महामहोपाध्यायश्रीभट्टोजिदीक्षितविरचिता

# वैयाकरण-सिद्धान्त-कौमुदी

श्रीमज्ज्ञानेन्द्रभिक्षुविरचितया प्राढोपकारिण्या तत्त्वबोधिन्याख्यटीकया, श्रीवासुदेवदीक्षितविरचितया छात्रोपकारिण्या बालमनोरमाख्यटीकया, महामहोपाध्याय श्रीनागेश (नागोजी) भट्टविरचितेन विद्वत्प्रियेण लघुशब्देन्दुशेखराख्येन तिलकेन, स्वरवैदिकभागे-श्री जयकृष्णमोनिविरचितया सुबोधिन्याख्यया टीकया, लिङ्गानुशासनभागे-श्रीभैरवमिश्रकृतया चन्द्रकलाख्यटीकया, अन्ते च गणपाठसूचीपत्रादिना परिशेष्टेन च विराजेता।।

## टीकात्रयसमलङ्कृता

## उत्तरार्द्धम्

महामहोपाध्यायश्रीमद्भट्टोजिदीक्षितविरचिता

# वैयाकरण-सिद्धान्त-कौमुदी

श्रीमज्ज्ञानेन्द्रभिक्षुविरचितया प्रौढोपकारिण्या तत्त्वबोधिन्याख्यटीकया, श्रीवासुदेवदीक्षितविरचितया छात्रोपकारिण्या

बालमनोरमाख्यटीकया, महामहोपाध्याय श्रीनागेश [नागोजी] भट्टविरचितेन विद्वत्प्रियेण लघुशब्देन्दुशेखराख्येन तिलकेन, स्वरवैदिकभागे-श्रीजयकृष्णमौनिविरचितया सुबोधिन्याख्यया टीकया, लिङ्गानुशासनभागे-श्रीभैरवमिश्रकृतया चन्द्रकलाख्यटीकया, अन्ते च गणपाठसूचीपत्रादिन परिशिष्टेन च विराजिता।

**टीकात्रयसमलङ्कृता-**

तस्याः उत्तरार्द्धम्


भारतीय विद्या प्रकाशन

दिल्ली वाराणसी

भारत

**प्रकाशक :**

**भारतीय विद्या प्रकाशन**

1. यू. बी. जवाहर नगर, बैंग्लो रोड,
   दिल्ली -110007, फोन न.- 011-23851570
2. पो. बा. 1108, कचौड़ी गली, वाराणसी-221001
   फोन न.- 0542-2392376,

**ISBN : 81-217-0189-9**

**मूल्य : 1500.00 सेट (2 भाग में )**

**संस्करण : 2005**

**मुद्रक :**

**जैन अमर प्रिंटिंग प्रेस, दिल्ली**

श्रीः ।

# तत्त्वबोधिनी-बालमनोरमा-शेखर-संवलिता

# सिद्धान्तकौमुदी

## तस्या उत्तरार्द्धम् ।

### अथ तिङन्ते भ्वादयः

श्रौत्राहन्तीचणैर्गुण्यैर्महर्षिभिरहर्दिवम् । स्तोष्टूय्यमानोऽप्यगुणो विभुर्विजयतेतराम् ॥ १ ॥

तत्त्व.] अज्ञाननाशने दक्षं दीक्षितं भक्तरक्षणे । वटमूलाश्रयं त्र्यक्षं दक्षिणामूर्तिमाश्रये ॥ १ ॥

ग्रन्थमध्ये विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षार्थं निबध्नाति—श्रौत्रेत्यादिना । श्रोत्रियस्य भावः श्रौत्रम् । 'हायनान्तयुवादिभ्योऽ'णिति सूत्रे 'श्रोत्रियस्य यलोपश्चे'ति वार्तिकाद्यलोपेऽण्प्रत्यये च 'यस्येति चे'तीकारलोपः । अर्हतो भाव आर्हन्ती। 'गुणवचनब्राह्मणादिभ्यः' इति सूत्रे 'अर्हतो नुम् चे'त्युक्तेर्नुम्, ष्यञ् च । षित्वान्ङीषि 'हलस्तद्धितस्ये'ति यलोपः । ताभ्यां वित्तैः—श्रौत्राहन्तीचणैः। 'तेन वित्तः' इति चणप् । श्रोत्रियत्वयोग्यताभ्यां प्रसिद्धैरित्यर्थः। किं च गुण्यैः-गुणवद्भिः । प्रशस्तगुणयुक्तैरिति यावत् । 'रूपादाहतप्रशंसयो'रिति सूत्रे [मत्वर्थे] 'अन्येभ्योऽपि दृश्यते' इत्युक्त्वा 'गुण्या ब्राह्मणाः' इत्यस्य भाष्यादावुदाहृतत्वात् । अहर्दिवमिति । अहन्यहनि । प्रत्यहमित्यर्थः । 'अचतुरे'त्यादिना निपातनात्साधुः । तोष्टूय्यमान इति । स्तौतेर्यङन्तात्कर्मणि शानच् । 'सार्वधातुके य'गिति धातोर्यक् । 'आने मु'गिति

बाल.] अस्तु नमः पाणिनये भूयो मुनये तथास्तु वररुचये । किंचास्तु पतञ्जलये अत्रे विश्वेश्वराय गुरवे च ॥ १ ॥
व्याख्याता बहुभिः प्रौढैरेपा सिद्धान्तकौमुदी । वासुदेवस्तु तद्व्याख्यां वष्टि बालमनोरमाम् ॥ २ ॥

ॐ 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते, वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि चाध्येतारश्च मङ्गलयुक्ताः स्यु'रिति भाष्यप्रमाणकं ग्रन्थमध्ये विघ्नविघातादिप्रयोजनाय कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नाति—श्रौत्रेति । वेदाध्येता-श्रोत्रियः । 'श्रोत्रियंश्छन्दोऽधीते' इति वेदपर्यायाच्छन्दश्शब्दाद्द्वितीयान्तादधीत इत्यर्थे घन्प्रत्ययः, प्रकृतेः श्रोत्रादेशश्च निपातितः । श्रोत्रियस्य भावः—श्रौत्रम् । 'श्रोत्रियस्य यलोपश्चे'त्यणि इकारादुत्तरस्य यकाराऽकारसङ्घातस्य लोपे इकारस्य 'यस्येति चे'ति लोपः । अर्हति—आर्यैः प्रशस्यमानेषु वेदविहितकर्मसु योग्यो भवतीत्यर्हन् । 'अर्हः प्रशंसाया'मिति शतृप्रत्ययः । अर्हतो भावः—आर्हन्ती । 'अर्हतो नुम् चे'ति ष्यञि आदिवृद्धौ प्रकृतेर्नुमागमे षित्वान्ङीषि 'हलस्तद्धितस्ये'ति यकारलोपे 'यस्येति चे'त्यकारलोपः । स्त्रीत्वं लोकात् । श्रौत्रं च आर्हन्ती च श्रौत्राहन्त्यौ । ताभ्यां वित्ताः—श्रौत्राहन्तीचणाः । तैरिति विग्रहः । 'तेन वित्तश्चुञ्चुप्चणपा'विति चणप् । वेदाध्येतृत्वेन, वेदविहितकर्मयोग्यतया च प्रसिद्धैरिति-यावत् । गुण्यैरिति । नित्याऽनित्यवस्तुविवेकः, इहाऽमुत्रार्थफलभोगविरागः, शमदमादिसम्पत्तिः, मुमुक्षुत्वमित्यादिप्रशस्तगुणसम्पन्नैरित्यर्थः । 'रूपादाहतप्रशंसयो'रिति सूत्रे 'अन्येभ्योऽपि दृश्यते' इति वार्तिकेन यप् प्रत्ययः, तद्भाष्ये 'गुण्या ब्राह्मणा' इत्युदाहरणात् । महर्षिभिरिति । महान्तश्च ते ऋषयश्चेति कर्मधारयः । 'आन्महत' इत्यात्वम् । अतितपस्विभिरित्यर्थः । अहर्दिवमिति । अहश्च दिवा चेति वीप्सायाम् 'अचतुरे'त्यादिना द्वन्द्वो निपातितः । अहन्यहनीत्यर्थः । तोष्टूय्यमानोऽपीति । 'ष्टुञ् स्तुतौ', सकर्मकः । गुणवत्त्वेनाऽभिधानं स्तुतिः । अभिधानक्रियानिरूपितं कर्मत्वमादाय 'देवान् स्तौती'त्यादौ द्वितीया । न तु गुणाभिधानमेव स्तुतिः, तथा सति गुणस्य धात्वर्थोपसङ्गृहीतत्वेनाऽकर्मकत्वापत्तेः । 'धात्वादेः षः सः' इति षकारस्य सकारे ष्टुत्वनिवृत्तौ, 'धातोरेकाच' इति भृशार्थे यङि, 'अकृत्सार्वधातुकयो'रिति दीर्घे, 'सन्यङो'रिति द्वित्वे, 'शर्पूर्वाः खयः' इति सकारस्याभ्यास-

शेखरः ] 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते' इति भाष्योक्तेर्विघ्नविघातार्थं ग्रन्थमध्ये कृतं मङ्गलं शिष्यशिक्षार्थं निबध्नाति-श्रौत्राहन्तीति । श्रौत्रं-श्रोत्रियत्वं, वेदाध्ययनकर्तृत्वम् । आर्हन्ती-योग्यता,

**पूर्वार्द्धे कथितास्तुर्यपञ्चमाध्यायवर्तिनः । प्रत्यया, अथ कथ्यन्ते तृतीयाध्यायगोचराः ॥ २ ॥**

तत्रादौ दश लकाराः प्रदर्श्यन्ते । लट् । लिट् । लुट् । लृट् । लेट् । लोट् । लङ् । लिङ् ।

---

त.] मुक् । अपिशब्देन आपाततो विरोधं द्योतयति । वस्तुतस्तु न विरोधः। स्तुतिप्रयोजकीभूतानामनन्तकल्याणगुणानां श्रुतिस्मृतिसिद्धत्वेऽपि वियदादिवद्व्यावहारिकत्वात्तदभावस्य पारमार्थिकत्वात् । एतच्चोत्तरमीमांसायां स्पष्टमेव । विभुः–व्यापकः परमेश्वरः । अतिशयेन वि जयते वि जयतेतराम् । सर्वोत्कर्षेण वर्तत इति फलितोऽर्थः । 'विपराभ्यां जे'रिति तङ् । तदन्तात् 'द्विवचनविभज्ये'त्यादिना तरपि 'किमेत्तिङव्ययघादामु'इत्याम् । नन्विह तरब्दुर्लभ एव, विजयत इत्यस्य अप्रातिपदिकत्वादतिङन्तत्वाच्च । नच 'सह सुपे'त्यत्र सहेति योगविभागात्तिङन्तेन विशब्दस्य समासे प्रातिपदिकत्वं स्यादेवेति वाच्यं, 'स च छन्दस्येवे'ति तत्रत्यग्रन्थेन सह विरोधापत्तेः । किंच प्रातिपदिकत्वाभ्युपगमे सोरुत्पत्तिः स्यात्, लिङ्गसर्वनामताभ्युपगमेन नपुंसकत्वात्सोर्लुक्यपि 'ह्रस्वो नपुंसके'इति ह्रस्वो दुर्वारः स्यात् । समुदायान्तर्गतस्य 'जयते' इत्यस्य तिङन्तत्वेऽपि साकाङ्क्षत्वेनाऽसामर्थ्यात्ततोऽपि भवितुं नार्हति, 'समर्थः पदविधि'रिति परिभाषितत्वात् । 'आमन्तेन विशब्दो युज्यते' इति कल्पनायां त्वन्तरङ्गत्वात्परस्मैपदप्रवृत्तौ 'विजयतितरा'मिति स्यादिति चेत् । अत्राहुः–समुदायान्तर्गताज्जयत इत्यस्मादेव तरप् । नच तस्य विशब्देन सह साकाङ्क्षत्वेनाऽसामर्थ्यं शङ्क्यम् । तिङन्तस्य प्रधानत्वेन सापेक्षत्वेऽपि दोषाऽभावात्, उपसर्गस्य द्योतकत्वेन प्रत्येकमर्थ एव नास्तीति साकाङ्क्षताया वक्तुमशक्यत्वाच्चेति ॥ वृत्तकथनपूर्वकं वर्तिष्यमाणमाह–**पूर्वार्द्धे इति** । हलन्तेषु 'स्पृशोऽनुदके क्विन्', 'ऋत्विग्दधृक्', 'त्यदादिष्वि'त्यादिना क्विन्नादिव्युत्पादनं प्रासङ्गिकमिति भावः । **तुर्यः**–चतुर्थः । 'चतुरश्छयतावाद्यक्षरलोपश्चे'त्युक्तत्वात् । **अथेति** । इहापि कृत्सु 'णचः स्त्रियामञ्', 'अग्निनुणः' इत्यादिव्युत्पादनं प्रासङ्गिकं बोध्यम्, प्राधान्येन तु तृतीयाध्यायस्था एवेहोच्यन्त इति भावः । अनुबन्धभेदेन भेदमाश्रित्याह–**दश लकारा इति** । **प्रदर्श्यन्त इति** । यद्यपि पञ्चमलकाररूपाण्यधुना न व्युत्पाद्यन्ते तथापि लकारः स्वरूपेण प्रदर्श्यते 'लः कर्मणि च भावे चाकर्मकेभ्यः', 'लस्ये'त्यादि-

---

बा.]गतस्य लोपे, 'गुणो यङ्लुको'रित्यभ्यासोकारस्य गुणे, ततः परस्य सस्य 'आदेशप्रत्यययो'रिति षत्वे, ष्टुत्वेन तकारस्य टकारे, 'तोष्टूये'ति यङन्तात् 'सनाद्यन्ता' इति धातुसंज्ञकात्कर्मणि लटि लटश्शानचि 'आने मु'गिति मुगागमे, 'सार्वधातुके य'गिति यकि, यङोऽकारस्य 'अतो लोप' इति लोपे, 'तोष्टूय्यमान' इति रूपम् । भृशं स्तूयमानोऽपीत्यर्थः । अचिन्त्यजगद्रचनाद्यनन्तगुणसम्पन्नतया भृशं सङ्कीर्त्यमानोऽपीति यावत् । **अगुण इति** । निर्गुण इत्यर्थः । 'साक्षी चेता केवलो निर्गुणश्चे'त्यादिश्रुतेरिति भावः । निर्गुणस्य गुणवत्त्वेन कथनात्मिका स्तुतिर्विरुद्धेत्यापातप्रतिपन्नं विरोधमपिशब्दो द्योतयति। गुणानां व्यावहारिकसत्यत्वेऽपि पारमार्थिकत्वाऽभावान्न विरोध इत्युत्तरमीमांसायां स्पष्टम् । **विभुरिति** । सर्वव्यापकः परमेश्वर इत्यर्थः । **वि जयतेतरामिति** । 'जि जये', अकर्मकः । उत्कर्षेण वर्तनं जयः । 'विपराभ्यां जे'रित्यात्मनेपदम् । 'तिङश्चे'त्यतिशायने तरप् । 'किमेत्तिङव्यये'ति तरबन्तात्स्वार्थे आम्प्रत्ययः । 'तद्धिश्चाऽसर्वविभक्ति'रित्यत्र तसिलादिषु परिगणनादामन्तमव्ययम् । सर्वोत्कर्षेण वर्तत इत्यर्थः । न च 'विजयते' इति समुदायस्याऽतिङन्तत्वात्कथं ततस्तरबिति वाच्यं, 'वि' इति हि भिन्नं पदम्, तिङन्तोत्तरपदसमासस्य छन्दोमात्रविषयत्वात् । ततश्च जयत इत्यस्मादेव तरप् । न च 'जयते' इत्यस्य 'विपराभ्यां जे'रिति कृतात्मनेपदस्य विशब्दसापेक्षत्वादसामर्थ्यं शङ्क्यम् । 'वी'त्युपसर्गस्य द्योतकत्वेन पृथगर्थविहीनतया तत्सापेक्षत्वाऽभावात्तिङन्तस्य प्रधानतया तस्य विशब्दाऽपेक्षत्वेऽपि बाधकाऽभावाच्चेत्यलम् । वृत्तकथनपूर्वकं वर्तिष्यमाणनिरूपणं प्रतिजानीते–**पूर्वार्द्धे इति** । तुर्यश्चतुर्थः । 'चतुरश्छयतावाद्यक्षरलोपश्चे'ति चतुर्शब्दाद्यत्प्रत्ययः, प्रकृतेश्चकाराऽकारसङ्घातस्य लोपश्च । पूर्वार्धे चतुर्थपञ्चमाध्यायवर्तिनः प्रत्ययाः कथिता इत्यन्वयः । 'स्पृशोऽनुदके क्वि'न्नित्यादितार्तीयीककतिपयप्रत्ययोपन्यासस्तु प्रासङ्गिक इति भावः । **अथेति** । चतुर्थपञ्चमाध्यायवर्तिप्रत्ययनिरूपणानन्तरं तृतीयाध्यायगोचराः प्रत्ययाः कथ्यन्त इत्यन्वयः। तृतीयाध्यायस्य गोचराः = प्रतिपाद्यतया विषयाः । तृतीयाध्यायविहिता इति यावत् । कृत्सु 'णचः स्त्रियाम'ञित्यादितद्धितव्युत्पादनं तु प्रासङ्गिकमिति भावः ।

**तत्रेति** । निर्धारणसप्तम्यन्तात्त्रल् । तेषु तृतीयाध्यायवर्तिप्रत्ययेष्वित्यर्थः । **दशेति** । अनुबन्धभेदाल्लकारभेद-

---

शे.]तद्विहितकर्मानुष्ठातृत्वम्। ताभ्यां **वित्तैः**–प्रसिद्धैरित्यर्थः। **गुण्यैः**–प्रशस्तगुणवद्भिः। **अहर्दिवम्**–अहन्यहनि। **वि जयतेतरामिति** । 'वी'ति भिन्नं पदम् । 'तिङश्चे'ति तरप्याम् । तिङन्तोत्तरपदस्तु समासश्छन्दस्येव । उपसर्गाणां द्योतकतया 'वी'त्येतत्सापेक्षत्वेनाऽसामर्थ्यात्कथन्तरबिति न शङ्क्यम् । पूर्वार्द्धेनाऽस्य सङ्गतिमाह **पूर्वार्द्धे इति**।**कथिताः**। प्राधान्येनेत्यर्थः । **तृतीयाध्यायेति** । उणादीनामपि 'उणादयो बहुल'मिति सूत्रबोधितत्वात्तत्त्वम् । **पञ्चम इति** । 'लट्' 'लिट्' इत्याद्युक्तक्रमापेक्षयेदम् । **छन्दोमात्रेति** । तेन तद्रूपाणामिहाऽप्रदर्शनान्न्यूनतेति परास्तम् । **वर्त्तमाने ल**।

लुङ् । लृङ् । एषु पञ्चमो लकारश्छन्दोमात्रगोचरः ॥ **वर्तमाने लट्** । ३।२।१२३। वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात् । अटावितौ । **लः कर्मणि च भावे चाऽकर्मकेभ्यः** । ३ । ४ । ६९ ।

त.]सूत्रविषयतां व्युत्पादयितुमिति भावः । **पञ्चम इति** । लेडित्यर्थः । लट्-लिडिति स्त्रोक्तक्रमापेक्षयैव लेटः पञ्चमत्वं, न तु सूत्रोक्तक्रमेणेति बोध्यम् । **वर्तमाने लट्** । वर्तमान इत्येतत्प्रकृत्यर्थविशेषणमित्याह–**वर्तमानक्रियावृत्तेर्धातोरिति** । धातोरिति सूत्रमा तृतीयाध्यायान्तमधिक्रियत इति भावः। **लट् स्यादिति** । तस्य वाच्यत्वमनुपदमेव स्फुटीभविष्यति । वर्तमानकालस्तु न तद्वाच्यः, किंतु द्योत्य एव । लङादिष्वपि भूतादिकालो यथायथं द्योत्य एवेत्यवगन्तव्यम् । वस्तुतस्तु वाच्यत्वाभ्युपगमोऽपि सुगम इति विध्यादिसूत्रे वक्ष्यामः ॥ **अटाविताविति** । 'अकार उच्चारणार्थ' इति तु नोक्तं, लिडादिवैलक्षण्यसंपादनाय तस्यावश्यवक्तव्यत्वात् । **लः कर्मणि च** । चकारात् 'कर्तरि कृ'दित्यतः कर्तरीत्यनुकृष्यते । सकर्मकविषयं चेदम् । अकर्मकेषु कर्मणीत्यंशस्य बाधितत्वात्, 'भावे चे'त्युत्तरवाक्येन तत्र विशेषविधानाच्च । तदेतदाह–**सकर्मकेभ्य इति** । **भावे चेति** । चकारेण कर्तैवाऽनुकृष्यते न तु कर्म, असंभवात् । तदाह–**भावे कर्तरि चेति** । ननु भावकर्मणोरात्मनेपदविधानात्, 'शेषात्कर्तरी'ति परस्मैपदविधानाच्च ज्ञापकाल्लकाराणां भावकर्मकर्तारोऽर्था अनुमातुं शक्यन्त इति किमनेन सूत्रेण ? । मैवम् । असत्यस्मिन्सूत्रे सकर्मकेभ्योऽपि घञादिवद्भावे लकारापत्तौ 'घटं क्रियते देवदत्तेने'त्यादिप्रयोगः प्रसज्येत, तन्माभूदित्येतदर्थमेतत्सूत्रस्यावश्यकत्वात् । न चैवम् 'अकर्मकेभ्यो भावे लः' इत्येव सूत्र्यतां, 'भावे अकर्मकेभ्य एवे'ति नियमार्थमिति वाच्यम्, 'अकर्मकेभ्यो भाव एवे'ति विपरीतनियमापत्त्या कर्तरि तेभ्यो लकाराऽनापत्तेः । तस्माद्भावे चेति चकार आवश्यकः । न चैवं 'भावे चाकर्मकेभ्यः' इत्येवाऽस्त्विति वाच्यं, भावे इव कर्तर्यप्यकर्मकेभ्य एवेति नियमापत्तौ सकर्मकेभ्यो भाव इव कर्तर्यपि लकारानापत्तेः । नन्वेवमपि 'लश्च भावे चाऽकर्मकेभ्यः' इत्येवास्तु, चकारेण कर्तरीत्यनुकर्षणाल्लकाराः सकर्मकेभ्यः कर्तरि स्युरकर्मकेभ्यो भावे कर्तरि च स्युरित्यर्थे पर्यवसिते, कर्मणि तूक्तज्ञापकाद्भविष्यन्तीति किमनेन कर्मणीत्यनेनेति चेन्मैवम्, उत्तरसूत्रे 'तयो'रित्यनेन कर्मणोऽपि परामर्शार्थं तस्यावश्यकतया ज्ञापकानुसरणक्लेशस्य वैयर्थ्यात् । तस्माद्यथान्यासमेव रमणीयम् । अत्र **नैयायिकाः**–'लकाराणां कृतावेव शक्तिर्लाघवान्न तु कर्तरि, कृतिमतः कर्तृत्वेन तत्र शक्तौ गौरवात्, 'देवदत्त' इत्यादिप्रथमान्तपदेन तल्लाभाच्च । 'देवदत्तः पचती'त्यत्र हि देवदत्तो विशेष्यः, यत्नो विशेषणम्, आश्रयत्वं तु संसर्गः । तथाच पाकानुकूलकृत्याश्रयो देवदत्त इत्यादिशाब्दबोधोऽपि सुष्ठूपपद्यते' इति । तन्न । पचतीत्युक्ते पाककर्ता क इत्याकाङ्क्षानुरोधेन लकाराणां कर्तरि शक्तिरित्यभ्युपगन्तुमुचितत्वात् । पाकानुकूला कृतिरिति शाब्दबोधाभ्युपगमे तु कस्मिन्नित्याकाङ्क्षा स्यात्, कस्येति वा । न चैककर्तृका पचिक्रियेति शाब्दबोधाभ्युपगमेऽपि क इत्याकाङ्क्षा नोपपद्यत एवेति शङ्क्यं, कर्तृसामान्यबोधे सति क इति कर्तृविशेषाकाङ्क्षायां बाधकाऽभावात् । नापि देवदत्तकर्तृका पचिक्रियेत्युक्तेऽपि कस्मिन्नस्ति कस्य वेत्याकाङ्क्षा दुर्वारैवेति शङ्क्यं, विक्लित्त्यनुकूलव्यापारस्यैव पचिक्रियात्वात्, तदाश्रयस्य देवदत्तस्य कर्तृत्वात्, क्रियाश्रयत्वे निश्चिते कस्मिन्नित्याद्याकाङ्क्षाया अप्रवृत्तेः । किंच 'पचन्तं देवदत्तं पश्य,' 'पचते देवदत्ताय देहि,' 'पचमानस्य देवदत्तस्य द्रव्य'मित्यादौ शतृशानजादीनामपि तिबादिवल्लादेशत्वाऽविशेषेण तेभ्योऽपि कृतिमात्रबोधापत्तेः । न चेष्टापत्तिराश्रयत्वं संसर्ग इत्युक्तत्वेन पाकानुकूलकृत्याश्रयं देवदत्तं पश्येत्याद्यर्थस्वीकारे दोषाऽभाव-

बा.]इतिभावः। **पञ्चम इति** । लेडित्यर्थः। **छन्दोमात्रेति** । 'लिङर्थे लेटि'त्यत्र 'छन्दसि लुङ्लङ्लिटः' इति पूर्वसूत्राच्छन्दसीत्यनुवृत्तेरिति भावः। एतेन लेड्रूपाणि इह कुतो न प्रदर्श्यन्त इति शङ्का निरस्ता। **वर्तमाने लट्** । 'धातो'रिति सूत्रमा तृतीयाध्यायसमाप्तेरधिकृतम् । 'वर्तमाने' इति तत्रान्वेति । वर्तमानेऽर्थे विद्यमानाद्धातोर्लडिति लभ्यते । फलितमाह–**वर्तमानक्रियावृत्तेरिति** । धात्वर्थक्रियाया वर्तमानत्वं तु वर्तमानकालवृत्तित्वम् । कालस्य तु वर्तमानत्वम्–अतीतानागतभिन्नकालत्वम् । 'भूतभविष्यतोः प्रतिद्वन्द्वी वर्तमानः काल' इति भाष्यम् । वर्तमानत्वं च न प्रत्ययार्थभूतकर्त्रादिविशेषणम् । अतीतपाकादिक्रिये कर्तरि वर्तमाने पचतीत्याद्यापत्तेः, किंतु धात्वर्थविशेषणमेव वर्तमानत्वम् । लट् तु तस्य द्योतक एव । **अटाविताविति** । न च अकार उच्चारणार्थ एवास्त्विति वाच्यं, लिडादिवैलक्षण्याय तस्यावश्यकत्वात् । तथाच तस्य इत्संज्ञां विना निवृत्त्युपायाऽभावादित्संज्ञैवादर्तव्येति भावः । **लः कर्मणि च** । वाक्यद्वयमिदं सूत्रम् । 'लः कर्मणि चे'ति प्रथमं वाक्यम् । 'ल' इति प्रथमाबहुवचनान्तम् । चकारेण 'कर्तरि कृ'दित्यतः 'कर्तरी'त्यनुकृष्यते । 'धातो'रित्यधिकृतम् । लकाराः कर्मणि कर्तरि च धातोः स्युरिति लभ्यते । सकर्मक-

शे.]कालादेर्द्योत्यतयाऽऽह–**वर्तमानक्रियेत्यादि** । वर्तमानकालक्रियेत्याद्यर्थः। वर्तमानत्वं-प्रारब्धाऽपरिसमाप्तक्रियाश्रयत्वं कालगतं बोध्यम् । **अटाविताविति** । अकारस्य विनेत्सञ्ज्ञां निवृत्त्युपायाऽभावात् । टित्त्वं टेरेत्वार्थम् । **लः कर्मणि** ।

**लकारः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च ॥**

त.]दिति वाच्यं, नामार्थयोर्भेदान्वयस्य स्वपरसिद्धान्तविरुद्धत्वात्। न चैवं नामार्थयोरमेदसंसर्गव्युत्पत्त्यनुरोधेन. शतृशानजादीनां कर्तरि शक्तिस्तिबादीनां तु कृतावेवेति वैषम्यं स्वीक्रियते, प्रामाणिकगौरवस्याऽदोषत्वादिति वाच्यं, 'स्थान्येव वाचको लाघवान्न त्वादेशो गौरवा'दिति स्वसिद्धान्तस्य परित्यागापत्तेः। 'रामः,' 'ज्ञानं' 'कतर'दित्यादौ सोर्विसर्गे सोरमि सोरदड्डि च कृते लाघवात्सुत्वेनैव शक्तिर्न तु तत्तद्रूपेणेत्यादिभवदीयव्यवहारस्याऽसाङ्गत्यापत्तेश्च। एवं च तिबादीनां शत्रादीनां च स्मारकतया लिपिस्थानीयत्वं, बोधकस्तु लकार एवेति स्थितम्। स च शत्राद्यन्ते कर्तरि शक्त इत्यभ्युपगमे तिङन्ते कथं कृतिं बोधयेत्?। 'अन्याय्यश्चाऽनेकार्थत्व'मिति न्यायात्। यदि तु वैयाकरणरीतिमाश्रित्य सर्वत्रादेशा एव वाचका इत्याद्यभ्युपगम्यते तर्हि–घटं, घटेन, हरेऽव, विष्णोऽवेत्यादिषु 'सर्वे सर्वपदादेशाः' इति न्यायेन पदस्फोटो वाक्यस्फोटश्च सिध्येदिति भवतां तन्महदनिष्टम्। किं च 'कर्तरि कृ'दिति यत्कर्तृग्रहणं तदेव 'लः कर्मणी'ति सूत्रे चकारेणानुकृष्यत इति कथं ण्वुलादीनां लकाराणां च शक्तौ वैलक्षण्यम्?। न च नामार्थयोरमेदान्वयसंसर्गाभ्युपगम एव ण्वुलादौ कर्तृवाच्यत्वे बीजमिति वाच्यं, 'पचतिरूपं पचतिकल्पं देवदत्त' इत्याद्यनुरोधेन तिङ्क्ष्वपि कर्तुरेव वाच्यतौचित्यात्। ननु समुदायस्य नामत्वेऽपि तिङ्प्रत्ययो न नामेति चेत्, पाचक इत्यत्राप्यक इत्येतन्न नामेति तुल्यम्। अकान्तं नामेति चेद्रूपवाद्यन्तमपि नामेति तुल्यम्। ततश्चात्र प्रशस्तपाककर्ता देवदत्त इत्याद्यभेदान्वयो भवद्भिरभ्युपगन्तव्य इति तिङ्क्ष्वपि कर्तृवाच्यता स्वीकर्तव्यैव। किं च कर्तृवाच्यत्वाऽनभ्युपगमे 'युष्मदि समानाधिकरणे मध्यमः' 'अस्मद्युत्तमः' इति सामानाधिकरण्यप्रयुक्ता पुरुषव्यवस्था, 'अभिहिते कर्तरि प्रथमे'त्यादिकं च भवन्मते कथं सङ्गच्छताम्?। यत्तु अनभिहित इत्यस्यानभिहितसङ्ख्याक इत्यर्थवर्णनेन 'देवदत्तः पचत्योदनम्', 'ओदनः पच्यते देवदत्तेने'त्यादौ प्रथमाद्वितीयादिव्यवस्थापनमुक्तं, तन्न, कृत्तद्धितसमासेषु सङ्ख्याभिधानस्याऽप्रसिद्धत्वात्। ततश्च 'पक्तव्यस्तण्डुलः' 'शत्यः शतिकोऽश्वः,' 'प्राप्तोदको ग्रामः'-इत्यादिषु 'कर्मणि द्वितीये'त्यस्य प्रवृत्तौ प्रथमा न स्यात्। न च 'तिष्ठती'त्यध्याहारेण सङ्ख्याभिधानमिहाप्यस्तीति वाच्यं, 'स्थित' इत्याद्यध्याहारे तदभावात्। 'शाब्दिकोऽयं देवदत्तो न तु नैयायिक' इत्यादिषु 'नीलमिदं न तु रक्त'मित्यत्रेव क्रियापदा[द्य]ध्याहारस्याऽनावश्यकतया आख्यातेन, 'शब्ददर्दुरं करोती'ति ठक्प्रत्ययेन वा कर्तृसङ्ख्याया अनुक्तत्वाद्देवदत्ते कर्तरि तृतीयोत्पत्तिप्रसङ्गाच्च। तस्मादनभिहिते कर्तरीत्यादिव्याख्यानमेवाभ्युपेतव्यम्। अपि च धातूपात्तव्यापाराश्रयः कर्ता, तत्राश्रयमात्रं कृतां लकाराणां चार्थो न तु व्यापारोऽपि, तस्य धातुनैव लब्धत्वात्। अतएव कर्ता कारक इत्यादौ प्रकृतिप्रत्ययार्थयोर्नाऽनन्वयः, व्यापाराश्रयस्य प्रत्ययार्थत्वे तु तस्य प्रकृत्यर्थेन व्यापारेणान्वयः क्लिष्टः स्यात्। यस्तु वदति–'कृधातोः कृतिरर्थः,कृत्प्रत्ययस्यापि कृतावेव शक्तिर्न तु कर्तरि। 'कर्तरि कृ'दित्यत्र हि कर्तरीति भावप्रधानो निर्देशः। कर्तृत्वं कृतिमत्त्वम्।तच्च कृतिरेव।यत्र तु देवदत्तादिपदसमभिव्याहारस्तत्र तृजादौ कृतिमति लक्षणे'त्यादि, तन्मते पूर्वोक्तकर्तेत्यादौ सुतरामनन्वयः।'कर्मवत्कर्मणे'ति सूत्रे करोतिरुत्पादनार्थः, उत्पत्तिश्च कर्मस्था, यत्नार्थकत्वे तु 'करिष्यते घट' इत्यादि न सिध्येदिति वक्ष्यमाणदूषणं च दुरुद्धरम्। आश्रयमात्रस्य प्रत्ययार्थत्वे तु 'रथो गच्छती'त्यत्र रथस्याचेतनस्य यत्नाभावेऽपि गमनानुकूलचक्रभ्रमणादिव्यापाराश्रयत्वान्न काचिदनुपपत्तिः। एवं स्थिते कृतौ शक्तिरित्यस्योक्तिसंभव एव नास्ति, कृतेरपि व्यापारविशेषतया प्रायेण धातुत एव लाभात्। जानातीत्यादावाश्रयत्वं प्रत्ययस्यार्थ इति स्वीकृत्य यत्नार्थत्वस्य त्वयापि वक्तव्यत्वात्। नहि यत्नमन्तरेण ज्ञानं नोदेतीति कश्चिदभ्युपैति। तस्मात्कृतां तिङां च वैलक्षण्यं दुर्लभमिति कर्त्रर्थकत्वमभ्युपेयम्। एतेन कर्त्रधिकरणे आख्यातवाच्यत्वं कर्तुर्निरस्य जञ्जभ्यमानाधिकरणे यङन्ताद्विहितस्य जञ्जभ्यमान इति शानचः कर्तृवाचकत्वं स्वीकुर्वन्तो मीमांसका अपि प्रत्युक्ताः। यत्तु तैरुक्तं-'शानजंशे 'कर्तरि कृ'दिति व्याकरणं शक्तिग्राहकमस्ती'ति। तन्न। कृद्वाक्यशेषो ह्ययमर्थाकाङ्क्षायामनिर्दिष्टार्थेषु ण्वुलादिष्वेवोपतिष्ठते 'आकाङ्क्षितविधानं ज्यायः' इति न्यायात्, न तु शत्रादिषु। स्थानिभूतलकारार्थेनैव तेषां निराकाङ्क्षत्वात्, अन्यथा भावे कर्मणि च शानचो दौर्लभ्यापत्तेः। ततश्च 'शय्यमाने आस्यमाने चायं गत'इत्यादिप्रयोगो भावे न स्यात्। कर्मणि तु 'क्रियमाण' इत्यादिप्रयोगो न स्यात्। यत्तु भट्टपादा आहुः–'कर्तरि यदेकत्वं तत्र तिप्,

बा.] धातुविषयमेवेदम्, अकर्मकेषु 'कर्मणी'त्यस्य बाधितत्वात्। तदाह–**लकारः सकर्मकेभ्य इति**। एवं च सकर्मकेभ्यो भावे लकारा न भवन्ति। सकर्मकेभ्योऽपि भावलकारप्रवृत्तौ तु 'देवदत्तेन घटं क्रियते' इत्यादौ भावलकारेण कर्मणोऽनभिहितत्वाद्द्वितीया स्यादिति भावः। 'भावे चाकर्मकेभ्य' इति द्वितीयं वाक्यम्। अत्रापि चकारेण कर्तैवानुकृष्यते, न तु कर्म, असंभवात्। तदाह–**अकर्मकेभ्यो भावे कर्तरि चेति**। अत्राऽकर्मकग्रहणेन अविवक्षितकर्मका अपि गृह्यन्ते। तेन 'देवदत्तेन भुज्यते' इत्यत्र सतोऽप्योदनरूपकर्मणोऽविवक्षायां भावे लकारोऽस्त्येवेत्यन्यत्र विस्तरः।

**लस्य**। 'धातो'रित्यधिकृतम्। अकारो न विवक्षितः। तेन लिडादीनामपि सङ्ग्रहः। 'चूडाल' इत्यादौ च नाति-

लस्य ।३।४।७७। अधिकारोऽयम् ॥ तिप्तस्झिसिप्थस्थमिब्वस—

त.]कर्तरि यद्द्वित्वं तत्र तसित्यादिक्रमेण 'लः कर्मणी'त्यस्य 'द्व्येकयो'रित्यादेश्चैकवाक्यतया व्याख्यानान्न कर्तृवाच्यता सूत्रादायाती'ति । तच्चिन्त्यम् । 'तान्येकवचनद्विवचने'ति विहितद्विवचनादिसंज्ञा हि तिबाद्यादेशनिष्ठा । ततश्च द्विवचनादिसंज्ञकतिबादिविधिना 'द्व्येकयो'रित्यस्यैकवाक्यताऽस्तु । न च तिबादिविधौ कर्तरीत्यस्ति यद्द्वित्वैकत्वादिविशेषणतया कथंचिन्नीयेत ? । ननु 'लः कर्मणी'ति सूत्रे कर्तरि क्व'दित्यतोऽनुवृत्तं कर्तृग्रहणं तिबादिविधावस्त्येव, लविधि-तिबादिविध्योरप्येकवाक्यताखीकारादिति चेत् । सत्यम् । वाक्यैकवाक्यता हि सा, न तु पदैकवाक्यता, 'लः कर्मणी'ति विहितलकारानुवादेन तिबाद्यादेशविधेः प्रवृत्तत्वात् । तथा च लविधौ श्रूयमाणं कर्तृग्रहणं कथं सङ्ख्यां विशिनष्टु । न हि यत्र कर्तृग्रहणं तत्र सङ्ख्योपस्थापकमस्ति, लकारस्य द्विवचनादिसंज्ञाविनिर्मुक्तत्वात् । ततश्च 'कर्तरि यदेकत्व'मिति व्याख्या कथमपि न संभवत्येव । स्यादेतत्—'लः कर्मणी'ति सूत्रे 'ल' इत्यकारानुबन्धकयोर्लृड्वोः सामान्यग्रहणं न भवति, किन्तूत्सृष्टानुबन्धकलकाराणां सामान्यग्रहणमिति निर्विवादम् । तत्र 'ल' इति जसन्तं माभूत्, किं तु ङसन्तमस्तु 'लः परस्मैपद'मितिवत् । आदेशापेक्षा चेयं षष्ठी—लस्य य आदेशः स कर्मणि चेत्यादि । न चाऽविहितस्य लस्यानुवादो न संभवतीति वाच्यं, 'वर्तमाने ल'डित्यादिभिरेव लविधानात् । तथा च लस्य स्थाने य आदेशः स सकर्मकात्कर्मणि कर्तरि च [यदेकत्वं तत्र] स्यादकर्मकाद्भावे कर्तरि चेत्याद्यर्थः सुलभ इति भट्टपादोक्तयोजनिका निर्बाधैवेति चेत् । अत्राहुः—ल इत्यस्य षष्ठ्यन्तत्वे आदेशानामेवाऽर्थ उक्तः स्यात् । सोऽपि तिबादीनामेव, न तु शबादीनां, तेषां द्विवचनादिसंज्ञाविरहात् । 'द्व्येकयो'रित्यादिनाऽस्यैकवाक्यताया भवद्भिरुक्तत्वात् । न च भवदुक्तरीत्या 'कर्तरि क्व'दित्यनेन निर्वाहः । भावे कर्मणि च शानचो दौर्लभ्यापत्तेरुक्तत्वात् । न च शानज्विधिना सहाऽऽत्मनेपदव्यवस्थापकानामेकवाक्यतया 'भावकर्मणो'रित्यनेनेष्टसिद्धिः । सकर्मकादपि भावे शानजापत्तेः । किं च जसन्तत्वे श्रुतेनैव संबन्धः, षष्ठ्यन्तत्वे त्वादेश इत्यध्याहारागौरवमित्यादि ॥ अत्रेदं बोध्यम्—'भावे चाकर्मकेभ्यः' इत्यकर्मकग्रहणेनाऽविवक्षितकर्मणोऽपि गृह्यन्ते । अतएव 'णेरणौ' इति सूत्रे—नेह पच्यते नेह भज्यते इति भावे लकार इति हरदत्तः। 'अत्यन्ताऽविद्यमानकर्मकाणामेव ग्रहणं, 'नेह पच्यते' इत्यादौ तु कर्मण्येव लकारः । गम्यमानत्वाच्च कर्म न प्रयुज्यते' इति मतान्तरम् । एतच्च 'गतिबुद्धी'त्यादिसूत्रे हरदत्तग्रन्थे स्पष्टम् ॥ यत्तु कैश्चिदुक्तम्—इह 'अविवक्षितकर्मणां भावे लकार इति प्रसादकृतोक्तं भाष्यादिविरोधादयुक्त'मिति, तच्चिन्त्यम् । पक्षद्वयस्यापि भाष्यकैयटादिग्रन्थारूढत्वात् । प्रत्युताऽविवक्षितकर्माणोऽप्यकर्मका इति पक्ष एव प्रबलः । तथाहि 'समानकर्तृकेषु तुमु'न्निति सूत्रे इच्छता क्रियत इति भावे लङुक्तो हरदत्तेन । 'णेरध्ययने वृत्त'मिति सूत्रे कैयटहरदत्तादिभिरपि 'नपुंसके भावे क्तोऽकर्मकेभ्य एव, 'तयोरेव कृत्यक्त'त्यत्र क्तमात्रस्य ग्रहणात्, तत्र भावेचाऽकर्मकेभ्य इत्यनुवर्तनात्, अन्यथा घटं कृतमिति प्रसज्येते'ति सिद्धान्तितम् । एवं स्थिते यद्यविवक्षितकर्माणोऽपीह सूत्रेऽकर्मकग्रहणेन न गृह्येरन्, तर्हि पीता गावो भुक्ता ब्राह्मणा इत्यादौ भावे क्तान्तादर्श आद्यजित्यादि निष्ठादिप्रकरणे स्वयमेव वक्ष्यमाणम्, 'आदिकर्मणि क्तः' इति सूत्रे हरदत्तेन वक्ष्यमाणं, कृतपूर्वीत्यत्र भावे क्त इति कैयटाद्युक्तं च कथं सङ्गच्छेत ? । कथं च 'गतं तिरश्चीन'मित्यादिप्रयोगाः सङ्गच्छेरन् ? । 'गतिबुद्धी'ति सूत्रे त्वकर्मकग्रहणेनाऽविवक्षितकर्माणो न गृह्यन्त इत्युक्तं, तेनाऽणौ यः कर्ता स ण्यन्ते कर्म न भवतीति देवदत्तेन पाचयतीति सिद्धम् । 'गत्यर्थाकर्मके'ति सूत्रेऽपि न गृह्यन्ते, तेन हि सूत्रेण कर्तर्यपि क्तो विधीयत इति दत्तवान्पक्ववानित्याद्यर्थे दत्तः पक्व इत्याद्यापत्तेः । इह सूत्रे त्वविवक्षितकर्मणामकर्मकत्वेन ग्रहणे न कोऽपि दोष इत्यास्तां तावत् ।

लस्य । वर्णग्रहणे प्रत्ययग्रहणपरिभाषा, अर्थवद्ग्रहणपरिभाषा च न प्रवर्तते इति लुनाति, चूडाल इत्यादौ तिबाद्यादेशः कुतो न भवतीति चेत् ? । अत्राहुः—'लः कर्मणी'ति सूत्रे निर्दिष्टानां कर्त्राद्यर्थानामनुवृत्तेः कर्त्राद्यर्थे विहितस्य लकारस्य ग्रहणमिति । अतोऽपि तिबाद्यादेशानुवादेन कर्त्राद्यर्थविधिरिति कल्पना निरस्ता । लस्थानिकतिबादीनां कर्त्राद्यर्थे विहितस्य लस्य तिबादिविधानमित्यन्योन्याश्रयापत्तेः । यद्वा धातोरित्यधिकाराद्धातोर्विहितस्यैव लस्येह ग्रहणमिति नोक्ताऽतिप्रसङ्गः । लस्येत्संज्ञा तु न भवति, फलाऽभावात् । न च लित्स्वरः फलं, णलो लित्त्वेन तदभावस्य ज्ञापनात् । नाप्यश्रवणमेव फलं, तदुच्चारणस्यानर्थक्यापत्तेः, आदेशविधिनैवाऽश्रवणलाभाच्च । लस्य तिबादिस्थानित्वाभ्युपगमे तु 'लः परस्मैपद'मित्यादि स्वरसतः सङ्गच्छत इति दिक् ।

तिप्तस्झि । समाहारे द्वन्द्वः। इट्टकार आगमलिङ्गं न भवति, सप्तदशभिरादेशैः समभिव्याहारात्। किंतु

बा.]प्रसङ्गः।तिप्तस् ।तिप्, तस्, झि, सिप्, थस्, थ, मिप्, वस्, मस्, त, आताम्, झ, थास्, आथाम्, ध्वम्, इड्, वहि, महिङ् । एषां समाहारद्वन्द्वात्प्रथमैकवचनम् । लस्येति स्थानषष्ठ्यन्तमधिकृतम् । तेन आदेश इति लभ्यते।

शे.]ल इति उच्चारणार्थोऽकारेण जातौ प्रथमैकवचनान्तम्, लस्येत्येतत्स्वरसात्।तिप्तस्झि।सौत्रत्वाद्विर्विभक्तिकानुकरणत्वाद्वा 'थासाथां' 'तस्झि'इत्यादौ रुत्वं न । तिबादीनां पित्त्वं गुणार्थं स्वरार्थञ्च। आदेशैः साहचर्याच्चाऽऽगमत्वमिटः।

**स्तांझथासाथांध्वमिड्वहिमहिङ्** ।३।४।७८। एतेऽष्टादश लादेशाः स्युः ।

**लः परस्मैपदम्**।१।४।९९। लादेशाः परस्मैपदसंज्ञाः स्युः। **तङानावात्मनेपदम्**।१।४।१००। तङ् प्रत्याहारः, [तादिनवकं] शानच्कानचौ चैतत्संज्ञाः स्युः । पूर्वसंज्ञापवादः ॥ **अनुदात्तङित आत्मनेपदम्** ।१।३।१२।अनुदात्तेत,उपदेशे यो ङित्तदन्ताच्च धातोर्लस्य स्थाने आत्मनेपदं स्यात्॥ **स्वरितञितः कर्त्रभिप्राये**

त.]'इटोऽ'दिति विशेषणार्थः । 'एर'दित्युच्यमाने एधेवहि एधेमहीत्यत्रापि स्यात्, वर्णग्रहणे प्रत्ययग्रहणाऽर्थवद्ग्रहण-परिभाषयोरप्रवृत्तेः । केचित्तु-'इटोऽ'दित्यत्र लिङ इत्यनुवर्तनाल्लिङादेशस्येवर्णस्येति सामानाधिकरण्येन व्याख्याने एधेवहि एधेमहीत्यादावतिप्रसङ्गो नास्त्येव । न हि तत्र इकारमात्रमादेशो भवति । तेन 'इटोऽ'दित्यत्र टकारः स्पष्टप्रतिपत्त्यर्थ एवेत्याहुः । तच्चिन्त्यम् । इकारस्य विशेषणत्वे विशेषणेन तदन्तग्रहणादवर्णान्तस्य लिङोऽत्स्यादित्यर्थ-प्रसत्त्या उक्तातिप्रसङ्गस्य तदवस्थत्वात् । वहि-महीत्यस्यापि स्थानिवत्त्वेन लिङ्त्वात् । महिङो ङकारस्तिङ् तङिति प्रत्या-हारार्थः । स च समुदायानुबन्धो न त्ववयवानुबन्धो, व्याख्यानात् । तेनेषेः कर्मणि आशीर्लिङि एषिषीमहीत्यत्र गुण-निषेधो न, तथा च वृश्चतेः पृच्छतेश्च कर्मणि लिटि वव्रश्चिमहे पप्रच्छिमहे इत्यत्र 'ग्रहिज्ये'ति संप्रसारणं न ।

**तङानौ** । लस्येत्यस्यानुवृत्तेर्लादेश एवाऽऽनो गृह्यते इत्याशयेनाह-**शानच्कानचौ चेति**। तेन परस्मै-पदिभ्योऽपि 'ताच्छील्यवयोवचने'ति चानश्भवत्येव।'कतीह निघानाः'॥**अनुदात्तङितः** । अनुदात्तश्च ङश्च अनुदात्तङौ, तौ इतौ यस्य सोऽनुदात्तङित् । द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकं संबध्यते । तत्रानुदात्तांशे तदन्तविधेः फलाऽभावा-दंशान्तर एव तदन्तग्रहणमित्याशयेनाह-**अनुदात्तेत इत्यादि** । 'उपदेशेऽजनुनासिक' इत्यतोऽनुवृत्तमुपदेशग्रहणमपि ङिदंश एव संबध्यते, नान्यत्र, अव्यभिचारात्तदाह-**उपदेशे यो ङिदिति** । विशेष्यमन्तरेण तदन्तविधिरिह दुर्लभ इत्यत आह-**धातोरिति** । **लस्येति** । नन्विहाऽनुवृत्तेरभावादुभयमपि दुर्लभं, 'भूवादयः' इति सूत्रान्मण्डूकप्लुत्यानु-

बा.]फलितमाह-**एत इति** । तसादौ रुत्वाऽभाव आर्षः। तिबादौ पकारानुबन्धयोजनं तु द्वेष्टीत्यादौ सार्वधातुकमपिदिति ङित्त्वनिवृत्त्यर्थम् । तदुदाहरणेषु स्पष्टीभविष्यति । **लः पर** । 'ल' इति स्थानषष्ठी । 'आदेश' इत्यध्याहार्यम् । तदाह-**लादेशा इति । तङानौ** । तङ् च आनश्चेति द्वन्द्वः । **प्रत्याहार इति** । 'त आतामिति तशब्दमारभ्य महिङिति ङकारेणे'ति शेषः । तदाह-**तादिनवकमिति** । इह पूर्वसूत्राल्ल इत्यनुवर्तते । ततश्च आनग्रहणेन शान-च्कानचावेव गृह्येते, न तु 'ताच्छील्यवयोवचनशक्तिषु चान'शिति विहितश्चानशपि, तस्य लादेशत्वाऽभावात् । तेन परस्मैपदिभ्योऽपि चानश् सिध्यति-निघ्नाना इत्यादौ । तदाह-**शानच्कानचौ चेति । एतत्संज्ञानीति** । आत्मनेपदसंज्ञकानीत्यर्थः । **पूर्वसंज्ञेति** । परस्मैपदसंज्ञापवाद इत्यर्थः । एवं च तिबादिनवके परस्मैपदसंज्ञा पर्यवस्यति । अथ कस्माद्धातोः परस्मैपदं, कस्मादात्मनेपदमित्याकाङ्क्षायामाह-**अनुदात्तङितः** । अनुदात्तश्च ङ्च अनुदात्तङौ । तावितौ यस्य सः-अनुदात्तङित् । तस्मात्-अनुदात्तङितः । द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकं सम्बध्यते । अनुदात्तेतो ङितश्चेति लभ्यते । 'उपदेशेऽजनुनासिक इ'दित्यस्मान्मण्डूकप्लुत्या उपदेश इत्यनुवृत्तं ङित इत्यनेन सम्बध्यते, नत्वनुदात्तेत इत्यनेन । उपदेशादन्यत्र अनुदात्तस्येत्संज्ञाया अप्रसक्तत्वेनाऽव्यभिचारात् । 'भूवादयो धातव' इत्यस्मान्मण्डूकप्लुत्या 'धातव' इत्यनुवृत्तं पञ्चम्या विपरिणतमनुदात्तेता ङिता च विशेष्यते । तत्रानु-दात्तेदंशे तदन्तविधेः प्रयोजनाऽभावान्ङिदंशे तदन्तविधिः । तदाह-**अनुदात्तेत इत्यादिना । लस्य स्थान इति** । आत्मनेपदग्रहणलभ्यमिदम् , तिङां लादेशत्वनियमात् । उपदेशे किम् ? । चुकुटिषति । अत्र 'गाङ्कुटादिभ्य' इति सन आतिदेशिकमेव ङित्त्वम् , नत्वौपदेशिकम् । धातोः किम् ? । अदुद्रुवत् । अत्र 'णिश्री'ति चङन्तान्नात्मनेपदम् । ङिदंशे तदन्तविध्यभावे तु 'बोभूयते' इत्यादौ 'सनाद्यन्ता' इति धातुसंज्ञकायङन्तादात्मनेपदं न स्यात् । 'ङित' इत्येवोक्तौ यङो ङित्त्वेऽपि तद्वन्तस्य धातोर्ङित्त्वाऽभावादात्मनेपदं न स्यात् । **स्वरितञितः** । स्वरितश्च ञ् च स्वरितञौ,

शे.]एषां स्थानिवद्भावेन प्रत्ययत्वे सिद्धेऽपि देशांशे निराकाङ्क्षत्वेऽपि चाऽविरोधात् 'प्रत्ययः' 'परश्चे'ति 'आद्युदात्तश्चे'ति च सम्बध्यत एव । अत एवैतत्सूत्रविधेय-तादिविषये 'प्रत्ययसञ्ज्ञासन्नियुक्तमाद्युदात्तत्व'मिति 'आद्युदात्तश्च' इति सूत्रे भाष्ये उक्तम् । 'ल' इत्यादेशापेक्षया षष्ठीत्याह-**लादेशा इति** । सिजादयस्तु च्लेर्विशिष्टस्योद्देशेन विहिता न लमात्रोद्देशेनेति न तेषामत्र ग्रहणम् । अस्याऽऽकडारत्वेऽपि शत्रादौ सावकाशां परस्मैपदसञ्ज्ञां पुरुषसञ्ज्ञा न बाधते, 'सिचि वृद्धिः परस्मैपदेषु' इत्यादिलिङ्गात् । एकसञ्ज्ञाधिकारादेवात्मनेपदपरस्मैपदसञ्ज्ञयोर्बाध्यबाधकभावः । शेषपदार्थ-ज्ञानायात्मनेपदविधायकान्याह-**अनुदात्तङित इति । तदन्ताच्चेति** । तेन यङन्तादात्मनेपदसिद्धिः । यङादेर्ङित्त्व-मादाय तत्सिद्धावपि यङाद्यन्तसमुदायस्य तङ्निरूपिताङ्गत्वाऽनापत्तावडाद्यव्यवस्थापत्तिरिति **केचित्** । चङाद्यन्ते तु न,

क्रियाफले ।१।३।७२। स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले । शेषात्कर्तरि परस्मैपदम् ।१।३।७८। आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात् ॥ तिङस्त्रीणि त्रीणि प्रथम-

त.]वृत्तस्य 'धातव' इत्यस्य विभक्तिविपरिणामात्कथंचिद्धातोरिति पदे लब्धेऽपि लस्येत्येतन्न लभ्यत इति चेत्। अत्राहुः— 'इको झ'लित्यत्र सनां धातोरिवेहात्मनेपदेन लकारधात्वोराक्षेपो बोध्यः, तिङां लादेशत्वाल्लस्य च धातोर्विधानादिति । उपदेश इति किम् ? । चुकुटिषति । 'गाङ्कुटादिभ्यः' इति सन आतिदेशिकं ङित्वम् । धातोः किम् ? । चङ्भ्यां माभूत् । अदुद्रुवत् । अवोचत् । ननु लावस्थायामेव वृतादिभ्यः 'स्यतासी' इत्यादिना स्यप्रत्यये कृते व्यवधानादात्मनेपदपरस्मैपदरूपनियमाऽप्रवृत्तावपि लकारसामान्याश्रयत्वेनान्तरङ्गत्वात्स्यप्रत्ययात्पूर्वमेव लस्य तिबादिषु सत्सु पक्षे परस्मैपदं पक्षे चात्मनेपदं सिध्यत्येवेति 'वृद्भ्यः स्यसनो'रिति सूत्रे स्यग्रहणं व्यर्थं [स]त्तेनैव स्यग्रहणेन 'विकरणेभ्यो नियमो बलीया'निति ज्ञापितम् । तेनानुदात्तेत्त्वाद्वर्तिष्यत इत्येवं नित्यमात्मनेपदे प्राप्ते 'वृद्भ्यः स्यसनो'रिति परस्मैपदमपि पक्षे भवति । तथा च विकरणेभ्यो नियमस्य बलीयस्त्वाच्चङ्ोर्न दोषः, विकरणात्प्रागेव परस्मैपदप्रवृत्तेरिति चेत् । सत्यम् । स्यग्रहणं विकरणव्यवधानेऽपि नियमप्रवृत्तिं ज्ञापयतीति पक्षे चङ्ोर्दोषः स्यादेव । अयं च पक्षः 'शदेः शितः' इति सूत्रे भाष्यकैयटयोः स्पष्टः । किं च तदन्तविधिलाभार्थमपि धातुग्रहणमावश्यकं । 'धातोरेकाच' इत्यादिना यङ् । बोभूयते । 'ऋतेरीयङ्' । ऋतीयते । शेते ह्नुते इत्यत्र तु व्यपदेशिवद्भावेन ङिदन्तत्वम् । 'नमोवरिवश्चित्रङ' इति क्यचि चित्रीयते इत्येतत्कथमिति चेत् । अत्राहुः—अवयवेऽचरितार्थो ङकारः क्यजन्तस्य विशेषणं भवति । तथा च समुदायानुबन्धो ङकार इति व्यपदेशिवद्भावेनैव ङिदन्तत्वं बोध्यमिति । स्वरितञितः । पूर्ववदिच्छब्दः प्रत्येकं संबध्यते । कर्तारमभिप्रैति गच्छतीति कर्त्रभिप्रायम् । 'कर्मण्यण्' । धातोरिति । धातोर्लस्येत्यर्थः । लकारधात्वोराक्षेपः पूर्ववद्बोध्यः ॥ तिङस्त्रीणि त्रीणि । तिङः षट् त्रिकाः, संज्ञास्तु तिस्र इति यथासङ्ख्यं न प्राप्नोतीत्यत आह—

बा.] तौ इतौ यस्य तस्मादिति बहुव्रीहिः। इच्छब्दः प्रत्येकं सम्बध्यते । तदाह—स्वरितेतो ञितश्चेति । धातोरित्यनन्तरं 'लस्य स्थाने' इति शेषः । कर्तारमभिप्रैति गच्छतीति 'कर्त्रभिप्रायम्' । कर्मण्यण् । तदाह—कर्तृगामिनीति । एवं च 'होता याज्यया यजती'त्यादौ यागफलस्य स्वर्गस्य यजमानगामित्वेन होतृगामित्वाऽभावान्नात्मनेपदम् । तथा 'वेतनेन यज्ञदत्तभृतो देवदत्तः पचती'त्यत्रापि पाकफलस्य भोजनस्य पक्तृगामित्वाऽभावान्नात्मनेपदम् । दक्षिणादिलाभस्तु न फलम् । लोकतो वेदतो वा यदुद्देशेन क्रियाप्रवृत्तिस्तस्यैवात्र क्रियाफलशब्देन विवक्षितत्वात् । कर्तृगामिफलकक्रियावृत्तेर्धातोरित्यर्थः । आत्मनेपदं तु धात्वर्थफलस्य कर्तृगामित्वं द्योतयतीत्यलम् । शेषात्कर्तरि । 'अनुदात्तङित' इति 'स्वरितञित' इति चोक्तादात्मनेपदविषयादन्यः शेषः । तदाह—आत्मनेपदनिमित्तहीनादिति । अनेन भूधातोः कर्तरि लस्य परस्मैपदं सिद्धम् । तत्र तिबादिनवके युगपत्पर्यायेण एकद्वित्र्यादिकतिपयरूपेण वा प्राप्ते 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' 'अस्मद्युत्तमः' 'शेषे प्रथमः' इति व्यवस्थां वक्ष्यन् प्रथमादिसंज्ञां तावदाह—तिङस्त्रीणि त्रीणि । तिङः षट् त्रिकाः, संज्ञास्तु तिस्र इति यथासङ्ख्याऽसम्भवादेकैकस्य त्रिकस्य तिसृषु संज्ञासु

शे.]मण्डूकप्लुत्या 'भूवादयः' इत्यतो 'धातव'इत्यस्य षष्ठ्या विपरिणतस्यानुवृत्तेरित्ति भाष्ये स्पष्टम्।स्वरितञितः।कर्तारमभिप्रैतीति तत्–कर्त्रभिप्रायम् । कर्मण्यण् । अभिप्रैतिर्गत्यर्थः । तदाह-कर्तृगामिनीति । क्रियाफलञ्च श्रुत्या लोकतो वा यदुद्देशेन क्रियाप्रवृत्तिरवगता तदेव, न दक्षिणादिरूपम् । तच्च पच्यादौ भोजनादि लोकतोऽवगतं, यज्यादौ स्वर्गादि श्रुत्याऽवगतम् । कर्तृगामिफलकक्रियावृत्तेर्धातोरित्यर्थः। तदर्थद्योतकञ्चात्मनेपदमेव। यजमानस्य पाकयागादिसामग्रीसङ्घटनरूपं संविधानं 'यजमानो यजते' इत्यादौ धात्वर्थः । न चैवं णिजापत्तिरिति वाच्यम्, संविधानपूर्वकप्रेरणाया एव णिजर्थत्वात् । यत्र सति 'प्रयोजक' इत्युच्यते । न हि संविधानमात्रेण तथोच्यते । 'संविधानं कुर्वन्नपि न यावत् प्रेरयति न तावत्प्रयोजक इत्युच्यते' इति हेलाराजोक्तेः । 'भिक्षा वासयती'त्यादावपि प्रयोजकत्वारोपो बोध्यः । 'तूष्णीमासीनो यस्तत्समर्थान्याचरति सोऽपि वासादिप्रयोजकः'इति भाष्यात् । तत्समर्थाचरणमात्रेण तत्प्रयोजकत्वारोप इति तदर्थः । तत्समर्थाचरणपूर्वकप्रेरणा तत्र तत्र धात्वर्थः । तदुक्तं हेलाराजेन–'यः स्वर्गादिफलार्थं भृत्या इतरं व्यापारयति स्वयञ्च प्रतिविधानमारभते तत्रैव यजमानादौ कर्तर्यात्मनेपदमिष्यते'इति । 'केषाञ्चित्कर्त्रभिप्राये णिचा सह विकल्पते । आत्मनेपदम्' इति हरिकारिकाव्याख्यावसरे हेलाराज आह''–णिच् प्रेरणावाची । 'तत्प्रयोजको हेतुश्च'इति सूत्रात् । अत एव तदाश्रयस्य कर्तृत्वं 'पाचयति देवदत्तो यज्ञदत्तेन' इत्यादौ । एवञ्च भिन्नविषयत्वाद्विकल्पोक्तिरसङ्गता । किं च सामान्यविहितणिचो धातुविशेषाद्विहितेनात्मनेपदेन बाध एवोचितः। एतच्च केषाञ्चिदित्यनेन सूचित''मिति । 'क्रीणीष्व' 'वपते'इत्यादिप्रयोगाणां तेनैवं गतिरुक्ता–' क्रीणीष्वात्मानमिति विनतां कद्रूराह । तत्र प्रत्युपकारं विना दास्यान्मुक्त्य-

**मध्यमोत्तमाः।१।४।१०१। तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः॥ तान्येकवचनद्विवचनबहुवचनान्येकशः ।१।४।१०२। लब्धप्रथमादिसंज्ञानि तिङ्स्त्रीणि त्रीणि वचनानि प्रत्येकमेकवचनादिसंज्ञानि स्युः॥ युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ।१।४।१०५। तिङ्वाच्यकारकवाचिनि युष्मदि [उपपदे]**

त.]**उभयोरिति**। परस्मैपदमात्मनेपदमिति चानुवर्तते। तेन पदद्वये प्रत्येकं त्रयस्त्रिका इति यथासङ्ख्यं संज्ञाः प्रवर्तन्त इति भावः॥ ननु प्रथमश्च प्रथमश्च प्रथमौ, मध्यमश्च मध्यमश्च मध्यमावित्येवं कृतैकशेषाणां प्रथमादीनां, प्रथमौ च मध्यमौ च उत्तमौ च प्रथममध्यमोत्तमा इति द्वन्द्वेऽभ्युपगते त्रिकद्वयस्य त्रिकद्वयस्य यथासङ्ख्यं प्रथममध्यमोत्तमसंज्ञाः स्युर्न त्वेकैकस्येति 'णलुत्तमो वे'ति सूत्रं विरुध्येत, णल उत्तमसंज्ञकत्वाऽलाभात्; ततश्च 'प्रथममध्यमोत्तमा' इत्यत्र कृतद्वन्द्वानां प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमाश्चेत्येकशेष आश्रीयताम्, तथाहि सति सञ्ज्ञा अपि षडिति परस्मैपदात्मनेपदग्रहणानुवृत्तिक्लेशं विनैवेष्टसिद्धिरिति चेत्। मैवम्। एकशेषाश्रयणे गौरवाद्वैयर्थ्याच्च त्वयापि परस्मैपदात्मनेपदग्रहणमनुवर्त्यमेव। अन्यथा शतृक्वस्वोः सावकाशा परस्मैपदसंज्ञा प्रथमादिसंज्ञया बाध्येत। ततश्च क्राम्यति क्रामतीत्यादौ 'क्रमः परस्मैपदेषु' इति दीर्घो न स्यात्। 'आक्राम'न्नित्यादौ तस्य सावकाशत्वात्। यदि तु 'परस्मैपदाना'मिति विहितस्य णलो 'णलुत्तमो वे'ति णिरवविकल्पविधानाज्ज्ञापकात्परस्मैपदसंज्ञा प्रथमादिसंज्ञया न बाध्यत इति ब्रूषे, तर्हि सुतरां प्रतिपत्तिगौरवम्॥ **तान्येकवचन। 'तानी'त्यस्य व्याख्यानं–लब्धेत्यादि**। अन्वर्थैकसंज्ञाधिकारात्प्रथमादिसंज्ञानामेकवचनादिसंज्ञानां च पर्यायः स्यात्। इष्टापत्तौ तु अस्तेर्लोटो 'मेर्नि'रिति कृते एकत्वविवक्षायामुत्तमसंज्ञाऽभावात् 'आडुत्तमस्ये'त्यस्याऽप्रवृत्त्या असानीत्यादिप्रयोगोऽपि साधुः स्यादिति भावः॥ **प्रत्येकमिति**। यत्तु प्राचा 'एकैकश'इत्युक्तं, तदयुक्तम्। शसैव वीप्साया उक्तत्वेन द्विर्वचनाऽयोगात्, 'येन नाप्राप्तिन्यायेन द्विर्वचनापवादः श'सिति सिद्धान्तात्। तथा 'सुपः' इति सूत्रेऽप्येकैकश इति प्राचोक्तमयुक्तमेव। एतच्च मनोरमाग्रन्थानुरोधेनोक्तम्॥ **अन्ये तु** एकैकमेवैकैकशः, स्वार्थे शस्, न त्वत्र वीप्सायाम्। न च स्वार्थे यः शस् स आकरग्रन्थान्नावगम्यत इति वाच्यम्, 'एकां कपिलामेकैकशः सहस्रकृत्वो दत्त्वे'ति भाष्यात्, शसन्तस्य प्रत्येकमित्यर्थकत्वेन कैयटेन व्याख्यानाच्च स्वार्थिकस्यापि शसोऽवगम्यमानत्वात्। ततश्चैकैकश इति प्राचोक्तमयुक्तमिति यदुक्तं तदेवाऽयुक्तमित्याहुः॥**युष्मदि। समानाधिकरणे** इत्यस्य व्याख्यानं–**तिङ्वाच्यकारकवाचिनीति**। भिन्नप्रवृत्तिनिमित्तानां

बा.]प्राप्तास्वाह–**तिङ उभयोः पदयोरिति**।'लः परस्मैपद'मित्यतः परस्मैपदमिति,'तङानावात्मनेपद'मित्यत आत्मनेपदमिति चानुवृत्तं षष्ठ्यन्ततया विपरिणम्यते। ततश्च परस्मैपदात्मनेपदयोरुभयोरपि प्रत्येकं त्रयस्त्रिकाः सन्तीति यथासङ्ख्यं प्रथमादिसंज्ञाः प्रवर्तन्त इति भावः। प्रथमादिषु पुरुषसंज्ञा तु प्राचीनाचार्यशास्त्रसिद्धेति बोध्यम्।

अथ प्रथमादिपुरुषेषु एकैकस्मिन्पुरुषे प्रत्ययत्रिकात्मके युगपत्पर्यायेण वा एकैकप्रत्यये प्राप्ते 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचन'मिति व्यवस्थार्थमेकवचनादिसंज्ञामाह–**तान्येक**। तच्छब्देन पूर्वसूत्रोपात्तानि प्रथममध्यमोत्तमाख्यानि तिङ्स्त्रीणि त्रीणि परामृश्यन्ते। तदाह–**लब्धप्रथमादिसंज्ञानीति**। **'एकश'**इत्यस्य विवरणं–**प्रत्येकमिति**। 'सङ्ख्यैकवचनाच्च वीप्साया'मिति शसिति भावः। **युष्मदि**। उपोच्चारितं पदमुपपदम्। युष्मदि समीपोच्चारिते सतीत्यर्थः। समानमेकमधिकरणं वाच्यं यस्येति विग्रहः। सामानाधिकरण्यं च युष्मदस्तिङः स्थानीभूतलकारेण विवक्षितम्, 'लः परस्मैपद'मित्यतस्तदनुवृत्तेः। तथा च फलितमाह–**तिङ्वाच्यकारकवाचिनि युष्मदीति**। स्थानं–प्रसङ्गोऽस्यास्तीति स्थानी, तस्मिन्। प्रसक्ते सतीत्यर्थः। प्रसङ्गश्च तदर्थावगतौ सत्यां वक्त्रा अप्रयोग एव भवति। तथा च 'स्थानिनी'त्यनेन उपपदभूते युष्मदि प्रयोगं विना स्वार्थं बोधयति सतीत्यर्थः पर्यवस्यति। तदाह–**अप्रयुज्य-**

शे.]सम्भवात् प्रत्युपकारस्य च स्वाऽसाध्यत्वात्पुत्रसंविधानं गम्यते, न तु स तदर्थः। एवं 'केशश्मश्रु वपते' इत्यादावपि स्वस्याऽसामर्थ्येन सामर्थ्यात्कर्तुः संविधानं गम्यते न तु तदर्थः। एवमन्यत्राप्यूह्य'मिति। 'स्वामिदासौ पचेते' इत्यादौ स्वामिधर्मस्य दासे आरोपादात्मनेपदम्। दासधर्मस्य तु न स्वामिन्यारोपः। उत्तमे निकृष्टधर्मारोपस्य प्रयोजनं विना स्वरसतोऽप्रतीतेरिति न कदाचित्तत्र परस्मैपदम्। एतच्च **मञ्जूषायां** विस्तरेण निरूपितम्। 'कमलवनोद्घाटनङ्कुर्वते'-इत्यादौ तु सुगन्धाघ्राणादिरूपविकासफलारोपः किरणेष्विति न दोष इत्यन्यत्र निरूपितम्। **युष्मद्युपपदे**। सामानाधिकरण्यम्–एकार्थबोधकत्वम्। तच्च प्रत्यासत्त्या लकारेणैवेत्याशयेनाह–**तिङ्वाच्येति**। अत्र तिङ्ग्रहणं तत्स्थानिलकारे लाक्षणिकम्। एतद्विधेयस्य तिङ एतद्वाक्ये उद्देश्यत्वाऽसम्भवात्। उपोच्चारितं पदम्–उपपदं, न तु कृत्रिमं, तस्येहानुपयोगात्, अप्राप्तेश्च। स्थानं–प्रसङ्गः। तद्वति-स्थानिनीत्यर्थः। स च तदर्थावगतौ सत्यां वक्त्राऽप्रयोग एवेत्यभिप्रेत्याह–

अप्रयुज्यमाने प्रयुज्यमाने च मध्यमः स्यात् ॥ **प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च** ।१।४।१०६। मन्यधातुरुपपदं यस्य धातोस्तस्मिन्प्रकृतिभूते सति मध्यमः स्यात्परिहासे गम्यमाने, मन्यतेस्तूत्तमः स्यात्, स चैकार्थस्य वाचकः स्यात् ॥ **अस्मद्युत्तमः** ।१।४।१०७। तथाभूतेऽस्मद्युत्तमः स्यात् ॥ **शेषे प्रथमः** ।१।४।१०८।

त. ] शब्दानामेकस्मिन्नर्थे वृत्तिः—सामानाधिकरण्यम्। स्थानिनीत्यस्य व्याख्यानम्—**अप्रयुज्यमान इति**। समानाधिकरणे किम् ? । त्वां पश्यति, त्वया क्रियते, तुभ्यं ददाति ॥ **प्रहासे** । 'मन्योपपदे' इति सप्तम्यन्तस्यानुगुणत्वेन व्याचष्टे—**तस्मिन्प्रकृतिभूते सतीति** । तस्माद्धातोर्लस्य स्थान इत्यर्थः । **तथाभूते इति** । तिङ्वाच्यकारकवाचिनि प्रयुज्य-

बा. ] **मान इति**। 'स्थानिनी'त्युक्तौ युष्मद्युपपदे प्रयुज्यमान एव मध्यमः स्यात्। ततश्च राम पाहीत्यादावव्याप्तिः स्यात्। अपिना लब्धमाह—**प्रयुज्यमानेऽपीति** । 'युष्मद्युपपदे स्थानिनी'त्येवोक्तौ राम त्वं पाहीत्यादौ युष्मत्प्रयोगे मध्यमो न स्यादतोऽपिग्रहणमिति भावः । अत्वं त्वं संपद्यत इत्यत्र तु न मध्यमपुरुषः, तत्र युष्मच्छब्दस्य गौणत्वात्। 'भवानागच्छती'त्यादौ भवच्छब्दयोगे तु न मध्यमपुरुषः, युष्मच्छब्दस्य संबोध्यैकविषयत्वात्, भवच्छब्दस्य तु स्वभावेन संबोध्याऽसंबोध्यसाधारणत्वादित्यलम्। **प्रहासे च** । वाक्यद्वयमिदं सूत्रम्। 'प्रहासे च मन्योपपदे' इति प्रथमं वाक्यम्। मध्यम इत्यनुवर्तते । मनधातुः श्यन्विकरण उपपदं यस्येति बहुव्रीहिः । मन्यपदश्रवणबलाद्धाताविति विशेष्यं लभ्यते । तदाह—**मन्यधातुरित्यादिना** । **तस्मिन्प्रकृतिभूते सतीति**। तस्माद्धातोर्लस्य स्थाने इत्यर्थः। **मध्यमः स्यादिति** । 'अस्मद्युपपदे' इति शेषः । अस्मद्युत्तमं इत्युत्तरसूत्रात्तदनुवृत्तेः । एवंच उत्तमपुरुषापवादोऽयं मध्यमविधिः । 'मन्यतेरुत्तम एकवच्चे'ति द्वितीयं वाक्यम्। तद्व्याचष्टे—**मन्यतेस्तूत्तमः स्यादिति** । 'युष्मद्युपपदे' इति शेषः । पूर्वसूत्रात्तदनुवृत्तेः । **स चेति** । सः = मन्यतेरुत्तमपुरुषः, द्वित्वबहुत्वयोरपि एकवचनं लभत इत्यर्थः । मध्यमोत्तमयोर्व्यत्यासार्थमिदम्। एतत्सर्वमनुपदमेवोदाहरणे स्पष्टीभविष्यति । **अस्मद्युत्तमः** । **तथाभूत इति** । तिङ्वाच्यकारकवाचिनि अप्रयुज्यमाने प्रयुज्यमाने चेत्यर्थः । **शेषे** । उक्तान्मध्यमोत्तमविषयादन्यः शेषः । तदाह—

शे. ] **अप्रयुज्यमाने इति** । अपेरर्थमाह—**प्रयुज्यमाने चेति** । 'त्वद्भवति' 'अत्वं त्वं सम्पद्यते' इत्यादौ तु न, त्वंशब्दस्य गौणत्वात्। 'त्वत्कल्प' इत्यादौ कालान्तरदृष्टगुणस्यैवेषदसमाप्तौ प्रत्यय इति 'त्वत्कल्पो भवसी'त्येव । ननु तिङ्वाच्यकारकवाची त्वत्कल्पशब्दो, न स युष्मच्छब्दः । न च युष्मदीत्यस्य युष्मद्वतीत्यर्थे सैत्री लक्षणेति वाच्यम्, 'अतित्वं भवती'त्यादावपि मध्यमापत्तेः । स्पष्टञ्चेदं **भाष्ये** इति चेन्न । 'युष्मदि साधने इत्येवं भविष्यति'इति **भाष्ये** एव समाधानात्। युष्मदर्थेन यत्र लान्तस्य सामानाधिकरण्यं तत्र मध्यम इत्यर्थेन तल्लाभ इति **कैयटः** । लबोध्यार्थेन समानाधिकरणयुष्मदर्थबोधकशब्दे उपपदे इत्यादिक्रमेणार्थः । सामानाधिकरण्यञ्च तदर्थप्रवृत्तिनिमित्तयोर्बोध्यम्। सलिङ्गस्य चेतनाऽचेतनसाधारणस्य भवदर्थत्वात्, युष्मदश्चाऽलिङ्गचेतनैकविषयत्वाद्भवच्छब्दयोगे न मध्यमः । सम्बोधनार्थो मध्यमे प्रतीयते । युष्मदश्च सम्बोधन एव प्रथमेति तु न युक्तम्। त्वं पचसीत्यादौ तदप्रतीतेः । क्रियाविनियोगफलकाभिमुखीकरणस्यैव सम्बोधनत्वात्। तदुक्तं **हरिणा**—

'प्रत्यक्काऽपरभावश्चेत्युपाधी कर्तृकर्मणोः । तयोः श्रुतिविशेषेण द्योतकौ मध्यमोत्तमौ ॥ १ ॥
सदसद्वाऽपि चैतन्यमेताभ्यामवगम्यते । चैतन्यभागे प्रथमः पुरुषो न तु वर्तते' ॥ २ ॥ इति ॥

एवञ्च मध्यमोत्तमाभ्याञ्चैतन्ययुक्ते कर्तृकर्मणी बोध्येते। **प्रत्यक्त्वं**—प्रयोक्तुरहङ्कारानास्पदचेतनत्वम्। **अपरत्वम्**—तदहङ्कारास्पदचेतनत्वम्। तत्र कर्मविशेषणतया तयोः प्रतीतिरिति**ङै**वेति **श्रुतिविशेषेणे**त्युक्तम्। शृणोत ग्रावाण इत्याद्यर्थम् **असदिति** । अनभिव्यक्तमित्यर्थ इति **मञ्जूषायां** विस्तरः । अतित्वं भवतीत्यादौ अतिक्रमितुः प्राधान्यान्न मध्यम इति बोध्यम् । **प्रहासे च** । पूर्वोत्तरसूत्रयोरपवादः । 'मन्योपपदे' इति बहुव्रीहिः । प्रकृतिभूतश्च मन्यतिकर्तृकर्तृक एव, प्रत्यासत्तेः, समानाधिकरणे इत्यनुवृत्तेश्च । मध्यमोत्तमयोर्व्यत्यासेन प्रयोगे प्राप्ते इदम्। अत्राद्ये वाक्ये 'अस्मद्युपपदे' इति, द्वितीये 'युष्मद्युपपदे' इति च संबध्यते । उत्तमार्थस्यैकत्वविधानात्तत्समानाधिकरणयुष्मच्छब्द एकवचनान्त एव । **अस्मदि** । आद्यन्तपदरहितं पूर्वसूत्रमनुवर्तते, तदाह—**तथाभूत इति** । युष्मदस्मदोः सामानाधिकरण्ये तु परत्वादुत्तम एव । 'अहञ्च त्वञ्च वृत्रहन् संयुज्यावहै' इति यथा । देवदत्तश्च त्वञ्चेत्येकशेषे 'युवां भवथ' इति मध्यम एव, युष्मदर्थसत्त्वेन शेषत्वाऽभावात्। एकशेषे शिष्टशब्दप्रवृत्तिनिमित्तेनैव लुप्तार्थबोधात्। उपयुक्ताऽसमभिव्याहृतस्योपयुक्तादन्यस्य शेषपदार्थत्वात्। स्पष्टञ्चेदं सर्वं **भाष्ये** । एवञ्च तत्र वाक्येऽपि भवथ इत्येव । भवच्छब्देन युष्मदस्मदोः सहविवक्षायां पूर्वशेष एवेति मध्यमोत्तमावेव । परस्य भवतः शेषस्तु न, अनभिधानादिति **कैयटः** ।

मध्यमोत्तमयोरविषये प्रथमः स्यात् ॥ १ भू सत्तायाम् ॥ कर्तृविवक्षायां 'भू-ति'इति स्थिते ॥ **तिङ्शित्सार्वधातुकम्** ।३।४।११३। तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः ॥ **कर्तरि शप्** ।३।१।६८। कर्त्रर्थे सार्वधातुके परे धातोः शप् स्यात् । शपावितौ ॥ **सार्वधातुकार्द्धधातुकयोः** ।७।३।८४। अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात् । अवादेशः । भवति । भवतः ॥ **झोऽन्तः** ।७।१।३। प्रत्ययावयवस्य झस्या-

---

त.]मानेऽप्रयुज्यमाने चेत्यर्थः॥ **तिङ्शित्** । धात्वधिकारोक्ता इति किम् ?। हरीन् । शसः'सार्वधातुकमपि'दिति ङित्वे 'घेर्ङिती'ति गुणः स्यात्, लिहः श्रिय इत्यादिशसन्तेषु 'सार्वधातुके य'गिति यक्च स्यात् । केचित्तु वारिणी इत्यत्र नुमि कृतेऽपि लघूपधगुणः स्यादित्याहुः । तन्न । क्ङितीति निषेधात्, इगन्तत्वप्रयुक्तस्य नुमो गुणप्रयोजकत्वे सन्निपातपरिभाषाविरोधाच्च ॥ **कर्तरि शप्** । 'सार्वधातुके य'गित्यतः सार्वधातुक इत्यनुवर्तते, 'धातोरेकाचः' इति सूत्राद्धातोरिति च, तदाह-**कर्त्रर्थे इत्यादि** । **झोऽन्तः** । तकारादकार उच्चारणार्थः । 'आयनेयीनी'ति सूत्रात्प्रत्ययग्रहणमनुवर्तते न त्वादिग्रहम्, एकदेशे स्वरितत्वप्रतिज्ञानात् । तस्याप्यनुवृत्तौ तु 'शयान्तै'इति न सिध्येत् । शीङो 'लेटोऽडाटौ' इत्यन्तरङ्गत्वादन्तादेशात्प्रागाटि कृते झस्यादित्वाऽभावात् । तदेतदाह-**प्रत्ययावयवस्येति** । प्राचा तु प्रत्ययादेर्झस्येत्युक्तं, तदनेन प्रत्युक्तम् । इह मनोरमायामादिग्रहणं निवृत्तमित्युक्तं, तदापाततः, अन्यत्राऽप्रवृत्तस्यादिग्रहणस्य

---

बा.]**मध्यमोत्तमयोरविषय इति** । 'त्वमहं च पचाव' इत्यत्र तु परत्वादुत्तमपुरुष एव न तु मध्यमः ।'देवदत्तस्त्वं च पचथ' इत्यत्रापि न प्रथमपुरुषः, युष्मदस्सत्त्वेन शेषत्वाऽभावादित्यलम् । **भू सत्तायामिति** । 'वर्तते' इति शेषः । भ्वादिगणे प्रथमो धातुरयम् । तत्र 'भू' इत्येव गणे पाठः । अर्थनिर्देशस्त्वाधुनिक इति वक्ष्यते । यद्यपि सत्ता जातिः, न क्रिया, तथापि आत्मधारणं सत्तेत्युच्यते । स्वरूपेणाऽवस्थानमिति यावत् । **कर्तृविवक्षायामिति** । वर्तमानसत्तावृत्तेर्भूधातोः कर्तरि लटि आत्मनेपदनिमित्तहीनतया परस्मैपदे तिबादिनवके तत्रापि युष्मदस्मत्सामानाधिकरण्याऽभावात् प्रथमपुरुषत्रिके, तत्रापि कर्तुरेकत्वविवक्षायां तिपि सति, भू-ति इति स्थिते प्रक्रिया वक्ष्यत इत्यर्थः । तत्र सार्वधातुककार्यं वक्ष्यन्सार्वधातुकसंज्ञामाह-**तिङ्शित्** । धातोरित्यधिकृतं । तदाह-**धात्वधिकारोक्ता इति** । तेन 'हरी'-नित्यत्र शसः सार्वधातुकत्वं न, 'अन्यथा तिङ्शित्सार्वधातुक'मिति शसः सार्वधातुकत्वात्सार्वधातुकमपिदिति ङित्वे 'घेर्ङिती'ति गुणः स्यात् । **कर्तरि शप्** । 'सार्वधातुके य'गित्यस्मात्सार्वधातुक इत्यनुवर्तते । 'धातोरेकाचो हलादे'रित्यस्माद्धातोरिति । तदाह-**कर्त्रर्थे इत्यादिना** । तिङि परे धातोर्विहितानां प्रत्ययानां शबादीनां विकरणसंज्ञा प्राचीनाचार्यसिद्धा । **शपाविताविति** । शकारपकारौ 'लशक्वतद्धिते' इति 'हलन्त्य'मिति चेत्संज्ञकावित्यर्थः । ततश्च शपि शकारपकारयोर्लोपेऽकारमात्रं शिष्यत इत्यर्थः । भू-अ-ति-इति स्थिते-**सार्वधातुकार्द्ध** । 'इको गुणवृद्धी' इति परिभाषया 'इक' इत्युपस्थितेन अङ्गस्येत्यधिकृतं विशेष्यते । तदन्तविधिः । 'मिदेर्गुण' इत्यस्माद्गुण इत्यनुवर्तते । तदाह-**अनयोरित्यादिना** । तथा च ऊकारस्य गुण ओकारः । **अवादेश इति** । 'ओकारस्ये'ति शेषः । तथा च परिनिष्ठितं रूपमाह-**भवतीति** । **भवत इति** । कर्तृद्वित्वविवक्षायां भूधातोर्लस्तसादेशे शपि गुणेऽवादेशे सकारस्य रुत्वविसर्गाविति भावः । कर्तृबहुत्वविवक्षायां भूधातोर्लटो झीत्यादेशे शपि गुणेऽवादेशे च कृते-**झोऽन्तः** । झः-अन्त इतिच्छेदः । 'झ' इति षष्ठ्यन्तम् । आदेशे तकारादकार उच्चारणार्थः । 'आयनेयी'ति सूत्रात्प्रत्ययग्रहणमनुवर्तते, न त्वादिग्रहणमपि, अस्वरितत्वात् । अनुवृत्तं च प्रत्ययग्रहणमवयवषष्ठ्यन्तमाश्रीयते । तदाह-**प्रत्ययावयवस्येति** ।

---

शे.] **भू सत्तायां** । सत्तेहाऽऽत्मधारणम् ।'**सत्तायामि**त्यादेर्वर्त्तत इति शेषः। पूर्वं भूकथनं महाव्याहृतिस्मारकतया माङ्गलिकत्वात् । सत्तार्थनिर्देशोऽप्येवं, सत्ताख्यस्य परब्रह्मणः स्मरणात् । कर्मणः कर्त्रधीनत्वेन पूर्वं कर्तृप्रत्ययानाह-**कर्त्रिति** । धातोरिति पञ्चम्यन्तस्य पृथक्सूत्रस्याधिकारसामर्थ्यादाह-**धात्वधिकारेति** । **कर्त्रर्थे इति** । विकरणास्तु सति सम्भवे द्योतका इति भावः। अत्तीत्यादौ विकरणं विनाऽपि तत्प्रतीतेः । वस्तुतस्तिबादयोऽपि द्योतका एव, लकारार्थश्च क्रियायामेवाऽभेदेनान्वेति; गुणगुणिनोरिव क्रियातद्वतोरपि तादात्म्याङ्गीकारात् । अत एव **कैयटेन** 'युष्मदर्थस्य यत्र लन्तेन सामानाधिकरण्य'मित्युक्तम् । अन्यथा लेनेत्येव वदेदित्यन्यत्र निरूपितम् । ननु कर्त्तरीति व्यर्थं, भावकर्मणोस्तु यका बाधान्न दोषः, तद्विधौ हि भावकर्मणोरिति वर्त्तते इति चेन्न, 'दिवादिभ्यः' इत्यादावनुवृत्त्यर्थत्वात् । अन्यथाऽपवादविप्रतिषेधेन भावकर्मणोरपि तेभ्यः श्यन्स्यात् । यत्तु पुरस्तादपवादन्यायेन शप एव बाधक इति दिक् । **प्रत्ययावयवस्येति** । तेनोज्झितेत्यादौ न दोषः । 'सर्वे सर्वपदादेशा' इति न्यायेन तु झविशिष्टस्याऽन्तविशिष्ट आदेश इत्यर्थः । अत एवाऽछुवन्नित्यादावुपदेशिवद्वचनेनान्तरङ्गत्वादन्तिभावे कृते स्थानिवत्त्वेन परस्मैपदत्वादितो लोपे एकदेशविकृतन्यायेन ङित्वात्प्राप्तो जुस् धातोरित्यधिकारान्नेति **भाष्ये** स्पष्टम् । 'झेर्जु'सित्यत्र प्रक्रियालाघवाय विशिष्टे एव स्थानित्वं बोध्यम्।

ऽन्तादेशः स्यात् । 'अतो गुणे' । भवन्ति । भवसि । भवथः । भवथ ॥ **अतो दीर्घो यञि** ।७।३।१०१। अतोऽङ्गस्य दीर्घः स्याद्यञादौ सार्वधातुके परे। भवामि। भवावः। भवामः॥स भवति। तौ भवतः। ते भवन्ति। त्वं भवसि। युवां भवथः। यूयं भवथ। अहं भवामि। आवां भवावः। वयं भवामः॥ एहि, 'मन्ये

त.]निवृत्तत्वाऽयोगात्। 'निवृत्त'मित्यस्याननुवृत्तमित्यर्थ इति वा कथंचिद्व्याख्येयम्। यत्तु प्रत्ययादेरिति ग्रन्थसमर्थनाय व्याचक्षते—आडागमे कृते तत्सहितोऽपि प्रत्ययोऽस्तु नाम, न तु तत्सहित एव प्रत्यय इति नियमोऽस्तीति। तन्न। अवयवविनिर्मुक्तस्यावयवित्वाऽयोगात्। अन्यथा भूयास्तामित्यादौ तामादीनामिडागमापत्तेः। नन्वङ्गात्परस्य प्रत्ययस्येट्, यासुडन्तं तु नाङ्गमिति चेत्। 'आगमविनिर्मुक्तस्यापि प्रत्ययत्व'मिति वदतां मते भवामि भविष्यामीत्यादौ विकरणान्तस्येव तदादिग्रहणबलेन यासुडन्तस्याप्यङ्गताया दुर्वारत्वात्। किं च लविषीयेत्यत्र विशेषविहितत्वात्सीयुटि कृते लिङः स्थाने इट्, तस्यागमेनाऽऽदित्वविघातात्प्रत्ययाद्युदात्तत्वं न प्राप्नोतीत्याशङ्क्य प्रत्ययस्वरे कर्तव्ये आगमा अविद्यमानवदित्यतिदेशः 'आद्युदात्तश्चे'ति सूत्रे भाष्यादौ स्वीकृतः। न चैतत्केवलस्यापि प्रत्ययत्वे युज्यते। न च तन्मते आगमसहितस्यापि प्रत्ययत्वादिकारस्याप्युदात्तः स्यात्, तद्वारणाय 'प्रत्ययस्वरे कर्तव्ये' इत्यादिग्रन्थः स्वीकर्तव्य एवेति नास्त्येवाऽऽकरग्रन्थविरोध इति वाच्यम्, 'आगमा अनुदात्ताः' इति विशेषवचनेनागमस्याप्यनुदात्तत्वे कृते आद्युदात्तत्वस्य तत्राऽप्रवृत्तेरिति दिक्। **झस्येति**। झकारादकार उच्चारणार्थः। **अतो गुणे इति**। 'अतो दीर्घो यञी'ति तु न प्रवर्तते, स्थान्यलादेशविधौ स्थानिवत्त्वनिषेधादिति भावः। **अतो दीर्घो**। 'तुरुस्तुशम्यमः' इति सूत्रात्सार्वधातुक इत्यनुवर्तते। सार्वधातुके किं ?। केशवः अङ्गना। 'अत आ' इति वक्तव्ये दीर्घग्रहणं दीर्घ एव यथा स्यादित्येवमर्थम्। अन्यथाऽपाक्षीरोदनं देवदत्त!, ननु पचामि भोरित्यत्रानन्त्यस्यापि प्रश्नाख्यानयोरिति प्लुतः स्यात्। केचित्तु—'अत आ'दिति सुवचं, तपरकरणसामर्थ्याद्विकारनिवृत्तिर्भवेदिति प्लुतस्याऽप्रसङ्गात्, उदात्तस्थाने उदात्त आकारः, अनुदात्तस्थानेऽनुदात्त आकार इत्यादि तु 'स्थानेऽन्तरतमः' इत्यनेनैव सिद्धम्। अतएव 'वृषाकप्यग्नी'ति सूत्रे वृषाकपिशब्दो मध्योदात्त एक एवोदात्तत्वं प्रयोजयति, अग्न्यादिषु तु 'स्थानेऽन्तरतमः' इत्येव सिद्धमिति मनोरमादावुक्तम्। ततश्च प्रयोजनाऽभावात्तपरकरणमनणि विध्यर्थमिति नाशङ्कनीयमेव। यदि तु 'हल्ङ्याब्भ्यः' इत्यत्र आ—आबितिवत्, 'अत आ'इत्यत्रापि आ—आ इति प्रश्लेषः क्रियते तदा तपरकरणं विनापीष्टसिद्धिरित्याहुः॥ 'प्रहासे चे'ति सूत्रस्योदाहरणमाह—**एहि मन्ये इति**। 'ओदनं भोक्ष्ये'इति त्वं मन्यस इत्यर्थः॥ **एतम् एत वेति**। 'एतं मन्ये ओदनं भोक्ष्येथे', 'एत मन्ये ओदनं भोक्ष्यध्वे' इत्यन्वयः। भोक्ष्यावहे इति युवां मन्येथे, भोक्ष्यामह इति यूयं मन्यध्वे इति क्रमेणार्थः॥

बा.]**झस्य**। झकारस्येत्यर्थः। **अन्तादेशः स्यादिति**।'अन्त्'इत्ययमादेशः स्यादित्यर्थः।प्रत्ययावयवस्येति किम्?। उज्झिता। अत्र धात्ववयवस्य झकारस्य न भवति। आदिग्रहणानुवृत्तौ तु 'शयान्तै' इति न सिध्यति। अन्तादेशात्प्रागेवान्तरङ्गत्वाल्लेटोऽडाटावित्याटि कृते झकारस्य प्रत्ययादित्वाऽभावादिति भाष्ये स्पष्टम्। एवं च 'भव-झी'त्यत्र झकारस्य अन्त् इत्यादेशे, भव—अन्ति इति स्थिते, 'अतो गुण' इति द्वयोरकारयोः सवर्णदीर्घापवादे पररूपे कृते, भवन्तीति रूपमित्यर्थः। अन्तादेशे प्रथमाऽकारोच्चारणं तु लुग्विकरणे द्विषन्तीत्यादौ अकारश्रवणार्थम्। **भवसीति**। मध्यमपुरुषैकवचने सिपि शपि गुणेऽवादेशे रूपम्। **भवथ इति**। मध्यमपुरुषद्विवचने थसि शपि गुणेऽवादेशे रुत्वविसर्गयोश्च रूपम्। 'न विभक्तौ तुस्मा' इति सस्य नेत्त्वम्। **भवथेति**। मध्यमपुरुषबहुवचने थादेशे शपि गुणे अवादेशे रूपम्। उत्तमपुरुषैकवचनेऽपि शपि गुणे अवादेशे भव—मि इति स्थिते—**अतो दीर्घो यञि**। 'अङ्गस्ये'त्यधिकृतमता विशेष्यते। तदन्तविधिः। 'तुरुस्तुशम्यम' इत्यतः सार्वधातुक इत्यनुवृत्तं यञा विशेष्यते। तदादिविधिः। तदाह—**अदन्तस्येत्यादिना**। **भवामीति**। न च भूधातोर्विहितलादेशं प्रति भूधातुरेवाऽङ्गं, न तु भवेति विकरणान्तमिति वाच्यं, 'यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्ग'मित्यत्र तदादिग्रहणेन विकरणविशिष्टस्यापि अङ्गत्वात्। **भवावः भवाम इति**। लस्य वसि मसि च शपि गुणेऽवादेशे अतो दीर्घे रुत्वे विसर्गे च रूपे। 'न विभक्ता'विति सस्य नेत्त्वम्। अथ प्रथममध्यमोत्तमपुरुषव्यवस्थामुक्तां स्मारयितुमाह—**स भवतीत्यादि**। 'अथ प्रहासे चे'ति सूत्रस्योदाहरति—**एहीति**। सर्वेषु भुक्तवत्सु भोक्तुमागतं जामातरं प्रति परिहासाय प्रवृत्तमिदं वाक्यम्। भो जामातः! एहि

शे.] **भवन्तीति**। अत्र शबकाराऽन्त्यकारयोः पररूपे कृते 'अचः परस्मिन्'इति स्थानिवत्त्वाद्गुणः। वार्णादाङ्गमिति तु समानस्थानिकत्वे एवेति बोध्यम्। **अतो दीर्घो**। यञि किम्?। भवतः। **एहि मन्ये इति**। ओदनं भोक्ष्य इति त्वं मन्यसे इत्यर्थः। एवमग्रेऽपि बोध्यम्। सत्यप्योदने परिहासशीलस्यालकादेर्वाक्यमेतत्। अत्र मननापेक्षया भोजनस्य भविष्यत्कालतैव, मननस्य तु वर्तमानतैव, परिहासपोषायैव एहीत्याकारणम्। श्यना निर्देशादिह न—एहि मनुषे

ओदनं भोक्ष्यसे'[इति]भुक्तः सोऽतिथिभिः। एतमेत वा, 'मन्ये ओदनं भोक्ष्येथे। भोक्ष्यध्वे' [इत्यादि]॥ 'भोक्ष्ये। भोक्ष्यावहे। भोक्ष्यामहे [ इत्यादि ]। मन्यसे। मन्येथे। मन्यध्वे'इत्यादिरर्थः। 'युष्मद्यु पदे' इत्याद्यनुवर्तते। तेनेह-एतु भवान्मन्यते ओदनं भोक्ष्ये इति, भुक्तः सोऽतिथिभिः। प्रहासे किम् ?। यथार्थकथने माभूत्। एहि, मन्यसे 'ओदनं भोक्ष्ये' इति, भुक्तः सोऽतिथिभिरित्यादि ॥ **परोक्षे लिट्** ।३।२।११५। भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । लस्य तिबादयः ॥ **लिट् च** ।३।४।११५। लिडादेशस्तिङार्द्धधातुकसंज्ञ एव स्यान्न तु सार्वधातुकसंज्ञः। तेन शबादयो न ॥ **परस्मैपदानां णलतुसुस्थलथुसणल्वमाः** ।३।४।८२। लिट-

---

त.] **परोक्षे लिट्**। यद्यप्यधिश्रयणादिव्यापाररूपा क्रिया सर्वा परोक्षैव। उक्तं हि भाष्ये-'क्रिया नामेयमत्यन्ताऽपरिदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितु'मिति, तथापि तदनुकूलशक्तिमतां व्यापाराऽऽविष्टानां साधनानां परोक्ष्यमिह विवक्षितम्। तेन क्रियाऽनाविष्टसाधनमात्रप्रत्यक्षेऽपि लिड्भवत्येव। अयं पपाच। त्वं पेचिथ॥ ननु क्रियाशब्दवाच्याधिश्रयणा[धःश्रयणा]दिव्यापाराणां युगपत्प्रत्यक्षाविषयत्वेऽपि क्रमशः प्रत्यक्षविषयत्वमस्ति, यत्र तु क्रमशोऽपि प्रत्यक्षविषयत्वं नास्ति तत्र हि पारोक्ष्यं क्रियायाः; ततश्च लिड्उत्तमपुरुषो दुर्लभ इति चेत्। अत्राहुः—स्वव्यापारस्यापि वर्तमानतादशायां व्यासङ्गादिना स्वयमप्रतिसन्धाने ततः कार्येणानुमितौ भवत्येव, 'बहु जगद पुरस्तात्तस्य मत्ता किलाह'मितिवदिति। **लिट् च। आर्द्धधातुकसंज्ञ एवेति**। 'लङः शाकटायनस्ये'ति सूत्रादेवकारोऽनुवर्तत इति भावः। **परस्मैपदानाम्**। अत्र थशब्दस्याऽकारो विधीयमानोऽन्त्यस्य प्राप्नोति। न चाऽकारस्याऽकारविधौ निरर्थकत्वमिति वाच्यं, यथासङ्ख्यसंपादनेन कृतार्थत्वात्। अत्राहुः—धातोरित्यधिकारात् 'आदेः परस्ये'ति व्यञ्जनमात्रस्य कृते, द्वयोः 'अतो गुणे' इति पररूपम्। यद्वा द्वयोरकारयोः पररूपेण सूत्रे निर्देशः,तथा चानेकाल्त्वात्सर्वादेशे सिद्धमिष्टमिति। ननु सुबन्तानामेव द्वन्द्वस्तत्र लकारद्वयकल्पनायां सवर्णदीर्घ एव स्यादिति चेन्मैवम्। आदेशानां स्थान्यर्थेनैवार्थवत्त्वात्थशब्दस्य विधीयमानमकारद्वयं प्रत्येकमर्थवन्न भवतीति समुदितस्य प्रातिपदिकत्वेन 'अतो गुणे'

---

बा.] = आगच्छ, 'ओदनं भोक्ष्ये' इति त्वं मन्यसे, नैतद्युक्तमित्यर्थः। कुत इत्यत आह-**भुक्तः सोऽतिथिभिरिति**। स ओदनोऽतिथिभिर्भक्षित इत्यर्थः। अत्र भुजेरुत्तमपुरुषे प्राप्ते मध्यमः पुरुषः। मन्यतेस्तु मध्यमपुरुषे प्राप्ते उत्तमः पुरुषः। **एतम् एत चेति**। हे जामातरौ! आगच्छतम्, 'ओदनं भोक्ष्यावहे' इति मन्येथे इति, भो जामातरः! 'ओदनं भोक्ष्यामहे' इति मन्यध्वे इति चार्थः। अत्रोभयत्रापि भुजेरुत्तमे प्राप्ते मध्यमः। मन्यतेस्तु मध्यमे प्राप्ते उत्तमः, द्वित्वबहुत्वयोरेकवचनं च।**इत्यादीति**।एहि, एतम् एत वा मन्ये जलं पास्यसि पास्यथः पास्यथेत्यादिसङ्ग्रहः। 'मन्ये' इत्युत्तमपुरुषैकवचनान्तं व्याचष्टे-**मन्यस इत्यादिना**। **अनुवर्तत इति**। 'प्रहासे चेति सूत्रे' इति शेषः। **एतु भवानिति**। युष्मद्भवतोः पर्यायत्वाऽभावस्यानुपदमेवोक्तत्वादिति भावः। इति लट्प्रक्रिया। **परोक्षे लिट्**। 'अनद्यतने ल'ङित्यस्मादनद्यतन इत्यनुवर्तते। 'भूते' इत्यधिकृतम्। परोक्षत्वं धात्वर्थविशेषणं, तदाह-**भूतानद्यतनेत्यादिना**। अतीतरात्रेरन्त्ययामेन आगामिरात्रेराद्ययामेन सहितो दिवसोऽद्यतन इति लुङ्सूत्रभाष्ये कैयटे स्थितम्। परोक्षत्वं तु वर्षशतवृत्तत्वमित्येके। वर्षसहस्रवृत्तत्वमित्यपरे। द्व्यहवृत्तत्वं, त्र्यहवृत्तत्वं चेत्यन्ये। कुड्यकटाद्यन्तरितत्वमितीतरे। एते पक्षा भाष्ये स्थिताः। तत्र प्रयोक्तुरिन्द्रियाऽगोचरत्वं परोक्षत्वमित्येव सर्वसंमतमित्यलम्।

**लस्य तिबादय इति**।तिबादिनवकमित्यर्थः।**लिट् च**।'लि'डिति लुप्तस्थानषष्ठ्यन्तम्।'तिङ्शित्सार्वधातुक'मित्यस्मात्तिङित्यनुवर्तते।'आर्द्धधातुकं शेष' इत्यस्मादार्द्धधातुकमिति। तदाह-**लिडादेशस्तिङिति**। एकसंज्ञाधिकारबहिर्भूतत्वात्सार्वधातुकसंज्ञाया अपि समावेशे प्राप्ते आह-**आर्द्धधातुकसंज्ञ एवेति**। 'लङः शाकटायनस्यैवे'ति सूत्रादेवकारानुवृत्तेरिति भावः। **तेनेति**। सार्वधातुकत्वाऽभावेन तन्निमित्ताः शप्श्यनादयो न भवन्तीत्यर्थः। **परस्मै-**

---

शे.]रथेन यास्यामीति।अत्र पुरुषव्यत्ययस्य प्रहासव्यञ्जकत्वम्।**परोक्षे लिट्**।परोक्षत्वञ्च साक्षात्कृतमित्येतादृशविषयताशालिज्ञानाऽविषयत्वम्। 'भूते' इति 'अनद्यतने लङ्' इत्यतोऽनद्यतने इति चानुवर्त्तते। तत्र भूतादीनां साक्षाद्धातुविशेषणत्वाऽसम्भवाद्धात्वर्थविशेषणतेत्याह-**भूतेत्यादि**। भूतत्वं-वर्तमानध्वंसप्रतियोगिसमयवृत्तित्वम्। अतीतरात्रेरन्त्ययामेनाऽऽगामिन्याः पूर्वयामेन च सहितः कालः-अद्यतनः,।तद्भिन्नः-अनद्यतनः॥ **लिट् च**। षष्ठ्याः सौत्रो लुक्, तदाह-**लिडादेश इति**। एकसञ्ज्ञाधिकारादन्यत्र सत्त्वेन सञ्ज्ञासमावेशः स्यादत आह-**एवेति**।'लङः शाकटायनस्यैव' इत्यतोऽनुवृत्तेरिति भावः। **परस्मैपदानां**। णलः सर्वादेशत्वन्ततः प्राक् णकारस्य लोपाऽभावेनानेकाल्त्वादिति **केचित्**, तन्न, 'नानुबन्धकृतमनेकाल्त्व'मिति निषेधात्। अनुबन्धत्वयोग्यकृतमिति तदर्थः। ध्वनितञ्चेदं 'डारौरस' इति सूत्रे

तिबादीनां नवानां णलादयो नव स्युः। भू-अ इति स्थिते ॥ **भुवो वुग्लुङ्लिटोः** ।६।४।८८। भुवो वुगागमः स्याल्लुङ्लिटोरचि। नित्यत्वाद्वुग्गुणवृद्धी बाधते ॥ **एकाचो द्वे प्रथमस्य** ।६।१।१। **अजादेर्द्वितीयस्य** ।६।१।२। इत्यधिकृत्य ॥ **लिटि धातोरनभ्यासस्य** ।६।१।८। लिटि परेऽनभ्यासधात्ववयवस्यैकाचः

---

त.] इति पररूपस्यैव प्रवृत्तेः ॥ **भुवो वुक्** । 'अचि श्नुधात्वि'ति सूत्रादचीत्यनुवर्तते । तदाह—**लुङ्लिटोरचीति** । अचीति किम् । अभूत् अभूः । वुकि सति 'लोपो व्यो'रिति लोपं बाधित्वा परत्वाद्धल्ङ्यादिलोपः स्यात् । ननु हल्ङ्यादिलोपादन्तरङ्गत्वात् 'लोपो व्यो'रिति लोप एव भविष्यति । तथा च मव्यतेर्यङ्लुगन्ताल्लङि तिप्सिपोः अमामन्, अमाम इत्यत्र व्योर्लोप एव माधवादिभिः स्वीकृतः । एवं चाऽज्ग्रहणम् 'ऊदुपधाया' इत्युत्तरार्थमनुवर्तमानमिहाप्युपरञ्जकतया वृत्तिकारादिभिर्योजितं न त्वावश्यकतयेत्येव निष्कर्ष उचित इति चेत् । अत्राहुः—'भुवो वुगि'त्यस्याङ्गत्वाद्बहिरङ्गत्वेन हल्ङ्यादिलोपस्यैव वुकोऽपि बहिरङ्गतयाऽसिद्धत्वे सति वलिलोपस्य प्राप्तेरेवाऽभावादज्ग्रहणमिहार्थमपीत्येव युक्तमिति । अयं च शङ्काग्रन्थः, समाधानग्रन्थश्च मनोरमायां स्थितः ॥ अत्र नव्याः—मव्यतिर्यङ्लुगन्त एव नास्ति, अमामदित्यादि रूपं तु दूरादपास्तमेव, 'यकारवकारान्तानामूठ्भाविनां यङ्लुङ्नास्ती'ति 'छ्वोः शू'डिति सूत्रे भाष्ये ध्वनितम्, कैयटेन च स्पष्टीकृतम् । इदं च छ्वोरिति यत्रोठ् तद्विषयकं, 'ज्वरत्वरे'त्यूठ्भाविनोः स्त्रिविमव्योस्तु यङ्लुगस्त्येवेति न्याय्यं, माधवादिसंमतं च । 'मव्य बन्धने' अयं यान्त ऊठ्भावी'ति मूले वक्ष्यमाणत्वात् । तथाच तद्ग्रन्थेन सहात्रत्यमनोरमाग्रन्थो विरुध्यत इत्याहुः । यदि तु मवतेर्यङ्लुगन्तादिति मनोरमायां पठ्यते तदा तत्र पूर्वाऽपरग्रन्थविरोधो नास्तीति दिक् ॥ **अजादेरिति** । यदि बहुव्रीहेः षष्ठी तदा इन्द्रमात्मन इच्छति इन्द्रीयति, इन्द्रीयितुमिच्छति इन्दिद्रीयिषतीत्यत्र दकारस्य 'न न्द्राः' इति द्वित्वनिषेधः स्यात्, किंतु अचासावादिश्चाऽजादिस्तस्मादिति कर्मधारयादेषा

---

बा.]**पदानां** । लिटस्तङ्योरित्यस्माल्लिट इत्यनुवृत्तिमभिप्रेत्याह—**लिटस्तिबादीनामिति** । **णलादय इति** । णल्, अतुस्, उस् । थल्, अथुस्, अ । णल्, वं, म—इत्येते नव यथासङ्ख्यं स्युरित्यर्थः । तत्र तिपो णल् सर्वादेशः । न च णकारलकारयोः 'चुटू' इति 'हलन्त्य'मिति च इत्संज्ञकत्वाल्लोपे कथमनेकाल्त्वमिति वाच्यं, सर्वादेशत्वात्प्रागणलः प्रत्ययत्वाऽभावेन 'चुटू' इत्यस्याऽप्रवृत्तेः । णित्त्वं तु जुहावेत्यादौ वृद्ध्यर्थम् । लित्त्वं तु लित्स्वरार्थम् । ननु मध्यमपुरुषबहुवचनथस्य विधीयमानोऽकारः 'अलोऽन्त्यस्ये'त्यन्त्यस्य स्यात् । अकारस्य अकारविधिस्तु यथासङ्ख्यापादनार्थ इति चेत्, सत्यम्. द्वयोरकारयोः पररूपेण 'अ' इति सूत्रे निर्देशादनेकाल्त्वात्सर्वादेशत्वमिति भाष्ये स्पष्टम् । न च अतुसादीनामादेशत्वात्पूर्वं विभक्तित्वाऽभावेन'न विभक्तौ'विति निषेधाऽभावात्सकारस्येत्त्वं दुर्वारमिति वाच्यं, सकारादुपरि सकारान्तरस्य संयोगान्तलोपेन लुप्ततया श्रूयमाणसकारस्योपदेशेऽन्त्यत्वाऽभावादित्यलम् । **भुवो वुक्** । **अचीति** । 'अचि श्नुधात्वि'त्यतस्तदनुवृत्तेरिति भावः । अचीति किम् ? । अभूत् । ननु णलि परत्वाद्वुकं बाधित्वा 'अचो ञ्णिती'ति वृद्धिः स्यात्, बभूविथेत्यत्र तु 'सार्वधातुकार्द्धधातुकयो'रिति गुणः स्यादित्यत आह—**नित्यत्वादिति** । कृतयोरपि गुणवृद्ध्योरेकदेशविकृतन्यायाद्वुक् प्रवर्तते, अकृतयोरपि प्रवर्तते । ततश्च 'कृताऽकृतप्रसङ्गी यो विधिः स नित्य' इति न्यायेन वुक् नित्यः सन् गुणवृद्धी बाधत इत्यर्थः । वुकि ककार इत्, उकार उच्चारणार्थः । कित्त्वादन्तावयवः ।

भूव्-अ इति स्थिते। **एकाचः**।**अजादेः**।**इत्यधिकृत्येति**।षष्ठाध्यायारम्भे द्वे इमे सूत्रे।ते च न विधायके, अतिप्रसङ्गात्, किन्तु 'ष्यङः सम्प्रसारण'मित्यतः प्रागनुवर्तेते एवेति भावः । **लिटि धातोः** । 'एकाचो द्वे प्रथमस्ये'त्यधिकृतं । धातोरित्यवयवषष्ठी । तदाह—**धात्ववयवस्येति** । 'एकाच' इति 'प्रथमस्ये'ति च धात्ववयवस्य विशेषणम् । एकोऽच् यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । तथा च लिटि परेऽभ्यासभिन्नस्यैकाऽच्कस्य प्रथमस्य धात्ववयवस्य द्वे उच्चारणे स्त इत्यर्थः। 'एकाच' इत्यत्र कर्मधारयाश्रयणे तु पपाचेत्यादि न सिध्येदिति भाष्ये स्पष्टम् । 'अजादे-

---

शे.]'अनेकाल्' इतिच सूत्रे भाष्ये इति 'जसः शी'त्यत्र निरूपितम् । तस्मात् ण-अलिति प्रश्लेषेणाऽनेकाल्त्वेन सर्वादेशत्वसिद्धिः । प्रश्लेषसामर्थ्यादादेशोत्तरमेकादेशप्रवृत्तिः । एवं डा-आ इति प्रश्लेषाड्डादेशः सर्वादेशो बोध्यः। लित्त्वं—स्वरार्थम् । अन्यथा द्विःप्रयोगत्वाद्द्विर्वचनस्य पर्यायेणोभयोरन्तोदात्तत्वं स्यादित्यत्रैव भाष्ये स्पष्टम्।**भुवो वुक्** । 'अचि श्नु' इत्यतोऽचीत्यनुवर्त्तते। **नित्यत्वादिति**। कृताऽकृतप्रसङ्गित्वमात्रेण क्वचिन्नित्यताभ्युपगमादिति भावः। 'ओः सुपि' इत्यत ओरिति तु नात्रानुवर्त्तते, फलाऽभावात्, अस्वरितत्वाच्चेत्यपि बोध्यम् । **आधिकृत्येति** ।व्याख्यानादस्याऽधिकारत्वमेवेति भावः। 'एका'जिति तद्गुणसंविज्ञानबहुव्रीहिणा प्रथमविशेषणम् । अत एव जागर्त्यादौ द्वित्वं, तदाह—**धात्ववयवस्येत्यादि** । पचादौ इण्धातौ च प्रथमत्वैकाच्त्वधात्ववयवत्वानि व्यपदेशिवद्भावेन बोध्यानि। अजादेरिति कर्मधारयस्तदाह—**आदिभूतादिति** । एवञ्च द्वितीयस्येति न कार्यमिति बोध्यम् । अत्र 'एकाच' इत्यादेः कारकषष्ठीत्वाद्द्विःप्रयोगपक्ष एव । अत

प्रथमस्य द्वे स्त आदिभूतादचः परस्य तु द्वितीयस्य। भूव्-भूव्-अ इति स्थिते ॥ **पूर्वोऽभ्यासः** ।६।१।४। अत्र

त.] पञ्चमी । तदाह-**आदिभूतादचः परस्य त्विति** ॥ **भूव्भूविति** । यद्यप्यत्र धात्ववयवत्वं प्राथम्यं च न सङ्गच्छते, तथापि व्यपदेशिवद्भावेन तद्बोध्यम् । नन्विह चत्वार एकाचस्तत्रावयवास्त्रयः, तत्र भू, ऊ, ऊविति । भूविति समुदायश्चतुर्थः । तथा चाऽनियमेन यस्य कस्यचिद्द्वित्वं स्यात् । मैवम् । समुदायस्यैकाच एव द्विर्वचनस्य न्याय्यत्वात्, तस्मिन्हि द्विरुच्यमाने अवयवा अपि द्विरुच्यन्त एव, वृक्षचलनेन सर्वावयवचलनवत् ॥ **अत्रेति** । 'एकाचो द्वे' इति

बा.] द्वितीयस्ये'त्यप्यधिकृतम् । तत्राऽचासावादिश्च अजादिः, तस्मादिति कर्मधारयात्पञ्चमी । तदाह-**आदिभूतादचः परस्य तु द्वितीयस्येति** । 'एकाच' इति शेषः । अजादिधात्ववयवस्य एकाचश्चेद्द्वित्वं तर्हि द्वितीयस्यैवैकाचो द्वित्वं नतु प्रथमस्येति यावत् । अत्र **द्वे** इत्यनन्तरमुच्चारणे इत्यध्याहृत्यैकाचः प्रथमस्येति कृद्योगलक्षणषष्ठीं चाश्रित्य द्विःप्रयोग एवात्र विधीयते, न स्थानषष्ठीमाश्रित्यादेशपक्ष इति प्रकृतसूत्रभाष्ये प्रपञ्चितम् । 'आदेशप्रत्यययो'रिति सूत्रभाष्येऽपि द्विःप्रयोगपक्ष एवोक्तः । तदिह विस्तरभयान्न लिखितम् । पपाच इयायेत्यादौ प्रथमत्वमेकाच्कत्वं च व्यपदेशिवत्त्वेन बोध्यम् । अजादेरिति बहुव्रीह्याश्रयणे तु इन्द्रमात्मन इच्छति इन्द्रीयति, इन्द्रीयितुमिच्छति इन्दिद्रीयिषतीत्यादौ 'न न्द्राः संयोगादय' इति दकारस्य द्वित्वनिषेधश्च स्यात्, तत्राऽजादेरित्यनुवृत्तेः । धातोरिति किम् ? । तदभावे हि लिटि परे यः प्रथम एकाच् तस्य द्वे इत्यर्थः स्यात् । एवं सति पपाचेत्यादावेव स्यान्न तु जजागारेत्यादाविति भाष्ये स्पष्टम् । न च पपाचेत्यादौ 'लिटि धातो'रिति द्वित्वे कृते 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनर्द्वित्वस्याऽप्रसक्तेरनभ्यासग्रहणं व्यर्थमिति वाच्यं, यङन्तात् 'सन्यङो'रिति यङ्निमित्तकद्वित्वविशिष्टत्वात्सनि सन्निमित्तकद्वित्वनिवृत्तये, सन्नन्तात् 'सन्यङो'रिति कृतद्वित्वाण्णिचि लुङि चङि कृते 'चङी'ति द्वित्वनिवृत्तये चाऽनभ्यासग्रहणस्यावश्यकत्वात् । भाष्ये तु-"कृष्णो नोनाव वृषभो यदीद'मित्यादौ नुधातोर्यङन्तात् 'सन्यङो'रिति कृतद्वित्वान्नोनूयेत्यस्माल्लिटि 'कास्प्रत्यया-दाममन्त्रे लिटी'ति मन्त्रपर्युदासादामभावे 'यस्य हल' इति यकारलोपे अतो लोपे तिपो णलि वृद्धावावादेशे नोनावेत्यत्र 'लिटि धातो'रिति द्वित्वनिवृत्तयेऽनभ्यासग्रहणमित्युक्त्वा, 'अनभ्यासग्रहणमनर्थकं छन्दसि वा वचना"दित्युक्तम् । यङन्तात्सनि, सन्नन्ताण्णिचि चङि च प्रयोगो लोके नास्त्येवेति तदाशय इति शब्देन्दुशेखरे स्पष्टम् । प्रकृते च भूव् अ इत्यत्र चत्वार एकाचः । तत्र 'भू' इति प्रथमः, 'ऊ'विति द्वितीयः, 'ऊ'इति व्यपदेशिवद्भावेन तृतीय एकाच्, 'भू'विति समुदायस्तु चतुर्थः । तत्र समुदाये द्विरुच्यमाने सर्वेऽवयवा द्विरुच्यन्त इति 'भू'विति समुदायस्यैव द्विर्वचनमिति भाष्ये स्पष्टं । तदाह-**भूव् भूव् अ इति स्थित इति** । अत्र 'भू'वित्यस्य एकाचो धात्ववयवत्वं प्रथमत्वं च व्यपदेशिवत्त्वाद्बोध्यम् । **पूर्वः** । **अत्रेति** । 'एकाचो द्वे प्रथमस्ये'ति षाष्ठद्वित्वप्रकरण इत्यर्थः । तेन 'सर्वस्य द्वे' इत्यादिविहितस्य द्वित्वस्य न सङ्ग्रहः । कस्य पूर्व इत्याकाङ्क्षायां 'द्वे' इत्यनुवृत्तं षष्ठ्या विपरिणतं संबध्यते । तदाह-**ये द्वे**

शे.]एवाऽऽटिटदित्यादौ णिलोपसिद्धिः। स्पष्टञ्च 'आदेशप्रत्यययोः' इति सूत्रेऽस्य द्विःप्रयोगत्वमुक्तं **भाष्ये** ।अत्रोत्तरखण्डस्यैवार्थवत्त्वम्, अभ्यासोऽनर्थक एव । ध्वनितञ्चेदं 'दयतेः' इति सूत्रे **भाष्ये** । न च अत्र पक्षे सिषेचेत्यादौ 'सात्पदाद्योः' इति षत्वनिषेधापत्तिः, सिचेरत्र तिङ्विहित इति द्वितीयोच्चारणविशिष्टस्य पदत्वात्पदादित्वस्योत्तरखण्डाद्यसकारे सत्त्वादिति वाच्यम् । 'तावेव सुप्तिङौ यौ ततः परौ, सैव च प्रकृतिराद्या । आदिग्रहणञ्च कृतं, समुदायपदत्वमेतेन'इति **भाष्येण** समाधानात् । यौ ततो विधानावधेः परौ तावेवेमौ सुप्तिङौ, यतो विहितौ सा प्रकृतिराद्यैव । 'आगन्तूनामन्ते निवेशः' इति न्यायाद्द्वितीयोच्चारणस्यैव विधेयत्वात् । आद्या-आद्योच्चारणविषया। ननु द्वितीयोच्चारणेन व्यवधानमत आह-**ग्रहणमिति** ।'यस्मात्प्रत्ययविधिस्तदादी'त्यस्यात्रानुवर्त्तनात् । **समुदायपदत्वमिति** । उच्चारणद्वयविषयत्वे समुदायव्यवहार इति तदर्थः । कृते तु द्वित्वे द्वितीयोच्चारणेनैवार्थबोधादभ्यासस्य नैरर्थक्यव्यवहारोऽपि । यत्तु द्वित्वे लिटीत्यस्य विषयसप्तमीत्वमाश्रित्य पूर्वं द्वित्वे ततः समुदायाल्लिटि ततस्तिङि यस्मात्तिङ्विधिस्तदादितिङन्तस्य समुदायस्यैव पदत्वम्, समुदायोऽपि द्विःप्रयोगत्वाद्द्वित्वस्य धातुबुद्धिविषय इति पक्षान्तरमुक्तम्, तत्त्वेकदेश्युक्तिः । गणपठितत्वाऽभावेन क्रियावाचकत्वाऽभावेन च तस्य धातुत्वोपपत्त्यभावात् । अत एव 'दयतेः' इति सूत्रे असति द्वित्वे परस्य भूमावे रूपाऽसिद्धिमाशङ्क्यार्द्धधातुके इत्यस्य विषयसप्तमीत्वेन परिहृतम् । इदं प्रथमद्विर्वचनापवादः । अजादेर्धातोर्द्वितीयाऽभावे प्रथमवाक्येनैव प्रथमस्य द्वित्वमिति **भाष्ये** स्पष्टम् । व्यपदेशिवद्भावेन तु न द्वितीयत्वं, प्रथमस्येत्युक्त्योभयसत्तायामेवाजादेरित्यस्य प्रवृत्तेः । धातोरिति किम् ? । तदभावे लिटीत्यादि प्रथमैकाच एव विशेषणं स्यात् । एवञ्च पपाचेत्यादावेव स्यान्न तु जजागारेत्यादौ । 'अनभ्यासग्रहणमनर्थकं छन्दसि वा वचना'दिति **भाष्यम्** । यङन्तात्सनि सन्नन्ताण्णिचि चङि वा लोके प्रयोगा अनभिधानादसाधव एवेति तदाशयः । 'स्तौतिण्योः' इति सूत्रभाष्योक्तं सोषुपिषते इति तु छान्दसमेव ।

ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात् ॥ **हलादिः शेषः** ।७।४।६०। अभ्यासस्यादिर्हल् शिष्यते, अन्ये हलो लुप्यन्ते । इति वलोपः ॥ **ह्रस्वः** ।७।४।५९। अभ्यासस्याऽचो ह्रस्वः स्यात् ॥ **भवतेरः** ।७।४।७३।

त.]प्रकरणे । **हलादिः** । अभ्यासस्येति जातिपरो निर्देशस्तेन आटतुः आटुरित्यादौ तकारादिनिवृत्तिः सिध्यति, क्वचिदभ्यासे आदेर्हलः सत्त्वमाश्रित्य सर्वत्रानादेर्लोपविधानात् ॥ **भवतेरः** । 'अत्र लोपोऽभ्यासस्ये'ति सूत्रादभ्यासपदमनुवर्तते । अत्र प्राचोक्तं–भवतेरिति कर्तृनिर्देशाद्भावकर्मणोर्नाऽत्वमिति । व्याख्यातं च तत्पौत्रेण–'कर्त्रर्थयोः श्तिप्शपोर्निर्देशादित्यर्थ' इति । तन्न । धातुनिर्देशमात्रे श्तिपो विधानात्, शपश्च विकरणत्वेनानर्थकत्वात्, कर्त्रर्थके परे विहितस्यापि तस्य श्तिपः शित्त्वसामर्थ्यादेवेह प्रवृत्तेः, अन्यथा त्वदुक्तरीत्या 'उपसर्गात्सुनोतिसुवती'त्यादीनामपि भावकर्मणोरप्रवृत्तौ सर्वोपप्लव एव स्यात्, अपसिद्धान्तश्चाऽयमिति स्पष्टमेवाकरदृशाम् । प्रयुञ्जते च कर्मण्यप्यकारं कवयः– 'तस्यातपत्रं बिभरांबभूवे', 'विभावरीभिर्बिभरांबभूविरे' इत्यादि । एतच्च प्रक्रियाप्रसादग्रन्थदूषणं मनोरमायां स्थितम् ।

अत्र नव्याः–'श्तिपः शित्त्वसामर्थ्यादेवेह शपःप्रवृत्ति'रिति यदुक्तं,तन्न।पिबतिर्ग्लायतिरित्यादौ पिबाद्यादेशप्रवृत्त्या आत्त्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वात् । एवं च 'उपसर्गात्सुनोतिसुवति', 'भवतेरः', 'ध्यायतेः संप्रसारणं चे'त्यादिनिर्देशादकर्तृवाचिन्यपि परे शबादय इत्येव व्याख्येयम् । अन्यथा 'इक्श्तिपौ' इति सूत्रे वक्ष्यमाणस्वग्रन्थेन सह विरोधापत्तेः । केचित्तु–शित्वात्तिपः सार्वधातुकत्वेन भवतिरित्यादौ 'आर्द्धधातुकस्येड्वलादे'रितीडागमनिवृत्त्या, 'ब्रवीति'रित्यत्र 'ब्रुव ईडि'तीडागमप्रवृत्त्या च शित्त्वं चरितार्थमिति व्याचख्युः, तच्चिन्त्यम् । 'तितुत्रे'त्यनेनेण्निषेधादार्द्धधातुकत्वेऽपि क्षत्यभावात् । 'ब्रुव ई'डित्यत्र 'ब्रुवः परस्य हलादेः पित ईडागम' इत्येतन्मात्रस्य मूले व्याख्यातत्वात्सार्वधातुकस्येति विशेषणाऽभावेऽपि क्षत्यभावात् । न च हलादेः पित्प्रत्ययस्य 'सार्वधातुकस्ये'ति विशेषणाऽभावे ब्रुवो लिटि वच्यादेशे सिपस्थलि उवक्थेत्यत्राऽतिप्रसङ्गः स्यादिति वाच्यं, थलोऽत्र पित्त्वाऽभावात् । न च स्थानिवद्भावेन पित्वं, श्नः शानचः शित्वेन लिङ्गेन क्वचिदनुबन्धकार्येऽप्यनल्विधाविति तन्निषेधात् । तस्मात्पूर्वोक्तरीत्यैव श्तिपः शित्त्वसामर्थ्यादकर्तर्यपि शपः प्रवृत्तिरिति ग्रन्थो निराकर्तव्य इत्याहुः । तदपरे न क्षमन्ते । थलः पित्वाऽभावे हि 'असंयोगाल्लिट्कि'दिति कित्वात् 'वचिस्वपी'ति संप्रसारणे सत्युवचिथ उवक्थेति न सिध्येत्, किंतु ऊचिथ ऊक्थेति स्यात् । तस्मात्स्थानिवत्त्वेन थलः पित्त्वेऽभ्युपगते उवक्थेत्यादावतिप्रसङ्गवारणाय 'पितः सार्वधातुकस्य ईडागम' इति व्याख्यातव्यमेव. तथाच ब्रवीतिरित्यत्र ईडागमप्रवृत्त्या शित्वं चरितार्थमिति कैश्चिद्यदुक्तं तदपि सम्यगेवेति ॥

बा.]**विहिते तयोरिति** । **हलादिः शेषः** । 'अत्र लोपोऽभ्यासस्ये'त्यस्मादभ्यासस्येत्यनुवर्तते । शिष्यत इति शेषः, कर्मणि घञ् । शिषधातुरितरनिवृत्तिपूर्वकावस्थितौ । तदाह–**अभ्यासस्येत्यादिना** । **इति वलोप इति** । भूव् भूव् इत्यत्र अभ्यासवकारस्य लोप इत्यर्थः । भू भूव् अ इति स्थिते–**ह्रस्वः** । 'अत्र लोपोऽभ्यासस्ये'त्यतोऽभ्यासस्येत्यनुवर्तते । ह्रस्वश्रवणादचश्चेति परिभाषया अच इत्युपस्थितम् । तदाह–**अभ्यासस्याऽच इति** । भु भूव् अ इति स्थितम् । यद्यपि 'भवतेर' इति वक्ष्यमाणाऽकारविधिनैव सिद्धमिदं तथापि झुलावेत्याद्यर्थमावश्यकमिदमत्रैव न्याय्यत्वादुपन्यस्तम् । **भवतेरः** । भवतेः–अ इति छेदः । भवतेरिति श्तिपा निर्देशः । भूधातोरित्यर्थः । 'इक्श्तिपौ धातुनिर्देशे' इत्युक्तेः । 'अत्र लोपोऽभ्यासस्ये'त्यस्मादभ्यासस्येनुवर्तते । 'व्यथो लिटि' इत्यस्माल्लिटीति । भूधातोरभ्यासस्य भवन्नकारः

शे.]जुगुप्सिषते इत्यादौ 'लक्ष्ये लक्षणस्ये'ति न्यायेन निर्वाह इति बोध्यम्।'द्वे'इत्यनुवृत्तं षष्ठ्या विपरिणम्यते–**तयोरिति**।

**हलादिः शेषः**। 'अत्र लोपोऽभ्यासस्य' इत्यतोऽभ्यासस्येत्यनुवर्त्तते । यद्यपि 'अभ्यासस्यादिर्हल् शिष्यते' इति वाक्ये आदिहल्वत एव ग्रहणात् प्रत्यासत्त्या शेषग्रहणसामर्थ्यलभ्याऽभ्यासस्यान्ये हलो लुप्यन्त इति वाक्ये तादृशस्यैवाभ्यासस्य ग्रहणं प्राप्नोति तथापि लक्ष्यानुसाराद्व्याप्तिन्यायाश्रयेणाभ्यासमात्रग्रहणं बोध्यम् । यद्वा संहितापाठेऽहलादिः शेष इति च्छेदः। अभ्यासस्याऽहल्–हलभावो भवति, यश्चादिः स तत्र शिष्यते इत्यर्थान्न दोषः। आदेर्हलः शेषोक्तेःप्रत्यासत्त्याऽन्यस्य हल एव लोपः,इतरनिवृत्तिपूर्वकावस्थाने शेषशब्दस्य वृत्तेरित्याशयेनाह–**अन्ये हल इति**। **ह्रस्वः** । यद्यपि 'भवतेरः' इत्येव सिद्धेरस्य प्रकृते नोपयोगस्तथापि पर्जन्यवच्छास्त्रप्रवृत्त्यभ्युपगमेनेदमत्रोक्तम् । अत्राऽभ्यासस्येत्यनुवर्त्तते । अच इति चोपस्थितं, तच्च व्यधिकरणम्,अभ्यासावयवस्याऽच इत्यर्थः । अत एव छो इत्यस्यात्वे लिटि छाशब्दस्य द्वित्वेऽन्तरङ्गत्वात्तुकि अनजन्तस्यापि ह्रस्वसिद्धिः। ह्रस्वो ह्याङ्गत्वाद्बहिरङ्गः । एतेन तुगपेक्षया परत्वाद्ध्रस्व इत्यपास्तम् । स्पष्टञ्चेदं 'दीर्घोऽकितः'इत्यत्र **भाष्ये** । एवम् 'उरत्''सन्यतः' इत्यनयोरपि बोध्यम् । वार्णादाङ्गमिति तु उभयोरादेशत्वे एवेति तद्भावः ।

**भवतेरः**। प्रयोगे दृष्टानां भुवामनुकरणात् श्तिप् ।अत एवास्तेर्भूभावेऽपि बभूवेत्येव।तस्यार्द्धधातुक एव विधानेन लुग्विकरणत्वाऽभावान्न लुग्विकरणेति परिभाषाप्रवृत्तिः। उभयानुकरणेनाऽदादिमात्रत्वाभावाच्च शपो लुक् । प्रकृतिवदनुकरण-

भवतेरभ्यासोकारस्य अः स्याल्लिटि ॥ **अभ्यासे चर्च ।** ।८।४।५४। अभ्यासे झलां चरः स्युर्जशश्च । झशां जशः, खयां चरः । तत्रापि प्रकृतिजशां प्रकृतिजशः, प्रकृतिचरां प्रकृतिचर इति विवेकः, आन्तरतम्यात् ॥ **असिद्धवदत्रा भात्** ।६।४।२२। इत ऊर्ध्वमापादपरिसमाप्तेराभीयम् । समानाश्रये तस्मिन्कर्तव्ये तदसिद्धं स्यात् । इति

त.] **असिद्धवदत्राभात्** ।वत्करणं प्रतिपत्तिलाघवाय,अन्यथा सिद्धे असिद्ध इति प्रयुज्यमानमनुपपन्नं सत्सामर्थ्यादसिद्धवदिति कल्पनीयं स्यात् । यथा राजभिन्ने पुरोहिते 'राजाऽय'मिति प्रयोगो 'राजव'दिति कथंचित्कल्पयति, 'राजवदयं पुरोहित' इत्युक्ते तु लघुप्रतिपत्तिर्भवति।तथा चाऽगत्या 'षत्वतुकोरसिद्धः' इत्यत्राऽसिद्धवदिति कल्प्यते । 'असंयोगल्लिट्कि'दित्यत्रापि किद्वदित्यगत्यैव कल्प्यत इति ज्ञेयम् । **आ भादिति** । अभिविधावाङ् । भाधिकारमभिव्याप्येत्यर्थः । अधिकारश्चायम् । 'अत्र'ग्रहणं समानाश्रयप्रतिपत्त्यर्थम् । आभाद्ग्रहणं विषयनिर्देशार्थम् । भाधिकारस्याऽवधिलाभस्तु 'अङ्गस्य', 'प्रत्ययः', 'परश्चे'त्यादाविव व्याख्यानेनैव सिध्यति । एवं 'अनुदात्तोपदेशे'त्यत्रास्योपस्थाने सत्ययमर्थो भवति, 'एषामनुनासिकस्य लोपः स्याज्झलादौ क्ङिति परे, स चासिद्धो भवति, अत्र झलादिक्ङिदाश्रित्यैव यदाभीयं प्राप्नोति तस्मिन्कर्तव्ये सति'इति । जङ्गहि जङ्घहि ।'अतो हेः' इति लुम भवति, अनुनासिकलोपस्य हिशब्दाश्रितत्वेनाऽसिद्धत्वात् । नन्वस्याधिकारत्वे यत्र

ब०.] 'अलोऽन्त्यस्ये'त्यन्त्यस्योकारस्य भवति। तदाह-**अभ्यासोकारस्येति**।'नानर्थकेऽलोन्त्यविधि'रिति तु नेह प्रवर्तते, 'अनभ्यासविकारे' इत्युक्तेः । भ भूव् अ इति स्थिते-**अभ्यासे चर्च** । 'झलां जश् झशी'त्यस्माज्झलामित्यनुवर्तते । चकारेण जश् समुच्चीयते । तदाह-**अभ्यासे झलामित्यादिना** । झलश्चतुर्विंशतिः । तत्र शषसाः-शरः । तेषामभ्यासे लोपो वक्ष्यते-'शर्पूर्वाः खय' इति । हकारस्य त्वभ्यासे 'कुहोश्चु'रिति चुत्वं वक्ष्यते । एवं च झलसु झयो विंशतिरिहाऽभ्यासगताः स्थानिनो लभ्यन्ते । तेषां मध्ये कस्य चरः, कस्य जश इत्याकाङ्क्षायामाह-**झशां जश इति** । वर्गाणां तृतीयचतुर्थो झशः । तेषां जशः-जबगडदा इत्यर्थः । यद्यद्वर्ग्याः स्थानिनस्तत्तद्वर्ग्या आदेशा इत्यपि बोध्यम् । **खयां चर इति** । वर्गाणां प्रथमद्वितीयाः खयः, तेषां चरः-चटकतपा इत्यर्थः । अत्रापि यद्यद्वर्ग्याः स्थानिनस्तत्तद्वर्ग्या आदेशा इत्यपि बोध्यम् । **तत्रापीति** । तेष्वपि वर्ग्येषु प्रकृत्या=स्वभावेन जशामेव सतां प्रकृत्या स्वभावेन जश एव सन्तरतत्तद्वर्ग्या आदेशाः स्युः । एवं प्रकृत्या स्वभावेन चरामेव सतां प्रकृत्या स्वभावेन चर एव सन्तस्तत्तद्वर्ग्या आदेशाः स्युरित्यर्थः । पर्जन्यवल्लक्षणप्रवृत्तेरिति भावः । कुत इयं व्यवस्थेत्यत आह-**आन्तरतम्यादिति** । झशां जशां च घोषसंवारनादप्रयत्नसाम्यम् । खयां चरां च श्वासाऽघोषविवारप्रयत्नसाम्यम् । तत्तद्वर्ग्याणां तत्तद्वर्ग्या आदेशा इत्यत्र तु स्थानसाम्यं नियामकं बोध्यम् । तथा च प्रकृतेऽभ्यासभकारस्य बकारे सति बभूव् अ इति स्थिते 'अचि श्नुधात्वि'त्युवङादेशमाशङ्कितुमाह-**असिद्धवदत्रा** । षष्ठस्य चतुर्थपादे इदं सूत्रं 'श्नान्नलोप' इति सूत्रात्पूर्वं पठितम् । आ भादित्यभिविधावाङ् । भस्येत्यधिकारमभिव्याप्येत्यर्थः । भाधिकारश्च आ पादपरिसमाप्तेरिति सिद्धान्तः । तथा च आ पादपरिसमाप्तेरिति लभ्यते । 'विहितं कार्य'मिति शेषः । किमारभ्येत्याकाङ्क्षायामुपस्थितत्वादस्मादेव सूत्रादूर्ध्वमिति लभ्यते । ततश्च 'श्नान्नलोप' इत्यारभ्या पादसमाप्तेर्विहितं यदाभीयं कार्यं तदसिद्धवद्भवति । प्रवृत्तमप्यप्रवृत्तवद्भवतीत्यर्थः। अधिकारसूत्रमिदमुत्तरत्र 'श्नान्नलोप' इत्यादौ प्रतिसूत्रमुपतिष्ठते । तथा च यद्यत्सूत्रे इदमनुवर्तते तत्तदाभीयकार्ये कर्तव्येऽसिद्धमिति लभ्यते। एवंच 'श्नान्नलोप' इत्यादि तत्तदाभीयं कार्यं 'श्नान्नलोप' इत्याद्याभीये कार्ये कर्तव्येऽसिद्धवदित्यर्थः पर्यवस्यति । अत्रेत्यनेन निमित्तसप्तम्यन्तेन त्वसिद्धीभवतः कार्यस्य यन्निमित्तं तन्निमित्तके कार्ये कर्तव्ये सतीत्यर्थलाभात् 'समानाश्रये कार्ये कर्तव्ये सती'ति लभ्यते । एतत्सर्वं भाष्ये स्थितम् । तदाह-**इत ऊर्ध्वमित्यादिना । तस्मिन्निति** । आभीये कर्तव्ये सतीत्यर्थः । एधि शाधीत्युदाहरणम् । अत्र 'घ्वसोरेद्धावभ्यासलोपश्चे'त्यस्तेरेत्वस्य 'शाहा'विति शास्तेः शाभावस्य चाभीयत्वेनाऽसिद्धत्वात् 'हुझल्भ्यो हेर्धि'रिति हेर्धित्वमाभीयं प्रवर्तते । तथा 'जङ्गही'त्याद्यप्युदाहरणम् । हनधातोर्यङ्लुगन्ताल्लोण्मध्यमपुरुषैकवचने सिपो हिभावे 'अनुदात्तोपदेशे'ति नलोपस्याभीयस्यासिद्धत्वादतो हेरित्याभीयो लुङ् न भवति । समानाश्रय इति किम् ?। 'पपुष' इत्यत्र पाधातोर्लिटः क्वसौ 'लिटि धातो'रिति द्वित्वेऽभ्यासह्रस्वे क्वस्वन्ताद्द्वितीयाबहुवचने शसि वसोः संप्रसारणमाभीयम् 'आतो लोप इटि चे'त्याल्लोपे आभीये कर्तव्ये असिद्धं न भवति । आल्लोपः क्वसौ, संप्रसारणं तु शसीति भिन्नाश्रयत्वात् । आभीये कर्तव्ये इति किम् ? । 'अभाजि' 'राग' इत्यत्र भञ्जेश्चिणि, रञ्जेर्घञि च कृते, 'भञ्जेश्च चिणि', 'घञि च भावकरणयो'रिति नलोपस्याभीयस्याऽनाभीयायामुपधावृद्धौ कर्तव्यायां नाऽसिद्धत्वम् । आभादित्यभिविधिः किम् ? । भाधिकारात् प्रागित्युक्ते भूयानित्यत्र 'बहोर्लोपो भू च बहो'रिति बहोर्भूभावस्य ओर्गुणे कर्तव्ये असिद्धत्वं न स्यात्, भस्येति सूत्रादूर्ध्वभावित्वादित्यलम् । **इति वुकोऽसिद्धत्वादिति** ।

वुकोऽसिद्धत्वादुवङि प्राप्ते॥ *वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ॥ बभूव । बभूवतुः। बभूवुः॥. आर्द्धधातु-

त.]यत्रोपस्थानं तत एवारभ्य यदाभीयं तस्मिन्नेव कर्तव्येऽसिद्धत्वं स्यान्न तु ततः पूर्वस्मिन्नपि । ततश्च 'घ्वसो'रित्येत्वं पूर्वस्मिन्नपि धित्वे कर्तव्ये नाऽसिद्धं स्यादिति चेत् । भवेदयं दोषः शब्दाधिकारे, अर्थाधिकारस्त्वयम् । ततश्चेह 'श्नान्न-लोपः' इत्यवधिर्निर्णीतः, स एव प्रतिसूत्रमुपतिष्ठते । तदेतत्सकलमभिप्रेत्याह–**इत ऊर्ध्वमिति** । अत्रापि शास्त्राऽसिद्ध-त्वमेवाऽऽकरे स्थितम् । तेन एधि शाधीत्यत्र स्थानिनो झलन्तत्वबुद्धेरनिवर्तितत्वात्तन्निबन्धनं 'हुझल्भ्यो हेर्धि'रिति धित्वं सिध्यति। प्राचोक्तकार्याऽसिद्धत्वपक्षे तु न सिध्यति, 'देवदत्तस्य हन्तरि हते देवदत्तस्योज्जीवनं ने'ति न्यायेन एत्वविधिना झल्बुद्धौ निवर्तितायां पश्चादेत्वबुद्धिनिवर्तनेऽपि धित्वकार्यस्याऽप्रवृत्तेरित्याहुः । समानाश्रये इति किम् ? । पपुषः । चिच्युषः । लुलुवुषः । इह पाधातोश्चिञो लूञश्च परस्य वसोर्यत्संप्रसारणं तत् 'आतो लोप इटि च' इत्याल्लोपे 'एरने-काचः' इति यण्युवङि च कर्तव्ये नाऽसिद्धम् । आल्लोपादीनि हि क्वसौ, संप्रसारणं तु विभक्ताविति व्याश्रयत्वात् । न च बहिरङ्गत्वेनाऽसिद्धताऽस्त्विति शङ्क्यं, 'नाऽजानन्तर्ये' इति निषेधात् । 'वाह ऊठ्'सूत्रस्थबहिरङ्गपरिभाषाया अप्याभीय-त्वेनाऽऽल्लोपादिषु कर्तव्येष्वसिद्धत्वाच्च । न चोक्तपरिभाषाया आल्लोपादीनां च समानाश्रयत्वं नेति शङ्क्यम्, वसोः संप्रसारणे कृते ह्यजाद्याश्रयेणाल्लोपादीनि प्रवर्तन्ते । तेषु कर्तव्येषु संप्रसारणस्याऽसिद्धत्वात्तद्विषये बहिरङ्गपरिभाषाऽपि प्रवर्तेत इति तेषां तत्सत्त्वादिति दिक् । विषयलाभार्थमाभाद्ग्रहणं किम् ? । आभीयं प्रत्येवाऽभीयमसिद्धं नान्यं प्रतीति यथा स्यादित्येवमर्थम् । तेन 'अभाजि' 'राग' इत्यत्र 'भञ्जेश्च चिणि', 'रञ्जेश्च', 'घञि च भावकरणयोः' इति नलोपे कृते तस्याऽसिद्धत्वाऽभावात् 'अत उपधायाः' इति वृद्धिर्भवतीत्याहुः । स्यादेतत्—देभतुः देभुरित्यत्र 'श्रन्थिग्रन्थिदम्भी'-ति वक्ष्यमाणवचनेन लिटः कित्त्वान्नलोपेऽप्येत्वाभ्यासलोपौ न स्यातां, नलोपस्याऽसिद्धत्वात् । अत्राहुः—'श्नसोरल्लोपः' इति तपरकरणाल्लिङ्गादाभीयाऽसिद्धत्वमनित्यमिति नास्त्यत्र दोषः । तपरकरणं हि आस्तामित्यत्राऽऽडागमस्य लोपो माभू-दित्येतदर्थम् । यद्याडागमः श्नसोरल्लोपं प्रत्याभीयत्वेनाऽसिद्धः स्यात्तर्हि किं तेन तपरकरणेन ?। एवं च 'दम्भेश्चे'ति वक्ष्यमाणं नाऽपूर्वं वार्तिकं, किं त्वनित्यत्वबलरुभ्यमेवेति ॥ वुकः = 'वुक्'शास्त्रस्य । एवमग्रेऽपि । युट उदाहरणं 'दिदीये' । **बभूवेति** । अत्र प्राचा—'इन्धिभवतिभ्यां चे'ति सूत्रं पितोऽपि लिटः कित्त्वार्थमिति व्याख्याय 'अचोऽञ्णिती'ति वृद्धिप्राप्तौ 'क्ङिति चे'ति निषेध'इत्युक्तं, तदुपेक्षितम्। 'इग्लक्षणयोरेव गुणवृद्ध्योर्निषेध' इति सिद्धान्तात्। अन्यथा इक्स्थानिकयोर्निषेधे 'लैगवायन' इत्यत्रापि वृद्धिर्न स्यात् । न चाऽत्र कित्त्वसामर्थ्यादनिग्लक्षणाया अपि वृद्धेर्निषेध इति वाच्यं, थलि, उत्तमे णलि च गुणनिषेधेन कित्त्वस्य चरितार्थत्वात् । सूत्रं तु प्रत्याख्यातमेवाकरे । तथाच वार्तिकम्–'इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्य'मिति । यद्यपीह शब्दान्तरप्राप्त्या वुको नित्यत्वं नास्ति, तथापि कृताऽकृतप्रसङ्गित्वमात्रेणापि क्वचिन्नित्यता स्वीक्रियत इति पक्षोऽप्यस्मादेव वार्तिकादवगम्यते, तेन रधेर्णिचि परामप्युपधावृद्धिं बाधित्वा नित्यत्वात् 'रधिजभोरची'ति नुमि कृते रन्धयतीति सिद्धम् । नन्वेवमपि संयोगात्परस्य लिटः कित्त्वार्थमिन्धेश्चेत्यंशोऽपेक्षित एव । अन्यथा 'समीधे दस्यु हन्तम'मित्यत्रेन्धेर्नलोपो न स्यात् । मैवम् । 'छन्दस्युभयथे'ति सूत्रेण हि सार्वधातुकसंज्ञा आर्द्धधातुकसंज्ञा च विधीयते, तेन 'सार्वधातुकमपि'दिति लिटो ङित्त्वे स्यादेव नलोप इति वार्तिकाशयात् । अत्र नव्याः—'बभूवे'त्यत्र 'द्विर्वचनेऽची'त्यजादेशस्य निषेधाद्गुणवृद्धिभ्यां प्रागेव वुकः प्रवृत्त्या 'भुवो वुको नित्यत्वा'दिति वार्तिके 'नित्यत्वा'दिति हेतूपन्यासो निष्प्रयोजनः, शब्दान्तरप्राप्त्या वुको नित्यत्वं नास्ती'त्याशङ्क्य कृताऽकृतप्रसङ्गित्वमात्रेणापि क्वचिन्नित्यत्वं स्वीक्रियत इत्यादिसमाधानमपि व्यर्थमेवेत्याक्षिप्य

बा.]वुक आभीयस्य अचि श्नुधात्वित्युवङि आभीये कर्तव्येऽसिद्धतया ऊकारस्योवङि लघूपधगुणे बभोवेति प्राप्ते सतीत्यर्थः। वुग्विधिस्तु गुणवृद्धिबाधकत्वेन चरितार्थ इति भावः । **वुग्युटावुवङ्यणोरिति** । यथासङ्ख्यमन्वयः । **बभूवेति** । णलो णित्त्वं तु जगादेत्यादौ वृद्ध्यर्थम् । **बभूवतुरिति** । तसोऽतुसादेशे वुगादि पूर्ववत् । सकारस्य रुत्वविसर्गौ । **बभूवुरिति** । झेरुसादेशे वुगादि पूर्ववत् । सिपस्थलि बभू थ इति स्थिते–**आर्द्धधातुकस्येट्** । 'नेड्वशि कृती'त्य-स्मादनुवृत्त्यैव सिद्धेरिहेड्ग्रहणं न कार्यमिति 'नेड्वशी'ति सूत्रभाष्ये प्रत्याख्यातम् । आर्द्धधातुकस्येति किम् ? । जुगुप्सति ।

शे.]सूत्रमनित्यम्, 'श्नसोरल्लोपः' इति सूत्रस्थतपरकरणात्।तथाहि–अस्–तामिति स्थिते 'जनसने'ति सूत्रभाष्योक्तरीत्याऽऽ-भीयेषु विप्रतिषेधसत्त्वेन परत्वाल्लोपे तस्याऽऽभीयत्वेनाऽसिद्धत्वात्पुनःप्रसङ्गविज्ञानेनाऽऽटि लक्ष्यभेदात् 'लक्ष्ये लक्षणस्ये'ति न्यायाऽप्राप्तौ प्राप्तस्याऽऽटो लोपस्य वारणाय तत्र तपरकरणं, तच्चाऽऽटोऽसिद्धत्वे व्यर्थं सत्तदनित्यत्वज्ञापकमिति बोध्यम् । इदञ्च 'अत एके'ति सूत्रे भाष्ये स्पष्टम् । तेन दम्भेर्देभतुरिति सिद्धम् । **उवङीति** । णल्यपि वृद्ध्यपेक्षया नित्यत्वा-द्वुकि वृद्धेराभीयत्वाऽभावेन तत्राऽसिद्धत्वाऽभावात्तदप्राप्तावुवङः प्राप्तिः । अभ्यासविकारेषु बाध्यबाधकभावाऽभावाद्धलादिः

**कस्येड्वलादेः** ।७।२।३५। वलादेरार्द्धधातुकस्येडागमः स्यात् । बभूविथ । बभूवथुः । बभूव ॥ बभूव । बभूविव । बभूविम । **अनद्यतने लुट्** ।३।३।१५। भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् स्यात् । **स्यतासी लृलुटोः**

त.]स्वयमेव समादधुः—षाष्ठद्वित्वप्रकरणान्ते हि वार्तिककृता पूर्वविप्रतिषेधः पठ्यते 'द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपकिकिनोरुत्वेभ्यः' इति । तथाच 'द्विर्वचनेऽची'ति सूत्रं नारम्भणीयमित्याशयेन नित्यत्वादिति हेतुरुपन्यस्तः' इति । 'द्विर्वचनेऽचीति सूत्रेणाऽजादेशस्य स्थानिवद्भावो विधीयत' इति पक्षे तु द्वित्वात्प्रागेव वृद्ध्याद्यादेशस्य स्वीकृतत्वादादेशानन्तरमपि वुकः प्रवृत्तिरस्तीति भुवो वुको नित्यत्वादित्यादिग्रन्थः सम्यगेव । न चैवमपि नामधातुषु त्वापयति मापयतीत्यत्र 'मपर्यन्तस्य त्वमौ, पररूपात्पूर्वं नित्यत्वाट्टिलोप' इति ग्रन्थः कथं सङ्गच्छेतेति वाच्यं, 'प्रकृत्यैका'जिति सूत्रं भाष्ये प्रत्याख्यातमित्याशयेन तत्प्रवृत्तेः । अतएव त्वादयति मादयतीत्येव न्याय्यमिति तत्रोक्तमिति दिक् ॥ **आर्द्धधातुकस्येड्वलादेः** । 'नेड्वशि कृती'त्यत इडित्यनुवर्तमाने पुनरिड्ग्रहणं निषेधसंबद्धस्येटो निवृत्त्यर्थम् । वस्तुतस्तु 'समर्थानां प्रथमाद्वे'त्यनुवृत्तस्य पदत्रयस्य मध्ये 'प्राग्दिश' इत्यनन्तरं 'समर्थानां प्रथमा'दिति निवृत्तं, 'वे'ति त्वनुवर्तत इति व्याख्यानमिव 'नेति निवृत्तम्, इडित्यनुवर्तते' इति व्याख्यातुं शक्यत्वादिड्ग्रहणं त्यक्तुं शक्यम्, तथापि स्पष्टप्रतिपत्त्यर्थं तत्स्वीकृतमिति बोध्यम् । आर्द्धधातुकस्येति किम् ?। आस्ते, शेते। वलादेः किम् ?।एधनीयम् । ननु 'रुदादिभ्यः सार्वधातुके' इत्यनेन सार्वधातुकस्य यदीड्भवति तर्हि रुदादिभ्य एवे'ति नियमादास्ते शेत इत्यत्र इड् भवेदित्यार्द्धधातुकस्येति ग्रहणं व्यर्थम् । न च रुदादिभ्यः सार्वधातुक एवेति विपरीतनियमाद्रोदितेत्यत्र न स्यात्, आस्ते शेत इत्यत्र तु स्यादिति शङ्क्यम् । 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्चे'ति क्त्वासनोः कित्त्वस्य वैयर्थ्यप्रसङ्गात्, त्वदुक्तरीत्या रुदादेः क्त्वासनोरिडागमाऽभावेन 'न क्त्वा से'डिति निषेधाऽप्रवृत्त्या क्त्वाप्रत्यये औपदेशिककित्त्वस्य सुस्थत्वात् । 'हलन्ताच्चे'ति झलादिसनः कित्त्वाच्च । तस्माद्विपरीतनियमाऽसंभवेनार्द्धधातुकग्रहणं व्यर्थमेव।ननु तद्ग्रहणाऽभावे वलादेरित्यस्य–अङ्गस्येति यदधिकृतं तद्विशेष्यं स्यात्,ततश्च अडाटाविवेडागमोऽप्यङ्गस्य स्यात् । मैवम् । कृतेऽप्यार्द्धधातुकग्रहणे वलाद्यार्द्धधातुकस्य यदङ्गं तस्येडागम इति व्याख्यानापत्त्योक्तदोषतादवस्थ्यात्, अकृतेऽपि तद्ग्रहणेऽङ्गस्य यो वलादिरङ्गनिमित्तं तस्येडिति व्याख्यानादिष्टसिद्धेश्च । तस्मादुभयथापि व्याख्याने शरणीकर्तव्ये 'आर्द्धधातुकस्ये'त्यस्य त्याग एव श्रेयान् । नन्वेवं'केशवः,''अञ्जना''वृक्षत्व'मित्यत्रेट् स्यात् ।'ऋत इद्धातो'रित्यतो धातोरित्यनुवर्तनादधातोः परस्य न भवतीति परिहारसंभवेऽपि लूभ्यां पूभ्यामित्यत्र दुर्वार एवेडागमः।विहितविशेषणेनाप्ययं वारयितुमशक्यः,क्विबन्ता धातुत्वं न जहतीति लूभ्यां लूभिरित्यत्र भ्यामादेर्धातोर्विहितत्वाऽनपायात् । किंच 'जुगुप्सते' इत्यादौ 'गुप्तिज्किद्भ्यः' इति धातोर्विहितस्य सन इड् दुर्वारः स्यात् । न चेह धातोः परत्र विहितस्य वलादेरिति व्याख्यानलाभाय धातोरिति पञ्चम्यन्तमपेक्षितं, तच्च दुर्लभम्, 'ऋत इद्धातो'रित्यत्र धातोरित्यस्य षष्ठ्यन्तत्वात्, तथाच वृक्षत्वमित्यादावपीडागमप्रसङ्ग इति वाच्यं, शब्दाधिकारपक्षे स्वरितत्वेन तत्तदर्थशब्दोऽनुमीयत इति पञ्चम्यन्तलाभात् । अस्तु वा षष्ठ्यन्तत्वं, विहितत्वं षष्ठ्यर्थ इति व्याख्यायामिष्टसिद्धेः । तस्माज्जुगुप्सत इत्यादावतिप्रसङ्गवारणार्थमार्द्धधातुकस्येति ग्रहणम् । केचित्तु–धातोरित्युचार्य विहितो यः प्रत्ययस्तस्येडिति यदि व्याख्यायेत तदा लूभ्यां जुगुप्सत इत्यत्रातिप्रसङ्गाऽभावादार्द्धधातुकस्येति व्यर्थमित्याहुः । **बभूविवेति** । न चाऽत्र 'श्र्युकः किती'तीण्निषेधे वुगागमोऽपि न स्यादिति शङ्क्यं, क्रादिनियमादिटः प्रवृत्तेः ॥ **अनद्यतने** । अतीताया रात्रेः पश्चार्द्धेन, आगामिन्याः पूर्वार्द्धेन सहिते

बा.]अत्र 'गुप्तिज्किद्भ्यः' इति सनो धातोरित्यधिकृत्य विहितत्वाऽभावान्नार्द्धधातुकत्वम् । **बभूविथेति** । सिपस्थलि तस्य इडागमे वुगादि पूर्ववत् । **बभूवथुरिति** । थसोऽथुसादेशे वुगादि पूर्ववत् । सकारस्य रुत्वविसर्गौ । **बभूवेति** । मध्यमपुरुषबहुवचनस्य अकारः सर्वादेश इति 'परस्मैपदानां णलतु'सित्यत्रोक्तम् । वुगादि पूर्ववत् । **बभूवेति** । मिपो णलि वुगादि पूर्ववत् । **बभूविवेति** । वसो वादेशे वलादित्वादिडागमे वुगादि पूर्ववत् । नचात्र 'श्र्युकः किती'तीडागमनिषेधः शङ्क्यः, 'कृसृभृवृस्तुद्रुस्रुश्रुवो लिटी'ति क्रादिनियमादिटसिद्धेः । **बभूविमेति** । मसो मादेशे इडागमे वुगादि पूर्ववत् । इति लिट्प्रक्रिया । **अनद्यतने लुट्** । धातोरित्यधिकृतम् । 'भविष्यति गम्यादयः' इत्यतो भविष्यतीत्यनुवर्तते । भविष्यत्यनद्यतन इति धात्वर्थेऽन्वेति । तदाह–**भविष्यत्यनद्यतन इति** । अनद्यतनशब्दस्तु परोक्षे लिडित्यत्र व्याख्यातः । उदाविती । लुटस्तिबादयः । भू-ति इति स्थिते 'कर्तरि शब्'िति शपि प्राप्ते–**स्यतासी लृ** । स्यश्च तासिश्चेति द्वन्द्वात्प्रथमाद्विवचनम् । तासेरिकार उच्चारणार्थः । लृ लुट् अनयोर्द्वन्द्वात्सप्तमीद्विवचनम् । **ग्रहणमिति** ।

शे.]शेषाऽनयोरत्र समावेशो बोध्यः। **आर्द्धधातुकस्येट्** । 'नेड्वशि कृती'ति प्रकृते'एकयोगनिर्दिष्टानामेकदेशोऽप्यनुवर्त्तते' इति न्यायेन नेति निवृत्त्या सिद्धे पुनरिड्ग्रहणं 'नेड्वशी'ति सूत्रे भाष्ये प्रत्याख्यातम् । आर्द्धधातुकस्येति किं ?। अजुगुप्सते । **स्यतासी** । यद्यपि लृशब्देन लृङ्लृटोर्ग्रहणं, तथापि इह यथासङ्ख्यं, वाचकशब्दसाम्यात् । **शबाद्यपवाद**

।३।१।३३। 'लृ' इति लृङ्लुटोर्ग्रहणम्। धातोः स्यतासी एतौ प्रत्ययौ स्तो लृलुटोः परतः। शबाद्यपवादः॥ **आर्द्धधातुकं शेषः** ।३।४।११४। तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात्। इट्॥ **लुटः प्रथमस्य डारौरसः** ।२।४।८५। डा रौ रस् एते क्रमात्स्युः। डित्वसामर्थ्यादभस्यापि टेर्लोपः। **पुगन्तलघूपधस्य च** ।७।३।८६। पुगन्तस्य लघूपधस्य चाऽङ्गस्येको गुणः स्यात्सार्वधातुकार्द्धधातुकयोः। येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्। तेन भिनत्तीत्यादावनेकव्यवहितत्वयेको न गुणः। भवित्—आ।

त.]दिवसोऽद्यतन इति 'कालोपसर्जने च तुल्य'मित्यत्र स्थितम्॥ **आर्द्धधातुकं। धातोरिति।** 'धातोरेकाचः' इत्यत्र धातोरित्यनुवर्तमाने पुनर्धातोरित्यधिकारसूत्रारम्भादिदं लभ्यते। एतच्च तत्रैव मनोरमायां स्पष्टम्॥ धातोरितिविहित इति किम्? । लूभ्यां । जुगुप्सते॥ **अनेकव्यवहितस्येति** । सार्वधातुकादिकमिको विशेषणं न त्वङ्गस्येति भावः॥

बा.]लृस्वरूपस्योभयत्राऽविशिष्टत्वादिति भावः। धातोरित्यधिकृतम्। तदाह—**धातोरिति।** भू तास् ति इति स्थिते—**आर्द्धधातुकं शेषः**। 'तिङ्शित्सार्वधातुक'मिति पूर्वसूत्रोपात्ततिङ्शिदन्यः शेषः। तदाह—**तिङ्शिद्भ्योऽन्य इति। विहित इति।** 'धातो'रित्यधिकृतं विहितविशेषणमाश्रीयत इति भावः। एवं च 'जुगुप्सते' इत्यादौ 'गुप्तिज्किद्भ्य' इत्यादिविहितसनादीनां धातोरित्युच्चार्य विहितत्वाऽभावेन आर्द्धधातुकत्वाऽभावादिडागमो न भवति। **एतत्संज्ञः स्यादिति।** आर्द्धधातुकसंज्ञक इत्यर्थः। **इडिति।** तास्प्रत्ययस्योक्तसूत्रेणार्द्धधातुकत्वात्स्वतो वलादित्वाच्च 'आर्द्धधातुकस्येड्वलादे'रितीडागम इत्यर्थः। भू इ तास् इति स्थिते—उकारस्य गुणेऽवादेशे च भविता स् इतिस्थिते—**लुटः प्रथमस्य।** डा रौ रस् एषां द्वन्द्वात्प्रथमाबहुवचनम्। 'लुट'इति स्थानषष्ठी। लुडादेशस्य प्रथमपुरुषस्येत्यर्थः। **क्रमादिति**—यथासङ्ख्यलभ्यम्। ननु परस्मैपदस्य त्रयः प्रथमाः, आत्मनेपदस्य च त्रयः प्रथमा इति स्थानिनः षट्, आदेशास्तु त्रय इति कथं यथासङ्ख्यमिति चेन्न, डाश्च रौश्च रस् चेति कृतद्वन्द्वानां डारौरसश्च डारौरसश्चेत्येकशेषमाश्रित्य भाष्ये समाहितत्वात्। डाभावस्य चादेशत्वात् प्राक् प्रत्ययत्वाऽभावेन 'चुटू' इत्यस्याऽप्रवृत्त्या सर्वादेशत्वम्। सति च तस्मिन् प्रत्ययत्वाच्चुटू इति टकारस्येत्संज्ञेति भाष्ये स्पष्टम्। एवं च भू तास् आ इति स्थिते प्रक्रियां दर्शयति—**डित्वसामर्थ्यादिति।** डाभावस्य कप्रत्ययावधिषु स्वादिष्वनन्तर्भूतत्वेन तस्मिन् परे भत्वाऽभावेऽपि डित्त्वसामर्थ्याट्टेरिति टिलोप इत्यर्थः। तथाच भवित्—आ इति स्थिते—**पुगन्तलघू।** 'मिदेर्गुण' इत्यतो गुण इत्यनुवर्तते। अङ्गस्येत्यधिकृतमवयवषष्ठ्यन्तमाश्रीयते। पुगन्तलघूपधस्येति तद्विशेषणम्। पुक् अन्तो यस्य तत् पुगन्तं। लघ्वी उपधा यस्य तल्लघूपधं। पुगन्तं च लघूपधं चेति समाहारद्वन्द्वात् षष्ठी। 'इको गुणवृद्धी' इति परिभाषया 'इक' इत्युपस्थितं स्थानषष्ठ्यन्तमाश्रीयते। तदाह—**पुगन्तस्येत्यादिना। अङ्गस्येक इति।** अङ्गावयवस्येत्यर्थः। द्वेष्टि द्वेष्टेत्याद्युदाहरणम्। नन्वत्राऽङ्गावयवस्येकस्तदुपरितनहला व्यवधानात्सार्वधातुकपरत्वाऽभावात्कथमिह इको गुण इत्यत आह—**येन नेति।** येन = स्थान्युत्तरवर्णेन परनिमित्तस्य, नाऽव्यवधानं = व्यवधानमवर्जनीयमिति यावत्, तेन = वर्णेन व्यवहितेऽपि परनिमित्तं कार्यं भवतीत्यर्थः। कुत इत्यत आह—**वचनप्रामाण्यादिति।** तथाविधवर्णव्यवधानेऽपि कार्यप्रवृत्तौ वचनारम्भस्यैव प्रमाणत्वादित्यर्थः। लघूपधस्य हीको गुणो विधीयते, उपधात्वं चाऽन्त्यादलः पूर्वस्यैव भवति। ततश्चेक उपर्यन्त्यस्य वर्णस्याऽभावे इक उपधात्वाऽभावाल्लघूपधस्याऽङ्गस्य गुणविधानं निर्विषयमेव स्यादतस्तद्व्यवधानं सोढव्यमिति भावः। ननु व्यवहितस्यापीको गुणप्रवृत्त्यभ्युपगमे भिनत्ति छिनत्तीत्यादौ इकारस्यापि गुणः स्यादित्यत आह—**तेनेति।** अवर्जनीयव्यवधानस्यैवाश्रयणेनेत्यर्थः। उपधात्वस्यैकमेव वर्णमुपरितनमादाय सम्भवादनेकवर्णव्यवधानं नादर्तव्यमिति भावः। **गुणे प्राप्त इति।** भवित्—आ इति स्थिते डाभावसंपन्नस्याऽऽकारस्य स्थानिवत्त्वेन सार्वधातुकतया तस्मिन् परे भविदित्यङ्गावयवस्योपधाभूतस्येकारस्य गुणे प्राप्ते सतीत्यर्थः। न च भूधातोर्विहितं सार्वधातुकं प्रति भूधातुरेवाऽङ्गं, न तु भवित् इति विकरणविशिष्टमिति वाच्यम्, अङ्गसंज्ञासूत्रे तदादिग्रहणेन विकरणविशिष्टस्याऽप्यङ्गत्वात्। **दीधीवेवी।** 'दीधीङ् दीप्तिदेवनयोः' 'वेवीङ् वेतिना तुल्ये'। दीधीश्च वेवीश्च इट् चेति द्वन्द्वात् षष्ठी। 'इको गुणवृद्धी' इत्यतो गुणवृद्धी इति, 'न धातुलोप' इत्यतो नेति चानुवर्तते। तदाह—

शे.]इति। अत्रार्द्धधातुक इत्यनुवृत्त्याऽस्य लावस्थायां प्राप्तावपि यदीदं न स्यात्तदा शप्स्यात्कृते त्वप्राप्तिरेवेत्येतावतेति भावः। **लुटः प्रथ।** एकार्थस्यैकार्थं इत्याद्यान्तरतम्यान्निर्वाहः। **डित्त्वेति।** सर्वादेशत्वन्त्वनुबन्धान्तरेणापि सुशकमिति भावः। **पुगन्त।** बहुव्रीहिगर्भो द्वन्द्वः। सार्वधातुकादिकञ्चेको विशेषणम्। अङ्गावयवस्येक इत्यर्थः। अत एव भिनत्तीत्यादौ न गुणः। नन्वेवं भेत्तेत्यादावपि न स्यादत आह—**येन नेति।** सूत्रारम्भसामर्थ्यादेकवर्णव्यवधानमेवाश्रीयते। अत्र क्नोः कित्त्वसामर्थ्याद्भूतपूर्वलघूपधत्वाश्रयो गुणः। 'इको गुणवृद्धी' इति सूत्रे भाष्ये तु—पुकि अन्तो, लघ्वी उपधा, तयोः समाहारद्वन्द्व इत्याश्रितम्। सार्वधातुकादिकञ्चाङ्गविशेषणं, तत्रैवोत्थिताकाङ्क्षत्वात्। तत्पराऽङ्गावयवपुगन्तलघूपधारूपेको

अत्रेको गुणे प्राप्ते ॥ **दीधीवेवीटाम्** ।१।१।६। दीधीवेव्योरिटश्च गुणवृद्धी न स्तः । भविता ॥ **तासस्त्योर्लोपः** ।७।४।५०। तासेरस्तेश्च लोपः स्यात्सादौ प्रत्यये परे ॥ **रि च** ।७।४।५१। रादौ प्रत्यये प्राग्वत् । भवितारौ । भवितारः । भवितासि । भवितास्थः । भवितास्थ । भवितास्मि । भवितास्वः । भवितास्मः ॥

**लृट् शेषे च** ।३।३।१३। भविष्यदर्थाद्धातोर्लृट् स्यात्क्रियार्थायां क्रियायामसत्यां सत्यां च । स्यः । इट् । भविष्यति । भविष्यतः । भविष्यन्ति । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यामि । भविष्यावः ।

---

त.] **तासस्त्योः**। 'सः स्यार्धधातुके' इत्यतः सीत्यनुवर्तते, अङ्गाक्षिप्तस्य प्रत्ययस्य सीत्यनेन विशेषणात् 'यस्मिन्विधि'रिति तदादिविधिः, तदिदमाह—**सादाविति** । एवं रादावित्यत्राप्यूह्यम् । **प्राग्वदिति** । तासेर्लोप इत्यर्थः । अस्तिस्तु नेह संबध्यते, ततो रादिप्रत्ययस्याऽसंभवात् ॥ **लृट् शेषे च** । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थाया'मिति प्रागुक्तं, ततोऽन्यः शेष इत्याह—**असत्यामिति**।चार्थमाह—**सत्यामिति**।हरदत्तस्त्वाह—अस्वरितत्वादेव क्रियार्थायां क्रियायामिति नानुवर्तते । एवं च 'शेषे चे'ति सुत्यजमिति । तच्चिन्त्यम् । 'शयिष्यत इति स्थीयते'इत्यादौ तुमुना लृटो बाधापत्तेः, 'क्त्ल्युट्तुमुन्खलर्थेषु वासरूपविधेरभावात् । अत्र च ज्ञापकं 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चे'त्यत्र लोटा बाधा माभूदिति पुनः कृत्यविधि'रित्यादि कृदन्ते वक्ष्यति । इदमपि ज्ञापकमित्यन्यदेतत् ॥ यत्तु प्राचा—'भविष्यतीति व्रजती'त्युदाहृतं, तदापाततः, 'तुमुन्विषयेऽपि लृङ्वति तुमुना लृण्न बाध्यते' इत्येतत्प्रतिपादनाय तस्याऽनुपयोगात् , न हि भविष्यतीत्यत्र कर्तरि तुमुनः प्राप्तिरस्ति, भावे हि सः । समानकर्तृकेष्वेवेति च वक्ष्यते । लृडित्येतावत्सूत्रकरणेऽपि 'भविष्यतीति व्रजती'त्ययं

---

बा.] **दीधीवेव्योरित्यादिना** । अथ प्रथमपुरुषद्विवचने तास परे शबपवादे तासि इडागमे ऊकारस्य गुणे अवादेशे तसो रौभावे भवितास्-रौ इति स्थिते 'रि चे'ति सकारस्य लोपं वक्ष्यंस्तत्रानुवृत्तिप्रतिपत्तये तत्पूर्वसूत्रमुपन्यस्यति—**तासस्त्योः** । तास् चाऽस्तिश्चेति द्वन्द्वात्षष्ठी । 'सःस्यार्धधातुके' इत्यतोऽनुवृत्तेन सीति सप्तम्यन्तेनाऽधिकृताङ्गाक्षिप्तप्रत्ययस्य विशेषणात्तदादिविधिः । तदाह—**तासेरित्यादि**। 'अस्ते'रिति श्तिपा निर्देशः। अस्धातोरित्यर्थः । अलोऽन्त्यस्येत्यन्त्यस्य लोपः । भवितासीत्यनुपदमेवोदाहरणं वक्ष्यते । **रि च** । 'तासस्त्योर्लोप' इति सूत्रमस्तिवर्जमनुवर्तते । रीत्यनेनाऽङ्गाक्षिप्तप्रत्ययस्य विशेषणात्तदादिविधिः । तदाह—**रादाविति** । **प्राग्वदिति** । तासेर्लोप इत्यर्थः । अस्तिस्तु नानुवर्तते, ततो रादिप्रत्ययस्याऽसंभवात् । आर्द्धधातुके तस्य भूभावविधानात् । एवं च भवितास् रावित्यत्र सलोपे सति रूपमाह—**भविताराविति** । **भवितार इति** । झौ तासि इडागमे ऊकारस्य गुणे अवादेशे झे रस् इत्यादेशे तासः सकारस्य लोपे रसः सकारस्य रुत्वविसर्गाविति भावः । **भवितासीति** । सिपि तासि इडागमे ऊकारस्य गुणे अवादेशे 'तासस्त्यो'रिति सकारस्य लोप इति भावः । **भवितास्थ इति** । थसि तासि इडागमे गुणेऽवादेशे थसः सस्य रुत्वविसर्गाविति भावः । **भवितास्थेति** । बहुवचने थे तासि इटि गुणावादेशौ । **भवितास्मीति** । मिपि तासि इटि गुणावादेशौ । **भवितास्व इति** । वसि तासि इटि गुणे अवादेशे रुत्वविसर्गौ । एवं मसि भवितास्म इति रूपम् । इति लुट्प्रक्रिया । **लृट् शेषे च** । धातोरित्यधिकृतम् । 'भविष्यति गम्यादयः' इत्यतो भविष्यतीत्यनुवृत्तं धात्वर्थेऽन्वेति। तदाह-**भविष्यदर्थाद्धातोर्लृट् स्यादिति** । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थाया'मिति पूर्वसूत्रे क्रियार्थायां क्रियायामित्यर्थनिर्देशः स्थितः, ततोऽन्यः शेषः । 'क्रियार्थायां क्रियायामसत्या'मिति लभ्यते । चकारात्—'क्रियार्थायां क्रियायां सत्या'मित्यपि लभ्यते । तदाह—**क्रियार्थायां क्रियायामसत्यां सत्यां चेति** । ननु 'लृ'डित्येव सूत्रमस्तु, 'शेषे चे'ति मास्तु । भविष्यदर्थाद्धातोर्लृडित्येतावतैव क्रियार्थायां क्रियायामसत्यां सत्यां च लृटो लाभ इति चेन्मैवम् । 'शयिष्यत इति स्थीयते' इत्यादौ भावकर्त्रोस्तुमुन्ण्वुल्भ्यां लृटो बाधाऽभावार्थत्वात् । न च वासरूपविधिना तत्सिद्धिः शङ्क्या, 'क्त्ल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ती'ति तन्निषेधादित्यास्तां तावत् । **स्य इडिति** । लृटस्तिपि 'स्यतासी लृलुटो'रिति स्यप्रत्ययः । तस्य वलाद्यार्द्धधातुकत्वादिडागम इत्यर्थः । **भविष्यतीति** । स्यप्रत्ययस्य इटि ऊकारस्य गुणे अवादेशे प्रत्ययावयवत्वात्सकारस्य षत्वे भविष्यतीति रूपमित्यर्थः।तसादौ भविष्यत इत्याद्यप्येवं योज्यम् । भविष्यामीत्यादौ 'अतो दीर्घो यञी'ति दीर्घः । इति लृट्प्रक्रिया । **लोट् च** । 'विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु'

---

शे.] गुण इत्यर्थ इति तदाशयः। **दीधीवे**। इडत्रागम एव, व्याख्यानात् । **तासस्त्योः**। 'सः स्यार्द्धधातुके' इत्यतोऽनुवृत्त-'सी'त्येतद्बोधितसकारस्य प्रत्ययावयवस्यैव सम्भवेन फलितमाह—**सादाविति** । 'लृट् शेषे' इति 'च'रहितः पाणिनेः पाठ इति भाष्यस्वरसः । तत्र योगविभागः—'**लृट्**' इति । अत्र क्रियार्थायामित्याद्यनुवर्त्तते । 'शेषे'इति अक्रियार्थोपपदार्थम् । न च क्रियार्थेत्यादिनिवृत्त्यैव सिद्धे शेषग्रहणं व्यर्थम्, भावकर्त्रोस्तुमुन्ण्वुल्भ्यां लृटो बाधाऽभावाय तत् । न च वासरूपविधिना तत्सिद्धिः, 'तुमुन्ण्वुलौ'इति सूत्रे ण्वुलग्रहणेन क्रियार्थायां क्रियायामुपपदे वासरूपविधिना प्रत्ययान्तराऽ-

भविष्यामः। **लोट् च** ।३।३।१६२। विध्यादिष्वर्थेषु धातोर्लोट् स्यात्। आशिषि **लिङ्लोटौ** ।३।३।१७३। **एरुः** ।३।४।८६। लोट इकारस्य उ[कार]: स्यात् । भवतु ॥ **तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्** ।७।१।३५। आशिषि तुह्योस्तातङ् स्यात् । अनेकाल्त्वात्सर्वादेशः । यद्यपि 'ङिच्चे'त्ययमपवादः,तथाप्यनन्यार्थङित्त्वेष्वनङादिषु चरितार्थं इति गुणवृद्धिप्रतिषेध-संप्रसारणाद्यर्थतया संभवत्प्रयोजनङकारे तातङि मन्थरं प्रवृत्तः परेण बाध्यते, इहोत्सर्गापवादयोरपि समबलत्वात्। भवतात् ॥ **लोटो लङ्वत्** ।३।४।८५। लोटो लङ इव कार्यं

---

त.]सिष्यत्येवेत्यास्तां तावत् ॥ **लोट् च**। 'विधिनिमन्त्रणे'त्याद्यनुवर्तते। तदाह-**विध्यादिष्विति**। **आशिषि लिङ्लोटौ**। ननु विध्यादिसूत्र एव संप्रश्नप्रार्थनाशीःष्वित्युच्यतां किमनेन पृथक्सूत्रकरणेनेति चेत्। अत्राहुः-इह हि 'क्तिच्क्तौ चे'त्युत्तरसूत्रार्थमाशिषीति तावदावश्यकम्। लिङ्लोटावपीहैव विधेयौ, विध्यादिसूत्रे आशीर्ग्रहणे हि 'स्मे लो'डित्यादिना स्वविषये परत्वाद्बाधः स्यात्। सिद्धान्ते तु परत्वादेष विधिः'स्मे लो'डित्यादेर्बाधक इति महान्विशेष इति। **तुह्योस्तातङ्**। यद्यपि'तिह्योस्तात'ङिति वक्तुं शक्यं, तथापि लाघवाऽभावादतिप्रसङ्गवारणाय हिशब्दसाहचर्याश्रयणे लोट् इत्यनुवर्तमाने वा गौरवाच्च तुह्योरित्युक्तम्। **लोटो लङ्वत्**। 'लोट' इत्युपमेये षष्ठीदर्शनात् उपमानादपि]

---

बा.]इत्यनुवर्तते। तदाह-**विध्यादिष्विति**। विध्यादिशब्दा अनुपदमेव लिङ्विधौ व्याख्यास्यन्ते। **आशिषि लिङ्**। आशिष्यपीत्यर्थः। आशासनमाशीः, इष्टप्राप्तीच्छा। लोटस्तिपि विशेषमाह-**एरुः**। 'एः-उः' इति च्छेदः। एरिति षष्ठ्यन्तम्। इवर्णस्येति लभ्यते। 'लोटो लङ्व'दित्यतो लोट इत्यनुवर्तते। तदाह-**लोट इति**। **भवत्विति**। तिपि शपि गुणेऽवादेशे तिप इकारस्य उकारः। अथाऽऽशिषि लोटो विशेषमाह-**तुह्योस्तातङ्**। तुश्च हिश्च तुही, तयोरिति विग्रहः। तातङि ङकार इत्। अकार उच्चारणार्थः। तादित्यादेशः शिष्यते। ननु किमस्य अनेकाल्त्वात्सर्वादेशता, उत ङित्त्वादन्तादेशतेत्यत आह-**अनेकाल्त्वात्सर्वादेश इति**। ननु 'ङिच्चे'त्यस्य सर्वादेशापवादतयाऽनङादेरिव तातङोऽप्यन्त्यादेशत्वमेवोचितमित्याशङ्कते-**यद्यपीति**। परिहरति-**तथापीति**। **परेण बाध्यत इति**। तातङादेशे 'ङिच्चे'त्ययं विधिः 'अनेकाल्शित्सर्वस्ये'ति परेण बाध्यत इत्यर्थः। ननु 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय' इति परापेक्षया अपवादस्य प्रबलत्वान्ङिच्चेत्यन्तादेशत्वमेव तातङि युक्तमित्यत आह-**मन्थरं प्रवृत्त इति**। 'ङिच्चेति विधि'रिति शेषः। तातङ्विषये ङिच्चेति विधिर्मन्थरं प्रवृत्त इति हेतोः परेण सर्वादेशविधिना बाध्यत इत्यर्थः। कुतो मन्दप्रवृत्तिकत्वमित्यत आह-**अनन्यार्थेत्यादिना**। अन्तादेशत्वादन्योऽर्थो यस्य ङित्त्वस्य न विद्यते तदनन्यार्थम्। तथाविधं ङित्त्वं येषां तेषु अनङादिषु ङिच्चेति विधिश्चरितार्थः-लब्धप्रयोजनक-इति कृत्वा मन्दं प्रवृत्त इत्यर्थः। तातङो ङित्त्वं तु अन्तादेशत्वापेक्षयाऽनन्यार्थं नेत्याह-**सम्भवत्प्रयोजनङकारे इति**। सम्भवन्ति प्रयोजनानि अन्यानि यस्य स सम्भवत्प्रयोजनः, तथाविधो ङकारो यस्य तथाविधे तातङीत्यर्थः। कथं सम्भवत्प्रयोजनकत्वमित्यत आह-**गुणवृद्धिप्रतिषेध-सम्प्रसारणाद्यर्थतयेति**। छिन्तात्दित्यादौ लघूपधादिगुणनिषेधः। स्तुतात्,युतादित्यादा वुतो वृद्धिर्लुकि हली'ति विहिताया वृद्धेर्निषेधः। 'वश कान्तौ' उष्टादित्यत्र 'ग्रहिज्यावयी'ति सम्प्रसारणम्। आदिना ब्रूतादित्यत्र 'ब्रुव ई'डितीटोऽभावस्य सङ्ग्रहः। ननु तातङ्विषये ङिच्चेति विधिर्मन्दं प्रवर्तताम्, अथापि 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय'इति न्यायेन परस्यापि सर्वादेशविधेरपवादभूतेन ङिच्चेत्यनेन बाध एवोचित इत्यत आह-**इहेति**। इह = तातङ्विषये अनेकाल्शित्सर्वस्येति स.मान्यशास्त्रस्य, ङिच्चेति विशेषशास्त्रस्य च समबलत्वात्सामान्यशास्त्रं विशेषशास्त्रेण न बाध्यत इत्यर्थः। अयं भावः-अपवादशास्त्रस्य परनित्यान्तरङ्गापेक्षया प्राबल्ये निरवकाशत्वमेव बीजम्। प्रकृते च ङिच्चेति विधिरनङादिङित्त्वमन्तादेशत्वैकप्रयोजनकं प्रयोजनान्तरविरहेण निरवकाशत्वाज्झटिति परिगृह्णन्कृतार्थतामनुभवन्, तातङो ङित्त्वं प्रयोजनान्तरसत्त्वेन सावकाशत्वादुपेक्षत इति। तदुक्तं भाष्ये-'ङित्त्वस्य स.वकाशत्वाद्विप्रतिषेधात्तातङ्सर्वादेश' इति। अधिकन्तु विस्तरभिया विरम्यते। **भवतादिति**। आशिषि लोटस्तिपि शपि गुणे अवादेशे उकारे तोस्तातङ्सर्वादेशः। ङकार इत्। द्वितीयतकारादकार उच्चारणार्थः। **लोटो लङ्वत्**। लङ इव लङ्वत्। 'तत्र तस्येवे'ति षष्ठ्यन्ताद्वतिः। तदाह-**लोटो लङ इवेति**। ननु तर्हि 'लुङ्लङ्लृङ्क्ष्वडुदात्त' इत्यडागमोऽपि स्यादित्यत आह-**तेनेति**। लङ इति स्थानषष्ठ्यन्ताद्वतिप्रत्ययाश्रयणेनेत्यर्थः। अडागमस्तु न लङो विधीयते, किन्तु लङि

---

शे ]भावज्ञापनस्य भाष्ये उक्तत्वात्। सर्वञ्चेदं भाष्ये स्पष्टम्। **आशिषि**।आशीः-इष्टप्राप्तीच्छा। **अनन्यार्थङित्त्वेष्विति**। तद्बलकल्प्यमानाऽर्थानुवाद एव 'ङिच्चे'त्येतत् अर्थान्तरकल्पनानिवृत्त्यर्थमिति भावः। परिभाषाणाञ्च प्रायेण पक्षप्राप्तार्थानुवादेनाऽर्थान्तरनिवृत्त्यर्थत्वं 'व्रीहीनवहन्ती'त्यादिवदिति स्पष्टमेव। **संप्रसारणादीति**। आदिना-ब्रुव ईडभावः। **सम्भवत्प्रयोजनेति**।इदं प्रयोजनं सर्वादेशत्वे एव, नाऽन्त्यादेशत्वे, अप्रत्ययत्वात्। **मन्थरमिति**। सम्भवत्प्रयोजनतया

स्यात्। तेन तामादयः सलोपश्च। तथा हि–**तस्थस्थमिपां तांतंताऽमः** ।३।४।१०१। ङितश्चतुर्णां तामादयः क्रमात्स्युः ॥ **नित्यं ङितः** ।३।४।९९। सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः स्यात्। 'अलोऽन्त्यस्ये'–ति सस्य लोपः। भवताम्। भवन्तु ॥ **सेर्ह्यपिच्च** ।३।४।८७। लोटः सेर्हिः स्यात्सोऽपिच्च ॥ **अतो हेः**

---

त.]षष्ठ्यन्तादेव वतिः, तदाह–**तेनेति**। अडाटौ तु नातिदिश्येते, न हि तौ लङः क्रियेते, किं तु लङि अङ्गस्येति भावः॥ नन्वेमपि यान्तु वान्तु इत्यत्र 'लङः शाकटायनस्ये'ति जुस्स्यात्, जुह्वतु विदन्त्वित्यत्र तु 'सिजभ्यस्ते'ति जुस्स्यात्। अत्राहुः–'विदो लटो वे'ति वाग्रहणमिहानुवर्त्त्य व्यवस्थितविभाषाश्रयणान्न जुस्। यद्वा 'लङः शाकटायनस्ये'ति सूत्रे 'नित्यं ङितः' इत्यतो 'ङित' इत्यनुवृत्त्यैवेष्टसिद्धेर्लङ्ग्रहणमतिरिच्यते, लुङि सिचा, लृङि स्यप्रत्ययेन च व्यवधानात्, लिङि तु 'झेर्जु'सिति जुसो विहितत्वाच्च, 'ङित' इत्यस्य लङ्येव पर्यवसानात्। ततो लङ्ग्रहणं विभज्यते। नियमश्चायं 'लङेव यो लङ् तस्यैव झेर्जुस् न तु लङ्वद्भावेन। यो लङ् तस्ये'त्यतो नोक्तदोष' इति। तच्चिन्त्यम्। अदुरित्यत्र 'सिजभ्यस्ते'ति नित्यजुसं बाधित्वा परत्वाच्छाकटायनस्येति विकल्पप्रसङ्गात्। तस्माल्लङ्ग्रहणं शाकटायनसूत्रे कर्तव्यमेव, न तु तदतिरिच्यते। न च 'आतः' इति सूत्रेणाऽदुरित्यत्र नित्यं जुस्स्यादिति वाच्यं, तस्य नियमार्थत्वेन विध्यर्थत्वाऽयोगात्, अन्यथा अभूवन्नित्यत्र 'सिजभ्यस्ते'ति जुस् दुर्वार एव स्यादिति नव्याः॥ यदि त्विह 'आतः' इति सूत्रमावर्त्त्य विध्यर्थता नियमार्थता च व्याख्यायेत तदा तूक्तदोषाऽभावाद्यद्वेति समाधानमपि सम्यगेव, शाकटायनस्येति जुसो वैकल्पिकत्वात्। तदभावपक्षे पुनःप्रसङ्गविज्ञानात् 'सिजभ्यस्ते'ति जुसि स्वीकृते तु सुतरां सम्यगेव, परं तु जुह्वतु विन्दन्त्वित्यत्र जुस्वारणाय व्यवस्थितविभाषा त्वाश्रयणीयैवेति दिक्। **सकारान्तस्येति**। 'ङिल्लकारोत्तमसकारस्ये'ति प्राचो व्याख्यानं त्वयुक्तं, भूयासमित्यादावतिप्रसङ्गः स्यादिति भावः। **ङिदुत्तमस्येति**। ङिल्लकारोत्तमस्येत्यर्थः। तेन भवाव भवामेत्यादौ नातिप्रसङ्गः॥ **सोऽपिच्चेति**। एवं च पित्त्वेनानुदात्तस्य सिपः

---

बा.]अङ्गस्येति भावः। केन तामादयः, केन वा सलोप इत्यत आह–**तथा हीति**। तामादयः सलोपश्च यथा ज्ञायन्ते तथा स्पष्टमुच्यन्त इत्यर्थः। **तस्थस्थमिपां**। तस्, थस्, थ, मिप्,–एषां द्वन्द्वात्षष्ठीबहुवचनम्। ताम् तम् त अम् एषां द्वन्द्वात्प्रथमाबहुवचनम्। 'नित्यं ङित' इत्यस्मान्ङित इत्यनुवर्तते। तदाह–**ङितश्चतुर्णामिति**। ङितो लकारस्य आदेशभूतानामित्यर्थः। **क्रमादिति**। यथासङ्ख्यसूत्रलभ्यमिदम्। **नित्यं ङितः**। उत्तमपुरुष एवास्य सूत्रस्य प्रयोजनम्, प्रसङ्गादिहोपन्यस्तम्। 'स उत्तमस्ये'ति सूत्रमनुवर्तते। तत्र 'स' इति षष्ठ्यन्तम्। तेन उत्तमो विशेष्यते। तदन्तविधिः। 'इतश्च लोप' इत्यतो 'लोप' इत्यनुवर्तते। तदाह–**सकारान्तस्य ङिदुत्तमस्येति**। ङितो लकारस्य य आदेशः–उत्तमपुरुषस्तस्येत्यर्थः। 'वैतोऽन्यत्रे'त्यस्माद्वाग्रहणानुवृत्तिनिवृत्तये नित्यग्रहणम्। अलोऽन्त्यस्येत्यन्त्यलोपः। **भवतामिति**। लोटस्तस्। तस्य तामादेशः। शप्। गुणाऽवादेशौ। न च तामादेशस्य सर्वादेशत्वात्प्राग्विभक्तित्वाऽभावा'न्न विभक्तौ तुस्माः' इति निषेधाऽभावान्मकारस्येत्संज्ञा शङ्क्या। संयोगान्तलोपेन मकारान्तरप्रश्लेषेण उपदेशेऽन्त्यत्वाऽभावात्। **भवन्त्विति**। लोटो रेझन्तादेशे शपि गुणेऽवादेशे द्वयोरकारयोः पररूपे एरुरितीकारस्य उकारे भवन्त्विति रूपम्। अथ लोटः सिपि शपि गुणाऽवादेशयोः-भव सि इति स्थिते–। **सेर्ह्यपिच्च**। 'हि' इति लुप्तप्रथमाकम्। 'लोटो लङ्व'दित्यतो 'लोट' इत्यनुवर्तते। तदाह–**लोटः सेरिति**। लुहीत्यादौ सिप्स्थानिकस्य हेः पित्त्वात्सार्वधातुकपिदिति ङिद्वत्त्वाऽभावाद्गुणे प्राप्ते अपिद्वचनम्। एवञ्च ङिद्वत्त्वात्क्ङितिचेति गुणो न। 'सेर्हिर्ङिच्चे'त्येव तु न सूत्रितम्, पितस्सिपोऽनुदात्तस्य स्थाने हेरप्यनुदात्तत्वापत्तेः। भव हि इति स्थिते–। **अतो हेः**। 'अत' इति पञ्चमी। हेरिति षष्ठी। 'चिणो लु'गित्यतो लुगित्यनुवर्तते।

---

शे.] स्वविषयाऽभावसम्भवनया ङित्त्वमात्रदर्शनेन स्वविषयसम्भावनया च मन्दं प्रवृत्तिरित्यर्थः। **समबलत्वादिति**। मन्दप्रवृत्त्यैव तत्त्वमिति भावः। एतेन टाप्–यप्–अबादिष्वनन्यार्थपित्त्वेषु चरितार्थस्य 'अनुदात्तौ सुप्पितौ' इत्यस्य 'जित्वरी'त्यादौ तुक्संपादनेन चरितार्थपित्त्वे क्वचिदपि उक्तन्यायेनान्तरङ्गेण प्रत्ययाद्युदात्तत्वेन बाधापत्तिरिति परास्तं, तद्वदस्य पित्त्वसामर्थ्यसिद्धत्वाऽभावात्। **वस्तुतस्तु** तत्सामर्थ्यसिद्धस्य 'ङिच्चे'त्यस्यात्राऽप्राप्तिरेव। 'ङित्त्वस्य सावकाशत्वात्तातङि विप्रतिषेधात्सर्वादेशः'इति भाष्यस्य सावकाशङित्त्वे प्रवृत्तौ परिभाषात्वविरोधादप्रवृत्तौ सर्वादेशः सिद्ध इत्यर्थः। न च 'गुणवृद्धिप्रतिषेधार्थत्वे सर्वादेशत्वं, तत्त्वे च 'तदर्थत्व'मित्यन्योन्याश्रयेण सर्वादेशत्वाऽलाभे अन्त्यादेशत्वमेव स्यादिति वाच्यम्, 'एरु'रिति प्रकरणे 'तिह्योस्ता'दिति न्यासेनाऽनयोरिवर्णस्य तादित्यर्थकेनान्त्यादेशत्वसिद्धौ ङित्करणस्य गुणवृद्धिप्रतिषेधार्थत्वबोधनद्वारा सर्वादेशार्थत्वेनाऽदोषात्। स्पष्टञ्चेदं सर्वं भाष्यकैयटयोः। तुस्थानिकश्चायमान्तरतम्यादनुदात्त एव, हिस्थानिकस्तूदात्त एवेत्याहुः। **नित्यं ङितः**। ङिदुत्तमस्येति षष्ठीतत्पुरुषः। एतल्लेखो 'भवानी'त्युत्तरमुचितः। **सेर्ह्य**। अपिद्ग्रहणात्पित्त्वेनाऽनुदात्तसेः स्थाने जायमानहेरान्तरतम्यात्प्राप्तमप्यनुदात्तत्वं न। एतेन

।६।४।१०५। अतः परस्य हेर्लुक् स्यात् । भव । भवतात् । भवतम् । भवत ॥ **मेर्निः** ।३।४।८९। लोटो मेर्निः स्यात् ॥ **आडुत्तमस्य पिच्च** ।३।४।९२। लोडुत्तमस्याऽऽडागमः स्यात्स पिच्च । हिन्योरुत्वं न, इकारोच्चारणसामर्थ्यात् । भवानि । भवाव । भवाम ॥ **अनद्यतने लङ्** ।३।२।१११। अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात् ॥ **लुङ्लङ्लृङ्क्ष्वडुदात्तः** ।६।४।७१। एषु परेष्वङ्गस्याऽऽडागमः स्यात्स चोदात्तः ॥ **इतश्च** ।३।४।१००। ङितो लस्य परस्मैपदमिकारान्तं यत्त[दन्त]स्य लोपः स्यात् । अभवत् । अभवताम् । अभवन् ।

---

त.] स्थाने यो हिरादेशः स तु 'स्थानेऽन्तरतमः' इत्यनुदात्तो न भवति, 'जहि शत्रून्', 'स्तुहि श्रुतम्' ॥ **भवतादिति** । लुगपेक्षया परत्वाद्धेस्तातङ्, अन्तरङ्गमेव लुग्बाधते न तु परमिति भावः ॥ **स पिच्चेति** । 'स' इति तच्छब्देन यस्याऽऽडागमः स परामृश्यत इत्याहुः । **इतश्च** । 'इतश्च लोपः' इति सूत्रात्परस्मैपदेष्वित्यनुवृत्तं षष्ठ्येकवचनान्ततया विपरिणमय्य इत इत्यनेन विशेष्यते । तदाह-**परस्मैपदमिकारान्तं यत्तस्येति** । प्राचा तु 'परस्मैपदेष्विकारस्य लोप' इत्युक्तम्, तदयुक्तम्, भवेदित्यादावतिव्याप्तेः। ननु 'अतो येयः' इत्यत्र इय् दीर्घादिरस्तु, एवं च नोक्तातिव्याप्तिः 'इतश्चे'ति तपरकरणात्। अतएव अबोभवीदित्यादावपि न दोष इति चेत्। मैवम्। रुदेर्लङि अरुदितामित्यादौ दोषध्रौव्यादिति

---

बा.] तदाह-**अतः परस्येति**। **भवेति**। हिविधानं तु स्तुहीत्याद्यर्थमिति भावः। **भवतादिति**। आशिषि लोटः सिपि तस्य 'सेर्ह्यपिच्चे'ति हिभावे शपि गुणावादेशयोः 'अतो हे'रिति लुकं परत्वाद्बाधित्वा 'तुह्यो'रिति पक्षे तातङिति भावः।

**भवतमिति**। थसि शपि गुणे ऽवादेशे च भव थस् इति स्थिते 'लोटो लङ्व'दिति लङ्वत्त्वात्तस्थस्थमिपामिति थसस्तमादेशे रूपम्। एवं भवतेति। थस्य तादेश इति विशेषः। लोटो मिपि शपि गुणेऽवादेशे मिपस्तस्थस्थमिपामित्यमादेशे प्राप्ते-**मेर्निः**। 'लोटो लङ्व'दित्यतो लोट इत्यनुवर्तते। तदाह-**लोटो मेरिति**। भव नि इति स्थिते-। **आडुत्तमस्येति**। 'लोटो लङ्व'दित्यतो लोट इत्यनुवर्तते। तदाह-**लोडुत्तमस्येति**। स्तवानि स्तवावेत्यादौ सार्वधातुकमपिदिति ङित्त्वनिवृत्त्यर्थं पिद्वचनम्। यद्यपि मिप्स्थानिकस्य नेः पित्त्वात्तदागमस्यापि सिद्धं पित्त्वं, तथापि वस्मसोराडागमस्याऽङित्त्वार्थं पिदिति वचनम्। ननु स्तुहि भवानीत्यत्र 'एरु'रित्युत्वं कुतो न स्यादित्यत आह-**हिन्योरुत्वं नेति**। **सामर्थ्यादिति**। अन्यथा 'हु-नु'इत्येव विदध्यादिति भावः। **भवानीति**। आडागमे सवर्णदीर्घः। नचाऽत्र लङ्वद्भावादितश्चेति लोपः शङ्क्यः, इकारोच्चारणसामर्थ्यात्। अन्यथा 'मो न' इत्येव विदध्यात्। एवं हेरपि बोध्यम्। यद्यपि भवानीत्यादावतो दीर्घो यञि इत्येव दीर्घसिद्धेराडागमविधिर्व्यर्थस्तथापि स्तवानीत्याद्यर्थमावश्यकमिहापि न्याय्यत्वादुपन्यस्तम्। **भवावेति**। लोटो वस्। गुणावादेशौ। आडागमः। सवर्णदीर्घः। लङ्वद्भावात् 'नित्यं ङित' इति सकारलोपः। एवं मसि भवामेति रूपम्। इति लोट्प्रक्रिया। **अनद्यतने लङ्**। धातोरिति, भूत इति चाधिकृतम्। भूत इति धात्वर्थेऽन्वेति। तदाह-**अनद्यतनभूतार्थवृत्तेरिति**। **लुङ्लङ्लृङ्क्षु**। अङ्गस्येत्यधिकृतम्। तदाह-**एषु परेषु अङ्गस्येति**। अन्तरङ्गत्वान्नित्यत्वात्परत्वाच्च यथायथं तिपि शपि विकरणे गुणेऽवादेशे विकरणविशिष्टस्याङ्गस्य अडागमः। 'लावस्थायामेवाऽडागम' इति तु पक्षान्तरं भाष्ये स्थितम्। **इतश्च**। लस्येत्यधिकृतम्। 'इतश्च लोपः परस्मैपदेष्वि'त्यस्माल्लोप इति, परस्मैपदेष्विति चानुवर्तते। परस्मैपदेष्वित्येतत्षष्ठ्या विपरिणम्यते। तदाह-**ङितो लस्येत्यादिना**। अलोऽन्त्यस्येत्यन्त्यस्य लोपः। तदाह-**अभवदिति**। **अभवतामिति**। लङस्तसस्तामादेशः।शप्।गुणावादेशौ।अट्। **अभवन्निति**। झेरन्तादेशः।शप्।गुणावादेशौ।अट्।'इतश्चे'तीकारलोपः। तकारस्य संयोगान्तलोपः। **अभव इति**। सिपि शपि गुणे अवादेशे अटि इकारलोपे रुत्वविसर्गौ। **अभवतमिति**।

---

शे.] 'सेर्ह्यपिच्चे'त्येवास्त्विति परास्तम्। **भवतादिति**। लुगपेक्षया परत्वाद्धेस्तातङ्। 'अन्तरङ्गानपी'ति न्यायस्तु 'ज्ञापकसिद्धं न सर्वत्रे'ति न्यायेनाऽनित्यत्वाच्च। **मेर्निः**। अमोऽपवादोऽयम्। **स पिच्चेति**। यस्याऽऽडागमः स इत्यर्थः। **सामर्थ्यादिति**। अन्यथा प्रक्रियालाघवाय हु-नू एव विदध्यादिति भावः। **भवानीति**। लङ्वद्भावात्प्राप्तमपि 'इतश्चे'ति न, 'मो न'इति वक्तव्ये मेर्निरिति सूत्रकरणात्। एवं हेरपि बोध्यम्। **अनद्यतने**। अयं बहुव्रीहिः। तेन 'अद्य ह्यश्चाभुङ्क्ष्महीं'त्यत्र व्यामिश्रे लुङेव। **स चोदात्त इति**। अन्तरङ्गत्वात्तिवादिषु कृतेषु नित्यत्वाद्विकरणे कृते विकरणान्ताङ्गस्याऽऽडागमः। लकारप्रश्लेषेण 'लावस्थायामेवाऽ'डिति षष्ठे भाष्ये पक्षान्तरमुक्तम्। नन्वत्र पक्षे 'अकरो'दित्यादौ उप्रत्ययाद्युदात्तत्वनिबन्धनमनुदात्तत्वमटः स्यात्, उदात्तत्वन्तु 'अभव'दित्यादौ चरितार्थमिति चेन्न, उदात्तपदे स्वरितत्वप्रतिज्ञानात्स्वरितेनाधिकं कार्यमित्यप्यर्थाद्बलवतोऽपि सतिशिष्टस्वरस्य बाधनात्, पूर्वशास्त्रेण बलवतोऽपि परशास्त्रस्य बाधनवत्। अधिकः कार इत्यप्यर्थः,तेन पूर्वेण परस्य बाध इति स्पष्टं 'स्वरितेने'ति सूत्रे भाष्ये। अत एव पक्षयोर्न फलभेद इत्यलम्। **अभवदिति**। न चात्र 'आदेः परस्ये'ति-आदेर्लोपापत्तिः, अनुवृत्तधातोरित्यस्य

अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम ॥ **विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्** ।३।३।१६१। एष्वर्थेषु द्योत्येषु वाच्येषु वा लिङ् स्यात् । विधिः—प्रेरणं, भृत्यादेर्निकृष्टस्य प्रवर्तनम् । निमन्त्रणं—नियोगकरणम् , आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् । आमन्त्रणं—कामचारानुज्ञा । अधीष्टः—सत्कारपूर्वको व्यापारः । 'प्रवर्तनायां लि'ङित्येव सुवचम् । चतुर्णां पृथगुपादानं प्रपञ्चार्थम् ।

---

त.]मनोरमायां स्थितम् ॥ **विधिनिमन्त्रणा । द्योत्येषु वाच्येषु वेति** । पक्षद्वयस्याप्याकरे स्थितत्वादिति भावः । अत्राद्ये त्वित्थमुपपत्तिः—विध्यादीनां प्रत्ययार्थत्वमनुचितम् । तथाहि सति कर्त्रादीनामर्थानां लकारान्तरे चरितार्थानां विध्यादयोऽर्था बाधकाः स्युः, तथा च लिङः कर्त्राद्यभिधायकत्वं न स्यात्, ततश्च द्विवचनबहुवचने न स्यातां, शबादयश्च न स्युः, पुरुषव्यवस्था च न स्यात्, अभिहितत्वप्रयुक्तस्तृतीयादिविरहश्च न सिध्येदिति ॥ द्वितीये त्वित्थमुपपत्तिः—विध्यादिभिः कर्त्रादयो न बाध्यन्ते, परस्परविरोधाऽभावात् । तथा च 'लः कर्मणी'त्यत्र 'ल'इति बहुवचननिर्देशेन सर्वलकाराणां सङ्ग्रहाल्लिङादीनामपि कर्त्रादयोऽर्था भवेयुः । किं च कर्त्रादयोऽपि निरवकाशाः । न च लडादयोऽवकाशाः । न्यायसाम्येन विध्यादिवद्वर्तमानत्वभूतत्वादेरपि तत्तल्लकारवाच्यत्वात् । न चैवं पचतीत्यादौ धात्वर्थं प्रति वर्तमानत्वादेः प्रत्ययार्थतया विशेष्यत्वं स्यात्, तथा चैककर्तृका वर्तमाना पचिक्रियेत्यादिशाब्दबोधवर्णनमयुक्तं स्यादिति वाच्यम् । प्रत्ययार्थतया विशेष्यत्वापादनस्य कर्त्रादावपि तुल्यत्वात् । ननु प्रत्ययार्थः प्रधानं, प्रकृत्यर्थो विशेषणमित्यौत्सर्गिकमाख्याते त्यज्यते 'भावप्रधानमाख्यात'मिति सिद्धान्तानुरोधादिति चेत्तर्हि तत एव नोक्तदोष इति दिक् ॥ **प्रवर्तनायामिति** । प्रवर्तनात्वस्य विध्यादिषु चतुर्ष्वनुस्यूतत्वादिति भावः । अत्र वदन्ति—प्रवृत्तिः प्रवर्तना चोभयमपि व्यापारः, स च धात्वर्थः । फलव्यापारयोर्धातुवाच्यत्वस्वीकारात् । तदाश्रयस्तु लकारार्थः, व्यापारत्वेन प्रवर्तनाया धात्वर्थत्वेऽपि प्रवर्तनात्वेन प्रवर्तना तु लिङ्त्वादिरूपेण लकारवाच्या द्योत्या वेति पक्षद्वयम् । प्रवृत्तिः पुरुषनिष्ठा 'आर्थी भावने'त्युच्यते । प्रवर्तना तु विधिः, मां प्रेरयतीत्यनुभवात् लिङादिनिष्ठा 'शाब्दी भावने'त्युच्यते । वेद एव लिङादिनिष्ठा, वक्तुरभावात्, लोके तु पुरुषनिष्ठेति केचिदभ्युपगच्छन्ति । प्रवर्तनाया अस्याः पुरुषप्रवृत्तिरेव भाव्या । पुरुषप्रवृत्तेस्तु यजनदानादि भाव्यम् । एवं च धातूपात्तव्यापारस्य विषयविषयिभावेन द्वेधाऽन्वये तात्पर्यग्राहका लिङादय इति द्योतकतापक्ष एव ज्यायान् । लिङ्त्वादिरूपेण लकारस्य प्रवर्तनायां शक्त्यन्तरकल्पने गौरवात् । एवं णिच्यपि । इयांस्तु विशेषः—णिच्प्रत्ययद्योत्या प्रेरणा सर्वस्मिन्नपि मते पुरुषादिनिष्ठैव न तु णिज्निष्ठा, लिङादिद्योत्या तु मतभेदेन लिङ्निष्ठा वा पुरुषनिष्ठा वेति ॥ स्यादेतत्—'लिङादिद्योत्या प्रवर्तना लोके पुरुषनिष्ठे'ति मते 'पाचयत्योदनं देवदत्तेन यज्ञदत्त' इतिवत् 'पचेदोदनं देवदत्तेन यज्ञदत्त' इति प्रयोगः स्यात् । प्रवृत्त्याश्रयः प्रवर्तनाश्रयश्च लकारेणोक्त इति कर्तरि तृतीया न भवति किं तु प्रथमैवेति चेत् । तर्हि 'ओदनं देवदत्तो यज्ञदत्तः पचे'दिति प्रयोगः स्यात् । अत्राहुः—पुरुषनिष्ठेति मते प्रवर्तना लिङादिवाच्यैव, न तु धातुवाच्या । तथा च लिङुपात्तव्यापाराश्रयस्य पुरुषस्य कर्तृत्वाऽभावान्नोक्तदोषः । 'देवदत्तेन पाचयति यज्ञदत्त'इत्यादौ तु णिजन्तस्य धातुत्वाद्धातूपात्तव्यापाराश्रयत्वेन प्रयोज्यप्रयोजकयोरुभयोरपि

---

बा.]थसस्तमादेशः।शप्। गुणावदेशौ। अट्। **अभवतेति**।थस्य तादेशे शपि गुणे अवादेशेऽटि। **अभवमिति**। मिपोऽमादेशे शपि गुणे ऽवादेशे पूर्वरूपम् । **अभवावेति**। वसि शपि गुणावादेशौ । अट् । 'अतो दीर्घो यञी'ति दीर्घः। 'नित्यं ङित' इति सकारलोपः । एवं मसि अभवामेति रूपम् । इति लङ्प्रक्रिया । **विधिनिमन्त्रणा** । ननु विध्यादयो हि न लिङो वाच्याः, लः कर्मणि च भावे चेति सूत्रेण कर्तृकर्मभावानां लकारवाच्यत्वबोधनात् । नच लः कर्मणि चेति शास्त्रं लिङ्व्यतिरिक्तलकारविषयकमेवास्त्विति वाच्यं, तथा सति यजेतेत्यादौ कर्तृवाचकत्वाऽभावेन शबाद्यनापत्तेरित्यत आह—**द्योत्येष्विति** ।'लः कर्मणि चे'ति सूत्रं सामान्यविषयं चेदपि विधिनिमन्त्रणेति विशेषशास्त्रेण न बाध्यते, अविरोधात् । तथाच विध्यादिविशिष्टकर्त्रादिषु लिङिति फलतीति मत्वाह—**वाच्येषु वेति** । पक्षद्वयमपीदं भाष्ये स्थितम् । 'विधिः प्रेरण'मिति भाष्यमर्थतस्सङ्गृह्णाति—**विधिः प्रेरणमिति** । ननु निमन्त्रणादीनामपि प्रेरणान्तर्भावात्पौनरुक्त्यमित्यतो व्याचष्टे—**भृत्यादेर्निकृष्टस्य प्रवर्तनमिति** । तद्यथा भृत्यं स्वामी वदति—'भवान् वस्त्रं क्षालये'दिति । आमन्त्रणाद्भेदं दर्शयितुं निमन्त्रणशब्दं व्याचष्टे—**निमन्त्रणं नियोगकरणमिति** । नियोगशब्दस्य प्रेरणशब्दपर्यायत्वभ्रमं वारयति—**आवश्यके** इति । 'त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलः' इत्यादिवचनादिति भावः । तद्यथा दौहित्रादीन् प्रति 'इह श्राद्धे भवान् भुञ्जीते'ति । **आमन्त्रणं कामचारानुज्ञेति** । 'यथेच्छं क्रियता'मित्यभ्यनुज्ञानमित्यर्थः । **अधीष्टं सत्कारपूर्वको व्यापार इति** । भाष्यवाक्यमिदम् । सत्कृत्य प्रवर्तनमित्यर्थः । अधिपूर्वकस्येषधातोर्भावे

**यासुट् परस्मैपदेषूदात्तो ङिच्च** ।३।४।१०३। लिङः परस्मैपदानां यासुडागमः स्यात्स चोदात्तो ङिच्च । ङित्त्वोक्तेर्ज्ञायते—क्वचिदनुबन्धकार्येऽप्यनल्विधाविति प्रतिषेध इति। श्नादेशस्य शानचः शित्त्वमपीह लिङ्गम्। **सुट् तिथोः** ।३।४।१०७। लिङस्तकारथकारयोः सुट् स्यात् ।सुटा यासुण्न बाध्यते, लिङो यासुट् तकारथकारयोः सुडिति

त ]कर्तृत्वाल्लकारेणाऽनुक्ते प्रयोज्ये कर्तरि तृतीयेति वैषम्यमिति। कौस्तुभादौ तु—'हेतुमति चे'ति सूत्रे प्रयोजकव्यापारस्य णिज्वाच्यत्वपक्ष एव मुख्यत्वेन स्थापितः।व्यापारद्वयस्यापि णिच्प्रकृत्यर्थत्वे तु—अभीत्यस्य-णिजर्थविशेष्यकत्वे अभिसावयति, प्रकृत्यर्थविशेष्यकत्वे तु 'उपसर्गात्सुनोती'ति षत्वमभिषावयतीति सिद्धान्तस्य स्वारस्यभङ्गापत्तेरिति।तथा 'गतिबुद्धी'ति सूत्रे अणिकर्तेति विशेषणमव्यावर्तकं स्यात् । त्वन्मते प्रयोजकव्यापारस्यापि णिच्प्रकृत्यर्थत्वेन प्रयोजकस्याप्यणौ कर्तृत्वादिति दिक्। **प्रार्थनं**—याच्ञा। **क्वचिदिति**।ज्ञापनफलं तु वक्ष्यमाणेत्यादौ टिड्ढाणञिति ङीबभाव इति 'टिड्ढे'ति सूत्र एवोक्तम् । 'रुया'दित्यादौ 'उतो वृद्धिर्लुकि हली'ति न प्रवर्तते, भाष्ये 'पिच्च ङिन्न, ङिच्च पिन्ने'ति व्याख्यानाद्विशेषविहितेन ङित्त्वेन पित्त्वस्य बाधादित्यदादौ वक्ष्यमाणतया यासुटो ङित्त्वं न ज्ञापकमित्यपरितोषादाह—**श्नः शानचः शित्त्वमिति**॥

बा.] क्तान्तस्योपसर्गवशादस्मिन्नर्थे वृत्तिः । अत एव भाष्यप्रयोगादधीष्टशब्दस्य पुंस्त्वम् । 'अधीष्ट'मित्येव क्वचित्पाठः । 'माणवकं भवानध्यापये'दित्युदाहरणम् । 'इदं कार्यं न वे'ति विचार्य निर्धारणं संप्रश्नः । यथा—'किं भोः व्याकरणं भवानधीयीते'ति । **प्रार्थनं**—याच्ञा । यथा 'भवानन्नं मे दद्या' दिति । **सुवचमिति** । प्रवर्तनात्वस्य विध्यादिचतुर्षु अनुस्यूतत्वादिति भावः । प्रवृत्त्यनुकूलव्यापारः—प्रवर्तना । तत्र प्रवृत्तिः शिष्यादिनिष्ठा । तदनुकूलव्यापारस्तु प्रेरणात्मकः प्रवर्तयितृगुर्वादिनिष्ठः । विस्तरस्तु मञ्जूषायां द्रष्टव्यः । **चतुर्णामिति** । विधिनिमन्त्रणामन्त्रणाधीष्टानामित्यर्थः ।

अथ लिङस्तिपि इतश्चेतीकारलोपे शपि गुणेऽवादेशे भव त् इति स्थिते—**यासुट् पर** । 'लिङः सीयु'डित्यतो लिङ इत्यनुवर्तते । षष्ठ्यर्थे सप्तमी । तदाह—**लिङः परस्मैपदानामिति** । सीयुटोऽपवादः । यासुटि टकार इत्, उकार उच्चारणार्थः । टित्त्वात्तिबादीनामाद्यवयवः । अवयवे ङित्त्वं च 'आनर्थक्यात्तदङ्गेषु' इति न्यायेन समुदाये आगम-विशिष्टतिबादौ विश्राम्यति।'आगमा अनुदात्ता'इति यासुटोऽनुदात्तत्वे प्राप्ते उदात्तवचनम्।इदमेव वचनम् 'आगमा अनुदात्ता' इत्यत्र ज्ञापकमिति भाष्यम् ।स्तुयात् स्तुयातामित्यादौ गुणादिनिषेधार्थं यासुटो ङित्त्ववचनम् ।ननु यदागमा इति न्यायेन यासु-डागमो लिङादेशपरस्मैपदावयवः,ततश्च स्थानिवत्त्वेनैव ङित्त्वसिद्धेर्यासुटो ङित्त्वविधिर्व्यर्थः । न च स्थानिभूतलिङो ङका-रस्याऽल इत्त्वेन गुणनिषेधविधावाश्रयणादनल्विधाविति निषेधः शङ्क्यः, 'घुमास्थागापाजहातिसां हली'ति क्ङिति विहितस्य ईत्वस्य 'न ल्यपी'ति निषेधेन लिङ्गेनाऽनुबन्धकार्ये अनल्विधाविति निषेधाऽभावज्ञापनादित्यत आह—**ङित्त्वोक्तेरिति** । **क्वचिदनुबन्धकार्येऽपि अनल्विधाविति निषेध इति**। यासुटो ङित्त्वेन ज्ञायत इत्यन्वयः।तथा च एतज्ज्ञापनार्थमेव यासुटो ङित्त्वमिति भावः । ज्ञापनफलं तु वक्ष्यमाणेत्यत्र ङीबभावः । अन्यथा लडादेशस्य शानचः स्थानिवत्त्वेन टित्त्वान्ङीप् स्यात् । ननु 'क्वचिदनुबन्धकार्येऽप्यनल्विधाविति निषेध' इत्यत्र यासुटो ङित्त्ववचनं न ज्ञापकम् । अनुबन्धकार्ये सर्वत्र अनल्विधाविति निषेधाऽभावे सत्यपि यासुटो ङित्त्वस्य तिप्सिप्मिबागमयासुटो ङित्त्वार्थमावश्यक-त्वात्, नहि लिङादेशत्वेऽपि तिपसिप्मिपां ङित्त्वं स्थानिवत्त्वलभ्यम् । 'हलःश्नश्शानज्झा'विति सूत्रभाष्ये 'ङिच्च पिन्न पिच्च ङिन्ने'ति प्रपञ्चितत्वादित्यस्वरसादाह—**श्नः शानचः शित्त्वमपीह लिङ्गमिति** । इह—अनुबन्धकार्येऽपि क्वचिदनल्विधाविति निषेधोऽस्तीत्यस्मिन्नर्थे, श्नः—श्नाप्रत्ययस्य, यः शानजादेशो हलः श्नश्शानज्झाविति विहितः, तस्य शित्त्वमपि **लिङ्गं**—ज्ञापकमित्यर्थः । अन्यथा स्थानिवत्त्वेनैव तस्य शित्त्वसिद्धेस्तद्वचनं व्यर्थं स्यादिति भावः । अत्र च यद्वक्तव्यं तत्स्त्रीप्रत्ययप्रकरणे वक्ष्यमाणेत्यत्र प्रपञ्चितम् । तथा च प्रकृते भव यास् त् इति स्थिते—**सुट् तिथोः** ।

शे.]वेत्यादिरूपः। **यासुट्प** । सीयुटोऽपवादः । प्रत्ययसन्नियोगशिष्टतयाऽन्तरङ्गत्वात्परस्मैपदानां तसादीनामुदात्तत्वे कृते यासुडागमोऽनुदात्तः स्यादित्युदात्तवचनम् । न च 'आद्युदात्तश्चे'ति सूत्रोक्तभाष्योक्तरीत्या परस्मैपदविषये लस्यैव यासुटि धातोरित्यस्य विहितविशेषणत्वान्निर्दिश्यमानलस्यैवादेश इति नोक्तं फलमिति वाच्यं, लस्य स्थाने आद्युदात्तस्तस् भवतीत्ये-वमर्थादुत्पद्यमानस्यैवाद्युदात्तत्वेन तत्र 'यदागमाः' इत्यस्या अनुवादविषयाया अप्रवृत्त्या तेन यासुडुदात्तत्वस्य दौर्लभ्यात् । 'आगमा अनुदात्ताः' इत्येषोऽर्थः शेषनिघातमूलक एव । 'अनुदात्तं पद'मिति सूत्रे पदग्रहणस्य परिमाणार्थत्वेन यावतः पदत्वं भावि, यावच्च पदत्वं भावि, तावत्संनिहितानां सर्वेषां शेषनिघातेन पश्चात्प्रवृत्तागमानामपि तेन निघातप्रवृत्तेः । सन्निहितानान्तु तत्समकालमेव निघात इत्यन्यत् । 'अलावी'दित्यादौ सिचश्चित्त्वे तेनेट उदात्तत्वान्न निघात इति 'आद्यु-दात्तश्चे'ति सूत्रे भाष्यप्रदीपोद्योते निरूपितम् । अनेन यासुटो ङित्त्वेप्यवयवेऽचरितार्थं लिङ्गं समुदाये विशेषणमिति न्यायेन समुदाये ङित्त्वं बोध्यम् । **ङित्त्वोक्तेरिति** । अत्र यद्वक्तव्यन्तत् 'टिड्ढे'ति सूत्रे उक्तम् । **सुटा यासु-ण्नेति** । आत्मनेपदे चारितार्थ्येऽपि परत्वात्प्राप्तो बाधो नेत्यर्थः । **विषयभेदादिति** । एवञ्च यौगपद्याऽसम्भवरूप-

विषयभेदात् । **लिङः स लोपोऽनन्त्यस्य** ।७।२।७९। सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः स्यात् । इति सकारद्वयस्यापि निवृत्तिः । सुटः श्रवणं त्वाशीर्लिङि । स्फुटतरं तु तत्राप्यात्मनेपदे ॥ **अतो येयः** ।७।२।८०। अतः परस्य सार्वधातुकावयवस्य या इत्यस्य इय् स्यात्। गुणः। यलोपः। भवेत् । सार्वधातुके किम्?। चिकीर्ष्यात् ।

---

त.] **सुट् तिथोः** ।तकारादिकार उच्चारणार्थः।**लिङः स लोपो**।'रुदादिभ्यः'इति सूत्रात्सार्वधातुक इत्यनुवर्तते,सेति लुप्तषष्ठीकमनन्त्यस्येत्यनेन विशेष्यते। तदाह-**सार्वधातुकलिङोऽनन्त्यस्येति**। **सकारद्वयस्यापीति**। अवयवावयवोऽपि समुदायं प्रत्यवयव इत्याश्रयणात्सुटोऽपि लिङ्भक्तत्वादिति भावः । **आशीर्लिङीति** । भूयास्तामित्यादौ । ननु सुटि कृते 'अनचि चे'ति द्वित्वस्याऽसिद्धत्वात्ततः प्रागेव 'स्को'रिति यासुटः सकारो लुप्यते, झलि परे यः संयोगस्तदादित्वात् । तथा चैकसकारं रूपं तुल्यम् । सुडभावे यासुटः सकारस्य द्वित्वे कृते सुटि 'स्को'रिति सलोपात्सुट एव सकारस्य द्वित्वे च द्विसकारकमपि रूपं तुल्यमेवेति सुटो विधानं व्यर्थमित्यपरितोषादाह-**स्फुटतरं त्विति** । एधिषीष्टेत्यादाविति भावः ।

---

बा.] लिङःसीयुडित्यतो लिङ इत्यनुवर्तते।तिश्च थ् चेति द्वन्द्वात्षष्ठीद्विवचनम्। इकार उच्चारणार्थः।तदाह-**लिङस्तकारेति**। सुटि टकार इत्, उकार उच्चारणार्थः। भव यास् स् त् इति स्थितम् । नन्विह परेण सुटा यासुटः कथं न बाधः?। भवेयुरित्यादौ परस्मैपदेषु यासुड्विधेश्चरितार्थत्वादित्याशङ्क्य निराकरोति-**सुटा यासुण्न बाध्यत इति** । तदुक्त इत्यत आह-**लिङो यासुडिति** । लिङः सीयुट् यासुडागमश्च, लिङादेशैकदेशस्य तकारस्य सुडागम इति विषयभेदादित्यर्थः। तथा च यौगपद्याऽसम्भवाऽभावाद्विप्रतिषेधाऽभावान्न परेणापि सुटा यासुटो बाध इतिभावः । **लिङः स** । सेति लुप्तषष्ठीकं पदम् । 'रुदादिभ्यः सार्वधातुके' इत्यतः सार्वधातुक इत्यनुवृत्तं षष्ठ्या विपरिणम्यते। तदाह-**सार्वधातुकलिङ इतिं । सकाद्वयस्यापीति** । अविशेषात्सकारद्वयस्यापि युगपल्लोपः प्रवर्तते, 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्ति'रिति तु पर्यायेण पुनःप्रवृत्तिनिवृत्तिपरमिति भावः । यद्यपि भव यास् स् त् इत्यत्र स्कोरित्येव सिध्यति, तथापि भवेयुरित्याद्यर्थं सूत्रम् । ननु सुटो लोपे किमर्थस्सुड्विधिरित्यत आह-**सुटः श्रवणं त्वाशीर्लिङीति** । भूयास्तामित्यादौ । लिङाशिषीत्यार्द्धधातुकत्वेन तत्र सकारलोपस्याऽप्रसक्तेरिति भावः । 'व्यञ्जनपरस्यैकस्याऽनेकस्य वोच्चारणे विशेषाऽभाव' इति भाष्यादाह-**स्फुटतरं त्विति। तत्रापि** = आशिषि लिङ्यपि, एधिषीष्टेत्यादा**वात्मनेपदे स्फुटतरं** सकारद्वयस्य श्रवणमित्यर्थः । तत्र यासुटोऽभावेन, सलोपाऽभावेन च सुट एव सकारस्य पृथक् स्पष्टं श्रवणसम्भवादिति भावः । तथाच भव या त् इति स्थिते-**अतो येयः** । 'या' इति लुप्तषष्ठीकं पदम् । 'अत इति' पञ्चमी । परस्येत्यध्याहार्यम्। 'इय' इत्यत्राऽकार उच्चारणार्थः । 'रुदादिभ्य' इत्यस्मात् 'सार्वधातुक' इत्यनुवृत्तमवयवषष्ठ्या विपरिणम्यते । तदाह-**अतः परस्येत्यादिना** । भव इय् त् इति स्थितम् । **गुण इति** । 'आद्गुण इत्यनेने'ति शेषः । भवेय् त् इतिं स्थितम् । **यलोप इति** । 'लोपो व्योरित्यनेने'ति शेषः । **भवेदिति** । यलोपात्प्राग्घल्ङ्यादिलोपः संयोगान्तलोपश्च न शङ्क्यः, अन्तरङ्गत्वेन यलोपस्य पूर्वं प्रवृत्तेः, संयोगान्तलोपस्य त्रैपादिकत्वेनाऽसिद्धत्वाच्चेति भावः । **सार्वधातुके किमिति** । 'रुदादिभ्य'इत्यतः सार्वधातुक इत्यनुवृत्तिलभ्यं । सार्वधातुकावयवस्येति किमर्थमित्यर्थः । भूयादित्यादावाशीर्लिङि आर्द्धधातुके ऽतः परत्वाऽभावादेव इयादेशाऽभावसिद्धेः सार्वधातुकग्रहणानुवृत्तिर्व्यर्थेत्याशयः । **चिकीर्ष्यादिति** । कृञ्धातोः सन्नन्तादाशीर्लिङि तिबादौ चिकीर्ष-यादिति स्थिते 'अतो लोप' इत्यकारलोपे चिकीर्ष्यादिति रूपम् । तत्र 'अतो येय' इत्यत्र सार्वधातुकग्रहणाननुवृत्तौ चिकीर्ष-यादिति स्थिते 'अतो येय' इति इयादेशे आद्गुणे यलोपे चिकीर्षेदिति स्यात् । सार्वधातुकग्रहणानुवृत्तौ तु न दोषः, आशीर्लिङादेशस्य तिङो लिङाशिषीत्यार्द्धधातुकताया वक्ष्यमाणत्वादिति भावः । ननु आशिषि लिङि चिकीर्ष-यादिति स्थिते नित्यत्वादतो लोप इत्यकारलोपे सति. अतः

---

शे.] विप्रतिषेधाऽभावान्न परत्वेन बाध इति भावः।एतेन 'एधिषीष्टे'त्यादौ सुटा सीयुटो येननाप्राप्तिन्यायेन बाधः स्यादित्यपास्तं, तकारथकारयोः सुटः सत्त्वेन कार्यिभेदादिति भाष्यकैयटयोः स्पष्टम् । ननु 'अस्ति च सम्भवो यदुभयं स्या'दिति वार्तिकमतेऽस्य समाधेर्वक्तुं शक्यत्वेऽपि 'सत्यपि सम्भवे बाधनं भवती'ति भाष्यनये प्रथमद्विर्वचनस्य द्वितीयद्विर्वचनेन बाधवत् सुटापि सीयुटो बाधो दुर्वार इति चेत्, सत्यम्, 'यासुड्विषये सीयुटः प्रतिषेधो वक्तव्यः' इति वचनेनाऽत्र प्रकरणे बाध्यबाधकभावाऽभावज्ञापनेनाऽदोषादिति निरूपितं भाष्यप्रदीपोद्योते । अत एव झेर्जुसादिविषये यासुट्सिद्धिः, अन्यथा जुसा यासुटो बाधापत्तिरिति दिक् । **लिङः स**। 'रुदादिभ्यः' इत्यतः सार्वधातुक इत्यनुवर्त्तते। **सकारद्वयस्यापीति** । युगपत्प्रवृत्त्या, लक्ष्यभेदात्पुनः प्रवृत्त्या वेति भावः । **यलोप इति** । न च तत्र कर्त्तव्येऽङ्गसञ्ज्ञासापेक्षस्येयो बहिरङ्गतयाऽसिद्धत्वमिति वाच्यं, तस्यामङ्गशब्देन शब्दरूपस्य सप्तम्याद्यन्तोपात्तस्य निमित्तस्यैव ग्रहणं न तु सञ्ज्ञाया अर्थस्य वेत्यदोषात् । एवञ्चेयोऽपरनिमित्तकत्वेनान्तरङ्गत्वमिति बोध्यम् । **सार्वधातुकावयवस्येति किमिति** । 'रुदादिभ्यः' इत्यतः सार्वधातुकग्रहणमत्रानुवर्त्तते । अन्यथा पचेदित्यादौ दीर्घप्राप्त्या चिकीर्ष्यादित्यादौ अतोलोपप्राप्त्याऽऽनर्थक्येनोभयो

मध्येऽपवादन्यायेन हि अतो लोप एव बाध्येत । भवेदित्यादौ तु परत्वाद्दीर्घः स्यात् । भवेताम् ॥ **झेर्जुस्** ।३।४।१०८। लिङो झेर्जुस् स्यात् । ज इत् । **उस्यपदान्तात्** ।६।१।९६। अपदान्तादवर्णादुसि परे पररूपमेकादेशः स्यात् । इति प्राप्ते । परत्वान्नित्यत्वाच्च 'अतो येय' इति प्राञ्चः । यद्यप्यन्तरङ्गत्वात्पररूपं न्याय्यं, तथापि यासित्येतस्य इयिति व्याख्येयम् । एवं च सलोपस्याऽपवाद इय् । 'अतो येयः' इत्यत्र तु सन्धिरार्षः ।

---

त.] **मध्येऽपवादन्यायेनेति** । 'रुदादिभ्य' इति सूत्रात्सार्वधातुक इत्यननुवृत्तावयं न्यायः प्रवर्तत इति भावः । **अन्तरङ्गत्वादिति** । प्रत्ययमात्रापेक्षत्वात् । 'अतो येयः' इत्यस्य त्वाङ्गत्वात्प्रकृतिप्रत्ययोभयसापेक्षत्वेन बहिरङ्गत्वादिति भावः । नचाऽपदान्ताऽकारस्य जुसश्चाश्रयणात्पररूपस्याप्युभयसापेक्षत्वमस्त्येवेति चेन्मैवम् , अनेकाश्रयणेऽपि प्रत्ययमात्राश्रयतया प्रकृतेरनाश्रयणात् । **व्याख्येयमिति** । एतच्च विप्रतिषेधसूत्रे भाष्ये स्पष्टम् ।

---

बा.] परत्वाऽभावादेव 'अतो येय' इत्यस्याऽप्रवृत्तेस्तत्र सार्वधातुकग्रहणानुवृत्तिर्व्यर्थैवेत्यत आह—**मध्येऽपवादन्यायेन ह्यतो लोप एव बाध्येतेति** । षष्ठस्य चतुर्थपादे अतो लोप इति सूत्रं, सप्तमस्य द्वितीयपादे अतो येय इति सूत्रं, सप्तमस्य चतुर्थपादे तु अतो दीर्घो यञीति सूत्रमिति स्थितिः । तत्र आशीर्लिङि आर्द्धधातुके चिकीर्ष-यादित्यत्राऽल्लोपप्राप्त्या, विधिलिङि तु भव यादित्यत्र अतो दीर्घप्राप्त्या च इयादेशस्य निरवकाशत्वेन बाध्यसामान्यचिन्तामाश्रित्याऽपवादतया तेन अन्यतरस्मिन् बाध्ये सति, 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरा'निति न्यायेनातो लोप एव बाधमर्हति न तु अतो दीर्घ इत्यर्थः । एवं चार्द्धधातुके चिकीर्ष-यादिति स्थिते अतः परत्वादियादेशः प्रसज्येतेत्यतिव्याप्तिः स्यादिति स्थितम् । एवं चाऽव्याप्तिरपीत्याह—**भवेदित्यादाविति** । अतः परस्य इयादेशविधौ सार्वधातुकग्रहणाननुवृत्तौ विधिलिङस्तिपि सार्वधातुके भव-यादिति स्थिते इयादेशं परत्वाद्बाधित्वा 'अतो दीर्घो यञी'ति यञादौ सार्वधातुके परे अतो विधीयमानो दीर्घः स्यात् । ततश्च अतः परत्वाऽभावादियादेशो न स्यादित्यव्याप्तिः स्यादित्यर्थः । नच इयादेशस्य निरवकाशत्वाद्दीर्घबाधकत्वं शक्ष्यम् । चिकीर्ष्यादित्यार्द्धधातुके दीर्घप्राप्त्ययोग्ये इयादेशस्य सावकाशत्वादिति भावः । **भवेतामिति** । तसस्तामादेशे शपि गुणे अवादेशे यासुडागमे सुटि सकारद्वयलोपे या इत्यस्य इयादेशे आद्गुणे यलोपः । अथ लिङो झेर्झोऽन्त इति प्राप्ते—**झेर्जुस्** । लिङः सीयुडित्यतो लिङ इत्यनुवर्तते । तदाह—**लिङो झेरिति** । अनेकाल्त्वात्सर्वादेशः । **ज इदिति** । जुसः स्थानिवत्त्वेन प्रत्ययत्वाच्चुटू इति जकार इत्संज्ञक इत्यर्थः । उसि शपि गुणे अवादेशे यासुटि सकारलोपे भव या उसिति स्थिते इयादेशं बाधित्वा पररूपप्रवृत्तिं शङ्कितुमाह—**उस्यप** । एकः पूर्वपरयोरित्यधिकृतम् । आद्गुण इत्यस्मादादित्यनुवर्तते । 'एङि पररूप'मित्यस्मात्पररूपमिति । तदाह—**अपदान्तादिति** । **उसीति** । उसि योऽच् उकारस्तस्मिन् परत इत्यर्थः, 'इको यणची'त्यतोऽचीत्यनुवृत्तेः । यद्यपि उसः कृत्स्नस्याऽऽकारस्य च उसित्येकादेशेऽपि रूपं तुल्यं, तथापि अकः सवर्णे दीर्घ इत्यादावुत्तरत्राचीत्यावश्यकमत्राप्यनुवर्तत इति बोध्यम्। भिन्द्युरित्याद्युदाहरणम्। **इति प्राप्त इति**। भव या उसित्यत्राकारस्योकारस्य चाद्गुणं बाधित्वा एकस्मिन्नुकारे पररूपे प्राप्ते सतीत्यर्थः । सति च पररूपे या इत्यस्याऽभावादिय् न स्यादिति मन्यते—**परत्वादिति**। पररूपापेक्षया इयादेशः परो नित्यश्च, अकृते कृते च प्रवृत्तेः । कृते पररूपे य् इत्यस्यैकदेशविकृतन्यायेन, एकादेशस्य पूर्वान्तवत्त्वेन वा इयादेशस्य निर्बाधत्वात् । ततश्च पररूपं बाधित्वा इयादेशे भवेयुरिति रूपमिति प्राचीना मन्यन्त इत्यर्थः । ननु पररूपमङ्गाधिकारस्थत्वाऽभावादङ्गानपेक्षत्वादन्तरङ्गम्, इयादेशस्तु आङ्गत्वात्प्रकृतिप्रत्ययोभयसापेक्षत्वाद्बहिरङ्गः । ततश्च परान्नित्यादपीयादेशात्पररूपस्यान्तरङ्गतया बलवत्त्वात्पररूपमेव इह स्यादिति शङ्कते—**यद्यपीति** ।

परिहरति—**तथापीति** । अतः-यास्-इयः-इति पदच्छेदः । यासिति लुप्तषष्ठीकं पदम् । ततश्च अतः परस्य यासित्येतस्य इय् स्यादिति व्याख्येयमित्यर्थः । ननु 'लिङः स लोपोऽनन्त्यस्ये'ति सकारस्य लोप इयादेशं बाधित्वा नित्यत्वात्प्राप्नोतीति, ततश्च यास् इत्यस्य इय् इति कथमित्यत आह—**एवं चेति** । यासिति सकारान्तस्य इयादेशविधिसामर्थ्यादेव सकारलोपं बाधित्वा प्रागेव यासिति सकारान्तस्य इयादेशो भवतीत्यर्थः । तथा च सकारावस्थायामवर्णात्परत्वाऽभावेन पररूपस्याऽप्रवृत्तिरिति भावः । ननु यदि 'यास्-इयः' इतिच्छेदस्तदा सकारस्य रुत्वे, भोभगो इति यत्वे, 'लोपः शाकल्यस्ये'ति तस्य लोपे अतो-या इय इति स्यात् । आद्गुणे कर्तव्ये यलोप-

---

शे.] रपि बाधः स्यात्, 'मध्येऽपवादाः' इति न्यायेन लोपमेव वा बाधेतेति। स्पष्टञ्चेदं भाष्यकैयटयोः। तदाह—**मध्येऽपवादेत्यादि**। **उस्यप**। अपदान्तात्किम् ? । का उस्रा-कोस्रा । न चात्र लाक्षणिकत्वमुसः, अपदान्तादित्येतत्सामर्थ्येनेह परिच्छेदकन्यायाऽप्रवृत्तिज्ञापनात् । अत एवानर्थकेऽप्रत्यये च भिन्द्युरित्यादौ पररूपसिद्धिः । अवर्णादुसोऽवयवेऽचीति सूत्रार्थस्तदाह—**इति प्राप्ते इति**। याशब्दाऽऽकारेणेति भावः। **नित्यत्वादिति**। एकादेशस्य पूर्वान्तत्वेन ग्रहणादिति भावः। **यासित्येतस्येति** । 'वार्णादाङ्ग'मित्यनपेक्ष्येदम् । **सन्धिरार्ष इति** । 'आने मुक्' इति सूत्रे भाष्येऽतो-या इति

भवेयुः । भवेः । भवेतम् । भवेत । भवेयम् । भवेव । भवेम । **लिङाशिषि** ।३।४।११६। आशिषि लिङस्तिङार्द्धधातुकसंज्ञः स्यात् । **किदाशिषि** ।३।४।१०४। आशिषि लिङो यासुट् कित्स्यात् । 'स्कोः'रिति सलोपः । **क्ङिति च** ।१।१।५। गित्किन्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः । भूयात् । भूयास्ताम् ।

---

त.] **आर्धधातुकसंज्ञ इति** । 'लङः शाकटायनस्यैवे'त्यत एवकारोऽनुवर्तनीयः । अन्यथा एकसंज्ञाधिकारबहिर्भूतत्वेन सार्वधातुकसंज्ञापि स्यात् ,ततश्च पक्षे शबादिः स्यात्। **किदाशिषि**।ङित्वेनैव गुणवृद्धिप्रतिषेधे सिद्धे किद्वचनमिज्यादित्यादौ संप्रसारणार्थं, जागर्यादित्यत्र गुणार्थं च । जागर्तेर्गुणो हि ङिति पर्युदस्यते, ङित्वं चेह विशेषविहितेन कित्त्वेन बाध्यते । **सलोप इति** । झल्परसंयोगादित्वेन यासुटः सस्य लोपः, सुटस्तु पदान्तसंयोगादित्वेनेति भाव इति मनोरमायां स्थितं, तदसंबद्धमिति मत्वाऽत्र निष्कर्षमाहुः—भूयास्तां, भूयास्तं, भूयास्तेत्यत्र झल्परसंयोगादित्वेन यासुटः सस्य लोपः । भूयादित्यत्र तु सुट इव यासुटोऽपि सस्य लोपः पदान्तसंयोगादित्वेनैव । अन्यथा झल्परसंयोगादिलोपस्याऽसिद्धत्वात्संयोगान्तलोप एव स्यात्। मृष्ट इत्यादौ सावकाशस्य झल्परसंयोगादिलोपस्य संयोगान्तलोपाऽबाधकत्वादिति । **ङिन्निमित्ते इति**। 'कितिगितिङिति परे इको गुणवृद्धी न स्त' इति न व्याख्यातम् ,छिन्नं भिन्नमित्यत्र लघूपधगुणस्याऽनिषेधप्रसङ्गात् । नचाऽऽरम्भसामर्थ्यं शङ्क्यं, चितं स्तुतमित्यादावव्यवहिते किति चरितार्थत्वादिति भावः । अन्ये तु—क्ङितीति प्रत्ययग्रहणात्प्रत्ययेन संनिधापितस्याऽङ्गस्य क्ङिति पर इति व्याख्याने तु छिन्नं भिन्नमित्यादि सिध्यत्येव । न चैवं भवावः भवाम इत्यादावतिप्रसङ्ग इति वाच्यम्, अन्तरङ्गगुणं प्रति बहिरङ्गनिषेधस्याऽप्रवृत्तेरित्याहुः। क्ङिति चेति सूत्रे चर्त्वेन गकारोऽपि प्रश्लिष्यत इत्याशयेन 'गित्किन्ङिन्निमित्ते' इत्युक्तम्। गिति किम्?। 'ग्लाजिस्थश्च ग्स्नुः' जिष्णुः। किति त्वस्मिन्स्थास्नुरित्यत्र 'घुमास्थे'तीत्वं प्रसज्येत । न ग्स्नोर्गित्त्वे भूष्णुरित्यत्रेण्निषेधो न स्यात्, 'ग्लाजिस्थश्चे'ति चकाराद्भुवश्च ग्स्नुर्भवतीति स्वीकारादिति वाच्यम्, 'श्र्युकः किती'त्यत्रापि चर्त्वेन गकारं प्रश्लिष्य गित्कितोरिण्न स्यादिति व्याख्यानात् । न चैवं चर्त्वस्याऽसिद्धतया 'श्र्युकः' इत्यत्र विसर्जनीयो न लभ्यत इति 'हशि चे'त्युत्वमेव स्यादिति वाच्यं, सौत्रत्वात् । 'न मुने' इत्यत्र नेति योगविभागेनाऽसिद्धत्वाऽभावाद्वेष्टसिद्धेः।वामनस्तु-'ग्लाजिस्थश्चे'ति सूत्रे स्था-आ इति प्रश्लेषात्स्थास्नुरित्यत्र 'घुमास्थे'तीत्वं न भविष्यतीति गकारप्रश्लेषाऽभावाच्च 'श्र्युकः किती'त्यत्र चर्त्वस्याऽसिद्धत्वाऽभावसमर्थनक्लेश इत्याह । **इग्लक्षण इति** । 'इक्' इत्येवं विहिते इत्यर्थः । इग्लक्षणे किम् ? । लैगवायनः । लिगोर्नडादित्वात्फक् । इहादिवृद्धेरोर्गुणस्य च वस्तुगत्या इक्स्थानिकत्वेऽपि न निषेधः । न चेक इत्युक्तेऽपि 'किति चे'त्यारम्भसामर्थ्यादत्र निषेधो न भवेदिति शङ्क्यम्, नाडायनादौ तस्य चरितार्थत्वात् । **भूयादिति** । इह 'स्कोः'रिति लोपस्याऽसिद्धत्वात्तकारस्य संयोगान्त-

---

बा.] स्याऽसिद्धत्वादित्यत आह-**सन्निपातपरिभाषा इति** । 'आने मु'गिति सूत्रे भाष्ये तु 'अतो या-इय इत्येव सूत्रपाठो लक्ष्यते । **भवेरिति** । सिपि, शपि, गुणः । अवादेशः । इतश्चेति इकारलोपः । यासुडागमः । सकारस्य लोपः । इयादेशः । आद्गुणः यलोपः । रुत्वविसर्गौ । एवं थसस्तमादेशे थस्य तादेशे च, भवेतं भवेतेति च रूपम् । **भवेयमिति** । मिपि अमादेशः । शप् । गुणः । अवादेशः । यासुट् । सलोपः । इयादेशः । आद्गुणः । **भवेवेति** । वस् । शप् । गुणावादेशौ । 'नित्यं ङितः' इति सकारलोपः । यासुट् । सलोपः । इयादेशः । आद्गुणः । यलोपः । एवं मसि भवेमेति रूपम् । इति विधिलिङ्प्रक्रिया । अथाशीर्लिङि विशेषमाह-**लिङाशिषि** । 'लि'ङिति लुप्तषष्ठीकं पदम् । तिङ्शित्सार्वधातुकमित्यतस्तिङित्यनुवर्तते । तदाह-**आशिषि लिङस्तिङिति** । सार्वधातुकसंज्ञाऽपवादोऽयम् । ततश्च सार्वधातुकसंज्ञाकार्यं शबादि न भवति । **किदाशिषि** । 'लिङः सीयु'ड्त्यितो लिङ इत्यनुवर्तते । 'यासुट् परस्मैपदेषु'त्यतो यासुडिति च । तदाह-**आशिषि लिङ इति** । 'यासुट् परस्मैपदेषु'ति ङित्त्वस्यापवादः। यद्यपि ङित्त्वेनैव गुणनिषेधः सिध्यति, तथापि 'इज्या'दित्यादौ 'वचिस्वपियजादीनां किती'ति संप्रसारणार्थं कित्त्वमावश्यकमिह न्याय्यत्वादुपन्यस्तम् । अथ आशिषि लिङस्तिप्यार्द्धधातुकत्वाच्छबभावे 'इतश्चे'तीकारलोपे यासुडागमेऽतः परत्वाऽभावात् सार्वधातुकत्वाऽभावाच्च इयादेशाऽभावे सुटि भूयास् स् त् इति स्थिते प्रक्रियामाह-**स्कोरिति सलोप इति** । 'लिङः

---

शे ] व्यस्तपाठ एव दृश्यते । नन्वेवमपि भवेत्यकारेणेयुसः पररूपं दुर्वारं, 'यदागमाः' इति न्यायेनेयुस उस्त्वादिति चेन्न,-भिन्द्युरित्यसिद्ध्यापत्त्याऽर्थवत्परिभाषाया इव 'यदागमाः' इत्यस्या अप्युस्विषयेऽप्रवृत्तेः । अन्यथाऽऽगमसत्त्वे केवले उस्त्वस्याऽप्यभावेन तदसिद्धिः स्पष्टैव । **क्ङिति च** । इह चर्त्वेन गकारोऽपि निर्दिश्यते । तेन ग्स्नौ जिष्णोः सिद्धिः । स्थास्नुरित्यत्रेत्वापत्त्या नाऽयङ्किदित्याशयेनाह-**गिदित्यादि**। **निमित्ते इति** । क्ङिति सति ये गुणवृद्धी प्राप्नुत इत्यध्याहारेण सिद्धं सिद्धसाध्यसमभिव्याहारन्यायेन निमित्तत्वं बुध्यते इति **केचित्** । वार्तिककृता तु 'तन्निमित्तग्रहणं कर्तव्य'मित्युक्तं, भाष्यकृता क्नोः कित्त्वेन ज्ञापकेन प्रत्याख्यातं, गुणवृद्धिविशेषणत्वेऽपि क्ङिति अव्यवहिते उपश्लिष्टस्य पूर्वस्य ये प्राप्नुत

**भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ॥ लुङ् ।३।२।११०। भूतार्थवृत्तेर्धातोर्लुङ् स्यात् ॥ माङि लुङ् ।३।३।१७५। सर्वलकारापवादः ॥ स्मोत्तरे लङ् च ।३।३।१७६। स्मोत्तरे माङि लङ् स्याल्लुङ् च ॥ च्लि लुङि ।३।१।४३। शबाद्यपवादः ॥ च्लेः सिच् ।३।१।४४। इचाविचौ ॥**

त.]लोपः प्राप्तः पदान्तसंयोगादिलोपेनाऽनवकाशेन बाध्यते। नन्वेवमपि संयोगादिलोपस्य 'पूर्वत्रासिद्ध'मित्यसिद्धत्वाद्धल्ङ्यादिलोपः स्यात्, पदान्ते संयोगादिलोपस्य मृट् मृडित्यादौ सावकाशत्वादिति चेत्, अत्राहुः—सुड्यासुटोः सतोस्ताभ्यां विशिष्टस्यैव प्रत्ययत्वेनाऽपृक्तत्वाऽभावात्, हलन्तायाः प्रकृतेः परत्वाऽभावाच्चोक्तदोषशङ्कैव नास्तीति ॥ **सर्वलकारापवाद इति** । मास्त्वित्यादौ निषेधार्थकमाशब्दोऽन्य एव, न तु माङित्याहुः। **च्लि लुङि**। 'इकार उच्चारणार्थ' इति मनोरमा । न च 'मन्त्रे घसे'ति सूत्रे लेरिति स्थाने ल इत्युच्यमाने च्लिभिन्नस्यापि लकारस्य लुक् स्यादिति शङ्क्यं, 'गातिस्थे'ति सूत्रात्सिच इत्यनुवर्त्य सिचस्थानिनः = स्थान्यर्हस्य लस्य लुगिति व्याख्यायामतिप्रसङ्गाऽभावाद्विभाषानुवृत्तेर्लुको वैकल्पिकतया छन्दसि रूपान्तरस्याऽनापाद्यतया च सिजनुवृत्तिं विनापि नातिप्रसङ्ग इत्याहुः । **शबाद्यपवाद इति** । आदिशब्दात्तत्तद्गणप्रयुक्तानां श्यन्नादीनां ग्रहणम् । **इचाविताविति** । तत्रेदित्त्वे प्रयोजनममंस्ते-

बा.]सलोप' इत्यस्य सार्वधातुकविषयत्वात्स्कोरिति सुटः पदान्तसंयोगादित्वाल्लोपः। ततो यासुटः सस्यापि पदान्तसंयोगादित्वादेव लोपः, न तु झल्परसंयोगादित्वेन यासुटः सस्य लोपे सुटःसस्य पदान्तसंयोगादित्वाल्लोप इति युक्तं, तथा सति झल्परसंयोगादिलोपस्याऽसिद्धत्वेन संयोगान्तलोपापत्तेः। भ्रष्ट इत्यादौ सावकाशस्यझल्परसंयोगादिलोपस्य संयोगान्तलोपाऽबाधकत्वादिति शब्दरत्ने विस्तरः । एवं च भूयास् स् त् इति स्थिते सकारद्वयस्य निवृत्तौ भूयादिति रूपम् । तत्र 'सार्वधातुकार्द्धधातुकयो'रिति गुणे प्राप्ते। **क्ङिति च**। ग्क्ङ् एषां समाहारद्वन्द्वः, कात्पूर्वं गकारस्य चर्त्वेन निर्देशात् । ग्क्ङ् च इत् यस्येति विग्रहः। द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकमन्वेति। तथा च गिति किति ङिति चेति लभ्यते। निमित्तसप्तम्येषा। 'इको गुणवृद्धी'इत्यनुवर्तते । चकार इत्यर्थे। इक इत्युच्चार्य विहिते इति लभ्यते । 'न धातुलोप आर्द्धधातुके' इत्यतो नेत्यनुवर्तते । तदाह—**गित्किन्ङिन्निमित्ते इत्यादिना** । गितीत्यनुक्तौ तु 'ग्लाजिस्थश्च ग्स्नु'रिति ग्स्नुप्रत्यये 'जिष्णु'रित्यत्र गुणनिषेधो न स्यात् । न च ग्स्नुप्रत्ययः किदेव क्रियतामिति वाच्यं, तथा सति 'घुमास्थे'ति किति विहितस्य ईत्वस्य प्रसङ्गात् । यदि तु गिति किति ङिति परतो गुणवृद्धी न स्त इति व्याख्यायेत, तदा च्छिन्नं भिन्नमित्यत्र क्तप्रत्यये परे लघूपधगुणनिषेधो न स्यात् । स्थानिभूतस्येको हला व्यवधानात् । नच येन नाव्यवधानन्यायः शङ्क्यः । चितं स्तुतमित्यादावव्यवहिते चरितार्थत्वात् । यदि च 'इको गुणवृद्धी' इत्येवं व्याख्यायेत, न क्विग्लक्षणे इति, तदा लिगोरपत्यं लैगवायनः, नडादित्वात् फक्, इह आदिवृद्धेरोर्गुणस्य च वस्तुगत्या इक्स्थानिकत्वान्निषेधः स्यादित्यलम् । **भूयादिति** । इहार्द्धधातुकत्वाल्लिङः सलोप इत्यस्याऽप्रवृत्तेः स्कोरिति सलोप इत्युक्तं न विस्मर्तव्यम् । न चैवमपि संयोगादिलोपस्याऽसिद्धत्वाद्धल्ङ्यादिलोपः स्यादिति वाच्यं, सुटि यासुटि च सति ताभ्यां विशिष्टस्यैव प्रत्ययत्वेनाऽपृक्तत्वाऽभावादित्यलम्। **भूयास्तामिति**। आशिषि लिङस्तसस्तामादेशे आर्द्धधातुकत्वाच्छबभावे यासुडागमेऽतः परत्वाऽभावादियादेशाऽभावे सुटि झल्परसंयोगादित्वेन यासुटः सकारस्य लोपो, गुणनिषेधश्च । **भूयासुरिति** । झेर्जुसि यासुडागमे गुणनिषेधे रूपम् । **भूया इति** । आशीर्लिङः सिपि इतश्चेतीकारलोपः । यासुटः 'स्को'रिति सलोपः, गुणनिषेधः, रुत्वविसर्गौ । **भूयास्तमिति** । थसस्तमादेशे यासुटि गुणनिषेधः । एवं थस्य तादेशेऽपि भूयास्तेति रूपम् । **भूयासमिति** । मिपोऽमादेशे यासुटि गुणनिषेधः। **भूयास्वेति** । लिङो वस् । 'नित्यं ङितः' इति सकारलोपः । यासुट् । गुणनिषेधः । एवं मसि भूयास्मेति रूपम् । इत्याशीर्लिङ्प्रक्रिया । **लुङ्** । धातोरिति भूत इति चाधिकृतम् । तदाह-**भूतार्थवृत्तेरिति** । **माङि लुङ्** । माङि प्रयुज्यमाने धातोर्लुङ् स्यादित्यर्थः । ननु लुङित्युदाहृतसूत्रेणैव सिद्धेः किमर्थमिदमित्यत आह-**सर्वलकारापवाद इति** । मास्त्वित्यादौ तु 'मा' इत्यव्ययान्तरं प्रतिषेधार्थकमित्याहुः । 'आङ्माङोश्चे'ति सूत्रभाष्ये तु ङितो माशब्दस्य निर्देशात्प्रमाच्छन्द इत्यत्र तुङ्न भवतीत्युक्तम् । माशब्दस्याऽव्ययान्तरस्य सत्त्वे तु तदेवोदाहियेत। मास्त्वित्यत्र तु अस्त्विति विभक्तिप्रतिरूपकमव्ययमित्यन्ये । **स्मोत्तरे लङ् च** । चकारान्माङि लुङित्यनुकृष्यते । 'स्मे'त्यव्ययमुत्तरं यस्मादिति विग्रहः । तदाह-**स्मोत्तरे**

शे.]इत्यर्थस्य सम्भवेन परिभाषाया दुर्वारत्वात्। 'अनुवादे परिभाषा ने'ति तु 'इको गुणवृद्धी' 'अचश्च' इति सूत्रद्वयविषयमेवेत्युक्तं । भाष्ये तस्य निषेधस्याऽनुपलम्भाच्च । अधिकरणसप्तमीसम्भवे 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति न्यायेन 'यस्य च भावेने'ति सप्तम्ययुक्तेत्यप्युक्तम्। 'सिद्धसाध्ये'ति न्यायस्य परिभाषया बाध एवोचितः । तन्निमित्तग्रहणेन सामर्थ्यात् ज्ञापकेन वा परिभाषाबाध इति तूचितम् । इक इति च स्वरूपपरमत्रानुवर्तते, अर्थाधिकारात् । तदाह—**इग्लक्षणे इति** । इक्पदलक्षणे इत्यर्थः । **भूयास्तामिति** । 'धातोर्विहिततसादीना'मित्यर्थेन परत्वात् 'आद्युदात्तश्चे'ति सूत्रभाष्यरीत्या लस्य यासुटि, अन्तरङ्गत्वाद्वा पूर्वं यासुट्यपि निर्दिश्यमानपरिभाषया न क्षतिः । **माङि लुङ्** । मास्तु

**गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु** ।२।४।७७। एभ्यः सिचो लुक् स्यात् । गापाविहेणादेशपिबती गृह्येते ॥ **भूसुवोस्तिङि** ।७।३।८८। 'भू' 'सू' एतयोः सार्वधातुके तिङि परे गुणो न स्यात् ॥ **अस्तिसिचोऽपृक्ते** ।७।३।९६। सिच् अस् चेति समाहारद्वन्द्वः । सिच्छब्दस्य सौत्रं भत्वम् । 'अस्ती'त्यव्ययेन कर्मधारयः। ततः पञ्चम्याः सौत्रो लुक् । विद्यमानात्सिचोऽस्तेश्च परस्याऽपृक्तस्य हल ईडागमः स्यात् । इति-ईण्नेह, सिचो

---

त.] त्यत्र 'अनिदिता'मित्युपधालोपाऽभावः ॥ **गातिस्था** । इह व्यवहितोऽपि लुगनुवर्तते, न तु श्लुः, व्याख्याना-दित्याशयेनाह—**लुगिति** । **गापाविति** । गातीति श्तिपा विकरणशून्यस्य निर्देशाल्लुग्विकरण इणादेशो गृह्यते, 'लुग्विकरणाऽलुग्विकरणयोरलुग्विकरणस्य ग्रहण'मिति परिभाषया पिबतिर्गृह्यते न तु पातिरित्यर्थः । **भूसुवोः** । 'षूङ् प्राणिगर्भविमोचने' । सुवतिसूयत्योस्तु न ग्रहणं, तिङो विकरणेन व्यवधानात् ॥ **अस्तिसिचोऽपृक्ते** । अत्र प्राञ्चः—अस्तिश्च सिच्चेति समाहारद्वन्द्वे अस्तिसिच् , तस्मादिति विग्रहं मत्वा अस्तेः सिचश्च परस्येति व्याचख्युः । तच्चिन्त्यम् । तत्र समासान्तस्याऽनित्यत्वाश्रयणे 'द्वन्द्वाच्चुदषहान्ता'दिति प्राप्तस्य टचः परिहारेऽपि, 'समुद्राभ्राद्घः' इति निर्देशात् 'अल्पाच्तर'मित्येतदनित्यमित्याश्रित्य सिच्छब्दस्य परत्वसमर्थनेऽपि, 'अस्तेर्भू'रिति भूभावस्य स्थानिवत्त्वेनाऽस्तितया तत्राऽपृक्तस्य हल ईडागमस्य दुर्वारत्वात् । तथा गातिस्थाघुपाभूभ्यः सिचो लुक्यपि स्थानिवद्भावेन सिचः परत्वानपायादगाद-स्थादभूदित्यादावतिप्रसङ्गाच्च । तदेतद्ध्वनयन्व्याचष्टे—**सिच्च अस् चेति** । **सौत्रं भत्वमिति** । तेनाऽत्र कुत्वजश्त्वे न भवत इति भावः । **विद्यमानादिति** । सिचोऽस्तेश्च विद्यमानविशेषणेन लुप्तात्सिचः, कृतभूभावादस्तेश्च नेति भावः ॥ भाष्यकारास्त्वाहुः—'अस्तिसिचोऽपृक्ते' इति द्विसकारकोऽयं निर्देश इति । अत्र माधवः—अस् स् इति समुदायस्याऽधातुतया 'इक्श्तिपौ धातुनिर्देशे' इति श्तिप् प्रत्ययो न स्यादिति । अत्र वदन्ति—द्विसकारकनिर्देशे श्तिप् न स्यादिति यदुक्तं, तद्भ्रमसोक्तिमात्रम् । इत्थं हि भाष्याशयः—सिच इत्यस्यानन्तरं सकारः प्रश्लिष्यते न तु श्तिपः प्राक् ,

---

बा.] **माङीति** । अयमपि सर्वलकारापवादः। **च्लिलुङि**। च्लीति लुप्तप्रथमाकम्। लुङि परे धातोश्च्लिप्रत्ययः स्यादित्यर्थः। **शबाद्यपवाद इति** । आदिना श्यनादिविकरणसङ्ग्रहः । **च्लेः सिच्** । **इचाविति** । चित्स्वरश्चित्त्वस्य प्रयोजनम् । इदित्त्वस्य तु अमंस्तेत्यत्र 'अनिदितां हल उपधाया' इत्युपधालोपस्याऽप्रवृत्तिः प्रयोजनम् । **गातिस्थाघु** । गाति स्था घु पा भू एषां द्वन्द्वात्पञ्चमीबहुवचनम् । परस्येति शेषः । सिच इति षष्ठी । गातीति श्तिपा निर्देशाद्गाधातोर्ग्रहणम् । घु इत्यनेन दाधा घ्वदाबिति घुसंज्ञकयोर्दाधातोर्धाधातोश्च ग्रहणम् । 'ण्यक्षत्रियार्षञितो यूनि लुगणिञो'रित्यस्माद्व्यव-हितादपि लुगित्यनुवर्तते, 'जुहोत्यादिभ्यः श्लु'रित्यव्यवहितमपि श्लुग्रहणं नानुवर्तते, व्याख्यानात् । तदाह—**एभ्यः सिच इत्यादिना** । **गापाविहेति** । इह = गातिस्थेति, सूत्रे गातीत्यनेन पाग्रहणेन च इणो गा लुङीति लुग्विकरण-स्येणो गादेशः, शब्विकरणः पिबादेशयोग्यः पाधातुश्च गृह्येते इत्यर्थः । 'गापोर्ग्रहणे इण्पिबत्योर्ग्रहण'मिति भाष्यादिति भावः । तथा च लुङस्तिबादेशे इतश्चेति इकारलोपे शबपवादे च्लिप्रत्यये तस्य सिचि तस्य लुकि अडागमे अभू-त् इति. स्थिते पित्त्वान्ङित्त्वाऽभावे सार्वधातुकार्द्धधातुकयोरिति गुणे प्राप्ते—**भूसुवोस्तिङि** । 'मिदेर्गुण' इत्यतो 'गुण' इति, 'नाभ्यस्तस्याचि पिती'त्यतो नेति सार्वधातुक इति चानुवर्तते । तदाह—**एतयोरिति** । भू सू इत्यनयोरित्यर्थः । इह 'षूङ् प्राणिगर्भविमोचने' इति लुग्विकरणस्यैव ग्रहणं, न तु सुवतिसूयत्योः शविकरणश्यन्विकरणयोरपि, तत्र तिङो विकर-णेन व्यवधानात् । अथ अभूत् इत्यत्र तकारस्येडागममाशङ्कितुमाह—**अस्तिसिचोऽपृक्ते** । अस्तिश्च सिच्चेति समाहारद्वन्द्वात्पञ्चमी । 'ब्रुव ई'डित्यत ईडित्यनुवर्तते । 'तस्मादित्युत्तरस्ये'ति परिभाषया 'अस्तिसिचः' इति पञ्चमी अपृक्तस्येति षष्ठीं प्रकल्पयति । ततश्च अस्तेः सिचश्च परस्याऽपृक्तस्य ईडागमः स्यादिति प्राचीना व्याचक्षते । तथा सति लुङि अस्तेर्भूभावे अभूदिति न स्यात्, स्थानिवत्त्वेन अस्तितया तत्राऽपृक्तस्य हल ईडागमस्य दुर्वारत्वात् । तथा अगात् अस्थात् अपादित्यादावपि 'गातिस्थे'ति सिचो लुक्यपि स्थानिवत्त्वेन सिचः परत्वादीडागमः स्यादतः प्रकारान्तरेण व्याचष्टे—**सिच्च अश्चेत्यादिना** । ननु सिचस्शब्दे सिच्शब्दस्य पूर्वखण्डस्यान्तर्वर्तिविभक्त्या पदत्वाच्चोः कुरिति कुत्वप्रसङ्ग इत्यत आह—**सौत्रं भत्वमिति** । तथा च भत्वेन पदत्वस्य बाधान्न कुत्वमिति भावः । ननु सिचस्शब्दे असित्यनेनैवास्तेर्लाभादस्तिग्रहणं किमर्थमित्यत आह—**अस्तीत्यव्ययेन कर्मधारय इति** । अस्तीति विभक्तिप्रति-रूपकमव्ययं लुप्तसुब्विभक्तिकं विद्यमानार्थकम् । तेन सिचस्शब्दस्य कर्मधारय इत्यर्थः । तथा च 'अस्तिसिच'सित्येक पदमिति स्थितम् । **सौत्रो लुगिति** । 'सुपां सुलुगित्यनेने'ति शेषः । तथा च अस्तिसिच इति पदाल्लब्धार्थमाह—

---

शे.] इत्यादौ तु निषेधार्थो माशब्दो न माङिति न दोष इति केचित्, तन्न, 'आङ्माङोश्चे'ति सूत्रस्थेन 'माङो विशिष्टस्य ग्रहणं, किमर्थम् ? । प्रतिषेधार्थकसम्प्रत्ययार्थम्। प्रमाच्छत्रमित्यादौ माभू'दिति भाष्येण तदभावबोधनादिति परे । **गापाविहेति** । व्याख्यानादिति भावः । अत एव 'गापोर्ग्रहणे इणूपिबत्योर्ग्रहण'मित्युक्तं भाष्ये । **भूसुवोः** ।

[लुका]लुप्तत्वात् । अभूत् । हलः किम्? । ऐधिषि । अपृक्तस्येति किम् ? । ऐधिष्ट । अभूताम् । ,**सिजभ्यस्त-विदिभ्यश्च** ।।३।४।१०९ । सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्संबन्धिनो झेर्जुस् स्यात् । इति प्राप्ते । **आतः** ।३।४।११०। सिज्लुक्यादन्तादेव झेर्जुस् स्यात् । अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव ।

त.]अतएव 'सिचोऽपृक्ते' इति द्विसकारकोऽयं निर्देश' इत्युक्तं भाष्ये।अन्यथा 'अस्तीति निर्देशो द्विसकारक' इत्येव ब्रूयात्,. एवं च सान्तादस्तेः,सान्तात्सिंच इति चार्थो निर्बाध एव। द्वितीयश्च सकारो लुप्यते,'संयोगान्तस्य पदान्तस्ये'ति व्याख्यानात्, व्यपदेशिवद्भावेन पदान्तत्वाद्वितीयसकारस्य । न च संयोगान्तलोपस्याऽसिद्धत्वात् 'अतो रो'रित्युत्वं दुर्लभमिति वाच्यं, 'संयोगान्तलोपो रोरुत्वे' इति वार्तिकेनाऽसिद्धत्वनिषेधात् । 'संयोगान्तं यत्पद'मिति व्याख्याने तु नेह संयोगान्तलोपः, किंतु सकारद्वयस्यापि रुत्वे कृते 'अतो रो'रित्यनेनैक एवोकारो भविष्यति,विधेयविशेषणस्यैकत्वस्य पश्वेकत्ववद्विवक्षितत्वात्। न च स्थानिभेदेन उकारद्वये सत्यपि न क्षतिः, सवर्णदीर्घानन्तरमाद्गुणे सति समीहितरूपसिद्धेरिति वाच्यम्, एकपदाश्रयत्वेनाऽन्तरङ्गत्वादाद्गुणे पश्चादवादेशप्रवृत्त्या 'अस्तिसिचोऽपृक्ते' इति रूपाऽसिद्धेः, तस्मादुक्तरीत्या एक एवोकार इति स्वीकर्तव्यम् । अतएव विधेयगतैकत्वस्य विवक्षितत्वात् 'एकः पूर्वपरयो'रित्यत्रैकग्रहणं भाष्यादौ प्रत्याख्यातम् । नन्वति परे यो रुः,स त्वतः परो न भवति, अतः परस्तु अतिपूर्वो न भवतीति रुद्वयस्थाने कथमुकारः स्यात् ?। मैवम् । 'रो'रिति जातिपरनिर्देशेनाऽतः परत्वस्य पूर्वत्वस्य च संभवात् । न चैवमपि परत्वात् 'हशि चे'ति प्रथमस्यैव रोरुः स्यादिति वाच्यं, रुत्वस्याऽसिद्धतया हशपरत्वाऽभावात् । न चाश्रयाऽसिद्धत्वमिति वाच्यं, स्थान्यंशे तथात्वेऽपि निमित्तभूतहशंशे तदसंभवात् । यद्यपि रुत्वजातेरेकत्वादुभयोरपि एक एव रुर्भवतीति व्याख्यायां नायं क्लेशस्तथापि रुत्वविधौ पदस्येत्यनुवर्तनादेकपदान्तत्वं न संभवति, द्वितीयसकारस्य पृथक्पदत्वादित्याहुः । **अपृक्तस्य हल इति** । 'अपृक्तसार्वधातुकस्ये'ति प्राचोक्तं त्वयुक्तम्, ऐधिषीत्यादावतिव्याप्तेः, सार्वधातुकग्रहणव्यावर्त्याऽलाभाच्च ॥ **आतः** । सिज्ग्रहणमनुवर्तते, 'झेर्जु'सिति च । सिच आकाराच्च परस्य झेर्जुस् । तत्र प्रत्ययलक्षणेन सिचः परत्वमाकारात्तु श्रुत्या । एवं स्थिते फलितमाह–**सिज्लुकीति** । 'गातिस्थे'ति सूत्रेणेत्यर्थः । 'सिजभ्यस्ते'ति पूर्वसूत्रेणवादन्तादपि झेर्जुसि सिद्धे नियमार्थोऽयमित्याह–**आदन्तादेवेति** । **हेतुहेतुमद्भावादीति** । अत्र केचित्–'आदिशब्देनाशंसावचनं गृह्यत' इति व्याख्याय आशंसावचने लिङो यन्निमित्तं तत्रापि क्रियातिपत्तौ भविष्यति लृङ् , गुरुश्चेदायास्यत्, आशंसे,–अह-

बा.]**विद्यमानादित्यादि** । **हल इति** । 'उतो वृद्धिर्लुकि हली'त्यतोऽनुवृत्तस्य हलीत्यस्य षष्ठ्या विपरिणाम इति भावः। **इतीण्नेहेति** । अनेन सूत्रेण अभूत् इत्यत्र ईडागमो नेत्यर्थः । कुत इत्यत आह–**लुप्तत्वादिति** । विद्यमानत्वविशेषणेन लुप्तात्सिचः परस्य नेति भावः'। एवं च अगादित्यादावपि लुप्तात्सिचः परस्य अस्तेर्लुङि कृतभूभावात्परस्य च नेत्युक्तप्रायम् । **ऐधिषीति** । एधधातोर्लुङि उत्तमपुरुषैकवचनम् इट् । अत्र इकारस्य सिचः परत्वेऽपि हल्त्वाऽभावादिडागमो नेति भावः । **ऐधिष्टेति** । एधधातोर्लुङि प्रथमपुरुषैकवचनम् । अत्र त इत्यस्य सिचः परत्वेऽपि एकाल्प्रत्ययत्वाऽभावेनाऽपृक्तत्वाऽभावादीडागमो नेति भावः । **अभूतामिति** । लुङस्तसि तस्य तामादेशः । च्लिः । सिच् । अट् । गुणनिषेधः । **सिजभ्यस्तविदि** । 'झेर्जु'सिति सूत्रमनुवर्तते । 'नित्यं ङित' इत्यतो ङित इति च । तदाह–**सिचोऽभ्यस्तादित्यादिना** । **इति प्राप्त इति** । 'लिङो झेर्जुसी'ति शेषः । **आतः** । 'झेर्जु'सिति सूत्रमनुवर्तते । 'आतः सिज्लुगन्तादिति वक्तव्य'मिति वार्तिकं भाष्ये पठितम् । ततश्च सिज्लुकि यदाकारान्तं तस्मात्परस्य झेर्जुसिति लभ्यते । सिजभ्यस्तेति पूर्वसूत्रेणैव सिद्धे नियमार्थमिदम् । तदाह–**आदन्तादेवेति** । **अभूवन्निति** । झिः । च्लिः । सिच् । लुक् । अट् । झोऽन्तः । इतश्चेति इकारलोपः । तकारस्य संयोगान्तलोपः। 'भुवो वुग्लुङ्लिटो'रिति वुक् । सिज्लुकि आतः परस्यैवेति नियमात्सिजभ्यस्तेति न जुसिति भावः । **अभूरिति** । सिप् च्लिः सिच् लुक् अट् इकारलोपः । रुत्वविसर्गौ । **अभूतमिति** । थसस्तम् च्लिः सिच् लुक् अट् । गुणनिषेधः । एवं थस्य तादेशे अभूतेति रूपम् । **अभूवमिति** । मिप् अम्। च्लिः सिच्। लुक्। अट् वुक् । **अभूवेति** । वस् च्लिः

शे.]अत्र पितीत्यनुवृत्तावननुवृत्तौ वा फलदोषयोरभावेन तदनुक्तिः। **भत्वमिति** । तेन कुत्वजश्त्वे न। **विद्यमानादिति**। तरवश्च- सर्वादेशेनाऽनपहृतत्वम् ।अत एवाऽऽसीदित्यादौ न दोषः ।भाष्यात्तु 'अस्तिसिचोऽपृक्ते' इति सूत्रपाठो लभ्यते । तत्र स् इति मध्यमणिन्यायेनोभाभ्यां सम्बध्यते। सान्तादस्तेः, सान्तात्सिचश्चेत्यर्थः । लुक्यपि स्थानिवत्त्वं न, अल्विधित्वात् । प्रत्ययलक्षणसूत्रन्तु नियमार्थम् । विध्यर्थत्वेऽपि सान्तादिति विशेषणसामर्थ्येन श्रूयमाणसान्तपरम् । अत एव वार्तिककृता सकारः सिच एव विशेषणमित्याशयेन भुव ईटि स्थानिवत्त्वप्रतिषेध उक्तो न तु सिज्लुकोऽपि तन्निषेध आरब्धः । 'सिचस्स्' इति प्रश्लेषे 'द्विसकारको निर्देशः' इत्यस्य भाष्यस्याऽसङ्गतिः, तदुच्चारणाऽभावादिति भाष्यप्रदीपोद्द्योते विस्तर इत्याहुः । **इति प्राप्ते इति** । प्रत्ययलक्षणेन प्राप्तिः । **आदन्तादेवेति** । विपरीतनियमस्तु न, व्याख्यानात् । 'च्लि

अभूम। **न माङ्योगे** ।६।४।७४। अडाटौ न स्तः। मा भवान् भूत्। मा स्म भवत्। भूद्वा। **लिङ्निमित्ते लृङ् क्रियातिपत्तौ** ।३।३।१३९। हेतुहेतुमद्भावादि लिङ्निमित्तं, तत्र भविष्यत्यर्थे लृङ् स्यात्क्रियाया अनिष्पत्तौ गम्यमानायाम्। अभविष्यत्। अभविष्यताम्। अभविष्यन्। अभविष्यः। अभविष्यतम्। अभविष्यत। अभविष्यम्। अभविष्याव। अभविष्याम। **ते प्राग्धातोः** ।१।४।८०। ते-गत्युपसर्गसंज्ञा-धातोः प्रागेव प्रयोक्तव्याः। **आनि लोट्** ।८।४।१६। उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्याऽऽनीत्यस्य नस्य णः स्यात्। प्रभवाणि। * **दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः** * दुःस्थितिः। दुर्भवानि। * **अन्तःशब्द-**

---

त.] मध्येऽप्ये' इत्याद्युदाहरन्ति। अन्ये तु 'भविष्यति मर्यादे'त्यादिना भविष्यतीत्युपक्रम्य यो यो लिङ् विहितस्तन्निमित्त एव क्रियातिपत्तौ लृङ् भवति, नान्यत्रेत्याहुः॥ **लिङ्निमित्तमिति**। 'हेतुहेतुमतोर्लिङ्', 'इच्छार्थेषु लिङ्लोटौ' इत्यादिलकारार्थप्रक्रियायां स्फुटीभविष्यति। **अनिष्पत्ताविति**। 'सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्य'दिति तत्रै-वोदाहरिष्यति। **प्रागेवेति**। न परतः, नापि व्यवहिता इत्यर्थः। अतएव 'छन्दसि परेऽपि','व्यवहिताश्चे'ति सूत्रितम्। **आनि लोट्**। 'नि लो'डित्येव वक्तव्ये आनिग्रहणमागमशास्त्रस्याऽनित्यतां ज्ञापयितुम्। तेन 'सागरं तर्तुकामस्य' 'जप्त्वा स्तोत्र'मित्यादि सिध्यति। लोड्ग्रहणं स्पष्टप्रतिपत्त्यर्थम्। न च प्रकृष्टा वपा येषां तानि प्रवपानि मांसानीत्यत्राप्य-नेन नित्यं णत्वं स्यादिति वाच्यम्, उपसर्गग्रहणादर्थवद्ग्रहणाऽच्चास्याऽप्रवृत्तेः। 'प्रातिपदिकान्ते'ति वैकल्पिकणत्वं त्विष्यत एव। **दुरः षत्वेति**। 'दुरः परस्य णत्वं नेति केचि'दिति प्राचोक्तं त्वयुक्तम्। एवं हि सिद्धान्ते णत्वं स्यात्, तच्चाकर-

---

बा.]सिच् लुक् अट्। नित्यं ङित इति सकारलोपः। गुणनिषेधः। एवं मसि अभूमेति रूपम्। अथ माङि लुङि विशेषमाह-**न माङ्योगे**। शेषपूरणेन सूत्रं व्याचष्टे-**अडाटौ न स्त इति**। 'लुङ्लङ्लृङ्क्ष्वडुदात्त' इत्यत, 'आडजादीना'-मित्यश्च तदनुवृत्तेरिति भावः। **मा भवान्भूदिति**। 'मा भू'दित्यत्राऽडागमे सत्यसति च विशेषाऽभावाद्भवत्पदस्य मध्ये प्रयोगः। अथ 'स्मोत्तरे लङ् चे'त्यस्य उदाहरति-**मा स्म भवद्भूद्वेति**। एवं बहुवचने मा स्म भवन् मा स्म भूवन्निति चोदाहरणं बोध्यम्। इति लुङ्प्रक्रिया। **लिङ्निमित्ते**। **हेतुहेतुमद्भावादीति**। हेतुहेतुमतोर्लिङ्', 'इच्छार्थेषु लिङ्लोटा'वित्यादि लिङ्निमित्तं लकारार्थप्रक्रियायां स्पष्टीभविष्यति। **भविष्यत्यर्थ इति**। 'भविष्यति मर्यादावचने' इत्यतस्तदनुवृत्तेरिति भावः। क्रियातिपत्तिपदं व्याचष्टे-**क्रियाया अनिष्पत्ताविति**। 'सुवृष्टिश्चेदभवि-ष्यत्तदा सुभिक्षमभविष्य'दित्युदाहरणं बोध्यम्। **अभविष्यदिति**। लृङ्। तिप्। इतश्चेतीकारलोपः। 'स्यतासी लृलुटो'रिति शबपवादः स्यप्रत्ययः। अट्। वलादिलक्षण इट्। गुणावादेशौ। षत्वम्। **अभविष्यतामिति**। तसस्तामादेशः। स्यः। अट्। इट्। गुणावादेशौ। षत्वम्। **अभविष्यन्निति**। झिः। स्यः। अट्। इट्। गुणावादेशौ। 'झोऽन्त इति झेरन्तादेशः। इतश्चेतीकारलोपः। तकारस्य संयोगान्तलोपः। षत्वम्। **अभविष्य इति**। सिप्। स्यः। अट्। इट्। गुणः। अवादेशः। इतश्चेतीकारलोपः। षत्वम्। रुत्वविसर्गौ। **अभविष्यतमिति**। थसस्तमादेशः। स्यः। अट्। इट्। गुणाऽवौ। षत्वम्। एवं थस्य तादेशादि पूर्ववत्। **अभविष्यमिति**। मिपोऽम्। स्यः। अट्। इट्। गुणावौ। पूर्वरूपम्। षत्वम्। **अभविष्यावेति**। वस्। स्यः। अट्। इट्। नित्यं ङित इति सकारलोपः। अतो दीर्घः। षत्वम्। एवं मसि अभविष्यामेति रूपम्। इति लृङ्प्रक्रिया। अथ प्रसङ्गादाह-**ते प्राग्धातोः**। 'ते'इत्यस्य विवरणं-**गत्युपसर्गसंज्ञा इति**। 'उपसर्गाः क्रियायोगे' 'गतिश्चे'ति प्रकृतत्वादिति भावः। **प्रागेवेति**। न परतो, नापि व्यव-हिता इत्यर्थः। इद 'धातोः प्रागेव प्रयुज्यमाना गत्युपसर्गाः स्यु'रिति संज्ञानियमपक्षेऽपि भाष्ये स्थितः। **आनि लोट्**। लोडिति आनीति च लुप्तषष्ठीकं पदम्। 'रषाभ्यां नो ण'इत्यनुवर्तते, 'उपसर्गादसमासेऽपी'त्यत उपसर्गादिति च। तदाह-**उपसर्गस्थान्निमित्तादिति**। रेफषकाररूपकादित्यर्थः। असमानपदत्वार्थ आरम्भः। 'अट्कुप्वाङ्नुम्व्य-वायेऽपी'ति सूत्रं णत्वप्रकरणे सर्वत्र भवतीति भाष्यम्। **दुरः षत्वेति**। षत्वणत्वयोः कर्तव्ययोर्दुर उपसर्गत्व-प्रतिषेध इत्यर्थः। **दुःस्थितिरिति**। अत्रोपसर्गात्सुनोतीति षत्वं न भवति। **दुर्भवानीति**। अत्राऽऽनि लोडिति

---

शे.]लुङी'त्यत्र प्रकृतसूत्रे च भाष्ये स्पष्टमेतत्सर्वम्। **अडाटाविति**। 'लुङादिषु यदुक्तं तन्ने'ति व्याख्यानादिति भावः। **लिङ्निमित्ते**। 'हेतुहेतुमद्भावादी'त्यादिना 'आशंसावचने लि'ङित्यपि गृह्यते इत्येके। **अतिपत्तिः**-अनभिनिर्वृत्तिः। उदाहरणे सुवृष्टिभवनसुभिक्षभवनयोर्हेतुहेतुमतोर्भविष्यत्कालयोरनभिनिर्वृत्तिरितो वाक्याद्गम्यते। प्रमाणान्तराच्च तयोरति-पत्तिं वक्ताऽवगत्य वाक्यं प्रयुङ्क्ते। **आनि लोट्**। उपसर्गात्परसमुदायावयवाऽऽनिशब्दनकारस्य णत्वमित्यर्थः। प्रद्रिमानी त्यादौ तु न दोषः, अनर्थकत्वात्प्रादीनामनुपसर्गत्वाच्च। एवञ्च लोड्ग्रहणमनर्थकमिति भाष्ये स्पष्टम्। **दुरः षत्वणत्वेति**। दुरः कर्मकमान्तस्याप्यत्रानुकरणात्तस्याप्ययं निषेध इति निरूपितम्। **अन्तःशब्दस्येति**। 'हन्तेरत्पूर्वस्ये'त्युत्तरम् ...' इति तु देशप्रतिषेधार्थमिति भावः। 'अयनं च' इत्युत्तरसूत्रमपि 'कृत्यचः' इति सिद्धे देशप्रतिषेधार्थमेव।

**स्याऽङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्** । अन्तर्वा । अन्तर्धिः अन्तर्भवाणि । **शेषे विभाषाऽकखादावषान्त उपदेशे** ।८।४।१८। उपदेशे कादिखादिषान्तवर्जे गदनदादेरन्यस्मिन् धातौ परे उपसर्गस्थान्निमित्तात्परस्य ने [नेस्य] णत्वं वा स्यात् । प्रणिभवति । प्रनिभवति । इहोपसर्गाणामसमस्तत्वेऽपि संहिता नित्या । तदुक्तम्—**संहितैकपदे नित्या, नित्या धातूपसर्गयोः । नित्या समासे, वाक्ये तु सा विवक्षामपेक्षते ॥ १ ॥** इति । सत्ताद्यर्थनिर्देशश्चोपलक्षणम् । 'यागात्स्वर्गो भवती'त्यादावुत्पद्यत इत्याद्यर्थात् । उपसर्गास्त्वर्थविशेषस्य द्योतकाः । प्रभवति । पराभवति । संभवति । अनुभवति । अभिभवति । उद्भवति । परि—

त.] विरुद्धमिति भावः। **अन्तर्द्धेति** । 'आतश्चोपसर्गे' इत्यङ् । टाप् । **अन्तर्धिरिति**। 'उपसर्गे घोः किः'। श्रच्छब्दस्याङ्विधावुपसर्गत्वमुपसङ्ख्यायते तत्तु प्रकृतानुपयोगादुपेक्षितम्। भिदादिपाठेन, 'प्रज्ञाश्रद्धे'ति निपातनेन वा गतार्थत्वाच्च ।

**शेषे विभाषा**।'नेर्गदनदे'ति सूत्रोक्तापेक्षया शेष इत्याह—**गदनदादेरन्यस्मिन्निति**। उपदेशे किम् ? । प्रनिचकार प्रनिचखादेत्यत्रापि निषेधो यथा स्यात् । अषान्तेति किम् ?।प्रनिपिनष्टि । उपदेशग्रहणात्—प्रनिपेक्ष्यति ।'चक्षिङः क्शाञ्' । 'प्रनिचक्शौ'इत्यत्रापि निषेधः । शेषग्रहणं स्पष्टार्थम् । णत्वशास्त्रे संहितायामित्यधिकारात्संहितायामविवक्षितायां णत्वाऽभावः, संहितायां तु णत्वमिति विकल्पसिद्धेः किमनेन विभाषाग्रहणेनेत्याशङ्का न कार्येत्याह—**इहोपसर्गाणामित्यादि** । एकपद इत्यनेनैव सिद्धे समासग्रहणं गोबलीवर्दन्यायेनेति बोध्यम् । **वाक्ये त्विति** । सा संहिता विवक्षाधीना न त्वत्र नित्येत्यर्थः । **उपलक्षणमिति** । एतच्च सत्ताद्यर्थनिर्देशं कृतवतो भीमसेनस्यापि संमतमित्यत्र 'कुर्द खुर्द गुर्द गुद क्रीडायामेवे'त्येवकारो ज्ञापकः । 'सेधतेर्गतौ' इति सूत्रे गतावित्येतदपि 'षिध गत्या'मित्याद्यर्थनिर्देशस्योपलक्षणत्व एव घटते नान्यथेति दिक् । **उत्पद्यत इत्याद्यर्थादिति** । एवं च उपसर्गं विनाप्युत्पत्त्यर्थप्रतीते-

बा.]णत्वं न भवति। **अन्तःशब्दस्येति**। अङ्विधौ किविधौ णत्वे च कर्तव्ये अन्तरित्यस्य उपसर्गत्वमित्यर्थः। प्रादित्वाऽभावादप्राप्ते वचनम् । **अन्तर्धेति** । 'स्त्रिया'मित्यधिकारे धाधातोः 'आतश्चोपसर्गे' इत्यङ् । टाप् । **अन्तर्धिरिति** । 'उपसर्गे घोः किः'। **अन्तर्भवाणीति** । 'आनि लो'डिति णत्वम् । **शेषे विभाषा**। अकखादाविति च्छेदः।'नेर्गदनदे'ति पूर्वसूत्रोक्तधातुभ्योऽन्यः शेषः। तदाह—**गदनदादेरन्यस्मिन्निति** । ननु णत्वप्रकरणं संहिताधिकारस्थं,ततश्चाऽविवक्षितायां संहितायामुपसर्गात्परत्वाऽभावाण्णत्वाऽभावः, विवक्षितायां तु णत्वमिति विकल्पसिद्धेः किमिह विभाषाग्रहणेनेत्यत आह—**इहोपसर्गाणामिति**। **उक्तमिति**।'हरिणे'ति शेषः। अत्र 'एकपदे' इत्येन अखण्डं पदं विवक्षितं,'नित्या समासे' इति लिङ्गात्,अखण्डत्वं च पदभिन्नोत्तरखण्डकत्वम्।अन्यथा 'राजीयती'त्यादौ 'अतो गुणे' इति शपा पररूपमेकादेशः पक्षे न स्यात्। **अर्थनिर्देशश्चेति**।धातुपाठे 'भू सत्ताया'मित्याद्यर्थनिर्देश इत्यर्थः। **उपलक्षणमिति**।प्रदर्शनमात्रमित्यर्थः । नन्वर्थान्तरपरिसंख्या कुतो न स्यादित्यत आह—**यागादिति** । नच 'यागात्स्वर्गो भवती'त्यादावुत्पत्त्यादौ लक्षणा कुतो न स्यादिति वाच्यं,प्रयोगप्राचुर्यसत्त्वात् । पाणिनिर्हि धातुपाठे धातून् कांश्चिदर्थसहितान्कांश्चिदर्थरहितान्पठतीति 'चुट्ट' इति सूत्रभाष्ये स्थितम्।न चातिप्रसङ्गः शङ्क्यः,'अनेकार्था अपि धातवो भवन्ती'ति भाष्ये अपिशब्देन प्रयोगानुसारित्वावगतेः। सर्वेषु धातुष्वर्थनिर्देशस्त्वाधुनिकः । एवं च 'सेधतेर्गता'विति सूत्रे गतावित्युपादानात्षिध गत्यामित्यर्थनिर्देशोऽपाणिनीय एवेति दिक् । ननु भूधातोः केवलस्योत्पत्त्याद्यर्थकत्वे उद्भवतीत्यादौ उपसर्गा व्यर्था इत्यत आह—**उपसर्गास्त्विति** । उपसर्गं विनापि भूधातोरुत्पत्त्याद्यर्थप्रतीतेः 'उद्भवती'त्यादौ प्रयुज्यमाना अप्युपसर्गा द्योतका एव, न तु वाचका इति

शे.]**शेषे विभाषा**। अकखादावितिच्छेदः। ननु संहिताधिकारात्तद्विवक्षाऽविवक्षाभ्यां रूपद्वयसिद्धौ विभाषाग्रहणं व्यर्थमत आह—**संहितेति** । अत्रैकपदेशब्देन अखण्डम्पदम् । अत एव **'नित्या समासे'** इति चरितार्थम् । अत एवाग्रे—अग्रे इत्यादौ पदद्वित्वे संहिताऽनित्यैव । **अखण्डत्वञ्च**—पदत्वाऽभाववदुत्तरखण्डकत्वम् । तेन राजीयतीत्यादौ न दोषः । अन्यथा तत्र पक्षे शपा एकादेशोऽपि न स्यादिति बोध्यम्। **अर्थनिर्देशश्चेति**। 'भू सत्ताया'मित्यादिरभियुक्तकृत इत्यर्थः । स च क्रियावाचित्वबोधार्थ इति भावः । पाणिनिस्तु कांश्चिदर्थरहितान्पठति, कांश्चिदर्थसहितान् । अत एव भूवादिसूत्रे 'परिमाणग्रहणं कर्त्तव्यम् । कुतो ह्येतत्, भूशब्दो धातुसंज्ञो भविष्यति, न पुनर्भ्वेधशब्दः'इति भाष्ये उक्तम् । 'चुट्ट' इति सूत्रे 'यदयमिरितः कांश्चिन्नुमनुषक्तान्पठति 'उबुन्दिर् निशामने, स्कन्दिर्गतिशोषणयोरिति, तेन नेरितामिदिद्विधिः' इति भाष्ये उक्तम् । तथा 'नमो वरिव' इति सूत्रे भाष्ये उक्तम्—'कः खल्वपि पचादीनां क्रियावचनत्वे यत्नं करोतीति ?'। 'अर्थं खल्वप्याचार्यश्चित्रयति क्वचिदेकं क्वचिन्ने'ति । **उपलक्षणमिति** । 'अनेकार्था अपि धातवो भवन्ती'ति भाष्यमत्र मानम् । तच्च प्रयोगानुसारेणैव, न त्वमर्यादम् । भाष्यस्थाऽपिशब्दात् । एवञ्च 'सेधतेर्गतौ' इति सूत्रे 'गतौ'इत्युपादानात् षिध गत्यामित्यर्थनिर्देशोऽपाणिनीय इति बोध्यम्। **द्योतका इति**। अत एवानुभवत्यादेः सकर्मकत्वम्। अत्रोपसर्गास्त्वित्युक्त्या निपातानां द्योतकत्वं, वाचकत्वञ्चाभ्युपैति । **पध वृद्धौ** । अकर्मकः । 'वृद्धिक्षयभयजीवितमरणं लज्जा-

भवतीत्यादौ विलक्षणार्थोऽवगतेः । उक्तं च—उपसर्गेण धात्वर्थो बलादन्यत्र नीयते । प्रहाराहारसंहार-विहारपरिहारवत् ॥ १ ॥ इति । २ **एध वृद्धौ ।** कत्थ्यन्ताः षट्त्रिंशदनुदात्तेतः । **टित आत्मनेपदानां टेरे** ।३।४।७९। टितो लस्यात्मनेपदानां टेरेत्वं स्यात् । एधते । **सार्वधातुकमपित्** ।१।२।४। अपित्सार्वधातुकं ङिद्वत्स्यात् । **आतो ङितः** ।७।२।८१। अतः परस्य ङितामाकारस्य इय् स्यात् । एधेते । एधन्ते । **थासः से** ।३।४।८०। टितो लस्य थासः से स्यात् । एधसे । एधेथे । एधध्वे । 'अतो गुणे' । एधे । एधावहे । एधामहे । **इजादेश्च गुरुमतोऽनृच्छः** ।३।१।३६। इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि ।

---

त.] रुद्भवतीत्यादौ प्रयुज्यमानोऽप्युपसर्गो द्योतक एव न तु वाचक इति भावः । **उपसर्गेण धात्वर्थ इति** । अत एवाऽमरेणाप्युक्तं—'स्यादाभाषणमालपः, प्रलापोऽनर्थकं वचः । अनुलापो मुहुर्भाषा, विलापः परिदेवनम् । विप्रलापो विरोधोक्तिः, संलापो भाषणं मिथः । सुप्रलापः सुवचनमपलापस्तु निह्नवः' इति । **टित आत्मने** । ननु शानचोऽपि लस्थानिकात्मनेपदत्वात्पचमानो यजमान इत्यत्र टेरेत्वेन भवितव्यमिति चेत् । अत्राहुः—प्रकृतैस्तिबादिभिरात्मनेपदानां विशेषणान्न दोषः । एवं तु 'टितस्तङ्गं टेरे' इत्येव वक्तुमुचितमिति । **थासः से** । एकारोच्चारणं ज्ञापनार्थमिति 'लिटस्तझयो'रित्यत्र स्फुटीभविष्यति । **अतो गुणे इति** । इट एत्वे कृते आद्गुणं बाधित्वा वृद्धौ प्राप्तायामनेन पररूपमित्यर्थः । **इजादेश्च** । 'धातोरेकाचः' इत्यतो धातुग्रहणं 'कास्प्रत्यया'दित्यत आम् लिटीति चानुवर्तत इत्याह—

---

बा.] भावः। द्योतकत्वं वा तेषां किमर्थं स्वीकार्यमित्यत आत—**प्रभवतीत्यादि** । **प्रभवः**—प्रकाशः उत्पत्तिः शक्तिर्वा । **पराभवः**—पराजयः । **सम्भवः**—सम्भावना । **अनुभवः**—उपभोगः । **अभिभवः**—हिंसा । **उद्भवः**—उत्पत्तिः । **परिभवः**—तिरस्कारः । **उक्तं चेति** । 'हरिणे'ति शेषः । **प्रहारः**—कशाद्याघातः । **आहारो**—भक्षणम् । **संहारः**—वधः । **विहारः**—क्रीडा । **परिहारः**—परित्यागः । इति भूधातुप्रक्रिया । **एध वृद्धाविति** । जायते, अस्ति, विपरिणमते, वर्द्धते, अपक्षीयते, विनश्यतीति षड्भावविकाराः । तत्र चतुर्थावस्था वृद्धिरुपचयः । **कत्थ्यन्ता इति** । 'कत्थ श्लाघाया'मित्यन्ता इत्यर्थः । **अनुदात्तेत इति** । ततश्च एतेभ्य आत्मनेपदमेवेति भावः । तत्र एध् इत्यस्मात् कर्तरि लटि तस्यात्मनेपदप्रथमपुरुषैकवचने तादेशे शपि एधत इति स्थिते—**टित आत्म** । टेः—ए इति च्छेदः । लस्येत्यधिकृतं । तदाह—**टितो लस्येति** । 'आदेशाना'मिति शेषः । अत्रात्मनेपदशब्देन तङेव गृह्यते नत्वानोऽपि तेन पचमानो यजमान इत्यादावेत्वं नेति भाष्ये स्पष्टम् । **एधत इति** । अत्र तकारादकारस्य व्यपदेशिवद्भावेनान्त्यादित्वेन टित्वादेत्वम् । अथ लटः प्रथमपुरुषद्विवचने आतामित्यादेशे 'टित आत्मनेपदाना'मिति आम एत्वे, शपि एध–आते इति स्थिते ङित्कार्यं वक्ष्यन्ङित्त्वमाह—**सार्वधातुकमपित्** । 'गाङ्कुटादिभ्य' इत्यतो ङिदित्यनुवर्तते । अङितो ङित्त्वं वास्तवं न संभवतीति ङिद्वदिति लभ्यते । तदाह—**ङिद्वदिति । आतो ङितः** । ङित इत्यवयवषष्ठी । 'अतो येय' इत्यस्मादत इति पञ्चम्यन्तम्, इय इति प्रथमान्तं चानुवर्तते । यकारादकार उच्चारणार्थः । तदाह—**अतः परस्येति** । 'ङिता'मित्यनन्तरम्'अवयवस्ये'ति शेषः। **एधेते इति**।एध–आते इति स्थिते,आकारस्य इय्, 'आद्गुणः' 'लोपो व्योर्वलि'ति यकारलोप इति भावः । **एधन्त इति** । लटः प्रथमपुरुषबहुवचने झादेशे परे, शपि झकारस्य अन्तादेशे, पररूपे, टेरेत्वमिति भावः । अथ लटो मध्यमपुरुषैकवचने थासादेशे कृते 'टित आत्मनेपदाना'मित्येत्वे प्राप्ते—**थासः से** । 'से'इति लुप्तप्रथमाकम् । **एधस इति** । थासि शपि थासः सेभावः । **एधेथे इति** । लटो मध्यमपुरुषद्विवचने आथामादेशे शपि आम एत्वे आकारस्य इयादेशे गुणे यलोप इति भावः । **एधध्व इति** । लटो मध्यमपुरुषबहुवचने ध्वमादेशे शपि टेरेत्वे रूपम् । लट उत्तमपुरुषैकवचने इडादेशे एत्वे शपि एध ए इति स्थिते प्रक्रियां दर्शयति—**अतो गुणे इति** । 'अतो गुणे'इति पररूपे वृद्ध्यपवादे कृते सति 'एधे'इति रूपमित्यर्थः । **एधावहे इति** । लट उत्तमपुरुषबहुवचने वहीत्यादेशे टेरेत्वे शपि अतो दीर्घः । **एधामह इति** । लट उत्तमपुरुषबहुवचने महीत्यादेशे टेरेत्वे शपि अतो दीर्घः । महिङिति ङकारस्तङ्प्रत्याहारार्थः । इति लट्प्रक्रिया । **इजादेश्च** । नञ् ऋच्छ इत्यनेन समासेऽनृच्छ इत्यस्मात्पञ्चमी । 'धातोरेकाच' इत्यतो धातोरित्यनुवर्तते । 'कास्प्रत्यया'दित्यत आमिति, लिटीति चानु-

---

शे.]सत्तास्थितिजागरणं।शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः।'इत्यभियुक्तोक्तेः। **टित आत्मनेपदानाम्**। आत्मनेपदशब्देनाऽत्र प्रकृतास्तङ एव गृह्यन्ते । तेन आनस्य नेति भाष्ये स्पष्टम् । **सार्वधातुकमपित्**। अपिदिति पर्युदासः । न च 'च्यवे' इत्यत्र परादिवद्भावेन शबिटोरेकादेशस्याऽपित्त्वान्ङित्त्वे गुणाऽनापत्तिः । एकादेशस्य पूर्वविधौ स्थानिवत्त्वेनाऽदोषात् । यत्तु 'पिदार्द्धधातुकयो'रिति पठित्वा इदन्त्यक्तुं शक्यमिति, तन्न । 'मृष्ट' इत्यादौ मृजेर्वृद्धेः 'क्ङिति चे'ति निषेधाऽनापत्तेः ।**थासः से**।'तङादेशानां टेरेत्वं ने'ति ज्ञापनादेकारोच्चारणम्। **इजादेश्च गु**। 'धातोरेकाच'

आमो मकारस्य नेत्त्वम्, आस्कासोराम्विधानाज्ज्ञापकात् । आमः ।२।४।८१। आमः परस्य लुक् स्यात् ।

**कृञ्चानुप्रयुज्यते लिटि**।३।१।४०।आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते।'आम्प्रत्ययवत्कृञोऽनुप्रयोग-स्ये'ति सूत्रे कृञ्ग्रहणसामर्थ्यादनुप्रयोगोऽन्यस्यापीति ज्ञायते । तेन 'कृभ्वस्तियोगे' इत्यतः 'कृञो द्वितीये'ति

त.] **इजादिर्यो धातुरित्यादि**। गुरुमान् किम् ? । इयेष । ऋच्छेरत्वानर्च्छ ॥ **थामः**।'लक्षणप्रतिपदोक्त'परिभाषया, 'प्रत्ययग्रहण'परिभाषया च नेह–आम । आमतुः । **परस्य लुगिति** । 'मन्त्रे घसे'ति सूत्राल्लेरित्यनुवर्त्य 'लेर्लुं'गिति काशिकादौ व्याख्यातं, तदत्रोपेक्षितं, व्यावर्त्याऽलाभात् । तिङपवादत्वाल्लावस्थायामेवायं लुक् । तेन आमन्तस्याऽतिङ-न्तत्वाद्देवदत्तादिपदात्परत्वेऽपि 'तिङ्ङतिङः' इति न निघातः । आमन्तात्परस्य निघातश्च तिङन्तस्येत्यर्थः । न चाऽति-ङन्तत्वे पदत्वाऽभावादामन्तात्परस्य निघातो न सिध्यतीति शङ्क्यं, लिटः कित्त्वात्प्रत्ययलक्षणेन कृदन्ततया प्रातिपदिकत्वे सोरुत्पत्तावामन्तस्याऽव्ययत्वात्सुपो लुक्यपि प्रत्ययलक्षणेन सुबन्ततया पदत्वात् । **कृञ्चानुप्रयुज्यते** । कथं तर्हि 'तं पातयां प्रथममास पपात पश्चात्'। 'प्रभ्रंशयां यो नहुषं चकारे'ति ? । प्रमाद एवायम् । न च विपरीतप्रयोगनिवृत्तिमात्रे सूत्रस्य तात्पर्यात्पश्चात्प्रयोगो व्यवहितोऽपि न दुष्यतीति वाच्यम् , 'विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थं चे'ति वार्तिकविरोधात् । **अन्यस्यापीति** । यदीह कृञ्शब्देन एक एव धातुर्गृह्येत तदा धात्वन्तरस्य प्राप्त्यभावात् 'आम्प्रत्ययव'दिति सूत्रेऽनुप्रयुज्यमानस्य कृञ इति विशेषणं व्यर्थं स्यादिति भावः । न चात्र 'कृञ्चे'ति चकारेणैवा-ऽनुप्रयोगोऽन्यस्यापीति ज्ञायत इति शङ्क्यं, 'धातोराम् स्यात्, अनुप्रयुज्यते च लिङ्परः कृञित्यर्थसमर्पकतया तस्यो-

बा.] वर्तते । तदाह–**इजादिरित्यादिना** । **आस्कासोरिति** । 'कास्प्रत्ययादाममन्त्रे लिटी'ति, 'दयायासश्चे'ति च कास्धातोः, आस्धातोश्च लिटि आम्विहितः । तत्र मकारस्य इत्संज्ञकत्वे 'मिदचोऽन्त्यात्पर' इति आकारादाकारान्तरं स्यात् । ततश्च सवर्णदीर्घे कृते कास् आस् इत्येव भवतीति आम्विधिरनर्थकः स्यात् । अत आमो मकारस्य नेत्संज्ञेति विज्ञायत इत्यर्थः । तथाच एध् आम् ल इति स्थिते–**आमः** । 'मन्त्रे घसह्वरे'त्यतो लेरिति, 'ण्यक्षत्रियार्षञित'इत्यतो लुगिति चानुवर्तते । तदाह–**आमः परस्य लेरिति** । अत्रेदमवधेयम् ,–'कृन्मेजन्त'इत्यत्र कृद्यो मान्तस्तदव्ययमिति व्याख्याने एधामित्यादि नाऽव्ययं, लिट एव कृत्त्वात्, तस्य च मान्तत्वाऽभावात् । तथाच प्रत्ययलक्षणेन कृदन्तत्वा-त्प्रातिपदिकत्वे स्वाद्युत्पत्तौ 'आम'इति लुक् । लेरिति तु नानुवर्तते । 'मान्तं कृदन्तमव्यय'मिति व्याख्याने तु प्रत्यय-लक्षणेन कृदन्तत्वादेधामिति मान्तमव्ययम् । ततः सुबुत्पत्तावव्ययादाप्सुप इति लुक् । 'आम' इत्यनेन तु परिशेषाल्लेरेव लुक्सिद्धेर्लेरितिनानुवर्तनीयम्।'आमः परस्य ले'रिति विवरणवाक्ये तु लेरिति स्पष्टार्थमेव।एवं च एधामित्यव्ययं न वेति-पक्षद्वयम्, उभयथापि सुबन्तं पदमिति भाष्ये स्पष्टम्। **कृञ्चानु**। 'कास्प्रत्ययादा'मित्यत आमित्यनुवृत्तं पञ्चम्या विपरि-णम्यते । प्रत्ययग्रहणपरिभाषया तदन्तं गृह्यते। लिटि परे यः कृञ् सोऽनुप्रयुज्यत इत्यन्वयः। फलितमाह–**आमन्ताल्लि-ट्परा इति** । लिट्शिरस्का इत्यर्थः। **कृभ्वस्तय इति**। 'कृ'ञित्यनेन कृभ्वस्तीनां ग्रहणमिति भावः। **अनुप्रयुज्यन्त इति** । प्रशब्दादनुशब्दाच्चाऽव्यवहिताः पश्चात्प्रयुज्यन्त इत्यर्थः । 'विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थं चे'ति वार्तिका-द्भाष्याच्च। एवं च'तं पातयां प्रथममास पपात पश्चात्''प्रभ्रंशयां यो नहुषं चकारे'त्यादिप्रयोगाः प्रामादिका एव । धातो-राम् स्यात्,कृञ्चानुप्रयुज्यत इत्युक्तसमुच्चयार्थश्चकारः।ननु कृञ एवाऽनुप्रयोगश्रवणात्कथं भ्वस्त्योरप्यनुप्रयोग इत्यत आह–**आम्प्रत्ययवदित्यादिना**।'कृञ्चानुप्रयुज्यत'इत्यत्र कृञ एकस्यैवानुप्रयोगविधौ सति 'आम्प्रत्ययव'दिति सूत्रे अनुप्रयुज्य-

शे.] इत्यतो धातोरिति,'कास्प्रत्यये'त्यत आम् लिटीति चानुवर्त्तते। इयेषेत्यादौ तु नाऽऽम् , सन्निपातपरिभाषाविरोधात् । लिण्निमित्ता हि तस्य गुरुमत्ता । 'इजादेर्गुरुमतो विहिते लिटी'ति वार्थान्न दोषः । 'इचो गुरोः' इत्येवाऽनृच्छ इति पर्युदासादर्थान्तरस्याऽसम्भवाच्चेजादेर्गुरुमत इत्यर्थलाभे मतुग्रहणमादिग्रहणञ्च स्पष्टार्थम् । 'मतुग्रहणादौपदेशिक-गुरुमतो ग्रहण'मिति तु न युक्तम् , इयक्षिऋजीत्यादेरुच्छेश्चामनापत्तेः । तत्र हि नुम्–तुगुत्तरं गुरुमत्ता । अनृच्छ इत्यस्य वैयर्थ्यापत्तेश्च । 'आदिग्रहणान्मुख्येजादेरेव ग्रहणं न तु व्यपदेशिवद्भावेनेजादे'रित्यपि न युक्तम् । ईञ्जतावित्यादे-रयाञ्चक्रे इति माधवाद्युदाहृतस्याऽसङ्गत्यापत्तेः । न च ऋच्छेर्लिटि गुणविधानसामर्थ्यादेव तत आमभावे सिद्धेऽनृच्छ इति व्यर्थम् । आम्बाधाऽपेक्षया 'तस्मिन्' इति परिभाषाबाधेन व्यवधानेऽपि गुणप्रवृत्त्या तत्सामर्थ्याऽभावेन तत्सार्थक्या-दिति सूत्रतात्पर्यम् । **ज्ञापकादिति** । ननु मित्त्वादन्त्यादचः परत्वसामर्थ्यादसञ्जातविरोधित्वन्यायेन सवर्णदीर्घ-बाधोऽस्त्विति चेन्न, प्रधानसवर्णदीर्घबाधापेक्षया इत्सञ्ज्ञाबाधस्यैवौचित्यात् । **कृञ्चानु** । 'कास्प्रत्यया'दिति सूत्रादनु-वृत्तमामिति पञ्चम्या विपरिणम्यते, लिटि परत उपश्लिष्टस्य कृञ आमन्तादनुप्रयोग इति सूत्रार्थः। तत्फलितमाह–**आम-न्ताल्लिट्परा इति** । 'आमन्ता'दिति पञ्चम्या निर्दिश्यमानपरिभाषया प्रशब्देन चाऽव्यवहिते एव प्रयोगः । अनु-शब्दात्पश्चादेवेति च बोध्यम् । **कृञ्ग्रहणेति** । कृञ एवानुप्रयोगेऽनुप्रयोगस्येत्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । **तेषा-**

ञकारेण प्रत्याहाराश्रयणात्कृभ्वस्तिलाभः। तेषां क्रियासामान्यवाचित्वादाम्प्रकृतीनां विशेषवाचित्वात्तदर्थयोरभेदान्वयः। संपदिस्तु प्रत्याहारेऽन्तर्भूतोऽप्यनन्वितार्थत्वान्न प्रयुज्यते। कृञस्तु क्रियाफले परगामिनि परस्मैपदे प्राप्ते- **आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ।१।३।६३।** आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः। आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात्कृञोऽप्यात्मनेपदं स्यात्। इह 'पूर्ववत्'दित्यनुवर्त्य वाक्यभेदेन संबध्यते।

त.]पक्षीणत्वात्। **अभेदान्वय इति**। सामान्यविशेषयोरभेदान्वयो लोकसिद्ध इति भावः। एवं च एधांचक्रे एधांबभूवे इत्यादौ एककर्तृका भूतानद्यतनपरोक्षा वृद्ध्यभिन्ना क्रियेति तुल्यो बोधः। ननु करोतिः सकर्मको भवतिस्त्वकर्मक इति कथमिह तुल्यतेति चेत्? । अत्राहुः-यदा हि करोतिरुत्पादनार्थकः स्वातन्त्र्येण प्रयुज्यते—घटं चक्रे राज्यं चकारेति, तदा नियमेन सकर्मकत्वम्। यदा तु क्रियान्तरसमानाधिकरणः करोतिः प्रयुज्यते-जुहवांचकारेत्यादौ, तदा यत्समानाधिकरणः करोतिस्तस्य सकर्मकत्वाऽकर्मकत्वाभ्यां स्वयमपि तथाभावं भजते। एवं भ्वस्त्योरप्याम्प्रकृतिसामानाधिकरण्येन क्वचित्सकर्मकत्वं बोध्यम्। अतएवाऽनुप्रयुज्यमानाद्भवतेः सकर्मकत्वात्कर्मणि लिट्। तथा च माघः-'तस्यातपत्रं बिभरांबभूवे' इति, श्रीहर्षश्च-'तपर्त्तुपूर्तावपि मेदसां भरा विभावरीभिर्बिभरांबभूविरे' इति। अत्रेदमवधेयं-जुहाव जुहवांचकार जुहवांबभूवेत्यादौ केवलो होमो गम्यते, इतरत्र तु होमरूपा क्रियेति बोधः। फले तु न कश्चिद्विशेषः, घटमानय द्रव्यं घटमानयेत्यत्र यथा। एवं चाऽऽम्प्रकृत्यर्थगतिकारकसङ्ख्यादिविशेषाभिव्यक्तिरनुप्रयोगस्य फलमिति। **अनन्वितेति**। संपद्यर्थस्याऽऽम्प्रकृत्यर्थस्य चाऽभेदान्वयो न संभवति, उभयोरपि विशेषरूपत्वादिति भावः। **आम्प्रत्ययवत्**। आम्प्रत्ययान्तस्यात्मनेपदाऽभावादाह-**अतद्गुण इति**। **आम्प्रकृत्या तुल्यमनुप्रयुज्यमानादिति**। तृतीयान्ताद्वतिः। **अनुप्रयोगस्येत्यत्र** कर्मणि घञिति भावः। 'अनुदात्तङित' इत्यतोऽनुवर्तनादाह-**आत्मनेपदं स्यादिति**। एवमप्राप्तस्य विधानेऽपि प्राप्तस्य निवारणमनेनैव सूत्रेण न संभवतीत्यत आह-**वाक्यभेदेनेति**। अत्र च प्रमाण-

बा.]मानस्येत्यस्य कृञ इति विशेषणं व्यर्थं स्यात्, धात्वन्तरस्याऽनुप्रयोगाऽप्रसक्तेः।ततश्च 'कृञ' इति विशेषणादन्यस्याप्यनुप्रयोगो विज्ञायत इत्यर्थः। ननु कृञोऽन्यस्याऽप्यनुप्रयोगो विज्ञायतां, भ्वस्त्योरपीत्येव कुत आयातमित्यत आह-**तेनेति**। कृञ्ग्रहणेनेत्यर्थः। **प्रत्याहाराश्रयणादिति**। एतच्च भाष्ये स्पष्टम्। नन्वनुप्रयुज्यमानानां कृभ्वस्तीनामाम्प्रकृतिभूतानां च कथमन्वय इत्यत आह-**तेषामित्यारभ्याभेदेनान्वय** इत्यन्तेन। सामान्यविशेषयोरभेदान्वयस्य न्याय्यत्वादिति भावः। कृञ इव भ्वस्त्योरपि क्रियासामान्यवाचित्वात्, धातूनामनेकार्थत्वादिति ज्ञेयम्।

ननु 'कृभ्वस्तियोगे' इत्यस्य, 'कृञो द्वितीये'त्यस्य च सूत्रस्य मध्ये 'अभिविधौ संपदा चे'ति पठितम्। एवं च कृञ्प्रत्याहारे संपदोऽपि कुतो न ग्रहणमित्यत आह-**संपदिस्त्विति**। **अनन्वितार्थत्वादिति**। सिद्धस्य वस्तुनो रूपान्तरापत्तिः सम्पदेरर्थः। एधादिधातोस्त्वाम्प्रकृतिभूतस्य वृद्ध्यादिरर्थः। तयोरुभयोरपि विशेषरूपत्वेन सामान्यविशेषभावाऽभावेन अभेदान्वयाऽसंभवादित्यर्थः।अत एव कृभ्वस्तीनां ग्रहणमिति भाष्यं सङ्गच्छत इति भावः। ननु आम्प्रत्ययवदिति कृञ आत्मनेपदविधायकसूत्रं वक्ष्यमाणं व्यर्थं, 'स्वरितञित' इत्येव तत्सिद्धेरित्याशङ्क्याह-**कृञस्त्विति**।

**आम्प्रत्ययव**। 'अनुदात्तङित' इत्यत आत्मनेपदमित्यनुवर्तते। तत्राम्प्रत्ययस्यात्मनेपदाऽभावादाह-**अतद्गुणसंविज्ञानो बहुव्रीहिरिति**।तस्य = अन्यपदार्थस्य,गुणाः = विशेषणानि वर्तिपदार्थरूपाणि,तेषां संविज्ञानं = क्रियान्वयितया ज्ञानं,न विद्यते यस्य बहुव्रीहेः सोऽतद्गुणसंविज्ञानः।यथा 'चित्रगुमानये'ति। अत्र हि पुरुषस्यैवान्यपदार्थस्य क्रियान्वयो न तु चित्राणां गवामपि। तथा च प्रकृते आम्प्रत्ययविनिर्मुक्त आम्प्रत्ययप्रकृतिभूत एधादिधातुरेव आम्प्रत्ययशब्देन लभ्यत इति भावः। 'आम्प्रत्ययव'दिति तृतीयान्ताद्वतिः।अनुप्रयुज्यत इत्यनुप्रयोगः। कर्मणि घञ्। पञ्चम्यर्थे षष्ठी।

शे.] **क्रियेति**। एधमृनादयः फलानुकूलव्यापारवाचकाः। कृञ्तूत्पत्त्यनुकूलव्यापारवाची। भ्वस्ती च सत्तानुकूलव्यापारवाचकौ। आम्प्रकृतिसमभिव्याहारे चोत्पत्त्यादिकमामन्तार्थफलनिष्ठमेव। एवञ्च एधाञ्चक्रे इत्यस्यैककर्तृकवृद्ध्यनुकूलव्यापाराऽभिन्नपरोक्षानद्यतनभूत उत्पत्त्यनुकूलव्यापार इति बोधः। **सम्पदिस्त्विति**। 'अभिविधौ सम्पदा चे'ति सूत्रे पठित इत्यर्थः। **अनन्वितार्थत्वादिति**। सम्पदेर्हि सिद्धवस्तुनो योग्यरूपान्तरापत्तिरूपार्थकत्वादिति भावः। 'द्रव्यं सम्पादयती'त्यादौ तु धातूनामनेकार्थत्वात्स्वस्वत्वाक्रान्तताकरणमर्थः। केवलपदेरप्यनुप्रयोगो नापाद्यः, उत्तरदेशसंयोगानुकूलव्यापारवाचित्वेन तस्यापि विशेषवाचित्वात्। एतेन कृञ्सजातीयानान्धातूनामेव प्रत्याहारे ग्रहणात्सम्पदेर्विशिष्टस्याऽधातुत्वाच्चिन्त्यमिदमित्यपास्तम्। **अतद्गुणेति**। आमन्तस्यात्मनेपदानर्हत्वात्प्रत्ययग्रहणाच्चेति भावः। तृतीयान्ताद्वतिः,अनुप्रयोगस्येति कर्मणि घञ्। पञ्चम्यर्थे षष्ठी। अत्र न प्रत्याहारग्रहणम्। अनुप्रयोगस्येत्येव सिद्धे कृञ्ग्रहणात्। **पूर्ववदिति**। तृतीयान्ताद्वतिः, पूर्वशब्देन पूर्वोपादानकात्मनेपदभवनं लक्ष्यते, तदाह-**पूर्ववद्वेति**। पूर्ववाक्ये 'आम्प्रत्ययव'दिति तु इन्दाञ्चकारेत्यादावकर्तृगामिनि क्रियाफले एतद्विहितात्मनेपदवारणाय। **न तद्धिति**।

पूर्ववदेवात्मनेपदं नतु तद्विपरीतमिति। तेन कर्तृगेऽपि फले इन्दाञ्चकारेत्यादौ न तङ्। **लिटस्तझयोरेशिरेच्** ।३।४।८१। लिडादेशयोस्तझयोरेश् इरेच् एतौ स्तः। एकारोच्चारणं ज्ञापकं,-'तङादेशानां टेरेत्वं ने'ति। तेन डारौरसां न। कृ-ए इति स्थिते। **असंयोगाल्लिट्कित्** ।१।२।५। असंयोगात्परोऽपिल्लिट्कित्स्यात्। 'क्ङिति चे'ति निषेधात् 'सार्वधातुकार्द्धधातुकयो'रिति गुणो न। द्वित्वात्परत्वाद्यणि प्राप्ते-।

**द्विर्वचनेऽचि** ।१।१।५९। द्वित्वनिमित्तेऽचि परे अच आदेशो न स्याद्द्वित्वे कर्तव्ये।

त.]माम्प्रत्ययवदिति वचनमेव। अन्यथा पूर्ववदित्यनुवर्त्यैवानुप्रयोगस्य कृञ आमः पूर्वेण तुल्यमित्यर्थलाभादिष्टसिद्धेः किं तेन 'आम्प्रत्ययव'दित्यनेन। **लिटस्तझयोः**। एशिति शकारकरणमकारविशिष्टतकारस्यादेशत्वाय। **असंयोगात्**। असंयोगादिति किम्?। ममन्थे। अत्र नलोपो न। **द्विर्वचनेऽचि**। अचा सामानाधिकरण्यलाभाय द्विर्वचनशब्दस्य तन्निमित्ते लक्षणा स्वीक्रियते। यद्वा-उच्यत इति वचनं, द्विः-वचनं यस्मिन्नचि तद्द्विर्वचनम्। अथवा द्विर्वचनमस्मिन्नस्तीत्यर्शआद्यच्। तदेतदाह-**द्वित्वनिमित्तेऽचीति**। इह 'अचः परस्मि'न्नित्यतोऽच इति, 'स्थानिवदादेशः' इत्यस्मादादेश इति, 'न पदान्ते'त्यतो नेति चानुवर्तते। तदाह-**अच आदेशो न स्यादिति**। यद्यपीह वृत्त्यादौ-'अजादेशः स्थानिवत्स्या'दिति रूपातिदेशपक्षः स्वीकृतः, फलं चोभयत्र तुल्यं, तथाप्यादेशनिषेधपक्षोऽपि भाष्यारूढ इति स एवात्र

बा.]तदाह-**आम्प्रकृत्येत्यादिना**। आम्प्रकृतेर्भवितुं योग्यं यदात्मनेपदं तत् अनुप्रयुज्यमानात्कृञोऽपि स्यादिति यावत्। अत्र न प्रत्याहारग्रहणम्, 'अनुप्रयोगस्ये'त्येव सिद्धे कृञ्ग्रहणादिह न प्रत्याहारग्रहण'मिति भाष्यम्। परगामिन्यपि क्रियाफले कृञ्धातोरात्मनेपदार्थोऽयमारम्भः। इन्दंचकारेत्यादौ तु परगामिनि क्रियाफले नाऽनेनात्मनेपदम्, आम्प्रकृतेः 'इदि परमैश्वर्ये' इति धातोरात्मनेपदाऽभावात्, तस्य परस्मैपदित्वात्। एतदर्थमेव आम्प्रत्ययवदित्युपात्तम्। नन्विन्दांचकारेत्यादौ मास्त्वनेन सूत्रेण परगामिनि क्रियाफले आत्मनेपदम्। आत्मगामिनि तु क्रियाफले 'स्वरितञित' इत्यात्मनेपदं दुर्वारम्। अस्य सूत्रस्य एधाञ्चक्र इत्यादौ परगामिनि क्रियाफले आत्मनेपदस्याऽप्राप्तस्य विधान एव समर्थतया आत्मगामिनि क्रियाफले 'स्वरितञित' इति प्राप्तस्यात्मनेपदस्य निवारणे सामर्थ्याऽभावादित्यत आह-**इहेति**। इह = 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्ये'ति सूत्रे 'पूर्ववत्सनः' इति पूर्वसूत्रात्पूर्ववदित्यनुवर्त्य 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्ये'त्येकं वाक्यं, 'पूर्ववत्कृञोऽनुप्रयोगस्ये'ति अन्यद्वाक्यमिति वाक्यद्वयं संपाद्यम्। तत्र पूर्ववदिति तृतीयान्ताद्वतिः। पूर्वेण = पूर्वप्रयुक्तेन एधादिधातुना, तुल्यमित्यर्थः। तत्र वाक्यद्वयस्य समानार्थकत्वे वैयर्थ्याद्द्वितीयं वाक्यं नियमार्थं संपद्यते। 'पूर्ववदेव आत्मनेपदं न तु तद्विपरीत'मिति। एवं च पूर्ववाक्येन एधाञ्चक्रे इत्यादौ कृञः परगामिन्यपि क्रियाफले आत्मनेपदविधिः, द्वितीयवाक्येन तु इन्दाञ्चकारेत्यादौ कर्तृगामिनि क्रियाफले 'स्वरितञित' इत्यात्मनेपदस्य निवृत्तिः फलति। तदाह-**तेनेति**। द्वितीयवाक्येनेत्यर्थः। **न तङिति**। न आत्मनेपदमित्यर्थः। एवं चाऽनुप्रयुज्यमानात्कृञो लिटस्तङि प्रथमपुरुषैकवचने तादेशे एधाम् कृ त इति स्थिते-। **लिटस्तझयो**। ननु लिटस्तझयोरिशिरिजित्येवास्तु, आदेशयोरेकारोच्चारणं व्यर्थं, टित आत्मनेपदानामित्येत्वेनैन सिद्धेरित्यत आत-**एकारोच्चारणमिति**। ज्ञापनस्य फलमाह-**नेन डारौरसां नेति**। डा रौ रस्-एषां लुडादेशभूतात्मनेपदादेशानां टेरेत्वं नेत्यर्थः। वस्तुतस्तु परत्वादेत्वे कृते पुनःप्रसङ्गविज्ञानेन डादिषु कृतेषु लक्ष्ये लक्षणस्येति न्यायादेत्वं नेति लुटः प्रथमस्येति सूत्रभाष्ये स्पष्टम्।

**कृ ए इति स्थित इति**। तकाराऽकारसङ्घातस्य एकारः शित्वात्सर्वादेश इति भावः। **असंयोगाल्लिट्। अपिदिति**। 'सार्वधातुकमपि'दित्यतस्तदनुवृत्तेरिति भावः। 'सार्वधातुकमपि'दिति ङित्त्वं तु नात्र प्रवर्तते, लिडादेशानामार्द्धधातुकत्वादिति बोध्यम्। कित्त्वस्य फलमाह-**क्ङिति चेति**। **द्वित्वादिति**। कृ ए इति स्थिते लिटि धातोरिति द्वित्वात्परत्वादिको यणचीति ऋकारस्य यणादेशे रेफे प्राप्ते सतीत्यर्थः। कृते तु यणि एकाच्त्वाऽभावल्लिटि धातोरिति द्वित्वं न स्यादिति भावः। **द्विर्वचनेऽचि**। द्विरुच्यते येन परनिमित्तेन तद्द्विर्वचनं। द्वित्वनिमित्तमिति यावत्।

शे.] इदमुपलक्षणं, कानचोऽपि। **एकारोच्चारणमिति**। 'थासः से' इत्यत्रत्यमप्येवम्। **तेन डेत्यादि**। 'टित आत्मनेपदाना'मित्यत्र भाष्ये स्पष्टमिदमेकदेश्युक्त्या। वस्तुतः परत्वादेत्वे पुनःप्रसङ्गविज्ञानेन डादिषु कृतेषु 'लक्ष्ये-लक्षणस्ये'ति न्यायेन नैत्वमिति 'लुटः प्रथमस्ये'त्यत्र भाष्ये स्पष्टम्। **कित्स्यादिति**। किद्वत्स्यादित्यर्थः।

**द्विर्वचने**। स्थान्यचः पूर्वत्वेन दृष्टस्यैव 'चक्रे' इत्यादौ कार्याऽभावात् 'अचः परस्मि'न्नित्यनेनाऽसिद्धेरिदमारब्धम्। द्विर्वचने अचीत्यनयोः सामानाधिकरण्याऽसम्भवाद्द्विर्वचनशब्देन तन्निमित्तं लक्ष्यते। अतोऽचीत्यनेन सामानाधिकरण्यं, तदाह-**द्वित्वनिमित्तेऽचीति**। प्रत्यासत्त्या तन्निमित्तनिमित्तकादेशस्यैव स्थानिवत्त्वं बोध्यम्। 'ऊर्णुनविषती'त्यादावपि तद्भावभावितामात्रेण निमित्तत्वाश्रयणादचस्तन्निमित्तत्वम्। किं च लक्ष्यानुरोधेन साक्षात्समुदायघटकतया वा द्वित्व-

उरत्।७।४।६६। अभ्यासऋवर्णस्य अत्स्यात्प्रत्यये परे। रपरत्वम्। 'हलादिः शेषः'। प्रत्यये किम् ?। वव्रश्च।

त.] स्वीकृतः । किं च आदेशमङ्गीकृत्य पुनः स्थानिरूपाश्रयणापेक्षया निषेधपरतया व्याख्यानमेव लघु । 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर'मिति न्यायात् । 'न पदान्ते'ति निषेधानन्तरं पाठोऽप्येवं सत्यनुगृहीत इति श्रेयानयं पक्षः ।

इष्टानुरोधेन द्विर्वचन इत्यावर्त्य कालावधारणपरतयापि व्याचष्टे-**द्वित्वे कर्तव्ये इति**।कृते तु द्वित्वे यथायथमादेशः स्यादेवेति भावः । द्वित्वनिमित्ते किम् ? । दुद्यूषतीत्यत्र द्वित्वात्परत्वादूठि कृते यदि यणः पूर्वमेव द्वित्वं स्यात्तदा दिद्यूषतीत्यनिष्टं रूपं स्यात्तन्माभूदिति द्वित्वनिमित्त इत्युक्तम् । नह्यूठ् द्वित्वनिमित्तम् । अचीति किम् ? । जेघ्रीयते ।

बा.]अचीत्यस्य विशेषणमिदम्।'अचः परस्मि'न्नित्यतोऽच इति, 'स्थानिवदादेश' इत्यत आदेश इति, न पदान्तेत्यतो नेति चानुवर्तते । द्विर्वचन इत्यावर्तते । एवं च 'द्वित्वे कर्तव्ये सती'त्यपि लभ्यते । तदाह-**द्वित्वनिमित्तेऽचीत्यादिना** । 'द्वित्वे कर्तव्ये सती'त्युक्तेः कृते द्वित्वे 'चक्रे' इत्यादौ यणादयो भवन्ति । अन्यथा तु न स्युः, द्वित्वनिमित्तस्य अचः सत्त्वात् । द्वित्वनिमित्त इति किम् ? । दुद्यूषति । दिव्धातोः सनि द्वित्वात्परत्वादूठि कृते द्वित्वात्प्राग्यण् भवत्येव । तथाच 'द्यू' इत्यस्य द्वित्वे दुद्यूषतीति सिध्यति । द्वित्वे कर्तव्ये यणो निषेधे तु दिद्यूषतीत्यभ्यासे इकार एव श्रूयेत । न तूकारः । 'द्वित्वनिमित्ते' इत्युक्तौ तूठि परे द्वित्वात्प्राग्यणो न निषेधः, ऊठो द्वित्वनिमित्तत्वाऽभावात् । अचीति किम् ?। जेघ्रीयते। अत्र घ्राधातोर्यङि द्वित्वात्प्राक् 'ई घ्राध्मो'रितीकारादेशो न निषिध्यते । ईत्वस्य द्वित्वनिमित्तयङ्निमित्तकत्वेऽपि द्वित्वनिमित्ताऽज्निमित्तकत्वाऽभावात् । अचः किम् ?। असूषुपत् । इह स्वापेश्चङि द्वित्वात्प्राक् 'स्वापेश्चङी'ति वकारस्य सम्प्रसारणं न निषिध्यते, तस्याऽजादेशत्वाऽभावात् । ततश्च कृते सम्प्रसारणे सुप् इत्यस्य द्वित्वेऽभ्यासे उकारस्य श्रवणं संभवति । संप्रसारणे निषिद्धे तु 'स्वप्' इत्यस्य द्वित्वेऽभ्यासे उकारो न श्रूयेत। एवं च प्रकृते यणादेशात्प्राग् 'लिटि धातो'रिति द्वित्वे कृ कृ ए इति स्थिते-। **उरत्** । उः-अदिति छेदः । 'ऋ'इत्यस्य उरिति षष्ठ्येकवचनम् । 'अत्र लोपोऽभ्यासस्ये'त्यस्मादभ्यासस्येत्यनुवर्तते । अङ्गस्येत्यधिकृतं । तद्वशात्प्रत्यये परत इति लभ्यते । प्रत्यये परत एव अङ्गसंज्ञाविधानात् । तदाह-**अभ्यासऋवर्णस्येत्यादिना । रपरत्वमिति** । अभ्यासऋवर्णादेशस्याऽकारस्योरण्रपर इति रपरत्वमित्यर्थः । तथाच कर् कृ ए इति स्थिते । **हलादिः शेष इति** । रेफस्य निवृत्तिरिति भावः । **प्रत्यये किमिति** । अङ्गेनैव प्रत्ययस्याक्षिप्तत्वात्प्रत्यये परत इति किमर्थमित्यर्थः ।

**वव्रश्चेति** । 'ओ व्रश्चू च्छेदने', लिटि णल् द्वित्वं । लिट्यभ्यासस्येत्यभ्यासरेफस्य सम्प्रसारणमृकारः । उरत्। रपरत्वम्।हलादिः शेषः । वव्रश्चेति रूपम्।अत्र अभ्यासऋवर्णस्य रेफस्थानिकस्य सम्प्रसारणस्य य उरदत्वसम्पन्नोऽकारस्तस्य अचः परस्मिन्निति स्थानिवत्त्वेन सम्प्रसारणतया तस्मिन्परे वकारस्य 'न सम्प्रसारणे सम्प्रसारण'मिति निषेधान्न सम्प्रसारणमिति स्थितिः।उरदित्यत्र 'प्रत्यये परत' इत्यनुक्तौ तु सम्प्रसारणभूतऋकारस्थानिकस्य अकारस्य परनिमित्तकत्वाऽभावेन स्थानिवत्त्वाऽप्रसक्तेः सम्प्रसारणत्वाऽभावात्तस्मिन् परतो 'न सम्प्रसारणे सम्प्रसारण'मिति निषेधो न

शे.]प्रयोजकत्वं निमित्तत्वमिहेति चक्रतुरित्यादिसिद्धिः। एवञ्च द्वित्वेऽजादिप्रत्ययस्य निमित्तत्वेऽचोऽपि तत्त्वं, णिचि अचो निमित्तत्वेऽजादिप्रत्ययस्यापि । 'सन्यङो'रित्यस्य षष्ठ्यन्तत्वेऽपि सनो द्वित्वप्रयोजकत्वमस्ति । तत्र लोके समवायिकारणातिरिक्ते एव निमित्तकारणत्वव्यवहारात् 'अरिरिषती'त्यादौ नेस, इकारस्य वा द्वित्वनिमित्तत्वमिति न गुणनिषेधः, इसो द्वित्वाश्रयत्वात् । तदाहुः-'न हि कार्यमनुभवन्कार्यी निमित्तत्वेनाश्रीयते' इति । तस्य समवायिकरणत्वादिति तदाशयः । एतेन 'शयितरि व्रते' इति ज्ञापकसिद्धं परिभाषान्तरमिति वदन्तः परास्ताः, भाष्येऽस्यानुक्तेश्च । व्याकरणेऽपि कार्यिणोपश्लिष्टस्यैव निमित्तत्वव्यवहाराच्च । न च 'अरिरिषती'त्यादावपि तथा । उपश्लेषस्य समीपसम्बन्धरूपस्य भेदनिबन्धनत्वात् । अचि किं ? । अधिजगे । 'गाङ्लिटी'त्यत्र ङित्त्वकारकनिर्देशेन लावस्थायाङ्गाङादेशस्य सत्त्वात् । 'लिटि' 'आर्द्धधातुके' इत्यादीनां विषयसप्तमीत्वेऽपि तद्भावभावित्वेनेव तद्बुद्धिभावभाविता मात्रेणापि निमित्तत्वस्य वक्तुं शक्यत्वात् । अत्र सूत्रोपात्तलिड्बुद्धिभाव एव निमित्तमित्यज्निमित्तत्वाऽभावः । सर्वत्रैव चाऽत्र शास्त्रे बुद्धिकृतमेव निमित्तत्वादि । इदमेवाऽचीति ईदृशनिमित्तत्वाश्रयणे लिङ्गम् । आवृत्त्या कालावधारणमपीत्याह-**द्वित्वे कर्तव्ये इति** । अचः किम् ? । ईजाथे । तत्र हि कित्त्वनिमित्तत्वात्सम्प्रसारणस्यादेशेषु कृतेषु प्रवृत्त्याऽज्निमित्तत्वदत्र तन्निषेधे द्वित्वे हलादिःशेषे उत्तरखण्डे सम्प्रसारणे पूर्वखण्डे सम्प्रसारणं न स्यात्, 'न सम्प्रसारणे' इति निषेधात् । लावस्थायान्तु न कित्त्वं, परैस्तिबादिभिर्बाधात् । अत एव 'असंयोगा'दित्यत्राऽपिदित्यनुवृत्तिश्चरितार्थेति दिक् । **उरत्** । चच्छृदतुरित्यादावभ्यासविकारे बाध्यबाधकभावाऽभावेन पूर्वं हलादिःशेषे ततोऽन्तरङ्गत्वात्तुकि उरदत्वसिद्धये आह-**अभ्यासऋवर्णस्येति** । इदञ्च 'दीर्घोऽकितः' इति सूत्रे भाष्ये स्पष्टम् । 'नन्तृते' इत्यादौ तेनैव न्यायेनोरदत्वे कृते हलादिःशेष इति बोध्यम् । **प्रत्यये किमिति** । अङ्गेन प्रत्ययाक्षेपः किमर्थमिति प्रश्नः । **वव्रश्चेति** । अन्यथोरदत्वस्याऽपरनिमि-

**कुहोश्चुः।७।४।६२।** अभ्यासकवर्गहकारयोश्चवर्गादेशः स्यात्। चघांचक्रे। चघांचक्राते। ऐघांचक्रिरे। चकाच उपदेशे-

त.] दिध्मीयते। शाशय्यते। इह 'ई घ्राध्मो'रिति ईकारः, 'अयङ् यि क्ङिति'त्ययङादेशश्च निषिध्येत, स मा भूदिति प्राञ्चः। अन्ये त्वाहुः–अचीति व्यर्थं, घ्रीय्-ध्मीय्-शय्य् इति द्वितीयाऽजवधिकस्यैकाचः कार्यितया यङो द्वित्वनिमित्तत्वाऽभावादिति। अचः किम्? असुषुपत्। इह 'स्वापेश्चङी'ति यत्संप्रसारणं तस्मिन्निषिद्धेऽभ्यासे उवर्णो न श्रूयेत। न च द्वित्वे कृते पुनः संप्रसारणेन स्वापेरवयवत्वाऽविशेषादभ्यासे तदुत्तरखण्डे च उकारश्रवणं भवेदिति वाच्यं, परस्य संप्रसारणे कृते 'यून' इत्यत्रेव 'न संप्रसारणे' इति पूर्वस्य यणः संप्रसारणनिषेधात्। स्यादेतत्–चक्रतुरित्यत्र अच आदेशस्य निषेधाऽप्रवृत्त्या यण् स्यादेव। अतुसो द्वित्वनिमित्तत्वेऽप्यकारस्याऽतथात्वात्। नच 'द्विर्वचनेऽची'त्यस्य वैयर्थ्यं, चक्रे इत्यादौ सावकाशत्वात्। तथा चैकाच्त्वाऽभावात् 'लिटि धातो'रितीह द्वित्वं न स्यादिति चेत्। मैवम्। इह द्वित्वनिमित्तशब्देन साक्षाद्वा, समुदायघटकतया वा यद्द्वित्वप्रयोजकं, लक्ष्यानुरोधेन तस्य सर्वस्य ग्रहणात्। एतच्च 'ठस्येकः' इति सूत्रे कैयटे स्पष्टम्। तथाच ऊर्णोतेः सनि 'सनीवन्त'ेतीट्पक्षे 'विभाषोर्णो'रिति ङित्त्वविरहे ऊर्णुनविषतीति सिद्धम्। सन्नन्तस्य द्वित्वविधानेऽपि सनो द्वित्वप्रयोजकत्वेन तस्मिन्परे प्राप्तयोर्गुणाऽवादेशयोर्द्वित्वे कर्तव्ये निषेधात्। अत एवाहुः–'तद्भावभावितामात्रेणेह निमित्तत्व'मिति। एवं च द्वित्वनिमित्तघटकतया सन इडागमोऽतुस अकारश्च द्वित्वनिमित्तमिति स्थितम्। नन्वेवम् ऋधातोः सनि 'स्मिपूङ्रञ्ज्वशां सनी'तीटि कृते इस्शब्दनिमित्तकस्य गुणस्य 'द्विर्वचनेऽची'ति निषेधे 'अजादेर्द्वितीयस्ये'ति द्वित्वप्रसङ्गादरिरिषतीति न सिध्येत्। रिस्शब्दनिमित्तकस्य द्वित्वे तु यद्यपि सिध्यति तथापि गुणनिषेधे रिस्शब्द एव दुर्लभ इति चेत्। अत्राहुः–गुणे रपरे कृते रिस्शब्दस्यैव द्वित्वम्। नच द्वित्वनिमित्ते ऽचि गुणस्य निषेधः। इस्शब्दस्तु नेह निमित्तं, कार्यित्वात्। न हि कार्यी निमित्ततयाऽऽश्रीयते, 'स्थण्डिलाच्छयितरि व्रते' इति ज्ञापकात्। अन्यथा शीङो ङित्वेन 'क्ङिति चे'ति गुणनिषेधाच्छयितरीति रूपस्याऽसिद्ध्यापत्तेः। न च 'किति ङिति परे गुणवृद्धी ने'ति व्याख्यायामुक्तेऽर्थे शयितरीति न ज्ञापकमिति वाच्यं, तद्व्याख्यायां छिन्नं भिन्नमित्यत्र गुणनिषेधो

बा.] स्यादिति भावः। एवं च–क् कृ ए इति स्थिते–**कुहोश्चुः।** कु हु इत्यनयोर्द्वन्द्वात्षष्ठीद्विवचनम्। 'अत्र लोपोऽभ्यासस्ये'त्यतोऽभ्यासस्येत्यनुवर्तते। तदाह–**अभ्यासेति।** यद्यपि स्थानिनां कवर्गीयाणां हकारस्य च षट्त्वात्, चवर्गीयाणां पञ्चत्वान्न यथासङ्ख्यं, नापि स्थानत आन्तर्यं, कण्ठतालुस्थानभेदात्। आभ्यन्तरप्रयत्नसाम्यं तु कवर्गचवर्गयोरविशिष्टम्। हकारचवर्गयोस्तु नास्त्येव तत्, अतो बाह्यप्रयत्नत एवान्तर्यमिह व्यवस्थापकमाश्रयणीयम्। तत्र प्रथमस्य कवर्गीयस्य प्रथम एव चवर्गीयो भवति, अघोषश्वासविवाराऽल्पप्राणप्रयत्नसाम्यात्, नतु द्वितीयः, महाप्राणत्वात्। नापि तृतीयपञ्चमौ, घोषसंवारनादप्रयत्नत्वात्। नापि चतुर्थः, घोषसंवारनादमहाप्राणप्रयत्नत्वात्। तथा द्वितीयस्य कवर्गीयस्य द्वितीय एव चवर्गीयो भवति, अघोषश्वासविवारमहाप्राणप्रयत्नत्वात्, नतु प्रथमः, अल्पप्राणत्वात्। नापि तृतीयपञ्चमौ, घोषसंवारनादाल्पप्राणप्रयत्नत्वात्। नापि चतुर्थः, घोषसंवारनादप्रयत्नत्वात्। तथा तृतीयस्य कवर्गीयस्य तृतीय एव चवर्गीयो भवति। घोषसंवारनादाल्पप्राणप्रयत्नत्वात्। न तु प्रथमः, अघोषश्वासविवारप्रयत्नत्वात्। अत एव न द्वितीयोऽपि, महाप्राणप्रयत्नत्वाच्च। नापि चतुर्थः, महाप्राणत्वात्। नापि पञ्चमः, घोषसंवारनादाल्पप्राणसाम्येऽपि अनुनासिकतया भेदात्। तथा चतुर्थस्य कवर्गीयस्य चतुर्थ एव चवर्गीयो भवति, घोषसंवारनादमहाप्राणप्रयत्नत्वात्। न तु प्रथमः, अघोषश्वासविवाराल्पप्राणप्रयत्नत्वात्। नापि द्वितीयः, अघोषविवारश्वासप्रयत्नत्वात्। नापि तृतीयपञ्चमौ, अल्पप्राणत्वात्। पञ्चमस्य तु कवर्गीयस्य अनुनासिकत्वाञ्ञकार एव। हकारस्य तु घोषसंवारनादमहाप्राणवतस्तादृशो वर्गचतुर्थ एव झकार इति विवेकः। प्रकृते तु क कृ ए इति स्थिते अभ्यासककारस्य चकारे ऋकारस्य यणि रेफः। तदाह–**चघांचक्र इति।** एककर्तृका भूतानद्यतनपरोक्षा वृद्धिरूपा क्रियेत्यर्थः। **चघांचक्राते इति।** कृञो लिट आतामि टेरेत्वम्। 'द्विर्वचनेऽची'ति यणि निषिद्धे 'कृ' इत्यस्य द्वित्वे उरदत्वम्। हलादिः शेषः। चर्त्वम्। यण्। न च आतामित्यस्य द्वित्वनिमित्तत्वेऽपि आकारस्याऽचो द्वित्वनिमित्तत्वाऽभावात्कथमिह 'द्विर्वचनेऽची'ति यण्निषेध इति वाच्यं; साक्षाद्वा, समुदायघटकतया वा द्वित्वप्रयोजकस्यैव द्वित्वनिमित्तशब्देन विवक्षितत्वादिति भावः। **चघांच-**

शे.] त्त्वात्स्थानिवत्त्वाऽभावेन 'न सम्प्रसारणे' इति निषेधानापत्तिः। अत एवाऽऽसप्तमसमाप्तेरङ्गाधिकार उक्तो भगवता। न च प्रागभ्यासविकारेभ्योऽङ्गाधिकारेऽपि अभ्यासेन प्रत्ययाक्षेपो भविष्यतीति वाच्यम्, अभ्याससञ्ज्ञैकवाक्यतया लिटि परे ये द्वे तयोः पूर्वस्य ऋतोऽदित्यर्थलाभेऽपि अत्वस्य परनिमित्तत्वानुपपादनात्। किं च 'सन्यङो'रित्यस्य षष्ठीत्वेन तद्विषये सन्नन्तस्य ये द्वे इत्यर्थेन सर्वथाऽपरनिमित्तत्वन्दुरुपपादम्। अङ्गसञ्ज्ञैकवाक्यतया तु प्रत्यय इत्यस्यावृत्त्या न दोषः। अजर्घाः 'चर्करीती'त्यादौ यङ्लुगन्ते 'न लुमते' ति निषेधाऽनित्यत्वेन न क्षतिरिति भावः। वस्तुतस्तेन तदाक्षेपाऽभावेऽपि अङ्गसञ्ज्ञाद्वाराऽस्य परनिमित्तत्वम्। नियमतः परवृद्धेः पूर्ववृत्तितया परनिमित्तत्वात्। एवञ्च 'चर्क-

ऽनुदात्तात्।७।२।१०।उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्य वलादेरार्द्धधातुकस्येण्न स्यात्।'उपदेशे' इत्युभयान्वयि । एकाच इति किम्?।यङ्लुग्व्यावृत्तिर्यथा स्यात्। स्मरन्ति हि-(प) श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च।यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ् लुकि॥१॥इति।एतच्चेहैवैकाज्ग्रहणेन ज्ञाप्यते।'अच'इत्येवै-

---

त.]न स्यादित्यादिदोषस्य 'क्ङिति चे'ति सूत्र एवोपपादितत्वात्। न चैवं कार्यिणो निमित्तत्वाऽनाश्रयणे सन्नन्तस्य कार्यित्वात्सनि परतः प्राप्तयोर्गुणावादेशयोरनिषेधादूर्णुनविषतीत्यपि न स्यादिति वाच्यं, मत्वर्थीयेनेनिना कार्यमनुभवत एव कार्यित्वाऽलाभात्। ऊर्णोतेर्हि नुशब्द एव द्वित्वरूपं कार्यमनुभवति, न तु सन् । अरिरिषतीत्यत्र तु रिस्शब्दः कार्यभागिति वैषम्यादिति । **उभयान्वयीति** । मध्ये पाठाद्देहलीदीपन्यायेन पूर्वोत्तराभ्यां संबध्यत इत्यर्थः। तत्रोत्तरान्वयस्य कर्तुं गन्तुमित्यादाविण्निषेधः फलम् । नित्स्वरेण संप्रत्युदात्तत्वात् । पिपक्षति बिभत्सतीत्यादाविण्निषेधस्तु पूर्वान्वयस्य फलम्। द्वित्वे कृतेऽनेकाच्त्वात् । नन्वेकाच इत्युक्ते ह्युपदेशपदेनाऽप्यन्वयः स्वीकर्तव्यस्तदेव मास्तु, उपदेशेऽनुदात्तादित्यनेनैवेष्टसिद्धेरिति शङ्कते-**एकाचः किमिति** । पिपक्षतीत्यादाविव यङ्लुक्यपीण्निषेधः स्यादेवेत्याशङ्कायामाह-**स्मरन्ति हीति**।**श्तिपेत्यादि** । **श्तिपा** यथा-'स्यतिहन्तियातिवातिद्रातीं'त्यादि । तेन प्रन्यजङ्घनीदित्यादौ 'नेर्गदे'ति णत्वं न । **शपा** यथा-भरेति । तेन बिभर्तेः सनि बिभरिषतीत्यत्र 'सनीवन्तर्धे'तीड्विकल्पो न, किंतु नित्यमेवेट् । 'एकाच' इति निषेधाऽप्रवृत्तेः । **अनुबन्धेन** निर्देशो द्विधा, स्वरूपेणेत्संज्ञकत्वेन च । **स्वरूपेण** यथा-'शीङः सार्वधातुके गुणः', 'दीङो युडचि' इति । शेशितः । देधितः । तसि क्तप्रत्यये चेमे क्रमेणोदाहरणे । **इत्संज्ञकत्वेन** यथा-'अनुदात्तङितः' इति । तेन स्पर्धशीङादिभ्यः 'अनुदात्तङितः' इत्यात्मनेपदं न । पास्पर्धीति । शेशयीति । **गणेन** यथा-वेभिदीति । 'रुधादिभ्यः' इति श्नम्न । **एकाज्ग्रहणं** प्रकृतसूत्रे । तेन बेभेदिता चेच्छेदितेत्यादाविण्निषेधो न । **एतच्चेति** । न च श्तिपा शपाद्यंशे कथमिदं ज्ञापकमिति शङ्क्यम्, एकादेशानुमतिद्वारा सर्वत्र ज्ञापनस्य 'उपपदमति'ङित्यादौ दृष्टत्वात् । अतएव तत्र 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्ते'रिति सिद्धमित्युक्तम् । अनन्यार्थैः स्यतिहन्तिभरेत्यादिभिः श्तिप्शबादिभिरेव ज्ञापनसंभवाच्च। 'अपरस्पराः' इति सूत्रे सातत्यग्रहणेन

---

बा.]क्लिर इति। झस्य इरेच्। क्ल इत्यस्य द्वित्वादि पूर्ववत् । अथ लिटि थासः सेभावे 'क्ल' इत्यस्य द्वित्वादौ एधां च क्ल से इति स्थिते 'आर्द्धधातुकस्येड्वलादे'रितीडागमे प्राप्ते-**एकाच उपदेशे** । 'ऋत इद्धातो'रित्यतो धातोरित्यनुवर्तते । 'नेड्वशि कृती'त्यतो नेति च । तदाह-**उपदेशे यो धातुरेकाजिति** । एकोऽच् यस्येति बहुव्रीहिः । **आर्द्धधातुकस्येति** । यद्यपीदं न श्रुतं, नाप्यनुवृत्तिलभ्यं, तथाप्यार्थिकमिदम्, आर्द्धधातुकस्यैवेटः प्राप्तेः । वृत्तिग्रन्थे तु आर्द्धधातुकस्येति नोपात्तम्। नन्वेकाच उपदेशेऽनुदात्तादित्यत्र यदि उपदेश इत्येतदेकाच इत्यत्रान्वेति तदा कर्तु मित्यत्र इण्निषेधो न स्यात्, कृञ्धातोरूदृदन्तैरित्यादिनाऽनुदात्तत्वस्य वक्ष्यमाणत्वेऽपि तुमुन्प्रत्यये कृते 'ञ्नित्यादिर्नित्य'मित्याद्युदात्तत्वात् । यदि तूपदेश इत्येतदनुदात्तादित्यनेनान्वेति तदा यद्यपि नायं दोषः, कृते तुमुन्प्रत्यये उदात्तत्वेऽपि धातूपदेशकालेऽनुदात्तत्वेन तत्र इण्निषेधस्य निर्बाधत्वात्तथापि एधांचकृषे इत्यादाविण्निषेधो न स्यात्, द्वित्वे कृतेऽनेकाच्त्वादित्यत आह-**उपदेश इत्युभयान्वयीति** । 'उपदेश' इत्येतत् 'एका'जित्यत्र, 'अनुदात्ता'दित्यत्र चान्वेति, मध्यमणिन्यायादिति भावः । ननूदृदन्तैरित्यादिना परिगणितानामनुदात्तोपदेशधातूनामेकाच्त्वाऽव्यभिचारादेकाज्ग्रहणं मास्तु, उपदेशेऽनुदात्तादित्येवास्तु, एतावतैव कर्तुं चकृष इत्यादाविण्निषेधसिद्धेरिति पृच्छति-**एकाचः किमिति**। **यङ्लुग्व्यावृत्तिरिति** । यङ्लुकि चर्करितेत्यादौ इण्निषेधव्यावृत्तये एकाज्ग्रहणमित्यर्थः । ननु कृतेऽप्येकाज्ग्रहणे कथं यङ्लुग्व्यावृत्तिः, कृते द्वित्वे अनेकाच्त्वेऽपि धातूपदेशे एकाच्त्वादित्यत आह-**स्मरन्ति हीति** । प्राचीनाचार्या निबध्नन्तीत्यर्थः । **श्तिपा शपेत्यादेरुदाहरणानि** यङ्लुङ्निरूपणे स्पष्टीभविष्यन्ति । नन्विह एकाज्ग्रहणाद्यङ्लुकीण्निषेधस्य व्यावृत्तावपि श्तिबादिनिर्दिष्टानां यङ्लुकि व्यावृत्तिः प्राचीनाचार्यसंमताऽपि पाणिनेरसंमतैवेत्यत आह-**एतच्चेति** । **एतत्** = श्तिपा शपेति श्लोकसिद्धं सर्वमपि, इह = सूत्रे,एकाज्ग्रहणेनैव एकदेशानुमत्या ज्ञाप्यत इत्यर्थः। ननु 'हनो वध लिङि' 'लुङि चे'ति हनधातोर्वधादेशे कृतेऽवधीदित्यत्रेडागमो न स्यात्, वधादेशे कृते अनेकाच्त्वेऽपि धातूपदेशे हन्तेरेकाच्त्वादित्यत आह-**अच इत्येकत्वेत्यादि व्यावर्त्यत** इत्यन्तम् । 'एकाच उपदेशेऽनुदात्ता'दित्यत्र हि एकग्रहणमपनीयाऽच

---

शे.]रीति' 'अजर्घाः' इत्यादौ दोषशङ्कैव नेति दिक्। ननूपदेशेऽनुदात्तस्यैकाच्त्वाऽव्यभिचारात्किं तेनेति पृच्छति-**एकाच इति किमिति** । न च वधिव्यावृत्त्यर्थन्तत्, तत्सामर्थ्येन उपदेशमात्रे एकाचो ग्रहणादिति वाच्यम्, आद्युदात्तनिपातनेन सिद्धेरित्यभिमानात् । **एकाज्ग्रहणेनेति** । तदर्थकेनाऽच इति पदेनेत्यर्थः । अन्यथोपदेशेऽनेकाचामुदात्तत्वस्यैव सत्त्वेन तद्वैयर्थ्यं स्पष्टमेवेति भावः। ननु वधादावाद्युदात्तनिपातनेऽपि न सिद्ध्यति, हन्त्युपदेशे तस्यानुदात्तत्वाऽक्षतेः। नच तत्सामर्थ्यं, गौरवादत आह-**अच इत्येवेति** । उपात्तविभक्त्यर्थत्यागे मानाऽभावेन तद्विवक्षेति भावः । **तद्वत इति** ।

करवविवक्षया, तद्वतो ग्रहणेन च सिद्धे एकग्रहणसामर्थ्यादनेकाच्कोपदेशो व्यावर्त्यते। तेन वधेर्हन्त्युपदेशे एकाचोऽपि न निषेधः, आदेशोपदेशेऽनेकाच्त्वात्। अनुदात्ताश्चानुपदमेव सङ्ग्रहीष्यन्ते। एधाञ्चक्रुषे। एधाञ्च-

त.]एकदेशानुमत्या 'लुम्पेदवश्यमः कृत्ये' इत्यादिपूर्वाचार्यश्लोको ज्ञापित इति तु तत्रैवाऽवोचाम। मनोरमायां त्वेकदेशानुमतिद्वारा पूर्वाचार्यप्रठितपरिभाषाया ज्ञापनस्य 'गतिकारकोपपदाना'मित्यादौ दृष्टत्वादित्युक्तं, तदयुक्तमिति नव्याः। 'गतिकारकोपपदाना'मित्याद्येव हि पूर्वाचार्याणां परिभाषा। न च तज्ज्ञापनं तत्रैव दृष्टमिति युज्यते वक्तुमिति। **तद्वत इति**। न च मत्वर्थलक्षणायां मानाऽभावः, वसत्यादीनामनुदात्तपाठस्यैव तत्र मानत्वात्। न चेदानीमनुदात्तपाठः परिभ्रष्टः, आधुनिकानां वसतिशक्लित्यादिपाठस्त्वनार्षत्वान्न मानमिति शङ्क्यं, पाणिनिना पठितानामेवानुदात्तधातूनामाधुनिकैर्व्याख्यातृपरम्परया सङ्गृहीतत्वात्। अन्यथा एकोऽच् यस्येति बहुव्रीहिलाभार्थमेकग्रहणे कृतेऽप्यनुदात्तपाठस्य परिभ्रष्टत्वाद्वसतिशक्लादयोऽनुदात्ताः, न तु भ्वादय इति निर्धारणं न स्यात्। **एकग्रहणेति**। नन्वेकाज्ग्रहणं यङ्लुग्व्यावृत्त्यर्थमित्युक्त्वा पुनरेकग्रहणसामर्थ्यादित्युक्तौ परस्परव्याघातः स्यादिति चेत्। अत्राहुः—एकाच्शब्देनैकाज्ग्रहणं यङ्लुग्व्यावृत्त्यर्थमिति नार्थः, किं तु वस्तुगत्यैवैकाज्ग्रहणं, तच्चैकग्रहणं विनैव लभ्यत इत्यदोष इति। **वधेरिति**। यस्तु तद्व्यावृत्तयेऽनिङ्कारिकास्वदन्तपर्युदास उक्तो व्याघ्रभूतिना, स एव प्राचाऽनुसृतः। 'अदन्तदन्तरुपक्ष्णुशीयुणुक्ष्विडीङ्श्रिभिः। वृङ्वृञ्भ्यां च विनैकाचः स्वरान्ता धातवोऽनिटः' इति। स चादन्तपर्युदास इहोपेक्षितः। सूत्राननुगुणत्वात्। तथाहि—'सर्वे सर्वपदादेशाः' इति न्यायेन 'कृ'इत्यादेः करित्यादिरादेशस्तस्य यथा स्थान्युपदेशं गृहीत्वा कर्ता हर्तेत्यादौ निषेधः प्रवर्तते तथैव वधादेशेऽपि प्रवर्तमानः केन वार्यताम्?। अदन्तपर्युदाससामर्थ्यादिति

बा.]इत्युक्तेऽपि एकाऽच्कादिति लभ्यते,एकवचनोपात्तस्यैकत्वस्य त्यागे प्रमाणाऽभावात्। न चैवं सति एकत्वविशिष्टादचः परस्येत्येव लभ्येत, नत्वेकाच्कादिति बहुव्रीह्यर्थ इति वाच्यम्, अनुदात्तोपदेशपरिगणने शक्लपचिमुच्यादीनां परिगणनसामर्थ्येन 'अच' इत्यस्य मत्वर्थलक्षणामाश्रित्य एकाज्वतो ग्रहणसंभवात्। तदेवमच इत्यनेनैव एकाच्कादिति सिद्धे यदेकग्रहणं करोति तत्सामर्थ्यादुपदेशे सर्वत्र एकाजेव न तु कस्मिंश्चिदप्युपदेशे अनेकाजित्यर्थकल्पनया कदाचिदनेकाच्कोपदेशधातुर्व्यावर्त्यत इत्यर्थः। **तेनेति**। उपदेशे सर्वत्र एकाजेवेत्यर्थलाभेन, हन्त्युपदेशे—हनिति स्थान्युपदेशे—एकाचोऽपि सतो हनिति धातोरादेशस्य वधेः परस्य इण्निषेधो नेत्यर्थः। कुत इत्यत आह—**आदेशोपदेश इति**। 'अवधी'दित्यत्र'अतो हलादेर्लघो'रिति वृद्धिनिवृत्तये हनो वधादेशस्य अदन्तताया भाष्ये उक्तत्वादिति भावः।

ननु के तेऽनुदात्ता धातव इत्यत आह—**अनुदात्तास्त्वनुपदमेवेति**। पदस्य पश्चादनुपदम्। पदमात्रे अतीते सतीत्यर्थः। अनन्तरमेवेति यावत्। **एधाञ्चक्रुषे इति**। इडभावे प्रत्ययावयवत्वात्षत्वम्। **एधाञ्चक्राथे इति**। लिट आथामादेशः।

शे.]समुदाये एकत्वविशिष्टाऽज्रूपत्वारोपेणेति भावः। **सिद्धे इति**। शब्दविशेषमनादृत्याऽर्थविशेषपुरस्कारेणैवोक्तपरिभाषाप्रवृत्तेः सूपपादत्वादिति भावः। **सामर्थ्यादिति**। उपदेशमात्रे य एकाजेवेत्यर्थकल्पनयेत्यर्थः। **अनेकाच्त्वादिति**। 'हनो वधे'ति सूत्रेऽस्याऽदन्तताया भाष्ये उक्तत्वात्। अत एव 'अवधीत्' इत्यत्र 'अतो हलादे' रिति वृद्धिर्न। एवञ्चाद्युदात्तनिपातनन्तस्य निष्फलमिति भावः। वस्तुत आरोपितार्थबोधकत्वे तात्पर्यग्राहकाऽभावेनाऽजन्तस्येत्यर्थवारणाय चैकपदस्याऽऽवश्यकत्वेऽपि अवच्छेदकावच्छेदेनान्वयस्यौत्सर्गिकत्वेन, लक्ष्यानुरोधेन च तथैवान्वयाद्व्यधिव्यावृत्तिः। स्पष्टा चेयं रीतिः 'उपदेशेऽत्वतः' इति सूत्रे भाष्यकैयटयोः। तत्र हि—'घसौ प्रतिषेधाऽभावाय हलादिग्रहणं कर्तव्यम्' इति भाष्यमुपादाय 'उपदेशग्रहणमुभाभ्यां सम्बध्यते, उपदेशे योऽत्वान् हलादिश्चेति, न च 'घसिरद्युपदेशे हलादि' रिति कैयटेनोक्तम्। यद्वा यस्य साक्षादुपदेशः सम्भवति तस्य मुख्यत्वात्स एव गृह्यते न तु स्थान्युपदेश इति न दोषः। इयमपि रीतिः 'उपदेशेऽत्वतः' इति सूत्रशेषे 'ऋतो भारद्वाजस्ये' ति सूत्रे च भाष्ये। परे त्वेकाज्ग्रहणव्यावर्त्योऽत्र वधिरेव। किंच उत्तरार्थमेकाज्ग्रहणम्। अत एव जागरितवानित्यादावुपदेशे उगन्तत्वमादाय 'श्र्युकः' इति इण्निषेधो न। तत्रोपदेशाऽनुवृत्तिश्च स्तीर्णमित्यादाविण्निषेधायेत्याकरे स्पष्टम्। 'श्तिपा शपा' इति नास्त्येव, भाष्यानुक्तत्वात्। न च भाष्ये यङ्लोपे बेभिदितेत्यादाविड्व्यावृत्त्यर्थमुपदेशेऽनुदात्तादेकाचः श्रूयमाणादित्यर्थे सनीट्प्रतिषेधो वक्तव्यः, बिभित्सतीति दोषोपन्यासवद्यङ्लुकि दोषाऽनुपन्यासेन तत्र इडिष्टः। 'यङ्लोपे' इत्यादि भाष्यं तूपक्रमोपसंहारबलेन न यङ्लुग्विषयम्। किं च तस्य तद्विषयत्वे यङ्लोपे स्थानिवत्त्वस्येव यङ्लुक्युपायाऽप्रदर्शनेन न्यूनतापत्तिरिति वाच्यम्, इड्विषये यङ्लुको लोकेऽनभिधानेन,छन्दसि सर्वविधीनां वैकल्पिकत्वेन च तत्र दोषानुपन्यासेनाऽदोषात्। अन्यथैकाज्ग्रहणं किमर्थमिति प्रश्नस्योत्तरत्र जागर्त्यर्थमित्युत्तरस्य च भाष्ये निरालम्बनतापत्तेः। अजर्घाः, बेभिदीतीत्यादौ श्नम्-श्यनादयस्तु चर्करीतञ्चेत्यस्याऽदादौ पाठेन यङ्लुगन्ते गणान्तरप्रयुक्तस्याऽप्राप्त्या न छान्दसत्वादेव कार्यान्तराणामपि छन्दसि दृष्टप्रयोगेष्वदृष्टानामभावो बोध्यः। भाषायान्तु तादृशानामभाव एव। श्तिप्शबादिनिर्देशास्तु लिङादि-

कथे । **इणः षीध्वंलुङ्लिटां धोऽङ्गात्** ।८।३।७८। इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य मूर्धन्यः स्यात् । एधांचकृढ्वे । एधांचक्रे । एधांचकृवहे । एधांचकृमहे । एधांबभूव । अनुप्रयोगसामर्थ्यादस्तेर्भूभावो न, अन्यथा[हि] 'कृञ्चानुप्रयुज्यते'इति,'कृभ्वि'ति वा ब्रूयात् । **अत आदेः** ।७।४।७०।अभ्यासस्यादेरतो दीर्घः स्यात् । पररूपापवादः । एधामास । एधामासतुरित्यादि ॥ एधिता । एधितारौ । एधितारः । एधितासे । एधितासाथे ।

---

त.] चेन्न, सूत्रकारेणाऽपर्युदस्तत्वादिति भावः । **इणः षीध्वम्** । 'इण्को'रित्यधिकारेऽपि पुनरिण्ग्रहणं कवर्गात्परस्य माभूदित्येतदर्थम्।तेनेहन न-पक्षीध्वम्। **अङ्गात्परेषामिति**। 'विहिताना'मित्युक्तौ तु दाञो लुङि अदिढ्ढुमित्यत्राऽव्याप्तिः स्यात्, लिहदुहनहां तु ढत्वघत्वधत्वेषु लिक्षीध्वं धुक्षीध्वं नत्सीध्वमित्यत्रातिव्याप्तिश्च स्यादिति बोध्यम् । अङ्गात् किम् ?। वेविषीध्वम् । यद्यप्यर्थवतः षीध्वमित्यस्य ग्रहणात्कृषीढ्वमित्यादावेव भवेत्तत्र, तथाप्यर्थवद्ग्रहणपरिभाषा क्वचिन्न प्रवर्तत इति ज्ञापनार्थमिदमुक्तम् । तेन 'अनिनसन्ग्रहणानी' ति सिद्धम् । **एधांबभूवेत्यादि** । 'आम्प्रत्ययव'दिति सूत्रे कृञ्ग्रहणादनुप्रयोगान्तरे तन्न नेति 'शेषात्कर्तरी'ति परस्मैपदमेव, भावकर्मणोस्तु स्यादेव-एधांबभूवे ईक्षांबभूवे इति । अस्तेस्तु भावकर्मणोस्तङि कृते एशि इटि च रूपे विप्रतिपद्यते । तथाहि-उभयत्रापि 'ह एती'ति हादेशे कृते एधामाहे ईक्षामाहे इति केचित् । तासिसाहचर्यादिटयेव ह्त्वं न त्वेशीत्यन्ये । तत्साहचर्यादेव सार्वधातुक एव एति ह्त्वम् । तथा च कर्मव्यतिहारे तङि व्यतिहे इत्यत्रैव भवति न तूक्तद्वयेऽपि। तेन एधामासे ईक्षामासे इत्येव रूपमित्यपरे। **कृभ्वितीति** । यद्यपि कृञित्युक्तौ लाघवमस्ति, तथापि धातुद्वयस्यैव लाभार्थं प्रत्याहाराश्रयणे क्लेश इति भावः । **पररूपापवाद इति** । 'अपवाद'इत्ययं ग्रन्थो नामधातुप्रक्रियास्थस्वग्रन्थेन सह विरुध्यते । तत्र हि''अ इवाचरति

---

बा.] टेरेत्वं।द्वित्वादि पूर्ववत्।लिटो ध्वमष्टेरेत्वे द्वित्वादौ एधाचक्-ध्वे. इति स्थिते। **इणः षीध्वं**। षीध्वं लुङ्लिट् एषां द्वन्द्वः। 'धः' इति षष्ठ्येकवचनम् । 'इण्' इत्यङ्गविशेषणम् । तदन्तविधिः । 'अपदान्तस्य मूर्धन्य'इत्यधिकृतं । तदाह-**इण-न्तादित्यादिना** । धकारस्य ढकारो मूर्धन्यः,घोषसंवारनादमहाप्राणप्रयत्नसाम्यात्। तदाह-**एधांचकृढ्व इति**। उत्तम-पुरुषैकवचने इटि एत्वे पूर्ववत् द्वित्वादौ कृते रूपमाह-**एधांचक्र इति** । **एधांचकृवह इति**। लिटो वहिभावे एत्वे द्वित्वादि पूर्ववत् । एवं लिटो महिभावे द्वित्वादि पूर्ववत् । सर्वत्राऽसंयोगाल्लिङ्किदिति कित्त्वाद्गुणाऽभावः ।

अथ भूधातोर्लिडन्तस्यानुप्रयोगे उदाहरति-**एधांबभूवेति**।एधाञ्चक्र इत्यनेन समानार्थकम् ,अनुप्रयुज्यमानस्य भूधातोः क्रियासामान्यार्थकत्वात् । नन्वस्तेरनुप्रयोगे लिडादेशस्यार्द्धधातुकत्वादस्तेर्भूरित्यार्द्धधातुके विहितो भूभावः कुतो न स्यादित्यत आह-**अनुप्रयोगेति** । कृञ्चानुप्रयुज्यत इत्यत्र प्रत्याहारमाश्रित्य कृभ्वस्तीनामनुप्रयोगविधिसामर्थ्याद-स्धातोर्भूभावो नेत्यर्थः। तदेवोपपादयति-**अन्यथेति** । अनुप्रज्यमानस्याऽस्तेर्भूभावाभ्युपमे कृञ्चानुप्रयुज्यत इत्यनुप्रयोग-विधौ 'कृस्त्वानुप्रयुज्यते'इति वा, 'कृभु चानुप्रयुज्यते'इति वा ब्रूयात् । तावता एधांबभूवेति सिद्धेरित्यर्थः । यद्यपि'कृ'-मित्युक्तौ लाघवमस्ति तथापि एकस्यैव भवतेरधिकस्य लाभाय कृञिति प्रत्याहारक्लेशो न कर्तव्य इति भावः । अत एवाऽत उत्सार्वधातुक इति सूत्रभाष्येऽनुप्रयोगे भूभावेन अस्तेरबाधनमिति भाष्यं सङ्गच्छते । ततश्च अनुप्रयुज्यमाना-दस्धातोर्लिटि भूभावनिवृत्तौ णलि एधाम् अस् अ इति स्थिते द्वित्वे हलादिः शेषे अ अस् इति स्थिते सवर्णदीर्घं बाधित्वा अतो गुण इति पररूपे प्राप्ते-**अत आदेः** । 'अत्र लोप' इत्यस्मादभ्यासस्येत्यनुवर्तते । 'दीर्घ इणः' इत्यतो दीर्घ इति इति च । तदाह-**अभ्यासस्येति** । अत्र यद्वक्तव्यं तन्नामधातुप्रक्रियायाम् 'अ इवाचरति अती'त्यादिग्रन्थस्य व्या-ख्यानावसरे वक्ष्यते । **एधामासेति** । नचाऽत्रानुप्रयुज्यमानाभ्यामस्तिभूभ्यामाम्प्रत्ययवदित्यात्मनेपदं शङ्क्यं, तत्र कृञ्ग्रहणेन प्रत्याहारग्रहणाऽभावस्य भाष्ये उक्तत्वात् । **एधामासतुरित्यादीति** । एधामासुः । एधामासिथ । एधामासथुः। एधामास । एधामास। एधामासिव। एधामासिम । इति लिड्प्रक्रिया । **एधितेति**। लुटस्तादेशे एध्-त इति स्थिते शबपवादस्तस् । लुटः प्रथमस्येति डा । टिलोपः । एधितेति रूपम् । दीधीवेवीटामिति लघूपधगुणो न । **एधि-ताराविति** । लुटं आताम् । तास् इट् । आतामित्यस्य रौभावः । रि चेति सलोपः । **एधितार इति** । झस्य रस् । तास् । इट् । रि चेति सलोपः । रुत्वविसर्गौ । **एधितास इति** । थासः से । तास् इट् । तासस्त्योरिति

---

शे.]निमित्तक-'भवतेरः' इत्यादिस्थतन्निर्देशवत्नाऽर्थसाधक इत्याहुः।**इणः षीध्वम्**।षीध्वमि षकारोच्चारणन्तु ब्रुवीध्वमित्या-दावेकदेशविकृतन्यायेन षीध्वमः सत्त्वेन ढत्ववारणाय । अङ्गात्किं ?। वेविषीध्वम् । अस्य षीध्वमोऽनर्थकत्वेऽपि अर्थवत्प-रिभाषायां अनित्यत्वज्ञापनाय इदम् । तेन 'अनिनसमन्ग्रहणानि'इति सिद्धमिति केचित् । **कस् चेति** । यद्यपि 'कृ'मित्युक्तौ लाघवमस्ति तथापि एकस्यैव लाभार्थं प्रत्याहारग्रहणे क्लेशो;दुर्ज्ञेयता चेति भावः।तदुक्तम् 'अत उत्सार्वधातुके' इति सूत्रे भाष्ये-'अनुप्रयोगे तु भुवाऽस्त्यबाधनं स्मरन्ति कर्तुर्वचनान्मनीषिणः' इति । **पररूपापवाद इति** । पररूपपदमेकदेशोपलक्षणम् । 'आवृजे' इत्यादौ गुणस्यैव प्राप्तेः । अभ्यासविकारे बाध्यबाधकभावाऽभावेन पूर्वोपस्थित-

**धि च** ।८।२।२५। धादौ प्रत्यये परे सलोपः स्यात् । एधिताध्वे । **ह एति** ।७।४।५२। तासस्त्योः सस्य हः स्यादेति परे । एधिताहे । एधितास्वहे । एधितास्महे ॥ एधिष्यते । एधिष्येते । एधिष्यन्ते । एधिष्यसे । एधिष्येथे । एधिष्यध्वे । एधिष्ये । एधिष्यावहे । एधिष्यामहे । **आमेतः** ।३।४।९०। लोट एकारस्य आम् [आदेशः] स्यात् । एधताम् । एधेताम् । एधन्ताम् । **सवाभ्यां वामौ** ।३।४।९१। सवाभ्यां परस्य लोडेतः क्रमाद्व अम् [एतौ] स्तः। एधस्व । एधेथाम् । एधध्वम्। **एत ऐ** ।३।४।९३। लोडुत्तमस्य एत ऐ स्यात् । आमोऽपवादः ।एधै । एधावहै । एधामहै । **आडजादीनाम्** ।६।४।७२। अजादीनामाट् स्याल्लुङादिषु । अटोऽपवादः । 'आटश्च' । ऐधत ।

---

त.]अति । प्रत्ययग्रहणमुपनीय कास्यनेकाजित्युक्तेर्नाम्। औ । अतुः। उः। द्वित्वम् 'अतो गुणे', 'अत आदेः' इह्वि दीर्घः। णल औ वृद्धि''रित्युक्तत्वात् । हलादिःशेषात्प्रागेव परत्वात् 'अत आदे'दिति दीर्घे कृते तु पररूपशङ्कापि तत्र नास्तीति चिन्त्योऽयं ग्रन्थ इति नव्याः। **आडजादीनाम्** । एतच्चाऽजादीनामटा सिद्धमिति वार्तिककृता प्रत्याख्यातम् । ननु अटि

---

बा.]सलोपः । **एधितासाथे इति** । आथाम् टेरेत्वं । तास् । इट् । अथ ध्वमि टेरेत्वे तासि इटि एधितास्–ध्वे इति स्थिते–**धि च** । 'सः स्यार्धधातुके' इत्यतः स इत्यनुवर्तते । तासस्त्योरित्यतो लोप इति । अङ्गाक्षिप्तप्रत्ययो धीत्यनेन विशेष्यते । तदादिविधिः । तदाह–**धातावित्ति** । तासः सलोपे 'एधिताध्वे'इति रूपम् । अथ लुट इडादेशे एत्वे तासि इटि एधितास् ए इति स्थिते–**ह एति** । 'ह' इति प्रथमान्तम् । अकार उच्चारणार्थः । सः स्यार्धधातुक इत्यतः स इति, तासस्त्योर्लोप इत्यतस्तासस्त्योरिति चानुवर्तते । तदाह–**तासस्त्योरिति** । तासः सस्य हकारे 'एधिताहे' इति रूपम् । **एधितास्वहे इति** । लुटो वहिभावः । टेरेत्वं । तास् । इट् । एवम्–एधितास्महे इति । तत्र महिभावो विशेषः। इति लुड्प्रक्रिया । **एधिष्यत इति** । लृटस्तादेशे टेरेत्वम् । 'स्यतासी'इति शबपवादः स्यः। इट् । प्रत्ययावयवत्वात्षत्वम् । **एधिष्येते इति** । आताम् । टेरेत्वं । स्यः । इट् । 'आतो ङित' इत्याकारस्य इय् । लोपो व्योरिति यलोपः। आद्गुणः। षत्वम् । **एधिष्यन्त इति** । झस्य टेरेत्वं। झकारस्य अन्तादेशः । स्यः । इट् । पररूपं । षत्वम् । थासादावपि लटीव सुयोजमिति मत्वा रूपाणि न प्रदर्शितानि । तत्र थासः से । स्यः । इट् । षत्वम् । एधिष्यसे इति रूपम् । एधिष्येते इतिवदाथामि एधिष्येथे इति रूपम् । ध्वम एत्वे स्यः । इट् । षत्वम् । एधिष्यध्वे इति रूपम् । इट एत्वे स्यः । इडामगः । षत्वम् । अतो गुण इति पररूपम् । एधिष्ये इति रूपम् । वहिमह्योष्टेरेत्वम् । स्यः । इट् । अतो दीर्घः । एधिष्यावहे एधिष्यामहे इति रूपे । इति लृड्प्रक्रिया । **आमेतः** । आम्–एत इति च्छेदः । 'लोटो लङ्व'दित्यतो लोट इत्यनुवर्तते । तदाह–**लोट एकारस्येति** । लोडादेशावयवस्य एकारस्येत्यर्थः। **एधतामिति** । लोटस्तादेशे टेरेत्वे आमादेशे शपि रूपम्। **एधेतामिति**। आताम् । टेरेत्वं । शप् । 'सार्वधातुकमपि'दिति ङित्त्वादातो ङित इत्याकारस्य इय् । गुणः। यकारलोपः। 'आमेत' इत्येकारस्य आम् । **एधन्तामिति**। झस्य टेरेत्वे शपि झकारस्य अन्तादेशे एकारस्य आम् । अथ लोटस्थासः सेभावे शपि एध–से इति स्थिते । **सवाभ्यां** । सश्च वश्च सवौ । ताभ्यामिति विग्रहः । अकारावुच्चारणार्थौ । वश्च अम्च वाऽमौ । 'लोटो लङ्व'दित्यास्माल्लोट इति 'आमेत' इत्यस्मादेत इति चानुवर्तते । तदाह–**सकारेति** । 'आमेत' इत्यस्यापवादः। **एधस्वेति** । 'एध–से' इत्यत्र एकारस्य 'व' इति वकाराकारसङ्घात आदेशः। **एधेथामिति** । आथाम् । टेरत्वं । शप्। 'आतो ङित' इत्याकारस्य इय् । गुणः। यलोपः 'आमेत' इत्याम् । **एधध्वमिति** । ध्वमि शप्, टेरेत्वे कृते सवाभ्यामिति वकारात्परत्वादेकारस्य अम् । उत्तमपुरुषैकवचने इटि टेरेत्वे शपि 'आमेत' इत्येकारस्य आमि प्राप्ते–। **एत ऐ** । 'ऐ' इति लुप्तप्रथमाकम् । 'लोटो लङ्व'दित्यस्माल्लोट इति, 'आडुत्तमस्य पिच्चे'त्यस्मादुत्तमस्येति चानुवर्तते । तदाह–**लोडुत्तमस्येति** । **एधै इति** । एध–ए इति स्थिते एकारस्य ऐत्वे, आडुत्तमस्येत्याडागमे, आटश्चेति वृद्धौ, वृद्धिरेचीति वृद्धिः । **एधावहै एधामहै इति** । वहिमह्योष्टेरेत्वे शपि एकारस्य ऐत्वे आटि सवर्णदीर्घः । इति लोड्प्रक्रिया । अथ एधधातोर्लङि लुङ्लङ्लृङ्क्ष्वडुदात्त इत्यडागमे वृद्धिं बाधित्वा परत्वादतो गुण इति पररूपे प्राप्ते–। **आडजादीनां** । **लुङादिष्विति** । 'लुङ्लङ्लृङ्क्ष्वि'त्यनुवृत्तेरिति भावः ।

---

शे.] हलादिःशेषोत्तरं दीर्घ इति भावः । अत्र लिटीति वर्तते, तेन ऋधातोरश्धातोश्च यङ्लुकि नायं दीर्घ इति केचित् । आदिग्रहणं तदन्तविधिनिरासार्थम् । **धि च** । **धादौ प्रत्यय इति** । तेन पयो धावति पयोधावनमित्यादौ न लोपः। अत एव भाष्ये सडीत्युक्तं । सनः सकारमारभ्य महिङो ङकारेण प्रत्याहारः । 'चकाधीत्येवेष्यते'इति भाष्योक्तेरयं सिचो लोप इति सडीत्यस्यैकदेश्युक्तं प्रत्याख्यानं न युक्तम्, तत्र सडोऽन्यस्य धादेः सान्तादसम्भवेन प्रत्यय इत्येवाध्याहृतं मूलकृता । यत्तु पदस्येत्यधिकारेण प्रत्यासत्त्या व्याख्यानेन चाऽखण्डैकपदस्थयोर्निमित्तनिमित्तिनोर्ग्रहणमिति कैयटेनोक्तं, तत्त्वतिक्लिष्टम् । ततो वचनमेव ज्याय इति **परे** । **ह एति** । 'तासस्त्योर्लोप' इत्यतस्तासस्त्योरिति, 'सः सी'त्यतः स इति च वर्तते । **लोट इति** । लोडादेशस्येत्यर्थः ।

ऐधेताम् । ऐधन्त । ऐधथाः । ऐधेथाम् । ऐधध्वम् । ऐधे । ऐधावहि । ऐधामहि । **लिङः सीयुट्** ।३।४।१०२। [ लिङात्मनेपदस्य सीयुडागमः स्यादात्मनेपदे ] । सलोपः । एधेत । एधेयाताम् । **झस्य रन्** ।३।४।१०५। लिङो झस्य रन् स्यात् । एधेरन् । एधेथाः । एधेयाथाम् । एधेध्वम् । **इटोऽत्** ।३।४।१०६। लिङादेशस्येटोऽत्स्यात् । एधेय । एधेवहि । एधेमहि ।

आशीर्लिङि आर्द्धधातुत्वाल्लिङः सलोपो न । सीयुट्सुटोः प्रत्ययावयवत्वात्षत्वम् । एधिषीष्ट ।

---

त.]सति 'वृद्धिरेची'त्यनेन ऐधतेत्यादिसिद्धावपि ऐन्ददित्यादि न सिध्येत्। किं च 'अतो गुणे' इति पररूपप्रवृत्त्या ऐधतेत्याद्यपि न सिध्येत् । यदि तु 'आटश्चे' ति सूत्रम् 'अटश्चे'ति क्रियेत तर्हि अस्वपोऽहसदित्यत्र वृद्धिः स्यात् । 'रुदश्च पञ्चभ्यः', 'अड्गार्ग्यगालवयो'रित्यडागमस्य सत्त्वात्, 'अतो रोरप्लुता'दिति रौरुत्वे सति अच्परत्वाच्चेति चेन्न, 'उपसर्गादति धातौ' इत्यतो धाताविति अपकृष्याऽऽजादौ धाताविति व्याख्यानात् । न च अस्वपोऽस्तीत्यादावोकारस्यान्तवद्भावेनाऽट्त्वात्परत्राजादिधातुसत्त्वाचोक्तदोषस्तदवस्थ इति वाच्यम्, आदित्यनुवर्त्य अकाररूपादटोऽचि परे वृद्धिरिति व्याख्यानात् । एतेन अटश्चेत्युक्तौ 'अट गतौ' इत्यस्माल्लुटि अटनमित्यत्रातिप्रसङ्गः स्यादित्येतदपि निरस्तम् । न चैवमपि आतत् आतीदित्यादि न सिध्यति। 'अटश्चे'त्यस्य ऐन्ददित्यादौ सावकाशतया परत्वादिह 'अतो गुणे' इत्यस्यैव प्रवृत्तेरिति वाच्यं, चकारोऽत्र पुनर्वृद्धिविधानार्थ इत्यभ्युपगमादन्तरङ्गत्वाद्वा 'अटश्चे'त्यस्यैव प्रवृत्तेः । स्यादेतत्-'आडजादीना'मिति सूत्राऽभावे आस्ताम् आसन् इति कथमटा सिध्यति । 'श्नसो'रित्याल्लोपेन 'अटश्च' इति तत्र वृद्ध्यप्रवृत्तेः । मैवम्।अन्तरङ्गत्वात्प्रागेवाऽऽडागमे कृते वृद्धौ च कृतायां पश्चात् श्नसोरल्लोपस्याऽप्रसक्तेः।न च 'वार्णादाङ्गं बलीयः' इति वृद्धेः प्रागल्लोप एव स्यादिति शङ्क्यं, व्याश्रयत्वात्, 'वार्णादाङ्ग'मिति परिभाषाया अनित्यत्वाद्वा । तत्र हि 'श्नसोरल्लोपः' इति तपरकरणमेव लिङ्गं, यदि वृद्धेः प्रागेवाल्लोपः स्यात्तर्हि किं तेन तपरकरणेनेति । यद्यपि वैदिकप्रक्रियायामानट् आव इत्यादौ 'छन्दस्यपि दृश्यते' इत्याडागमस्य वक्ष्यमाणत्वात्तदर्थमाट्सूत्रं कर्तव्यं तथाप्याटं विनैवाड्व्यत्ययेन,आड्पूर्वकत्वेन वा तत्र कथंचिद्याख्येयमिति स्थितस्य गतिमाहुः। **सलोप इति** । 'लिङः सलोपोऽनन्त्यस्ये'त्यनेन। **एधेयातामिति** । सीयुटः

---

बा.]**अटोऽपवाद इति**। अटि सति पररूपं स्यादिति भावः।**'आटश्चे'**त्यनन्तरं 'वृद्धि'रिति शेषः।यद्यपि वृद्धिरेचीति वा वृद्धौ इदं सिध्यति तथापि ऐक्षतेत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तम्। **ऐधतेति** । लङस्तादेशे शपि आडागमे आटश्चेति वृद्धिः । लङादेशानां टिदादेशत्वाऽभावादेत्वं न भवति । 'आडजादीना'मिति सूत्रं भाष्ये प्रत्याख्यातम् ।

**ऐधेतामिति** । आतामि शपि आटि वृद्धिः । 'आतो ङित' इत्याकारस्य इय् । आद्गुणः,यलोपः।**ऐधन्तेति**। झेरन्तादेशः । शप् आट् वृद्धिः। **ऐधथा इति** । थास् शप् आट् वृद्धिः । **ऐधेथामिति** । आथाम् शप् आट् वृद्धिः। इय् । आद्गुणः । यलोपः । **ऐधध्वमिति** । ध्वम् शप् आट् वृद्धिः । **ऐधे इति** । इट् शप् । आद्गुणः । आटो वृद्धिः । **ऐधावहि ऐधामहीति** । वहिमह्योः शप्, आट्, वृद्धिः । इति लङ्प्रक्रिया । **लिङः सीयुट्** । स्पष्टम् । परस्मैपदानां लिङादेशानां यासुडागमविधानादात्मनेपदविषयमिदम् । सीयुटि टकार इत् । उकार उच्चारणार्थः । **सलोप इति** । 'लिङः सलोप इत्यनेने'ति शेषः । **एधेतेति** । लिङस्तादेशः । सीयुट् । सलोपः । आद्गुणः । यलोपः । **एधेयातामिति** । आतामि सीयुट् शप् सलोपः । आद्गुणः । **झस्य रन्** । 'लिङः सीयु'डित्यतो लिङ इत्यनुवर्तते । तदाह-**लिङो झस्येति** । लिङादेशस्य झस्येत्यर्थः । अनेकाल्त्वात्सर्वादेशः । **एधेरन्निति** । झस्य रन् । शप् । सीयुट् । सलोपः। आद्गुणः। यलोपः । **एधेथा इति** । थास् सीयुट् शप् । सीयुटः सस्य लोपः। आद्गुणः। यलोपः। थासःसस्य रुत्वविसर्गौ । **एधेयाथामिति** । आथां । सीयुट् । सलोपः । शप् । आद्गुणः । **एधेध्वमिति** । ध्वम् सीयुट् । शप्। सलोपः । आद्गुणः । यलोपः । **इटोऽत्** । इटः-अत् इति च्छेदः । 'लिङः सीयु'डित्यतो लिङ इत्यनुवर्तते । तदाह-**लिङादेशस्येति** । 'अच घे'रित्यत्रेव आदेशे तकार उच्चारणार्थ एव, नत्वित्संज्ञक इति शब्देन्दुशेखरे दिव औदित्यत्र प्रपञ्चितम् । इत्संज्ञक एवेत्यन्ये । न विभक्ताविति निषेधस्तु न, आदेशत्वात्प्राग्विभक्तित्वाऽभावात् । 'झस्य र'न्नित्यत्र तु लक्ष्यानुरोधेन संयोगान्तलोपमाश्रित्य नकारान्तरप्रश्लेषादुपदेशेऽन्त्यत्वाऽभावान्नकारस्य नेत्संज्ञेत्यलम् । **एधेयेति** । इट् । तस्य अकारादेशः । सीयुट् शप् । सलोपः । आद्गुणः । **एधेवहि । एधेमहीति** । वहिमह्योः सीयुट् । सलोपः । शप् । आद्गुणः । यलोपः । इति विधिलिङ्प्रक्रिया ।

**आर्द्धधातुकत्वादिति** । 'लिङाशिषी'त्यनेनेति भावः । **सलोपो नेति** । सार्वधातुकग्रहणस्य 'लिङः सलोप' इत्यत्रानुवृत्तेरिति भावः । **सीयुट्सुटोरिति** । लक्ष्यभेदात्पुनःप्रवृत्तिरिति भावः । युगपदेवोभयोः षत्व-

---

शे.] **सलोप इति** । 'लिङः सलोप' इत्यनेन । **इटोऽत्** । तकार उच्चारणमात्रफलको-'न विभक्तौ' इत्यस्योच्चारणमात्रफलकेऽप्रवृत्तेः 'अच घेः' इत्यत्रोपपादितत्वात्-इत्सञ्ज्ञया निवर्त्तते । **षत्वमिति** । लक्ष्यभेदात्पुनः प्रवृत्तिरिति

एधिषीयास्ताम्। एधिषीरन्। एधिषीष्ठाः। एधिषीयास्थाम्। एधिषीध्वम्। एधिषीय। एधिषीवहि। एधिषीमहि॥

ऐधिष्ट। ऐधिषाताम्। **आत्मनेपदेष्वनतः** ।७।१।५। अनकारात्परस्यात्मनेपदेषु झस्य अदित्यादेशः स्यात्। ऐधिषत। ऐधिष्ठाः। ऐधिषाथाम्। 'इणः षीध्वंलुङ्लिटां धोऽङ्गात्'। ऐधिढ्वम्। 'इङ्भिन्न एव इणिह गृह्यते'-इति मते तु-ऐधिध्वम्। ढधयोर्वस्य मस्य च द्वित्वविकल्पात्षोडश रूपाणि। ऐधिषि। ऐधिष्वहि। ऐधिष्महि।

ऐधिष्यत। ऐधिष्येताम्। ऐधिष्यन्त। ऐधिष्यथाः। ऐधिष्येथाम्। ऐधिष्यध्वम्। ऐधिष्ये। ऐधिष्यावहि। ऐधिष्यामहि। उदात्तत्वाद्धलादेरिट्। प्रसङ्गादनुदात्ताः सङ्गृह्यन्ते-

---

त.]सलोपे आद्गुणः। **एधिषीध्वमिति**। इणः परत्वेऽपि इणन्तादङ्गात्परत्वाऽभावात् 'इणः षीध्वमि'ति ढत्वं न भवति। **आत्मनेपदे**। 'झोऽन्तः' इत्यतो 'झ' इति 'अदभ्यस्ता'दित्यास्मादत् इति चानुवर्तते। तदाह-**झस्य अत्स्यादिति**। आत्मनेपदेषु किम्? अदन्ति। सुन्वन्ति। अनतः किम्?। एधन्ते। प्लवन्ते। **इङ्भिन्न एवेणिति**। 'विभाषेटः' इति इटो विशिष्यग्रहणाद्गो-

---

बा.]मित्यन्ये। **एधिषीष्टेति**। आशिषि लिङस्तादेशः। आर्द्धधातुकत्वान्न शप्। सीयुट्। तकारस्य सुट्। सीयुटः सकारात्प्रागिडागमः। यलोपः। सीयुटः सुटश्च सकारस्य षत्वं। तकारस्य ष्टुत्वेन टकारः। **एधिषीयास्तामिति**। आताम् सीयुट्। अकारादुपरि तकारात्प्राक्सुट्। सीयुटः प्रागिट्। तत उत्तरस्य सकारस्य षत्वम्। **एधिषीरन्निति**। झस्य रन्। सीयुट्। इडागमः। यकारलोपः। षत्वम्। **एधिषीष्ठा इति**। थास् सीयुट्। थकारस्य सुट्। सीयुटः प्रागिट्। सकारद्वयस्य षत्वम्। थकारस्य ष्टुत्वेन ठकारः। रुत्वविसर्गौ। **एधिषीयास्थामिति**। आथाम्। सीयुट्। अकारादुपरि थकारात्प्राक्सुट्। सीयुटः प्रागिट्। तत उत्तरस्य सकारस्य षत्वम्। **एधिषीध्वमिति**। ध्वम् सीयुट् यलोपः। सीयुटः प्रागिट्। षत्वम्। इणः परत्वेऽपि इणन्तादङ्गात्परत्वं नास्ति, इटः प्रत्ययभक्तत्वात्। ततश्च 'इणः षीध्व'मिति ढत्वं न भवति। **एधिषीयेति**। इटोऽत्। सीयुट्। इट्। षत्वम्। **एधिषीवहि एधिषीमहीति**। वहिमह्योः सीयुट्। इट् षत्वम्। इत्याशीर्लिङ्प्रक्रिया। **ऐधिष्टेति**। लुङस्तादेशः। च्लिः। सिच्। इट्। धातोराट्। वृद्धिः। षत्वं ष्टुत्वम्। **ऐधिषातामिति**। आताम्। च्लिः। सिच्। इट्। आट्। वृद्धिः। षत्वम्। अथ झस्य आदेर्झकारस्य झोऽन्त इत्यन्तादेशे प्राप्ते-**आत्मनेपदेषु**। 'झोऽन्त' इत्यतो झ इति षष्ठ्यन्तमनुवर्तते। 'आत्मनेपदेष्वि'ति षष्ठ्यर्थे सप्तमी। आत्मनेपदावयवस्य झकारस्येति लभ्यते। 'अदभ्यस्ता'दित्यतोऽदित्यनुवर्तते। न अत् अनत्। तस्मादिति विग्रहः। तदाह-**अनकारादित्यादिना**। **ऐधिषतेति**। झावयवझकारस्य अदित्यादेशः। च्लिः। सिच्। इट्। आट्। वृद्धिः। षत्वम्। **ऐधिष्ठा इति**। थास् च्लिः। सिच् इट्। आट्। वृद्धिः। षत्वं। थकारस्य ष्टुत्वेन ठकारः। रुत्वविसर्गौ। **ऐधिषाथामिति**। आथाम्। च्लिः। सिच्। इट्। आट्। वृद्धिः। षत्वम्। अथ ध्वमो धस्य ढत्वं स्मारयति-**इणः षीध्वमिति**। **ऐधिढ्वमिति**। ध्वम्। च्लिः। सिच्। इट् आट् वृद्धिः। धि चेति सस्य लोपः। 'इणः षीध्व'मिति धकारस्य ढत्वम्। इटो लुप्तसिज्भक्ततया सिजन्ताङ्गान्तर्भूतत्वेन इडन्तस्य इण्णन्ताऽङ्गत्वादिति भावः। **इङ्भिन्न एवेति**। उत्तरसूत्रे 'विभाषेट' इत्यत्र इड्ग्रहणात्पूर्वसूत्रे इणः षीध्वमित्यत्र इङ्भिन्न एव इण् गृह्यत इतिं केचिदाहुः। तन्मते तु प्रकृते इटः परत्वाद्धकारस्य ढत्वाऽभावे ऐधिध्वमित्येव रूपमित्यर्थः। इदं तु मतान्तरं भाष्याऽनारूढमिति सूचयितुं 'तु'शब्दः। **ढधयोरिति**। मतभेदमाश्रित्येदम्। ढत्वाऽभावपक्षे धकारस्य अनचि चेति द्वित्वविकल्पाद्धिधमेकधमिति रूपद्वयम्। एवं ढत्वे द्विढम्, एकढ'मिति रूपद्वयम्। रूपचतुष्टयेऽपि 'यणो मयो द्वे वाच्ये' इत्यत्र मय इति पञ्चमीमाश्रित्य वकारस्य द्वित्वविकल्पादेकवकाराणि द्विवकाराणि च प्रागुक्तानि चत्वारि रूपाणि भवन्ति। तथाच अष्टौ रूपाणि संपन्नानि। मकारस्य द्वित्वविकल्पादेतान्यष्टौ रूपाणि एकमकाराणि द्विमकाराणि चेति षोडश(१६) रूपाणि संपन्नानीत्यर्थः। **ऐधिषीति**। लुङ इडादेशः। च्लिः। सिच्। इडागमः। आट्। वृद्धिः। वहिमह्योस्तु च्लेः सिचि इडागमे आटि वृद्धौ ऐधिष्वहि ऐधिष्महीति रूपे। इति लुङ्प्रक्रिया। **ऐधिष्यतेति**। लङस्तादेशः। स्यः। इट्। आट्। वृद्धिः। षत्वम्। **ऐधिष्येतामिति**। आतां स्यः। इट्। आकारस्य इय्। आद्गुणः यलोपः। आट् वृद्धिः। षत्वम्। **ऐधिष्यन्तेति**। झावयवझकारस्यान्तादेशः। स्यः। इट् आट् वृद्धिः। षत्वम्। **ऐधिष्यथा इति**। थास्। स्यः। इट् आट्। वृद्धिः। रुत्वविसर्गौ। **ऐधिष्येथामिति**। आथाम्। स्यः। इट्। आकारस्य इय्। आद्गुणः। यलोपः। आट्। वृद्धिः। षत्वम्। **ऐधिष्यध्वमिति**। ध्वम्। स्यः। इट्। आट्। वृद्धिः। **ऐधिष्य इति**। इडादेशः। स्यः। इडागमः। षत्वम्। आद्गुणः। वहिमह्योस्तु स्यः। इट्। अतो दीर्घः। आट्। वृद्धिः। षत्वम्। ऐधिष्यावहि ऐधिष्यामहि इति रूपे। नन्वेधधातोरनुदात्तेत्करवादेकाच उपदेशेऽनुदात्तादितीण्निषेधः कुतो न

---

शे.] भावः। युगपदेव वोभयोः षत्वम्। **ढधयोरिति**। 'मतभेदेने'ति शेषः। 'ढस्ये'त्येव युक्तम्।

**इति मतेरित्यनेन** तन्मते भाष्यानुग्रहरूपस्य युक्त्यभावरूपस्य चाऽस्वरसस्य बोधनात्।

ऊदृदन्तैर्यौति-रु-क्ष्णु-शीङ्-स्नु-नु-क्षु-श्वि-डीङ्-श्रिभिः ॥
वृङ्-वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥ १ ॥
शक्ल-पच्-मुचि-रिच्-वच्-विच्, सिच्-प्रच्छि-त्यज्-निजि-भजः ॥
भञ्ज्-भुज्-भ्रस्ज्-मस्जि-यज्-युज्-रुज्, रञ्ज्-विजिर्-स्वञ्जि,-सञ्ज्-सृजः ॥२॥
अद्-क्षुद्-खिद्-छिद्-तुदि-नुदः, पद्य-भिद्, विद्यति-विनद् ॥
शद्-सदी, स्विद्यतिः, स्कन्दि-हदी, क्रुध्, क्षुधि-बुध्यती ॥ ३ ॥

त.] बलीवर्दन्यायेन कैश्चिदिड्भिन्न एवेणिह गृह्यते इति भावः। ऊदृदन्तैरिति। ऊदृदन्तैर्विना, यौत्यादिभिर्विना, वृङ्वृञ्भ्यां च विना अन्ये ये एकाचोऽजन्तास्ते निहताः। अनुदात्ता इत्यर्थः। तथा च दाता धाता चेता स्तोतेत्यादिषु इण्न भवति। ऊदन्ता भूल्प्रभृतयः। ऋदन्ताः कॄतॄप्रभृतयः। 'यु मिश्रणादौ'। 'रु शब्दे' 'रुङ् गतिरेषणयोः' इत्युभयोर्ग्रहणम्, निरनुबन्धपरिभाषया, 'लुग्विकरणाऽलुग्विकरणयोः' इति परिभाषया च। नच साहचर्याल्लुग्विकरणस्यैव ग्रहणमिति शक्यम्, तस्याऽनित्यत्वात्। 'क्ष्णु तेजने'। 'शीङ् स्वप्ने' 'ष्णु प्रस्रवणे'। 'णु स्तुतौ'। 'टुक्षु शब्दे'। 'टुओश्वि गतिवृद्ध्योः' 'डीङ् विहायसा गतौ'। श्रिञ् सेवायाम्'। 'वृङ् संभक्तौ'। वृञ् वरणे'। नन्वेतद्भिन्नानामेकाचामेवानुदात्तत्वे ऊर्णुतः ऊर्णुतवानित्यादि न सिध्येदिति चेत्। मैवम्। 'ऊर्णोतेर्णुवद्भावो वाच्यः' इति वक्ष्यमाणवार्तिकेनेष्टसिद्धेः। तेन ऊर्णोनूयते इत्यत्र तु 'धातोरेकाच' इति यङ्। ऊर्णुनावेत्यत्राऽनेकाच्त्वेन प्रवृत्तस्याऽऽमोऽभावश्च सिध्यति। उक्तं च भाष्ये-'वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्। आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात्'॥ इति। 'विभाषा गुणेऽस्त्रियां'-मिति हेताविदं पञ्चमी। हेतुरिह फलम्। एतच्च कैयटे स्पष्टम्। उपग्रहः-प्रतिषेधः। इट्प्रतिषेधार्थमित्यर्थः। एवं च णुवद्भावेनैकाच्त्वात् 'श्रयुकः क्किती'ति निषेधप्रवृत्तेरूर्णुत इत्यादि सिध्यति। 'एकाच उपदेशे' इतीण्निषेधस्तु न प्रवर्तते, णुवद्भावेनैकाच्त्वेऽप्यनुदात्तत्वाऽभावात्, ऊर्णुधातोर्णुधातोश्चोदात्तत्वात्, तथा चोर्णविता और्णावीदित्याद्यपि सिद्धम्। 'वसतिशक्लघस्लृभ्यः' इति प्राचो ग्रन्थस्थं पाठमुपेक्ष्य हलन्तेषु कादिक्रमेणाह-शक्ल इति। कान्त एकः। चान्तेषु पच्मुच्रिच्वच्विच्सिचः षट्। 'डुपचष्पाके'। 'पचि व्यक्तीकरणे'। द्वावपि 'प'चित्यनेन गृह्येते। 'मुच्लृ मोक्षणे'। 'रि'चित्यनेन 'रिचिर् विरेके' 'रिच वियोजनसंपर्चनयोः' इति यौजादिकश्च गृह्येते। 'व'चित्यनेन तु 'वच परिभाषणे' ब्रुवो वचिरपि। वचियौंजादिकोऽपि गृह्यते। 'विचिर् पृथग्भावे'। 'षिच क्षरणे'। छान्तेषु प्रच्छ्येकः। जान्तेषु त्यज्निजिर्भज्भञ्ज्भुज्भ्रस्ज्मस्ज्यजयुज्रुज्रञ्ज्विजिर्स्वञ्ज्सञ्ज्सृजः पञ्चदश। भुजित्यनेन 'भुज पालनाभ्यवहारयोः' 'भुजो कौटिल्ये' इति च गृह्यते। युजित्यनेन 'युजिर् योगे', 'युज समाधौ' इति च गृह्यते। केचित्तु व्याघ्रभूतिश्लोके भाष्ये च युजित्येतत् 'युजिर् योगे' इत्यस्यैकदेशोच्चारणमित्याहुस्तन्मते 'युज् समाधौ' सेट्। सृजित्यनेन तु 'सृज विसर्गे'

बा.] स्यादित्यत आह-उदात्तत्वादिति। एधधातुर्यद्यपि अनुदात्तेत्तथापि अनुदात्तस्याऽतो लोपे सति परिशिष्टो धातुर्नानुदात्तः इति भावः। ननु कतिपये धातवः पाणिनिना अनुदात्ता उच्चरिता इति कथमिदानीन्तनैरवगन्तव्यमित्यत आह-प्रसङ्गादिति। स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः। पाणिनिपठितानामनुदात्तधातूनां तदानीन्तनशिष्यपरम्परया आनुनासिवयवदिदानीं ज्ञानं संभवतीति भावः। ऊदृदन्तैरिति। अजन्तेषु धातुषु ऊदन्तैः ऋदन्तैश्च धातुभिर्विना, यु रु क्ष्णु शीङ् स्नु नु क्षु श्वि डीङ् श्रि-एतैश्च धातुभिर्विना, वृङ् वृञ्-आभ्यां च विना, अन्ये एकाचोऽजन्तधातवो निहिताः = अनुदात्ताः स्मृताः। पाणिनिशिष्यपरम्परया ज्ञाता इत्यर्थः। अथ हलन्तेषु अनुदात्तान्धातून् परिगणयति-शक्ल पच्मुचिति। शक्ल पच् मुच् रिच् वच् विच् सिच् प्रच्छि त्यज् निजिर् भज्-एषां द्वन्द्वः। तत्र कान्तेषु शक्ल इत्येकः। लृकार इत्। भाष्ये तु अनुबन्धरहितः पाठो दृश्यते। चान्तेषु पच् मुच् रिच् वच् विच् सिच् इति षट्। अत्र डुपचष् इत्यस्यैव ग्रहणं, प्रसिद्धत्वात्, न तु पचि व्यक्तीकरणे इत्यस्येत्याहुः। मुच्लृ मोक्षणे इत्यस्यैव ग्रहणं, न तु मुचि कल्कन इति भौवादिकस्य। अविशेषात्सर्वस्येत्यन्ये। छान्तेषु प्रच्छ् एकः। प्रच्छीतीकार उच्चारणार्थः। णिजिरित्यत्र इर इत्संज्ञा वक्ष्यते। भुञ्ज भुजित्यादि सृज इत्यन्तमेकं पदम्। जान्तेषु-त्यज् निज् भज् भञ्ज् भुज् भ्रस्ज् मस्ज् यज् युज् रुज् रञ्ज् विज् स्वञ्ज सञ्ज सृज् इति पञ्चदश। अद् क्षुदित्यादि नुद इत्यन्तमेकं पदम्। तत्र तुदेरिकार उच्चारणार्थः। पद्यभिदित्येकं पदम्। समाहारद्वन्द्वः। पद्येति श्यना निर्देशः। विद्यतिरिति श्यना निर्देशः। विनदिति श्नमा निर्देशः। 'शद्-सदीत्यादि बुध्यतीत्यन्तमेकं पदम्। समाहारद्वन्द्वः। सदि स्कन्दि हदि क्षुधि

शे.] ऊदृदन्तैरिति। दीर्घोकारान्तानामुदात्तत्वादेव 'बभूथाततन्थे'तीडभावनिपातनमारब्धम्।
एकाच इति। तेन 'जागृ' 'दीधी'त्यादीनां व्यावृत्तिः। शक्लिति। भाष्ये त्वनुबन्धरहितः पाठो दृश्यते। पचिति-डुपच्

बन्धिर, युधि-रुधी, राधि-व्यधं-शुधः, साधि-सिध्यती ॥
मन्य-हन्नाप-क्षिप्-छुपि-तप्-तिपस्तृप्यति-दृप्यती ॥ ४ ॥
लिप्-लुप्-वप्-शप्-स्वप्-सृपि-यभ्, रभ्-लभ्-गम्-नम्-यमो, रमिः ॥
क्रुशिर, दंशि-दिशी-दृश्-मृश्-रिश्-रुश्-लिश्-विश्-स्पृशः, कृषिः ॥ ५ ॥
त्विष्-तुष्-द्विष्-दुष्-पुष्य-पिष्-विष्-शिष्-शुष्-श्लिष्यतयो, घसिः ॥
वसतिर्दह्-दिहि-दुहो, नह्-मिह्-रुह्-लिह्, वहिस्तथा ॥ ६ ॥

त.]दिवादिस्तुदादिश्च गृह्यते । दान्तेषु अद्क्षुद्खिद्छिद्तुद्नुद्पद्यभिद्विद्यतिर्विनद्शद्सद्खिद्यस्कन्दहदः पञ्चदश । खिदित्यनेन 'खिद दैन्ये' खिद्यतिः खिन्दतिः खिनत्तिश्च गृह्यते । विद्यतीति । 'विद सत्तायाम्' । विनदिति । 'विद विचारणे' । धान्तेषु क्रुध्क्षुध्बुध्यबन्धयुध्रुध्राध्व्यध्शुध्साध्सिध्यतय एकादश। रुधित्यनेन 'रुधिर् आवरणे' 'अनो रुध कामे' इति दिवादिश्च गृह्यते । नान्तेषु मन्यहनौ द्वौ । 'मन ज्ञाने' दिवादिः । पान्तेषु आप्क्षिप्छुप्तप्तिप्तृप्यदृप्यलिप्लुप्वप्शप्स्वप्सृपस्त्रयोदश । क्षिपित्यनेन 'क्षिप प्रेरणे' क्षिप्यतिः क्षिपतिश्च गृह्यते। 'छुप स्पर्शे'। तपित्यनेन 'तप संतापे', 'तप ऐश्वर्ये' दिवादिः। 'तप दाहे' इत्यपि णिजभावपक्षे गृह्यते । 'तिपृ क्षरणे'। तृप्यतिदृप्यत्योर्वेट्कत्वेऽपि 'अनुदात्तस्य चर्दुपधस्ये'त्यमर्थोऽत्र पाठः। भान्तेषु यभ्रभ्लभस्त्रयः । मान्तेषु गम्नम्यम्रमश्चत्वारः । शान्तेषु क्रुश्दंश्दिश्दृश्मृश्रिश्रुश्लिश्विश्स्पृशो दश । 'रिश् रुश् हिंसायाम्' । 'लि'शित्यनेन 'लिश् अल्पीभावे' दिवादिः, 'लिश गतौ' तुदादिश्च गृह्यते। षान्तेषु कृष्त्विष्तुष्द्विष्दुष्पुष्य्पिष्विष्शिष्शुष्श्लिष्य एकादश । कृषिति भौवादिकतौदादिकौ गृह्येते । विषित्यनेन 'विष्लृ व्याप्तौ' जिषुविषुमिषिति दण्डकस्थोऽपि गृह्यते । शिषित्यनेन तु 'शिष्लृ विशेषणे' 'कष खष विषे'ति दण्डकस्थश्च गृह्यते । विषिति 'विष्लृ व्याप्तौ' इति जौहोत्यादिक एव गृह्यते न तु दण्डकस्थः । शिषित्यनेनापि 'शिष्लृ विशेषणे' इति रौधादिक एव न तु दण्डकस्थ इति बोपदेवादयः । सान्तेषु घस्लृवसती द्वौ । 'घस्लृ अदने'। 'लुङ् सनोर्घस्लृ' इत्यत्तेरादेशस्य तु स्थान्यनुदात्तत्वेनापि सिद्धम्।हान्तेषु दह्दिह्दुह्मिह्नह्रुह्लिह्वहयोऽष्टौ। दुहिरिति भौवादिको न गृह्यते किं तु 'दुह प्रपूरणे' इति आदादिक एवेति प्राञ्चः।इह मनोरमायां सङ्ग्रहश्लोक उक्तः-'कच-च्छजा दधनपा भमशाः षसहाः क्रमात् । कचका णणटाः खण्डो गघञाष्टखजाः स्मृताः' इति।

बा.]इति इका निर्देशः।खिद्यति-बुध्यतीति श्तिपा श्यन्विकरणयोर्निर्देशः। ततश्च दान्तेषु-अद् क्षुद् खिद् छिद् तुद् नुद् पद् ( श्यन्विकरणः), भिद् विद् ( श्यन्विकरणः ), विद् ( श्नम्विकरणः ), शद् सद् खिद् ( श्यन्विकरणः ), स्कन्द् हद् इति पञ्चदश । बन्धिरिति इका निर्देशः। युधि-रुधी इत्येकं पदम् । इका निर्देशः। 'राधिव्यधशुधः'इत्येकं पदम् । राधीति इका निर्देशः । साधिसिध्यती इति द्वन्द्वः । साधीति इका निर्देशः । ततश्च धान्तेषु-क्रुध् क्षुध् ( श्यन्विकरणः ), बन्ध् युध् रुध् राध् व्यध् शुध् साध् सिध् ( श्यन्विकरणः )-इत्येकादश । मन्येत्यादि तिप इत्यन्तमेकं पदम् । मन्येति श्यना निर्देशः । छुपीति इका निर्देशः । 'तृप्यतिदृप्यती'इति द्वन्द्वः । श्यना निर्देशः । लिबित्यादि यम इत्यन्तमेकं पदम् । सृपीति इका निर्देशः । रमिरिति भिन्नं पदम् । इका निर्देशः। तथाच नान्तेषु मन् हन्निति द्वौ । मनिः श्यन्विकरणः । पान्तेषु-आप् क्षिप् छुप् तप् तिप् तृप् दृप् लिप् लुप् वप् शप् स्वप् सृप् इति त्रयोदश। भान्तेषु-यभ् रभ् लभ् इति त्रयः। मान्तेषु-गम् नम् यम् रम् इति चत्वारः । क्रुशिरित्यादि स्पृश इत्यन्तमेकं पदम् । दंशिरिति च इरित् । क्रुशि दिशि दंशीति इका निर्देशः । तथा च शान्तेषु क्रुश् दंश् दृश् दिश् मृश् रिश् रुश् लिश् विश् स्पृश् इत्येते दश । कृषिरिति पृथक्पदम् । इका निर्देशः। त्विषित्यादि श्लिष्यतय इत्यन्तमेकं पदम् । पुष्येति श्यना निर्देशः । श्लिष्यतीति श्यन्विकरणस्य श्तिपा निर्देशः । तथाच षान्तेषु कृष् त्विष् तुष् द्विष् दुष् ( श्यन्विकरणः ), पिष् विष् शिष् शुष् श्लिष् ( श्यन्विकरणः )-इत्येकादश । घसिरिति पृथक्पदम् । इका निर्देशः । वसतिरिति पृथक्पदं। श्तिपा निर्देशः । सान्तेषु घस् वस् इति द्वौ। दह्दिहिदुह इति द्वन्द्वः । दिहीति इका निर्देशः । नह मिह रुह् लिह् इति समाहारद्वन्द्वः । वहिरिति पृथक्पदम् । इका निर्देशः ।

शे.]एव,प्रसिद्धत्वात्।सृजिर्दिवादिस्तुदादिश्च।बुध्यतीति।यद्यपि भाष्ये श्यना निर्देशो नास्ति तथापि माधवादिप्रामाण्यादुक्तः। तृप्यतिदृप्यतीति । अत एव 'शे मुचादीनाम्' इति सूत्रभाष्ये 'तृपितः, दृपितः' इत्युदाहृतम् । लुप्-तुदादिरेव न दिवादिः, व्याख्यानात् । शप्धातोर्भ्वादेर्दिवादेश्च ग्रहणम् । श्लिष्यतीति श्यना निर्देशः 'श्लिष आलिङ्गने' इति सूत्र-भाष्यप्रामाण्यात् । तत्र हि 'श्लिषः' इति विभक्तविहितक्सस्य पुषाद्यङ्बाधकत्वमुक्तम् । 'अनिट' इत्यनुवर्तनाद्दाहार्थस्य सेटो ग्रहणाऽभाव इति कैयटः । मृशोर्भाष्येऽनार्षः पाठः, 'मृषस्तितिक्षाया'मिति सेण्निष्ठाया अकित्त्वविधानात् । अत

**अनुदात्ता हलन्तेषु धातवो ह्यधिकं (१०२) शतम् ॥**
**तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु ॥ ७ ॥**
**तृप्-दृपी, तौ वारयितुं श्यना निर्देश आदृतः ॥**
**किं च-स्विद्यपद्यौ, सिध्यबुध्यौ, मन्यपुष्यश्लिषः श्यना ॥ ८ ॥**
**वसिः शपा, लुका यौतिर्निर्दिष्टोऽन्यनिवृत्तये ॥**
**णिजिर्, विजिर्, शक्ल,-इति सानुबन्धा अमी तथा ॥ ९ ॥**
**विन्दतिश्चान्द्रदौर्गादेरिष्टो भाष्येऽपि दृश्यते ॥**
**व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम् ॥ १० ॥**

त.]तत्र पूर्वार्धोपात्ता ये चतुर्दश वर्णास्तदन्ता धातव उत्तरार्धोपात्तकादिक्रमेण ये वर्णास्तत्संख्याका बोध्या इत्यर्थः। अतएव-कान्त एकः, चान्ताः षट्, छान्त एकः, जान्ताः पञ्चदशेत्यादि व्याख्यातम् । क इत्येकस्य, च इति षण्णां, ण इति पञ्चदशानां संज्ञेत्याद्यभ्युपगमात् । पान्तेषु द्वयोः श्यना । निर्देशस्य फलमाह-**तुदादाविति** । तृप्-दृपी मतभेदेन तुदादौ स्थितौ । चुरादौ तु तृपिः सर्वमतेन स्थितः । दृपिस्त्वेकीयमतेनेति विवेकः । अतएव वक्ष्यति-'तृप तृम्फ तृप्तौ'। द्वावपि द्वितीयान्तावित्यन्ये ।'दृप दृम्फ उत्क्लेशे'। प्रथमः प्रथमान्तः,द्वितीयो-द्वितीयान्तः। प्रथमो द्वितीयान्त इत्येके इति च तुदादौ।चुरादौ तु-'तृप तृप्तौ''तृप दृप संदीपने' इत्येके इति च । **अन्यनिवृत्तये इति** । निवर्तनीयास्तु 'ञिष्विदा स्नेहनमोचनयोः'। पद स्थैर्ये' । षिध गत्याम्' । षिधू शास्त्रे माङ्गल्ये च' । बुधिर् बोधने' इति भौवादिः । 'मनु अवबोधने' तानादिकः। 'पुष पुष्टौ' भौवादिकः क्रैयादिश्च । 'श्लिष दाहे' भौवादिकः । 'वस आच्छादने' आदादिकः । एते अनुदात्तत्वराहित्यात् सेटः । युञ् बन्धने' क्रैयादिकोऽयमनुदात्त इत्यनिट् । श्यना निर्देशेन सङ्ग्राह्यास्तु 'ञिष्विदा गात्रप्रक्षरणे'। 'पद गतौ'।षिधू संराद्धौ'।'बुध अवगमने'। 'मन ज्ञाने' । पुष पुष्टौ'। 'श्लिष आलिङ्गने'। 'वस निवासे' । एतेऽनिटः।'यु मिश्रणामिश्रणयोः' अयं सेट्।**अमी तथेति**।'णिजि शुद्धौ'।'ओविजी भयचलनयोः'।'शक्ल मर्षणे' इत्येतेषां क्रमेण आदादिकतौदादिकदैवादिकानां व्यावृत्तये सानुबन्धा निर्दिष्टा इत्यर्थः।**विन्दतिरिति** । 'विद्लृ लाभे। इष्ट इति।

बा.]तथेति चकारपर्यायः। **हान्तेषु**-दह् दिह् दुह् नह् मिह रुह् लिह् वह् इत्यष्टौ । **ह्यधिकं शतमिति** । भाष्ये मृषेः षान्तेषु पाठस्तु लेखकप्रमादकृत इति भावः । अथ पान्तेषु द्वयोः श्यना निर्देशस्य फलमाह-**तुदादाविति** । यौ तृप्दृपी तुदादौ चुरादौ च मतान्तरीयत्वेन धातुपाठे स्थितौ तौ अनुदात्तेभ्यो वारयितुं श्यना निर्देशोऽभ्युपगत इत्यर्थः । अत एव 'शे मुचादीना'मिति सूत्रभाष्ये तृपितो दृपित इत्युदाहृतं सङ्गच्छत इति भावः । **किं चेति** । अन्यदपि वक्ष्यत इत्यर्थः । **अन्यनिवृत्तय इति** । विकरणान्तरनिवृत्तय इत्यर्थः । तच्चाग्रे तत्तदार्द्धधातुकनिरूपणे स्पष्टीभविष्यति । **अमी तथेति** । उक्तानुबन्धरहितानां व्यावृत्तय इत्यर्थः । एतदपि तत्तदार्द्धधातुकनिरूपणे स्पष्टी-भविष्यति । **विन्दतिरिति** । 'विद्लृ लाभे' इति तौदादिकः । चान्द्रदौर्गादिव्याकरणसम्मतः । **भाष्येऽपि दृश्यत इति** । विन्दतिविनत्तिविद्यतीति तत्र पाठादिति भावः । **एनमिति** । विन्दतिमित्यर्थः । **नेह पेठुरिति** । तथापि भाष्यप्रामाण्यादस्याऽनिङ्कत्वमिति भावः। **'रञ्जिमस्जी'** इत्येकं पदम् । **नुद् क्षुध्** इति पृथक्कृते पदे । **'शुषिपुषी'** इत्येकं पदम् । **शिषिरित्यनन्तरम्** 'इत्येते'इति शेषः । **नवेहेति** । नव धातवो भाष्यानुक्ता अपि इहानुदात्तेषु परि-गणिता इत्यर्थः । कुत इत्यत आह-**व्याघ्रभूत्यादिसम्मतेरिति** । भाष्ये त्वेभ्यो नवभ्योऽन्येषां परिगणनं नवाना-मप्येषामुपलक्षणमिति भावः । 'तेन रक्तं रागात्,' 'तदस्मिन्नन्नं प्रायेण,' 'क्तोऽकृतमितप्रतिपन्नाः,' 'शुष्कधृष्टौ,' क्तेन नञ्विशिष्टेने'त्यादिसौत्रप्रयोगाः,नुन्नः मग्नः पुष्टः मङ्क्त्वा मङ्क्तव्यमित्यादिभाष्यप्रयोगाश्चात्र लिङ्गम् । [**इत्यनिङ्कारिकाः**] ।

शे.]एव मूले मृषिर्नोक्तः। **पुष्येति** श्यना निर्देशो-माधवादिप्रामाण्यात् । **वसतिर्भ्वादिः**,'वसिः प्रसारणी'ति भाष्यात् । **शक्ल इति** चन्द्रदुर्गादिमतेन । वस्तुतो भाष्ये लृदित्पाठाऽभावेन दिवादेरप्यनिट्त्वमेव । **विद्यतिर्विनदिति** विक-रणनिर्देशस्य व्यावर्त्यं व्यावर्त्यान्तरखण्डनव्याजेन दर्शयति-**विन्दतिरिति** । **भाष्येऽपीति** । 'विन्दति-विनत्ति-विद्यती'ति पाठ इति भावः । सम्प्रत्युपलभ्यमाने-विन्दि, विद्यति-इति पाठेऽपि विन्दिग्रहणेन उभयोर्ग्रहणं, विन्त्ते वेत्ति, विन्दतीति प्रयोगस्थविदेरनुकरणादिटः सत्त्वात् । अत एव 'यस्य विभाषा अविदेरिति वक्तव्यम् , इह माभूत् 'विदितः, तत्तर्हि वक्तव्यं ? न वक्तव्यं, यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः । शविकरणस्य विभाषा, लुग्विकरणश्चायम्-'इति 'यस्य विभाषे'ति सूत्रे भाष्ये उक्तम् । तौदादिकस्यापि सेट्त्वे 'अविदेः'इति वार्त्तिके तद्ग्रहणमेव स्यात् । एवञ्च यदुपाधेरि-त्याश्रयणेऽपि तदर्थं वार्त्तिकस्यावश्यकत्वेन तत्प्रत्याख्यानाऽसङ्गतिः। मम तु त्रयाणामप्यनुदात्तत्वेन वार्त्तिके लुग्विकरणस्यैव ग्रहणमिति न दोषः । अत एव 'ज्येष्ठं परित्यज्य दारानग्नींश्च लब्धवा'नित्यर्थे परिवेत्तेति तृजन्तप्रयोगः सङ्गच्छते ।

रञ्जि-मस्जी, अदि-पदी, तुद्, क्षुध्, शुषि-पुषी, शिषिः ॥
भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसंमतेः ॥ ११ ॥

**स्पर्ध सङ्घर्षे** । सङ्घर्षः पराभिभवेच्छा । धात्वर्थेनोपसङ्ग्रहादकर्मकः । स्पर्धते । **शर्पूर्वाः खयः** ।७।४।६१। अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते । 'हलादिः शेषः' इत्यस्यापवादः । पस्पर्धे । स्पर्धिता । स्पर्धिष्यते । स्पर्धताम् । अस्पर्धत । स्पर्धेत । स्पर्धिष्ट । अस्पर्धिष्ट । अस्पर्धिष्यत । ४ **गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च** । गाधते । जगाधे । ५ **बाधृ लोडने** । लोडनं प्रतिघातः । बाधते । ६ **नाथृ** ७ **नाधृ याच्ञोपतापै-**

त.]'अनिड्ग्वेने'ति शेषः। **भाष्यानुक्ता इति** । भाष्यकृताऽनुक्ताः, न तु प्रत्याख्याता इति नास्तीह तद्विरोधः । ततश्च व्याघ्रभूत्यादिग्रन्थानुरोधात्, 'शुष्कधृष्टौ' 'क्तेन नञ्विशिष्टेनाऽन'मित्यादि सौत्रप्रयोगादत्तं प्रतिपत्तुमित्यादिसार्वलौकिकव्यवहाराच्च उपलक्षणतयैव भाष्यं नेयमिति भावः। **अकर्मक इति**। अत्र केचित्—अभिभवेच्छा धात्वर्थः।तथा च स्पर्द्धार्थकस्य सकर्मकता दृश्यते, 'आह्वास्त मेरावमरावतीं या' इति। उदाहरिष्यते च 'स्पर्धायामाङः' इत्यत्र स्वयमेव 'कृष्णश्चाणूरमाह्वयते। स्पर्धत इत्यर्थः' इति । श्रीहर्षोऽपि प्रायुङ्क्त—'तन्नासत्ययुगान्तं वा त्रेता स्पर्द्धितुमर्हति' इति । अतोऽस्य सकर्मकत्वं न्याय्यमित्याहुः। **शर्पूर्वाः**। अतद्गुणसंविज्ञानोऽयं बहुव्रीहिः। तेन शरो न शेषः, किं तु खयामेव । इह स्पर्ध इत्यत्र रेफस्यापि द्वित्वं भवति,द्वितीयस्यैकाचः संबन्धिरेफस्यैव 'नन्द्राः' इति निषेधादिति बोध्यम्।**गाधृ**।ऋकारो 'नाग्लोपिशास्वृ-

बा.]**स्पर्ध सङ्घर्षे इति** । 'वर्तते'इति शेषः। **पराभिभवेति** । परस्याभिभवःपराजयः । तद्विषयकेच्छेत्यर्थः । नन्वत्रेच्छायां पराभिभवस्य कर्मतया स्पर्धधातोः सकर्मकत्वाद्देवदत्तो यज्ञदत्तं स्पर्धयतीत्यादौ 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माऽकर्मकाणा'मित्यकर्मककार्यं कथमित्यत आह—**धात्वर्थेनोपसङ्ग्रहादिति** । 'धात्वर्थबहिर्भूतकर्मकत्वमेव सकर्मकत्व'मिति 'सुप आत्मनः क्य'जिति सूत्रभाष्ये प्रपञ्चितत्वादिति भावः । नचैवं सति पदव्यवस्थायां 'स्पर्धायामाङ' इत्यत्र 'कृष्णश्चाणूरमाह्वयते, स्पर्धत इत्यर्थ' इति मूलग्रन्थविरोध इति वाच्यं, तत्र स्पर्धेरभिभवपूर्वकाह्वाने वृत्तेरित्यलम् ।

**स्पर्धेत इति** । 'कत्थन्ताः षट्त्रिंशदनुदात्तेत'इत्युक्तेरात्मनेपदम् । एधधातुवल्लटि रूपाणीति भावः। धातोरिजादित्वाऽभावादिंजादेश्चेति लिट्याम्न । अत एव नानुप्रयोगोऽपि । किन्तु लिटस्तादेशे 'लिटस्तझयो'रिति तस्यैशि 'लिटि धातो'रिति द्वित्वे 'हलादिः शेषः' इत्यभ्यासे प्रथमहल्व्यतिरिक्तहलां निवृत्तौ सस्पर्धे इति प्राप्ते-। **शर्पूर्वाः । अभ्यासस्येति** । 'अत्र लोपोऽभ्यासस्ये'त्यतस्तदनुवृत्तेरिति भावः । 'शर्पूर्वाः'इत्यत्र शर् पूर्वो येभ्य इत्यतद्गुणसंविज्ञानो बहुव्रीहिः । तेन शर्न क्षिप्यते । **शिष्यन्त इति** । 'हलादिः शेष' इत्यतः शेष इत्यनुवृत्तं कर्मणि घञन्तं बहुवचनान्ततया विपरिणम्यत इति भावः । तथाच प्रकृते अभ्यासे खय् पकारः शिष्यते । 'न न्द्राः संयोगादय' इति रेफस्य द्वित्वनिषेधो न शङ्क्यः, द्वितीयैकाजवयवस्यैव तन्निषेधात् । तदाह—**पस्पर्धे इति** । नच व्रश्चेत्यत्राभ्यासे चकार एव शिष्येतेति वाच्यं, हलादिः शेष इत्यतो हि आदिरित्यप्यनुवर्तते । शर्व्यतिरिक्तवर्णापेक्षया धात्वादिभूता इत्यर्थः। पस्पर्धाते, पस्पर्धिरे, पस्पर्धिषे पस्पर्धाथे, पस्पर्धिध्वे, पस्पर्धे पस्पर्धिवहे पस्पर्धिमहे इति लिटि रूपाणि सुगमानि । **स्पर्धितेति** । लुटि एधधातुवद्रूपाणि सुगमानीति भावः । **स्पर्धिष्यत इति** । लृटि एधधातुवद्रूपाणीति भावः । **स्पर्धतामिति** । लोटि एधिवद्रूपाणीति भावः । **अस्पर्धतेति** । लङि एधिवद्रूपाणीति भावः । हलादित्वादडेव न त्वाडिति विशेषः । **स्पर्धेतेति** । विधिलिङि एधिवद्रूपाणि । **स्पर्धिषीष्टेति** । आशिषि लिङि एधिवद्रूपाणि । **अस्पर्धिष्टेति** । लुङि एधिवद्रूपाणि । अडागमः, न त्वाडिति विशेषः । **अस्पर्धिष्यतेति** । लृङि एधिवद्रूपाणि । अडागमो विशेषः, न त्वाट् । **गाधृ प्रतिष्ठेति** । चतुर्थान्तो धातुः । ऋकारो 'नाग्लोपिशास्वृदिता'मिति निषेधार्थः । अजगाधत् । **प्रतिष्ठा**—आधारे स्थितिः। **ग्रन्थः**—ग्रन्थनं, रचनम् । **जगाधे इति** । लिटि द्वित्वादि । अभ्यासस्य ह्रस्वः । चुत्वम् । **बाधृ इति** । **प्रतिघातः**—पीडनम् । **नाथृनाधृ इति** । द्वितीयचतुर्थान्तौ धातू । **उपतापः**—ज्वरप्रयुक्ता पीडा ।

शे.]यत्तु कैयटेन तत्रत्यं भाष्यमुपादाय 'वेत्तिरत्र विवक्षितो 'विद्लृ लाभे' इत्यस्य तु प्रतिषेधो भवत्येव—विन्न इति।विद्यतिविनत्त्योस्त्वनुदात्तत्वादिड्प्रतिषेधः सिद्ध' इति । तदेतेन परास्तम् । तौदादिकस्यापि सेट्त्वे अविदेरित्यनेन वेत्तेरेव ग्रहणे बीजाऽलाभात् । **नवेति** । 'तेन रक्तं' 'तदस्मिन्नन्नं प्राये' 'क्तोऽकृतमितप्रतिपन्नाः' 'शुष्कधृष्टौ' क्तेन नञ्विशिष्टेन' इति निर्देशात्, तुन्नो मग्नः पुष्टो मङ्क्ता मङ्क्ष्यमित्यादिभाष्यव्यवहाराच्च, 'वसतिक्षुधोरिट्' 'नुदविदोन्दत्रा' 'मस्जिनशोर्झलि' इत्यादिगमकाच्च, 'ततवद्धा तुन्नवद्धे'ति भाष्यप्रयोगाच्चेति भावः । **अकर्मक इति** । 'देवदत्तो यज्ञदत्तं स्पर्द्धते' इत्यत्र स्पर्द्धापूर्वके शब्दने वृत्तिर्बोध्या । **शर्पूर्वाः** । 'हलादिः' इत्यतः शेष इत्यनुवर्त्तते । अत्रादिरित्यनुवर्त्तते । तत्र शर्व्यतिरिक्तवर्णापेक्षया धात्वादिभुता इत्यर्थः । तेन वव्रश्चेत्यत्र चस्य न शेषः । खयः किम् ? सस्नम्भ । शर्पूर्वाः

श्वर्याशीःषु । * **आशिषि नाथ इति वाच्यम्** । अस्याशिष्येवात्मनेपदं स्यात् । नाथते । अन्यत्र-नाथति । नाधते । ८ दध धारणे । दधते । **अत एकहल्मध्येऽनादेशादेर्लिटि** ।६।४।१२०। लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्याऽसंयुक्तहल्मध्यस्थस्याऽकारस्य एकारः स्यादभ्यासलोपश्च किति लिटि । **थलि च सेटि** ।६।४।१२१। प्रागुक्तं स्यात् । आदेशश्चेह वैरूप्यसंपादक एवाश्रीयते, शसिदद्योः प्रतिषेधवचना-

---

त.]दिता'मिति निषेधार्थः । अजगाधत् । आस्पदं स्थापना अवस्थानं वा प्रतिष्ठा । एकत्र स्थापनं संदर्भो वा ग्रन्थः ॥ **नाथृ नाधृ** । उपतापो रोगः । अनुदात्तेत्त्वादेव सिद्धे नियमार्थं वार्तिकमित्याह-**आशिष्येवेति** । **अत एकहल्मध्ये** । एकशब्दोऽत्राऽसहायवचनः । एकयोर्हलोर्मध्ये इत्यर्थः । तद्व्याचष्टे-**असंयुक्तेति** । इष्टानुरोधेन लिटीत्यावर्त्त्य आदेश-विशेषणमेत्वस्य निमित्तं च क्रियत इत्याह-**लिण्निमित्तेति** । **किति लिटीति** च। यद्यपि 'गहमने'ति सूत्रे ङ्कितीति वर्तते, तथापि प्रयोजनाऽभावान्ङितीत्येतन्नानुवर्तत इति भावः । किति किम् ? । ननाद । लिटि किम् ? । पापच्यात् । **चकणतुरिति** । न चैवमपि बभणतुरित्यत्र 'अभ्यासे चर्चे'त्यस्याऽसिद्धत्वादेत्वाभ्यासलोपौ स्त एवेति वाच्यं, फलभज-ग्रहणेन एत्वविधिं प्रति तत्सूत्रस्य सिद्धत्वज्ञापनात् । एवं चादेशश्चेह वैरूप्यसंपादक एव गृह्यते इति व्याख्यानमवश्यं

---

बा.]आशीः-आशासनम् । द्वितीयान्तस्य नाथृधातोर्विशेषमाह-**आशिषि नाथ इति**। अत्र 'नाथ'इति षष्ठी। 'अनु-दात्तङित' इत्यत आत्मनेपदमित्यनुवर्तते । अनुदात्तेत्त्वादेव सिद्धे नियमार्थमिदं वार्तिकं । तदाह-**अस्याशिष्येवेति** ॥ आशासनार्थवृत्तेरेव नाथधातोरात्मनेपदम् । याच्ञाद्यर्थवृत्तेस्तु 'शेषात्कर्तरी'ति परस्मैपदमेवेत्यर्थः । **नाथत इति** ॥ आशास्ते इत्यर्थः । **अन्यत्रेति** । याच्ञाद्यर्थे विद्यमानस्येत्यर्थः । अथ चतुर्थान्तस्य नाधधातोरुदाहरति-**नाधते इति**॥ **दधेति** । चतुर्थान्तोऽयम् । तस्य लटि एधिवद्रूपाणि सिद्धवत्कृत्य लिटस्तादेशे तस्यैशि द्वित्वे दध् दध् ए इति स्थिते । **अत एकहल्मध्ये** । आदेश आदिर्यस्येति बहुव्रीहिः । अङ्गस्येत्यधिकृतमन्यपदार्थः । लिटीति निमित्तसप्तमी अना-देशादेरित्यस्यैकदेशे आदेशेऽन्वेति । लिटि परे निमित्ते य आदेशः स आदिर्यस्य न भवति तथाविधस्याङ्गस्येति लभ्य-ते । अङ्गस्येत्यवयवषष्ठी । तथाच तथाविधाङ्गावयवस्याऽत इति लभ्यते । एकशब्दोऽसहायवाची । 'एके मुख्यान्यकेवलाः' इत्यमरः । एकौ असंयुक्तौ हलौ एकहलौ, तयोर्मध्यः, एकहल्मध्यः, तत्रेति विग्रहः । 'अत'इत्यस्यैव विशेषणमिदम् । 'घ्वसोरेद्धा'वित्यत एदिति, अभ्यासलोप इति चानुवर्तते । 'गमहने'त्यतः कितीत्यनुवर्तते, नतु ङितीति, लिडादेशानां ङित्वाऽसंभवात् । लिटीत्येत्वविधौ परनिमित्तं च । आवृत्त्या उभयार्थलाभः । तदाह-**लिण्निमित्तेत्यादिना** । **थलि च**। **प्रागुक्तमिति**। एकहल्मध्य इति यत्प्रागुक्तम्-एत्वादि, तत्सेटि थलि च स्यादित्यर्थः। थलः कित्वाऽभावात्पूर्वसूत्रे-णाऽप्राप्तौ वचनम्। ननु देभे पेततुरित्यादौ 'अभ्यासे चर्चे'ति जशां चरां च जशि चरि च लिण्निमित्तादेशादित्वात्कथमेत्वा-भ्यासलोपावित्यत आह-**आदेशश्चेहेति**। इह='अत एकहल्मध्ये' इति सूत्रे,आदेशशब्देन स्थान्यपेक्षया विरूप एवादेशो विवक्षितः । तथाच तथाविधादेशादेरेव एत्त्वाभ्यासलोपौ न भवतः, स्थानिसरूपादेशास्तु न पर्युदास इत्यर्थः । **शसि-दद्योरिति** । 'न शसददवादिगुणाना'मिति शसिदद्योरेत्वाभ्यासलोपयोः प्रतिषेध उच्यते । यदीह यथाकथंचिदादेशादेः पर्युदासः स्यात्तर्हि शसिदद्योरभ्यासे शकारदकारयोश्चर्त्वजशोः शकारदकारादेशे सति आदेशादित्वादेव एत्वाभ्यासलोपयो-रभावसिद्धौ 'न शसददवे'ति तत्प्रतिषेधोऽनर्थकः स्यात् । अतो वैरूप्यसंपादकादेशादेरेव पर्युदासो विज्ञायत इत्यर्थः ।

---

शे.]किम् ?। 'सपूर्वा' इत्युक्तौ उखादिष्वपि खयः शेषापत्तेः।**आशिष्येवेति** । आशीःप्रतिपादकनाथ एवेति वाच्योऽर्थः। अर्थान्तरे 'शेषात्' इति परस्मैपदमेव । **अत एक** । एकशब्दोऽसहायवाची, द्विवचनान्तेन समासः, द्वयोरेव मध्य-सम्भवादित्याह-**असंयुक्तेत्यादि** । 'लिटी'त्यादेशविशेषणम् । एकदेशान्वयेऽपि सौत्रत्वाद्वृत्तिस्तदाह-**लिण्निमि-त्तेति** । तन्निमित्तादेशादिभिन्नमित्यर्थः । निमित्तञ्च प्रत्यासत्त्या उपस्थितो लिडेवेत्याशयेनाह-**किति लिटीति** ॥ 'गमहने'त्यादितो यद्यपि ङ्कितीत्यनुवृत्तं, तथापि लिटो ङित्वाऽसम्भवात्कितीत्युक्तम् । **अभ्यासलोप इति** । विशिष्ट-विधिरत्र । प्राप्ताऽप्राप्तविवेकेन च लोपमात्रे विधेयता पर्यवस्यति । यद्वा समासेऽप्युद्देश्यविधेयतयाऽन्वयोऽस्ति सति तात्पर्ये क्वचित् । लिटीति किम् ?। पापच्यते । अभ्यासविकारे बाध्यबाधकभावाऽभावेन दीर्घात्पूर्वं, कृते वाऽभ्यासदीर्घे, एत्वाभ्यासलोपौ प्राप्नुतः । किं च परत्वादेत्वाभ्यासलोपस्य दीर्घत्वेन बाधः, 'सकृद्गते'न्यायाच्च न पुनस्तौ-इति भाष्ये उक्तम् । शब्दान्तरप्राप्त्या च लोपो न नित्यः।'अभ्यासविकारेषु न बाध्यबाधकभाव' इति तु ज्ञापकसिद्धस्याऽसार्वत्रिकत्वा-न्नात्राश्रीयत इति तदाशयः । एतेन 'यत्रान्यतरस्मिन्कृते सर्वेषां प्रवृत्तिस्तद्विषयः स न्याय' इति कैयटोक्तमपास्तम् । दीर्घे कृते इत्वस्याऽप्राप्त्या 'अचीकरत्' इति 'गुणो यङ्लुकोः'इति सूत्रोक्ततदुदाहरणपरभाष्यविरोधापत्तेः । **थलि च से** । सेटीत्येव सामर्थ्यादेवाऽकिञ्चिद्विषयत्वे लब्धे थल्ग्रहणं स्पष्टार्थम् । **तेपिवति** । 'देभे' इत्यादिषु दकारादिषु सत्स्वपीत्यर्थः। **एकेत्यादि किमिति** । 'आटतु'रिट्यादौ 'हल्मध्ये' इत्येतावताऽपि वारणसम्भवादिति प्रश्नः । नच 'बभणतु'रित्यत्र

ज्ञापकात् । तेन प्रकृतिजश्चरां तेषु सत्स्वपि एत्वाभ्यासलोपौ स्त एव । देधे । देधाते । देधिरे । अतः किम् ? । दिदिवतुः । तपरः किम् ? । ररासे । एकेत्यादि किम् ? । तत्सरतुः । अनादेशादेः किं ? । चकणतुः । लिटा आदेश-विशेषणादिह स्यादेव । नेमिथ । सेहे । ९ स्कुदि आप्रवणे । आप्रवणमुत्प्लवनमुद्धरणं च । इदितो नुम् धातोः ।७।१।५८। स्कुन्दते । चुस्कुन्दे । १० श्विदि श्वैत्ये । अकर्मकः । श्विन्दिते । शिश्विन्दे । ११ वदि अभिवादनस्तुत्योः । वन्दते । ववन्दे । १२ भदि कल्याणे सुखे च । भन्दते । बभन्दे । १३ मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु । मन्दते । ममन्दे । १४ स्पदि किंचिच्चलने । स्पन्दते । पस्पन्दे । १५ क्लिदि परिदेवने । शोक इत्यर्थः । सकर्मकः । क्लिन्दते चैत्रम् । चिक्लिन्दे । १६ मुद हर्षे । मोदते । मुमुदे । १७ दद दाने । ददते । **न शसददवादिगुणानाम्** ।६।४।१२६। शसेर्ददेर्वकारादीनां गुणशब्देन भावितस्य च योऽकारस्तस्य एत्वा-

---

त.] कर्तव्यमेवेति दिक् । **मदि स्तुति** । मोदः—संतोषः । मदो—गर्वः । स्वप्नः—आलस्यम् । **न शसदद** । 'शसु हिंसायां' दन्त्यान्तः । सूत्रेऽवयवावयविभावः षष्ठ्यर्थः । तथा च शसददवादीनां योऽकार इत्यन्वयसंभवेऽपि अकारस्य गुणरूपत्वाद्भेदनिबन्धना षष्ठी न संभवतीत्याशङ्क्य तन्निर्वाहार्थं व्याचष्टे—**गुणशब्देन भावितस्येति** । भावितत्वं च

---

बा.] **तेनेति** । स्थानित्रिसरूपादेशादेः पर्युदासाऽभावादित्यनेनेत्यर्थः । **सत्स्वपीति** । देधे पेततुरित्यादौ दकाराद्यादेशेषु सत्स्वपीत्यर्थः । **देधे इति** । दध् दध् ए इति स्थिते दकारादकारस्य एत्वेऽभ्यासलोपे च रूपम् । 'असंयोगाल्लिट्कि'-दिति कित्वमिह बोध्यम् । **देधिरे इति** । देधिषे देधाथे देधिध्वे । देधे देधिवहे देधिमहे इति रूपाणि संभवन्तीति भावः । **दिदिवतुरिति** । दिव्धातोरतुसि द्वित्वे हलोर्मध्येऽतोऽभावादेत्त्वाभ्यासलोपौ नेति भावः । **तपरः किमिति** । 'अत' इति तपरकरणं किमर्थमित्यर्थः । **ररासे इति** । 'रासृ शब्दे'भ्वादिरात्मनेपदी । अत्र हल्मध्यस्थाऽवर्णस्य ह्रस्वत्वाऽभावादेत्वाभ्यासलोपौ नेति भावः । **एकेत्यादि किमिति** । एकहल्मध्यस्थस्येति किमर्थमित्यर्थः । **तत्सरतुरिति** । 'त्सर च्छद्मगतौ' । लिटोऽतुसि द्वित्वे अभ्यासाऽकारस्य नाऽसंयुक्तहल्मध्यस्थत्वमिति भावः । **चकणतुरिति** । 'कण शब्दे' लिटोऽतुसि द्वित्वे कुहोश्चुरिति ककारस्य चुत्वेन चकारः । तथाच वैरूप्यसंपादकादेशादित्वादेत्वाभ्यासलोपौ नेति भावः । अथ 'लिण्निमित्तादेशादिक'मित्यत्र लिण्निमित्तेत्यस्य प्रयोजनमाह—**लिटेति** । **नेमिथेति** । 'णमु प्रह्वत्वे शब्दे च' । 'णो नः' इति नत्वम् । थलि इटि द्वित्वे नत्वसंपन्ननकारादेशादित्वेऽपि नत्वस्य लिण्निमित्तकत्वाऽभावाल्लिण्निमित्तकादेशादित्वाऽभावादेत्वाभ्यासलोपौ निर्बाधाविति भावः । **सेहे इति** । 'षह मर्षणे' । 'धात्वादेः षः सः' इति सत्वे लिटि द्वित्वे सत्वसंपन्नसकारादेशादित्वेऽपि सत्वस्य लिण्निमित्तकत्वाऽभावाल्लिण्निमित्तकादेशादित्वविरहादेत्वाभ्यासलोपा निर्बाधाविति भावः । दधिता । दधिष्यते । दधताम् । अदधत । दधेत । दधिषीष्ट । अदधिष्ट । अदधिष्यत । **स्कुदीति** । उत्प्लवनमुत्प्लुत्य गमनम् । **इदितः** । इत्—ह्रस्व इकारः, इत्—इत्संज्ञको यस्य स इदित्, तस्येति विग्रहः । इत्संज्ञकेदन्तधातोरित्यर्थः । तेन चक्षिङादौ न दोषः । नुमि मकार इत् । उकार उच्चारणार्थः । मित्त्वादन्त्यादचः परः । **स्कुन्दत इति** । 'नश्चापदान्तस्ये'त्यनुस्वारः परसवर्णः । **चुस्कुन्दे इति** । लिटि द्वित्वे 'शर्पूर्वाः खयः' इत्यभ्यासे ककारः शिष्यते । 'कुहोश्चु'रिति तस्य कुत्वेन चकारः । **श्विदीति** । **श्वैत्यं**—श्वैत्यकरणम् । **अकर्मक इति** । श्वैत्यस्य धात्वर्थेनोपसङ्ग्रहादिति भावः । ततश्च 'श्विन्दयति देवदत्तं यज्ञदत्त' इत्यादौ 'गतिबुद्धिप्रत्यवसाने'त्यादिनाऽकर्मककार्यं द्वितीया भवति । श्वेतीभवनं वा श्वैत्यम् । **श्विन्दत इति** । श्वेतीभवतीत्यर्थः । इदित्वान्नुम् । अनुस्वारपरसवर्णौ । **शिश्विन्दे इति** । नुमि कृते गुरुमत्त्वेऽपि इजादित्वाऽभावादाम् नेति भावः । **वदीति** । **अभिवदनम्**—आशीर्वादः, तत्कारणभूतो व्यापारः—प्रणामादिरभिवादनम् । **वन्दत इति** । इदित्त्वान्नुम् । **भदीति** । **कल्याणं**—शुभक्रिया । **सुखं**—सुखीभावः । **भन्दत इति** । इदित्त्वान्नुम् । **बभन्दे इति** । अभ्यासे भकारस्य जश्भावेन बकारः । **मदीति** । **मोदः**—सन्तोषः । **मदः**—गर्वः । **मन्दत इति** । इदित्त्वान्नुम् । **ममन्दे इति** । नुमि सति संयुक्तहल्मध्यस्थत्वादेत्त्वाभ्यासलोपौ नेति भावः । **स्पदीति** । अकर्मकः । **स्पन्दत इति** । इदित्त्वान्नुम् । **पस्पन्दे इति** । 'शर्पूर्वाः खयः' इत्यभ्यासे पकारः शिष्यते । **क्लिदीति** । परिदेवनशब्दं व्याचष्टे—**शोक इति** । स्मृत्वा क्लेशः—शोकः ।

---

शे.] 'अभ्यासे चर्चे'त्यस्याऽसिद्धत्वादेत्वादि स्यादिति वाच्यम् । फलिभजिग्रहणेनैत्वाभ्यासलोपयोरभ्यासादेशस्याऽसिद्धत्वाऽभावज्ञापनात् । 'अनादेशादे'रित्यादिग्रहणन्तु हलादिःशेषमादाय सूत्रस्याऽसम्भववारणाय स्पष्टार्थम् । **उत्प्लवनम्**= उत्प्लुत्य गमनम् । **इदितो** । 'इदित' इति कर्मधारयेण धातोर्विशेषणम् । तेनेदिदन्तस्य धातोर्नुम्विधानाच्चक्षिङादौ न दोषः । 'धातो'रिति धातूपदेशावस्थायां नुमर्थम् । तेन हुण्डेत्यादौ 'गुरोश्च हलः' इत्यप्रत्ययसिद्धिः । अनुवर्तमानमङ्गस्येत्यङ्गत्वयोग्यस्येत्यर्थकं बोध्यम् । तासौ तु न दोषः, तास एव वक्तुं शक्यत्वात् । सिच्यपि न दोषः । सच एव वक्तुं शक्यत्वादिति स्पष्टमाकरे । **श्विन्दते इति** । श्वेतो भवतीत्यर्थः । **अभिवादनम्**—नतिः, तत्पूर्वकमाशिषो वाचनञ्च ।

भ्यासलोपौ न । दददे । दददाते । दददिरे । १८ ष्वद १९ स्वर्द आस्वादने । अयमनुभवे सकर्मको, रुचावकर्मकः । **धात्वादेः षः सः** ।६।१।६४। धातोरादेः षस्य सः स्यात् । 'सात्पदाद्यो'रिति षत्वनिषेधः । अनुस्वदते । सस्वदे । स्वर्दते । सस्वर्दे । २० उर्द माने क्रीडायां च । **उपधायां च** ।८।२।७८। धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात् । ऊर्दते । ऊर्दांचक्रे । २१ कुर्द २२ खुर्द २३ गुर्द

---

त.]साक्षात्परम्परासाधारणम् । तथा च शशरतुः पपरतुरित्यादौ गुणशब्देन क्रियमाणो योऽर् तदवयवोऽकारः । लुलविथेत्यादौ तु गुणशब्देन क्रियमाणो य ओकारस्तत्स्थानिकस्याऽवादेशस्यावयवोऽकार इत्यर्थान्नास्त्यत्रानुपपत्तिः। **दददे इति**। शशसतुः। शशसुः। ववमतुः । ववमुरित्यादावपि निषेधो बोध्यः । **ष्वद स्वर्द । अयमिति** । प्रत्येकाभिप्रायेणोक्तमित्याहुः । **सकर्मक इति** । स्वदस्व हव्यानि । अनुभवेत्यर्थः । **अकर्मक इति** । 'अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा'-इति श्रीहर्षः । न स्वदते । न रोचत इत्यर्थः । **धात्वादेः** । धातुग्रहणं किम् ?। षट् षड् । आदेः किम् ? । लषति । **उपधायां च** । 'सिपि धातो'रित्यतो धातोरित्यनुवर्तते, 'र्वोरुपधायाः' इत्यतो र्वोरिक इति । 'हलि चे'त्यतो हलीति च । तदाह-**धातोरित्यादि** । धातोः किम् ? । 'ऊर्ध्वतः' । कुरुः कुर्वौ कुर्वः इत्यत्रेको दीर्घो माभूत्।न चात्र रेफस्य प्रातिपदिकोपधात्वेऽपि पदोपधात्वाऽभावादेव दीर्घो न भवेदिति धातोरित्यनुवर्तन-

---

बा.]तदाह-**सकर्मक इति। क्लिन्दते चैत्रमिति**। अतीतं चैत्रं स्मृत्वा क्लिश्नातीत्यर्थः। इदित्वान्नुम्। **चिक्लिन्दइति**। अभ्यासे ककारस्य चुत्वेन चकार इति भावः । **मुदेति** । हर्षः-तुष्टिः । **मोदत इति** । शपि लघूपधगुणः । **मुमुद इति** । 'असंयोगाल्लिट्कि'दिति कित्वान्न गुणः । **ददेति** । न ममेति त्यागो दानं, न तु द्रव्यत्यागः । तथा सति धात्वर्थोपसङ्ग्रहादकर्मकत्वापत्तेः । **न शसदद** । शस दद वादि गुण-एषां द्वन्द्वः । अवयवषष्ठी । गुणशब्देन विहित एव गुणोऽत्र गुणशब्देन विवक्षितः, अन्यथा शसिददिग्रहणवैयर्थ्यात् । 'अत एकहल्मध्ये' इत्यस्मादत इति, 'घ्वसोरेद्धौ' इत्यत एदिति, 'अभ्यासलोप' इति चानुवर्तते । तदाह-**शसेरित्यादिना** । गुणशब्देनेति किम् ? । पेचे । अत्र पचेरकारस्य गुणत्वेऽपि गुणशब्देन विहितत्वाऽभावान्नायं निषेधः। पॄधातोः पपरतुरिति तु गुणस्योदाहरणम्, गुणशब्देन विहितो योऽर् तदवयवत्वादकारस्येति बोध्यम् । **ददद इति** । ददेर्लिटस्तादेशस्य एशि द्वित्वे 'अत एकहल्मध्ये' इति प्राप्तावेत्त्वाभ्यासलोपौ न भवतः । **ष्वद स्वर्दति** । आस्वादनम्-अनुभवः । प्रीतिविषयीभावात्मिका रुचिर्वा । तदाह-**अयमिति** । प्रत्येकाभिप्रायमेकवचनम् । **धात्वादेः**। 'ष'इति षष्ठ्यन्तं । तदाह-**धातोरादेः षस्य सः स्यादिति**। षकारस्य सः स्यादित्यर्थः। धातुग्रहणं किम् ?। षट् । अत्र धात्वादित्वाऽभावान्न सकारः । आदिग्रहणं किम् ?। लषति । न चैवमपि षकारीयतीत्यादौ सुब्धात्वादेरपि षस्य सकारः स्यादिति वाच्यम्, 'आदेच उपदेशेऽशिती'त्यत उपदेश इत्यनुवृत्तेः। एवं च षडित्यादावप्युपदेशग्रहणानुवृत्त्यैव व्यावृत्तिसिद्धेर्धातुग्रहणं भाष्ये प्रत्याख्यातम् । ननु धातुपाठे स्वद स्वर्देत्येवं सकार एव उपदिश्यताम् । एवं च 'धात्वादेः षः सः' इत्यपि मास्त्विति चेन्मैवं, ण्यन्ताल्लुङि असिष्वददित्यत्र षकारश्रवणार्थकत्वात्।धातुपाठे सकारस्यैवोपदेशे तु असिष्वददित्यत्र सकारस्य आदेशसकारत्वाऽभावेन षत्वाऽसंभवात् । नन्वेवं सति अनुस्वदत इत्यत्रादेशसकारत्वात्षत्वापत्तिरित्यत आह-**सात्पदाद्योरिति । सस्वद इति** । लिटि द्वित्वे संयुक्तहल्मध्यस्थत्वादेत्वाभ्यासलोपौ नेति भावः । **उर्देति** । चकारादास्वादनेऽपीति केचित् । **उपधायां च** । सिपि धातोरिति, 'र्वोरुपाधाया' इत्यतो र्वोरिक इति, 'हलि चे'त्यतो हलीति चानुवर्तते । 'उपधयो'रित्यर्थे उपधायामित्यार्षम् । तदाह-**धातोरित्यादि । ऊर्दत इति** । अत्र धातोः रेफवान्तत्वाऽभावात् 'र्वोरुपधायाः' इत्यस्य 'हलि चे'त्यस्य चाऽप्राप्तौ 'उपधायां चे'त्यारम्भः । धातोरित्यभावे पदाधिकारस्थत्वात्पदस्य उपधाभूतयोरित्यर्थः स्यात् । ततश्च क्विबन्ते ऊर्दित्यत्रैव स्यात्, ऊर्दत इत्यादौ न स्यात् । रेफवकारयोः किम् ? । पुष्यति । हल्परयोः किम् ? । चिरिणोति । इकः किं ? । नर्दति । **ऊर्दांचक्र इति** । इजादित्वादाम् । 'कृञ्चानुप्रयुज्यते' इत्यनुप्रयोगः । **कुर्देति** । गुर्देत्यपि पृथग्धातुः । 'क्रीडायामेवे'त्यर्थनिर्देशः । एवकारस्तु इतोऽन्यत्र धात्वर्थनिर्देशस्य उपलक्षणत्वं ज्ञापयति ।

---

शे.]स्वप्नः-आलस्यं, निद्रागतावस्थाविशेषश्च । **न शस** । गुणशब्दोऽत्र नादेशमात्रपरः,शसिददिग्रहणवैयर्थ्यापत्तेः । व्यपदेशिवद्भावेन गुणावयवत्वसम्भवात् । अतो, व्याख्यानाच्च लक्षणया गुणशब्देन भावितपरः स इति बोध्यम् ।

**अयमित्यादि। आस्वादनम्**-अनुभवो, रुचिश्च। **धात्वादेः**। अत्र सुब्धातुव्यावृत्तये उपदेश इत्यनुवृत्तेरावश्यकतया षडित्यादेरपि तेनैव व्यावृत्तौ धातुग्रहणं स्पष्टार्थम् । 'आदे'रिति लषतिव्यावृत्तये । षोपदेशफलन्त्वसिष्वददिति । **उर्द माने । मानं** = सुखम् । चादास्वादने । **उपधायाश्च** । 'सिपि धातो'रित्यतो धातोरिति, 'र्वोरुपधायाः' इत्यतो र्वोरिक इति, 'हलि चे'त्यतो हलीति चानुवर्त्तते । धातोरित्यस्याऽभावे पदाधिकारस्य सत्त्वेन पदोपधाभूतयोरित्यर्थे 'ऊर्दतः' इत्यसिद्धिः । सूत्रन्तु क्विबन्ते 'ऊर्द्' इत्यादौ चरितार्थम् । **कुर्द खुर्द । गुर्देति** पृथग्धातुः ।

**२४ गुद क्रीडायामेव । कूर्दते । चुकूर्दे । खूर्दते । गूर्दते । गोदते । जुगुदे । २५ षूद क्षरणे । सूदते । सुषूदे ।**

**सेक्सृप्सृस्तृसृजस्तृस्त्याऽन्ये दन्त्याजन्तसादयः । एकाचः षोपदेशाः ष्वष्क्-**

---

त.]मिहानावश्यकमिति वाच्यं, पदस्येत्यनुवृत्तौ तु कूर्दते गूर्दते इत्याद्यसिद्धिप्रसङ्गात् । वस्तुतस्तु पूर्वत्रासिद्धे न स्थानिवदिति स्वीकारात् 'अचः परस्मि'न्निति स्थानिवत्त्वस्य निषेधाभ्युपगमेऽपि कार्यकालपक्षे 'असिद्धं बहिरङ्ग'मिति परिभाषायाः प्रवृत्तेर्बहिरङ्गयणोऽसिद्धत्वात्कुर्वौ कुर्व इत्यत्र 'उपधायां चे'ति दीर्घो न भवेदिति धातुग्रहणानुवर्तनस्य नात्यन्तावश्यकता, पदस्येत्यननुवृत्त्या कूर्दते इत्यादौ दीर्घः सिध्यत्येवेत्याहुः । रेफवकारयोः किम् ? । 'पुष्प विकसने' पुष्प्यति। हल्परयोः किम्?।चिरणोति।जिरिणोति।इकः किम् ?। अर्वते। नर्दति । ननु 'हलि चे'त्यत्र रेफवकारयोर्हल्परयोरिको दीर्घः स्यादिति व्याख्यायां कूर्दते गूर्दते इत्यादि सिध्यत्येवेति सूत्रमिदं व्यर्थमिति चेत् । अत्राहुः—'हलि चे'त्यत्र धातुग्रहणमनुवर्तनीयमेव । अन्यथा दिवमिच्छति दिव्यतीत्यादावतिप्रसङ्गः स्यात् । तथा च 'उपधायां चे'ति सूत्राऽभावे उपधाभूतयोः र्वोः परतो दीर्घो न स्यात् किं तु रेफवान्तयोरेव धात्वोः 'हलि चे'ति सूत्रेण स्यादित्येतत्सूत्रमावश्यकमेवेति । **सूदते इति ।** स्रवतीत्यर्थः । ननु स्वर्दतिवत्स्वद सूदेति दन्त्यादय एव धातवः पठ्यन्ताम् , षोपदेशे न पठित्वा सत्वविधौ गौरवात् । मैवम् । तथाहि सति ण्यन्ताच्चङि असिष्वदत् ,असूषुददित्यादौ, लिटि सुषूदे सिषेधेत्यादौ च 'आदेशप्रत्यययोः' इति षत्वं न स्यात् । इणः परस्य सकारमात्रस्य षत्वविधौ तु सुपिसौ सुपिस इत्यादावपि स्यादिति धातुपाठे पाणिनिना तालव्यदन्त्यादिपाठवत्षोपदेशा अपि व्यवस्थयैव पठिताः, स च पाठ इदानीं परिभ्रष्टः । साधादिषु सादिपाठस्यैव दृश्यमानत्वात् । अतो लक्षणमुखेन तान्व्यवस्थापयति—**सेगित्यादि ।** दन्तश्च अच् दन्त्याचौ, तौ अन्तौ अव्यवहितपरौ यस्य स दन्त्याजन्तः। दन्त्याजन्तश्चासौ सश्च दन्त्याजन्तसः, स आदिर्येषां धातूनां ते दन्त्यान्तसादयोऽजन्तसादयश्चैकाचः षोपदेशा बोध्याः । तथा च साधादौ सांप्रतं पठ्यमानः सकार उपदेशे न स्थित इत्यनुमेयमिति भावः । दन्त्येत्यादि किम् ? । चुस्कुन्दे । एकाचः किम् ? । सोसूच्यते । सोसूत्र्यते । सूचिसूत्री चुरादवदन्तौ । उक्तलक्षणस्यातिव्याप्तिं वारयितुमाह—**सेगिति।** 'सेकृ गतौ'। 'सृप्लृ गतौ'। 'सृ गतौ' 'स्तृञ् आच्छादने'। 'सृज विसर्गे' । 'स्तॄञ् आच्छादने' । 'स्त्यै शब्दसङ्घातयोः' । एभ्योऽन्ये । पूर्वेण केषांचिदसङ्ग्रहादाह—**ष्वष्केति ।** 'ष्वष्क

---

बा.]**कूर्दत इति।** 'उपधायां चे'ति दीर्घः। **चुकूर्द इति।** 'कुहोश्चु'रिति चुत्वम् । **खूर्दत इति ।** 'उपधायां चे'ति दीर्घः । एवं गूर्दते इति । **गोदत इति ।** शपि लघूपधगुणः । **जुगुद इति ।** 'असंयोगा'दिति कित्वान्न गुणः । **षूदेति । क्षरणं**—प्रस्रवणम् । **सूदत इति ।** प्रस्रवतीत्यर्थः । 'धात्वादे'रिति षस्य सः । अलघूपधत्वान्न गुणः । **सुषूद इति ।** 'धात्वादे'रिति षस्य सत्वे लिटि द्वित्वादौ इणः परस्यादेशसकारत्वात्षत्वम् । यदि धातुपाठे सकारस्यैव पाठस्तर्हि इहादेशसकारत्वाऽभावात् षत्वं न स्यात् । षोपदेशे तु षस्य सत्वे सति आदेशसकारत्वात्षत्वं सूपपादमिति भावः । ननु धातुपाठे के धातवः षादयः पठिताः, के वा सादयः, पाणिनिकृतषोपदेशपाठस्य इदानीं परिभ्रष्टत्वादित्याशङ्क्य पाणिनीयपरम्परासिद्धान् षोपदेशान् पठति—**सेगिति श्लोकेन ।** 'दन्त्याजन्तषादय एकाचः षोपदेशाः स्यु'रित्यन्वयः । दन्त्यश्च अच् दन्त्याचौ, तौ अन्तौ = अव्यवहितपरौ यस्य स दन्त्याऽजन्तः, तथाविधः षः=षकार आदिर्येषां ते—दन्त्याजन्तषादयः । दन्त्यपरकोऽच्परकश्च यः षकारस्तदादय एकाचो धातव इदानीं कृतसत्वाः सकारादित्वेन परिदृश्यमाना अपि षकारादित्वेन पाणिनिनोपदिष्टाः प्रत्येतव्या इत्यर्थः । 'सादय' इति पाठेऽप्येवमेव व्याख्येयम् । 'अज्दन्त्यपराः षादयः षोपदेशाः' इति भाष्यम् । षूद क्षरणे इत्यादयोऽच्परकषोपदेशाः । 'ष्ठा गतिनिवृत्तौ' इत्यादयस्तु दन्त्यपरकषोपदेशाः । दन्त्याजन्तेति किम् ? । स्कुदि आप्रवणे । चुस्कुन्दे । अत्र सकारो न दन्त्यपरको, नाप्यच्परकः । एकाचः किम् ? । सोसूत्र्यते । 'सूत्र वेष्टने', चुरादिरजन्तोऽनेकाच् । यद्यप्येकाच इति भाष्ये न दृश्यते, तथापि यङ्विधौ सोसूच्यत इति भाष्यं तत्र मानमिति बोध्यम् । एवं च 'साध संसिद्धौ' इत्यादौ सकारपाठस्यैव दृश्यमानत्वेऽपि षोपदेशत्वमेव । ननु 'सेकृ गतौ', 'सृप्लृ गतौ', 'सृ गतौ', 'सृज विसर्गे' एते चत्वारोऽच्परकसादयः । स्तृञ् आच्छादने' ऋदन्तः श्नुविकरणः, । 'स्तॄञ् आच्छादने'ॠदन्तः श्नाविकरणः, 'स्त्यै शब्दसङ्घातयोः' । एते त्रयो दन्त्यपरकसादयः । एषां सप्तानामपि षोपदेशत्वं स्यादित्यतिव्याप्तिमाशङ्क्य तद्भिन्नत्वं विशेषणमाह—**सेक् सृप् सृ स्तृ सृज**

---

शे ] **सेगिति ।** भाष्ये क्वचिद्ध्रस्वान्तस्य क्वचित्स्तॄ इति दीर्घान्तस्य पाठदर्शनादुभयोपादानं । यद्यपि 'एकाच' इति—अत्रत्यभाष्ये न दृश्यते, तथापि यङ्विधौ 'सोसूच्यते' इति भाष्योदाहरणात्पूरितं। सेगादिपर्युदासाद्वा तल्लाभः। यद्यपि भाष्ये ष्वष्कतिर्न दृश्यते तथापि 'सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधः' इति वार्तिकबलात्पठितः । ष्ठिवेस्तु न सत्वं, यादित्वादिति बोध्यम् । 'न रपरे'ति सूत्रे सृपि–सृजि–स्पृशि–स्पृहीनामषोपदेशत्वेऽपि 'पूर्वपदा'दिति सूत्रेण प्राप्तषत्वनिषेधार्थं ग्रहणम् । तत्र हि 'आदेशप्रत्यययो'रिति न सम्बध्यते । अत एव द्विषाहसमित्यादौ छन्दसि तेन षत्वसिद्धिरिति वृत्तौ स्पष्टम् ।

**स्विद्स्वद्स्वञ्जस्वप्स्मिङः ॥ १ ॥** दन्त्यः केवलदन्त्यो न तु दन्तोष्ठजोऽपि, ष्वष्कादीनां पृथग्ग्रहणाज्ज्ञापकात् । २६ ह्राद अव्यक्ते शब्दे । ह्रादते । जह्रादे । २७ ह्लादी सुखे च । चादव्यक्ते शब्दे । ह्लादते । २८ स्वाद आस्वादने । [स्वादते] । २९ पर्द कुत्सिते शब्दे । [गुदरवे इत्यर्थः] । पर्दते । ३० यती प्रयत्ने । यतते । येते । ३१ युतृ ३२ जुतृ भासने । योतते । युयुते । जोतते । जुजुते । ३३ विथृ ३४ वेथृ याचने । वेथते । विविथे । विवेथे । ३५ श्रथि शैथिल्ये । श्रन्थते । ३६ ग्रथि कौटिल्ये । ग्रन्थते । जग्रन्थे । ३७ कत्थ श्लाघायाम् । कत्थते । एधादयोऽनुदात्तेतो गताः । **अथाष्टत्रिंशत्तवर्गीयान्ताः परस्मैपदिनः ।** ३८ अत सातत्यगमने । अतति । 'अत आदेः' । आत । आततुः । आतुः । लुङि आतिस् ई त् इति स्थिते । **इट ईटि ।८।२।२८।** इटः परस्य सस्य लोपः स्यादीटि परे । ✲ **सिज्लोप एकादेशे सिद्धो वाच्यः ।** आतीत् । आतिष्टाम् । आतिषुः ।

त.]गतौ' । जिष्विदा गात्रप्रक्षरणे' । 'स्वद आस्वादने' । 'ष्वञ्ज परिष्वङ्गे' । 'ञिष्वप् शये' । 'स्मिङ् ईषद्धसने' एते षोपदेशा' इत्यन्वयः । 'स्वाद आस्वादने' इत्यादावतिव्याप्तिमाशङ्क्याह-**दन्त्यः केवलदन्त्य इति ।** तथा च असिस्वददित्यादौ षत्वं नेति भावः । **ह्लादी** सुखे च । चादव्यक्ते शब्दे । ईकारः 'श्वीदितो निष्ठायां'मितीण्निषेधार्थः । प्रह्लन्नः प्रह्लन्नवान् । इह 'ह्लादो निष्ठायां'मित्युपधाह्रस्वः । **श्लाघायामिति ।** अविद्यमानगुणसम्बन्धज्ञापनं-श्लाघा । **आततुरिति ।** हल्मध्यस्थत्वाऽभावादेत्वं न । **इट ईटि ।** 'संयोगान्तस्य लोपः' इत्यतो लोप इति, 'रात्सस्ये' त्यतः सस्येति चानुवर्तते । तदाह-**लोपः स्यादिति ।** इटः किम् ? । अहार्षीत् । ईटि किम् ? । आतिष्टाम् । आतिषुः । **सिज्लोप इति ।**

बा.]**स्तृम्त्यान्ये इति ।** स्त्यैधातोः कृतात्वस्य निर्देशः श्लोके समावेशार्थः, स्त्यै इत्यैकारान्तस्य निर्देशे 'स्त्यायन्य' इत्येकस्याक्षरस्याधिक्यापत्तेः । नन्वेवमपि ष्वष्क् गतौ, ञिष्विदा गात्रप्रस्रवणे, ष्वद आस्वादने, ष्वञ्ज परिष्वङ्गे, ञिष्वप् शये, ष्मिङ् ईषद्धसने-इत्येतेषु सकारस्य दन्त्यपरकत्वाऽभावादच्परकत्वाऽभावाच्च षोपदेशेष्वसङ्ग्रह स्यादित्यव्याप्तिमाशङ्क्य तानपि संगृह्णाति-**ष्वष्क् स्विद् स्वद् स्वञ्ज स्वप् स्मिङ इति ।** 'अपी'ति शेषः । ननु 'स्वृ शब्दोपतापयो'रित्यादीनामपि दन्त्यवकारपरकत्वात्षोपदेशत्वं स्यादित्यत आह-**दन्त्यः केवलदन्त्य इति ।** कुत इत्यत आह-**ष्वष्कादीनामिति ।** अन्यथा दन्त्यपरकत्वादेव सिद्धे ष्वष्कादिग्रहणं व्यर्थं स्यादिति भावः । यद्यपि ष्वष्कतिरत्र भाष्ये न दृश्यते तथापि सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेध इति वार्तिकात्तल्लाभ इति भावः । **ह्रादेति ।** रेफवानयम् । **अव्यक्तशब्दः**-अमनुष्यवाक । **जह्राद इति ।** अभ्यासस्य ह्रस्वः । चुत्वम् । **ह्लादीति ।** लकारवानयम् । 'श्वीदितो निष्ठाया'-मितीण्निषेधार्थमीत्वम् । **स्वादेति ।** केवलदन्त्यपरकत्वाऽभावाच्चायं षोपदेशः । असिस्वदत् । **पर्देति ।** गुदरव इत्यर्थः । **यतीति ।** ईदित्वमिण्निषेधार्थम् । **येते इति ।** 'अत एकहल्मध्ये' इत्येत्वाभ्यासलोपौ । **युतृ जुतृ इति ।** ऋदित्वम् 'नाग्लोपिशास्वृदिता'मित्याद्यर्थम् । **योतत इति ।** शपि लघूपधगुणः । **युयुत इति ।** 'असंयोगा'दिति किन्त्वान्न गुणः । **विथृ वेथृ इति ।** द्वितीयान्ताविमौ । ननु 'विथृ' इत्येवास्तु, लघूपधगुणे सति वेथत इत्यस्याऽविशिष्टत्वादित्यत आह-**विविथे विवेथे इति ।** वेथृधातोर्विवेथे इति रूपम् । विथृधातोस्तु असंयोगादिति किन्त्वाद्गुणाऽभावे विविथ इति रूपमिति भावः । **श्रथीति ।** द्वितीयान्तः । **शैथिल्यं**-स्रंसनम् । **श्रन्थते इति ।** इदित्वान्नुम् । **ग्रथीति ।** द्वितीयान्तः । **कौटिल्यं**-वक्रीभवनम् । **ग्रन्थत इति ।** इदित्वान्नुम् । **कत्थेति ।** अविद्यमानगुणज्ञापनं श्लाघा । **अथाष्टात्रिंशदिति ।** अष्टौ च त्रिंशदिति द्वन्द्वः । अष्टाधिका त्रिंशदिति वा । 'द्व्यष्टनः सङ्ख्याया'मित्यात्वम् । 'अष्ट त्रिंश'दिति पाठे तु अष्टेति पृथक्पदम् । **परस्मैपदिन इति ।** अनुदात्तस्वरितङित्त्वाऽभावात् 'शेषात्कर्तरी'ति परस्मैपदिन एवेति भावः । **अतेति ।** **सातत्यगमनं**-संततगमनम् । लिटि णलि द्वित्वे हलादिशेषे अ अत् अ इति स्थिते पररूपे प्राप्ते आह-**अत आदेरिति ।** 'इति दीर्घ' इति शेषः । तथा च अभ्यासाऽकारस्य दीर्घे सति सवर्णदीर्घः । तदाह-**आतेति ।** अकारस्य हल्मध्यस्थत्वाऽभावादेत्वाभ्यासलोपौ न । **लुङीति ।** अतधातोर्लुङस्तिपि इतश्चेति इकारलोपे च्लेः सिचि तस्य इडागमे 'अस्तिसिचोऽपृक्ते' इति ईडागमे आटि वृद्धौ आतिस् ई त् इति स्थिते सतीत्यर्थः ।

**इट ईटि ।** 'इट' इति पञ्चमी । रात्सस्येत्यतः सस्येति, संयोगान्तस्येत्यतो लोप इति चानुवर्तते । तदाह-**इटः परस्येति ।** एवं च आति स् ई त् इति स्थिते सकारस्य लोपे आति ईत्-इति स्थिते सवर्णदीर्घे आतीदिति रूपं वक्ष्यति । तत्र सलोपस्याऽसिद्धत्वात्कथं सवर्णदीर्घ इत्यत आह-**सिज्लोप एकादेशे सिद्धो वक्तव्य इति । आतिष्टामिति ।** लुङस्तस् । तस्य ताम् । च्लेः सिच् । तस्य इटि आटि वृद्धौ षत्वम् । अपृक्तत्वाऽभावेन ईडभावा-

शे.]'पूर्वपदा' दिति सूत्रे च छन्दसीति सम्बध्यते । यद्यपि छन्दसि दृष्टानुविधिस्तथापि छान्दसान्यनिषेधवदिदमपीति बोध्यम् । **ग्रथि कौटिल्ये । कौटिल्यं**-शाठ्यं वक्रता वा । **श्लाघायामिति ।** अविद्यमानगुणसम्बन्धज्ञापनं श्लाघा । **अथाष्टात्रिंशदिति । अष्ट-त्रिंशदिति** पाठे भिन्ने पदे । **इट ईटि ।** 'संयोगान्तस्ये'त्यतो लोप इति-

**वदव्रजहलन्तस्याचः।७।२।३।** वदेर्व्रजेर्हलन्तस्य चाङ्गस्याऽचः स्थाने वृद्धिः स्यात्सिचि परस्मैपदेषु। इति प्राप्ते। **नेटि।७।२।४।** इडादौ सिचि प्रागुक्तं न स्यात्। मा भवानतीत्। अतिष्टाम्। अतिषुः। **३९ चिती संज्ञाने।** चेतति। चिचेत। अचेतीत्। अचेतिष्टाम्। अचेतिषुः। **४० च्युतिर् आसेचने।** सेचनमार्द्रीकरणम्। आङ्-ईषदर्थेऽभिव्याप्तौ च। * इर इत्संज्ञा वाच्या। च्योतति। चुच्योत। **इरितो वा।३।१।५७।** इरितो धातोश्च्लेरङ् वा स्यात्परस्मैपदे परे। अच्युतत्। अच्योतीत्। **४१ श्चुतिर् क्षरणे।** श्चोतति। चुश्चोत। अश्चुतत्। अश्चोतीत्। यकाररहितोऽप्ययम्। श्चोतति। **४२ मन्थ विलोडने।** विलोडनं प्रतिघातः। मन्थति। ममन्थ। यासुटः 'किदाशिषी'ति कित्त्वात् 'अनिदिता'मिति नलोपः। मथ्यात्। **४३ कुथि**

त.] अत्र वदन्ति-सलोप इति वक्तव्ये सिज्ग्रहणं 'झलो झली'त्यादिसूत्रत्रयं सिज्विषयकमिति ज्ञापनार्थम्। तेनेह सोमसुत्, स्तोता। द्विष्टराम्। द्विष्टमाम्। 'धि चे'ति सूत्रे तु वामनमते सिचो लोपः। भाष्यमते तु सस्येति भेदो बोध्य इति।

**वदव्रज।** अवादीत्। अव्राजीत्। 'अतो हलादे'रिति विकल्पं बाधित्वा अनेन नित्यं वृद्धिः। हलन्तस्योदाहरणम्—अपाक्षीत् अधाक्षीत्। तदन्तविधिनैव सिद्धेऽन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम्। 'हलोऽ'जित्युक्ते त्वजन्ताङ्गस्य हलः स्थाने वृद्धिरिति कदाचिदाशङ्क्येत। 'अच' इति तु इक्परिभाषाया अनुपस्थानार्थम्, अन्यथा अभैत्सीदित्यत्र स्यान्नत्वपाक्षीदित्यादौ।

**नेटि।** प्रागुक्तं नेति। हलन्तत्वादेव सिद्धे वदव्रजोर्विशिष्य विधानान्न निषेधः, किंतु हलन्तलक्षणा या एव वृद्धेर्निषेधः तस्या अनिडादौ सिचि चारितार्थत्वात्। अमुमेवार्थं मनसि निधाय क्वचित्पुस्तकेषु 'हलन्तलक्षणा वृद्धिर्ने'त्येव पठ्यते। **इर इत्संज्ञेति।** इकारस्य 'उपदेशेऽजनुनासिकः' इति, रेफस्य तु 'हलन्त्य'मिति प्रत्येकमित्संज्ञायाम् 'इदित' इति नुम् स्यादिति भावः। एतस्य वैयर्थ्यं 'चक्षिङ् व्यक्तायां वाची'त्यत्र स्फुटीभविष्यति। **चुश्चोतेति।** 'शर्पूर्वाः खयः'। **यकाररहितोऽप्ययमिति।** तथा च प्रयुज्यते 'मधुश्चुतं घृतमिव सुपूत'मिति। **मन्थ।** अयं श्र्यादावपि। 'षिध गत्याम्'। अयमुदिदिति केचित्। तत्तु सिध्यतिबुध्यत्योः श्यना निर्देशात् सिधितं बुधितमिति वृत्तिग्रन्थविरुद्धम्।

बा.] सलोपो न। **आतिपुरिति।** लुङि क्तिः च्लेः सिच्। जुस्, इट्, आट्, वृद्धिः। षत्वं रुत्वविसर्गौ। आतीः आतिष्टम् आतिष्ट। आतिषम् आतिष्व आतिष्म। अत्र वृद्धिमाशङ्कितुमाह—**वदव्रज।** वद व्रज हलन्त एषां समाहारद्वन्द्वात् षष्ठ्येकवचनम्। अङ्गस्येत्यधिकृतम्। 'सिचि वृद्धिः परस्मैपदेष्वि'त्यनुवर्तते। तदाह—**वदेरित्यादिना।** हलन्तत्वादेव सिद्धे वदव्रजग्रहणं तु अवादीदव्राजीदित्यत्र 'अतो हलादेर्लघो'रिति वृद्धिविकल्पबाधनार्थम्। **नेटि।** प्रागुक्तं नेति। 'वदव्रजहलन्तस्याच' इत्युक्तं नेत्यर्थः। तत्र वदव्रजयोर्विशिष्य विधानाद्धलन्तलक्षणाया एव वृद्धेर्निषेधोऽयम्। हलन्तलक्षणा वृद्धिस्तु अधाक्षीदित्यादावनिडादौ सिचि चरितार्था। नन्वातीदित्यादौ अकारस्य वृद्धौ सत्यामसत्यां च आटा एकादेशे सति रूपे विशेषाऽभावात्किं तन्निषेधेनेत्याशङ्क्याह—**मा भवानतीदिति।** माङ्योगे आडभावे सति वृद्धिनिषेधः सफल इति भावः। **चितीति।** ईदित्त्वम् 'श्वीदितो निष्ठाया'मिति इण्निषेधार्थम्। **चेततीति।** शपि लघूपधगुणः। **चिचेतेति।** तिबादेशणलः पित्त्वेन असंयोगादिति कित्त्वस्याऽप्रवृत्तेर्न गुणनिषेधः। चिचिततुरित्यादौ तु कित्त्वान्न गुणः।

**अचेतीदिति।** 'इट ईटी'ति सलोपः। **अचेतिष्टामिति।** अपृक्तत्वाऽभावादीडभावान्न सिज्लोपः। नेटीति निषेधान्न हलन्तलक्षणा वृद्धिः। **च्युतिरिति।** अत्र इकारस्य रेफस्य च प्रत्येकमित्संज्ञायामिदित्वान्नुमि प्राप्ते आह—**इर इत्संज्ञेति।** तथाच इरिति समुदायस्य इत्संज्ञकत्वादिदित्त्वाऽभावान्न नुमिति भावः। **च्योततीति।** लघूपधगुणः। **चुच्योतेति।** णलः पित्त्वेन कित्त्वाऽभावान्न गुणनिषेध इति भावः। चुच्युततुरित्यादौ तु कित्त्वान्न गुणः। लुङि च्लेः सिचि प्राप्ते। **इरितो वा।** 'धातोरेकाच' इत्यतो धातोरिति, 'च्लेः सि'जित्यतश्च्लेरिति, 'अस्यतिवक्तिख्यातिभ्य' इत्यतोऽङिति, 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इत्यतः परस्मैपदेष्विति चानुवर्तते। तदाह—**इरितो धातोरित्यादिना।** **अच्युतदिति।** अङि सति ङित्त्वान्न गुणः। अच्युतताम् अच्युतन्। अच्युतः अच्युततम् अच्युतत। अच्युतम् अच्युताव अच्युताम। अङभावे त्वाह—**अच्योतीदिति।** 'इट ईटी'ति सिज्लोपः। अच्योतिष्टामित्यादि। **श्च्युतिरिति।** च्युतिवद्रूपाणि। **चुश्च्योतेति।** 'शर्पूर्वा' इति चकारः शिष्यते। **यकाररहितोऽपीति।** 'मधुश्चुतं घृतमिव सुपूत'मित्यादौ तथा दर्शनादिति भावः। **मन्थेति।** **विलोडनम्**—आस्फालनम्। **मन्थतीत्यादि** सुगमम्। आशीर्लिङि विशेषमाह—**यासुट इति।** **कुथीति।** चत्वारोऽपि द्वितीयान्ताः। इदित्त्वान्नुमि कुन्थतीत्यादि

शे.] 'रात्सस्ये'त्यतः सस्येति चानुवर्तते। **वदव्रज।** हलन्तत्वादेव सिद्धे 'अतो हलादे'रित्यस्य बाधनार्थमनयोर्ग्रहणम्। तदन्तविधिनैव सिद्धेऽन्तग्रहणं स्पष्टार्थम्। नन्वज्ग्रहणसामर्थ्यात्, 'नेटी'ति निषेधाच्चाऽनन्त्याचो ग्रहणे सिद्धे हलन्तग्रहणं व्यर्थमिति चेन्न, इत आरभ्य वृद्धिभाज एव सिच्परत्वेन विशेष्यन्त इत्यर्थज्ञापनार्थन्तत्सत्त्वात्। एवञ्चाऽराङ्क्षीदित्यादिसिद्धये वर्णग्रहणे जातिग्रहणाय तदावश्यकम्। अत एव लावस्थायामडागमेऽपाक्षीदित्यादावटो न वृद्धिः। **विलोडनं**

**४४ पुथि ४५ लुथि ४६ मथि हिंसासंक्लेशनयोः।** इदित्वान्नलोपो न। कुन्थात्।[पुन्थ्यात्। लुन्थ्यात्।] मन्थ्यात्। **४७ षिध गत्याम्।** सेधति। सिषेध। सेधिता। असेधीत्। 'सात्पदाद्यो'रिति निषेधे प्राप्ते। **उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** ।८।३।६५। उपसर्गस्थान्निमित्तादेषां सस्य षः स्यात्। **सदिरप्रतेः** ।८।३।६६। प्रतिभिन्नादुपसर्गात्सदेः सस्य षः स्यात्। **स्तन्भेः** ।८।३।६७। [स्तन्भेः] सौत्रस्य सस्य षः स्यात्। योगविभाग उत्तरार्थः। किंच अप्रतेरिति नानुवर्तते। 'बहुप्रतिष्टम्भविवृद्धमन्युः'। **अवाच्चाऽऽलम्बना-**

त.]उदित्वे हि 'उदितो वे'ति क्त्वायामिड्विकल्पान्निष्ठायामिण्न स्यात्, 'यस्य विभाषेति'निषेधात्। **सिषेधेति।** 'आदेशप्रत्यययो'रिति षत्वम्। **उपसर्गात्।** 'सुनोति सुवती'त्यादिश्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थस्तेन अभिसोषवीति अभिसोषोतीत्यादौ षत्वं नेति प्राञ्चः। 'स्थादिष्वेवाभ्यासस्य षत्वं न सुनोत्यादिष्वि'ति नियमान्नेह षत्वप्राप्तिरिति व्यर्थः प्रतिषेध' इति मनोरमादौ स्थितम्। **सेनयेति** णिजन्तो नामधातुः। सेनयाऽभियाति-अभिषेणयति। **सेधेति** शपा निर्देशाद्भ्वादिकस्य ग्रहणं, न तु सिध्यतेः। परिसिध्यति। 'गृहा दारा' इत्यत्रेव तात्स्थ्यात्ताच्छब्द्यमित्याह-**उपसर्गस्थादिति। निमित्तादिति।** इण्रूपात्। कवर्गस्तु नेह संबध्यते, असंभवात्। न च निःषुणोति निःषेधति निःषिञ्चतीत्यादौ व्यवधानेन इणः परत्वाऽभावात्सस्य षत्वं न स्यादिति शङ्क्यं, षत्वविधौ 'नुम्विसर्जनीयशर्व्यवायेऽपी'त्यधिकारात्। 'इणन्तादुपसर्गा'दिति व्याख्याने तु स्यादेवात्राऽव्याप्तिः। 'दुरः षत्वणत्वयो'रित्युपसर्गत्वप्रतिषेधाद्दुःसुनोति दुःसेधतीत्यादौ तु षत्वेन न भवितव्यमिति दिक्। मूर्धन्यादेशे फलितमाह-**सस्य षः स्यादिति।** स्थादिषु 'प्राक् सिता'दित्यत्र क्रमज्ञानस्यापेक्षितत्वात्तेनैव क्रमेण षत्वसूत्राणि व्याचष्टे-**सदिरप्रतेः।** अप्रतेः किम्?। प्रतिसीदति। षष्ठ्यर्थे प्रथमेत्याह-**सदेरिति। स्तन्भेः। सौत्रस्येति।** 'स्तन्भुस्तुन्भु' इति सूत्रे निर्दिष्टस्य रोधनार्थस्य, न तु 'ष्टभि प्रतिबन्धे' इत्यस्येति भावः। एवं 'जॄस्तम्भु' इत्यङ्विधायकसूत्रेऽपि सौत्रस्यैव ग्रहणमिति बोध्यम्। एतच्च 'लक्षणप्रतिपदोक्त'-परिभाषया लभ्यते। सौत्रो हि धातुर्नकारोपध इति प्रतिपदोक्तः। इदित्त्वान्नुमि ष्टभिर्लाक्षणिकः। तेन विस्तम्भते इत्यादौ षत्वं न। 'उदःस्थास्तम्भो'रिति सूत्रे तु मकारोपधग्रहणेनोभयोरपि ग्रहणादुत्तम्भते इति द्वयोरपि रूपं तुल्यं, मकारस्योभयत्रापि लाक्षणिकत्वात्। **उत्तरार्थं इति।** उत्तरसूत्रे स्तन्भेरेवानुवृत्त्यर्थ इति भावः। ननु 'सदिस्तन्भ्यो'-रिति सूत्रितेऽपि एकदेशे स्वरितत्वप्रतिज्ञानात्कथंचिदनुवृत्तिर्भविष्यतीत्यत आह-**किंचेति। नानुवर्तत इति।** तथा च 'स्तन्भे'रित्यत्राऽननुवृत्तये योगविभाग आवश्यक इति भावः। **अवाच्च।** चकारश्चिन्त्यप्रयोजन इत्याहुः।

बा.]सुगमम्। आशीर्लिङि यासुटः कित्वेऽपि इदित्वेन अनिदितामिति पर्युदासन्नलोपो नेत्याह-**इदित्वादिति। कुन्थ्यादिति।** पुन्थ्यात् लुन्थ्यात् मन्थ्यात्। एतदर्थमेव मन्थधातोः पृथङ् मथीति निर्देशः। **षिध गत्यामिति।** अच्परकषकारादित्वात्षोपदेशोऽयम्। ततश्च धात्वादेरिति सः। तदाह-**सेधतीति। सिषेधेति।** आदेशसकारत्वात्षत्वम्। अनिट्सु श्यन्विकरणस्यैव सिधेर्ग्रहणात्सेडोऽयम्। **असेधीदिति।** 'इट ईटी'ति सिज्लोपः। नेटीति निषेधान्न हलन्तलक्षणा वृद्धिः। असेधिष्टामित्यादि। अथ निषेधतीत्यादौ 'उपसर्गात्सुनोती'ति षत्वं वक्ष्यति तत्किमर्थम्, आदेशप्रत्यययो'रित्येव सिद्धेरित्याशङ्क्याह- **सात्पदाद्योरिति। उपसर्गात्सुनोति। उपसर्गस्थादिति।** उपसर्गशब्द उपसर्गस्थे लाक्षणिक इति भावः। **निमित्तादिति।** इण्रूपादित्यर्थः। 'इण्को'रित्यधिकारेऽपि कोरिति नात्र संबध्यते, असंभवात्। **सस्येति।** 'सहेः साडः स'इत्यतः स इति षष्ठ्यन्तमनुवर्तत इति भावः। **षः स्यादिति।** 'अपदान्तस्य मूर्धन्य' इत्यधिकारादिति भावः। अत्र सुनोतीत्यादिः श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थ इति प्राञ्चः। स्पष्टार्थ इति प्रौढमनोरमायाम्। सेनयेति णिजन्तो नामधातुः। सेधतीति शपा निर्देशात्सिध्यतेर्न ग्रहणम्। अभिषुणोतीत्याद्युदाहरणम्। प्रकृते निषेधतीत्याद्यर्थमिह सूत्रोपन्यासः। प्रसङ्गादाह-**सदिरप्रतेः। उपसर्गादिति।** उपसर्गस्थादिणः परस्येत्यर्थः। सदिरिति षष्ठ्यर्थे प्रथमेत्यभिप्रेत्याह-**सदेः सस्येति।** निषीदतीत्युदाहरणम्। **स्तन्भेः।** नकारोपधनिर्देशस्य प्रयोजनमाह-**सौत्रस्येति।** 'स्तन्भुस्तुन्भु' इति सूत्रनिर्दिष्टस्य नोपधस्येत्यर्थः। स हि प्रतिपदोक्तः। 'ष्टभि प्रतिबन्धे' इत्यस्य तु धातोरिदित्वान्नुमि लाक्षणिकत्वान्न ग्रहणम्। तेन विस्तम्भत इत्यादौ न षत्वम्। 'उदःस्थास्तम्भ्वो'रिति सूत्रे

शे.]क्षोभणम्। **निषेधे प्राप्ते इति।** इदमुपलक्षणम्-अवष्टभ्नातीत्यादावप्राप्तस्य विधानात्। **उपसर्गात्सु।** अभिषावयतीति ण्यन्तेऽपि षत्वं भवत्येव, शब्दशक्तिस्वभावेनोपसर्गाणां प्रकृत्यर्थविशेषणताया एव स्वीकारात्। तदुक्तं भाष्ये-'सुनोत्यादीनां षत्वे [illegible]स्योपसङ्ख्यानमधिकत्वात् अभिषावयति। नवाऽनन्यत्वात्। न च नाऽत्र सुनोतिं प्रति क्रियायोगः। किं तर्हि सावयतिं प्रति। सुनोतिं प्रत्येव क्रियायोगः। नासावेवं प्रेष्यते-सुनु-अभीति, किं तर्हि?। उपसर्ग-वि[illegible]ते-अभिषुणु इती'ति। अत्र वचनप्रत्याख्यानयोः समफलत्वाय 'नासावेव'मित्यादिभाष्येण च [illegible] तात्पर्यं लभ्यते। **सदिरप्र।** अप्रतेः किम्?। प्रतिससाद। ननु सदेरालम्बनाविदूर्ययोर्वृत्त्यभावादेवासम्बन्धः

ऽऽविदूर्ययोः ।८।३।६८। अवात्स्तन्भेरेतयोरर्थयोः षत्वं स्यात् । **वेश्च स्वनो भोजने** ।८।३।६९। व्यवा-त्स्वनतेः सस्य षः स्याद्भोजने । **परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्** ।८।३।७०। परिनि-विभ्यः परेषामेषां सस्य षः स्यात् । निषेधति । **प्राक्सितादड्व्यवायेऽपि** ।८।३।६३। 'सेवसिते'त्यत्र सित-शब्दात्प्राग् ये सुनोत्यादयस्तेषामड्व्यवायेऽपि षत्वं स्यात् । न्यषेधत् । न्यषेधीत् । न्यषेधिष्यत् । **स्थादिष्व-भ्यासेन चाभ्यासस्य** ।८।३।६४। प्राक् सितात् स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात् । एषामेव चा-

---

त.]आलम्बनमाश्रयणम् । यथा—यष्टिमवष्टभ्य आस्ते । तामाश्रित्य तिष्ठतीत्यर्थः । आविदूर्यं—सामीप्यम् । तच्च प्रयोगोपाधिः । अवष्टब्धा गौः । निरुद्धा सती समीपे आस्त इत्यर्थः । एतयोः किम् ? । अवस्तब्धो वृषलः शीतेन । केचिदिह अविदूरशब्दात्स्वार्थे ष्यञ् । आविदूर्यमनतिदूरम् । ईषद्दूरमित्यर्थः । तथा च अविदूरशब्दात् 'न नञ्पूर्वात्तत्पुरुषा'-दिति निषेधे प्राप्ते अतएव निपातनाद्भावप्रत्यय इति मनोरमाग्रन्थोक्तिर्नातीवोपयुज्यत इत्याहुः । **वेश्च** । विष्वणति । सशब्दं भुङ्क्त इत्यर्थः । 'अट्कुप्वा'ङिति णत्वम् । एवम्—अवष्वणति । व्यष्वणत् । विषष्वाण । 'स्थादिष्वभ्यासेन चे'ति षत्वम् । भोजने किम् ? । विस्वनति वीणा । **परिनिविभ्यः** । सेवेत्यत्र अकार उच्चारणार्थः । न च यङ्लुङ्निवृत्तये शपा निर्देश एवास्त्विति शङ्क्यं, वकारान्तानामूठ्भाविनां यङ्लुङ् नास्तीति वक्ष्यमाणत्वात् । 'षेवृ सेवायाम्' । परिषेवते । 'षिञ् बन्धने' । क्तान्तः सितशब्दः । एरजन्तः पचाद्यजन्तो वा सयशब्दः । विषितः । विषयः । प्रत्ययविशिष्टग्रहणं किम् ? । विसिनोति । 'षिवु तन्तुसन्ताने' । परिषीव्यति । 'षह मर्षणे' परिषहते । सुट-आगमः । परिष्करोति । [विष्करोति]।स्तुस्वञ्ज्योः 'उपसर्गात्सुनोती'त्येव सिद्धे परिनिविभ्यः परयोरेतयोः 'सिवादीनां वाड्व्यवायेऽपी'ति विकल्पार्थं पुनर्वचनम् । **प्राक्सितात्** । 'उपसर्गात्सुनोती'त्यादिना विहितं षत्वमड्व्यवाय एवेति भ्रमनिवारणार्थमपिशब्दस्यो-पादानम् । **तेषामिति** । पञ्चदशानामित्यर्थः । अभ्यषुणोदित्यादीन्युदाहर्तव्यानि । **स्थादिषु** । इह द्वे वाक्ये, आद्यं षत्वविध्यर्थं, द्वितीयं तु नियमार्थमित्याशयेनाह—**व्यवायेऽपि षत्वं स्यादेषामेव चेति** । स्थादीनां दशानामेवा-

---

बा.]तु मोपधग्रहणादुभयोरपि ग्रहणं,मकारस्य उभयत्रापि लाक्षणिकत्वात् । ननु 'सदिस्तन्भ्योरप्रते'रित्येकमेव सूत्रं कुतो न कृतमित्यत आह—**योगविभाग उत्तरार्थ इति** । 'अवाच्चालम्बनाविदूर्ययो'रित्युत्तरसूत्रे सदेरननुवृत्त्यर्थ इत्यर्थः । ननु सदेरस्वरितत्वादालम्बनाविदूर्ययोर्वृत्त्यभावादेव च अनुवृत्त्यभावः सिद्ध इत्यस्वारस्यादाह—**किंचेति** । **नानुवर्तेत इति** । स्तन्भेरित्यत्र अप्रतेरित्यस्य अनुवृत्तिर्नेष्टा । एकसूत्रत्वे तु अप्रतेरित्यस्य स्तन्भिनाऽपि संबन्धः स्यादिति भावः । 'अप्रते'रित्यस्य स्तन्भावनन्वयो वृद्धप्रयोगानुगत इत्याह—**बाहुप्रतिष्टम्भेति** । **अवाच्च** । आलम्बनं च आविदूर्यं चेति द्वन्द्वात्सप्तमीद्विवचनम् । **एतयोरिति** । आलम्बनाविदूर्ययोरर्थयोर्विद्यमानस्य अवात्परस्य स्तन्भेरित्यन्वयः । अपूर्व-विधिरयम्, इणः परत्वाऽभावादप्राप्तेः । **आलम्बने**—यथा—यष्टिमवष्टभ्यं तिष्ठतीति । आश्रित्येत्यर्थः । **आविदूर्ये**—सामीप्यम् । अवष्टब्धा गौः । निरुद्धा सती समीपे आस्त इत्यर्थः । **वेश्च** । अवादित्यनुकर्षणार्थश्चकारः । तदाह—**व्यवाभ्यामिति** । विष्वणति । अवष्वणति । सशब्दं भुङ्क्ते इत्यर्थः । अट्कुप्वाङिति णत्वम् । **परिनिविभ्यः** । सेवे-त्यकार उच्चारणार्थः । 'षेवृ सेवाया'मिति धातोर्ग्रहणम् । परिषेवते । निषेवते । विषेवते । सितेत्यनेन षिञ् बन्धन इति क्तान्तस्य ग्रहणम् । अस्यैव धातोरेरजन्तो वा पचाद्यजन्तो वा सयशब्दः। विषितः । विषयः। षिवु तन्तुसन्ताने। परिषी-व्यति । षह मर्षणे । परिषहते । सुट्-आगमः । परिष्करोति । स्तुस्वञ्जो'रुपसर्गात्सुनोती'त्येव सिद्धे 'सिवादीनां वे'ति विकल्पार्थं पुनर्वचनम् । **प्राक्सितात्** । **सुनोत्यादय इति**। 'उपसर्गात्सुनोतीत्यादिसूत्रोपात्ता' इति शेषः।**तेषामिति**। पञ्चदशानामित्यर्थः। **न्यषेधदिति**। अकारेण व्यवहितत्वादिणः परत्वाऽभावादप्राप्तौ वचनम् । अभ्यषुणोदित्यप्युदाहार्यम्।

**स्थादिषु**। अभ्यासेनेति तृतीयान्तम् । प्राक्सितादित्यनुवर्तते। तदाह—**प्राक्सितादिति**। 'उपसर्गात्सुनोती'ति सूत्रे स्थाधातुमारभ्य 'परिनिविभ्यः सेवसिते'त्यत्र सितशब्दात्प्राग्ये धातव उपात्तास्तेषु दशस्वित्यर्थः । निषिषेधेत्यादौ अभ्यासात्परस्य सस्य अभ्यासव्यवहितत्वेन उपसर्गात्परत्वाऽभावादप्राप्तौ वचनम्। ननु निषिषेधेत्यादौ अभ्यासस्थसकारस्य उपसर्गात्सुनोतीत्यनेनैव सिद्धत्वादभ्यासस्येति व्यर्थमित्याशङ्क्य नियमार्थमित्याह—**एषामेवेति**।अभ्यासस्थसकारस्य चेत्षत्वं

---

शे.]सिद्धोऽत आह—**किं चेति** । **अवाच्चा** । **आविदूर्य**—सामीप्यम् । **अवष्टब्धा गौः**। निरुद्धा सती समीपे आस्ते इत्यर्थः । **परिनिविभ्यः** । सेवेत्यत्राऽकार उच्चारणार्थः । सितसयौ षिञ्प्रकृतिकौ, व्याख्यानात् । **स्थादिष्व** । 'प्राक्सिता'दित्यस्य सम्बन्धार्थं 'प्राक्सिता'दित्युत्तरमिदं पठितम् । न चाभ्यासस्य नैरर्थक्यात्तस्य षत्वाऽप्राप्त्या कथमस्य नियमार्थत्वमिति वाच्यम् । द्विःप्रयोगत्वादभ्याससकारस्यापि अर्थवत्सुनोत्यादिसम्बन्धित्वाऽक्षतेः । अर्थवत्सुनोत्याद्यवय-वत्वमिव तत्सम्बन्ध्यवयवत्वस्यापि अत्र षष्ठ्यर्थत्वात् । यद्वा अत्र प्रकरणे तत्तद्धातोरिव तदानुपूर्वीकस्य च ग्रहणं, नियमस्य व्याख्यानात् । अत एव 'अनुषस्यन्दे' इत्यादौ 'अनुविपर्यभिनिभ्यः' इति अभ्यासस्य षत्वम् । स्थादिष्विति

भ्यासस्य न तु सुनोत्यादीनाम् । निषिषेध । निषिषिधतुः । **सेधतेर्गतौ** ।८।३।११३। गत्यर्थस्य सेधतेः षत्वं न स्यात् । गङ्गां विसेधति । ४८ षिधू शास्त्रे माङ्गल्ये च । शास्त्रं-शासनम् । **स्वरतिसूतिसूयतिधूञूदितो वा** ।७।२।४४। स्वरत्यादेरूदितश्च परस्य वलादेरार्द्धधातुकस्येड्वा स्यात् । **झषस्तथोर्धोऽधः** ।८।२।४०। झषः

---

त.]भ्यासस्यं षत्वमित्यर्थः । तत्फलं तु 'षू प्रेरणे' अभिसुसूषति । अत्रोक्तनियमादभ्याससकारस्य न षत्वं, द्वितीयस्य तु 'स्तौतिण्यो'रिति नियमान्न भवति । अभिसिषासतीत्यत्र तु षणोऽभावादभ्यासात्परस्य षत्वं, पूर्वस्य तूक्तनियमान्नेति बोध्यम् । स्यादेतत्--निषिषेधेत्यादौ अभ्यासस्य 'उपसर्गात्सुनोती'त्यनेन सिद्धम्, अभ्यासात्परस्य तु 'आदेशप्रत्यययो'रित्यनेनेति किमाद्यवाक्येन ? । अत्राहुः--फलत्रयार्थमाद्यं वाक्यं । तथाहि अषोपदेशार्थम्-सेनया अभियातुमिच्छति अभिषिषेणयिषति । अवर्णान्ताभ्यासार्थं च-'अर्धासनं गोत्रभिदोऽधितष्ठौ' । षणि प्रतिप्रसवार्थं च-अभिषिषिक्षति । 'षिच क्षरणे' । 'स्तौतिण्योरेवे'ति नियमात्षभूते सनि निवर्तितमपि सत्वमुपसर्गमाश्रित्याऽत्र भवतीति ।

**सेधतेर्गतौ** । श्तिपा निर्देशाद्गत्यर्थादस्माद्यङ्लुकि न निषेधः, तेनोपसर्गमाश्रित्य षत्वं भवत्येव-'विषेषिधीति'। न च सेधेति शपा निर्देशाद्यङ्लुकि 'उपसर्गात्सुनोती'ति षत्वं न भवेदिति शङ्क्यं, दैवादिकनिवृत्त्यर्थतया शपा निर्देशस्य चरितार्थत्वात्।अन्यथा सेधतेरिति श्तिपा निर्देशस्य वैयर्थ्यापत्तेरिति दिक् । **षिधू** शास्त्रे।माङ्गल्यं-मङ्गलक्रिया। स्वार्थे ष्यञ् । **स्वरतिसूति**।'स्वृ शब्दोपतापयोः'भ्वादिः।ननु 'स्वरतिसूधूञूदितो वे'ति सूत्र्यतां,किमनेन सूतिसूयत्योः पृथग्ग्रहणेन ? । मैवम् ।तथाहि सति निरनुबन्धकपरिभाषया 'षू प्रेरणे' इति तौदादिकस्यैव ग्रहणं स्यान्न त्वादादिकदैवादिकयोरेतयोः।न चैवं धूङिति पठ्यतामिति वाच्यं,'लुग्विकरणाऽलुग्विकरणयो'रिति परिभाषया अलुग्विकरणस्य सूयतेरेव ग्रहणप्रसङ्गात् । अस्याश्च परिभाषायाः सूतिसूयत्योः पृथग्ग्रहणमेव ज्ञापकमित्याहुः । 'धूञ् कम्पने'स्वादिः क्र्यादिश्च । सानुबन्धनिर्देशो 'धू विधूनने' इत्यस्य निवृत्त्यर्थः । 'इट् सनि वे'त्यतो वेति वर्तमाने पुनर्वाग्रहणं लिङ्सिचोर्विकल्पनिवृत्त्यर्थम् । [अन्यथा लिङ्सिज्विशिष्टं वापदमत्रापि सिङ्सिचोरेव विकल्पं कुर्यात् । पुनर्वाग्रहणे तु आर्द्धधातुकमात्रे विकल्पः सिद्ध इति भावः] । **झषस्तथोः**। 'अध' इति किम् ?। धत्तः । **असैत्सीदिति**।'अस्तिसिचः'इति ईडागमः। 'वदव्रजे'ति वृद्धिः ।

---

बा.]तर्हि स्थादिदशानामेवेत्यर्थः।एवं च'षू प्रेरणे,'अभिसुसूषति।अत्राभ्यासस्य न षत्वम्। अभ्यासात्परस्य तु सस्य स्तौतिण्योरेवेति नियमान्न षत्वम् । **सेधतेः। न षत्वमिति**। 'न रपरे'त्यतो नेत्यनुवृत्तेरिति भावः। **गङ्गां विसेधतीति** । गच्छतीत्यर्थः । इह 'उपसर्गात्सुनोती'ति षत्वं न भवति । अनन्तरस्येति न्यायेन उपसर्गात्सुनोतीत्यस्यैवायं निषेधः, न त्वादेशप्रत्यययोरित्यस्यापि । तेन सिषेधेत्यादौ आदेशप्रत्यययोरिति षत्वं भवत्येव । **षिधू इति** । ननु वाक्यसङ्घविशेषात्मकस्य शास्त्रस्य अक्रियारूपत्वात्कथं धात्वर्थत्वमित्यत आह-**शास्त्रं शासनमिति** । **माङ्गल्यं तु**-शुभकर्म । षिध गत्यामितिवदस्यापि रूपाणि । तत्र वलादावार्द्धधातुके नित्यमिटि प्राप्ते-**स्वरति** । 'आर्द्धधातुकस्येड्वलादे'रित्यनुवर्तते । स्वरति सूति सूयति धूञ् ऊदित्-एषां समाहारद्वन्द्वात्पञ्चम्येकवचनं । फलितमाह-**स्वरत्यादेरिति** । स्वरतीति स्वृधातोः शपा निर्देशः । सूतीति सूयतीति च लुग्विकरणस्य श्यन्विकरणस्य च सूधातोर्निर्देशः । एवंच षू प्रेरण इति तौदादिकस्य न ग्रहणम् । 'धूञ् कम्पने' स्वादिः क्र्यादिश्च । ञकारानुबन्धनिर्देशात् धू विधूनन इत्यस्य न ग्रहणम् । 'इट्सनि वे'त्यतो वेत्यनुवर्तमाने वाग्रहणं 'लिङ्सिचोरात्मनेपदेष्वि'ति सूत्रयोर्विकल्पनिवृत्त्यर्थमिति भाष्यम् । एवं च थलि इडभावपक्षे द्वित्वादौ सिसेध्-थ इति स्थिते । **झषस्तथोः** । झष इति पञ्चमी । तश्च थ् चेति द्वन्द्वः ।

---

शे.]'प्राक्सिताच्चेदभ्यासस्य षत्वं तदा स्थादिष्वेवे'त्येवमिति नात्र तस्य प्राप्तिः। 'सुपिसूतिसमा' इति सूत्रे भाष्ये सर्वमिदं स्पष्टम् । तत्र हि भाष्ये 'विसुष्वापेति अभ्यासस्य षत्वं प्राप्नोति । नच स्थादिष्विति नियमान्न भविष्यति । प्राक्सितसंशब्दनान्नियमः, उत्तरश्च सुपिः । एवन्तर्ह्यनर्थकत्वान्न । न चैवं विषुषुपुरिति न सिध्यतीति वाच्यम् । सुपिभूतस्य द्विर्वचना'दित्युक्तम् । 'सुपिभूतस्ये'ति प्रतीके यद्यपि कैयटेन 'द्विःप्रयोगे स एव सुपिर्द्विरुक्त इति समुदायाश्रयमेव षत्व'मिति व्याख्यातं, तथापि 'दयतेर्दिगी'तिसूत्रस्थभाष्यविरोधात्समुदायस्य सुपित्वाऽनुपपत्तेश्च मदुक्तव्याख्याने एव भाष्यतात्पर्यम् । 'दिगी'ति सूत्रस्थभाष्यं त्वग्रे तनादिगणे स्फुटीकरिष्यते । **गङ्गां विसेधतीति** । 'विप्रतिषेध' इत्यत्र 'सेधतेर्गतौ'इति निषेधो न । तस्य विरोधार्थत्वेन गत्यर्थत्वाऽभावात् । सिषेधेत्यादौ 'आदेशप्रत्यययो'रिति षत्वं भवत्येव, 'अनन्तरस्ये'ति न्यायेन 'सेधतेर्गतौ' इत्यनेन 'आदेशप्रत्यययो'रित्यस्याऽनिषेधादिति केचित् । 'सिचो यङी'त्यादिसाहचर्यात्सर्वषत्वनिषेधः । 'उपसर्गा'दित्यस्य तु नाऽत्र सम्बन्धः, विच्छिन्नत्वात् । तेन गङ्गां सिसेधेत्येव, यद्यभिधानमस्तीत्यन्ये । **स्वरतिसूति** । सूतीत्यत्र गुणाऽभावः सौत्रः । धूञः सानुबन्धकनिर्देशो 'धू विधूनने' इत्येतद्व्यावृत्त्यर्थः । 'इट्सनि वे'त्यनुवर्त्तमाने वाग्रहणं 'लिङ्सिचोरात्मनेपदेषु'इत्यस्य निवृत्त्यर्थम् । न च स्वरतिग्रहणसामर्थ्यादेव तन्निवृत्तिः सिद्धा, 'ऋतश्चे'तीड्विकल्पस्य सिद्धत्वादिति वाच्यं, स्वरतिग्रहणं नित्याऽर्थं स्यादिति तस्याऽज्ञापकत्वादिति कैयटः ।

परयोस्तथयोर्धः स्यान्न तु दधातेः। जश्त्वम्। सिषेद्ध-सिषेधिथ। सेद्धा-सेधिता। सेत्स्यति-सेधिष्यति। असैत्सीत्। **झलो झलि** ।८।२।२६। झलः परस्य सस्य लोपः स्याज्झलि। असैद्धाम्। असैत्सुः। असैत्सीः। असैद्धम्। असैद्ध। असैत्सम्। असैत्स्व। असैत्स्म। पक्षे-असेधीत्। असेधिष्टामित्यादि। ४९ **खाद्ट भक्षणे**। ऋकार इत्। खादति। चखाद। ५० **खद स्थैर्ये हिंसायां च**। चाद्भक्षणे। स्थैर्येऽकर्मकः। खदति। **अत उपधायाः** ।७।२।११६। उपधाया अतो वृद्धिः स्याञ्ञिति णिति च प्रत्यये परे। चखाद। **णलुत्तमो वा** ।७।१।९१। उत्तमो णल्वा णित्स्यात्। चखाद। चखद। **अतो हलादेर्लघोः** ।७।२।७। हलादेर्लघोरकारस्य इडादौ परस्मैपदपरे सिचि वृद्धिर्वा स्यात्। अखादीत्। अखदीत्। ५१ **बद स्थैर्ये**। पवर्गीयादिः। बदति। बबाद। बेदतुः। बेदिथ। बबाद। बबद। अबादीत्। अबदीत्। ५२ **गद व्यक्तायां वाचि**। गदति। नेगद-

त.]ततश्चर्त्वम्। **झलो झलि**। 'संयोगान्तस्ये'त्यतो लोप इति, 'रात्सस्ये'त्यतः सस्येति चानुवर्तते। तदाह-**सस्य लोपः स्यादिति**। पदस्येत्यधिकारात्प्रत्यासत्तेर्झलो झलि सस्येति निर्दिष्टानां त्रयाणामेकपदसंबन्धित्वे लोपोऽयम्। तेन 'सोमसुत्स्थान'मित्यत्र न भवति। झलःकिम्। अनैष्टाम्। झलि किम्?। असैत्सीत्। **असेधीदिति**। 'नेटी'ति वृद्धिप्रतिषेधः।गुणः।**खाद्ट भक्षणे।ऋकार इदिति**। तेन 'नाग्लोपी'ति निषेधः। अचखादत्। **अत उप।** अतः किम्। तुतोद। उपधायाः किम्। गणयति। इह अतो लोपं बाधित्वा परत्वाद्वृद्धिः स्यात्। **अतो हलादेः।** इह 'सिचि वृद्धि' रिति सूत्रमनुवर्तते।'नेटी'ति सूत्रादिटीति, 'ऊर्णोतेर्विभाषे'त्यतो विभाषाग्रहणं च। तदाह-**इडादावित्यादि। वृद्धिर्वा स्यादिति**। अतःकिम्। अदेवीत्। हलादेः किम्?। मा भवानतीत्। अटीत्। लघोःकिम्?। अगर्दीत्। अरक्षीत्। इडादौ किम्?। अपाक्षीत्।परस्मैपदे किम्?। अयतिष्ट। अयतिषाताम्। अचकासीदित्यत्र चकारादकारस्य वृद्धिवारणाय 'येन नाव्यवधान'मिति न्यायेन यद्येकवर्णव्यवधानमेवाश्रीयते तदा त्वरक्षीदित्यत्रापि प्रसक्त्यभावाल्लघोरिति शक्यमकर्तु- मित्याहुः। तपरकरणं स्पष्टार्थम्। **पवर्गीयादिरिति**। दन्त्योष्ठ्यादित्वे तु 'न शसददे'त्येत्वाभ्यासलोपनिषेधाद्वेदतुः

बा.]तकारादकार उच्चारणार्थः। तकारथकारयोरिति लभ्यते।'धः' इति प्रथमैकवचनम्। अकार उच्चारणार्थः। धकार इति लभ्यते। 'अध'इति षष्ठ्यन्तम्। धाधातुभिन्नस्येति लभ्यते। तदाह-**झषः परयोरिति**। **जश्त्वमिति**। सिसेध् थ इति स्थिते 'झलां जश् झशी'ति प्रथमधकारस्य दकारे सिषेद्धेति रूपमित्यर्थः। सिषिधिव-सिषिध्व। सिषिधिम-सिषिध्म। क्रादिनियमस्तु नेड्वशीति प्रक्रमाच्च प्रापितस्यैवाऽभावस्य निवर्तको, नतु विभाषादिप्रापितस्यापि, अनन्तरस्येति न्यायात्। इड्पक्षे आह-**सिषेधियेति। सेद्धेति**। लुट् तास् इडभावः। डा टिलोपः गुणः। धत्वं जश्त्वम्। सेद्धार इत्यादि। **सेधितेति**। इड्पक्षे रूपम्। **सेत्स्यति सेधिष्यतीति**। लृटि स्यः। इड्विकल्पः। **असैत्सीदिति**। लुङ्तिप्। इकारलोपः। च्लिः। सिच्। इडभावः। 'अस्तिसिचः' इति ईट्। वदव्रजेति वृद्धिः। धकारस्य चर्त्वम्। असैध् स् तामिति स्थिते, अपृक्तत्वाभावादीडभावादिडभावाच्च, इट ईटीति सिचो लोपे ऽप्राप्ते-। **झलो झलि**। झल इति पञ्चमी। संयोगान्तस्येत्यतो लोप इति,रात्सस्येत्यतः सस्येति चानुवर्तते।तदाह-**झलः परस्येत्यादि। असैद्धामिति**। असैध् स् तामिति स्थिते सलोपे धत्वे जश्त्वे च रूपम्। **पक्ष इति**। इड्पक्ष इत्यर्थः। **असेधीदिति**। इट ईटीति सलोपः। नेटीति वृद्धिप्रतिषेधः। लघूपधगुणः। **खाद्ट इति**। अत्र ऋदित्वं 'नाग्लोपी'त्याद्यर्थमित्यभिप्रेत्याह-**ऋकार इदिति**।

**खदेति। स्थैर्य**-स्थिरीभवनम्। णलि अजन्तत्वाऽभावादचो ञ्णितीति वृद्धेरप्राप्तौ-। **अत उपधायाः।वृद्धिः स्यादिति**। 'मृजेर्वृद्धि'रित्यतस्तदनुवृत्तेरिति भावः। **ञिति णिति चेति**। 'अचो ञ्णिती'त्यतस्तदनुवृत्तेरिति भावः। **चखादेति**। एत्वाभ्यासलोपौ तु नात्र भवतः, पित्त्वेऽकित्त्वात्,आदेशादित्वात्,तदपेक्षया वृद्धेः परत्वाच्च। **णलुत्तमः। णित्स्यादिति**। 'गोतो णि'दित्यतस्तदनुवृत्तेरिति भावः। **चखाद चखदेति**। णित्त्वे उपधावृद्धिः। तदभावे न।

**अतो हलादेः।** 'सिचि वृद्धिः परस्मैपदेष्वि'त्यनुवर्तते। 'नेटी'त्यस्मादिटीति,'ऊर्णोतेर्विभाषे'त्यतो विभाषेति च। तदाह-**हलादेरिति**। हलाद्यङ्गावयवस्येत्यर्थः। आदिग्रहणं स्पष्टार्थं, हलः परस्येत्येव सिद्धेः। **अखादीत् अखदीदिति**। वृद्धौ तदभावे च इट ईटीति सिज्लोपः। अखादिष्टाम्, अखदिष्टामित्यादि। **बदेति**। स्थैर्य-स्थिरीभवनम्। **पवर्गीयादिरिति**। पवर्गतृतीयादिरित्यर्थः। ननु दन्त्योष्ठ्यादिरिति भावः। **बबादेति**। 'अत उपधायाः'इति वृद्धिः। **बेदतुरिति**। अभ्यासजश्त्वेन आदेशादित्वेऽपि जश्त्वस्य वैरूप्यापादकत्वाऽभावादेत्वाभ्यासलोपाविति भावः। बबादेत्यत्र तु पित्त्वेन कित्त्वाऽभावादेत्वाभ्यासलोपौ न। **बेदियेति**। अकित्त्वेपि 'थलि च सेटी'त्येत्वाभ्यासलोपौ। बेदथुः बेद। अथ उत्तमपुरुषणलि 'णलुत्तमो वे'ति णित्त्वविकल्पादुपधावृद्धिविकल्प इत्याह-**बबाद बबदेति**। बेदिव बेदिम।

शे.]**ऋकार इदिति**। तत्फलन्तु 'नाग्लोपी'ति ह्रस्वनिषेधः। **अतो हलादेः** अत्राऽङ्गान्त्येऽकाराऽसम्भवाद्धलादेरिति सामर्थ्याच्चाऽङ्गस्याऽकार इति वैयधिकरण्येनान्वयः। 'हलः परस्याऽङ्गावयवाऽकारस्ये'त्यर्थेन सिद्धे आदिग्रहणं स्पष्टार्थम्।

**नदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ।८।४।१७।** उपसर्गस्थान्निमित्तात्परस्य नेर्णः स्याद्गदादिषु । प्रणिगदति । जगाद । ५३ **रद विलेखने ।** विलेखनं भेदनम् । रराद । रेदतुः । ५४ **णद अव्यक्ते शब्दे ।** **णो नः ।६।१।६५।** धातोरादेर्णस्य नः स्यात् । णोपदेशास्त्वनर्द्-नाटि-नाथ्-नाध्-नन्द्-नक्क-नॄ-नृतः । नाटेर्दीर्घोहस्य पर्युदासाद्घटादिर्णोपदेश एव । तवर्गचतुर्थान्तनाधतेर्नृनन्द्योश्च केचिण्णोपदेशतामाहुः। **उपसर्गादसमासेऽपि णोपदेशस्य ।८।४।१४।** उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्समासेऽसमासेऽपि । प्रणदति । प्रणिनदति । ५५ **अर्द गतौ याचने च ।**

---

त.]वेदिथेत्यादि न सिध्येदिति भावः। **नेर्गदनद।** गदादीनां चतुर्णां शपा निर्देशः,स्यत्यादीनामेकादशानां श्तिपा निर्देशश्च यङ्लुङ्निवृत्त्यर्थः। तेन 'प्रनिजागदीति । प्रतिनानदीति । प्रनिसासेति । प्रनिजङ्घनीती'त्यादौ णत्वं न । घुशब्देन घुसंज्ञका दाधादयः षट् गृह्यन्ते । **डुदाञ्**–प्रणिददाति । **दाण्**–प्रणियच्छति । **दो**–प्रणिद्यति । **देङ्**–प्रणिदयते । **धेट्**–प्रणिधयति । **डुधाञ्**–प्रणिदधाति । माशब्देन मेङ्माङोरेव ग्रहणम् । 'घुप्रकृतिमा'ङिति पठित्वा भाष्यादौ तथा व्याख्यानात् । **णो नः । धातोरिति ।** 'धात्वादेः षः सः' इत्यतोऽनुवर्तनाद्धात्वादेरित्येव । नेह–अणति । णोपदेशान्पर्युदासमुखेनाह–**णोपदेशास्त्विति ।** 'नर्द शब्दे' । 'नट अवस्यन्दने' । चुरादिः । यस्तु नट नृत्ताविति घटादिः स नेह गृह्यते, नाटीति दीर्घनिर्देशात् । 'नाथृ नाधृ याच्ञादौ' । 'टुनदि समृद्धौ' । 'नक्क नाशने' । 'नॄ नये' । 'नृती गात्रविक्षेपे' । एभ्योऽष्टाभ्यो भिन्ना इत्यर्थः । **तवर्गेति ।** तेषां मते तु पञ्चभ्यो भिन्ना णोपदेशाः । **उपसर्गाद ।** 'समासेऽङ्गुलेः सङ्गः' इत्यतोऽनुवर्तनात्समास एव स्यादित्यसमासग्रहणं । कृते तु तस्मिन्नसमास एव स्यादित्यपेर्ग्रहणं कृतम् । **प्रणिनदतीति ।**'नेर्गदे'ति णत्वम्।धातुनकारस्य तु 'उपसर्गादसमासे'इति णत्वं न भवति, अडादिभिन्नेन व्यवधानात् ।

---

बा.]**अवादीत् अवदीदिति ।** 'अतो हलादे'रिति वृद्धिविकल्पः । **गदेति । व्यक्तवाक्**–मनुष्यकृतशब्दप्रयोगः । **जगादेति ।** चुत्वजश्त्वे । उपधावृद्धिः । वैरूप्यापादकादेशादित्वादेत्त्वाभ्यासलोपौ न । जगदतुः जगदुरित्यादि ।

**नेर्गद ।** 'रषाभ्यां नो णः'इत्यनुवर्तते।'उपसर्गादसमासेऽपी'त्यत उपसर्गादिति च। तच्च उपसर्गस्थे लाक्षणिकं । तदाह–**उपसर्गस्थादिति ।** श्तिता शपा च निर्देशा यङ्लुङ्निवृत्त्यर्थाः । **प्रणिनदतीति ।** भिन्नपदस्थत्वादप्राप्तौ वचनम् । **रदेति ।** णलि उपधावृद्धिमभिप्रेत्याह–**ररादेति।** रेदतुरित्यादि । अरादीत् अरदीत् । **णदेति । अव्यक्तशब्दः**–अमनुष्यपशुपक्ष्यादिकृतशब्दप्रयोगः। **णो नः ।** 'ण' इति षष्ठ्यन्तं । 'धात्वादेः षः सः' इत्यतोऽनुवर्तनादाह–**धातोरादेरिति ।** तेन अणतीत्यादौ न नत्वम् । नः **स्यादिति ।** नकारः स्यादित्यर्थः । **नदतीति ।** 'मेघादि'-रिति शेषः। 'णो नः' इति नत्वस्याऽनैमित्तकतया लिण्निमित्तादेशादित्वाऽभावादेत्त्वाभ्यासलोपौ स्त एव,–नेदतुरित्यादि । अथ 'नृतनर्द्नन्दनक्कनाट्नाथृनाधृनॄवर्जं णोपदेशाः'इति भाष्यं श्लोकार्धेन सङ्गृह्णाति–**णोपदेशास्त्विति ।** 'नर्द शब्दे'। 'नट अवस्यन्दने' चुरादिः । नाथृ नाधृ याञ्चादौ, द्वितीयचतुर्थान्तौ । 'टु नदि समृद्धौ' । 'नक्क नाशने' । 'नॄ नये' । 'नृती गात्रविक्षेपे' एभ्योऽष्टभ्योऽन्ये णकारादिधातव इदानीं नकारादित्वेन दृश्यमाना अपि नत्वसंपन्ननकारादितया-णोपदेशाःप्रत्येतव्या इत्यर्थः। 'नाटी'ति ण्यन्तस्य प्रयोजनमाह–**नाटेरिति । घटादिरिति ।** 'नट नृत्ता'विति घटादिपठित इत्यर्थः । तत्फलं घटादौ वक्ष्यते । मतान्तरमाह–**तवर्गेति ।** तवर्गचतुर्थान्तनाधधातोर्नृनन्द्योश्च णोपदेशेषु पर्युदासाऽभावमङ्गीकृत्य तेषामपि णोपदेशत्वमाहुरित्यर्थः । अत्र मते पञ्चभ्यो भिन्ना णोपदेशा इति फलितम् । भाष्यविरोधोऽत्रारुचिबीजम् । ननु णकारमुपदिश्य तस्य किमर्थं नकारो विधीयते, नकार एवोपदिश्यतामित्याशङ्क्य तत्प्रयोजनमाह–**उपसर्गात् ।** 'रषाभ्यां नो णः' इत्यधिकृतम् । तदाह–**उपसर्गस्थादिति ।** 'समासेऽङ्गुलेः सङ्गः' इत्यतः समास इत्यनुवृत्तेरसमासे न स्यादित्यसमासग्रहणम् । तथा सति 'प्रणाम' इत्यादौ समासे न स्यादित्यपिग्रहणं। तदाह–**समासेऽसमासेऽपीति ।** णस्योपदेशो यस्मिन्निति विग्रहः । **प्रणदतीति ।** भिन्नपदत्वादप्राप्तिः । **प्रणिनदतीति ।** नेर्गदेति णत्वम् । नचात्र 'उपसर्गादसमास' इति धातुनकारस्य णत्वं शङ्क्यम्, अट्कुप्वाङ्भिन्नेन व्यवधानात् । **अर्देति ।**

---

शे.]अचकासीदित्यादौ तु चकाराऽकारे नातिप्रसङ्गः,सिच्परत्वेनाऽकारविशेषणात्।नन्वेवं लघोरिति व्यर्थं,अतक्षीदित्यत्रापि 'येननाव्यवधान'न्यायेनैव वारणसम्भवादिति चेन्न, स्पष्टार्थत्वात् ।'अत'इति तु 'अकुटी'दित्यादौ वृद्धिवारणाय । **नेर्गद।** अत्राऽड्व्यवायेऽपीति वर्त्तते । तेनाऽकारादिव्यवधानेऽपि णत्वम् । यद्यपि तत्र सूत्रे रेफषयोर्निमित्तयोर्निमित्तिनश्च नस्याऽडादिव्यवाय आश्रितस्तथापि यत्र यन्निमित्तं निमित्ती च तयोरप्यडादिव्यवायेऽपि णत्वम्,अस्ति चात्र गदादेर्निमित्तत्वं, नेर्निमित्तित्वमिति स्पष्टं भाष्यकैयटयोः।धात्वादेरित्यनुवर्त्तनादाह–**धात्वादेरिति।**अत्रोपदेश इत्यनुवृत्त्याणादिनामधातुव्यावृत्तिर्बोध्या। **नाटीति।**'नट अवस्यन्दने' चुरादिरेव,व्याख्यानात्।तेन भ्वादिर्णोपदेश एव।**आहुरितिरि ।** भाष्यविरोधोऽत्राऽरुचिः। **उपसर्गाद ।** 'पूर्वपदात्सञ्ज्ञाया'मित्यतःपूर्वपदादित्यनुवृत्तौ तदाक्षिप्तसमासे एव स्यादतः–**असमासेऽपीति।**

'अत आदेः'। **तस्मान्नुड् द्विहलः** ।७।४।७१। द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात्। आनर्द। आर्दीत्। ५६ नर्द ५७ गर्द शब्दे। णोपदेशत्वाऽभावान्न णः। प्रनर्दति। गर्दति। जगर्द। ५८ तर्द हिंसायाम्। तर्दति। ५९ कर्द कुत्सिते शब्दे। कुत्सिते-कौक्षे। कर्दति। ६० खर्द दन्दशूके। दंशहिंसादिरूपायां दन्दशूकक्रियायामित्यर्थः। खर्दति। चखर्द। ६१ अति ६२ अदि बन्धने। अन्तति। आनन्त। अन्दति। आनन्द। ६३ इदि परमैश्वर्ये। इन्दति। इन्दाञ्चकार। ६४ विदि अवयवे। पवर्गतृतीयादिः। बिन्दति। अवयवं करोतीत्यर्थः। 'भिदी'ति पाठान्तरम्। ६५ गडि वदनैकदेशे। गण्डति। अन्तत्यादयः पञ्चैते न तिङ्विषया इति काश्यपः। अन्ये तु तिङमपीच्छन्ति। ६६ णिदि कुत्सायाम्। निन्दति। प्रणिन्दति। ६७ टुनदि समृद्धौ॥ **आदिर्ञिटुडवः**।१।३।५। उपदेशे धातोराद्या एते इतः स्युः। नन्दति। इदित्वान्नलोपो न। नन्द्यात्। ६८ चदि आह्लादे। [चन्दति]। चचन्द। ६९ त्रदि चेष्टायाम्। [त्रन्दति]। तत्रन्द। ७० कदि ७१ क्रदि ७२ क्लदि आह्वाने रोदने च। चकन्द। चक्रन्द। चक्लन्द। ७३ क्लिदि परिदेवने। चिक्लिन्द। ७४ शुन्ध शुद्धौ। [शुन्धति]। शुशुन्ध।

त.] तस्मात्। तच्छब्देन कृतदीर्घाकारः परामृश्यत इत्याह—**दीर्घीभूतादिति**। खर्द [दन्दशूके]। दन्दशूकस्य सर्पत्वात्तद्वाचित्वे धातुत्वं न सङ्गच्छत इत्याह—**दन्दशूकक्रियायामिति**। दन्दशूककर्तृकायामित्यर्थः। **आनन्तेति**। इदित्वान्नुम्। तस्मान्नुड् द्विहलः इति नुट्। **वदनैकदेश इति**। तत्क्रियायामित्यर्थः। **आदिर्ञिटुडवः**। 'उपदेशेऽजनुनासिक' इत्यतोऽनुवर्तनादाह—**उपदेशे इति**। उपदेशे किम्। ञिकारीयति। ञिष्वप्। 'ञीतः क्तः'। सुप्तः। 'ट्वितोऽथुच्'। नन्दथुः। 'ड्वितः क्त्रिः'। कृत्रिमम्। **क्लिदि परिदेवने**। अनुदात्तेत्सु पठितस्येह पाठः परस्मैपदार्थः। क्रियाफलस्य कर्तृगामित्वेऽपि परस्मैपदार्थं स्वरितेत्स्वयं न पठितः। **शुन्ध शुद्धौ**। अयं शौचकर्मणि युजादौ। माङ्गलिक एधतिरुक्तस्तवर्गीयान्तस्तदनुरोधेन कतिचित्तवर्गीयान्ताः

बा.] 'उपधायां चे'त्यत्र इक इत्यनुवर्तनादर्दतीत्यादौ न दीर्घः। लिटि णलि द्वित्वे हलादिशेषे अत आदेरित्यभ्यासाकारस्य दीर्घे आ अर्देति स्थिते—**तस्मान्नुट्**। द्वौ हलौ यस्य तस्येति विग्रहः। तच्छब्देन 'अत आदे'रिति कृतदीर्घः परामृश्यते। तदाह—**दीर्घीभूतादिति**। टकार इत्। उकार उच्चारणार्थः। टित्वादाद्यवयवः। तदाह—**आनर्देति**। **आर्दीदिति**। 'इट ईटी'ति सिज्लोपः। **नर्देत्यादि** स्पष्टम्। **कर्देति**। कुत्सितशब्देन कुत्सितविशेषो विवक्षित इत्याह—**कौक्ष इति**। कुक्षिभवे इत्यर्थः। **खर्देति**। **दन्दशूकः**—दंशनस्वभावः सर्पः। 'दन्दशूको बिलेशयः' इत्यमरः। ननु सर्पस्य क्रियात्वाऽभावात्कथं धात्वर्थत्वमित्यत आह—**दंशनेति**। **अति अदीति**। इदित्वान्नुम्। तदाह—**अन्ततीति**। **आनन्तेति**। 'अत आदे'रिति दीर्घः। 'तस्मान्नुड् द्विहलः' इति नुट्। एवम्—अन्दति। **आनन्देति**। नुट्। आन्दीत्। **इदीति**। **परमैश्वर्यम्** = परमेश्वरीभवनम्। **इन्दतीति**। इदित्वान्नुम्। **इन्दाञ्चकारेति**। 'इजादेश्चे' त्याम्। **बिदीति**। इदित्वान्नुमित्याह—**बिन्दतीति**। नन्ववयवस्य अक्रियारूपत्वात्कथं धात्वर्थत्वमित्यत आह—**अवयवं करोतीत्यर्थ इति**। अबिन्दीत्। अबिन्दिष्यमित्यादि। **पाठान्तरमिति**। पवर्गीयचतुर्थादिरित्यर्थः। **गडीति**। **वदनैकदेश इति**। तत्क्रियायामित्यर्थः। गण्डति। अगण्डीत्। **अन्तत्यादय इति**। अति अदि बन्धने, इदि परमैश्वर्ये, बिदि अवयवे, गडि वदनैकदेशे इति पञ्च धातवस्तिङ्प्रकृतयो न भवन्तीति काश्यपमतमित्यर्थः। **अन्य इति**। काश्यपादन्ये मुनयस्तिङमपि एभ्य इच्छन्तीत्यर्थः। **णिदीति**। इदित्वान्नुम्। णोपदेशत्वाण्णस्य नत्वम्। तदाह—**निन्दतीति**। **प्रणिन्दतीति**। 'उपसर्गादसमासेऽपी'ति णत्वम्। **टु नदीति**। **समृद्धिः**—प्रजापश्वादिसम्पत्तिः। **आदिः**। 'भूवादयो धातवः' इत्यस्माद्धातव इत्यनुवृत्तं षष्ठ्या विपरिणम्यते। 'उपदेशेऽजनुनासिकः' इत्यस्मादुपदेश इति, इदिति चानुवर्तते। आदिरिति इदिति च बहुत्वे एकवचनं। तदाह—**उपदेश इति**। ट्वित्करणं 'ट्वितोऽथु'जित्येतदर्थम्। **नन्दतीति**। इदित्वान्नुम्। **इदित्वादिति**। आशीर्लिङि यासुटः कित्त्वेऽपि इदित्वादनिदितामिति नलोपो नेत्यर्थः। **नन्द्यादिति**। अन्त्यात्, अन्यादित्यस्याप्युपलक्षणं। **चदीति**। इदित्वान्नुमित्याह—**चन्दतीति**। **त्रदीति**। अदुपधोऽयम्। इदित्वान्नुमित्याह—**त्रन्दतीति**। **कदि क्रदीति**। अदुपधौ। **क्लिदि परिदेवने इति**। अनुदात्तेत्सु-

शे.] ननु पूर्वपदाधिकारस्याऽत्र निवृत्तेर्व्याख्यानत एव सिद्धावदं व्यर्थम्। न चाऽसञ्ज्ञायां 'पूर्वपदा'दिति नियमव्यावर्तितणत्वप्रतिप्रसवाय समासाऽसमासयोर्विशिष्य विधानार्थम्। 'पूर्वपदा'दिति दृष्ट्या 'उपसर्गादसमासे' इत्यस्याऽसिद्ध्या नियमेन व्यावृत्तेः कर्तुमशक्यत्वात्। नचैतत् 'प्रकरणे प्रकरणमसिद्धं न तु सूत्रे सूत्र'मित्यर्थज्ञापकमिति वाच्यं, 'रषाभ्या'मित्यत्र 'समानपदे' इत्यस्याऽखण्डपदे इत्यर्थेन पूर्वपदादित्यस्य विध्यर्थत्वेन ज्ञापकाऽसम्भवादिति चेन्न। स्पष्टार्थत्वात्। **तस्मात्**। तच्छब्देन 'अत आदे'रिति कृतदीर्घः परामृश्यते, उपस्थितत्वात्, तदाह—**दीर्घीभूतादिति**। अत्रापि लिटीति वर्तते। दन्दशूकस्याऽक्रियात्वादाह—**दन्दशूकक्रियायामिति**। 'दन्दशूको बिलेशयः'। **वदनैकदेश इति**। तत्क्रियायामित्यर्थः। **आदिर्ञि**। 'ञिकारीयती'त्यादौ नेदं, तेषामनभिधानात्। यत्तूपदेश इत्यनुवृत्तेस्तत्र न दोष इति; तन्न, तस्याऽस्वरित-

नलोपः शुध्यात्। अथ कवर्गीयान्ता अनुदात्तेतो द्विचत्वारिंशत्। ७५ शीकृ सेचने। तालव्यादिः दन्त्यादिरित्येके। शीकते। शिशीके। ७६ लोकृ दर्शने। लोकते। लुलोके। ७७ श्लोकृ सङ्घाते। सङ्घातो ग्रन्थः। स चेह ग्रथ्यमानस्य व्यापारो, ग्रन्थितुर्वा। आद्येऽकर्मको, द्वितीये सकर्मकः। श्लोकते। ७८ द्रेकृ ७९ ध्रेकृ शब्दोत्साहयोः। उत्साहो—वृद्धिरौद्धत्यं च। दिद्रेके। दिध्रेके। ८० रेकृ शङ्कायाम्। रेकते। ८१ सेकृ ८२ स्रेकृ ८३ स्रकि ८४ श्रकि ८५ श्लकि गतौ। त्रयो दन्त्यादयः। द्वौ तालव्यादी। अषोपदेशत्वान्न षः। सिसेके। ८६ शकि शङ्कायाम्। [शङ्कते]। शशङ्के। ८७ अकि लक्षणे। अङ्कते। आनङ्के। ८८ वकि कौटिल्ये। वङ्कते। ८९ मकि मण्डने। मङ्कते। ९० कक लौल्ये। लौल्यं गर्वश्चापल्यं च। ककते। चकके। ९१ कुक ९२ वृक आदाने। कोकते। चुकुके। वर्कते। ववृके॥ * ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वप्रतिषेधेन। ९३ चक तृप्तौ प्रतीघाते च। चकते। चेके। ९४ ककि ९५ वकि ९६ श्वकि ९७ त्रकि ९८ ढौकृ ९९ त्रौकृ १०० ष्वष्क १०१ वस्क १०२ मस्क १०३ टिकृ १०४ टीकृ १०५ तिकृ १०६ तीकृ १०७ रघि १०८ लघि गत्यर्थाः। कङ्कते। डुढौके। तुत्रौके॥ * सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः। ष्वष्कते।

---

त.] पठिताः। इदानीं लोकप्रसिद्धककादिपाठक्रमेणाह—**अथेत्यादि**। **चुकुके इति**। परमपि गुणं बाधित्वा नित्यत्वात् 'असंयोगा'-दिति कित्त्वम्। **सुब्धात्वित्यादि**। सुब्धातोरुदाहरणानि—षट् दन्ता अस्य षोडन्। तमाचष्टे। णिचि टिलोपः। षोडयति। एवं षण्डं करोत्याचष्टे वा षण्डयति। षण्डीयतीत्यत्र तु षण्डशब्दात्क्यचि इत्वं बोध्यम्। एतच्च वार्तिकं भाष्ये प्रत्याख्यातम्। तथाहि 'धात्वादे'रिति सूत्रे उपदेश इति वर्तते। न च सुब्धातूनामुपदेशोऽस्ति। ष्ठिवुष्वष्कती तु

---

बा.] पठितस्येह पाठः परस्मैपदार्थः। **शुन्ध शुद्धाविति**। अकर्मकोऽयम्। **शुन्धतीति**। शुचिर्भवतीत्यर्थः। ननु शुधीत्येवमिदिदेवाऽयं कुतो न पठित इत्यत आह—**नलोप इति**। आशीर्लिङि 'अनिदिता'मिति नलोपे शुध्यादिति रूपमिष्टम्। इदित्वे तु नलोपो न स्यादिति भावः। **'अथ कवर्गीयान्ता'** इत्यादि **'लोकृ'** इत्यन्तं स्पष्टम्। **श्लोकृ इति**। सङ्घातशब्दं व्याचष्टे—**ग्रन्थ इति**। ननु वाक्यसमुदायात्मकस्य ग्रन्थस्य अक्रियात्वात् कथं धात्वर्थत्वमित्याशङ्क्याह—**स चेहेति**। ग्रन्थनं ग्रन्थः—सङ्घीभावः, सङ्घीकरणं वा। तत्र सङ्घीभवनं सङ्घनिष्ठम्। सङ्घीकरणं तु सङ्घीकर्तृनिष्ठम्। तत्र सङ्घीभवनार्थकत्वेऽकर्मकः। सङ्घीकरणार्थत्वे सकर्मक इत्यर्थः। **श्लोकत इति**। सङ्घीभवतीत्यर्थः। सङ्घीकरोतीति वा। **द्रेकृ ध्रेकृ इति**। शब्दनं शब्दः। [**एच इगिति ह्रस्व इति**। लिटि एशि द्वित्वे 'हलादिःशेषे' देद्रेक् ए इति स्थिते अभ्यासे एकारस्य ह्रस्वो भवन् 'एच इग्घ्रस्वादेशे' इति इकारो भवतीत्यर्थः।] **दिध्रेके इति**। अभ्यासे धकारस्य जश्त्वेन दकारः। एकारस्य तु ह्रस्व इकारः। **रेकृ इति**। **शङ्का**—संशयः, आक्षेपो वा। **शीकृ सेचने** इत्यारभ्य एतत्पर्यन्ता ऋदितः। **सेकृ इति**। आद्यौ एकारमध्यौ ऋदितौ। इतरे त्रयोऽउपधा इदितः। **त्रय इति**। पञ्चसु आद्यास्त्रय इत्यर्थः। **अषोपदेशत्वादिति**। सेकृधातोः पर्युदासान्न षोपदेशत्वम्। द्वितीयतृतीययोस्तु दन्त्याच्परकसादित्वाऽभावान्न षोपदेशत्वं। ततश्च सकारस्यादेशसकारत्वाऽभावान्न षत्वमिति भावः। 'एच इग्घ्रस्वादेशे' इत्यभिप्रेत्याह—**सिसेक इत्यादि**। 'सस्रङ्के' इत्यादावपि इदित्त्वान्नुम्। **शकीति**। इदित्त्वान्नुमित्याह—**शङ्कते**। **शशङ्क इति**। **अकीति**। लक्षणं—चिह्नीकरणम्। **अङ्कत इति**। इदित्त्वान्नुम्। **आनङ्क इति**। 'तस्मान्नुड् द्विहलः' इति नुट्। **वकि कौटिल्ये** इत्यादि स्पष्टम्। **कुक वृकेति**। द्वितीय ऋदुपधः। शपि लघूपधगुणं मत्वा आह—**कोकत इति**। **चुकुक इति**। 'असंयोगा'दिति कित्त्वान्न लघूपधगुणः। अभ्यासे चुत्वं। लघूपधगुणे रपरत्वं मत्वाह—**वर्कत इति**। लिटि 'असंयोगा'दिति कित्वान्न गुण इति मत्वाह—**ववृके इति**। उरदत्वं, हलादिः शेषः। ननु कित्त्वात्परत्वाद्गुणः स्यात्, कृते गुणे रपरत्वे संयोगात्परत्वेन कित्त्वस्याऽप्रवृत्त्याऽनित्यत्वादित्यत आह—**ऋदुपधेभ्य इति**। **चकेति**। तृप्तावकर्मकः। प्रतिघाते सकर्मकः। एत्वाभ्यासलोपौ मत्वाह—**चेक इति**। **ककीति**। एते पञ्चदश धातवः। आद्याश्चत्वार इदितः। द्वितीयो वकारादिः। तृतीयस्तालव्यादिः। पञ्चमषष्ठौ दशमाद्याश्चत्वारश्च ऋदितः। दशमद्वादशौ इदुपधौ। रघिलघी इदितौ चतुर्थान्तौ। **'कङ्कते'** इत्यादाविदित्वान्नुम्। **डुढौके तुत्रौक इति**। अभ्यासे ढस्य

---

शे.]त्वात्। किं च तदनुवृत्तावादिग्रहणवैयर्थ्यापत्तिः, षड्ादिशब्दे उपदेशाऽभावादेव तदप्रवृत्तेरित्याहुः। **द्विचत्वारिंशदिति**। 'विभाषा चत्वारिंशत्प्रभृतौ' इति विकल्पविधानादात्वाऽभावः। **अषोपदेशत्वादिति**। सेकः पर्युदासात्,अन्ययोर्दन्त्याऽजन्तसादित्वाऽभावादित्यर्थः। **ऋदुपधेभ्य इति**। यद्यपि 'बिभिदतु'रित्यत्र कित्त्वं नित्यं, तथापि ऋदुपधे तदनित्यं, गुणे[कृते]संयोगात्परत्वात्। तत्र परत्वाद्गुणे प्राप्ते इदम्। कित्त्वाऽवकाशः—ईजतुरित्यादिः,गुणावकाशः—चेततीत्यादिः। **परे** तु ऋदुपधविषयैतल्लक्षणोपप्लवकृतकित्त्वस्याऽनवकाशत्वमेव। तदुक्तं भाष्ये—'उक्तं वा कसस्यानवकाशत्वादपवादो गुणस्ये'ति। यथा 'कसस्य कित्त्वसामर्थ्यादल्लिक्षदित्यादौ गुणो बाध्यते, तथेह ऋदुपधविषयैतल्लक्षणोपप्लव-

ष्वष्क्के । अत्र तृतीयो दन्त्यादिरित्येके । **लघि** भोजननिवृत्तावपि । **१०९ अघि ११० वघि १११ मघि** गत्याक्षेपे । आक्षेपो निन्दा । गतौ गत्यारम्भे चेत्यन्ये । अङ्घते । आनङ्घे । वङ्घते । मङ्घते । **मघि** कैतवे च । **११२ राघृ ११३ लाघृ ११४ द्राघृ** सामर्थ्ये । राघते । लाघते । ध्राघृ इत्यपि केचित् । **द्राघृ** आयामे च । आयामो दैर्घ्यम् । द्राघते । **११५ श्लाघृ** कत्थने । श्लाघते । **अथ परस्मैपदिनः पञ्चाशत्** । **११६ फक्क** नीचैर्गतौ । नीचैर्गतिः-मन्दगमनमसद्व्यवहारश्च । फक्कति । पफक्क । **११७ तक** हसने । तकति । **११८ तकि** कृच्छ्रजीवने । तङ्कति । **११९ बुक्क** भषणे । भषणं श्वरवः । बुक्कति । **१२० कख** हसने । प्रनिकखति । **१२१ ओख १२२ राखृ १२३ लाखृ १२४ द्राखृ १२५ ध्राखृ** शोषणाऽलमर्थयोः । ओखति । ओखांचकार । **१२६ शाखृ १२७ श्लाखृ** व्याप्तौ । शाखति । **१२८ उख १२९ उखि १३० वख १३१ वखि १३२ मख १३३ मखि १३४ णख १३५ णखि १३६ रख १३७ रखि १३८ लख १३९ लखि १४० इख १४१ इखि १४२ ईखि १४३ वल्ग १४४ रगि १४५ लगि १४६ अगि १४७ वगि १४८ मगि १४९ तगि १५० त्वगि १५१ श्रगि १५२ श्लगि १५३ इगि १५४ रिगि १५५ लिगि** गत्यर्थाः । द्वितीयान्ताः पञ्चदश । तृतीयान्तास्त्रयोदश । इह खान्तेषु-रिख त्रख त्रिखि शिखि इत्यपि चतुरः केचित्पठन्ति । **अभ्यासस्याऽसवर्णे** ।६।४।७८। अभ्यासस्य इवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि । उवोख । सन्निपातपरिभाषया 'इजादे'-

त.]यकारादौ । 'लोपो व्यो'रिति यलोपः । **प्रनिकखतीति** । 'शेषे विभाषे'त्यत्र अकखादाविति पर्युदासान्नेर्णत्वं नेति भावः। **असवर्णेऽचीति** । असवर्णे किम् ? । ऊखतुः । अचि किम् ? । इयाज, उवाय । **उवोखेति** । 'द्विर्वचनेऽची'ति निषेधात्पूर्वं द्वित्वं, पश्चादुकारस्य लघूपधगुणे कृते अभ्यासस्योवङ् । एवमियेषेत्यत्रेयङ् । असवर्णग्रहणसामर्थ्यादियङादौ कर्तव्ये गुणोऽत्र न स्थानिवदिति बोध्यम् । **संनिपातपरिभाषयेति** । आमि सति लिङ्परत्वं धातोर्न सिध्येदिति

बा.]जश्त्वेन डकारः,ओकारस्य ह्रस्व उकारः। अथ ष्वष्कधातोः षोपदेशपरिगणनाद्दात्वादेरिति सत्वे प्राप्ते आह-**सुब्धा-दिष्विति** । **षष्वष्क इति** । संयुक्तहल्मध्यस्थत्वादेत्वाभ्यासलोपौ न, संयोगात्परत्वेन लिटः कित्वाऽभावाच्च । **तृतीय इति** । तथा च 'स्वष्कते'इति रूपं । केवलदन्त्यपरकसादित्वाऽभावेन षोपदेशत्वाऽभावः । **टेकृ इति** । लघूपधगुणः । **टीकत इति** । दीर्घोपधत्वाच्च गुणः । एवं तेकते तीकत इति । रङ्घते लङ्घते । इदित्त्वान्नुम् । **लघि भोजन-निवृत्तावपीति** । निवृत्तिः-विमुखीभवनम् । लङ्घते । न भुङ्क्त इत्यर्थः । **अघीति** । त्रयोऽपि चतुर्थान्ता इदितः । **आनङ्घ इति** । 'तस्मान्नुड् द्विहलः' इति नुट् । **वङ्घत इति** । इदित्त्वान्नुम् । लिटि तु ववङ्घे इति रूपम् । वादित्वात्संयुक्तहल्मध्यस्थत्वात्संयोगात्परत्वेन लिटः कित्वाऽभावाच्च एत्वाभ्यासलोपौ न । **मघि कैतवे चेति** । कैतवं वञ्चना । **राघृ इति** । त्रयोऽपि ऋदितः । **सामर्थ्यं**-कार्यक्षमीभवनम् । **ध्राघृ इत्यपीति** । चतुर्थादिमपि केचित् पठन्तीत्यर्थः । **द्राघृ इति** । **आयामः**-दीर्घीभवनम् । **श्लाघृ कत्थन इति** । **कत्थनं**-स्तुतिः । **शीकृ** इत्या-दयो द्विचत्वारिंशदात्मनेपदिनो गताः । **फक्क नीचैरित्यादि** स्पष्टं । **प्रनिकखतीति** । 'शेषे विभाषे'त्यत्र अकखादा-विति पर्युदासान्नेर्णत्वं नेति भावः । **ओखृ इति** । **अलमर्थः**-भूषणक्रिया, पर्याप्तिः, वारणं वा । ओखति । ओखांचकार । **शाखृ श्लाखृ इति** । श्लाघृ इति चतुर्थान्त आत्मनेपदेषु गतः । **उख उखीति** । **पञ्चदशेति** । 'ईखि इत्यन्ता'इति शेषः । **त्रयोदशेति** । 'वल्गादय' इति शेषः । तत्र इदित्त्वान्नुम् । आशीर्लिङि नलोपाऽभावश्च । **पठन्तीति** । तेषां मते खान्ता एकोनविंशतिरिति बोध्यम् । **ओखतीति** । शपि लघूपधगुणः । लिटि णलः पित्त्वेन कित्वाऽभावात्प्राप्तस्यापि लघूपधगुणस्य 'द्विर्वचनेऽचीति' निषिद्धतया गुरुमत्त्वाऽभावादामभावे सति पूर्वं द्वित्वे कृते हलादिःशेषे पश्चात् 'वार्णादाङ्गं बलीय' इति परिभाषाया अन्तरङ्गमपि सवर्णदीर्घं बाधित्वा लघूपधगुणे कृते उ ओख अ इति स्थिते, उवर्णस्य यणि प्राप्ते--**अभ्यासस्य** । 'अचि श्नुधात्वि'त्यतोऽचीति, य्वोरियङुवङाविति चानुवर्तते । इश्च उश्च यू, तयोरिति विग्रहः । अभ्यासविशेषणमिदं । तदन्तविधिः । तदाह-**इवर्णोवर्णान्तस्येति** । ङित्त्वादन्तादेशौ । **उवोखेति** । 'अचि श्नुधात्वि'त्यस्य तु नात्र प्राप्तिः, अजादौ प्रत्यये परत एव तत्प्रवृत्तेः, अभ्यासस्य भत्वाऽभावाच्च ।

शे.]प्रापितातिदेशसामर्थ्यादित्यर्थः' इति कैयटः । न च परत्वाद्गुणस्यैतद्विषयलक्षणोपप्लव एव नेति वाच्यं, 'असंयोगा'दिति कित्त्वस्यैतद्विषये निषेधातिदेशकत्वेन 'निषेधाश्च बलीयांसः' इति न्यायादत्र विषये विप्रतिषेधाऽप्रवृत्तेः । न च संप्रसारण-विधौ कित्त्वस्य कृतार्थत्वाद्दुर्बलेनानेनाऽतिदेशेन प्राप्यमाणो गुणनिषेधो दुर्बल इति विधिरनेन स्पर्द्धत इति परत्वप्रवृत्ति-रस्त्येवेति वाच्यं, 'विचति' 'गृह्णाती'त्यादावतिदेशप्राप्तङित्त्वस्य संप्रसारणेन कृतार्थतया तदनन्तरप्राप्तगुणेन त्वदुक्त-रीत्याऽतिदेशप्राप्तगुणनिषेधबाधापत्तेः । एवञ्च 'विषम उपन्यासः, अनवकाशं क्सस्य कित्त्वम्, इह पुनरुभयं साव-काश'मित्यादिस्तदुत्तरभाष्यग्रन्थ एकदेश्युक्तिरित्याहुः । **उवोखेति** । 'द्विर्वचनेऽची'ति निषेधात्पूर्वं द्वित्वे [कृते] उकारस्य

रित्याम्न । ऊखतुः । ऊखुः । इह सवर्णदीर्घस्याभ्यासग्रहणेन ग्रहणाद्ध्रस्वः प्राप्तो न भवति, सकृत्प्रवृत्तत्वात् । आङ्गत्वाद्धि पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वे कृते ततो दीर्घः । वार्णादाङ्गं बलीय इति न्यायात्परत्वाच्च । उङ्खति।

---

त.]भावः। अन्ये तु–'इजादे'रिति सूत्रे गुरुमानिति नित्ययोगे मतुप् । ततश्च नित्यं यो गुरुमान् 'एध वृद्धौ'इत्यादिस्तत्रैव स्यादिति नात्र आमः प्रसक्तिरित्याहुः । **ऊखतुरिति**। अत्र कित्त्वाद्गुणाऽभावे 'अभ्यासस्यासवर्णे' इति उवङ् न भवति। ननु इयेष उवोखेत्यत्राप्यन्तरङ्गत्वात्सवर्णदीर्घे कृतेऽच्परत्वाभावादियङुवङौ न स्त इतीष्टरूपाऽसिद्धेः किं तत्राऽसवर्णग्रहणेनेति चेत् । अत्राहुः–'वार्णादाङ्गं बलीयः' इति परिभाषाज्ञापनार्थमेवाऽसवर्णग्रहणं कृतम् । तेन भवतीत्यत्रान्तरङ्गमपि यणं बाधित्वा गुणो भवति । तथा करोतेर्घञि 'कार' इत्यत्र यणं बाधित्वा वृद्धिर्भवति । न चैवं सिवेरौणादिके -नप्रत्यये 'स्योन' इत्यत्र 'छ्वोः शू'डित्यूठि कृते लघूपधगुणं बाधित्वा यण न स्यादिति वाच्यम् । समानाश्रय एव वार्णादाङ्गस्य बलीयस्त्वात् । इह तु निमित्तभेदेन व्याश्रयत्वमिति। **अभ्यासग्रहणेनेति**। पूर्वस्यान्तवत्त्वेनेत्यर्थः। **पर्जन्यवल्लक्षणेति**। उपयोगाऽनुपयोगाऽविचारेण प्रवर्तमानं शास्त्रं ह्रस्वस्थानेऽपि ह्रस्वं प्रवर्तयतीत्यथः । तथा चैकस्मिँल्लक्ष्ये लक्षणं सकृदेव प्रवर्तेत इति न तस्य पुनः प्रवृत्तिरिति भावः । **आङ्गं बलीय इति** । नन्वत्र ह्रस्वसवर्णदीर्घयोर्निमित्तभेदात्समानाश्रयत्वाऽभावे कथमाङ्गस्य बलीयस्त्वमिति चेत् । सत्यम् । इष्टानुरोधेन स्थानिनमादाय क्वचित्समानाश्रयत्वाभ्युपगमात् । अत एव उङ्शब्दे इत्यस्माल्लिटि ऊवे ऊवाते इत्यादीष्टं सिध्यति । उवङः प्राक् सवर्णदीर्घप्रवृत्तौ तन्न सिध्येदिति दिक् । **परत्वाच्चेति** । आपाततोऽयं हेतुः, ह्रस्वस्याऽऽङ्गत्वेन बहिरङ्गत्वादन्तरङ्गं सवर्णदीर्घं प्रति परत्वोपन्यासस्यायुक्तत्वात् । **उङ्खतीति** । इदित्त्वान्नुम् । लिटि उङ्खाञ्चकार । आशिषि–उङ्ख्यात् । **ववखतुरिति** । वादित्वादेत्वाभ्यासलोपौ न ।

---

बा.]ननु द्वित्वे कृते लघूपधगुणे सति इजादिगुरुमत्त्वादाम् स्यादित्यत आह–**संनिपातेति**। णलि परे विहितगुणसंपन्नमिजादिगुरुमत्त्वमाश्रित्य आमं गुणो न प्रवर्तयति, आमि सति धातोर्णल्परकत्वव्याघातादिति भावः।**ऊखतुरिति** । अपित्त्वेन कित्त्वाल्लघूपधगुणाऽभावे द्वित्वे हलादिशेषे सवर्णपरकत्वादभ्यासस्याऽसवर्ण इति इयङभावे सवर्णदीर्घे रूपमिति भावः। ननु 'ऊखतु'रित्यत्र ऊकारस्य सवर्णदीर्घसंपन्नस्य एकादेशतया पूर्वान्तत्वेनाऽभ्याससंबन्धित्वात् 'ह्रस्व' इत्यभ्यासस्याऽचो विधीयमानो ह्रस्वः प्राप्नोतीत्याशङ्कते–**इहेति**। अथ परहरति–**न भवतीति**। कुत इत्यत आह–**सकृत्प्रवृत्तत्वादिति** । तदेवोपपादयति–**आङ्गत्वादिति** । उ-उखतुरिति स्थिते पर्जन्यवल्लक्षणप्रवृत्त्या अभ्यासह्रस्वे सवर्णदीर्घे 'ऊखतु'रिति स्थितिः । तत्र ऊकारस्य पुनरभ्यासह्रस्वो न भवति। 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्ति'रिति न्यायादित्यर्थः। ननु वर्णमात्रापेक्षत्वेनाऽन्तरङ्गतया प्रथमं सवर्णदीर्घ एव स्यादिति ह्रस्वस्य प्रथमं प्रवृत्तिर्दुरुपपादेत्यत आह–**वार्णादिति**। तथा चानया परिभाषया बहिरङ्गोऽपि ह्रस्व एव प्रथमं प्रवर्तेत इति भावः । **परत्वाच्चेति** । नन्विदमनुपपन्नम्, उक्तरीत्या अन्तरङ्गं सवर्णदीर्घं प्रति ह्रस्वस्य परत्वकथनाऽनौचित्यादिति चेन्न, **परत्वादित्यस्य** परकालप्राप्तिकत्वादित्यर्थात् । अभ्यासविकारेषु परस्परं बाध्यबाधकभावाऽभावेन युगपदेव हलादिशेषे ह्रस्वे च कृते पश्चात्प्रवर्तमानस्य सवर्णदीर्घस्य 'पूर्वं पूर्वमन्तरङ्गं, परं परं बहिरङ्ग'मिति न्यायेन बहिरङ्गत्वादित्यलम् । **उङ्खतीति**। इदित्त्वान्नुम् । **ववाखेति** । वखधातोर्णलि उपधावृद्धिः । **ववखतुरिति** । वादित्वादेत्त्वाभ्यासलोपौ न । **वङ्खतीति** । वखिधातोरिदित्त्वान्नुम् । ववङ्ख । **मेखतुरिति**। एत्त्वाभ्यासलोपौ । [**मङ्खतीति** । मखिधातोरिदित्त्वान्नुम् । **ममङ्खेति** । संयुक्तहल्मध्यस्थत्वादेत्वाभ्यासलोपौ न । **नखति नङ्खतीति** । 'णो नः' इति नत्वम् । **रखतीति**। णलि तु उपधावृद्धिः। रराख । अतुसादावेत्वाभ्यासलोपौ–**रेखतुरित्यादि** । **रङ्खतीति** । इदित्त्वान्नुम् । ररङ्ख । **एखतीति** । इखधातोः शपि लघूपधगुणः। इयेख । ईखतुः। **इङ्खतीति** । इदित्त्वान्नुम् । इङ्खांचकार । **ईङ्खतीति** । अलघूपधत्वान्न गुणः। ईङ्खांचकार । **वल्गतीति** । लिटि ववल्ग ववल्गतुः । **रङ्गतीति लङ्गतीति** । ररङ्गतुः । '**अङ्गतीति** । लिटि–आनङ्ग । **वङ्गतीति** । लिटि–ववङ्ग ववङ्गतुः । **मङ्गतीति** । लिटि–ममङ्ग ममङ्गतुः। **तङ्गतीति** ।लिटि–ततङ्ग ततङ्गतुः। **त्वङ्गतीति** । लिटि तत्वङ्ग तत्वङ्गतुः । **श्रङ्गतीति** । लिटि–शश्रङ्ग शश्रङ्गतुः। **श्लङ्गतीति** । लिटि–शश्लङ्ग शश्लङ्गतुः । **इङ्गतीति** । लिटि इङ्गांचकार । **रिङ्गतीति** । लिटि–रिरिङ्ग रिरङ्गतुः । **लिङ्गतीति** । अथ खान्तेषु रिखादिचतुर्णां मतान्तरसिद्धानामु-

---

शे.]वार्णादाङ्गस्य बलीयस्त्वात्सवर्णदीर्घं बाधित्वा गुणे कृते उवङ्। एतेन गुणस्य स्थानिवत्त्वेनाऽन्तरङ्गत्वात्सवर्णदीर्घःस्यादित्यपास्तम् , पूर्वस्यैव विधौ स्थानिवत्त्वात्। उवङि तु न स्थानिवत्त्वम्, असवर्णग्रहणसामर्थ्यात् । **सन्निपातेति**। आमि सति धातोर्णल्परत्वव्याघातः स्यादिति भावः । **वार्णादिति** । अत्र हि 'अभ्यासस्ये'ति सूत्रं ज्ञापकम् । तद्धि 'इयेषे' त्यादावियङर्थम् । तत्र पूर्वप्राप्तगुणवृद्ध्योः 'द्विर्वचनेऽची'ति निषेधे द्वित्वोत्तरं प्राप्ते गुणवृद्धी बाधित्वाऽन्तरङ्गत्वात्सवर्णदीर्घे तद्वैयर्थ्यं स्पष्टमेवेत्यन्यत्र विस्तरः। **परत्वाच्चेति** ।–अस्य–परकालप्राप्तिकत्वादित्यर्थः । एवञ्चाऽभ्यासविकारेबाध्यबाधकभावाऽभावेन ह्रस्वहलादिःशेषयोर्युगपत्प्रवृत्तौ ततःपरकालो दीर्घ इत्यन्तरङ्गत्वाद्दीर्घत्वं स्यादिति न वाच्यमिति भावः।

ववखतुः । वङ्खति । मेखतुः । त्वगि कम्पने च । १५६ युगि १५७ जुगि १५८ बुगि वर्जने । युङ्गति । १५९ घघ हसने । घघति । जघाघ । १६० मघि मण्डने । मङ्घति । १६१ शिघि आघ्राणे । शिङ्घति ।

अथ चवर्गीयान्ताः। तत्रानुदात्तेत एकविंशतिः। १६२ वर्च दीप्तौ। वर्चते। १६३ षच सेचने सेवने च । सचते । सेचे । सचिता । १६४ लोचृ दर्शने । लोचते । लुलोचे । १६५ शच व्यक्तायां वाचि । शेचे । १६६ श्वच १६७ श्वचि गतौ । श्वचते । श्वञ्चते । १६८ कच बन्धने । कचते । १६९ कचि १७० काचि दीप्तिबन्धनयोः। चकञ्चे। चकाञ्चे। १७१ मच १७२ मुचि कल्कने। कल्कनं दम्भः शाठ्यं च। कथनमित्यन्ये । मेचे । मुमुञ्चे । १७३ मचि धारणोच्छ्रायपूजनेषु। ममञ्चे। १७४ पचि व्यक्तीकरणे। पञ्चते। १७५ ष्टुच प्रसादे। स्तोचते। तुष्टुचे। १७६ ऋज गतिस्थानार्जनोपार्जनेषु। अर्जते। नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते। तेन द्विहल्त्वान्नुट् । आनृजे । १७७ ऋजि १७८ भृजी भर्जने। ऋञ्जते। 'उपसर्गादृती'ति वृद्धिः। प्रार्ञ्जते। ऋञ्जाञ्चक्रे । आर्ञ्जिष्ट । भर्जते । बभृजे । अभर्जिष्ट । १७९ एजृ १८० भ्रेजृ १८१ भ्राजृ दीप्तौ । एजांचक्रे । १८२ ईज गतिकुत्स-

---

त.]एखति । इङ्खति । इङ्खांचकार । ईखति । ईखाञ्चकार । इङ्गति । इङ्गांचकार । **त्वगि कम्पने इति** । अयम् उख उखि इति दण्डके गतौ पठितस्य गतिविशेषे वृत्तिं बोधयितुं पठ्यते । अतएवानतिप्रयोजनत्वाद्बहुषु पुस्तकेषु न पठितः । **सेवने चेति** । 'यं पूरवो वृत्रहणं सचन्ते' इत्यादौ सेवन्ते इत्यभियुक्तैर्व्याख्यातत्वात् । स्वरितेत्तु 'षच समवाये' इति वक्ष्यते । **लोचृ** । ऋदित्त्वात् 'नाग्लोपी'ति ह्रस्वनिषेधः । अलुलोचत् । 'पचि व्यक्तीकरणे' । 'पचि विस्तारवचने' इति चुरादौ । **ऋज गति** । **अर्जनं**–प्राधान्येन, **उपार्जनं** तु–प्रासङ्गिकम् । **नुड्विधावित्यादि** । 'नुड्विधिलादेशविनामेषु तु प्रतिविधेय'मिति वचनान्नुडादिविधिषु वर्णैकदेशस्य वर्णत्वेन ग्रहणादिति भावः । यद्वा द्विहल्ग्रहणं भाष्यादौ प्रत्याख्यायते। न च आट आटतुरित्यत्रातिप्रसङ्गः, 'अश्नोतेश्चे'त्यनेन 'अवर्णोपधस्य यदि भवति तर्ह्यश्नोतेरेवे'ति नियमात्सिद्धमिष्टमित्यन्यत्र विस्तरः । **ऋजिभृजी** । भर्जनं–जलं विना तण्डुलादेः संतापविशेषः । ईदित्त्वात् 'श्वीदितो निष्ठाया'मिति नेट् । भृक्तः । भृक्तवान् । **एजृ भेजृ भ्राजृ** । भ्राजेर्ऋदित्करणमनुदात्तेत्त्वमात्रफलम् । 'भ्राजभासे'त्या-

---

बा.]दाहरणमाह–**रेखतीति** । शपि लघूपधगुणः । रिरेख रिरिखतुः। **त्रखतीति** । लिटि–तत्राख तत्रखतुः । **त्रिङ्खतीति** । लिटि–तित्रिङ्ख तित्रिङ्खतुः । **शिङ्खतीति** । लिटि शिशिङ्ख शिशिङ्खतुः । **त्वगि कम्पने चेति** । चाद्गतौ । त्वङ्गति तत्वङ्ग । **युगादीति** । त्रयोऽपि इदितः । युङ्गति बुङ्गति जुङ्गति । **घघ हसने इति** । घघति । णलि उपधावृद्धिः । जघाघ जघघतुः । लिण्निमित्तादेशादित्वादेत्वाभ्यासलोपौ न । **मघि मण्डन इति** । इदित्त्वान्नुमित्याह–**मङ्घतीति** । ममङ्घ ममङ्घतुः । **शिघि आघ्राण इति** । शिङ्घति शिशिङ्घ । फक्कादयः पञ्चाशद्गताः । **वर्च दीप्ताविति** । **दीप्तिः**–प्रकाशः । **षच सेचन इति** । अच्परकसादित्वात् षोपदेशोऽयम् । स्वरितेत्तु 'षच समवाये' इति वक्ष्यते । **सेच इति** । सत्वस्य लिण्निमित्तत्वाऽभावादादेशादित्वेऽपि एत्वाभ्यासलोपौ । **दम्भः शाठ्यं चेति** । परविस्रम्भार्थं धर्माद्याचरणं **दम्भः**–कापट्याऽपरपर्यायः । 'कपटोऽस्त्री व्याजदम्भोपधयः' इत्यमरः । **शाठ्यं** कुटिलीभावः। 'निकृतस्त्वनृजुः शठः' इत्यमरः । **पचि व्यक्तीकरण इति** । 'पचि विस्तारे' इति चुरादौ वक्ष्यते। 'पचे'त्येके। **ष्टुच प्रसाद इति**। ष्टुत्वसंपन्नष्टकारः। ततश्च दन्त्यपरकसादित्वात् षोपदेशोऽयम्। **स्तोचत इति**। षस्य सत्वे सति ष्टुत्वं निवर्तत इति भावः । **तुष्टुचे इति** । 'शर्पूर्वाः खयः' इति तकारशेषः । आदेशसकारत्वात् षत्वम् । **ऋज गतीति**। **अर्जनं**–संपादनम्। **उपार्जनं**–सेवनम्। 'ऊर्जनेष्वि'त्यन्ये। **अर्जत इति**। शपि लघूपधगुणः। रपरत्वम्। **नुड्विधाविति**। वार्तिकमिदम्। **आनृज इति** । लिटोऽसंयोगादिति कित्त्वाद्गुणाऽभावे द्वित्वे उदरत्वे रपरत्वे हलादिः शेषे अत आदेरिति दीर्घे नुडिति भावः। **ऋजी भृजी इति** । ऋदुपधौ द्वौ । आद्य इदित् । द्वितीयस्य ईदित्त्वात् 'श्वीदितो निष्ठाया'मिति नेट् । इदित्त्वान्नुम् । अनुस्वारपरसवर्णौ। **ऋञ्जांचक्र इति**। नुमि सति 'संयोगे गुर्वि'ति ऋकारस्य गुरुत्वादिजादेश्चेत्याम् । ऋञ्जिता । ऋञ्जिष्यते । ऋञ्जताम् । आर्ञ्जत । ऋञ्जेत । ऋञ्जिषीष्ट । अथ लुङि रूपं दर्शयति–**आर्ञ्जिष्टेति** । लुङस्तादेशः । च्लिः । सिच् । इट् । लघूपधत्वाऽभावान्न गुणः । आट् वृद्धिः । षत्वम् । ष्टुत्वम् । लृङि–आर्ञ्जिष्यत । **भर्जत इति** । शपि लघूपधगुणः । रपरत्वम् । बभृजे । भर्जिता । भर्जिष्यते । भर्जताम् । अभर्जत । भर्जेत । भर्जिषीष्ट । लुङि रूपमाह–**अभर्जिष्टेति** । लुङस्तादेशः। च्लिः सिच् । इट् । गुणः। रपरत्वम् । अडागमः। षत्वं । ष्टुत्वम् । लृङि-अभर्जिष्यत । **एजृ भ्रेजृ भ्राजृ इति** । आद्ययोर्ऋदित्वं 'नाग्लोपी'त्यर्थम् । तृतीयस्य तु अकारेत्कत्वेऽप्यात्मनेपदं सिध्यति ।

नयोः । ईजांचक्रे । अथ द्विसप्ततिर्व्रज्यन्ताः परस्मैपदिनः । १८३ शुच शोके । शोचति । १८४ कुच शब्दे तारे । कोचति । १८५ कुञ्च १८६ क्रुञ्च कौटिल्याऽल्पीभावयोः । 'अनिदिता'मिति नलोपः । कुच्यात् । कुञ्च्यात् । १८७ लुञ्च अपनयने । लुच्यात् । १८८ अञ्चु गतिपूजनयोः । अच्यात् । गतौ नलोपः । पूजायां तु अञ्च्यात् । १८९ वञ्चु १९० चञ्चु १९१ तञ्चु १९२ त्वञ्चु १९३ म्रुञ्चु १९४ म्लुञ्चु १९५ म्रुचु १९६ म्लुचु गत्यर्थाः । वच्यात् । चच्यात् । तच्यात् । त्वच्यात् । अम्रुञ्चीत् । अम्लुञ्चीत् । जॄस्तन्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च।३।१।५८। एभ्यश्च्लेरङ् वा स्यात् । अम्रुचत् । अम्रोचीत् । अम्लुचत् । अम्लोचीत् । १९७ ग्रुचु १९८ ग्लुचु १९९ कुजु २०० खुजु स्तेयकरणे । जुग्रोच । अग्रुचत् । अग्रोचीत् । जुग्लोच । अग्लुचत् । अग्लोचीत् । अकोजीत् । अखोजीत् । २०१ ग्लुञ्चु २०२ षस्ज गतौ । अङ् [वा] । अग्लुचत्। अग्लुञ्चीत् । सस्य श्चुत्वेन शः, [तस्य] जश्त्वेन जः । सज्जति । अयमात्मनेपद्यपि । सज्जते । [गुज] २०३ गुजि अव्यक्ते शब्दे। गुञ्जति। गुञ्ज्यात् । २०४ अर्च पूजायाम् । आनर्च । २०५ म्लेछ अव्यक्ते शब्दे । अस्फुटेऽपशब्दे चेत्यर्थः । म्लेच्छति । मिम्लेच्छ । २०६ लछ २०७ लाछि लक्षणे । ललच्छ । ललाञ्छ । २०८ वाछि इच्छायाम् । वाञ्छति । २०९ आछि आयामे । आञ्छति । 'अत आदे'रित्यत्र तपरकरणं

त.]दिना चङ्परे णौ उपधाह्रस्वस्य विकल्पितत्वात् । अबिभ्रजत् । अबभ्राजत् । **परस्मैपदिन इति** । चवर्गीयान्ताः परस्मैपदिनः । **पूजायां त्विति** । 'नाञ्चेः पूजाया'मिति निषेधादिति भावः। **जॄस्तन्भु** । स्तन्भुः सौत्रः । अजरत् । अजारीत् । अस्तभत् । अस्तम्भीत् । अश्वत् । अश्वताम् । अश्वन् । अश्वयीत् । 'विभाषा धेट्श्व्योः'रिति चङि-अशि-

बा.]ऋदित्त्वस्य न किञ्चित्फलमस्ति । न च 'नाग्लोपी'ति चङ्परे णौ उपधाह्रस्वः फलं भवितुमर्हति,'भ्राजभासे'त्यादिना तत्र उपधाह्रस्वविकल्पस्य वक्ष्यमाणत्वात् । **ईज गतीति** । अलघूपधत्वान्न गुणः । ईजते । **ईजांचक्र इति** । इजादेश्चेत्याम् । वर्चादय एकविंशतिर्वृत्ताः । **द्विसप्ततिरिति** । 'चवर्गीयान्ता' इति शेषः । **शुच शोक इति** । स्मृत्वा क्लेशः-**शोकः** । **शोचतीति** । वियुक्तं पित्रादिकं स्मृत्वा क्लिश्नातीत्यर्थः । **कुच शब्द इति** । शब्दनं शब्दः । चुकोच चुकुचतुः। अकोचीत् । **कुञ्च क्रुञ्चेति**। उभावपि चवर्गपञ्चमोपधौ। कुञ्चतौ अनुस्वारपरसवर्णसंपन्नस्य नकारस्थानिकञकारस्य धातुपाठे निर्देशः । धातुपाठे 'नकारजावनुस्वारपञ्चमौ' इत्यभियुक्तवादात् । तदाह-**अनिदितामिति**। अनुस्वारपरसवर्णयोरसिद्धतया नकारस्य सत्त्वेन आशीर्लिङि 'अनिदिता'मिति नलोपे कुच्यादिति रूपमित्यर्थः। लिटि तु चुकुञ्च चुकुञ्चतुरित्यादौ पित्त्वेन संयोगात्परत्वेन च कित्त्वाऽभावान्नलोपो न भवति । क्रुञ्चधातुस्तु स्वाभाविकञकारोपध एव, न त्वनुस्वारपरसवर्णसंपन्नञकारोपध इति 'परेश्च घाङ्कयो'रिति सूत्रे भाष्यकैयटयोः स्थितम् । अतस्तस्याशीर्लिङि 'अनिदिता'मिति नलोपस्य न प्रसक्तिरित्यभिप्रेत्योदाहरति-**क्रुञ्च्यादिति** । ञकाररहितपाठस्तु प्रामादिक इति शब्देन्दुशेखरे स्थितम् । **लुञ्चेति** । अयमपि नोपधः । अनुस्वारपरसवर्णसंपन्नस्य ञकारस्य निर्देशः । तथा च आशीर्लिङि 'अनिदिता'मिति नलोपः । तदाह-**लुच्यादिति** । एवमञ्चुधातोरपि द्रष्टव्यम् । **पूजायां त्विति** । 'नाञ्चेः पूजाया'मिति निषेधादिति भावः । **वञ्चु चञ्चु तञ्चु इति** । आद्याः षट् नोपधाः । अनुस्वारपरसवर्णाभ्यां ञकारनिर्देशः। तथा च तेषामाशीर्लिङि 'अनिदिता'मिति नलोपः । तदाह-**वच्यादिति** । लुङि अम्रुञ्चीत् अम्लुञ्चीदिति नोपधयो रूपम् । सिज्लोपः । **जॄस्तन्भु** । 'च्लेः सि'जित्यतश्च्लेरिति, 'अस्यतिवक्तिख्यातिभ्यः' इत्यतोऽङिति, 'इरितो वे'त्यतो वेति चानुवर्तते । तदाह-**एभ्यश्च्लेरङ् वेति** । 'जॄष् वयोहानौ','स्तन्भुः' सौत्रो धातुः,'म्रुचुम्लुचू गत्यर्थौ', 'ग्रुचु ग्लुचु स्तेयकरणे', 'ग्लुञ्चु गतौ',-इत्येतेभ्य इत्यर्थः । **अम्रुचदिति** । च्लेरङि सति ङित्त्वान्न लघूपधगुणः । **अम्रोचीदिति** । अङभावे 'इट ईटी'ति सिज्लोपः । **ग्रुचु ग्लुचु इति** । 'जॄस्तन्भु' इत्यङ् वेत्याह-**अग्रुचत् अग्रोचीदिति** । आद्यस्य रूपे । अथ द्वितीयस्य अङ्विकल्पमुदाहरति-**अग्लुचत् अग्लोचीदिति** । अङि सति ङित्त्वान्न लघूपधगुणः । अङभावे सिज्लोपः । **ग्लुञ्चु षस्जेति** । आद्यो नोपधः, द्वितीयस्तु षोपदेशः, अच्परकसादित्वात् । तत्र आद्यस्य लुङि विशेषमाह-**अङ्वेति** । 'जॄस्तम्भ्विेत्यनेने'ति शेषः। ग्लुचुग्लुञ्च्वोः पृथग्ग्रहणसामर्थ्यान्नलोपो नेति वृत्तिकृत् । ग्लुञ्च्यात्। **सस्येति**।धात्वादेः षस्य सत्वे सस्ज् इति स्थिते,द्वितीयस्य सकारस्य श्चुत्वेन शकार इत्यर्थः । **तस्येति** । शकारस्य 'झलां जश् झशी'ति जकार इत्यर्थः । **गुजीति** । इदित्त्वादाशीर्लिङि नलोपो नेत्याह-**गुञ्ज्यादिति** । **अर्चेति** । लिटि 'तस्मान्नुड्द्विहल' इति नुटं मत्वाह-**आनर्चेति** । **म्लेच्छेत्यादि** स्पष्टम् । तुकि लच्छतीति रूपम् । ललच्छ ललच्छतुः । **आछीति** । लिटि णलि द्वित्वे हलादिशेषे अभ्यासह्रस्वे अ आञ्छ् अ इति

शे.] **अनिदितामिति** । इदं कुञ्चधातुविषयम् । क्रुञ्चौ 'त्वनिदिता'मिति न प्रवर्त्तते, 'परेश्च घे'ति सूत्रस्थभाष्यप्रामाण्येनाऽस्य ञोपधत्वात्। 'नकारजावनुस्वारपञ्चमौ'इति तु प्रायिकं,तदाह-**क्रुञ्च्यादिति**। ञकाररहितपाठस्त्वपपाठः।

स्वाभाविकह्रस्वपरिग्रहार्थम्। तेन दीर्घाऽभावान्न नुट्। आञ्छ। 'तपरकरणं मुखसुखार्थ'मिति मते तु नुट्। आनाञ्छ।२१० ह्रीछ लज्जायाम्। जिह्रीच्छ।२११ हुर्छा कौटिल्ये। कौटिल्यमपसरणमिति मैत्रेयः। 'उपधायां चे'ति दीर्घः। हूर्च्छति। २१२ मुर्छा मोहसमुच्छ्राययोः। मूर्च्छति।२१३ स्फुर्छा विस्तृतौ। स्फूर्च्छति। २१४ युछ प्रमादे। युच्छति।२१५ उञ्छि उञ्छे। 'उञ्छः-कणश आदानं,कणिशाद्यर्जनं शिल'मिति यादवः। उञ्छति। उञ्छांचकार। २१६ उछी विवासे। विवासः-समाप्तिः। प्रायेणायं विपूर्वः। व्युच्छति। २१७ ध्रज २१८ ध्रजि २१९ धृज २२० धृजि २२१ ध्वज २२२ ध्वजि गतौ। ध्रजति। ध्रञ्जति। धर्जति। धृञ्जति। ध्वजति। ध्वञ्जति। २२३ कूज अव्यक्ते शब्दे। चुकूज। २२४ अर्ज २२५ षर्ज अर्जने। अर्जति। आनर्ज। सर्जति। ससर्ज। २२६ गर्ज शब्दे। गर्जति। २२७ तर्ज भर्त्सने। तर्जति। ततर्ज।२२८ कर्ज व्यथने। चकर्ज। २२९ खर्ज पूजने च। चखर्ज।

२३० अज गतिक्षेपणयोः। अजति। **अजेर्व्यघञपोः**।२।४।५६। अजेर्वी इत्ययमादेशः स्यादार्द्धधातुकविषये घञमपं च वर्जयित्वा। **वलादावार्द्धधातुके वेष्यते**। विवाय। विव्यतुः। विव्युः। अत्र वकारस्य हल्पर-

---

त.] श्रियत्। अर्च पूजायाम्। अयं युजादौ स्वरितेत्। इह पाठस्तु कर्तृगेऽपि फले परस्मैपदार्थः। **दीर्घाऽभावादिति**। स्वाभाविकह्रस्वस्थानिकदीर्घाऽभावादित्यर्थः। **मुखसुखार्थमिति**। कृतह्रस्वस्थानिकदीर्घाकारात्परस्यापि नुड्भवत्ये-वेति भावः। **युछ प्रमादे**। **युच्छतीति**। अन्तरङ्गत्वात् 'छे चे'ति तुकि लघूपधत्वाऽभावान्न गुणः। न च वार्णा-दाङ्गं बलीय इति वाच्यम्, आङ्गवार्णयोर्युगपत्प्रवृत्तावेव आङ्गस्य बलीयस्त्वात्। न च युच्छेति चकारछकारावुच्चार्येतां किमनेन तुग्विधिनेति शङ्क्यं, बहुषु धातुरूपेषु चकारछकारयोरुच्चारणे गौरवात्, 'छे चे'त्यस्य शिवच्छायेत्यादावावश्यक-त्वाच्च। **अजेर्व्य**। वी-इति च्छेदः। तेन संवीतः संवीतिरित्यादि सिध्यति। **आर्द्धधातुकविषय इति**। तेन वीभावो-त्तरं यङि वेवीयते इत्यादि सिध्यति, परसप्तम्यां तु हलादित्वाऽभावाद्यङ् न स्यादिति भावः। यङ्लुक् त्वस्मान्न भवति; लुका यङोऽपहारे आर्द्धधातुकविषयत्वाऽभावान्नार्द्धधातुकाभिव्यक्तिरिति वीभावस्यैवाऽप्रसक्तेः। एतच्च 'न लुमते'ति सूत्रे कैयटे स्पष्टम्। अघञपोः किम् ?। समाजः। 'समुदोरजः पशुषु' इत्यप्। समजः। उदजः। **विव्यतुरिति**। 'एर-

---

बा.] स्थिते 'अत आदे'रिति दीर्घे, 'तस्मान्नुड्द्विहल' इति च नुटमाशङ्क्याह-**अत आदेरिति**। तत्र हि दीर्घस्याकारस्य दीर्घविधौ प्रयोजनाऽभावादेव ह्रस्वाकारस्य दीर्घ इति सिद्धावत इति तपरकरणं स्वाभाविकस्यैव ह्रस्वाकारस्य परिग्रहार्थ-मित्यर्थः। ततः किमित्यत आह-**तेनेति**। 'अत आदे'रिति दीर्घविधौ स्वाभाविकह्रस्वाकारस्यैव ग्रहणेन, 'अत आदे'-रिति दीर्घस्याऽभावान्न नुडित्यर्थः। **आञ्छेति**। द्वित्वे हलादिशेषेऽभ्यासह्रस्वे सवर्णदीर्घ इति भावः। **मुखसुखा-र्थमिति**। तथाच ह्रस्वस्थानिकदीर्घाकारादपि परस्य नुड् भवत्येवेति भावः। **'ह्रीछ लज्जाया'**मित्यादि स्पष्टम्। **युछ प्रमाद इति**। यकारादिरुदुपधोऽयम्। **युच्छतीति**। अन्तरङ्गत्वात् 'छे चे'ति तुकि लघूपधत्वाऽभावान्न गुणः। युयुच्छ। युयुच्छतुः। **उछि उञ्छे इति**। अयमप्युदुपधः। **उञ्छतीति**। इदित्त्वान्नुमि अलघूपधत्वान्न गुणः। **उञ्छांचकारेति**। नुमि कृते 'संयोगे गुरु' इत्युकारस्य गुरुत्वात् 'इजादेश्चे'त्यामिति भावः। **धृजेति**। आद्यौ ऋदु-पधौ। इतरे चत्वारोऽदुपधाः। द्वितीयचतुर्थषष्ठा इदितः। **धर्जतीति**। शपि लघूपधगुणः। रपरत्वम्। दधर्ज दधृजतुः। धृज्यात्। अधर्जीत्। **धृञ्जतीति**। इदित्त्वान्नुम्। दधृञ्ज। इदित्त्वान्नलोपो न। धृञ्ज्यात्। अधृञ्जीत्। **ध्रजतीति**। णलि-दध्राज दध्रजतुः। अध्राजीत्-अध्रजीत्। **ध्रञ्जतीति**। अदुपधोऽयम्। दध्रञ्ज। इदित्त्वान्नलोपो न-दध्रञ्जतुः। **ध्वजतीति**। दध्वाज। **ध्वञ्जतीति**। दध्वञ्ज। **कूज अव्यक्त इति**। स्पष्टम्। **सर्जतीत्यत्र** षोपदेशत्वात्षत्वम्। **अज गतीति**। लटि अजतीत्यादि सिद्धवत्कृत्य लिटि विशेषमाह-**अजेर्व्यघञपोः**। 'वी'ति दीर्घान्तं लुप्तप्रथमाकम्। 'आर्द्धधातुके' इत्यधिकृतं। विषयसप्तम्येषा, नतु परसप्तमी, व्याख्यानात्। तदाह-**आर्द्धधातुकविषय इत्यादि**। अजेरिति इका निर्देशः। अजधातोरित्यर्थः। आर्द्धधातुक इति परसप्तम्याश्रयणे तु वेवीयत इति न स्यात्, वीभावा-त्प्रागजादित्वाद्यङसंभवात्। विषयसप्तम्याश्रयणे तु यङि विवक्षिते वीभावे सति हलादित्वाद्यङ् निर्बाधः। अघञपोः किम् ?। घञि समाजः। 'समुदोरजः पशुषु' इत्यपि समजः। अत्र 'अघञपो'रिति न वक्तव्यं। 'वा लिटी'त्यतो वेत्यनुवर्तते। व्यवस्थितविभाषेयं। घञि अपि च न भवति। ल्युटि वलादावार्द्धधातुके च विकल्पः। अन्यत्र तु आर्द्धधातुके नित्य'-मिति भाष्यकैयटयोः स्थितं। तदाह-**वलादावार्द्धधातुके वेष्यत इति**। उक्तव्यवस्थितविभाषोपलक्षणमिदं। **विवा-येति**। लिटो णलि विवक्षिते वीभावे सति णलि द्वित्वेऽभ्यासह्रस्वे 'अचो ञ्णिति' इति वृद्धावायादेश इति भावः।

---

शे.] **इति मते त्विति**। इदमेव युक्तं, [तपरकरण]फलस्य भाष्याऽनुक्तत्वात्। **अजेर्व्य**। अत्र 'वा लिटी'त्यतो वेत्यनुवर्तते। तेन व्यवस्थितविभाषा। तेन घञप्क्यप्सु न, ल्युटि वा, वलादावार्द्धधातुके वा, अन्यत्र नित्यमेव। अत्र 'अघञपो'रिति न वक्तव्यम्। स्पष्टञ्चेदं भाष्ये। एवञ्चैतद्विकल्पसामर्थ्याद्वीधातोरज्यर्थे सार्वधातुके

स्वात् 'उपधायां चे'ति दीर्घे प्राप्ते, 'अचः परस्मि'न्निति स्थानिवद्भावेनाऽच्परत्वम् । नच 'न पदान्ते'ति निषेधः, 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिव'दित्युक्तेः । थलि 'एकाचः' इतीण्निषेधे प्राप्ते । **कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि** ।७।२।१३। एभ्यो लिट इण्न स्यात् । क्रादीनां चतुर्णां ग्रहणं नियमार्थम्—'प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावानिण्निषेधः स लिटि चेत्तर्हि क्रादिभ्य एव नान्येभ्य' इति। ततश्चतुर्णां थलि भरद्वाजनियमप्रापितस्य, वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थम् । **अचस्तास्वत्थल्यनिटो नित्यम्** ।७।२।६१। उपदेशेऽजन्तो

---

त.] नेकाचः' इति यण्। **लोपाजादेश एवेति**। एतच्च 'न पदान्ते'ति सूत्र एवास्माभिरुपपादितम्। **एकाच इतीति** । अजेरुदात्तत्वेऽपि वीभावोऽनुदात्तः, ऊदृदन्तादिभिन्ना एकाचोऽजन्ताः सर्वेऽप्यनुदात्ता इत्यभ्युपगमात् । **कृसृभृ** । 'डुकृञ् करणे' । 'कृञ् हिंसायाम्' । इह निरनुबन्धग्रहणादेकानुबन्धद्व्यनुबन्धयोरुभयोर्ग्रहणम् । एवमग्रेऽपि 'भृञ् भरणे' 'डुभृञ् धारणपोषणयो'रित्युभयोर्ग्रहणम् । 'सृ गतौ' । 'वृङ् संभक्तौ' । 'वृञ् वरणे' । इह निरनुबन्धकग्रहणाद्भिन्नानुबन्धयोरप्युभयोर्ग्रहणम् । कृ सृ भृ एषामनुदात्तत्वात् 'एकाच उपदेश' इति प्रकृत्याश्रये निषेधे प्राप्ते, वृङ्वृञोस्तूदात्तत्वात् 'श्र्युकः किती'ति प्रत्ययाश्रये निषेधे प्राप्ते नियमोऽयमित्याह—**क्रादीनां चतुर्णामिति** । इह स्तुद्र्वादीनां चतुर्णां ग्रहणस्य भारद्वाजनियमप्रापितेण्निषेधोऽपि प्रयोजनमिति बोधयितुमष्टानां ग्रहणमिति नोक्तम् । **इण्निषेध इति**। 'नेड्वशी'ति प्रकमान्नञा प्रापितस्यैवाऽभावस्य नियमो नतु विभाषाबलभ्यस्यापि । 'अनन्तरस्ये'ति न्यायादपि संनिहितस्यैव नियम उचितः । तेन—सिषेधिथ । सिषेद्ध । सिषिधिव । सिषिध्व इत्याद्युभयं भवति । **नान्येभ्य इति** । तेन पेचिव, बभूविवेत्यादि सिद्धम् । न चैवं क्रादिनियमेनैव 'नेड्वशि कृती'ति निषेधस्याप्यप्रवृत्तौ सेदिवान् जक्षिवानित्यादि सिध्यत्येवेति 'वस्वेकाजाद्घसा'मितीड्विधानं किमर्थमिति शङ्क्यं, तस्य नियमार्थत्वेन व्याख्यास्यमानत्वात् । अन्यथा बभूवानित्यत्रापीडागमः स्यादिति । नन्विह 'क्रादिभ्यश्चेदिण्न स्यात्तर्हि लिट्येवे'ति विपरीतनियमः किं न स्यात् । तथा च कर्ता अकार्षीदित्यादाविडागमः स्यादिति चेत् । मैवम् । 'कृते ग्रन्थे,' 'तमधीष्टो भृतः,' 'परिवृतो रथः' इत्यादिनिर्देशविरोधा-

---

बा.] **विव्यतुरिति**। वीभावे सति अतुसि द्वित्वेऽभ्यासह्रस्वे 'असंयोगा'दिति कित्त्वाद्गुणाऽभावे इयङपवादे 'एरनेकाचः' इति यणि रूपम् । एवमुसि विव्युरिति रूपं । ननु विव्यतुः विव्युरित्यत्र द्वितीयवकारस्य यकारात्मकहल्परकत्वात् 'उपधायां चे'तीकारस्य दीर्घः स्यादित्याशङ्क्य ईकारस्थानिकस्य यकारस्य 'अचः परस्मि'न्निति स्थानिवत्त्वेन द्वितीयवकारस्य हल्परकत्वाऽभावात्तस्मिन्वकारे परे इकारस्य न दीर्घ इति परिहरति—**अत्र वकारस्येत्यादि अच्पर[क]त्वमित्यन्तम्**। ननु दीर्घविधौ 'न पदान्ते'ति निषेधात्कथमिह यकारस्य स्थानिवत्त्वमित्याशङ्क्य निराकरोति—**न च न पदान्तेति निषेध इति** । 'शङ्क्य' इति शेषः । कुत इत्यत आह—**स्वरदीर्घेति** । **इत्युक्तेरिति**। 'वार्तिककृते'ति शेषः। **थलि एकाच इति** । अजधातोरनुदात्तोपदेशानन्तर्भावेऽपि 'वी'ति तदादेशोऽनुदात्तः, अजन्तेषु ऊदृदन्तादिचतुर्दशभिन्नधातूनामनुदात्तत्वाभ्युपगमादिति भावः । **कृसृ** । कृ सृ भृ वृ स्तु द्रु स्रु श्रु इत्यष्टानां समाहारद्वन्द्वात्पञ्चमी । लिटीति षष्ठ्यर्थे सप्तमी। 'नेड्वशि कृती'त्यतो नेति इडिति चानुवर्तते । तदाह—**एभ्य इति** । ननु 'एकाच उपदेशेऽनुदात्ता'दिति, 'श्र्युकः किति' इति च सिद्धे किमर्थमिदं सूत्रमित्यत आह—**क्रादीनामिति** । कृ सृ भृ वृ इत्येतेषामित्यर्थः । नियमस्वरूपमाह—**प्रकृत्याश्रय इत्यादि** । कृ सृ भृ इत्येषां त्रयाणामनुदात्तोपदेशान्तर्भूतानामेकाच उपदेश इति यः प्रकृत्याश्रयो निषेधः, यश्च वृधातोः 'श्र्युकः किती'ति प्रत्ययाश्रयो निषेधः,तदुभयमपि यदि लिटि स्यात्तर्हि कृसृभृवृ इत्येभ्य एव परस्य लिटो भवति, नतु तदन्येभ्यः परस्येत्यर्थः । तेन बिभिदिव बिभिदिमेत्यादौ 'एकाच उपदेशे' इति निषेधः, बभूविव बभूविमेत्यादौ 'श्र्युकः किती'ति निषेधश्च न भवति । अथ स्तुद्रुस्रुश्रुवां ग्रहणस्य प्रयोजनमाह—**तत इति** । 'अन्येषा'मिति शेषः । **चतुर्णामिति** । 'ग्रहण'मिति शेषः । **ततः** = तेभ्यः कृसृभृवृ इत्येभ्यः—अन्येषां स्तुद्रुस्रुश्रुवां

---

एव प्रयोगो नार्द्धधातुक इति बोध्यम् । **स्वरदीर्घेति** । 'पूर्वत्रासिद्धीये'इति निषेधस्याप्ययं नियम इति भावः । **चतुर्णामिति** । कृत्वादिना चतुष्टं । विनिगमनाविरहेण तेषां सर्वेषां नियमार्थत्वमेव । तदुत्तरेषान्तु विध्यर्थत्वसंभवान्न तदर्थत्वम् । **प्रकृत्याश्रयः**—'एकाच उपदेशे' इति क्रादिषु त्रिषु प्राप्तः । **प्रत्ययाश्रयः**—'श्र्युकः किती'ति वृधातौ प्राप्तः । प्रत्ययाश्रयस्य नियमे वृग्रहणमेव मानम् । **यावानिति** । नञ्—वा—शब्दान्यतरप्रापित इत्यर्थः । तेन 'षिधू' इत्यस्य सिषेधिथेत्येकमेव । यदि तु 'नेड्वशी'ति प्रकमान्नञ्प्रापितस्यैव नियमः स्यात्तदा 'उपदेशेऽत्वतः' इति सूत्रे 'नित्याऽनिट' इत्यस्याऽजिव्यर्थावर्त्त्यर्थ इत्यर्थपरभाष्याऽसङ्गतिः । तत्र 'नित्याऽनिट' इत्यस्याऽभावेऽञ्जौ 'ऋतो भारद्वाजस्ये'ति विकल्पः स्यात्, तत्सत्त्वेऽप्यूदित्त्वप्रयुक्तविकल्पस्यैव सत्त्वेन तदसङ्गतिः । मम तु क्रादिनियमेन नित्य इडिति भावः । 'क्रादिभ्यश्चेदिण्न तर्हि लिट्येवे'ति विपरीतनियमस्तु न, 'कृते' 'परिवृत' इत्यादिलक्ष्यविरोधात् । अत्र सूत्रे'कृञोऽसुट'इति वक्तव्यम्, तेन सञ्चस्करिवेत्यादि सिद्धमिति स्पष्टं भाष्ये । **ततश्चतुर्णामिति** ।

यो धातुस्तासौ नित्यानिट् ततः परस्य थल इण्न स्यात् । उपदेशेऽत्वतः ।७।२।६२। उपदेशेऽकारवतस्तासौ

त.]यत्तेः। वमादिष्विति। आदिशब्देन सेध्वेवहिमहीनां ग्रहणम्। तुष्टुवे। तुष्टुध्वे। तुष्टुवहे। तुष्टुमहे इत्यादिं स्यादेतत्– अस्तु प्रकृत्याश्रयनिषेधस्य नियमः, प्रत्ययाश्रयस्य तु न संभवति, वृग्रहणस्य ववर्थेत्यत्राऽप्राप्तनिषेधप्रापकत्वात्। न ह्यत्र प्रत्ययाश्रयो निषेधः प्राप्नोति, थलोऽकित्त्वात् । नापि प्रकृत्याश्रयः, वृञ उदात्तत्वात् । न चैवमपि वृञो नियमार्थत्वम-स्त्विति वाच्यं, तस्य विशिष्याऽग्रहणात् । यद्यपि विशिष्य ग्रहणं वृञोऽपि नास्ति, तथाप्यप्राप्तनिषेधप्राप्तिफलकत्वाद्वृ इति वृञ एव ग्रहणं भवेत्, विधिनियमयोर्विधिरेव ज्यायानिति न्यायात्।एवं च बभूविवेत्यादौ 'श्र्युकः किती'त्निषेधो दुर्वार इति चेत् । अत्राहुः–'बभूथाततन्थजगृभ्मववर्थेति निगमे' इति सूत्रेण छन्दसि ववर्थेति निपातनाद्भाषायां वृञस्थल इटः स्वीकर्तव्यतया वृग्रहणस्य थल्विषयत्वाऽयोगात्,वमादीनां च कित्त्वेन नियमस्य सुस्थत्वादिति । अचस्तास्वत् । उत्तर-सूत्रादुपदेश इत्यपकृष्यते, तच्चाऽजन्तस्य विशेषणमित्याह–उपदेशेऽजन्त इति । धातुरित्याक्षेपाल्लभ्यते । न ह्यधातोः स्थल् संभवति । नित्यग्रहणमनिटो विशेषणम् । क्व नित्यमनिडित्यपेक्षायां संनिधानात्तासावेवेति विज्ञायते, 'तासि च क्लृपः' इति सन्निहितं वाऽनुवर्तते । 'न वृद्भ्यः' इत्यस्मान्नेत्यनुवर्तते, तदाह–तासौ नित्यानिट् ततः परस्येत्यादि। तासाविव तास्वदिति सप्तम्यन्ताद्वतिः। यथा तासौ न भवति एवं थल्यपीत्यर्थः। अच इति किम् ?। बिभेदिथ। रुरोधिथ । उपदेशे इति किम् ?। जहर्थ। इह परत्वान्नित्यत्वाच्च गुणे रपरत्वे च कृते अजन्तत्वाऽभावादेतस्याऽप्रवृत्ताविट् प्रसज्येतेत्यु-पदेश इत्युक्तम् । थलीति किम् ? । पपिव पपिम । नित्यमनिटः किम् ? । सस्वरिथ । सस्वर्थ । नाऽयं तासौ नित्यम-निट् , 'स्वरतिसूती'ति विकल्पितेट्त्वात् । इह तासीति नेति चानुवृत्त्यैवेष्टसिद्धेस्तास्वदित्येतन्नातीवोपयुज्यत इति केचित् । अन्ये तु–यस्य तासौ विद्यमानत्वं तस्मादेव परस्य थल इण्निषेध इत्येतल्लाभार्थं तत् । तेन उवयिथ, जघसिथेत्यत्र न निषेध इत्याहुः । उपदेशेऽत्वतः। पपक्थ । इयष्ठ । उपदेशे किम् ? । कर्ष्टा । चकर्षिथ । अकारवत इति किम् ? ।

बा.]ग्रहणं थलि तुष्टोथ दुद्रोथ सुस्रोथ शुश्रोथ इत्यत्र 'ऋतो भारद्वाजस्ये'ति वक्ष्यमाणेन 'ऋदन्तस्यैव थलि नेट् अन्यस्य तु स्यादेवे'ति नियमेन प्राप्तस्य इटो निषेधार्थम् , तथा तुष्टुव तुष्टुमेत्यादौ 'कृसृभृवृ' इत्युक्तेन 'क्रादिभ्य एव परस्य लिट इण्निषेधः, अन्येभ्यस्तु परस्य इट् स्यादेवे'ति नियमेन प्राप्तस्य इटो निषेधार्थं चेत्यर्थः । तदेवमजेस्थलि वीभावे 'एकाचः' इति निषेधाऽभावादिडागमो निर्बाध इति स्थितम् । अथ तस्य थलीडागमस्य भारद्वाजनियमाद्विकल्पं वक्ष्यंस्तदुपयोगि-त्वेन सूत्रद्वयमुपन्यस्यति–अचस्तास्वत् । अधातोस्थलोऽभावाद्धातोरिति लभ्यते । 'अच'इति तद्विशेषणम् । तदन्त-विधिः । 'उपदेशेऽत्वत' इत्युत्तरसूत्रादुपदेश इत्यपकृष्यत इति 'ऋतो भारद्वाजस्ये'ति सूत्रभाष्ये स्थितम् । उपदेशे अजन्तादित्यन्वयः । 'अनिट्' इति बहुव्रीहेः पञ्चमी । नित्यमिड्हीनादित्यन्वयः। 'तासि च क्लृपः' इत्यतस्तासीत्यनुवर्तते। तासौ नित्यमनिट इत्यन्वयः । थलीति षष्ठ्यर्थे सप्तमी । 'गमेरिट् परस्मैपदेष्वि'त्यत इडिति, 'न वृद्भ्यश्चतुर्भ्य' इत्यतो नेति चानुवर्तते। 'तास्व'दिति सप्तम्यन्ताद्वतिः।तदाह–उपदेशे योऽजन्त इत्यादि, इण्न स्यादित्यन्तम् । 'तास्व'-दिति शेषः। यथा तासि नेट् तथा थल्यपि नेडित्यर्थः। चिचेथ जुहोथेत्याद्युदाहरणम् । अत्र क्रादिनियमप्राप्त इण्न भवति। अजन्तात्किम् ?। बिभेदिथ । उपदेश इति किम् ?। 'हृञ्' जहर्थ। इह गुणे रपरत्वेऽजन्तत्वाऽभावादिण्निषेधो न स्यादि-त्युपदेशग्रहणम् । नित्यग्रहणं किम् ? । 'स्वृ गतौ' सस्वरिथ । 'स्वरितसूती'ति तासौ विकल्पितेड्त्वान्न निषेधः । तासौ किम् ?।लूत्वा लुलविथ।थलः किम्?।पपिव पपिम।इह तासीत्यनुवृत्त्यैव सिद्धेः 'तास्व'दिति नातीवोपयुज्यत इति केचित् । वस्तुतस्तु यस्तासौ विद्यते तस्मादेव परस्य थल इण्निषेधार्थं तास्वदित्यावश्यकम्। तेन 'लिट्यन्यतरस्या' मित्यदो घस्लभावे जघसिथेत्यत्र न निषेधः, घसस्तासावभावादिति–अद भक्षण इति धातौ मूल एव वक्ष्यते । 'यस्तासावस्ति अनिट्चे'ति भाष्यम् । एवं वेञो वयादेशेऽपि न निषेध इति बोध्यम् । उपदेशेऽत्वतः। 'अत्वत'इति च्छेदः । अत् = ह्रस्वाकारः, सोऽस्याऽस्तीति अत्वान् । 'तसौ मत्वर्थे' इति भत्वान्न जश्त्वम् । अच इतिवर्जं पूर्वसूत्रं, तत्र यदनुवृत्तं तदप्यनुवर्तते ।

शे.]नियमाद्विधिर्बलवानिति भावः । उपदेशेऽजन्त इति । 'उपदेशे' इत्युत्तरसूत्रस्थम् । तथा च सूत्रविभागादिहैव क्रियत इति 'ऋतो भारद्वाजस्ये'ति सूत्रे भाष्ये स्पष्टम् । एवञ्च धेडादेर्दधिथेत्यादिसिद्धयेऽज्ग्रहणमावश्यकम् । अन्यथो-पदेशे एजन्तानामात्वविधानेनाऽज्ग्रहणमेव कुर्यात् । तासौ नित्यानिट इति । तासौ सततस्तत्र नित्याऽनिट इत्यर्थः, 'यस्तासावस्ति नित्याऽनिट् चे'ति भाष्योक्तेरिति भावः । तास्वदिति–सप्तम्यन्ताद्वतिः । यथा तासौ नेट् तथा थल्यपीत्यर्थः। नित्याऽनिटः किम् ?। दुधविथ । अयं 'स्वरती'ति सूत्रेण तासौ विकल्पितेट् । अतोऽस्य थलि नित्यमिट्। नित्यपदाऽभावे भारद्वाजनियमेन विकल्पः स्यादिति वृत्तिः।तासाविति किम्?। घस्लादेशे जघसिथेत्यादौ नित्य एवेड्यथा स्या-

नित्याऽनिटः परस्य थल इण्न स्यात् । **ऋतो भारद्वाजस्य** ।७।२।६३। तासौ नित्याऽनिट ऋदन्तादेव थलो नेट्, भारद्वाजस्य मतेन । तेनाऽन्यस्य स्यादेव । अयमत्र सङ्ग्रहः ।

**अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम्।ऋदन्त ईदृङ्नित्यानिट् क्राद्यन्यो लिटि सेड्भवेत्॥१॥**

---

त.]भेत्ता । बिभेदिथ । तपरकरणं किम्?। राद्धा। रराधिथ । तासौ किम् ?। जिघृक्षति। जग्रहिथ । 'सनि ग्रहगुहोश्चे'ति सनि नित्यमनिट् । क्रान्तः । चक्रमिथ । ऊदित्त्वेन क्त्वायां वेड्त्वात् 'यस्य विभाषे'ति निष्ठायां नेट् । नित्यानिटः किम् ?। अङ्क्ता । अञ्जिता । आनञ्जिथ । किंच नित्यग्रहणानुवर्तनाच्चक्रमिथेत्यपि सिध्यति । नहि क्रमिस्तासौ नित्याऽनिट्, 'स्नुक्रमोरनात्मनेपदनिमित्ते' इति परस्मैपदे सेड्त्वात् । **ऋतो भारद्वाजस्य** । तपरकरणात्कॄगॄप्रभृतिषु दीर्घान्तेषु नायं निषेधः प्रवर्तते । ह्रस्वान्तेषु हृञ्धृञादिषु 'अचस्तास्व'दित्येव सिद्धं, वृञ्वृङौ तु यद्यपि सेटौ, तथापि वृङः थलेव नास्ति, आत्मनेपदित्वात्, वृञस्तु छन्दसि 'ववर्थे'ति निपातनाद्ववरिथेति भाषायामिटा भाव्यम् । तस्मान्नियमोऽयमित्याह–**ऋदन्तादेवेति** । जहर्थ । दधर्थ । **अन्यस्य स्यादेवेति** । एवं च भारद्वाजमते स्यादन्यमते न स्यादिति विकल्पः फलितः। पपिथ । पपाथ । पेचिथ । पपक्थ । इयजिथ । इयष्ठ । **अकारवानिति** । ह्रस्वाऽकारवानित्यर्थः । **ईदृगिति** । यस्तास्यनिट् स ऋदन्तस्थलि नित्याऽनिड्भवतीत्यर्थः । ननु स्तुद्रुस्रुश्रुवामपि थलि भारद्वाजनियमादिट् स्यात् । न चैवं क्रादिसूत्रे तेषा पठनं निरर्थकं स्यादिति वाच्यं, तत्पठनस्य वमादिष्विण्निवृत्त्यर्थ-

---

बा.]तदाह–**उपदेशेऽकारवत इति**। 'शक्ल' शशक्थ, 'पच्' पपक्थेत्युदाहरणम्। अत्र क्रादिनियमप्राप्त इण्न भवति। उपदेशे किम् ? । 'कृष विलेखने' । चकर्षिथ । अत्वत इति किम् ? । बिभेदिथ । तपरः किम् ? । रराधिथ । तासौ किम् ? । जग्रहिथ । 'जिघृक्षती'त्यत्र 'सनि ग्रहगुहोश्चे'ति सनि नित्यमनिट्, नतु तासौ । नित्येति किम् ? 'अञ्ज', आनञ्जिथ।'ऊदित्त्वात्तासौ वे'डिति भाष्यम् । चक्रमिथेत्यप्युदाहरणम्, स्नुक्रमो'रिति नियमेनात्मनेपदे तासावनिड्त्वेऽपि परस्मैपदे सेड्त्वात् । **ऋतो भा** । तासौ नित्यमनिट इति, थलीति,नेति,इडिति चानुवर्तते । भारद्वाजस्य मते ऋदन्ताद्धातोः परस्य थलो नेडिति फलितं। हृञ्धृञादौ 'अचस्तास्व'दित्येव सिद्धम्। अतो नियमार्थमिदमित्याह–**ऋदन्तादेवेति**। अनृदन्तात्परस्य तु थल इट् स्यादेवेत्येवकारार्थः । तदाह–**अन्यस्य स्यादेवेति** । ऋदन्तभिन्नात्परस्य थल इट् स्यादेवेत्यर्थः । तथा च ऋदन्तभिन्नाद्धातोः परस्य थलो नेण्निवृत्तिरिति भारद्वाजमते फलतीति न वैयर्थ्यमिति भावः । तथाच अनृदन्ताद्धातोः परस्य थलो भारद्वाजमते इट्, मतान्तरे तु अचस्तास्वदिति उपदेशेऽत्वत इति च तत्र नेडिति विकल्पः फलतीति भावः । तद्यथा–पपिथ-पपाथ । पेचिथ–पपक्थ । **अयमत्रेति** । कृसृभृवृस्तुद्रुस्रुश्रुवो लिटी'ति, 'अचस्तास्वत्थल्यनिटो नित्य'मिति, 'उपदेशेऽत्वत' इति, 'ऋतो भारद्वाजस्ये'ति च सूत्रचतुष्टयस्य विषयाणां सङ्ग्रहो वक्ष्यत इत्यर्थः । **अजन्त इति** । यो धातुः ऋदन्तभिन्नाऽजन्तो ह्रस्वाकारवान् वा तासौ नित्याऽनिट् सोऽयं थलि विकल्पितेड्क इति पूर्वार्धस्यार्थः । अत्र '**ईदृग्**'इत्यस्य तासौ नित्याऽनिडित्यर्थः । य ऋदन्तस्तासौ नित्यानिट् स थलि नित्याऽनिडित्यर्थः । 'अचस्तास्व'दिति पाणिनिमते'ऋतो भारद्वाजस्ये'ति भारद्वाजमतेऽपि तस्य अनिड्त्वादिति भावः ।

**क्राद्यन्य इति** । क्राद्यष्टभ्योऽन्यो धातुर्लिटि नित्यं सेडित्यर्थः। क्राद्यष्टभ्य एव परस्य लिटि नेडिति कृसृभृवृ इति सूत्रेण नियमितत्वादिति भावः। नन्वत्र **क्राद्यन्य** इत्युक्त्या क्रादीनामष्टानां लिटि नित्यानिड्त्वमवगतं तदनुपपन्नं, स्तुद्रुस्रुश्रुवामृदन्तभिन्नत्वेन तेभ्यस्थलि अचस्तास्वदिति निषेधस्य भारद्वाजमतेऽप्रवृत्त्या इड्विकल्पस्य दुर्वारत्वात् । नचैवं सति कृसृभृवृ इति सूत्रे स्तुद्रुस्रुश्रुग्रहणमनर्थकमिति वाच्यं,तुष्टुव तुष्टुमेत्यादौ वमादिषु क्रादिनियमप्राप्तस्य इटो निवृत्त्या

---

शे.]दिति । **उपदेशेऽत्व** । 'उपदेशे किम् ? । कर्ष्टा, चकर्षिथ । अत्वतः किम् ?। भेत्ता, बिभेदिथ । तपरः किम् ? । राद्धा, रराधिथ । तासौ किम् ?। जिघृक्षति, जग्रहिथ । 'नित्याऽनिटः किम् ? । आनञ्जिथे'ति भाष्यम् । चक्रमिथेत्यपि प्रत्युदाहरणम् । 'स्नुक्रमो'रिति नियमेनात्मनेपदपरतासाविडभावेऽपि परस्मैपदे तत्सत्त्वात् । **ऋतो भा** । 'अचस्तास्व'दित्येव सिद्धे नियमोऽयमित्याह–**ऋदन्तादेवेति** । न च ऋदन्ते विकल्पेन निषेधार्थमिदमिति वाच्यम्, 'अचस्तास्व'दिति सामान्यसूत्रप्रणयनेन भारद्वाजातिरिक्तैरप्यृदन्ते निषेधस्यैवाङ्गीकारेण स्मृत्यन्तरानुसन्धानद्वारा विकल्पस्य वक्तुमशक्यत्वात् । वृञादिषु परत्वान्नित्यत्वाच्च गुणे रपरत्वे ऋदन्तत्वाऽभावेऽप्युपदेशग्रहणस्यै तथासूत्रविभागेन 'अचस्तास्व'दित्यत्रैव तत्करणात्प्राप्तिः । नियमफलितार्थमाह–**तेनान्यस्येति** । अत्रापि 'भारद्वाजस्ये'ति सम्बध्यते । अन्यस्येत्यस्य–ऋकारान्तभिन्नस्य तासौ नित्याऽनिट उपदेशेऽजन्तस्याऽत्वतश्चेत्यर्थः । एतेन ययिथेत्यादावजन्तसन्निपातेन जात इट्–सन्निपातपरिभाषया आलोपनिमित्तं न स्यादित्यपास्तम्,उपदेशे इत्युक्तेः।तदाह–**अजन्त इत्यादि**।अस्योपदेशे इत्यादिः । **ईदृक्** =तासौ नित्याऽनिट् । ननु स्तुद्रुस्रुश्रुवां थलि भारद्वाजनियमादिट् स्यात्, क्रादिसूत्रस्थस्त्वादिग्रह-

न च स्तुद्र्वादीनामपि थलि विकल्पः शङ्क्यः। 'अचस्तास्व'दिति, 'उपदेशेऽत्वतः' इति च योगद्वय-प्रापितस्यैव हि प्रतिषेधस्य भारद्वाजनियमो निवर्तकः, अनन्तरस्येति न्यायात्। विवयिथ। विवेय। आजिथ। विव्यथुः। विव्य। विवाय। विवय। विव्यिव। विव्यिम। वेता। अजिता। वेष्यति। अजिष्यति। अजतु। आजत्। अजेत्। वीयात्। **सिचि वृद्धिः परस्मैपदेषु** ।७।२।१। इगन्ताङ्गस्य वृद्धिः स्यात्परस्मै-

त.] तया सफलत्वात्। अन्यथा क्रादिनियमात्तत्र इडागमो दुर्वारः स्यादित्याशङ्क्याह-**न चेति**। **योगद्वयेति**। क्रादि-योगप्रापितस्य तु न निवर्तक इति भावः। कुत इत्याकाङ्क्षायामाह-**अनन्तरस्येति**। न चैवम् 'उपदेशेऽत्वतः' इत्यस्यैव बाधः स्यादिति वाच्यम्, अत्वत्सु धातुषु ऋदन्तत्वाऽदर्शनेन यद्यत्वतस्थलि इण्निषेधस्तर्हि ऋदन्तादेवेति नियन्तुमशक्यत्वात्। ननु तर्हि 'अचस्तास्व'दित्यस्यैव बाधोऽस्तु,तत्कथं 'योगद्वयप्रापितस्ये'त्युक्तम्। अत्राहुः-'उपदेशेऽचस्तास्व'दित्येव सूत्रे कृतेऽपि तास्वत्थलीत्यादिपदानामिवोपदेशपदस्याप्यनुवृत्तिसंभवे अत्वत इति सूत्रे उपदेशपदस्य, अच इति पूर्वसूत्रे तु तास्वत्थलीत्यादेश्च करणादुभयोः समानयोगक्षेम इति ज्ञायते। तस्मादिष्टानुरोधाच्च योगद्वयमपि भारद्वाजनियमेन बाध्यते। यदि तु 'उपदेशेऽत्वतोऽचस्तास्वत्थल्यनिटो नित्य'मिति एको योगः स्वीक्रियते तदात्र नास्त्येव शङ्कालेशोऽपीति बोध्यमिति। अन्ये तु व्याचक्षते-'अचस्तास्व'दिति सूत्रानन्तरमेव 'ऋतो भारद्वाजस्ये'ति पठनीयं। द्वयोरनन्तरमस्यारम्भादिह 'तास्वत्थल्यनिटो नित्यं' 'तासी'त्यनुवर्त्य योऽयं तासि नित्यानिटस्थलि इण्निषेधः स भारद्वाजमते ऋकारान्तस्यैवेति व्याख्यायते। तेन सर्वेष्टसिद्धिः। यद्वा क्रादिसूत्रे स्तुप्रभृतीनां ग्रहणमेवेड्द्वयस्यापि बाधकमस्तु, पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात्। अनाश्रितविधानविशेषमिण्मात्रमनारभ्याधीतेन प्रतिषेधेन यथा बाध्येतेत्येतदर्थो हि स आरम्भः। अमुमेवार्थं सिद्धवत्कृत्य 'ततश्चतुर्णां थलि भारद्वाजनियमप्रापितस्य वमादिषु क्रादि-नियमप्रापितस्य चेटो निषेधार्थ'मिति मूलेऽप्युपनिबद्धमिति। **विव्यिव। विव्यिमेति**। क्रादिनियमान्नित्यमिट्।

**सिचि वृद्धिः**। 'इको गुणवृद्धी' इति परिभाषोपस्थानादाह-**इगन्तेति**। परस्मैपदेष्विति किम्?।

बा.] चरितार्थत्वादित्याशङ्क्य निराकरोति-**न चेति**। कुत इत्यत आह-**अचस्तास्वदिति**। ऋदन्तादेव परस्य थल इण्निषेधः, अनृदन्तात्परस्य तु थल इण्निषेधो नेति भारद्वाजीयं मतम्। अयं च इण्निषेधस्य निषेधः 'अचस्तास्व'दिति 'उपदेशेऽत्वत' इति च सूत्रद्वयप्राप्तस्यैव इण्निषेधस्य पक्षे निवर्तको न तु क्रादिसूत्रप्राप्तस्य इट्प्रतिषेधस्यापीत्यर्थः।

कुत इत्यत आह-**अनन्तरस्येति**। 'अचस्तास्व'दिति'उपदेशेऽत्वत'इति'ऋतो भारद्वाजस्ये'तिच सूत्रक्रमः। कृसृभृवृ इति सूत्रं तु ततः प्राग्बहुव्यवहितमिति भावः। किंच 'नेड्वशि कृती'त्यादिप्रतिषेधकाण्डोत्तरम् 'आर्द्धधातुकस्येड्वलादे'रिति विधिकाण्डारम्भसामर्थ्यादपि स्तुद्रुस्रुश्रुवामिण्निषेधो भारद्वाजनियमं बाधत इति 'नेड्वशि कृती'त्यत्र,'वस्वेकाजाद्घसा'मित्यत्र च भाष्ये स्पष्टम्। ततश्च प्रकृते अजेस्थलि वीभावे तस्य अजन्तत्वात्तासौ नित्याऽनिट्त्वाच्च इड्विकल्प इति सिद्धं। तदाह-**विवयिथ विवेथेति**। सिबादेशस्य थलः पित्त्वादसंयोगादिति कित्त्वाऽभावाद्गुणः। इट्पक्षेऽयादेशः। **आजिथेति**। 'वलादावार्द्धधातुके वेष्यते' इति वीभावाऽभावपक्षे अजधातोरनुदात्तोपदेशबहिर्भूतत्वादिट्। द्वित्वम्। हलादिःशेषः। 'अत आदे'रिति दीर्घः। **विव्यथुरिति**। अथुसि वीभावे द्वित्वे अभ्यासह्रस्वे असंयोगादिति कित्त्वाद्गुणाऽभावे इयङपवादे 'एरनेकाच' इति यणि रूपम्। **विव्येति**। थस्य अकारे वीभावादि। **विवाय विवयेति**। 'णलुत्तमो वे'ति णित्त्वविकल्पाद्वृद्धिविकल्पः। **विव्यिव विव्यिमेति**। 'क्रादिनियमा'दिति सेड्त्वे'दिति नित्यमिटि यण्। **वेता अजितेति**। लुटि तासि वीभावविकल्पः। **वेष्यति अजिष्यतीति**। लृटि स्ये वीभावविकल्पः। **वीयादिति**। आशीर्लिङादेशस्य आर्द्धधातुकत्वाद्वीभावः। अथ लुङि सिचि वीभावे 'सार्वधातुकार्द्धधातुकयो'रिति गुणे प्राप्ते-**सिचि वृद्धिः**। **इगन्तस्येति**। वृद्धिश्रुत्या इक इत्युपस्थितमङ्गस्येत्यधिकृतस्य विशेषणं, तदन्तविधिरिति भावः। एवं च अक्रोषीदित्यादौ व्यञ्जनस्य न वृद्धिः। **अवैषीदिति**। लुङस्तिप्। इकारलोपः। सिचि वीभावः। 'एकाच'इति इण्निषेधः। वृद्धिः। अडागमः। षत्वम्। **आजीदिति**। सिज्लोपः। 'वदव्रजे'ति हलन्तलक्षणायां वृद्धौ

शे.] णेन तु येननाप्राप्तिन्यायेन क्रादिनियमप्रापितस्यैव बाधौचित्यादित्याशयेनाह-**न चेति**। समाधत्ते-**योगद्वयेति**। अयं भावः-'थल्यनिटो नित्य'मित्यस्याऽनुवृत्त्या 'तत्पदसम्बन्धवान् य इण्निषेधः स भारद्वाजमते ऋकारान्तस्यैवे'ति नियमेन क्रादिनियमस्य नायं निषेध इति। एतेन भारद्वाजनियमो येननाप्राप्तिन्यायेन 'अचस्तास्व'दित्यस्यैव बाधकइति जघनिये-त्यादाविण्न स्यादित्यपास्तम्। ध्वनितञ्चेदमत्रैव सूत्रे भाष्ये। किं च पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादपि स्त्वादि-निषेधेनाऽनन्तरस्यापि भारद्वाजनियमस्य बाध इति 'नेड्वशी'त्यत्र 'वस्वेकाजा' दित्यत्र च भाष्ये स्पष्टम्। **सिचि वृद्धिः**। वृद्धिश्रुत्योपस्थितमिक इति अङ्गस्य समानाधिकरणं विशेषणमित्याह-**इगन्ताङ्गस्येति**। तत्फलन्त्वक्रोषीदित्यादौ व्यञ्जनस्य वृद्ध्यभावः। न च 'नेटी'ति निषेधः, तत्र हलन्तस्येत्यनुवृत्त्या तद्विषये परत्वाद्धलन्तलक्षणयाऽस्या वृद्धेर्बाधेनाऽनया

पदपरे सिचि । अवैषीत् । आजीत् । अवेष्यत् । आजिष्यत् । २३१ तेज पालने । तेजति । २३२ खज मन्थे । खजति। २३३ खजि गतिवैकल्ये। खञ्जति। २३४ एजृ कम्पने। एजांचकार। २३५ टुओ स्फूर्जा वज्रनिर्घोषे । स्फूर्जति । पुस्फूर्ज । २३६ क्षि क्षये । अकर्मकः । अन्तर्भावितण्यर्थस्तु सकर्मकः। क्षयति । चिक्षाय । चिक्षियतुः । चिक्षियुः । चिक्षयिथ । चिक्षेथ । चिक्षियिव । चिक्षियिम । क्षेता । **अकृत्सार्वधातुकयोर्दीर्घः** ।७।४।२५। अजन्ताङ्गस्य दीर्घः स्याद्यादौ प्रत्यये परे, न तु कृत्सार्वधातुकयोः । क्षीयात् । अक्षैषीत् । २३७ क्षीज अव्यक्ते शब्दे । कूजिना सहाऽयं पठितुं युक्तः। चिक्षीज । २३८ लज २३९ लजि भर्जने । २४० लाज २४१ लाजि भर्त्सने च । २४२ जज २४३ जजि युद्धे । २४४ तुज हिंसायाम् । तोजति । तुतोज । २४५ तुजि पालने। २४६ गज २४७ गजि २४८ गृज २४९ गृजि २५० मुज २५१ मुजि शब्दार्थाः।गज मदने च । २५२ वज २५३ व्रज गतौ। [ववजतुः]। 'वदव्रजे'ति वृद्धिः। अव्राजीत्। **अथ टवर्गीयान्ताः शाड्यन्ता**

त.] अघविष्ट। अघोष्ट। सिचि किम् ?। एति। विभर्ति । गुणं बाधित्वा वृद्धिः स्यात् । खज मन्थे । कजेति केचित्पठन्ति । एजृ कम्पने । दीप्तौ त्वात्मनेपदी गतः। टुओस्फूर्जा । 'ट्वितोऽथुच्'। स्फूर्जथुः । 'ओदितश्चे'ति निष्ठानत्वार्थमोकारः । स्फूर्णः।स्फूर्णवान्।आकारस्तु 'ओदितश्च' इति निष्ठायामिटो निषेधार्थः,'विभाषा भावादिकर्मणो'रिति विकल्पार्थश्च।स्फूर्णं, स्फूर्जितमनेनेत्यादि । 'उपधायां चे'ति दीर्घस्याऽनित्यत्वज्ञापनार्थमिह दीर्घोपदेशः । तेन हुर्च्छति मुर्च्छति इत्यपि भवतीति केचित् । क्षि क्षये । अजन्तेष्वस्य पाठो युक्तः । 'क्षि निवासगत्यो'रिति तुदादौ । अकृत्सार्व । दीर्घग्रहणेन 'अचश्चे'ति परिभाषोपस्थानादाह–अजन्तेति । यादौ प्रत्यय इति । 'अयङ् यि क्ङिती'त्यतो यीत्यनुवर्त्यं अङ्गाक्षिप्तप्रत्ययस्तेन विशेष्यते, विशेषणेन तदादिविधिः । 'यस्मिन्विधि'रिति परिभाषोपस्थानादिति भावः । न त्विति । क्यकारे—प्रकृत्य । प्रहृत्य। उच्चैःकृत्य। तुकं बाधित्वापरत्वाद्दीर्घः स्यात् । तुग्विधिस्तु–अग्निचित् । सोमसुदित्यादौ चरितार्थः । ल्यपः पित्त्वमप्यनुदात्तार्थतया चरितार्थमित्याहुः । सार्वधातुकयकारे तु–चिनुयात् । सुनुयात् । कूजिनेति । अर्थैक्यादेकत्र पाठ उचित इति भावः । लज लजि । लज्यात् । लञ्ज्यात् । लज प्रकाशने इति कथादौ । भर्त्सने चेति । चाद्भर्जने । तुजि पालने । भाषार्थोऽयं युजादौ । गज गजि । 'गञ्जा तु मदिरागृहम्' । गज मदने च ।

बा.] 'नेटी'ति निषिद्धायामाडागमे 'आटश्चे'ति वृद्धिः । लृङि अवेष्यत् आजिष्यत् । तेज पालन इत्यादि । स्पष्टम् । एजृ कम्पन इति । दीप्तौ त्वात्मनेपदी गतः । टु ओ स्फूर्जति । 'आदिर्ञिटुडव' इति टुरित् । उपदेशेऽनुनासिकत्वादोकार आकारश्च इत् । 'ट्वितोऽथु'जित्यथुच् , 'आदितश्चे'ति निष्ठानत्वम् , 'ओदितश्चे'ति निष्ठायामिण्निषेधश्च तत्फलानि । 'उपधायां चे'ति दीर्घस्याऽनित्यत्वज्ञापनार्थमिह दीर्घ ऊकारः पठितः । तेन हुर्छतीत्यादौ न दीर्घ इत्याहुः । स्फूर्जतीति । लिटि–पुस्फूर्ज, अस्फूर्जीत् । क्षि क्षय इति । क्षयो–नाशः। अन्तर्भावितण्यर्थ इति । नाशनार्थक इत्यर्थः । अजन्तेष्वेवास्य पाठो युक्तः । क्षयतीति । नश्यतीत्यर्थः, नाशयतीति वा । शपि गुणेऽयादेशः ।

चिक्षायेति । णलि वृद्धिः। आयादेशः। चिक्षियतुरिति । 'असंयोगा'दिति कित्त्वान्न गुणः। इयङ् । चिक्षयिथ–चिक्षेथेति । पित्त्वेन कित्त्वाऽभावाद्गुणः। अजन्तत्वात्तासौ नित्याऽनिट्त्वाच्च भारद्वाजनियमात्थलि वेट् । इट्पक्षेऽयादेशः। चिक्षियथुः। चिक्षिय। चिक्षाय चिक्षय । वसमसोस्तु क्रादिनियमान्नित्यमिट् । तदाह–चिक्षियिव चिक्षियिमेति । क्षेता । क्षेष्यति । क्षयतु । अक्षयत् । क्षयेत् । आशीर्लिङि विशेषमाह–अकृत्सार्व । अङ्गस्येत्यधिकृतम् । 'अयङ्यि क्ङिती'त्यतो यीति सप्तम्यन्तमनुवृत्तमङ्गाक्षिप्तप्रत्ययविशेषणं, तदादिविधिः । दीर्घश्रुत्या 'अच' इत्युपस्थितमङ्गविशेषणं । तदन्तविधिः । तदाह–अजन्तस्येत्यादिना । अकृत्सार्वधातुकयोरिति किम् ? । प्रकृत्य । तुकं बाधित्वा परत्वाद्दीर्घो न । चिनुयात् । सार्वधातुकत्वान्न दीर्घः । । क्षीजेति । ईदुपधः । कूजिनेति । 'कूज अव्यक्ते शब्दे' इत्यनुपदमेव पठितं, तत्रैव 'कूज क्षीज अव्यक्ते शब्दे' इति पठितुं युक्तमित्यर्थः, अर्थैक्यादिति भावः । लज लजि । भर्त्सन इति क्वचित्पाठः । 'भर्त्सनं त्वपवादगी'रित्यमरः । द्वितीय इदित् । आशीर्लिङि–लज्यात् । लञ्ज्यात् । लाज लाजि । भर्जन इति क्वचित्पाठः।–आद्यपर्यौ। द्वितीय इदित्। जज जजीत्यादि। स्पष्टम्। वज व्रजेति । आद्यस्य असंयुक्तहल्मध्यस्थाऽकारवत्त्वेऽपि 'न शसददवादिगुणाना'मित्येत्त्वाभ्यासलोपौ नेत्याह–ववजतुरिति । अवाजीत् । अवजीत् । द्वितीयस्य तु संयुक्तहल्मध्यस्थाऽकारवत्त्वादेत्त्वाऽभ्यासलोपयोर्न प्रसक्तिः । 'अव्राजी'दित्यत्र 'अतो हलादे'रिति वृद्धिविकल्पमाशङ्क्याह–वदव्रजेति वृद्धिरिति । हलन्तत्वादेव सिद्धे व्रजग्रहणस्य 'अतो हलादे'रिति

शे.] येननाप्राप्तिन्यायाऽभावेनाऽस्यास्तेन निषेधेनाऽबाधात् । भ्रष्टावसरन्यायस्तु नास्त्येव । 'नान्तः पाद'मिति पाठेऽपि 'एङोऽती'त्यनुवर्त्य 'एङोऽति यत्प्राप्नोति तस्य निषेध' इत्यर्थस्य 'नान्तः' इति सूत्रे भाष्ये उक्तत्वेन फलाऽभावात् । कूजिनेति । अर्थैक्यादिति भावः ।

अनुदात्तेतः षट्त्रिंशत्। २५४ अट्ट अतिक्रमहिंसयोः। दोपधोऽयम्। तोपध इत्येके। अट्टते। आनट्टे। २५५ वेष्ट वेष्टने। विवेष्टे। २५६ चेष्ट चेष्टायाम्। अचेष्टिष्ट। २५७ गोष्ट २५८ लोष्ट सङ्घाते। जुगोष्टे। लुलोष्टे। २५९ घट्ट चलने। जघट्टे। २६० स्फुट विकसने। स्फोटते। पुस्फुटे। २६१ अठि गतौ। अण्ठते। आनण्ठे। २६२ वठि एकचर्यायाम्। वण्ठते। ववण्ठे। २६३ मठि २६४ कठि शोके। शोक इह आध्यानम्। मण्ठते। २६५ मुठि पालने। मुण्ठते। २६६ हेठ विबाधायाम्। विबाधा शाठ्यम्। जिहेठे। २६७ एठ च। एठाञ्चक्रे। २६८ हिडि गत्यनादरयोः। हिण्डते। जिहिण्डे। २६९ हुडि सङ्घाते। जुहुण्डे। २७० कुडि दाहे। चुकुण्डे। २७१ वडि विभाजने। [ववण्डे।]. २७२ मडि च। २७३ भडि परिभाषणे। परिहासः सनिन्दोपालम्भश्च परिभाषणम्। बभण्डे। २७४ पिडि सङ्घाते। पिपिण्डे। २७५ मुडि मार्जने। मार्जनं शुद्धिर्न्यग्भावश्च। मुण्डते। २७६ तुडि तोडने। तोडनं-दारणं हिंसनं च। तुण्डते। २७७ हुडि वरणे। वरणं-स्वीकारः। हरण इत्येके। हुण्डते। २७८ चडि कोपे। चण्डते। २७९ शडि रुजायां सङ्घाते च। शण्डते। २८० तडि ताडने। तण्डते। २८१ पडि गतौ। पण्डते। २८२ कडि मदे। कण्डते। २८३ खडि मन्थे। २८४ हेडृ २८५ होडृ अनादरे। जिहेडे। जुहोडे। २८६ बाडृ आप्लाव्ये। वशादिः। आप्लाव्यम्-आप्लवः। बाडते। २८७ द्राडृ २८८ ध्राडृ विशरणे। [द्राडते। ध्राडते]। २८९ शाडृ श्लाघायाम्। शाडते। अथ आ टवर्गीयान्त-समाप्तेः परस्मैपदिनः। २९० शौटृ गर्वे। शौटति। शुशौट। २९१ यौटृ बन्धे। यौटति। २९२ म्लेटृ २९३ म्रेडृ उन्मादे। द्वितीयो डान्तः। टान्तमध्ये पाठस्त्वर्थसाम्यान्नाथतिवत्। म्लेटति। म्रेडति। २९४

त.]मदनं-मदः-चित्तविकारः। वज व्रज। वादित्वादेत्वाभ्यासलोपौ न। ववजतुः। वव्रजतुः। शाड्यन्ता इति। 'शाडृ श्लाघाया'मित्यन्ता इत्यर्थः। दोपधोऽयमिति। तथा च ष्टुत्वशास्त्रस्यासिद्धत्वा'न्न न्द्राः'इति द्वित्वनिषेधेन दकारं विहाय टिशब्दस्य द्वित्वे पश्चाद्दकारस्य ष्टुत्वे च अट्टिटिषते आट्टिटदित्यादि सिध्यति। टोपधत्वे तु अटिट्टिषते। आटिट्टदिति स्यादिति भावः। तोपध इति। अस्मिंस्तु पक्षे-अतिट्टिषते आतिट्टदित्यादि बोध्यम्। हलादिः शेषेण टकारनिवृत्तौ तन्निमित्तस्यापि ष्टुत्वस्य निवृत्तत्वादिति नव्याः। मनोरमायां तु 'पूर्वत्रासिद्धीयमद्विर्वचने' इति ष्टुत्वस्या-ऽसिद्धत्वाऽभावाट्टकारद्वयसहितस्य द्वित्वे हलादिः शेषे अटिट्टिषते आटिट्टदित्यादि सिध्यतीत्युक्तम्। 'निमित्ताऽपाये नैमित्ति-कस्याप्यपायः' इति त्वनित्यमिति तदाशयः। आनट्टे इति। इह 'न न्द्राः' इति निषेधो न, तत्र द्वितीयस्येत्यनुवर्तना-द्वितीयैकाच एव नदराणां निषेधात्। घट्ट चलने। अयं चुरादावपि। स्फुट। अयं कुटादावपि। आनण्ठे इति। 'तस्मान्नुड् द्विहलः' इति नुट्। वण्ठते इति। सहायं विना चरतीत्यर्थः। मडि च। पृथक्पाठसामर्थ्यादयं वेष्टने-ऽपीत्याहुः। 'मडि भूषाया'मित्यग्रे परस्मैपदिषु। भडि। 'यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषण'मित्यमरः। शडि। 'शण्डोऽसुरपुरोहितः'। दाडृ। विशरणम्-अवयवविभागः। शाडृ। डलयोरैक्यात् 'शालते' इति

बा.]विकल्पनिरासार्थत्वादिति भावः। शुचादयो द्विसप्ततिर्वृत्ताः। शाडन्ता इति। 'शाडृ श्लाघाया'मित्यन्ता इत्यर्थः। 'शाड्यन्ता'इति क्वचित्पाठः। अट्टेति। तवर्गतृतीयोपधोऽयम्। चर्त्वष्टुत्वाभ्यां टोपधनिर्देशः। तदाह-दोपधोऽय-मिति। तथा च अट्टधातोः सनि इटि अट्टिस् इति स्थिते ष्टुत्वचर्त्वयोरसिद्धत्वादजादेर्द्वितीयस्येति प्रवर्तमानं द्वित्वं 'न न्द्राः संयोगादयः' इति दकारं विहाय टिस् इत्यस्य भवति। ततो हलादिशेषे दकारस्य ष्टुत्वचर्त्वयोः 'अट्टिटिषते' इतीष्टं सिध्यति। स्वाभाविकमूर्धन्योपधत्वे 'न न्द्रा'इति निषेधाऽभावाट्टकारद्वयसहितस्यैव द्वित्वे हलादिशेषेण द्वितीयटका-रस्य निवृत्तौ अटिट्टिषते इत्यनिष्टं प्रसज्येतेति भावः। तोपध इत्यन्य इति। ष्टुत्वेन टोपधनिर्देश इति भावः। अस्मिन्पक्षे सनि द्वित्वे कर्तव्ये ष्टुत्वस्याऽसिद्धत्वेऽपि 'न न्द्रा' इति निषेधाऽभावात्तकारविशिष्टस्य त्टिस् इत्यस्य द्वित्वे हलादिशेषेण टकारस्य निवृत्त्या अतिट्टिषते इति रूपमिति भावः। आनट्टे इति। इह 'न न्द्रा' इति निषेधो न, तत्र द्वितीयस्यैकाच इत्यनुवृत्तेः। घट्ट चलन इति। अयं चुरादावपि। स्फुट विकसन इति। अयं कुटादावपि। अठि गताविति। लिटि नुमि द्वित्वे हलादिशेषे 'अत आदेः'रिति दीर्घे 'तस्मान्नुड् द्विहल' इति नुडिति मत्वाह-- आनण्ठ इति। वठि एकचर्यायामिति। असहायचर्यायामित्यर्थः। मडि चेति। विभाजन इत्यनुषज्यते। 'मडि भूषाया'मिति परस्मैपदिषु वक्ष्यते। शाडृ श्लाघायामिति। डलयोरैक्याच्छालत इति काश्यपः। इत्यट्टादयः षट्त्रिंशद्गताः। अथ टवर्गीयान्ता [गड्यन्ता]इति। 'गडि वदनैकदेशे' इत्यन्ता इत्यर्थः। म्लेटृ म्रेडृ इति। एदु-पधौ। द्वितीयो डान्त इति। टवर्गतृतीयान्त इत्यर्थः। ननु टान्तेष्वस्य कथं पाठः, चुड्ड भावकरण इत्यारभ्यानुक्रम्यमाणे-ष्वेवास्य पठितुं युक्तत्वादित्यत आह-टान्तमध्ये इति। नाथतिवदिति। 'एध वृद्धा'वित्यारभ्यानुक्रान्तेषु तवर्ग-

**कटे** वर्षाऽऽवरणयोः । **चटे** इत्येके । चकाट । सिचि 'अतो हलादेर्लघोः'रिति वृद्धौ प्राप्तायाम् । **ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्** ।७।२।५। हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्न स्यादिडादौ सिचि । अकटीत्। **२९५ अट २९६ पट** गतौ।आट।आटतुः।आटुः। पपाट। पेटतुः।पेटुः। **२९७ रट** परिभाषणे । रराट । **२९८ लट** बाल्ये । ललाट । **२९९ शट** रुजाविशरणगत्यवसादनेषु । शशाट । **३०० वट** वेष्टने । ववाट । ववटतुः । ववटुः । ववटिथ । **३०१ किट ३०२ खिट** त्रासे । केटति । खेटति । **३०३ शिट ३०४ षिट** अनादरे । शेटति । शिशेट । सेटति । सिषेट । **३०५ जट ३०६ झट** सङ्घाते । **३०७ भट** भृतौ । **३०८ तट** उच्छ्राये । **३०९ खट** काङ्क्षायाम् । **३१० णट** नृत्तौ। **३११ पिट** शब्दसङ्घातयोः । **३१२ हट** दीप्तौ । **३१३ षट** अवयवे । **३१४ लुट** विलोडने । डान्तोऽयमित्येके । **३१५ चिट** परप्रेष्ये । **३१६ विट** शब्दे । **३१७ बिट** आक्रोशे । बशादिः । हिटेत्येके । **३१८ इट ३१९ किट ३२० कटी** गतौ । एटति । केटति । कटति । ईकारः 'श्वीदितो निष्ठाया'मितीण्निषेधार्थः । केचित्तु इदितं मत्वा नुमि कृते कण्टतीत्यादि वदन्ति । अन्ये तु इ-ई इति प्रश्लिष्य-अयति । इयाय । इयतुः। इयुः। इययिथ। इयेथ । [इय]। इयाय । इयय । दीर्घस्य

---

त.]काश्यपः।**शौटृ** गर्वे।अस्योणादिषु ईरन्वक्ष्यते।'तदेतदतिशौटीर्यमौडुलोमेर्न मृष्यति' इति कल्पतरुः। **कटे**। **ह्म्यन्तक्षण**। अग्रहीत् । **टुवम्** । अवमीत् । **हय** गतौ । अहयीत् । **क्षणु** हिंसायाम् । अक्षणीत्।**श्वस** प्राणने । अश्वसीत् । **जागृ** निद्राक्षये। अजागरीत् । ण्यन्ते छन्दसि 'नोनयतिध्वनयती'त्यादिना चङि निषिद्धे औनयीदिति उदाहरणम् । **टुओश्वि** । अश्वयीत् । **इडादौ सिचीति** । इडादौ किम् ? । दह भस्मीकरणे । अधाक्षीत् । **किट खिट** । इट किटेति किटिर्गतौ पठिष्यते । इह पाठस्त्वर्थभेदात् । **जट झट** । जेटतुः । जझटतुः । इह त्वादेशादित्वादेत्वाभ्यासलोपौ न ।

**खट** । 'अशू प्रुषिलटिखटिकणिविशिभ्यः क्वन्'। खट्वा । **णट** नृत्तौ। प्रणटति । णोपदेशपर्युदासे नाटीति सवृद्धिकनिर्देशेन 'नट अवस्यन्दने' इति चौरादिकस्यैव ग्रहणादयं णोपदेश एव । **हट** दीप्तौ । हाटकं-सुवर्णम् । 'संज्ञायां चे'ति ण्वुल् बाहुलकादस्त्रियामपि । **षट** । पचाद्यजन्ताट्टाप् । 'सटा जटाकेसरयोः' । **चिट** । 'सर्वधातुभ्यः'इति औणादिक इन् । चेटिः । 'कृदिकारात्-' इति ङीष् । चेटी । **विट** । इगुपधलक्षणः कः । विटः । **इयायेति** । द्वित्वे कृते णलि वृद्धौ सत्यामायादेशः । 'अभ्यासस्याऽसवर्णे' इति इयङ् । **ईयतुरिति** । द्वित्वे कृते 'एरनेकाच' इति यणं बाधित्वा

---

बा.]चतुर्थान्तेषु यथा 'नाधृ नाथृ याच्ञे'ति तवर्गद्वितीयान्तस्यापि अर्थसाम्यात्पाठः,तद्वदित्यर्थः।**कटे इति**। कण्ठ्यादिः। **चटे इति** । ताल्व्यादिः। आद्यस्य लिटि अभ्यासस्य चुत्वमित्याह-**चकाटेति** । चकटतुः। द्वितीयस्य चेटतुः। वैरूप्यापादकाऽऽदेशादित्वाऽभावादेत्वाभ्यासलोपौ। **प्राप्तायामिति** । हलन्तलक्षणाया नित्यवृद्धेर्नेटीति निषेधात् 'अतो हलादे'रिति वैकल्पिकवृद्धौ प्राप्तायामित्यर्थः । **ह्म्यन्त** । हयन्त क्षण श्वस जागृ णि श्वि एदित्-एषां द्वन्द्वात्षष्ठी । ह् म् य् इत्येते वर्णा येषामन्ते ते ह्म्यन्ताः । तदाह-**हमयान्तस्येति** । **क्षणादेरिति** । आदिना श्वस जागृ इत्यनयोर्ग्रहणम् । **ण्यन्तस्येति** । प्रत्ययग्रहणपरिभाषया णिग्रहणेन तदन्तग्रहणमिति भावः । **श्वयतेरिति** । श्विधातोरित्यर्थः । **एदित इति** । एत् इद्यस्येति विग्रहः । **वृद्धिर्न स्यादिति** । 'सिचि वृद्धि'रित्यतो, 'नेटी'त्यतश्च तदनुवृत्तेरिति भावः । **इडादौ सिचीति** । 'सिचि वृद्धि'रित्यतः सिचीति, 'नेटी'त्यत इटीति चानुवर्तत इति भावः । **अकटीदिति** । एदित्वान्न वृद्धिः । **अट पटेति** । 'अत आदे'रिति दीर्घं मत्वाह-**आटेति** । **पेटतुरिति** । एत्वाभ्यासलोपौ । **वट-वेष्टने । ववटतुरिति** । 'न शसददवादिगुणाना'मिति निषेधः । **ववटिथेति** । अत्र 'थलि च सेटी'ति प्राप्तस्य 'न शसदद'दे ति निषेधः । **किट खिट त्रास इति** । यद्यपि 'इट किट कटी गता'विति अग्रे क्रिटधातुः पठ्यते, तथाप्यर्थभेदात्पुनरिह पाठः । खिट त्रासे, किट गतौ चेति पठितुं युक्तम् । **शिट षिटेति** । आद्यस्तालव्यादिः । द्वितीयस्तु षोपदेशः । **जट झटेति** । आद्यस्य अवैरूप्यापादकादेशादित्वादेत्वाऽभ्यासलोपौ । द्वितीयस्य तु न । जेटतुः जझटतुः। **णट नृत्ताविति** । णोपदेशः । चुरादेरेव नाटेः पर्युदासादयं णोपदेश एव । प्रणटति । **इट किट कटी गताविति**। 'कटे वर्षाऽऽवरणयो'रिति कटिः पूर्वमेदित्पठितः। इह ईदित्पठ्यते । एदित्त्वाऽभावात् ह्म्यन्तेति वृद्धिनिषेधो न भवति । अकटीत् अकाटीत् । ननु तर्हि कटेत्येव कुतो न पठ्यत इत्यत आह-**ईकार इति** । **केचित्त्विति** । कटि इति ह्रस्वान्तपाठं मत्वा इदित्वान्नुमि कृते अनुस्वारे परसवर्णे च कण्टतीति वदन्तीत्यर्थः । **अन्ये त्विति** । उदाहरन्तीत्यन्वयः। **प्रश्लिष्येति** । कटीत्यनन्तरम् इ ई इति धातुद्वयं सवर्णदीर्घेण प्रश्लिष्य निर्दिष्टमिति भावः । **अयतीति** । इधातो-

---

शे.] **ह्म्यन्तक्षण** । इडादौ किम् ? । अधाक्षीत् । **इयतुरिति** । इकारोऽत्र ह्रस्वः । द्वित्वे कृते 'एरनेकाच' इति यणूसवर्णदीर्घयोः प्राप्तयोः 'वार्णादाङ्ग'मिति परिभाषया यणिति बोध्यम् । **केचित्त्वित्यारभ्य**

तु 'इजादेश्चे'त्यामि अयांचकारेत्याद्युदाहरन्ति । ३२१ मडि भूषायाम् । ३२२ कुडि वैकल्ये । कुण्डति । 'कुण्डते'इति तु दाहे गतम् । ३२३ मुड ३२४ प्रुड मर्दने । ३२५ चुडि अल्पीभावे । ३२६ मुडि खण्डने । पुडि चेत्येके । पुण्डति। ३२७ रुटि ३२८ लुटि स्तेये। रुण्टति। लुण्टति। रुठि लुठि इत्येके। रुडि लुडि इत्यपरे । ३२९ स्फुटिर् विशरणे। इरित्त्वादङ्वा। अस्फुटत्। अस्फोटीत्। स्फुटीत्यपि केचित्। इदित्त्वान्नुम्। स्फुण्टति। ३३० पठ व्यक्तायां वाचि । पेठतुः। पेठिथ । अपठीत् । अपाठीत् । ३३१ वठ स्थौल्ये । ववठतुः । ववठिथ । ३३२ मठ मदनिवासयोः । ३३३ कठ कृच्छ्रजीवने। ३३४ रठ परिभाषणे। [रुठेत्येके] । ३३५ हठ प्लुतिशठत्वयोः । बलात्कार इत्येके। हठति। जहाठ। ३३६ रुठ ३३७ लुठ ३३८ उठ उपघाते। ओठति । ऊठेत्येके । ऊठति । ऊठांचकार। ३३९ पिठ हिंसासंक्लेशनयोः। ३४० शठ कैतवे च। ३४१ शुठ प्रतिघाते । शोठति । शुठीति स्वामी । शुण्ठति । ३४२ कुठि च। कुण्ठति । ३४३ लुठि आलस्ये, प्रतिघाते च । ३४४ शुठि शोषणे । ३४५ रुठि ३४६ लुठि गतौ । ३४७ चुडु भावकरणे । भावकरणमभिप्रायसूचनम् । चुड्डति । चुचुड्ड । ३४८ अडु अभियोगे । अड्डति । आनड्ड । ३४९ कडु कार्कश्ये । कड्डति । चुड्डादयस्त्रयो दोपधाः । तेन क्विपि–चुत् । अत् । कत् । इत्यादि । ३५० क्रीडृ विहारे । चिक्रीड । ३५१ तुडृ तोडने । तोडति । तुतोड । तूडृ इत्येके । ३५२ हुडृ ३५३ हूडृ ३५४ होडृ गतौ । हुड्यात् । हूड्यात् । होड्यात् । ३५५ रौडृ अनादरे । ३५६ रोडृ ३५७

त.]अन्तरङ्गत्वात्सवर्णदीर्घः।ततः 'अचि श्नुधातु–' इतीयङ्। एकादेशस्य पूर्वान्तवत्त्वेन अभ्यासग्रहणेन ग्रहणात् 'अभ्यासस्याऽसवर्णे' इत्यनेनेत्येके । केचित्तु–'वार्णादाङ्गं बलीयः' इति दीर्घं बाधित्वा यण् । न चेह समानाश्रयत्वं नेति वाच्यम् , अभ्यासोत्तरस्येकारस्य सवर्णदीर्घयणौ प्रति स्थानित्वेन तयोः समानाश्रयत्वात् । अतएव ईयतुरित्यत्र 'इणो यण्' इति यणि ततो 'दीर्घ इणः किति' इत्यभ्यासस्य दीर्घो विधीयते। अन्यथा सूत्रमिदं निर्विषयं स्यात्, अभ्यासाऽभावादित्याहुः । स्यादेतत्–णल्थलोस्त्वभ्यासस्येयङ् दुर्लभः, तस्मिन्कर्तव्ये 'अचः परस्मिन्–' इति वृद्धिगुणयोः स्थानिवद्भावेन असवर्ण इति प्रतिषेधादिति चेत् । मैवम् । असवर्णग्रहणसामर्थ्यादेव स्थानिवत्त्वस्याऽप्रवृत्तेः । ननु नास्ति सामर्थ्यम् , इयर्ति इयृत इत्यादौ सावकाशत्वादिति चेत् । अत्राहुः–न ह्येकमुदाहरणं योगारम्भं प्रयोजयति । अन्यथा ह्यर्म्यासस्यार्ताविति ब्रूयात् । एवं चान्तरङ्गत्वात्सवर्णदीर्घे कृते ततो वृद्धिगुणयोः सतोर्णलि आय, थलि–एय । इट्पक्षे तु अयियेति स्यादित्याशङ्कापि न कार्या, 'अभ्यासस्याऽसवर्णे' इत्यस्य वैयर्थ्यापत्तेरिति । एता । एष्यति । 'अकृत्सार्वे'ति दीर्घः ।

बा.]लिटि शपि गुणेऽयादेशः। इयायेति । णलि द्वित्वे वृद्धौ आयादेशे 'अभ्यासस्याऽसवर्णे' इति इयङ् । इयतुरिति । इकारोऽत्र ह्रस्वः। तथाहि–इ-अतुसिति स्थिते कित्त्वाद्गुणाऽभावे 'द्विर्वचनेऽची'ति निषेधाद्यणभावे 'इ' इत्यस्य द्वित्वे इ इ-अ-तुसिति स्थिते सवर्णपरकत्वादभ्यासस्य इयङभावे सति 'वार्णादाङ्गं बलीय'इति सवर्णदीर्घं बाधित्वा 'एरनेकाच' इत्युत्तरखण्डस्य यणि 'इयतु'रिति रूपम् । इधातोर्भारद्वाजनियमात्थलि वेट् । तत्र इट्पक्षे रूपमाह–इययिथेति । थलि द्वित्वे इटि पित्त्वेन कित्वाऽभावाद्गुणेऽयादेशेऽभ्यासस्य इयङ् । नचाऽचः परस्मिन्निति गुणस्य स्थानिवत्त्वेनाऽसवर्णपरत्वाऽभावात्कथमभ्यासस्य इयङिति वाच्यम् , असवर्णग्रहणसामर्थ्यादेव स्थानिवत्वाऽप्रसक्तेः । एवं णलि इयायेत्यत्रापि वृद्धेर्न स्थानिवत्वम् । थलि इडभावपक्षे रूपमाह–इयेथेति । थलि द्वित्वे गुणेऽभ्यासस्येयङ् । अथुसि इयथुः इयेति। थस्य अकारादेशे द्वित्वे उत्तरखण्डस्य 'एरनेकाच' इति यणि रूपम् । 'णलुत्तमो वे'ति णित्त्वपक्षे आह–इयायेति । द्वित्वे पित्त्वेन कित्वाऽभावाद्वृद्धावायादेशेऽभ्यासस्य इयङ् । णित्त्वाऽभावे आह–इययेति । द्वित्त्वे पित्त्वेन कित्त्वाऽभावाद्गुणेऽयादेशेऽभ्यासस्येयङ् । वसि मसि च क्रादिनियमान्नित्यमिटि द्वित्वे उत्तरखण्डस्य 'एरनेकाच' इति यणि इयिव इयिमेति रूपम् । एता एष्यति अयतु आयत् अयेत् । आशीर्लिङि तु 'अकृत्सार्वधातुकयो'रिति दीर्घः । ईयात् । सिचि वृद्धिः। ऐषीत् । ऐष्यत् । दीर्घस्य रिवति । दीर्घस्य ईधातोरित्यर्थः । तस्य लिटं वर्जयित्वा लडादिषु पूर्ववत् । लिटि विशेषमाह–अयाञ्चकारेति । ईधातोरामि गुणे अयादेशः, अनुप्रयोगश्च । कुडि वैकल्य इति । वैकल्यम् अविवेक इत्याहुः । अपूर्णभावो वा । मुड प्रुड मर्दन इत्यादि । स्पष्टम् । पठधातोर्लिटि अतुसादौ किति एत्वाभ्यासलोपौ । तदाह–पेठतुरिति । पेठिथेति । पित्त्वेन अकित्त्वेऽपि 'थलि च सेटी'त्येत्वाभ्यासलोपौ । अपठीद् अपाठीदिति । 'अतो हलादेर्लघो'रिति वृद्धिविकल्पः । वठ स्थौल्य इति । स्थौल्यं–स्थूलीभवनम् । 'न शसददवादिगुणाना'मित्येत्वाभ्यासलोपनिषेध इति मत्वाह–ववठतुः ववठिथेति । दोपधा इति । डत्वेन डोपधनिर्देश इति भावः । चुदिति । चुड्डधातोः क्विपि हल्ङ्यादिना सुलोपे द्वितीयस्य डस्य संयोगान्तलोपे डुत्वनिवृत्तौ 'वावसाने' इति

शे.]उदाहरन्तीत्यन्तमरुचिग्रस्तमिति केचित् । कुडि । वैकल्यम् = अविवेकः । तुडृ तोडने । तोडनम् =

लोडृ उन्मादे । ३५८ अड उद्यमे । अडति । आड । आडतुः । आडुः । ३५९ लड विलासे । लडति । डलयोलंळयोश्चैकत्वस्मरणाल्ललतीति स्वाम्यादयः । ३६० कड मदे । कडति । कडि इत्येके । कण्डति । ३६१ गडि वदनैकदेशे । गण्डति । इति टवर्गीयान्ताः ॥ अथ पवर्गीयान्ताः । तत्रानुदात्तेतः स्तोभत्यन्ता श्चतुस्त्रिंशत् । ३६२ तिपृ ३६३ तेपृ ३६४ ष्टिपृ ३६५ ष्टेपृ क्षरणार्थाः । आद्योऽनुदात्तः । क्षीरस्वामी त्वयं सेडिति बभ्राम । तेपते । तितिपे । क्रादिनियमादिट् । तितिपिषे । तेप्ता । तेप्स्यते । लिङ्सिचावात्मनेपदेषु ।१।२।११। इक्समीपाद्धलः परौ 'झलादी लिङ्, आत्मनेपदपरः सिच्'त्येतौ कितौ स्तः। कित्त्वान्न गुणः । तिप्सीष्ट । तिप्सीयास्ताम् । तिप्सीरन् । लुङि 'झलो झली'ति सलोपः । अतिप्त । अतिप्सातांम्। अतिप्सत। तेपते। तितेपे। [तेपिता]।तिष्टिपे। तिष्टिपाते। तिष्टिपिरे । तिष्टेपे। तिष्टेपाते । तिष्टेपिरे। तेपृ कम्पने च । ३६६ ग्लेपृ दैन्ये । ग्लेपते । ३६७ टुवेपृ कम्पने । वेपते । ३६८ केपृ ३६९ गेपृ ३७० ग्लेपृ च । चात्कम्पने गतौ च, सूत्रविभागादिति स्वामी । मैत्रेयस्तु–चकारमन्तरेण पठित्वा 'कम्पने' इत्यपेक्षत इत्याह । ग्लेपेरर्थभेदात्पुनः पाठः । ३७१ मेपृ ३७२ रेपृ ३७३ लेपृ गतौ । ३७४ त्रपूष् लज्जायाम् । त्रपते । तॄफलभजत्रपश्च ।६।४।१२२। एषामत एकारोऽभ्यासलोपश्च स्यात्किति लिटि सेटि थलि च । त्रेपे । त्रेपाते ।

---

त.]ईयात् । ऐषीत् । कुडि। वैकल्यमविवेकः। तुड्। तोडनं दारणं हिंसनं च । रोडृ लोडृ । उन्मादश्चित्तविभ्रमः । गडि वदनैकदेशे । टवर्गीयप्रकरणादिह पाठस्तु उचितः। अन्तत्यादिषु तु 'पञ्चैते न तिङ्विषयाः' इति मतान्तरं बोधयितुं प्रसङ्गादुपन्यस्तः । तिपृ तेपृ । लिङ्सिचावात्मनेपदेषु । 'इको झल्', 'हलन्ताच्च' इति वर्तते । 'असंयोगाल्लिट् कित्' इत्यतः किदिति च । तदाह–इक्समीपादित्यादि । इकः किम् ?। यक्षीष्ट । सति कित्त्वे संप्रसारणं स्यात् । आत्मनेपदेति किम् ? । अद्राक्षीत् । कित्त्वे सति 'सृजिदृशोर्झल्यमकिति' इत्यत्र स्यात् । आत्मनेपदपरत्वं सिच एव विशेषणं न तु लिङ्स्थानिकस्यात्मनेपदस्य । लिङः परत्वाऽसंभवात् । तेपृ कम्पने च । चकारात्क्षरणार्थस्य लाभादस्य पूर्वत्र पाठस्त्यक्तुं शक्यः । केचित्तु 'तिपृ देपृ' इति पठन्ति । टुवेपृ । वेपथुः। केपृ गेपृ ग्लेपृ च । योगविभागात्पूर्वोत्तरार्थौ चकारेणानुकृष्येते। तदाह–चात्कम्पने गतौ चेति। योगविभागसामर्थ्यादेवार्थद्वयलाभे चकारो व्यर्थ इत्यन्ये।

---

बा.]चर्त्ते चुदिति रूपम् । अदिति । अड्धातोः क्विपि पूर्ववद्रूपम्। कदिति। कड्धातोः क्विपि रूपम्। इत्यादीति । आदिना जश्त्वेन चुदित्यादिसङ्ग्रहः । एकत्वस्मरणादिति । 'शिक्षादा'विति शेषः । गडि वदनेति । तवर्गान्तेषु गडीति गतम् । परस्मैपदिनः शौटृ गर्वे इत्यादयो गताः । तिपृ इति । प्रथमतृतीयाविदुपधौ । द्वितीयचतुर्थौ एदुपधौ। तृतीयचतुर्थौ षोपदेशौ च,तकारस्य ष्टुत्वेन टकारस्य निर्दिष्टतया दन्त्यपरकसादित्वात्। आद्य इति । तिपृधातुरित्यर्थः। भाष्यादावनुदात्तोपदेशेष्वस्य पाठादिति भावः । बभ्रामेति । भाष्यविरुद्धत्वादिति भावः । आद्यस्योदाहरति–तेपत इति । शपि लघूपधगुणः । तितिप इति । 'असंयोगा'दिति कित्त्वान्न गुणः। अथ तितिपिष इत्यत्र 'एकाच उपदेश' इति निषेधमाशङ्क्याह–क्रादिनियमादिति । तेप्स्यत इति । लोडादौ तु तेपताम् , अतेपत, तेपेत। अथाशीर्लिङि सीयुटि सुटि तिप्सीष्टेति रूपं वक्ष्यति । तत्र लघूपधगुणे प्राप्ते–। लिङ् । इको झलिति, हलन्ताच्चेति च सूत्रमनुवर्तते । 'असंयोगा'दित्यतः किदिति च । इक इति सामीप्ये षष्ठी, हलि अन्वेति । तदाह–इक्समीपादित्यादिना । आत्मनेपदपरकत्वं सिच एव विशेषणं, नतु लिङः,लिङादेशस्यात्मनेपदस्य लिङः परत्वाऽसंभवात् । इकः किम् ? ।'वहू'वक्षीष्ट। सति तु कित्त्वे 'वचिस्वपी'ति संप्रसारणं स्यात् । आत्मनेपदेषु किम् ? । अद्राक्षीत् । इह कित्त्वे सति 'सृजिदृशोर्झल्यमकिती'त्यत्र स्यात् । अतिप्तेति । लुङ्स्तादेशे, च्लिः, सिच् । 'झलो झली'ति लोपः । आत्मनेपदपरकत्वेन सिचः कित्त्वान्न लघूपधगुणः । अथ तेपृधातोरेदुपधत्वस्य प्रयोजनमाह–तितेपे इति। इदुदुपधत्वे तु कित्त्वाद्गुणो न स्यादिति भावः । सेड्ढोऽयमिति सूचयति–तेपितेति । तेपिषीष्ट । अतेपिष्ट । ष्टिपृधातोस्तु 'धात्वादेः षः सः' इति सत्वे ष्टुत्वनिवृत्त्या लटि स्तेपत इति रूपं सिद्धवत्कृत्य लिटि रूपमाह–तिष्टिप इति । 'शर्पूर्वाः खयः' इति तकारः शिष्यते, षकारस्य निवृत्तौ ष्टुत्वनिवृत्तेः । कित्त्वान्न गुणः । तिष्टेप इति । ष्टेपृधातो रूपम् । तेपृ कम्पने चेति । चात्क्षरणे। वस्तुतस्तु चकारेण क्षरणार्थस्य लाभात्पूर्वत्रास्य पाठस्त्यक्तुं शक्यः । केचित्तु 'देपृ' इति वर्गतृतीयादिं पठन्ति । चात्कम्पने गतौ चेति । अनुक्तसमुच्चयार्थश्चकार इति भावः । एतच्च टु वेपृ केपृ गेपृ ग्लेपृ कम्पन इत्येव सिद्धे पृथक्पाठाल्लभ्यते। अर्थभेदादिति। ग्लेपृ दैन्ये' इति पूर्वं पठितम्। इह त्वर्थभेदात्पुनः पाठः। अन्यथा 'ग्लेपृ दैन्ये कम्पने गतौ चे'ति गौरवं स्यादिति भावः । त्रपूषिति । ऊकारः षकारश्च इत् । अदुपधः । संयुक्तहल्मध्यस्थत्वादेत्वाभ्यास-

---

शे.]दारणं हिंसनं च । ळळयोश्चेति । अत्रैको दुःस्पृष्टः, स च शिक्षादौ प्रसिद्धः । लिङ्सिचा । 'इको झल्' 'हलन्ताच्चे'ति, 'असंयोगा'दित्यतः किदिति चानुवर्तते । आत्मनेपदेष्विति किम् ?। अद्राक्षीत् । अत्र हि कित्त्वे अत्र

त्रेपिरे । ऊदित्वाद्विट् । त्रपिता । त्रप्ता । त्रपिषीष्ट । त्रप्सीष्ट । ३७५ कपि चलने । कम्पते । चकम्पे । ३७६ रबि ३७७ लबि ३७८ अबि शब्दे । ररम्बे । ललम्बे । आनम्बे । ३७९ लबि अवस्रंसने च । ३८० कबृ वर्णे । चकबे । ३८१ क्लीबृ अधार्ष्ट्ये । चिक्लीबे । ३८२ क्षीबृ मदे । क्षीबते । ३८३ शीभृ कत्थने । शीभते । ३८४ चीभृ च । ३८५ रेभृ शब्दे । रिरेभे । अभिरभी क्वचित्पठ्येते । अम्भते । रम्भते । ३८६ ष्टभि ३८७ स्कभि प्रतिबन्धे। स्तम्भते।[तुम्यनुस्वारः]। उत्तम्भते। 'उदः स्थास्तम्भो'रिति पूर्वसवर्णः। विस्तम्भते।'स्तन्भे'रिति षत्वं तु न भवति, श्रुविधौ निर्दिष्टस्य सौत्रस्यैव तत्र ग्रहणात्। तद्बीजं तु 'उदःस्थास्तम्भो'रिति पवर्गीयोपधपाठः, 'स्तन्भे'रिति तवर्गीयोपधपाठश्चेति माधवः । केचिदस्य टकार औपदेशिक इत्याहुः । तम्भते-ष्टम्भते । टष्टम्भे । ३८८ जभी ३८९ जृभि गात्रविनामे । रधिजभोरचि ।७।१।६१। एतयोर्नुमागमः स्यादचि । जम्भते । जजम्भे । जम्भिता । अजम्भिष्ट । जृम्भते । जजृम्भे । ३९० शल्भ कत्थने । शशल्भे । ३९१ वल्भ भोजने । दन्त्योष्ठ्यादिः। ववल्भे। ३९२ गल्भ धार्ष्ट्ये। गल्भते। ३९३ श्रम्भु स्रम्भु प्रमादे।तालव्यादिर्दन्त्यादिश्च। श्रम्भते। स्रम्भते । ३९४ ष्टुभु स्तम्भे। स्तोभते । विष्टोभते । तुष्टुभे । व्यष्टोभिष्ट । (४००)। अथ परस्मैपदिनः। ३९५ गुपू रक्षणे । गुपूधूपविच्छिपणिपनिभ्य आयः।३।१।२८। एभ्य आयप्रत्ययः स्यात्स्वार्थे। 'पुगन्ते'ति गुणः।

---

त.]पुनः पाठ इति । दैन्ये पठितस्य कम्पनाद्यर्थलाभार्थमिति भावः। तॄफल । तरतेरकारस्य गुणशब्देन भावितत्वात्फलभजोर्वैरूप्यसंपादकादेशादित्वात्रपतेस्त्वेकहल्मध्यस्थत्वाऽभावादप्राप्ते विधिरयम् । तेरतुः । तेरुः । फेलतुः । फेलुः । भेजतुः । भेजुः । अबि शब्दे । अस्मात् 'गुरोश्च हलः' इति अप्रत्यये अम्बाशब्दः । तिस्रः-अम्बाः=अकारोकारमकारात्मकाः शब्दा यस्य इति बहुव्रीहौ 'शेषाद्विभाषे'ति कप्रत्यये त्र्यम्बक इत्येके। केचित्तु त्रीणि अम्बकानि नेत्राणि यस्येति विग्रहन्ति । अभिरभी इति।'सर्वधातुभ्योऽसु'न्नित्यधिकारे 'उदके नुम्-भौ चे'ति वक्ष्यमाणत्वाद्धात्वन्तरेणापि अम्भः-शब्दः सिध्यतीति बोध्यम्।अम्भः-तोयम् । तस्यापत्यम् आम्भिः-भीष्मः।'अम्भसो लोपश्चे'तिब ह्वादिपाठादिञि सलोपः। तद्बीजं त्विति । पूर्वसवर्णप्रवृत्तेः, षत्वाऽप्रवृत्तेश्च-बीजमित्यर्थः । रधिजभोरचि । रन्धयति । परापि वृद्धिर्नित्येन

---

बा.]लोपयोरप्राप्तावाह-तॄफल। 'अत एकहल्मध्ये' इत्यतोऽत इति,लिटीति चानुवर्तते । 'थसो'रित्यत एदिति,अभ्यासलोपश्चेति च, 'गमहने'त्यस्मात्किितीति, 'थलि च सेटी'ति सूत्रं च। तदाह-एषामिति । गुणशब्देन भाविताऽकारवत्त्वाद्विरूपादेशादित्वादेकहल्मध्यस्थत्वाऽभावाच्चाऽप्राप्ते विधिरियम् । आनम्ब इति। द्विहल्त्वान्नुट् । ष्टभि स्कभीति। आद्यः षोपदेशः, ष्टुत्वेन तकारस्य टकारनिर्देशेन दन्त्यपरकसादित्वात् । ततः षस्य सत्वे ष्टुत्वस्य निवृत्तिः । तदाह-स्तम्भत इति । तुम्यनुस्वार इति । इदित्वान्नुमि 'नश्चापदान्तस्ये'ति तस्यानुस्वारः । 'अनुस्वारस्य ययी'ति तस्य परसवर्णो मकारः । 'ष्टम्भे'त्येव पाठे तु प्रतिपदोक्तत्वात् 'उदः स्थे'त्यत्राऽस्यैव ग्रहणं स्यादिति भावः । पूर्वसवर्ण इति । सकारस्य थकारः । तस्य 'खरि चे'ति चर्त्वे तकार इत्यर्थः । अत्र यद्वक्तव्यं तदुदः स्थास्तम्भोरित्यत्र हल्सन्धौ प्रपञ्चितम् । विस्तम्भत इति।'सात्पदाद्यो'रिति षत्वनिषेध इति भावः । नन्वेवमपि 'स्तन्भे'रिति षत्वं कुतो न स्यादित्यत आह-स्तन्भेरिति षत्वं तु नेति। कुत इत्यत आह-श्रुविधाविति।'स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्चे'ति सूत्रे निर्दिष्टस्यैव प्रतिपदोक्तस्य षत्वविधौ ग्रहणादित्यर्थः । नन्वेवं सति 'उदः स्थास्तम्भो'रिति पूर्वसवर्णविधावपि सौत्रस्यैव ग्रहणं स्यादित्यत आह-तद्बीजं त्विति । षत्वविधौ सौत्रस्यैव ग्रहणं, पूर्वसवर्णविधौ तु तदन्यस्यापीत्यत्र प्रमाणमित्यर्थः । ननु पूर्वसवर्णविधौ मोपधस्य, षत्वविधौ तु नोपधस्य पाठ इत्यत्र किं प्रमाणमित्यत आह-इति माधव इति । पाणिनिशिष्यपरम्परैव तत्र प्रमाणमिति भावः । लिटि 'शर्पूर्वाः खयः'इति षकारस्य निवृत्तौ ष्टुत्वनिवृत्त्या तकारः शिष्यते । तस्तम्भे । टकार औपदेशिक इति । स्वाभाविक एव टकारो नतु ष्टुत्वसंपन्न इत्यर्थः । तम्भते इति। तथा च षकारस्यापि स्वाभाविकत्वात् षत्वविधौ स्तन्भेरेव ग्रहणेऽपि षकारो निर्बाध इति भावः । टष्टम्भ इति । 'शर्पूर्वा' इति टकार एव शिष्यत इति भावः । जभी जृभि गात्रविनाम इति । गात्रस्य विनामः=वक्रभावः । आद्य ईदित् । द्वितीय इदित् । आद्यस्य ईदित्त्वं 'श्वीदितो निष्ठाया'मिति इण्निषेधार्थम् । रधिजभोः । 'रध हिंसाया'मिति श्यन्विकरणस्य चतुर्थान्तस्य इका निर्देशः । 'इदितो नुम् धातो'रित्यतो नुमित्यनुवर्तते । तदाह-एतयोरिति । अनिदित्त्वान्नुम्विधिः । जम्भत इति । शपि नुम् । 'जम्भिते'त्यादावपि अच्परकत्वान्नुम् । अचि किम् ? । रद्धा । जब्धम् । श्रम्भु इति । अकारमध्यः । ष्टुभु स्तम्भ इति । ष्टुत्वेन तकारस्य टः । षोपदेशोऽयम् । विष्टोभत इति । 'उपसर्गात्सुनोती'ति षत्वम् । व्यष्टोभिष्टेति । 'प्राक्सितादड्व्यवायेऽपी'ति षत्वम् । तिपृ इत्यादयः स्तोभ-

---

शे.]स्यात् । अर्थभेदादिति । पूर्वो दैन्यार्थ इति भावः। तॄफल । गुणशब्देन भाविताऽकारवत्त्वाद्विरूपादेशादित्वादेकहल्मध्यस्थत्वाऽभावाच्च यथायथमप्राप्ते विधिरयम् । तद्बीजन्त्विति । पूर्वसवर्णप्रवृत्ति-षत्वाऽप्रवृत्त्योर्बीजं त्वित्यर्थः । अर्थविशेषाऽनिर्देशादाह—स्वार्थ इति । 'धातोरेकाचः' इत्यतो धातोरित्यधिकारादस्यार्द्धधातुकत्वम् । आयोऽकारान्तः।

**सनाद्यन्ता धातवः** ।३।१।३२। सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञाः स्युः । धातुत्वाल्लडादयः । गोपायति । **आयादय आर्द्धधातुके वा** ।३।१।३१। आर्द्धधातुकविवक्षायामायादयो वा स्युः । **कास्प्रत्ययादाममन्त्रे लिटि** ।३।१।३५। कास्धातोः प्रत्ययान्तेभ्यश्चाम् स्याल्लिटि न तु मन्त्रे । ***कास्यनेकाज्ग्रहणं कर्तव्यम्** । सूत्रे प्रत्ययग्रहणमपनीय तत्स्थानेऽनेकाच इति वाच्यमित्यर्थः। **आर्द्धधातुके** ।६।४।४६।

---

त.]त्तुमा बाध्यते । अचीति किम् ?। रद्धा । जब्धा । **सनाद्यन्ताः। सनादय इति**। 'सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विप्णिज्यङौ तथा । यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः' । **धातुत्वादिति** । प्रत्ययविशिष्टस्य धातुत्वादित्यर्थः । 'सुप्तिङन्त'मित्यनेन 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ती'ति ज्ञापितत्वाद्विशिष्टस्य धातुसंज्ञालाभाय अस्मिन् सूत्रे अन्तग्रहणं कृतम् । 'भूवादयो धातवः' इत्यस्यानन्तरं 'सनाद्यन्ताश्चे'ति न सूत्रितं, सनादयो द्वादशैवेति निर्धारणाऽलाभापत्तेः । 'सनाद्यन्ता धातवः' इत्यस्यानन्तरं तु 'भूवादयश्चे'ति पठित्वा 'धातव' इत्येतत्त्र त्युक्तं शक्यम् । **आयादयः**। आयेयङ्णिङ इत्यर्थः। **विवक्षायामिति** । परसप्तम्यां तु आर्द्धधातुकोपदेशकाले यददन्तमित्यनुपदं वक्ष्यमाणं न सङ्गच्छेतेति भावः । अन्ये तु 'गुपू रक्षणे' इत्यस्मात् क्तिनि पश्चादाय्प्रत्यये गोपायतिरित्यनिष्टं प्रसज्येत। **विवक्षाया**मित्युक्ते तु आय्प्रत्यये कृते क्तिनं बाधित्वा 'अप्रत्यया'दित्यकारप्रत्यये टापि च 'गोपाया' 'धूपाये'ति सिद्ध्यतीत्याहुः । **कास्प्रत्यया** । अमन्त्रेति किम् ?। कृष्णो नोनाव । अच्छन्दसीति तु नोक्तं, मन्त्रभिन्ने छन्दसि आम इष्टत्वात् । यथा-'पुत्रमामन्त्रयामास' । प्रत्ययान्तत्वादाम् । 'अथ ह शुनःशेप ईक्षांचक्रे' । 'इजादेश्चे'त्याम् । इह चुलुम्पचकासदरिद्रादिभ्य आमोऽप्राप्तौ 'कास्यनेकाच'इति वार्तिकमारभ्यते । **प्रत्ययग्रहणमपनीयेति** । अन्यथा अ

---

बा.]त्यन्ता अनुदात्तेतो गताः । **गुपू रक्षण इति** । ऊदिदयम् । **गुपूधूप । पञ्च इति** । गुपू धूप विच्छि पणि पनि इत्येभ्य इत्यर्थः । अर्थनिर्देशाऽभावादाह—**स्वार्थ इति** । आयप्रत्ययः अकारान्तः । तत्फलं तु 'गोपायतं नः सुमनस्यमान' इत्यत्र गोपायेत्यस्य धातुस्वरेणान्तोदात्तत्वेन शबकारेण एकदेशस्यापि 'एकादेश उदात्तेनोदात्तः' इत्युदात्तत्वे, 'त'मित्यस्य अदुपदेशात् परलसार्वधातुकत्वेन अनुदात्तस्य 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितत्वमिति बोध्यम् । 'धातोरेकाच' इत्यतो धातोरित्यनुवृत्त्या धातोरिति विहितत्वादायप्रत्ययस्यार्द्धधातुकत्वात्तत्कार्यं गुणादि भवति । तदाह-**पुगन्तेति गुण इति** । नन्वायप्रत्ययान्तस्य भ्वादिषु पाठाऽभावेन धातुत्वाऽभावात् कथमस्माल्लडादय इत्यत आह-**सनाद्यन्ताः** । 'गुप्तिज्किद्भ्यः स'नित्यारभ्य 'कमेर्णि'ङित्यन्तैः सूत्रैः सनादिप्रत्ययान्विधाय सूत्रमिदं पठितम् । सन् आदिर्येषां ते सनादयो णिङ्प्रत्ययपर्यन्ताः, ते अन्ते येषां ते सनाद्यन्ता इति विग्रहः । तदाह-**सनादयः इति** । 'सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विब्णिज्यङौ तथा । यगाय ईयङ् णिङ् चेति द्वादशाऽमी सनादयः' । इति सङ्ग्रहः । संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणप्रतिषेधादिह तदन्तग्रहणम् । **धातुत्वादिति** । आयप्रत्ययान्तस्येत्यर्थः । **गोपायतीति** । शपि 'अतो गुणे' इति पररूपम् । **आयादयः** । आय आदिर्येषां ते आयादयः । 'आय ईयङ्णिङ् चेति त्रय आयादयो मताः' । गुपूधूपविच्छिपणिपनिभ्य आयः, ऋतेरीयङ्, कमेर्णिङित्युत्तरस्य सूत्रस्य पाठात् । **विवक्षायामिति** । 'आर्द्धधातुके'इति विषयसप्तमीति भावः । परसप्तमीत्वे तु गोपायितेत्यत्र अतो लोपो न स्यात्; आर्द्धधातुकोपदेशकालेऽदन्तत्वाऽभावादिति भावः । तथा च लिटि आयप्रत्ययस्य विकल्पः स्थितः । तत्र आयप्रत्ययपक्षे आह-**कास्प्रत्ययात्** । आम्-अमन्त्रे इति च्छेदः । चकासृ दीप्तौ, जागृ निद्राक्षये इत्यादिभ्योऽपि लिटि आमिष्यते । तदर्थमाह-**कास्यनेकाजिति** । ननु यद्यस्मिन् वार्तिके सूत्रस्थप्रत्ययग्रहणमपि संबध्यते। तदा कास्धातोश्च अनेकाचश्च प्रत्ययान्ताच्चेति लभ्यते । ततश्च अ इवाचरति अति। क्विबन्ताल्लडादयः । लिटि औ अतुरित्यादीष्टं न सिध्येत्, प्रत्ययान्तत्वेन आमः प्रसङ्गात् । यदि तु कास्धातोश्च, अनेकाचः प्रत्ययान्ताच्चेति व्याख्यायेत, तदा चकासजागृप्रादिभ्यो न स्यादित्यत आह-**प्रत्ययग्रहणमपनीयेति** । तथाच कास्धातोरनेकाचश्च आमित्येतावदेव लभ्यत इति नोक्तदोषद्वयमिति भावः ।

---

शे.]तत्फलं तु 'गोपायतं'मित्यादौ 'गोपाये'त्यस्य धातुस्वरेणान्तोदात्तत्वे शबकारेणैकादेशस्याप्यन्तोदात्तत्वे तमित्यस्यादुपदेशात्परलसार्वधातुकत्वेनानुदात्तस्य 'उदात्तादनुदात्तस्ये'ति स्वरितत्वम् । **सनाद्यन्ताः** । सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्ताऽग्रहणादन्तग्रहणम् । 'यस्मात्स विहितस्तदादे'रित्यंशस्तु प्रवर्त्तत एव । तेन 'देवदत्तश्चिकीर्षती'त्यादौ देवदत्तादेः समुदायस्य न । एतत्साध्यधातुसञ्ज्ञकघटकानां सूत्रादीनां समुदायानाञ्च क्रियावाचकत्वन्तु स्वभावाद्बोध्यम् । स्पष्टं चेदं 'सुप आत्मनः' इति सूत्रे, 'नमो वरिव' इति सूत्रे च भाष्ये । **विवक्षायामिति** । विषयसप्तमीति भावः । परसप्तमीत्वे हि आर्द्धधातुकोपदेशकाले यदकारान्तमिति गोपायितेत्यत्र लोपो न स्यात्, 'गोपाया'इति च न सिध्येत्, पूर्वङ्क्तिन एवापत्तेः । **कास्र । प्रत्ययान्तेभ्यश्चेति** । 'धातुभ्य' इति शेषः । **सूत्रे प्रत्ययग्रहणमपनीयेति** । एतच्च हरदत्तग्रन्थे स्पष्टम् । **परे तु** कासीति सप्तम्यन्तं । तद्धितसूत्रे इत्यर्थः । भाष्ये-'कास्ग्रहणेऽनेकाच उप-

इत्यधिकृत्य । **अतो लोपः** ।६।४।४८। आर्द्धधातुकोपदेशकाले यदकारान्तं तस्याऽकारस्य लोपः स्यादार्द्धधातुके परे । गोपायांचकार । गोपायांबभूव । गोपायामास । जुगोप । जुगुपतुः । ऊदित्त्वाद्वेट् । जुगोपिथ । जुगोप्थ । गोपायिता।गोपिता। गोप्ता।गोपाय्यात् । गुप्यात् । अगोपायीत्। अगोपीत्।अगौप्सीत्। **३९६ धूप संतापे** । धूपायति । धूपायांचकार । दुधूप । धूपायितासि । धूपितासि । **३९७ जप ३९८ जल्प व्यक्तायां वाचि** । **जप मानसे च** । **३९९ चप सान्त्वने। ४०० षप समवाये**।समवायः–संबन्धः,सम्यगवबोधो वा। सपति।**४०१ रप ४०२ लप व्यक्तायां वाचि** । **४०३ चुप मन्दायां गतौ** । चोपति । चुचोप। चोपिता । **४०४ तुप ५०५ तुम्प ४०६ त्रुप ४०७ त्रुम्प ४०८ तुफ ४०९ तुम्फ ४१० त्रुफ ४११ त्रुम्फ हिंसार्थाः** । तोपति । तुतोप ।

---

त.]इवाचरति अति। अस्य लिटि औ अतुरित्यादि वक्ष्यमाणं न सिध्येदिति भावः। अन्ये तु भाष्यवार्तिकयोः प्रत्ययग्रहणमपनीयेत्यनुक्त्या प्रत्ययान्तादेकाचोप्याम् भवत्येव । अ इवाचरति इत्याचारक्विपि लिटि आंचकार आंचक्रतुरित्यादीत्याहुः। **अतो लोपः** । 'अनुदात्तोपदेशे'ति सूत्रादुपदेश इत्यनुवर्तते । तदाह–**आर्द्धधातुकोपदेशेत्यादि** । उपदेशे इति किम् ?। **अय पय गतौ** । आभ्यां क्विपि 'वेरपृक्तलोपाद्वलि लोपः पूर्वविप्रतिषेधेने'ति वार्तिकात् 'लोपो व्यो'रिति यलोपे 'अतो लोपः' इति लोपो माभूत् । अत् । पत् । इह 'ह्रस्वस्य पिती'ति तुक् । आर्द्धधातुके पर इति किम् ?। कथयते । वृद्धौ कर्तव्यायां 'अचः परस्मि'न्निति स्थानिवत्त्वं यथा स्यात् । **गोपायामिति** । नन्विह आयप्रत्ययस्याऽदन्ततामाश्रित्य लोपकरणे फलाऽभावादुच्चारणार्थ एव तत्राकारोऽस्त्विति चेत् । अत्राहु–गोपायतं नः' इत्यत्र गोपायशब्दस्य धातु-

---

दा.]वस्तुतस्तु अ इवाचरति अतीत्यादि नास्त्येवेति सुब्धातुनिरूपणे वक्ष्यते । तथा च गोपाय–आमिति स्थितम् । **अतो लोपः** । 'अनुदात्तोपदेशवनती'त्यत उपदेशग्रहणमनुवर्तते । आर्द्धधातुक इत्यधिकृतम् । तदिह आवर्तते । एकमुपदेशे अन्वेति । द्वितीयं तु लोपे परनिमित्तम् । तदाह–**आर्द्धधातुकोपदेश** इत्यादिना । आर्द्धधातुकोपदेश इति किम् ? । अय पय गतौ, आभ्यां क्विपि, 'लोपो व्यो'रिति लोपे, 'ह्रस्वस्य पिती'ति तुकि, अपृक्तलोपे अत् पत् इतीष्यते । अत्र यलोपे सति अतो लोपो न भवति, आर्द्धधातुकोपदेशकाले धातोर्यकारान्तत्वात् । 'आर्द्धधातुकोपदेश' इत्यत्र आर्द्धधातुकग्रहणाऽभावे 'चिकीर्षित'मित्यत्र अल्लोपो न स्यात्, सन उपदेशकाले नकारान्तत्वात् । आर्द्धधातुकग्रहणे तु न दोषः, अनुबन्धविनिर्मुक्तात्सन्प्रत्ययादेव क्तप्रत्ययस्य आर्द्धधातुकस्योत्पत्तेः । आर्द्धधातुके पर इति किम् ?। कथयति । चुरादावदन्तोऽयम् । अत्र उपधावृद्धिर्न भवति, 'अचः परस्मि'न्नित्यल्लोपस्य स्थानिवत्त्वात् । आर्द्धधातुके पर इत्यनुक्तौ तु अल्लोपस्य परनिमित्तकत्वाऽभावात्स्थानिवत्त्वं न स्यात् । तथाच प्रकृते गोपाय–आमिति स्थिते अतो लोपे गोपायामिति सिध्यति । यद्यपि सवर्णदीर्घेणाप्येतत्सिद्धं, तथापि न्याय्यत्वादतो लोप उपन्यस्तः । आयप्रत्ययाऽभावपक्षे आह–**जुगोपेति** । पित्त्वेन कित्त्वाऽभावाल्लघूपधगुणः । **जुगुपतुरिति** । कित्त्वान्न गुणः । **ऊदित्त्वाद्वेडिति** । 'थलादा'विति शेषः । जुगुपिव–जुगुप्व । जुगुपिम–जुगुप्म । क्रादिनियमस्तु नञ्प्राप्तस्यैवाऽभावस्य, नतु विभाषादिलभ्यस्येति षिधू शास्त्र इत्यत्रोक्तम् । **गोपायितेति** । लुटि आयप्रत्ययपक्षे नित्यमिट् । आयप्रत्ययाऽभावपक्षे इड्विकल्पः । ऊदित्त्वस्य केवले चरितार्थत्वात् । तदाह–**गोपिता गोप्तेति** । गोपायिष्यति गोपिष्यति गोप्स्यति । गोपायतु । अगोपायत् । गोपायेत् । आशीर्लिङि आयप्रत्ययपक्षे अतो लोपे रूपमाह–**गोपाय्यादिति** । आयप्रत्ययाऽभावे आह–**गुप्यादिति** । लुङि सिचि आयप्रत्ययपक्षे आह–**अगोपायीदिति** । आयप्रत्ययाऽभावपक्षे इटि रूपमाह–**अगोपीदिति** । 'इट ईटी'ति सिज्लोपः । 'नेटी'ति हलन्तलक्षणवृद्धेर्निषेधः । इडभावे तु इटः परत्वाऽभावान्न सिज्लोप इत्याह–**अगौप्सीदिति** । 'वदव्रजे'ति वृद्धिः । अगोपायिष्यत् अगोपिष्यत् अगोप्स्यत् । **धूप संताप इति** । 'गुपूधूपे'त्यायः । आर्द्धधातुके तद्विकल्पः। **षप समवाय इति**। षोपदेशोऽयम् । **चुप मन्दायामिति** । चवर्गप्रथमादि-

---

शे.]सङ्ख्यान'मित्युपक्रमस्वारस्यात् । अत एव भाष्ये–'तन्न कर्तव्य'मिति नोक्तम् । अत एव 'आचारेऽवगल्भे'ति वार्तिके धातुभिरेव [रूप] सिद्धिमाशङ्क्य'अवगल्भाञ्चक्रे' इत्यादौ 'कास्प्रत्ययादाममन्त्रे' इत्याम्यथा स्या'दित्युक्तं भाष्ये। तत्राऽऽकारस्यानुबन्धत्वेनैकाऽच्त्वात् । न च भौतपूर्विकाऽनेकाच्त्वं गृहीत्वा तत्राऽऽमिति वाच्यम्, 'आमर्थं वार्तिक'मित्युत्तरमपर आह–'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' । एवन्तर्ह्यवगल्भाद्यनुक्रमणं न कार्यम् । कार्यञ्च। 'अनुबन्धानासङ्क्रामी'ति–'अवगल्भक्लीबहोडे'ति भाष्योक्त्या तदर्थं तस्य चारितार्थ्येन भौतपूर्विकानेकाच्त्व आमित्यर्थे मानाऽभावात् । अनुबन्धासङ्गश्च 'सर्वप्रातिपदिकेभ्यः' इत्यनेन क्विपि अवगल्भतीत्यादीनां वारणायावश्यकः । कृते त्वस्मिन्न तेनैभ्यः क्विप्, येननाप्राप्तिन्यायेनाऽस्य तद्बाधकत्वात् । सर्वग्रहणन्त्ववगल्भेति वार्त्तिकापेक्षया बहुविषयत्वबोधनायेत्याहुः । अत्रेदं बोध्यम्–प्रत्ययग्रहणापनयवादिनोऽप्येकाज्भ्य आचारक्विपोऽनभिधानमावश्यकम्, अन्यथाऽऽरम्भप्रत्याख्यानयोः फलभेदः स्यादिति हरदत्तोदाहृतानि 'सस्वौ' 'चक्रौ' इत्यादीनि चिन्त्यान्येवेति। **अतो लोपः**। आर्द्धधातुके किम् ?। वृक्षस्य । व्युत्पत्तिपक्षे

तुम्पति । तुतुम्प । तुतुम्पतुः । संयोगात्परस्य लिटः कित्त्वाऽभावान्नलोपो न । 'किदाशिषी'ति कित्त्वान्नलोपः । तुप्यात् । प्रात्तुम्पतौ गवि कर्तरीति पारस्करादिगणे पाठात्सुट् । प्रस्तुम्पति गौः । श्तिपा निर्देशाद्यङ्लुकि न । प्रतोतुम्पीति । त्रोपति । त्रुम्पति । तोफति । तुम्फति । त्रोफति । त्रुम्फति । इहाद्यौ द्वौ पञ्चमषष्ठौ च नीरेफाः । अन्ये सरेफाः । आद्याश्चत्वारः प्रथमान्ताः । ततो द्वितीयान्ताः । अष्टावप्युकारवन्तः । **४१२ पर्प ४१३ रफ ४१४ रफि ४१५ अर्ब ४१६ पर्ब ४१७ लर्ब ४१८ बर्ब ४१९ मर्ब ४२० कर्ब ४२१ खर्ब ४२२ गर्ब ४२३ शर्ब ४२४ षर्ब ४२५ चर्ब गतौ ।** आद्यः प्रथमान्तः । ततो द्वौ द्वितीयान्तौ । तत एकादश तृतीयान्ताः । द्वितीयतृतीयौ मुक्त्वा सर्वे रेफोपधाः । पर्पति । पपर्प । रफति । रम्फति । अर्बति । आनर्ब । पर्बति । लर्बति । बर्बति । पवर्गीयादिरयम् । मर्बति । कर्बति । खर्बति । गर्बति । शर्बति । सर्बति । चर्बति । **४२६ कुबि आच्छादने ।** कुम्बति । **४२७ लुबि ४२८ तुबि अर्दने ।** लुम्बति । तुम्बति । **४२९ चुबि वक्त्रसंयोगे ।** चुम्बति । **४३० षृभु ४३१ षृम्भु हिंसार्थौ ।** सर्भति । ससर्भ । सर्भिता । सृम्भति । ससृम्भ । सृभ्यात् । षिभुं षिम्भु इत्येके । सेभति । सिम्भति । **४३२ शुभ ४३३ शुम्भ भाषणे ।** भासने इत्येके । हिंसायामित्यन्ये । **अथानुनासिकान्ताः । तत्र कम्यन्ता अनुदात्तेतो दश । ४३४ घिणि ४३५ घुणि ४३६ घृणि ग्रहणे ।** नुम् । ष्टुत्वम् । घिण्णते । जिघिण्णे । घुण्णते । जुघुण्णे । घृण्णते । जघृण्णे । **४३७ घुण ४३८ घूर्ण भ्रमणे ।** घोणते । घूर्णते । इमौ तुदादौ परस्मैपदिनौ । **४३९ पण व्यवहारे स्तुतौ च । ४४० पन च ।** स्तुतावित्येव संबध्यते, पृथङ्निर्देशात् । पनिसाहचर्यात्पणेरपि स्तुतावेवाऽऽयप्रत्ययः । व्यवहारे तु-पणते । पेणे । पणितेत्यादि । स्तुतावनुबन्धस्य केवले चरितार्थत्वादायप्रत्यान्तान्नात्मनेपदम् । पणायति । पणायांचकार । पेणे । पणायितासि । पणितासे । पणाय्यात् । पनायति । पनायांचकार । पेने । **४४१ भाम क्रोधे ।** भामते । बभामे । **४४२ क्षमूष् सहने ।** क्षमते । चक्षमे । चक्षमिषे । चक्षंसे । चक्षमिध्वे । चक्षमिवहे । चक्ष्व-

---

त.]त्वाद्धातोरन्त उदात्तो भवति । ततः शबकारेणैकादेशोऽपि 'एकादेश उदात्तने'त्युदात्त एव,तकाराऽकारस्तु 'तास्यनुदात्तेन्ङिददुपदेशात्' इत्यनुदात्तः । ततश्च 'उदात्तादनुदात्तस्ये'ति स्वरितो भवति । 'स्वरितात्संहितायामनुदात्ताना'मिति 'न' इत्यस्य एकश्रुतिः । आयंप्रत्ययस्य अनदन्तत्वेतु नेदमिष्टं सिध्यतीति । **स्तुतावेवेति ।** भट्टिस्तु व्यवहारेऽपि आयं

---

बा.]रयम् । चवर्गद्वितीयादिस्त्वनिङ्कः । **तुप तुम्पेति ।** अष्टावप्युदुपधाः, तृतीयचतुर्थौ सप्तमाष्टमौ च रेफवन्त इति मूले स्पष्टीभविष्यति । 'तुतुम्पतु'रित्यत्र नलोपमाशङ्क्याह-**संयोगादिति ।** आशीर्लिङि विशेषमाह-**किदाशिषीति । प्रात्तुम्पताविति** । श्तिपा निर्देशोऽयम् । प्रात्-प्रेत्युपसर्गात्-तुम्पधातौ परे सुट् स्याद्गवि कर्तरि सतीत्यर्थः । तुपधातोः सुट् आद्यवयवः । सुड्विधावस्मिन् तुम्पताविति श्तिपा निर्देशस्य प्रयोजनमाह-**यङ्लुकि नेति ।** 'शपाऽनुबन्धेने'त्युक्तेरिति भावः । **षृभु षृम्भु इति ।** ऋदुपधौ षोपदेशौ । **सृभ्यादिति ।** आशीर्लिङि अनिदित्वान्नलोपः । **षिभुं षिम्भु इत्येक इति ।** आद्य इदुपधो, द्वितीयो मोपधः । **शुभ शुम्भेति ।** द्वितीयस्य आशीर्लिङि अनिदित्वान्नलोपः । इति 'गुपू'इत्यादयः पवर्गीयान्ताः परस्मैपदिनो गताः । **कम्यन्ता इति ।** 'कमु कान्तौ'इत्येतत्पर्यन्ता इत्यर्थः । **घुण घूर्णेति ।** द्वितीयस्य दीर्घपाठः स्पष्टार्थः, 'उपधायां चे'त्येव दीर्घसिद्धेः । केचित्तु घुर्णेति ह्रस्वमेव पठन्ति । **स्तुतावित्येवेति ।** न तु व्यवहार इत्येवकारार्थः । **पृथङ्निर्देशादिति ।** अन्यथा 'पण पन व्यवहारे स्तुतौ चे'त्येव निर्दिशेदिति भावः । यद्यपि पृथङ्निर्देशो यथासङ्ख्यनिवृत्त्यर्थ इत्यपि वक्तुं शक्यं, तथापि संप्रदायानुरोधादेवमुक्तम् । **पनिसाहचर्यादिति ।** पनधातुः स्तुतावेव वर्तते, तत्साहचर्याद्गुपूधूपविच्छेत्यत्र पणधातुरपि स्तुत्यर्थक एव गृह्यते, नतु व्यवहारार्थकः । अतः स्तुतावेव पणधातोरायप्रत्ययो न तु व्यवहारे इत्यर्थः । क्रेतव्यद्रव्यस्य मूल्यनिर्धारणाय प्रश्नप्रतिवचनात्मको व्यवहारः । ननु स्तुतौ पणायतीति रूपं वक्ष्यमाणमनुपपन्नं, पणधातोरनुदात्तेत्त्वेनात्मनेपदापत्तेः । न च आयप्रत्ययान्तस्यानुदात्तेत्त्वं नेति शङ्क्यं, पणधातौ श्रुतस्यानुदात्तेत्त्वस्य 'आनर्थक्यात्तदङ्ग'न्यायेन आयप्रत्ययान्तेऽन्वयोपपत्तेरित्यत आह-**स्तुताविति ।** अनुबन्धस्य अनुदात्तात्मकस्य इतः,-यआर्द्धधातुकविषये कदाचिदायप्रत्ययविनिर्मुक्ते चरितार्थत्वादायप्रत्ययान्तादात्मनेपदं नेत्यर्थः । एवं च तुल्यन्यायत्वादेकाच उपदेश इति निषेधोऽपि नेति सूचितम् । **क्षमूष् सहन इति ।** 'षिड्भिदादिभ्योऽ'ङित्यर्थं षित्त्वम् । ऊदित्त्वादिड्विकल्पं मत्वाह-**चक्षमिषे**

---

शे.]सप्रत्यय उपदेशेऽकारान्तः। **घुण घूर्ण।** अस्य दीर्घपाठः प्रक्रियालाघवार्थः। अन्ये तु ह्रस्वमेव पठन्ति। **स्तुतावित्येवेति ।** यद्यपि पृथङ्निर्देशो यथासङ्ख्यनिवृत्त्यर्थ इत्यपि वक्तुं शक्यन्तथापि सम्प्रदायानुरोधादेवमुक्तम् । **स्तुतावनुबन्धस्येति ।** आर्द्धधातुकविषये आयादीनां वैकल्पिकत्वेन तदभावे चारितार्थ्यमिति भावः । **चक्षंसे** इति ।

।८।२।६५। मान्तस्य धातोर्मस्य नकारादेशः स्यान्मकारे वकारे च परे । णत्वम् । चक्षण्वहे । चक्षिमिहे । चक्षण्महे । क्षमिष्यते । क्षंस्यते । क्षमेत । आशिषि—क्षमिषीष्ट । क्षंसीष्ट । अक्षमिष्ट । अक्षंस्त । ४४३ **कमु कान्तौ** । कान्तिरिच्छा । **कमेर्णिङ्** ।३।१।३०। स्वार्थे । ङित्वात्तङ् । कामयते । **अयामन्ताल्वाय्येत्निष्णुषु** ।६।४।५५। आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात् । वक्ष्यमाणलोपापवादः । कामयांचक्रे । 'आयादय आर्द्धधातुके वा' । चकमे । कामयिता। कमिता । कामयिष्यते । कमिष्यते । **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** ।३।१।४८। ण्यन्तात् , श्र्यादिभ्यश्च च्लेश्चङ् स्यात्कर्त्रर्थे लुङि परे । अकाम् इ अं त इति स्थिते । **णेरनिटि** ।६।४।५१। अनिडादावार्द्धधातुके परे णेर्लोपः स्यात् । परत्वाद् 'एरनेकाचः' इति यणि प्राप्ते ।

त.]प्रायुङ्क्त—'न चोपलेभे वणिजां पणाया'मिति। वणिजां व्यवहारमित्यर्थः।'अ प्रत्यया'दित्यायप्रत्ययान्तादकारप्रत्यये टाप्। **चक्षंस इति** । इह 'अनुनासिकस्य क्विझलो'रित्युपधादीर्घो न कृतः, संज्ञापूर्वकविधेरनित्यत्वादिति स्थितस्य गतिमुत्प्रेक्षयन्ति । **कमु** कान्तौ । अस्य णिङभावे 'उदितो वे'ति क्त्वायामिड्विकल्पः । कमित्वा । कान्त्वा । निष्ठायां तु 'यस्य विभाषे'ति निषेधात्कान्तः । **अयामन्ता** । 'नामन्ते'ति सूत्रितेऽपि 'णेरनिटी'ति वक्ष्यमाणलोपस्य निषेधे गुणाऽयादेशयोः सतोः 'कामयांचक्रे' इत्यादिरूपाणि सिध्यन्त्येव, तथापि 'ल्यपि लघुपूर्वा'दित्येवमर्थमयादेशवचनम् । प्रस्तनय्य । सङ्गमय्य । नह्यत्र गुणाऽयादेशौ लभ्येते । **आम्**—कारयामास । **अन्त**—गण्डयन्तो मण्डयन्तः । 'तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्चे'त्यौणादिको झच्। 'झोऽन्तः' । 'स्पृहिगृही'त्यालुच् । स्पृहयालुः। 'श्रुदक्षिस्पृहिगृहिभ्यः' इत्यौणादिक आय्यः । 'स्पृहयाय्यः' । 'स्तनिहृषिपुषी'त्यौणादिक एव इत्नुच् । स्तनयित्नुः । 'णेश्छन्दसीति' इष्णुच् । 'वीरुधः पारयिष्णवः' । **णिश्रिद्रु** । च्लेः सिचोऽपवादः । **णेरनिटि** । णेरिति णिङ्णिचोर्ग्रहणम् । एवमन्यत्रापि बोध्यम् । 'अनिटी'त्यनेनाधिकृतमार्द्धधातुक इत्येतद्विशेष्यते। 'यस्मिन्विधि'रिति तदादिविधिः। 'अतो लोपः' इत्यस्माल्लोप इति चानुवर्तते, तदाह—**अनिडादावित्यादि** । **यणि प्राप्त इति** । ननु परत्वादियङ्यणादिविषयो यथासंभवमत्र सन्तु नाम,तेषु स्थानिवद्भावाण्णिग्रहणेन ग्रहणाल्लोपो भविष्यतीति चेत् ,नैवं शक्यम् , इयङादेशे ह्यन्त्यलोपः प्रसज्येतेति दोषः स्यात् । एतच्च 'अतो लोपः' इति सूत्रे भाष्ये स्थितम् । न चाऽत्र 'कारणा' 'कारक' इत्यादौ गुणवृद्ध्योः कृतयोरन्तरङ्गत्वादयायादेशयोः कृतयोरन्त्यस्य लोपः प्राप्नोतीति कथमियङादेशे एव दोष उक्त इति शङ्क्यं,

बा.]**चक्षंस इति**। इडभावपक्षे 'अनुनासिकस्य क्विझलो'रिति दीर्घस्तु न भवति,क्विसाहचर्येण तिङ्भिन्नस्यैव झलादेस्तत्र ग्रहणात् । वहिमह्योरिडभावपक्षे विशेषमाह—**म्वोश्च** । 'मो नो धातो'रित्यनुवर्तते । तदाह—**मान्तस्येति** । **णत्वमिति** । षात्परत्वादट्कुप्वाङिति नकारस्य णत्वमित्यर्थः । **कमु कान्ताविति** । 'उदितो वे'ति क्त्वायामिड्विकल्पार्थमुदित्त्वम् । कान्तिशब्दस्य प्रभापरत्वभ्रमं वारयति—**कान्तिरिच्छेति** । 'स्वर्गकाम'इत्यादौ कमेरिच्छायां प्रयोगबाहुल्यदर्शनादिति भावः । 'कामोऽभिलाषस्तर्षश्चे'त्यमरः। **कमेर्णिङ्** । शेषपूरणेन सूत्रं व्याचष्टे—**स्वार्थे इति** । अर्थविशेषाऽनिर्देशादिति भावः। णङावितौ। 'णेरनिटी'त्यत्रोभयोर्ग्रहणायाऽनुबन्धकरणम्। **ङित्वात्तङिति**।अनुदात्तेत्त्वं तु णिङभावे 'चकमे' इत्यादौ चरितार्थमिति भावः।**कामयत इति**।णिङि 'अत उपधाया' इति वृद्धौ 'कामी'ति णिङन्तम्। 'क्ङिति चे'ति निषेधस्तु न, अनिग्लक्षणत्वात् । णिङन्तस्य धातुत्वाल्लडादयः । तत्र लटि शपि गुणेऽयादेशे **कामयते** इति रूपम् । **कामयेते** इत्यादि सुगमम्। लिटि 'कास्यनेकाच' इत्यामि, 'आम' इति लिटो लोपे 'कामि-आम्' इति स्थिते, 'सार्वधातुके'ति गुणं बाधित्वा 'णेरनिटी'ति वक्ष्यमाणे णिलोपे प्राप्ते—**अयामन्ता**। अयिति छेदः। 'णेरनिटी'त्यतो णेरित्यनुवर्तते। तदाह—**णेरयादेशः स्यादिति** । तथा च कामयामित्यामन्तं स्थितम् । ततः 'कृञ्चानुप्रयुज्यते' इत्यनुप्रयोगाल्लिडिति मत्वाह—**कामयांचक्र इति** । णिङ आयादिष्वन्तर्भावाल्लिडादावार्द्धधातुके तद्विकल्पमुक्तं स्मारयति—**आयादय इति** । **चकम इति** । सेड्कोऽयम् । चकमिषे । चकमिध्वे । चकमिवहे । चकमिमहे ।**कामयितेति** । लुटि णिङ्पक्षे तासि इटि वृद्धौ गुणेऽयादेशे रूपम् । कामयताम् । अकामयत । कामयेत । कामयिषीष्ट—कमिषीष्ट । अथ णिङन्तात्कामीत्यस्माल्लुङस्तादेशे च्लेः सिजादेशे प्राप्ते—**णिश्रि** । णि श्रि द्रु स्रु एषां द्वन्द्वः । प्रत्ययग्रहणपरिभाषया णीति तदन्तस्य ग्रहणम् । 'च्लि लुङी'त्यतो लुङीति, 'च्लेः सि'जित्यतश्च्लेरिति चानुवर्तते। तदाह—**ण्यन्तादित्यादिना** । चङावितौ । **णेरनिटि** । आर्द्धधातुक इत्यधिकृतम् । 'अतो लोप' इत्यस्माल्लोप इत्यनुवर्तते । 'अनिटी'त्यस्य आर्द्धधातुकविशेषणत्वात्तदादिविधिः। तदाह—**अनिडादाविति** । तथाच णिलोपे काम् अ त इति स्थिते—**परत्वादिति** । 'एरनेकाच'इत्यस्य

शे.]'अनुनासिकस्ये'ति दीर्घस्तु न, क्विप्साहचर्येण तिङ्भिन्नस्यैव झलादेर्ग्रहणात् । **कामयत इति** । अनिग्लक्षणत्वान्नोपधावृद्धिनिषेधः । **अयामं** । **लोपापवाद इति** । णिलोपापवाद इत्यर्थः । वस्तुतोऽयनुवादोऽयं, तदनुवादबलाच्च णिलोपबाधः । ध्वनितश्चेदं प्रकृतसूत्रे भाष्ये इति 'उणादयः' इति सूत्रे निरूपयिष्यामः । ननु परत्वादियङादिषु णिलोपो

**ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेनेति** वार्तिकम् । णिलोपस्य तु पाचयतेः पाक्तिरित्यादि क्तिजन्तमवकाश इति भावः । वस्तुतस्त्वनिटीति वचनसामर्थ्यादार्द्धधातुकमात्रमस्य विषयः । तथा चेयङादेर-

---

त.]'वार्णादाङ्गं बलीयः' इत्ययायौ बाधित्वा णिलोपो भविष्यतीति भाष्याशयात्। **ण्यल्लोपाविति।** णिलोपः इयङ्यण्गुण-वृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन । अल्लोपस्तु–वृद्धिदीर्घाभ्यामिति विवेकः । णिलोपस्य निरवकाशत्वेन वार्तिकस्योक्तिसंभव एव नास्तीत्यत आह—**पाक्तिरित्यादि क्तिजन्तमिति** । तत्र 'तितुत्रे'तीण्निषेधादिति भावः । **वचनसामर्थ्यादिति** । अयं भावः–'णे'रित्येतावति सूत्रे कृतेऽप्यार्द्धधातुक इत्यनुवृत्त्या आर्द्धधातुके परतः प्रवर्तमानो णिलोप इयङ्यणादिभिर्बाधितः सन् परिशेषात् क्तिच्येव स्यादित्यनिटीत्यस्य वैयर्थ्यं प्रसज्येत,तथा चाऽनिडाद्यार्द्धधातुकं सर्वमप्यस्य विषयो, न तु क्तिजन्तमेवेति । **अयमिति** । णिलोप इत्यर्थः । अल्लोपांशे तु वचनमपेक्षितमेव । तेन 'चिकीर्षक' इत्यत्र वृद्धिं,

---

बा.]'णेरनिटी'त्यपेक्षया परत्वाण्णिलोपं बाधित्वा यणि प्राप्ते सतीत्यर्थः।कृते तु यणि लोपो दुर्लभः,णेरभावात्।स्थानिवत्त्वेऽपि यणा बाधितस्य पुनरुन्मेषो दुर्लभः । वस्तुतस्तु स्थानिवत्त्वमेवेह दुर्लभम् , यण्स्थानिनमिकारम् अलं णित्वरूपेणाश्रित्य प्रवर्तमानस्य णिलोपस्याऽल्विधित्वेन तत्र स्थानिवत्त्वाऽसंभवात्।स्पष्टा चेयं रीतिर्भोभगो इति सूत्रभाष्ये इति शब्देन्दुशेखरे विस्तरः। **ण्यल्लोपाविति** । णिलोप इयङ्यण्गुणवृद्धिदीर्घेभ्यः, अल्लोपस्तु वृद्धिदीर्घाभ्यां पूर्वविप्रतिषेधेनेति विवेकः। तथा च पूर्वविप्रतिषेधादिह यणं बाधित्वा णिलोपो भवतीति स्थितम् । ननु अततक्षत् , आटिटत् , कारणा, कारकः, कार्यते इति वक्ष्यमाणेषु वार्तिकोदाहरणेषु क्रमेण इयङ्यण्गुणवृद्धिदीर्घाणामवश्यं प्राप्तेर्णिलोपस्य निरवकाशत्वादेव इयङादिबाधकत्वसंभवादिदं वार्तिकं व्यर्थम् , सुधियौ, प्रध्यौ, कर्ता, चिकाय, सूयादित्यादौ इयङ्यण्गुणवृद्धिदीर्घाणां सावकाशत्वादित्यत आह—**णिलोपस्य त्विति** । पच्धातोर्णिचि उपधावृद्धौ पाचीति ण्यन्तात् 'स्त्रियां क्ति'न्निति क्तिनि, 'तितुत्रतथसिसुसरकसेषु चे'तीण्निषेधे, 'णेरनिटी'ति णिलोपे, कुत्वे पाक्तिरिति स्थितिः। 'क्तिजन्त'मिति पाठे तु 'क्तिच्क्तौ च संज्ञाया'-मिति क्तिज्बोध्यः। 'पाक्ति'रिति कस्यचित्संज्ञा । अत्र इयङादीनामप्रसक्तेर्णिलोपस्यापि सावकाशत्वं तुल्यम् । तत्र अततक्षदित्यादौ परत्वादियङादिप्राप्तौ तन्निवृत्त्यर्थं वार्तिकमिदमारम्भणीयमिति भावः । वार्तिकं व्यर्थमेवेत्याह–**वस्तुतस्त्विति । आर्द्धधातुकमात्रमिति** । कृत्स्नमनिडाद्यार्द्धधातुकमस्य णिलोपस्य विषय इत्यर्थः । तथा च अततक्षदित्यादौ परानपि इयङादीन् णिलोपोऽपवादत्वाद्बाधते । परापेक्षयाऽपवादस्य प्रबलत्वात् । परत्वादियङादीनां णिलोपबाधकत्वाभ्युपगमे हि णेरनिटीत्यत्र अनिटीति व्यर्थम् । कारयितेत्यादाविडाद्यार्द्धधातुके गुणेनैव णिलोपस्य बाधसिद्धेः । ततश्च अनिटीति वचनसामर्थ्यादनिडादावार्द्धधातुके सर्वस्मिन्परे णिलोप इति विज्ञायते। एवं च अततक्षदित्यादावियङादिप्रवृत्तियोग्येऽप्यार्द्धधातुके सर्वत्र णिलोप इति,–अस्य निरवकाशत्वादपवादत्वादेव णिलोपेन इयङादिबाधसिद्धेर्वार्तिकमिदं व्यर्थमिति भावः। **अपवाद एवायमिति** । णिलोप इत्यर्थः । अतो लोपस्तु 'चिकीर्षक' इत्यत्र वृद्धिं, 'चिकीर्ष्या'दित्यत्र 'अकृत्सार्वधातुकयो'रिति दीर्घं च बाधित्वा पूर्वविप्रतिषेधाद्भवति । नह्यतो लोपो वृद्धिदीर्घयोरपवादः, गोपायितेत्यादौ

---

शे.]न स्यादत आह–**ण्यल्लोपाविति। क्तिजन्तमिति।**क्तिन् तु दुर्लभः,'अ प्रत्यया'दित्यनेन बाधात् । एवं 'ज्ञीप्सती'-त्यप्यवकाशः, इडभावे 'इको झ'लिति कित्त्वात् । यत्तु 'यदि पुनःप्रसज्ञ आश्रीयते, स्थानिवद्भावेन च णित्वन्तदा णिलोपांशे वार्त्तिकमनावश्यकम्। अत एव सप्तमशेषे 'ण्यन्ताण्णौ परत्वात् [वृद्धिः। ] वृद्धौ कृतायां लोपस्तन्नाग्लोप्यङ्गम्', इति भाष्ये उक्त'मिति, तन्न । अगिति प्रत्याहारग्रहणसामर्थ्येनाऽकृतायां वृद्धौ लोप इत्यर्थस्य 'णौ चङी'ति सूत्रभाष्ये 'अवीवद'दित्युपक्रम्यैव सिद्धान्तितत्वेन, 'ण्यल्लोपौ' इति पूर्वविप्रतिषेधपरभाष्यविरोधेन च परत्वाद्वृद्धिरित्यत्रत्यभाष्यस्य एकदेश्युक्तित्वात् । किं च वृद्धौ णिलोपोऽपि दुर्लभः, णेरभावात् । न च स्थानिवद्भावः, वृद्धिस्थानीकाररूपाऽल्वृत्तिधर्मणित्वाश्रयाऽल्विधित्वेन तत्र स्थानिवत्त्वाऽप्रवृत्तेः । स्पष्टा चेयं रीतिः 'भोभगो' इति सूत्रे भाष्ये । ण्यन्ताण्णाववीवद-दित्यादावित्वदीर्घत्वोपधाह्रस्वत्वसिद्धये णेर्णिच्युपसङ्ख्यानमेव कार्यम् । 'सन्वत्' सूत्रे 'णेर्णिच्युपसङ्ख्यान'मिति वचनाऽभावे न सिद्ध्यति, णिचा व्यवहितत्वादग्लोपित्वाच्चे'त्येव सिद्धान्त्युक्तिः। अग्रिमभाष्यन्त्वेकदेश्युक्तिः । एवम् 'अतो लोपः' इति सूत्रे 'ण्यल्लोपौ' इति पूर्वविप्रतिषेधमुक्त्वा 'न वक्तव्यः । एषु विधिषु कृतेषु स्थानिवद्भावाण्णित्वेन लोपो भविष्यति । नैवं शक्यम् । इयङादेशेऽन्त्यलोपापत्तेः' इत्युक्तं भाष्ये । तदप्येकदेश्युक्तिरेव, 'भोभगो' इति सूत्रस्थन्यायसिद्धभाष्यविरोधात् । किञ्च 'णेरनिटी'त्यस्य ण्यन्ताङ्गस्य निर्दिश्यमानो योऽन्त्यस्तस्य लोप इत्यर्थ इति 'एकाचो द्वे' इति सूत्रभाष्याल्लभ्यते । तत्र हि–'स्थानेद्विर्वचने आटिटदित्यादौ णिलोपो न स्या'दित्यापादितम् । एवञ्चेयङि अन्त्यस्य निर्दिश्यमानधर्मावच्छिन्नत्वाऽभावात्समुदायस्य चान्त्याऽल्रूपत्वाऽभावाल्लोपाऽप्राप्त्या तस्यैकदेश्युक्तित्वावश्यकत्वात् । **वचनसामर्थ्यादिति** । परत्वाद्गुणादीनां णिलोपबाधकत्वे इडादावपि गुणेन बाधसिद्धिरिति भावः । तेन कारणादिसिद्धिः । **परे** त्वेवमनेकवचनकल्पनया तत्तत्सामर्थ्येन तत्तद्बाधकल्पनापेक्षया पूर्वविप्रतिषेधकल्पकताया एवाऽनिटीत्यस्यौचित्यमित्याहुः

पवाद एवाऽयम् । इयङ्—अततक्षत् । यण्—आटिटत् । गुणः—कारणा । वृद्धिः—कारकः । दीर्घः—कार्यते ।
**णौ चङ्युपधाया ह्रस्वः** ।७।४।१। चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् । **चङि** ।६।१।११। चङि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेस्तु द्वितीयस्य । **सन्वल्लघुनि चङ्परेऽनग्लोपे** ।७।४।९३। 'चङ्परे' इति बहुव्रीहिः । [अन्यपदार्थो णिः] । स चाङ्गस्येति च द्वयमप्यावर्तते । अङ्गसंज्ञानिमित्तं

त.]चिकीर्ष्योदित्यत्र'अकृत्सार्वे'ति दीर्घं च बाधित्वा पूर्वविप्रतिषेधेन'अतो लोपः'इति लोपो भवतीत्याहुः।**णौ चङ्युपधाया ह्रस्वः** । उपधायाः किम् ?। अचकाङ्क्षत् । **सन्वल्लघुनि** । चङ्पर इत्येतावतैव णिरिति न लभ्यते, श्रिद्रुस्रुवामपि

बा.]वृद्धिदीर्घयोरप्राप्तयोरप्यतो लोपस्यारम्भादित्यलम् । **इयङिति**। उदाहरणसूचनमिदम् । **अततक्षदिति**। तक्षधातोर्ण्यन्ताल्लुङस्तिपि इकारलोपे चङि द्वित्वे संयोगपूर्वकत्वादेरनेकाच इति यणभावे इयङि प्राप्ते पूर्वविप्रतिषेधाण्णिलोपे हलादिशेषेऽडागमेऽततक्षदिति रूपम् । **यणिति** । उदाहरणसूचनम् । **आटिटदिति** । अटधातोर्ण्यन्तादाटीत्यस्माल्लुङि तिपि इकारलोपे चङि'टी'त्यस्य द्वित्वे 'एरनेकाच' इति यणं बाधित्वा पूर्वविप्रतिषेधाण्णिलोपे आटि वृद्धौ रूपम् । **गुण इति** । उदाहरणसूचनम् । **कारणेति** । 'स्त्रिया'मित्यधिकारे कृञ्धातोर्ण्यन्तात्कारीत्यस्मात् 'ण्यासश्रन्थो यु'जिति युचि, अनादेशे 'सार्वधातुकार्द्धधातुकयो'रिति गुणं बाधित्वा पूर्वविप्रतिषेधाण्णिलोपे स्त्रीत्वाट्टापि कारणेति रूपम् । **वृद्धिरिति** । उदाहरणसूचनम् । **कारक इति** । कृञ्धातोर्ण्यन्तात्कारीत्यस्माण्ण्वुलि अकादेशे वृद्धिं बाधित्वा पूर्वविप्रतिषेधाण्णिलोपे रूपम् । **दीर्घ इति** । उदाहरणसूचनम् । **कार्यत इति** । कृञ्धातोर्ण्यन्तात्कारीत्यस्मात्कर्मणि लटि यकि 'अकृत्सार्वधातुकयो'रिति दीर्घं बाधित्वा पूर्वविप्रतिषेधाण्णिलोपः । तथाच प्रकृते काम् इ अ त इत्यत्र 'एरनेकाच' इति यणं बाधित्वा णिलोपे काम् अ त इति स्थितम् । **णौ चङि** । अङ्गाधिकारादाह-**यदङ्गमिति** । उपधायाः किम् ?। अचकाङ्क्षत् । चङि किम् ?। कारयति । णौ किम् ? । 'चङ्युपधाया ह्रस्व' इत्युच्यमाने अदीदपदित्यत्र दाधातोर्ण्यन्ताल्लुङि चङि दा इ अ त् इति स्थिते आकारस्य ह्रस्वे सति पुक्न स्यात् । णावित्युक्तौ तु आकारस्य णौ परत उपधात्वाऽभावान्न ह्रस्वः । 'द्विर्वचनेऽची'ति निषेधस्तु न शङ्क्यः, द्वित्वनिमित्तचङ उपधया व्यवहितत्वात् । तथाच प्रकृते कम् अ त इति स्थितम् । **चङि** । 'एकाचो द्वे प्रथमस्ये'ति 'अजादेर्द्वितीयस्ये'ति चाधिकृतम् । 'लिटि धातोरनभ्यासस्ये'ति सूत्रं लिटीति वर्जमनुवर्तते । तदाह-**चङि पर इत्यादिना** । तथाच कमित्यस्य द्वित्वे हलादिशेषे क कम् अ त इति स्थितम् । **सन्वल्लघुनि** । 'अनग्लोपे' इति च्छेदः । **बहुव्रीहिरिति** । चङ् परो यस्मादिति विग्रह इति भावः । कर्मधारयमाश्रित्य चङि परे इति नार्थः, परग्रहणवैयर्थ्यात् । ननु बहुव्रीह्याश्रयणेऽपि 'अत्र लोपोऽभ्यासस्ये'त्यतोऽभ्यासस्येत्यनुवृत्तौ चङ्परके लघुनि परेऽभ्यासः सन्वदित्यर्थो लभ्यते । तथा सति अण्यन्तेभ्यः श्रिद्रुस्रुभ्यश्चङि द्वित्वे अशिश्रियत् अदुद्रुवत् असुस्रुवदित्यत्रापि सन्वत्त्वं स्यात् । ततश्च 'दीर्घो लघो'रिति सन्वद्भावविषये अभ्यासस्य वक्ष्यमाणो दीर्घः स्यादित्यत आह-**अन्यपदार्थो णिरिति** । तथाच चङ्परे णौ इति लभ्यते । अशिश्रियदित्यादौ च णेरभावान्न सन्वत्त्वमिति भावः । **स चाङ्गस्येति चेति** । बहुव्रीहिगम्यो णिः, अङ्गस्येत्यनुवृत्तं चेत्यर्थः । तत्र णावित्यावृत्तौ एकं लघुनीत्यत्रान्वेति । तथाच चङ्परे णौ यल्लघु तस्मिन्परत इति लभ्यते । द्वितीयं तु अनग्लोपे इत्यत्रान्वेति । तथाच णौ परतो योऽग्लोपस्तस्याऽभावे सतीति लभ्यते । अङ्गस्येत्यावृत्तौ एकं चङ्परे इत्यत्रान्वेति । निमित्तनिमित्तिभावे षष्ठी । तथाच अङ्गसंज्ञानिमित्तभूते चङ्परके वर्णे परे इति लभ्यते । चङ्परकश्च वर्णोऽर्थाण्णेरिकार एव, न तु श्रिद्रुस्रुवामन्त्यवर्णः, तस्य अप्रत्ययत्वेन अङ्गसंज्ञाप्रापकत्वाऽभावात् । एतदर्थमेव अङ्गस्येत्यस्य निमित्तषष्ठ्यन्ततामाश्रित्य चङ्पर इत्यनेनान्वयोऽभ्युपगतः । चङ्पर इत्येतावतैव तु णाविति न लभ्यते, श्रिद्रुस्रुषु व्यभिचारात् । द्वितीयं

शे.]**णौ चङि**।णिनाऽङ्गस्याव्यवहितपरत्वम्।चङा तु सामर्थ्याद्व्यवहितपरत्वम्।तत्फलितमाह-**चङ्परे णाविति**।णाविति किम्? । चङ्परोपधाया ह्रस्वभाविन्या असम्भवेन सूत्रवैयर्थ्यापत्तेः । न च 'लृ इ अ' इति ऋकारस्य सम्भवः, तत्राप्यन्तरङ्गत्वाद्वृद्ध्यावादेशयोः सतोस्तदसम्भवात् । न च ह्रस्वो वृद्धेरपवादः, ह्रस्वप्रवृत्तिकाले वृद्धेर्निष्पन्नत्वेन तस्य तद्बाधकत्वाऽसम्भवात् । पदसंस्कारपक्षेऽपि निमित्तनिमित्तिभावापन्नशास्त्रकार्याणां क्रमेणैव ज्ञानेन धातुसञ्ज्ञा-तिङुत्पत्ति-चङुत्पत्ति-समये एव वृद्ध्यावोर्निष्पन्नत्वज्ञानेन चङुत्तरकालिकह्रस्वेन तद्बाधाऽयोगात् । न च सामर्थ्येन चङि यः प्रत्ययस्तस्मिन्नुपधाया इत्यर्थो भविष्यतीति वाच्यं, तदपेक्षया सकलबोद्धृबोधक्षमत्वेन णावित्यस्यैव लघुत्वात् । चङि किम् ? । कारयति । उपधायाः किम् ? । अचकाङ्क्षत् । प्रत्ययस्याऽङ्गांशे उत्थिताकाङ्क्षत्वाण्णावित्यङ्गस्यैव विशेषणं, नाऽच इति बोध्यम् । तदुक्तं-'शपूर्वा' इति सूत्रे कैयटे-'शब्दनित्यत्वेऽपि उपायानामवश्याश्रयणीयोऽन्तरङ्गबहिरङ्गभावः' इति । नित्यः शब्दो वाक्यपदरूपः, तदन्वाख्यानेऽपीत्यर्थः। **अवश्येति**। अन्यथाऽन्वाख्यानविलय इति तदर्थः।**बहुव्रीहिरिति**। परग्रहण-

यच्चङ्परं, णिरिति यावत्, तत्परं यल्लघु, तत्परो योऽङ्गस्याभ्यासस्तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति ।

अथवाऽङ्गस्येति नावर्तते । चङ्परे=णौ–यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्येत्यादि प्राग्वत् ।

**सन्यतः**।७।४।७९। अभ्यासस्याऽत इकारः स्यात्सनि। **दीर्घो लघोः**।७।४।९४।लघोरभ्यासस्य दीर्घः

---

त.]चङ्परत्वात्। अत आह–**अङ्गसंज्ञानिमित्तमिति**।**अङ्गस्याभ्यास इति**।अङ्गस्य ये द्वे विहिते तयोः पूर्वोऽभ्यास इत्यर्थः । **अङ्गस्येति नावर्तत इति** । अस्मिंस्तु व्याख्याने 'चङ्परे' इत्येतावतैव णिरिति लभ्यते, श्रिद्रुस्रुषु परेषु अङ्गत्वाऽसंभवादतो व्याचष्टे–**चङ्परे णौ यदङ्गमिति**। **चङ्परे** इत्यस्यैव व्याख्यानं 'णा'विति ज्ञेयम् । अनग्लोपे किम् ?। अचकथत् । **सन्यतः**। 'अत्र लोपोऽभ्यासस्ये'त्यतोऽभ्यासस्येति, 'भृञामि'दित्यत इद्ग्रहणं चानुवर्तते। तदाह–**अभ्यासस्येत्यादि** । तपरकरणं किम् ? । पापच्यतेः सन् । पापचिषते । न च सनि योऽभ्यासः सन्निमित्त इति विज्ञानात्तपरकरणाऽभावेऽपि नोक्तातिप्रसङ्गः, अभ्यासस्येह यङ्निमित्तत्वादिति वाच्यं, तादृशविवक्षायामधीषिषति प्रतीषिषतीत्यादावव्याप्तेः । न हि कार्यी निमित्तत्वेनाश्रीयते । यद्याश्रीयेत तर्हि 'द्विर्वचनेऽची'ति निषेधेन रिस्शब्दस्य द्वित्वाऽप्रवृत्तावरिरिषतीत्यादि न सिध्येत् ।नन्वेवं पिपक्षतीत्यादावव्याप्तिः,अभ्यासस्य सन्परत्वाऽभावात् । न च 'येन नाव्यवधान' न्यायेन सन्प्रकृत्या व्यवहितेऽप्यभ्यासस्येत्वं स्यादेवेति वाच्यं, प्रतीषिषतीत्यादावभ्यासस्याऽव्यवहितसन्परत्वसंभवादुक्तन्यायस्याऽप्रवृत्तेरिति चेत् । अत्राहुः–सना धातुमाक्षिप्य सनि सति यो धातुः सन्नन्तस्तदीयाभ्यासस्येति व्याख्यानान्नोक्तदोषः । न च सनि परे अभ्यासस्येति यथाश्रुतं परित्यज्योक्तव्याख्याने किं मानमिति वाच्यम् , तपरकरणस्यैव तत्र मानत्वात् । किंच अकारग्रहणमपि तत्र मानम् ।अन्यथा 'सन' इत्येव ब्रूयात् , तावताप्यधीषिष[ति प्रतीषिष]तीत्यादावित्त्वप्रवृत्तिसिद्धेरिति । **दीर्घो लघोः** ।**लघोरभ्यासस्येति**। ननु अज्झल्समुदायाऽभ्यासस्य लघुसंज्ञा दुर्लभा,

---

बा.]त्वङ्गस्येत्येतत् अभ्यासस्येत्यनुवृत्तेन अन्वेति । 'सन्व'दिति सप्तम्यन्ताद्वतिः । तदाह–**अङ्गसंज्ञानिमित्तमित्यादिना** । **अथवेति** । अस्मिन्व्याख्याने 'चङ्परे' इत्येतदङ्गस्येत्यत्रान्वेति, न तु लघुनि । अङ्गस्य च प्रत्ययनिमित्तत्वादेव णेरन्यपदार्थस्य लाभः । लघुनीति तु अभ्यासस्येत्यत्रैवान्वेति । तदाह–**चङ्परे णौ यदङ्गमित्यादिना** ।

**प्राग्वदिति**। सनीव कार्यं स्याण्णावग्लोपेऽसतीत्यर्थः। अत्र प्रथमपक्ष एव भाष्यसंमतः,'अजजागर'दित्यत्र चङ्परे णौ यल्लघु, तदभ्यासव्यवहितमिति न सन्वत्त्व'मिति भाष्योक्तेः । एवं च प्रथमपक्षे उन्देर्ण्यन्ताच्चङि द्वित्वे उन्दिदि अ त् इत्यत्र अभ्यासोत्तरखण्डे चङ्परे णौ लघोरभावेनाऽभ्यासस्य तथाविधलघुपरकत्वविरहात्सन्वत्त्वाऽभावान्नाऽभ्यासदीर्घः । द्वितीयपक्षे तु चङ्परे णौ यदङ्गम्–'उन्दिद्' इत्येतत् ,–तदीयोऽभ्यासश्चङमादाय, लुप्तं णिमादाय वा लघुपर इति सन्वत्त्वसत्त्वादभ्यासदीर्घ इति भेदः । एवं च प्रकृते क कम् अ त इत्यत्र व्याख्याद्वयेऽपि सन्वत्त्वं स्थितम् ।

**सन्यतः**। सनि–अत इति च्छेदः।'अत्र लोप' इत्यतोऽभ्यासस्येत्यनुवर्तते।'भृञामि'दित्यस्मादिदिति। तदाह–**अभ्यासस्येति** । कि कम् अ त इति स्थितम् । **दीर्घो लघो** । 'अत्र लोपोऽभ्यासस्ये'त्यतोऽभ्यासस्येत्यनुवर्तते । **अभ्यासस्य लघोर्दीर्घ इति** । अभ्यासावयवस्य लघोरित्यर्थः । 'सन्वल्लघुनि चङ्परे'इति सूत्रं सन्वच्छब्दवर्जमनु-

---

शे.]सामर्थ्यादिति भावः। तद्विशेष्यञ्च णिरेव न लघु, अङ्गस्येत्यावर्त्याऽङ्गसञ्ज्ञानिमित्तमिति व्याख्यानात् ।अत एव श्रिप्रभृतीनां न सन्वत्त्वं । तदाह–**अङ्गसञ्ज्ञेत्यादि** । **तत्परं यल्लघ्विति** । सन्निधानाच्चङ्परे णाविति लघोरेव विशेषणमिति भावः । अत एव 'इह कस्मान्न भवति–'अजजागरत्'?। लघुनि चङ्पर इत्युच्यते, व्यवहितञ्चात्र लघु चङ्परे'इति भाष्यं सङ्गच्छते । चङ्परे णौ यल्लघु तदभ्यासस्य व्यवहितमित्यर्थः । एवञ्च 'अचचकास'दित्यादौ नैव सन्वत्त्वम् । 'औन्दिद'-दित्यादौ च नैव दीर्घत्वम् । 'और्णूनव'दित्यत्र च भवत्येव सन्वत्त्वम् । 'अचिक्ष्मयत्' 'अचिक्षण'दित्यत्र 'अत्स्मृदृत्वरे'-त्यनेनेत्वबाधनार्थेन संयोगव्यवधाने प्रवृत्तिज्ञापनान्न दोषः । **अङ्गस्येति** । अवयव इत्यर्थः । अस्य फलं चिन्त्यं, तत्परलघुपराऽभ्यासस्येत्येव सिद्धेः । माधवानुरोधेन तु मूलकृतोक्तम् । तन्मते फलन्त्वग्रे स्फुटम् । **णाविति** । 'चङ्परे' इत्यस्यावृत्तेरिति भावः । **अथ वेति** । 'चङ्परे'इत्यस्याऽङ्गविशेषणत्वेऽङ्गत्वस्य प्रत्ययनिमित्तत्वेनैव णिरूपविशेष्यलाभ इति भावः । अयं पक्षो भाष्यविरुद्धः । 'औन्दिद'दित्यादौ दीर्घापत्तिश्चात्र पक्षे, चङ्परे णौ यदङ्गमौन्दिद् इति, तदीयोऽभ्यासश्चङमादाय, णिलोपस्य स्थानिवद्भावेन णिमादाय वा लघुपर इति बोध्यम् । ननु 'मीमादीनान्तु अभ्यासस्य लोपः प्राप्नोति, अमीमैपत् । सिद्धन्तु सनि यादृशमभ्यासरूपं दृष्टं तादृशस्यैवात्रातिदेशो न तु कार्यस्य । न च मीमादीनां सन्यभ्यासरूपमस्ति, लोपश्च न रूप'मित्युक्त्वा 'अङ्गान्यत्वाद्वा सिद्ध'मिति भाष्ये उक्तम् । तत्र कैयटः–'मीमादीनामङ्गानामभ्यासलोपो विहितोऽयन्त्वभ्यासो ण्यन्तानाम् । **अन्ये तु** 'चङ्परे णौ यदङ्गं तदभ्यासस्य सन्वत्त्वं, णौ मीमादीन्येवाङ्गानि । तस्मादङ्गान्यत्वादित्यस्यायमर्थः–येषामङ्गानामच इस् इत्यादिर्विधीयते तस्याऽत्रग्रहणाल्लोपो, न त्विसादिरहितानाम्–अमीमपदित्यादौ । धातोः सन्वत्त्वाऽभावात् । अभ्यासस्यैव ह्यनेन सन्वत्त्वमिति । एवञ्च **कैयटेना**प्ययं पक्ष

स्यात्सन्वद्भावविषये। अचीकमत । णिङभावपक्षेतु–कमेश्च्लेश्चङ्‌ वक्तव्यः।।णेरभावान्न दीर्घसन्वद्भावौ। अचकमत ।
**संज्ञायाः कार्यकालत्वादङ्गं यत्र द्विरुच्यते । तत्रैव दीर्घः सन्वच्च नानेकाक्ष्विति माधवः ॥१॥**

त.] 'ह्रस्वं लघु' इति सूत्रितत्वात्। नैष दोषः।इमे हि न समानाधिकरणे षष्ठ्यौ, किं तु व्यधिकरणे, तथा चाभ्यासावयवस्य लघोर्दीर्घ इत्यर्थः । 'लघुनि चङ्परेऽनग्लोपे' इति सर्वमिहानुवर्तते । तच्च प्राग्वदेव द्वेधा व्याख्येयं । तदाह–**सन्वद्भावविषय इति** । 'हलादे'रिति प्राचोक्तमिहोपेक्षितं, निष्प्रमाणत्वात् । न हि मुनित्रयोक्तिं विना हलादेरिति व्याख्यातुमुचितम् । न चैवमौन्दिदत् आट्टिटदित्यादौ दीर्घः स्यादिति शङ्क्यम्, अङ्गलघ्वोरुभयोरपि णिचं प्रति विशेष्यत्वे दीर्घस्य तत्राऽप्राप्तेः । चङ्परं हि यदङ्गम् उन्द् इति, न तदीयोऽभ्यासो, न वा चङ्परणिच्परं यल्लघु तत्परः । एतेन आट्टिटदित्यादिभिाष्योदाहरणमेव 'हलादे'रिति व्याख्याने प्रमाणमिति केषांचिदुत्प्रेक्षापि प्रत्युक्ता। दीर्घोऽप्राप्त्यैवोदाहरणसौष्ठवस्योक्तत्वात् । लघोः किम्?। क्ष्णु हिंसायाम् । अचिक्ष्णवत् ॥ शास्त्रेऽस्मिन् 'कार्यकालं संज्ञापरिभाषं, 'यथोद्देशं संज्ञापरिभाष'-मिति पक्षद्वयमप्यस्ति जातिव्यक्तिपक्षवत् । तथा च 'पूर्वोऽभ्यासः' इत्यस्य 'सन्वल्लघुनी'त्यादिना सह पक्षद्वयेऽपि एकवाक्यता समानैव, तथापि कार्यकालपक्षे पदैकवाक्यता, यथोद्देशपक्षे तु वाक्यैकवाक्यतेत्यस्ति विशेषः । तत्रेदानीं कार्यकालपक्षपातिमाधवमतं तावद्व्याचष्टे–**संज्ञाया** इत्यादिना श्लोकद्वयेन । **अङ्गं यत्रेति** । अयं भावः–'सन्वल्लघुनि', 'दीर्घो लघो'रिति सूत्रद्वये अङ्गस्येत्यनुवर्तते, अभ्यासस्येति च । तेनाङ्गस्य ये द्वे तयोः पूर्वोऽभ्याससंज्ञकस्तस्येति फलितम् । 'द्वे' इत्यत्र च 'उच्चारणे' इति विशेष्यसमर्पकमध्याह्रियते, तच्च कृदन्तं, तद्योगादङ्गस्येति कर्मणि षष्ठी । तेन यत्राङ्गं द्विरुच्यते तत्रैव पूर्वस्य दीर्घसन्वद्भावौ स्त इति । अचीकरत् । अपीपचत् । युक्तं चैतत् । अङ्गस्येति षष्ठ्याः

बा.] वर्तते । तच्च प्राग्वदेव द्वेधा व्याख्येयम् । तथा च फलितमाह–**सन्वद्भावविषय इति** । 'सन्यत' इत्यत्र तपरत्वं स्पष्टार्थमिति 'दीर्घोऽकित' इति सूत्रे भाष्ये स्पष्टम् । तथा च कि कम् अ तेत्यत्र अभ्यासेकारस्य दीर्घेऽभ्यासचुत्वेऽडागमे परिनिष्ठितं रूपमाह–**अचीकमतेति** । अत्र लघोर्णिपरत्वं येन नाव्यवधानन्यायाद्बोध्यम् । **णिङभावपक्षे त्विति**। 'आयादय आर्द्धधातुके वे'ति णिङो वैकल्पिकत्वादिति भावः । **कमेश्च्लेश्चङ् वक्तव्य इति** । अण्यन्तत्वादप्राप्तौ वचनम् । **णेरभावादिति** । णिङभावपक्षे कमिधातोरनुदात्तेत्त्वात्तङि प्रथमपुरुषैकवचने च्लेश्चङि द्वित्वे हलादिशेषे अभ्यासचुत्वे अडागमे अचकमतेति रूपं वक्ष्यते । तत्र णेरभावाद्दीर्घो लघोरित्यभ्यासलघोर्दीर्घो न भवति, तत्र लघुनि चङ्परेऽनग्लोप इत्यनुवर्त्य चङ्परे णावेव तद्विधानोक्तेः । अत एव सन्वत्त्वाऽभावात्सन्यत इत्यभ्यासाऽकारस्य इत्वं च न भवतीत्यर्थः । 'दीर्घो लघो'रिति दीर्घविधौ सन्वत्त्वं न निमित्तं, किंतु लघुनि चङ्पर इत्यस्य तत्रानुवृत्त्या सन्वद्भावविषये तत्प्रवृत्तिः। अतो दीर्घसन्वद्भावाविति पृथगुक्तिः । अथ पञ्चभिः श्लोकैः सन्वद्भावसूत्रं, 'दीर्घो लघो'रिति सूत्रं च विशदयति–**संज्ञाया इत्यादिना**।अस्मिन् शास्त्रे'कार्यकालं संज्ञापरिभाष'मित्येकः पक्षः। 'कार्यकाल'मित्यस्य कार्यप्रदेशकमित्यर्थः। अस्मिन्पक्षे तत्तत्कार्यविधिप्रदेशेषु संज्ञाशास्त्रस्य परिभाषाशास्त्रस्य च उपस्थितिः । 'यथोद्देशं संज्ञापरिभाष'मिति पक्षान्तरम्। उद्देशाः–संज्ञापरिभाषाशास्त्राम्नानप्रदेशाः,तान् अनतिक्रम्य यथोद्देशम् । संज्ञाशास्त्रं परिभाषाशास्त्रं च स्वप्रदेशे स्थितमेव तत्तद्विध्यपेक्षितं स्वं स्वमर्थं समर्पयतीति यावत्।अस्मिन्पक्षे कार्यप्रदेशेषु संज्ञापरिभाषायां तदर्थस्यैवोपस्थितिर्न तु संज्ञापरिभाषाशास्त्रयोरिति स्थितिः। 'सन्वल्लघुनी'ति सूत्रे, 'दीर्घो लघो'रिति सूत्रे च अङ्गस्येति अभ्यासस्येति चानुवृत्तम्। तत्र कार्यकालपक्षे 'पूर्वोऽभ्यास'इतिसूत्रं संनिहितम्। ततश्च अङ्गस्य ये द्वे उच्चारणे तयोः पूर्वोऽभ्याससंज्ञः, स सन्वद्भवतीति फलितम् । तत्र कृदन्तोच्चारणशब्दयोगादङ्गस्येति कर्मणि षष्ठी, न त्ववयवषष्ठी, कारकषष्ठ्या बलवत्त्वात् । अङ्गं च प्रत्यये परतः कृत्स्नमेव प्रकृतिरूपं, न तु तदेकदेशः । ततश्च कृत्स्नमङ्गं यत्र द्विरुच्यते न तु तदेकदेशमात्रं तत्रैव 'दीर्घो लघो'रिति दीर्घः, 'सन्वल्लघुनी'ति सन्वद्भावश्च भवति । एवं च अङ्गस्य एकाच्कत्वे सत्येव तयोः प्रवृत्तिः, तत्र कृत्स्नस्याङ्गस्य द्विरुक्तेः । अनेकाच्केषु तु अङ्गेषु न तयोः प्रवृत्तिः, तत्र एकस्यैव एकाचोऽङ्गैकदेशस्य द्विरुक्तेरिति माधवो

शे.] उक्त इति चेन्न, 'अङ्गस्याऽभ्यास'इत्यत्राऽङ्गं किंनिरूपितं ग्राह्यम् ?। चङ्निरूपितम्, णिनिरूपितं वा?। तत्रोपस्थितत्वात्प्राधान्याच्च णिनिरूपितमेव गृह्यते इत्येवंपरतया पूर्वभाष्याऽविरोधेन तस्य योजयितुं शक्यत्वात् । अन्यथा एकस्यैव प्रयोगस्य सूत्रव्याख्यानभेदेन साधुत्वाऽसाधुत्वयोरापत्तौ 'न वे'ति सूत्रस्थभाष्यविरोध इति दिक् । **सन्यतः** । अतः किं ? । जुघुक्षति । तपरत्वं स्पष्टार्थम् । 'अभ्याससम्बन्ध्यकारस्येत्यर्थः' इति 'दीर्घोऽकितः' इति सूत्रे भाष्ये स्पष्टम् । अत एव 'चिच्छादयिषती'त्यादावन्तरङ्गत्वात्तुक्यपि इत्वसिद्धिः । सन्पराभ्यांसस्येत्यर्थः । द्विःप्रयोगत्वाद्द्विर्वचनस्य 'अधीषिषती'त्यादौ सन्परत्वमभ्यासस्य । यङोऽल्लोपस्य स्थानिवत्त्वात् 'पापचिषते'इत्यादौ न दोषः। ध्वनितंचेदं 'स्तौतिण्यो' रिति सूत्रे भाष्ये । तत्र हि–'अभ्यासादित्यस्य सनि योऽभ्यासस्तस्माया प्रातिस्तस्या नियमो यथा स्यात्, यदि

**चकास्त्यर्थापयत्यूर्णोत्यादौ नाङ्गं द्विरुच्यते । किं त्वस्यावयवः कश्चित्तस्मादेकाक्ष्विदं द्वयम् ॥२॥**
**वस्तुतोऽङ्गस्यावयवो योऽभ्यास इति वर्णनात् । ऊर्णौ दीर्घोऽर्थापयतौ द्वयं स्यादिति मन्महे॥३॥**
**चकास्तौ तूभयमिदं न स्यात्स्याच्च व्यवस्थया । णेर्विशेष्यं सन्निहितं लघुनीत्यङ्गमेव वा ॥४॥**

त.]कारकविभक्तित्वसंभवे तदुपेक्ष्य शेषषष्ठीत्वकल्पनाया अन्याय्यत्वात् । **नाङ्गं द्विरुच्यते इति**।एवं च अचचकासत् । आर्तथपत् । और्णुनवदित्येव भवतीति भावः । **अवयवः कश्चिदिति** । हलादेः प्रथमावयवो द्विरुच्यते, अजादेस्तु द्वितीयावयव इत्यर्थः । अङ्गं यत्र द्विरुच्यते तत्र पूर्वस्य दीर्घसन्वद्भावौ विधीयमानौ एकाक्ष्वेवेति च फलितम् । किंच-अस्मिन्पक्षे 'एकाच' इत्यङ्गस्य विशेषणं शब्दतोऽपि सुलभम्, 'एकाचो द्वे' इत्यधिकारादित्याशयेनाह-**तस्मादेकाक्ष्विति** । स्यादेतत्-उक्तरीत्या ह्रस्वहलादिशेषचुत्वादीन्यपि अनेकाक्षु न स्युः । न चेष्टापत्तिः । दिद्रासति । दिदरिद्रासति । जिगणयिषतीत्यादिलक्ष्यस्य सर्वसंमतत्वात् । तन्निर्वाहार्थं यथोद्देशपक्ष आश्रीयत इति चेत्, तर्हि इहापि स एवोचितः । अर्थाधिकारपक्षस्यैवाभ्यर्हितत्वात्, वृत्त्यादिषु स्वीकृतत्वाच्चेत्यभिप्रेत्याह-**वस्तुत इति । ऊर्णौ दीर्घ इति** । 'स्या'दित्यपकृष्यते । और्णुनवत् । इह सन्वद्भावस्तु नोपयुज्यते, णौ कृतस्यादेशस्य स्थानिवद्भावेन, निषेधेन वा नुशब्दस्य द्वित्वे सति अभ्यासे अवर्णाऽभावादिति भावः । **अर्थापयताविति** । अर्थमाचष्टे इत्यर्थे णिच्यापुगागमे ततश्च च्लेश्चङि दीर्घस्य, 'सन्यतः' इतीत्वस्य च प्रवृत्तौ आर्तीथपदित्येव भवतीति भावः । 'अर्थ उपयाच्ञाया'मित्यस्य तु चङ्परे णौ आर्तथतेति भवति, न तु तत्र दीर्घसन्वद्भावयोः प्रवृत्तिरिति चुरादिषु स्फुटीभविष्यति । **उभयमिति** । दीर्घः, सन्वच्चेत्येतद्द्वयमित्यर्थः । **न स्यात्स्याच्च व्यवस्थयेति** । 'चङ्परे णौ यल्लघ्वि'ति व्याख्याने न स्यात्, 'चङ्परे णौ यदङ्ग'मिति व्याख्याने तु स्यात् । एवं च अचचकासत्, अचीचकासदिति व्याख्याभेदेन रूपद्वयमित्यर्थः ।

बा.]मन्यत इति प्रथमश्लोकस्यार्थः । 'नानेकाक्ष्वि'त्युक्तं विशदयति-**चकास्तीति** श्लोकेन । 'चकासृ दीप्तौ' । अर्थमाचष्टे इत्यर्थे णिचि 'अर्थवेदयो'रिति प्रकृतेरापुगागमे अर्थापिधातुः । 'ऊर्णुञ् आच्छादने' । एते त्रयोऽनेकाच्का धातवः । आदिना 'जागृ निद्राक्षये'इत्यादिसंग्रहः । एभ्यो ण्यन्तेभ्यश्चङि अङ्गं कृत्स्नं न द्विरुच्यते, किंतु अङ्गस्य कश्चिदेकाजवयव एव द्विरुच्यते, तस्मादनेकाच्केषु कृत्स्नस्याङ्गस्य द्विरुक्त्यभावादेकाच्केष्वेवाङ्गेषु 'दीर्घो लघो'रिति दीर्घः, 'सन्वल्लघुनी'-ति सन्वद्भावश्चेत्येतद्द्वयं भवति, नत्वनेकाच्काङ्गेष्वित्यर्थः । नन्वेवं सति दिदरिद्रासतीत्यादौ 'हलादिः शेष' इत्याद्यभ्यासकार्यमनेकाच्केष्वङ्गेषु न स्यात्, कृत्स्नाङ्गस्य द्विरुक्त्यभावात् । किंच अजजागरदित्यत्र सन्वत्त्वमाशङ्क्य 'णिपरकलघोर्गकाराकारस्य 'जा'इत्यनेन व्यवहितत्वादभ्यासस्य न सन्वत्त्व'मिति समाहितं भाष्ये । तदेतदनेकाच्काङ्गेषु सन्वत्त्वस्याऽप्रवृत्तौ विरुध्येत, कृत्स्नस्याङ्गस्य द्विरुक्त्यभावादेव तत्र सन्वत्त्वस्याऽप्राप्तौ तच्छङ्काया एवानुन्मेषादित्यस्वारस्याद्यथोद्देशपक्षमालम्ब्याह-**वस्तुत इति** । 'अङ्गस्ये'त्यवयवषष्ठी । अङ्गावयवस्याभ्यासस्येति लभ्यते । ततश्च ऊर्णुञि ण्यन्ते चङि 'नु' इत्येकदेशस्य द्वित्वेऽपि 'और्णूनुव'दित्यत्र 'दीर्घो लघो'रित्यभ्यासलघुर्दीर्घीभवति । सन्वत्त्वं तु प्रयोजनाऽभावादुपेक्षितम्, अभ्यासे अकाराऽभावेन 'सन्यत' इत्यस्याऽसंभवात् । अर्थमाचष्टे इत्यर्थे णिचि प्रकृतेरापुकि अर्थापिधातोश्चङि णिलोपे उपधाह्रस्वे थप् इत्यस्य द्वित्वेऽपि 'अर्तीथप'दित्यत्र सन्वद्भावात् 'सन्यत' इत्यभ्यासस्य इत्वम्, अभ्यासदीर्घश्चेति द्वयं भवतीति जानीम इति तृतीयश्लोकार्थः । 'अङ्गस्यावयव' इति पक्षेऽपि चकास्तौ विशेषमाह-**चकास्तौ त्विति** । चतुर्थश्लोकोऽयम् । **अवस्था**-वस्तुस्थितिः । **व्यवस्थया** । पक्षद्वयेनेति यावत् । 'चङ्परे' इत्यनेन अन्यपदार्थतया लब्धस्य णावित्यस्य संनिहितं लघुनीत्येतद्विशेष्यम् । तथाच 'चङ्परे णौ यल्लघु' इति प्रथमव्याख्यानं फलितम् । अङ्गमेव वा णेर्विशेष्यम् । तथाच 'चङ्परे णौ यदङ्ग'मिति द्वितीयं व्याख्यानं फलितम् । इति व्यवस्थया=पक्षद्वयेन सन्वत्त्वं दीर्घश्चेत्युभयमिदं चकासृधातौ ण्यन्ते चङि णिलोपे द्वित्वे अचचकासदित्यत्र न स्यात्, स्याच्चेत्यन्वयः ।

शे.]योऽभ्यासस्तस्माद्या प्राप्तिस्तत्र नियमो माभूत्, सोषुप्यतेः सन् सोषुपिषते । अथ वाऽभ्यासाद्या प्राप्तिस्तस्या नियमो यथा स्यात्, धातोश्च या प्राप्तिस्तस्याश्च नियमो माभूत्, अधीषिषति'-इति प्रयोजनमुक्तम् । **सञ्ज्ञायाः कार्येति** । तत्पक्षे हि 'पूर्वोऽभ्यासः' इत्यस्य'एकाच' इत्यनुवृत्तसहितस्य कार्यदेशे सन्निधानम्, अङ्गञ्च तत्र संनिहितम् । तत्राऽङ्गस्येति कर्मणि षष्ठी, कारकविभक्तेर्न्याय्यत्वात् । 'एकाच' इति च तत्समानाधिकरणम् । एवञ्चाऽङ्गसञ्ज्ञकैकाऽच्कर्मके ये द्वे उच्चारणे, तयोः पूर्वोऽभ्याससञ्ज्ञकस्तस्य च सन्वदित्यर्थ इत्येकाक्ष्वेव प्रवृत्तिः। एतदर्थमेवाङ्गस्येत्यस्यावृत्तिरिति भावः। इदञ्च 'अजजागर'दित्यादौ सन्वद्भावापादानपरभाष्यविरुद्धमित्यरुचेराह-**वस्तुत इत्यादि** । अत्र पक्षेऽङ्गस्येत्युपरञ्जकतया कथं चिन्त्येयम् । **ऊर्णौ दीर्घ इति** । 'स्या'दित्यपकृष्यते । सन्वत्त्वन्त्वत्र नोपयुज्यते । **अर्थापयताविति** । अर्थशब्दाण्णिचि प्रकृतेरापुगिति भावः । वस्तुत आपुडागम इति भाष्योक्तपक्षान्तरेण फलाऽभेदाय लुङि अस्याऽनभिधानमेवोचितम् । मूलन्तु कृत्वाचिन्तान्यायेनेति दिक् । **न स्यादिति** । न स्यादेवेत्यर्थः । **व्यवस्थयेति** । अथवे-

इति व्याख्याविकल्पस्य कैयटेनैव वर्णनात्। णेरग्लोपेऽपि संबन्धस्त्वगितामपि सिद्धये॥५॥

अथ क्रम्यन्तास्त्रिंशत्परस्मैपदिनः। ४४४ अण ४४५ रण ४४६ वण ४४७ भण ४४८ मण ४४९ कण ४५० क्वण ४५१ व्रण ४५२ भ्रण ४५३ ध्वण शब्दार्थाः। अणति। रणति। वणति। वकारादित्वादेत्वाऽभ्यासलोपौ न। ववणतुः। ववणिथ। घणिरपि कैश्चित्पठ्यते। घणति। ४५४ ओणृ अपनयने। ओणति। ओणांचकार। ४५५ शोणृ वर्णगत्योः। शोणति। शुशोण। ४५६ श्रोणृ संघाते। श्रोणति। ४५७ श्लोणृ च। शोणादयस्त्रयोऽमी तालव्योष्मादयः। ४५८ पैणृ गतिप्रेरणश्लेषणेषु। प्रैणृ इति क्वचित्पठ्यते। पिप्रैण। ४५९ ध्रण शब्दे। उपदेशे नान्तोऽयम्। 'रषाभ्या'मिति णत्वम्। ध्रणति। णोपदेशफलं तु यङ्लुकि–दंध्रन्ति। बणेत्यपि केचित्। बेणतुः। बेणिथ। ४६० कनी दीप्तिकान्तिगतिषु। चकान। ४६१ ष्टन ४६२ वन शब्दे। स्तनति। वनति। ४६३ वन ४६४ षण संभक्तौ। वनेरर्थभेदात्पुनः पाठः। सनति।

त.] ननु यथा 'चङ्परे णौ यल्लघ्वि'ति व्याख्याने 'येन नाव्यवधान'न्यायेन अपीपचदित्यादावेवोभयं भवति, न त्वनेकव्यवाये अचचकासदित्यादौ, तथा न्यायसाम्येन 'लघुनि योऽभ्यास' इत्यत्राप्येकेनैव व्यवायस्य स्वीकार्यत्वादचिक्षणदित्यादौ सन्वदितीत्वं न स्यादिति चेत्। अत्राहुः–'अत्स्मृदृत्वरे'तीत्त्वापदेन अत्ववचनेन तुल्यजातीयापेक्षेण संयोगस्य व्यवधानेऽपीत्वस्य ज्ञापितत्वान्नोक्तदोषः। अतएव 'दीर्घो लघो'रिति सूत्रे लघोरिति सार्थकम्। माधवोऽपि जागृधातावित्थमेवाह। एवं च वदन् यथोद्देशपक्षमेवाशिश्रियत्। तथाच ऊर्णुधातौ यत्तेनोक्त'मौर्णुनवदित्यत्र 'दीर्घो लघो'रित्यभ्यासस्य दीर्घो न भवति, चङ्परे णौ यदङ्गं तस्य योऽभ्यास इति सूत्रार्थात्। अत्र त्वङ्गावयवस्याभ्यासो न त्वङ्गस्ये'त्यादि, तत्र तस्याप्याग्रहो नास्तीति गम्यते। अतएव चकास्तावचीचकासदित्युदाजहार। तथा च मतभेदाभिप्रायेण पूर्वापरग्रन्थविरोधः समाधेय इति। **कातन्त्रपरिशिष्टे** त्विलदीर्घयोरजीजागरदित्युदाहृतं, तन्मतद्वयेऽप्यसंभवादुपेक्ष्यम्। व्यवस्थामेव विवृणोति–**णेरिति**। 'सन्निहित'मिति हेतुगर्भविशेषणं, 'लघुनी'त्येतणेर्विशेष्यं भवति, सन्निहितत्वादित्यर्थः। **अङ्गमेवेति**। अस्य चङ्परे इत्यत्र आदेशरूपचङंशे आकाङ्क्षाऽभावेऽपि णाविति प्रत्ययांशे उत्थिताकाङ्क्षत्वादिति हेतुः स्पष्ट एवेति भावः। **कैयटेनैवेति**। तथा च एकं हरदत्तमतम्, अपरं तु कैयटमतमिति विषयविभागेन व्याचक्षाणा उपेक्ष्या इति भावः। चङ्परे इत्यावर्त्त्य अग्लोपविशेषणतयापि योजितं, तस्य फलमाह–**णेरिति**। श्रिद्रुस्रुषु परतोऽग्लोपित्वाऽसंभवादिहापि चङ्परं इत्येतावतैव णाविति लभ्यत इति बोध्यम्। **अगितामपीति**। पचिकमिशकिप्रभृतीनामित्यर्थः। नहीत्संज्ञकानां लोपो मिथं प्रतीक्षत इति भावः। **णोपदेशफलमिति**। अनुस्वार इत्यर्थः। **दंध्रन्तीति**। 'नुगतोऽनुनासिका-

बा.] तत्र 'चङ्परे णौ यल्लघ्वि'ति व्याख्याने सति नैव उभयं स्यात्, चङ्परस्य णेः कास् इत्यनेन व्यवहितत्वात्। अचीकमतेत्यादौ त्वेकव्यवधानं येन नाव्यवधानन्यायात्सोढव्यमेव। 'चङ्परे णौ यदङ्ग'मिति व्याख्याने तु अचीचकासदित्यत्र उभयं स्यादेव, अङ्गस्य णिपरकत्वसत्त्वादिति बोध्यम्। ननु चङ्परे णौ यल्लघ्विति, चङ्परे णौ यदङ्गमिति च व्याख्याभेदे किं प्रमाणमित्यत आह–**व्याख्याविकल्पस्य कैयटेनैव वर्णनादिति**। 'आदर्तव्यते'ति शेषः। ननु णौ इत्यावृत्तिमभ्युपगम्य अग्लोपेऽपि तदन्वयः किमर्थ इत्यत आह–**णेरग्लोपेऽपीति**। **अगितामिति**। 'कमु कान्ता'वित्यादीनामपीत्यर्थः। **सिद्धय इति**। दीर्घसन्वत्त्वसिद्ध्यर्थमित्यर्थः। अन्यथा कमुप्रभृतीनामुकाराद्यनुबन्धलोपमादाय अग्लोपित्वात् दीर्घसन्वद्भावौ न स्यातामित्यर्थः। इति घिणिप्रभृतयः कम्यन्ता दश गताः।

**क्रम्यन्ता इति**। 'क्रमु पादविक्षेपे' इत्येतत्पर्यन्ता इत्यर्थः। 'अनुनासिकान्ता'इति शेषः। **अण रणेति**। ऋदित्वं 'नाग्लोपी'ति निषेधार्थम्। **ध्रण शब्द इति**। अदुपधोऽयम्। **उपदेश इति**। धातूपदेशे नकारान्तोऽयम्। अकारस्य उच्चारणार्थस्य निवृत्तौ तवर्गपञ्चमान्त इत्यर्थः। तर्हि णकारस्य कथं श्रवणमित्यत आह–**रषाभ्यामिति णत्वमिति**। ननु स्वाभाविक एव णकार इत्यस्तु, किं नकारस्य कृतणत्वस्य निर्देश इति कल्पनयेत्यत आह–**णोपदेशेति**। नकारस्थानिकणोपदेशस्य 'नश्चे'त्यनुस्वारात्मकं फलं यङ्लुकि प्रत्येतव्यमित्यर्थः। **दन्ध्रन्तीति**। ध्रणधातोर्यङ्लुकि द्वित्वे हलादिशेषे 'नुगतोऽनुनासिकान्तस्ये'त्यभ्यासस्य नुकि उत्तरखण्डे णकारस्याऽसिद्धत्वेन अनुस्वारे परसवर्णे तस्याऽसिद्धत्वाण्णत्वाऽभावे नकारस्यैव श्रवणम्। स्वाभाविकणकारोपदेशे तु उत्तरखण्डे णकार एव श्रूयेतेति भावः। **बणेत्यपीति**। पवर्गतृतीयादिरिति भावः। 'कन दीप्ती'त्यारभ्य अम गत्यादिष्वित्यतः प्राक्तवर्गपञ्चमान्ताः। **ष्टन वनेति**। आद्यः षोपदेशः। ष्टुत्वसंपन्नष्टकारः। तदाह–**स्तनतीति**। **वन षणेति**। द्वितीयः षोपदेशः। ननु 'ष्टन वन शब्दे' इति वनेः पठितस्य पुनः पाठो व्यर्थ इत्यत आह–**अर्थभेदादिति**। वनेः शब्दे संभक्तौ च वृत्तिरिष्टा। ष्टनेस्तु शब्द एव वृत्तिरिष्टा। तत्र 'ष्टन वन शब्दे संभक्तौ चे'त्युक्तौ ष्टनेरपि संभक्तौ वृत्तिः

शे.] त्यार्वाचीनोक्तपक्षेणेत्यर्थः। **कैयटेनैवेति**। एतन्निष्कर्षश्चोक्तः। **अगितामिति**। कमिप्रभृतीनामित्यर्थः।

ससान । सेनतुः । ये विभाषा ।६।४।४३। जनसनखनामात्वं वा स्याद्यादौ क्छिति । सायात् । सन्यात् । ४६५ अम गत्यादिषु । 'कनी दीप्तिकान्ती'त्यत्र गतेः परयोः शब्दसंभक्त्योरादिशब्देन संग्रहः । अमति । आम । ४६६ द्रम ४६७ हम्म ४६८ मीमृ गतौ । द्रमति । दद्राम । 'ह्यन्ते'ति न वृद्धिः । अद्रमीत् । हम्मति । जहम्म । मीमति । मिमीम । अयं शब्दे च । ४६९ चमु ४७० छमु ४७१ जमु ४७२ झमु अदने । **ष्ठिवुक्लमुचमां शिति** ।७।३।७५। एषामचो दीर्घः स्याच्छिति । आङि चम इति वक्तव्यम् । आचामति । आङि किम् ? । चमति । विचमति । अचमीत् । जिमि केचित्पठन्ति । जेमति । ४७३ क्रमु पादविक्षेपे । **वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः** ।३।१।७०। एभ्यः श्यन्वा स्यात्कर्त्रर्थे सार्वधातुके परे । क्रम० **परस्मैपदेषु** ।७।३।७६। क्रमेर्दीर्घः स्यात्परस्मैपदपरे शिति । क्राम्यति । क्रामति । चक्राम । क्राम्यतु।क्रामतु । **स्नुक्रमोरनात्मनेपदनिमित्ते**।७।२।३६।अत्रैवेट्।अक्रमीत्।अथ रेवत्यन्ता अनुदात्तेतः। ४७४अय४७५ वय

---

त.]न्तस्ये' इत्यभ्यासस्य नुक् । गत्यादिष्विति । गतिशब्दसंभक्तिष्वित्यर्थः । मीमृ । ऋदित्फलं तु 'नाग्लोपी'ति निषेधः । अमिमीमत् । ष्ठिवुक्लमु । ष्ठीवति । क्लामति । आङि चम इति । 'ष्ठिवुक्लम्वाचमा'मिति वृत्तिकारोक्तपाठोऽयुक्त इति भावः । जिमि केचिदिति । तथाच जेमनमिति भोजने प्रयुञ्जते । वा भ्राश । उभयत्रविभाषेयम्। अनवस्थानार्थौ भ्रमिः,क्रमित्रसी च–दिवादयः, तेभ्यो नित्यं प्राप्ते। इतरेषामप्राप्ते चारम्भात्। 'भ्राशृ भ्लाशृ दीप्तौ' । फणादावेतौ । 'भ्रमु चलने' भ्वादिः, ज्वलादिः। 'फणादि'रित्यपि मनोरमायां पठ्यते,तद्भ्रमादिति नव्याः। 'भ्रमु अनवस्थाने' दिवादिः, पुषादिः, शमादिः। तत्र भ्वादेः–भ्रम्यति भ्रमति । शमादेस्तु श्यनि दीर्घे भ्राम्यतीति त्रैरूप्यम् । 'क्लमु ग्लानौ', 'त्रसी उद्वेगे', 'त्रुट छेदने', 'लष कान्तौ' । क्रमः । 'ष्ठिवुक्लमुचमा'मित्यतोऽनुवर्तनादाह–परस्मैपदे शितीति । परस्मैपदे किम् ? । उपक्रमते । पराक्रमते । स्नुक्रमो । अनात्मनेपदनिमित्ते इति । आत्मनेपदनिमित्ताऽभावे

---

बा.]स्यात्। 'ष्वन शब्दे' इत्युक्त्वा 'वन संभक्तौ चे'ति पाठे तु गौरवमिति भावः। आशीर्लिङि विशेषमाह–ये विभाषा । 'जनसनखनां सञ्झलो'रित्यतो जनसनखनामित्यनुवर्तते। अनुदात्तोपदेशेत्यतः क्छितीति । 'ये'इति तद्विशेषणम् । अकार उच्चारणार्थः । तदादिविधिः । 'विड्वनोरनुनासिकस्या'दित्यत आदित्यनुवर्तते । तदाह–जनसनखनामित्यादिना । सायादिति । नकारस्य आत्वे सवर्णदीर्घः । द्रम हम्म । आद्योऽदुपधः । न वृद्धिरिति । 'अद्रमी'दित्यत्र हलन्तलक्षणायां वृद्धौ 'नेटी'ति निषिद्धायां, 'ह्यन्ते'त्यतोऽतो हलादेरिति वृद्धिर्नेत्यर्थः । जहम्मेति । अभ्यासचुत्वेन हस्य झः । तस्य 'अभ्यासे चर्चे'त्यनेन जः । मिमीमेति । मीमृधातोर्णलि द्वित्वे अभ्यासह्रस्वः । अयं शब्दे चेति । मीमृधातुरित्यर्थः । ष्ठिवुक्लम्वाच । 'शमामष्टानां दीर्घः श्यनी'त्यतो दीर्घ इत्यनुवर्तते । दीर्घश्रुत्या अच इत्युपस्थितम् । तदाह–एषामचो दीर्घ इति।ष्ठिवु क्लमु आचम् एषां द्वन्द्वः।आचमित्यनेन आङ्पूर्वकस्य चमेर्ग्रहणम्। अचमीदिति। 'ह्यन्ते'ति न वृद्धिः । क्रमु पादेति । उदित्त्वमुदितो वेति विकल्पार्थम् । वा भ्राश । 'दिवादिभ्यः श्य'नित्यतः श्यन्निति, 'कर्तरि श'बित्यतः कर्तरीति, 'सार्वधातुके य'गित्यतः सार्वधातुक इति चानुवर्तते। तदाह–एभ्यः श्यन्वेत्यादि।

क्रमः। दीर्घः स्यादिति। 'शमामष्टाना'मित्यतस्तदनुवृत्तेरिति भावः। शितीति। 'ष्ठिवुक्लम्वाचमा'मित्यतस्तदनुवृत्तेरिति भावः। क्रामत्विति। मध्यमपुरुषैकवचने क्रामेत्यत्र तु 'क्रमः परस्मैपदेष्वि'ति दीर्घो भवत्येव । नच दीर्घस्याङ्गाधिकारस्थत्वाल्लुमतेति निषेधः शङ्क्यः, लुमता लुप्ते प्रत्यये यदङ्गं तस्य कार्ये एव तस्य प्रवृत्तेः । शिति परतः क्रमेरङ्गस्य दीर्घस्तु न लुप्तप्रत्यये परस्मैपदे परे अङ्गस्य कार्यं, किंतु शिति परे अङ्गस्य कार्यमिति बोध्यम् । स्नुक्रमोः। पञ्चम्यर्थे षष्ठी । आत्मनेपदनिमित्तस्याऽभावः–अनात्मनेपदनिमित्तम्। अर्थाभावेऽव्ययीभावेन सह नञ्तत्पुरुषो विकल्प्यत इत्युक्तेः समासः । आत्मनेपदनिमित्ताऽभावे सति स्नुक्रम्भ्यां परस्य वलाद्यार्धधातुकस्य इट् स्यादित्यर्थः । स्नुक्रमोरनुदात्तोपदेशानन्तर्भावादिटि सिद्धे वचनमिदं नियमार्थमित्याह–अत्रैवेडिति । एवंच भावकर्मलकारेषु इण्न भवति । उप-

---

शे.]येविभाषा।'जनसने'ति सूत्रे जन्ग्रहणेन यथा जुहोत्यादिदिवाद्योर्ग्रहणं तथा सन्ग्रहणेनापि सनतेः सनोतेश्च ग्रहणम्। अत एव 'सनोतेरनुनासिकलोपादात्वं विप्रतिषेधेने'ति वार्तिकव्याख्यावसरे 'आत्वे सनोतेर्ग्रहणस्य कोऽवकाशः ? । सनि च, ये विभाषा च । आत्वस्यावकाशोऽन्ये जनादयः' इत्युक्तं भाष्ये । अन्यथाऽन्ययोर्जनखनोर्द्वयोरेव सत्त्वेन जनादय इति बहुवचनाऽसङ्गतिः स्यात् । मम त्वेनं सनमादाय तदुपपत्तिः स्पष्टैव । एतेन भाष्ये सनोतेरित्युक्त्याऽस्य न तत्र ग्रहणमित्यपास्तम् । नच 'आङो यी'तिवन्निर्देशे कार्येऽकारोच्चारणेन यगादावेवास्य प्रवृत्तिर्न तु यासुडादाविति वाच्यम् । अजज्ञि–आशाम् अजश्यासामित्यत्र यणि 'ये विभाषा'इत्यात्वं प्राप्नोतीति 'अचः परस्मि'न्निति सूत्रशेषस्थभाष्यविरोधापत्तेः । तस्मादकारोऽत्राऽदृष्टार्थ एव । क्रामत्विति । 'उत्क्रामे'त्यत्र हेर्लुकि दीर्घो भवत्येव, 'क्रमः'इति सूत्रेऽनुवृत्ताऽङ्गस्य परस्मैपदपरशिन्निरूपितस्यैव ग्रहणेन हेर्लुक्यपि तन्निरूपिताङ्गस्य कार्याऽभावेन 'न लुमते'त्यस्याऽप्रवृत्तेः,प्रत्यासत्ति-

४७६ पय ४७७ मय ४७८ चय ४७९ तय ४८० णय गतौ । अयते । **दयायासश्च** ।३।१।३७। दय अय आस् एभ्य आम् स्याल्लिटि । अयांचक्रे । अयेत । अयिषीष्ट । **विभाषेटः** ।८।३।७९। इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा मूर्धन्यः स्यात् । अयिषीढ्वम् । अयिषीध्वम् । आयिष्ट । आयिढ्वम् । आयिध्वम् । **उपसर्गस्यायतौ** ।८।२।१९। अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात् । प्लायते । पलायते । निस्दुसो[:]-रुत्वस्याऽसिद्धत्वान्न लत्वम् । निरयते । दुरयते । निर्दुरोस्तु—निलयते । दुलयते । 'प्रत्यय' इति त्विणो रूपम् । अथ कथम्—'उदयति विततोर्ध्वरश्मिरज्जा'विति माघः ? । इटकिटकटी इत्यत्र प्रश्लिष्टस्य भविष्यति । यद्वा

त.]इत्यर्थः। अन्ये तु द्विवचनस्थाने व्यत्ययेन एकवचनम्, अनात्मनेपदनिमित्तयोरित्यर्थ इत्याहुः। उभयोरपि भावकर्म-कर्मव्यतिहारास्तत्रो निमित्तं, क्रमेस्तु वृत्तिसर्गादयोऽपीति बोध्यम् । स्नुक्रमोरुदात्तत्वादिटि सिद्धे नियमार्थोऽयमित्याह—**अत्रैवेड्ढिति** । अनात्मनेपदेति किम् ? । 'उपस्नोष्यते जलेन' । 'उपक्रंस्यते' । 'आक्रंस्यते' । निमित्त इति किम् ? । स्नौतीति स्नविता, स इवाचरति स्नवित्रीयते । इह क्यङ् आत्मनेपदनिमित्तं न तु स्नौतिरित्याहुः । **लुङ्लिटां धस्येति** । लिटि लिलिहिढ्वे । लिलिहिध्वे । **अथ कथमिति** । शानचा भाव्यमिति शङ्कितुराशयः । **क्नूयी शब्दे उन्दे च** ।

बा.]स्नोष्यते जलेन । भावलकारोऽयम् । उपक्रंस्यते । कर्मणि लृट् । स्यः । 'प्रस्नुत'मित्यत्र तु श्र्युकः किती'ति निषेधान्नेट्, 'आर्द्धधातुकस्येड्वलादे'रितीड्विधेः पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात् । 'स्नुक्रमोरनात्मनेपदे' इति तु न सूत्रितम्, आत्मनेपदभिन्ने परस्मैपदे परे इत्यर्थे चिक्रमिषिष्यतीत्यसिद्धेः, स्येन व्यवधानात् । आत्मनेपदे परे नेडित्यर्थे तु प्रचिक्रंसिष्यत इत्यसिद्धिः, अतो निमित्तग्रहणमित्यलम् । **अक्रमीदिति** । 'ह्यन्ते'ति न वृद्धिः । इति क्रम्यन्ताः परस्मैपदिनो गताः । **रेवत्यन्ता इति** । 'रेवृ प्लवगता'वित्येतत्पर्यन्ता इत्यर्थः । **अयपयेत्यारभ्य शल चलने** इत्यतः प्राग् यकारान्ताः । **दयायासश्च** । दय अय आस् एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम् । 'कास्प्रत्यया'दित्यत आम् लिटी-त्यनुवर्तते । तदाह—**एभ्य आम् स्याल्लिटोति** । **विभाषेटः** । 'इणः षीध्वंलुङ्लिटां धः' इत्यनुवर्तते । 'अपदा-न्तस्ये'त्यतो मूर्धन्य इति च । तदाह—**इणः परो य इडित्यादि** । इणन्तादङ्गादित्यर्थः । **अयिषीढ्वमिति** । आशीर्लिङो ध्वमः सीयुट् । यलोपः । आर्द्धधातुकत्वान्न सलोपः । इट् । यकारादिणः परो य इट् ततः परत्वाद्धस्य मूर्धन्यो ढः । इटः परभक्तत्वाद्यकारान्तादङ्गात्परस्य इषीध्वम इणन्तादङ्गात्परत्वान्नित्ये प्राप्ते विकल्पोऽयम् । **आयि-ढ्वमिति** । लुङो ध्वमि च्लेः सिचि आटि वृद्धौ सिच इटि 'धि चे'ति सलोपः । ध्वम इवर्णान्तादङ्गात्परत्वान्नित्ये प्राप्ते विकल्पः । अङ्गादिति निवृत्तमिति केचित् । **उपसर्गस्याऽयतौ** । अयताविति श्तिपा निर्देशः । 'कृपो रो ल' इत्यतो रो ल इत्यनुवर्तते । तदाह—**अयतिपरस्येत्यादिना** । **प्लायत इति** । प्र इत्युपसर्गः । **पलायत इति** । परा इत्याकारान्त उपसर्गः । ननु निरयते दुरयत इत्यत्रापि लत्वं स्यादित्यत आह—**निस्दुसोरिति** । तर्हि निलयते दुलयत इति कथमित्यत आह—**निर्दुरोस्त्विति** । एतदर्थमेव प्रादिषु सान्तयो रेफान्तयोश्च निर्देश इति भावः । तर्हि 'प्रत्यय' इत्यत्रापि प्रतेरयतिपरत्वाद्रस्य लत्वं स्यादित्यत आह—**प्रत्यय इति त्विति** । प्रतिपूर्वकादिण्धातोरच्प्रत्यये 'प्रत्यय' इति रूपम् । अयतिपरत्वाऽभावान्न लत्वमित्यर्थः । अयधातुमादाय 'प्लत्यय' इति न, अनभिधानादिति कैयटः । **कथमुदय-तीति** । उत्पूर्वकादयधातोः शत्रन्तात्सप्तम्यन्तमिति मत्वा आक्षेपः । अनुदात्तेत्त्वेन लटः शानच्प्रसङ्गादिति भावः ।

शे.]न्यायेन लुमता लुप्ते प्रत्यये यदङ्गन्तस्य कार्यं एव निषेधप्रवृत्तेः । **स्नुक्रमोर** । स्नुक्रमोरिति प्रथमार्थे षष्ठी । 'अनात्मनेपदनिमित्ते' इति प्रसज्यप्रतिषेधः । स्नुक्रमी यत्रात्मनेपदनिमित्ते न भवतस्तत्र प्रत्यासत्त्या ताभ्यां परस्यार्द्ध-धातुकस्येडित्यर्थः । उदात्तत्वादिटि सिद्धे नियमोऽयम् । तदाह—**अत्रैवेति** । 'प्रस्नुतः' इत्यादौ तु 'श्र्युकः किती'ति निषेध एव, पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात् । निमित्तत्वं चात्र फलोपहितं, न योग्यतामात्रम् । तेन 'प्रस्नविता' इत्यादाविड्भवत्येव । 'स्नुक्रमोरनात्मनेपदे' इति तु न सूत्रितम् । तत्र हि परस्मैपदे इडित्यर्थे 'चिक्रमिषिष्यती'त्यसिद्धिः, स्येन व्यवधानात् । 'आत्मनेपदे ने'डित्यर्थे तु 'प्रचिक्रंसिष्यते'इत्यसिद्धिरतो निमित्तपदोपादानमिति दिक् । **ततः परेषामिति** । यद्यपीटः षीध्वमवयवत्वात्तस्य ततः परत्वं दुरुपपादं, तथापि श्रुतिकृतानन्तर्यमात्रेण सामर्थ्याच्छास्त्र-प्रवृत्तिर्बोध्या । **अन्ये तु**—'इटः परस्यैषां धस्ये'त्यर्थः । षीकारव्यवधाने तु सामर्थ्यात्प्रवृत्तिरित्याहुः । अत्राऽङ्गादिति निवृ-त्तम् । अत एव 'उपदिदीयिढ्वे[ध्वे]'इत्यत्र विकल्पः।अन्यथा युटः परादित्वान्न स्यात् । इयञ्च प्राप्तविभाषा । लुङ्यपि 'धि चे'ति सलोपे इवर्णान्तमङ्गन्ध्वमिति जातमिति 'इणः षीध्व'मित्यस्य प्राप्तेः । **परस्योपसर्गस्येति** । श्रुतत्वादयतावित्युप-सर्गविशेषणम् ।अत एव 'निलयते' 'प्लायते' 'पलायते'इत्यादौ सर्वत्र लत्वसिद्धिः। रेफविशेषणत्वे तु'प्लायते' 'निलयते'इत्यत्र श्रुतिकृताऽव्यवधाने एव स्यादिति भावः । **प्लायत इति** । 'अचः परस्मि'न्निति स्थानिवत्त्वाद्यपवर्गइति स्पष्टं भाष्ये । **इणो रूपमिति** । 'प्लत्यय' इति तु न, अनभिधानादिति कैयटः । **कथमुदयतीति** । शानच् स्यादिति प्रश्नः ।

अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यं, चक्षिङो ङित्करणाज्ज्ञापकात् । वादित्वात्-ववये । पेये । मेये । चेये । तेये । प्रणयते । नेये । ४८१ दय दानगतिरक्षणहिंसाऽऽदानेषु । आदानं-ग्रहणम् । दयांचक्रे । ४८२ रय गतौ । ४८३ ऊयी तन्तुसन्ताने । ऊयांचक्रे । ४८४ पूयी विशरणे दुर्गन्धे च । पूयते । पुपूये । ४८५ क्नूयी शब्दे उन्दे च । चुक्नूये । ४८६ क्ष्मायी विधूनने । चक्ष्माये । ४८७ स्फायी ४८८ ओप्यायी वृद्धौ । स्फायते । पस्फाये । प्यायते । लिड्यङोश्च ।६।१।२९। लिटि यङि च प्यायः पीभावः स्यात् । पुनः प्रसङ्गविज्ञानात्पीशब्दस्य द्वित्वम् । 'एरनेकाचः' इति यण् । पिप्ये । पिप्याते । पिप्यिरे । दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ।३।१।६१। एभ्यश्च्लेश्चिण्वा स्यादेकवचने तशब्दे परे । चिणो लुक् ।६।४।१०४। चिणः परस्य[तशब्दस्य]लुक् स्यात् । अप्यायि । अप्यायिष्ट । ४८९ तायृ सन्तानपालनयोः । सन्तानः-प्रबन्धः । तायते । तताये । अतायि । अतायिष्ट । ४९० शल चलनसंवरणयोः । शेले । ४९१ वल ४९२ वल्ल संवरणे संचरणे च । ववले । ववल्ले । ४९३ मल ४९४ मल्ल धारणे । मेले । ममल्ले ।[५००]। ४९५ भल ४९६ भल्ल परिभाषणहिंसादानेषु । बभले । बभल्ले । ४९७ कल शब्दसङ्ख्यानयोः । कलते । चकले । ४९८ कल्ल अव्यक्ते शब्दे । कल्लते । अशब्दे इति स्वामी । अशब्दस्तूष्णींभाव इति च । ४९९ तेवृ ५०० देवृ देवने । तितेवे । दिदेवे । ५०१ षेवृ ५०२ गेवृ ५०३ ग्लेवृ ५०४ पेवृ ५०५ मेवृ ५०६ म्लेवृ सेवने । 'परिनिविभ्यः' इति षत्वम् । परिषेवते । सिषेवे । 'अयं सोपदेशोऽपी'ति न्यासकारादयः । तद्भाष्यविरुद्धम् । गेवते । जिगेवे । जिग्लेवे । पिपेवे । मेवते । म्लेवते । शेवृ खेवृ क्लेवृ इत्यप्येके । ५०७ रेवृ प्लवगतौ । प्लवगतिः-प्लुतगतिः । रेवते । अथाऽऽवत्यन्ताः परस्मैपदिनः ।

---

त.]उन्दः क्लेदनम् । लिड्यङोश्च । यङि-पेपीयते । दीपजन । 'दीपी दीप्तौ', 'जनी प्रादुर्भावे', 'बुध अवगमने', 'पूरी आप्यायने' । एते दिवादयः । चिणो लुक् । परस्य लुक् स्यादिति । 'तशब्दस्ये'ति कैश्चित्पठ्यते, तदार्थिकार्थकथनम्, तशब्दे परतश्चिणि विहिते चिणः परस्य जायमानो लुक्-'प्रत्ययस्य लुक्श्लुलुपः' इति वचनात्तशब्दस्यैवेति स्पष्टत्वात् । अयमिति । षेवृ धातुः । भाष्यविरुद्धमिति । यदि सोपदेशः स्यात्तदा स्त्यायतिरिवाऽयमपि षोपदेशलक्षणे पर्युदस्येत, तदकरणान्नास्ति सोपदेश इति भावः । प्लवगताविति । केचित् प्लवेति धात्वन्तरमित्याहुस्तद्धि

---

बा.]प्रश्लिष्टस्येति । 'इधातो'रिति शेषः । तस्य अनुदात्तेत्त्वाऽभावाच्छतृप्रत्ययो निर्बाध इति भावः । ज्ञापकादिति । 'चक्षिङ्'धातोरिकारस्याऽनुदात्ततया अनुदात्तेत्त्वादेवात्मनेपदसिद्धौ ङित्करणमनुदात्तेत्त्वप्रयुक्तात्मनेपदस्याऽनित्यतां ज्ञापयति । तस्याऽनित्यत्वे तु नित्यात्मनेपदार्थं ङित्करणमर्थवदिति भावः । इदं तु भाष्ये न दृश्यते । वादित्वादिति । वयधातोर्लिटि वादित्वादेत्वाभ्यासलोपयोरभावे सति 'ववये' इति रूपमित्यर्थः । णयधातुर्णोपदेश इति मत्वा आह-प्रणयत इति । 'उपसर्गादसमासेऽपी'ति णत्वमिति भावः । दयांचक्र इति । 'दयायासश्चे'त्याम् । ऊयांचक्र इति । इजादित्वादाम् । उन्दने चेति । क्लेदने चेत्यर्थः । स्फायी ओप्यायीति । ओदित्त्वम् 'ओदितश्चे'ति निष्ठानत्वार्थम् । ईदित्त्वं तु 'श्वीदितो निष्ठाया'मितीण्निषेधार्थम् । लिड्यङोश्च । लिट् च यङ् चेति द्वन्द्वात्सप्तमी । 'प्यायः पी'ति सूत्रमनुवर्तते । तदाह-लिटि यङि चेति । ननु प्यायेर्लिटि द्वित्वं बाधित्वा परत्वात्पीभावे द्वित्वे 'एरनेकाच' इति यणि 'पिप्ये' इति रूपमिष्यते । तत्र द्वित्वं बाधित्वा परत्वात् पीभावे कृते पुनर्द्वित्वं न संभवति, 'विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति न्यायादित्यत आह-पुनः प्रसङ्गेति । 'पुनः प्रसङ्गविज्ञानात्सिद्ध'मिति परिभाषा । विप्रतिषेधे बाधितस्यापि पुनः प्रवृत्तेरभ्युपगमात्कृतेऽपि पीभावे द्वित्वादिकं सिद्धमिति तदर्थः । दीपजन । 'च्लेः सि'जित्यतः च्लेरिति, 'चिण् ते पदः' इत्यस्माच्चिण् ते इति चानुवर्तते । तदाह-एभ्यश्च्लेरिति । एकवचन इति । दीपादीनामात्मनेपदित्वेन तेभ्यस्तशब्दस्य एकवचनत्वनियमादिति भावः । चिणो लुक् । 'चिण' इति पञ्चमी । तदाह-चिणः परस्येति । चिणः परश्च अर्थात्तशब्द एव भवति । चिणभावे च्लेः सिचि रूपमाह-अप्यायिष्टेति । तायृ संतानेति । लुङि 'दीपजने'ति च्लेश्चिणि तलोपे रूपमाह-अतायीति । चिणभावे सिचि अतायिष्टेति रूपम् । शल चलनेइत्यारभ्य तेवृ इत्यतः प्राग्लान्ताः । तेवृ इत्यारभ्य रेवत्यन्ता वकारान्ताः । षेवृधातोः षोपदेशत्वात्सत्वे सेवत इत्यादि रूपम् । परिषेवत इत्यत्र 'सात्पदाद्यो'रिति निषेधे प्राप्ते आह-परिनिविभ्य इति । सिषेवे इति । आदेशसकारत्वात्षत्वमिति भावः । अयं सोपदेशोऽपीति । षेवृधातुरित्यर्थः । तद्भाष्यविरुद्धमिति । सेक्सृप्सृस्तृसृज-

---

शे.]अनित्यमिति । इदं भाष्ये न दृश्यते । इट किटेत्यत्र प्रश्लेषाऽभाववादिनां मते त्वयं प्रयोगोऽसाधुरेवेति बोध्यम् । उन्दः-क्लेदनम् । पुनः प्रसङ्गेति । द्वित्वे कृते 'पी' सावकाश इत्यभिमानः । लिटीति । विषयसप्तमीति परे । दीपजन । बुधेति-बुध्यतेरेव ग्रहणं, तस्यैवात्मनेपदित्वात् । चिणो लुक् । 'अकारितरा'मित्यादौ तरपो न लुक्,

**५०८ मव्य बन्धने।** ममव्य । **५०९ सूक्ष्य** **५१० ईक्ष्य** **५११ ईर्ष्य ईर्ष्यार्थाः।** **५१२ हय गतौ ।** अहयीत् । यान्तत्वान्न वृद्धिः । **५१३ शुच्य अभिषवे ।** अवयवानां शिथिलीकरणं सुरायाः सन्धानं वा-अभिषवः, स्नानं च । शुशुच्य । चुच्य इत्येके । **५१४ हर्य गतिकान्त्योः ।** जहर्य । **५१५ अल भूषणपर्याप्तिवारणेषु ।** अलति । आल । **अतो ल्रान्तस्य** ।७।२।२। 'ल्र'ति लुप्तषष्ठीकम् । अतः समीपौ यौ ल्रौ तदन्तस्या-

त.] मनोरमायां दूषितम् ।' 'प्लवे'ति धात्वन्तरत्वे 'विभाषाऽऽङि रुप्लुवो'रित्यत्र प्लुवः पक्षे घञ्विधानं व्यर्थं स्यात्, प्लवेत्येत-स्माद्धि आप्लावशब्दस्य सिद्धत्वात् । तथा 'स्रवतिशृणोती'ति सूत्रेण प्लवतेरभ्यासोकारस्येत्वविधानमपि व्यर्थं स्यात्, तद्धि पक्षे अपिप्लवदिति रूपसिद्ध्यर्थं क्रियते, तच्च रूपं प्लवधातोः 'सन्यतः' इत्यनेन सिद्धमिति किं तदुपादानेनेति ।

**ममव्येति।** 'यस्य हलः' इति लोपस्तु न भवति, 'यस्येति सङ्घातग्रहण'मिति सिद्धान्तितत्वात् । वर्णग्रहणे त्वर्थवद्ग्र-हणपरिभाषाया अप्रवृत्त्या पुत्रकाम्येत्यादावपि लोपः स्यादिति दिक् । लुटि-मव्यिता। आशिषि-मव्यात् । 'हलो यमा'मिति धातुयकारस्य वा लोपः। **सूक्ष्य ईक्ष्य** । लिटि-सुसूक्ष्य। ईक्ष्यांचकार । ईर्ष्यांचकार।एभ्यः क्विपि 'लोपो व्यो'रिति यलोपे, 'स्कोः' इति कलोपे जश्त्वचर्त्वयोः-सूर्ट् ईर्ट् । संयोगान्तलोपस्त्विह न भवति, 'रात्सस्ये'ति नियमात् । सूक्ष्य आदर इति वक्ष्यते, तस्यापि सूट् इत्येव रूपम् । **हय** गतौ । जहाय । हय्यात् । **शिथिलीकरणमिति** । 'सोममभिषुणो-ती'त्यादौ दर्शनात् । **सुराया इति** । तत्प्रकरणे 'संधानं स्यादभिषवः' इत्यमरोक्तेः । **अतो ल्रान्तस्य** । यद्यवयवं-वचनेनाऽन्तशब्देन बहुव्रीहिरङ्गं चान्यपदार्थस्तत्पक्षे विशेषणेन तदन्तविधेः सिद्धत्वादन्तग्रहणमनर्थकम् । अश्वल्लीदित्यत्रा-तिव्याप्तिश्च । समीपवाचिना अन्तशब्देन षष्ठीसमासपक्षे रपिरणिश्वल्लप्रभृतिष्वतिव्याप्तिः, अङ्गस्याऽतो ल्रोः समीपत्वात् । ल्र च तदन्तश्चेति समीपवाचिनाऽन्तशब्देन कर्मधारयपक्षे त्वन्तशब्दस्य विशेषणत्वात्पूर्वनिपातः स्यादत आह-लुप्त-षष्ठीकमिति । अन्तशब्दः समीपवाचीत्यभिप्रेत्याह-**अतः समीपाविति** । **अतो वृद्धिः स्यादिति** । इह 'अत' इत्यस्य तन्त्रावृत्त्यादिकं स्वीकर्तव्यम् । अन्यथा प्रयोजनाऽभावादिक्परिभाषानुपस्थानेऽप्यल्ऽन्त्यपरिभाषयाऽन्त्यस्य स्यादिति भावः । यद्यपि 'अतो ल्रस्ये'त्युक्तेऽपि ल्रान्तस्याङ्गस्य अतः सिचि परे वृद्धिरित्यर्थे स्वीकृते 'येन नाव्यवधान'-न्यायेनेष्टं सिध्यति तथाप्यङ्गस्य सिचि परे अतो वृद्धिरित्यर्थोऽपि प्रतीयेत । ततश्चाऽश्वल्लीदित्यत्रातिप्रसङ्गः स्यात् । तद्वारणाय सूत्रेऽन्तग्रहणं कृतमिति । तदनुरोधेनाऽन्तशब्दस्य समीपवाचित्वमत इत्यस्य चाऽऽवृत्तिः स्वीकृतेति बोध्यम् । अतः समीपाविति किम् ? । अखोरीत् अमीलीत् । ल्रान्तस्याङ्गस्य किम् ? । श्वल्ल आशुगमने । अश्वल्लीत् । अत्र अकारसमीपे यो लकारः स नाङ्गस्यान्तः, यस्त्वङ्गस्यान्तः, स तु नाकारस्य समीपः । ननु ल्रे'त्यस्य लुप्तषष्ठीकत्वाभ्युपग-मेऽप्यन्तशब्दस्यावयववाचित्वं स्वीकृत्य अङ्गस्यान्तं यत् ल्र तस्याऽतो=तत्समीपस्याऽतो वृद्धिरिति व्याख्याने त्वत इत्यस्या-वृत्तिर्नापेक्षितेति चेत् । अत्राहुः-'हलन्त्य'मिति सूत्रे मनोरमायां 'सामीप्यं षष्ठ्यर्थः' इति पक्षस्य निराकरणात्तदनुरोधे-नात्राऽत इत्यस्याऽऽवृत्तिराश्रितेति । अत्र केचित्-'अतो ल्रान्तस्ये'त्यत्र ल्रेति लुप्तसप्तमीकम् । अथवा 'अतो ल्रान्ते' इति व्यस्तमेव सूत्रयितुं शक्यम् । तथा च 'अङ्गस्यान्तं यत् ल्र तस्मिन्परेऽव्यवहितस्याऽतो वृद्धिरिति व्याख्यानसंभवान्न तन्त्रा[वृत्त्या]द्याश्रयणक्लेशः । न चाङ्गस्य विशेष्यत्वेनैवान्वयो युज्यते न तु विशेषणत्वेन, 'पदाङ्गाधिकारे तस्य च तदन्तस्य चे'ति परिभाषायाः पदमङ्गं च विशेष्यं भवतीत्यभिप्रायवर्णनादिति वाच्यम्, 'अल्लोपोऽनः' इति सूत्रेऽङ्गावयवोऽसर्वनाम-

बा.] स्तृस्त्यानामेव भाष्ये षोपदेशपर्युदासादिति भावः। **रेवृ प्लवगताविति।** प्लवेति न धात्वन्तरमिति सूचयन्नाह-**प्लव-गतिः-प्लुतगतिरिति।** **अयपयेत्यादिरेवत्यन्ता गताः।** **अवत्यन्ता इति।** 'अव रक्षणे' इत्येतत्पर्यन्ता इत्यर्थः । **मव्येत्यारभ्य अलभूषणेत्यतः** प्राग्यकारान्ताः । **अल भूषणेत्यारभ्य ञ्वोर्ऋ प्रतीघाते** इत्यतः प्राग्लकारान्ताः । **अतो ल्रान्तस्य** । 'सिचि वृद्धिः परस्मैपदेषु' इत्यनुवृत्तम् । अङ्गस्येत्यधिकृतम् । तद्विशेषणत्वात्तदन्तविधिनैव सिद्धे-ऽन्तग्रहणं व्यर्थम् । तत्राह-**ल्रेति लुप्तषष्ठीकमिति** । ल-अन्तस्य इति छेदः । ल् च रश्चेति समाहारद्वन्द्वात्षष्ठ्ये-कवचनं लुप्तम् । ल्रस्यान्तस्येति सामानाधिकरण्येनान्वयः। 'अत' इति व्यधिकरणषष्ठ्यन्तम्,-अन्तस्येत्यत्रान्वेति । अन्त-शब्दः समीपवर्तिवाची । तथा च अतः समीपवर्तिनो ल्रस्येति लभ्यते । ल्रस्येत्यङ्गविशेषणत्वात्तदन्तविधिः । ततश्च अत्समीपवर्तिरेफलकारान्तस्य अङ्गस्य सिचि वृद्धिरिति लभ्यते । 'अत' इत्यावृत्तं वृद्धौ स्थानित्वेनान्वेति तदाह-**अतः समीपावित्यादिना** । अतः समीप इति किम् ?। अखोरीत् । अमीलीत् । ल्रान्तस्येति किम् ?। मा भवानतीत् । अतो वृद्धिरित्युक्ते अतः समीपावित्यनुक्तौ तु अवश्रीत् अश्वल्लीदित्यत्रातिव्याप्तिः । अत्र अङ्गस्यान्तौ रेफलकारौ नातः समीपाविति न वृद्धिः । नचात्र अतो भकारेण लकारेण च व्यवहितत्वादेव न वृद्धिः, आलीदित्यादौ एकव्यवधाने

शे.] प्रतिलक्ष्यं लक्षणभेदेन पूर्वचिणो लुक उत्तरचिणो लुक्यसिद्धत्वात् । **अतो ल्रान्त** । कश्चिद्भाष्येऽतोर्लान्तस्येति

ऽकृत्वाऽतो वृद्धिः स्यात्परस्मैपदपरे सिचि । 'नेटी'ति निषेधस्य, 'अतो हलादे'रिति विकल्पस्य चाऽपवादः । माभवानालीत् । अयं स्वरितेदित्येके । तन्मते–अलते इत्याद्यपि । ५१६ ञिफला विशरणे । 'तृफले'त्येत्वम् । फेलतुः । फेलुः । अफालीत् । ५१७ मील ५१८ श्मील ५१९ स्मील ५२० क्ष्मील निमेषणे । निमेषणं–संकोचः । द्वितीयस्तालव्यादिः । तृतीयो दन्त्यादिः । ५२१ पील प्रतिष्टम्भे । प्रतिष्टम्भो–रोधनम् । ५२२ णील वर्णे । निनील । ५२३ शील समाधौ । शीलति । ५२४ कील बन्धने । ५२५ कूल आवरणे । ५२६ शूल रुजायां संघोषे च । ५२७ तूल निष्कर्षे । निष्कर्षो निष्कोषणम् । तद्यान्तर्गतस्य बहिर्निःसारणम् । तुतूल । ५२८ पूल सङ्घाते । ५२९ मूल प्रतिष्ठायाम् । ५३० फल निष्पत्तौ । फेलतुः । फेलुः । ५३१ चुल्ल भावकरणे । भावकरणम्–अभिप्रायाऽऽविष्कारः। ५३२ फुल्ल विकसने। ५३३ चिल्ल शैथिल्ये भावकरणे च । ५३४ तिल गतौ । तेलति । तिल्लेत्येके । तिल्लति । ५३५ वेल्ल ५३६ चेल्ल ५३७ केल्ल ५३८ खेल्ल ५३९ क्ष्वेल्ल ५४० वेल्ल चलने । पञ्च ऋदितः । षष्ठो लोपधः । ५४१ पेल्ल ५४२ फेल्ल ५४३ शेल्ल गतौ । षेल्ल इत्येके । ५४४ स्खल संचलने । चस्खाल । अस्खालीत् । ५४५ खल संचये । ५४६ गल अदने । गलति । अगालीत् । ५४७ षल गतौ । सलति । ५४८ दल विशरणे । ५४९ श्वल ५५० श्वल्ल आशुगमने । शश्वाल। अश्वालीत् । शश्वल्ल । अश्वल्लीत् । ५५१ खोल्ल ५५२ खोर्ऋ गतिप्रतिघाते । खोलति । खोरति । ५५३ धोर्ऋ गतिचातुर्ये । धोरति । ५५४ त्सर छद्मगतौ । तत्सार । अत्सारीत् । ५५५ क्मर हूर्च्छने । चक्मार । ५५६ अभ्र ५५७ वभ्र ५५८ मभ्र ५५९ चर गत्यर्थाः । चरतिर्भक्षणेऽपि । अभ्रति । आनभ्र । मा भवानभ्रीत् । अङ्गान्त्यरेफत्वाऽतः समीपत्वाऽभावान्न वृद्धिः । ५६० ष्ठिवु निरसने । 'ष्ठिवुक्लम्वि'ति दीर्घः । ष्ठीवति । अस्य द्वितीयस्थकारष्ठकारो वेति वृत्तिः । तिष्ठेव । तिष्ठिवतुः । तिष्ठिवुः । टिष्ठेव । टिष्ठिवतुः । टिष्ठिवुः । 'हलि चे'ति दीर्घः । ष्ठीव्यात् । ५६१ जि जये । अयमजन्तेषु पठितुं युक्तः । जय उत्कर्षप्राप्तिः । अकर्मकोऽयम् । जयति । **सँल्लिटोर्जेः** ।७।३।५७। जयतेः सँल्लिण्निमित्तो योऽभ्यासस्ततः परस्य कुत्वं स्यात् । जिगाय ।

---

त.]स्थानेत्येवं भाष्यकारादिभिर्विशेषणतया व्याख्यानात्क्वचिद्विशेषणत्वेऽप्यङ्गस्य न क्षतिरित्याहुः । **नेटीत्यादि** । यद्यपि पुरस्तादपवादन्यायेन 'नेटी'त्यस्यापवादो न तु विकल्पस्यापि, तथापि बाध्यसामान्यचिन्तायां स्वविषये प्राप्तं सर्वं बाध्यत इति पुरस्तादपवादन्यायोऽत्र न प्रवर्तत इति भावः । **मील संकोचे इति** । नेत्रसंकोचे तु प्रचुरप्रयोगः । **तिल गतौ** । तिल स्नेहने इति चुरादौ । **दल विशरणे** । विशरणमवयवानां विभागः । **धोर्ऋ**। धोरितकमश्वानां गतिविशेषः। निष्ठान्तात्संज्ञायां कन् । **त्सर** । छद्मना कपटेन गतिः—छद्मगतिः । **क्मर हूर्छने** । **हूर्छनं**—कौटिल्यम् । **ष्ठिवु निरसने** । अस्य ल्युटि–ष्ठेवनम् । 'ष्ठीवनाऽऽस्वक्शकृन्मूत्ररेतांस्यप्सु न निक्षिपे'दित्यत्र पृषोदरादित्वात्पक्षे दीर्घ ईकार इत्याहुः । **सँल्लिटोर्जेः** । **सँल्लिण्निमित्त इति** । यदि तु सनि लिटि च परे योऽभ्यास इति प्राचो व्याख्यान-

---

बा.] चरितार्थत्वादिति वाच्यं, सिचि परे यदङ्गं तदकारस्य वृद्धिरित्यर्थाश्रयणेऽतिव्याप्तिवारणार्थत्वात् । **ञि फलेति** । **विशरणं**–शिथिलीभावः । 'आदिर्ञिटुडवः' इति ञिरित् । 'ञीतः क्तः' इति प्रयोजनम् । 'आदितश्चे'तीण्निषेधार्थमादित्त्वम् । लिण्निमित्तादेशादित्वादप्राप्ते आह–**तृफलेति** । **मील श्मीलेति** । **निमेषणं**–नेत्रसंकोचः । संकोच इति पाठेऽप्ययमेवार्थः । **णील वर्ण इति** । वर्णक्रियायामित्यर्थः । **फल निष्पत्ताविति** । ञि फलेति पूर्वं पठितम्। अनुबन्धभेदात्पुनः पाठः । **खोल्ल खोर्ऋ इति** । द्वितीयो रेफान्त ऋदित् । इत आरभ्य ष्ठिवेः प्राग्रेफान्ताः । **धोर्ऋ गतिचातुर्य इति** । अश्वगतिविशेष इत्यर्थः । रेफान्तोऽयम् , ऋदित् । **त्सर छद्मगताविति** । कपटगतावित्यर्थः। **क्मर हूर्छन इति** । कुटिलीभवन इत्यर्थः । **ष्ठिवु निरसन इति** । इदुपधः, उदित् । इत आरभ्य ऊष्मान्तेभ्यः प्राग्वकारान्ताः । तिपि शपि लघूपधगुणे प्राप्ते आह–**ष्ठिवुक्लम्वितीति** । ल्युटि तु शित्परकत्वाऽभावाद्दीर्घाऽभावे लघूपधगुणः । 'ष्ठीवन'मिति तु पृषोदरादित्वात्समाधेयम् । **अस्येति** । ष्ठिवुधातोर्द्वितीयो वर्णस्थकार इत्यर्थः । कृतष्टुत्वस्य निर्देश इति भावः । षोपदेशोऽयं, केवलदन्त्यथकारपरकसादित्वात् । षोपदेशत्वेऽपि न सत्वम्, 'सुब्धातुष्ठिवु' इति निषेधात् । लिटि तु 'शर्पूर्वाः खयः' इति षकारवकारयोर्निवृत्त्या ष्टुत्वनिवृत्तौ रूपमाह–**तिष्ठेवेति** । ठकारस्य स्वाभाविकत्वे तु टिष्ठेवेति रूपम् । **जि जय इति** । जिधातुरनिट्कः । **सँल्लिटोर्जेः** । 'अभ्यासाच्चे'ति सूत्रादभ्यासादित्यनुवर्तते । 'चजोः कु घिण्ण्यतो'रित्यस्मात्कु इति च । 'संल्लिटो'रिति निमित्तसप्तमी अभ्यासे अन्वेति । तदाह–

---

शे.]पाठो दृश्यते।आगन्तुनाऽकारेण[लून्तैस्येति]निर्देशः।**सङ्कोच इति**।नेत्रसङ्कोच इत्यर्थः।तत्रैव प्रचुरप्रयोगात् । **गतिचातुर्यम्**–अश्वीयं बोध्यम् । **छद्मगतिः**–कपटगतिः।**हूर्छनं**–कौटिल्यम् । **सँल्लिण्निमित्तेति**। सँल्लिटोरिति सप्तमी।

जिग्यतुः । जिग्युः । जिगयिथ । जिगेथ । जिगाय । जिगय । जिग्यिव । जिग्यिम । जेता । जीयात् । अजैषीत् । ५६२ जीव प्राणधारणे । जिजीव । ५६३ पीव ५६४ मीव ५६५ तीव ५६६ णीव स्थौल्ये । [पीवति]। पिपीव। मिमीव । तितीव । निनीव।५६७ क्षीवु ५६८ क्षेवु निरसने।५६९ उर्वी ५७० तुर्वी ५७१ थुर्वी ५७२ दुर्वी ५७३ धुर्वी हिंसार्थाः। ऊर्वांचकार। 'उपधायां चे'ति दीर्घः। तूर्वति। तुतूर्व।५७४ गुर्वी उद्यमने । गूर्वति । [जुगूर्व]। ५७५ मुर्वी बन्धने । ५७६ पुर्व ५७७ पर्व ५७८ मर्व पूरणे । ५७९ चर्व अदने । ५८० भर्व हिंसायाम् । ५८१ कर्व ५८२ खर्व ५८३ गर्व दर्पे । ५८४ अर्व ५८५ शर्व ५८६ षर्व हिंसायाम् । आनर्व । शर्वति । सर्वति । ५८७ इवि व्याप्तौ । इन्वति । इन्वांचकार । ५८८ पिवि ५८९ मिवि ५९० णिवि सेचने । तृतीयो मूर्धन्योष्मादिरित्येके । 'सेवने' इति तरङ्गिण्याम् । पिन्वति । पिपिन्व । ५९१ हिवि ५९२ दिवि ५९३ धिवि ५९४ जिवि प्रीणनार्थाः । हिन्वति । दिन्वति । **धिन्विकृण्व्योर च** ।३।१।८०। अनयोरकारोऽन्तादेशः स्यादुप्रत्ययश्च शब्विषये । 'अतो लोपः'। तस्य स्थानिवद्भावाल्लघूपधगुणो न । उप्रत्ययस्य पित्सु गुणः । धिनोति । धिनुतः । धिन्वन्ति । **लोपश्चास्यान्यतरस्यां म्वोः** ।६।४।१०७। असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तस्याङ्गस्य लोपो वा स्यान्म्वोः परयोः । धिन्वः । धिनुवः । धिन्मः ।

---

त.] माद्रियेत तदा 'येन नाव्यवधान' न्यायेन प्रकृतिव्यवधानं सोढव्यमेव, परं तु यङ्लुगन्तात्सनि जेजयिषतीत्यत्र कुत्वं स्यात्, न च तन्माधवग्रन्थसंमतमिति भावः । **धिन्विकृण्व्योर च** । 'अलोऽन्त्यस्ये' ति वकारस्याऽकारादेशः । चकारेण तु उप्रत्ययोऽनुकृष्यते । बोपदेवेन त्वनयोस्तनादित्वं स्वीकृतम् । तन्मते तु चकारं विनाप्युप्रत्ययलाभः ।

**अतो लोप इति**। यद्यप्युपदेशेऽदन्तत्वं नास्ति तथाप्यार्द्धधातुकोपदेशे तदस्त्येव । 'धिन्विकृण्व्योर चे'ति श्रुतत्वादकारादेशे कृते चानुकृष्टस्य पश्चाज्जायमानत्वादिति भावः । **लोपश्च** । **यः प्रत्ययोकार इति** । असंयोगपूर्वो यः

---

बा.] **संल्लिण्निमित्तो योऽभ्यास इत्यादि**। 'सनि लिटि च अभ्यासात् परस्य कुत्व'मिति व्याख्याने तु यङ्लुगन्तात्सनि जेजयिषतीत्यत्र कुत्वं स्यात् । अतः 'संल्लिण्निमित्तो योऽभ्यास'इति व्याख्येयमिति माधवः । **जिगायेति** । णलि द्वित्वे वृद्धौ उत्तरखण्डे जस्य कुत्वेन गः। **जिग्यतुरिति** । क्त्वित्वाद्गुणाऽभावः । लिटि 'एकाच' इति इण्निषेधं बाधित्वा क्रादिनियमादिटि प्राप्ते, थलि 'अचस्तास्व'दिति तन्निषेधस्य भारद्वाजनियमाद्विकल्पः । तदाह-**जिगयिथ जिगेथेति** । जिग्यथुः । जिग्य । 'णलुत्तमो वे'ति मत्वा आह-**जिगाय जिगयेति** । क्रादिनियमादिटं मत्वा आह-**जिग्यिव जिग्यिमेति** । **जेतेति** । जेष्यति। जयतु । अजयत् । आशीर्लिङि 'अकृत्सार्वधातुकयो'रिति दीर्घं मत्वा आह-**जीयादिति** । **अजैषीदिति**। 'सिचि वृद्धि'रिति वृद्धिरिति भावः । अजेष्यत् । षर्वधातुः षोपदेशः । **इविधातोरिदित्वान्नुम्**। तदाह-**इन्वतीति** । **इन्वांचकारेति** । नुमि इजादिगुरुमत्वादामिति भावः । **पिवि मिवी**त्यादय इदितः। **धिन्विकृण्व्योः** । 'अ' इति लुप्तप्रथमाकम् । धिविकृव्योः कृतनुमोर्धिन्विकृण्वीति निर्देशः । 'तनादिकृञ्भ्य उः' इत्यत उरिति चकारादनुकृष्यते। 'कर्तरि श'बित्यतः कर्तरीति,'सार्वधातुके य'गित्यतः सार्वधातुक इति च। तदाह-**अनयोरित्यादिना** । वकारस्याऽकारः। धिन् अ उ ति इति स्थितम्। **अतो लोप इति** । युगपत्संनियोगशिष्टतया उप्रत्ययाऽकारयोर्विधानेऽपि श्रुतक्रमानुरोधेन प्रवृत्त्या आर्द्धधातुकोपदेशकाले 'धिन' इत्यस्याऽदन्तत्वमिति भावः । नन्वत्र वकारस्य लोप एव विधीयतां किमकारविधिनेत्यत आह-**तस्येति** । वकारस्य लोपविधौ तु अजादेशत्वाऽभावात्स्थानिवत्त्वं न स्यादिति भावः। तथा च धिनु ति इति स्थिते आह-**उप्रत्ययस्येति** । **धिनुत इति** । धिविधातोर्नुमि तसि उप्रत्यये वकारस्य अकारादेशे अतो लोपः। तसो ङित्त्वादुकारस्य न गुणः । **धिन्वन्तीति** । धिन्व् इत्यस्माज्झिः । झोऽन्तः । उप्रत्ययः । वकारस्य अकारः । अतो लोपः । उकारस्य यणिति भावः । अत्र वकारस्य स्थानिवत्त्वेन आर्द्धधातुकत्वेऽपि नेट् । उकारवृत्त्यार्द्धधातुकत्वस्य अल्धर्मत्वेन अनल्विधाविति निषेधात् । तदिदं 'भोभगो' इति सूत्रभाष्ये स्पष्टम् । धिनोषि धिनुथः धिनुथ। धिनोमि। **लोपश्च** । 'उतश्च प्रत्ययादसंयोगपूर्वा'दिति पूर्वसूत्रोक्त उकारोऽस्येत्यनेन परामृश्यते । प्रत्ययशब्दः प्रत्ययसंबन्धिनि वर्तते। असंयोगपूर्वात् प्रत्ययादिति च उकारे अन्वेति । स च अङ्गस्य विशेषणं । तदन्तविधिः । तदाह-**असंयोगेति** । **प्रत्ययोकार इति** । प्रत्ययसंबन्धी उकार इत्यर्थः । 'प्रत्यय-उकार' इति व्याख्याने तु सुनुवः सुनुम इत्यत्र न स्यात्, तत्र श्नोरेव प्रत्ययत्वात् । प्रत्ययेति किम् ? । युवः । युमः । असंयोगपूर्वादिति किम् ?। शक्नुवः शक्नुमः । **धिन्वः धिनुव इति** । अत्र उप्रत्ययस्य उकारान्तत्वं व्यपदेशिवत्त्वेन बोध्यम् । नन्वेवं धिनोमीत्यत्र मिपि धिनु मि इति स्थिते उकारस्य लोपः स्यादित्यत आह-**मिपि त्विति** । दिधिन्व । धिन्विता । धिन्विष्यति ।

---

शे.] अभ्यासविशेषणं चेति भावः । 'सँल्लिड्ढरो योऽभ्यास' इति वक्तुमुचितम् । **उप्रत्ययश्चेति**। सन्नियोगशिष्टत्वेनोभयो-

धिनुमः । मिपि तु परत्वाद्गुणः । धिनोमि । **उतश्च प्रत्ययादसंयोगपूर्वात्** ।६।४।१०६। असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादङ्गात्परस्य हेर्लुक् स्यात् । धिनु । नित्यत्वादुकारलोपात्पूर्वमाट्–धिनवाव । धिनवाम । जिन्वतीत्यादि[६००]।५९५ रिवि ५९६ रवि ५९७ धवि गत्यर्थाः। रिण्वति । रण्वति । धन्वति।५९८ कृवि हिंसाकरणयोश्च । चकारादृतौ । कृणोतीत्यादि धिनोतिवत् । अयं स्वादौ च । ५९९ मव बन्धने । [मवति]। मेवतुः । मेवुः । अमवीत् । अमावीत् । ६०० अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसाऽऽदानभागवृद्धिषु । अवति । आव । मा भवानवीत् । ६०१ धावु गतिशुद्ध्योः । स्वरितेत् । धावति । धावते । दधाव । दधावे । अथोष्मान्ता आत्मनेपदिनः । ६०२ धुक्ष ६०३ धिक्ष संदीपनक्लेशनजीवनेषु । धुक्षते । दुधुक्षे । धिक्षते । दिधिक्षे । ६०४ वृक्ष वरणे । वृक्षते । ववृक्षे । ६०५ शिक्ष विद्योपादाने । शिक्षते । ६०६ भिक्ष भिक्षायामलाभे लाभे च । भिक्षते । ६०७ क्लेश अव्यक्तायां वाचि । 'बाधने'इति दुर्गः । क्लेशते । चिक्लेशे । ६०८ दक्ष वृद्धौ शीघ्रार्थे च । दक्षते । ददक्षे । ६०९ दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु । दीक्षते । दिदीक्षे । ६१० ईक्ष दर्शने । ईक्षांचक्रे । ६११ ईष गतिहिंसादर्शनेषु । ईषांचक्रे । ६१२ भाष व्यक्तायां वाचि । भाषते । ६१३ वर्ष स्नेहने । दन्त्योष्ठ्यादिः । ववर्षे । ६१४ गेषृ अन्विच्छायाम् । ग्लेषृ इत्येके । अन्विच्छा-अन्वेषणम् । जिगेषे । ६१५ येषृ प्रयत्ने। येषते ।

---

त.]प्रत्यय इति प्रत्ययविशेषणं तु न कृतम्, अक्ष्णुवः अक्ष्णुम इत्यादावनिष्टाऽभावेऽपि अश्नुवहे इत्यादावतिप्रसङ्गात् । एवम् 'उतश्चे'ति सूत्रेऽपि 'अक्ष्णुही'त्यत्र दोषाऽभावेऽपि अश्नुहीत्यत्रातिप्रसङ्गः स्यादित्यसंयोगपूर्वेति प्रत्ययविशेषणं न कृतमित्याहुः । 'अश्नुही'ति परस्मैपदं यद्यपि लोके दुर्लभं, तथापि वेदाभिप्रायेण तत्प्रयोगस्य साधुत्वं बोध्यम् । 'आप्नुही'ति पाठस्तूचितः । **कृवि। अयमिति** । कृणोतीत्यादिरित्यर्थः। स्वादौ हि कृवीत्ययं धातुर्न पठ्यते, किंतु कृञ् हिंसायामिति। तस्य च परस्मैपदेषु सार्वधातुके कृणोतीत्यादीनि रूपाणि तुल्यानीति फलितोऽर्थः । **अव रक्षणे** । एकोनविंशतिरर्थाः । **कान्तिः**–शोभा । **दीप्तिस्तेज** इत्याहुः । **तृप्तिः**–इच्छानाशः । **स्वाम्यर्थः**–स्वामित्वम् । **हिंसा**–हननम् । **आदानं**–ग्रहणम् । न चात्र दानमेवार्थोऽस्त्विति वाच्यम् । 'भागे वृद्धौ ग्रहे वधे' इत्येवमर्थानां विशिष्य बोपदेवेन गणितत्वात् । **भिक्ष** । याच्ञालाभाऽलाभास्त्रयोऽर्थाः। स्वामी तु 'क्लेश अव्यक्तायां वाचि चे'ति पठित्वा इमावपि भिक्षधातोरर्थाविति मन्यते । 'क्लिश उपतापे' इति दिवादौ । 'क्लिशू विबाधने' इति क्र्यादौ । **दीक्ष** । पञ्चार्थाः । **ईष** गति । 'गुरोश्च हलः' इत्यप्रत्यये टाप् । ईषा । मनस ईषा–मनीषा । शकन्ध्वादिः । मनीषामभिनिविष्टं मनीषितम् । 'प्रातिपदिका-

---

बा.]धिनोतु । **उतश्च । हेर्लुक्स्यादिति** । 'चिणो लु' गित्यतो'ऽतो हे'रित्यतश्च तदनुवृत्तेरिति भावः । लोटो मिपि उप्रत्यये वकारस्य अकारे अतो लोपे धिनु मि·इति स्थिते मेर्निभावमाडुत्तमस्येत्याडागमं च बाधित्वा परत्वादुकारस्य 'लोपश्चास्यान्यतरस्या'मिति लोपमाशङ्क्याह–**नित्यत्वादित्यादि**।निभावस्याप्युपलक्षणम्। उकारलोपे कृते अकृते च निभावस्य आडागमस्य च प्रवृत्त्या नित्यत्वादुकारलोपात्पूर्वमेव निभावाडागमयोः कृतयोरुकारलोपस्याऽप्रसक्तौ आटः पित्त्वेन ङित्त्वाऽभावादुकारस्य गुणेऽवादेशे च धिनवानीति रूपमिति भावः । अधिनोत् । धिनुयात् । धिन्व्यात् । अधिन्वीत् । अधिन्विष्यत् । **कृणोतीत्यादीति** । धिविवद्रूपाणीति भावः । **अयं स्वादौ चेति** । कृविरित्यर्थः । **अव रक्षणेति** । **स्वाम्यर्थः**–ऐश्वर्यम् । **मा भवानवीदिति** । 'नेटी'ति न वृद्धिः । मव्यादयोऽवत्यन्ताः परस्मैपदिनो गताः । **धावु गतीति** । उदिदयम् । **स्वरितेदिति** । ततश्च कर्तृगामिनि फले आत्मनेपदम्, अन्यथा परस्मैपदमिति भावः।
**अथोष्मान्ता इति** । तत्र 'धुक्षे'त्यारभ्य कासृधातोःप्राक् षकारान्ताः। तत्र क्लेशधातुरेकः शकारान्तः। **दीक्ष**

---

शे.]पदेशकालस्यैकत्वादार्द्धधातुकोपदेशकालेऽदन्तत्वादतो लोप इति भावः। **तस्य स्थानिवद्भावादिति** । एतेन वस्य लोप एव विधीयतामित्यपास्तम् । धिन्वन्तीत्यादौ वस्य स्थानिवत्त्वेनार्द्धधातुकत्वादिण्न । उकारवृत्त्यार्द्धधातुकत्वस्याऽल्धर्मत्वेनाऽनल्विधाविति निषेधात् । स्पष्टा चेयं रीतिः 'भोभगो'इति सूत्रे भाष्ये । 'अचः परस्मि'न्निति सूत्रे भाष्ये त्वभ्युपेत्य स्थानिवत्त्वं पञ्चमीसमासेन परिहृतमेकदेशिनेति बोध्यम् । **प्रत्ययोकार इति** । 'असंयोगपूर्वा'दित्यनेनावध्यवधिमतोः साजात्यादुकार एव विशेष्य इति भावः । 'असंयोगपूर्वो य उकारस्तदन्तो यः प्रत्यय' इति वक्तुमुचितम् ।

**अमवीदमावीदिति**।यत्तु 'इको गुणे'ति सूत्रे भाष्ये 'अतो ल्रे'ति सूत्रे वकारप्रश्लेषमुक्त्वा माभवानवीन्मवीदित्यत्र दोषमाशङ्क्य'ह्यन्ते'त्यत्राऽविमव्योर्नेत्युक्तेरत्र नित्यनिषेध एव लभ्यते इति,तन्न, मध्येऽपवादन्यायेनास्य निषेधस्याऽतोल्रे इत्येतन्मात्रबाधकत्वात् । जागर्त्तौ तु लक्ष्याऽनुरोधाद्वाध्यसामान्यचिन्ताया एवाङ्गीकारात् । ह्मयान्तादिविषये तु सामर्थ्याद्विकल्पस्यैव निषेधात् । अत एव सूत्रभाष्ययोर्न विरोधः । 'इकः' इति सूत्रस्थभाष्यं पूर्वपक्ष्युक्तिरिति **परे** इति दिक् । **दीक्ष** ।

६१६ जेषृ ६१७ णेषृ ६१८ एषृ ६१९ प्रेषृ गतौ। जेषते।नेषते।एषांचक्रे। पिप्रेषे। ६२० रेषृ ६२१हेषृ ६२२ ह्रेषृ अव्यक्ते शब्दे। आद्यो वृकशब्दे। ततो द्वावश्वशब्दे। रेषते। हेषते। ह्रेषते। ६२३ कासृ शब्दकुत्सायाम्। कासांचक्रे। ६२४ भासृ दीप्तौ। बभासे। ६२५ णासृ ६२६ रासृ शब्दे। नासते। प्रणासते। ६२७ णस कौटिल्ये। नसते। ६२८ भ्यस भये। भ्यसते। बभ्यसे। ६२९ आङः शसि इच्छायाम्। आशंसते। आशशंसे। ६३० ग्रसु ६३१ ग्लसु अदने। जग्रसे। जग्लसे। ६३२ ईह चेष्टायाम्। ईहांचक्रे। ६३३ बहि ६३४ महि वृद्धौ। बंहते। बबंहे। मंहते। ६३५ अहि गतौ। अंहते। आनंहे। ६३६ गर्ह ६३७ गल्ह कुत्सायाम्। जगर्हे। जगल्हे। ६३८ वर्ह ६३९ वल्ह प्राधान्ये। ओष्ठ्यादी। ६४० वर्ह ६४१ वल्ह परिभाषणहिंसाऽऽच्छादनेषु। दन्त्योष्ठ्यादी। केचित्तु पूर्वयोर्दन्त्योष्ठ्यादितामनयोरोष्ठ्यादितां चाहुः। ६४२ प्लिह गतौ। पिप्लिहे। ६४३ वेहृ ६४४ जेहृ ६४५ बाहृ प्रयत्ने। आद्यो दन्त्योष्ठ्यादिः। अन्त्यः केवलोष्ठ्यादिः। उभावप्योष्ठ्यादी इत्येके। दन्त्योष्ठ्यादी इत्यपरे। जेहतिर्गत्यर्थोऽपि। बबाहे। ६४६ द्राहृ निद्राक्षये। निक्षेपे इत्येके। ६४७ काशृ दीप्तौ। चकाशे। ६४८ ऊह वितर्के। ऊहांचक्रे। ६४९ गाहू विलोडने। गाहते। जगाहे। जगाहिषे। जघाक्षे। जगाहिढ्वे। जगाहिध्वे। जगाढ्वे। गाहिता। २३३५ ढो ढे लोपः।८।३।१३। ढस्य

त.]द्धात्वर्थे बहुलमिष्ठवच्चे'ति णिचि तदन्तात् क्तः। 'ईष उञ्छे'इति तु परस्मैपदिषु। ह्रस्वादयस्त्रयः। 'इष गतौ'दिवादिः। 'इष इच्छायां' तुदादिः। 'इष आभीक्ष्ण्ये' क्र्यादिः। **कासांचक्रे इति।** 'कास्प्रत्यये'त्याम्। **भासृ दीप्तौ।** अस्य ऋदित्त्वं भ्राजतेरिव तच्चमात्रफलकम्। 'भ्राजभासे'त्यादिनोपधाह्रस्वस्य विकल्पितत्वात्। **णस कौटिल्ये।** लिण्निमित्तादेशादित्वाऽभावादेत्वम्। नेसे। **आङः शसि।** 'शंसु स्तुता'विति तु परस्मैपदिषु वक्ष्यते। **ग्रसु ग्लसु।** 'उदितो वे'ति क्त्वायां वेट्। ग्रसित्वा। ग्रस्त्वा। 'यस्य विभाषे'ति नेट्। ग्रस्तः। **वेहृ जेहृ बाहृ। आद्य इति।** वेहतेरतिप्रत्यये वेहच्छब्दो निपातितः 'पोटायुवती'ति सूत्रे इति भावः। 'वेहद्गर्भोपघातिनी'। **अन्त्य इति।** बाहुशब्दस्य भुजपर्यायस्य, 'क्षुब्धस्वान्तध्वान्ते' ति निपातितस्य बाढशब्दस्य च निर्विवादत्वादिति भावः। **दन्त्योष्ठ्यादी इति।** 'उभावपी'त्यनुषज्यते। अनुदात्तेत्त्वकृतमात्मनेपदमनित्यम्। तेन 'ववाह रक्तं पुरुषास्ततो जाताः सहस्रशः' इति सिद्धम्। न चात्राऽर्थासङ्गतिः, धातूनामनेकार्थत्वात्प्रस्रवणार्थकत्वे बाधकाऽभावादित्याहुः। **ऊह।** कथं तर्हि 'अनुक्तमप्यूहति पण्डितो जनः इति ?। अत्राहुः—अनुदात्तेत्त्वलक्षणस्य तङोऽनित्यत्वान्न दोष इति। **गाहू।** ऊदित्त्वादिड्वा। इडभावे ढत्वम्। 'एकाचः' इति भष्भावः। 'षढोः कः सी'ति कः। कात्परस्य षत्वम्—**जघाक्षे।** 'विभाषेटः' इति वा मूर्धन्यः। जगाहिढ्वे। जगाहिध्वे। इडभावे तु भष्भावः। 'ढो ढे लोपः'—**जघाढ्वे।** ढे किम् ?। ऊढः। इह पूर्वं ढलोपो माभूत्। कृते तु ढेग्रहणे 'ष्टुना ष्टु' रित्यस्य आश्रयात् सिद्धत्वं भवतीति सिद्धमिष्टमित्याहुः। **अगाढेति।** 'झलो झली'—

बा.]**मौण्ड्येति।** णेषृधातुर्णोपदेशः। **कासृधातुमारभ्य ईहधातोः प्राक् सकारान्ताः। कासांचक्र इति।** कास्प्रत्ययादित्याम्। **णासृधातुर्णसधातुश्च** णोपदेशः। **आङः शसीति।** आङः परः शसिधातुरिच्छायामित्यर्थः। **ईहेत्यारभ्य काशृधातुवर्जं घुषि कान्तीत्यतः प्राक्**—हकारान्ताः। काशृधातुस्तु शकारान्तः। **प्लिहधातुरिदुपधः। ऊह वितर्के इति।** युक्त्या अर्थनिर्णयो **वितर्कः।** 'अनुक्तमप्यूहति पण्डितो जनः' इत्यत्र तु अनुदात्तेत्त्वलक्षणात्मनेपदमनित्यमिति बोध्यम्। गाहूधातुरूदित्त्वाद्वेट्। तदाह—**जगाहिषे जघाक्षे इति।** इडभावे जगाह् से इति स्थिते 'हो ढः', 'एकाच' इति भष्भावेन गस्य घः, 'षढो'रिति ढस्य कः, सस्य षः। **जगाहिढ्वे जगाहिध्वे इति।** इट्पक्षे 'विभाषेटः' इति ढत्वविकल्पः। इडभावे त्वाह—**जघाढ्व इति।** जगाह्-ध्वे इति स्थिते हस्य ढः, धस्य ष्टुत्वेन ढः, गस्य भष् घकारः। पूर्वस्य ढस्य 'ढो ढे लोपः' इति वक्ष्यमाणो लोपः। ढलोपसूत्रं त्विहैव पठितुं युक्तम्। **गाहितेति।** इट्पक्षे रूपम्। इडभावे तु गाह् ता इति स्थिते हस्य ढत्वे 'झषस्तथोर्धोऽधः' इति तकारस्य धत्वे,ष्टुत्वेन धस्य ढत्वे, गाढ्-ढा इति स्थिते— **ढो ढे।** 'ढः' इति षष्ठ्यन्तम्। तदाह—**ढस्येति।** ढकारस्येत्यर्थः। इति पूर्वस्य ढकारस्य लोपे 'गाढा' इति रूपम्। ढलोपे ष्टुत्वस्याऽसिद्धत्वं तु न, तथा सति ढलोपविधिवैयर्थ्यात्। **घाक्ष्यते इति।** इडभावे हस्य ढः,गस्य भष् घकारः, ढस्य कः, सस्य ष इति भावः। **घाक्षीष्टेति।** आशीर्लिङि सीयुटि इडभावपक्षे हस्य ढः, गस्य भष् घकारः, ढस्य कः, सस्य ष इति भावः। **अगाहिष्टेति।** सिच इट्, सस्य षः, तकारस्य ष्टुत्वेन टः। इडभावे त्वाह—**अगाढेति।** अगाह् स् त इति स्थिते सिच इडभावे 'झलो झली'ति लोपः। ढत्वधत्वष्टुत्वढलोपाः। सलोपात्पूर्वं भष्भावस्तु न, भष्भावस्याऽसिद्धतया 'झलो झली'ति सलोपस्य पूर्वं प्रवृत्तेः। न च कृतेऽपि सलोपे प्रत्ययलक्षणेन सकारपरकत्वात् भष्

शे.] मौण्ड्यादयः पद्मार्थाः। **ईष गति।** 'दानेष्वि'ति पाठान्तरम्। **परिभाषणम्**—अनृतभाषणम्। **आद्य इति।** अत एव 'वेहद्गर्भोपघातिनी'त्यादि सङ्गच्छते। **गाढेति।** लोपे ष्टुत्वाऽसिद्धत्वं न, लोपविधानसामर्थ्यात्।

लोपः स्याड्ढे परे। गाढा। गाहिष्यते। घाक्ष्यते। गाहिषीष्ट। घाक्षीष्ट। अगाहिष्ट। अगाढ। अघाक्षाताम्। अघाक्षत। अगाढाः। अघाढ्वम्। अघाक्षि। ६५० गृहू गर्हणे। गर्हते। जगृहे। * ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन। जगृहिषे। जघृक्षे। जघृढ्वे। गर्हिता। गर्ढा। गर्हिष्यते। घर्क्ष्यते। गर्हिषीष्ट। घृक्षीष्ट। लुङि—अगर्हिष्ट। इडभावे—। **शल इगुपधादनिटः क्सः** ।३।१।४५। इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात्। अघृक्षत। **क्सस्याऽचि** ।७।३।७२। अजादौ [तङि] क्सस्य लोपः स्यात्। 'अलोऽन्त्यस्य'। अघृक्षाताम्। अघृक्षन्त। ६५१ ग्लहू च। ग्लहते। ६५२ घुषि कान्तिकरणे।

---

त.] ति सलोपः। ढत्वधत्वष्टुत्वढलोपाः। सिज्लोपात्पूर्वं भष्भावस्तु न, असिद्धत्वात्। भष्भावस्तु सिज्लोपानन्तरमपि न भवति, सकारपरत्वाऽभावात्। न च कृतेऽपि सलोपे प्रत्ययलक्षणेन सिच्परत्वाद्भष्भावो दुर्वार इति शङ्क्यं, वर्णाश्रये प्रत्ययलक्षणाऽभावात्। अन्यथा गवे हितं गोहितमित्यत्राऽवादेशः स्यादिति दिक्। **जगृहे इति**। कित्त्वात्परत्वात् 'पुगन्ते'ति गुणे प्राप्ते 'ऋदुपधेभ्य' इति वार्तिकात्कित्त्वे गुणाऽभावः। **शल इगुपधा**। 'शल' इति धातोर्विशेषणात्तदन्तलाभः। शल इति किम्? अतिप्त। इगिति किम्? अगाढ। अनिटः किम्। औहिष्ट। **क्सस्याचि**। अज्ञादाविति। अङ्गाक्षिप्तप्रत्ययोऽत्र विशेष्यः। 'तङी'ति तु केषांचित्प्रक्षेपस्तस्य काशिकादावनुक्तत्वादित्याहुः। अन्ये तु 'लुग्वा दुहे'त्यत्र आत्मनेपदे इत्यपकर्षणात्तङीति लभ्यते। तेन 'दशेः क्सः' इति वार्तिकोक्तक्सप्रत्ययस्य लोपो न

---

बा.] दुर्वार इति शङ्क्यं, वर्णाश्रये प्रत्ययलक्षणाऽभावादिति भावः। **अघाक्षातामिति**। इडभावपक्षे ढघकषाः। **अघाक्षतेति**। पूर्ववत्। **अगाढा इति**। थास्, सिच्। इडभावे सलोपः। ढत्वधत्वष्टुत्वढलोपाः। **अघाढ्वमिति**। ध्वमि इडभावपक्षे सलोपः। ढत्वधत्वष्टुत्वढलोपाः। ध्वममाश्रित्य ढलोपात्पूर्वं भष्भावः। **अघाक्षीति**। इडभावे हस्य ढः, भष्भावः, ढस्य कः, सस्य षत्वमिति भावः। अघाक्ष्वहि। अघाक्ष्महि। अगाहिष्यत अघाक्ष्यत। गृहूधातुरूदित् ऋदुपधः। **गर्हते इति**। लटस्तिपि शपि लघूपधगुणे रपरत्वम्। **जगृहे इति**। 'असंयोगा'दिति कित्त्वाद्गुणाऽभावः। न च कित्त्वात् परत्वाद्गुणः शङ्क्यः, 'ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेने'ति वार्तिकादिति भावः। ऊदित्त्वादिड्विकल्पं मत्वा आह—**जगृहिषे जघृक्षे इति**। अभ्यासे उरदत्वं, हलादिः शेषः, जश्त्वम्, इट्, षत्वम्। इडभावे तु ढत्वभष्भावकत्वषत्वानि। ध्वमि जगृहिध्वे इति सिद्धवत्कृत्य इडभावे आह—**जघृढ्वे इति**। हस्य ढः, भष्भावष्टुत्वढलोपाः। **गर्ढेति**। इडभावे गुणे रपरत्वे ढत्वधत्वष्टुत्वढलोपाः। **घर्क्ष्यते इति**। गुणः, रपरत्वं, हस्य ढः, भष्भावः, ढस्य कः, षत्वम्। **घृक्षीष्टेति**। आशीर्लिङः सीयुटि इडभावे 'लिङ्सिचा'विति कित्त्वाद्गुणाऽभावे, हस्य ढः, भष्भावः, ढस्य कः षत्वम्। **अगर्हिष्टेति**। सिच इटि गुणे रपरत्वे षत्वे रूपम्। **शल इगुपधा**। **शलन्त इति**। 'धातोरेकाचः' इत्यतोऽनुवृत्तधातुविशेषणत्वात्तदन्तविधिरिति भावः। सिचोऽपवादः। क्सादेशोऽदन्तः। ककार इत्। **अघृक्षतेति**। च्लेः क्सः। तस्य कित्त्वादृकारस्य न गुणः। हस्य ढः, भष्भावः, ढस्य कः, षत्वमिति भावः। अघृक्ष—आतामिति स्थिते 'आतो ङितः' इति इयादेशे प्राप्ते—**क्सस्य**। अचीत्यऽस्याङ्गाक्षिप्तप्रत्ययविशेषणत्वात्तदादिविधिः। 'घोर्लोपो लेटि वे'त्यतो लोप इत्यनुवर्तते। तदाह—**अजादावित्यादिना**। **अलोऽन्त्यस्येति**। अन्त्यस्याऽकारस्य लोप इति भावः। वस्तुतस्तु 'लुग्वा दुहदिहे'त्युत्तरसूत्रादात्मनेपदे इत्यपकृष्य तद्विशेषणत्वादचीति तदादिविधिः। तेन दशेः क्सप्रत्यये 'तादक्षा' इत्यादौ नायं लोपः। **'अजादौ तङी'**त्येव क्वचित्पाठो दृश्यते। **अघृक्षातामिति**। अघृक्ष—आतामिति स्थिते क्साऽकारस्य लोपे अतः परत्वाऽभावात् 'आतो ङितः' इति इय् नेति भावः। **अघृक्षन्तेति**। झस्य अजादित्वाभावात्तस्मिन्परे क्सस्य अकारलोपाऽभावादतः परत्वात् 'आत्मनेपदेष्वनतः' इत्यदादेशो न। कृते तु झोऽन्तादेशे क्सस्याकारलोपः पररूपं वा। **ग्लहु चेति**। ग्लहधातुरपि ग्रहणे वर्तत इत्यर्थः। अदुपधोऽयम्। **घुषि कान्तीति**। उदुपधोऽयम्। इदित्त्वान्नुम्। 'नश्चे'त्यनुस्वारः। यय्परकत्वाऽभावान्न परसवर्णः। तदाह—**घुंषत इति**। सेट्कोऽयम्। अदुपधपक्षे तु घषते। जघषे। ऊष्मान्ता आत्मनेपदिनो गताः। **अथार्हत्यन्ताः परस्मैपदिन इति**। 'ऊष्मान्ता' इति शेषः।

---

शे.] **शल इगु। अनिटश्च्लेरिति**। धातुविशेषणत्वे तु गुहू इत्यस्य सेट्त्वादघुक्षदित्यादौ क्सो न स्यात्, पाक्षिकेडभावमादायाऽनिट्त्वे तु नित्यमेव स्यात्। च्ल्यारम्भवादिसूत्रमते इदमनिट इति विशेषणादेव क्सस्य न 'ऊदित' इतीट्। न च गृहादेश्च्ल्यवस्थायां गुणः स्यात्, इगुपधत्वाऽभावेऽपि क्सविधानं भूतपूर्वगत्या चरितार्थमिति वाच्यं, क्सस्य कित्त्वसामर्थ्यात्तदप्रवृत्तेः। न च ककाराऽभावे तृणादिभ्यश्चातुरर्थिके से तृणसावित्यादौ 'क्सस्याची'ति लोपापत्तिः, तत्रोत्तरसूत्रस्थात्मनेपदग्रहणापकर्षेणाऽदोषात्। तदाह—**अजादौ तङीति**। अत एव ककारे कृतेऽपि दशेः क्से 'तादक्षौ' इत्यादौ न लोपः। उत्तरसूत्रे च्ल्यादेशक्सस्यैव ग्रहणेनाऽर्थाधिकारानुरोधादत्र तस्यैव ग्रहणेन तङीति निष्फलं निर्मूलं

घुंषते । जुघुंषे । केचिद्घुषेत्यदुपधं पठन्ति । **अथाऽर्हत्यन्ताः परस्मैपदिनः** । ६५३ **घुषिर् अविशब्दने** । विशब्दनं-प्रतिज्ञानं,ततोऽन्यस्मिन्नर्थे इत्येके । शब्दे इत्यन्ये पेठुः। घोषति । जुघोष । घोषिता । इरित्त्वादङ् वा। अघुषत्। अघोषीत्। ६५४ **अक्षू व्याप्तौ। अक्षोऽन्यतरस्याम्**।३।१।७५।अक्षो वा श्नुप्रत्ययः स्यात्कर्त्रर्थे सार्वधातुके परे । पक्षे शप् । अक्ष्णोति । अक्ष्णुतः । [श्नुप्रत्ययान्तत्वादचि श्नुत्युवङ् ]। अक्ष्णुवन्ति । अक्षति । अक्षतः। अक्षन्ति । आनक्ष। आनक्षिथ । आनष्ठ । अक्षिता । अष्टा । अक्षिष्यति । 'स्कोः'रिति कलोपः । 'षढोः कः सि'। अक्ष्यति। अक्ष्णोतु । अक्ष्णुहि । अक्ष्णवानि । आक्ष्णोत्। आक्ष्णवम्। अक्ष्णुयात् । अक्ष्णुयुः। अक्ष्यात् । ऊदित्त्वाद्वेट् । 'नेटि' । मा भवानक्षीत्।अक्षिष्टाम्।अक्षिषुः। इडभावे तु-मा भवानाक्षीत्।आष्टाम्।आक्षुः।६५५ **तक्षू** ६५६ **त्वक्षू तनूकरणे । तनूकरणे तक्षः** ।३।१।७६। श्नुः स्याद्वा शब्विषये। तक्ष्णोति तक्षति वा काष्ठम् ।ततक्षिथ।ततष्ठ। अतक्षीत् । अतक्षिष्टाम् । [अतक्षिषुः]। अताक्षीत् । अताष्टाम् ।[अताक्षुः]। तनूकरणे किम् ?। वाग्भिः संतक्षति ।

त.]भवति,सदृक्षा अन्यादृक्षा इत्यत्रेत्याहुः। घुषि कान्तिकरणे। लुङि अघुंषिष्ट। अघुंषिषाताम्। अदुपधपाठे तु-अघषिष्ट । अघषिषाताम् । **अतक्षीदिति** । 'नेटि' इति वृद्धिनिषेधः । इडभावे तु-अताक्षीत् । **प्रणिक्षतीति** । 'उपसर्गादस-

बा.]तत्र **तुस ह्रसेत्यतः** प्राक् षान्ताः । **घुषिरिति** । इर् इत् । **प्रतिज्ञानमिति** । 'वेदाः प्रमाण'मित्याद्यभ्युपगम इत्यर्थः । **ततोऽन्यस्मिन्निति** । विशब्दनात् अन्यत्-अविशब्दनं, तस्मिन्नित्यर्थः । **इरित्त्वादङ् वेति** । 'इरितो वेत्यनेने'ति शेषः । **अघुषदिति** । अङो ङित्त्वान्न लघूपधगुणः । **अघोषीदिति** । अङभावपक्षे लघूपधगुणे 'इट ईटी'ति सिज्लोपः । हलन्तलक्षणवृद्धेः 'नेटी'ति निषेधः । अक्ष्धातुरूदित्त्वाद्वेङ्कः । **अक्षोऽन्यतरस्याम्** । 'अक्ष' इति पञ्चमी । 'स्वादिभ्यः श्नु'रित्यतः श्नुरिति, 'कर्तरि श'बित्यतः कर्तरीति, 'सार्वधातुके य'गित्यतः सार्वधातुक इति चानुवर्तते । तदाह-**अक्षो वेति** । श्नुप्रत्ययस्य शित्त्वं सार्वधातुकत्वार्थम् । तत्फलं तु 'स्वादिभ्यः श्नु'रित्यत्र वक्ष्यते ।

**अक्ष्णोतीति** । तिपि श्नुः । तस्य तिपः पित्त्वेन ङित्वाऽभावात् 'सार्वधातुके'ति गुणः । णत्वम् । **अक्ष्णुत इति** । तसोऽपित्त्वेन ङित्वात् श्नोर्न गुणः । **अक्ष्णुवन्तीति** । ङित्त्वाद्गुणाऽभावे उवङ् । अक्ष्णोषि अक्ष्णुथः अक्ष्णुथ । अक्ष्णोमि अक्ष्णुवः अक्ष्णुमः । **अक्षतीति** । शप्पक्षे रूपम् । **आनक्षेति** । णलि द्विहल्त्वान्नुट् । आनक्षतुः आनक्षुः ।

ऊदित्त्वादिट्पक्षे आह-**आनक्षिथेति**। इडभावे आह-**आनष्ठेति**। आनक्ष्-थ इति स्थिते 'स्कोः'रिति कलोपः। थस्य ष्टुत्वेन ठः । **अष्टेति** । लुटि तासि इडभावपक्षे 'स्कोः'रिति कलोपे तकारस्य ष्टुत्वेन टः । अक्ष् स्य तीति स्थिते प्रक्रियां दर्शयति-**स्कोरिति कलोपः, षढोः कः सीति** । कात्परत्वात् सस्य षत्वं च । **अक्ष्णोत्विति** । अक्ष्णोतु अक्ष्णुतात्-अक्ष्णुताम् । अक्ष्णुवन्तु । **अक्ष्णुहीति** । संयोगपूर्वत्वादुतश्चेति हेर्लुक् न । हेरपित्त्वेन ङित्वात् श्नोर्न गुणः । अक्ष्णुतात् अक्ष्णुतम् अक्ष्णुत । **अक्ष्णवानीति** । आटः पित्त्वेन ङित्वाऽभावान्न गुणनिषेधः । गुणेऽवादेशः। अक्ष्णवाव अक्ष्णवाम । शपि तु अक्षत्वित्यादि । **आक्ष्णोदिति** । लङस्तिप् । श्नोर्गुणः । आट् । वृद्धिः । आक्ष्णुताम् आक्ष्णुवन् । आक्ष्णोः आक्ष्णुतम् आक्ष्णुत । **आक्ष्णवमिति** । मिपोऽम् । श्नोर्गुणः । अवादेशः । आक्ष्णुव आक्ष्णुम । **अक्ष्णुयादिति** । विधिलिङि यासुटो ङित्वात् श्नोर्न गुणः । **अक्ष्णुयुरिति** । 'लिङः सलोपः' इति सलोपे 'उस्य-पदान्ता'दिति पररूपमिति भावः । अक्ष्णुयाः अक्ष्णुयातम् अक्ष्णुयात । अक्ष्णुयाम् अक्ष्णुयाव अक्ष्णुयाम । शप्पक्षे अक्षे-दित्यादि । **अक्ष्यादिति** । आशीर्लिङि आर्द्धधातुकत्वान्न श्नुः, नापि शप् । लुङि सिचि विशेषमाह-**ऊदित्त्वाद्वे-डिति** । तत्र इट्पक्षे आह-**नेटीति** । हलन्तलक्षणा वृद्धिर्नेत्यर्थः । नच अभैत्सीदित्यादावेकेन हला व्यवधाने हलन्त-लक्षणवृद्धेश्चरितार्थत्वादत्र न तत्प्रसक्तिरिति शङ्क्यं, रञ्जेरराङ्क्षीदित्यत्र वृद्धिसिद्धये अनेकाल्व्यवधानेऽपि हलन्तलक्षणवृद्धि-प्रवृत्तेर्भाष्यादौ प्रपञ्चितत्वादिति भावः । **मा भवानक्षीदिति** । आटि सति हलन्तलक्षणवृद्धौ सत्यामसत्यां च रूपे भेदाऽभावात् 'मा भवा'नित्युपात्तम् । **अक्षिष्टाम्** । **अक्षिषुरिति** । अत्रापि 'मा' इति संबध्यते । **इडभावे त्विति**। लुङस्तिपि अक्ष् स् ईदिति स्थिते इडभावान्नेटीति निषेधाऽप्रसक्त्या हलन्तलक्षणवृद्धौ 'स्कोः'रिति कलोपे 'षढोः'रिति कत्वे षत्वमिति भावः । अत्र 'नेटी'ति निषेधाऽभावेन हलन्तलक्षणवृद्धिर्निर्बाधेति स्पष्टयितुमेव **'मा भवान्'** इत्यत्राप्युपात्त-मिति बोध्यम् । **आष्टामिति** । अक्ष् स् ताम् इति स्थिते हलन्तलक्षणवृद्धौ 'झलो झली'ति सिज्लोपे 'स्कोः'रिति कलोपे तकारस्य ष्टुत्वम् । **आक्षुरिति** । अक्ष् स् उस् इति स्थिते हलन्तलक्षणवृद्धौ 'स्कोः'रिति कलोपे षस्य कत्वे सस्य षत्वमिति भावः । आक्षीः आष्टम् आष्ट । आक्षम् आक्ष्व आक्ष्म । आक्षिष्यत्-आक्ष्यत्, आक्ष्यताम् आक्ष्यन् । आक्ष्यः आक्ष्यतम् आक्ष्यत । आक्ष्यम् आक्ष्याव आक्ष्याम । **तक्षू त्वक्षू इति** । स्थूलस्य काष्ठादेः कतिपयावयवापनयनेन सूक्ष्मीकरणं तनूकरणम् । **तनूकरणे** । शेषपूरणेन सूत्रं व्याचष्टे-**श्नुः स्याद्वा शब्विषये इति** । 'स्वादिभ्यः श्नु'-

शे.]चेत्यन्ये । **अघृक्षातामिति** । लोपाऽभावे 'आतो ङित'इति स्यादिति भावः । **प्रतिज्ञानमिति** । तत्र शब्देन

भर्त्सयतीत्यर्थः । ६५७ उक्ष सेचने । उक्षांचकार । ६५८ रक्ष पालने । ६५९ णिक्ष चुम्बने । प्रणिक्षति । ६६० तृक्ष ६६१ स्तृक्ष ६६२ णक्ष गतौ । तृक्षति । स्तृक्षति । नक्षति । ६६३ वक्ष रोषे । संघात इत्येके । ६६४ मृक्ष संघाते । म्रक्ष इत्येके । ६६५ तक्ष त्वचने । त्वचनं-संवरणं, त्वचोग्रहणं च । पक्ष परिग्रह इत्येके । ६६६ सूर्क्ष आदरे । सुसूर्क्ष । अनादर इति तु क्वाचित्कोऽपपाठः । 'अवज्ञावहेलनमसूर्क्षण'मित्यमरः । ६६७ काक्षि ६६८ वाक्षि ६६९ माक्षि काङ्क्षायाम् । ६७० द्राक्षि ६७१ ध्राक्षि ६७२ ध्वाक्षि घोरवासिते च । ६७३ चूष पाने । चुचूष । ६७४ तूष तुष्टौ । ६७५ पूष वृद्धौ । ६७६ मूष स्तेये । ६७७ लूष ६७८ रूष भूषायाम् । ६७९ शूष प्रसवे । प्रसवोऽभ्यनुज्ञानम् । तालव्योष्मादिः । ६८० यूष हिंसायाम् । ६८१ जूष च । ६८२ भूष अलङ्कारे । भूषति । ६८३ ऊष रुजायाम् । ऊषांचकार । ६८४ ईष उञ्छे । ६८५ कष ६८६ खष ६८७ शिष ६८८ जष ६८९ झष ६९० शष ६९१ वष ६९२ मष ६९३ रुष ६९४ रिष हिंसार्थाः । तृतीयषष्ठौ तालव्योष्मादी । सप्तमो दन्त्योष्ठ्यादिः । चकाष । चखाष । शिशेष । शिशेषिथ । शेष्टा । क्सः-अशिक्षत् । अशेक्ष्यत् । जेषतुः । जंझषतुः । शेषतुः । ववषतुः । मेषतुः । **तीषसहलुभरुषरिषः ।७।२।४८।** इच्छत्यादेः परस्य तादेरार्द्धधातुकस्येड्वा स्यात् । रोषिता । रोष्टा । रोषिष्यति ।

---

त.]मासेऽपी'ति नित्यं णत्वम् । 'वा निंसनिक्षनिन्दा'मिति तु कृद्विषयम् । 'ण्वुल्तृचौ' । प्रणिक्षिकः । प्रनिक्षकः । प्रणिक्षिता । प्रनिक्षिता । **अवज्ञेत्यादि** । सूर्क्षणमादरस्ततोऽन्यदसूर्क्षणमित्यमरग्रन्थार्थः । यदि तु सूर्क्षणमनादर इत्युच्येत तर्हि असूर्क्षणमवज्ञापर्यायो न स्यादिति भावः । **काक्षि** । काङ्क्षा-इच्छा । **द्राक्षि ध्राक्षि ध्वाक्षि** । **घोरवासितं**-घोरशब्दः । **वासृ** शब्दे । **ध्वाङ्क्षतीति** । ध्वाङ्क्षः-काकः । **द्राक्षि** । धातोः 'गुरोश्च हलः' इति 'अ'प्रत्यये द्राक्षा । यवादिगणे निपातनान्नलोपः । द्राक्षामान् । इह मतोर्वत्वं तु न भवति, 'अयवादिभ्य' इत्युक्तेः । **तूष** तुष्टौ । दिवादौ तु ह्रस्वोपधः । **मूष** स्तेये । संज्ञायां क्वुनि 'मूषकः' । क्र्यादौ तु ह्रस्वोपधोऽयम् । **भूष** अलङ्कारे । अयं चुरादावपि । **ईष** उञ्छे । 'गुरोश्च हलः' इत्यप्रत्यये 'ईषा लाङ्गलदण्डः' । **कष खष** । षान्तौ । 'शिषे'त्ययमप्यनिङ्को न तु रौधादिक एव, संकोचे मानाऽभावादित्यभिप्रेत्योदाहरति-**शेष्टा** । **अशिक्षदित्यादि** । **तीषसह** । इष इच्छायाम् । षह मर्षणे ।

---

बा.] रित्यतः श्नुरिति, 'कर्तरि श'बित्यतः कर्तरीति, 'सार्वधातुके य'गित्यतः सार्वधातुक इति चानुवर्तते । तनूकरणेऽर्थे विद्यमानात्तक्षधातोः श्नुः स्यात्कर्त्रर्थे सार्वधातुके इति फलितम् । नच तक्षूधातोस्तनूकरणार्थकत्वाऽव्यभिचारात् श्नुविधौ तनूकरणग्रहणं व्यर्थमिति वाच्यम्, अत एव धातुपाठे अर्थनिर्देशस्य उपलक्षणत्वावगमात् । **तक्ष्णोतीत्यादि** । अक्षूवद्रूपाणि । लुङि सिचि इट्पक्षे 'नेटी'ति वृद्धिनिषेधे अतक्षीदिति, इडभावे तु अताक्षीदिति च रूपमक्षूवत् । एवं त्वक्षूधातुरपि । णिक्षधातुर्णोपदेशः । **प्रक्षिणतीति** । 'उपसर्गादसमासेऽपी'ति णत्वम् । **त्रयो ष्ट्रक्ष णक्ष गताविति** । त्रयोऽप्यकारमध्याः । द्वितीयः षोपदेशः । तदाह-**स्त्रक्षतीति** । षस्य सत्वे ष्टुत्वनिवृत्तिरिति भावः । णक्षधातुर्णोपदेशः । सिचि 'नेटी'ति हलन्तलक्षणवृद्धिनिषेधः । **वक्ष रोष इति** । दन्त्योष्ठ्यादिः । म्रक्षधातुरकारमध्यः । त्वचनशब्दस्य विवरणं-**संवरणमिति** । सूर्क्षधातू रेफमध्यः । अपपाठत्वे हेतुमाह-**अवज्ञेति** । सूर्क्षधातोरनादरार्थकत्वे असूर्क्षणमित्यस्य आदरार्थकत्वापत्त्या अमरकोशे अवज्ञापर्यायत्वावगमविरोध इति भावः । **घोरवाशिते चेति** । चात् काङ्क्षायामपि । **घोरवाशितं**-क्रूरशब्दः । **चूषेत्यारभ्य ऊष रुजाया**मिति यावदूदुपधाः । **ईष उञ्छ इति** । ईदुपधः । **कषे-त्यारभ्य** दश धातवः । तत्र तृतीयो दशमश्च इदुपधः । शिषधातुरनिङ्कः । क्रादिनियमात्थलि वसि मसि च नित्यमिट् अजन्ताकारवत्त्वाऽभावेन थलि वेङ्कत्वाऽभावात् । शिशेषिथ । शिशिषिव शिशिषिम । **अशिक्षदिति** । 'शल इगुपधा'दिति च्लेः क्सादेशे क्त्वाल्लघूपधगुणनिषेधे षस्य कत्वे सस्य षत्वमिति भावः । **ववषतुरिति** । 'न शसददे'ति निषेधादेत्त्वाभ्यासलोपौ न । रुषधातुः सेङ्कः । रोषति । रुरोष रुरुषतुः रुरुषुः । रुरोषिथ रुरुषथुः रुरुष । रुरोष रुरुषिव रुरुषिम । **तीषसह** । आर्द्धधातुकस्येत्यत इडित्यनुवर्तते । 'स्वरतिसूती'त्यतो वेति च । तीति सप्तम्युपादानात्तदादिविधिः । इष सह लुभ रुष रिष एषां द्वन्द्वात्पञ्चम्येकवचनम् । तदाह-**इच्छत्यादेरिति** । इच्छतीति इषेः श्तिपा निर्देशः । इषधातुर्विवक्षितः । 'इषु इच्छायां' तुदादिः शविकरणः । 'इष गतौ' दिवादिः श्यन्विकरणः । 'इष आभीक्ष्ण्ये' क्र्यादिः श्नाविकरणः ।

---

शे.]स्वाभिप्रायप्रकाशनम् । अपपाठत्वे हेतुः-**अवज्ञेत्यादि** । **सूर्क्षणम्**-आदरस्ततोऽन्यदसूर्क्षणमिति तदर्थः । **तीषस** । 'इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः' इति वार्तिकादत्रेषग्रहणेनेच्छतीष्णात्योरेव ग्रहणम् । अत्र सूत्रे, धातुपाठे च 'इषु' इत्युदित्पाठोऽनार्षः । **तादेरिति** । ननु तादेरित्यर्थो दुर्लभः । वलादेरित्यादिग्रहणसामर्थ्येन विशेष्यविशेषणयोरुभयोरपि सप्तम्युच्चारणे एव 'यस्मिन्विधि'रित्यस्य प्रवृत्तेः । अत एव 'ङः सि धु'डित्यादौ सादेः पदस्येति नार्थ इति चेन्न, सौत्रे-

रेपिता। रेष्टा।रेपिष्यति ![७००]।६९५ भष भर्त्सने । भर्त्सनं श्वरवः।भषति । बभाष । ६९६ उष दाहे।ओषति ।

**उषविदजागृभ्योऽन्यतरस्याम्** ।३।१।३८। एभ्यो लिट्यास्वा स्यात् । ओषांचकार । उवोष । ऊषतुः । उवोषिथ । ६९७ जिषु ६९८ विषु ६९९ मिषु सेचने । जिजेष । क्रादिनियमादिट् । विवेषिथ । विविषिव । वेष्टा । वेक्ष्यति । अविक्षत् । ७०० पुष पुष्टौ । पोषिता । पोषिष्यति । अपोषीत् । अनिट्केषु 'पुष्ये'ति श्यना निर्देशाद्यं सेट् । अतो न क्सः । अङ्विधौ दैवादिकस्य ग्रहणान्नाऽङ् । ७०१ श्रिषु ७०२ श्लिषु ७०३ प्रुषु ७०४ प्लुषु दाहे । श्रेषति । शिश्रेष । श्रेषिता । श्लेषति । शिश्लेष । श्लेषिता । अयमपि सेट् । अनिड्दैवादिकस्यैव ग्रहणमिति कैयटादयः । यत्त्वनिड्कारिकान्यासे 'द्वयोर्ग्रहण'मित्युक्तं तत्स्वोक्तिविरोधाद्ग्रन्थान्तरविरोधाच्चोपेक्ष्यम् । पुप्रोष । पुप्लोष । ७०५ पृषु ७०६ वृषु ७०७ मृषु सेचने । मृषु सहने च । इतरौ हिंसासंक्लेशनयोश्च । पर्षति । पपर्ष । पृष्यात् । ७०८ घृषु संघर्षे । ७०९ हृषु अलीके । ७१० तुस ७११ ह्रस ७१२ ह्लस ७१३ रस शब्दे । तुतोस । जह्रास । जह्लास । ररास । ७१४ लस श्लेषणक्रीडनयोः । ७१५ घस्लृ अदने । अयं न सार्वत्रिकः । 'लिट्यन्यतरस्या'मित्यदेर्घस्लादेशविधानात् । ततश्च यत्र लिङ्गं वचनं वास्ति तत्रैवास्य प्रयोगः । अत्रैव पाठः शपि परस्मैपदे लिङ्गम् । लृदित्करणमङि । अनिड्कारिकासु पाठो वलाद्यार्धधा-

त.]लुभ गार्ध्ये । रुष रिष हिंसायाम् । एषिता । एष्टा । सहिता । सोढा । लोभिता। लोब्धा । **उवोषेति** । 'पुगन्ते'ति गुणः । 'अभ्यासस्याऽसवर्णे' इत्युवङ् । **घृषु** संघर्षे । ल्युटि-घर्षणम् । **घस्लृ** अदने । **अयमिति** । यद्ययं सार्वत्रिकः स्यात्तदा लिट्यपि प्रयुज्येत, ततश्च 'लिट्यन्यतरस्या'मिति विकल्पेनादेशविधानं व्यर्थं भवेदिति भावः । **अत्रैव पाठ**

बा.]करणः।तत्र 'इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः' इति वार्तिकाद् श्यन्विकरणस्य न ग्रहणम्। **रोषिता रोष्टेति**। इडभावे ष्टुत्वेन तकारस्य टकारः । रिषेरप्यादाविड्विकल्पं मत्वा आह-**रेषिता रेष्टेति** । **उष दाह इति** । सेट्कोऽयम् । उखधातुवत् रूपाणि । **उषविद** । 'कास्प्रत्यया'दित्यत आम् लिटीत्यनुवर्तते । तदाह-**एभ्यो लिटीति** । आमभावपक्षे आह-**उवोषेति** । 'अभ्यासस्याऽसवर्णे'इति उवङादेशः । **जिषु विषु मिषु सेचन इति** । द्वितीयो दन्त्योष्ठ्यादिः। थलि वसि मसि च विशेषमाह-**क्रादिनियमादिडिति** । **विवेषिथेति** । अजन्ताकारवत्त्वाऽभावेन भारद्वाजनियमाऽप्रवृत्तेस्थल्यपि क्रादिनियमान्नित्यमिट् । **वेष्टेति** । तासि ष्टुत्वेन तकारस्य टः । **वेक्ष्यतीति** । 'षढो'रिति षस्य कः, सस्य षः । **अविक्षदिति** । 'शल इगुपधा'दिति क्सः, षस्य कः, सस्य षः, क्त्वान्न गुणः । पुषधातुः सेडिति मत्वा आह-**पोषितेति** । **अपोषीदिति** । 'नेटी'ति वृद्धिनिषेधः । नन्वनिट्सु पुषेः पाठात् कथं सेट्त्वमित्यत आह-**अनिट्केष्विति** । **अत इति** । सेट्त्वात् क्सो नेत्यर्थः । ननु पुषादित्वलक्षणः अङ्कुतो नेत्यत आह-**अङ्विधाविति** । एतच्चानुपदमेव पुषादिसूत्रव्याख्यावसरे स्पष्टीभविष्यति । **अयमपीति** । पुषधातुवत् श्लिषधातुरपि भौवादिकः सेडित्यर्थः । **कैयटादय इति** । 'श्लिष आलिङ्गने'इति सूत्रे कैयटहरदत्तादिभिस्तथा प्रपञ्चितत्वादिति भावः । **द्वयोर्ग्रहणमिति** । भौवादिकदैवादिकयोरित्यर्थः । **स्वोक्तीति** । 'श्लिष आलिङ्गने'इति सूत्रे दैवादिकश्लिषेरनिट्केषु ग्रहणमिति न्यासकृता कैयटादिभिश्चोक्तत्वादिति भावः । **पृषु वृषु** इत्यारभ्य **हृषुपर्यन्ता** ऋदुपधाः । **अलीकं**-मिथ्याभवनं, मिथ्योक्तिर्वा । **तुस ह्रसेत्यारभ्य णश गताविव्यतः** प्राक् सकारान्ताः। **घस्लृधातुरनिड्**ः। **अयमिति**। घस्लृधातुः, सर्वेषु न प्रयोज्य इत्यर्थः । कुत इत्यत आह-**लिटीति** । यद्ययं सार्वत्रिकः स्यात्तदा लिट्यपि प्रयुज्येत । ततश्च 'अद भक्षणे' इति धातोर्लिट्यन्यतरस्यामिति घस्लृभावविधिर्व्यर्थः स्यादिति भावः । असार्वत्रिकत्वे सति क्व प्रयोगः क्व नेत्यत आह-**ततश्चेति** । यत्र घस्लृधातोः प्रयोगे ज्ञापकं प्रत्यक्षवचनं वास्ति तत्रैवास्य प्रयोग इत्यर्थः। तत्र तावल्लिङ्गं दर्शयति-**अत्रैवेति**। भ्वादिगणे अत्रैव क्रमे अस्य पाठः शपि परस्मैपदे प्रयोगे लिङ्गमित्यर्थः।नच धातुसंज्ञार्थः पाठ इति शङ्क्यं,द्युत दीप्तावित्यतः प्राक् ['अनुदात्तेत' इत्यतोऽग्रे] पाठेनैव सिद्धे अत्र क्रमे तत्पाठवैयर्थ्यादिति भावः।**लृदित्करणमङीति** । 'प्रयोगे लिङ्ग'मिति शेषः । **अनिड्कारिकास्विति** । अनुदात्तोपदेशेषु घस्लृधातोः पाठो वलाद्यार्धधातुके

शे.]त्वाद्वलादेरित्यनुवृत्तविशेषणीभूतवल्पदार्थस्य तकारेण विशेषणात्।तकाररूपवलादेरिति वाच्योऽर्थः। एवं 'सेऽसिची'त्यादावपि बोध्यम् । सप्तमी तु प्रथमार्थे एवेत्यलम् । **उषविद** । इयमप्राप्तविभाषा । 'प्रत्ययान्ता धात्वन्तराणि'इति 'न वे'ति सूत्रे भाष्ये स्पष्टम् । **कैयटादय इति** । 'श्लिष आलिङ्गने' इति सूत्रस्था इति बोध्यम् । **अत्रैव पाठ इति** । न च धातुसञ्ज्ञार्थः पाठः, द्युतात्पूर्वं पाठेनैव सिद्धेऽत्र पाठस्य ज्ञापकत्वात् । एतेनाऽयं द्युतात्पूर्वं पाठ्यः, पुषादिसूत्रे घसादीति पाठ्यं, लृदित्त्वञ्च न कार्यमित्यपास्तम् । पाठस्याऽङ्सम्पादकतया चारितार्थ्येन शपि परस्मैपदे प्रयोगाऽनापत्तेः । **लृदित्करणमिति** । यद्यपि घस्लादेशेनैव 'अघस'दिति सिद्धं तथापि 'अघात्सी'दिति प्रयोगवारणार्थमस्य लृदित्वं

तुके । क्मरचि तु विशिष्योपादानम् । घसति । घस्ता । **सः स्यार्द्धधातुके** ॥७।४।४९। सस्य तः स्यात्सादावार्द्धधातुके । घत्स्यति । घसतु । अघसत् । घसेत् । लिङाद्यभावादाशिष्यस्याऽप्रयोगः । **पुषादिद्युताद्य्ऌदितः परस्मैपदेषु** ।३।१।५५। श्यन्विकरणपुषादेर्द्युतादेर्ऌदितश्च परस्य च्लेरङ् स्यात्परस्मैपदेषु । अघसत् । **७१६ जर्ज ७१७ चर्च ७१८ झर्झ** परिभाषणहिंसातर्जनेषु । **७१९ पिसृ ७२० पेसृ** गतौ । पिपिसतुः । पिपेसतुः । **७२१ हसे** हसने । एदित्वान्न वृद्धिः । अहसीत् । **७२२ णिश** समाधौ । तालव्योष्मान्तः । प्रणेशति । **७२३ मिश ७२४ मश** शब्दे रोषकृते च । तालव्योष्मान्तौ । **७२५ शव** गतौ । दन्त्योष्ठ्यान्तस्तालव्योष्मादिः । शवति । अशवीत् । अशावीत् । **७२६ शश** प्लुतगतौ । तालव्योष्माद्यन्तः । शशाश । शेशतुः ।

---

त.]इति । भ्वादौ परस्मैपदे पाठ इत्यर्थः । **क्मरचीति** । 'सृघस्यदः क्मर'जिति सूत्रे । **सः स्यार्द्ध** । सः-सीति च्छेदः । सादौ किम् ? । घस्मरः । आर्द्धधातुके इति किम् ? । वस्से । **आशिषीति** । आशीर्लिङीत्यर्थः । एतच्च कर्तरि प्रयोगमभिप्रेत्योक्तम् । कर्मणि तु यग्विषये प्रयोगो नेति बोध्यम् । **पुषादिद्युता** । पुष धातुर्भ्वादौ दिवादौ क्र्यादौ चुरादौ च पठ्यते । यदि तु 'पुष पुष्टा'विति भौवादिकधातुमारभ्य पुषादिगणो गृह्येत तदा द्युतादिग्रहणमनर्थकं भवेत्, पुषेरुत्तरत्र द्युतादीनां पाठात् । नापि क्र्याद्यन्तर्गणः, तत्र हि पुषधातोरग्रे 'मुष स्तेये,' 'खच भूत प्रादुर्भावे' 'हेठ च' 'ग्रह उपादाने' इति चत्वार एव पठ्यन्ते । यदि तु त एव जिघृक्षिताः स्युस्तर्हि लाघवाल्लृदित एव क्रियेरन् । ग्रहेः स्वरितेत्त्वेऽपि ऌकारेणैव तन्निर्वाहादनेकानुबन्धासङ्गगौरवशङ्काया अप्यभावात् । नापि चुरादिः, णिचा व्यवधानेन ततोऽनन्तरस्य च्लेरसंभवात् । अतः परिशेषाद्दिवादय एव गृह्यन्त इत्याह-**श्यन्विकरणपुषादेरिति** । केचित्तु दिवाद्यन्तर्गत एव पुषादिर्गृह्यते, व्याख्यानादित्याहुः । चुरादीनां सर्वेषां णिज्विकल्प इति पक्षे चौरादिकपुषादेरपि परः च्लिः संभवतीति तेषामाशयः । 'नन्दिग्रहिपचादिभ्यः' इतिवत् 'पुषद्युताद्य्ऌदितः' इति सूत्रयितुमुचितम् । ननु पुषादयो द्युतादयश्च ऌदित एव कुतो न कृता इति चेत् । अत्राहुः-निरनुबन्धेषु सानुबन्धेषु च प्रत्येकं ऌकारपाठे विपरीतगौरवं स्यात् । न च अनुबन्धान्तरस्य यत्प्रयोजनमात्मनेपदं तत्तु ऌदित्करणेऽपि सिध्यतीत्यनेकानुबन्धासङ्गगौरवदोषो नास्तीत्यपि शङ्क्यम् । आदितामीदितामूदितां च तेषु सत्त्वाल्लृकारेण तत्तत्कार्याणामनिर्वाहादनेकानुबन्धासङ्गगौरवस्य दुर्निवारत्वादिति । **जर्ज चर्च झर्झ** । एषां परिभाषणादिभिः सह यथासङ्ख्यं नास्ति, व्याख्यानादित्याहुः । परिभाषणं-सनिन्दोपालम्भः । त्रयाणामपि चवर्गीयान्तेषु पाठ उचितो, न जिह्वोष्मान्तेषु । **णिश समाधौ** । समाधिः-अन्तःकरणनिरोधः । **प्रणेशतीति** । 'उपसर्गादसमासेऽपी'ति णत्वम् । **रोषकृते चेति** । चकारात्समाधौ । **शश** प्लुतगतौ । 'नशसददे'ति प्रतिषेधसूत्रे सान्तस्य ग्रहणमित्यभिप्रेत्य व्याचष्टे-**शेशतुरिति**। प्राचा तु 'शशशतु'रित्युक्तं, तदयुक्तमिति भावः। **अचहीदिति** । 'ह्यन्ते'ति न वृद्धिः। **रह** त्यागे । अयं कथादावपि । 'ज्ञप मिच्चे'ति मित्प्रकरणेऽप्य-

---

बा.]प्रयोगे लिङ्गमित्यर्थः। अथ क्वचिदस्य प्रयोगे प्रत्यक्षवचनं दर्शयति-**क्मरचीति**।'सृघस्यदः क्मर'जित्यत्र विशिष्य घसेरुपादानं क्मरचि प्रयोगे प्रमाणमित्यर्थः। **घसतीति** । लटि तसाद्युपलक्षणमिदम्। लिटि अस्य प्रयोगाऽभावाल्लुट्मुदाहरति-**घस्तेति** । **सः सि** । 'सः' इति छेदः। 'स' इति षष्ठ्यन्तम् । सीति सप्तम्यन्तमार्द्धधातुकविशेषणं । तदादिविधिः । 'अच उपसर्गात्तः' इत्यतस्त इत्यनुवर्तते । अकार उच्चारणार्थः । तदाह-**सस्य तः स्यादिति** । आदेशे अकारस्य उच्चारणार्थत्वात्तकारः स्यादित्यर्थः। लुङि च्लेः सिचि प्राप्ते-**पुषादि** । 'च्लेः सि'जित्यतः च्लेरिति, 'अस्यतिवक्तिख्यातिभ्यः' इत्यतोऽङिति चानुवर्तते। पुषादि द्युतादि ऌदित् एषां समाहारद्वन्द्वात्पञ्चमी । तत्र पुषधातुस्तु भ्वादौ क्र्यादौ चुरादौ दिवादौ चास्ति । तत्र यदि भौवादिकः पुषादिगणो गृह्येत तर्हि द्युतादिग्रहणमनर्थकं स्यात्, पुषादिगणोत्तरमेवात्र द्युतादिगणपाठात् । नापि क्र्याद्यन्तर्गणः । तत्र हि 'मुष स्तेये' 'खच भूतप्रादुर्भावे' 'हेठ च' 'ग्रह उपादाने' इति चत्वार एव पठ्यन्ते । यदि त एवात्र पुषादयो विवक्षिताः स्युस्तर्हि लाघवात् ऌदित एव ते क्रियेरन् । नाप्यत्र चौरादिकः पुषादिर्गृह्यते, णिचा च्लेर्व्यवहितत्वात् । अतः परिशेषाद्दिवादय एव गृह्यन्ते । तदाह-**श्यन्विकरणेति** । **जर्ज चर्च झर्झेति** । एतेषां चवर्गीयान्तेष्वेव पाठ उचितः । **हसे हसन इति** । एदिदयम् । **न वृद्धिरिति** । 'ह्यन्तेत्यनेने'ति शेषः । **णिश समाधाविति** । णोपदेशत्वादुपसर्गादसमासेऽपीति नस्य णत्वम् । तदाह-

---

शे.]बोध्यम्।**आशिषीति**। इदमुपलक्षणं-यक्चिणोर्विषये [च] प्रयोगाऽभावस्य। **परे तु** 'लिट्यन्यतरस्या'मित्येतत्सामर्थ्याल्लिटि मास्तु प्रयोगोऽन्यत्र तु भवत्येव । जघस्थेति रूपवारणेन च तत्सार्थक्यम् । जगस्थेत्यस्येष्टत्वे हि असार्वत्रिकत्वबोधनेऽपि न कथमपि सार्थक्यम् । अत एव 'उपदेशेऽत्वतः'इति सूत्रे 'घसेः प्रतिषेधो वक्तव्यो, जघसिथ'इति वार्तिकं तासौ नित्याऽनिट्त्वाऽभावात्प्रत्याख्यातं भाष्ये । अन्यथाऽस्य प्रतिषेधार्थं वार्त्तिकं स्यादिति तत्प्रत्याख्यानाऽसङ्गतिः । अच्प्रत्यये घस्लादेशविधानं तु 'अदः' इत्येतद्रूपवारणार्थमित्याहुः । **अशावीदशवीदिति** । यद्यपि 'इको गुणे'ति

शेशुः । शेशिथ । ७२७ शसु हिंसायाम् । दन्त्योष्मान्तः । 'न शसददे'त्येत्त्वं न । शशसतुः । शशसुः । शशसिथ । ७२८ शंसु स्तुतौ । अयं दुर्गतावपीति दुर्गः । 'नृशंसो घातुकः क्रूर' इत्यमरः । शशंस । आशिषि नलोपः। शस्यात् । ७२९ चह परिकल्कने । कल्कनं-शाठ्यम् । अचहीत् । ७३० मह पूजायाम् । अमहीत् । ७३१ रह त्यागे । ७३२ रहि गतौ । रंहति । रंह्यात् । ७३३ दृह ७३४ दृहि ७३५ बृह ७३६ बृहि वृद्धौ । दर्हति । ददर्ह । ददृहतुः । दृंहति । बर्हति । बृंहति । बृहि शब्दे च । 'बृहितं करिगर्जितम्' । बृहिर् इत्येके । अबृहत् । अबर्हीत् । ७३७ तुहिर् ७३८ दुहिर् ७३९ उहिर् अर्दने । तोहति। तुतोह । अतुहत् । अतोहीत् । दोहति । दुदोह । अदुहत् । अदोहीत् । अनिङ्कारिकास्वस्य दुहेर्ग्रहणं नेच्छन्ति । ओहति । उवोह । ऊहतुः । ओहिता । माभवानुहत् । औहीत् । ७४० अर्ह पूजायाम् । आनर्ह । अथ कृपूपर्यन्ता अनुदात्तेतः । ७४१ द्युत दीप्तौ । द्योतते । **द्युतिस्वाप्योः संप्रसारणम्** ।७।४।६७। अनयोरभ्यासस्य संप्रसारणं स्यात् । दिद्युते । दिद्युताते । द्योतिता । **द्युद्भ्यो लुङि** ।१।३।९१। द्युतादिभ्यो लुङः परस्मैपदं वा स्यात् । पुषादिसूत्रेण परस्मैपदेऽङ् । अद्युतत् । अद्योतिष्ट । ७४२ श्विता वर्णे । श्वेतते । शिश्विते । अश्वितत् । अश्वेतिष्ट । ७४३ ञिमिदा

---

त.]यमेकीयमतेन पठितः। नेच्छन्तीति।व्याख्यानमेवात्रावलम्बनम् । **माभवानुहदिति** । 'न माङ्योगे' इत्याडभावः। 'इरितो वे'त्यङ्वा । **अथ द्युतादिः** । **द्युत दीप्तौ** । **द्युतिस्वाप्योः** । 'स्वापी'ति णिजन्तस्य ग्रहणम् । **दिद्युते इति** । संप्रसारणे कृते 'संप्रसारणाच्चे'ति पूर्वरूपम् । स्वापेरुदाहरणं तु-सुष्वापयिषति । इह स्वापेर्णिजन्तस्याऽभ्यासनिमित्तप्रत्ययेनानन्तर्यें सति संप्रसारणमिष्यते । तेनेह न-स्वापेर्ण्वुल् स्वापकः, तमिच्छति स्वापकीयति, ततः सन्-सिस्वापकीयिषति । **द्युद्भ्यो लुङि** । बहुवचननिर्देशाच्छौण्डैरित्यत्रेव तदादिग्रहणम् । तदाह-**द्युतादिभ्य इति** । द्युतादयो 'घट चेष्टाया'मित्यवधिकाः। 'ङः सी'त्यत्रेव लुङीति सप्तम्याः षष्ठ्यर्थतेत्यभिप्रेत्याह-**लुङः परस्मैपदमिति** ।

---

बा.]**प्रणेशतीति** । 'शसु हिंसाया'मित्यतः प्राक् शकारान्ताः। शवतिस्तु वान्तः। **शंस्विति** । नोपधः । कृतानुस्वारस्य निर्देशः । **'चह परिकल्कने'** इत्यारभ्य **अर्हति**पर्यन्ता हकारान्ताः । **रह त्यागे इति** । नाऽयमिदित् । **रहि गताविति** । अयमिदित् । **दृह दृहीति** । ऋदुपधा एते । द्वितीयचतुर्थाविदितौ । **अबृहत्** । **अबर्हीदिति** । इरित्वादङ्विकल्प इति भावः । **उवोहेति** । उहिधातोर्लिटि द्वित्वे हलादिशेषे पुगन्तलक्षणे गुणे 'अभ्यासस्यासवर्णे' इत्युवङ् । **मा भवानुहदिति** । इरित्वादङि रूपम् । **औहीदिति** । अङभावपक्षे च्लेः सिचि तस्य इटि 'अस्तिसिचः' इति तकारस्य ईटि 'इट ईटी'ति सिचो लोपे 'आडजादीना'मिति आटि वृद्धिः । माङ्योगे तु मा भवानुहीत् । **आनर्हेति** । 'अत आदेः' इति दीर्घे नुट् । **कृपूपर्यन्ता इति** । 'द्युते'त्यारभ्य कृपूपर्यन्ता इत्यर्थः। **द्युतिस्वाप्योः अभ्यासस्येति** । 'अत्र लोपोऽभ्यासस्ये'त्यतस्तदनुवृत्तेरिति भावः । **दिद्युते इति** । द्वित्वे 'हलादिः शेषः' इत्यनेन यकारस्य लोपे प्राप्ते तदपवादत्वेन 'द्युतिस्वाप्यो'रिति संप्रसारणे, 'संप्रसारणाच्चे'ति उकारस्य पूर्वरूपे रूपम् । **द्युद्भ्यो लुङि**। बहुवचनात् द्युतादिभ्य इति गम्यते । दिग्योगे पञ्चमी । 'तस्मादित्युत्तरस्ये'ति परिभाषया परस्येति लभ्यते । 'शेषात्कर्तरी'त्यतः परस्मैपदमित्यनुवर्तते । तदाह—**द्युतादिभ्य इति** । **परस्मैपदे अङिति** । आत्मनेपदपक्षे सिजेव नत्वङ्, पुषादिसूत्रे परस्मैपदग्रहणादिति भावः । तदाह—**अद्योतिष्टेति** । **श्विता वर्णे इति** । श्वेतवर्णकरणे, श्वेतीभवने वेत्यर्थः । **अश्वितदिति** । द्युतादित्वादङ् । **अश्वेतिष्टेति** । आत्मनेपदपक्षे रूपम् । एवमग्रेऽपि द्युतादौ लुङि रूपभेदो ज्ञेयः । **ञि मिदा स्नेहने इति** । ञिरित् 'ञीतः क्तः'इत्येतदर्थः । 'मिमिदे'इत्यत्र लिटः'असंयोगा'-

---

शे.]सूत्रे 'अतो लृ'त्यत्र वकारप्रश्लेष उक्तस्तथापि पूर्वपक्षत्वात्तस्य सिद्धान्ते प्रश्लेषे मानाऽभावेनाऽत्र विभाषा वृद्धिरिति भावः । **मह पूजायाम्** । अयं दाने इति 'दाश्वा'निति सूत्रे भाष्यम् । **द्युतिस्वाप्योः** । प्रत्यासत्त्याऽङ्गाभ्यासयोरेकनिमित्तत्वे एवाऽस्य प्रवृत्त्या 'दुद्योतकीयिषती'त्यादौ सम्प्रसारणाऽभावः । 'व्यदिद्युत'दित्यत्र द्युश्च इश्चेति समाहारद्वन्द्वगर्भद्वन्द्वाश्रयणेन न दोषः । इकारेणोपस्थितद्युतेरेवेकारान्तस्य ग्रहणम्, इकारश्च णिच एव, स्वापिसाहचर्यादिति **वृत्त्यनुसारिणः** । 'अत्र मानाऽभावात् द्युतेर्ण्यन्ताच्चङि संप्रसारणं न भवत्येवे'ति **भाष्यानुसारिणः** । स्वापिर्न नामधातुः, द्युतिसाहचर्यात् । न चाऽभ्यासस्य प्रकृतिभूतद्युतिस्वाप्योः प्रत्यासत्त्याऽभ्यासनिमित्तप्रत्ययान्तयोः संप्रसारणमित्यर्थे नोक्तदोषप्राप्तिः । स्पष्टा चेयं रीतिः 'हः संप्रसारण'मिति सूत्रे भाष्ये इत्यङ्गाधिकारपाठो व्यर्थ इति वाच्यम्, अभ्यासस्य संप्रसारणलाभाऽनापत्तेः। अभ्यासस्येत्यनुवृत्त्यर्थं तत्र पाठाच्च । अशोकवनिकान्यायाच्च । एतेनाऽभ्यासाक्षिप्तप्रत्ययस्य प्रकृत्याकाङ्क्षायामुपात्तधातोरेव ग्रहणेनाऽभ्यासनिमित्तप्रत्ययप्रकृतिभूतद्युतेः संप्रसारणमित्यर्थेन नाऽङ्गाधिकारे एतत्सूत्रपाठे फलमिति परास्तम् । किं चाभ्यासस्योत्पत्तौ प्रत्ययापेक्षत्वेऽपि ज्ञाने तदपेक्षत्वाऽभावेन शास्त्रे तदाक्षेपे मानाऽभावः। अत एव 'अभिषिषेचनीयिषती'त्यत्र 'स्थादिषु'इति·षत्वं भवत्येवेति दिक् ।

**द्युद्भ्यो लुङि**। बहुवचनादाद्यर्थावगतिः । षष्ठ्यर्थे लुङीति सप्तमी। तदाह-**द्युतादिभ्य इति** ।

स्नेहने। मेदते। **मिदेर्गुणः** ।७।३।८२। मिदेरिको गुणः स्यादित्संज्ञकशकारादौ प्रत्यये। एश आदिशित्त्वाऽभावान्नानेन गुणः। मिमिदे। अमिदत्। अमेदिष्ट। **७४४ ञिष्विदा स्नेहनमोचनयोः**। मोहनयोरित्येके। स्वेदते। सिष्विदे। अस्विदत्। अस्वेदिष्ट। **ञिक्ष्विदा** चेत्येके। अक्ष्विदत्। अक्ष्वेदिष्ट। **७४५ रुच दीप्तावभिप्रीतौ च**। रोचते सूर्यः। हरये रोचते भक्तिः। अरुचत्। अरोचिष्ट। **७४६ घुट परिवर्तने**। घोटते। जुघुटे। अघुटत्। अघोटिष्ट। **७४७ रुट ७४८ लुट ७४९ लुठ प्रतिघाते**। अरुटत्। अरोटिष्ट। **७५० शुभ दीप्तौ**। **७५१ क्षुभ संचलने**। **७५२ णभ ७५३ तुभ हिंसायाम्**। आद्योऽभावेऽपि। 'नभन्तामन्यके समे'। 'मा भूवन्नन्यके सर्वे' इति निरुक्तम्। अनभत्। अनभिष्ट। अतुभत्। अतोभिष्ट। इमौ दिवादी क्र्यादी च। **७५४ स्रंसु ७५५ ध्वंसु ७५५ भ्रंसु अवस्रंसने**। ध्वंसु गतौ च। अङि नलोपः। अस्रसत्। अस्रंसिष्ट। 'नास्रसत्करिणां ग्रैव'मिति रघुकाव्ये। भ्रंशु इत्यपि केचित्पेठुः। अत्र तृतीय एव तालव्यान्त इत्यन्ये। भ्रशु भ्रंशु अधःपतन इति दिवादौ। **७५७ स्रम्भु विश्वासे**। अस्रभत्। अस्रम्भिष्ट। दन्त्यादिरयम्। तालव्यादिस्तु प्रमादे गतः। **७५८ वृतु वर्तने**। **वृद्भ्यः स्यसनोः** ।१।३।९२। वृतादिभ्यः परस्मैपदं वा स्यात्स्ये सनि च। **न वृद्भ्यश्चतुर्भ्यः** ।७।२।५९। एभ्यः सकारादेरार्द्धधातुकस्येण्न स्यात्तङानयोरभावे। वर्त्स्यति।

---

त.]**ञिमिदा**। **मिदेर्गुणः**।'ष्ठिवुक्लमुचमा'मित्यतः शितीत्यनुवर्तते। तत्र शश्चासौ इच्चेति कर्मधारयात्सप्तमी। अङ्गाक्षिप्तप्रत्ययस्तु विशेष्यः। तेन 'यस्मिन्विधि'रिति तदादिविधिः प्रवर्तते। तदाह–**इत्संज्ञकशकारादाविति**। **आदिशित्त्वाभावादिति**। मेद्यति मेद्यत इत्यादौ तु 'दिवादिभ्य' इति श्यन आदिशित्त्वाद्गुणो भवत्येव। **मिमिदे इति**। 'शिती'ति बहुव्रीहौ त्विह स्यादेव गुणः। तथा पपे तस्थे इत्यादौ पिबादयोऽपि स्युरिति भावः। **ञिष्विदा**। अनिड्कारिकायां स्विद्यतिरिति श्यना निर्देशादयं सेट्। स्वेदिता। स्वेदिष्यते। **ञिक्ष्विदा चेति**। पूर्वोक्तयोरेवार्थयोरयमिति बोध्यम्। **हरये इति**। 'रुच्यर्थाना'मिति संप्रदानसंज्ञायां चतुर्थी। **घुट**। **परिवर्तनम्**–इतस्ततो भ्रमणम्। **जुघुटे इति**। 'असंयोगा'दिति कित्त्वाद्गुणाऽभावः। **क्षुभ**। **संचलनं**–प्रकृतिविपर्यासो, मन्थनं च। क्षोभते। 'क्षुभ्यती'ति दिवादौ। 'क्षुभ्नाती'ति क्र्यादौ। **नास्रसदिति**। 'नास्रंस'दित्यपपाठ एव। न चेदं लङो रूपं, तत्र परस्मैपदाऽसंभवादिति भावः। **वृद्भ्यः**। वृतादयः पञ्च। **न वृद्भ्यः**। गणकार्यत्वादुभयोर्यङ्लुक्यप्रवृत्तिः। वर्वर्तिष्यति। वर्वर्तिषति। चतुर्ग्रहणफलं तु मूले एव स्फुटीभविष्यति। 'सेऽसिची'ति सूत्रात्से इत्यनुवर्तते। तदाह–**सकारादेरिति**। **इण् न स्यादिति**। स्यन्देरूदित्त्वाद्विकल्पे प्राप्ते, इतरेषां नित्यमिटि प्राप्ते निषेधोऽयम्। **तङानयोरिति**। जिगमिषिता।

---

बा.]दिति कित्त्वेऽपि गुणं शङ्कितुमाह–**मिदेर्गुणः**।'मिदे'रित्यवयवषष्ठी। गुणश्रुत्या 'इको गुणवृद्धी' इति परिभाषया इक इत्युपतिष्ठते, 'ष्ठिवुक्लमुचमां शिति' इत्यतः शितीत्यनुवर्तते। श् चासाविच्चेति कर्मधारयः। तेन च अधिकृताऽङ्गाक्षिप्तः प्रत्ययो विशेष्यते। तदादिविधिः। इत्संज्ञकशकारादौ प्रत्यये परे इति लभ्यते। तदाह–**मिदेरित्यादिना**। दैवादिकमिदेः श्यनि मेद्यते इत्याद्युदाहरणम्। श् इत् यस्येति बहुव्रीहिमाश्रित्य शिति प्रत्यये परे मिदेरिको गुण इत्येव कुतो न व्याख्यायत इत्याशङ्क्य मिमिदे इत्यत्र गुणाऽभावार्थमित्संज्ञकशकारादाविति व्याख्येयमित्यभिप्रेत्याह–**एश आदिशित्त्वाभावादिति**। **ञिष्विदेति**। षोपदेशोऽयम्। अनिट्सु स्विद्येति श्यन्विकरणस्यैव ग्रहणादयं सेट्। **रुच दीप्तावभिप्रीतौ चेति**। **अभिप्रीतिः**–प्रीतिविषयीभवनम्। दीप्तौ उदाहरति–**रोचते सूर्य इति**। प्रकाशत इत्यर्थः। अभिप्रीतौ उदाहरति–**हरये रोचते भक्तिरिति**। भक्तिर्हर्याश्रितप्रीतिविषयो भवतीत्यर्थः। 'रुच्यर्थाना'मिति संप्रदानत्वाच्चतुर्थी। **क्षुभ संचलने इति**। क्षोभते। क्षुभ्यतीति दिवादौ। क्षुभ्नातीति क्र्यादौ। **णभ** धातुर्णोपदेशः। नभते। **आद्योऽभावे चेति**। चात्संचलनेऽपि। तत्र अभावार्थकस्य प्रयोगं दर्शयति–**नभन्तामन्यके समे इति**। मन्त्रोऽयम्। नन्वत्र मन्त्रे णभेर्हिंसार्थकत्वमेव कुतो न स्यादित्यत आह–**मा भूवन्नन्यके सर्वे इति**। 'नभन्ता'–मित्यस्य विवरणं–**मा भूवन्निति**। न भवन्तीत्यर्थः। **'समे'**इत्यस्य विवरणं–**सर्वे** इति। **निरुक्तमिति**।वेदव्याख्यानात्मको यास्कप्रणीतो ग्रन्थविशेषो निरुक्तम्। **स्रंसु ध्वंसु भ्रंसु इति**। त्रयो नोपधाः कृतानुस्वारनिर्देशाः। **ध्वंसु गतौ चेति**। चादवस्रंसनेऽपि। **अस्रसदिति**। द्युतादित्वात्परस्मैपदे अङि नलोप इति भावः। **नास्रसदिति**। 'नास्रंस'दित्यपपाठः। नचाऽस्रंसदिति लङो रूपमिति भ्रमितव्यं, तत्र परस्मैपदाऽसंभवात्। स्रम्भुधातुरकारमध्यः। **वृतु वर्तने इति**। उदित् ऋदुपधः सेट्कः। **वर्तते इति**। शपि गुणे रपरत्वम्। **ववृते इति**। 'असंयोगा'दिति कित्त्वाद्गुणाऽभावे द्वित्वे उरदत्वे रपरत्वे हलादिशेषे रूपम्। लुटि–वर्तिता। **वृद्भ्यः**। बहुवचनाद्वृतादिभ्य इति गम्यते। 'शेषात्कर्तरी'त्यतः परस्मैपदमित्यनुवर्तते, 'वा क्यषः' इत्यतो वेति च। तदाह–**वृतादिभ्य इति**। **न वृद्भ्यः**।

---

शे.] **वृद्भ्यः स्य**। प्रतिप्रसवविधिरयम्।

वर्तिष्यते । अवृतत् । अवर्तिष्ट । अवर्त्स्यत् । अवर्तिष्यत । ७५९ वृधु वृद्धौ । ७६० शृधु शब्दकुत्सायाम् । इमौ वृतिवत् । ७६१ स्यन्दू प्रस्रवणे । स्यन्दते । सस्यन्दे । सस्यन्दिषे । सस्यन्त्से । सस्यन्दिध्वे । सस्यन्द्ध्वे । स्यन्दिता । स्यन्ता । 'वृद्भ्यः स्यसनो'रिति परस्मैपदे कृते ऊदित्लक्षणमन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहण-सामर्थ्यात् 'न वृद्भ्यः'इति निषेधः । स्यन्त्स्यति । स्यन्दिष्यते । स्यन्त्स्यते । स्यन्दिषीष्ट । स्यन्त्सीष्ट । 'द्युद्भ्यो लुङी'ति परस्मैपदपक्षेऽङ् । नलोपः । अस्यदत् । अस्यन्दिष्ट । अस्यन्त । अन्त्यन्त्सातात्म् । अस्यन्त्सत । अस्य-न्त्स्यत् । अस्यन्दिष्यत । अस्यन्त्स्यत । **अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ।८।३।७२।** एभ्यः परस्या-

---

त.] जिगमिषितारावित्यादौ तृचि परतः सन इडागमसिद्धये 'गमेरिट् परस्मैपदेषु' इत्यत्र परस्मैपदग्रहणं तङानयोरभावं लक्षयतीत्यभ्युपगम्यते । तच्चात्रापि तथैवानुवर्तते, अर्थाधिकाराश्रयणात् । तेन परस्मैपदाऽभावेऽपि तृचि विवृत्सितारा-वित्यत्र 'अतो हे'रिति हेर्लुकि 'त्वं विवृत्से'त्यत्र च सन इण्निषेधः सिध्यतीति भावः। अत्र भाष्यवार्तिकयोर्वृतादीनामात्मने-पदेन समानपदस्थस्यैवेड्वचनादन्यत्र निषेध इति स्थितम् । तेन विवर्तिषते विवर्द्धिषते इत्यादाविड्भवति । विवृत्सितेवाचरति विवृत्सित्रीयते इत्यत्र त्वात्मनेपदोत्पत्तेः पूर्वं तत्समानपदस्थत्वाऽभावादन्तरङ्गोऽयं निषेधः प्रवर्तते । स च पश्चात्तङि कृतेऽपि न निवर्तते, चतुर्ग्रहणसामर्थ्यादिति । अत्र व्याचख्युः-'पञ्चभ्य' इति वक्तुमुचितम् । [एवं च] 'तासि चे'त्येव सूत्रं कर्तव्यम् । न च वृतादिष्वतिव्याप्तिः, तङानयोः सत्त्वादिति । **अस्यन्तेति** । अत्र 'अनिदिता'मिति नलोपो न

---

बा.] सेऽसिचीति सूत्रात्से इति, आर्द्धधातुकस्येडिति चानुवर्तते । तदाह-**पञ्चभ्यः सकारादेरिति। तङानयोरभावे इति** । 'गमेरि'डित्यतः परस्मैपदेष्वित्यनुवृत्तम् । तेन च तङानयोरभावो लक्ष्यते, व्याख्यानादिति भावः । तेन 'जिग-मिषिते'त्यत्र गमेः सन्नन्तात्तृचि इट् सिध्यति, वृतेः सन्नन्ताद्धेर्लुकि विवृत्सेत्यत्र इण्निषेधश्च सिध्यति । **वत्स्र्यतीति** । लृटि स्यः । 'वृद्भ्यः स्यसनो'रिति परस्मैपदविकल्पः । 'न वृद्भ्यः' इति इण्निषेधः । गुणः । रपरत्वम् । परस्मैपदाऽभावे त्वाह-**वर्तिष्यते इति** । 'तङानयोरभावे' इत्युक्तेः 'न वृद्भ्यः' इति इण्निषेधो न । **अवर्तिष्टेति** । परस्मैपदस्य अङ्श्चाऽभावे रूपम् । **अवर्त्स्यदिति** । लृङि स्यः । 'वृद्भ्यः स्यसनो'रिति परस्मैपदम् । 'न वृद्भ्यः' इति इण्निषेधः, गुणः, रपरत्वमिति भावः । **अवर्तिष्यतेति** । परस्मैपदस्याऽभावे 'न वृद्भ्य' इति इण्निषेधोऽपि नेति भावः। **वृधु शृधु** इति द्वौ ऋदुपधौ । तत्रापि 'द्युद्भ्यो लुङि' इति परस्मैपदपक्षे द्युतादित्लक्षणोऽङ् । लृट्लृङोः 'वृद्भ्यः स्यसनोः' इति परस्मैपदपक्षे 'न वृद्भ्यः' इति इण्निषेधश्च । तदाह-**इमौ वृतुवदिति** । वर्त्स्यति-वर्धिष्यते । अवृ-धत्-अवर्धिष्ट । अवर्त्स्यत्-अवर्धिष्यत । शर्त्स्यति-शर्धिष्यते । अशृधत्-अशर्धिष्ट । अशर्त्स्यत्-अशर्धिष्यत । **स्यन्दू-** धातुः ऊदित् ,नकारोपधः कृतानुस्वारपरसवर्णनिर्देशः । **सस्यन्दिषे सस्यन्त्से इति** । इडभावे दस्य चर्त्वेन तः । **सस्यन्दिद्ध्वे सस्यन्द्ध्वे इति** । इडभावे धकारात् प्राग् दकारः । खर्परकत्वाऽभावान्न चर्त्वम् । **स्यन्दितास्यन्त्तेति**। इडभावे दस्य चर्त्वम् । ननु लृटि स्ये सति 'वृद्भ्यः स्यसनो'रिति परस्मैपदपक्षे परत्वादूदित्लक्षणमिड्विकल्पं बाधित्वा 'न वृद्भ्यश्चतुर्भ्यः' इति इण्निषेधे स्यन्त्स्यतीत्येव रूपमिष्यते, नतु स्यन्दिष्यति इति । तदयुक्तम् , अन्तरङ्गतया ऊदित्ल-क्षणस्यैव इड्विकल्पस्य उचितत्वात् ,सकारादिविशेषापेक्षतया तङानाभावनिमित्तापेक्षतया च 'न वृद्भ्यः' इति निषेधस्य बहिरङ्गत्वादित्याशङ्क्य निराकरोति-**वृद्भ्य इति** । 'वृद्भ्यः स्यसनो'रिति परस्मैपदे कृते अन्तरङ्गमपि विकल्पं बाधित्वा 'न वृद्भ्य' इति निषेध इत्यन्वयः । कुत इत्यत आह-**चतुर्ग्रहणसामर्थ्यादिति** । यदि ह्यत्र ऊदित्लक्षण इड्विकल्प एव स्यात्तु 'न वृद्भ्यश्चतुर्भ्यः' इति निषेधस्तर्हि 'चतुर्भ्यः' इति व्यर्थं स्यात् । नच कृपूव्यावृत्तिस्तत्फलमिति शङ्क्यं, 'तासि च क्लृपः' इति चकारेण सकाराद्यार्द्धधातुकेऽपि नित्यमिण्निषेधप्रवृत्तेर्वक्ष्यमाणत्वात् । तथा च चतुर्ग्रहणं चतु-र्णामपि सर्वत्र इण्निषेधार्थमिति भावः। भाष्ये तु 'निषेधाश्च बलीयांसः' इति न्यायेन अन्तरङ्गस्यापि ऊदित्लक्षणेड्विकल्पस्य 'न वृद्भ्यः' इति निषेधेन बाधसिद्धेश्चतुर्ग्रहणं प्रत्याख्यातम् । तथा च लृटि परस्मैपदपक्षे ऊदित्लक्षणमिड्विकल्पं बाधित्वा 'न वृद्भ्यः' इति नित्यमिण्निषेधे स्यन्त्स्यतीत्येकमेव रूपमिति स्थितम् । आत्मनेपदपक्षे तु ऊदित्त्वादिड्विकल्पं मत्वाह-**स्यन्दिष्यते स्यन्त्स्यते इति** । इडभावे दस्य चर्त्वम् । आशीर्लिङि सीयुटि ऊदित्त्वादिड्विकल्पं मत्वा आह-**स्यन्दिषीष्ट स्यन्त्सीष्टेति** । 'न वृद्भ्यः' इति निषेधस्तु न, तङानयोरभाव एव तत्प्रवृत्तेरिति भावः । लुङि विशेष-माह-**द्युद्भ्यो लुङीत्यादिना । अङिति** । 'द्युतादित्लक्षणे' इति शेषः । **नलोप इति** । 'अनिदितामित्यनेने'ति शेषः । आत्मनेपदपक्षे तु अङभावादूदित्लक्षणमिड्विकल्पं मत्वा आह-**अस्यन्दिष्ट अस्यन्त्तेति** । तत्र इडभावपक्षे

---

शे.] **अन्तरङ्गमपीति** । सकारादिविशेषापेक्षत्वादात्मनेपदनिमित्तत्वाऽभावनिमित्तत्वाच्च निषेधस्य बहिरङ्गत्व-मित्यभिमानः। **चतुर्ग्रहणसामर्थ्यादिति** । तेन हि सर्वेषु प्रत्येकं निषेधव्यापारो ध्वन्यते। अन्यथा 'न वृद्भ्यः' इत्येतावतैव सिद्धौ तद्वैयर्थ्यं स्पष्टमेव । कृपिव्यावृत्तिस्तु न फलं, 'तासि चे'ति चकारेण सार्वधातुके तस्यापि

ऽप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा स्यात्। अनुष्यन्दते अनुस्यन्दते वा जलम्। अप्राणिषु किम्?। अनुस्यन्दते हस्ती। 'अप्राणिष्वि'ति पर्युदासान्मत्स्योदके अनुष्यन्देते इत्यत्रापि पक्षे षत्वं भवत्येव। 'प्राणिषु ने'त्युक्तौ तु न स्यात्। **७६२ कृपू सामर्थ्ये । कृपो रो लः** ।८।२।१८। 'कृप-उ'-[रः लः] इति च्छेदः। 'कृपे'ति लुप्तषष्ठीकम्। तच्चावर्तते। कृपो यो रेफस्तस्य लः स्यात्। कृपेर्ऋकारस्यावयवो यो रो=रेफसदृशस्तस्य च लकारसदृशः स्यात्। कल्पते। चक्लृपे। चक्लृपिषे। चक्लृप्से इत्यादि स्यन्दिवत्। **लुटि च क्लृपः** ।१।३।९३। लुटि स्यसनोश्च क्लृपेः परस्मैपदं वा स्यात्। **तासि च क्लृपः** ।७।२।६०। क्लृपेः परस्य

त.]भवति, सिज्लोपस्याऽसिद्धत्वेनानुपधात्वात्। **अनुविपर्यभिनिभ्यः। पभ्य इति** । पञ्चभ्य इत्यर्थः। **षत्वं भवत्येवेति** । प्राण्यप्राणिकर्तृकस्याऽप्यप्राणिकर्तृकत्वामपायादिति भावः। असमर्थसमास-वाक्यभेदापत्तिदोषाभ्यां प्रसज्यप्रतिषेधो न सूत्रेऽभिप्रेत इत्याशयेनाह-**प्राणिषु नेत्युक्ताविति** । कृपू सामर्थ्ये। भाष्यकृतां व्याख्यामाह-**कृप उ इति** । 'कृपे रो लः' इत्यर्वाचीनपाठस्तु नादर्तव्य इति ध्वनयति-**कृपेर्ऋकारस्येत्यादिना** । वर्णैकदेशस्य वर्णग्रहणेन ग्रहणादाह-**रेफसदृश इति** । एवं चात्र कृपेत्यस्यावृत्तिरवश्यं स्वीकर्तव्या। तथा च 'लुटि च क्लृपः' इत्यादिसौत्रनिर्देशोऽ-

बा.]अस्यन्द् स् त इति स्थिते 'झलो झली'ति सलोपे दस्य चर्त्वम्। नचाऽपित्त्वेन ङित्त्वात् 'अनिदिता'मिति नलोपः शङ्क्यः, सिज्लोपस्याऽसिद्धत्वेनाऽनुपधात्वादिति भाव। **अस्यन्त्सातामस्यन्त्सतेति**। अस्यन्त्थाः, अस्यन्त्साथाम्। अस्यन्द्ध्वम्। अस्यन्त्सि अस्यन्त्स्वहि अस्यन्त्स्महि। अस्यन्त्स्यत्-अस्यन्त्स्यत-अस्यन्दिष्यत। **अनुविपर्यभिनि। पभ्य इति** । अनु वि परि अभि नि इत्येतेभ्य इत्यर्थः। **सस्येति**। 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तस्यानुवृत्तेरिति भावः। **षो वा स्यादिति**। 'अपदान्तस्य मूर्धन्यः' इत्यधिकारादिति भावः। ननु 'मत्स्योदके अनुष्यन्देते' इत्यत्र कथं षत्वं, प्राणिकर्तृकत्वस्यापि सत्त्वादित्यत आह-**अप्राणिष्विति पर्युदासादिति**। 'प्राणिकर्तृकस्य ने'ति न प्रतिषेधः, येनात्र प्राणिकर्तृकत्वस्यापि सत्त्वात् षत्वं न स्यात्। किन्तु प्राणिभिन्नकर्तृकस्येति पर्युदास आश्रीयते। एवंच प्राण्यप्राणिकर्तृकस्यापि अप्राणिकर्तृकत्वाऽनपायादिह षत्वं निर्बाधमिति भावः। **कृपू सामर्थ्ये इति** । **सामर्थ्यं**-कार्यक्षमीभवनम्। ऊदित्त्वादिड्विकल्पोऽयम्। ऋदुपधः। तङि प्रथमपुरुषैकवचनस्य टेरेत्वे शपि लघूपधगुणे रपरत्वे कर्पते इति स्थिते-**कृपो रो लः** । 'कृप' इति लुप्तविभक्तिकम्। षष्ठ्येकवचने उदिति ऋकारस्य रूपम्। अवयवषष्ठी। कृप उरिति स्थिते आद्गुणे कृपोरिति भवति। 'र' इति षष्ठ्यन्तम्। कृपोर् रः इति स्थिते 'रो री'ति रेफलोपे 'कृपो रः' इति भवति। 'ल' इति प्रथमान्तम्। अकार उच्चारणार्थः। तदाह-**कृप उः [रः ल] इति च्छेद इति**। एतच्च ऋलृक्सूत्रभाष्ये स्थितम्। ननु कृपेत्यत्र का विभक्तिरित्यत आह-**लुप्तषष्ठीकमिति** । पकारादकार उच्चारणार्थः। कृप्धातोरिति लभ्यते। **तच्चावर्तते इति** । कृप रः लः इति पदत्रयमावर्तत इत्यर्थः। तथाच वाक्यद्वयं संपद्यते-'कृप रः लः' इत्येकं वाक्यम्। तदाह-**कृपो यो रेफस्तस्य लः स्यादिति** । तथाच 'कल्पते' इति भवति। 'कृप उः रः लः' इति द्वितीयं वाक्यम्। तत्र कृपेत्यवयवषष्ठ्यन्तम्-उरित्यत्रान्वेति। उरित्यवयवषष्ठ्यन्तं रेफे अन्वेति। तथाच कृप्धातोरवयवो य ऋकारस्तस्य यो रेफस्तस्य लकारः स्यादिति लभ्यते। तत्र ऋकारावयवत्वं रेफस्य न संभवतीति रेफशब्दो रेफसदृशे ऋकारांशे लाक्षणिकः। ल इत्यपि लकारसदृशे लकारांशे लाक्षणिकः। तदाह-**कृपेर्ऋकारस्यावयव इत्यादिना** । एवं च लिटि चकृप् ए इति स्थिते किरवाद्गुणाऽभावे ऋकारैकदेशस्य रेफसदृशस्य लकारसदृशे सति 'चक्लृपे' इति रूपम्। 'कृपः रः लः' इति च्छेदमभ्युपगम्य कृपधातो रेफस्य लकार इति व्याख्याने तु 'चक्लृपे' इति न सिध्येत्। तदर्थमावृत्तिराश्रितेत्यभिप्रेत्याह-**कल्पते चक्लृपे इति** । ऊदित्वादिड्विकल्पं मत्वा आह-**चक्लृपिषे चक्लृप्से इति** । **स्यन्दिवदिति** । चक्लृपाथे चक्लृपिध्वे-चक्लृब्ध्वे। चक्लृपे चक्लृपिवहे-चक्लृप्वहे, चक्लृपिमहे-चक्लृप्महे।

**लुटि च क्लृपः** । चकारात् 'वृद्भ्यः स्यसनो'रित्यतः स्यसनोरित्यनुकृष्यते, 'शेषात्कर्तरी'त्यतः परस्मैपदमिति, 'वा क्यषः' इत्यतो वेति च। तदाह-**लुटि स्यसनोरित्यादिना** । **तासि च** । चकारात्सकारादार्द्धधातुकं गृह्यते। 'सेऽसिचि कृत' इत्यतः 'से' इति, 'आर्द्धधातुकस्ये'त्यत आर्द्धधातुकस्येडिति चानुवर्तते। 'न वृद्भ्यश्चतुर्भ्यः' इत्यतो नेति च, 'गमेरि'डित्यतः परस्मैपदमिति च। तदाह-**क्लृपेःपरस्येत्यादिना। कल्प्तासीति**। 'लुटि च क्लृप' इति परस्मै-

शो.]निषेधसत्त्वात्। वृत्करणेन वृतादेरिवद्युतादेरपि समाप्तिर्बोधयितुं शक्या। अत एव 'वृद्भ्यः स्यसनो'रिति सूत्रं सङ्गच्छते। 'न वृद्भ्यः' इति वचनन्तु 'येननाप्राप्ति'न्यायेनार्द्धधातुकलक्षणेड्बाधेन चरितार्थम्। क्लृपेस्तु 'तासि चे'ति सूत्रारम्भसामर्थ्यादेव विकल्पो नेति भावः। वस्तुतश्चतुर्भ्य इति व्यर्थम्। 'निषेधाश्च बलीयांसः' इति न्यायेनान्तरङ्गाणामपि बाधसिद्धेः, वृतादिभ्यो यद्यत्प्राप्तन्तन्नेति वचनव्यक्त्या सर्वेण्णिषेधाच्च। अत एव 'चतुर्भ्य' इत्यस्य प्रत्याख्यानं भाष्योक्तं सङ्गच्छते। किं च बहिर्भूतशब्दनिमित्तकस्यैव बहिरङ्गत्वमिति परत्वेनापि तद्बाधोऽनेनेति दिक्। **उ इति च्छेद इति** । स्पष्टं चेदं

तासेः सकारादेरार्द्धधातुकस्य चेण्न स्यात्तङानयोरभावे । कल्प्तासि । कल्प्तास्थः । कल्पितासे । कल्प्तासे । कल्प्स्यति । कल्पिष्यते । कल्प्स्यते । कल्पिषीष्ट । क्लृप्सीष्ट । अक्लृपत् । अकल्पिष्ट । अक्लृप्त । अकल्प्स्यत् । अकल्पिष्यत । अकल्प्स्यत । (ग.) वृत् । वृत्तः=संपूर्णो द्युतादिर्वृतादिश्चेत्यर्थः ।

**अथ त्वरत्यन्तास्त्रयोदशानुदात्तेतः षितश्च** । ७६३ **घट चेष्टायाम्** । घटते । 'घटादयो मित' इति वक्ष्यमाणेन मित्संज्ञा । तत्फलं तु णौ 'मितां ह्रस्वः' इति, 'चिण्णमुलोर्दीर्घोऽन्यतरस्या'मिति च वक्ष्यते । घटयति। विघटयति। कथं तर्हि 'कमलवनोद्घाटनं कुर्वते ये'।'प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिवे'-त्यादि ? । शृणु । घट सङ्घात इति चौरादिकस्येदम् । न च तस्यैवार्थविशेषे मित्त्वार्थमनुवादोऽयमिति वाच्यं,

त.]प्युपपद्यत इति भावः। **तासि च क्लृपः** । चकारात्सार्वार्द्धधातुकं गृह्यते । **क्लृप्सीष्टेति** । 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वान्न गुणः । **वृदिति** । वृतु वर्तने इत्यस्मात्क्विप् । 'ञित्वरा संभ्रमे' इत्यस्यानन्तरं 'घटादयः षितः' इत्युक्तत्वात्त्वरत्यन्तास्त्रयोदशैव षितो न तु फणान्ताः सर्वेऽपीति सिद्धं, तथापि स्पष्टप्रतिपत्त्यर्थमाह-**षितश्चेति** । प्रयोजनं तु 'षिद्भिदादिभ्यः' इत्यङि टाप् । घटा व्यथेत्यादिरूपसिद्धिः। **घट चेष्टायाम्** । ये धातवोऽन्यत्राधीतास्तेषामिह पाठेऽर्थ-

बा.]पदपक्षे ऊदिल्लक्षणमिड्विकल्पं बाधित्वा 'तासि च क्लृपः' इति इण्निषेधे गुणे रपरत्वे लत्वे रूपम् । परस्मैपदाऽभावपक्षे तु ऊदिल्लक्षणमिड्विकल्पं मत्वा आह-**कल्पितासे कल्प्तासे इति** । लृटि तु 'लुटि च क्लृपः' इति परस्मैपदपक्षे ऊदिल्लक्षणमिड्विकल्पं बाधित्वा 'तासि च क्लृपः' इति इण्निषेधं मत्वा आह-**कल्प्स्यतीति** । परस्मैपदाऽभावे तु ऊदित्वादिड्विकल्पं मत्वा आह-**कल्पिष्यते कल्प्स्यत इति** । कल्पताम् । अकल्पत । कल्पेत । आशीर्लिङि ऊदिल्लक्षणमिड्विकल्पं मत्वा आह-**कल्पिषीष्टेति, क्लृप्सीष्टेति च** । इडभावे 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वान्न गुणः ।

**अक्लृपदिति**। 'द्युद्भ्यो लुङी'ति परस्मैपदपक्षे द्युतादिलक्षणे अङि सति ङित्त्वान्न गुणः। अङभावे तु ऊदिल्लक्षणमिड्विकल्पं मत्वा आह-**अकल्पिष्टेति, अक्लृप्तेति च** । **अकल्प्स्यदिति** । लृङि स्ये 'लुटि च क्लृप' इति परस्मैपदपक्षे ऊदिल्लक्षणमिड्विकल्पं बाधित्वा 'तासि च क्लृप'इति इण्निषेध इति भावः । परस्मैपदाऽभावपक्षे तु ऊदिल्लक्षणमिड्विकल्पं मत्वा आह-**अकल्पिष्यत अकल्प्स्यतेति** । **वृदिति** । वृतेः समाप्त्यर्थकात्कर्तरि क्विप् । तदाह-**वृत्त इति** । 'गत्यर्थाकर्मके'ति कर्तरि क्तः । वृत्तशब्दस्य विवरणं-**सम्पूर्ण इति** । द्युतादयः क्लृपूपर्यन्ता अनुदात्तेतो गताः ।

**अथ त्वरत्यन्ता इति** । 'ञि त्वरा संभ्रमे' इत्यन्ता इत्यर्थः । **षितश्चेति** । षित्संज्ञका इत्यर्थः। षित्कार्यभाज इति वा। 'ञि त्वरा संभ्रमे' इत्युक्त्वा 'घटादयः षितः' इति वक्ष्यमाणत्वादिति भावः । षित्फलं तु 'स्त्रिया'-मित्यधिकारे 'षिद्भिदादिभ्यः' इत्यङ् । घटा व्यथेत्यादि रूपम् । **घटते इति** । चेष्टते इत्यर्थः । **तत्फलं त्विति** । मित्त्वफलं तु 'मितां ह्रस्वः' इति णौ ह्रस्वः, 'चिण्णमुलोर्दीर्घः'इति दीर्घश्च वक्ष्यते । 'धातुपाठे अर्थनिर्देश उपलक्षण'मित्युक्तम् ।-ततश्चार्थान्तरवृत्तेरपि घटधातोर्घटादिकार्यं भवत्येव । तदाह-**घटयति विघटयतीति** । संश्लेषयति विश्लेषयतीत्यर्थः । णौ ह्रस्वोदाहरणमिदम् । अघटि अघाटीति चिण्युदाहरणम्। घाटंघाटम्, घटंघटमिति ण्यन्ताण्णमुलि दीर्घविकल्पस्योदाहरणम्। 'नित्यवीप्सयो'रिति द्विर्वचनम् । ननु यद्यर्थान्तरवृत्तेरपि घटधातोर्मित्त्वं तदा 'उद्घाटनं' 'प्रविघाटयिते'त्यत्र विकासनैार्थकस्यापि घटधातोर्णौ मित्त्वाद्ध्रस्वः स्यादित्याक्षिपति-**कथं तर्हीति** । **शृण्विति**। 'समाधान'-मिति शेषः । **चौरादिकस्येति** । चुरादौ 'घट सङ्घाते'इति पठितम् । तदिदं घाटादिकाद्घटधातोर्धात्वन्तरमेव । तस्य णौ मित्त्वाऽभावाद्ध्रस्वाऽभावे 'उद्घाटनं' 'प्रविघाटयिते'ति निर्बाधमेव, अर्थनिर्देशस्योपलक्षणतया सङ्घातादन्यत्र विकासनेऽपि चौरादिकस्य वृत्तिसंभवादिति भावः । ननु घटादिगणादन्यत्र अर्थान्तरे पठितानां धातूनामिह घटादिगणे पाठे घटादिगणनिर्दिष्ट एवार्थे मित्त्वार्थोऽनुवाद एव, नतु धातुभेदः । अन्यथा घाटादिकत्वं, गणान्तरस्थत्वं चादाय मित्त्वतदभावयोर्विकल्पापत्तेः । ये तु धातवो घटादिगण एव पठिता नतु गणान्तरे, तेषान्त्वर्थान्तरवृत्तावपि मित्त्वमिति धातुवृत्त्यादिग्रन्थेषु सिद्धान्तः । घटधातुस्तु 'घट सङ्घाते'इति चुरादौ पठितः । अतस्तस्यैवात्र गणे चेष्टायामर्थे मित्त्वार्थोऽनुवाद इति लब्धम् । एवंच 'विघटयती'त्यादावर्थान्तरवृत्तौ ण्यन्तस्य कथं मित्त्वमित्याशङ्क्य निराकरोति-

शे.]प्रत्याहाराह्निके भाष्ये । **तच्चेति** । क्लृपेति पदमित्यर्थः । सूत्रमित्यन्ये । आवृत्तिफलं वाक्यभेदः । **वृदिति** । वृतेः कर्तरि क्विप् । **षितश्चेति** । अतिदेशोऽयम् । फलन्तु 'षिद्भिदादिभ्यः'इत्यङ् । तत्र येऽन्यावकरणा अनूद्यन्ते तेषां तत्तत्प्रयुक्ता एव विकरणाः, ये तु भ्वादिस्था एवानूद्यन्ते, स्वतन्त्रा वा पठ्यन्ते, तेषां शबेव । **न च तस्यैवेति** । एवञ्च 'विघटयती'त्यादौ मित्त्वं न स्यादिति भावः । **नान्ये मित इति** । अनुवादसामर्थ्येन तद्बाधकल्पनापेक्षया स्वातन्त्र्यकल्पनस्यैवौचित्यादिति भावः। न च षित्त्वार्थमयञ्चुरादेरनुवादः, तत्रैव 'घट'षिति पठितुं युक्तत्वात्,'ण्यासश्रन्थे'ति सूत्र

'नाऽन्ये मितोऽहेता'विति निषेधात् । अहेतौ=स्वार्थे णिचि ज्ञपादिपञ्चकव्यतिरिक्ताश्चुरादयो मितो नेत्यर्थः। ७६४ व्यथ भयसंचलनयोः। व्यथते । **व्यथो लिटि** ।७।४।६८। व्यथोऽभ्यासस्य संप्रसारणं स्याल्लिटि। हलादिःशेषापवादः। थस्य[हृ]हलादिःशेषेण निवृत्तिः। विव्यथे।७६५ प्रथ प्रख्याने।पप्रथे।७६६ प्रस विस्तारे।पप्रसे। ७६७ म्रद मर्दने।७६८ स्खद स्खदने।स्खदनं विद्रावणम्।७६९क्षजि गतिदानयोः।मित्वसामर्थ्यादनुपधात्वेऽपि 'चिण्णमुलो'रिति दीर्घविकल्पः। अक्षञ्जि। अक्षाञ्जि। क्षञ्जंक्षञ्जम् । क्षाञ्जङ्क्षाञ्जम् । ७७० दक्ष गतिहिंसनयोः।घोऽयं

त.]नियमाय। ये त्विहैव पठ्यन्ते तेषामुपसर्गादिनाऽर्थान्तरपरत्वेऽपि मित्त्वमस्त्येवेति धातुवृत्त्यादिषु स्थितं। तदेतद्ध्वनयन्नुदाहरति-**विघटयतीति । व्यथो लिटि । हलादिःशेषापवाद इति** । हलादिःशेषप्रक्रमेणादिति भावः। एवं च 'उत्सर्गसदेशश्चापवादः' इति परस्यैव संप्रसारणं भवति न पूर्वस्येति कैयटाद्युक्त्या 'न संप्रसारणे' इति निषेधोऽत्र नापेक्षितः । केचित्तु हलादिःशेषेण यकारनिवृत्तावपि वकारस्य सत्त्वात्सूत्रमिदं सावकाशमित्यपवादत्वं न संभवतीति मत्वा 'संप्रसारणं तदाश्रयं च कार्यं बलव'दिति वचनाद्धलादिःशेषं बाधित्वा परस्य संप्रसारणे पूर्वस्य निषेधः । 'संप्रसारणं तदाश्रयं चे'ति वचनाऽभावे तु 'व्यथो लिटी'ति संप्रसारणस्य धातुविशेषप्रत्ययविशेषाश्रयत्वेन, 'इग्यण'इति संज्ञाविशेषद्वयाश्रयत्वेन च बह्वपेक्षस्य बहिरङ्गत्वात्संप्रसारणं बाधित्वा हलादिःशेषे जाते वकारस्य संप्रसारणं स्यादित्याहुः । **थस्येति** । संप्रसारणस्याऽभ्यासान्तर्गतयकारनिवृत्तेरपवादत्वं न तु थकारनिवृत्तेरिति भावः। लिटीति किम् ?। विव्यथि-

बा.]नचेति । **तस्यैव**-चौरादिकस्यैव, घटधातोश्चेष्टात्मके अर्थविशेषे वृत्तौ मित्त्वार्थोऽनुवादः स्यादिति न वाच्यमित्यर्थः । कुत इत्यत आह-**नान्ये मितोऽहेताविति** । चुराद्यन्तर्गणसूत्रमिदम् । तत्र हि 'ज्ञप मिच्च' 'यम च परिवेषणे' 'चह परिकल्कने' 'रह त्यागे' 'बल प्राणने' 'चिञ् चयने' इति पञ्च धातून् पठित्वा 'नान्ये मितोऽहेतौ' इति पठितम् । तत्र 'चह परिकल्कने' इत्यस्य स्थाने 'चपे'ति केचित्पठन्ति । तथाच पञ्चत्वस्य न विरोधः । एषु पञ्चस्वपि मिदित्यनुवर्तते । 'अहेता'विति च्छेदः । कस्मादन्ये इत्यपेक्षायां संनिहितत्वाज्ज्ञपादिपञ्चभ्य इति लभ्यते। हेतुशब्देन 'हेतुमति चे'ति सूत्रविहितो णिज्लभ्यते । तद्भिन्नो णिच् स्वार्थिकोऽहेतुः । तदाह-**अहेतौ स्वार्थे णिचीति** । ज्ञप आदिर्येषामिति अतद्गुणसंविज्ञानो बहुव्रीहिः । ज्ञपधातोस्तदुत्तरेभ्यश्च पञ्चभ्य इत्येवं षड्भ्योऽन्ये ये चुरादयस्ते मितो नेति फलितम् । एवं च चुरादौ ज्ञपादिपञ्चकव्यतिरिक्तानां मित्त्वाऽभावात् 'घट चेष्टाया'मिति निर्देशश्चौरादिकस्य 'घट सङ्घाते' इत्यस्य चेष्टायां वृत्तौ मित्त्वार्थोऽनुवाद इति न युज्यते, किंतु इहैव घटादिगणे 'घट चेष्टाया'-मित्यपूर्वोऽयं धातुः । तस्य चाऽर्थान्तरवृत्तावपि मित्त्वमस्त्येवेति 'विघटयती'त्यादौ मित्त्वाद्ध्रस्वो निर्बाध इति भावः ।

**व्यथ**धातुर्द्वितीयान्तः । **व्यथो लिटि** । 'अत्र लोपः' इत्यतोऽभ्यासस्येति,'द्युतिस्वाप्यो'रित्यतः संप्रसारणमिति चानुवर्तते । तदाह-**व्यथोऽभ्यासस्ये**त्यादिना । **हलादिशेषापवाद इति** । व्यथ् व्यथ् ए इति स्थिते हलादिशेषलभ्यं यकारस्य लोपं बाधित्वा संप्रसारणमित्यर्थः । तथाच यकारस्य इकारे पूर्वरूपे विव्यथे इति रूपम् । वकारस्य तु न संप्रसारणं, 'न संप्रसारणे संप्रसारण'मिति निषेधात् । ननु संप्रसारणेन हलादिशेषबाधे थकारस्यापि निवृत्तिर्न स्यादित्यत आह-**थस्येति** । यकारलोपस्य बाधं विना संप्रसारणस्य प्रवृत्त्यनुपपत्तेस्तेन तद्बाधेऽपि थकारलोपस्य बाधे प्रमाणाऽभावादिति भावः। **मृद मर्दने इति** । ऋदुपधोऽयम् । मर्दते। ममृदे। **क्षजि**धातुरिदित्।क्षञ्जते । चक्षञ्जे । ननु घटादिगणेऽस्य पाठो व्यथः, क्षञ्जयतीत्यत्र णौ नुमि कृते अकारस्यानुपधात्वेन उपधादीर्घस्याऽप्रसक्त्या 'मितां ह्रस्वः' इत्यस्याऽप्रवृत्तावपि विशेषाऽभावादनुपधात्वेन 'मितां ह्रस्व'इत्यस्य प्रसक्त्यभावाच्च।अत एव अक्षञ्जि क्षञ्जं क्षञ्जमित्यत्रापि 'चिण्णमुलो'रिति दीर्घविकल्पस्यापि न प्रसक्तिरित्यत आह-**मित्वसामर्थ्यादिति।दक्ष गतीति**।ननु'दक्ष वृद्धौ शीघ्रार्थे चे'त्यनुदात्तेत्सु पाठादेव सिद्धे किमर्थमिह पाठः?, अर्थनिर्देशस्योपलक्षणत्वादेव गतिहिंसार्थकत्वस्यापि संभवादित्यत आह-

शे.]एव प्राप्त्या षित्त्वे फलाऽभावाच्च। **हलादिःशेषापवाद इति** । यत्स्थानिकहलादिःशेषापवाद इत्यर्थः। न चाऽभ्यासविकारे बाध्यबाधकभावाऽभावेनेदमसङ्गतम्,'अजीगण'दित्यादौ हलादिःशेषे ईत्वस्य ज्ञाप्यार्थप्रयोजनत्वेन भाष्ये उपन्यासाल्लोपस्यापि तत्र विकारग्रहणेन ग्रहणात्, एवञ्च वस्यैव सम्प्रसारणापत्तिरिति वाच्यं, 'लिट्यभ्यासस्ये'त्यत्रोभयेषाङ्ग्रहणेन सामान्यत एवाऽभ्यासलोपा-ऽभ्याससम्प्रसारणविषये तन्न्यायाऽप्रवृत्तेर्ज्ञापनेनाऽदोषात्।'सम्प्रसारणं तदाश्रयञ्च बलव'-दिति तूभयेषाङ्ग्रहणवैयर्थ्यापत्त्या 'लिट्यभ्यासस्ये'ति सूत्रे भाष्ये एव प्रत्याख्यातमिति तदुपन्यासः केषाञ्चिदयुक्त एवेति दिक् । **मित्त्वसामर्थ्यादिति** । असञ्जातविरोधन्यायेनेति भावः । **अक्षञ्जीति** । ण्यन्ताच्चिणि तशब्दस्य लुक् । **क्षाञ्जङ्क्षाञ्जमिति** । ण्यन्तादाभीक्ष्ण्ये णमुल् । क्रियासमभिहारे द्वित्वम् । एतत्सर्वं दक्षादिष्वपि बोध्यम् । **मित्त्वार्थ इति** । षित्त्वस्याप्युपलक्षणम् । 'गुरोश्च हलः'इत्यप्रत्ययेनाऽपि सिद्धेः षित्त्वे फलाऽभाव इति कश्चित् ।

वृद्धिशैथिल्ययोरनुदात्तेत्सु पठितस्यास्येहार्थविशेषे मित्त्वार्थोऽनुवादः। ७७१ क्रप कृपायां गतौ। ७७२ कदि ७७३ क्रदि ७७४ क्लदि वैक्लव्ये। वैकल्य इत्येके। त्रयोऽप्यनिदित इति नन्दी। इदित इति स्वामी। 'कदि-क्रदी इदितौ, क्रद क्लदेति चानिदिता'विति मैत्रेयः। कदिक्रदिक्लदीनामाह्वानरोदनयोः परस्मैपदिषूक्तानां पुनरिह पाठो मित्त्वार्थ, आत्मनेपदार्थश्च। ७७५ ञित्वरा संभ्रमे। (ग) घटादयः षितः। षित्वादङ् क्त्सु वक्ष्यते।

अथ फणान्ताः परस्मैपदिनः। ७७६ ज्वर रोगे। ज्वरति। जज्वार। ७७७ गड सेचने। गडति। जगाड। ७७८ हेड वेष्टने। 'हेडृ अनादरे' इत्यात्मनेपदिषु गतः, स एवोत्सृष्टानुबन्धोऽनूद्यतेऽर्थविशेषे मित्त्वार्थम्। परस्मैपदिभ्यो ज्वरादिभ्यः प्रागेवानुवादे कर्तव्ये तन्मध्येऽनुवादसामर्थ्यात्परस्मैपदम्। हेडति। जिहेड।

त.] षते। इह 'सन्यतः' इति इत्त्वम्। वाव्यध्यते। वाव्यथीति। क्रप कृपायां गतौ। चकाराभावेऽपीहार्थद्वयमित्येव बोध्यमित्याहुः। कदि क्रदि। क्रन्दयति। अक्रन्दि। अक्रान्दि। क्रन्दंक्रन्दम्। क्रान्दंक्रान्दम्। ञित्वरा। आदित्त्वमिह व्यर्थम्, ह्रस्वोच्चारणेनाप्यात्मनेपदसिद्धेः। न च निष्ठायाम् 'आदितश्च' इतीट्प्रतिषेधार्थमिति शङ्क्यम्। 'रुष्यमत्वरे'ति निष्ठायामिटो विकल्पितत्वात्। तूर्णः। त्वरितः। ज्वर रोगे। णौ–ज्वरयति। अज्वरि। अज्वारि। ज्वरंज्वरम्। ज्वारंज्वारम्। गड सेचने। णौ-गडयति। अगडि। अगाडि। गडंगडं। गाडंगाडम्। एवमन्यत्राप्यूह्यम्। हेड

बा.] वृद्धिशैथिल्ययोरिति। मित्त्वसामर्थ्यादनुपधात्वेऽपि चिण्णमुलोर्दीर्घविकल्पः। अदक्षि अदाक्षि। दक्षंदक्षम्, दाक्षंदाक्षम्। क्रप कृपायां गताविति। अदुपधोऽयम्। कृपायां गतौ चेत्यर्थः। कदि क्रदि क्लदि इति नन्दिमते। क्षीरस्वामिमते च त्रय एव धातवः। मैत्रेयमते चत्वार इति बोध्यम्। तत्र इदितां त्रयाणां पौनरुक्त्यं परिहरति–कदिक्रदिक्लदीनामित्यादिना।

ञित्वरेति। ञिरित्। 'ञीतः क्तः' इति क्तः प्रयोजनम्। आदित्त्वं तु 'आदितश्चे'ति निष्ठायामिण्निषेधार्थम्। वस्तुतस्तु आदित्त्वं व्यर्थं, ह्रस्वेऽप्यात्मनेपदसिद्धेः 'रुष्यमत्वरसङ्घुषास्वना'मिति निष्ठायामिड्विकल्पसिद्धेश्च। घटादयः षित इति। 'त्वरत्यन्ता' इति शेषः। गणसूत्रमिदम्। तत्प्रयोजनमाह–षित्त्वादिति। वक्ष्यते इति। 'षिद्भिदादिभ्योऽङि'त्य नेने'ति शेषः। घटादिषु त्रयोदशानुदात्तेतो गताः। 'द्युत दीप्तौ' इत्यतः प्राग्घटादिसमाप्तिरिति वक्ष्यते।

अथ फणान्ता इति। 'फण गतौ' वित्येतत्पर्यन्ता इत्यर्थः। ज्वर रोगे इति। णौ ज्वरयति। चिणि तु अज्वरि-अज्वारि। णमुलि तु-ज्वरंज्वरं ज्वारंज्वारम्। एवमग्रेऽपि ज्ञेयम्। हेड वेष्टने इति। डकारादकार उच्चारणार्थः। ततश्च 'नाग्लोपिशास्वृदिता'मिति निषेधो न भवति। स एवेति। हेडृधातुरेव ऋकारानुबन्धमुत्सृज्य वेष्टनरूपेऽर्थविशेषे मित्त्वार्थमनूद्यते इत्यर्थः। धात्वन्तरत्वे तु मित्त्वतदभावयोर्विकल्पः स्यादिति भावः। नन्वात्मनेपदिन एवाऽत्रानुवादे परस्मैपदं न स्यादित्यत आह–परस्मैपदिभ्य इति। यदि त्वात्मनेपदमिष्टं तर्हि घटादिषु त्वरत्यन्तेष्वेवानुदात्तेत्सु पठ्येतेति भावः। हेडतीति। वेष्टते इत्यर्थः। हिडयतीति। वेष्टयतीत्यर्थः। 'हेतुमती'ति णिचि 'मितां ह्रस्वः' इति ह्रस्व इति भावः। अहिडि अहीडीति। 'चिण्णमुलो'रिति दीर्घविकल्पः। हेडयतीति। वेष्टनरूपाऽर्थ एव मित्त्वान्न ह्रस्व इति भावः। 'वट परिभाषणे' इति नाऽपूर्वो धातुरित्याह-वट वेष्टने इत्यादि। अनुवाद इति।

शे.] मित्त्वार्थ आत्मनेपदार्थश्चेति। चेन षित्त्वमप्युपलक्ष्यमनिदित्पाठे, इदित्पाठे तु क्षजिवत्। उत्सृष्टानुबन्ध इति। त्यक्तानुबन्ध इत्यर्थः। डकारेऽकार उदात्त उच्चारणार्थः, अनुवादत्वे लाघवेना'ऽन्य एवे'ति नोक्तमिति भावः। अत्र गणेऽन्यत्र पठितानां सति सम्भवेऽनुवाद एवेति 'श्रृतं पाके'इति सूत्रे भाष्ये, कैयटे च ध्वनितम्। तत्र हि 'श्राश्रप्योः श्रभावो निपात्यते' इति भाष्यमुपादाय 'श्रा पाके इत्यदादौ,'श्रै पाके' इति भ्वादौ, घटादिषु मित्त्वार्थं 'श्रा पाके' इति पठ्यते' इति कैयटः। अत एव भाष्ये श्राश्रपिश्रापीनामिति नोक्तम्। प्रागेवेति। त्वरतेरग्रे इत्यर्थः। षित्त्वं त्रयोदशानामेव, अनुदात्तेत्त्ववन्न्येषामप्यस्त्विति भावः। परस्मैपदमिति। न चैतदर्थं पाठस्य चारितार्थ्येन कथमर्थविशेषनियमलाभ इति वाच्यं, घटादिषु पाठेन तत्प्रयुक्तकार्यस्याप्यावश्यकत्वेन विजातीयार्थपाठेन च तस्यापि लाभात्। एवञ्च मित्त्वं परस्मैपदे वेष्टने एवेति बोध्यम्। अहिडि अहीडीति। 'चिण्णमुलो'रिति दीर्घः। एतदर्थं तत्र ह्रस्व एव न विकल्पितः। परे तु ह्रस्वविकल्पेनैव सिद्धे 'चिण्णमुलो'रित्यत्र दीर्घग्रहणं व्यर्थमित्याशङ्क्य शमेर्ण्यन्तात्णिचि 'अशमी'त्यादौ णिलोपस्य स्थानिवद्भावाद्ध्रस्वो न स्यात्, दीर्घग्रहणे तु दीर्घे स्थानिवत्त्वनिषेधान्न दोष इति 'कर्मणीङ्'सूत्रे भाष्ये उक्तं, तदनुपपन्नम्, प्रकृतोदाहरणार्थं दीर्घविधानस्यावश्यकत्वेन शङ्कोत्तरयोरुभयोरपि निर्दलत्वापत्तेः। तस्मादस्याऽत्रासांप्रदायिकः पाठः। कैयटादयस्तु चिन्त्या एव। 'ऊकालः' इतिसूत्रे भाष्येऽप्येतद्ध्वनितमिति भाष्यप्रदीपोद्द्योते निरूपितम्। 'द्विर्वचनादीनि न वक्तव्यानि वरेयलोपस्वरवर्जे'मिति नपदान्तसूत्रभाष्ये वर्ज्यकोटौ दीर्घोऽप्युपलक्षणीयः। किं च यद्यपि पाठस्तदापि 'उत्सृष्टानुबन्धे'त्यायसङ्गतम्, अपूर्वत्वे बाधकाऽभावात्। 'अर्थविशेषे' इत्यत्रापि न मानम्। किं च सर्वेषामने-

ह्रिडयति । अहिडि । अहीडि । अनादरे तु–हेडयति । ७७९ वट ७८० भट परिभाषणे । 'वट वेष्टने' 'भट भृता'विति पठितयोः परिभाषणे मित्त्वार्थोऽनुवादः । ७८१ णट नृत्तौ । इत्थमेव पूर्वमपि पठितम् । तत्रायं विवेकः—पूर्वं पठितस्य नाट्यमर्थः । यत्कारिषु नटव्यपदेशः । वाक्यार्थाभिनयो नाट्यम् । घटादौ तु नृत्तं चार्थः । यत्कारिषु नर्तकव्यपदेशः। पदार्थाभिनयो नृत्यम् । गात्रविक्षेपमात्रं नृत्तम् । केचित्तु घटादौ नट नताविति पठन्ति । गताविन्यन्ये । णोपदेशपर्युदासवाक्ये भाष्यकृता 'नाटी'ति दीर्घपाठाद्धटादिर्णोपदेश एव । ७८२ ष्टक प्रतीघाते । स्तकति । ७८३ चक तृप्तौ । तृप्तिप्रतीघातयोः पूर्वं पठितस्य तृप्तिमात्रे मित्त्वार्थोऽनुवादः। आत्मनेपदिषु पठितस्य परस्मैपदिष्वनुवादात्परस्मैपदम् । ७८४ कखे हसने । एदित्वान्न वृद्धिः । अकखीत् । ७८५ रगे शङ्कायाम् । ७८६ लगे सङ्गे । ७८७ ह्रगे ७८८ ह्लगे ७८९ षगे ७९० ष्ठगे संवरणे । ७९१ कगे–नोच्यते । 'अस्यायमर्थ'इति विशिष्य नोच्यते, क्रियासामान्यार्थत्वात् । अनेकार्थत्वादित्यन्ये । ७९२ अक ७९३ अग कुटिलायां गतौ । ७९४ कण ७९५ रण गतौ । चकाण । [८००] । रराण । ७९६ चण ७९७ शण ७९८ श्रण दाने च । शण गतावित्यन्ये । ७९९ श्रथ ८०० क्नथ ८०१ क्रथ ८०२ क्लथ हिंसार्थाः । 'जासिनिप्रहणे'ति सूत्रे 'क्राथे'ति मित्त्वेऽपि वृद्धिर्निपात्यते । क्राथयति । मित्त्वं तु निपातनात्परत्वात् 'चिण्ण-

---

त.]वेष्टने। उत्सृष्टानुबन्ध इति। तेन वेष्टने 'नाग्लोपी'ति निषेधशङ्कैव नास्तीति भावः। णोपदेश एवेति। प्रणटति। प्रणटयति । 'नाटी'त्यस्य तु प्रनाटयति । वृद्धिर्निपात्यत इति । तेन 'मितां ह्रस्व' इति न प्रवर्तेत इति भावः । निपातनात्परत्वादिति । निपातनविषयीभूत'मितां ह्रस्व' इत्यस्मात्परत्वात् । 'मितां ह्रस्वः' इत्येतदेव निपातनेन

---

बा.]धात्वन्तरत्वे तु मित्त्वतदभावयोर्विकल्पः स्यादिति भावः। 'णट नृत्तौ' इत्यस्य पौनरुक्त्यमाक्षिपति–इत्थमेवेति।'ट-वर्गान्तेष्वि'ति शेषः । तथा च उभयोरप्यर्थैक्येन अर्थविशेषे मित्त्वार्थमिहानूद्यते इति परिहारस्याऽसंभवात्पौनरुक्त्यमेवेति भावः। परिहर्तुमुपक्षिपति–तत्रायं विवेक इति। तत्र=तयोर्धात्वोः, अयं=वक्ष्यमाणः, विवेकः=अर्थभेदः, प्रत्येतव्य इत्यर्थः । पूर्वं पठितस्येति । टवर्गान्तेषु पठितस्येत्यर्थः । यत्कारिष्विति । यस्य कर्तृषु नटव्यवहारस्तन्नाट्यं पूर्वं पठितस्य नटधातोरर्थ इत्यर्थः । किं तन्नाट्यमित्यत्राह–वाक्यार्थेति। घटादौ त्विति । यस्य कर्तृषु नर्तकव्यपदेश-स्तन्नृत्यं, नृत्तं च घटादौ पठितस्य नटेरर्थ इत्यर्थः । नृत्यनृत्तयोः को भेद इत्यत आह–पदार्थेति । एवंच टवर्गान्तेषु पठितस्य घटादिगतस्य चाऽर्थभेदसत्त्वादर्थविशेषे मित्त्वार्थोऽनुवाद इति युज्यते। धात्वन्तरत्वे तु मित्त्वतदभावयोर्विकल्पः स्यादिति भावः । अथ नटधातोरस्य णोपदेशपर्युदासभ्रमं वारयति–णोपदेशेति । 'अनर्द्नाटी'त्यादिपर्युदासवाक्ये नाटीति णिज्लक्षणवृद्धिनिर्देशेन 'नट अवस्यन्दने' इति चौरादिकस्यैव ग्रहणादयं णोपदेश एवेत्यर्थः। ष्टकधातुः षोपदेशः। कृतष्टुत्वस्य निर्देशः । स्तकतीति । 'धात्वादे'रिति षस्य सत्वे ष्टुत्वनिवृत्तिः । चक तृप्तौ । तृप्तीति । 'चक तृप्तौ प्रतीघाते चे'त्यात्मनेपदिषु पठितस्य तृप्त्यर्थे मित्त्वार्थोऽत्राऽनुवाद इत्यर्थः । एवंच धात्वन्तरत्वाऽभावान्न मित्त्वतदभाव-विकल्पः । ननु आत्मनेपदिषु पठितस्यात्रानुवादादात्मनेपदं स्यादित्यत आह–आत्मनेपदिष्विति । षगे ष्ठगे इति । षोपदेशौ । ष्ठगे इति कृतष्टुत्वनिर्देशः । कगे नोच्यत इति । ननु 'कगे' इत्यनेन यदि किमपि नोच्येत, तर्हि कथमस्य धातुत्वमित्यत आह–अस्यायमिति । क्रियाविशेषो नास्यार्थ इति भावः । ननु यदि न कोऽपि क्रियाविशेषो-ऽस्यार्थस्तर्हि कथमयं धातुरित्यत आह–क्रियासामान्यार्थवाचित्वादिति । धातुपाठपठितस्य क्रियाविशेषार्थकत्वा-ऽभावे सति क्रियासामान्यवाचित्वं परिशेषलभ्यमिति भावः। अनेकेति । 'कलिः कामधेनु'रिति न्यायेन कलधातुवदपरि-मितार्थकत्वमिति भावः । श्रथ क्नथ क्रथ क्लथ इति । चत्वारोऽपि द्वितीयान्ताः । आद्यतृतीयौ रेफमध्यौ । द्वितीयो नकारमध्यः । चतुर्थस्तु लकारमध्यः । आद्यस्तु शकारादिः । इतरे ककारादयः । ननु क्रथधातोर्घटादित्वेन मित्त्वाण्णौ उपधावृद्धिसंपन्नस्य अकारस्य 'मितां ह्रस्व' इति ह्रस्वत्वे क्रथयतीति स्यान्नतु क्राथयतीति । तत्राह–जासिनीति ।

---

शे.]कार्थत्वे न मानम् । एवञ्चोपात्तार्थे एव मित्त्वमिति तत्र फलाऽभावः। एवमन्यत्राप्यनेकार्थत्वे निर्णायकाऽभावे। किं च 'भ्वेधस्पर्द्ध'इति धातुपाठस्य भूवादिसूत्रभाष्योक्तेः,'अर्थं खल्वप्याचार्यश्चित्रयति क्वचिदर्थानादिशति क्वचिन्ने'ति 'नमोवरिव' इतिसूत्रभाष्योक्तेश्चात्रस्यार्थनिर्देशस्य पाणिनीयत्वमेवेत्यत्र न दृढतरं मानम् । एवञ्च नियमकथाऽपि निर्मूला । अतिप्रसङ्ग-परिहारस्त्वनभिधानात्, प्रयुक्तानामेवान्वाख्यानाच्च । किं च ज्वरादिभ्यः प्रागग्रे वा पाठे न किंचिद्गौरवं, लाघवं वा । एवञ्च तत्रानुवादमात्रेण परस्मैपदकल्पनापि निर्मूलेत्याहुः। ननु विशेषाऽनालिङ्गितसामान्यस्याऽभावेन क्रियासामान्यार्थत्वम-युक्तमत आह–अनेकार्थत्वादिति । निपात्यत इति । तत्र णिप्रकृतिधातोरेव ग्रहणं, न घञन्तस्य, व्याख्यानात्, पूर्वोत्तरसाहचर्याच्चेति भावः । धातुपाठे ह्रस्वोच्चारणन्तु दीर्घणिचोरभावे चरितार्थम् । नन्वत्र पाठवैयर्थ्यमत आह–

मुलो'रिति दीर्घे चरितार्थम् । अक्रथि । अक्राथि । क्रथंक्रथम् । क्रथंक्राथम् । ८०३ **वनं च** । 'हिंसाया'मिति शेषः । वनु च नोच्यते । 'वनु' इत्यपूर्व एवायं धातुर्न तु तानादिकस्यानुवादः, उदित्करणसामर्थ्यात् । तेन क्रियासामान्ये वनतीत्यादि । प्रवनयति । अनुपसृष्टस्य तु मित्त्वविकल्पो वक्ष्यते । ८०४ **ज्वल दीप्तौ** । णप्रत्ययार्थं पठिष्यमाण एवायं मित्त्वार्थमनूद्यते । प्रज्वलयति । ८०५ **ह्वल** ८०६ **ह्मल चलने** । प्रह्वलयति । प्रह्मलयति । ८०७ **स्मृ आध्याने** । चिन्तायां पठिष्यमाणस्य आध्याने मित्त्वार्थोऽनुवादः । आध्यानमुत्कण्ठापूर्वकं स्मरणम् । ८०८ **दॄ भये** । 'दॄ विदारणे'इति क्र्यादेरयमनुवादः । हणन्तं प्रेरयति–दरयति । भयादन्यत्र–दारयति । 'धात्वन्तरमेवेद'मिति मते तु दरतीत्यादि । केचिद्धटादौ, 'अस्मृदृत्वरे'ति सूत्रे च 'दृ'

---

त.]बाध्यते न तु ततः परं 'चिण्णमुलो'रित्येतदित्यर्थः। **वन च**। संभक्तौ पठितस्य हिंसायां मित्त्वार्थोऽनुवादः। वनति । णौ–वनयति । अवनि । अवानि । वनंवनम् । वानंवानम् । **तानादिकस्येति** । वनु याचन इत्यस्येत्यर्थः । **सामर्थ्यादिति** । अनुवादे तु तत्र कृतेनोदित्त्वेन क्त्वायामिड्विकल्पस्य, निष्ठायामिड्निषेधस्य च सिद्धेः पुनरुदित्करणं व्यर्थं स्यादिति भावः । **वनतीत्यादीति** । णौ–वनयति । तानादिकस्य तु–वनुते । वानयति । **मित्त्वविकल्प इति** । 'ग्लास्नावनुवमां चे'ति गणसूत्रेण । **णप्रत्ययार्थमिति** । 'ज्वलितिकसन्तेभ्यो णः' इति ज्वलादिभ्यो णप्रत्ययार्थम् ।

---

बा.]'जासिनिप्रहणनाटक्राथपिषां हिंसाया'मिति षष्ठीविधौ णौ मित्त्वेऽपि क्राथेति वृद्धिर्निपात्यत इत्यर्थः। नन्वेवं सति घटादौ क्रथधातोः पाठो व्यर्थ इत्यत आह–**मित्त्वं त्विति** । चिण्णमुलोर्दीर्घपक्षे चरितार्थमित्यन्वयः । ननु तत्रापि क्राथेति निपातनाद्वृद्धिरित्यत आह–**निपातनात्परत्वादिति** । 'क्राथे'ति निपातनापेक्षया 'चिण्णमुलो'रित्यस्य परत्वादित्यर्थः । यद्यपि 'मितां ह्रस्वः' इत्यपि परन्तथापि पुरस्तादपवादन्यायेन क्राथेति वृद्धिनिपातनं 'मितां ह्रस्वः' इत्यस्यैवाऽव्यवहितस्य बाधकं, नतु 'चिण्णमुलो'रित्यस्यापि,तस्य व्यवहितत्वादिति बोध्यम्। **अक्रथि-अक्राथीति**।क्रथेर्ण्यन्ताच्चिणि दीर्घविकल्पः।**क्रथंक्रथं क्राथंक्राथमिति**। णमुलि दीर्घविकल्पः। **वन चेति** । चकारो हिंसानुकर्षकः। तदाह–**हिंसायामितीति** । वन शब्दे, वन संभक्ताविति पठितस्य हिंसायां मित्त्वार्थोऽत्रानुवादः। वनति । णौ तु–वनयति । णमुलि तु वनंवनं वानंवानम् । **वनु च नोच्यते इति** ।'क्वगे नोच्यते' इतिवद्व्याख्येयम् । नन्वन्यत्र पठितस्य घटादौ मित्त्वार्थोनुवाद इति सिद्धान्तात्तनादौ 'वनु याचने' इति पठितस्य अनुदात्तेत्तोऽनुवादात्क्रियासामान्येऽर्थे वनुते इत्यात्मनेपदम्, उप्रत्ययश्च स्यादित्यत आह–**अपूर्व एवायमिति**।**उदित्करणेति**।यदि तानादिकस्यैव अत्रानुवा[illegible] स्यात्तर्हि तनादिगणे 'वनु'इति कृतेन उदित्करणेनैव 'उदितो वे'त्याद्युदित्कार्यस्य सिद्धेरिह गणे पुनरुदित्करणमनर्थकं [illegible] अतस्तानादिकस्य नात्रानुवादः, किं त्वपूर्व एवायं वनुधातुः। तथा च 'वनती'ति परस्मैपदं, शब्विकरणं [illegible] **क्रियासामान्ये वनतीत्यादीति**।आदिना वनतःवनन्तीत्यादिसङ्ग्रहः। **प्रवनयतीति**। घटादिकस्य क्रियासामान्यवाचिनो णिचि मित्त्वाद्ध्रस्वः । **वक्ष्यत इति** । 'ग्लास्नावनुवमां चे'त्यनेने'ति शेषः । तानादिकात्तु वनु याचने इत्यस्माण्णिचि उपधादीर्घे 'वानयती'त्येव भवति । **ज्वल दीप्तौ** । **णप्रत्ययार्थमिति** । 'ज्वलितिकसन्तेभ्यो णः' इति णप्रत्ययार्थं ज्वलादिगणे पठिष्यमाणस्य इह मित्त्वार्थोऽनुवाद इत्यर्थः । ज्वलतीत्यादि सिद्धवत्कृत्य मित्त्वस्य णौ ह्रस्वं प्रयोजनमाह–**प्रज्वलयतीति** । धात्वन्तरत्वे तु मित्त्वतदभावयोर्विकल्पः स्यादिति बोध्यम् । **स्मृ आध्याने** । **चिन्तायामिति** । 'स्मृ चिन्ताया'मिति पठिष्यमाणस्य आध्याने मित्त्वार्थोऽनुवाद इत्यर्थः। चिन्ताया आध्यानमन्यदिति दर्शयितुमाह–**आध्यानमुत्कण्ठेति** । **दॄ भये इति** । अस्य दृणातीति रूपं, नतु शप् । तदाह–**मित्त्वार्थोऽनुवाद इति** । 'भयेऽर्थे मित्त्वार्थ'मिति शेषः । अर्थनिर्देशस्य उपलक्षणत्वाद्भये वृत्तिः । तथाच क्र्यादित्वात् श्नाविकरण एवायमिति भावः ।

---

शे.]**मित्त्वन्त्विति** । निपातनञ्च चिण्णमुलतिरिक्तविषये चरितार्थं । तदभावेऽपि न वृद्धिः, फले विशेषाऽभावेन दीर्घेण बाधस्य वैयर्थ्यापत्तेः, तच्छास्त्रस्य तदभावेऽपि तात्पर्यादिति भावः । **उदित्करणसामर्थ्यादिति** । तदनुवादे तनादेरुदित्त्वेन पुनरत्र तत्करणं व्यर्थमित्यर्थः । 'विशिष्याऽर्थो नोच्यते' इत्युक्त्या नियमस्य वक्तुमशक्यत्वेन तद्वैयर्थ्यमिति भावः। अत एव पूर्वपठितवनो नानुवादः । उक्तरीत्याऽर्थनियमाऽसम्भवेन तत्र वनपाठस्य वैयर्थ्यापत्त्या तदनुवादाऽसम्भवात् । उदित्त्वफलन्तु णिजभावे । **परे तु**–पूर्वपाठः सम्भक्तौ शब्दे च वनोतीति रूपन्याय्यमित्यर्थः । अन्यथाऽनेनैव वनतीत्यादिसिद्ध्या तैंवापि तद्वैयर्थ्यं तदवस्थमेव । तनादौ 'वनु याचने' इति पाठः । अत्र तु 'वन शब्दे' 'वन षण सम्भक्तौ' इति । उदित्त्वमस्य तु तानादिकस्यैवात्रानुवाद इत्यर्थबोधनाय । तेन पूर्वपठितस्य 'प्रवानयती'त्येव । तानादिकस्योदित्त्वेन पूर्वपठितस्यानुदित्त्वेन निष्ठायां रूपद्वयं तवापीष्टमेवेत्याहुः । **विकल्पो वक्ष्यत इति** । 'ग्लास्नावनुवमां चे'त्यनेनेति भावः । **क्र्यादेरिति** । दिवादेरित्यपि बोध्यम् । तच्छीलिकप्रकरणान्तेऽस्य दिवादिताया अपि भाष्य-

इति दीर्घस्थाने ह्रस्वं पठन्ति । तन्नेति माधवः । ८०९ नॄ नये । क्र्यादिषु पठिष्यमाणस्यानुवादः। नयादन्यत्र-नारयति । ८१० श्रा पाके। 'श्रै' इति कृतात्वस्य,'श्रा' इत्यादादिकस्य च सामान्येनानुकरणम् । 'लुग्विकरणाऽलुग्विकरणयोरलुग्विकरणस्य' 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य[एव ग्रहणम्']इति परिभाषाभ्याम् । श्रपयति। विक्लेदयतीत्यर्थः । पाकादन्यत्र-श्रापयति । स्वेदयतीत्यर्थः । मारणतोषणनिशामनेषु ८११ज्ञा । निशामनं-चाक्षुषज्ञानमिति माधवः । ज्ञापनमात्रमित्यन्ये । निशानेष्विति पाठान्तरम् । निशानं-तीक्ष्णीकरणम् । एष्वे-

---

त.]दॄ भये । धातोरनेकार्थत्वाद्भयार्थकत्वम् । दृणाति । दरयति । तन्नेतीति । माधवस्यायमाशयः-सूत्रे दीर्घान्त एव पाठःसर्वसंमतः। घटादावपि दीर्घान्त एव सर्वैः पठ्यते। यद्ययं ह्रस्वान्तो भवेत्तर्हि 'शॄदॄप्रां ह्रस्वो वे'ति ह्रस्वविकल्पविधायके सूत्रे दॄग्रहणमनर्थकं स्यात् । धातुद्वयेन दद्रतुः ददरतुरिति रूपद्वयसिद्धेः।न च 'दॄ विदारणे' इत्यस्य रूपद्वयलाभार्थं दॄग्रहणमावश्यकमिति वाच्यं, धातूनामनेकार्थत्वात्समीहितसिद्धेरिति । नॄ नये । नृणाति । नरयति । अनरि । अनारि । नरंनरं । नारंनारम् । श्रै इतीति । अयं हि वक्ष्यमाणो भौवादिकः।लुग्विकरणेति । अत्र व्याचक्षते-'स्वरतिसूती'ति सूत्रे 'सूङ्' इति पठितेपि द्वयोर्ग्रहणे सिद्धे सूतिसूयत्योः पृथग्ग्रहणं व्यर्थं सदिमां परिभाषां ज्ञापयति । नन्वलुग्विकरणं बलीय इति वैपरीत्यं किं न स्यादिति शङ्क्यम्, इष्टानुरोधात् । 'सूङ्'इति पठिते स्वरतिसाहचर्यादलुग्विकरणस्यैव ग्रहणं स्यान्न तूभयोरित्यपि न शङ्क्यं, साहचर्यस्याऽनित्यत्वात् । तस्मात्पृथग्ग्रहणं व्यर्थं सज्ज्ञापकमेवेति । लक्षणप्रतिपदोक्तपरिभाषा तु न्यायसिद्धा, लाक्षणिकं हि विलम्बितोपस्थितिकं, प्रतिपदोक्तं तु शीघ्रोपस्थितिकमिति । **परिभाषाभ्यामिति।** यद्यप्युक्तपरिभाषयोः परस्परविरोधेनाऽप्रवृत्तावपीष्टं सिध्यति,।तथाप्यविशेषादुभयोः प्रवृत्तिरप्यत्र युक्तैवेति भावः। **मारणतोषण** । 'निशामन'मित्यस्य शम 'आलोचन इत्यस्मान्निष्पन्नत्वादाह-**चाक्षुषं ज्ञानमिति** । **एष्वर्थेष्विति** । पशुं

---

बा.]मित्त्वप्रयोजनं दर्शयति-**दरयतीति** । भीषयतीत्यर्थः। **दारयतीति** । भेदयतीत्यर्थः। **धात्वन्तरमेवेति** । नतु क्र्यादेरनुवाद इत्यर्थः । अस्मिन्मते भौवादिकत्वाच्छबेवेत्याह-**दरतीत्यादीति** । **सूत्रे चेति** । 'अत्स्मृदॄत्वरप्रथम्रदस्तॄस्पशा'मिति अत्वविधावित्यर्थः । **ह्रस्वं पठन्तीति** । तन्मते क्र्यादेरनुवादप्रसक्तिरेव नास्तीति भावः । **तन्नेतीति** । यदि ह्ययं घटादौ ह्रस्वान्तः, क्र्यादौ तु दीर्घान्तो भवेत्तर्हि 'शॄदॄप्रां ह्रस्वो वे'त्यत्र दॄग्रहणमनर्थकं स्यात् । ह्रस्वदीर्घान्तधातुभ्यामेव तत्फलसिद्धेरिति भावः । **नॄ नये इति** । नयः-नयनम् । **क्र्यादिष्विति** । 'नॄ नये' इत्येव क्र्यादिषु पठ्यते । तत्रार्थनिर्देशो न विवक्षितः । क्र्यादिषु पठिष्यमाणस्य नॄधातोर्नयादन्यत्र विद्यमानस्य नयेऽर्थे मित्त्वार्थोऽनुवाद इत्यर्थः । तथाच श्नाविकरण एवायम् । नृणातेर्धात्वन्तरत्वाऽभावान्न मित्त्वतदभावौ । अपि तु नित्यमेव मित्त्वम् । **श्रा पाके इति** । नन्वत्र भ्वादौ पठ्यमानाच्छ्रायतेः, उत्तरत्र अदादौ पठिष्यमाणाच्च श्रातेरन्य एव यदि कश्चन स्वतन्त्रो धातुर्घटादौ निर्दिश्येत तदा प्रकृते लटि शपि श्रातीति रूपसंपत्त्या लुग्विकरणस्थेन 'श्रा पाके' इत्यनेन पौनरुक्त्यमित्यत आह-**श्रै इतीति** । अग्रे भ्वादिगणे 'श्रै पाके' इति पठिष्यते, तस्य कृतात्वस्यानुकरणमित्यन्वयः । तथाच तस्यैव श्रैधातोरनेकार्थकतया पाके वृत्तस्य मित्त्वार्थमत्रानुवादाच्छपि श्रायतीत्यादि रूपम् । एतच्च 'शृतं पाके' इति सूत्रे भाष्यकैयटयोः स्थितम् । एवं च 'सति संभवेऽन्यत्र पठितानामिह मित्त्वार्थोऽनुवाद' इति सिद्धान्तादग्रे भ्वादौ 'श्रै पाके' इत्यस्य पौनरुक्त्यं न शङ्क्यम् । नन्वेवं सति 'श्रै पाके' इत्येवात्र कुतो न पठितमित्यत आह-**श्रा इत्यादादिकस्य चेति** । ननु लाक्षणिकत्वात् 'श्रै पाके' इति भौवादिकस्य कृतात्वस्याप्यनुवाद इति न युज्यत इत्यत आह-**लुग्विकरणेत्यादि, परिभाषाभ्यामित्यन्तम्** । परिभाषाभ्यामुभयोरनुकरणमित्यन्वयः । 'स्वरतिसूयती'ति सूत्रे 'सू'इति पठितेऽपि द्वयोर्ग्रहणे सिद्धे सूतिसूयत्योःपृथग्ग्रहणं 'लुग्विकरणे'ति परिभाषां ज्ञापयतीत्याहुः । प्रतिपदोक्तपरिभाषा तु न्यायसिद्धेत्युक्तमेव । **श्रपयतीति** । श्रैधातोर्णिचि 'आदेच उपदेशे' इत्यात्वे 'अर्तिह्री'ति पुकि'मितां ह्रस्वः'। श्राधातोस्तु स्वत एवाऽऽदन्तत्वाण्णिचि पुकि ह्रस्वः। **पाकादन्यत्रेति** । अर्थनिर्देशस्योपलक्षणत्वादिति भावः। **मारणति।** मारणे तोषणे निशामने च ज्ञाधातुर्वर्तेत इत्यर्थः। अक्षतस्य मारणे संपूर्वकस्यैव ज्ञाधातोः प्रयोगः । **चाक्षुषज्ञानमिति।** निपूर्वकाच्छम आलोचने इत्यस्माच्चौरादिकण्यन्ताल्ल्युटि निशामनशब्दस्य निष्पत्तेरिति भावः । **ज्ञापनमात्रमिति ।** उपसर्गवशादिह ज्ञापने वृत्तिः, चाक्षुषत्वं च ज्ञानस्य न विवक्षितमिति भावः । **निशानेष्वितीति** । 'मारणतोषणनिशानेषु ज्ञे'ति पाठान्तरमित्यर्थः । ननु ज्ञाधातोरस्माल्लडादौ शपि 'ज्ञाजनोर्जे'ति जादेशे जाति जात इत्यादि स्यादित्यत

---

शे.]सम्मतत्वात् । अण्यन्तत्वे दृणाति दीर्यति वा । **इति मते इति** । इदमेव युक्तमिति भाति । एवमन्यत्रापि बोध्यम् । अत्र पठिष्यमाणानामन्यत्र पठितानामपि नानेकार्थत्वमित्यन्ये । **पाकादन्यत्रे**त्याद्यपि चिन्त्यम्,अर्थान्तरे वृत्तौ मानाऽभावात् । **परिभाषाभ्यामिति** । विरोधेऽनित्यत्वादुभयोरप्यप्रवृत्तिरिति भावः । **मारणेत्यादि।** मारणे सम्पूर्वकस्यैव

वाऽर्थेषु ज्ञानातिर्मित् । 'ज्ञप मिच्चे'ति चुरादौ। ज्ञापनं मारणादिकं च तस्यार्थः । कथं 'विज्ञापना भर्तृषु सिद्धि-मेती'ति, 'तज्ज्ञापयत्याचार्य'इति च?। शृणु। माधवमतेऽचाक्षुषज्ञाने मित्त्वाऽभावात् । 'ज्ञापनमात्रे मित्त्व'मिति मते तु 'ज्ञा नियोगे'इति चौरादिकस्य,धातूनामनेकार्थत्वात् । 'निशानेष्वि'ति पठतां हरदत्तादीनां मते तु न काप्य-नुपपत्तिः।कम्पने ८१२ चलिः।'चल कम्पने'इति ज्वलादिः।चलयति शाखाम्।कम्पनादन्यत्र तु–शीलं चालयति। अन्यथा करोतीत्यर्थः।हरतीत्यर्थ इति स्वामी। सूत्रं चालयति। क्षिपतीत्यर्थः८१३ छदिरूर्जने। 'छद अपवारणे'इति यौजादिकस्य स्वार्थे णिजभावे मित्त्वार्थोऽयमनुवादः। अनेकार्थत्वादूर्जनेऽर्थे वृत्तिः।छदन्तं प्रयुङ्क्ते–छदयति।बलवन्तं

त.]संज्ञपयति । मारयतीत्यर्थः । विष्णुं विज्ञपयति । संतोषतीत्यर्थः । संज्ञपयति रूपम् । माधवमते–दर्शयतीत्यर्थः । मतान्तरे तु बोधयतीत्यर्थः । प्रज्ञपयति शरम् । तीक्ष्णीकरोतीत्यर्थः । स्यादेतत्–'निशामनं ज्ञापनमात्र'मिति वदतां मते 'श्लाघह्नुङ्स्थे'ति सूत्रे 'ज्ञीप्स्यमानो बोधयितुमभिप्रेत' इति वृत्तिग्रन्थः सङ्गच्छतां नाम, माधवमते तु तद्ग्रन्थस्य का गतिरित्यत आह–ज्ञप मिच्चेति । ज्ञापनमिति । एवं च वृत्तिग्रन्थो माधवमतेऽपि सङ्गच्छत इति भावः । मारणा-दिकं चेति । एतच्च मतान्तराभिप्रायेणोक्तम् । चुरादिषु तु 'ज्ञप मिच, अयं ज्ञाने ज्ञापने च वर्तते'इति वक्ष्यमाण-त्वात् । कथमिति । ज्ञाधातोर्ज्ञपधातोश्च णौ मित्त्वाद्ध्रस्वेन भवितव्यमिति भावः । मित्त्वाऽभावादिति । एवं च बोधने ज्ञापयति, ज्ञपधातोस्तु ज्ञपयतीति रूपद्वयं माधवमते बोध्यम् । छदिरूर्जने । 'ऊर्ज बलप्राणनयोः' । अत्र छदि-र्मित् । चुराद्यन्तर्गणो यौजादिकः । स्वार्थे णिजभाव इति । 'आधृषाद्वे'ति वैकल्पिकत्वादिति भावः । लडयति

बा.]आह–एष्वेवेति।'ज्ञा अवबोधने'इति श्नाविकरणस्यैव मारणादिष्वर्थेषु णौ मित्त्वार्थमिहानुवादात् श्नाविकरण एवायमिति भावः । जानातेर्मित्त्वफलं तु णौ ह्रस्वः–'पशुं संज्ञपयति' । अक्षतं मारयतीत्यर्थः । 'हरिं ज्ञपयति' । संतोषयतीत्यर्थः । 'रूपं ज्ञपयति' । माधवमते दर्शयतीत्यर्थः। मतान्तरे तु बोधयतीत्यर्थः।'शरं ज्ञपयति'। तीक्ष्णीकरोतीत्यर्थः । ननु माधव-मते बोधयतीत्यर्थे ज्ञपयतीति कथं मित्त्वम्, तन्मते चाक्षुषज्ञानस्यैव निशामनशब्दार्थत्वादित्यत आह–ज्ञप मिच्चेति चुरादाविति । एवंच चौरादिकं ज्ञाधातुमादाय बोधनेऽप्यर्थे ज्ञपयतीति ह्रस्वः सङ्गच्छते इति भावः । ननु चौरा-दिकस्यापि ज्ञपेर्मारणतोषणनिशामनेष्वेवार्थेषु मित्त्वमस्तु, तत्रार्थान्तरनिर्देशाऽभावात् । तथाच माधवमते कथं बोधनेऽर्थे मित्त्वमित्यत आह–ज्ञापनं मरणादिकं चेति । ज्ञापनं मारणं तोषणं निशामनं च, तस्य–चौरादिकस्य ज्ञपधातोरर्थो माधवमते इत्यर्थः । कथमिति । ज्ञाधातोर्ज्ञपधातोश्च णौ मित्त्वाद्ध्रस्वप्रसङ्गादिति भावः । शृणिवति । 'उत्तर'मिति शेषः । मित्त्वाऽभावादिति । 'ह्रस्वो ने'ति शेषः । 'विज्ञापने'त्यत्र 'तज्ज्ञापयती'त्यत्र च अचाक्षुष-मेवाऽऽत्मज्ञानं विवक्षितमिति भावः । ननु 'ज्ञापनमात्रे मित्त्व'मिति मते 'विज्ञापने'त्यत्र 'तज्ज्ञापयती'त्यत्र च मित्त्वं दुर्वारमित्यत आह–ज्ञापनमात्रे इति । चौरादिकस्येति । 'विज्ञापनेति. ज्ञापयतीति च रूप'मिति शेषः । 'नान्ये मितोऽहेतौ'इति निषेधाच्च तस्य मित्त्वमिति भावः। ननु नियोगार्थस्य तस्य कथं ज्ञापने वृत्तिरित्यत आह–धातूना-मिति । न कापीति । 'विज्ञापने'त्यत्र, 'ज्ञापयती'त्यत्र च ज्ञापनार्थवृत्तित्वाज्ज्ञापनस्य च मारणतोषणतीक्ष्णीकरणा-न्यत्वाच्च तस्मिन्नर्थे ज्ञाधातोर्मित्त्वप्रसक्तिरिति भावः । एवंच माधवमते बोधने ज्ञाधातोर्ज्ञापयतीत्युपधादीर्घः । ज्ञपधातोस्तु ज्ञपयतीत्युपधाह्रस्व इति रूपद्वयमपि साध्विति स्थितम् । कम्पने चलिरिति । इका निर्देशोऽयम् । चलधातुः कम्पने मिदित्यर्थः । ज्वलादिरिति । तस्य चलेः कम्पने मित्त्वार्थोऽत्राऽनुवाद इति भावः । शीलं चालयतीति । अत्र कम्पनार्थकत्वाऽभावान्न मित्त्वमिति भावः । तदाह–अन्यथा करोतीत्यर्थ इति । धातूनामनेकार्थत्वादिति भावः । छदिरूर्जने इति । इका निर्देशोऽयम् । छदधातुरूर्जने मिदित्यर्थः । ऊर्जनं–बलवत्करणं, प्राणनं वा, 'ऊर्ज बलप्राणनयो'रित्युक्तेः । अन्यत्र पठितस्यात्रार्थविशेषे णौ मित्त्वार्थोऽनुवाद इति सिद्धान्तः । छदधातुस्त्वयं चुराद्यन्तर्गणे युजादौ पठितः । तस्याऽत्रानुवादो व्यर्थः, 'नान्ये मितोऽहेता'विति ज्ञापादिपञ्चक-व्यतिरिक्तस्य चुरादौ मित्त्वनिषेधादित्यत आह–छद अपवारणे इति । चुराद्यन्तर्गणयुजादिपठितस्य 'आ धृषाद्वे'ति स्वार्थिकणिजभावपक्षे ऊर्जनेऽर्थे मित्त्वार्थोऽनुवाद इत्यर्थः। [हेतुमण्णिचीतियावत्]। स्वार्थिकणिचि सत्येव 'नान्ये मित'इति निषेधप्रवृत्तेरिति भावः । नन्वपवारणार्थकस्य छदेः कथमूर्जने वृत्तिरित्यत आह–अनेकार्थत्वादिति । ननु स्वार्थणिज-भावे सति मित्त्वं किमर्थमित्यत आह–छदयतीति । अत्र हेतुमण्णिचि ह्रस्वः । 'नान्ये मित'इति निषेधस्तु हेतु-

शे.]प्रयोग इति पुरुषकारे उक्तम्।कथमिति–माधवाऽन्यमते आक्षेपः।तद्धनयन्नाह–माधवेति।अत्र माधव[स्यैव]मतं ज्यायः । कम्पने चलिरिति । कम्पनेऽर्थे चलधातुरित्यर्थः । एवमन्यत्रापि । स्वार्थे णिजभावे इति । 'आधृषा-द्वे'ति वैकल्पिकत्वादित्यर्थः । स्वार्थे णिचि त्विति । 'नान्ये मितः' इत्यस्य प्रवृत्तेरिति भावः । जिह्ममिति ।

प्राणवन्तं वा करोतीत्यर्थः। अन्यत्र–छादयति। अपवारयन्तं प्रयुङ्क्ते इत्यर्थः। स्वार्थे णिचि तु–छादयति। बलीभवति, प्राणीभवति, अपवारयति वेत्यर्थः। जिह्वोन्मथने ८१४ लडिः। 'लड विलासे' इति पठितस्य मित्त्वार्थोऽनुवादः। उन्मथनं–ज्ञापनम्। जिह्वाशब्देन षष्ठीतत्पुरुषः। लडयति जिह्वाम्। तृतीयातत्पुरुषो वा। लडयति जिह्वया। अन्ये तु जिह्वाशब्देन तद्व्यापारो लक्ष्यते। समाहारद्वन्द्वोऽयम्। लडयति शत्रुम्। लडयति दधि। अन्यत्र–लाडयति पुत्रम्। ८१५ मदी हर्षग्लेपनयोः। ग्लेपनं दैन्यम्। दैवादिकस्य मित्त्वार्थोऽयमनुवादः। मदयति। हर्षयति, ग्लेपयति वेत्यर्थः। अन्यत्र–मादयति। चित्तविकारमुत्पादयतीत्यर्थः। ८१६ ध्वन शब्दे। भाव्ययं मित्त्वार्थमनूद्यते। ध्वनयति घण्टाम्। अन्यत्र–ध्वानयति। अस्पष्टाक्षरमुच्चारयतीत्यर्थः।

अत्र भोजः–'दलि-वलि-स्खलि-रणि-ध्वनि-त्रपि-क्षपयश्चे'ति पपाठ। तत्र ध्वनिरणी उदाहृतौ। 'दल विशरणे'। 'वल संवरणे'। 'स्खल संचलने'। 'त्रपूष् लज्जाया'मिति गताः। तेषां णौ–दलयति। वलयति। स्खलयति। त्रपयति। 'क्षै क्षये' इति वक्ष्यमाणस्य कृतात्वस्य पुका निर्देशः। क्षपयति। ८१७ स्वन अवतंसने। 'शब्दे' इति पठिष्यमाणस्यानुवादः। स्वनयति। अन्यत्र–स्वानयति। (ग) घटादयो मितः। मित्संज्ञा इत्यर्थः।

---

त.]जिह्वामिति। जिह्वां ज्ञापयतीत्यर्थः। जिह्वयेति। जिह्वया पदार्थान्तरं ज्ञापयतीत्यर्थः। जिह्वाव्यापारे उदाहरण माह–लडयति शत्रुमिति। शत्रुमुद्दिश्य गालिदानादिकं [गालनादिकं]करोतीत्यर्थः। लडयति दधीति। उन्मथ्नाति। विलोडयतीत्यर्थः। केचित्तु जिह्वाव्यापारे लडयति दधि, उन्मथने तु लडयति शत्रुमिति व्यत्यासेन योजयन्ति। लाडयति पुत्रमिति। शर्करादिदानेनाऽनुकूलयतीत्यर्थः। ध्वनिरणी उदाहृताविति। ध्वनिरव्यवधानेनोदाहृतः, रणिस्तु कण गण गतावित्यत्रेत्यर्थः। स्वन अवतंसने। अवतंसनं–भूषणम्। स्वनयतीति। भूषयतीत्यर्थः। अस्वनीत्। अस्वा[illegible]। अस्वनि। अस्वानि। स्वनंस्वनम्। स्वानंस्वानम्। घटादयो [मितः]। मित्संज्ञा इत्यर्थ इति। अन्ये तु मकारानुबन्धा इति व्याचक्षते। 'घटम् चेष्टाया'मिति प्रत्येकं पाठे गौरवादेकत्रैव सर्वेषां मित्संज्ञा, मकारानुबन्धकत्वं

---

बा.]मणिणिचि नेति भावः। अन्यत्रेति। ऊर्जनादन्यत्र अपवारणे इत्यर्थः। स्वार्थे णिचि त्विति। 'नान्ये मितः' इति निषेधस्य तत्र प्रवृत्तेरिति भावः। जिह्वोन्मथने लडिरिति। इका निर्देशोऽयम्। लडधातुर्जिह्वोन्मथने मिदित्यर्थः। लडेति। 'लड विलासे' इति टवर्गान्तेषु भ्वादौ पठितस्य जिह्वोन्मथनेऽर्थे मित्त्वार्थोऽनुवाद इत्यर्थः। एवंच धातुभेदाऽभावात्सर्वत्रैव मित्त्वकार्यं भवति। गणभेदाद्धातुभेदे मित्त्वतदभावयोर्विकल्पः स्यादिति भावः। लडयति जिह्वामिति। रसनां रसान् ज्ञापयतीत्यर्थः। 'गतिबुद्धी'ति द्विकर्मकोऽयम्। लडयति जिह्वयेति। देवदत्तो रसान् जानाति, तज्जिह्वया ज्ञापयतीत्यर्थः। तद्व्यापार इति। शब्दप्रयोगादिजिह्वाव्यापार इत्यर्थः। समाहारेति। जिह्वा च उन्मथनं चेति समाहारद्वन्द्वः। जिह्वाव्यापारे उदाहरति–लडयति शत्रुमिति। 'गेहेशूर' इत्यादिशब्दप्रयोगेण गर्हत इत्यर्थः। 'उन्मथनं लोडन'मित्यभिप्रेत्योदाहरति–लडयति दधीति। विलोडयतीत्यर्थः। अन्यत्रेति। जिह्वोन्मथनादन्यत्रेत्यर्थः। लाडयति पुत्रमिति। क्रीडयतीत्यर्थः। ग्लेपनं दैन्यमिति। दीनीभवनमित्यर्थः। ननु लडादौ शपि मदतीत्यादि स्यादित्यत आह–दैवादिकस्येति। तथाच श्यन्विकरण एवाऽयमिति भावः। ध्वन शब्दे इति। पूर्वमनुनासिकान्तेषु 'अण रणे' त्यत्र ध्वणधातुर्मूर्धन्यान्तः पठितः, अयं तु दन्त्यान्त इति भेदः। भावीति। ज्वलादौ 'ध्वन शब्दे' इति पठिष्यमाण एवात्र ध्वन्यात्मके अनुच्चारणजन्ये शब्दने मित्त्वार्थमनूद्यते इत्यर्थः। धातुभेदे तु मित्त्वतदभावौ स्यातामिति भावः। ध्वनयति घण्टामिति। शब्दायमानां करोतीत्यर्थः। अन्यत्रेति। अस्पष्टोच्चारणात्मके शब्दने इत्यर्थः। अत्रेति। 'घटादा' वित्यर्थः। तत्रेति। दलिवल्यादिष्वित्यर्थः। उदाहृताविति। 'घटादा' विति शेषः। तत्र ध्वनिरनुपदमेवोदाहृतः। रणिस्तु 'कण रण गता' वित्यत्रेति बोध्यम्। भोजमते प्रागनयोः पाठो नेति न पौनरुक्त्यम्। गता इति। भ्वादौ पठिता इत्यर्थः। 'इह मित्त्वार्थमनूद्यन्ते' इति शेषः। धात्वन्तरत्वे तु मित्त्वतदभावौ स्यातामिति भावः। ननु क्षपेरत्र पाठान्मित्त्वे णौ ह्रस्वे 'क्षपयती' ति वक्ष्यति। अस्त्वेवम्, तथापि 'क्षै क्षये' इति भ्वादौ पठिष्यमाणस्य णौ आत्वे पुकि क्षापयतीत्यपि स्यात्, क्षैधातोः क्षपीत्यनुवादाऽसंभवात्। तत्राह–क्षै इत्यादि। णौ आत्वे पुकि मित्त्वाद्ध्रस्वे सति क्षपीति क्षै इत्यस्यानुवादसंभव इति भावः। स्वन अवतंसने इति। अवतंसनम्–अलङ्कृतिः। पठिष्यमाणस्येति। घटादिगणादूर्ध्वं 'स्वन शब्दे' इति पठिष्यमाणस्य स्वनेरवतंसनेऽर्थे णौ मित्त्वार्थोऽत्रानुवाद इत्यर्थः। धात्वन्तरत्वे तु मित्त्वतदभावौ स्यातामिति भावः। स्वनयतीति। भूषयतीत्यर्थः। अन्यत्रेति। अवतंसनादन्यत्र शब्देऽर्थे णौ मित्त्वाऽभावान्न ह्रस्व इति भावः। घटादयो मित इति। गणसूत्रम्। ननु घटादिषु मकारानुबन्धाऽदर्शनात्कथं मितस्ते स्युरित्यत आह–मित्सं-

---

शे.]त्वं ज्ञापयतीत्यर्थः। जिह्वयेति। तया ज्ञापयतीत्यर्थः। लडयति शत्रुमिति। गालयतीत्यर्थः। दधीति। उन्मथ्नाति।

(ग) जनीजॄष्क्नसुरञ्जोऽमन्ताश्च। 'मित' इत्यनुवर्तते। 'जॄ' षिति षित्त्वनिर्देशाज्जीर्यतेर्ग्रहणम्। जृणातेस्तु-जारयति। केचित्तु 'जनी जॄ-ष्णसु' इति पठित्वा 'ष्णसु निरसने' इति दैवादिकमुदाहरन्ति। (ग) ज्वलह्वलह्मलनमामनुपसर्गाद्वा। एषां मित्त्वं वा। प्राप्तविभाषेयम्। ज्वलयति। ज्वालयति। उपसृष्टे तु नित्यं मित्त्वम्-प्रज्वलयति। कथं तर्हि प्रज्वालयति उन्नामयतीति ?। घञन्तात्तत्करोतीति णौ। कथं संक्रामयतीति ?। 'मितां ह्रस्वः' इति सूत्रे 'वा चित्तविरागे' इत्यतो 'वे' त्यनुवर्त्य व्यवस्थितविभाषाश्रयणादिति वृत्तिकृत्। एतेन 'रजो विश्रमयन् राज्ञां', 'धुर्यान्विश्रामयेति स' इत्यादि व्याख्यातम्। (ग) ग्लास्नावनुवमां च। अनुपसर्गादेषां मित्त्वं वा स्यात्। आद्ययोरप्राप्ते, इतरयोः प्राप्ते विभाषा। (ग) न कम्यमिचमाम्। अमन्तत्वात्प्राप्तं मित्त्वमेषां न स्यात्। कामयते। आमयति। चामयति। ८१८ (ग) शमो दर्शने। शाम्यतिर्दर्शने मित्स्यात्। निशामयति रूपम्। अन्यत्र तु 'प्रणिशम्य निशमय्य वधूः कथाः'। कथं तर्हि 'निशामय तदुत्पत्तिं विस्तराद्गदतो

त.] वाऽनेन सूत्रेण विधीयत इति भावः। जनीजॄष्। जनी प्रादुर्भावे। जॄष् वयोहानौ। क्नसु ह्वरणदीप्त्योः। त्रयोऽपि दिवादयः। रञ्ज रागे। दैवादिको भौवादिकश्च। अमन्ताः-क्रमिगमीत्यादयः। जनयति। जरयति। क्नसयति। रजयति मृगान्। रञ्जयति पक्षिणः। क्रमयति। गमयति। रमयति। ज्वलह्वल। एषां मित्त्वमिति। 'मित' इत्यनुवृत्तस्येह भावप्रधानता, 'अनुपसर्गा' दिति तु षष्ठ्यर्थे पञ्चमीत्येवं क्लेशेन व्याख्येयमिति भावः। 'नमोऽनुपसर्गाद्वे' ति पाठान्तरं, तत्र न कश्चित्क्लेशः। प्राप्तविभाषेति। ज्वल दीप्तौ, ह्वल ह्मल चलने इति त्रयाणां पूर्वपठितत्वात्, नमेस्त्वमन्तत्वादिति भावः। कथं संक्रामयतीति। क्रमेः 'नोदात्तोपदेशस्ये' ति वृद्धिप्रतिषेधाद्घञि 'क्रम' इत्येव भवति, न तु 'क्राम' इति पूर्वोक्तसमाधानस्यात्राऽसंभवात्पृथक् प्रश्नः। व्यवस्थितविभाषेत्यादि। क्वचिण्णौ मितां ह्रस्वो न प्रवर्तत इति भावः। वृत्तिकृदिति। केचित्तु घञन्तात्क्रमशब्दात्प्रज्ञाद्यणि क्रामशब्दं स्वीकृत्य तस्मात् 'तत्करोती' ति णौ सङ्क्रामयतीति समादधत इति भावः। इतरयोः प्राप्ते इति। वनेः पूर्वं पाठाद्वमेरमन्तत्वाच्चेति भावः। ग्लापयति। ग्लपयति।

बा.] ञ्ज्का इति। मित्कार्यभाज इत्यर्थः। जनीजॄषिति। गणसूत्रम्। जनी जॄष् क्नसु रञ्ज् एषां द्वन्द्वात्प्रथमाबहुवचनम्। अम् अन्ते येषां ते अमन्ताः-क्रमिगम्यादयः। एते अघटादित्वेऽपि मित इत्यर्थः। जीर्यतेरिति। 'जॄष् वयोहानौ' इति श्यन्विकरणस्येत्यर्थः। जृणातेस्त्विति। 'जॄ वयोहानौ' इति श्नाविकरणस्य षित्त्वाऽभावेनात्र ग्रहणाऽभावान्न मित्त्वमिति भावः। उदाहरन्तीति। तन्मते जृणातेरपि मित्त्वमिति भावः। ज्वलह्वलेत्यपि गणसूत्रम्। प्राप्तविभाषेयमिति। ज्वलह्वलह्मलां घटादित्वान्नमेर्मान्तत्वाच्च मित्त्वस्य प्राप्तेरिति भावः। उपसृष्टे त्विति। सोपसर्गे त्वित्यर्थः। कथं तर्हीति। अनुपसर्गादिति विशेषणे सति ज्वलेर्नमेश्च णौ मित्त्वविकल्पाऽभावाज्जनीजॄषिति मित्त्वाद्ध्रस्वो नित्यः स्यादित्याक्षेपः। समाधत्ते-घञन्तादिति। तत्करोतीति णावित्यनन्तरं 'समाधेय' मिति शेषः। प्रज्वलनं प्रज्वालः। उन्नमनम् उन्नामः। भावे घञ्। उपधावृद्धिः। प्रज्वालं करोतीति, उन्नामं करोतीति चार्थे 'तत्करोति तदाचष्टे' इति णिचि 'णाविष्ठव' दितीष्ठवत्त्वाट्टिलोपे सति तस्य स्थानिवत्त्वान्मित्त्वप्रयुक्तह्रस्वाऽभावे प्रज्वालि उन्नामीत्याभ्यां लटि तिपि शपि गुणे अयादेशे प्रज्वालयति उन्नामयतीति रूपे इति भावः। ननु संपूर्वात्क्रमेर्णौ संक्रामयतीति रूपमिष्यते, तत्र अमन्तत्वेन मित्त्वाद्ध्रस्वप्रसङ्गः। नच क्रमणं क्राम इति घञन्तात्तत्करोतीति णावुक्तरीत्या ह्रस्वाऽभाव इति समाधानं संभवति, क्रमेर्घञि हि 'नोदात्तोपदेशस्ये' ति वृद्धिप्रतिषेधे सति 'क्रम' इत्येव भवति, नतु 'क्राम' इति कृत्वा उक्तसमाधानाऽसंभवादित्यप्रेत्याक्षिपति-कथमिति। समाधत्ते-मितामिति। 'मितां ह्रस्वः' इति सूत्रे वेत्यनुवर्त्य मित्त्वाऽभावे संक्रामयतीति रूपमित्यन्वयः। ननु कदाचिद्ध्रस्वो दुर्वार इत्यत आह-व्यवस्थितेति। तथा चात्र ह्रस्वाऽभाव एवाश्रीयत इति भावः। वृत्तिकृदिति। भाष्ये तु नैतत् दृश्यते इति भावः। एतेनेति। व्यवस्थितविभाषाश्रयणेनेत्यर्थः। 'ग्लास्नावनुवमां चे' त्यपि गणसूत्रम्। प्रथमार्थे षष्ठी। अनुपसर्गादिति, मित इति, वेति चानुवर्तते। फलितमाह-अनुपसर्गादिति। आद्ययोरिति। ग्ला स्ना इत्यनयोरघटादित्वादप्राप्ते मित्त्वे, इतरयोर्वनुवमोः प्राप्ते मित्त्वे विभाषेत्यर्थः। तत्र वनेः 'वनु च नोच्यते' इति घटादौ पाठाद्वमेस्त्वमन्तत्वान्मित्त्वप्राप्तिरिति बोध्यम्। 'न कम्यमिचमा' मिति 'शमो दर्शने' इति च गणसूत्रम्। दर्शनं-चाक्षुषज्ञानम्। 'शम उपशमे' इति दैवादिकः श्यन्विकरण एवात्र गृह्यते नतु 'शम आलोचने' इति चौरादिकः, 'नान्ये मितोऽहेतौ' इति तस्य मित्त्वनिषेधात्। तदाह-शाम्यतिरिति। निशामयति रूपमिति। पश्यतीत्यर्थः। उपशमार्थकस्यापि अनेकार्थकत्वाद्दर्शने वृत्तिः। अन्यत्रेति। दर्शनादन्यत्रेत्यर्थः। निशमय्येति। श्रावयित्वेत्यर्थः। शमेर्ण्यन्तात् क्त्वो ल्यपि कृते 'ल्यपि लघुपूर्वा' दिति णेरयादेशः।

शो.] विलोडयतीत्यर्थः। दैवादिकस्येति। अस्यैवानुवाद इत्यर्थबोधनार्थमीदित्त्वमिति भावः। घञन्तादिति। णौ टिलोपे सति तस्य स्थानिवत्त्वान्न 'मितां ह्रस्वः' इति भावः। वृत्तिकृदिति। भाष्ये तु न दृश्यत इति भावः। प्राप्ते इति।

ममे'ति। शम आलोचन इति चौरादिकस्य। धातूनामनेकार्थत्वाच्छ्रवणे वृत्तिः—शाम्यतिवत्। ८१९ (ग) यमोऽपरिवेषणे। यच्छति भोजनातोऽन्यत्र मिन्न स्यात्। आयामयति। द्राघयति, व्यापारयति वेत्यर्थः। परिवेषणे तु—यमयति ब्राह्मणान्। भोजयतीत्यर्थः। 'पर्यवसितं नियमय'न्नित्यादि तु नियमवच्छब्दात्तत्करोतीति णौ बोध्यम्। (ग) ८२०स्खदिरवपरिभ्यां च। मिन्नेत्येव। अवस्खादयति। परिस्खादयति। 'अपाऽवपरिभ्य'इति न्यासकारः। स्वामी तु 'न कमी'ति नञ्मुत्तरत्रिसूत्र्यामनुवर्त्त्य 'शमः—अदर्शने'इति चिच्छेद। यमस्त्वपरिवेषणे मित्त्वमाह। तन्मते 'पर्यवसितं नियमयन्नि'त्यादि सम्यगेव। 'उपसृष्टस्य स्खदेश्चेदवादिपूर्वस्ये'ति नियमात्प्रस्खादयतीत्याह। तस्मात्सूत्रद्वये उदाहरणप्रत्युदाहरणयोर्व्यत्यासः फलितः। इदं च मतं वृत्तिन्यासादिविरोधा-

त.] ज्ञापयति। स्नपयति। वानयति। वनयति। वामयति। वमयति। **शाम्यतिवदिति**। यथा शाम्यतिर्निशामयतीत्यादौ दर्शने प्रयुज्यते तथा चुरादिः शमधातुरपि श्रवणे भविष्यतीत्यर्थः। **यमोऽपरिवेषणे। यच्छतिरिति**। 'यम उपरमे'इत्ययं धातुर्भोजनातोऽन्यत्र। भोजनशब्दो 'ण्यासश्रन्थो युच्'इति युजन्तो ज्ञेयः। परिवेषणमिह भोजनानुकूलव्यापारस्ततोऽन्यस्मिन्नर्थे मिन्निषेधः। **नियमयन्निति**। नियमवच्छब्दाण्णिचि विन्मतोर्लुकि शतरि शप्प्रत्यये गुणे च ज्ञेयम्। **व्यत्यासः फलित इति**। स्वामिमते त्वपरिवेषणे—आयामयति। परिवेषणे तु—यमयति ब्राह्मणान्। अवादि-

बा.] कथमिति। तर्हि—दर्शनार्थकस्यैव शमेर्मित्त्वनिषेधे सति, 'शृणु' इत्यर्थे मित्वाद्ध्रस्वप्रसङ्गान्निशामयेति कथमित्याक्षेपः। समाधत्ते—**चौरादिकस्येति**। 'निशामयेति रूप'मिति शेषः। 'नान्ये मितोऽहेता'विति तस्य मित्त्वनिषेधान्न ह्रस्व इति भावः। ननु चौरादिकस्य शमेरालोचनार्थकत्वात्कथं श्रवणे वृत्तिरित्यत आह—**धातूनामिति। शाम्यतिवदिति**। श्यन्विकरणस्य शमेरुपशमार्थकस्य यथा दर्शने वृत्तिस्तद्वदित्यर्थः। '**यमोऽपरिवेषणे**' इत्यपि गणसूत्रम्। भोजनपात्रे ओदनाऽपूपादिभोज्यद्रव्याणां स्थापनं परिवेषणम्। तदाह—**भोजनातोऽन्यत्रेति**। भुक्त्यनुकूलपरिवेषणादन्यत्रेत्यर्थः। 'यम उपरमे' इत्यस्य उपसर्गवशात्परिवेषणे, ततोऽन्यस्मिन्नप्यर्थे वृत्तिः संभवति। तत्र अपरिवेषणे वृत्तौ मित्त्वं नेत्यर्थः। **आयामयतीति**। अत्राऽपरिवेषणे वृत्तेर्न मित्त्वमिति भावः। तदाह—**द्राघयतीति**। दीर्घीकरोतीत्यर्थः। **व्यापारयतीति**। प्रवर्तयतीत्यर्थः। **यमयति ब्राह्मणानिति**। परिवेषणार्थकत्वान्मित्त्वमिति भावः। तदाह—**भोजयतीति**। भुञ्जते ब्राह्मणाः, तान्परिवेषणेन प्रवर्तयतीत्यर्थः। ननु 'पर्यवसितं नियमय'न्नित्यत्र अपरिवेषणार्थकतया मित्त्वाऽभावात्कथं ह्रस्व इत्यत आह—**पर्यवसितमित्यादि**। नियमनं नियमः। 'यमः समुपनिविषु चे'ति भावेऽप्प्रत्ययः। तस्मान्मतुप्। नियमवच्छब्दात्तत्करोतीति णिचि 'विन्मतोर्लुं'गिति मतुपो लुकि ण्यन्ताल्लटश्शतरि गुणाऽयादेशयोर्नियमयच्छब्द इति भावः। वस्तुतस्तु मतुपो लुकि टिलोपस्याऽप्राप्त्या 'अचो ञ्णिती'ति वृद्धौ पुगागमापत्तिः। ततश्च नियमवदित्यर्थकादर्शआद्यजन्तान्नियमशब्दात् 'तत्करोती'ति णिचि इष्ठवत्त्वाट्टिलोपे तस्य स्थानिवत्त्वादुपधावृद्ध्यभावे 'नियमय'न्निति समर्थनीयमिति शब्देन्दुशेखरे स्थितम्। **स्खदिरवपरिभ्यां चे**त्यपि गणसूत्रम्। स्खदिरिति इका निर्देशः। अव परि—आभ्यां परः स्खदधातुर्मिन्नेत्यर्थः। स्खद स्खदने इति घटादौ पाठान्मित्त्वप्राप्तिः। **परिस्खादयतीति**। अषोपदेशत्वेन आदेशसकारत्वाऽभावान्न ष इति भावः। **अपावेति**। 'स्खदिरपावपरिभ्यः' इति न्यासकारः पपाठेत्यर्थः। तन्मते अपस्खादयतीत्यत्रापि मित्त्वाऽभावान्न ह्रस्वः। **स्वामी त्विति**। 'न कम्यमिचमा'मित्यत्र श्रुतो नञ् 'शमो दर्शने' 'यमोऽपरिवेषणे' 'स्खदिरवपरिभ्यां चे'ति त्रिषु सूत्रेषु नानुवर्तते। शमः—अदर्शने इति च्छेदः। शमधातुर्दर्शने मित्स्यादित्यर्थः। अमन्तत्वादेव सिद्धे नियमार्थमिदम्। 'अदर्शन एव शमधातुर्मित्स्यान्नतु दर्शने' इति स्वाभिमतम्। इदं च पर्यवसानगत्या पूर्वमताज्ञातिरिच्यते। **यमस्त्विति**। यमधातोस्तु अपरिवेषण एव मित्त्वमाहेत्यर्थः। अमन्तत्वादेव सिद्धेरपरिवेषण एव यमधातुर्मिन्न तु परिवेषण इति फलति। एवं च द्राघयति व्यापारयति वेत्यर्थे मित्त्वाद्ध्रस्वे 'आयमयती'त्येव रूपम्। परिवेषणे तु मित्त्वाऽभावाद्ध्रस्वाऽभावे 'यामयति ब्राह्मणा'निति भवतीति पूर्वमताद्विपरीतं फलति। एवं च 'पर्यवसितं नियमय'न्नित्यत्र यमेरपरिवेषणार्थत्वान्मित्त्वे ह्रस्वो निर्बाधः। तदाह—**तन्मते इति**। स्खदेर्घटादित्वादेव मित्त्वसिद्धेः 'स्खदिरवपरिभ्यां चे'ति सूत्रमपि नियमार्थम्। 'सोपसर्गस्य चेत्स्खदेर्मित्त्वं तर्हि अवपरिभ्यां परस्यैव मित्त्वं न तूपसर्गान्तरा'दिति। एवं च प्रस्खादयतीत्यत्र मित्त्वाऽभावान्न ह्रस्वः। अवस्खदयति परिस्खदयतीत्यत्र तु मित्त्वाद्ध्रस्व इति फलति। तदाह—**उपसृष्टस्येति**। सोपसर्गस्येत्यर्थः। पूर्वमते तु अवपरिभ्यां परस्य मित्त्वनिषेधादवस्खादयति परिस्खा-

शे.] वनः पूर्वपाठाद्वमोऽमन्तत्वादिति भावः। अत्र वनोस्तानादिकस्यापि ग्रहणमित्यन्ये। **यमोऽप। परिवेषणं**—भोजनानुकूलः पात्रेऽन्नस्थापनादिरूपो व्यापार इति बोध्यम्। **नियमवच्छब्दादिति**। न च मतुब्लोपे 'टे'रित्यस्याऽप्राप्तौ वृद्धौ पुगापत्तिः, 'नियमव'दित्यर्थकार्शआद्यजन्तनियमशब्दादित्यर्थेनाऽदोषात्। **उपेक्ष्यमिति**। 'नियमय'न्नित्यादिः

दुपेक्ष्यम् । ८२१ फण गतौ । 'ने'ति निवृत्तम् , असंभवात् । निषेधात्पूर्वमसौ न पठितः, फणादिकार्यानुरोधात् । फणां च सप्तानाम् ।६।४।१२५। एषां वा एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च । फेणतुः । फेणुः । फेणिथ।पफणतुः।पफणुः।पफणिथ।फणयति।(ग) वृत् । घटादिः समाप्तः। फणेः प्रागेव वृदित्येके । तन्मते फाणयतीत्येव ।८२२ राजृ दीप्तौ । स्वरितेत् । राजति । राजते ।रेजतुः। रराजतुः। रेजे । रराजे । 'अत' इत्यनुवृत्तावपि विधानसामर्थ्यादात एत्वम् । ८२३ टुभ्राजृ ८२४ टुभ्राशृ ८२५ टुभ्लाशृ दीप्तौ । अनुदात्तेतः । भ्राजतेरिह पाठः फणादिकार्यार्थः । पूर्वं पाठस्तु भ्रस्जादिषत्वाऽभावार्थः । तत्र हि राजिसाहचर्यात्फणादेरेव ग्रहणम् । भ्रेजे । बभ्राजे । 'वा भ्राशे'ति श्यन्वा । भ्राश्यते । भ्राशते । भ्रेशे । बभ्राशे । भ्लाश्यते । भ्लाशते । भ्लेशे । बभ्लाशे । द्वावपीमौ तालव्यान्तौ । ८२६ स्यमु ८२७ स्वन ८२८ ध्वन शब्दे । स्यमादयः क्षरत्यन्ताः परस्मैपदिनः । स्येमतुः । सस्यमतुः । अस्यमीत् । स्वेनतुः । सस्वनतुः । अस्वानीत् । अस्वनीत् । विष्वणति । अवष्वणति । सशब्दं भुङ्क्ते इत्यर्थः। 'वेश्च स्वन'इति षत्वम् । फणाद्यो गताः।

---

त.]पूर्वस्य स्खदेः-अवस्खदयति । परिस्खदयति । प्रपूर्वस्य तु प्रस्खादयतीत्येवं व्यत्यासो ज्ञेयः । उपेक्ष्यमिति । 'न पादम्या'दिति सूत्रे 'आयामयते'इत्युदाहृत्य वृत्तावुक्तं-'यमोऽपरिवेषणे इत्यनेन मित्त्वं प्रतिषिध्यते'इति । न्यासेऽपि 'तत्र न कम्यमीत्यतो नेत्यनुवर्तते' इत्युक्तम् । एवं हि निषेधानन्तरं पाठ उपपद्यते । अन्यथा 'न कमी'त्यतः प्रागेव त्रिसूत्रीं पठेदिति भावः। फण गतौ। फणति।लुङि। अफाणीत् । अफणीत्। णौ तु 'चिण्णमुलो'रिति वा दीर्घः। अफणि । अफाणि । फणंफणम् । फाणंफाणम् । असंभवादिति। मित्त्वप्राप्तिं विना निषेधाऽसंभवादिह 'ने'त्येतन्न संबध्यते किंतु मित्संज्ञैव । तदेतदाह-फणयति । वृत् । सामर्थ्यादिति । फणादिषु पाठसामर्थ्यादित्यर्थः । तत्र हीति ।

---

बा.]दयतीति न ह्रस्वः।प्रस्खदयतीत्यत्र तु अवपरिपूर्वकत्वाऽभावेन मित्त्वनिषेधाऽभावाद्ध्रस्व इति विपरीतम्।तस्मादिति। 'यमोऽपरिवेषणे,' 'स्खदिरवपरिभ्यां चे'ति सूत्रद्वये उक्तरीत्या मित्त्वनियमविध्याश्रयणादुदाहरणप्रत्युदाहरणयोरुक्तरीत्या व्यत्यासः फलित इत्यर्थः। उपेक्ष्यमिति । 'न पादम्या'दिति सूत्रव्याख्यावसरे 'यमोऽपरिवेषणे इति मित्त्वं प्रतिषिध्यत' इति वृत्तिन्यासयोरुक्तत्वादिति भावः । केचित्तु स्वामिमते 'पर्यवसितं नियमय'न्नित्यादिसामञ्जस्यात्तावेवोपेक्ष्यावित्याहुः ।

फण गताविति।नतु घटादित्वेऽपि नायं मित्, इतःप्राक् 'स्वन अवतंसने' इत्युत्तरमेव 'घटादयो मित' इत्युक्तेः। अतः कथमत्र निषेधः । तत्राह-नेति निवृत्तमिति । प्राप्तिं विना मित्त्वस्य निषेधाऽसंभवादिह नेति नानुवर्तते, किंतु मिदित्येवानुवर्तते इत्यर्थः । ननु फण गतावित्यत्र मिन्नेति यदि नानुवर्तते तर्हि 'न कम्यमिचमा'मिति निषेधकाण्डात् प्रागेवाऽयं कुतो न पठितः ? । तत्राह-निषेधात्पूर्वमसौ न पठित इति । कुत इत्यत आह-फणादिकार्यानुरोधादिति । निषेधकाण्डात्प्रागेव फणेः पाठे कम्यमिचमादीनामपि फणादिष्वन्तर्भावः स्यादिति भावः । फणां च । 'अत एकहल्मध्ये' इत्यतो लिटीति, 'थलि च सेटी'ति चानुवर्तते । 'घ्वसोः'इत्यत एदिति, 'गमहने'त्यतः कितीति, 'वा जॄभ्रमुत्रसा'मित्यतो वेति च । तदाह-एषामिति । फणादीनामित्यर्थः । फणामिति बहुवचनात्तदादिलाभः । 'फण गतौ' इत्यत्र मिदित्येवानुवर्तते, नेति तु नानुवर्तते इत्यस्य प्रयोजनमाह-फणयतीति । वृदिति-कर्तरि क्विबन्तम् । वृतुधातुरिह समाप्त्यर्थकः । तदाह-घटादिः समाप्त इति । फणेः प्रागेवेति । एवं सति फणेरघटादित्वाच्च मित्त्वमिति भावः । तदाह-तन्मते फणयतीत्येवेति । इति घटादयः । राजृ दीप्ताविति । इत आरभ्य षण्णामेत्वाऽभ्यासलोपौ फणादित्वात्पक्षे भवतः । तदाह-रेजतुरित्यादि । ननु 'फणां च सप्ताना'मित्यत्र अत इत्यनुवृत्तेः कथमिह एत्वाभ्यासलोपावित्यत आह-अत इत्यनुवृत्तावपीति । अत इति नानुवर्तते । तदनुवृत्तावपि फणादिसप्तानामपि वचनसामर्थ्याद्राजृधातोराकारस्याप्येत्वाभ्यासलोपस्य विकल्पः स्यादेवेत्यर्थः । 'अत' इति राजादिधातौ न संबध्यते, असंभवादिति यावत् । टु भ्राजृ इत्यादि । टुरित् 'ट्वितोऽथुच्' इत्येतदर्थः । अनुदात्तेत इति । 'एते त्रय' इति शेषः । ननु पूर्वं चवर्गान्तेष्वनुदात्तेत्सु भ्राजतेः पाठात्पुनरपि तस्येह पाठः किमर्थ इत्यत आह-भ्राजतेरिति । तर्हि 'एजृ भ्रेजृ भ्राजृ दीप्तौ' इति भ्राजेः पूर्वं पाठो व्यर्थ इत्यत आह-पूर्वं पाठस्त्विति । षत्वाऽभावार्थ इति । 'व्रश्चभ्रस्जे'ति षत्वविधौ भ्राजेर्ग्रहणाऽभावार्थ इत्यर्थः। ननु पूर्वं पठितस्यापि षत्वविधौ कुतो न ग्रहणमित्यत आह-तत्र हीति । षत्वविधौ हीत्यर्थः । एत्वाभ्यासलोपयोः पाक्षिकत्वादाह-भ्रेजे बभ्राजे इति । द्वावपीमाविति। द्वितीयतृतीयावित्यर्थः। ननु 'विष्वणती'त्यत्र कथं षत्वं ?, केवलदन्त्याऽजन्तसादित्वाऽभावेनाऽषोपदेशतया आदेशसकारत्वाऽभावात्। अवष्वणतीत्यत्र इण्कवर्गाभ्यां परत्वाऽभावाच्च षत्वस्य प्रसक्तिः। 'सात्पदाद्यो'रिति निषेधाच्चेत्यत

---

शे.]सामञ्जस्येनाऽत्र मते उपपत्तेस्तावेवोपेक्ष्याविति कश्चित्। असम्भवादिति । प्राप्तिं विना निषेधाऽसम्भवादित्यर्थः। फणेः प्रागेवेति । 'ग्रो व्यती'रफाणयन्सुयुक्तामुपदाशुषे'इत्यादिश्रौतप्रयोगोऽत्रानुकूल इति बोध्यम् । तत्र हीति ।

दध्वनतुः। ८२९ षम ८३० ष्टम अवैकल्ये। ससाम। तस्ताम। ८३१ ज्वल दीप्तौ। 'अतो ल्रान्तस्य'। अज्वालीत्। ८३२ चल कम्पने। ८३३ जल घातने। घातनं-तैक्ष्ण्यम्। ८३४ टल ८३५ ट्वल वैक्लव्ये। ८३६ ष्ठल स्थाने। ८३७ हल विलेखने। ८३८ णल गन्धे। बन्धन इत्येके। ८३९ पल गतौ। पलति। ८४० बल प्राणने धान्यावरोधने च। बलति। बेलतुः। बेलुः। ८४१ पुल महत्त्वे। पोलति। ८४२ कुल संस्त्याने बन्धुषु च। संस्त्यानं-सङ्घातः।बन्धुशब्देन तद्व्यापारो गृह्यते। कोलति। चुकोल। ८४३ शल ८४४ हुल ८४५ पत्लृ गतौ। शशाल। जुहोल। पपात। पेततुः। पतिता। **पतः पुम्** ।७।४।१९। अङि परे। अपप्तत्। 'नेर्गदे'ति णत्वम्। प्रण्यपप्तत्। ८४६ क्वथे निष्पाके। क्वथति। चक्वाथ। अक्वथीत्। ८४७ पथे गतौ। अपथीत्। ८४८ मथे विलोडने। मेथतुः। अमथीत्। ८४९ टुवमु उद्गिरणे। इहैव निपातनादृत इत्वमिति **सुधाकरः**। ववाम। ववमतुः। वादित्वादेत्वाभ्यासलोपौ न। **आगवृत्तौ** तु वेमतुरित्याद्यप्युदाहृतं, तद्भाष्यादौ न दृष्टम्। ८५० भ्रमु चलने। 'वा भ्राशे'ति श्यन्वा। भ्रम्यति। भ्रमति।

त.]षत्वविधौ हीत्यर्थः। तथा च विभ्राट्। विभ्राड्भ्याम्। पूर्वं पठितस्य तु विभ्राक् विभ्राग्भ्यामित्यादि सिध्यतीति भावः। **अस्यमीदिति**। मान्तत्वान्न वृद्धिः। अथ ज्वलादिः। **अज्वालीदिति**। 'अतो ल्रान्तस्ये'ति वृद्धिः। **वैक्लव्य इति**। वैक्लव्यं-भयादिजनितोद्विग्नता। **तद्व्यापार इति**। बन्धुतानुकूलो व्यापारः। **पतः पुम्**। मित्त्वादन्त्यादचः परः। **अक्वथीदिति**। एदित्वान्न वृद्धिः। एवम्-अपथीत्। अमथीदित्यत्रापि। **टुवमु**। केचिदमुमुदितं पठित्वा वान्त्वा वमित्वेत्युदाहरन्ति, तत्तु वामनेन विरुध्यते। तेन हि 'आदितश्चे'ति चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य 'वान्त' इत्यत्र इडभावः साधितः। उदित्त्वे तु 'यस्य विभाषे'त्यनेनैव 'वान्त' इति सिद्धेस्तदसङ्गतं स्यात्। एवं च क्त्वाप्रत्यये वमित्वेत्येव साधु। **निपातनादिति**। अन्यथा गुणे सति उद्वरण इति स्यात्। यद्यपि अर्थनिर्देश आधुनिकस्तथापि पृषोदरादित्वमित्यत्रैव तात्पर्यं बोध्यत्। **इत्याद्यप्युदाहृतमिति**। 'वेमुश्च केचिद्बुधिर'मित्यादिप्रयोगानुरोधेन तथोदाहृतमित्याहुः। ननु वादित्वेन निषेधादेत्वाभ्यासलोपौ कथमिह स्यातामिति चेत्। अत्राहुः-'न शसदद-वादिगुणाना'मिति सूत्रितेऽपि वेत्यकारान्तसङ्घातग्रहणेनेष्टसिद्धेरादिग्रहणमौपदेशिकप्रतिपत्त्यर्थम्। 'एकान्ता अनुबन्धा' इति च स्वीक्रियते। तथा च नायं वादिः, किं तु ट्वादिरिति। अन्ये तु वमेरादौ 'लोपो व्यो'रिति लोपेन यकारः प्रश्लिष्यते। ततश्चोपदेशे वादित्वाऽभावान्निषेधो नेत्याहुः। **भ्रमु** चलने। मण्डलाकारेण चलनमेव धात्वर्थो, न तु चलनमात्रम्। तदभाववद्विशेष्यकं तत्प्रकारकज्ञानं च धात्वर्थः।'शुक्तिं पश्यन् रजतमिति भ्रमती'ति प्रयोगात्। 'उदितो वे'ति क्त्वायां वेट्। भ्रमित्वा। भ्रान्त्वा। 'यस्य विभाषे'ति निष्ठायां नेट्। भ्रान्तः। नन्वस्य ज्वलादिगणे पाठः किमर्थः। न चात्र णप्रत्ययार्थमेव पाठ इति वाच्यं, पचादेराकृतिगणत्वादच्प्रत्ययेनाऽपि 'भ्रम' इति रूपसिद्धेः,'नोदात्तोपदेशस्ये'ति वृद्धिनिषेधाण्णप्रत्यये अच्प्रत्यये च रूपस्य तुल्यत्वादिति चेत्। अत्राहुः-यदि पचादित्वादच्प्रत्ययः स्यात्तर्हि 'अभ्रम'

बा.]आह-वेश्च स्वन इतीति। तत्र चकारेण 'अवाचे'त्यपि लभ्यत इति भावः। **फणादयो गता इति**। 'ध्वनतेः प्रा'गिति शेषः। ततश्च ध्वनेर्न फणादिकार्यमिति भावः। तदाह-**दध्वनतुरिति**। **षम ष्टमेति**। षोपदेशौ। **तस्तामेति**। सत्त्वे सति ष्टुत्वनिवृत्तिरिति भावः। **तैक्ष्ण्यमिति**। तीक्ष्णीभवनमित्यर्थः। **टल ट्वल**। वैक्लव्यं-भयादिजनितो व्यग्रीभावः। णल। णोपदेशोऽयम्। **गन्धः**-गन्धक्रिया। **तद्व्यापार इति**। बन्धुतानुकूलो विवाहादिव्यापार इत्यर्थः।

पत्लृधातुस्तवर्गप्रथमान्तः सेट्कः।लुङि लृदित्त्वाच्च्लेरङि कृते अपत् अ त् इति स्थिते-**पतःपुम्**। शेषपूरणेन सूत्रं व्याचष्टे-**अङि परे इति**। 'ऋदृशोऽङी'इत्यतस्तदनुवृत्तेरिति भावः। पतेः पुम् स्यादङि परे इति फलितम्। पुमि मकार इत्। उकार उच्चारणार्थः। मित्त्वादन्त्यादचः परः। तदाह-**अपप्तदिति**। **क्वथे**। जलक्षीरघृतादीनां प्राग्भागादिशोषणपर्यन्तः पाको **निष्पाकः**। **अक्वथीदिति**। एदित्वान्न वृद्धिः। एवम्-अमथीत्। **टु वमु**। टुरित्। नायमुदित्। तेन 'उदितो वे'ति क्त्वायामिड्विकल्पो न। 'गॄ निगरणे' इति दीर्घान्तोऽयम्। नन्वस्माद्धातोर्ल्युटि 'ॠत इद्धातोः' इति इत्वं बाधित्वा परत्वात् 'सार्वधातुके' इति गुणे सति 'उद्गरण' इत्येव निर्देशो युज्यत इत्यत आह-**इहैवेति**। 'उद्गिरणे' इत्यर्थनिर्देशः पाणिनीय इति **सुधाकरो** मन्यते। **भ्रमु चलने इति**। वक्रमार्गसंचारे इत्यर्थः। अयथार्थज्ञाने-

शे.]षत्वविधावित्यर्थः। **टल ट्वल**। वैक्लव्यं-भयादिजनितोद्वेगः। **तद्व्यापार इति**। बन्धुत्वानुकूलो व्यापार इत्यर्थः। **अक्वथीदिति**। एदित्वान्न वृद्धिः। **सुधाकर इति**। अस्यैवमर्थसहितस्य पाणिनिना पाठे प्रमाणाऽभाव इति-अत्राऽरुचिः। **तद्भाष्यादाविति**। 'वेमु'रित्याद्यस्त्वसाधव एवेति भावः। **मर्षणं**-क्षमा। सा चाऽपराधे सत्यपि

'भ्राम्यती'ति तु दिवादेर्वक्ष्यते । **वा जृभ्रमुत्रसाम्** ।६।४।१२४। एषामेत्वाभ्यासलोपौ वा स्तः किति लिटि सेटि थलि च । भ्रेमतुः । बभ्रमतुः । अभ्रमीत् । ८५१ क्षर संचलने । अक्षारीत् ।

अथ द्वावनुदात्तेतौ । ८५२ षह मर्षणे । 'परिनिविभ्यः'इति षत्वम् । परिषहते । सेहे । सहिता । 'तीषसहे'ति वेट् । इडभावे ढत्वधत्वष्टुत्वढलोपाः । **सहिवहोरोदवर्णस्य** ।६।३।११२। अनयोरवर्णस्य ओत्स्याड्ढलोपे सति । **सोढः** ।८।३।११५। सोढ्रूपस्य सहेः सस्य षत्वं न स्यात् । परिसोढा।

**सिवादीनां वाड्व्यवायेऽपि** ।८।३।७१।परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेऽपि । पर्यसहत । पर्यषहत । ७५३ रम क्रीडायाम् । रेमे । रेमिषे । रन्ता । रंस्यते । रंसीष्ट । अरंस्त ।

अथ कसन्ताः परस्मैपदिनः । ८५४ षद्लृ विशरणगत्यवसादनेषु । **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** ।७।३।७८। पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे । सीदति । ससाद । सेदतुः । सेदिथ । ससत्थ । सत्ता । सत्स्यति । लृदित्त्वा-

---

त.]इत्यत्र 'अच्कावशक्तौ'इति नञः परमन्तोदात्तं स्यात् । णप्रत्यये त्विह 'तत्पुरुषे तुल्यार्थे'त्याद्युदात्तमेव भवतीति । **वाजृभ्रमुत्रसाम्** । अप्राप्तविभाषेयम् । **अभ्रमीदिति** । मान्तत्वान्न वृद्धिः । **अक्षारीदिति**। हलन्तलक्षणाया वृद्धेः 'नेटी'ति निषेधेऽपि 'अतो ल्रान्तस्ये'ति वृद्धिः । **षह** । अपराधे सत्यपि कोपाऽनाविष्करणं **मर्षणम्** । **सहिवहो** । इह रेफलोपस्याऽसंभवात् 'ढ्रलोपे पूर्वस्ये'त्यतो 'ढलोप' एवानुवर्तते । तदाह–**ढलोप इति** । ढलोपे किम् ? । सहते । वहते । **सोढः** । **षत्वं नेति** । 'न रपरे'ति सूत्रान्नेत्यनुवर्तत इति भावः । **सिवादीनां** । सिवुसहसुट्स्तुस्वञ्जः **सिवादयः** । पर्यषीव्यत् । पर्यसीव्यत् । पर्यष्करोत् । पर्यस्करोत् । न्यष्टौत् । न्यस्तौत् । व्यष्वजत् । व्यस्वजत् ।
**रम** क्रीडायाम् । अमुमुदितं मत्वा रन्त्वा रमित्वेति केचिदुदाजहुस्तन्माधवादयो न सहन्ते । तथा च क्त्वायां रन्त्वेत्येव साधु । **रेमिषे इति** । क्रादिनियमादिट् । पचाद्यचि टाप् । रमा । घञि तु–रामः। अमन्तत्वेन मित्त्वाण्णौ ह्रस्वः । रमयति । **षद्लृ** । **विशरणम**वयवानां विश्लेषः । **अवसादनं**–नाशः । **पाघ्राध्मा** । पा पाने । पा रक्षणे इति तु न गृह्यते, लुग्विकरणत्वात्। 'द्रक्षि' इति केषांचित्पाठस्तत्र 'दृशिदृशो'रित्यम् । अर्तीत्यादौ ऋच्छादेशाद्यभाव इव सौत्रत्वात्पश्यादेशाऽभाव इति बोध्यम् । 'दृश्यर्त्ती'ति पाठस्तु निर्दुष्ट एव । **पादीनामिति** । एकादशानामेषां यथासङ्ख्यमेका-

---

बा.]ऽप्ययम् । 'उदितो वे'ति क्त्वायामिड्विकल्पार्थमुदित्त्वम्। **वा जृभ्रमु** । 'अत एकहल्मध्ये' इत्यतो लिटीति,'थलि च सेटी'ति चानुवर्तते । 'घ्वसोरेद्धौ' इत्यत एदिति, 'गमहने'त्यतः कितीति च । तदाह–**एषामिति** । **अभ्रमीदिति** । 'ह्म्यन्ते'ति न वृद्धिः। **अक्षारीदिति**। 'अतो लरान्तस्ये'ति वृद्धिः। **षह**। अपराधे सत्यपि कोपाऽनाविष्करणं **मर्षणम्** ।' **इडभावे इति** । सह्–ता इति स्थिते 'हो ढः' इति ढत्वं, 'झषस्तथो'रिति तकारस्य धत्वम् । धस्य ष्टुत्वेन ढः । 'ढो ढे लोपः' इति पूर्वस्य ढस्य लोप इत्यर्थः । स–ढा इति स्थितम् । **सहिवहोः** । **ढलोपे इति** । 'ढ्रलोप' इत्यतस्तदनुवृत्तेरिति भावः । 'रलोप' इति तु नानुवर्तते, असंभवात् । तथाच सकारादकारस्य ओत्वे सोढेति रूपम् । 'परिसोढे'त्यत्र 'परिनिविभ्य' इति षत्वे प्राप्ते–। **सोढः**। 'सोढ' इति सहेरोत्वसंपन्नस्य षष्ठ्यन्तम् । 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते । 'न रपरे'त्यतो नेति । 'मूर्धन्य' इत्यधिकृतम् । तदाह– **सोढ्रूपस्येत्यादिना** । **सिवादीनां**। 'परिनिविभ्यः' इति सूत्रादुत्तरमिदं सूत्रम्। तदाह–**परिनिविभ्यः परेषामिति**। 'सिवुसहसुट्स्तुस्वञ्जा'मिति शेषः। **रमु इति** । नाऽयमुदिदिति माधवः । केचित्तु उदितं मत्वा 'उदितो वे'ति क्त्वायामिड्विकल्पमिच्छन्ति। अनिङ्कोऽयम् । लिटि क्रादिनियमादिट् । तदाह–**रेमिषे इति** । **अथ कसन्ता इति**।'कस गतौ' इत्येतत्पर्यन्ता इत्यर्थः ।
**षद्लृ**धातुः षोपदेशोऽनिङ्कश्च।लटि शपि सद् अ ति इति स्थिते–**पाघ्राध्मा**।पा घ्रा ध्मा स्था म्ना दाण् दृशि अर्ति सर्ति शद् सद्-एषां द्वन्द्वात् षष्ठीबहुवचनम् । पिब जिघ्र धम तिष्ठ मन यच्छ पश्य ऋच्छ धौ शीय सीद-एषां द्वन्द्वात् प्रथमाबहुवचनम् । यथासङ्ख्यमादेशाः। 'ष्ठिवुक्लमु' इत्यतः शितीत्यनुवर्तते। श् चासौ इच्चेति कर्मधारयः। अङ्गाक्षिप्तप्रत्ययविशेषणत्वात्तदादिविधिः । तदाह–**इत्संज्ञकेति** । **ससादेति** । इत्संज्ञकशकारादिप्रत्ययाऽभावान्न सीदादेशः ।·श् इत् यस्य स शित् । शितीति बहुव्रीह्याश्रयणे तु पाधातोः कर्मणि लिटि एशि आल्लोपे 'पपे' इत्यत्रापि पिबादेशः स्यादिति बोध्यम् । थलि क्रादिनियमप्राप्तस्य इटः 'उपदेशेऽत्वतः' इति निषेधेऽपि भारद्वाजनियमाद्वेट् । तत्र इट्पक्षे 'थलि च

---

शे.]कोपाऽनाविष्करणम्। **ढलोप इति**। बहुव्रीहिपक्षे निमित्तत्वेनाश्रयणादेव ष्टुत्वादीनामसिद्धत्वं न। यद्वा शब्दाधिकारात् षष्ठीतत्पुरुषत्वेन ढलोप इति विषयसप्तमी । अत्र क्तप्रत्ययं विना तद्विषयज्ञानाऽभावादूढ इत्यादौ तत्र कृते सम्प्रसारणौत्वयोः प्राप्तौ परत्वादोत्वे सम्प्रसारणे पूर्वत्वे च कृते 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनरोत्स्वाऽप्रवृत्त्याऽवर्णस्येति भाष्ये प्रत्याख्यातम् । रलोपस्य त्वसम्भवान्निवृत्तिः। **सोढः** । 'न रपरे'त्यतो नेत्यनुवर्तते।सोढः किम् ? । परिषहते । **सिवादी**-

दत्। असदत्। 'सदिरप्रतेः'। निषीदति। न्यषीदत्। **सदेः परस्य लिटि** ।८।३।११८। सदेरभ्यासात्परस्य षत्वं न स्याल्लिटि। निषसाद। निषेदतुः। ८५५ **शद्लृ शातने**। विशीर्णतायामयम्। शातनं तु विषयतया निर्दिश्यते। **शदेः शितः** ।१।३।६०। शिद्भाविनोऽस्मादात्मनेपदं स्यात्। शीयते। शशाद। शेदतुः। शेदिथ। शशत्थ। शत्ता। अशदत्। ८५६ **क्रुश आह्वाने रोदने च**। क्रोशति। क्रोष्टा। शलः क्सः। अक्रुक्षत्। ८५७ **कुच संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु**। कोचति। चुकोच। ८५८ **बुध अवगमने**। बोधति। बोधिता। बोधिष्यति। ८५९ **रुह बीजजन्मनि प्रादुर्भावे च**। रोहति। रुरोह। रुरोहिथ। रोढा। रोक्ष्यति। अरुक्षत्। ८६० **कस गतौ**। अकासीत्। अकसीत्। (ग) **वृत्**। ज्वलादिगणः समाप्तः।

---

त.]दश-पिबाद्यादेशाः स्युरित्यर्थः। 'ष्ठिवुक्लमुचमा'मित्यतः शितीत्यनुवर्तते। स च कर्मधारय इत्यभिप्रेत्याह-**इत्संज्ञकशकारादाविति**। शकारादाविति किम्? पपे। जिघ्रे। दध्मे। शितीति बहुव्रीहिरित्यभ्युपगमे त्विह पिबाद्यादेशाः स्युरेव। **सेदिथेति**। 'उपदेशेऽत्वतः' इति क्रादिनियमप्राप्तस्येटो निषेधेऽपि भारद्वाजनियमादिट्। **सदेः परस्य**। सदेरिति षष्ठी। फलितमाह-**अभ्यासात्परस्येति**। 'स्थादिष्वभ्यासेन चे'ति प्राप्तिः। लिटीति किम्? निषिषित्सति। 'सदिस्वञ्ज्यो'रिति वृत्त्यारूढोऽपि पाठ इहोपेक्षितः, भाष्यानानुगुणत्वात्। **निषसादेति**। 'सदिरप्रते'रित्यत्राऽप्रतेरिति पर्युदासात्प्रतिससादेत्यत्राऽभ्यासस्यापि षत्वं नेति बोध्यम्। **शद्लृ**। 'विशीर्णताया'मिति वक्तव्ये 'शातने' इत्युक्तिरसंगतेत्याशङ्क्य कथंचित्समाधत्ते-**शातनं त्विति**। शदेरेव हि णिचि 'शदेरगतौ'इति तत्वे ल्युटि च शातनमिति रूपम्। तथा चाऽस्यैव धातोरिदं रूपं प्रसिद्धं चेत्यभिप्रेत्य तन्निर्देशः कृतः। यथा 'गम्लृ गतौ' 'डुपचष् पाके' इत्यादाविति भावः। **कुच संपर्चनादौ**। 'कुच शब्दे तारे'इति चवर्गीयान्तेषु पठितस्य पुनरिह पाठः संपर्चनादावेव

---

बा.]सेटी'त्येत्त्वाभ्यासलोपौ। तदाह-**सेदिथ ससत्थेति**।सेदिव सेदिम। क्रादिनियमादिट्। **न्यषीददिति**। 'प्राक्सितादड्व्यवायेऽपि'ति षत्वम्। 'निषसादे'त्यत्र अभ्यासात्परस्य 'स्थादिष्वभ्यासेने'ति षत्वे प्राप्ते-**सदेः परस्य**। 'न रपरे'-त्यतो नेत्यनुवर्तते। 'मूर्धन्य' इत्यधिकृतम्। सदेरित्यवयवषष्ठी। परशब्द उत्तरखण्डपरः। सदेरुत्तरखण्डस्य षत्वं नेति लभ्यते। फलितमाह-**सदेरभ्यासात्परस्येति**। **शद्लृ**। ननु शद्धातोरस्माद्धेतुमण्ण्यन्ताल्ल्युटि 'शदेरगतौ तः' इति दकारस्य तकारे 'शातन'शब्दः। तथाच शातनं शीर्णतानुकूलक्रियेति फलति। एवं च सकर्मकत्वापत्तौ विशीर्यतीत्यर्थे शीयत इति वक्ष्यमाणमुदाहरणं कथमित्यत आह-**विशीर्णतायामिति**। विशरणे इत्यर्थः। तर्हि कथं शातनमिति हेतुमण्णिजित्यत आह-**विषयतयेति**। विपूर्वात् 'षिञ् बन्धने' इत्यस्माद्विषयशब्दः। अविनाभावेनेत्यर्थः। प्रयोजकव्यापारं विना विशरणस्याऽसंभवाच्छातननिर्देशः। ण्यर्थस्याऽविवक्षितत्वाद्विशरणमेव शद्लृधात्वर्थ इति यावत्।

**शदेः शितः**। 'अनुदात्तङित' इत्यस्मादात्मनेपदमित्यनुवर्तते। श् इत् यस्य स शित्। शप् विवक्षितः। शिति विवक्षिते सतीत्यर्थः, तिङुत्पत्तेः पूर्वं सार्वधातुकाश्रयस्य शपोऽसंभवात्। तदाह-**शिद्भाविन इति**। शित् भावी=भविष्यन् यस्मात्स शिद्भावी, तस्मादित्यर्थः। **शीयते इति**। शपि शदेः शीयादेशः। विशीर्यतीत्यर्थः। शीयेते शीयन्ते इत्यादि। 'शिद्विषया'दित्युक्तेर्लिटि नात्मनेपदम्। 'इत्संज्ञकशकारादा'वित्युक्तेर्न शीयादेशः। तदाह-**शशादेति**। अनिड्कोऽयम्। क्रादिनियमप्राप्तस्य इटः 'उपदेशेऽत्वतः' इति नियमात्थलि भारद्वाजनियमाद्वेट्। तदाह-**शेदिथ शशत्थेति च**। इड्पक्षे 'थलि च सेटी'त्येत्त्वाभ्यासलोपाविति भावः। शेदिव शेदिम। क्रादिनियमादिट्। **अशददिति**। लृदित्त्वादङिति भावः। **क्रुशधातुरनिड्कः**। चुक्रोशिथ। क्रादिनियमात्थलि नित्यमिट्। अजन्ताऽकारवत्त्वाऽभावाच्च भारद्वाजनियमः। चुक्रुशिव चुक्रुशिम। **क्रोष्टेति**। व्रश्चादिना शस्य षत्वे ष्टुत्वेन तकारस्य टः। **शलः क्स इति**। इगुपधशलन्तत्वादिति भावः। **अक्रुक्षदिति**। व्रश्चादिना शस्य षः। 'षढो'रिति षस्य कः, सस्य षत्वम्। कित्त्वान्न गुणः। **कुच**। 'कुच शब्दे' इति पठितस्य पुनरिह पाठः संपर्चनादावेव ज्वलादिकार्यणप्रत्ययार्थः। अर्थनिर्देशः क्वचित्पाणिनीय इति भूधातौ प्रपञ्चितम्। **बुध इति**। सेट्कोऽयम्, अनिट्सु श्यन्विकरणस्यैव बुधेर्ग्रहणात्। तदाह-**बोधितेति**। अबोधीत्।

**रुहधातुरनिड्कः**। क्रादिनियमात्थल्यपि नित्यमिट्। अजन्ताऽकारवत्त्वाऽभावाच्च भारद्वाजनियमः। **रोढेति**। लुटि तासि गुणे ढत्वधत्वष्टुत्वढलोपाः। **रोक्ष्यतीति**। लृटि स्ये ढकषाः। **अरुक्षदिति**। इगुपधशलन्तत्वात् क्से ढकषाः।

---

शे.]नाम्। सिवुसहसुट्स्तुस्वञ्जः-सिवादयः। **विशीर्णतायामिति**। विशरणे इत्यर्थः।ननु शातनं तदनुकूलो व्यापारः, एवञ्च तेनार्थकथनमसङ्गतं, सकर्मकत्वापत्तेरत आह-**शातनन्त्विति**। **विषयतयेति**। विषयताऽत्र जनकतारूपा। एवञ्च तज्जन्यविशरणमर्थ इति भावः। **शदेः शितः**। शदेरितिङुत्पत्तेः पूर्वं शितोऽसंभवाच्छित इत्यस्य शिद्विषये लक्षणा। तदाह-**शिद्भाविन इति**। शिद्विशिष्टे लक्षणायान्तु शितः=शबादेः-सार्वधातुकाश्रयत्वेन पूर्वंपरस्मैपदे जाते 'भुक्तवन्त'-मिति न्यायेनाऽस्य सूत्रस्य वैयर्थ्यापत्तिरिति भावः। **बोधितेति**। बुध्यतेरेवाऽनिट्त्वमिति भावः। **वृदिति**। परे तु

अथ गूहत्यन्ताः स्वरितेतः। ८६१ हिक्क अव्यक्ते शब्दे। हिक्कति। हिक्कते। ८६२ अञ्चु गतौ याचने च। अञ्चति। अञ्चते। अचु इत्येके। अचि इत्यपरे। ८६३ टुयाचृ याच्ञायाम्। याचति। याचते। ८६४ रेटृ परिभाषणे। रेटति। रेटते। ८६५ चते ८६६ चदे याचने। चचात। चेते। अचतीत्। चचाद। चेदे। अचदीत्। ८६७ प्रोथृ पर्याप्तौ। पुप्रोथ। पुप्रोथे। ८६८ मिदृ ८६९ मेदृ मेधाहिंसनयोः। मिमेद। मिमिदे। मिमेदे। थान्ताविमाविति स्वामी। मिमेथ। धान्ताविति न्यासः। ८७० मेधृ सङ्गमे च। मेधति। मिमेधे। ८७१ णिदृ ८७२ णेदृ कुत्सासन्निकर्षयोः। निनेद। निनिदतुः। निनिदे। निनेदतुः। निनेदे। ८७३ शृधु ८७४ मृधु उन्दने। उन्दनं-क्लेदनम्। शर्धति। शर्धते। शर्धिता। मर्धति। मर्धते। ८७५ बुधिर् बोधने। बोधति। बोधते। इरित्वादङ् वा। अबुधत्। अबोधीत्। अबोधिष्ट। 'दीपजने'ति चिण् तु न भवति, पूर्वोत्तरसाहचर्येण दैवादिकस्यैव तत्र ग्रहणात्। ८७६ उबुन्दिर् निशामने। निशामनं-ज्ञानम्। बुबुन्दे। अबुदत्। अबुन्दीत्। ८७७ वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु। वेणति। वेणते। नान्तोऽप्ययम्। ८७८ खनु अवदारणे। खनति। खनते। गमहनजनखनघसां लोपः क्ङित्यनङि ।६।४।९८। एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि। चख्नतुः। 'ये विभाषा'। खायात्। खन्यात्। ८७९ चीवृ आदानसंवरणयोः। चिचीव। चिचीवे। ८८० चायृ पूजानिशामनयोः। ८८१ व्यय गतौ। अव्ययीत्। ८८२ दाशृ दाने। ददाश। ददाशे। ८८३ भेषृ भये। गतावित्येके। भेषति। भेषते। ८८४

---

त.] ज्वलादिप्रयुक्तो णप्रत्ययो यथा स्यादिति मनोरमादौ स्थितम्। अत्र नव्याः—अनेनैव ग्रन्थेन पाणिनिनापि क्वचित्क्वचिदर्थनिर्देशः कृत इत्यनुमीयते, अन्यथाऽत्रत्यग्रन्थस्वारस्यभङ्गापत्तेरित्याहुः। **बोधितेति**। बुध्यतेरेवाऽनिड्कारिकासु पठितत्वादयं सेडिति भावः। **अकासीदिति**। हलन्तलक्षणाया वृद्धेः 'नेटी'ति निषेधेऽपि 'अतो हलादे'रिति वैकल्पिकी वृद्धिः। **वृदिति**। अत्र नव्याः—'ज्वलितिकसन्तेभ्यः' इति निर्देशाद्वृत्करणमिहाऽनार्षमित्यनुमीयते। अन्यथा 'ज्वलादिभ्यो णः' इत्येव सूत्रयेदित्याहुः। **अञ्चु गतौ**। 'अनिदिता'मिति नलोपः। अच्यात्। 'अची'त्येकीयमते तु इदित्त्वात्—अञ्च्यात्। **मेधृ सङ्गमे च**। चात्पूर्वोक्तेऽर्थे। 'प्रजायै गृहमेधिना'मित्यत्र गृहैर्दारैर्मेधन्ते=सङ्गच्छन्ते इति विग्रहः। 'सुप्यजातौ' इति णिनिः। **शृधु मृधु**। **क्लेदनमिति**। आर्द्रीभाव इत्यर्थः। उदित्त्वात्क्त्वायां वेट्। शर्धित्वा शृद्ध्वा। **उबुन्दिर्**। बुन्दित्वा। बुत्वा। निष्ठायां—बुन्नम्। **निशामनं**—चाक्षुषं ज्ञानम्। **वेणृ**। गत्यादयः पञ्चार्थाः। वाद्यभाण्डस्य वादनार्थं ग्रहणं **वादित्रग्रहणम्**। वेणिः वेणी वेणुरित्यादिरूपाण्यस्यैव धातोः। **नान्तोऽपीति**। 'उत माता महिषमन्ववेन'दित्यत्र नान्तदर्शनादिति भावः। **खनु**। खनित्वा। खात्वा। निष्ठायां—खातः। **गमहन**। 'अचि श्नुधातुभ्रुवां'मित्यतोऽचीत्यनुवर्तते। 'ऊदुपधाया गोहः' इत्यत उपधाग्रहणं च। तदाह—**एषामुपधाया इत्यादि**। जग्मतुः। जग्मुः। जघ्नतुः। जघ्नुः। जज्ञे। जज्ञाते। जक्षतुः। जक्षुः। अनङीति किम्? अगमत्।

**चीवृ**। चीवरं—वस्त्रं 'चीवरपीवरमीवरे'त्युणादिषु निपातितोऽयम्। **व्यय गतौ**। वित्तत्यागे तु नित्यमात्मनेपदी

---

बा.] कित्त्वान्न गुणः। **वृदिति**। 'ज्वलितिकसन्तेभ्यः' इति उत्तराऽवधेरपि कसेर्ग्रहणादेव सिद्धेर्वृत्करणं स्पष्टार्थमित्याहुः। इति ज्वलादयः। **गूहत्यन्ता इति**। 'गुहू संवरणे' इत्येतत्पर्यन्ता इत्यर्थः। **चते चदे याचने**। **अचतीदिति**। एदित्त्वान्न वृद्धिः। एवमचदीत्। **बुधिर्**। 'बुध अवगमने' इति केवलपरस्मैपदी गतः। स तु ज्वलादिकार्यार्थः। अयं तु इरित् स्वरितेत्। अनिट्सु श्यन्विकरणस्यैव पाठादयं सेट्। **अबुधदिति**। इर इत्त्वेऽपि तदवयवस्य इकारस्य प्रत्येकं मित्त्वाऽभावान्न नुम्। स्वरितेत्त्वप्रयुक्तमात्मनेपदं तु भवत्येव, स्वरितेत्सु पाठसामर्थ्यात्। वस्तुतस्तु इकारस्य प्रत्येकमित्त्वेऽपि न नुम्, 'इदितो नु'मित्यत्र कर्मधारयमाश्रित्य इत्संज्ञकेकारान्तस्यैव नुम्विधेः। **पूर्वोत्तरेति**। जन-पूरि-साहचर्येणेत्यर्थः। **उबुन्दिरिति**। आद्य उकार इत्—'उदितो वे'ति क्त्वायामिड्विकल्पार्थः। **अबुददिति**। इरित्वादङि 'अनिदिता'मिति नलोपः, इर इकारस्य प्रत्येकमित्संज्ञाविरहात्, अनिदितामित्यस्य इत्संज्ञकेकारान्तभिन्नानामित्यर्थाश्रयणाच्चेति शब्देन्दुशेखरे स्थितम्। **वेणृ गतीति**। वाद्यभाण्डस्य वादनार्थं ग्रहणं **वादित्रग्रहणम्**।

**खनुधातुरुदित्**—क्त्वायामिड्विकल्पः। **गमहन**। **उपधाया इति**। 'ऊदुपधायाः' इत्यतस्तदनुवृत्तेरिति भावः। **अजादाविति**। 'अचि श्नुधात्वि'त्यतोऽनुवृत्तस्य अचीत्यस्य अङ्गाक्षिप्तप्रत्ययविशेषणतया तदादिविधिलाभ इति भावः। क्ङितीत्युक्तेश्खनेत्यत्र नोपधालोपः। अनङीति किम्? अगमत्। चख्ने चख्नाते इत्यादि। **व्यय**। अयं

---

शे.] 'ज्वलितिकसन्तेभ्यः' इति सूत्रादत्र वृत्करणमनार्षम्। अन्यथा 'ज्वलादिभ्यो णः' इत्येव सूत्रयेदित्याहुः। **अबुददिति**। इर इत्त्वेऽपि इदित्त्वाऽभावान्न नुम्। रुन्धे इत्यादौ स्वरितेत्त्वप्रयुक्तमात्मनेपदन्तु भवत्येव, स्वरितत्वप्रतिज्ञासामर्थ्यात्। प्रत्येकमिरोरित्त्वमिति पक्षेऽपि न नुम्, कर्मधारयेणाऽन्त्येदित एव तद्विधानात्। 'अनिदिता'मित्यस्यापीत्सञ्ज्ञकेकारान्त-

श्रेषृ ८८५ श्लेषृ गतौ । ८८६ अस गतिदीप्त्यादानेषु । असति । असते । आस । आसे । अयं षान्तोऽपि । ८८७ स्पश बाधनस्पर्शनयोः । स्पर्शनं ग्रथनम् । स्पशति । स्पशते । ८८८ लष कान्तौ । 'वा भ्राशे'ति श्यन्वा । लष्यति । लषति । लेषे । ८८९ चष भक्षणे । ८९० छष हिंसायाम् । चच्छषतुः । चच्छषे । ८९१ झष आदानसंवरणयोः । ८९२ भ्रक्ष ८९३ भ्लक्ष अदने । भक्ष-इति मैत्रेयः । ८९४ दासृ दाने । ८९५ माहृ माने । ८९६ गुहू संवरणे । ऊदुपधाया गोहः ।६।४।८९। गुह उपधाया ऊत्स्याद्गुणहेतावजादौ प्रत्यये। गूहति । गूहते । ऊदित्वादिड्वा । गूहिता । गोढा । गूहिष्यति । घोक्ष्यति । गूहेत् । गुह्यात् । अगूहीत् । इडभावे क्सः । अघुक्षत् । लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ।७।३।७३। एषां क्सस्य लुग्वा स्या-द्दन्त्ये तङि । ढत्वधत्वष्टुत्वढलोपदीर्घाः । अगूढ । अघुक्षत । 'क्सस्याची'त्यन्तलोपः । अघुक्षाताम् । अघुक्षन्त । अगुह्वहि।अघुक्षावहि।अघुक्षामहि।अथाजन्ता उभयपदिनः।८९७श्रिञ् सेवायाम्। श्रयति।श्रयते । शिश्रियतुः।

---

त.] गत इति मनोरमा । न कुत्रापि गत इति चिन्त्यैव सा । अव्ययीदिति । यान्तत्वान्न वृद्धिः । स्पश बाधनस्पर्शनयोः । 'णिश्री'ति च्लेश्चङि-अपस्पशत् ।-'अत्स्मृदृत्वरप्रथे'त्यादिना अभ्यासस्याऽत्वं सन्वदित्त्वापवादः । पस्पशा । यङन्तादचि 'यङोऽचि च' इति लुक् । 'अजाद्यतः' इति टाप् । 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घस्तु न भवति, संज्ञापूर्वकविधेरनित्यत्वादित्याहुः।'जपजभदहदशभञ्जपसां चे'त्यत्र पसेति सौत्रो धातुः।पसतीत्यादि। यङ्लुकोस्तु'जपजभे'-त्यनेनैवाभ्यासस्य नुक् । यङि-पंपस्यते।लुकि-पंपसीति । पंपसिति कण्ड्वादिः ।पंपस्यति । ऊदुपधायाः । गुणहेताविति । एतच्च 'गोह' इति विकृतनिर्देशाल्लभ्यम् । 'अचिश्नुधाति'त्यतोऽनुवृत्तेनाऽचीत्यनेनाऽऽक्षिप्तप्रत्ययो विशेष्यते । विशेषणेन तदादिविधिः । तदाह-अजादाविति । दन्त्ये तङीति । दन्त्यादौ तङीत्यर्थः । अदुग्ध । अधुक्षत ।

---

बा.] वित्तत्यागेऽपि, अर्थनिर्देशस्योपलक्षणत्वात् । अव्ययीदिति ।'ह्यन्ते'ति न वृद्धिः। चष भक्षण इति । चचाष चेषतुः। छष हिंसायामिति । वैरूप्यसंपादकादेशादित्वादेत्वाभ्यासलोपो न। तदाह-चच्छषतुरिति । गुहू । उदुपधोऽयम् । ऊदित् । ऊदुपधायाः । 'गोह' इति कृतलघूपधगुणस्य गुहेर्निर्देशः । ततश्च गुणविषय एवेदं भवति । अचिश्नुधात्वित्यतोऽनुवृत्तस्य अचीत्यस्य अङ्गाक्षिप्तप्रत्ययविशेषणत्वात्तदादिविधिः । तदाह-गुह उपधाया इत्यादिना ।

गुणहेताविति। गुणं प्रति परनिमित्तभूत इत्यर्थः।गुणापवादः। जुगूह। गुणहेताविति किम्?। जुगुहतुः जुगुहुः। जुगुहे जुगुहाते जुगुहिरे । जुगूहिथ। जुगोढ । ढत्वधत्वष्टुत्वढलोपाः । जुगुहथुः जुगुह। जुगुहिषे-जुघुक्षे। ढत्वभष्भावकत्वषत्वानि । जुगुहाथे जुगुहिध्वे-जुघुढ्वे । जुगूह। जुगुहिव-जुगुह्व जुगुहिम-जुगुह्म।जुगुहे। जुगुवहिहे-जुगुह्वहे। जुगुहिमहे-जुगुह्महे । इति लिटि रूपाणि सिद्धवत्कृत्य लुटि इडक्षे ऊत्वे रूपमाह-गूहितेति । इडभावे अजादिप्रत्ययाऽभावादू-त्वाऽभावे गुणे ढत्वधत्वष्टुत्वढलोपेषु रूपमाह-गोढेति । लृटि स्ये इडक्षे ऊत्वे रूपमाह-गूहिष्यतीति । इडभावे तु गुणढत्वभष्भावकत्वषत्वेषु रूपमाह-घोक्ष्यतीति । गूहिष्यते, घोक्ष्यते इत्यप्युदाहार्यम् । गूहतु । गूहताम् । अगूहत् । अगूहत । गूहेदिति । 'गूहेते'त्यपि ज्ञेयम् । गुह्यादिति। आशीर्लिङि अजादिप्रत्ययाऽभावादूत्वं न । कित्त्वान्न गुणः । लुङि इडक्षे सिज्लोपे ऊत्वे रूपमाह-अगूहीदिति । अगूहिष्टाम् अगूहिषुरित्यादि । इडभावे क्स इति । इगुपधशलन्तत्वादिति भावः । अघुक्षदिति । ढत्वभष्भावकत्वषत्वानि । अघुक्षताम् अघुक्षन्नित्यादि । लुङ्स्तङि विशेषमाह-लुग्वा दुह । दन्त्ये तङीति । दन्त्यादौ तङीत्यर्थः । प्रत्ययाऽदर्शनत्वात्सर्वादेशोऽयं लुक् । अगूढेति । अगुह् त इति स्थिते प्रक्रियां दर्शयति-ढत्वधत्वष्टुत्वढलोपदीर्घा इति । अघुक्षतेति । क्सलुगभावे ढत्वभष्भावकत्वषत्वानीति भावः । अघुक्षातामिति। च्लेः क्सादेशे क्सस्य कित्त्वेन गुणहेतुत्वाऽभावादू त्वाऽभावे ढत्वभष्भावकत्वषत्वेषु कृतेषु 'क्सस्याची'त्यन्त्यलोपे अतः परत्वाभावादातो ङित इति न भवतीति भावः । अघुक्षन्तेति । झस्य अजादित्वाऽभावात्तस्मिन्परे क्सस्य अन्त्यलोपाऽभावादतः परत्वाऽभावादात्मनेपदेष्वनत इत्यदादेशो न भवति । कृते तु झोऽन्तादेशे क्सस्याऽन्तलोप इति भावः। अघुक्षथाः अघुक्षाथाम् अघुक्षध्वम् । अघुक्षि । इति रूपाणि सिद्धवत्कृत्याह-अगुह्वहीति । दन्त्यादिप्रत्ययपरत्वात्क्सस्य लुकि अजादिप्रत्ययाऽभावादूत्वाऽभावे रूपम् । अघुक्षावहीति । क्सलुगभावे ढत्वभष्भावकत्वषत्वानि, अतो दीर्घश्च। अघुक्षामहीति।दन्त्यादिप्रत्ययपरत्वाऽभावान्न क्सलुक् । इति गूहत्यन्ताः स्वरितेतः।

उभयपदिन इति। ञित्वादिति भावः। श्रिञ्धातुः सेट् । शिश्रियतुरिति । कित्त्वान्न गुणः। इयङ् शिश्रियुः। शिश्रयिथ शिश्रियथुः शिश्रिय । शिश्राय-शिश्रय, शिश्रियिव शिश्रियिम। शिश्रिये शिश्रियाते शिश्रियिरे। शिश्रियिषे शिश्रि-

---

शे.] भिक्षाऽङ्गानामित्यर्थ इति नलोपो भवत्येवेति बोध्यम्।ऊदुपधायाः। 'उपधाया' इत्युत्तरार्थम्। प्रकृते तु 'ओः सुपी'-इत्यत 'ओ'रित्यनुवृत्त्याऽपि सिद्धम् । 'गोह' इति विषयार्थम् । तदाह-गुणहेताविति । तेन 'जुगुहतु'रित्यादि सिद्धम् । दन्त्ये तङीति । वर्णग्रहणायस्मिन्विधिरिति न्यायाच्च दन्त्यादौ तङीत्यर्थः । अन्तलोप इति । अत एव

श्रयिता। 'णिश्री'ति चङ्। अशिश्रियत्। ८९८ भृञ् भरणे। भरति। बभार। बभ्रतुः। बभर्थ। बभृव। बभृषे। भर्त्ता। ऋद्धनोः स्ये।७।२।७०। ऋतो हन्तेश्च स्यस्य इट् स्यात्। भरिष्यति। रिङ् शयग्लिङ्क्षु।७।४।२८। शे यकि यादावार्द्धधातुके लिङि च ऋतो रिङादेशः स्यात्। रीङि प्रकृते रिङ्विधिसामर्थ्याद्दीर्घो न। भ्रियात्। उश्च।१।२।१२। ऋवर्णात्परौ झलादी लिङ्,तङ्परः सिचेत्येतौ कितौ स्तः। भृषीष्ट। भृषीयास्ताम्। अभार्षीत्। अभार्ष्टाम्। अभार्षुः। ह्रस्वादङ्गात्।८।२।२७। सिचो लोपः स्याज्झलि। अभृत। अभृषाताम्। अभरिष्यत्। ८९९ हृञ् हरणे। हरणं-प्रापणं, स्वीकारः, स्तेयं, नाशनं च। जहर्थ। जह्रिव। जह्रिषे। हर्ता। हरिष्यति।

त.] अदिग्ध। अधिक्षत। अलीढ। अलिक्षतेत्यादि। रिङ् शयग्लिङ्क्षु। 'अयङ् यि क्ङिती'त्यतोऽनुवृत्तं यीत्येतल्लिङ एव विशेषणं, शेऽसंभवात्। यकि तु वैयर्थ्यात्। तथा 'अकृत्सार्वधातुकयो'रित्यनुवृत्तमपि लिङ एव विशेषणमित्यभिप्रेत्याह-यादावित्यादि।.शे-म्रियते। 'तुदादिभ्य' इति शः। यकि-क्रियते। भ्रियते। उश्च। 'इको झ'लित्यतो झल्ग्रहणं, 'लिङ्सिचौ'इति पूर्वसूत्रं चानुवर्तते। तदाह-ऋवर्णादित्यादि। अभार्षीदिति। 'सिचि वृद्धि'रिति वृद्धिः। ह्रस्वादङ्गात्। ह्रस्वात् किम्?। अच्योष्ट। अप्लोष्ट। अङ्गग्रहणादिह 'रात्सस्ये'त्यतः सस्येत्यनुवृत्तावपि प्रत्ययस्यैव तत्रापीष्टत्वात्सिच एव लोपो भवति। तेनेह न-अस्तं द्विष्टमाम्। केचित्त्विहाऽङ्गग्रहणाऽभावे अयाविष्टाम् अलाविष्टामित्यादावपि अतिप्रसङ्गः स्यादित्याहुः।तदपरे न क्षमन्ते। संनिपातपरिभाषयापि परिहारसंभवादिति। झलीति किम्?। अभृषाताम्। अभृषत। हृञ् हरणे। चत्वार इहाऽर्थाः। भारं हरति। प्रापयतीत्यर्थः। अंशं हरति। स्वी-

बा.]याथे शिश्रियिढ्वे-शिश्रियिध्वे। शिश्रिये शिश्रियिवहे शिश्रियिमहे। श्रयितेति। श्रयिष्यति श्रयिष्यते। श्रयतु श्रयताम्। अश्रयत् अश्रयत। श्रयेत्। श्रयेत। श्रीयात्। श्रयिषीष्ट। लुङि विशेषमाह-णिश्रीति। अशिश्रियदिति। 'चङी'ति द्वित्वम्। अशिश्रियत। अश्रयिष्यत् अश्रयिष्यत। भृञ्धातुरनिट्। भरतीति। भरते इत्यपि ज्ञेयम्। बभ्रतुरिति। कित्वान्न गुणः। यण्। बभ्रुः। थलादौ 'एकाचः' इति नेट्, कृसृभृवृस्तुद्रुस्रुश्रुषु लिट्यपि तन्निषेधस्य प्रवृत्तेः। थलि 'अचस्तास्व'दिति निषेधाच्च,ऋदन्तेषु भारद्वाजमतेऽपि थलि निषेधाच्च। तदाह-बभर्थेति। बभ्रथुः बभ्र। बभार-बभर। इति सिद्धवत्कृत्याह-बभृवेति। बभृम। बभ्रे बभ्राते बभ्रिरे। इति सिद्धवत्कृत्याह-बभृषे इति। बभ्राथे बभृढ्वे। बभ्रे बभृवहे बभृमहे। लृटि स्ये इण्निषेधे प्राप्ते-ऋद्धनोः। ऋत् हन् अनयोर्द्वन्द्वात्पञ्चम्यर्थे षष्ठी। 'स्ये' षष्ठ्यर्थे सप्तमी। 'आर्द्धधातुकस्ये'डित्यत इडित्यनुवर्तते। तदाह-ऋत इत्यादिना। 'एकाच'इतीण्निषेधस्यापवादः। भरिष्यतीति। भरिष्यते। भरतु भरताम्। अभरत् अभरत। भरेत् भरेत। आशीर्लिङि परस्मैपदे भृ यादिति स्थिते-रिङ् शय। श यक् लिङ् एषां द्वन्द्वात्सप्तमीबहुवचनम्। 'अयङ्यि क्ङिती'त्यतो यीति सप्तम्यन्तमनुवृत्तं लिङो विशेषणम्। तदादिविधिः। शे तु यीति नान्वेति, असंभवात्। नापि यकि, अव्यभिचारात्। अत एव अकृत्सार्वधातुकयोरित्यनुवृत्तमपि लिङ एव विशेषणं। तदाह-शे यकीत्यादिना। ऋत इति। 'रीङृत' इत्यतस्तदनुवृत्तेरिति भावः। अङ्गस्येत्यधिकृतम्। 'ऋत' इति तद्विशेषणं। तदन्तविधिः। ऋदन्तस्याऽङ्गस्येति लभ्यते। आदेशे ङकार इत्। ङित्वादन्तादेशः। निर्दिश्यमानपरिभाषयैव सिद्धे ङकारोच्चारणम्, इकागमेनैव सिद्धे रेफोच्चारणं च स्पष्टार्थम्। ननु भ्रियादिति वक्ष्यमाणमुदाहरणमयुक्तम्, कृते रिङि 'अकृत्सार्वधातुकयो'रिति दीर्घप्रसङ्गादित्यत आह-रीङि प्रकृते इति। कृते रिङि यदि दीर्घः स्यात्तर्हि रिङ्विधिर्व्यर्थः स्यात्, 'रीङृत' इत्येव सिद्धेः। अतो रिङि कृते सति न दीर्घ इत्यर्थः। भ्रियादिति। भ्रियास्तामित्यादि सुगमम्। आशीर्लिङि भृषीष्टेत्यत्र गुणे प्राप्ते-उश्च। 'लिङ्सिचावात्मनेपदेषु' इति सूत्रमनुवर्तते। 'इको झ'लित्यतो झलिति च। तदाह-ऋवर्णादिति। भृषीष्टेति। कित्वान्न गुणः। अभार्षीदिति। परस्मैपदे सिचि वृद्धौ रपरत्वम्। तङि तु अभृ स् त इति स्थिते-ह्रस्वादङ्गात्। ह्रस्वान्तादित्यर्थः। सिच इति भाष्यम्। 'झलो झली'त्यतो झलीति, 'संयोगान्तस्य लोपः' इत्यतो लोप इति चानुवर्तते-इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे-सिचो लोपः स्याज्झलीति। ह्रस्वात्किम्?। अच्योष्ट। अङ्गात्किम्?। अलविष्टाम्। सिचः किम्?। द्विष्टराम्। द्विष्टमाम्। सुजन्तात्तरप्तमपौ। अभृतेति। 'उश्चे'ति सिचः कित्वान्न गुणः। 'झली'त्युक्तेरभृषाताम् अभृषतेत्यत्र न सिज्लोपः। अनतः परत्वाज्झस्य अदादेशः। अभृथाः अभृषाथाम् अभृढ्वम्। अभृषि अभृष्वहि अभृ-

शे.]'अधुक्षाता'मित्यादौ 'आतो ङितः' इतीयादेशो न। ऋद्धनोः।'एकाचः' इति निषेधे प्राप्ते इदम्। रिङ्श।'अयङ्यी'त्यतो 'यी'ति, 'अकृत्सार्वे' इति चानुवृत्तं लिङ एव विशेषणं, शेऽसम्भवात्, यकि वैयर्थ्यात्। तदाह-यादाविति। इगागमेन सिद्धे रेफोच्चारणं, निर्दिश्यमानपरिभाषया सिद्धे ङकारोच्चारणञ्च स्पष्टार्थम्। उश्च। 'इको झ'लित्यतो झल्ग्रहणं 'लिङ्सिचा'विति सूत्रञ्चानुवर्त्तते, तदाह-ऋवर्णादित्यादि। ह्रस्वादङ्गात्। अङ्गग्रहणमङ्गसञ्ज्ञानिमित्तस्य लोपार्थं। तच्च पूर्वाऽपरसाहचर्यात्सिजेव। तदाह-सिच इति। तेन 'अस्तम्' 'द्विष्टमा'मित्यादौ न। यद्यपि 'ह्रस्वात्सिच'' इत्येव

९९० धृञ् धारणे । धरति । अधार्षीत् । अधृत । ९०१ णीञ् प्रापणे । निनयिथ । निनेथ । निन्यिषे ।
अथाजन्ताः परस्मैपदिनः। ९०२ धेट् पाने। धयति । **आदेच उपदेशेऽशिति** ।६।१।४५। उपदेशे
एजन्तस्य धातोरात्वं स्यान्न तु शिति । **आत औ णलः** ।७।१।३४। आदन्ताद्धातोर्णल औकारादेशः स्यात् ।

---

त.]करोतीत्यर्थः । स्वर्णं हरति । चोरयति। पापं हरति । नाशयति । **धृञ्** । दधार । दध्रतुः। दधर्थ । दध्रे । दध्राते । धर्ता । ध्रियात् । **णीञ्** । **निनयिथेति** । भारद्वाजनियमादिड्विकल्पः । **आदेच उपदेशेऽशिति** । 'लिटि धातो'रित्यनुवृत्तमेचा विशेष्यते । तदाह–**एजन्तस्य धातोरिति** । उपदेशे किम् ? । चेता । स्तोता । ननु लाक्षणिकत्वादेवाऽत्र न भविष्यतीति चेत् । अत्राहुः–वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयत इति ज्ञापनार्थमुपदेशग्रहणम् । तेन 'क्रीङ्जीनां णौ' इति कृतात्वे क्रापयतीत्यादौ पुक् सिध्यतीति मनोरमाकृत् । धातोः किम् ? । गोभ्याम् । नौभ्याम् । अस्ति ह्यत्रापि 'गमेर्डोः' 'ग्लानुदिभ्यां डौ'रित्युपदेशे एच् । 'अशिती'ति प्रसज्यप्रतिषेध इत्याह–**न तु**

---

बा.]ष्महि । हृधातुरनिट्।-हरणं चतुर्विधमित्याह–**प्रापणमित्यादि**।तद्यथा–भारं हरति। प्रापयतीत्यर्थः। अशं हरति । स्वीकरोतीत्यर्थः। परस्वं हरति । चोरयतीत्यर्थः। पापं हरति हरते वा । नाशयतीत्यर्थः। जहार जह्रतुः जह्रुः । 'एकाचः' इतीण्णिषेधस्य क्रादिष्वेव लिटि नियमितत्वादिह थलि इटि प्राप्ते 'अचस्तास्व'दिति तन्निषेधः । ऋदन्तत्वेन भारद्वाजमतेऽपि इण्णिषेध एव । तदाह–**जहर्थेति** । जह्रथुः जह्र । जहार-जहर । इति सिद्धवत्कृत्याह–**जह्रिवेति** । क्रादिनियमादिट् । जह्रिम । जह्रिषे । क्रादिनियमादिट् । जह्राथे जह्रिढ्वे–जह्रिध्वे । जह्रे जह्रिवहे जह्रिमहे । लुङादिषु भृञ इव रूपाणि । **धृञ्धातुरनिट्** । हृञ इव रूपाणि । **णीञ्धातुरनिट्** । णोपदेशः। नयति नयते । निनाय निन्यतुः निन्युः। क्रादिनियमाल्लिटि इट् । थलि तु 'अचस्तास्व'दितीण्णिषेधस्य भारद्वाजनियमादिड्विकल्प इत्यभिप्रेत्याह–**निनयिथ निनेथेति** । निन्यिषे निन्याथे निन्यिढ्वे–निन्यिध्वे । निन्ये निन्यिवहे निन्यिमहे । नेता । नेष्यति नेष्यते । नयतु नयताम् । अनयत् अनयत । नयेत् नयेत । नीयात् नेषीष्ट । अनैषीत् अनेष्ट । अनेष्यत् अनेष्यत । इत्यजन्ता उभयपदिनो गताः । **परस्मैपदिन इति** । 'जि ज्रि अभिभवे इत्येतत्पर्यन्ता' इति शेषः । **धेट् पाने इति** । 'स्तनन्धयी'त्यादौ ङीबर्थं टित्त्वम्, अवयवे टित्त्वस्य व्यर्थतया समुदायार्थत्वादिति हरदत्तः । **आदेचः** । **एजन्तस्य धातोरिति** । 'लिटि धातो'रित्यतो धातोरित्यनुवृत्तमेचा विशेष्यते, तदन्तविधिरिति भावः । **न तु शितीति** । श् चासौ इच्चेति कर्मधारयात्सप्तमी,प्रत्ययविशेषणत्वात्तदादिविधिः,इत्संज्ञकशकारादौ प्रत्यये परे इति लभ्यते। 'ल्यपि च' 'न व्यो लिटी'–त्यादिपूर्वोत्तरसूत्राणां प्रत्ययेष्वेव प्रवृत्त्या 'प्रत्यये' इति विशेष्यलाभः । 'अशिती'ति न पर्युदासः । तथा सति शिद्भिन्ने प्रत्यये परे इत्यर्थः स्यात् । ततश्च 'सुग्ल' इत्यत्र ग्लैघाटोः 'आतश्चोपसर्गे' इति कप्रत्ययो न स्यात्, कप्रत्ययनिमित्तमात्त्वम् ,आदन्तात्प्रत्यय इत्यन्योन्याश्रयात् । 'शिति ने'ति प्रसज्यप्रतिषेधे तु आत्त्वस्य अनैमित्तिकतया कप्रत्ययनिमित्तकत्वाऽभावात् प्रथममात्त्वे कृते कप्रत्ययः सूपपादः। 'शिती'ति बहुव्रीह्याश्रयणे ग्लैधातोर्भावे लिटि 'भावकर्मणो'रिति तङि एशि आत्त्वे आतो लोपे 'जग्ले' इति न सिध्येत्, एशः शित्त्वेन तस्मिन्परे आत्त्वस्य निषेधात् । अतः कर्मधारयमाश्रित्य इत्संज्ञकशकारादौ प्रत्यये परे नेत्यर्थ आश्रितः । एवंच पर्युदासेऽपि न क्षतिः । इत्संज्ञकशकारादिभिन्नप्रत्यये विवक्षिते

---

शे.]सिद्धम्,'अलाविष्टा'मित्यादौ तु न दोषः,आगमे कृते तत्सहितस्यैव प्रत्ययत्ववत्सिच्त्वमिति स्वावयवेन पौर्वापर्याऽभावात्, तथापि पदलाघवाऽभावादेवमेवोक्तम् । **आदेच** । 'उपदेशे' इति षष्ठ्यर्थे सप्तमी । तेनैजन्तस्योपदिश्यमानस्येत्यर्थः । कर्मव्युत्पन्नोपदेशपदेनाद्योच्चारणविषय उच्यते । तेन 'ढौकिते'त्यादौ न दोषः । समुदायस्योपदिश्यमानत्वं, न तु तदवयवस्य, तदुपदेशे तात्पर्याऽभावात् । उपदेशे किम् ?। गोभ्याम् । 'उद्देशश्च प्रातिपदिकानां नोपदेशः'। उणादीनामव्युत्पन्नत्वाच्च'डो' इत्यादीनामुपदिश्यमानैजन्तत्वमिति न वाच्यम् । तादृशश्च प्रायेण धातुरेवेत्यतो 'धातो'रित्युक्तम् । मेङादौ ङकारसत्त्वे परस्य ङस्य सत्त्वेन तस्यैजन्तत्वाऽभावेन 'उदीचां माङः' इति निर्देशस्य 'नानुबन्धकृतमनेजन्तत्व'मित्यर्थज्ञापकता सुस्था । ङकारलोपे त्वेजन्तत्वसत्त्वेन धातुसञ्ज्ञादिकार्यार्थं तावतोऽप्युपदेशे तात्पर्याच्चोपदिश्यमानैजन्तत्वसत्त्वेन भवत्येवाऽऽत्वम् । 'धातो'रित्यनुवृत्तौ त्वनुबन्धलोपोत्तरं तद्विनिर्मुक्तस्यैव धातुताया 'न धातुलोप'सूत्रे भाष्ये उक्तत्वेन 'उदीचां माङः' इत्यादावात्त्वानापत्तिः। 'धातो'रित्येतत्सम्बन्धं विनापि तदन्तविधिरत्रेति 'अणिञो'रिति सूत्रशेषेऽपि भाष्ये ध्वनितम् । तत्र हि–अवश्यमात्वार्थं धातुग्रहणं कर्त्तव्यम्, इह माभूत्–गोभ्यामिति । **उपदेशे यदेजन्तं तस्य चेदात्वमिष्यते। उद्देशो रूढिशब्दानां, तदा[तेन]गोर्न भविष्यति**'। इत्युक्तम्। न च 'ह्वे'प्रभृतीनामुपदेशे एजन्तत्वादात्वव्यावृत्तये धातोरित्यावश्यकं,'शिति ने'त्युक्त्या शित्प्रत्ययपरत्वयोग्यस्यैवैजन्तस्य ग्रहणेनाऽदोषात्।एवञ्चोपदेशे इत्यस्य वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाऽप्रवृत्तिज्ञापकताऽपि चिन्त्येति दिक्।**न तु शितीति**।शितीति कर्मधारयात्सप्तमी,पूर्वो-

**दधौ**। **आतो लोप इटि च**।६।४।६४। अजाद्योरार्द्धधातुकयोः क्ङिदिटोः परयोरातो लोपः स्यात्। द्वित्वात्परत्वा-[दा]ल्लोपे प्राप्ते 'द्विर्वचनेऽची'ति निषेधः। द्वित्वे कृते आतो लोपः। दधतुः। दधुः। दधिथ। दधाथ। दधिव। [दधिम]। धाता। **दाधा घ्वदाप्**।१।१।२०। दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना। पर्लिङ्गि

त.]शितीति। पर्युदासे तु जग्ले मम्ले इत्यादौ 'द्विर्वचनेऽची'ति निषेधादात्वं न स्यात्, अभ्यासे इकारश्च श्रूयेत। किं च 'सुग्ल'इत्यत्र 'आतश्चोपसर्गे' इति कः, 'सुग्ले'त्यत्र 'आतश्चोपसर्गे' इति स्त्रियामङ्, 'सुग्लान' इत्यत्र 'आतो युजि'ति युज्न स्यात्। प्रत्ययनिमित्तं ह्यात्वम्, आदन्ताच्च प्रत्यय इत्यन्योन्याश्रयात्। प्रसज्यप्रतिषेधे तु न कोऽपि दोषः। 'ह्वाव-मश्चे'ति सूत्रेण कबाधनार्थं पुनरविधानं च प्रतिषेधपक्षे ज्ञापकम्। तदाहुः—अनैमित्तिकमात्वं, शिति तु प्रतिषेध इति। नन्वेवमपि एशः शित्वाज्जग्ले मम्ले इत्यादि न सिध्यतीति चेत्। अत्राहुः—यदि तु शितीति बहुव्रीहिः स्यात्तदाऽत्र स्यादेव दोषः। किं तु कर्मधारयोऽयम्। तथा चाऽशितीत्यत्रेत्संज्ञकशकारादौ प्रत्यये परे नेत्यर्थः। धातुग्रहणाक्षिप्तस्य प्रत्ययस्य शितीति कर्मधारयेण विशेषणात्। विषयसप्तम्यां तु इत्संज्ञकशकारादिभिन्नप्रत्ययविषये आत्वमित्यर्थात्पर्युदासेऽपि न क्षतिरिति। **आत औ णलः**। इह अङ्गस्येत्यनुवर्तते। धातोरिति तु फलितार्थकथनम्। आदन्तादङ्गादित्यर्थः।

**आतो लोप इटि च**। आर्द्धधातुक इत्यनुवर्तते। 'दीङो युडचि क्ङिती'त्यतोऽचि क्ङितीति च। तदेतत्फलितमाह—**अजाद्योरार्द्धधातुकयोरिति**। अजाद्योः किम्?। ग्लायते। यक्—जाग्लायते। यङ्—दासीय। डुदाञो लिङुत्तमै-कवचनमिट्। आर्द्धधातुकयोः किम्?। यान्ति। वान्ति। व्यतिरे। कर्मव्यतिहारे रा दाने धातोर्लुट्युत्तमैकवचनमिट्। [व्यतिरै। लट इट्]। **दधिथेति**। एवं च अजाद्यार्द्धधातुकस्य किंत्वेन दधिव दधिमेत्यादिष्वातो लोपसिद्धावपि दधिथ पपिथे-त्यादि रूपसिद्धये सूत्रेऽसिन्निटीति ग्रहणमावश्यकमिति ज्ञेयम्। यदि तु इडागम एवात्र गृह्यते व्याख्यानात्तदाऽचि क्ङिती-त्येतदार्द्धधातुकस्यैव विशेषणं, न तूभयोः। **दाधा घ्वदाप्**। इह दारूपाश्चत्वारः—डुदाञ् दाने। दाण् दाने। दो अवखण्डने। देङ् रक्षणे। धारूपौ तु द्वौ—डुधाञ् धारणपोषणयोः। धेट् पाने। अनुबन्धानामनेकान्तत्वात् 'आदेच उपदेशे' इत्यात्वे दोदेङ्धेटामनुकरणे दाधारूपत्वमस्ति। एवं च दाश्च दाश्च दाश्च दाः। धाश्च धाश्च धौ। दाश्च धौ च दाधा इति विग्रहः। **दाप्दैपौ विनेति**। दाप् लवने। दैप् शोधने—एतद्भिन्ना इत्यर्थः। दैपः पित्त्वमिह प्रतिषेधार्थं,

बा.]इत्याश्रयणेन 'सुग्ल' इत्यत्र कप्रत्ययात्प्रागेव आत्वोपपत्तेः। उपदेशे किम्?। चेता, स्तोता। धातोः किम्?। गोभ्याम्। 'गमेर्डो'रिति डोप्रत्ययोपदेशात् उपदेशे य एच् तदन्तत्वाड्डो इत्यस्य प्राप्तिः। न च मेङादीनामुपदेशे एजन्तत्वाऽभावा त्कथमात्वमिति न शङ्क्यम्, 'उदीचां माङः' इति निर्देशेन 'नानुबन्धकृतमनेजन्तत्व'मिति ज्ञापनादित्यास्तां तावत्।

तथाच प्रकृते लिटि द्वित्वादौ दधा अ इति स्थिते—**आत औ**। 'औ' इति लुप्तप्रथमाकम्। अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते। 'आत' इति तद्विशेषणम्। तदन्तविधिः। तदाह—**आदन्ताद्धातोरिति**। णल्प्रकृतिश्च धातुरेवेति धातुग्रहणम्। तथाच णल औत्वे वृद्धौ रूपमाह—**दधाविति**। दधा—अतुसिति स्थिते—**आतो लोपः**। 'आर्द्धधातुके' इत्यधिकृतम्। 'दीङो यु'डित्यतोऽचि क्ङितीति चानुवर्तते। अचीत्यार्द्धधातुकविशेषणत्वात्तदादिविधिः। क्ङिति अजा-द्यार्द्धधातुके इटि च आतो लोप इति लभ्यते। फलितमाह—**अजाद्योरिति**। इट आर्द्धधातुकत्वं तु तदवयवत्वाद्बोध्यम्। क्ङितीति च इटो न विशेषणम्, इड्ग्रहणसामर्थ्यात्। इडित्यनेन उत्तमपुरुषैकवचनम्, इडागमश्च गृह्यते। अजाद्योःकिम्?। ग्लैधातोः कर्मणि लटि यकि—ग्लायते। आर्द्धधातुकयोः किम्?। यान्ति वान्ति। दधौ इत्यत्र तु क्ङित्वाऽभावान्नाल्लोपः। सति तस्मिन् औत्वं न स्यात्। ननु धा—अतुसिति स्थिते द्वित्वात्परत्वादाल्लोपे सति एकाच्त्वाऽभावाद्द्वित्वं न स्यादित्याशङ्क्य परिहरति—**द्वित्वादित्यादिना**। **धेट्धातुरनिट्**। भारद्वाजनियमात्थलि वेडित्याह—**दधिथ दधाथेति**। इडपक्षे आल्लोपः। दधथुः। दध। दधौ इति सिद्धवत्कृत्याह—**दधिवेति**। वसि आत्त्वे क्रादिनियमादिटि आल्लोप इति भावः। एवं दधिमेत्यपि ज्ञेयम्। **धातेति**। लुटि आत्वे तासादीति भावः। धास्यति। धयतु। अधयत्। धयेत्।

आशीर्लिङि घुसंज्ञाकार्यं वक्ष्यन्घुसंज्ञां दर्शयति—**दाधा घ्वदाप्**। 'दे'त्यनेन स्वाभाविकाऽऽकारान्तयोः 'डु दाञ् दाने' 'दाण् दाने' इत्यनयोः, कृतात्वयोः 'दो अवखण्डने' 'देङ् रक्षणे' इत्यनयोर्लाक्षणिकयोश्च, 'धे'त्यनेन स्वाभाविकाकारान्तस्य

शे.]त्तरसूत्राणां प्रत्ययेष्वेव प्रवृत्तेस्तत्साहचर्यादत्र शितीति 'शिति प्रत्यये'इत्येतद्वाक्यैकदेशः। एवञ्च तदादिविधावित्सञ्ज्ञक-शकारादौ नेत्यर्थः। तेन 'जग्ले' इत्यस्य सिद्धिः। विषयसप्तमी चेयम्। तेन 'म्लायती'त्यादौ शबाद्युत्पत्तेः प्रागपि नात्वमित्यलम्। **आतो लोपः**। 'दीङो यु'डित्यतोऽचि क्ङितीति वर्त्तते। तदाह—**अजाद्योरिति**। **इट्** आगम एव, अन्याऽसम्भवात्। 'जग्ले' इत्यादौ त्वजादिकित्त्वादेव सिद्धम्। इट आर्द्धधातुकत्वं[तु]तदवयवत्वाद्बोध्यम्। क्ङितीति चेटो न विशेषणम्, इड्ग्रहणसामर्थ्यात्। **दारूपा इति**। 'प्रयोगे' इति शेषः। प्रयोगस्थदाधारूपाणामेव सूत्रेऽनुकरणात्। 'प्रयोगस्थानामेव सूत्रेऽनुकरण'मित्यर्थस्य 'तन्नदेशानां टेरेत्वं ने'त्यर्थे 'आनयी'ति वक्तव्ये 'आने मु'गिति सूत्रनिर्देशस्य ज्ञापकत्वं वदता भाष्यकृता सूचनाच्च। यद्यपि लाक्षणिकत्वाद्दोदेङ्धेटां कृतात्वानां न प्राप्नोति, तथापि 'गामादाग्रहणेष्व-

।६।४।६७। घुसंज्ञानां मास्थादीनां च एत्वं स्यादार्द्धधातुके किति लिङि । धेयात् । धेयास्ताम् । धेयासुः । **विभाषा धेट्श्व्योः** ।३।१।४९। आभ्यां च्लेश्चङ् स्यात्कर्तृवाचिनि लुङि परे । 'चङी'ति द्वित्वम् । अदधत् । अदधताम् । **विभाषा घ्राधेट्शाच्छासः** ।२।४।७८। एभ्यः सिचो लुग्वा स्यात्परस्मैपदे परे । अधात् । अधाताम् । अधुः।**यमरमनमातां सक् च**।७।२।७३।एषां सक् स्यात्, एभ्यः सिच इट् [च] स्यात्परस्मैपदेषु। अधासीत् । अधासिष्टाम् । अधासिषुः । ९०३ ग्लै ९०४ म्लै हर्षक्षये । हर्षक्षयो–धातुक्षयः । ग्लायति । जग्लौ ।

त.] न त्वनुदात्तार्थम्, 'अनुदात्तौ सुप्पितौ' इति प्रत्ययस्यैव पितोऽनुदात्तत्वात् । न च दैपो लाक्षणिकत्वाच्चाऽस्य प्रतिषेध इति शङ्क्यं, पित्करणस्यानर्थक्यप्रसङ्गात्। इदमेव च दैपः पित्त्वं 'गामादाग्रहणेष्वविशेषः' इति परिभाषाया ज्ञापकमित्याहुः। अदाबिति किम् ? । दातं बर्हिः । लूनमित्यर्थः । इह 'दो दद्घो'रिति दद्भावो न । अवदातं मुखम् । शुद्धमित्यर्थः । इह तु 'अच उपसर्गा'दिति तादेशो न । **एलिङि । मास्थादीनामिति ।** मास्थागापाजहातिसामित्यर्थः । मा माने । गामादाग्रहणेष्वविशेषेऽपि माङ्मेङौ नेह गृह्येते, लिङि किर्त्वाऽसंभवात् । ष्ठा गतिनिवृत्तौ । गै शब्दे । गाङ् गतौ इति तु न गृह्यते, लिङि किर्त्वाऽसंभवादेव।पा पाने।ओहाक् त्यागे। षोऽन्तकर्मणि।देयात्।धेयात् ।मेयात्। स्थेयात् । गेयात् । पेयात् । हेयात् । अवसेयात् । आर्द्धधातुके किम् ? । मायात् । मायाताम् । मायुः । कितीति किम् ? । दासीष्ट । इह 'दीङो युडचि'त्यतः क्ङितीत्यनुवर्तमानेऽपि प्रकृतोपयोगितया कितीत्यस्यैवानुवृत्तिः कृता । **विभाषा धेट्** । 'च्लि लुङी'त्यनुवर्तते, 'णिश्री'त्यस्मात्कर्तरीति च । तदाह–**च्लेश्चङ् वेत्यादि । अदधदिति ।** चङि आतो लोपः।श्वयतेरुदाहरणम्–अशिश्वियत् । **विभाषा घ्रा** । इह 'ण्यक्षत्रियार्षे'त्यतो लुगनुवर्तते,'गातिस्थे'त्यतः सिचः परस्मैपदेष्विति च । तदाह–**सिचो लुग्वेत्यादि । अधुरिति ।** 'आतः' इति झेर्जुस् । परस्मैपदे किम् ? । व्यत्यघास्त । **यमरमनमाताम्** । इह 'आर्द्धधातुकस्येड्वलादे'रितीडनुवर्तते । 'अञ्जेः सिची'त्यतः सिज्ग्रहणं,'स्तुसुधूञ्भ्य-'

बा.]'डु धाञ् धारणपोषणयो'रित्यस्य, लाक्षणिकस्य 'धेट् पाने' इत्यस्य च ग्रहणम् । 'गामादाग्रहणेष्वविशेषः' इति परिभाषाबलात्तत्र दाग्रहणेन धारूपस्यापि ग्रहणाच्च । अत एव 'दो दद्घो'रित्यत्र धेणिवृत्त्यर्थं दाग्रहणमर्थवत्, दधातेर्हिभावविधानादेव निवृत्तिसिद्धेः । तदाह–**दारूपा धारूपाश्चेति । एलिङि ।** 'ए'रिति प्रथमान्तम् । 'आर्द्धधातुके' इत्यधिकृतम् । 'घुमास्थागापाजहातिसा'मित्यनुवर्तते । घु मा स्था गा पा जहाति सा एषां द्वन्द्वात् षष्ठीबहुवचनम् । तदाह–**घुसंज्ञानां मास्थादीनामिति । किति लिङीति ।** 'दीङो यु'डित्यतः कितीत्यनुवृत्तेरिति भावः । ङितीति नानुवर्तते, लिङार्द्धधातुकस्य ङित्त्वाऽसंभावात् । लुङि च्लेः सिचि प्राप्ते–**विभाषा धेट्** । 'च्लि लुङी'त्यनुवर्तते । 'णिश्रिद्रुस्रुभ्यः' इत्यतः कर्तरि चङिति च । तदाह–**आभ्यामिति ।** धेट् श्वि आभ्यामित्यर्थः । **अदधदिति ।** चङि द्वित्वे आल्लोप इति भावः । अदधताम् । अदधन् । अदधः अदधतम् अदधत । अदधम् अदधाव अदधाम । चङभावपक्षे विशेषमाह–**विभाषा घ्रा** । 'ण्यक्षत्रियार्षे'त्यतो लुगित्यनुवर्तते, 'गातिस्थे'त्यतः सिचः परस्मैपदेष्विति, तदाह–**एभ्य इति** । 'घ्रा गन्धोपादाने' 'धेट् पाने' 'शो तनूकरणे' 'छो छेदने' 'षो अन्तकर्मणि'–एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम् । शोप्रभृतीनां कृतात्त्वानां निर्देशः । धेटः 'गातिस्थाघुपे'ति नित्यं प्राप्ते, अन्येषामप्राप्ते वचनम् । **अधुरिति** । 'उस्यपदान्ता'दिति पररूपम् । अधाः अधातम् अधात । अधाम् अधाव अधाम । सिचो लुगभावपक्षे आह–**यमरम** । यम, रम, नम, आत्–एषां द्वन्द्वात्षष्ठीबहुवचनम् । 'आ'दित्यनेन आदन्तं गृह्यते । तदाह–**एषां सगिति** । सकि ककार इत् । अकार उच्चारणार्थः । कित्त्वादन्तावयवः । चकारेण 'इडत्यर्ती'त्यत इडिति, 'स्तुसुधूञ्भ्यः' इत्यतः परस्मैपदेष्विति चानुकृष्यते।'अञ्जेः सिची'त्यतः सिचीति च।तच्च षष्ठ्या विपरिणम्यते। तदाह–**सिचइट् चेति।अधासीदिति** । धातोः सगागमः । सिच इट्, ईट् । 'इट ईटि' इति सिज्लोपः । **अधासिष्टामिति** । अपृक्तत्वाऽभावादीडभावाच्च सिज्लोपः । सस्य षत्वे तकारस्य ष्टुत्वेन टः । **अधासिषुरिति** । अधासीः अधासिष्टम् अधासिष्ट । अधासिषम् अधासिष्व अधासिष्म । यद्यपि अधासीदित्यत्र सगिटोर्विधिर्व्यर्थ एव, तथापि अधासिष्टामित्याद्यर्थमातः सगिड्विधानम्।यमादीनां तु अयंसीदित्यादौ हलन्तलक्षणवृद्धेरभावार्थम्,अयंसिष्टामित्याद्यर्थं च। तदेतत्तत्तद्धातुषु स्पष्टीभविष्यति । अधास्यत् । **म्लै म्लै । धातुक्षय इति** । बलक्षय इत्यर्थः । अनिटाविमौ । **ग्लायतीति** । शपि आयादेशः ।

शो.]विशेषः' इति परिभाषया न दोषः । अस्याच्च दैपः पित्त्वं ज्ञापकम्। तच्चाऽदाबिति निषेधेऽस्यापि ग्रहणाय।**धारूपा इति** । प्रयोगबाहुल्येन बहुवचनम् । 'प्रनिधारयती'त्यादावनर्थकत्वात्, तरवेनैव घुनिरूपितोपसर्गत्वाऽभावाच्च न णत्वम् । 'प्रणिदापयती'त्यादौ 'यदागमाः' इति न्यायेन न दोषः। रेफस्वाकाराऽगमौ, न दा इत्यस्य। दासाहचर्याद्दाग्रहणेन धेटोऽपि ग्रहणम् । अत एव 'दो दद्घो'रित्यत्र दधातेर्हिविधानसत्त्वाद्धेणिवृत्त्यर्थं दाग्रहणं चरितार्थम् । **एलिङि** । घुमास्थेत्यादि वर्तते, कितीति च । **विभाषा धेट** । 'णिश्री'त्यतः कर्त्तरीति, चङिति च वर्त्तते । **विभाषा घ्रा** । 'गातिस्थे'त्यतः

जग्लिथ । जग्लाथ । **वाऽन्यस्य संयोगादेः** ।६।४।६८। घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा स्यादार्धधातुके किति लिङि। ग्लायात् । ग्लेयात् । अग्लासीत् । म्लायति। ९०५ द्यै न्यक्करणे। न्यक्करणं–तिरस्कारः। ९०६ द्रै स्वप्ने।[९००]। ९०७ ध्रै [धै?]। तृप्तौ। ९०८ ध्यै चिन्तायाम्। ९०९ रै शब्दे। ९१० स्त्यै ९११ ष्ट्यै शब्दसङ्घातयोः । स्त्यायति। षोपदेशस्यापि सत्त्वे कृते रूपं तुल्यम्। षोपदेशफलं तु तिष्ट्यासति, अतिष्ट्यपदित्यत्र षत्वम् । ९१२ खै खदने। ९१३ क्षै ९१४ जै ९१५ षै क्षये । क्षायति । जायति।जजौ । जाता। सायति। ससौ। साता। 'घुमास्थे'त्यत्र 'विभाषा घ्राधे'त्यत्र च स्यतेरेव ग्रहणं न त्वस्य। तेन एत्वसिज्लुकौ न। सायात्। असासीत् । ९१६ कै ९१७ गै शब्दे । गेयात् । अगासीत् । ९१८ शै ९१९ श्रै पाके । ९२० पै ९२१ ओवै शोषणे । पायात् । अपासीत् । 'घुमास्थे'तीत्वं, तदपवाद 'एर्लिङी'त्येवं,'गातिस्थे'ति सिज्लुक् च न, पारूपस्य

---

त ]इत्यतः परस्मैपदग्रहणं च। तदाह–**यमरमः सिच इडित्यादि।** अयंसीत् । अयंसिष्टाम् । व्यरंसीत् । व्यरंसिष्टाम् । अनंसीत् । अनंसिष्टाम् । परस्मैपदेषु किम् ? । उदायंस्त भारम् । अरंस्त । अरंसाताम् । **वाऽन्यस्य** । अन्यस्य किम् ? । स्थेयात् । **द्यै न्यक्करणे** । द्यायति । दद्यौ । अद्यासीत् । **घुमास्थेत्यत्रेति** । व्याख्यानात्तत्रान्तरे जहातिस्यतीनामिति श्यना निर्देशाच्चेति भावः । **विभाषा घ्रेति** । श्यन्विकरणाभ्यां शाच्छाभ्यां साहचर्यादिति भावः । एवं शाच्छासेति युग्विधावपि स्यतेरेव ग्रहणमिति बोध्यम् । तेनाऽस्य धातोः 'अर्तिह्री'ति पुगेव । सापयति । **पै ओवै ।**

---

बा.]शिद्विषयत्वादात्त्वं न । **जग्लाविति** । णलि आत्वे 'आत णौ णल.' इति औभावे वृद्धिरिति भावः । अतुसादौ द्वित्वे कृते आतो लोपः । जग्लतुः जग्लुः । भारद्वाजनियमात्थलि वेडित्याह–**जग्लिथ जग्लाथेति** । इडक्षे आल्लोपः । जग्लथुः जग्ल । जग्लौ जग्लिव जग्लिम । ग्लाता । ग्लास्यति । ग्लायतु । अग्लायत् । ग्लायेत् । आशीर्लिङि आत्वे कृते ग्ला–यात्–इतिस्थिते–**वाऽन्यस्य।** आर्द्धधातुक इत्यधिकृतम् । 'एर्लिङी'त्यनुवर्तते । 'ए'रिति प्रथमान्तम् । 'आतो लोप इटि चे'त्यत 'आत' इत्यनुवर्तते। कस्मादन्यस्येत्यपेक्षायां घुमास्थागापाजहातिसां हली'ति प्रकृतत्वात्तेभ्योऽन्यस्येति लभ्यते । तदाह–**घुमास्थादेरित्यादिना** । **कितीति** । 'दीङो युडचि क्ङिती'त्यतस्तदनुवृत्तेरिति भावः । ङितीति तु नानुवर्तते, लिङ्यार्द्धधातुकस्य ङित्वाऽसंभवात् । **अग्लासीदिति** । 'यमरमे'त्यादन्तत्वात्सगिटौ । अग्लासिष्टाम् अग्लासिषुरित्यादि । अग्लास्यत्।**म्लायतीति**।ग्लैधातोरिव रूपाणीति भावः। **द्यै न्यक्करणे**।यकारमध्योऽयम्। इत आरभ्य ऐकारान्तानां संयोगादीनां ग्लैवदेव रूपाणि प्रत्येतव्यानि । 'रै शब्दे' इत्यादीनां त्वसंयोगादीनामाशीर्लिङि 'वाऽन्यस्य संयोगादे'रित्येत्वं न भवति, [तेन]रायादित्यादि रूपमिति विशेषः। **स्त्यै ष्ट्यै इति** । षोपदेशेषु स्त्याधातोः पर्युदासादाद्यो न षोपदेशः । द्वितीयस्तु षोपदेशः । तकारस्य ष्टुत्वसंपन्नटकारनिर्देशः । **सत्त्वे कृते इति** । 'धात्वादे'रिति षस्य सकारे सति निमित्ताऽपायात् ष्टुत्वनिवृत्तिरिति भावः । **तिष्ट्यासतीति** । ष्ट्यैधातोः कृतसत्वात्सनि आत्वे स्त्या स इति सन्नन्ताल्लटि तिपि सपि 'सन्यङो'रिति द्वित्वे 'शर्पूर्वाः खयः' इति सकारयकारनिवृत्तौ 'तास्त्यासति' इति स्थिते अभ्यासह्रस्वे 'सन्यतः'इति इत्वे सकारस्य इणःपरत्वादादेशसकारत्वाच्च षत्वे 'तिष्ट्यासती'ति रूपम् । स्वाभाविकसकारादित्वे त्वादेशसकारादित्वाऽभावात्षत्वं न स्यादिति भावः । **अतिष्ट्यपदिति** । ष्ट्यैधातोः कृतसत्वाण्णौ आत्वे 'अर्तिह्री'ति पुकि स्त्यापि इति ण्यन्ताल्लुङि अडागमे तिपि 'इतश्च' इति इकारलोपे 'णिश्रिद्रुस्रुभ्यः' इति च्लेश्चङि 'णेरनिटी'ति णिलोपे 'णौ चङ्युपधायाः' इति ह्रस्वे 'चङि' इति स्त्यबित्यस्य द्वित्वे 'शर्पूर्वा इति सकारयकारपकाराणां निवृत्तौ सत्यां 'सन्यतः' इति इत्वे, इणः परत्वादादेशसकारत्वाच्च सस्य षत्वे, तस्य ष्टुत्वे अतिष्ट्यपदिति रूपम् । स्वाभाविकसकारत्वे त्वादेशसकारत्वाऽभावात्षत्वं न स्यादिति भावः । **जजौ ससाविति** । जैधातोः षैधातोश्च णलि आत्वे द्वित्वादौ वृद्धिरिति भावः । ननु 'एर्लिङी'त्यत्र 'घुमास्थागापाजहातिसा'मित्यनुवृत्त्या सैधातोराशीर्लिङि 'साया'दित्यत्र एत्वं स्यात् । तथा लुङि सगिटोः–असासात् असासिष्टामित्येव इष्यते।तत्र 'विभाषा घ्राधेट्शाच्छासः' इति सिचः पाक्षिके लुकि असात् असातामित्यपि प्रसज्येतेत्यत आह–**घुमास्थेत्यत्रेत्यादि । स्यतेरिति** । 'षो अन्तकर्मणि' इति श्यन्विकरणस्येत्यर्थः । अत्र व्याख्यानमेव शरणम् । 'विभाषा घ्राधेडि'त्यत्र श्यन्विकरणाभ्यां साहचर्याच्च । **पै ओ वै** । पायति । वायति । 'ओदितश्चे'ति निष्ठानत्वार्थमोदित्वम्। ननु पैधातोः कर्मणि लटि यकि आत्वे पायते इत्यत्र 'घुमास्थागापाजहातिसां हली'ति ईत्वं स्यात् । तथा आशीर्लिङि पायादित्यत्र 'एर्लिङी'त्येत्वं स्यात् , तत्रापि 'घुमास्थागापाजहातिसा'मित्यनुवृत्तेः, तथा लुङि 'अपासी'दित्यत्र 'गातिस्थे'ति सिचो लुकि 'यमरमे'ति इटोऽभावात्तत्संनियोगशिष्टः सगपि न स्यादित्यत आह–**घुमास्थेतीत्वमित्यादिना । पारूपस्येति** । उदाहृतसूत्रत्रये लक्षणप्रतिपदोक्तपरिभाषया आदन्तत्वेन उपदिष्टस्यैव

---

शे.]सिचः परस्मैपदेष्विति, लुगिति च वर्तते । **यमरम** । अनयोः सगिड्विधानम् 'अयंसी'दित्यादौ वृद्धेरभावाय, 'अयंसिष्टामि'त्याद्यर्थश्च । आतोऽपि 'अघासिष्टा'मित्यादौ फलम् । **वाऽन्यस्य** । अन्यस्येति स्थाधातौ परत्वादेतद्विकल्पबार-

जुहोथ । जुहुवे । ह्वाता । हूयात् । ह्वासीष्ट । **लिपिसिचिह्वश्च** ।३।१।५३। एभ्यश्च्लेरङ् स्यात् । **आत्मनेपदेष्वन्यतरस्याम्** ।३।१।५४। 'अतो लोपः'। अह्वत्। अह्वताम्। अह्वन्। अह्वत। अह्वास्त । [१०००]। **अथ द्वौ परस्मैपदिनौ । १००९ वद व्यक्तायां वाचि** । अच्छ वदति । उवाद । ऊदतुः उवदिथ । वदिता । उद्यात् । 'वदव्रजे'ति वृद्धिः । अवादीत् । **१०१० टुओश्वि-गतिवृद्ध्योः** । श्वयति । **विभाषा श्वेः** ।६।१।३०। श्वयतेः

त.] अभ्यस्तमस्यास्तीति अभ्यस्तः=सनादिः, तस्य यो ह्वेञ्=तत्प्रकृतिभूतस्तस्येत्यादिव्याख्यानस्य स्वीकारात्, तेन जिह्वायकमात्मन इच्छति जिह्वायकीयिषतीत्यत्र ह्वेञः संप्रसारणं न भवति, ण्वुलो द्वित्वनिमित्तत्वाऽभावात् । अतएव णिचो द्वित्वनिमित्तत्वं नेति 'ह्वः संप्रसारण'मिति योगविभागः क्रियते । एतच्च आकरे स्पष्टम्। **लिपिसिचि** । लिप उपदेहे । षिच क्षरणे । अलिपत्। असिचत्। **अच्छ वदतीति** । 'अच्छे'त्यस्य वदयोगे गतित्वाद्धातोः प्राक् प्रयोगः। **विभाषा श्वेः**। **लिटि यङि चेति**। 'लिड्यङोश्चे'ति पूर्वसूत्रमिहानुवर्तत इति भावः। उभयत्रविभाषेयम् । लिडंशे अतुसादौ नित्यं प्राप्ते,

बा.] दिति भावः । तथाच णलि आत्त्वे कृते संप्रसारणे पररूपे 'हु'इत्यस्य द्वित्वे 'कुहोश्चु'रिति चुत्वे तस्य जश्त्वे 'अचो ञ्णिती'ति वृद्धौ अवादेशे परिनिष्ठितं रूपमाह—**जुहावेति । जुहुवतुरिति** । अतुसि आत्त्वे आल्लोपं बाधित्वा अन्तरङ्गत्वात् 'अभ्यस्तस्य चे'त्यनेन संप्रसारणे 'वार्णादाङ्गं बलीयः' इत्यस्याऽनित्यतयाऽन्तरङ्गत्वात्पूर्वरूपे कृते द्वित्वे उवङिति भावः । यद्यपि किति 'वचिस्वपी'ति संप्रसारणेऽपि सिद्धमिदम् , तथापि अकिति आवश्यकमभ्यस्तस्य चेत्येतद्याप्यत्वादिहापि भवतीति बोध्यम् । एवं जुहुवुः भारद्वाजनियमात्थलि वेट् । तदाह—**जुहोथ जुहविथेति** । जुहुवथुः जुहुव। जुहाव-जुहव जुहुविव जुहुविम। क्रादिनियमादिट् । जुहुवे जुहुवाते जुहुविरे। जुहुविषे जुहुवाथे जुहुविढ्वे जुहुविध्वे । जुहुवे जुहुविवहे जुहुविमहे । **ह्वातेति** । तासि आत्त्वम् । ह्वास्यति ह्वास्यते। ह्वयतु ह्वयताम् । अह्वयत् अह्वयत। ह्वयेत् ह्वयेत । **हूयादिति** । आशीर्लिङि आत्त्वे यासुटि कित्त्वात् 'वचिस्वपी'ति संप्रसारणे पूर्वरूपे 'अकृत्सार्वधातुकयो'रिति दीर्घ इति भावः । **ह्वासीष्टेति** । आशीर्लिङि सीयुटि रूपम् । लुङि विशेषमाह—**लिपिसिचि** । लिपि सिचि ह्वा एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम् । 'च्लेः सि'जित्यतश्च्लेरिति, 'अस्यतिवक्तिख्यातिभ्यः' इत्यतोऽङिति चानुवर्तते । तदाह—**एभ्य इति** । इदं परस्मैपदविषयम् , आत्मनेपदे विकल्पविधानात् । तदाह—**आत्मनेपदेषु । आतो लोप इति** । अह्वा अ त् इति स्थिते 'आतो लोप इटि चे'त्यालोप इत्यर्थः । **अह्वदिति** । अह्वताम् । **अह्वन्नित्यादि । अह्वतेति** । लुङि आत्मनेपदे अङि रूपम् । अह्वेताम् अह्वन्तेत्यादि । अङभावपक्षे त्वाह—**अह्वास्तेति** । अह्वासाताम् अह्वासत । इत्यादि । अह्वास्यत् अह्वास्यत । **वद व्यक्तायां वाचीति** । अक्षरविभागेन स्पष्टोच्चारणे इत्यर्थः । सेडयम् । **अच्छ वदतीति** । 'अच्छे'त्यव्ययमाभिमुख्ये । अभिमुखं वदतीत्यर्थः । 'अच्छ गत्यर्थवदेषु' इति गतित्वादच्छेत्यस्य धातोः प्रागेव प्रयोग इति भावः । अकिति लिटि द्वित्वे 'लिड्यभ्यासस्ये'ति संप्रसारणमिति मत्वा आह—**उवादेति** । किति लिटि तु 'वचिस्वपियजादीना'मिति द्वित्वात्प्राक् संप्रसारणे कृते द्वित्वे सवर्णदीर्घ इति मत्वाह—**ऊदतुरिति । उवदिथेति** । द्वित्वे अभ्यासस्य संप्रसारणमिति भावः । ऊदथुः ऊद । उवाद—उवद ऊदिव ऊदिम । **वदितेति** । तासि इट् । वदिष्यति । वदतु । अवदत् । वदेत् । **उद्यादिति** । आशीर्लिङि यासुटः कित्त्वात् 'वचिस्वपी'ति संप्रसारणमिति भावः । 'अवादी'दित्यत्र हलन्तलक्षणवृद्धेः 'नेटी'ति निषेधेऽपि 'अतो हलादे'रिति वृद्धिविकल्पमाशङ्क्य वदधातोः पृथग्ग्रहणाद्वृद्धिरित्यभिप्रेत्याह—**वदव्रजेति वृद्धिरिति** । एतदर्थमेव 'वदव्रजहलन्तस्ये'त्यत्र वदधातोः पृथग्ग्रहणमिति भावः । **टु ओ श्वीति** । टुरोकारश्चेत् । **श्वयतीति** । शपि गुणायादेशौ । लिटि तु अकिति णलादौ 'लिड्यभ्यासस्ये'त्यभ्यासस्य नित्यं संप्रसारणे प्राप्ते, किति तु अतुसादौ द्वित्वात्प्राक् 'वचिस्वपी'ति नित्यं संप्रसारणे प्राप्ते आह—**विभाषा श्वेः । संप्रसारणमिति** । 'ष्यङः संप्रसारण'मित्यतस्तदनुवृत्तेरिति भावः ।

शे.] मुत्तरखण्डस्य सम्प्रसारणे अभ्यासस्य 'न सम्प्रसारणे' इति निषेधः स्यादत आह—**अभ्यस्तीभविष्यत इति** । न च 'जिह्वायकीयिषती'त्यादावपि सम्प्रसारणापत्तिः । **'अभ्यस्तीभविष्यतो ह्वेञः'** इत्यस्याऽभ्यस्तप्रकृतिभूतस्य ह्वेञ इत्यर्थेनाऽदोषात् । अत्र हि क्यजन्तः सन्नन्तो वा तत्प्रकृतिः । यद्धतं धातुत्वं निमित्तीकृत्याऽवयवस्यैकाचो द्वित्वं स हि तत्प्रकृतिरित्युच्यते। अत एव 'ह्वः सम्प्रसारण'मिति सन्—चङ्परे णौ सम्प्रसारणविधायकं चरितार्थम् , तत्र ह्वाययतेरभ्यस्तप्रकृतित्वात् । स्पष्टं चेदं भाष्ये । यत्तु कैयटेनाऽभ्यस्ताक्षिप्तप्रत्ययेऽनन्तरस्य ह्वयतेर्ग्रहणेन नाऽत्र दोष इत्युक्तं, तत्तु 'द्युतिस्वाप्यो'रिति सूत्रोक्तरीत्याऽसङ्गतमिति स्पष्टमेव। **जुहुवतुरिति**। ह्वा—अतुसित्यत्राऽऽलोपापेक्षयाऽनैमित्तिकत्वेनान्तरङ्गत्वात्सम्प्रसारणे वार्णपरिभाषाया अनित्यत्वाश्रयणेनाऽन्तरङ्गत्वात्पूर्वरूपे, ततो द्वित्वे उवङ् । उवङि पूर्वरूपस्य न स्थानिवत्त्वम् , उवर्णान्तधातोरुवङ्विधानेनाऽऽकारात्पूर्ववृत्तिधर्मावच्छिन्नोद्देश्यकत्वाऽभावात्, आकारैकदेशस्याऽऽकारात्परीभूतनिमित्तकत्वाऽभावाच्च । प्रत्यासत्त्या 'अचः परस्मि'न्नित्यत्रादेशस्थान्यपेक्षपरत्ववन्निमित्तकस्यैव ग्रहणात् । **अच्छ वदतीति** ।

संप्रसारणं वा स्याल्लिटि यङि च । शुशाव । शुशुवतुः। *श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः। तेन 'लिट्यभ्यासस्ये'ति संप्रसारणं न । शिश्वाय । शिश्वियतुः। श्वयिता । श्वयेत् । शूयात्। 'जॄस्तम्भ्वि'त्यङ् वा । **श्वयतेरः ।७।४।१८।**श्वयतेरिकारस्याऽकारः स्यादङि । पररूपम्। अश्वत्। अश्वताम्। अश्वन् । 'विभाषा धेट्श्व्यो'रिति चङ्। इयङ् । अशिश्वियत् । अशिश्वियताम् । 'ह्यन्ते'ति न वृद्धिः । अश्वयीत् । अश्वयिष्टाम् । (ग.) **वृत्** । यजादयो वृत्ताः । भ्वादिस्त्वाकृतिगणः । तेन चुलुम्पतीत्यादिसङ्ग्रहः । इति [सिद्धान्तकौमुद्यां] भ्वादयः ।

---

त.]णलादावप्राप्ते । यङंशे त्वप्राप्तविभाषा । शोशूयते । शेश्वीयते । **संप्रसारणं नेति** । अन्यथा शुश्वायेत्यादि स्यादिति भावः । **श्वयतेरः**। अलोऽन्त्यपरिभाषालभ्यमाह-**इकारस्येति । पररूपमिति** । अतो लोपस्तु न भवति, 'आर्द्धधातुकोपदेशे यदकारान्त'मिति व्याख्यातत्वात् । **इयङिति** । लघूपधगुणापेक्षयाऽन्तरङ्गत्वादिति भावः। **अश्वयीदिति।** नन्विहान्तरङ्गत्वाद्गुणायादेशयोः कृतयोर्यान्तत्वादेव वृद्धिनिषेधो भवेदिति किमनेन णिश्विग्रहणेनेति चे॰। अत्राहुः-'न सिच्यन्तरङ्गमस्ती'ति ज्ञापनार्थं णिश्विग्रहणम् । तेन चिरिणोतिजिरिणोत्योर्यङ्लुगन्तानां चिनीप्रभृतीनां च सिचि बहिरङ्गा वृद्धिरेव भवति। अचिरायीत् । अजिरायीत् । अचेचायीत् । अनेनायीदिति। **तेनेति** । उक्तं च वार्तिककृता-'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थ'मिति।**चुलुम्पतीति** । लुम्पतीत्यर्थः,चुलुम्प लोपे इति कविकल्पद्रुमे उक्तत्वात् । **इति भ्वादयः।**

---

बा.]**लिटि यङि चेति**।'लिड्यङो'रित्यनुवृत्तेरिति भावः । **शुशावेति।** णलि अभ्याससंप्रसारणं बाधित्वा द्वित्वात्प्रागेव परत्वादनेन संप्रसारणे कृते ततो द्वित्वे वृद्ध्यावादेशाविति भावः । अकित्त्वाद्वचिस्वपीत्यस्य नाऽत्र प्राप्तिः । तथाच लिड्यकित्स्वेकवचनेषु द्वित्वात्प्रागप्राप्तस्य संप्रसारणस्य विकल्पविधिः । 'शुशुवतु'रित्यादिद्विवचनबहुवचनेषु तु द्वित्वात्प्राग्वचिस्वपीति प्राप्तस्य संप्रसारणस्य विकल्पविधिः । तथाच उभयत्र विभाषेयम् । यङंशे त्वप्राप्तविभाषैवेयम्-शोशूयते । शेश्वीयते । तत्र णलि एतत्संप्रसारणाऽभावपक्षे'श्वी'त्यस्य द्वित्वानन्तरमभ्याससंप्रसारणे शुश्वाय इति प्राप्ते आह-**श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेध इति** । लिट्यभ्याससंप्रसारणस्य प्रतिषेधो वक्तव्य इत्यर्थः । तथाच 'श्वि'इत्यभ्यासस्य संप्रसारणाऽभावादभ्यासे इकार एव श्रूयते इत्याह-**तेनेति । शूयादिति** । आशीर्लिङि. यासुटः कित्त्वाद्वचिस्वपीति संप्रसारणे पूर्वरूपे 'अकृत्सार्वधातुकयो'रिति दीर्घ इति भावः । लुङि विशेषमाह-**जॄस्तम्भ्विति** । तथाच अश्वि अ त् इति स्थिते इयङि प्राप्ते-**श्वयतेरः** । श्वयतेः-अ इति च्छेदः । श्वयतेरिति श्तिपा निर्देशः । श्विधातोरित्यर्थः । 'अलोऽन्त्यस्ये'त्यन्त्यस्य इकारस्येति लभ्यते। 'ऋदृशोऽङी'इत्यतोऽङीत्यनुवर्तते । तदाह-**श्वयतेरिकारस्येति** । अश्व अ त् इति स्थिते सवर्णदीर्घमाशङ्क्याह-**पररूपमिति** । आर्द्धधातुकोपदेशे अदन्तत्वाऽभावान्न अल्लोपः । **अश्वन्निति।** अश्वः अश्वतम् अश्वत । अश्वम् अश्वाव अश्वाम । अङभावपक्षे त्वाह-**विभाषेति । इयङिति** । 'चङी'ति द्वित्वमित्यपि ज्ञेयम् । तदाह-**अशिश्वियदिति** । अङश्चङश्चाऽभावे तु अश्वि ईत् इति स्थिते इकारस्य सिचि वृद्धौ सत्यामायादेशे अश्वायीदिति प्राप्ते आह-**ह्यन्तेति न वृद्धिरिति** । श्विग्रहणादिति भावः । न च 'नेटी'त्येव सिचि वृद्धेर्निषेधसिद्धेः पृथक् श्विग्रहणं व्यर्थमिति वाच्यम्, 'नेटी'ति निषेधस्य हलन्तलक्षणवृद्धिमात्रविषयत्वात् । नच अश्वि ईत् इति स्थिते सिचि वृद्ध्यपेक्षया परत्वादन्तरङ्गत्वाच इकारस्य गुणे एकारे कृते इगन्तत्वाऽभावेन सिचि वृद्ध्यप्राप्त्या अयादेशे कृते यान्तत्वादेव हलन्तलक्षणवृद्धेर्निषेधसिद्धेः 'ह्यन्ते'त्यत्र श्विग्रहणं व्यर्थमिति व्याच्यम्, अनवकाशतया अपवादत्वेन गुणं बाधित्वा सिचि वृद्धेः प्राप्तौ तन्निषेधार्थत्वादित्यलम् । वृदित्यस्य व्याख्यानम्-**यजादयो वृत्ता इति** । ननु भ्वादयो वृत्ता इति कुतो न व्याख्यायते इत्यत आह-**भ्वादिस्त्वाकृतिगण इति । चुलुम्पतीति** । चुलुम्पधातुर्लोपार्थकः, तस्यापि भ्वादिगणे पाठाच्छब्विकरणत्वमिति भावः। **इति भ्वादय इति** । नचैवं सति 'अद भक्षणे' इत्यादीनां वक्ष्यमाणानां धातुत्वं कथमिति शङ्क्यं, शब्विकरणा भ्वादयः समाप्ता इत्यर्थात्। **इति भ्वादयः।**

---

शे.]'अच्छ गत्यर्थवदेषु'इति गतित्वम् । **विभाषा श्वेः**। उभयत्र विभाषेयम् । **शुशावेति** । अत्र नित्यत्वात्संप्रसारणेऽन्तरङ्गत्वात्पूर्वरूपे द्वित्वे वृद्ध्यावाविति भावः । नन्वेतदभावे 'लिट्यभ्यासस्ये'ति दुर्वारम् । तथा च 'शिश्वाये'त्यसिद्धिरत आह-**श्वयतेर्लिटीति** । वाचनिकमेवेदम् । एतत्सामर्थ्याच्छ्वयत्यभ्यासविषयलक्षणानुपप्लव एवेति भावः । यत्त्वनेन परत्वात्तस्य बाध इति, तन्न, अस्य परत्वेन द्विर्वचनात्पूर्वं प्राप्त्या,'लिट्यभ्यासस्ये'त्यस्य च द्वित्वोत्तरं प्राप्त्या युगपत् प्राप्त्यभावेन विप्रतिषेधशास्त्राऽप्रवृत्तेः।तदभावपक्षे तेन बाधस्य वक्तुमशक्यत्वाच्च।**पररूपमिति**।आर्द्धधातुकोपदेशेऽदन्तत्वाऽभावान्नाऽतो लोपः। **अश्वयीदिति** । नन्वन्तरङ्गत्वाद्गुणे इगन्तत्वाऽभावाद्वृद्ध्यप्राप्त्याऽयादेशे यान्तत्वादेव हलन्तलक्षणाया निषेधे सिद्धे किं 'ह्यन्ते'त्यत्र णिश्विग्रहणेनेति चेन्न,सिचिवृद्धेर्येननाप्राप्तिन्यायेनान्तरङ्गापवादत्वादिति दिक्।**इति भ्वादयः।**

## अथाऽदादयः ।

**ऋतेरीयङ्** ।३।१।२९। ऋतिः सौत्रः. तस्मादीयङ् स्यात्स्वार्थे । जुगुप्सायामयं धातुरिति बहवः । कृपायां चेत्येके।'सनाद्यन्ता'इति धातुत्वम्। ऋतीयते । ऋतीयाँचक्रे ।आर्द्धधातुकविवक्षायां तु 'आयादय आर्द्ध-धातुके वे'तीयङभावे 'शेषात्कर्तरी'ति परस्मैपदम् । आनर्त । अर्तिष्यति । आर्तीत् । १०११ अद भक्षणे । द्वौ परस्मैपदिनौ । **अदिप्रभृतिभ्यः शपः**।२।४।७२। लुक् स्यात् । अत्ति । अत्तः। अदन्ति । **लिट्यन्यतरस्याम्** ।२।४।४०।अदो घस्लृ वा स्याल्लिटि। जघास। 'गमहने'त्युपधालोपः। तस्य चर्विधिं प्रति स्थानिवद्भावनिषेधाद्धस्य चर्त्वम्। 'शासिवसी'ति षत्वम् । जक्षतुः। जक्षुः। घसेस्तासावभावात्थलि नित्यमिट् । जघसिथ । आद । आदतुः। 'इडत्त्यर्ती'ति नित्यमिट्। आदिथ । अत्ता । अत्स्यति । **हुझल्भ्यो हेर्धिः** ।६।४।१०१। होर्झलन्तेभ्यश्च हेर्धिः

---

त.] **ऋतेरीयङ्** । तान्तोऽयं धातुरिका निर्दिष्टो न त्विकारान्तः, 'वश्चिलुश्च्यृतश्चे'ति निर्देशात्। केचित्तु ईयङिति दीर्घोच्चारणात्तान्तोऽयमिति ज्ञायते । इदन्तत्वे हि सवर्णदीर्घेणैव सिद्धेरियङमेव कुर्यादित्याहुस्तच्चिन्त्यम्। इदन्तत्वे तु 'एरनेकाच' इति यणा सवर्णदीर्घस्य बाधात्। न च ऋतेर्यङ्विधावकृत्सार्वेति दीर्घोपपत्तेरीयङ्विधानं तान्तत्वे लिङ्गं भवत्येवेति वाच्यं, यङ्विधौ 'सन्यङो'रिति द्वित्वापत्तेः । **कृपायां चेति** । 'अर्तनं च ऋतीया च हृणीया च घृणार्थकाः' इति, 'जुगुप्सा करुणा घृणे'ति चाऽमरः । **हुझल्भ्यो हेर्धिः** । जुहुधि । 'घसिभसोर्हलि'त्यतो हलीत्यनु-

---

बा.] **ऋतेरीयङ्** । ऋतेर्धातुपाठेऽदर्शनादाह–**ऋतिः सौत्र इति** ।**स्वार्थे इति**। अर्थविशेषस्याऽनिर्देशादिति भावः। तकारान्तो धातुरयमिका निर्दिष्टो न त्विकारान्तः। इदन्तत्वे हि सवर्णदीर्घेणैव सिद्धे ईयङिति ईकारोच्चारणवैयर्थ्यात्। नच इदन्तत्वे ऽति 'एरनेकाचः' इति यण् स्यादिति वाच्यम्, एवमपि 'ऋतेर्यः'इति यप्रत्यये कृते 'अकृत्सार्वधातुकयो-र्दीर्घः' इति दीर्घेणैव सिद्धे इयङ्विधिवैयर्थ्यात् । **एके इति** । अन्ये इत्यर्थः । **ऋतीयते इति** । ईयङोऽदन्तत्वाच्छपि पररूपम् । **ऋतीयांचक्रे इति** । 'कास्प्रत्यया'दित्याम् । ऋतीयिता । ऋतीयिष्यते । ऋतीयताम् । आर्तीयत । ऋतीयेत । ऋतीयिषीष्ट । आर्तीयिष्ट । आर्तीयिष्यत । **आनर्तेति** । ऋत् इति तकारान्ताल्लिटि णलि द्वित्वे उरदत्त्वे रपरत्वे हलादिशेषे 'अत आदे'रित्यभ्यासस्य दीर्घे 'तस्मान्नुड्द्विहलः' इति नुट्. 'नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते'इत्युक्तेरिति भावः।आनृततुः आनृतुः। अनिट्सु अस्याऽपाठात् थलि नित्यमिट् ।आनर्तिथ आनृतथुः आनृत । आनर्त। आनृतिव आनृतिम । अर्तिता। अर्तिष्यति । ऋत्यात् । **आर्तीदिति**।'इट ईटि' इति सिज्लोपः। आडागमः। आर्तिष्यत्।

अथ लुग्विकरणान् धातून्निरूपयितुमुपक्रमते–**अद भक्षणे इति**। अनिडयम्। **अदिप्रभृतिभ्यः**।'ण्यक्षत्रियार्ष-ञितः'इत्यतो लुगित्यनुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे–**लुक् स्यादिति**।अदिप्रभृतिभ्यः परस्य शपो लुगिति फलितम् । **अत्तीति** । शपो लुकि दस्य चर्त्वेन तकारः । एवमत्त इत्यपि । **अदन्तीति** । एतदर्थमेव 'झोऽन्तः' इत्यत्र अकारादिरादेश आश्रितः । अत्सि अत्थः अत्थ । अद्मि अद्वः अद्मः । **लिट्यन्यतरस्याम्** । 'अदो जग्धि'-रित्यतोऽद इति, 'लुङ्सनोर्घस्लृ' इत्यतो घस्लृ इति चानुवर्तते। तदाह–**अद इति**। आदेशे लृकार इत्। घसादेशोऽत्रा-ऽनिट् । **जघासेति**। अकित्त्वात् 'गमहने'त्युपधालोपो नेति भावः । जघस् अतुसिति स्थिते आह–**गमहनेत्युपधा-लोप इति**। 'असंयोगा'दिति कित्त्वादिति भावः । जघ्स् अतुसिति स्थिते घकारस्य चर्त्वे वक्ष्यत्युपधालोपस्य स्थानि-वत्त्वमाशङ्क्याह–**तस्येति** । उपधालोपस्येत्यर्थः । जघ्स् अतुसिति स्थिते सकारस्य आदेशप्रत्ययावयवत्वाऽभावादाह–**शासीति** । थलि तु क्रादिनियमान्नित्यमिट् । 'उपदेशेऽत्वतः' इति निषेधस्य तासौ नित्याऽनिड्विषयत्वात् । घस् तु तासौ न विद्यत एव, कुतस्तस्य तासावनिट्त्वम् । 'यस्तासावस्ति अनिट् चे'ति हि भाष्यम् । तदाह–**घसेस्तासा-विति** । **जघसिथेति** । जक्षथुः जक्ष । जघास जघस जक्षिव जक्षिम । घसादेशाऽभावपक्षे त्वाह–**आदेति** । थलि भारद्वाजनियमादिड्विकल्पे प्राप्ते आह–**इडत्त्यर्तीति** । **आदिथेति** । आदथुः आद । आद आदिव आदिम । अत्ता । **अत्स्यतीति** । अनिट् । दस्य तः । अत्तु अत्तात् अत्ताम् अदन्तु । अद्–हि इति स्थिते 'झयो होऽन्यतरस्या'मिति हकारस्य पूर्वसवर्णविकल्पेन धकारविकल्पे प्राप्ते–**हुझल्भ्यो हेर्धिः** । **झलन्तेभ्य इति** । अङ्गविशेषणत्वात्तदन्त-

---

शे.] **सौत्र इति** । 'कमेर्णि'ङिति साहचर्यात्तान्त इका निर्दिष्टो, न त्विकारान्तः, यप्रत्यये 'अकृत्सार्वे'ति दीर्घेण सिद्धे ईयङ्करणात् । **एके इति** । 'ऋतीयते स्याद्घृणयो'रिति कोशादर्थद्वयमपि तत्र । 'घृणयो'रित्यस्य जुगुप्साकरुणयोरित्यर्थः । **नित्यमिडिति** । अन्यथा भारद्वाजनियमाद्विकल्पः स्यादिति भावः ।

**हुझल्भ्यो**।'रुदिही'त्यादौ तु न,निर्दिश्यमानस्य व्यवहितत्वाद्विहितस्य चाऽनिर्दिश्यमानत्वात्। '**अत्ता**'दित्यत्र

स्यात् । अद्धि । अत्तात् । अदानि । **अदः सर्वेषाम्** ।७।३।१००। अदः परस्याऽपृक्तसार्वधातुकस्याऽडागमः स्यात्सर्वमतेन । आदत् । आत्ताम् । आदन् । आदः । आत्तम् । आत्त । आदम् । आद्व । आद्म । अद्यात् । अद्याताम् । अद्युः । [अद्यात्] । अद्यास्ताम् । अद्यासुः । **लुङ्सनोर्घस्लृ**।२।४।३७। अदो घस्लृ स्याल्लुङि सनि च । लृदित्वादङ् । अघसत् । **१०१२ हन हिंसागत्योः** । प्रणिहन्ति । **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिक लोपो झलि क्ङिति**।६।४।३७।'अनुनासिके'ति लुप्तषष्ठीक वनतीतरेषां विशेषणम्। अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ क्ङिति परे । यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः । तनुक्षणुक्षिणु

---

त.]वर्त्यं हलदेरिति व्याख्यानात् रुदिहि स्वपिहीत्यादाविडादेर्हेर्धिर्न भवति, 'अत्त'दित्यत्र तु धित्वात्परत्वात्तातङि कृते स्थानिवद्भावेन पुनर्धित्वं तु 'सकृद्गतौ' इति न्यायान्नेत्याहुः । अन्ये तु—हेर्धिरित्यत्र स्थान्यादेशयोर्द्वयोरपीकार उच्चारणार्थ इति हकारस्य धकार आदेशः, तेन हलीत्यनुवृत्तिर्न कर्तव्या, नापि तातङो धित्वप्रसङ्ग इति सकृद्गतिन्यायाश्रयणमपि मास्त्वित्याहुः । **अदः सर्वेषाम्** । 'अड्गार्ग्यगालवयोः' इत्यतोऽडित्यनुवर्तते । गार्ग्यगालवयोरित्यस्य त्वनुवृत्तिशङ्कां निवारयितुं सर्वेषांग्रहणम् । **लुङ्सनोः**। जिघत्सति । **प्रणिहन्तीति** । 'नेर्गदे'ति णत्वम्। **अनुदात्तोपदेश** । यद्यत्र 'एतेषामनुनासिकस्य लोप' इति व्याख्यायेत, तदा मन्यतेर्नम्नह्मिहुमुच्मस्जादीनां चानन्त्यस्यापि लोपः स्यात्, तथा च मतः नतः नद्धः मीढः मुक्तः मग्न इत्यादि न सिध्येत्। अत आह—**लुप्तषष्ठीकमिति। वनतीतरेषामिति** । वनतेरव्यभिचाराद्विशेषणं व्यर्थमिति भावः । वतिः । इह क्तिनि 'नेड्वशि कृती'तीण्निषेधाज्झलि क्ङिति न लोपः। **लोपः स्यादिति**।'अलोऽन्त्यस्ये'त्यन्त्यस्येति भावः।अनुनासिकान्ताऽनुदात्तोपदेशान्दर्शयति—**यमिरमीति** । तनोत्यादीनप्यनुनासिकान्तान्दर्शयति—**तनुक्षणुक्षिण्विति** । करोतिवर्जितास्तनोत्यादयो नव, तन्मध्ये सनोतेः

---

बा.]विधिरिति भावः। अनेकाल्त्वात्सर्वादेशः। 'रुदिही'त्यत्र तु न,निर्दिश्यमानहेरिटा व्यवहितत्वात्,इट्सहितस्य त्वनिर्दिश्यमानत्वादिति भाष्ये स्पष्टम् । **अत्तादिति** । धित्वात्परत्वात्तातङ् । तस्य स्थानिवत्त्वेन हित्वेऽपि न पुनर्धित्वं, 'विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति न्यायात् । अत्तम् अत्त । **अदानीति** । 'आडुत्तमस्ये'त्याडागमः । एतदर्थमेव आडागमे दीर्घोच्चारणमिति भावः। अदाव अदाम । लङि आद् त् इति स्थिते—। **अदः सर्वेषाम्** । 'अद'इति पञ्चमी। 'तस्मादित्युत्तरस्ये'ति परिभाषया परस्येति लभ्यते । 'गुणोऽपृक्ते' इत्यतः 'अपृक्ते'इति, 'तुरुस्तुशम्यमः' इत्यतः 'सार्वधातुके' इति चानुवर्तते । सप्तमीद्वयं च षष्ठ्या विपरिणम्यते। 'अड् गार्ग्यगालवयो' रित्यतोऽडित्यनुवर्तते। 'गार्ग्यगालवयो'रित्यस्यानुवृत्तिनिवृत्तये 'सर्वेषा'मिति । तदाह—**अदः परस्येत्यादिना** । टित्वादाद्यवयः । तदाह—**आददिति** । **आत्तामिति** । अपृक्तग्रहणान्नाऽडागम इति भावः । विधिलिङि रूपमाह—**अद्यादिति** । शपो लुकि अतः परत्वाऽभावात् 'अतो येयः' इति नेति भावः। मिपः अमि यासुटि सलोपे सवर्णदीर्घे—अद्याम्।अद्याव अद्याम। आशीर्लिङि अद्यादिति सिद्धवत्कृत्याह—**अद्यास्तामिति**। लुङि अद् स् त् इति स्थिते—**लुङ्सनोर्घस्लृ**। 'अदो जग्धिः' इत्यतोऽद इत्यनुवर्तते। तदाह—**अद इति** । लृदित्वस्य प्रयोजनमाह—**लृदित्वादिति** । **हनधातुरनिट्** । **प्रणिहन्तीति** । शपो लुक् । नस्याऽनुस्वारपरसवर्णौ । 'नेर्गदे'ति णत्वम् । **अनुदात्तोपदेश** । 'ऊद्दन्तै'रित्यादिभिः सङ्गृहीता अनुदात्तोपदेशाः, वनतिर्भौवादिकः, तनोत्यादयस्तु 'तनु विस्तारे' इत्यादिना पठिष्यन्ते । एतेषामनुनासिकस्य लोपः स्याज्झलादौ क्ङितीति प्रतीयमानार्थः।एवं सति 'मुक्त'मित्यादौ मुचादीनामपि मकारादिलोपः स्यात्। तत्राह—**अनुनासिक इति लुप्तषष्ठीकं पदमिति**।एवमप्युक्ताऽतिप्रसङ्गतादवस्थ्यादाह—**वनतीतरेषां विशेषणमिति**।अनुदात्तोपदेशानां तनोत्यादीनां चेत्यर्थः। तथाच विशेषणत्वात्तदन्तविधावनुनासिकान्तानामनुदात्तोपदेशानां तनोत्यादीनां वनतेश्चेत्येषामन्तस्य लोपः स्यादित्यर्थलाभान्मुक्तमित्यादौ नातिप्रसङ्गः।तदाह—**अनुनासिकान्तानामित्यादिना**।वनधातोस्तु अनुनासिकान्तत्वान्न विशेषणम्,अव्यभिचारादिति भावः । अत्रानुदात्तोपदेशाननुनासिकान्तान्दर्शयति—**यमिरमीति** । अनुदात्तोपदेशेषु एतेषामेव षण्णामनुनासिकान्तत्वादिति भावः। अथ तनोतीत्यादीननुनासिकान्तान्दर्शयति—**तनुक्षणुक्षिण्विति** । 'मनु' इत्यन्तं समाहारद्वन्द्वात्प्रथमैकवचनान्तम् । एतेऽष्टौ तनोत्यादयोऽनुनासिकान्ता इत्यर्थः । 'तनु विस्तारे' इत्यारभ्य 'डु कृञ् करणे' इत्यन्ता दश धातवस्तनोत्यादयः। तत्र करोतिरननुनासिकान्तत्वाऽभावादिह न गृह्यते, 'जनसनखनां सन्झलो'रिति सनोते-

---

शे.]धित्वात्परत्वात्तातङि स्थानिवत्त्वेन पुनर्धित्वन्तु न, 'सकृद्गतौ'इति न्यायात् । युगपत्प्रवृत्तौ खल्वनिमित्तानन्तर्योऽभावरूपाऽसम्भवस्य सत्त्वेन परत्वप्रवृत्तेः । तादृशाऽसम्भव एव च विप्रतिषेधशास्त्रप्रवृत्त्युपयोगी । स्थानिवद्भावस्तु कार्यप्रवृत्त्युत्तरं, न प्रवृत्तिकाले इति युगपदसम्भवः स्पष्ट एवेति दिक् । **अदः सर्वेषाम्** । 'अड्गार्ग्ये'त्यतोऽडिति वर्तते । **प्रणिहन्तीति** । 'नेर्गदे'ति णत्वम् । **लुप्तषष्ठीकमिति** । असमस्तम् । सौत्रत्वाल्लुप्तविभक्तिकमित्यर्थः । तेन मुचादौ न दोषः । **अनुदात्तोपदेश इति** । 'अनुनासिकान्ता'इति शेषः । उपदेशेति किम् ? । यतिः । क्तिनि नित्त्वेना-

ऋणु तृणु घृणु वनु मनु **तनोत्यादयः**। हतः । घ्नन्ति । **वमोर्वा** ।८।४।२३। उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णो वा स्याद्वमयोः परयोः । प्रहण्मि । प्रहन्मि । प्रहण्वः । प्रहन्वः । 'हो हन्ते'रिति कुत्वम् । जघान । जघ्नतुः । जघ्नुः । **अभ्यासाच्च** ।७।३।५५। अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात् । जघनिथ। जघन्थ । हन्ता । 'ऋद्धनो'रितीट् । हनिष्यति । हन्तु । हतात् । घ्नन्तु । **हन्तेर्जः** ।६।४।३६। **हौ परे** । आभीयतया जस्याऽसिद्धत्वाद्धेर्न लुक् । जहि । हनानि । हनाव । हनाम । अहन् । अहताम् । अघ्नन् । अहनम् । **आर्द्धधातुके** ।२।४।३५। इत्यधिकृत्य । **हनो वध लिङि** ।२।४।४२। **लुङि च** ।२।४।४३। **वधादेशोऽदन्तः**। 'आर्द्धधातुके'इति विषयसप्तमी । तेनार्द्धधातुकोपदेशेऽकारान्तत्वात् 'अतो लोपः'। वध्यात् । वध्यास्ताम् । आर्द्धधातुके किम् ? । विध्यादौ–हन्यात् । 'हन्ते'रिति णत्वम् । प्रहण्यात् । [अल्लोपस्य स्थानिवत्त्वात् 'अतो हलादे'रिति न वृद्धिः] । अवधीत् । **अथ चत्वारः स्वरितेतः** । **१०१३ द्विष अप्रीतौ** । द्वेष्टि । द्विष्टे । द्वेष्टा ।

त.]'जनसनखना'मित्यात्वं वक्ष्यतीति न स परिगणितः। ततः क्षतः क्षित इत्यादीन्युदाहरणानि । तनोत्यादीनामुदित्त्वात् क्त्वायामिड्विकल्पनान्निष्ठायां नेट् । अनुनासिकान्तानामिति किम् ? । शक्तः । रुद्धः । घ्नन्तीति किम् ? । गम्यते । नम्यते । क्षितीति किम् ? । गन्ता । मन्ता । **जघान । जघ्नतुरिति** । यद्यप्यत्र 'अभ्यासाच्चे'त्यस्यापि प्रवृत्तिरस्ति तत्राप्यन्तरङ्गत्वात् 'हो हन्ते'रित्युपन्यस्तम् । **आभीयतयेति** । सन्निपातपरिभाषयाऽपि हेर्लुङ् नेति वक्तुं शक्यमिति केचित् । तन्मन्दम् । 'अतो हे'रित्यारम्भसामर्थ्यात्तस्या अप्रवृत्तेरिति नव्याः । **वधादेशोऽदन्त इति** । तेन आदेशो-

बा.]रात्त्वस्य वक्ष्यमाणत्वात्सोऽप्यत्र न गृहीतः । 'वनु याचने' इति तनादौ पठितम्। तस्य उविकरणतया, उदित्त्वेन च वनतिग्रहणेनाऽग्रहणात्तनादौ पठितस्यापि पृथग्ग्रहणम् । तत्र तानादिकस्य वनेरुदित्वात् 'उदितो वे'ति क्त्वायामिड्विकल्पात् 'यस्य विभाषे'ति निष्ठायामिडभावे वतः वतवानित्युदाहरणम् । वनतेस्तु भौवादिकस्य उदित्त्वाऽभावान्निष्ठायां सेड्त्वेऽपि क्तिनि वतिरित्युदाहरणम्, तत्र 'तितुत्रतथसिसुसरकसेषु चे'ति इण्निषेधादित्यलम् । **हत इति** । तसि अनुदात्तोपदेशानुनासिकान्तत्वान्नकारलोपः, 'सार्वधातुकमपि'दिति तसो ङित्त्वात् । **घ्नन्तीति** । अजादिङित्परकत्वात् 'गमहने'त्युपधालोपे 'हो हन्ते'रिति कुत्वेन हस्य घः । हंसि हथः हथ । **वमोर्वा** । 'उपसर्गादसमासेऽपी'त्यतः उपसर्गादित्यनुवर्तते । 'रषाभ्यां नो णः' इति सूत्रमनुवर्तते । 'हन्तेरत्पूर्वस्ये'त्यतो 'हन्ते'रिति । तदाह–**उपसर्गस्थान्निमित्तादिति** । णलि जहानेति स्थिते आह–**हो हन्तेरिति** । 'अभ्यासाच्चे'त्यपेक्षयाऽस्यान्तरङ्गत्वेन न्याय्यत्वादिति भावः । **जघ्नतुरिति** । 'गमहने'त्युपधालोपे 'हो हन्ते'रिति कुत्वम् । थलि भारद्वाजनियमादिड्विकल्पे जहनिथ जहन् थ, इति स्थिते ञ्णित्प्रत्ययपरत्वाऽभावान्नकारपरत्वाऽभावाच्च 'हो हन्ते'रिति कुत्वाऽप्राप्तौ। **अभ्यासाच्च**। 'हो हन्ते'रित्यनुवर्तते । 'चजोः कु घिण्ण्यतो'रित्यतः कुग्रहणं च । तदाह–**अभ्यासात्परस्येत्यादिना** । **जघनिथ जघन्थेति** । इडभावे नस्याऽनुस्वारपरसवर्णौ । जघ्नथुः । जघ्न । जघान–जघन, जघ्निव जघ्निम । लृटि स्ये इण्निषेधमाशङ्क्याह–**ऋद्धनोरिति** । हन् हि इति स्थिते 'हुझल्भ्यः' इति धित्वे प्राप्ते–।**हन्तेर्जः** । 'शा हौ' इत्यतो हौ इत्यनुवृत्तिमभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे–**हौ परे इति** । कृते जादेशे 'अतो हे'रिति हेर्लुकमाशङ्क्य आह–**आभीयतयेति** । **जहीति** । हतात् हतम् । हत । **हनानीति** । आटः पित्त्वेन ङित्त्वाऽभावान्नोपधालोप इति भावः । **अहन्निति** । लङ्स्तिपि 'इतश्चे'ति इकारलोपे 'संयोगान्तस्ये'ति तकारलोपः । न्याय्यत्वाद्धल्ङ्यादिलोपो वा । **अहनमिति** । अहन्व । अहन्म । झलादिपरकत्वाऽभावान्नोपधादीर्घः । विधिलिङि हन्यात् हन्यताम् इत्यादि । आशीर्लिङि वधादेशं वक्ष्यन्नाह–**आर्द्धधातुके** । **इत्यधिकृत्येति** । 'अदो जग्धि'रित्यादिविषयो वक्ष्यन्ते' इति शेषः । तदधिकारस्थं सूत्रमाह–**हनो वध** । 'वधे'ति लुप्तप्रथमाकम् । हनो वधादेशः स्यादार्द्धधातुके लिङीत्यर्थः । **लुङि च** । हनो वधादेशः स्याल्लुङीत्यर्थः स्पष्टः । **वधादेशोऽदन्त इति** । धकारादकारो न सुखोच्चारणार्थं इति भावः । तत्प्रयोजनं तु अनुपदमेव अवधीदित्यत्र वक्ष्यते । ननु आशीर्लिङि हन्यादिति स्थिते आर्द्धधातुके परे कृतस्य वधादेशस्य आर्द्धधातुकोपदेशे अकारान्तत्वाऽभावात्कथं वध्यादित्यत्र अल्लोप इत्यत आह–**विषयसप्तमीति** । तथाच आर्द्धधातुके विवक्षिते तत्प्रवृत्तेः प्रागेव वधादेशे कृते आर्द्धधातुकप्रवृत्तिरिति फलितम् । ततश्च आर्द्धधातुकोपदेशे वधादेशस्य अकारान्तत्वादल्लोपो निर्बाधः । तदाह–**तेनेति** । **अवधीदिति** । सिचि अल्लोपे कृते वधादेशस्य धकारान्ततया एकाच्त्वेऽप्यादेशोपदेशेऽनेकाच्त्वेन 'एकाच उपदेशे' इति निषेधाऽभावात्सिच इट् । 'अतो हलादे'रिति वृद्धिस्तु न भवति, 'अचः परस्मिन्नि'त्यल्लोपस्य स्थानिवत्त्वात् । एतदर्थमेव हि वधादेशस्य अदन्तत्वमाश्रितम्। **स्वरितेत इति** । उभय-

शे.]द्युदात्तत्वेऽपि न दोषः।'**जघनिथे**'त्यादौ ञ्णित्परत्वाऽभावादाह–**अभ्यासाच्चेति**।इदञ्चाऽभ्यासाऽङ्गनिमित्तप्रत्ययस्यैव

द्वेक्ष्यति । द्वेक्ष्यते । द्वेष्टु । द्विष्टात् । द्विड्ढि । द्वेषाणि । द्वेषै । द्वेषावहै । अद्वेट् । **द्विषश्च** ।३।४।११२। लङो झेर्जुस्वा स्यात् । अद्विषुः । अद्विषन् । अद्वेषम् । द्विष्यात् । द्विषीत । द्विक्षीष्ट । अद्विक्षत् । **१०१४ दुह प्रपूरणे ।** दोग्धि । दुग्धः । धोक्षि । दुग्धे । धुक्षे । धुग्ध्वे । दोग्धु । दुग्धि । दोहानि । धुक्ष्व । धुग्ध्वम् । दोहै । अधोक् । अदोहम् । अदुग्ध । अधुग्ध्वम् । अधुक्षन् । अधुक्षत । 'लुग्वा दुहे'ति लुक्पक्षे तथाऽध्वंवहिषु लङ्वदपि । **१०१५ दिह उपचये ।** प्रणिदेग्धि । **१०१६ लिह आस्वादने ।** लेढि । लीढः । लिहन्ति । लेक्षि । लीढे । लिक्षे । लीढ्वे । लेढु । लीढाम् ।

त.] पदेशोऽनेकाच्त्वादवधीदित्यत्र 'एकाचः' इतीण्निषेधाऽप्रवृत्ताविडादौ सिचि 'अतो हलादे'रिति प्राप्ता वृद्धिरल्लोपस्य स्थानिवत्वान्नेति भावः । दुह प्रपूरणे । **प्रपूरणं**-त्याजनम् । **लङ्वदपीति** । अदुग्ध । अदुग्धाः । अधुग्ध्वम् । अदुह्वहि ।

दिह । उपचयो वृद्धिः । **प्रणिदेग्धीति** । 'नेर्गदे'ति णत्वम् । **अलिक्षतेति** । 'शल इगुपधे'ति क्सः । अलिक्षा-

बा.] पदिन इति फलितम् । **द्विष अप्रीताविति** । अनिट् । **द्वेष्टीति** । पित्त्वेन ङित्त्वाऽभावाल्लघूपधगुण इति भावः । द्विष्टः द्विषन्ति । द्वेक्षि द्विष्ठः द्विष्ठ । द्वेष्मि द्विष्वः द्विष्मः । तङि उदाहरति-**द्विष्टे इति** । ङित्त्वान्न गुणः । द्विषाते द्विषते । द्विक्षे द्विषाथे द्विड्ढ्वे । द्विषे द्विष्वहे द्विष्महे । षढोरिति षस्य कत्वं मत्वा आह-**द्वेक्ष्यतीति** । **द्विड्ढीति** । हेर्धिः, षस्य जश्त्वेन डः, ष्टुत्वेन ढः । द्विष्टात्, द्विष्टम्, द्विष्ट । **द्वेषाणीति** । आटः पित्त्वेन ङित्त्वाऽभावाद्गुणः, षात्परत्वाण्णत्वम् । द्वेषाव द्वेषाम । द्विष्टाम् द्विषाताम् द्विषताम् । द्विक्ष्व द्विषाथाम् द्विड्ढ्वम् । **द्वेषै इति** । आटः पित्त्वेन ङित्त्वाऽभावाद्गुण इति भावः । **अद्वेडिति** । लङस्तिप् । गुणः । इकारलोपः । हल्ङ्यादिलोपः । 'वाऽवसाने' इति 'झलां ज'शिति च चर्त्वजश्त्वे इति भावः । अद्विष्टाम् । **द्विषश्च** । 'झेर्जु'सिति 'लङः शाकटायनस्यै'ति चानुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे-**लङो झेरिति** । **अद्विषन्निति** । अद्वेट् अद्विष्टम् अद्विष्ट । अद्वेषम् अद्विष्व अद्विष्म । विधिलिङि परस्मैपदे आह-**द्विष्यादिति** । द्विष्याताम् द्विष्युः-इत्यादि । तङि आह-**द्विषीतेति** । द्विषीयाताम् द्विषीरन् इत्यादि ।

आशीर्लिङि द्विष्यास्ताम्-इत्यादि । तङ्याह-**द्विक्षीष्टेति** । 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वान्न गुणः । द्विक्षीयास्तामित्यादि । लुङि परस्मैपदे आह-**अद्विक्षदिति** । 'शल इगुपधात्' इति क्सः । अद्विक्षताम् अद्विक्षन्नित्यादि । तङि-अद्विक्षत अद्विक्षाताम् अद्विक्षन्त इत्यादि । अद्वेक्ष्यत् अद्वेक्ष्यत । **दुह प्रपूरणे इति** । अयमनिट् । ['पयो दोग्धी'-त्यादौ प्रकृष्टपूरणस्यार्थस्यानवगमादाह-**प्रपूरणं पूरणाऽभाव इति** । ऊधःपूरणप्रतिकूलीभाव इत्यर्थः । ऊधसः सकाशात्क्षारणे इति यावत् । ननु प्रपूरणशब्दस्य कुतोऽयमर्थ इत्यत आह-**धात्वर्थं बाधते कश्चिदिति** । प्रसिद्धं धात्वर्थं कश्चिदुपसर्गो बाधित्वा अर्थान्तरं नयतीत्यर्थः] । **दोग्धीति** । 'दादे'रिति हस्य घः, 'झषस्तथो' रिति तकारस्य धकारः, घस्य जश्त्वेन गः । एवं दुग्ध इत्यपि । दुहन्ति । **धोक्षीति** । हस्य घः, चर्त्वेन कः, षत्वमिति भावः । दुग्धः दुग्ध । दोह्मि दुह्वः दुह्मः । लटि आत्मनेपदे आह-**दुग्धे इति** । धघगाः । दुहाते दुहते । **धुक्षे इति** । हस्य घः, दस्य भष् धकारः, घस्य कः, षत्वम् । दुहाथे । **धुग्ध्वे इति** । हस्य घः, भष्, घस्य गः । दुहे दुह्वहे दुह्महे । दुदोह, दुदुहतुः, दुदुहुः । अजन्ताऽकारवत्त्वाऽभावात्क्रादिनियमान्नित्यमिट् । दुदोहिथ, दुदुहथुः दुदुह । दुदोह दुदुहिव दुदुहिम । दुदुहे दुदुहाते दुदुहिरे दुदुहिषे दुदुहाथे दुदुहिढ्वे-दुदुहिध्वे । दुदुहे दुदुहे दुदुहिवहे दुदुहिमहे । दोग्धा । धोक्ष्यति । धोक्ष्यते । **दोग्ध्विति** । दुग्धात् दुग्धाम् दुहन्तु । **दुग्धीति** । हेर्धिः । घत्वजश्त्वे । दुग्धात् दुग्धम् । दुग्ध ।

**दोहानीति** । आटः पित्त्वादङित्त्वाद्गुणः । दोहाव दोहाम । दुग्धाम् दुहाताम् दुहताम् । **धुक्ष्वेति** । घत्वं भष् । जश्त्वचर्त्वे । षत्वम् । दुहाथाम् । **धुग्ध्वमिति** । हस्य घः, भष्, घस्य जश्त्वम् । **दोहै इति** । आटः पित्त्वादङित्त्वाद्गुण इति भावः । दोहावहै दोहामहै । लङि परस्मैपदे आह-**अधोगिति** । तिप इकारलोपः, हल्ङ्यादिलोपः, हस्य घः, दस्य भष्, घस्य चर्त्वविकल्पः । अदुग्धाम् अदुहन् । अधोक् अदुग्धम् अदुग्ध । **अदोहमिति** । अदुह्व अदुह्म । लङस्तङ्याह-**अदुग्धेति** । हस्य घः, तकारस्य धः, घस्य गः । अदुहाताम् अदुहत । अदुग्धाः, अदुहाथाम् । **अधुग्ध्वमिति** । हस्य घः, दस्य भष्, घस्य गः । अदुहि अदुह्वहि अदुह्महि । लुङि परस्मैपदे आह-**अधुक्षदिति** । 'शल इगुपधा'दिति क्सः । हस्य घः, दस्य भष्, घस्य चर्त्वं, षत्वम् । अधुक्षताम्, अधुक्षन्-इत्यादि । लुङस्तङ्याह-**अधुक्षतेति** । 'क्सस्याऽचि' । अधुक्षाताम् अधुक्षन्त । अधुक्षथाः, अधुक्षाथाम्, अधुक्षध्वम् । अधुक्षि, अधुक्षावहि, अधुक्षामहि । **लुग्वेति** । त थास् ध्वम् वहि-एषु चतुर्षु दन्त्यादिषु परेषु 'लुग्वा दुहे'ति क्सस्य लुक्पक्षे लङीव रूपाणीत्यर्थः । तथाच अदुग्ध, अदुग्धाः, अधुग्ध्वम्, अदुह्वहि-इत्यपि रूपाणीति फलितम् । अधोक्ष्यत् । अधोक्ष्यत ।

**दिह उपचये इति** । उपचयो वृद्धिः । अनिट् । **प्रणिदेग्धीति** । 'नेर्गदे'ति णत्वम् । दुहधातुवद्रूपाणि । **लिह**

शो.] एव । तेन 'जिहननीयिषती'त्यादौ न । **अदन्त इति** । तेन 'अवधी'दित्यादौ न वृद्धिः ।

लीढि। लेढानि। अलेट्। अलिक्षत्। अलिक्षत। अलीढ। अलिक्षावहि। अलिह्वहि। अलेक्ष्यत्। अलेक्ष्यत। १०१७ चक्षिङ् व्यक्तायां वाचि। अयं दर्शनेऽपि। इकारोऽनुदात्तो युजर्थः। 'विचक्षणः प्रथयन्'। नुम् तु न, 'अन्ते इदित' इति व्याख्यानात्। ङकारस्तु अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यमिति ज्ञापनार्थः। तेन 'स्फायश्चिमोंकसन्धी'-त्यादि सिध्यति। चष्टे। चक्षाते। 'आर्द्धधातुके'। चक्षिङः ख्याञ्। २।४।५४। वा लिटि। २।४।५५। अत्र भाष्ये ख्शादिरयमादेशः। असिद्धकाण्डे 'शस्य यो वे'ति स्थितम्। ञित्त्वात्पदद्वयम्।

त.]ताम्। अलिक्षन्त। अलीढेति। 'लुग्वा दुहे'ति वा लुक्। अलीढाः। अलीढ्वम्। चक्षिङ्। दर्शनेऽपीति। 'विश्वा रूपा अभिचष्टे शचीभि'रित्यत्र दर्शनार्थत्वेन व्याख्यातत्वादिति भावः। युजर्थ इति। 'अनुदात्तेतश्च हलादे'-रिति युच्। अन्तेदित इति। 'इदितः' इति नुम्विधौ 'गोः पादान्ते' इत्यस्मादन्त इत्यनुवर्तत इति भावः। एवं च नुमागमशङ्कानुत्थानाय चक्षिङ इकारस्थानेऽकार एवासत्कुमुचितः। अनुदात्तेत्त्वेनैव तङि सिद्धे ङकारो व्यर्थ इत्याशङ्क्याह-ङकारस्त्विति। स्फायञ्जिति। 'स्फायी वृद्धा'वित्यनुदात्तेतो लटः शत्रादेशः। चष्ट इति। 'स्को'रिति कलोपः। ष्टुत्वम्। ख्शादिरिति। तेन 'पुंख्यान'मित्यत्र 'पुमः खय्यम्परे' इति रुत्वं नेत्यादि पूर्वार्धे एवोक्तम्। असिद्धकाण्डे इति। 'णत्वप्रकरणानन्तर'मिति शेषः। तेन 'पर्याख्यान'मित्यत्र शकारेण व्यवधानात्

बा.]आस्वादने इति। अनिट्। लेढीति। शपो लुकि ढत्वधत्वष्टुत्वढलोपाः। लेक्षीति। सिपि हस्य ढः। 'षढो'रिति ढस्य क इति भावः। लीढः लीढ। लेह्मि लिह्वः लिह्मः। लटि तब्याह-लीढे इति। लिहाते लिहते। लिक्षे इति। ढकषाः। लिहाथे इति सुगमम्। लीढ्वे इति। ढत्वधत्वष्टुत्वढलोपदीर्घाः। लिहे लिह्वहे लिह्महे। लेढा। लेक्ष्यति। लेक्ष्यते। लेढ्विति। लीढात् लीढाम् लिहन्तु। लीढीति। हेर्धिः। ढत्वधत्वष्टुत्वढलोपदीर्घाः। लीढात् लीढम् लीढ। लेहानीति। आटः पित्त्वेन ङित्त्वाऽभावाद्गुण इति भावः। लेहाव लेहाम। लीढाम् लिहाताम् लिहताम्। लिक्ष्व लिहाथाम् लीढ्वम्। लेहै लेहावहै लेहामहै। अलेडिति। लङि तिपि शपो लुकि इकारलोपे हल्ङ्यादिलोपे हस्य ढः। चर्त्वविकल्प इति भावः। अलीढाम् अलिहन्। अलेट् अलीढम् अलीढ। अलेहम् अलिह्व अलिह्म। अलीढ अलिहाताम् अलिहत। अलीढाः अलिहाथाम् अलीढ्वम्। अलिहि अलिह्वहि अलिह्महि। अलिक्षदिति। लुङि क्सः। अलिक्षताम् अलिक्षन्। अलिक्ष इत्यादि। तङि आह-अलिक्षतेति। अलीढेति। 'लुग्वा दुहे'ति क्सलोपपक्षे रूपम्। अलिक्षाताम् अलिक्षन्त। अलिक्षथाः-अलीढाः, अलिक्षाथाम् अलिक्षध्वम्-अलीढ्वम्। अलिक्षि। 'लुग्वा दुहे'ति लुग्विकल्पं मत्वा आह-अलिक्षावहि अलिह्वहीति। अलेक्ष्यत् अलेक्ष्यतेति। लङि रूपे। द्विषादयश्चत्वारः स्वरितेतो गताः। चक्षिङ् व्यक्तायां वाचीति। गूढार्थस्य स्पष्टप्रतिपत्त्यर्थे विवरणे इत्यर्थः। अयं दर्शनेऽपीति। श्रुतौ 'पूर्वाऽपरं चरतो माययैतौ। शिशू क्रीडन्तौ परियातो अध्वरम्। विश्वान्यन्यो भुवनानि चष्टे। ऋतूनन्यो विदधज्जायते पुनः' इत्यादौ तथा दर्शनादिति भावः। ननु चक्षिङित्यत्र इकारोच्चारणं व्यर्थम्। न च सुखोच्चारणार्थं तदिति वाच्यम्, अकारोच्चारणेनैव तत्सिद्धेः। नाप्यनुदात्तेत्त्वप्रयुक्तात्मनेपदार्थं तदिति शक्यं वक्तुं, ङित्त्वादेव तत्सिद्धेरित्यत आह-इकारोऽनुदात्तो युजर्थ इति। 'अनुदात्तेतश्च हलादे'रिति ल्युडपवादयुच्प्रत्ययार्थ इत्यर्थः। अकारमुल्लङ्घ्य इकारोच्चारणं तु उच्चारणार्थत्वाऽभावप्रतिपत्त्यर्थमिति भावः। विचक्षणः प्रथयन्निति मन्त्रः। अत्र लित्स्वरनिवृत्तये युच्प्रत्यय इति भावः। ननु युच्प्रत्ययार्थमिकारस्य इत्संज्ञावश्यकत्वे नुमागमः स्यादित्यत आह-नुम् तु नेति। कुत इत्यत आह-अन्ते इदित इति। 'इदितो नुम् धातो'रित्यत्र 'गोः पादान्ते' इत्यस्मादन्ते इत्यनुवृत्तेरिति भावः। नन्विकारे युजर्थमनुदात्तत्वस्य इत्संज्ञकत्वस्य च आवश्यकत्वे तत एवात्मनेपदसंभवान्ङकारोच्चारणं व्यर्थमित्याशङ्क्य आह-ङकारस्त्विति। ङकारो नित्यात्मनेपदार्थः। अनुदात्तेत्त्वप्रयुक्तं त्वात्मनेपदं कदाचिन्न स्यात्, अतो ङकारोच्चारणम्। अत एव 'अनुदात्तेत्त्वप्रयुक्तात्मनेपदमनित्य'मिति विज्ञायत इत्यर्थः। स्फायञ्जिति। 'स्फायी वृद्धा'वित्यनुदात्तेतोऽपि लटः शत्रादेशः, न त्वात्मनेपदं शानजिति भावः। वस्तुतस्तु अन्त्येत्त्वव्याघातेन चरितार्थत्वान्ङकारोच्चारणमुक्तार्थे कथं ज्ञापकम्?, भाष्ये तथाऽनुक्तत्वाच्च। अतः पृषोदरादित्वकल्पनया स्फायञ्जिति कथंचित्साध्यमित्याहुः। चष्ट इति। 'स्को'रिति कलोपः, ष्टुत्वं चेति भावः। चक्षाते इति। चक्षते। थासः सेभावे 'स्को'रिति कलोपे 'षढो'रिति षस्य कत्वे षत्वे च कृते-चक्षे चक्षाथे। ध्वमि 'स्को'रिति कलोपे षस्य जश्त्वेन डकारे चड्ढ्वे। चक्षे चक्ष्वहे चक्ष्महे। आर्द्धधातुके इत्यनन्तरम् 'इत्यनुवर्तमाने' इति शेषः। चक्षिङः ख्याञ्। चक्षिङः ख्याञ् स्यादार्द्धधातुके परे इत्यर्थः। वा लिटि। चक्षिङः ख्याञ् वा स्याल्लिटीत्यर्थः। अत्रेति। 'चक्षिङः ख्या'ञिति सूत्रभाष्ये 'ख्शादिरयमादेश' इति, 'पूर्वत्रासिद्ध'-

शे.]अलिक्षतेति। 'शलः' इति क्सः। 'लुग्वे'ति वा लुक्। अलिक्षातामिति। 'क्सस्याचि' इत्यन्तलोपः। युजर्थ इति। 'अनुदात्तेतश्च हलादे'रिति युच्। विचक्षणोऽन्तोदात्तः। ज्ञापनार्थ इति। अन्तेदित्त्वव्याघातकत्वेन चारितार्थ्यात्कथं ज्ञापकत्वं।

चख्यौ । चख्ये । चक्शौ। चक्शे। 'चयो द्वितीया'इति तु न, चर्त्वस्याऽसिद्धत्वात् । चचक्षे । ख्याता । क्शाता । ख्यास्यति । ख्यास्यते । क्शास्यति । क्शास्यते । अचष्ट । चक्षीत । ख्यायात् । ख्येयात् । क्शायात् । क्शेयात् । ख्यासीष्ट। क्शासीष्ट ।**अस्यतिवक्तिख्यातिभ्योऽङ्** ।३।१।५२। एभ्यश्च्लेरङ् । अख्यत्। अख्यत। अक्शासीत् । अक्शास्त । ॐ **वर्जने क्शाञ् नेष्टः**। समचक्षिष्टेत्यादि । **अथ पृच्यन्ता अनुदात्तेतः**। **ईर गतौ कम्पने च**। ईर्ते । ईरांचक्रे। [ईरिता।ईरिष्यते।]ईर्ताम्। ईर्ष्व। ईर्ध्वम्। ऐरिष्ट। **ईड स्तुतौ**।ईट्टे।**ईशः से**।७।२।७७। **ईडजनोर्ध्वे च** ।७।२।७८। ईशीड्जनां सेध्वेशब्दयोः सार्वधातुकयोरिट् स्यात् । योगविभागो वैचित्र्यार्थः । ईडिषे । ईडि-

---

त.]'कृत्यचः' इति णत्वं न । तथा सुप्रख्येन निर्वृत्तं सौप्रख्यं,तत्र भवः सौप्रख्यीयः । यत्वस्याऽसिद्धत्वात् 'धन्वयोपधा'-दिति वुञ् न, किं तु छ एवेति बोध्यम् । **अचष्टेति** । 'स्को'रिति कलोपः । ष्टुत्वम् । 'अस्यतिवक्तिख्यांती'त्यत्र विधिसामर्थ्याद्यत्वं नाऽसिद्धम् । स्वतन्त्रस्य ख्याधातोः सार्वधातुकमात्रविषयतया वक्ष्यमाणत्वात् । अस्यतेः पुषादि-पाठादङि सिद्धे तद्ग्रहणमित्यादि पुषादिषु वक्ष्यति । **वक्तीति** । 'ब्रुवो वचिः' 'वच परिभाषणे' इति उभयोर्ग्रह-णम् । **ईर** । ईरिता । ईरिष्यते । लङि । ऐर्त । ऐराताम् । ऐरत । ऐरि । ऐर्वहि । ऐर्महि । **ईशः से** । यथाश्रुत-सूत्रन्यासे ईशो ध्वे शब्दे परे ईशिध्वे ईशिध्वमिति न सिध्येदत आह-**ईशीड्जनामिति** । **वैचित्र्यार्थ इति** ।

---

बा.]मित्यधिकारे 'ख्शाञः शस्य यो वा वक्तव्यः' इति च स्थितमित्यर्थः।तेन 'पुंख्यान'मित्यत्र यत्वस्याऽसिद्धत्वात् 'पुमः खय्यम्परे' इति रुत्वं नेति हल्सन्धिनिरूपणे प्रपञ्चितम् । **ञित्त्वात्पदद्वयमिति** । परस्मैपदमात्मनेपदं चेत्यर्थः । **चख्यौ इति** । ख्शादेशस्य शस्य यत्वपक्षे 'आत औ णलः' इति भावः। चख्यतुः चख्युः। भारद्वाजनियमात्थलि वेट्-चख्यिथ-चख्याथ, चख्यथुः चख्य। चख्यौ चख्यिव चख्यिम।क्रादिनियमादिट्। लिटि तङि ख्शाञादेशस्य शस्य यत्वपक्षे आह-**चख्ये इति** । चख्याते चख्यिरे । चख्यिषे चख्याथे [चख्यिढ्वे] चख्यिध्वे चख्ये।चख्यिवहे । चख्यिमहे । शस्य यत्वाऽभावपक्षे त्वाह-**चक्शौ चक्शे इति**। खस्य चर्त्वेन क इति भावः। कृते चर्त्वे तस्य 'चयो द्वितीयाः शरि' इति खकारमाशङ्क्य निराकरोति-**चय इति**। अथ ख्याञादेशाऽभावपक्षे आह-**चचक्षे इति**। चचक्षिषे चचक्षिध्वे । चचक्षि-वहे । **ख्यास्यतीति** । चष्टाम् चक्षाताम् चक्षताम् । चक्ष्व चक्षाथाम् चड्ढ्वम् । चक्षै चक्षावहै चक्षामहै । लङ्याह-**अचष्टेति** । अचक्षाताम् अचक्षत । अचष्ठाः अचक्षाथाम् अचड्ढ्वम् । अचक्षि अचक्ष्वहि अचक्ष्महि । विधि-लिङ्याह-**चक्षीतेति** । आशीर्लिङि ख्शादेशस्य शस्य यत्वपक्षे आह-**ख्यायात् ख्येयादिति** । 'वाऽन्यस्ये'त्येत्त्व-विकल्पः । शस्य यत्वाऽभावपक्षे आह-**क्शायात् क्शेयादिति** । लुङि च्लेः सिचि प्राप्ते-**अस्यतिवक्ति** । 'च्लेः सि'जित्यतश्च्लेरित्यनुवर्तते । तदाह-**एभ्यश्च्लेरिति** । **अख्यत् अख्यतेति** । यत्वपक्षे रूपम् । आल्लोपः । ञित्त्वादुभयपदित्वादात्मनेपदेऽपि रूपम् । क्शादेशपक्षे परस्मैपदपक्षे तु आह-**अक्शासीदिति** । अङ्विधौ ख्यातीति यकारनिर्देशाद्यत्वाऽभावपक्षे अङ् न भवति, किं तु आदन्तत्वलक्षणौ सगिटौ । अक्शासिष्टामित्यादि । **अक्शास्तेति** । आत्मनेपदे लुङि रूपम्।अक्शासातामित्यादि।अख्यास्यत् अख्यास्यत। अक्सास्यत्।अक्शास्यत।**वर्जने क्शाञ् नेष्ट इति**। वार्तिकमिदम् । **समचक्षिष्टेति** । अवर्जयदित्यर्थः । लुङि रूपम् । **अथ पृच्यन्ता इति** । 'पृची संपर्चने' इत्येतत्पर्यन्ता इत्यर्थः । **ईर गताविति** । सेट् । **ईर्ते इति** । ईराते ईरते । ईर्षे ईराथे ईर्ध्वे । ईरे ईर्वहे ईर्महे । **ईरांचक्रे इति** । 'इजादेश्चे'त्याम् । **ईरितेति** । ईरिष्यते इत्यपि ज्ञेयम् । **ईर्तामिति** । ईराताम् इरताम् । **ईर्ष्वेति**। ईराथामित्यपि ज्ञेयम् । **ईर्ध्वमिति** । ईरै ईरावहै ईरामहै । ऐर्त ऐराताम् ऐरत । ऐर्थाः ऐराथाम् ऐर्ध्वम् । ऐरि ऐर्वहि ऐर्महि । ईरीत । ईरिषीष्ट । ऐरिष्ट । ऐरिष्यत । **ईड स्तुतौ** । **ईट्टे इति** । तकारस्य ष्टुत्वेन टः, डस्य चर्त्वेन ट इति भावः । ईडाते ईडते । ईड्-से इति स्थिते सार्वधातुकत्वादिडागमे अप्राप्ते-**ईशः से** । **ईडजनोर्ध्वे च** । 'इड-त्यर्ती'त्यत इडिति, 'रुदादिभ्यः' इत्यतः सार्वधातुक इति चानुवर्तते । से ध्वे इति लुप्तषष्ठीके इत्यभिप्रेत्य सूत्रद्वयं युगपद्व्याचष्टे-**ईशीड्जनामिति** । 'ध्वे' इत्यस्य पूर्वत्रापकर्षः, 'से'इत्यस्य उत्तरत्राऽनुवृत्तिरिति भावः । प्रत्येकं व्याख्याने तु ईशो ध्वेशब्दे परे न स्यात्, ईडजनोः सेशब्दे परे न स्यादिति भावः । ननु तर्हि 'ईशीडजनां सेध्वयो'-रित्येकमेव सूत्रं कुतो न कृतमित्यत आह-**योगविभागो वैचित्र्यार्थ इति** । 'से' इत्यस्य उत्तरत्रानुवृत्तिः, 'ध्वे'

---

शे.]भाष्यानुक्तं च ज्ञापकत्वम्। अत इदं माधवानुरोधेन। 'स्फाय'मित्याद्यसाध्वेवेति बोध्यम्। **असिद्धकाण्डे इति**। तेन सुप्रख्येन निर्वृत्तं-सौप्रख्यं, तत्र भवः-'सौप्रख्यीयः'इत्यत्र 'धन्वयोपधा'दिति वुञ् न, किं तु च्छ एव । तच्च वचनं णत्वप्रकरणानन्तरं बोध्यम् । तेन 'पर्याख्यान'मित्यत्र 'कृत्यचः'इति णत्वं न । **अस्यतिवक्ति** । अस्यतेः पुषादित्वा-त्सिद्धे तद्ग्रहणम् । '**वक्ती**'ति वाच्यादेशस्वतन्त्रयोरुभयोरपि ग्रहणम् । **ख्यातीति** प्रयोगस्थख्याधातूनामनुकरणं दाधेतिवत् । **वैचित्र्यार्थ इति** । 'ध्वे' इत्यस्य पूर्वत्रापकर्षः, 'से' इत्यस्योत्तरत्रानुवृत्तिरिति वैचित्र्यम् । 'ईशेर्ध्वे

ध्वे । एकदेशविकृतस्यानन्यत्वात्-ईडिष्व । ईडिध्वम् । विकृतिग्रहणेन प्रकृतेरग्रहणात्-ऐड्ढ्वम् । **१०२० ईश** ऐश्वर्ये । ईष्टे । ईशिषे । ईशिध्वे । **१०२१ आस** उपवेशने । आस्ते । 'दयायासश्च' । आसांचक्रे । आस्व । आध्वम् । आसिष्ट । **१०२२ आङः शासु** इच्छायाम् । आशास्ते । आशासाते । आङ्पूर्वत्वं प्रायिकम् । तेन 'नमोवाकं प्रशास्महे' इति सिद्धम् । **१०२३ वस** आच्छादने । वस्ते । वस्से । वध्वे । ववसे । वसिता । **१०२४ कसि** गतिशासनयोः । कंस्ते । कंसाते । कंसते । अयमनिदिदित्येके । कस्ते । ताल्व्यान्तोऽप्यनिदित् । कष्टे । कशाते । कक्षे । कड्ढ्वे । **१०२५ णिसि** चुम्बने । निंस्ते । दन्त्यान्तोऽयम् । आभरणकारस्तु ताल्व्यान्त इति बभ्राम । **१०२६ णिजि** शुद्धौ । निङ्क्ते । निङ्क्षे । निञ्जिता । **१०२७ शिजि** अव्यक्ते शब्दे ।

---

त.] 'ध्वे' इत्यस्य पूर्वत्रापकर्षः, 'से' इत्यस्योत्तरत्रानुवृत्तिरित्येवं विचित्रबोधार्थइत्यर्थः। इह काशिकादौ जनेरुदाहरणमुक्तम्। तथा हि 'जनी प्रादुर्भावे' इत्यस्माच्छ्यनश्छान्दसो लुक्, उपधालोपाऽभावश्च । जनिषे । जनिध्वे । जनिष्व । जनिध्वम् । 'जन जनने' इति श्लुविकरणस्याप्युपधालोपे व्यतिजज्ञिषे । व्यतिजज्ञिध्वे । 'कर्तरि कर्मव्यतिहारे' इति तङ् । **नमोवाकमिति।** 'नमस्ते रुद्र मन्यवे' इत्यादि नमोवचनम् । वचेर्घञ् । 'चजो' रिति कुत्वम् । **ववसे इति ।** वादित्वादेत्त्वाभ्यासलोपौ न । **णिसि चुम्बने । बभ्रामेति ।** 'नुम्विसर्जनीये' ति सूत्रे वृत्तिपदमञ्जर्यादिभिरुक्तं-'नुमादिभिः प्रत्येकं व्यवाये षत्वमिष्यते, तेन निंस्से निंस्स्वेत्यत्र न भवती' ति । तच्चाऽस्य सान्तत्वे युज्यते, शान्तत्वे तु 'व्रश्चे' तिषत्वे 'षढो' रिति कत्वे, कवर्गात्परत्वेन षत्वं दुर्वारमिति प्रत्युदाहरणमिदं न सङ्गच्छत इति भावः । **णिजि शुद्धौ ।** अनिट्केषु णिजिरिति जौहोत्यादिकस्य ग्रहणादयं सेडिति ध्वनयति-**निञ्जितेति । शिजि** अव्यक्ते शब्दे । क्तप्रत्यये-शिञ्जितम् । आव-

---

बा.] इत्यस्य पूर्वत्रापकर्ष इति वैचित्र्यद्योतनार्थं इत्यर्थः। स्वतन्त्रेच्छस्य महर्षेर्नियन्तुमशक्यत्वादिति भावः। **ईडिषे इति ।** इडे ईड्वहे ईड्महे । लिटि तु ईडांचक्रे इत्यादि । ईडिता । ईडिष्यते । ईट्टाम् । ननु ईडिष्वेत्यत्र कथमिट्, सेशब्दाऽभावात् । तत्राह-**एकदेशेति ।** एकदेशविकृतत्वात्स्वशब्दस्य इटि ईडिष्व इति रूपमित्यर्थः । ननु तर्हि ईड्ढ्वमित्यत्र कथं नेट्, ध्वेस्वरूपापेक्षया 'ध्व' मित्यस्य एकदेशविकृतत्वादित्यत आह-**विकृतीति ।** प्रकृतिग्रहणे तदेकदेशविकृतस्य ग्रहणम्, न तु विकृतिग्रहणे तदेकदेशविकृताया अपि प्रकृतेर्ग्रहणम् । 'पुरुषमानये' त्युक्ते हि अन्धोऽनन्धो वा पुरुष आनीयते । 'अन्धमानये' त्यत्र तु अन्ध एवानीयते न त्वनन्धः । तथाच ध्वम एत्वे कृते ध्वेशब्दः, तेन च विकृतेन ध्वमित्यस्य तत्प्रकृतिभूतस्य न ग्रहणमिति नेडिति भावः । इडै ईडावहै ईडामहै । ऐट्ट ऐडाताम् ऐडत । ऐट्ठाः ऐडाथाम् ऐड्ढ्वम् । ऐडि ऐड्वहि ऐड्महि । ईडीत । ईडिषीष्ट । ऐडिष्ट । ऐडिष्यत । **ईश**धातुरीडिवत् । **ईष्टे इत्यादि ।** शस्य व्रश्चादिना षत्वे ष्टुत्वमिति विशेषः। **आस उपवेशने। आस्ते इति।** आसाते आसते । आस्से आसाथे। 'धि चे' ति सलोपः । आध्वे । आसे आस्वहे आस्महे । इजादित्वाद्यभावादाह-**दयायासश्चेति ।** आसिता । आसिष्यते । आस्ताम् आसाताम् । **आस्स्वेति ।** सकारद्वयमत्र बोध्यम् । आसाथाम् । **आध्वमिति ।** 'धि चे' ति सलोपः । आसै आसावहै आसामहै । आस्त, आसाताम्, आसत । आस्थाः, आसाथाम्, आध्वम् । आसि आस्वहि, आस्महि । आसीत आसीयाताम् । आसिषीष्ट आसिषीयास्ताम् । **आसिष्टेति ।** आसिषातामित्यादि । आसिष्यत । **आङः शासु ।** आङः परः शासधातुरिच्छायामित्यर्थः । **नमोवाकमिति ।** वचेर्घञि वाकः । नमश्शब्दस्य वचनं कुर्महे इत्यर्थः । धातूनामनेकार्थत्वात् । आसिवद्रूपाणि । **वस आच्छादने इति ।** परिधाने इत्यर्थः । **वध्वे इति ।** 'धि चे' ति सलोपः । **ववसे इति।** वादित्वादेत्त्वाभ्यासलोपौ नेति भावः। **वसितेति।** अनिट्सु शब्विकरणस्यैव वसेर्ग्रहणमिति भावः। वसिष्यते । वस्ताम् । अवस्त । वसीत । वसिषीष्ट। अवसिष्ट। अवसिष्यत । **कसि गतीति ।** वसधातुवत् । इदित्वान्नुमिति विशेषः। **ताल्व्यान्त इति।** ताल्व्योष्मान्त इत्यर्थः। **कष्टे इति।** 'व्रश्चे' ति शस्य षः, ष्टुत्वम्। **कक्षे इति।** शस्य षः, षस्य 'षढो' रिति कः, षत्वम्। **कड्ढ्वे इति ।** शस्य षः, तस्य जश्त्वेन डः, धस्य ष्टुत्वेन ढः। **णिसि चुम्बने इति ।** णोपदेशोऽयम् । नुमि 'नश्चे' त्यनुस्वारः । निंस्ते इत्यादि । **निंस्से इति ।** नुमोऽनुस्वारः । थासः सेभावः । **दन्त्यान्तोऽयमिति ।** दन्त्योष्मान्तोऽयमित्यर्थः । **बभ्रामेति ।** 'नुम्विसर्जनीयशर्व्यवायेऽपी' ति सूत्रे वृत्त्यादौ दन्त्योष्मान्तत्वोक्तेरिति भावः। **णिजि शुद्धाविति ।** णोपदेशोऽयम् । अनिट्सु इरित एव ग्रहणादयं सेट् । **निङ्क्ते इति ।** नुमि निन्ज् ते इति स्थिते जस्य कुत्वेन गः, तस्य चर्त्वेन कः, नस्य अनुस्वारे परसवर्णो ङकारः । निञ्जाते । निङ्क्षे निञ्जाथे निङ्ग्ध्वे । निञ्जे निञ्ज्महे

---

शे.] इडभावार्थं योगविभाग इति न युक्तं, भाष्यविरोधात् । 'ईड्जनोर्ध्वे चे' ति भाष्यसम्मतः पाठः । **आङः शासु ।** अयं धातुर्वेवीङनन्तरमिति 'जक्षित्यादि' सूत्रस्थभाष्यस्वरसः । **नमोवाकमिति ।** वचेर्घञि वाकः । 'नमः' इति वचनमित्यर्थः । नमस्कारमिति यावत् । **प्रशास्महे ।** कुर्महे इत्यर्थः। धातूनामनेकार्थत्वात् । **शिजि ।** अयं दन्त्यादि-

शिङ्क्ते । १०२८ पिजि वर्णे । संपर्चने इत्येके । उभयत्रेत्यन्ये । अवयवे इत्यपरे । अव्यक्ते शब्दे इतीतरे । पिङ्क्ते । पृंजि इत्येके । पृङ्क्ते । १०२९ वृजी वर्जने । दन्त्योष्ठ्यादिः । ईदित् । वृक्ते । वृजाते । वृक्षे । इदिदित्यन्ये । वृङ्क्ते । १०३० पृची संपर्चने । पृक्ते । १०३१ षूङ् प्राणिगर्भविमोचने । सूते । सूषे । सुषुवे । सुषुविषे । सोता । सविता । 'भूसुवो'रिति गुणनिषेधः । सुवै । सविषीष्ट । सोषीष्ट । असविष्ट । असोष्ट । १०३२ शीङ् स्वप्ने । **शीङः सार्वधातुके गुणः** ।७।४।२१। 'क्ङिति चे'त्यस्याऽपवादः । शेते । शयाते । **शीङो रुट्** ।७।१।६। शीङः परस्य झादेशस्याऽतो रुडागमः स्यात् । शेरते । शेषे । शेध्वे । शये । शेवहे । शिश्ये । शयिता । अशेत । शयीत । अशयिष्ट । **अथ कौत्यन्ताः परस्मैपदिनः** । ऊर्णुस्तूभयपदी । १०३३ यु मिश्रणेऽमिश्रणे च । **उतो वृद्धिर्लुकि हलि** ।७।३।८९। लुग्विषये उकारस्य वृद्धिः स्यात्पिति हलादौ सार्वधातुके, न त्वभ्यस्तस्य । यौति । युतः । युवन्ति । युयाव । यविता । युयात् । इह उतो वृद्धिर्न, भाष्ये 'पिच्च ङिन्न ङिच्च पिन्न'ति

त.]श्यकणिन्यन्तान्ङीपि 'शिञ्जिनी' । 'भूषणानां तु शिञ्जितम्' । 'मौर्वी ज्या शिञ्जिनी गुणः' इति चामरः । **सुषुविषे इति** । 'स्वरतिसूति' इति विकल्पं बाधित्वा 'श्र्युकः किति' इति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । **शीङ् स्वप्ने । क्ङिति चेत्यस्येति** । अन्यत्र 'सार्वधातुकार्द्धधातुकयो'रित्यनेन सिद्धमिति भावः । **शीङो रुट्** । 'झोऽन्तः' इत्यतो 'झ' इत्यनुवर्तते । 'अदभ्यस्ता'दित्यतोऽदिति च । तथा चेष्टानुरोधेनाऽदिति प्रथमान्तस्य षष्ठ्यन्तत्वमाश्रित्य व्याचष्टे—**झादेशस्याऽत इति** । झस्यैव रुडागमे तु अदादेशो दुर्लभ इत्यदित्यस्याप्यनुवृत्तिः कृता । **शिश्ये इति** । 'एरनेकाचः' इति यण् । शेताम् । शयाताम् । शेरताम् । शेष्व । शयाथाम् । शेध्वम् । **उतो वृद्धिः** । 'नाभ्यस्तस्याचि पिती'त्यतो निषेधानुवृत्तेराह-**न त्वभ्यस्तस्येति** । उतः किम् ? । एति । एषि । लुकीति किम् ? । सुनोति ।

बा.] निङ्क्ष्महे । लिटि संयोगात्परत्वात्कित्त्वाऽभावान्नलोपो न । निनिञ्जे निनिञ्जाते इत्यादि । निञ्जिता । निञ्जिष्यते । निङ्क्ताम् । अनिङ्क्त । निञ्जीत । निञ्जिषीष्ट । अनिञ्जिष्ट । अनिञ्जिष्यत । **शिजिपिजी** अप्येवम् । **पृजि इत्येके इति** । ऋदुपधोऽयम् । वृजीधातुर्ऋदुपध ईदित्, अतो नुम् नेति भावः । **पृची संपर्चने इति** । ऋदुपधोऽयम् । पपृचे इत्यादि । ईरादयः पृच्यन्ता अनुदात्तेतो गताः । षूङ्धातुः षोपदेशः, सेट् । ङित्त्वात्तङ् । **सूते इति** । सुवाते सुवते । सूषे सुवाथे सूध्वे । सुवे सूवहे सूमहे । **सुषुविषे इति** । 'स्वरती'तीड्विकल्पं बाधित्वा 'श्र्युकः किती'ति निषेधे प्राप्ते, क्रादिनियमान्नित्यमिट् । 'स्वरतिसूती'ति इड्विकल्पं मत्वा आह—**सोता सवितेति** । तिङ्स्तासा व्यवधानात् 'भूसुवो' रिति न गुणनिषेध इति भावः । सोष्यते सविष्यते । सूताम् । सुवाताम् सुवताम् । सूष्व सूध्वम् । आटः पित्त्वाद्गुणे प्राप्ते आह—**भूसुवोरिति** । **सुवै इति** । सुवावहै सुवामहै । असूत । सुवीत । सविषीष्ट सोषीष्ट इत्यादि स्पष्टम् । **शीङ् स्वप्ने** । सेट् । ङित्त्वात्तङ् । **शीङः सार्वधातुके** । स्पष्टम् । 'सार्वधातुकार्द्धधातुकयो' रित्येव सिद्धे किमर्थमिदमित्यत आह—**क्ङिति चेत्यस्यापवाद इति** । झस्य अदादेशे सति शे—अते इति स्थिते—**शीङो रुट्** । 'झोऽन्तः' इत्यतो झ इत्यनुवर्तते । 'अदभ्यस्ता'दित्यतोऽदित्यनुवृत्तं षष्ठ्या विपरिणम्यते । तदाह—**शीङः परस्येति** । रुटि उकार उच्चारणार्थः । टित्त्वादाद्यवयवः । **शेध्वे इति** । 'षीध्वंलुङ्लिटा'मित्युक्तेर्न ढः । **शिश्ये इति** । शिश्यिषे । शिश्यिढ्वे—शिश्यिध्वे । **शयितेति** । शयिष्यते । शेताम् शयाताम् शेरताम् । शेष्व शयाथाम् शेध्वम् । शयै शयावहै शयामहै । अशेत अशयाताम् अशेरत । अशेथाः अशयाथाम् । अशेध्वम् । अशयि अशेवहि अशेमहि । शयीत । शयिषीष्ट । **अशयिष्टेति** । अशयिष्यतेत्यपि ज्ञेयम् । **क्ष्णौत्यन्ता इति** । 'टुक्ष्णु तुता'वित्यतः प्राक्तना इत्यर्थः । **ऊर्णुस्तूभयपदीति** । ञित्त्वादिति भावः । **यु मिश्रणेऽमिश्रणे चेति** । अमिश्रणं पृथग्भावः । सेडयम् । **उतो वृद्धिर्लुकि हलि** । 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति अचिवर्जमनुवर्तते । लुकीति विषयसप्तमी, दर्शनाऽभावस्य लुकः परत्वाऽसंभवात् । तदाह—**लुग्विषय इत्यादिना** । **यौतीति** । गुणं बाधित्वा वृद्धिः । **युत इति** । अपित्त्वान्न वृद्धिः । **युवन्तीति** । अपित्त्वाद्वृद्ध्यभावे ङित्त्वाद्गुणाऽभावे उवङिति भावः । यौषि युथः युथ । यौमि युवः युमः । **युयावेति** । युयुवतुः युयुवुः । युयविथ युयुवथुः युयुव । युयाव-युयव युयुविव युयुविम । **यवितेति** । उवङं बाधित्वा परत्वाद्गुणः । यविष्यति । यौतु-युतात् युताम् युवन्तु । हौ अपित्त्वान्न वृद्धिः । युहि-युतात् युतम् युत । आटि पित्त्वेऽपि हलादित्वाऽभावान्न वृद्धिः । पित्त्वेन ङित्त्वाऽभावाद्गुणः । यवानि यवाव यवाम । अयौत् अयुताम् अयुवन् । अयौः अयुतम् अयुत । अयवम् अयुव अयुम । विधिलिङ्याह—**युयादिति** । अत्र यासुडागमसहि-

शे.]रपि । **शीङो रुट्** । 'झोऽन्तः' इत्यतो 'झ' इति, 'अदभ्यस्ता'दित्यतोऽदिति च वर्त्तते । तच्च षष्ठ्या विपरिणम्यते । तदाह—**अत इति** । झस्यैव रुटि त्वदादेशो दुर्लभः । **उतो वृ** । 'अची'त्येतद्रहितं 'नाभ्यस्तस्ये'ति सूत्रमनुवर्तते, तदाह—**पितीति** । **भाष्ये पिच्चेति** । इदञ्च 'हलः श्नः' इति सूत्रे भाष्ये स्पष्टम् । 'सार्वधातुकमपि'दित्यस्यावृत्त्येदं

व्याख्यानात्। विशेषविहितेन ङित्त्वेन पित्त्वस्य बाधात्। यूयात्। अयावीत्। **१०३४ रु शब्दे। तुरुस्तुशम्यमः सार्वधातुके** ।७।३।९५। एभ्यः परस्य सार्वधातुकस्य हलादेस्तिङ ईड्वा स्यात्। नाभ्यस्तस्ये'त्यतोऽनुवृत्तिसंभवे पुनः सार्वधातुकग्रहणमपिदर्थम्। रवीति। रौति। रुवीतः। रुतः। हलादेः किम्?। रुवन्ति। तिङः किम्?। शाम्यति। सार्वधातुके किम्?। आशिषि–रूयात्। विध्यादौ तु–रुयात्। रुवीयात्। अरावीत्। अरविष्यत्। 'तु' इति सौत्रो धातुर्गतिवृद्धिहिंसासु। अयं च लुग्विकरण इति स्मरन्ति। तवीति। तौति। तुवीतः। तुतः। तोता। तोष्यति। **१०३५ णु स्तुतौ**। नौति। नविता। **१०३६ टुक्षु शब्दे**। क्षौति। क्षविता। **१०३७ क्ष्णु तेजने**। क्ष्णौति। क्ष्णविता। **१०३८ ष्णु प्रस्रवणे**। स्नौति। सुष्णाव। स्नविता। स्नुयात्। स्नूयात्। **१०३९ ऊर्णुञ् आच्छादने। ऊर्णोतेर्विभाषा** ।७।३।९०। वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके। ऊर्णौति। ऊर्णोति। ऊर्णुतः। ऊर्णुवन्ति। ऊर्णुते। ऊर्णुवाते। ऊर्णुवते। **ऊर्णोते-**

---

त.] जुहोति। हलि किम्?। यवानि यवाव। 'आडुत्तमस्ये'त्याडागमः पित्। पिति किम्?। युतः। रुतः। 'नाभ्यस्तस्ये'ति किम्?। योयोति। रोरोति। सार्वधातुके किम्?। यूयात्। न चाऽत्र ङिच्च पिन्नेति व्याख्यानान्निर्वाहः शङ्क्यः, 'किदाशिषी'ति यासुटः कित्त्वात्। केचित्तु युयात् स्तुयादित्यादावपि 'ङिच्च पिन्ने'त्येतदानाश्रित्य व्याचक्षते। संज्ञापूर्वकविधेरनित्यत्वाद्वृद्धिर्न भवति। अन्यथा 'उत औ'दित्येव वदेदिति। **तुरुस्तु**। 'तुः सौत्रो धातु'रिति वक्ष्यति।

**अपिदर्थमिति**। 'एभ्यः परस्य पितः सार्वधातुकस्ये'ति प्राचो व्याख्यानं प्रामादिकं, रुवीतः स्तुवीत इत्याद्यसिद्ध्यापत्तेरिति भावः। शम्यमोरुदाहरणं तु शमीध्वम्। अभ्यमीति। अभ्यन्ति। शम्यमोश्छन्दसि विकरणस्य लुकि सति झलादिसार्वधातुकमनन्तरं संभवतीति काशिकायामुक्तम्। आपिशलास्तु–'तुरुस्तुशम्यमः सार्वधातुके-छन्दसी'ति पठन्ति, तन्मते सूत्रमिदं छन्दस्येव। **ऊर्णोतेर्विभाषा**। 'उतो वृद्धि'रिति नित्ये प्राप्ते विभाषेयम्। हलादौ किम्?।

---

बा.]तस्य तिपः पित्त्वादुतो वृद्धिमाशङ्क्याह–**इह उतो वृद्धिर्नेति**। कुत इत्यत आह–**भाष्ये इति**।**व्याख्यानादिति**। 'हलः श्नः शानज्झौ' इति सूत्रव्याख्यावसरे वचनादित्यर्थः। ननु यासुडागमसहितस्य तिपः पित्त्वात् 'पिच्च ङिन्ने'त्युक्तवचनेन 'यासुट् परस्मैपदेषु' इति ङित्त्वस्याऽप्यभावात् 'क्ङिति चे'ति गुणनिषेधाऽभावाद्गुणः स्यादित्यत आह–**विशेषविहितेनेत्यादि, बाधादित्यन्तम्**। 'यासुट् परस्मैपदेषु' इति विशेषविहितेन यासुटो ङित्त्वेन तत्सहितस्य तिपो 'ङिच्च पिन्ने'ति पित्त्वप्रयुक्तङित्त्वनिषेधस्य बाधान्ङित्त्वाद्गुणनिषेधो निर्बाध इत्यर्थः। आशीर्लिङ्याह–**यूयादिति**। आर्द्धधातुकत्वान्न वृद्धिः। 'अकृत्सार्वधातुकयो'रिति दीर्घः। यूयास्तामित्यादि। लुङ्याह–**अयावीदिति**। सिचि वृद्धिः। 'इट ईटी'ति सिज्लोपः। अयाविष्टामित्यादि। अयविष्यत्। **तुरुस्तु**। तु रु स्तु शमि अम् एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम्। 'उतो वृद्धि'रित्यतो हलीति, 'भूसुवो' रित्यतस्तिङीति, 'ब्रुव ई'डित्यत ईडिति, 'यङो वे'त्यतो वेति चानुवर्तते। तदाह– **एभ्य इत्यादिना**। **नाभ्यस्तस्येति**। 'नाभ्यस्तस्याऽचि पिति सार्वधातुके' इत्यतः सार्वधातुके इत्यनुवृत्तिसंभवे पुनः सार्वधातुकग्रहणं पितीत्यस्याऽनुवृत्तिर्मा भूदित्येतदर्थमित्यर्थः। **रवीतीति**। ईट्पक्षे हलादित्वाऽभावादुतो वृद्धिर्नेति भावः। **रौतीति**। ईडभावे 'उतो वृद्धि'रिति भावः। **रुवीतः रुत इति**। अपित्त्वेऽपि ईड्विकल्प इति भावः। **रुवन्तीति**। अन्तादेशे कृते हलादित्वाऽभावादीडभावे उवङिति भावः। **शाम्यतीति**। श्यनस्तिङ्त्वाऽभावादीण्नेति भावः। **आशिषि रूयादिति**। आर्द्धधातुकत्वादीडभावे 'अकृत्सार्वधातुकयो'रिति दीर्घः।

**विध्यादौ त्विति**। आदिना निमन्त्रणादिसङ्ग्रहः। **रुयात् रुवीयादिति**। हलादिसार्वधातुकत्वादीड्विकल्प इति भावः। ईडभावपक्षे हलादौ पिति सार्वधातुके 'उतो वृद्धि'रिति बोध्यम्। ननु धातुपाठे तुधातोरदर्शनाद्धातुत्वाऽभावात्कथं ततः सार्वधातुकस्य ईड्विधिरित्यत आह–**तु इति सौत्रो धातुरिति**। **गतिवृद्धिहिंसास्विति**। अत्र व्याख्यानमेव शरणम्। ननु शपा व्यवधानादस्य सार्वधातुकपरत्वं कथमित्यत आह–**अयं च लुग्विकरण इति स्मरन्तीति**। अव्यवहिततिङ ईड्विधानमेवाऽत्र बीजम्। शम्यमोस्तु 'शमीध्वम् अभ्यमीती'ति वेदे शपो लुकि बोध्यम्। अयमनिट्। हलादौ सार्वधातुके रुधातुवत्। आर्द्धधातुके तु नेट्। तदाह–**तोतेति**। **णु स्तुताविति**। णोपदेशोऽयं सेट्। युधातुवद्रूपाणि। क्षुक्ष्णुस्नुधातवः सेटः। युधातुवद्रूपाणि। चुक्षाव। चुक्ष्णाव। **सुष्णाव इति**। षोपदेशोऽयमिति भावः। **ऊर्णु**ञ्धातुरुभयपदी। सेट्। उतो वृद्धेर्नित्यं प्राप्तौ–**ऊर्णोतेर्विभाषा**। 'उतो वृद्धि'रित्यतो वृद्धिरिति, हलीति चानुवर्तते। 'नाभ्यस्तस्ये'त्यतः 'पिति सार्वधातुके' इति च। इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे–**वृद्धिः स्यादि-**

---

शे.]लस्यते। ननु पूर्ववाक्येन ङित्त्वमपि दुर्लभमत आह–**विशेषेति**। **यूयादिति**। आर्द्धधातुकत्वान्न वृद्धिः। **स्मरन्तीति**। अव्यवहिततिङ ईड्विधानमत्र बीजम्। शम्यमोः 'बहुलं छन्दसी'ति विकरणलुकि वेदे उदाहरणम्।

**राम्नेति वाच्यम्** । **न न्द्राः संयोगादयः** ।६।१।३। अचः पराः संयोगादयो नदरा द्विर्न भवन्ति । नुशब्दस्य द्वित्वम् । णत्वस्याऽसिद्धत्वात् । 'पूर्वत्राऽसिद्धीयमद्विर्वचने' इति त्वनित्यम्, 'उभौ साभ्यासस्ये'ति लिङ्गात् । ऊर्णुनाव । ऊर्णुनुवतुः । ऊर्णुनुवुः । **विभाषोर्णोः** ।१।२।३। इडादिप्रत्ययो वा ङित्स्यात् । ऊर्णुनुविथ । ऊर्णुनविथ । ऊर्णुविता । ऊर्णविता । ऊर्णौतु । ऊर्णोतु । ऊर्णवानि । ऊर्णवै । **गुणोऽपृक्ते** ।७।३।९१। ऊर्णोते-

---

त.]ऊर्णवानि । पिति किम् ?। ऊर्णुतः । सार्वधातुके किम् ?। ऊर्णूयात् । **ऊर्णोतेराम्नेति** । 'ऊर्णोतेर्णुवद्भावो वाच्यः' इति वक्ष्यमाणस्य आमभावोऽपि फलमिति भावः । **न न्द्राः** । अजादेरिति वर्तते । स च कर्मधारयः । आदिग्रहणस्य तु प्रकृतेऽनुपयोगः । तदेतदाह-**अचः परा इति** । उन्दिदिषति । इन्दिदिषति । अड्डिडिषति । अर्चिचिषति । 'न न्द्राः' इति किम् ? । ईक्षतेः सनि ईचिक्षिषते । संयोगादयः किम् ? । प्राणिणिषति । अरिरिषति । अचः पराः किम् ?। इन्द्रीयितुमिच्छतीति क्यजन्तात्सनि इन्दिद्रीयिषति । इह नकारस्य द्वित्वाऽभावेऽपि दकारस्तु द्विरुच्यत एव, अचः परत्वाऽभावात् । **नुशब्दस्येति** । उपदेशे नकार एव, णत्वं तु 'रषाभ्या'मित्यनेनेति भावः। **पूर्वत्रासिद्धीयमिति**।अत्र द्विर्वचनशब्देन षाष्ठमाष्टमिकं चोभयं गृह्यते । तत्र षाष्ठस्य ऊढिमाख्यत् औडिढदित्युदाहरणम् । आष्टमिकस्य तु द्रोग्धा-द्रोग्धा, द्रोढा-द्रोढेति । इह त्रिपादीस्थं घत्वढत्वादिकं द्विर्वचने सिद्धमेव । असिद्धत्वे तु त्रिपादीस्थकार्यात्पूर्वमेव द्रोह्ता इत्यस्य द्वित्वे, पश्चात् 'वा द्रुहे'ति घत्वढत्वयोः प्रवृत्तौ द्रोग्धा द्रोढेत्यपि द्विर्वचनं कदाचित्स्यान्न तु द्रोग्धा-द्रोग्धेति। समानजातीयस्यैव नियमेन द्विर्वचनं सिध्यति । किंच षट् सन्त इत्यत्र डस्य चर्त्वे टकारस्य द्वित्वं, 'पूर्वत्रासिद्धीयम-द्वित्वे' इत्युक्तेरिति मनोरमादावुक्तम् । अतएव सुद्ध्युपास्य इत्यत्र धस्य जश्त्वेन दकारे व्यक्तिभेदाद्दकारस्यापि द्वित्वं सुवचमेवेत्याहुः । **अनित्यमिति** । अतएव हुतिशब्दस्य द्वित्वमौजिढदित्यपि नामधातुषु वक्ष्यति । **उभौ साभ्या-सस्येति**। 'अनिते'रित्यनेन णत्वं कृत्वा द्विर्वचने कृते प्राणिणत् प्राणिणिषतीति सिद्धमिति सूत्रमिदं ज्ञापकमित्यर्थः। एवं च 'प्रणिनाये'त्यादौ द्वितीयस्य णत्वाऽभावः सिद्धः। **विभाषोर्णोः** । 'गाङ्कुटादिभ्यः' इत्यतो ङिदिति, 'विज इ'डित्यत इडिति चानुवर्तते इत्याशयेनाह-**इडादिप्रत्यय इत्यादि** । तेन गुणविकल्पे पक्षे उवङ् । **गुणोऽपृक्ते** । 'नाभ्यस्त-

---

बा.]त्यादिना । लिटि 'इजादे'रिति, 'कास्यनेका'जिति च आमि प्राप्ते आह-**ऊर्णोतेराम् नेति** । ऊर्णोतेर्नुवद्भावस्य वक्ष्यमाणतया इजादित्वस्य अनेकाच्त्वस्य चाऽभावादिति भावः । णलि ऊर्णु अ इति स्थिते 'अजादेर्द्वितीयस्ये'ति 'र्नु' इति रेफसहितस्य द्वित्वे हलादिशेषे नकारस्य निवृत्तौ ऊरुनावेति प्राप्ते-**न न्द्राः** । 'एकाचो द्वे प्रथमस्ये'त्यतो 'द्वे' इत्यनुवर्तते । 'अजादेर्द्वितीयस्ये'त्यतोऽजादेरिति । अचासौ आदिश्चेति कर्मधारयात्पञ्चमी । न्, द्, र् एषां द्वन्द्वः । तदाह-**अचः परा इति** । ननु 'णु' इत्यस्य द्वित्वे खण्डद्वयेऽपि णकारः श्रूयेतेत्यत आह-**नुशब्दस्य द्वित्वमिति**। **णत्वस्येति** । धातुपाठे 'ऊर्णु' इति नकारस्य कृतणत्वस्य निर्देशः, द्वित्वे कर्तव्ये तस्य णत्वस्याऽसिद्धत्वादित्यर्थः ।

**लिङ्गादिति** । 'उभौ साभ्यासस्ये'त्यस्याऽयमर्थः-साभ्यासस्याऽनितेरुपसर्गस्थान्निमित्तात्परौ खण्डद्वयगतौ नकारौ णत्वं प्राप्नुत इति। प्राणिणदित्युदाहरणम् । 'अत्र अनिते'रिति णत्वे कृते 'पूर्वत्रासिद्धीयमद्विर्वचने' इति णत्वस्याऽसिद्धत्वा-ऽभावमाश्रित्य 'णी'त्यस्य द्वित्वादेव खण्डद्वये णकारश्रवणसिद्धेः 'उभौ साभ्यासस्ये'ति वचनं 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्याऽनित्यतां गमयतीत्यर्थः । **ऊर्णुनावेति** । नुशब्दस्य द्वित्वे पूर्वनकारस्य 'रषाभ्या'मिति णत्वम् । द्वितीयस्य तु 'अट्कुप्वा'ङिति न णत्वम्, 'उभौ साभ्यासस्ये'ति लिङ्गादेव । **विभाषोर्णोः** । 'गाङ्कुटादिभ्यः' इत्यतो ङिदित्यनुवर्तते, 'विज इ'डित्यत इडिति,-इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे-**इडादीति** । **ऊर्णुनुविथेति** । ङित्त्वपक्षे गुणाऽभावादुवङ् । **ऊर्णुनविथेति** । ङित्त्वाऽभावपक्षे गुणः । ऊर्णुनुवथुः ऊर्णुनुव । ऊर्णुनाव-ऊर्णुनव । लुटि तासि इटि ङित्त्वविकल्पं मत्वाऽऽह-**ऊर्णविता ऊर्णुवितेति** । ऊर्णविष्यति ऊर्णुविष्यति । ऊर्णविष्यते-ऊर्णु-

---

शे.]**ऊर्णोतेः** । 'उतो वृद्धि'रित्यतो वृद्धिरित्यनुवर्त्तते । **आम्नेतीति** । ऊर्णोतेर्नुवद्भावेनेजादेरित्यनेकाच इति वाऽऽमो-ऽभावस्याऽतिदेशादिति भावः । **न न्द्राः** । अजादेरिति कर्मधारयात्पञ्चमी, तदाह-**अचः परा इति** । आदिभूतादचः परा इत्यर्थः । ननूत्तरखण्डेऽपि णश्रवणं स्यादत आह-**नुशब्दस्येति** । णत्वस्याऽसिद्धतया नुबुद्ध्यैव द्वित्वकरणात् । यद्बुद्ध्या शास्त्रप्रवृत्तिस्तदीयद्वितीयप्रयोगस्यैव साधुत्वाऽन्वाख्यानान्नोत्तरखण्डे णश्रवणं, पूर्वोच्चारणेन व्यवधानाच्च न शास्त्रेण तत्प्रसङ्ग इति भावः । **पूर्वत्रासिद्धीयमिति** । 'पूर्वत्रासिद्ध'मित्यधिकारे भवमित्यर्थः । गहादित्वाच्छः । यत्पूर्वत्रा-सिद्धीयं-शास्त्रं, तत्र-'अद्वित्वे' इत्युपतिष्ठते इत्यर्थः । तच्च 'पूर्वत्रे'त्यनेनान्वेति । एवञ्च द्वित्वभिन्ने पूर्वत्रेदमसिद्धमि-त्यर्थः । द्वित्वस्य त्वन्यत्राऽसिद्धत्वं भवत्येव । अत्र द्वित्वशब्देन षाष्ठमाष्टमिकञ्च, अविशेषात् । **लिङ्गादिति** । अन्यथा 'अनिते'रित्यनेन कृतणत्वस्य द्वित्वे 'प्राणिण'दित्यादेः सिद्धौ 'उभौ'इति सूत्रं व्यर्थं स्यात्। एवञ्च णत्वविधावस्यानुपस्थान-मिति भावः । **विभाषोर्णोः** । 'गाङ्कुटादिभ्यः' इत्यतो ङिदिति, 'विज इ'डित्यत इडिति चानुवर्तते । तत्र इट् आगम

गुणःस्यादपृक्ते हलादौ पिति सार्वधातुके। वृद्ध्यपवादः। और्णोत्। और्णोः। ऊर्णुयात्। ऊर्णुयाः। इह वृद्धिर्न, 'ङिच्च पिन्न' इति भाष्यात्। ऊर्णूयात्। ऊर्णुविषीष्ट। ऊर्णविषीष्ट। और्णुवीत्। और्णुविष्टाम्। **ऊर्णोतेर्विभाषा** ।७।२।६। इडादौ सिचि परस्मैपदे परे वा वृद्धिः स्यात्। पक्षे गुणः। और्णावीत्। और्णाविष्टाम्। और्णाविषुः। और्णवीत्। और्णविष्टाम्। और्णविषुः। **१०४० द्यु अभिगमने।** द्यौति। द्योता। **१०४१ षु प्रसवैश्वर्ययोः।** प्रसवोऽभ्यनुज्ञानम्। सोता। असौषीत्। **१०४२ कु शब्दे।** कोता। **१०४३ ष्टुञ् स्तुतौ।** स्तौति। स्तवीति। स्तुतः। स्तुवीतः। स्तुते। स्तुवीते। 'स्तुसुधूञ्भ्य' इतीट्। अस्तावीत्। 'प्राक्सिता'दिति षत्वम्। अभ्यष्टौत्। 'सिवादीनां वा'। पर्यष्टौत्। पर्यस्तौत्। **१०४४ ब्रूञ् व्यक्तायां वाचि।** **ब्रुवः पञ्चानामादित आहो ब्रुवः** ।३।४।८४। ब्रुवो लटः

त.] स्याची'त्यतः 'पिति सार्वधातुके'इति, 'उतो वृद्धिर्लुकि हली'त्यतो हलीति चानुवर्तते। तदाह—**हलादावित्यादि।** **ऊर्णोतेर्विभाषा।** 'सिचि वृद्धि'रिति सूत्रं, 'नेटी'त्यत्र इटीति चानुवर्तत इत्याशयेनाह—**इडादावित्यादि।** **स्तवीतीति।** 'तुरुस्तुशम्यमः' इति ईड्वा। 'स्तुसुधूञ्भ्यः' इत्यत्र परस्मैपदेष्वित्युक्तेरात्मनेपदे तु नेट्। अस्तोष्ट। अस्तोषाताम्। **ब्रुवः पञ्चानाम्।** 'विदो लटो वे'त्यतो लटो वेति वर्तते। 'ब्रुव' इत्येतदादिमं पञ्चम्यन्तमन्तिमं तु षष्ठ्यन्तमित्याशयेनाह—**ब्रुवो लट इत्यादि।** **वक्तव्यमिति।** प्रक्रियालाघवात् 'आहस्तः' इत्येव सुवचमित्याहुः।

बा.] विष्यते। लङि और्णुदिति स्थिते 'ऊर्णोतेर्विभाषे'ति वृद्धिविकल्पे, गुणे च प्राप्ते—**गुणोऽपृक्ते।** 'ऊर्णोतिविभाषे'त्यत ऊर्णोतेरिति, 'नाभ्यस्तस्ये'त्यतः पिति सार्वधातुके इति, 'उतो वृद्धि'रित्यतो हलीति चानुवर्तते। तदाह—**ऊर्णोतेरित्यादि।** **वृद्ध्यपवाद इति।** 'ऊर्णोतेर्विभाषे'ति वृद्धिविकल्पस्यापवाद इत्यर्थः। ऊर्णुयादित्यत्र 'विभाषोर्णो'रिति वृद्धिविकल्पमाशङ्क्याह—**इह वृद्धिर्नेति।** **भाष्यादिति।** तथा च यासुटो ङित्त्वेन पित्त्वाऽभावान्न वृद्धिविकल्प इति भावः। नचैवं सति गुणनिषेधोऽपि न स्यादिति शङ्क्यं, विशेषविहितेन यासुटो ङित्त्वेन 'ङिच्च पिन्न'ति पित्त्वप्रयुक्तङित्त्वनिषेधस्य बाध इति 'यु मिश्रणे' इति धातावेवोक्तत्वादिति भावः। परस्मैपदे आशीर्लिङ्याह—**ऊर्णूयादिति।** 'अकृत्सार्वधातुकयो'रिति दीर्घः। ऊर्णूयास्तामित्यादि। आत्मनेपदे लिङ्याह—**ऊर्णविषीष्ट ऊर्णुविषीष्टेति।** 'विभाषोर्णो'रिति ङित्त्वविकल्प इति भावः। लुङि परस्मैपदे और्णु—ईदिति स्थिते 'विभाषोर्णो'रिति ङित्त्वपक्षे गुणाऽभावे उवङि रूपमाह—**और्णुवीदिति।** ङित्त्वाऽभावपक्षे गुणे नित्यं प्राप्ते—**ऊर्णोतेर्विभाषा।** 'सिचि वृद्धिः परस्मैपदेषु' इत्यनुवर्तते, 'नेटी'त्यत इटीति च। तदाह—**इडादाविति।** आत्मनेपदे तु लुङि और्णविष्ट और्णुविष्ट। और्णविष्यत्—और्णुविष्यत्। और्णविष्यत—और्णुविष्यत। **द्यु इति।** अनिट्। **द्यौतीति।** उतो वृद्धिः। सार्वधातुके लिटि च युधातुवत्। **द्योतेति।** द्योष्यति। अद्यौषीत्। **षु प्रसव इति।** षोपदेशोऽयम्। अनिट्। सौतीत्यादि युधातुवत्। एवं **कु शब्दे** इत्यपि। **ष्टुञ् स्तुताविति।** उभयपदी अनिट्। 'तुरुस्तुशम्यमः' इति ईड्विकल्पम्, ईडभावपक्षे तु उतो वृद्धिं च मत्वा आह—**स्तौति स्तवीतीति।** स्तुवन्ति। स्तौषि—स्तवीषि, स्तुथः—स्तुवीथः, स्तुथ—स्तुवीथ। स्तौमि—स्तवीमि, स्तुवः—स्तुवीवः। स्तुमः। स्तुवीमः। आत्मनेपदे लटि ईड्विकल्पं मत्वा आह—**स्तुते। स्तुवीते इति।** स्तुवाते स्तुवते। स्तुषे—स्तुवीषे स्तुवाथे स्तुध्वे—स्तुवीध्वे। स्तुवे स्तुवहे—स्तुवीवहे स्तुमहे—स्तुवीमहे। लिटि—तुष्टाव तुष्टुवतुः तुष्टुवुः। क्रादित्वात्थल्यपि नेड्भवति। तुष्टोथ तुष्टुवथुः तुष्टुव। तुष्टाव—तुष्टव। तुष्टुव तुष्टुम। तुष्टुवे इत्यादि। स्तोता। स्तोष्यति स्तोष्यते। स्तौतु—स्तवीतु, स्तुतात्—स्तुवीतात्, स्तुताम्—स्तुवीताम्, स्तुवन्तु। स्तुहि—स्तुवीहि, स्तुतात्—स्तुवीतात्, स्तुतम्—स्तुवीतम्, स्तुत-स्तुवीत। स्तवानि स्तवाव स्तवाम। स्तुताम्—स्तुवीताम्, स्तुवाताम् स्तुवताम्। स्तुष्व—स्तुवीष्व स्तुवाथाम् स्तुध्वम्—स्तुवीध्वम्। स्तवै स्तवावहै स्तवामहै। लङि—अस्तौत्—अस्तवीत् अस्तुताम्—अस्तुवीताम् अस्तुवन्। अस्तौः—अस्तवीः, अस्तुतम्—अस्तुवीतम्, अस्तुत—अस्तुवीत। अस्तवम्, अस्तुव—अस्तुवीव, अस्तुम—अस्तुवीम। अस्तुत—अस्तुवीत अस्तुवातामित्यादि। विधिलिङि स्तुयात्—स्तुवीयादित्यादि। आत्मनेपदे स्तोषीष्टेत्यादि। लुङि सिचि इडभावे प्राप्ते आह—**स्तुसुधूञ्भ्य इति।** तथाच 'इट ईटी'ति सिज्लोपे सिचि वृद्धौ अस्तावीदिति फलति। अस्ताविष्टामित्यादि। 'स्तुसुधूञ्भ्यः' इत्यत्र परस्मैपदेष्वित्यनुवृत्तेरात्मनेपदे इण्न। अस्तोष्ट अस्तोषातामित्यादि। ब्रूञ्। उभयपदी। **ब्रुवः पञ्चानाम्।** 'परस्मैपदानां णलतु'रित्यत उत्तरसूत्रमिदम्। 'विदो लटो वे'त्यतो लटो वेत्यनुवर्तते। तदाह—**ब्रुवो लट इति।** **आदितः**

शे.] एव, 'विज इ'डित्यत्र तस्यैव संभवेनाऽर्थाधिकारात्। अतः 'और्णुवि' इत्यत्र नायं विकल्पः। अन्यथा परमपि 'सार्वधातुकपि'दिति बाधित्वा 'निषेधाश्च बलीयांसः' इति इदमेव स्यादिति दिक्। **गुणोऽपृक्ते।** 'नाभ्यस्तस्ये'त्यतः पितीत्याद्यनुवर्तते। 'उतो वृद्धि'रित्यतो हलीति च। **ऊर्णोतेर्विभाषा।** 'सिचि वृद्धि'रिति सूत्रं, 'नेटी'ति च वर्तते। निषेधविकल्पे विधिविकल्पस्य फलितत्वान्नेति निवृत्तेर्वाऽऽह—**वृद्धिर्वेति।** **ब्रुवः पञ्चानाम्।** आद्यं ब्रुव इति पञ्च-

परस्मैपदानामादितः पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाऽऽहादेशः। अकार उच्चारणार्थः। आह। आहतुः। आहुः। **आहस्थः** ।८।२।३५। झलि परे। चर्त्वम्। आत्थ। आहथुः। **ब्रुव ईट्** ।७।३।९३। ब्रुवः परस्य हलादेः पित ईट् स्यात्। 'आत्थे'त्यत्र स्थानिवद्भावात्प्राप्तोऽयं झलीति थत्वविधानान्न भवति। ब्रवीति। ब्रूतः। ब्रुवन्ति। ब्रूते। आर्द्धधातुकाधिकारे-। **ब्रुवो वचिः** ।२।४।५३। उवाच। ऊचतुः। ऊचुः। उवचिथ। उवक्थ। ऊचे। वक्ता। ब्रवीतु। ब्रूतात्। 'ङिच्च पिन्ने'त्यपित्त्वादीण्न। ब्रवाणि। ब्रवै। ब्रूयात्। उच्यात्। 'अस्यतिवक्ती'त्यङ्। **वच उम्** ।७।४।२०। अङि परे। अवोचत्। अवोचत। **अथ शास्यन्ताः परस्मैपदिनः।** इङ् त्वात्मनेपदी। १०४५ इण् गतौ। एति। इतः। **इणो यण्** ।६।४।८१। अजादौ प्रत्यये परे।

---

त.]**ब्रुव ईट्**। हलादेः किम् ?। ब्रवाणि। पितः किम् ?। ब्रूतः। **झलीति थत्वविधानादिति**। ईडागमे कृते झलादित्वाऽभावादिति भावः।। इण् गतौ। **इयङोऽपवाद इति**। येन नाप्राप्तिन्यायेनेति भावः। गुणवृद्धी तु परत्वादस्य

---

बा.]**पञ्चानामिति**। तिप् तस् झि सिप् थसित्येषामित्यर्थः। **णलादयः पञ्चेति**। णल् अतुस् उस् थल् अथुस् इत्येते पञ्चेत्यर्थः। **उच्चारणार्थ इति**। तत्प्रयोजनमात्थेत्यत्रानुपदमेव व्यक्तं भविष्यति। **आहेति**। ब्रूधातोर्लटस्तिपो णलि प्रकृतेराहादेशः। सिपस्थलि प्रकृतेराहादेशे आह् थ इति स्थिते हस्य ढत्वे प्राप्ते-**आहस्थः**। 'आह' इति षष्ठ्यन्तम्। 'झलो झलि' इत्यतो झलीत्यनुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे-**झलि परे इति**। आह् इत्यस्य थकारः स्याज्झलीति फलितम्। 'अलोऽन्त्यस्ये'त्यन्त्यस्य भवति। **चर्त्वमिति**। आथ्-थेति स्थिते प्रथमथकारस्य 'खरि चे'ति चर्त्वे आत्थेति रूपमित्यर्थः। आहादेशस्य अकारान्तत्वे तु हकारादकारस्य थकारादेशे हस्य ढत्वे चर्त्वे आट्त्थ इति स्यादिति बोध्यम्। पञ्चानां णलाद्यभावपक्षे आह-**ब्रुव ईट्**। 'नाभ्यस्तस्ये'त्यतः पितीति, 'उतो वृद्धि'रित्यतो हलीति चानुवर्तते। तदाह-**ब्रुवः परस्येत्यादिना**। ननु आत्थेत्यत्र आहादेशस्य स्थानिवत्त्वेन ब्रूत्वात्ततः परस्य थस्य ईडागमः स्यादित्यत आह-**आत्थेत्यत्रेति**। स्थानिवद्भावात्प्राप्तोऽयमीडागमो न भवतीत्यन्वयः। कुत इत्यत आह-**झलीति थत्वविधानादिति**। 'आहस्थः' इति झलि परत आहादेशस्य थत्वं विधीयते। इटि तु सति झलादित्वाऽभावात्तन्निर्विषयं स्यात्। अत आत्थेत्यत्र ईण्नेति विज्ञायत इत्यर्थः। **ब्रुवन्तीति**। ब्रवीषि ब्रूथः ब्रूथ। ब्रवीमि ब्रूवः ब्रूमः।

लट आत्मनेपदे आह-**ब्रूते इति**। ब्रुवः पञ्चाना'मित्यत्र परस्मैपदानामित्यनुवृत्तेराहादेशो न। ब्रुवाते ब्रुवते। ब्रूषे ब्रुवाथे ब्रूध्वे। ब्रुवे ब्रूवहे ब्रूमहे। **ब्रुवो वचिः**। ब्रुवो वचिरादेशः स्यादार्द्धधातुके इत्यर्थः। इकार उच्चारणार्थः।

**उवाचेति**। अकिति द्वित्वे कृते 'लिट्यभ्यासस्ये'ति संप्रसारणमिति भावः। **ऊचतुरिति**। किति द्वित्वात्प्राक् 'वचिस्वपियजादीना'मिति संप्रसारणे द्वित्वे कृते हलादिशेषे सवर्णपरत्वात् 'अभ्यासस्याऽसवर्णे' इत्युवङभावे सवर्णदीर्घ इति भावः। वचिरनिट्सु परिगणितः। तस्य भारद्वाजनियमात्थलि वेट्। तदाह-**उवचिथ उवक्थेति**। इडभावे 'चोः कुः'। 'ब्रुव ई'डित्यत्र 'नाभ्यस्तस्ये'त्यतः सार्वधातुकग्रहणस्याप्यनुवृत्तेरीण्न। ऊचथुः ऊच। उवाच-उवच ऊचिव ऊचिम। क्रादिनियमादिट्। **ऊचे इति**। ऊचाते ऊचिरे। ऊचिषे ऊचाथे ऊचिध्वे। ऊचे ऊचिवहे ऊचिमहे। **वक्तेति**। वच्यादेशे इण्निषेधः। वक्ष्यति। वक्ष्यते। **ब्रवीतु ब्रूतादिति**। ननु तिबादेशस्य तातङः पित्त्वात् 'ब्रुव ई'डिति ईडागमः स्यादित्यत आह-**ङिच्चेति**। ब्रूताम् ब्रुवन्तु। ब्रूहि-ब्रूतात् ब्रूतम् ब्रूत। **ब्रवाणीति**। आटः पित्त्वेन ङित्त्वाऽभावान्न गुणनिषेध इति भावः। ब्रवाव ब्रवाम। ब्रूताम् ब्रुवाताम् ब्रुवताम्। ब्रूष्व ब्रुवाथाम् ब्रूध्वमिति सिद्धवत्कृत्य आह-**ब्रवै इति**। आटः पित्त्वेन ङित्त्वाऽभावाद्गुणः। ब्रवावहै ब्रवामहै। **लङि**-अब्रवीत् अब्रूताम् अब्रुवन्। अब्रवीः अब्रूतम् अब्रूत। अब्रवम् अब्रूव अब्रूम। विधिलिङ्याह-**ब्रूयादिति**। ब्रूयातामित्यादि। आशीर्लिङ्याह-**उच्यादिति**। वच्यादेशे 'वचिस्वपी'ति संप्रसारणमिति भावः। उच्यास्तामित्यादि। आत्मनेपदे आशीर्लिङि-वक्षीष्ट वक्षीयास्तामित्यादि। अकित्त्वान्न संप्रसारणम्। लुङि सिचि वच्यादेशे अवच् स् त् इति स्थिते आह-**अस्यतीति**। अवच् अ त् इति स्थिते-**वच उम्**। शेषपूरणेन सूत्रं व्याचष्टे-**अङि परे इति**। 'ऋदृशोऽङी'त्यतस्तदनुवृत्तेरिति भावः। मित्त्वादन्त्यादचः परः। आद्गुणः। तदाह-**अवोचदिति**। अवक्ष्यत् अवक्ष्यत। **इङ् त्विति**। 'इङ् अध्ययने' इति धातुस्तु ङित्त्वादात्मनेपदीत्यर्थः। **इण्गताविति**। 'इणो य'णित्यादौ विशेषणार्थो णकारः। **एतीति**। शपो लुकि तिपः पित्त्वेन ङित्त्वाऽभावाद्गुणः। **इत इति**। अपित्त्वेन ङित्त्वान्न गुणः। इ-अन्तीत्यत्र ङित्त्वाद्गुणाऽभावे इयङि प्राप्ते-**इणो यण्**। 'अचि श्नुधातु' इत्यतोऽचीत्यनुवृत्तस्य अङ्गाधिकारलब्धाऽङ्गाक्षिप्तप्रत्ययविशेषणत्वात्तदादिविधिरित्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—**अजादौ प्रत्यये परे इति**। **इयङोऽपवाद इति**।

---

शे.]म्यन्तं, द्वितीयं षष्ठ्यन्तम्। 'विदो लटो वे'त्यतो लटो वेति वर्त्तते। **चर्त्वमिति**। महाप्राणादेशप्रकरणात्-'आहस्तः' इति नोक्तम्। **हलादेः पित इति**। 'नाभ्यस्तस्ये'त्यतः पितीत्याद्यनुवर्त्तते। 'सार्वधातुकस्ये'त्यपि बोध्यम्।

इयङोऽपवादः। यन्ति। इयाय। **दीर्घ इणः किति** ।७।४।६९। इणोऽभ्यासस्य दीर्घः स्यात्किति लिटि। ईयतुः। ईयुः। इययिथ। इयेथ। [एता। इतात्। इहि। अयानि]। ऐत्। ऐताम्। आयन्। इयात्। ईयात्। **एतेर्लिङि** ।७।४।२४। उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यादार्द्धधातुके किति लिङि। निरियात्। 'उभयत

---

त.]बाधिके। अयनम्। आयकः। **दीर्घ इणः किति**। 'अत्र लोपोऽभ्यासस्ये'त्यतोऽभ्यासस्येत्यनुवर्तते। 'व्यथो लिटी'-त्यतो लिटीति च। किति किम्?। इयाय। अत्र वदन्ति—इह दीर्घे कृतेऽपि 'अभ्यासस्याऽसवर्णे'इतीयङा रूपसिद्धेः कितीति व्यर्थम्। न च दीर्घस्येयङि दीर्घविधानं व्यर्थमिति वाच्यम्, ईयतुः ईयुरित्यत्र 'वार्णादाङ्गं बलीयः'इति यणि कृते दीर्घविधेरावश्यकत्वात्। किंच लिटीत्यनुवर्तनमपीह व्यर्थमेव, व्यावर्त्याऽभावादिति। एता। एष्यति। एतु। इतात्। इताम्। यन्तु। इहि। उत्तमे तु अयानि। अयाव। अयाम। लङ्मध्यमे-ऐः। ऐतम्। ऐत। उत्तमे तु आयम्। ऐव। ऐम। **ईयादिति**। 'अकृत्सार्वे'ति दीर्घः। **एतेर्लिङि**। इहार्द्धधातुक इति स्वरूपकथनार्थं प्रक्षिप्तम्।

---

बा.]इयङि प्राप्ते एव तदारम्भादिति भावः। गुणवृद्धी तु परत्वादस्य बाधिके। यथा—अयनम्। आयकः। **यन्तीति**। एषि इथः इथ। एमि इवः इमः। **इयायेति**। द्वित्वे सति उत्तरखण्डवृद्धावायादेशे'अभ्यासस्याऽसवर्णे' इतीयङ्। अतुसि तु द्वित्वे कित्वाद्गुणाऽभावे इ इ अतुस् इति स्थिते 'इणो य'णित्युत्तरखण्डस्य यणि इ-यतुरिति स्थिते—**दीर्घ इणः**। 'अत्र लोपः' इत्यतोऽभ्यासस्येति, 'व्यथो लिटी'त्यतो लिटीति चानुवर्तते। तदाह—**इणोऽभ्यासस्येति**। **ईयतुरिति**। भारद्वाजनियमात्थलि वेडिति मत्वा आह—**इययिथ इयेथेति**। इयथुः ईय। इयाय इयय ईयिव ईयिम। एता। एष्यति। एतु—इतात् इताम् यन्तु। इहि—इतात् इतम् इत। अयानि अयाव अयाम। **ऐदिति**। लङि तिप इकार-लोपे इकारस्य गुणे आटो वृद्धिः। **आयन्निति**। झेरन्तादेशे इकारलोपे इ—अन् इति स्थिते 'इणो य'णिति यणि कृते तस्याभीयत्वेनाऽसिद्धत्वादाडिति भावः। ऐः ऐतम् ऐत। आयम् ऐव ऐम। विधिलिङ्याह—**इयादिति**। इयाताम्। इयुरित्यादि। आशीर्लिङ्याह—**ईयादिति**। 'अकृत्सार्वधातुकयो'रिति दीर्घ इति भावः। ईयास्तामित्यादि। **एतेर्लिङि**। 'उपसर्गाद्ध्रस्व ऊहते'रित्यत 'उपसर्गाद्ध्रस्व'इति, 'केऽणः' इत्यतोऽण इति, 'अयङ्यि क्ङिती'त्यतः कितीति चानुवर्तते। तदाह—**उपसर्गात्परस्येत्यादि**। इह आर्द्धधातुके इति प्रामादिकं, पूर्वसूत्रेषु तदभावादनुवृत्तेरसंभवात्, किति लिङीत्येव सिद्धेश्च। ङितीति तु नानुवर्तते, इण आर्द्धधातुकलिङो ङित्त्वाऽभावात्। नन्वभीयादित्यत्रापि ह्रस्वः स्यादि-

---

शे.]तेन'उवक्थे'त्यत्र न। अपृक्त इति तु नानुवर्त्तते,'ब्रवीति' इत्यसिद्ध्यापत्तेः। **वक्तीत्यङिति**। प्रयोगस्थानुकरणेऽस्य स्वतन्त्रस्य च विनिगमनाविरहादनुकरणमिति भावः। **दीर्घ इणः**। 'अत्र लोपः' इत्यतोऽभ्यासस्येति, 'व्यथो लिटी'त्यतो लिटीति चाऽनुवर्तते। कितीति किम्?। इयाय। न च परत्वाद्दीर्घेऽपि अभ्यासविकारे बाध्यबाधकभावाऽभावेन, पुनःप्रसङ्गविज्ञानेन चेयङि रूपसिद्धिरिति वाच्यम्, अभ्यासविकारे बाध्यबाधकभावाऽभावेन परत्वाऽप्रवृत्तौ इयङुत्तरं दीर्घेऽनिष्टस्यैापत्तेः। **ईयतुरिति**। ननु इ-इ-अतुसिति स्थितेऽभ्यासदीर्घे यण्यपि स्थानिवत्त्वेन सवर्णदीर्घेऽभ्यासदीर्घ-विधानसामर्थ्यात्पुनर्यणभावे ई-अतुरिति प्राप्नोति, 'अनन्तरस्ये'ति न्यायेन तत्सामर्थ्येन यण एव बाधो न तु दीर्घस्ये-ति चेन्न, पूर्वस्यैव विधौ स्थानिवत्त्वेन यणि दीर्घाऽप्रवृत्तेः। **आयन्निति** यण आभीयाऽसिद्धत्वादाट्। तदसिद्धत्व-प्रत्याख्याने तु लावस्थायामडेव कर्त्तव्यः। 'आडजादीना'मिति च न कार्यम्। 'आटश्चे'ति सूत्रम् 'अटश्चे'ति कार्यम्। तेन 'ऐज्यते'त्यादौ न दोषः। वृद्धिविधौ धातोरित्यपकर्षेण 'अस्वपो-हसति'इत्यत्र न वृद्धिः। 'अतो गुणे' इत्युत्तरं 'नाऽट' इति कर्त्तव्यम्। तेन 'आटी'दित्यादौ न पररूपम्। 'आयुन'गित्यादौ वेदे तु छान्दसो दीर्घः। 'आय'न्नित्यत्र चाऽन्तरङ्गत्वाद्वृद्धावायादेशः। वृद्धौ कृतायाम् 'इणो य'णिति तु न, तत्र एरित्यकर्षणेनेकाररूपस्येणो यणित्यर्थात्। इदञ्च 'असिद्धव'त्सूत्र-'न माङ्योगे' इति सूत्रयोर्भाष्ये स्पष्टम्। **इणोऽण इति**। प्रसिद्धत्वादस्यैवाऽत्र ग्रहणमिति भावः। **उभयत इति**। पूर्वपरशब्दाभ्यामन्तादिशब्दाभ्याञ्च विरोधस्य पुरःस्फूर्तिकत्वाद्विरुद्धातिदेशद्वयस्य युगपदसम्भवः। यथा द्वयोरेकः प्रेष्यस्ताभ्यां युगपद्भिन्नदेशे कार्याय प्रेरितोऽविरोधार्थी कस्यापि कार्यं न करोति तद्वदिति भावः। एत-द्विषये स्थानिवत्त्वन्तु न, आनुमानिके स्थान्यादेशभावे विशिष्टस्य स्थानित्वेऽपि प्रत्येकं तयोः स्थानित्वे मानाऽभावात्, श्रौतस्तु वर्णयोरेवेति बोध्यम्। स्पष्टा चेयं रीतिः 'उपसर्गादस्यत्यूह्यो'रित्यस्य 'प्रोह्यते' इत्यादौ गुणे कृते प्रवृत्तिवारण-परभाष्ये। न च भान्तस्यैकदेशविकृतन्यायेनोपसर्गत्वादीकारस्य परादिवद्भावेनेण्त्वाद्ध्रस्वो दुर्वारः। स्पष्टा चेयं रीतिः —'उदकेऽकेवले' इति पूर्वपदान्तोदात्तत्वं प्रयोजनम् 'गुडोदक'मिति भाष्यमुपादाय 'अन्तादिवच्चे'ति सूत्रे कैयट इति वाच्यं, 'येन विधि'रिति सूत्रे भाष्ये 'सर्वके' इत्यत्र जसः शी कथम्?। न च यथा गङ्गाप्रविष्टनद्या गङ्गाग्रहणेन ग्रहणं तथा तदन्तःप्रविष्टाऽकस्यापि तद्ग्रहणेन ग्रहणमिति वाच्यं, 'यथा परिच्छिन्नपरिमाणार्थकवाचकानां द्यादिद्रोणादिशब्दानां

आश्रये नान्तादिवत्'। अभीयात्। अणः किम्?। समेयात्। 'समीया'दिति प्रयोगस्तु भौवादिकस्य।

---

त.]क्ििति लिङीत्येतावतैवेष्टसिद्धेः। **उभयत आश्रय इति**। अन्तादिशब्दाववयवविशेषवाचिनौ। तत्र यदि पूर्वस्यावयवबुद्ध्या एकादेश आश्रीयते तदा तस्यैव परस्य कथमादिवद्भावः स्यात्। एवं परस्यादित्वे, पूर्वस्यान्तवद्भावो न स्यात्, एकस्योभयापेक्षया पारतन्त्र्यविरोधादिति भावः। नन्वेवं रामौ इत्यस्य 'सुप्तिङन्त'मिति पदत्वं न स्यात्, परादित्वे रामेति प्रकृतेरभावात्। 'यस्मात्प्रत्ययविधिस्तदादेस्तदन्तस्य ग्रहण'मिति स्वीकाराद्रामित्यस्याऽप्रकृतित्वात्। पूर्वान्तत्वे तु परत्र प्रत्ययाऽभावात्। अत्राहुः—पूर्वं पदसंज्ञा पश्चादेकादेश इति नोक्तदोषः। इह च ज्ञापकं[तु] 'सुपिसूतिसमाः'इति। विध्यादौ समीयादिति न भवत्येव। आशीर्लिङि तु 'अकृत्सार्वे'ति दीर्घे कृतेऽपि ह्रस्वत्वेन भाव्यमित्याशङ्क्याह—**भौवादिकस्येति**। 'इटकिटी'त्यत्र प्रश्लिष्टस्य इधातोराशीर्लिङि इदं रूपम्। 'वी गतौ'त्यत्र ईकारोऽपि धात्वन्तरं प्रश्लिष्यते

---

बा.]त्यत आह—**उभयत इति**। अत्र एकादेशस्य ईकारस्य पूर्वान्तत्वे उपसर्गानुप्रवेशादिण्धातुत्वं न सम्भवति, परादिवत्त्वेन इण्धातुत्वाश्रयणे तु न उपसर्गात्परत्वम्, उपसर्गैकदेशस्य इकारस्य ईकारात्मना सत्त्वेन 'अभ्'-इत्यस्य उपसर्गत्वाऽभावात्। एकादेशस्य आदिवत्त्वमाश्रित्य इण्धातुत्वम्, अन्तवत्त्वमाश्रित्य तस्य उपसर्गानुप्रवेशश्चेत्यपि न संभवति, पूर्वपरशब्दाभ्यामन्तादिशब्दाभ्यां च विरोधस्य पुरःस्फूर्तिकतया विरुद्धातिदेशद्वयस्य युगपदसंभवादित्यर्थः। इदंच अन्तादिवत्सूत्रे भाष्ये स्पष्टम्। न च 'अभ्' इति भान्तस्य एकदेशविकृतन्यायेन उपसर्गत्वादीकारस्य परादित्वे ह्रस्वो दुर्वार इति वाच्यं, लक्ष्यानुसारेण क्वचिदेकदेशविकृतन्यायानाश्रयणादिति शब्देन्दुशेखरे विस्तरः। **समेयादिति**। आ-इयात् एयात्। समेयादित्यत्र एकारस्य अनण्त्वान्न ह्रस्वः। ग्रहणकसूत्रादन्यत्र पूर्वेणैव णकारेण प्रत्याहाराश्रयणादिति भावः। तर्हि क्वचित् 'समीया'दिति प्रयोगः कथमित्याशङ्क्याह—**समीयादिति प्रयोगस्तु भौवादिकस्येति**। 'इट किट कटी गतौ' इति प्रश्लिष्टस्य इधातोराशीर्लिङि 'अकृत्सार्वधातुकयोर्दीर्घः'

---

शे.]न्यूनाधिकयोर्न प्रवृत्तिस्तथा सर्वाद्युपादानेन क्रियमाणसञ्ज्ञाया विना शास्त्रव्यापारं न न्यूनेऽधिके वा प्रवृत्ति'रित्याशङ्क्य 'नेदमदसो' रिति ज्ञापकात्समाहितम्, तत्तुल्यन्यायादत्राऽपि दीर्घविशिष्टे भान्ते च लौकिकन्यायेनोपसर्गत्वाऽभावात्, उपसर्गसञ्ज्ञायाः परिच्छिन्नपरिमाणप्रादिगतत्वादिति बोध्यम्। लक्ष्यानुसारात्क्वचिन्न्यायाऽनाश्रयणमिति न दोष इत्यन्ये। **परे** तु वतिघटितशास्त्रस्याऽऽहार्यारोपबोधकत्वेन तस्य च विरुद्धविषयस्यापि युगपत्सम्भवेन लौकिकन्यायेनोक्तेन नास्य सिद्धिः। किं च तत्राऽन्तादिवत्त्वेऽपि व्यपवर्गाऽभावेनोपसर्गात्परत्वस्येणि अभावेन 'अभीया'दित्यादिसिद्धिः। न च 'उपसर्गस्ये'ति सूत्रेऽयतिपरस्योपसर्गस्येत्यर्थे 'प्लायते' इत्यादावेकादेशे कृते व्यपवर्गाऽभावादयताविति लत्वं न स्यादित्याशङ्क्य 'अन्तादिवद्भावेन व्यपवर्गः' इति भाष्याऽसङ्गतिः, तस्मात्पूर्वपरान्तादिवद्भावे आर्थसमाजग्रस्तः स इति वाच्यं, तद्भावेऽपि वास्तवभेदाऽभावेनाऽयतिपरत्वस्याऽनुपपादनेन तस्यैकदेश्युक्तित्वात्। न हि तेनातिदेशेन वाच्यत्वया तदारोपबोधनं शक्यं कर्तुम्। तस्मादेकदेशिनोक्ते तस्मिन्नर्थे परेणैकदेशिना 'उभयत आश्रये नाऽन्तादिव'दित्युक्ते, 'अचः परस्मि'न्निति स्थानिवद्भावाद्व्यपवर्ग' इति सिद्धान्तिनोक्तम्। अत एव 'उभे अभ्यस्त'मिति सूत्रे 'ईर्त्स'न्नित्यादौ नुम्प्रतिषेध एकादेशे कृते व्यपवर्गाऽभावाद्वारितः। किं च 'अभीया'दित्यादौ 'वार्णादाङ्ग'मिति न्यायेन ह्रस्वे कृते 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनर्ह्रस्वाऽप्राप्तेर्नाऽस्य निषेधस्योपयोगः। इदम् 'उपसर्गाद्ध्रस्वः' इति सूत्रे कैयटे स्पष्टम्। यत्तु व्याश्रयत्वादत्र तन्न्यायाऽप्रवृत्तिरिति तेनोक्तं, तत्तु 'इयाये'त्याद्यसिद्ध्याऽसङ्गतमिति स्पष्टमेव। यदपि 'प्रोह्यते' इत्यत्रैकादेशे कृते व्यपवर्गाऽभावान्न ह्रस्व इति तत्सूत्रे भाष्ये उक्तं, तस्य—अन्तादिवद्भावेऽपि उपसर्गात्परत्वाऽभावादित्यर्थः। साऽप्येकदेश्युक्तिरेव, वार्णपरिभाषया सिद्धेः। 'आ-ऊह्यते—ओह्यते' 'समोह्यते' इत्येतद्वारणाय तत्र, 'समेया'दित्येतद्वारणायाऽत्र चाऽण इत्यनुवर्तते इति भाष्यमप्येकदेश्युक्तिरेव। आङोऽप्युपसर्गत्वेन तेन न्यायेन पूर्वं ह्रस्वस्यैव प्रवृत्तेः। अत एवाऽन्तादिवत्सूत्रे 'अभ्यासादीनां ह्रस्वत्वे नान्तादिवत्। के पुनरभ्यासादयः ?। अभ्यासोह्यऽम्बार्थनदीनपुंसकोपसर्जनह्रस्वत्वानि, उपेयाय, प्रोह्यते, अम्बाऽत्र'—इत्याद्युदाहृत्य 'न वा बहिरङ्गलक्षणत्वात्। अन्तरङ्गं ह्रस्वत्वं, बहिरङ्गा एते विधयः' इत्युक्तम्। न च ऊहेर्ह्रस्वत्वं नाऽन्तरङ्गम्, उपसर्गसम्बन्धोत्तरमेव प्रवृत्तेः, वर्णाश्रयत्वादेकादेश एवान्तरङ्ग इति वाच्यं, तदपवादवार्णपरिभाषाया अप्यनेनोपलक्षणात्। एवञ्चोभयत इत्यादेरग्रहणाऽनुवृत्तेश्चैकदेश्युक्तित्वं स्पष्टमेवोक्तम्। किं चोहेरिवेणमभ्यासादिष्वगणयता 'अभीया'दित्यादेरनभिधानं सूचितम्। यदपि 'अन्तादिवच्चे'ति सूत्रे 'प्राऽटितः' इत्यादावेकादेशादुत्तरपदप्रकृतिस्वरो विप्रतिषेधेन। स चावश्यं निप्रतिषेध आश्रयितव्यः। न ह्येकादेश उत्तरपदं परं भवती'ति व्यपवर्गाऽभावाभिप्रायेण सिद्धान्तिनोक्ते, 'ननु चान्तादिवद्भावेन पर'मिति पूर्वपक्ष्येकदेशिना शङ्किते, 'उभयत आश्रये नान्तादिव'दित्युक्तं, साऽप्येकदेश्युक्तिरेव। एवं 'न पदान्त'सूत्रस्थे, 'गोस्त्रियो'रिति सूत्रस्थेऽन्यत्र च भाष्येऽस्योल्लेख एकदेश्युक्तिरेव।

**इणो गा लुङि** ।२।४।४५। 'गातिस्थे'ति सिचो लुक्। अगात्। अगाताम्। अगुः। १०४६ **इङ् अध्ययने**। नित्यमधिपूर्वः। अधीते। अधीयाते। अधीयते। **गाङ् लिटि** ।२।४।४९। इङो गाङ् स्याल्लिटि-लावस्थायां, विवक्षिते वा। अधिजगे। अधिजगाते। अधिजगिरे। अध्येता। अध्येष्यते। अध्ययै। गुणायादेशयोः कृतयोरुपसर्गस्य यण्। 'पूर्वं धातुरुपसर्गेणे'ति दर्शनेऽन्तरङ्गत्वाद्गुणात्पूर्वं सवर्णदीर्घः प्राप्तः, 'णेरध्ययने वृत्त'मिति

त.]इति मते तु विध्यादिलिङ्ग्यपि भवत्येवेति बोध्यम्। **गाङ् लिटि। लावस्थायामिति**। वार्तिकमते तु एकादेशात्प्रागेव गाङादेशे 'द्विर्वचनेऽचि'इति सूत्रं न प्रवर्तते, द्वित्वनिमित्ताऽचोऽभावात्। **विवक्षित इति**। भाष्यमते तु सुतरां न प्रवर्तते, अनैमित्तिकत्वादिति भावः। **निर्देशाच्च भवतीति**। 'वार्णादाङ्गं बलीयः'इति समाधानं तु न प्रव-

बा.]इति दीर्घो बोध्य इति भावः। लुङि विशेषमाह-**इणो गा**। इण्धातोर्गा इत्यादेशः स्याल्लुङीति सूत्रार्थः स्पष्टः। अगास् त् इति स्थिते आह-**गातिस्थेतीति**। लुङि ऐष्यत्। **इङ् अध्ययने इति**। अधिरुपरिभावे। 'उपरिभावश्च पठने नियमपूर्वकत्व'मिति भूवादिसूत्रे भाष्ये स्पष्टम्। **नित्यमधिपूर्व इति**। धातुपाठे वचनमिदम्। अधीते इत्यत्र धातुरुपसर्गं न व्यभिचरतीति भूवादिसूत्रे भाष्ये। **अधीते इति**। 'सार्वधातुकमपि'दिति ङित्वाद्गुणनिषेधे सवर्णदीर्घः। अजादौ तु इयङ्। तदाह-**अधीयाते अधीयते इति**। अधीषे अधीयाथे अधीध्वे। अधीये अधीवहे अधीमहे।

**गाङ् लिटि।इङ इति**।'इङश्चे'त्यतस्तदनुवृत्तेरिति भावः। स्थानिवत्त्वादेव ङित्वे सिद्धे ङित्करणं 'गाङ्कुटादिभ्यः' इत्यत्र 'इणो गा लुङी'त्यस्य ग्रहणाऽभावार्थमिति भाष्यम्। ननु कृते गाङादेशे द्वित्वेऽभ्यासजश्त्वे आल्लोपे अधिजगे इति रूपं वक्ष्यति। तदयुक्तम्। 'द्विर्वचनेऽची'ति गाङादेशनिषेधाद्गाङादेशात् प्रागेव द्वित्वे सति उत्तरखण्डस्य गादेशे अधीगे इति रूपापत्तेरित्यत आह-**लावस्थायां, विवक्षिते वेति**। तत्र 'लावस्थाया'मिति वार्तिकमते गाङादेशात्प्रागेव 'द्विर्वचनेऽची'ति सूत्रं न प्रवर्तते, द्वित्वनिमित्ताऽचोऽभावात्। 'विवक्षिते'इति भाष्यमते तु सुतरां 'द्विर्वचनेऽची'ति न प्रवर्त्तते, अनैमित्तिकत्वादिति भावः। **अधिजगिरे इति**। अधिजगिषे अधिजगाथे अधिजगिध्वे। अधिजगे अधिजगिवहे अधिजगिमहे। **लोटि**-अधीताम् अधीयाताम् अधीयताम्। अधीष्व अधीयाथाम् अधीध्वमिति सिद्धवत्कृत्य आह-**अध्ययै इति**। तत्र प्रक्रियां दर्शयति-**गुणाऽयादेशयोरिति**। 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणे'ति 'सुट्कात्पूर्वः' इति सूत्रसिद्धान्तादिति भावः। तथाच इट एत्वे आटि वृद्धौ अधि इ ऐ इति स्थिते गुणेऽयादेशे यणिति फलितम्। ननु 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेने'त्यपि पक्षः 'सुट्कात्पूर्वः' इति सूत्रभाष्ये स्थितः, तथाच अधि इ ऐ इति स्थिते पूर्वसवर्णदीर्घे सति गुणायादेशयोः कृतयोः अधयै इति स्यादित्याशङ्क्य निराकरोति-**पूर्वं धातुरिति**। **साधनेने**त्यस्य कारकबोधकेनेत्यर्थः। प्रत्ययेनेति यावत्। **दर्शन** इत्येतस्य मते इत्यर्थः। 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेने'ति पक्षे पूर्वप्रवृत्तिकत्वेन अन्तरङ्गत्वात् 'सार्वधातुकार्द्धधातुकयो'रिति गुणं बाधित्वा सवर्णदीर्घः प्राप्तो न भवतीत्यन्वयः। कुत इत्यत आह-**णेरध्ययने वृत्तमिति निर्देशादिति**। अन्यथा ल्युटि

शे.]निरूपितञ्च तत्र तत्र भाष्यप्रदीपोद्योते तस्य तत्त्वम्।अत एव'अन्तादिवच्चे'ति सूत्रे'उभयत आश्रये'इत्यर्थं न्यायसिद्धमुक्त्वा तस्योदाहरणं न दत्तम्। वृत्तिकृता च सोऽर्थो नोक्त इत्याहुः। **समेयादिति**। आङः प्रश्लेषोऽत्र बोध्यः। **भौवादिकस्येति**।'इटकिट[कटी]इत्यत्र प्रश्लिष्टस्याऽऽशीर्लिङीति भावः। इहार्द्धधातुक इति स्वरूपकथनं,'किति लिङी'त्येतावतैव सिद्धेः। **नित्यमधिपूर्व इति**। धातुसञ्ज्ञा तु पाठापेक्षणादधिरहितस्यैव। क्रियावाचकत्वन्तु काल्पनिकन्तस्याऽस्त्येव। अधिरुपरिभावे। उपरिभावश्च पठने नियमपूर्वकत्वमिति 'भूवादि'सूत्रभाष्ये स्पष्टम्। ननु 'द्विर्वचनेऽची'ति निषेधादिङ एव द्वित्वे उत्तरखण्डस्य गादेशे 'अधीगे' इति स्यादत आह-**लावस्थायामित्यादि**। एवञ्च द्वित्वनिमित्ताऽज्निमित्तत्वाऽभावेन 'द्विर्वचनेऽची'त्यस्याऽप्रवृत्तिरिति भावः। **गुणायादेशयोरिति**। 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणे'ति 'सुट्कात्पूर्वः' इति सूत्रे भाष्ये सिद्धान्तादिति भावः। **साधनेने**त्यस्य कारकेणेत्यर्थः। **उपसर्गेण** = तत्सञ्ज्ञकशब्देन। **इति दर्शन इति**। अनेनाऽरुचिर्बोधिता। तद्बीजन्तु तत्रैव भाष्ये एवमुपक्रम्य 'नैतत्सार'मित्युक्तिः। **निर्देशान्नेति**। अनेन हि निर्देशेन 'पूर्वं धातुः साधनेने'त्युक्तन्यायो ज्ञाप्यते। उपसर्गयोगेन तु पूर्वं योगः।तेन पूर्वं योगादेव 'अनुभूयते'निविशते'इत्यादौ कर्मणि लकारात्मनेपदयोः सिद्धिः। 'नेर्विशः'इत्यादेर्नैःपरत्वयोग्यादित्यादिक्रमेणाऽर्थात्पूर्वमेव तङ्। 'संपृचानुरुधे'त्यादेरपि संपूर्वत्वयोग्यात्पृचेरित्यादिक्रमेणाऽर्थः। अत एव न तत्र धातूपसर्गयोः समासः, तिङि 'अति'ङिति निषेधात्। ध्वनितञ्चेदम् 'उपपदमति'ङिति सूत्रे भाष्ये। 'गोसन्दायः' इत्यादावपि सन्योत्यार्थविशिष्टाद्धातोः कर्मण्युपपदेऽणि ततः संशब्दयोगे गतिसमासे उपपदसमासो बोध्यः। साध्यत्वेन प्रतीतये च पूर्वं साधनसम्बन्धः, तस्मिंश्च तत्प्रयुक्तं कार्यमपि पूर्वमेव,अन्तरङ्गत्वात्। एवञ्च तिङुत्पत्त्यनन्तरमधिसंम्बन्धे 'वार्णादाङ्ग'मिति न्यायेन गुणादौ कृते यण्। घञ्ल्युडाद्योऽप्युपसर्गार्थविशिष्टे सिद्धत्वप्रतिपादनाय पूर्वं तदर्थसम्बन्धेऽन्तरङ्गत्वात्पदद्वयनिमित्तसमासात्पूर्वमेव। एवं भावार्थतिङोऽपि। ध्वनितञ्चेदं 'सुट्कात्पूर्वः' 'गतिर्गतौ' 'उपपदमतिङ्'

निर्देशान्न भवति । अध्यैत । परत्वादियङ् । तत आट् । वृद्धिः । अध्यैयाताम् । अध्यैयत । अध्यैयि । अध्यैवहि । अधीयीत । अधीयीयाताम् । अधीयीरन् । अधीयीध्वम् । अधीयीय । अध्येषीष्ट । **विभाषा लुङ्लृङोः** ।२।४।५०।इङो गाङ् वा स्यात् । **गाङ्कुटादिभ्योऽञ्णिन्ङित्** ।१।२।१। गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः । **घुमास्थागापाजहातिसां हलि** ।६।४।६६। एषामात ईत्स्याद्धलादौ क्ङित्यार्द्धधातुके ।

---

त.]र्तते, व्याश्रयत्वादिति भावः। **अध्यैयतेति**। 'आत्मनेपदेष्वनतः' इति झस्य अत् । लध्यमे तु–अध्यैथाः। अध्यैयाथाम् । अध्यैध्वम् । **अध्येषीष्टेति** । लिङः सीयुट् । अध्यैषीयास्ताम् । अध्यैषीरन् । **गाङ्कुटादिभ्यो** । इह गाङ्तावित्यस्य न ग्रहणम्, तदर्थतया ङकारानुबन्धस्य तत्र चरितार्थत्वात् । आदेशङकारस्तु अचरितार्थः । स्थानिवद्भावेनैव तङः सिद्धत्वादत आह–**गाङादेशादिति** । कुटादिस्तुदाद्यन्तर्गणः । केचित्तु कुट आदिर्येषां ते कुटादयः । कुटस्य आदिः कुटादिः, कुटादिश्च कुटादयश्च कुटादय इति समासद्वयमाश्रित्य कुटपूर्वस्य लिखधातोरपि ग्रहणाल्लिखनमिति प्रयोगः सिद्ध इत्याहुः । तच्च 'रलो व्युपधा' दिति सूत्रस्थेन 'लिखित्वा, लेखित्वा लिलिखिषति लिलेखिषती'ति वृत्तिग्रन्थेन, 'शकुनिष्वालेखने' इति सौत्रप्रयोगेण च विरुध्यते । अञ्णिदिति किम् ? । घञि–कोटः । पोटः । णलि–चुकोट । पुपोट । **घुमास्था** । 'दीङो युडची'त्यतः क्ङितीत्यनुवर्तते । आर्द्धधातुक इति चाधिक्रियत एव । क्ङिति किं ? । दाता धाता । हलादौ किं ? । ददतुः । ददुः । अन्यथा आतो लोपात्परत्वादीत्वं स्यात् । आर्द्धधातुके किं ? ।

---

बा.]अनादेशे अधि इ अन इति स्थिते पूर्वं सवर्णदीर्घे ततो गुणाऽयादेशयोः कृतयोरधयनमिति प्रसङ्गादिति भावः। वस्तुतस्तु 'पूर्वं धातुः साधनेन युज्यते' इत्येव भाष्यसंमतं, 'पूर्वं धातुरुपसर्गेण । नैतत्सार'मिति भाष्योक्तेरित्यन्यत्र विस्तरः । अध्ययावहै अध्ययामहै । लङ्याह–**अध्यैतेति** । अधि आ इ त इति स्थिते 'आटश्चे'ति वृद्धौ यणिति भावः । अधि इ आतामिति स्थिते आटि वृद्धौ यणि अध्यैतामिति प्राप्ते आह–**परत्वादियङिति** । आटः प्रागेव परत्वादिकारस्य इयङि तत आटि वृद्धौ यणि 'अध्यैयाता'मिति रूपमित्यर्थः । **अध्यैयतेति** । 'आत्मनेपदेष्वनतः' इत्यदादेशः । अध्यैथाः अध्यैयाथाम् अध्यैध्वमिति सिद्धवत्कृत्याह–**अध्यैयि अध्यैवहि अध्यैमहीति** । विधिलिङ्याह–**अधीयीतेति** । अधि इ त इति स्थिते सीयुटि सुटि सलोपे यलोपे अधि इ ईत इति स्थिते धातुभूतस्य इकारस्य इयङि सवर्णदीर्घ इति भावः। **अधीयीयातामिति** । अधि इ आतामिति स्थिते सीयुटि सुटि सलोपे अधि इ ईयातामिति स्थिते धातुभूतस्येकारस्य इयङि सवर्णदीर्घ इति भावः । झस्य रन्भावे सीयुटि सकारयकारलोपे अधि इ ई रन् स्थिते धातुभूतस्य इकारस्य इयङि सवर्णदीर्घे-अधीयीरन, अधीयीथाः, अधीयीयाथामिति सिद्धवत्कृत्य आह–**अधीयीध्वमिति** । ध्वमि सीयुटि सलोपे यलोपे अधि इ ई ध्वमिति स्थिते इङ इयङि सवर्णदीर्घ इति भावः । **अधीयीयेति** । 'इटोऽत्' । सीयुट् । सलोपः । अधि इ ईय इति स्थिते इङ इयङि सवर्णदीर्घ इति भावः । अधीयीवहि अधीयीमहि । आशीर्लिङ्याह–**अध्येषीष्टेति** । सीयुटि गुणः। यण् षत्वम्।अध्येषीयास्ताम्–अध्येषीरन्। अध्येषीष्ठाः अध्येषीयास्थाम् अध्येषीढ्वम् । अध्येषीय अध्येषीवहि अध्येषीमहि।लुङि आटि अधि आ इ त इति स्थिते–**विभाषा लुङ्लृङोः**।शेषं पूरयति–**इङो गाङ्वा स्यादिति** । 'इङश्चे'त्यतो, 'गाङ् लिटी'त्यतश्च तदनुवृत्तेरिति भावः । सिचि अधि अ गा स् त इति स्थिते–**गाङ्कुटादिभ्यो** । ञ् च ण् च ञ्णौ, तौ इतौ यस्य स ञ्णित्, स न भवतीत्यञ्णित् । गाङ् च कुटादयश्चेति द्वन्द्वात्पञ्चमी।गाङिति ङकारानुबन्धात् 'इणो गा लुङी'त्यस्य न ग्रहणमित्युक्तम् । नापि 'गाङ्गतौ' इत्यस्याऽत्र ग्रहणं, तत्र ङकारस्यात्मनेपदप्रापणेन चरितार्थत्वात् । इङादेशस्य गाङो ङकारो नात्मनेपदप्रापणेन चरितार्थः, स्थानिवत्त्वेनैव तत्सिद्धेः । तदाह–**गाङादेशादिति** । एवं च सिचो ङित्त्वे आह–**घुमास्था** । 'षो अन्तकर्मणि' इत्यस्य कृतात्त्वस्य निर्देशः । घु मा स्था गा पा जहाति सा एषां द्वन्द्वात्षष्ठी । 'आर्द्धधातुके' इत्यधिकृतम् । 'आतो लोप इटि चे'त्यत आत इति 'ईद्यती'त्यत ईदिति, 'अनुदात्तोपदेशे'त्यतः क्ङिति–इति चानुवर्तते । तदाह–**एषामित्यादिना** । **अध्यगीष्टेति** । अधि अ गा स् त इत्यत्र आकारस्य ईकारे यणि सिचः षत्वे तकारस्य ष्टुत्वेन ट इति भावः । 'गातिस्थे'ति न सिज्लोपः, परस्मैपदाऽभावात् । अध्यगीषाताम् अध्यगीषत । अध्यगीष्ठाः अध्यगीषाथाम् अध्यगीढ्वम् । अध्यगीषि अध्यगीष्वहि अध्यगीष्महि ।

---

शे.]इत्यादिभाष्येषु । भिन्नपदवाच्यकारकबोधकपदसम्बन्धस्तूपसर्गसञ्ज्ञकशब्दयोगोत्तरमेव। अत एव 'अद्य आ ऊढा = अद्योढा' इत्यत्र पूर्वमन्तरङ्गत्वादाद्गुणे पररूपमिति 'संप्रसारणाच्चे'ति सूत्रे भाष्ये । **परत्वादियङिति** । 'आडपेक्षये'त्यादिः । अत्र वदन्ति–'लावस्थायाम'ङिति पक्षेऽन्तरङ्गत्वाद्वृद्धावेतद्रूपाऽसिद्धिः । कथञ्चिद् 'वार्णादाङ्ग'मित्याश्रयणेऽपि अनेकाच्त्वाद्यणापत्तिः । न चाऽऽटोऽसिद्धत्वान्न यण् । अत्र पक्षे 'असिद्धव'त्सूत्रस्य भाष्ये प्रत्याख्यानात् । न च 'एरनेकाचः' इति योगं विभज्य 'इणो य'णित्यनुवर्त्याऽडादिसहितानेकाचश्चेद्यण् तर्हि इवर्णान्तेण एवेति नियमान्न दोष इति वाच्यं, शब्दमर्यादयाऽलाभात् । उक्तरीत्याऽडादिसहिताऽनेकाजिणो यण एवाऽभावात् । भाष्ये तु 'असिद्धव'त्सूत्र-

अध्यगीष्ट । अध्यैष्ट । अध्यगीष्यत । अध्यैष्यत । १०४७ इक् स्मरणे । अयमप्यधिपूर्वः, 'अधीगर्थदयेशा'मिति लिङ्गात् । अन्यथा हीगर्थेत्येव ब्रूयात् ।* इण्वदिक इति वक्तव्यम् । अधियन्ति । अध्यगात् । केचित्तु आर्द्धधातुकाधिकारोक्तस्यैवाऽतिदेशमाहुः । तन्मते यण । तथाच भट्टिः-'ससीतयो राघवयोरधीय'न्निति । १०४८ वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । प्रजनं-गर्भग्रहणम् । असनं-क्षेपणम् । वेति । वीतः । वियन्ति । वेषि । वेमि । वीहि । अवेत् । अवीताम् । अवियन् । अडागमे सत्यनेकाच्त्वाद्यणिति केचित् । अव्यन् । अव्र-

त.]मातः । मायः। अध्यगीष्टेति । सिचो ङित्वादीत्त्वम् । इक् स्मरणे । ककार इह 'इण्वदिकः' इति विशेषणार्थः । 'ए'रित्युक्ते तु 'इट किट कटी'त्यत्र प्रश्लिष्टस्य ईधातोरपि ग्रहणं स्यादित्याहुः । केचित्त्विति । आर्द्धधातुकाधिकारे वार्तिकपाठात्तदधिकारोक्तानामेव कार्याणामुपस्थितत्वादतिदेश इति भावः । अधीयन्निति । स्मरन्नित्यर्थः । 'राघवयो'रिति । अत्र 'अधीगर्थदयेशां कर्मणी'ति षष्ठी । वी गति । अवियन्निति । अडागमात्परत्वादियङ् । अडागमे

बा.]गाङभावपक्षे आह-अध्यैष्टेति। अधि आ इ स् त इति स्थिते इकारस्य गुणे आटो वृद्धौ यणि षत्वष्टुत्वे इति भावः। अध्यैषाताम् अध्यैषत । अध्यैष्ठाः अध्यैषाथाम् अध्यैढ्वम् । 'धि चे'ति सलोपः । अध्यैषि अध्यैष्वहि अध्यैष्महि । लृङ्याह-अध्यगीष्यतेति । 'विभाषा लुङ्लृङो'रिति गाङादेशे स्ये तस्य 'गाङ्कुटादिभ्यः' इति ङित्त्वे 'घुमास्थे'ति ईत्वे अटि यणि षत्वमिति भावः । अध्यगीष्येतामित्यादि । गाङभावपक्षे आह-अध्यैष्यतेति । अध्यैष्येतामित्यादि ।

इक्स्मरणे । अयमपीति। इङ्धातुवदयमपि धातुर्नित्यमधिपूर्वक इत्यर्थः। ननु धातुपाठे इङमधिकृत्य 'नित्यमधिपूर्व' इति वचनात्, भूवादिसूत्रभाष्याच्च इङो नित्यमधिपूर्वकत्वं युक्तम्, अस्य तु तथात्वे किं प्रमाणमित्यत आह-अधीगर्थेति । तत्र हि अधीगर्थेत्यनेन स्मरणार्थकधातुर्विवक्षितः । इग्धातोरधिपूर्वकत्वाऽभावेऽपि स्मरणार्थकत्वे इगर्थेत्येतावतैव स्मरणार्थकधातुलाभात्तत्र अधीति व्यर्थं स्यात्। अत इग्धातुरयं नित्यमधिपूर्वक एव स्मरणार्थक इति विज्ञायत इत्यर्थः ।

इण्वदिक इति । षष्ठ्यन्ताद्वतिः । इणो यत् कार्यम् 'इणो यणि'त्यादि, तदिको भवतीत्यर्थः । अध्येति, अधीत इति सिद्धवत्कृत्य आह—अधियन्तीति । अन्तादेशे इयङपवादः । 'इणो य'णिति यणिति भावः । अध्येषि अधीथः अधीथ । अध्येमि अधीवः अधीमः । अधीयाय । अतुसि तु द्वित्वे कृते अधि इ इ अतुसिति स्थिते 'इणो य'णिति द्वितीयस्य इकारस्य यणि प्रथमस्य इकारस्य 'दीर्घ इणः किती'ति दीर्घे सवर्णदीर्घे-अधीयतुः अधीयुः । अधीययिथ-अधीयेथ अधीयथुः अधीय । अधीयाय-अधीयय अधीयिव अधीयिम । अध्येता । अध्येष्यति । अध्येतु-अधीतात् अधीताम् अधियन्तु । अधीहि—अधीतात् अधीतम् अधीत । अध्ययानि अध्ययाव अध्ययाम । अध्यैत् अध्यैताम् अध्यायन् । अध्यैः अध्यैतम् अध्यैत । अध्यायम् अध्यैव अध्यैम । इति सिद्धवत्कृत्य लुङ्याह—अध्यगादिति । इण्वत्त्वात् 'इणो गा लुङी'ति गादेशे 'गातिस्थे'ति सिचो लुका लुप्तत्वात् 'घुमास्थे'ति ईत्त्वं न । अध्यगाताम् । अध्यगाम् अध्यगाव । अध्यैष्यत् । केचित्त्विति । 'आर्द्धधातुके' इत्यधिकारे 'इणो गा लुङी'ति सूत्रे एतद्वार्तिकपाठस्य भाष्ये दर्शनात्तदधिकारोक्तानामेव कार्याणामुपस्थितत्वादिति भावः । तन्मते यण् नेति । 'इणो य'णित्यस्य आर्द्धधातुकाधिकारस्थत्वाऽभावान्नातिदेश इत्यर्थः । तेन झोऽन्तादेशे इयङि सवर्णदीर्घे अधीयन्तीत्याद्यूह्यम् ।

राघवयोरधीयन्निति । 'अधीगर्थे'ति षष्ठी । राघवौ स्मरन्नित्यर्थः। अधिपूर्वादिग्धातोर्लटः शतरि शपो लुकि इकारस्य इयङि सवर्णदीर्घे अधीयदिति शत्रन्तात्सुबुत्पत्तौ सौ रूपम् । वी गतीति । 'अजेर्व्यघञपो'रिति सूत्रभाष्यरीत्या अस्य आर्द्धधातुके नास्ति प्रयोग इति शब्देन्दुशेखरे स्थितम् । वियन्तीति । एकाच्त्वाद्यणभावादियङिति भावः। लोटि वेतु-वीतात् वीताम् वियन्तु । इति सिद्धवत्कृत्याह-वीहीति । हेरपित्त्वेन ङित्वान्न गुण इति भावः । वीतात् वीतम् वीत । वयानि वयाव वयाम । लङ्याह-अवेदिति । अवियन्निति । वी-अन्निति स्थिते परत्वादडागमात्

शे.]प्रत्याख्यानेऽस्य योगविभागस्य विध्यर्थतामाश्रित्यैतत्सामर्थ्यात् 'आय'न्नित्यत्र पूर्वमाडित्युक्तम् । तस्मादीदृशे विषये पक्षयोः फलाऽभेदाय 'इङ्' धातोर्लोकेऽनभिधानमेव । 'संप्रसारणाच्चे'ति सूत्रोदाहृतम् 'अध्यैयाता'मित्यादि तु छान्दसम् । तत्र हि 'बहुलं छन्दस्यमाङ्योगेऽपी'ति बहुलग्रहणादादेशोत्तरं परत्वादियङि तत आटि वृद्धिः । नचाऽऽनित्यः, इयङोऽपि तत्त्वात् । अन्तरङ्गया वृद्ध्या बाधेऽपि लक्षणान्तरेण निमित्तविघातेऽपि नित्यत्वाऽङ्गीकारादिति । केचित्तु 'लावस्थायाम'डिति पक्षेऽपि 'वार्णादाङ्ग'मिति न्यायेनाऽऽङ्गस्य, तन्निमित्तभूतादेशानाञ्च पूर्वं प्रवृत्त्या न दोषः । यथा 'अन्तरङ्गानपी'ति न्यायो लुक्तत्प्रयोजकसमासादीनाञ्च प्राबल्यबोधकः । अतिप्रसङ्गस्तु अनित्यत्वाद्वारणीय इत्याहुः । गाङादेशादिति । व्याख्यानमत्र शरणम् । घुमास्था। 'जहाती'ति हाको ग्रहणं, न हाङो, व्याख्यानात् । 'दीङो यु' डित्यतः ङितीति वर्त्तते । 'आर्द्धधातुके' इति चाधिकृतम्, 'ईद्यती' त्यत 'ई'दिति च वर्त्तते । इक्स्मरणे । 'इण्वदिकः' इत्यादौ विशेषणार्थः ककारः । केचित्त्विति । अत एव भाष्ये 'इणो गा लुङी'त्येतत्प्रकरणे इदं पठितम् । अधी-

ईकारोऽपि धात्वन्तरं प्रश्लिष्यते । एति । ईतः । इयन्ति । ईयात् । ऐषीत् । **१०४९ या प्रापणे** । प्रापणमिह गतिः । प्रणियाति । यातः । यान्ति । लङः **शाकटायनस्यैव** ।३।४।१११। आदन्तात्परस्य लङो झेर्जुस् वा स्यात् । अयुः । अयान् । यायात् यायाताम् । यायास्ताम् । अयासीत् अयासिष्टाम् । **१०५० वा गतिगन्धनयोः** । गन्धनं-सूचनम् । **१०५१ भा दीप्तौ** । **१०५२ ष्णा शौचे** । **१०५३ श्रा पाके** । **१०५४ द्रा कुत्सायां गतौ** । **१०५५ प्सा भक्षणे** । **१०५६ पा रक्षणे** । पायास्ताम् । अपासीत् । **१०५७ रा दाने** । **१०५८ ला आदाने** । 'द्वावपि दाने'इति चन्द्रः । **१०५९ दाप् लवने** । प्रणिदाति । प्रनिदाति । दायास्ताम् । अदासीत् । **१०६० ख्या प्रकथने** । अयं सार्वधातुकमात्रविषयः । 'सस्थानत्वं नमः ख्यात्रे'इति वार्तिकं तद्भाष्यं चेह लिङ्गम् । **सस्थानो-**

---

**त.]सतीति** । कृताऽकृतप्रसङ्गित्वमात्रेण अटो नित्यत्वादिति भावः । अतएवाऽपरितोषात्, 'असिद्धवदत्राभा'दिति समानाश्रये यणि कर्तव्ये अटोऽसिद्धत्वादियङेवोचित इत्याशयेन वा **केचिदि**त्युक्तम् । 'लावस्थायामेवाऽडागम'इति पक्षे तु यणेवेति बोध्यम् । **ईकारोऽपीति** । प्रयुज्यते च-'न हि तरणिरुदीते दिक्पराधीनवृत्ति'रिति । व्याख्यातं च मनोरमायाम्-'कर्मव्यतिहारे तङ् । न च 'न गतिहिंसार्थेभ्यः' इति निषेधः शङ्क्यः । उत्पूर्वस्याविर्भावार्थत्वा'दिति । अत्र वदन्ति—व्यतिशब्दं विना कर्मव्यतिहारकल्पनं क्लेशावहम् । परकीयकर्म च कर्मव्यतिहारेऽपेक्ष्यते, तच्चात्र नोपात्तम् ।परस्परकरणं तु न संभवत्येव । ततश्चोदीते इति भावे निष्ठा ज्ञेया । तथा चोदये दिक्पराधीनवृत्तिस्तरणिर्नेत्यर्थः सुगम इति । **प्रणिदातीति** । 'शेषे विभाषे'ति णत्वविकल्पः । **अदासीदिति** । अघुत्वान्न सिज्लुक् । **नमः ख्यात्रे इति** । यद्ययमा-

---

**बा.]**प्राग्यियङि कृते अडागम इति भावः । मतान्तरमाह-**अडागमे सतीति** । 'लावस्थाया'मडिति पक्षे इयङं बाधित्वा अनेकाच्त्वाद्यणि अव्यजिति केचिदाहुरित्यर्थः । **केचिदि**त्यस्वरसं सूचयति । तद्बीजं तु कृतेऽप्यटि यणि कर्तव्ये आभीयतया अटोऽसिद्धत्वादनेकाच्त्वाऽभावाद्यणभावादियङेवोचित इति शब्देन्दुशेखरे विस्तरः । **अत्रेति** । वी-ई इति सवर्णदीर्घे'वी गतौ'ति निर्देश इति भावः । **ईयादिति** । विधिलिङि आशीर्लिङि च रूपमिदं समानम् । 'स्कोरि'ति सलोपः । तत्र विधिलिङि ईयातामित्यादि, आशिषि तु ईयास्तामित्यादी'ति विशेषः । **ऐषीदिति** । सिचि वृद्धिः ।

**या प्रापणे इति** । ननु गच्छतीत्यर्थे यातीति कथमित्यत आह-**प्रापणमिह गतिरिति** । णिजर्थस्त्वविवक्षित इति भावः । **प्राणियातीति** । 'नेर्गदे'ति णत्वम् । ययौ । याता । यास्यति । यातु । अयात् अयाताम् । लङः **शाकटायनस्यैव** । 'झेर्जुसि'ति 'आत' इति चानुवर्तते । तदाह-**आदन्तादिति** । **जुस्वेति** । शाकटायनग्रहणाद्विकल्पलाभ इति भावः । एवकारस्तु 'लिट् च' 'लिङाशिषी'त्युत्तरार्थं इति भाष्ये स्पष्टम् । नच 'लोटो लङ्व'दित्यतिदेशाद्यान्तु इत्यत्रापि जुस्विकल्पः शङ्क्यः, 'नित्यं ङितः' इत्यतो ङित इत्यनुवृत्त्यैव सिद्धेर्लङ्ग्रहणस्य लङ्वद्भावमादाय प्रवृत्तिनिवारणार्थत्वात् । इदमपि भाष्ये स्पष्टम् । **अयानिति** । जुसभावे रूपम् । अयासीत् । ष्णाधातुः षोपदेशः । नस्य ष्टुत्वेन णत्वनिर्देशः । स्नाति । स्नायात्-स्नेयात् । **पा रक्षणे** । 'एर्लिङी'ति सूत्रे 'गातिस्थे'त्यत्र च पिबतेरेव ग्रहणादेत्त्वसिज्लुकौ न । तदाह-**पायास्ताम्** । **अपासीदिति** । **दाप् लवने** ।घुत्वाऽभावात् 'शेषे विभाषे'ति णत्वविकल्पं मत्वा आह-**प्रणिदाति प्रनिदातीति** । घुत्वाऽभावादाशीर्लिङि एत्वं, लुङि लुक् च नेति मत्वाऽऽह-**अदायास्तामिति** । **अदासीदिति च** । **ख्या प्रकथने** । **सार्वधातुकमात्रविषय इति** । मात्रशब्दोऽवधारणे । सार्वधातुक एवास्य ख्याधातोः प्रयोगः, न त्वार्द्धधातुक इत्यर्थः । कुत इत्यत आह-**सस्थानत्वमिति** । 'चक्षिङः

---

**शे.]यन्निति** । इयङि सवर्णदीर्घः । **राघवयोरिति** । 'अधीगर्थे'ति षष्ठी । **केचिदिति** । अत्राऽरुचिबीजमट आभीयतयाऽसिद्धत्वेनाऽनेकाच्त्वाऽभावः । 'लावस्थाया'मडिति पक्षेऽपि लङादिनिमित्तत्वादटः समानाश्रयत्वेन, स्थानिनमादाय वा समानाश्रयत्वेनाऽसिद्धत्वं सूपपादम् । ईदृशार्थम् 'असिद्धव'त्सूत्रमावश्यकमेव । अत एव तत्सूत्रे भाष्ये वार्तिकोक्तफलानामन्यथासिद्धिं कृत्वाऽपि 'आरभ्यमाणेऽस्मिन्सूत्रे' इत्याद्युक्तम् । सर्वथा प्रत्याख्याने तु अस्य लङ्प्रथमपुरुषबहुवचनेऽनभिधानं स्वीकार्यम् । अस्याऽऽर्द्धधातुके न प्रयोग इत्यजधातावुक्तम् । **जुस्वेति** । एवकारस्तूत्तरत्र पठ्यमाने 'लिट् च' 'लिङाशिषि' इत्यादावर्थवान् । तथा 'नित्यं ङितः' इत्यतो 'ङित' इत्यनुवृत्त्या सिद्धे लङ्ग्रहणं लङ्वद्भावेनैतदप्रवृत्त्यर्थम् । विध्याशिषोः 'स्कोरि'ति सलोपे 'याया' दित्येव रूपमिति विशेषद्योतनाय द्विवचनमुदाहरति-**यायातामिति** । 'लिङः सलोपः' इति सलोपः । **पा रक्षणे** । 'गातिस्था' 'घुमास्थे'त्यत्र पिबतेरेव ग्रहणान्नेत्त्वसिज्लुकौ । **प्रणिदातीति** । घुत्वाऽभावात् 'शेषे विभाषे' ति वैकल्पिकं णत्वम् । **सार्वधातुकमात्रेति** । 'मात्र'शब्दोऽवधारणे । **सस्थानत्वमिति** । ख्यादेशस्य क्शादित्वप्रयोजनकथनावसरे वार्तिकमिदम् ।संस्थानत्वं सस्थानशब्दः । तेन स्ववाच्यो जिह्वामूलीयो बोध्यते । यद्वा सस्थानत्वशब्दे सस्थानशब्दः शब्दपरः, तद्भावश्च तदर्थ एव । तदाह-**सस्थानो जिह्वामूलीय इति** । अन्यथाऽस्मात्तृचि तस्य दुर्वारत्वेन भाष्याऽसङ्गतिः।प्रमाणानां सामान्ये पक्षपाताच्चार्द्धधातुकमात्रे प्रयोगाऽभाव

जिह्वामूलीयः, स नेति ख्याञादेशस्य ख्शादित्वे प्रयोजनमित्यर्थः। 'संपूर्वस्य ख्यातेः प्रयो... न्यासकारः। १०६१ प्रा पूरणे। १०६२ मा माने। अकर्मकः। 'तनौ ममुस्तत्र [न कैटभद्विष' ]इति माघः। उपसर्गवशेनार्थान्तरे सकर्मकः। 'उदरं परिमाति मुष्टिना'। 'नेगंदे'त्यत्र नाऽस्य ग्रहणम्। प्रणिमाति। प्रनिमाति। १०६३ वच परिभाषणे। वक्ति। वक्तः। अयमन्तिपरो न प्रयुज्यते। बहुवचनपर इत्यन्ये। झिपर इत्यपरे। वग्धि। वच्यात्। उच्यात्। अवोचत्। १०६४ विद ज्ञाने। विदो लटो वा।३।४।८३। वेत्तेर्लटः परस्मैपदानां

त.]र्द्धधातुकेऽपि प्रयुज्येत तर्हि तृजन्तेऽस्मिन्परे 'शर्परे विसर्जनीयः' इत्यस्याऽप्रवृत्त्या 'कुप्वो'रिति जिह्वामूलीयो दुर्वारः स्यादेवेति 'तदभावः ख्शादित्वे प्रयोजन'मिति वार्तिककाराद्युक्तिर्व्यर्थाकुप्येतेति भावः। संपूर्वस्येत्यादि। सङ्ख्यातीत्यादिप्रयोगो नास्त्येव। 'सङ्ख्ये'ति प्रयोगस्तु ख्याञादेशस्येति न्यासकाराशयः। मा माने। नास्येति। 'घुप्रकृतिमा'ङिति पाठङिताभेव तत्र ग्रहणं, ततश्च 'शेषे विभाषे'ति विकल्प एव प्रवर्तत इत्याशयेनाह—प्रणिमातीत्यादि।

वच परिभाषणे। उवाच।वक्ता। वक्ष्यति।वक्तु। वक्तात्।अवक्। अवक्ताम्। अयमन्तिपर इति। तथा च—वचन्ति, वक्ष्यन्ति, वचन्तु, अवचन, अवोचन्, अवक्ष्यन्नित्येतेऽसाधवः। बहुवचनपर इति। अस्मिन् पक्षे लटि मध्यमे-वक्थ। उत्तमे तु-वच्मः। लिटि-ऊचुः। मध्यमे-ऊच। उत्तमे तु-ऊचिम। लुटि- वक्तारः। लिङि-उच्यासुः। वच्यासुरित्यादयोऽप्यसाधवः। झिपर इति। अस्मिंस्तु पक्षे-वक्थ वच्मः ऊच ऊचिमेत्यादयः साधव इति दिक्।

विदो लटो वा। पञ्चमीयं, न तु षष्ठी, तेन वियतिविन्दत्योरव्यवहितपरस्य लटोऽभावान्नैते आदेशाः। तदाह—

बा.]ख्या'ञिति सूत्रे ख्यास्थाने 'ख्शाञ्' इति वक्तव्यम्।अस्य शकारस्य'पूर्वत्रासिद्ध'मित्यधिकारे यकारो वक्तव्य इत्युक्त्वा 'प्रयोजनं सौप्रख्ये वुग्विधि'रित्युपक्रम्य 'सस्थानत्वं नमः ख्यात्रे' इत्युक्तं वार्तिके। तत्र नञमध्याहृत्य 'नमः ख्यात्रे' इति सस्थानत्वं न भवतीति व्याख्यातं भाष्ये। तदिदं वार्तिकं भाष्यं च ख्याधातोरस्य सार्वधातुके एव प्रयोग इत्यत्र ज्ञापकमित्यर्थः। तत्र सस्थानपदं व्याचष्टे-सस्थानो जिह्वामूलीय इति। प्राचीनाचार्यसमयादिति भावः। स नेति। स=जिह्वामूलीयो नमः ख्यात्रे इत्यत्र न भवतीत्येतत् ख्याञादेशस्य ख्शादित्वविधौ, शस्य यत्वविधौ च प्रयोजनमित्यर्थः।

ख्शादित्वे इति। यत्वविधावित्यस्याप्युपलक्षणम्। शकारस्थानिकयत्वस्याऽसिद्धत्वात् 'शर्परे विसर्जनीयः' इति विसर्जनीय इष्टः सिध्यति, जिह्वामूलीयस्त्वनिष्टो न भवतीति भाष्यवार्तिकहृदयम्। ख्याधातोरस्यार्द्धधातुकेऽपि प्रयोगसत्त्वे तु तृजन्ते ख्यातृशब्दे यकारस्य शकारस्थानिकत्वाऽभावादसिद्धत्वाऽभावात् 'शर्परे विसर्जनीयः' इत्यस्याऽप्रवृत्तौ कुप्वोर्जिह्वामूलीयो दुर्वारः स्यात्। ततश्चार्द्धधातुके सर्वत्र न ख्याधातोः प्रयोग इति विज्ञायते, ज्ञापकस्य सामान्यापेक्षत्वादिति भावः। संपूर्वस्येति। सार्वधातुकेऽपीति भावः। अत्र व्याख्यानमेव शरणम्। एवंच 'सङ्ख्याती'त्यादि नास्तीति फलितम्। सङ्ख्यादिशब्दास्तु ख्याञादेशस्येति बोध्यम्।

मा माने इति। मानं परिमितिरिति भावः।तदाह-अकर्मक इति।'माति घृतं पात्रेऽस्मि'न्निति उदाहरणम्। परिमितं भवतीत्यर्थः। संगृहीतं भवतीति यावत्। अत्रार्थे शिष्टप्रयोगसंवादं दर्शयति-तनौ ममुस्तत्रेति। 'तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः'इति माघकाव्ये तपोधनस्य नारदस्य अभ्यागमेन आगमनेन संभवाःमुदः =संतोषाः, कैटभद्विषः=श्रीकृष्णस्य तनौ=शरीरे,न ममुः=परिमिता न बभूवुः। आधिक्यान्न संगृहीता बभूवुरिति यावत्। अर्थान्तरे त्विति। परिच्छेदे त्वित्यर्थः। उदरमिति। 'उदरं परिमाति मुष्टिना कुतुकी कोऽपि दमस्वसुः किमु' इति नैषधकाव्ये। कोऽपि कुतुकी दमस्वसुः= दमयन्त्याः,उदरं मुष्टिना परिमाति किमु ?, किमुपरिगृह्णातीत्यर्थः।नास्य ग्रहणमिति। 'घुप्रकृतिमा'ङिति भाष्यादिति भावः। एवंच 'शेषे विभाषाऽकखादौ' इति णत्वविकल्प इति मत्वाऽऽह—प्रणिमाति प्रनिमातीति। ममौ। ममिथ-ममाथ।ममिव। माता। मास्यति। मातु। अमात्। अमासीत्। अमास्यत्। वच परिभाषणे। अनिट्। अयमन्तीति। लटि प्रथमपुरुषबहुवचनं नास्तीत्यर्थः। बहुवचनपर इति। 'न प्रयुज्यते' इति शेषः। अस्मिन् पक्षे पुरुषत्रये बहुवचनं नास्ति। झिपर इति। 'न प्रयुज्यते'इति शेषः। अस्मिन् पक्षे लिङादिष्वपि [प्रथमपुरुष]बहुवचनं नास्तीति भावः। तत्र लिटि अकिति 'लिट्यभ्यासस्ये'ति संप्रसारणम्। उवाच। किति तु 'वचिस्वपी'ति संप्रसारणम्। ऊचतुः। उवचिथ-उवक्थ। ऊचिव। वक्ता। वक्ष्यति। वक्तु। अवक्। वच्यादिति। विधिलिङि रूपम्। आशीर्लिङि 'वचिस्वपी'ति संप्रसारणं मत्वाऽऽह-उच्यादिति। अवोचदिति। लुङि 'अस्यतिवक्ती'ति च्लेरङि 'वच उ'मिति भावः। विद ज्ञाने इति। अनिट्सु लुङ्गित्रकरणन्याऽग्रहणादयं सेट्।

शे.]इति भावः। 'नटः ख्याती'त्यादौ तु जिह्वामूलीयो भवत्येवेति दिक्। संपूर्वस्येति। सार्वधातुकेऽपि नेति भावः। 'सङ्ख्ये'ति प्रयोगस्तु चक्षिङ एव। नास्येति। 'घुमप्रकृतिमा'ङिति भाष्ये पाठादिति भावः। अयमन्तीति। 'शिष्टै'-रिति शेषः। अत्राऽर्थे न भाष्यानुग्रहः। 'विदः' इति पञ्चमी, विकरणव्यवधाने लटस्ततः परत्वाऽसम्भवादाह—

णलादयो वा स्युः । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । पक्षे-वेत्ति । वित्तः । इत्यादि । । विवेद । विविदतुः । 'उषविदे'त्याम्पक्षे 'विदे'त्यकारान्तनिपातनान्न लघूपधगुणः । विदांचकार । वेदिता । **विदाङ्कुर्वन्त्वित्यन्यतरस्याम्** ।३।१।४१। वेत्तेर्लोट्याम् गुणाऽभावो, लोटो लुक्, लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पुरुषवचने न विवक्षिते, इतिशब्दात् । **तनादिकृञ्भ्य उः** ।३।१।७९। तनादेः कृञश्च उप्रत्ययः स्यात् । शपोऽपवादः । तनादित्वादेव सिद्धे कृञ्ग्रहणं गणकार्यस्याऽनित्यत्वे लिङ्गम् । तेन-'न विश्वसेदविश्वस्त'मित्यादि सिद्धम् । विदाङ्करोतु । **अत उत्सार्वधातुके** ।६।४।११०। उप्रत्ययान्तस्य कृञोऽकारस्य उत्स्यात्सार्वधातुके क्ङिति । 'उ'दिति तपरकरणसामर्थ्यान्न गुणः । विदाङ्कुरुतात् । विदाङ्कुरुताम् ।

---

त.] **वेत्तेरिति** । **लोटो लुगिति**।'आमः'इति सूत्रे 'मन्त्रे घसे'त्यतो लेरित्यनुवर्त्त्य आमः परस्य लेर्लुगिति व्याकुर्वतां मतेनेदमुक्तम् । निष्कर्षे तु तेनैव लुगिति बोध्यम् । **पुरुषवचने इति** । प्रथमपुरुषो, बहुवचनं चेत्यर्थः । 'परस्मैपदमप्यविवक्षितमेवे'ति केषांचिन्मते कर्मव्यतिहारे तङि-व्यतिविदाङ्कुरुताम् । व्यतिविदाङ्कुर्वातामित्यादि ज्ञेयम् । **तेनेति** । 'विश्वसे'दित्यत्र शपो लुगभावः सिद्ध इति भावः। एवमप्यविश्वस्तमित्यत्रेडभावः कथमिति चेदागमशास्त्रस्याऽनित्यत्वादिति

---

बा.] **विदो लटो वा** । 'परस्मैपदानां णलतु'सित्यादिसूत्रमनुवर्तते । 'विद' इति पञ्चमी । तदाह-**वेत्तेर्लट इति** । विन्दतिविद्यत्योस्तु शेन श्यना च व्यवधानान्नैते आदेशाः । **इत्यादीति** । विदन्ति । वेत्सि वित्थः वित्थ । वेद्मि विद्वः विद्मः । **विविदतुरिति** । विविदुः । विवेदिथ विविदथुः विविद । विवेद विविदिव विविदिम । **आम्पक्षे इति** । न लघूपधगुण इत्यन्वयः । कुत इत्यत आह-**अकारान्तनिपातनादिति** । 'उषविदे'ति सूत्रे विदेत्यकारान्तत्वमाम्संनियोगेन निपात्यत इत्यर्थः । आमि अतो लोपः । तस्य स्थानिवत्त्वान्न लघूपधगुण इति भावः । **वेदितेति** । वेदिष्यतीत्यपि ज्ञेयम् । **विदाङ्कुर्वन्त्वित्यन्यतरस्याम्** । 'कृञ् चानुप्रयुज्यते लिटी'त्युत्तरमिदं सूत्रम् । इतिशब्दः प्रकारे । एवंजातीयकं वैकल्प्येन प्रत्येतव्यमित्यर्थः । **वेत्तेरिति** । लुग्विकरणाद्विदधातोः लोटि परे आम्प्रत्ययो निपात्यते इत्यर्थः । **लोडन्तेति** । आमन्ताद्विदेर्लोडन्तकृञ्धातोरनुप्रयोगश्च निपात्यत इत्यर्थः । ननु 'विदाङ्कुर्वन्तु' इति लोटि प्रथमपुरुषबहुवचनस्यैव सूत्रे निर्देशात्कथं लोडन्तसामान्यानुप्रयोग इत्यत आह-**पुरुषेति**। कुर्वन्त्विति प्रथमपुरुषो बहुवचनं च न विवक्षितमित्यर्थः । तयोस्तु नान्तरीयकमुच्चारणमिति भावः । **इतिशब्दादिति** । तस्य प्रकारवचनस्य लोकप्रयोगानुसारित्वादिति भावः । **तनादिकृञ्भ्य उः** । **शपोऽपवाद इति** । अनेन शब्विषय एवास्य प्रवृत्तिरिति सूचितम् । 'सार्वधातुके य'गित्यतः सार्वधातुकग्रहणस्य 'कर्तरि श'बित्यतः कर्तरीत्यस्य चानुवृत्तेरिति भावः । **तेनेति** । गणकार्यस्याऽनित्यतया'श्वसे'दित्यत्र अदादिगणकार्यं शपो लुङ्न भवतीत्यर्थः।वस्तुतस्तु कृञ्ग्रहणस्यात्र भाष्ये प्रत्याख्यातत्वादुक्तज्ञापनाऽभावाद्विश्वसेदित्यसंबद्धमेवेत्याहुः।'विश्वस्त'मित्यत्र तु आगमशास्त्रस्याऽनित्यत्वान्नेडित्याहुः।**विदांकरोत्विति**। अत्र विदेर्लोटि आमि लोटो लुकि आमन्ताद्विदेः कृञो लोडन्तस्यानुप्रयोगः । तत्र लोटस्तिपि 'एरु'रित्युत्वे शपं बाधित्वा उप्रत्यये ऋकारस्य गुणे रपरत्वे उकारस्य तिब्निमित्तो गुणः। तातङि तु ऋकारस्य गुणे रपरे तातङो ङित्त्वादुकारस्य गुणाऽभावे विदाङ्करुतादिति स्थिते-**अत उत्।उप्रत्ययान्तस्येति**। 'उतश्च प्रत्यया'दित्यतस्तदनुवृत्तेरितिः भावः।**कृञोऽकारस्य उदिति** । 'नित्यं करोते'रित्यतस्तदनुवृत्तेरिति भावः । **क्ङितीति** । 'गमहने'त्यतस्तदनुवृत्तेरिति भावः । अकारस्य उत्त्वे कृते तस्य लघूपधगुणमाशङ्क्य आह-**तपरेति** । इदं स्थानिवत्सूत्रे भाष्ये स्पष्टम् । **विदाङ्कुरुतामिति** । विदाङ्कुर्वन्त्वित्यपि ज्ञेयम् । 'न भकुर्छुरा'मिति निषेधात् 'हलि चे'ति दीर्घो न । **हेर्लुगिति** । विदांकुरु हि इति स्थिते 'अत उत्सार्वधातुके' इत्युत्त्वं परमपि बाधित्वा नित्यत्वात् 'उतश्च प्रत्यया'दिति हेर्लुगित्यर्थः । तर्हि सार्वधातुकाऽभावा-

---

शे.] **वेत्तेरिति** । **अकारान्तनिपातनादिति** । 'आम्संनियोगेने'ति शेषः । तदुक्तं भाष्ये 'निपातनादगुणत्व'मिति । **विदाङ्कुर्वन्त्विति** । इतिशब्दः प्रकारे । एवञ्जातीयकमित्यर्थः।तदाह-**पुरुषवचने इति** । तयोर्नान्तरीयकमुच्चारणमिति भावः । 'कर्तृत्वपरस्मैपदे तु विवक्षिते एव, लोकविवक्षानुसारकेतिशब्दा'दित्येके । 'एते अप्यविवक्षिते, नान्तरीयकत्वादेवे'त्यन्ये । लोट् तूच्चारणसामर्थ्याद्विवक्षित एव । अत एव 'उषविदे'त्याम्विधानम् । तत्रापि व्याख्यानादुषजागृसाहचर्याच्चाऽस्यैव परस्मैपदिनो ग्रहणम् । **गणकार्यस्येति**। तनादिसाहचर्येण तद्गणस्थस्यैव कृञोऽत्र ग्रहणम् । क्रियासामान्यवाचित्वेनान्वययोग्यतया तस्यैवात्रानुप्रयोग इति भावः । भाष्ये कृञ्ग्रहणस्याऽत्र प्रत्याख्यानादत्राऽर्थे तस्य तात्पर्यमयुक्तम् । 'न विश्वसे'दित्याद्यार्षमेव । ज्ञापितेऽपि तच्चारितार्थ्याऽभावाच्चेत्यन्ये । **अत उत्स॥** 'गमहने'त्यतः क्ङितीति, 'नित्यं करोते'रिति, 'उतश्च प्रत्यया'दित्यत उत इति चानुवर्त्तते । **तपरत्वसामर्थ्यादिति** । इदं 'स्थानिवत्'सूत्रे भाष्ये स्पष्टम् । 'उदवोढा'मित्यत्र वृद्धिवत् 'लक्ष्ये लक्षणस्ये'ति न्यायेनाऽप्येतद्वारयितुं शक्यम्। विकारभेदकृतलक्ष्यभेदा-

'उतश्चे'ति हेर्लुक् । आभीयत्वेन लुकोऽसिद्धत्वादुत्वम् । विदाङ्कुरु । विदाङ्करवाणि । पक्षे वेत्तु । विद्धि । अवेत् । अवित्ताम् । 'सिजभ्यस्ते'ति झेर्जुस् । अविदुः । दश्च ।७।२।७५। धातोर्दस्य पदान्तस्य सिपि परे रुः स्याद्वा । अवेः । अवेत् । १०६५ अस् भुवि । अस्ति । श्नसोरल्लोपः ।६।४।१११। श्नस्याऽस्तेश्चाकारस्य लोपः स्यात्सार्वधातुके क्ङिति । स्तः । सन्ति । 'तासस्त्यो'रिति सलोपः । असि । स्थः । स्थ । अस्मि । स्वः । स्मः । 'आर्द्धधातुके' इत्यधिकृत्य-अस्तेर्भूः ।२।४।५२। बभूव । भविता । अस्तु । स्तात् । स्ताम् । सन्तु । घ्वसोरेद्धावभ्यासलोपश्च ।६।४।११९। घोरस्तेश्च एत्वं स्याद्धौ परे अभ्यासलोपश्च । आभीयत्वेन एत्वस्याऽसिद्धत्वाद्धेर्धिः । 'श्नसो'रित्यतो लोपः । एधि । तातङ्पक्षे एत्वं न, परेण तातङा बाधात्, 'सकृद्गता'विति न्यायात् । स्तात् । स्तम् । स्त । असानि । असाव । असाम । 'अस्तिसिच'इतीट् । आसीत् । 'श्नसो'रित्यल्लोपस्याऽऽभी-

त.] गृहाण । अत उत्सार्वं । क्ङिति किम् ? । करोति । करोषि । लुकोऽसिद्धत्वादिति । सार्वधातुकग्रहणमुत्तरार्थमेव नात्राऽऽवश्यकम् । 'इह भूतपूर्वगत्या सार्वधातुकपरत्वमाश्रीयते' इति वृत्तिमते त्वसिद्धत्ववर्णनस्योपयोगलेशोऽपि नास्तीति ज्ञेयम् । दश्च । 'सिपि धातो रुर्वे'त्यनुवर्तते, पदस्येति, 'झलां जशोऽन्ते' इत्यस्मादन्त इति च । तदाह-धातोर्दस्येत्यादि । सिपि किम् ? । तिपि-अवेत् । दान्तस्य धातोः सिपि रुर्वेत्येतावतैवेष्टसिद्धौ पदान्तानुवृत्तिर्मन्दप्रयोजनेत्याहुः । तच्चिन्त्यम् । वेत्सीत्यत्राऽतिप्रसङ्गात् । चर्त्वस्याऽसिद्धत्वेन दान्तत्वात् । श्नसोरल्लोपः । 'अत उ'दिति सूत्रादत इत्यनुवर्त्याऽल्ग्रहणं त्यक्तुं शक्यमित्याहुः । श्नसोरिति । शकन्ध्वादित्वात्पररूपमित्याह-श्नस्याऽस्तेश्चेति । श्नस्योदाहरणं [रुन्धः] । रुन्धन्तीत्यादि । क्ङिति किम् ? । रुणद्धि । अस्ति । तपरकरणमास्तामासन्नित्यत्र ह्याडागमे कृते तस्य लोपो माभूदित्ये-

बा.] त्कथमुत्वमित्यत आह-आभीयत्वेनेति । विदांकुर्विति । विदांकुरुतात् विदांकुरुतम् विदांकुरुत । विदांकरवाणीति । आटः पित्त्वेन ङित्त्वाऽभावादुकारस्य गुण इति भावः । विदांकरवाव विदांकरवाम । लङ्याह-अवेदिति । हल्ङ्यादिना सिपो लोपे विशेषमाह-दश्च । 'सिपि धातो रुर्वा' इत्यनुवृत्तम् । 'द' इति षष्ठ्यन्तेन धातुर्विशेष्यते । तदन्तविधिः । पदस्येत्यधिकृतम् । तदाह-धातोर्दान्तस्य पदस्येति । अलोऽन्त्यस्येत्यन्त्यस्य ज्ञेयम् । अवेदिति । सिपो हल्ङ्यादिलोपे दकारस्य रुत्वविकल्पः । अवित्तम् अवित्त । अवेदम् अविद्व अविद्म । विद्यात् विद्याताम् विद्युः । विद्यात् विद्यास्ताम् । विद्यासुः । अवेदीत् । अवेदिष्यम् । अवेदिष्यत् । अस भुवीति । भवनं भूः । सत्तायामित्यर्थः । अस्तीति । सस्य चर्त्वेऽपि सकार एव भवति, नतु तकारः, अल्पप्राणतया प्रयत्नभेदात् । श्नसोरल्लोपः । 'अ'दिति लुप्तषष्ठीकं पदम् । श्न अस् अनयोर्द्वन्द्वात्षष्ठीद्विवचनम् । शकन्ध्वादित्वात् पररूपम् । श्नेति श्नम्प्रत्ययैकदेशनिर्देशः । 'अत उत्सार्वधातुके' इत्यतः सार्वधातुके इत्यनुवर्तते, 'गमहने'त्यतः क्ङितीति । तदाह-श्नस्येत्यादिना । अस्तेर्भूः । असधातोर्भूभावः स्यादार्द्धधातुके परे इत्यर्थः । अस् हि इति स्थिते-घ्वसोरेद्धौ । घु अस् अनयोर्द्वन्द्वः । एत्-हौ इति च्छेदः । ननु अस् हि इति स्थिते 'हुझल्भ्यो हेर्धि'रिति धित्वं परत्वाद्बाधित्वा 'घ्वसो'रिति सकारस्य एत्वे हुझल्भ्यः परत्वाऽभावात्कथं धिभाव इत्यत आह-आभीयत्वेनेति । तथाच अ ए धीति स्थिते आह-श्नसोरिति । नन्वाशिषि अस् हि इति स्थिते तातङं बाधित्वा परत्वादेत्वं प्राप्नोतीत्यत आह-तातङ्पक्षे एत्वं नेति । कुत इत्यत आह-परेणेति । ननु कृते तातङि तस्य स्थानिवत्त्वेन हित्वात्तस्मिन्परे 'घ्वसो'रित्येत्वं कुतो नेत्यत आह-सकृद्गताविति । सकृत्=एकवारं, गतौ=प्रवृत्तौ, विप्रतिषेधे=विरोधे सति, यद्बाधितं तद्बाधितमेव भवति, नतु पुनः प्रवर्तत इति तदर्थः । लङस्तिपि विशेषमाह-अस्तिसिच इति । इकारलोपे आटि वृद्धौ 'अस्तिसिचः' इति ईडागम इत्यर्थः । ननु तसादौ ङिति परत्वादाडागमात्प्राक् 'श्नसो'रित्यल्लोपे सति अजादित्वाऽभावात्कथमाडित्यत आह-श्नसोरल्लोपस्याभीयत्वेनेति । आस्तामिति । अत्र कृते आडागमे तस्य लोपनिवृत्त्यर्थं 'श्नसोरल्लोपः' इति तपरकरणम् । वस्तुतस्तु आट आभीयत्वेनाऽसिद्धत्वादेव

शे.] नाश्रयणा"दिति केचित् । तत्स्थानिक इव तत्स्थानिस्थानिकेऽपि लोकन्यायेन तत्त्वबुद्धेः । स्वस्थानिकादेशस्थानिकादेशकृतलक्ष्यभेदानाश्रयणेऽपि स्वस्थानिकादेशावयवस्थानिकादेशकृतलक्ष्यभेदाऽनाश्रयणे मानाऽभाव इति 'स्थानिव'त्सूत्रस्थभाष्याशयं परे । 'कुर्वन्तु'इत्यत्र 'हलि चे'ति दीर्घस्तु न, 'न भकुर्छुरा'मिति निषेधात् । लुकोऽसिद्धत्वादिति । सार्वधातुक इत्यस्याऽभावेऽपि उकारान्ताङ्गावयवकरोतेरत उदित्यर्थात् , अङ्गसञ्ज्ञायाश्च लुक्यपि प्रत्ययलक्षणेन 'युवोरनाकौ' इत्यादिसूत्रभाष्ये स्वीकारेण सार्वधातुकग्रहणं स्पष्टार्थम् । एतत्सूत्रशेषेस्थम्-'इदं तर्हि प्रयोजनं सार्वधातुके भूतपूर्वमात्रेपि यथा स्यात्-कुर्विति'-इति भाष्यं त्वेकदेश्युक्तिरिति बोध्यम् । दश्च । 'सिपि धातो'रिति सूत्रं, पदस्येति चाऽनुवर्तते । पदान्तस्य [ईति] किम् ? । वेत्सि । चर्त्वस्याऽसिद्धत्वाद्दोऽस्त्यत्र । श्नसोरिति । शकन्ध्वादित्वात्पररूपम् । अत्र 'सार्वधातुके'इति निष्फलम्, आर्द्धधातुके तस्य भूभावात् । 'ईहामासे'त्यादौ 'अत आदे'रिति दीर्घे परस्य लोपेऽपि क्षत्यभावात्, श्नस्य सार्वधातुके एव सत्त्वाच्च । आसन्निति । आयन्निितिवत् । उपसर्ग । परस्येति सस्य विशेषणम् ।

यत्वेनाऽसिद्धत्वादाट्। आस्ताम्। आसन्। स्यात्। भूयात्। अभूत्। सिचोऽस्तेश्च विद्यमानत्वेन विशेषणादीण्न। **उपसर्गप्रादुर्भ्यामस्तिर्यच्परः** ।८।३।८७।उपसर्गेणः प्रादुसश्च परस्याऽस्तेः सस्य षः स्याद्यकारेऽचि च परे। निष्यात्। प्रादुःष्यात्। निषन्ति। प्रादुःषन्ति। यच्परः किम्?। अभिस्तः। **१०६६ मृजू शुद्धौ।** **मृजेर्वृद्धिः** ।७।२।११४। मृजेरिको वृद्धिः स्याद्धातुप्रत्यये परे। ***क्ङित्यजादौ वेष्यते**। 'व्रश्चे'ति षः। मार्ष्टि। मृष्टः। मृजन्ति। मार्जन्ति। ममार्ज। ममार्जतुः। ममृजतुः। ममार्जिथ। ममार्ष्ठ। मार्जिता। मार्ष्टा।

---

त.]तदर्थम्। निष्कर्षस्तु अनुपदं स्फुटीभविष्यति। **ध्वसोरेद्धा**। एत्वमलोन्त्यस्य, लोपस्तु शित्त्वात्सर्वस्येति भाष्यादौ स्पष्टम्। देहि। धेहि। **असिद्धत्वादाडिति**। नन्वेवमाटोऽसिद्धत्वात् 'श्नसो'रित्यल्लोपो न भवेदिति तपरकरणं तत्र व्यर्थमिति चेत्, अत्राहुः–आभाच्छास्त्रस्याऽनित्यताज्ञापनाय तपरकरणम्। तेन 'देभतु'रित्यादि सिद्धमिति। स्यादेतत्–अत्र केचित्–अद्ग्रहणस्य निष्फलत्वे तपरकरणस्य ज्ञापनार्थत्वं न सिध्येत्। न च 'अत उ'दिति सूत्रस्थतपरकरणमेव ज्ञापनार्थमस्त्विति वाच्यम्, अस्येत्युक्तौ गौरवादर्द्धमात्रालाघवाय तत्र तपरत्वमिति सुवचत्वात्। तस्मादुक्तज्ञापनार्थमद्ग्रहणमावश्यकमित्याहुः। **उपसर्गप्रादुर्भ्याम्**। प्रादुसिति सान्तमव्ययम्। 'प्रादुषश्चे'ति पाठे प्रादुर्भ्यामिति निर्देशो न युज्यते इति प्राचां षान्तपाठः प्रामादिकः। **परस्येति**। अयमस्तेः सस्य विशेषणं, न त्वस्तेः। तेन प्रादुरस्तीत्यत्र न षत्वम्। उपसर्गेत्यादि किम्?। दधि स्यात्। अस्तेः किम्?। परिस्रजति। **मृजू शुद्धौ**। अयं न षित्, भिदादिपाठसामर्थ्यात्। **मृजेर्वृद्धिः**। गुणापवादः। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमित्याह–**धातुप्रत्यये इति**। धातुप्रत्यये किम्?। कंसपरिमृड्भ्याम्। **क्ङित्यजादाविति**। एतच्चाऽन्येषां वैयाकरणानां मतम्–'इको गुणवृद्धी' इति सूत्रे भाष्यकृता स्वीकृतम्। **मृड्ढीति**। 'हुझल्भ्यः' इति हेर्धिः। षत्वष्टुत्वजश्त्वानि। **वलादेः सार्वधातुकस्येति**।

---

बा.]लोपो न भवतीति 'श्नसोरल्लोपः' इत्यत्र तपरकरणं व्यर्थमिति भाष्ये स्पष्टम्। **आसन्निति**। आसीः आस्तम्। आस्त। आसम्। आस्व। आस्म। विधिलिङ्याह–**स्यादिति**। स्याताम् स्युरित्यादि। आशीर्लिङि आर्द्धधातुकत्वाद्भूभावं मत्वाह–**भूयादिति**। लुङि तु सिचि भूभावे 'गातिस्थे'ति सिचो लुकं मत्वाह–**अभूदिति**। तत्र 'अस्तिसिचोऽपृक्ते'इति ईडागममाशङ्क्य आह–**सिचोऽस्तेश्चेति**। इह भूभावे सति अस्तेरश्रूयमाणत्वादीण्नेति भावः। **उपसर्गप्रादुर्भ्याम्**। उपसर्गः प्रादुस् अनयोर्द्वन्द्वः। इण्कोरित्यधिकृतम्। तत्र इण इत्युपसर्गेण संबध्यते,न प्रादुसि, ततः परस्य अस्तेः सस्य इणः परत्वाऽसंभवात्। कोरित्यपि असंभवान्न संबध्यते। अस्तिरिति षष्ठ्यर्थे प्रथमा। 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते, मूर्धन्य इत्यधिकृतम्। य् अच्–अनयोर्द्वन्द्वः। यचौ परौ यस्मादिति विग्रहः। यकारे अचि च परे इति लभ्यते। तदाह–**उपसर्गेण इति**। उपसर्गस्थादिण इत्यर्थः। **परस्येति**। अस्तेः सस्य विशेषणमिदम्, न त्वस्तेः, तेन प्रादुरासीदित्यत्र न षत्वम्। यकारपरकत्वे उदाहरति–**निष्यात् प्रादुष्ष्यादिति**। प्रादुसिति सान्तमव्ययम्। सस्य षत्वे पूर्वस्य सस्य ष्टुत्वेन षः। षान्तत्वे तु 'प्रादुर्भ्या'मिति रुत्वनिर्देशो नोपपद्यते। अच्परकत्वे उदाहरति–**निषन्ति प्रादुष्षन्तीति**। **मृजूष् शुद्धाविति**। ऊदित्वमिड्विकल्पार्थम्। 'षिद्भिदादिभ्यो'ऽङित्यङर्थं षित्त्वम्। वस्तुतस्तु भिदादिगणे मृजाशब्दपाठादेव सिद्धेरिह षित्करणमनार्षमित्याहुः। **मृजेर्वृद्धिः**। 'इको गुणवृद्धी' इति परिभाषया 'इक' इत्युपस्थितम्। मृजेरित्यवयवषष्ठी। तदाह–**मृजेरिको वृद्धिः स्यादिति**। 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञान'मिति परिभाषामभिप्रेत्य आह–**धातुप्रत्यये परे इति**। धातोर्विहिते प्रत्यये इत्यर्थः। तेन परिमृड्भ्यामित्यत्र न वृद्धिरिति भावः। गुणापवादोऽयम्। **क्ङित्यजादौ वेष्यते इति**। 'मृजेर्वृद्धि'रिति शेषः। 'इको गुणवृद्धी'इति सूत्रभाष्ये इदं पठितम्। **व्रश्चेति ष इति**। मृज्–ति इति स्थिते ऋकारस्य वृद्धौ रपरत्वे जकारस्य व्रश्चेति षत्वे तकारस्य ष्टुत्वेन टकारे मार्ष्टीति रूपमित्यर्थः। **मृष्ट इति**। ङित्त्वान्न वृद्धिर्नापि गुण इति भावः। **मृजन्ति मार्जन्ति इति**। 'क्ङित्यजादा'विति वृद्धिविकल्प इति भावः। मार्क्षि मृष्ठः मृष्ठ। मार्ज्मि मृज्वः मृज्मः। **ममार्जेति**। णलि 'मृजेर्वृद्धि'रिति अतुसादावजादौ किति वृद्धिविकल्पं मत्वा आह–**ममार्जतुः ममृजतुरिति**। ममार्जुः ममृजुरित्यपि ज्ञेयम्। ऊदित्वादिड्विकल्पं मृजेर्वृद्धिं च मत्वा आह–**ममार्जिथ ममार्ष्ठेति**। इडभावे जस्य व्रश्चेति षः। थस्य ष्टुत्वेन ठ इति भावः। ममार्जथुः–ममृजथुः, ममार्ज–ममृज। ममार्ज, ममार्जिव–ममृजिव–ममृज्व, ममार्जिम–ममृजिम–ममृज्म। लुट्याह–**मार्जिता मार्ष्टेति**। ऊदित्वादिट्, तदभावे च 'मृजेर्वृद्धि'रिति भावः।

---

शे.]तेन 'प्रादुरासी'दित्यत्र न षत्वम्। अस्तेः किम्?। अनुसूते–अनुसूः तस्यापत्यम्–'आनुसेयः' इत्यत्र शुभ्रादित्वाड्ढकि 'ढे लोपः' इत्युलोपे सकारनिरूपितोपसर्गत्वसत्त्वेन षत्वाऽऽपत्तेः। **मृजेर्वृ**। अत्राऽस्याऽऽघृषीयस्य च 'मृजू' इत्यस्य ग्रहणं, व्याख्यानात्। लुग्विकरणपरिभाषा त्वनित्यत्वादत्र न प्रवर्त्तते। 'धातोः कार्यमुच्यमान'मिति परिभाषालभ्यार्थानुवादमाह–**धातुप्रत्यये इति**। तेन 'परिमृड्भ्या'मित्यादौ न। **अजादाविति**। आद्यंशो 'यस्मिन्विधि'रिति परि-

मृड्ढि-। अमार्ट् । [ अमार्जन् । अमृजन् ] । अमार्जम् । अमार्जीत् । अमार्क्षीत् । १०६७ रुदिर् अश्रुविमोचने । **रुदादिभ्यः सार्वधातुके**।७।२।७६। रुद् स्वप् श्वस् अन् जक्ष एभ्यो वलादेः सार्वधातुकस्येट् स्यात् । रोदिति । रुदितः। **हौ परत्वादिटि** धित्वं न । रुदिहि । **रुदश्च पञ्चभ्यः** ।७।३।९८। हलादेः पितः सार्वधातुकस्याऽपृक्तस्य ईट् स्यात्। **अड्गार्ग्यगालवयोः**।७।३।९९। अरोदत्। अरोदीत्। अरुदिताम्। अरुदन्। अरोदीः। अरोदः। अरोदम्। प्रकृतिप्रत्ययविशेषापेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वाद्यासुट्। रुद्यात्। अरुदत्। अरोदीत् । ञिष्वप् शये । स्वपिति । स्वपितः। सुष्वाप । सुषुपतुः। सुषुपुः। सुष्वपिथ । सुष्वप्थ। **सुविनिर्दुर्भ्यः सुपिसूतिसमाः**।८।३।८८। एभ्यः

त.]वलादेः किम् ?। रुदन्ति । सार्वधातुके किम् ?। स्वप्ता । **धित्वं नेति** । सकृद्गताविति न्यायात् , हेर्धिरिति स्थान्यादेशयोरिकार उच्चारणार्थ इत्यादिप्रागुक्तसमाधानाद्वेति भावः । **रुदश्च** । पञ्चभ्यः किम् ? । जागर्तेर्लङि-अजागः । **प्रकृतिप्रत्ययेत्यादि** । हलादिपित्सार्वधातुकाऽपृक्ताऽपेक्षत्वाच्च बहिरङ्गत्वमडीटोः । **अरुददिति** । 'इरितो वे'त्यङ् । **अरोदीदिति** । 'अस्तिसिच' इति ईट् । 'रुदश्चे'त्यनेन तु न, सिचा व्यवधानेन रुदादेः परत्वाऽभावात् । **सुषुपतु**-

बा.]मार्जिष्यति-मार्क्ष्यति । मार्ष्टु-मृष्टात्, मृष्टाम्, मार्जन्तु-मृजन्तु । **मृड्ढीति**।हेरपित्त्वेन ङित्त्वान्न वृद्धिः । व्रश्चादिना जस्य षः । हेर्धिः, षस्य जश्त्वेन डः, धस्य ष्टुत्वेन ढः । मृष्टात् मृष्टम् मृष्ट । मार्जानि मार्जाव मार्जाम । लङ्याह-**अमार्डिति** । तिप इकारलोपे वृद्धौ रपरत्वे हल्ङ्यादिना तकारलोपे व्रश्चादिना जस्य षः, तस्य जश्त्वचर्त्वे इति भावः । अमृष्टाम् अमार्जन्-अमृजन् । अमार्ट् अमृष्टम् अमृष्ट । **अमार्जमिति** । अमृज्व अमृज्म । मृज्यात् । मृज्याताम् । मृज्यात्। मृज्यास्ताम्। **अमार्जीत् अमार्क्षीदिति**।ऊदित्त्वादिड्विकल्प इति भावः।इट्पक्षे अमार्जिष्टाम् अमार्जिषुरित्यादि सुगमम् । इडभावे अमार्ष्टाम् अमार्क्षुः । अमार्क्षीः अमार्ष्टम् अमार्ष्ट । अमार्क्षम् अमार्क्ष्व अमार्क्ष्म । अमार्जिष्यत्-अमार्क्ष्यत् । रुधिर्धातुरिरित् । सेट् । **रुदादिभ्यः**। इड्वलादेरित्यनुवृत्तिं मत्वाह-**वलादेरिति** । **रुदित इति** । ङित्त्वान्न गुणः । रुदन्ति । रोदिषि रुदिथः रुदिथ । रोदिमि रुदिवः रुदिमः । रुरोद रुरुदतुः [रुरुदुः] । रुरोदिथ । [ रुरुदथुः । रुरुद । रुरोद ] । रुरुदिव रुरुदिम । रोदिता । रोदिष्यति । रोदितु-रुदितात् रुदिताम् रुदन्तु । रुदि हि इति स्थिते 'हुझल्भ्यः' इति धित्वमाशङ्क्य आह-**हौ परत्वादिति** । **रुदिहीति** । हेरपित्त्वेन ङित्त्वान्न लघूपधगुण इति भावः । रुदितात् रुदितम् रुदित । रोदानि रोदाव रोदाम । **रुदश्च** । 'नाभ्यस्तस्ये'त्यतः पिति सार्वधातुके इति, 'उतो वृद्धि'रित्यतो हलीति; 'गुणोऽपृक्ते' इत्यतोऽपृक्ते इति, 'ब्रुव ईडि'त्यत ईडिति चानुवर्तते । 'रुद' इति पञ्चमी । 'रुदादिभ्य' इति विवक्षितमित्यभिप्रेत्य सूत्रशेषं पूरयति-**हलादेरित्यादिना** । **अड्गार्ग्यगालवयोः** । अनयोर्मते रुदादिभ्यः पञ्चभ्यः परस्य हलादेः पितः सार्वधातुकस्य अपृक्तस्य अडागमः स्यादिति स्पष्टोऽर्थः । **अरोदीरिति** । अरुदितम् अरुदितेत्यपि ज्ञेयम् । **अरोदमिति** । अरुदिव अरुदिम इत्यपि ज्ञेयम् । ननु लिङ्क्षपि यासुटं बाधित्वा परत्वात् 'अड्गार्ग्यगालवयो'रिति, 'रुदश्च पञ्चभ्यः' इति च अडीटौ स्यातामित्यत आह-**प्रकृतिप्रत्ययेति** । हलादिपित्सार्वधातुकाऽपृक्ताऽपेक्षत्वाच्चेत्यपि ज्ञेयम् । लुङि 'इरितो'वेत्यङ्पक्षे आह-**अरुददिति** । अङभावपक्षे त्वाह-**अरोदीदिति** । 'अस्तिसिचः' इति ईट् । 'रुदश्च पञ्चभ्य' इति तु नेह प्रवर्तते, सिचा व्यवहितत्वात् ।

**ञि ष्वप् शये इति**।षोपदेशोऽयम्।आर्द्धधातुके अनिट्। **स्वपितीति**।'रुदादिभ्यः' इति इट्।**स्वपित इति**। स्वपन्ति । स्वपिषि स्वपिथः स्वपिथ । स्वपिमि स्वपिवः स्वपिमः । **सुष्वापेति** । द्वित्वे 'लिट्यभ्यासस्ये'ति संप्रसारणे पूर्वरूपे आदेशसकारत्वात् षत्वमिति भावः। **सुषुपतुरिति** । 'वचिस्वपी'ति संप्रसारणे कृते द्वित्वादीति भावः । सुषुपुरित्यपि ज्ञेयम् । **सुष्वपिथ सुष्वप्थेति** । भारद्वाजनियमात्थलि वेडिति भावः । सुषुपथुः सुषुप । सुष्वाप-सुष्वप सुषुपिव सुषुपिम । **सुविनिर्दुर्भ्यः** । कृतसंप्रसारणस्य स्वप्धातोः **सुपी**त्यनेन ग्रहणम् । **सूती**त्यनेन सूतिशब्दः कृदन्तो गृह्यते । **समे**त्यनेनाऽपि समशब्दस्य ग्रहणम् । षष्ठ्यर्थे प्रथमा । 'सहेः साडः स' इत्यत स इति षष्ठ्यन्तमनुवर्तते । मूर्धन्य इत्यधिकृतम् । तदाह-**एभ्यः सुप्यादेरिति** । सुषुप्तिः, सुषूतिः, सुषम इत्युदाहरणानि । अत्र

शे.]भाषालभ्यार्थानुवादः । **मृड्ढीति** । हेर्धिः। षत्वष्टुत्वजश्त्वानि । **परत्वादिति** । युगपत्प्रवृत्तौ द्वयोः स्वस्वनिमित्तानन्तर्याऽसंभवरूपो विरोधोऽस्तीति भावः । **रुदश्च** । हलादेः किम् ?। व्यत्यरुदि । पञ्चभ्यः किम् ? । अजागः। 'पित' इति स्वरूपकथनम् । अपृक्ताऽपितोऽसम्भवात् । 'तुरुस्तु' इत्यत्रैव तन्निवृत्तेश्च । सार्वधातुकस्येत्यप्येवम् । **अरुदितामिति** । तामादिविधौ 'धातो'रित्यस्य विहितविशेषणत्वेन निर्दिष्टपरिभाषाऽनपेक्षणादन्तरङ्गत्वात्तामादयः । तत इट् । इदं 'पादः प'दिति सूत्रे भाष्ये स्पष्टम् । **प्रकृतीति**। प्रत्ययविशेषापेक्षयासुडपेक्षयाऽन्तरङ्गत्वात् 'इतश्चे'ति लोपे, यासुडीटोः प्राप्तयोरन्तरङ्गत्वाद्यासुडित्यर्थः। 'सामान्यधर्माऽपेक्षशास्त्राऽपेक्षया कश्चिद्विशेषधर्मोऽधिको निमित्तकोटौ यत्र विशेषापेक्षशास्त्रेऽस्ति तत्ततो बहिरङ्ग'मिति तदर्थः । रुदादित्वं सार्वधातुकत्वञ्च तथा, सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं, प्रत्ययस्य

सुप्यादेः सस्य षः स्यात्। पूर्वं धातुरुपसर्गेण युज्यते। किति लिटि परत्वात्संप्रसारणे षत्वे च कृते द्वित्वम्। 'पूर्वत्रासिद्धीयमद्विर्वचने'। सुषुपतुः। सुषुपुः। अकिति तु द्वित्वेऽभ्यासस्य संप्रसारणम्। षत्वस्याऽसिद्धत्वात्ततः पूर्वं 'हलादिः शेषः'। नित्यत्वाच्च। ततः सुपिरूपाऽभावान्न षः। सुष्वाप। सुस्वप्थ। अस्वपीत्। अस्वपत्। स्वप्यात्। सुप्यात्। सुषुप्यात्। अस्वाप्सीत्। १०६९ श्वस प्राणने। श्वसिति।

---

त.]रिति। 'वचिस्वपी'ति संप्रसारणम्। ततो द्वित्वम्। **सुपिसूतिसमा इति**। 'सूती'ति क्तिन्नन्तः। 'समे'ति पचाद्यजन्तः। सुषुप्तिः। सुषूतिः। सुषमा। विषमः। **अद्विर्वचन इति**। तेन षत्वसहितस्य द्वित्वम्। **सुपिरूपाभावादिति**। 'एकदेशविकृतमनन्यव'दिति तु न प्रवर्तते, तस्य स्थानिवत्सूत्रशेषत्वात्, षत्वस्य त्रैपादिकत्वेन तत्कार्यं प्रति स्थानिवत्त्वाऽभावादित्याहुः। वस्तुतस्तु 'स्थानिवदादेश' इत्येनं प्रति त्रिपादी सिद्धेत्युक्तम्। तस्मादिह समाधानान्तर-

---

बा.]कृतसंप्रसारणस्य स्वप्धातोर्ग्रहणात्सुस्वप्न इत्यत्र न षत्वमिति भाष्यम्। नन्वेवं सति सुषुपतुरित्यत्र सुपूर्वस्य स्वपधातोः कथं षत्वम्। कृतसंप्रसारणस्य हि स्वपधातोः षत्वम्। तत्र यदि स्वप् अतुस् इति स्थिते पूर्वं द्वित्वे कृते पश्चात् 'वचिस्वपी'ति संप्रसारणं तदा हलादिशेषे उत्तरखण्डस्यैव 'वचिस्वपी'ति संप्रसारणं, न त्वभ्यासस्य। अतुसः कित उत्तरखण्डव्यवहितत्वात्, 'न संप्रसारणे संप्रसारण'मिति निषेधाच्च। ततश्च सु ससुप् अतुसित्यत्र पूर्वखण्डस्य कृतसंप्रसारणत्वाऽभावात् कथं षत्वम्। उत्तरखण्डस्य च सु इत्युपसर्गादव्यवहितपरत्वाऽभावात्कथमनेन षत्वम्, इण्कवर्गाभ्यां परत्वाऽभावेन 'आदेशप्रत्यययो'रित्यस्याऽप्युत्तरखण्डे अप्रवृत्तेः। यदि तु परत्वात्पूर्वं संप्रसारणे कृते पश्चाद्द्वित्वं तर्हि सुप् इत्यस्य द्वित्वप्रवृत्तेः प्रागेव षत्वमिति वक्तव्यम्। तत्तु न युज्यते। 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणे'ति परिभाषया सु इत्युपसर्गसंबन्धस्य द्वित्वात्प्रागप्रवृत्तेः। तथाच कृतसंप्रसारणस्य अकृतषत्वस्य सुप् इत्यस्य द्वित्वे उत्तरखण्डस्यैव 'आदेशप्रत्यययो'रिति षत्वं स्यान्नतु पूर्वखण्डस्य, 'सात्पदाद्यो'रिति निषेधात्। कृते हलादिशेषे सु इति पूर्वखण्डस्य सुब्रूपत्वाऽभावेन 'सुविनिर्दुर्भ्यः' इत्यस्याऽप्यप्रवृत्तिः। न च एकदेशविकृतस्यानन्यत्वं शङ्क्यम्, एवमप्यभ्यासस्यानर्थकत्वेन अर्थवद्ग्रहणपरिभाषया षत्वस्य तत्राऽप्राप्तेः। तस्मादिह सुषुपतुरित्यत्र पूर्वखण्डे षत्वं दुरुपपादमित्याशङ्क्याह- **पूर्वं धातुरित्यादिना**। लक्ष्यानुरोधादिह 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेने'त्याश्रीयते। ततश्च द्वित्वात्प्रागेव परत्वात्संप्रसारणे सति सुप् इत्यस्य सु इत्युपसर्गपूर्वकत्वमादाय षत्वे च कृते सति पुनः प्रसङ्गविज्ञानात् षुबित्यस्य कृतषत्वस्य द्वित्वे सति खण्डद्वयेऽपि षकारश्रवणं निर्बाधमित्यर्थः। तदुक्तं भाष्ये-'षुपिभूतो द्विरुच्यते' इति। ननु कृतषत्वस्य कथं द्वित्वं, द्वित्वे कर्तव्ये षत्वस्याऽसिद्धत्वादित्यत आह-**पूर्वत्रासिद्धीयमिति**। ननु तर्हि सुषुष्वापेत्यत्रापि पूर्वखण्डे षत्वं श्रूयेतेत्यत आह-**पिति त्विति**। पिति णलि कित्त्वाऽभावात् 'वचिस्वपी'त्यस्याऽप्रवृत्तौ कृते द्वित्वे 'लिट्यभ्यासस्ये'ति पूर्वखण्डस्य संप्रसारणम्। सु सुप् स्वप् अ इति स्थिते 'सुविनिर्दुर्भ्यः' इति षत्वस्याऽसिद्धत्वात् हलादिशेष इत्यर्थः। **नित्यत्वाच्चेति**। कृते अकृते च षत्वे हलादिशेषस्य प्राप्तेरिति भावः। **तत इति**। हलादिशेषोत्तरं सु इत्यस्यैव स्थित्या सुबिति रूपस्याऽभावान्न ष इत्यर्थः। एकदेशविकृतत्वादनन्यत्वेऽपि अभ्यासस्यार्थवत्त्वाऽभावान्न ष इति द्रष्टव्यम्। स्वप्ता। स्वप्स्यति। स्वपितु-स्वपितात् स्वपिताम् स्वपन्तु। स्वपिहि-स्वपितात् स्वपितम् स्वपित। स्वपानि स्वपाव स्वपाम। लङ्याह-**अस्वपीत् अस्वपदिति**। 'रुदश्च पञ्चभ्यः' इति ईटि 'अड्गार्ग्यगालवयो'रित्यटि च रूपे। अन्यानि रुदिवद्रूपाणि। लिङ्याह-**सुप्यादिति**। 'वचिस्वपी'ति संप्रसारणमिति भावः। 'सुविनिर्दुर्भ्यः' इति षत्वं मत्वाह-**सुषुप्यादिति**। **अस्वाप्सीदिति**। अनिड्त्वान्न सिज्लोप इति भावः। **श्वस प्राणने इति**। वलाद्यार्द्धधातुके सेडयम्। सार्वधातुके तु वलादौ 'रुदादिभ्यः' इति इट्। लङस्तिपि 'रुदश्चे'ति ईटम्,

---

शे.]प्रत्ययत्वज्ञानं चावश्यकमिति सामान्यधर्मनिमित्तकत्वमप्यत्रास्तीति बोध्यम्। वस्तुत इदं बहिरङ्गत्वं भाष्ये क्वापि नाश्रितमिति परिभाषावृत्तौ निरूपितम्। तस्मान्नित्यत्वादत्र यासुटि कृतेऽपृक्तत्वाऽभावेनाऽडीटोः प्राप्त्यभावेन तयोरनित्यत्वादित्यन्ये। **सुविनिर्दुर्भ्यः**। 'सुपी'त्यागन्तुनेकारेण कृतसंप्रसारणस्य ग्रहणम्। 'सूती'ति क्तिन्नन्तं, 'समे'ति पचाद्यजन्तसाहचर्येण तस्यापि कृदन्तस्यैव ग्रहणात्। **पूर्वन्धातुरुपेति**। द्वित्वात्पूर्वं षत्वायेदम्। **षत्वे च कृते इति**। 'षुपिभूतो द्विरुच्यते' इति भाष्यादिति भावः। यदि तु सुपिसंबन्धिसस्येति सूत्रार्थोऽभ्याससोपि सुपिसंबन्धी भवत्येव, तदीयद्वितीयप्रयोगसम्बन्धित्वादित्युच्यते, तदा षत्वात्पूर्वं द्वित्वेऽपि न दोषः। इदमेव युक्तम्। 'पूर्वं धातुः साधनेने'ति सिद्धान्तात्। अत एव भाष्ये 'सुपिभूतो द्विरुच्यते' इति प्रचुरः पाठः। अन्यथाऽभ्यासस्यानर्थक्यात्तत्सम्बन्धिनः षत्वमेव न स्यादिति निरूपितं 'स्थादिषु' इति सूत्रे। **नित्यत्वाच्चेति**। अभ्युच्चयोऽयम्। **सुपिरूपाऽभावादिति**। अर्थवत्सुपिरूपाऽभावादित्यर्थः। अन्यथैकदेशविकृतन्यायेन तत्त्वं दुर्वारमेव। अभ्यासस्य नाऽर्थवत्त्वं, नापि समुदायस्येत्यत्रैव सूत्रे, 'दयतेर्दिगी'त्यत्र, 'सुट्

श्वसिता । अश्वसीत् । अश्वसत् । श्वस्याताम् । श्वस्यास्ताम् । 'ह्म्यन्तक्षणे'ति न वृद्धिः । अश्वसीत् । १०७० अन च । अनिति । आन । अनिता । आनीत् । आनत् । अनितेः ।८।४।१९। उपसर्गस्थान्निमित्तात्परस्याऽनितेर्नस्य णः स्यात् । प्राणिति । १०७१ जक्ष भक्षहसनयोः । जक्षिति । जक्षितः । अदभ्यस्तात् ।७।१।४। झस्य अत्स्यात् । अन्तापवादः । जक्षति । 'सिजभ्यस्ते'ति जुस् । अजक्षुः । अयमन्तस्थादिरित्युज्ज्वलदत्तो बभ्राम । रुदादयः पञ्च गताः । जागृ निद्राक्षये । जागर्ति । जागृतः । जाग्रति । 'उषविदे'त्याम्वा । जागरांचकार । जजागार । जाग्रोऽविचिण्णल्ङित्सु ।७।३।८५। जागर्तेर्गुणः स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन् वृद्धिविषये प्रति-

---

त.]मूह्यमित्यन्ये । अनितेः । 'उपसर्गादसमासेऽपी'त्यत उपसर्गादिति वर्तते, 'रषाभ्या'मित्यतो 'नो णः' इति च । तदाह—उपसर्गस्थादित्यादि । अन्तापवाद इति । 'झोऽन्तः' इत्यस्य अदादेशोऽपवादः । अस्य त्वपवादो जुसिति ज्ञेयम् । बभ्रामेति । 'जक्षन् क्रीडन् रममाण' इत्युपनिषदि जशादित्वस्य निर्विवादत्वात् । 'नाभ्यस्ताच्छतु'रिति निषेधेन 'जक्ष'न्निति नुमश्छान्दसत्वेऽपि जशादित्वस्य तत्कल्पनाया अन्याय्यत्वात् । धातुवृत्त्यादौ जशादिपाठाच्च।जाग्रोऽविचिण्णल् । ङिद्भ्योऽन्यस्मिन्निति । जागृविः । विशब्देन वादिप्रत्ययो गृह्यते । 'इकारस्तूच्चारणार्थ' इति वदतां मते क्वसावपि न भवति । जजागृवान् । जजागृवांसौ । चिण्—अजागारि । णल्—जजागार । ङित्—जागृतः । जागृथः । वृद्धिविषये इति । ण्वुलि—जागरकः । घञि—जागरः । णिचि—जागरयति । न चैतेषु गुणे कृतेऽपि 'अत उपधायाः'

---

बा.]'अज्ञार्ये'त्यटं च मत्वा आह—अश्वसीत् अश्वसदिति । विध्याशीर्लिङोःश्वस्यादिति सिद्धवत्कृत्य आह—श्वस्याताम् । श्वस्यास्तामिति । अन चेति । अनधातुरपि प्राणने वर्तते इत्यर्थः । सेडयम् । सार्वधातुकेऽपि वलादौ 'रुदादिभ्यः' इति इट् । लङि ईडटौ मत्वा आह—आनीत् आनदिति । अनितेः । 'रषाभ्यां नो णः' इत्यनुवर्तते । 'उपसर्गादसमासेऽपी'त्यत उपसर्गादिति । तदाह—उपसर्गस्थादिति । भिन्नपदस्थत्वादप्राप्तौ वचनम् ।

जक्षधातुः सेट् । वलादौ सार्वधातुकेऽपि 'रुदादिभ्यः' इति सेट् । अदभ्यस्तात् । झस्येति । 'झोऽन्त' इत्यतस्तदनुवृत्तेरिति भावः । जक्षतीति । 'जक्षित्यादयः ष'डित्यभ्यस्तसंज्ञेति भावः । लङस्तिपि ईडटोः—अजक्षीत् अजक्षदिति सिद्धवत्कृत्य आह—सिजभ्यस्तेति । अदादेशापवादो जुस् । अन्तःस्थादिरिति । तालव्याऽन्तःस्थादिरित्यर्थः । बभ्रामेति । 'जक्षन्क्रीडन् रममाणः' इत्युपनिषदि चवर्गतृतीयादित्वस्य निर्विवादत्वादिति भावः ।

जागृधातुर्ऋकारान्तः । सेट् । जागर्तीति । तिपि शपो लुकि ऋकारस्य गुणे रपरत्वम् । जागृत इति । ङित्वान्न गुणः । जाग्रतीति । 'जक्षित्यादयः ष'डित्यभ्यस्तसंज्ञायाम् 'अदभ्यस्ता'दिति झेरदादेशः । ङित्वाद्गुणनिषेधे ऋकारस्य यणिति भावः । जागर्षि जागृथः जागृथ । जागर्मि जागृवः जागृमः । लिटि 'कास्यनेका'जिति नित्यमामि प्राप्ते आह—उषविदेत्याम् वेति । जागरामिति । आमि ऋकारस्य गुणो रपरत्वं चेति भावः । आमभावे आह—जजागारेति । अतुसादौ कित्वाद्गुणनिषेधे प्राप्ते—जाग्रोऽवि । 'जाग्र'इति षष्ठी । 'मिदेर्गुणः' इत्यतो गुण इत्यनुवर्तते । तदाह—जागर्तेर्गुणः स्यादिति । 'अविचिण्णल्ङित्स्वि'तिच्छेदः । वि चिण् णल् ङित् एषां द्वन्द्वे नञ्समासः । तदाह—विचिण्णल्ङिद्भ्योऽन्यस्मिन्निति । चिण्णल्पर्युदासाद्वृद्धिविषयेऽप्यस्य प्रवृत्तिः । ङित्पर्युदासाद्गुणप्रतिषेधविषयेऽप्यस्य प्रवृत्तिः । तदाह—वृद्धिविषये प्रतिषेधविषये चेति । जजागरतुरिति । अत्र कित्वेऽपि गुणः । जजागरुः । जजागरिथ जजागरथुः जजगार । जजागार—जजागर, जजागरिव जजागरिम । विचि-

---

शे.]कात्' इत्यत्र च भाष्ये स्पष्टम् । अनितेः । 'उपसर्गादसमासे' इत्यत उपसर्गादिति वर्त्तते, नो ण इति च । अत्र समीपार्थ[क]मन्तपदमपकृष्य सप्तम्या विपरिण्म्य अनितेः समीपे यो रेफस्तस्मान्नस्य णत्वमित्यर्थः । सामीप्यञ्चाऽव्यवहितमेव, व्याख्यानात् । 'प्राणिती'त्यत्रैकादेशस्य परादिवत्त्वेनाऽनित्यव्यवहितत्वं रेफस्यास्ति । स्थानिवत्त्वन्तु न, पञ्चमीसमासस्याऽनित्यत्वात् । 'पर्यनिती'त्यादौ यकारेण व्यवधानान्न णत्वम् । अन्यथाऽडादिव्यवायेऽपि स्यादिति भाष्ये स्पष्टम् । 'अन्तः' इति सूत्रं 'हे प्राण्' इत्यत्र 'पदान्तस्ये'ति प्रतिषेधबाधनार्थम् । अन्तापवाद इति । यद्यप्यन्तरङ्गो ह्रस्वस्तथाप्यपवादविषयं प्रकल्प्योत्सर्गाणां प्रवृत्तेर्न 'ग्रामण्ये कुलाये'त्यादौ प्रवर्त्तेत इति 'तृतीयादिषु' इति सूत्रकैयटोक्तरीत्या 'प्रकल्प्य चाऽपवादविषयमुत्सर्गोऽभिनिविशते' इति भाष्योक्तन्यायमूलकेन 'उपसञ्जनिष्यमाणोऽप्यपवाद'न्यायेन ददतीत्यादौ अन्तरङ्गोऽप्यन्तादेशो न । 'ईर्त्सन्ती'त्यादौ नायम्, 'अनतः' इत्यपकर्षात्, अत एव 'प्रतीषिषन्ती'त्यादौ न। जाग्रो। चिण्णल्पर्युदासेन वृद्धिविषयस्य, ङित्पर्युदासेन प्रतिषेधविषयस्य ग्रहणम् । विरत्रैतच्छास्त्रकल्प्यो विन् । 'जागृविः' 'दर्विः' इत्याद्यव्युत्पन्नं प्रातिपदिकम् । उणादिषु पाणिनेरव्युत्पत्तिपक्षस्यैव सत्त्वात् । अत्रौणादिको 'वि'निति चिन्त्यम् । एतच्च 'उणादयः' इति सूत्रे निरूपयिष्यते । विग्रहणसामर्थ्याज्जागृवौ लक्षणान्तरेणापि गुणो न ।

षेधविषये च । जजागरतुः । अजागः । अजागृताम् । अभ्यस्तत्वाज्जुस् । **जुसि च** ।७।३।८३। अजादौ जुसीगन्ताङ्गस्य गुणः स्यात् । अजागरुः । अजादौ किम् ?। जागृयुः । आशिषि तु-जागर्यात्।जागर्यास्ताम् । जागर्यासुः । लुङि-अजागरीत् । जागृ-इसित्यत्र यण् प्राप्तः । तं सार्वधातुकगुणो बाधते । तं सिचि वृद्धिः । तां जागर्तिगुणः । तत्र कृते हलन्तलक्षणा वृद्धिः प्राप्ता, 'नेटी'ति निषिद्धा।ततः 'अतो हलादे'रिति बाधित्वा 'अतो ल्रान्तस्ये'ति प्राप्ता, 'ह्यन्ते'ति निषिध्यते । तदाहुः-**गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम् । पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नव।** इति।१०७२ **दरिद्रा दुर्गतौ।** दरिद्राति। **इद्दरिद्रस्य** ।६।४।११४। दरिद्रातेरिकारः स्याद्धलादौ क्ङिति सार्वधातुके । दरिद्रितः । **श्नाभ्यस्तयोरातः** ।६।४।११२। अनयोरातो लोपः स्यात् क्ङिति सार्वधातुके । दरिद्रति । अनेकाच्त्वादाम् । दरिद्रांचकार । 'आत औ णलः'इत्यत्र 'ओ'

---

त.]इति वृद्धिः स्यादिति वाच्यं, गुणविधेश्चिण्णल्प्रतिषेधस्य चाऽऽनर्थक्यापत्तेः । **जुसि च** । चकारः स्पष्टप्रतिपत्त्यर्थः । 'क्सस्याची'त्यतोऽचीत्यनुवर्तत इत्याह—**अजादाविति । जागृयुरिति ।** एवं शृणुयुः चिनुयुरित्यादावपि गुणो नेति बोध्यम् । 'यासुटो ङित्वाच्छृणुयुरित्यादौ गुणो ने'ति प्राचोक्तिस्तु मनोरमायां दूषिता, 'जुसि चे'ति गुणस्य निषेधापवादत्वादिति । केचित्तु-'जुसि चे'त्यत्र उसीत्यावर्त्य 'उस्रूपे जुसी'ति व्याख्यानान्नोक्तदोष इत्याहुः । 'अजादौ जुसी'ति समाधानं तु भाष्यारूढम् । जागर्तेः सिच इटि कृते यणादिप्राप्तिक्रमं दर्शयति-**जागृ-इसित्यत्रेति। तत्र कृते इति।** हलन्तलक्षणाया वृद्धेर्जागर्तिगुणेन बाधः,तेन गुणेन हलन्तत्वसंपादनात्। या हि गुणप्रवृत्तिसमये वृद्धिः सा बाध्यते नान्येति भावः । अजागरिष्टाम् । अजागरिषुः। अजागरीदित्यादि । **दरिद्रा । इद्दरिद्रस्य** । 'इद्दरिद्र' इति वक्तुमुचितम् । **श्नाभ्यस्त** । क्रीणन्ति । क्रीणते । पुनन्ति । पुनते । दधति । दधते । क्ङिति किम् ? । क्रीणाति । पुनाति । दधाति ।

---

बा.]ण्णल्ङित्सु तु न गुणः। वि-जागृविः। **चिण्**-अजागारि । **णल्**-जजागार । **ङित्**-जागृतः। **वृद्धिविषये** यथा ण्वुलि-जागरकः । **प्रतिषेधविषये** यथा-जजागरतुः । किरवेऽपि गुण इत्याद्यूह्यम् । जागरिता । जागरिष्यति । जागर्तु-जागृतात् जागृताम् जाग्रतु । जागृहि-जागृतात् जागृतम् जागृत । जागराणि जागराव जागराम । लङ्याह-**अजागरिति** । तिपि इकारलोपे हल्ङ्यादिना तकारलोपे रेफस्य विसर्ग इति भावः । अभ्यस्तत्वाल्लङो झेरदादेशे प्राप्ते आह-**अभ्यस्तत्वाज्जुसिति** । 'सिजभ्यस्तविदिभ्यश्चे'त्यनेनेति भावः । जक्षित्यादित्वादभ्यस्तत्वम् । अजागृ उस् इति स्थिते 'सार्वधातुकमपि'दिति ङित्वादविचिण्णल्ङित्स्विति पर्युदासादप्राप्ते गुणे आह-**जुसि च** । अङ्गस्येत्यधिकृतम्। 'मिदेर्गुण' इत्यतो गुण इत्यनुवर्तते । 'इको गुणवृद्धी'इति परिभाषया 'इक' इत्युपस्थितेन अङ्गस्य विशेषणात्तदन्तविधिः। 'क्सस्याची'इत्यतोऽनुवृत्तेन अचीत्यनेन जुसीत्यस्य विशेषणात्तदादिविधिः । तदाह-**अजादावित्यादिना । अजगरुरिति** । अजागः अजागृतम् अजागृत । अजागरम् अजागृव अजागृम । विधिलिङि यासुटो ङित्वान्न गुणः । जागृयात् जागृयाताम् । **जागृयुरिति** । 'जुसि चे'त्यत्र अजादावित्युक्तेर्न गुण इति भावः । **आशिषि तु जागर्यादिति** । 'किदाशिषी'इति यासुटः कित्वात् 'जाग्रोऽविचिण्णल्ङित्सु' इति गुण इति भावः । जागृधातोर्लुङि सिचि इटि यणादिप्राप्तिक्रमं दर्शयति-**जागृ इसित्यत्रेति । तत्र कृते इति** । 'जाग्रोऽविचिण्ण'लिति गुणे रपरत्वे कृते अजागर् ईदिति स्थिते सतीत्यर्थः । **तदाहुरिति** । 'वृद्धा' इति शेषः । अजागरिष्टाम् अजागरिषुरित्यादि सुगमम् ।

दरिद्राधातुरादन्तः सेट् । **दुर्गतिः**=धनहीनीभवनम् । **दारिद्रातीति** । धनहीनीभवतीत्यर्थः । **इद्दरिद्रस्य** । सौत्रो ह्रस्वः । 'गमहने'त्यतः क्ङितीत्यनुवर्तते । 'ई हल्यघो'रित्यते हलीति, 'अत उदि'त्यतः सार्वधातुके इति । तदाह-**दरिद्रातेरिति** । 'श्नाभ्यस्तयो'रित्याल्लोपाऽपवादः । ३ लोऽन्त्यस्ये'त्यन्त्यस्य इकारः । **दरिद्रित इति** । 'सार्वधातुकमपि'दिति तसो ङित्वादाकारस्य इकारः। **श्नाभ्यस्तयोरातः**। 'गमहने'त्यतो लोपः क्ङितीत्यनुवर्तते । 'अत उ'दित्यतः सार्वधातुके इति । तदाह-**अनयोरिति** । श्नाप्रत्ययस्य, अभ्यस्तस्य चेत्यर्थः । **दरिद्रतीति** । जक्षित्यादित्वादभ्यस्तत्वात् 'अदभ्यस्ता'दिति झस्य अदादेशे आकारलोपः। दरिद्रासि दरिद्रिथः । दरिद्रिथ । दरिद्रामि दरिद्रिवः दरिद्रिमः । लिट्याह-**अनेकाच्त्वादामिति**।इदंच 'कास्प्रत्यया'दिति सूत्रभाष्ये स्पष्टम् । **दरिद्रांचकारेति**।आमि सवर्णदीर्घः ।

---

शे.]किमु न गृह्यते, शुद्धेकारपरस्याऽत्र ग्रहणात्।क्विपस्तु साऽनुनासिक इति भाष्ये स्पष्टम्। **निषिध्यत इति** । 'जागरकः' इत्यत्र गुणे कृते उपधावृद्धिस्तु न, चिण्णल्प्रतिषेधवैयर्थ्यापत्त्या जागर्तेर्गुणे उपधावृद्ध्यभावकल्पनात् । यत्तु गुणोत्तरं वृद्धिमात्राऽभावे एतज्ज्ञापकमाश्रित्य 'ह्यन्ते'ति सूत्रे जागृग्रहणं त्याज्यमिति, तन्न, सति सम्भवे सजातीयापेक्षतैव ज्ञापकस्योचितेत्यर्थस्य जागृग्रहणेन ज्ञापनादित्याहुः । 'जाग्रः' इति सूत्रस्थभाष्यस्य तु सामान्यापेक्षज्ञापकत्वे एव स्वरसो दृश्यते । **इद्दरिद्रस्य** । सौत्रो ह्रस्वः । 'ई हल्यघो'रित्यस्यापवादः । आर्द्धधातुके लोपविधानात्सार्वधातुके एवेदम् । 'आत' इत्यनुवृत्त्या लोपोत्तरं नास्य प्रवृत्तिः । **अनयोरात इति** । श्नासाहचर्येणाभ्यस्तेऽप्यन्त्यस्यैव ग्रहणात्

इत्येव सिद्धे औकारविधानं दरिद्रातेरा[लृ]लोपे कृते श्रवणार्थम्। अतएव ज्ञापकाद्वाम्नेत्येके। ददरिद्रौ। ददरिद्रतुरित्यादि। यत्तु णलि ददरिद्रेति, तन्निर्मूलमेव। *दरिद्रातेरार्द्धधातुके विवक्षिते आतो लोपो वाच्यः। लुङि वा। सनि ण्वुलि ल्युटि च न। दरिद्रिता। अदरिद्रात्। अदरिद्रिताम्। अदरिद्रुः। दरिद्रियात्। दरिद्र्यात्। अदरिद्रीत्। इट्सकौ। अदरिद्रासीत्। १०७४ चकासृ दीप्तौ। [चकास्ति]। झस्य अत्। चका-

त.]आतः किम्? विभ्रति। ओ इत्येव सिद्धे इति। प्रथमत्यागे मानाऽभावादिति भावः। निर्मूलमेवेति। यत्तु व्याख्यातृभिः समर्थ्यते—'आमोऽभावे आतो लोपे कृते आदन्तत्वाऽभावादौत्वं नेति। तन्न। 'आत औ णलः' इत्यत्र प्राथम्यादोकारे कर्तव्ये औकारविधानं दरिद्रातेराल्लोपेऽपि श्रवणार्थं सदामभावे लिङ्गमिति हरदत्तमाधवादिग्रन्थैः, स्वग्रन्थेन च विरोधात्। तत्कथमौत्वस्याऽप्रवृत्तिर्भवेत्। यदप्युक्तम्—ओकारौकारयोर्द्विमात्रत्वाऽविशेषादौकारविधानमिति। तदपि स्थवीयः। तस्मिन्पक्षे आमो दुर्वारत्वप्रसङ्गात्। विवक्षित इति। तेन दरिद्रातीति दरिद्र इति पचाद्यजेव भवति। परसप्तम्यां तु 'श्याद्व्यधे'त्यादन्तलक्षणो णः स्यात्। सति तु तस्मिन् 'आतो युक् चिण्कृतो'रिति युकि दरिद्राय इति स्यादिति भावः। सनि ण्वुलीति। एतेष्वाल्लोपो नेत्यर्थः। दिदरिद्रासति। दरिद्रायकः। दरिद्राणम्। अदरिद्रुरिति। 'सिजभ्यस्ते'ति झेर्जुस्। 'लङः शाकटायनस्यैवे'त्यादन्तलक्षणो विकल्पस्तु न भवति, परत्वात् 'श्नाभ्यस्तयो'रित्याल्लोपे आकारान्तस्यैवाऽभावात्। 'ई हल्यघो'रित्यात ईत्वमिह न शङ्क्यमेव। झेर्जुसि हलादिपरत्वाऽभावादिति भावः। ननु दरिद्रा

बा.]कैयटमतमाह—आत इति। 'आत औ णलः' इत्यत्र प्रथमातिक्रमे कारणाऽभावादोकार एव विधातुमुचितः। वृद्धौ सत्यां तावतैव ययौ इत्यादिसिद्धेः। तस्मादौकारविधानं दरिद्राधातोर्णलि 'दरिद्रातेरार्द्धधातुके लोपो वक्तव्यः' इत्याल्लोपे 'ददरिद्रौ' इत्यौकारश्रवणार्थं संपद्यते। ओकारविधाने तु आल्लोपे सति वृद्धेरसंभवाद्ददरिद्रो इत्योकार एव श्रूयेतेत्यर्थः।

अत एवेति। अस्मादेव दरिद्रातेरौकारश्रवणार्थादौकारविधानाद्दरिद्रातेर्लिटि आम्नेति विज्ञायते। आमि सति णल एवाऽप्रसक्तेरित्यर्थः। इदंच 'वस्वेकाजाद्घसा'मिति सूत्रभाष्ये ध्वनितं, कैयटेन स्पष्टीकृतम्। तन्निर्मूलमेवेति। 'कास्प्रत्यये'ति 'वस्वेका'जिति सूत्रस्थभाष्यकैयटविरोधादिति भावः। ददरिद्रतुः ददरिद्रुः। ददरिद्रिथ ददरिद्रथुः ददरिद्र। ददरिद्रौ ददरिद्रिव ददरिद्रिम। आर्द्धधातुके विवक्षिते इति। 'आतो लोप इटि चे'त्याल्लोपो दरिद्रातेर्भवन् क्ङिति अक्ङिति च अजादावार्द्धधातुके भवति। स च आर्द्धधातुके विवक्षिते ततः प्रागेव भवतीति वक्तव्यमित्यर्थः। तेन दरिद्रातीति दरिद्रः। आल्लोपे कृते पचाद्यच् सिध्यति। आर्द्धधातुके परे आल्लोपप्रवृत्तौ तु 'श्याद्व्यधे'त्यादन्तलक्षणो णप्रत्ययः स्यात्। ततश्च कृते णप्रत्यये आल्लोपं बाधित्वा 'आतो युक् चिण्कृतो'रिति युकि 'दरिद्राय'इति स्यात्। आर्द्धधातुके विवक्षिते ततः प्रागेव आल्लोपे तु कृते आदन्तत्वाऽभावाण्णप्रत्ययाऽभावे पचाद्यच्प्रत्ययो निर्बाधः। तदिदं भाष्ये स्पष्टम्। लुङि वेति। लुङि आल्लोपो वा वक्तव्य इत्यर्थः। 'अद्यतन्यां वेति वक्तव्य'मिति वार्तिकार्थसङ्ग्रहोऽयम्। अद्यतन्यामित्यनेन अद्यतनभूतार्थकविहितलुङ्विभक्तिर्विवक्षिता, भाष्ये तस्या एवोदाहरणात्। सनि ण्वुलि ल्युटि च नेति। एतेषु दरिद्रातेराल्लोपो नेति वक्तव्यमित्यर्थः। ण्वुलि यथा—दरिद्रायकः। आतो युक्। ल्युटि यथा—दरिद्राणः। अनादेशे कृते आल्लोपाऽभावात्सवर्णदीर्घः। सनि यथा—दिदरिद्रासति। अनन्तरस्येति न्यायादस्य वार्तिकप्राप्तस्यैव लोपस्याऽयं निषेधः। तेन 'तनिपतिदरिद्राणामुपसङ्ख्यान'मिति दरिद्रातेः सन इट्पक्षे 'आतो लोप इटि चे'त्याल्लोपो भवत्येव—दिदरिद्रिषति। तदुक्तं भाष्ये—'न दरिद्रायके लोपो दरिद्राणे च नेष्यते। दिदरिद्रासतीत्येके, दिदरिद्रिषतीति वा'इति। दरिद्रितेति। तासि इटि उदाहृतवार्तिकेन आल्लोपः। 'आतो लोप इटि चे'त्यस्य संभवेऽपि न्याय्यत्वादत्र वार्तिकोपन्यासः। दरिद्रिष्यति। दरिद्रातु—दरिद्रितात् दरिद्रिताम् दरिद्रतु। दरिद्रितम् दरिद्रित। दरिद्राणि दरिद्राव दरिद्राम। लङ्याह—अदरिद्रादिति। इत्थं मत्वा आह—अदरिद्रितामिति। अदरिद्रुरिति। जक्षित्यादित्वेन अभ्यस्तत्वाज्जुसिति भावः। अदरिद्राः अदरिद्रितम् अदरिद्रित। अदरिद्राम् अदरिद्रिव अदरिद्रिम। दरिद्रियादिति। विधिलिङि सार्वधातुकत्वादित्वमिति भावः। आशीर्लिङ्याह—दरिद्र्यादिति। आतो लोप इति भावः। लुङि आतो लोपपक्षे आह—अदरिद्रीदिति। अदरिद्रिष्टामित्यादि। आल्लोपाऽभावपक्षे त्वाह—इट्सकाविति। अदरिद्रिष्यत्। चकासृ दीप्ताविति। ऋदित्। सेट्। चकास्ति चकास्त इति सिद्धवत्कृत्याह—झस्य अदिति। जक्षित्या-

शे.]'जाग्रति' इत्यत्र न दोषः। तत्साहचर्येणाभ्यस्तस्यापि सार्वधातुके एव लोप इत्याह—सार्वधातुके इति। आमिति। 'कास्प्रत्यया' दिति सूत्रे भाष्ये स्पष्टमिदम्। ओ इत्येवेति। ओकारस्य विवृततरत्वेन यत्नलाघवादिति भावः। आल्लोप इति। आर्द्धधातुके विवक्षिते लोपेऽपि औविधानसामर्थ्यादेव भूतपूर्वगत्याकारान्तत्वमाश्रित्य णल आदेश इति भावः। आम्नेति। पक्षे इति भावः। इदं मतं 'वस्वेकाजा'दिति सूत्रे भाष्ये ध्वनितं, कैयटेन स्पष्टमेवोक्तम्। सनिण्वुलीति। 'अनन्तरस्ये'ति न्यायेन वार्तिकप्राप्तस्यैव निषेधः। तेन 'दिदरिद्रिषती'त्यत्राऽऽतो लोपो भवत्येव। 'दिदरि-

सति । चकासांचकार । 'धि चे'ति सलोपः सिंच एवेत्येके । चकाद्धि । 'चकाधी'त्येव भाष्यम् । **तिप्यनस्तेः** ।८।२।७३। पदान्तस्य सस्य दः स्यात्तिपि न त्वस्तेः । अचकात् । अचकाद् । अचकासुः । **सिपि धातो रुर्वा** ।८।२।७४। पदान्तस्य धातोः सस्य रुः स्याद्वा । पक्षे दः । अचकाः । अचकात् । **१०७५ शासु अनुशिष्टौ** । शास्ति । **शास इदङ्हलोः** ।६।४।३४। शास उपधाया इत्स्यादङि हलादौ क्ङिति च । 'शासिवसी'ति षः । शिष्टः । शासति। शशासतुः। शशासुः।शास्तु । शिष्टात् । शिष्टाम्।शासतु । **शा हौ** ।६।४।३५। शास्तेः शादेशः स्याद्धौ परे । तस्याऽऽभीयत्वेनाऽसिद्धत्वाद्धेर्धिः । शाधि । अशात् । अशिष्टाम् । अशासुः । अशाः । अशात् ।

---

त.]झि इति स्थिते जुसः प्रागेव आल्लोपात्परत्वादपवादत्वाच्च ईत्वं स्यात्। मैवम् । अकृतव्यूहपरिभाषाया जागरूकत्वात् । ईत्वनिमित्तं हि हलादित्वं, तच्च विनाशोन्मुखं, जुसो भावित्वात् । **झस्य अदिति**। 'अदभ्यस्ता'दित्यनेन । **तिप्यनस्तेः**। पदान्तस्य किम् ? । चकास्ति । सस्येति किम् ?। वशेर्लङि तिपि अवट् । तिपि किम् ?। क्विपि चकाः। अनस्तेःकिम्?। सर्वमा इदम् । 'आ' इति लङि तिपि अस्ते रूपम् । 'बहुलं छन्दसी'ति ईट् न । **शास इदङ्हलो :** । अङि अशिषत्। क्ङिति–शिष्टः । शिष्टवान् । शिष्यात् । शिष्यास्ताम् । अङ्साहचर्यात्परस्मैपद एवेत्वम् । नेह–आशास्ते । अन्ये तु यस्माच्छासेरङ् संभवति तस्यैवेत्वमिति व्याख्याय व्यतिशिष्टे व्यतिशिढ्वे इत्यात्मनेपदेऽपि इत्वं स्वीकुर्वन्ति । **शा हौ** । पूर्वसूत्रे उपधापदान्वयानुरोधेन 'शास' इत्यवयवषष्ठ्यपि। इह स्थानषष्ठ्येव, 'उपधाया' इत्यस्य निवृत्तत्वादित्याह–**शास्तेः शादेश इति** । 'धि चे' ति सलोपेन शाधीति रूपे सिद्धेऽपि सलोपस्याऽसिद्धत्वात् 'शासइ'दिति इत्वं स्यात्;

---

बा.]दित्वेन अभ्यस्तत्वादिति भावः।**चकासतीति**।चकास्सि चकास्थः चकास्थ । चकास्मि चकास्वः चकास्मः। **चकासांचकारेति**।अनेकाच्त्वादामिति भावः।चकासिता।चकासिष्यति।चकास्तु [चकास्तात्]चिकास्ताम् चकासतु । हेर्धिभावे चकास् धि इति स्थिते 'धिचे'ति सलोप इति सिद्धान्तः । तत्र मतान्तरमाह–**सिच एवेत्येके इति** । 'धिचे'ति लोपः सिच एवेत्येके मन्यन्ते इत्यर्थः । **'धिसकारे सिचो लोपश्चकाद्धीति प्रयोजन'**मिति वार्तिकादिति तदाशयः । अस्मिन्पक्षे सकारस्य जश्त्वेन दकारः। तदाह–**चकाद्धीति**। 'एके' इत्यस्वरसोद्भावनम् । तद्बीजं तु 'धिसकारे सिचो लोपः' इति वार्तिकं प्रत्याख्याय सकारमात्रस्य 'धि चे'ति लोपस्याभ्युपगमः । तदाह–**चकाधीत्येव भाष्यमिति** । चकास्तात् चकास्तम् चकास्त । चकासानि चकासाव चकासाम । लङि अ चकास् त् इति स्थिते–**तिप्यनस्तेः** । न अस्तिः–अनस्तिः, तस्येति विग्रहः । पदस्येत्यधिकृतम् । 'झलां जशोऽन्ते' इत्यतोऽन्ते इत्यनुवर्तते । 'ससजुषो'रित्यतः स इति षष्ठ्यन्तमनुवर्तते । 'वसुस्रंसुध्वंस्वनडुहां दः' इत्यतो द इति । तदाह–**पदान्तस्येत्यादिना** । अनस्तेः किम्?। 'सलिलं सर्वमा इदम्' । 'आ' इत्यसधातोर्लङस्तिपि इकारलोपे 'बहुलं छन्दसी'ति 'अस्तिसिचः' इति ईडभावे हल्ङ्यादिलोपे रूपम् । । प्रकृते तु चकासेर्लङस्तिपो हल्ङ्यादिलोपे सकारस्य दत्वे 'वाऽवसाने' इति चर्त्वजश्त्वे इत्यभिप्रेत्याह–**अचकात् अचकादिति** । **अचकासुरिति** । 'सिजभ्यस्ते'ति जुसिति भावः । **सिपि धातोः** । पदस्येत्यधिकृतम्। 'झलां जशोऽन्ते' इत्यतोऽन्ते इत्यनुवृत्तम् । 'ससजुषो'रित्यतः स इति लुप्तषष्ठीकमनुवर्तते । तदाह–**पदान्तस्येति** । **पक्षे इति** । 'वसुस्रंस्वि'त्यतस्तदनुवृत्तेरिति भावः । सिपि धातुत्वस्य अव्यभिचाराद्धातोरित्युत्तरार्थम् । अचकासीत् । अचकासिष्यत् । शासधातुरुदित् । सेट् । **शास इदङ्हलोः**। 'अनिदितां हलः' इत्यत उपाधायाः क्ङिति इत्यनुवर्तते। तदाह–**शास उपधाया इति** । **शासतीति** । जक्षादित्वेन अभ्यस्तत्वाददादेश इति भावः । शास्सि शिष्ठः शिष्ठ । शास्मि शिष्वः शिष्मः। 'आशास्ते' इत्यत्र तु नेत्वम्, अङ्योग्यस्य परस्मैपदिन एव ग्रहणादिति भाष्ये स्पष्टम् । **शशासेति** । शशासिथ । शासिता । शासिष्यति । शास् हि इति स्थिते आह–**शा हौ** । 'शा' इति लुप्तप्रथमाकम् । 'शास इद'ङित्यतः शास इत्यनुवर्तते । तदाह–**शास्तेरिति** । इत्वापवादः । ननु शासेः शाभावे सति झल्परत्वाऽभावात्कथं हेर्धिरित्यत आह–**तस्याभीयत्वेनेति** । यद्यपि 'धि चे'ति सलोपे शाधीति सिद्धम् , तथापि सलोपस्याऽसिद्धत्वात् 'शास इ'दिति इत्वं स्यात् । तन्निवृत्तये शाविधानमित्याहुः। लङ्याह–**अशादिति**।'तिप्यनस्ते' रिति दत्वे चर्त्वविकल्प इति भावः । **अशासुरिति** । अभ्यस्तत्वाज्जुसिति भावः । **अशाः अशादिति** । 'सिपि धातो'रिति रुत्वदत्वविकल्प

---

शे.]द्रिषतीत्येके, दिदरिद्रासतीति वे' ति भाष्यात्। **अदरिद्रासीदिति**। अयं प्रयोग 'इद्दरिद्रस्ये'ति सूत्रे भाष्ये। **इत्येके इति** । 'धि चे'त्यत्र 'सिचो ग्रहणं कर्त्तव्य'मिति वार्तिकादिति भावः । **भाष्यमिति** । 'इष्टमेवैतच्चकाधी'ति भाष्योक्तेः । सिचोऽनुवृत्तेरभावोऽपूर्वकरणश्चाऽनिष्टावहमिति तद्भावः। **तिप्यनस्तेः** । अनस्तेः किम् ?। सलिलं सर्वमा इदम्।'आः'इति लङि तिप्यस्ते रूपम् । 'बहुलं छन्दसी'ति ईण्न । **सिपि धा** । 'सिपि वे'त्येव दत्वविकल्पे, सामान्यसूत्रेणैव रुत्वे सिद्धे धातोः रुरिति 'दश्चे'त्युत्तरार्थम् । **शास इति** । अङ्योग्यस्यैव शासेर्ग्रहणादाशास्ते इत्यादौ नेति भाष्ये स्पष्टम् । **शा हौ** । इत्वापवादः । यद्यपि पूर्वसूत्रे 'शास' इत्यवयवषष्ठी तथापीहोपधापदनिवृत्त्या स्थानषष्ठ्येव ।

शिष्यात्। 'सर्तिशास्ती'त्यङ्। अशिषत्। अशासिष्यत्। १०७६ दीधीङ् दीप्तिदेवनयोः। [देवनं शोकः]। एतदादयः पञ्च धातवश्छान्दसाः। दीधीते। 'एरनेकाचः' इति यण्। दीध्याते। यीवर्णयोर्दीधीवेव्योः। ७।४।५३। एतयोरन्त्यस्य लोपः स्याद्यकारे इवर्णे च परे। इति लोपं बाधित्वा नित्यत्वाट्टेरेत्वम्। दीध्ये। 'दीधीवेवीटा'मिति गुणनिषेधः। दीध्यांचक्रे। दीधिता। दीधिष्यते। [अदीधीत]। १०७७ वेवीङ् वेतिना तुल्ये। 'वी गती'त्यनेन तुल्येऽर्थे वर्तत इत्यर्थः। अथ त्रयः परस्मैपदिनः। १०७८ षस १०७९ सस्ति स्वप्ने। सस्ति। सस्तः। ससन्ति। ससास। सेसतुः [सेसुः। सस्तु]। सधि। 'पूर्वत्रासिद्ध'मिति सलोपस्याऽसिद्धत्वात् 'अतो हे'रिति लुङ्। असत्। असस्ताम्। असः। असत्। सस्यात्। असासीत्। अससीत्। सन्ति। सन्तः। संसन्ति। 'बहूनां समवाये द्वयोः

त.]तद्वारणाय शाविधानमित्याहुः। यीवर्णयोः। 'य्वो'रित्युक्तेऽपीष्टसिद्धौ यकारेकारयोरिति स्फुटप्रतिपत्तिर्न स्यादिति वर्णग्रहणं कृतम्। यिश्च इवर्णश्च यीवर्णौ, तयोः। यिश्चेति इकार उच्चारणार्थो न तु विवक्षितस्तदाह—यकारे इवर्णे चेति। 'यिवर्णयो'रिति पाठस्तूचितः। लोपं बाधित्वेति। लोपस्य तूदाहरणम्। आदीध्य गतः। आवेव्य गतः। दीधिता। दीधिष्यते। वेविता। वेविष्यते। यीवर्णयोरिति किम्?। आदीध्यनम्। आवेव्यनम्। षस। असदिति। 'तिप्यनस्ते'रितिदत्वम्। अस इति। 'सिपि धातो' रिति रुर्वा। पक्षे दः। सन्तीति। इदित्वान्नुमि सन्सत्ति इति

बा.]इति भावः। अशिष्टम् अशिष्ट। अशासम् अशिष्व अशिष्म। शिष्यादिति। 'शास इत्' इति इत्त्वे 'शासिवसी'ति ष इति भावः। अशिषदिति। अङि इत्वमिति भावः। दीधीङ्धातुरीकारान्तः। ङित्वादात्मनेपदी। एतदादयः पञ्चेति। इदं च माधवानुरोधेन। तत्त्वं त्वग्रे वक्ष्यते। जक्षित्यादित्वादभ्यस्तत्वाज्झस्य अदादेशः। दीध्यते। दीधीषे दीध्याथे दीधीध्वे। लट इडादेशे आह—यीवर्णयोर्दीधीवेव्योः। यिश्च इवर्णश्चेति द्वन्द्वात्सप्तमी। 'यि' इत्यत्र इकार उच्चारणार्थः। 'तासस्त्यो'रित्यतो लोप इत्यनुवर्तते। 'अलोऽन्त्यस्ये'त्यन्त्यस्य लोपः। तदाह—एतयोरित्यादि। 'आदीध्य गतः' 'आवेव्य गतः'। अत्र ल्यपि ईकारस्य लोपः। इवर्णे उदाहरणं वक्ष्यते। इति लोपमिति। लट इडादेशे दीधी इ इत्यत्र 'यीवर्णयो'रिति इवर्णपरत्वात्प्राप्तं लोपं परमपि बाधित्वा नित्यत्वाट्टेरेत्वमित्यर्थः। कृते अकृते च लोपे प्रवृत्तेरेत्वं नित्यम्। तस्मिन्कृते यीवर्णपरकत्वाऽभावान्न लोप इति भावः। गुणनिषेध इति। दीधी—आमिति स्थिते 'सार्वधातुकार्धधातुकयो'रिति प्राप्तस्य निषेध इत्यर्थः। दीधितेति। इटि कृते इवर्णपरकत्वादीकारस्य लोप इति भावः। दीधीताम् दीध्याताम् दीध्यताम्। दीधीष्व दीध्याथाम्। दीधीध्वम्। दीध्यै दीध्यावहै दीध्यामहै। अदीधीत अदीध्याताम् अदीध्यत। अदीधीथाः अदीध्याथाम् अदीधीध्वम्। अदीधि अदीधीवहि अदीधीमहि। दीधीत दीधीयाताम्। दीधिषीष्ट दीधिषीयास्ताम् दीधिषीरन्। अदीधिष्ट। अदीधिष्यत। वस्तुतस्तु छन्दसि दृष्टानुविधित्वादेषां पञ्चानां लोकानुसारेण रूपवर्णनमनुचितम्। वेवीङ् वेतिना तुल्ये इति। दीधीवद्रूपाणि। इति जक्षित्यादयः। षस षस्ति स्वप्ने इति। षोपदेशावेतौ। द्वितीय इदित्। तत्र षसधातोरुदाहरति—सस्तीति। ससन्तीति। अनभ्यस्तत्वादन्तादेश एवेति भावः। एत्वाभ्यासलोपौ मत्वा आह—सेसतुरिति। सेसुः। ससिथ सेसथुः सेस। ससास—ससस सेसिव सेसिम। ससिता। ससिष्यति। सस्तु—सस्तात् सस्ताम् ससन्तु। सस् हि इति स्थिते हेर्धिभावे 'धि चे'ति सलोपं मत्वाह—सधीति। तत्र 'धि'इत्यस्य स्थानिवत्त्वेन हित्वात् 'अतो हे'रिति लुकमाशङ्क्याह—पूर्वत्रेति। सस्तात् सस्तम् सस्त। ससानि ससाव ससाम। लङ्याह—असदिति। असस् त् इति स्थिते हल्ङ्यादिना तकारलोपे 'तिप्यनस्ते'रिति सस्य दत्वमिति भावः। अस्स्तामिति। अससन्नित्यपि ज्ञेयम्। लङः सिपि तु असस् स् इति स्थिते 'सिपि धातो'रिति रुर्वा। पक्षे दः। हल्ङ्यादिलोपः। तदाह—असः असदिति। असस्तम् असस्त। अससम् असस्व असस्म। लिङ्याह—सस्यादिति। सस्याताम्। सस्यास्तामित्यादि। लुङ्याह—असासीदिति। 'अतो हलादे'रिति वृद्धिविकल्प इति भावः। अससिष्यत्।

अथ षस्तिधातोरुदाहरति—सन्तीति। इदित्वान्नुम्। 'नश्चे'त्यनुस्वारे संस् त् ति इति स्थिते, 'स्को'रिति सलोपे,

शे.]पञ्चेति। अत एव 'दीधीवेवी'ति सूत्रे 'दीधीवेव्योश्छान्दसत्वा' दिति भाष्यं, 'जक्षित्यादयः' इति सूत्रे 'षसिवशी छान्दसौ' इति भाष्यञ्च। यीवर्णयोर्दी। 'तासस्त्यो'रित्यतो लोप इत्यनुवर्तते। यिश्च इवर्णश्चेति द्वन्द्वः। 'यी'त्यत्रेकार उच्चारणार्थस्तदाह—यकार इति। नित्यत्वादित्यन्तरङ्गत्वस्याप्युपलक्षणम्। टेरेत्वमिति। 'अचःपरस्मि'न्निति सूत्रे 'आदीध्ये' इति भाष्यप्रयोगादिति भावः। आदीधयतेर्ण्वुलि अन्तरङ्गत्वेन णिलोपात्पूर्वं 'यीवर्णयो'रिति लोपे 'आदीधकः' इति सिद्धम्। यत्तु 'नाग्लोपी'ति भाष्ये वर्णग्रहणसामर्थ्याल्लुप्तेऽपी[स्वमि]त्युक्तं, तत्तु अन्तरङ्गत्वमनालोच्य। एवञ्चान्तरङ्गपरिभाषाया अनित्यत्वे एतज्ज्ञापकमिति बोध्यम्। एतेन वर्णग्रहणसामर्थ्याच्छ्रूयमाण इवर्ण एव लोप इति हरदत्ताद्युक्तमपास्तम्। वेवीङोऽनन्तरमाङःशास्विति पठ्यते इति 'जक्षित्यादयः' इति सूत्रस्थभाष्यस्वरसः। षससस्ति। 'जक्षित्यादयः' इति सूत्रस्थभाष्यस्वरसात्तु सस्तिधातुरत्र नास्तीति प्रतीयते। तत्रैव कैयटे—षस शासि स्वप्ने' इत्येके पठन्ति तत्र

संयोगसंज्ञा ने'त्याश्रित्य 'स्को'रिति लोपाऽभावात्-संस्ति। संस्त इत्येके। १०८० **वश कान्तौ**। कान्तिरिच्छा। वष्टि।उष्टः। उशन्ति।वक्षि। उष्ठः।उवाश। ऊशतुः। वशिता। वष्टु। उष्टात्। उष्टाम्। उड्ढि। अवट्। अवड्। औष्टाम्। औशन्। अवशम्। उश्यातम्। उश्यास्ताम्। [अवाशीत्। अवशीत्]। (ग) **चर्करीतं च**। यङ्लुगन्तमदादौ बोध्यम्। १०८२ **हुङ् अपनयने**। हुते। जुहुवे। हुवीत। ह्नोषीष्ट। अह्नोष्ट। इत्यदादयः।

---

त.]स्थिते 'स्को' रिति सलोपे 'झरो झरि सवण' इति तकारस्य वा लोपः। **संस्ति संस्त इति**। इहापि पूर्ववत्तलोपो वा बोध्यः। **वश कान्तौ**। भाषायामप्यस्य प्रयोगो दृश्यते। 'वष्टि भागुरिरल्लोपं', 'जयाय सेनान्यमुशन्ति देवाः' इति। **चर्करीतं च**। गणसूत्रमिदम्। चर्करीतमिति यङ्लुगन्तस्य पूर्वाचार्याणां संज्ञा। **अदादौ बोध्यमिति**।

---

बा.]परसवर्णे,'झरो झरी'ति प्रथमतकारस्य लोपविकल्पे,एकतं द्वितं वा रूपमिति भावः। **संस्तन्तीति**। अनभ्यस्तत्वादन्तादेश एवेति भावः। सिपि संस्त् सि इति स्थिते 'स्को'रिति सलोपे अनुस्वारस्य परसवर्णो नकारः। सवर्णपरत्वाऽभावात् 'झरो झरी'ति तकारलोपो न। सन्त्सि सन्थः सन्थ। संस्मि संस्वः संस्मः। ससंस्त ससंस्ततुः। ससंस्तिथ। ससंस्तिव ससंस्तिम। संस्तिष्यति। सन्तु-सन्तात् सन्ताम् संस्तन्तु। संस्त् हि इति स्थिते हेर्धिभावे 'स्को'रिति सलोपे परसवर्णे सन्त् धि इति स्थिते 'झरो झरी'ति तकारस्य लोपः। सन्धि। लोपाऽभावे तकारस्य जश्त्वे सन्द्धि-सन्तात् सन्तम् सन्त। संस्तानि संस्ताव संस्ताम। लङस्तिपि असंस्त् त् इति स्थिते हल्ङ्यादिलोपे संयोगादिलोपे संयोगान्तस्य लोपे-असन्। असन्ताम् असंस्तन्।असन् असन्तम् असन्त।असंस्तम् असंस्व असंस्म।संस्त्यात्। असंस्तीत्। असंस्तिष्यत्। मतान्तरमाह-**बह्वनामिति**। **इत्याश्रित्येति**। तथाच प्रकृते लटस्तिपि संस्त् ति इति स्थिते झलि परे अनुस्वारसकारतकाराणां त्रयाणां समवायात् स् त् इत्यनयोः संयोगसंज्ञाविरहात् 'स्को'रिति लोपाऽभावात् संस्तीत्याद्यूह्यमित्यर्थः। **वश कान्ताविति**। **कान्तिरिच्छा**। सेट्। **वष्टीति**। 'व्रश्चे'ति शस्य षत्वे तकारस्य ष्टुत्वेन टः। **उष्ट इति**। ङिति 'ग्रहिज्या' इति संप्रसारणे रूपमिति भावः। **उवाशेति**। लिटि अकिति 'लिट्यभ्यासस्ये'ति संप्रसारणमिति भावः। **ऊशतुरिति**। परत्वाद्ग्रहिज्येति संप्रसारणे कृते द्वित्वे हलादिशेषे सवर्णदीर्घ इति भावः। उवशिथ ऊशथुः ऊश। उवाश-उवश ऊशिव ऊशिम। **वशितेति**। अनेन सेट्त्वं द्योतितम्। वशिष्यति। **उष्टामिति**। उशन्त्वित्यपि ज्ञेयम्। **उड्ढीति**। वश् हि इति स्थिते धिभावे अपित्त्वेन ङित्त्वाद्ग्रहिज्येति संप्रसारणे शस्य षत्वे धस्य ष्टुत्वेन ढकारे षस्य जश्त्वेन ड इति भावः। वशानि वशाव वशाम। लङ्याह-**अवडिति**। हल्ङ्यादिलोपे शस्य षः, षस्य डः, तस्य चर्त्वविकल्प इति भावः। **औशन्निति**। अवट् औष्टम् औष्ट। **अवशमिति**। पित्त्वान्न संप्रसारणमिति भावः। औश्व औश्म। विध्याशीर्लिङो उश्यादिति सिद्धवत्कृत्य आह-**उश्याताम् उश्यास्तामिति**। अवशीत् अवाशीत्। अवशिष्यत्। तदेवं दीधीङ् वेवीङ् षस षस्ति वश एते पञ्च धातवश्छान्दसा एवेति माधवादयः। तत्र 'दीधीवेवीटा'मिति सूत्रे 'दीधीवेव्योश्छन्दोविषयत्वा'दिति भाष्यम्। 'जक्षित्यादयः ष'डिति सूत्रे 'षसिवशी छान्दसा'विति भाष्यम्। एतद्भाष्यादेव षस्तिधातोर्नोऽत्र पाठ इति प्रतीयते। अत एव 'षस शास्ति स्वप्ने' इति पाठमभ्युपगम्य श्तिपा निर्देशेन शास एवार्थभेदात्पुनः पाठ इति कैयट आह। अत्र वशधातोरपि छान्दसत्ववचनं प्रायिकम्, 'वष्टि भागुरिरल्लोपं' 'जयाय सेनान्यमुशन्ति देवाः' इत्यादिप्रयोगदर्शनादित्यास्तां तावत्। **चर्करीतं चेति**। धातुपाठे गणसूत्रमिदम्। 'चर्करीत'मिति यङ्लुगन्तस्य संज्ञा पूर्वाचार्यसिद्धा। तदाह-**यङ्लुगन्तमदादाविति**। तेन यङ्लुगन्ताच्छबेव विकरणः, तस्य लुक्, न तु श्यनादि विकरणान्तरम्। 'परस्मैपदिन' इत्युपक्रमाद्यङ्लुगन्तस्य परस्मैपदित्वमेव। **हुङ् अपनयने इति**। अनिडयम्। **हुते इति**। हुवाते हुवते इत्यादि। **जुहुवे इति**। जुहुवाते जुहुविरे। क्रादिनियमादिट्। जुहुविषे। जुहुविवहे। होता। होष्यते। हुताम्। हुष्व। हवै हवावहै। अहुत। इति सिद्धवत्कृत्य विधिलिङ्याह-**हुवीतेति** आशीर्लिङ्याह-**ह्नोषीष्टेति**। लुङ्याह-**अह्नोष्टेति**। इति बालमनोरमायां लुग्विकरणम्।

---

शे.]श्तिपानिर्देशेन शास एवार्थभेदात्पुनः पाठ इत्यन्ये'त्युक्तम्।माधवानुरोधात्तु मूलपाठः।तदनुसारेणैव पञ्चानां छान्दसत्वोक्तिः। **असः, असदिति**। 'सिपि धातो'रिति वा रुः। **सन्तीति**। इदित्त्वान्नुमि 'स्को'रिति सलोपे 'झरो झरी'ति पक्षे तल्लोपः। **इत्येके इति**। अत्राऽरुचिबीजन्तु 'हलोऽनन्तराः' इति सूत्रभाष्यविरोधः। तत्रत्यभाष्यादप्ययमप्रामाणिकः। अन्यथा बहूनां सन्निधाने बहूनामेवेति पक्षे मस्जधाताविवाऽत्रापि दोषात्तदनुक्तौ बीजाऽनापत्तिः। **वश कान्तौ**। अस्य भाषायां प्रयोगोऽसाधुरेव। **उड्ढीति**। संप्रसारणधित्वषत्वजश्त्वष्टुत्वानि। **अवडिति**। लङि हल्ङ्यादिलोपे षत्वजश्त्वचर्त्वानि। **औष्टाम्**। संप्रसारणेऽजादित्वादाट्। [यद्यपि 'लावस्थायाम'डिति पक्षे आण्न प्राप्नोति तथापि भाव्यजादेरपि तेनाऽऽड्विधानान्न दोषः। तत्पक्षे 'ऐज्यते'त्यादिसिद्धयेऽटमेवाश्रित्य आटः प्रत्याख्यानाच्च]। **चर्करीतञ्चेति**। 'चर्क-

## अथ जुहोत्यादयः ।

**१०८३ हु** दानाऽदनयोः । आदाने चेत्येके । प्रीणनेऽपीति भाष्यम् । दानं चेह प्रक्षेपः । स च वैधे आधारे हविषश्चेति स्वभावाल्लभ्यते । इतश्चत्वारः **परस्मैपदिनः** । **जुहोत्यादिभ्यः श्लुः** ।२।४।७५। शपः श्लुः स्यात् । **श्लौ** ।६।१।१०। धातोर्द्वे स्तः । जुहोति । जुहुतः । 'अदभ्यस्तात्'इत्यत् । 'हुश्नुवो'रिति यण् । जुह्वति । **भीह्रीभृहुवां श्लुवच्च** ।३।१।३९। एभ्यो लिट्याम्वा स्यादामि श्लाविव कार्यं च । जुहवांचकार । जुहाव । होता । होष्यति । जुहोतु । जुहुतात् । हेर्धिः । जुहुधि । आटि परत्वाद्गुणः । जुहवानि । परत्वात् 'जुसि चे'ति गुणः । अजुहवुः । जुहुयात् । हूयात् । अहौषीत् । **१०८४ ञि भी भये** । बिभेति । **भियोऽन्यतरस्याम्** ।६।४।११५। इकारः स्याद्धलादौ क्ङिति सार्वधातुके । बिभितः ।

त.]तेन यङ्लुगन्तेषु 'अदिप्रभृतिभ्यः' इति शपो लुग् भवतीति भावः । प्राचा तु 'चर्करीत'मिति यङ्लुगन्तं परस्मैपदमित्युक्तं, तच्चेहाऽप्रकृतत्वादुपेक्षितम् । **इत्यदादयः** ।

**अथ जुहोत्यादयः । हु दाना** । यद्यपि स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वाऽऽपादनमेव दानं, तथापि प्रयोगमनुसृत्य व्याचष्टे—**प्रक्षेप इति** । **वैध इति** । आहवनीयादौ । **हविष इति** । विधिबोधितद्रव्यस्येत्यर्थः । **स्वभावादिति** । तेन आहवनीये पुरोडाशे प्रक्षेप्तव्ये प्रमादेन कोपेन[कामेन] वा पाषाणः प्रक्षिप्तः, पुरोडाशो वा गर्तादौ, स तु प्रक्षेपो न होम इति ज्ञेयम् । **परस्मैपदिन इति** । तेन 'ह्वोष्ये' इति केषांचित्प्रयोगोऽसाधुरेव । 'सराग्नौ जुह्वानाः' इत्यानन्दलहरीप्रयोगस्तु साधुरेव, शानचोऽप्रवृत्तावपि चानशन्तत्वात् । **आटीति** । 'आडुत्तमस्ये'त्यनेन । **परत्वादिति** । 'हुश्नुवो' रिति यणपेक्षया परत्वादित्यर्थः । **भियोऽन्यतरस्याम्** । सार्वधातुके किम् ? । भीयते । बिभीये ।

बा.] अथ श्लुविकरणा धातवो निरूप्यन्ते । **हु दानाऽदनयोरिति** । दाने अदने चेत्यर्थः । **भाष्यमिति** । 'तृतीया च होश्छन्दसी'ति सूत्रस्य'मिति शेषः । ननु यदि दानमिह प्रसिद्धं विवक्षितं तर्हि 'ब्राह्मणाय गां ददाती'त्यत्र जुहोतीत्यपि प्रयोगः स्यादित्यत आह—**दानं चेह प्रक्षेप इति** । नन्वेवमपि कूपे घटं प्रक्षिपति, आहवनीये जलं प्रक्षिपतीत्यत्रापि जुहोतीति प्रयोगः स्यादित्यत आह—**स चेति**। सः=प्रक्षेपो, विधिबोधिते आधारे=आहवनीयादौ पुरोडाशादिहविष इति लभ्यते इत्यन्वयः । कुत इत्यत आह—**स्वभावादिति** । अनादिसिद्धलोकव्यवहारादित्यर्थः । तथाच विधिबोधिते आधारे विधिबोधितस्य देवतायै त्यज्यमानस्य हविषः प्रक्षेपे हुधातुर्वर्तते इति फलितम् । एतच्च पूर्वमीमांसायां तृतीये 'सर्वप्रदानं हविषस्तदर्थत्वा'दित्यधिकरणेऽध्वरमीमांसाकुतूहलवृत्तौ प्रपञ्चितमस्माभिः । **जुहोत्यादिभ्यः श्लुः । शप इति** । 'अदिप्रभृतिभ्यः' इत्यतस्तदनुवृत्तेरिति भावः । हु अ इति स्थिते शपः श्लौ कृते हु ति इति स्थिते—**श्लौ** । शेषं पूरयति—**धातोर्द्वे स्त इति** । 'एकाचो द्वे' इत्यतो 'लिटि धातो'रित्यतश्च तदनुवृत्तेरिति भावः । द्वित्वे कृते अभ्यासकार्यमभिप्रेत्य आह—**जुहोतीति** । **यणिति** । उवङपवाद इत्यर्थः । **भीह्री** । भी ह्री भृ हु एषां द्वन्द्वात्पञ्चम्यर्थे षष्ठी । 'कास्प्रत्यया'दित्यत आम् लिटीत्यनुवर्तते । तदाह—**एतेभ्य इति** । 'श्लुव'दिति सप्तम्यन्ताद्वतिरित्यभिप्रेत्य आह—**आमि श्लाविव कार्यं चेति** । **जुहवामिति** । आमि श्लाविव द्वित्वे गुणे इति भावः । **जुहावेति** । जुहुवतुः । जुहविथ जुहोथ । जुहुधि । **हेर्धिरिति** । 'हुझल्भ्यो हेर्धि'रित्यनेनेति भावः । 'जुहवानी'त्यत्र आटः पित्त्वेन अङित्त्वाद्गुणे प्राप्ते तं बाधित्वा 'हुश्नुवो'रिति यणि प्राप्ते आह—**आटि परत्वादिति** । 'हुश्नुवो'रित्यपेक्षया गुणः परत्वाद्भवतीत्यर्थः । लङि—अजुहोत् अजुहुतामिति सिद्धवत्कृत्य 'सिजभ्यस्ते'ति जुसि 'हुश्नुवो'रिति यणमाशङ्क्याह—**परत्वाज्जुसि चेति गुण इति** । **अजुहवुरिति** । अजुहोः अजुहुतम् अजुहुत अजुहवम् अजुहुव अजुहुम । **अहौषीदिति**। सिचि वृद्धिः । अहौष्टामित्यादि । अहोष्यत् । **ञि भी भये इति**। अनिट् । ईदन्तः । शपः श्लौ द्वित्वादि मत्वाह—**बिभेतीति** । **भियोऽन्यतरस्याम्** । 'इद्दरिद्रस्ये'त्यत इदिति, 'गमहने'त्यतः क्ङितीति, 'ई हल्यघो'रित्यतो हलीति; 'अत उ'दित्यतः सार्वधातुके इति चानुवर्तते इत्यभिप्रेत्य शेषं पूरयति—**इकारः स्यादित्यादिना** ।

शे.]रीत'मिति यङ्लुकः सञ्ज्ञा । तेन तदन्तग्रहणं,सामर्थ्यात् । 'किरतिं चर्करीतान्त'मिति सप्तमे भाष्योक्तेः। **अदादावेति** । तेन यङ्लुगन्ताच्छबेव, न तु तत्तद्गणप्रयुक्तः श्यनादिः । शपो लुक्च । परस्मैपदिन उपक्रम्याऽस्य पाठादस्य परस्मैपदित्वमेवेति बोध्यम् । **इत्यदादयः** ।

**अथ जुहोत्यादयः । भाष्यमिति** । 'तृतीया च हो'रित्यत्र । दानं प्रसिद्धञ्चेत् 'विप्राय जुहोती'त्यपि स्यादत आह—**प्रक्षेप इति** । **वैधे इति** । आहवनीयाग्न्यादिरूपे । तत्र प्रज्वालनाय प्रक्षिप्यमाणकाष्ठादावतिप्रसङ्गनिवृत्तये आह—**हविषश्चेति** । **जुहुत इति** । श्लोः परनिमित्तत्वाऽभावेन श्लुत्वेन स्थानितयाऽजादेशत्वाऽभावेन च स्थानिवद्भावेन शप्त्वमाश्रित्य न गुणः । **परत्वादिति** । 'हुश्नुवो'रित्येतदपेक्ष्येति भावः । **भियोऽन्य** ।

बिभीतः । बिभ्यति । बिभयांचकार । बिभाय । भेता । **१०८५ ह्री लज्जायाम्** । जिह्रेति । जिह्रीतः । जिह्रियति । जिह्रयांचकार । जिह्राय । **१०८६ पॄ पालनपूरणयोः** । **अर्तिपिपर्त्योश्च** ।७।४।७७। अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ । **उदोष्ठ्यपूर्वस्य** ।७।१।१०२। अङ्गावयवौष्ठ्यपूर्वो य ऋत्तदन्तस्याऽङ्गस्य उत्स्यात् । गुणवृद्धी परत्वादिमं बाधेते । पिपर्ति । उत्वम् । रपरत्वम् । 'हलि च'ेति दीर्घः । पिपूर्तः । पिपुरति । पपार । किति लिटि 'ऋच्छत्यॄता'मिति गुणे प्राप्ते । **शॄदॄप्रां ह्रस्वो वा** ।७।४।१२। एषां किति लिटि ह्रस्वो वा स्यात् । पक्षे गुणः । पप्रतुः । पप्रुः । पपरतुः । पपरुः । परिता । परीता । अपिपः । अपिपूर्ताम् । अपिपरुः । पिपूर्यात् ।

त.]हलादौ किम् ? । बिभ्यति । क्ङिति किम् ? । बिभेति । केचिदत्र हलादौ क्ङितीत्येतन्नाऽतीवोपयुज्यते, इत्त्वविधानस्य बिभित इत्यादौ चरितार्थत्वात्, बिभ्यति बिभेतीत्यादौ यणादेः प्रवृत्तिसंभवादित्याहुः । **अर्तिपिपर्त्योश्च** । अर्तेरुदाहरणमियर्तीति वक्ष्यति । **उदोष्ठ्य** । अङ्गावयवेति किम् ? । 'ॠ गतौ' क्र्यादिस्तस्मात् क्तप्रत्यये 'श्र्युकः किती'ति इण्निषेधात्समीर्णं इति भवति । अन्यथा तु 'समूर्णं' इति स्यात् । **शॄदॄप्रां** । शॄ हिंसायाम् । दॄ विदारणे। इमौ क्र्यादी । **पक्षे गुण इति** । 'ऋच्छत्यॄता'मित्यनेन । **पप्रतुरिति** । ह्रस्वपक्षे यण् । ननु ह्रस्वग्रहणमिह मास्तु, गुणानुवृत्त्या

बा.]**बिभ्यतीति** । 'अदभ्यस्ता'दित्यत् । **बिभयामिति**। 'भीह्रीभृहुवां श्लुवच्चे'ति श्लुवत्त्वाद्द्वित्वादीति भावः। **बिभायेति** । बिभ्यतुः । बिभयिथ-बिभेथ । बिभ्यिव बिभ्यिम । **भेतेति** । भेष्यति । बिभेतु-बिभितात्-बिभीतात् बिभिताम् बिभीताम्—बिभ्यतु । बिभिहि—बिभीहि—बिभितात्—बिभीतात्, बिभितम्—बिभीतम्, बिभित—बिभीत । बिभयानि बिभयाव बिभयाम । अबिभेत्, अबिभिताम्-अबिभीताम्, अबिभयुः । अबिभेः, अबिभितम्-अबिभीतम्, अबिभित-अबिभीत । अबिभयम् अबिभिव-अबिभीव अबिभिम-अबिभीम । बिभियात्-बिभीयादित्यादि । आशीर्लिङि [ भीयात् ] भीयास्ताम् । अभैषीत् । अभेष्यत् । **ह्री लज्जायामिति** । अनिट् । **जिह्रियतीति** । 'अदभ्यस्ता'दित्यत् । इयङ् । **जिह्रयामिति** । 'भीह्रीभृहुवा'मित्याम् । श्लुवत्त्वाद्द्वित्वादीति भावः । **जिह्रायेति** । जिह्रयिथ जिह्रेथ । जिह्रियिव । ह्रेता । ह्रेष्यति । जिह्रेतु-जिह्रीतात् । जिह्रीहि । जिह्रयाणि । अजिह्रेत् । जिह्रीयात् । ह्रीयात् । अह्रैषीत् । अह्रेष्यत् । **पॄधातुः** सेट् । लटस्तिपि शपः श्लौ द्वित्वे पॄ पॄ इति स्थिते-**अर्तिपिपर्त्योश्च** । 'अत्र लोपः' इत्यस्मादभ्यासस्येति, 'भृञामि'दित्यस्मात् इदिति, 'निजां त्रयाणा'मित्यतः श्लाविति चानुवर्तते इत्यभिप्रेत्य शेषं पूरयति-**अभ्यासस्येत्यादिना** । तथाच अभ्यासे ऋकारस्य इत्वे रपरत्वे हलादिशेषे उत्तरखण्डस्य गुणे रपरत्वे पिपर्तीति वक्ष्यति । तत्र उत्तरखण्डे ॠकारस्य उत्वं शङ्कितुमाह-**उदोष्ठ्य** । 'ॠत इद्धातो'रित्यत ॠत इत्यनुवर्तते । अङ्गस्येत्यधिकृतमिहानुवृत्तमावर्तते । एकमवयवषष्ठ्यन्तमोष्ठ्यस्य विशेषणम् । अपरं तु ॠता विशेष्यते । तदन्तविधिः । तदाह-**अङ्गावयवौष्ठ्येत्यादिना** । अङ्गावयवेति किम् ? । समीर्णः । 'ॠ गतौ' क्र्यादिः । तस्मात्संपूर्वात् क्तप्रत्यये 'श्र्युकः किती'तीण्निषेधे 'ॠत इद्धातो'रिति इत्वे रपरत्वे 'हलि च'ेति दीर्घे 'रदाभ्या'मिति निष्ठानत्वे तस्य णत्वे समीर्णं इति रूपम् । तत्र मकारात्मकौष्ठ्यपूर्वत्वादित्त्वं बाधित्वा उत्त्वं स्यात् । 'अङ्गावयवे'त्युक्तौ तु मकारस्य ओष्ठ्यस्य अङ्गावयवत्वाऽभावादुत्त्वं न भवति। तथाच ऽक्तेऽपि पॄ तीत्यत्र इदमुत्त्वं स्यादिति शङ्का प्राप्ता। तां परिहरति-**गुणवृद्धी इति** । **इममिति** । उत्त्वविधिमित्यर्थः । **पिपर्तीति** । उरण्परत्वाद्गुण इति भावः । पिपॄ तस् इति स्थिते आह-**उत्वमिति** । ङित्त्वेन गुणाऽभावादुदोष्ठ्येत्युत्त्वमिति भावः । **पिपुरतीति** । अभ्यस्तत्वाददादेशे ङित्त्वाद्गुणाऽभावादुत्त्वमिति भावः । पिपर्षि पिपूर्थः पिपूर्थ । पिपर्मि पिपूर्वः पिपूर्मः । लिटि णल्याह-**पपारेति** । उरण्परत्वाद्वृद्धिरिति भावः। 'अर्तिपिपर्त्योश्चे'त्यभ्यासस्य नेत्त्वम्, तत्र श्लावित्यनुवृत्तेः । **प्राप्ते इति**। गुणे नित्यं प्राप्ते इत्यर्थः । **शॄदॄप्राम्** । शॄ दॄ पॄ एषां द्वन्द्वः । **लिटीति** । 'दयतेर्दिगि लिटी'त्यतस्तदनुवृत्तेरिति भावः । यद्यपि पूर्वसूत्रेषु क्वापि कितीति न दृष्टं तथापि अस्य 'ऋच्छत्यॄता'मिति गुणाऽपवादत्वाद्गुणस्य च तस्य किदर्थत्वात्कितीत्युक्तम् । **पप्रतुरिति** । पपॄ अतुस् इति स्थिते ॠकारस्य ह्रस्वे तस्य यणिति भावः । गुणपक्षे आह-**पपरतुरिति** । गुण एव तु न विकल्पितः, गुणाऽभावे 'वार्णादाङ्गं बलीयः' इति यणं बाधित्वा 'उदोष्ठ्ये'त्युत्त्वप्रसङ्गात् । पपरिथ पप्रथुः-पपरथुः पप्र-पपर । पपार पपर पप्रिव-पपरिव । 'वॄतो वा' इति दीर्घविकल्पं मत्वा आह-**परिता परीतेति** । परिष्यति-परीष्यति। पिपर्तु-पिपूर्तात् पिपूर्ताम् पिपुरतु । पिपूर्हि-पिपूर्तात् पिपूर्तम् पिपूर्त । पिपराणि पिपराव पिपराम। लङ्याह-**अपिपरिति** । अपि पॄ त् इति स्थिते गुणे रपरत्वे हल्ङ्यादिना तकारलोपे रेफस्य विसर्गः । **अपिपरुरिति** । अभ्यस्त-

शे.]'गमहने'त्यतः क्ङितीति वर्तते। अभ्यस्तस्येत्यनुवृत्त्या, सार्वधातुक इत्यनुवृत्त्या वा 'भीतः' इत्यादौ न दोषः।पॄ।दीर्घोच्चारणमुत्वाय । **उदोष्ठ्य** । **अङ्गावयवौष्ठ्येति** 'ॠ गतौ' इति क्र्यादेः क्ते 'समीर्णः' इति यथा स्यादिति तत् । **शृद** । ह्रस्वविधानस्य क्ङित्येव फलमिति सूचयितुं-**कितीति** । गुणाऽभावे 'वार्णादाङ्ग'मिति यणं बाधित्वोत्वापत्त्या गुण

पूर्यात्। अपारीत्। अपारिष्टाम्। ह्रस्वान्तोऽयमिति केचित्। पिपर्ति। पिपृतः। पिप्रति। पिपृयात्। आशिषि प्रियात्। अपार्षीत्। [अपरिष्यत्]। पाणिनीयमते तु 'तं रोदसी पिपृत' मित्यादौ छान्दसत्वं शरणम्। १०८७ डुभृञ् धारणपोषणयोः। भृञामित् ।७।४।७६। भृञ् माङ् ओहाङ्-एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ। बिभर्ति। बिभृतः। बिभ्रति। बिभृध्वे। श्रुवद्वावाद्विस्त्वेत्वे। बिभरामास। बभार। बभर्थ। बभृव। बिभृहि। बिभराणि। अबिभः। अबिभृताम्। अबिभरुः। बिभृयात्। भ्रियात्। भृषीष्ट। अभार्षीत्। अभृत। १०८८ माङ् माने शब्दे च। ई हल्यघोः।६।४।११३। श्नाभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि [न तु घुसंज्ञकस्य]। मिमीते। 'श्नाभ्यस्तयो' रित्याल्लोपः। मिमाते। मिमते। प्रण्यमास्त। १०८९ ओहाङ् गतौ। जिहीते। जिहाते। जिहते।

त.] तस्यैव विकल्पोऽस्तु। तथाच यणादेशेन पप्रतुः शश्रतुरित्यादि सिध्यत्येव। गुणपक्षे तु पपरतुः शशरतुरित्याद्यपि सिध्यतीति चेत्, मैवम्। गुणाऽभावपक्षे 'ऋत इद्धातो' रितीत्त्वप्रसङ्गात्। न चान्तरङ्गत्वाद्यणेव स्यादिति वाच्यं, 'वार्णादाङ्गस्य बलीयस्त्वात्। डुभृञ्। 'ड्वितः क्त्रिः'। भृत्रिमम्। भृञामित्। 'णिजां त्रयाणा' मित्यतोऽनुवर्तनादाह-एषां त्रयाणामिति। केचित्तु कपिञ्जलाधिकरणन्यायेन त्रयाणामिति लभ्यत इत्याहुः। त्रयाणां किम्?। जहाति। श्लौ किम्?। बभार। ई हल्यघोः। श्नाभ्यस्तयोरिति। लुनीते। पुनीते। क्ङितीति किम्?। लुनाति। अघोः किम्?। धत्तः। दत्तः। मिमीते इति। 'घुमास्थे' तीत्वमिह न प्रवर्तते, तत्रार्द्धधातुक इत्यनुवृत्तेः। अन्यथा मातः माथः, गाते गासे इत्यादावतिप्र-

बा.] त्वात् जुस्। कृते 'जुसि चे' ति गुणे रपरत्वम्। अपिपः अपिपूर्तम् अपिपूर्त। अपिपरम् अपिपूर्व अपिपूर्म। केचिदिति। अन्ये आचार्या इत्यर्थः। ह्रस्वान्तत्वपक्षे 'उदोष्ठ्ये' त्युत्त्वं नेति मत्वा आह-पिपृत इति। ह्रस्वान्तस्य अनिट्त्वाल्लुङादौ पर्तेत्यादि। पिपृहि। अपार्षीदिति। ह्रस्वान्तस्य अनिट्त्वान्न सिज्लोप इति भावः। नन्वाचार्यान्तरसंमतं ह्रस्वान्तत्वं कुतोऽस्माभिरादर्तव्यमित्यत आह-पाणिनीयेति। पाणिनिसंमतदीर्घान्तत्वस्यैवाश्रयणे 'तं रोदसी पिपृत' मित्यादौ 'उदोष्ठ्ये' त्युत्त्वापत्त्या ऋकारस्य ह्रस्वस्य श्रवणाऽनापत्त्या तद्विषये छान्दसत्वमेव शरणमनुसरणीयं स्यादित्यर्थः। डु भृञिति। अनिडयम्। ञित्वादुभयपदी। श्लौ सति द्वित्वादौ बिभर्तीत्यादि स्थितम्। भृञामित्। भृञामिति बहुवचनाद्भृञादीनामिति लभ्यते। 'अत्र लोपः' इत्यतोऽभ्यासस्येति, 'निजां त्रयाणां गुणः श्लौ' इत्यतस्त्रयाणां श्लाविति चानुवर्तते। तदाह-भृञ् माङित्यादिना। बिभ्रतीति। अभ्यस्तत्वाददादेशो यण्। बिभर्षि बिभृथः बिभृथ। बिभर्मि बिभृवः बिभृमः। बिभृते बिभ्राते बिभ्रते। बिभृषे बिभ्राथे। इति सिद्धवत्कृत्य आह-बिभृध्वे इति। बिभ्रे बिभृवहे बिभृमहे। श्रुवद्वावादिति। 'भीह्रीभृहुवा' मित्यनेनेति भावः। बिभरामासेति। अनुप्रयोगसामर्थ्यादस्तेर्भूभावो नेति भावः। बभारेति। श्लावित्यनुवृत्तेर्भृञामिदिति नेत्त्वम्। बभ्रतुः बभ्रुरित्यपि ज्ञेयम्। 'कृसृभृवृ' इति लिटि इण्निषेधः। थल्यपि 'अचस्तास्व' दिति नित्यमिण्निषेधः। ऋदन्तत्वेन भारद्वाजमतेऽपि निषेधात्। तदाह-बभर्थेति। बभ्रथुः बभ्र। बभार-बभर इति सिद्धवत्कृत्य आह-बभृवेति। क्रादित्वादिण्निषेध इति भावः। बभ्रे बभ्राते बभ्रिरे। बभृषे बभ्राथे बभृढ्वे। बभ्रे बभृवहे बभृमहे। भर्ता। भरिष्यति। भरिष्यते। बिभर्तु-बिभृतात् बिभृताम् बिभ्रतु। इति सिद्धवत्कृत्य आह-बिभृहीति। हेरपित्त्वेन ङित्त्वाद्गुणनिषेध इति भावः। बिभृतात् बिभृतम् बिभृतेति सिद्धवत्कृत्य आह-बिभराणीति। आटः पित्त्वेन ङित्त्वाऽभावान्न गुणनिषेध इति भावः। बिभराव बिभराम। लङ्याह-अबिभरिति। अबिभृ त् इति स्थिते गुणे रपरत्वे हल्ङ्यादिलोपे रेफस्य विसर्ग इति भावः। अबिभरुरिति। अभ्यस्तत्वात् झेर्जुस्। 'जुसि चे' ति गुणः। अबिभः अबिभृतम् अबिभृत। अबिभरम् अबिभृव अबिभृम। अबिभृत अबिभ्राताम् अबिभ्रत। अबिभृथाः अबिभ्राथाम् अबिभृध्वम्। अबिभ्रि अबिभृवहि अबिभृमहि। आशीर्लिङ्याह-भ्रियादिति। 'रिङ्शयग्लिङ्क्षु' इति रिङ्। आत्मनेपदे आशीर्लिङ्याह-भृषीष्टेति। 'उश्चे' ति कित्त्वान्न गुणः। अभार्षीदिति। अनिट्त्वान्न सिज्लोपः। सिचि वृद्धिः। रपरत्वमिति भावः। अभार्ष्टामित्यादि। आत्मनेपदे लुङ्याह-अभृतेति। 'ह्रस्वादङ्गा' दिति सिचो लोपः। अभृषातामित्यादि। माङ् माने इति। अनिट्। ङित्त्वादात्मनेपदी। श्लौ द्वित्वे 'भृञामि' दिति अभ्यासस्य इत्त्वे मि मा ते इति स्थिते-ई हल्यघोः। 'ई' इति लुप्तप्रथमाकम्। 'श्नाभ्यस्तयोरातः' इत्यनुवर्तते। 'गमहने' त्यतः क्ङितीति, 'अत उत्सार्वधातुके' इत्यतः सार्वधातुके इति चानुवर्तते। तदाह-श्नाभ्यस्तयोरित्यादिना। आल्लोप इति। 'अजादौ क्ङिति सार्वधातुके' इति शेषः। मिमते इति। अभ्यस्तत्वाददादेशः। मिमीषे मिमाथे मिमीध्वे। मिमे मिमीवहे मिमीमहे। ममे ममाते ममिरे। ममिषे ममाथे ममिध्वे। ममे ममिवहे ममिमहे। माता। मास्यते। मिमीताम् मिमाताम् मिमताम्। मिमीष्व मिमाथाम् मिमीध्वम्। मिमै मिमावहै मिमामहै। अमिमीत

शे.] एव न विकल्पितः। भृञामित्। बहुवचनादाद्यर्थावगतिः। 'णिजा' मित्यतस्त्रयाणामित्यनुवर्तते। [ई हल्य। श्नासाहचर्यादभ्यस्तांशेऽपि सार्वधातुक एवेदम्। जहातेश्च। अभ्यस्तस्येत्यनुवृत्त्याऽस्य, 'लोपो यी' त्यस्य च सार्वधातुके एव

जहे।हाता।हास्यते।१०९० ओहाक् त्यागे।परस्मैपदी।जहाति।**जहातेश्च**।६।४।११६।इत्स्याद्वा हलादौ क्ङिति सार्वधातुके। पक्षे ईत्त्वम् । जहितः। जहीतः। जहति । जहौ । जहातु। जहितात् । जहीतात् । जहिताम्। जहीताम्। **आ च हौ**।६।४।११७। जहातेर्हौ परे आस्यात् । चादिदीतौ । जहाहि। जहिहि। जहीहि। अजहात् । अजहुः। **लोपो यि**।६।४।११८।जहातेरालोपः स्याद्यादौ सार्वधातुके। जह्यात्।'एर्लिङि'।हेयात्। अहासीत् १०९१ डुदाञ् दाने। प्रणिददाति। दत्तः। ददति । दत्ते । ददौ । 'ध्वसो'रित्येत्त्वाभ्यासलोपौ । देहि । अददात् । अदत्ताम् । अददुः । दद्यात् । देयात् । अदात् । अदाताम् । अदुः। अदित । १०९२ डुधाञ् धारणपोषणयोः। दानेऽपीत्येके । प्रणिदधाति । **दधस्तथोश्च** ।८।२।३८। द्विरुक्तस्य झषन्तस्य धाञो बशो भष् स्यात्तथयोः स्ध्वोश्च परतः । वचन-

---

त.] सज्ञात्। अतएव काशिकायामुक्तमार्द्धधातुक इत्यधिकारो न ल्यपीति योगं यावदिति। **जहातेश्च** । क्ङितीति किम् ?। जहाति । सार्वधातुके किम् ?। हीयते । **चादिदीताविति** । अतएव भट्टिः प्रायुङ्क्त-'जहिहि जहीहि जहाहि रामभार्या'मिति । **लोपो यि** । सार्वेति किम् ? । हेयात् । **प्रणिददातीति** । 'नेर्गदे'ति णत्वम् । **दत्त इति** । 'श्नाभ्यस्तयो'रित्यालोपः । 'अघो'रित्युक्तत्वादीत्त्वं तु न । **अदादिति** । 'गातिस्थे'ति सिचो लुक् । **दधस्तथोश्च** ।

---

बा.] अमिमाताम् अमिमत। अमिमीथाः अमिमाथाम् अमिमीध्वम्। अमिमि अमिमीवहि अमिमीमहि।मिमीत मिमीयाताम् मिमीरन् । मिमीथाः मिमीयाथाम् मिमीध्वम् । मिमीय मिमीवहि मिमीमहि । मासीष्ट । अमास्त अमासाताम् अमासत। अमास्थाः अमासाथाम् अमाध्वम् । अमासि अमास्वहि अमास्महि । अमास्यत । **ओ हाङ्गताविति** । अनिट् । ङित्त्वादात्मनेपदी । 'भृञामि'दिति इत्त्वम् । माङ्धातुवद्रूपाणि । अभ्यासे चुत्वं विशेषः । तदाह-**जिहीते इत्यादि** । इति भृञादयस्त्रयो गताः । **ओ हाक्त्यागे इति** । अनिट् । ओकारः ककारश्च इत् । **जहातीति** । श्लौ द्वित्वे अभ्यासचुत्वमिति भावः । तसादौ 'श्नाभ्यस्तयोरातः' इति नित्यमीत्वे प्राप्ते-**जहातेश्च** । 'इद्दरिद्रस्ये'त्यत इदिति, 'भियोऽन्यतरस्या'मित्यतोऽन्यतरस्यामिति चानुवर्तते । 'गमहने'त्यतः क्ङितीति, 'अत उत्सार्वधातुके' इत्यतः सार्वधातुके इति, 'ई हल्यघो'रित्यतो हलीति चेत्यभिप्रेत्य शेषं पूरयति-**इत्स्याद्वेति** । **जहतीति** । अभ्यस्तत्वाददादेशे 'श्नाभ्यस्तयो'रित्याल्लोपः । **जहाविति** । जहतुः जहुः । जहिथ-जहाथ जहथुः जह । जहौ जहिव जहिम । हाता। हास्यति। **जहितादिति** । जहिताम्-जहीताम् जहतु । **आ च हौ** । 'आ'इति लुप्तप्रथमाकम् । **जहातेरिति** । 'जहातेश्चे'त्यतस्तदनुवृत्तेरिति भावः । **चादिदीताविति** । 'इद्दरिद्रस्ये'त्यतः, 'ई हल्यघो'रित्यतश्च तयोरिह चकारेणानुकर्षादिति भावः । जहितात्-जहीतात् जहितम्-जहीतम् जहित-जहीत । जहानि जहाव जहाम । लङ्याह-**अजहादिति** । अजहिताम्-अजहीताम् अजहुः । **अजहा इति** । अजहितम्-अजहीतम् अजहित-अजहीत । अजहाम् अजहिव-अजहीव अजहिम-अजहीम । **लोपो यि** । 'जहातेश्चे'त्यतो जहातेरिति, 'श्नाभ्यस्तयोरातः'इत्यत आत इति, 'अत उत्सार्वधातुके' इत्यतः सार्वधातुके इति चानुवर्तते । 'यी'ति सप्तम्यन्तं सार्वधातुकविशेषणम् । तदादिविधिः । तदाह-**जहातेरित्यादिना** । 'जहातेश्चे'त्यस्यापवादः । आशीर्लिङ्याह- **एर्लिङीति** । **अहासीदिति** । 'यमरमे'ति सगिटौ । अहास्यत् । **डु दाञ्** । उभयपदी । अनिट् । **प्रणिददातीति**। 'नेर्गदे'ति णत्वम्। **दत्त इति** । ददा तस् इति स्थिते 'अघो'रिति पर्युदासादीत्त्वाऽभावे 'श्नाभ्यस्तयो'रित्याल्लोपः । **ददतीति** । अभ्यस्तत्वाददादेशे 'श्नाभ्यस्तयो'रित्याल्लोप इति भावः । ददासि दत्थः दत्थ । ददामि दद्वः दद्मः । **दत्ते इति** । ददाते ददते । दत्से ददाथे दद्ध्वे । ददे दद्वहे दद्महे । **ददौ इति** । ददतुः ददुः । ददिथ-ददाथ ददथुः दद । ददौ ददिव ददिम । ददे ददाते ददिरे । ददिषे ददाथे ददिध्वे । ददे ददिवहे ददिमहे । दाता । दास्यति दास्यते । ददातु-दत्तात् दत्ताम् ददतु । इति सिद्धवत्कृत्य देहि इत्यत्र आह-**ध्वसोरिति** । दत्तात् दत्तम् दत्त । ददानि ददाव ददाम । दत्ताम् ददाताम् ददताम् । दत्स्व ददाथाम् दद्ध्वम् । ददै ददावहै ददामहै । लङ्याह-**अददादिति**। **अददुरिति** । अभ्यस्तत्वाज्जुस् । अददाः अदत्तम् । अदत्त । अददाम् अदद्व अदद्म । विधिलिङ्याह-**दद्यादिति** । श्नाभ्यस्तयो'रित्याल्लोपः । आशीर्लिङि तु 'एर्लिङी'त्येत्त्वमभिप्रेत्य आह-**देयादिति** । दासीष्ट । लुङ्याह-**अदादिति** । 'गातिस्थे'ति सिचो लुगिति भावः । अदाः अदातम् अदात । अदाम् अदाव अदाम । लुङ्यात्मनेपदे आह-**अदितेति** । अदा स् त इति स्थिते 'स्थाघ्वोरिच्चे'ति दाधातोरन्त्यस्य इकारः । सिचः कित्त्वं च । कित्त्वान्न गुणः । 'ह्रस्वादङ्गा'दिति सिचो लोप इति भावः । अदिषाताम् अदिषत । अदिथाः अदिषाथाम् अदिढ्वम् । अदिषि अदिष्वहि अदिष्महि । अदास्यत् अदास्यत ।

**डु धाञ्** । ञित्त्वादुभयपदी । अनिट् । **प्रणिदधातीति** । 'नेर्गदे'ति णत्वम् । तसि श्लौ द्वित्वे अभ्यासजश्त्वे

---

शे.] प्रवृत्तिः]। **दत्त इति**। 'अघो'रिति प्रतिषेधादीत्वाऽभावे 'श्नाभ्यस्ते'त्यालोपः। **अदात्** । 'गातिस्थे'ति सिचो लुक् ।

सामर्थ्यादाल्लोपो न स्थानिवदिति वामनमाधवौ । वस्तुतस्तु 'पूर्वत्राऽसिद्धे न स्थानिवत्' । धत्तः । दधति । धत्थः । धत्थ । दध्वः । दध्मः । धत्ते । धत्से । धद्ध्वे । धेहि । अधित । अथ त्रयः स्वरितेतः । १०९३ णिजिर् शौचपोषणयोः। निजां त्रयाणां गुणः श्लौ ।७।४।७५।निज्–विज्–विषामभ्यासस्य गुणः स्यात् श्लौ । नेनेक्ति । नेनिक्तः । नेनिजति । निनेज । नेक्ता । नेक्ष्यति । नेनेक्तु । नेनिग्धि । नाभ्यस्तस्याऽचि पिति सार्वधातुके ।७।३।८७। लघूपधगुणो न स्यात् । नेनिजानि । अनेनेक् । अनेनिक्ताम् । अनेनिजुः । नेनिज्यात् । निज्यात्।[इरितो वेत्यङ्] अनिजत्।अनैक्षीत्।अनिक्त। १०९४ विजिर् पृथग्भावे।वेवेक्ति।वेविक्ते । विवेजिथ।अत्र

---

त.]'दध' इति कृतद्विर्वचनाभ्यासकार्यो धाञेव गृह्यते न तु दध धारण इत्ययमिति व्याचष्टे–द्विरुक्तस्येति । झषन्तस्य किम् । दधाति । नन्वेवं 'धत्ते' इत्यादावपि न स्यादाल्लोपस्य स्थानिवत्त्वेनाऽझषन्तत्वादत आह–वचनसामर्थ्यादिति । निजाम् । श्लाविति किम् ?। निनेज। नाभ्यस्तस्य। अभ्यस्तस्य किम्?। द्वेषाणि । अचि किम् ?। वेवेष्टि । पिद्ग्रहणम्

---

बा.]'श्नाभ्यस्तयो'रित्याल्लोपे दध् तस् इति स्थिते–दधस्तथोश्च।धाधातोः कृतद्वित्वस्य दधा इत्यस्य 'दधः' इति षष्ठ्यन्तम् । 'एकाचो बशः' इत्यतो झषन्तस्य बशो भष् इत्यनुवर्तते । त थ् अनयोर्द्वन्द्वात् सप्तमीद्विवचनम् । तकारादकार उच्चारणार्थः । तकारथकारयोरिति लभ्यते । चकारात्स्ध्वोरिति समुच्चीयते । सकारे ध्वशब्दे चेति लभ्यते । तदाह–द्विरुक्तस्येत्यादिना । तथाच अभ्यासे दकारस्य धकारः, तकारपरकत्वात् । ननु 'श्नाभ्यस्तयो'रित्याल्लोपस्य 'अचः परस्मि'न्निति स्थानिवत्त्वान्न तकारपरकत्वं, नापि झषन्तत्वमित्यत आह–वचनसामर्थ्यादिति । वस्तुतस्त्वति । भष्भावस्य पूर्वत्रासिद्धीयत्वादेव तस्मिन् कर्तव्ये आल्लोपस्य स्थानिवत्त्वाऽप्रसक्तेर्वचनसामर्थ्याश्रयणक्लेशो वृथेति भावः । धत्त इति । धस्य चर्त्वेन त इति भावः । दधतीति । 'अदभ्यस्ता'दित्यदादेशे 'श्नाभ्यस्तयो'रित्याल्लोपः । धत्थ इति । थकारपरकत्वाद्भष् । धत्थ । दधामि । दध्व इति । परनिमित्ताऽभावान्न भष् । दध्मः। धत्ते इति । दधाते दधते । धत्से इति । सकारपरकत्वाद्भषिति भावः । दधाथे । धद्ध्वे इति । दध् ध्वे इति स्थिते ध्वशब्दपरकत्वाद्भषिति भावः । दधे दध्वहे दध्महे । दधौ । दधे । धाता । धास्यति धास्यते । दधातु–धत्तात् धत्ताम् दधतु ।

धेहीति । 'ध्वसो'रित्येत्वाभ्यासलोपाविति भावः। धत्तात् धत्तम् धत्त । दधानि दधाव दधाम । धत्ताम् दधाताम् दधताम् । धत्स्व दधाथाम् धद्ध्वम् । दधै दधावहै दधामहै । अदधात् अधत्त । दध्यात् दधीत । धेयात् धासीष्ट । अधात् । अधितेति । 'स्थाध्वोरिच्चे'ति इत्वे 'ह्रस्वादङ्गा'दिति सिचो लोप इति भावः। अधास्यत् अधास्यत। णिजिर् धातुः। अनिडयं णोपदेशः । इरित् । इकारस्य प्रत्येकमित्त्वाऽभावान्न नुम् । इकारस्य स्वरितत्वप्रतिज्ञाबलादात्मगे फले आत्मनेपदं भवत्येव । तस्मादयमप्युभयपदी । एवं विजिरपि ज्ञेयः । निजां त्रयाणाम् । निजामिति बहुवचनात्तदादीनां ग्रहणम् । 'अत्र लोपः' इत्यतोऽभ्यासस्येत्यनुवर्तते । तदाह–णिजिरित्यादिना । नेनेक्तीति । श्लौ द्वित्वे हलादिशेषे उत्तरखण्डस्य तिपमाश्रित्य गुणे पूर्वखण्डस्यानेन गुणे चोः कुत्वमिति भावः। अभ्यस्तत्वाददादेशं मत्वा आह–नेनिजतीति।नेनेक्षि नेनिक्थः नेनिक्थ।नेनेज्मि नेनिज्वः नेनिज्मः।नेनिक्ते नेनिजाते नेनिजते।नेनिक्षे नेनिजाथे नेनिग्ध्वे । नेनिजे नेनिज्वहे नेनिज्महे । निनेज निनिजतुः निनिजुः । निनेजिथ निनिजथुः निनिज । निनेज निनिजिव निनिजिम। निनिजे निनिजाते निनिजिरे । निनिजिषे निनिजाथे निनिजिध्वे । निनिजे निनिजिवहे निनिजिमहे । नेक्ता । नेक्ष्यति । नेनेक्तु नेनिक्तात् नेनिक्ताम् नेनिजतु । नेनिग्धीति । अपित्त्वेन ङित्त्वान्न गुणः । हेर्धिः। नेनिक्तात् नेनिक्तम् नेनिक्त । 'आडुत्तमस्य' इति पित्त्वेन अङित्त्वाल्लघूपधगुणे प्राप्ते–नाभ्यस्तस्याचि । 'मिदेर्गुणः' इत्यतो गुण इति, 'पुगन्ते'त्यतो लघूपधस्येति चानुवर्तते इत्यभिप्रेत्य शेषं पूरयति–लघूपधगुणो न स्यादिति । नेनिजानीति । नेनिजाव नेनिजाम । नेनिक्ताम् नेनिजाताम् नेनिजताम् । नेनिक्ष्व नेनिजाथाम् नेनिग्ध्वम् । नेनिजै नेनिजावहै । नेनिजामहै । लङि परस्मैपदे आह–अनेनेगिति । अनेनिजुरिति । अभ्यस्तत्वाज्जुसिति भावः । अनेनेक् अनेनिक्तम् अनेनिक्त । अनेनिजम् । 'नाभ्यस्तस्ये'ति न गुणः । अनेनिज्व अनेनिज्म । निक्षीष्ट । लुङ्याह–अनिजदिति । इरित्त्वादङिति भावः । अनिक्तेति । 'झलो झली'ति सिज्लोपः । अनिक्षातामित्यादि । विजिरपि णिजिर्वत् । अत्रेति । थलि इड्विषे

---

शे.]दधस्त । 'झषन्तस्य बश' इत्यनुवृत्तिसामर्थ्याद्द्विरुक्तग्रहणेन 'ध' इत्येव सिद्धे 'दधः' इति स्पष्टार्थम् । झषन्तस्येति किम् ?। दधाति । नन्वाल्लोपस्य स्थानिवत्त्वाद्धत्त इत्यादावपि न स्यादत आह–वचनेति । पूर्वत्रासिद्ध इति । एवञ्च वामनादीनां वचनसामर्थ्याश्रयणं वृथेति भावः । णिजान्त्र । श्लौ[इति] किम् ?। निनेज । कपिञ्जलाधिकरणन्यायस्याऽत्र शास्त्रेऽनाश्रयणबोधनाय त्रयाणामिति 'भृञामि'दित्युत्तरार्थम्। अत्र तु नोपयोगः, गणान्ते पाठेन त्रयाणामेव निजादित्वस्य वक्तुं शक्यत्वात् । नाभ्यस्तस्य । अभ्यस्तस्य किम् ?। द्वेषाणि । अचि किम् ?। नेनेक्ति । पितीत्युत्तरार्थम् । अत्र=थलीडिति । ओविजी इत्यस्यैवेति । तौदिकस्य रौधादिकस्यैव च तत्र ग्रहणं, व्याख्यानादिति

'विज इ'डिति ङित्त्वं न । 'ओ विजी'त्यस्यैव तत्र ग्रहणात् । णिजिविजी रुधादावपि । १०९५ विष्लृ व्याप्तौ । वेवेष्टि । वेविष्टे । ऌदित्त्वादङ् । अविषत् । तङि क्सः । अजादौ 'क्सस्याची'त्यल्लोपः । अविक्षत । अविक्षाताम् । अविक्षन्त । अथ आ गणान्ताः परस्मैपदिनश्छान्दसाश्च । १०९६ घृ क्षरणदीप्त्योः । जिघर्म्यग्निं हविषा घृतेन । 'भृञामित्' 'बहुलं छन्दसी'ति इत्वम् । १०९७ हृ प्रसह्यकरणे । 'अयं स्रुवो अभिजिहर्ति होमान्' । १०९८ ऋ १०९९ सृ गतौ । 'बहुलं छन्दसी'त्येव सिद्धे 'अर्तिपिपर्त्योश्चे'तीत्त्वविधानादयं भाषायामपि । 'अभ्यासस्याऽसवर्णे' इतीयङ् । इयर्ति । इयृतः । इयृति । आर । आरतुः । 'इडत्त्यर्ती'ति नित्यमिट् । आरिथ । अर्ता । अरिष्यति । इयराणि । ऐयः । ऐयृताम् । ऐयरुः । इयृयात् । अर्यात् । आरत् । ससर्ति ।

त.]'उतो वृद्धिर्लुकि हली'त्युत्तरार्थम्। सार्वेति किम् ?। निनेज । बहुलं छन्दसीतीत्त्वमिति।एतच्च पूर्वोत्तरान्वयि । इयर्तीति । अभ्यासस्य इयङ्, अभ्यासादुत्तरस्य तु गुणः। इय्रतीति। 'अदभ्यस्ता'दित्यत् । अर्यादिति । 'गुणोऽ-

बा.]'विज इ'डिति विहितं ङित्त्वं नेत्यर्थः। अतो न गुणनिषेध इति भावः। ओ विजी इत्यस्यैवेति । व्याख्यानादिति भावः । रुधादावपीति । ततश्च 'रुधादिभ्यः श्न'मिति श्नम्विकरणावपि ताविति भावः । विष्लृ व्याप्तौ इति । ऌदित्, उभयपदी, अनिट् । णिजेरिव रूपाणि । वेवेष्टीति । ष्टुत्वेन तकारस्य टः । सिपि 'षढो'रिति षस्य कत्वम् । वेवेक्षि वेविष्ठः । वेविष्ठ । वेविड्ढि । अविषदिति । ऌदित्त्वादङिति भावः । तङि क्स इति । 'शल इगुपधा'-दित्यनेनेति भावः। आ गणान्तादिति। जुहोत्यादिगणसमाप्तिपर्यन्तमित्यर्थः। घृधातुरनिट् । तिपि श्लौ द्वित्वेऽभ्यासकार्ये गुणे रपरत्वे जघर्ति। जघृतः जघ्रति । 'जघर्म्यग्निं हविषा घृतेन'इति बह्वृचमन्त्रपाठः । 'जिघर्म्यग्निं मनसा घृतेने'ति तैत्तिरीयपाठः । अत्रेत्वमभ्यासस्य आह-भृञामिदिति। ननु तत्र त्रयाणामेव ग्रहणमित्यत आह-बहुलमिति । इत्त्वं छान्दसमिति भावः। जघार जघ्रतुः।जघ्रुः। जघर्थ जघ्रथुः जघ्र। जघार-जघर । जघ्रिव । घरिष्यति । जघर्तु-जघृतात्। जघ्रतु । जघृहि । जघराणि । अजघः अजघृताम् अजघरुः । अजघरम् अजघृव । जघृयात् । घ्रियात् । अघार्षीत् । अघरिष्यत् । हृ इति । घृधातुवद्रूपाणि । अयं स्रुवो अभिजिहर्ति होमानिति । स्रुवे साध्यमाने याजमानो मन्त्रः । अत्रापि अभ्यासस्य इत्त्वं छान्दसमिति भावः । ऋ सृ गताविति । इमावनिटौ । तत्र ऋधातोः छान्दसत्वेऽपि लोकेऽपि क्वचित्प्रयोगं समर्थयति-बहुलमिति। 'भृञामित्' 'अर्तिपिपर्त्योश्च' 'बहुलं छन्दसी'ति सूत्रस्थितिः। तत्र 'बहुलं छन्दसी'त्येव ऋधातोरित्त्वसिद्धेः 'अर्तिपिपर्त्योश्चे'त्यर्तिग्रहणाल्लोकेऽपि ऋधातोः श्लुविकरणस्य प्रयोगो विज्ञायत इत्यर्थः । एतच्चाऽत्रैव सूत्रे भाष्ये स्पष्टम् । अत एव भाष्यात् श्लुविकरणस्यैव ऋधातोः 'अर्तिपिपर्त्योश्चे'त्यत्र ग्रहणम्, पिपर्तिसाहचर्याच्च, श्लावित्यस्य अभ्यासग्रहणस्य चानुवृत्तेश्चेत्यलम् । अभ्यासस्यासवर्णे इति । शपः श्लौ ऋ-ति इति स्थिते द्वित्वे उरदत्त्वं बाधित्वा 'अर्तिपिपर्त्योश्चे'त्यभ्यासऋकारस्य इत्त्वे रपरत्वे हलादिशेषे उत्तरखण्डस्य ऋकारस्य गुणे रपरत्वे इ अर् ति इति स्थिते 'अभ्यासस्याऽसवर्णे'इतीयङि इयर्तीति रूपमित्यर्थः। इयृत इति । पूर्ववदेव द्वित्वादि । तसोऽपित्त्वेन ङित्त्वाद्गुणनिषेध इति भावः। इय्रतीति । पूर्ववदेव द्वित्वादि । अभ्यस्तत्वाददादेशः। ङित्वान्न गुणः। उत्तरखण्डस्य ऋकारस्य यण् रेफ इति भावः। इयर्षि इयृथः। इयर्मि इयृवः इयृमः। लिट्याह-आरेति । थलि 'अचस्तास्व'दिति 'ऋतो भारद्वाजस्ये'ति नित्यमिण्निषेधे प्राप्ते आह-इडत्त्यर्तीति नित्यमिडिति । आरिथ । आरिव । आरिम । अर्तेति । अनिट्त्वादिति भावः । अरिष्यतीति । 'ऋद्धनोः स्ये' इतीडिति भावः । इयर्तु-इयृतात् इयृताम् इय्रतु । इयृहि-इयृतात् इयृतम् इयृत । इयराणीति। आटः पित्त्वेनाऽङित्त्वान्न गुणनिषेध इति भावः। इयराव । इयराम । लङ्याह-ऐय इति । श्लौ ऋ त् इति स्थिते द्वित्वेऽभ्यासस्य इत्त्वे रपरत्वे हलादिशेषे इयङि उत्तरखण्डस्य गुणे रपरत्वे च हल्ङ्यादिलोपे रेफस्य विसर्गे इय इति स्थिते आटि वृद्धौ ऐय इति रूपमिति भावः। नच 'लावस्थायाम'डिति पक्षे आटि वृद्धौ रपरत्वे आर् त् इति स्थिते द्वित्वे हलादिशेषे सवर्णदीर्घे हल्ङ्यादिलोपे रेफस्य विसर्गे आरिति स्यादिति शङ्क्यं, 'बहुलं छन्दस्यमाङ्योगेऽपी'ति बहुलग्रहणेनाऽत्र लावस्थायामाडित्यस्याऽनाश्रयणादित्याहुः । ऐयरुरिति।ऐयः ऐयृतम् ऐयृत।ऐयरम् ऐयृव ऐयृम। विधिलिङ्याह-इयृयादिति।यासुटो ङित्त्वाद्गुणनिषेध इति भावः । इयृयातामित्यादि। आशीर्लिङ्याह-अर्यादिति। 'अकृत्सार्वधातुकयो'रिति दीर्घः प्राप्तः । तं बाधित्वा 'रिङ् शयग्लिङ्क्षु'इति रिङ् प्राप्तः । तं बाधित्वा 'गुणोऽर्तिसंयोगाद्यो'रिति गुण इति भावः । लुङ्याह-आरदिति । 'सर्तिशास्त्यर्तिभ्यश्चे'त्यङि 'ऋदृशोऽङी'ति गुण इति भावः। आरिष्यत् । तदेवमृधातुं निरूप्य सृधातुं निरूपयति-ससर्तीति। ससृतः सस्रतीत्यादि

शे.]भावः। अभिजिहर्तीति। अत्रापि छान्दसत्वादित्वम् । इय्रतीति। यणः 'अचः परस्मि'न्निति स्थानिवत्त्वात् 'लोपो व्यो'रिति यलोपो न । यलोपे स्थानिवत्त्वनिषेधस्तु लोपरूपाऽजादेशस्यैवेति दिक् । ऐय इति । द्वित्वेऽभ्यासस्येत्वे इयङि उत्तरखण्डे गुणे रपरत्वे हल्ङ्यादिलोपे विसर्गे आटि वृद्धिः । 'लावस्थायाम'डिति पक्षेऽपि 'बहुलं छन्दस्यमा'ङिति

**११०० भस भर्त्सनदीप्त्योः** । बभस्ति । 'घसिभसोर्हलि च'ेत्युपधालोपः । 'झलो झली'ति सलोपः । बब्धः । बप्सति । **११०१ कि ज्ञाने** । चिकेति । **११० तुर त्वरणे** । तुतोर्ति । तुतूर्तः । तुतुरति । **११०३ धिष शब्दे** । दिधेष्टि । दिधिष्टः । **११०४ धन धान्ये** । दधन्ति । दधन्तः । दधनति । **११०५ जन जनने** । जजन्ति । **जनसनखनां सञ्झलोः** ।६।४।४२। एषामाकारोऽन्तादेशः स्याज्झलादौ सनि झलादौ क्ङिति च । जजातः । जज्ञति ।

त.] र्ती'ति गुणः । **आरदिति** । 'सर्तिशास्ती'त्यङि 'ऋदृशोऽङी'ति गुणः । **बब्ध इति** । तसस्तकारस्य 'झषस्तथो'रिति धत्वम् । **तुतूर्त इति** । 'हलि चे'ति दीर्घः । धन धान्ये । धान्यार्जन इत्यर्थः । **दधन्त इति** । छान्दसत्वात् 'अनुनासिकस्ये'ति नेह दीर्घ इत्याहुः । **जनसनखनाम्** । जन जनने, जनी प्रादुर्भावे इत्युभयोरपि ग्रहणम् । झलादौ सनि-

बा.] सुगमम् । ससार । ससर्थ । सस्व । सर्ता । सरिष्यति । ससर्तु । असस्रः असस्तृताम् अससरुः । सस्रयात् । स्रियात् । असरत् । **भस भर्त्सनेति** । अयं सेट् । **बभस्तीति** । श्लौ भस् तीति स्थिते द्वित्वेऽभ्यासजश्त्वमिति भावः । बभस् तस् इति स्थिते आह-**घसिभसोरिति** । 'घसिभसोर्हलि चे'त्यस्यायमर्थः-छन्दसि अनयोरुपधाया लोपः स्याद्धलादावजादौ च क्ङिति परे इति । तथाच बभस् तसित्यत्र उपधालोपे 'झलो झली'ति सकारलोपे तकारस्य 'झषस्तथो'रिति धत्वे भकारस्य जश्त्वमिति भावः । **बप्सतीति** । अभ्यस्तत्वाददादेशे बभस् अतीति स्थिते 'घसिभसो'रित्युपधालोपे भकारस्य चर्त्वमिति भावः । बभस्सि बब्धः बब्ध । बभस्मि बप्स्वः बप्स्मः । बभास बप्सतुः बप्सुः । बभसिथ बप्सथुः बप्स । बभास-बभस बप्सिव बप्सिम । भसिता । भसिष्यति । बभस्तु-बब्धात् बब्धाम् बप्सतु । बब्धि-बब्धात् बब्धम् बब्ध । बभसानि बभसाव बभसाम । अबभः अबब्धाम् अबप्सुः । अबभः अबब्धम् अबब्ध । अबप्सम् अबप्स्व । अबप्स्म । बप्स्यात् । भस्यात् । अभासीत्-अभसीत् । अभसिष्यत् । **कि ज्ञाने । चिकेतीति** । किधातोस्तिपि श्लौ द्वित्वे अभ्यासचुत्वे उत्तरखण्डस्य गुण इतिभावः । चिकितः चिक्यति । चिकेषि चिकिथः चिकिथ । चिकेमि चिकिवः । चिकिमः । चिकाय चिक्यतुः । चिक्युः । चिकयिथ-चिकेथ । चिक्यिव । केता । केष्यति । चिकेतु-चिकितात् चिकिताम् चिक्यतु । चिकिहि । चिकयानि । अचिकेत् अचिकिताम् अचिकयुः । अचिकेः । अचिकयम् अचिकिव । चिकियात् । कीयात् । अकैषीत् । अकेष्यत् । **तुर त्वरणे इति** । **तुतूर्त इति** । 'हलि चे'ति दीर्घः । तुतोर्षि तूतूर्थः तुतूर्थ । तुतोर्मि तुतूर्वः । तुतोर । तुतुरतुः तुतोरिथ । तुतुरिव । तोरिता । तोरिष्यति । तुतोर्तु-तुतूर्तात् तुतूर्ताम् तुतुरतु । तुतूर्हि । तुतुराणि । अतुतोः अतुतूर्ताम् । अतुतुरुः । अतुतोः । अतुतुरम् । अतुतूर्व । तुतूर्यात् । तूर्यात् । अतोरीत् । अतोरिष्यत् । **धिष शब्दे** । सेट् । **दिधेष्टीति** । श्लौ द्वित्वादौ लघूपधगुणे तकारस्य ष्टुत्वमिति भावः । दिधिषति । दिधेक्षि दिधिष्ठः । दिधेष्मि दिधिष्वः । दिधेष दिधिषतुः । दिधेषिथ । दिधिषिव । धेषिता । धेषिष्यति । दिधेष्टु-दिधिष्टात् । दिधिषतु । दिधिड्ढि । दिधिषाणि । अदिधेट् अदिधिष्टाम् अदिधिषुः । अदिधिषम् अदिधिष्व । दिधिष्यात् । धिष्यात् । अधेषीत् । अधेषिष्यत् । **धन धान्ये इति** । धान्याऽर्जने इत्यर्थः । **दधन्त इति** । क्षमूष् सहने इति धातोश्चक्षंसे इतिवदननुनासिकस्य क्वीति न दीर्घः । दधंसि दधन्थः । दधन्मि दधन्वः दधन्मः । दधान दधनतुः । दधनिथ । दधनिव । धनिता । धनिष्यतु । दधन्तु-दधन्तात् दधन्ताम् दधनतु । दधंहि । दधनानि । अदधन् अदधन्ताम् अदधनुः । अदधन् अदधन्तम् अदधन्त । अदधनम् अदधन्व अदधन्म । दधन्यात् । धन्यात् । अधानीत् अधनीत् । अधनिष्यत् । **जन जनने इति** । उत्पत्तौ अकर्मकः । उत्पादने सकर्मकः । **जनसन** । 'विड्वनो'रित्यत आदित्यनुवर्तते । तदाह-**एषामाकारोऽन्तादेश इति** । सन् झल् इत्यनयोर्द्वन्द्वात्सप्तमीद्विवचनम् । सनि झलि चेति लभ्यते । 'अनुदात्तोपदेशे'त्यतो झलि क्ङितीत्यनुवर्तते । तत्र झलीत्यनुवृत्तेन सन् विशेष्यते । तदादिविधिः । झलादौ सनीति लभ्यते । क्ङितीत्यनुवृत्तं त्वेतत्सूत्रस्थेन झला विशेष्यते । तदादिविधिः । झलादौ क्ङितीति लभ्यते । तथाच झलादौ सनीति, झलादौ क्ङितीति च परनिमित्तद्वयं लब्धम् । तदाह-**झलादौ सनि झलादौ क्ङिति चेति** । सन्विशेषणं झलादाविति किम् ? । जिजनिषति । सिसनिषति । चिखनिषति । अथ क्ङितोर्झल्विशेषणस्य प्रयोजनमाह-**जज्ञतीति** । जनन् अतीति स्थिते अतेर्ङित्त्वेऽपि झलादित्वाऽभावादात्वाऽभावे 'गमहने'त्युपधालोपे नकारस्य श्चुत्वेन ञकार इति भावः 'जनसनखनां स'न्नित्याश्रित्य योगविभागेन उक्तार्थसिद्धिं चाश्रित्य झल्ग्रहणं त्वत्र सूत्रे प्रत्याख्यातं भाष्ये । **जजंसीति** । 'नश्चे'त्यनुस्वारः । जजाथः जजाथ । जजन्मि जजन्वः जजन्मः । **जजानेति** । जज्ञतुः । सेडयम् । जजनिथ जज्ञथुः । जज्ञिव । जनिता । जनिष्यति । जजन्तु-जजातात् । जजाहि । जजनानि । अजजन् अजजाताम् ।

शे.] बहुलग्रहणात्तदुत्तरमत्राट् । 'बहुलं छन्दसी'ति सिद्धे 'अर्तिपिपर्त्योश्चे'त्यत्राऽर्त्तिग्रहणाज्ज्ञापकाल्लोके प्रयोगेऽपि छान्दसप्रकरणे पाठात्क्वचिदेव लोके साधुत्वं न सर्वत्रेति बोध्यम् । अत एव ऋलृक्सूत्रे भाष्ये उक्तम्-'अर्तिप्रवृत्तिश्चैव लोके लक्ष्यते' इति । प्रकारान्तरमपि 'इङ्' धातावुक्तम् 'केचित्तु'इत्यादिना । **दधन्त इति** । 'चक्षंसे' इतिवन्न दीर्घः । **जजायादिति** ।

जजंसि । जजान । जजन्यात् । जजायात् । जन्यात् । जायात् । ११०६ गा स्तुतौ । देवाञ्जिगाति सुम्नयुः । जिगीतः । जिगति । इति जुहोत्यादयः ।

## अथ दिवादयः ।

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु। झूषन्ताः परस्मैपदिनः। दिवादिभ्यः श्यन् ।३।१।६९। शपोऽपवादः। 'हलि चे'ति दीर्घः। दीव्यति। दिदेव। देविता। देविष्यति। दीव्यतु। दीव्य। अदीव्यत्। दीव्येत्। दीव्यात्। अदेवीत्। अदेविष्यत् । ११०८ षिवु तन्तुसन्ताने । परिषीव्यति । परिषिषेव । न्यषेवीत् । न्यसेवीत्। ११०९ स्रिवु गतिशोषणयोः। १११० ष्ठिवु निरसने। केचिदिहेमं न पठन्ति ११११ ष्णुसु अदने । आदान इत्येके। अदर्शन इत्यपरे। स्नुस्यति। सुष्णोस। १११२ ष्णसु निरसने । स्नस्यति । सस्नास । १११३ क्नसु ह्वरणदीप्त्योः। ह्वरणं कौटिल्यम्। चक्नास। १११४ व्युष दाहे। व्युष्यति। वुव्योष। १११५ प्लुष च। १११६ नृती गात्रविक्षेपे । नृत्यति । ननर्त । सेऽसिचि कृतचृतच्छृदतृदनृतः ।७।२।५७। एभ्यः परस्य सिज्भिन्नस्य सादेरार्द्धधातुकस्येड्वा स्यात् । नर्तिष्यति । नर्त्स्यति। नृत्येत् । नृत्यात्। अनर्तीत् । १११७ त्रसी उद्वेगे। 'वा भ्राशे'ति

त.]सिषासति । जजनतीति । 'गमहने'त्युपधालोपः। जजायादिति। 'ये विभाषे'ति वा आत्वम्। एवं जायादित्यत्रापि। जिगातीति । 'बहुलं छन्दसी'ति इत्वम् । इति जुहोत्यादयः ।

दिवु क्रीडा । उदित्करणं क्त्वायामिड्विकल्पार्थं निष्ठायामनिडर्थं, च । देविला । द्यूला । द्यूतम् । क्रीडायां-दीव्यन्ति माणवकाः । विजिगीषायां-शत्रुं दीव्यति । विजिगीषते इत्यर्थः । कान्तिरिच्छा । द्युतेः पृथग्ग्रहणात् । षिवु । परिषिषेवेति । 'स्थादिष्वेवाऽभ्यासस्ये'ति नियमो नेह प्रवर्तते, तत्र 'प्राक् सिता'दित्यनुवृत्तेः । अस्य चाऽप्राक्सितीयत्वात् । तेनाऽभ्यासस्य षत्वं 'परिनिविभ्यः' इत्यनेन भवत्येव । न्यषेवीदिति । 'सिवादीनां वे'ति विकल्पः । नृती । ईदित्करणं 'श्वीदित' इति निष्ठायामिण्निषेधार्थम् । यद्यपि 'सेऽसिची'ति इटो विकल्पितत्वात् 'यस्य विभाषे'त्यनेनैवेष्टं सिध्यति, तथापि 'यस्य विभाषे'त्यस्याऽनित्यत्वज्ञापनार्थमीदित्करणं, तेन 'धावितमिभराजधिया' इत्यादि सिद्धम् । सेऽसिचि । नर्तिष्यति । नर्त्स्यतीति । निनर्तिषति । निनृत्सति । कर्तिष्यति । कर्त्स्यति । चिकर्तिषति । चिकृत्सति । इत्यादि ज्ञेयम् । अनर्तीदिति । 'असिची'त्युक्तत्वादिह नित्यमिट्।

बा.]अजज्ञुः। अजजनम् अजजन्व । विधिलिङि 'ये विभाषे'ति मत्वाह-जजायात् जंजन्यादिति। अजनीत्-अजानीत् । अजनिष्यत् । गा स्तुतौ। देवान् जिगातीति। 'भृञामि'दित्यत्र 'बहुलं छन्दसी'ति वचनादभ्यासस्येत्वमिति भावः । जिगीत इति । 'ई हल्यघो'रिति ईत्वम् । जिगतीति । अभ्यस्तत्वाददादेशे 'श्नाभ्यस्तयो'रित्यालोपः । जिगासि जिगीथः जिगीथ । जिगामि जिगीवः । जगौ जगतुः । जगिथ-जगाथ । जगिव । गाता । गास्यति । जिगातु-जिगीतात् जिगीताम् जिगतु । जिगीहि । जिगानि । अजिगात् अजिगीताम् अजिगुः । अजिगाः । अजिगाम् अजिगीव जिगीयात् । आशिषि-गेयात् । अगासीत् । अगास्यत् । इति जुहोत्यादयः ।

अथ श्यन्विकरणा धातवो निरूप्यन्ते-। दीवु क्रीडेति । उदिदयम् । तेन क्त्वायामिड्विकल्पः, निष्ठायां च नेट् । झूषन्ता इति । जॄष् झॄष् वयोहानौ इत्येतत्पर्यन्ता इत्यर्थः। दिवादिभ्यः । 'कर्तरि श'बित्यतः कर्तरीति, 'सार्वधातुके य'गित्यतः सार्वधातुके इति चानुवर्तते इत्यभिप्रेत्याह-शपोऽपवाद इति। शकारनकारावितौ। दिव् यतीति स्थिते आह-हलि चेति दीर्घ इति । श्यनोऽपित्त्वेन ङित्त्वान्न गुण इति भावः । दीव्यतः दीव्यन्तीत्यादि सुगमम् । दिदेवेति । दिदिवतुः । दिदेविथ । दिदिविव । सेट्त्वं सूचयति-देवितेति । षिवुधातुरपि सेट् । षोपदेशः । दिवुधातुवदस्य रूपाणि। परिषीव्यतीति। 'परिनिविभ्यः सेवे'ति षत्वमिति भावः। परिषिषेवेति । 'स्थादिष्वेवाभ्यासस्ये'ति नियमस्तु न, तत्र 'प्राक्सिता'दित्यनुवृत्तेरिति भावः । 'सिवादीनां वाऽड्व्यवायेऽपी'ति मत्वाह-न्यषेवीत् न्यसेवीदिति । स्रिवुधातुस्तु रेफवान् । ष्ठिवु निरसने इति । 'सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वा'मिति न सत्वम्। ष्ठीव्यतीत्यादि सुगमम् । आर्द्धधातुकेषु तु शब्विकरणस्थष्ठिवुधातुवद्रूपाणि । ष्णुसुधातुश्च षोपदेशः । नृती गात्रेति । 'श्वीदितः' इत्याद्यर्थमीदित्त्वम् । सेडयम् । सेऽसिचि । से-असिचीति छेदः । सप्तमी षष्ठ्यर्थे । कृत चृत छृद तृद नृत एषां समाहारद्वन्द्वात्पञ्चमी । 'उदितो वे'त्यतो वेति, आर्द्धधातुकस्येडिति चानुवर्तते। तदाह-एभ्य इत्यादिना । नित्यमिटि प्राप्ते विकल्पार्थमिदं वचनम् । अनर्तीदिति । 'सेऽसिची'त्यत्र 'असिची'त्युक्तेर्नित्यमिडिति भावः । त्रसी उद्वेगे।

शे.]'ये विभाषे'त्यात्वम्। जिगीत इति। 'बहुलं छन्दसी'त्यभ्यासस्येत्वम्। 'ई हल्यघो'रिति ईत्वम्। इति जुहोत्यादयः।

दिवु। उदित्त्वम् 'उदितो वे'ति क्त्वायामिड्विकल्पार्थम् । सेऽसिचि । 'से' इत्यकारोऽविवक्षितः,

इयन्वा । त्रस्यति । त्रसति । त्रेसतुः । तत्रसतुः। १११८ कुथ पूतीभावे । पूतीभावो दौर्गन्ध्यम्। १११९ पुथ हिंसायाम् । ११२० गुध परिवेष्टने । ११२१ क्षिप प्रेरणे । क्षिप्यति । क्षेप्ता । ११२२ पुष्प विकसने । पुष्प्यति । पुपुष्प । ११२३ तिम ११२४ ष्टिम ११२५ ष्टीम आर्द्रीभावे । तिम्यति । स्तिम्यति । स्तीम्यति । ११२६ व्रीड चोदने लज्जायां च । व्रीड्यति । ११२७ इष गतौ। इष्यति । ११२८ षह ११२९ षुह चक्यर्थे। चक्यर्थस्तृप्तिः । सह्यति । सुह्यति । ११३० जॄष् ११३१ झॄष् वयोहानौ । जीर्यति । जजरतुः । जेरतुः । जरिता । जरीता। जीर्येत्। जीर्यात्। जॄस्तम्भि'त्यङ्वा।'ऋदृशोऽङि गुणः'।अजरत् । अजारीत्।अजारिष्टाम् ।झीर्यति। जझरतुः । अझारीत् ११३२ षूङ् प्राणिप्रसवे । सूयते । सुषुवे । 'स्वरतिसूती'ति विकल्पं बाधित्वा 'श्र्युकः किती'ति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सुषुविषे । सुषुविवहे । सोता । सविता । ११३३ दूङ् परितापे । दूयते । ११३४ दीङ् क्षये।दीयते। दीङो युडचि क्ङिति ।६।४।६३। दीङः परस्याऽजादेः क्ङित आर्द्धधातुकस्य युट् स्यात् ।* वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ । दिदीये। मीनातिमिनोतिदीङां ल्यपि च

त.]त्रेसतुरिति। वा जॄभ्रमुत्रसा'मीत्येत्वाभ्यासलोपौ। कुथ । पूतीभावः–पवित्रीभवनम् । कुथ्यति भूमिः। पवित्रीभवतीत्यर्थः।पुष्प विकसने । 'कालात्साधुपुष्प्यत्पच्यमानेष्वि'त्यत्र पुष्प्यतिः शत्रन्तः। पचाद्यचि पुष्पम् । संज्ञायां कन् । 'पुष्पकम्'।व्रीडा'गुरोश्च हलः'इत्यप्रत्यये टाप्।व्रीडा।घञि तु व्रीडः। 'अतएव व्रीडमावहति मे स संप्रती'ति कालिदासः। 'व्रीडादिवाभ्यासगतैर्विलिल्ये' इति माघश्च । षह षुह । 'परिनिविभ्यः' इत्यत्र सहेत्यकार उच्चारणार्थ इति षत्वमिह भवति । परिषह्यति । 'तीषसहे'तीड्विकल्पस्तु नाऽस्य भवति,'सहे'ति शबन्तनिर्देशात् , किं तु 'षह-मर्षणे' इत्यस्यैव स इत्यात्रेयादयः । सहेति निर्देशस्योभयत्र तुल्यत्वे 'तीषसहे'त्यत्र शपा निर्देशः, 'परिनिविभ्यः' इत्यत्र तु नेत्यर्द्धजरतीयमिदं हेयमेव । तत्त्वं तु प्रयोगमनुसृत्य महद्भिरेव निर्धार्यम् । नपुंसके भावे क्तः । सुहितं- तृप्तिः । अतएव 'पूरणगुणे'ति सूत्रे सुहितार्थास्तृप्त्यर्था इति व्याख्यातम्। जेरतुरिति। 'ऋच्छत्यॄता'मिति गुणे कृते 'न शसददे'ति गुणशब्देन भावितस्य निषेधात् 'अत एकहल्मध्ये' इत्यप्रवृत्तौ 'वा जॄभ्रमुत्रसा'मित्येत्वाभ्यासलोपविकल्पः । षूङ् । प्रसव उत्पत्तिः । 'मृत्पिण्डो घटं सूयते' इत्यादिप्रयोगाऽभावात्प्राणीत्युक्तम् । 'स्वादय ओदितः'इति वक्ष्यमाणत्वात् 'ओदितश्चे'ति निष्ठातस्य नत्वम् । प्रसूनम् । विकल्पमिति । 'परमपी'ति शेषः । निषेधे प्राप्ते इति । पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादिति भावः। दीङो। पञ्चमीत्यभिप्रायेण व्याचष्टे-परस्येति । अजादेरिति । 'ङः सी'त्यत्रेव 'उभयनिर्देशे पञ्चमीनिर्देशो बलीया'निति सप्तम्याः षष्ठीकल्पनम् । अचि किम् ? । देदीयते । क्ङितीति किम् ? । उपादानम् । आभीयत्वेनाऽसिद्धत्वमाशङ्क्याह-वुग्युटाविति । दिदीये इति । परमपि यणं बाधित्वा नित्यत्वादादौ युट् । सति तु यणि

बा.]'वा जॄभ्रमुत्रसा'मित्येत्वाभ्यासविकल्पौ मत्वाह-त्रेसतुः तत्रसतुरिति । कुथ पूतीभावे इति । पवित्रीभवने इत्यर्थः, दुर्गन्धकरणे इति वा । 'पूतिगन्धस्तु दुर्गन्धः' इत्यमरः । तिम ष्टिम ष्टीमेति । द्वितीयतृतीयौ षोपदेशौ । द्वितीय इदुपधः । तृतीयस्तु ईदुपधः । षह षुहेति । षोपदेशौ । चक्यर्थस्तृप्तिरिति । यद्यपि 'चक तृप्तौ प्रतिघाते चे'त्युक्तं तथापि तृप्तिरेवेह विवक्षिता, व्याख्यानात् । सुहेः 'नपुंसके भावे क्तः' इति क्तप्रत्यये सुहितशब्दः । सुहितस्तृप्तिरिति 'पूरणगुणे'ति सूत्रे कैयटः । जॄष् झॄष् । सेटौ । जीर्यतीति । 'ऋत इद्धातो'रिति इत्वे 'हलि चे'ति दीर्घ इति भावः । अतुसादौ 'ऋच्छत्यॄता'मिति गुणे रपरत्वे 'वा जॄभ्रमुत्रसा'मित्येत्वाभ्यासलोपविकल्प इति भावः । जजरिथ । 'वृतो वे'ति मत्वाह-जरिता जरीतेति । षूङ् । प्रसवः–उत्पादनम् । षोपदेशोऽयम् । विकल्पमिति । 'परमपी'ति शेषः । निषेधे प्राप्ते इति । पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादिति भावः । दूङ् परितापे इति । पीडने, पीडितीभवने वेत्यर्थः । आद्ये सकर्मकः । द्वितीये अकर्मकः । दीङ् क्षये इति । क्षयो–ह्रस्वो, नाशो वा । दीङो युडचि । 'आर्द्धधातुके' इत्यधिकृतमचा विशेष्यते । तदादिविधिः । 'दीङ' इति पञ्चमी । सप्तमी षष्ठ्यर्थे । तदाह-दीङः परस्येत्यादिना । दिदी ए इति स्थिते परत्वात् 'एरनेकाचः' इति यणि प्राप्ते नित्यत्वाद्युट् । टकार इत् । उकार उच्चारणार्थः । टित्त्वादाद्यवयवः । दिदीये इति रूपमिति भावः । ननु युटि कृतेऽपि तस्याऽसिद्धत्वाद्यणुर्वारः । तथाच दिद्य्ये इति स्यात् । इकारो न श्रूयेत, यकारद्वयं श्रूयेतेत्यत आह–

शे.]'असिची'ति पर्युदासात्। सादेरित्यर्थलाभो यथा तथा 'तीषसहे'त्यत्र निरूपितम् । तृप्तिरिति। यद्यपि प्रतीघातोऽपि चक्यर्थस्तथापि प्रकृते तृप्तेरेव ग्रहणम्, 'पूरणगुणे'ति सूत्रे सुहितार्थशब्देन तृप्तेरेव ग्रहणस्याऽऽकरे उक्तत्वादिति भावः । जेरतुरिति । 'ऋच्छत्यॄता'मिति गुणे 'वा जॄभ्रमु' इत्येत्वविकल्पः । दीङो युड । 'उभयनिर्देशे पञ्चमीनिर्देशो बलीया'न्नित्यचीति षष्ठ्यर्थे सप्तमी तदादिविध्यर्थेत्याशयेनाह-अजादेरिति । उत्तरार्था च सप्तमीत्यपि बोध्यम्। युटि कृतेऽपि तस्याऽसिद्धत्वेन यण्प्राप्तिमाशङ्क्याह-वुग्युटाविति । मीनाति । अत्रैव इति, उपदेश इति च वर्त्तते । उपदेश-

।६।१।५०। एषामात्वं स्याल्ल्यपि च चकारादशित्येज्निमित्ते । दाता । दास्यते । अदास्त । अदास्थाः । ११३५ डीङ् विहायसा गतौ । डीयते । डिड्ये । ११३६ धीङ् आधारे । धीयते । दिध्ये । धेता । ११३७ मीङ् हिंसायाम् । हिंसाऽत्र प्राणवियोगः । मीयते । ११३८ रीङ् स्रवणे । रीयते। ११३९ लीङ् श्लेषणे । विभाषा लीयतेः ।६।१।५१। लीयतेरिति यका निर्देशो न तु श्यना । लीलीङोरात्वं वा स्यादेज्विषये ल्यपि च । लेता । लाता । लेष्यते । लास्यते । एज्विषये किम्? । लीयते । लिल्ये । ११४० व्रीङ् वृणोत्यर्थे । व्रीयते । विव्रिये । (ग) स्वादय ओदितः । तत्फलं तु निष्ठानत्वम्। ११४१ पीङ् पाने । पीयते । ११४२ माङ् माने । मायते । ममे । ११४३ ईङ् गतौ । ईयते । अयांचक्रे । ११४४ प्रीङ् प्रीतौ । सकर्मकः । प्रीयते । पिप्रिये । अथ परस्मैपदिनश्चत्वारः। ११४५ शो तनूकरणे । ओतः श्यनि ।७।३।७१। लोपः स्यात् श्यनि । श्यति । श्यतः। श्यन्ति । शशौ। शशतुः।शशुः।शाता। शास्यति। 'विभाषा घ्राधे'ति सिचो वा लुक् । लुगभावे 'यमरमे'तीट्-

---

त.]ईकारस्य श्रवणं न स्यादिति युटः सिद्धत्वमुक्तम् । **मीनाति।** मीञ् हिंसायाम् । डुमिञ् प्रक्षेपणे। प्रमाय। उपदाय । प्रमातव्यम् । उपदातव्यम् । एज्निमित्त इति विषयसप्तमी । तेन आदावात्वं पश्चाद्धञ् । 'आतो यु'गिति युक् । उपदाय इति सिध्यति । अन्यथा एरचि कृते तत आत्वे उपदा इति स्यात् । **अदास्तेति** । 'दीङः प्रतिषेधः 'स्थाघ्वोरिच्चे'इति न घुत्वमित्यादितेति रूपं न भवतीत्येके।अन्ये तु 'स्थाघ्वोरिच्चे'त्येतत्तु न भवति, दीङोऽनुकरणे दारूपाऽसंभवेनाऽघुत्वात्। अतएव प्रनिदातेत्यादौ 'नेर्गदे'ति णत्वम् [अपि] न भवतीत्याहुः। अयं भावः–'दो अवखण्डने' इत्यादेर्दारूपत्वं संभवति । 'आदेच उपदेशे' इत्यस्याऽनैमित्तिकत्वात्। दीङस्तु एज्निमित्तप्रत्ययविषये आत्वं, दा इत्यनुकरणे एज्निमित्तस्याऽभावित्वान्न घुत्वम् । एवं च घुप्रकृतित्वमपि नास्तीति णत्वस्याऽप्रसक्तिरिति। **डीङ्** । डीनः।डीनवान् । स्वादिषु पाठसामर्थ्यान्निष्ठाया-मिण्न । इटि हि सति व्यवधानात् 'ओदितश्चे'ति नत्वं न स्यादिति । स्वादिषु पाठसामर्थ्यादिड्व्यवधानेऽपि णत्वम-स्त्विति न शङ्क्यम्, इष्टानुरोधात् । डयति इति प्रयोगस्तु भौवादिकस्य । 'निष्ठा शीङ्' इत्यत्र निष्ठेति योगविभागादकित्त्वे गुण इत्याहुः । मीञ् हिंसायाम् । मीञिति क्र्यादौ । **प्राणवियोग इति** । मीयते । प्राणैर्वियुज्यत इत्यर्थः । **लीङ्** । ली श्लेषण इति क्र्यादौ । **यकेति** । 'सार्वधातुके य'गिति विहितेन। **न तु श्यनेति**। अन्यथा 'लीङ' इत्येव ब्रूयादिति भावः। यका निर्देशस्य फलमाह–**लीलीङोरिति** । ल्यपि–विलाय । विलीय । **व्रीङ्** वृणोत्यर्थो–वरणम् । वृञ् वरण इति स्वादौ पठिष्यमाणत्वात् । 'वरणे' इति वक्तव्ये वृणोत्यर्थ इति वचनं वैचित्र्यार्थम् । व्री वरण इति क्र्यादौ। **माङ्** ।

---

बा.]घुग्युटाविति। **मीनातिमिनोति।** 'आदेच उपदेशेऽशिती'त्यत आदित्यनुवर्तते। तदाह–**एषामात्वं स्याल्ल्यपीति** । चकारात् एचः, अशितीति परनिमित्तं समुच्चीयते । तत्र 'एच' इत्यनन्तरं 'निमित्ते'इति शेषः । एज्निमित्ते अशिति प्रत्यये च परे इति फलितम् । तदाह–**अशित्येज्निमित्ते इति** । 'इति समुच्चीयते'इति शेषः । लुङ्याह–**अदास्तेति।** इह आत्वे कृते घुत्वे सत्यपि स्थाघ्वोरिच्चेति न भवति, 'स्थाघ्वोरित्वे दीङः प्रतिषेधः' इति घुसंज्ञासूत्रस्थ-भाष्यपठितवार्त्तिकादिति भावः । **धीङ् आधारे इति** । **आधारः**–आधारणम् । स्थापनमिति यावत् । **लीङ् श्लेषणे इति** । लीयते । लिल्ये । लिल्यिषे । [ लिल्यिढ्वे । लिल्यिध्वे ]। **विभाषा लीयतेः**। ननु लीयतेरिति श्यना निर्देशात् 'लीङ् श्लेषणे' इति श्नाविकरणस्य ग्रहणं न स्यादित्यत आह–**यका निर्देश इति** । 'सार्वधातुके य'गिति विहितयका लीयतेरिति निर्देशः । स च श्यन्श्नान्तसाधारणः, यक उभयत्रापि साधारण्यादिति भावः। 'मीनातिमिनोती'–त्यतो ल्यपीति, 'आदेचः' इत्यत आदिति, एच इति चाऽनुवर्तते। तदाह–**लीलीङोरित्यादिना** । **स्वादय ओदित इति।** धातुपाठपठितं गणसूत्रमिदम् । 'षूङ् प्राणिप्रसवे' इत्यारभ्य व्रीङन्ता ओदित्कार्यभाज इत्यर्थः। **निष्ठानत्वमिति।** 'ओदितश्चे'त्यनेनेति भावः । **प्रीङ् प्रीताविति** । **प्रीतिस्तुष्टिः** । 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरः । एवं सत्यकर्मकः। यथा–फलमूलादिना हरिः प्रीयते । हृष्यतीत्यर्थः। यदा तु प्रीतिः तर्पणं, 'प्रीञ् तर्पणे' इति क्रैयादिकात् क्तिनि प्रीतिशब्द-निष्पत्तिः, तदा तु सकर्मकः । तदाह–**सकर्मक इति** । **प्रीयते इति** । तर्पयतीत्यर्थः । **अथ चत्वारः परस्मैपदिन इति** । 'दो अवखण्डने' इत्यन्ता इति भावः । **शो तनूकरणे** । अनिट् । **ओतः श्यनि** । 'घोर्लोपो लेटि वे'त्यतो लोप इत्यनुवर्तते इत्यभिप्रेत्य शेषं पूरयति–**लोपः स्यादिति** । **शशाविति** । 'आदेच' इत्यात्वे णल औत्वमिति भावः । **शशतुरिति** । शशिथ–शशाथ । शशिव । **शास्यतीति** । श्यतु । अश्यत् । श्येत् । शायात् ।

---

शे.]पदञ्च तदुत्तरकालपरम्। 'एच' इत्यस्य 'विषये सती'ति शेषः। एवञ्चैचो विषये सति उपदेशोत्तरकाले एव आत्वमि-त्यर्थः । स्पष्टञ्चेदं भाष्ये । एवञ्चाऽशितीत्यनुवृत्तेः फलं चिन्त्यमिति **परे** । **लीलीङोरिति** । क्र्यादिराद्यषीयश्च निरनु-बन्धः परस्मैपदी । **स्वादय इति** । गणसूत्रमेतत् । 'षूं'ङित्यारभ्य 'व्री'ङन्ता इत्यर्थः। 'ओदित्' इत्यतिदेशः । **सक-र्मक इति** । अत्र मानन्तु चिन्त्यम् । **षोऽन्त** । **अन्तकर्म**–नाशनम्। **पतेति** । अत्र पाठे प्रमाणं प्रयोगमाह–**द्युत-**

सक्तौ । अशात् । अशाताम् । अशुः । अशासीत् । अशासिष्टाम् । ११४६ छो छेदने । छयति ११४७ षोऽन्तकर्मणि । स्यति । ससौ । अभिष्यति । अभ्यष्यत् । अभिससौ।[सेयात्]।११४८ दो अवखण्डने । द्यति । ददौ । प्रणिदाता । देयात्। अदात् । अथात्मनेपदिनः पञ्चदश । ११४९ जनी प्रादुर्भावे। ज्ञाजनोर्जा ।७।३।७९। अनयोर्जादेशः स्याच्छिति । जायते । जज्ञे । जज्ञाते । जज्ञिरे । जनिता । जनिष्यते । 'दीपजने'ति वा चिण् ।

**जनिवध्योश्च** ।७।३।३५। अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च। अजनि। अजनिष्ट। ११५० दीपी दीप्तौ । दीप्यते । दिदीपे । अदीपि । अदीपिष्ट । ११५१ पूरी आप्यायने । पूर्यते । अपूरि । अपूरिष्ट ११५२ तूरी गतित्वरणहिंसनयोः।तूर्यते । तुतूरे।११५३ धूरी ११५४ गूरी हिंसागत्योः।धूर्यते । दुधूरे। गूर्यते । जुगूरे । ११५५ घूरी ११५६ जूरी हिंसावयोहान्योः। ११५७ शूरी हिंसास्तम्भनयोः । ११५८ चूरी दाहे ॥ ११५९ तप ऐश्वर्ये वा । अयं धातुरैश्वर्ये वा तङ्श्यनौ लभते । अन्यदा तु शब्विकरणः परस्मैपदीत्यर्थः । केचित्तु वाग्रहणं वृतुधातोराद्यवयवमिच्छन्ति । तप्यते । तप्ता । तप्स्यते । पतेति व्यत्यासेन पाठान्तरम् । 'द्युतद्यामा नियुतः पत्यमानः' । ११६० वृतु वरणे । वृत्यते । पक्षान्तरे—वावृत्यते । 'ततो वावृत्यमाना सा रामशालां

---

त.]मायत इति । 'घुमास्थे'तीत्वं तु न, तत्रार्द्धधातुक इत्यधिकारात्। षोऽन्त। अन्तकर्म—नाशनम् ! 'राघव ! स्य शरैर्घोरैर्घोरं रावणमाहवे' इति । राघवेति संबुद्ध्यन्तम् । स्येति लोण्मध्यमैकवचनम् । अभिष्यतीति । 'उपसर्गात्सुनोती'ति षत्वम् । अभ्यष्यदिति । 'प्राक्सितादड्व्यवायेऽपी'ति षत्वम् । अभिससाविति । 'स्थादिषु' इति नियमान्न षत्वम् । दो अवखण्डने । अवेत्युपसर्गप्रयोगो वैचित्र्यार्थः, खण्डने इत्येतावत्युक्तेऽपीष्टसिद्धेः । प्रणिदातेति ! 'नेर्गदे'ति णत्वम्। देयादिति। 'एर्लिङी'त्येत्त्वम् । अदादिति । 'गातिस्थे'ति सिचो लुक् । ज्ञाजनोर्जा । जानाति । शिति किम् ? । ज्ञाता । 'ज' इति ह्रस्वोच्चारणेऽपि 'अतो दीर्घो यञी'ति दीर्घे सिद्धे जाग्रहणमङ्गवृत्तपरिभाषाज्ञापनार्थम् । तेन पाधातोः पिबादेशे कृते गुणो न भवति, पिबादेशस्याऽदन्तत्वाश्रयणं तूपायान्तरमित्याहुः । ञिति णिति कृति चेति । ञिति कृत्युदाहरणं घञि—जनः । णिति कृति तु—जनकः। जनयतीत्यत्रोपधावृद्धौ सत्यां 'जनीजॄ'षिति मित्त्वात् 'मितां ह्रस्वः' इति ह्रस्वः । दीपी दीप्तौ । ईदित्त्वान्निष्ठायामिण्न । दीप्तः । एवं पूरीत्यादेरीदित्त्वात्पूर्ण इत्यादि ज्ञेयम् ।

---

बा.]लुङि सिचि विशेषमाह—विभाषा घ्रेति। सिचो लुक्पक्षे आह—अशादिति । 'आतः' इति जुसिति मत्वा आह—अशुरिति । सिचो लुगभावे सगिटौ मत्वा आह—अशासीदिति। छोधातुरपि शोधातुवत् । षो अन्तकर्मणीति। समापने विनाशने वेत्यर्थः । शोधातुवद्रूपाणि । षोपदेशोऽयम् । स्यतीति । 'ओतः श्यनी'ति लोपः । अभिष्यतीति । 'उपसर्गा'दिति षत्वम् । अभ्यष्यदिति । 'प्राक्सिता'दिति षत्वम् । अभिससाविति । 'स्थादिष्वि'ति नियमान्न षः । दो अवखण्डने । प्रणिदातेति । 'नेर्गदे'ति णत्वम् । देयादिति । आशीर्लिङि 'एर्लिङी'त्येत्त्वम् । अदादिति । 'गातिस्थे'ति सिचो लुक् । अथात्मनेपदिन इति । 'वाश्ट शब्दे'इत्यन्ता इत्यर्थः । जनी प्रादुर्भावे इति । 'श्वीदितो निष्ठाया'मित्याद्यर्थमीदित्त्वम् । ज्ञाजनोर्जा । शितीति । 'ष्ठिवुक्लमुचमा'मित्यतस्तदनुवृत्तेरिति भावः । जायते इति । ज्ञाधातोस्तु श्नाविकरणत्वाज्जानातीत्युदाहरणम् । उभयत्रापि जादेशस्य ह्रस्वान्तत्वे 'अङ्गकार्ये कृते पुनर्नाङ्गकार्य'मिति परिभाषया 'अतो दीर्घो यञी'त्यप्राप्तेर्जादेशस्य दीर्घान्तत्वमाश्रितम् । जज्ञे इति । 'गमहने'त्युपधालोपे नस्य श्चुत्वेन ञः। जायेत। जनिषीष्ट । लुङि अजन् त इति स्थिते आह—दीपेति। वा चिणिति। 'च्लेरि'ति शेषः । अजन् इ त इति स्थिते उपधावृद्धौ प्राप्तायाम्—जनीवध्योश्च । 'अत उपधायाः' इत्यत उपधाया इति, 'मृजेर्वृद्धि'रित्यतो वृद्धिरिति, 'नोदात्तोपदेशस्ये'त्यतो नेति, 'आतो यु' गित्यतश्चिण्कृतोरिति, 'अचो ञ्णिती'त्यतो ञ्णितीति चानुवर्तते । तदाह—अनयोरिति । दीपीधातुरीदित् । 'दीपजने'ति च्लेश्चिण्विकल्पं मत्वाह—अदीपि अदीपिष्टेति । पूरीधातुरपि ईदित् । 'दीपजने'ति चिण्विकल्पं मत्वाह—अपूरि अपूरिष्टेति । तूरी इत्यादयोऽपि 'चूरी दाहे' इत्यन्ता ईदित एव । तप ऐश्वर्ये वेति। 'श्यन् आत्मनेपदं चे'ति शेषः । उभयोः प्रकृतत्वादित्यभिप्रेत्य शेषं पूरयति—श्यनं तङं चेति । अन्यदा त्विति । ऐश्वर्यादन्यार्थे वृत्तिदशायामित्यर्थः । केचित्त्विति । 'तप ऐश्वर्ये' 'वावृतु वरणे' इति धातुपाठे स्थितम् । तत्र 'वावृतु वरणे' इत्येवं वाशब्दं वृतु इत्यस्य आद्यवयवमिच्छन्तीत्यर्थः। एवंच 'तप ऐश्वर्ये' इत्येव स्थितम् । अस्मिन्पक्षे तपधातोर्नित्यमेव श्यन् तङ् चेति भावः। तप्यते इति । ईष्टे इत्यर्थः। प्रथमपक्षे ऐश्वर्ये तपतीत्यपि भवति । पत इतीति । तपधातोस्तकारपकारयोः क्रमव्यत्यासेन 'पत ऐश्वर्ये वा' इति पाठान्तरमित्यर्थः। एवं व्यत्यासेन पाठे प्रयोगं दर्शयति—द्युतद्यामा नियुत इति । प्रवायुमच्छा बृहतीत्यृच एकदेशोऽ-

---

शे.]द्यामेति । पक्षान्तरे इति।परे तु नित्येषु शब्देषु स्थान्यादेशत्वानुपपत्तिमाशङ्क्य, बुद्धिविपरिणामेन परिहृत्य, 'एवं तर्हि अपवादे उत्सर्गकृतं प्राप्नोती'त्याशङ्क्य 'नापवादे उत्सर्गकृतं भवति, यदयं श्यन्नादीन्कांश्चिच्छितः करोती'ति श्यन्नः

न्यविक्षते'ति भट्टिः । ११६१ क्लिश उपतापे । क्लिश्यते । क्लेशिता । ११६२ काश्ट दीप्तौ । काश्यते । ११६३ वाश्ट शब्दे । वाश्यते । ववाशे । **अथ पञ्च स्वरितेतः** । ११६४ मृष तितिक्षायाम् । मृष्यति । मृष्यते । ममर्ष । ममृषे । ११६५ ई शुचिर् पूतीभावे । पूतीभावः—क्लेदः । शुच्यति । शुच्यते । शुशोच । शुशुचे । अशुचत् । अशोचीत् । अशोचिष्ट । ११६६ णह बन्धने । नह्यति । नह्यते । ननाह । ननद्ध । नेहिथ । नेहे । नद्धा । नत्स्यति । अनात्सीत् । ११६७ रञ्ज रागे । रज्यति । रज्यते । ११६८ शप आक्रोशे । शप्यति । शप्यते । **अथैकादशानुदात्तेतः** । ११६९ पद गतौ । पद्यते । पेदे । पत्ता । पद्येत । पत्सीष्ट । **चिण् ते पदः** ।३।१।६०। पदश्च्लेश्चिण् स्यात्तशब्दे परे । प्रण्यपादि । अपत्साताम् । अपत्सत । ११७० खिद दैन्ये । खिद्यते । चिखिदे । खेत्ता । अखित्त । ११७१ विद सत्तायाम् । विद्यते । वेत्ता । ११७२ बुध अवगमने । बुध्यते । बुबुधे । बोद्धा । भोत्स्यते । भुत्सीष्ट । अबोधि । अबुद्ध । अभुत्साताम् । ११७३ युध संप्रहारे । युध्यते । युयुधे । योद्धा । अयुद्ध । कथं युध्यतीति ? । युधमिच्छतीति क्यच् । 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्य'-

---

त.]**केचित्त्विति।** तेषां मते ऐश्वर्ये तप्यते इत्येव प्रयोगो न तु तपतीति। **न्यविक्षतेति।** निपूर्वाद्विशतेर्लुङि 'शल इगुपधे'ति क्सः । 'नेर्विशः' इति तङ् । **वाश्ट शब्दे** । 'मन्दिवाशी'त्युरच् । वाशुरा रात्रिः । **तितिक्षायामिति** । 'गुप्तिज्किद्भ्यः' इति सन् । तत्र हि 'तिजेः क्षमाया'मित्युक्तम् । **ई शुचिर्** । ईदित्त्वान्नेट् । शुक्तम् । क्लिन्नमित्यर्थः । **ननद्धेति** । 'नहो धः'इति धत्वम् । **चिण् ते पदः**। **तशब्द इति** । सामर्थ्यादात्मनेपदप्रथमपुरुषैकवचनम् । तशब्दे किम् ? । अपत्थाः। **प्रण्यपादीति** । 'चिणो लु'गिति तशब्दस्य लुक् । 'नेर्गदे'ति णत्वम् । **अबोधीति** । 'दीपजन-

---

बा.]यम् । 'पत्यमान' इत्यस्य ईशान इत्यर्थः । अत्र लटः शानजात्मनेपदं श्यन् च । **पक्षान्तरे इति** । 'वावृतु' इति पाठपक्षे इत्यर्थः । **वावृत्यते इति** । वृणोतीत्यर्थः । अपेक्षते इति यावत् । वावृतुधातोः प्रयोगं दर्शयति—**ततो वावृत्यमानेति** । अपेक्षमाणेत्यर्थः । **न्यविक्षतेति** । 'नेर्विशः' इत्यात्मनेपदम् । 'शल इगुपधा'दिति क्सः ।

**अथ पञ्च स्वरितेत इति।**'शप आक्रोशे' इत्यन्ता इत्यर्थः।**शुच्यतीति।**क्लिन्नं भवतीत्यर्थः। **अशुचदिति** । इरित्त्वादङिति भावः । **णह बन्धने इति** । णोपदेशोऽयम् । अनिट् । **ननाहेति** । नेहतुः । भारद्वाजनियमात्थलि वेडिति मत्वाह—**नेहिथ ननद्धेति** । इट्पक्षे 'थलि च सेटी'त्येत्त्वाभ्यासलोपौ । इडभावे तु 'नहो धः' इति हस्य ध इति भावः। **रञ्ज रागे** । अनिट् । **रज्यतीति** । 'अनिदिता'मिति नलोप इति भावः । ररञ्ज ररञ्जतुः । ररञ्जिथ-ररङ्क्थ । ररञ्जिव । रङ्क्ता इत्यादि । **अथैकादशेति** । 'लिश अल्पीभावे' इत्यन्ता इत्यर्थः । **पद गतौ** । अनिट् । **चिण् ते पदः** । **पदश्च्लेरिति** । 'च्लेः सि'जित्यत श्च्लेरित्यनुवर्तते इति भावः। **तशब्दे इति** । आत्मनेपदप्रथमैकवचने इत्यर्थः । इदं च भाष्ये स्पष्टम् । **प्रण्यपादीति** । श्च्लेश्चिणि उपधावृद्धौ 'चिणो लु'गिति तशब्दस्य लोपः । 'नेर्गदे'ति णत्वमिति भावः । **विद सत्तायाम्** । **वेत्तेति** । अनिडिति भावः । लिटि क्रादिनियमादिट् । एवं बुधधातुरपि । **बोद्धेति** । तासि 'झषस्तथो'रिति तकारस्य धकारः । **भोत्स्यते इति** । 'एकाचः' इति भष् । **भुत्सीष्टेति** । 'लिङ्सिचौ' इति कित्त्वम् । 'दीपजने'ति चिण्विकल्पं मत्वा आह—**अबोधि अबुद्धेति** । **कथं युध्यतीति** । आत्मनेपदित्वादिति भावः । समाधत्ते—**युधमिति** । युध्शब्दो भावक्विबन्तः । युधमिच्छतीत्यर्थे 'सुप आत्मनः' इति इति क्यजन्तात्परस्मैपदमित्यर्थः। 'अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्य'मिति समाधानं त्वनुचितं, तस्य भाष्याऽदृष्टत्वेनाऽ-

---

शे.]शित्त्वस्य ज्ञापकतोक्ता स्थानिवत्सूत्रे भाष्ये।न च पित्त्वनिवृत्तये नियमार्थं शित्त्वमिति वाच्यं,नित्त्वसामर्थ्यादेव तत्सिद्धेः। तद्ध्याद्युदात्तार्थम्।श्यनः पित्त्वे तु पित्त्वादेवानुदात्तत्वे लब्धे, लसार्वधातुकानुदात्तत्वे च धातुस्वरेणैव सिद्धे किं तेनेति तदाशयः।न च ताच्छील्यादिविषये चानशि प्रकृतेराद्युदात्तार्थं नित्त्वमिति वाच्यम्,'अन्यत्र विकरणेभ्यः'इत्युक्त्या तत्र श्यन्स्वराऽप्राप्तेः । न च तस्यापि तत्सामर्थ्याद्बाधः, तद्बाधकल्पनापेक्षयाऽतिदेशप्राप्तपित्त्वबाधस्यैवौचित्यात् । 'वावृतु'इत्यस्याऽनेकाचः सत्त्वे तत्र धातुस्वरेणाऽसिद्धेर्नित्त्वस्यावश्यकतया तत्सामर्थ्याऽभावेन पित्त्वनिवृत्तये शित्त्वस्यावश्यकत्वाद्भाष्याऽसङ्गतिः स्पष्टैव । भट्टिप्रयोगे तु वाशब्दस्येवार्थतया 'कामयमानेव, न तु तथा, किन्तु च्छलनार्थमागते'त्यर्थान्न दोषः । 'वृत्ते तु वृत्तवावृत्तौ'इति कोशोक्तवावृत्तशब्दस्तु पृषोदरादित्वात् । पित्त्वनित्त्वयोरविशेषमुक्त्वा चानशि विशेषं प्रदर्शयतः कैयटस्याप्यनेकाचो धातोरत्र गणेऽभावे एव स्वरसः । न च ज्ञापकत्वान्नियमार्थत्वे लाघवं, सर्वथानुपपन्नस्यैव ज्ञापकतया नियमार्थत्वे ज्ञापकत्वस्यैवाऽसम्भवात् । किं च नियमार्थत्वे एकत्रैवातिदेशबाधो, ज्ञापकत्वं तु अनेकत्रेति नियम एव युक्त इत्याहुः । **क्लेदे इति** । अत एव क्लिन्ने 'शुक्त'मिति प्रयोगः । **तशब्दे इति** । स चात्रात्मनेपदप्रथमैकवचनं, पदेस्तस्यैव सम्भवात् । **अबोधीति** । 'दीपजने'ति चिण् । **युधमिच्छतीति** । 'व्यत्ययो बहुल'मिति सूत्रभाष्ये तु 'प्रतीपमन्य ऊर्मिर्युध्यती'त्यत्र व्यत्ययेन परस्मैपद'मित्युक्तम् । एतद्भाष्यविरोधादनुदात्तेत्त्वप्रयुक्तात्मनेपदा-

मिति वा । **११७४ अनो रुध कामे** । अनुरुध्यते । **११७५ अण प्राणने** । अण्यते । आणे । अणिता । अनेति दन्त्यान्तोऽयमित्येके । **११७६ मन ज्ञाने** । मन्यते । मेने । मन्ता । **११७७ युज समाधौ** । समाधिश्चित्तवृत्तिनिरोधः । अकर्मकः । युज्यते । योक्ता । **११७८ सृज विसर्गे** । अकर्मकः । 'संसृज्यते सरसिजैररुणांशुभिन्नैः' । ससृजिषे । स्रष्टा । स्रक्ष्यते । 'लिङ्सिचा'विति किस्वान्न गुणो, नाप्यम् । सृक्षीष्ट । असृष्ट । असृक्षाताम् । **११७९ लिश अल्पीभावे** । लिश्यते । लेष्टा । लेक्ष्यते । लिक्षीष्ट । अलिक्षत । अलिक्षाताम् । **अथाऽऽगणान्ताः परस्मैपदिनः** । **११८० राधोऽकर्मकाद्वृद्धावेव** । एवकारो भिन्नक्रमः । राधोऽकर्मकादेव श्यन् । उदाहरणमाह—वृद्धाविति । 'यन्मह्यमपराध्यति' । द्रुह्यतीत्यर्थः। 'विराध्यन्तं क्षमेत कः'। द्रुह्यन्तमित्यर्थः । राध्यत्योदनः । सिध्यतीत्यर्थः । कृष्णाय राध्यति । दैवं पर्यालोचयतीत्यर्थः । दैवस्य धात्वर्थेऽन्त-

---

त.]बुधे'ति चिण् । **अनो रुध कामे**। अनोः परो रुधधातुः कामे। काम इच्छा। दिवादिषु पाठसामर्थ्यात् 'रुधादिभ्यः' इति श्नमं बाधित्वा श्यन् । **नाप्यमिति** । 'सृजिदृशोर्झल्यमकिती'त्यकित्येव विधानात् । **लिश** । आतपादिनाऽनल्पस्य अल्पभावोऽल्पीभावः । **लिक्षीष्टेति** । 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वान्न गुणः । **अलिक्षतेति** । 'शल इगुपधे'ति क्सः । **राधोऽकर्मकात्** । भिन्नक्रमं दर्शयति—**अकर्मकादेवेति** । 'राधो वृद्धावेव श्य'न्निति व्याख्यायामकर्मकादिति विशेषणं व्यर्थं स्यात्, वृद्धावस्याऽकर्मकत्वात् । अकर्मकात्किम् ?। शत्रुमपराध्नोति । हिनस्तीत्यर्थः। राध संसिद्धाविति स्वादौ । 'राधो हिंसाया'मित्यनुवादाद्धिंसायामप्ययम् । **उदाहरणमाहेति** । अकर्मकत्वप्रयोजकस्य यस्य कस्यचिदर्थस्येति भावः । अकर्मके श्यन्नन्तस्य प्रयोगान्दर्शयति—**यन्मह्यमित्यादिना** । **कृष्णायेति** । 'राधीक्ष्यो'रिति

---

बा.]प्रामाणिकत्वात्। अत एव 'व्यत्ययो बहुल'मिति सूत्रभाष्ये 'प्रतीपमन्य ऊर्मिर्युध्यती'त्यत्र व्यत्ययेन परस्मैपदमित्येव समाहितम् । **अनो रुधेति** । अनु इत्युपसर्गात्परो रुधधातुः कामे वर्तत इत्यर्थः । **युज समाधौ** । अनिट् । **अकर्मक इति** । चित्तवृत्तेर्धात्वर्थान्तर्भावादिति भावः । अर्थान्तरे तु सकर्मकोऽपि भवति, 'सृजियुज्योः सकर्मकयोः कर्मवद्भाव' इति कर्मवत्सूत्रवार्तिकात् । एतच्च कर्मकर्तृप्रक्रियायां स्पष्टीभविष्यति । **सृज विसर्गे इति** । अनिट् । विसर्गः=संबन्धः । उपसर्गवशात् । तदाह—**अकर्मक इति। संसृज्यते इति** । अरुणांशुभिन्नैः=अरुणकिरणविकसितैः, सरसिजैः=कमलैः, संसृज्यते=संबध्नातीत्यर्थः । 'कमलिनी'ति शेषः । कर्तरि लकारोऽयम्, न त्वयं कर्मणि लकारः, अकर्मकत्वात् । अर्थान्तरे तु सकर्मकोऽयमिति कर्मकर्तृप्रक्रियायां वक्ष्यते । लिट्याह—**ससृजिषे इति** । क्रादिनियमादिडिति भावः । **स्रष्टेति** । 'सृजिदृशोर्झल्यमकिती'त्यमागमे ऋकारस्य यणि व्रश्चादिना जस्य षः । ष्टुत्वेन तकारस्य ट इति भावः । **स्रक्ष्यते इति** । पूर्ववदमि जस्य षत्वे 'षढो'रिति षस्य कत्वे सस्य षत्वमिति भावः । आशीर्लिङि आह—**सृक्षीष्टेति** । अत्र लघूपधगुणमाशङ्क्याह—**लिङ्सिचाविति** । **नाप्यमिति** । 'सृजिदृशोर्झल्य'मित्यमपि नास्तीत्यर्थः । अकित्येव तद्विधानादिति भावः । लुङ्याह—**असृष्टेति** । 'झलो झली'ति सिचो लोपः । 'लिङ्सिचावात्मनेपदेषु'इति सिचः कित्त्वान्न गुणो नाप्यमिति भावः । **लिश अल्पीभावे** । **लिक्षीष्टेति** । 'लिङ्सिचौ' इति कित्त्वान्न गुणः । **अलिक्षतेति** । 'शल इगुपधा'दिति क्सः । **आ गणान्तादिति** । दिवादिगणसमाप्तिपर्यन्तमित्यर्थः। **राधोऽकर्मकाद्वृद्धावेवेति** । श्य'न्निति शेषः । राधधातोरकर्मकाद्वृद्धावेवाऽर्थे श्यनिति प्रतीयमानोऽर्थः । एवं सति अकर्मकादिति व्यर्थम् । राधेरर्थान्तरे च श्यन् स्यात् । इष्यते हि 'अपराध्यती'त्यादौ द्रोहाद्यर्थेऽपि श्यन् । तत्राह—**एवकारो भिन्नक्रम इति**।यस्मिन् क्रमे वृद्धावित्यत ऊर्ध्वम्एवकारः पठितः,ततोऽन्यः क्रमो यस्य स भिन्नक्रम इत्यर्थः। 'वृद्धा'वित्यत ऊर्ध्वं पठित एवकारोऽन्यत्र निवेशनीय इति यावत् । तदेव दर्शयति—**राधोऽकर्मकादेव श्यनिति** । एवं चार्थान्तरेऽपि श्यन् सिध्यति । 'शत्रुं हिनस्ती'त्यर्थे शत्रुमपराध्नोतीत्यत्र सकर्मकत्वान्न श्यन्निति भावः । तर्हि वृद्धावित्यस्य किं प्रयोजनमित्याशङ्क्य अकर्मकक्रिया एवंविधेति प्रदर्शनार्थं तत्, नतु परिसङ्ख्यानार्थमित्याह—**उदाहरणमाह—वृद्धावितीति** । एवंच वृद्धिग्रहणमकर्मकक्रियामात्रोपलक्षणमिति भावः । तथाविधाऽर्थान्तराण्युदाहरति—**यन्मह्यमित्यादिना** । 'क्रुधद्रुहे'ति संप्रदानत्वम् । **कृष्णाय राध्यतीति** । 'राधीक्ष्योर्यस्य विप्रश्नः' इति संप्रदानत्वम् । **दैवमिति** । कृष्णस्य किमिदानीं शुभमशुभं वेति पृष्टो दैवज्ञस्तस्य शुभाऽशुभसूचकादित्यादिग्रहस्थितिं ज्योतिश्शास्त्रतः परीक्षते इति यावत् । ननु पर्यालोचने दैवस्य कर्मत्वात्कथमिह अकर्मकतेत्यत आह—**दैवस्येति**। ननु 'राधोऽ-

---

शे.]ऽनित्यत्वमपि चिन्त्यमेव । **अकर्मक इति** । अकर्मकोऽपीत्यर्थः। अतः 'सृजियुज्योः सकर्मकयोः कर्मवद्भावः' इति 'कर्मवत्' सूत्रस्थवार्त्तिकेन न विरोधः । **स्रष्टेति** । 'सृजिदृशो'रित्यम् । एवकारादर्थान्तरे राधः श्यन्न स्यादत आह—**भिन्नेति** । अत एवाकर्मकादिति सार्थकम् । **उदाहरणमिति** । । तथा च वृद्धावित्युपलक्षणम् । अत एव 'राध्यत्योदनः स्वयमेवे'ति कर्मवत्सूत्रस्थभाष्यप्रयोगोपपत्तिरिति भावः । **हिंसार्थस्येति** । 'शत्रुमपराध्नोती'त्यादौ हिनस्तीत्यर्थ-

र्भावाज्जीवत्यादिवदकर्मकत्वम् । रराध । रराधतुः । रराधिथ । 'राधो हिंसाया'मित्येत्वाभ्यासलोपाविह न, हिंसार्थस्य सकर्मकतया दैवादिकत्वाऽयोगात् । राद्धा । रात्स्यति । अयं स्वादिश्चुरादिश्च । ११८१ व्यध ताडने । 'ग्रहिज्या' [इति संप्रसारणम्]।विध्यति। विव्याध। विविधतुः। विव्यद्ध। विव्यधिथ। व्यद्धा । व्यत्स्यति। विध्येत् । विध्यात् । अव्यात्सीत् । ११८२ पुष पुष्टौ । पुष्यति । पुपोष । पुपोषिथ। पोष्टा । पोक्ष्यति । 'पुषादि'त्यङ् । अपुषत् । ११८३ शुष शोषणे । अशुषत् । ११८४ तुष प्रीतौ । ११८५ दुष वैकृत्ये । ११८६ श्लिष आलिङ्गने। श्लिष्यति । शिश्लेष। श्लेष्टा। श्लेक्ष्यति। 'श्लिषः' ३।१।४६।अस्मात्परस्याऽनिटश्च्लेः क्सः स्यात् ।.पुषाद्यङोऽपवादो न तु चिणः, पुरस्तादपवादन्यायात् । 'आलिङ्गने' ।३।१।४६। श्लिषश्च्लेरालिङ्गन एव क्सो नान्यत्र। योगविभागसामर्थ्याच्छल इगुपधादित्यस्याप्ययं नियमः।अश्लिक्षत्कन्यां देवदत्तः। आलिङ्गन एवेति किं?।

त.]चतुर्थी । अपुषदिति । ङित्वाद्गुणाऽभावः ।' शुष । शोष्टा । शोक्ष्यति । 'श्लिष आलिङ्गने' इति सूत्रं योगविभागेन व्याचष्टे-**श्लिष इति । अनिटश्च्लेः क्स इति** । एतच्च 'च्लेः सिच्', 'शल इगुपधा'दित्यतोऽनुवर्तत इति भावः । अनिटः किम् ? । 'श्लिषु दाहे' इति भौवादिकस्य सेटो माभूत् । अश्लेषीत् । 'शल इगुपधे'ति सिद्धे पुनः क्सविधेः फलमाह-**पुषाद्यङ इति । सामर्थ्यादिति** । यदि हि 'श्लिष' इति प्राप्त एव क्सो नियम्येत तर्हि योगविभागो व्यर्थः स्यादिति भावः । **शल इगुपधादित्यस्यापीति** । तेन कर्मण्यातांप्रभृतिष्वनालिङ्गने सिजेव भवति न तु क्सः । 'समाश्लिक्षत जतूनि काष्ठै'रिति क्सप्रत्यये सति तु समाश्लिक्षन्तेति स्यादिति भावः । **प्रत्यासत्ताविति** । आलिङ्गनं हि

बा.]कर्मकाद्वृद्धावेवे'त्यत्र वृद्धिग्रहणस्य उपलक्षणतया हिंसार्थकस्यापि राधेर्दैवादिकत्वाद्रराधतुरित्यादौ 'राधो हिंसाया'मिति वक्ष्यमाणावेत्त्वाऽभ्यासलोपौ स्यातामित्यत आह-**राध इति।इह नेति**।रराधतुरित्यादौ राधेर्हिंसार्थकत्वे 'राधो हिंसाया'मिति वक्ष्यमाणावेत्त्वाभ्यासलोपौ न स्त इत्यर्थः। कुत इत्यत आह-**हिंसार्थस्येति**। नोन्मिषत्येवैषा शङ्का,राधेरकर्मकस्यैव दैवादिकत्ववचनात् । हिंसार्थकस्य च राधेः सकर्मकतया दैवादिकत्वाऽभावादुक्तशङ्काया अनुन्मेषादित्यर्थः। ननु राध्नोति राधयतीति कथमित्यत आह-**अयं स्वादिश्चुरादिश्चेति**। रराधिथ । क्रादिनियमान्नित्यमिट्,दीर्घाकारवत्त्वेन 'उपदेशेऽत्वतः' इत्यस्याऽप्रवृत्तेः,अजन्तोऽकारवानित्यत्र च ह्रस्वाऽकारस्यैव विवक्षितत्वात्। राद्धा । अरात्सीत् । **व्यध ताडने इति** । चतुर्थान्तोऽयम्। अनिट्। **विध्यतीति**।श्यनो ङित्त्वात् 'ग्रहिज्ये'ति यकारस्य संप्रसारणे पूर्वरूपे विध्यतीति रूपमित्यर्थः। वकारस्य तु न संप्रसारणं, 'न संप्रसारणे संप्रसारण'मिति निषेधात् । **विव्याधेति**। द्वित्वे कृते अभ्यासस्य 'लिट्यभ्यासस्ये'ति संप्रसारणमिति भावः । **विविधतुरिति** । परत्वात् 'ग्रहिज्ये'ति संप्रसारणे कृते द्वित्वमिति भावः । भारद्वाजनियमात्थलि वेडित्याह-**विव्यधिथ विव्यद्धेति** । 'लिट्यभ्यासस्ये'ति संप्रसारणम् । अनिट्पक्षे 'झषस्तथो'रिति धः । **अव्यात्सीदिति** । हलन्तलक्षणा वृद्धिः । **पुष पुष्टौ** । अनिट् । **पुपोषिथेति** । अजन्ताऽकारवत्त्वाऽभावाक्रादिनियमान्नित्यमिट् । **अपुषदिति** । पुषाद्यङ् । ङित्वान्न गुणः। **शुषधातुरनिट्** । **अशुषदिति** । पुषाद्यङिति भावः । एवमग्रेऽपि। **तुष् दुष् श्लिष्**-एतेऽनिटः।लुङि श्लिषश्च्लेः सिजादेशे प्राप्ते-**श्लिषः**।'च्ले'रिति 'शल इगुपधा'दित्यतोऽनिटः क्स इति चानुवर्तते । तदाह-**अस्मात्परस्येत्यादिना** । ननु 'शल इगुपधा'दित्येव क्से सिद्धे किमर्थमिदमित्यत आह-**पुषाद्यङोऽपवाद इति**। 'शल इगुपधा'दिति क्सं बाधित्वा परत्वात्पुषाद्यङ् स्यात्, तन्निवृत्तये पुनः क्सविधिरित्यर्थः । ननु 'श्लिष' इति क्सो यथा परमपि पुषाद्यङं बाधते तथा 'चिण्भावकर्मणो'रिति चिणमपि परं बाधते, एवं सति 'उपाश्लेषि कन्या देवदत्तेने'त्यत्र कर्मणि लुङि 'चिण्भावकर्मणो'रिति च्लेश्चिण्न स्यादित्यत आह-**नतु चिण इति** । 'श्लिषः' इति क्सविधिः 'चिण् भावकर्मणो'रिति चिण्विधेर्न बाधक इत्यर्थः । कुत इत्यत आह-**पुरस्तादिति**। 'शल इगुपधादनिटः क्सः' 'श्लिषः' 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' 'चिण् भावकर्मणो'रिति सूत्रक्रम इति भावः । **आलिङ्गने** । 'श्लिष' इति पूर्वसूत्रे यदनुवृत्तं तत्सर्वमिहानुवर्तते, श्लिष इति च । तथाच आलिङ्गने विद्यमानात् श्लिषेः परस्य च्लेः क्सः स्यादिति लभ्यते । 'श्लिषः' इति पूर्वसूत्रेणैव सिद्धे नियमार्थमिदम् । तदाह-**श्लिषश्च्लेरालिङ्गने एव क्सो नान्यत्रेति** । नन्वयं नियमः 'अनन्तरस्ये'ति न्यायात् 'श्लिष' इति सूत्रप्राप्तस्यैव स्यान्नतु 'शल इगुपधा'-दित्यस्यापीत्यत आह-**शल इगुपधादित्यस्याप्ययं नियम इति** । कुत इत्यत आह-**योगविभागसामर्थ्यादिति**। यदि 'श्लिष' इति प्राप्त एव क्स आलिङ्गन एव इति नियम्येत तर्हि योगविभागो व्यर्थः स्यात् ,'श्लिष आलिङ्गने' इत्येकसूत्रत्वे सत्यपि अनालिङ्गने क्सो नेत्यस्यार्थस्य सिद्धत्वात् । अतः 'शल इगुपधा'दिति क्सोऽपि श्लिषेरालिङ्गने एव न त्वनालिङ्गनेऽपि इति नियमो विज्ञायत इत्यर्थः । **अश्लिक्षत्कन्यां देवदत्त इति** । आलिङ्गदित्यर्थः । अत्र पुषा-

शे.]दर्शनात्। **चुरादिश्चेति**। 'ज्ञेय' इति शेषः।तथा प्रयोगदर्शनादिति भावः। श्लिष इति प्रतिप्रसवविधिस्तदाह-**अङोऽपवाद इति**। पुषाद्यङस्त्वन्ये पुषादयोऽवकाशाः। यद्वा वक्ष्यमाणनियमपर्यालोचनयाऽनालिङ्गने चरितार्थस्याऽङोऽयमपवाद

समश्लिषज्जतु काष्ठम् । अङ् । प्रत्यासत्ताविह श्लिषिः । कर्मणि अनालिङ्गने सिजेव, न तु क्सः । एकवचने चिण् । अश्लेषि । अश्लिक्षाताम् । अश्लिक्षत । अश्लिष्टाः । अश्लिड्ढ्वम् । ११८७ शक विभाषितो मर्षणे । विभाषित इति । उभयपदीत्यर्थः । शक्यति शक्यते वा हरिं द्रष्टुं भक्तः । शशाक । शेकिथ । शशक्थ । शेके । शक्ता । शक्ष्यति । शक्ष्यते । अशकत् । अशक्त । सेड्कोऽयमित्येके । तन्मतेनाऽनिड्कारिकासु लृदित्पठितः । शकिता । शकिष्यति । ११८८ ष्विदा गात्रप्रक्षरणे । घर्मस्रुतावित्यर्थः । अयं ञीदिति न्यासकारादयः । नेति हरदत्तादयः । स्विद्यति । सिष्वेद । सिष्वेदिथ । स्वेत्ता । अस्विदत् । ११८९ क्रुध क्रोधे । क्रोद्धा । क्रोत्स्यति । ११९० क्षुध बुभुक्षायाम् । क्षोद्धा । कथं क्षुधित इति ? । संपदादिक्विबन्तात्तारकादित्वादितजिति माधवः । वस्तुतस्तु 'वसतिक्षुधो'रितीड्वक्ष्यते । ११९१ शुध शौचे । शुध्यति । शुशोध । शोद्धा । ११९२ षिधु

त.] प्राणिकर्तृकं न तु काष्ठादिकर्तृकमिति भावः । 'श्लिषश्लेरालिङ्गन एव क्स' इति व्याख्यानस्य फलं दर्शयति—कर्मणीत्यादिना । अश्लिक्षातामित्यादौ यद्यपि क्ससिचोर्विशेषो नास्ति 'क्सस्याची'त्यकारलोपात्, तथापि थासादावस्त्येव विशेष इति ध्वनयन्नुदाहरति—अश्लिष्ठाः । अश्लिड्ढ्वमिति । न्यासकारादय इति । तथा च तन्मते 'ञीतः क्तः' इति वर्तमाने क्तो भवति । आदित्वान्निष्ठायां नेट् । स्विन्नः । 'विभाषा भावादिकर्मणोः' । स्विन्नम् । स्वेदितमित्यादि सिद्धम् । षिधु । संराद्धिर्निष्पत्तिः । 'उदितो वे'ति क्त्वायामिड्विकल्पः । इडभावपक्षे 'रलो व्युपधा'दिति वा कित्त्वम् । सिधित्वा

बा.] ञ्चङं बाधित्वा अनेन क्सः । समाश्लिषज्जतु काष्ठमिति । जतु=लाक्षा । सा च काष्ठलग्नैवोत्पद्यते इति स्थितिः । जतु च काष्ठं चेति समाहारद्वन्द्वः । 'उपाश्लिषज्जतु काष्ठं चे'त्येव भाष्यम् । अत्र श्लिषेरालिङ्गनार्थकत्वाऽभावान्न क्सः, किन्तु पुषाद्यङेवेति भावः । नन्वजादित्वाऽभावेन आडागमस्याऽसंभवात्समाश्लिषदित्ययुक्तमित्यत आह—आङिति । समाश्लिषदित्यत्र श्लिषेः प्रागाङुपसर्ग एव, न त्वाडागम इति भ्रमितव्यमित्यर्थः । नन्वालिङ्गनं समाश्लेषणं, तथाच समाश्लिषज्जतु काष्ठमित्यत्रापि श्लिषेरालिङ्गनार्थकत्वात्क्सो दुर्वार इत्यत आह—प्रत्यासत्ताविहेति । इह=समाश्लिषज्जतु काष्ठमित्यत्र, श्लिषिः प्रत्यासत्तौ = संयोगे वर्तते, नतु बाह्वादिना संवलनात्मकसंबन्धविशेषरूपे आलिङ्गने इत्यर्थः । नन्वालिङ्गने एव श्लिषश्लेः क्सो, न त्वनालिङ्गने इति नियमादनालिङ्गने 'शल इगुपधा'दित्यपि क्सो न भवतीत्युक्तमयुक्तं, समाश्लिषज्जतु काष्ठमित्यत्राऽनालिङ्गने 'शल इगुपधा'दिति क्सं बाधित्वा परत्वात्पुषाद्यङ एव प्राप्त्या क्सस्याऽप्रसक्तेरित्यत आह—कर्मणीति । अनालिङ्गनवृत्तेः श्लिषधातोः कर्मणि लुङि च्लेःसिजेव भवति, न तु पुषाद्यङ्, तस्य परस्मैपदविषयत्वात्, कर्मणि लुङश्च 'भावकर्मणो'रित्यात्मनेपदनियमात् । तस्य च 'शल इगुपधा'दिति प्राप्तः क्स उक्तेन नियमेन अनालिङ्गनेऽपि वार्यते इति युक्तमित्यर्थः । यदुक्तम्—'आलिङ्गने श्लिषश्लेः क्सः पुषाद्यङ एवापवादो नतु चिण' इति, तस्य प्रयोजनमाह—एकवचने चिणिति । तदेवोदाहृत्य दर्शयति—अश्लेषीति । आलिङ्गिता कन्या देवदत्तेनेत्यर्थः । श्लिषेरालिङ्गनार्थकात्कर्मणि लुङि प्रथमैकवचने तशब्दे परे 'चिण भावकर्मणो'रिति च्लेश्चिणि कृते 'चिणो लु'गिति तशब्दस्य लुक् । अत्र 'श्लिष' इति क्सस्य पुषाद्यङ्मात्रापवादत्वाच्चिणपवादत्वाऽभावाच्चिण् निर्बाध इति भावः । 'समाश्लेषि जतुना काष्ठ'मित्यत्र त्वनालिङ्गनाच्च्लेश्चिणो निर्बाधत्वादश्लेषीति निर्बाधमेव । एवं च आलिङ्गने अनालिङ्गनेऽपि श्लिषः कर्मणि लुङि एकवचने तशब्दे परे च्लेश्चिणेवेति स्थितम् । अथाऽनालिङ्गने श्लिषः कर्मणि लुङि 'शल' इति क्सोऽपि नेति यदुक्तं, तदुदाहृत्य दर्शयति—अश्लिक्षातामिति । अनालिङ्गने श्लिषः कर्मणि लुङ आतामि च्लेः क्साऽभावात्सिचि 'षढो'रिति षस्य कत्वे सस्य षत्वे रूपमिति भावः । नन्वश्लिक्षातामित्यत्र सत्यपि क्से 'क्सस्याची'त्यकारलोपे इष्टं सिद्धमित्यस्वरसात्कर्मणि लुङि झादावुदाहरति—अश्लिक्षतेत्यादि । अश्लिष् स् झेति स्थिते झोऽन्तादेशं बाधित्वा 'आत्मनेपदेष्वनतः' इत्यदादेशे षस्य कत्वे सिचः सस्य षत्वे अश्लिक्षतेतीष्यते । च्लेः क्से तु सति अश्लिष् स् झ इति स्थिते 'क्सस्याची'त्यकारलोपाऽप्रसक्तेरतः परत्वात् 'आत्मनेपदेष्वनतः' इत्यदादेशो न स्यादिति भावः । अश्लिष्टा इति । श्लिषेः कर्मणि लुङस्थासि च्लेः सिचि 'झलो झली'ति सिचो लोपे ष्टुत्वे 'अश्लिष्ठा'इति रूपमिष्यते । क्से तु 'झलो झली'त्यसंभवादश्लिक्षथा स्यादिति भावः । अश्लिड्ढ्वमिति । श्लिषः कर्मणि लुङो ध्वमि सिचि 'झलो झली'ति सस्य लोपे षस्य जश्त्वेन डकारे ष्टुत्वेन धस्य ढः । क्से तु सति अश्लिक्षध्वमिति स्यादिति भावः । शक विभाषित इति । मर्षणेऽर्थे शकधातुर्विकल्पित इत्यर्थः । विकल्पश्च प्रकृतपरस्मैपदविषयक एव, न तु दिवादिपाठविषयकः, व्याख्यानात् । तदाह—उभयपदीति । मर्षणमिह—सामर्थ्यम् । शक्यति शक्यते वेति । समर्थो भवतीत्यर्थः । सेड्कोऽयमित्येके इति । स्वमते त्वनिड् एवेति भावः । नन्वनिड्कारिकासु लृदितः शकेः पाठात्कथमनिट्त्वमित्यत आह—तन्मतेनेति । ये सेट्त्वं शकेर्वदन्ति तन्मतमवलम्ब्याऽनिड्कारिकासु शकि-

शे.] इति भावः । सिच्फलं दर्शयति—अश्लिक्षत अश्लिष्ठा इति । अत्राऽदादेश—'झलो झली'तिलोपयोः सिद्धिरिति भावः ।

संराद्धौ । ऊदित्पाठः प्रामादिकः । सिध्यति । सेद्धा । सेत्स्यति । असिधत् । **११९३ रध हिंसासंराद्ध्योः ।** [संराद्धिर्निष्पत्तिः] रध्यति । 'रधिजभोरचि' इति नुम् । ररन्ध । ररन्धतुः । **रधादिभ्यश्च** ।७।२।४५। [रध नश् तृप् दृप् द्रुह् मुह् ष्णुह् ष्णिह् एभ्यो] वलाद्यार्द्धधातुकस्य वेट् स्यात् । ररन्धिथ । ररद्ध । ररन्धिव । रेध्व । **नेट्यलिटि रधेः** ।७।१।६२। लिड्वर्जे इटि रधेर्नुम्न स्यात् । रधिता । रद्धा । रधिष्यति । रत्स्यति । अङि [तु] नुम् । 'अनिदिता'मिति नलोपः । अरधत् । **११९४ णश अदर्शने ।** नश्यति । ननाश । नेशतुः । नेशिथ । **मस्जिनशोर्झलि** ।७।१।६०। नुम् स्यात् । ननंष्ठ । नेशिव । नेश्व । नेशिम । नेश्म । नशिता । नंष्टा । नशिष्यति । नङ्क्ष्यति । नश्येत् । नश्यात् । अनशत् । प्रणश्यति । **नशेः षान्तस्य** ।८।४।३६। णत्वं न स्यात् । प्रनंष्टा । अन्तग्रहणं भूतपूर्वप्रतिपत्त्यर्थम् । प्रनङ्क्ष्यति । नशिष्यति । **११९५ तृप प्रीणने ।** प्रीणनं तृप्तिस्तर्पणं च । 'नाग्निस्तृप्यति काष्ठानाम्' । 'पितृनताप्र्सीत्' इत्युभयत्र दर्शनात् । ततर्पिथ । ततर्प्थ । तत्रप्थ । तर्पिता । त्रप्ता । तर्प्ता । 'स्पृशमृशकृषे'ति सिज्वा । अतार्प्सीत् । अत्राप्सीत् । अतर्पीत् । अतृपत् । **११९६ दृप हर्षमोहनयोः ।** मोहनं गर्वः । दृप्यतीत्यादि । 'रधादित्वादिमौ वेड्कावमर्थमनुदात्तता' । **११९७ द्रुह जिघांसायाम्** । 'वा द्रुहमुहे'ति वा घः । पक्षे ढः । दुद्रोग्ध । दुद्रोढ । दुद्रोहिथ । द्रोहिता । द्रोग्धा । द्रोढा । द्रोहिष्यति । ध्रोक्ष्यति ।

---

त.] सेधित्वा । सिद्ध्वा । **प्रामादिक इति ।** ऊदित्त्वेत्वनुदात्तेषु सिध्यतेः पाठो व्यर्थः स्यादिति भावः । **रधादिभ्यश्च ।** 'स्वरतिसूति' इत्यतो वेत्यनुवर्तते । योगविभागो वैचित्र्यार्थः । गणनिर्देशाद्यङ्लुकि राराधितेत्येव न तु राराद्धेति । **नेट्यलिटि ।** इटीति किम् ? । रन्धकः । अलिटीति किम् ? । ररन्धिव । नुमि कृते संयोगात्परत्वेनाऽकित्त्वान्नलोपो न । **नंष्टेति ।** 'नशेर्वा' इति कुत्वमिह न शङ्क्यं, पदान्त एव तद्विधानात् । अन्यथा नष्टं नष्टिरित्यादि न सिध्येत् । **प्रणश्यतीति ।** 'उपसर्गादसमासेऽपी'ति णत्वम् । **नशेः ।** 'न भाभूपूकमिगमी'त्यतो नेत्यनुवर्तते । तदाह–**णत्वं न स्यादिति ।** 'षस्ये'त्युक्तेऽपि पदस्येत्यस्य विशेषणेन षान्तस्येति लाभादन्तग्रहणं व्यर्थं सज्ज्ञापयतीत्याह–**भूतपूर्वेति । काष्ठानामिति ।** करणस्य शेषत्वविवक्षायां षष्ठी । **तत्रप्थेति ।** 'अनुदात्तस्य चर्दुपधस्ये'–

---

बा.] र्लृदित्पठित इत्यर्थः। **संपदादिक्विबन्तादिति ।** क्षुध्यत इति क्षुध्, भावे क्विप् । क्षुध् अस्य संजाता क्षुधित इति विग्रहः । **वसतिक्षुधोरिति ।** वसेः क्षुधेश्च क्त्वानिष्ठयोरिडागमः स्यादिति तदर्थः । **वक्ष्यते इति ।** 'क्लिशः क्त्वानिष्ठयो'रिति शेषः । **षिधु संराद्धाविति ।** निष्पत्तावित्यर्थः। **प्रामादिक इति ।** माधवादिसंमतत्वादिति भावः। **रध हिंसेति ।** सेट् । चतुर्थान्तोऽयम् । **ररन्धतुरिति ।** एत्वाभ्यासलोपौ बाधित्वा परत्वान्नुमि संयोगात्परत्वेन अकित्त्वान्नलोपो नेति भावः । **रधादिभ्यश्च ।** 'आर्द्धधातुकस्येड्वलादे'रित्यनुवर्तते, 'स्वरतिसूती'त्यतो वेति चेत्यभिप्रेत्य शेषं पूरयति–**वलाद्यार्द्धधातुकस्य वेडिति ।** 'आर्द्धधातुकस्ये'ति नित्ये प्राप्ते विकल्पोऽयम् । लुटि तासि इटि 'रधिजभोरची'ति नुमि प्राप्ते–**नेट्यलिटि रधेः ।** 'इदितो नुम् धातो'रित्यतो नुमित्यनुवर्तते । तदाह–**लिड्वर्जे इटीति । अङि त्विति ।** पुषाद्यङि कृते सतीत्यर्थः । **अरधदिति ।** 'मो अहं द्विषते ऽरधम् ।' **णश अदर्शने इति ।** णोपदेशोऽयं सेट् । 'रधादिभ्यश्चे'ति वेट् । तत्र इट्पक्षे आह–**नेशिथेति ।** 'थलि च सेटी'त्येत्त्वाभ्यासलोपाविति भावः । इडभावपक्षे ननश्–थ इति स्थिते–**मस्जिनशोर्झलि । नुम् स्यादिति ।** 'इदितो नु'मित्यतस्तदनुवृत्तेरिति भावः । **ननंष्ठेति ।** व्रश्चादिषत्वम् । ष्टुत्वम् । **प्रणश्यतीति ।** 'उपसर्गादसमासे'इति णत्वम् । **नशेः षान्तस्य ।** 'रषाभ्या'मित्यतो ण इति,'न भाभूपू'इत्यतो नेति चानुवर्तते इत्यभिप्रेत्य शेषं पूरयति–**णत्वं न स्यादिति ।** षान्तस्येति किम् ?। प्रणश्यति । **भूतपूर्वेति ।** पूर्वं षकारस्य सत इदानीमादेशवशेन षान्तत्वाऽभावेऽपि णत्वनिषेधप्राप्त्यर्थमन्तग्रहणमित्यर्थः । **प्रनङ्क्ष्यतीति ।** अत्र षस्य कत्वे कृतेऽपि भूतपूर्वगत्या षान्तत्वान्न णत्वमिति भावः । **तृप प्रीणने । तृप्तिस्तर्पणं चेति ।** आद्येऽकर्मकः । द्वितीये सकर्मकः । रधादित्वाद्वेडिति मत्वाह–**ततर्पिथ ततर्प्थेति । तत्रप्थेति च ।** 'अनुदात्तस्य चर्दुपधस्ये'त्यमिति भावः। ततृपिव–ततृप्व । **सिज्वेति ।** पक्षे पुषाद्यङिति भावः । रधादित्वादिड्विकल्पः। तत्र सिचि इट्पक्षे आह–**अतर्पीदिति ।** इडभावपक्षे आह–**अतार्प्सीदिति ।** हलन्तलक्षणा वृद्धिरिति भावः । 'अनुदात्तस्य चे'त्यम्पक्षे आह–**अत्राप्सीदिति ।** पुषाद्यङ्पक्षे आह–**अतृपदिति ।** ङित्त्वान्न गुण इति भावः । **दृप हर्षे इति ।** तृपधातुवत् । ननु रधादित्वादेव वेड्कत्वादनिड्कारिकासु तृप्यतिदृप्यत्योः पाठो व्यर्थ इत्यत आह–**रधादित्वादिमौ वेड्कावमर्थमनुदात्ततेति । द्रुह जिघांसायाम् ।** अनुदात्तत्वाऽभावेऽपि रधादित्वाद्वेट् । तत्र इडभावे आह–**वा द्रुहमुहेति । ध्रोक्ष्यतीति ।** 'वा द्रुहे'ति घत्वपक्षे दकारस्य भषि घस्य चर्त्वे सस्य षत्वे रूपम् । ढत्व-

---

शे.] **ररन्धतुरिति ।** परत्वान्नुमि सत्यकित्त्वान्न लोपः। **नशेः षा ।** 'न भाभू' इत्यतो नेति वर्त्तते। **भूतपूर्वेति ।** स्पष्टञ्चेदं भाष्ये । नञा प्रापितनिषेधस्यैव क्त्वादिसूत्रेण नियम इति मतेनाह–**दुद्रोढ दुद्रोहिथेति ।** वस्तुतो 'दुद्रोहि-

ढत्वघत्वयोस्तुल्यं रूपम्। अद्रुहत्। ११९८ मुह वैचित्ये। वैचित्यमविवेकः। मुह्यति। मुमोहिथ। मुमोग्ध। मुमोढ। मोग्धा। मोढा। मोहिता। मोहिष्यति। मोक्ष्यति। अमुहत्। ११९९ ष्णुह उद्गिरणे। स्नुह्यति। सुष्णोह। सुष्णोहिथ। सुष्णोग्ध। सुष्णोढ। सुष्णुहिव। सुष्णुह्व। स्नोहिता। स्नोग्धा। स्नोढा। स्नोहिष्यति। स्नोक्ष्यति। अस्नुहत्। १२०० ष्णिह प्रीतौ। स्निह्यति। सिष्णेह। (ग) वृत्। रधादयः समाप्ता इत्यर्थः। पुषादयस्तु आ गणान्तादिति सिद्धान्तः। १२०१ शमु उपशमे। शमामष्टानां दीर्घः श्यनि ।७।३।७४। शमादीनामित्यर्थः। प्रणिशाम्यति। शेमतुः। शेमिथ। शमिता। अशमत्। १२०२ तमु काङ्क्षायाम्। ताम्यति। तमिता। अतमत्। १२०३ दमु उपशमे। 'उपशमे' इति ण्यन्तस्य। तेन सकर्मकोऽयम्। न तु शमिवदकर्मकः। अदमत्। १२०४ श्रमु तपसि खेदे च। श्राम्यति। अश्रमत्। १२०५ भ्रमु अनवस्थाने। 'वा भ्राशे'ति श्यन्वा। तत्र कृते 'शमामष्टाना'मिति दीर्घः। भ्राम्यति। लुप्यङ्। अभ्रमत्। शेषं भ्वादिवत्। १२०६ क्षमू सहने। क्षाम्यति। चक्षमिथ। चक्षन्थ। चक्षमिव। चक्षण्व। चक्षमिम। चक्षण्म। क्षमिता। क्षन्ता। अयमषित्। भ्वादिस्तु षित्। 'अषितः क्षाम्यतेः क्षान्तिः,क्षमूषः क्षमतेः क्षमा'। १२०७ क्लमु ग्लानौ। क्लाम्यति। क्लामति। शपीव श्यन्यपि 'ष्ठिवुक्लमु'इत्येव दीर्घे सिद्धे शमादिपाठो घिनुणर्थः। अङ्। अक्लमत्। १२०८ मदी हर्षे। माद्यति। अमदत्। शमादयोऽष्टौ गताः। १२०९ असु क्षेपणे। अस्यति। आस। असिता। अस्यतेस्थुक् ।७।४।१७। अङि परे। आस्थत्। अस्य पुषादित्वादङि सिद्धे 'अस्यतिवक्ती'ति वचनं तङर्थम्। तङ् तु 'उपसर्गादस्यत्यूह्यो'रिति वक्ष्यते। पर्यास्थत। १२१० यसु प्रयत्ने। यसोऽनुपसर्गात्

---

त.]ति विकल्पेनाऽऽगमः। रधादय इति। रधनशतृपदपद्रुहमुहष्णुहष्णिह इत्यर्थः। शमु। उदित्त्वात्क्त्वायां वेट्। शमित्वा। शान्त्वा। 'यस्य विभाषे'ति निष्ठायामनिट्। शान्तः। भ्रमु अनवस्थाने। शेषमिति। श्यनि दीर्घो लुङि अङ च विशेष उक्तस्ततोऽन्यदित्यर्थः। चक्षण्वेति। 'म्वोश्चे'ति मस्य नत्वे कृते णत्वम्। शमादिपाठ इति। 'शमित्यष्टाभ्यो घिनुण्' । शमादय इति। शमुतमुदमुश्रमुभ्रमुक्षमुक्लमुमद इत्यर्थः। यसोऽनुप। अत्र वदन्ति-'यस'

---

बा.]पक्षेऽपि 'षढो'रिति कत्वे एतदेव रूपम्। तदाह-ढत्वघत्वयोस्तुल्यं रूपमिति। अद्रुहदिति। पुषादित्वादङिति भावः। मुहधातुरनुदात्तत्वाऽभावेऽपि रधादिद्वेट्। मुमोहिथेति। इट्पक्षे रूपम्। अनिट्पक्षे तु 'वा द्रुहमुहे'ति घत्वं मत्वाऽऽह-मुमोग्धेति। ढत्वपक्षे आह-मुमोढेति। मोक्ष्यतीति। घत्वढत्वयोस्तुल्यं रूपम्। ष्णुह ष्णिहेति। षोपदेशौ। तदाह-सुष्णोह सिष्णेहेति। थलादावनिट्पक्षे 'वा द्रुहे'ति घत्वविकल्पः। पक्षे ढः। इति रधादयः। आ गणान्तादिति। दिवादिगणसमाप्तिपर्यन्ताः पुषादय इत्यर्थः। सिद्धान्त इति। माधवादिभिस्तथाऽभ्युपगमादिति भावः। उपशमे इति। उपशमो-नाशः, इन्द्रियनिग्रहश्च। शमामष्टानाम्। स्पष्टम्। बहुवचनाच्छमादिग्रहणम्। तदाह-शमादीनामिति। 'शमस्तमुर्दमुरथ श्रमुर्भ्रमुरपि क्षमुः। क्लमुर्मदी चेत्येतेऽष्टौ शमादय इति स्थितिः।' दमु उपशमे इति। ननु 'शमु यमु उपशमे' इत्येव पठितुं युक्तमित्यत आह-उपशम इति ण्यन्तस्येति। शमधातोर्हेतुमण्ण्यन्ताद्घञि 'नोदात्तोपदेशस्ये'ति वृद्ध्यभाव इत्यर्थः। ततः किमित्यत आह-तेनेति। ततश्च दाम्यतीत्यस्य शमयतीत्यर्थः। शेषं भ्वादिवदिति। आर्द्धधातुकेषु शप्पक्षे च भ्वादिवदित्यर्थः। क्षमू सहने। ऊदित्त्वात्थलि वमादौ च इड्विकल्पः। तदाह-चक्षमिथेत्यादि। षित्त्वाऽषित्त्वयोः फलभेदं श्लोकार्द्धेन संगृह्णाति-अषित इति। अषितः क्षाम्यतेः-श्यन्विकरणपठितस्य क्षमधातोः क्तिनि क्षान्तिरिति रूपम्। अषित्वात् 'षिद्भिदादिभ्यः' इत्यङ्। क्षमूषस्तु भौवादिकात् षित आत्मनेपदे शपि क्षमते इति रूपम्, क्तिनं बाधित्वा षित्त्वादङि क्षमेति रूपं चेत्यर्थः। क्लमु ग्लानौ। नन्वस्य शमादिगणाद्बहिरेव दिवादिगणे पाठोऽस्तु।नच 'शमामष्टाना'मिति दीर्घार्थं शमादिगणेऽस्य पाठ इति वाच्यं, 'ष्ठिवुक्लमुचमां शिती'त्येव शपि परे इव श्यनि परेऽपि दीर्घसिद्धेः।नच 'ष्ठिवुक्लमुचमांशिती'-त्यत्रैव क्लमुग्रहणं त्यज्यतामिति वाच्यं, शपि दीर्घार्थं तस्यावश्यकत्वादित्याशङ्क्य परिहरति-शपीव श्यन्यपीत्यादि, घिनुणर्थ इत्यन्तम्। 'शमित्यष्टाभ्यो घिनु'णिति विधानादिति भावः। शमादय इति। 'शमु उपशमे' इत्यारभ्य 'मदी हर्षे' इत्यन्ता अष्टौ शमादयो वृत्ता इत्यर्थः। असु क्षेपणे। अस्यतेस्थुक्। शेषं पूरयति-अङि परे इति। 'ऋदशोऽङी'त्यतस्तदनुवृत्तेरिति भावः। थुकि ककार इत्। उकार उच्चारणार्थः। कित्त्वादस्धातोरन्त्यावयवः। ननु पुषादित्वादेवाऽस्यतेश्च्लेरङि सिद्धे 'अस्यतिवक्तिख्यातिभ्योऽ'ङित्यत्राऽस्यतिग्रहणं व्यर्थमित्याशङ्क्य निराकरोति-अस्य पुषादित्वादिति। तङर्थमिति।'पर्यास्थते'त्यत्र आत्मनेपदेऽङर्थमस्यतिवक्तीत्यत्र अस्यतिग्रहणमित्यर्थः, पुषाद्यङः परस्मै-

---

शे.]थे'त्येकमेव रूपं न्याय्यम्। आ गणान्तादिति। यत्तु 'अस्यतेस्थु'गिति सूत्रमत्र लिङ्गमिति, तन्न,'अस्यतिवक्ती'त्यनेनात्मनेपदेऽङि तस्य चारितार्थ्यात्।

।३।१।७१। **संयसश्च** ।३।१।७२। श्यन्वा स्यात् । यस्यति । यसति । संयस्यति । संयसति । अनुपसर्गा-त्किम् ? । प्रयस्यति । **१२११ जसु मोक्षणे** । जस्यति । **१२१२ तसु उपक्षये** । **१२१३ दसु च** । तस्यति । अतसत् । दस्यति । अदसत् । **१२१४ वसु स्तम्भे** । वस्यति । ववास । ववसतुः । 'न शसदद' इति निषेधः । वशादिरयमिति मते तु–वेसतुः । वेसुः । **१२१५ व्युष विभागे** । अयं दाहे पठितः । अर्थभेदेन त्वङर्थं पुनः पठ्यते । अव्युषत् । ओष्ठ्यादिर्दन्त्यान्तोऽयम्–**१२१६ व्युस** इत्यन्ये । अयकारो बुस इत्यपरे । **१२१७ प्लुष दाहे** । अप्लुषत् । पूर्वत्र पाठः सिजर्थं इत्याहुः । तद्भ्वादिपाठेन गतार्थमिति सुवचम् । **१२१८ बिस प्रेरणे** । बिस्यति । अबिसत् । **१२१९ कुस संश्लेषणे** । अकुसत् । **१२२० बुस उत्सर्गे** । **१२२१ मुस खण्डने** । **१२२२ मसी परिणामे** । परिणामो विकारः । समी इत्येके । **१२२३ लुट विलोडने** । **१२२४ उच समवाये** । उच्यति । उवोच । ऊचतुः । मा भवानुचत् । **१२२५ भृशु १२२६ भ्रंशु अधःपतने** । बभर्श । अभृशत् । 'अनि-दिता'मिति नलोपः । भ्रश्यति । [बभ्रंश । बभ्रंसतुः] । अभ्रशत् । **१२२७ वृश वरणे** । वृश्यति । अवृशत् । **१२२८ कृश तनूकरणे** । कृश्यति । **१२२९ ञितृषा पिपासायाम्** । **१२३० हृष तुष्टौ** । श्यन्नङौ भौवादिकाद्विशेषः । **१२३१ रुष १२३२ रिष हिंसायाम्** । 'तीषसहे'ति वेट् । रोषिता । रोष्टा । रेषिता । रेष्टा । **१२३३ डिप क्षेपे** । **१२३४ कुप क्रोधे** । **१२३५ गुप व्याकुलत्वे** । **१२३६ युप १२३७ रुप १२३८ लुप विमोहने** । युप्यति । रुप्यति । लुप्यति । लोपिता । लुप्यतिः सेट्कः, अनिट्कारिकासु लिपिसाहचर्यात्तौदादिकस्यैव ग्रहणात् । **१२३९ लुभ गार्ध्ये** । गार्ध्यमाकाङ्क्षा । 'तीषसहे'ति वेट् । लोभिता । लोब्धा । लोभिष्यति । लुभ्येत् । लुभ्यात् । अलुभत् । भ्वादेरवृत्कृतत्वाल्लोभतीत्यपीत्याहुः । **१२४० क्षुभ संचलने** । क्षुभ्यति । **१२४१ णभ १२४२ तुभ हिंसायाम्** । क्षुभिनभितुभयो द्युतादौ क्र्यादौ च पठ्यन्ते । तेषां द्युतादित्वादङ् सिद्धः । क्र्यादित्वात्पक्षे सिज्भ-वत्येव । इह पाठस्तु श्यनर्थः । **१२४३ क्लिदू आर्द्रीभावे** । क्लिद्यति । चिक्लेदिथ । चिक्लेत्थ । चिक्लिदिव । चिक्लिद्व । [चिक्लिदिम । चिक्लिद्म] । क्लेदिता । क्लेत्ता । **१२४४ ञिमिदा स्नेहने** । 'मिदेर्गुणः' । मेद्यति ।

---

व.]इत्येवास्तु।ततः 'समः'। नियमार्थमिदम् ,–सोपसर्गाद्यसश्चेत्संपूर्वकादेवेति। एवं च पूर्वसूत्रेऽनुपसर्गादिति ग्रहणमुत्तरत्र च यसश्चेति ग्रहणं त्यक्तुं शक्यमिति। **दाहे पठित इति**।व्युष दाह इति–अस्मिन्नेव गणे पठित इत्यर्थः।अङर्थमिति।

---

बा.]पदमात्रविषयतया आत्मनेपदे अप्रसक्तेरिति भावः। नन्वस्यतेः केवलपरस्मैपदित्वादात्मनेपदं दुर्लभमित्यत आह–**तङ् तु उपसर्गादिति वक्ष्यते इति**। 'पदव्यवस्थाया'मिति शेषः। **यसु प्रयत्ने। यसोऽनुपसर्गात्। संयसश्च।** सूत्रद्वयमिदम् । **श्यन् वा स्यादिति** । शेषपूरणमिदम् । 'दिवादिभ्यः श्यन्' इत्यतो, 'वा भ्राशे'त्यतश्च तदनुवृत्ते-रिति भावः । अनुपसर्गाद्यसः श्यन्वा स्यादिति प्रथमसूत्रार्थः । सोपसर्गात्तु नित्य एव श्यन्, अनुपसर्गादिति पर्युदासात् । संपूर्वाद्यसेर्नित्यमेव श्यनः प्राप्तौ द्वितीयसूत्रम् । **व्युष विभागे । अयमिति** । दिवादिगण एव पुषादिभ्यः प्रागयं धातुः पठित इत्यर्थः । पौनरुक्त्यमाशङ्क्य आह–**अर्थभेदेन त्वङर्थं पठ्यते इति** । विभागात्मके अर्थविशेषे एव पुषाद्यङर्थमिह पुनः पाठ इत्यर्थः। **अव्युषदिति** । 'व्युष दाहे' इति पूर्वं पठितस्य तु सिजेव। अव्योषीत् । **ओष्ठ्या-दिरिति** । दन्त्योष्ठ्यादिर्दन्त्योष्मान्तोऽयमिति केचिन्मन्यन्त इत्यर्थः । **अयकार इति** । दन्तोष्ठ्यादिर्दन्त्योष्मान्तो यो धातुरुक्तः स एवायं यकाररहित इत्यन्ये मन्यन्त इत्यर्थः । 'अयकार'मिति पाठे क्रियाविशेषणम् । **प्लुष दाहे** । ननु दिवादिगणे परस्मैपदिषु पुषादिभ्यः प्रागस्य पाठः क्वचित् दृश्यते तत्र पौनरुक्त्यशङ्कां परिहरति–**पूर्वत्र पाठः सिजर्थं इति** । पुषादावेव पाठे सति अङेव श्रूयेत नतु सिच् । पुषादेः प्रागपि पाठे तु तस्य अङभावात्सिच् श्रूयेत । तथाच सिचः कदाचिच्छ्रवणार्थः पूर्वं पाठ इत्यर्थः । **आहुरित्यस्वरसोद्भावनम्** । तद्बीजं दर्शयति–**तद्भ्वादीति । तत्**= दिवादिगणे पुषादिभ्यः पूर्वमस्य पठनं, भ्वादिपाठेनैव संपन्नप्रयोजनकमिति सुष्ठु वक्तुं शक्यमित्यर्थः । एवं च भ्वादि-पाठाच्छब्विकरणो, लुङि सिचः श्रवणं च सिध्यति । पुषादौ पाठात्तु श्यन्विकरणः, अङ् च सिध्यति । अतो दिवादिगणे पुषादिभ्यः प्रागस्य पाठो व्यर्थ एवेति भावः। एतदेवाभिप्रेत्य मूले दिवादिगणे पुषादिगणात्प्राक् 'प्लुष दाहे' इति न पठित-मिति बोध्यम् ।।**मसी परिणामे इति**। ईदित्वं 'श्वीदितः' इत्येतदर्थम् । मस्यति । **समी इत्येके इति**। सम्यति । **भृशु भ्रंशु** । द्वितीयधातोराह–**अनिदितामिति** । **युप रुप लुप** । धातुवृत्त्यादिविरोधादुदित्पाठो लेखकप्रमादा-दायातः । **इह पाठस्त्विति** । क्षुभिनभितुभीनां इह दिवादिगणे पाठस्य श्यनेव प्रयोजनमित्यर्थः । वस्तुतस्तु पुषादेः

---

शे.] **दाहे पठितेति इति** । दिवादावेवेत्यर्थः । **'युपरुपलुपे'ति** पाठः । उदित्पाठो लेखकप्रमादात् , धातुवृत्त्यादिविरो-धात् । **इह पाठ इति** । दिवाद्यन्तर्गणपुषादावित्यर्थः। **श्यनर्थ इति** । एवञ्च पुषादेः प्रागेव पठितुं युक्त इति भावः। ४ त्र गणे 'त्रुट छेदने' इति पठन्ति,चुरादौ च। चुरादेर्नित्यण्यन्तत्वात् 'त्रोटती'त्यस्य सिद्धये 'वा भ्राशे'त्यत्र त्रुटिग्रहणम्।

अमिदत् । द्युतादिपाठादेवाऽमिदत् अमेदिष्टेति सिद्धे इह पाठोऽमेदीदिति माभूदिति । द्युतादिभ्यो बहिरेवात्मनेपदिषु पाठस्तूचितः । १२४५ ञिक्ष्विदा स्नेहनमोचनयोः । १२४६ ऋधु वृद्धौ । आनर्ध । आर्धत् । १२४७ गृधु अभिकाङ्क्षायाम्। अगृधत्।(ग)वृत् । पुषादयो दिवादयश्च वृत्ताः । केचित्तु पुषादिसमाप्त्यर्थमेव वृत्करणम् । दिवादिस्तु भ्वादिवदाकृतिगणः । तेन क्षीयते मृग्यतीत्यादि सिद्धमित्याहुः । इति दिवादयः ।

## अथ स्वादयः ।

१२४८ षुञ् अभिषवे । अभिषवः स्नपनं पीडनं स्नानं सुरासंधानं च । तत्र स्नानेऽकर्मकः । **स्वादिभ्यः श्नुः** ।३।१।७३। सुनोति । सुनुतः । 'हुश्नुवो'रिति यण् । सुन्वन्ति । सुन्वः । सुनुवः । सुन्वहे । सुनुवहे । सुषाव । सुषुवे । सोता । सुनु । सुनवानि । सुनवै । सुनुयात् । सूयात् । 'स्तुसुधूञ्भ्यः' इतीट् । असावीत् । असोष्ट । अभिषुणोति । अभ्यषुणोत् । अभिसुषाव । **सुनोतेः स्यसनोः** ।८।३।११७। स्ये सनि च

---

त.]दाहे पठितस्य तु सिजेव । अन्योषीत् । इति दिवादयः ।

षुञ् । **सुन्व इति** । 'लोपश्चास्ये'त्युकारस्य वा लोपः । **सुनवानीति** । 'आडुत्तमस्ये'त्यादि कृते 'हुश्नुवो'रिति यणं बाधित्वा परत्वाद्गुणः । **सुनोतेः स्यसनोः** । 'न रपरे'त्यस्मान्नेत्यनुवर्तनादाह–**षो न स्यादिति**।

---

बा.]प्रागेव एषां त्रयाणां पाठो युक्त इति भावः। **ञि मिदा।अमिददिति।**ननु भ्वाद्यन्तर्गणे द्युतादौ 'ञि मिदा स्नेहने' इत्यात्मनेपदिषु पठितः । लुङि तु 'द्युद्भ्यो लुङी'त्यत्र परस्मैपदविकल्प उक्तः । द्युताद्यङ् तु परस्मैपद एव, न तु तङि । एवं च द्युतादिपाठादेव परस्मैपदपक्षे अङि अमिददिति, तङि तु अङभावे अमेदिष्टेति सिद्धम् । तथाच पुषादावस्य पाठो व्यर्थः । तद्बहिर्दिवादौ पाठादेव श्यन्सिद्धेरित्याशङ्क्यते–**द्युतादिपाठादेवेत्यादिना, सिद्धे इत्यन्तेन ।**

तामिमां शङ्कां परिहरति–**इह पाठोऽमेदीदिति मा भूदितीति** । पुषादावस्य पाठोऽमेदीदिति व्यावृत्त्यर्थ इत्यर्थः । पुषादिभ्यः प्रागेव दिवादावस्य पाठे तु तस्माल्लुङि अङसंभवादमेदीदिति स्यादिति भावः। नन्वेवं सति भ्वाद्यन्तर्गणे द्युतादावस्य पाठो व्यर्थः, द्युतादिभ्यो बहिरेवात्मनेपदिषु पठ्यताम् । एवं च अमेदिष्टेति सिद्धम् । इह पुषादौ पाठात्तु अमिददिति सिद्धमित्याशङ्क्येष्टापत्त्या परिहरति–**बहिरेवेति** । **'सूचितः'** इति पाठे तु सुतरामुचित इति व्याख्येयम् । **ञि क्ष्विदेत्यादि** । व्यक्तम् । इति दिवादयः ।

अथ श्नुविकरणा धातवो निरूप्यन्ते । **षुञ्धातुः** षोपदेशः । अनिट् । इत आरभ्य ञित्त्वादुभयपदिनः । **सुरासन्धानमिति** । सुरोत्पादनमित्यर्थः । **स्वादिभ्यः श्नुः** । कर्त्रर्थे सार्वधातुके स्वादिभ्यः श्नुः स्यादित्यर्थः । शपोऽपवादः । **सुनोतीति** । लटस्तिपि श्नुः, शकार इत् । शित्त्वेन सार्वधातुकत्वात् 'सार्वधातुकमपित्' इति ङित्त्वात्तस्मिन् परे धातोर्न गुणः । श्नोस्तु तिपमाश्रित्य गुण इति भावः । **सुनुत इति** । तसो ङित्त्वात् श्नोर्न गुण इति भावः । सुनु–अतीति स्थिते 'अचि श्नुधातु' इति उवङमाशङ्क्याह–**हुश्नुवोरिति** । सुनोषि सुनुथः सुनुथ । सुनोमि । वसि मसि च 'लोपश्चास्यान्यतरस्यां म्वो'रित्युकारलोपविकल्पं मत्वाह–**सुन्वः सुनुव इति** । सुन्मः सुनुम इत्यपि ज्ञेयम् । अथ लटस्तङि–सुनुते सुन्वाते सुन्वते । सुनुषे सुन्वाथे सुनुध्वे । सुन्वे । इति सिद्धवत्कृत्य आह–**सुन्वहे सुनुवहे इति**। 'लोपश्चास्ये'त्युकारलोपविकल्प इति भावः। सुन्महे सुनुमहेइत्यपि ज्ञेयम्। **सुषावेति**। सुषुवतुः सुषुवुः। सुषविथ–सुषोथ सुषुवथुः सुषुव । सुषाव–सुषव सुषुविव सुषुविम । अथ लिटस्तङ्याह–**सुषुवे इति** । सुषुवाते सुषुविरे । सुषुविषे सुषुवाथे [सुषुविढ्वे] सुषुविध्वे । सुषुवे सुषुविवहे सुषुविमहे । **सोतेति** । अनिट्त्वसूचनमिदम् । सोष्यति सोष्यते । सुनोतु–सुनुतात् सुनुताम् सुन्वन्तु । इति सिद्धवत्कृत्य आह–**सुनु इति** । 'उतश्च प्रत्यया'दिति हेर्लुक् । सुनुतात् सुनुतम् सुनुत । **सुनवानीति** । 'हुश्नुवो'रिति यणं बाधित्वा परत्वाद्गुणः, आटः पित्त्वेनाऽङित्त्वादिति भावः । सुनवाव सुनवाम । लोटस्तङि सुनुताम् सुन्वाताम् सुन्वताम् । सुनुष्व सुन्वाथाम् सुनुध्वम् । इति सिद्धवत्कृत्य आह–**सुनवै इति** । 'हुश्नुवो'रिति यणं बाधित्वा परत्वाद्गुणः, आटः पित्त्वेन ङित्त्वाऽभावादिति भावः । सुनवावहै सुनवामहै । असुनोत् असुनुताम् असुन्वन् । असुनोः। असुनवम् असुनुव-असुन्व। असुनुत असुन्वाताम् असुन्वत । इत्याद्यूह्यम् । विधिलिङ्याह–**सुनुयादिति** । यासुटो ङित्त्वाच्छ्नोर्न गुण इति भावः । **सूयादिति** । आशीर्लिङि 'अकृत्सार्वधातुकयो'रिति दीर्घ इति भावः । सोषीष्ट । लुङि परस्मैपदे सिच इण्निषेधे प्राप्ते आह–**स्तुसुधूञ्भ्य इतीडिति** । असाविष्टामित्यादि । लुङस्तङ्याह–**असोष्टेति**। असोषातामित्यादि । असोष्यत् असोष्यत। 'उपसर्गात्सुनोती'-

---

शे.]'दृदत् दृणातेर्दीर्यतेर्वा' इति भाष्यात् दृधातुरप्यत्र बोध्यः,तदाह–**भ्वादिवदाकृतिगण इति।** **इति दिवादयः।**

**सुरासन्धानं**=सुरोत्पादनप्रकारः । **सुन्व इति** । 'लोपश्चास्ये'ति वा उलोपः । **सुनु इति ।**

परे सुञः षो न स्यात् । विसोष्यति । १२४९ षिञ् बन्धने । सिनोति । विसिनोति । सिषाय । सिष्ये। सेता। १२५० शिञ् निशाने । तालव्यादिः । शेता । १२५१ डुमिञ् प्रक्षेपणे । 'मीनातिमिनोती'त्यात्वम् । ममौ । [ममतुः।आल्लोपः]।ममिथ।ममाथ।मिम्ये।माता।मीयात्।मासीष्ट। अमासीत्।अमासिष्टाम् । अमास्त। १२५२ चिञ् चयने । प्रणिचिनोति । **विभाषा चेः** ।७।३।५८। अभ्यासात्परस्य चिञः कुत्वं वा स्यात्सनि लिटि च । प्रणिचिकाय।चिचाय।चिक्ये।चिच्ये।अचैषीत्।अचेष्ट।१२५३स्तृञ् आच्छादने।स्तृणोति।स्तृणुते।तस्तार। तस्तरतुः।'ऋतश्च संयोगादे'रिति गुणः।'गुणोर्त्ती'तिगुणः।स्तर्यात्।**ऋतश्च संयोगादेः**।७।२।४३।ऋदन्तात्संयोगादेःपरयोर्लिङ्सिचोरिड्वा स्यात्तङि ।स्तरिषीष्ट।स्तृषीष्ट।अस्तरिष्ट। अस्तृत। १२५४ कृञ् हिंसायाम्।कृणोति।कृणुते । चकार । चकर्थ । चक्रे ।

---

त.]सनि तु अभिसुसूः । सन्नन्तादस्मात्क्विप्यतो लोपे रुत्वे कृते दीर्घः । सुसूषतीत्येतत्तु नोदाहरणं, 'स्तौतिण्योरेव षणी'ति नियमेनैव षत्वाऽभावसिद्धेः । एतच्च काशिकायां स्पष्टम् । **चिञ्** । **चयनं** रचनाविशेषः। **विभाषा चेः** । 'चजो'रिति सूत्रात्कुरनुवर्तते, 'सन्लिटोर्जे'रित्यतः सन्लिटोरिति च । सन्युदाहरणं चिकीर्षति । चिचीषति । **ऋतश्च संयोगादेः** । 'इट् सनि वे'त्यत इट् वेत्यनुवर्तते । 'लिङ्सिचो'रिति सूत्रादात्मनेपदेष्विति च। तदाह-**इड् वा स्यात्तङीति** । तङि

---

बा.] ति षत्वं मत्वा आह-**अभिषुणोतीति** । षात्परत्वाण्णत्वम् । **अभ्यषुणोदिति** । 'प्राक् सितादड्व्यवायेऽपी'ति षत्वम् । **अभिसुषावेति** । 'स्थादिष्वभ्यासेने'ति नियमादभ्यासस्य न षः । 'आदेशप्रत्यययो'रित्युत्तरखण्डस्य षः ।

**सुनोतेः स्यसनोः** । 'अपदान्तस्य मूर्धन्यः' इत्यधिकृतम् । 'न रपरे'त्यतो नेत्यनुवर्तते । तदाह-**षो न स्यादिति** । स्ये उदाहरति-**विसोष्यतीति** । अत्र 'उपसर्गात्सुनोती'ति प्राप्तः षो न भवति । सनि तु 'अभिसुसू'-रित्युदाहरणम् । षुञः सनि द्वित्वे अभिसुसूषेति सनन्तात्क्विपि अतो लोपे अभिसुसूसित्यस्मात्सोर्हल्ङ्यादिलोपे सस्य रुत्वे 'र्वोरुपधायाः' इति दीर्घे रेफस्य विसर्गः । सुसूषतीति तु नोदाहरणं, 'स्तौतिण्योरेव षण्यभ्यासा'दिति नियमादेव षत्वाऽभावसिद्धेरित्यलम् । **षिञ् बन्धने इति** । षोपदेशः, अनिट् च । षुञ इव रूपाणि । **विसिनोतीति** । 'सात्पदाद्यो'-रिति षत्वनिषेधः । 'उपसर्गात्सुनोती'ति तु न षः, सुनोत्यादिष्वनन्तर्भावादिति भावः । **सिषायेति** । णलि वृद्ध्यावादेशः । अतुसादौ 'एरनेकाचः' इति यण् । सिष्यतुरित्यादि । लटस्तङ्याह-**सिष्ये इति** । सिषि ए इति स्थिते 'एरनेकाच' इति यणिति भावः । सिष्याते सिष्यिरे इत्यादि । असैषीत् । **षिञ् निशाने इति** । षिञ्वत् । **डु मिञ् प्रक्षेपणे इति** । मिनोति । उपदेशे एजन्तत्वाऽभावादात्वे अप्राप्ते आह-**मीनातिमिनोतीत्यात्वमिति**। 'एज्विषये अशिती'ति शेषः । **ममाविति** । आत्वे कृते णल औत्वमिति भावः । अतुसादावेज्विषयत्वाऽभावान्नात्वम् । 'एरनेकाचः' इति यण् । मिम्यतुः । मिम्युः । भारद्वाजनियमात्थलि वेडिति मत्वा आह-**ममिथ ममाथेति** । थलः पित्त्वेन अकित्त्वादेज्विषयत्वम् । इट्पक्षे 'आतो लोपः' इति भावः । मिम्यथुः मिम्य । ममौ मिम्यिव मिम्यिम । लिटस्तङ्याह-**मिम्ये इति** । एशः कित्त्वादेज्विषयत्वाऽभावाच्च नात्वमिति भावः। मिम्याते मिम्यिरे । मिम्यिषे मिम्याथे [मिम्यिढ्वे] मिम्यिध्वे । मिम्ये मिम्यिवहे मिम्यिमहे । **मातेति** । एज्विषयत्वादशित्वाच्च आत्वमिति भावः । मास्यति मास्यते । सार्वधातुकेषु षुञ्वत् । **मीयादिति** । आशीर्लिङि परस्मैपदे यासुटः कित्त्वादेज्विषयत्वाऽभावादात्वाऽभावे 'अकृत्सार्वे'ति दीर्घ इति भावः। आशीर्लिङि तङि आह-**मासीष्टेति** । एज्विषयत्वादात्वमिति भावः । लुङि परस्मैपदे सिचि आत्वे 'यमरमे'ति सगिटौ मत्वाह-**अमासीदिति** । सक्ि सिच इटि सिज्लोपः । **अमास्तेति** । लुङि तङि सिचि आत्वमिति भावः । अमासाताम् अमासात इत्यादि । **चिञ् चयने इति** । **चयनं**=रचना । अनिट् । सार्वधातुके षुञ्वद्रूपाणि । **प्रणिचिनोतीति** । 'नेर्गदे'ति णत्वमिति भावः । **विभाषा चेः** । 'चजोः कुघिण्ण्यतो'रित्यतः कुग्रहणमनुवर्तते।'अभ्यासाच्चे'त्यतोऽभ्यासादिति, 'सन्लिटोर्जे'रित्यतः सन्लिटोरिति च । तदाह-**अभ्यासादित्यादिना**। **स्तृञ् आच्छादने इति** । अनिट् । लिटि तस्तार।अतुसादौ 'ऋतश्च संयोगादेर्गुणः' इति गुणः।वृद्धिविषयेऽपि परत्वादस्य प्रवृत्तिः । तस्तरतुः। ऋदन्तत्वात्थल्यपि नित्यं नेट् । तस्तर्थ । तस्तरिव । तस्तरे तस्तराते तस्तरिरे । तस्तरिषे । तस्तरिवहे । स्तर्ता । 'ऋद्धनोः स्ये' । स्तरिष्यति । आशीर्लिङि परस्मैपदे यासुटः क्ित्त्वाद्गुणनिषेधे प्राप्ते आह-**गुणोऽर्तीति गुण इति** । तङि आशीर्लिङि स्तृ-षीष्ट इति स्थिते-**ऋतश्च संयोगादेः**। 'लिङ्सिचोरात्मनेपदेषु' इत्यनुवर्तते। 'इट् सनि वे'त्यत इड्वेति । तदाह-**ऋदन्तादित्यादिना**। लुङि परस्मैपदे-अस्तार्षीत् । लुङस्तङि त्वाह-**अस्तरिष्ट**

---

शे.]'उतश्चे'ति हेर्लुक् । 'सुनवानी'त्यत्र 'हुश्नुवो'रिति यणं बाधित्वा परत्वाद्गुणः । **सुनोतेः स्य** । 'न रपरे'त्यतो नेति वर्त्तते । सन्यभिसुसूषतेरप्रत्यये 'अभिसुसूः' इत्युदाहरणम् । अन्यत्र 'स्तौतिण्योरेवे'ति, 'स्थादिष्वभ्यासे'ति च नियमादेव तदभावसिद्धेः । **विभाषा चेः** । 'चजो'रिति सूत्रात्कुरिति, अभ्यासाच्चेति, 'सन्लिटोर्जे'रित्यतः सन्लिटोरिति चानुवर्त्तते । **ऋतश्च सं** । 'इट्सनि वा' इत्यत इड् वेति, 'लिङ्सिचो'रिति सूत्रञ्चानुवर्त्तते । न च लावस्थाया-

क्रियात् । कृषीष्ट । अकार्षीत् । अकृत । १२५५ वृञ् वरणे । **बभूथाततन्थजगृभ्मववर्थेति निगमे** ।७।२।६४। एषां वेदे इडभावो निपात्यते । तेन भाषायां थलीट् । ववरिथ । ववृव । ववृवहे । वरिता । वरीता । **लिङ्सिचोरात्मनेपदेषु** ।७।२।४२। वृङ्वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड्वा स्यात्तङि । **न लिङि** ।७।२।३९। वृतो लिङ इटो दीर्घो न स्यात् । वरिषीष्ट । वृषीष्ट । अवारीत् । अवरिष्ट । अवरीष्ट । अवृत । १२५६ धुञ् कम्पने । धुनोति । धुनुते । अधौषीत् । अधोष्यत् । दीर्घान्तोऽप्ययम् । धूनोति । धूनुते । 'स्वरतिसूति' इति वेट् । दुधविथ । दुधोथ । क्ङिति लिटि तु 'श्र्युकः' इति निषेधं बाधित्वा क्रादिनियमान्नित्यमिट् । दुधुविव । 'स्तुसुधूञ्भ्यः' इति नित्यमिट् । अधावीत् । अधविष्ट । अधोष्ट । अथ **परस्मैपदिनः** । १२५७ टु दु उपतापे । दुनोति । १२५८ हि गतौ वृद्धौ च । **हिनुमीना** ।८।४।१५। उपसर्गस्थान्निमित्तात्परस्य एतयोर्नस्य णः स्यात् । प्रहिणोति । [प्रहिणोमि] । **हेरचङि** ।७।३।५६। अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्न तु चङि । जिघाय । १२५९ पृ प्रीतौ । पृणोति । पर्ता । १२६० स्पृ प्रीतिपालनयोः । प्रीतिचलनयोरित्यन्ये । चलनं जीवनमिति स्वामी । स्पृणोति । पस्पार । स्मृ इत्येके । स्मृणोति । पृणोत्यादयस्त्रयोऽपिच्छान्दसा इत्याहुः । १२६१ आप्लृ

त.] किम् ?। स्वर्यात् । अस्वार्षीत् । **बभूथाततन्थ** । भूधातोस्तनोतेश्च थलि इडभावो निपात्यते । 'त्वं हि होता प्रथमो बभूथ' । 'येनान्तरिक्षमुर्वा ततन्थ' । भाषायां तु-बभूविथ तेनिथ । 'जगृभ्मा ते दक्षिणमिन्द्र हस्तम्' । भाषायां तु-जगृहिम । वृणोतेस्थलि क्रादिसूत्रेणेण्निषेधे सिद्धेऽपि निगम एव निषेधो नान्यत्रेति नियमार्थं ववर्थग्रहणम् । 'ववर्थ त्वं हि ज्योतिषाम्' । भाषायां तु-ववरिथ । ववृषे । **लिङ्सिचोः** । 'वृत' इत्यनुवर्तते । आत्मनेपदेषु किम् ? । अवारीत् । अवारिष्टाम् । अवारिषुः । 'सिचि च परस्मैपदेषु' इति निषेधादिह 'वृतो वे'ति न दीर्घः । **हिनु मीना** । प्रमीणाति । **हेर-**

बा.] अस्तृतेति । 'ऋतश्च संयोगादे'रिति इट्पक्षे गुणः । इडभावपक्षे तु 'हस्वादङ्गा'दिति सिचो लोपः । **कृञ् हिंसायाम्** । **चकर्थेति** । 'कृसृभृवृ' इति थल्यपि नित्यमिण्निषेधः । चकृव । **क्रियादिति** । आशीर्लिङि 'रिङ् शयग्लिङ्क्षु' इति रिङ् । **कृषीष्टेति** । 'उश्चे'ति कित्वान्न गुणः । **अकार्षीदिति** । सिचि वृद्धिः । रपरत्वम् । **अकृतेति** । 'हस्वादङ्गा'दिति सिचो लोपः । **वृञ् वरणे** । सेट् । ववार । ववतुः । ववुः । **बभूथाततन्थ** । **निगमो-वेदः** । तदाह-**एषां वेदेइति** । ननु 'कृसृभृवृ' इति निषेधादेव थलि ववर्थेति सिद्धे किमर्थं ववर्थग्रहणमित्यत आह-**तेन भाषायां थलीडिति** । निगमे एव वृणोतेस्थलि इण्निषेध इति नियमलाभादिति भावः । ववे ववाते । ववृषे । 'वृतो वा' इति मत्वाह-**वरिता वरीतेति** । **लिङ्सिचोः** । 'इट् सनि वा' इत्यत इड्वेत्यनुवर्तते । 'वृतो वे'त्यतो 'वृत' इति । तदाह-**वृङ्वृञ्भ्यामित्यादिना** । **न लिङि** । 'वृतो वे'त्यतो 'वृत' इत्यनुवर्तते । लिङीति षष्ठ्यर्थे सप्तमी । 'आर्धधातुकस्ये'डित्यत इडित्यनुवृत्तं षष्ठ्या विपरिणम्यते । 'ग्रहोऽलिटी'त्यतो दीर्घ इत्यनुवर्तते । तदाह-**वृत इति** । वृङ्वृञ्भ्यामृकारान्ताच्चेत्यर्थः । **वरिषीष्टेति** । इट्पक्षे 'वृतो वे'ति प्राप्तो दीर्घो न भवति । **वृषीष्टेति** । इडभावपक्षे 'उश्चे'ति कित्वाच्च गुणः । **अवारीदिति** । लुङि परस्मैपदे सिचि वृद्धिः । अवारिष्टाम् अवारिषुः । 'सिचि च परस्मैपदेषु' इति निषेधादिह 'वृतो वे'ति न दीर्घः । लुङस्तङि सिचि 'लिङ्सिचो'रिति इट्पक्षे 'वृतो वे'ति दीर्घविकल्पं मत्वा आह-**अवरिष्ट अवरीष्टेति** । **अवृतेति** । इडभावपक्षे 'हस्वादङ्गा'दिति सिचो लोपः । **धुञ् कम्पन इति** । हस्वान्तोऽयमनिट् । धुञ इव रूपाणि । **दीर्घान्तोऽप्ययमित्यादि** । व्यक्तम् । **अथ परस्मैपदिन इति** । 'राध साध संसिद्धा'विल्येतत्पर्यन्ता इत्यर्थः । 'टु दु उपतापे' इत्यारभ्य 'स्मृ इत्येके' इत्येतत्पर्यन्ता धातवो हस्वान्ताः । **हि गताविति** । 'प्रहिणोती'त्यत्र भिन्नपदत्वाण्णत्वेऽप्राप्ते आह-**हिनुमीना** । हिनु मीना अनयोर्द्वन्द्वात्षष्ठीद्विवचनस्य आर्षो लुक् । 'रषाभ्यां नो णः' इत्यनुवर्तते । 'उपसर्गादसमासेऽपि' इत्यत उपसर्गादिति च । तदाह-**उपसर्गस्थादिति** ।

**हेरचङि** । 'चजोः' इति सूत्रात्कुग्रहणमनुवर्तते । 'अभ्यासाच्चे'त्यतोऽभ्यासादिति । 'हो हन्ते'रित्यतो ह इति षष्ठ्यन्तमनुवर्तते । तदाह-**अभ्यासात्परस्येति** । **जिघायेति** । जिघ्यतुः । जिघयिथ-जिघेथ । जिघ्यिव । **आप्लृ**

शे.] मटि संयोगादित्वाऽभावात् 'उ स्तरिष्टे'त्यसिद्धिः, 'संयोगादिरिति कर्मधारयोऽङ्गस्येति तद्विशेषण'मिति संयोगसञ्ज्ञासूत्रभाष्योक्तपक्षेऽप्यङ्गावयवसंयोगात्परस्य ऋकारस्येत्यर्थादसिद्धिरेवेति वाच्यम् ,अत्र सिजनुवृत्तिसामर्थ्येनाऽडागमे भूतपूर्वसंयोगादित्वमादाय शास्त्रप्रवृत्तेर्ज्ञापनेनाऽदोषात् । अ त एव 'अस्तर्यते'त्यादौ 'गुणोर्तौ' ति गुणसिद्धिरिति दिक् । क्रादिनिषेधादेव सिद्धे 'ववर्थ'ग्रहणं निगम एवेति नियमार्थं, तदाह-**तेनेति** । **लिङ्सिचोः** । 'वृत' इति 'इट्सनिवा' इत्यत इड्वेति च वर्त्तते । **न लिङि** । 'वृत' इति 'दीर्घ' इति च वर्त्तते । **अवरीष्टेति** । 'वृतो वे'ति दीर्घः । **प्रहिणोतीति** । गुणस्य स्थानिवत्त्वात् 'हिनु'शब्दोऽत्र । 'पूर्वत्रासिद्धे न स्थानिव'दित्यस्य 'तस्य दोषः संयोगादिलोपे'त्यादिना निषेधात् । स्पष्टञ्चेदं भाष्ये । बहिरङ्गपरिभाषा तु त्रैपादिकेऽन्तरङ्गे नेत्यसकृदावेदितम् । **हेः** । 'अचङी'ति पर्युदासो न्याय्यः ।

व्याप्तौ । आप्नोति । आप्नुतः । आप्नुवन्ति । आप्नुवः । आप । आप्ता । आप्नुहि । लृदित्त्वादङ् । आपत् । **१२६२ शक्लृ शक्तौ ।** अशकत् । **१२६३ राध १२६४ साध संसिद्धौ ।** राध्नोति । **राधो हिंसायाम्** ।६।४।१२३। एत्वाभ्यासलोपौ स्तः क्ङिति लिटि सेटि थलि च । अपरेधतुः । रेधुः । रेधिथ । राद्धा । साध्नोति । साद्धा । असात्सीत् । असाद्धाम् । **अथ द्वावनुदात्तेत्तौ। १२६५ अशू व्याप्तौ सङ्घाते च ।** अश्नुते । **अश्नोतेश्च** ।७।४।७२। दीर्घादभ्यासादवर्णात्परस्य नुट् स्यात् । आनशे । अशिता । अष्टा। अशिष्यते । अक्ष्यते । अश्नुवीत । अक्षीष्ट । अशिषीष्ट । आशिष्ट । आष्ट । आक्षाताम् । **१२६६ ष्टिघ आस्कन्दने ।** स्तिघ्नुते । तिष्टिघे । स्तेघिता । **अथ आ गणान्तात्परस्मैपदिनः । १२६७ तिक १२६८ तिग गतौ च ।** चादास्कन्दने । तिक्नोति । तिग्नोति । **१२६९ षघ हिंसायाम्।**सघ्नोति। **१२७० ञिधृषा प्रागल्भ्ये ।** धृष्णोति । दधर्ष । धर्षिता । **१२७१ दम्भु दम्भने ।** दम्भनं दम्भः । दभ्नोति । ददम्भ । 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वे'ति व्याकरणान्तरमिहाप्याश्रीयत इत्युक्तम्।'अनिदिता'मिति नलोपः। तस्याऽऽभीयत्वादसिद्धत्वेन एत्वाभ्यासलोपयोरप्राप्तौ।***दम्भेश्च एत्वाऽभ्यासलोपौ वक्तव्यौ।**देभतुः।ददम्भतुः।इदं कित्त्वं पिदपिद्विषयकमिति सुधाकरादयः। तन्मते तिप्सिप्मिप्सु देभ देभिथ देभेति रूपान्तरं बोध्यम् । अपिद्विषयकमिति न्यासकारादिमते तु ददम्भ ददम्भिथ ददम्भेत्येव।दभ्यात्। **१२७२ ऋधु वृद्धौ।**आनर्द्ध। आनृधतुः।**तृप प्रीणने इत्येके।**क्षुभ्नादित्वाण्णत्वं न।तृप्नोति।

---

त.]**चङि** । जेघीयते। अचङीति किम् ?। अजीहयत् । इह ण्यन्तस्य धात्वन्तरत्वात्केवलस्य त्वभ्यासनिमित्तप्रत्ययपरत्वाभावात्कुत्वप्राप्तिरेव नास्तीत्यचङीति निषेधो व्यर्थः सन् ज्ञापयति–ण्यधिकस्यापि कुत्वं भवतीति । तेन जिघापयिषतीत्यादि सिद्धम् । **आप्नुहीति** । संयोगपूर्वत्वात् 'उतश्च प्रत्यया'दिति हेर्लुङ् न । **राधो हिंसायाम्** । 'अत' इत्यनुवर्तमानेऽपि सामर्थ्यादकारमात्रं स्थानित्वेनाश्रीयते । **अश्नोतेश्च** । 'तस्मान्नुडि'त्यनुवर्तत इत्याह–**दीर्घादिति** । श्नुविकरणनिर्देशः किम् ?। क्र्यादेरश भोजन इत्यस्य माभूत् । आश । आशतुः। **ञिधृषा** । शूलेन धृष्णोति प्रगल्भते इति शूलधृक् शूलधृषौ । 'ऋत्विग्दधृ'गिति क्विनो विधानादन्यत्रापि पदान्तविषये कुत्वम् । **दम्भु** । लोकवञ्चनाय विहितकर्मानुष्ठानं दम्भः । **तृप** । अयं सेट्कः, अनुदात्तेषु श्यना निर्देशात् । अह व्याप्तौ । अस्मात् 'ऋहलोर्ण्य'दिति ण्यति 'अह्य'

---

बा.]**व्याप्तौ** । अनिट् । **आप्नुवन्तीति**।संयोगपूर्वकत्वात् 'हुश्नुवो'रिति न यण् । **आप्नुव इति**। संयोगपूर्वकत्वात् 'लोपश्चास्ये'ति नोकारलोपविकल्पः । **आप्नुहीति** । संयोगपूर्वकत्वादेव 'उतश्च प्रत्यया'दिति हेर्न लुक् । **शक्लृ शक्ताविति** । शक्नोति । शशाक। शेकतुः । शशक्थ–शेकिथ । शेकिव । शक्ता । शक्ष्यति । **अशकदिति** । लृदित्वादङ् । **राध साध संसिद्धौ** । अनिटौ । दीर्घाकारवत्त्वात् 'अत एकह'लित्यप्राप्तावाह–**राधो हिंसायां**। 'घ्वसो'रित्यत एदिति, अभ्यासलोप इति चानुवर्तते । 'गमहने'त्यतः क्ङितीति, 'अत एकहल्मध्ये' इत्यतो लिटीति, 'थलि च सेटी'ति सूत्रं चानुवर्तते। तदाह–**एत्वेत्यादिना**।**अपरेधतुरिति**।उपसर्गवशादिह हिंसायां वृत्तिः।अन्यत्र रराधतुः। थल्यपि क्रादिनियमान्नित्यमिट् । 'उपदेशेऽत्वतः' इत्यत्र तपरकरणादिह नेण्निषेधः।तदाह–**रेधिथेति**।**राद्धेति**।'झषस्तथोः' इति धः। **अशू व्याप्ताविति**।ऊदित्त्वाद्वेट्।**अश्नुते इति**।अश्नुवाते अश्नुवते। संयोगपूर्वकत्वात् 'हुश्नुवो'रिति न यण् । **अश्नोतेश्च**। 'अत्र लोपः'इत्यतो अभ्यासस्येत्यनुवर्तते, 'तस्मान्नु'डिति च । तच्छब्देन 'अत आदे'रिति कृतदीर्घोऽकारः परामृश्यते । तदाह–**दीर्घादिति** । **आनशे इति** । आनशिषे आनक्षे । आनशिवहे–आनश्वहे । **अष्टेति** । व्रश्चादिना शस्य षत्वे ष्टुत्वम् । विधिलिङ्याह–**अश्नुवीतेति**। आशीर्लिङि ऊदित्त्वादिड्विकल्पं मत्वाह–**अक्षीष्ट-अशिषीष्टेति** । लुङि सिच इट्पक्षे आह–**आशिष्टेति** । अनिट्पक्षे 'झलो झली'ति सिचो लोपं मत्वाह–**आष्टेति** । **ष्टिघ**-धातुः षोपदेशः । सेट् । **आ गणान्तादिति** । स्वादिगणसमाप्तिपर्यन्तमित्यर्थः। **इत्युक्तमिति** । भ्वादाविति भावः। कित्त्वपक्षे आह–**अनिदितामिति नलोप इति** । नन्वनिदितामिति नलोपे सति 'अत एकहल्मध्ये' इत्येत्वसिद्धेः 'दम्भेश्चे'ति व्यर्थमित्यत आह–**तस्याभीयत्वादिति** । नलोपस्येत्यर्थः। **दभ्यादिति** । आशीर्लिङि 'अनिदिता'मिति

---

शे.]**आप्नुवन्तीति**।संयोगपूर्वकत्वात् 'हुश्नुवो'रिति यण् ,'उतश्चे'तिहेर्लुक् च न। **राधो**।अत इत्यनुवर्त्तमानेऽपि सामर्थ्यात्तपरत्वलभ्यार्थबाधः, 'श्नाभ्यस्तयोरातः' इत्यतो मण्डूकप्लुत्या 'आत' इत्यनुवृत्तिर्वा । **अशू** । अयं परस्मैपद्यपीति 'उपदेशेऽत्वतः' इति सूत्रस्थभाष्यस्वरसः । **अश्नोतेश्च** । तस्मान्नुडिति वर्त्तते । 'अशे'रिति वक्तव्येऽश्नातिव्यावृत्त्यर्थं श्नुनिर्देशः । **इहाप्याश्रीयत इति** । 'सदेः परस्य लिटी'ति सूत्रस्थः 'परिषस्वजे' इति भाष्यप्रयोगो, 'देभतुः' इति 'अत एके'ति सूत्रस्थभाष्यप्रयोगश्चेह मानम्। **दम्भेश्चेति**। 'अत एके'ति सूत्रे भाष्ये वार्त्तिकम्। **सुधाकरादय इति**। अत्राऽरुचिबीजन्तु 'श्रन्थिग्रन्थी'त्यत्र लिड्ग्रहणस्य, कित्पदस्य च कर्त्तव्यतापत्त्या गौरवमिति । मम तु व्याकरणान्तरेऽपि 'असंयोगा'दिति कित्प्रकरण एवैतदिति तयोरकर्त्तव्यता स्पष्टैव । अत एव भाष्ये प्रथमोपस्थितणलं विहाय 'देभतु'रित्यु-

(ग)छन्दसि। आ गणान्तादधिकारोऽयम्। १२७३ अह व्याप्तौ। अह्नोति। १२७४ दघ घातने पालने च। दघ्नोति। १२७५ चमु भक्षणे। चम्नोति।१२७६ रि १२७७ क्षि १२७८ चिरि १२७९ जिरि १२८० दाश १२८१ दृ हिंसायाम्। रिणोति। क्षिणोति। अयं भाषायामपीत्येके। 'न तद्यशः शस्त्रभृतां क्षिणोति'। ऋक्षीत्येक एवाऽजादिरित्यन्ये। ऋक्षिणोति। चिरिणोति। जिरिणोति। दाश्नोति। दृणोति। (ग) वृत्। इति स्वादयः।

## तिङन्ते तुदादयः।

१२८२तुद व्यथने। इतः षट् स्वरितेतः। तुदादिभ्यः शः।३।१।७७। तुदति। तुदते। तुतोद। तुतोदिथ। तुतुदे। तोत्ता। अतौत्सीत्। अतुत्त। १२८३ णुद प्रेरणे। नुदति। नुदते। नुनोद। नुनुदे। नोत्ता। १२८४ दिश अतिसर्जने। अतिसर्जनं दानम्। देष्टा। दिक्षीष्ट। अदिक्षत्। अदिक्षत।१२८५ भ्रस्ज पाके। 'ग्रहिज्या'[इति संप्रसारणम्]। सस्य श्चुत्वेन शः। शस्य जश्त्वेन जः। भृज्जति। भृज्जते। भ्रस्जो रोपधयो रमन्यतरस्याम् ।६।४।४७। भ्रस्जो रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्द्धधातुके। मित्त्वादन्त्यादचः परः। स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः। बभर्ज। बभर्जतुः। बभर्जिथ। बभर्ष्ठ। बभर्जे। रमभावे-बभ्रज्ज।बभ्रज्जतुः। बभ्रज्जिथ।

त.]इति 'तस्यादित उदात्तमर्द्धह्रस्व'मित्यत्रास्माभिरुपपादितम्। अन्ये त्वाहुः-'शतचक्रं यो३ह्यो वर्तनि'रित्यत्र 'अह्य' इति षष्ठ्यन्तमेव। 'घेर्ङिती'ति गुणस्तु अहिशब्दस्य च्छान्दसत्वान्नेति। रि क्षि। एते षट् धातवः। एक एवाजादिरिति मते तु पञ्च धातवः॥ इति स्वादयः॥

**तुदतीति**। परमपि लघूपधगुणं बाधित्वा नित्यत्वाच्छ इत्येके। अकृतव्यूहपरिभाषया गुणो न प्रवर्तत इत्यन्ये। **भ्रस्ज** पाके। भर्जनरूपः पाकोऽत्र धात्वर्थो न त्वोदनादेः पाकः, तत्र प्रयोगाऽभावादित्याहुः। 'भ्रस्जो' इति केषांचित्पाठे तु 'ओदितश्चे'ति निष्ठानत्वप्रसक्त्या भृष्टः भृष्टवानिति न सिध्येत्। **भ्रस्जो रोपधयोः**। रम्यकार उच्चारणार्थः। 'र'मित्यस्याऽन्त्यादचः परत्वे 'रोपधयो'रिति षष्ठीनिर्देशस्य वैयर्थ्यमाशङ्क्याह-**निवृत्तिरिति**। अयं

बा.]नलोपः। **छन्दसीति**। गणसूत्रमिदम्। तथ्याचष्टे-**आ गणान्तादिति**। **रि क्षि इति**। रि क्षि चिरि जिरि दाश दृ इति षट् धातवः। आद्यद्वितीयावेकाक्षरौ। तदाह-**रिणोति। क्षिणोतीति। अयं भाषायामपीति**। क्षिधातुरित्यर्थः। तत्र प्रयोगं दर्शयति-**न तद्यश इति। वृदिति**। स्वादयो वृत्ता इत्यर्थः। **इति स्वादयः**।

अथ शविकरणा धातवो निरूप्यन्ते। **इतः षडिति**। 'ऋषी गतौ' इत्यतः प्रागित्यर्थः। **तुदादिभ्यः शः**। कर्त्रर्थे सार्वधातुके परे तुदादिभ्यः शः स्यात्स्वार्थे इत्यर्थः। शबपवादः। **तुदतीति**। लघूपधगुणं बाधित्वा नित्यत्वात् शे कृते तस्य अपित्वात् 'सार्वधातुकमपि'दिति ङित्त्वाच्च गुण इति भावः। अजन्ताऽकारवत्त्वाऽभावात्कादिनियमात्थलिटि थल्यपि नित्यमिट्। तदाह-**तुतोदिथेति। तोत्तेति**। अनिडिति भावः। **अतौत्सीदिति**। हलन्तलक्षणा वृद्धिः। णुदधातुर्णोपदेशः। अनिट्। **दिशधातुरप्यनिट्। देष्टेति**। व्रश्चेति षत्वे ष्टुत्वम्। स्ये तु 'षढो'रिति षस्य कत्वं च-देक्ष्यति। **दिक्षीष्टेति**। 'लिङ्सिचौ' इति कित्त्वान्न गुणः। 'शल इगुपधा'दिति क्सं मत्वाह-**अदिक्षत्। अदिक्षतेति। भ्रस्ज पाके**। अनिट्। भ्रस्ज् अ ति इति स्थिते आह-**ग्रहिज्येति**। ङित्त्वाद्रेफस्य संप्रसारणमृकारः, पूर्वरूपं चेति भावः। भृस्ज् अ ति इति स्थिते आह-**सस्येत्यादि**। णलि भ्रस्ज् अ इति स्थिते-**भ्रस्जो रोपधयोः**। 'भ्रस्ज'इत्यवयवषष्ठी। 'रोपधयो'रिति स्थानषष्ठी। रश्च उपधा च तयोरिति विग्रहः। रेफादकार उच्चारणार्थः। रेफस्य उपधायाश्च स्थाने इति लभ्यते। 'आर्द्धधातुके' इत्यधिकृतम्। तदाह-**भ्रस्जो रेफस्येत्यादिना**। रमि मकार इत्। अकार उच्चारणार्थः। तदाह-**मित्वादन्त्यादचः पर इति**। तथाच रेफाऽकारादुपरि सकारात् प्राक् रेफ आगम इति फलितत्। भ्र र् स् ज् अ इति स्थितम्। ननु रम आगमत्वे 'रोपधयो'रिति कथं स्थानषष्ठीनिर्देश इत्यत आह-**स्थानेति। स्थानं**-प्रसङ्गः। रेफस्य उपधायाश्च उच्चारणप्रसङ्गे सति अकारादुपरि रेफः प्रयोज्यः। अकारादुपरि रेफो जकारात्प्राक्सकारश्च न प्रयोज्याविति लब्धम्। तथाच तयोर्निवृत्तिः फलितेति भावः। एवंच भर्ज् अ इति स्थिते द्वित्वादौ

शे.]दाहृतं 'दम्भेश्चे'त्येत्वविधायके। **तृप**। अत्रत्योऽयं सेङ्कः। **छन्दसीति**। गणसूत्रम्। **इति स्वादयः**।

**आर्द्धधातुके इति**। 'बरीभृज्ज्यते' इत्यत्र रीको रेफस्य न निवृत्तिः, अभ्यासस्य नैरर्थक्यात्, समुदायस्य तु न भ्रस्जित्वं, द्विःप्रयोगपक्षे दुरुपपदत्वात्, अतो न 'तन्मध्यपतित'न्यायेन तत्र प्राप्तिशङ्का। 'उपदेशे' इत्यनुवृत्त्या रीको रेफस्य 'बरीभृज्ज्यते'इत्यादौ रमागमव्यावृत्तिरित्येतत्परभाष्योक्तिस्तु एकदेशिनः। 'दयतेर्दिगी'ति सूत्रसंमतया न्यायसिद्धयोक्तरीत्या प्राप्तेरेवाऽभावात्। रमि अकार उच्चारणार्थः। **रोपधेत्यत्र** च रोपधयोः स्थाने=प्रसङ्गे, रम्प्रयुज्यते, रोपधे न प्रयुज्येते इत्यर्थः। **बभ्रज्जतुरिति**। संयोगात्परत्वात्कित्त्वाऽभावः। नन्वाशीर्लिङि संप्रसारणं बाधित्वा परत्वाद्रमि 'सकृद्गति'न्यायेन संप्रसारणाऽभावे पुनःप्रसङ्गेन संप्रसारणेऽप्याद्गुणे

**'स्कोः'रिति सलोपः। 'व्रश्चे'ति षः। बभ्रष्ठ। बभ्रज्ज्वे। भ्रष्टा। भर्ष्टा। भ्रक्ष्यति। *ङिति रमागमं बाधित्वा संप्रसारणं पूर्वविप्रतिषेधेन। भृज्ज्यात्। भृज्ज्यास्ताम्। भर्क्षीष्ट। भ्रक्षीष्ट। अभार्क्षीत्। अभ्राक्षीत्। अभर्ष्ट। अभ्रष्ट। १२८६ क्षिप**

---

त.]भावः–स्थानविशेषलाभाय मित्त्वस्य करणाच्च रोपधयोः स्थाने रम् भवति । यत्र ह्यनिर्धारितः स्थानषष्ठ्या निर्दिश्य विधीयते स तत्स्थाने भवति । यथा 'इको यणची'त्यादौ यणादिः । प्रकृते तु रमो निर्दिष्टस्थानिकत्वाद्रोपधयोः स्थाने न भवति । एवं चास्य आदेशागमत्वे भवतो, यथा श्नमः प्रत्ययागमत्वे' इति । अन्ये त्वेतादृग् व्याख्यानमयुक्तमिति मत्वा 'सनः क्तिची'त्यतो लोपमनुवर्त्य भ्रस्जो रोपधयोर्लोपः, रम् तु आगम एवेत्याहुः । परे तु–'भ्रस्जो रसरन्यतरस्या'मित्येव सूत्रमस्तु। 'रसः–ऋ' इति च्छेदः । 'रस' इति रेफाऽकारसकाराणां यः सङ्घातस्तस्य 'ऋ' इत्यादेशः स्यादित्यर्थः । ततश्च अङ्किति भर्जको भर्जनं बभर्जेत्यादि सिध्यति । ऋकाराऽभावपक्षे तु भ्रज्जको भ्रज्जनं बभ्रज्जेत्यादि । ङिति तु ऋकारपक्षे भृष्टिः भृज्यादित्यादि । तदभावे संप्रसारणे सति तदेव रूपम् । एवं च बरीभृज्यत इत्यादौ रीको रेफस्य निवृत्तिं वारयितुम् 'अनुदात्तोपदेशे'त्यत उपदेशग्रहणमनुवर्त्यम् ,इदानीं तु नानुवर्त्यं,'ङिति रमागमं बाधित्वा संप्रसारण'मिति पूर्वविप्रतिषेधश्च न कर्तव्य इति महदेव लाघवमित्याहुः।इदं च 'रसो वचनासिद्ध'मिति वार्तिकाशयवर्णनमेव न त्वपूर्वम् । 'वचना'दित्यस्य वा ऋवचनादिति छेदः । भाष्यकारैस्तु 'सूत्रं भिद्यते यथान्यासमेवास्तु' इति वदद्भिरस्यां कल्पनायां दुष्टत्वं सूचितं। तच्च मनोरमायां स्पष्टमेव । तथा हि रेफाऽकारसकारसमुदायस्य ऋभावे पञ्च दोषाः । अपिल्लिटि बभर्जतुः बभर्जुरित्यादीष्यते, बभृजतुः बभृजुरित्यादि स्यात् । न चाऽत्र गुणेन निर्वाहः, ऋभावे सति 'असंयोगाल्लिट् कि'दिति कित्त्वप्रवृत्त्या तन्निषेधात् । 'सनीवन्ते'ति इड्विकल्पाद्विभर्क्षतीत्यादि इष्यते, बिभृक्षतीत्यादि स्यात् । ऋभावे 'हलन्ताच्चे'ति सनः कित्त्वप्रवृत्तेः । लिङ्सिचोस्तु भर्क्षीष्ट अभर्ष्टेत्यादीष्यते । भृक्षीष्ट अभृष्टेत्यादि स्यात् । 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वात्।णिजन्ताच्चङि अबभर्जदितीष्यते । अबीभृजदित्यपि स्यात् । इररारामपवादत्वेन 'उर्ऋ'दिति ऋत्वप्रवृत्तौ 'सन्वल्लघुनी'ति सन्वद्भावात् 'सन्यतः' इतीत्वे 'दीर्घो लघो'रिति प्रवृत्तेः । यद्यपि 'उर्ऋ'दित्यस्य वैकल्पिकत्वादबभर्जदिति सिध्यत्येव तथापि पक्षे अबीभृजदित्यनिष्टं स्यादिति बोध्यम् । 'ऋजिभृजी भर्जने' इति भ्वादेस्त्वादृशं रूपमिष्टमिति चेत् । मैवम् । भर्जनार्थे हि तादृग्रूपमिष्टं न तु पाकसामान्ये। उभयोरेकार्थत्वाभ्युपगमेऽपि प्राचीनाश्चत्वारो दोषास्तु दृढा एव । न हि तेऽपि धात्वन्तरेण सुपरिहराः । अपिल्लिटि भृजेरपि धातोर्गुणाऽभावादनुदात्तत्वेन आत्मनेपदित्वाच्च बभर्जतुरित्यादिरूपस्य तेनाऽप्यसिद्धेः । तथा भृजेरुदात्तत्वेन ततः परेषां सन्लिङ्सिचामिडागमध्रौव्यात्–बिभर्क्षति भर्क्षीष्ट अभर्ष्टेत्यादिरपि तेन न सिध्यति । एतेन 'भ्रस्जेर्भृजिरादेश' इति पक्षोऽपि निरस्तः, पूर्वोक्तदूषणगणप्रसङ्गात् । किं च अस्मिन्पक्षे यङ्लुकि अधिको दोषः । वधादेशवत्साभ्यासस्य भृज्यादेशे पुनर्द्विर्वचनस्य दुर्लभत्वात्,स्थानिवत्त्वेनाऽनभ्यासस्येति निषेधात् । स्वीकृतेऽपि द्विर्वचने रुग्रिग्रीकोऽभ्यासस्य स्युरेवेति रुगादिरहितं बाभर्जिता बाभर्जिष्यतीत्यादि रूपं नैव सिध्येत्।यदि तु लाघवे पक्षपातेन स्वातन्त्र्यं चिकीर्ष्यते तर्हि 'भ्रस्जेरसो'रिति पठित्वा रसिति समुदायस्य अरेव विधीयतां, तथा च न कोऽपि दोष इति । अयमत्र सङ्ग्रहः–'रस ऋश्चेदपिल्लिट्सन्लिङ्सिच्चङ्परणिक्षु ते । दोषो भ्रस्जेर्भृजौ चैवं, दोषो यङ्लुकि चाधिकः । साभ्यासस्य हि भृज्भावो भवेद्धन्तेर्वधिर्यथा । द्वित्वं पुनर्न लभ्येत स्थानिवत्त्वाद्धघेरिव । तस्मादस्तु यथान्यासं, स्वातन्त्र्येऽस्तु रसोरिति' । पूर्वविप्रतिषेधेनेति । नित्यत्वा-

---

बा.]रूपमाह–**बभर्जेति**।अतुसादावपि संयोगात्परत्वात्कित्वाऽभावात् 'ग्रहिज्ये'ति संप्रसारणं न भवति। भारद्वाजनियमात्थलि वेडिति मत्वाऽऽह–**बभर्जिथ बभर्ष्ठेति** । इडभावपक्षे बर्भज् थ इति स्थिते 'व्रश्च' इति जस्य षः । ष्टुत्वेन थस्य ठ इति भावः । बभर्जिव । लिटस्तव्याह–**बभर्जे इति** । बभर्जाते इत्यादि सुगमम् । रमभावे आह–**बभ्रज्जेति**। णलि भ्रस्ज् अ इति स्थिते द्वित्वे हलादिशेषे अभ्यासजश्त्वे बभ्रस्ज् अ इति स्थिते सस्य श्चुत्वेन शकारे शस्य जश्त्वेन जकार इति भावः । 'लिट्यभ्यासस्ये'ति संप्रसारणस्य न प्रसक्तिः, अभ्यासे हलादिशेषेण रेफाऽभावात् । **बभ्रज्जतुरिति**। संयोगात्परत्वादकित्वात् 'ग्रहिज्ये'ति न संप्रसारणमिति भावः। **बभ्रज्जिथेति**। थलि भारद्वाजनियमादिड्पक्षे रमभावपक्षे रूपम् । तत्र इडभावपक्षे बभ्रस्ज् थ इति स्थिते आह–**स्कोरिति । व्रश्चेति ष इति** । 'जस्ये'ति शेषः । रमभावपक्षे लिटस्तव्याह–**बभ्रज्जे इति** । बभ्रज्जाते । बभ्रज्जिषे । इत्यादि सुगमम् । **भ्रष्टेति** । रमभावपक्षे रूपम् । **भर्ष्टेति** । रसागमे भर्ज् ता इति स्थिते जस्य 'व्रश्च' इति षः, ष्टुत्वेन तकारस्य ट इति भावः । एवं–**भ्रक्ष्यति भर्क्ष्यतीति** । 'षढो'रिति कत्वे सस्य षत्वमिति विशेषः। भृज्जतु । अभृज्जत् । भृज्जेत् । ननु आशीर्लिङि भ्रस्ज् यादिति स्थिते यासुटः कित्वात् 'ग्रहिज्ये'ति संप्रसारणे पूर्वरूपे सकारस्य श्चुत्वेन शकारे शस्य जश्त्वेन जकारे भृज्ज्यादिति रूपं वक्ष्यति। तदयुक्तम् । संप्रसारणं बाधित्वा परत्वाद्रमागमे कृते भर्ज्यादिति प्रसङ्गादित्यत आह–**ङिति रमागममिति** ।

---

सो.]'भर्ज्या'दिति स्यादत आह–**पूर्वविप्रतिषेधेनेति**। संप्रसारणरमोः 'भृजति' 'भर्ष्टा' इत्यवकाशौ, कृताऽकृतप्रसङ्गित्व-

प्रेरणे । क्षिपति । क्षिपते । क्षेप्ता । [ क्षिप्सीष्ट । 'लिङ्सिचा'विति कित्त्वान्न गुणः ] । अक्षैप्सीत् । अक्षिप्त । १२८७ कृष विलेखने । कृषति । कृषते । क्रष्टा । कर्ष्टा । कृष्यात् । कृक्षीष्ट । 'स्पृशमृशकृषे'ति सिज्वा । पक्षे क्सः । सिचि अम्वा । अक्राक्षीत् । अकार्क्षीत् । अकृक्षत् । तङि 'लिङ्सिचा'विति कित्वादम्न । अकृष्ट । अकृक्षाताम् । अकृक्षत ॥ [ अकृक्षत । अकृक्षाताम् ]। अकृक्षन्त । [ 'क्सस्याऽची'त्यन्तलोपः । अकृक्षि ] । १२८८ ऋषी गतौ । परस्मैपदी । ऋषति । आनर्ष । १२८९ जुषी प्रीतिसेवनयोः। आत्मनेपदिनश्चत्वारः। जुषते । १२९० ओविजी भयचलनयोः । प्रायेणाऽयमुत्पूर्वः ।उद्विजते । विज इट् ।१।२।२।विजेः पर इडादिः प्रत्ययो ङिद्वत् । उद्विजिता । उद्विजिष्यते । १२९१ ओलजी १२९२ ओलस्जी व्रीडायाम् । लजते । लेजे । लज्जते । ललज्जे । अथ परस्मैपदिनः । १२९३ ओ व्रश्चू छेदने । 'ग्रहिज्या' । वृश्चति । वव्रश्च । वव्रश्चतुः ।

---

त.]दित्यपि सुवचम्। न च संप्रसारणात्पूर्वं धातो रेफस्य, पश्चात्तु रमागमरेफस्येति शब्दान्तरप्राप्त्या संप्रसारणस्य नित्यत्वं नेति शङ्क्यं, लक्ष्यानुरोधेन कृताऽकृतप्रसङ्गित्वेनापि क्वचिन्नित्यत्वस्वीकारात्। विज इट्। इह 'वृद्धिर्यस्ये'ति सूत्रान्मण्डूकप्लुत्या यस्यादिरिति अनुवर्तते, तेन इडादिप्रत्ययो लभ्यत इति मनोरमायां स्थितम् । नन्वास्तु इह इडित्यनेनोत्तमैकवचनं न गृह्यते, तथा च सति विजिषीयेत्यत्रैव स्यान्न तूद्विजितेत्यादौ । ततश्चेष्टसिद्ध्यर्थमिडागमो गृह्यते । तस्य तु ङित्वं व्यर्थम्, तन्निमित्तगुणस्याऽप्राप्तेः,अतो लक्षणया इड्वान् गृह्यते।इट्प्रत्ययस्यादिरिति।फलितार्थकथनम्-इडादिप्रत्ययो ङिद्वदिति। एवं च इडादिरिति लाभाय यस्यादिरित्यनुवर्तनक्लेशो व्यर्थ एवेत्याहुः । इह ओविजीति तुदादौ रुधादिश्च गृह्यते न तु 'विजिर्पृथग्भावे' इति जुहोत्यादिः,व्याख्यानात्। यस्त्वत्र हरदत्तेन जुहोत्यादेरग्रहणे हेतुरुक्तः 'तस्यानिङ्क्त्वा'दिति, तदयुक्तम् । क्रादिनियमेन लिटि इट्संभवात् । न च तत्र कित्त्वेन गतार्थत्वादिटो ङित्त्वं व्यर्थमिति वाच्यम् , अपिल्लिटः

---

बा.]आशीर्लिङस्तङि सीयुटि रमागमपक्षे आह-भर्क्षीष्टेति। रमभावे तु अकित्त्वात्संप्रसारणाऽभावादाह-भ्रक्षीष्टेति। लुङि परस्मैपदे रमागमविकल्पं मत्वाह-अभार्क्षीत् अभ्राक्षीदिति । आत्मनेपदे सिचि रमागमविकल्पं मत्वाह-अभर्ष्ट-अभ्रष्टेति । 'झलो झली'ति सिर्लोपः । क्षिप प्रेरणे इति । अनिट् । अजन्ताऽकारवत्त्वाऽभावात्क्रादिनियमात्थलि नित्यमिट् । चिक्षेपिथ। एवं कृषधातुरपि। चकर्षिथ। लुटि तासि 'अनुदात्तस्य चर्दुपधस्ये'त्यमागमविकल्पः। अमागमाऽभावे गुणे रपरत्वम् । तदाह-क्रष्टा कर्ष्टेति । आशीर्लिङि परस्मैपदे आह-कृष्यादिति । कित्त्वाज्झलादित्वाऽभावाच्च अमागमो गुणश्च नेति भावः । आशीर्लिङस्तङ्याह-कृक्षीष्टेति । 'लिङ्सिचौ' इति कित्त्वादमागमो गुणश्च नेति भावः । लुङि परस्मैपदे आह-स्पृशमृशेति सिज्वेति । पक्षे इति। सिजभावपक्षे 'शलः' इति क्स इत्यर्थः। सिचि अम्वेति । सिच्पक्षे 'अनुदात्तस्य चे'त्यमागमविकल्प इत्यर्थः । क्से तु कित्त्वादमागमो नेति भावः । अक्राक्षीदिति । सिचि अमागमे रूपम् । अकार्क्षीदिति । सिचि अमभावपक्षे हलन्तलक्षणा वृद्धिरिति भावः । क्सादेशपक्षे आह-अकृक्षदिति । कित्त्वादमागमो गुणश्च नेति भावः । तङीति । तङि सिच्पक्षे अकृष् स् त इति स्थिते 'लिङ्सिचौ' इति कित्त्वादम्नेत्यर्थः । गुणोऽपि नेति ज्ञेयम् । अकृष्टेति । 'झलो झली'ति सिज्लोप इति भावः । अकृक्षतेति । सिच्पक्षे अनतः परत्वाददादेश इति भावः । क्सादेशपक्षे आह-अकृक्षतेति । कित्त्वादम्नेति भावः । अकृक्षन्तेति । क्सादेशपक्षे अ कृक्ष झ इति स्थिते अच्परकत्वाऽभावात् 'क्सस्याची'त्यकारलोपाऽभावादतः परत्वाददादेशाऽभावे अन्तादेश इति भावः । ऋषी गताविति । सेट् । आनर्षिथ । आनर्षिव । अर्षिता । आर्षीत् । ओ विजी भयेति । सेट् । उद्विजितेत्यादौ लघूपधगुणे प्राप्ते-विज इट् । 'गाङ्कुटादिभ्यः' इत्यतो ङिदित्यनुवर्तते । तदाह-विजेः पर इत्यादि । उद्विजिता । उद्विजिषीष्ट । उदविजिष्ट । व्रश्चधातुरूदित्वाद्वेट् । ग्रहिज्येति । लटि व्रश्च् अति इति स्थिते शस्याऽपित्त्वेन ङित्वात् 'ग्रहिज्ये'ति रेफस्य संप्रसारणमृकारः, पूर्वरूपं चेति भावः । तदाह-वृश्चतीति । वृश्चतः वृश्चन्तीत्यादि । वव्रश्चेति । णलि रूपमिदम् । थलि च प्रक्रिया अनुपदं वक्ष्यते । अतुसादौ संयोगात्परत्वेन कित्त्वाऽभावात् 'ग्रहिज्ये'ति न संप्रसारणम् । तदाह-वव्रश्चतुरिति । ऊदित्वात्थलादौ वेट् । तदाह-वव्रश्चिथ वव्रष्ठेति । धातुपाठे 'व्रश्चू' इत्यत्र व्रस् च् इति स्थिते सस्य श्चुत्वेन शकारनिर्देशः । तथाच वव्रश् थ इति स्थिते श्चुत्वस्याऽसिद्धत्वात् 'स्कोः' इति सकारलोपे, चस्य 'व्रश्चे'ति षत्वे, ष्टुत्वेन थस्य ठत्वे, वव्रष्ठेति रूपम् । वव्रश्चिव । ननु णलि थलि च अकिति द्वित्वे कृते 'लिट्यभ्यासस्ये'त्यभ्यासावयवयोर्वकाररेफयोर्द्वयोरपि संप्रसारणं स्यात्। न च 'न संप्रसारणे संप्रसारण'मिति वकारस्य संप्रसारणनिषेधः शङ्क्यः, पूर्वं वकारस्य संप्रसारणसंभवादित्यत आह-लिट्यभ्यासेति । 'न संप्र-

---

शे.]मात्रेण संप्रसारणं नित्यमित्यपि सुवचम्। न च ऋकारान्तर्गतरेफमादाय रमपि नित्यः,सिद्धान्ते वर्णग्रहणे वर्णैकदेशाऽग्रहणादिति स्पष्टं भाष्ये । अकृक्षतेति । क्सादेशे तङेकवचने, सिच्पक्षे बहुवचने च 'अनतः'इत्यदादेशे एतदेव रूपम् । अकृक्षन्तेति—क्सादेशेऽनत इत्युक्तेरदादेशो न ।

वव्रश्चिथ । वव्रष्ठ । 'लिट्यभ्यासस्ये'ति संप्रसारणं रेफस्य ऋकारः । 'उरत्' । तस्य 'अचः परस्मि'न्निति स्थानिवद्भावात् 'न संप्रसारणे' इति वस्योत्वं न । व्रश्चिता । व्रष्टा । व्रश्चिष्यति । व्रक्ष्यति । वृश्च्यात् । अव्रश्चीत् । अव्राक्षीत् । १२९४ व्यच व्याजीकरणे । विचति । विव्याच । विविचतुः । व्यचिता । व्यचिष्यति । विच्यात् । अव्याचीत् । अव्यचीत् । *'व्यचेः कुटादित्वमनसी'ति तु नेह प्रवर्तते, 'अनसी'ति पर्युदासेन कृन्मात्रविषयत्वात् । १२९५ उछि उञ्छे । उञ्छति । १२९६ उछी विवासे । उच्छति । १२९७ ऋछ गतीन्द्रियप्रलय-

त.]कित्त्वेऽपि विवेजिथेत्यत्र पित्त्वेन ङित्वाऽभावात् । वव्रश्चेति । अत्र नव्याः–'वव्रश्चे'त्यादौ 'लिट्यभ्यासस्ये'त्यभ्यासावयवयोर्द्वयोरपि यणोः संप्रसारणप्रसक्तौ पूर्वस्य यणो निषेधाय 'न संप्रसारणे' इति सूत्रं स्वीक्रियते । ततश्च 'अतएव ज्ञापकात्परस्य प्रथमं संप्रसारण'मिति परिकल्प्य 'आ पादपरिसमाप्तेरङ्गाधिकार'इति पक्षमभ्युपगम्य उरदत्वस्याङ्गाक्षिप्तप्रत्ययनिमित्तकत्वस्वीकारात् 'अचः परस्मि'न्निति स्थानिवद्भावप्रवृत्त्या संप्रसारणपरत्वमाश्रित्य वकारस्य संप्रसारणनिषेधः कथंचिदुपपद्यते। 'परस्य संप्रसारणं','परस्य यणः संप्रसारण'मिति वा सूत्रिते तु परस्यैव संप्रसारणं न तु पूर्वस्य यण इत्यर्थलाभादुक्तक्लेशं विनैव वव्रश्च यून इत्यादि सर्वं सिध्यति । नचैवं 'लिटि वयो यः' 'वेञः' इत्यत्र संप्रसारणनिषेधाय नञोऽनुवृत्तिर्न लभ्येतेति वाच्यं, 'न लिटि वयो यः' इति सूत्रकरणे बाधकाऽभावात्, 'न संप्रसारणे' इति यथाश्रुतसूत्रप्रणयने त्वन्ततो मात्राद्वयस्याधिक्याच्च । एवं च लघूपायेनेष्टसिद्धौ 'न संप्रसारणे'इति सूत्रारम्भो ज्ञापयति 'निमित्तभेदाऽभावेऽपि स्थानिभेदे पुनरपि कार्यं प्रवर्तते' इति । तथा च 'सुध्युपास्य' इत्यादौ धकारस्य द्वित्वे कृते पुनरुकारात्परस्य दकारस्यापि द्वित्वमिति प्रक्रियाकारादिव्याख्यानं सूत्रकाराभिप्रेतमेव । यदि स्थानिभेदेऽपि निमित्तैक्ये कार्याऽप्रवृत्तिः क्वचिदृश्यते तत्र तु 'ज्ञापकसिद्धं न सर्वत्रे'ति स दोषः परिहियतामित्याहुः । अव्रश्चीदिति । ऊदित्वात्पक्षे इट् । 'वदव्रजे'ति वृद्धेः 'नेटी'ति निषेधः । अव्राक्षीदिति । 'स्कोः'रिति सलोपः । 'व्रश्चे'ति षः । 'षढो'रिति कः । ततः सस्य षत्वम् । न चाऽत्र सकारस्य कथं लोप इति वाच्यं, धातुपाठे सकारस्य पाठात् । तदाहुः–'नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकारजः शकारश्चे, षाट्टवर्गस्तवर्गजः' । इति । व्यच । व्याजीकरणं छद्मकरणम् । पर्युदासेनेति । प्रसज्यप्रतिषेधे हि वाक्यभेदोऽसमर्थसमासश्च प्रसज्येतेति भावः । कृन्मात्रविषयत्वादिति । तेन उद्विचिता उद्विचितुमित्यत्र संप्रसारणं भवति । व्यचिता व्यचिष्यतीत्यादौ तु तिङ्विषये न भवति । विव्याचेत्यत्र कुटादित्वे जातेऽपि न क्षतिः, गाङ्कुटादिभ्यः' इति सूत्रे 'अञ्णितः प्रत्यया ङितःस्यु' रित्युक्तत्वात् । उत्तमे णलि तु णित्वाऽभावपक्षे ङित्त्वात्संप्रसारणे 'विव्यचे'ति न सिध्येदिति–'अनसी'ति पर्युदास आवश्यक इति बोध्यम् । 'उछी उञ्छे उछी विवासे'। इमौ भ्वादिगणे व्याख्यातौ । इह पाठस्तु उञ्छन्ती, [उञ्छती,

बा.]सारणे' इति निषेधादेव ज्ञापकात्प्रथमं रेफस्य ऋकारः संप्रसारणमित्यर्थः। तस्य संप्रसारणसंपन्नस्य ऋकारस्य अकारविधिं स्मारयति–उरदिति । ननु ऋकारस्य अकारे कृते वकारस्य संप्रसारणं स्यात्, संप्रसारणपरकत्वविरहेण 'न संप्रसारणे' इति निषेधाऽप्रवृत्तेरित्यत आह–तस्य चेति । अकारस्येत्यर्थः । न च उरदत्वस्य परनिमित्तकत्वाऽश्रवणात्कथं स्थानिवत्त्वमिति वाच्यम्, 'आपादपरिसमाप्तेरङ्गाधिकार' इत्यभ्युपगम्य अङ्गाक्षिप्तप्रत्ययनिमित्तकत्वाभ्युपगमात् । 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्ति'रिति न्यायस्तु 'न संप्रसारणे' इति निषेधादेव न स्थानिभेदे प्रवर्तत इति ज्ञायते । अत एव 'सुध्युपास्य'इत्यादौ धकारस्य द्वित्वे कृते पूर्वधकारस्य जश्त्वेन दकारे तस्य द्वित्वमित्यास्तां तावत् । आशीर्लिङ्याह–वृश्च्यादिति । कित्त्वात्संप्रसारणमिति भावः । अव्रश्चीदिति । ऊदित्वादिट्पक्षे 'नेटी'ति हलन्तलक्षणवृद्धिनिषेधः । इडभावे हलन्तलक्षणवृद्धिं मत्वाह–अव्राक्षीदिति । अव्रश्च् सीत् इति स्थिते हलन्तलक्षणा वृद्धिः । श्चुत्वस्याऽसिद्धत्वात् 'स्कोः' इति सलोपः । 'व्रश्चे'ति चस्य षः, तस्य 'षढो'रिति कः, सस्य ष इति भावः । 'नकारजावनुस्वारपञ्चमौ झलि धातुषु। सकारजः शकारः श्चे, षाट्टवर्गस्तवर्गजः'। इत्याहुः। व्यच । सेट् । शे 'ग्रहिज्ये'ति संप्रसारणं मत्वाह–विचतीति । विव्याचेति । 'लिट्यभ्यासस्ये'त्यभ्यासयकारस्य संप्रसारणम् । 'न संप्रसारणे' इति न वकारस्य । विविचतुरिति । कित्त्वात् 'ग्रहिज्ये'ति संप्रसारणे कृते द्वित्वादीति भावः । विव्यचिथ । विविचिव । विच्यादिति । आशीर्लिङि कित्त्वाद्यकारस्य संप्रसारणम् । 'अतो हलादे'रिति वृद्धिविकल्पं मत्वाह–अव्याचीत् अव्यचीदिति । ननु 'व्यचेः कुटादित्वमनसी'ति व्यचेः कुटादित्ववचनात् व्यचिता, व्यचिष्यतीत्यादावपि 'गाङ्कुटादिभ्यः' इति ङित्वात् संप्रसारणं स्यादित्यत आह–व्यचेरिति । कृन्मात्रेति । अव-

शे.] कृन्मात्रेति । अवधारणे मात्रशब्दः । ऋच्छत्यृतामिति । 'ऋच्छति' शब्देन धातुपाठे

मूर्तिभावेषु । 'ऋच्छत्यृता'मिति गुणः। द्विहल्ग्रहणस्याऽनेकहल्लुपलक्षणत्वान्नुट् । आनर्च्छ । आनर्च्छतुः । ऋच्छिता । १२९८ मिच्छ उत्क्लेशे । उत्क्लेशः पीडा । मिमिच्छ । अमिच्छीत् । १२९९ जर्ज १३०० चर्च १३०१ झर्झ परिभाषणभर्त्सनयोः । १३०२ त्वच संवरणे । तत्वाच । १३०३ ऋच स्तुतौ । आनर्च । १३०४ उब्ज आर्जवे । १३०५ उज्झ उत्सर्गे।१३०६ लुभ विमोहने। विमोहनमाकुलीकरणम् । लुभति। लोभिता। लोब्धा। लोभिष्यति । १३०७ रिफ कत्थनयुद्धनिन्दाहिंसादानेषु । रिफति। रिरेफ । रिहेत्येके । 'शिशुं न विप्रा मतिभी रिहन्ति'। १३०८ तृप १३०९ तृम्फ तृप्तौ । आद्यः प्रथमान्तः । द्वितीयो द्वितीयान्तः । द्वावपि द्वितीयान्ताविल्यन्ये । तृपति । ततर्प। तर्पिता । 'स्पृशमृशे'ति सिज्विकल्पः पौषादिकस्यैव, अङ्पवादत्वात्। तेनाऽत्र नित्यं सिच् । अतर्पीत् । तृम्फति । शस्य ङित्वात् 'अनिदिता'मिति नलोपे। **शे तृम्फादीनां नुम्वाच्यः** 'आदि'-शब्दः प्रकारे । तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । तृम्फति । ततृम्फ । तृम्प्यात् । १३१० तुप १३११ तुम्प १३१२ तुफ १३१३ तुम्फ हिंसायाम्। तुपति । तुम्पति । तुफति। तुम्फति। १३१४ दृप १३१५ दृम्फ उत्क्लेशे। प्रथमः प्रथमान्तः । द्वितीयो द्वितीयान्तः। प्रथमो द्वितीयान्त इत्येके । दृपति । [ दृफति ] । दृम्फति। १३१६ ऋफ १३१७ ऋम्फ हिंसायाम् । ऋफति । आनर्फ । ऋम्फति । ऋम्फाञ्चकार । १३१८ गुफ १३१९ गुम्फ ग्रन्थे । गुफति । जुगोफ। गुम्फति । जुगुम्फ। १३२० उभ १३२१ उम्भ पूरणे। उभति । उवोभ । उम्भति । उम्भाञ्चकार । १३२२ शुभ १३२३ शुम्भ शोभार्थे। शुभति । शुम्भति। १३२४ दृभी ग्रन्थे । दृभति । १३२५ चृती हिंसाग्रन्थनयोः । चर्तिता । 'सेऽसिची'ति वेट् । चर्तिष्यति । चर्त्स्यति । अचर्तीत् । १३२६ विध विधाने । विधति । वेधिता । १३२७ जुड गतौ । तवर्गपञ्चमान्त इत्येके । जुडति ।

---

त.]उच्छन्ती,उच्छती इ]त्यत्र 'आच्छीनद्यो'रिति नुम्विकल्पार्थः।पूर्वं पाठस्तु स्वरार्थः।तथाहि।उच्छति उच्छन्तीत्यादौ पिद्वचने शपिबादीनां पित्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तं पदम्।शे,तु प्रत्ययस्वरेण मध्योदात्तमिति।न च'सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति वक्ष्यमाणत्वात्कथमिह मध्योदात्ततेति वाच्यं, कुरुत इत्यादौ तसादेर्विकरणात्परत्वेन तत्स्वरस्योदात्तस्य विकरणस्वरापेक्षया प्रबलत्वेऽपि शस्य धातोः परत्वेन धातुस्वरापेक्षया शस्वरस्योदात्तस्य प्रबलत्वात् । **उपलक्षणत्वादिति** । अतएव 'अदुपधस्य चेदश्नोतेरेवे'ति नियममाश्रित्य द्विहल्ग्रहणं भाष्यकारैः प्रत्याख्यातम् । अन्यथा तत्र सञ्चच्छेतेति भावः । **आनर्च्छेति** । 'अनृच्छ'इति पर्युदासान्नाऽऽम्।नन्वास्तु' ऋच्छत्यृता'मिति लिटि परे गुणविधानसामर्थ्यादामभावः सिद्ध इति 'इजादे'रिति सूत्रे 'अनृच्छ' इत्येतत्स्पष्टप्रतिपत्त्यर्थमित्याहुः । अन्ये तु 'ऋच्छत्यृता'मित्यत्र 'तौदादिकऋच्छे'रिति सर्वैरेव व्याख्यातत्वाद्गणान्तरेऽपि ऋच्छिरस्तीत्यनुमीयते । तद्धातोस्तु लिट्याम्निवारणाय 'अनृच्छ' इत्येतदावश्यकमित्याहुः । **मिच्छ** । उत्कटः क्लेश **उत्क्लेशः** । **ऋच स्तुतौ** । ऋच्यते स्तूयते देवतादिकमनयेति ऋक् । बाहुलकादिह करणे क्विप् । **लोभिता। लोब्धा।**'तीषसहे'ति वेट् । **शिशुं न विप्रा इति।**'न'शब्द इवार्थे । विप्राः= ब्राह्मणाः शिशुमिव मतिभी रिहन्ति=हिंसन्ति । न्यूनीकुर्वन्तीत्यर्थः । चृती हिंसाग्रन्थनयोः। ईदित्करणं 'श्वीदितो निष्ठा-

---

बा.]धारणे मात्रशब्दः। 'उछि उञ्छे' 'उछी विवासे' इति भ्वादौ पठितौ। इह तयोः पाठस्तु शविकरणार्थः। तेन उच्छती उच्छन्ती,उच्छती उच्छन्ती इति 'आच्छीनद्यो'रिति नुम्विकल्पः सिध्यति। भ्वादौ पाठस्तु पित्स्वरार्थ इत्यन्यत्र विस्तरः । **ऋच्छ गतीति** । 'छे चे'ति तुकि तस्य श्चुत्वेन चकारनिर्देशः । ऋच्छति । णलि लघूपधत्वाऽभावाद्गुणे अप्राप्ते आह–**ऋच्छत्यृतामिति** । द्वित्वे उरदत्वे हलादिशेषे 'अत आदे'रिति दीर्घे आ अर्च्छ इति स्थिते बहुहल्त्वाद्द्विहल्त्वाऽभावान्नुटि अप्राप्ते आह–**द्विहल्ग्रहणस्येति** । **आनर्च्छेति** । 'इजादे'रित्यत्र 'अनृच्छः' इति पर्युदासादाम् । **ऋच्छितेति** । 'ऋच्छत्यृता'मित्यत्र लिटीत्यनुवृत्तेर्न गुण इति भावः । **लुभधातुः** सेट् । 'तीषसहे'ति वेडिति मत्वाह–**लोभिता लोब्धेति** । **शिशुं नेति** । 'न'शब्द इवार्थे । विप्राः शिशुमिव मतिभिः रिहन्ति=हिंसन्तीत्यर्थः । **तृपधातुः** श्यन्विकरण एवाऽनिट् । **अङ्पवादत्वादिति** । अपवादस्य उत्सर्गसमानदेशत्वादिति भावः । **चृती हिंसाश्रन्थनयोरिति** । **श्रन्थनं** विस्रंसनम् । चृततीत्यादि सुगमम् । 'अथास्य योक्त्रं विचृते'त्याश्वलायनः।

---

शे.] साक्षात्पाठादस्यैव ग्रहणं, न ऋधातोः । प्रश्लेषेणैव तस्य सिद्धत्वाच्च । अत एव सूत्रे बहुवचनम् । नन्वस्य तुकि तस्य चुत्वेन चकारे लिटि द्वित्वेऽभ्यासकार्ये 'ऋच्छती'ति गुणे त्रिहल्त्वान्नुण्न स्यादत आह—**अनेकहलिति** । **तृप तृम्फ** । 'शे मुचादीना'मिति सूत्रभाष्ये 'शे तृम्पादीनां नुम्वाच्यः, तृम्पति तृम्फती'ति पाठदर्शनादाद्योऽपि सनकार इति प्रतीयते । मूलन्तु धातुवृत्त्यनुसारीति बोध्यम् । **अङ्पवादत्वादिति** । 'उत्सर्गसमानदेशा अपवादाः'इति न्यायादिति भावः । किं च तत्राऽनयोर्ग्रहणे पक्षे सिजभावे च्लेरेव श्रवणोपपत्तौ

'मल्लो जुनन्ति'। १३२८ मृड सुखने। मृडति। मर्डिता। १३२९ पृड च। पृडति। १३३० पृण प्रीणने। पृणति। पपर्ण। १३३१ वृण च। वृणति। १३३२ मृण हिंसायाम्। १३३३ तुण कौटिल्ये। तुतोण। १३३४ पुण कर्मणि शुभे। पुणति। १३३५ मुण प्रतिज्ञाने। १३३६ कुण शब्दोपकरणयोः। १३३७ शुन गतौ। १३३८ द्रुण हिंसागतिकौटिल्येषु। १३३९ घुण १३४० घूर्ण भ्रमणे। १३४१ षुर ऐश्वर्यदीप्त्योः। सुरति। सुषोर। आशिषि सूर्यात्। १३४२ कुर शब्दे। कुरति। कूर्यात्। अत्र 'न भकुर्च्छुरा'मिति निषेधो न, करोतेरेव तत्र ग्रहणादित्याहुः। १३४३ खुर छेदने। १३४४ मुर संवेष्टने। १३४५ क्षुर विलेखने १३४६ घुर भीमार्थशब्दयोः। १३४७ पुर अग्रगमने। १३४८ वृहू उद्यमने। दन्त्योष्ठ्यादिः। पवर्गीयादिरित्यन्ये। [ अवर्हीत्। इडभावे-होढः। 'षढो कः सि' अवर्क्षीत्। ]। १३४९ तृहू १३५० स्तृहू १३५१ तृंहू हिंसार्थाः। तृहति। ततर्ह। स्तृहति। तस्तर्ह। तर्हिता। तर्ढा। स्तर्हिता। स्तर्ढा। अतृंहीत्। अताङ्क्षीत्। [अतौढाम्]।अताण्ढाम्। अताङ्क्षुः। इषु इच्छायाम्। 'इषुगमी'ति छः। इच्छति। एषिता। एष्टा। एषिष्यति। इष्यात्। ऐषीत्। १३५३ मिष स्पर्धायाम्। मिषति। मेषिता। १३५४ किल श्वैत्यक्रीडनयोः। १३५५ तिल स्नेहने। १३५६ चिल वसने। १३५७ चल विलसने। १३५८ इल स्वप्नक्षेपणयोः। १३५९ विल संवरणे। दन्त्योष्ठ्यादिः। १३६० बिल भेदने। ओष्ठ्यादिः। १३६१ णिल गहने। १३६२ हिल भावकरणे। १३६३ शिल १३६४ षिल उञ्छे। १३६५ मिल श्लेषणे। १३६६ लिख अक्षरविन्यासे। लिलेख।

१३६७ कुट कौटिल्ये।'गाङ्कुटादिभ्य' इति ङित्वम्।चुकुटिथ।चुकोट। चुकुट।कुटिता।१३६८पुट संश्लेषणे। १३६९ कुच सङ्कोचने। १३७० गुज शब्दे। १३७१ गुड रक्षायाम्। १३७२ डिप क्षेपे। १३७३ छुर छेदने। 'न भकुर्च्छुरा'मिति न दीर्घः। छुर्यात्। १३७४ स्फुट विकसने। स्फुटति। पुस्फोट। १३७५ मुट आक्षेप[प्र]मर्दनयोः। १३७६ त्रुट छेदने। 'वा भ्राशे'ति श्यन्वा। त्रुट्यति। त्रुटति।तुत्रोट। त्रुटिता। १३७७ तुट कलहकर्मणि। तुटति। तुतोट। तुटिता। १३७८ चुट १३७९ छुट छेदने। १३८० जुड बन्धने। १३८१ कड मदे। १३८२ लुट संश्लेषणे। १३८३ कृड घनत्वे। घनत्वं-सान्द्रता। चकर्ड। कृडिता। १३८४ कुड

---

त.]या'मितीण्निषेधार्थम्।यद्यप्यस्य वेदित्वान्निष्ठायामिण्निषेधः सिध्यति,तथापि 'यस्य विभाषे'त्यस्याऽनित्यतां ज्ञापयितुमीदित्करणम्। तेन 'धावितमिभराजधिये'त्यादि सिद्धमित्याहुः। **कुर शब्दे। करोतेरेवेति**। सुप्रसिद्धत्वात्। 'कुर्या'दित्युक्ते हि लोकानां कृञ एवोपस्थितिर्भवति न त्वस्येति भावः। **मुर संवेष्टने**। इगुपधलक्षणः कः। मुरो दैत्यः। मुरारिर्विष्णुः। **क्षुर विलेखने। विलेखनं-छेदनम्**। 'केशान् क्षुरति'। 'इगुपधे'ति कः। क्षुरः शस्त्रम्। **तिल स्नेहने**। तिलति। 'इगुपधे'ति कप्रत्यये तिलः। 'तिल गतौ' तेलतीति शपि [गतौम्]। **लिख अक्षरविन्यासे**। 'लिखितुं' 'लिखिष्यती'ति प्रयोगः प्रामादिकः। यत्तु कैश्चित्-कुटस्यादिः कुटादिः, कुट आदिर्येषां ते कुटादयः, कुटादिश्च कुटादयश्च कुटादय इत्येकशेषं स्वीकृत्य 'लिखितु'मित्यादि समर्थितम्। तदसत्। 'लेखिता' 'लेखिष्यती'त्यादौ गुणनिषेधापत्तेः। न चेष्टापत्तिः, वृत्तिकारहरदत्तादिग्रन्थविरोधात्। 'गाङ्लिखादिभ्यः' इत्येव सूत्रितव्ये 'कुटादिभ्य' इति पठनस्य स्वारस्यभङ्गापत्तेश्च। किं च 'शकुनिष्वालेखने' इति सौत्रप्रयोगोऽपि विरुध्यत इति प्रागेवोक्तमित्यास्तां तावत्। 'लिखापयती'ति प्रयोगस्तु मनोरमायामित्थं समर्थितः-,आपनम् आपः=प्राप्तिः,लिखस्यापो लिखापः,तं करोतीति।**स्फुट विकसने**। स्फुटत्यर्थोऽस्मादिति स्फोटः। स च पदस्फोटवाक्यस्फोटादिभेदेनानेकविधः। **कड मदे**। कुटादिकार्याऽभावेऽपि डान्तानुरोधे-

---

बा.]विस्रंसयेदित्यर्थः, उपसर्गवशात्। 'यजमानो मेखलां विचृतते' इत्यापस्तम्बसूत्रे तु तङ् आर्षः। षुरधातुः षोपदेशः। **कुर शब्दे। करोतेरेवेति**। व्याख्यानमेवाऽत्र शरणम्। **वृहूधातुः** ऋदुपधः। ऊदित्वाद्वेट्कः। **पवर्गादिरिति**। पवर्गतृतीयादिरित्यर्थः। **तृहू स्तृहू तृंहू इति**। त्रयोऽपि ऋकारवन्तः। तृतीयोऽनुस्वारवान्। ऊदित्वाद्वेट्। **तर्ढेति**। तृहेस्तासि ढत्वधत्वष्टुत्वढलोपाः। एवं स्तर्ढा। तृण्ढा। अतर्हीत् अतार्क्षीत्, अस्तर्हीत् अस्तार्क्षीदिति सिद्धवत्कृत्याह-**अतृंहीत्-अताङ्क्षीदिति**। तृंहेरिडभावपक्षे हलन्तलक्षणवृद्धौ रपरत्वम्। हस्य ढः, ढस्य कः, षत्वम्। अनुस्वारस्य परसवर्णो ङकार इति भावः। **अताढामिति**। तृहेस्तसस्तामि सिच इडभावपक्षे लोपे

---

शे.]'च्लिः क्वाऽपि न श्रूयते'इति भाष्यविरोधः।**वृण च**।यत्तु 'रुधादिभ्यः'इति सूत्रे भाष्ये-'पृणती'त्यादौ 'प्वादीना'मिति ह्रस्वत्वाय श्नमः शित्त्वम्। न वा धात्वन्यत्वात्। पृणिमृणी तौदादिकौ धात्वन्तर'मित्युक्ता 'यत्तर्हि न धात्वन्तरं वृणस इति', तत्तु तद्योग्यं धात्वन्तरं नेत्यभिप्रायकम्, अस्य परस्मैपदित्वात्। **परे तु** व्यत्ययेन श्नम्वत्तेनैवात्मनेपदसम्भवात्तद्भाष्यप्रामाण्येनाऽस्याऽप्रामाणिकत्वमेवेत्याहुः। **करोतेरेवेति**। व्याख्यानादिति भावः। **लिख**। 'लिखितु'मित्यादि प्रामादिकमेव। **कड मदे**। अस्य कुटादित्वसामर्थ्यादनिग्लक्षणवृद्धेरपि निषेध इति कश्चित्। 'अशोकवनिका'-

बाल्ये। १३८५ पुड उत्सर्गे। १३८६ घुट प्रतीघाते। १३८७ तुड तोडने। तोडनं भेदः। १३८८ थुड १३८९ स्फुड संवरणे। थुडति। तुथोड। पुस्फोड। खुड छुड इत्येके। १३९० स्फुर १३९१ स्फुल संचलने। स्फुर स्फुरणे। स्फुल संचलन इत्येके। स्फुरतिस्फुलत्योर्निर्निविभ्यः।८।३।७६। षत्वं वा स्यात्। निःष्फुरति। निःस्फुरति। 'स्फरे'त्यकारोपधं केचित्पठन्ति। पस्फार। [अस्फारीत्। अस्फरीत्]। १३९२ स्फुड १३९३ चुड १३९४ ब्रुडं संवरणे। १३९५ क्रुड १३९६ भृड निमज्जन इत्येके। १३९७ गुरी उद्यमने। अनुदात्तेत्। गुरते। जुगुरे। गुरिता। १३९८ णू स्तवने। दीर्घान्तः। 'परिणूतगुणोदयः'। इतश्चत्वारः परस्मैपदिनः। नुवति। अनुवीत्। १३९९ धू विधूनने। धुवति। १४०० गु पुरीषोत्सर्गे। जुगुविथ। जुगुथ। गुता। गुष्यति। [ गूयात्। अकृत्सार्वेति दीर्घः ]। अगुषीत्। 'ह्रस्वादङ्गात्'। अगुताम्। अगुषुः। १४०१ ध्रु गतिस्थैर्ययोः। ध्रुवेति पाठान्तरम्। आद्यस्य ध्रुवतीत्यादि गुवतिवत्। द्वितीयस्तु सेट्। दुध्रुविथ। ध्रुविता। ध्रुविष्यति। ध्रूयात्। अध्रुवीत्। अध्रुविष्टाम्। १४०२ कुङ् शब्दे। दीर्घान्त इति कैयटादयः। कुवते। कुविता। अकुविष्ट। 'ह्रस्वान्त' इति न्यासकारः। कुता। अकुत। (ग.) वृत्। कुटादयो वृत्ताः।

पृङ् व्यायामे। प्रायेण 'व्याङ्'पूर्वः। रिङ्। इयङ्। व्याप्रियते। व्यापप्रे। व्यापप्राते। व्यापप्रिरे। व्यापरिष्यते। [व्यापृषीष्ट। उश्चेति कित्त्वम्]। व्यापृत। व्यापृषाताम्। १४०४ मृङ् प्राणत्यागे। म्रियतेर्लुङ्लिङोश्च।१।३।६१। लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र। ङित्त्वं स्वरार्थम्। म्रियते। ममार। ममर्थ। मम्रिव। मर्तासि। मरिष्यति। मृषीष्ट। अमृत। [ह्रस्वादङ्गादिति सलोपः॥ अमरिष्यत्]।

अथ परस्मैपदिनः सप्त। १४०५ रि १४०६ पि गतौ। अन्तरङ्गत्वादियङ्। रियति। [रिरायै। रियतुः]। पियति। रेता। पेता। १४०७ धि धारणे। १४०८ क्षि निवासगत्योः। १४०९ षू प्रेरणे। सुवति। सविता। १४१० कॄ विक्षेपे। किरति। किरतः। चकार। चकरतुः। करिता। करीता। कीर्यात्। अकारीत्। किरतौ लवने

---

त.]नाऽयं कुटादौ पठितः। भ्वादौ पठितस्य पुनरत्र पाठः शतरि नुम्विकल्पार्थः। पूर्वपाठस्तु उच्छंतीत्यादाविव कडंतीत्यादौ आद्युदात्तार्थः। स्फुरतिस्फुलत्योः। 'सिवादीना'मित्यतो वेत्यनुवर्तनादाह—षत्वं वा स्यादिति। परिणूतेति। 'श्र्युकः किती'तीण्निषेधः। म्रियतेर्लुङ्लिङोश्च। चात् 'शित' इति अनुकृष्यते। तदाह—शितश्च प्रकृतिभूतादिति। तङिति। आत्मनेपदमित्यर्थः। तेन 'म्रियमाण' इति सिद्धम्। स्वरार्थमिति। 'मा हि मृते'त्यत्र 'तास्यनुदात्तेन्ङिद्दुपदेशाल्लसार्वधातुकमनुदात्त'मित्यनेन ङितः परस्य लादेशसार्वधातुकस्यानुदात्तत्वे कृते धातुरुदात्तः। ङित्त्वाऽभावे तु प्रत्ययस्योदात्तत्वे धातुरनुदात्तः स्यात्। न च सिज्लोपस्याऽसिद्धत्वान्ङितः परत्वं लसार्वधातुकस्य दुरुपपादमिति तस्य कथमनुदात्तता स्यादिति शङ्क्यम्, ङित्त्वसामर्थ्यात्सिज्लोपस्याऽसिद्धत्वं नेति सुवचत्वात्। 'अमृते'त्यत्राडागमस्यैवोदात्तत्वान्मृङो ङित्त्वस्य न किंचित्प्रयोजनमिति भ्रमनिवारणाय 'मा हि मृते'ति माङः प्रयोगः। 'तिङ्ङतिङः' इति तिङन्तनिघातेऽपि ङित्त्वं व्यर्थमेव स्यादिति 'हि'शब्दप्रयोगः। हिप्रयोगे तु 'हि चे'त्यनेन तिङन्तनिघातनिषेधादिष्टस्वरः सिध्यतीति बोध्यम्। रि पि गतौ। परत्वाल्लघूपधगुणः स्यादित्याशङ्कायामाह—अन्तरङ्गत्वादिति। किरतौ लवने।

---

बा.]हलन्तलक्षणवृद्धौ ढत्वधत्वष्टुत्वढलोपा इति भावः। एवं[स्तृहेः—]अस्तार्ढाम्।[तृंहेः] अताण्ढाम्। स्फुर स्फुरणे। स्फुरतिस्फुलत्योः। 'मूर्धन्य' इत्यधिकृतम्। 'सिवादीनां वे'त्यतो वेत्यनुवर्तते। तदाह—षत्वं वा स्यादिति। णू स्तवने इति। णोपदेशः। परिणूतेति। 'श्र्युकः किती'ति नेट्। कुङ् शब्दे। दीर्घान्त इति। ततश्चायं सेट्। पृङ् व्यायामे इति। ह्रस्वान्तोऽयमनिट्। 'ऋद्धनोः स्ये'इति इटं मत्वाऽऽह—व्यापरिष्यते इति। मृङ्धातुरनिट्। म्रियतेः। अनुदात्तङितः' इत्यत आत्मनेपदमित्यनुवर्तते। चकारेण 'शदेः शितः' इत्यतः शित इत्यनुकृष्यते। प्रकृतिभूतादित्यध्याहार्यम्। तदाह—लुङ्लिङोरिति। तङ् स्यादिति। आत्मनेपदं स्यादित्यर्थः, 'म्रियमाण' इत्यत्र आनस्यापि इष्टत्वात्। ननु ङित्त्वादेव सिद्धे किमर्थमिदमित्याशङ्क्य नियमार्थमित्याह—नान्यत्रेति। तर्हि ङित्त्वं व्यर्थमित्यत आह—ङित्त्वं स्वरार्थमिति। 'तास्यनुदात्तेन्ङिद्दुपदेशाल्लसार्वधातुकमनुदात्त'मित्येतदर्थमित्यर्थः। म्रियते इति। शे कृते रिङियङाविति भावः। ऋदन्तत्वाद्भारद्वाजमतेऽपि नेडित्याह—ममर्थेति। मम्रिवेति। क्रादिनियमादिट्। मर्ता। 'ऋद्धनोः स्ये' इति इटं मत्वाह—मरिष्यतीति। रि पि गताविति। द्वाविमावनिटौ। ननु शे कृते तिपमाश्रित्य इकारस्य परत्वाल्लघूपधगुणः स्यादित्यत आह—अन्तरङ्गत्वादियङिति। कॄ विक्षेपे इति। दीर्घान्तोऽयं, सेट्। किरतीति। 'ऋत इद्धातो'रितीत्त्वं। रपरत्वम्। चकरतुरिति। कित्त्वेऽपि 'ऋच्छत्यॄता'मिति गुण इति भावः। 'वृतो वे'ति मत्वाह—करिता करीतेति। किरतौ लवने। उपादिति। 'उपात्प्रतियत्ने' इत्यतस्तदनुवृत्तेरिति भावः।

---

शे.]न्यायेऽनात्र पाठ इति परे। तङिति। आनस्याप्युपलक्षणम्। अन्तरङ्गत्वादिति। 'नाऽजानन्तर्ये' इति तु न, सम-

।६।१।१४०। उपात्किरतेः सुडागमः स्याच्छेदेऽर्थे । उपस्किरति । * अडभ्यासव्यवायेऽपि । सुट्कात्पूर्व इति वक्तव्यम् । उपास्किरत् । उपचस्कार । **हिंसायां प्रतेश्च** ।६।१।१४१। उपात्प्रतेश्च किरतेः सुट् स्याद्धिंसायाम् । उपस्किरति । प्रतिस्किरति । **१४११ गृ निगरणे । अचि विभाषा** ।८।२।२१। गिरते रेफस्य लत्वं वा स्यादजादौ । गिरति । गिलति । जगार । जगाल । जगरिथ । जगलिथ । गरिता । गरीता । गलिता । गलीता । गीर्यात् । **१४१२ दृङ् आदरे।** आद्रियते। आद्रियेते। आदद्रे। आदद्रिषे। आदर्ता। आदरिष्यते। आदृषीष्ट। आदृत । आदृषाताम् । **१४१३ धृङ् अवस्थाने** । ध्रियते । अथ परस्मैपदिनः षोडश । **१४१४ प्रच्छ ज्ञीप्सायाम्** । 'ग्रहिज्या'।पृच्छति । पप्रच्छ। पप्रच्छतुः। पप्रच्छिथ। पप्रष्ठ। प्रष्टा। प्रक्ष्यति। अप्राक्षीत्। (ग.)वृत् । किरादयो वृत्ताः। **१४१५ सृज विसर्गे** । 'विभाषा सृजिदृशोः' । ससर्जिथ । सस्रष्ठ । स्रष्टा। स्रक्ष्यति। 'सृजिदृशोर्झल्यमकिती'-त्यमागमः । सृजेत् । सृज्यात् । अस्राक्षीत् । **१४१६ टुमस्जो शुद्धौ** । मज्जति । ममज्ज । 'मस्जिनशोर्झलि'-ति नुम् । * मस्जेरन्त्यात्पूर्वो नुम्वाच्यः । संयोगादिलोपः । ममङ्क्थ । ममज्जिथ । मङ्क्ता । मङ्क्ष्यति ।

---

त.]'उपात्प्रतियत्ने'ति सूत्रादुपादिति वर्तते । लवने किम् ?। उपकिरति । **हिंसायां प्रतेश्च** । चादुपात् । 'उरोविदारं प्रतिचस्करे नखै'रिति माघः। कर्मणि लिट् । 'ऋच्छत्यृता'मिति गुणः । **दृङ् आदरे** । 'तथाद्रियन्ते न बुधाः सुधामपी'-ति श्रीहर्षः। **प्रच्छ ज्ञीप्सायाम्** । ज्ञातुमिच्छा **ज्ञीप्सा** । अत्र ज्ञपिर्ज्ञाने । 'आप्ज्ञप्यृधामीत्' । 'अत्र लोपः' इत्यभ्यासलोपः । ण्वुलि प्रच्छकः । पृच्छाशब्दात् 'तत्करोती'ति णिजन्ताण्ण्वुलि तु-पृच्छकः । पृच्छाशब्दस्तु भिदादेराकृतिगणत्वादङि संप्रसारणे बोध्यः । **किरादयो वृत्ता इति** । एते च 'भूषाकर्मकिरादिसना'मिति वक्ष्यमाणयक्चिणादिनिषेधवार्तिके उपयोक्ष्यन्ते । 'किरश्च पञ्चभ्यः' इत्यत्र 'पञ्चभ्य' इत्येतदुत्तरसूत्रेऽनुवृत्त्यर्थमिति बोध्यम् । **ससर्जिथेति** ।

---

बा.] **सुडागम इति** । 'सुट् कात्पूर्व' इत्यतस्तदनुवृत्तेरिति भावः । **अडभ्यासव्यवायेऽपीति** वार्तिकम् । **'सुट् कात्पूर्वः'**इत्यनुवृत्तिलभ्यम्। **हिंसायां प्रतेश्च**।चकारादुपादिति समुच्चीयते। तदाह-**उपादिति। गृ निगरणे इति** । **निगरणं**-भक्षणम् । सेट् । **अचि विभाषा** । 'ग्रो यङी'त्यतो ग्र इत्यनुवर्तते । 'कृपो रो लः' इत्यतो रो ल इति । तदाह-**गिरतेरिति।अजादाविति।**'धातोः कार्यमुच्यमानं तत्प्रत्यये भवती'ति परिभाषालब्धस्य प्रत्ययस्य अचा विशेषणात्तदादिविधिः । तेन गिरावित्यादौ नेति 'मृजेर्वृद्धि'रिति सूत्रभाष्ये स्पष्टम् । **दृङ् आदरे इति।** ह्रस्वान्तोऽयम् । अनिट् । **आद्रियते इति** । रिङ् । इयङ् । 'ऋद्धनोः स्ये' इति मत्वाह-**आदरिष्यते इति** । **आदृषीष्टेति** । 'उश्चे'ति किरत्वान्न गुणः । **आदृतेति** । 'ह्रस्वादङ्गा'दिति सलोपः । **प्रच्छ ज्ञीप्सायामिति** । ज्ञातुमिच्छा-**ज्ञीप्सा**। अनिडयम् । **पृच्छतीति** । शस्य ङित्वात् 'ग्रहिज्ये'ति रेफस्य संप्रसारणमृकारः, पूर्वरूपं चेति भावः । **पप्रच्छतुरिति** । संयोगात्परत्वेन कित्त्वाऽभावान्न संप्रसारणमिति भावः । भारद्वाजनियमात्थलि वेडिति मत्वाह-**पप्रच्छिथ पप्रष्ठेति** । इडभावपक्षे व्रश्चादिना छस्य षः, थस्य ष्टुत्वेन ठ इति भावः । पप्रच्छिव । **प्रष्टेति** । छस्य व्रश्चेति षः, तकारस्य ष्टुत्वेन टः । नच षत्वस्याऽसिद्धत्वात्पूर्वं तुकि ततः छस्य षत्वे ष्टुत्वयोः प्रट्ष्टेति स्यादिति वाच्यं, व्रश्चेति सूत्रे सतुक्कस्य छस्य ग्रहणात्। **किरादयो वृत्ता इति** । नचैवं सति 'किरश्च पञ्चभ्यः' इत्यत्र पञ्चग्रहणं व्यर्थं, किरादीनां पञ्चत्वादिति वाच्यं, तस्य 'रुदादिभ्यः सार्वधातुके' इत्युत्तरार्थत्वात् । **सृज विसर्गे**। अनिट् । सृजति । ससर्ज। ससृजतुः । अजन्ताऽकारवत्त्वाऽभावेऽपि 'विभाषा सृजिदृशो'रिति थलि वेडिति मत्वाह-**ससर्जिथ सस्रष्ठेति**। इडभावे 'व्रश्चे'ति जस्य षः, थस्य ष्टुत्वेन ठः, पित्त्वेनाऽकित्वात् 'सृजिदृशो'रित्यमागम इति भावः । ससृजिव ।

**टु मस्जो। मज्जतीति**।सस्य श्चुत्वेन शः,तस्य जश्त्वेन ज इति भावः। **ममङ्क्थेति** । मस्जेर्द्वित्वे हलादिशेषे ममस्ज् थेति स्थिते 'स्को'रिति सकारलोपे ममज् थ इति स्थिते जस्य कुत्वेन गकारे, 'मस्जिनशो'रिति नुमि, तस्यानुस्वारे, तस्य परसवर्णो ङकारः, गस्य चर्त्वेन क इति बोध्यम्। यद्यपि अकारात्परत्र नुमि सत्यपि इदं सिध्यति, तथापि 'अन्त्यात्पूर्वो नु'मित्यस्य 'मग्न'इत्यादौ नलोपः फलम् । अन्यथा उपधात्वाऽभावान्नस्य लोपो न स्यादिति भावः । एवं-**मङ्क्तेति** । मङ्क्ष्यतीत्यत्र तु सस्य षत्वं विशेषः। **'रुजो भङ्गे'** इत्यारभ्य **'विच्छ गतौ'** इत्यतः प्रागनिटः।'अनुदात्तस्य

---

शे.]कालप्रवृत्तिकत्वात् , तस्या असत्त्वाच्च । **अडभ्यासेत्यादि**। अत्र यद्वक्तव्यं तत्तनादौ वक्ष्यते। **गिरतेरिति**। व्याख्यानात् 'ग्रो यङी'त्यत्राऽस्यैव ग्रहणमिति भावः । **अजादाविति** । 'धातोः कार्यमुच्यमान'मिति परिभाषासन्निधापितस्य प्रत्ययस्याऽचीति विशेषणमिति भावः । अत एव 'गिरौ' इत्यादौ न । 'मृजेर्वृद्धि'रित्यादौ भाष्ये स्पष्टमेतत् ।

**आद्रियते इति** । रिङ् इयङ् । **प्रष्टेति**।'व्रश्चे'इति षः। न च षत्वस्याऽसिद्धत्वात्पूर्वं तुकि छस्य षत्वे 'प्रष्ट्टा'इति स्यादिति वाच्यम्, अत्रापि सतुक्कनिर्देशात् । **मज्जतीति** । सस्य श्चुत्वजश्त्वे । **अन्त्यात्पूर्व इति** । एतत्फलन्तु

अमाङ्क्षीत् । अमाङ्क्ताम्। अमाङ्क्षुः ।१४१७ रुजो भङ्गे। रोक्ता । रोक्ष्यति । अरौक्षीत् । अरौक्ताम् १४१८ भुजो कौटिल्ये । रुजिवत् । १४१९ छुप स्पर्शे । छोप्ता । अच्छौप्सीत् । १४२० रुश १४२१ रिश हिंसायाम् । तालव्यान्तौ । रोष्टा । रोक्ष्यति । रेष्टा । रेक्ष्यति । १४२२ लिश गतौ । अलिक्षत् । १४२३ स्पृश संस्पर्शने । स्प्रष्टा । स्पर्ष्टा । स्प्रक्ष्यति । स्पर्क्ष्यति । अस्प्राक्षीत् । अस्पार्क्षीत् । अस्पृक्षत् । १४२४ विच्छ गतौ। 'गुपूधूपे'-त्यायः । आर्द्धधातुके वा । विच्छायति । विच्छायांचकार । विविच्छ । १४२५ विश प्रवेशने । विशति । वेष्टा । १४२६ मृश आमर्शने । आमर्शनं स्पर्शः । अम्राक्षीत् । अमार्क्षीत् । अमृक्षत् । १४२७ णुद प्रेरणे । कर्त्रभिप्रायेऽपि क्रियाफले परस्मैपदार्थः पुनः पाठः। १४२८ षद्लृ विसरणगत्यवसादनेषु। 'सीदती'त्यादि भौवादिकवत् । इह पाठो नुम्विकल्पार्थः । सीदती। सीदन्ती । ज्वलादौ पाठस्तु णार्थः। सादः। स्वरार्थश्च। शबनुदात्तः। शस्तूदात्तः । १४२९ शद्लृ शातने । स्वरार्थं एव पुनः पाठः । शता तु नास्ति, 'शदेः शित' इत्यात्मनेपदोक्तेः । अथ षट् स्वरितेतः । १४३० मिल सङ्गमे । 'मिल संश्लेषणे' इति पठितस्य पुनः पाठः कर्त्रभिप्राये तङर्थः । मिलति । मिलते । मिमेल । मिमिले । १४३१ मुच्लृ मोक्षणे । शे मुचादीनाम् ।७।१।५९। नुम् स्यात् । मुञ्चति । मुञ्चते । मोक्ता । मुच्यात् । मुक्षीष्ट । अमुचत् । अमुक्त । अमुक्षाताम् । १४३२ लुप्लृ छेदने । लुम्पति । लुम्पते । अलुपत् । अलुप्त । १४३३ विद्लृ लाभे । विन्दति । विन्दते । विवेद । विविदे । व्याघ्रभूत्यादिमते सेड्कोऽयम् । वेदिता । भाष्यादिमतेऽनिङ्कः । वेत्ता । परिवेत्ता । परिवेंजने । ज्येष्ठं परित्यज्य दारानग्नींश्च लब्धवानित्यर्थः । तृन्तृचौ । १४३४ लिप उपदेहे । उपदेहो वृद्धिः । लिम्पति । लिम्पते । लेप्ता । 'लिपिसिची'त्यङ् । तङि तु वा । अलिपत् । अलिपत । अलिप्त । १४३५ षिच क्षरणे । सिञ्चति । सिञ्चते । असिचत् । असिचत । असिक्त । अभिषिञ्चति । अभ्यषिञ्चत् । अभिषिषेच । अथ त्रयः परस्मैपदिनः ।

---

त.]'विभाषा घ्रजिदृशो'रिति थलि वेट्। विच्छे गतौ। तुदादिपाठसामर्थ्यादायप्रत्ययान्तादपि शो, न तु शप्। तेन विच्छायती विच्छायन्तीति नुम्विकल्पः । केचित्तु तुदादिपाठसामर्थ्यादायप्रत्ययस्य पाक्षिकत्वं स्वीकृत्य विच्छती विच्छन्तीति नुम्विकल्पं, विच्छति विच्छतःविच्छन्तीत्यादिरूपाणि चोदाजहुः,तेषां तु मते तुदादिपाठस्य केवले चरितार्थत्वादायप्रत्ययान्ताच्छवेव। तेन विच्छायन्ती [इ]ति नित्यमेव 'शप्श्यनो'रिति नुम् । पठितस्येति। अस्मिन्नेव गणे परस्मैपदिषु पठितस्येत्यर्थः। तङर्थ इति । पूर्वपाठस्तु संश्लेषणे कर्त्रभिप्रायेऽपि परस्मैपदार्थः । षिच क्षरणे । 'षिचि'रिति केचिदिरितं

---

बा.] चर्दुपधस्ये'त्यम्विकल्पं मत्वाह–स्प्रष्टा स्पर्ष्टेति । णुद प्रेरणे । णोपदेशोऽयम् । 'विश प्रवेशने' इत्यारभ्य 'शद्लृ शातने' इत्यन्ता अनिटः । तत्र अदुपधस्य थलि वेट् । अन्यस्य तु नित्यमेवेट् । मृशेः 'अनुदात्तस्य चे'त्यम्विकल्पः । तदाह–अम्राक्षीत्-अमार्क्षीदिति । 'स्पृशमृशे'ति सिज्वेति भावः । सिजभावे 'शल इगुपधा'दिति क्सं मत्वाह–अमृक्षदिति । णुद्धातुर्णोपदेशः । ननु तनादिगण एवाऽस्मिन्स्वरितेत्सु पठितस्य किमर्थमिह पाठ इत्यत आह–कर्त्रभिप्रायेऽपीति । षद्लृधातोर्भ्वादौ पठितादेव सीदतीत्यादिसिद्धेरिह पाठो व्यर्थ इत्यत आह–इह पाठ इति । सीदन्तीति । शविकरणाच्छत्रन्तान्ङीपि 'आच्छीनद्यो'रिति नुम्विकल्पार्थ इह पाठ इत्यर्थः। भ्वादावेव पाठे तु 'शप्श्यनोर्नित्य'मिति नित्यो नुम् स्यादिति भावः । तर्हि भ्वाद्यन्तर्गणे ज्वलादावस्य पाठो व्यर्थ इत्यत आह–ज्वलादाविति । 'ज्वलितिकसन्तेभ्यः' इति कर्तरि णप्रत्ययार्थ इति भावः । तदुदाहृत्य दर्शयति–साद इति । उभयत्र पाठस्य फलान्तरमाह–स्वरार्थश्चेति । तदेव विशदयति–शबनुदात्त इति । 'अनुदात्तौ सुप्पितौ' इति पित्स्वरेणेति भावः । शस्तूदात्त इति । 'प्रत्ययः' 'आद्युदात्तश्चे'त्यनेनेति भावः । ननु 'शद्लृ शातने' इत्यस्य भ्वादौ पाठादेव सिद्धे इह पाठो व्यर्थ इत्यत आह–स्वरार्थ एवेति । प्रागुक्तपित्त्वाऽपित्त्वकृतस्वरभेदार्थ एवेत्यर्थः । ननु शत्रन्तान्ङीपि उक्तरीत्या नुम्विकल्पार्थोऽपि कुतो न स्यादित्यत आह–शता तु नास्तीति। शदेर्लटः शानजेव, नतु शत्रादेश इत्यर्थः कुत इत्यत आह–शदेः शित इतीति । मिल सङ्गमे । पठितस्येति । अस्मिन्नेव तुदादिगणे परस्मैपदिषु पठितस्येत्यर्थः । तङर्थ इति । पूर्वत्र पाठस्तु कर्त्रभिप्रायेऽपि परस्मैपदार्थ इत्यर्थः । मुच्लृ मोक्षणे । शे मुचादीनाम् । नुम्स्यादिति । शेषपूरणमिदम् । 'इदितो नु'मित्यतस्तदनुवृत्तेरिति भावः । मुक्षीष्टेति । 'लिङ्सिचौ' इति कित्त्वान्न गुण इति भावः। अमुचदिति । लृदित्त्वादङिति भावः। लुङि तङि आह–अमुक्तेति । 'झलो झली'ति सिज्लोप इति भावः । लिप उपदेहे । तङि तु वेति । 'आत्मनेपदेष्वन्यतरस्या'मित्यनेने'ति शेषः । षिच

---

शे.]'मग्नः' इत्यादौ नलोपः। ततः संयोगादिलोपः । ममङ्क्थेति। जस्य कुत्वे नस्यानुस्वारे परसवर्णे गस्य चर्त्वं बोध्यम्। मङ्क्ष्यतीति । स्यसस्ये षत्वं विशेषः । तङर्थ इति । पूर्वपाठस्तु कर्त्रभिप्रायेऽपि परस्मैपदार्थः । विद्लृ । 'विदेः

**१४३६ कृती छेदने** । कृन्तति । चकर्त । कर्तिता । कर्तिष्यति । कर्त्स्यति । अकर्तीत् । **१४३७ खिद परिघाते** । खिन्दति । चिखेद । खेत्ता । अयं दैन्ये दिवादौ रुधादौ च । **१४३८ पिश अवयवे** । पिंशति । पेशिता । अयं दीपनायामपि । त्वष्टा रूपाणि पिंशतु । (ग.) **वृत्** । मुचादयो वृत्ताः, तुदादयश्च । **इति तुदादयः** ।

## अथ रुधादयः ।

**१४३९ रुधिर् आवरणे** । **नव स्वरितेत इरितश्च** । **रुधादिभ्यः श्नम्** ।३।१।७८। शपोऽपवादः । मित्त्वादन्त्यादचः परः । नित्यत्वाद्गुणं बाधते । रुणद्धि । 'श्नसोरल्लोपः' । णत्वस्याऽसिद्धत्वादनुस्वारः परसवर्णः। तस्याऽसिद्धत्वाण्णत्वं न । 'न पदान्ते'ति सूत्रेणाऽनुस्वारपरसवर्णयोरल्लोपो न स्थानिवत् । रुन्धः । रुन्धन्ति । रुरोध । रोद्धा । रोत्स्यति । रोत्स्यते । रुणद्धु । रुन्द्धात् । रुन्धि । रुणधानि । रुणधै । अरुणत् । अरुन्धाम् । अरुणत् । अरुणः । अरुणधम् । अरुधत् । अरौत्सीत् । अरुद्ध । **१४४० भिदिर् विदारणे** । भिनत्ति । भिन्ते । भेत्ता । भेत्स्यति । भेत्स्यते । अभिनत् । अभिनः । अभिन्ताम् । अभिनदम् । अभिन्त । अभिदत् । अभैत्सीत् । अभित्त । **१४४१ छिदिर् द्वैधीकरणे** । अच्छिदत् । अच्छैत्सीत् । अच्छित्त । **१४४२ रिचिर् विरेचने** । रिणक्ति । रिङ्क्ते । रिरेच । रिरिचे । रेक्ता । रिणक्तु । रिञ्चन्तु । अरिणक् । अरिचत् । अरैक्षीत् । अरिक्त । **१४४३ विचिर् पृथग्भावे** । विनक्ति । विङ्क्ते । **१४४४ क्षुदिर् संपेषणे** । क्षुणत्ति । क्षुन्ते । क्षोत्ता । अक्षुणत् । अक्षुणः । अक्षुदत् । अक्षौत्सीत् । अक्षुत्त । **१४४५ युजिर् योगे** । योक्ता ।

---

त.] पठन्ति, तत्तु फलाऽभावादुपेक्ष्यम् । इह 'लिपिसिचिह्वश्चे'ति च्लेरङ् विधीयते, स चाऽप्राप्तविधिः । इरित्त्वे तु विकल्पेन प्राप्तौ नित्यार्थो विधिरिति फलाऽभावः । **पिंशत्विति** । दीपयत्वित्यर्थः । **इति तुदादयः** ।

**रुधादिभ्यः श्नम्** । प्रत्ययत्वेऽपि मित्त्वादन्त्यादचः परः । प्रत्ययसंज्ञाफलं तु शस्येत्संज्ञा । शस्योच्चारणं तु 'श्नसोरल्लोपः', 'श्नान्नलोपः,' इत्यत्र विशेषणार्थं न तु सार्वधातुकसंज्ञार्थं, फलाऽभावात् । न चाऽपित्सार्वधातुकस्य ङित्त्वे गुणनिषेधः फलमिति शङ्क्यम्, इगन्तस्याङ्गत्वाऽभावात् । **अरुण इति** । सिपि 'दश्चे'ति रुर्वा । **एवमभिन इत्यत्रापि** ।

---

बा.] क्षरणे । **अभिषिञ्चतीति** । 'उपसर्गात्सुनोती'ति षः । **अभ्यषिञ्चदिति** । 'प्राक्सिताद्व्यवायेऽपी'ति षत्वम् । **अभिषिषेचेति** । 'स्थादिष्वभ्यासेन'ति षः । **कृती छेदने इति** । ईदित्त्वं 'श्वीदित' इत्येतदर्थम् । 'सेऽसिची'ति वेडिति मत्वाऽऽह-**कर्तिष्यति कर्त्स्यतीति** । **पिशि अवयवे इति** । अवयवक्रियायामित्यर्थः । **रूपाणि पिंशत्विति** । प्रकाशयत्वित्यर्थः । **इति तुदादयः** ।

अथ श्नम्विकरणा धातवो निरूप्यन्ते । **रुधादिभ्यः श्नम्** । कर्त्रर्थे सार्वधातुके परे रुधादिभ्यः श्नम्प्रत्ययः स्यात्स्वार्थे इत्यर्थः । तदाह-**शपोऽपवाद इति** । श्नमि शमावितौ । मित्त्वस्य फलमाह-**मित्त्वादन्त्यादचः पर इति** । प्रत्ययत्वाच्छकारस्येत्संज्ञा । शकारनिर्देशस्तु 'श्नसोरल्लोपः' 'श्नान्नलोपः' इत्यत्र विशेषणाऽर्थः, नतु सार्वधातुकसंज्ञार्थः, फलाऽभावात् । न च 'सार्वधातुकमपि'दिति ङित्त्वे गुणनिषेधः फलमिति शङ्क्यं, श्नमः पूर्वस्य इगन्तस्य अङ्गत्वाऽभावादेव गुणाऽप्रसक्तेः । ननु श्नमः प्राक् परत्वाल्लघूपधगुणे कृते पश्चात् श्नमि रोणद्धीति स्यादित्यत आह-**नित्यत्वाद्गुणं बाधते इति** । कृते अकृते च गुणे प्रवृत्तेः श्नम् नित्यः । तस्मिन् सति लघूपधत्वाऽभावाच्च गुण इति भावः । **रुणद्धीति** । रुनध् ति इति स्थिते 'झषस्तथो'रिति धत्वे णत्वमिति भावः । रुनध् तस् इति स्थिते प्रक्रियां दर्शयति-**श्नसोरल्लोप इति** । क्ङिति सार्वधातुके तद्विधेरिति भावः । रुन्ध् तस् इति स्थिते नस्य णत्वमाशङ्क्याह-**णत्वस्यासिद्धत्वादिति** । ननु कृते परसवर्णे तस्य नस्य णत्वमस्त्वित्यत आह-**तस्यासिद्धत्वादिति** । परसवर्णसंपन्ननस्येत्यर्थः । नन्विह अल्लोपस्य 'अचः परस्मि'न्निति स्थानिवत्त्वात् कथमनुस्वारपरसवर्णावित्यत आह-**न पदान्तेति** । **रुन्द्ध इति** । 'झषस्तथो'रिति धः । **रुन्धन्तीति** । रुणत्सि रुन्द्धः रुन्द्ध । रुणध्मि रुन्ध्वः रुन्ध्मः । **रुन्द्धे इति** । रुन्धाते रुन्धते । रुन्त्से रुन्धाथे रुन्द्ध्वे । रुन्धे रुन्ध्वहे रुन्ध्महे । रुरोध । रुरोधिथ । **अरुणदिति** । लङि हल्ङ्यादिना तिपो लोपः । धस्य चर्त्वविकल्पः । सिपि तु हल्ङ्यादिना लुप्ते 'दश्चे'ति रुत्वविकल्पं मत्वाह-**अरुणत् अरुण इति** । रुन्ध्यात् । रुन्धीत । रुत्सीष्ट । इरित्त्वादङ्विकल्पं मत्वाह-**अरुधत् अरौत्सीदिति** । अङभावे सिचि हलन्तलक्षणा वृद्धिः । लुङस्तङ्याह-**अरुद्धेति** । 'झलो झली'ति सिज्लोपः । **भिनत्तीति** । भिन्तः भिन्दन्ति । भिनत्सि भिन्त्थः भिन्त्थ । भिनद्मि भिन्द्वः भिन्द्मः । **भिन्त्ते इति** । भिन्दाते भिन्दते । भिन्त्से भिन्दाथे । भिन्द्ध्वे । भिन्दे भिन्द्वहे । बिभेद । बिभेदिथ । बिभिदिव । बिभिदे । बिभिदिषे । **अभिनत् अभिन इति** । 'दश्चे'ति रुर्वेति भावः । **अभिन्तेति** । लङि तङि रूपम् । लुङः परस्मैपदे आह-**अभिदत् अभैत्सीदिति** । इरित्त्वादङ्वेति भावः । लुङि तङ्याह-

---

शे.] भोगे'ति सूत्रस्थकैयटे 'विदिर्लाभे' इति पठ्यते । **इति तुदादयः** ।

१४४६ उच्छृदिर् दीप्तिदेवनयोः । छृणत्ति । छृन्त्ते । चच्छर्द । 'सेसिचो'ति वेट् । चच्छृदिषे । चच्छृत्से । छर्दिता । छर्दिष्यति । छर्त्स्यति । अच्छृदत् । अच्छर्दीत् । अच्छर्दिष्ट । १४४७ उतृदिर् हिंसाऽनादरयोः । तृणत्तीत्यादि छृणत्तिवत् । १४४८ कृती वेष्टने । परस्मैपदी । कृणत्ति । आर्द्धधातुके तौदादिकवत् । १४४९ ञि इन्धी दीप्तौ । अथ आत्मनेपदिनः । श्नान्नलोपः ।६।४।२३। श्नमः परस्य नस्य लोपः स्यात् । 'श्नसोरल्लोपः' । इन्द्धे । इन्त्से । इन्धिता । इनधै । ऐन्धाः । १४५० खिद दैन्ये । खिन्त्ते । [ खिन्दाते खिन्दते ] । खेत्ता । १४५१ विद विचारणे । विन्त्ते । वेत्ता । अथ परस्मैपदिनः । १४५२ शिष्लृ विशेषणे । शिनष्टि । शिंष्टः । शिंषन्ति । शिशेषिथ । शेष्टा । शेक्ष्यति । हेर्धिः । जश्त्वम् । ष्टुत्वम् । 'झरो झरी'ति वा ढलोपः । अनुस्वारपरसवर्णौ । शिण्ढि । शिण्ड्ढि । शिनषाणि । अशिनट् । लृदित्त्वादङ्—अशिषत् । १४५३ पिष्लृ संचूर्णने । पिनष्टि । शिषिवत् । १४५४ भञ्जो आमर्दने । भनक्ति । बभञ्जिथ । बभङ्क्थ । भङ्क्ता । [ भङ्ग्धि । भञ्ज्यात् । भज्यात् । नलोपः ] । १४५५ भुज पालनाऽभ्यवहारयोः । भुनक्ति । भोक्ता ।

---

त.] उच्छृदिर् । उकारः क्त्वायामिड्विकल्पार्थः । छृत्वा । छर्दित्वा । इदक्षे 'न क्त्वा से'डिति कित्त्वनिषेधाद्गुणः । श्नान्नलोपः । अस्य मुख्योदाहरणम्–अनक्ति । भनक्ति । श्नादित्युत्सृष्टमकारानुबन्धस्य श्नमो ग्रहणमित्याह–श्नमः परस्येति । एवं च 'यजयाचे'ति विश्नशब्दस्याऽऽमि नुटि विश्नानामित्यत्र लक्षणप्रतिपदोक्त–प्रत्ययग्रहणपरिभाषयोःप्रवृत्त्या नलोपशङ्कैव नास्तीत्याहुः । इन्धे इन्त्से । श्नमो नकारस्यानुस्वारपरसवर्णौ । 'अनिदिता'मिति नलोपस्तु न भवति, अल्लोपस्य

---

बा.] अभित्तेति । 'झलो झली'ति सिज्लोपः । अभित्साताम् इत्यादि । उ छृदिरिति । उकार इत् । 'उदितो वे'ति क्त्वायामिड्विकल्पार्थः । ञि इन्धी दीप्तौ । ईदित्त्वं 'श्वीदितः' इत्येतदर्थम् । श्नमि कृते इन न् ध् ते इति स्थिते–श्नान्नलोपः । श्नम्प्रत्ययैकदेशस्य श्न इत्यस्य श्नादिति पञ्चमी । नेति लुप्तषष्ठीकम् । तदाह–श्नमः परस्य नस्येति । नकारस्येत्यर्थः । अकार उच्चारणार्थः । तथाच इन ध् ते इति स्थिते आह–श्नसोरल्लोप इति । तथाच इन्ध् ते इति स्थिते 'झषस्तथो'रिति तकारस्य धत्वे पूर्वधस्य जश्त्वे परिनिष्ठितमाह–इन्द्धे इति । यद्यपि 'अनिदिता'मित्येवात्र नलोपः सिध्यति, तथापि अनक्तीत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तमिति बोध्यम् । इन्धते । इन्द्धे । इन्द्धाम् । इन्त्स्व । इन्द्धम् । इनधै इति । श्नमि उत्तमस्य इट एत्वे आटि वृद्धौ इन न् ध् ऐ इति स्थिते श्नान्नलोपे आटः पित्त्वेन ङित्त्वाऽभावात् 'श्नसोरल्लोपः' इत्यभावे रूपमिति भावः । अत्र नलोपार्थमपि श्नान्न लोप इत्यावश्यकम्, आटः पित्त्वेन ङित्त्वाऽभावात् 'अनिदिता'मित्यस्याऽप्रवृत्तेः । इनधावहै । लङ्याह–ऐन्द्धेति । ऐन्द्धा इति । 'झषस्तथो'रिति थस्य धः । इन्धीत । लुङि–ऐन्धिष्ट । शिष्लृ । अनिट् । शिशेषिथेति । अजन्ताऽकारवत्त्वाऽभावात्क्रादिनियमान्नित्यमिट् । शिनष् हीति स्थिते अल्लोपे शिन्ष् हि इति स्थिते आह–हेर्धिरिति । शिन् ष् धीति स्थिते आह–जश्त्वमिति । 'झलां जश् झशी'ति षस्य ड इति भावः । ष्टुत्वमिति । धस्य ढ इति भावः । यद्यपि जश्त्वस्याऽसिद्धत्वात्ततः प्रागेव ष्टुत्वस्य उपन्यासो युक्तस्तथापि जश्त्वं ष्टुत्वमिति प्रक्रियाप्रदर्शनमात्रपरं, क्रमस्तु न विवक्षितः । झर इति । जश्त्वसंपन्नस्य डस्य लोपविकल्प इत्यर्थः । अनुस्वारपरसवर्णाविति । नकारस्य 'नश्चे'त्यनुस्वारे सति तस्य परसवर्णो णकार इत्यर्थः । 'न पदान्ते'ति निषेधाच्चाऽल्लोपः स्थानिवत् । ढस्य लोपपक्षे उदाहरति–शिण्ढीति । ढस्य लोपाऽभावे उदाहरति–शिण्ड्ढीति । वस्तुतस्तु सानुस्वार एव पाठ उचितः, 'दीर्घादाचार्याणा'मित्युत्तरम् 'अनुस्वारस्य यथि परसवर्णः' 'वा पदान्तस्य' 'तोर्लि' 'उदः स्थास्तम्भोः पूर्वस्य' 'झयो होऽन्यतरस्याम्' 'शश्छोऽटी'ति षट्सूत्रपाठोत्तरं 'झलां जश् झशि' 'अभ्यासे चर्च' 'खरि च' 'वाऽवसाने' 'अणोऽप्रगृह्यस्यानुनासिकः' इति पञ्चसूत्रीपाठ इति भाष्यसंमताऽष्टाध्यायीपाठे परसवर्णदृष्ट्या 'झलां जश् झशी'त्यस्य 'झरो झरी'त्यस्य चाऽसिद्धत्वेन यय्परत्वाऽभावे परसवर्णोऽप्राप्तेरिति शब्देन्दुशेखरे स्थितम् । शिंष्टात् । शिंष्टम् शिंष्ट । शिनषाणीति । आटः पित्त्वेन ङित्त्वाऽभावात् 'श्नसो'रित्यल्लोपो नेति भावः । अशिनडिति । लङ्स्तिपो हल्ङ्यादिलोपे षस्य जश्त्वमिति भावः । अशिंष्टाम् । अशिंषन् । अशिनट् । अशिंष्टम् । अशिंष्ट । अशिनषम् अशिंष्व अशिंष्म । भञ्जो । भनक्तीति । श्नमि भ न न् ज् तीति स्थिते 'श्नान्न लोपः' इति नलोप इति भावः । भङ्क्तः भञ्जन्तीत्याद्यूह्यम् । भारद्वाजनियमात्थलि वेडिति मत्वाह–बभञ्जिथ बभङ्क्थेति । भङ्क्तेति । अनिडिति भावः । भुज पालनेति । 'भुजोऽनवने' इति तङ् वक्ष्यते । भुङ्क्ते

---

शे.] जश्त्वं ष्टुत्वमित्यादि । अत्र प्रक्रियाप्रदर्शनमात्रे तात्पर्यं, न तु क्रमे । शिड्ढीति । सानुस्वार एव पाठः । अनुस्वारस्यादिष्टादचः पूर्वत्वेन स्थानिवत्त्वाऽप्रवृत्तावपि 'दीर्घादाचार्याणा'मित्युत्तरम् 'अनुस्वारस्य यथि' 'वा पदान्तस्य' 'तोर्लि' 'उदः स्था' 'झयो हो' 'शश्छोटी'ति षट्सूत्रीपाठोत्तरं 'झलाञ्जश्झशि' 'अभ्यासे चर्च' 'खरि च' 'वाऽवसाने' 'अणोऽप्रगृह्यस्ये'ति

भोक्ष्यति । अभुनक् ।१४५६ तृह १४५७ हिसि हिंसायाम् । तृणह इम् ।७।३।९२। तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति । तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् । हिनस्ति । जिहिंस । हिंसिता । [ धि चेति सलोपः । हिंधि । हिंस्तात् । अहिंसीत् । अहिंष्याम् । नेटीति वृद्धिर्न ] । १४५८ उन्दी क्लेदने । उनत्ति । उन्त्तः । उन्दन्ति । उन्दाञ्चकार । औनत् । औन्ताम् । औन्दन् । औनः । औनत् । औनदम् । १४५९ अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आनञ्जिथ । आनङ्क्थ । अङ्क्ता । अञ्जिता । अङ्ग्धि । अनजानि । आनक् । अञ्जेः सिचि ।७।२।७१। अञ्जेः सिचो नित्यमिट्

त.]'असिद्धवदत्रे'त्यसिद्धत्वात्स्थानिवत्त्वाद्वा । भञ्जो । ओदित्करणं निष्ठानत्वार्थम् । भग्नः । भुज पालनादौ । 'भुजोऽनवने' इत्यात्मनेपदं वक्ष्यते । भुङ्क्ते । भुञ्जाते । भुञ्जते ।तृणह इम् ।'तृह्' इति वक्तव्ये सश्नमो ग्रहणं विशेषविहितेन इमा श्नमो बाधो माभूदित्येवमर्थम् । न च तौदादिकस्य तृह इत्यस्य व्यावृत्त्यर्थमेवास्त्विति शङ्क्यं, ततः परस्य हलादेः पितः सार्वधातुकस्य विकरणेन व्यवधानात् । 'नाभ्यस्तस्याचि पिती'त्यतः पितीति, 'उतो वृद्धि'रित्यतो हलीति च वर्तते । तदाह—हलादौ पितीति । 'प्रत्ययलोपे प्रत्ययलक्षण'मिति सूत्रस्थभाष्यकारीयनिष्कर्षे तु हलीति नानुवर्तते, किं तु पितीत्यनुवर्तत एव । तेन 'तृण्ढ' इत्यत्र नातिप्रसङ्गः । न च हलीत्यननुवृत्तौ तृणहानीत्यत्रातिप्रसङ्ग इति वाच्यम्, अचि नेत्यनुवर्तनात् । उन्दी । क्लेदनमार्द्रीभावः । अञ्जू । व्यक्तिर्विवेचनम् । म्रक्षणं–स्निग्धता । अञ्जेः सिचि । नित्यमिट्

बा.]भुञ्जाते इत्यादि । तृह हिसि । आद्य ऋदुपधः । सेट् । श्नमि कृते णत्वे तृणह् ति इति स्थिते—तृणह इम् । 'तृणह' इति षष्ठी । कृतश्नमस्तृहधातोर्निर्देशः । 'नाभ्यस्तस्ये'त्यतः पितीति, 'उतो वृद्धि'रित्यतो हलीति चानुवर्तते । फलितमाह—तृहः श्नमि कृते इति । मित्त्वादन्त्यादचः परः । 'श्नमि कृते' इत्यनुक्तौ तु येन नाप्राप्तिन्यायेन इमागमेन श्नम्बाध्येत, 'सत्यपि संभवे बाधनं भवती'ति न्यायात् । अन्यथा 'ब्राह्मणेभ्यो दधि दीयतां, तक्रं कौण्डिन्याये'त्यत्र तक्रेण दधि न बाध्येत, श्नमा शप्च न बाध्येत, देशभेदेन उभयसंभवादिति भावः । तृणेढीति । तृणह् तीति स्थिते इमागमे आद्गुणे तृणेह् ति स्थिते ढत्वधत्वष्टुत्वढलोपा इति भावः । तृण्ढ इति । तसि श्नमि कृते, तृणह् तस् इति स्थिते, तसोऽपित्त्वादिमागमाऽभावे 'श्नसो'रित्यल्लोपे ढत्वधत्वष्टुत्वढलोपा इति भावः । तृंहन्ति । तृणेक्षि तृण्ढः तृण्ढ । तृणेह्मि तृंह्वः तृंह्मः । ततर्हेति । ततृहतुः । ततर्हिथ । ततृहिव । तर्हितेति । सेडिति भावः । तर्हिष्यति । तृणेढु–तृण्ढात् तृण्ढाम् तृंहन्तु । तृण्ढि–तृण्ढि–तृण्ढात् तृण्ढम् तृण्ढ । तृणहानि तृणहाव तृणहाम । अतृणेडिति । लङि तिपि श्नमि इम् हल्ङ्यादिलोपः ढत्वजश्त्वे इति भावः । अतृण्ढाम् अतृंहन् । अतृणेट् अतृण्ढम् अतृण्ढ । अतृणहम् अतृंह्व अतृंह्म । तृंह्यात् तृह्यात् । अतर्हीत् । अतर्हिष्यत् । हिसिधातोरुदाहरति—हिनस्तीति । इह श्नमि इदित्वान्नुमि च कृते 'श्नान्न लोपः' इति नुमो लोप इति भावः । हिंस्तः हिंसन्ति । हिनस्सि हिंस्थः हिंस्थ । हिनस्मि हिंस्वः हिंस्मः । जिहिंसेति । कितिः इदित्त्वान्नलोपो न । जिहिंसतुः । जिहिंसिथ । हिंसितेति । सेडिति भावः । हिंसिष्यति । हिनस्तु हिंस्ताम् । हौ श्नमि नुमि कृते 'श्नान्नलोपः' इति नुमो लोपे हेरपित्त्वेन ङित्वात् 'श्नसो'रित्यल्लोपे 'धि चे'ति सलोपे, हिन्धीति रूपम् । हिंस्तात् । हिनसानि । अहिनत् अहिंस्ताम् अहिंसन् । सिपि रुत्वे—अहिनः अहिनत्, अहिंस्तम् । अहिनसम् अहिंस्व । हिंस्यात् हिंस्याताम् । आशीर्लिङि श्नमभावान्नुमेव । इदित्त्वान्नलोपो न । हिंस्यादित्येव । हिंस्यास्ताम् । अहिंसीत् । अहिंसिष्यत् । उन्दी क्लेदने । उनत्तीति । उनत्सि उन्त्थः । उनद्मि उन्द्वः । उन्दामिति । इजादेश्चेत्याम् । उन्दिता । उन्दिष्यति । उनत्तु—उन्त्तात् । उन्द्धि । उनदानि । लङ्याह—औनदिति । औन्ताम् औन्दन् । औनः औनत् । औनदम् । औन्द्व । उन्द्यात् । उद्यात् । अञ्जूधातुर्नोपधः कृतपरसवर्णनिर्देशः । ऊदित्वाद्वेट् । अनक्तीति । श्नमि कृते परसवर्णस्याऽसिद्धत्वात् 'श्नान्न लोपः' इति नकारलोपे जस्य कुत्वेन गः, तस्य चर्त्वेन क इति भावः । अङ्क्त इति । नलोपे अल्लोपे जस्य कुत्वेन गः । गस्य चर्त्वेन कः । श्नमो नस्य परसवर्णो ङ इति भावः । अञ्जन्तीति । नलोपाऽल्लोपौ । श्नमो नस्य परसवर्णो ञ इति भावः । अनक्षि अङ्क्थः । अनज्मि अञ्ज्वः । अङ्ग्धीति । हौ श्नमि धिभावे नलोपाऽल्लोपौ । जस्य कुत्वेन गकारः । नस्य परसवर्णो ङकार इति भावः । अनजानीति । श्नान्नलोपः । आटः पित्त्वादल्लोपो न । लङ्याह—आनगिति । आङ्क्ताम् । आञ्जन् । अञ्ज्यात् । अज्यात् । अञ्जेः सिचि । 'इडत्त्यर्ती'त्यत इडित्यनुवर्तते । ऊदित्वादेव सिद्धे नित्यार्थमिदम् । तदाह—अञ्जेरित्यादिना । तञ्चू

शो.]पञ्चसूत्रीपाठ इति भाष्यसंमताऽष्टाध्यायीपाठपक्षे परसवर्णदृष्ट्या 'झलाञ्जशोऽन्ते' त्यस्य 'झरो झरि' त्यस्य चाऽसिद्धत्वेन यत्परत्वाऽभावात् परसवर्णाऽप्राप्तेरित्यन्यत्र विस्तरः ।तृणह इम् ।श्नमि कृते इम् यथा स्यादिति श्नमो निर्देशः ।अन्यथा 'येननाप्राप्ति'-न्यायेन इम् श्नमो बाधकः स्यात्तदाह—श्नमि कृत इति । अञ्जेः सिचि । ऊदिल्लक्षणविकल्पापवादः । इति रुधादयः ।

स्यात् । आञ्जीत् । १४६० तञ्चू सङ्कोचने । तनक्ति । तङ्क्ता । तञ्चिता । [ अतञ्चीत् । अताङ्क्षीत् । वदव्रजेति वृद्धिः ] । १४६१ ओविजी भयचलनयोः । विनक्ति । विक्तः । 'विज इ'डिति ङित्वम् । विविजिथ । विजिता । अविनक् । अविजीत् । १४६२ वृजी वर्जने । वृणक्ति । वर्जिता । [ अवर्जीत् । अवर्जिष्टाम् ] । १४६३ पृची संपर्के । पृणक्ति । पपर्च । इति रुधादयः ।

## अथ तनादयः ।

अथ सप्त स्वरितेतः । १४६४ तनु विस्तारे । 'तनादिकृञ्भ्य उः' । तनोति । तन्वः । तनुवः । तनुते। ततान। तेने। तनु। अतनीत्। अतानीत्। तनादिभ्यस्तथासोः ।२।४।७९। तनादेः सिचो वा लुक् स्यात्तथासोः परतः। थासा साहचर्यादेकवचनं तशब्दो गृह्यते। तेनेह न-यूयमतनिष्ट । 'अनुदात्तोपदेशे'त्यनुनासिकलोपः । तङि-अतत । अतनिष्ट । अतथाः । अतनिष्ठाः । १४६५ षणु दाने। सनोति । सनुते । 'ये विभाषा' । सायात् । सन्यात् । 'जनसने'त्यात्वम् । असात । असनिष्ट । असाथाः । असनिष्ठाः। १४६६ क्षणु हिंसायाम् । क्षणोति । क्षणुते। [चक्षाण । चक्षणे]। 'ह्यन्ते'ति न वृद्धिः । अक्षणीत् । अक्षत । अक्षणिष्ट । अक्षथाः । अक्षणिष्ठाः । १४६७ क्षिणु च । उप्रत्ययनिमित्तो लघूपधगुणः 'संज्ञापूर्वको विधिरनित्यः' इति न भवती-

---

त.] स्यादिति । विभाषाग्रहणं नानुवर्तत इति भावः। सिचि किम् ?। अङ्क्ता । पृची । ईदित्त्वान्निष्ठायां नेट् । पृक्तः । 'अपृक्त एका'लित्यत्र नम्पूर्वः । इति रुधादयः ।

अतनिष्ट अतानिष्टेति । 'तस्थस्थमिपा'मिति तादेशः । 'अतो हलादे'रिति वा वृद्धिः । अततेति । 'तनादिभ्यस्तथासो'रिति सिज्लुक्यनुनासिकलोपः । अतनिष्टेति । लुगभावपक्षे इट् । षणु दाने । नान्तोऽयम् । णकारस्तु लाक्षणिकः । तेन यङ्लुकि 'संसन्ति संसन्त' इत्यादावनुस्वारपरसवर्णौ । क्षणु हिंसायाम् । क्षिणु च ।

---

बा.]सङ्कोचने । नोपधः कृतपरसवर्णनिर्देशः । अञ्जूवद्रूपाणि यथायोग्यमूह्यानि । ओ विजीति । ओकार इत् । अनिट्सु इरितो ग्रहणादयं सेट् । इति रुधादयः ।

अथ उविकरणधातवो निरूप्यन्ते। तनुधातुरुदित्,'उदितो वे'ति प्रयोजनम्। तनादिकृञ्भ्य उः। कर्त्रर्थे सार्वधातुके तनादिभ्यः कृञश्च उप्रत्ययः स्यात्स्वार्थे इत्यर्थः । शपोऽपवादः । तनोतीति । उप्रत्ययस्य तिपमाश्रित्य गुणः । तसादौ तु ङित्वान्न गुणः । तनुतः । झोऽन्तादेशे कृते 'इको यणची'ति यण् । तन्वन्ति । तनोषि तनुथः तनुथ । तनोमि। 'लोपश्चास्यान्यतरस्या'मित्युकारलोपविकल्पमभिप्रेत्याह-तन्वः तनुव इति । तङ्याह-तनुते इति । तन्वाते तन्वते । तनुषे तन्वाथे तनुध्वे । तन्वे तनुवहे-तन्वहे तनुमहे-तन्महे। ततानेति । तेनतुः । तेनिथ । तेन । तेनिव । तङ्याह-तेने इति । तेनाते तेनिरे । तेनिषे तेनाथे तेनिध्वे । तेने तेनिवहे तेनिमहे । तनिता । तनिष्यति । तनिष्यते । तनोतु-तनुतात् तनुताम् तन्वतु । 'उतश्च प्रत्यया'दिति हेर्लुकं मत्वाह-तन्विति । तनुतात् तनुतम् तनुत । तनवानि । तनवाव तनवाम । अतनोत् अतनुताम् अतन्वन् । अतनोः । अतनवम्, अतन्व-अतनुव । तनुयात् । तन्वीत । तनिषीष्ट । 'अतो हलादे'रिति वृद्धिविकल्पं मत्वाऽऽह-अतनीत् अतानीदिति । अतनिष्टम् अतनिषुः । अतनीः अतनिष्टम् अतनिष्ट । अतनिषम् अतनिष्व अतनिष्म । वृद्धिपक्षे अतानिष्टामित्यादि । अतनिष्यत् । लुङस्तङि प्रथमैकवचने, मध्यमपुरुषैकवचने च विशेषमाह-तनादिभ्यस्तथासोः । 'गातिस्थे'त्यतः सिच इति, 'ण्यक्षत्रियार्षे'त्यतो लुगिति, 'विभाषा घ्राधे'डित्यतो विभाषेति चानुवर्तते । तदाह-तनादेरित्यादिना । एकवचनतशब्दो गृह्यत इति । ननु लुङादेशपरस्मैपदमध्यमपुरुषबहुवचनतादेशोऽपीत्यर्थः । यूयमिति । लुङि मध्यमपुरुषबहुवचने सिचि वृद्धिविकल्पे सति अतनिष्ट अतानिष्टेत्यत्र सिचो नायं लुग्विकल्प इत्यर्थः । तदेवं प्रत्युदाहरणमुक्त्वा सूत्रस्योदाहरणं वक्ष्यन्प्रक्रियां दर्शयति-अनुदात्तोपदेशेत्यनुनासिकलोपस्तङीति । तङि प्रथमैकवचने, तशब्दे मध्यमपुरुषैकवचने थासि च सिचो लुकि 'अनुदात्तोपदेशे'ति नकारस्य लोप इत्यर्थः। तदाह-अतत अतनिष्टेति । अतथाः अतनिष्ठा इति च । अतनिषाथामित्यादि सुगमम् । षणु दाने । षोपदेशोऽयम् । तनुवद्रूपाणि । असातेति । सिचो लुक्पक्षे रूपम् । असनिष्टेति । इट् । झलादिपरकत्वाऽभावादात्वं नेति भावः । क्षणुधातुरदुपधः । 'वज्रेऽध्वर्युः क्षण्वीते'ति तैत्तिरीये । क्षिणु चेति । इदुपधः । अयमपि हिंसायामित्यर्थः । 'वज्रेऽध्वर्युः क्षिण्वीते'ति शाखान्तरं शाबरभाष्ये उदाहृतम् । ननु क्षिणोतीत्यत्र उप्रत्ययमाश्रित्य इकारस्य लघूपधगुणः कस्मान्नेत्यत आह-उप्रत्ययनिमित्त इति ।

---

शे.] तन्व इति । 'लोपश्चास्या'मिति वा लोपः ।

त्यात्रेयादयः । भवत्येवेत्यन्ये । क्षिणोति । क्षेणोति । क्षेणितासि । क्षेणितासे । अक्षेणीत् । अक्षित । अक्षेणिष्ट । **१४६८ ऋणु गतौ** । ऋणोति । अर्णोति । अर्णुतः । अर्ण्वन्ति । आनर्ण । आनृणे । अर्णितासि । [ ऋणु । अर्णुहि । गुणे कृते संयोगपूर्वकत्वान्न लुक् ] । आर्णोत् । आर्त । आर्णिष्ट । आर्थाः । आर्णिष्ठाः । **१४६९ तृणु अदने** । तृणोति । तर्णोति । तृणुते । तर्णुते । **१४७० घृणु दीप्तौ** । जघर्ण । जघृणे । **अथ द्वावनुदात्तेतौ** । **१४७१ वनु याचने** । वनुते । ववने । चान्द्रमते परस्मैपदी । वनोति । ववान । **१४७२ मनु अवबोधने** । मनुते । मेने । **१४७३ डुकृञ् करणे** । करोति । 'अत उत्सार्वधातुके' । कुरुतः । यण् । 'न भकुर्छुरा'मिति न दीर्घः । कुर्वन्ति । **नित्यं करोतेः** ।६।४।१०८। करोतेः प्रत्ययोकारस्य नित्यं लोपः स्यान्म्वोः परयोः । कुर्वः । कुर्मः । चकर्थ । चकृव । चकृषे । कर्ता । करिष्यति । [ कुरु । उतश्चेति हेर्लुक् ] । **ये च** ।६।४।१०९। कृञ उलोपः स्याद्यादौ प्रत्यये परे । कुर्यात् । आशिषि—क्रियात् । कृषीष्ट । अकार्षीत् । 'तनादिभ्य' इति लुकोऽभावे 'ह्रस्वादङ्गा'दिति सिचो लोपः । अकृत । अकृथाः । **संपरिभ्यां करोतौ भूषणे** ।६।१।१३७। **समवाये च** ।६।१।१३८। संपरिपूर्वस्य करोतेः सुट् स्याद्भूषणे सङ्घाते चार्थे । संस्करोति । अलङ्करोतीत्यर्थः । संस्कुर्वन्ति । सङ्घीभवन्तीत्यर्थः । संपूर्वस्य क्वचिदभूषणेऽपि सुट् , 'संस्कृतं भक्षाः' इति ज्ञापकात् । 'परिनिविभ्यः' इति षः । परिष्करोति । **'सिवादीनां वा'** । पर्यष्कार्षीत् । पर्यस्कार्षीत् । **उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च** ।६।१।१३९। उपात्कृञः सुट् स्यादेष्वर्थेषु । चात्प्रागुक्तयोरर्थयोः । **प्रतियत्नो**-गुणाधानम् । विकृतमेव वैकृतं-विकारः । वाक्यस्याध्याहार आकाङ्क्षितैकदेशपूरणम् । उपस्कृता कन्या । अलङ्कृतेत्यर्थः । उपस्कृता ब्राह्मणाः । समुदिता इत्यर्थः । एधो दकस्योपस्कुरुते । गुणाधानं करोतीत्यर्थः । उपस्कृतं भुङ्क्ते । विकृतमित्यर्थः । उपस्कृतं ब्रूते । वाक्याध्याहारेण ब्रूत इत्यर्थः । **सुट्कात्पूर्वः** ।६।१।१३५। **'अडभ्यास-**

---

त.]इमावपि लाक्षणिकणकारौ । तेन-चङ्क्षन्ति, चेक्षेति इत्यत्रानुस्वारपरसवर्णौ । **सिचो लोप इति** । न चाऽस्मिन्पक्षे प्रत्ययलक्षणप्रवृत्त्या अकृतेत्यत्र गुणः स्यादिति वाच्यम्, 'उश्चे'ति सिचः कित्त्वेन तन्निषेधात् । 'संपर्युपेभ्यः' इति वृत्तिस्थपाठं विहाय भाष्यवार्तिकानुसारेणाह-**संपरिभ्यामिति** ।

---

बा.]**ऋणु गतौ** । अत्रापि क्षिणुवन्मतभेदाल्लघूपधगुणतदभावौ । तदाह-**ऋणोति अर्णोतीति** । एवमग्रेऽपि । **अर्ण्वन्तीति** । 'इको यणची'ति यणिति भावः । **डु कृञ् करणे** । **करोतीति** । उप्रत्ययमाश्रित्य ऋकारस्य गुणः । रपरत्वम् । उकारस्य तु तिपमाश्रित्य गुणः । **कुरुत इति** । तसो ङित्त्वादुकारस्य न गुणः । कुरु अन्तीति स्थिते आह-**यणिति** । 'इको यणचीत्यनेने'ति शेषः । उकारस्य यणि कुर्व् अन्ति इति स्थिते 'हलि चे'ति दीर्घमाशङ्क्याह-**नभेति** । वसि मसि च 'लोपश्चास्यान्यतरस्या'मित्युकारलोपविकल्पे प्राप्ते-**नित्यं करोतेः**।'उतश्च प्रत्यया'दित्यनुवर्तते, 'लोपश्चास्यान्यतरस्या'मित्यतो लोपः, म्वोरिति च । तदाह-**करोतेरिति । चकर्थेति** । 'कृसृभृवृ'इति नेडिति भावः । अजन्तत्वेऽपि ऋदन्तत्वाद्भारद्वाजमतेऽपि नेट् । **करिष्यतीति** । करोतु-कुरुतात् । कुरु । करवाणि । कुरुताम् । कुर्वाताम् । करवै करवावहै करवामहै । अकरोत् अकुरुताम् । अकुरुत अकुर्वाताम् । विधिलिङि कुरु यात् इति स्थिते-**ये च** । 'लोपश्चास्यान्यतरस्या'मित्यतो लोप इति, अस्येति चानुवर्तते । अस्येत्यनेन पूर्वसूत्रे उत इत्युपात्त उत्परामृश्यते । 'नित्यं करोते'रित्यतः करोतेरित्यनुवर्तते । अङ्गाक्षिप्तः प्रत्ययो यकारेण विशेष्यते, तदादिविधिः । तदाह-**कृञ उलोप इति । आशिषि क्रियादिति** । 'रिङ् शयग्लिङ्क्षु' इति रिङिति भावः । **कृषीष्टेति** । 'उश्चे'ति कित्त्वान्न गुण इति भावः । **अकार्षीदिति** । सिचि वृद्धौ रपरत्वमिति भावः । ननु लुङस्तङि अकृ स् त इति स्थिते 'तनादिभ्यस्तथासो'रिति सिचो लुकि अकृतेतीष्टं सिद्ध्यति । सिचो लुगभावे तु सकारः श्रूयेतेत्यत - आह-**तनादिभ्य इत्यादि । संपरिभ्याम् । समवाये च । करोतेः सुट् स्यादिति** । 'सुट् कात्पूर्वः' इत्यतो, 'नित्यं करोते'रित्यतश्च तदनुवृत्तेरिति भावः । **प्रागुक्तयोरिति** । भूषणसमवाययोरित्यर्थः । ननु 'संपरिभ्या'मिति सुट् पदद्वयापेक्षत्वाद्बहिरङ्गः । 'लिटि धातो'रिति द्वित्वं तु प्रकृतिप्रत्ययमात्रापेक्षत्वादन्तरङ्गम् । ततश्च संचस्कारेत्यत्र परमपि सुटं बाधित्वा द्वित्वे कृतेऽभ्यासात्प्रागेव सुटि प्राप्ते-**सुट् कात्पूर्वः** । षष्ठस्याद्यपादे इदं सूत्रम् । 'संपरिभ्यां करोतौ भूषणे' 'समवाये च' 'उपात्प्रतियत्ने'त्यारभ्य 'अनुदात्तं पदमेकवर्ज'मित्यतः प्रागिदमधिकृतं वेदितव्यमित्यर्थः । एवंच कात्पूर्वं इत्युक्तेरभ्यासा-

---

शे.] **आत्रेयादय इति** । अत्राऽरुचिस्तु तदनित्यत्वे भाष्याऽनुक्तत्वम् । 'क्षिणु' इत्यादिप्रयोगास्तु 'बहुलमेतन्निदर्शन'मितिरीत्या क्षिधातुं स्वादावप्यङ्गीकृत्य निर्वाह्या इत्यन्ये । तत्र पठित एव भाषायामपीत्येके । **समवायः** संबन्धः, समूहश्च । **उपात्प्र** । यद्यप्यत्र सूत्रे चो वृत्तौ न पठ्यते तथापि 'संपर्युपेभ्य' इति वृत्त्युक्तपाठफलस्य भाष्यमते साधनाऽर्थं तदावश्यकतेत्याहुः । **केचित्तु** भूषणसंबन्धयोरुपात्परस्य सुटं नेच्छन्ति, चञ्च न पठन्ति । **सुट्कात्पूर्वः** ।

ऽभ्यवायेऽपी'त्युक्तम् । संचस्कार । 'कात्पूर्वं' इत्यादि भाष्ये प्रत्याख्यातम् । तथाहि-पूर्वं धातुरुपसर्गेण युज्यते । अन्तरङ्गत्वात्सुट् । ततो द्वित्वम् । एवंच-'ऋतश्च संयोगादेर्गुणः'। संचस्करतुः । 'कृसृभृवृ'ति सूत्रे, 'ऋतो भारद्वाजस्ये'ति सूत्रे च * कृञोऽसुट इति वक्तव्यम् । तेन ससुट्कात्परस्येट् । संचस्करिथ । संचस्करिव । 'गुणोर्ती'ति सूत्रे 'नित्यं छन्दसी'ति सूत्रान्नित्यमित्यनुवर्तते । नित्यं यः संयोगादिस्तस्येत्यर्थात्सुटि गुणो न ।

त.] इति तनादयः ।

बा.]त्प्राङ्ग सुडिति भावः।नन्वभ्यासेन व्यवधानात्कथमिह उत्तरखण्डस्य सुट्,संस्करोतीत्यादौ अव्यवहिते सुड्विधेश्चरितार्थत्वात् । किंच समस्करोदित्यत्राऽटा व्यवधानात्कथं सुट् । नह्यडागमः कृञ्भक्तः, अङ्गभक्तत्वात् । विकरणान्तस्यैवाङ्गत्वादित्यत आह-अडभ्यासव्यवायेऽपीत्युक्तमिति । 'वार्तिक'मिति शेषः । अटा अभ्यासेन च व्यवधानेऽपि संपर्योदिभ्यः परस्मात्कात्पूर्वः सुडित्यर्थः । इत्यादीति । सुडित्येवाधिकृतमस्तु, 'कात्पूर्वः' इति 'अडभ्यासव्यवायेऽपी'ति मास्त्वित्येवं भाष्ये प्रत्याख्यातमित्यर्थः । तदेवोपपादयितुं प्रतिजानीते-तथा हीति । पूर्वं धातुरुपसर्गेण युज्यते इति । 'पश्चात्साधनेने'ति शेषः । ततश्च पूर्वोपनिपतितधातूपसर्गसम्बन्धनिमित्तकं कार्यं पश्चादनुपतिष्यद्धातुप्रत्ययसंबन्धनिमित्तकात्कार्यादन्तरङ्गम्, प्रथमोपस्थितत्वात् । तदुक्तं भाष्ये-'पूर्वं धातुरुपसर्गेणेति कृत्वा धातूपसर्गयोः कार्यमन्तरङ्ग'मिति । तदाह-अन्तरङ्गत्वात्सुट् । ततो द्वित्वमिति । तथा सुटि कृते 'स्कृ' इत्यस्य द्वित्वे उरदत्वे रपरत्वे 'शर्पूर्वाः खयः' इति रेफसकारयोर्निवृत्तौ अभ्यासचुत्वे संचस्कारेति रूपसिद्धेः 'कात्पूर्वः' इति, 'अडभ्यासव्यवायेऽपी'ति च न कर्तव्यमिति भावः । एवं समस्करोदित्यत्रापि विकरणान्ताऽङ्गभक्ताऽडागमापेक्षयाऽन्तरङ्गत्वात्प्रथमं सुड्भविष्यतीति कृत्वा 'अड्व्यवायेऽपी'त्यंशो न कर्तव्य इत्यूह्यम् ।'पूर्वं धातुरुपसर्गेणे'त्याश्रयणे फलान्तरमप्याह-एवं चेति । उक्तरीत्या अन्तरङ्गत्वात्सुटि कृते संस्कृ इत्यस्माल्लिटोऽतुसि 'ऋतश्च संयोगादेर्गुणः' इति गुणे संचस्करतुरिति सिद्ध्यति । 'पूर्वं धातुः साधनेन युज्यते' इत्याश्रयणे तु चक्रतुरिति परिनिष्ठितस्य समित्युपसर्गयोगात्संयोगादित्वाऽभावाद्गुणस्याऽसिद्धिरिति भावः । ननु संचस्करिव, संचस्करिथ इत्यत्र च 'कृसृभृवृ' इति 'ऋतो भारद्वाजस्ये'ति च इण्निषेधः स्यादित्यत आह-कृसृभृवृसूत्रे इत्यादि । नन्वाशीर्लिङि संस्क्रियादित्यत्र 'गुणोऽर्तिसंयोगाद्यो'रिति गुणः कुतो नेत्यत आह-गुणोऽर्तीत्यादि । ननु तङि संस्कृषीष्ट इति लिङि, समस्कृत समस्कृत समस्कृषातामिति लुङि च 'ऋतश्च संयोगादे' रिति

शे.]अत्राद्यं सूत्रम्, अन्त्यं वार्तिकम्। अभ्यासस्यानर्थकत्वेनोत्तरखण्डस्यैवार्थवत्तया करोतित्वेन च,तस्य च समोऽभ्यासेन व्यवधानादड्विषये विकरणान्तभक्ततयाऽटस्तेन व्यवधानात्सुटोऽप्राप्तौ अन्त्यमारब्धम् । अडभ्यासव्यवायेऽपि सुड्भवति स च कात्पूर्व इत्यर्थः । भाष्यकृता तु अत्र कात्पूर्वग्रहणं कालावधारणार्थं, 'तदा सुड्भवति यदा कृतः कात्पूर्वो भवती'ति। तेनान्तरङ्गमपि द्वित्वादिकं बाधित्वा पूर्वं सुडिति'अडभ्यासव्यवायेऽपी'ति न कार्यमिति तत्प्रत्याख्यातम् । 'कात्पूर्व'इत्यपि प्रत्याख्यातमित्याह-पूर्वं धातुरिति । उपसर्गेणेत्यस्य-तदर्थेनेत्यर्थः । अत एव 'अनुभूयते'इति कर्मणि लकारः । एवञ्चान्तरङ्गार्थकोपसर्गनिमित्तकत्वाद्द्वित्वाद्यपेक्षया सुडन्तरङ्ग इत्याशयः । 'लावस्थायाम'ड्इति पक्षे तु 'संपरिभ्यां परत्वयोग्यस्य करोतेः सु'डित्यर्थात्सर्वतः पूर्वं सुडिति न दोषः । सुडित्यंशस्तु संपरिभ्यामित्यत्रैव पाठ्य इति तदाशयः ।

ऋतश्च संयोगादेरिति।नतु द्वित्वे समुदायस्यैवाङ्गत्वेन संयोगादित्वं दुरुपपादं, नित्यत्वेन गुणात्पूर्वं'शर्पूर्वाःखयः' इत्यस्य प्रवृत्तेः । न च-अभ्यासस्य नैरर्थक्येनोत्तरखण्डस्यैवाऽर्थवत्त्वेनाऽऽङ्गत्वमिति न दोषः।अभ्यासस्य नैरर्थक्यञ्च लोके केवलाभ्यासतोऽर्थाऽबोधात्।उत्तरखण्डस्य (तु) प्रत्ययाऽव्यवहितप्राग्वर्त्तिनः केवलस्याप्यन्यत्रार्थबोधकताया दृष्टत्वेनाऽर्थवत्त्वमेव । 'पेचतु'रित्यादौ तदभावेऽप्यर्थबोधेन तस्याऽर्थवत्त्वाच्च । अभ्यासप्रयोगस्तु 'रैपोषं पुष्यती'तिवत्साधुत्वार्थ एव । 'याति'रित्यादौ 'शिष्यमाणं लुप्यमानार्थाभिधायी'ति न्यायेन शिष्यमाणाभ्यासस्यैवोत्तरखण्डाऽभावादर्थबोधजनकत्वम्। इदं केवलस्यानर्थकत्वं समुदायस्याऽर्थवत्त्वमिति वदतोऽप्यावश्यकम्। अत एव 'दयतेर्दिगि'ति सूत्रे 'अस्तेर्द्वित्वे कृते परस्य भूभावे पूर्वस्य श्रवणं प्राप्नोती'त्याशङ्क्यार्द्धधातुके इत्यस्य विषयसप्तमीत्वेन परिहृतम् । समुदायेऽस्तित्वन्तु द्विःप्रयोगपक्षे दुरुपपादं, भिन्नानुपूर्वीकत्वात् । एवञ्च धातुत्वमप्युत्तरखण्ड एवेति वाच्यम् । 'द्विःप्रयोगो द्विर्वचन'मिति सिद्धान्तेनाद्ये प्रत्ययविधानावधित्वप्रत्यभिज्ञया तदादिग्रहणसत्त्वेन समुदाये एवाङ्गत्वस्य 'एकाचो द्वे' इति सूत्रे भाष्ये उक्तत्वात् । अङ्गसञ्ज्ञाया विकरणविशिष्टे समुदाये निरर्थकेऽप्यङ्गीकारेणाऽसमर्थसमासे निरर्थकस्याप्यङ्गत्वदर्शनेनाऽङ्गसञ्ज्ञायामर्थवत्परिभाषाया अप्रवृत्तेः । 'यस्मा'दित्यनेनोद्देश्यतावच्छेदकशब्दानुपूर्वीमात्रावच्छिन्नस्यैव ग्रहणात् । धातुत्वादिकं तूत्तरखण्डे एवेति बोध्यम्। न चाऽस्तूक्तरीत्या समुदायस्याऽङ्गत्वमुत्तरखण्डमात्रस्यापि तु तद्धर्वारम्, ईदृशे विषये मुख्यतदादित्वभेन व्यपदेशिवद्भावलब्धतदादेरप्रवृत्तेरिति चेन्न, प्रत्ययोत्पत्तिवेलायां संयोगादित्वस्य विवक्षणेनाऽदोषात् । अत एव 'सस्वरतु'रित्यादिसिद्धिः, सूत्रञ्च सार्थकम् । सुट् तु संपरिभ्यां परत्वयोग्यस्य सुड्विधानात्प्रत्ययोत्पत्तेः पूर्वमेवेति दिक् । नित्य-

संस्क्रियात् । 'ऋतश्च संयोगादे'रिति लिङ्सिचोर्नेट्, 'एकाच उपदेशे' इति सूत्रादुपदेश इत्यनुवर्त्य 'उपदेशे यः संयोगादि'रिति व्याख्यानात् । संस्कृषीष्ट । समस्कृत । समस्कृषाताम् । इति तनादयः ।

## अथ क्र्यादयः ।

१४७४ डुक्रीञ् द्रव्यविनिमये। **क्र्यादिभ्यः श्ना** ।३।१।८१। क्रीणाति । 'ई हल्यघोः'। क्रीणीतः । ईत्वात्पूर्वं झेरन्तादेशः । परत्वान्नित्यत्वादन्तरङ्गत्वाच्च। एवं झस्याऽद्भावः । ततः 'श्नाभ्यस्तयो'रित्याल्लोपः । क्रीणन्ति । क्रीणीते । क्रीणाते। क्रीणते। चिक्राय। चिक्रियतुः। चिक्रियिथ। चिक्रेथ । चिक्रियिव। चिक्रियिषे । क्रेता। क्रेष्यति। क्रीणीहि। क्रीयात् । क्रेषीष्ट। अक्रैषीत् । अक्रेष्ट। १४७५ प्रीञ् तर्पणे कान्तौ च । कान्तिः कामना । प्रीणाति । प्रीणीते । १४७६ श्रीञ् पाके । १४७७ मीञ् हिंसायाम् । 'हिनुमीना' । प्रमीणाति । प्रमीणीतः । 'मीनाति-मिनोती'त्येज्विषये आत्वम् । ममौ । मिम्यतुः । ममिथ । ममाथ । मिम्ये । माता । मास्यति । मीयात् । मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त । १४७८ षिञ् बन्धने । सिनाति । सिनीते । सिषाय । सिष्ये । सेता । १४७९ स्कुञ् आप्रवणे । **स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च** ।३।१।८२। चात् श्ना । स्कुनोति । [ स्कुनुतः । स्कुन्वति । 'हुश्नुवो'रिति यण् ]। स्कुनुते । स्कुनाति । स्कुनीते । चुस्काव । चुस्कुवे । स्कोता । अस्कौषीत् । अस्कोष्ट । स्तन्भ्वादयश्चत्वारः सौत्राः । सर्वे रोधनार्था इत्येके । माधवस्तु---प्रथमतृतीयौ स्तम्भार्थौ, द्वितीयो निष्कोषणार्थश्चतुर्थो धारणार्थ इत्याह । सर्वे परस्मैपदिनः । नलोपः । विष्टभ्नोति । विष्टभ्नाति । अवष्टभ्नोति । अवष्टभ्नाति । अवतष्टम्भ । 'जृस्तन्भ्वि'त्यङ्वा । व्यष्टभत् । व्यष्टम्भीत्। स्तुभ्नोति । स्तुभ्नाति । **वेःस्कभ्नातेर्नित्यम्** ।८।३।७७। वेः परस्य स्कभ्नातेः सस्य षः स्यात् । विस्कभ्नोति । विष्कभ्नाति । स्कुभ्नोति । स्कुभ्नाति । **हलः श्नः शानज्झौ** ।३।१।८३। हलः परस्य श्नः शानजादेशः स्याद्धौ परे । स्तभान। स्तुभान । स्कभान । स्कुभान । पक्षे स्तभ्नुहीत्यादि। १४८० युञ् बन्धने । युनाति । युनीते । योता १४८१ क्नूञ् शब्दे। क्नूनाति। क्नूनीते । क्नविता । १४८२ द्रूञ् हिंसायाम् । द्रूणाति।

---

त.]इट् कुतो नेत्यत आह-ऋतश्चेत्यादि । इति तनादयः ।

**एवं झस्याऽद्भाव इति** । 'आत्मनेपदेष्वनतः' इत्यनेन । **सौत्रा इति** । नकारोपधा इत्यपि ज्ञेयम्। **विष्टभ्नोतीति** । 'अनिदिता'मिति नलोपः। 'स्तन्भे'रिति षत्वम् । **वेः स्कभ्नातेर्नित्यम्** । 'सिवादीनां वे'त्यतो वेति नानुवर्तते इति ध्वननार्थमिह नित्यग्रहणम् । **विस्कभ्नोतीति** । 'स्कभ्नाते'रित्यत्र श्नाविशिष्टं रूपं न विवक्षितं किं तु धातुमात्रम्, अन्यथा विष्कम्भिता विष्कम्भितमित्यादावपि षत्वं न स्यात् । न चेष्टापत्तिः, माधवादिग्रन्थविरोधादिति भावः । **हलः श्नः** । **स्तभानेति** । 'अतो हे'रित्यारम्भसामर्थ्यात्संनिपातपरिभाषाया अप्रवृत्तेर्हेर्लुक् । अतएव 'जही'-त्यत्र हिलोपवारणायेयं परिभाषा नोपन्यस्तेत्याहुः । यत्तु कैश्चिच्छानजादेशो धातुपाठपठितेभ्यः परस्य श्नो भवति न तु

---

बा.] अथ श्नाविकरणधातवो निरूप्यन्ते-। **डु क्रीञिति** । **क्र्यादिभ्यः श्ना** । कर्त्रर्थे सार्वधातुके परे क्र्यादिभ्यः श्नाप्रत्ययः स्यात्स्वार्थे इत्यर्थः । शपोऽपवादः । **क्रीणातीति** । श्नाप्रत्ययस्य अपित्सार्वधातुकत्वेन ङित्वादीकारस्य न गुण इति भावः । **ई हल्यघोरिति** । हलादौ क्ङिति सार्वधातुके ईत्वमिति भावः । क्री णा झीति स्थिते 'ई हल्यघो'रिति ईत्वमाशङ्क्य आह-**ईत्वात्पूर्वमिति** । **नित्यत्वादिति**। अकृते कृते च ईत्वे अन्तादेशस्य प्रवृत्तेरिति भावः ।**एवं झस्येति** । क्री णा झ इति स्थिते 'आत्मनेपदेष्वनतः' इत्यदादेशोऽपि ईत्वात्पूर्वमित्यर्थः । **तत इति** । अन्तादेशाददादेशाच्च पश्चादित्यर्थः । अजादौ क्ङिति सार्वधातुके श्नाप्रत्ययस्य आल्लोपः । भारद्वाजनियमात्थलि वेडिति मत्वाऽऽह-**चिक्रयिथ चिक्रेथेति** । **चिक्रियिवेति** । क्रादिनियमादिडिति भावः । क्रीणातु । क्रीणीहि । अक्रीणात् । अक्रीणीत । क्रीणीयात् । क्रीणीत । **सौत्रा इति** । नोपधा इत्यपि ज्ञेयम् । **नलोप इति** । 'अनिदिता'मित्यनेनेति भावः । **विष्टभ्नोतीति** । 'स्तन्भे'रिति षत्वम् । **अवष्टभ्नोतीति** । 'अवच्चालम्बनाविदूर्ययो'रिति षत्वम् । **अवतष्टम्भेति**। 'स्थादिष्वभ्यासेने'ति षत्वम् । **व्यष्टभदिति** । 'प्राक्सिता'दिति षत्वम् । **स्तभानेति**। श्नाप्रत्ययस्य

---

शे.]**मित्यनुवर्त्तते इति**। इदञ्च 'सुक्षा'दिति सूत्रे कैयटे स्पष्टम्। परन्त्विदं चिन्त्यं, तस्यातिदूरत्वात्, विच्छिन्नत्वाच्च, तस्य तत्सूत्रे विधेयविशेषणत्वाच्च । किं च नित्यं संयोगादित्वं न प्रयोगमात्रावच्छेदेन तत्त्वं, क्वाप्यभावात्, 'सस्वरतुः' 'सस्वरिथे'त्यादौ तदभावात् । यगादिघटितप्रयोगमात्रावच्छेदेन तत्त्वमित्यपि न, 'अस्त्वर्यंत' 'तरीस्तर्या'दित्यादावभावात् । अत एव प्रत्येकं संयोगसञ्ज्ञापक्षे 'संहृषीष्ट' 'संह्रियते' इत्यादौ इड्गुणापादनपरं 'हलोऽनन्तराः' इति सूत्रस्थभाष्यं सङ्गच्छते । एतेनेड्विधावुपदेशग्रहणानुवृत्तिरपि परास्ता । तस्मादिङ्गुणयोः प्रतिषेधवचनारम्भ एव ज्यायानिति **परे**। **इति तनादयः** ।

दूणीते। १४८३ पूञ् पवने। प्वादीनां ह्रस्वः।७।३।८०। शिति परे। पुनाति। पुनीते। पविता। १४८४ लूञ् छेदने। लुनाति। लुनीते। १४८५ स्तॄञ् आच्छादने। स्तृणाति। स्तृणीते। तस्तार। तस्तरतुः। स्तरिता। स्तरीता। स्तृणीयात्। स्तृणीत। आशिषि-स्तीर्यात्। 'लिङ्सिचो'रिति वेट्। 'न लिङि'। [वृत इटो लिङि दीर्घो न स्यात्]। स्तरिषीष्ट। 'उश्चे'ति कित्त्वम्। स्तीर्षीष्ट। 'सिचि च परस्मैपदेषु' इति न दीर्घः। अस्तारीत्। अस्तारिष्टाम्। अस्तरिष्ट। अस्तरीष्ट। अस्तीर्ष्ट।१४८६ कॄञ् हिंसायाम्। कृणाति। कृणीते। चकार। चकरे। १४८७ वॄञ् वरणे। वृणाति। वृणीते। ववार। ववरे। वरिता। वरीता। आशिषि 'उदोष्ठ्यपूर्वस्य'। वूर्यात्। वरिषीष्ट। वूर्षीष्ट। अवारीत्। अवारिष्टाम्। अवरिष्ट। अवरीष्ट। अवूर्ष्ट। १४८८ धूञ् कम्पने। धुनाति। धुनीते। दुधविथ। दुधोथ। दुधुविव। धोता। धविता। 'स्तुसुधूञ्भ्यः' इतीट्। अधावीत्। अधविष्ट। अधोष्ट। अथ बध्नात्यन्ताः परस्मैपदिनः। १४८९ शॄ हिंसायाम्। 'शॄदॄप्रां ह्रस्वो वे'ति ह्रस्वपक्षे यण्। अन्यदा 'ऋच्छत्यॄता'मिति गुणः। शश्रतुः। शशरतुः। 'श्युकः किती'ति निषेधस्य क्रादिनियमेन बाधः। शशरिव। शश्रिव। शरिता। शरीता। शृणीहि। शीर्यात्। अशारिष्टाम्। १४९० पॄ पालनपूरणयोः। पप्रतुः। पपरतुः। आशिषि-पूर्यात्। १४९१ वॄ वरणे। भरणे इत्येके। १४९२ भॄ भर्त्सने। भरणेऽप्येके। १४९३ मॄ हिंसायाम्। मृणाति। ममार। १४९४ दॄ विदारणे। ददरतुः।दद्रतुः।दीर्यात्। १४९५ जॄ वयोहानौ झॄ। इत्येके। धॄ इत्यन्ये। १४९६ नॄ नये। १४९७ कॄ हिंसायाम्। १४९८ ऋ गतौ। ऋणाति। अरांचकार। अरिता। अरीता। आर्णात्। आर्णीताम्। ईर्यात्। आरीत्। आरिष्टाम्। १४९९ गॄ शब्दे। १५०० ज्या वयोहानौ। 'ग्रहिज्या'। हलः।६।४।२।अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्ताङ्गस्य दीर्घः स्यात्। इति दीर्घे कृते-'प्वादीनां

---

त.]सौत्रेभ्य इति व्याख्याय स्तेंभ्नीहीत्युदाहृतं तन्निष्प्रमाणं, माधवादिग्रन्थविरुद्धं च।प्वादीनां ह्रस्वः। 'ष्ठिवुक्लमुचमा'मित्यतः शितीत्यनुवर्तत इत्याह-शिति पर इति। न लिङीति। अनेन वृत इटो लिङि दीर्घो नेति स्मारितम्। उदोष्ठ्य। दन्तोष्ठ्योऽपि ओष्ठ्यग्रहणेन गृह्यत इत्याह-वूर्यादिति। वरिषीष्टेति। 'लिङ्सिचोरात्मनेपदेषु' इति वेट्। वूर्षीष्ट।अवूर्ष्टेति।'उश्चे'ति लिङ्सिचोः कित्त्वाद्गुणाऽभावे सत्युत्वम्। हलः। 'संप्रसारणस्ये'त्यनुवर्तते। 'अङ्गस्ये'-त्यवयवषष्ठी। 'हल' इति पञ्चमी। तदेतदाह-अङ्गावयवादिति। अङ्गावयवात्किम्?। निरुतम्। दुरुतम्। तदन्ता-

---

बा.]शानजादेशे कृते 'अतो हे'रिति लुक्। प्वादीनां ह्रस्वः। 'ष्ठिवुक्लमुचमा'मित्यतः शितीत्यनुवर्तत इत्यभिप्रेत्य शेषं पूरयति-शिति परे इति। पवितेति। ऊकारान्तत्वात्सेडिति भावः। स्तॄञ् आच्छादने। सेट्। तस्तरतुरिति। कित्त्वेऽपि 'ऋच्छत्यॄता'मिति गुणः। स्तरिता स्तरीतेति। 'वृतो वा' इति दीर्घविकल्पः। आशिषि स्तीर्यादिति। 'ॠत इद्धातो'रिति इत्त्वे रपरत्वे 'हलि चे'ति दीर्घः। स्तॄ-षीष्ट इति स्थिते आह-लिङ्सिचोरिति वेडिति। 'वृतो वा'इति दीर्घविकल्पनिषेधसूत्रं स्मारयति-न लिङीति। वृत इटो दीर्घो नेत्यर्थः। इडभावपक्षे स्तॄषीष्टेत्यत्र गुणमाशङ्क्याह-उश्चेति कित्त्वमिति। लुङि परस्मैपदे सिचि अस्तारिष्टामित्यत्र 'वृतो वे'ति इटो दीर्घविकल्पे प्राप्ते आह-सिचि चेति। अस्तरीष्ट अस्तरिष्टेति। 'वृतो वे'ति दीर्घः। अस्तीर्ष्टेति। 'लिङ्सिचो'रिति इडभावपक्षे ॠत इत्त्वे 'हलि चे'ति दीर्घ इति भावः। कॄञ् हिंसायाम्। चकरे इति। 'ऋच्छत्यॄता'मिति गुणः। वॄञ् वरणे इति। आशिषीति। वॄ यात् इति स्थिते 'उदोष्ठ्यपूर्वस्ये'ति ॠकारस्य उत्त्वमित्यर्थः, तत्र दन्त्योष्ठ्यपूर्वस्यापि ग्रहणादिति भावः। ॠत उत्त्वे रपरत्वे 'हलि चे'ति दीर्घ इति बोध्यम्। वरिषीष्ट वूर्षीष्टेति। 'लिङ्सिचो'रिति वेट्। इडभावे 'उश्चे'ति कित्त्वाद्गुणाऽभावे उत्त्वे रपरत्वे 'हलि चे'ति दीर्घ इति भावः। अवारिष्टामिति। 'सिचि चे'ति इटो न दीर्घ इति भावः। अवरिष्ट अवरीष्टेति। 'वृतो वा' इति सिच इटो दीर्घविकल्प इति भावः। दुधविथ-दुधोथेति। 'स्वरतिसूतिसूयतिधूञूदितः' इति वेडिति भावः। शॄ हिंसायाम्। सेट्। णलि-शशार। शॄ अतुस् इत्यत्र कित्त्वेऽपि 'ऋच्छत्यॄता'मिति नित्ये गुणे प्राप्ते आह-शॄदॄप्रामिति। गुणाऽपवादे पाक्षिके ह्रस्वे कृते ऋकारस्य यणि रेफ इत्यर्थः। शशरिथ। पॄधातुरपि शॄधातुवत्। आशिषि पूर्यादिति। 'उदोष्ठ्यपूर्वस्ये'त्युत्वमिति भावः। दॄ विदारणे। 'शॄदॄप्रा'मिति ह्रस्वविकल्पं मत्वाह-ददरतुः दद्रतुरिति। ऋ गतौ। अरांचकारेति। व्यपदेशिवत्त्वेन गुरुमत्त्वादाम्। लङ्याह-आर्णादिति। ज्या वयोहानौ। अनिट्। ज्या ना तीति स्थिते 'ग्रहिज्ये'ति संप्रसारणे पूर्वरूपे च जिनातीति स्थिते-। हलः। दिग्योगे पञ्चम्येषा। हलः परस्येति लभ्यते। 'संप्रसारणस्ये'ति

---

शे.] हलः। अङ्गस्येत्यावर्त्तते। तत्रैकं हलो विशेषणम्, अवयवसंबन्धे षष्ठी, द्वितीयञ्च संप्रसारणस्य विशेष्यं,

ह्रस्वः' । जिनाति । जिज्यौ । जिज्यतुः । [जीयात् । संप्रसारणे कृतेऽकृत्सा'र्वेति दीर्घः । अज्यासीत् । यमरमनमे-तीट्सकौ ]। १५०१ री गतिरेषणयोः । रेषणं-वृकशब्दः । १५०२ ली श्लेषणे । 'विभाषा लीयते'रित्येज्विषये आत्वं वा । ललौ । लिलाय । [ आत्वपक्षे-ललिथ । ललाथ । आत्वाऽभावे-ललयिथ । ललेथ । लिलाय । लिलय ]। लाता । लेता । १५०३ व्ली वरणे । व्लिनाति । १५०४ प्ली गतौ । वृत् । ल्वादयो वृत्ताः । प्वादयोऽपीत्येके। १५०५ व्री वरणे । १५०६ भ्री भये । भरणे इत्येके १५०७ क्षीष् हिंसायाम्। एषां त्रयाणां ह्रस्वः। केषांचिन्मते तु न।१५०८ ज्ञा अवबोधने।'ज्ञाजनोर्जा'।जानाति। दीर्घनिर्देश सामर्थ्यान्न ह्रस्वः। [ ज्ञेयात् । 'वान्यस्य संयोगादे'रित्येत्वम्]।१५०९ बन्ध बन्धने । बध्नाति। बबन्धिथ बबन्द्ध। बन्धा। बन्धारौ। भन्त्स्यति। बधान । अभान्त्सीत् । 'पूर्वत्रासिद्ध'मिति भष्भावात्पूर्वं 'झलो झली'ति सिज्लोपः । प्रत्ययलक्षणेन सादिप्रत्ययमाश्रित्य भष्भावो न, प्रत्ययलक्षणं प्रति सिज्लोपस्याऽसिद्धत्वात् । अबान्द्धाम् । अभान्त्सुः । १५१० वृङ् संभक्तौ । वृणीते । वव्रे। ववृषे । ववृढ्वे । [ववृवहे]। वरिता। वरीता । अवरिष्ट।अवरीष्ट।अवृत । १५११ श्रन्थ विमोचनप्रतिहर्षयोः । इतः परस्मैपदिनः । श्रथ्नाति । 'श्रन्थिग्रन्थी'त्यादिना किस्त्वपक्षे एत्वाभ्यासलोपावप्यत्र वक्तव्यौ इति हरदत्तादयः । श्रेथतुः । श्रेथुः । इदं कित्त्वं पितामपीति सुधाकरमते-श्रेथिथ । अस्मिन्नपि पक्षे णलि-शश्राथ । उत्तमे तु-शश्राथ शश्रथेति माधवः । तत्र मूलं मृग्यम् । १५१२ मन्थ

---

ब.]ङ्गस्य किम् ? । विध्यति । क्षीष् हिंसायाम् । षित्वादङ् । 'क्षिया' । 'हेति क्षियायाम्' । 'क्षियाशी'रित्यादौ 'क्षिया धर्मव्यतिक्रम आचारभेद' इति वक्ष्यति । **दीर्घनिर्देशसामर्थ्यादिति** । ननु दीर्घग्रहणेनाऽङ्गवृत्तपरिभाषा ज्ञाप्यत इत्याकरे स्थितम् । अन्यथा ज्ञाजनोर्ज विदध्यात् , 'अतो दीर्घो यञी'ति दीर्घसिद्धेः । तथा च दीर्घनिर्देशसामर्थ्यस्योपक्षयात्कथमिह ह्रस्वाऽभावसिद्धिरिति चेत् । अत्राहुः-ह्रस्वाऽभावे सत्येव दीर्घनिर्देश उक्तपरिभाषाया ज्ञापकः । सति तु ह्रस्वे पुनरङ्गकार्यं प्रवृत्तमेवेति न ज्ञापकः । तथा च ह्रस्वाऽभावसिद्धौ न किंचिद्बाधकमिति । किंच 'अङ्गवृत्ते पुनरङ्गवृत्तावविधि'रित्येव परिभाषाशरीरम् । तच्चोक्तज्ञापकात्सिद्धम् । यदि तु 'भ्यसो भ्य'मिति सूत्रे भाष्ये परिनिष्ठितस्येत्येव पाठस्तर्हि स्वतन्त्रमेवेदं वचनं न तु ज्ञापकमिति पक्षोऽपि युष्मदस्मच्छब्दगतमनोरमाग्रन्थादवगम्यते । तस्मिंस्तु पक्षे दीर्घग्रहणसामर्थ्यं नोपक्षीणमिति सम्यगेवायं ग्रन्थ इति । केचित्तु संज्ञापूर्वकविधेरनित्यत्वान्न ह्रस्व इति व्याख्येयमित्याहुः। **बध्नातीति** । 'अनिदिता'मिति नलोपः । **अभान्त्सीदिति** । 'वदव्रजे'ति वृद्धिः । भष्भावः । **अबान्द्धामिति** । 'झषस्तथो'रिति तस्य धत्वम् । 'झरो झरी'ति वा लोपः । **वृङ् संभक्तौ** । **भक्तिर्भजनम्** । **श्रन्थ** । **कित्त्वपक्षे**

---

बा.]सूत्रमनुवर्तते । अङ्गस्येत्यधिकृतमिहानुवृत्तमावर्त्यते । एकमत्रयवषष्ठ्यन्तं हल इत्यत्रान्वेति । अङ्गावयवाद्धल इति लभ्यते । द्वितीयं तु स्थानषष्ठ्यन्तं संप्रसारणेन विशेष्यते । तदन्तविधिः । 'ढ्लोपे' इत्यतो दीर्घ इत्यनुवर्तते । तदाह-**अङ्गावयवादित्यादिना** । उदाहरणं तु-वीतः, शूनः, जीनः । हल इति किम् ? । उतः उतवान् । अङ्गावयवात् किम् ? । निरुतम् । तदन्ताङ्गस्येति किम् ? । विध्यति । **एषामिति** । व्रीभ्रीक्षीषामित्यर्थः । ल्वादय एव वृत्ताः, न तु प्वादय इति मते इति भावः । **ज्ञा अवबोधने** । शिति जादेशं स्मारयति-**ज्ञाजनोर्जेति** । **दीर्घनिर्देशेति** । प्वादित्वेऽपि आकारोच्चारणसामर्थ्यान्न ह्रस्व इति भावः । **बन्ध बन्धने** । अनिट् । नोपधः । **बध्नातीति** । 'अनिदितां'मिति नलोप इति भावः । भारद्वाजनियमात्थलि वेडिति मत्वाऽऽह-**बबन्धिथ बबन्द्धेति** । अकित्त्वान्नलोपो न । अनिट्पक्षे तु 'झषस्तथो'रिति थस्य धः। **बन्धेति** । तासि । झषस्तथो'रिति तकारस्य धः। **भन्त्स्यतीति** । 'एकाचः' इति बस्य भष् । धस्य चर्त्वेन तः । **बधानेति** । 'हलः श्नः शानज्झौ' इति शानच् । **अभान्त्सीदिति** । हलन्तलक्षणा वृद्धिः । भष्भावः। अबान्द्धामित्यत्र सकारपरकत्वाद्भष्भावमाशङ्क्याह-**पूर्वत्रेत्यादि** । ननु कृते सिज्लोपे प्रत्ययलक्षणमाश्रित्य सकारपरकत्वाद्भष् दुर्वार इत्यत आह-**प्रत्ययलक्षणेनेति** । **अबान्द्धामिति** । 'झषस्तथो'रिति तस्य धः । **श्रन्थ विमोचने** । **श्रन्थिग्रन्थीत्यादिनेति**। 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्वं वे'ति व्याकरणान्तरेणेत्यर्थः । **अस्मिन्नपि पक्षे इति** । 'पितामपीदं कित्व'मिति सुधाकरमतेऽपि प्रथमपुरुषणलि-शश्राथ । उत्तमपुरुषणलि तु शश्राथ शश्रथेति माधव आहेत्यर्थः । **तत्र मूलमिति** । 'कित्त्वपक्षे एत्वाभ्यासलोपा'वित्यारभ्य

---

शे.]तदन्तविधिस्तदाह-**अङ्गावयवादिति** । तेन 'निरुत'मित्यादौ न । **दीर्घनिर्देशेति** । अङ्गवृत्तपरिभाषा निष्फलेत्यनेन सूचयति । **सिज्लोपस्येति** । प्रत्ययलक्षणसूत्रं विध्यर्थम्, 'एकाचः' इति सूत्रे 'ध्व'साहचर्यात्सादिप्रत्यय एव गृह्यते इति मतेनेदम् । यदा त्विदं नियमार्थं, स्थानिवत्सूत्रदृष्ट्या च त्रिपादी नाऽसिद्धा, तदाऽल्विधित्वान्न स्थानिवत्त्वमिति बोध्यम् । **तत्र मूलमिति** । 'एत्वाभ्यासलोपावप्यत्रे'त्यारभ्य यदुक्तं तत्र मूलं मृग्यमित्यर्थः । संयुक्त-

विलोडने । १५१३ श्रन्थ १५१४ ग्रन्थ सन्दर्भे । अर्थभेदाच्छ्न्थेः पुनः पाठः । रूपं तूक्तम् । १५१५ कुन्थ संश्लेषणे । संक्लेशे इत्येके । कुथ्नाति । चुकुन्थ । क्रुथेति दुर्गः । चुकोथ । १५१६ मृद क्षोदे । मृद्नाति । मृदान । १५१७ मृड च । अयं सुखेऽपि । छुत्वम् । मृड्णाति । १५१८ गुध रोषे । गुध्नाति । १५१९ कुष निष्कर्षे । कुष्णाति । कोषिता । निरः कुषः ।७।२।४६। निरः परात्कुषो वलादेरार्द्धधातुकस्य इड्वा स्यात् । निष्कोषिता । निष्कोष्टा । निरकोषीत् । निरकुक्षत् । १५२० क्षुभ संचलने । 'क्षुभ्नादिषु च' । क्षुभ्नाति । क्षुभ्नीतः । क्षोभिता । क्षुभाण । १५२१ णभ १५२२ तुभ हिंसायाम् । नभ्नाति । तुभ्नाति । नभते तोभते इति शपि । नभ्यति तुभ्यतीति श्यनि । १५२३ क्लिशू विबाधने । 'श्ना'दिति श्रुत्वनिषेधः । क्लिश्नाति । क्लेशिता । क्लेष्टा । अक्लेशीत् । अक्लिक्षत् । १५२४ अश भोजने । अश्नाति । आश । १५२५ उ ध्रस उञ्छे । उकार इत् । ध्रस्नाति । ध्रस्नीतः । उकारो धात्ववयव इत्येके । उध्रसांचकार । १५२६ इष आभीक्ष्ण्ये । पौनःपुन्यं भृशार्थो वा आभीक्ष्ण्यम् । इष्णाति । इयेष । 'तीषसहे'त्यत्र सहिना साहचर्यादकारविकरणस्य तौदादिकस्यैव इषेर्ग्रहणं नतु इष्यतीष्णात्योरित्याहुः । एषिता । वस्तुतस्तु इष्णातेरपि इड्विकल्प उचितः । अथा च वार्तिकम्* 'इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः' इति । १५२७ विष विप्रयोगे । विष्णाति । वेष्टा । १५२८ प्रुष १५२९ प्लुष स्नेहनसेवनपूरणेषु । प्रुष्णाति । प्लुष्णाति । १५३० पुष पुष्टौ । पुष्णाति । पोषिता । १५३१ मुष स्तेये । मोषिता । १५३२ खच भूतप्रादुर्भावे । भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः । खच्नाति । वान्तोऽयमित्येके । च्छ्वोः शूडनुनासिके च ।६।४।१९। सतुक्कस्य छस्य वस्य च क्रमाच्छ ऊठ् एतावादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति । खौनाति । चखाव । खविता । शानचः परत्वा-

---

त.]इति । 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्वं वे'ति व्याकरणान्तरमित्युक्तत्वात् । निरः कुषः । 'स्वरती'ति सूत्राद्वेत्यनुवर्तते । 'आर्द्धधातुकस्ये'डित्यधिक्रियत एव । तदाह-वलादेरित्यादि । निरः किम् ? । कोषिता । कोषितुम् । निरकुक्षदिति । इडभावे क्सः । सहिना साहचर्यादिति । यद्यपि षह षुह चक्यर्थे इति दिवादिरपि सहिरस्ति तथापि सहेति शपा निर्देशाद्भौवादिकेनैव सहिना साहचर्यमित्याहुः । श्यन्प्रत्ययादिति । बहुव्रीहिरयम् । श्यन्प्रत्ययवत इषेस्तकारे परत इड्विकल्पप्रतिषेध इति वार्तिकार्थः । तथा च दैवादिकाद्विकल्पो नेति फलितम् । एवं च 'तीषसहे'त्यत्र इष्णातेरपि ग्रहणमिति बोध्यम् । पोषितेति । अनिट्केषु पुष्येति श्यना निर्देशादयं सेडिति भावः ।

च्छ्वोः शूडनु । 'च्छ्वो'रिति सतुक्कस्यानुकरणम् । चुत्वेन तकारस्थाने चकार इत्याह-सतुक्कस्येति । एवं च सूत्रे छकारात्पूर्वं चकारो ज्ञेयः । सतुक्कस्य किम् ? । विच्छप्रच्छाभ्यां नङ्प्रत्यये छकारस्य शकारे कृते तुकोऽश्रवणं यथा स्यात् । अकृतव्यूहपरिभाषा त्वनित्या, अस्मादेव सतुक्ग्रहणात् । तेनातिक्रान्तो भवकन्तमतिभवकानित्यादि सिद्धमित्याहुः । सूत्र-

---

बा.]'माधव' इत्यन्तसंदर्भे मूलं नास्तीत्यर्थः । संयुक्तहलमध्यस्थत्वादेवंविधवार्तिकाऽदर्शनाच्चेति भावः । कुष निष्कर्षे । निरः कुषः । 'आर्द्धधातुकस्येड्वलादे'रित्यनुवर्तते । 'स्वरतिसूती'त्यतो वेति च । तदाह-निरःपरादिति । निरकुक्षदिति । इडभावपक्षे 'शल' इति क्स इति भावः । अश भोजने । आशेति । द्विहल्त्वाऽभावान्नुडिति भावः । इष आभीक्ष्ण्ये । तासि 'तीषसहे'तीड्विकल्पमाशङ्क्याह-तीषसहेत्यत्रेति । सहेति शपा निर्देशबलेन भौवादिक एव सहधातुरत्र निर्दिष्टः । तत्साहचर्यात्तौदादिकस्यैव इषेर्ग्रहणम्, अकारविकरणत्वसामान्यादिति भावः । इषेस्तकारे श्यन्प्रत्ययादिति । श्यन् प्रत्ययो यस्मादिति बहुव्रीहिः । श्यन्विकरणपठितादिषेस्तकारे परे 'तीषसहे'ति विधिर्नेत्यर्थः । इष्णातेस्तकारे इड्विकल्पः फलित इति भावः । प्रुष प्लुषेति । आद्यो दीर्घोपधः । पुष पुष्टौ । पोषितेति । अनिट्सु श्यन्विकरणस्यैव पुषेर्ग्रहणादयं सेडिति भावः । 'पुषादिद्युतादी'त्यत्र श्यन्विकरणपुषादेरेव ग्रहणादङ् न । खच भूतप्रादुर्भावे । अतिक्रान्तोत्पत्तिरिति । दशममासादौ उत्पत्तियोग्यस्य एकादशादिमासादिषूत्पत्तिरित्यर्थः । खच्नातीति । नस्य श्चुत्वेन ञ इति भावः । वान्तोऽयमिति । 'खव भूतप्रादुर्भावे' इत्येवं दन्त्योष्ठ्यान्तमेके पठन्तीत्यर्थः । च्छ्वोः शूडनुनासिके च । च्छ् व् अनयोर्द्वन्द्वात्षष्ठीद्विवचनम् । छकारात्प्राक्तुकः श्चुत्वेन चकारस्य निर्देशः । 'शूठ्' इति छेदः । श् ऊठ् अनयोः समाहारद्वन्द्वात्प्रथमा । चकारेण क्विझलोः क्ङितीत्यनुवर्तते । तदाह-सतुक्कस्येत्यादि । यथा विश्नः प्रश्नः । विच्छधातोः प्रच्छधातोश्च औणादिके नङ्प्रत्यये अन्तरङ्गत्वात् 'छे चे'ति तुकि कृते सति सतुक्कस्य छस्य शकार आदेशः । वकारस्य ऊठमुदाहरति-खौनातीति । खव् ना तीति स्थिते वकारस्य ऊठ्, ठकार इत् 'एत्येधत्यूठ्सु' इति वृद्धिरिति भावः । खौनीतः खौनन्तीत्यादि । खव् ना हि इति स्थिते 'हलः श्नःशानज्झौ' इति शानजादेशमाशङ्क्य

---

शे.]हलमध्यस्थत्वात्, ग्रन्थेरादेशादित्वाच्च, सूत्रेणाऽप्राप्तेः, वार्तिकाऽदर्शनाच्चेति भावः । श्यन्प्रत्ययादिति बहुव्रीहिः । वेष्टेति ।

दूठि कृते झलन्तत्वाऽभावान्न शानच् । खौनीहि । १५३३ हिठ च । ष्टुत्वम् । हिठ्णाति । १५३४ ग्रह उपादाने । स्वरितेत् । 'ग्रहिज्या' । गृह्णाति । गृह्णीते । **ग्रहोऽलिटि दीर्घः** ।७।२।३७। एकाचो ग्रहेर्विहितस्येटो दीर्घः स्यान्नतु लिटि । ग्रहीता । लिटि तु–जग्रहिथ । गृह्यात् । ग्रहीषीष्ट । 'ह्यन्ते'ति न वृद्धिः । अग्रहीत् । अग्रहीष्टाम् । अग्रहीष्ट । अग्रहीषाताम् । अग्रहीषत । इति क्र्यादयः ।

## तिङन्ते चुरादयः ।

१५३५ चुर स्तेये । **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** ।३।१।२५। एभ्यो णिच् स्यात् । चूर्णान्तेभ्यः 'प्रातिपदिकाद्धात्वर्थे' इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम् ।

---

त ]स्थेन चशब्देन क्ङिझलोः क्ङितीत्यनुकृष्यत इत्याह–**क्ङावित्यादि** । ग्रहो लिटि दीर्घः। एकाचः किम् ?। जाग्रहिता । जाग्रहिष्यति–इत्यादौ यङ्लुकि माभूत् । विहितस्येति किं ? । ग्राहितम् । न चाऽत्र णिलोपस्य स्थानिवद्भावाद्ग्रहेः परत्वं नेति वाच्यं, दीर्घविधौ स्थानिवत्त्वनिषेधात् । 'त्रैपादिकदीर्घविधावेव स्थानिवत्त्वनिषेध' इत्यभ्युपगमे तु विहितविशेषणं व्यर्थमेवेत्याहुः । प्रकृतस्येटो ग्रहणाद्ग्राहिता ग्राहिष्यत इत्यादौ चिण्वदिटो न दीर्घः । **ग्रहिषीष्टेति** । 'वृत' इत्यनुवृत्ते- 'र्न लिङी'ति दीर्घनिषेधो न प्रवर्तते । **अग्रहीषातामिति** । लुङ् । आत्मनेपदद्विवचनम् । इति क्र्यादयः ।

**सत्यापपाश** । एतस्योदाहरणानि अग्रे नामधातुषु स्फुटीभविष्यन्तीति नास्माभिरुपपाद्यन्ते । त्वचशब्दोऽकारान्तः । **प्रपञ्चार्थमिति** । 'सत्याप'ग्रहणं तु आपुगर्थमिति ज्ञेयम् । अन्ये त्वाहुः–सापेक्षेभ्योऽपि णिजर्थमेषामु-

---

बा.]आह–**शानचः परत्वादिति** । **हेठ चेति** । हेठधातुरपि भूतप्रादुर्भावे वर्तते इत्यर्थः । **ग्रह उपादाने इति** । अदुपधः । स्वरितेत्त्वादुभयपदी । क्ङिति ङिति च संप्रसारणं स्मारयति–**ग्रहिज्येति** । **गृह्णाति गृह्णीते इति** । श्नाप्रत्ययस्य ङित्त्वाद्रेफस्य संप्रसारणे पूर्वरूपमिति भावः । णलि द्वित्वे कृते 'लिट्यभ्यासस्ये'ति संप्रसारणे उरदत्वे रपरत्वे हलादिशेषे अभ्यासचुत्वे उपधावृद्धिः। जग्राह । अतुसादौ क्ङिति परत्वात् 'ग्रहिज्ये'ति संप्रसारणे कृते द्वित्वादि । जगृहतुः जगृहुः । जग्रहिथ । जगृहथुः जगृह । जग्राह–जग्रह जगृहिव जगृहिम । जगृहे जगृहाते जगृहिरे । जगृहिषे जगृहाथे जगृहिढ्वे–जगृहिध्वे । जगृहे जगृहिवहे जगृहिमहे । **ग्रहोऽलिटि दीर्घः** । 'ग्रह' इति दिग्योगे पञ्चमी । 'आर्द्धधातुकस्येट्' इत्यत इडित्यनुवृत्तं षष्ठ्यन्तं विपरिणम्यते, 'एकाच उपदेशेऽनुदात्ता'दित्यत एकाच इति च । तदाह– **एकाच इत्यादि** । एकाचः किम् ?। यङ्लुकि माभूत । जाग्रहिता । विहितस्येति किम् ?। ग्राहितम् । णिलोपे कृते ग्रहधातोः परत्वेऽपि विहितत्वाऽभावादिटो न दीर्घः । नच णिलोपस्य स्थानिवत्त्वान्न ग्रहधातोः पर इडिति वाच्यं, दीर्घविधौ स्थानिवत्त्वनिषेधात् । अलिटीत्यस्य फलमाह–**लिटि तु जग्रहिथेति** । **गृह्यादिति** । आशीर्लिङि यासुटः कित्त्वात्संप्रसारणमिति भावः । लिङस्तव्याह–**ग्रहीषीष्टेति** । 'ग्रहोऽलिटी'ति दीर्घः । 'न लिङी'ति इटो दीर्घनिषेधस्तु न, तत्र 'वृत' इत्यनुवृत्तेः । **अग्रहीष्टामिति** । 'ग्रहोऽलिटी'ति दीर्घः । अग्रहीषुः । अग्रहीरित्यादि । लुङस्तव्याह– **अग्रहीष्टेति** । 'ग्रहोऽलिटी'ति दीर्घः । **अग्रहीषतेति** । अग्रहीष्ठा इत्यादि सुगमम् । इति क्र्यादयः ।

अथ स्वार्थिकणिजन्ताश्चुरादिधातवो निरूप्यन्ते । **चुर स्तेये इति** । रेफादकार उच्चारणार्थः, न त्वित्संज्ञकः, प्रयोजनाऽभावात्, 'णिचश्चे'ति पदव्यवस्थाया वक्ष्यमाणत्वाच्च । एवमग्रेऽपि । **सत्याप** । सत्याप पाश रूप वीणा तूल श्लोक सेना लोमन् त्वच वर्मन् वर्ण चूर्ण चुरादि–एषां द्वन्द्वात्पञ्चमी । तदाह–**एभ्यो णिच्स्यादिति** । कस्मिन्नर्थे इत्याकाङ्क्षायामाह–**चूर्णान्तेभ्य इति** । सत्यादिभ्यश्चूर्णान्तेभ्यो द्वादशभ्यः करोत्याचष्टे इत्याद्यर्थ 'प्रातिपदिकाद्धात्वर्थे बहुल'मिति वक्ष्यमाणेन सिद्धमेवाऽर्थनिर्देशनमित्यर्थः। ननु तेनैव सिद्धत्वादिह चूर्णान्तानुक्रमणं व्यर्थमित्यत आह–**तेषामिह ग्रहणं प्रपञ्चार्थमिति** । नच तेभ्यः स्वार्थे एव णिज्विधिरस्त्विति वाच्यं, 'सत्यस्य तु कृग्यापुङ्गि-' पात्यते । सत्यं करोति सत्यापयती'त्यादिभाष्यविरोधादिति भावः । नामधातुप्रकरणे सत्यादिचूर्णान्तानामुदाहरणानि मूल एव स्फुटीभविष्यन्ति । **चुरादिभ्यस्तु स्वार्थे इति** । अर्थान्तरस्याऽनिर्देशादिति भावः । अत्र 'धातोरेकाचः' इत्यतो धातोरित्यनुवर्तते । चुरादिभ्यो धातुभ्यो णिजिति फलितम् । ततश्च णिच आर्द्धधातुकत्वं सिध्यति । अन्यथा धातोरिति

---

शे.]न्यासैकृन्मतेनेदम् । **ग्रहो**। इडित्यनुवृत्तस्य ग्रह इति पञ्चम्या षष्ठी कल्प्यते इत्याह–**इट इति**। **एकाच इत्यादि**। हरदत्तानुरोधेनेदमुक्तम् । 'अग्रहीष्ट'मित्यादौ 'लावस्थायाम'डिति पक्षे एकाचो विहितत्वाऽभावाद्दीर्घोऽप्राप्त्याऽसङ्गतमिदं हरदत्तोक्तम् । इति क्र्यादयः ।

**प्रपञ्चार्थमिति** । न च स्वार्थे विधानार्थमस्तु । 'सत्यस्य कृग्यापु'गिति भाष्यविरोधात् । न च

चुरादिभ्यस्तु स्वार्थे । 'पुगन्ते'ति गुणः । 'सनाद्यन्ताः' इति धातुत्वम् । तिप्शबादि । गुणाऽयादेशौ । चोरयति ।
**णिचश्च** ।१।३।७४। णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले । चोरयते । चोरयामास । चोरयिता ।
चोर्यात् । चोरयिषीष्ट । 'णिश्री'ति चङ् । 'णौ चङी'ति ह्रस्वः । द्वित्वम् । 'हलादिः शेषः' । 'दीर्घो लघो'-
रित्यभ्यासदीर्घः । अचूचुरत् । अचूचुरत । १५३६ चिति स्मृत्याम् । चिन्तयति । अचिचिन्तत् । चिन्तेति
पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम् । तेन 'चिन्त्यात्' 'चिन्त्यते' इत्यादौ नलोपो न । चिन्तति ।
चिन्तेत् । एतच्च ज्ञापकं सामान्यापेक्षमित्येके, 'अत एकह'लित्यत्र वृत्तिकृता जगाण जगणतुरित्युदाहृतत्वात् ।

---

त.]पादानम् । अन्यथा 'रमणीयं घटं करोती'त्यादाविव 'रमणीयं रूपयती'त्यादावपि णिज्न स्यादिति । **अचूचुरदिति** ।
अत्र प्राचा व्याख्यात्रा 'सन्वल्लघुनी'ति सन्वद्भाव इत्युक्तं, तद्भ्रमसात् । सन्वद्भावविषये हि जायमानो दीर्घः सन्वद्भावं
नापेक्षत इति । **सामान्यापेक्षमिति** । सर्वेऽपि चुरादयो विकल्पेन णिचं लभन्त इत्येतदर्थकमित्यर्थः । न चैवम्
'आधृषाद्वे'ति व्यर्थमिति वाच्यं, ज्ञापकसिद्धस्याऽसार्वत्रिकत्वात् । एवं चाऽस्मिन्पक्षे आधृषीयाणामवैच्छिको विकल्पः,
अन्येषां तु शिष्टप्रयोगाद्यवस्थित इत्यर्थः । **जगाण जगणतुरिति** । वृत्तौ 'चकाण चकणतु'रिति प्रचुरः पाठस्त-
स्मिंस्तु पाठे नास्त्येव प्रकृतार्थसिद्धिः । केचित्तु णिजभावे गणयामासेत्यादिरूपाऽभावेपि गणधातोरदन्तत्वाद्गणामासेत्यामा

---

बा.]विहितत्वाऽभावादार्द्धधातुकत्वं न स्यादिति बोध्यम् । तदाह–**पुगन्तेति गुण इति** । णिचि कृते चुर् इ इति स्थिते
णिच आर्द्धधातुकत्वात्तस्मिन् चकारादुकारस्य 'पुगन्तलघूपधस्ये'ति गुण इत्यर्थः । **णिचश्च** । 'अनुदात्तङित' इत्यत
आत्मनेपदमिति, 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इति चानुवर्तते । प्रत्ययग्रहणपरिभाषया णिजन्तादिति लभ्यते ।
तदाह–**णिजन्तादित्यादिना** । **चोरयतीति** । चोरयिष्यति । चोरयिष्यते । चोरयतु । चोरयताम् । अचोरयत् ।
अचोरयत । चोरयेत् । चोरयेत । आशीर्लिङि परस्मैपदे आह–**चोर्यादिति** । 'णेरनिटी'ति णिलोप इति भावः ।
आशीर्लिङि आत्मनेपदे आह–**चोरयिषीष्टेति** । लुङ्याह-**णिश्रीत्यादि** । **दीर्घो लघोरिति** । 'सन्वल्लघुनी'ति
सन्वद्भावविषयत्वादिति भावः । **चिति स्मृत्याम्** । **चिन्तयतीति** । इदित्त्वान्नुमि णिजन्तात्तिङ उत्पत्तिरिति भावः।
ननु इदित्करणं मास्तु, प्रक्रियालाघवात् 'चिन्त स्मृत्या'मित्येवोच्यताम् । नच नलोपनिवृत्त्यर्थमिदित्त्वमिति वाच्यं,
चिन्तयति चिन्तयांचकारेत्यादौ णिचः क्ङित्त्वाऽभावादेव नलोपस्याऽप्रसक्तेः । नच णिजभावे आशीर्लिङि चिन्त्यादिति,
कर्मलकारे यकि चिन्त्यते इत्यत्र नलोपनिवृत्त्यर्थमिदित्त्वमिति शङ्क्यं, चुरादिणिचो नित्यत्वेन णिचं विना केवलात्
चिन्त्यात् चिन्त्यते इति प्रयोगस्य शशशृङ्गायमाणत्वादित्यत आह–**चिन्तेत्यादि** । **तेनेति** । पाक्षिकत्वेनेत्यर्थः । तथाच
कदाचित् चिन्त्यात् चिन्त्यते इति प्रयोगस्य सत्त्वात्तत्र नलोपनिवृत्त्यर्थमिदित्करणमिति भावः । ननु तथापि यत्र नलोप-
प्रसक्तिस्तत्रैव चिन्त्यात् चिन्त्यते इत्यत्र णिज्विकल्पः स्यान्नतु चिन्ततीत्यादौ, शपा व्यवधानेन तत्र नलोपस्याऽप्रसक्ते-
रित्याशङ्क्य ज्ञापकमिदं चिन्तधातुसामान्यापेक्षमित्यभिप्रेत्योदाहरति–**चिन्तति** । **चिन्तेदिति** । ज्ञापकमिदं चुरादित्व-
सामान्यापेक्षमिति मतान्तरमाह-**एतच्चेति** । ज्ञापकस्य चुरादित्वसामान्यपेक्षत्वे वृद्धसंमतिमाह–**अत एकेति**।ज्ञापकस्य
चितिधातुमात्रविषयकत्वे गणधातोश्चौरादिकस्य जगणतुरित्युदाहरणानुपपत्तिः स्पष्टैवेति भावः । **विशेषापेक्षमिति** ।
चितिधातुमात्रविषयमित्यर्थः । इदमेव मतं युक्तमित्याह–**अत एवेति** । सर्वस्यापि चुरादेर्णिज्विकल्पे सति 'आ धृषाद्वा'

---

शे.]आपुङ्निपातनार्थं सत्यापग्रहणमावश्यकम् । अर्थवेदार्थमावश्यके वार्तिके एव 'सत्य'पाठेन सिद्धेरिति भावः । **स्वार्थे
इति** । करण इत्यस्य तु नानुवृत्तिः, विच्छिन्नत्वादिति भावः । **णिचश्च** । लक्षयतेः स्वरितेत्त्वमनार्षम् । एतेन
लक्षेः स्वरितेत्त्वादिदङ्गुरादौ न प्रवर्तते इति परास्तम् । **इदित्करणमिति** । णिचो नित्यत्वे हि तेन व्यवधाना-
न्नलोपाऽप्रसक्त्या किं तेनेति भावः । न च णिजन्तात्क्विपि नलोपाऽभावाय तच्चरितार्थं, स्थानिवत्त्वन्तु क्वौ विधौ
निषिद्धमिति वाच्यम्, 'असिद्धवदत्रे'ति णिलोपस्याऽसिद्धत्वात् । 'क्वौ विधि'मित्यस्य क्विशब्दमुच्चार्य विहितविधि-
विषयत्वाच्च । 'क्वौ लुप्त'मिति तु न सार्वत्रिकम् । **परे** त्विदित्त्वस्य तत्रिमत्र्यादौ व्यभिचरितत्वेन 'क्वौ लुप्त'मित्याश्रयणे
ज्ञापकतौचित्येन च, 'चिन्ते'ति पाठेऽर्द्धमात्रागौरवेण च णिच्छास्त्रबाधे न मानं, भाष्यानुक्तत्वाच्च, वक्ष्यमाण–'णेरणौ'
इतिसूत्रस्थकैयटाऽसंमतेश्चेत्याहुः । **सामान्यापेक्षमिति** । चुरादित्वापेक्षमित्यर्थः । **जगणतुरिति** । मन्त्रत्वादाम्नेति
तदाशयः । नित्यण्यन्तत्वेऽपि णिलोपेनेष्टसिद्ध्या इयं वृत्तिर्न साधिका । गणेर्नित्यण्यन्तत्वे 'णेरणौ' इति सूत्रस्थभाष्याऽ-
सङ्गतिश्च । तत्र हि–'गणयति गणः स्वयमेवे'त्यादौ णौ कर्मणो णौ कर्तृत्वे आत्मनेपदाऽभावाय 'णेरणौ' इति सूत्रमि-
त्याशङ्क्योच्यत एवात्रात्मनेपदं,चुरादिण्यन्तानां नित्यण्यन्ततया केवलानाञ्चुरादीनां प्रयोगाऽभावात्,अणौ कर्मणोऽसम्भवात् ।
अत्र सूत्रे हेतुमण्णेरेव ग्रहणमित्यहेतुमण्णौ गणस्य कर्मत्वं, हेतुमण्णौ कर्तृत्वमिति सूत्रविषयक एवायमिति भाष्यकैयटयो-

विशेषापेक्षमित्यपरे । अतएव आधृषाद्वेत्यस्य न वैयर्थ्यम् । १५३७ यत्रि सङ्कोचे । यन्त्रयति । यन्त्रेति पठितुं शक्यम् । यत्तु इदित्करणाद्यन्त्रतीति माधवेनोक्तं, तच्चिन्त्यम् । एवं कुद्रितन्त्रिमन्त्रिषु । १५३८ स्फुडि परिहासे । स्फुण्डयति । इदित्करणात्–स्फुण्डति। स्फुटीतिपाठान्तरम्। स्फुण्टयति। स्फुण्टति। १५३९ लक्ष दर्शनाऽङ्कनयोः । १५४० कुद्रि अनृतभाषणे। कुन्द्रयति । १५४१ लड उपसेवायाम् । लाडयति। अलीलडत्। १५४२ मिदि स्नेहने । मिन्दयति । मिन्दति । १५४३ ओलडि उत्क्षेपणे । ओलण्डयति । ओलण्डति । ओकार इदित्येके । लण्डयति। लण्डति । उकारादिरयमित्यन्ये । उलण्डयति । १५४४ जल अपवारणे । लज इत्येके । १५४५ पीड अवगाहने । पीडयति । **भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्** ।७।४।३। एषामुपधाया ह्रस्वो वा स्याच्चङ्परे णौ । अपीपिडत् । अपिपीडत् । १५४६ नट अवस्पन्दने । अवस्पन्दनं–नाट्यम् । १५४७ श्रथ प्रयत्ने । प्रस्थान इत्येके । १५४८ बध संयमने । बाधयति । बन्धेति चान्द्रः । १५४९ पॄ पूरणे । पारयति । दीर्घोच्चारणं णिचः पाक्षिकत्वे लिङ्गम् । तद्धि सेट्त्वाय । एवं च पृणातिपिपर्तिभ्यां परितेत्यादिसिद्धा-

त.]भवितव्यमिति जगाणेत्यादिपाठश्चिन्त्य इत्याहुः। **न वैयर्थ्यमिति।** वैयर्थ्यशङ्कापि नेत्ययमेव पक्षो युक्त इति भावः। तत्र पूर्वोक्तपक्षस्य शिथिलत्वे जगाण जगणतुरिति वृत्तिप्रयोगः कथं सङ्गच्छतामिति न शङ्क्यम् , भ्वादेराकृतिगणत्वा-त्तत्रत्यधातोस्तद्रूपसिद्धेः । **तच्चिन्त्यमिति ।** यन्त्रितन्त्रिमन्त्र्यादिषु इकारो व्यर्थ एव न तु ज्ञापनार्थः, तेषां संयोगान्त-त्वात् , यन्त्रतन्त्रमन्त्रेति नकारे पठितेऽपि 'अनिदिता'मिति लोपो न लभ्यते, नकारस्याऽनुपधात्वात् । चिन्त्यादित्यत्र तु 'चिन्त स्मृत्या'मिति नकारोपधपाठे नलोपः स्यादेवेति तद्वारणाय क्रियमाण इकारस्तु ज्ञापक इति भावः। **लड।** स्नेह-पूर्विका सेवा उपसेवा । लाडयति पुत्रम् । लडयोरभेदाल्लालयति। **ओकार इदित्येके इति।** ओदित्करणम् 'ओदितश्चे'-ति धातोरव्यवहितस्य निष्ठातकारस्य नत्वार्थमिति तद्वलान्नेडित्येके । लण्डर्णः । ओदिद्वलादिड्व्यवधानेऽपि नत्वमित्यन्ये । लण्डिनः । **पीड अवगाहने ।** 'भ्राजभासे'ति ह्रस्वपक्षे सन्वद्भावविषयत्वात् 'दीर्घो लघो'रित्यभ्यासस्य दीर्घः । ह्रस्वाऽ-भावपक्षे तु न दीर्घ इत्याह–**अपीपिडदित्यादि । पॄ पूरणे । दीर्घोच्चारणमित्यादि ।** पारयतीत्यादिरूपाणि ह्रस्वो-

बा.]इति कतिपयचुराद्यन्तर्गणपठितानां णिज्विकल्पविधिवैयर्थ्यमिति भावः। **यत्रि सङ्कोचे। यन्त्रयतीति।** अकारस्य उपधात्वाऽभावान्न वृद्धिः । **अययन्त्रदिति** । अकारस्य गुरुत्वादलघुत्वाल्लघुपरकत्वाऽभावात् सन्वद्भावाऽभावादित्त्वदीर्घौ न । एवमग्रेऽपि संयोगान्तधातूनां ज्ञेयम् । **पठितुं शक्यमिति ।** नलोपाऽभावस्तु इदित्त्वस्य न फलं, नकारस्य उपधात्वाऽभावादेव नलोपस्याऽप्रसक्तेरिति भावः । **तच्चिन्त्यमिति ।** यन्त्र्यादित्यणिजन्ते सत्यपि नकारस्य अनुपधा-त्वादेव लोपाऽप्रसक्त्या इत्त्वस्य प्रयोजनाऽभावादिति भावः।एवं 'कुद्रि अनृतभाषणे' 'तन्त्रि कुटुम्बधारणे' 'मन्त्रि गुप्तभाषणे' इति चुरादौ पठिष्यमाणेष्वपि इदित्त्वं त्यक्तुं शक्यमित्यर्थः । **लड उपसेवायां । लाडयतीति ।** णिचि अत उपधा-वृद्धिः । एवमग्रेऽपि ज्ञेयम् । अलीलडत् । **पीड अवगाहने । भ्राजभास ।** 'णौ चङ्युपधाया ह्रस्वः' इत्यनुवर्तते । तदाह–**एषामिति ।** नित्ये उपधाह्रस्वे प्राप्ते विकल्पोऽयम् । ह्रस्वपक्षे लघुपरकत्वात्सन्वत्त्वादभ्यासदीर्घ इत्यभिप्रेत्य आह–**अपीपिडदिति ।** अत्र उत्तरखण्डे ह्रस्वः, पूर्वखण्डे तु दीर्घः । ह्रस्वाऽभावपक्षे तु लघुपरकत्वाऽभावात्सन्वत्त्व-विरहान्नाऽभ्यासदीर्घ इति मत्वाह–**अपिपीडदिति ।** अत्र उत्तरखण्डे दीर्घः । पूर्वखण्डे ह्रस्वः । **नट अवस्पन्दने इति ।** अवस्पन्दनं नाट्यम् । नाटयति । अनीनटत् । **श्रथ प्रयत्ने ।** श्राथयति । अशिश्रथत् । सन्वत्त्वविधौ अनेक-हल्व्यवधानेऽपि लघुपरत्वं न विरुध्यते, अत्स्मृदृत्वरे'ति ईत्त्वापवादस्य अत्त्वस्य विधानाल्लिङ्गात् । अन्यथा अपप्रथ-दित्यादौ अनेकहल्व्यवधानाल्लघुपरत्वाऽभावादेव इत्त्वाऽप्रसक्त्या किं तेन ?। **पॄ पूरणे ।** ननु ह्रस्वान्त एवायं धातुर्निर्दि-श्यतां, तावतैव पारयतीत्यादिसिद्धेः । न च णिजभावपक्षे परिता परिष्यतीत्यत्र इडर्थं दीर्घोच्चारणम्, ऋदन्तत्वे अनिट्-त्वप्रसङ्गादिति वाच्यं, चुरादिणिचो नित्यत्वेन ततो णिजभावस्य शशशृङ्गायमाणत्वादित्यत आह–**दीर्घोच्चारणं णिचः पाक्षिकत्वे लिङ्गमिति ।** 'पॄधातो'रिति शेषः । णिचः पाक्षिकत्वे तु परितेत्यादौ पर्तेत्यादिवारणाय दीर्घोच्चारणमर्थ-वदिति भावः। ननु ह्रस्वान्तत्वेऽपि परितेत्यादौ इट् कुतो न स्यादित्यत आह–**तद्धि सेट्त्वायेति ।** हि=यतः, तत्= दीर्घोच्चारणं परितेत्यादौ सेट्त्वार्थम्, ऋदन्तत्वे तु इण्न स्यात्, 'ऊदृदन्तै'रित्यनिट्कारिकासु ऋदन्तस्य पर्युदासेन ऋदन्त-

शे.]त्वम् । किं ज्ञापकस्य सामान्यापेक्षत्वे 'घुषिरविशब्दने' इति सूत्रस्थभाष्यविरोधः। तत्र हि विशब्दनार्थस्य चुरादित्वेन नित्यणिजन्ततया भ्वादेश्चाऽविशब्दन एव वृत्तेः सूत्रे 'अविशब्दने' इति व्यर्थमित्याशङ्क्य 'एतदेव ज्ञापयति घुषेर्विशब्दने विभाषाणिच् , तेन जुघुषुरिति सिद्ध'मित्युक्तम् । अत एव चुरादाविरित्त्वमपि सार्थकमिति बोध्यम् । **विशेषेति ।** असंयोगोपधेकारान्तरूपविशेषेत्यर्थः । **तच्चिन्त्यमिति ।** नस्योपधात्वाऽभावेन नलोपाऽप्रसक्त्या ज्ञापितेऽपि चारितार्थ्या-

वपि परति परत इत्यादिसिद्धिः फलम् ।[पारयते]।१५५० ऊर्ज बलप्राणनयोः।१५५१ पक्ष परिग्रहे।१५५२ वर्ण १५५३ चूर्ण प्रेरणे । (ग) वर्ण वर्णन इत्येके । १५५४ प्रथ प्रख्याने । प्राथयति । 'नान्ये मितोऽहेतौ'विति वक्ष्यमाणत्वान्नास्य मित्त्वम्ः अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् ।७।४।९५। एषामभ्यासस्य अकारोऽन्तादेशः स्याच्चङ्परे णौ । इत्त्वापवादः । अपप्रथत् । १५५५ पृथ प्रक्षेपे । पर्थयति । उर्ऋत् ।७।४।७ उपधाया ऋवर्णस्य स्थाने ऋत्स्याद्वा चङ्परे णौ । इररारामपवादः । अपीपृथत् । अपपर्थत् । पथ इत्येके । पाथयति। १५५६ षम्ब संबन्धने । सम्बयति । अससम्बत् । १५५७ शम्ब च । अशशम्बत् । साम्ब इत्येके । १५५८ भक्ष अदने । १५५९ कुट्ट छेदनभर्त्सनयोः । पूरण इत्येके । कुट्टयति । १५६० पुट्ट १५६१ चुट्ट अल्पीभावे। १५६२ अट्ट १५६३ षुट्ट अनादरे । अट्टयति । अयं दोपधः । ष्टुत्वस्याऽसिद्धत्वात् 'न न्द्राः' इति निषेधः ।

त.]च्चारणेऽपि सिध्यन्तीति परतीत्याद्यर्थं दीर्घोच्चारणमित्यर्थः।अत्र वदन्ति-धातुपाठकृता पाणिनिना विशिष्यैव उदात्ता अनुदात्ताश्च पठिताः, न हि 'ऋकारान्ताः सेट्का' इति तेन परिभाषितं येनेत्थं तस्याशयः कल्प्येत । कविकल्पद्रुमे त्वस्य नित्यण्यन्तत्वमुक्तमिति । एवं चाऽस्मिन्पक्षे दीर्घोच्चारणं व्यर्थमिति फलितम् । अन्ये तु दीर्घोच्चारणं परिता परीतेत्यादौ 'वृतो वे'ति इटो दीर्घविकल्पार्थम् । ततश्च णिज्विकल्पः सिद्ध एवेति परतीत्यादिरूपमाहुः । ऊर्ज । ऊर्जयति । बलवान्भवति । जीवति वेत्यर्थः । उर्ऋत् । 'जिघ्रतेर्वे'त्यतो वेति वर्तते । इररारामिति । ऋकारोपधे तु 'उपधायाश्चे'त्यचीकृतदित्यादौ इर् प्राप्तः, अमीमृजदित्यत्र मृजेर्वृद्धिरार् प्राप्तः, इतरेषांमृदुपधानां गुणेन अपीपृथदित्यादावरिति विवेकः। नन्विह उरित्यनूद्यमानः सवर्णान्गृह्णाति, ऋदिति विधीयमानस्तु न गृह्णाति । तथा च अचीक्लृपदित्यत्र 'उर्ऋ'दित्यनेन ऋवर्णे सति अचीकृपदिति प्रसज्येतेति चेत् । मैवम् । ऌत्वस्याऽसिद्धत्वेन प्रथमम् 'उर्ऋ'दित्यस्य प्रवृत्तौ पश्चात् 'कृपो रो लः' इत्यनेन ऋकारैकदेशस्य ऌकारैकदेशविधानादिष्टसिद्धेः । न च चलीक्लृप्यत इत्यादौ रीगागमादेर्लत्वार्थं 'कृपो रो लः' इत्यस्यावश्यकत्वेऽपि कृपूधातुः 'कृपू सामर्थ्ये' इत्येव पठ्यताम्, एवं हि प्रक्रियालाघवं लभ्यते, ऋकारैकदेशस्य ऌकारैकदेश इति व्याख्यानक्लेशोऽपि न भवतीति वाच्यम्, अचीक्लृपदित्यत्र 'उर्ऋ'दित्यस्य प्रवृत्तावनिष्टरूपप्रसङ्गात् ।

बा.]स्याऽनिङ्कत्वावगमादिति भावः । ननु पॄधातोर्णिचः पाक्षिकत्वज्ञापनस्य किं फलम् ? । श्नाविकरणश्नुविकरणपठिताभ्यामेव पृधातुभ्यां परितेत्यादिसिद्धेरित्यत आह-एवं चेति । उक्तरीत्या पॄधातोर्णिचः पाक्षिकत्वे ज्ञापिते सतीत्यर्थः। [पारयति] परतीति । 'उदोष्ठ्यपूर्वस्ये'त्युत्त्वं तु न भवति, पराभ्यां गुणवृद्धिभ्यां बाधादिति भावः ।

ऊर्ज बलेति । 'सन्वल्लघुनी'ति सूत्रं द्वेधा व्याख्यातं प्राक् । तत्र चङि 'न न्द्राः' इति निषेधात्, 'जि' इति णिजन्तस्य द्वित्वे उत्तरखण्डे चङ्परे णौ लघोरभावात्प्रथमव्याख्यानेऽभ्यासस्य तथाविधलघुपरकत्वविरहात्सन्वत्त्वविरहाच्चाऽभ्यासदीर्घः, और्जिजत् । द्वितीयव्याख्याने तु चङ्परे णौ यदङ्गम् ऊर्ज इत्येतत्, तदीयस्याभ्यासस्य चङमादाय वा णिचं लुप्तमादाय वा लघुपरकत्वादभ्यासस्य दीर्घः, और्जीजत् । एवमेव एवंजातीयकेषु द्रष्टव्यम् । प्रथ प्रख्याने । प्राथयतीति । णिचि उपधावृद्धिरिति भावः । नन्वस्य घटादिकत्वेन मित्त्वाद्ध्रस्वः स्यादित्यत आह-नान्ये इति । ज्ञपादिपञ्चकव्यतिरिक्तचुरादिषु मित्त्वनिषेधादिति भावः । घटादिकस्य तु मित्त्वाद्धेतुमण्णिचि 'प्रथयती'त्येव भवति । न च चौरादिकस्यैव मित्त्वार्थं घटादावनुवादः किं न स्यादिति वाच्यं, 'नान्ये मितोऽहेतौ' इति निषेधादित्यलम् । अत्स्मृ। अभ्यासस्येति।'अत्र लोपोऽभ्यासस्ये'त्यतस्तदनुवृत्तेरिति भावः । चङ्परे णाविति । 'सन्वल्लघुनी'त्यतश्चङ्परे इत्यनुवर्तते । चङ् परो यस्मादिति बहुव्रीहिः । अन्यपदार्थस्तर्थाणिरेवेति भावः । इत्त्वेति । 'सन्यतः' इति इत्त्वस्यापवाद इत्यर्थः । अपप्रथदिति । अत्र अत्त्वविधानादेव सन्वत्त्वविधावनेकहल्व्यवधानेऽपि लघुपरकत्वमिति विज्ञायते। अन्यथा येन नाव्यवधानन्यायादेकहल्व्यवधानस्यैवाश्रयादत्र सन्वत्त्वविरहादेव इत्त्वाऽप्रवृत्त्या किं तेन ?। संयोगे परे गुरुत्वान्नाऽभ्यासदीर्घः । पृथ प्रक्षेपे । ऋदुपधः । पर्थयतीति । णिचि लघूपधगुणः । रपरत्वम् । उर्ऋत् । 'ऋ' इत्यस्य 'उ'रिति षष्ठ्यन्तं रूपम् । 'णौ चङ्युपधायाः' इत्यनुवर्तते । 'जिघ्रतेर्वे'त्यतो वेति । तदाह-उपधाया इति । ननु ऋकारस्य ऋकारविधिर्व्यर्थ इत्यत आह-इररारामपवाद इति । 'कृत संशब्दने' 'अचीकृत'दिदित्यादौ 'उपधायाश्चे'ति इरत्वे रपरत्वे इर् प्राप्तः, 'अमीमृज'दित्यत्र तु 'मृजेर्वृद्धि'रित्यार् प्राप्तः, प्रकृतपृथधातौ तु चङि णिलोपे प्रत्ययलक्षणेन णिचमाश्रित्य लघूपधगुणे रपरत्वे अर् प्राप्तः, तेषामपवाद इत्यर्थः । अपीपृथदिति । णिचमाश्रित्य प्राप्तं गुणं बाधित्वा ऋकारे, द्वित्वे, उरदत्वे, हलादिशेषे, सन्वत्त्वादित्त्वे, दीर्घे, रूपमिति भावः । अपपर्थदिति । ऋत्वाऽभावपक्षे 'द्विर्वचनेऽची'ति निषेधाद्गुणात्प्राक् द्वित्वे उरदत्वे हलादिशेषे ऋकारस्य णिचमाश्रित्य गुणे रपरत्वे अपपर्थदित्यत्र लघुपरकत्वाऽभावेन सन्वत्त्वविरहादित्त्वदीर्घौ नेति भावः । अट्ट षुट्ट अनादरे । अयं

शे.]भावादिति भावः। परितेत्यादिनि। आदिना ऋकारान्तत्वप्रयुक्तकार्यविशिष्टरूपग्रहणं। फलमिति । एवञ्च 'पर्ते'ति

आट्टिटत्। १५६४ लुण्ठ स्तेये। लुण्ठयति। 'लुण्ठती'ति लुठि स्तेये इति भौवादिकस्य। १५६५ शठ १५६६ श्वठ असंस्कारगत्योः। श्वठि इत्येके। १५६७ तुजि १५६८ पिजि हिंसाबलाऽऽदाननिकेतनेषु। तुञ्जयति। पिञ्जयति। इदित्करणात्तुञ्जति। पिञ्जति। तुजं पिजेति केचित्। लजि लुजि इत्येके। १५६९ पिस गतौ। पेसयति। पेसतीति तु शपि गतम्। १५७० षान्त्व सामप्रयोगे। १५७१ श्वल्क १५७२ वल्क परिभाषणे। १५७३ ष्णिह स्नेहने। स्फिट इत्येके। १५७४ स्मिट अनादरे। अपोपदेशत्वान्न षः। असिस्मिटत्। ष्मिङ् अनादर इत्येके। ङित्त्वस्यावयवेऽचरितार्थत्वाण्णिजन्तात्तङ्। स्माययते। १५७५ श्लिष श्लेषणे। १५७६ पथि गतौ। पन्थयति। पन्थति। १५७७ पिच्छ कुट्टने। १५७८ छदि संवरणे। छन्दयति। छन्दति। १५७९ श्रण दाने। प्रायेणाऽयं विपूर्वः। विश्राणयति। १५८० तड आघाते। ताडयति। १५८१ खड १५८२ खडि १५८३ कडि भेदने। खाडयति। खण्डयति। खण्डति। कण्डयति। कण्डति। १५८४ कुडि रक्षणे। १५८५ गुडि वेष्टने। रक्षण इत्येके। कुठि इत्यन्ये। अवकुण्ठयति। अवकुण्ठति। गुठि इत्यपरे। १५८६ खुडि खण्डने। १५८७ वंठ विभाजने। वडि इत्येके। १५८८ मडि भूषायां हर्षे च। १५८९ भडि कल्याणे। १५९० छर्द वमने। १५९१ पुस्त १५९२ बुस्त आदराऽनादरयोः। १५९३ चुद संचोदने। अचूचुदत्। १५९४ नक्क १५९५ धक्क नाशने। णोपदेशलक्षणे पर्युदस्तोऽयम्। प्रनक्कयति। १५९६ चक्क १५९७ चुक्क व्यथने। १५९८ क्षल शौचकर्मणि। १५९९ तल प्रतिष्ठायाम्। १६०० तुल उन्माने। तोलयति। तोलयामास। अतूतुलत्। कथं तुलयति तुलना इत्यादि। 'अतुलोपमाभ्या'मिति निपातनादङन्तस्य तुलाशब्दस्य सिद्धौ ततो णिच्। १६०१ दुल उत्क्षेपे। [दोलयति। दोलयामास। अदूदुलत्]। १६०२ पुल महत्त्वे। १६०३ चुल समुच्छ्राये। १६०४ मूल रोहणे। [मूलयति। मूलयामास]। १६०५ कल १६०६ बिल क्षेपे। [कालयति]। १६०७ बिल भेदने। १६०८ तिल स्नेहने। १६०९ चल भृतौ। १६१० पाल रक्षणे। १६११ लूष हिंसायाम्। १६१२ शुल्ब माने। १६१३ शूर्प च। १६१४ चुट छेदने। १६१५ मुट संचूर्णने। १६१६ पडि १६१७ पसि नाशने। पण्डयति। पण्डति। पंसयति। पंसति। १६१८ व्रज मार्गसंस्कारगत्योः। १६१९ शुल्क अतिस्पर्शने। १६२० चपि गत्याम्। चम्पयति। चम्पति। १६२१ क्षपि क्षान्त्याम्। क्षम्पयति। १६२२ क्षंजि कृच्छ्रजीवने।

---

स.] 'कृपो रो लः' इत्यनेन ऋकारैकदेशस्य लृकारैकदेश इत्यभ्युपगमे तु उक्तव्याख्यानक्लेशध्रौव्यात्।[इदं च कैयटरीत्योक्तम्। नत्विदं क्षोदक्षमम्, 'ऋत उत्' इत्यनेन तपरकरणेन लृवर्णग्राहकत्वे रूपसिद्धेः स्पष्टत्वात् ]। **अयं दोपध इति।** टोपधत्वे त्वाट्टिटदिति स्यादिति भावः। **शठ श्वठ।** शाठयति। असंस्कृतो भवति, गच्छति वेत्यर्थः। **स्माययत इति।** आत्वं तु नेह भवति, 'नित्यं स्मयते'रिति निर्देशेन 'स्मिङ् ईषद्धसने' इति भौवादिकादेव हेतुमण्णौ तद्विधानात्। **श्रण दाने।** **विश्राणनं**-वितरणम्। **चुद संचोदने।** 'ण्यासश्रन्थः' इति युचि-चोदना। **व्रज मार्ग।** व्राजयति। मार्गयति। केचित्तु मार्गेति न धात्वन्तरं किं तु व्रजेरेक एव धातुर्मार्गसंस्कारे गतौ चेति व्याचख्युः।

---

बा.] **दोपध इति।** अड्डधातुरित्यर्थः। दकारस्य ष्टुत्वचर्त्वाभ्यां निर्देश इति भावः। दोपधत्वस्य प्रयोजनमाह-**ष्टुत्वस्येति।** तथा च दकारं विहाय 'टि' इत्यस्य द्वित्वे अद् टिटत् इति स्थिते दस्य ष्टुत्वे चर्त्वे च 'आट्टिट'दिति रूपमिष्टं सिद्ध्यति। स्वाभाविकटोपधत्वे तु 'न न्द्राः' इति निषेधाऽभावाट्टकारद्वयसहितस्य ण्यन्तस्य द्वित्वे हलादिशेषेणाऽभ्यासे प्रथमटकारस्य अनिवृत्तौ आटिट्टदिति अनिष्टं रूपं स्यादिति भावः। **ष्मिङ् अनादरे।** ननु णिचश्चेत्यात्मनेपदसिद्धेः किमर्थं ङित्करणमित्यत आह-**णिजन्तात्तङिति।** तङेवेत्यर्थः। अकर्त्रभिप्रायेऽपि फले णिजन्तादात्मनेपदार्थं ङित्करणमिति यावत्। ननु कृतेऽपि ङित्करणे णिजन्तस्य ङित्त्वाऽभावात्कथमुक्तप्रयोजनलाभ इत्यत आह-**अवयवेऽचरितार्थत्वादिति।** ण्यन्तावयवे ष्मिङ्धातौ ङित्त्वं व्यर्थं, तस्य णिचं विना प्रयोगाऽभावात्। ततश्चाऽवयवे श्रुतं ङित्त्वं ण्यन्तादेव कार्यं साधयतीत्यर्थः। **स्माययते इति।** णिचि वृद्धौ आयादेशे स्मायीति ण्यन्ताल्लटस्तिपि शपि गुणाऽयादेशाविति भावः। असिष्मयत। **तुल उन्माने। कथमिति।** लघूपधगुणप्रसङ्गादिति भावः। **तुलनेति।** 'ण्यासश्रन्थो यु'जिति भावः। समाधत्ते-**अतुलोपमाभ्यामिति। आदन्तस्येति।** तुलधातोर्ण्यन्तात्पचाद्यचि निपातनाद्गुणाऽभावे स्त्रीत्वे तुलाशब्द आदन्तः। 'ततस्तत्करोति तदाचष्टे' इति णिचि इष्ठवत्त्वाट्टिलोपे तुलीति ण्यन्ताल्लटस्तिपि युचि च 'तुलयती'ति 'तुलने'ति च रूपम्। अकारलोपस्य 'अचः परस्मि'न्निति स्थानिवत्त्वान्न गुण इति भावः। **व्रज मार्गेति।** व्राजयति। मार्गयति। यद्वा-मार्गेति न धात्वन्तरम्। व्रजधातुर्मार्गसंस्कारे गतौ चेत्यर्थः।

---

शे.] रूपवारणाय दीर्घोच्चारणमिति भावः। वस्तुत इदमपि ज्ञापकं चिन्त्यमेव, दीर्घपाठस्य सन्दिग्धत्वादित्याहुः। **षान्त्व साम।** केचित्त्वत्र 'षाम सान्त्वप्रयोगे' इति पठन्ति। **णिजन्तात्तङिति।** चित्रङादावुक्तन्यायस्य क्लृप्तत्वाच्छात्र-

१६२३ श्वर्त गत्याम्। १६२४ श्वभ्र च। १६२५ ज्ञप मिच्च। अयं ज्ञाने ज्ञापने च वर्तते। **मितां ह्रस्वः** ।६।४।९२। मितामुपधाया ह्रस्वः स्याण्णौ परे। ज्ञपयति। १६२६ **यम च परिवेषणे**। चान्मित्। परिवेषणमिह वेष्टनम्। न तु भोजना, नापि वेष्टना। यमयति चन्द्रम्। परिवेष्टत इत्यर्थः। १६२७ **चह परिकल्कने**। चहयति। अचीचहत्। कथादौ वक्ष्यमाणस्य तु अदन्तत्वेनाऽग्लोपित्वाद्दीर्घसन्वद्भावौ न। अचचहत्। चप इत्येके। चपयति। १६२८ रह त्यागे इत्येके। अरीरहत्। कथादेस्तु अररहत्। १६२९ बल प्राणने। बलयति।

---

त.] **ज्ञप मिच्च**। चान्नित्यामित्येके। ज्ञपधातुर्णिचं लभते मित्संज्ञकश्चेत्यन्ये **ज्ञाने ज्ञापने चेति**। 'प्रतिपज्ज्ञप्तिचेतना:'। प्रच्छ ज्ञीप्सायामित्यत्र ज्ञाने, 'श्लाघह्नु'ङिति सूत्रे 'ज्ञीप्स्यमानो बोधयितुमिष्यमाण' इति व्याख्यायां ज्ञापने च प्रयोगदर्शनादिति भावः। **वेष्टनमिति**। 'परिवेषस्तु परिधि'रित्यमरः। **न त्वित्यादि**। अयं भावः—घटादौ 'यमोऽपरिवेषणे' इति पठितं, तत्र हि परिवेषणमिति हेतुमण्ण्यन्तस्य रूपम्। हेतुमण्ण्यन्तस्य हि भोजना वेष्टना चाऽर्थः। तथा च अपरिवेषण इत्यनेन भोजनातो वेष्टनातश्चान्यत्र मित्त्वनिषेधेऽपि तयोरर्थयोस्त्वमन्तत्वादेव मित्त्वसिद्धेरिति। यद्यपि घटादौ 'यच्छति-भोजनातोऽन्यत्र मिन्ने'ति व्याख्यातं तथाप्यत्रत्यग्रन्थानुगुण्येनोपलक्षणतया तद्व्याख्येयमित्याहुः। अत्रेदं बोध्यं—घटादौ 'यमोऽपरिवेषणे' इत्यत्र परिपूर्वकस्य विषेर्णिजन्तस्य ल्युटि रूपम्, 'यम च परिवेषणे' इत्यत्र तु केवलस्यैव ल्युटि रूपं न तु णिजन्तस्य। तथा च भोजनावद्वेष्टनाया अपि परिवेषणशब्दार्थत्वादुभयत्राप्यमन्तत्वेनैव मित्त्वं सिध्यति। वेष्टने तु

---

बा.] **ज्ञप मिच्चेति**। ज्ञपधातुर्णिचं लभते, मित्संज्ञश्चेत्यर्थः। मित्त्वकार्यभागिति वा। धातुपाठेऽर्थनिर्देशाऽभावादाह—**अयमिति**। 'प्रच्छ ज्ञीप्साया'मित्यत्र ज्ञाने, 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' इत्यत्र ज्ञापने च प्रयोगदर्शनादिति भावः। **मितां ह्रस्वः**। 'ऊदुपधाया गोहः' इत्यत उपधाया इति, 'दोषो णौ' इत्यतो णाविति चानुवर्तते। तदाह—**मिताम्-उपधाया इत्यादिना**। **ज्ञपयतीति**। णिचि उपधावृद्धौ ह्रस्व इति भावः। **यम च परिवेषणे**। **चान्मिदिति**। 'इति अनुकृष्यते' इति शेषः। यमधातुः परिवेषणे णिचं लभते, मित्कार्यभाक्चेत्यर्थः। मित्संज्ञक इति वा। **परिवेषणमिह वेष्टनमिति**। 'परिवेषस्तु परिधि'रिति कोशादिति भावः। **न तु भोजनमिति**। भुजेर्हेतुमण्ण्यन्तात्स्त्रियामित्यधिकारे 'ण्यासश्रन्थो युच्'। क्लीबत्वं लोकात्। 'भोजने'त्येव क्वचित्पाठः। भोक्तुः पात्रे भोज्यद्रव्योपकल्पनमिह न परिवेषणमित्यर्थः। भोजनायां यमेर्हेतुमण्ण्यन्तस्य अमन्तत्वादेव मित्त्वसिद्धेरिति भावः। **परिवेष्टत इत्यर्थ इति**। अनेन इह परिविषेर्ण्यन्तात्ल्युटि परिवेषणशब्द इति सूचितम्। नच वेष्टनेऽप्यर्थे यमेरमन्तत्वादेव सिद्धे मित्त्वविधिर्व्यर्थ इति वाच्यं, 'न कम्यमिचमा'मिति मित्त्वप्रतिषेधप्रकरणस्थे 'यमोऽपरिवेषणे' इति घटाद्यन्तर्गणसूत्रेऽपरिवेषणे इति पर्युदासेन भोजनतोऽन्यत्र वेष्टनेऽर्थे मित्त्वनिषेधस्य प्राप्तौ मित्त्वप्रापणार्थत्वात्। 'यमोऽपरिवेषणे' इत्यत्र परिवेषणशब्देन भोजनाया एव विवक्षितत्वेन वेष्टने यमेर्मित्त्वनिषेधस्य प्रसङ्गात्। अत एव 'यमिर्भोजनातोऽन्यत्र न मि'दिति व्याख्यातं मूलकृता। भोजनायां तु 'यमोऽपरिवेषणे' इति मित्त्वनिषेधविधौ भोजनायाः पर्युदासादेव तत्र मित्त्वनिषेधाऽभावादमन्तत्वादेव मित्त्वप्राप्तेरिह चुरादौ परिवेषणशब्देन वेष्टनमेव विवक्षितं नतु भोजनेत्यास्तां तावत्। **चह परिकल्पने इति**। इत आरभ्य 'चिञ् चयने' इत्येतत्पर्यन्तं चेत्यनुवर्तते। अतस्तेषां मित्त्वाण्णिचि ह्रस्वः। तदाह—**चहयतीति**। नन्वनेनैव सिद्धे अग्रे चुराद्यन्तर्गणे कथादावस्य पाठो व्यर्थ इत्यत आह—**कथादाविति**। 'कथादयोऽदन्ता' इति वक्ष्यते। तस्माण्णिचि अल्लोपे चहयतीत्यादौ अल्लोपस्य स्थानिवत्त्वाद्वृद्ध्यभावे मित्त्वाद्ध्रस्वे च न विशेषः। तथापि अदन्ताच्चङि णौ अल्लोपे सति अग्लोपितया सन्वत्त्वदीर्घयोरभावे 'अचचह'दिति रूपमस्ति फलमित्यर्थः। **चप इत्येके इति**। 'चह परिकल्पने' इत्यस्य स्थाने 'चपे'त्येके पठन्तीत्यर्थः। 'रह त्यागे इत्येके' इत्यपि तथैव व्याख्येयम्। एवंच ज्ञपादिषु पञ्चसु चहधातुश्चपधातुः रहधातुर्वा अन्यतमस्तृतीयः, बलधातुश्चतुर्थः, चिञ्धातुः पञ्चम इति कृत्वा ज्ञपादिपञ्चानां मतत्रयेऽपि पञ्चत्वाज्ज्ञपादिपञ्चकत्वस्य न विरोधः। 'रह त्यागे' इत्यस्यापि कथादिपाठफलमाह—**कथादेस्तु अररहदिति**। अदन्तत्वेन अग्लोपित्वान्न दीर्घसन्वत्त्वे इति भावः। **बल प्राणने**। 'चे'त्यनुवृत्त्या मित्त्वस्यानुकर्षणा-

---

शे.] बाधस्याऽन्याय्यत्वाच्च णिचो वैकल्पिकत्वं नोक्तम्। **ज्ञापने चेति**। चान्मारणादावपीत्यन्ये। **वेष्टनमिति**। अण्यन्तपरिविषेर्ल्युडिति भावः। नन्वण्यन्ततत्प्रकृतिकल्युडन्तेनाऽदनीयवस्तुनो भोजनार्थं भोजनपात्रे निक्षेपोऽप्युच्यते, तत्रा[पि मित्त्वं स्यादत आ]ह—**न तु भोजनेति**। उक्तरूपेत्यर्थः। भुज्यर्थयमधातोर्हेतुमण्णावमन्तत्वेन मित्त्वसिद्धेः। ननु ण्यन्तात्ल्युटि वेष्टनापि परिवेषणशब्देनोच्यते तत्रापि मित्त्वं स्यादत आह—**नापि वेष्टनेति**। अमन्तत्वेनैव सिद्धेः। 'न कमी'ति निषेधप्रकरणस्थे 'यमोऽपरिवेषणे' इति परिवेषणभिन्नेऽर्थे मित्त्वनिषेधके घटाद्यन्तर्गणसूत्रे भोजनावद्वेष्टनाऽपि गृह्यते, विनिगमनाविरहादिति भावः। घटादिपठितवचने वेष्टनन्तु न परिवेषणशब्देन गृह्यते, तस्य हेतुमण्णावेव

**१६३० चिञ् चयने । चिस्फुरोर्णौ** ।६।१।५४। आत्वं वा स्यात् । **अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ** ।७।३।३६। चपयति । चययति । ञित्करणसामर्थ्यादस्य णिज्विकल्पः । चयति । चयते । प्रणिचयति । प्रनिचयति । (ग) **नान्ये मितोऽहेतौ** । अहेतौ=स्वार्थे णिचि ज्ञपादिभ्योऽन्ये मितो न स्युः । तेन शमादीनाममन्तत्वप्रयुक्तं मित्त्वं न । **१६३१ घट्ट चलने । १६३२ मुस्त सङ्घाते । १६३३ खट्ट संवरणे । १६३४ षट्ट १६३५ स्फिट्ट १६३६ चुबि हिंसायाम्** ।**१६३७ पूलं सङ्घाते** । **पूर्ण इत्येके** । **पुणेत्यन्ये** । **१६३८ पुंस अभिवर्द्धने । १६३९ टकि बन्धने** । टङ्कयति । टङ्कति । **१६४० धूस कान्तिकरणे** । धूसयति । दन्त्याऽन्तः । मूर्धन्याऽन्त इत्येके । तालव्याऽन्त इत्यपरे । **१६४१ कीट वर्णे । १६४२ चूर्ण सङ्कोचने । १६४३ पूज पूजायाम् । १६४४ अर्क स्तवने**। तपन इत्येके। आर्चिकत्। **१६४५ शुठ आलस्ये**। **१६४६ शुठि शोषणे**।शुण्ठयति। शुण्ठति । **१६४७ जुड प्रेरणे । १६४८ गज १६४९ मार्ज शब्दार्थौ** । गाजयति । मार्जयति । **१६५० मर्च च** । मर्चयति । **१६५१ घृ प्रस्रवणे** । स्रावण इत्येके । **१६५२ पचि विस्तारवचने** । पञ्चयति । पञ्चति । 'पञ्चते' इति व्यक्तार्थस्य शपि गतम् । **१६५३ तिज निशाने** । तेजयति । **१६५४ कृत संशब्दने । उपधायाश्च** ।७।१।१०१।

---

**त.]** अपरिवेषण इत्यनेन अमन्तत्वप्रयुक्तमित्त्वस्य निषेधेऽपि 'यम च परिवेषणे' इत्यनेन मित्त्वं सिध्यतीति दिक्। **चिस्फुरोर्णौ** । 'आदेच उपदेशे' इत्यत आदित्यनुवर्तते 'विभाषा लीयतेः' इत्यतो विभाषाग्रहणं च। तदाह—**आत्वं वा स्यादिति । अर्तिह्री** । परत्वादन्तरङ्गत्वाच्च आदौ पुक्, पश्चाद्गुणः। अर्पयति । ह्रेपयति । व्लेपयति। रेपयति । यलोपः । क्नोपयति । क्ष्मापयति । स्थापयति । **चपयतीति** । वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तते, 'आतोऽनुपसर्गे' इति कबाधनाय 'ह्वावामश्चे'त्यारम्भादिति भावः । **ज्ञपादिभ्य इति** । मुख्यमते पञ्च ज्ञपादयः । मतान्तरे तु सप्त । **पूर्ण इत्येके । पुणेत्यन्ये इति** । ईदृशेषु पाठशुद्धिर्निर्णेतुमशक्या । अतएव क्षीरस्वामिनोक्तम्—'**पाठेऽर्थे चागमभ्रंशान्महतामपि मोहतः । न विद्मः किं जहीमोऽत्र किमुपाददहे वयम्**' । इति । **पूलपूर्णादिषु पाठे भ्रंशः**। वजधातोर्मार्गसंस्कारोऽर्थ उत संस्कार एवेत्यर्थे **भ्रंशः**। **आगमभ्रंशात्**—शास्त्रभ्रंशात् । **चूर्ण** संकोचने। प्रेरणे पठितस्य पुनः पाठोऽर्थभेदकृतः। **मर्च चेति** । क्वचिद्धातुपाठेऽस्याऽदृष्टत्वेऽपि नाऽयमप्रामाणिक इति मन्तव्यम् । 'मिदचोऽन्त्यात्परः' इति सूत्रे कैयटेनाऽस्योपन्यस्तत्वात् । 'मर्तो मर्तं मर्चयति द्वयेने'ति प्रयोगदर्शनाच्च । **उपधायाश्च** ।

---

**बा.]** ह्रस्वं मत्वाह—**चलयतीति । चिस्फुरोर्णौ**। 'आदेच उपदेशे' इत्यत आदिति, 'विभाषा लीयते'रित्यतो विभाषेति चानुवर्तते इति मत्वा शेषं पूरयति—**आत्वं वा स्यादिति** । चिञो णिचि आत्वे चा इ इति स्थिते—**अर्तिह्री** । अर्ति ह्री व्ली री क्नूयी क्ष्मायी आत् एषां द्वन्द्वात्षष्ठी । 'पुक् णौ' इति छेदः । तदाह—**एषां पुक्स्याण्णौ इति** । पुकि ककार इत्, उकार उच्चारणार्थः।कित्त्वादन्तावयवः।चाप् इ इति स्थिते चेत्यनुवर्त्य मित्त्वस्याऽनुकर्षणेन मित्त्वाद्ध्रस्वे 'चपी'त्यसमुत्तिबादौ परिनिष्ठितमाह—**चपयतीति** । आत्वाऽभावपक्षे त्वाह—**चययतीति** । चेर्णिचि वृद्धौ आया देशे मित्त्वादुपधाह्रस्व इति भावः । ननु चिञ्धातोरिह ञित्करणं व्यर्थम् , ण्यन्ताणिचश्चेत्येव उभयपदसिद्धेः । चौरादिकस्याऽस्य नित्यं ण्यन्तत्वेन चयति चयते इति केवलस्याऽण्यन्तस्य शशश्रृङ्गायमाणत्वादित्यत आह—**ञित्करणसामर्थ्यादिति** । एवंच णिजभावपक्षे उभयपदार्थमिह ञित्करणमर्थवदिति भावः । 'शेषे विभाषाऽकखादौ' इति णत्वविकल्पं मत्वा आह—**प्रणिचयति प्रनिचयति इति** ।'**नान्ये मितोऽहेतौ' इति**।चुरादिगणसूत्रम् । अहेताविति च्छेदः । 'हेतुमति चे'ति सूत्रेण विहितो णिच् 'हेतु'शब्देन विवक्षितः। स न भवतीत्यहेतुः—स्वार्थणिच् । तस्मिन्परे इति लभ्यते । किमपेक्षया अन्ये इत्याकाङ्क्षायां मितः प्राक् पठितज्ञपादिचिञन्तेभ्य इति लभ्यते । तदाह—**अहेतौ स्वार्थे णिचीत्यादिना** । अहेताविव्यस्य व्याख्यानं—**स्वार्थे णिचीति । तेनेति** । ज्ञपादिचिञन्तव्यतिरिक्तचुरादीनां मित्त्वनिषेधेनेत्यर्थः । **शमादीनामिति** । 'शम आलोचने' 'अम रोगे'इत्यादीनामग्रे चुरादौ पठिष्यमाणानामित्यर्थः । **अमन्तत्वेति** । 'जनीजृष्क्नसुरञ्जोऽमन्ताश्चे'त्यमन्तत्वनिमित्तकमित्यर्थः । **कृत संशब्दने । उपधायाश्च** । 'ॠत इद्धातो'-

---

**शे.]** प्रवृत्तेःफलाऽभावादिति भावः।केचित्त्वत्र सूत्रेऽर्थत्रयग्रहणेऽपि बाधकाऽभावः,विनिगमनाविरहाच्च सर्वग्रहणं, घटादिपठितेऽपरिवेषण इति तु ततो हेतुमण्णौ 'यामयती'त्येतद्वारणाय।न चैवमत्रार्थत्रयग्रहणं व्यर्थम्, एकणिज्ज्ञानेपि धर्मोत्पत्तिबोधनेन सार्थक्यादित्याहुः।**चिस्फुरो**।अत्र णिशब्देन चुरादिणिच एव ग्रहणं,प्रतिपदोक्तत्वात्।अत एव स्वादेश्चेरन्यस्य स्फुरश्चात्र न ग्रहणम् । नन्वेवमस्य चिञो ञित्त्वं व्यर्थं; सामान्यग्रहणस्य तवाऽनिष्टत्वेन सामान्यग्रहणाऽविघातार्थमपि नेत्यत आह—**ञित्करणेति**।एवञ्चाऽस्माण्णिजभावे हेतुमण्णावपि नाऽऽत्वमिति बोध्यम्।इदं माधवाद्यनुसारेण।**परे तु** ञित्त्वं सामान्य-

धातोरुपधाभूतस्य ऋत इत्स्यात्। रपरत्वम्। 'उपधायां चे'ति दीर्घः। कीर्तयति। 'उर्ऋत्'। अचीकृतत्। अचिकीर्तत्। १६५५ वर्ध छेदनपूरणयोः। १६५६ कुबि [ओ]च्छादने। कुम्बयति। कुम्बति। कुभि इत्येके। १६५७ लुबि १६५८ तुबि अदर्शने। अर्दन इत्येके। १६५९ ह्लप व्यक्तायां वाचि। क्लप इत्येके। १६६० चुटि छेदने। १६६१ इल प्रेरणे। एलयति। ऐलिलत्। १६६२ म्रक्ष म्लेच्छने। १६६३ म्लेच्छ अव्यक्तायां वाचि।[भ्रक्षंभ्लक्ष अदने]।१६६४ब्रूस १६६५ बर्ह हिंसायाम्। केचिदिह–गर्ज गर्द शब्दे। गर्ध अभिकाङ्क्षायामिति पठन्ति। १६६६ गुर्द पूर्वनिकेतने। १६६७ जसि रक्षणे। मोक्षण इति केचित्। जंसयति। जंसति। १६६८ ईड स्तुतौ। १६६९ जसु हिंसायाम्। १६७० पिडि सङ्घाते। १६७१ रुष रोपे। रुट इत्येके। १६७२ डिप क्षेपे। १६७३ ष्टुप समुच्छ्राये। आ कुस्मादात्मनेपदिनः। 'कुस्म नाम्नो वे'ति वक्ष्यते तमभिव्याप्येत्यर्थः। अकर्तृगामिफलार्थमिदम्। १६७४ चित संचेतने। चेतयते। अचीचितत। १६७५ दशि दंशने। दंशयते। अददंशत। इदित्त्वाण्णिजभावे–दंशति। आकुस्मीयमात्मनेपदं णिच्सन्नियोगेनैवेति व्याख्यातारः। नलोपे सञ्जिसाहचर्याद्भ्वादेरेव ग्रहणम्। १६७६ दसि दर्शनदंशनयोः। दंसयते। दंसति। दसेत्यप्येके। १६७७ डप १६७८ डिप सङ्घाते। १६७९ तत्रि कुटुम्बधारणे। तन्त्रयते। चान्द्रास्तु धातुद्वयमिति मत्वा 'कुटुम्बयते' इत्युदाहरन्ति।१६८० मन्त्रि गुप्तपरिभाषणे।१६८१ स्पश ग्रहणसंश्लेषणयोः। [अपस्पशत]।१६८२ तर्ज १६८३ भर्त्स तर्जने। १६८४ बस्त १६८५ गन्ध अर्दने। बस्तयते। गन्धयते। १६८६ विष्क हिंसायाम्। हिष्केत्येके। १६८७ निष्क परिमाणे। १६८८ लल ईप्सायाम्। १६८९ कूण सङ्कोचने। १६९० तूण पूरणे। १६९१ भ्रूण आशाविशङ्कयोः। १६९२ शठ श्लाघायाम्। १६९३ यक्ष पूजायाम्। १६९४ स्यम वितर्के। १६९५ गूर उद्यमने। १६९६ शम १६९७ लक्ष आलोचने। 'नाऽन्ये मित' इति मित्त्व-

---

त.]'ऋत इद्धातो'रिति वर्तते।तदाह–**धातोरुपधाया इति**।ननु 'ऋत इद्धातो'रिति सूत्रे धातोर्ऋत इति वैयधिकरण्येन व्याख्याने सिद्धमिष्टमिति किमनेन सूत्रेणेति चेन्मैवम्। तथा हि सति ऋकारीयतीत्यत्रापि इत्वप्रसङ्गात्। **अर्दन इत्येके इति**। अत्र वदन्ति–अर्दने लुबितुबि भ्वादौ पठितौ, तयोस्तत्र पाठो वृथा स्यात्। इदित्त्वादेव लुम्बति तुम्बतीत्यादिरूपसिद्धेः। अदर्शने त्वर्थेऽर्थभेदाद्भ्वादिपाठः सार्थक इत्यर्दनार्थत्वं चौरादिकयोरयुक्तमित्यस्वरसादेक इत्युक्तमिति। **म्रक्ष** म्लेच्छने। म्रक्षणेऽप्ययम्। तच्च तैलादिनाऽभ्यञ्जनम्। म्रक्षयति। अमम्रक्षत्। **गुर्द पूर्व** निकेतने। गुर्दयति। पूर्वयति। केचित्तु 'पूर्वनिकेतने' इति पठित्वा गुर्दधातुः पूर्वनिवासे वर्तते इति व्याचक्षते। **जसु** हिंसायाम्। क्वायामिड्विकल्पार्थमुदित्करणमिति तत्सामर्थ्यादस्य णिज्ञनित्यः। जासयति। जसति। जसित्वा। जस्त्वा। जस्तम्। **चिति** संचेतने। **संचेतनं**–मूर्च्छाद्यवस्थानिवृत्त्युत्तरकालिकं ज्ञानम्। **दंशतीति**। इह 'दंशसञ्जे'ति नलोपमाशङ्क्याह–**सञ्जिसाहचर्यादिति**। **स्पश**। स्पाशयते। 'अत्स्मृदृत्वरे'त्यादिनाऽभ्यासस्य अत्वम्–इत्वापवादः। अपस्पशत्। **तर्ज भर्त्स** तर्जने। तर्जयते। भर्त्सयते। 'तर्जयन्निव केतुभि'रिति प्रयोगस्तु णिजन्तादस्माद्भौवादिकात्तर्जतेर्वा हेतुमण्णिचि बोध्यः। **भ्रूण**। भ्रूणयते। 'भ्रूणोऽर्भके स्त्रैणगर्भे' इत्यमरः। **गूर** उद्यमने। दीर्घोपधोऽयम्। गूरयते। ह्रस्वोपधस्तु दिवादौ चेति मनोरमायां स्थितम्। यद्यपि तुदादौ 'गुरी उद्यमने' इति पाठाद्ध्रस्वोपध एव तथापि दिवादौ घूरी गूरी हिंसागत्योरिति पाठान्नास्ति ह्रस्वोपध इति नव्याः। **शम लक्ष**। ननु 'निशामय तदुत्पत्ति'मित्यत्र शामय इत्येतत् शमु

---

बा.]रित्यनुवर्तते। तदाह–**धातोरित्यादिना**। चङि 'उर्ऋ'दित्युपधाया ऋत्त्वपक्षे आह–**अचीकृतदिति**। उपधाया ऋत्त्वे कृदित्यस्य द्वित्वे उरदत्त्वे लघुपरतया सन्वत्त्वादित्त्वे 'दीर्घो लघो'रिति दीर्घ इति भावः। ऋत्वाऽभावपक्षे आह–**अचिकीर्तदिति**। ऋत इत्त्वे रपरत्वे 'उपधायां च' इति दीर्घे कीर्दित्यस्य द्वित्वे हलादिशेषे अभ्यासह्रस्वे चुत्वमिति भावः। लघुपरकत्वाऽभावेन सन्वद्भावविषयत्वाऽभावान्नाऽभ्यासदीर्घः। 'आकुस्मा'दित्यत्र आङभिविधाविति मत्वाह–**तमभिव्याप्येति**। ननु 'णिचश्चे'ति सिद्धे आत्मनेपदविधानं व्यर्थमित्यत आह–**अकर्तृगामीति**। ननु 'दशि दंशने' णिजभावे 'दंशती'ति कथम्। आकुस्मीयत्वेन णिजभावेऽपि तङो दुर्वारत्वादित्यत आह–**आकुस्मीयमिति**। 'दंशसञ्जस्वञ्जां शपी'ति नलोपमाशङ्क्य आह–**नलोपे सञ्जीति**। **स्पश ग्रहणेति**। अपस्पशत। 'अत्स्मृदृत्वरे'ति अभ्यासस्य अत्वम्–इत्वापवादः। **गूर उद्यमने**। अयं दीर्घोपधः। गूरयते। तुदादौ तु 'गुरी उद्यमने' इति

---

शे.]ग्रहणाऽविघातार्थमेव। णिशब्देन चिशब्देन चोभयोरपि ग्रहणम्।एवं स्फुरशब्देनाऽपि। ईदृशरीत्या प्रतिपदोक्तपरिभाषा त्वसार्वत्रिकी।चुरादिशब्दमुच्चार्य विहितत्वेऽपि चिस्फुरावुच्चार्याऽविहितत्वाच्च।एवञ्च स्वादेर्हेतुमण्णावात्वं भवत्येव।उत्तरत्र 'बिभेतेर्हेतुभये' इत्यादौ णावित्यस्य शब्दाधिकारश्च नेत्याहुः।**आ कुस्मादिति**।–गणसूत्रमात्मनेपदविधायकं,तदाह–**अकर्तृ-**

निषेधः । शामयते।[लक्षयते]१६९८ कुत्स अवक्षेपणे।१६९९ त्रुट छेदने।कुट इत्येके । १७०० गल स्रवणे । १७०१ भल आमण्डने । १७०२ कूट आप्रदाने । अवसादने इत्येके । १७०३ कुट्ट प्रतापे । १७०४ वञ्चु प्रलम्भने । १७०५ वृष शक्तिबन्धने । शक्तिबन्धनं-प्रजननसामर्थ्यं, शक्तिबन्धश्च । वर्षयते । १७०६ मद तृप्तियोगे। [मादयते]। १७०७ दिवु परिकूजने।१७०८ गृ विज्ञाने।गारयते।[अजीगरत]।१७०९ विद चेतनाऽऽख्याननिवासेषु। वेदयते । 'सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे।विन्दते विन्दति प्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात्'। १७१० मान स्तम्भे । मानयते । १७११ यु जुगुप्सायाम् । यावयते । १७१२ (ग) कुस्म नाम्नो वा । कुस्मेति धातुः कुत्सितस्मयने वर्तते । कुस्मयते । अचुकुस्मत । अथवा-'कुस्मे'ति प्रातिपदिकं, ततो धात्वर्थे णिच् । इत्याकुस्मीयाः । १७१३ चर्च अध्ययने । १७१४ बुक्क भषणे । १७१५ शब्द उपसर्गादाविष्कारे च । चाद्भषणे । प्रतिशब्दयति । प्रतिश्रुतमाविष्करोतीत्यर्थः । 'अनुपसर्गाच्च' । आविष्कारे इत्येव । शब्दयति । १७१६ कण निमीलने । काणयति । णौ चङ्युपधाया ह्रस्वः 'काण्यादीनां वे'ति विकल्प्यते । अचीकणत् । अचकाणत् । १७१७ जभि नाशने । जम्भयति । जम्भति । १७१८ षूद क्षरणे । सूदयति । असूषुदत् । १७१९ जसु ताडने । जासयति । जसति । १७२० पश बन्धने । पाशयति ।

---

त.]उपशम इत्यस्य.णिचि रूपं चेदमन्तत्वान्मित्त्वे सति ह्रस्वेन भाव्यमित्याशङ्क्य कथमनेन सिद्धमिति वदन्ति, आकुस्मीयत्वात्तङि निशामयस्वेति रूपस्य सर्वसंमतत्वादिति चेत् । अत्राहुः-स्वार्थण्यन्तादस्माद्धेतुमण्णिचि निशामयेति रूपम् । न चार्थोऽसङ्गतिः, 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते' इति सिद्धान्तादिति । कुत्स अवक्षेपणे । 'यूनश्च कुत्सायां'मिति निर्देशादङ् । कुत्सा । 'ण्यासश्रन्थे'ति युच् । कुत्सना। भल । आभण्डनं निरूपणमित्याहुः । वञ्चु प्रलम्भने । ल्युटि वञ्चनम् । उदित्करणस्य क्त्वायामिड्विकल्पार्थत्वाण्णिजनित्यः । वञ्चयति । वञ्चति । वचित्वा । वञ्चित्वा । वक्त्वा । 'वञ्चिलुञ्च्यृतश्चे'ति सेटः क्त्वः कित्त्वविकल्पनात्पाक्षिको नलोपः । इडभावे तु नित्यम् । निष्ठायां तु-वक्तम् । 'यस्य विभाषे'तीण्निषेधः । 'नाम्नो वे'ति वाशब्दं व्याचष्टे-अथ वेति । प्रातिपदिकमिति । 'अन्येष्वपि दृश्यते' इति सूत्रे 'अन्येभ्योऽपी'ति वक्ष्यमाणत्वात्कुपूर्वात्स्मयतेर्डप्रत्यये टिलोपे 'कुगती'ति समासे च निष्पन्नमित्यर्थः। यद्यपि कुपूर्वस्य स्मिङो लङादिषु कुस्मयते इत्यादि सिद्धं तथापि प्रकुस्मयते इत्यादि न सिध्येदुपसर्गस्य धातुना व्यवधानाऽयोगात्। 'कुस्मयांचक्रे' इत्याद्यर्थमपि कुस्मेति पाठोऽर्थवान् । इत्याकुस्मीयाः । चर्च । सर्वोऽपि चुरादिर्णिच् पाक्षिक इति पक्षे 'गुरोश्च हलः' इत्यप्रत्ययः। चर्चा । कण निमीलने । एकनेत्रनिमीलन एवायं शब्दः, स्वभावात् । काणः । काण्यादी-

---

बा.]ह्रस्वोपधः । दिवादौ तु 'घूरी, गूरी हिंसागत्यो'रिति दीर्घोपध एवेति केचित् । ह्रस्वोपध इत्यन्ये । विदधातोरर्थभेदे विकरणभेदं सङ्गृह्णाति-सत्तायां विद्यते इत्यादिश्लोकेन । कुस्म नाम्नो वा । गणसूत्रम् । 'कुस्मे'ति पृथक्पदमविभक्तिकम् । तदाह-कुस्म इति धातुरिति । 'कुत्सितस्मयने वर्तते' इति शेषपूरणं, व्याख्यानादिति भावः । कुस्मयते इति । आकुस्मीयत्वादकर्तृगेऽपि फले आत्मनेपदम् । 'आकुस्मादात्मनेपदिन' इत्यत्र आङभिविधावित्याश्रयणादिति भावः । अचुकुस्मतेति । उकारस्य गुरुतया अभ्यासस्य लघुपरकत्वाऽभावान्न सन्वत्त्वमिति भावः । 'नाम्नो वे'त्यंशं व्याचष्टे-अथवेति । नाम = प्रातिपदिकं, तस्माद्वा णिज्भवतीत्यर्थः । तच्च प्रातिपदिकं कुस्मशब्दात्मकमेव गृह्यते, प्रत्यासत्त्या । तथा च कुस्मेति धातोः, कुस्मेति प्रातिपदिकाद्वा णिजिति फलितम् । तत्र धातोर्णिचः स्वार्थिकत्वमभिप्रेत्य प्रातिपदिकाण्णिचि विशेषमाह-तत इति । तस्मात् = प्रातिपदिकादित्यर्थः । धात्वर्थे इति । करोतीत्यर्थे, आचष्टे इत्यर्थे वेत्यर्थः । नच 'तत्करोति तदाचष्टे' इत्येव प्रातिपदिकाण्णिच् सिद्ध इति वाच्यम्, 'आकुस्मादात्मनेपदिनः' इत्यात्मनेपदनियमार्थत्वात् । इत्याकुस्मीयाः । शब्द उपसर्गादिति । उपसर्गात्परः शब्दधातुराविष्कारे वर्तते इत्यर्थः। अनुपसर्गाच्चेति । अनुपसर्गात्परोऽपि शब्दधातुर्णिचं लभते इत्यर्थः । 'आविष्कारे' इत्यस्यैवानुवृत्त्यर्थं पृथगुक्तिः । 'शब्द आविष्कारे चे'त्येतावत्येवोक्ते अनुपसर्गाद्भाषणेऽपि स्यात् । तदाह-आविष्कारे इत्येवेति। काण्यादीनामिति । इदं वार्तिकं 'भ्राजभासभाषे'ति सूत्रे भाष्ये पठितम् । 'काणिराणिश्राणिभाणिहेठिलोपय:

---

शे.]गेति । णिच्संनियोगेनैवेति च । भल आभण्डने। 'आलम्बने' इति पाठान्तरम्। 'नाम्नो वा' इत्यशं व्याचष्टे अथ वेति । धात्वर्थे इति । करोत्यर्थे आचष्टे इत्यर्थे वेत्यर्थः । शब्द उपसर्गादिति । यद्यपि शब्दशब्दात् 'तत्करोती'ति णिचि 'शब्दयति' 'प्रतिशब्दयती'त्यादि सिद्धं, तथापि 'शब्दवैरे'ति क्यङा बाधाऽभावाय, विशिष्टेऽर्थे

१७२१ अम रोगे । आमयति । 'नाऽन्ये मित' इति निषेधः । अम गत्यादौ शपि गतः, तस्माद्धेतुमण्णौ 'न कम्यमिचमा'मिति निषेधः। आमयति। १७२२ चट १७२३ स्फुट भेदने। विकासे शशपोः स्फुटति स्फोटते इत्युक्तम् । १६२४ घट सङ्घाते । घाटयति । (ग) हन्त्यर्थाश्च । नवगण्यामुक्ता अपि हन्त्यर्थाः स्वार्थे णिचं लभन्त इत्यर्थः ।। १७२५ दिवु मर्दने । उदित्त्वाद्देवतीत्यपि । १७२६ अर्ज प्रतियत्ने । अयमर्थान्तरेऽपि । द्रव्यमर्जयति । १७२७ घुषिर् विशब्दने । घोषयति। 'घुषिरविशब्दने'इति सूत्रेऽविशब्दन इति निषेधाल्लिङ्गाद-नित्योऽस्य णिच् । घोषति । इरित्त्वादङ्वा । अघुषत् । अघोषीत् । ण्यन्तस्य तु-अजूघुषत् । १७२८ आङः क्रन्द-सातत्ये । भौवादिकः क्रन्दधातुराह्वानाद्यर्थे उक्तः स एवाङ्पूर्वो णिचं लभते सातत्ये । आक्रन्दयति । अन्ये तु आङ्पूर्वो घुषिः क्रन्दसातत्ये इत्याहुः । आघोषयति । १७२९ लस शिल्पयोगे । १७३० तसि १७३१ भूष अलङ्करणे । अवतंसयति । अवतंसति । भूषयति । १७३२ अर्ह पूजायाम् । १७३३ ज्ञा नियोगे । आज्ञा-पयति । १७३४ भज विश्राणने । १७३५ शृधु प्रहसने । अशीशृधत् । अशशर्धत् । १७३६ यत निकारो-

त.]नामिति । एते हेतुमण्ण्यन्तेषु वक्ष्यन्ते। हन्त्यर्थाश्च।तेन घातयति हन्तीत्येतौ समानार्थौ। अर्ज। प्रतियत्नो गुणा-धानम् । अर्जयतीति । सङ्गृह्णातीत्यर्थः । घुषिर् । अविशब्दनं-प्रतिज्ञानम् । निषेधाल्लिङ्गादिति । घुषिरवि-शब्दन इति सूत्रेण अविशब्दने निष्ठाया इण्निषिध्यते, विशब्दनार्थादेतस्मादनन्तरा निष्ठा नास्त्येव, णिचा व्यवधानात् । अतो घुषिरविशब्दन इति भौवादिकादेव निष्ठाया इण्निषेधो भवेदिति किं विशब्दनप्रतिषेधेन ?। ततश्चानेनैव विशब्दन-प्रतिषेधेनाऽनित्योऽस्य णिजिति ज्ञाप्यते इति भावः।इरित्करणादपि णिज्विकल्पः सिध्यतीति केचित् । शिल्पयोग इति। क्रियाकौशलं शिल्पम् । यत निकारोपस्कारयोः । यत्नो वा प्रैषो वा निकारः। 'निराकारोपस्कारयो'रिति पाठान्तरम् । क्रियानिघण्टौ 'यत्ने प्रैषे निराकारे पादपे चाप्युपस्कृतौ । निसोऽयं धान्यधनयोः प्रतिदाने' इत्युक्तम् ।

बा.]षड्गाण्यादयः' इति भाष्यम्। अचीकणदिति।ह्रस्वत्वपक्षे लघुपरत्वादभ्यासस्य सन्वत्त्वमिति भावः। शशपोरिति। शविकरणे, शब्विकरणे चेत्यर्थः । हन्त्यर्थाश्चेति । गणसूत्रमिदम् । हन हिंसागत्योरिति हनधातोर्हिंसा गमनं चार्थः। एतदर्थका ये धातवो भ्वादिषु नवसु गणेषु पठितास्ते सर्वेऽपि चुरादौ पठिताः प्रत्येतव्या इत्यर्थः । ततश्च तेभ्यः स्वार्थे णिजपि पक्षे भवतीति फलितम्।तदाह-नवगण्यामित्यादि।दिवु मर्दने ।उदित्त्वादिति।उदित्करणम्।'उदितो वे'ति क्त्वायामिड्विकल्पार्थम्।द्यूत्वा देवित्वा।इडभावे ऊठ्।इटि तु-'न क्त्वा से'डिति कित्त्वनिषेधाद्गुण इति स्थितिः।अस्य नित्य-ण्यन्तत्वे सति णिचा व्यवहितत्वेन क्त्वायामिड्विकल्पस्य अप्रसक्तेरुदित्करणं व्यर्थं सज्ज्ञापयति अस्य दिवुधातोर्णिज्विकल्प इतीति भावः। घुषिर् विशब्दने । विशब्दनं=शब्देन स्वाभिप्रायाविष्करणं, प्रतिज्ञानं च । भ्वादौ त्वयं धातुरविशब्द-नार्थकः पठितः । घोषयतीति । शब्देन स्वाभिप्रायमाविष्करोतीत्यर्थः, प्रतिजानीते इति वा । लिङ्गादिति । इण्नि-षेधप्रकरणे 'घुषिर् अविशब्दने' इति सूत्रम् । अविशब्दनार्थकाद्धुषधातोर्निष्ठायामिण्न स्यादित्यर्थः । यथा-'घुष्टा रज्जुः'। प्रसारितेत्यर्थः । अविशब्दने इति किम् ?। अवघुषितं वाक्यम् । प्रतिज्ञातमित्यर्थः । अत्र विशब्दनार्थकत्वान्नेण्निषेध इति स्थितिः । तत्र विशब्दनार्थकस्य घुषधातोश्चौरादिकत्वेन ण्यन्तत्वनियमाण्णिचा व्यवधानात्ततः परा निष्ठा नास्त्ये-वेति इण्निषेधे विशब्दनपर्युदासो व्यर्थः सन् चौरादिकस्याऽस्य विशब्दनार्थकस्य घुषेर्णिचो विकल्पं गमयति । एवंच 'अवघुषितं वाक्य'मित्यत्र चौरादिकघुषेर्विशब्दनार्थकस्य निष्ठायामिण्निषेधो नेति भाष्ये स्पष्टम् । इरित्त्वादङ् वेति । 'णिजभावपक्षे' इति शेषः । ननु इरित्त्वादेव णिज्वकल्पे सिद्धे 'घुषिरविशब्दने' इति इण्निषेधसूत्रे 'अविशब्दने' इति पर्युदासस्य णिज्विकल्पज्ञापकत्वाश्रयणक्लेशो भाष्ये व्यर्थ इति चेन्न, अत एव भाष्यादिरित्त्वाऽभावविज्ञानात् । एवंच 'घुषिर् विशब्दने' इत्यत्र 'घुषी'रित्यस्य इका निर्देशमाश्रित्य प्रथमान्तत्वमेवाश्रयणीयम् । 'इरित्त्वादङ्वे'ति मूलं तु भाष्यविरोधादुपेक्ष्यमेवेत्यास्तां तावत् । आङः क्रन्द सातत्ये इति । आङः परः क्रन्दधातुराह्वानसातत्येऽर्थे णिचं लभते इत्यर्थः । यद्वा 'आङ' इत्यनन्तरं 'घुषि'रित्यनुवर्तते । 'क्रन्दसातत्ये' इत्यर्थनिर्देशः । तदाह-अन्ये त्विति । लस शिल्पयोगे इति । कौशले इत्यर्थः। तसि भूषेति । अत्र तसिः प्रायेण अवपूर्वः। तदाह-अवतंसयतीति। ज्ञा नियोगे इति । आङ्पूर्वः । तदाह-आज्ञापयतीति । आदन्तत्वात्पुक् । अजिज्ञपत् । यत निकारेति । तालव्याऽन्तःस्थादिः । यत्नो वा प्रैषो वा-निकारः । यातयति । अयीयतत् । अञ्च विशेषण इति । व्यावर्तने इत्यर्थः । उदित्त्वमिति । 'उदितो वे'त्यण्यन्तात् क्त्वायामिड्विकल्पार्थमित्यर्थः। ण्यन्तात्तु णिचा व्यवधानादिड्विकल्पस्य

शे.]साधुत्वार्थं चेदमुक्तम् । नान्ये मित इति । 'न कम्यमी'ति निषेधस्तु चमिसाहचर्यात्पूर्वोत्तरसाहचर्याच्च हेतुमण्णा-वेवेति भावः । तस्माद्धेत्विति । 'न कम्यमी'ति निषेधाद्वृद्धिर्भवत्येवेति भावः । हन्त्यर्थाश्चेति । तेषां तत्तद्गणे

पस्कारयोः।१७३७ रक्क १७३८ लग आस्वादने।रघ इत्येके।रग इत्यन्ये १७३९ अञ्चु विशेषणे । अञ्चयति । उदित्त्वमिड्विकल्पार्थम्। अतएव विभाषितो णिच् । अञ्चति। एवं शृधुजसुप्रभृतीनामपि बोध्यम् ।१७४० लिगि चित्रीकरणे। लिङ्गयति।लिङ्गति। १७४१ मुद संसर्गे। मोदयति सक्तून् घृतेन। १७४२त्रस धारणे। ग्रहण इत्येके। वारण इत्यन्ये।१७४३ उध्रस उञ्छे । उकारो धात्ववयव इत्येके । नेत्यन्ये । ध्रासयति । ध्रसति। उध्रासयति । १७४४ मुच प्रमोचने मोदने च । १७४५ वस स्नेहच्छेदापहरणेषु । १७४६ चर संशये। १७४७च्यु सहने। हसने चेत्येके । च्यावयति। अचुच्यवत् । च्युसेत्येके। च्योसयति। अचुच्युसत्। (ग) भुवोऽवकल्कने।अवकल्कनं मिश्रीकरणमित्येके । चिन्तनमित्यन्ये । भावयति । १७४९ कृपेश्च । कल्पयति । [अचीकृपत् । अचकल्पत् । ] (ग) आ स्वदः सकर्मकात् । स्वदिमभिव्याप्य संभवत्कर्मभ्य एव णिच् । १७५० ग्रस ग्रहणे । ग्रासयति फलम् । १७५१ पुष धारणे । पोषयत्याभरणम् । १७५२ दल विदारणे । दालयति । १७५३ पट १७५४ पुट १७५५ लुट १७५६ तुजि १७५७ मिजि १७५८ पिजि १७५९ लुजि १७६० भजि १७६१ लघि १७६२ त्रसि १७६३ पिसि १७६४ कुसि १७६५ दशि १७६६ कुशि १७६७ घट १७६८ घटि १७६९ बृहि १७७० बर्हं १७७१ बल्ह १७७२ गुप १७७३ धूप १७७४ विच्छ १७७५ चीव १७७६ पुथ १७७७ लोकृ १७७८ लोचृ १७७९ णद १७८० कुप १७८१ तर्क १७८२ वृतु १७८३ वृधु भाषार्थाः । पाटयति । पोटयति । लोटयति । तुञ्जयति । तुञ्जति । एवं परेषाम् । घाटयति । घण्टयति । नाग्लोपिशास्वृदिताम् ।७।४।२। णिच्यग्लोपिनः शास्तेर्ऋदितां च उपधाया ह्रस्वो न स्याच्चङ्परे णौ । अलुलोकत् । अलुलोचत् । वर्तयति । वर्द्धयति । उदित्त्वाद्वर्तति । वर्द्धति । १७८४ रुटु १७८५ लजि १७८६ अजि १७८७ दसि १७८८ भृशि १७८९ रुशि १७९० शीक [१७९१ रुसि] १७९२ नट १७९३ पुटि १७९४ जिंवि ['जुचि'] १७९६ रघि १७९७ लघि १७९८ अहि १७९९ रहि १८०० महि च । १८०१ लडि १८०२ तड १८०३ नल च । १८०४ पूरी आप्यायने । ईदित्त्वं निष्ठायामिण्निषेधाय । अतएव णिज्वा । पूरयति । पूरति । १८०५ रुज हिंसायाम् । १८०६ ष्वद आस्वादने । स्वाद इत्येके । असिष्वदत् ।

---

त.]अस्यार्थः-यत्नाद्यर्थेषु चतुर्षु यतधातुं प्रयुञ्जीत।निसः परभागे चेत्प्रयुज्यते तदाऽयं धान्यधनयोः प्रतिदावे च वर्तते इति। ऋणं निर्यातयति । प्रतिददातीत्यर्थः । अञ्चु विशेषणे । **विशेषणं**-व्यावर्तनम् । **'भुवोऽवकल्कने'** । भूधातोर्णिच् स्यात् । **भावयतीति** । मिश्रीकरोति चिन्तयति वेत्यर्थः । **कृपेश्च** । कृपेर्णिच् स्यादवकल्कने । **आ स्वदः । अभिव्याप्येति** । 'आकुस्मा'दिति पूर्वत्र, आधृषादागर्वादिति परत्र च आङोऽभिविध्यर्थतायाः सर्वसंमतत्वेन तन्मध्यपतितेऽत्रापि तथैव व्याख्यानमुचितमिति भावः । अन्ये त्वाङ्पूर्वकात्स्वदः सकर्मकाण्णिजिति व्याचख्युः । आस्वदीयेषु धातवः सर्वे सकर्मकाः । **घाटयतीति** । अयं चुरादावेव सङ्घाते गतः, पुनः पाठस्तु अर्थभेदात् । **स्वाद इत्येके इति** । अस्मिन्मते पूर्वत्राप्यास्वादः सकर्मकादिति पाठ्यम् । ननु दीर्घपाठो व्यर्थः, ह्रस्वपाठेऽप्युपधावृद्ध्या स्वादयतीति रूपाणां तुल्यत्वादत आह-**दीर्घस्य त्विति** । 'सः स्विदिस्वदिसहीनां चे'ति सूत्रेण अभ्यासेणः परस्य सस्य सकारो न

---

बा.]न प्रसक्तिरिति भावः । नन्वस्य नित्यण्यन्तत्वादण्यन्तत्वमसिद्धमित्यत आह-**अत एवेति** । **च्यु सहने इति** । च्यावयति । अचुच्यवत् । **भुवोऽवकल्कने इति** । अवकल्कनवृत्तेर्भूधातोर्णिच् स्यादित्यर्थः । **कृपेश्चेति** । अवकल्कनवृत्तेः कृपेर्णिच् स्यादित्यर्थः । **कल्पयतीति** । 'कृपो रो लः' इति लत्वम् । **आ स्वदः सकर्मकादिति** । आङभिविधौ । तदाह-**स्वदिमभिव्याप्येति** । तत्र 'ष्वद आस्वादने' इत्यस्य अकर्मकत्वादाह-**संभवत्कर्मभ्य इति**। इत आरभ्य आस्वदीयाः सकर्मकाः । स्वदिस्त्वकर्मकः । **पट पुटेति** । एकत्रिंशद्धातवः । आद्यास्त्रयष्टान्ताः । आद्यद्वितीयौ पवर्गप्रथमादी।चतुर्थाद्या एकादश इदितः।त्रिसिपिसी इदुपधौ इत्येके । अदुपधावित्यन्ये । षोडशसप्तदशाविदितौ । अलुलोकत् अलुलोचदित्यत्र उपधाह्रस्वे प्राप्ते-**नाग्लोपि**।'णौ चङ्युपधायाः' इत्यनुवर्तते । णावित्यावर्तते । एकमग्लोपिन इत्यत्रान्वेति, द्वितीयं तु निषेधे परनिमित्तं । तदाह-**णिच्यग्लोपिन इत्यादि**।**अलुलोकदिति** । ऋदित्त्वाऽनाग्लोपीति निषेधेन उपधाह्रस्वाऽभावे सति लघुपरकत्वाऽभावान्नाऽभ्यासदीर्घ इति भावः। **उदित्त्वादिति** । 'वृतु वृधु' इत्युदित्त्वम् 'उदितो वे'त्यण्यन्तात् क्त्वायामिड्विकल्पार्थम् । ण्यन्तात्तु णिचा व्यवधानान्नेड्विकल्पप्रसक्तिः, अतो णिज्विकल्पो विज्ञायते इति भावः। **पूरी आप्यायने । इण्निषेधायेति** । अण्यन्तात्क्त्वायामिण्निषेधार्थमीदित्त्वम् । ण्यन्तात्तु णिचा

---

शे.]पाठसामर्थ्याण्णिज्वा।एवं कृपेरपि। अत एव ज्ञापकान्निवृत्तप्रेरणादित्यसार्वत्रिकम् । **यत**। तालव्याऽन्तस्थादिः। **असि-**

दीर्घस्य त्वषोपदेशत्वात्—असिस्वदत्। इत्यास्वदीयाः। (ग) आ धृषाद्वा। इत ऊर्ध्वं विभाषितणिचो धृषधातुमभिव्याप्य। १८०७ युज १८०८ पृच संयमने। योजयति। योजति। अयौक्षीत्। पर्चयति। पर्चति। पर्चिता। अपर्चीत्। १८०९ अर्च पूजायाम्। १८१० षह मर्षणे। साहयति। 'स एवायं नागः सहित कलभेभ्यः परिभवम्'। १८११ ईर क्षेपे। १८१२ ली द्रवीकरणे। लाययति। लयति। लेता। १८१३ वृजी वर्जने। वर्जयति। वर्जति। १८१४ वृञ् आवरणे। वारयति। वरति। वरते। वरिता वरीता। अवी-वरत्। जॄ वयोहानौ। जारयति। जरति। जरिता। जरीता। १८१६ ज्रि च। ज्राययति। ज्रयति। ज्रेता। १८१७ रिच वियोजनसंपर्चनयोः। रेचयति। रेचति। रेक्ता। १८१८ शिष असर्वोपयोगे। शेषयति। शेषति। शेष्टा। अशिक्षत्। अयं विपूर्वोऽतिशये। १८१९ तप दाहे। तापयति। तपति। तप्ता। १८२० तृप तृप्तौ। संदीपन इत्येके। तर्पयति। तर्पति। तर्पिता। १८२१ छृदी सन्दीपने। छर्दयति। छर्दति। छर्दिता। छर्दिष्यति। 'सेऽसिचि'ति विकल्पो न, साहचर्यात्तत्र रौधादिकस्यैव ग्रहणात्। चृप छृप दृप दृप संदीपन इत्येके। चर्प-यति। छर्पयति। १८२२ दृभी भये। दर्भयति। दर्भति। दर्भिता। १८२३ दृभ संदर्भे। अयं तुदादावीदित्। १८२४ श्रथ मोक्षणे। हिंसायामित्येके। अशिश्रथत्। १८२५ मी गतौ। माययति। मयति। मेता। १८२६ ग्रन्थ बन्धने। ग्रन्थयति। ग्रन्थति। १८२७ शीक आमर्षणे। १८२८ चीक च। १८२९ अर्द हिंसायाम्। स्व-रितेत्। अर्दयति। अर्दति। अर्दते। १८३० हिसि हिंसायाम्। हिंसयति। हिंसति। हिनस्तीति श्नमि गतम्। १८३१ अर्ह पूजायाम्। १८३२ आङः षद पद्यर्थे। आसादयति। आसीदति। पाघ्रे'ति सीदा-

त.]तु षत्वमिति वक्ष्यमाणत्वात्सन्नन्तेऽपि सिस्वादयिषतीत्यादि रूपं तुल्यमेवेत्यभिप्रेत्याह—असिस्वददिति। इत्यास्व-दीयाः। आधृषाद्वा। व्याख्यानात्, योग्यताबलाद्वा णिजिति संबध्यते। अयौक्षीदिति। णिजभावपक्षे अनिट्कोऽ-यमिति भावः। ली द्रवीकरणे। 'लिनातिलीयत्योर्यका निर्देश' इति भाष्यकारोक्त्या 'विभाषा लीयते'रित्यात्वमिह न प्रव-र्तत इति ध्वनयति—लेतेति। वरीतेति। 'वृतो वे'ति वा दीर्घः। लिङि—वूर्यात्। आत्मनेपदे तु वृषीष्ट। वरिषीष्ट। 'लिङ्सिचोरात्मनेपदेषु' इति वेट्। 'न लिङी'ति इटो दीर्घनिषेधः। इडभावपक्षे 'उश्चे'ति किर्त्वान्न गुणः। लुङि अवा-रीत्। अवारिष्टाम्। अवारिषुः। 'सिचि च परस्मैपदेषु' इति दीर्घनिषेधः। आत्मनेपदे तु अवरिष्ट। अवरीष्ट। इडभावे सिचो लोपः। अवृत। रिच। णिजभावे अयमनिडित्याह—रेक्तेति। अशिक्षदिति। 'शल इगुपधा'दिति क्सः। तृप। अनिट्सु श्यना निर्देशादयं सेडिति ध्वनयति—तर्पितेति। छृदी। ईदित्वान्निष्ठायां नेट्। ऋवर्णान्नस्य णत्वम्। छृण्णः।

बा.]व्यवधानादप्रसक्तेः। अतो णिज्विकल्पो विज्ञायते इत्यर्थः। स्वद्धातुः षोपदेशः। तदाह—असिष्वददिति। आदेश-सकारत्वात्षः। अभ्यासेऽकारस्य संयोगपरकत्वेन गुरुत्वाभावान्नाऽभ्यासदीर्घः। दीर्घस्य त्विति। दीर्घमध्यस्य त्वित्यर्थः। अषोपदेशत्वादिति। ह्रस्वमध्यस्यैव स्वदेः षोपदेशेषु परिगणनादिति भावः। इत्यास्वदीयाः। आ धृषाद्वेति। गणसूत्रम्। विभाषितणिच इति। विकल्पितणिचकाः प्रत्येतव्या इत्यर्थः। आङभिव्याप्ताविति मत्वा आह—धृष-धातुमभिव्याप्येति। णिजभावपक्षे आह—अयौक्षीदिति। अर्च पूजायामिति। अयमनुदात्तेदिति शाकटा-यनः। अर्चयते। अर्चते। अस्य भ्वादौ पाठोऽनार्षः, अनेनैव सिद्धेः। न च परस्मैपदार्थं भ्वादावर्चेः पाठ इति वाच्यम्, भ्वादौ तस्याप्यात्मनेपदीयतायाः शाकटायनसंमतत्वेन माधवोक्तेः। एवमत्रत्यानामाधृषीयाणां भ्वादौ परस्मैपदिषु पाठः प्रामादिक एवेत्याहुः। ली द्रवीकरणे। लाययतीति। लीलोरिति नुक्षु न, लासाहचर्याद्धेतुमण्णावेवाऽस्य प्रवृत्तेः। लेतेति। 'विभाषा लीयते'रित्यात्वं तु न, तत्र श्यश्न्विकरणयोरेव यका निर्देश इति भाष्यात्। वृञ् आवरणे। वरिता—वरीतेति। 'वृतो वे'ति दीर्घः। आशीर्लिङि—व्रियात्। आत्मनेपदे तु 'लिङ्सिचो'रिति वेट्। वृषीष्ट—वरिषीष्ट। इडभावपक्षे 'उश्चे'ति किर्त्वान्न गुणः। 'न लिङी'ति इटो न दीर्घः। अवृत। ज्रि चेति। ह्रस्वान्तोऽयम्। रिच वियोजने इति। अनिडयम्। ततश्च णिजभावपक्षे नेट्। तदाह—रेक्तेति। शिष असर्वेति। अयमप्यनिट्। तदाह—शेष्टेति। अशिक्षदिति। 'शल इगुपधा'दिति क्सः। अयं विपूर्वोऽतिशये इति। 'वर्तते' इति शेषः। अयमस्माद्विशिष्ट इत्यत्र अधिक इति गम्यते। तृप तृप्ताविति। अनिट्सु श्यना निर्देशादयं सेट्। तदाह—तर्पितेति।

शे.]ष्वददिति। षोपदेशलक्षणे स्वञ्जिसाहचर्येण भ्वादेर्निरनुबन्धकपरिभाषयाऽस्य च ग्रहादिति भावः। इत्यास्वदीयाः। अर्च पूजायामिति। 'अयमनुदात्ते'दिति शाकटायनः। अस्य भ्वादौ पाठोऽनार्षः, अनेनैव सिद्धेः। तस्याप्यात्म-नेपदिताया: शाकटायनमते माधवेनोक्तेः। एवमन्येषामपि परस्मैपदिनां भ्वादिपाठो बोध्यः। लाययतीति। 'लीलो' रिति नुक्षु न, लासाहचर्याद्धेतुमण्णावेव तस्य प्रवृत्तेः। लेतेति। 'विभाषा लीयते' रित्यात्वं तु न, 'लिनातिलीयत्योर्यका

देशः । आसत्ता । आसात्सीत् । १८३३ शुन्ध शौचकर्मणि । शुन्धिता । अशुन्धीत् । अशुन्धिष्टाम् । १८३४ छद अपवारणे । स्वरितेत् । १८३५ जुष परितर्कणे। परितर्कणमूहो हिंसा वा । परितर्पण इत्यन्ये । परितर्पणं परितृप्तिक्रिया । जोषयति । जोषति । प्रीतिसेवनयोर्जुषते इति तुदादौ । १८३६ धूञ् कम्पने । णावित्यधिकृत्य * धूञ्प्रीञोर्नुग्वक्तव्यः । धूनयति । धवति। धवते। केचित्तु 'धूञ्प्रीणो'रिति पठित्वा प्रीणातिसाहचर्याद्धुनातेरेव नुकमाहुः।धावयति। अयं स्वादौ तुदादौ क्र्यादौ च। स्वादौ ह्रस्वश्च।तथा च कविरहस्ये-'धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् । वायुर्विधूनयति चम्पकपुष्परेणून्यत्कानने धवति चन्दनमञ्जरीश्च'।१८३७ प्रीञ् तर्पणे। प्रीणयति । 'धूञ्प्रीणो'रिति हरदत्तोक्तपाठे तु-प्राययति । प्रयति । प्रयते । १८३८ श्रन्थ १८३९ ग्रन्थ सन्दर्भे । १८४० आप्लृ लम्भने । आपयति । आपिपत्। आपति। आप्ता। आपत् । स्वरितेदयमित्येके। आपते । १८४१ तनु श्रद्धोपकरणयोः (ग) उपसर्गाच्च दैर्घ्ये । तानयति। वितानयति।तनति। वितनति। चन श्रद्धोपहननयोरित्येके ।चानयति।चनति।१८४२ वद संदेशवचने । वादयति । स्वरितेत् । वदति । वदते । अनुदात्तेदित्येके।ववदतुः।ववदिथ।ववदे।वद्यात्।१८४३ वच परिभाषणे। वाचयति। वचति।वक्ता। अवाक्षीत्। अवाक्तम्।१८४४ मान पूजायाम् । मानयति। मानति। मानिता। विचारणे तु भौवादिको नित्यंसन्नन्तः। स्तम्भे मानयते इत्याकुस्मीयः। मन्यते इति दिवादौ । मनुते इति तनादौ [चे] । १८४५ भू प्राप्तौ।आत्मनेपदी। भावयते। भवते। णिच्सन्नियोगेनैवात्मनेपदमित्येके । भवति।१८४६ गर्ह विनिन्दने । १८४७ मार्ग अन्वेषणे । अममार्गत्।१८४८ कठि शोके। उत्पूर्वोऽयमुत्कण्ठायाम्। कण्ठते इत्यात्मनेपदिषु गतः । १८४९ मृजू शौचालङ्कारयोः । मार्जयति । ['मृजेर्वृद्धिः'।अमीमृजत्।अममार्जत् ]।मार्जति । मार्जिता । मार्ष्टा । मार्क्ष्यति।१८५० मृष तितिक्षायाम्। स्वरितेत्। मर्षयति। मर्षति।मर्षते। मृष्यति मृष्यते इति दिवादौ । सेचने शपि-मर्षति। १८५१ धृष प्रसहने । धर्षयति । धर्षति । इत्याधृषीयाः । अथाऽदन्ताः । १८५२ कथ वाक्यप्रबन्धे । अल्लोपस्य स्थानिवद्भावान्न वृद्धिः । कथयति । अग्लोपित्वान्न दीर्घसन्वद्भावौ । अचकथत् ।

---

त.]छृण्णवान् । ह्रस्वश्चेति । धुञ् कम्पने इत्यर्थः । अवाक्षीदिति 'अस्यतिवक्ती'ति लुका निर्देशादङ् नेति भावः । 'वचिस्वपी'ति संप्रसारणम् । उच्यात्। धृष प्रसहने। केचित्वादितमाहुस्तन्मते धृष्टो, मुख्यमते तु धृषितः। नन्वत्र 'निष्ठा शीङि'त्यादिना सेणिनिष्ठायाः कित्त्वनिषेधाद्गुणेन भाव्यमिति चेत् । अत्राहुः-ञ्यादिसाहचर्यादादित एव ञिधृषेत्यस्य तत्र ग्रहणात् । न च आदितो निष्ठाया इड् दुर्लभ इति शङ्क्यं, 'विभाषा भावादिकर्मणो'रिति तत्संभवादिति । इत्याधृषीया युजादयः । अथाऽदन्ता इति । वक्ष्यमाणेषु धातुषु अन्त्यावयवोऽकारो न तूच्चारणार्थ इत्यर्थः । स्थानिवत्त्वान्न वृद्धिरिति । 'अचः परस्मिन्' इति सूत्रेणेत्यर्थः । न च स्थानिनि सति यत्कार्यं तदेव स्थानिवदित्यनेनातिदिश्यते न त्वादेशप्रयुक्तं वार्यते, अन्यथा नायक पावक इत्यादि न सिध्येदिति वृद्धिरत्र दुर्वारेति वाच्यम् , 'अचः परस्मिन्'

---

बा.]छृदी संदीपने इति । ईदित्त्वं निष्ठायामिण्निषेधार्थम् । धुवति स्फुटितेति । शविकरणस्य रूपम् । शस्य ङित्वाद्गुणाऽभावे उवङ् । प्रीञ् तर्पणे । प्रीणयतीति । 'धूञ्प्रीञो'रिति वार्तिकान्नुगिति भावः । हरदत्तेति । अनेन भाष्याऽसंमतत्वं सूचितम् । उपसर्गाच्चेति। दैर्घ्यं तूपसर्गादनुपसर्गाच्च परस्तनुधातुगधृषीयो वेदितव्य इत्यर्थः । श्रद्धोपकरणयोस्त्वनुपसर्गादेवेति भावः । वच परिभाषणे । अवाक्षीदिति । 'अस्यतिवक्ती'ति लुका निर्देशादङनेति भावः । 'वचिस्वपी'ति संप्रसारणम्-उच्यात् । इत्याधृषीयाः । अथाऽदन्ता इति । 'वक्ष्यन्ते' इति शेषः । अन्ते अकारो नेत्संज्ञको, नाप्युच्चारणार्थ इति भावः । तत्र कथधातोर्णिचि अतो लोपे 'कथि' इत्यस्मात्तिपि शपि गुणेऽयादेशे कथयतीति रूपं वक्ष्यति । तत्र णिचमाश्रित्य उपधावृद्धिमाशङ्क्याह-अल्लोपस्य स्थानिवद्भावादिति । 'अचः परस्मि'न्नित्यनेनेति भावः। अत्रेदमवधेयं-स्थानिनि सति शास्त्रीयं यत्कार्यं तदेव स्थानिवदादेशोऽनल्विधावित्यत्रातिदिश्यते यत्तु स्थानिनि सति निमित्तव्याघातान्न भवति तस्याऽभावस्याऽशास्त्रीयत्वान्नाऽतिदेशः । अन्यथा 'नायक' इत्यत्र ईकारस्थानिकस्य ऐक.रस्य आयादेशानापत्तेः। ईकारे स्थानिनि सति आयभावस्य दृष्टत्वेन तस्याप्यैकारे अतिदेशप्रसङ्गात् । 'अचः परस्मि'न्नित्यत्र तु स्थानिनि सति यच्छास्त्रीयं कार्यं प्रसज्यते तस्य, तदभावस्य चाऽशास्त्रीयस्याप्यतिदेश इति भाष्ये स्पष्टम् । अतोऽत्र थकारादकारे सति प्रसक्तस्य उपधावृद्ध्यभावस्याऽशास्त्रीयत्वेऽप्यतिदेश इति सिद्धम् । लुङि चङि 'अचकथ'दित्यत्र सन्वत्त्वमाशङ्क्याह-अग्लोपित्वादिति । सन्वत्त्वविषये जायमानोऽभ्यासदीर्घः सन्वत्त्वं नापेक्षत इति

---

शे.]निर्देशः' इति भाष्यात्।नुकमाहुरिति । 'शाच्छासे'ति सूत्रे भाष्येऽस्य पाठात्तत्साहचर्येण हेतुमण्णावेवास्य प्रवृत्तिः। 'वायुर्विधूनयती'ति च हेतुमण्ण्यन्तस्यैव रूपमिति तु परे । हरदत्तेति । अनेन भाष्याऽसंमतत्वं सूचितम् । स्थानि-

१८५३.वर ईप्सायाम्। वरयति। वारयतीति गतम्। १८५४ गण सङ्ख्याने। गणयति। ई च गणः ।७।४।९७।गणेरभ्यासस्य ई स्याच्चङ्परे णौ। चादत्। अजीगणत्। अजगणत्।१८५५ शठ १८५६ श्वठ सम्यगवभाषणे। १८५७ पट १८५८ वट ग्रन्थे। १८५९ रह त्यागे। अररहत्। १८६० स्तन १८६१ गदी देवशब्दे। स्तनयति। गदयति।अजगदत्। १८६२ (ग)पत गतौ वा। वा णिजन्तः। वाऽदन्त इत्येके। आद्ये-पतयति। पतति। पतांचकार। अपतीत्। द्वितीये-पातयति। अपीपतत्। १८६३ पष अनुपसर्गात्। गतावित्येव। पषयति। १८६४ स्वर आक्षेपे। स्वरयति। १८६५ रच प्रतियत्ने। रचयति। १८६६ कल गतौ सङ्ख्याने च। १८६७ चह परिकल्कने। परिकल्कनं-दम्भः शाठ्यं च। १८६८ मह पूजायाम्। महयति। महतीति शपि गतम्। १८६९ सार १८७० कृप १८७१ श्रथ दौर्बल्ये। सारयति। कृपयति। श्रथयति। १८७२ स्पृह ईप्सायाम्। १८७३ भाम क्रोधे। अबभामत्। १८७४ सूच पैशुन्ये। सूचयति। अषोपदेशत्वान्न षः। असूसुचत्। १८७५ खेट भक्षणे। तृतीयान्त इत्येके। खोट इत्येन्ये १७७६ क्षोटं क्षेपे। १८७७ गोम उपलेपने। अजुगोमत्। १८७८ कुमार क्रीडायाम्। अचुकुमारत्। १८७९ शील उपधारणे। उपधारणमभ्यासः। १८८० साम सान्त्वप्रयोगे। अससामत्। 'साम सान्त्वने' इत्यतीतस्य तु

त.]इत्यत्र स्थानिवदित्यनुवर्त्त्य शब्दाधिकारपक्षाश्रयेण भावाऽभावावुभावप्यतिदिश्येते इति सिद्धान्तात्। स्थानिनि सत्यभवन्त्या वृद्धेरादेशेऽप्यभावात्। 'स्थानिनि सति यन्न भवति तदादेशेऽपि न भवती'त्यत्र तु 'न पदान्ते'ति सूत्रस्थलोपादिग्रहणमेव लिङ्गमिति दिक्। ई च गणः। 'अत्स्मृदृत्वरे'त्यत्र योऽत् स चकारेण समुच्चीयते। स्तन गदी। 'गदी'त्यत्र इका निर्देशादतो लोपः। अनेकाच्त्वेनाषोऽपदेशत्वात्षत्वं न। तिस्तनयिषति। 'स्तनिहृषिपुषी'ति णेरिष्णुचि 'अयामन्ते'त्ययादेशः। 'स्तनयित्नुर्बलाहकः'। पत गतौ वा। गणसूत्रमिदम्। कृपयतीति। 'कृपो रो लः' इति न प्रवर्तते, तत्र कृपू सामर्थ्ये इत्यस्य ग्रहणात्, कृपप्रकृतिकणिजन्तस्य तु धात्वन्तरत्वात्। स्पृह। आप्तुमिच्छा ईप्सा। अबभामदिति। अल्लोपस्य स्थानिवत्त्वात् 'णौ चङ्ङी'त्युपधाह्रस्वो न। सूच। पिशुनो दुर्जनस्तस्य कर्म पैशुन्यम्। अषोपदेशत्वादिति। अनेकाच्त्वादिति भावः। साम सान्त्वने इत्यतीतस्य त्विति। अयं धातुरितः प्राक्

बा.]पृथगुक्तिः।एवं वरादौ सर्वत्र ज्ञेयम्। गण सङ्ख्याने। चङि अल्लोपस्य स्थानिवत्त्वाद्दीर्घसन्वद्भावयोरभावे 'अजगण'-दित्येव प्राप्ते आह-ई च गणः। 'सन्वल्लघुनी'त्यतश्चङ्परे इति, 'अत्र लोपे'त्यतोऽभ्यासस्येति चानुवर्तते। तदाह-गणेरभ्यासस्येति।'अत्स्मृदृत्वरे'ति पूर्वसूत्राददग्रहणं चकारादनुकृष्यते। तदाह-चाददिति। स्तनगदी देवशब्दे इति। पर्जन्यगर्जने इत्यर्थः। स्तनश्च गदिश्चेति द्वन्द्वः।गदीति इका निर्देशः।गदेत्यकारान्तादिकि अल्लोपे गदीति निर्देशः। एवंच प्राकरणिकमदन्तत्वं न व्याहन्यते। पत गतौ वेति। गतावर्थे पतधातुर्णिचं वा लभत इत्यर्थः। तदाह-वा णिजन्त इति। आधृषीयत्वाऽभावाद्विकल्पविधिः। यद्वा वाशब्दस्य अदन्तत्व एवाऽन्वयः। णिच् तु नित्य एव। तदाह-वा अदन्त इत्येके इति। प्रथमपक्षे तु अदन्तत्वमेव। तदाह-आद्ये पतयतीति। अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः। पतांचकारेति। णिजभावेऽप्यदन्तत्वात्कास्यनेकाजित्यामिति भावः। चङि-अपपतत्। अग्लोपित्वान्न दीर्घसन्वत्त्वे। द्वितीये पातयतीति। तकारादकारस्य उच्चारणार्थत्वादुपधावृद्धिरिति भावः। अपीपतदिति। अग्लोपित्वाऽभावाद्दीर्घसन्वत्त्वे इति भावः। कृपयतीति। अदन्तस्य त्वस्य धात्वन्तरत्वात् 'कृपो रो लः' इति न भवति। स्पृह ईप्सायाम्। आप्तुमिच्छा-ईप्सा। अबभामदिति। चङि अल्लोपस्य स्थानिवत्त्वान्नोपधाह्रस्वः। सूच पैशुन्ये। अषोपदेशत्वादिति। अनेकाच्त्वादिति भावः। खेट भक्षणे। तृतीयान्त इति। टवर्गतृतीयान्त इत्यर्थः। साम सान्त्वप्रयोगे। सान्त्वप्रयोगः=अकटुभाषणम्। अससामदिति। अल्लोपस्य स्थानिवत्त्वान्नोपधाह्रस्वः। ननु 'साम सान्त्वने' इति कथादेः प्राक् चुरादौ पाठो व्यर्थः, अनेनैव सिद्धेरित्यत आह--साम सान्त्वने इत्यतीतस्य तु असीषमदिति। पूर्वपठिते सामधातौ मकारादकारस्य उच्चारणार्थतया उपधाह्रस्वे,

शे.]वत्त्वादिति।'अचः परस्मि'न्नित्यनेनेति भावः।गण सं। अयं सङ्ख्यानिमित्तज्ञानविशेषरूपरिच्छेदे, भागशोऽवस्थापने चेति 'णेरणौ' इत्यत्राऽऽकरः। ई च गणः। णिचः प्राग्वर्त्तिनोऽनुकरणम्। एतेन नित्यणिजन्तत्वाद्गण इत्यसङ्गतमित्यपास्तम्। तेन स्वार्थण्यन्ताच्चङ्यपि प्रवृत्तिः। 'गणे'रिति ण्यन्तानुकरणे तु ण्यन्ताण्णौ चङ्येव स्यात्, णौ चङ्पर इत्यनुवृत्तेरिति बोध्यम्। यद्यपि गणूपाभ्यासाऽन्त्यस्य णस्य ई इत्यर्थाद्धलादिःशेषेणान्त्यनिवृत्तावस्याऽप्राप्त्याऽनवकाशत्वेनेदं तद्बाधकं प्राप्नोति, तथापि अभ्यासविकारे बाध्यबाधकभावाऽभावेन पूर्वं हलादिःशेषेऽवशिष्टान्त्यस्येकारः, एकदेशविकृतन्यायेन चाऽवशिष्टस्य गणरूपत्वम्। स्पष्टं चेदं 'गुणो यङ्लुको' रित्यत्र भाष्ये। स्तनगदी। इगन्ताद्विवचनम्। प्रकरणा-

असीषमत्। १८८१ वेल कालोपदेशे। वेलयति। काल इति पृथग्धातुरित्येके। कालयति। १८८२ पल्पूल लवनपवनयोः। १८८३ वात सुखसेवनयोः। गतिसेवनयोरित्येके। वातयति। अववातत्। १८८४ गवेष मार्गणे। अजगवेषत्। १८८५ वास उपसेवायाम्। १८८६ निवास आच्छादने। अनिनिवासत्। १८८७ भाज पृथक्कर्मणि। १८८८ सभाज प्रीतिदर्शनयोः। प्रीतिसेवनयोरित्यन्ये। सभाजयति। १८८९ ऊन परिहाणे। ऊनयति। 'ओः पुयण्ज्यी'ति सूत्रे पयोरिति वक्तव्ये वर्गप्रत्याहारजग्रहो लिङ्गं 'णिच्यच आदेशो

स.]मूलपुस्तके न कुत्रापि दृष्टः, पुस्तकान्तरेषु मृग्यः। केचित्तु 'साम सान्त्वने' इत्यस्य क्वाप्यपठितत्वेपि 'षान्त्व सामप्रयोगे' इति प्राक्पठितमेव। तत्र च 'षान्त्व' 'सामे'ति धातुद्वयं प्रयोगे वर्तते। प्रयोगश्च सान्त्वप्रयोगपरः। स च सान्त्वनमेवेत्येवं ग्रन्थकाराशयं वर्णयित्वा स्थितस्य गतिं समर्थयन्ते। **गवेष। मार्गणम्**–अन्वेषणम्। **ऊन** परिहाणे। अस्माण्णौ चङि द्वित्वात्परत्वादन्तरङ्गत्वाच्च अल्लोपेन 'अजादेर्द्वितीयस्ये'ति णिचा सह द्वित्वे औनिनदित्यनिष्टं प्रसज्येत, किं तु औननदित्येवं रूपमिष्टम्। तच्च नशब्दस्य द्वित्वं विना न संभवति। न च 'द्विर्वचनेऽची'ति सूत्रेण द्वित्वे कर्तव्ये अल्लोपस्य स्थानिवद्भावान्निषेधाद्वा नशब्दस्य द्वित्वं सिध्यतीति वाच्यं, णिचो द्वित्वनिमित्तत्वाऽभावादत आह–**ओः पुयण्जीत्यादि**। संपूर्णसूत्रं लिङ्गमिति केषांचिद्भ्रमं निवर्तयितुमाह–**पयोरिति**। अयं भावः–'स्रिपूङ्ज्वशां सनि', 'सनीवन्तर्द्धे'ति सूत्राभ्यां पूङ्यौतिभ्यां परस्य सन इडागमे कृते 'द्विर्वचनेऽची'ति स्थानिवद्भावादादेशनिषेधाद्वा उवर्णान्तस्यैव द्वित्वमिति–पुपविषते युयविषतीत्यनिष्टं प्रसज्येत। ततश्चाऽभ्यासोवर्णस्येत्वार्थं पयोरित्यपेक्षितम्। अन्यथा पिपविषते यियविषतीति न सिध्येदिति। **वर्गप्रत्याहारेति**। 'पुयण्जी'ति वर्गादिग्रहणफलं तु–अबीभवत् अमीमवत् अरीरवत् अलीलवत् अजीजवत्, बिभावयिषति मिमावयिषति रिरावयिषति लिलावयिषतीत्यादिरूपसिद्धिरिति वाच्यम्।तदुभयं सूपपादम्।णिचि परत्वादन्तरङ्गत्वाच्च वृद्ध्यादौ कृते द्वित्वे सत्यभ्यासे उवर्णस्य दुर्लभत्वात्,अकारस्य 'सन्यतः' इतीत्वेन रूपसिद्धेश्च। ततो वर्गादिग्रहणं व्यर्थं सदुक्तार्थे ज्ञापकमिति भावः। ज्ञापनफलं तु यत्र 'ओः पुयण्जी'त्यस्याऽप्राप्तिस्तत्र बोध्यम्। तद्यथा–चुक्षावयिषति। चङि अचुक्षवत्। उडुरिवाचरति उडवति। 'सर्वप्रातिपदिकेभ्यः' इत्याचारे क्विप्। तदन्ताद्धातोर्णौ सन्। उडुडावयिषति। चङि औडूडवत्। तु इति सौत्रो धातुस्ततो णौ सन्। तुतावयिषति।चङि अतूतवत्। नुनावयिषति। अनूनवत्। पुस्फारयिषति। अपुस्फुरत्। 'चिस्फुरोर्णौ' इति वा आत्वम्। अपुस्फरदित्यादिष्वभ्यासे उकारश्रवणं भवति ज्ञापनात्, अन्यथा चिक्षावयिषतीत्यादि प्रसज्येत। तदेतत्सकलमभिप्रेत्य वार्तिककृतोक्तम् 'ओः पुयण्जिषु वचनं ज्ञापकं–णौ स्थानिवद्भावस्ये'ति। स्थानिवद्भावः प्रतिषेधस्याप्युपलक्षणम्। **अच आदेशो न**

बा.]दीर्घसन्वत्त्वे चेत्यर्थः।यद्यपि 'साम सान्त्वप्रयोगे'इत्येव प्राक् चुरादौ पठितम्, तथापि सान्त्वनस्य सामप्रयोगादनन्यत्वात्तथोक्तिरिति भावः। **गवेष मार्गणे। मार्गणम्**–अन्वेषणम्। चङि अल्लोपस्य स्थानिवत्त्वान्नोपधाह्रस्वः। तदाह–**अजगवेषदिति। निवास आच्छादने**। अनिनिवासत्।

**ऊन परिहाणे। परिहाणम्**–न्यूनीभावः। **ऊनयतीति**। णावतो लोप इति भावः। ननु लुङि चङि ऊन इ अ त् इति स्थिते णिलोपे 'चङी'त्यजादेर्द्वितीयस्य नशब्दस्य द्वित्वे अतो लोपे अग्लोपित्वेन सन्वत्त्वाऽभावादभ्यासे ह्रस्वदीर्घयोरभावे आटो वृद्धौ औननदिति रूपं वक्ष्यति, तदनुपपन्नं, द्वित्वात्प्रागेव परत्वादतो लोपे कृते निशब्दस्य द्वित्वे औनिनदित्येवमभ्यासे इकारश्रवणप्रसङ्गात्। नच द्वित्वे कार्ये अतो लोपस्य 'द्विर्वचनेऽची'ति निषेधः शङ्क्यः, अल्लोपनिमित्तस्य णिचो द्वित्वनिमित्तत्वाऽभावादित्यत आह–**ओः पुयण्जीत्यादि**। 'ओः पुयण्ज्यपरे' इति सूत्रे 'ओः–पयोरपरयो'रित्येव वक्तव्ये 'पु' इति पवर्गस्य, 'य'णिति प्रत्याहारस्य, जकारस्य च ग्रहणं लिङ्गमित्यन्वयः।

कुत्र लिङ्गमित्यत आह–**णिचीत्यादि**।द्वित्वे कार्ये णिज्निमित्तकोऽच आदेशो न स्यादित्यत्र लिङ्गमिति पूर्वेणान्वयः। 'तथाहि–ओः पुयण्ज्यपरे' इति सूत्रम्। 'सनि परे यदङ्गं तदवयवाऽभ्यासोवर्णस्य इकारः स्यादवर्णपरकेषु पवर्गयण्जकारेषु परत' इति तदर्थः। 'पूङ्'–पिपावयिषति, 'भू'–बिभावयिषति, 'यु'–यियावयिषति, 'रु'–'रिरावयि-

शे.]वाऽदन्तत्वम्। ऊन। अस्माण्णौ चङि नशब्दस्येष्टं द्वित्वं दुर्लभम्, द्वित्वादन्तरङ्गत्वादल्लोपात्। णिचो द्वित्वनिमित्तत्वाऽभावात् 'द्विर्वचनेऽची'ति दुर्लभमत आह–**ओः पुयणिति**। अयं भावः–'बिभावयिषती'त्यादावन्तरङ्गत्वाद्वृद्धावावादेशे 'सन्यतः' इत्येव सिद्धं। पूङो यौतेश्च सनि 'स्मिपूङ्' 'सनीवन्त्र्' इतीटि 'द्विर्वचनेऽची'ति सूत्रप्रवृत्त्याऽभ्यासे उकारसत्त्वेऽपि तदर्थं 'पयो'रित्येव वाच्यम्। न च 'पिपविषते' इत्यादौ गुणाऽवादेशयोः 'अचः परस्मि'न्निति स्थानिवत्त्वेनाऽवर्णपरयकारादिपरत्वाऽभावः, एतत्सूत्रारम्भसामर्थ्येनैव तदभावात्। एवञ्च वर्गादिग्रहणं व्यर्थं सणिचो द्वित्वनिमित्तत्वाऽभावेऽपि तन्निमित्तकाऽजादेशस्य द्वित्वे कर्त्तव्ये निषेधं ज्ञापयतीति। **णिचीति**। णिज्निमित्तक इत्यर्थः।

न स्याद्द्वित्वे कर्त्तव्ये' इति । यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याद्योऽच्-प्रक्रियायां, परिनिष्ठिते रूपे वाऽवर्णो लभ्यते

त.]स्यादिति। प्रतिषेधपक्षो मुख्य इत्यभिप्रेत्येदमुक्तम्। प्रतिषेधः स्थानिवद्भावस्याप्युपलक्षणमिति वा बोध्यम्।नन्वेवं कृत संशब्दन इति धातोर्णौ चङि इरादेशात्प्रागेव कृत इत्यस्य द्वित्वे उरदत्वे च अचकीर्तदिति स्यान्न तु अचिकीर्तदित्यत आह—यत्र द्विरुक्ताविति । आद्योऽजिति । चङ्सहितस्योत्तरखण्डत्वमभ्युपेत्येदमुक्तम् । अन्ये तु आद्यग्रहणं स्पष्टप्रतिपत्त्यर्थं, धातोरवयस्यैकाचो द्वित्वे सत्यभ्यासोत्तरखण्डे अज्द्वयाऽसंभवादित्याहुः । औजढत् औननदित्यादौ परिनिष्ठिते अवर्णस्याऽलाभादाह—प्रक्रियायामिति । चुक्षावयिषतीत्यादौ प्रक्रियायामवर्णो न लभ्यते इत्याह—परिनिष्ठिते रूपे वेति । वाशब्दोऽनास्थायाम् । क्वचिदवर्णपरत्वं विवक्षितं, न तु अमुकत्रैवेत्याग्रह इति भावः । सजातीयापेक्षत्वादिति । 'पुयण्जी'त्यभ्यासोत्तरखण्डे अवर्णपरा भवन्ति । अतस्तथैव ज्ञापकमित्यर्थः । अतएव भाष्यकृता 'पवर्गादेरन्यस्मिन्नपि हलि अवर्णपरे एव स्थानिवत्त्वमिति अचिकीर्तदित्यादौ नाऽतिव्याप्ति'रिति सिद्धान्तितम् । ननु 'ओः पुयण्जी'ति सूत्रे णिचि इति नास्ति, तथा च णिच्यच आदेशो न स्यादित्यर्थे कथमिदं ज्ञापकं भवेत् । न च सामान्यतो द्वित्वे कार्ये अच आदेशो न स्यादित्येव ज्ञाप्यतामिति वाच्यं, दिदवनीयिषति निनवयिषतीत्यादावभ्यासे उकारश्रवणप्रसङ्गादिति चेत् । अत्राहुः—येन नाव्यवधानमित्येकेन प्रत्ययेन द्वित्वनिमित्तप्रत्ययस्य व्यवधानमाश्रीयते । तच्च णेरेव संभवतीति णिज्विषयकमेव ज्ञापकं, दिदवनीयिषतीत्यत्र तु ल्युटा क्यचा च व्यवधानादनेकव्यवधानमिति न तद्विषयकं ज्ञापनमिति । अस्मिन्मते आचारक्विबन्ताद्दिवनशब्दात्सनि दुदवनिषतीति स्यात्, तच्च नेष्यते, 'णौ स्थानिवद्भावस्य ज्ञापक'मिति वार्तिकोक्तेः । स्थानिवत्त्वेन प्रतिषेधेन वा णौवेवाभ्यासे उकारेण भवितव्यम् । अतो वार्तिककारवचनादेव णौ स्थानिवदिति स्वीकर्तव्यम् ।

बा.]षति,'लूञ्'-लिलावयिषति,'जु'-जिजावयिषतीत्युदाहरणानि।अत्र द्वित्वं प्रत्यनिमित्ते णिचि 'द्विर्वचनेऽची'ति निषेधाऽप्रवृत्त्या द्वित्वात्प्रागेव परत्वाद्वृद्ध्यावादेशयोः कृतयोरभ्यासेऽवाकारस्य ह्रस्वे सति 'सन्यतः' इत्येव इत्त्वसिद्धेः पवर्गयणप्रत्याहारजकारग्रहणं व्यर्थम् । पकारयकारग्रहणं तु न व्यर्थं, पिपावयिषति यियावयिषतीत्यत्र उक्तरीत्या 'सन्यतः' इति इत्त्वसिद्धावपि पिपविषते यियविषतीत्यत्र पूङ्धातोर्युधातोश्च अण्यन्तात्सनि अभ्यासे इत्त्वार्थं तदावश्यकत्वात् । तत्र हि—'इको झ'लिति सनः किरवात्'श्रयुकः किति' इति प्राप्तमिण्निषेधं बाधित्वा,'स्मिपूङ्रञ्ज्वशां सनी'ति, 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसना'मिति च सूत्राभ्यामिटि कृते इडादेः सनो द्वित्वनिमित्तत्वेन इटोऽपि द्वित्वनिमित्ततया 'द्विर्वचनेऽची'ति गुणावाऽदेशयोर्निषेधे सति 'पू' 'यु' इत्यनयोर्द्वित्वे अभ्यासे अकाराऽभावेन 'सन्यतः' इत्यस्याऽप्रवृत्त्या तत्र इत्त्वार्थं 'पयो'रित्यावश्यकम्। वर्गप्रत्याहारजकारग्रहणं 'तु द्वित्वे कार्ये णावच आदेशो ने'त्यनाश्रयणे व्यर्थमेव। तदाश्रयणे तु बिभावयिषतीत्यादिषु णिचि लुप्ते सति 'चङी'ति'द्वित्वे कार्ये प्रत्ययलक्षणमाश्रित्य णिचि गुणाऽवादेशयोः प्रतिषेधे सति उवर्णान्तानां द्वित्वे अभ्यासे अकाराऽभावेन 'सन्यतः' इत्यस्याऽप्रवृत्त्या वर्गप्रत्याहारजकारग्रहणमर्थवत् । अतो द्वित्वे कार्ये णावच आदेशो नेति विज्ञायत इत्यर्थः। ननु 'कृत संशब्दने' अस्मात् णौ 'उपधायाश्चे'ति ऋत इत्वे रपरत्वे कित् इत्यस्माल्लुङि चङि णिलोपे द्वित्वे हलादिशेषे कस्य चुत्वे उत्तरखण्डे इकारस्य 'उपधायां चे'ति दीर्घे अचिकीर्तदिति रूपमिष्यते । तन्न युज्यते । द्वित्वे कर्तव्ये णावच आदेशस्य निषिद्धतया इत्त्वात्प्रागेव कृदित्यस्य द्वित्वे, उरदत्वे, रपरत्वे, हलादिशेषे, कस्य चुत्वे, उत्तरखण्डे, ऋत इत्वे, रपरत्वे, उपधादीर्घे, अचकीर्तदित्यापत्तेरित्यत आह—यत्र द्विरुक्ता-

शे.]णिचि परत इत्यर्थे तु 'पुस्फारयिषती'त्यादौ रेफेण व्यवधानान्न स्यात्।ज्ञापनफलन्तु—'तुतावयिषति' 'अतूतवत्' 'ऊर्णुनावयिषति' 'और्णूनवत्' 'पुस्फारयिषति' 'अपुस्फर'दिति ।[णिचीति णिलोऽप्युपलक्षणम् । तेनाऽऽस्यशब्दात् 'णिज्ञानिरसने' इति णिङि चङि 'आसस्य'दित्यादौ प्रक्रियादशायामवर्णस्योत्तरखण्डे सत्त्वादल्लोपनिषेधे'स्य'शब्दस्य द्वित्वसिद्धिः]। न च णिचीत्यस्य सूत्रेऽभावेन कथन्तल्लाभ इति वाच्यं, यतो नाऽनेनाऽपूर्वो निषेधो ज्ञाप्यते, किं तु 'द्विर्वचनेऽची'त्यस्य [व्यवधानेऽपि प्रवृत्तिस्तत्र] द्वित्वनिमित्तेऽजादौ प्रत्यये परेऽजादेशो नेत्यर्थकस्य 'येन नाव्यवधान'मिति न्यायेन एकव्यवधाने तत्प्रवृत्तिरतस्तल्लाभः । तेन 'दिदवनीयिषती'त्यादौ नाऽतिप्रसङ्गः । एतन्मूलकमेवाऽच इति स्वरूपकथनम् । एवञ्च 'द्विर्वचनेऽची'त्यस्य 'द्वित्वनिमित्तेऽजादौ प्रत्यये एकप्रत्ययातिरिक्ताऽव्यवहिते परे तदन्यतरनिमित्तकादेशो ने'ति सूत्रार्थः । इतीति । इत्यत्र वर्गादिग्रहो लिङ्गमिति पूर्वेणाऽन्वयः । यत्रेति । यद्यपि 'अचिकीर्त'दित्यत्र त इत्यवर्णपरत्वमस्ति, तथापि न दोषः । चङ्सहितस्योत्तरखण्डत्वाऽभावात् । आद्योऽजिति । स्पष्टार्थम् ।[तदुक्तं भाष्ये—'ओः पुयण्जिषु वचनं ज्ञापकं—णौ स्थानिवद्भावस्य । यद्येतज्ज्ञाप्यते 'अचिकीर्त'दित्यत्रापि प्राप्नोति । तुल्यजातीयस्य ज्ञापकम् । कश्च तुल्यजातीयः ? । यथाजातीयाः पुयण्जयः । कथं जातीयकाश्चैते? । अवर्णपराः'—इति] । तत्राऽवर्णपरत्वं किं द्वित्वप्रवृत्तिवेलायामुत परिनिष्ठिते रूपे ? । नाद्यः । 'चुक्षावयिषती'त्याद्यसिद्ध्यापत्तेः । नान्त्यः । 'औनन'दित्याद्यसिद्धेरत आह—प्रक्रियायामिति । न त्वमुकत्रैवेत्याग्रह इति भावः । ['उवर्णादेशे एव स्थानिव'दिति तु न युक्तम् । तथा सति

तत्रैवाऽयं निषेधः, ज्ञापकस्य सजातीयापेक्षत्वात् । तेनाऽचिकीर्त्तदिति सिद्धम् । प्रकृते तु नशब्दस्य द्वित्वं,

---

त.]तथा च न पूर्वोदाहरणेषु दोष इति दिक् । फलितमाह–**प्रकृते त्विति। औननदिति।** 'नोनयति ध्वनयती'ति चङ् निषेधस्त्विह न। तत्र छन्दसीत्यनुवृत्त्या 'मा त्वायतो जरितुः काममूनयी'रित्यादिर्वेदे एव तन्निषेधात् । यद्यपि परिनिष्ठित एवाऽवर्णपरत्वमित्याशयेन 'उवर्णादेश एव स्थानिवत्स्यान्नाऽन्य' इति वदतां बोपदेवादीनां मते औनिनदित्येव भाव्यम्,अवर्णादेशस्य स्थानिवत्त्वे तु परिनिष्ठितरूपे अवर्णपरत्वाऽलाभात्, तथापि अचिकीर्तदित्यादौ स्थानिवत्त्वमाशङ्क्य उत्तरभागे अवर्णाऽभावादिति भाष्यकारोक्तपरिहारपर्यालोचनया उवर्णादेश एव स्थानिवदिति नियमो नास्तीत्यौननदिति रूपं निर्बाधमेव । किं च 'उवर्णादेश एवे'ति नियमे 'लोपः पिबतेरीच्चाभ्यासस्ये'ति सूत्रे अपीप्यदित्यत्र पिबतेर्णौ 'शाच्छासे'त्यादिना युकि चङि उपधालोपे तस्य स्थानिवत्त्वात्पाय्शब्दस्य द्वित्वमिति वृत्तिग्रन्थो विरुध्येत । अपि च **'शुष्किका शुष्कजङ्घा च क्षामिमानौजढत्तथे'**ति वैयाघ्रपद्यवार्तिकस्य औजढदिति प्रयोगोऽपि विरुध्येत । एतद्धि पूर्वत्राऽसिद्धमित्यस्य प्रयोजन कथनवार्तिकम् । तद्यथा–**शुष्किके**त्यत्र तु 'उदीचामातः' इतीत्वविकल्पो न, 'शुषः कः' इति कत्वस्याऽसिद्धत्वेन यकपूर्वत्वाऽभावात् । **'शुष्कजङ्घे'**त्यत्र कत्वस्याऽसिद्धत्वादेव 'न कोपधायाः' इति पुंवद्भावनिषेधो न । **क्षामिमानि**-त्यत्र तु 'मादुपधाया' इति वत्वं न, 'क्षायो मः' इति मत्वस्याऽसिद्धत्वात् । वहेः क्तान्ताण्णिचि चङि औजढदित्यत्र ढत्वस्याऽसिद्धत्वाण्णौ कृतस्य टिलोपस्य स्थानिवत्त्वाच्च हूतशब्दस्य द्वित्वं।'कुहोश्चुः''अभ्यासे चर्च'। सन्वदित्वं तु अनग्लोपीति प्रतिषेधान्न भवति । एवं काशिकायामपि 'पूर्वत्रासिद्ध'मिति सूत्रे **औजढ**दित्युदाहृत्य, ऊढिमाख्यदौजिढदित्येतत्तु क्तिन्नन्तस्य ऊढिशब्दस्य भवतीत्युक्तं,तदपि विरुध्येत। 'उवर्णादेश एव स्थानिव'दिति नियमे णौ कृतस्य टिलोपस्याऽत्र स्थानिवत्त्वाऽभावेन हूतशब्दस्य हूतिशब्दस्य वा द्वित्वाऽसंभवात् । एवं चाऽङ्कधातोर्णिच्यल्लोपे चङि स्थानिवत्त्वात्कशब्दस्य द्वित्वे आञ्चकदिति रूपमेव सर्वसंमतं, न त्वाञ्चिकदिति बोपदेवोक्तमिति बोध्यम् । नन्वचिकीर्तदित्यादौ स्थानिवत्त्वमाशङ्क्योत्तरभागे अवर्णाऽभावादिति वदन्भाष्यकारो न बोपदेवग्रन्थस्य प्रतिकूलः । उत्तरभागे परिनिष्ठितरूपे अवर्णपरत्वमुवर्णादेशस्यैव संभवति नान्यस्येत्याशयेनैव भाष्यकारेण तथोक्तमिति वक्तुं शक्यत्वादिति चेत् । मैवम् । तथा हि सति यत्र 'ओः पुयण्जी'त्यस्याऽप्राप्तिस्तत्राप्युवर्णादेश एव स्थानिवत्, ज्ञापकस्य सजातीयापेक्षत्वादित्येवमेव भाष्यकारो वदेत् । ऋजु-

---

बा.]**वित्यादि।** यत्र धातौ चङि द्विर्वचने कृते अभ्यासोत्तरखण्डस्य आद्योऽच् अवर्णो लभ्यते तत्रैव द्वित्वे कार्ये णावच आदेशो नेत्ययं निषेध इत्यन्वयः । यद्यपि धातोरवयवस्य एकाचो द्वित्वे कृते अभ्यासोत्तरखण्डे द्वितीयस्याऽचोऽभावादाद्योऽजिति व्यर्थमेव, तथापि स्पष्टार्थं तदित्याहुः । नन्वभ्यासोत्तरखण्डस्याद्योऽजवर्णो लभ्यते इत्यत्र किमवर्णो द्वित्वप्रवृत्तिवेलायां विवक्षितः, उत परिनिष्ठिते रूपे विवक्षितः ?, नाद्यः, क्षुधातोर्ण्यन्तात्सनि चुक्षावयिषतीत्यत्र 'क्षु' इत्यस्य द्वित्वे कृते अभ्यासोत्तरखण्डे प्रक्रियादशायामवर्णाऽभावेन वृद्ध्यावादेशयोर्निषेधाऽप्रवृत्त्या द्वित्वात्प्रागेव परत्वाद्वृद्ध्यावादेशयोः क्षावित्यस्य द्वित्वे चिक्षावयिषतीत्यापत्तेः । न द्वितीयः, ऊन इ अ त् इति स्थिते सति 'ने'त्यस्य द्वित्वेऽभ्यासोत्तरखण्डेऽल्लोपे सत्यवर्णाऽभावेन णावल्लोपस्य निषेधाऽप्रवृत्त्या द्वित्वात् प्रागेव परत्वादतो लोपे सति 'नी'त्यस्य द्वित्वे औनिनदित्यापत्तेरित्यत आह–**प्रक्रियायां परिनिष्ठिते रूपे वेति** । न त्वमुकत्रैवेत्याग्रह इति भावः । सजातीये पुयण्जामभ्यासोत्तरखण्डेऽवर्णपरत्वनियमादिति भावः । **सिद्धमिति।** प्रक्रियायां परिनिष्ठिते वा उत्तरखण्डे अवर्णाऽभावादृत इत्त्वस्य न निषेध इति भावः । एवं च 'चुक्षावयिषती'त्यत्र 'क्षु' इत्यस्य द्वित्वे प्रक्रियादशायामभ्यासोत्तरखण्डेऽवर्णाऽभावेऽपि परिनिष्ठिते रूपे तत्सत्त्वाण्णौ गुणावादेशयोर्भवत्येव द्वित्वे कार्ये निषेधः । औननदित्यत्रापि णौ भवत्येवाऽल्लोपस्य निषेध इत्याह–**प्रकृते त्विति** । औननदित्यत्रेत्यर्थः । **नशब्दस्येति** । अल्लोपात्प्रागेव नशब्दस्य द्वित्वाश्रयणे प्रक्रियादशाया-

---

शे.]भाष्ये 'कथं जातीयाश्चैते'इति प्रश्ने 'उवर्णादेशपरा' इत्येव वदेत् । अनेन उवर्णादेशादन्यत्रापि स्थानिवत्त्वसूचनेन परिनिष्ठिते एव यत्राऽवर्णपरत्वं तत्रैव निषेध इति विकल्पनाऽपि प्रत्युक्ता । एतेन 'ओः पुय' णिनि सूत्रेऽभ्यासस्येकार इति व्याख्येयम्,अलोऽन्त्यपरिभाषयाऽन्त्यस्य भविष्यति।एवं च 'ओ'रित्यधिकं ज्ञाप्यकोटावुवर्णादेशानिवेशार्थमिति परास्तम् । 'अत' इत्यनुवृत्तिशङ्कावारणाय तत्सत्त्वात् ] । नन्वेवं सति 'हलिकल्योरदन्तत्वनिपातनं कृतायां वृद्धौ टिलोपज्ञापक'मिति भाष्याऽसङ्गतिः, ण्यन्ताभ्यामाभ्याञ्चङि 'यथेष्टं नामधातुषु'इत्यनेन द्वितीयद्वित्वे 'अहलल'दित्यादौ अभ्यासेऽकारश्रवणेन चारितार्थ्यादिति चेन्न, एतद्भाष्यप्रामाण्येन, 'कण्ड्वादेस्तृतीयस्ये'त्युत्तरं तत्पाठेन च, त्र्येकाचामेव तत्र भाष्ये उदाहृतत्वेन च, द्वित्वप्रवृत्तियोग्यैकाच्त्रयसन्निधाने एव 'यथेष्ट'मित्यस्य प्रवृत्तेरदोषात् । तद्ध्वनयन्नाह–**औननदिति** । यत्त्वदन्तत्वसामर्थ्यादल्लोपविकल्प इति, तन्न, शास्त्रबाधस्याऽन्याय्यत्वात् । मम तु न कस्यापि शास्त्रस्य बाधः । एतेन णिज्वि-

तत उत्तरखण्डेऽल्लोपः। औननत्। माभवानूननत्। १८९० ध्वन शब्दे। अदध्वनत्। १८९१ कूट परितापे। परिदाह इत्यन्ये। १८९२ सङ्केत १८९३ ग्राम १८९४ कुण १८९५ गुण चामन्त्रणे। चात्कूटोऽपि। कूटयति। सङ्केतयति। ग्रामयति। कुणयति। गुणयति॥ पाठान्तरम्—१८९६ 'केत श्रावणे निमन्त्रणे च। केतयति। चिकेतयति। कुण गुण चामन्त्रणे। चकारात्-केते। १८९७ कूण सङ्कोचने' इति। १८९८ स्तेन चौर्ये। अतिस्तेनत्। आ गर्वादात्मनेपदिनः। १८९९ पद गतौ। पदयते। अपपदत। १९०० गृह ग्रहणे। गृहयते। १९०१ मृग अन्वेषणे। मृगयते। मृगयतीति कण्ड्वादिः। १९०२ कुह विस्मापने। १९०३ शूर १९०४ वीर विक्रान्तौ। शूरयते। वीरयते। १९०५ स्थूल परिबृंहणे। स्थूलयते। अतुस्थूलत। १९०६ अर्थ उपयाच्ञायाम्। अर्थयते। आर्तथत। १९०७ सत्र सन्तानक्रियायाम्। अससत्रत। अनेकाच्त्वाच्च षोपदेशः। सिसत्रयिषते। १९०८ गर्व माने। गर्वयते। अदन्तत्वसामर्थ्याण्णिज्विकल्पः। धातोरन्त उदात्तो लिट्याम् च फलम्।

त.]मार्गेण सिध्यतोऽर्थस्य वक्रेण साधनाऽयोगादिति दिक्। सङ्केत। चत्वारोऽत्र धातवः। पाठान्तरमिति। 'सङ्कोचने' इत्येतत्पर्यन्तम्। अनेकाच्त्वेनाऽषोपदेशत्वात्षत्वं नेति ध्वनयति—अतिस्तेनदिति। गृहयते इति। अल्लोपस्य स्थानिवत्त्वाच्च गुणः। लुङि—अजगृहत। अग्लोपाच्च सन्वद्भावः। मृगयते इति। मार्गयति मार्गतीति तु मार्ग अन्वेषणे इत्याधृषीयस्य। अर्थ। अर्थयते इति। 'वृद्धेर्लोपो बलीया'नित्यल्लोपाच्च वृद्धिः। बोपदेवस्तु—वृद्धौ कृतायां पुकि चार्थापयते इति रूपमाह, तद्भ्रमसात्। न च 'अर्थवेदसत्याना'मित्यापुक् स्यादेवेति वाच्यं, तत्र प्रातिपदिकस्य ग्रहणात्। अदन्तत्वसामर्थ्यादिति। कथादिषूपधाह्रस्वदीर्घसन्वद्भावविरहेण, सारभामप्रभृतीनामुपधाह्रस्वस्य, गृह-

बा.]मुत्तरखण्डेऽवर्णलाभादल्लोपस्य निषेधे सति नशब्दस्यैव द्वित्वं, न तु निशब्दस्येति भावः। तत इति। नशब्दस्य द्वित्वाऽनन्तरमुत्तरखण्डे अल्लोप इति भावः। अत्र नशब्दद्वित्वार्थमेव ऊनधातोरदन्तत्वं स्थितम्। फलान्तरं सूचयन्नाह—मा भवानूननदिति। अग्लोपित्वान्नोपधाह्रस्व इति भावः। पाठान्तरमिति। 'केत श्रावणे' इत्यादि ज्ञेयमित्यर्थः। चकारात्केतेति। 'समुच्चीयते' इति शेषः। सङ्कोचने इतीति। इतिशब्दः पाठान्तरसमाप्तौ। स्तेन चौर्ये। अनेकाच्त्वान्न षोपदेशोऽयमिति मत्वा आह—अतिस्तेनदिति। गृह ग्रहणे। ऋदुपधोऽयम्। गृहयते इति। अल्लोपस्य स्थानिवत्त्वान्न गुण इति भावः। लुङि—अजगृहत। अग्लोपित्वान्न सन्वत्त्वम्। मृग अन्वेषणे। मृगयते इति। इहाऽप्यल्लोपस्य स्थानिवत्त्वान्न गुणः। 'मार्ग अन्वेषणे' इत्याधृषीयस्य तु मार्गयति, मार्गतीति च गतम्। अर्थ उपयाच्ञायाम्। अर्थयते इति। अर्थ इ इति स्थिते अतो लोपः, न तु 'अचो ञ्णिती'ति वृद्धिः, 'वृद्धेर्लोपो बलीया'निति न्यायात्। 'अर्थवेदयो'रित्यापुक्तु न, तत्र प्रातिपदिकस्य ग्रहणात्। गर्व माने। अभिमाने इत्यर्थः। ननु कथादावस्य

शे.]कल्पार्थन्तदित्यपास्तम्। किं चाऽस्यादन्तत्वमग्लोपित्वसंपादनेन ह्रस्वाऽभावार्थम्। तद्ध्वनयन्नाह—मा भवानूननदिति। परे तु भाष्ये 'ओःपुयण्जिषु वचनं ज्ञापकं-णौ स्थानिवद्भावस्य। यद्येतज्ज्ञाप्यते 'अचिकीर्त'दित्यत्रापि प्राप्नोति। तुल्यजातीयस्य ज्ञापकम्। कश्च तुल्यजातीयः?। यथाजातीयकाः पुयण्जयः। कथं जातीयकाश्चैते?। अवर्णपराः' इत्युक्तम्। तत्र 'णा'वित्यस्य णिनिमित्तकोऽच आदेश इत्यर्थः। णौ पर इत्यर्थे रेफेण व्यवधानात् 'पुस्फारयिषती'त्याद्यसिद्धिः। ज्ञापनफलन्तु 'तुतावयिषती'त्यादि। तुल्यजातीयस्येत्यस्य प्वादिघटितधात्वच्तुल्यस्याऽच इत्यर्थः। षष्ठ्यन्ततयाऽच इत्यस्यैव तद्विशेष्यत्वात्। अच्त्वेन तुल्यत्वं कृतेरपीति पृच्छति—कश्चेति। उत्तरयति—यथाजातीयका इति। अत्र पुयण्जकारैरचस्तुल्यत्वाऽसम्भवात् पुयणित्यादेस्तद्घटितधात्वच इत्यर्थः। धात्ववयवत्वादिना साम्यमत्रापीति पृच्छति—कथंजातीयका इति। उत्तरयति—अवर्णपरा इति। एवञ्च द्वित्वप्रवृत्तिवेलाया-मवर्णपरत्वसंपादकादेशस्थानिनोऽच आदेश इत्यर्थः। तदैव स्थानिवत्त्वप्रवृत्त्या तात्कालिकसाजात्यग्रहणस्यैवौचित्यात्। एवञ्चाऽवर्णपरत्वसम्पादकादेशस्थानित्वेन तुल्यतेति भावः। एतेनाऽऽद्यजवर्णकपरखण्डका इत्यर्थोऽस्येति परास्तम्। तत्प्रवृत्तिवेलायां परखण्डाऽभावात्, आयजित्यादेः शब्दमर्यादयाऽलाभाच्च। एवञ्च यत्र द्विरुक्तौ परभागस्यायोऽजवर्णस्तत्रायं स्थानिवद्भाव इति 'द्विर्वचनेऽची' त्यादौ भाष्यकैयटयोः स्थितमिति माधवोक्तं चिन्त्यम्। अत्रत्यभाष्यकैयटाभ्यामक्षरमर्यादया तदर्थाऽलाभात्। सर्वथा 'औनन'दित्यादि चिन्त्यमेव। द्वित्वप्रवृत्तिवेलायां स्थानिवद्भावात्पूर्वमुत्तरखण्डेऽकाराऽभावात्। नापि द्वित्वोत्तरं सः, द्वित्वे कर्त्तव्ये एव स्थानिवद्भावेन तदुत्तरमुत्तरखण्डे तदश्रवणात्, स्थानिवद्भावकृताकारश्रवणस्य तत्प्रवृत्तौ निमित्तत्वाऽयोगाच्च। अत एव 'णौ स्थानिव'दित्यस्य प्रथमोपस्थिताऽदन्तोदाहरणं विहायोकारान्तोदाहरणं दत्तं भाष्ये इति प्राहुः। णिज्विकल्प इति। सूत्रादेरदन्तत्वमनेकाच्त्वेनाऽषोपदेशत्वार्थमिति न ततो णिज्विकल्प इति भावः। अन्त उदात्त इति। तेन 'गर्वति' इति मध्योदात्तम्। सूत्रमूत्रयोः पाठे फलं चिन्त्यम्। 'तत्क-

एवमग्रेऽपि । इत्यागर्वीयाः । १९०९ सूत्र वेष्टने । सूत्रयति । असुसूत्रत् । १९१० मूत्र प्रस्रवणे । मूत्रयति । मूत्रति । १९११ रूक्ष पारुष्ये । १९१२ पार १९१३ तीर कर्मसमाप्तौ । अपपारत् । अतितीरत् । १९१४ पुट संसर्गे । पुटयति । १९१५ धेक्क दर्शन इत्येके । अदिधेकत् । १९१६ कत्र शैथिल्ये । कत्रयति । कत्रति । कर्तेत्यप्येके । कर्तयति । कर्तति । (ग) प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च । प्रातिपदिका-

त.] मृगप्रमृतीनामुपधागुणस्य च व्यावर्तनेनाऽदन्तत्वं सार्थकम् । इह त्वदन्तत्वे प्रागुक्तफलाऽभावाण्णिचः पाक्षिकत्वं ज्ञापयतीति भावः । नन्वदन्तत्वसार्थकत्वाय 'वाऽल्लोप' इति प्राचोक्तमेवाभ्युपगम्यतामिति चेत् । अत्राहुः–'चिन्तयतेरिदित्त्वं सामान्यापेक्षं ज्ञापक'मिति मते इह अदन्तत्वस्य फलं स्पष्टमेव । 'विशेषाऽपेक्षं ज्ञापक'मिति मते तु तत्र तत्र आकार ईकार उकार ऊकारश्चेत्यनुबन्धा यथा ज्ञापकतया स्वीकृतास्तथा अदन्तताऽपि णिच्विकल्पमेव ज्ञापयतु, कृतेनैव णिज्विकल्पेन कृतार्थत्वे अपूर्वस्य लोपबाधस्य कल्पनाया अन्याय्यत्वात् । एवं हि सति मतद्वयेऽप्येकरूपमेव फलं लभ्यत इति ।

असुसूत्रदिति । अनेकाच्त्वान्न त्वम् । प्रातिपदिकादिति । यदि सुबन्ताण्णिच् स्यात्तदा स्रजयतीत्यादौ कुत्वं स्यादिति भाव इति केचित् । तन्न । इष्ठवद्भावेन भत्वे कुत्वस्याऽप्रसक्तेः । अत्र 'बहुलं णिच् स्यात् । स च णिच् इष्ठवद्भवती'त्यन्वयात्पक्षे वाक्यमपि भवतीत्याह–पटुमाचष्ट इति । धात्वर्थे इत्यनेन करणऽऽख्यानादिर्गृह्यत इति भावः । ननु बहून्याचष्टे भावयतीत्यत्र 'इष्ठस्य यिट् चे'ति णिचोऽपि यिट् स्यात् । अत्राहुः–'टे'रिति सूत्रे 'णाविष्ठवत्प्रातिपदिकस्ये'ति वार्तिके प्रातिपदिकग्रहणं प्रत्ययकार्याणामतिदेशो माभूदित्येवमर्थम् । तेनाऽत्र णिचोऽपीण्न भवति, तदभावे भूभावेनापि न भवितव्यं, संनियोगशिष्टत्वात्, किंतु बहयतीत्येव भवितव्यमिति मतान्तरम् । एतच्च तत्रैव सूत्रे कैयटे स्पष्टमिति । अन्ये त्वाहुः–इष्ठवदिति हि सप्तम्यन्ताद्वतिः, णावित्युपमेये सप्तमीदर्शनात्, तेन इष्ठनि परे पूर्वस्य यत्कार्यं तदतिदिश्यते न तिष्ठनोऽपीति । पुंवद्भावेति । अतिशयेन पट्वी-पटिष्ठेत्यत्र 'भस्याऽढे तद्धिते' इति पुंवद्भावः । क्रशिष्ठः द्रढिष्ठ इत्यत्र 'र ऋतो हलादे'रिति रभावः । 'साधिष्ठ'इत्यादौ टिलोपः । अतिशयेन स्रग्वी स्रजिष्ठ इत्यत्र 'विन्मतोर्लुं'गिति विनो लुक् । अतिशयेन गोमान् गविष्ठ इत्यादौ मतुपो लुक् । स्थविष्ठ इत्यादौ 'स्थूलदूरे'त्यादिना यणादिलोपः । प्रेष्ठ इत्यादौ 'प्रियस्थिरे'त्यादिना प्रस्थाद्यादेशः । तद्गुणणावपीति । पुंवद्भावस्योदाहरम्–ऐनीमाचष्टे एतयति । टिलोपेनैव सन्नियोगशिष्टत्वान्नकारनिवृत्तौ सिद्धायां पुंवद्भावग्रहणं दरदमाचष्टे दारदयतीत्यादिसिध्यर्थमिति बोध्यम् । द्रढयतीत्यादौ रभावः । स्रग्विणमाचष्टे स्रजयतीत्यत्र विनो लुक् । गोमन्तमाचष्टे गवयतीत्यत्र मतुपो लुक् । अङ्गवृत्तपरिभाषया वृद्धिरत्र न भवति । प्रियमाचष्टे प्रापयति, स्थिरमाचष्टे स्थापयतीत्यदौ तु वृद्धिर्भवत्येव, 'द्वयो'रिति निर्देशेन तस्याः परिभाषाया

बा.] पाठो व्यर्थः, अदन्तत्वे फलाऽभावात् । न च सन्वत्त्वनिवृत्तये अग्लोपित्वाय अदन्तत्वमिति शङ्क्यं, लघुपरकत्वाऽभावादेव तदप्रसक्तेः । नाऽप्यल्लोपस्य स्थानिवद्भावादुपधावृद्धिनिवृत्त्यर्थमदन्तत्वमिति शङ्क्यं, गकारादकारस्यानुपधात्वादेव तदप्रसक्तेरित्यत आह–अदन्तत्वसामर्थ्याण्णिज्विकल्प इति । ननु 'गर्वते' इत्यत्र णिजभावेऽप्यदन्तत्वं निष्फलमिति कथं तस्य विकल्पज्ञापकतेत्यत आह–धातोरन्त उदात्त इति । तेन 'गर्वते' इत्यत्र वकारादकार उदात्तः फलति । अदन्तत्वाऽभावे तु गकारादकार उदात्तः स्यादिति भावः । लिट्याम् चेति । 'गर्वांचक्रे' इत्यत्र 'कास्यनेकाचः' इत्याम्प्रत्ययोऽप्यदन्तत्वस्य फलमित्यर्थः । अन्यथा अनेकाच्त्वाऽभावादाम्न स्यादिति भावः । एवमग्रेऽपीति । 'मूत्र प्रस्रवणे' इत्यादावित्यर्थः । इत्यागर्वीयाः । सूत्र वेष्टने । अनेकाच्त्वादषोपदेशत्वार्थमस्य अदन्तत्वमिति न ततोऽस्य णिज्विकल्पः । कत्र शैथिल्ये । कर्त इत्यपीति । अदन्तत्वसामर्थ्यादस्य णिज्विकल्प इति मत्वाह–कर्तयति कर्ततीति । प्रातिपदिकाद्धात्वर्थे । चुरादिगणसूत्रमिदम् । 'इष्ठ'वदिति सप्तम्यन्ताद्वतिः । तेन भुवमाचष्टे भावयतीत्यत्र 'इष्ठस्य यिट् चे'ति यिडागमो न भवति । तदाह–इष्ठे यथेति । अत्र 'धात्वर्थे इत्यनेन करणम् आख्यानं दर्शनं वचनं श्रवणमित्यादि गृह्यते । पुंवद्भावेति । अतिशयेन पट्वी पटिष्ठेत्यत्र 'भस्याऽढे' इति पुंवत्त्वम् । 'द्रढिष्ठ' इत्यत्र 'र ऋतो हलादेर्लघो'रिति रभावः । अतिशयेन साधुः साधिष्ठ इत्यत्र टिलोपः । अतिशयेन स्रग्वी स्रजिष्ठ इत्यत्र 'विन्मतोर्लु'गिति विनो लुक् । अतिशयेन गोमान् गविष्ठ इत्यत्र मतुपो लुक् । अतिशयेन स्थूलः स्थविष्ठ इत्यादौ 'स्थूलदूरयुवे'त्यादिना यणादिलोपः, पूर्वस्य च गुणः । अतिशयेन प्रियः प्रेष्ठ इत्यादौ 'प्रियस्थिरे'त्यादिना प्रस्थाद्यादेशः ।

शे.] रीती'त्यस्य 'सूत्रयति' मूत्रयती'ति भाष्ये उदाहरणात् । वस्त्रं वेष्टयतीत्यर्थे 'वस्त्रं सूत्रयती'ति सिद्धये, घटः प्रस्रवतीत्यर्थे 'घटो मूत्रयती'त्यर्थं तयोः पाठ इति कश्चित् । ['मूत्राद्यकारे'त्यर्थोऽन्स्यपाठः, 'कार्पासेन वेष्टयति' इत्यर्थे 'कार्पासेन सूत्रयती'त्यर्थश्चायपाठ इत्यन्ये] । गणसूत्रमाह–प्रातिपदिकादिति । यत्तु तत्प्रकृतिकसुबन्तादित्यर्थः, तत्करोतीत्यस्य तद्विवरणत्वात् । तत्र हि 'त'दिति कर्मपरम् । 'द्वितीयान्तात्प्रत्ययः' इति तृतीये हरदत्तोक्तेः । तन्न । 'सुप' इत्यस्याऽप्रकृतत्वात्, सुप इत्येव सिद्धे गणसूत्रेस्थप्रातिपदिकपदाऽसङ्गतेश्च । अत एव 'स्वार्थे परिपूर्ण'मिति न्यायोऽत्र न । अत एवाऽऽचारक्विप् प्रातिपदिकादेव । इदमेवाऽभिप्रेत्य मूले 'तत्करोतीति पूर्वस्य प्रपञ्चः' इत्युक्तम् । माधव-

द्धात्वर्थे णिच् स्यात्, इष्टे यथा–प्रातिपदिकस्य पुंवद्भाव-रभाव-टिलोप-विन्मतुब्लोप-यणादिलोप–प्रस्थ-स्फाद्यादेश-भसंज्ञास्तद्वण्णावपि स्युः। पटुमाचष्टे पटयति। परत्वाद्वृद्धौ सत्यां टिलोपः। अपीपटत्। 'णौ चङी'त्यत्र भाष्ये तु 'वृद्धेर्लोपो बलीया'निति स्थितम्। अपपटत्। (ग) **तत्करोति तदाचष्टे**। पूर्वस्य प्रपञ्चः। करो-

---

त.]अनित्यत्वज्ञापनादिति दिक्। **परत्वाद्वृद्धाविति**। लोपः शब्दान्तरप्राप्त्याऽनित्यः। वृद्धिरप्यनित्या। उभयोरनित्ययोः परत्वाद्वृद्धिः। तस्यां कृतायामौकारस्याऽऽवादेशात्प्रागेव परत्वाद्वार्णादाङ्गस्य बलीयस्त्वाच्च लोप इत्यर्थः। एवं चाऽनग्लोपित्वाद्दीर्घसन्वद्भावौ स्त इत्याह–**अपीपटदिति**। इह टिलोपस्य स्थानिवत्त्वेन व्यवधानाद्दीर्घसन्वद्भावौ नेति न भ्रमितव्यम्, स्थानिवत्त्वेऽप्यङ्गस्य णिच्परत्वाऽनपायात्। चङ्परे णौ यल्लघ्विति पक्षेऽपि अभ्यासस्य आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति दीर्घसन्वद्भावौ स्त एव। केचित्तु 'चङ्परे णौ यल्लघ्वि'ति पक्षे पटुशब्दोकारस्य वृद्धौ कृतायां णिच्परं लघु दुर्लभमिति सन्वद्भावाऽप्राप्त्या अपपटदित्येव रूपम्। प्रथमं टिलोपः, पश्चाद्विर्वचनमिति मत्वा अभ्यासस्य आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति मनोरमोक्तं यत्, तन्नादर्तव्यम्। 'णिच्यच आदेशो न स्याद्वित्वे कर्तव्ये' इति निषेधपक्षस्य मुख्यतया प्रागुक्तत्वेन प्रथमं टिलोपस्य दुरुपपादत्वादित्याहुस्तन्मन्दम्। अपीपटदित्यत्र द्वितीयाऽच्पर्यन्तस्य प्रथमावयवस्य द्वित्वमिति हि निर्विवादम्। तथाच द्वितीयस्याऽचो द्वित्वकरणात्प्रथमं टिलोपः स्यादेवेति। **वृद्धेर्लोप इति**। कृताऽकृतप्राप्तिमात्रेण लोपो नित्यः, वृद्धिस्त्वनित्या, टिलोपे सति स्थानिनः पूर्वत्र कर्तव्यायां लोपस्य स्थानिवत्त्वात्, स्वविधौ स्वस्य स्थानिवत्त्वाऽभावाच्च। अस्मिंस्तु पक्षे 'मुण्डमिश्रे'ति सूत्रे हलिकल्योरदन्तत्वनिपातनस्य वैयर्थ्यमेव, वृद्धेः प्राक् टिलोपे सति अग्लोपित्वसंभवात्। तथा चाऽदन्तत्वनिपातनसामर्थ्याट्टिलोपात्पूर्वं वृद्धिरेवेत्यन-

---

बा.]अतिशयेन स्रग्वी स्रजिष्ठ इत्यत्र भत्वान्न कुत्वम्। एते इष्टे इव णावपि परतः स्युरित्यर्थः। **पटयतीति**। पटुमाचष्टे इत्याद्यर्थे णिच्। इष्ठवत्त्वाट्टेरिति टिलोप इति भावः। ननु उकारस्य टेर्लोपे सति अग्लोपित्वात्सन्वत्त्वं न स्यादित्यत आह–**परत्वाद्वृद्धौ सत्यां टिलोप इति**। 'अचो ञ्णिती'ति उकारस्य वृद्धौ कृतायामेकारस्य टेर्लोपः। अकृतायां तु वृद्धावुकारस्य टेर्लोपः। ततश्च 'शब्दान्तरस्य प्राप्नुवन्विधिरनित्यः' इति न्यायेन टिलोपोऽनित्यः। वृद्धिस्तु टिलोपे कृते सति नैव भवतीति साऽप्यनित्या। एवंच वृद्धिटिलोपयोरुभयोर्मध्ये परत्वादुकारस्य वृद्धिरौकारः। तस्याऽवादेशात्प्रागेव परत्वाद्वार्णादाङ्गस्य बलीयस्त्वाच्च औकारस्य टेर्लोप इत्यर्थः।एवंच अनग्लोपित्वात्सन्वत्त्वमिति मत्वाऽऽह–**अपीपटदिति**। एतच्च 'मुण्डमिश्रे'ति सूत्रे भाष्यकैयटयोः स्पष्टम्। **स्थितमिति**। तथाच वृद्धेः प्रागुकारस्य लोपेऽग्लोपित्वान्न सन्वत्त्वमित्यर्थः। भाष्ये उभयथा दर्शनाद्रूपद्वयमपि साध्विति बोध्यम्। शब्देन्दुशेखरे तु–'वृद्धेर्लोपो बलीया'निति 'णौ चङी'ति सूत्रभाष्यमेव प्रमाणं। 'मुण्डमिश्रे'ति सूत्रभाष्यं त्वेकदेश्युक्तिरिति प्रपञ्चितम्। अत्र पुंवद्भावादिकमुदाह्रियते–एनीमाचष्टे एतयति। पुंवद्भावान्ङीब्नकारयोर्निवृत्तिः। दृढमाचष्टे द्रढयति। 'र ऋतः' इति रभावः। स्रग्विणमाचष्टे स्रजयति। 'विन्मतो'रिति विनो लुक्। गोमन्तमाचष्टे गवयति। मतुपो लुक्। अङ्गवृत्तपरिभाषया न वृद्धिः। स्थूलमाचष्टे स्थवयतीत्यादिषु यणादिलोपः। प्रियमाचष्टे प्रापयति, स्थिरमाचष्टे स्थापयतीत्यादिषु प्रस्थस्फाद्यादेशाः। अत्र वृद्धिर्भवत्येव, 'द्वयो'रिति निर्देशेन अङ्गवृत्तपरिभाषया अनित्यत्वाश्रयणात्। स्रग्विणमाचष्टे स्रजयति। सुबन्ताद्विहितस्य विनो लुक्यन्तर्वर्तिविभक्त्या पदत्वात् प्राप्तं कुत्वं भत्वान्न भवति। **तत्करोति तदाचष्टे**। इदमपि चुरादिगणसूत्रम्। प्रातिपदिकादित्यनुवर्तते। तत्करोति, तदाचष्टे इति चार्थे प्रातिपदिकाण्णिच् स्यादित्यर्थः। आचारक्विबिव प्रातिपदिकादेवेदम्। ननु 'प्रातिपदिकाद्धात्वर्थे' इत्येव सिद्धे किमर्थमिदमित्यत आह–**पूर्वस्यैव प्रपञ्च इति**। ननु करोति आचष्टे इति

---

शे.]स्वरसोऽप्येवमेव। 'द्वितीयान्ता'दिति हरदत्तस्य–तदन्तार्थकादित्यर्थः। अत एव 'अत्वरराजत्' 'पटयती'त्यादौ न कुत्वादि,पदत्वाऽभावात्।परे तु 'तत्करोती'ति'हेतुमति चे'ति सूत्रे वार्तिकात्, 'टे'रिति सूत्रे 'णाविष्ठवत्प्रातिपदिकस्ये'ति वार्तिकाच्च गणसूत्राणि,प्रातिपदिकाद्धात्वर्थे इत्यत्रेष्ठवच्चेति चाऽप्रामाणिकानि।तत्र[तन्त्र]सूत्रे वृत्तिकारादिभिः ख्युनामित्यादीनां सूत्रावयवत्वेन पठितानामपि वार्तिकेषु दर्शनेनाऽप्रामाणिकत्वकल्पनस्य सर्वसंमतत्वात्। वार्तिके 'करोती'ति धात्वर्थोपलक्षणम्, इष्ठवत्त्वविधायके प्रातिपदिकस्येत्युक्त्या प्रातिपदिकादेव तदुत्पत्तिलाभात्। [अत एव 'घटो जायते' 'घटं पचति' इत्यर्थे च 'घटयति' इत्यादि नेत्याहुः]। तत्र वार्तिके णावित्युपमेये सप्तमीदर्शनात्सप्तम्यन्ताद्वतिरित्याह–**इष्टे यथेति**। अत एव 'भावयती'त्यादौ 'इष्ठस्य यिट् चे'ति यिडागमो न। **प्रस्थेत्यादि**। आदिना–सकलषाष्ठादेशाः, पाञ्चमिकः कन् च गृह्यते। अत एव भारद्वाजीयैः–'णाविष्ठवत्प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरप्रादिविन्मतोर्लुक्कन्विध्यर्थ'मिति पाञ्चमिकः कनेवोपात्तो, न तु तत्रादिपदमुपात्तं, नापि प्रथमोपस्थितप्रस्थोपादानमिति केचित्। [तस्मात्कन्व्यतिरिक्तपाञ्चमिकानामनभिधानमेव णाविति बोध्यम्]। माधवादयस्तु कन्ग्रहणमुपलक्षणं मत्वा सर्वपाञ्चमिकादेशान्

स्याचष्ट इति धात्वर्थमात्रं णिजर्थः । लडर्थस्त्वविवक्षितः । (ग) **तेनातिक्रामति** । अश्वेनातिक्रमति अश्वयति । हस्तिनाऽतिक्रामति हस्तयति । (ग) **धातुरूपं च** । णिच्प्रकृतिर्धातुरूपं प्रतिपद्यते । चशब्दोऽनुक्तसमुच्चयार्थः। तथा च वार्तिकम्।***आख्यानात्कृतस्तदाचष्टे कृल्लुक्,प्रकृतिप्रत्यापत्तिः, प्रकृतिवच्च कारकमिति** । कंसवधमाचष्टे कंसं घातयति।इह कंस अम् हन् इ इति स्थिते । **हनस्तोऽचिण्णलोः** ७।३।३२।हन्तेस्तकारोऽन्तादेशः स्याच्चिण्णल्वर्जे ञिति णिति । नन्वत्राऽङ्गसंज्ञा धातुसंज्ञा च कंसविशिष्टस्य प्राप्ता । ततश्चा-

---

त.]ग्लोपित्वादपीपटदित्येव रूपं साध्विति प्रतीयते । भाष्यद्वयप्रामाण्याद्रूपद्वयमपि साध्विति बहवः । **लडर्थस्त्विति** । करोत्याचष्टे इति हि कर्तरि वर्तमाने लडेकवचनम् । लडर्थाऽविवक्षायां तु ण्यन्ताद्भावकर्मणोर्भूतभविष्यतोर्द्वित्वबहुत्वयोश्च प्रत्ययो भवत्येवेति भावः । यद्यप्येकत्वादिसङ्ख्या लडर्थो न भवति, तथापि लडादेशतिङर्थोऽपीह लडर्थत्वेन गृहीत इति ज्ञेयम् । **तेनातिक्रामति** । तृतीयाप्रकृतिभूतात्प्रातिपदिकाण्णिच् । तृतीयान्ताण्णिजित्यन्ये । एवं **तत्करोतीत्य**त्रापि द्वितीयाप्रकृतिभूताद्द्वितीयान्ताद्वा णिच् । न च सुबन्ताण्णिचि वाचं करोत्याचष्टे वाचाऽतिक्रामति वा वाचयतीत्यत्र कुत्वं स्यादिति शङ्क्यम्, इष्ठवद्भावेन भसंज्ञया पदसंज्ञाया बाधात् । यशस्विनमाचष्टे यशसयति, स्रग्विणमाचष्टे स्रजयतीत्यादौ विनो लुकि प्राप्तस्य पदकार्यस्य बाधार्थं भसंज्ञातिदेशस्यावश्यकत्वात् ,'तत्करोती'त्यादिनिर्देशानुगुणत्वाच्च सुबन्ताण्णिजिति पक्ष एव ज्यायानित्याहुः। **णिच्प्रकृतिरिति** । वधशब्दो णिच्प्रकृतिः,इदानीं तु कृल्लुक्यवशिष्टभाग एव प्रकृतिरित्यर्थः । **आख्यानात्कृत इति** । यद्यपि 'वध'शब्दः कृदन्तः, स आख्यानं न भवति तथाप्याख्यानवाची कृदन्तश्च कंसवधशब्दो भवत्येव, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् । **कृल्लुगिति**। 'हनश्च वधः' इति विहितस्य अप्प्रत्ययस्य लुक् ।

---

बा.]वर्तमाननिर्देशादकरोदित्याद्यर्थेषु न स्यादित्यत आह—**करोत्याचष्टे इत्यादि** । **लडर्थ** इत्युपलक्षणम् । तेन भूते भविष्यति द्वित्वे बहुत्वे च प्रत्ययो भवत्येव । **तेनातिक्रामति** । इदमपि गणसूत्रम् । 'प्रातिपदिकाद्धात्वर्थे' इत्यस्यैव प्रपञ्चः । वाचाऽतिक्रामति वाचयति इत्यत्र कुत्वं तु न शङ्क्यम्, असुबन्तादेव प्रातिपदिकात्प्रत्ययोत्पत्तेः । **धातुरूपं चेति** । इदमपि गणसूत्रम् । णिच्प्रकृतिरिति, प्रतिपद्यते इति चाध्याहृत्य व्याचष्टे—**णिच्प्रकृतिर्धातुरूपं प्रतिपद्यत इति** । ननु प्रातिपदिकाद्धात्वर्थे णिज् भवति, णिच्प्रकृतिर्धातुरूपं च प्रतिपद्यते इति प्रतीयमानार्थाश्रयणे भुक्तमाचष्टे भुक्तयतीति न स्यात् । भुक्तशब्दस्य भुजधातुरादेशः स्यादित्यत आह—**चशब्दोऽनुक्तसमुच्चयार्थ इति** । किमनुक्तं समुच्चीयते इत्यत आह—**तथाच वार्तिकमिति** ।

**आख्यानात्कृत इति** । 'हेतुमति चे'ति सूत्रे इदं वार्तिकं स्थितम् । **आख्यानं**—वृत्तकथाप्रबन्धः। तद्वाचिनः कृदन्तात्कंसवधादिशब्दात्तदाचष्टे इत्यर्थे णिचि कृते णिच्प्रकृत्यवयवभूतस्य कृतः लुक् , तस्यैव कृतो या प्रकृतिर्हनादिधातुरूपा, तस्याः **प्रत्यापत्तिः**=आदेशादिविकारपरित्यागेन स्वरूपेणाऽवस्थानं भवतीत्यर्थः । 'प्रकृतिवच्च कारक'मित्यंशस्तु मूल एव व्याख्यास्यते । कंसवधमाचष्टे कंसं घातयतीत्युदाहरणम् । हननं वधः । 'हनश्च वधः' इति भावे हनधातोरप्प्रत्ययः प्रकृतेर्वधादेशश्च। कंसस्य वधः कंसवधः,। तदन्वाख्यानपरवाक्यसन्दर्भो विवक्षितः। तमाचष्टे इत्यर्थे णिच्। अप्प्रत्ययस्य कृतो लुक् , प्रकृतिभूतस्य हनधातोर्वधादेशस्य च निवृत्तिः । तथाच फलितं दर्शयति—**इह कंसं हन् इ इति स्थिते इति** । **हनस्तोऽचिण्णलोः** । 'हन'इति षष्ठी । 'त'इत्यत्राऽकार उच्चारणार्थः । तदाह—**हन्तेस्तकार इति**। **'अन्तादेश'** इत्यलोऽन्त्यपरिभाषया सिद्धम्। **ञिति णिति चेति** । 'अचो ञ्णिती'त्यतस्तदनुवृत्तेरिति भावः। तथाच हनो नकारस्य तत्वे 'हो हन्ते'रिति कुत्वेन हस्य घकारे 'घाती'ति ण्यन्तं फलितम्। ततो लटि 'घाततयी'ति रूपं

---

शे.]मन्वते । यद्यपि भसञ्ज्ञा भाष्ये न दृश्यते, तथापि 'उदाहरणमेतन्न परिगणन'मिति भाष्यात्तस्या अपि ग्रहणम् । तेन स्रग्विणमाचष्टे—स्रजयती'त्यादौ न कुत्वम् । ण्यन्तात्क्विपि स्रगित्यादौ बहिर्भूतसुब्निमित्त[क]बहिरङ्गपदत्वस्यान्तरङ्गेण भत्वेन बाधाऽयोगात्कुत्वं भवत्येव । पुंवद्भावोदाहरणम्—'इडविडमाचष्टे—ऐडविडयती'ति । इष्ठनि दृष्टस्यैवातिदेश इति आदिवृद्धनोतिदेश इति दिक् । **परत्वाद्वृद्धाविति** । अत एव 'मुण्डमिश्रे'त्यत्र हलकलेति हलिकल्योरदन्तत्वनिपातनं भाष्योक्तं सार्थकम् । वृद्धेः पूर्वं लोपे तु इकारलोपेऽप्यग्लोपित्वसत्त्वेन तद्वैयर्थ्यं स्पष्टमेव । लोपस्य शब्दान्तरप्राप्त्या वृद्धेः स्वत एवाऽनित्यत्वेनोभयोरनित्ययोः परत्वाद्वृद्धौ आवादेशात्पूर्वं परत्वादाङ्गत्वाच्च लोप इत्यनग्लोपित्वात्सन्वत्त्वं भवत्येवेति भावः। न चात्रपक्षे 'वारि आख्यत्—अवीवर'दित्यादौ वृद्धौ कृतायाङ्कृतस्यापि टिलोपस्य स्थानिवत्त्वाद्ध्रस्वत्वं न प्राप्नोतीति वाच्यं, चङ्परनिर्ह्रासे तन्निषेधात् । इदञ्च 'मुण्डमिश्रे'ति सूत्रे भाष्यकैयटयोः स्पष्टम् । **वृद्धेर्लोप इति** । अत एव 'नाग्लोपी'ति सूत्रेऽग्लोपीत्यत्राऽगिति प्रत्याहारग्रहणं चरितार्थम् । इदुदुपधेभ्यो णिजन्तेभ्यो लुङ् तु न, भाष्यप्रामाण्यादिति भावः। सात्त्मिकमेव ज्यायः । 'मुण्डमिश्रे'ति सूत्रस्थन्त्वेकदेश्युक्तिः, 'अचकल'दित्यादौ वृद्धेरपि नित्यत्वमाशङ्क्य शब्दान्तर-

ऽड्द्वित्वयोर्दोषः । किंच कुत्वतत्वे न स्याताम्, 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्' । सत्यम् । 'प्रकृतिवच्चे'ति चकारो चकारो भिन्नक्रमः। 'कारकं च' । चात्कार्यम् । हेतुमण्णिचः प्रकृतेर्हन्यादेर्हेतुमण्णौ यादृशं

त.]**प्रकृतिप्रत्यापत्तिरिति**। विकारपरित्यागेन स्वरूपेणाऽवस्थितिरित्यर्थः।तदेतत्सकलमभिप्रेत्याह-**कंसं हन् इ इति स्थिते इति । कंसविशिष्टस्येति**। तस्मादेव णिचो विधानादिति भावः। **दोष इति**। कंसशब्दात्पूर्वमडागमः, कंस् इत्यस्य द्विर्वचनं स्यादित्यर्थः । **किं चेति** । एवं च कंसमजीघतदितीष्टं न सिध्येदिति भावः । **तत्प्रत्यये**-धातोर्विहितप्रत्यये। तेन 'वार्त्रघ्न'मित्यत्र 'हनस्त' इति तत्वं न भवतीति ज्ञेयम् । उक्तदोषान्परिहरति-**सत्यमिति** । 'प्रकृतिवच्चे'ति चकारोऽनुक्तसङ्ग्रहार्थं इत्याह-**चात्कार्यमिति** । यद्यप्यन्यतरातिदेशेनाप्यड्द्विर्वचने सिध्यतः, तथापि धातावनन्तर्भूतद्वितीयान्तादिलाभाय कारकातिदेशः । कार्यातिदेशस्तु कुत्वतत्वादिलाभायेति विवेकः । इह 'भारतभागवतादिप्रसिद्धे कंसवधाद्युपाख्याने एव णि'जिति नाग्रहः, किं तूपाख्यानमात्रे । तेन राजागमनमाचष्टे राजानमागमयतीत्यादि सिध्यति। इह कृत्प्रकृतौ राज्ञः कर्तृत्वेऽपि गमेर्हेतुमण्णौ 'गतिबुद्धी' त्यनेन तस्य कर्मत्वमिति द्वितीयान्तमेव रूपातिदेशबलात्स्वीक्रियते । देवदत्तपाकमाचष्टे देवदत्तेन पाचयतीत्यत्र तु देवदत्तस्य कर्तृत्वानपायात्तृतीयैव भवति । रुक्मिणी-

बा.]स्थितम् । कृतो लुकि समासनिवृत्तौ सुब्लुकोऽपि निवृत्तौ कंसमिति च स्थितम् । 'आख्यानात्कृतः' इति वार्तिकस्थं 'प्रकृतिवच्च कारक'मित्यंशं शङ्कोत्तरत्वेन योजयिष्यञ्छङ्कामवतारयति-**नन्विति। कंसविशिष्टस्येति**। 'कंसवध'शब्दस्यैवेत्यर्थः । तस्मादेव णिचो विधानादिति भावः । ननु कंसवधशब्दस्य अङ्गत्वे का हानिरित्यत आह-**ततश्चेति** । कंसवधशब्दस्याऽङ्गत्वादड्द्वित्वयोर्विषये दोषः स्यात्। कंसशब्दात्पूर्वमडागमः स्यात् । 'कं'सित्यस्य द्विर्वचनं स्यात्।इष्यते तु 'कंसमजीघत'दित्येवं हनधातोरेवोभयमित्यर्थः । **किं चेति** । कंसं घातयतीति कुत्वतत्वे न स्यातामित्यर्थः । कुत इत्यत आह-**धातोरिति** । धातोर्हन्नित्यादितत्तत्स्वरूपेण ग्रहणे सति तत्प्रत्यये=धातोर्विहितप्रत्यये कार्यविज्ञानमिति परिभाषयेत्यर्थः । तेन वार्त्रघ्नमित्यत्र 'हनस्तोऽचिण्णलो'रिति तत्वं न भवतीति 'हनस्तोऽचिण्णलो'रिति सूत्रे भाष्ये स्पष्टम् । तथाच प्रकृते 'कंसं घातयती'त्यत्र 'हो हन्ते'रिति कुत्वं, 'हनस्तोऽचिण्णलो'रिति तत्वं च न स्याताम्, अत्र णिचः प्रातिपदिकाद्विहितत्वेन धातोर्विहितत्वाऽभावादित्यर्थः । अत्र प्रत्ययलक्षणेन कृदन्ततया कृत्प्रकृत्यर्थस्य कर्मत्वेन कंसस्येति षष्ठी स्यादित्यप्याक्षेपोऽपि बोध्यः,तत्परिहारस्यापि वक्ष्यमाणत्वात् । तामिमां शङ्कामर्द्धाङ्गीकारेण परिहरति-**सत्यमिति** । कंसवधशब्दस्यैवाङ्गत्वमित्याद्यङ्गीक्रियते, दोषापादनं तु नाङ्गीक्रियत इत्यर्थः। **प्रकृतिवच्चेतीति** । 'आख्यानात्कृतः' इति वार्तिके 'प्रकृतिवच्चे'ति चकारो भिन्नक्रमः। 'प्रकृतिव'दित्यनन्तरपठितश्चकारः कारकमित्यस्मादूर्ध्वं निवेशनीय इति भावः । तदेवाभिनीय दर्शयति-**कारकं चेति** । चकारोऽयमनुक्तसङ्ग्रहार्थं इत्याह-**चात्कार्यमिति** । 'समुच्चीयते' इति शेषः । तथाच कारकं कार्यं च प्रकृतिवदिति फलितम् । अत्र प्रकृतिशब्देन हेतुमण्णिचः प्रकृतिर्विवक्षिता, व्याख्यानात् । प्रकृताविव प्रकृतिवत् । सप्तम्यन्ताद्वतिः । तदाह-**प्रकृतेर्हन्यादेर्हेतुमण्णाविति** । 'प्रयुज्यमाने सती'ति शेषः । 'कारक'मित्यस्य विवरणं-**द्वितीयान्तमिति** । द्वितीयातृतीयादिकारकविभक्त्यन्तमित्यर्थः । हन्ति कंसं कृष्णः, तं प्रेरयतीत्यर्थे

शे.]प्राप्त्या अनित्यत्वप्रतिपादकस्य 'मुण्डे'ति सूत्रस्थभाष्यस्य तत्त्वावश्यकत्वात् । लोपस्य स्थानिवद्भावेन 'अत उपधायाः' इत्यस्याऽप्राप्तेः, 'अचोञ्णिती'त्यस्य स्थान्यभावेनाऽप्राप्तेश्च, 'अत उपधायाः' इत्यस्या भिन्नलक्ष्यगत्वाद्भिन्नस्थानिकत्वाच्च । अत एव 'णौ चङी'ति सूत्रे-'अवीवद'दित्यत्र णिलोपेऽग्लोपित्वाद्ध्रस्वप्रतिषेधः प्राप्नोति । न च परत्वाद्वृद्धौ कृतायां लोप इत्यग्लोपित्वाऽभावः । 'नाग्लोपी'ति सूत्रे प्रत्याहारग्रहणेन वृद्धेर्लोपस्य बलवत्त्वज्ञापनात् । अथवा 'णग्लोपौ'इति पूर्वविप्रतिषेधात्पूर्वं णिलोप'-इत्याशङ्क्य णेर्णिच्युपसङ्ख्यानेन परिहृतम् । एतदेवाभिप्रेत्य सप्तमे कैयट आह-'अनाश्रित्य ज्ञापकमत्वनिपातनमुक्तं,ज्ञापकाश्रयणन्तु ज्याय'इति।किं च हलकलेत्यकारान्तयोरेव सूत्रे ग्रहणात्'अचकल'दित्यादि सिद्धं, हलिकलिभ्यां णिजेव नास्तीत्यफलमत्वनिपातनम्।न च तत्करोतीति णिच्, इकारान्तयोरकारान्तयोश्च पर्यायत्वेन हलकलग्रहणस्य नियमार्थत्वेन तयोर्णिजभावादिष्टसिद्धेः । एवञ्च चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधो न कार्यः, तत्साध्यस्याऽवीवददित्यादेर्णेर्णिच्युपसङ्ख्यानेन सिद्धेः । अन्येषान्तु तत्साध्यानामनभिधानमेवेति 'नाग्लोपी'ति सूत्रे कैयटे स्पष्टम् । **धातुरूपं चेति** । गणसूत्रम्। **वार्त्तिकमिति** । 'हेतुमति चे'ति सूत्रे' इति शेषः। अत्राऽऽख्यानशब्देन सर्वं, न प्रसिद्धं कंसवधाद्येव । तेन 'राजागमनमाचष्टे-राजानमागमयती'त्येव । आख्यानवाचककृदन्तात्तदाचष्टे इत्यर्थे णिच्,णिच्प्रकृत्यवयवकृतो लुक्, तस्यैव कृतो या प्रकृतिर्हन्नित्यादिस्तस्या विकारपरित्यागेन स्वेन रूपेणाऽवस्थानमित्यर्थः । **प्रकृतिवच्चेति** । कृत्प्रकृतिप्रकृतिकणिजन्तवदित्यर्थः, तदाह-**हेतुमण्णिच इत्यादिना** । अत एव पुष्ययोगं जानाति-'पुष्येण योजयती'त्यादौ तृतीयासिद्धिः,'राजानमागमयती'त्यादौ द्वितीया च।**द्वितीयान्तमित्युपलक्षणम्**।आख्यानात्तदाचष्ट इति चोप-

कारकं धातावनन्तर्भूतं द्वितीयान्तं, यादृशं च कार्यं कुत्वतत्वादि, तदिहापीत्यर्थः । कंसमजीघतत् । (ग) **कर्तृकरणाद्धात्वर्थे** । कर्तुर्व्यापारार्थं यत्करणं न तु चक्षुरादिमात्रमित्यर्थः । असिना हन्ति असयति । [औसिसत्]। **१९१७ वष्क दर्शने**।**१९१८ चित्र चित्राकरणे** । आलेख्यकरण इत्यर्थः । 'कदाचिद्दर्शने'। चित्रेत्ययमद्भुतदर्शने णिचं लभते।चित्रयति । **१९१९ अंस समाघाते**।**१९२० वट विभाजने** । **१९२१ लज प्रकाशने** । **वटि लजि इत्येके** । वण्टयति । लञ्जयति। अदन्तेषु पाठबलाददन्तत्वे वृद्धिरित्यन्ये । वण्टापयति । लञ्जापयति । शाकटायनस्तु कथादीनां सर्वेषां पुकमाह । तन्मते-कथापयति । गणापयतीत्यादि । **१९२२ मिश्र संपर्के** । **१९२३**

---

त.]हरणमाचष्टे इत्यादौ 'हृक्रोरन्यतरस्या'मिति विकल्पाद्रुक्मिणीं रुक्मिण्या वा हारयतीति प्रयोगः। **कर्तृकरणादिति** । कर्तृग्रहणाऽभावे चक्षुषा पश्यति चक्षयतीत्यादावेव स्यान्न तु करिभिरवबध्नाति अवकरयतीत्यादौ । लोके इन्द्रियाणामेव करणत्वेन सुप्रसिद्धत्वात्, अतस्तत्सङ्ग्रहार्थं कर्तृग्रहणमिति मनोरमायां स्थितम् । नव्यास्तु-साधकतमत्वेन विवक्षितं यत्तत्करणशब्देन गृह्यते न तु लोकप्रसिद्धकरणमेव । अन्यथा 'कर्तृकरणयोस्तृतीया' इत्यादावपि लोकप्रसिद्धकरणग्रहण-प्रसक्त्या 'बाणेन हत' इत्यादि रूपं न सिध्येत् । तथा च कर्तृग्रहणं विनाप्यवकरयतीति रूपसिद्धौ न किंचिद्बाधकमिति व्याख्याय 'कर्तृकरणा'दित्यत्र समाहारद्वन्द्वं मत्वा देवदत्तेन पाचयति देवदत्तयतीत्युदाजह्रुः । **कदाचिद्दर्शने** । 'चित्र-करणकदाचिद्दर्शनयो'रिति सुवचम् । **अदन्तेषु पाठबलादिति** । अदन्तस्य फलान्तराऽभावादतो लोपं बाधित्वा वृद्धि-रित्यर्थः । **सङ्ग्राम** । संङ्ग्रामेति युद्धवाचि प्रातिपदिकं करोत्यर्थे णिचं लभते । **अनुदात्तेदिति** । एतच्च 'भृशादिभ्यो

---

बा.]कसं घातयति,कंसमजीघतदित्यादौ हेतुमण्ण्यन्ते प्रयुज्यमाने यद्द्वितीयादिकारकविभक्त्यन्तं यच्च कार्यं कुत्वतत्वाऽड्द्वित्वादि तत्सर्वम् 'आख्यानात्कृत' इत्यस्योदाहरणे कंसवधमाचष्टे कंसं घातयति, कंसवधमाचष्ट कसमजीघतदित्यादावपि भवतीति फलितम् । तत्र 'कारक'मित्यनेन कंसात्षष्ठी निरस्ता, उदाहृतहेतुमण्ण्यन्तस्थले कृद्योगाऽभावेन कर्मणि द्वितीयाया एव सत्त्वात् । 'कार्य'मित्यनेन तु कंसस्य अड्द्वित्वनिरासश्चेति बोध्यम्।आख्यानशब्दश्च कथंचिद्वृत्तानुवादपरो, न तु भारतादि-प्रसिद्धकंसवधादिकथापरः । तेन राजागमनमाचष्टे राजानमागमयतीत्यादि सिध्यति । 'द्वितीयान्त'मित्यत्र द्वितीयाग्रहण-मुपलक्षणम् । तेन पुष्ययोगमाचष्टे पुष्येण योजयतीति सिध्यतीति भाष्ये स्पष्टम् । **कर्तृकरणाद्धात्वर्थे** । इदमपि गण-सूत्रम्, 'प्रातिपदिकाद्धात्वर्थे' इत्यस्यैव प्रपञ्चः । कर्तुः करणं-कर्तृकरणं, न तु कर्ता च करणं च इति द्वन्द्वः, व्याख्या-नात् । तदाह-**कर्तुर्व्यापारार्थमिति** । अभिमतफलोत्पादनार्थमित्यर्थः। साधकतममिति यावत् । नन्वेवं सति 'करणा-द्धात्वर्थे' इत्येव सिद्धे कर्तृग्रहणं व्यर्थमित्यत आह-**न तु चक्षुरादिमात्रमिति**। कर्तृग्रहणं विहाय करणादित्येवोक्तौ चक्षुरादीन्द्रियमेव सुप्रसिद्धत्वात्करणादिति शब्देन गम्येत । अतः कर्तृग्रहणमित्याहुः । वस्तुतस्तु 'साधकतमं करण'मिति शास्त्रप्रसिद्धकरणस्य ग्रहणौचित्यात्कर्तृग्रहणं स्पष्टार्थमेव । केचित्तु कर्तृकरणादिति द्वन्द्वमाश्रित्य 'देवदत्तेन वाचयति देवदत्तयती'ति कर्तुरुदाजह्रुः । **कदाचिद्दर्शने इति** । चित्रेत्यनुवर्तते । तदाह-**चित्र इत्ययमिति** । कदाचिद्दर्शने इत्यस्य विवरणम्-**अद्भुतदर्शने इति** । 'चित्र चित्रीकरणकदाचिद्दर्शनयो'रित्येव सुवचम् । **वटि लजि इत्येके इति** । ननु कथादावनयोः पाठो व्यर्थः, इदितोरनयोष्टकारजकारान्तयोरदन्तत्वस्याऽप्रसक्तेः, फलाऽभावाच्चेत्यत आह-**अदन्तेष्विति** । अदन्तेषु पाठबलात् बण्ट लञ्जेति कदाचिददन्तत्वमप्यनयोर्विज्ञायते । अदन्तत्वस्य च फलाऽभावादतो लोपं बाधित्वा 'अचो ञ्णिती'ति वृद्धौ 'अर्तिह्री'ति पुगित्यर्थः। फलितमाह-**वण्टापयतीति** । **शाकटायनस्त्विति** । ऋषिविशेषोऽयम् । **सङ्ग्राम युद्धे** । गणसूत्रमिदम् । युद्धवाचि सङ्ग्रामेति प्रातिपदिकं करोत्यर्थे णिचं लभते इत्यर्थः । ननु 'प्रातिपदिकाद्धात्वर्थे' इत्येव सिद्धे किमर्थमिदमित्यत आह-**अनुदात्तेदिति** । एतदात्मनेपदार्थमिति भावः । ननु

---

शे.]लक्षणम् । **द्वितीयान्तमिति**। अन्यथा प्रत्ययलक्षणेन कृदन्ततया कृत्प्रकृत्यर्थकर्मत्वेन षष्ठी स्यादिति भावः। परे तु 'प्रकृतिप्रत्यापत्ति'रित्यत्रापि प्रकृतिपदेन प्रत्यासत्त्या कृत्प्रकृतिप्रकृतिकहेतुमण्ण्यन्तप्रकृतिस्तस्याः **प्रत्यापत्तिः**-प्रत्यभिज्ञा-विषया आपत्तिः=स्थितिः, सा च पृथक् तत्सत्त्वे तत्रत्यकार्यसत्त्वे च भवतीत्यनेनैव कारकबहिर्भावो, वधाद्यादेश-निवृत्तिः, कुत्वतत्वादिकं, 'योजयती'त्यादौ कुत्वादिनिवृत्तिश्च सिद्धा । अत एव 'रात्रिविवासमाचष्टे-रात्रिं विवासयती'-त्युदाहरणविषयवचने प्रकृतिंप्रत्यापत्तिरित्युक्तिर्भाष्ये चरितार्था । अन्यथा तत्र कृत्प्रकृतेर्विकाराऽभावेन तदुक्तेर्वैयर्थ्यमेव स्यात् । मम तु कारकबहिर्भावाय तदुक्तिः सार्थिका। एवमपि कंसादेः षष्ठी प्राप्नोतीत्यतः-**प्रकृतिवच्चेति**। यद्विभक्त्यन्तं तत्र कारकं तादृशमत्रापीत्यर्थः । एवञ्च प्रकृतिपदयोरेकार्थता भवति, चकारमूलकं भिन्नं वाक्यञ्च न कल्प्यं भवतीत्याहुः। **कर्तृकरणादिति**-न द्वन्द्वो, व्याख्यानादित्याशयेनाह-**कर्तुर्व्यापारार्थमिति** । **चित्र** । चित्रात्क्यचा णिचो बाधा मा भूदिति पाठः । **अदन्तेष्विति** । 'वटी'त्यादिनिर्देशस्तु सौत्र इति भावः । **शाकटायन इति** । अत्राऽरुचिस्तु

**सङ्ग्राम युद्धे** । अयमनुदात्तेत्, अकारप्रश्लेषात् । अससङ्ग्रामत । **१९२४ स्तोम श्लाघायाम्** । अतुस्तोमत् । **१९२५ छिद्र कर्णभेदने** । करणभेदन इत्यन्ये । कर्णेति धात्वन्तरमित्यन्ये । **१९२६ अन्ध दृष्ट्युपघाते** । उपसंहार इत्यन्ये। अन्धयति। आन्दधत्। **१९२७ दण्ड दण्डनिपातने**। **१९२८ अङ्क पदे लक्षणे च** । आञ्चकत् । **१९२९ अङ्ग च** । आञ्जगत् । **१९३० सुख १९३१ दुःख तत्क्रियायाम्** । **१९३२ रस आस्वादनस्नेहनयोः** । **१९३३ व्यय वित्तसमुत्सर्गे** । अवव्ययत् । **१९३४ रूप रूपक्रियायाम्** । रूपस्य दर्शनं करणं वा—रूपक्रिया । **१९३५ छेद द्वैधीकरणे** । अचिच्छेदत् । **१९३६ छद अपवारण** इत्येके । छदयति । **१९३७ लाभ प्रेरणे** । **१९३८ व्रण गात्रविचूर्णने** । **१९३९ वर्ण वर्णक्रियाविस्तारगुणवचनेषु** । वर्णक्रिया—वर्णकरणम् । सुवर्णं वर्णयति । कथां वर्णयति। विस्तृणातीत्यर्थः। हरिं वर्णयति। स्तौतीत्यर्थः। ***बहुलमेतन्निदर्शनम्** । अदन्तधातुनिदर्शनमित्यर्थः । बाहुलकादन्येऽपि बोध्याः । तद्यथा—। **१९४० पर्ण हरितभावे** । अपपर्णत् । **१९४१ विष्क दर्शने** । **१९४२ क्षिप प्रेरणे** । **१९४३ वस निवासे**। **१९४४ तुत्थ आवरणे**। एवमान्दोलयति । प्रेङ्खोलयति । विडम्बयति । अवधीरयतीत्यादि । अन्ये तु दशगणीपाठो बहुलमित्याहुः । तेनाऽपठिता अपि सौत्रलौकिकवैदिका बोध्याः । अपरे तु नवगणी[पाठो बहुलमित्याहुः। तेनाऽ]पठितेभ्योऽपि क्वचित्स्वार्थे णिच् । रामो राज्यमचीकरदिति यथेत्याहुः । 'चुरादिभ्य एव बहुलं णिजित्यर्थ' इत्यन्ये । सर्वे पक्षाः प्राचां ग्रन्थे स्थिताः ।

---

त.]भुवी'ति सूत्रे कैयटेनोक्तम्। **अकारप्रश्लेषादिति**।तेन प्रश्लिष्टस्येत्संज्ञा, प्रकृत्यकारस्य तु 'इष्ठव'दिति टिलोपः। तथा च अग्लोपादससङ्ग्रामतेत्यत्र नोपधाह्रस्वः। **सुख दुःख**। तच्छब्देन सुखदुःखे प्रातिपदिकार्थौ परामृश्येते । प्रातिपदि-

---

बा.]सङ्ग्रामशब्दस्य प्रातिपदिकस्य अकारान्तत्वात्कथमनुदात्तेत्त्वमित्यत आह—**अकारप्रश्लेषादिति**।सङ्ग्रामशब्दादनुदात्तानुनासिकं पररूपेण प्रश्लिष्य निर्देशादिति भावः । **अससङ्ग्रामतेति** । लुङि चङि सङ्ग्रामशब्दस्य ण्यन्तस्य अग्लोपित्वात्ततः प्रागडिति भावः । एतच्च मृशादिसूत्रे कैयटे स्पष्टम् । अग्लोपित्वान्नोपधाह्रस्वः । **सुख दुःख तत्क्रियायाम्** । सुखानुकूले दुःखानुकूले च व्यापारे इत्यर्थः । सुख दुःखेति प्रातिपदिकाभ्यां तत्करोतीत्यर्थे णिच् स्यादिति यावत् । 'प्रातिपदिकाद्धात्वर्थे' इत्येव आभ्यां णिजित्याहुः । **बहुलमेतन्निदर्शनम्** । गणसूत्रमिदम् । एतेषां कथादीनामदन्तानां निदर्शनं=पाठ इत्यर्थः । तदाह—**अदन्तेति** । बहुलग्रहणस्य फलमाह—**बाहुलकादिति** । **अपपर्णदिति** । अग्लोपित्वान्न सन्वत्त्वमिति भावः । **क्षिप प्रेरणे** । क्षिपयति । अग्लोपस्य स्थानिवत्त्वान्न गुणः । एवमग्रेऽपि । **वस निवासे** । वसयति । अदन्तत्वान्नोपधावृद्धिः। **'आन्दोलयती'**त्यादावदन्तत्वेन अग्लोपित्वान्नोपधाह्रस्वः। तदेवं 'बहुलमेतन्निदर्शन'मित्यस्य कथाद्यदन्तविषयत्वमुक्त्वा मतान्तरमाह—**अन्ये त्विति** । भ्वादिः, अदादिः, जुहोत्यादिः, दिवादिः, स्वादिः, तुदादिः, रुधादिः, तनादिः, क्र्यादिः, चुरादिरिति दशगणी, तद्बहिर्भूता अपि सौत्रा—जुप्रभृतयः, लौकिकाः—प्रेङ्खोलादयः, वैदिकाः—'तद्रक्षांसि रात्रिभिरसुभ्न'मित्यादौ सुभादयश्च सङ्गृहीता भवन्तीत्यर्थः । मतान्तरमाह—**अपरे त्विति** । चुरादिभिन्ना उदाहृता ये नव गणास्तेभ्योऽपि क्वचित्स्वार्थे णिज्बहुलग्रहणादस्माल्लभ्यत इत्यर्थः। मतान्तरमाह—**चुरादिभ्य एवेति** । वस्तुतस्तु भूवादिसूत्रे 'पाठेन धातुसंज्ञे'ति भाष्यप्रतीकमुपादाय—'स पाठो नोपलक्षणार्थः । किंतु

---

शे.]सर्वत्राऽग्लोपबाधे मानाऽभाव इति । **सङ्ग्रामेति**। 'युद्धे' इत्यस्य णिजर्थत्वन्तु न, प्रकृत्यैव लोकव्युत्पत्त्या तद्बोधात्। अस्य गणसूत्रत्वादत्र विवक्षित एवार्थः, 'मारणतोषणनिशामनेषु ज्ञा' इत्यादिवत् । **अनुदात्तेदिति** । तत्त्वञ्च केवलसङ्ग्रामशब्दस्य क्रियावाचकत्वाऽभावेनाऽधातुत्वात्तत्राऽचरितार्थमिति ण्यन्ते उपकरोतीति बोध्यम्।**अकारप्रश्लेषादिति**। अदन्तप्रकरणात् । तेनाऽग्लोपित्वादुपधाह्रस्वो नेति भावः । अस्याऽनुदात्तत्वे कैयटाद्युक्ते इदं मानं चिन्त्यम् । मृशादिसूत्रे भाष्ये 'अवश्यं सङ्ग्रामयतेः सोपसर्गादुत्पत्तिर्वक्तव्या 'असङ्ग्रामयत शूरः' इत्यर्थम् । तन्नियमार्थम्—'अस्मादेव सोपसर्गान्नान्यस्मात्सोपसर्गा'दित्येवोक्तम् । तस्यायं भावः—'ग्रामशब्द एव युद्धार्थकः, 'सं'शब्दस्तु तस्य तदर्थत्वद्योतकः । एवञ्च 'प्रातिपदिका'दिति णिचि 'प्रजयती'त्यादौ द्योतकस्य प्रादेरिवाऽस्यापि द्योतकस्य धातावन्तर्भावो न स्यात् । एवञ्च 'सङ्ग्रामयते' इत्येव स्यादतो ग्राम युद्धे इत्येतावतैव युद्धे वर्तमानाद्ग्रामशब्दान्तादित्यर्थकेन सङ्ग्रामेति विशिष्टाण्णिचि सिद्धे सङ्ग्रामेति पाठो नियमार्थः'इति । नियमाकारादि चाऽग्रे दर्शयिष्यते । एवञ्चास्यानुदात्तत्वे मानं चिन्त्यम् । भाष्यप्रयोगस्य णिचश्चेति पाक्षिकात्मनेपदेनापि सिद्धेरित्यलम् । **बहुलमिति**। 'भूवादि'सूत्रे तु 'पाठेन धातुसञ्ज्ञे'ति भाष्यप्रतीकमुपादाय—'स पाठो नोपलक्षणार्थोऽपि त्वियत्ताप्रतिपादनार्थ' इति कैयटेनोक्तं, तेनेदमनार्षमिति सूचितम्। **नवगणीत्यादि**।'हन्त्यर्थाश्चे'त्यसङ्गतेरिदं चिन्त्यम्।**चुरादिभ्य इति**।इदमपि 'चिति' धातौ दूषितप्रायम्।

(ग)णिङङ्गान्निरसने । अङ्गवाचिनः प्रातिपदिकान्निरसनेऽर्थे णिङ् स्यात्। हस्तौ निरस्यति हस्तयते । पादयते । (ग) **श्वेताऽश्वाऽश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च।** श्वेताऽश्वादीनां चतुर्णामश्वादयो लुप्यन्ते णिङ् च धात्वर्थे । श्वेताश्वमाचष्टे तेनातिक्रामति वा श्वेतयते। अश्वतरमाचष्टेऽश्वयते । गालोडितं=वाचां विमर्शः, तत्करोति-गालोडयते । आह्वरयते । केचित्तु णिचमेवानुवर्तयन्ति । तन्मते परस्मैपदमपि । (ग) **पुच्छादिषु धात्वर्थ इत्येव सिद्धम् ।** णिजन्तादेव बहुलवचनादात्मनेपदमस्तु । माऽस्तु 'पुच्छभाण्डे'ति णिङ्विधिः । 'सिद्ध'शब्दो ग्रन्थान्ते मङ्गलार्थः । इति चुरादयः ।

## अथ ण्यन्तप्रक्रिया ।

**तत्प्रयोजको हेतुश्च** ।१।४।५५। कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात् । **हेतुमति च** ।३।१।२६। प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात् । भवन्तं प्रेरयति-भावयति । 'णिचश्चे'ति कर्तृगे

---

त.]काद्धात्वर्थे इत्येव सिद्धे अनयोः पाठः सोपसर्गात्प्रत्ययार्थ इत्येके । सुखदुःखाभ्यां तत्क्रियायामेव णिच् स्यान्न त्वाचष्ट इत्यस्मिन्नर्थे इत्येतदर्थः पाठ इत्यन्ये । **पुच्छादिष्विति** । भीमसेनस्य वाक्यम् । **ग्रन्थान्त इति** । भू सत्तायामित्यादिधातुपाठस्याऽन्त इत्यर्थः । इति **चुरादयः** ।

**तत्प्रयोजको हेतुश्च** । तच्छब्देन 'स्वतन्त्रः कर्ते'ति पूर्वसूत्रोपात्तः कर्ता परामृश्यते । तस्य=कर्तुः प्रयोजकः=प्रेरकः, तद्व्यापारानुकूलव्यापारवानित्यर्थः। चकार एकसंज्ञाधिकारबाधनार्थस्तदाह-**हेतुसंज्ञः कर्तृसंज्ञश्चेति** । हेतुसंज्ञायाः प्रयोजनं 'भीस्म्योर्हेतुभये', 'भियो हेतुभये पु'गित्यादौ प्रयोजकस्य हेतुत्वेन व्यवहारः । कर्तृसंज्ञायास्तु 'लः कर्मणि च भावे चे'ति सूत्रेण प्रयोजके वाच्ये लकारादयः । **हेतुमति च** । स्वनिष्ठाधारतानिरूपिताधेयतासंबन्धेन हेतुर्यत्रास्ति स हेतुमान्=व्यापारः, तस्मिन्वाच्ये णिजित्याह-**प्रयोजकव्यापार इति** । प्रयोजकश्चेतनाऽचेतनसाधारण्येन विवक्षितः । स च क्वचित्फलरूपः । 'देवदत्तः पाचयति गमयती'त्यादौ सिद्धः । 'भिक्षा वासयति' 'सङ्क्रामो वासयती'त्यादौ तु फलरूपः । **प्रेषणादावित्ति** । भृत्यादेर्निकृष्टस्य प्रवर्तना **प्रेरणा** । आज्ञेत्यर्थः । आदिशब्देना-

---

बा.]इयत्ताप्रतिपादनार्थं इति कैयट आह-एवंच 'बहुलमेतन्निदर्शन'मिति गणसूत्रमनार्षमिति शब्देन्दुशेखरे स्थितम् । **णिङङ्गान्निरसने इति** । गणसूत्रम् । स्पष्टम् । ङित्त्वान्नित्यमात्मनेपदम् । **श्वेताश्वाश्वतर** । इदमपि गणसूत्रम् । **श्वेताश्वादीनामिति** । श्वेताश्व, अश्वतर, गालोडित, आह्वरक-एषामित्यर्थः । **अश्वादय इति** । श्वेताऽश्वशब्दे 'अश्व'शब्दः, अश्वतरशब्दे 'तर'शब्दः, गालोडितशब्दे 'इत'शब्दः, आह्वरकशब्दे 'क'शब्दश्च लुप्यन्ते इत्यर्थः । **णिङ् चेति** । चकारलभ्यमिदम् । **धात्वर्थे इति**। 'प्रातिपदिकाद्धात्वर्थे' इत्यतस्तदनुवर्तते। 'निरसने' इति निवृत्तमिति भावः। **विमर्श इति**। विवेचनमित्यर्थः।**पुच्छादिषु केचिदित्ति**।'श्वेताश्वे'त्यादिसूत्रे णिचमेवानुवर्तयन्ति न तु णिङमित्यर्थः। णिच्णिङोः फलभेदं दर्शयति-**तन्मते इति** । **धात्वर्थे इत्येव सिद्धमिति** । धातुपाठं रचयितुर्भीमसेनस्य वाक्यमिदमित्याहुः । 'प्रातिपदिकाद्धात्वर्थे' इति णिचि सिद्धे 'पुच्छभाण्डचीवराण्णि'ङिति न कर्तव्यमित्यर्थः । ननु नित्यात्मनेपदार्थं 'पुच्छभाण्डे'ति णिङ्विधिरावश्यक इत्यत आह-**णिजन्तादेव बहुलवचनादिति** । 'बहुलमेतन्निदर्शन'मिति बहुलग्रहणादित्यर्थः। ननु 'पुच्छादिषु धात्वर्थ इत्येव णि'जित्येव सिद्ध सिद्धशब्दो व्यर्थ इत्यत आह-**सिद्धशब्द इति**। धातुपाठात्मकग्रन्थसमाप्तौ सिद्धशब्दप्रयोगो मङ्गलार्थ इत्यर्थः। पस्पशाह्निकभाष्ये हि 'सिद्धे शब्दार्थसंबन्धे' इति वार्तिकग्रन्थस्याऽऽदिमवार्तिकव्याख्यावसरे 'सिद्धशब्दोपादानं मङ्गलार्थ'मित्युक्तम् । 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते' इति भूवादिसूत्रस्थभाष्याद्ग्रन्थान्तेऽपि मङ्गलस्य कर्तव्यतासिद्धिः । इति **चुरादयः** ।

अथ 'हेतुमति चे'ति णिज्विधिं वक्ष्यन् हेतुसंज्ञामाह-**तत्प्रयोजको हेतुश्च**। 'स्वतन्त्रः कर्ते'ति पूर्वसूत्रोपात्तः कर्ता तच्छब्देन परामृश्यते । तस्य कर्तुः **प्रयोजकः** प्रवर्तयिता-तत्प्रयोजकः । तदाह-**कर्तुः प्रयोजको हेतुसंज्ञ इति** । चकारः पूर्वसूत्रोपात्तां कर्तृसंज्ञां समुच्चिनोति । तदाह-**कर्तृसंज्ञश्चेति** । देवदत्तः पचति, तं प्रेरयति यज्ञदत्त इत्यत्र देवदत्तस्यैव पाकानुकूलव्यापारात्मकपचधात्वर्थाश्रयत्वरूपकर्तृत्वसत्त्वात्प्रयोजकस्य तदभावादिह कर्तृसंज्ञाविधिः । प्रयोजकस्य प्रयोज्यकर्त्रा अन्यथासिद्धत्वाद्धेतुत्वाऽप्राप्तौ हेतुसंज्ञाविधिः । **हेतुमति च** । 'सत्यापपाशे'त्यतो णिजित्यनुवर्तते । हेतुः प्रयोजकः=आधारतया अस्यास्तीति **हेतुमान्**=प्रयोजकनिष्ठः प्रेषणादिव्यापारः, तस्मिन् वाच्ये णिच् स्यादित्यर्थः । 'धातोरेकाचो हलादे'रित्यतो धातोरित्यनुवर्तते । तदाह-**प्रयोजकव्यापार इति** । **प्रेषणादा-**

---

शे.]'णिङङ्गात्' 'श्वेताश्वे'ति च गणसूत्रे । **मङ्गलार्थः**-प्रसङ्गात्तदर्थः सिद्धशब्द इत्यर्थः । **इति चुरादयः** । **तत्प्रयोजको** । तच्छब्देन 'स्वतन्त्रः कर्ते'त्यत्रोपस्थितः कर्ता गृह्यते, येन च । **हेतुमति च** ।

फले आत्मनेपदम्। भावयते। [भावयाञ्चक्रे] भावयाम्बभूव। **ओः पुयण्ज्यपरे।७।४।८०।** सनि परे यदङ्गं तदवयवाभ्यासोकारस्येत्वं स्यात्पवर्गयण्जकारेष्ववर्णपरेषु परतः। अबीभवत्। अपीपवत्। मूञ्-अमीमवत्। अयीयवत्। अरीरवत्।

त.] ऽध्येषणानुमत्यादीनामुपादानम्। समानस्याऽधिकस्य वा ऋत्विगाचार्यादेः प्रवर्तना-अध्येषणम्। प्रार्थनेत्यर्थः। **अनुमतिस्तु** राजादेः संमतिः, तां विना यागादिक्रिया न निष्पद्यत इत्यनुमतिमात्रेण राजादिः प्रयोजकः। 'अनुमत्यादी'त्यादिशब्देनात्रोपदेशानुग्रहयोरुपादानम्। 'ज्वरितः कषायं पिबे'दित्युपदेशमात्रेण वैद्यादिः प्रयोजकः। यस्तु केनचिद्धन्तुमिष्टं पलायमानं निरुणद्धि सोऽपि हन्तुरनुग्राहकत्वेन प्रयोजकः। सर्वेऽप्येते विशेषाः कथं णिच्प्रत्ययगम्या इति चेत्। अत्राहुः-सर्वानुगतं प्रवर्तनासामान्यं णिचोऽर्थः, विशेषास्त्वर्थप्रकरणादिगम्या इति। नन्वेवं णिचो लोडादीनां च पर्यायता स्यात्तथ 'इदानीं पृच्छतु भवा'निति वक्तव्ये 'प्रच्छयती'ति णिजपि प्रयुज्येतेति चेत्। मैवम्। कर्तुः प्रयोजको हि हेतुः, प्रैषविषयो यः संबोध्यो देवदत्तादिः स तु नाद्यापि प्रश्नकर्तृत्वेनावधारितः। तथा च प्रयोज्यप्रवृत्त्युपहिता या प्रयोजकनिष्ठप्रवृत्तिः सा णिजर्थः, तदनुपहिता प्रयोजकप्रवृत्तिस्तु लोडर्थ इत्युभयोर्भेदः। उक्तं च-'**द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोड् विधीयते। सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः**'॥ इति। अस्यार्थः-कर्तृत्वेनाऽनवधारितस्य देवदत्तादेस्तु प्रैषे 'प्रच्छ ज्ञीप्सायां'मित्यादेर्लोड्भवति। प्रयोज्यप्रवृत्त्युपहितप्रवृत्त्याश्रयस्य प्रयुक्तिस्तु यदा सा णिचो विषय इति। किं च प्रयोक्तृनिष्ठा प्रयुक्तिर्लोडर्थः, प्रयोक्तृप्रयोक्तृकर्तृका तु णिजर्थः। 'पच देवदत्ते'त्यत्र हि वक्तैव प्रेरकः। 'पाचयती'त्यादौ वक्तृभिन्नः, 'पाचयामी'त्यादौ तु वक्तेति दिक्। **ओः पुयण्जि।** 'पुयण्जी'ति समाहारद्वन्द्वात्सप्तम्येकवचनम्। 'अपरे' इति बहुव्रीहिः। 'अत्र लोपोऽभ्यासस्ये'त्यतोऽभ्यासस्येत्यनुवर्तते। 'भृञामि'दित्यत इद्ग्रहणं, 'सन्यतः' इत्यतः सनीति च, अङ्गस्येति तु अधिक्रियत एव। तदेतदभिप्रेत्याह-**सनि परे यदङ्गमित्यादि**। अपरे किम्?। बुभूषति। पवर्गयण्जीति किम्?। ऊर्णुनविषति। **अबीभवदित्यादि।** 'भू सत्तायाम्'। 'पूङ् पवने'। 'मूङ् बन्धने'। 'यु मिश्रणादौ'। 'रु शब्दे'। 'लूञ् छेदने'। 'जु गतौ'। सौत्रोऽयं धातुः 'जुचङ्क्रम्ये'त्यत्र निर्दिष्टः। ननु भू भू इति द्वित्वोत्तरं वृद्ध्यावादेशौ भवतस्ततः कृतस्य 'णौ चङ्यी'ति ह्रस्वस्य स्थानिवद्भावेन लघुपरत्वाऽभावात्सन्वद्भावाऽप्रवृत्त्याऽबीभवदित्यादावभ्यासोवर्णस्येत्वं दुर्लभमिति चेत्। अत्राहुः-आरम्भसामर्थ्या-

बा.] दित्यादिशब्देन अध्येषणानुमत्युपदेशादीनां ग्रहणम्। तत्र भृत्यादेर्निकृष्टस्य प्रवर्तना **प्रेषणम्**। आज्ञेत्यर्थः। समानस्याऽधिकस्य च सख्याचार्यादेः प्रवर्तना-**अध्येषणा**। **अनुमतिः**-राजादेः संमतिः। ज्वरितस्य कषायपाने हितावबोधनेन प्रवर्तना-**उपदेशः**। हननाद्भीत्या पलायमानस्य निरोधाचरणमपि प्रयोजकव्यापारः। प्रयोजकनिष्ठप्रवर्तनायां णिजिति फलितम्। एते तु विशेषाः प्रकरणादिना अवगम्यन्ते। 'कुलालो घटं करोती'त्यत्र तु न णिच्, प्रयोज्यप्रयोजकोभयसमभिव्याहार एव तत्प्रवृत्तेरित्यन्यत्र विस्तरः। **भवन्तमिति।** देवदत्तो यज्वा भवति। तं प्रेरयति याजक इत्याद्यर्थे भूधात्वर्थस्य भवनस्य मुख्यकर्ता यज्वा, तस्य यज्वभवने प्रवर्तयिता याजकादिः प्रयोजकः, तन्निष्ठायां प्रेरणायां भूधातोर्णिच्। वृद्ध्यावादेशौ। भावीति णिजन्तम्। तस्माद्भवनानुकूलव्यापारार्थकाल्लटि 'भावयती'ति रूपम्। भवन्तं प्रेरयतीति फलितोऽर्थः। **भावयांबभूवेति।** कर्तृगामिन्यपि क्रियाफले भूधातोरनात्मनेपदित्वादनुप्रयुज्यमानादपि नात्मनेपदमिति भावः। **ओः पुयण्।** 'उ' इत्यस्य 'ओ'रिति षष्ठी। 'पुयण्जी'ति छेदः। पुश्च यण् च ज् चेति समाहारद्वन्द्वात्सप्तमी। अः परो यस्मादिति बहुव्रीहिः। 'सन्यतः' इत्यस्मात्सनीत्यनुवर्तते। अङ्गस्येत्यधिकृतम्। 'अत्र लोपः' इत्यस्मादभ्यासस्येति, भृञामिदित्यस्मादिदिति चानुवर्तते। तदाह-**सनि परे इत्यादिना। अबीभवदिति।** भू इ अत् इति स्थिते द्वित्वे कार्ये णौ अच आदेशस्य निषेधाद्वृद्ध्यावादेशाभ्यां प्रागेव 'भू'इत्यस्य द्वित्वे उत्तरखण्डस्य वृद्ध्यावादेशयोः कृतयोरुपधाह्रस्वेऽभ्यासेऽकाराऽभावेन 'सन्यतः' इत्यस्याऽप्रवृत्त्या सन्वत्त्वादनेन इत्त्वे दीर्घ इति भावः। **अपीपवदिति।** पूङ्धातो रूपम्। मूञित्यस्माद्धातोरमीमवदिति रूपमित्यर्थः। **अयीयवदिति।** युधातो रूपम्। **अरीरवदिति।** रुधातो रूपम्। **अलीलवदिति।** लूञ्धातो रूपम्। **अजीजवदिति।** जुः सौत्रो धातुर्जुचङ्क्र-

शे.] 'हेतु'शब्देनोक्तः कृत्रिम एव। अन्यथा विक्लित्त्यनुकूलव्यापारादीनामपि हेतुमत्त्वेनाऽतिप्रसङ्गात्। हेतुमांश्च प्रेरणादिरेव, हेतुः=कर्त्ताऽस्येति व्याख्यानात्। तदाह-**प्रयोजकव्यापारे इति।** स च वाच्य एव। द्योत्यत्वे तु तस्य विशेषणतापत्तौ 'गमितो ग्रामं देवदत्तो यज्ञदत्तेने'त्यादौ प्राधान्येन गत्यर्थत्वात्कर्तरि क्तस्यापत्तेरिति भाष्ये स्पष्टम्। विशेष्यत्वे तु 'पाचयति देवदत्तो यज्ञदत्तेने'त्यादौ प्रधानीभूतव्यापारानाश्रयत्वेन प्रयोज्यस्य कर्तृत्वानापत्तिरित्याशयेनाह-**वाच्ये इति। ओः पुयण्।** अः परो यस्मादिति बहुव्रीहिर्न तु यस्येति, पुयणादीनामकारावयवकत्वाऽभावात्। णौ कृतादेशस्य स्थानिवत्त्वज्ञापनाद्भू भू इति द्वित्वे सन्वद्भावेनेत्वे 'दीर्घो लघो'रिति दीर्घः, तदाह-**अबीभवदिति।** 'अपरे' इति वर्त्तते, तच्च बहुव्रीहिः, अन्यपदार्थश्च प्रत्यासत्त्या धात्वक्षरमेव। तदाह-**अवर्णपरे इत्यादि।** एकहल्व्यवधाने तु सामर्थ्यात्प्रवृत्तिः। 'ओः

अलीलवत् । अजीजवत् । **स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा** ।७।४।८१। एषामभ्यासोकारस्येत्वं वा स्यात्सन्यवर्णपरे धात्वक्षरे परे । असिस्रवत् । असुस्रवत् ॥ 'नाग्लोपी'ति ह्रस्वनिषेधः। अशशासत् । अडुढौकत् । अचीचकासत् । मतान्तरे-अचचकासत् । अग्लोपीति सुब्धातुप्रकरणे उदाहरिष्यते। ण्यन्ताण्णिच् । पूर्वविप्रतिषेधादपवादत्वाद्वा वृद्धिं बाधित्वा णिलोपः।चोरयति। 'णौ चङी'ति ह्रस्वः।'दीर्घो लघो'रिति दीर्घः[3]। न चाऽग्लोपित्वाद्द्वयोरप्यसंभवः, ण्याकृतिनिर्देशात् । अचूचुरत् । **णौ च संश्चङोः** ।६।१।३१। सन्परे चङ्परे

---

त.]देव न स्थानिवत्त्वमिति । **स्रवतिशृणोति** । 'अपरे' इत्यनुवर्तते नतु पुयण्जीति, पवर्गजकारयोरसंभवात् । यणः संभवेऽप्यव्यभिचारात्तदाह-**अवर्णपरे धात्वक्षरे इति** । 'अक्षर'शब्दोऽत्र वर्णपरः। अवर्णपरे किम् ? । सुस्रूषति । शृणोत्यादेरुदाहरणं तु—अशिश्रवत् । अशुश्रवत् । अदिद्रवत् । अदुद्रवत् । अपिप्रवत् । अपुप्रवत् । अचिच्यवत् । अचुच्यवत् । **अडुढौकदिति** । 'ढौकृ गतौ' । 'चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपर' इति पक्षाश्रयेणाह-**अचीचकासदिति** । **मतान्तर इति** । 'अङ्गं यत्र द्विरुच्यते' इति मते, 'चङ्परे णौ यल्लघु तत्परो योऽङ्गस्याऽभ्यास' इति मते चेत्यर्थः । **सुब्धातुप्रकरण इति** । अतितिरायत् । अससध्रायत् । अविविष्वद्रायत् । अदिदेवद्रायदित्याद्युदाहरिष्यत इत्यर्थः । **वृद्धिं बाधित्वेति** । 'ण्यल्लोपावियङ्'क्षित्यादिवचनात्, लोपांऽशप्रत्याख्यानपक्षेऽपवादत्वाद्वेत्यर्थः। **असंभव इति** । तथा च अचुचोरदित्येव रूपमिति भावः । **ण्याकृतिनिर्देशादिति** । 'चङ्परे णा'वित्यत्र चङ्परे

---

बा.]ण्येत्यत्र निर्दिष्टः।ननु भू भू इति द्वित्वोत्तरं वृद्ध्यावादेशयोः कृतयोरुपधाह्रस्वे तस्य स्थानिवत्त्वेन लघुपरत्वाऽभावात्सन्वत्त्वाऽप्रसक्त्या कथमिहाभ्यासोवर्णस्य इत्त्वमिति चेन्न,आरम्भसामर्थ्यादेव स्थानिवत्त्वाऽप्रवृत्तेरित्यलम् । **स्रवतिशृणोति**। अपर इत्यनुवर्तते, न तु पुयण्जीति, पवर्गजकारयोरसंभवात्, स्रवत्यादौ यणः सत्त्वेऽप्यव्यभिचारात् । तदाह-**अवर्णपरे धात्वक्षरे इति** । अक्षरशब्दो वर्णपरः । **असिस्रवत् असुस्रवदिति** । द्विहल्व्यवधानेन लघुपरकत्वाऽभावान्न सन्वत्त्वमिति भावः । अशिश्रवत् अशुश्रवत् । अदिद्रवत् अदुद्रवत् । अपिप्रवत् अपुप्रवत् । अपिप्लवत् अपुप्लवत् । अचिच्यवत् । अचुच्यवत् । अथ शासुधातोरशशासदित्यत्राह-**नाग्लोपीति** । **अडुढौकदिति** । ढौकृ गतावित्यस्य ऋदित्त्वादिति भावः । **अचीचकासदिति** । चकासृ दीप्तौ । ऋदित्त्वान्नोपधाह्रस्वः । 'चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपर' इति पक्षे सन्वत्त्वम्, अभ्यासदीर्घश्चेति भावः।**मतान्तरे त्विति**।'अङ्गं यत्र द्विरुच्यते' इति मते,'चङ्परे णौ यल्लघु तत्परो योऽङ्गस्य अभ्यास' इति मते चेत्यर्थः । **अग्लोपीतीति** । अग्लोपिन उपधाह्रस्वनिषेधे मा भवानूननदिति उदाहृतम्। अतितिरायदित्याद्युदाहरणान्तरं सुब्धातुनिरूपणे वक्ष्यते इत्यर्थः । ननु 'चुर स्तेये' इत्यस्मात्स्वार्थे णिचि उपधागुणे 'चोरि' इति रूपम् , तस्माद्धेतुमण्णौ प्रथमस्य णेर्लोपे सति 'चोरि' इत्येव हेतुमण्ण्यन्तम् । तस्माल्लटि तिपि शपि गुणे अयादेशे 'चोरयती'त्येव रूपमिष्यते । तन्नोपपद्यते, हेतुमण्णौ परे प्रथमस्य णेर्लोपं बाधित्वा परत्वाद्वृद्धावायादेशे चोराय् इ इत्यस्माल्लटि चोराययतीत्यापत्तेरित्यत आह-**ण्यन्ताण्णिचीति** । ण्यन्ताण्णिचि वृद्धिं बाधित्वा णिलोप इत्यन्वयः । कुत इत्यत आह-**पूर्वविप्रतिषेधादिति** । 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेने'ति वार्तिकेनेति भावः । **अपवादत्वाद्वेति** । 'कमु कान्तौ' इति धातौ द्विधा प्रपञ्चितत्वादिति भावः । अथ ण्यन्ताण्णौ प्रथमस्य णेर्लोपे 'चोरि' इत्यस्माल्लुङि चङि अचोर् इ अ त् इति स्थिते प्रक्रियां दर्शयति-**णौ चङीति ह्रस्व इति** । ततो हेतुमण्णेर्लोपे चुरित्यस्य द्वित्वे सन्वद्भावविषयत्वादाह-**दीर्घो लघोरिति** । तथाच अचूचुरदिति सिद्धम् । ननु उपधाह्रस्वोऽभ्यासदीर्घश्चेति द्वयमपि चङ्परे णौ विहितं, तदुभयमप्यत्र प्रत्ययलक्षणमाश्रित्य प्रथमणिचमादाय न संभवति, तस्य द्वितीयणिचा व्यवहितत्वेन चङ्परकत्वाऽभावात् । नापि द्वितीयणिचमादाय तदुभयसंभवः, द्वितीयणिच्प्रकृतेः प्रथमण्यन्तस्य णिलोपमादाय अग्लोपित्वादित्याशङ्क्य परिहरति-**न चेति** । अग्लोपित्वाद्द्वयोरपि उपधाह्रस्वाऽभ्यासदीर्घयोरसंभवो न शङ्क्य इत्यर्थः । कुत इत्यत आह-**ण्याकृतिनिर्देशादिति** । 'चङ्परे णा'वित्यत्र णावित्यस्य चङ्परकणित्वजात्याश्रयैकाऽनेकणिज्व्यक्तिपरकत्वं विवक्षितम् । तथाच णिद्वयस्य चङ्परकत्वाऽभावेऽपि णित्वस्य चङ्परकत्वमस्तीति ह्रस्वदीर्घयोरस्ति प्रवृत्तिरिति भावः । अत्र जातिनिर्देशोऽयुक्त इति शब्देन्दुशेखरे प्रपञ्चितम् । 'टु ओ श्वि गतिवृद्ध्योः' अस्माद्धेतुमण्णौ वृद्ध्यायादेशयोः श्वायीत्यस्माल्लडादौ श्वाययतीति रूपम् । लुङि चङि अश्वि इ अ त् इति स्थिते विशेषमाह-**णौ च संश्चङोः**।'विभाषा श्वे'रिति सूत्रमनुवर्तते।'ष्यङः संप्रसारण'मित्यतः 'संप्रसारण'मिति च।तदाह-**सन्परं इत्या**

---

शे.]पुयणि'त्यस्य तु न व्यवधाने प्रवृत्तिः,मानाऽभावात् । अत एव 'पुस्फारयिषती'त्यादिसिद्धिः।अवर्णपर इति किम् ? । सुस्रूषति । **अचीचकासदिति** । 'चङ्परे णौ यदङ्गं तस्य योऽभ्यास' इति व्याख्यातॄणामर्वाचां मते इदम् । **मतान्तरे इति** । 'चङ्परे णौ यल्लघ्वि'ति भाष्यसम्मते पक्षे इत्यर्थः । **द्वयोरपीति** । 'अवीवद'दित्यादौ सन्वद्भावस्याप्युप-

च णौ श्वयतेः संप्रसारणं वा स्यात् । 'संप्रसारणं तदाश्रयं च कार्यं बलव'दिति वचनात्संप्रसारणं, पूर्वरूपम् । अशूशवत् । अलघुत्वान्न दीर्घः । अशिश्वयत् । स्तन्भुसिवुसहां चङि ।८।३।११६। उपसर्गस्थान्निमित्तादेषां सस्य षो न स्याच्चङि । अवातस्तम्भत् । पर्यसीषिवत् । न्यसीषहत् । आटिटत् । आशिशत्। बहिरङ्गोऽप्युपधाह्रस्वो द्वित्वात्प्रागेव, ओणेर्ऋदित्करणाल्लिङ्गात् । मा भवानिदिधत् । एजादावेधतौ विधानात्

त.]णित्वे इत्यर्थः । तेन णिद्वये सत्यपि णित्वं चङ्परमस्तीति ह्रस्वदीर्घयोरस्ति संभव इति भावः। एतेन 'अवीवदद्वीणां परिवादकेने'त्यादौ सन्वद्भावो व्याख्यातः,तत्रापीत्थमेव पूर्वपक्षसिद्धान्तयोस्तुल्यत्वात् । णौ च । 'विभाषा श्वे'रित्यनुवर्तते।'संश्चङो'रिति णावित्यस्य विशेषणं।'ह्वः संप्रसारण'मित्यतः संप्रसारणमित्यनुवर्तत एवेत्याह-सन्परे चङ्परे इति। वचनादिति । इयं च परिभाषा 'लिट्यभ्यासस्योभयेषा'मित्यत्र वय्यादीनां ग्रह्यादीनामनुवृत्त्यैवेष्टसिद्धावुभयेषांग्रहणसामर्थ्याल्लभ्यते । अन्यथा वव्रश्चेत्यत्र हलादिःशेषे कृते वस्य संप्रसारणं स्यादित्याहुः। स्तन्भुसिवु। स्तन्भुः सौत्रः। 'षिवु तन्तुसंताने' । 'षह मर्षणे' । स्तन्भतेः 'स्तन्भेः' इत्यनेन प्राप्तिरन्ययोस्तु 'परिनिविभ्यः' इत्यनेनेति विवेकः । आटिटत् । आशिशदिति । णिचा सह द्वित्वात्सन्वद्भावो नेति तद्विषये विहितो यो 'दीर्घो लघो'रिति दीर्घः स न प्रवर्तते । ऋदित्करणाल्लिङ्गादिति । यदि पूर्वं द्विर्वचनं भवेत्तदा णिशब्दस्य द्वित्वे सत्युपधाह्रस्वस्याऽप्राप्तेस्तत्प्रतिषेधार्थमृदित्करणं व्यर्थं स्यादतस्तदुक्तेऽथ ज्ञापकमेव । एजादावेधनाविति । 'एत्येधत्यूठ्सु' इति सूत्रे 'एजाद्योरे-

बा.]दिना।नन्वन्तरङ्गत्वात्संप्रसारणात्पूर्वं वृद्धयायादेशयोः कृतयोः पश्चात्संप्रसारणे पूर्वरूपे अशीशवदिति स्यात् ,अशूशवदिति न स्यादित्यत आह-संप्रसारण तदाश्रयं चेति । इदं वचनं 'लिट्यभ्यासस्ये'ति सूत्रभाष्ये स्थितम् । एवंच अश्वि इ अत् इत्यत्र वृद्ध्यायादेशाभ्यां प्रागेव वकारस्य संप्रसारणमुकार इति फलितम्। पूर्वरूपमिति। ततश्च शु इत्यस्य द्वित्वे उत्तरखण्डस्य णिचमाश्रित्य वृद्ध्यावादेशयोरुपधाह्रस्वे सन्वत्त्वविषयत्वादभ्यासदीर्घे फलितमाह-अशूशवदिति । संप्रसारणाऽभावपक्षे अशिश्वयदित्यत्र अभ्यासदीर्घमाशङ्क्य आह-अलघुत्वादिति । संयोगपरकत्वादिति भावः । अवपूर्वात्स्तम्भेण्यन्तादवष्टम्भयतीत्यादि । 'अवाच्चालम्बनाविदूर्ययो'रिति षत्वम् । चङि अवातस्तम्भदित्यत्र षत्वे प्राप्ते-स्तन्भुसिवु । 'उपसर्गनिमित्तस्य प्रतिषेध' इति वार्तिकम् । 'न रपरसृपी'त्यतो नेत्यनुवर्तते । 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते । 'मूर्धन्य' इत्यधिकृतम् । तदाह-उपसर्गनिमित्त इत्यादि । स्तम्भुः सौत्रो धातुः । 'षिवु तन्तुसन्ताने' 'षह मर्षणे' । पर्यसीषिवत् न्यसीषहदिति । 'परिनिविभ्यः सेवे'त्युपसर्गनिमित्तं षत्वं न । अभ्यासनिमित्तं तु षत्वं भवत्येव । आटिटत् आशिशदिति । आट् इ अ त्, आश् इ अ त् इति स्थिते 'णौ चङी'त्युपधाह्रस्वात्प्रागन्तरङ्गत्वा'चङी'ति द्वित्वमाशङ्क्याह-बहिरङ्गोऽपीति । उपधाह्रस्वश्चङ्परण्यपेक्षत्वाद्बहिरङ्गः । द्वित्वं तु चङ्मात्रापेक्षत्वादन्तरङ्गम् । अथाऽपि द्वित्वात्प्रागेव उपधाह्रस्व इत्यर्थः। कुत इत्यत आह-ओणेरिति । 'ओणृ अपनयने' इति धातोः ऋदित्करणम् औणिणदित्यत्र 'नाग्लोपी'ति उपधाह्रस्वप्रतिषेधार्थम् । यदि तु

शे.]लक्षणमिदम्। णिनिमित्तकणिलोपस्यं स्थानिवत्त्वेन चङ्परणिपरोपधायास्ततपरलघोरभावाच्च तयोरसम्भव इत्यपि बोध्यम्। ण्याकृताविति । 'ते प्रा'गित्यादौ गत्याकृतिनिर्देशवदिति भावः । एतेन वर्णग्रहणे एव जातिग्रहणं नान्यत्रेत्यपास्तम् । एवञ्च चङ्परणित्वजात्याश्रयैकानेकव्यक्तिपरे[इ]त्यर्थ इति बोध्यम् । इदञ्च वृत्त्यनुरोधेन । परे तु आकृतिनिर्देशोऽयुक्तः, जातेः पौर्वापर्याऽभावेन ह्रस्वसन्वद्भावविधायके चङ्परे णाविति विशेषणाऽसङ्गतेः।व्यक्तिद्वारकं पौर्वापर्यमिति 'हलन्ताच्चे'ति सूत्रकैयटोक्तन्तु न युक्तं,द्वितीयाध्यायस्थे 'आर्द्धधातुके' इति सूत्रे जातिनिर्देशाज्जात्या पौर्वापर्याऽसम्भवेन विषयसप्तमीति भाष्याऽसङ्गत्यापत्त्या [जातिनिर्देशे व्यक्तेर्विशेषणत्वेन] तद्वारकं पौर्वापर्यमित्यस्याऽसङ्गतत्वात् । [किञ्च यथा 'आर्द्धधातुके' इति सूत्रे 'तस्मि'न्निति परिभाषाया अप्रवृत्तिस्तथा जातिनिर्देशेऽत्रापि तदप्रवृत्तिः । एवञ्च 'अवीव'दित्यादौ णिलोपस्य स्थानिवत्त्वेन चङ्परणिपरलघोरभावात् 'सन्यतः' इतीत्वाऽनापत्तिः,एवं 'दीर्घो लघोरि'त्यस्याप्यनापत्तिः]। किं च णावित्यस्याग्लोपविशेषणत्वेन णित्वजातिनिमित्तकाऽग्लोपेत्यर्थेन एकणिनिमित्तकाऽपरणिलोपस्यापि णित्वजातिनिमित्तकत्वेनाग्लोपित्वं दुर्वारम् । णित्वजात्याश्रयानेकनिमित्तकेऽत्यर्थे 'अचकथ'दित्यादौ दोषः । 'एकणिजन्ते तावन्मात्रनिमित्तकस्यैवाऽग्लोपस्य ग्रहणमनेकसत्त्वे त्वनेकनिमित्तकस्यैव तस्य ग्रहण'मित्यर्थस्य शब्दमर्यादया न लाभः।अनेकणिनिमित्तकाऽग्लोपस्याऽप्रसिद्धत्वाच्च । अत एव 'सन्व'त्सूत्रे 'णौ चङी'त्यत्र च णेर्णिच्युपसङ्ख्यानमेवोक्तं भाष्ये इत्याहुः । णौ च सं । अत्र 'णौ च संश्चङो'रिति विषयसप्तमी । एवञ्च तयोर्विवक्षितयोरन्तरङ्गत्वाद्वृद्ध्यादेः पूर्वं सम्प्रसारणम् । अन्यथाऽन्तरङ्गत्वाद्वृद्ध्यायोः कृतयोः पश्चात्संप्रसारणेऽपि 'अशूशव'दित्याद्यसिद्धिः। तदाह-संप्रसारणं तदाश्रयञ्चेति । न त्वियं परिभाषेति भ्रमितव्यम् , तस्या भाष्ये प्रत्याख्यानात् । स्तन्भुसि । उपसर्गेति । 'उपसर्गादिति वक्तव्य'मिति वार्त्तिकात् । तत्फलमुदाहरति-न्यसीषहदिति । अत्राऽभ्यासनिमित्तं षत्वं भवत्येवेति भावः। ऋदित्करणादिति। अन्यथा नित्यत्वाद्द्वित्वे

वृद्धिः । मा भवान्प्रेदिधत् । 'न न्द्राः' इति नदराणां न द्वित्वम् । औन्दिदत् । आड्डिडत् । आर्चिचत् । उब्ज आर्जवे । उपदेशे दकारोपधः । 'भुजन्युब्जौ पाण्युपतापयो'रिति सूत्रे निपातनाद्दस्य बः । स चान्तरङ्गोऽपि द्वित्वविषये 'न न्द्रा' इति निषेधाज्जिशब्दस्य द्वित्वे कृते प्रवर्तते, न तु ततः प्राक्, दकारोच्चारणसामर्थ्यात् ।

---

त.]त्येधत्यो'रिति व्याख्यातत्वादिति भावः। न च मा भवान्प्रेदिधदित्यत्र 'णौ चङी'ति ह्रस्वे कृते नायमेधतिरिति वृद्धेरप्रवृत्तौ किमेधतेरेजादिविशेषणेनेति वाच्यम्, एकदेशविकृतस्याऽनन्यत्वात् । न चैवमपि 'अजादेर्द्वितीयस्ये'ति धिशब्दस्थाने धिधिशब्दादेशे सति वस्नसोरिव प्रकृतिप्रत्ययविभागसंमोह इति वाच्यं, 'द्विः प्रयोगो द्विर्वचनं षष्ठ'मिति भाष्ये सिद्धान्तितत्वात् । अन्यथा इहैव प्रेदिधदित्यत्र णिलोपो न स्यात्, 'जिघांसती'त्यादौ सनः सकारेण विशिष्टस्य द्वित्वे कृते कुत्वं च न स्यादिति दिक् । **उब्ज आर्जव इति** । अयमुपध्मानीयोपध इति वार्तिककृतोक्तम् । तस्य 'झलां जश् झशी'ति जश्त्वेन बकारे कृते—उब्जिता उब्जितुमिति रूपम् । एतच्चाऽयोगवाहानां शर्षु पाठस्य फलम् । भाष्यकारादयस्तूपध्मानीयोपधपाठे 'उब्जिजिषती'ति रूपं न सिध्येत् । यदि 'पूर्वत्राऽसिद्धीयमद्विर्वचने' इत्याश्रित्य बकारोत्तरं द्वित्वं क्रियते, यदि वा अस्याऽनित्यतामाश्रित्य बकारात्पूर्वमेवोपध्मानीयस्य द्वित्वमुभयथापीष्टरूपाऽसिद्धिः, आद्ये उब्जिजिषति, द्वितीये तूपध्मानीयस्याऽच्त्वात्तदादेः 'अजादेर्द्वितीयस्ये'ति द्वित्वे हलादिःशेषे द्वितीयोपध्मानीयस्य जश्त्वेन बकारे पश्चात्प्रथमस्यापि तथैव बकारे उब्जिजषतीत्यापत्तेः । ततश्चेष्टसिद्धये दकारोपधोऽयं स्वीकार्यः । 'भुजन्युब्जा'विति निपातनादुपधादकारस्य बो भवतीति वाक्यं कल्प्यते, तच्च 'स्तोः श्चुना श्चु'रित्यस्याग्रे । तदयमर्थः—श्चुना योगे उद्जेर्दकारस्य बकार इति।अभ्युद्गः समुद्ग इत्यत्र तु उब्जिता उब्जितुमित्यत्रेव चवर्गयोगो नास्तीति न बकारः।दकारोपधे चास्मिन्स्वीकृते 'न न्द्राः' इति निषेधाज्जिशब्दस्य द्वित्वे ततो बकारे च उब्जिजिषतीति सिध्यति रूपम् । न च 'पूर्वत्रासिद्धीयमद्विर्वचने' इति धकारोत्तरं द्विर्वचने सति स्यादेवाऽनिष्टमिति वाच्यम्, द्विर्वचने हि त्रैपादिकं सिद्धं न तु तन्निषेधेऽपि । तथाच निषेधे त्रिपादीस्थस्याऽसिद्धत्वात् 'न न्द्राः' इति निषेधः प्रवर्तते । यद्वा तादृशवाक्यमिह न कल्प्यते किं तु 'भुजन्युब्जौ' इति निपातनेन दस्य ब इति । न चैवं बकारसहितस्य द्वित्वप्रसङ्गः, धातोर्दकारोच्चारणसामर्थ्यात् । नचाऽभ्युद्ग इत्यादावपि बकारश्रवणप्रसङ्गः, अकुत्वविषय एव बकारनिपातनाभ्युपगमात् । यद्वा अभ्युद्ग इत्यादि रूपं ह्युपसर्गाद्गमेर्डप्रत्यये ज्ञेयम् । उद्जेस्तु घञि अनभिधानात्प्रयोगाऽभाव इति वदन्ति । तदेतद्भाष्यादिमतमभि-

---

बा.]उपधाह्रस्वात्प्रागेव अन्तरङ्गत्वाद्द्वित्वं स्यात्तदा ओण् इ अ त् इत्यत्र 'अजादेर्द्वितीयस्ये'ति णीत्यस्य णिचा सह द्वित्वे सति पश्चादोकारस्य चङ्परे णौ उपधात्वाऽभावादेव ह्रस्वस्याऽप्रसक्तत्वादृदित्करणं व्यर्थं स्यात् । 'द्वित्वात्प्रागेव उपधाह्रस्व' इत्यभ्युपगमे तु ओण् इ अ त् इत्यस्यामवस्थायां प्राप्तस्य ह्रस्वस्य निषेधार्थमृदित्करणमर्थवत् । अतो 'बहिरङ्गोऽप्युपधाह्रस्वो द्वित्वात् प्रागेवे'ति विज्ञायते इत्यर्थः । ननु आटिटत् आशिशदित्यत्र द्वित्वप्रवृत्त्यनन्तरमुपधाह्रस्वस्याऽभावेऽपि 'आटश्चे'ति वृद्धौ आटिटत् आशिशदिति सिध्यत्येवेति किमनेन ज्ञापनेनेत्यत आह—**मा भवानिदिधदिति** । एध् इ अ त् इति स्थिते पूर्वं द्वित्वप्रवृत्तौ 'धी'त्यस्य द्वित्वे पश्चादेकारस्य ह्रस्वो न स्यात्, द्वित्वात्प्रागेव उपधाह्रस्वे तु इध् इ अ त् इति स्थिते 'धी'त्यस्य द्वित्वे माङ्योगादाडभावे इदिधदिति इष्टं सिध्यतीत्यर्थः । ननु मा भवान् प्रेदिधदित्यत्र प्र इदिधदिति स्थिते कृतेऽपि ह्रस्वे एकदेशविकृतन्यायेन एधधातुत्वात् 'एत्येधत्यूठ्सु' इति वृद्धिः स्यादित्यत आह—**एजादावेधताविति** । 'अवर्णादेजाद्योरेत्येधत्यो'रिति व्याख्यातत्वादिति भावः । **औन्दिददिति** । उन्द् इ अ त् इति स्थिते 'दी'त्यस्य द्वित्वमिति भावः । **आड्डिडदिति** । अड्डधातुर्दोपधः । ष्टुत्वसंपन्नो डकारः । अड्ड् अ त् इति स्थिते ष्टुत्वस्याऽसिद्धत्वेन दकारात्परस्य 'डि' इत्यस्य द्वित्वमिति भावः । **आर्चिचदिति** । अर्च् इ अ त् इति स्थिते रेफात् परस्य 'ची'त्यस्य द्वित्वमिति भावः । **उब्ज आर्जवे इति** । ननु चङि 'ब्जी'त्यस्य द्वित्वे हलादिशेषे औब्जिब्जदिति रूपं स्यात् । औब्जिजदित्येव तु इष्यते । तत्राह—**उपदेशे दकारोपधोऽयमिति** । ततश्च 'न न्द्राः' इति दकारस्य द्वित्वनिषेधाज्जीत्यस्यैव द्वित्वमिति भावः । तर्हि दकारः कुतो न श्रूयते इत्यत आह—**भुजन्युब्जाविति** । ननु द्वित्वात्प्रागन्तरङ्गत्वाद्दकारस्य बकारादेशे सति 'न न्द्रा' इति निषेधस्य कथमिह प्रवृत्तिरित्यत आह—**स चेति** । ननु 'द्रु गतौ' द्रावयति, चङि 'द्रु' इत्यस्य द्वित्वे उत्तरखण्डस्य वृद्ध्यावादेशयोरुपधाह्रस्वे 'स्रवतिशृणोती'त्यभ्यासस्य इत्वे अदिद्रवदिति इष्यते । तन्नोपपद्यते । 'न न्द्राः' इति दकारस्य द्वित्वनिषेधादित्यत आह—**अजादेरित्येवेति** । 'न न्द्राः' इत्यत्र अजादेरित्यनुवर्तत एवेत्यर्थः । 'आदिभूतादचः' इति व्याख्यातं प्राक् । ततश्च आदिभूतादचः परा नदरा द्विर्न भवन्तीति फलितम् । **नेहेति** । प्रकृते आदिभूतादचः परत्वाऽभावान्न दकारद्वित्वनिषेध इत्यर्थः । 'अदि-

---

शे.]उपधात्वाऽभावात्प्राप्त्यभावे किन्तेन ? । **माभवानिति** । अत्र यद्वक्तव्यं तदेत्येधतीत्यत्रोक्तम् । **औन्दिददिति** ।

ओड्डिजत् । अजादेरित्येव । नेह–अदिद्रपत् । **रभेरशब्लिटोः** ।७।१।६३। रभेर्नुम् स्यादचि न तु शब्लिटोः । **लभेश्च** ७।१।६४। अररम्भत्।अललम्भत्।'ह्रेरचङी'ति सूत्रे अचङीत्युक्तेः कुत्वं न–अजीह्रयत् ।'अत्स्मृदृत्वर-प्रथम्रदस्तॄस्पशाम्'।असस्मरत्।अददरत्।तपरत्वसामर्थ्यादत्र लघोर्न दीर्घः।[अतत्वरत्]।**विभाषा वेष्टिचेष्ट्योः** ।७।४।९६। अभ्यासस्याऽत्वं वा स्याच्चङ्परे णौ।अववेष्टत्।अविवेष्टत् ।अचचेष्टत् । अचिचेष्टत्।'भ्राजभासे'त्यादिना वोपधाह्रस्वः अबिभ्रजत्।अबभ्राजत्।* **काण्यादीनांवेति** वैक्तव्यं। ण्यन्ताः–कणरणभणश्रणलुपहेठाःकाण्यादयः

त.]प्रेत्याह–**उपदेशो दकारोपध इत्यादि । अजादेरित्येवेति** । 'न न्द्राः' इत्यत्र अजादेरित्यनुवर्तते, तेन आदिभूतादचः परा एव नदरा द्विर्नोच्यन्ते नान्ये इत्यर्थः । ननु 'लावस्थायामेव अ'डिति भाष्यकारोक्तपक्षे अदिद्रप-दित्यत्र अजादित्वमस्त्येव, न्याय्यश्च प्रथममट्,परत्वादन्तरङ्गत्वाच्चेति चेत् । अत्राहुः–द्वितीयस्येत्यप्यत्रानुवर्तते, तत्साम-र्थ्याच्च नित्यं द्वितीयस्येति तदर्थः । तेन लावस्थायामटि कृतेऽपि धातुसंज्ञाप्रवृत्तिकाले अजादित्वाऽभावान्नोक्तदोषः । नित्यं द्वितीयस्यैकाचो ये नदरास्तेषामेव निषेधात् । न चैवं नित्यं द्वितीयस्येति व्याख्ययैव इष्टसिद्धावजादेरित्यस्याऽत्रानुवृत्तिर्मा-स्त्विति वाच्यम्, इन्दिद्रीयिषतीत्यत्र दकारस्यापि द्वित्वनिषेधापत्तेः । अजादेरित्युक्तौ त्वादिभूतादचः परत्वं दकारस्य नेति सिद्धमिष्टम्। न च अजादेरित्युक्तावपि चन्दिद्रीयिषतीत्यत्र दोषः स्यादेव, आद्यवयवस्य हल्त्वान्नकारस्य द्वित्वनिषेधा-ऽप्रसङ्गादिति वाच्यम्, अजादेरिति कर्मधारयात्पञ्चमीत्युक्तत्वात् । इह च एकदेशे स्वरितत्वं प्रतिज्ञाय अच इत्येवा नुवर्त्यताम् । अथवा आदेरित्यस्याप्यनुवर्तनमस्तु, तस्य नावयवपरत्वं, किंतु पूर्ववर्तिमात्रपरत्वं, शब्दाधिकाराश्रयणादिति ज्ञेयम्। नन्वेवमुत्तरार्थतया द्वितीयस्येति ग्रहणस्य सार्थकत्वे स्थिते 'द्वितीयस्येति न वक्तव्य'मिति भाष्यं विरुध्येतेति चेत्। मैवम् । यस्मिन्सूत्रे पठितं तत्र मास्त्विति तदाशयात् । न च अजादेरित्येतावदुक्तं यस्य कस्यचिदेकाचो द्वित्वं स्यादिति वाच्यम्, प्रथमस्यैकाचः पूर्वेणैव सिद्धेः पुनरारम्भो द्वितीयस्य द्वित्वार्थमिति सुवचत्वात् । **रभेरशब्लिटोः** । 'रधिजभो'-रित्यतोऽचीति, 'इदितः' इत्यतो नुमिति चानुवर्तते । अचि किम् ?। आरब्धम् । अशब्लिटोः किम् ?। रभते । रेभे ।

**लभेश्च** । योगविभागः 'आङो यी'त्यत्र लभेरेवानुवृत्तिर्यथा स्यादिति।**काण्यादीनामिति**। 'कण निमीलने' । रण शब्दे' । 'भण शब्दे' । 'श्रण दाने' । 'लुप्ल छेदने' । 'हेठ विबाधायाम्' । षट् । 'ह्वेञ् स्पर्धायां शब्दे च' । 'वण

बा.]द्रप'दिति पाठे द्राधातोर्णिचि पुकि 'द्रापी'त्यस्माद्रूपम् । ननु 'लावस्थायाम'डिति पक्षे अचः परत्वमस्त्येवेति चेन्न, 'न न्द्राः' इत्यत्र 'लिटि धातो'रित्यतो धातोरित्यनुवर्त्यं धातुसंज्ञाकालिकादादेरचः परा नदरा द्विर्नेति व्याख्यानादित्याहुः ।

**रभेरशब्लिटोः** । 'इदितो नुम्धातो'रित्यतो नुमिति, 'रधिजभोरची'त्यतोऽचीति चानुवर्तते । तदाह–**रभेर्नुमि-त्यादि । लभेश्च** । लभेरपि नुम् स्यादचि, नतु शब्लिटोरित्यर्थस्य स्पष्टत्वादनुक्तिः । **अररम्भदिति** । नुमि कृते संयोगपरत्वेन अकारस्य लघुत्वाऽभावान्न सन्वत्त्वमिति भावः । 'हि गतौ वृद्धौ चे'त्यस्माच्चङि 'अजीह्रय'दित्यत्र 'ह्रेरचङी'ति हकारस्य कुत्वं नेत्याह–**ह्रेरचङीति**।'अत्स्मृदृत्वरे'ति सूत्रं चुरादौ 'प्रथ प्रख्याने' इति धातौ व्याख्यातम् । **असस्मरदिति** । अत्र 'सन्यतः' इतीत्वे प्राप्ते अत्वम् । अत एव ज्ञापकादनेकहल्व्यवधानेऽपि लघुपरत्वमित्युक्तं प्राक् । संयोगपरत्वेन लघुत्वाऽभावाच्चाऽभ्यासदीर्घः। **अददरदिति** । 'दॄ विदारणे' इत्यस्य रूपम् । अत्रापि 'सन्यतः' इत्यस्या-पवादोऽत्वम्। 'दीर्घो'रिति दीर्घमाशङ्क्याह–**तपरत्वसामर्थ्यादिति**। अतत्वरत् । अपप्रथत् । अमम्रदत् । अतस्तरत् । अपस्पशत् । **विभाषा वेष्टिचेष्ट्योः** । 'अत्र लोपः' इत्यस्मादभ्यासस्येत्यनुवर्तते । 'अत्स्मृदृत्वरे'त्यतोऽदिति, 'सन्व-ल्लघुनी' इत्यतश्चङ्परे इति । चङ् परो यस्मादिति बहुव्रीहिः । णावित्यार्थिकम् । तदाह–**अभ्यासस्याऽत्वमिति । अबिभ्रजदिति** । उपधाह्रस्वपक्षे लघुपरत्वात्सन्वत्त्वादभ्यासस्य इत्वम् । 'दीर्घो लघो'रिति तु न, संयोगपरत्वादलघु-त्वात् । **काण्यादीनां वेति** । 'णौ चङ्युपधाया इति ह्रस्व' इति शेषः । **ण्यन्ताः कणरणेति** । 'कण निमीलने' 'रण शब्दे','भण शब्दे''श्रण दाने','लुप छेदने','हेठ विबाधाया'मिति षट् धातवो ण्यन्ताः काण्यादयो भाष्ये पठिता इत्यर्थः। **ह्वायीति** । 'ह्वेञ् स्पर्धायां शब्दे च' । आत्वे युकि च निर्देशः । 'वण शब्दे' दन्त्योष्ठ्यादिः, 'लुठ प्रतिघाते' टवर्ग-द्वितीयोपधः, 'लप व्यक्तायां वाची'ति चत्वारो ण्यन्ता भाष्योक्तेभ्योऽधिका न्यासग्रन्थे पठिता इत्यर्थः । **चाणिलोटी**

शे.]चङ्परे णौ यल्लघु तत्पराभ्यासाऽभावाच्च दीर्घः।**अजादेरित्येवेति**। अजादेरिति च कर्मधारयात्पञ्चमी,आदिभूतादचः परे इत्यर्थः। तेन'इन्दिद्रीयिषती'त्यादौ दस्य न द्वित्वनिषेधः । स्पष्टञ्चेदं संयोगसञ्ज्ञासूत्रे भाष्ये। तत्र हि 'न न्द्राः' इत्यत्र 'अजादेरिति वर्त्तते'इत्युक्तम्। **अदिद्रपदिति** । ननु 'लावस्थायाम'डिति पक्षे आदेरचः परत्वमस्त्येव । किं च 'चङी'ति द्वित्वात्परत्वादपि प्रथममट् न्याय्य इति चेन्न, 'न न्द्राः' इत्यस्याधिकारसूत्रत्वेन तत्तत्सूत्रे उपस्थितौ तत्र धातोरिति सत्त्वेन प्रत्यासत्त्या व्याख्यानेन च धातुसञ्ज्ञाकालिकादादेरचः परा नदरा इत्यर्थान्न दोष इत्याहुः । ईदृशानामभिधाने

षड्भाष्ये उक्ताः।ह्लायिवाणिलोटिलोचयश्चत्वारोऽधिका न्यासे। चाणिलोठी अप्यन्यत्र। इत्थं द्वादश। अचीकणत्। अचकाणत्। **स्वापेश्चङि** ।६।१।१८। ण्यन्तस्य स्वापेश्चङि संप्रसारणं स्यात्। असूषुपत्। **शाच्छासाह्वाव्या-वेपां युक्** ।७।३।३७। णौ परे। पुकोऽपवादः। शाययति। ह्वाययति। **ह्वः संप्रसारणम्** ।६।१।३२। सन्परे चङ्परे च णौ ह्वः संप्रसारणं स्यात्। अजूहवत्। अजुहावत्। **लोपः पिबतेरीच्चाभ्यासस्य** ।७।४।४। पिबते-रुपधाया लोपः स्यादभ्यासस्य ईदन्तादेशश्च चङ्परे णौ। अपीप्यत्। 'अर्तिह्री'ति पुक्। अर्पयति। ह्रेपयति।

---

त.]शब्दे'।'लुट (ठ) प्रतिघाते' 'लुप्लृ छेदने'। लोपीति णिजन्तनिर्देशः।लापयतीति पाठान्तरम्।लप व्यक्तायां वाचि।केचित्तु **लप हेठ** इति पठन्ति। न्यासे चत्वारः॥ 'चण दाने'। 'लुठँ स्तेये' भ्वादिः। चुरादौ दण्डकपाठे भाषार्थकोऽपि। अरीरणत्। अरराणत्। अबीभणत्। अबभाणत्। अशिश्रणत्। अशिश्राणत्। अलूलुपत्। अलुलोपत्। अजीहिठत्। अजिहेठत्।**स्वापेश्चङि**। चङि किम्?। स्वापयति। **असूषुपदिति**। इह संप्रसारणोत्तरं द्वित्वम्। **शाच्छासा**। 'शो तनूकरणे'। 'छो छेदने'। 'षोऽन्तकर्मणि'। 'ह्वेञ् स्पर्धायाम्'। 'व्येञ् संवरणे'। 'वेञ् तन्तुसंताने'। 'पा पाने'। 'लुग्विकरणाऽलुग्विकरणे'ति परिभाषया 'पा रक्षणे' इति नेह गृह्यते। तस्य तु पालयतीति रूपमनुपदं वक्ष्यति। शाययति। अशीशयत्। छाययति। अचिच्छयत्। साययति। असीषयत्। ह्वाययति। अविह्वयत्। व्याययति। अविव्ययत्। वाययति। अवीवयत्। पाययति। अपीपयत्। इह शाच्छासादीनां कृतात्वानां निर्देशः पुकः प्राप्तिं ध्वनयितुम्। तत्प्रयोजनं त्वस्मिन्प्रकरणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिः। तेन ध्यापयति, क्षापयतीत्यादि सिद्धम्। **ह्वः संप्र**। 'णौ च संश्चङो'रिति वर्तते। तदाह-**सन्पर इत्यादि**। **अजूहवत्**। **अजुहावदिति**। 'काण्यादीनां वे'ति ह्रस्वविकल्पः।

---

बा.]इति। 'चण दाने' तालव्यादिः। 'लुट स्तेये' टवर्गप्रथमान्तौ भ्वादिः। चुरादौ भाषार्थकोऽपि। एतावपि ण्यन्तौ द्वौ भाष्यन्यासग्रन्थाभ्यामन्यत्र क्वचिद्ग्रन्थे पठितावित्यर्थः। **इत्थं द्वादशेति**। अनेन मतभेदेन काण्यादयो द्वादशेत्यर्थः। **अचीकणदिति**। उपधाह्रस्वपक्षे लघुपरत्वात्सन्वत्त्वदीर्घौ च। **अचकाणदिति**। उपधाह्रस्वाऽभावपक्षे रूपम्। अरीरणत्-अरराणत्। अबीभणत्-अबभाणत्। अशिश्रणत्-अशश्राणत्। अलूलुपत्-अलुलोपत्। अजीहिठत्-अजिहेठत्। अजूहवत्-अजुहावत्। अवीवणत्-अववाणत्। अलूलुठत्-अलुलोठत्। अलीलपत्-अललापत्। अचीचणत्-अचचाणत्। अलूलुटत्-अलुलोटत्। **स्वापेश्चङि॥संप्रसारणमिति**। 'ष्यङः संप्रसारण'मित्यतस्तदनुवृत्तेरिति भावः। **असूषुपदिति**। 'संप्रसारणं तदाश्रयं च कार्यं बलव'दिति वचनात्कृते संप्रसारणे द्वित्वं पूर्वरूपं सन्वत्त्वदीर्घौ षत्वमिति भावः। **शाच्छासा**। 'शो तनूकरणे', 'छो छेदने', 'षो अन्तकर्मणि', 'ह्वेञ् स्पर्धायां शब्दे च', 'व्येञ् संवरणे',-एषां कृतात्वनिर्देशः। 'वेञ् तन्तुसंताने' 'पा पाने भ्वादिः। एषां द्वन्द्वात्षष्ठीबहुवचनत्। **णौ परे इति**। शेषपूरणमिदम्। आदन्तलक्षणपुकोऽपवादः। युकि ककार इत्। उकार उच्चारणार्थः। कित्त्वादन्तागमः। अत्र 'लुग्विकरणाऽलुग्विकरणयोरलुग्विकरणस्य ग्रहण'मिति वचनात् 'पा रक्षणे' इति न गृह्यते। तस्य तु पालयतीति रूपमनुपदमेव वक्ष्यति। **शाययतीति**। लुङि अशीशयत्। **छाययतीति**। अचिच्छयत्। **साययतीति**। असीषयत्। **ह्वाययतीति**। लुङि तु विशेषो वक्ष्यते। **व्याययतीति**। अविव्ययत्। वाययति। अवीवयत्। पाययति। लुङि तु विशेषो वक्ष्यते। **ह्वः संप्रसारणम्**। ह्वेञः कृतात्वस्य 'ह्व' इति षष्ठी। 'णौ च संश्चङो'रित्यनुवृत्तिमभिप्रेत्य आह-**सन्पर इत्यादि**। **अजूहवदिति**। ह्वा इ अ त् इति स्थिते 'संप्रसारणं तदाश्रयं च कार्यं बलव'दिति वचनात्कृते संप्रसारणे पूर्वरूपे च 'हु' इत्यस्य द्वित्वे उत्तरखण्डस्य वृद्ध्यावादेशयोः कृतयोरुपधाह्रस्वे सन्वत्त्वदीर्घाविति भावः। अत्र कृते संप्रसारणे पूर्वरूपे च ह्वारूपाऽभावान्न युक्।पाधातोर्णौ युगागमे पायि इत्यस्माल्लुङि चङि द्वित्वादौ अपीपय् अ त् इति स्थिते-**लोपः पिबतेः**। **चङ्परे णाविति**। 'णौ चङ्युपधायाः' इत्यतस्तदनुवृत्तेरिति भावः। **अपीप्यदिति**। 'नानर्थकेऽलोऽन्त्यविधि'रित्यस्य अनभ्यासविकार इति निषेधादभ्यासाऽन्त्यस्य ईत्वम्। इह उपधालोपे कृतेऽग्लोपित्वाद-लघूपधत्वाच्च सन्वत्त्वदीर्घयोरप्राप्तावीत्वविधिः। **अर्तिह्रीति पुगिति**। 'क्रमेणोदाह्रियते' इति शेषः। **अर्पयतीति**। ऋधातोरुदाहरणम्। वृद्धिं बाधित्वा नित्यत्वात् पुक्। गुणः। **ह्रेपयतीति**। 'ह्री लज्जाया'मित्यस्य रूपम्। **ब्लेपय-**

---

शे.]दृढं मानं चिन्त्यमिति कश्चित्। **ह्लायिवाणि**। द्वितीयः पवर्गीयादिः। **लोटिलोचय इति**। आद्यष्टवर्गप्रथमोपधः, चोपधोऽन्त्यः।**वाणिलोठीति**। आद्यो दन्त्योष्ठ्यादिः; द्वितीयष्ठद्वितीयोपधः। तत्र पूर्वं 'षड्भाष्ये' इत्युक्त्या न्यासादिमतस्याऽप्रामाणिकत्वं सूचितम्। **स्वापेश्चङि**। चङीति विषयसप्तमी। तेन पूर्वं सम्प्रसारणे द्वित्वम्। **शाच्छासा**। अत्र पाशब्देनाऽलुग्विकरणत्वादलाक्षणिकत्वाच्च पिबतेरेव ग्रहणमिति कैयटः।**ह्वः सम्प्रसारणम्**। 'णौ च संश्चङो'रित्यनुवर्त्तते। सा च विषयसप्तमी। **लोपः पि**। अभ्यासेकारसन्नियोगशिष्टत्वाद्द्वित्वे कृते उपधालोपः। **अर्पयतीति**।

व्लेपयति । रेपयति । यलोपः । क्नोपयति । क्ष्मापयति । स्थापयति । **तिष्ठतेरित्** ।७।४।५। उपधाया इदादेशः स्याच्चङ्परे णौ । अतिष्ठिपत् । **जिघ्रतेर्वा** ।७।४।६। अजिघ्रिपत् । अजिघ्रपत् । 'उऋ्रतत्' । अचीकृतत् । अचिकीर्तत् । अवीवृतत् । अववर्तत् । अमीमृजत् । अममार्जत् । ॐ **पातेर्णौ लुग्वक्तव्यः** । पुकोऽपवादः । पालयति । **वो विधूनने जुक्** ।७।३।३८। वातेर्जुक् स्याण्णौ कम्पेऽर्थे । वाजयति । कम्पे किम् ?। केशान्वापयति । 'विभाषा लीयतेः' ।**लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने** ।७।३।३९। लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ

त.]**अपीप्यदिति**।उपधालोपस्य द्वित्वे कर्तव्ये प्रतिषेधात्कृते लोपे स्थानिवद्भावाद्वा पाय्शब्दस्य द्वित्वे हलादिःशेषे ईकारः। स च अनभ्यासविकार इति निषेधादन्त्यस्यादेशः। इहाऽग्लोपित्वादलघूपधत्वाच्च सन्वदित्त्वदीर्घयोरप्राप्ताविर्त्वं विधीयते । **व्लेपयतीत्यादि** । व्ली वरणे । रीङ् क्षये । क्नूयी शब्दे उन्दे च।क्ष्मायी विधूनने।**तिष्ठतेरित्**। तकारो मन्दप्रयोजनः। श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः। अतास्थपत्। लटि—तास्थापयीति तास्थापेति। **'उऋ्रतत्'** । चुरादौ व्याख्यातम् । **अचिकीर्तदिति** । ऋदादेशाऽभावपक्षे 'उपधायाश्चे'तीत्वे रपरत्वम् । 'उपधायां चे'ति दीर्घः। **पुकोऽपवाद इति** । आदन्तत्वात्पुकः प्राप्तिः । एवं च लुगागमस्य पुङ्निवृत्तिरेव फलम् । 'पालयती'ति रूपस्य 'पाल रक्षणे' इति धातुनापि सिद्धेरिति भावः।**वो विधू**। लुग्विकरणाऽलुग्विकरणपरिभाषया 'ओवै शोषणे' इत्यस्यैव ग्रहणं नतु 'वा गतिगन्धनयो'रित्यस्य। लक्षणप्रतिपदोक्तपरिभाषा त्वस्मिन्प्रकरणे न प्रवर्तते इत्युक्तं प्राक् । 'ओवै शोषणे' इत्यस्य रूपमिति वदन्वामनोऽप्यत्रानुकूलः । वज गतावितिति धातुना वाजयतीति रूपे सिद्धे जुगागमस्य पुङ्निवृत्तिरेवेहापि फलम् । **वातेरिति** । 'वायते'रिति वक्तुं युक्तम् । आत्वविधायकसूत्रं स्मारयति—**विभाषा लीयतेरिति** । लीयतेरिति यका निर्देशो नतु श्यना । अन्यथा 'विभाषा लीङ'इत्येवाक्ष्यत् । तेन लीलीङोरुभयोरप्यात्वं भवति । **लीलोः**। 'लीङ् श्लेषणे' दिवादिः। 'ली श्लेषणे'

बा.]**व्लीति**। 'व्ली विशरणे' इत्यस्य रूपम् । **रेपयतीति** । 'री क्षये' इत्यस्योदाहरणम्। 'क्नूयी शब्दे' इत्यस्य क्नोपयतीत्युदाहरिष्यन्नाह—**यलोप इति** : क्नूयीधातोर्णौ पुकि 'लोपो व्यो'रिति यलोप इत्यर्थः । ततः क्नूप् इ इति स्थिते अलघूपधत्वेऽपि पुगन्तत्वाद्गुणः । **क्ष्मापयतीति** । 'क्ष्मायी विधूनने' अस्माण्णौ पुकि यलोपः। आदन्तस्योदाहरति—**स्थापयतीति** । लुङि चङि अतिष्ठप् अ त् इति स्थिते—**तिष्ठतेरित्** । 'णौ चङ्युपधायाः' इत्यनुवर्तते । तदाह—**उपधाया इति** । **जिघ्रतेर्वा**। घ्राधातोरुपधाया इद्वा स्याच्चङ्परे णावित्यर्थः । अजिघ्रप् अ त् इति स्थिते उपधाया इत्वविकल्पः । **उऋ्रदिति** । धातोरुपधाया ऋकारस्य ऋद्वा चङ्परे णाविति व्याख्यातं चुरादौ । **अचीकृतदिति** । कृत् इ अ त् इति स्थिते ऋत्वपक्षे कृत् इत्यस्य द्वित्वे उरदत्वे हलादिशेषे अभ्यासचुत्वे सन्वत्त्वादित्वे तस्य दीर्घे रूपम् । **अचिकीर्तदिति** । कृत् इ अ त् इति स्थिते 'उऋ्र'दित्युपधाया ऋत्वाऽभावपक्षे 'उपधायाश्चे'ति इत्वे रपरत्वे 'किर्त्' इत्यस्य द्वित्वे उत्तरखण्डे 'उपधायां चे'ति दीर्घे रूपम् । **अवीवृतदिति** । 'वृतु वर्तने' । णिचि लघूपधगुणं बाधित्वा 'उऋ्रत्' । चङि 'वृत्' इत्यस्य द्वित्वे उरदत्वे सन्वत्त्वादित्वं दीर्घश्चेति भावः। **अववर्तदिति** । ऋत्वाऽभावपक्षे वृदित्यस्य द्वित्वे उरदत्वे उत्तरखण्डस्य लघूपधगुणे रूपम् । लघुपरकत्वाऽभावान्न सन्वत्त्वदीर्घौ । **अमीमृजदिति** । उपधाया ऋत्वपक्षे रूपम् । **अममार्जदिति** । उपधाया ऋत्वाऽभावपक्षे द्वित्वे उरदत्वे उत्तरखण्डे 'मृजेर्वृद्धि'रिति वृद्धौ रपरत्वे रूपम् । लघुपरत्वाऽभावान्न सन्वत्त्वम्। **पातर्णौ लुगिति** । लुगागम इत्यर्थः। **पुकोऽवाद इति** । आदन्तलक्षणपुकोऽपवाद इत्यर्थः । यद्यपि 'पाल रक्षणे' इति धातोरेव सिद्धं, तथापि पुको निवृत्तिः फलम् । **वो विधूनने**। 'ओ वै शोषणे' इति धातोः कृतात्वस्य 'व' इति षष्ठ्यन्तम्। 'अर्तिह्री'त्यतो णावित्यनुवर्तते । तदाह—**वातेरित्यादि** । पुकोऽपवादो जुक् । **केशान्वापयतीति** । सुगन्धीकरोतीत्यर्थः । अत्र वैधातोः पुगेव । वाधातोस्त्विह न ग्रहणं, लुग्विकरणत्वात् । केचित्तु वातेरेवाऽत्र ग्रहणं, नतु वेञो, नापि वै इत्यस्य, लाक्षणिकत्वात्, सानुबन्धकत्वाच्चेत्याहुः । आत्वविधायकसूत्रं स्मारयति—**विभाषा लीयतेरिति** । लीलीङोरात्वं वा स्यादेज्विषये ल्यपि चेति व्याख्यातं प्राक् श्यन्विकरणे। तत्र लीयतेरिति यका निर्देशो,नतु श्यना । तेन 'ली श्लेषणे' इति श्नाविकरणस्य, 'लीङ्श्लेषणे' इति श्यन्विकरणस्य च ग्रहणमिति च प्रागुक्तं न विस्मर्तव्यम् । **लीलोः**। ली ला इत्यनयोः षष्ठीद्विवचनम् । **णाविति** । अर्तिह्री'त्यतस्तदनुवृत्तेरिति भावः । स्नेहस्य=तैलस्य, निपातनं=द्रावणं, स्नेहनिपातनम्। तदाह—**स्नेहद्रवे इति** । आत्वाऽभाव-

शे.]वृद्धिं बाधित्वा नित्यत्वात्पुकि गुणः। **यलोप इति**। 'लोपो व्यो'रित्यनेन । **पातेर्णौ**। **पुक इति**। 'अर्तिह्री'त्यस्येत्यर्थः । अत्र लुगागम एव । 'पाल रक्षणे' इत्यनेन रूपे सिद्धेऽप्यागमान्तरनिवृत्तये वचनम् । **वो विधू** । अत्र वातेरेव ग्रहणं, न वेञो, नापि 'वै' इत्यस्य, लाक्षणिकत्वात्, सानुबन्धकत्वाच्च । **केशान्वापयतीति** । सुगन्धीकरोतीत्यर्थः । **लीयतेरिति** । लीलीङोरित्यर्थः । **लातेश्चेति** । आदादिकस्य, कृतात्वलीयतेश्चेत्यर्थः । व्याख्यानादिति बोध्यम् ।

वा स्तो णौ स्नेहद्रवे। विलीनयति विलाययति, विलालयति विलापयति वा घृतम्। ली ई इति ईकारप्रश्लेषादात्वपक्षे नुग्न। स्नेहद्रवे किम् ?। लोहं विलाययति। विलापयति। * **प्रलम्भनाऽभिभवपूजासु लियो नित्यमात्वमशिति वाच्यम्। लियः संमाननशालीनीकरणयोश्च** ।१।३।७०। लीङ्लियोर्ण्यन्तयोरात्मनेपदं स्यादकर्तृगेऽपि फले, पूजाभिभवयोः प्रलम्भने चाऽर्थे। जटाभिर्लापयते। पूजामधिगच्छतीत्यर्थः। श्येनो वर्तिकामुल्लापयते। अभिभवतीत्यर्थः। बालमुल्लापयते। वञ्चयतीत्यर्थः। **बिभेतेर्हेतुभये** ।६।१।५६। बिभेतेरेच आत्वं वा स्यात्प्रयोजकाद्भयं चेत्। **भीस्म्योर्हेतुभये** ।१।३।६८। ण्यन्ताभ्यामाभ्यामात्मनेपदं स्याद्धेतोश्चेद्भयस्मयौ। सूत्रे भयग्रहणं धात्वर्थोपलक्षणम्। मुण्डो भापयते। **भियो हेतुभये षुक्** ।७।३।४०। भी ई इती-

त.]क्र्यादिः। लाग्रहणेन 'ला आदाने' अदादिः, कृतात्वौ लीलीङौ च त्रयोऽपि गृह्यन्ते। 'लीयते'रिति औचित्यादिहापि यक्त निर्देश इत्युभयोरपि ग्रहणम्। न च 'निरनुबन्धकग्रहणे न सानुबन्धकस्य ग्रहण'मिति परिभाषया सूत्रेऽपि लीङो न ग्रहणमिति वाच्यम्, इयं हि परिभाषा 'वामदेवाड्ड्यड्ड्यौ' इत्यत्र ङित्त्वेन ज्ञापिता। ज्ञापनं च उत्सर्गतः सजातीयापेक्षमिति प्रत्ययग्रहणविषयत्वमस्याः कल्प्यते। यथा 'सदव्ययतव्यसमानाधिकरणेने'त्यत्र तव्यस्यैव ग्रहणं न तु तव्यतः, अत एव 'जॄव्रश्च्योः क्त्वी'ति सूत्रे जृणातिजीर्यत्योरुभयोर्ग्रहणमिति न्यासकृतोक्तम्। अतोऽत्र लीलीङोर्ग्रहणमिति सम्यगेव। न चैवं 'दिव औ'दित्यत्र निरनुबन्धपरिभाषया दिविति प्रातिपदिकस्यैव ग्रहणं न तु धातोरिति ग्रन्थः कथं सङ्गच्छत इति वाच्यम्, उत्सर्गतः प्रत्ययग्रहणविषयत्वेन क्वचिदन्यत्रापि प्रवृत्तौ बाधकाऽभावादिति वदन्ति। **विलीनयतीति**। लीलीङोरिकारान्तयोर्नुकि रूपम्। **विलाययतीति**। नुगभावपक्षे तयोरेव रूपम्। **विलालयतीति**। लातेः कृतात्वयोर्लीलीङोश्च लुकि रूपम्। **विलापयतीति**। लुगभावपक्षे आदन्तानां तेषामेव रूपम्। **लोहं विलापयतीति**। नुग्लुकोरभावादात्वपक्षे पुक्। आत्वाऽभावे तु वृद्ध्यायादेशौ। **प्रलम्भनेति**। प्रलम्भनं वञ्चनम्। अशिति किम्?। लीयते। लिनाति। **लियः संमानन**। चात्प्रलम्भने। **बिभेतेर्हेतुभये**। **हेतुः**-प्रयोजकः। इह 'आदेच उपदेशे' इत्यत एच आदित्यनुवर्तते, 'विभाषा लीयते'रित्यतो विभाषा, 'चिस्फुरो'रित्यतो णाविति च। तदाह-**बिभेतेरेच इत्यादि**। **भीस्म्योः**। व्यत्ययेन षष्ठीत्याह-**आभ्यामिति**। 'णेरणौ' इत्यतो णेरित्यनुवृत्तेर्ण्यन्ताभ्यामेव विधिरकर्त्र-

बा.]पक्षे आह-**विलीनयतीति**। लीलीङोरीकारान्तयोर्नुकि रूपम्। द्रवीकरोतीत्यर्थः। लीलीङोरात्त्वनुगभावपक्षे आह-**विलाययतीति**। लाधातोर्लुगागमे आह-**विलालयतीति**। अत्र लातेरादादिकस्य, कृतात्वलीयतेश्च ग्रहणम्, व्याख्यानात्। **विलापयतीति**। लुगागमाऽभावे रूपम्। ननु कृतात्वस्य लीधातोरपि एकदेशविकृतन्यायेन लीत्वान्नुक्स्यादित्यत आह-**ली ई इति**। **लोहं विलापयतीति**। नुग्लुकोरभावादात्वपक्षे पुक्। आत्वाऽभावे तु वृद्ध्यायादेशाविति भावः। **प्रलम्भनाभिभवेति**। प्रलम्भनं-वञ्चना। अभिभवः-तिरस्कारः। पूजा प्रसिद्धा। एष्वर्थेषु लीलीङोरेज्विषये नित्यमात्त्वं वक्तव्यमित्यर्थः। **लियः संमानन**। 'लिय' इति लीलीङोर्ग्रहणम्। 'अनुदात्तङितः' इत्यत आत्मनेपदमिति, 'णेरणौ' इत्यतो णेरिति चानुवर्तते। 'णिचश्चे'ति सिद्धेऽकर्त्रभिप्रायार्थमिदम्। **संमाननं**-पूजालाभः। **शालिनीकरणम्**-अभिभवः। चकारात् 'गृधिवञ्च्यो'रिति पूर्वसूत्रात्प्रलम्भनग्रहणं समुच्चीयते। तदाह-**लीङ्लियोरित्यादिना**। **बिभेतेर्हेतुभये**। 'आदेच उपदेशे' इत्यत एच इति, आदिति चानुवर्तते। 'विभाषा लीयते'रित्यतो विभाषेति, 'चिस्फुरो'-रित्यतो णाविति च। **हेतुभयं**-प्रयोजकाद्भयम्। तदाह-**बिभेतेरेच इत्यादिना**। **भीस्म्योर्हेतुभये**। 'अनुदात्तङितः' इत्यत आत्मनेपदमिति, 'णेरणौ' इत्यतो णेरिति चानुवर्तते। **हेतुः**-प्रयोजकः। तदाह-**आभ्यां ण्यन्ताभ्यामित्यादि**। अकर्त्रभिप्रायार्थमिदम्। ननु हेतोश्चेद्भयस्मयावित्यनुपपन्नं, सूत्रे स्मयग्रहणाऽभावादित्यत आह-**सूत्रे भयेति**। सूत्रे भयग्रहणं स्मिङ्धात्वर्थस्य स्मयस्याप्युपलक्षणमित्यर्थः। **मुण्डो भापयते इति**। अत्र आत्त्वं, पुक्, आत्मनेपदं च। भिय आत्त्वाऽभावपक्षे विशेषमाह-**भियो हेतुभये षुक्**। **भी ई इति**। द्वयोः सवर्णदीर्घे भीशब्दात् षष्ठीति भावः। इदं च स्थानिवत्सूत्रे भाष्ये स्पष्टम्। ईकारप्रश्लेषलब्धमाह-**ईकारान्तस्येति**। तेन आत्वपक्षे न षुगिति फलितम्।

शे.]विपातनं=द्रवीकरणम्। ननु कृतात्वस्यापि स्थानिवत्त्वेन लीत्वान्नुक् स्यादत आह-**लीई इति**। **प्रलम्भनाभिभवे-त्यादि**। यद्यपि भाष्ये ['णौ]लीयतेः प्रलम्भनशालीनीकरणयोर्नित्य'मित्येव पठितं तथापि तदात्मनेपदविषयोपलक्षणम्, तेन पूजायामपीति कैयटः। 'द्वयोरेवे'त्यपि मतान्तरं तेनैवोक्तम्। इदमेव भाष्यसम्मतं, विशिष्य द्वयोरेवोपादानात्। अशितीति तु प्रकरणाल्लब्धम्। अशिच्चाऽत्र णिरेव, 'क्रीङ्जीना'मित्यत्र पाठात्, भाष्ये णावित्युक्तेश्च। **लियः सं**। इहापि द्वयोर्ग्रहणं, व्याख्यानात्। तदाह-**लीङ्लियोरिति**। **शालीनीकरणम्**=अभिभवः। **प्रयोजकाद्भयश्चेदिति**। हेतुसम्बन्धिभयस्याऽव्यावर्तकत्वात्पञ्चम्यन्तेन समास आश्रीयते इति भावः। हेतुभय इत्युक्तेर्भयस्मयावित्यनुपपन्नमत आह-

कारः प्रश्लिष्यते। ईकारान्तस्य भियः पुक् स्याण्णौ हेतुभये। [जटिलो] भीषयते। **नित्यं स्मयतेः** ।६।१।५७। स्मयतेरेचो नित्यमात्वं स्याण्णौ हेतोः स्मये। जटिलो विस्मापयते। हेतोश्चेद्भयस्मयावित्युक्तेर्नेह—कुञ्चिकयैनं भाययति। विस्माययति। कथं तर्हि 'विस्मापयन् विस्मितमात्मवृत्ता'विति। 'मनुष्यवाचे'ति करणादेव हि तत्र स्मयः। अन्यथा शानजपि स्यात्। सत्यम्। 'विस्माययन्नि'त्येव पाठ इति साम्प्रदायिकाः। यद्वा मनुष्यवाक् प्रयोज्यकर्त्री विस्मापयते, तया सिंहो विस्मापयन्निति ण्यन्ताण्णौ शतेति व्याख्येयम्। **स्फायो वः** ।७।३।४१। णौ[परे]। स्फावयति। **शदेरगतौ तः** ।७।३।४२। शदेर्णौ तोऽन्तादेशः स्यान्न तु गतौ। शातयति। गतौ तु—गाः शादयति गोविन्दः। गमयतीत्यर्थः। **रुहः पोऽन्यतरस्याम्** ।७।३।४३। णौ [परे]। रोपयति। रोहयति। **क्रीङ्जीनां णौ** ।६।१।४८। एषामेच आत्वं स्याण्णौ। क्रापयति। अध्यापयति। जापयति। **णौ च संश्चङोः** ।२।४।५१।

त.]भिप्रायार्थः। **ईकारान्तस्येति**। तेन आत्वपक्षे भाययते इत्येव, न त्वत्र पुगित्यर्थः। **करणादेव हीति**। तथा च करणात्स्मये आत्वाऽभावेन पुग्दुर्लभ इति भावः। **प्रयोज्यकर्त्रीति**। यद्यपि प्रथमणिजर्थं प्रति मनुष्यवागेव प्रयोजिका, अतएव आत्वं प्रवृत्तं,तथापि द्वितीयणिजर्थाभिप्रायेणेदमुक्तमिति मनोरमायाम्। केचित्तु प्रयोज्यस्य कर्त्री। प्रयोजककर्त्रीति यावदिति प्रथमणिजभिप्रायेणैवेदं सुयोजमित्याहुः। **ण्यन्ताण्णाविति**। राजा विस्मयते, तं मनुष्यवाग्विस्मापयते, तया सिंहो विस्मापयन्नित्यर्थः। एवं च प्रथमणिचि हेतुर्मनुष्यवागिति आत्वपुकावुपपन्नौ। **क्रीङ्जीनाम्**। 'डुक्रीञ् द्रव्यविनिमये'। 'इङ् अध्ययने'। 'जि जये'। अचिक्रपत्। **अध्यजीगपदिति**। नाऽत्र णिज्निमित्तस्य गाङो द्वित्वे कर्तव्ये

बा.]णाविति। 'अर्तिह्री' त्यतस्तदनुवृत्तेरिति भावः। **नित्यं स्मयतेः**। 'आदेच उपदेशे' इत्यत एच इति, आदिति चानुवर्तते। 'चिस्फुरो'रित्यतो णाविति, 'बिभेतेर्हेतुभये' इत्यतो हेतुभये इति च। तत्र भयग्रहणं स्मयस्याप्युपलक्षणम्, अत्र तु स्मय एव विवक्षितः, स्मयतेर्भीत्यर्थकत्वाऽसंभवात्। तदाह—**स्मयतेरेच इत्यादि**। 'विभाषा लीयते'रित्यतो विभाषानुवृत्तिनिवृत्तये नित्यग्रहणम्। अथ 'बिभेतेर्हेतुभये' इति, 'नित्यं स्मयते'रिति च आत्वविधौ, 'भीस्म्योर्हेतुभये' इति आत्मनेपदविधौ च हेतुग्रहणस्य प्रयोजनमाह—**हेतोश्चेद्भयस्मयावित्युक्तेर्नेहेति**। **कुञ्चिकयैनमिति**। केशबन्धविशेषः कुञ्चिका। तस्याश्च करणतया प्रयोजककर्तृत्वाऽभावादात्वं पुक् च नेति भावः। आक्षिपति—**कथमिति**। रघुवंशकाव्ये—'तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम्। विस्मापयन् विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः' ॥ इति श्लोके विस्मापयन्निति कथमित्याक्षेपः। प्रयोजकाद्भयाऽभावेन आत्वपुगनुपपत्तेरिति भावः। ननु मनुष्यवागेव तत्र प्रयोजिकेत्यत आह—**मनुष्येति**। मनुष्यवाचेति तृतीयान्तगम्यकरणान्मनुष्यवागात्मकादेव हि तत्र स्मयः। ननु करणभूताऽपि मनुष्यवाक् प्रयोजिका कुतो नेत्यत आह—**अन्यथेति**।मनुष्यवाचः स्मयप्रयोजकत्वमभ्युपगम्य आत्वाश्रयणे 'भीस्म्योर्हेतुभये' इत्यात्मनेपदमपि स्यादित्यर्थः। स्मयोऽत्र प्रयोजकमूलको नेति युक्तमेव, किन्त्वात्वपुगाक्षेपो न युज्यते इत्यर्द्धाङ्गीकरेण परिहरति—**सत्यमिति**। **विस्माययन्नित्येति**। णौ आयादेशे स्मायीत्यस्माल्लटः शतरि शपि णेर्गुणे अयादेशे विस्माययन्नित्येव कालिदासो महाकविः प्रायुङ्क्त। 'विस्मापय'न्निति पकारपाठस्तु लेखकप्रमादकृत इति भावः। **यद्वेति**। राजा दिलीपो विस्मयते। तं सिंहोच्चारिता मनुष्यवाक् प्रयोजयति—'विस्मापयते मनुष्यवाक् राजानम्'। अत्र मनुष्यवाक् प्रयोजककर्त्री। राजा तु प्रयोज्यकर्तेति स्थितिः। अत्र स्मयस्य प्रयोजककर्तृभूतमनुष्यवाङ्मूलकत्वादात्वे पुक्। मूले 'प्रयोज्यकर्त्री'त्येव पाठः। प्रयोजककर्त्रीत्यर्थः। प्रयोज्यः कर्ता यस्याः सा प्रयोज्यकर्त्रीति बहुव्रीह्याश्रयणात्। 'प्रयोजककर्त्री'त्येव पाठः सुगमः। तां विस्मापयमानां प्रयोजककर्त्रीं मनुष्यवाचं प्रयोजयति सिंहः-विस्मापयति। स्मापीति ण्यन्ताण्णौ प्रथमणेर्लोपे स्मापि इत्यस्माच्छतृप्रत्यये शपि णेर्गुणे अयादेशे विस्मापयन्निति भवतीत्यभिप्रेत्य आह—**तया सिंह इति**। प्रयोजककर्तरि तृतीया। आत्मनेपदं भीस्मिप्रकृतिकण्यन्तादेव, नतु ण्यन्तप्रकृतिकण्यन्तादिति भावः। **स्फायो वः**। णाविति शेषपूरणम्। 'अर्तिह्री'त्यतस्तदनुवृत्तेरिति भावः। **शदेरगतौ तः**। 'अर्तिह्री'त्यतो णावित्यनुवृत्तिं मत्वाह—**शदेर्णाविति**। **तोऽन्तादेश इति**। तकार इत्यर्थः। अकार उच्चारणार्थः। **रुहः पो**। णाविति शेषपूरणम्। **क्रीङ्जीनां णौ**। 'डु क्रीञ् द्रव्यविनिमये, 'इङ् अध्ययने', 'जि जये' एषां द्वन्द्वः। **एच आत्वमिति**। 'आदेच उपदेशे' इत्यतस्तदनुवृत्तेरिति भावः। **क्रापयति जापयतीति**।

शे.]**सूत्रे इति**। **भी ई इति**। स्थानिवत्सूत्रे भाष्ये स्पष्टमेतत्। **नित्यं स्म**। हेतुभय इति वर्तते। भय इति धात्वर्थोपलक्षणं, तदाह—**हेतोः स्मय इति**। **भाययतीति**। द्वितीयोऽपि तालव्यान्तस्थाः। **कथन्तर्हि विस्मापयन्निति**। आत्वं कृतमात्मनेपदञ्च नेत्यत्र बीजाऽभाव इति प्रश्नः। उभौ तालव्ययकारावेवेति न दोष इत्युत्तरम्। **यद्वेति**। आत्मनेपदं भीस्मिप्रकृतिकण्यन्तादेवेति न ण्यन्ताण्णाविति भावः। **णौ च सं**। अत्राधिकृतमार्द्धधातुक इति, णाविति च विषय-

सन्परे चङ्परे च णौ इङो गाङ्वा स्यात्। अध्यजीगपत्। अध्यापिपत्। **सिध्यतेरपारलौकिके**।६।१।४९। ऐहलौकिकेऽर्थे विद्यमानस्य सिध्यतेरेच आत्वं स्याण्णौ। अन्नं साधयति। निष्पादयतीत्यर्थः। अपारलौकिके किम्?। तापसः सिध्यति। तत्त्वं निश्चिनोति। तं प्रेरयति-सेधयति तापसं तपः। **प्रजने वीयतेः** ।६।१।५५। अस्यैच आत्वं वा स्याण्णौ प्रजनेऽर्थे। वापयति वाययति वा गाः पुरोवातः। गर्भं ग्राहयतीत्यर्थः। **'ऊदुपधाया गोहः'**। गूहयति। **दोषो णौ** ।६।४।९०। 'दुष' इति सुवचम्। दुष्यतेरुपधाया ऊत्स्याण्णौ। दूषयति। **वा चित्तविरागे** ।६।४।९१ विरागोऽप्रीतता। चित्तं दूषयति दोषयति वा कामः। **'मितां ह्रस्वः'**। घटादौ चुरादौ

---

त.]स्थानिवद्भावो, निषेधो वा शङ्क्यः,यत्राऽभ्यासोत्तरखण्डे आद्योऽजवर्णोऽस्ति तत्रैव स्थानिवद्भावो,निषेधो वेत्युक्तत्वात्। इह तु गाङः पूर्वं सति हि द्वित्वे 'अजादेर्द्वितीयस्य' इति णिच एव द्वित्वं भवेत्तत्श्चङ्परणिञ्निमित्तो गाङ्, ततश्च प्रक्रियायां परिनिष्ठितरूपे वा अवर्णवदुत्तरखण्डं दुर्लभं, कीर्तयतिसाम्यादिति नोक्तशङ्कावकाशः। **अध्यापिपदिति**। पिशब्दस्यात्र द्वित्वम्। **सिध्यतेरपार**। श्यना निर्देशाद्भौवादिकस्याऽग्रहणम्। **तत्त्वं निश्चिनोतीति**। तत्त्वनिश्चयश्चात्मविषयकः। स च परलोके उपयुज्यते। **प्रजने**। 'वीयते'रिति वी गतिप्रजनादौ,आदादिकस्य यका निर्देशः। अत्र केचिदुत्प्रेक्षयन्ति-वीतेरिति वक्तव्ये यका निर्देशाद्व्येञोऽपि ग्रहणम्, तस्यापि यकि संप्रसारणे वीधातुना समानरूपत्वात्। अतो द्वयोरपि प्रजनेऽर्थे आत्वं वा स्यात्। तत्र आत्वे, तदभावे च यद्यपि व्येञः व्याययतीति रूपं तुल्यं, 'शाच्छासे'ति पुकोऽपवादतया युग्विधानात्, तथापि णिजन्तात्क्विपि-व्याः व्यौ व्याः। आत्वाऽभावपक्षे व्यैः व्यायौ व्याय इत्यस्ति विशेषः। विभाषाविधानसामर्थ्यात्पक्षेऽपि 'आदेच उपदेशेऽशिती'ति न प्रवर्तते। अनेकार्थत्वाच्च धातूनां व्ययतेरपि प्रयोजनोऽर्थ इति। **दोषो णौ**। दुष वैकृत्ये। दिवादिः। णौ किम्?। दोषः। **चित्तमिति**। 'चिती संज्ञाने' इत्यस्मात् क्तः। **दूषयति दोषयति वेति**। चित्तं दुष्यति। स्नानसन्ध्यादौ विरक्तं भवति। तत्प्रयुङ्क्ते इत्यर्थः। **जृणातेस्त्विति**।

---

बा.]आत्वे पुक् लुङि अचिक्रपत् अजीजपत्। **अध्यापयतीति**। इङ आत्वे पुकि रूपम्।अधि इ इ अ त् इति स्थिते। **णौ च संश्चङोः**।विषयसप्तमीयमित्याकरे स्पष्टम्। णौ विवक्षिते इति लभ्यते। 'इङश्चे'त्यत इङ इति, 'गाङ् लिटी'त्यतो गाङिति, 'विभाषा लुङ्लृङो'रित्यतो विभाषेति चानुवर्तते। तदाह-**सन्परे चङ्परे चेत्यादि**। सन्परे चङ्परे च णौ विवक्षिते इत्यर्थः। **अध्यजीगपदिति**। णौ इङो गाङादेशे पुकि उपधाह्रस्वे अधि गप् इ अ त्. स्थिते गप् इत्यस्य द्वित्वे हलादिशेषे अभ्यासह्रस्वे सन्वत्त्वादित्वे दीर्घे अभ्यासचुत्वे रूपम्। नच 'द्वित्वे कार्ये णावजादेशो ने'ति द्वित्वात् प्रागगाङादेशनिषेधः शङ्क्यः, अभ्यासोत्तरखण्डे अवर्णसत्त्व एव तन्निषेधप्रवृत्तेरुक्तत्वात्। द्वित्वे कार्ये गाङादेशस्य निषेधे सति गाङः पूर्वम् 'अजादेर्द्वितीयस्ये'ति णिच एव द्वित्वे सति प्रक्रियायां परिनिष्ठिते वा धातोरुत्तरखण्डेऽवर्णाऽभावादिति भावः। **अध्यापिपदिति**। गाङभावे 'क्रीङ्जीनां णौ' इत्यात्वे पुकि अधि आ प् इ अ त् इति स्थिते 'पी'त्यस्य द्वित्वे रूपमिति भावः। **सिध्येतरपारलौकिके**। 'आदेच उपदेशे' इत्यस्मादादेच इति, 'क्रीङ्जीना'मित्यस्माण्णाविति चानुवर्तते। तदाह-**ऐहलौकिके इत्यादि**। **अन्नमिति**। तन्निष्पादनं तृप्त्यर्थत्वादैहलौकिकमिति भावः। **तत्त्वमिति**। आत्मस्वरूपमित्यर्थः। **सेधयति तापसं तप इति**। तत्त्वं निश्चाययतीत्यर्थः। आत्मतत्त्वनिश्चय आमुष्मिकफलक इति भावः। **प्रजने वीयतेः**। 'आदेच उपदेशे' इत्यस्मादादेच इति, 'चिस्फुरो'रित्यतो णाविति, 'विभाषा लीयतेः' इत्यतो विभाषेति चानुवर्तते। तदाह-**अस्यैच इत्यादि**। 'वीयते'रिति न श्यना निर्देशः, 'वी गतिप्रजनस्थानार्जनोपार्जनेषु' इत्यस्य लुग्विकरणस्थत्वात्। किंतु यका निर्देशोऽयम्। तेन व्येञोऽपि ग्रहणं, तस्यापि संप्रसारणे वीधातुना तुल्यत्वादिति केचित्। वस्तुतस्तु व्येञो न ग्रहणं, तस्य प्रजनार्थकत्वाऽभावात्, तस्य णौ 'शाच्छासे'ति पुगपवादयुग्विधानेन व्याययतीति रूपे विशेषाऽभावाच्चेति शब्देन्दुशेखरे प्रपञ्चितम्। **गर्भं ग्राहयतीति**। पुरोवातकाले गावो गर्भं गृह्णन्तीति प्रसिद्धिः। अथ 'गुहू संवरणे' इत्यस्य गुणनिमित्तेऽजादौ प्रत्यये परे उपधाया ऊत्त्वविधिं स्मारयति-**ऊदुपधाया गोह इति**। **गूहयतीति**। लघूपधगुणापवाद ऊत्त्वमिति भावः। **दोषो णौ**। 'ऊदुपधाया' इत्यनुवर्तते। 'दुष वैकृत्ये' इति श्यन्विकरणः। तस्य कृतलघूपधगुणस्य निर्देशः। ततश्च गुणविषयकमेवेदम्। **दुष्यतेरुपधाया ऊत्स्यादिति**। 'णा'विति शेषः। **दूषयतीति**। लघूपधगुणापवाद ऊत्। 'दुषो णा'वित्येव सुवचम्। **वा चित्तविरागे**। ऊदुपधाया इति, दोषो णाविति चानुवर्तते। चित्तविरागे दुष उपधाया ऊद्वा स्याण्णाविति फलितम्। विरागपदस्य विवरणम्-**अप्रीततेति**। इच्छाविरह इत्यर्थः। **चित्तमिति**। चित्तं दुष्यति। स्नानसन्ध्यावन्दनादिनित्यकर्मसु विरक्तं भवति। तत्प्रयो-

---

शे.]सप्तमीति स्पष्टमाकरे। तत्रादेशस्य णिवृद्धिनिमित्तकत्वेऽपि गाङो द्वित्वे कार्ये 'णावच आदेशो ने'ति न प्रवर्त्तते। सति हि तस्मिन् 'अजादेर्द्वितीयस्ये'ति णिज एव द्वित्वे उत्तरखण्डेऽवर्णपरत्वाऽभावात्, अस्योवर्णादेशत्वाऽभावाच्च। **प्रजने वीयतेः**। नाऽयं श्यन्, आदादिकत्वात्। यका निर्देशस्त्वदृष्टार्थः। व्येञो ग्रहणार्थन्तु न, तस्य प्रजने वृत्तौ माना-

च मित उक्ताः। घटयति । 'जनीजॄष्'। जनयति । जॄष्-जरयति । जॄणातेस्तु जारयति ।* **रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः ।** मृगरमणमाखेटः। रजयति मृगान् । मृगेति किम् ? । रञ्जयति पक्षिणः । रमणादन्यत्र तु-रञ्जयति मृगांस्तृणदानेन।चुरादिषु ज्ञपादिश्चिञ्। 'चिस्फुरोर्णौ' इति वा आत्वम् । चपयति चययतीत्युक्तम् । चिनोतेस्तु चापयति।चाययति । स्फारयति । स्फोरयति । अपुस्फरत्।अपुस्फुरत्। **उभौ साभ्यासस्य** ८।४।२१। साऽभ्यासस्याऽनितेरुभौ नकारौ णत्वं प्राप्नुतो निमित्ते सति । प्राणिणत् । **णौ गमिरबोधने** ।२।४।४६। इणो

त.]अपित्त्वादस्य मित्त्वं नेति भावः । **आखेटकमिति** । मृगयेत्यर्थः। **रजयतीति** । रजन्ति मृगाः, ग्रहणमरणाद्यनुकूलव्यापारविषया भवन्ति, तान्मृगांस्तादृग्व्यापारविषयान्करोतीत्यर्थः । **ज्ञपादिश्चिञिति** । तेन मित्त्वाद्ध्रस्व इति भावः । स्वादिगणस्थस्य तु मित्त्वं नेत्युदाहरति-**चापयतीत्यादि** । **अपुस्फुरदिति** । द्वित्वे कर्तव्ये अजादेशस्य स्थानिवत्त्वान्निषेधाद्वा 'स्फु' रित्युकारवतो द्वित्वं, ततः 'चिस्फुरोर्णौ' इति वा आत्वम् । **उभौ सा** । 'रषाभ्या'मिति सूत्रे 'न' इति षष्ठ्यन्तं प्रथमाद्विवचनान्ततया विपरिणम्यत इत्याह-**उभौ नकाराविति**। ननु 'साऽभ्यासस्ये'त्युक्त्या उभयोरपि भविष्यतीत्युभौग्रहणं व्यर्थमिति चेत् ,अत्राहुः-साहित्यमात्रं विवक्षितं न तुल्ययोग इत्यभ्युपगमे द्वयोर्युगपन्न सिध्येदित्युभौग्रह-

बा.]जयति काम इत्यर्थः।**मितां ह्रस्व इति**। णौ मितामुपधाया ह्रस्व इति प्राग्व्याख्यातमपि स्मारयति। **जनीजषिति**। इदमपि व्याख्यातं स्मार्यते । **जॄणातेस्त्विति** । श्नाविकरणस्य अषित्त्वान्न मित्त्वमिति भावः । **रञ्जेर्णाविति** । णेः कित्त्वाऽभावादनिदितामित्यप्राप्तौ वचनम् । 'मृगरमण'पदस्य विवरणम्—**आखेटकमिति** । मृगयेत्यर्थः । **रजयति मृगानिति** । 'रञ्ज रागे' शब्विकरणः । 'रञ्जेश्चे'ति शपि नलोपः । 'रजन्ति मृगाः' । ग्राह्या भवन्ति । तान् मृगान् तादृग्व्यापारविषयान् करोति मृगवधासक्तो राजादिरित्यर्थः । अत्र नकारलोपः । **रञ्जयति पक्षिण इति** । 'पक्षिणो रजन्ति' । ग्राह्या भवन्ति । तान् तादृग्व्यापारविषयान् करोतीत्यर्थः । पक्षिग्रहणमिदं न मृगयेति मन्यते । **रञ्जयति मृगांस्तृणदानेनेति** । घातको मृगान् रक्षणाय तृणसमर्पणेन बन्धनस्थानगान् करोतीत्यर्थः। **चुरादिष्विति** । चुरादिषु ज्ञपादिपञ्चकान्तर्गतश्चिञ्धातुरस्ति । तस्मात्स्वार्थणिचि कृते 'चिस्फुरो'रित्यात्वपक्षे पुकि मित्त्वादुपधाह्रस्वे चपयतीति रूपम् । आत्त्वाऽभावे तु वृद्धावायादेशे मित्त्वाद्ध्रस्वे चययतीति रूपमुक्तं चुरादावित्यर्थः। **चिनोतेस्त्विति** । श्नुविकरणस्य चिञ्धातोर्हेतुमण्णौ 'चिस्फुरो'रित्यात्त्वे पुकि मित्त्वाऽभावाद्ध्रस्वाऽभावे 'चापयती'ति रूपम्। आत्त्वाऽभावे वृद्धावायादेशे मित्त्वाऽभावाद्ध्रस्वाऽभावे चाययतीति रूपमित्यर्थः । **स्फारयति-स्फोरयतीति** । 'चिस्फुरो'रित्यात्त्वविकल्पः । **अपुस्फरत्-अपुस्फुरदिति** । स्फुर् इ अ त् इति द्वित्वे कर्तव्ये णावच आदेशस्य निषिद्धतया 'स्फु'रित्युकारवतो द्वित्वे ततश्चिस्फुरोर्णावित्युत्तरखण्डे आत्त्वविकल्पः । आत्त्वपक्षे उपधाह्रस्व इति भावः । **उभौ साभ्यासस्य** । अनितेरित्यनुवर्तते । 'अन प्राणने' इति धातोरित्यर्थः । 'रषाभ्यां नो णः' इत्यधिकृतम् । 'उपसर्गादसमासेऽपी'त्यत उपसर्गादित्यनुवर्तते । तदाह- **साभ्यासस्येत्यादिना** । **निमित्ते सतीति** । उपसर्गस्थे रेफे सतीत्यर्थः। **प्राणिणदिति**। प्र अन् इ अ त् इति स्थिते 'अनिते'रिति णत्वस्याऽसिद्धत्वान्नीत्यस्य द्वित्वे उत्तरखण्डे नकारस्याभ्यासनकारेण व्यवधानाण्णत्वे अप्राप्ते उभयोर्नकारयोरनेन णत्वमित्यर्थः।नच 'पूर्वत्राऽसिद्धीयमद्विर्वचने' इति निषेधाद्द्वित्वे कर्तव्ये णत्वस्याऽसिद्धत्वविरहेण परत्वात्कृते णत्वे ततः पश्चाद्द्वित्वे 'प्राणिण'दिति सिद्धमिति वाच्यम्,अत एव 'पूर्वत्राऽसिद्धीयमद्विर्वचने' इत्यस्याऽनित्यत्वविज्ञानात् । तेन 'ऊर्णुनावे'त्यत्र णत्वात् पूर्वमेव नुशब्दस्य द्वित्वे कृतेऽभ्यासोत्तरखण्डे णत्वाऽभावसिद्धिरित्यन्यत्र विस्तरः। **णौ गमिरबोधने** । 'इणो गा लुङी'त्यत इण इत्यनुवर्तते । तदाह-**इणो गमिरिति** । मकारा-

शे.]ऽभावात् ,तस्य 'शाच्छासे'ति पुगपवादयुको विधानेन रूपे विशेषाऽभावाच्च।'वचिस्वपी'त्यादिसंप्रसारणयोर्ण्यन्तेभ्यः काम्यच्सूत्रस्थयोः संप्रसारणविधायके विहितविशेषणपक्ष-तदितरपक्षयोः फलैक्याय क्विबभावस्य सत्त्वाच्च । एतेन ण्यन्तात्क्विप्यात्वपक्षे 'व्याः' 'व्यौ' इत्यादिरूपाणि, तदभावपक्षे 'व्यैः' 'व्यायौ' इत्यादिरूपाणीति विशेष इत्यपास्तम् , विचोऽसार्वत्रिकत्वाच्च । अत एव भाष्ये 'विभाषा लीयते'रित्यत्रेवाऽत्र सामान्यग्रहणार्थत्वं नोक्तमित्यलम् । **वा चित्त** । णाविति वर्त्तते । प्राप्तविभाषेयम् । तेनेह न-चित्तस्य दोषः । **जॄणातेस्त्विति** । तस्य षित्त्वाऽभावेन मित्त्वाऽभावादिति भावः । **आखेट इति** । अनेन पक्ष्याखेटेऽपि 'रजयति पक्षिणः' इत्येवेति सूचयति । **अन्ये तु** 'रजयाञ्चकार विरजाः स मृगा'नित्यादिप्रयोगान्मृगरमणं यथाश्रुतमेव । अत एव भाष्ये 'मृगरमणे इति किमर्थं, 'रञ्जयति वस्त्राणी'ति प्रत्युदाहृतमित्याहुः । **ज्ञपादिरिति** । तेन मित्त्वाद्ध्रस्वः । चिनोतेस्तु 'चिस्फुरो'रित्यात्वे पुकि तस्याऽमित्त्वान्न ह्रस्वः । पक्षे तालव्यौ द्वौ यकारौ । इदञ्चुरादिलिखित-**'परे तु'**-मते बोध्यम् । **अपुस्फरदिति** । आत्वस्य णौ कृतत्वेन स्थानिवत्त्वेन स्फरित्यस्य द्वित्वमिति भावः। 'साऽभ्यासस्ये'त्यनितेर्विशेषणं व्याख्यानात्तदाह-**साभ्यासस्यानितेरिति**। अनेनो-

गमिः स्याण्णौ । गमयति । बोधने तु–प्रत्याययति । *इण्वदिकः । अधिगमयति । 'हनस्तोऽचिण्णलोः' । 'हो हन्ते'रिति कुत्वम् । घातयति॥ ईर्ष्यंयति।*ईर्ष्यतेस्तृतीयस्येति वक्तव्यम् । तृतीयव्यञ्जनस्य, तृतीयैकाच इति वाऽर्थः । आद्ये षकारस्य द्वित्वं वारयितुमिदम् । द्वितीये तु 'अजादेर्द्वितीयस्ये'त्यस्याऽपवादतया सन्नन्ते

---

त.]णम् । न च तुल्ययोगविवक्षायां 'तेन सहेति तुल्ययोगे' इति समासोऽत्र न स्यादिति शङ्क्यं,'तुल्ययोगग्रहणं प्रायिकं, सकर्मकः सलोमक' इत्युक्तत्वादिति । कैयटे तु–'उभावित्यस्मिन्नसति साभ्यासस्याऽनितेर्णो भवतीत्युच्यमाने वचनसामर्थ्याच्च 'पूर्वत्रासिद्धीयम द्विर्वचने' इत्यनाश्रीयमाणे अकृतणत्वस्य द्विर्वचने कृते अनन्तरस्याऽनितेरिति पूर्वेणैव णत्वस्य सिद्धत्वाद्व्यवहितनकारार्थमिदं णत्वं स्यात्, अनन्तरस्य तु तक्रकौण्डिन्यन्यायेन न स्यादिति उभावित्युच्यते' इति स्थितम् । साभ्यासस्येति किम् ?। प्राण् नमति। असत्यस्मिन् 'अनिते'रिति षष्ठी संबन्धसामान्ये स्यात्,ततश्चानन्तर्यादिसंबन्धोऽपि गृह्येत । सति त्वस्मिन्नवयवावयविभावसंबन्धो लभ्यते । अतोऽर्थवत्साभ्यासग्रहणम् । यदि त्विष्टानुरोधेनाऽनितेरिति षष्ठी अवयवसंबन्धे व्याख्यायते, अनितेश्च नकारद्वयाऽभावात्सामर्थ्याद्द्विर्वचनं प्राप्त एवाऽनितिर्गृह्येत तदा साभ्यासस्येति मन्दप्रयोजनम् । इह पूर्वं णत्वं कृत्वा द्वित्वे कृते प्राणिणदित्यादिसिद्धावयमारम्भः 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्याऽनित्यत्वज्ञापनार्थः । तेन ऊर्णुनावेत्यत्र णत्वात्पूर्वमेव नुशब्दस्य द्वित्वादभ्यासोत्तरखण्डे णत्वाऽभावः सिद्धः । **प्रत्याययतीति**। प्रतिपूर्वस्येणो ज्ञानार्थता । लुङि–प्रत्यायियत् । इह इणो णिचि कृते 'इणो य'णिति यणं बाधित्वा परत्वाद्वृद्धिः । न च 'ओः पुयण्जी'ति ज्ञापकात्पूर्वं द्वित्वं, पश्चाद्वृद्धिरिति शङ्क्यम्, 'अजादेर्द्वितीयस्ये'ति णिचो द्वित्वेऽभ्यासोत्तरखण्डस्याऽवर्णपरत्वाऽभावात् । **इति वाऽर्थ इति** । व्याख्यानद्वयमप्याकराख्ढमिति भावः । **षकारस्येति**। रेफस्य तु 'न न्द्राः' इत्यनेन निषेधादिति भावः । **द्वितीये त्विति** । 'तृतीयस्यैकाच' इति पक्षे । **सन्नन्ते प्रवर्तत इति** । वचनसामर्थ्यादिति

---

बा.]दिकार उच्चारणार्थः । **गमयतीति** । प्रापयतीत्यर्थः। **प्रत्याययतीति** । बोधयतीत्यर्थः। लुङि–प्रत्यायियत् । इणो णिचि 'इणो य'णिति यणं बाधित्वा परत्वाद्वृद्धावायादेशे आय् इ अ त् इति स्थिते 'यी'त्यस्य द्वित्वम् । नच द्वित्वे कार्ये णावजादेशस्य निषिद्धत्वाद्वृद्धेर्निषेधः शङ्क्यः, 'अजादेर्द्वितीयस्य' इति णिचो द्वित्वे उत्तरखण्डे अवर्णाऽभावात् ।

'इक् स्मरणे' इत्यस्य इण्वत्त्वमुक्तं स्मारयति–**इण्वदिक इति। अधिगमयतीति।** स्मारयतीत्यर्थः। हन्तेर्ञिति णिति च तकारादेशमुक्तं णौ स्मारयति–**हनस्तोऽचिण्णलोरिति। कुत्वमिति।** 'हस्ये'ति शेषः। उपधावृद्धिं मत्वाह–**घातयतीति** । लुङि अजीघतत् । **ईर्ष्यंयतीति** । ईर्ष्यतेर्णौ रूपम् । **वक्तव्यमिति** । 'द्वित्व'मिति शेषः । **इति वाऽर्थ इति**। 'न न्द्राः' इति सूत्रभाष्ये स्पष्टमिदम् । **आद्ये इति**। 'तृतीयस्य व्यञ्जनस्ये'ति पक्षे इत्यर्थः । **षकारस्येति** । अन्यथा इर्ष्य् इ अ त् इति स्थिते 'न न्द्राः' इति रेफं वर्जयित्वा षकारसहितस्य 'ष्यि' इत्यस्य द्वित्वं स्यात् । ततश्च उत्तरखण्डे णिलोपे ऐर्षिष्यदिति स्यात् । 'ऐर्ष्यिदितीष्टं न स्यात् । अतस्तृतीयव्यञ्जनस्येत्युक्तम् । एवंच यकारद्वित्वे णिलोपे संयुक्तद्वियकारमिष्टं सिध्यतीत्यर्थः । **द्वितीये इति** । 'तृतीयैकाच' इति व्याख्याने इत्यर्थः । **सन्नन्ते प्रवर्तते इति** । 'उक्तवार्तिक'मिति शेषः । सनि इटि ईर्ष्य् इस इति स्थिते ईर्ष्य् इति प्रथमैकाच्, 'ष्यिस्' इति द्वितीयैकाच्, स इति तृतीयैकाजिति स्थितिः । तत्र तृतीयैकाचः संभवात्तस्य द्वित्वविधिः, अन्यथा 'अजादेर्द्वितीयस्ये'ति

---

शे.]त्तरखण्डे एव तत्तद्धातुत्वमिति सूचयति।एतेन प्राधान्यान्नकारविशेषणत्वेऽभ्याससहितनस्येत्यर्थे रमागमेन रोपधयोरिवाऽभ्यासनिवृत्तावुभौग्रहणान्नस्यैव स्थाने णद्वये 'प्राण्णदि'ति स्यादित्यपास्तम् । अत एव प्रकृतसूत्रे भाष्ये उक्तं–'साभ्यासस्य द्वयोरिष्ट'मिति । 'अनिते'रित्यनेन तु न सिद्धिः, अभ्यासस्याऽनर्थकत्वादुत्तरखण्डस्य व्यवहितत्वात् । अत एवेदं सूत्रमभ्यासेनेति, अभ्यासस्येति वा नोक्तं, किन्तु साभ्यासस्येत्येवमुक्तमिति तदाशयः । **परे तु** साभ्यासाऽनितिसम्बन्धिनकारयोरुभौ णकारौ भवत इति वृत्तिरुचिता। न चाऽभ्यासस्य 'अनिते'रित्यनेन सिद्धिः, तस्याऽनर्थकत्वात्। अनितेरवयवस्य, तत्सम्बन्ध्यवयवस्य चेत्यर्थे तु तदनुवादकमेवेदं, तथाऽर्थाऽभावे तु विधायकमेवेदमुभयोर्णकारयोः। अत एव 'एकः पूर्वपरयो'रिति सूत्रे भाष्ये उक्तम्–'उभौग्रहणसामर्थ्याद्द्वावादेशौ भवतः' इति । कैयटश्च–'साभ्यासस्याऽनितेरुभौ णकारौ भवतः' इत्याह। एवमेव युक्तं, न तूभौ नकाराविति । 'न' इत्यस्य षष्ठ्यन्तस्यैवाधिकारेणोभयोरित्यापत्तेः, अत्पूर्वस्येतिवत्। 'उभौ'ग्रहणन्त्वादेशद्वयार्थम् । अन्यथा 'उत्रे'त्यादूत्रत्सरूपप्रवृत्त्यैवोभयोर्निवृत्तौ स्थान्यभावादेव पुनरप्रवृत्तौ आदेशद्वयलाभो न स्यादित्याहुः। 'पूर्वत्रासिद्धीयमद्वित्वे' इत्युक्तेः पूर्वं णत्वे द्वित्वेन सिद्धावपि क्वचित्तदप्रवृत्तिज्ञापनार्थमिति बोध्यम्। **निमित्ते सतीति** । तच्चोपसर्गरेफः । **णौ गमि** । णाविति विषयसप्तमी । 'अत्र **बोधनं**=शब्दजं ज्ञानं नान्य'दिति 'इक्'धातो माधवः । **ईर्ष्यतेरिति** । ईर्ष्यतिप्रकृतिकप्रत्ययान्तधातोरित्यर्थः । स च ण्यन्तः, सन्नन्तश्च, विनिगमनाविरहात् । ईर्ष्यतेरामः सत्त्वेन लिटोऽभावात्, अन्यत्र द्वित्वाऽभावाच्चेति दिक् । **इति वार्थ इति** । 'न न्द्राः' इति

प्रवर्तते । ऐर्ष्यियत् ऐर्ष्यिष्यत् द्वितीयव्याख्यायां णिजन्ताच्चङि षकार एवाभ्यासे श्रूयते, हलादिः शेषात् द्वित्वं तु द्वितीयस्यैव, तृतीयाऽभावेन प्रकृतवार्तिकाऽप्रवृत्तेः ॥ निवृत्तप्रेषणाद्धातोर्हेतुमण्णौ शुद्धेन तुल्योऽर्थः । तेन 'प्रार्थयन्ति शयनोत्थितं प्रिया' इत्यादि सिद्धम् । एवं सकर्मकेषु सर्वेषूह्यम् । इति ण्यन्तप्रक्रिया ।

## अथ सन्नन्तप्रक्रिया ।

**धातोः कर्मणः समानकर्तृकादिच्छायां वा ।३।१।७। इषिकर्मण इषिणैककर्तृकाद्धातोः सन्-**

त.] भावः । **ऐर्ष्यियदिति** । 'तृतीयव्यञ्जनस्ये'ति पक्षे इदमुदाहरणम् । 'ऐर्षिष्य'दिति रूपस्याऽसाधुत्वमाशङ्क्योपपादयति—**द्वितीयव्याख्यायामित्यादिना** । **द्वितीयस्यैवेति** । 'एकाच' इति शेषः । **अप्रवृत्तेरिति** । किंतु सन्नन्त एव प्रवर्तते । तत्र ह्यनुपदमीर्ष्यिषिषतीत्युदाहरिष्यति । 'अर्थ उपयाच्ञायां'मित्यस्य आगर्वीयत्वादात्मनेपदेन भाव्यमिति 'प्रार्थयन्ती'ति माघकाव्यादिप्रयोगोऽसाधुरित्याशङ्क्य तत्समर्थनायाह—**निवृत्तप्रेषणादिति** । उक्तं च—'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते' इति । **तेनेत्यादि** । 'प्रार्थनां कुर्वन्ती'ति विवक्षितार्थे प्रयोगः सिद्ध इति भावः । केचित्तु परस्मैपदसिद्ध्यर्थं—प्रार्थनं प्रार्थः, तं कुर्वन्ति प्रार्थयन्तीति व्याचक्षते, तदसत् । धातुसंज्ञाप्रयोजकप्रत्यये चिकीर्षिते उपसर्गाणां पृथक्करणस्य वक्ष्यमाणतया 'अर्थवेद'त्यापुगागमस्य दुर्वारत्वात् । इति ण्यन्तप्रक्रिया ।

**धातोः कर्मणः** । **इषिकर्मण इत्यादि** । इच्छायामिति श्रुतत्वात्कर्मत्वं कर्तृत्वं च तदपेक्षमेव गृह्यत

बा.] स्यादिति भावः । **ऐर्ष्यियदिति** । यकारमात्रस्य द्वित्वे णिलोपे संयुक्तद्वियकारकं रूपम् । अथ द्वितीयव्याख्यायां रूपमाह—**ऐर्षिष्यदिति** । तदुपपादयति—**द्वितीयव्याख्यायामिति** । ण्यन्ताच्चङि ईर्ष्य् इ अ त् इति स्थिते 'न न्द्राः' इति निषेधाद्रेफं वर्जयित्वा 'अजादेर्द्वितीयस्ये'ति 'ष्यि' इत्यस्य द्वित्वं नतु यकारमात्रस्य, प्रथमव्याख्याने एव तृतीयव्यञ्जनस्येत्युक्तेः । तत्र 'ष्यि' इत्यस्य द्वित्वे कृतेऽपि अभ्यासे षकार एव हल् इकारशिरस्कः श्रूयते, नतु यकारोऽपीत्यर्थः । कुत इत्यत आह—**हलादिशेषादिति** । नतु तृतीयस्यैकाच द्वितीयव्याख्यायामिह द्वितीयस्यैकाचः कथं द्वित्वमित्यत आह—**द्वित्वं तु द्वितीयस्यैवेति** । 'एकाच' इति शेषः । कुत इत्यत आह—**तृतीयाभावेनेति** । ईर्ष्य् इ अ त् इत्यत्र ईर्ष्य् इति प्रथमैकाच्, ष्यि इति द्वितीयैकाच्, नतु चङि परे तृतीयैकाजस्ति । अतोऽत्र 'तृतीयैकाच' इति वार्तिकं न प्रवर्तते । तस्माद्द्वितीयस्यैव एकाचो द्वित्वमित्यर्थः । एवंच 'तृतीयस्यैकाच' इति वार्तिकं सन्नन्त एव प्रवर्तते । ईर्ष्येतेरामः सत्त्वेन ततः परस्य च्लेरोऽभावादिति बोध्यम् । ननु 'प्रार्थयन्ति शयनोत्थितं प्रियाः' इति माघकाव्ये प्रार्थयन्तीति न चौरादिकस्वार्थिकणिजन्तं, तस्याऽऽगर्वीयतया आत्मनेपदप्रसङ्गात् । नापि हेतुमण्ण्यन्तं, स्वाभीष्टं याचते इत्यर्थे तदसंभवात् । नहि प्रयोजकव्यापाराऽभावे तत्प्रवृत्तिरस्तीत्यत आह—**निवृत्तेति** । निवृत्तं प्रेषणं यस्मात् स निवृत्तप्रेषणः । संप्रति अविवक्षितप्रेषण इत्यर्थः । तस्माद्धातोर्भूतपूर्वगत्या प्रेषणमादाय हेतुमण्णौ कृते शुद्धेन णिज्विहीनेन धातुना तुल्योऽर्थः प्रतीयते इत्यर्थः । तदुक्तं—'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते' इति । इदं च 'णेरणौ' इति सूत्रे भाष्ये स्पष्टम् ।

### इति हेतुमण्णिच्प्रक्रिया ।

अथ सन्प्रक्रिया निरूप्यन्ते । **धातोः कर्मणः** । 'गुप्तिज्किद्भ्यः' इत्यतः सन्नित्यनुवर्तते । इच्छायाः श्रुतत्वात्तां प्रत्येव कर्मत्वं विवक्षितम् । तथा समानकर्तृकत्वमपि इच्छानिरूपितमेव विवक्षितम् । कर्मेति स्ववाचकशब्दद्वारा धातौ सामानाधिकरण्येनान्वेति । एवंच इच्छासमानकर्तृकत्वे सति इच्छाकर्मीभूतो यो व्यापारस्तद्वाचकाद्धातोरिच्छायां सन् वा स्यादिति फलति । तदाह—**इषिकर्मण इत्यादि** । इषिरिच्छा । इषिणा एककर्तृकत्वादिषेकर्मीभूतव्यापारवाचकाद्धातोरित्यर्थः । ननु समानकर्तृकादित्युक्त्यैव धातोरिति लब्धम्, धात्वर्थव्यापाराश्रयस्यैव कर्तृत्वादित्यत आह—**धातोरिति** । धातोरिति विहितस्यैव प्रत्ययस्यार्द्धधातुकत्वं, नतु धातोः परस्य । अन्यथा जुगुप्सते इत्यत्र धातोरित्यविहितस्यापि 'गुप्तिज्किद्भ्य' इति सन आर्द्धधातुकत्वापत्तौ लघूपधगुणापत्तेरिति भावः । अस्य सन आर्द्धधातुकत्वे फलमाह—**इडिति** । **द्वित्वमिति** । 'सन्यङो'रित्यनेनेति भावः । अभ्यासस्य इत्वविधिं स्मारयति—**सन्यत इति** । **पठितु**

शे.] सूत्रे भाष्ये स्पष्टमेतत् । **षकारस्येति** । रेफस्य तु 'न न्द्राः' इत्यनेन वारितमिति भावः । **द्वितीयस्यैवेति** । 'अजादेर्द्वितीयस्ये'त्यनेन । रेफस्य तु 'न न्द्राः' इति निषेध इति भावः । इहोपन्यासस्तु आद्यव्याख्याने उपयोगादिति बोध्यम् ।

### इति ण्यन्तप्रक्रिया ।

**धातोः क** । **इषिकर्मण इति** । कर्मादिकं चाऽर्थद्वारकं धातोर्विशेषणम् । एवञ्चेषिकर्मवाचकादित्यर्थः ।

प्रत्ययो वा स्यादिच्छायाम् । धातोर्विहितत्वादिह सन आर्द्धधातुकत्वम् । इट् । द्वित्वम् । '**सन्यतः**' । पठितु-मिच्छति पिपठिषति । कर्मणः किम् ? । गमनेनेच्छतीति करणान्मा भूत् । समानकर्तृकात्किम् ? । शिष्याः पठन्त्वितीच्छति गुरुः। वाग्रहणात्पक्षे वाक्यमपि । '**लुङ्सनोर्घस्लृ**' । 'एकाच उपदेशे' इति नेट् । सस्य तत्वम्। अत्तुमिच्छति–जिघत्सति । 'ईर्ष्यतेस्तृतीयस्ये'ति यिसनोर्द्वित्वम् । ईर्ष्यियिषति । ईर्ष्यिषिषति । **रुदविद-मुषग्रहिस्वपिप्रच्छः संश्च**।१।२।८।एभ्यः सन् क्त्वा च कितौ स्तः। रुरुदिषति।विविदिषति । मुमुषिषति । **सनि ग्रहगुहोश्च** । ।७।२।१२। ग्रहेर्गुहेरुगन्ताच्च सन इण्न स्यात् । 'ग्रहिज्ये'ति संप्रसारणम् । सनः षत्वस्याऽसिद्ध-

---

त.]इति भावः। **पठितुमिच्छतीति** । एकनिष्ठा पाठगोचरा वर्तमानेच्छेत्यर्थः।**यिसनोरिति**। 'तृतीयव्यञ्जनस्ये'ति पक्षे यकारस्य द्वित्वं, 'तृतीयस्यैकाच' इति पक्षे तु सन इत्यर्थः । **रुदविद** । रुदसाहचर्याद्वेत्तेरेव ग्रहणम् । इह रुदविद-मुषाणां ग्रहणं 'रलो व्युपधा'दिति विकल्पे प्राप्ते, ग्रहेः 'न क्त्वा से'डिति निषेधात्क्त्वाया अप्राप्ते, स्वपिप्रच्छयोस्तु क्त्वः किस्वेऽपि सनः कित्त्वस्याऽप्राप्तौ वचनम् । रुदित्वा। विदित्वा। मुषित्वा। एतेषु गुणाऽभावः कित्त्वस्य फलम् । गृहीत्वा । सुप्त्वा । पृष्ट्वा । एतेषु संप्रसारणमपि फलम् । **सनि ग्रहगुहोश्च** । ग्रहेर्नित्यं, गुहेर्विकल्पेन प्राप्ते निषेधोऽयम् । **सनः षत्वस्याऽसिद्धत्वाद्भष्भाव इति** । कुत्वस्याऽसिद्धत्वाद्भष्भाव इत्येव सुवचम् । केचित्तु ढत्वे सति भष्भाव इत्य-ध्याहारेण योजयन्ति । तथा च जगृह् स इति स्थिते इणः परत्वेन सस्य षत्वं प्राप्तं, तस्याऽसिद्धत्वाड्ढत्वे भष्भावः। ततश्च कत्वे कवर्गात्परस्य षत्वमिति विधिक्रमः । अन्ये तु षत्वे ढत्वे च कृते पश्चाद्भष्भावे कर्तव्ये सकारपरत्वाऽभावाद्भष्भावो न स्यादित्याशङ्कायां सनः षत्वस्याऽसिद्धत्वादिति ग्रन्थः प्रवृत्त इति कार्याऽसिद्धपक्षावलम्बनेन व्याचक्षते। **जिघृक्षतीति**। गुहेर्जुघुक्षति । सूत्रे चकारात् 'श्र्युकः किती'त्यत उक इत्यनुकृष्यते । **उगन्तात्**–बुभूषति । लुलूषति । श्रयतिस्तु नाऽनुकृष्यते, तस्य 'सनीवन्तर्धे'ति विकल्पविधानात् । **किरश्च पञ्चभ्यः** । 'पञ्च'ग्रहणमुत्तरार्थं स्पष्टप्रतिपत्तये इहैव

---

बा.]**मिच्छतीति** । भावस्तुमुनर्थः। 'अव्ययकृतो भावे' इत्युक्तेः । धात्वर्थ एव भाव इत्युच्यते । तथाच पठितुमित्यस्य पठनक्रियैऽवार्थः । तस्मिन् पठने इच्छाकर्मत्वम्, इच्छासमानकर्तृकत्वं च सना गम्यते । तथाच स्वकर्तृकं पठनमिच्छती-त्यर्थे पिपठिषतीति शब्दो वर्तत इत्युक्तं भवति । अथ 'अद भक्षणे' इति धातोः सनि घस्लृभावं स्मारयति–**लुङ्सनो-र्घस्लृ इति** । घस् स इति स्थिते इटमाशङ्क्य आह–**एकाच इति नेडिति** । घस् स इति स्थिते आह–**सस्य तत्वमिति** । 'सः स्यार्द्धधातुके' इत्यनेनेति भावः । **जिघत्सतीति** । द्वित्वे अभ्यासजश्त्वचुत्वे इति भावः । **यसनोर्द्वित्वमिति** । 'तृतीयस्य व्यञ्जनस्ये'ति पक्षे ईर्ष्य् इस इत्यत्र यकारमात्रस्य द्वित्वे, सनः षत्वेसं युक्तद्वियकारं रूपमिति भावः । तदाह–**ईर्ष्यियिषतीति** । तथाच सन्नन्ते ईकाररेफषकारयकारद्वित्वेकारषकाराः । 'तृतीयस्यैकाच' इति पक्षे ईर्ष्य इ स इत्यत्र स इत्यस्य द्वित्वे अभ्यासेत्त्वे सकारद्वयस्यापि षत्वे रूपं मत्वा आह–**ईर्ष्यिषिषतीति** । अत्र तु सन्नन्ते ईकाररेफषकारयकारेकारषकारेकारषकाराऽकाराः । **रुदविद** । इका निर्देशात् संप्रसारणे गृहीति निर्देशः। स्वपीति इकारस्तु उच्चारणार्थः, न त्विका निर्देशः, सुपीति संप्रसारणप्रसङ्गात् । चकारात् 'मृडमृदगुधे'ति पूर्वसूत्रस्थं क्त्वेति समुच्चीयते । तदाह–**सन् क्त्वा चेति** । **किताविति** । 'असंयोगाल्लि'डित्यतस्तदनुवृत्तेरिति भावः । रुद-साहचर्याद्वेत्तेरेव ग्रहणमिति केचित् । अविशेषात्सर्वस्येत्यन्ये। 'हलन्ताच्चे'ति सिद्धे रुदविदमुषां ग्रहणं 'रलो व्युपधा'दिति विकल्पबाधनार्थम् । ग्रहेस्तु क्त्वायां 'न क्त्वा से'डिति निषेधबाधनार्थम् । स्वपिप्रच्छयोस्तु क्त्वायां कित्त्वेऽपि सनोऽप्राप्त-कित्त्वविधानार्थम् । रुरुदिषतीत्यादौ सनः कित्वाल्लघूपधगुणाऽभावः । **सनि ग्रहगुहोश्च** । चकारात् 'श्र्युकः किती'-त्यत उक इत्यनुकृष्यते, न तु श्रयतिः, तस्य 'सनीवन्तर्धे'ति विकल्पस्य वक्ष्यमाणत्वात् । 'नेड्वशि कृती'त्यतो नेडिति चानुवर्तते । तदाह–**ग्रहेरित्यादि** । ग्रहधातोर्नित्यमिटि प्राप्ते, गुहेरूदित्त्वाद्विकल्पे प्राप्ते वचनम् । **ग्रहिज्येति** । ग्रह् स इति स्थिते सनः कित्त्वात् 'ग्रहिज्ये'ति रेफस्य संप्रसारणमृकार इत्यर्थः । ननु गृह् स इति स्थिते हस्य ढत्वे भष्भावा-पेक्षया परत्वात्कत्वे सस्य षत्वे च कृते झषन्तत्वाऽभावे कथं भष्भाव इत्यत आह–**सनः षत्वस्येति** । कत्वस्या-

---

शे.]ननु कर्तृत्वस्य क्रियानिरूपितत्वात्समानकर्तृकादित्युक्त्या क्रियावाचकाद्धातोरेव भविष्यति, किं धातोर्ग्रहणेनेत्यत आह–**धातोरिति** । अत एव 'इको झ'लिति कित्त्वं सार्थकम् । **कर्मणः किमिति** । प्रत्ययवाच्येच्छाया नियतं कर्माकाङ्क्ष-तया तदाकाङ्क्षायां प्रत्यासत्त्या प्रकृत्यर्थकर्मिकायामेव विधानं भविष्यतीति प्रश्नः । प्रत्यासत्तिः सर्वैर्दुर्ज्ञेयेत्युत्तरम् । **समानकर्तृकात्किमिति**।प्रत्यासत्तिमाश्रित्य प्रश्नः।प्राग्वदेवोत्तरम् । **रुदविद** । लक्ष्यानुरोधिव्याख्यानाद्विदेः सर्वस्य ग्रहणमित्याहुः । **सनि ग्रह** । चकार उगनुकर्षणार्थः । अन्यथा 'बुभूषती'त्यादौ कित्त्वात्परत्वादिडेव स्यात्, कित्त्वा-ऽभावेन 'श्र्युकः' इत्यस्याऽप्रवृत्तेः । एकाजित्येव । 'जिजागरिषति' । ननु परत्वेन षत्वकत्वयोः कृतयोर्भष्भावो न स्यादत

त्वात्क्षभावः । जिघृक्षति । सुषुप्सति । **किरश्च पञ्चभ्यः** ।७।२।७५। कॄ गॄ दृङ् धृङ् प्रच्छ एभ्यः सन इट् स्यात् । पिपृच्छिषति । चिकरिषति । जिगरिषति । जिगलिषति । **अत्रेटो दीर्घो नेष्टः** । दिदरिषते । दिधरिषते । कथमुद्दिधीर्षुरिति ? । भौवादिकयोर्दृङ्धृङोरिति गृहाण । **इको झल्** ।१।२।९। इगन्ताज्झलादिः सन् कित्स्यात् । बुभूषति । दीङ्—दातुमिच्छति दिदीषते । एज्विषयत्वाऽभावात् 'मीनातिमिनोती'त्यात्वं न । अतएव 'सनि मीमे'ति सूत्रे माधातोः पृथङ्मीग्रहणं कृतम् । **हलन्ताच्च** ।१।२।१०। इक्समीपाद्धलः परो झलादिः सन् कित्स्यात् । गुहू—जुघुक्षति । बिभित्सति । इकः किम् ? । यियक्षते । झल्किम् ? । विवर्द्धिषते । हल्ग्रहणं जाति-

---

त.]कृतम्।एवं च प्रच्छधातोरनन्तरं गणशठस्थं दृत्करणं त्यक्तुं शक्यम्।अत्रत्य'पञ्चभ्य' इत्यनेनैव दृत्करणं यत्तदपाणिनीयमिति व्याख्येयमित्याहुः । केचित्तु-'भूषाकर्मकिरादिसना'मिति वार्तिके किरादिज्ञानार्थं दृत्करणमावश्यकमित्याहुः ।

**अत्रेट इति** । 'वृतो वे'ति प्राप्ते भाष्यकारेष्टिरियम्।**भौवादिकयोरिति**।तथाच 'अज्झनगमा'मिति वक्ष्यमाणेन दीर्घे इति भावः । **इको झल्** । 'रुदविदे'त्यतः सनन्नुवर्तते, सनाक्षिप्तो धातुरिका विशेष्यते, विशेषणेन च तदन्तविधिरित्याह-**इगन्तादिति** । इगन्तात्किम् ?। पिपासति । तिष्ठासति । झलीति किम् ? । शिशयिषते । **कित्स्यादिति** । 'असंयोगाल्लिङ्कि'दित्यतः किदनुवर्तत इति भावः । **एज्विषयत्वाऽभावादिति** । कित्त्वेन गुणाऽप्राप्तेरित्यर्थः । **अतएवेति** । यद्येज्विषयादन्यत्राप्यात्वं भवेत्तदा मीग्रहणं तत्र न कुर्यात, गामादाग्रहणेष्वविशेषादिति भावः। **हलन्ताच्च** । इगित्यनुवर्तते। तदवयवत्वं हलो न संभवतीति समीपवाच्यत्राऽन्तशब्द इत्याशयेन व्याचष्टे-**इक्समीपादिति** । सौत्र-

---

बा.]ऽसिद्धत्वादित्येव सुवचम्।**जिघृक्षतीति**।ग्रह् स इति स्थिते हकारादिणः परस्य षत्वं परत्वात् प्राप्तं,तस्याऽसिद्धत्वात् हस्य ढत्वे भष्भावः,ततः कत्वे कात्परस्य षत्वमिति क्रम इति भावः। गुहेः जुघुक्षतीत्युदाहार्यम्। उगन्तात्-बुभूषति। अत्र 'श्र्युकः किती'त्यनेन तु न सिध्यति, तत्र कित एव निषेधात् । परत्वादिडागमे 'इको झ'लित्यस्याऽप्राप्तेः । स्पष्टं चेदं शब्देन्दुशेखरे । **सुषुप्सतीति** । सनः कित्त्वात् 'वचिस्वपी'ति संप्रसारणं, लघूपधगुणाऽभावश्च। **किरश्च पञ्चभ्यः**। किर इति पञ्चमी । किरादिभ्य इति विवक्षितम् । तुदादौ 'कॄ विक्षेपे', 'गॄ निगरणे', 'दृङ् आदरणे', 'धृङ् अवस्थाने', 'प्रच्छ ज्ञीप्सायां'मिति स्थिताः । तदाह-**कॄ गॄ इत्यादिना** । **सन इडिति** । 'स्मिपूङ्रञ्ज्वशां सनी'त्यतः, 'इडत्यर्ती'त्यतश्च तदनुवृत्तेरिति भावः । किरतिगिरत्योः 'इवृनि वे'ति विकल्पे, अन्येषां च 'एकाच' इति निषेधे प्राप्तेऽयमिड्विधिः। शब्देन्दुशेखरे तु 'सनि ग्रहे'ति 'एकाच' इति च निषेधे प्राप्ते वचनमित्युक्तम् । **पिपृच्छिषतीति** । सनः कित्त्वात् 'ग्रहिज्ये'ति संप्रसारणम् । **चिकरिषतीति** । कॄधातोः सनि इटि रूपम् । **जिगरिषतीति** । 'गॄ निगरणे' इत्यस्मात्सनि इटि रूपम् । **जिगलिषतीति** । 'अचि विभाषे'ति लत्वविकल्प इति भावः । 'इट् सनि वे'त्यस्यायमपवादः । चिकरिषति, जिगरिषतीत्यत्र 'वृतो वे'ति दीर्घमाशङ्क्याह-**अत्रेटो दीर्घो नेष्ट इति** । वार्तिकमिदं वृत्तौ स्थितम् । भाष्ये तु न दृश्यते । **दिदरिषते दिधरिषते इति** । दृङो धृङश्च सनि इटि रूपम् । 'पूर्ववत्सनः' इत्यात्मनेपदम् । **कथमिति** । 'उद्दिधीर्षु'रिति कथमित्यन्वयः । किरादित्वेन इट्प्रसङ्गादिति भावः । **भौवादिकयोरिति** । 'धृङ् अवस्थाने', 'धृञ् धारणे' इत्यनयोर्भौवादिकयोः सनि किरादित्वाऽभावे 'अज्झनगमां सनी'ति दीर्घे 'ऋत इद्धातो'रिति इत्त्वे, रपरत्वे, 'हलि चे'ति दीर्घे, षत्वे, उद्दिधीर्ष इत्यस्मात्, 'सनाशंसभिक्ष उः' इत्युप्रत्यये उद्दिधीर्षुरिति रूपमिति **गृहाण**-जानीहीति शङ्कां प्रत्युत्तरम् । **इको झल्** । **इगन्तादिति** । सना आक्षिप्तधातुविशेषणत्वात्तदन्तविधिरिति भावः । **सन् किदिति** । 'रुदविदमुषग्रही'त्यतः, 'असंयोगाल्लिङ्कि'दित्यश्च तदनुवृत्तेरिति भावः । **बुभूषतीति** । कित्त्वान्न गुणः । उकः परत्वान्नेट् । **दिदीषते इति** । सनः कित्त्वान्न गुणः । दीङो ङित्त्वात् 'पूर्ववत्सनः' इत्यात्मनेपदम् । **एज्विषयत्वाभावादिति** । कित्त्वे गुणनिषेधादिति भावः। **अत एवेति** । यद्येज्विषयादन्यत्राप्यात्वं स्यात्तदा मीमेति पृथग्ग्रहणमनर्थकं स्यात् , 'गामादाग्रहणेष्वविशेषः' इत्युक्तेरिति भावः । **हलन्ताच्च** । 'इको झ'लिति पूर्वसूत्रमनुवर्तते । 'रुदविदमुषे'त्यतः सनिति, 'असंयोगाल्लि'डित्यतः किदिति च । 'ह'लिति लुप्तपञ्चमीकं पदम् । अन्तशब्दः समीपवाची । तदाह-**इक्समीपादित्यादि** । **जुघुक्षतीति** । सनः कित्त्वान्न गुणः । 'सनि ग्रहगुहोश्चे'त्युदित्त्वेऽपि नित्यं नेट् । हस्य ढत्वे भष्भावे कत्वषत्वे इति भावः । **बिभित्सतीति** । भिदेः सनः कित्त्वान्न गुणः । यिय-

---

शे.]आह-**षत्वस्येति** । **किरश्च** । 'सनि ग्रहे'ति, 'एकाचः' इति च निषेधे प्राप्ते वचनम् । **जिगरिषतीति** । 'इट् सनि वे'त्येतमपवादत्वादयं बाधते । **अत्रेट इति** । इदं वृत्तौ स्पष्टं, भाष्ये तु न दृश्यते । **हलन्ताच्च** । 'ह'लिति लुप्तपञ्चम्यन्तम्, अन्तशब्दः समीपवाची । 'इक' इत्यनुवृत्तं षष्ठ्या विपरिणम्यते, तदाह-**इक्समीपादिति**। **यियक्षते इति** । सति कित्त्वे यजेः संप्रसारणं स्यादिति भावः । **जातिपरमिति** । हल्त्वजात्याक्रान्तैकाऽनेकव्यक्तिपरमित्यर्थः ।

परम् । तृन्हू-तितृक्षति । तितृंहिषति । **अज्झनगमां सनि** ।६।४।१६। अजन्तानां हन्तेरजादेशगमेश्च दीर्घः स्याज्झलादौ सनि । 'सन्लिटोर्जेः' । जिगीषति । 'विभाषा चेः' । चिकीषति । चिचीषति । जिघांसति । **सनि च** ।२।४।४७। इणो गमिः स्यात्सनि न तु बोधने । जिगमिषति । बोधने तु-प्रतीषिषति । *इण्वदिकः । अधिजिगमिषति । कर्मणि तङ् । 'परस्मैपदेष्वि'त्युक्तेर्नेट् । 'झलादौ सनी'ति दीर्घः । जिगांस्यते । अधिजिगांस्यते । 'अजादेशस्ये'त्युक्तेर्गच्छतेर्न दीर्घः । जिगंस्यते । संजिगंसते । **इङश्च** ।२।४।४८। इङो गमिः स्यात्सनि। अधिजिगांसते । **रलो व्युपधाद्धलादेः संश्च** ।१।२।२६। उश्च इश्च वी, ते उपधे यस्य तस्माद्धलादे रलन्ता-

---

त.]त्वाद्विशेषणस्याऽन्तशब्दस्य परनिपातः। **तितृक्षतीति**। कित्त्वे सति 'अनिदिता'मिति नलोपः। **अज्झनगमाम्** । गमः सामान्येन ग्रहणे गम्लृ गतावित्यस्मात्संजिगंसते इत्यत्रातिप्रसङ्गः स्यादतः 'सनि च', 'इङश्चे'ति सूत्राभ्यां विहितस्येणिङोरादेशस्य, 'इण्वदिकः' इति इक आदेशस्य च ग्रहणमित्याशयेनाह-**अजादेशगमेरिति** । एतच्च सूत्रेऽज्ग्रहणाल्लभ्यते । तथाहि-इह 'सनी'त्येवं सूत्रं कर्तव्यं, दीर्घश्रुत्योपस्थितेनाऽच इत्यनेनाङ्गस्य विशेषणादजन्ताङ्गस्य दीर्घः। चिचीषति। ततो 'हनिगम्यो'रित्यपरं कर्तव्यम् । एवं चाऽज्ग्रहणमतिरिच्यमानं प्रवृत्तिभेदेन गमेर्विशेषणार्थम् । अजन्तस्य दीर्घो भवति, अजादेशगमेश्चेति । झलादाविति किम् ?। जिगमिषति। 'गमेरिट् परस्मैपदेषु' इति इट् । **सनि च**। 'णौ गमिरबोधने' इत्यतोऽबोधन इत्यनुवर्तते। **प्रतीषिषतीति** । तक्रकौण्डिन्यन्यायस्याऽनित्यत्वात्सनूरूपस्याभ्यासस्येत्वम् । अनित्यत्वे लिङ्गं तु 'नित्यं कौटिल्ये गतौ' इत्यत्र नित्यग्रहणमिति वक्ष्यते । **संजिगंसते इति** । 'समो गम्यृच्छिभ्या'मिति तङ् 'पूर्ववत्सनः' इति सन्नन्तादपि भवति । **रलो व्युपधा** । 'न क्त्वा से'डित्यतः सेडिति वर्तते । चकारेण क्त्वायाः

---

बा.]क्षते इति। अत्र हलः इक्समीपत्वाऽभावान्न कित्त्वम्। सति तु कित्त्वे ग्रजेः संप्रसारणं स्यादिति भावः। **विवर्धिषते इति** । वृधेः सनि रूपम्। अत्र ऽन इटि झलादित्वं नेति भावः। ननु 'तृंहू हिंसायाम्' तुदादिर्नोपधोऽयम् । कृतानुस्वारस्य निर्देशः । अस्मात्सनः 'अनिदिता'मिति नलोपार्थं कित्त्वमिष्यते । तन्नोपपद्यते । न ह्यत्र इक्समीपादनुस्वारात्सन् परो भवति, हकारेण व्यवधानात् । हकारात्तु परः सन् इक्समीपाद्धलः परो न भवति, अनुस्वारेण व्यवधानादित्यत आह-**हल्ग्रहणं जातिपरमिति** । हल्त्वजात्याक्रान्तैकाऽनेकव्यक्तिपरमित्यर्थः । **तृंहिति** । तृंहूधातोः प्रदर्शनामिदम् । **तितृक्षतीति** । ऊदित्त्वादिडभावपक्षे रूपम् । सनः कित्त्वान्नलोपः, लघूपधगुणाऽभावश्च । ढत्वकत्वषत्वानि । इट्पक्षे आह-**तितृंहिषतीति** । झलादित्वाऽभावेन कित्त्वाऽभावान्नलोपो नेति भावः । **अज्झनगमां सनि** । अच् , हन्, गम्-एषां द्वन्द्वः। 'नोपधायाः' इत्यत उपधाया इत्यनुवृत्तं हनगमोरन्वेति,न त्वजन्ते, असंभवात् । अङ्गस्येत्यधिकृतम् । अचस्तद्विशेषणत्वात्तदन्तविधिः । गमधातुरिह अजादेश एव विवक्षित इति प्रकृतसूत्रभाष्ये स्पष्टम् । 'ढ्रलोपे पूर्वस्ये'त्यतो दीर्घ इत्यनुवर्तते । तदाह-**अजन्तानामित्यादिना** । **झलादौ सनीति** । 'च्छ्वोः शूडिति सूत्रभाष्ये 'अज्झनगमा'मित्यत्र सनं झला विशेषयिष्याम इत्युक्तेरिति भावः । अथ जिधातोरभ्यासात्परस्य कुत्वविधिं स्मारयति-**सन्लिटोर्जेरिति** । **जिगीषतीति** । जेर्दीर्घे अभ्यासात्परस्य कुत्वम् । अथ चिञ्धातोरभ्यासात्परस्य कुत्वविकल्पं स्मारयति-**विभाषा चेरिति** । **चिकीषति-चिचीषतीति** । अजन्तत्वाद्दीर्घः । **जिघांसतीति** । हनेः सनि 'अज्झने'त्यकारस्य दीर्घः, न त्वन्त्यस्य नकारस्य, दीर्घश्रुत्या 'अच' इत्युपस्थितेः । द्वित्वम् । 'अभ्यासाच्चे'ति कुत्वम् । 'नश्चे'त्यनुस्वारः । **सनि च** । 'इणो गा लुङी'त्यत इण इति, 'णौ गमिरबोधने' इत्यतो 'गमिरबोधने' इति चानुवर्तते । तदाह-**इणो गमिरित्यादि** । **जिगमिषतीति** । 'गमे'रिति इट् । अत्र 'अज्झनगमा'मिति दीर्घो न, 'झलादौ सनी'त्युक्तेः । **प्रतीषिषतीति** । बोधयितुमिच्छतीत्यर्थः । अत्र बोधनार्थत्वादिणो न गमिः । इ स इति स्थिते 'अजादेर्द्वितीयस्ये'ति सनो द्वित्वे अभ्यासेत्त्वम् । प्रतिना सवर्णदीर्घे सकारद्वयस्यापि षत्वमिति भावः ।

'इक् स्मरणे' इत्यस्याह-**इण्वदिक इति**। अनेन वार्तिकेन इक्धातुरिण्वद्भवतीत्यर्थः। ततश्च 'सनि चे'ति गमिरादेश इति भावः। **कर्मणि तङिति**। इण्धातोरिग्धातोश्च सन्नन्तात्कर्मणि लटस्तङित्यर्थः। 'भावकर्मणो'रित्यनेनेति भावः। **परस्मैपदेष्विति** । 'गमेरिट्परस्मैपदेषु' इत्युक्तेस्तङि नेडित्यर्थः । **झलादाविति** । 'अज्झने'ति झलादौ सनि विहितो दीर्घ इत्यर्थः । **जिगांस्यते इति** । गन्तुमिष्यते इत्यर्थः । इणो रूपम् । **अधिजिगांस्यते इति** । स्मर्तुमिष्यत इत्यर्थः । इको रूपम् । **जिगंस्यते इति** । गम्लृधातोः सन्नन्तात्कर्मणि तङि रूपम् । गमेरजादेशत्वाऽभावान्न दीर्घः । **इङश्च** । **गमिः स्यात्सनीति**।'णौ गमि'रित्यतः, 'सनि चे'त्यतश्च तदनुवृत्तेरिति भावः। इङो ङित्त्वात् 'पूर्व-

---

प्र.]सामीप्यमव्यवहित एवेति भावः । **अज्झन** । 'च्छ्वो'रिति सूत्रभाष्ये झलनुवृत्तेरुक्तत्वादाह-**झलादौ सनीति** । **जिगमिषतीति** । 'गमेरि'ङितीट् । तत्र हि सर्वोऽपि गमिर्गृह्यते, व्याख्यानादिति भावः । **रलो व्यु** । 'न क्त्वे'त्यतः

त्थरौ क्त्वासनौ सेटौ वा कितौ स्तः । 'द्युतिस्वाप्योः संप्रसारणम्' । दिद्युतिषते । दिद्योतिषते । रुरुचिषते । रुरोचिषते । लिलिखिषति । लिलेखिषति । रलः किम् ? । दिदेविषति । व्युपधात्किम् ? । विवर्तिषते । हलादेः किम् ? । एपिषिषति । इह नित्यमपि द्वित्वं गुणेन बाध्यते । उपधाकार्यं हि द्वित्वात्प्रबलम्, ओणेर्ऋदित्करणस्य सामान्यापेक्षज्ञापकत्वात् । **सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्** ।७।२।४९। इवन्तेभ्य ऋधादिभ्यश्च सन इड्वा स्यात् । इडभावे 'हलन्ताच्चे'ति कित्वम् । 'च्छ्वो'रिति वस्य ऊठ् । यण् । द्वित्वम् । दुद्यूषति । दिदेविषति । 'स्तौतिण्योरेवे'ति वक्ष्यमाणनियमान्न षः । सुस्यूषति । सिसेविषति । **आप्ज्ञप्यृधामीत्** ।७।४।५५।

त.]सङ्ग्रहः । 'असंयोगा'दित्यतः किदिति, 'नोपधा'दित्यतो वेति चानुवर्तते । तदाह-**क्त्वासनावित्यादि** । सेट् किम् ? । भित्त्वा । छित्त्वा । बुभुक्षते । **आप्ज्ञ** । 'सनि मीमे'त्यतः-अच इत्यनुवर्तते, 'सः स्यार्द्धधातुके' इत्यतः सीति च ।

बा.]क्तसनः' इति तङ् । परस्मैपदेष्वित्युक्तेर्नेट् । 'अज्झने'ति दीर्घ इति भावः । **रलो । क्त्वासनाविति** । चकारेण 'पूङः क्त्वा चे'त्यतः क्त्वाया अनुकर्षादिति भावः । **सेटाविति** । 'न क्त्वा सेडि'त्यतस्तदनुवृत्तेरिति भावः । **वा किताविति** । 'नोपधात्थफान्ताद्वे'त्यतः, 'असंयोगाल्लिट्कि'दित्यतश्च तदनुवृत्तेरिति भावः । **दिद्युतिषते इति** । 'द्युत दीप्तौ' अनुदात्तेत् । सनि द्वित्वे कित्वात् 'द्युतिस्वाप्यो'रित्यभ्यासस्य संप्रसारणे पूर्वरूपे सनः कित्वान्न लघूपधगुण इति भावः । सनः कित्वाऽभावे आह-**दिद्योतिषते इति** । 'पूर्ववत्सनः' इत्यात्मनेपदम् । **एषिषिषतीति** । इष्धातोः सन् । इट् । हलादित्वाऽभावेन कित्वाऽभावाद्गुणे एष् इस ति इति स्थिते 'अजादेर्द्वितीयस्ये'ति षिस् इत्यस्य द्वित्वे हलादिशेषे सनः षत्वे रूपम् । नन्विह सत्यपि कित्वे नित्यत्वात्परमपि गुणं बाधित्वा षिसित्यस्य द्वित्वे धात्ववयवस्य इकारस्य उपधात्वाऽभावादेव गुणाऽप्रसक्तेर्हलादेरिति व्यर्थमित्यत आह-**इह नित्यमपि द्वित्वं गुणेन बाध्यते इति** । कुत इत्यत आह-**उपधाकार्यं हि द्वित्वात्प्रबलमिति** । तच्च कुत इत्यत आह-**ओणेरिति** । ओणेः ऋदित्करणस्य ज्ञापकत्वादित्यन्वयः । तथाहि-ओणृधातोर्ण्यन्ताल्लुङि चङि 'णौ चङ्युपधायाः' इति ह्रस्वस्य 'नाग्लोपिशास्वृदिता'मिति निषेधे सति ओणि अ त् इति स्थिते णि इत्यस्य द्वित्वे मा भवानोणिणदिति रूपम् । अत्र उपधाह्रस्वनिषेधार्थमोणेर्ऋदित्करणम् । उपधाह्रस्वे कृते तु उण् इ अ त् इति स्थिते णीत्यस्य द्वित्वे मा भवानुणिणदिति स्यात्, ओकारो न श्रूयेतेति स्थितिः । यदि तु नित्यत्वादुपधाह्रस्वात्प्रागेव ओण् इ अ त् इत्यस्यां दशायां द्वित्वं स्यात्तदा ओकारस्य उपधात्वाऽभावादेव ह्रस्वाऽप्रसक्तेस्तन्निषेधार्थमृदित्करणमनर्थकं स्यात् । तस्मादुपधाह्रस्वात्मकमुपधाकार्यं द्वित्वात्प्रबलमिति विज्ञायते इत्यर्थः । ननु भवतु उपधाह्रस्वो द्वित्वात्प्रबलः, प्रकृते तु उपधागुणः कथं द्वित्वात्प्रबलः स्यादित्यत आह-**सामान्यापेक्षेति** । उपधाह्रस्वस्य उपधाकार्यत्वेन रूपेण द्वित्वात्प्राबल्यविज्ञानादित्यर्थः । वस्तुतस्तु 'णौ चङ्युपधायाः' इति सूत्रे 'यदयमोणिमृदितं करोति तज्ज्ञापयति द्विर्वचनाद्ध्रस्वत्वं बलीय' इति विशिष्य उपधाह्रस्वग्रहणात्सामान्यापेक्षत्वं ज्ञापकस्य चिन्त्यमिति शब्देन्दुशेखरे प्रपञ्चितम् । **सनीवन्तर्ध** । सनि इवन्तेति च्छेदः । इवन्त, ऋध, भ्रस्ज, दम्भु, श्रि, स्वृ, यु, ऊर्णु, भर, ज्ञपि, सन्,-एषां द्वन्द्वः । इव् अन्ते येषां ते इवन्ताः । 'स्वरती'त्यतो वेति, 'इण्निष्ठाया'मित्यत इडिति चानुवर्तते । तदाह-**इवन्तेभ्य इत्यादि** । इवन्तस्य दिव्धातोरुदाहरिष्यन्नाह-**इडभावे इति** । **वस्येति** । वकारस्येत्यर्थः । **यणिति** । 'दकारादिकारस्ये'ति शेषः । **द्वित्वमिति** । 'द्यु इत्यस्ये'ति शेषः । **दुद्यूषतीति** । 'अज्झने'ति दीर्घः । इट्पक्षे आह-**दिदेविषतीति** । अझलादित्वान्न सनः कित्वम्, अतो नोठ्, किन्तु लघूपधगुण इति भावः । इवन्तस्योदाहरणान्तरं सिवुधातोः सुस्यूषतीति वक्ष्यते । तत्र द्वितीयस्य षत्वमाशङ्क्य आह-**स्तौतिण्योरिति** । **सुस्यूषतीति** । सिवुधातोः सनि इडभावे दुद्यूषतीतिवद्रूपम् । इट्पक्षे आह-**सिसेविषतीति** । ऋध्धातोः सनि ईर्त्सतीति रूपं वक्ष्यन्नाह-**आप्ज्ञप्यृधामीत्** । **साद्रौ सनीति** । 'सनि मीमाघुरभे'त्यतः सनीति,

शे.]सेडिति वर्तते, तच्च क्त्वासम्बद्धमपीहानुवर्त्तमानं सनोऽपि विशेषणं, व्याख्यानात् । 'नोपधे'त्यतो वेति वर्त्तते, नेति निवृत्तं, सनि प्राप्त्यभावेन निषेधस्य वक्तुमशक्यत्वात् । तदाह-**सेटौ वेति** । **सामान्यापेक्षेति** । 'णौ चङी'ति सूत्रभाष्ये 'यदयमोणिमृदितं करोति तज्ज्ञापयति-द्विर्वचनाद्ध्रस्वत्वं बलीयः' इत्युक्तत्वेन सामान्यापेक्षज्ञापकत्वमस्य चिन्त्यम् । अत्र 'हलादे'रिति तु 'एषित्वा' इत्यादौ नित्यं कित्वाऽभावाय । किञ्च 'एषिषिषती'त्यत्र नित्यत्वाद्द्वित्वेऽभ्यासस्य नैरर्थक्यादिदोऽनापत्तौ रूपाऽसिद्धिः, तस्माच्छब्दान्तरप्राप्त्या द्वित्वस्याप्यनित्यत्वाद्द्वयोरनित्ययोः परत्वादिड्वाच्य इति ततोऽपि पूर्वं परत्वाद्गुणेनेष्टसिद्धेरिति दिक् । **सनीवन्त** । अत्र सन् धातुस्तनादिर्भ्वादिश्च, विनिगमनाविरहात् । **आप्ज्ञ** । 'सनि मीमे'त्यतोऽच इति, सनीति च, 'सः सी'त्यतः सीति चानुवर्त्तते । आप्ज्ञादिभिरचो विशेषणादनन्त्ये सावकाशमीत्वं पूर्वविप्रतिषेधेन णिलोपो बाधते इति नाऽन्त्यस्य णिच ईत्वम् । यदि पूर्वविप्रतिषेधवार्त्तिके दीर्घग्रहणेन नेत्वग्रहणं तदाऽनन्त्य-

एषामच ईस्स्यात्सादौ सनि । **अत्र लोपोऽभ्यासस्य** ।७।४।५८। 'सनि मीमे'त्यारभ्य यदुक्तं तत्राभ्यासस्य लोपः स्यात्। आप्तुमिच्छति ईप्सति। अर्द्धितुमिच्छति । रपरत्वम् । चर्त्वम् । ईर्त्सति। अर्दिधिषति। बिभ्रज्जिषति। बिभर्जिषति । बिभ्रक्षति। बिभर्क्षति । **दम्भ इच्च** ।७।४।५६। दम्भेरच इत्स्यादीच्च सादौ सनि। अभ्यासलोपः । 'हलन्ताच्चे'त्यत्र हल्ग्रहणं जातिपरमित्युक्तम् । तेन सनः कित्वान्नलोपः । धिप्सति । धीप्सति । दिदम्भिषति । शिश्रीषति । शिश्रयिषति । **'उदोष्ठ्यपूर्वस्य'** । सुस्वूर्षति । सिस्वरिषति । युयूषति। यियविषति । ऊर्णुनूषति । ऊर्णुनुविषति । ऊर्णुनविषति । न च परत्वाद्गुणाऽवादेशयोः सतोरभ्यासे उकारो न श्रूयेतेति वाच्यं, 'द्विर्वचने-

---

त.]तदाह–**अच ईस्स्यात्सादाविति** । 'सी'त्यस्य सनो विशेषणात्सादाविति लाभः।**ईप्सतीति**। 'अजादेर्द्वितीयस्ये'ति प्सशब्दस्य द्वित्वम् । **बिभ्रज्जिषतीति**। इटि तदभावे च रमागमविकल्पाच्चत्वारि रूपाणि । **सुस्वूर्षतीति** । 'अज्झन-गमा'मिति दीर्घे सत्युत्वम् । **यियविषतीति** । 'द्विर्वचनेऽची'त्यादेशनिषेधाद्द्वित्वे कृतेऽभ्यासस्योवर्णस्येत्वम् । ऊर्णु-

---

बा.]अच इति चानुवर्तते । 'सः स्यार्द्धधातुके' इत्यतः सीत्यनुवृत्तं सनो विशेषणम् । तदादिविधिरिति भावः । **अत्र लोपोऽभ्यासस्य** । 'सनि मीमे'ति 'आप्ज्ञप्यृधामी'दिति 'दम्भ इच्चे'ति, 'मुचोऽकर्मकस्य गुणो वे'ति पूर्वसूत्रचतुष्टयविहितकार्यमत्रेत्यनेन परामृश्यते। तदाह–**सनि मीमेत्यारभ्येति** । सूत्रचतुष्टयकार्ये कृते सतीत्यर्थः। **ईप्सतीति**। आप्धातोः सनि आकारस्य इत्वे 'अजादेर्द्वितीयस्ये'ति प्स इत्यस्य द्वित्वेऽभ्यासलोप इति भावः । **रपरत्वमिति** । ऋधेः सनि इडभावे ऋकारस्य ईत्वे रपरत्वमित्यर्थः । **चर्त्वमिति** । ईर्ध् स इति स्थिते धस्य चर्त्वे 'न न्द्राः' इति रेफं वर्जयित्वा 'अजादेर्द्वितीयस्ये'ति 'त्स' इत्यस्य द्वित्वे अभ्यासस्य लोप इति भावः । 'पूर्वत्राऽसिद्धीयमद्वित्वे' इति वचनाच्चर्त्वे कृते द्वित्वमिति बोध्यम् । इट्पक्षे आह–**अर्दिधिषतीति** । सनः सादित्वाऽभावादीत्त्वाऽभावे गुणे रपरत्वे अर् ध् इ स इति स्थिते धिस् इत्यस्य द्वित्वमिति भावः । भ्रस्जधातोः सन इटि 'भ्रस्जो रोपधयो'रिति रमागमाऽभावे आह–**बिभ्रज्जिषतीति** । सस्य श्चुत्वेन शः, शस्य जश्त्वेन जः । क्ङिदभावात् 'ग्रहिज्ये'ति संप्रसारणं न । **बिभर्जिषतीति** । इटि रमागमपक्षे भ्रस्ज् इस इति स्थिते अकारादुपरि सकारात्प्राग्रेफागमे भकाराद्रेफस्य सकारस्य च निवृत्तौ भर्ज् इस इति स्थिते भर्ज् इत्यस्य द्वित्वे हलादिशेषे अभ्यासस्य इत्वे जश्त्वे सनः षत्वे च रूपम् । तदेवमिट्पक्षे रमागमतदभावाभ्यां रूपद्वयम् । **बिभ्रक्षतीति**।इडभावे रमागमाऽभावे च रूपम् । जस्य कुत्वं सस्य षः । **बिभर्क्षतीति** । इडभावे रमागमे च रूपम् । तदेवमिडभावपक्षे रमागमतदभावाभ्यां द्वे रूपे । **दम्भ इच्च** । 'सनि मीमे'त्यतः सनीति, अच इति चानुवर्तते । चकारात् 'आप्ज्ञप्यृधा'मिति सूत्रादीदिति समुच्चीयते । 'सः सी'त्यत सीत्यनुवृत्तं सनो विशेषणं, तदादिविधिः । तदाह–**दम्भेरच इत्यादि** । **अभ्यासलोप इति** । 'अत्र लोपः' इत्यनेने'ति शेषः । दिम्भ् स इति स्थिते इक्समीपादनुस्वारादव्यवहितपरत्वाऽभावेऽपि हलन्तादित्यस्य प्रवृत्तिमुपपादयति–**हलन्ताच्चेत्यत्रेति** । हल्ग्रहणं हल्त्वजात्याक्रान्तैकाऽनेकव्यक्तिपरमिति प्रागुक्तमित्यर्थः । ततः किमित्यत आह–**तेनेति** । **धिप्सतीति** । 'सनीवन्ते'ति इडभावे इत्वे रूपम् । **धीप्सतीति** । इडभावे इत्वे च रूपम् । **दिदम्भिषतीति** । इट्पक्षे सनो झलादित्वाऽभावादकित्वान्नलोपो नेति भावः । **शिश्रीषतीति** । 'सनीवन्ते'ति इडभावे 'अज्झने'ति दीर्घः । सनः कित्वान्न गुणः । इट्पक्षे आह–**शिश्रयिषतीति** । अझलादित्वान्न कित्वं, नाप्यज्झनेति दीर्घः । स्वृधातोः सनि ऋकारस्य उत्वविधिं स्मारयति–**उदोष्ठ्येति** । **सुस्वूर्षतीति** । 'सनीवन्ते'ति इडभावे ऋकारस्य 'अज्झने'ति दीर्घे कृते उत्वे रपरत्वे 'उपधायां चे'ति दीर्घ इति भावः । **सिस्वरिषतीति** । 'स्वृ' इत्यस्य द्वित्वे उदरत्वे इत्वमिति भावः । **युयूषतीति** । 'सनीवन्ते'ति इडभावे 'अज्झने'ति दीर्घः । **यियविषतीति** । इट्पक्षे 'द्विर्वचनेऽची'ति गुणनिषेधात् 'यु' इत्यस्य द्वित्वम् । 'ओः पुयण्जी'तीत्वमिति भावः । **ऊर्णुनूषतीति** । 'सनीवन्ते'ति इडभापक्षे 'न न्द्रा' इति रेफं वर्जयित्वा नुस् इत्यस्य द्वित्वे 'अज्झने'ति दीर्घः । 'इको झलि'ति सनः कित्वान्न गुणः । इट्पक्षे तु 'विभाषोर्णो'रिति सनो ङित्वविकल्पं मत्वाह–**ऊर्णुनुविषति** । **ऊर्णुनविषतीति** । ङित्त्वपक्षे गुणाऽभावान्नुशब्दस्य द्वित्वे उत्तरखण्डे उवङ् ।

---

शे.]स्येति वक्तव्यम् । **अत्र लो**। अत्र='सनि मीमे'त्यादिसूत्रचतुष्टये 'लोपोऽभ्यासस्ये'त्युपतिष्ठते इत्यर्थः।तत्फलितमाह–**सनि मीत्यादि**। यद्वा 'सनि मीमे'त्यादिविहिते कार्ये कृते सति योऽभ्यासस्तस्येत्यर्थः।अत्र 'अलोन्त्यस्ये'ति नोपतिष्ठते, 'नानर्थके' इति निषेधात्। लोपस्याऽविकारत्वादनभ्यासविकार इत्यस्याऽप्रवृत्तिः। यद्वा 'सनि मीमे'त्याद्यनुवृत्त्यैव सिद्धेऽत्रग्रहणादत्राभ्यासत्वेन यो निर्ज्ञातस्तस्य लोप इत्यर्थात्तदनुपस्थितिः । **ईर्त्सतीति** । 'पूर्वत्राऽसिद्धीयमद्वित्वे' इति चर्त्वे कृते 'त्स'शब्दस्य द्वित्वम् । भ्रस्जेरिड्रमागमयोर्विकल्पाच्चत्वारि रूपाणि । **उदोष्ठ्येति** । 'अज्झने'ति दीर्घे कृते इति भावः । **यियविषतीति** । 'द्विर्वचनेऽची'ति युशब्दस्य द्वित्वे 'ओः पुय'णितीत्वम् । ऊर्णोतेरिडभावे 'अज्झने'ति

ऽची'ति सूत्रेण द्वित्वे कर्तव्ये स्थानिरूपातिदेशादादेशनिषेधाद्वा। न च सन्नन्तस्य द्वित्वं प्रति कार्यित्वान्निमित्तता कथमिति वाच्यं, (प) कार्यमनुभवन्हि कार्यी निमित्ततया नाश्रीयते; न त्वननुभवन्नपि। न चेह सन् द्वित्वमनुभवति। बुभूर्षति। बिभरिषति। ज्ञपिः पुगन्तो मित्संज्ञकः, पकारान्तश्चौरादिकश्च। इडभावे 'इको झ'लिति किस्वान्न गुणः। 'अज्झने'ति दीर्घः परत्वाण्णिलोपेन बाध्यते। 'आप्ज्ञ'विति ईत्। ज्ञीप्सति। जिज्ञपयिषति। अमितस्तु—जिज्ञापयिषति। 'जनसने'त्यात्वम्। सिषासति। सिसनिषति। *तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः। **तनोतेर्विभाषा** ।६।४।१७। अस्योपधाया दीर्घो वा स्याज्झलादौ सनि। तितांसति। तितंसति। तितनिषति। *आशङ्कायां सन्वक्तव्यः। श्वा मुमूर्षति। कूलं पिपतिषति। सनि मीमा-

---

त.]नूषतीति। इडभावे 'अज्झनगमा'मिति दीर्घः। इट्पक्षे तु 'विभाषोर्णो'रिति वा ङित्वम्। **न चेह सन्निति**। किं तु नुशब्द इत्यर्थः। **क्ङित्वान्न गुण इति**। णिचः स्थाने इत्यर्थः। **श्वा मुमूर्षतीति**। एकश्वविषया मरणशङ्केति

---

बा.]ङित्वाऽभावपक्षे 'नु' इत्यस्य द्वित्वे उत्तरखण्डस्य गुणावादेशाविति भावः। उभयत्राप्यभ्यासे उवर्णः श्रूयते। ननु ङित्वाऽभावपक्षे ऊर्णु इस इति स्थिते द्वित्वात् प्रागेव परत्वाद्गुणे अवादेशे च कृते नव्शब्दस्य द्वित्वेऽभ्यासस्याऽत इत्वे ऊर्णिनविषतीति अभ्यासे इकार एव श्रूयेत, नतु उकार इत्याशङ्क्य निराकरोति—**द्विर्वचनेऽचीति**। अस्मिन् सूत्रे 'स्थानिव'दित्यनुवर्त्य रूपातिदेशं चाश्रित्य द्वित्वनिमित्ते अचि परे योऽजादेशः स द्वित्वे कर्तव्ये स्थानिरूपं प्रतिपद्यते इत्येकोऽर्थः। 'न पदान्ते'त्यतो नेत्यनुवर्त्य द्वित्वनिमित्ते अचि योऽजादेशः स न स्याद्द्वित्वे कर्तव्ये इत्यन्योऽर्थः। तत्र प्रथमव्याख्याने तु कृतस्यापि गुणस्य स्थानिभूतोकाररूपप्रतिपत्त्या 'नु' इत्यस्य द्वित्वे अभ्यासे उकार एव श्रूयते। द्वितीयव्याख्यानेऽपि द्वित्वात् प्राग्गुणस्य निषिद्धतया नुशब्दस्यैव द्वित्वे अभ्यासे उकार एव श्रूयते इति भावः।

ननु ऊर्णु इस इति सन्नन्तस्य द्वित्वरूपकार्यभाक्त्वेन तदन्तर्गतस्य इस इत्यस्यापि कार्यित्वान्न द्वित्वनिमित्तत्वम्, 'नहि कार्यी निमित्ततया आश्रीयते' इत्युक्तेः। तथाच द्वित्वे कर्तव्ये द्वित्वनिमित्ताऽच्परकादेशस्य क्रियमाणो निषेधः कथमिह गुणस्य प्रसज्यते इत्याशङ्क्य निराकरोति—**न च सन्नन्तस्येति**। **कार्यमनुभवन्निति**। अत्र व्याख्यानमेव शरणम्। **न चेह सन्निति**। किंतु नुशब्द इत्यर्थः। **बुभूर्षतीति**। 'सनीवन्ते'ति इडभावपक्षे भृ स इति स्थिते 'अज्झने'ति दीर्घे 'उदोष्ठ्यपूर्वस्ये' त्युत्वे रपरत्वे उत्तरखण्डस्य 'हलि चे'ति दीर्घः। सनः किस्वान्न गुण इति भावः। इट्पक्षे आह—**बिभरिषतीति**। भृ इस इति स्थिते द्वित्वे उरदत्वे रपरत्वे हलादिशेषे अभ्यासस्य अत इत्वे उत्तरखण्डस्य गुणे रपरत्वमिति भावः। **ज्ञपिः पुगन्तो मित्संज्ञक इति**। 'सनीवन्ते'ति सूत्रे 'गृह्यते' इति शेषः। 'मारणतोषणनिशामनेषु ज्ञे'ति घटादौ। ततो हेतुमण्णौ पुकि घटादित्वेन मित्त्वादुपधाह्रस्वे ज्ञपीति ण्यन्तो गृह्यत इत्यर्थः। **पकारान्तश्चौरादिकश्चेति**। 'ज्ञप मिच्चे'ति यः स्वतः पकारान्तः पठितश्चुरादौ, न तु पुगन्तः, सोऽपि 'सनीवन्ते'ति सूत्रे गृह्यते इत्यर्थः। **इडभावे इति**। उभयविधादपि ण्यन्ताज्ज्ञपीत्यस्मात्सनि इडभावपक्षे णेः परस्य सनः 'इको झल्' इति किस्वाण्णेर्गुणो नेत्यर्थः। **परत्वादिति**। णेर्लोपे सति अचोऽभावान्न दीर्घ इति भावः। तथाच 'ज्ञी'बित्यस्य द्वित्वे हलादिशेषे 'अत्र लोपः' इत्यभ्यासलोपे परिनिष्ठितमाह—**ज्ञीप्सतीति**। इट्पक्षे आह—**जिज्ञपयिषतीति**। **अमितस्त्विति**। मारणादिव्यतिरिक्तार्थकस्य घाटादिकस्य हेतुमण्ण्यन्तस्य, 'ज्ञा नियोगे' इति चौरादिकण्यन्तस्य च मित्त्वाऽभावेन उपधाह्रस्वाऽभावात् 'सनीवन्ते'त्यत्र ज्ञपिग्रहणेनाऽग्रहणान्नित्यमेव इडिति भावः। तदाह—**जिज्ञापयिषतीति**। सनधातोः सनि आह—**जनसनेत्यात्वमिति**। 'नकारस्ये'ति शेषः। **सिषासतीति**। आत्वे कृते सा इत्यस्य द्वित्वे अभ्यासस्य ह्रस्वे अत इत्वे षत्वे रूपम्। नच 'स्तौतिण्योरेवे'ति नियमान्न ष इति शङ्क्यं, सनः षत्वे सत्येव तत्प्रवृत्तेः। इट्पक्षे त्वाह—**सिसनिषतीति**। अत्र 'जनसने'त्यात्वं तु न, सनो झलादित्वाऽभावात्। 'स्तौतिण्योरेवे'ति नियमान्न ष इति भावः। **तनिपतीति**। प्राप्तविभाषेयम्। **तनोतेर्विभाषा**। **उपधाया दीर्घ इति**। 'नोपधायायाः' इत्यतो 'ढ्रलोपे' इत्यतश्च तदनुवृत्तेरिति भावः। **झलादौ सनीति**। 'अज्झने'त्यतस्तदनुवर्तते। तत्र झलादाविति भाष्ये स्थितमिति भावः। **आशङ्कायामिति**। आशङ्काविषयक्रियावृत्तेर्धातोः स्वार्थे सन्नित्यर्थः। **श्वा मुमूर्षतीति**। शङ्कितमरणो भवतीत्यर्थः। **कूलं पिपतिषतीति**। शङ्कितपतनं भवतीत्यर्थः। 'तनिपती'ति इट्पक्षे रूपम्। पतेः सनि इडभावपक्षे त्वाह—**सनि मीमा**। **सादौ सनीति**। 'सः सि' इत्यतः सीत्यनुवृत्तेरिति

---

शे.]दीर्घः। इट्पक्षे 'विभाषोर्णो'ति वा ङित्वम्। **चौरादिकश्चेति**। ह्रस्वविशिष्टयोरुभयोरपि लाक्षणिकत्वादिति भावः। **क्ङित्वान्न गुण इति**। 'णिच' इति शेषः। णिलोपेन गुणस्य बाध इत्यपि बोध्यम्। **आशङ्कायामिति**। आशङ्काविषयार्थप्रतिपादकाद्धातोः स्वार्थे सनित्यर्थः। **श्वा मुमूर्षतीति**। वर्त्तमानसामीप्ये लट्। आशङ्का च प्रयोक्तृगता।

**घुरभलभशकपतपदामच इस्** ।७।४।५४। एषामच इस् स्यात्सादौ सनि। अभ्यासलोपः।'स्को'रिति सलोपः। पित्सति । दिदरिद्रिषति । दिदरिद्रासति । डुमिञ् मीञ्–आभ्यां सन् । कृतदीर्घस्य मिनोतेरपि मीरूपत्वाऽविशेषादिस् । 'सः सी'ति तः ।' मित्सति । मित्सते । मा माने–मित्सति । माङ्मेङोः–मित्सते । दोदाणोः दित्सति । देङ्–दित्सते । दाञ्–दित्सति । दित्सते । धेट्–धित्सति । धाञ्–धित्सति । धित्सते । रिप्सते । लिप्सते । शक्लृ–शिक्षति । शक मर्षण इति दिवादिः। स्वरितेत्। शिक्षति। शिक्षते। पित्सति। पित्सते। * राधो हिंसायां सनीस् वाच्यः। रित्सति। हिंसायां किम्? आरिरात्सति। **मुचोऽकर्मकस्यो गुणो वा** ।७।४.५७। सादौ सनि । अभ्यासलोपः । मोक्षते मुमुक्षते वा वत्सः स्वयमेव । अकर्मकस्य किम् ? । मुमुक्षति वत्सं कृष्णः। 'न वृद्भ्यश्चतुर्भ्यः' । विवृत्सति । तङि तु–विवर्तिषते। 'सेऽसिची'ति वेट् । निनर्तिषति । निनृत्सति।

**इट् सनि वा** ।७।२।४१। वृङ्वृञ्भ्यामृदन्ताच्च सन इड्वा स्यात् । तितरिषति । तितरीषति । तिती-

त.] बोधः।मरणाऽऽशङ्काविषयो भवतीत्यन्ये। 'पूर्ववत्सनः' इत्यात्मनेपदमिह नं शङ्क्यं, 'शदे'रित्यादिसूत्रद्वये 'सनो ने'त्यनुवर्त्य वाक्यभेदेन व्याख्येयमिति वक्ष्यमाणत्वात्। **सनि मीमा** । 'सः सी'त्यतः सीत्यनुवर्तते । तस्य सनो विशेषणत्वात्सादौ सनीति लाभः। **मीरूपाऽविशेषादिति** । ननु मिनोतेर्मीरूपस्य लाक्षणिकत्वान्मीग्रहणेन ग्रहणं न प्राप्नोति । नैष दोषः। यत्र लक्षणाभिनिर्वृत्तत्वेन शब्दरूपमपेक्ष्यते तत्र 'लक्षणप्रतिपदोक्तयो'रिति परिभाषोपस्थानं न तु यत्र प्रयोगाश्रयणं तत्रेति 'इको झ'लिति सूत्रे कैयटेनोक्तत्वात् । तस्यायमाशयः–मीरूपमात्रस्य प्रयोगोऽत्राश्रितः । 'विभाषा दिक्समासे' इत्यत्र तु लक्षणाभिनिर्वृत्तस्य समासशब्दस्याश्रयणात् 'दिङ्नामान्यन्तराले' इति प्रतिपदोक्त एवं समास आश्रीयते इति । लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वात्क्वचिदुपतिष्ठते क्वचिन्नोपतिष्ठते इति तु निष्कृष्टोऽर्थः । **मित्सतीति** । 'हलन्ताच्चे'ति किस्वान्नोपधागुणः। **शिक्षतीति** । ननु निरनुबन्धपरिभाषया 'शक मर्षणे' इत्यस्यैव ग्रहणमुचितमिति चेत् । अत्राहुः–इयं हि परिभाषा प्रत्ययग्रहणविषया । अतएव 'जृव्रश्च्यो'रित्यत्र जजृषोरुभयोर्ग्रहणमिति न्यासकारेणोक्तमतोऽत्रापि स्वादिदैवादिकयोर्ग्रहणं युक्तमेवेति । **मुचोऽकर्मकस्य** । 'हलन्ताच्चे'ति किस्वेन गुणाऽभावे प्राप्ते विधिरयम् । **विवृत्सतीति** । 'वृद्भ्यः स्यसनो'रिति विकल्पेन परस्मैपदम् । **इट्सनि वा** । चिकीर्षतीत्यादौ 'अज्झनगमा'मिति दीर्घे कृते

बा.] भावः। **अभ्यासलोप इति**। 'अत्र लोपः' इत्यनेनेति भावः।पिस् त् स ति इति स्थिते आह–**स्कोरिति**। दरिद्रातेः सनि 'तनिपती'ति इड्विकल्पमुदाहरति–**दिदरिद्रिषति दिदरिद्रासतीति** । **डु मिञिति** । 'डु मिञ् प्रक्षेपणे' स्वादिः; 'मीञ् हिंसायाम्' क्र्यादिः,- आभ्यां सन्नित्यर्थः । 'सनि मीमे'त्यत्र मीग्रहणेन एतयोरुभयोर्ग्रहणमिति भावः।

ननु मीति दीर्घश्रवणात् डु मिञ् इत्यस्य ह्रस्वान्तस्य कथं ग्रहणमित्यत आह–**कृतदीर्घस्येति**।डु मिञ्धातोः सनि 'अज्झने'ति कृतदीर्घस्य,तथा'मीञ् हिंसाया'मिति स्वतःसिद्धदीर्घस्य च मीरूपाऽविशेषादुभयोरपि ग्रहणमित्यर्थः।**सःसीति**। उभयोरपि धात्वोः मी स इति स्थिते 'सनि मीमे'ति इसादेशे द्वित्वे 'अत्र लोपः' इत्यभ्यासलोपे 'सः सी'ति सस्य तकार इत्यर्थः । **मित्सति मित्सते इति** । प्रकृतेर्ञित्त्वात् 'पूर्ववत्सनः' इति उभयपदित्वम् । **माङ्मेङोरिति** । मेङः सनि 'आदेचः' इत्यात्त्वे कृते मारूपत्वाऽविशेषात् 'सनि मीमे'त्यत्र उभयोरपि ग्रहणमिति भावः। **दोदाणोरिति** । 'दो अवखण्डने' इतिधातोः सनि आत्वे कृते दारूपाऽविशेषाद्घुत्वादुभयोर्ग्रहणमिति भावः । **दित्सतीति** । 'हलन्ताच्चे'ति किस्वान्नोपधागुणः । **देङिति** । तस्यापि कृतात्वस्य दारूपत्वेन घुत्वादिति भावः । **दाञिति** । 'डु दाञ् दाने' इति धातुरपि घुत्वाद्गृह्यते इति भावः । **धेडिति** । अस्यापि कृतात्त्वस्य घुत्वात् 'सनि मीमे'त्यत्र ग्रहणमिति भावः । **रिप्सते इति** । रभधातोः रूपम् । **लिप्सते इति** । लभधातो रूपम् । **पित्सतीति**। पत्लृधातो रूपम् । पदधातोः **पित्सते** इति रूपम् । **सनि इस् वाच्य इति** । 'आकारस्ये'ति शेषः । **रित्सतीति**। सनि इसादेशः । 'अत्र लोपः' इत्यभ्यासलोपः । **मुचोऽकर्मकस्य । सादौ सनीति** । शेषपूरणमिदम् । 'सः सी'त्यतः सीति, 'सनि मीमे'त्यतः सनीति चानुवृत्तेरिति भावः । 'हलन्ताच्चे'ति किस्वाद्गुणनिषेधे प्राप्ते वचनम् । **अभ्यासलोप इति** । 'अत्र लोपः' इत्यनेने'ति शेषः। **मोक्षते इति** । 'अत्र लोपः' इत्यभ्यासलोपः । **तङि त्विति** । 'न वृद्भ्यः' इत्यत्र परस्मैपदग्रहणानुवृत्तेरुक्तत्वादिति भावः । **निनृत्सतीति** । इडभावपक्षे 'हलन्ताच्चे'ति किस्वान्न गुणः । **इट् सनि वा** । 'वतो वे'त्यतो 'वृत' इत्यनुवर्तते इति मत्वाह–**वृङ्वृञ्भ्यामित्यादि**। 'सनि ग्रहगुहोश्चे'त्यस्यापवादः। चिकीर्षतीत्यादौ 'अज्झने'ति दीर्घे कृते सनि नेदं प्रवर्तते, 'एकाच उपदेशे' इत्यतं उपदेशे इत्यनुवर्त्य उपदेशे ऋकारान्तादिति व्याख्या-

शे.] **सनि मीमा** । 'सः सी'त्यतः सीत्यनुवर्त्तते । मीशब्देन कृतदीर्घमीनातिमिनोत्योर्ग्रहणं,व्याख्यानात्। शकग्रहणेन च द्वयोर्ग्रहणं, द्वयोरपि सानुबन्धकत्वात् । **मुचोऽक** । किस्वाद्गुणाऽप्राप्तौ वचनम् । **इट् सनि वा** । 'सनिग्रहे'त्यस्याऽ-

र्षति । विवरिषति। विवरीषति।वुवूर्षति।वृङ्-वुवूर्षते । विवरिषते।[विवरीषते]।दुध्वूर्षति।**स्मिपूङ्रञ्ज्वशां सनि** ।७।२।७४। स्मि पूङ् ऋ अञ्जू अश एभ्यः सन इट् स्यात् । सिस्मयिषते । पिपविषते । अरिरिषति । इह 'रिस्' शब्दस्य द्वित्वम्। 'इ'सिति सनोऽवयवः कार्यभागिति कार्यिणो निमित्तत्वाऽयोगात् 'द्विर्वचनेऽची'ति न प्रवर्तते । अञ्जिजिषति । अशिशिषते । **'उभौ साभ्यासस्य'** । प्राणिणिषति । उच्चिच्छिषति । 'पूर्वत्रासिद्धीय-मद्विर्वचने' इति चछाभ्यां सहितस्येटो द्वित्वम् । **'हलादिः शेषः'** । उचिच्छिषति । **'निमित्ताऽपाये नैमि-त्तिकस्याप्यपायः'** इति त्वनित्यम्, 'च्छ्वो'रिति सतुग्ग्रहणाज्ज्ञापकात्, प्रकृतिप्रत्यापत्तिवचनाद्वा । 'णौ च

---

त.]नेदं प्रवर्तते, 'एकाच उपदेशे' इत्यत उपदेश इत्यनुवर्त्य,उपदेशे ऋकारान्तादिति व्याख्यानात् । अतएवेटं विनैवो-दाहरति-**दुध्वूर्षतीति** । 'ध्वृ कौटिल्ये' । 'अज्झने'ति दीर्घः । 'उदोष्ठ्यपूर्वस्ये'त्युत्वं । रपरत्वं । 'हलि चे'ति दीर्घः । **स्मिपूङ्** । 'पू'ङिति ङकारानुबन्धग्रहणात् पूञः पुपूषतीत्येव, 'सनि ग्रहे'तीण्निषेधात् । **सिस्मयिषत इति** । स्मिङ् ईषद्धसने' अस्याऽनिट्त्वादिडागमस्याऽप्राप्तिः । 'स्तौतिण्योरेवे'ति नियमान्न षः । **अरिरिषतीति** । अस्याप्यनिट्त्वादि-डागमस्याऽप्राप्तिः । **रिस्शब्दस्येति** । सन इटि गुणे च कृते अरिस् इति स्थिते 'अजादेर्द्वितीयस्ये'ति रिस्शब्दस्य द्वित्वमित्यर्थः। **अञ्जिजिषतीत्यादि** । 'अञ्जू व्यक्तिम्रक्षणादौ' । 'अशू व्याप्तौ'।अनयोरूदित्त्वादिड्विकल्पे प्राप्ते नित्यमिट् । अश भोजन इति क्र्यादिस्तु नित्यं सेडेव।**स्तुञ्राभ्यामिति** । एकं द्वितीयेऽपरं तु षष्ठे । तत्राद्येन णत्वादेशोऽपरेण संप्र-

---

बा.]नात् । **तितरिषति-तितरीषतीति**। तॄधातोः सनि लटि 'वृतो वे'ति दीर्घः। इडभावे त्वाह-**तितीर्षतीति** । 'इको झ'लिति कित्त्वाद्गुणाऽभावे 'तॄ इत्यस्य ॠकारस्य इत्वे रपरत्वे 'हलि चे'ति दीर्घ इति भावः। **विवरिषतीति** । वृञ्धातोः सनि इटि 'वृतो वे'ति दीर्घविकल्पः।इडभावे त्वाह-**वुवूर्षतीति**। 'उदोष्ठ्ये'त्युत्वे रपरत्वे 'हलि चे'ति दीर्घः।**वुवूर्षते इति** । ङित्त्वादात्मनेपदम्। **दुध्वूर्षतीति**। 'ध्वृ कौटिल्ये' 'अज्झने'ति दीर्घः।'उदोष्ठ्ये'त्युत्वे, 'हलि चे'ति दीर्घ इति भावः ।

**स्मिपूङ्**। स्मि, पूङ्. ऋ, अञ्जू, अश एषां द्वन्द्वः। ऋकारस्य यणि रेफे रञ्जिवति निर्देशः। **इट् स्यादिति** । 'इडत्यर्ती'त्यतस्तदनुवृत्तेरिति भावः । पूञस्तु पुपूषतीत्येव । 'सनि ग्रहे'तीण्निषेधात् । **सिस्मयिषते इति** । 'स्तौति-ण्योरेवे'ति नियमान्न षः । **पिपविषते इति** । पूङ्धातोः पू इत्यस्य द्वित्वे 'ओः पुयण्ज्यी'ति इत्वम् । **अरिरिष-तीति** । ऋधातोः सनि इटि रूपम् । **रिस्शब्दस्येति**। गुणे रपरत्वे 'अजादेर्द्वितीयस्ये'ति रिस् इत्यस्य द्वित्वमित्यर्थः। ननु 'द्विर्वचनेऽची'ति निषेधाद्गुणाऽसंभवात् रिस् इत्यस्य कथं द्वित्वमित्यत आह-**न प्रवर्तते इति** । कुत इत्यत आह-**कार्यिणो निमित्तत्वाऽयोगादिति**।'न हि कार्यी निमित्ततया आश्रीयते' इति निषेधादिडादेः सनो द्वित्वरूपकार्यिणो न द्वित्वनिमित्तत्वमिति भावः। ननु इडागमः सन्भक्तः, ततश्च इस् इत्यस्य द्वित्वेऽपि समुदायस्य इस इत्यस्य द्वित्वकार्यि-त्वाऽभावाद्द्वित्वनिमित्तत्वमित्यत आह-**इसितीति** । इस् इति सनोऽवयवो द्वित्वभागिति कृत्वा अवयवद्वारा इस इति समुदायस्य कार्यित्वमिति भावः । **अञ्जिजिषतीति** । अञ्जेः सनि इटि 'न न्द्राः' इति नकारस्य निषेधात् जिसित्यस्य द्वित्वम् । ऊदित्त्वादिड्विकल्पे प्राप्ते नित्यमिट् । **अशिशिषते इति** । 'अशू व्याप्तौ' ऊदित्त्वादिड्विकल्पे प्राप्ते नित्यमिट् । 'अश भोजने' इति क्र्यादिस्तु नित्यं सेडेव । **उच्छेरिति** । 'उच्छी विवासे' । अत्र 'छे च' इति तुगित्यर्थः । **श्चुत्व-मिति** । 'तुक्' इति शेषः । ननु उच्छ् इस इति स्थिते श्चुत्वस्याऽसिद्धत्वात्तकारसहितस्य द्वित्वे अभ्यासे तकारः श्रूयेते-त्यत आह-**पूर्वत्रेत्यादि** । **हलादिः शेष इति** । च्छिस् इत्यस्य द्वित्वे हलादिशेषादभ्यासे छकारसकारयोर्निवृत्तौ तुकश्चकार इकारश्च शिष्यते इत्यर्थः । तदाह- **उच्चिच्छिषतीति** । उत्तरखण्डे छकारे परे इकारस्य तुकश्चुत्वेन चकारः । ननु च्छिस् इत्यस्य द्वित्वे हलादिशेषात्पूर्वखण्डे छकारसकारयोर्निवृत्तौ 'निमित्ताऽपाये नैमित्तिकस्याप्यपायः' इति न्यायेन तुकोऽपि निवृत्तेस्तदादेशचकारस्य कथमभ्यासे श्रवणमित्यत आह-**निमित्तापाये इति** । कथमनित्यत्व-मित्यत आह-**च्छ्वोरिति** । पृष्टः पृष्टवानित्यादौ प्रच्छेः छकारस्य 'च्छ्वो'रिति शकारे व्रश्चादिना शस्य षत्वे तुक्चकारस्य श्रवणप्राप्तौ तन्निवृत्त्यर्थं सतुक्ग्रहणम् । तत्र चकारस्य शकारे सति निमित्ताऽभावादेव तुकोऽपि निवृत्तिसिद्धेः सतुक्ग्रहणं व्यर्थमापद्यमानम् 'निमित्तापाये' इत्यस्याऽनित्यतां ज्ञापयतीत्यर्थः । **प्रकृतिप्रत्यापत्तिवचनाद्वेति** । 'हनश्च वधः' इति हनधातोरप्प्रत्यये प्रकृतेर्वधादेशे वधशब्दः। कंसवधमाचष्टे कंसं घातयतीत्यादौ 'आख्यानात्कृतस्तदाचष्टे कृल्लुक्प्रकृति-प्रत्यापत्ति'रित्यप्प्रत्ययस्य लुकि प्रकृतेर्वधादेशनिवृत्तिर्विहिता । तत्र कृतो लुकि निमित्ताऽपायादेव वधाद्यादेशनिवृत्ति-

---

शे.]पवादः।**प्रकृतिप्रत्यापत्तीति**।'पुष्ययोगं जानाति-पुष्येण योजयती'त्येतत्साधके 'पुष्ययोगे ज्ञी'ति वचने भाष्यकृत्कृत-प्रत्यापत्त्यनुवृत्तिर्ज्ञापिका । तत्र हि 'चजो'रिति घिति परतः कुत्वम् । अन्यथा कृल्लुकि निमित्ताऽपायपरिभाषयैव कुत्वनिवृत्तौ सिद्धायां किं तदनुवृत्त्येत्यन्यत्र विस्तरः। वस्तुत एतैस्तत्परिभाषाऽभाव एव बोध्यते । **पुस्फारयिष-**

संश्वङो'रिति सूत्राभ्यामिङो गाङ्, श्वयतेः संप्रसारणं च वा । अधिजिगापयिषति । अध्यापिपयिषति । शिश्वाययिषति । शुशावयिषति । '**ह्वः संप्रसारणम्**' । जुहावयिषति । 'णौ द्वित्वात्प्रागच आदेशो ने'त्युक्तत्वादुकारस्य द्वित्वम् । पुस्फारयिषति । चुक्षावयिषति । '**ओः पुयण्ज्यपरे**' । पिपावयिषति । बिभावयिषति । यियावयिषति । रिरावयिषति । लिलावयिषति । जिजावयिषति । पुयण्जि किम् ? । नुनावयिषति । अपरे किम् ? । बुभूषति । 'स्रवती'तीत्वं वा । सिस्रावयिषति । सुस्रावयिषतीत्यादि । अपर इत्येव । शुश्रूषते । **स्तौतिण्योरेव षण्यभ्यासात्** ।८।३।६१। अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात्षभूते सनि नान्यस्य । तुष्टूषति । 'द्युतिस्वाप्यो'रित्युत्वम् । सुष्वापयिषति । सिषाधयिषति। स्तौतिण्योः किम् ?। सिसिक्षति। उपसर्गात्तु 'स्थादिष्व-

---

त.]सारणम् । **ह्वः संप्रसारणम्** । इदं च णिजन्तेष्व व्याख्यातमिह तु स्मारितम्। **जिजावयिषतीति** । जुः सौत्रो धातुः 'जुचङ्क्रम्ये'त्यत्रोक्तः । **शुश्रूषते इति** । 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मपदम् । **स्तौतिण्योरेव** । एवं च सिषाधयिषेति प्रयोगस्य साधुत्वं न तु सिसाधयिषेत्यस्येति ज्ञेयम् । **उपसर्गात्त्विति** । मध्येऽपवादन्यायात् 'स्तौतिण्यो'रिति

---

बा.]सिद्धेः प्रकृतिप्रत्यापत्तिवचनं व्यर्थमापद्यमानं 'निमित्तापाये' इत्यस्य अनित्यतां ज्ञापयतीत्यर्थः । यद्यप्यत्र वधशब्दे अप्प्रत्ययो वधादेशश्च युगपद्विहितो, नतु प्रत्यये परे, तथापि संनियोगशिष्टत्वात् प्रत्ययस्य निमित्तत्वं पर्यवसानगत्येति बोध्यम् । वस्तुतस्तु पुष्ययोगं जानाति पुष्येण योजयतीत्येतत्साधके 'पुष्ययोगे ज्ञी'ति वचने भाष्योक्तप्रकृतिप्रत्यापत्तिरित्यनुवृत्तिरिह ज्ञापिका । तत्र हि 'चजो' रिति घिति परतः कुत्वम् । अन्यथा कृल्लुकि निमित्ताऽपायपरिभाषयैव कुत्वनिवृत्तौ किं प्रकृतिप्रत्यापत्त्यनुवृत्त्येति शब्देन्दुशेखरे विस्तरः । अथ 'इङ् अध्ययने' 'टु ओ श्वि गतिवृद्ध्योः' इत्याभ्यां ण्यन्ताभ्यां सनि विशेषमाह–**णौ चेति** । 'णौ च संश्वङो'रिति सूत्रं द्वितीयस्य चतुर्थे पादे, षष्ठस्य प्रथमे पादे च स्थितम् ।'सन्परे चङ्परे च णौ इङो गाङ् वे'ति प्रथमस्यार्थः।'सन्परे चङ्परे च णौ श्वयतेः संप्रसारणं वे'ति द्वितीयस्यार्थः। प्रथमसूत्रेण इङो गाङ्, द्वितीयसूत्रेण श्वयतेः सम्प्रसारणमित्युभयमपि पाक्षिकं भवतीत्यर्थः । **अधिजिगापयिषतीति** । इङो णौ विवक्षिते गाङि पुकि गापीत्यस्मात्सनि रूपम् । 'णौ च संश्वङो'रिति गाङ्विधौ विषयसप्तमीति प्रागेवोक्तम् । गाङभावे आह–**अध्यापिपयिषतीति**। 'क्रीङ्जीनां णौ' इत्यात्त्वे पुक् । **शिश्वाययिषतीति** । श्विधातोर्णौ वृद्धावायादेशे श्वायि इत्यस्मात्सनि संप्रसारणाऽभावे रूपम् । संप्रसारणपक्षे आह–**शुशावयिषतीति** । ण्यन्तात्सनि इटि श्वि इ इस इति स्थिते 'संप्रसारणं तदाश्रयं च कार्यं बलव'दिति वचनात्प्रथमं संप्रसारणं पूर्वरूपम् । 'शु' इत्यस्य द्वित्वे उत्तरखण्डे उकारस्य वृद्धावावादेशे णिचो गुणाऽयादेशाविति भावः। **ह्वः संप्रसारणमिति**। हेतुमण्ण्यन्तप्रक्रियायां व्याख्यातम् । **जुहावयिषतीति** । ह्वेञो ण्यन्तात्सनि इटि प्रथमं संप्रसारणं पूर्वरूपम् । 'हु' इत्यस्य द्वित्वम् । उकारस्य वृद्ध्यावादेशौ, णिचो गुणाऽयादेशाविति भावः । ननु परत्वाद्द्वित्वात् प्रागेव उकारस्य वृद्ध्यावादेशयोः कृतयोर्हाविर्त्यस्य द्वित्वे अभ्यासस्याऽत इत्त्वे इकार एव श्रूयेतेत्यत आह–**णौ द्वित्वादिति** । **पुस्फारयिषतीति** । स्फुरतेः ण्यन्तात्सनि इटि 'चिस्फुरोर्णौ' इत्यस्मात् प्रागेव स्फुरित्यस्य द्वित्वम्, द्वित्वे कार्ये णावच आदेशस्य निषेधात्। 'ओः, पुयण्जी'ति इत्वं तु न, फकारस्य सकारेण व्यवहिततया पवर्गपरत्वाऽभात् । **चुक्षावयिषतीति** । क्षुधातोर्ण्यन्तात्सनि इटि 'क्षु' इत्यस्य द्वित्वम् । परिनिष्ठिते रूपे अवर्णपरत्वेन णावच आदेशस्य निषेधादिति भावः ।

**ओः पुयणिति**।हेतुमण्णिच्प्रक्रियायामिदं व्याख्यातमपि स्मार्यते।**पिपावयिषतीत्यादि**।पू,भू,यु, रु, लू, जु एभ्यो ण्यन्तेभ्यः सनि इटि द्वित्वे कार्ये णावच आदेशनिषेधात् उवर्णान्तानामेव द्वित्वे अभ्यासोवर्णस्य इत्वमिति भावः । जुः सौत्रो धातुः, 'जुचङ्क्रम्ये'त्यत्रोक्तः । अथ 'स्रवतिशृणोती'ति सूत्रं हेतुमण्णिच्प्रक्रियायां व्याख्यातं स्मारयति–**स्रवतीतीत्वं वेति** । **शुश्रूषते इति** । 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदम् । **स्तौतिण्योरेव** । 'षणी'ति कृतषत्वस्य सनो ग्रहणम्। 'अपदान्तस्य मूर्धन्यः'इत्यधिकृतम्, 'इण्को'रिति च। तत्र कुग्रहणं निवर्तते, असंभवात्। णिग्रहणेन तदन्तग्रहणम् । 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते । तदाह–**अभ्यासेण इत्यादि** । **षभूते इति** । षकारं प्राप्ते सनीत्यर्थः । **नान्यत्रेति** । अभ्यासेणः परस्य चेत्सस्य षत्वं तर्हि स्तौतिण्यन्तयोरेवेत्यर्थः । नच 'आदेशप्रत्यययो'रित्येव सिद्धे आरम्भसामर्थ्यादेव नियमलाभादेवकारो व्यर्थ इति शङ्क्यं, षण्येवेति नियमनिरसनार्थत्वात् । 'षण्येवे'ति नियमे सति तुष्टवेत्यत्र षत्वाऽनापत्तेः । स्तौतेरुदाहरति–**तुष्टूषतीति** । 'अञ्झने'ति दीर्घः। ण्यन्तस्योदाहरिष्यन्नाह–**द्युतीति** । **उत्त्वमिति** । वकारस्य संप्रसारणमुकार इत्यर्थः । **सुष्वापयिषतीति** । स्वपेर्णौ उपधावृद्धौ

---

शे.]तीति। व्यवधानात् 'ओः पुय'णिति न । **स्तौतिण्योरेव** । एवकार इष्टतोऽवधारणार्थः।अन्यथा 'षण्येवे'ति नियमः स्यात् । तथा च 'तुष्टावे'ति न स्यात् । सानुबन्धकषणीति किम् ?। सुषूषे इह । **उपसर्गात्त्विति** । 'स्तौतिण्यो'रिति

भ्यासेन चे'ति षत्वम् । परिषिषिक्षति । षणि किम् ? । तिष्ठासति । सुषुप्सति । अभ्यासादित्युक्तेर्नेह निषेधः,- इण्-प्रतीषिषति । इक्-अधीषिषति । **सः स्विदिस्वदिसहीनां च** ।८।३।६२। अभ्यासेणः परस्य ण्यन्तानामेषां सस्य स एव, न षः षणि परे । सिस्वेदयिषति । सिस्वादयिषति । सिसाहयिषति । 'स्थादिष्वभ्यासेने'ति नियमान्नेह-अभिसुसूषति । * **शैषिकान्मतुवर्थीयाच्छैषिको मतुवर्थिकः । सरूपः प्रत्ययो नेष्टः, सन्नन्तान्न सनिष्यते** । शैषिकाच्छैषिकः सरूपो न । तेन शालीये भव इति वाक्यमेव न तु छान्ताच्छः । सरूपः किम् ? ।

त.]नियमेन 'आदेशप्रत्यययो'रिति षत्वमेव बाध्यते न तु 'स्थादिष्वभ्यासेन चे'त्युत्तरेण विहितमिति भावः। **सुषुप्सतीति**। 'रुदविदे'ति सनः कित्वान्न गुणः । **प्रतीषिषतीति** । इह षभूते सनीण् गताविति धातोः परस्य सस्य षत्वं भवत्येवेत्यर्थः। **नियमान्नेहेति**। न चाऽत्र नियमादेव निषेधे 'सुनोतेः स्यसनो'रिति सूत्रं सन्विषये निर्विषयं स्यादिति वाच्यम्, अभिसुसूषतेरप्रत्ययः 'अभिसुसू'रित्यत्र षत्वनिषेधाय तस्यावश्यकत्वात् । एतच्च काशिकायां स्पष्टम् । **शैषिकेति** । एतच्च श्लोकवार्तिकमिति केचित् । भाष्यमिति बहवः । शेषे भवः शैषिकः । अध्यात्मादित्वाट्ठञ् । मतुबर्थे भवो मतुब-

बा.]स्वापि इत्यस्मात्सनि इटि वकारस्य संप्रसारणे पूर्वरूपे सुप् इत्यस्य द्वित्वे णेर्गुणे अयादेशे सनः षत्वे अभ्यासेणः परस्य षत्वमिति भावः। **सिषापयिषतीति**।अत्रापि ण्यन्तत्वादभ्यासेणः परस्य षत्वमिति भावः।**सिसिक्षतीति**।सेक्तुमिच्छतीत्यर्थः । सिचधातोः सन् । 'हलन्ताच्चे'ति कित्त्वान्न लघूपधगुणः । 'अभ्यासेणः परस्य सस्य चेत् षत्वं, तर्हि स्तौतिण्योरेवे'ति नियमान्न ष इति भावः । ननु परिषिषिक्षतीत्यत्र अभ्यासेणः परस्य सस्य कथं षत्वं, 'स्तौतिण्योरेवे'ति नियमात्, 'स्थादिष्वभ्यासेन चे'ति षत्वस्याप्यनेन नियमेन निवृत्तेरित्यत आह-**उपसर्गात्त्विति**। 'स्तौतिण्योरेवे'ति नियमेन मध्येऽपवादन्यायबलात् 'आदेशप्रत्यययोः' इति षत्वमेव बाध्यत इति भावः। **षणि किमिति** । कृतषत्वनिर्देशः किमर्थ इति प्रश्नः । **तिष्ठासतीति** । 'धात्वादे'रिति षस्य सत्वे स्था इत्यस्य द्वित्वे अभ्यासह्रस्वे इत्त्वे 'आदेशप्रत्यययो'रिति षत्वम् । कृतषत्वे सन्येवायं नियमः, अत्र तु सनः षत्वाऽभावेन नियमाऽप्रवृत्तेः षत्वं निर्बाधमिति भावः।**सुषुप्सतीति**। स्वप्धातोः सनि 'रुदविदमुषग्रहिस्वपी'ति कित्त्वात् 'वचिस्वपी'ति संप्रसारणे कृते द्वित्वम् । कित्त्वान्न लघूपधगुणः । इहापि 'स्तौतिण्योरेवे'ति नियमो न भवति, सनः षत्वाऽभावादिति भावः । ननु 'षणि इणः परस्य सस्य चेत्षत्वं तर्हि स्तौतिण्योरेवे'त्येतावदेवास्तु, अभ्यासादिति किमर्थमित्यत आह-**अभ्यासादित्युक्तेर्नेहेति** । **प्रतीषिषतीति** । इण्धातोः सनि 'अजादेर्द्वितीयस्ये'ति स इत्यस्य द्वित्वे अभ्यासेत्वम् । इह षभूते सनि 'इण् गतौ' इति धातोः परस्य सस्य षत्वं भवत्येव, अभ्यासेणः परत्वे सत्येव नियमप्रवृत्तेरिति भावः । **अधीषिषतीत्यप्येवम्** । **सः स्विदि** । सः स्विदीति छेदः । 'स्तौतिण्योरेव षण्यभ्यासा'दिति सूत्रं स्तौतिवर्जमनुवर्तते । 'सहे साडः सः' इत्यतः स इति षष्ठ्यन्तं च । तदाह-**अभ्यासेण इति** । सकारविधिर्नियमार्थ इत्याह-**सस्य स एवेति** । सुनोतेः सनि 'स्तौतिण्योरेवे'ति नियमादुत्तरखण्डस्य षत्वाऽभावे अभिसुसूषतीत्यत्र 'उपसर्गात्सुनोती'त्यभ्यासस्य षत्वमाशङ्क्याऽऽह-**स्थादिष्वेवेति**। **शैषिकादिति** । सन्विधायकसूत्रस्थमिदं वार्तिकम् । शैषिकात्सरूपः शैषिकः प्रत्ययो न । मतुवर्थीयात्सरूपो मतुबर्थिकः प्रत्ययो नेत्यन्वयः। शेषाधिकारे विहितः शैषिकः। भवार्थे अध्यात्मादित्वाट्ठञ् । मतुबर्थे भवो-मतुबर्थीयः। गहादित्वाच्छः। मतुबर्थोऽस्यास्तीति मतुबर्थिकः । 'अत इनिठनौ' इति ठन् । **शालीये इति** । शालायां भवः शालीयः । 'वृद्धाच्छः' ।

शे.]नियमेन मध्येऽपवादन्यायबलात् 'आदेशप्रत्यययो'रिति षत्वमेव बाध्यत इति भावः । सोषुप्यतेः सनि 'सोषुपिषते' इत्यादौ तु षत्वं भवत्येवं, प्रत्यासत्त्या सनि योऽभ्यासस्तस्माद्या प्राप्तिस्तस्या एव नियमेन व्यावृत्तेः । अयन्तु यङ्निमित्तोऽभ्यासः । **प्रतीषिषतीति**। अत्राऽभ्यासान्तस्य 'अज्झनगमा'मिति न दीर्घः, 'सिषेचे'त्यत्र पदादित्ववारणाय 'एकाचो द्वे' इति सूत्रभाष्योक्तरीत्या द्वित्वनिष्पन्नस्योत्तरभागस्य प्रत्ययाधिकारस्थत्वाऽभावेनाऽप्रत्ययतया चाऽभ्यासान्तसमुदायस्याऽङ्गत्वाऽभावात्, श्रुतिपातिरूपसन्त्वं त्वस्त्येवेतीत्वं भवत्येव । 'सन्यतः' इत्यस्य ह्यङ्गावयवाभ्यासस्याऽत इत्सनि परत इत्येवार्थ इत्यलम् । धातूपसर्गैकादेशनिष्पन्नेण्निमित्तमत्राद्यखण्डे षत्वं, न त्वभ्यासेण्निमित्तं, द्विःप्रयोगत्वादभ्यासस्य षण्परत्वं, द्वितीयस्य तु न षण्परत्वम् । **सः स्विदि** । 'न स्विदी'ति वक्तुं युक्तम् । **शैषिकादिति** । सन्विधायके भाष्ये इदम् । शेषाधिकारभवप्रत्ययान्तात्तदधिकारभवः सरूपो न । **शालीये इति** । शालायां भवे इत्यर्थः। **वाक्यमेवेति**। एवकारेण च्छ एव व्यावर्त्यते, तदाह-**न त्विति** । अण् तु भवत्येवेति भावः । **अणन्तादिति** । भवाद्यर्थाऽणन्तादित्यर्थः । अत्र सारूप्यं शब्दत एव, तेन जातार्थच्छान्ताद्भवार्थेऽपि छो नेत्याहुः । स्पष्टं चेदं वृत्तौ । न च शालाशालीययोः पठति-पिपठिषत्योश्चैककालिकोपस्थित्यभावात्कथन्तत्तत्प्रत्ययान्तेभ्यस्तत्तत्प्रत्ययप्राप्तिरिति निषेधो व्यर्थ इति वाच्यं, नित्यशब्दपक्षे धातुत्वेन प्रातिपदिकत्वेन च सर्वानुवादेन विधिसम्भवात् । अत एव त्वप्रत्ययान्तात्त्वप्रत्ययसिद्धिः

अहिच्छत्रे भव आहिच्छत्रः।आहिच्छत्रे भव आहिच्छत्रीयः। अण्णन्ताच्छः। तथा मत्वर्थात्सरूपः स नं। धनवान-स्यास्ति। इह मतुबन्तान्मतुन्न। विरूपस्तु स्यादेव। दण्डिमती शाला। सरूप इत्यनुषज्यते। अर्थद्वारा सादृश्यं तस्यार्थः।तेन इच्छासन्नन्तात्सन्न।स्वार्थसन्नन्तात्तु स्यादेव। जुगुप्सिषते। मीमांसिषते। इति सन्नन्तप्रक्रिया।

## अथ यङन्तप्रक्रिया।

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ्** ।३।१।२२। पौनः पुन्यं भृशार्थश्च क्रियासमभि-हारः। तस्मिन् द्योत्ये यङ् स्यात्। **गुणो यङ्लुकोः** ।७।४।८२। अभ्यासस्य गुणः स्याद्यङि यङ्लुकि च। 'सनाद्यन्ताः' इति धातुत्वाल्लडादयः।ङिदन्तत्वादात्मनेपदम्।पुनः पुनरतिशयेन वा भवति बोभूयते।बोभूयांचक्रे। अबोभूयिष्ट। धातोः किम् ?। आर्द्धधातुकत्वं यथा स्यात्। तेन 'ब्रुवो वचि'रित्यादि। एकाचः किम् ?। पुनः

---

त.]र्थीयः। गहादित्वाच्छः। मतुबर्थोऽस्यास्तीति मतुबर्थिकः। 'अत इनिठनौ' इति ठन्। इति सन्नन्तप्रक्रिया।

**धातोरेकाचो**।क्रियासमभिहार इत्युक्तत्वाद्धातोरेव स्यान्न तु प्रातिपदिकादिति पृच्छति **धातोः किमिति**।**ब्रुवो वचिरित्यादीति**।वावच्यते, चाख्यायत इत्यादिरूपसिद्धिः प्रयोजनमित्यर्थः।धातुग्रहणाऽभावे धिगित्यव्ययादपि स्यात्तस्य

---

बा.]शालीये भव इत्यर्थे शालीयशब्दात्पुनः छो नेत्यर्थः। **आहिच्छत्रे भव इति**। आहिच्छत्रशब्दो भवार्थे अणन्तः। ततो भवार्थे 'वृद्धाच्छः' इति छ एव भवति नतु पुनरणिति भावः। ननु जुगुप्सिषते इत्यादौ कथं सन्नन्तात् सन्नित्यत आह–**सरूप इत्यनुषज्यते इति**। 'सन्नन्तान्न सनिष्यते' इत्यत्रापि सरूप इत्यनुषज्यते इत्यर्थः। नन्वेवमपि जुगु-प्सिषते इत्यत्र सरूपस्य सनः कथं प्रवृत्तिरित्यत आह–**अर्थद्वारेति**। शब्दतो वैरूप्यस्याऽसंभवादर्थद्वारकमेव सारूप्यं विवक्षितमिति भावः। **तेनेति**। इच्छासन्नन्तादिच्छासन्नेति लभ्यते इत्यर्थः। **स्वार्थेति**। स्वार्थसन्नन्तात्तु इच्छासन् भवत्येवेत्यर्थः। **इति सन्नन्तप्रक्रिया**।

अथ यङ्प्रक्रिया निरूप्यन्ते। **धातोरेकाचो**। **तस्मिन्द्योत्ये इति**। वाच्यत्वे तु प्रत्ययवाच्यस्य प्रधानतया सन्नन्ते इच्छाया इव तस्य विशेष्यत्वं स्यादिति भावः। **गुणो यङ्लुकोः**। यङ् च लुक्च इति द्वन्द्वात्सप्तमी। लुगिह यङ एव विवक्षितः, उपस्थितत्वात्। 'अत्र लोपः' इत्यतोऽभ्यासस्येत्यनुवर्तते। तदाह–**अभ्यासस्येति**। इक्परिभाषया इगन्तस्येति लभ्यते। **बोभूयते इति**। 'सन्यङो'रिति द्वित्वम्। यङो ङित्वादूकारस्य न गुणः। 'बोभूये'त्यस्माल्लटि तिपि शपि पररूपम्। 'क्रियासमभिहारे द्वे वाच्ये' इति पुनर्द्वित्वं तु न, तस्य 'क्रियासमभिहारे' इति विहितलोडन्तमात्रविषयत्वात्। अत एव 'क्रियासमभिहारे लो'डिति सूत्रभाष्ये 'क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्वे वाच्ये' इत्येव पठितम्। पौनः पुन्ये यङि तु 'नित्यवीप्सयो'रिति न द्वित्वम्, 'क्रियासमभिहारे द्वे' इत्यनेन पौनः-पुन्येऽपि लोडन्तद्वित्वविधानेन पौनःपुन्यस्य अन्यतो लाभे सौत्रद्वित्वाऽप्रवृत्तेर्ज्ञापनादित्यलम्। **धातोः किमिति**। 'क्रियासमभिहारे' इत्यनेनैव धातोर्लाभात्किमर्थं धातुग्रहणमिति प्रश्नः। **आर्द्धधातुकत्वमिति**। 'धातो'रित्यभावे आर्द्ध-धातुकत्वं न स्यात्, धातोरिति विहितप्रत्ययस्यैव आर्द्धधातुकत्वादिति भावः। **ब्रुव इति**। यङ आर्द्धधातुकत्वे सत्येव तस्मिन् परे 'ब्रुवो वचिः' 'वेञो वयि'रित्यादि कार्यं सिध्यति, अन्यथा 'आर्द्धधातुके' इत्यधिकृत्य तद्विधानान्न स्यादिति भावः। **भृशमीक्षते इति**। नच भृशशब्देनैवाऽत्र भृशार्थभानाद्यङ् न भविष्यतीति वाच्यम्, भृशत्वं हि यङ्द्योत्यम्, नतु वाच्यम्। द्योतनं च उक्तस्यापि संभवतीति भावः। **यङ् नेति**। अनभिधानादिति भाष्ये स्पष्टम्। **पौनःपुन्ये**

---

शे.]सत्यभिधाने।तथाऽल्पार्थे सिद्ध'सर्वक'शब्दादर्थान्तरे पुनरकच् सत्यभिधाने इष्ट एव।अन्यथा त्वनभिधानान्न। **सरूपः सं नेति**। सारूप्यं शब्दतोऽर्थतो वा। तेन समानार्थो विरूपः सरूपश्च न, भिन्नार्थः समानाकारो नेत्यर्थः। 'दण्डि-मती'त्यत्र षष्ठीसप्तम्यर्थान्यतरवृत्तेः सप्तमीषष्ठ्यन्य[illegible]र्थे प्रत्ययेऽर्थतः शब्दतश्च सरूपत्वाऽभावान्न दोष इति मतुप्सूत्रे आकरे स्पष्टम्। तत्र हि 'मत्वर्थीयान्मतुबादेः प्रतिषेधो वक्तव्यः। तत्रापि श्रुवता समानवृत्तौ सरूप इति वक्तव्य'मित्यु-क्तम्। सनि त्वर्थसारूप्यमेव, विशेषणसामर्थ्यात्। **इति सन्नन्तप्रक्रिया**।

**भृशार्थः**–कात्स्न्यम्।**तस्मिन्द्योत्ये इति**।वाच्यत्वे तु सन्नन्ते इच्छाया इव तस्य विशेष्यत्वं स्यादिति भावः।**पुनः पुनरित्यादि**–धातोः क्रियासमभिहारवृत्तिताद्योतकम्।**बोभूयत इति**।'क्रियासमभिहारे द्वे'इति द्वित्वन्तु न,'क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्वे'इति 'क्रियासमभिहारे लो'डिति सूत्रे भाष्ये पाठेन तस्य लोड्विषयत्वात्।किञ्च यङः क्रियासम-भिहारातिरिक्तार्थाऽभावेन यङैव तद्द्योतनसम्भवान्न तत्।लोटस्तु समुच्चयेऽपि विधानादस्ति तद्द्योतने द्वित्वापेक्षा। भृशार्थे यङि ततःपौनःपुन्यविवक्षायान्तु भवत्येव 'नित्यवीप्सयो'रिति द्वित्वं–'पापच्यते पापच्यते'इति।भृशक्रियां सम्पादयन्पुनःपुनः

पुनर्जागर्त्ति । हलादेः किम् ? । भृशमीक्षते । 'भृशं रोचते शोभते इत्यत्र यङ्नेति' भाष्यम् । पौनःपुन्ये तु स्यादेव । रोरुच्यते । शोशुभ्यते । * सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः । आद्यास्त्रयश्चुरादावदन्ताः । सोसूच्यते । सोसूत्र्यते । अनेकाच्त्वेनाऽषोपदेशत्वात्षत्वं न । मोमूत्र्यते । यस्य हलः ।६।४।४९। यस्येति सङ्घातग्रहणम् । हलः परस्य यशब्दस्य लोपः स्यादार्द्धधातुके । आदेः परस्य' । 'अतो लोपः'। सोसूचांचक्रे । सोसूचिता। सोसूत्रिता । मोमूत्रिता । दीर्घोऽकितः ।७।४।८३। अकितोऽभ्यासस्य दीर्घः स्याद्यङि

त.]क्रियावाचित्वादेकाच्त्वाच्चेति तद्वारणार्थमपि धातुग्रहणमावश्यकमित्याहुः। यस्य हलः । सङ्घातग्रहणमिति । तेन ईर्ष्यिता अहर्यादित्यादौ यलोपो न । सङ्घातग्रहणेन चाऽर्थवद्ग्रहणपरिभाषोपस्थित्या पुत्रकाम्येत्यादौ नातिप्रसङ्गः । वर्णग्रहणे तु उक्तपरिभाषाया अनुपस्थित्या स्यादेवाऽत्र यलोप इति भावः।हलः किम्?। लोलूयिता। पोपूयिता।दीर्घोऽकितः। अकितः किम् ? । यंयम्यते । रंरम्यते। ननु दीर्घश्रुत्योपस्थितेनाऽचा 'अत्र लोपोऽभ्यासस्ये'त्यतोऽनुवृत्तमभ्यासस्येत्येतद्विशिष्येत । ततश्चाऽजन्ताभ्यासस्य दीर्घो भवतीत्यर्थात् पापच्यत इत्यादावेव दीर्घो भवेन्न तु यंयम्यते जङ्गनीतीत्यादौ। तत्र हि परत्वान्नुकि कृतेऽभ्यासस्याऽजन्तत्वाऽभावाद्दीर्घस्य प्रसक्तिरेव नास्तीति किमनेनाऽकित इत्यनेन । न चाभ्यासावयवस्याऽचो दीर्घ इति वैयधिकरण्यान्वये स्वीकृतेऽकिद्ग्रहणं प्रयोजनवदिति वाच्यं, संभवति सामानाधिकरण्ये वैयधिकरण्यस्याऽन्याय्यत्वात् । येन नाप्राप्तिन्यायेन नुको दीर्घापवादत्वस्वीकाराच्च । तस्मादकित इति व्यर्थमिति चेत् । अत्राहुः—डोढौक्यते इत्यत्राभ्यासह्रस्वं बाधित्वा परत्वात् 'दीर्घोऽकितः' इति दीर्घे कृते डोढौक्यत इति स्यात् । तस्मादभ्यासविकारेषु उत्सर्गविधीन्बाधका न बाधन्त इति ज्ञापनायाऽकित इति ग्रहणं कर्तव्यमिति । तथा चोक्तज्ञापकनिर्वाहाय 'दीर्घोऽकितः' इत्यत्राऽभ्यासस्याऽच इति वैयधिकरण्यपक्षस्याश्रयणार्थंयम्यत इत्यादौ दीर्घात्प्रागेव नुकि कृतेऽपि दीर्घः स्यात्,तद्वारणार्थ-

बा.]त्विति । पुनःपुनश्शब्दसमभिहारेऽपि यङस्त्येव, भृशार्थे एवाऽनभिधानोक्तेरिति भावः । सूचिसूत्रीति । सूचि, सूत्रि, मूत्रि, अटि, अर्ति, अशू, ऊर्णोति—एषां द्वन्द्वः । 'सूच पैशुन्ये', 'सूत्र वेष्टने', 'मूत्र प्रस्रवणे' एते त्रयश्चुराद्यन्तर्गणे कथादावदन्ताः । तेषामनेकाच्त्वादप्राप्तौ यङ्वचनमित्याह—आद्यास्त्रय इति । 'अट गतौ, ऋ गतौ, अश भोजने, अशू व्याप्तौ' एषां हलादित्वाऽभावाद्वचनम् । ऊर्णुमस्तु हलादित्वाऽभावादेकाच्त्वाऽभावाच्च वचनम् । सोसूच्यते इति । ण्यन्ताद्यङि णिलोपे द्वित्वे 'गुणो यङ्लुको'रित्यभ्यासगुणः । सूचेः षोपदेशत्वभ्रमं वारयति—अनेकाच्त्वेनेति । षोपदेशत्वे तु 'धात्वादे'रिति षस्य सत्वे कृते आदेशसकारत्वादुत्तरखण्डस्य षत्वं स्यादिति भावः ।

लिटि सोसूच् य आमिति स्थिते—यस्य हलः। यकारादकारस्य उच्चारणार्थत्वभ्रमं वारयति—सङ्घातग्रहणमिति । यकाराऽकारसमुदायस्येत्यर्थः। 'हलः' इति पञ्चमी। 'अर्द्धधातुके' इत्यधिकृतम् । 'अतो लोपः' इत्यस्माल्लोप इत्यनुवर्तते । तदाह—हलः परस्येत्यादिना । ननु 'अलोऽन्त्यस्ये'ति यकारादकारस्य लोपः स्यादित्यत आह—आदेः परस्येति। 'अलोऽन्त्यस्ये'त्यस्यायमपवाद इति भावः । अतो लोप इति । यकाराऽकारसङ्घाते यकारस्य लोपे सति परिशिष्टस्याऽकारस्य 'अतो [लोपे इति]लोप इत्यर्थः। ननु मास्तु सङ्घातग्रहणम् ,यकारस्यैवात्र लोपो विधीयताम्। अतो लोपे सति इष्टसिद्धिरिति चेत् , न, ईर्ष्य्धातोस्तृचि सति ईर्ष्यितेत्यत्र यकारलोपनिवृत्त्यर्थत्वादित्यलम् । अटधातोर्यङि 'अजादेर्द्वितीयस्ये'ति'ट्य' इत्यस्य द्वित्वे हलादिशेषेण अभ्यासे यकारनिवृत्तौ अटाट्यते इति स्थिते—दीर्घोऽकितःअभ्यासस्येति। 'अत्र लोपोऽभ्यासस्ये'त्यतस्तदनुवृत्तेरिति भावः। यङि यङ्लुकि चेति। 'गुणो यङ्लुको'रित्यतस्तदनुवृत्तेरिति भावः। 'अकित' इत्यस्य तु यंयम्यते इत्यादौ प्रयोजनं वक्ष्यते । ऋधातोर्यङि कृते ङित्त्वाद्गुणनिषेधे प्राप्ते—यङि च । 'गुणो-

शे.]पचतीत्यर्थात्। पौनःपुन्ये यङि तु न 'नित्यवीप्सयो'रिति द्वित्वं,'क्रियासमभिहारे द्वे' इत्यनेन पौनःपुन्येऽपि लोडन्तद्वित्वविधानेन पौनःपुन्यस्य केनचिद्द्योतने सौत्रद्वित्वाऽप्रवृत्तेर्ज्ञापनात्। अन्यथा भृशार्थ इत्येव वदेदिति निरूपितं द्विरुक्तप्रक्रियायामिति दिक् । क्रियासमभिहारे धातोरेव वृत्तिसम्भवात्पृच्छति—धातोः किमिति । यङ् नेतीति । अनभिधानादिति भावः । यङ्विधौ 'धातोः कर्मणः' इत्यतो वेत्यनुवर्त्तते । तेन धातुसम्बन्धे पक्षे यङोऽभावे 'भवाँल्लुनीहि लुनीहीत्येवायं लुनाती'त्यादौ लोट् सिद्धिरिति भाष्ये स्पष्टम्। सूचिसूत्रि। सूत्रे एकाज्हलादिग्रहणप्रत्याख्यानफलमिदम् । सूत्रे स एकदेशानुवादः । भृशं शोभते रोचते इत्यादावतिव्याप्तेः, सूच्यादावव्याप्तेश्च तत्प्रत्याख्यातं । यथास्थितसूत्रन्यासे तु तेषामुपसङ्ख्यानं कर्त्तव्यं स्यादिति स्पष्टं भाष्ये । यथान्यासेऽपि 'ऊर्णोतेर्न वक्तव्यः, नुवद्भावेन सिद्धे'रिति चोक्तं तत्र । अकितोऽभ्यासस्येति । 'अकित' इति बहुव्रीहिः. किद्रहिताभ्यासस्येत्यर्थः । 'अनन्तरस्ये'ति न्यायेनैतत्प्रकरणस्थकिद्युतानामेव व्यावृत्तिरिति 'चाच्छायते' इत्यादावन्तरङ्गत्वात्तुकि दीर्घो भवत्येवेति माधवादयः । भाष्योदाहरणादिति । एतेन यङो द्वित्वं प्रति कार्यित्वेन दीर्घनिमित्तत्वाऽयोग इत्यपास्तम् । अनेन भाष्योदाहरणेन यं प्रति कार्यित्वन्तं

लुंकि च । अटाट्यते । **यङि च** ।७।४।३०। अर्तेः संयोगादेश्च ऋतो गुणः स्याद्यङि । यकारपररेफस्य न द्वित्व-निषेधः, 'अरार्यते' इति भाष्योदाहरणात् । अरारिता । अशाशिता । ऊर्णोनूयते । बेभिद्यते । अल्लोपस्य स्थानिवत्त्वान्नोपधागुणः । बेभिदिता । **नित्यं कौटिल्ये गतौ** ।३।१।२३। गत्यर्थात्कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे । कुटिलं व्रजति वाव्रज्यते । **लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम्** ।३।१।२४। एभ्यो धात्वर्थगर्हायामेव यङ् स्यात् । गर्हितं लुम्पति लोलुप्यते । सासद्यते । **चरफलोश्च** ।७।४।८७। अनयो-रभ्यासस्याऽतो नुक् स्याद्यङ्-लुकोः । 'नु'गित्यनेनानुस्वारो लक्ष्यते । * **'स च पदान्तवद्वाच्यः'** । 'वा पदा-न्तस्ये'ति यथा स्यात् । **उत्परस्याऽतः**।७।४।८८। चरफलोरभ्यासात्परस्याऽत उत्स्याद्यङ्-लुकोः । 'हलि चे'ति

त.]मकित इत्यावश्यकमिति दिक् । **अटाट्यत इति**। इह ट्यशब्दस्य द्वित्वम् । **यङि च** । इह 'गुणोऽर्तिसंयोगाद्यो'-रित्येतत्सर्वमप्यनुवर्तते। **यकारपररेफस्येति**।यदि भाष्योदाहरणं सामान्यापेक्षं ज्ञापकं स्यात्तदाऽर्यमाख्यत्, आर्यदित्यादि सिध्यति । **नित्यं कौटिल्ये** । 'नित्यं'शब्दोऽवधारणार्थक इत्याह-**कौटिल्य एवेति** । तक्रकौण्डिन्यन्यायेनैवेष्टे सिद्धे

बा.]ऽर्तिसंयोगाद्यो'रिति सूत्रमनुवर्तते। 'रीङृतः' इत्यस्माद्दत इति च। तदाह-**अर्तेरित्यादि** । तथाच ऋ य इति स्थिते ऋकारस्य गुणे अकारे रपरत्वे अर्-य इति स्थिते 'न न्द्राः' इति रेफस्य द्वित्वनिषेधे य इत्यस्य द्वित्वे 'दीर्घोऽकितः' इत्यभ्यासदीर्घे 'अर्यायते' इति प्राप्ते आह-**यकारपररेफस्येति** । **भाष्योदाहरणादिति** । 'धातोरेकाचः' इति सूत्रे' इति शेषः । **अरारितेति** । 'यस्य हलः' इति यकारलोपः । **अशाशितेति** । अशधातोर्यङि 'श्य' इत्यस्य द्वित्वे हलादिशेषेण अभ्यासे यकारनिवृत्तौ 'दीर्घोऽकितः' इति दीर्घे 'यस्य हलः' इति यकारलोपः । **ऊर्णोनूयते इति**। ऊर्णु य इति स्थिते 'न न्द्रा' इति 'नु' इत्यस्य द्वित्वे हलादिशेषे अभ्यासगुणे 'अक्र'दिति दीर्घः । **बेभिद्यते इति** । भिद् य इति स्थिते भिदित्यस्य द्वित्वे हलादिशेषे अभ्यासगुणः । ननु बेभिद्य इति यङन्ताल्लुटि तासि इटि यलोपे अतो लोपे बेभिदितेत्यत्र तासि परे लघूपधगुणः स्यादित्यत आह-**अल्लोपस्य स्थानिवत्त्वादिति** ।

**नित्यं कौटिल्ये गतौ** । 'नित्य'शब्द एवार्थे, 'कौटिल्ये' इत्यस्योपरि द्रष्टव्यः । 'धातोरेकाचः' इत्यतो यङित्यनुवर्तते । तदाह-**गत्यर्थात्कौटिल्य एवेति** । गत्यर्थवृत्तेर्धातोः कौटिल्ये द्योत्य एव यङित्यर्थः । एवशब्द-व्यवच्छेद्यमाह-**न तु क्रियासमभिहारे इति**।शब्देन्दुशेखरे तु गत्यर्थेभ्यः क्रियासमभिहारे यङस्त्येवेति प्रपञ्चितम् । **लुपसद** । लुप, सद, चर, जप, जभ, दह, दश, गॄ एषां द्वन्द्वः । यङित्यनुवर्तते । भावो धात्वर्थः। तद्गता गर्हा भाव-गर्हा । नित्यमित्यनुवृत्तमेवकारार्थकं । तदाह-**एभ्य इत्यादि** । **चरफलोश्च** । 'अत्र लोपः' इत्यस्मादभ्यासस्येत्यनु-वर्तते । 'नुगतोऽनुनासिकान्तस्ये'त्यस्मादतो नुगिति । 'गुणो यङ्लुको'रित्यस्माद्यङ्लुकोरिति च । तदाह-**अनयोरित्या-दि** । नुकि ककार इत्, उकार उच्चारणार्थः । **लक्ष्यते इति** । 'नुगतोऽनुनासिकान्तस्ये'ति पूर्वसूत्रे यंयम्यते रंरम्यते इत्यादावनुस्वारश्रवणार्थं नुगित्यनुस्वारोपलक्षणमाश्रयणीयम् । अन्यथा झल्परत्वाऽभावात् 'नश्चे'त्यनुस्वाराऽसंभवान्नकार एव श्रूयेतेत्युक्तं भाष्ये । तस्यैवेहानुवृत्तेरत्राप्यनुस्वारोपलक्षणार्थत्वमिति भावः। **पदान्तवदिति**। 'नुगतोऽनुनासिकान्तस्ये'ति पूर्वसूत्रस्थमिदं वार्तिकमत्राप्यनुवर्तते इति भावः । **उत्परस्याऽतः** । 'अत्र लोपः' इत्यस्मादभ्यासस्येत्यनुवृत्तं परशब्द-

शे.]प्रति निमित्तत्वाऽभावस्यैव 'न हि कार्यी'त्यनेन बोधनादिति भावः। नित्यग्रहणं न वाक्यनिवृत्तये,'विग्रहेण यङन्तप्रति-पाद्यविशेषाऽसम्प्रत्ययान्नित्यग्रहणानर्थक्य'मिति भाष्यात्।तस्मात्कौटिल्यैपदार्थान्वय्यवधारणार्थन्तदित्याह-**कौटिल्य एवे-ति** । इदञ्च वृत्त्यनुरोधेन । 'धातोरेकाचः' इति सूत्रे भाष्ये तु 'उत्तरयोर्विग्रहेण विशेषाऽसम्प्रत्ययान्नित्यग्रहणानर्थ-क्यम् । क्रियासमभिहारे च नैतेभ्यो यङा भवितव्य'मिति । चेन विशेषासम्प्रत्ययादित्यनुकृष्यते। **विग्रहेण**=कुटिलङ्गच्छ-तीत्यनेन,चंक्रम्यत इत्यर्थोऽसम्प्रत्ययान्नित्यग्रहणमाद्येऽनर्थकं, कुटिलं पन्थानं गच्छतीत्येव सम्प्रत्ययात्।**क्रियासमभिहारे चेत्येतत्** 'लुपसदे'त्येतद्विषयम्। तद्विषयस्यैव भाष्ये उदाहरणात्।तस्माद्गत्यर्थेभ्यः क्रियासमभिहारे यङ् भवत्येव । अतोऽपि वक्ष्यमाणं यश्चित्यादिमतमसङ्गतम् । अत एव स्थावरप्रतिद्वन्द्व्यर्थकं 'जङ्गम' इति सिद्धम् । स्थितिशीलो हि स्थावरः, तत्प्रतिद्वन्द्वी मृशङ्गन्ता हि जङ्गमः।योगद्वये नित्यग्रहणाऽभावेन योगयोरित्यस्यैवमेव व्याख्योचिता।चकारस्वारस्याच्च । यत्र तत्कृतं तत्र तत्प्रत्याख्याने उत्तरत्राऽसम्बन्धस्य सिद्धत्वाच्च । **भावगर्हायामेवेति** । इदमपि वृत्तिरीत्यैव । यत्तु गत्य-र्थादिभ्यः कौटिल्यभावगर्हयोर्विशेषविहितेन यङा क्रियासमभिहारार्थयङस्तक्रकौण्डिन्यन्यायेन बाधस्ताभ्यामर्थाभ्यां वा तद-र्थस्य बाध इति, तन्न, तस्य न्यायस्य विधेयविषयत्वादचरितार्थविषयत्वाच्च। अत्र क्रियासमभिहारादेर्यङ्द्योत्यतया तद्वृत्ते-र्धातोरित्यर्थेनाऽविधेयत्वं क्रियासमभिहाराऽविवक्षायां चारितार्थ्यञ्च । अत एवाऽटेरत्तैश्च गत्यर्थकात्क्रियासमभिहारे यङुदा-हृतो भाष्ये, एकाज्हलादिग्रहणञ्च प्रत्याख्यातम् । **उत्परस्य** । परशब्दसामर्थ्यादभ्यासस्येत्यनुवर्तमानं पञ्चम्या विप-

दीर्घः । चञ्चूर्यते । चंचूर्यते । पम्फुल्यते । पंफुल्यते । **जपजभदहदशभञ्जपशां च** ।७।४।८६। एषामभ्यासस्य नुक् स्याद्यङ्-लुकोः । गर्हितं जपति जञ्जप्यते इत्यादि । **ग्रो यङि** ।८।२।२०। गिरते रेफस्य लत्वं स्याद्यङि । गर्हितं गिलति-जेगिल्यते । 'घुमास्थे'तीत्वम् । गुणः । देदीयते । पेपीयते । सेषीयते । 'विभाषा श्वेः' । शोशूयते । शेश्वीयते । 'यङि च' । सास्मर्यते । 'रीङृतः' । चेक्रीयते । सुट्-संचेस्क्रीयते । **सिचो यङि** ।८।३।११२। सिचः सस्य षो न स्याद्यङि । सेसिच्यते । **न कवतेर्यङि** ।७।४।६३। कवतेरभ्यासस्य

त.] नित्यग्रहणं तस्य न्यायस्याऽनित्यत्वज्ञापनार्थम् । तेन 'मतिबुद्धिपूजार्थेभ्यश्चे'ति वर्तमाने क्तेनाऽबाधनात्पूजार्थेभ्यो भूते क्तः सिध्यति । ततश्च 'क्तस्य च वर्तमाने' इति षष्ठी न प्रवर्तेत इति 'पूजितो यः सुरासुरै'रिति तृतीया साधुरेव । इत्यादीति । जंजभ्यते । दंदह्यते । दंदश्यते । बंभज्यते । 'पस'धातुर्दन्त्यान्तः सौत्रो गत्यर्थ इति स्पश बाधनस्पर्शनयोरित्यत्र माधवः । पंपस्यते । काशिकायां तु तालव्यान्तः क्वचिद्दृश्यते । एवं जञ्जपीति । जञ्जभीति । दन्दहीतीत्यादि यङ्लुकि उदाहर्तव्यम् । **ग्रो यङि** । 'कृपो रो लः' इत्यतो रो ल इति वर्तते । तदाह-**रेफस्य लत्वमिति** । **चेक्रीयते इति** । परत्वाद्रीङि कृते द्विर्वचनम् । **संचेस्क्रीयते इति** । रीङि द्वित्वे च सुट् । न च 'सं-कृ' इत्यस्यामवस्थायां द्वित्वात्परत्वात्सुटि कृते संयोगादित्वेन रीङ्प्रवृत्तेः प्राग्गुणः स्यादिति वाच्यम्, 'अडभ्यासव्यवायेऽपी'त्यस्यारम्भेण अडभ्यासयोः कृतयोरेव सुण्न तु ततः प्रागिति सिद्धान्तात् । एतेन 'सुटो बहिरङ्गत्वान्न संयोगादित्वेन गुण' इति केषांचित्समाधानं परास्तम् । अभ्यासात्परस्य सुटि कृते साभ्यासस्याङ्गस्य संयोगादित्वमृदन्तत्वं च नास्तीति गुणप्राप्तेरभावात् । ननु 'अडभ्यासव्यवायेऽपि सुट्कात्पूर्वः' इति वार्तिकप्रत्याख्यानाय 'पूर्वं धातुरुपसर्गेण युज्यते' इति पक्षं स्वीकृत्य भाष्यकृता संचस्करतुरित्यादावन्तरङ्गत्वात्सुटि ससुट्कस्यैव द्वित्वाभ्युपगमात् संचेस्क्रियते इति न सिध्येत् । तत्र हि सुटि कृते रीङं बाधित्वा परत्वात् ' यङि चे'ति गुणे संचास्कर्यत इत्यनिष्टरूपप्रसङ्गात् । यदि तु इष्टानुरोधेन 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणे'ति मताश्रयणेन रीङादेशं द्वित्वं च कृत्वा पश्चात्सुटि इष्टं रूपं सिध्यतीत्युच्यते, तर्हि 'अडभ्यासव्यवायेऽपी'ति वचनं स्वीकर्तव्यमेव स्यादिति चेत् । अत्राहुः-अडभ्यासे'त्यादिवार्तिकं विनापि संचस्करतुरित्यादिरूपसिद्धये भाष्यकृता 'पूर्वं धातुरुपसर्गेण युज्यते' इति पक्ष आश्रितः । संचेस्क्रीयते समचेस्क्रियतेत्यादिसिद्धिस्तु वार्तिकायत्तैवेति । **सिचो यङि** । अभ्याससकारस्य 'उपसर्गात्सुनोती'ति, ततः परस्य तु 'स्थादिष्वभ्यासेन चे'ति षत्वे प्राप्ते निषेधोऽयम् । यङि किम् ?। अभिषिषिक्षति । **न कवतेर्यङि** । इह कोरित्येव वाच्ये कवतेरिति शपा निर्देशात्कूङ् शब्द इति भ्वादि-

बा.] योगात् पञ्चम्या विपरिणम्यते । 'गुणो यङ्लुको'रित्यतो यङ्लुकोरिति, 'चरफलो'रिति चानुवर्तते । तदाह-**चरफलोरित्यादि** । **दीर्घ इति** । 'उकारस्ये'ति शेषः । **चञ्चूर्यते इति** । गर्हितं चरतीत्यर्थः । यङि द्वित्वे हलादिशेषे अभ्यासाऽकारादुपरि अनुस्वारागमे 'वा पदान्तस्ये'ति तस्य परसवर्णे ञकारे उत्तरखण्डेऽकारस्य उत्त्वे तस्य दीर्घः । परसवर्णाऽभावपक्षे त्वाह-**चंचूर्यते इति** । **पम्फुल्यते इति** । अत्र अनुस्वारस्य मकारः परसवर्णः । **जपजभ** । 'चरफलोश्चे'त्यत्र यदनुवृत्तं तत्सर्वमिहाप्यनुवर्तते । तदाह-**एषामिति** । **इत्यादीति** । जञ्जभ्यते । दन्दह्यते । दन्दश्यते । बम्भज्यते । पम्पश्यते । 'पस' धातुर्दन्त्यान्तः सौत्रो गत्यर्थ इति माधवः । 'तालव्यान्त' इति काशिका । **ग्रो यङि** । 'गॄ' इत्यस्य 'ग्रः' इति षष्ठ्येकवचनम् । 'कृपो रोल'इत्यतो रो ल इत्यनुवर्तते । तदाह-**गिरतेरित्यादि** । दा, पा, सा,-एभ्यो यङि विशेषमाह-**घुमास्थेत्यादि** । **शोशूयते इति** । श्विधातोर्यङि 'संप्रसारणं तदाश्रयं च कार्यं बलव'दिति वचनात् संप्रसारणे पूर्वरूपे 'शु' इत्यस्य द्वित्वम् । 'अकृत्सार्वधातुकयो'रिति दीर्घः । **सास्मर्यते इति** । स्मृ य इति स्थिते संयोगादित्वात् 'यङि चे'ति परत्वाद्गुणे रपरत्वे द्वित्वे 'दीर्घोऽकितः' इत्यभ्यासदीर्घः । **चेक्रीयते इति** । कृ-य इति स्थिते परत्वादृकारस्य रीङादेशे 'क्री'त्यस्य द्वित्वेऽभ्यासगुणः । **सुडिति** । 'संपरिभ्यां करोतौ भूषणे' 'समवाये चे'त्यनेने'ति शेषः । **सिचो यङि** । 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते । 'मूर्धन्य' इत्यधिकृतम् । 'न रपरसृपि' इत्यतो नेत्यनुवर्तते । तदाह-**सिच इति** । **सेसिच्यते इति** । 'उपसर्गात्सुनोती'ति, 'स्थादिष्वभ्यासेने'ति च षत्वमनेन निषिध्यते । **न कवतेर्यङि** । 'अत्र लोपः' इत्यतोऽभ्यासस्येति, 'कुहोश्चु'रित्यतश्चुरिति चानुवर्तते इति मत्वाह-

शे.] रिणम्यते । तदाह-**अभ्यासात्परस्येति** । ॠत इति तपरत्वं स्पष्टार्थम् । अस्येत्युक्तौ लाघवाऽभावात् । **ग्रो यङि** । गिरतेरेवाऽत्र ग्रहणं, व्याख्यानात् । **सञ्चेस्क्रीयते इति** । न च सम्-कृ इत्यस्यामवस्थायान्द्वित्वनिमित्तयङः पूर्वमन्तरङ्गत्वात्सुटि कृते ततो यङि, द्वित्वात्परत्वाद्रीङश्च अपवादत्वात् 'यङि चे'ति गुणः स्यादिति वाच्यं, 'सुट्कात्पूर्व' इति सूत्रभाष्ये ध्वनितेन गुणनिषेधेन 'संस्क्रियते' इतिवददोषात् । तत्र हि भाष्ये 'सर्वतोऽन्तरङ्गतरकः सु'डित्युक्तम् । कैयटेन च

चुत्वं न स्याद्यङि। कोकूयते। कौतिकुवत्योस्तु-चोकूयते। **नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्** ।७।४।८४। एषामभ्यासस्य नीगागमः स्याद्यङ्यङ्लुकोः । 'अकित' इत्युक्तेर्न दीर्घः । नलोपः । वनीवच्यते । सनीस्रस्यते इत्यादि । **नुगतोऽनुनासिकान्तस्य** ।७।४।८५। अनुनासिकान्तस्याङ्गस्य योऽभ्यासोऽदन्तस्तस्य नुक् स्यात् । नुकानुस्वारो लक्ष्यत इत्युक्तम्। यँय्यम्यते। यंयम्यते। तपरत्वसामर्थ्याद्भूतपूर्वदीर्घस्यापि न । 'भाम क्रोधे'। बाभाम्यते। 'ये विभाषा'। जाजायते । जञ्जन्यते । *हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः। जेघ्नीयते । हिंसायां किम् ?।

त.]रेव गृह्यते न तु कु शब्द इत्यदादिः, कूङ् शब्द इति तुदादिश्चेत्याशयेनाह–**कौतिकुवत्योस्त्विति** । ननु 'को'रित्युक्तेऽपि कूङः प्रसङ्गो नास्ति, दीर्घान्तत्वात्, लुग्विकरणपरिभाषया च कौतेरपि प्रसङ्गो नास्तीति चेत् । अत्राहुः– 'को'रित्युक्ते तु निरनुबन्धपरिभाषाया अपि 'जागरूकत्वादुभयोर्ग्रहणं स्यादिति कौतिव्यावृत्त्यर्थं शपा निर्देशः कर्तव्यः । कृते च तस्मिन्कुवतिमपि व्यावर्तयतीत्यत्र तात्पर्यमिति। 'कुङ' इत्येवाऽत्र सुवचम् । **इत्यादीति** । दंनीध्वस्यते । बनी-भ्रस्यते । चनीकस्यते । पनीपत्यते । पनीपद्यते। चनीस्कद्यते । एवं वनीवञ्चीति सनीस्रंसीति दनीध्वंसीतीत्यादि यङ्लुक्यु-दाहर्तव्यम् । **घ्नीभाव इति** । ह्नीभावे कृतेऽपि 'अभ्यासाच्चे'ति कुत्वेन जेघ्नीयत इति सिध्यति, तथापि प्रक्रियालाघवाय 'घ्नी'त्युक्तमिति मनोरमा। अन्ये तु 'सेर्हिः' 'मेर्नि'रिति इकारोच्चारणसामर्थ्याद्यथा 'एरु'रित्युत्वं न भवति तथा ह्नीभावे हि कृते 'अभ्यासाच्चे'ति कुत्वं न स्यादित्याशयेन घ्नीभावः कृत इत्याहुः।अत्र च दिग्यादेशेनेव घ्नीभावेन द्वित्वं न बाध्यते पुनः प्रसङ्गविज्ञानादिति केचित् । वस्तुतस्तु यङन्तावयवस्य द्वितीयाऽजवधिकस्य द्वित्वं, घ्नीभावस्तु प्रकृतिमात्रस्येति विषय-

बा.]**कवतेरभ्यासस्येति**। ननु 'कोर्यङी'त्येव सिद्धे श्तिपा निर्देशो व्यर्थ इत्यत आह–**कौतिकुवत्योस्त्विति**। शपा निर्देशार्थं कवतिग्रहणम् । तेन 'कु शब्दे' इति लुग्विकरणस्य, 'कूङ् शब्दे' इति शविकरणस्य च ग्रहणं न लभ्यते इति भावः । नच 'को'रित्युक्तेऽपि दीर्घान्तस्य शविकरणस्य न ग्रहणप्रसक्तिरिति शङ्क्यं, तुदादौ 'कुङ् शब्दे' इति ह्रस्वान्त-पाठस्य न्याससंमतत्वात् । वस्तुतस्तु न्याससंमते तौदादिकेऽस्याऽप्रवृत्तिरेव फलम् । 'लुग्विकरणाऽलुग्विकरणयोरलुग्विक-रणस्यैव ग्रहण'मिति लुग्विकरणस्य ग्रहणनिवृत्तिरिति भावः । **यङ्लुकोरिति** । यङि यङ्लुकि चेत्यर्थः । **न दीर्घ इति** । नीगागमात्प्राक् प्राप्तोऽभ्यासदीर्घो नेत्यर्थः । भविष्यदपि कित्त्वं दीर्घप्रतिबन्धकमिति भावः । **नलोप इति** । 'अनिदिता'मित्यनेन नकारस्य लोप इत्यर्थः । **इत्यादीति** । सनीस्रस्यते, दनीध्वस्यते, बनीभ्रस्यते, चनीकस्यते, पनी-पत्यते, पनीपद्यते, चनीस्कद्यते । **नुगतोऽनु** । अङ्गस्येत्यधिकृतम् । 'अत्र लोपः' इत्यतोऽभ्यासस्येत्यनुवर्तते । 'गुणो यङ्लुको'रित्यतो यङ्लुकोरिति च । तदाह–**अनुनासिकान्तस्येत्यादि** । ननु 'यंयम्यते' इत्यत्र नुको नकारस्य अपदान्तत्वाद्झल्परकत्वाच्च कथं 'नश्चे'त्यनुस्वार इत्यत आह–**नुकेति** । नन्वभ्यासे ह्रस्वविधानाद्दीर्घस्याऽभावान्नुग्विधा-वत इति तपरकरणं व्यर्थमित्यत आह–**तपरत्वसामर्थ्यादिति** । स्वाभाविक एव यो ह्रस्वोऽकारः, तस्यैव ग्रहणम्, नतु दीर्घादेशभूतस्य ह्रस्वाऽकारस्येत्येतदर्थं तपरकरणमिति भावः । **बाभाम्यते इति** । अत्र आकारस्थानिकस्य ह्रस्व-विधिसंपन्नस्य अकारस्य न नुगिति भावः । जनधातोर्यङि नकारस्य आत्त्वविकल्पं स्मारयति–**ये विभाषेति** । **घ्नी-भाव इति** । यद्यपीह ह्नीभावविधावपि 'अभ्यासाच्चे'ति कुत्वे हकारस्य घकारः सिध्यति, तथापि प्रयत्नलाघवाऽभावात्, प्रक्रियालाघवाच्च 'घ्नी'ति घकारोच्चारणमिति भावः । **जेघ्नीयते इति** । पुनः पुनरतिशयेन वा हिनस्तीत्यर्थः । अत्र 'यङी'ति विषयसप्तमी । यङि विवक्षिते सतीति लभ्यते । तेन द्वित्वस्य परत्वेऽपि प्रागेव घ्नीभाव इति बोध्यम् ।

शे.]'इङ्गुणयोस्तु प्रतिषेधो वक्तव्य एवे'त्युक्तम्। एतच्च तनादिशेषे निरूपितम्।शपा निर्देशस्य फलमाह–**कौतीत्यादि** । भ्वादेरेव कुङोऽत्र ग्रहणमिति भावः। **नीग्वञ्चु** । कसधातुर्भ्वादिरेव, अलुग्विकरणत्वादिति केचित् । **अकित इत्युक्ते-रिति** । नन्वजन्ताभ्यासस्य दीर्घ इत्यर्थे नुगागादौ कृतेऽजन्तत्वाऽभावान्नीकि विशेषाऽभावाद्रिकि रीग्विधानेनैव सिद्धे रिग्विधिसामर्थ्यादेव तदभावसिद्धेः किमकित इत्यनेनेति चेन्न, अभ्यासविकारविधौ वैयधिकरण्यान्वयज्ञापनार्थत्वात् । तेन छ्यतेः सनि द्वित्वेऽन्तरङ्गत्वात्तुकि 'चिच्छासती'त्यादावभ्यासह्रस्वेत्वसिद्धिः । न चैवमप्यपवादत्वान्नीगादिभिर्दीर्घबाधे व्यर्थमेव तदिति वाच्यम, 'अभ्यासविकारे बाधका न बाधन्ते' इत्यर्थस्यापि ज्ञापनात् । तेषां सति सम्भवे युगपदेव प्रवृत्तिः, यौगपद्याऽसम्भवे क्रमेणैव । तत्रान्यत्र बाधकप्रवृत्त्युत्तरं बाध्यप्रवृत्त्यभावः, प्रकृते तु तस्मिन्कृतेऽपि प्राप्तियोग्यं बाध्यं भवत्येव । यत्र तु बाधकप्रवृत्त्युत्तरं बाध्यस्य प्रवृत्त्ययोग्यता तत्र पूर्वं बाध्यस्य प्रवृत्तिरनन्तरं बाधकस्य प्रवृत्ति-रिति । अत एव 'मीमांसते' 'अचीकर'दित्यादावित्वे कृते दीर्घः । **अनुस्वार इति** । तस्य पदान्तवत्त्वात्पक्षे पर-सवर्णः। **घ्नीभाव इति** । अत्र यङीति विषयसप्तमीति पूर्वं घ्नीभावे 'पिप्ये' इतिवद्द्वित्वम्। यङ्येवोपसङ्ख्यानाद्यङ्लुकि न।

जङ्गन्यते । **रीगृदुपधस्य च** ।७।४।९०। ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद्यङ्-लुकोः। वरीवृत्यते । क्षुभ्नादित्वान्न णः । नरीनृत्यते । जरीगृह्यते । उभयत्र लत्वम् । चलीक्लृप्यते । * **रीगृत्वत इति वक्तव्यम्** । वरीवृश्च्यते । परीपृच्छ्यते । **स्वपिस्यमिव्येञां यङि** ।६।१।१९। संप्रसारणं स्याद्यङि । सोषुप्यते । सेसिम्यते। वेवीयते। **न वशः**।६।१।२०। यङि। वावश्यते। **चायः की**।६।१।२१। चेकीयते। **ई घ्राध्मोः**।७।४।३१।जेघ्रीयते । देध्मीयते । **अयङ् यि क्ङिति** ।७।४।२२। शीङोऽयङादेशः स्याद्यादौ क्ङिति परे । शाशय्यते । अभ्यासस्य ह्रस्वः । ततो गुणः । डोढौक्यते । तोत्रौक्यते । **इति यङन्तप्रक्रिया** ।

---

त.]मेदाद्द्वित्वं निर्बाधमेव । **रीगृदुपधस्य च** । ऋदिति किम् ? । चेकीर्त्यते । णिजभावपक्षे एकाच्त्वाद्यङ् ।

**स्वपिस्यमि** । यङि किम्?। स्वप्नक्। **सेसिम्यते इति**।'स्यमु शब्दे'।दन्त्याऽजन्तसादित्वाऽभावेनाऽषोपदेशत्वान्न षः । **वेवीयते इति** । 'हलः' इति, 'अकृत्सार्वे'ति वा दीर्घः । **चायः की** । यङि परे चायः की स्यात् । दीर्घोच्चारणं यङ्लुगर्थम् । अतएव 'न लुमते'ति निषेधोऽपि न प्रवर्तत इति यङ्लुक्यपि चायः की स्यादेव। चेकीतः। **ई घ्राध्मोः**। दीर्घोच्चारणं प्राग्वत् । जेघ्रीतः । [वस्तुतस्तु] 'अस्य च्वौ' इत्याद्यर्थं दीर्घग्रहणमिति तु सुवचम् । **शाशय्यते इति** । परत्वादन्तरङ्गत्वाच्चाऽयङादेशे कृते द्वित्वम् । **इति यङन्तप्रक्रिया** ।

---

बा.]जङ्गन्यते इति । गर्हितं गच्छतीत्यर्थः।**रीगृदुपधस्य च**। **अभ्यासस्येति**। 'अत्र लोपः' इत्यतस्तदनुवृत्तेरिति भावः । **यङ्लुकोरिति** । 'गुणो यङ्लुको'रित्यतस्तदनुवृत्तेरिति भावः । **वरीवृत्यते इति** । 'वृतु वर्तने' अस्माद्यङि द्वित्वे उदरत्वे हलादिशेषेऽभ्यासस्य रीक् । नृतेर्यङि नरीनृत्यते इत्यत्र णत्वमाशङ्क्य आह–**क्षुभ्नादित्वान्न ण इति** । **जरीगृह्यते इति** । 'ग्रह उपादाने' अस्माद्यङि 'ग्रहिज्ये'ति संप्रसारणे द्वित्वे उदरत्वे हलादिशेषे अभ्यासस्य रीक् । **उभयत्रेति** । कृपधातोर्यङि द्वित्वे उरदत्वे रपरत्वे हलादिशेषे रीक् । **चलीक्लृप्यते** । 'कृपो रो लः' इत्यभ्यासे रेफस्य लकारः। उत्तरखण्डे ऋकारस्याऽवयवो यो रेफस्तस्य लकारसदृश इत्यर्थः । ननु व्रश्चधातोर्यङि वरीवृश्च्यते इत्यत्र कथमभ्यासस्य रीक्, धातोः शकारोपधत्वेन ऋदुपधत्वाऽभावादित्यत आह–**रीगृत्वत इति** । 'रीगृदुपधस्ये'त्यत्र ऋदुपस्येत्यपनीय 'ऋत्वत' इति वक्तव्यमित्यर्थः। ऋत् अस्यास्तीति ऋत्वत् । 'तसौ मत्वर्थे' इति भत्वात्पदत्वाऽभावान्न जश्त्वम्। **परीपृच्छ्यते इति** । प्रच्छधातोर्यङि 'ग्रहिज्ये'ति रेफस्य संप्रसारणमृकारः।पूर्वरूपं द्वित्वं रपरत्वं हलादिशेषः रीक्। **वरीवृश्च्यते इति** । व्रश्चधातोर्यङि संप्रसारणे द्वित्वादि पूर्ववत् । **स्वपिस्यमि** । 'संप्रसारणं स्या'दिति शेषपूरणम् । 'ष्यङः संप्रसारण'मित्यतस्तदनुवृत्तेरिति भावः । **सोषुप्यते इति** । स्वप्धातोर्यङि वकारस्य संप्रसारणे उकारे पूर्वरूपे द्वित्वे अभ्यासगुणः। उत्तरखण्डे सस्य षत्वम् । **सेसिम्यते इति**। स्यमुधातोर्यङि यकारस्य संप्रसारणे पूर्वरूपे द्वित्वादि। अषोपदेशत्वान्न षः । **वेवीयते इति** । व्येञो यङि यकारस्य संप्रसारणे पूर्वरूपे द्वित्वादि । 'हलः' इति 'अकृत्सार्वधातुकयो'रिति वा दीर्घः। अथ वशधातोर्यङि 'वावश्यते' इत्यत्र 'ग्रहिज्ये'ति संप्रसारणे प्राप्ते तन्निषेधं स्मारयति–**न वश**। वशधातोश्छान्दसत्वं प्रायिकमिति प्रागेवोक्तम् । **चायः की** । 'यङी'ति शेषः । 'स्वपिस्यमिव्येञां यङी'त्यतस्तदनुवृत्तेरिति भावः । **चेकीयते इति** । 'चायृ पूजानिशामनयोः' । अस्माद्यङि प्रकृतेः कीभावे द्वित्वादि । **ई घ्राध्मोः** । घ्रा ध्मा अनयोर्द्वन्द्वात्षष्ठीद्विवचनम् । 'यङी'ति शेषः, 'यङि चे'त्यतस्तदनुवृत्तेः । **जेघ्रीयते** । **देध्मीयते इति** । ईत्वे कृते द्वित्वादि । ह्रस्वस्य इकारस्य विधावपि 'अकृत्सार्वधातुकयो'रिति दीर्घसिद्धेर्दीर्घोच्चारणम् 'अस्य च्वौ' इत्युत्तरार्थम् । **अयङ्यि क्ङिति** । 'यी'ति सप्तमी । क् ङ् एतौ इतौ यस्येति विग्रहः । **शीङ इति** । 'शीङः सार्वधातुके गुणः' इत्यतस्तदनुवृत्तेरिति भावः । अयङि ङकार इत् । यकारादकार उच्चारणार्थः । ङित्वादन्तादेशः । **शाशय्यते इति**। शी य इति स्थिते ईकारस्य अय्।ततो द्वित्वे अभ्यासदीर्घः।ढौकृधातोर्यङि विशेषमाह–**अभ्यासस्य ह्रस्वइति**। द्वित्वे अभ्यासह्रस्वे उकारे तस्य 'गुणो यङ्लुको'रिति गुण इत्यर्थः।**तोत्रौक्यते इति**। त्रौके रूपम्। **इति यङन्तप्रक्रिया**।

---

शे.] **रीगृत्वत इति** । एवञ्च 'रीगृदुपधस्ये'त्यत्र ऋदुपधग्रहणं न कार्यं, 'रुग्रिकौ चे'त्यत्र 'ऋत्वतः' इत्यस्यैवानुवृत्ते-ऋतश्चेत्यपि न कार्यमिति केचित्, तन्न, ऋदुपधग्रहणप्रत्याख्याने मानाऽभावात् । अत एव 'तन्न कर्त्तव्य'मिति भाष्ये नोक्तम् । 'रुग्रिकौ चे'त्यत्र ऋदुपधस्येत्यस्यानुवृत्त्यर्थं तस्यावश्यकत्वात् । एवञ्च 'ऋतश्चे'त्यप्यावश्यकमेव । अत एव तृक्षमृक्षादौ यङ्लुकि न रुगादि । रीक्तु अनेन वार्त्तिकेन भवत्येवेति परे।**ई घ्रा**। दीर्घोच्चारणम् 'अस्य च्वौ' इत्युत्तरार्थम्।

**शाशय्यत इति** । 'यि क्ङिती'त्यस्य विषयसप्तमीत्वादन्तरङ्गत्वेन अयङि द्वित्वम् । अन्यथा द्विर्यादेशेनेवाऽयङाऽपि द्वित्वबाधः स्यादिति बोध्यम् । **इति यङन्तप्रक्रिया** ।

## अथ यङ्लुगन्तप्रक्रिया ।

**यङोऽचि च**।२।४।७४।यङोऽच्प्रत्यये लुक् स्यात्।चकारात्तं विनापि बहुलं लुक् स्यात्।अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति। ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वम्। अभ्यासकार्यम्। धातुत्वाल्लडादयः। 'शेषात्कर्तरी'ति परस्मैपदम्। 'अनुदात्तङित' इति तु न, ङित्त्वस्य प्रत्ययाऽप्रत्ययसाधारणत्वेन प्रत्ययलक्षणाऽप्रवृत्तेः।

---

त.] **यङोऽचि च**। यङा साहचर्यादचीति प्रत्ययो गृह्यते नतु प्रत्याहारः।'ण्यक्षत्रियार्षे'त्यतोऽत्र लुगनुवर्तते। तदाह-**अच्प्रत्यये लुक् स्यादिति**। चकारेण 'बहुलं छन्दसी'त्यतो बहुलमित्यनुकृष्यत इत्याह-**बहुलं लुक् स्यादिति**। केचित्तु 'छन्दसी'त्यनुकर्षन्ति, तेषामपि मते क्वचिद्भाषायां यङ्लुग्भवत्येव। 'भूसुवो'रिति गुणनिषेधे सिद्धे बोभूत्विति छन्दसि निपातनाज्ज्ञापकात्। एतच्च मूले एव स्फुटीभविष्यति। **अनैमित्तिकोऽयमिति**। अच्प्रत्यये विधीयमानो यङ्लुक्तु तन्निमित्त एव। तेन लोलुवः पोपुव इत्यादौ 'न धातुलोपे'ति निषेधः सिद्ध्यति। **यङन्तत्वादिति**। 'सन्यङो'रिति षष्ठी, न तु सप्तमी, अन्यथा यङो लुका लुप्तत्वेन प्रत्ययलक्षणाऽप्रवृत्तेर्द्वित्वं न स्यादिति भावः। न चाऽङ्गाधिकारविहितकार्यस्यैव 'न लुमते'ति निषेधाद्द्वित्वमत्र स्यादेवेति सप्तमीपक्षोऽपि निर्दुष्ट इति वाच्यं, 'न लुमते'त्यत्राऽङ्गाधिकारो न गृह्यते किं तु आङ्गमनाङ्गं वा प्रत्यये परतः पूर्वस्य विधीयमानं सर्वमिति सिद्धान्तात्। अन्यथा 'राजपुरुष' इत्यादौ नलोपो न स्यात्, त्वदुक्तरीत्या प्रत्ययलक्षणप्रवृत्तौ भत्वेन पदत्ववाधात्। यद्यपि 'एकाच' इति विधीयमानं द्वित्वं 'श्तिपा शपे'त्यादिना निषिध्यते तथापि तत्स्यादेव।'गुणो यङ्लुकोः','रुग्रिकौ च लुकी'त्याद्यभ्यासकार्यविधिभिर्द्वित्वाऽनिषेधस्य ज्ञापनात्। **प्रत्ययाप्रत्ययेति**। प्रत्यये ङित्त्वं दृश्यते 'ऋतेरीय'ङित्यादिषु, अप्रत्ययेऽपि दृश्यते-चित्रङादिषु। एवं च यङो लुकि प्रत्ययलक्षणेन यङाश्रितङित्त्वप्रयुक्तकार्यमात्मनेपदमत्र न शङ्क्यमिति भावः।'ङित इत्यनुबन्धनिर्देशा'दिति परिहारस्त्वत्र नोक्तः, शीङादीनामिव भू इत्यादिधातूनामनुबन्धेनाऽनिर्दिष्टत्वात्। यङो ङकारस्य प्रत्यया-

---

बा.] अथ यङ्लुक्प्रक्रिया निरूप्यन्ते। **यङोऽचि च**। अचीति प्रत्ययग्रहणं, नतु प्रत्याहारः, यङा साहचर्यात्। 'ण्यक्षत्रियार्षे'त्यतो लुगित्यनुवर्तते। तदाह-**यङोऽच्प्रत्यये लुगिति**। **चकारात्तं विनापीति**। अच्प्रत्ययाऽभावेऽपीत्यर्थः। **बहुलमिति**। चकारात् 'बहुलं छन्दसी'ति पूर्वसूत्राद्बहुलग्रहणमप्यनुकृष्यते इति भावः। एवंच अच्प्रत्यये तदभावेऽपि यङो बहुलं लुगिति फलितम्। तेन लूञो यङन्तादचि यङो लुगभावपक्षे अतो लोपे 'लोलूय' इति रूपम्। लुकि तु 'लोलुव' इति रूपं सिध्यति। तथा अच्प्रत्ययाऽभावेऽपि बोभूयते बोभवीतीत्यादौ यङो लुग्विकल्पः सिध्यतीति बोध्यम्। **अनैमित्तिकोऽयमिति**। अच्प्रत्ययादन्यत्र 'बोभवीती'त्यादौ यङ्लुगनैमित्तिकः। ततश्च परस्मादपि द्वित्वादिकार्यात्प्रागेव अन्तरङ्गत्वाद्यङो लुग्भवति, ततो द्वित्वादीति वस्तुतः स्थितिकथनमिदम्। अच्प्रत्यये विधीयमानस्तु यङ्लुक् नैमित्तिकत्वाद्बहिरङ्ग एव। ततश्च परत्वान्नित्यत्वाच्च आदौ द्वित्वे कृते यङो लुकि अच्प्रत्ययमाश्रित्य प्राप्तो गुणः 'न धातुलोप आर्द्धधातुके' इति निषेधान्न भवति, अच्प्रत्ययस्य यङ्लोपनिमित्तत्वादिति बोध्यम्। नन्वेवं सति यङ्लुकि 'सन्यङो'रिति द्वित्वं न स्यात्, यङो लुका लुप्तत्वेन प्रत्ययलक्षणाऽभावादित्यत आह-**तत इति**। यङो लुगनन्तरमित्यर्थः। 'न लुमते'त्यनेन हि लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं निषिध्यते। द्वित्वादिकं तु यङन्तस्य कार्यं, नतु यङ्निमित्तकम्, यङि परतस्तद्विध्यभावादिति भावः। **द्वित्वमिति**। नच एकाचो विधीयमानं द्वित्वं कथमिह यङ्लुकि स्यात्, 'श्तिपा शपे'ति निषेधादिति वाच्यं, 'गुणो यङ्लुको'रित्याद्यभ्यासकार्यविधिबलेन द्वित्वनिषेधाऽभावज्ञापनादिति भावः। **अभ्यासकार्यमिति**। गुणादीति भावः। **धातुत्वादिति**। यङो लुकि सत्यपि प्रत्ययलक्षणमाश्रित्य यङन्तत्वात् 'सनाद्यन्ताः' इति धातुत्वम्। नच 'न लुमते'ति निषेधः शङ्क्यः, धातुसंज्ञाया यङन्तधर्मत्वेन यङि परतोऽङ्गकार्यत्वाऽभावादिति भावः। यङो ङित्त्वात्तदन्तादात्मनेपदमाशङ्क्य आह-**शेषादिति**। ननु 'शेषात्कर्तरी'त्यत्र आत्मनेपदनिमित्तहीनो धातुः शेषः। यङन्तधातुस्तु न तथा, आत्मनेपदनिमित्तङकारानुबन्धसत्त्वादित्यत आह-**अनुदात्तङित इति तु नेति**। कुत इत्यत आह-**ङित्त्वस्येति**। तदेवोपपादयति-**यत्र हीति**। यत्र प्रत्यये

---

शे.] **यङोऽचि**। अच् प्रत्यय एव, व्याख्यानात्। चेन 'बहुल'मित्यनुकृष्यते। अत एव 'योयूयः' 'रोरूयः' इत्यादौ न। फलान्तरमप्याह-**चकारात्तं विनाऽपीति**। बहुलग्रहणानुवृत्त्या वाक्यभेदेन तदर्थसिद्धिः। स च छन्दस्येव प्रयोगदर्शनात्तद्विषय एव। बाहुलकादेव क्वचिल्लोकेऽपि 'बेभिदीति' 'चेच्छिदीती'ति। एतत्प्रयोगद्वयमेव लोके इति 'हुश्नुवो'रितिसूत्रस्थभाष्यस्वरसः। **अन्तरङ्गत्वादिति**। लुक्वाच्चेत्यपि बोध्यम्। **धातुत्वादिति**। 'चर्करीत'मित्यस्यादादौ पाठाद्धादित्वेन भूवादिसूत्रेणेति भावः। **ङित्त्वस्येति**। न चाऽयमनुबन्धनिर्देश इति भ्रमितव्यं, यदी-

यत्र हि प्रत्ययस्याऽसाधारणं रूपमाश्रीयते तत्रैव तत्। अतएव 'सुदृषत्प्रासाद' इत्यत्र 'अत्वसन्तस्ये'ति दीर्घो न। येऽपि स्पर्द्धशीङादयोऽनुदात्तङितस्तेभ्योऽपि न, 'अनुदात्तङित' इत्यनुबन्धनिर्देशात्। तत्र च 'श्तिपा शपे'ति-निषेधात्। अतएव श्यन्नादयो न, गणेन निर्देशात्। किंतु शबेव। 'चर्करीतं चे'त्यदादौ पाठाच्छपो लुक्। **यङो वा** ।७।३।९४। यङन्तात्परस्य हलादेः पितः सार्वधातुकस्य ईड्वा स्यात्। 'भूसुवो'रिति गुणनिषेधो

---

त.]ऽनुबन्धत्वेन समुदायाऽननुबन्धत्वाद्यङन्तोऽपि धातुरनुबन्धेनाऽनिर्दिष्ट इति बोध्यम्।**सुदृषदिति**।शोभना दृषदोऽस्मिन्निति बहुव्रीहौ दृषच्छब्दो जसन्तः। **दीर्घो नेति**। 'अ'सिति प्रत्ययोऽप्रत्ययश्चास्तीति प्रत्ययस्याऽसाधारणरूपानाश्रयणात्प्रत्ययलक्षणेनाऽसन्तत्वाऽभावादिति भावः। **तेभ्योऽपीति**। ये त्वनुदात्तेतः, प्रत्ययलक्षणं विनैव ङितश्च तेभ्योऽपीत्यर्थः। **अदादौ पाठादिति**। तथा च 'अदिप्रभृतिभ्यः शपः' इत्यनेन यङ्लुगन्तात्परस्य शपो लुगित्यर्थः। **यङो वा**। 'नाभ्यस्तस्याची'ति सूत्रात्पिति सार्वधातुक इति, 'उतो वृद्धि'रित्यतो हलीति चानुवर्तते, 'ब्रुव ई'डित्यत ईडिति च। तदेतदाह-**यङन्तादित्यादि**। यङो लुक्यपि प्रत्ययलक्षणेनाऽत्र यङन्तत्वम्। एतेन यङन्ताद्धलादिपित्सार्वधातुकं न

---

बा.]लुप्तेपि प्रत्ययमात्रवृत्तिधर्मपुरस्कारेण तमाश्रित्य कार्यप्रवृत्तिरिष्यते तत्रैव प्रत्ययलक्षणम्। यथा 'राजे'त्यत्र। तत्र हि लुप्तं सुप्प्रत्ययं सुत्वात्मकप्रत्ययमात्रवृत्तिधर्मपुरस्कारेणाश्रित्य सुबन्ततया पदत्वात् 'न लोपः' इति नकारलोपप्रवृत्तिः। ङित्त्वं तु न प्रत्ययमात्रधर्मः, 'ऋतेरीय'ङित्यादिप्रत्ययेष्वप्रत्ययेष्वपि चित्रङादिषु सत्त्वात्। ततश्च यङि लुप्ते सति प्रत्ययलक्षणेन तमाश्रित्य तद्वृत्तिङित्त्वप्रयुक्तं कार्यमात्मनेपदं न शङ्कितुं शक्यमिति भावः। ननु यत्किञ्चिद्धर्मपुरस्कारेण प्रत्ययाश्रयकार्ये प्रत्ययलक्षणं कुतो नेत्यत आह--**अत एवेति**। प्रत्ययमात्रवृत्तिधर्मपुरस्कारेण प्रत्ययाश्रयकार्ये प्रत्ययलक्षणाश्रयणादेवेत्यर्थः। **दीर्घो नेति**। सु=शोभनाः दृषदो यस्य स सुदृषत्प्रासाद इत्यत्र समासावयवत्वाल्लुप्तं जसं प्रत्ययलक्षणेनाऽऽश्रित्य प्राप्तोऽसन्तलक्षणो दीर्घो न भवति।उणादीनामव्युत्पत्तिपक्षे व्युत्पत्तिपक्षे च 'अस्तुअस्य''वेधा'इत्यादावप्रत्यये प्रत्यये च [असन्तत्वस्य] सत्त्वेन प्रत्ययमात्रवृत्तित्वाऽभावेन तत्पुरस्कारेण दीर्घे क्रियमाणे प्रत्ययलक्षणाऽसम्भवादिति भावः। एतत्सर्वं प्रत्ययलक्षणसूत्रभाष्यकैयटादिषु स्पष्टम्। नच 'सुदृषत्प्रासाद' इत्यत्र जसो लुका लुप्तत्वात् 'न लुमते'ति निषेधादेव दीर्घो न भविष्यतीति वाच्यं, दीर्घस्याऽसन्तकार्यत्वेन जसि परे अङ्गकार्यत्वाऽभावादित्यलम्।

ननु उक्तरीत्या प्रत्ययलक्षणाऽभावाल्लुप्तयङन्तान्ङित्त्वप्रयुक्तमात्मनेपदं मास्तु। ये तावत्स्पर्धादयोऽनुदात्तेतः,ये च शीङादयो ङितः पठिताः,तेभ्य आत्मनेपदं दुर्वारमित्यत आह-**येऽपीति**।**तेभ्योऽपि नेति**।तेभ्यो यङ्लुकि नात्मनेपदमित्यर्थः। कुत इत्यत आह-**अनुदात्तङित इत्यनुबन्धनिर्देशादिति**। नन्वनुबन्धनिर्देशेऽपि यङ्लुकि आत्मनेपदं कुतो न स्यादित्यत आह-**तत्र च श्तिपेति**। न चाऽनुबन्धनिर्देशादेव ङित्त्वप्रयुक्तमपि कार्यमात्मनेपदं यङ्लुकि न भविष्यति,अतः प्रत्ययाऽसाधारणधर्माश्रयत्वे सत्येव प्रत्ययलक्षणमिति क्लेशाऽनुभवो वृथेति वाच्यं, यङो ङकारस्य प्रत्ययानुबन्धत्वेन यङन्तस्य धातोरनुबन्धेनाऽनिर्देशादित्यलम्। **अत एवेति**। 'श्तिपा शपे'ति निषेधादेव, यङ्लुकि श्यन्नादयो विकरणा नेत्यर्थः। 'श्तिपा शपे'ति निषेधमुपपादयति-**गणेन निर्देशादिति**। 'दिवादिभ्यः श्यन्' 'रुधादिभ्यः श्न'मित्यादिगणनिर्देशादित्यर्थः। **किंतु शबेवेति**। 'कर्तरि श'बित्यस्य 'श्तिपा शपे'ति निषेधाऽविषयत्वादिति भावः। **चर्करीतमिति**। यङ्लुगन्तमदादौ बोध्यमिति व्याख्यातं प्राक्। अतो यङ्लुगन्ताच्छपो लुगित्यर्थः। एवंच भूधातोर्यङो लुकि द्वित्वादौ 'बोभू' इत्यस्माल्लटि तिपि शपो लुकि बोभू ति इति स्थिते-**यङो वा**। 'उतो वृद्धि'रित्यतो हलीति, 'नाभ्यस्तस्याची'त्यतः पिति सार्वधातुके इति,'ब्रुव ई'डित्यत ईडिति चानुवर्तते। तदाह-**यङन्तादित्यादिना**। श्तिबा-

---

शे.]द्यनुबन्धनिर्देशस्तत्प्रकृतिकयङ्लुगन्ते तस्याऽप्रवृत्तिरित्यर्थस्यैव श्तिन्निर्देशादिसाहचर्येणाऽङ्गीकारात्,'श्तिपा शपाऽनुबन्धेन' इति निषेधस्य भाष्येऽदर्शनाच्चेति भावः।**यत्र हीति**।तस्य सूत्रस्य नियमार्थत्वमेव सिद्धान्ते इति भावः।**अनुबन्धनिर्देशादिति**।**परे तु** तन्निषेधाऽभावेऽपि 'तेतिक्ते' इति निपातनेनैव 'अत्रैवात्मनेपदं यङ्लुगन्ते,नान्यत्रे'ति नियमान्न दोषः। तिजेर्न निशानार्थस्येदं रूपं,तस्य नित्यं सन्नन्तत्वेन ततो यङभावात्,तस्मादर्थान्तरवृत्तेरनुदात्तेत्सु पठितस्य श्वादेरिदं रूपम्। अर्थान्तरेऽप्यनुदात्तेत्सु पाठेनाऽनुदात्तेत्त्वमस्त्येव।अनुबन्धकरणसामर्थ्यात्सन्नन्तादात्मनेपदमिति 'गुप्ति'जादिसूत्रस्थभाष्यस्य क्षमादिरूपार्थविशेषेऽप्यनुबन्धकरणसामर्थ्यादित्यर्थः।केषु चिद्धातुषु अर्थसहितो धातुपाठः पाणिनीय इति भाष्यसम्मतमिति निरूपितम्। अर्थान्तरवृत्तेश्चुरादित्वमेवेति मतन्त्वयुक्तम्,एतद्भाष्यविरोधात्।एवञ्चानुदात्तेत्त्वादात्मनेपदे सिद्धे तत्-उक्तनियमार्थम्।अत एव 'अनुदात्तङितः' इत्यात्मनेपदं सिद्धमित्युक्तम्।अन्यथा 'ङित' इति आत्मनेपदं सिद्धमित्येव वदेत्,उक्तरीत्या ङित्त्वप्रयुक्तस्य तत्राऽप्राप्तेश्च। एतन्मूलक एवाऽदादौ 'चर्करीतञ्चे' त्यस्य परस्मैपदिषु पाठः। श्यन्नादयोऽपि न, 'चर्करीतं चे'त्यस्य विशिष्याऽदादौ पाठेन तत्र गणान्तरप्रयुक्तस्याऽप्राप्तेरित्याहुः। **यङन्तादिति**। लुक्यपि प्रत्ययलक्षणेन यङन्ता-

यङ्लुकि भाषायां न, 'बोभूतु तेतिक्ते' इति छन्दसि निपातनात् । अतएव यङ्लुग्भाषायामपि सिद्धः । न च यङ्लुकि अप्राप्त एव गुणाऽभावो निपात्यतामिति वाच्यं, 'प्रकृतिग्रहणेन यङ्लुगन्तस्याऽपि ग्रहणात्' । 'द्विः-प्रयोगो द्विर्वचनं षाष्ठ'मिति सिद्धान्तात् । बोभवीति । बोभोति । बोभूतः । बोभुवति । बोभवांचकार । बोभ-

---

त.]संभवतीति यङ्शब्देन यङ्लुगन्तं लक्ष्यत इति व्याख्यानं परास्तम्।उक्तरीत्या यङन्तत्वानपायात्।किं च यङन्तार्द्वला-दिपिच संभवतीति यङ्शब्देन यङ्लुगन्ते लक्षितेऽपि 'सन्यङो'रिति द्वित्वस्य यङन्ते चरितार्थतया यङ्लुगन्तलक्षणायां बीजाऽभावाद्यङ्लुकि द्वित्वाऽभावप्रसङ्गादिति दिक् । **छन्दसि निपातनादिति** । गुणनिषेधे सिद्धे निपातनमिदं 'छन्द-स्येव गुणनिषेधो नाऽन्यत्रे'ति नियमार्थमित्यर्थः । **बोभूरिवति** । समुदायस्याऽतिरिक्तत्वात् 'भूसुवो'रिति गुणनिषेधो न प्राप्नोतीति निपातनमिदं न नियमार्थमित्याशङ्कायामाह–**न चेति** । **द्विःप्रयोग इति** । तथा च प्रकृतिग्रहणे यङ्लुग-न्तस्यापि ग्रहणमित्येतन्न्यायसिद्धं, नाऽपूर्वं वचनमिति भावः। **बोभुवतीति**। 'अदभ्यस्ता'दित्यत्। **अबोभूवीदिति**। केचिदिह 'भुवो वुगि'ति सूत्रे 'ओः सुपी'त्यत ओरित्यनुवर्तते। तथा च उवर्णान्तस्य भुवो वुगित्यर्थाद्गुणे कृते वुकः प्राप्ति-र्नास्तीत्यनित्यो वुक् । स च पराभ्यां गुणवृद्धिभ्यां बाध्यते । तेनाऽबोभवीदिति रूपमाहुः । तच्चिन्त्यम् । 'भुवो वुको नित्यत्वा'दिति भाष्यग्रन्थविरोधात् । तस्माद्वुको नित्यत्वमाश्रित्य 'इन्धिभवतिभ्यां चे'ति सूत्रं प्रत्याख्यातवतो भाष्यकृत

---

बा.]त्तिप आद्यवयव ईट्।तथाच बोभू ई ति इति स्थिते ऊकारस्य गुणे अवादेशे बोभवीतीति रूपं वक्ष्यति। 'भूसुवोस्ति-ङी'ति गुणनिषेधमाशङ्क्याह–**भूसुवोरिति** । **निपातनादिति** । 'कृषेः छन्दसी'त्यतश्छन्दसीत्यनुवृत्तौ 'दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्ते' इत्यादिसूत्रे भूधातोर्यङ्लुगन्तस्य गुणाऽभावो निपात्यते । 'भूसुवो'रित्येव तत्र गुणनिषेधे सिद्धे गुणाऽभावनिपातनं नियमार्थं–'यङ्लुकि छन्दस्येवाऽयं 'भूसुवो'रिति गुणनिषेधो, नान्यत्रे'ति। अतो लोकेऽपि यङ्-लुगस्तीति विज्ञायते । एतेन 'यङोऽचि चे'ति यङ्लुग्विधौ 'बहुलं छन्दसी'ति पूर्वसूत्राच्छन्दसीत्यनुवर्तयन्तः परास्ताः । तदाह–**अत एव यङ्लुक् भाषायामपि सिद्ध इति**।'भूसुवोस्तिङी'ति सूत्रभाष्ये तु–'बोभूत्वित्येतन्नियमार्थम्।अत्रैव यङ्लुगन्तस्य गुणो न भवति, नान्यत्र। क मा भूत् बोभवीती'त्युक्तम् । अत्रैवेत्यस्य बोभूत्विति लोट्येवेत्यर्थः । **यङ्-लुगन्तस्येत्यस्य** 'भूधातो'रिति शेषः। बोभवीतीत्येवोदाहृतत्वादिति शब्देन्दुशेखरे प्रपञ्चितम् । वस्तुतस्तु भाष्ये यङ्-लुगन्तस्येति सामान्याभिप्रायमेव,भूधातुमात्रसङ्कोचे मानाऽभावात्। 'बोभवीती'त्युदाहरणं तु धात्वन्तराणामपि प्रदर्शनपर-मिति मूलकृदाशयः । ननु भूधातोर्यङ्लुकि 'बोभू' इत्यस्य 'भूसुवोस्तिङी'ति गुणनिषेधप्रसक्तिर्नास्ति, द्वित्वे सति यङ्लु-गन्तस्य प्रकृत्यन्तरत्वेन भूरूपत्वाऽभावात् । ततश्च यङ्लुगन्तस्याऽप्राप्ते गुणाऽभावे तत्प्राप्त्यर्थमेव बोभूत्विति निपातनमिति युक्तम् । तथा च छन्दस्येव यङ्लुगन्तस्य गुणनिषेधो न तु भाषायामिति नियमः कथं सिध्येदित्याशङ्क्य निराकरोति–**नच यङ्लुकीति** । **प्रकृतीति** । 'प्रकृतिग्रहणेन यङ्लुगन्तस्यापि ग्रहण'मिति परिभाषया 'भूसुवो'रित्यत्र भूग्रहणेन बोभू इति यङ्लुगन्तस्याऽपि ग्रहणादित्यर्थः।ननु 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहण'मित्यत्र किं प्रमाणमित्याशङ्क्य न्याय-सिद्धमिदमित्याह–**द्विःप्रयोग इति** । षष्ठाध्यायादौ 'एकाचो द्वे प्रथमस्ये'त्यत्र 'किमिदं द्विर्वचनम्–एकाचः प्रथमस्य एकस्य स्थाने द्वितीयात्मक आदेशः स्थान्यपेक्षया अन्यो विधीयते, उत स्थानिन एकस्य सतो द्विरुच्चारणं विधीयते, नतु तत्स्थानिनोऽतिरिच्यते' इति संशय्य 'द्विः प्रयोगो द्विर्वचन'मिति सिद्धान्तितम् । तदधिकारस्थत्वात् 'सन्यङो'रिति द्विर्वचनमपि तथाविधमेव । ततश्च 'भू' इत्यस्यैव 'बोभू' इति द्विःप्रयुज्यमानतया 'भूसुवो'रिति भूग्रहणेन ग्रहणाद्यङ्लु-क्यपि निषेधसिद्धेर्बोभूत्विति निपातनेन 'छन्दस्येव यङ्लुकि गुणनिषेधः, नतु भाषाया'मिति नियमलाभाल्लोकेऽपि यङ्लुक् सिद्ध इति भावः । **बोभूत इति** । अपित्त्वादीण्न । ङित्त्वाच्च न गुणः। **बोभुवतीति** । 'अदभ्यस्ता'दित्यत् । ङित्त्वा-द्गुणाऽभावे उवङिति भावः । बोभवीषि–बोभोषि बोभूथः बोभूथ । बोभवीमि–बोभोमि बोभूवः बोभूमः **बोभवांचका-रेति** । 'कास्यनेका'जित्याम् । बोभविता । बोभविष्यति । बोभवीतु–बोभोतु–बोभूतात् बोभूताम् बोभुवतु । हेरपित्त्वा-

---

शे.]त्परत्वम् । **छन्दसि निपातनादिति**। सङ्कोचे मानाऽभावेन यङ्लुगन्तभूधातोश्छन्दस्येव, तत्रापि लोट्येव गुणा-ऽभाव इति नियम इति भावः । तत्र सूत्रे 'एकाज्ग्रहणं कर्त्तव्य'मिति वार्त्तिकारम्भे यङ्लुकि भाषायां सर्वत्र गुण एव लभ्यत इति तदेकफलत्वाय तत्प्रत्याख्यानप्रकारेऽपि द्विविधनियमस्यैवौचित्यम् । अत एव वार्त्तिकारम्भे 'अभू'दित्यसिद्धि-वद्भाषायां यङ्लुकि गुणापत्तिर्दोषत्वेन भाष्ये नोद्भाविततेति दिक् । **परे** तु लोट्येवेत्येव नियमः, 'बोभूतु' इत्यस्य छान्दसेषु पाठस्तु यङ्लुकश्छान्दसत्वादेव । भाषायामस्य यङ्लुगन्तस्य प्रयोगसत्त्वे न मानम् । अत एव भाष्ये 'बोभूतु' इति नियमार्थम्–'अत्रैव यङ्लुगन्तस्य गुणाऽभावो नान्यत्रे'ति 'बोभवती'ति लेटि उदाहृतमित्याहुः। **न चेति**। तस्य मूलाऽभावादिति भावः । **ग्रहणादिति** । **परे** तु–उत्तरखण्डस्य भूत्वादिना 'भूसुवो'रित्यस्य तदन्ताऽङ्गस्येत्यर्थात्

विता। अबोभवीत्। अबोभोत्। अबोभूताम्। अबोभवुः। [ 'जुसि चे'ति गुणः ]। बोभूयात्। बोभूयाताम्। [ बोभूयुः। बोभूयात् ]। बोभूयास्ताम्। [ बोभूयासुः ]। 'गातिस्थे'ति सिचो लुक्। 'यङो वे'-तीट्पक्षे गुणं बाधित्वा नित्यत्वाद्वुक्-अबोभूवीत्। अबोभोत्। अबोभूताम्। अभ्यस्ताश्रयो जुस्। नित्यत्वाद्वुक्-अबोभूवुः। अबोभविष्यदित्यादि॥ पास्पर्धीति। पास्पर्द्धि। पास्पर्द्धः। पास्पर्धति। पास्पर्त्सि। 'हुझल्भ्यो हेर्धिः'। पास्पर्द्धि। लङ्-अपास्पर्द्धीत्। अपास्पत्। अपास्पद्। सिपि 'दश्चे'ति रुत्वपक्षे 'रो रि'।

त.]ओरित्यनुवर्तनमसंमतमेव।'आत' इति नियमाज्जुसभावमाशङ्क्याह-**अभ्यस्ताश्रय इति**। अयं भावः-'सिजभ्यस्ते'ति सूत्रेण सिचः परत्वमाश्रित्य यो जुस् प्राप्तस्तस्यैवाऽयं नियमो न त्वभ्यस्ताश्रयस्य जुस इति। 'जुसि चे'ति गुणमाशङ्क्याह-**नित्यत्वाद्वुगिति। अबोभूवुरिति**। न चाऽत्र परत्वात् 'अदभ्यस्ता'दित्यदादेशः स्यादिति वाच्यम्, अभ्यस्ताश्रयजुसोऽदादेशाऽपवादत्वात्। **पास्पर्धीतीति**। स्पर्ध संघर्षे। 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घः। 'यङो वे'ति ईड्विकल्पः। ईडभावपक्षे 'झषस्तथो'रिति धत्वं, 'झरो झरि सवर्णे' इति वा धलोपः। लिटि-पास्पर्धांचकार। लुट्-पास्पर्धिता। लृटि-पास्पर्द्धिष्यति। लोटि-पास्पर्धीतु। पास्पर्द्धु। पास्पर्धात्। पास्पर्धाम्। पास्पर्धतु। **पास्पर्द्धीति**। हेर्धित्वे वा धलोपः। लङि इडागमपक्षे-अपास्पर्धीत्। **रुत्वपक्षे इति**। पक्षान्तरे तु अपास्पत्। अपास्पद्। लिङि-पास्पर्ध्यात्। पास्पर्ध्याताम्। पास्पर्ध्यास्ताम्। लुङि-'अस्तिसिचोऽपृक्ते' इति नित्यमीट्। 'इट ईटी'ति सलोपः। अपास्पर्धीत्। अपास्पर्द्धिष्टाम्। अपास्पर्धिषुः। लृङि-अपास्पर्धिष्यत्। **जागाधीति**। गाधृ प्रतिष्ठादौ। ईट्पक्षे तु जागाधीति। **जागात्सीति**। 'एकाच' इति भष्भावः। धस्य चर्त्वम्। लोटि-जागाधीतु।

बा.]दीर्णा।ङित्वाच्च गुणः।बोभूहि-बोभूतात् बोभूतम् बोभूत। आटः पित्त्वेन अङित्वाद्गुणः। बोभवानि बोभवाव बोभवाम। लङ्याह-**अबोभवीदित्यादि। अबोभवुरिति**। 'सिजभ्यस्ते'ति जुसि गुणेऽवादेशः। अबोभवीः-अबोभोः, अबोभूतम् अबोभूत। अबोभवम् अबोभूव अबोभूम। **बोभूयादिति**। विधिलिङि आशीर्लिङि च रूपम्। बोभूयातामिति विधिलिङ्स्तामि रूपम्। बोभूयुः। बोभूयाः।बोभूयातम् बोभूयात। बोभूयाम् बोभूयाव बोभूयाम। **बोभूयास्तामिति।** आशीर्लिङि तामि रूपम्। बोभूयास्त। बोभूयासम् बोभूयास्व बोभूयास्म। लुङस्तिपि सिचि कृते आह-**गातिस्थेति। ईट्पक्षे इति।** 'इतश्चे'ति इकारलोपे कृते ईडागमे 'सार्वधातुकार्द्धधातुकयो'रिति गुणं परमपि बाधित्वा नित्यत्वात् 'भुवो वुग्लुङ्लिटो'रिति वुगित्यर्थः। गुणे कृतेऽकृते च प्राप्तेर्वुको नित्यत्वं बोध्यम्। **अबोभूवीदिति**। वुकि कृते सति तेन व्यवधानादुकारस्य न गुणः। ननु लुङो झेर्जुसि वुकि अबोभूवुरिति रूपं वक्ष्यति। तदयुक्तम्, 'आतः' इति सूत्रे सिज्लुकि आदन्तादेव झेर्जुसिति नियमनादित्यत आह-**अभ्यस्ताश्रयो जुसिति**। 'सिजभ्यस्ते'त्यनेन अभ्यस्तात्परत्वाज्जुसित्यर्थः। 'सिजभ्यस्ते'ति सूत्रे सिचः परत्वमाश्रित्य यो जुस् प्राप्तस्तस्यैवायं नियमः, न त्वभ्यस्ताश्रयजुस इति भावः। अबोभू उस् इति स्थिते 'जुसि चे'ति गुणमाशङ्क्य आह-**नित्यत्वाद्वुगिति**। 'जुसि चे'ति गुणापेक्षयेत्यर्थः। **अबोभूवुरिति**। न चात्राभ्यस्ताश्रयजुसं बाधित्वा परत्वात् 'अदभ्यस्ता'दित्यदादेशः स्यादिति शङ्क्यम्, अभ्यस्ताश्रयजुसोऽदादेशापवादत्वादिति भावः। अबोभूवीः-अबोभोः अबोभूतम् अबोभूत। अबोभूवम् अबोभूव अबोभूम। **इत्यादीति**। अबोभविष्यताम् अबोभविष्यन्नित्यादि व्यक्तम्। **पास्पर्धीतीति**। स्पर्धधातोर्यङ्लुकि द्वित्वे 'शर्पूर्वाः खयः' इति पकारशेषे 'दीर्घोऽकितः' इति दीर्घे पास्पर्ध् इत्यस्माल्लटस्तिपि शपि शपो लुकि 'यङो वे'ति ईडागमे रूपम्। ईडभावे त्वाह-**पास्पर्द्धीति**। पास्पर्ध् ति इति स्थिते 'झषस्तथोर्धोऽधः' इति तकारस्य धकारः। 'झलां जश् झशी'ति पूर्वधकारस्य द इति भावः। मिब्वस्मस्सु पास्पर्धीमि-पास्पर्धिम पास्पर्ध्वः पापर्ध्मः। पास्पर्धांचकार। पास्पर्धिता। पास्पर्द्धिष्यति। पास्पर्धीतु-पास्पर्द्धु-पास्पर्द्धात् पास्पर्धतु।हेरपित्त्वादीडभावं सिद्धवत्कृत्य आह-**हुझल्भ्य इति।पास्पर्धीति**। हेर्धिभावे 'झरो झरी'ति वा धलोपः। पास्पर्धात्। पास्पर्धम्। पास्पर्धानि पास्पर्धाव पास्पर्धाम। **लङिति**-उदाहरणसूचनम्। ईटि अपास्पर्धीदिति सिद्धवत्कृत्य ईडभावे आह-**अपास्पर्दिति**। अपास्पर्ध् त् इति स्थिते हल्ङ्यादिना तकारलोपे 'वाऽवसाने' इति चर्त्वविकल्प इति भावः। अपास्पर्धाम् अपास्पर्धुः। सिपि तु अपास्पर्ध् स् इति स्थिते जश्त्वे 'दश्चे'ति दकारस्य रुत्वपक्षे अपास्पर् रु स् इति स्थिते हल्ङ्यादिना सकारलोपे 'रो री'ति रेफलोपे 'ढ्रलोपे' इति दीर्घे विसर्गे 'अपास्पाः' इति रूपम्। न च दीर्घे 'दश्चे'ति रुत्वमसिद्धमिति शङ्क्यम्, 'ढ्रलोपे' इति सूत्रे ढ्रग्रहणेन, लण्सूत्रे 'जर्गृधेरजर्घाः' इति भाष्यप्रयोगेण च पूर्वत्राऽसिद्धमित्यस्याऽप्रवृत्तिबोधनात्। अपास्पर्धम् अपास्पर्ध्व अपास्पर्ध्म।

शे.] प्राप्तस्य निषेधस्य नियमः। द्विःप्रयोगत्वेऽपि विशिष्टानुपूर्वीभेदात्प्रकृतिग्रहणेन तद्ग्रहणोपपादनाऽसम्भवात्। अत एव 'दयते'रिति सूत्रे भाष्यम्-'अस्तेर्भूआदेशो यदि स्थाने द्विर्वचनं, कृते द्वित्वे सर्वादेशो भूभावः प्राप्नोति, अथ द्विःप्रयोगो द्विर्वचनं, तदा परस्य भूभावे कृते पूर्वस्य श्रवणं प्राप्नोति'-इत्युक्तमित्याहुः। **नित्यत्वाद्वुगिति**। 'जुसि चे'ति

अपास्पर्धाः॥ जागाद्धि । जाघात्सि। अजाघात्। सिपि रुत्वपक्षे अजाघाः॥ **नाथृ**–नानात्ति। नानात्तः॥**दधँ**–दादद्धि। दादद्धः । दाधत्सि। अदाधत् । अदादद्धाम् । अदादधुः। अदाधः। अदाधत् । लुङि–अदादाधीत् । अदादधीत् ॥ चोस्कुन्दीति । चोस्कुन्त्ति । अचोस्कुन् । अचोस्कुन्त्ताम् । अचोस्कुन्दुः॥ मोमुदीति । मोमोत्ति । मोमोदांचकार। मोमोदिता । अमोमुदीत् । अमोमोत् । अमोमुत्ताम् । अमोमुदुः । अमोमुदीः । अमोमोः–अमोमोत् । लुङि

---

त.]जागाद्धु । जागाद्धाम् । जागाधतु । लङि–अजागाधीत् । अजाघात्। अजागाद्धाम् । अजागाधुः। लुङि–अजागाधीत्। अजागाधिष्टाम् । **नाथ नाधृ** याच्ञादौ । **नानात्तीति**। ईट्पक्षे नानाथीति । **दध** धारणे । ईट्पक्षे–दादधीति । लुङि 'अतो हलादे'रिति वा वृद्धिः । **चोस्कुन्दीति**। **स्कुदि** आप्रवणे । 'इदितः' इति नुम् । ईडभावे 'झरो झरि सवर्णे' इति वा लोपः । लङि–ईट्पक्षे–अचोस्कुन्दीत् । लुङि तु 'अस्तिसिचः' इति नित्यमिट् । अचोस्कुन्दीत् । अचोस्कुन्दिष्टाम् । **मोमुदीतीति** । **मुद** हर्षे । 'नाभ्यस्तस्याऽची'ति लघूपधगुणनिषेधः । **मोमोदितेति** । न चाऽत्र 'न धातुलोप' इति गुणनिषेधः शङ्क्यः, बहुलग्रहणेन प्राप्तस्य यङ्लुकोऽनैमित्तिकत्वात् । **लुङि गुण इति** । सिज्निमित्तकोऽयं

---

बा.]लिङि–पास्पर्ध्यात् पास्पर्ध्याताम्। पापर्ध्यास्तामित्यादि। लुङि अपास्पर्ध् स् इति स्थिते 'अस्तिसिचः' इति नित्यमीट् । 'इट ईटी'ति सलोपः । अपास्पर्धीत् अपास्पर्धिष्टाम् अपास्पर्धिषुः। अपास्पर्धिष्यत् । **गाधृ**धातोर्यङ्लुगन्ताल्लटस्तिपि इट्पक्षे जागाधीतीति सिद्धवत्कृत्य ईडभावे आह–**जागाद्धीति** । जागाध् ति इति स्थिते 'झषस्तथो'रिति तकारस्य धः। जागाद्धः जागाधति । सिपि ईट्पक्षे जागाधीषीति सिद्धवत्कृत्य ईडभावपक्षे आह–**जाघात्सीति** । जागाध् सि इति स्थिते 'एकाचो बशः' इति गस्य भष् । धस्य चर्त्वमिति भावः । जागाद्धः जागाद्ध । जागाध्मि जागाध्वः जागाध्मः । जागाधांचकार । जागाधिता। जागाधिष्यति। जागाधीतु–जागाद्धु–जागाद्धात् जागाद्धाम् जागाधतु । जागाद्धि–जागाद्धात् जागाद्धम् जागाद्ध। जागाधानि जागाधाव जागाधाम । लङि–अजागाधीत्–अजाघात् , अजागाद्धाम् अजागाधुः। सिपि ईट्पक्षे अजागाधीरिति सिद्धवत्कृत्य ईडभावपक्षे आह–**सिपीति** । अजागाध् स् इति स्थिते भष्भावे, जश्त्वे, 'दश्चे'ति दस्य रुत्वपक्षे,हल्ङ्यादिलोपे, रेफस्य विसर्गे आजाघा इति रूपमित्यर्थः । पक्षे अजाघादिति बोध्यम् । अजागाद्धामित्यादि । जागाध्यात् । लुङि 'अस्तिसिचः' इति नित्यमीट् । अजागाधीत् अजागाधिष्टामित्यादि । **नाथृ इति**–उदाहरणसूचनम् । वर्गद्वितीयान्तोऽयं धातुर्न झषन्तः । तस्य ईट्पक्षे नानाथीतीति सिद्धवत्कृत्य ईडभावपक्षे आह–**नानात्तीति** । नानाथ् ति इति स्थिते 'खरि चे'ति थस्य चर्त्वम् । 'झषस्तथो'रिति,'एकाचो बशो भ'षिति च न, अझषन्तत्वात् । नानात्तः नानाथति । नानाथीषि–नानात्सि नानात्थः नानात्थः । नानाथीमि–नानाथ्मि नानाथ्वः नानाथ्मः । लोटि–नानाथीतु–नानात्तु । हेर्धिः । थस्य जश्त्वेन दः। नानाद्धि । नानाथानि नानाथाव नानाथाम । लङि–अनानाथीत्–अनानात् , अनानात्ताम् अनानाथुरित्यादि । लुङि–'अस्तिसिचः' इति इति नित्यमीट् । अनानाथीत् अनानाथिष्टामित्यादि । **दधेति** । उदाहरणसूचनमिदम् । दधधातोर्लटस्तिपि ईट्पक्षे दादधीतीति सिद्धवत्कृत्य ईडभावपक्षे आह–**दादद्धीति** । दादध् ति इति स्थिते 'झषस्तथो'रिति तकारस्य धः। दादधीषीति सिद्धवत्कृत्याह–**दाधत्सीति**। 'एकाचो बशः' इति दस्य भष् । धस्य 'खरि चे'ति चर्त्वमिति भावः । दादत्थः दादत्थ । दादध्मीत्यादि । लोटि दादधीतु–दादद्धु । दादद्धि । दादधानि । लङस्तिपि ईटि अदादधीदिति सिद्धवत्कृत्य ईडभावे आह–**अदाधदिति** । अदादध् त् इति स्थिते हल्ङ्यादिलोपे भष्भावे धस्य 'वाऽवसाने' इति चर्त्वविकल्प इति भावः । सिपि ईटि अदादधीरिति सिद्धवत्कृत्य ईडभावे आह–**अदाध इति**। अदादध् स् इति स्थिते जश्त्वे 'दश्चे'ति दस्य रुत्वे हल्ङ्यादिना सलोपे रुत्वजश्त्वयोरसिद्धत्वेन झषन्तत्वाद्दस्य भषिति भावः। अदाधदिति पक्षे रूपम् । 'अस्तिसिचः' इति नित्यमीडिति मत्वाह–**अदादधीदिति** । 'अतो हलादे'रिति वृद्धिविकल्पः। अदादधिष्टामित्यादि । '**स्कुदि** आप्रवणे' । इदित्वान्नुम् । अस्माद्यङ्लुकि उदाहरति–**चोस्कुन्दीतीति** । ईटि रूपम् । तदभावे त्वाह–**चोस्कुन्त्तीति** । 'झरो झरि सवर्णे' इति दकारस्य लोपविकल्पः । इह यङो लुप्तत्वादिदित्वाच्च यङं तिङं चाश्रित्य नलोपो न । लङि ईटपक्षे अचोस्कुन्दीदिति सिद्धवत्कृत्य ईडभावे आह–**अचोस्कुन्निति** । अचोस्कुन्द् त् इति स्थिते हल्ङ्यादिना तकारलोपे दकारस्य संयोगान्तलोपः । लुङि तु 'अस्तिसिचः' इति नित्यमीट् । अचोस्कुन्दीत् अचोस्कुन्दिष्टाम् । इत्यादि । **मोमुदीतीति**। 'मुद हर्षे' ईटि 'नाभ्यस्तस्याऽचि पिति सार्वधातुके' इति लघूपधगुणो न । **मोमोत्तीति** । ईडभावे अच्परकत्वाऽभावात् 'नाभ्यस्तस्याऽची'ति लघूपधगुणनिषेधो न। **मोमोदितेति** । 'न धातुलोप आर्द्धधातुके' इति गुणनिषेधस्तु न, धात्वंशलोपनिमित्ते आर्द्धधातुके परे एव तन्निषेधस्य प्रवृत्तेः, इह च यङ्लुकोऽनैमित्तिकत्वस्य उक्तत्वात्। **लुङि गुण इति**। 'सिज्निमित्तक' इति शेषः । अतो 'नाभ्यस्तस्ये'ति गुणनिषेधो

---

शे.]गुणापेक्षयेत्यर्थः । **अपास्पा इति** । न च दीर्घे 'सिपि धातो'रिति रुत्वमसिद्धम् । 'ढ्रलोप'सूत्रे ढ्रग्रहणेन, लण्सूत्रे

गुणः। अमोमोदीत्॥ चोकूर्त्ति। चोकूर्दीति। लङ् तिप्। अचोकूर्द्। अचोकूर्दीत्। सिप्पक्षे—अचोकूः। अचोखूः। अजोगूः॥ वनीवञ्चीति। वनीवङ्क्ति। वनीवक्तः। वनीवचति। अवनीवञ्चीत्। अवनीवन्॥ जङ्गमीति। जङ्गति। 'अनुदात्तोपदेशे'त्यनुनासिकलोपः। जङ्गतः। जङ्ग्मति। 'म्वोश्च'। जङ्गन्मि। जङ्गन्वः। एकाज्ग्रहणेनोक्तत्वा-न्निषेधः। जङ्गमिता। अनुनासिकलोपस्याऽऽभीयत्वेनाऽसिद्धत्वान्न हेर्लुक्। जङ्गहि। 'मो नो धातोः'। अजङ्गन्। अनुबन्धनिर्देशान्न च्लेरङ्। 'ह्म्यन्ते'ति न वृद्धिः। अजङ्गमीत्। अजङ्गमिष्टाम्॥ हन्तेर्यङ्लुक्। 'अभ्यासाच्चे'ति कुत्वं यद्यपि 'हो हन्ते'रित्यतो हन्तेरित्यनुवर्त्य विहितं, तथापि यङ्लुकि भवत्येवेति न्यासकारः। 'श्तिपा शपे'ति निषेधस्त्वनित्यः, 'गुणो यङ्लुको'रिति सामान्यापेक्षज्ञापकादिति भावः। जङ्घनीति। जङ्घन्ति। जङ्घतः।

त.]गुणस्तेन 'नाभ्यस्तस्याची'ति निषेधो न शङ्कनीय इति भावः। **चोकूर्तीति। कुर्द खुर्द गुर्द गुद** क्रीडायाम्। लङि तिपि ईड्पक्षे अचोकूर्दीत्। अचोखूर्दीत्। अचोगूर्दीत्। **पक्षे अचोकूरिति।** 'दश्चे'ति रुत्वपक्षे इत्यर्थः। **वनीवञ्चीतीति। वञ्चु** गतौ। 'नित्यं कौटिल्ये गतौ' इति यङ्। 'नीग्वञ्चु' इत्यभ्यासस्य नीगागमः। यङो लुका लुप्तत्वान्न तदाश्रितो नलोपः। **वनीवक्त इति**। तसो ङित्त्वादिह स्यादेव 'अनिदिता'मिति नलोपः। लोटि—वनीवञ्चीतु। वनीवङ्क्तु। वनीवक्तात्। वनीवक्ताम्। वनीवचतु। वनीवग्धि। वनीवञ्चानि। **जङ्गमीतीति**। 'नुगतोऽनुनासिकान्तस्ये'ति नुक्। **जङ्ग्मतीति**। 'गमहने'त्युपधालोपः। **अजङ्गन्निति**। ईड्पक्षे त्वजङ्गमीत्। अजङ्गताम्। अजङ्ग्मुः। अजङ्गमीः। अजङ्गतम्। अजंङ्गत। अजङ्गमम्। अजङ्गन्व। अजङ्गन्म। **सामान्यापेक्षेति**। अयं भावः—

बा.]न शङ्क्यः। **चोकूर्तीति।** कुर्द क्रीडायाम्, यङ्लुक्। द्वित्वादि। ईडभावे 'उपधायां चे'ति दीर्घः। **अचोकूर्दिति।** लङस्तिपि अचोकूर्द् त् इति स्थिते हल्ङ्यादिलोपे 'रात्सस्ये'ति नियमान्न संयोगान्तलोप इति भावः। **सिप्पक्षे इति।** लङः सिपि ईडभावे अचोकूर्द् स् इति स्थिते 'दश्चे'ति रुत्वपक्षे हल्ङ्यादिना सलोपे 'रो री'ति प्रथमरेफलोपे दीर्घे दकार-स्थानिकरेफस्य विसर्गे अचोकूरिति रूपमित्यर्थः। **अचोखूरिति।** खुर्दधातोर्यङ्लुगन्ताल्लङः सिपि कुर्दवद्रूपम्। **अजो-गूरिति**। गुर्दधातोर्यङ्लुगन्तात्सिपि रूपम्। **वनीवञ्चीतीति**। 'वञ्चु गतौ', अस्मात् 'नित्यं कौटिल्ये गतौ' इति यङन्तस्य लुक्। द्वित्वादि। 'नीग्वञ्चु' इत्यादिना अभ्यासस्य नीगागमः। यङो लुका लुप्तत्वान्न तदाश्रितो नलोपः। तिपः पित्त्वेन अङित्त्वान्न तदाश्रितोऽपि नलोपः। ईकारोच्चारणसामर्थ्याच्चीको न गुणः। अन्यथा निकमेव विदध्यात्। नच 'नीग्वञ्चु' इत्यनुबन्धनिर्देशाद्यङ्लुकि नीग्दुर्लभ इति शङ्क्यं, तत्र यङ्लुकोरित्यनुवृत्तिसामर्थ्येनाऽदोषादिति भावः। **वनी-वङ्क्तीति**। ईडभावे चस्य कुत्वेन कः। नकारस्थानिकानुस्वारस्य परसवर्णो ङकार इति भावः। **वनीवक्त इति**। तसो ङित्त्वादिह स्यादेव 'अनिदिता'मिति नलोपः। लोटि वनीवञ्चीतु—वनीवङ्क्तु—वनीवक्तात् वनीवक्ताम् वनीवचतु। हेर्धिः। अपित्त्वेन ङित्त्वान्नलोपः। अत एव ईडपि न। वनीवग्धि। वनीवञ्चानि। आटः पित्त्वादङित्त्वान्नलोपो न। लङि तिपि ईड्पक्षे आह—**अवनीवञ्चीदिति**। ईडभावे त्वाह—**अवनीवन्निति**। हल्ङ्यादिना तलोपे चकारस्य संयो-गान्तलोपः। **जङ्गमीतीति**। गमेर्यङ्लुगन्ताल्लटस्तिपि ईट्। 'नुगतोऽनुनासिकान्तस्ये'ति नुक्। 'नश्चे'त्यनुस्वारः, पर-सवर्णश्चेति भावः। तसि आह—**अनुदात्तेति**। **जङ्ग्मतीति**। 'गमहने'त्युपधालोप इति भावः। ननु गमेरनिट्त्वा-त्प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणाज्जङ्गमितेत्यत्र कथमिडित्यत आह—**एकाज्ग्रहणेनेति**। ननु जङ्गहीत्यत्र अनुना-सिकलोपे कृते 'अतो हे'रिति लुक् स्यादित्यत आह—**अनुनासिकलोपस्येति**। लङस्तिपि अजङ्गमीदिति सिद्धवत्कृत्य ईडभावे आह—**मो न इति**। अजङ्गम् त् इति स्थिते हल्ङ्यादिना तलोपे 'मो नो धातो'रिति मस्य न इत्यर्थः। तदाह—**अजङ्गन्निति**। अजङ्गताम् अजङ्ग्मुः। अजङ्गन् अजङ्गतम् अजङ्गत। अजङ्गमम् अजङ्गन्व अजङ्गन्म। लुङि—अजङ्ग-मीदित्यत्र 'पुषादिद्युताद्लृदितः' इत्यङमाशङ्क्य आह—**अनुबन्धेति**।

**हन्तेर्यङ्लुगिति**। हिंसार्थे क्रियासमभिहारे, गत्यर्थत्वे तु कौटिल्ये इति इति बोध्यम्। **हन्तेरित्य-नुवर्त्त्येति**। तथाच 'श्तिपा शपे'ति निषेधात्कथमिह हन्तेः कुत्वमित्याक्षेपः। **गुण इति**। 'गुणो यङ्लुको'रिति ज्ञाप-कादित्यन्वयः। 'एकाचो द्वे प्रथमस्ये'त्यत्र एकाज्ग्रहणाद्यङ्लुकि द्विर्वचनस्याऽप्रवृत्त्या अभ्यासाऽभावात् 'गुणो यङ्लुको'-रित्यभ्यासस्य गुणविधानं व्यर्थं सत् 'श्तिपा शपे'त्यादिनिषेधस्य क्वचिद्यङ्लुकि अप्रवृत्तिं ज्ञापयतीत्यर्थः। नन्वेकाज्ग्रहण-विधेरेव यङ्लुकि क्वचिदप्रवृत्तिज्ञापनलाभेऽपि हन्तेरिति श्तिपा निर्देशनिमित्तकनिषेधस्य कथं यङ्लुक्यप्रवृत्तिः स्यादि-त्यत आह—**सामान्यापेक्षेति**। 'गुणो यङ्लुको'रित्यभ्यासस्य गुणविधानमेकाऽज्ग्रहणस्याऽनित्यत्वं ज्ञापयत्तद्वचनोपा-

शे.]'अजर्घाः' इति भाष्योदाहरणेन च 'पूर्वत्रासिद्ध'मिति सूत्रे पूर्वग्रहणेनैतत्सूत्राऽग्रहणबोधनात्। **वनीवञ्चीतीति**। न च 'नीग्वञ्चु' इत्यनुबन्धनिर्देशेन यङ्लुकि नीग् दुर्लभ इति वाच्यं, यङ्लुकोरित्यनुवृत्तिसामर्थ्येनाऽदोषात्। अत एव 'सनीस्रंसः' दनीध्वंसः' इति 'यङोऽचि चे'त्यत्र भाष्ये प्रयुक्तम्। नलोपस्तु न, यङो लुका लोपात्, 'श्तिपा शपे'त्यस्या

जङ्घ्नति । जङ्घनिता । श्तिपा निर्देशाज्जादेशो न । जङ्घहि । अजङ्घनीत् । अजङ्घन् । जङ्घन्यात् । आशिषि तु वध्यात् । अवधीत् । अवधिष्टामित्यादि । वधादेशस्य द्वित्वं तु न भवति, स्थानिवत्त्वेनाऽनभ्यासस्येति निषेधात्। तद्धि समानाधिकरणं धातोर्विशेषणम् । बहुव्रीहिबलात् । आङ्पूर्वात्तु 'आङो यमहनः' इत्यात्मनेपदम् । आजङ्घते इत्यादि॥ 'उत्परस्ये'ति तपरत्वान्न गुणः। 'हलि चे'ति दीर्घस्तु स्यादेव, तस्याऽसिद्धत्वेन तपरत्वनिवर्त्यत्वाऽयोगात्। चञ्चुरीति । चञ्चूर्ति। चञ्चूर्तः। चञ्चुरति । अचञ्चुरीत् । अचञ्चूः॥ चङ्खनीति । चङ्खन्ति । [तंसि]। 'जनसने'त्या-

त.]एकाच इत्यत्रैकाज्ग्रहणाद्यङ्लुकि द्विर्वचनं न कुत्रापि प्राप्नोति, तथा च 'गुणो यङ्लुकोः' इत्यभ्यासस्य विधीयमानो गुणो द्विर्वचनं विना निवेशमलभमानः सन् 'श्तिपा शपा' इति सर्वेषामपि निषेधानां क्वचिद्यङ्लुक्यप्रवृत्तिं ज्ञापयतीति । तथा च प्रयुज्यते-'राजा वृत्रं जङ्घनत्' इत्यादि । **द्वित्वं तु न भवतीति** । वध्यात् अवधीदित्यत्र कृतद्विर्वचनस्य 'हनो वध लिङि', 'लुङि च' इति वधादेशात्पुनर्द्वित्वं न भवतीत्यर्थः । तत्र हेतुमाह-**स्थानिवत्त्वेनेति** । **आङ्पूर्वादिति** । प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणादिति भावः। **चञ्चूर्तीति** । चरतिर्गतौ भक्षणे च । 'चरफलोश्च' इत्यभ्यासस्य नुक् । 'उत्परस्याऽतः' इत्युत्वम्। 'हलि च' इति दीर्घः। **अचञ्चूरि**त्यत्र तु पदान्तविषयत्वात् 'र्वोरुपधायाः'

बा.]तत्त्वसामान्यात् 'श्तिपा शपे'त्यादिसर्वनिषेधानां यङ्लुकि क्वचिदप्रवृत्तिं ज्ञापयतीत्यर्थः। **इति भाव इति** । 'न्यासकृत' इति शेषः । **जङ्घनीतीति** । 'नुगतः' इति नुक् । **जङ्घत इति** । अनुदात्तोपदेशे'त्यनुनासिकलोपः । **जङ्घ्नतीति** । 'गमहने'त्युपधालोपः । **जङ्घनितेति** । एकाज्ग्रहणादिण्निषेधो न । 'जङ्घही'त्यत्र 'हन्तेर्जः' इत्याशङ्क्याह-**श्तिपेति। अजङ्घन्निति** । लङ्स्तिपि ईडभावे अजङ्घन् त् इति स्थिते हल्ङ्यादिलोप इति भावः। **आशिषि तु वध्यादिति** । जंघन्तीत्यस्मादाशीर्लिङि 'हनो वध लिङी'ति वधादेशः, प्रकृतिग्रहणेन यङ्लुगन्तस्यापि ग्रहणादिति भावः । **अवधीदिति** । जंघन्तीत्यस्माल्लुङस्तिपि 'लुङि चे'ति वधादेशे 'अस्तिसिचः' इति नित्यमीडिति भावः ।

ननु हनो यङ्लुगन्तादाशीर्लिङो लुङश्च तिपि द्वित्वात्प्रागेव वधादेशे कृते तस्य द्वित्वं कुतो न स्यादित्यत आह-**वधादेशस्य द्वित्वं तु न भवतीति**।कुत इत्यत आह -**स्थानिवत्त्वेनेति**।वधादेशात्परत्वादादौ द्वित्वे कृते सति कृतद्विर्वचनस्य स्थाने वधादेशः । तस्य च स्थानिवत्त्वेन साभ्यासतया 'अनभ्यासस्ये'ति निषेधान्न द्वित्वमित्यर्थः। ननु साभ्यासस्य स्थाने भवन् वधादेशः स्थानिवत्त्वेन साभ्यासोऽस्तु । द्वित्वं तु दुर्वारं, साभ्यासत्वेऽप्यभ्यासाऽनात्मकत्वात् , 'अनभ्यासस्ये'त्यनेन धातोरवयवस्याभ्यासस्य द्वित्वनिषेधादित्यत आह-**तद्धीति** । 'धात्ववयवस्य अभ्यासस्ये'ति नार्थः, किंतु अनभ्यासो यो धातुस्तदवयवस्यैकाच इत्येवमनभ्यासग्रहणं सामानाधिकरण्येन धातोर्विशेषणमित्यर्थः । नन्वेवमपि न अभ्यासः अनभ्यास इति विग्रहे द्वित्वं दुर्निवारमेव, वधादेशस्य स्थानिवत्त्वेन साभ्यासत्वेऽप्यभ्यासानात्मकत्वादित्यत आह-**बहुव्रीहिबलादिति** । न विद्यते अभ्यासो यस्य धातोरिति बहुव्रीहिमाश्रित्य अनभ्यासस्येत्येतद्धातोः सामानाधिकरण्येन विशेषणमित्यर्थः । प्रकृते च वधादेशस्य स्थानिवत्त्वेन साभ्यासत्वादभ्यासहीनत्वाऽभावान्न द्वित्वमिति भावः । **आङ्पूर्वादिति** । 'यङ्लुगन्ताद्धनधातो'रिति शेषः । 'आङो यमहनः' इत्यत्र हन्ग्रहणेन यङ्लुगन्तस्यापि ग्रहणम्, प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणादिति भावः । **उत्परस्येति** । 'चर गतौ भक्षणे च', अस्माद्यङ्लुकि लटस्तिपि ईडभावे द्वित्वे 'चरफलोश्चे'त्यभ्यासस्य नुक् । 'उत्परस्याऽतः' इत्युत्तरखण्डे अकारस्य उत्वम्, 'हलि चे'ति दीर्घः । चञ्चूर्तीति रूपम् । तिपमाश्रित्य उकारस्य लघूपधगुणस्तु न, 'उ'दिति तपरकरणसामर्थ्यात् । अन्यथा 'उ'रित्युक्तेऽपि 'भाव्यमानोऽण् सवर्णान्न गृह्णाती'त्येव दीर्घादिव्यावृत्तेरित्यर्थः । ननु उदिति तपरकरणाद्यथा गुणो निवर्तते तथा 'हलि चे'ति दीर्घोऽपि निवर्तेत इत्यत आह-**हलि चेति दीर्घस्तु स्यादेवेति** । कुत इत्यत आह-**तस्येति** । 'हलि चे'ति दीर्घशास्त्रस्य त्रैपादिकत्वेन 'उत्परस्याऽतः' इति शास्त्रं प्रत्यसिद्धतया तपरकरणेन तन्निवृत्तेरसंभवादित्यर्थः । वस्तुतस्तु गुणस्याऽपि बहिरङ्गतयाऽसिद्धत्वात्तपरत्वनिवर्त्यत्वं न भवति।अत एव विप्रतिषेधसूत्रे भाष्ये'उदोछ्ये'त्युत्वे 'पोपूर्यते'इत्यत्राभ्यासगुणो दृश्यमान उपपद्यते इति शब्देन्दुशेखरे प्रपञ्चितम्। **अचञ्चूरिति**।लङस्तिपि ईडभावे हल्ङ्यादिना तलोपे प्रत्ययलक्षणेन 'हलि चे'ति वा, पदान्तत्वात् 'र्वोरुपधाया'इति वा दीर्घः । 'खनु अवदारणे'अस्माद्यङ्लुकि उदाहरति-**चङ्खनीतीति**।

शे.]असत्त्वाच्च । **वनीवक्त इति** । तसो ङित्त्वान्नलोपः, ईकारोच्चारणसामर्थ्यान्नीगादेर्न गुणः । **सामान्यापेक्षेति** । अन्यथैकाज्निबन्धनस्यैवाऽनित्यत्वं स्यादिति भावः । **आशिषि तु वध्यादिति** । इदं 'दयते' रिति सूत्रस्थभाष्यविरुद्धमपि माधवानुरोधेनोक्तं । निरूपितश्चैतत्तनादिशेषे । **धातोर्विशेषणमिति** । एतदपि अशास्त्रीयस्याप्यतिदेश इति मते । एतेन साभ्यासत्वस्याऽशास्त्रीयत्वेन तासौ नित्याऽनिट्त्ववदतिदेशाऽलभ्यत्वमित्यपास्तम् । **असिद्धत्वेनेति** । त्रिपादीस्थत्वेनेति भावः । बहिरङ्गत्वेन गुणोऽप्यसिद्ध इति चिन्त्यम् । 'उदोछ्ये'त्युत्वे 'पोपूर्यते' इत्यत्राभ्यासगुणो विप्र-

त्वम्। चङ्खातः। 'गमहने'त्युपधालोपः। चङ्खनति। चङ्खाहि। चङ्खनानि। अचङ्खनीत्। अचङ्खन्। अचङ्खताम्। अचङ्खनुः। 'ये विभाषा'। चङ्खायात्। चङ्खन्यात्। अचङ्खनीत्। अचङ्खानीत्॥ 'उतो वृद्धि'रित्यत्र नाभ्यस्तस्येत्यनुवृत्तेरुतो वृद्धिर्न। योयोति। योयवीति। अयोयवीत्। अयोयोत्। योयुयात्। आशिषि दीर्घः। योयूयात्। अयोयावीत्॥ नोनवीति। नोनोति॥ जाहेति। जाहाति। 'ई हल्यघोः'। जाहीतः। इह 'जहातेश्च' 'आ च हौ' 'लोपो यि', 'घुमास्था', एर्लिङी'त्येते पञ्चापि न भवन्ति, श्तिपा निर्देशात्। जाहति। जाहासि। जाहेषि। जाहीथः। जाहीथ। जाहीहि। अजाहेत्। अजाहात्। अजाहीताम्। अजाहुः। जाहीयात्। आशिषि-जाहायात्। अजाहासीत्। अजाहासिष्टाम्। अजाहिष्यत्॥ लुका लुप्ते प्रत्ययलक्षणाऽभावात्

त.]इति दीर्घः। **चङ्खनीतीति**। खनु अवदारणे। **चङ्खात इति**। यत्तु केचिद्धातुग्रहणेन कृतं कार्यं यङ्लुकि वेति 'जनसने'त्यात्वाऽभावे 'अनुनासिकस्य क्विझलोः' इति दीर्घोऽपि न भवति। क्विप्साहचर्याद्धि झलादिः कृदेव तत्र गृह्यते न तु तिङित्यभ्युपेत्य चङ्खन्त इति रूपमाहुः, तदयुक्तम्। धातुग्रहणेन कृतस्य यङ्लुक्यप्रवृत्तौ मानाऽभावात्। सत्यपि प्रमाणे आत्वं वेति विकल्पोक्त्या चङ्खात इति रूपं केन वार्यताम्। यच्चोक्तम् 'अनुनासिकस्य' इति सूत्रे क्विप्साहचर्याद्धि झलादिरपि कृदेव गृह्यत इति, तदप्ययुक्तमेव। यदि हि कृदेव क्विप्स्यात्तदा साहचर्योक्तिः सङ्गच्छेत। किं तु कृद्भिन्नोऽप्यस्त्येवाचारक्विप्। अतएव राजानति चर्माणतीत्यादौ माधवादिभिः क्विनिमित्तो दीर्घ उक्तः। **चङ्खाहीति**। हेरपित्त्वेन ङित्त्वात् 'जनसने'त्यात्वम्। **अचङ्खानीदिति**। 'अतो हलादेः' इति वा वृद्धिः। **जाहेतीत्यादि**। हाङ्हाकोस्तुल्यानि रूपाणि, ङित्त्वप्रयुक्तस्यात्मनेपदस्य यङ्लुक्यप्रवृत्तेः। 'भृञामित्' इति हाङ इत्वस्य श्लुनिमित्ताभ्यासस्यैव विहितत्वाच्च। नच अकित इति निषेधेन हाकोऽभ्यासस्य दीर्घो दुर्लभ इति कथमुभयोस्तुल्यरूपतेति शङ्क्यम्, अकित इत्यत्र हि न विद्यते कियस्याभ्यासस्येति बहुव्रीहिराश्रीयते, तेन 'द्विःप्रयोगो द्विर्वचनं षाष्ठम्' इत्यस्याऽभ्युपगमाद्धातोः कित्त्वे अभ्यासस्य कित्त्वेऽपि वनीवञ्चीतीत्यादाविव किस्वाऽभावान्न दोषः। किं च द्वित्वाऽभावे केवलस्यार्थवत्त्वेऽपि द्वित्वे सति समुदाय एवार्थवानिति हि सर्वसंमतम्। तथा कित्त्वमपि समुदायस्यैवास्तु न तु प्रत्ययवयवमिति नास्त्येव दीर्घे प्रतिबन्धः। **जाहीयादिति**। 'ई हल्यघोः' इतीत्वम्। **लुका लुप्त इति**। सर्वविधिभ्यो लुग्विधेर्बलीयस्त्वात्। अकृतव्यूहपरिभाषया च लुकः पूर्वं न शङ्क्यमेवेति भावः। **उत्वं नेति**। फलितार्थकथनमिदम्। 'स्वपिस्यमि' इत्यादिना विधीयमानं यत्सं-

बा.]**चङ्खाहीति**। हेरपित्त्वेन ङित्वात् 'जनसने'त्यात्वम्। **अचङ्खनीदिति**। 'अस्तिसिचः' इति नित्यमीट्। 'अतो हलादे'रिति वृद्धिविकल्पः। युधातोर्योयोतीत्यत्र 'उतो वृद्धि'रिति वृद्धिमाशङ्क्याह-**उतो वृद्धिरित्यत्रेति। आशिषि दीर्घ इति**। 'अकृत्सार्वधातुकयो'रित्यनेनेति भावः। **अयोयावीदिति**। ईटि सिचि वृद्धिः। नुधातोरपि युध तुवद्रूपाणीति मत्वाह-**नोनवीतीति**। हाङ्हाकोर्यङ्लुकि तुल्यानि रूपाणि। ङित्वप्रयुक्तात्मनेपदस्य यङ्लुकि अप्रवृत्तेरुक्तत्वादिति मत्वाह-**जाहेतीति**। हाङ्हाकोर्यङ्लुगन्तात्लटस्तिपि ईटि आद्गुणे रूपम्। नच हाङोऽभ्यासस्य 'भृञामि'-दिति इत्वम्, हाकस्तु तन्नास्ति, भृञ् माङ् ओहाङ् एषां त्रयाणामेव तत्र ग्रहणात्, तत्कथं हाङ्हाकोस्तुल्यत्वमिति शङ्क्यं, 'भृञामि'दित्यस्य श्लावेव प्रवृत्तेः। न चाऽकित इति निषेधाद्धाकोऽभ्यासस्य दीर्घाऽभावात्कथमुभयोस्तुल्यरूपत्वमिति वाच्यं, क् इत् यस्य स कित्, न विद्यते कियस्य स अकित्, तस्य अकित इति बहुव्रीहिगर्भबहुव्रीह्याश्रयणात्। इह हाको धातोः कित्त्वेऽपि न किद्वत्वम्। तदभ्यासस्य तु दूरेतरां न किद्वत्त्वम्। 'द्विःप्रयोगो द्विर्वचनं षाष्ठ'मिति सिद्धान्तात्। बहुव्रीह्याश्रयणसामर्थ्यादेव व्यपदेशिवत्त्वेन हाको न किद्वत्त्वम्। अतो हाकोऽप्यभ्यासदीर्घो निर्बाध इति भावः। **जाहीत इति**। हाङ्हाकोस्तसि ईत्वमेव। ननु हाको 'जहातेश्चे'ति इत्वविकल्पः कुतो नेत्यत आह-**इहेति**। हलादौ ङिति सार्वधातुके 'जहातेश्चे'ति इत्वविकल्पः, तथा 'आ च हौ' इति जहातेर्हौ परे आत्वमित्त्वमीत्वं च, तथा 'लोपो यी'ति यादौ सार्वधातुके जहातेराल्लोपश्च, तथा 'घुमास्थे'ति जहातेर्हलादौ क्ङित्यार्द्धधातुके ईत्वं च, तथा 'एर्लिङी'ति जहातेरार्द्धधातुके किति लिङ्येत्वं च इत्येते पञ्चापि विधयो यङ्लुकि न भवन्तीत्यर्थः। कुत इत्यत आह-**श्तिपेति**। एवंच 'जाहीत' इत्यत्र 'ई हल्यघो'रिति ईत्वमेव, न त्वित्वविकल्प इति स्थितम्। **जाहतीति**। 'अदभ्यस्ता'दित्यदादेशः, 'श्नाभ्यस्तयो'रित्याल्लोपः। जाहांचकार। जाहिता। जाहिष्यति। जाहेतु-जाहातु-जाहीतात् जाहीताम् जाहतु। **जाहीहीति**। हेरपित्त्वेन ङित्वादीत्वम्। इह 'आ च हौ' इति न। विधिलिङ्याह-**जाहीयादिति**। 'ई हल्यघो'-रिति ईत्वमेव। 'लोपो यी'त्याल्लोपस्तु न। **आशिषि जाहायादिति**। इह 'घुमास्थे'ति ईत्वं न। 'एर्लिङी'त्यपि न। **अजाहासीदिति**। 'यमरमे'ति सगिटौ। 'ञि ष्वप् शये'। अस्य यङ्लुकि 'स्वपिस्यमिव्येञां यङी'ति संप्रसारणमाशङ्क्याह-**लुका लुप्ते इति। उत्वं नेति**। वस्य संप्रसारणं नेत्यर्थः। ईडभावपक्षे 'रुदादिभ्यः' इति इटमाशङ्क्य

शे.]तिषेधसूत्रे भाष्ये दृश्यते। **न भवन्तीति**। एतन्माधवानुसारेण। न विद्यते कियस्मिन्निति बहुव्रीहिगर्भबहुव्रीह्या-

'स्वपिस्यमी'त्युत्वं न । 'रुदादिभ्यः' इति गणनिर्दिष्टत्वादिण्न । सास्वपीति । सास्वप्ति । सास्वप्तः । सास्वपति। असास्वपीत् । असास्वप् । सास्वप्यात् । आशिषि तु 'वचिस्वपी'त्युत्वम् । सासुप्यात् । असास्वापीत् । असास्वपीत्॥ **रुग्रिकौ च लुकि** ।७।४।९१। ऋदुपधस्य धातोरभ्यासस्य रुक् रिक् रीक् एते आगमाः स्युर्यङ्लुकि। **ऋतश्च** ।७।४।९२। ऋदन्ताद्धातोरपि तथा।वर्वृतीति । वरिवृतीति । वरीवृतीति । वर्वर्ति। वरिवर्ति । वरीवर्ति । वर्वृतः ३ । वर्वृतति ३ । वर्वर्तामास३ । वर्वर्तिता। गणनिर्दिष्टत्वात् 'न वृद्भ्यश्चतुर्भ्यः' इति न । वर्वर्तिष्यति३ । [वर्वृतीतु३। वर्वृद्धि३। अपित्वादीण्न]।अवर्वृतीत्३।अवर्वर्त्३।सिपि 'दश्चे'ति रुत्वपक्षे 'रो रि'। अवर्वाः३। गणनिर्दिष्टत्वादङ्। अवर्वर्तीत्३ ॥ चर्करीति ३ । चर्कर्ति । चरिकर्ति। चरीकर्ति । चर्कृतः३ । चर्कति ३ । चर्करांचकार३। चर्करिता ३ । अचर्करीत् । अचर्कः ३ । चर्कृयात्३ । आशिषि रिङ्-चर्क्रियात् ३ । अचर्कारीत् ३॥ 'ऋतश्चे'ति

त.]प्रसारणं तन्नेत्यर्थः। **असास्वापीदिति**। 'अतो हलादेः'-इति विकल्पेन वृद्धिः । **रुग्रिकौ च** । चकारेण "रीगृदुपधस्य' इत्यतो रीगनुकृष्यते । रुकं उकार उच्चारणार्थः । **ऋतश्च** । ऋताऽनुवर्तमानमङ्गं विशेष्यते । ऋदन्तस्याङ्गस्यं योऽभ्यासस्तस्येत्यर्थः । 'ऋदन्ताद्धातो'रिति पाठस्तु फलितार्थकथनपरतया नेयः । लोटि-वर्वृतीतु । ३ वर्वर्तु ३ । वर्वृतात् । वर्वृताम् ३ । वर्वृततु ३ । वर्वृद्धि ३ । **अङ्नेति** । 'पुषादिद्युतादी'त्यनेन । **चर्करीतीति** । डुकृञ् करणे । **चर्कृयादति** । सार्वधातुकत्वात् 'अकृत्सार्वे' तिन दीर्घः । लुङि 'सिचि वृद्धि'रिति वृद्धिः। अचर्कारीत् ३ । अचर्कारिष्टाम् ३ । अचर्कारिषुः । ३ अचर्कारीः ३ । **चाकर्तीति** । ईट्पक्षे-चाकरीति । लोटि-चाकरीतु । चाकर्तु । चाकीर्ताम् । चाकिरतु । चाकीर्हि । लङि अचाकरीत् । अचाकः । अचाकीर्ताम् । अचाकरुः । लिङि-चाकीर्यात् । आशिषि

बा.]आह-**रुदादिभ्य इति** । **असास्वबिति** । लङस्तिपि ईडभावे हल्ङ्यादिलोपः । **असास्वापीदिति** । 'अतो हलादे'रिति वृद्धिविकल्पः । 'अस्तिसिचः' इति नित्यमीट् । **रुग्रिकौ च लुकि** । 'रीगृदुपधस्य चे'त्यत ऋदुपधस्येत्यनुवर्तते । रिगपि इह चकारात्समुच्चीयते । 'अत्र लोपः' इत्यतोऽभ्यासस्येनुवर्तते । 'गुणो यङ्लुको'रित्यतो यङ्ग्रहणं च । तदाह-**ऋदुपधस्येत्यादिना** । रुकि उकार उच्चारणार्थः । रिकि तु इकारः श्रूयत एव । एवं रीकि ईकारश्च, व्याख्यानात् । **ऋतश्च** । **तथेति** । अभ्यासस्य रुक् रिक् रीक् एते आगमाः स्युर्यङ्लुकीत्यर्थः । 'वृतु वर्तने', अस्मायङ्लुगन्तात् वर्वृत् इत्यस्माल्लटस्तिपि ईट्पक्षे अभ्यासस्य क्रमेण रुकं रिकं रीकं चोदाहरति-**वर्वृतीति वरिवृतीति वरीवृतीतीति** । ईट्पक्षे 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति निषेधान्न लघूपधगुणः । ईडभावेऽपि रुगाद्यागमत्रयमुदाहरति—**वर्वर्तीत्यादि** । **इति नेनि** । इण्निषेधो नेत्यर्थः । लोटि वर्वृतीतु-वर्वर्तु-वर्वृत्तात् वर्वृत्ताम् वर्वृततु । वर्वृद्धि । वर्वर्तानि । लङस्तपि ईटि आह-**अवर्वृतीदिति** । ईडभावे त्वाह-**अवर्वर्दिति** । हल्ङ्यादिना तिपो लोपः । 'रात्सस्ये'ति नियमान्न संयोगान्तलोपः । **अवर्वा इति** । लङ सिपि अवर्वर्त् स् इति स्थिते जश्त्वे 'दश्चे'ति दकारस्य रुत्वे 'रो री'ति पूर्वरेफस्य लोपे 'ढ्रलोपे' इति दीर्घे हल्ङ्यादिना सिपो रेफस्य विसर्ग इति भावः । **अङ् नेति** । 'पुषादिद्युतादीत्यनेने'ति शेषः । 'अस्तिसिचः' इति नित्यमीट् । अथ 'डु कृञ् करणे' इति धातोरुदाहरति-**चर्करीतीत्यादि** । **चर्कृयादिति** । विधिलिङस्तिङः सार्वधातुकत्वात् 'अकृत्सार्वधातुकयो'रिति दीर्घो न । **आशिषीति** । आशीर्लिङ आर्द्धधातुकत्वात् 'रिङ् शयग्लिङ्क्षु' इति रिङिति भावः । **लुङि अचर्कारीदिति** । सिचि वृद्धिः । **ऋतश्चेति तपरत्वान्नेहेति** । 'रुग्रिग्रीक' इति शेषः। **चाकर्तीति** । ईडभावे रूपम् । न चाभ्यासह्रस्वत्वे 'रीगृत्वतः' इति रीक् शङ्क्यः, नित्यत्वादुरदत्वस्य प्राप्तेः । चाकीर्तः चाकिरति इत्यादि । ङित्वाद्गुणाऽभावे ऋत इत्वं रपरत्वम् । ईटि चाकरीति । चाकीर्तः चाकिरति । चाकरांचकार । चाकरिता । चाकर्तु चाकीर्तात् चाकिरतु । चाकीर्हि । चाकिराणि । लङि अचाकरीत्-अचाकः । अचाकीर्ताम् । अचाकरुः । विधावाशिषि च चाकीर्यात् । यासुटो ङित्वान्न गुणः । इत्त्वं। 'हलि चे'ति दीर्घः।चाकीर्याताम्। चाकीर्यास्तामित्यादि । लुङि अचाकारीत् अचाकारिष्टामित्यादि। एवं 'तॄ प्लवनतरणयोः' इत्यस्यापि रूपाणि । अद्वैतदीपिकायां तु 'चोद्यं नावतरीतर्ती'ति लेखकप्रमादः । 'चोद्यं तु नाव-

शे.]श्रयणात् 'जाहेति' इत्यादावक्ङित इति दीर्घनिषेधो न। तत्सामर्थ्यादेव व्यपदेशिवद्भावोऽपि न। **उत्वं नेति** । संप्रसारणं नेत्यर्थः । **इण्नेति** । एतदपि माधवानुरोधेन । चाद्रीगनुवर्त्तत इत्याह-**रीगिति** । **अवर्वर्दिति** । इदं माधवानुरोधेन । वस्तुतोऽस्याऽनभिधानम् । 'रात्सस्ये'त्यत्र तकारप्रश्लेषे तलोपस्य प्राप्त्या, सूत्रमतेऽप्राप्त्या फलभेदापत्तेः । **चाकर्तीति** । यङं निमित्तीकृत्याऽन्तरङ्गमपि 'ऋत इत्' इतीत्वं न, यङो लुका लुप्तत्वात् । उरदत्वं भवत्येवेति निरूपितं 'न लुमते'ति सूत्रे । न च 'चाकर्त्ती'त्यत्राभ्यासह्रस्वत्वे ऋत्वत्तया 'रीगृत्वतः' इति रीग्दुर्वार इति वाच्यम्, अभ्यासऋकारमादाय ऋत्वतो ग्रहणे ऋत्वत इति तपरत्ववैयर्थ्येन तद्ग्रहणस्य वक्तुमशक्यत्वात् । नित्यत्वेन 'उर'दित्यस्य

तपरत्वान्नेह–कॄ विक्षेपे। चाकर्ति॥ तातर्ति । तातीर्तः । तातिरति । तातीर्हि । तातराणि । अतातरीत् । अतातः। अतातीर्ताम् । अतातरुः । अतातारीत् । अतातारिष्टामित्यादि ॥ अर्तेर्यङ्लुकि द्वित्वेऽभ्यासस्योरदत्वं रपरत्वम् । 'हलादिः शेषः'। रुक्। रिग्रीकोस्तु 'अभ्यासस्याऽसवर्णे' इतीयङ् । अरर्ति । अरियर्ति२।अररीति । अरियरीति २। अर्ऋतः । अरियृतः २ । झि–अत्। यण्। रुको 'रो री'ति लोपः।न च तस्मिन् कर्तव्ये यणः स्थानिवत्त्वम् । पूर्वत्रा-ऽसिद्धीये तन्निषेधात् । आरति । अरिग्रति२। लिङि श्तिपा निर्देशात् 'गुणोऽर्ती'ति गुणो न । रिङ्।रलोपः।दीर्घः ।

त.]तु–चाकीर्यास्ताम् । लुङि–अचाकारीत्। अचाकारिष्टाम् । एवं तातरीतीत्यादि । **अर्तेरिति**–भौवादिकजौहोत्यादिकयो-र्ग्रहणम् । **उरदत्वमिति** । केचित्तु 'गुणो यङ्लुको'रित्यभ्यासस्य गुणमाहुः । फले तु न विशेषः। **रिग्रीकोस्त्विति।** एवं च अरियर्तीति रूपमुभयोस्तुल्यमिति भावः । **आरतीति** । 'रो री'ति लोपे 'ढ्रलोपे'इति दीर्घः । 'दीर्घोऽकितः' इति दीर्घस्तु न भवति, कित्त्वात् । **अरिग्रतीति** । परत्वात्पूर्वमियङ् । ततो यण् । रिग्रीकोस्तुल्यमिदम् । मध्यमोत्तम-योस्तु–अरर्षि । अरियर्षि । अररीषि । अरियरीषि । अर्ऋथः अरियृथः । अरर्मि । अरियर्मि । अररीमि । अरियरीमि । अर्ऋवः । अरियृवः। अरियृमः।**लिटि**–अररांचकार।रिग्रीकोस्तु–अरियरांचकार।**लुटि**–अररिता।रिग्रीकोस्तु–अरियरिता। अररिष्यति । अरियरिष्यति । अरर्तु । अरियर्तु । अर्ऋतात् । अरियृतात् । अर्ऋताम् । अरियृताम् । आरतु । अरि-ग्रतु । अर्ऋहि । अरियृहि । अरराणि । अरियराणि । अरराव । अरियराव । **लङि**–आरः । आरियः । आररीत् । आरियरीत् । आर्ऋताम् । आरियृताम् । आररुः । आरियरुः । आरः । आरियः । आररीः । आरियरीः । आर्ऋतम् । आरियृतम्।आर्ऋत।आरियृत।आररम् । आरियरम्।आर्ऋव। आरियृव।**विधिलिङि**–अर्ऋयात् ।·अरियृयात्।अर्ऋयाताम्।

बा.]तातर्ती'ति पाठः प्रामाणिकः।**अर्तेरिति**। सूचिसूत्री'त्यादिना ऋधातोर्यङ् । तस्य लुक् । व्यपदेशिवत्त्वेन ऋ इत्यस्य आदिभूतादचः परत्वाद्द्वितीयैकाच्त्वाच्च द्वित्वम् । अभ्यासऋवर्णस्य अत्वे रपरत्वे अर् ऋ इति स्थिते अभ्यासस्य रुक् । लटस्तिपि ईडभावे अर् ऋ ति इति स्थिते हलादिशेषेण रेफस्य निवृत्तिः । अ ऋ इति स्थिते अभ्यासस्य रुक् । लट-स्तिपि ईडभावे अर् ऋति इति स्थिते, तिपि, ऋकारस्य गुणे, अकारे, रपरे सति, अरर्तीति रूपमित्यर्थः । **रिग्रीको-स्त्विति।** यङ्लुकि द्वित्वे उरदत्वे हलादिशेषे अ ऋ इति स्थिते रिकि रीकि च कृते तिपि उत्तरखण्डस्य ऋकारस्य गुणे अकारे रपरे कृते अरि अर्ति, अरी अर्तीति स्थिते अभ्यासे रेफादिवर्णस्य यणं बाधित्वा 'अभ्यासस्याऽसवर्णे'इति इयङि अरियर्तीति रिग्रीकोस्तुल्यं रूपमित्यर्थः। अथ लटस्तिपि ईट्पक्षे आह–**अररीति अरियरीतीति**। **अर्ऋत इति** । रुकि तसि रूपम् । ङित्वान्न गुणः । **अरियृत इति** । द्वित्वे उरदत्वे हलादिशेषे अ ऋ तस् इति स्थिते रिकि रीकि च कृते इयङादेशे रूपम् । **झि–अदिति** । 'झि' इत्यविभक्तिकनिर्देश उदाहरणसूचनार्थः । 'अदभ्यस्ता'दिति झेरदादेश इति यावत् । **यणिति** । रुकि कृते अर् ऋ अति इति स्थिते ऋकारस्य यण् रेफ इत्यर्थः। तथाच अर् र् अतीति स्थिते आह–**रुको रो रीति लोप इति**।ननु रेफस्य लोपे कर्तव्ये यणादेशसंपन्नस्य रेफस्य'अचः परस्मि'न्निति स्थानिवत्त्वा-दकारपरकत्वाद्रेफपरकत्वाऽभावात्कथं पूर्वरेफस्य लोप इत्यत आह–**पूर्वत्रासिद्धे तन्निषेधादिति**। पूर्वत्रासिद्धीयकार्ये कर्तव्ये स्थानिवत्त्वनिषेधादित्यर्थः । **आरतीति** । अर् र् अति इति स्थिते पूर्वरेफस्य लोपे सति 'ढ्रलोपे' इति दीर्घः । नच यणः स्थानिवत्त्वं शङ्क्यं, दीर्घविधौ तन्निषेधादिति भावः । **अरिग्रतीति** । द्वित्वे उरदत्वे हलादिशेषे रिकि रीकि च कृते, परत्वादभ्यासस्य इयङि ततो यणि रिग्रीकोस्तुल्यमेव रूपमित्यर्थः। अरर्षि अरियर्षि अररीषि अरियरीषि अर्ऋथः अरियृथः । अरर्मि अरियर्मि अररीमि अरियरीमि । अर्ऋवः–अरियृवः । अररांचकार–अरियरांचकार । अररिता–अरि-यरिता । अररिष्यति–अरियरिष्यति । अरर्तु अरियर्तु अररीतु अरियरीतु। अर्ऋतात् अरियृतात्। अर्ऋताम्–अरियृताम् । आरतु–अरिग्रतु । अर्ऋहि–अरियृहि । अरराणि–अरियराणि । अरराव–अरियराव । **लङि**–आरः–आरियः आररीत्–आरियरीत् । आर्ऋताम्–आरियृताम् । आररुः–आरियरुः। आरः–आरियः आररीः–आरियरीः । आर्ऋतम्–आरियृतम्। आर्ऋत–आरियृत । आररम्–आरियरम् । आर्ऋव–आरियृव । **विधिलिङि**–अर्ऋयात्–अरियृतात् । अर्ऋयाताम् । अरियृयाताम् अर्ऋयुः–अरियृयुरित्यादि।आशीर्लिङि विशेषमाह–**लिङि श्तिपेति**।रुकि अर् ऋयात् इति स्थिते अर्ति इति

शे.]प्रवृत्त्या तदभावाच्च । स्थानिवत्त्वं तु न, अपूर्वविधित्वात्।'चाकर्ति' 'चाकीर्तः' इत्युपक्रम्य–'किरतिञ्चर्करीतान्तं पच-तीत्यत्र यो नयेत् । प्राप्तिज्ञन्तमहं मन्ये प्रारब्धस्तेन सङ्ग्रहः' ॥ इति भाष्योक्ते । 'पचती'ति लटः सञ्ज्ञा । तेना-न्यत्राऽस्याऽप्रयोगः सूचितः। **आरतीति**। 'ढ्रलोपे' इति दीर्घः। न च दीर्घे यणः स्थानिवत्त्वम्, अभ्यासकार्ये तदनवयव-धात्ववयवादेशस्य तत्प्रतिबन्धकस्थानिवत्त्वं नेत्यर्थस्य 'अभ्यासस्यासवर्णे' इत्यसवर्णग्रहणेन ज्ञापिततयाऽक्षतेः, दीर्घविधौ तन्निषेधाच्च।**अरिग्रतीति**।यणादेशस्य स्थानिवत्त्वात्, परत्वादिना ततः पूर्वमेव वा इयङ्।**एकाच इत्यनुवृत्तेरिति**।

आरियात् । अरिग्रियात्२। आरारीत् । आरियारीत् २॥ **गृहू ग्रहणे**–जर्गृहीति३।जर्गर्ढि ३।जर्गृढः३।जर्गृहति ३ । जर्घक्षि ३ ।अजर्घर्ट् ३॥ **गृह्णातेस्तु**–जाग्रहीति । जाग्राढि। तसादौ ङिन्निमित्तं संप्रसारणम् । तस्य बहिरङ्गत्वेना-

---

त.]अरियृयाताम्।अर्र्युः।**लिङीति**।आशीर्लिङीत्यर्थः।**अरिग्रियादिति**।रिग्रीकोः–अरियृ इति स्थिते लिङि रिङ्।बहिरङ्गत्वेन रिङोऽसिद्धत्वाद्यलोपो न भवति, 'अचः परस्मिन्नि'ति स्थानिवत्त्वाच्च।न च 'न पदान्ते'ति निषेधः शङ्क्यः, स्वरदीर्घयलोपेषु लोपरूपाऽजादेश एव न स्थानिवदित्युक्तत्वात् । न च अकृतव्यूहपरिभाषया इयङ्नेति शङ्क्यं, रिङः स्थानिवत्त्वेन निमित्त-विनाशाऽभावादुक्तपरिभाषाया अप्रवृत्तेः । अतएव अरिग्रतीत्यपि सिद्धम् । तत्रापि यणः स्थानिवत्त्वेन निमित्तविनाशा-ऽभावादुक्तपरिभाषाया अप्रवृत्तेरियङो निर्बाधत्वात् । क्वचित्तु मूलपुस्तकेषु परत्वान्नित्यत्वाच्च पूर्वं रिङि कृते इयङोऽप्र-वृत्तिरित्याशयेन–'अरिरियात् अरीरिया'दिति पठ्यते, तदापाततः। अरिग्रतीति रूपाऽसिद्ध्या पूर्वोत्तरग्रन्थयोर्विरोधापत्तेः । लुङि आरारीत् । आरियारीत् । लृङि आररिष्यत्। आरियरिष्यत्। **जर्गृहीतीति** । 'नाभ्यस्तस्याची'ति गुणनिषेधः । मध्यमोत्तमयोस्तु–जर्गृहीषि ३ । जर्घर्क्षि ३ । जर्गृढः ३ । जर्गृहीमि ३ । जर्गर्ह्मि ३ । जर्गृह्वः ३ । जर्गृह्मः ३ । जर्गृ-हांचकार ३। जर्गर्हिता। जरिगर्हिता।जरीगर्हिता।इहानुबन्धनिर्देशादूदिल्लक्षण इड्विकल्पो न।जर्गृहीतु।जर्गर्ढु।जर्गृढाम् ३।जर्गृ-हतु ३ । जर्गृढि ३ । मिपि जर्गृहाणि ३ । लुङि अजर्गृहीत् ३ । ईडभावे–'एकाच' इति भष्भावः । अजर्घर्ट् ३ । यद्यपि इह 'यत्रैकाज्ग्रहणं चे'ति निषेधाद्भष्भावो दुर्लभस्तथापि 'गुणो यङ्लुको'रित्यनेन 'श्तिपा शपे'त्यादिनिषेधस्याऽनित्य-त्वज्ञापनाद्भष्भावोऽत्र प्रवर्तते इत्याहुः।अजर्गृढाम्३।अजर्गृहुः३।अजर्गृहीः३।अजर्घर्ट्३ अजर्घर्ड्३।अजर्गृढम् ३।अजर्गृढ३। अजर्गृहम् ३।अजर्गृह्व३।जर्गृह्यात्३।अजर्गर्हीत्३। अजर्गर्हिष्टाम्३ । अजर्गर्हिष्यत् ३। **जाग्रहीतीति** । ग्रह उपादाने । यङो लुका लुप्तत्वात्तन्निमित्तं 'ग्रहिज्ये'ति संप्रसारणमिह नेति भावः। **जर्गृढ इति** । 'उरत्'।'दीर्घोऽकितः' । तत्रैकाच

---

बा.]श्तिपा निर्देशात् 'गुणोऽर्ति' इति गुणो नेत्यर्थः । **रिङिति** । 'ऋकारस्ये'ति शेषः । तथाच अर् रि यादिति स्थिते आह–**दीर्घ इति** । 'रो री'ति लोपे 'ढ्लोपे' इति दीघ इत्यर्थः । तथाच परिनिष्ठितमाह–**आरियादिति** । रिग्रीको-स्त्वाह–**अरिग्रियादिति** । अरि ऋ यात्, अरी ऋ यात् इति स्थिते इवर्णस्य इयङ् । ऋकारस्य रिङ् । 'लोपो व्यो'-रिति यलोपस्तु न, बहिरङ्गत्वेन रिङोऽसिद्धत्वात्, 'अचः परस्मि'न्निति स्थानिवत्त्वाच्च । 'न पदान्ते'ति निषेधस्तु न शङ्क्यः, 'स्वरदीर्घयलोपेषु लोपरूपाऽजादेश एव न स्थानिव'दित्युक्तेरित्यलम् । लुङि–आरारीत्–आरियारीत् । लृङि आर-रिष्यत्–आरियरिष्यत्।**गृहू ग्रहणे इति**। ऋदुपधोऽयम् । यङ्लुकि द्वित्वे उरदत्त्वे हलादिशेषे अभ्यासस्य रुग्रिग्रीकः । तदाह–**जर्गृहीतीत्यादि** । ईढक्षे 'नाभ्यस्तस्याऽचि पिति सार्वधातुके' इति लघूपधगुणनिषेधः । ईडभावे त्वाह–**जर्ग-र्ढीत्यादि** । जर्गृह् ति इति स्थिते लघूपधगुणे रपरत्वे ढत्वधत्वष्टुत्वढलोपाः । 'यणो मयः' इति शिष्टस्य ढस्य द्वित्व-विकल्पः । एवं जरिगर्ढि–जरीगर्ढि । **जर्गृढ इति** । रुक् ढत्वधत्वष्टुत्वढलोपाः । ङित्वान्न गुणः । एवं जरिगृढः२। **जर्गृहतीति** । 'अदभ्यस्ता'दित्यत् । जर्गृहीषि–जरिगृहीषि–जरीगृहीषि । 'नाभ्यस्तस्याचि पिती'ति न लघूपधगुणः । जर्घर्क्षि–जरिघर्क्षि–जरीघर्क्षि।जर्गृढः–जरिगृढः–जरीगृढः।जर्गृढ–जरिगृढ–जरीगृढ । जगृहीमि–जरिगृहीमि–जरीगृहीमि, जर्गर्ह्मि–जरिगर्ह्मि जरीगर्ह्मि,जर्गृह्वः–जरिगृह्वः–जरीगृह्वः, जर्गृह्मः–जरिगृह्मः–जरीगृह्मः । जर्गर्हांचकार–जरिगर्हांचकार–जरीगर्हांचकार।जर्गर्हिता–जरिगर्हिता–जरीगर्हिता।जर्गर्हिष्यति–जरिगर्हिष्यति–जरीगर्हिष्यति।जर्गृहीतु–जरिगृहीतु–जरीगृ-हीतु, जर्गर्ढु–जरिगर्ढु–जरीगर्ढु,जर्गृढात्–जरिगृढात्–जरीगृढात्, जर्गृढाम्–जरिगृढाम्–जरीगृढाम्, जर्गृहतु–जरिगृहतु–जरीगृहतु । जर्गृढि–जरिगृढि–जरीगृढि।जर्गृहाणि–जरिगृहाणि–जरीगृहाणि।लङि अजर्गृहीत्–अजरिगृहीत्–अजरीगृहीत्। ईडभावे तु–अजर्गर्ह्त् इति स्थिते हल्ङ्यादिना तलोपे हस्य ढत्वे गस्य भष् घकारः। अजर्घर्ट् अजरिघर्ट् अजरीघर्ट् । एकाज्ग्रहणे सत्यपीह यङ्लुकि भष् घकारः,'गुणो यङ्लुको'रित्यनेन 'श्तिपा शपे'ति निषेधस्याऽनित्यत्वज्ञापनादित्याहुः । अजर्गृढाम् ३ अजर्गृहुः ३। अजर्गृहीः ३–अजर्घर्ट् ३ अजर्गृढम् ३ अजर्गृढ ३। अजर्गृहम् ३ अजर्गृह्व ३ अजर्गृह्म ३। जर्गृह्यात् ३ । लुङि 'अस्तिसिचः' इति नित्यमीट् । अजर्गर्हीत् ३ । अजर्गर्हिष्यत् ३ । **गृह्णातेस्त्विति** । 'ग्रह उपादाने' इत्यस्मादित्यर्थः । अदुपधोऽयम् । ईटि आह–**जाग्रहीतीति** । यङो लुका लुप्तत्वात्, तिपः पित्त्वाच्च 'ग्रहि-ज्ये'ति संप्रसारणं नेति भावः । ईडभावे त्वाह–**जाग्राढीति** । जाग्रह् ति इति स्थिते ढत्वधत्वष्टुत्वढलोपदीर्घाः । जाग्रह् तस् इति स्थिते आह–**तसादाविति** । कृते संप्रसारणे ऋदुपधत्वात् रुगादीनाशङ्क्य आह–**तस्येति** । संप्र-

---

शे.]इदं हरदत्तानुरोधेन । वस्तुतोऽस्माद्यङ्लुक्सत्त्वेऽपि दीर्घस्य प्राप्तिरेव नास्ति, भाष्यकृता द्वित्वेऽभ्यासविशिष्टस्यैत्रा-ङ्गत्वाङ्गीकारवत् 'प्रत्ययग्रहणे यस्मा'दिति न्यायेन विशिष्टस्यैव यङन्तत्वाद्धातुत्वाङ्गीकारो, न तु तस्य ग्रहित्वमिति इड्योग्यप्रत्ययस्य ग्रहेर्विहितत्वाऽभावात्तदनुवृत्तिर्निष्फलैवेति तनादिशेषे क्र्यादिशेषे च निरूपितम् । एवञ्च माधवस्य

ऽसिद्धत्वान्न रुगादयः । जागृढः । जागृहति । जाग्रहीषि । जाग्रक्षि । लुटि–जाग्रहिता । 'ग्रहोऽलिटी'ति दीर्घस्तु न, तत्रैकाच इत्यनुवृत्तेः। माधवस्तु दीर्घमाह, तद्भाष्यादिविरुद्धम्। गृधु अभिकाङ्क्षायाम्। जर्गृधीति ३। जर्गर्द्धि ३। जर्गृद्धः ३। जर्गृधति ३। जर्गृधीषि। जर्घर्त्सि ३। अजर्गृधीत् ३। ईडभावे गुणः। हल्ड्यादि-

त.]इत्यनुवर्तत इति 'एकाचो द्वे' इत्यस्मिन् सूत्रे हरदत्तेनोक्तत्वादिति भावः। **माधवस्त्विति**। अयं भावः–'ग्रहोऽलिटि' इति सूत्रे 'यङ्लोपे चोक्त'मिति वार्तिकतदीयभाष्यकैयटादिपर्यालोचनया जरीगृहीतेत्यादिषु ग्रहेर्यङन्तात्तृचस्तासेर्वा य इट् तस्य दीर्घाऽभावे युक्तिद्वयं लभ्यते। पूर्वस्मादपि विधौ स्थानिवद्भाव इत्येके। ग्रहेर्विहितो य इट् तस्य दीर्घ इत्यपरे। तत्राद्यः पक्षो भाष्यवार्तिककाररीत्या। ताभ्यां हि 'पूर्वत्रासिद्धे न स्थानिव'दित्यवष्टम्य दीर्घादिग्रहणस्य प्रत्याख्यानात्। त्रैपादिकदीर्घातिरिक्तदीर्घेऽस्मिन् कर्तव्ये स्थानिवद्भावस्य तन्मते सुवचत्वात्। द्वितीयस्तु सूत्ररीत्या, तेन तु सामान्यतो दीर्घविधौ स्थानिवद्भावस्य निषिद्धत्वात्तन्मते स्थानिवद्भावस्य वक्तुमशक्यत्वात्। एवं च यङ्लुकि दीर्घप्रवृत्तौ न किंचिद्बाधकम्, यङ्लुकोऽनैमित्तिकत्वात्, अजझलादेशत्वाच्च स्थानिवद्भावाऽयोगात्। 'द्विःप्रयोगो द्विर्वचनं षाष्ठ'मिति सिद्धान्ताद्यङ्लुगन्ताद्गृह्णातेर्विहितस्य ग्रहेर्विहितत्वाऽनपायाच्च। **तद्भाष्यादिविरुद्धमिति**। आदिशब्देन कैयटहरदत्तौ गृह्येते। विरोधश्चात्र मनोरमायामुपपादितः। तथा हि–'एकाचो द्वे प्रथमस्ये'ति सूत्रे 'ग्रहेरङ्गा'दिति भाष्यमुपादाय कैयट आह–'तृचो हि 'जरीगृहि'त्यङ्गं, न तु ग्रहिः, विशेषणसामर्थ्याद्धि यथाश्रुतरूपाश्रयण'मिति। यद्यपि तत्र यङन्तं प्रक्रम्येदमुक्तं, तथापि युक्तिसाम्याद्यङ्लुगन्तेऽपि न दीर्घ इति लभ्यते। एकाज्ग्रहणमनुवर्तयन् हरदत्तोऽप्यत्रानुकूलः। न ह्यस्मिन्पक्षे यङ्लुकि दीर्घस्य प्रसक्तिरस्ति। एवं च पूर्वस्मादपि विधौ स्थानिवद्भाव इति ग्रहेर्विहितस्य य इट् तस्य दीर्घ इति च प्रागुक्तसमाधानमुपायस्योपायान्तराऽदूषकत्वादिति न्यायेन यङन्तांशे उपायान्तरपरतया नेयम्। न च 'ग्रे'हिति यथाश्रुतरूपाश्रयणे 'गृहीत' इत्यादावपि दीर्घो न स्यादिति वाच्यम्, अङ्गसंज्ञाप्रवृत्तिवेलायां यथाश्रुतरूपस्यैव सत्त्वात्। 'ग्राहित'मित्यादौ तु नैवम्। 'एकाच' इति समाधानं तु णिज्भिन्नविषयकमेव, 'निष्ठायां सेटी'ति णिलोपे ग्राहितमित्यादावेकाच्त्वानपायात्। तदित्थं–'**यङ्लुगन्ताण्णिजन्ताच्च यङन्ताच्च ग्रहेरिटः। द्विधा त्रिधा चतुर्धा च दीर्घप्राप्तिः समाहिता**'। अस्यार्थः–यङ्लुगन्ताद्दीर्घे प्राप्ते समाधानद्वयम्। ग्रहेरङ्गादिति व्याख्यानमेकाच इत्यनुवृत्तिश्चेति। णिजन्तात्तु ग्रहिस्वरूपाऽभावः,विहितविशेषणं, स्थानिवद्भावश्चेति समाधानत्रयम्। यङन्तात्स-

बा.]सारणस्येत्यर्थः। **जागृढं इति**। ढत्वधत्वष्टुत्वढलोपाः। 'ढ्रलोपे' इति दीर्घस्तु न, ऋकारस्याऽनण्त्वात्। जागृहति। सिपः पित्त्वान्न संप्रसारणमिति मत्वाह–**जाग्रहीषि जाग्रक्षीति**। ईडभावे, हस्य ढः, तस्य कः, सस्य कः, सस्य षः, भष्भावः। जागृढः जागृढ। जाग्रहीमि–जाग्रह्मि जागृह्वः जागृह्मः। **इत्यनुवृत्तेरिति**। 'एकाचो द्वे' इति सूत्रे हरदत्तेन तथोक्तत्वादिति भावः। **माधवस्त्विति**। एकाज्ग्रहणं नानुवर्तत इति तदाशयः। **भाष्यविरुद्धमिति**। 'एकाचो द्वे प्रथमस्ये'ति सूत्रभाष्ये 'ग्रह उपादाने' इत्यस्माद्यङि संप्रसारणे अभ्यासस्य रीकि यङन्तात्-जरीगृहिता, जरीगृहितं, जरीगृहितव्यमित्यत्र इटो दीर्घाऽभावं सिद्धवत्कृत्य तत्र दीर्घमाशङ्क्य ग्रहोऽङ्गात्परस्य इटो दीर्घो विधीयते। 'जरीगृह्' इत्यङ्गं, तच्च न ग्रहधातुरिति निरूप्याङ्गविशेषणसामर्थ्यादेव 'प्रकृतिग्रहणे यङ्लुगन्तस्याऽपि ग्रहण'मिति नात्र प्रवर्तत इति समाहितम्। यङन्ते उक्तो न्यायो यङ्लुगन्तेऽपि जाग्रहितेत्यादौ समान इत्यादि प्रौढमनोरमायां ज्ञेयम्। नच हरदत्तमत एकाज्ग्रहणानुवृत्त्यैवाऽत्र दीर्घनिवारणे सति भाष्योक्तमिदं समाधानं नादरणीयमिति वाच्यम्, उपायस्य उपायान्तराऽदूषकत्वादित्यलम्। जाग्रहिष्यति। जाग्रहीतु-जाग्राढु जागृढाम् जागृहतु। हौ–जागृढि। जाग्रहाणि। **लङि** अजाग्रहीत्–अजाघट् अजागृढाम्। अजागृढम् अजागृढ। अजाग्रहम् अजागृह्व अजागृह्म। जागृह्यात्। **लुङि–अजा**ग्रहीत्। 'ह्यन्ते'ति न वृद्धिः 'अस्तिसिचः' इति नित्यमीट्। अजाग्रहिष्यत्। 'गृधु अभिकाङ्क्षायाम्'। अस्माद्यङ्लुगन्ताद्धस्तिपि ईटि आह–**जर्गृधीतीति**। 'नाभ्यस्तस्ये'ति न लघूपधगुणः। ईडभावे आह–**जर्गर्द्धीति**। जर्गृध् ति इति स्थिते 'झषस्तथो'रिति तकारस्य धः। लघूपधगुणः। रपरत्वम्। **जर्गृद्ध इति**। तसादौ ङित्त्वान्न गुणः।'झषस्तथो'रिति तस्य धः। **जर्घर्त्सीति**। जर्गृध् सि इति स्थिते, गस्य भष् घः, गुणः, रपरत्वं, धस्य चर्त्वम्। जर्गर्घ्मि ३जर्गृधीमि३। जर्गृध्वः३। जर्गर्धांचकार३। जर्गर्धिता३। जर्गर्धिष्यति३। जर्गृधीतु३। जर्गर्द्धु३।जर्गृद्धात्३। **हौ**–जर्गृद्धि३। जर्गृधानि ३। **लङि**-तिपि ईट् अजर्गृधीत्३।**ईडभावे इति**। अजर्गृध् त् इति स्थिते पित्त्वादङित्त्वाद्गुणे रपरत्वे हल्ङ्यादिना तकारलोपे पदान्तत्वाद्गस्य भष् घकारः। धस्य जश्त्वेन दकारे तस्य 'वाऽवसाने' इति चर्त्वविकल्प इत्यर्थः। **अजर्घर्दिति**। 'रात्सस्ये'ति नियमान्न संयोगान्तलोपः। अजर्गृद्धाम् अजर्गृधुः। सिपि ईडभावपक्षे अजर्गृध् स् इति स्थिते, गुणे, रपरत्वे, हल्ङ्यादिलोपे

शे.]भाष्यविरुद्धत्वमपि चिन्त्यमिति दिक्।

लोपः । भष्भावः । जश्त्वचर्त्वे । अजर्घत् ३ । अजर्गृद्धाम् ३ । सिपि 'दश्चे'ति पक्षे रुत्वम् । अजर्घाः ३ । अजर्गर्धीत् ३ । अजर्गर्धिष्टाम् ३ ॥ पाप्रच्छीति । पाप्रष्टि । तसादौ 'ग्रहिज्ये'ति संप्रसारणं न भवति, श्तिपा निर्देशात् । 'च्छ्वोः शूड्'डिति शः । 'व्रश्चे'ति षः । पाप्रष्टः । पाप्रच्छति। पाप्रश्मि। पाप्रच्छ्वः । पाप्रश्मः । यकार-वकारान्तानां तूठ्भाविनां यङ्लुङ् नास्तीति 'च्छ्वो'रिति सूत्रे भाष्ये ध्वनितम् । कैयटेन च स्पष्टीकृतम् । इदं 'च्छ्वो'रिति यत्रोठ् तद्विषयकम् । 'ज्वरत्वरे'त्यूठ्भाविनोः स्रिविमव्योस्तु यङ्लुगस्त्येवेति न्याय्यं, माधवादिसंमतं

---

त.]माधानचतुष्टयम्, 'एकाचः' इत्यनुवृत्तिः, पूर्वोक्तसमाधानत्रयं चेति । **अजर्घा इति** । **गृधु** अभिकाङ्क्षायाम् । इह अपदान्तस्यापि रेफस्य 'रो री'ति लोपो भवत्येव, तत्र मण्डूकप्लुत्या पदस्येत्यनुवर्तनात् । **पाप्रच्छीति** । **प्रच्छ** ज्ञीप्सायाम् । 'व्रश्चे'ति षः । पाप्रच्छिता । पाप्रच्छिष्यति । पाप्रष्टु । पाप्रष्टात् । पाप्रष्टाम् । पाप्रच्छतु । पाप्रड्ढि । पाप्रच्छानि । अपाप्रच्छीत् । अपाप्रट् । अपाप्रष्टाम् । अपाप्रच्छुः । अपाप्रच्छीः । अपाप्रट् । अपाप्रष्टाम् । अपाप्रष्ट । अपाप्रच्छम् । अपाप्रच्छ्व । अपाप्रश्म । **भाष्ये ध्वनितमिति** । 'च्छ्वोः शूड्'डिति सूत्रे भाष्ये क्ङिद्ग्रहणमनुवर्तते न वेति विकल्प्य कांश्चिद्दोषानुद्भाव्य परिहृत्य- चोक्तम्, एतावानेव विशेषः-अनुवर्तमाने क्ङिद्ग्रहणे 'च्छः षत्वं वक्तव्य'मिति । अननुवर्तमाने त्वनेन छः शत्वे कृते शान्तत्वादेव षो भविष्यतीति प्रष्टा प्रष्टुमित्यादिसिद्धये व्रश्चादिसूत्रे छग्रहणं न कर्तव्यमिति भावः । एवं हि वदता भाष्यकृता ऊठ्भाविभ्यो यङ्लुङ्नास्तीत्युक्तप्रायम् । अन्यथा दिवेर्यङ्लुकि इडभाव-

---

बा.]भष्भावे,घस्य जश्त्वे, तस्य चर्त्वविकल्पे,पूर्ववदेव रूपं सिद्धवत्कृत्य आह-**सिपि दश्चेति पक्षे रुत्वमिति**। तथाच अजर्घर्द् स् इति स्थिते 'रो रि' इति लोपे,'ढ्रलोपे' इति दीर्घे, शिष्टरेफस्य विसर्गे, अजर्घा इति रूपमित्यर्थः । अजर्गृद्धम् अजर्गृद्ध । अजर्गृधम् अजर्गृध्व अजर्गृध्म । लुङि आह-**अजर्गर्धीदिति** । 'अस्तिसिचः' इति नित्यमीट् । **पापच्छीतीति** । 'प्रच्छ ज्ञीप्सायाम्' अस्माद्यङ्लुगन्ताल्लटस्तिपि ईटि रूपम् । ईडभावे आह-**पाप्रष्टीति** । 'व्रश्चे'ति छस्य षः। तकारस्य ष्टुत्वेन टः । 'च्छ्वो'रिति छस्य शकारस्तु नात्र भवति, तस्य अनुनासिकादौ प्रत्यये क्वौ झलादौ क्ङिति ङिति च विहितत्वात् । ननु तिपः पित्त्वेन ङित्त्वाऽभावात् 'ग्रहिज्ये'ति संप्रसारणाऽभावेऽपि तसो ङित्त्वात्संप्रसारणं दुर्वारमित्यत आह-**तसादाविति । श्तिपेति** । 'ग्रहिज्ये'ति सूत्रे 'प्रच्छती'ति श्तिपा निर्देशादित्यर्थः । **पाप्रच्छतीति** । 'अदभ्यस्ता'दित्यत् । पाप्रच्छीषि । सिपि ईडभावे तु 'च्छ्वो'रिति छस्य न शः, सिपो झलादित्वेऽपि ङित्त्वाऽभावात् । किंतु 'व्रश्चे'ति ष एव । 'षढो'रिति षस्य कः, सस्य षत्वम् । पाप्रक्षि पाप्रष्ठः पाप्रष्ठ । **पाप्रश्मीति** । अनुनासिकप्रत्ययपरकत्वाच्छस्य 'च्छ्वो'रिति श इति भावः । **पाप्रच्छ्व इति** । अत्र 'च्छ्वो'रिति न शः, वसो झलादित्वाऽभावात् । **पाप्रश्म इति** । अनुनासिकादिप्रत्ययपरकत्वाच्छस्य शः । पाप्रच्छांचकार । पाप्रच्छिता । पाप्रच्छिष्यति । पाप्रच्छीतु-पाप्रष्टु-पाप्रष्टात् पाप्रष्टाम् पाप्रच्छतु । हेर्धिः, अपित्त्वेन ङित्त्वात्, झलादित्वाच्च छस्य शः । तस्य 'व्रश्चे'ति षः, ष्टुत्वेन धस्य ढः, षस्य जश्त्वेन डः, पाप्रड्ढि । पाप्रच्छानि । लङि तिपि ईटि-अपाप्रच्छीत् । इडभावे तु अपाप्रच्छ् त् इति स्थिते हल्ङ्यादिना तलोपे छस्य षः, तस्य जश्त्वचर्त्वे । अपाप्रट् अपाप्रष्टाम् अपाप्रच्छुः । अपाप्रच्छीः-अपाप्रट् अपाप्रष्टम् अपाप्रष्ट । अपाप्रच्छम् अपाप्रच्छ्व अपाप्रश्म । **लिङि**-पाप्रच्छ्यात् । लुङि अपाप्रच्छीत् । 'अस्तिसिचः' इति नित्यमीट् । अपाप्रच्छिष्यत्। **ऊठ्भाविनामिति**। 'भू प्राप्तौ' चुरादिरात्मनेपदीयः। तस्मात् 'आवश्यकाधमर्ण्ययोर्णिनि'-रिति भविष्यदर्थे णिनिः । ऊठं प्राप्स्यतामित्यर्थः । ऊठ्विषयाणामिति यावत् । **ध्वनितमिति** । सूचितमित्यर्थः । **स्पष्टीकृतमिति** । तथाहि 'च्छ्वो'रिति सूत्रे क्ङिद्ग्रहणानुवृत्तौ कांश्चिद्दोषानुद्भाव्य परिहृत्य क्ङिद्ग्रहणानुवृत्तिं स्वीकृत्योक्तं भाष्ये-'एतावानेव विशेषः । अनुवर्तमाने क्ङिद्ग्रहणे छः षत्वं वक्तव्य'मिति । अत्र **कैयटः**-प्रष्टा पृष्टमित्यादौ 'च्छ्वो'रिति छस्य शत्वे कृते तस्य 'व्रश्चे'ति षत्वे ष्टुत्वमिति स्थितिः । तत्र क्ङितीत्यनुवृत्तौ छस्य षत्वं न स्यादतश्छस्य षत्वं वक्तव्य-मित्यर्थः। नच क्ङिद्ग्रहणानुवृत्तावत्र शत्वाऽभावेऽपि न दोषः, व्रश्चादिना छस्य षत्वे इष्टसिद्धेरिति वाच्यं, 'च्छ्वो'रित्यत्र 'छस्य षत्वं वक्तव्य'मित्यनेनैव प्रष्टेत्यादिसिद्धेर्व्रश्चादिसूत्रे छग्रहणं न कर्तव्यमित्याशयात् । नच प्रडिति क्विबन्तात्सोलोपे षत्वार्थं व्रश्चादिसूत्रे छग्रहणमिति वाच्यम्, तत्रापि क्विनिमित्तशादेशस्य दुर्निवारत्वात् । क्विप् तु प्रच्छधातोरनभिधानान्नास्ति । एवं चाऽत्र भाष्ये 'ऊठ्भाविभ्यो यङ्लुङ्नास्ती'त्युक्तप्रायम्।अन्यथा 'च्छ्वो'रित्यत्र क्ङिद्ग्रहणानुवृत्तौ दिवेर्यङ्लुकि तिबादौ ईडभावे लघूपधगुणे 'लोपो व्यो'रिति वलोपे देदेति देदेषीत्याद्यूठोऽभावे रूपम् । तदननुवृत्तौ तु वस्य ऊठि देद्योति देद्योषीत्यादि रूपमिति विशेषस्य सत्त्वादेतावानेवेत्येवकारो विरुध्येत । अत ऊठ्भाविनां यकारवकारान्तानां यङ्लुङ्नास्तीति विज्ञायते इत्यलम् । **इदं चेति** । 'च्छ्वो'रिति सूत्रेण यत्र ऊठ् प्रवर्तते तद्विषयकमेव इदम्=उक्तं ज्ञापनमित्यर्थः। **स्रिविमव्योस्त्विति**। 'स्रिवु गतिशोषणयोः', 'मव्य बन्धने' इत्यनयोरित्यर्थः । **न्याय्यमिति**। उक्तज्ञापनस्य 'च्छ्वो'रिति सूत्रस्थभाष्यमूलकत्वादिति भावः । नच ज्ञापनस्य सामान्यापेक्षत्वं कुतो नाश्रीयते इत्यत आह-

च । मव्य बन्धने । अयं यान्त ऊठ्भावी । तेवृ देवृ देवने इत्यादयो वान्ताः ॥ हय गतौ । जाहयीति । जाहति । जाहतः । जाहयति । जाहयीषि । जाहसि । वलि लोपे यजादौ दीर्घः । जाहामि । जाहावः । जाहामः ॥ हर्य गतिकान्त्योः । जाहर्यीति । जाहर्ति । जाहर्तः। जाहर्यति । लोटि जाहर्हि । अजाहः । अजाहर्ताम् । अजाहर्युः ॥ मव बन्धने । ज्वरत्वरस्रिव्यविमवामुपधायाश्च ।६।४।२०। ज्वरादीनामुपधावकारयोरूठ् स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये। अत्र क्ङितीति नानुवर्तते, अवतेस्तुनि कृते 'ओतु'रिति दर्शनात्। अनुनासिकग्रहणं चानुवर्तते, अवतेर्मन्प्रत्यये तस्य टिलोपे ओमिति दर्शनात्।ईडभावे ऊठि पिति गुणः।मामोति। मामवीति । मामूतः। मामवति. मामोषि।[मामवीषि। मामवीमि]। मामोमि । मामावः । मामूमः । मामूहि ।

त.]पक्षे देदेति देदेषि इत्यादौ ऊठो भावाऽभावाभ्यां महान् विशेषः स्यात्।तत्र क्ङिद्ग्रहणाननुवृत्तावूठः प्रवृत्त्या देद्योति देद्योषीत्यादिरूपविशेषलाभात् । ततश्चैतावानेवेत्येवकारो विरुध्येत । स्रिविमव्योरित्वति । स्रिवु गतिशोषणयोः । मव बन्धने । जाहामीति । ईदृक्षे जाहयीमि । लोटि जाहयीतु । जाहतु । जाहतात् । जाहताम् । जाहयतु । जाहहि । जाहतात् । जाहयानि । जाहयाव । जाहयाम । लङि–अजाहयीत् । अजाहत् । अजाहताम् । अजाहयुः । अजाहयीः । अजाहः । अजाहतम् । अजाहत । अजाहयम् । अजाहाव । अजाहाम । जाहय्यात् । 'ह्यन्तक्षणे'ति वृद्धिनिषेधः । अजाहयीत् । अजाहयिष्टाम् । अजाहयिष्यत् । ज्वरत्वर । ज्वर रोगे । ञित्वरा संभ्रमे । अत्र वृत्तौ 'झलादौ क्ङिती'त्युक्तं तत्र क्ङितीत्येतद्भ्रमकृतमेवेत्याह–क्ङितीति नानुवर्तत इति । अवतेस्तुनीति । 'ज्वरत्वरे'त्युपधावकारयोरूठि गुणे च कृते 'ओतु'रिति सिध्यति नाऽन्यथा । तेनाऽत्र क्ङितीति नानुवर्तनीयमिति भावः । अवतेरिति । उपधावकारयोरूठि गुणे च कृते मन्प्रत्ययस्य टिलोपे चोमिति सिध्यतीत्यर्थः । ज्वरादेरुदाहरणं क्विपि-जूः । जुरौ । जुरः । झलादौ तु–जूर्तिः । जूर्णः । जूर्णवान् । त्वर–तूः । तुरौ । तुरः । तूर्तिः । तूर्णः । तूर्णवान् । स्रिवि–स्रूः । स्रुवौ । स्रुवः । स्रूतिः । अवि–ऊः । उवौ । उवः । ऊतिः । मव–मूः । मुवौ । मुवः । मूतः । मूतिः । मामोषी-

बा.]माधवादिसंमतं चेति। 'उक्तविशेषवत्त्व'मिति शेषः। ऊठ्भावीति । अतो नास्य यङ्लुगिति भावः। वान्ता इति। 'ऊठ्भाविन' इति शेषः। नैतेषामपि यङ्लुगिति भावः। ऊठ्भाविनामिति विशेषणस्य व्यावर्त्यमाह–हय गताविति । अस्य यान्तत्वेऽपि ऊठविषयत्वाऽभावादस्येव यङ्लुगिति भावः । जाहतीति । तिप ईडभावे 'लोपो व्यो'रिति यलोपः । मिपि ईडभावे जाहय् मि इति स्थिते आह–वलि लोपे इति । ईटि–जाहयीमि । जाहयांचकार । जाहयिता । जाहयिष्यति । लोटि–जाहयीतु जाहतात् जाहताम् जाहयतु । जाहहि । जाहयानि जाहयाव । लङि–अजाहयीत् । अजाहत् । अजाहताम् । अजाहयुः । अजाहयीः । अजाहः । अजाहतम् । अजाहत । अजाहयम् अजाहाव अजाहाम । जाहय्यात्। लुङि–'ह्यायन्ते'ति न वृद्धिः । 'अस्तिसिचः' इति नित्यमीट् । अजाहयीत् अजाहयिष्टाम्। अजाहयिष्यत्।जाहर्तीति। तिपि जाहर्य् ति इति स्थिते ईडभावे यलोपः । जाहर्हीति । हौ यलोपः । लङस्तिपि अजाहर्य् त् इति स्थिते यलोपः।हल्ङ्यादिना तकारलोपः, रेफस्य विसर्ग इति मत्वा आह–अजाह इति।सिप्यप्येवं रूपम् ।ज्वरत्वर।ज्वर, त्वर, स्रिवि, अवि, मव् एषां द्वन्द्वः। 'च्छ्वोः शूड्'डित्यतो वकारग्रहणम्, ऊठ्ग्रहणम्,अनुनासिके इति चानुवर्तते । छस्य श इति नानुवर्तते, ज्वरादिषु छस्य अभावेन असंभवात् । 'अनुनासिकस्य क्विझलोः क्ङिती'त्यतः क्विझलोरिति चानुवर्तते । चकारो वकारसमुच्चयार्थः । तदाह–ज्वरादीनामिति । अवतेस्तुनीति । अवधातोरौणादिके तुन्प्रत्यये कृते, अकारवकारयोरूठि, तस्य गुणे 'ओतु'रिति दृश्यते । क्ङितीत्यनुवृत्तौ तु तन्न स्यादिति भावः । ओमिति । 'अवतेष्टिलोपश्चे'त्यौणादिकसूत्रम् । 'अव रक्षणे' इति धातोर्मन्प्रत्ययः स्यात् , प्रत्ययस्य टेर्लोपश्चेति तदर्थः। तथाच अव् म् इति स्थिते उपधाभूतस्य अकारस्य वकारस्य च ऊठि तस्य गुणे ओमिति दृश्यते । 'ज्वरत्वरे'त्यत्र अनुनासिकग्रहणाननुवृत्तौ तु मनिनि परे अवतेरूठ् न स्यात् , क्विझलोरेव तद्विधिलाभादिति भावः । ऊठि पितीति । मवधातोर्यङ्लुक् । मामव् ति इति स्थिते ईडभावपक्षे अकारवकारयोरेकस्मिन् ऊठि तिपः पित्त्वेन ङित्त्वाऽभावादूकारस्य गुणे मामोतीति रूपमित्यर्थः । उपधाया वकारस्य च प्रत्येकमूडिति पक्षे सवर्णदीर्घः । पक्षद्वयमपि 'एकः पूर्वपरयो'रित्यत्र भाष्ये स्पष्टम् । ईदृक्षे आह–मामवीतीति । अत्र ऊठ् न, क्वौ झलादौ अनुनासिकादौ च प्रत्यये परे तद्विधानात् । मामूत इति । अकारवकारयोरूठि तसो ङित्त्वान्न गुण इति भावः । मामवतीति । 'अदभ्यस्ता'दित्यत् । 'मामवीषी'ति सिद्धवत्कृत्याह–मामोषीति । अनुनासिकपरकत्वादूठ्, गुणः । मामाव इति । मामव् वस् इति स्थिते परनिमित्ताऽभावादूठ् न । 'लोपो व्यो'रिति वलोपे 'अतो दीर्घो यञी'ति दीर्घः। मामूम इति। मामव् मस् इति स्थिते

शे.] ज्वरत्वर । अत्रोपधायाश्चेति चकारेण वाक्यभेदादादेशिभेदेनोठ्द्वयम्, तयोश्च सवर्णदीर्घे 'जू'रित्यादिसिद्धिः । ऊठ् एक एव, रमागमन्यायेन तूभयोर्निवृत्तिरित्यन्ये । एतद्द्वयमपि 'एकः पूर्वे'त्यत्र भाष्ये स्पष्टम् ।

मामवानि। अमामवीत्। अमामोत्। अमामवीः। अमामोः। अमामवम्। अमामाव। अमामूम॥ **तुर्वी** हिंसायाम्। तोतूर्वीति। **राल्लोपः** ।६।४।२१। रेफात्परयोश्छ्वोर्लोपः स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये। इति वलोपः। लघूपधगुणः। **न धातुलोप आर्द्धधातुके** ।१।१।४। धात्वंशलोपनिमित्ते आर्द्धधातुके परे इको गुणवृद्धी न स्तः।

---

त.]**त्यादि** । ईदृक्षे मामवीषि । मामवीमि । मामवीतु । अमामवीत् । अमामवीरिति बोध्यम् । **राल्लोपः** । 'च्छ्वोः शूडित्यतश्छ्वोरित्यनुवर्तते । क्वावुदाहरणं-तूः । तुरौ तुरः । **धुर्वी**-धूः । धुरौ । धुरः । **मुर्छा**-मूः । मुरौ । मुरः॥ **न धातुलोपः** । आर्द्धधातुके धातुलोपो नास्तीति लक्षणया व्याचष्टे-**धात्वंशेति** । यद्यपि 'दुरिणो लोपश्चे'त्यौणादिके रक्प्रत्यये धातुलोपः प्रसिद्धस्तथापि प्रयोजनवानप्रसिद्धः, इणो लुप्तत्वादेव गुणाऽप्रसङ्गात् । प्रत्ययसन्नियोगेन धातुलोपविधानादार्द्धधातुकस्य निमित्तत्वमपि नास्ति । अतएव 'दूर'मित्यत्र 'ढ्रलोपे'इति दीर्घे कर्तव्ये धातुलोपस्य स्थानिवत्त्वं नास्ति। इह धातोर्लोपो यस्मिन्निति बहुव्रीहिः। विशेष्यं चार्द्धधातुकमित्याशयेनाह-**लोपनिमित्ते इति**। **गुणवृद्धी न स्त इति** । यद्यपि 'क्ङिति चे'ति सूत्रे 'लैगवायन' इत्यत्र गुणनिषेधो माभूदिति 'इग्लक्षणे गुणवृद्धी न स्तः' इति व्याख्यातं, तथापि इह प्रयोजनाऽभावादिग्लक्षणे इति नोक्तम् । धात्विति किम् ? । **लूञ्**-लविता । **पूञ्**-पविता । नन्वत्रानुबन्धलोपनिमित्तमार्द्धधातुकं न भवतीति व्यङ्गविकलमिदमिति चेदत्राहुः-धातुग्रहणे सति धातोर्लोपो यस्मिन् इति बहुव्रीहिलाभाल्लोपनिमित्त इत्यर्थो लभ्यते, तदभावे तु लोपे सत्यार्द्धधातुक इत्यर्थाल्लवितेत्यादौ दोषः स्यादेवेति । यदा तु लोपयतीति लोपः, तस्मिँल्लोपनिमित्ते आर्द्धधातुके इको गुणवृद्धी न स्त इति व्याख्यायते तदा धातुग्रहणं स्पष्टप्रतिपत्त्यर्थम् । उत्सृष्टानुबन्धस्य धातुत्वमिति कैयटादिमते तु धातुलोप इत्यत्र बहुव्रीह्याश्रयणं विनापि धात्ववयवलोपे सत्यार्द्धधातुक इति व्याख्यायां लवितेत्यादौ नातिप्रसङ्ग इति बोध्यम् । आर्द्धधातुके किम् ?।'त्रिधा बद्धो वृषभो रोरवीति' । 'रु शब्दे' इत्यस्मात् 'धातोरेकाच' इति यङि तस्य लुक् । यङन्तस्य धातुत्वे यङो धात्ववयवत्वाल्लुप्तत्वाच्चात्रापि निषेधः स्यात्तन्माभूदिति । नन्वत्र यङ्लुकोऽनैमित्तिकत्वादिको लोपनिमित्तपरत्वं नास्तीति व्यङ्गविकलमिति चेत् । अत्राहुः-आर्द्धधातुकग्रहणे सति अन्यपदार्थलाभाद्बहुव्रीहिर्लभ्यते, तदभावे त्ववयवलोपे सति गुणवृद्धी न स्त इत्यर्थाद्रोरवीतीत्यत्र दोषः स्यादेवेति । केचित्तु धातुं लोपयतीति धातुलोपः । 'ढ्रलोपे' इत्यत्रेव 'कर्मण्य'णित्यभ्युपेत्य व्यधिकरणबहुव्रीह्याश्र-

---

बा.]अनुनासिकपरकत्वादूठ् । ङित्त्वान्न गुणः। मामवांचकार । मामविता । मामविष्यति । लोटि आह-**मामोत्विति** । **मामूतादिति** । ङित्त्वान्न गुणः । मामूताम् मामवतु । **मामूहीति** । ऊठि हेरपित्त्वेन ङित्त्वान्न गुणः । मामूतात् मामूतं । मामूत । **मामवानीति** । आटः पित्त्वादङित्त्वाद्गुणः। मामवाव । मामवाम । लङस्तिप्याह-**अमामोदिति** । अमामूताम् अमामवुः । सिप्याह-**अमामोरिति** । अमामूतम् । अमामूत । **लिङि**-मामव्यात् । लुङि 'अस्तिसिचः' इति नित्यमीट् । अमामवीत् अमामावीत् । अमामविष्यत् । ज्वरतेस्तु-जाज्वरीति जाजूर्तीत्यादि । त्वरतेस्तु तात्वरीति तातूर्तीत्यादि । स्रिवेस्तु सेस्रवीति । ईडभावे तु ऊठि-सेस्रोतीत्यादि । अवतेस्तु यङभावात् क्विप्युदाहरणम्-ऊः उवौ उव इत्याद्यूहम् । **तोतूर्वीतीति** । 'उपधायां चे'ति दीर्घः । ईडभावे तोतुर्व् ति इति स्थिते-**राल्लोपः** । 'च्छ्वोः शूडनुनासिके चे'ति सूत्रं शूड्वर्जमनुवर्तते। 'अनुनासिकस्य क्विझलो'रित्यतः क्विझलोरिति च । तदाह-**रेफात्परयोरित्यादि** । अत्रापि क्ङितीति नानुवर्तते, पूर्वसूत्रे तदननुवृत्तेः।**वलोप इति**।तथाच तोतुर् ति इति स्थिते उकारस्य लघूपधगुणः,तिपः पित्त्वेन अङित्त्वादित्यर्थः। **न धातुलोपे**। 'इको गुणवृद्धी' इत्यनुवर्तते।तत्र धातुलोपे सति इको गुणवृद्धी न स्त आर्द्धधातुके परत इत्यर्थे लूञ्धातोर्यङन्तात्पचाद्यचि यङो लुकि, लोलुव इत्यत्र गुणनिषेधाऽभावप्रसङ्गात्, अत्र धात्ववयवस्य यङो लोपेऽपि धातोर्लोपाऽभावात् ।'धात्ववयवलोपे सती'त्यर्थे तु शीङ्धातोस्तृचि शयितेत्यत्र गुणो न स्यात्,तत्र धात्ववयवङकारलोपसत्त्वात्।'आर्द्धधातुके परे यो धात्ववयवलोपस्तस्मिन् सती'त्यर्थे क्नोपयतीत्यत्रापि गुणनिषेधः स्यात्, तत्र यकारलोपस्य आर्द्धधातुकपरकत्वादित्यतो व्याचष्टे-**धात्वंशलोपनिमित्ते इति**।धातुं लोपयतीति धातुलोपः।कर्मण्यण् । धातुलोपनिमित्ते आर्द्धधातुके परे इति यावत्। 'लोलुव' इत्याद्युदारणम् । लूञ्धातोर्यङन्तात् पचाद्यचि 'यङोऽचि चे'त्य-

---

श्री.] **राल्लोपः** । वलि लोपेन सिद्धे लोपविधानमूठो बाधनार्थम् । **न धातुलो** । धातुलोप इति बहुव्रीहिः । तदाह-**धात्वंशलोपेत्यादि** । सर्वधातुलोपस्याऽभावादिति भावः । स्पष्टश्चेदं भाष्ये । **गुणवृद्धी नेति** । सन्निहितेक्परिभाषानिषेधे तु 'दीधीवेवीटा'मित्यसम्बद्धं स्यादिति व्याख्यानाद्गुणवृद्ध्योरेव निषेध इति भावः । नन्वेवं हलादिःशेषस्याङ्गाधिकारस्थत्वेनाऽङ्गाक्षिप्तप्रत्ययनिमित्तत्वात्'विभेदे'त्यादावनेन निषेधापत्तिरिति चेन्न,अभ्यासस्य धात्वनवयवत्वात्। इदञ्च तनादिशेषे निरूपितम् । किं च 'युवोरनाकौ' इत्यादिसूत्रभाष्योक्तरीत्या तृज्वद्भावस्येवाऽस्याप्यनैमित्तिकत्वात् । निरूपितं चैतत्-'न क्षुमते' ति सूत्रे । सूत्रोदाहरणं-'लोलुवः' 'पोपुवः' इत्यादि । धात्वितिकिम् ? । लूञ्'-लविता । तदभावे बहुव्रीह्यलाभेन लोपनिमित्त इत्यर्थाऽलाभात् । आर्द्धधातुक इति किम् ? । तोतोर्ति । 'क्ङिति चे'ति सूत्रस्थभाष्या-

इति नेह निषेधः, तिबादीनामनार्द्धधातुकत्वात् । तोतोर्ति । 'हलि चे'ति दीर्घः । तोतूर्तः । तोतूर्वति । तोथोर्ति । दोदोर्ति । दोधोर्ति । मुर्च्छा—मोमूर्च्छीति । मोमोर्ति । मोमूर्तः । मोमूर्च्छतीत्यादि ॥

आर्द्धधातुक इति विषयसप्तमी । तेन यङि विवक्षिते अजेर्वी । वेवीयते । अस्य यङ्लुङ्नास्ति, लुकापहारे विषयाऽसम्भवेन वीभावस्याऽप्रवृत्तेः । **इति यङ्लुगन्तप्रक्रिया ।**

त.]यणं विनैव धात्ववयवलोपनिमित्ते गुणवृद्धी न स्त इति व्याचक्षते । इक इति किम् ? । रागः । अभाजि । 'घञि च भावकरणयो'रिति रञ्जेर्नलोपे कृते वृद्धिः । 'अभाजी'त्यत्र तु 'भञ्जेश्च चिणी'ति नलोपे वृद्धिः । **इति नेह निषेध इति** । सूत्रस्योदाहरणं तु—लोलुवः, पोपुवः, मरीमृज इत्यादि बोध्यम् । तत्र लोलूयपोपूयशब्दाभ्यां पचाद्यचि 'यङोऽचि च' इति यङ्लुकि कृते अच्प्रत्ययमाश्रित्य प्राप्तो गुणो निषिध्यते। 'मरीमृज' इत्यत्र तु वृद्धिः । ननु लोलूयादिभ्योऽच्प्रत्यये 'अतो लोपः' इत्यल्लोपे यकारस्य 'यङोऽचि चे'ति लुक्यल्लोपस्य स्थानिवत्त्वादच्प्रत्ययनिमित्तः 'सार्वधातुकार्द्धधातुकयो'रिति गुणो, 'मृजेर्वृद्धि'रिति वृद्धिश्च न भवेदिति किमनेन निषेधसूत्रेण ?। न चैवमपि 'लोलुव' इत्यादावुवङि कृते लघूपधगुणः स्यात्तद्वारणाय निषेधोऽयमावश्यकः । उवङ आदिष्टादचः पूर्वत्वेन लघूपधगुणे कर्तव्ये स्थानिवत्त्वाऽभावादिति वाच्यं, स्थानिद्वाराऽनादिष्टादचः पूर्वत्वेन उवङो दृष्टत्वात् स्थानिद्वारा दृष्टत्वेऽपि स्थानिवद्भवतीत्येतत् 'न पदान्ते'ति सूत्रे सवर्णग्रहणेन ज्ञापितम्। न हि शिण्ढीत्यत्र स्थानिभूतादचः पूर्वत्वेनाऽनुस्वारो दृष्टः, किं तु स्थानिद्वारा । तथा च अनुस्वारस्य परसवर्णे कर्तव्ये श्नमो ल्लोपस्य स्थानिवत्त्वनिषेधाय तत्र सवर्णग्रहणं कृतमितीह स्थानिवद्भावः सिद्धः। नोनावेत्यत्र तु लिङुत्पत्तेः प्रागेव बहुलग्रहणादकारविशिष्टस्य यङो लुकि स्थानिवद्भावाऽप्रसक्तया न वृद्ध्यभावशङ्केति 'न धातुलोपे'ति सूत्रस्य न किंचित्प्रयोजनमिति चेत् । सत्यम् । अतएव भाष्ये प्रत्याख्यातमिदमिति संक्षेपः । **तोतोर्तीति** । यद्यप्यत्र 'लोपो व्यो'रित्यनेन वलोपः सिध्यति, तथापि 'तोतूर्त' इत्यादौ वलोपार्थं 'राल्लोपः' इत्युपन्यस्तम् । अन्यथा तत्र 'लोपो व्यो'रिति लोपं बाधित्वा वस्य 'च्छ्वोः शू'डिति ऊठ् स्यात् । **तोथोर्तीत्यादि । थुर्वी दुर्वी धुर्वी** हिंसायाम् । **मुर्च्छा** मोहसमुच्छ्राययोः । मोमूर्च्छीषि । मोमोर्षि । मोमूर्थः । मोमूर्थ । मोमूर्च्छीमि । मोमोर्मि । मोमूर्च्छ्वः । मोमूर्मः । मोमूर्च्छांचकार । मोमूर्च्छिता । मोमूर्च्छीतु । मोमोर्तु । मोमूर्तात् । मोमूर्हि । अमोमूर्च्छीत् । अमोमोः । अमोमूर्च्छुः । मोमूर्च्छ्यात् । अमोमूर्च्छीत् । अमोमूर्च्छिष्टाम्। अमोमूर्च्छिष्यत् । **इतियङ्लुगन्तप्रक्रिया।**

बा.]च्प्रत्ययमाश्रित्य यङो लुकि,अच्प्रत्ययमाश्रित्य प्राप्तो गुणोऽनेन निषिध्यते।'मरीमृज' इति तु वृद्धिनिषेधोदाहरणम्।धात्विति किम्?।शीङ्.—शयिता।इह 'उत्सृष्टानुबन्धस्य धातुत्वं, नतु सानुबन्धस्ये'ति कैयटादिमते तु धातुग्रहणं स्पष्टार्थम्।इदं सूत्रं भाष्ये प्रत्याख्यातम्।हरदत्तेन पुनरुद्धृतम् । कौस्तुभे तु तदपि दूषयित्वा प्रत्याख्यातमेव । **इति नेहेति**।तोतोर्तीत्यत्राऽयं गुणनिषेधो नेत्यर्थः । **हलि चेति** । तोतुर्व् तस् इति स्थिते 'लोपो व्यो'रिति वकारस्य लोपं बाधित्वा 'च्छ्वोः शू'डित्यूठि प्राप्ते, वकारस्याऽनेन लोपे, 'हलि चे'ति दीर्घ इत्यर्थः । यद्यपि तोतोर्तीत्यत्र 'च्छ्वो'रित्यूठोऽप्रवृत्तेर्वकारस्य 'लोपो व्यो'रिति लोपः सिध्यति तथापि तोतूर्त इत्यादौ ऊठो बाधनाय आवश्यकोऽयं लोपो न्याय्यत्वात्तोतोर्तीत्यत्रोपन्यस्त इति बोध्यम् । **तोतूर्वतीति** ।'अदभ्यस्ता'दित्यत् । 'उपधायां चे'ति दीर्घः। तोतूर्वीषि—तोतोर्षि तोतूर्थः तोतूर्थ। तोतूर्वीमि—तोतोर्मि तोतूर्वः तोतूर्मः । तोतूर्वांचकार । तोतूर्विता । तोतूर्विष्यति । तोतूर्वीतु—तोतोर्तु—तोतूर्तात् तोतूर्ताम् तोतूर्वतु । तोतूर्हि । तोतूर्वाणि । लङि अतोतूर्वीत्—अतोतोः अतोतूर्ताम् अतोतूर्वुः। अतोतूर्वीः—अतोतोः अतोतूर्तम् अतोतूर्त । अतोतूर्वम् अतोतूर्व अतोतूर्म। तोतूर्व्यात्। लुङि 'अस्तिसिचः' इति नित्यमीट्।अतोतूर्वीत्। अतोतूर्विष्यत्। थुर्वीधातोरुदाहरति—**तोथोर्तीति**। तुर्वीवद्रूपाणि। **दोदोर्तीति**। दुर्वीधातो रूपम् । **दोधोर्तीति**। धुर्वीधातो रूपम्। मुर्च्छाधातोर्मोमूर्च्छीतीति सिद्धवत्कृत्य ईडभावे आह—**मोमोर्तीति** । 'राल्लोप' इति छस्य लोपः । **इत्यादीति** । मोमूर्च्छीषि मोमोर्षि । मोमूर्च्छीमि—मोमोर्मि । मोमूर्च्छुः। मोमूर्हि । अमोमूर्च्छीत्—अमोमूः। सिप्यप्येवम् । **लुङि**—'अस्तिसिचः' इति नित्यमीट् । अमोमूर्च्छीत् । अमोमूर्च्छिष्यत् । **विषयसप्तमीति** । 'अजेर्व्यघञपो' रिति वीभावविधावार्द्धधातुके इत्यनुवृत्तं विषयसप्तम्यन्तमाश्रीयते, नतु परसप्तम्यन्तमित्यर्थः। ततः किमित्यत आह—**तेनेति** । विषयसप्तम्याश्रयणेनेत्यर्थः। **विवक्षिते इति**। यङि विवक्षिते ततः प्रागेव अजेर्वीभाव इत्यर्थः । एवंच कृते वीभावे हलादित्वाद्यङ् लभ्यते इति मत्वाह—**वेवीयते इति** । ननु अजेर्वीभावानन्तरं यङि सति तस्य 'यङोऽची'ति पाक्षिको लुक् कुतो नोदाह्रियते इत्यत आह—**अस्य यङ्लुङ् नास्तीति । विषयत्वेति**। लुका लुप्तयङो भाविज्ञानविषयत्वाऽभावेनेत्यर्थः। इति **यङ्लुगन्तप्रक्रिया ।**

शे.]त्वेषां यङ्लुगन्तानामभाव एव भाषायामिति लभ्यते तदाऽऽर्द्धधातुकग्रहणं स्पष्टतया बहुव्रीहिलाभार्थम्।**विषयासम्भवेनेति**।भाविज्ञानस्यैव शब्दीयविषयपदार्थत्वादित्याहुः।प्रत्ययलक्षणन्तु न,'न लुमते'ति निषेधात्।**इति यङ्लुगन्तप्रक्रिया।**

# अथ नामधातुप्रक्रिया ।

**सुप आत्मनः क्यच्** ।३।१।८। इषिकर्मण एषितुःसंबन्धिनः सुबन्तादिच्छायामर्थे क्यच् प्रत्ययो वा स्यात् । धात्वयवत्वात्सुब्लुक् । **क्यचि च** ।७।४।३३। अस्य ईः स्यात् । आत्मनः पुत्रमिच्छति पुत्रीयति । **'वान्तो यि प्रत्यये'** । गव्यति । नाव्यति । 'लोपः शाकल्यस्ये'ति तु न, अपदान्तत्वात् । तथा हि–**नः क्ये** ।१।४।१५। क्यचि क्यङि च नान्तमेव पदं स्यान्नान्यत् । सन्निपातपरिभाषया क्यचो यस्य लोपो न । गव्यांचकार । गव्यिता । नाव्यांचकार । नाव्यिता । नलोपः–राजीयति । **'प्रत्ययोत्तरपदयोश्च'** । त्वद्यति ।

---

त.] **सुप आत्मनः क्यच्** । 'धातोः कर्मणः' इति पूर्वसूत्रात्कर्मण इच्छायां वेत्यनुवर्तते । ततश्च सन्निधानादिच्छाकर्मण एव भवतीत्याह–**इषिकर्मण इति** । 'परस्य पुत्रमिच्छती'त्यत्रातिप्रसङ्गवारणाय सूत्रे आत्मशब्द उपात्तः । स तु स्वशब्दपर्यायः । स्वश्च क इत्याकाङ्क्षायामिच्छायाः सन्निधापितत्वादेषितैव गृह्यते। तदाह–**एषितृसंबन्धिन इति** । सुबन्तस्योक्तविशेषणद्वयमर्थद्वारकं बोध्यम् । **नः क्ये** । 'लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणी'ति वक्ष्यमाणतया हलन्तात्क्यष् दुर्लभ इत्यभिप्रेत्याह–**क्यचि क्यङीति** । एवं चेह 'क्यषी'त्यपि कैश्चिदुक्तं तदुपेक्ष्यम् । 'यस्य हलः' इति लोपमाशङ्क्याह–**सन्निपातपरिभाषयेति** । यकारे परे वान्तादेशविधानाद्वकारो यलोपस्य निमित्तं न भवतीति भावः । [**गव्यतीति** । अत्रान्तर्वर्तिविभक्त्या पदत्वाल्लोपो दुर्वारः स्यादित्याशङ्क्याह–**अपदान्तत्वादिति** । इदं च 'समाधानस्य समाधानान्तराऽदूषकत्वा'दिति न्यायेन समाधिसौकर्यादुक्तम् । वस्तुतस्तु उक्तरीत्या शङ्कैव नेति बोध्यम् । अन्ये तु वार्तिक एव प्रश्लेष इति द्वितीयपक्षमाश्रित्येदं, सूत्रे वकारप्रश्लेषे लोपाऽसंभवात्, 'न हि कार्यी'ति न्यायात् । न च वलीति निमित्तत्वेनाऽऽश्रयणात्तत्रापि लोपो भवत्येव, अन्यथा वलीत्येव कुर्यादिति वाच्यम्, वकारे परतो यकारलोपे तस्य निमित्तत्वेनाऽऽश्रयणावश्यकत्वादिति द्वितीयकल्प एव युक्त इत्याहुः] । **राजीयतीति** । 'क्यचि चे'त्यवर्णस्य

---

बा.] अथ नामधातुप्रक्रिया निरूप्यन्ते । **सुप आत्मनः** । प्रत्ययग्रहणपरिभाषया सुबन्तादिति लभ्यते । 'धातोः कर्मणः' इति सूत्रात्कर्मण इच्छायां वेत्यनुवर्तते । कर्मण इति पञ्चमी । कर्मकारकादिति लभ्यते । सन्निधानादिच्छां प्रत्येव कर्मत्वं विवक्षितम् । आत्मन्शब्दः स्वपर्यायः । तादर्थ्यस्य शेषत्वविवक्षायां षष्ठी । स्वार्थात्कर्मण इति लभ्यते । स्वश्च इच्छायां सन्निधापितत्वादेषितैव विवक्षितः । तथाच स्वस्मै यदिष्यते कर्मकारकं तद्वृत्तेः सुबन्तादिच्छायां क्यज्वा स्यादिति फलति । तदिदमभिप्रेत्य आह–**इषिकर्मण एषितृसम्बन्धिन इत्यादिना** । एषित्रर्थादिषिकर्मण इत्यर्थः । एषित्रा स्वार्थं यदिष्यते कर्मकारकं तद्वाचकात्सुबन्तादिति यावत् । **धात्ववयवत्वादिति** । सुबन्तात्क्यचि कृते तदन्तस्य 'सनाद्यन्ता' इति धातुत्वादिति भावः । **क्यचि च** । 'अस्य च्वौ' इत्यतोऽस्येत्यनुवर्तते । 'ई घ्राध्मो' रित्यत ईग्रहणं चेति मत्वा शेषं पूरयति–**अस्येति** । अकारस्येत्यर्थः । **पुत्रीयतीति** । क्यचि पुत्र य इति स्थिते ईत्वे पुत्रीय इति धातोर्लडादिरित्यर्थः । आत्मनः किम् ? राज्ञः पुत्रमिच्छति । पदविधित्वेन समर्थपरिभाषायाः प्रवृत्तेर्महान्तं पुत्रमिच्छतीत्यत्र पुत्रशब्दान्न क्यच् । **गव्यतीति** । गामात्मन इच्छतीत्यर्थः । **नाव्यतीति** । नावमात्मन इच्छतीत्यर्थः । **अपदान्तत्वादिति** । 'लोपः शाकल्यस्ये'त्यस्य पदान्त एव प्रवृत्तेरिति भावः । नन्वन्तर्वर्तिविभक्त्या पदत्वमस्त्येवेत्यत आह–**तथा हीति** । यथा पदत्वं न भवति तथोच्यते इत्यर्थः । **नः क्ये** । नकारादकार उच्चारणार्थः । 'सुप्तिङन्त'मित्यतः सुबन्तं पदमित्यनुवर्तते । सुबन्तं नकारेण विशेष्यते । तदन्तविधिः। नकारान्तं सुबन्तं पदसंज्ञं स्यादिति लभ्यते। सुबन्तत्वादेव पदत्वे सिद्धे नियमार्थमिदम् । क्यग्रहणेन क्यच्क्यङोर्ग्रहणं न तु क्यषः, 'लोहितडाज्भ्यः क्यष्वचन'मिति वक्ष्यमाणतया हलन्तात्क्यषोऽभावात् । तदाह–**क्यचि क्यङि चेत्यादिना** । ननु गव्यांचकारेत्यत्र आम आर्द्धधातुकत्वात्तस्मिन् परे वकाराद्धल उत्तरस्य यकारस्य 'यस्य हलः' इति लोपः स्यादित्यत आह–**संनिपातेति** । यकारनिमित्तकावादेशसंपन्नवकारस्य यकारलोपं प्रति निमित्तत्वाऽसंभवादिति भावः । **गव्यितेति** । इटि अतो लोपः । राजीयतीत्यत्र आह–**नलोप इति** । राजानमिच्छतीत्यर्थे क्यचि राजन् य ति इति स्थिते 'नः क्ये' इति पदत्वान्नकारस्य लोप इत्यर्थः । कृते नलोपे 'क्यचि चे'त्यकारस्य ईत्वमिति मत्वाह–**राजीयतीति** । न च ईत्वे कर्तव्ये नलोपस्याऽसिद्धत्वं

---

बो.] **सुपः** । आत्मनः किम् ? । राज्ञः पुत्रमिच्छति । पदविधित्वेन समर्थपरिभाषाप्रवृत्तये 'सुप' इति, महान्तं पुत्रमिच्छतीत्यादेर्वाक्यान्माभूदिति च । वाम्यचि पूर्वस्य पदत्वाय च तत् । **अस्य ईदिति** । अवर्णान्तस्याङ्गस्येत्यर्थः । **नाव्यतीति** । 'गोसमानाक्षरनान्ता'दिति त्वेकदेशिमतं, न सिद्धान्तः । अत एव 'नः क्ये' इति सूत्रे 'वाच्यती'ति भाष्ये प्रयुक्तम् । **नः क्ये** । ककारोच्चारणं सामसु साधुः–सामन्य इत्येतद्व्यावृत्तये । अन्यथा तत्रैव विपर्ययं स्यात् । 'यस्य हलः' इति लोपमाशङ्क्याह–**सन्निपातेति** । **राजीयतीति** । 'नलोपः सुप्स्वरे'ति

मद्यति । एकार्थयोरित्येव । युष्मद्यति । अस्मद्यति । 'हलि च' । गीर्यति । पूर्यति । धातोरित्येव । नेह—दिवमिच्छति दिव्यति । इह पुरमिच्छति पुर्यतीति माधवेनोक्तं प्रत्युदाहरणं चिन्त्यम्।पूर्गिरोः साम्यात्। 'दीव्यती'ति दीर्घस्तु प्राचः प्रामादिक एव । अदस्यति।'रीङ् ऋतः' । कर्त्रीयति।'क्यच्व्योश्च'।गार्गीयति । वात्सीयति।वाच्यति।

त.]ईत्वे कर्तव्ये 'पूर्वत्रासिद्ध'मिति नलोपोऽसिद्धो न भवति,'नलोपः सुप्स्वरे'ति नियमात्। यद्यपि 'नियमसूत्राणां निषेधमुखेन प्रवृत्तिरिति 'नलोपः सुप्स्वरे'ति सूत्रं राजीयतीत्यादिषु पठनीयम् , 'राजभ्या'मित्यादौ तु 'पूर्वत्रासिद्ध'मिति नलोपस्याऽसिद्धत्वेन दीर्घाद्यभावसिद्धेस्तथापि 'विधिमुखेन प्रवृत्ति'रिति पक्षाभ्युपगमेन हलन्तेषु राजभ्यां राजभिरित्यत्रैव पठितमिति ज्ञेयम् । न च विधिमुखप्रवृत्तिपक्षो निरालम्ब एवेति वाच्यम्, 'अनुपराभ्यां कृञः' इति सूत्रस्थभाष्यग्रन्थपर्यालोचनया तत्पक्षावगमात् । यत्तु 'नलोपः सुप्स्वरे'ति सूत्रे मनोरमायामुक्तं—'नियमसूत्राणां विधिमुखेन प्रवृत्तिः, सामान्यशास्त्रतात्पर्यसङ्कोचकता चे'ति पक्षस्य 'द्युद्भ्यो लुङी'तिसूत्रे भाष्यकृता ध्वनितत्वा'दिति । तच्चिन्त्यम् । तत्सूत्रस्य भाष्यकारैरस्पृष्टत्वात् । केचित्तु 'द्युद्भ्यो लुङीत्यत्र ध्वनितत्वा'दिति वक्तव्ये सूत्रग्रहणं बहुव्रीहिलाभार्थम् । 'द्युद्भ्यो लुङी'ति सूत्रं यस्मिन्प्रकरणे तत् 'द्युद्भ्योलुङीतिसूत्रम्' । परस्मैपदप्रकरणमित्यर्थः । तत्र हि 'अनुपराभ्या'मिति सूत्रं वर्तत इति तत्सूत्रे यद्ध्वनितं तत्तु परस्मैपदप्रकरणे ध्वनितमिति भवति । यद्वा 'अनुपराभ्यां कृञः' इत्यत्र हि भाष्यकृता 'द्युद्भ्यो लुङी'ति परामृष्टम् । तथा च 'द्युद्भ्यो लुङी'ति सूत्रं यस्मिंस्तत् द्युद्भ्योलुङीतिसूत्रम् = 'अनुपराभ्यां कृञः' इति सूत्रमित्यर्थ इत्येवं कुकविकृतिवत्कथंचिदस्थितस्य गतिः समर्थनीयेत्याहुः । **पूर्गिरोः साम्यादिति** । गॄ शब्दे, पॄ पालनपूरणयोरित्येताभ्यां क्विपि 'ॠत इद्धातोः', 'उदोष्ठ्यपूर्वस्ये'ति प्रवृत्तेरिति भावः । **प्रामादिक एवेति** । दिवुधातोः क्विपि तु 'द्यू'रिति स्यात् । ततः क्यचि तु द्यूयतीति भवति । क्विपं विहाय विचि कृते तूपधागुणे वलोपश्च स्यात् । ततः क्यचि तु देयतीति भवति। तथा च 'हलि चे'ति सूत्रे वृत्तावपि 'धातोरित्येव, नेह दिवमिच्छति दिव्यती'त्येवोक्तमिति भावः। आपत्ययकारस्य लोपं स्मारयति—**क्यच्व्योश्चेति** । 'नः क्ये' इति नियमेन पदत्वाऽभावात्कुत्वं नेत्याह—**वाच्यतीति** । एवं 'समिध्यती'त्यत्र जश्त्वं नेति बोध्यम् । 'मान्ताव्ययेभ्यः प्रतिषेधः' इति वार्तिकस्य यथा-

बा.]शङ्क्यं, 'नलोपः सुप्स्वरे'ति नियमादित्यलम् । ननु त्वामात्मन इच्छति, मामात्मन इच्छतीत्यत्र युष्मदस्मद्भ्यां क्यचि धात्ववयवत्वात्सुपो लुकि प्रत्ययलक्षणाऽभावात् 'त्वमावेकवचने' इति कथं त्वमौ स्यातां, विभक्तौ परत एव तद्विधानादित्यत आह—**प्रत्ययोत्तरपदयोश्चेति** । सुपो लुका लुप्तत्वेऽपि क्यचमादाय मपर्यन्तस्य त्वमाविति भावः । ननु युष्मानात्मन इच्छति, अस्मानात्मन इच्छति—युष्मद्यति अस्मद्यतीत्यत्रापि क्यचमादाय त्वमौ स्यातामित्यत आह—**एकार्थयोरित्येवेति** । प्रत्ययोत्तरपदयोश्चे'त्यत्र 'त्वमावेकवचने' इति सूत्रमनुवृत्तम् । एकवचनशब्दश्च न रूढः, किंतु एकत्वविशिष्टार्थवृत्तित्वमेकवचनशब्देन विवक्षितमिति युष्मदस्मत्प्रक्रियायां प्रपञ्चितं प्राक् । तथाच युष्मदस्मदोरेकत्वविशिष्टार्थवृत्तित्वाऽभावान्न त्वमाविति भावः। गिरमात्मन इच्छति,पुरमात्मन इच्छतीत्यत्र गिर्शब्दात्पुर्शब्दाच्च क्यचि विशेषमाह—**हलि चेति** । 'उपधादीर्घ' इति शेषः। ननु दिवमिच्छति दिव्यतीत्यत्रापि 'हलि चे'ति दीर्घः स्यादित्यत आह—**धातोरित्येवेति** । 'हलि चे'ति सूत्रे 'सिपि धातो'रित्यस्तदनुवृत्तेरिति भावः। **दिव्यतीति** । दिव्शब्दोऽव्युत्पन्नं प्रातिपदिकमिति भावः । **इहेति** । 'हलि चे'ति सूत्रे धातोरित्यनुवृत्तेः पुर्यतीत्यत्र न दीर्घ इति माधवग्रन्थश्चिन्त्य इत्यर्थः । कुत इत्यत आह—**पुर्गिरोः साम्यादिति** । 'गॄ शब्दे' 'पॄ पालनपूरणयोः' इत्याभ्यां क्विपि 'ॠत इद्धातो'रिति 'उदोष्ठ्यपूर्वस्ये'ति च इत्वे उत्वे च कृते रपरत्वे गिर्शब्दस्य पुर्शब्दस्य च निष्पत्तेरिति भावः । **प्रामादिक एवेति** । दिव्शब्दस्याऽव्युत्पन्नप्रातिपदिकत्वान्न धातुत्वम्। दिव्धातोः क्विबन्तादूठि द्यूशब्दाच्च क्यचि 'द्यूयती'त्येव उचितम् । विचि तु लघुपधगूणे 'लोपो व्यो'रिति लोपे देशब्दात् क्यचि देयतीत्येवोचितमिति भावः । **अदस्यतीति** । अमुमात्मन इच्छतीत्यर्थे अदस्शब्दात्क्यचि सुपो लुका लुप्तत्वाद्विभक्तिपरकत्वाऽभावान्न त्यदाद्यत्वम् । सान्तत्वान्नोत्वमत्वे । 'नः क्ये' इति नियमेन पदान्तत्वाऽभावान्न सस्य रुत्वमिति भावः। कर्तृशब्दात्क्यचि विशेषमाह—**रीङृत इति** । गार्ग्यशब्दात्क्यचि विशेषमाह—**क्यच्व्योश्चेति** । आपत्यस्य यञो यकारस्य लोप इति भावः । कृते यलोपे 'क्यचि चे'त्यकारस्य ईत्वं मत्वाह—**गार्गीयतीति। वात्सीयतीति।** वात्स्यशब्दात्क्यचि पूर्ववत्। कविशब्दात्क्यचि विशेषमाह—**अकृत्सार्वेति।**

शे.]नियमादीत्वे नलोपो नाऽसिद्धः। **चिन्त्यमिति**।पुर्शब्दमिच्छतीत्यर्थेऽपि 'प्रकृतिवदनुकरण'मित्यनेन धातुत्वमस्त्येवेति भावः।**प्रामादिक इति**।'हलि चे'त्यत्र धातोरित्यनुवृत्तेरिति भावः।**क्यच्व्योश्चेति**।आपत्ययलोपोऽनेन क्रियते।**वाच्यतीति** । अत्र सम्प्रसारणं न,'धातोः कार्यमुच्यमान'मिति परिभाषया।।**['सर्वप्रातिपदिके'ति]**।'सर्वप्रातिपदिकेभ्य'इति

'अकृत्सार्व' इति दीर्घः। कवीयति । समिध्यति । **क्यस्य विभाषा** ।६।४।५०। हलः परयोः क्यच्क्यङोर्लोपो वा स्यादार्द्धधातुके । 'आदेः परस्य'।'अतो लोपः'। तस्य स्थानिवत्त्वाल्लघूपधगुणो न । समिधिता । समिध्यिता। ***मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यज्न** । किमिच्छति । इदमिच्छति । स्वरिच्छति । **अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु** ।७।४।३४। क्यजन्ता निपात्यन्ते। अशनायति । उदन्यति । धनायति । बुभुक्षादौ किम् ?। अशनीयति । उदकीयति। धनीयति । **अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि** ।७।१।५१। एषां क्यचि असुगागमः स्यात्। * **अश्ववृषयोर्मैथुनेच्छायाम्** । अश्वस्यति वडवा । वृषस्यति गौः। * **क्षीरलवणयोर्लालसायाम्** । क्षीरस्यति बालः । लवणस्यति उष्ट्रः । * **सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ**।दधिस्यति।दध्यस्यति।मधुस्यति।मध्वस्यति।**काम्यच्च** ।३।१।९। उक्तविषये काम्यच् स्यात्। पुत्रमात्मन

---

त.]श्रुतव्याख्याने पुत्रमिच्छतीत्यत्रापि न स्यात्। पुत्रौ पुत्रान् वा इच्छतीत्यादावेव स्यात्,अतो व्याचष्टे–**मान्तप्रकृतिकादिति** । **अशनायोदन्य** । **क्यजन्ता इति** । उदकशब्दस्योदन्भावोऽन्ययोर्दीर्घ इत्यपि ज्ञेयम् । इह यः सद्य एव भोक्तुमशनमिच्छति, यश्च पातुमुदकं, यश्च धने सत्यपि पुनर्धनं,–तत्रोदाहरणानि । यस्तु कालान्तरोपयोगार्थमशनमिच्छति, यश्च स्नातुमुदकं, यश्च दरिद्रः सन् धनमिच्छति तत्र प्रत्युदाहरणानि । ननु 'उदन्या तु पिपासा तृ'डिति निघण्टौ परस्परसामानाधिकरण्यं न स्यात्, उदन्याशब्दस्य उदकेच्छावाचित्वादिति चेत् । अत्राहुः–'अशनायती'त्यादिषु अविवक्षितप्रकृत्यर्थं बुभुक्षापिपासादिकमेवार्थः, तथा च नोक्तदोष इति । **अश्वक्षीर** । 'आजसे'रित्यतोऽसुगिति वर्तते । **अश्वस्यतीति** । मैथुनार्थमश्वमिच्छतीत्यर्थः । एवं मैथुनार्थं वृषमिच्छति वृषस्यति गौः । ननु 'इति रामो वृषस्यन्ती'मिति प्रयोगो मनुष्यविषये कथं सङ्गच्छत इति चेत् । अत्राहुः–अश्ववृषरूपप्रकृत्यर्थपरित्यागेन मैथुनेच्छैवार्थः, अतएव 'वृषस्यन्ती तु कामुकी'ति कोशोऽपि स्वरसतः सङ्गच्छते इति। **लालसायामिति** । उत्कटेच्छायामित्यर्थः। **काम्यच्च**।

---

बा.]**वाच्यतीति**। वाच्शब्दात्क्यचि 'नः क्ये' इति नियमेन पदत्वाऽभावान्न कुत्वम् । 'वचिस्वपी'ति संप्रसारणं तु न, 'धातोः कार्यमुच्यमानं धातुविहितप्रत्यये एवे'ति नियमात् । **समिध्यतीति** । समिध्शब्दात्क्यचि 'नः क्ये' इति नियमेन पदत्वाऽभावान्न जश्त्वम् । लुटस्तासि इटि समिध्य इता इति स्थिते 'यस्य हलः' इति नित्ये यलोपे प्राप्ते–**क्यस्य विभाषा** । 'यस्य हलः' इत्यतो हल इति पञ्चम्यन्तमनुवर्तते । 'आर्द्धधातुके' इत्यधिकृतम् । तदाह–**हलः परयोः क्यच्क्यङोरिति** । क्यष् तु नात्र गृह्यते, 'लोहितडाज्भ्यः क्यष्वचन'मिति वक्ष्यमाणतया हलन्तात्तदभावात्। अन्तलोपमाशङ्क्याह–**आदेः परस्येति** । तथाच समिध् अ इता इति स्थिते आह–**अतो लोप इति** । तथाच समिध् इता इति स्थिते लघूपधगुणमाशङ्क्याह–**तस्य स्थानिवत्त्वादिति** । क्यच्सूत्रे 'मान्ताव्ययेभ्यः प्रतिषेधः' इति वार्तिकम् । मान्तेभ्योऽव्ययेभ्यश्च प्रतिषेध इत्यर्थे पुत्रमात्मन इच्छति पुत्रीयतीत्यत्र न स्यात्, पुत्राविच्छतीत्यादेव स्यात् । मान्तानि अव्ययानि मान्ताव्ययानि तेभ्य इत्यर्थे स्वरिच्छतीत्यत्र क्यचः प्रतिषेधो न स्यात् । अतस्तद्वार्तिकं विवृण्वन्नाह–**मान्तप्रकृतिकेति**। **अशनायोदन्य**। अशनाय, उदन्य,धनाय इत्येषां द्वन्द्वः । **क्यजन्ता इति**। एते त्रयः शब्दाः क्रमेण बुभुक्षादिष्वर्थेषु निपात्यन्ते इत्यर्थः । भोक्तुमिच्छा **बुभुक्षा** । पातुमिच्छा पिपासा । **गर्द्धः**–अभिकाङ्क्षा । **अशनायतीति** । अश्यते यत्तदशनम् = अन्नं, तद्भोक्तुमिच्छतीत्यर्थः । 'क्यचि चे'ति ईत्वाऽभावो निपात्यते । 'अकृत्सार्व'ति दीर्घः । **उदन्यतीति** । उदकं पातुमिच्छतीत्यर्थः । उदकशब्दस्य उदन्नादेशो निपात्यते, नलोपाऽभावश्च । **धनायतीति** । जीवनार्थं सत्यपि धने अधिकं धनं वाञ्छतीत्यर्थः । ईत्वाऽभावो निपात्यते । **अशनीयतीति** । अशनम्=अन्नं, तत्सङ्ग्रहीतुमिच्छति वैश्वदेवाद्यर्थमित्यर्थः । **उदकीयतीति** । सस्यादिसेचनार्थमुदकमिच्छतीत्यर्थः । **धनीयतीति** । दरिद्रः सन् जीवनाय धनमिच्छतीत्यर्थः । **अश्वक्षीर** । **क्यचि** । 'परे असु'गिति शेषपूरणम्, 'आजसेरसु'गित्यतस्तदनुवृत्तेरिति भावः । असुकि ककार इत्, उकार उच्चारणार्थः । कित्त्वादन्त्यावयवः । **अश्ववृषयोरिति–वार्तिकम्** । **अश्वस्यति वडवेति** । मैथुनार्थमश्वमिच्छतीत्यर्थः । **वृषस्यति गौरिति** । मैथुनार्थं वृषमिच्छतीत्यर्थः । 'वृषस्यन्ती तु कामुकी'ति कोशस्तु अश्ववृषरूपप्रकृत्यर्थपरित्यागेन मैथुनेच्छामात्रे लाक्षणिकः । **क्षीरलवणयोरिति–वार्तिकम्** । 'असु'गिति शेषः । **लालसा**–उत्कटेच्छा । **सर्वप्रातिपदिकानामिति** । इदमपि वार्तिकम् । लालसायां सर्वेषां प्रातिपदिकानां क्यच् वक्तव्यः। तस्मिन् परे प्रकृतीनां सुगसुकौ च वक्तव्यौ इत्यर्थः। नचानेनैव वार्तिकेन सिद्धे 'क्षीरलवणयोर्लालसाया'मिति वार्तिकं व्यर्थमिति शङ्क्यं, 'क्षीरलवणयो'रिति वार्तिकं कात्यायनीयं, 'सर्वप्रातिपदिकाना'मिति तु मतान्तरमित्यदोषात् । एतच्च भाष्ये 'अपर आह'त्यनेन ध्वनितम् । **काम्यच्च** । 'सुप

---

शे.]वार्तिकस्य–'दध्यस्यति''दधिस्यति''मध्वस्यति''मधुस्यती'त्येवमर्थ'मिति शेषादिदं दधिमधुशब्दविषयकमेवेति माधवः।

इच्छति पुत्रकाम्यति। पुत्रकाम्यिता। इह 'यस्य हलः' इति लोपो न, अनर्थकत्वात्। 'यस्ये'ति सङ्घातग्रहणमित्युक्तम्। यशस्काम्यति। सर्पिष्काम्यति। मान्ताव्ययेभ्योऽप्ययं स्यादेव। किंकाम्यति। स्वःकाम्यति। **उपमानादाचारे।३।१।१०।** उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् स्यात्। पुत्रमिवाचरति पुत्रीयति च्छात्रम्। विष्णूयति द्विजम्। ***अधिकरणाच्चेति वक्तव्यम्।** प्रासादीयति कुट्यां भिक्षुः। कुटीयति प्रासादे। **कर्तुः क्यङ् स लोपश्च।३।१।११।** उपमानात्कर्तुः सुबन्तादाचारे क्यङ् वा स्यात्। सान्तस्य तु कर्तृवाचकस्य लोपो वा स्यात्। 'क्यङ् वे'त्युक्तेः पक्षे वाक्यम्। सान्तस्य लोपस्तु क्यङ्सन्नियोगशिष्टः। स च व्यवस्थितः। ***ओजसोऽप्सरसो नित्यमितरेषां विभाषया।** कृष्ण इवाचरति कृष्णायते। ओजःशब्दो वृत्तिविषये तद्वति। ओजायते। अप्सरायते। यशायते। यशस्यते। विद्वायते। विद्वस्यते। त्वद्यते। मद्यते। अनेकार्थत्वे तु–युष्मद्यते। अस्मद्यते। **'क्यङ्मानिनोश्च'।**

---

त.] उच्चारणसामर्थ्याच्च कस्येत्संज्ञा। 'मान्ताव्ययेभ्यः प्रतिषेधः' इत्यस्यानुवृत्त्यभावं सूचयति–**अयं स्यादेवेति। आचरतीति।** व्यवहरतीत्यर्थः। **अधिकरणाच्चेति।** सप्तम्यन्तरूपात्सुबन्तादित्यर्थः। **कर्तुः क्यङ् स लोपश्च।** 'धातोः कर्मणः' इति सूत्राद्वेत्यनुवर्तत इत्याह–**क्यङ् स्यादिति।** 'से'ति लुप्तषष्ठीकं कर्तृविशेषणमित्याह–**सान्तस्येति।** चकारस्तु अन्वाचये बोध्यः। **तद्वतीति।** तथा च 'ओजायते' इत्यत्र ओजस्वीवाचरतीति विग्रहो बोध्यः। **विद्वस्यत इति।** नान्तस्यैव पदत्वात्सस्य रुत्वं न। पुंवद्भावं स्मारयति–**क्यङ्मानिनोश्चेति। सपत्नीवेति**–त्रितयसाधारणं

---

बा.] आत्मनः क्य'जित्युत्तरमिदं सूत्रम्। तदाह–**उक्तविषये इति। पुत्रकाम्यतीति।** कस्येत्संज्ञा तु न, फलाऽभावात्। **अनर्थकत्वादिति।** काम्यच एकदेशस्य यकारस्य अर्थाऽभावादित्यर्थः। ननु बेभिदितेत्यत्राऽपि यकारस्य अनर्थकत्वाल्लोपो न स्यादित्यत आह–**यस्येतीति।** 'यस्य हलः' इत्यत्र 'यस्ये'त्यनेन यकाराऽकारसङ्घातग्रहणमित्युपदमेवोक्तमित्यर्थः। तथाच बेभिद्य इता इति स्थिते यङो यस्य सङ्घातस्याऽर्थवत्त्वाद्यकारलोपो निर्बाधः। प्रकृते तु काम्यजेकदेशस्य यस्याऽनर्थकत्वाल्लोपो नेति भावः। **यशस्काम्यतीति।** 'सोऽपदादौ' इति सत्वम्। ननु किमात्मन इच्छति किंकाम्यति, स्वःकाम्यतीति कथम्?, 'मान्ताव्ययानां ने'त्यनुवृत्तेरित्यत आह–**मान्ताव्ययेभ्योऽप्ययमिति। उपमानादाचारे।** 'सुप आत्मनः क्य'जित्यतः सुप इत्यनुवर्तते। 'धातोः कर्मणः समानकर्तृका'दित्यतः कर्मण इति। तदाह–**उपमानात्कर्मण इत्यादिना।** उपमानं यत्कर्मकारकं तद्वृत्तेः सुबन्तादित्यर्थः। **पुत्रमिवेति।** 'धातोः कर्मणः' इत्यतो वेत्यनुवृत्तिरनेन सूचिता। छात्रं पुत्रत्वेन उपचरतीत्यर्थः। **विष्णूयतीति।** द्विजं विष्णुत्वेन उपचरतीत्यर्थः। **अधिकरणाच्चेति।** उपमानभूताधिकरणवृत्तेरपि सुबन्तादाचारे क्यजिति वक्तव्यमित्यर्थः। **प्रासादीयति कुट्यामिति।** प्रासादे इव कुट्यां हृष्टो वर्तते इत्यर्थः। **कुटीयति प्रासादे इति।** कुट्यामिव प्रासादे क्लिष्टो वर्तते इत्यर्थः। **कर्तुः क्यङ्।** 'कर्तु'रित्यावर्तते। 'कर्तुः क्य'ङित्येकं वाक्यम्। अत्र कर्तुरिति पञ्चम्यन्तम्। उपमानादाचारे इत्यनुवर्तते। 'धातोः कर्मणः' इत्यतो वेति च। तदाह–**उपमानादिति।** उपमानं यत्कर्तृकारकं तद्वृत्तेः सुबन्तादित्यर्थः। 'कर्तुः सलोपश्चे'ति द्वितीयं वाक्यम्। चकारः 'तु'पर्यायो भिन्नक्रमः। 'स' इति लुप्तषष्ठीकं पृथक्पदं। 'कर्तु'रिति षष्ठ्यन्तस्य विशेषणम्। तदन्तविधिः। तदाह–**सान्तस्य त्विति। पक्षे इति।** क्यङभावपक्षे इत्यर्थः। क्यङभावपक्षे सकारलोप इति भ्रमं वारयति–**सान्तस्य लोपस्त्विति।** एतच्च महाभाष्ये स्पष्टम्। क्यङि सलोपविकल्पः सर्वत्र स्यादित्यत आह–**स च व्यवस्थित इति।** सान्तस्य सलोप इत्यर्थः। व्यवस्थामेव दर्शयति–**ओजसोऽप्सरस इति।** इदं वार्तिकम्। **ओजश्शब्द इति।** क्यङन्तोऽयम्। 'सनाद्यन्ता' इति धातुत्वाद्वृत्तिः। तत्र ओजश्शब्द ओजस्विनि वर्तत इत्यर्थः। **ओजायते इति।** ओजस्वीवाचरतीत्यर्थः। ओजश्शब्दात्क्यङि सलोपे 'अकृत्सार्व'ेति दीर्घ इति भावः। **अप्सरायते इति।** अप्सरश्शब्दात्क्यङि सलोपदीर्घौ। क्यङो ङित्त्वादात्मनेपदम्। 'इतरेषां विभाषये'त्यस्योदाहरति–**यशायते यशस्यते इति।** यशस्वीवाचरतीत्यर्थः। **विद्वायते विद्वस्यते इति।** विद्वानिवाचरतीत्यर्थः। विद्वच्छब्दात्क्यङि सलोपविकल्पः। **त्वद्यते मद्यते इति।** त्वमिव अहमिव आचरतीत्यर्थः। युष्मदस्मच्छब्दात्क्यङि 'प्रत्ययोत्तरपदयोश्चे'ति मपर्यन्तस्य त्वमौ। **युष्मद्यते अस्मद्यते इति।** यूयमिव वयमिव आचरतीत्यर्थः। 'त्वमावेकवचने'इत्यस्मात् 'प्रत्ययोत्तरपदयोश्चे'ति सूत्रे 'एकवचने' इत्यनुवृत्तेरेकत्वविशिष्टार्थवृत्तित्वे सत्येव युष्मदस्मदोस्त्वमाविति भावः। कुमार्यादिशब्दात्क्यङि पुंवत्त्वं स्मारयति–**क्यङ्मानिनोश्चेति। कुमारायते इति।** पुंवत्त्वेन ङीषो निवृत्तौ दीर्घः।

---

शे.] **काम्यच्च।** धातुस्वरेण सिद्धेऽस्य चित्त्वचिन्त्यप्रयोजनम्। कस्येत्संज्ञा तु न, फलाऽभावात्। **कर्तुः क्यङ्।** 'धातोः कर्मणः' इत्यतो वेत्यनुवर्त्तते। कर्तुरिति क्यङ्विधौ पञ्चम्यन्तमपि सलोपविधौ योग्यतया षष्ठ्यन्तं, तेन तदन्तविधिरिति बोध्यम्। तेन 'हंसायते' इत्यादौ सलोपो न। **सन्नियोगशिष्ट इति।** सान्तसम्बन्धिक्यङेत्यर्थः। तेन क्यङि तदभावो नेति भावः। तदाह–**स च व्यवस्थित इति। इतरेषामिति।** भाष्ये नानामतप्रदर्शनेन विकल्पे

कुमारीवाचरति कुमारायते । हरिणीवाचरति हरितायते । गुर्वीव गुरूयते । सपत्नीव सपत्नायते । सपतीयते । सपत्नीयते । युवतिरिव-युवायते । पट्वीमृद्व्याविव पट्वीमृदूयते । '**न कोपधायाः**' । पाचिकायते । *आचारेऽवगल्भक्लीवहोडेभ्यः क्विब्वा वक्तव्यः । वाग्रहणात्क्यङपि । अवगल्भादयः पचाद्यजन्ताः । क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वं चाऽत्प्रत्ययस्य प्रतिज्ञायते । तेन तङ् । अवगल्भते । क्लीवते । होडते । भूतपूर्वादप्यनेकाच आम् , एतद्वार्तिकारम्भसामर्थ्यात् । न च अवगल्भते इत्यादिसिद्धिस्तत्फलम् , केवलानामेवाचारेऽपि

त.]विग्रहवाक्यम् । **सपत्नायत इति** । शत्रुपर्यायात्सपत्नशब्दाच्छार्ङ्गरवादिङीनन्तात्क्यङि पुंवद्भावे 'अकृत्सार्व'ेति दीर्घे च रूपमिदम् । **सपतीयत इति** । समानस्वामिकाभिधायिनो भाषितपुंस्कस्य 'नित्यं सपत्न्यादिषु' इति नादेशे नान्तत्वान्ङीप् , ततः क्यङि पुंवद्भावे च दीर्घः । **सपत्नीयत इति** । विवाहजन्यसंस्कारविशेषनिमित्तकेन पतिशब्देन समासे सति नित्यस्त्रीत्वान्न पुंवत् । **युवायत इति** । न च व्याप्सूत्रे भाष्ये युवतितरेत्युदाहरणाद्यौवनं जातिरिति 'जातेश्चे'ति निषेधे 'युवतीयते' इत्युदाहरणमिहोचितमिति वाच्यं, वयसोऽनित्यत्वेनाऽजातित्वात् । अन्यथा 'युवजानि'रिति 'अचः परस्मि'न्निति सूत्रस्थभाष्यग्रन्थो विरुध्येत । युवतितरेति भाष्यस्य तु का गतिरिति चेत् । अत्राहुः-'तसिलादिषु' इति पुंवद्भावे प्राप्ते भाष्यनिर्देशादेव न पुंवदिति । 'युवती'शब्दस्य तु तरपि 'घरूपे'ति ह्रस्वे 'युवतितरे'ति भवत्येव । **पट्वीमृदूयत इति** । पूर्वशब्दस्य क्यङ्परत्वाऽभावान्न पुंवत् । **पाचिकायत इति** । पुंवद्भावे सति कात्पूर्वस्येत्वं न श्रूयेतेति भावः । एवं-पञ्चमीयते । स्रौघ्नीयते । सुकेशीयते । ब्राह्मणीयत इत्यादि । **आचारेऽवगल्भ । गल्भ** धार्ष्ट्ये ।

बा.]**हरितायते इति** । हरिणीशब्दात् क्यङि पुंवत्त्वेन 'वर्णादनुदात्ता'दिति नत्वस्य ङीषश्च निवृत्तौ दीर्घः । **गुरूयते इति** । गुर्वीशब्दात्क्यङि ङीषो निवृत्तौ दीर्घः । **सपत्नायते इति** । शत्रुपर्यायात् सपत्नशब्दाच्छार्ङ्गरवादित्वेन ङीनन्तात्पुंवत्त्वेन ङीनो निवृत्तौ दीर्घ इति भावः । **सपतीयते इति** । समानः पतिः स्वामी यस्या इति बहुव्रीहौ सपतिशब्दस्य नत्वे ङीपि च निष्पन्नात्सपत्नीशब्दात्क्यङि पुंवत्त्वेन ङीब्नत्वयोर्निवृत्तौ दीर्घ इति भावः । **सपत्नीयते इति** । विवाहनिबन्धनं पतिशब्दमाश्रित्य समानः पतिर्यस्या इति बहुव्रीहौ सपत्नीशब्दस्य नित्यस्त्रीलिङ्गत्वान्न पुंवत्त्वमिति भावः । **युवायते इति** । युवतिशब्दात्क्यङि पुंवत्त्वे तिप्रत्ययस्य निवृत्तौ नलोपे दीर्घ इति भावः । वयोवाचिनां जातिकार्यं वैकल्पिकमिति 'जातेरस्त्रीविषया'दित्यत्र भाष्ये स्पष्टम् । एतेन 'जातेश्चे'ति निषेधादिह पुंवत्त्वं दुर्लभमित्यपास्तमिति शब्देन्दुशेखरे स्थितम् । **पट्वीमृदूयते इति** । इह पूर्वपदस्य क्यङ्परकत्वाभावान्न पुंवत्त्वम् । ननु पाचिकेवाचरति पाचिकायते इत्यत्रापि 'क्यङ्मानिनोश्चे'ति पुंवत्त्वेन टापः, 'प्रत्ययस्था'दिति इत्वस्य च निवृत्तौ 'पाचकायते' इति स्यादित्यत आह-**न कोपधाया इति** । '**आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वे**'ति वार्तिकम् । उपमानादित्यनुवर्तते । 'धातोः कर्मणः'इत्यतो वाग्रहणस्याऽस्मिन्प्रकरणे अनुवृत्त्यैव सिद्धे वाग्रहणं व्यर्थमित्यत आह-**वाग्रहणात्क्यङपीति** । अन्यथा विशेषविहितत्वात्क्विपा क्यङो बाधः स्यादिति भावः । तथाचाऽत्र वाशब्दो विकल्पार्थक इति फलितम् । अत्र सुप इति नानुवर्तते । प्रातिपदिकात् क्यङोऽप्राप्तौ वाग्रहणात्समुच्चीयते इति केचित् । **अवगल्भादय इति** । 'गल्भ धाष्र्ट्ये' अवपूर्वः, 'क्लीब अधाष्र्ट्ये' 'होडृ अनादरे' एभ्यः पचाद्यचि अवगल्भादिशब्दास्त्रयो निष्पन्ना इत्यर्थः । तथा च अवगल्भ इवाचरति, क्लीव इवाचरति, होड इवाचरतीत्यर्थे अवगल्भादिशब्देभ्यः क्विप्क्यङाविति स्थितम् । अवगल्भते इत्यात्मनेपदलाभायाह-**क्विप्संनियोगेनेति** । अन्त्यस्य अकारस्य अनुदात्तत्वमनुनासिकत्वं चाऽत्र प्रतिज्ञायते । ततश्च तस्य इत्संज्ञायां लोपे अनुदात्तेत्त्वादात्मनेपदं लभ्यते । तदाह-**तेन तङिति । अवगल्भते इति** । क्विपि भकारादकारस्य लोपे हलन्ताल्लडादौ तङि शबिति भावः । ननु अवगल्भांचक्रे, क्लीबाञ्चक्रे, होडांचक्रे इत्यत्र कथमाम्? अन्त्यस्य च इत्संज्ञालोपाभ्यामपहारेण धातूनामेकाच्त्वेन 'कास्यनेका'जित्यस्याऽप्रवृत्तेः । नच 'अवगल्भे'त्यस्य क्विबन्तस्य धातोरनेकाच्कत्वमस्तीति वाच्यम्, 'उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक्क्रियते' इत्यनुपदमेव वक्ष्यमाणत्वादित्यत आह-**भूतपूर्वादपीति** । क्विबुत्पत्तेः प्राक्तनमनेकाच्त्वं भूतपूर्वगत्या आश्रित्येत्यर्थः । भूतपूर्वगत्याश्रयणे प्रमाणमाह-**एतद्वार्तिकेति** । 'सर्वप्रातिपदिकेभ्यः क्विब्वे'ति वक्ष्यमाणवार्तिकादेव अवगल्भते, अवजगल्भे इत्यादिसिद्धौ

शे.]तात्पर्यादिति भावः । **सपत्नीवेति** । एतत्तत्त्वं 'भस्याऽढे' इत्यत्र निरूपितम् । **युवायत इति** । वयोवाचिनां जातिकार्यं वैकल्पिकमिति 'जातेरस्त्री'ति सूत्रे भाष्ये स्पष्टम् । एतेन 'जातेश्चे'ति निषेधादिदं रूपं दुर्लभमिति परास्तम् । **वाग्रहणादिति** । अन्यथा विशेषविहितत्वात्क्विपा क्यङो बाधः स्यादिति भावः । एतान्नुक्रम्य 'सर्वप्रातिपदिकेभ्य इत्येके' इति भाष्योक्तेरस्यापि प्रातिपदिकादेवोत्पत्तिः । सर्वप्रातिपदिकेभ्योऽस्य, क्यङश्च विधानेन वचनसामर्थ्यलब्धपर्यायस्यैवानुवादको वाशब्द इति माधवः । **भूतपूर्वादपीति** । [अकारस्यैानुबन्धत्वेन सांप्रतिकानेकाच्त्वस्याऽत्राऽभावात्] । अत एव

वृत्तिसंभवात्। धातूनामनेकार्थत्वात्। अवगल्भांचक्रे। क्लीबांचक्रे। होडांचक्रे। वार्तिकेऽवेत्युपसर्गविशिष्ट-पाठात्केवलादुपसर्गान्तरविशिष्टाच्च क्यङेवेति माधवादयः। तङ् नेति तूचितम्। *सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः। पूर्ववार्तिकं त्वनुबन्धासङ्गार्थम्। तत्र क्विबनूद्यते। प्रातिपदिकग्रहणादिह 'सुप' इति न संबध्यते।

त.] क्लीबृ-अधार्ष्ट्ये। होडृ अनादरे। क्यङपीति। अपिशब्दाद्वाक्यम्। तत्तु 'सर्वप्रातिपदिकेभ्यः' इत्यत्र वाग्रहणा-ल्लभ्यते इत्याहुः। क्विप्सन्नियोगेनेत्यादि। तेन क्यङ्सन्नियोगेनाऽनुदात्तत्वानुनासिकत्वयोरभावादित्संज्ञालोपौ न स्त इति 'अकृत्सार्व'ेति दीर्घे सति अवगल्भायते क्लीबायत इत्यादि भवति। तेन तङिति। आत्मनेपदमित्यर्थः। तथा च अवगल्भमानः क्लीबमान इत्यादि सिध्यति। माधवादय इति। केचित्तेषामाशयमाहुः—'आचारेऽवगल्भे'त्यत्र सुप इत्यनुवर्तते। तथा च केवलादुपसर्गान्तरविशिष्टादवगल्भप्रगल्भादिसुबन्तात्क्यङेव, न तु क्विप्। तङ् नेति तूचित-मिति। उत्तरवार्तिकेन प्रातिपदिकमात्रात्क्विब्विधीयत इति एतेभ्योऽपि त्रिभ्यः क्विपि सिद्धे तत्सन्नियोगेनानुदात्तत्वानुना-सिकत्वमात्रमच्प्रत्ययस्य 'आचारेऽवगल्भे'त्यवगल्भादिषु प्रतिज्ञायते लाघवात्। अन्यत्र तु गल्भप्रगल्भादिप्रातिपदिकेषु क्विपि परस्मैपदमेव भवति न तु तङिति भावः। नन्वेवम् 'आचारेऽवगल्भे'त्यत्र वाग्रहणात्क्यङ्मनुवर्त्य अवगल्भादिप्रातिपदि-केभ्यः क्यङ्विधानेऽप्यन्यत्र सुबन्तादेव क्यङिति क्यङो विषय एव नास्ति, तथा च केवलादुपसर्गान्तरविशिष्टाच्च क्यङ-प्ययुक्त इति चेत्। अत्र वदन्ति—प्रातिपदिकेभ्यः क्विप्, सुबन्तेभ्यः क्यङिति विषयभेदेनापि गल्भति गल्भायते प्रगल्भति प्रगल्भायते इत्यादि सिध्यत्येवेति॥ स्यादेतत्—'गल्भ धार्ष्ट्ये' इत्यादीनामनुदात्तत्वादवगल्भते इत्यादिप्रयोगसिद्धावपि अवगल्भा-दिपूत्तरवार्तिकेन क्विपि सत्यवगल्भतीत्याद्यनिष्टप्रयोगः स्यात्तद्वारणार्थम् 'आचारेऽवगल्भे'ति वार्तिकारम्भस्यावश्यकतया सामर्थ्यस्योपक्षीणत्वात् 'भूतपूर्वादप्यनेकाच आ'मित्येतदप्ययुक्तमिति चेत्। सत्यम्। अत्र ह्ययमाशयः—'सर्वप्रातिपदि-केभ्यः' इति वार्तिके वाग्रहणेन व्यवस्थितविभाषाश्रीयते। तथा च अवगल्भक्लीबहोडेभ्यः क्विपोऽभावादनिष्टप्रयोगो न भवि-ष्यतीति स्वीकृते सामर्थ्यं नोपक्षीणमिति दिक्। पदकार्यं नेति। सवर्णदीर्घो यद्यपि पदमात्रकार्यं न भवति तथापि पदस्य जायमानं कार्यं नेत्यत्र तात्पर्यं बोध्यम्। तनोतीति तत्। स इव आचरति ततति। अत्र जश्त्वं न। त्वगिव आच-

बा.] पुनरेभ्यः क्विब्विधानं तत्संनियोगेन अन्त्यवर्णस्य अनुदात्तत्वानुनासिकत्वप्रतिज्ञानार्थं सद्भूतपूर्वगत्या अनेकाच्त्वाश्रयणं ज्ञाप-यतीत्यर्थः। नन्वनुदात्तत्वानुनासिकत्वप्रतिज्ञानस्यात्मनेपदसिद्धावुपक्षीणत्वात्कथमुक्तज्ञापकतेत्याशङ्क्य निराकरोति—नचेत्यादि। कुत इत्यत आह—केवलानामिति। अच्प्रत्ययरहितानां धातुपाठसिद्धानामनुदात्तेतामेव गल्भादिधातूनामवगल्भ इवा-चरतीत्याद्यर्थेषु वृत्तिसंभवात्। तच्च कुत इत्यत आह—धातूनामनेकार्थत्वादिति। एवंच 'आचारेऽवगल्भे'ति क्विब्वि-धानमनुबन्धासञ्जनार्थं सद्भूतपूर्वगत्या अनेकाच्त्वाश्रयणं ज्ञापयतीति सिद्धम्। नच 'सर्वप्रातिपदिकेभ्यः' इति क्विपि अव-गल्भतीत्यादिवारणाय अनुबन्धासञ्जनमुपक्षीणमिति कथं तस्य उक्तज्ञापकतेति वाच्यं, 'सर्वप्रातिपदिकेभ्यः' इति वार्तिकेन क्विपि तथा प्रयोगे इष्टापत्तेः, भूतपूर्वाश्रयणपरभाष्यप्रामाण्येन 'सर्वप्रातिपदिकेभ्यः' इति वार्तिकस्य अवगल्भादिभ्यो-ऽप्रवृत्तिविज्ञानाद्वेत्यास्तां तावत्। आचारेऽवगल्भे'त्यत्र अवेत्यस्य प्रयोजनमाह—अवेत्युपसर्गेति। केवलादिति। उपसर्गविहीनाद्गल्भशब्दादित्यर्थः। उपसर्गान्तरेति। प्रगल्भाऽनुगल्भादिशब्दादित्यर्थः। क्यङेवेति। न तु क्विबि-त्यर्थः। माधवादय इत्यस्वरसोद्भावनम्। तद्बीजमाह—तङ् नेति तूचितमिति। केवलादुपसर्गान्तरविशिष्टाच्च गल्भशब्दात्, प्रगल्भादिशब्दाच्च अनेन क्विबभावेऽपि 'सर्वप्रातिपदिकेभ्यः इति वार्तिकेन क्विन्निर्बाधः। परन्तु अवपूर्वत्व एवानुबन्धासञ्जनादात्मनेपदमेव तत्र नेति वक्तुमुचितमित्यर्थः। सर्वप्रातिपदिकेभ्य इति। 'आचारे' इति शेषः। नन्वनेनैव वार्तिकेन सिद्धे 'आचारेऽवगल्भे'ति वार्तिकं व्यर्थमित्यत आह—पूर्ववार्तिकं त्विति। अन्त्यवर्णस्य इत्संज्ञा-सिद्ध्यर्थमित्यर्थः। तर्हि तत्र क्विग्ग्रहणं व्यर्थमित्यत आह—तत्र क्विबनूद्यते इति। तत्संनियोगेनानुबन्धासञ्जार्थमित्यर्थः। पदकार्यं नेति। 'राजानती'त्यादौ नलोपादिकं नेत्यर्थः। अन्यथा अन्तर्वर्तिविभक्त्या पदत्वान्नलोपादिकं स्यादिति भावः। पररूपमिति। कृष्णशब्दात् क्विबन्ताल्लडादौ शपि 'अतो गुणे' इति पररूपमित्यर्थः। कृष्णांचकार। कृष्णिता। कृष्णि-ष्यति। कृष्णतु। अकृष्णत्। कृष्णेत्। कृष्णायात्। अतो लोपात्परत्वात् 'अकृत्सार्व'ेति दीर्घः। पूर्वविप्रतिषेधस्य

शे.] धातुभिरेव रूपसिद्धिमाशङ्क्य 'अवगल्भाचक्रे' इत्यादौ 'कास्प्रत्यया' दित्याम् यथा स्यादिति क्विप् कृतः' इति भाष्ये उक्तम्। न च 'अवजिगल्भिषते' इत्यादावाचारक्विबन्तात्सनि 'यथेष्टं नामधातुषु' इत्यस्य प्रवृत्त्यर्थमिदं वार्तिकमाव-श्यकमिति वाच्यं, 'नाम'शब्दस्य सुबन्तपरतया तत्प्रकृतिके एवाऽस्य प्रवृत्तेः, आचारक्विबन्तेभ्यः सन एवानुत्पत्तेश्च। अकारस्यानुबन्धत्वेन साम्प्रतिकाऽनेकाच्त्वस्याऽत्राऽभावात्। वृत्तिसंभवादिति। न चाचारेऽर्थे 'सर्वे'त्यनेनाऽजन्ता-त् क्विपि 'अवगल्भती' त्यादिवारणायाऽनुबन्धासञ्जनार्थवचनमावश्यकमिति वाच्यम्। 'सर्वप्रातिपदिकेभ्यः' इत्यनेन

तेन पदकार्यं न । कृष्ण इवाचरति कृष्णति । 'अतो गुणे' इति शपा सह पररूपम् । अ इवाचरति–अति। अतः। अन्ति । प्रत्ययग्रहणमपनीय 'अनेकाच' इत्युक्तेर्नाऽऽम् । औ । अतुः । उः । द्वित्वम् । 'अतो गुणे' । 'अत आदे'रिति दीर्घः । णल् औ वृद्धिः । अतुसादिषु तु 'आतो लोप इटि चे'त्यालोपः । मालेवाचरति–मालाति ।

---

त.]रति । त्वचति। अत्र कुत्वं नेत्याद्यपि बोध्यम्। **द्वित्वमिति**। अ णल् इति स्थिते 'द्विर्वचनेऽची'ति निषेधादतो लोपो न भवतीति भावः।'अतो गुणे' इति द्वित्वे कृतेऽप्यतो लोपो न भवति, अन्तरङ्गेणाऽनेन बाधितत्वादिति भावः। यद्यप्यत्र फले विशेषो नास्ति तथापि शास्त्रप्रातिक्रमनुरुध्योक्तम्। यद्यप्यत्र 'वार्णादाङ्गं बलीयः' इति परिभाषयाऽतो लोप एवोचित इति चेन्मैवम्। तस्याः समानाश्रये कारश्चकारेत्यादौ प्रवृत्तिस्वीकारान्न तु व्याश्रयेऽपि। नच परत्वान्नित्यत्वाच्च 'अत आदे'-रित्यनेनैव प्रथमं भाव्यमिति वाच्यं, तस्य बहिरङ्गत्वेनाऽसिद्धत्वात् । न चापवादत्वात् 'अत आदे'रित्यनेन भाव्यमिति वाच्यम्, अपवादो यद्यन्यत्र चरितार्थस्तर्हि अन्तरङ्गेण बाध्यत इत्युक्तत्वात्, आनर्देत्यादौ तस्य चरितार्थत्वात् । तत्र हलादिःशेषात्प्रागेव परत्वात् 'अत आदे'रित्यस्य प्रवृत्तेः । न च नित्यत्वाद्धलादिः शेष एव प्रथमं स्यादिति वाच्यं, नित्यत्वस्य 'अत आदे'रित्यत्रापि तुल्यत्वात् । एतच्च मनोरमानुसारेणोक्तम् । केचिदत्र वदन्ति–'अतो गुणे' इति पररूपापवादस्य 'अत आदे'रित्यस्य आनर्देत्यादौ चरितार्थत्वादन्तरङ्गमेव भवतीति मनोरमोक्तं चिन्त्यम् । स्वविषयमध्ये एकत्रोदाहरणे चरितार्थस्योदाहरणान्तरेऽपि प्रवृत्त्यभ्युपगमात् । न हि 'गोद' इत्यत्र 'आतोऽनुपसर्गे कः' इति चरितार्थमिति

---

बा.]विहितत्वादतो लोप इत्यन्ये । **अ इवेति** । अः=विष्णुः । स इवेत्यर्थः। **अतीति** । शपा पररूपम् । असि अथः अथ । आमि आवः आमः। क्विप्प्रत्ययान्तत्वाल्लिटि 'कास्प्रत्ययात्' इत्याम्प्रत्ययमाशङ्क्य आह–**प्रत्ययग्रहणमपनीयेति**। औ अतुः उरिति सिद्धरूपप्रदर्शनम् । तत्र प्रक्रियां दर्शयति–**द्वित्वमिति** । णलि 'द्विर्वचनेऽची'ति लोपस्य निषेध इति भावः । **अतोगुणे इति** । द्वित्वे कृते अ अ अ इति स्थिते अन्तरङ्गत्वादतो लोपं बाधित्वा पररूपमिति भावः । **अत आदेरिति** । नच परत्वान्नित्यत्वादपवादत्वाच्च 'अतो गुणे' इत्यस्मात्प्राक् 'अत आदे'रित्यस्य प्रवृत्तिरिति वाच्यं, तस्य बहिरङ्गत्वात् 'अत आदे'रित्यस्यापवादत्वेऽपि आनर्देत्यत्र हलादिशेषात्प्रागेव परत्वात् 'अत आदे'रित्यस्य चरितार्थत्वेन बाधकत्वाऽसंभवात्, 'अपवादोऽपि यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते' इत्युक्तेरित्यन्यत्र विस्तरः। यद्यप्यत्र प्रक्रियाव्युत्क्रमे फलविशेषो नास्ति तथापि न्याय्यत्वादेवमुक्तम् । **णल औ इति** । पररूपे दीर्घे च आ अ इति स्थिते 'अत औ णलः' इत्यौत्वमिति भावः । **वृद्धिरिति** । आ औ इति स्थिते 'वृद्धिरेची'ति वृद्धिरित्यर्थः । तथा च 'औ' इति रूपं परिनिष्ठितम् । **अतुसादिष्विति** । अ अतुस्, अ उस्, इति स्थिते द्वित्वे पररूपे 'अत आदेः' इति दीर्घे आतो लोप इत्यर्थः । अतुः उरिति प्रत्ययमात्रं शिष्यते । थलि इटि द्वित्वे दीर्घे ऽाल्लोपे,–इथ अथुः अ । औ इव इम । वस्तुतस्तु 'कास्यनेकाज्ग्रहण'मिति वार्तिकव्याख्यावसरे प्रत्ययग्रहणमपनीयेति भाष्ये नोक्तम् । कासेश्च, प्रत्ययान्ताच्च आमिति लभ्यते । अत एव 'आचारेऽवगल्भक्लीबहोडेभ्यः' इति वार्तिके 'अवगल्भांचक्रे' इत्यादौ अन्त्यवर्णस्यानुबन्धत्वेन एकाच्त्वेऽपि 'कास्प्रत्यया'दित्यामित्युक्तं भाष्ये इति शब्देन्दुशेखरे प्रपञ्चितम् । इता । इष्यति । अतु–अतात् अताम् अन्तु अ–अतात् अतम् अत । अानि आव आम । आत् अाताम् आन् । आः अातम् आत । आम् आव आम । विधिलिङि एत् एताम् एयुः । एः एतम् एत । एयम् एव एम । यात् यास्ताम् यासुः । लुङि 'इट ईटि' इति सिज्लोपे 'आटश्चे'-ति वृद्धिं बाधित्वा परत्वादतो लोपे इटा सह आटो वृद्धौ ऐत् ऐष्टाम् ऐषुरित्यादीति केचित् । आर्द्धधातुकोपदेशकाले

---

शे.]क्विपि तथा प्रयोगे इष्टापत्तिरित्यभिमानः । वस्तुत इदं सर्वं हरदत्तानुरोधेनेति ध्वनयन्नाह–**पूर्ववार्तिकन्तु अनुबन्धासञ्ज्ञार्थमिति** । आचारेऽजन्तात्क्विपि 'अवगलभती'ति प्रयोगवारणाय 'सर्वे'त्येतत्किबनुवादेनानुदात्ताऽऽसञ्ज्ञ एषां बोध्यते इत्यर्थः । अत्र चातिरिक्तोऽकारः पररूपेण प्रश्लिष्टोऽनुनासिक आसज्यते इत्यनेकाच्त्वप्रयुक्तस्याऽऽमः सिद्धिरिति भावः । हरदत्तानुसारेणाह–**प्रत्ययग्रहणमपनीयेति** । वस्तुतस्तदपनये न मानमिति निवेदितं प्राक् । एवञ्च प्रत्ययान्तत्वादेवात्राऽऽम्सिद्धिर्बोध्या । किं च तदपनयनादिना एकाज्भ्योऽनभिधानात्किबनुत्पत्तिरेव वाच्या । अन्यथा सूत्रवार्तिकयोः फलभेदापत्तेः । यत्र भिन्नफलार्थमेवोत्तरस्य प्रवृत्तिस्तत्र फलभेदेऽपि प्रत्याख्यानमस्तु । न चाऽत्र तथा, तथा सत्यनेकाज्ग्रहणमुत्क्षुम्पाद्यर्थमितिवदेकाज्भ्यावृत्त्यर्थमित्यपि वदेत्।किं चैवं सति 'न क्वादे'रित्यादौ 'अनर्थकः प्रतिषेधो निष्ठायामनिटः कुत्ववचना'दितिवत् 'प्रत्ययादित्यनर्थकम्, अनेकाच आम्विधाना'दिति वदेदिति दिक् । तत्र हरदत्तोक्तमङ्गीकृत्य माधवेनोक्तं प्रक्रियाक्रममाह–**अतो गुणेऽत आदेरित्यादि**। अतो लोपम्, 'अत आदेः'रिति दीर्घञ्च बाधित्वाऽन्तरङ्गत्वात्पूर्वरूपम्, 'वार्णादाङ्ग'मिति तु न, अनित्यत्वादिति माधवाभिप्रायः। **दीर्घ इति** । परत्वादतो लोपं बाधित्वा पूर्वान्तत्वेनाऽभ्यासत्वादित्यभिप्रायः । **मालातीति** । 'आतो नापः' 'आतो धातो'रिति न्यासयोः फलैक्यायाबन्तेभ्य

लिङ्गविशिष्टपरिभाषया, एकादेशस्य पूर्वान्तत्वाद्वा क्विप्। मालांचकार। लुङि-अमालात्। अत्र हल्ङ्यादिलोपो न, ङी[पा]साहचर्यादापोऽपि सोरेवं लोपविधानात्।इदङ्कौ। अमालासीत्। कविरिव कवयति। आशीर्लिङि कव्रीयात्। 'सिचि वृद्धि'रित्यनुवर्त्य धातुरेव यो धातुरिति व्याख्यानान्नामधातोर्न वृद्धिरिति कैयटादयः। अकवयीत्। माधवस्तु नामधातोरपि वृद्धिमिच्छति। अकवायीत्। विरिव-वयति। विवाय। विव्यतुः। अवयीत्। अवायीत्। श्रीरिव-श्रयति। शिश्राय। शिश्रियतुः। पितेव-पितरति। आशिषि रिङ्-पित्रियात्। भूरिव भवति। अत्र 'गातिस्थे'ति, 'भुवो वु'गिति, भवतेरः' इति च न भवन्ति। अभिव्यक्तत्वेन धातुपाठस्थस्यैव तत्र ग्रहणात्। बुभाव। अभावीत्। द्रुरिव द्रवति। 'णिश्री'ति चङ् न। अद्रावीत्।अनुनासिकस्य क्विझलोः क्ङिति ।६।४।१५। अनुनासिकान्तस्योपधाया दीर्घः स्यात् क्वौ झलादौ च क्ङिति। इदमिवाचरति इदामति।

---

त.] गोप' इत्यादौ न प्रवर्तते। तस्मादणं बाधित्वा कप्रत्ययो यथा स्वविषये सर्वत्र प्रवर्तते तथेहापि प्रवर्तत इति। तदपरे न क्षमन्ते। गोदगोपादौ सर्वत्राऽणः कस्य च प्राप्तिसंभवे विनिगमनाविरहादणं बाधित्वा कप्रत्यय एव भवति। प्रकृते त्वानर्दैत्यादौ हलादिःशेषात्प्राक् 'अतो गुणे' इत्यस्य प्राप्त्यभावाद्वैषम्यमस्तीति। ननु 'अत आदे'रित्यस्य पररूपाऽपवादत्वमेधामासेत्यत्र यदुक्तं तत्कथं सङ्गच्छते, आनृधतुरित्यादौ 'आद्गुणः' इति गुणस्याऽपि प्राप्तेः। न च यथा सवर्णदीर्घो यण्गुणयोरपवादस्तथाऽयमप्युभयोरपवाद इति वाच्यम्, एवमप्यानर्दैत्यत्रैव हलादिःशेषात्प्रागेवाऽऽसेत्यत्रापि 'अत आदे'रित्यस्य प्रवृत्तौ किं तेन पररूपापवादत्वकथनेनेति चेत्। अत्र केचिदाहुः-'द्वन्द्वापवाद एकशेष' इति केषांचित्प्रवादे यथाऽपवादशब्दो बाधकपरः, 'सरूपाणा'मित्येकशेषानारम्भे हि स्वाद्युत्पत्तौ द्वन्द्वस्य प्रवृत्तेरेकशेषसूत्रारम्भे तु पदान्तराऽभावेन तदप्रवृत्तेस्तथाऽत्रत्याऽपवादशब्दोऽपि बाधकपरः।'अत आदे'रित्यनारम्भे हि हलादिःशेषे पररूपप्रवृत्तावेधामासेति न स्यात्। आरम्भे तु तत्सूत्रे तथा स्यादेव, परत्वाद्धलादिःशेषात्प्रागेव दीर्घप्रवृत्त्या पररूपस्याऽप्रसक्तेरिति। ययप्यासेत्यादौ प्रथमतः 'अत आदे'रिति दीर्घाऽकरणेऽपि हलादिःशेषे पररूपे च कृते तस्य पूर्वान्तवद्भावे सति अभ्यासग्रहणेन ग्रहणात् 'अत आदे'-रिति दीर्घप्रवृत्त्या समीहितरूपसिद्धिस्तथाप्यानर्देत्यादि न सिध्यत्येव।तत्र हि 'तस्मान्नुड् द्विहलः' इति दीर्घीभूतादकारान्नुटि नकारोपर्यकारश्रवणाऽभावप्रसङ्गादिति दिक्।प्रत्ययान्तत्वेनाऽप्रातिपदिकत्वात्क्विपोऽनुत्पत्तिमाशङ्क्याह-**लिङ्गविशिष्टेत्यादि।** **सिचि वृद्धिरित्यत्रेति।** सिचा धातोराक्षेपात्, 'ऋत इद्धातो'रित्यतो धातोरित्यनुवर्तनाच्च धातुरेव यो धातुरिति व्याख्या लभ्यत इति ज्ञेयम्। **विरिवेति।** विः-पक्षी। **अनुनासिकस्य।** 'अङ्गस्ये'ति विशेष्यसन्निधानात्तदन्तलाभः। 'ढ्रलोपे' इत्यतो दीर्घग्रहणं, 'नोपधायाः' इत्यत उपधाग्रहणं चानुवर्तते। तदाह-**अनुनासिकान्तस्येत्यादि।** **झलादाविति।** एतच्च 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषया लभ्यते। झलादौ क्ङिति शान्तो दान्त इत्युदाहरणं, क्ङिति तु यङ्-

---

बा.]एव परत्वादतो लोपे अङ्गस्याऽभावादाणेत्यन्ये।ईत्, इद्यामित्यादि। ऐभ्यत्। ननुमालाशब्दस्य टाप्प्रत्ययान्तत्वेन प्रातिपदिकत्वाऽभावात्ततः कथं क्विबित्यत आह-**लिङ्गविशिष्टेति।** वस्तुतस्तु आबन्तेभ्य आचारे क्विब्नास्त्येवेति विश्वपाशब्दनिरूपणे प्रपञ्चितम्। **ङीप्साहचर्यादिति।** ङ्यन्तादाचारक्विबन्ताद्गौरीशब्दाल्लुङि अगौरयदित्यादौ तिस्योर्ङ्यन्तात्परत्वाऽसंभवात्तत्साहचर्यादाबन्तादपि न तयोर्लोप इत्यर्थः। **कवयतीति।** शपि गुणाऽयादेशौ। **कवीयादिति।**'अकृत्सार्वे'ति दीर्घः। लुङि अकवि ईत्, स्थिते सिचि वृद्धिमाशङ्क्य आह-**सिचि वृद्धिरित्यत्रेति।** सिचा धातोराक्षेपतो लाभेऽपि 'ऋत इद्धातो'रित्यतस्तदनुवृत्तेर्धातुरेव यो धातुरिति लभ्यते इति भावः। **कैयटादय इति।** 'इको गुणवृद्धी' इति सूत्रे गोशब्दादाचारक्विपि अगवीदित्युपक्रम्य तथोक्तत्वादिति भावः। **माधवस्त्विति।** 'सिचि वृद्धि'रित्यत्र 'ऋत इद्धातो'रित्यतो धातुग्रहणानुवृत्तौ मानाऽभावेन धातुरेव यो धातुरित्युक्तार्थाऽलाभादिति तदाशयः। वस्तुतस्तु 'इको गुणवृद्धी' 'वदव्रजहलन्तस्याऽचः' इत्यादिसूत्रस्थभाष्ये सिचि परत एजन्तं नास्तीत्युक्तत्वादेजन्तेभ्य आचारक्विब्नास्त्येवेति शब्देन्दुशेखरे प्रपञ्चितम्। **विरिवेति।** विः=पक्षी, स इवेत्यर्थः। **अभिव्यक्तत्वेनेति।** 'अभिव्यक्तपदार्था ये' इति न्यायेनेति भावः। **बुभावेति।** इह न वुक्। अभ्यासस्य अत्वं च न। **अभावीदिति।** इह 'गातिस्थे'ति सिचो न लुक्। **चङ् नेति।** 'णिश्री'ति सूत्रे द्रुग्रहणेन धातुपाठस्थस्यैव ग्रहणादिति भावः। **अनुनासिकस्य।** अङ्गस्येत्यधिकृतमनुनासिकेन विशेष्यते। तदन्तविधिः। 'नोपधायाः' इत्यत उपधाया इति, 'ढ्रलोपे' इत्यतो दीर्घ इति चानुवर्तते। तदाह-**अनुनासिकान्तस्येत्यादिना।** **इदामतीति।** 'हलन्तेभ्य आचारक्विप् नास्ती'ति 'हस्त्वनयापः' इति

---

शे.]आचारक्विबेव नेत्यपरे। **ङीपा साहचर्यादिति।**ईकाररूपङ्यन्तात्तिस्योरसम्भव इति भावः।**कैयटादय इति।**इदञ्च गोशब्दादाचारक्विपि 'अगावी'दित्युपक्रम्य 'इको गुणे'ति सूत्रे कैयटेनोक्तम्। अत्राऽरुचिबीजन्तु 'न वै सन्ध्यक्षरमन्त्यमस्ती'ति 'इको गुणे'ति 'वदव्रजे'तिसूत्रस्थभाष्यप्रामाण्यात् 'ओतः श्यनि' 'आदेचः' इत्यादिसूत्रस्थभाष्यप्रामाण्यादेजन्तेभ्य

राजेव-राजानति। पन्था इव-पथीनति। मथीनति। ऋभुक्षीणति। द्यौरिव देवतीति माधवः। अत्र ऊठि द्यवतीत्युचितम्। क इव कति। चक्काविति हरदत्तः। माधवस्तु ण्यल्लोपाविति वचनाण्णलि वृद्धिं बाधित्वाऽतो लोपावक इति रूपमाह। स्व इव स्वति। सस्वौ। सस्व। यत्तु स्वामी स्वांचकारेति, तदनाकरमेव। **भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः।३।१।१२।** अभूततद्भावविषयेभ्यो भृशादिभ्यो भवत्यर्थे क्यङ् स्यात्, हलंन्तानामेषां लोपश्च। अभृशो भृशो भवति भृशायते। 'अच्वे'रिति पर्युदासबलादभूततद्भाव इति लब्धम्। तेनेह न-'क्व दिवा भृशा भवन्ति'। ये रात्रौ भृशा नक्षत्रादयस्ते दिवा क्व भवन्तीत्यर्थः। **सुमनस्।** अस्य सलोपः।

---

त.]लुकिं-तसि शंशान्तः दंदान्तः। **पथीनतीति।** अन्तरङ्गत्वाद्दीर्घस्ततो न गुण इत्याहुः। 'इन्ह'न्निनियमेन शावेवेति नियमाद्दीर्घाऽभावे गुणे सति 'पथेनती'त्येव रूपमित्यन्ये। येषामिन्नादीनां शावुपधादीर्घः क्रियते परमदण्डीनीत्यादौ तेषामेव दण्डिन्वृत्रहन्नादीनाम् 'इन्ह'न्निति नियमो,न तु पथ्यादीनाम्। एतेषां तु शौ परतः सुपन्थानीत्यादावुपधादीर्घप्रवृत्तावपि 'इतोऽत्सर्वनामस्थाने' इत्यत्वे कृते 'इन्ह'न्निति नियमाऽप्रवृत्तेः। अन्यथा पन्थानौ पन्थान इति न सिध्येत्। तथा च पथीनतीत्यात्यायेव साध्वित्यपरे। **देवतीति माधव इति।** अपदान्तत्वादिव उत्व। **अत्रेति।** लघूपधगुणं बाधित्वान्तरङ्गत्वादूठि यण्।तस्मिन्कर्तव्ये बहिरङ्गस्याप्यूठो नाऽसिद्धत्वं,'नाजानन्तर्ये'इति निषेधात्।न च वर्णादाङ्गस्य बलीयस्त्वाद्यणं बाधित्वा लघूपधगुणः स्यादिति वाच्यं, व्याश्रयत्वात्। अतएव सिवेरौणादिके नप्रत्यये स्योनशब्दः सिध्यतीति भावः। **क इवेति। को-ब्रह्मा।चक इतीति।** नन्वेवमौ अतुरित्यत्रापि 'ऋत आदेः' इति दीर्घं बाधित्वा 'अतो लोप' एव स्यादिति चेत्। अत्राहुः-'ण्यल्लोपौ' इति वचनेन जायमानो योऽतो लोपः स तु सन्निहितमेव 'अक्कत्सार्वे'ति दीर्घं बाधते, अनन्तरस्येति न्यायात्,न तु व्यवहितमपि 'अत आदे'रिति दीर्घमिति माधवाशयात्रानेन तद्ग्रन्थस्य विरोध इति। **अनाकरमेवेति।** अनेकाच्त्वाऽभावादित्यर्थः। अन्ये तु भाष्ये 'प्रत्ययग्रहणमनीये'त्यनुक्तत्वात्प्रत्ययान्ततया स्वामासेत्यादि रूपं शुद्धमेवेत्याहुः। **भृशादिभ्यो।** 'भुवी'त्येतद्व्याचष्टे-**भवत्यर्थ इति।** भृश, शीघ्र, मन्द, पण्डित, दुर्मनस्, सुमनस्, उन्मनस्,

---

बा.]सूत्रभाष्ये स्पष्टमिति शब्देन्दुशेखरे स्थितम्। **पथीनतीति।** पथिन्शब्दात्क्विपि 'अनुनासिकस्ये'ति इकारस्य दीर्घः। इदं तु माधवानुरोधेन। क्विबभ्युपगमेऽपि तिपि पथेनतीत्येव युक्तम्, 'इन्ह'न्निति नियमेन दीर्घाऽप्राप्तेः। नच नियमस्य सजातीयापेक्षत्वात्सुबानन्तर्ये एवाऽयं नियमो नान्यत्रेति वाच्यं, तथा सति वृत्रघ्नः स्त्री वृत्रघ्नीत्यत्रापि अल्लोपं बाधित्वा अन्तरङ्गत्वात् 'अनुनासिकस्ये'त्युपधादीर्घापत्तेरित्याहुः। **देवतीति।** दिव्शब्दादाचारक्विबन्ताच्छपि लघूपधगुणः 'नः क्ये' इति नियमेन अपदान्तत्वात् 'दिव उ'दित्युत्वं नेति भावः। **अत्र ऊठीति।** दिव्शब्दात् क्विपि 'च्छ्वो'रिति वकारस्य ऊठि कृते लघूपधगुणं बाधित्वा परत्वादिकारस्य यणि द्यूशब्दाच्छपि ऊकारस्य गुणे अवादेशे च द्यवतीति रूपमुचितमित्यर्थः। **चक्काविति।** कशब्दात्क्विबन्ताल्लिटि णलि द्वित्वे चुत्वे चक अ इति स्थिते ककारादकारस्य अतो लोपात्परत्वाद्वृद्धौ आकारे 'आत औ णलः' इत्यौत्वे वृद्धिरेकादेश इति भावः। **माधवस्त्विति।** चक अ इति स्थिते पूर्वविप्रतिषेधाद्वृद्धिं बाधित्वा ककारादकारस्य अतो लोपे कृते णलोऽकारेण सह चक्क इति रूपमित्यर्थः। नचैवं सति अ इवाचरति अति, औ, अतुरित्यत्रापि लिटि 'ऋत आदे'रिति दीर्घं बाधित्वा अतो लोपः स्यादिति वाच्यं, 'ण्यल्लोपा'विति पूर्वविप्रतिषेधलभ्योऽतो लोपः संनिहितमेव 'अक्कत्सार्वे'ति दीर्घं बाधते, नतु 'अत आदे'रिति दीर्घमपि, 'अनन्तरस्ये'ति न्यायादिति माधवाशय इत्याहुः। **तदनाकरमेवेति।** अनेकाच्त्वाऽभावादिति भावः। वस्तुतस्तु 'प्रत्ययग्रहणमपनीये'त्यस्य भाष्ये अदर्शनात् प्रत्ययान्तत्वादाम्भवत्येवेति युक्तमेवेत्यनुपदमेवोक्तम्। **भृशादिभ्यो।** भवनं भूः, भावे क्विप्। तदाह-**भवत्यर्थे इति।** भवने इत्यर्थः। **क्यङ् स्यादिति।** 'कर्तुः क्यङ् स लोपश्चे'त्यतस्तदनुवृत्तेरिति भावः। **हलन्तानामेषामिति।** भृशादिषु ये हलन्तास्तेषां लोपः, क्यङ् चेत्यर्थः।ननु 'अभूततद्भावे' इति कुतो लब्धमित्यत आह-**अच्वेरिति पर्युदासबलादिति।** 'अभूततद्भावग्रहण' मिति वार्तिकमेतल्लभ्यार्थकथनपरमिति

---

शे.]आचारक्विपोऽभाव इति। सुगसुग्विधायकवार्तिकोक्तमाधवरीत्याऽस्यापि वार्तिकस्य 'अश्वति' 'गर्दभती'त्येवमर्थ'मितिवाक्यशेषात्तन्मात्रविषयतैवाऽस्येति कश्चित्। **इदामतीति।** हलन्तेभ्य आचारक्विप्नास्तीति 'ह्रस्वनद्यापः' इति सूत्रे भाष्ये स्पष्टम्। **पथीनतीति।** इदं माधवानुसारेण। क्विबङ्गीकारेऽपि 'पथेनती'ति तु युक्तम्। 'इन्ह'न्निति नियमेन दीर्घाऽप्राप्तेः। न च नियमस्य सजातीयापेक्षत्वात्सुबानन्तर्ये एव नियमफलनिषेधप्रवृत्तिरिति वाच्यं, 'वृत्रघ्नः स्त्री-वृत्रघ्नी' इत्याद्यसिद्ध्यापत्तेरित्यपरे। हरदत्त इत्यत्राऽरुचिं दर्शयति-**माधव इति। अनाकरमेवेति।** अत्र यद्वक्तव्यन्तदुक्तम्। **भृशादिभ्यो।** भृशादिराकृतिगणः। सुमनसादयो बहुव्रीहयः, 'अभूततद्भावग्रहणं कर्त्तव्य'मिति वार्तिकं, तदाह-**अभूतेत्यादि।** वार्तिकाऽन्यथासिद्धिमाह-**अच्वेरिति।** चोऽन्वाचये।अत एव भृशग्रहणं चरितार्थम्। **भृशा इति।**

सुमनायते । चुरादौ सङ्ग्राम युद्धे इति पठ्यते। तत्र 'सङ्ग्रामे'ति प्रातिपदिकम् । तस्मात्तत्करोतीति णिच् सिद्धः । तत्सन्नियोगेनाऽनुबन्ध आसज्यते । 'युद्धे योऽयं ग्रामशब्द' इत्युक्तेऽपि सामर्थ्यात्सङ्ग्रामशब्दे लब्धे विशिष्टपाठो ज्ञापयति-'उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक्क्रियते' इति । तेन मन-

त.]इत्यादयो **भृशादयः**।'क्व दिवे'त्यादि भाष्यकारीयं प्रत्युदाहरणं व्याचष्टे-**ये रात्राविस्यादिना**।**प्रातिपदिकमिति**। न त्वयं धातुः,'ग्रसेरा च' इत्यौणादिकेन मन्प्रत्ययान्ततया निष्पादितत्वात्। एवं च वक्ष्यमाणज्ञापकं सङ्गच्छत इति भावः। **अनुबन्ध इति** । सङ्ग्रामेति मशब्दाकाराद्भिन्नोऽकारोऽनुबन्ध इत्यर्थः। तथा च अत्र 'अतो गुणे' इति पररूपं ज्ञेयम् । यदि तु मकारादकारोऽनुबन्धः स्यात्तर्हि अससङ्ग्रामतेत्यत्र 'णौ चङी'त्युपधाह्रस्वः स्यात् । णिच्सन्नियोगेनाऽनुबन्धकरणे तु अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्याऽप्रवृत्त्या 'णिचश्चे'ति कर्तृगामिनि क्रियाफल एवात्मनेपदं स्यान्न तु परगामिनीति विवेकः। **सामर्थ्यादिति** । केवलस्य ग्रामशब्दस्य युद्धे प्रयोगाऽभावादिति भावः । क्रियायोगाऽभावादुपसर्गो नेत्यभिप्रेत्याह-**समानाकारमिति** । **पूर्वपदमिति** । तच्च समास एव संभवति । तेन आन्दोलयित्वा प्रेङ्खोलयित्वेत्यादौ आ-प्रेत्यादीनां न पृथक्करणम् । अन्यथा तेषां क्त्वाप्रत्ययान्तेन समासे सति ल्यप् स्यादिति भावः । पृथक्करणस्य फलमाह-**तेनेति** । सुमिमनायिषति उन्मिमनायिषतीत्यादौ मनश्शब्दस्य द्विर्वचनं पृथक्करणस्य फलमिति बोध्यम् । **अवागल्भतेति** । 'आचारेऽवगल्भे'ति क्विब्विधौ अवेत्यस्य पृथक्करणाद्गल्भशब्दात्प्रागट्। किं तत्साजात्यमित्यत आह-**तेनेति**।**उत्त्रामिति**।

बा.]भावः। **ये रात्रौ भृशा इति** । प्रकाशाऽतिशयवन्त इत्यर्थः। भृशादिषु हलन्तमुदाहरति-**सुमनसिति** । **सुमनायते इति** । असुमनाः सुमना भवतीत्यर्थः । यद्यपि स्त्रियामित्यधिकारे 'अप्सुमनस्समासिकतावर्षाणां बहुत्वं चे'ति लिङ्गानुशासनसूत्रे सुमनश्शब्दस्य नित्यं बहुवचनं विहितं, तथापि तद्देवादिपर्यायरूढविषयम् । सु=शोभनं मनो यस्येति सुमना इति बहुव्रीहिर्यौगिक इति भावः । **सुमनायते इति** । क्यङि सलोपे 'अकृत्सार्व'ेति दीर्घः । ननु लङि मनश्शब्दात्प्रागटि 'स्वमनायते'ति वक्ष्यमाणमनुपपन्नम्, अङ्गस्य अड्विधानात्सुमनश्शब्दस्य समस्तस्यैव लङं प्रत्यङ्गत्वात्, 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहण'मिति न्यायादित्याशङ्क्याह-**चुरादौ सङ्ग्राम युद्धे इति पठ्यते इति** । ततश्च क्वचित्सोपसर्गपाठबलादन्यस्मात् सोपसर्गादाचारक्विपि उपसर्गस्य न धातुसंज्ञाप्रवेश इति विज्ञायते इत्यर्थः । ननु चुरादौ 'सङ्ग्रामे'ति समस्तो धातुः, नतु सोपसर्गो ग्रामशब्दः। एवं चास्य प्रातिपदिकत्वाऽभावात्सोपसर्गात्क्विपि उपसर्गस्य न धातुसंज्ञाप्रवेश इत्यत्र कथमिदं गमकमित्यत आह-**तत्र सङ्ग्रामेति प्रातिपदिकमिति** । 'ग्रसेरा चे'त्यौणादिके मन्प्रत्यये निष्पन्नस्य ग्रामशब्दस्य 'कृत्तद्धिते'ति प्रातिपदिकत्वम् । अव्युत्पत्तिपक्षे 'अर्थवदधातु'रिति प्रातिपदिकत्वमित्यर्थः। ननु चुरादावस्य पाठो धात्वधिकारविहितचौरादिकणिजर्थः । एवं च प्रातिपदिकत्वेन चुरादौ तस्य पाठो व्यर्थ इत्यत आह-**तस्मादिति** । तस्मात्सङ्ग्रामेति प्रातिपदिकाच्चौरादिकणिजसंभवेऽपि 'तत्करोती'त्यर्थे णिच् सिद्ध इत्यर्थः । ननु 'तत्करोती'त्यनेनैव सङ्ग्रामशब्दात्प्रातिपदिकाण्णिच्सिद्धेः किमर्थमिह चुरादौ तस्य पाठ इत्यत आह-**तत्संनियोगेनेति** । णिच्संनियोगेन अकारस्य इत्संज्ञकस्य अनुदात्तेत्त्वार्थकस्य आसञ्जनार्थ इत्यर्थः । नच मकारादकारस्य इत्संज्ञकत्वे अल्लोपस्य णिनिमित्तकत्वाऽभावादससङ्ग्रामतेत्यत्र 'णौ चङ्युपधायाः' इत्युपधाह्रस्वः स्यादिति वाच्यं, सङ्ग्रामेत्ययं हि कथादित्वाददन्तः । तस्मादकारो भिन्न एव अनुबन्धत्वेनासज्यते इत्यर्थः । एवं च णौ अतो लोपे सति णावग्लोपित्वान्नोपधाह्रस्वः। कथादित्वलक्षणाऽदन्तत्वलाभायैवाऽस्य चुरादौ पाठ इति भावः । ननु चुरादौ सङ्ग्रामशब्दस्य 'तत्करोती'ति णिचि परे अस्त्वनुबन्धाऽऽसङ्गः, तथापि आचारक्विपि उपसर्गस्य न धातुसंज्ञाप्रवेश इत्यत्र कथमस्य ज्ञापकतेत्यत आह-**युद्धे इति** । **सामर्थ्यादिति** । 'ग्राम युद्धे' इत्येतावतैव सङ्ग्रामशब्दो लभ्यते, केवलस्य ग्रामशब्दस्य युद्धे प्रयोगाऽभावादित्यर्थः । **विशिष्टपाठ इति** । सङ्ग्रामशब्दपाठ इत्यर्थः । ज्ञाप्यमर्थमाह-**सामानाकारमिति**। सङ्ग्रामशब्दे युद्धवाचिनि 'स'मित्यस्य क्रियायोगाऽभावात्समानाकारमित्युक्तम्। **धातुसंज्ञाप्रयोजके इति**। 'क्विबादा'विति शेषः। **पृथक्क्रियते इति**। तथाच न तस्य धातुसंज्ञाप्रवेश इत्यर्थः । ततः किमित्यत आह-**तेनेति** । 'स'मित्यस्य धातुसंज्ञाप्रवेशाऽभावेनेत्यर्थः । तथाच सुमनश्शब्दादाचारक्विपि विवक्षिते मन-

शे.]भृशाऽऽलोका इत्यर्थः। कैयटे तथा पाठात् । **प्रातिपदिकमिति**। न धातुः, तथा सति भाष्योक्तवक्ष्यमाणज्ञापकानुपपत्तिरिति भावः । **उपसर्गसमानाकारमिति**। अन्यथाऽत्रत्य'सं'शब्दस्य क्रियायोगाऽभावेनानुपसर्गत्वाज्ज्ञापकानुपपत्तिरिति भावः। उपसर्गस्यापि प्रयोगभेदेनोपसर्गसमानाकारत्वं बोध्यम् । **चिकीर्षिते इति** । पृथक्करणेन समासाऽभावकल्पनेऽपि तद्विषये क्यङादिप्रत्ययविधायके लक्षणे सुबन्तादित्यंशे यस्माद्विहितस्तदादीत्यंशाऽप्रवृत्त्या न दोषः । यस्माद्विहित इत्यनेनाऽधिकव्यावृत्तिरेव न तु न्यूनव्यावृत्तिरिति तत्त्वम् । **पृथक् क्रियते इति** । तेन जातसमासाऽभावः

शब्दात्प्रागट् । स्वमनायत । उन्मनायते । उदमनायत । एवं चाऽवागल्भत अवागल्भिष्टेत्यादावप्यवेत्यस्य पृथक्करणं बोध्यम् । ज्ञापकं च सजातीयविषयम् । तेन यत्रोपसर्गरूपं सकलं श्रूयते न त्वादेशेनापहृतं तत्रैव पृथक्कृतिः । एवं च आ ऊढः ओढः, स इवाऽऽचर्य-ओढायित्वा । अत्र 'उन्मनाय्य' 'अवगल्भ्ये'तिवन्न ल्यप् । ज्ञापकस्य विशेषविषयत्वे षाष्ठं वार्तिकं, तज्ज्ञाप्यं च प्रमाणम् । तथा हि । *उस्योमाङ्क्ष्वाटः प्रतिषेधः । उसि ओमाङोश्च परयोराटः पररूपं नेत्यर्थः । उस्रामैच्छद् औस्रीयत् । औङ्कारीयत् । औढीयत् । 'आटश्चे'ति 'च'शब्देन

---

त.]'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी'त्यमरः। **औस्रीयदिति**। क्यजन्तादुस्राशब्दाल्लङि अङ्गस्याऽऽटि च कृते 'उस्यपदान्ता'दिति पररूपं प्राप्तम् । न चानर्थकोऽयमुस् न ग्रहीष्यत इति वाच्यं, छिन्द्युर्भिन्द्युरित्यादावप्युसोऽनर्थकत्वादागमसहितस्यैवार्थवत्त्वात्। तथा चाऽयुः,अपुरित्यादावेव स्यात्। एवं चाऽयमेवाऽऽडागमस्य उसि परे प्रतिषेधोऽर्थवद्ग्रहपरिभाषाया अत्राऽप्रवृत्तौ ज्ञापक इति स्थितम् । अतएव 'उस्यपदान्ता'दित्यत्राऽपदान्तात् किं, कोस्रेति भाष्ये प्रत्युदाहृतम् । **औङ्कारीयदिति** । 'ओमाङोश्चे'ति पररूपं प्राप्तम् । आडागमस्याऽऽङि परे उदाहरणमाह-**औढीयदिति** । यत्रा-

---

वा.]शब्दमात्रस्य धातुत्वात्ततो लङि मनश्शब्दस्यैवाङ्गत्वात्ततः प्रागेव अट् , न तु सुमनसिति समुदायात्प्रागित्यर्थः।एतेन 'सङ्ग्रामयतेरेव सोपसर्गात्नाऽन्यस्मा'दित्यादि भाष्यं 'भृशादिभ्य' इति सूत्रस्थं व्याख्यातमिति बोध्यम्। **उन्मनायते इति**। भृशादित्वात् क्यङि सलोपः । **एवं चेति** । एवमुक्तरीत्या 'आचारेऽवगल्भे'ति क्विब्विधावपि अवेत्यस्य पृथक्करणाद्गल्भशब्दात्प्रागेव अडित्यर्थः । ननु आ ऊढः ओढः । 'कुगती'ति समासः । अस्माद्भृशादित्वात्क्यङि 'ओढायते' इत्यादि रूपम् । अत्रापि आङो धातुसंज्ञाप्रवेशो न स्यात्, तत्र यद्यपि लङि ऊढशब्दाद्वा आङो वा प्रागटि न रूपे विशेषः, उभयथापि औढायतेत्येव रूपं सिद्धमेव । तथापि ओढायेति क्यङन्तात्क्त्वाप्रत्यये अतो लोपे ओढायित्वेत्येवेष्यते । अत्र क्यङि विकीर्षिते उक्तरीत्या पृथक्करणे पृथक्कृतस्य आङः 'कुगतिप्रादयः' इति क्त्वाप्रत्ययान्तेन समासे सति 'समासेऽनञ्पूर्वे क्त्वो ल्य'बिति ल्यप् स्यादित्यत आह-**ज्ञापकं च सजातीयविषयमिति** । तदेवोपपादयति-**तेनेति** । चुरादौ 'सङ्ग्राम युद्धे' इति सम्ग्रहणस्य उक्तार्थे पृथक्करणे ज्ञापकस्य सजातीयविषयकत्वाश्रयणेन यत्र उपसर्गस्वरूपमविकृतं श्रूयते नत्वेकादेशेनापहृतं तत्रैव उपसर्गस्य पृथक्कृतिरिति विज्ञायते इत्यर्थः, सङ्ग्रामे सम्ग्रहणस्य ज्ञापकस्य एवंविधत्वादिति भावः । ततः किमित्यत आह-**एवंचेति** । **ओढायित्वेति** । ओढशब्दाद्भृशादित्वात् क्यङि ओढायेत्यस्मात्क्यङन्तात्क्त्वाप्रत्यये अतो लोपे रूपम् । **अत्रेति** । अत्र न ल्यबित्यन्वयः । क्यङि विवक्षिते आङ एकादेशेनापहृतत्वेन पृथक्करणाऽभावे सति तस्य आङः क्त्वाप्रत्ययान्तेन समासाऽभावान्न ल्यबिति भावः । उन्मनाय्य, अवगल्भ्येतिवदिति व्यतिरेकदृष्टान्तः । उन्मनस्शब्दाद्भृशादित्वादाचारे क्यङि सकारलोपे 'अकृत्सार्व'ेति दीर्घे उन्मनायेत्यस्मात्क्त्वो ल्यपि, अतो लोपे, उन्मनाय्येति रूपम् । अवगल्भशब्दादाचारेऽवगल्भेति क्विबन्तात्क्त्वो ल्यपि रूपम् । अत्र 'उ'दित्यस्य 'अवे'त्यस्य च उपसर्गस्वरूपस्य अनपहृतत्वेन क्यङि क्विपि च विवक्षिते पृथक्कृततया तयोः क्त्वान्तेन समासे सति ल्यबुचितः । इह तु ओढायित्वेत्यत्र न तथेति व्यतिरेकदृष्टान्तोऽयम् । ज्ञापकस्य सजातीयत्वे प्रमाणं दर्शयति-**ज्ञापकस्येति** । षाष्ठं वार्तिकं दर्शयति-**उस्योमाङ्क्ष्विति** । उसि, ओम्, आङ् एषां द्वन्द्वः । षष्ठस्य प्रथमे पादे 'ओमाङोश्चे'ति सूत्रे इदं वार्तिकं पठितम् । तद्व्याचष्टे-**उस्योमाङोश्च परयोरिति** । 'एङि पररूप'मित्यतः पररूपग्रहणानुवृत्तिं मत्वा आह-**पररूपं नेति** । उसि तावदुदाहरति-**औस्रीयदिति** । उस्रामात्मन ऐच्छदित्यर्थे 'सुप आत्मनः' इति क्यजन्तात्लङि उस्रीयशब्दादङ्गात्प्रागटि कृते 'उस्यपदान्ता'दिति पररूपं प्राप्तमनेन निषिध्यते । अर्थवद्ग्रहणपरिभाषा त्वनित्या, अस्मादेव भाष्योदाहरणात् । अन्यथा भिन्द्युरित्यादौ पररूपं न स्यात्, आगमसहितस्य युस एवार्थवत्त्वादिति भावः । ओमि परत उदाहरति-**औङ्कारीयदिति** । ओङ्कारशब्दात् क्यजन्तात्लङि अङ्गस्य आटि कृते 'ओमाङोश्चे'ति पररूपं प्राप्तमनेन निषिध्यते । आङि उदाहरति-**औढीयदिति** । आ ऊढः ओढः, तस्मात् क्यजन्तात्लङि अङ्गस्य ओढशब्दस्य आटि कृते 'ओमाङोश्चे'ति पररूपं प्राप्तमनेन निषिध्यते । उदाहरणत्रयमिदं भाष्ये स्थितम् । तत्र यदि उपसर्गस्वरूपस्य एकादेशेनापहारेऽपि पृथक्करणं स्यात्तर्हि क्यचि विवक्षिते आङः पृथक्कृतौ सत्यां धातुबहिर्भावादूढशब्दात् प्रागाङः परत्र आटि सति पररूपस्याऽप्रसक्तेराङि पररूपप्रतिषेधो व्यर्थः

---

शे.]कल्प्यते। अत एव 'सुमनाय्ये'त्यादौ पुनः क्त्वान्तेन समासे ल्यप्सिद्धिः। तदुक्तं 'भृशादिभ्य' इति सूत्रे भाष्ये 'सङ्ग्रामयतेरेव सोपसर्गान्नाऽन्यस्मात्सोपसर्गा'दिति । **श्रूयत इति**। 'उत्तरपदात्पार्थक्येने'ति शेषः । **आदेशेनेति**। एकादेशरूपेणेत्यर्थः । अत एव 'स्वाशभत्' 'सम्यचिच'दिति माधवोदाहृतं सङ्गच्छते । **अवगल्भ्येति** । स्वोत्तरभागेन धातुसञ्ज्ञानिमित्तप्रत्ययप्रकृतिभूतैकदेशधातुना समर्थत्वादिकं । तद्वारा तद्धटितविशिष्टार्थेऽपि क्त्वान्तेन सह समर्थतया 'कुगती'ति

पुनर्वृद्धिविधानादिदं सिद्धमिति षाष्ठे स्थितम्। **लोहितादिडाज्भ्यः क्यष्** ।३।१।१३। लोहितादिभ्यो डाजन्ताच्च भवत्यर्थे क्यष्स्यात्। **वा क्यषः** ।१।३।९०। क्यषन्तात्परस्मैपदं वा स्यात्। लोहितायति। लोहितायते। अत्राऽच्वेरित्यनुवृत्त्याऽभूततद्भावविषयत्वं लब्धम्। तच्च लोहितशब्दस्यैव विशेषणं, न तु डाचोऽसंभवात्। नाप्यादिशब्दग्राह्याणां, तस्य प्रत्याख्यानात्। तथा च वार्तिकं–।* **लोहितडाज्भ्यः क्यष्वचनं, भृशादिष्वितराणि**। इति। न चैवं काम्यच इव क्यषोऽपि ककारः श्रूयेत, उच्चारणसामर्थ्यादिति वाच्यं; तस्यापि भाष्ये प्रत्याख्यानात्। पटपटायति। पटपटायते। कृभ्वस्तियोगं विनापीह डाच्, डाजन्तात् क्यषो विधानसामर्थ्यात्। यत्तु–'**लोहितश्यामदुःखानि हर्षगर्वसुखानि च। मूर्च्छानिद्राकृपाधूमाः करुणा नित्यचर्मणी**'। इति

त.]देशेनाऽपहृतं तत्रापि यदि पृथक्कृतिस्तदा आङः परत्रोऽऽटा भाव्यमित्याडागमस्याऽऽङि परे पररूपनिषेधो व्यर्थः स्यात्। तथा च ज्ञापकस्य विशेषविषयत्वे प्रमाणमयमेव निषेध इति भावः। 'च'शब्दं प्रयुञ्जानः सूत्रकारोऽपि ज्ञापकस्य विशेषविषयत्वेऽनुकूल इत्याह–**चशब्देनेति**। **षाष्ठे स्थितमिति**। भाष्यकारोऽप्युक्तार्थे प्रमाणभूत इति भावः। स्यादेतत्– 'अवधीरयती'त्यादाववशब्दस्य पृथक्करणमस्ति वा, न वा?। आद्ये बोपदेवेनाऽवशब्दात् प्रागाडागमं वकारद्वित्वं च कृत्वा चङि आववधीरदित्युदाहृतं, तन्न संगच्छेत।द्वितीये तु 'इतीव धारामवधीर्य मण्डलीक्रियाश्रियाऽमण्डि तुरङ्गमैर्मही'ति श्रीहर्षप्रयोगो न सङ्गच्छेतेति चेत्। अत्राहुः–नायं धातुश्चुरादौ पठितः, किं तु 'बहुलमेतन्निदर्शन'मिति बाहुलकादूहितः। ऊहश्च धीरेत्यस्यापि संभवति, अवधीरेत्यस्यापि। प्रयोगद्वयप्रामाण्यान्मुनित्रयविरोधाऽभावाच्च।यदा त्ववधीरेति विशिष्टस्यैव धातुत्वं तदाऽवधीरयित्वेति साधुः। धीरेत्यस्यैव धातुत्वे तु अवधीर्येत्यस्य साधुत्वमिति। **तस्येति**। आदिशब्दस्येत्यर्थः। **तस्यापीति**।क्यषःककारस्येत्यर्थः।एतेन'नःक्ये' 'क्यस्य विभाषे'ति सूत्रद्वये क्यषोऽपि ग्रहणं वदन्तःपरास्ताः।**लोहनीय-**

बा.]स्यात्। उक्तज्ञापकस्य सजातीयविषयत्वे तु अत्र आङ एकादेशेनापहारात्पृथक्करणाऽभावादोढशब्दात् प्रागाडागमे सति आङि पररूपप्राप्तेस्तन्निषेधोऽर्थवान् भवति। अतो ज्ञापकस्य सजातीयविषयत्वे 'उस्योमाङ्क्षु' इत्याङ्ग्रहणम्, औढीयदिति तदुदाहरणपरभाष्यं च अत्र प्रमाणमिति भावः। ज्ञापकस्य सजातीयविषयत्वे प्रमाणान्तरमाह–**आटश्चेति चशब्देनेति**। 'आटश्चे'ति चकारः पुनर्वृद्धिविधानार्थः। तथाच आटोऽचि वृद्धिरेव यथा स्यान्नाऽन्यत्पररूपमिति लभ्यते इत्यपि षष्ठाध्यायें 'ओमाङोश्चे'ति सूत्रे, 'आटश्चे'ति सूत्रे च भाष्ये स्थितमित्यर्थः। एवंच एतद्वार्तिकप्रत्याख्यानपरः सौत्रश्चकारस्तद्भाष्यं चाऽत्र ज्ञापकमित्युक्तं भवति। **लोहितादि**। **भवत्यर्थे इति**। 'भृशादिभ्यो भुवी'त्यतो भुवीत्यनुवृत्तेरिति भावः। **वा क्यषः**। **परस्मैपदमिति**। 'शेषात्कर्तरी' त्यतस्तदनुवृत्तेरिति भावः। **लोहितायतीति**। अलोहितो लोहितो भवतीत्यर्थः। **अत्रेति**। 'लोहितादी'ति सूत्रे इत्यर्थः। **तच्चेति**। अभूततद्भावविषयत्वमित्यर्थः। **असंभवादिति**। अव्यक्तानुकरणड्डाचो विहितत्वेन तस्य अभूततद्भावविषयत्वे अनुकरणत्वस्य भङ्गापत्तेरिति भावः। **नाप्यादिशब्दग्राह्याणामिति**। 'श्यामादिशब्दाना' मिति शेषः। **तस्येति**। आदिग्रहणस्येत्यर्थः। आदिग्रहणप्रख्याने प्रमाणं दर्शयति–**तथा चेति**।आदिग्रहणमपनीय लोहितशब्दाड्डाजन्तेभ्यश्च क्यष्वचनं कर्तव्यम्।इतराणि=लोहितादिगणपठितानि श्यामादीनि प्रतिपदिकानि भृशादिष्वेव पठनीयानीत्यर्थः। एवंच श्यामादिशब्देभ्यः क्यङि आत्मनेपदमेवेति फलितम्। **तस्यापीति**। आदिग्रहणस्येव क्यषः ककारस्यापि भाष्ये प्रत्याख्यातत्वादित्यर्थः।**पटपटायतीति**। 'अव्यक्तानुकरणाद्व्यजवरार्द्धादनितौ डाजि'ति पटच्छब्दाड्डाचि विवक्षिते सति 'डाचि विवक्षिते द्वे बहुल'मिति द्वित्वे नित्यमाम्रेडिते'डाची'ति पूर्वखण्डान्तस्य तकारस्य, उत्तरखण्डादेः पकारस्य च पररूपे एकस्मिन् पकारे,डित्त्वाट्टिलोपे,पटपटाशब्दाड्डाजन्तात् क्यषि तदन्ताल्लडादीति भावः। 'अभूततद्भावे' इति तु नात्र संबध्यते इत्युक्तम्। न ह्यपटच्छब्दः पटच्छब्दो भवतीति युज्यते। ननु कृभ्वस्तियोगाऽभावादिह कथं डाजित्यत आह–**कृभ्वस्तियोगं विनापीति**। भवत्यर्थसत्तामात्रेणेत्यर्थः। कुत इत्यत

शे.]सूत्रेण समासे क्त्वो ल्यबादेशः। प्रकृत्येकदेशद्वारकमेव च कृत्सु सर्वत्र सामर्थ्यमिति दिक्। **चशब्देनेति**। एवञ्च विनिगमनाविरहेण बाध्यसामान्यचिन्तया सर्वबाधकत्वन्तस्येति भावः। अन्यथा 'पुरस्तादपवाद'न्यायेन 'ओमाङो'रित्यस्यैव बाधः स्यान्न तु 'उसी'त्यस्येति बोध्यम्। **अत्राऽच्वेरिति**। अत एव भाष्ये लोहितभिन्नानां लोहितादिगणे पठ्यमानानां भृशादिपाठे नित्यात्मनेपदमेव प्रयोजनमुक्तं न त्वभूततद्भावविषयतालाभोऽपीति भावः। **असम्भवादिति**। अनुकरणाड्डाज्विधानेनानुकरणत्वभङ्गापत्त्या तत्र तदसम्भव इति भावः। **तस्य**–आदिशब्दस्य। 'भृशादिभ्यः' इति नित्यमात्मनेपदस्यैव तेभ्य इष्टेरिति भावः। **तस्यापीति**। ककारस्यापीत्यर्थः। **योगं विनापीति**। तदर्थसत्तामात्रे-

पठित्वा श्यामादिभ्योऽपि क्यषि पदद्वयमुदाहरन्ति, तद्भाष्यवार्तिकविरुद्धम् । तस्मात्तेभ्यः क्यङेव । श्यामायते । दुःखादयो वृत्तिविषये तद्वति वर्तन्ते । लिङ्गविशिष्टपरिभाषया लोहिनीशब्दादपि क्यष् । लोहिनीयति । लोहिनीयते । **कष्टाय क्रमणे** ।३।१।१४। चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात् । कष्टाय क्रमते-कष्टायते । पापं कर्तुमुत्सहत इत्यर्थः । ***सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्** । कण्वं-पापम् । सत्रादयो वृत्तिविषये पापाऽर्थाः । तेभ्यो द्वितीयान्तेभ्यश्चिकीर्षायां क्यङ् । पापं चिकीर्षतीत्यस्वपदविग्रहः । सत्रायते । कक्षायते इत्यादि । **कर्मणो रोमन्थतपोभ्यां वर्तिचरोः** ।३।१।१५। रोमन्थतपोभ्यां कर्मभ्यां क्रमेण वर्तनायां चरणे चाऽर्थे क्यङ् स्यात् । रोमन्थं वर्तयति रोमन्थायते । *** हनुचलन इति वक्तव्यम्** । चर्वितस्याऽऽकृष्य पुनश्चर्वण इत्यर्थः । नेह-कीटो रोमन्थं वर्तयति । अपानप्रदेशान्निःसृतं द्रव्यमिह रोमन्थः। तदश्नातीत्यर्थ इति कैयटः । वर्तुलं करोतीत्यर्थ इति न्यासकारहरदत्तौ । *** तपसः परस्मैपदं च** ।

त.]तीति। क्यङि सति तङेव स्यात् ,'क्यङ्मानिनोश्चे'ति पुंवद्भावश्चेति भावः।**कष्टाय क्रमणे**। क्यङेवानुवर्तते,स्वरितत्वात्, नतु क्यष् । कष्टायेति निर्देशादेव चतुर्थ्यन्तं लभ्यते । क्रमणमुत्साहः । 'वृत्तिसर्गतायनेषु' इति क्रमेरात्मनेपद विधायकसूत्रे 'सर्ग उत्साह' इति सर्वैर्व्याख्यातत्वात्। **कष्टं**-कृच्छ्रम् । 'कृच्छ्रगहनयोः कषः' इति इडभावः। न च दुःखं कर्तुमुत्साहः संभवतीति तत्साधनं पापमिह गृह्यत इत्याह-**पापं कर्तुमिति**।**द्वितीयान्तेभ्य इति**।चिकीर्षायां द्वितीयान्तस्यैवान्वययोग्यत्वादेवमुक्तम् । **कर्मणो**। 'रोमन्थतपोभ्या'मित्यनेन सामानाधिकरण्यात्कर्मण इति पञ्चमी । प्रत्येकं संबन्धादेकवचनमित्याह-**कर्मभ्यामिति**।**वर्तनायां चरण इति** । सूत्रे 'वर्ती'ति ण्यन्ताद्वृतेः 'ण्यासश्रन्थो'ति युचं

बा.]आह-**डाजन्तादिति** । **तद्भाष्येति** । 'भृशादिष्वितराणी'त्युक्तवार्तिकतद्भाष्यविरुद्धमित्यर्थः । **तस्मादिति** । उक्तवार्तिकभाष्यविरोधात्तेभ्यः श्यामादिभ्यो भृशादित्वलक्षणः क्यङेव नतु क्यषित्यर्थः । ततश्च 'वा क्यषः' इत्यस्याऽप्रवृत्तेर्ङित्वादात्मनेपदमेवेति मत्वाऽऽह-**श्यामायते इति**। श्यामो भवतीत्यर्थः। ननु देवदत्तः सुखायते इति कथम्?, देवदत्तस्य सुखत्वाऽभावादित्यत आह-**सुखादय इति** । श्यामादिषु ये सुखदुःखादिशब्दा गुणवचनास्ते सुखादिगुणवति वर्त्तन्ते इत्यर्थः । एवं च 'सुखायते' इत्यस्य सुखवान् भवतीत्यर्थः । एवं 'दुखायते' इत्यादावपि । ननु लोहितशब्दाद्विहितः क्यष् कथं लोहिनीशब्दात्स्यादित्यत आह-**लिङ्गविशिष्टेति** । **कष्टाय क्रमणे** । 'क्रमण'शब्दं विवृणोति-**उत्साहे इति** । अस्वरितत्वात् क्यषिति नानुवर्तते इति भावः । 'क्रियार्थोपपदस्ये'ति चतुर्थीति मत्वा आह-**पापं कर्तुमिति** । क्रमते इत्यत्र 'वृत्तिसर्गतायनेषु क्रमः' इति तङ् । 'कण्वचिकीर्षाया' मित्यत्र कण्वपदं व्याचष्टे-**कण्वं पापमिति** । सत्रादिशब्दान्विवृणोति-**सत्रादय इति**। **द्वितीयान्तेभ्य इति**। चिकीर्षायां द्वितीयान्तस्यैवाऽन्वययोग्यत्वादिति भावः । कण्वशब्दस्तु सत्रादिशब्दानां कण्वपरत्वे तात्पर्यग्राहकः । केचित्तु 'कण्वे'त्यविभक्तिकम् । कण्ववर्तिभ्य इति व्याचक्षते । **अस्वपदविग्रह इति**। वृत्तावेव सत्रादिशब्दानां पापवाचित्वादिति भावः । इदं कष्टशब्दादन्यत्रैव। 'कष्टाय क्रमते' इति तु स्वपदविग्रहोऽस्त्येव। भाष्ये एवं विग्रहं प्रदर्श्य सत्रादिषु विग्रहाऽप्रदर्शनादित्याहुः। **कर्मणो रोमन्थ** । वृतुधातोर्ण्यन्तात् 'धात्वर्थनिर्देशे इक्वक्तव्यः' इति इकि वर्तिशब्दः । आवर्तनमर्थः । चरेः संपदादित्वाद्भावे क्विप् । वर्ति चर अनयोर्द्वन्द्वात्सप्तमी । आवर्तने चरणे चेति लभ्यते । कर्मशब्देन कर्मकारकं विवक्षितम् । द्वित्वे एकवचनम् । तथाच कर्मकारकवृत्तिभ्यां रोमन्थतपश्शब्दाभ्यामिति लभ्यते । यथासंख्यमन्वयः । तदाह-**रोमन्थतपोभ्यामिति** । **रोमन्थमिति**।उद्गीर्णस्य निगीर्णस्य वा मन्थो रोमन्थ इति भाष्यम् । उद्गीर्णस्य=उदरादुपरि कण्ठद्वारा निर्गतस्य, निगीर्णस्य=अपानद्वारा निर्गतस्य च मन्थः=चर्वणं रोमन्थ इत्यर्थः । **वर्तयतीति** । आवर्तयतीत्यर्थः । **हनुचलन इति** । हनु=तालु, तच्चलने सत्येव अयं विधिरित्यर्थः । तथाच उदरगतं भक्षितं द्रव्यं तृणादिकं पुनःपुनराकृष्य तालुचलनेन चूर्णितस्य पुनःपुनः प्राशने रोमन्थशब्दात्क्यङिति फलितम् । तदाह-**चर्वितस्येति** । हनुचलनेन भक्षितस्य उदरं प्रविष्टस्य पुनःपुनराकृष्य हनुचलनेन भक्षणे गम्ये इति फलितमित्यर्थः । **कीट इति**। इह हनुचलनाऽभावान्न क्यङिति भावः । तदेवोपपादयति-**अपानेति** । **तपसः परस्मैपदं चेति**-वार्तिकम् । तपश्शब्दः कर्म-

शो ]णेत्यर्थः । एवञ्च तदर्थविवक्षया डाचि कृते ततस्तदर्थे क्यषिति भावः। **तद्भाष्येति** । उक्तभाष्येत्यर्थः । **कष्टाय** । क्रमणम्-उत्साहः । 'कष्टायते' इत्युक्त्या गमनाद्यप्रतीतावपि कष्टविषयकोत्साहप्रतीतेः,। तदाह-**उत्साहेऽर्थे इति**।**पापं कर्त्तुमिति** । अन्तरङ्गत्वात्कर्त्तुमित्यस्यैवाऽन्तर्भावः । विग्रहे 'कर्तु'मित्यध्याहारेण 'क्रियार्थोपपदस्ये'ति चतुर्थी। 'वृत्तिसर्गे'ति तङ् । **वृत्तिविषय इति** । न च तत्रैव तत्त्वे कष्टाय क्रमते इति विग्रहोऽनुचितोऽस्वपदविग्रहस्यैवौचित्यादिति वाच्यम्, अस्य सत्राद्यभिप्रायेण प्रवृत्तेः । अत एव भाष्ये कष्टाय क्रामतीति विग्रहं प्रदर्श्य सत्रादिषु स न दर्शितः । **पापश्चिकीर्षतीति** । उत्पादनायाः कृञर्थत्वाद्द्वितीया । भाष्ये तु क्रामतीति परस्मैपदं प्रयुक्तम् । क्रमणं गमनमेव ।

तपश्चरति तपस्यति । **बाष्पोष्मभ्यामुद्वमने** ।३।१।१६। आभ्यां कर्मभ्यां क्यङ् स्यात् । बाष्पमुद्वमति बाष्पायते । ऊष्मायते । * **फेनाच्चेति वाच्यम्** । फेनायते । **शब्दवैरकलहाऽभ्रकण्वमेघेभ्यः करणे** ।३।१।१७। एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात् । शब्दं करोति शब्दायते । 'पक्षे तत्करोतीति णिजपीष्यते' इति न्यासः। शब्दायति । * **सुदिनदुर्दिननीहारेभ्यश्च** । सुदिनायते । **सुखादिभ्यः कर्तृ वेदनायाम्** ।३।१।१८। सुखादिभ्यः कर्मभ्यो वेदनायामर्थे क्यङ् स्याद्वेदनाकर्तुरेव चेत्सुखादीनि स्युः । सुखं वेदयते—सुखायते । कर्तृग्रहणं किम् ? । परस्य सुखं वेदयते । **नमोवरिवश्चित्रङः क्यच्** ।३।१।१९। करणे इत्यनुवृत्तेः क्रियाविशेषे, पूजायां, परिचर्यायामाश्चर्ये च । नमस्यति देवान् । पूजयतीत्यर्थः । वरिवस्यति गुरून् । शुश्रूषत इत्यर्थः । चित्रीयते । विस्मयत इत्यर्थः । विस्मापयत इत्यन्ये ।

**पुच्छभाण्डचीवराण्णिङ्** ।३।१२०। * **पुच्छादुदसने व्यसने पर्यसने च** । विविधं विरुद्धं

---

त.]बाधित्वाऽस्मादेव निपातनात्क्तिन् । चर्तेस्तु संपदादित्वाद्भावे क्विविति भावः । केचित्तु वर्तिशब्दो वर्तयतेः 'इक्श्तिपौ' इति इकि रूपम् । लक्षणया चाऽर्थलाभ इत्याहुः । **शब्दवैर** । कर्मण इत्यनुवर्तत इत्याह—**एभ्यः कर्मभ्य इति** ।

**सुखादिभ्यः**।'कर्तृ' इति पृथक्पदं लुप्तषष्ठीकम् । 'विद चेतनाख्याननिवासेष्वि'ति चौरादिकाद्युचि 'वेदना'शब्दो ज्ञानवाची, तदपेक्षमेव कर्तृत्वम् । कर्ता च सुखादिभिरन्वेति । तदेतदाह—**वेदनाकर्तुरेवेति** । **परस्य सुखमिति**। इह यन्निष्ठं सुखं तद्भिन्नो वेदनाकर्तेति वाक्यमेव । सुखादयः सुखदुःखतृप्रकृच्छ्रादयः। **नमोवरिवः** । चित्रङः क्यज्विधानमीत्वार्थं, ङित्करणं तु तङर्थम्। **विस्मापयत इत्यन्य इति**। तथा च भट्टिः—'ततश्चित्रीयमाणोऽसौ' इति। **असौ**= मायामृगश्चित्रीयमाणो=विस्मयमुत्पादयन्नित्यर्थः । **पुच्छभाण्ड** । 'करणे' इत्यनुवृत्तेरत्रापि क्रियाविशेष एव णिङ् । तमेव विशेषं दर्शयति—**पुच्छादित्यादिना**। ङकारोऽत्र 'णेरनिटी'ति णिङ्णिचोः सामान्यग्रहणार्थो, नित्यात्मनेपदार्थश्च।

---

बा.]कारकवृत्तिःपूर्वसूत्राच्चरणे क्यङं लभते,ङित्त्वप्रयुक्तमात्मनेपदं बाधित्वा परस्मैपदमेव च लभते इत्यर्थः।**तपस्यतीति**। प्रातिपदिकादेवास्य क्यङुत्पत्तेरन्तर्वर्तिविभक्त्यभावात् 'नः क्ये' इति नियमाच्च पदत्वाऽभावान्न रुत्वमिति भावः । **बाष्पोष्मभ्यामुद्वमने** । **आभ्यां कर्मभ्यामिति** । 'कर्मणो रोमन्थे'त्यतः कर्मग्रहणमनुवर्तते इति भावः । कर्मकारकवृत्तिभ्यामित्यर्थः । **फेनायते इति** । फेनमुद्वमतीत्यर्थः । **शब्दवैर** । **करणं**—क्रिया । तदाह—**करोत्यर्थे इति** । 'तत्करोती'ति णिचोऽपवादः । **पक्षे इति** । कदाचिदित्यर्थः । **न्यास इति** । भाष्याऽनारूढत्वमत्र अरुचिबीजम् । **सुदिनदुर्दिन** इति—वार्तिकम् । 'करोत्यर्थे क्य'ङिति शेषः । **सुखादिभ्यः** । 'कर्तृ' इति पृथक्पदं लुप्तषष्ठीकम् । 'कर्मणो रोमन्थे'त्यतः कर्मग्रहणाऽनुवृत्तिं मत्वा आह—**एभ्यः कर्मभ्य इति** । **वेदनायामिति** । ज्ञाने इत्यर्थः । कर्तृत्वं च वेदनां प्रत्येव विवक्षितम्, उपस्थितत्वात् । वेदनाकर्तृवृत्तिवाचिभ्यः सुखादिशब्देभ्य इति लभ्यते । फलितमाह—**वेदनाकर्तुरेव चेदिति** । **सुखं वेदयते इति** । जानातीत्यर्थः। 'विद चेतनाया'मिति चुरादौ ।

**नमोवरिवस्** । नमस्, वरिवस्, चित्रङ् एषां समाहारद्वन्द्वात्पञ्चमी । आत्मनेपदार्थं चित्रशब्दो ङिन्निर्दिष्टः। 'शब्दवैरे'त्यतः करणे इत्यनुवर्तते।**करणं**—क्रिया। सा च पूजापरिचर्याऽऽश्चर्यात्मिका विवक्षिता, 'नमसः पूजायां' 'वरिवसः परिचर्यायां', 'चित्रङः आश्चर्ये' इति वार्तिकैः । तदाह—**करणे इत्यनुवृत्तेरित्यादिना** । **नमस्यति देवानिति** । कारकविभक्तेर्बलीयस्त्वाद्द्वितीया । परिचर्या शुश्रूषेति मत्वाह—**शुश्रूषते इत्यर्थ इति** । आश्चर्यशब्दो विस्मयवाचीति मत्वाह—**विस्मयते इत्यर्थ इति** । **विस्मापयते इत्यन्ये इति** । आश्चर्यशब्दो विस्मापनपर इति भावः । 'ततश्चित्रीयमाणोऽसा'विति भट्टिः । **असौ**—मायामृगो विस्मयमुत्पादयन्नित्यर्थः । **पुच्छभाण्ड** । **पुच्छादुदसने इति**—वार्तिकम् । **उत्पुच्छयते इति** । विविधं विरुद्धं वा पुच्छमुत्क्षिपतीत्यर्थः । **भाण्डात्समाचयने**—इत्यपि वार्ति-

---

शे.]पापोद्देश्यकेन हि तेन तद्विषयकोत्साहो गम्यते इति क्रमेरुत्साहार्थत्वाऽभावः।'कण्वचिकीर्षाया'मित्यस्य हि तस्याङ्गम्याया-मित्यर्थं इति तदाशयः । कर्मण इति षष्ठी । प्रतिपादकत्वं षष्ठ्यर्थः । कर्मप्रतिपादकरोमन्थतपोभ्यामिति वाच्योऽर्थः । फलितमाह—**कर्मभ्यामिति** । 'वर्ती'ति ण्यन्ताद्धात्वर्थनिर्देशे इक् । **कैयट इति** । उक्तञ्च भाष्ये 'उद्गीर्णस्यावगीर्णस्य वा मन्थो=रोमन्थः'—इति । **उद्गीर्णम्**—उदरादुपर्याकृष्टम् । अवगीर्णम्=अपानान्निर्गतम् । मन्थः—चर्वणमिति तदर्थः ।

**शब्दवैर** । कर्मण इति वर्त्तते। करणमत्र क्रिया, व्याख्यानात् । **इति न्यास इति**।भाष्यानारूढत्वमत्राऽरुचिः। **सुखादिभ्यः** । वेदनाकर्तृसम्बन्धिसुखादिप्रतिपादकेभ्यः सुखादिभ्य इति वाच्योऽर्थः । फलितमाह—**वेदनेत्यादि** । 'पूजाया'मित्यादि नमआदिभिः क्रमेणाऽन्वेति । चित्रङो ङित्त्वमवयवेऽचरितार्थमिति क्यजन्तात्तङानौ । **पुच्छादिति** । अत्र पुच्छादयः स्वकर्मकोदसनक्रियादौ लाक्षणिकाः । ततः स्वार्थे णिङ्, 'णाविष्ठव'दिति टिलोपः । '**वस्त्रा**'दित्यादि,

वोत्क्षेपणं व्यसनम् । उत्पुच्छयते । विपुच्छयते । परिपुच्छयते । *भाण्डात्समाचयने । संभाण्डयते। भण्डानि समाचिनोति।राशीकरोतीत्यर्थः। समभाण्डयत।समबभाण्डत।*चीवरादर्जने परिधाने च । संचीवरयते भिक्षुः। चीवराण्यर्जयति, परिधत्ते वेत्यर्थः। **मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्** ।३।१।२१। कृञर्थे । मुण्डं करोति-मुण्डयति । *व्रताद्भोजनतन्निवृत्त्योः। पयः शूद्रान्नं वा व्रतयति। *वस्त्रात्समाच्छादने । संवस्त्रयति । *हल्यादिभ्यो ग्रहणे । हलिकल्योरदन्तत्वं निपात्यते । हलिं कलिं वा गृह्णाति-हलयति, कलयति । महद्धलं हलिः । परत्वाद्वृद्धौ सत्यामपीष्ठवद्भावेन अगेव लुप्यते, अतः सन्वद्भावदीर्घौ न । अजहलत् । अचकलत् । कृतं गृह्णाति-कृतयति । तूस्तानि विहन्ति-वितूस्तयति । तूस्तं केशा इत्येके । जटीभूताः केशा इत्यन्ये । पापमित्यपरे । मुण्डादयः 'सत्यापपाशे'त्यत्रैव पठितुं युक्ताः । 'प्रातिपदिकाद्धात्वर्थे' इत्येव सिद्धे केषांचिद्ग्रहणं सापेक्षेभ्योऽपि णिजर्थम्। मुण्डयति माणवकम्। मिश्रयत्यन्नम्। श्लक्ष्णयति वस्त्रम् । लवणयति

---

त.]उदपुपुच्छत । **मुण्डमिश्र। कृञर्थे इति**।क्वचित्क्रियासामान्ये, प्राचुर्येण तु क्रियाविशेषे। **व्रतादीति** । पयो व्रतयति । अश्नातीत्यर्थः । शूद्रान्नं व्रतयति । वर्जयतीत्यर्थः । **वस्त्रादिति** । समाच्छादने यो वस्त्रशब्दस्तस्मात्करोत्यर्थे णिजित्यर्थः । **संवस्त्रयतीति** । वस्त्राच्छादनं करोतीत्यर्थः। **अदन्तत्वमिति** । अयमेव निपातो 'वृद्धौ सत्यां टिलोप' इत्यत्र ज्ञापकः । यदि पूर्वं लोपो भवेत्तदाऽग्लोपकार्यसिद्धौ किमनेन निपातनेन ?। तथा च अपपटदिति सिध्यतीत्यादि चुरादिष्वेवोपपादितम् । **कृतयतीति** । उपकारं स्वीकरोतीत्यर्थः । **पठितुं युक्ता इति** । एकसूत्रकरणे लाघवमिति भावः । **सापेक्षेभ्योऽपीति** । विधानसामर्थ्यादिति भावः । अन्यत्र तु 'रमणीयं पटुमाचष्टे' इत्येव न तु 'पटयती'ति वृत्तिः । सापेक्षत्वमेव दर्शयति-**माणवकमित्यादिना** । अयं भावः-द्वितीयान्ताद्विधीयमानस्य णिचः पदविधित्वात्सापेक्षेभ्यो न भवेत् , किं तु यदा प्रकरणादिना माणवकस्येति ज्ञायते तदैव मुण्डयतीति वृत्तिः स्यान्न तु माणवकादिप्रयोगे ।

---

बा.]कम् । **समबभाण्डतेति** । उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक्क्रियते इत्युक्तत्वात्संभाण्डशब्दात्क्यङ्यपि भाण्डशब्दात्प्रागेवाऽडिति भावः। एवम् **उदपुपुच्छत**ेत्यादावपि । **चीवरादर्जने** इत्यपि वार्तिकम् । **मुण्डमिश्र । कृञर्थे इति**। शेषपूरणमिदम्, 'शब्दवैरे'त्यतः करणे इत्यनुवृत्तेरिति भावः। **व्रताद्भोजने**ति-वार्तिकम् । **पयः शूद्रान्नं वा व्रतयतीति** । पयो भुङ्क्ते, शूद्रान्नं वर्जयतीत्यर्थः । **वस्त्रात्समाच्छादने**-इत्यपि वार्तिकम् । भाष्ये तु न दृश्यते । **संवस्त्रयतीति** । वस्त्रेण सम्यगाच्छादयतीत्यर्थः । वस्त्रं परिधत्ते इति वा । **हल्यादिभ्यो ग्रहणे**-इति वार्तिकम् । भाष्ये तु न दृश्यते । **हलिकल्योरिति** । हलिकली इदन्तौ । हलकलशब्दावदन्तौ, इदन्तौ च । याविदन्तौ तयोरत्त्वं निपात्यते इति भाष्ये स्पष्टम् । **हलयति कलयतीति** । हलिकलिभ्यां णौ इकारस्य अकारे इष्ठवत्त्वेन टेर्लोपे हलि कलि इति ण्यन्ताभ्यां लडादीति भावः।**महद्धलं हलिरिति**।अत्र वृद्धप्रयोगोऽन्वेषणीयः। नन्वनयोरिकारान्तयोरदन्तत्वनिपातनं व्यर्थम् , इकारस्य णाविष्ठवत्त्वाल्लोपे हलयति कलयतीति सिद्धेः । नच अचहलत् अचकलदित्यत्र सन्वत्त्वाऽप्रवृत्तये अग्लोपित्वाय तयोरदन्तत्वमिति वाच्यम् , इकारलोपेऽप्यग्लोपित्वसिद्धेरित्यत आह-**परत्वादिति** । इकारस्य णौ इष्ठवत्त्वे टिलोपात्प्रागेव परत्वात् 'अचो ञ्णिती'ति वृद्धौ कृतायामैकारस्य इष्ठवत्त्वाट्टिलोपेऽग्लोपित्वं न स्यात् । इकारयोरत्त्वे तु अकारस्य टिलोपात् प्राक् परत्वाद्वृद्धौ सत्यामप्याकार एव इष्ठवत्त्वाल्लुप्यते इत्यर्थः । **अत इति** । अग्लोपित्वात्सन्वत्त्वम् , 'दीर्घो लघो'रिति दीर्घश्च नेत्यर्थः । **कृतं गृह्णातीति** । उपकारं स्वीकरोतीत्यर्थः । **पठितुं युक्ता इति** । लाघवादेकसूत्रत्वं युक्तमित्यर्थः । **केषांचिदिति** । मुण्डादीनामित्यर्थः । **सापेक्षेभ्योऽपीति** । अन्यथा णिजन्तस्याऽस्य सनाद्यन्तवृत्तित्वाद्विशेषणसापेक्षत्वे मुण्डादिभ्यो णिज्न भवेत् , सविशेषणानां वृत्तिनिषेधात् । इह मुण्डादीनां पुनर्ग्रहणे तु तत्सामर्थ्यात् सापेक्षेभ्योऽपि मुण्डादिभ्यो णिच् सिध्यतीत्यर्थः । स्पष्टं चेदं 'सुप आत्मनः' इत्यत्र भाष्यकैयटयोः । **मुण्डयति माणवकमिति** । अत्र माणवकं मुण्डं करोतीत्यर्थे मुण्डशब्दस्य माणवकसापेक्षत्वेऽपि णिच् सिध्यति । अन्यथा यदा प्रकरणादिना माणवकादिविशेषो ज्ञायते तदैव मुण्डयतीति णिच् स्यादिति भावः । 'सुप आत्मनः' इति सूत्रभाष्ये तु 'मुण्डयति माणवक'मित्यत्र गमकत्वाण्णिच् , 'महान्तं पुत्रमिच्छती'त्यादौ त्वगमकत्वान्न क्यजित्युक्तम् । तदा प्रपञ्चार्थमेव मुण्डादिग्रहणमिति शब्देन्दुशेखरे स्थितम् । **श्लक्ष्णयति वस्त्रमिति** । निर्मलं करोतीत्यर्थः । **लवणयति व्यञ्जनमिति** । लवणयुक्तं

---

शे.]'**हल्यादिभ्य**' इति च भाष्ये न दृश्यते।**संवस्त्रयतीति**।वस्त्रैः समाच्छादयतीत्यर्थः। **परत्वाद्वृद्धाविति**। न च नित्यो लोपः, शब्दान्तरप्राप्त्या तस्याप्यनित्यत्वात् । व्यक्तिभेदमात्रेण च शब्दान्तरप्राप्तिग्रहणात् । 'रन्धयती'त्यत्र तु तस्य अनित्यत्वान्न दोषः । अत्र यद्वक्तव्यन्तदुक्तञ्चुरादौ । **सापेक्षेभ्योऽपीति** । स्पष्टं चेदं 'सुप आत्मनः' इत्यत्र

व्यञ्जनमिति । हलिकल्योरदन्तत्वार्थम् । सत्यस्य आपुगर्थम् । केषांचित्तु प्रपञ्चार्थम् । सत्यं करोत्याचष्टे वा सत्यापयति । *अर्थवेदयोरप्यापुग्वक्तव्यः । अर्थापयति । वेदापयति । पाशं विमुञ्चति–विपाशयति । रूपं पश्यति–रूपयति । वीणयोपगायत्युपवीणयति । तूलेनानुकुष्णात्यनुतूलयति । तृणाग्रं तूलेनानुघट्टयतीत्यर्थः। श्लोकैरुपस्तौति–उपश्लोकयति । सेनया अभियाति–अभिषेणयति । 'उपसर्गात्सुनोती'ति षः । अभ्यषेणयत् । 'प्राक्सिता'दिति षः । अभिषिषेणयिषति । 'स्थादिष्वभ्यासेन चे'ति षः । लोमान्यनुमार्ष्टि–अनुलोमयति। 'त्वच संवरणे' घः । त्वचं गृह्णाति–त्वचयति । वर्मणा संनह्यति–संवर्मयति । वर्णं गृह्णाति–वर्णयति । चूर्णैरवध्वंसते–अवचूर्णयति । 'इष्ठव'दित्यतिदेशात्पुंवद्भावादयः । एनीमाचष्टे–एतयति । दरदमाचष्टे दारदयति । पृथुं–प्रथयति । वृद्धौ सत्यां, पूर्वं वा टिलोपः । अपिप्रथत् । अपप्रथत् । मृदुं म्रदयति । अमिम्रदत् । अमम्रदत् । भृशं कृशं दृढम्–भ्रशयति । क्रशयति । द्रढयति । अबभ्रशत् । अचक्रशत् । अदद्रढत् । परिव्रढयति । पर्यव-

त.]णिजन्तस्य सनाद्यन्तवृत्तित्वात्सविशेषणानां वृत्त्यभावाच्चेति। घ इति। 'पुंसि संज्ञाया'मित्यनेन। **पुंवद्भावादय इति।** आदिशब्देन–रभावटिलोपादयः।टिलोपेनैवैतयतीत्यादिरूपसिद्धौ पुंवद्भावग्रहणं दारदयतीति सिद्ध्यर्थमिति चुरादिष्वेवास्माभिरुक्तम्।दरदोऽपत्यं दारदः।'द्व्यञ्मगधे'त्यण्। तस्य स्त्रियाम् 'अतश्चे'ति लुकि दरद्, तामाचष्टे दारदयति।इह पुंवद्भावाऽभावे टिलोपे सति दरयतीति स्यात्। **प्रथयतीति।**'र ऋतो हलादे'रिति रभावः। **अपिप्रथदिति।** वृद्धौ सत्यां टिलोपेनाऽ-

बा.]करोतीत्यर्थः । **हलिकल्योरिति** । एवं च ताभ्यां सापेक्षाभ्यां न णिच्, तद्ग्रहणस्य अदन्तत्वनिपातनेन चरितार्थत्वादिति भावः । ननु सत्यशब्दा'त्तत्करोती' त्यादिनैव णिच्सिद्धेः 'सत्यापे'ति सूत्रे सत्यग्रहणं व्यर्थमित्यत आह– **सत्यस्यापुगर्थमिति । केषांचिदिति ।** पाशादीनामित्यर्थः । **सत्यापयतीति ।** आपुग्विधिसामर्थ्यान्न टिलोपः । पाशं विमुञ्चतीत्यादौ 'प्रातिपदिकाद्धात्वर्थे' इति णिच् । **अभिषिषेणयिषतीति ।** अभिषेणि इति ण्यन्तात्सनि रूपम् । ननु त्वचं गृह्णाति त्वचयतीति कथम् ? । त्वच्छब्दाच्चकारान्ताण्णिचि टिलोपे त्वयतीत्यापत्तेरित्यत आह–**त्वचेति ।** 'त्वच संवरणे' इत्यस्मात् 'पुंसि संज्ञायां घः प्रायेणे'ति घप्रत्यय इत्यर्थः । **पुंवद्भावादय इति ।** आदिना रभावटिलोपादिग्रहणम् । **एतयतीति ।** 'भस्याऽढे'इति पुंवत्त्वस्य इष्ठनि प्रवृत्तेर्णावपि तस्याऽतिदेशात् 'वर्णादनुदात्ता'दिति स्त्रीप्रत्ययस्य, तत्संनियोगशिष्टनत्वस्य च निवृत्तौ एतशब्दे तकारादकारस्य टिलोप इति भावः। नन्वेनीशब्दाण्णौ टिलोपेन स्त्रीप्रत्ययनिवृत्तौ तत्संनियोगशिष्टनत्वस्याऽपि निवृत्तौ एतयतीति सिध्यतीत्यस्वरसात्पुंवद्भावे उदाहरणान्तरमाह–**दरदमिति ।** दरदिति कश्चिद्राजा, तस्यापत्यं दारदः । 'द्व्यञ्मगधे'त्यण् । द्व्यपत्ये तु दरदोऽपत्यं स्त्री दरत् । 'अतश्चे'त्यणो लुक् । तामाचष्टे इत्यर्थे दरच्छब्दाण्णौ इष्ठवत्त्वात् पुंवत्त्वेन स्त्रियामित्यनुवृत्तौ 'अतश्चे'ति स्त्रियां विहितस्य अण्प्रत्ययलुको निवृत्तौ दारदशब्दे टिलोपे दारदयतीति रूपं सिध्यति । पुंवद्भावाऽभावे तु दरच्छब्दस्य टिलोपे सति दरयतीति स्यादिति भावः । टिलोपस्य अजादेशत्वेन स्थानिवत्त्वान्नोपधावृद्धिः । 'पृथुं मृदुं भृशं चैव, कृशं च दृढमेव च । परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत्' । इति । क्रमेणोदाहरति–**पृथुमिति ।** 'आचष्टे' इति शेषः । प्रथयति । तत्र प्रक्रियां दर्शयति–**वृद्धौ सत्यामिति ।** पृथु इ इति स्थिते परत्वाद्वृद्धौ कृतायां टिलोपः । अथवा कृतायामकृतायां च वृद्धौ प्रवृत्त्या नित्यत्वाद्वृद्धेः प्राक्टिलोपः । उभयथापि 'र ऋतः' इति रभावे प्रथयतीति रूपमिति भावः । वस्तुतस्त्वकृतायां वृद्धौ उकारस्य लोपः, कृतायां तु औकारस्य लोपः । तथा च 'शब्दान्तरस्य प्राप्नुवन् विधिरनित्यः' इति टिलोपोऽनित्यः। ततश्च परत्वाट्टिलोपात् प्राग्वृद्धिरेवेति 'मुण्डमिश्रे'ति सूत्रे भाष्ये स्थितम् । 'वृद्धौ सत्यां पूर्वं वा टिलोप' इति मूलं तु कृताऽकृतप्रसङ्गित्वाट्टिलोपस्य नित्यत्वमभिप्रेत्येति बोध्यम् । **अपिप्रथदिति ।** वृद्धौ सत्यां टिलोपे अग्लोपित्वाऽभावात् सन्वत्त्वे 'सन्यतः' इति इत्वमिति भावः।**अपप्रथदिति।**वृद्धेः पूर्वं टिलोपेन उकारस्य-

शे.]कैयटे । गमकत्वात् 'मुण्डयति माणवक'मित्यत्र णिज्भवति,क्यच् तु न,अगमकत्वादित्यपि तत्र भाष्ये स्पष्टम् । तदा प्रपञ्चार्थमेव मुण्डादिग्रहणम् । 'माणवकं मुण्डं करोती'त्यत्र वाक्ये कर्मसामानाधिकरण्यान्माणवकस्य कर्मत्वम् । वृत्तौ तु मौण्ड्यरूपफलाश्रयत्वात्तत्त्वं बोध्यम् । **सत्यापयतीति ।** आपुग्विधानसामर्थ्याट्टिलोपो न । एषां लुब्यनभिधानम् । अत एव णेरापुङिति भाष्यं सङ्गच्छते । **घे इति ।** कर्मण्ययं, निपातनात्कुत्वाऽभावः । कर्तर्यजन्त इत्यपि वक्तुं शक्यमित्यन्ये । **एतयतीति ।** न चाऽत्र परत्वाट्टिलोपः स्यात्, अतिदिश्यमानकार्याणामुपदेशदेशस्यैव देशत्वाङ्गीकारादिति वाच्यम्, 'भस्याऽढे' इत्यस्य प्रत्ययोत्पत्तेः पूर्वं प्रवृत्त्याऽन्तरङ्गत्वात्, तदतिदेशसामर्थ्याच्च । न च पुंवत्त्वस्याऽसिद्धत्वाट्टिलोपो दुर्लभः, आभीयाऽसिद्धत्वस्याऽनित्यत्वात् । अत एव 'टे'रितिसूत्रे भाष्ये 'एतयति' 'श्येतयती'त्युदाहृतम् । इष्ठनि छन्दस्येव तृलोपप्रवृत्तेर्लोके न तदतिदेश इति पुंवद्भावादिषु तृलोपो नोक्तो, मूले नाप्युदाहृतः । अत एव 'मात-

ब्रढत् । ऊढिमाख्यत्–औजिढत् । ढत्वादीनामसिद्धत्वात् 'हूति'शब्दस्य द्वित्वम् । 'पूर्वत्राऽसिद्धीयमद्वित्वे' इति त्वनित्यमित्युक्तम् । 'ढि' इत्यस्य द्वित्वमित्यन्ये । औडिढत् । ऊढमाख्यत् औजढत् । औडढत् । 'ओः पुयण्जी'ति सूत्रे वर्गप्रत्याहारजग्रहो लिङ्गं द्वित्वे कार्ये णावच आदेशो नेति ऊनयतावुक्तम् । 'प्रकृत्यैकाच्' । वृद्धिपुकौ । स्वापयति । त्वां मां वाऽऽचष्टे–त्वापयति । मापयति । मपर्यन्तस्य त्वमौ । पररूपात्पूर्वं नित्यत्वाट्टिलोपः। वृद्धिः पुक् । 'त्वादयति । मादयती'ति तु न्याय्यम् , अन्तरङ्गत्वात्पररूपे कृते 'प्रकृत्यैका'जिति प्रकृतिभावात् । न च प्रकृतिभावो भावो भाष्ये प्रत्याख्यात इति भ्रमितव्यं, भाष्यस्य प्रेष्ठाद्युदाहरणविशेषेऽन्यथासिद्धि-

त.]ग्लोपित्वात्सन्वद्भावे सति 'सन्यतः' इतीत्वम्। वृद्धेः पूर्वं टिलोपे तु–अपप्रथत् । **औजढदिति** । इह टिलोपे सति णिच्सहितस्य द्वित्वे पश्चादभ्यासेऽकारो दुर्लभ इत्यत आह–**ओः पुयण्जीत्यादि**। **त्वमाविति** । 'प्रत्ययोत्तरपदयोश्चे'-त्यनेन। **अन्तरङ्गत्वादिति** । न च 'वार्णादाङ्ग'मिति टिलोपस्यैव प्रवृत्तिरुचितेति वाच्यं, व्याश्रयत्वात् । **भाष्यस्येति**।

बा.]निवृत्तावग्लोपित्वात्सन्वत्त्वाऽभावे रूपम् । **अवभ्रशदित्यादौ** वृद्धेः पूर्वं पश्चाद्वा टिलोपेऽपि अग्लोपित्वान्न सन्वत्त्वमिति भावः । **औजिढदिति** । वहधातोः क्तिनि ढत्वधत्वष्टुत्वढलोपेषु ऊढिः । तस्माण्णौ टिलोपे ऊढि इति ण्यन्ताल्लुङि चङि आटि वृद्धौ औढि अ त् इति स्थिते प्रक्रियां दर्शयति–**ढत्वादीनामिति** । ढत्वधत्वष्टुत्वढलोपानामसिद्धत्वात् 'अजादेर्द्वितीयस्ये'ति हूतिशब्दस्य द्वित्वमित्यर्थः । **इत्युक्तमिति** । 'लुग्विकरणप्रक्रियायां ऊर्णुञ्धाता'विति शेषः । एवं च हूतिशब्दस्य द्वित्वे हलादिशेषे 'कुहोश्चु'रिति हस्य चुत्वमिति भावः। **ढिशब्दस्येति** । 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यस्य क्वचिदनित्यत्वेऽप्यत्र तदप्रवृत्तौ मानाऽभावादिति भावः । **ऊढमाख्यदिति** । वहधातोः क्तप्रत्यये ढत्वधत्वष्टुत्वढलोपेषु ऊढशब्दाण्ण्यन्ताल्लुङि चङि ढत्वादीनामसिद्धत्वात् 'हूते'त्यस्य द्वित्वे हलादिशेषे अभ्यासस्य चुत्वे रूपम् । **औडढदिति** । 'पूर्वत्रासिद्धीयमद्वित्वे' इति ढत्वादीनामसिद्धत्वाऽभावपक्षे ढशब्दस्य द्वित्वे रूपम् । नन्विह परत्वाट्टिलोपे सति णिच्सहितस्य हूतीति ढीत्यस्य वा द्वित्वे कृते अभ्यासे इकार एव श्रूयेत नत्वकार इत्यत आह–**ओः पुयणित्यादि** । स्वशब्दाण्णिचि टिलोपमाशङ्क्याह–**प्रकृत्यैकाजिति**। प्रकृतिभावाट्टिलोपाऽभावे अकारस्य वृद्धौ आकारे पुगागमः । तदाह–**वृद्धिपुकाविति** । त्वापयति मापयतीत्यत्र प्रक्रियां दर्शयति–**मपर्यन्तस्येति** । युष्मदस्मद्भ्यां णौ 'प्रत्ययोत्तरपदयोश्चे'ति मपर्यन्तस्य त्वमौ । त्व अद् इ, म अद् इ, इति स्थिते आह–**पररूपादिति** । कृते अकृते च पररूपे टिलोपस्य प्रवृत्तेर्नित्यत्वं बोध्यम् । त्व इ म इ इति स्थिते आह– **वृद्धिरिति** । अकारस्य आकारः । टिलोपस्य स्थानिवत्त्वं तु न शङ्क्यम्, अजादेशत्वाऽभावात् । **पुगिति** । 'अर्ती'त्यनेनेति भावः । तदेवं प्राचीनमतमुपन्यस्य स्वमतमाह–**त्वादयतीत्यादिना** । तदेवोपपादयति–**अन्तरङ्गत्वादिति** । त्व अद् इ, म अद् इ, इति स्थिते नित्यमपि टिलोपं बाधित्वा अन्तरङ्गत्वात्पररूपे कृते 'प्रकृत्यैका'जिति प्रकृतिभावे टिलोपस्याऽप्रवृत्तौ उपधावृद्धिरिति भावः । ननु इष्ठेमेयस्सु किमुदाहरणमिति प्रश्ने प्रेयान् प्रेमा प्रेष्ठ इत्युदाहरणानि प्रदर्श्य, 'नैतदस्ति प्रयोजनं 'प्रस्थस्फे'ति विहितप्रादीनामाभीयत्वेनाऽसिद्धतया तत्र टिलोपाऽप्रसक्ते' रित्युक्त्वा, श्रेयान् श्रेष्ठ इत्यत्र 'प्रशस्यस्य श्रः' इति श्रादेशस्य पाञ्चमिकतया आभीयत्वाभावेनाऽसिद्धत्वाऽभावाट्टिलोपे प्राप्ते प्रकृतिभावविधि 'रित्युदाहरणान्तरं प्रदर्श्य' 'श्रादेशे अकारोच्चारणसामर्थ्याट्टिलोपो न भविष्यती'त्युक्त्वा, स्रग्वितमः स्रजिष्ठ इत्यत्र 'विन्मतोर्लु'गिति लुकि टिलोपनिवृत्त्यर्थं प्रकृतिभावविधानमित्युक्त्वा, प्राप्त एव टिलोपे आरभ्यमाणस्य लुकस्तदपवादतया लुका टिलोपस्य बाधो भविष्यती'ति 'प्रकृत्यैका' जित्यस्य भाष्ये प्रत्याख्यातत्वात्त्वादयति मादयतीत्यत्र प्रकृतिभावोपन्यासो न युज्यते इत्याशङ्क्य निराकरोति–**न चेत्यादि** । कृत

शे.]यति' 'भ्रातयती'त्युदाहृतं 'र ऋतः' इति सूत्रे भाष्ये । **प्रथयतीति**। रभावटिलोपावत्र । **असिद्धत्वादिति** । द्वित्वे तदसिद्धत्वेन हकारघटितबुद्ध्या द्वित्वेऽभ्यासे चुत्वसिद्धिः।इदं 'पूर्वत्रासिद्ध'मिति सूत्रे वृत्तौ। **ढीत्यस्येति**। तदनित्यत्वम् 'उभौ साभ्यासस्ये'ति लिङ्गाण्णत्वमात्रविषयमिति तद्भावः । **औडिढदिति** । द्वित्वे कृते तदाश्रयस्य कार्यान्तरे कर्तव्येऽप्यसिद्धत्वनिषेधान्नाऽभ्यासे चुत्वादीति भावः । वैयाघ्रपद्यवार्त्तिके, 'शर्पूर्वा' इति सूत्रे कैयटे च 'औजढ'दिति प्रयोगो दृश्यते इत्यनित्यत्वमन्यविषयेऽपीति,–अत्राऽरुचिः । स प्रयोगोऽपि चिन्त्य इत्यन्ये । **ऊनयतावुक्तमिति** । तच्चाऽसङ्गतमिति तत्रैवोक्तं । कैयटे अभ्यासेऽकारपाठो लेखकप्रमादात् । 'पूर्वत्रासिद्ध'मिति सूत्रस्थवृत्तिग्रन्थोऽपि चिन्त्य एव । तत्र हि 'ऊढमाख्यत्–औजढ'दित्युक्त्वा 'औजिढदिति तु ऊढिशब्दस्ये'त्युक्तम् । **प्रकृत्यैकाजिति** । तेनाऽतिदिष्टटिलोपो न । 'यस्ये'ति लोपश्च न, इष्ठनि तस्याऽदृष्टत्वेन तदनतिदेशात्, 'नैका'जिति सिद्धे प्रकृत्येत्युक्त्या तस्यापि बाधाच्च । **वृद्धिपुकाविति** । 'आपयती'ति भाष्यप्रयोगात् । 'अचोऽञ्णिती' इति सूत्रस्थं 'न ञ्णित्यत उपधाया इत्येवोच्येत किमर्थो योगविभागः ? । सख्यर्थ' इति भाष्यन्तु प्रयोजनोपलक्षणमिति भावः । **अन्तरङ्गत्वादिति** ।

परत्वात्। युवामावां वा–युष्मयति। अस्मयति। श्वानमाचष्टे–शावयति। 'नस्तद्धिते' इति टिलोपः। प्रकृतिभावस्तु न, येन नाप्राप्तिन्यायेन 'टे'रित्यस्यैव बाधको हि सः। भत्वात्संप्रसारणम्। अन्ये तु 'नस्तद्धिते'

---

त.]वृत्तिकारैर्हि 'प्रकृत्यैका'जिति सूत्रे प्रेयान् प्रेष्ठ इत्याद्य उदाहृताः। ते च प्रस्थादादेशविधायकस्य 'प्रियस्थिरे'त्यादि शास्त्रस्य 'असिद्धवदत्राभा'दित्यसिद्धवद्भावेन प्रस्थादावकारोच्चारणसामर्थ्याद्वा भाष्ये प्रकृतिभावं विनैव साधिताः। स्रग्वान् स्रजिष्ठ इत्यादावपि टिलोपो न भविष्यति, लोपापवादस्य विन्मतोर्लुकस्तत्र प्रवर्तनात्। एषैवाऽनेकाच्सु पयस्वान् पयसिष्ठः चम्पकस्रजिष्ठ इत्यादिषु गतिः, न चैतावता 'प्रकृत्यैका'जिति सूत्रं प्रत्याख्यातमिति मन्तव्यम्। स्वापयतीत्यादौ तस्यावश्यकत्वादिति भावः। **युवामावामिति**। युष्मानस्मानिति विग्रहेऽपि युष्मयति अस्मयतीत्येव रूपम्। न च द्वयोरुक्तौ युवावौ भवत इति रूपे विशेषः शङ्क्यः, विभक्तिपरत्वांऽभावात्। न च प्रत्ययलक्षणं, लुका लुप्तत्वात्। न च प्रागेवादेशोऽस्त्विति वाच्यम्, 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुक् बाधते' इति न्यायात्। अकृतव्यूहपरिभाषाया जागरूकत्वाच्च। **येन नाप्राप्तीति**। यत्र यत्र 'प्रकृत्यैका'मित्यस्य प्रवृत्तिस्तत्र टेरित्यस्य प्रवृत्तिर्न तु 'नस्तद्धिते' इत्यस्य, 'स्रजिष्ठ' इत्यादौ तस्याऽप्रवृत्तेरिति भावः। 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति न्यायेनेत्यन्ये। **संप्रसारणमिति**। न च टिलोपे सत्यन्नन्तत्वाऽभावात् 'श्वयुवमघोना'मिति कथमिह संप्रसारणप्रवृत्तिरिति शङ्क्यं, स्थानिवत्त्वादसिद्धवदत्रेत्यसिद्धत्वाद्वा टिलोपेऽप्यन्नन्तत्वलाभात्। अतद्धित इति हि तत्र पर्युदासो न तु प्रतिषेधः। तेन तद्धिते न विधिर्न निषेधः, किं तु तद्धितभिन्ने परे विधिः। तद्धितभिन्नत्वं तु णिचोऽस्त्येवेति न संप्रसारणप्रतिबन्धः, नापि दविष्ठ इत्यादाविष्ठनि ओर्गुणो दृष्ट इतीहापि वृद्धिं बाधित्वा गुणः स्यादिति वाच्यं, जातेऽपि गुणे पुनर्वृद्धौ रूपसिद्धेः। अथवा

---

बा.]इत्यत आह–**भाष्यस्येति**। उदाहृतभाष्यस्य हि प्रेयान् प्रेष्ठ इत्यादीनां प्रकृतिभावं विनाऽपि साधने तात्पर्यं, न तु प्रकृतिभावप्रत्याख्यानमभिमतम्, स्वमाचष्टे स्वापयतीत्यादौ तदावश्यकत्वात्। अत एव 'प्रकृत्यैकाजिष्ठेमेयस्सु चेच्चेकाच उच्चारणसामर्थ्यादवचनात्प्रकृतिभावः' इति वार्तिकव्याख्यावसरे 'अन्तरेणापि वचनं प्रकृतिभावो भविष्यती'ति भाष्ये उक्तम्। अन्यथा 'अन्तरेणैव वचन'मित्युच्येतेत्यास्तां तावत्। 'प्रत्ययोत्तरपदयोश्चे'त्यत्र 'एकवचने' इत्यनुवृत्तम्। तच्च यौगिकमाश्रीयते।तेन एकत्वविशिष्टवाचिनोर्युष्मदस्मदोरिति लभ्यते इति मत्वाऽऽह–**युवामावां वेति**। न च द्वयोरुक्तौ युवावादेशौ शङ्क्यौ, विभक्तेर्लुका लुप्तत्वात्। न च लुकः प्रागेव युवावौ किं न स्यातामिति वाच्यम्, 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इत्युक्तेरिति भावः। **शावयतीति**। श्वानमाचष्टे इत्यर्थः। श्वन्शब्दाण्णौ श्वन् इ इति स्थिते आह–**नस्तद्धिते इति**। 'प्रकृत्यैका'जिति प्रकृतिभावमाशङ्क्याह–**प्रकृतिभावस्तु नेति**। कुत इत्यत आह–**येनेति**। 'टे'रिति टिलोपे प्राप्ते सत्येव 'प्रकृत्यैका'जित्यारभ्यते, 'नस्तद्धिते' इत्यस्य स्रजिष्ठ इत्यादावप्राप्तावपि प्रकृतिभाव आरभ्यते इति भावः। **भत्वादिति**। इष्ठवत्त्वेन भत्वात् 'श्वयुवे'ति संप्रसारणमित्यर्थः। तथा च श्वन् इ इति स्थिते टिलोपे सति तस्याभीयत्वेनाऽसिद्धत्वादन्नन्तत्वाद्वस्य संप्रसारणे पूर्वरूपे उकारस्य वृद्धावावादेशः। **अन्ये त्विति**। इष्ठनि दृष्टस्यैव इष्ठवदित्यतिदेशः। टेरित्येव टिलोप इष्ठनि दृष्टो, न तु 'नस्तद्धिते' इति। अतो नाऽस्यातिदे-

---

शे.]वार्णपरिभाषाया अनित्यत्वादप्रवृत्तिरिति भावः। अनित्यत्वाश्रयणे दृढतरमानाऽभावात्, व्याश्रयेऽपि 'इयाय' इत्यादौ तत्प्रवृत्तेश्चायमेव न्याय्यमिति परे। **अन्यथासिद्धीति**। एवं हि तत्र भाष्यम्–'इष्ठेमेयःसु प्रकृतिभावे किमुदाहृणं ?। प्रेष्ठ इति। प्रादीनामसिद्धत्वान्न भविष्यति। इदन्तर्हि श्रेष्ठः। अकारोच्चारणसामर्थ्यान्न भविष्यति। विन्मतोर्लुगर्थं तर्हि 'स्रग्वितमः' 'स्रजिष्ठः' इति। नाप्राप्ते टिलोपे लुक आरम्भेण लुका टिलोपबाधात्तद्विषये तदभावात्'–इति॥ असिद्धवत्त्वप्रत्याख्याने तु परत्वात्प्रादिषु टिलोपं बाधित्वा कृतेषु सकृद्गतिन्यायेन टिलोपाऽप्राप्तिर्बोध्या। अत एव 'श्रेष्ठः' इत्यत्रोच्चारणसामर्थ्यादिति नोक्तम्। किं च विन्मतोर्लुगिव प्रादयः श्रादयश्च नाप्राप्ते टिलोपे आरभ्यमाणास्तद्बाधका इति तद्विषये न टिलोप इत्यन्त्यमेव सर्वसाधारणम्। अत एव 'कनिष्ठः' इत्यादौ 'टे'रिति न। 'नस्तद्धिते, इत्यपि न, अन उच्चारणसामर्थ्यात्। सर्वादेशत्वं 'के'त्यादेशेनापि सिद्धम्। प्रेष्ठज्येष्ठयोराद्ये समाधाने एकदेशिनः। **परे तु** 'किमुदाहरण'मिति प्रश्ने परोक्तोदाहरणानामन्यथासिद्धिं प्रदर्श्योदाहरणान्तराणुक्तेरस्योदाहरणाऽभाव एव। औपदेशिकोदाहरणाऽभावे आतिदेशिकफलार्थमात्रं सूत्रारम्भस्याऽदर्शनाच्च प्रत्याख्याने एव भाष्यतात्पर्यमित्याहुः। **टेरित्यस्यैवेति**। एवकारेण 'नस्तद्धिते' इत्यस्य व्यावृत्तिः। तेन सह येननाप्राप्त्यभावात्, तस्याऽनन्तरत्वाच्च। **भत्वादिति**। 'इष्ठव'दित्यतिदेशेन भत्वात् 'श्वयुवे'ति सम्प्रसारणम्। नान्तश्वादीनामित्यर्थेऽपि टिलोपस्याभीयाऽसिद्धत्वान्न दोषः परेतु 'बहुश्वन्'शब्दात्स्त्रियां डापि नान्तत्वाऽभावेन सम्प्रसारणाऽभावे 'बहुश्वे'त्येव भाव्यमिति डाप्सूत्रे भाष्ये उक्तं, तत्प्रामाण्यात्संप्रसारणेऽनित्यत्वेनाभीयाऽसिद्धत्वाऽप्रवृत्तेरावश्यकत्वेन कथं सम्प्रसारणम्?। न च 'नकारग्रहणं कर्तव्य'मिति वार्तिकप्रत्याख्यानाय भाष्येऽन

इति नेहातिदिश्यते, इष्ठनि तस्याऽदृष्टत्वात् । 'ब्रह्मिष्ठ' इत्यादौ परत्वात् 'टे'रित्यस्यैव प्रवृत्तेः । तेन शुनयतीति रूपमाहुः। विद्वांसमाचष्टे–विद्वयति । अङ्गवृत्तपरिभाषया संप्रसारणं नेत्येके। संप्रसारणे वृद्धावावादेशे च विदावयतीत्यन्ये । 'नित्यत्वाट्टिलोपात्प्राक्संप्रसारणम् । अन्तरङ्गत्वात्पूर्वरूपम् । टिलोपः। विदयती'त्यपरे । उदञ्चमाचष्टे उदीचयति । उदैचिचत् । प्रत्यञ्चं–प्रतीचयति । प्रत्यचिचत्।'इकोऽसवर्णे' इति प्रकृतिभावपक्षे–प्रति–अचिचत्।

त.]टिलोपसंप्रसारणयोर्गुणं प्रति 'असिद्धवदत्रे'त्यसिद्धत्वादिष्ठवद्भावेन नास्ति गुणप्रसङ्गः । **शुनयतीति** । इष्ठवद्भावेन भत्वात्संप्रसारणम् । 'प्रकृत्यैका'जिति प्रकृतिभावः । **नित्यत्वादिति** । शब्दान्तरप्राप्त्या तु टिलोपस्याऽनित्यत्वमिति भावः । **उदीचयतीति** । उपसर्गं पृथक्कृत्याऽच्शब्दादेव णिजिति 'प्रकृत्यैका'जिति प्रवृत्तेष्टिलोपो न । 'उद ईत्' इतीत्वम्। 'अनिदिता'मिति क्विन्निमित्तो नलोपः। **उदैचिचदिति**। लुङि 'द्विर्वचनेऽची'ति णिलोपस्य निषेधाच्चिशब्दस्य-

बा.]देश इत्यर्थः । नन्वतिशयेन ब्रह्मा ब्रह्मिष्ठ इत्यत्र नस्तद्धिते इति टिलोपो दृष्ट इत्यत आह–**ब्रह्मिष्ठ इत्यादाविति।** **तेनेति** । 'नस्तद्धिते' इत्यस्याऽप्रवर्तनेनेत्यर्थः । ततश्च प्रकृतिभावात् 'टेः' इति लोपस्याऽभावे संप्रसारणे शुनयतीति रूपमित्यर्थः । **आहुरित्यस्वरसोद्भावनम्** । तद्बीजं तु ब्रह्मवच्छब्दादिष्ठनि टेरिति टिलोपापवादे 'विन्मतोर्लु'गिति मतुपो लुकि 'नस्तद्धिते' इति टिलोपो दृष्ट एव। ततश्च 'इष्ठनि तस्याऽदृष्टत्वा' दित्ययुक्तम् । किंच 'ब्रह्मिष्ठ इत्यादौ परत्वाट्टेरित्यस्य प्रवृत्ति' रित्ययुक्तम् , केवलस्य ब्रह्मन्शब्दस्य वेदादिवचनस्य गुणवचनत्वाऽभावेन इष्ठनो दुर्लभत्वात् ,'अजादी गुणवचनादेवे'त्युक्तेः । मत्वन्तादिष्ठनि तु मतोर्लुकि तेन 'टे'रित्यस्य प्रवृत्तिबाधेन लुगुत्तरं तदप्रवृत्त्या परत्वादित्यप्यसङ्गतिरिति शब्देन्दुशेखरे स्थितम्।**विद्वयतीति**।विद्वस्शब्दाण्णौ टिलोपः।ननु इष्ठवत्त्वाद्भत्वे 'वसोः संप्रसारण' मित्याशङ्क्याह–**अङ्गवृत्तेति**।'अङ्गवृत्ते पुनर्वृत्तावविधि'रिति परिभाषयेत्यर्थः।अङ्गकार्ये कृते पुनर्नाङ्गकार्यमिति तदर्थः। वस्तुतस्तु विद्वयतीत्यत्र 'टे'रित्यसो लोपे वस्वन्तत्वाऽभावात्संप्रसारणाऽप्रसक्तेरङ्गवृत्तपरिभाषोपन्यासो वृथेत्यस्वरसं सूचयति–**इत्येके इति । संप्रसारणे इति**।विद्वच्छब्दाण्णौ इष्ठवत्त्वेन टिलोपे कृते वकारस्य संप्रसारणे पूर्वरूपे उकारस्य वृद्धौ आवादेशे विदावयतीत्यन्ये मन्यन्ते इत्यर्थः। अत्रापि पूर्ववदेवाऽस्वरसः,टिलोपे सति वस्वन्तत्वाऽभावात्। **नित्यत्वादिति** । टिलोपे कृते अकृते च प्रवृत्तेः संप्रसारणं नित्यम् । टिलोपस्तु कृते संप्रसारणे पूर्वरूपे च कृते उसो भवति, अकृते तु अस इत्यनित्यः, 'शब्दान्तरस्य प्राप्नुवन्विधिरनित्यः' इति न्यायादिति भावः । ननु कृतेऽपि संप्रसारणे पररूपात्प्राक् अस एव टिलोप इति तस्य नित्यत्वमित्यत आह–**अन्तरङ्गत्वात्पूर्वरूपं टिलोप इति** । संप्रसारणे पूर्वरूपे च कृते उसो लोपेऽपि वस्वन्तत्वस्य विनङ्क्ष्यत्त्वान्न संप्रसारणमित्यस्वरसं सूचयति–**इत्यपरे इति** । एवंच विद्वयतीति प्रथमपक्ष एव स्थितः । तत्राङ्गवृत्तपरिभाषोपन्यास एव वृथेति स्थितम् । **उदीचयतीति** । उत्पूर्वकादञ्चेः ऋत्विगित्यादिना क्विनि 'अनिदिता'मिति नलोपे उदच्शब्दः । तस्माण्णौ इष्ठवत्त्वेन भत्वादच इत्यकारलोपं बाधित्वा 'उद ई'दिति ईत्वे 'उदीची'ति ण्यन्ताल्लडादय इति भावः। **उदैचिचदिति**। लुङि 'द्विर्वचनेऽची'ति णिलोपनिषेधाच्चिशब्दस्य द्वित्वम्।'उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते' इत्युक्तेरुद उपर्थाडिति भावः । एवंच उदः पृथक्करणेन 'प्रकृत्यैका'जिति प्रकृतिभावान्न टिलोपः । **प्रतीचयतीति** । 'अच' इत्यल्लोपे 'चौ' इति पूर्वस्य दीर्घः । **प्रत्यचिचदिति** । इह 'अच'

शे.]इत्यपकर्षः कृतस्तत्पक्षे संप्रसारणं दुर्वारं,लोपस्य स्थानिवद्भावेन अनन्तयाऽनन्तत्वस्यार्थसमाजग्रस्तत्वात्, श्वन्शब्दत्वन्तु 'सर्वे सर्वपदादेशाः' इति न्यायेनेति वाच्यम्, वार्त्तिकैकवाक्यतया 'अल्लोपोऽनः' इत्यस्य श्रूयमाणाऽनन्त एव प्रवृत्तेस्तत्साहचर्येणार्थाधिकारेण च 'बहुश्वे'त्येवे'ति भाष्यविरोधेन चाऽस्यापि श्रूयमाणाऽनन्त एव प्रवृत्तेरदोषात्। किं च 'षपूर्वे'ति सूत्रे भाष्ये प्रकृतिभावस्य 'अल्लोपोऽनः' इत्येतद्बाधकताया अप्युक्तत्वेन, 'नैका'जित्येव सिद्धे प्रकृतिग्रहणेन प्रकृतिभावविधायके न्यायाऽप्रवृत्तेर्बोधनेन च 'नस्तद्धिते' इत्यस्याऽपि प्रकृतिभावो न्याय्य इति टिलोपोऽपि दुर्लभः । यत्तु 'प्रकृत्यैका'जिति सूत्रे भाष्ये 'यस्येत्यादौ प्रकृतिभावः' इत्युक्तं । तत्रादिशब्दः प्रकारे, लोपत्वेन च सादृश्यमिति न तद्विरोधः । एवञ्च वृद्धौ 'श्वानयतीति'प्राहुः । **शुनयतीति** । नच सम्प्रसारणे पूर्वत्वं बाधित्वा 'वार्णादाङ्ग'मिति न्यायेन टिलोपे इदं रूपं दुर्लभमिति वाच्यम् , 'शुशुवतु'रित्यादौ संप्रसारणे कृते तेन न्यायेन 'एरनेकाचः' इति यणि रूपाऽसिद्ध्या पूर्वरूपविषयेऽनित्यत्वेन तन्न्यायाऽप्रवृत्तेरिति भावः । **आहुरिति** । अत्राऽरुचिबीजन्तु ब्रह्मवच्छब्दादिष्ठनि मतोर्लुकि 'टे'रित्यस्याऽप्रवृत्तौ 'नस्तद्धिते' इत्यस्य प्रवृत्तेर्दृष्टत्वेनेष्ठनि तस्याऽदृष्टत्वादित्यसङ्गतम्। किं च 'ब्रह्मिष्ठः इत्यादावि'त्यप्यसङ्गतम्। तथा हि केवलादगुणवचनत्वेनेष्ठन्नेव दुर्लभः, मत्वन्तादिष्ठनि मतोर्लुकि तेन 'टे'रित्यस्य प्रवृत्तिमात्रबाधनेन लुगुत्तरं तदप्रवृत्त्या 'परत्वा'दित्यस्याऽसङ्गतिः । किं च 'नस्तद्धिते' इत्यस्य 'टे'रित्यपेक्षया परत्वमित्यर्थस्य 'प्रकृत्यैका'जिति सूत्रे भाष्ये ध्वनिततयाऽपि तदयुक्तमिति । **नेत्येक इति** । टिलोपेनाऽसो लोपे वस्त्वं दुर्लभं, 'राजकीय'मित्यादाव-

सम्यञ्चमाचष्टे समीचयति । सम्यचिचत् । समिअचिचत् । तिर्यञ्चमाचष्टे—तिराययति । अञ्चेष्टिलोपेनापहारेऽपि बहिरङ्गत्वेनाऽसिद्धत्वात्तिरसस्तिरिः । 'असिद्धवदत्रे'ति चिणो लुङ्न्यायेन प्रथमटिलोपोऽसिद्धोऽतः पुनष्टिलोपो न । अङ्गवृत्तपरिभाषया वा। चव्यग्लोपित्वादुपधाह्रस्वो न । अतितिरायत् । सध्र्यञ्चमाचष्टे—सध्राययति।

---

त.]द्वित्वम् । **प्रतीचयतीति** । 'अच' इत्यल्लोपे 'चौ' इति पूर्वस्य दीर्घः । **प्रत्यचिचदिति** । इह धात्वकारस्याऽच इति लोपे चिशब्दात्प्रागटि पूर्वस्य यण् । न चास्तामासन्नित्यादिवदलोपस्याऽसिद्धात्वादाट् स्यादिति वाच्यं, व्याश्रयत्वात् । णिनिमित्तो हि लोपो, लुङ्निमित्तश्चाट् । आसन्नित्यादौ तु न तथेति वैषम्यम् । **तिराययतीति** । उपसर्गसमानाकारत्वाऽभावादिह तिरसः पृथक्करणं नास्ति, तेन 'प्रकृत्यैका'जित्यप्रवृत्तेष्टिलोपः । तदाह—**अञ्चेरिति। चिणो लुङ्न्यायेनेति।** यथाऽपाचितरामित्यत्र चिणः परस्य तशब्दस्य लुकि पुनरतरप्रत्ययस्य लुङ् न भवति, प्रथमलुकोऽसिद्धत्वेन व्यवधानात्, तथेत्यर्थः । **पुनष्टिलोपो नेति** । तिर्यादेशस्येकारस्य लोपो नेत्यर्थः । **अग्लोपित्वादिति** । अनग्लोपिनोऽप्यग्लोपित्वस्वीकारादिति भावः । **देवद्र्यञ्चमिति** । ननु 'आख्यानात्कृतस्तदाचष्टे' इति कारकस्य पृथक्करणाद्देवानञ्चयतीति प्रसज्येत, बलिबन्धनमाचष्टे—बलिं बन्धयतीतिवत् , इष्यते तु देवद्राययतीत्येव रूपम्। किंच कारकस्य पृथक्करणेऽदिदेवद्रायदित्याद्यपि न सिध्येत् । न च पुराणप्रसिद्धाख्यान एव कारकस्य पृथक्करणादिकमिति वाच्यं, राजान-

---

बा.]इत्यल्लोपे चिशब्दात्प्रागटि तकारादिकारस्य यण् अच इत्यकारलोपस्याभीयत्वेऽपि असमानाश्रयत्वान्नाऽसिद्धत्वम् ,लोपस्य णिनिमित्तत्वात्, आटस्तु लुङ्निमित्तत्वात् । **इकोऽसवर्णे इतीति** । 'न समासे' इति तु न, पृथक्करणेन समासनिवृत्तेः । **समीचयतीति** । 'समः समि' इति सम्यादेशः । 'अच' इति लोपे 'चा'विति दीर्घः। **सम्यचिचदिति** । सम्यादेशस्य स्थानिवत्त्वेनोपसर्गत्वात् पृथक्करणम् , पृथक्करणेन उत्तरपदपरत्वाऽभावेऽप्यन्तरङ्गत्वाज्जातः सम्यादेशो न निवर्तते । **तिराययतीति** । 'तिर'सित्यव्ययम् । तत्पूर्वादञ्चेः क्विनि नलोपे तिरस् अच् इत्यस्माण्णौ टिलोपेन धातोर्निवृत्तौ 'तिरसस्तिर्यलोपे' इति तिरिभावे इकारस्य वृद्धावायादेशे 'तिरायी'त्यस्माण्ण्यन्ताल्लडादीति भावः । न च तिरसः पृथक्करणे सति धातोः 'प्रकृत्यैका'जिति प्रकृतिभावात्कथं टिलोप इति वाच्यं, तिरसित्यस्य कदाप्यनुपसर्गतया उपसर्गसमानाकारत्वाऽभावेन पृथक्करणाऽभावात्।नन्वेवं सति अञ्चतेष्टिलोपेनापहारे सति अञ्चतिपरकत्वविरहात्कथमिह तिरसस्तिरिभाव इत्यत आह—**अञ्चेष्टिलोपेनेति** । **बहिरङ्गत्वेनेति** । बहिर्भूतणिनिमित्तकत्वादिति भावः । नन्वस्तु तिरसस्तिरिः, तत्र रेफादिकारस्य टेरिति लोपः स्यादित्यत आह—**असिद्धवदत्रेति** । प्रथमटिलोपोऽसिद्ध इत्यन्वयः । तिरस् अच् इ इति स्थिते प्रथमप्रवृत्तः अच् इत्येवंरूपटेर्लोपः तिरेः टिलोपे कर्तव्ये आभीयत्वादसिद्ध इत्यर्थः । ननु प्रथमटिलोपस्य कथं तिरेष्टिलोपे कर्तव्ये असिद्धत्वं, टिलोपशास्त्रस्य एकत्वादित्यत आह—**चिणो लुङ्न्यायेनेति** । पचधातोर्भावकर्मणोर्लुङस्तङि प्रथमपुरुषैकवचने तशब्दे परे 'चिण् भावकर्मणो'रिति च्लेश्चिणि उपधावृद्धौ अटि अपाचि त इत्यस्मात् 'तिङश्चे'ति तरपि तदन्तात् 'किमेत्तिङव्ययघादा'मित्याम्प्रत्यये अपाचिततरामिति स्थिते 'चिणो लु'गिति प्रथमस्य तशब्दस्य लुकि कृते पुनस्तरप्प्रत्ययतशब्दस्य लुङ् न भवति, स्थानिभेदेन लुको भेदमाश्रित्य प्रथमलुकोऽसिद्धत्वेन व्यवधानादिति स्थितिः । एवमिहापीत्यर्थः। **अत इति।**प्रथमटिलोपस्याऽसिद्धत्वादित्यर्थः। **अङ्गवृत्तपरिभाषया वेति।** 'पुनष्टिलोपो ने'त्यनुषज्यते । न च तिरेरिकारस्याङ्गवृत्तपरिभाषया 'टे'रिति लोपाऽभावे तिराययतीति वृद्धिरपि तस्य न स्यादिति वाच्यम्, अङ्गवृत्तपरिभाषाया अनित्यत्वेन वृद्धिविषये तदप्रवृत्तेः । **अग्लोपित्वादिति** । तिरस् अच् इ इति स्थिते 'टे'रित्यचो धातोर्लोपे सति तिरि इत्यस्य अग्लोपित्वम् , अचो धातोर्लोपे अकारस्यापि लोपसत्त्वादित्यभिमानः।

---

शे.]न्त्ववत्। एवञ्च संप्रसारणप्राप्तेरेवाऽभावेनाङ्गवृत्तपरिभाषोपन्यासो वृथेति,—अत्राऽरुचिबीजं। तत्परिभाषाया अभावश्चेति च । इदमेवाग्रिममतद्वयेऽरुचिबीजम् । रूपन्तु 'विद्र्यती'त्येव सत्यभिधाने । **प्रतीचयतीति** । 'अचः' इत्यल्लोपे 'चौ' इति दीर्घः । **इकोऽसवर्ण इति** । 'न समासे' इति तु न, पृथक्करणेन समासनिवृत्तेरुक्तत्वात् । **सम्यचिचदिति** । सम्यादेशस्य स्थानिवत्त्वेनोपसर्गत्वात्पृथक्करणम् । पृथक्करणेन समासस्य निवृत्तेरुत्तरपदपरत्वाऽभावेपि अन्तरङ्गत्वाज्जातः सम्यदेशो न निवर्त्तते । 'समीचयती'त्यादौ चकारस्याऽञ्चतित्वन्तु स्थानिवत्त्वेन बोध्यम् । **अञ्चेरिति** । तिरसोऽनुपसर्गत्वेन पृथक्करणाऽभावेनाऽनेकाच्त्वात्प्रकृतिभावाऽप्राप्तेरिति भावः।**बहिरङ्गत्वेनासिद्धत्वादिति।**बहिर्भूतणिनिमित्तकत्वादिति भावः । 'तिरसस्तिर्यलोपे' इत्यत्रानन्तरत्वेन 'अचः' इति लोपस्यैव प्रतियोगित्वेन ग्रहणाट्टिलोपेऽपि तिरिः। स्थानिवत्त्वेन तिरेरव्ययत्वेन 'अव्ययानां भमात्रे' इति टिलोपो न। 'नस्तद्धिते' इति भाष्येऽस्य पाठेन परया वृद्ध्या बाधात् । अत एव 'यस्ये'ति लोपो न । अनेन सर्वटिलोपवारणेऽपि माधवोक्तामभ्युच्चययुक्तिमाह—**असिद्धवदिति** । [तदनित्यत्वेऽप्याह—]**अङ्गवृत्तेति** । वृद्धिस्तु भवत्येव, तस्या अनित्यत्वादिति भावः । अङ्गवृत्तपरिभाषायाः फलाऽभाव

असससध्रायत्। विष्वद्र्यञ्चम् [आचष्टे]–विष्वद्र्याययति। अविविष्वद्र्यायत्। देवद्र्यञ्चं देवद्र्याययति। अदिदेवद्र्यायत्। अदद्र्यञ्चम् [अदद्र्याययति] आदद्र्यायत्। अमुमुयञ्चम् अमुमुआययति। चङ्–आमुमुआयत्। अदमुयञ्चम्–अदमुआययति। आददमुआयत्। भुवं–भावयति। अबीभवत्। श्रुवं–अशुश्रवत्। श्रियम्–अशिश्रयत्। गाम्–अजूगवत्। रायम्–अरीरयत्। नावम्–अनूनवत्। स्वश्वं–स्वाशश्वत्। स्वः। [अव्ययानां भमात्रे टिलोपः]। स्वयति। अससस्वत्। असिस्वत्। बहून्–भाव-

त.] मागमयतीत्यत्राऽव्याप्तेरिति चेत्। अत्राहुः–यत्राख्याने कृच्छ्रूयते तत्रैवेदं प्रवर्तते, कृल्लुगितिसं नियोगशिष्टविधानात्। किंच आख्यानग्रहणसामर्थ्यान्महाजनप्रवादविषयीभूतार्थविषयकमेव तत्, भाष्यादौ तादृशानामेवोदाहृतत्वात्। यदि तु देवाञ्चनमाचष्टे इत्यादौ महाजनप्रसिद्धिरस्ति तदा देवानञ्चयतीति भवत्येवेति। **अमुमुआयदिति**। 'पूर्वत्राऽसिद्धीय-मद्विर्वचने' इत्यसिद्धत्वनिषेधान्मुशब्दस्य द्वित्वम्। **अबीभवदिति**। 'ओः पुयण्जी'त्यभ्यासोवर्णस्येत्वम्। 'दीर्घो लघो'रिति दीर्घः। ननु परत्वात्प्रथमं दीर्घे कृते पश्चादित्वं स्यात्। न चैवं 'दीर्घो लघो'रित्यस्य वैयर्थ्यमिति वाच्यम्, अजूहवदित्यादौ तस्य सावकाशत्वादिति चेत्। अत्राहुः–'विप्रतिषेधे पर'मित्यत्र परशब्दस्येष्टवाचित्वाल्लक्ष्यानुरोधेन दीर्घात्प्रागित्वमेव भवति, लक्ष्यभेदात्पुनरिकारस्य दीर्घो वा भवतीति। **अबुभ्रवदिति**। 'इहाऽभ्यासात्परो यः पवर्गः स त्ववर्णपरो न, यस्त्ववर्णपरो यण्, नासावभ्यासात्पर, इत्यभ्यासोकारस्येत्वं न। गां-गावयति। **स्वश्वमिति**। शोभ-नोऽश्वः स्वश्वः। शोभनोऽश्वो यस्येति बहुव्रीहिर्वा। **स्वाशश्वदिति**। उपसर्गसमानाकारस्य पृथक्करणादजादेरिति द्वितीयस्य द्वित्वमाडागमश्च। **स्वयतीति**। 'प्रकृत्यैका'जिति प्रकृतिभावस्तु येन नाप्राप्तिन्यायाट्टेरित्यस्यैव बाधको न तु 'अव्ययानां भमात्रे टिलोपः' इत्यस्येति भावः। **अससस्वदिति**। 'ओः पुयण्जी'ति ज्ञापकेन द्वित्वे कार्येऽजादेशस्य स्थानिवत्त्वान्निषेधाद्वा स्वर्शब्दस्य द्वित्वमिति मतेनेदम्। अन[ग्लोपिन्य]ग्लोपित्वाभ्युपगमेऽप्यज्हलादेशेऽजादेशत्वव्यवहारो नास्तीति मते तु णिच्सहितस्यैव द्वित्वं। तदाह–**असिस्वदिति**। **भावयतीति**। 'बहोर्लोपो भू च बहोः' 'इष्ठस्य यिट् चे'ति भूभावः। न चैवं यिडागमोऽपि णेरस्त्विति वाच्यं, णाविष्ठवदित्यत्र सप्तमीनिर्देशादिष्ठवदित्यत्र सप्तम्यन्ता-द्वतिरित्यभ्युपगमात्। एवं चेष्ठनि परे पूर्वस्य यत्कार्यं तदेवातिदिश्यते न त्विष्ठनोऽपि कार्यमिति स्थितम्। बहयती-

बा.] सध्राययतीति। सहस्य सध्रिः। तिराययतीतिवद्रूपम्। सहेत्यस्य उपसर्गत्वाऽभावान्न पृथक्करणम्। तदाह–**अससध्रायदिति**। **विष्वद्र्यञ्चमिति**। विष्वक् अच् इ इति स्थिते 'विष्वग्देवयोश्च'ति विष्वक्शब्दटेरद्र्यादेशे टेरित्यचो धातोर्लोपे विष्वद्रि इ इति स्थिते वृद्धौ आयादेशे विष्वद्रायि इति ण्यन्ताल्लटि विष्वद्राययतीति रूपम्। **देवद्र्यञ्चमिति**। देवशब्दस्य टेरद्र्यादेशे देवद्राययतीति सिद्धवत्कृत्य लुङ्याह–**अदिदेवद्रायदिति**। अतितिरायदितिवद्रूपम्। **आदद-द्रायदिति**। सर्वनामत्वाददस्शब्दस्य टेरद्र्यादेशः। 'त्यदाद्यत्वे सत्येव उत्वमत्वे' इति पक्षे इदम्, अदस्शब्दाद्विभक्ते-र्लुका लुप्तत्वेन विभक्तिपरकत्वाऽभावेन त्यदाद्यत्वाऽप्रवृत्तेः। 'त्यदाद्यत्वाऽविषयत्वेऽपि उत्वमत्वे स्त' इति मतमाश्रित्य आह–**अमुमुयञ्चमिति**। अदस् अच् इ इति स्थिते टेरद्र्यादेशे अच् इत्यस्य टेर्लोपे अदद्रि इ इति स्थिते 'अदसोऽद्रेः पृथङ्-मुत्व'मिति मते दकाराऽकारयोर्दकाररेफयोश्च मत्वोत्वयोः कृतयोः अमुमु इ इति स्थिते प्रथमस्य इकारस्य णिचि वृद्धौ आयादेशे अमुमु आयीति ण्यन्ताल्लडादीति भावः। मुत्वस्याऽसिद्धत्वान्न यण्। **अदमुआययतीति**। 'केचिदन्त्यसदेशस्ये'ति मते इदम्। **भुवमिति**। भुवमाचष्टे इत्यर्थे भूशब्दाण्णिच्। वृद्ध्यावादेशौ, भावीत्यस्माल्लडादीति भावः। **अबीभवदिति**। 'ओः पुयण्जी'ति इत्वम्। **अबुभ्रवदिति**। अवर्णपरकपवर्गादिपरत्वाऽभावात् 'ओः पुयण्जी'ति न। **स्वश्वमिति**। सुशोभनः अश्व इति विग्रहः। **स्वाशश्वदिति**। उपसर्गसमानाकारस्य पृथक्करणादश्वशब्दस्य 'अजादेर्द्वितीयस्ये'ति द्वित्वमाडागमश्च। **स्वरिति**। स्वरित्यस्माण्णिचि 'अव्ययानां भमात्रे' इति टिलोपः, इष्ठवत्त्वेन भत्वात्। 'प्रकृत्यैका'-जिति प्रकृतिभावस्तु येन नाप्राप्तिन्यायेन 'टे'रित्यस्यैव बाधकः। **अससस्वदिति**। द्वित्वे कार्ये णावजादेशस्य निषेधात् टिलोपं बाधित्वा स्वर्शब्दस्य द्वित्वम्, 'अ'रित्यस्य लोपे अकारस्यापि लोपसत्त्वेन अजादेशत्वादिति भावः। **असि-स्वदिति**। अर्लोपस्य अजादेशत्वं नेति मते द्वित्वे कार्ये णौ टिलोपस्य निषेधाऽभावाट्टिलोपे कृते णिचा सह स्विशब्द-

शे.] इतीदं चिन्त्यम्। निरूपितश्चैतद्युष्मदस्मत्प्रकरणे। **देवद्र्यञ्चमिति**। 'विष्वग्देवयो'रित्यद्र्यादेशः। **स्वयतीति**। 'अव्ययाना'मिति टिलोपः, अतिदेशेन भत्वात्। **सञ्ज्ञापूर्वकत्वादिति**। णाविष्ठवदित्याङ्गेनाऽतिदेशेन विनो लुकः सत्त्वादङ्ग-वृत्तपरिभाषया न वृद्धिरिति कैयटः। अत एव 'टे'रिति सूत्रे 'दवयती'त्यत्र वृद्धिर्न कृता भाष्ये। परे त्वेतद्भाष्यप्रयोगात्, 'प्रापयती'ति भाष्यप्रयोगाच्च लक्ष्यविशेषविषयकेऽस्मिन् वाक्येऽभावातिदेशोऽपि, तेनेष्टसिद्धिः, 'उदाहरणमात्र'मिति भाष्योक्त्या तदनुक्तमसञ्ज्ञातिदेशवत्क्वचिदस्याप्यतिदेशे बाधकाऽभावात्। एतेन सञ्ज्ञापूर्वकविधेरनित्यत्वं न भाष्यसम्म-तम् 'अङ्गकार्ये' इत्यपि न लक्ष्यसाधकं, तत्र तत्र तज्ज्ञापकमुक्त्वा 'किं प्रयोजनम्?, पित्वेर्गुणप्रतिषेधः प्रयोजन'मित्येवोक्तं

यति । बह्यतीत्यन्ये । [ 'विन्मतो'रिति लुक् ] । स्रग्विणं स्रजयति । संज्ञापूर्वकत्वान्न वृद्धिः । श्रीमतीं श्रीमन्तं वा-[श्राययति] । अशिश्रयत् । पयस्विनीम् पयसयति। इह टिलोपो न, तदपवादस्य लुकः प्रवृत्तत्वात् । स्थूलं स्थवयति । दूरं-दवयति। कथं 'तर्हि दूरयत्यवनते विवस्वती'ति । दूरमतति अयते वा दूरात् । दूरातं कुर्वती-

त.]त्यन्य इति।यिडभावे तत्सन्नियोगशिष्टस्य भूभावस्याप्यभाव इति भावः।नन्वेवंमन्यमतत्वेन किमर्थमिदमुपन्यस्तमिति चेत् । अत्राहुः-प्राधान्यादिष्ठवदिति कार्यातिदेशो, न त्वयं शास्त्रातिदेशः । तथा चेष्ठनि दृष्टं भूभावं स एवातिदेशो विधत्त इति नात्र सन्नियोगशिष्टपरिभाषायाः प्रवृत्तिः । इत्थं च भावयतीत्येव रूपं सम्यगिति । स्रजयतीति । इष्ठवद्भावेन 'विन्मतो'रिति लुक् । ननु 'अजादी गुणवचनादेवे'त्युक्तत्वादिष्ठन्प्रत्ययः स्रग्विन्शब्दाद्दुर्लभ इति इष्ठवद्भावोऽत्राऽयुक्त इति वाच्यम्, अस्मादेव लुग्वचनाज्ज्ञापकाद्विन्नन्तान्मतुबन्ताच्च अजादी भवत इत्यभ्युपगमात्। श्रीमतीमिति । मतुपो लुक् । श्राययति । अशिश्रयदिति । द्वित्वे णिनिमित्तगुणे सत्यायादेशः । एतेन 'स संचरिष्णुर्भुवनान्तरेषु यां यदृच्छयाशिश्रयदाश्रयः श्रिया'मिति माघश्लोके 'अशिश्रय'दिति प्रचुरः पाठो व्याख्यातः,श्रीमतीमकरोदित्यर्थादिति मनोरमायां स्थितम् । अत्र केचित्-सापेक्षाणां वृत्त्यभावान्मनोरमोक्तं यत्तदयुक्तम् । नहि कश्चिदयं घटं करोति तमानयेत्यर्थे 'यं घटयति तमानये'ति प्रयुङ्क्ते । अतएव 'तत्करोती'त्यनेनैव सिद्धे मुण्डादिग्रहणं सापेक्षेभ्योऽपि णिजर्थ'मिति पूर्वोक्तं सङ्गच्छते । यद्यन्यत्रापि सापेक्षेभ्यो णिच् स्यात्तर्हि तन्न सङ्गच्छेत । न चाऽत्र सापेक्षत्वं नेति विवदितव्यम्, यां दिशं श्रीमतीमकरोदिति स्वयमेव व्याख्यातत्वात् । नापि सविशेषणानां वृत्त्यभावेऽपि विशेष्ययोगे स्यादेव वृत्तिरिति नात्रानुपपत्तिः, श्रीमतीमित्यर्थं प्रति दिशो विशेष्यत्वादिति वाच्यम्, विशेष्ये (हि ) बहिर्भूते विशेषणानां वृत्तिर्नाङ्गीक्रियते । न हि कश्चित् श्रीमतो राज्ञ इदमित्यर्थे राज्ञः श्रैमतमिति वृत्तिमभ्युपैति । किं च माघश्लोके अशिश्रियदित्येव पाठो बहुषु पुस्तकेषु दृश्यते, न त्वशिश्रयदित्यलं क्षुद्रे ग्रन्थसमर्थनाऽभिनिवेशेनेत्याहुः। पयसयतीति । इह विन्मतोर्लुकि अग्लोपात्सन्वदित्वादिकं च न । अनग्लोपेऽपि सन्वद्भावाऽभावात् । 'णौ चङी'ति सूत्रे अत्तरराजदिति भाष्यमिह प्रमाणम् । लुङि-अपपयसत् । एवं स्रग्विणमाख्यत् असस्रजदित्यत्रापि सन्वदित्वं न । गोमन्तं-गवयति । लुङि अजुगवत् । इहाऽग्लोपात् 'दीर्घो लघो'रिति दीर्घो न । गां स्रजं पय इति विग्रहे तु-अजूगवत् । असिस्रजत् । [पयंयति ।] अपपयत् । टेर्लोपस्य बहिरङ्गत्वेन असिद्धत्वादिह वृद्धिर्न । अग्लोपित्वात्तु सन्वद्भावदीर्घौ न । तदपवादस्येति । येन नाप्राप्तिन्यायेन टिलोपापवादो लुक् । स्थवयतीति। 'स्थूलदूरे'ति यणादिलोपो, गुणश्च। न च गुणस्य 'अचोऽञ्णिती'ति वृद्धिः

बा.]स्य द्वित्वमिति भावः।बह्नतीति। बहुशब्दाण्णिचि 'णाविष्ठव'दित्यतिदेशात् 'बहोर्लोपो भू च बहो'रिति बहोर्भूभावः। 'इष्ठस्य यिट् चे'ति यिडागमस्तु न, 'णाविष्ठव' दिति सप्तम्या इष्ठनि परे दृष्टस्यैव कार्यस्यातिदेशादिति भावः । बह्यतीति । यिडभावे तत्संनियोगशिष्टस्य भूभावस्याप्यभावादिति भावः। स्रजयतीति । इष्ठवत्त्वात् 'विन्मतो'रिति लुक् । नचाऽजादी गुणवचनादेवेति इष्ठन्प्रत्ययः स्रग्विन्शब्दाद्दुर्लभ इति इष्ठवत्वमत्र कथमिति शङ्क्यं, 'विन्मतो' रिति लुग्विधानेन स्रग्विनशब्दादिष्ठवत्त्वसिद्धेरिति भावः । उपधावृद्धिमाशङ्क्याह-संज्ञापूर्वकत्वान्न वृद्धिरिति । 'णाविष्ठव'-दित्यनेनातिदेशेन विनो लुकः सत्त्वादङ्गवृत्तपरिभाषया न वृद्धिरिति कैयटः । श्रीमतीमिति । श्रीमतीशब्दाण्णिचि 'णाविष्ठव'दित्यतिदेशेन'भस्याऽढे' इति पुंवत्त्वे 'विन्मतोः' इति मतो लुकि रेफादिकारस्य वृद्ध्यायादेशयोः'श्रायि' त्यस्माल्लुङादीति भावः । अशिश्रयदिति । णावच आदेशो नेति वृद्ध्यायादेशयोः प्रागेव श्रीशब्दस्य द्वित्वे उत्तरखण्डे वृद्ध्यायादेशयोः कृतयोरुपधाह्रस्व इति माधवः । मतुपो लुकि अकारस्यापि लोपसत्त्वेन अग्लोपित्वान्नोपधाह्रस्व इत्यन्ये । पयस्विनीमिति । णिचि इष्ठवत्त्वाद्विन्मतोरिति मतुपो लुगिति भावः । पयसयतीत्यत्र इष्ठवत्त्वाट्टिलोपमाशङ्क्य आह-इह टिलोपो नेति । कुत इत्यत आह-तदपवादस्येति । न च टिलोपं बाधित्वा मतुपो लुकि कृते पयसष्टेर्लोपः कुतो न स्यादिति वाच्यं, 'सत्यपि संभवे बाधन'मिति न्यायेन पयसष्टिलोपस्यापि मतुपो लुका बाधात्।स्थवयतीति । स्थूलशब्दाण्णिचि इष्ठवत्त्वात्स्थूलदूरेति स्थूलशब्दस्य यणादेर्लोपे ऊकारस्य गुणे अवादेशे स्थवि इत्यस्माल्लडादीति भावः । गुणे ओकारस्याऽचो ञ्णितीति वृद्धिस्तु न शङ्क्या, अङ्गकार्ये कृते पुनरङ्गकार्यस्याऽप्रवृत्तेः । दवयतीति । पूर्ववद्यणादिलोपो गुणश्च । कथं तर्हीति । 'स्थूलदूरे'ति यणादिलोपस्य टिलोपाऽपवादत्वादिति भावः । दूरमततीति । 'अत सातत्यगमने' इति धातोः 'अन्येभ्योऽपि दृश्यते' इति क्विपि दूरादिति रूपम्। अय गतावित्यस्मात् क्विपि 'लोपो व्यो'रिति यलोपे 'ह्रस्वस्य पिती'ति तुकि दूरादित्येव रूपम् । तस्माण्णौ टिलोपे 'दूरी'ति ण्यन्तात् शतृप्रत्यये शपि इकारस्य गुणे

शे.] न त्वेवंविधलक्ष्यसिद्धिस्तत्प्रयोजनत्वेनोक्तेति एषां प्रकारान्तरेण सिद्धेर्भाष्याभिप्रेतत्वादित्याहुः। श्रीमतीमिति । णिचि पुंवत्त्वे मतोर्लुक् । अशिश्रयदिति । 'णावच आदेशो ने'ति श्रीशब्दस्य द्वित्वे उत्तरखण्डे वृद्ध्यायोः कृतयो-

त्यर्थः । युवानं-यवयति, कनयति । 'युवाल्पयो'रिति वा कन् । अन्तिकं-नेदयति । बाढं-साधयति । प्रशस्यं-प्रशस्ययति । इह श्रज्यौ न । उपसर्गस्य पृथक्कृतेः । वृद्धं-ज्यापयति । वर्षयति । प्रियं-प्रापयति । स्थिरं-स्थापयति । स्फिरं-स्फापयति । उरुं-वरयति । वारयति । बहुलं-बंहयति । गुरुं-गरयति । [ वृद्धं वर्षयति ] । तृप्रं-त्रापयति । दीर्घं-द्राघयति । वृन्दारकं-वृन्दयति । इति नामधातुप्रक्रिया ।

## अथ तिङन्ते कण्ड्वादयः ।

**कण्ड्वादिभ्यो यक् ।३।१।२७।** एभ्यो धातुभ्यो नित्यं यक् स्यात् स्वार्थे । धातुभ्यः किम् ? । प्रातिपदिकेभ्यो मा भूत् । द्विधा हि कण्ड्वादयः धातवः प्रातिपदिकानि च । **१९४५ कण्डूञ्** गात्रविघर्षणे । कण्डूयति । कण्डूयते । **१९४६ मन्तु** अपराधे । रोष इत्येके । मन्तूयति । चन्द्रस्तु जितमाह । मन्तूयते ।

---

त.]स्यादिति वाच्यम्, अङ्गकार्ये कृते पुनरङ्गकार्यस्याऽप्रवृत्तेः।'प्रातिपदिकाद्धात्वर्थे' इति बहुलग्रहणाद्वा।लुङि-अतुस्थवत् । **द्वयति । यवयतीत्यादि** । इहापि पूर्ववद्वृद्ध्यभावः । लुङि-अदूद्वत् । अयूयवत् । अचीकनत् । **नेदयतीति** । 'अन्तिकबाढयोर्नेदसाधौ'। टिलोपः । लुङि अनिनेदत् । असिसाधत् । प्रशस्य-प्राशशस्यत् । **पृथक्कृतेरिति** । तेन विशिष्टस्य स्थानिनोऽभावान्नादेशविमौ भवत इत्यर्थः । **ज्यापयतीति** । 'वृद्धस्य चे'ति ज्यादेशः । स च 'प्रियस्थिरे'ति वर्षादेशेन सह विकल्प्यत इत्याह-**वर्षयतीति** । लुङि अजिज्यपत् । अववर्षत् । प्रियम्-अपिप्रपत् । स्थिरम्-अतिस्थपत् । सस्यादेशावयवत्वात्षत्वं न । स्फिर-अपिस्फपत् । **उरुमिति** । वरादेशे कृते संज्ञापूर्वकविधेरनित्यत्वाद्वाहुलकाद्वा माधवेन विकल्पेन उपधावृद्धिरुदाहृतेति स्वयमपि तथैवाह-**वरयति** । **वारयतीति** । अवीवरत् । **बंहयतीति**। अल्लोपित्वात्-अबबंहत् । **गरयतीति** । अजीगरत् । **त्रापयतीति** । अतित्रपत् । **द्राघयतीति** । अदद्राघत् । **वृन्दयतीति** । अववृन्दत् । इति **नामधातुप्रक्रिया** ।

**कण्ड्वादिभ्यो यक्** । 'धातोरेकाच' इत्यस्माद्धातोरिति वर्तते । वेति निवृत्तम् । अन्यथा कण्डवतीति स्यात्तदाह-**धातोर्नित्यमिति**।केचित्तु 'नित्यं कौटिल्ये गतौ' इत्यतो नित्यमित्यनुवर्तत इत्याहुः। तच्चिन्त्यम् । तत्र हि नित्यग्रहणमेवकारार्थे वर्तते तत्कौण्डिन्यन्यायस्याऽनित्यतां ज्ञापयितुमिति प्राग्व्याख्यातत्वात्।किंच 'नित्यं कौटिल्ये गतौ'-इत्यत्रापि वेत्यनुवर्तते। अन्यथा गत्यर्थेभ्यो नित्यं यङ् स्यादिति। **स्वार्थे इति**। कण्ड्वादिभ्यो यक्स्यात्कृञर्थे इति प्राचोक्त-

---

बा.]अयादेशे दूरयच्छब्दस्य दूरयतीति सप्तम्यन्तमिति भावः।तदाह-**दूरात् कुर्वतीत्यर्थ इति**। 'कुर्वती'ति सप्तम्यन्तम् । **यवयतीति** । युवन्शब्दाण्णौ स्थूलदूरेति वनो यणादेर्लोपः । पूर्वस्य उकारस्य गुणे अवादेशः । यवि इत्यस्माल्लडादि । **कनयतीति** । युवन्शब्दस्य कनादेशपक्षे रूपम् । तदाह-**युवाल्पयोरिति** । **नेदयतीति** । अन्तिकशब्दस्य णौ नेदादेशः, 'अन्तिकबाढयोर्नेदसाधा'वित्युक्तेः । **साधयतीति** । बाढशब्दस्य णौ साधादेशः । **इहेति** । प्रशस्ययतीत्यत्र 'प्रशस्यस्य श्रः' 'ज्य चे'ति श्रज्यौ नेत्यर्थः । कुत इत्यत आह-**उपसर्गस्येति** । तत्पृथक्करणे सति विशिष्टस्य स्थानिनोऽभावान्नादेशाविति भावः । **वृद्धं-ज्यापयतीति** । 'वृद्धस्य चे'ति वृद्धशब्दस्य ज्यादेशे वृद्धौ पुगिति भावः । 'प्रियस्थिरे'ति सूत्रक्रमेणोदाहरति-**प्रियं-प्रापयतीति** । प्रियशब्दस्य प्रादेशे वृद्धिः पुक् । **स्थापयतीति** । स्थिरशब्दस्य स्थादेशे वृद्धिपुकौ । **वरयति वारयतीति** । उरुशब्दस्य वर् । संज्ञापूर्वकविधेरनित्यत्वादुपधावृद्धिविकल्प इति माधवः । **बंहयतीति** । बहुलस्य बंहादेशः । **गरयतीति**। गुरोर्गर्। **वृद्धं वर्षयतीति** । वृद्धस्य वर्षादेशः 'वृद्धस्य चे'ति ज्यादेशेन विकल्प्यते । **त्रपयतीति** । तृप्रस्य त्रप् आदेशः । अदुपधः । संज्ञापूर्वकत्वान्न वृद्धिः । गरयतीत्यादिवत् । 'त्रापयती'ति क्वचित्पाठः । **द्राघयतीति** । दीर्घस्य द्राघादेशः । **वृन्दयतीति** । वृन्दारकस्य वृन्दादेशः । **इति नामधातुप्रक्रिया** ।

अथ कण्ड्वादिप्रक्रिया निरूप्यन्ते । **कण्ड्वादिभ्यो यक्** । **धातुभ्य इति** । 'धातोरेकाचः' इत्यतस्तदनुवृत्तेरिति भावः । **नित्यमिति** । वाग्रहणं तु निवृत्तमिति भावः। अन्यथा कण्डवतीत्याद्यपि स्यादिति भावः। **द्विधा हीति**।

---

शे.]नंघटिताऽनित्यत्वेन 'नाग्लोपी'ति निषेधाऽभावे ह्रस्वत्वमिति भावः।एतच्च माधवानुरोधेन।सत्यभिधाने 'अभिप्राय'दित्युचितमित्यन्ये । **यवयतीति** । 'स्थूलदूरे'ति यणादिलोपगुणौ । अङ्गवृत्तपरिभाषयाऽनन्तत्वाऽभावेन वा संप्रसारणं न । 'ज्यापयति' 'नेदयति' 'साधयती'ति माधवानुरोधेन, पाश्चमिकयोर्विन्मतोर्लुङ्कनोरेव भाष्यकृता इष्ठवद्भावेनाङ्गीकारादित्युक्तम् । **कनयतीति** । अत्रोपधावृद्धिर्न, 'सजयती'तिवत् । **उपसर्गस्येति** । तत्पृथक्करणेन विशिष्टस्य प्रातिपदिकत्वाऽभावात्तत्राऽतिदेशाऽप्रवृत्तिरिति भावः । **इति नामधातुप्रक्रिया** ।

**एभ्यो धातुभ्य इति** । धातोरित्यनुवृत्तिसामर्थ्याद्धातुपाठेनैषां धातुत्वमिति भावः । कण्ड्वादिराकृतिगण

१९४७ वल्गु पूजामाधुर्ययोः । वल्गूयति । १९४८ असु उपतापे । अंसु असूञ् इत्येके । अस्यति । असूयति । असूयते । १९४९ लेट् १९५० लोट् धौर्त्ये पूर्वभावे स्वप्ने च । दीप्ताविल्येके । लेट्यति । लेटिता । लोट्यति । लोटिता । १९५१ लेला दीप्तौ । १९५२ इरस् १९५३ इरज् १९५४ इरञ् ईर्ष्यायाम् । इरस्यति। इरज्यति । 'हलि चे'ति दीर्घः। ईर्यति । ईर्यते। १९५५ उषस् प्रभातीभावे । १९५६ वेद धौर्त्ये स्वप्ने च । १९५७ मेधा आशुग्रहणे । मेधायति । १९५८ कुषुभ क्षेपे । कुषुभ्यति । १९५९ मगध परिवेष्टने । नीचदास्य इत्यन्ये । १९६० तन्तस् १९६१ पम्पस् दुःखे । १९६२ सुख १९६३ दुःख तत्क्रियायाम् । सुख्यति । दुःख्यति । सुखं दुःखं चानुभवतीत्यर्थः । १९६४ सपर पूजायाम् । १९६५ अरर आराकर्मणि । ११६६ भिषज् चिकित्सायाम् । १९६७ भिष्णज् उपसेवायाम् । १९६८ इषुध शरधारणे । १९६९ चरण १९७० वरण गतौ । १९७१ चुरण चौर्ये । १९७२ तुरण त्वरायाम् । १९७३ भुरण धारणपोषणयोः । १९७४ गद्गद वाक्स्खलने । १९७५ एला १९७६ केला १९७७ खेला विलासे । १९७८ इलेत्यन्ये । १९७९ लेखा स्खलने च ।[लेखायेति]।अदन्तोऽयमित्यन्ये।लेख्यति।१९८० लिट्[3] अल्पकुत्सनयोः।लिट्यति।१९८१ लाट्[4] जीवने । १९८२ हृणीङ् रोषणे लज्जायां च । १९८३ महीङ् पूजायाम् । महीयते। पूजां लभत इत्यर्थः। १९८४ रेखा श्लाघाऽऽसादनयोः।१९८५ द्रवस् परितापपरिचरणयोः। १९८६ तिरस् अन्तर्धौ । १९८७ अगद नीरोगत्वे । १९८८ उरस् बलार्थः । उरस्यति । बलवान् भवतीत्यर्थः । १२८९ तरण गतौ । १९९० पयस् प्रसृतौ । १९९१ संभूयस् प्रभूतभावे । १२९२ अंबर १९९३ संवर संवरणे । आकृतिगणोऽयम् ।

इति कण्ड्वादयः ।

---

त.]मयुक्तमिति भावः। **द्विधा हीति**। यकः कित्त्वेन धातव इति ज्ञायते । कण्डूञिति दीर्घपाठेन प्रातिपदिकान्यपीति । यदि तु धातव एव स्युस्तर्हि ह्रस्वान्ते पठितेऽपि यकि परे 'अकृत्सार्वे'ति दीर्घेण कण्डूयतीत्यादिसिद्धेः किं तेन दीर्घपाठेन ?। द्वैविध्ये तु धातुभ्यो यकि गुणनिषेधेन कित्त्वं सार्थकम्।'कण्डू'रित्यादियग्रहितरूपसिद्ध्या दीर्घपाठोऽपि सार्थकः। अत एवोक्तं भाष्ये–**'धातुप्रकरणाद्धातुः कस्य चाऽसञ्जनादपि । आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः'** । इति । एतेन कण्डूं करोति कण्डूयतीति प्राचोक्तविग्रहोऽपि परास्तः । कण्ड्वादयः प्रातिपदिकान्येवेत्यनभ्युपगमात्।न च द्वैविध्याभ्युपगमेऽपि प्रातिपदिकादेव यक् स्यादिति वाच्यं,तथाहि सति धातोर्लङादौ कण्डवतीत्याद्यनिष्टप्रसङ्गात् । सुखदुःखादिप्रातिपदिकेभ्यो यकि अल्लोपाऽसंभवेन सुख्यतीत्याद्यसिद्धिप्रसङ्गाच्च। यत्तु कैश्चित् 'शब्दवैरकलहे'ति सूत्रात्करणे इत्यनुवर्तनात्कृञर्थे यगिति प्राचोक्तव्याख्यायां न किंचिद्बाधकमित्युक्तं, तच्चिन्त्यम्, अनुवृत्तौ मानाऽभावात् । अन्यथा णिजन्तेष्विव प्रकृतिप्रत्ययाभ्यां व्यापारद्वयापत्तेरिति दिक् । **पूर्वभाव इति** । पूर्वत्वमित्यर्थः । **लेटितेति** । 'यस्य हलः' इति यलोपः । **सुख्यतीति** । चुरादौ तु 'सुख दुःख तत्क्रियायां । सुखयती'त्याद्युदाहृतम् । **सपर** । यगन्तात् 'अ प्रत्ययात्' 'गुरोश्च हलः' इत्यनेन वा अप्रत्यये टाप् । सपर्या । **अरर** । आरा=प्रतोदः । तत्करणकं कर्म आराकर्म । **अदन्तोऽयमिति** । लेख्यति । आदन्तपक्षे तु लेखायति । **महीङ्** । 'प्रेत्य स्वर्गे महीयते' इति रामायणम् । **प्रसृताविति** । प्रसृतिः–परिमाणविशेषः । **प्रभूतभावे इति** । बाहुल्य इत्यर्थः । 'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु' इत्यमरः। संभूयस्यति । असंभूयसीत् । नेह संशब्दस्य पृथक्कृतिः,यत्र प्रातिपदिकाद्धातुसंज्ञाप्रयोजकप्रत्ययस्य विधानं तत्रैव पृथक्कृतिरित्याहुः। **आकृतिगण इति** । तेन दुवस् सन्दीपने इत्यादि सिद्धम् । प्रयुज्यते च 'समिधाऽग्निं दुवस्यते'त्यादि । **इति कण्ड्वादिप्रक्रिया** ।

---

बा.]एतच्च भाष्ये स्पष्टम् । तेन कण्डूरित्याद्यविगृहीतरूपसिद्धिः । **लेटितेति** । 'यस्य हलः' इति यलोपः । **मेधा आशुग्रहणे इति** । आशुग्रहणं त्वरया बोधः । 'सुग्रहणे' इति पाठान्तरम् । **सुख्यतीति** । यकि अतो लोपः । प्रातिपदिकेभ्यो यकि तु आर्द्धधातुकत्वाऽभावादल्लोपो न स्यादिति बोध्यम् । चौरादिकयोस्तु सुखयति दुःखयतीत्युक्तम् । **अरर आराकर्मणीति** । आरा=प्रतोदः, तत्करणकं कर्म–आराकर्म । **भिषज् चिकित्सायाम्** । जान्तोऽयम् । भिषज्यति । **लेखा स्खलने चेति** । लेखायति । **लेख्यतीति** । अदन्तात्यकि अतो लोपः । **आकृतिगणोऽयमिति** । कण्ड्वादिरित्यर्थः । तेन दुवस् संदीपने इत्यादिसङ्ग्रहः । 'समिधाऽग्निं दुवस्यते' ।

इति कण्ड्वादयः ।

---

शे.] इति **गणरत्नमहोदधौ** । तेन 'रैयति' 'धवल्यति' इत्यादिसुब्धातवृत्तौ स्पष्टम् । **इति कण्ड्वादयः** ।

## अथ तिङन्ते प्रत्ययमाला ।

कण्डूयतेः सन् । 'सन्यङो'रिति प्रथमस्यैकाचो द्वित्वे प्राप्ते- । *कण्ड्वादेस्तृतीयस्येति वाच्यम् । कण्डूयियिषति । क्यजन्तात्सन् । *यथेष्टं नामधातुषु । आद्यानां त्रयाणामन्यतमस्य द्वित्वमित्यर्थः । अजादेस्त्वाद्येतरस्य । पुपुत्रीयिषति । पुतित्रीयिषति । पुत्रीयियिषति । अशिश्वीयिषति । अश्वीयियिषति । नदराणां संयुक्तानामचः परस्यैव द्वित्वनिषेधः । इन्द्रीयतेः सन् । द्रीशब्दयिशब्दयोरन्यतरस्य द्वित्वम् । इन्दिद्रीयिषति । इन्द्रीयियिषति । चिचन्द्रीयिषति । चन्दिद्रीयिषति । चन्द्रीयियिषति । प्रियमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छति-पिप्रापयिषति । प्रापिपयिषति । प्रापयियिषति । उरुं-विवारयिषति । वारिरयिषति । वारयियिषति । बाढं-सिसाधयिषतीत्यादि-

त.] प्रथमस्येति । अजादेस्तु द्वितीयस्य द्वित्वे प्राप्ते इत्यपि ज्ञेयम् । प्राचा तु 'यथेष्टं नामाधातुषु' इति प्राप्ते 'कण्ड्वादेस्तृतीयस्येत्युक्त'मित्यवतारितं, तदयुक्तम्, नामधातुत्वस्य निराकृतत्वात् । अत एव मूले नामधातून् समाप्य कण्ड्वादयः पृथगेवोक्ताः । द्रीशब्दयिशब्दयोरिति । नकारस्य त्वचः परत्वाद्द्वित्वं नेति भावः । पिप्रापयिषतीति । णाविष्ठवद्भावेन प्रियशब्दस्य 'प्रियस्थिरे' त्यादिना प्रादेशः । ततो द्वित्वादि । सिसाधयिषतीति । इष्टवद्भावादिह 'अन्तिक-

बा.] अथ प्रत्ययमालां वक्ष्यन्नाह-कण्डूयतेः सन्निति । 'धातोः कर्मणः' इत्यनेनेति भावः । प्रथमस्यैकाच इति । 'अजादेर्द्वितीयस्ये'ति द्वितीयैकाचो द्वित्वे प्राप्ते इत्यपि ज्ञेयम् । कण्ड्वादेस्तृतीयस्येति । 'एकाचो द्वित्व'मिति शेषः । 'कण्ड्वादे'रित्यनन्तरं 'यगन्तस्ये'ति शेषः, केवलकण्ड्वादिषु तृतीयैकाचोऽभावात् । कण्डूयियिषतीति । कण्डूयेति यगन्तात्सनि इटि अतो लोपः । इस् इति तृतीयस्यैकाचो द्वित्वम् । असु उपतापे । कण्ड्वादिः । असूयियिषति । अजादेस्तृतीयस्य एकाचो द्वित्वम् । क्यजन्तात्सन्निति । 'उदाह्रियते' इति शेषः । यथेष्टं नामधातुषु-इत्यपि वार्तिकम् । नाम=प्रातिपदिकं, तद्घटितधातुष्वित्यर्थः । अजादेस्त्वाद्येतरस्येति । अजादेरित्यनुवृत्त्या आदिभूतादचः परेषामेकाचां यथेष्टमित्यर्थलाभादिति भावः । नदराणामिति । तेषां मध्ये आदिभूतादचः परस्यैवेत्यर्थः । इन्द्रीयतेः सन्निति । इन्द्रशब्दात् क्यजन्तात्सन्नित्यर्थः । द्रीशब्दयिशब्दयोरिति । नकारस्य आदिभूतादचः परत्वान्न द्वित्वम् । दकारस्य तु आदिभूतादचः परत्वाऽभावान्न द्वित्वनिषेध इति भावः । चिचन्द्रीयिषतीति । चन्द्रीयतेः सनि प्रथमस्यैकाचो द्वित्वम् । चन्दिद्रीयिषतीति । द्वितीयस्यैकाचो द्वित्वम् । 'न न्द्राः' इति नकारस्य न द्वित्वमिति माधवः । आदिभूतादचः परेषां नदराणां न द्वित्वमित्येव भाष्यसंमतम् । अत्र नकारस्यापि द्वित्वमित्येव युक्तम् । चन्द्रीयियिषतीति । तृतीयस्यैकाचो द्वित्वम् । प्रियमिति । प्रियमाख्यातुमिच्छतीत्यर्थे 'तत्करोति तदाचष्टे' इति ण्यन्तात्सनि इटि णाविष्ठवत्त्वात्प्रियशब्दस्य 'प्रियस्थिरे'ति प्रादेशे वृद्धौ पुकि णिचो गुणाऽयादेशयोः षत्वे प्रापयिषेत्येव सन्नन्तम् । प्रियमाचक्षाणं प्रेरयितुमिच्छतीत्यर्थे तु प्रापि इति ण्यन्तादुक्ताद्धेतुमण्णौ तदन्तात्सनि इटि द्वितीयं णिचमाश्रित्य प्रथमणिचो लोपे द्वितीयणिचो गुणाऽयादेशयोः प्रापयिषेत्येव सन्नन्तम् । तत्र यथेष्टं नामधातुष्वित्याद्यानां त्रयाणामेकाचामेकैकस्य द्वित्वे 'पिप्रापयिषती'त्यादिरूपत्रयमित्यर्थः । उरुमिति । उरुमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छतीत्यर्थे उरुशब्दाचष्टे इत्यर्थे णिचि 'प्रियस्थिरे'ति वरादेशे उपधावृद्धौ वारि इति ण्यन्तात्सनि इटि णिचो गुणाऽयादेशयोः षत्वे वारयिषेति सन्नन्तम् । माधवमते वृद्ध्यौकाराद्वारीत्यस्माद्धेतुमण्ण्यन्तात् सनि इटि प्रथमणेर्लोपे षत्वे वारयिषेत्येव रूपम् । तत्र यथेष्टं नाम-

शे.] प्रथमैकाच इति । 'अजादेर्द्वितीयस्ये'त्यस्याप्युपलक्षणमेतत् । तृतीयस्येति । एकाच इत्यर्थः । एकाच इत्यनुवृत्तेः । कण्ड्वादेरित्यस्य तद्घटितयगन्तस्येत्यर्थः । भाष्ये 'कण्डूयियिषती'ति यिशब्दस्य द्वित्वकरणात् ।

नामधातुष्विति । नामघटितधातुष्वित्यर्थः, नामशब्देन सुबन्तम् । तेषु विद्यमानानान्त्रयाणामेकाचां यथेष्टमित्यर्थः । अत एव 'पुपुत्रीयिषती'त्याद्युदाहृतं भाष्ये । अतोऽपि ण्यन्ताच्चङि नाऽस्य प्रवृत्तिः । त्रयाणामिति । एकाचो द्वेऽजादेःकण्ड्वादेरित्यत्र पूर्वं त्रयाणामेवोपस्थितेः पूर्वत्र बाध्यबाधकभावस्य निर्णयात्त्रयाणां न युगपद्द्वित्वम् । तत्राऽजादेर्द्वितीयतृतीययोः पर्यायेणाऽन्येषां तु त्रयाणां पर्यायेण द्वित्वमिति बोध्यम् । एषां वचनानां 'न न्द्राः' इति सूत्रे पाठेन तद्वदेवाऽधिकारत्वादविशेषेण प्रवृत्तेश्चाऽभिधानं प्रवृत्तिरित्याहुः । नदराणामिति । तेषां मध्ये आदिभूतादचः परस्यैवेत्यर्थः । द्रीशब्दयिशब्दयोरिति । न च 'द्विर्वचनेऽची'त्यल्लोपनिषेधाद्यशब्दस्य द्वित्वप्राप्त्या 'यिशब्दे'त्यसङ्गतम् । 'नटभार्यावद्ध्यजनानी'ति न्यायेनेकारसकारसहितस्य द्वित्वप्राप्त्या कार्यानुभवेन 'न हि कार्यी'ति निषेधेन 'द्विर्वचनेऽची'त्यस्याऽप्रवृत्तेः । न च 'यिस्' शब्दो न नामधात्ववयवः, नामधातुघटकवर्णसंबद्धैकाचामित्यर्थेनाऽदोषात् । अत एव 'पुत्रीयियिषती'ति भाष्ये उदाहृतम् । यिशब्दद्वित्वेऽपि सनवयवेकारस्य द्वित्वानुभवेन द्वित्वनिमित्तत्वाऽयोगोऽस्त्येवेत्यनास्थया मूले 'यिशब्दे'त्येवोक्तम् । चन्दिद्रीयिषतीति । इदं माधवानुरोधेन । 'आदिभूतादचः परस्ये'ति भाष्यसंमतेऽर्थे तु

रूपत्रयम् । षत्वं तु नास्ति, 'आदेशो यः सकार' इत्युक्तेः । यङ्, सन्, ण्यन्तात्सन् । बोभूयिषयिषति । यङ्, णिच्, सन्नन्ताण्णिच् । बोभूययिषयतीत्यादि । इति प्रत्ययमाला ।

## अथ तिङन्ते आत्मनेपदप्रक्रिया ।

**'अनुदात्तङित आत्मनेपदम्'** । आस्ते । शेते । **भावकर्मणोः** ।१।३।१३। बभूवे । अनुबभूवे । **कर्तरि कर्मव्यतिहारे** ।१।३।१४। क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदं स्यात् । व्यतिलुनीते । अन्यस्य योग्यं लवनमन्यः करोतीत्यर्थः । **'श्नसोरल्लोपः'** । व्यतिस्ते । व्यतिषाते । व्यतिषते । **तासस्त्योर्लोपः** । व्यतिसे। **'धि च'**।व्यतिध्वे। **'ह एति'**। व्यतिहे । व्यत्यसै । व्यत्यास्त । व्यतिषीत । व्यतिराते ३। व्यतिभाते ३।

---

त.] बाढयो'रिति साधादेशः। सैदिधयिषति। सैाधयिषति। **षत्वं तु नास्तीति**।आदेशावयवत्वादिति भावः। **बोभूयिषयिषतीति**।इह यङ्निमित्तद्वित्वे कृतेऽपि सन्निमित्तद्वित्ववारणाय 'लिटि धातो'रिति सूत्रे 'अनभ्यासस्ये'त्येतदवश्यं वक्तव्यम्। एवं च 'लक्ष्ये लक्षणं सकृदेव प्रवर्तते' इति अनभ्यासग्रहणं तत्र माऽस्त्विति भाष्यस्थं प्रत्याख्यानं प्रौढिवादमात्रमिति भावः।

इति प्रत्ययमाला ।

**भावकर्मणोः**।भावे कर्मणि च यो लकारस्तस्याऽऽत्मनेपदमित्यर्थः।**कर्तरि कर्म**।**अन्यस्येति**।शूद्रस्य योग्यं सस्यादिलवनं ब्राह्मणः करोतीत्यर्थः। परस्परकरणमपि कर्मव्यतिहारः। संप्रहरन्ते राजानः। पृथक्सूत्रारम्भादेव सिद्धे कर्तृग्रहणमुत्तरार्थम्।**व्यतिस्ते इति**।यच्परत्वाऽभावान्न षः।**व्यतिसे इति**। 'उपसर्गप्रादुर्भ्या'मिति नेह षत्वम्, सकारस्याऽस्त्यवयवत्वा-

---

बा.] धातुष्वित्येकैकस्य एकाचो द्वित्वे विवारयिषतीत्यादिरूपत्रयमित्यर्थः।**वाढंसिसाधयिषतीति**।बाढमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छतीत्यर्थे णिजादि पूर्ववत्।'अन्तिकबाढयो'रिति साधादेशः। तत्र सकारस्यादेशत्वाऽभावान्न षत्वम् । तदाह—**षत्वं तु नास्तीति**। बोभूयिषयिषतीत्यत्र प्रक्रियां दर्शयति—**यङिति**। 'भूधातो'रिति शेषः। द्वित्वे बोभूयेति स्थितम्। **सन्निति** । इटि अतो लोपे षत्वे बोभूयिषेति स्थितम् । **ण्यन्तात्सन्निति** । बोभूयिषेत्यस्माद्धेतुमण्णिचि अतो लोपे बोभूयिषि इति स्थितम् । तस्मात् सनि इटि णिचो गुणाऽयादेशयोः षत्वे बोभूयिषयिषेति स्थितम् । ततो लटस्तिपि शपि पररूपे बोभूयिषयिषतीति रूपम् । 'अनभ्यासस्ये'त्युक्तेर्न पुनर्द्वित्वम् । अथ बोभूययिषयतीत्यत्र प्रक्रियां दर्शयति—**यङिति** । 'भूधातो'रिति शेषः । द्वित्वे बोभूयेति स्थितम् । **णिजिति** । बोभूयेत्यस्माद्धेतुमण्णौ अतो लोपे बोभूयि इति स्थितम् । **सन्नन्ताण्णिजिति** । बोभूयि इत्यस्मात्सनि इटि णिचो गुणाऽयादेशयोः षत्वे बोभूययिषेति स्थितम् । तस्माद्धेतुमण्णिचि अतो लोपे बोभूययिषि इत्यस्माल्लटस्तिपि शपि गुणाऽयादेशयोर्बोभूययिषयतीति रूपं सिद्धम् ।

प्रत्ययमाला समाप्ता ।

अथ आत्मनेपदप्रक्रिया निरूप्यते । आत्मनेपदपरस्मैपदव्यवस्थापकानि सूत्राणि प्रथमस्य तृतीयपादे पठितानि । तानि क्रमेण व्याख्यास्यन् व्याख्यातमपि सूत्रं पुनः स्मारयति—**अनुदात्तङित इति** । 'आत्मनेपद'मित्येतत् 'शेषात्कर्तरि परस्मैपद'मित्यतः प्रागनुवर्तते । **भावकर्मणोः** । भावः भावना क्रियेति पर्यायाः । कर्मशब्दः कर्मकारके वर्तते । भावे कर्मणि च यो लकारस्तस्यात्मनेपदमित्यर्थः । भावे उदाहरति—**बभूवे इति**। वृत्ता भवनक्रियेत्यर्थः। कर्मण्युदाहरति—**अनुबभूवे इति** । 'आनन्द' इति शेषः । आनन्दकर्मिका वृत्ता अनुभवक्रियेत्यर्थः । **कर्तरि कर्म** । कर्मव्यतिहारशब्दं विवृण्वन्नाह—**क्रियाविनिमये द्योत्ये इति** । एवं च कर्मशब्दः क्रियापरः, व्यतिहारशब्दो विनिमयपर इत्युक्तं भवति । **अन्यस्येति** । शूद्रादियोग्यं सस्यादिलवनं ब्राह्मणः करोतीत्यर्थः । परस्परकरणमपि कर्मव्यतिहार इति कैयटः । संप्रहरन्ते राजानः । कर्तृग्रहणं भावकर्मणोरित्यस्याऽनुवृत्तिनिवृत्त्यर्थम् । अन्यथा व्यतिलुनीत इत्यत्र न स्यात् । वस्तुतस्तु पृथक् सूत्रारम्भादेव सिद्धे कर्तृग्रहणमुत्तरार्थमिति भाष्ये स्पष्टम् । व्यति अस् ते इति स्थिते आह—**श्नसोरिति** । **व्यतिस्ते इति** । तपसे अयोग्यः शूद्रस्तपस्वी भवतीत्यर्थः । इह 'उपसर्गप्रादुर्भ्या'मिति न षः, यच्परकत्वाऽभावादिति भावः । **व्यतिषाते इति** । इह अच्परकत्वादुपसर्गप्रादुर्भ्यामिति षः । व्यति स् से इति स्थिते आह—**तासस्त्योरिति** । 'उपसर्गप्रादुर्भ्या'मिति नेह षत्वम्, अस्त्यवयवस्य सकारस्य लुप्तत्वात् । व्यतिषाथे। व्यति स् ध्वे इति स्थिते आह—**धि चेति**। 'सलोप' इति शेषः। व्यतिस् ए इति स्थिते आह—**ह एतीति**। सकारस्य हकार इति भावः । **व्यत्यसै इति** । लोडुत्तमपुरुषैकवचनम् । **व्यत्यास्तेति** । लङि रूपम् । **व्यतिषीतेति** । लिङि रूपम् । **व्यतिराते इति** । लटि प्रथमपुरुषैकद्विबहुवचनेषु समानमेव रूपम् । **व्यतिभाते इति**।

---

शे.] चिन्त्यमिदम् । **विवारयिषतीति** । माधवेन वृध्द्यङ्गीकारात्तन्मते इदम् । **इति प्रत्ययमाला** ।

**कर्तरि क** । कर्मेह क्रिया । 'कर्मव्यतिहारे वर्तमानाद्धातो'रित्यर्थेन धातोः क्रियायां वृत्तेरनुरूपत्वेन

व्यतिबभे। **न गतिहिंसार्थेभ्यः**।१।३।१५। व्यतिगच्छन्ति। व्यतिघ्नन्ति । * **प्रतिषेधे हसादीनामुपसङ्ख्यानम्**। हसादयो हसप्रकाराः शब्दक्रियाः। व्यतिहसन्ति। व्यतिजल्पन्ति। ***हरतेरप्रतिषेधः**। संप्रहरन्ते राजानः। **इतरेतरान्योन्योपपदाच्च** ।१।३।१६। * **परस्परोपपदाच्चेति वक्तव्यम्** । इतरेतरस्यान्योन्यस्य परस्परस्य वा व्यतिलुनन्ति । **नेर्विशः** ।१।३।१७। निविशते । **परिव्यवेभ्यः क्रियः**।१।३।१८। अकर्त्रभिप्रायार्थमिदम् ।

---

त.]ऽभावात् ।'आदेशप्रत्यययो'रिति षत्वं तु 'सात्पदाद्यो'रिति निषिद्धम्,एकदेशविकृतन्यायेन प्रत्ययमात्रस्य पदत्वात्।**न गतिहिंसार्थेभ्यः** । अर्थशब्दः प्रत्येकमभिसंबध्यते । कर्मव्यतिहारे यदात्मनेपदं तस्य निषेधः । अर्थग्रहणसामर्थ्याद्ये शब्दान्तरमनपेक्ष्य गतिहिंसयोर्वर्तन्ते त एवेह गृह्यन्ते । हरतिस्तूपसर्गवशाद्धिंसायां प्रवर्तते इति 'हरतेरप्रतिषेधः' इति वार्तिकमर्थग्रहणलभ्यमेवेत्याहुः । **इतरेतरा** । नन्वितरेतरादिशब्दैरेव कर्मव्यतिहारस्य द्योतितत्वात्तद्द्योतकमात्मनेपदं न प्राप्नोतीति किमर्थो निषेधः ? । अत्राहुः—लौकिके व्यवहारे लाघवाऽनादरादात्मनेपदं प्रसज्येतेति निषेधोऽयमारभ्यते । अतएव व्यतिलुनीते इत्यादौ कर्मव्यतिहारद्योतनाय 'व्यती'त्युपसर्गोवात्मनेपदं च समुच्चित्य प्रयुज्यत इति। **नेर्विशः**।नेः

---

बा.]भाधातो रूपम् । **व्यतिबभे इति** । लिटि रूपम् । **न गतिहिंसार्थेभ्यः** । कर्मव्यतिहारे आत्मनेपदं नेत्यर्थः। हसादिगणस्य अदर्शनादाह–**हसप्रकारा इति** । उपसर्गमनपेक्ष्य ये गतिहिंसयोर्वर्तन्ते तेषामेव ग्रहणलाभाय अर्थग्रहणम् । हृन्धातुस्तु उपसर्गबलाद्धिंसायां वर्तते इति न तस्य प्रतिषेध इत्याह–**हरतेरप्रतिषेध इति** । अर्थग्रहणलभ्यमिदं वार्तिकम् । **इतरेतर** । 'नात्मनेपद'मिति शेषः । **नेर्विशः** । निपूर्वाद्विश आत्मनेपदं स्यादित्यर्थः । नेति

---

शे.]तस्या एव ग्रह इति प्रकृतसूत्रे,सङ्ख्यासञ्ज्ञासूत्रे च कैयटे स्पष्टम्।'कर्मव्यतिहारविषये' इत्यर्थसम्भवेऽपि न कृत्रिमकर्मग्रहणम्, उक्तार्थस्यौचित्यात् । तेन देवदत्तस्वामिकं धान्यं स्वद्रव्यं दत्वा लवनेन स्वीकरोतीत्याद्यर्थके 'देवदत्तस्य धान्यं व्यतिलुनाती'त्यादौ न । यद्यपि साध्यस्वभावक्रियाणां परिवर्त्तनरूपो व्यतिहारो न सम्भवति, '**प्रणिदानं**=व्यतिहार इत्येकोऽर्थः' इति घुसञ्ज्ञासूत्रकैयटात्,'उदीचां माङो व्यतीहारे' इति सूत्रोदाहरणस्य 'अपमित्य याचते' इत्यस्य 'याचित्वा वस्त्राणि परिवर्तयतीत्यर्थः' इति कैयटाच्च । स्ववस्तुदानपूर्वकपरवस्त्वङ्गीकारो हि परिवर्त्तनम् । अत एव 'कर्मव्यतिहारे द्वे वाच्ये' इति वार्तिके 'कर्मव्यतिहारः=क्रियाविनिमयः' इति व्याख्यातमभियुक्तैः । एतेन 'अन्यक्रियाया अन्येन करणं–व्यतिहारः' इत्यपास्तम् । अत एव 'अन्यक्रियामन्यः करोति, इतरक्रियामितरः' इति कर्मव्यतिहारं जयमङ्गलाकारः प्राऽदर्शयत् । तथाऽपि 'तत्तत्साध्यत्वेन ज्ञातक्रियाणां साध्यसाधनभावव्यत्यासः सः, परस्परकरणञ्च सः । यथा 'संप्रहरन्ते राजानः' इति'–इति कैयटः । 'तत्र वर्त्तमानाद्धातोः कर्तरी'त्यर्थे विनिगमनाविरहात्कर्तृमात्रे प्रत्ययौचित्येन द्विवचनबहुवचनान्तान्येवाऽस्योदाहरणानि न त्वेकवचनान्तानि । अत एव भाष्ये क्वाप्येकवचनान्तानि नोदाहृतानि । एवञ्च 'व्यतिलुनते' इत्यस्याऽन्योन्यव्यत्यासेन लुनन्तीत्यर्थः । एतेन–'देवदत्तेन सह चैत्रो व्यतिलुनीते' इत्येकवचनान्तप्रयोगसम्भवः । अत एव 'दाणश्चे'ति सूत्रे 'कथञ्चतुर्थ्यर्थे तृतीया स्यात् ? । एवन्तर्हि अशिष्टव्यवहारे तृतीया च विधीयते, आत्मनेपदञ्चे'ति सिद्धान्तिनोक्ते,'इतर आह–यद्येवं नार्थोऽनेन,'सहयुक्ते तृतीया स्याद्व्यतिहारे तङो विधिः'–दास्या संप्रयच्छते' इति भाष्ये उक्तम् । 'दास्यै विश्राण्य तया सहोपभुङ्क्ते' इत्यर्थ इति कैयटेन चोक्त'मिति परास्तम् । तस्य भाष्यस्य पूर्वपक्ष्युक्तित्वेनाऽर्थाऽसाधकत्वात् । तथा हि–तस्यै विश्राण्य तामुपभुङ्क्ते इत्यर्थेऽकर्मव्यतिहारेऽप्यशिष्टत्वप्रतीतेः,तया सहोपभुङ्क्ते इत्येतन्मात्रेण व्यतिहारप्रतीतेश्च सूत्रस्यावश्यकत्वात् । किं च 'उपपदविभक्ते'रिति न्यायेन विश्राणननिरूपितचतुर्थ्या एव युक्तत्वम् । किं च धातोर्व्यतीहारे वृत्तावपि उक्तरीत्या कर्तृद्वयस्यापि तिङोक्तत्वात्तेनैव न्यायेन प्रथमोचिता, न सहयोगतृतीया, अत एव क्रियायोगे 'पुत्रेण सहागतः' इत्यादौ कर्तरि तृतीयायां सिद्धायाम् अक्रियायोगार्थं 'तेन सहे'ति सूत्रमिति तत्सूत्रे भाष्ये उक्तम् । भाष्यकृता त्वतिफल्गुत्वान्न तद्दूषणाभिनिवेशः कृतः । एतेन भट्टिकाव्ये विश्वामित्राश्रमे मारीचं प्रति 'किमर्थं ब्रह्मवधादि करोषि ?' इति रामेण पृष्टे, 'ममायं धर्मः' इति तेनोत्तरिते, 'धर्मोऽस्ति सत्यं तव राक्षसायमन्यो व्यतिस्ते तु ममापि धर्मः । ब्रह्मद्विषस्ते प्रणिहन्मि येन राजन्यबन्धुर्धृतकार्मुकेषु:' इति रामवाक्ये, तव धर्मेण देवब्राह्मणद्वेषरूपेण ममाऽन्यो धर्मस्तपोरूपो व्यत्यासेन भवति, येन धर्मेण युक्तोऽहं येन धर्मेण युक्तान् त्वत्सम्बन्धिनो ब्रह्मद्विषः प्रणिहन्मीत्यर्थके, अद्यारभ्य त्वद्धर्मः क्रौर्यं मयि भवति, मद्धर्मोऽक्रौर्यं च त्वयि। वर्त्तमानसामीप्ये लट् । रामबाणपातेन समुद्रसमीपे पतितो मारीचस्तपश्चरिष्यतीत्येतत्तात्पर्यके–'व्यतिस्ते' इति प्रयोगोऽपि परास्तः । यतो धातोरात्मनेपदं प्रत्यासत्त्या तदर्थक्रियायां तत्कर्त्रोर्व्यत्यासे एवात्मनेपदौचित्याच्च । 'तासस्त्यो'रिति सूत्रवृत्त्युदाहृतं 'व्यतिसे' इति तु छान्दसम् । तत्र हि व्यत्ययेन द्विवचनादिस्थाने एकवचनं। 'रि चे'ति सूत्रे 'व्यतिरे' इतिवत्। 'इरयो रे' इत्यस्य छान्दसत्वात्तच्छान्दसमेव।'ह एति'इति सूत्रे'व्यतिहे'इत्यपि तथैव।लोके त्वेकवचनान्तमसाध्वेवेति दिक्। **नेर्विशः**।

परिक्रीणीते । विक्रीणीते । अवक्रीणीते। **विपराभ्यां जेः**।१।३।१९। विजयते । पराजयते । **आङो दोऽनास्यविहरणे** ।१।३।२०।आङ्पूर्वाद्ददातेर्मुखविकसनादन्यत्रार्थे वर्तमानादात्मनेपदं स्यात् । विद्यामादत्ते। अनास्येति किम् ? । मुखं व्याददाति । आस्यग्रहणमविवक्षितम् । विपादिकां व्याददाति। पादस्फोटो विपादिका । नदी कूलं व्याददाति । *** पराङ्गकर्मकान्न निषेधः** । व्याददते पिपीलिकाः पतङ्गस्य मुखम् । **क्रीडोऽनुसंपरिभ्यश्च** ।१।३।२१। चादाङः। अनुक्रीडते । संक्रीडते । परिक्रीडते । आक्रीडते । ***अनोः कर्मप्रवचनीयान्न**। उपसर्गेण समा साहचर्यात् । माणवकमनु क्रीडति।.तेन सहेत्यर्थः। 'तृतीयार्थे' इत्यनोः कर्मप्रवचनीयत्वम् । ***समोऽकूजने** । संक्रीडते । कूजने तु संक्रीडति चक्रम् । *** आगमेः क्षमायाम्** । ण्यन्तस्येदं ग्रहणम् । आगमयस्व तावत् । मा त्वरिष्ठा इत्यर्थः । ***शिक्षेर्जिज्ञासायाम्**। धनुषि शिक्षते। धनुर्विषये ज्ञाने शक्तो भवितुमिच्छती-

त.]किम्?। प्रविशति। अर्थवद्ग्रहणलक्षणप्रतिपदोक्तपरिभाषाभ्यां नेरुपसर्गस्य ग्रहणम्।तेनेह न–'मधूनि विशन्ति भ्रमराः'। 'इत्युक्ता मैथिली भर्तुरङ्के निविशती भया' दित्यत्र तु 'अङ्गानि विशती'ति पाठ्यम् । न च पदसंस्कारपक्षे त्वङ्के नि विशतीति पाठेऽप्यदोष इति वाच्यं, त्वं करोति भवान् करोषीत्यादिप्रयोगस्यापि त्वदुक्तरीत्या साधुत्वापत्तेः, 'वा लिप्सायाम्'मित्यादेर्वैयर्थ्यापत्तेश्च । स्यादेतत्—'नवाऽभ्युदश्यामतनुर्न्यविक्षते'त्यत्रात्मनेपदं न स्यात्, अटा व्यवधानात् । न च स्वाङ्गमव्यवधायकमिति वाच्यम्, अङ्गभक्तस्याऽटो विकरणविशिष्टस्याऽवयवत्वेऽपि धातोरनवयवत्वादिति चेत्। अत्राहुः–'लावस्थायामडागम' इति भाष्यमते न कश्चिद्दोषः । मतान्तरे तु उपसर्गनियमे 'अड्व्यवाये उपसङ्ख्यान'मिति वार्तिकमस्तीति [दिक्] । **आङो दो** । अकर्त्रभिप्रायार्थमिदम् । तेन 'व्यादत्ते विहगपतिर्मुखं स्वकीय'मिति प्रयोग आस्यविहरणेऽपि सिद्धः, क्रियाफलस्य कर्तृगामित्वविवक्षणात् । **शिक्षेर्जिज्ञासायामिति** । 'शिक्ष विद्योपादाने' इत्यस्य नेह ग्रहणमनु-

बा.]निवृत्तम्।यद्यपि न्यविशतेत्यत्र न विशिर्नेः परः,अटा व्यवधानात्,अटो विकरणान्ताङ्गभक्तत्वेन विशधात्ववयवत्वाऽभावात्, तथापि 'अड्व्यवाये उपसङ्ख्यान'मिति वार्तिकाद्भवतीति 'शदेः शितः' इत्यत्र भाष्ये स्पष्टम्। **परिव्यवेभ्यः**। परि वि अव एभ्य परस्मात् क्रीञ्धातोरात्मनेपदमित्यर्थः । ञित्वादात्मनेपदसिद्धेः किमर्थमिदमित्यत आह–**अकर्त्रभिप्रायार्थमिति** । **विपराभ्यां जेः** । वि परा आभ्यां परस्माज्जिधातोरात्मनेपदमित्यर्थः । **विजयते इति** । उत्कृष्टो भवतीत्यर्थः । **पराजयते इति** । निकृष्टो भवतीत्यर्थः । **आङो दो** । आस्यविहरणं–मुखविकसनम् । दा इत्यस्य दः इति पञ्चमी । तदाह–**ददातेर्मुखविकसनादन्यत्रेति** । **विद्यामादत्ते इति** । गृह्णातीत्यर्थः । दाञो ञित्त्वेऽप्यकर्त्रभिप्रायार्थमिदम् । **अविवक्षितमिति**। 'अविहरणे' इत्येतावदेव विवक्षितमित्यर्थः। **विपादिकां व्याददातीति**। क्षारौषधादिना विदारयतीत्यर्थः । अत्र आस्यविहरणाऽभावेऽपि विकसनसत्त्वान्नात्मनेपदमिति भावः । **नदी कूलं व्याददातीति**। भिनत्तीत्यर्थः। अत्रापि विकसनसत्त्वादास्यविहरणाऽभावेऽपि नात्मनेपदम् । **पराङ्गकर्मकान्न निषेध इति**,–वार्तिकम् । **पतङ्गस्येति** । पक्षिणो मुखं भक्षणाय विकासयन्तीत्यर्थः । **क्रीडोऽनु** । **चादाङ इति** । तथाच अनु सम् परि आङ् एभ्यः परस्मात् क्रीडधातोरात्मनेपदमित्यर्थः । '**अनोः कर्मप्रवचनीयान्ने**'ति वार्तिकम् । तदिदं न्यायसिद्धमित्याह—**उपसर्गेण समेति** । '**समोऽकूजने**' इति वार्तिकम् । समः परस्मादकूजने विद्यमानात् क्रीडेरात्मनेपदमित्यर्थः । **कूजने तु संक्रीडति चक्रमिति** । कूजतीत्यर्थः । **आगमेः क्षमायामिति** । 'आत्मनेपद'मिति शेषः । वार्तिकमिदम् । **ण्यन्तस्येदं ग्रहणमिति** । भाष्ये ण्यन्तस्यैवोदाहरणादिति भावः । **आगमयस्व तावदिति** । कंचित्कालं सहस्वेत्यर्थः । आङुपसर्गवशाद्गमधातुः क्षमायां वर्तते । 'हन्त्यर्थाश्चे'ति चुरादिगणसूत्रेण स्वार्थे णिच् । चुरादेराकृतिगणत्वाद्वा । **मा त्वरिष्ठा इति** । फलितार्थकथनम् । 'शिक्षे-

शे.]नेरिति षष्ठी । नेरर्थद्वारसंबन्धिनस्तद्द्योत्याऽर्थकस्य विशेरित्यर्थः, तेन 'न्यविशते'त्यादौ न दोषः । 'परिव्यवेभ्यः' इत्यादावपि षष्ठ्यर्थे पञ्चमी । स्पष्टं चेदं 'शदेः शितः' इत्यत्र भाष्ये । अत एव न्यादीनामुपसर्गाणामेव ग्रहणमिति दिक् ।

**आङो दो** । अकर्त्रभिप्रायेऽप्यात्मनेपदार्थमिदम् । आस्यविहरणे ददातेरेव प्रसिद्धत्वेन संयोगवद्भिप्रयोगस्यापि विशेषावगतिहेतुत्वेन तस्यैव ग्रहणमित्याह–**ददातेरिति**। **आस्यग्रहणमिति**। विहरणशब्दस्य क्रीडापादविहरणाद्यर्थत्वाऽभावबोधनपूर्वकं विकासार्थत्वमात्रे तात्पर्यग्राहकं तदिति भावः।'प्रतीकमाददाति' 'भिक्षामाददाती'ति चिन्त्यमेव।यत्त्वत्र स्मरणे आकारो ङिन्नेत्यात्मनेपदं नेति,तन्न।विस्मृतस्यार्थस्य स्मृतिविषयताद्योतकस्यैव भाष्यबलेनाऽङित्त्वलाभात्,स्मरणपूर्वके ग्रहणे धातोर्वृत्तौ तात्पर्यग्राहकत्वेन क्रियायोगसत्त्वेन ङित्त्वस्यैव लाभाच्च।ङकारस्तु अस्यैवार्थस्यानुवादकः।**ण्यन्तस्येति**। भाष्ये ण्यन्तस्यैवोदाहरणादिति भावः । 'हन्त्यर्थाश्चे'ति गणसूत्रेण णिच्, हन्तेर्गत्यर्थत्वस्यापि सत्त्वात् । **मा त्वरिष्ठा इति** । सहस्व कं चित्कालमित्यर्थः । **शिक्षेरिति** । अत्र 'जिज्ञासाया'मित्युक्तेर्ज्ञानपदाध्याहारे आत्मनेपदं तात्पर्य-

त्यर्थः । ❀ **आशिषि नाथः** । आशिष्येवेति नियमार्थं वार्तिकमित्युक्तम् । सर्पिषो नाथते । 'सर्पिर्मे स्या'-दित्याशास्ते इत्यर्थः । कथं तर्हि 'नाथसे किमु पतिं न भूभृता'मिति? । 'नाधसे' इति पाठ्यम् । ❀ **हरतेर्गतताच्छील्ये** । गतं=प्रकारः। पैतृकमश्वा अनुहरन्ते। मातृकं गावः। पितुर्मातुश्च गतं प्रकारं सततं परिशीलयन्तीत्यर्थः। ताच्छील्ये किम् ?। मातुरनुहरति । ❀ **किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्** । हर्षादयो विषयाः । तत्र हर्षो विक्षेपस्य कारणम् । इतरे फले । **अपाच्चतुष्पाच्छकुनिष्वालेखने** ।६।१।१४२। अपात्किरतेः सुट् स्यात् । ❀ **सुडपि हर्षादिष्वेव वक्तव्यः** । अपस्किरते वृषो हृष्टः । कुक्कुटो भक्षार्थी । श्वा आश्रयार्थी च । हर्षादिष्विति किम् ?। अपकिरति कुसुमम् । इह तङ्सुटौ न, हर्षादिमात्रविवक्षायां यद्यपि तङ् प्राप्तस्तस्यापि सुडभावे नेष्यत इत्याहुः। गजोऽपकिरति । ❀ **आङि नुप्रच्छ्योः** । आनुते । आपृच्छते। ❀ **शप उपालम्भे** । आक्रोशार्थात्स्वरितेतोऽकर्तृगेऽपि फले शपथरूपेऽर्थे आत्मनेपदं वक्तव्यमित्यर्थः । कृष्णाय

---

त.]दात्तेत्वादेवात्मनेपदसिद्धेः, किं तु शकेः सन्नन्तस्येति ध्वनयति—**धनुर्विषय इत्यादिना** । **नियमार्थमिति** । नाथतेरनुदात्तेत्त्वं तु 'अनुदात्तेतश्च हलादे'रिति युचि नाथन इति रूपसिद्ध्यर्थमिति भावः । **मातुरनुहरतीति** । सादृश्यमात्रमत्र विवक्षितं, न तु प्रकारताच्छील्यम् । **गजोऽपकिरतीति** । अत्र हर्षे सत्यपि आलेखनाऽभावात् सुटोऽप्राप्तिः। **कृष्णाय शपते इति**।'श्लाघह्नु'ङिति संप्रदानसंज्ञा। 'नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः! शपामि यदि किंचि-

---

बा.]**जिज्ञासाया**'मित्यपि वार्तिकम्।**धनुषि शिक्षते इति**। वैषयिके आधारे सप्तमी । शक्किः सन्नन्तः। 'सनि मीमा' इति इस् । अभ्यासलोपश्च । तदाह–**धनुर्विषये इत्यादि** । 'शिक्ष विद्योपादाने' इत्यस्य तु नेह ग्रहणम् , अनुदात्तेत्त्वादेव सिद्धेरिति भावः । **कथमिति** । भूभृतां पतिं किमु न नाथसे=न याचसे इत्यर्थः । आशिषोऽप्रतीतेः कथमात्मनेपदमित्यर्थः।**नाधसे इति पाठ्यमिति**।तवर्गचतुर्थान्तोऽयम् । 'आशिषि नाथः' इति नियमस्तु तवर्गद्वितीयान्तस्यैवेति भावः। '**हरतेर्गते**'त्यादि वार्तिकम्। 'आत्मनेपद'मिति शेषः। **गतं प्रकार इति** । वृत्तमित्यर्थः। ताच्छील्यं = स्वभावानुसरणम्।गतिताच्छील्यमिति यावत्।गतेति पाठे भावे क्तः।**पैतृकमश्वा इति**।पैतृकं वृत्तमश्वाः स्वभावादनुसरन्तीत्यर्थः।**मातृकं गाव इति**।'अनुहरन्ते'इत्यनुषज्यते। **मातुरनुहरतीति**।अनुकरोतीत्यर्थः। अत्र सादृश्यमात्रं विवक्षितं, न तु गतिताच्छील्यमिति भावः।**किरतेरिति** वार्तिकम्।हर्षः = प्रमोदः, जीविका जीवनोपायो,भक्षणम् ,कुलायकरणम् = आश्रयसंपत्तिः, एषु कॄधातोरात्मनेपदमित्यर्थः। ननु कधातोर्विक्षेपार्थकस्य कथमेषु वृत्तिरित्यत आह–**हर्षादयो विषया इति**। धात्वर्थत्वाऽभावेऽपि पदान्तरसमभिव्याहारगम्या इत्यर्थः। **तत्रेति** । तेषु हर्षादिष्वित्यर्थः। **कारणमिति**। तथाच हर्षमूलकत्वं विक्षेपस्य लभ्यते इति भावः। **इतरे इति**। जीविकाकुलायकरणे विक्षेपस्य साध्ये इति लभ्यते। हर्षादीनामेवंविधविषयत्वे सत्येवात्मनेपदमिति फलितम् ,भाष्ये तथैवोदाहृतत्वादिति भावः।**अपाच्चतुष्पात्**।'सुट्कात्पूर्वः'इत्यधिकृतम्। 'किरतौ लवने'इत्यतःकिरतावित्यनुवर्तते।तदाह–**अपात्किरतेः सुट् स्यादिति**। चतुष्पात्सु शकुनिषु च गम्येष्वित्यपि ज्ञेयम् । आलेखनं = खननम्।'**सुडपि हर्षादिष्वेवे**'ति–वार्तिकम्।**अपस्किरते वृषो हृष्ट इति**। हर्षाद्भूमिं लिखन् धूल्यादि विक्षिपतीत्यर्थः। **कुक्कुटो भक्षार्थीति** । 'अपस्किरते' इत्यनुषज्यते । **श्वा आश्रयार्थीति** । 'अपस्किरते' इत्यनुषज्यते । **अपकिरति कुसुममिति**। 'वृषादि'रिति शेषः। ह्रियमाणो वृषादिः पादैः कुसुममवकिरतीत्यर्थः । अत्र हर्षाद्यभावान्नात्मनेपदम्, नापि सुट् । तदाह–**इह तङ्सुटौ नेति**। ननु 'अपस्किरते वृषो हृष्ट' इत्याद्युदाहरणत्रये यदि हर्षजीविकाकुलायकरणान्येव विवक्षितानि न त्वालेखनमपि, तदा तङेव स्यान्न तु सुडित्यत आह–**हर्षादिमात्रेत्यादि** । आलेखनाऽभावेऽपीत्यर्थः। **नेष्यते इति** । 'किरतेर्हर्षजीविके'त्यात्मनेपदविधौ ससुट्कानामेव भाष्ये उदाहरणादिति भावः। भाष्यस्थान्युदाहरणान्यालेखनविषयाण्येव भविष्यन्तीत्यस्वरसं सूचयति–**आहुरिति** । **गजोऽपकिरतीति** । स्वभावाख्यानमत्रेति भावः। '**आङि नुप्रच्छ्यो**'रिति वार्तिकम् । **आनुते इति** । सृगाल इति भाष्यम् । सृगाल उत्कण्ठापूर्वकं शब्दं करोतीत्यर्थ इति कैयटः । ननु 'शप आक्रोशे' इत्यस्य स्वरितेत्त्वादेव सिद्धे 'शप उपालम्भे' इत्यात्मनेपद-

---

शे.]ग्राहकम्। वैषयिके आधारे सप्तमीत्याह–**धनुर्विषय इति**। **प्रकार इति**। धर्म इत्यर्थः।**ताच्छील्यं**=नियततत्स्वभावता । **विषया इति** । समभिव्याहृतपदाऽन्तरगम्या इत्यर्थः । **आलेखनम्**=खननम् । **अपस्किरत इति** । अत्र कृधातोः खननपूर्वके धूल्यादिविक्षेपे वृत्तिः । **अपकिरति कुसुममिति** । इहाऽऽलेखनाऽभावात्सुडभावः । 'ध्रियमाणो वृषभः पादैर्भुवमपकिरती'त्यत्र हर्षाद्यभावादप्रवृत्तिः । **नेष्यते इति** । अत एव भाष्ये ससुट्कान्येवोदाहरणानि दृश्यन्ते। **गजोऽपकिरतीति** । स्वभावाऽऽख्यानमत्र । **आनुते इति** । शृगाल उत्कण्ठापूर्वकं शब्दं करोतीत्यर्थ इति **कैयटः**। **शप इति**। **परे** तु उपलम्भनेऽनेनाऽऽत्मनेपदं, भाष्ये 'उपलम्भने' इत्येव पाठदर्शनात् । उपल-

शपते । **समवप्रविभ्यः स्थः** ।१।३।२२। सन्तिष्ठते। '**स्थाघ्वोरिच्च**'। समस्थित । समस्थिषाताम् । [समस्थिषत]। अवतिष्ठते। प्रतिष्ठते। वितिष्ठते। * **आङः प्रतिज्ञायामुपसङ्ख्यानम्** । शब्दं नित्यमातिष्ठते । नित्यत्वेन प्रतिजानीते इत्यर्थः। **प्रकाशनस्थेयाऽऽख्ययोश्च**।१।३।२३। गोपी कृष्णाय तिष्ठते । आशयं प्रकाशयतीत्यर्थः । 'संशय्य कर्णादिषु तिष्ठते यः' । कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः । **उदोऽनूर्ध्वकर्मणि** ।१।३।२४। मुक्तावुत्तिष्ठते । अनूर्ध्वेति- किम् ?। पीठादुत्तिष्ठति । ***ईहायामेव** । नेह-ग्रामाच्छतमुत्तिष्ठति । **उपान्मन्त्रकरणे**।१।३।२५। आग्नेय्याऽऽग्नीध्रमुपतिष्ठते । मन्त्रकरणे किम् ? । भर्तारमुपतिष्ठति यौवनेन । ***उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्** । आदित्यमुपतिष्ठते। कथं तर्हि-'स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे

त.]दपि स्मरामी' त्यत्र तु स्वाशयं प्रकाशयामीत्यर्थो विवक्षितो न तु शपथ इति न तद्वित्याहुः।**प्रकाशन**। प्रकाशनं-ज्ञापनम् । **स्थेयो**-विवादपदनिर्णेता, तिष्ठन्तेऽस्मिन् विवादपदनिर्णयार्थमिति व्युत्पत्तेः । बाहुलकादधिकरणे 'अचो यत्' । 'स्थेयो विवादस्थानस्य निर्णेतरि पुरोहिते' इति मेदिनी। कर्णादिष्विति अधिकरणे सप्तमी। तेषां स्थेयत्वं 'तिष्ठते' इत्यात्मनेपदेन द्योत्यते । तमेवाऽर्थमाह-**कर्णादीनिति**।प्रकाशनेत्यादि किम् ? । चैत्रे तिष्ठति । **उदोऽनूर्द्ध्वकर्मणि** । 'स्थ' इत्यनुवर्तते । ऊर्द्ध्वदेशसंयोगानुकूलं यत्कर्म तदूर्द्ध्वकर्म । 'उदोऽनूर्ध्वे' इत्युक्तेऽप्यनूर्ध्वक्रियायां वर्तमानादुत्पूर्वात्तिष्ठतेर्लेस्यात्मनेपदमित्यर्थो लभ्यत एव, तथापि परिस्पन्दार्थलाभाय कर्मपदमित्यभिप्रेत्याह-**ईहायामेवेति** । इच्छापूर्विका चेष्टा-**ईहा**। सा च 'ग्रामाच्छत'मित्यत्र नास्ति। **उपान्मन्त्रकरणे**।मन्त्रः करणं यत्र मन्त्रकरणं-स्तुतिः, तत्र वर्तमानादुपपूर्वात्तिष्ठतेरात्मनेपदं स्यात् । **आग्नेय्येति**। अग्निदेवताकया ऋचा आग्नीध्रम्=अग्निविशेषं स्तौतीत्यर्थः। अत्रकेचित्-'श्लोकै राजानं स्तौतीत्यर्थे श्लोकैरुपतिष्ठत इति प्रयोगो नेष्यते । ऐन्द्या गार्हपत्यमुपतिष्ठते, आग्नेय्या आग्नीध्रमिति वैदिकविषय एव सर्वैरुदाहृतत्वात् । तथा च तिष्ठतेरर्थे यदा मन्त्रः करणं तदा तङिति व्याख्येयम् । उपतिष्ठत इत्यस्य तु समीपावस्थानमेवार्थः । न च तत्र यष्ट्यादिवन्मन्त्रस्य करणत्वं न संभवतीति वाच्यम्, उपस्थानस्वरूपे तस्योपयोगाऽभावेऽपि तत्कार्ये स्तुतावुपयोगादुपस्थानकरणत्वं मन्त्रस्य न विहन्यते । 'आग्नीध्र'मिति द्वितीया तु करणत्वान्यथानुपपत्तिलभ्येन स्तोतुमित्यनेनान्वेति । एवं चाऽऽग्नेय्या आग्नीध्रं स्तोतुं तत्समीपे तिष्ठतीत्येव वाक्यार्थः । आदित्यमुपतिष्ठते

बा.]विधिर्व्यर्थ इत्यत आह-**आक्रोशार्थादिति**।'शप आक्रोशे' इति स्वरितेतः कर्तृगामिन्येव फले आत्मनेपदं प्राप्तम् , अकर्तृगेऽपि फले शपथरूपकनिन्दाविशेषे विद्यमानात्तस्मात् शपधातोरात्मनेपदार्थमिदमित्यर्थः । **कृष्णाय शपत इति** । 'श्लाघह्नुङ्स्थाशपा'मिति संप्रदानत्वाच्चतुर्थी । **समवप्रविभ्यः स्थः** । स्थ इति पञ्चमी । सम् अव प्र वि एभ्यः परस्मात्स्थाधातोरात्मनेपदमित्यर्थः । **संतिष्ठते इति** । समाप्तं भवतीत्यर्थः । **प्रकाशन** । प्रकाशनं-स्वाभिप्रायाविष्करणम् । स्थेयः-विवादपदनिर्णेता । तिष्ठति=विश्राम्यति विवादपदनिर्णयोऽस्मिन्नित्यर्थे बाहुलके अधिकरणे 'अचो यत्' इति यति [ईत्वे ]स्थेयशब्दव्युत्पत्तेः।'स्थेयो विवादस्थानस्य निर्णेतरि पुरोहिते' इति मेदिनी।इह तु विवादपदनिर्णेतृत्वेनाध्यवसायो विवक्षितः । आख्या=अभिधानम् । प्रकाशनाख्यायां, स्थेयाख्यायां च वर्तमानात् स्थाधातोरात्मनेपदमित्यर्थः । प्रकाशने उदाहरति-**गोपी कृष्णाय तिष्ठते इति** । 'श्लाघह्नुङ्स्थाशपा'मिति संप्रदानत्वाच्चतुर्थी । स्थेये उदाहरति-**संशय्येति** । कर्णादिष्विति विषयसप्तमी । फलितमाह-**कर्णादीनिति** । **उदोऽनूर्ध्वकर्मणि** । ऊर्ध्वदेशसंयोगानुकूला क्रिया ऊर्ध्वकर्म । तद्भिन्नमनूर्ध्वकर्म । तद्वृत्तेः स्थाधातोरुत्पूर्वादात्मनेपदमित्यर्थः । **मुक्तावुत्तिष्ठते इति** । गुरूपगमनादिना यतते इत्यर्थः। **पीठादुत्तिष्ठतीति** । उत्पततीत्यर्थः। **ईहायामेव**-इति वार्तिकम् । ईहा कायपरिस्पन्दः । **ग्रामाच्छतमुत्तिष्ठतीति** । उत्पद्यत इत्यर्थः । **उपान्मन्त्रकरणे** । मन्त्रकरणकेऽर्थे विद्यमानात्स्थाधातोरात्मनेपदमित्यर्थः। **आग्नेय्या आग्नीध्रमुपतिष्ठते इति** । आग्नेय्या ऋचा आग्नीध्राख्यमण्डपविशेषमुपेत्य तिष्ठतीत्यर्थः । स्थितेरकर्मकत्वेऽपि उपेत्येतदपेक्ष्य सकर्मकत्वम् । केचित्तु मन्त्रकरणके समीपावस्थितिपूर्वकस्तवे विद्यमानात्स्थाधातोरात्मनेपदमिति व्याचक्षते । तत्र स्तवो गुणवत्त्वेन संकीर्तनमिति स्तुतशब्दाधिकरणे प्रपञ्चितमस्माभिः । श्लोकै राजानं स्तौतीत्यर्थे श्लोकैरुपतिष्ठते इत्यात्मनेपदं न, मन्त्रकरणकत्वाऽभावात्।**उपाद्देवपूजा**-इति वार्तिकम्। अमन्त्रकरणकत्वार्थम्। **आदित्यमुपतिष्ठते इति**। अभिमुखीभूयाऽवस्थितिपूर्वकस्तुत्यादिभिः पूजयतीत्यर्थः । **कथं तर्हीति** । रघोर्देवतात्वा-

शे.]म्भनं=प्रकाशनम्। धातोः शपथकरणकप्रकाशने वृत्तौ तङ् तात्पर्यग्राहकः। शपथश्च लोकप्रसिद्ध एव।अत एवोदाहरणे देवदत्तायेत्यत्र चतुर्थ्येव भाष्ये प्रयुक्ता । 'सरूपः ? शपामि यदि किञ्चिदपि स्मरामी'त्यादौ शपथमात्रं विवक्षितं न तु प्रकाशनम् । मूले **उपालम्भ** इति पाठः, आक्रोशार्थादित्यादिव्याख्यानञ्च वृत्त्यनुरोधेनेति वदन्ति। **ईहा**=कायपरिस्पन्दरूपो व्यापारः। **शतमुत्तिष्ठती**त्यस्योत्पद्यते इत्यर्थः । **उपान्मन्त्र** । मन्त्रकरणकेऽर्थे वर्तमानादित्यर्थः । **सङ्गतिकर-**

सरस्वती'ति । देवतात्वारोपात्, नृपस्य देवतांऽशत्वाद्वा । गङ्गा यमुनामुपतिष्ठते । उपश्लिष्यतीत्यर्थः । रथिकानुपतिष्ठते । मित्रीकरोतीत्यर्थः । पन्थाः स्रुघ्नमुपतिष्ठते । प्राप्नोतीत्यर्थः। *वा लिप्सायामिति वक्तव्यम्।भिक्षुः प्रभुमुपतिष्ठते, उपतिष्ठति वा । लिप्सया उपगच्छतीत्यर्थः। **अकर्मकाच्च** ।१।३।२६। उपात्तिष्ठतेरकर्मकादात्मनेपदं स्यात् । भोजनकाले उपतिष्ठते । सन्निहितो भवतीत्यर्थः । **उद्विभ्यां तपः** ।१।३।२७। अकर्मकादित्येव । उत्तपते । वितपते । दीप्यत इत्यर्थः। *स्वाङ्गकर्मकाच्चेति वक्तव्यम् । स्वमङ्गं स्वाङ्गं, नतु अद्रवमिति परिभाषितम् । उत्तपते वितपते वा पाणिम् । नेह—सुवर्णमुत्तपति । सन्तापयति विलापयति वेत्यर्थः । चैत्रो मैत्रस्य पाणिमुत्तपति । सन्तापयतीत्यर्थः। **आङो यमहनः** ।१।३।२८। आयच्छते । आहते । 'अकर्मकात्स्वाङ्गकर्मका'दित्येव । नेह—परस्य शिर आहन्ति। कथं तर्हि-'आजघ्ने विषमविलोचनस्य वक्ष' इति भारविः । 'आहध्वं मा रघूत्तम'मिति भट्टिश्च । प्रमाद एवाऽयमिति भागवृत्तिः । प्राप्येत्यध्याहारो वा । ल्यब्लोपे पञ्चमीति तु ल्यबन्तं विनैव तदर्थावगतिर्यत्र तद्विषयकम्। भेत्तुमित्यादि तुमुन्नन्ताध्याहारो वाऽस्तु। समीपमेत्येति वा। **आत्मनेपदेष्वन्यतरस्याम्** ।२।४।४४। हनो वधादेशोवा लुङि [आत्मनेपदेषु परेषु]। आवधिष्ट। आवधिषाताम्। **हनः**

---

त.]इत्यत्र तु तत्समीपावस्थानस्याऽसंभवादादित्यं स्तोतुं तदभिमुखतया तिष्ठतीत्यर्थ इत्याहुः। **गङ्गा यमुनामिति**। एतेन यमुनैव प्राचीना, गङ्गा तु पश्चाद्यमुनया सह मिलितेति प्रतीयते । **स्वाङ्गकर्मकाच्चेति** । चकारेणाऽकर्मकस्य सङ्ग्रहः। **न त्वद्रवमिति** । अन्यथा चैत्रो मैत्रस्येत्यादि वक्ष्यमाणं न सङ्गच्छेतेति भावः । **आङो यमहनः** । **प्राप्येति** । तथा च हन्तेरकर्मकतया आजघ्ने आहध्वमित्यात्मनेपदं युक्तमित्यर्थः । **भेत्तुमित्यादीति** । एवं च ल्यब्लोपपञ्चम्याः प्रसक्तिरेव नास्तीति भावः । **समीपमेत्येति** । विषमविलोचनस्य समीपमेत्य वक्ष आजघ्ने । स्वकीयमेव वक्षो मल्ल इव सन्तोषातिशयादास्फालयांचक्रे इत्यर्थात्स्वाङ्गकर्मकत्वमस्त्येवेति भावः । **आत्मनेपदेष्विति** । 'तङी'त्येव सुवचम् ।

---

बा.]भावादिति भावः।समाधत्ते–**देवतात्वारोपादिति**।**नृपस्येति**। 'नाऽविष्णुः पृथिवीपति'रित्यादिस्मरणादिति भावः। **वा लिप्सायामिति** । लिप्साहेतुकाऽर्थवृत्तेः स्थाधातोरात्मनेपदं वेत्यर्थः । **अकर्मकाच्च**। **उपात्तिष्ठतेरिति**। 'उपान्मन्त्रकरणे' इत्यतः,'समवप्रविभ्यः स्थः' इत्यतश्च तदनुवृत्तेरिति भावः। **उद्विभ्यां तपः**।'अकर्मकादित्येवे'ति भाष्यम्। **दीप्यते इति** । दीप्तिमान् भवतीत्यर्थः । **स्वाङ्गकर्मकाच्चेति** । 'उद्विभ्यां तप' इत्यनुवर्तते। चकारादकर्मकसमुच्चयः। स्वाङ्गशब्दोऽत्र यौगिक इत्याह–**स्वमङ्गमिति** । **सुवर्णमुत्तपतीति** । अस्वाङ्गकर्मकत्वादकर्मकत्वाऽभावाच्च नात्मनेपदमिति भावः । स्वाङ्गशब्दोऽत्र न पारिभाषिकः, किन्तु यौगिक इत्यस्य प्रयोजनमाह–**चैत्रो मैत्रस्य पाणिमुत्तपतीति**।अत्र 'अद्रवं मूर्तिम'दित्यादिपरिभाषितस्वाङ्गकर्मकत्वेऽपि स्वकीयाङ्गकर्मकत्वाऽभावान्नात्मनेपदमिति भावः।**आङो यमहनः** । आङः परस्माद्यमो, हनश्चात्मनेपदमित्यर्थः । **आयच्छते इति** । रज्जुर्दीर्घाभवतीत्यर्थः । दीर्घीकरोति पादमिति वा । **आहते इति** । 'स्वोदर'मिति शेषः । **परस्य शिर आहन्तीति**। स्वीयाऽङ्गकर्मकत्वाऽभावादकर्मकत्वाऽभावाच्च नात्मनेपदम्। **कथं तर्हीति**।स्वीयाऽङ्गकर्मकत्वाऽभावादकर्मकत्वाऽभावाच्चात्मनेपदाऽसंभवादिति भावः।**प्राप्येति**। विषमविलोचनस्य वक्षः प्राप्य आजघ्ने इति,रघूत्तमं प्राप्य माऽऽहध्वमिति च प्राप्तिक्रियां प्रत्येव विषमविलोचनस्य रघूत्तमस्य च कर्मतया हन्तेरकर्मकत्वादात्मनेपदं निर्बाधमिति भावः । यद्यपि हननक्रियां प्रत्यपि तयोरेव वस्तुतः कर्मत्वं तथापि तस्याऽविवक्षितत्वादकर्मकत्वमेव, 'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात् । प्रसिद्धेरविवक्षातःकर्मणोऽकर्मिका क्रिया' इत्यनुपदमेव वक्ष्यमाणत्वादिति बोध्यम् । ननु प्राप्येत्यध्याहारे 'प्रासादात्प्रेक्षते' इत्यादिवत्पञ्चमी स्यादित्यत आह–**ल्यब्लोपे इति** । 'ल्यब्लोपे पञ्चमी'त्येतत्तु यत्राऽर्थाध्याहारमाश्रित्य ल्यबन्तार्थावगतिस्तद्विषयकम् । अत्र तु ल्यबन्तशब्दाध्याहारान्नाऽत्र पञ्चमीत्यर्थः । **भेत्तुमित्यादीति** । एवं च ल्यब्लोपपञ्चम्या न प्रसक्तिरिति भावः । 'आजघ्ने विषमे' त्यत्र परिहारान्तरमाह–**समीपमेत्येति वेति** । 'अध्याहार' इति शेषः। विषमविलोचनस्य समीपमेत्य स्वीयमेव वक्षो मल्ल इव वीरावेशादास्फालयांचक्रे इत्यर्थः । तथाच स्वाङ्गकर्मकत्वादात्मनेपदं निर्बाधमिति भावः । लुङि आहन् स् त इति स्थिते–**हनः सिच्** । 'कित्स्या'दिति शेषपूरणम् । 'असंयोगाल्लिट्कि'दित्यतस्तदनुवृत्तेरिति भावः । हनधातोः परः सिच् कित्स्यादिति फलितम् । **अनुनासिकलोप इति** । 'अनुदात्तोपदेशे'ति नकारलोप इत्यर्थः । उत् आ यम्

---

शे.]णम्=उपश्लेषः, **मित्रकरणम्**=अनुपश्लिष्टस्यापि मैत्रीसंबन्धः।**लिप्सायामिति** । लिप्सोपसर्जनकेऽर्थे वर्तमानादित्यर्थः । **उद्विभ्याम्** । उद्विभ्यां किम् ? । निष्टपति । ज्वलतीत्यर्थः । **ल्यबन्तं विनैवेति** । 'वाक्ये वाक्यैकदेशप्रयोग'न्यायेन। अत्र तु शब्दाध्याहार इति भावः। अस्याऽयुक्तत्वं मन्यमान आह–**भेत्तुमित्यादीति**।तद्घटितवाक्यस्यैकदेशोऽयमित्यर्थः । **समीपमेत्येति वेति** । विषमविलोचनस्य समीपमेत्य स्वं वक्ष आजघ्ने इत्यन्वय इति भावः ।

सिच् ।१।२।१४। कित्स्यात् । अनुनासिकलोपः । आहत । आहसाताम् । आहसत । **यमो गन्धने** ।१।२।१५। सिच् कित्स्यात् । गन्धनं सूचनं, परदोषाविष्करणम् । उदायत । गन्धने किम्?। उदायंस्त पादम् । आकृष्टवानित्यर्थः । **समो गम्यृच्छिभ्याम्** ।१।३।२९। अकर्मकाभ्यामित्येव । सङ्गच्छते । **वा गमः** ।१।२।१३। गमः परौ झलादी लिङ्सिचौ वा कितौ स्तः। सङ्गसीष्ट । सङ्गंसीष्ट । समगत । समगंस्त। समृच्छते। समृच्छिष्यते। अकर्मकाभ्यां किम्?। ग्रामं सङ्गच्छति।* **विदिप्रच्छिस्वरतीनामुपसङ्ख्यानम्**। वेत्तेरेव ग्रहणम्। संवित्ते। संविदाते। **वेत्तेर्विभाषा** ।७।१।७। वेत्तेः परस्य झादेशस्याऽतो रुडागमो वा स्यात् । संविद्रते । संविदते । [संविद्रताम् । संविदताम् । समविद्रत । समविदत]। संपृच्छते । संस्वरते।* **अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्**। अर्तीति द्वयोर्ग्रहणम्। अङ्विधौ त्वियर्तेरेवेत्युक्तम् । मा समृत । मा समृषाताम् । मा समृषतेति । समार्त । समार्षाताम् । समार्षतेति

त.]'समो गम्यृच्छिस्वरत्यर्तिविदिभ्यः' इति वृत्तिस्थं पाठमुपेक्ष्य भाष्यस्थं पाठमनुसरति—**समो गम्यृच्छिभ्यामिति** । **सङ्गच्छते इति** । सङ्गतं भवतीत्यर्थः । **वा गमः** । 'असंयोगाल्लिङ्कि'त्यतः किदनुवर्तते, 'इको झ'लित्यतो झल्ग्रहणं, 'लिङ्सिचौ' इत्यतो लिङ्सिचाविति चानुवर्तते । कित्वपक्षे'अनुदात्तोपदेशे'ति मलोपः। **'समृच्छिष्यते'**इति लृटः प्रयोगस्तु तौदादिकऋच्छेरत्र ग्रहणं न तु ऋच्छादेशस्येति ध्वननार्थम् । **ग्रामं सङ्गच्छतीति**। 'तच्चैक्यं समगच्छते'त्यत्र तु एकं जातमित्यर्थाद्गमेरकर्मकत्वमेवेति तत् । एकमेवैक्यम् । स्वार्थे ष्यञ् । **विदिप्रच्छि** । परस्मैपदिसाहचर्यादाह—**वेत्तेरेवेति** । विन्दतिर्हि स्वरितेत् । सत्ताविचारणार्थयोस्तु अनुदात्तेत्वादेव सिद्धम् । न च निरनुबन्धपरिभाषयैव वेत्तेर्ग्रहणं स्यादिति वाच्यं, 'लुग्विकरणाऽलुग्विकरणयो'रिति परिभाषया तु विन्दतेर्ग्रहणप्रसङ्गात् । **वेत्तेर्विभाषा** । 'शीङो रु'डित्यतो रुडनुवर्तते, 'अदभ्यस्ता'दित्यतोऽदित्यनुवर्त्य षष्ठ्यन्तत्वेन विपरिणम्यत इत्याह—**अतो रुडागम इति** । **अङ्विधौ त्विति** । 'सर्तिशास्त्यर्ती'ति लुप्तविकरणेन शासिना साहचर्यादिति भावः । **मा समृतेति** । 'उश्चे'ति कित्वम् । माङ्योगादडभावः । **समार्तेति** । ननु सिज्लोपस्याऽसिद्धत्वात् 'आटश्चे'ति वृद्धौ कृतायां 'ह्रस्वा-

बा.]स् त इति स्थिते—**यमो गन्धने। सिच्कित्स्यादिति**। शेषपूरणम्। सिचः कित्वे मकारस्य 'अनुदात्तोपदेशे'ति लोपः । **समो गम्यृच्छिभ्याम्** । 'आत्मनेपद'मिति शेषः । **अकर्मकाभ्यामित्येवेति** । 'स्वाङ्गकर्मकाच्चे'ति तु निवृत्तमिति भावः । **सङ्गच्छते इति** । संगतं भवतीत्यर्थः । **वा गमः** । 'इको झल्' इत्यतो झलिति, 'लिङ्सिचावात्मनेपदेषु' इत्यतो लिङ्सिचाविति, 'असंयोगाल्लिट्' इत्यतः किदिति चानुवर्तते । तदाह—**गमः परावित्यादि** । **समगतेति** । लुङि रूपम् । सिचः कित्वपक्षे 'अनुदात्तोपदेशे'ति मकारलोपे 'ह्रस्वादङ्गादि'ति सिचो लुक् । **समृच्छते इति** । 'ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु' इति तौदादिकस्य रूपम् । अत्र तौदादिकस्य ऋच्छतेरेव ग्रहणं, नतु ऋच्छादेशस्येति सूचयितुं लृडन्तमप्युदाहरति—**समृच्छिष्यते इति** । **विदिप्रच्छिस्वरतीनामिति** । सम इत्यनुवर्तते । संपूर्वेभ्यो विदिप्रच्छिस्वरतिभ्य आत्मनेपदमित्यर्थः । **वेत्तेरिति** । लुग्विकरणस्यैव विदेर्ग्रहणमित्यर्थः । व्याख्यानादिति भावः । **वेत्तेर्विभाषा** । 'झोऽन्तः' इत्यतो झ इत्यनुवर्तते । 'अदभ्यस्ता'दित्यत आदित्यनुवृत्तं षष्ठ्या विपरिणम्यते । 'शीङो रु'डित्यतो रुडिति च । तदाह—**वेत्तेः परस्येत्यादिना** । **अर्तिश्रुदृशिभ्य इति** । 'संपूर्वेभ्यस्त'ङिति शेषः । **द्वयोरिति** । भौवादिकस्य, इयर्तेश्चेत्यर्थः । **अङ्विधौ त्विति** । 'सर्तिशास्त्यर्तिभ्यश्च' इत्यत्रेत्यर्थः । **मा समृतेति** । 'उश्चे'ति सिचः कित्वान्न गुणः । 'ह्रस्वादङ्गा'दिति सिचो लोपः । माङ्योगे मा समृतेत्यादि । माङ्योगाऽभावे तु समार्तेत्यादि इत्येवं भौवादिकस्य ऋधातो रूपमित्यर्थः । माङ्योगादाडभावः ।

अथ माङ्योगाऽभावे आडागमे उदाहरति—**समार्तेति** । सम् आ ऋ स् त इति स्थिते 'उश्चे'ति कित्वाद्गुणनिषेधे 'आटश्च' इति वृद्धिं बाधित्वा परत्वात् 'ह्रस्वादङ्गा'दिति सिचो लोपे 'आटश्चे'ति ऋकारस्य वृद्धौ रपरत्वे रूपम् । नच सिज्लोपस्याऽसिद्धत्वात् आटश्चेति वृद्धौ कृतायां ह्रस्वादङ्गादिति सिज्लोपस्याऽप्रवृत्त्या समार्ष्टेत्येवो-

शे.]**वेत्तेरेवेति**। व्याख्यानात् [इति भावः]। **अर्तीति द्वयोरिति**। व्याख्यानादिति भावः। सूत्रे ऋच्छतिग्रहणं तौदादिकऋच्छेः सम्पूर्वात्परस्मैपदव्यावृत्तये, 'समृच्छिषते' इत्याद्यर्थञ्च । **समार्तेति** । 'उश्चे'ति कित्वाद्गुणाऽप्राप्तौ 'आटश्चे'ति बाधित्वा परत्वात्सिज्लोपे वृद्धिः। 'सिज्लोप एकादेशे' इति सिद्धकाण्डे पाठाद्वृद्धिं प्रति सिज्लोपो नाऽसिद्धः । यत्तु 'ह्रस्वादङ्गा'दित्यत्राऽङ्गपदसत्त्वेन वार्णपरिभाषया वृद्धेः पूर्वं सिज्लोप इति, तन्न, तस्य वार्णाऽऽङ्गयोरेकस्थानिकत्व एव प्रवृत्तेः, तज्ज्ञापकस्य सजातीयापेक्षत्वेनाऽङ्गाधिकारस्थस्यैवाङ्गस्य तत्र ग्रहणाच्च। 'ह्रस्वा'दिति सूत्रे ऽङ्गपदप्रयोजनन्तु तत्रैवोक्तम् । 'अध्यैष्टे'ति तु सिज्लोपस्याऽसिद्धत्वात्परत्वाद्वार्णादाङ्गस्य बलवत्त्वाच्च 'सार्वधातुके'ति गुणे वृद्धौ सिध्यतीति भावः । परे तु 'लावस्थायाम'डिति पक्षे सर्वतो वृद्धेरन्तरङ्गत्वेन तत्पक्षे सिज्लोपो दुर्लभस्तदेकवाक्यतया पक्षान्तरेऽपि तदलोप एवोचितः । किं च 'सिज्लोप एकादेशे' इति सिद्धत्वमपि प्रत्यासत्त्या सिज्लोपनिमित्तकैकादेशं प्रत्येवोचितं, न तु प्रकृत-

च भ्वादेः। इयर्तेस्तु–मा समरत। मा समरेताम्। मा समरन्त। समारत। समारेताम्, समारन्तेति च। संश्रुणुते। संपश्यते। अकर्मकादित्येव। अतएव–'रक्षांसीति पुराणि संश्रुणुमहे' इति मुरारिप्रयोगः प्रामादिक इत्याहुः। अध्याहारो वा इति कथयन्त्य इति। अथाऽस्मिन्नकर्मकाधिकारे हनिगम्यादीनां कथकर्मकत्वेति चेत्। शृणु–

'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया'।

वहति भारम्। नदी वहति।स्यन्दत इत्यर्थः।जीवति।नृत्यति।प्रसिद्धेर्यथा–मेघो वर्षति। कर्मणोऽविव-

त.]दन्ना'दिति सिज्लोपाऽप्रवृत्त्या समार्ष्टेति रूपं स्यात्। न च ह्रस्वाद्विहितस्येति व्याख्यानादिष्टसिद्धिरिति वाच्यं, विहित-विशेषणे मानाऽभावात्। उदायत आहतेत्याद्यसिद्ध्यापत्तेश्च। अत्र केचित्–'सिज्लोप एकादेशे सिद्धो वाच्यः' इत्यनेन पूर्वं सिज्लोपे पश्चाद्वृद्धिर्भवति, 'एकादेशे' इति विषयसप्तम्याश्रयणात्। न चैवमध्यैष्टेति न सिध्येत्, तत्राप्युक्तरीत्या पूर्वं सिज्लोपे वृद्धौ सत्यामध्यैतेति रूपप्रसङ्गादिति वाच्यम्, 'वार्णादाङ्गं बलीयः' इति पूर्वमेव गुणे कृते सिज्लोपो न प्रवर्तते इति 'आटश्चे'ति वृद्धौ कृतायामध्यैष्टेति रूपस्य निर्बाधत्वात्। समार्तेत्यत्र तु 'उश्चे'ति कित्त्वेन गुणाऽप्रवृत्त्या

बा.]चितमिति वाच्यम्, 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति वचनेन पूर्वं सिज्लोपे पश्चादाटश्चेति वृद्धेः प्रवृत्ति-संभवादित्यलम्। **इयर्तेस्त्विति**। श्लुविकरणऋधातोरित्यर्थः। **मा समरतेति**। 'सर्तिशास्त्यर्तिभ्य' इत्यङ्, तत्र इयर्तेर्ग्रहणादिति भावः। 'ऋदृशोऽङि' इति गुणः। **समारतेति**। 'आटश्च' इति वृद्धिः। **इति चेति**। इयर्तेः रूपमित्यन्वयः। तदेवमर्तिश्रुदृशिभ्य इत्यत्र अर्तिप्रपञ्चमुक्त्वा श्रुधातोरुदाहरति–**संश्रुणुते इति**। दृशेरुदाहरति–**संपश्यते इति**। **अकर्मकादित्येवेति**। 'समो गम्यृच्छिभ्या'मित्यत्र अकर्मकादित्यनुवृत्तेरभ्युपगतत्वेन तत्रोप-संख्यातवार्तिकेऽस्मिंस्तदनुवृत्तेर्युक्तत्वादिति भावः। **अत एवेति**। 'प्रमादिक इत्याहु'रित्यत्रान्वयः, सकर्मकत्वेनात्मने-पदाऽसंभवादिति भावः। **अध्याहारो वेति**। 'इति कथयन्त्य' इत्यध्याहारो वेत्यन्वयः। तथाच रक्षांसीति कथयन्त्यः पुरा संश्रुणुमहे इत्यत्र कथन एव रक्षसामन्वितत्वात् श्रुवोऽकर्मकत्वादात्मनेपदं निर्बाधमिति भावः। **धातोरिति**। धातोरर्थान्तरे वृत्तेरिति, धात्वर्थेनोपसंग्रहादिति, प्रसिद्धेरिति, अविवक्षात इति चत्वारि वाक्यानि। अकर्मिका क्रियेति सर्वत्रान्वेति। 'कर्मण' इति तु द्वितीयादिषु वाक्येष्वन्वेति। **वहति भारमिति**। प्रापयतीत्यर्थः। अत्र सकर्मकत्वमिति भावः। अस्याऽर्थान्तरे क्वचिदकर्मकत्वमुदाहरति–**नदी वहतीति**। **स्यन्दते इति**। प्रस्रवतीत्यर्थः। धात्वर्थोपसङ्ग्रहे उदाहरति–**जीवतीति**। **नृत्यतीति**। जीवेः प्राणधारणमर्थः। नृतेस्त्वङ्गविक्षेपः। उभयत्रापि कर्मणो धात्वर्थान्त-र्भावान्न सकर्मकत्वमिति 'सुप आत्मनः' इति सूत्रे भाष्ये स्पष्टम्। **मेघो वर्षतीति**। वर्षकर्मणो जलस्य प्रसिद्धत्वाद-

शे.]विषयमपि। न चैकादेशपदसामर्थ्यं, सवर्णदीर्घपदाऽपेक्षया लघुत्वादित्याहुः। **मा समरतेति**। 'सर्तिशास्ती'ति सूत्रे पुषादिसूत्रेण योगविभागसामर्थ्यात्परस्मैपदेष्वित्यस्याऽसम्बन्धादिति भावः। अत एव–'समारन्त ममाभीष्टाः सङ्कल्पास्त्व-य्युपागते' इति भट्टिः सङ्गच्छते, वृत्तौ च स्पष्टमेतत्। **परे तु**–'शास इ'दिति सूत्रे 'आशास्ते' इत्यादावित्ववारणाय 'यस्माच्छासेरङ् विहितस्तस्य ग्रहण'मिति भाष्यमुपादाय 'सर्तिशास्ती'त्यत्र परस्मैपदाधिकारादाशास्तेरङित्युक्तं कैयटेन। किं च 'अस्यतिवक्ती'त्यनेन सर्त्यादेर्योगविभागस्य फलं निरूपयितुमशक्यम्। अत एव भाष्ये प्रकृतवार्तिके धातुद्वय-साधारण्येन 'मा समृत' इत्याद्येवोदाहृतम्। एवञ्च भट्टिप्रयोगवृत्त्यादि चिन्त्यमित्याहुः। **अकर्मकादित्येवेति**। 'समो-गमी'त्यत्रोपसङ्ख्यातत्वादिति भावः। न च 'समो गमादिषु विदादीनामुपसङ्ख्यान'मिति भाष्ये आदिशब्दबहुवचनाभ्यां 'समः क्ष्णुवः' इत्यत्राप्येषामुपसङ्ख्यानेन सकर्मकेभ्योऽप्यात्मनेपदेष्टेरकर्मकादित्येवेत्यसङ्गतमिति वाच्यं, तेनैव सिद्धेऽत्रो-पसङ्ख्यानस्य वैयर्थ्यापत्तेः। न हि तत्र सकर्मकादित्यस्ति येनाऽकर्मकार्थमिदं स्यात्। भाष्ये बहुवचनन्तु प्रयोगभेदाभि-प्रायेणेत्याहुः। **वहतीति**। प्रापणार्थस्य वहतेरर्थान्तरे स्यन्दने वृत्तिरिति भावः। **जीवतीत्यत्र** जीवनं कर्म धात्वर्थेऽन्त-र्भूतम्। अकर्मकत्वञ्च पृथगुपस्थितैतच्छास्त्रविहितकर्मसञ्ज्ञकानन्वय्यर्थकत्वम्। स्पष्टञ्चेदं 'सुप आत्मनः' इति सूत्रे भाष्ये। **वर्षतीति**। इदं चिन्त्यम्। अत्र प्रसिद्ध्या झटित्युपस्थितस्य 'प्रविश पिण्डी'मित्यादाविवाऽन्वयसम्भवेन तद्वाचका-नुपादानमात्रं, न त्वेतावताऽकर्मकत्वं न्याय्यं। कदाचित् 'मेघो जलं वर्षति'इति प्रयोगात्। अत एव तपरसूत्रे 'अयुक्तो-ऽयं निर्देशः इति प्रतीकमुपादाय 'न्यायेनाऽसंबद्ध इत्यर्थः। न्यायशब्दस्य तु प्रयोगः प्रसिद्धत्वान्न कृतः। कदाचित्तु प्रसिद्धार्थस्याऽपि प्रयोगो दृश्यते 'न्यायेनाऽयुक्त' इति।धात्वर्थेऽन्तर्भूतस्य तु प्रयोगाऽभावो,न हि भवति 'जीवति प्राणान्' इति–इति कैयटेनोक्तम्। एवं रीत्याऽकर्मकत्वस्य भाष्येऽनुपलम्भाच्चेति। कर्मणोऽविवक्षा नाम–कर्मविशेषान्वयाऽविवक्षा। सा च क्वचित्सार्वदिकी, यथा मूलोदाहृते, तत्र निर्बाधं भावे लादीनां साधुत्वं, क्वचित्तु कार्यप्रवृत्तिवेलायान्तदविवक्षा, पश्चात्तु तद्विवक्षा। यथा 'कृतपूर्वी कट'मित्यादि वृत्तिविषये। किं च कर्मणो धात्वर्थं प्रति सम्बन्धसामान्येनान्वयविवक्षा, न

क्षातो यथा-हिताल यः संश्रृणुते स किंप्रभुः।* उपसर्गादस्यत्यूह्योर्वेति वाच्यम्। अकर्मकादिति निवृत्तम्। बन्धं निरस्यति, निरस्यते। समूहति, समूहते। उपसर्गाद्धस्व ऊहतेः।७।४।२३। यादौ क्ङिति। ब्रह्म समुह्यात्। अग्निं समुह्य। निसमुपविभ्यो ह्वः।१।३।३०। निह्वयते। स्पर्द्धायामाङः।१।३।३१। कृष्णश्चाणूरमाह्वयते। स्पर्द्धायां किम्? पुत्रमाह्वयति। गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः।१।३।३२। गन्धनं-हिंसा। उत्कुरुते। सूचयतीत्यर्थः। सूचनं हि प्राणवियोगानुकूलत्वाद्धिंसैव। अवक्षेपणं-भर्त्सनम्। श्येनो वर्तिकामुदाकुरुते। भर्त्सयतीत्यर्थः। हरिमुपकुरुते। सेवते। परदारान्प्रकुरुते। तेषु सहसा प्रवर्तते। एधो दकस्योपस्कुरुते। गुणमाधत्ते। गाथाः प्रकुरुते। प्रकथयति। शतं प्रकुरुते। धर्मार्थं विनियुङ्क्ते। एषु किम्? कटं करोति। अधेः प्रसहने।१।३।३३। प्रसहनं क्षमाऽभिभवश्च, 'षह मर्षणेऽभिभवे चे'ति पाठात्। शत्रुमधिकुरुते। क्षमत इत्यर्थः। अभिभवतीति वा। वेः शब्दकर्मणः।१।३।३४। स्वरा-

त.]पूर्वमेव सिज्लोपे पश्चात् 'आटश्चे'ति वृद्धिरिति वैषम्यमित्याहुः।अन्ये तु-सिज्लोपानन्तरं यत्रैकादेशः प्रसज्यते तत्रैव सिज्लोपः सिद्धो, यथा अग्रहीदिति। न चात्र तादृशो विषयोऽस्ति। किं च 'वार्णादाङ्गं बलीयः' इति पूर्वमेव गुणे कृते इत्यादि यदुक्तं, तदसत्। समानाश्रये हि वार्णादाङ्गं बलीयः। अन्यथा द्यौरिवाचरति द्यवतीत्यत्र यण न स्यात्। किंतु 'पुगन्ते'ति गुण एव स्यात्। तथा च समर्ष्टेत्येव वक्तव्ये समार्तेति लेखकप्रमाद इत्याहुः। गन्धनं हिंसेति। गन्ध अर्दने, अर्द हिंसायामित्यनयोश्चुरादौ पाठादिति भावः। सहसा वर्तते साहसिकः। 'ओजःसहोम्भसे'ति ठक्, तस्य कर्म साहसिक्यम्। ब्राह्मणादित्वात्ष्यञ्। परदारानित्यादि। तान्वशीकरोतीत्यर्थः। साहसिक्यं न धात्वर्थः, तथाहि सति परदारानिति कर्मणोऽनन्वयः स्यात्, किं तु प्रयोगोपाधिरित्यभिप्रेत्याह-तेषु सहसेति। एधो दकस्येति। एधशब्दोऽकारान्तः-'अवोदैधौद्म'ेति निपातितः। एधाश्च उदकं च एषां समाहारः। यद्वा एधःशब्दः सकारान्तः।

बा.]कर्मकत्वम्। हिताल य इति। हितात्पुरुषाद्यो न संश्रृणुते = स्वहितं न मन्यते स किंप्रभुः, कुत्सित इत्यर्थः। अत्र स्वहितस्य वस्तुतः कर्मत्वेऽपि तदविवक्षया अकर्मकत्वमिति भावः। एवं चास्मिन्नकर्मकाधिकारे हनिगम्यादीनां सतोऽपि कर्मणोऽविवक्षया अकर्मकत्वं सिद्धमिति बोध्यम्। अकर्मकत्वनिर्णयोऽयं 'लः कर्मणि' इत्यादौ उपयुज्यते। उपसर्गादस्यत्यूह्योर्वेति। 'आत्मनेपद'मिति शेषः। निवृत्तमिति। सोपसर्गयोरस्यत्यूह्योः सकर्मकत्वनियमादिति भावः। उपसर्गाद्धस्व ऊहतेः। 'यादौ क्ङिति' इति शेषपूरणम्। 'अयङ्यि क्ङिति' इत्यतस्तदनुवृत्तेरिति भावः। ब्रह्म समुह्यादिति। ऊह वितर्के। सम्यग्विचारयेदित्यर्थः। अत्र आशीर्लिङि यासुटः किरवेन ऊकारस्य ह्रस्वः। अग्निं समुह्येति। परितः संमृज्येत्यर्थः। ल्यादेशस्य ल्यपः कित्त्वमिति भावः। निसमुपवि। ह्वेञः कृतात्त्वस्य ह्व इति पञ्चम्यन्तम्। निह्वयते इति। संह्वयते। उपह्वयते। विह्वयते। अकर्त्रभिप्रायार्थमिदम्। स्पर्धायामाङः। आङ्पूर्वकात् स्पर्धाविषयकात् ह्वेञ आत्मनेपदमित्यर्थः। कृष्णश्चाणूरमाह्वयते इति। स्पर्धार्थमाकारयतीत्यर्थः। गन्धनावक्षेपण। 'आत्मनेपदमकर्त्रभिप्रायेऽपी'ति शेषः। गन्धनं हिंसेति। गन्ध अर्दने। अर्द हिंसायामित्युक्तेरिति भावः। सूचयतीति। परदोषमाविष्करोतीत्यर्थः। नन्वेवं सति कथमस्य गन्धने वृत्तिः?, हिंसाया असत्त्वादित्यत आह-सूचनं हीति। श्येनो वर्तिकामिति। वर्तिका-शकुनिविशेषः। साहसिक्ये उदाहरति-परदारान् प्रकुरुते इति। साहसप्रवृत्तिविषयीकरोतीत्यर्थः। सहसा वर्तते साहसिकः। 'ओजस्सहोऽम्भसा वर्तते' इति ठक्। तस्य कर्म असमीक्ष्यकरणं = साहसिक्यम्। तदाह-तेषु सहसा प्रवर्तते इति। फलितार्थकथनमिदम्, साहसप्रवृत्तिमात्रार्थकत्वे द्वितीयानुपपत्तेः। अतः साहसप्रवृत्तिविषयीकरणपर्यन्तानुधावनमिति बोध्यम्। प्रतियत्ने उदाहरति-एधो दकस्योपस्कुरुते इति। एधशब्दोऽदन्तः 'अवोदैधौद्मप्रश्रथहिमश्रथाः' इति सूत्रे निपातितः। एधश्च उदकं चेति समाहारद्वन्द्वः। यद्वा एधस्शब्दः सकारान्तो नपुंसकलिङ्गः। एधश्च दकं चेति विग्रहः। दकशब्द उदकवाची। 'प्रोक्तं प्राज्ञैर्भुवनममृतं जीवनीयं दकं च' इति हलायुधः। 'काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित् स्त्रियामि'त्यमरः। प्रतियत्नो गुणाधानमित्यभिप्रेत्य आह-गुणमाधत्ते इति। काष्ठस्य शोषणादिगुणाधानम्। दकस्य तु गन्धद्रव्यसंपर्कजनितगन्धाधानम्। अधेः प्रसहने। अधेः परस्मात् कृञः प्रसहनवृत्तेरात्मनेपदमित्यर्थः। वेः शब्दकर्मणः। शब्दः

शे.]तु कर्मत्वेनेत्ययमप्यविवक्षापदार्थः। अत एव 'मातुः स्मर्यते' इत्यत्राऽविवक्षितकर्मतया भावे लकारः 'अधीगर्थे'त्यत्र भाष्ये। 'हिताल यः' इत्यत्रापि हितात्पुरुषाद्धितार्थस्य यो न संश्रृणुते = न जानातीति प्रतीतेः 'मातुः स्मर्यते' इतिवदेवाऽविवक्षा। एतेनेदं प्रसिद्ध्या गतार्थमित्यपास्तमित्यन्ये। निवृत्तमिति। सोपसर्गोस्यत्यूह्योः सकर्मकत्वेनाऽकर्मकादित्येतत्संबन्धस्य वक्तुमशक्यत्वादिति भावः। स्पर्द्धायाम्। स्पर्द्धाविषये इत्यर्थः। आह्वयतेः शब्दन एव वृत्तेरिति भावः।

न्विकुरुते । उच्चारयतीत्यर्थः । शब्दकर्मणः किम्? । चित्तं विकरोति कामः । **अकर्मकाच्च** ।१।३।३५। वेः कृञ इत्येव । छात्रा विकुर्वते । विकारं लभन्ते इत्यर्थः । **संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः** ।१।३।३६। अत्रोत्सञ्जनज्ञानविगणनव्यया नयतेर्वाच्याः । इतरे प्रयोगोपाधयः । तथा हि—शास्त्रे नयते । शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थः। तेन च शिष्यसंमाननं फलितम्। उत्सञ्जने—दण्डमुन्नयते । उत्क्षिपतीत्यर्थः । माणवकमुपनयते । विधिना आत्मसमीपं प्रापयतीत्यर्थः । उपनयनपूर्वकेणाध्यापनेन हि उपनेतरि आचार्यत्वं क्रियते । ज्ञाने—तत्त्वं नयते । निश्चिनोतीत्यर्थः । कर्मकरानुपनयते । भृतिदानेन स्वसमीपं प्रापयतीत्यर्थः । **विगणनमृणादेर्निर्यातनम्** । करं विनयते । राज्ञे देयं भागं परिशोधयतीत्यर्थः । शतं विनयते धर्मार्थम्। विनियुङ्क्त इत्यर्थः।**कर्तृस्थे चाऽशरीरे कर्मणि** ।१।३।३७। नियः कर्तृस्थे कर्मणि यदात्मनेपदं प्राप्तं तच्छरीरावयवभिन्ने एव स्यात् । सूत्रे शरीरशब्देन तदवयवो लक्ष्यते । क्रोधं विनयते । अपगमयति । तत्फलस्य चित्त-

---

त.]तथा च एधांसि च दकं चेति विग्रहः। दकशब्दोऽप्युदकवाच्येवेत्यर्थोऽत्र न भिद्यते । उक्तं च हलायुधे—'प्रोक्तं प्राङ्गैर्भुवनममृतं जीवनीयं दकं चे'ति । **संमाननो** । **उपनयनपूर्वकेणेति** । **उपनयनं**—वटुसंस्कारः । तस्य परगामित्वात्परस्मैपदे प्राप्ते अनेनात्मनेपदं विधीयते । नह्युपनयनमात्रेण आचार्यत्वं भवति किं तु तत्पूर्वकाध्यापनेनेत्याचार्यकरणस्य प्रयोगोपाधित्वं परंपरया ज्ञेयम् । 'उपनीय ददद्वेदमाचार्यः स उदाहृतः' इति स्मृतिः। **कर्तृस्थे** । **कर्मणीति**।

---

बा.]कर्म कारकं यस्य तस्मात्कृञो विपूर्वादात्मनेपदमित्यर्थः। **अकर्मकाच्च**। **वेः कृञ इत्येवेति** । तथाच अकर्मकात् विपूर्वात् कृञ आत्मनेपदमित्यर्थः । 'विकुर्वते' इत्येतद्व्याचष्टे—**विकारं लभन्ते इति** । लभे विकारस्य कर्मत्वेपि धात्वर्थोपसङ्ग्रहादकर्मकत्वम् । **संमननोत्सञ्जना**। एषु नम्येषु णीञ्धातोरात्मनेपदमित्यर्थः। परगामिन्यपि फले आत्मनेपदार्थमिदम् । **इतरे इति**। संमाननाऽऽचार्यकरणप्रभृतय इत्यर्थः। **प्रयोगोपाधय इति**। वाच्यत्वाऽभावेऽपि आर्थिक्याः सत्तामात्रेण शब्दप्रयोगे निमित्तभूता इत्यर्थः। आत्मनेपदद्योत्या इति यावत् । तदेवोपपादयितुं प्रतिजानीते—**तथा हीति**। संमानने उदाहरति—**शास्त्रे नयते इति** । अत्र णीञ् प्रापणार्थकः । 'सिद्धान्त'मित्यध्याहार्यम् । सिद्धान्तं प्रत्यधिकरणत्वात् शास्त्रे इति सप्तमी । तदाह—**शास्त्रस्थमिति** । **तेनेति** । सिद्धान्तप्रापणेनेत्यर्थः । **फलितमिति** । अर्थादिति भावः । **उत्सञ्जने इति** । 'उदाह्रियते' इति शेषः। उत्सञ्जनमुत्क्षेपः। **उत्क्षिपतीत्यर्थ इति**। धातूनामनेकार्थत्वादिति भावः । आचार्यकरणे उदाहरति—**माणवकमुपनयते इति** । उपपूर्वो णीञ् समीपप्रापणार्थकः । सामीप्यं च प्रत्यासत्त्या प्रापयित्रपेक्षमेव। तच्च माणवकीयमात्मसमीपप्रापणं वैधमेव विवक्षितम्, पूर्वोत्तराऽङ्गकलापाम्नानसामर्थ्यात् । तदाह—**विधिना आत्मसमीपं प्रापयतीति**। तत्राऽऽचार्यकरणस्यार्थिकत्वमुपपादयति—**उपनयनपूर्वकेणेति**। 'माणवकमुपनयीत, तमध्यापयीते'त्यध्यापनार्थत्वमुपनयनस्याऽवगतम्, अध्यापनादाचार्यत्वं संपद्यते, 'उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ।' इति स्मरणात् । तथा च आचार्यकरणमुपनयनसाध्यत्वादार्थिकमिति भावः। **ज्ञाने इति**। 'उदाह्रियते' इति शेषः। **निश्चिनोतीत्यर्थ इति**।नयतिर्निश्चयार्थक इति भावः। भृतौ उदाहरति—**कर्मकरानुपनयते इति**।भृतिः=वेतनं।तदर्थं कर्म करोतीति कर्मकरः। 'कर्मणि भृतौ' इति टप्रत्ययः।कर्मण्युपपदे कृञष्टः स्यात्कर्तरीति तदर्थः । उपपूर्वको णीञ् समीपप्रापणार्थकः । समीपप्रापणं च भृत्यर्थमिति कर्मकरशब्दसमभिव्याहाराद्गम्यते । फलितमाह—**भृतिदानेनेति** । **ऋणादेरिति** । आदिना करादिसङ्ग्रहः । निर्यातनं प्रत्यर्पणादि । **करं विनयते इति** । राज्ञे देयो भागः करः। विपूर्वो णीञ् परिशोधनार्थकः । तदाह— **राज्ञे देयं भागंपरिशोधयतीति** । परिगणयति दातुमित्यर्थः । व्यये उदाहरति—**शतं विनयते धर्मार्थमिति** । अत्र विपूर्वो णीञ् व्ययार्थकः । तदाह—**विनियुङ्क्ते इत्यर्थ इति** । **कर्तृस्थे** । **निय इति** । कर्मकारके कर्तृस्थे सति णीञ्धातोर्यदात्मनेपदं कर्तृगे फले ञित्त्वात्प्राप्तं, तच्छरीरावयवभिन्न एव सति कर्मकारके स्यात् । कर्मणः शरीरावयवत्वे तु कर्तृगेऽपि फले परस्मैपदमेवेत्यर्थः । ननु सूत्रे शरीरग्रहणात्कथं शरीरावयवेत्युक्तमित्यत आह—**सूत्रे इति** । शरीरतादात्म्यापन्नस्यैव

---

शे.]**वेः शब्द**।शब्दः कर्म कारकं यस्य ततः कृञो विपूर्वादात्मनेपदमित्यर्थः।**प्रयोगोपाधय इति**। यथा 'शास्त्रे नयते' इत्यत्र नयतेः प्रापणमर्थः, शिष्यादिसंमाननन्तु तत्फलतया मानसबोधविषयः, एवं 'माणवकमुपनयते' इत्यत्र विधिना वेदाध्ययनफलकमुपनयनाख्यसंस्कारेणात्मसमीपप्रापणं नयतेरर्थः । एवं हि सोऽध्यापक आचार्यो भवतीति आचार्यकरणं मानसबोधविषयः । 'कर्मकरानुपनयते' इत्यत्रात्मसमीपप्रमाणं नयत्यर्थः । तच्च भृतिदानकरणकमेवेति तन्मानसबोधविषय इति भावः । **कर्तृस्थे कर्मणीति** । कर्तृस्थे कर्मकारके सतीत्यर्थः । **शरीरशब्देनेति** । शरीरतादात्म्यापन्नस्यैव कर्तृत्वेन शरीरस्य तत्स्थत्वाऽसम्भवः, अवयवानान्तु सम्बन्धविशेषेण तत्स्थत्वसम्भव इति भावः । कर्तृस्थे इति

प्रसादस्य कर्तृगत्वात् 'स्वरितञित' इत्येव सिद्धे नियमार्थमिदम्। तेनेह न—गडुं विनयति। कथं तर्हि—'विगणय्य नयन्ति पौरुष'मिति। कर्तृगामित्वाऽविवक्षायां भविष्यति। **वृत्तिसर्गतायनेषु क्रमः** ।१।३।३८। वृत्तिरप्रतिबन्धः। ऋचि क्रमते बुद्धिः। न प्रतिहन्यत इत्यर्थः। सर्ग—उत्साहः। अध्ययनाय क्रमते। उत्सहते इत्यर्थः। क्रमन्तेऽस्मिन् शास्त्राणि। स्फीतानि भवन्तीत्यर्थः। **उपपराभ्याम्** ।१।३।३९। वृत्त्यादिष्वाभ्यामेव क्रमेर्न तूपसर्गान्तरपूर्वात्। उपक्रमते। पराक्रमते। नेह—सङ्क्रामति। **आङ उद्गमने** ।१।३।४०। आक्रमते सूर्यः। उदयत इत्यर्थः। * **ज्योतिरुद्गमन इति वाच्यम्**। नेह—आक्रामति धूमो हर्म्यतलात्। **वेः पादविहरणे** ।१।३।४१। साधु विक्रमते वाजी। पादविहरणे किम्?। विक्रामति सन्धिः। द्विधा भवति। स्फुटतीत्यर्थः। **प्रोपाभ्यां समर्थाभ्याम्** ।१।३।४२। समर्थौ—तुल्यार्थौ। शकन्ध्वादित्वात्पररूपम्। प्रारम्भेऽनयोस्तुल्यार्थता। प्रक्रमते। उपक्रमते। समर्थाभ्यां किम्?। प्रक्रामति। गच्छतीत्यर्थः। उपक्रामति। आगच्छतीत्यर्थः। **अनुपसर्गाद्वा** ।१।३।४३। क्रामति। क्रमते। अप्राप्तविभाषेयम्। वृत्त्यादौ तु नित्यमेव। **अपह्नवे ज्ञः** ।१।३।४४। शतमपजानीते। अपलपतीत्यर्थः। **अकर्मकाच्च** ।१।३।४५। सर्पिषो जानीते। सर्पिषोपायेन प्रवर्तते इत्यर्थः। **संप्रतिभ्यामनाध्याने** ।१।३।४६। शतं संजानीते। अवेक्षत इत्यर्थः। शतं प्रतिजानीते। अङ्गीकरोतीत्यर्थः।

---

त.]आत्मगामिनि क्रियाफले इत्यर्थः। **वृत्तिसर्ग**। तायृ सन्तानपालनयोः।**तायनं**—स्फीतता।तदाह—**स्फीतानीति**। प्रवृद्धानीत्यर्थः। **वेःपाद**। यद्यपि क्रमेः पादविक्षेप एवार्थस्तथापि धातूनामनेकार्थत्वादेवमुक्तम्। **प्रोपाभ्याम्**। 'प्रोपाभ्यां प्रारम्भे' इत्येव सुवचम्। **उपक्रामतीति**। वृत्त्याद्यर्थेष्वेवोपपराभ्यामिति प्रवृत्तेर्नाऽत्रात्मनेपदं शङ्क्यमिति भावः।**वृत्त्यादौ त्विति**।न च वृत्त्यादिसूत्रं सोपसर्गे चरितार्थमित्यनुपसर्गात्क्रमेर्वृत्त्याद्यर्थेऽपि विभाषैवाऽस्त्विति वाच्यम्, 'उपपराभ्या'-मिति नियमस्योक्तत्वात्। **अकर्मकाच्च**। 'अनुपसर्गाज्ज्ञः' इत्यनेनैव सिद्धे 'सर्पिषोऽनुजानीते' इत्यादिसोपसर्गार्थमिदं

---

बा.]कर्तृतया शरीरस्य कर्तृस्थत्वं न संभवति।शरीरावयवानां तु समवायेन आधारतया तत्संभवतीति भावः।ननु क्रोधापगमस्य क्रोध विषयशत्रुगताऽनिष्टपरिहारफलकत्वाञ्ञित्त्वेऽप्यात्मनेपदाऽप्राप्तेस्तद्विध्यर्थत्वात्कथमुक्तनियमार्थत्वमस्य सूत्रस्येत्यत आह—**तत्फलस्येत्यादि**। **गडुं विनयतीति**। कर्मणो गडोः शरीरावयवत्वान्नात्मनेपदमित्यर्थः।**कथं तर्हीति**।पौरुषस्य कर्मणः शरीरावयवभिन्नतया आत्मनेपदप्रसङ्गादिति भावः। **कर्तृगामित्वेति**। कर्तृस्थे कर्मणि नियः कर्तृगे फले ञित्वात् प्राप्तमात्मनेपदं शरीरावयवभिन्न एवेति नियम्यते,नतु विधीयते।अत्र तु फलस्य कर्तृगामित्वं सदपि न विवक्षितम्, अतो नात्मनेपदमिति भावः।**वृत्तिसर्ग**।'आत्मनेपद'मिति शेषः। तायने उदाहरति—**क्रमन्तेऽस्मिन्निति**। तायनं = वृद्धिः। तदाह—**स्फीतानीति**। **उपपराभ्याम्**।'वृत्तिसर्गतायनेषु क्रमः' इत्यनुवर्तते।तेनैव सिद्धे नियमार्थमिदं।तदाह—**आभ्यामेव क्रमेरिति**।'आत्मनेपद'मिति शेषः। **आङ उद्गमने**। आङः परस्मादुद्गमनवृत्तेः क्रम आत्मनेपदमित्यर्थः। **आक्रमते सूर्य इति**। आङ्पूर्वः क्रमिरुद्गमनार्थकः। तदाह—**उदयते इत्यर्थ इति**। उपसर्गवशादिति भावः। **वेः पादविहरणे**। पादविहरणं = पादविक्षेपः। तद्वृत्तेर्विपूर्वात् क्रमेरात्मनेपदमित्यर्थः। **साधु विक्रमते वाजीति**। सम्यक्पदानि विक्षिपतीत्यर्थः। **प्रोपाभ्याम्**। 'क्रम आत्मनेपद'मिति शेषः।समौ अर्थौ ययोरिति विग्रह इत्याह—**समर्थौ तुल्यार्थाविति**। सवर्णदीर्घमाशङ्क्य आह—**शकन्ध्वादित्वादिति**।ननु 'प्रक्रमते' इत्यत्र अतिशयितपदविक्षेपार्थप्रतीतेः,उपक्रमते इत्यत्र समीपे पदानि विक्षिपतीति प्रतीतेः कथमनयोस्तुल्यार्थकत्वमित्यत आह—**प्रारम्भेऽनयोस्तुल्यार्थतेति**। तथाच आरम्भार्थकाभ्यामिति फलितमिति भावः। **अनुपसर्गाद्वा**। 'क्रम आत्मनेपद'मिति शेषः। **अप्राप्तविभाषेयमिति**। अनुपसर्गात् क्रमेरात्मनेपदस्य कदाप्यप्राप्तेरिति भावः। **वृत्त्यादाविति**। वृत्तिसर्गतायनेषु तु पूर्वविप्रतिषेधान्नित्यमेवेत्यर्थः। **अपह्नवे ज्ञः**। अपह्नवः = अपलापः। तद्वृत्तेर्ज्ञाधातोरात्मनेपदमित्यर्थः। **अकर्मकाच्च**। 'ज्ञ आत्मनेपद'मिति शेषः। **सर्पिषो जानीते इति**। अत्र ज्ञाधातुः प्रवृत्तौ वर्तते। 'ज्ञोऽविदर्थस्य करणे' इति तृतीयार्थे षष्ठी। तदाह—**सर्पिषोपायेन प्रवर्तते इति**। 'अनुपसर्गाज्ज्ञः' इति वक्ष्यमाणेनैव सिद्धे सोपसर्गार्थमिदम्। सर्पिषोऽनुजानीते। **सम्प्रतिभ्यामनाध्याने**। 'ज्ञ आत्मनेपद'मिति शेषः। **अवेक्षते इत्यर्थ इति**। अकर्मकत्वाऽभावा-

---

शे.]किम्?। राज्ञः क्रोधं विनयति। अन्ये तु विध्यर्थमिदम्, अकर्तृगेऽपि क्रियाफले। 'नयन्ति पौरुष'मिति तु प्रमाद इत्याहुः। **उपपराभ्याम्**। अस्य नियमत्वं 'वृत्तिसर्गे'त्यनुवृत्त्या बोध्यम्। विधित्वे तु अनेनैव सिद्धे 'प्रोपाभ्या'मिति सूत्रे उपग्रहणवैयर्थ्यापत्तिः, 'प्रात्प्रारम्भे' इत्येव सिद्धेः। **वेः पादवि**। धातूनामनेकार्थत्वं बोधयितुं सूत्रे 'पादविहरणे' इत्युक्तम्। **अनुपसर्गाद्वा**। इदं सूत्रं लिटि, आशीर्लिङि च न। अस्य 'विकरणेभ्यो नियमो बलीया'नित्यर्थज्ञापकतापर—'अनुदात्तङितः' इति—सूत्रस्थभाष्यप्रामाण्यात्। **नित्यमेवेति**। पूर्वविप्रतिषेधेनेति भावः। **सम्प्रतिभ्याम्**।

अनाध्यान इति योगो विभज्यते । तत्सामर्थ्यात् 'अकर्मकाच्चे'ति प्राप्तिरपि बाध्यते । मातरं मातुर्वा संजानाति । कर्मणः शेषत्वविवक्षायां षष्ठी । **भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः।१।३।४७।** उपसंभाषोपमन्त्रणे धातोर्वाच्ये । इतरे प्रयोगोपाधयः । शास्त्रे वदते । भासमानो ब्रवीतीत्यर्थः । **उपसंभाषा**-उपसान्त्वनम् । भृत्यानुपवदते । सान्त्वयतीत्यर्थः । ज्ञाने,-शास्त्रे वदते । यत्ने,-क्षेत्रे वदते । विमतौ,-क्षेत्रे विवदन्ते । उपमन्त्रणमुपच्छन्दनम् । उपवदते। प्रार्थयते इत्यर्थः।**व्यक्तवाचां समुच्चारणे।१।३।४८।** मनुष्यादीनां संभूयोच्चारणे वदेरात्मनेपदं स्यात् । संप्रवदन्ते ब्राह्मणाः । नेह-संप्रवदन्ति खगाः । **अनोरकर्मकात् ।१।३।४९।** व्यक्तवाग्विषयादनुपूर्वादकर्मकाद्वदेरात्मनेपदं स्यात् । अनुवदते कठः कलापस्य। अकर्मकात्किम् ?। उक्तमनुवदति। व्यक्तवाचां किम् ?। अनुवदति वीणा। **विभाषा विप्रलापे।१।३।५०।**विरुद्धोक्तिरूपे व्यक्तवाचां समुच्चारणे उक्तं

---

त.]सूत्रम्। **भासनोपसंभाषा।**एषु किम् ?। यत्किंचिद्वदति। **अनुवदते कठ इति।** अनुः सादृश्ये । तेन कलापस्येति तुल्यार्थयोगे शेषलक्षणा षष्ठी । **विभाषा विप्रलापे** । अप्राप्तविभाषा ।

---

बा.]त् पूर्वेणाऽप्राप्तिरिति भावः । अनाध्याने किम् ? मातरं संजानाति । आध्यायतीत्यर्थः । उत्कण्ठापूर्वकं स्मरणमाध्यानम् । ननु यदा आध्याने कर्मणः शेषत्वविवक्षया षष्ठीमाश्रित्य मातुः संजानातीति प्रयुज्यते तदा सम्पूर्वो जानातिरयमकर्मक इति स्थितिः । तत्र 'संप्रतिभ्यामनाध्याने' इत्यात्मनेपदस्याऽप्रवृत्तावपि 'अकर्मकाच्चे'ति सूत्रेणात्मनेपदं दुर्वारम्, तत्र अनाध्याने इत्यभावात् । संप्रतिभ्यामित्यत्र अनाध्यानग्रहणस्य मातरं संजानातीति सकर्मके चरितार्थत्वादित्यत आह-**अनाध्याने इति योगो विभज्यते इति।** ततश्च 'संप्रतिभ्या'मित्येको योगः । संप्रतिपूर्वाज्ज्ञ आत्मनेपदमित्यर्थः । 'अनाध्याने' इति योगान्तरम् । अनाध्याने संप्रतिभ्यामात्मनेपदमित्यर्थः । ततः किमित्यत आह-**अकर्मकाच्चेति प्राप्तिरपि बाध्यते इति ।** ननु अनन्तरस्येति न्यायेन 'सम्प्रतिभ्या'मित्यस्यैव बाधो युक्त इत्यत आह-**तत्सामर्थ्यादिति ।** एकसूत्रत्वेनैव सिद्धे अनाध्याने इति योगविभागाद्व्यवहितस्यापि बाध इत्यर्थः । ननु 'मातरं मातुर्वा संजानाती'त्यत्र मातुः कर्मत्वाद्द्वितीयैव युक्तेत्यत आह-**कर्मणः शेषत्वविवक्षायां षष्ठीति ।** नचैवमपि 'अधीगर्थदयेशां कर्मणि' इति षष्ठ्येव स्यान्नतु द्वितीयेति वाच्यम्, तत्र शेष इत्यनुवर्त्य कर्मणः शेषत्वविवक्षायां षष्ठी, कर्मत्वविवक्षायां तु द्वितीयेत्यभ्युपगमात् । नचैवं सति 'षष्ठी शेषे' इत्यनेनैव सिद्धत्वात् 'अधीगर्थे'ति व्यर्थमिति वाच्यम्, 'मातुः स्मरण'मित्यादौ शेषषष्ठ्याः समासाऽभावार्थत्वादिति कारकाधिकारे प्रपञ्चितम् । **भासनोपसंभाषा ।** 'आत्मनेपद'मिति शेषः। **इतरे इति।** भासनज्ञानादय इत्यर्थः। **प्रयोगोपाधय इति ।** इदं 'सम्माननोत्सञ्जने'त्यत्र व्याख्यातं प्राक् । भासनं तु तत्तदाक्षेपेषु समाधानाय नवनवयुक्त्युल्लेखः । **शास्त्रे वदते इति ।** विषयसप्तम्येषा । **भासमान इति ।** नवनवयुक्तीरुल्लिखतीत्यर्थः। **शास्त्रे वदते इति**-विषयसप्तमी। व्यवहरतीत्यर्थः । व्यवहारश्च ज्ञानं विना न संभवतीति ज्ञानमार्थिकम् । ज्ञात्वा व्यवहरतीति फलितम् । **क्षेत्रे विवदन्ते इति ।** विरुद्धं व्यवहरन्तीत्यर्थः। विरुद्धव्यवहारश्च वैमत्यमूलक इति विमतिरार्थिकी। **उपवदते इति ।** उपपूर्वस्य वदेः प्रार्थनमर्थः । तदाह-**प्रार्थयते इत्यर्थ इति ।व्यक्तवाचाम्।** व्यक्ताः = अज्झल्भेदेन स्पष्टोच्चारिताः वाचः = शब्दा येषामिति विग्रहः । समित्येकीभावे । तदाह-**मनुष्यादीनामिति । संप्रवदन्ते ब्राह्मणा इति ।** संभूयोच्चारयन्तीत्यर्थः । **अनोरकर्मकात् ।** 'व्यक्तवाचा'मित्यनुवृत्तं विषयषष्ठ्यन्तमाश्रीयते । समुच्चारणे इति निवृत्तम् । तदाह-**व्यक्तवाग्विषयादिति ।** मनुष्यकर्तृकादित्यर्थः । **अनुवदते इति ।** अनुः सादृश्ये । 'तुल्यार्थैरतुलोपमाभ्या'मिति षष्ठी । कठः कलापेन तुल्यं वदतीत्यर्थः । वस्तुतस्तु शेषषष्ठीत्येवोचितम् । 'तुल्यार्थै'रित्यत्र 'अतुलोपमाभ्या'मिति पर्युदासेनाऽनव्ययानामेव तुल्यार्थानां ग्रहणात् । अन्यथा 'चन्द्र इव मुख'मित्यादावपि तृतीयाषष्ठ्योरापत्तेरित्यलम् । **विभाषा विप्रलापे ।** 'व्यक्तवाचां समुच्चारणे' इत्यनुवर्तते । विरुद्धोक्तिर्विप्रलापः । तदाह-

---

शे.]उत्कण्ठापूर्वकं स्मरणम्=आध्यानम् । **योगो विभज्यत इति ।** अत्र वृत्त्यादिकमेव मानम् । **भासमान इति ।** शिष्यैः स्तूयमानो हि भासेत,तथा चोपर्युपरिशास्त्रार्थप्रतिभासात्सद्युक्तिर्निर्वहति । तेजोभङ्गे तु न शक्नुयाद्वदितुमिति भावः। **ज्ञाने इति ।** 'शास्त्रे वदते' इति बोधोत्तरं शास्त्रविषयकज्ञानवत्त्वं मनसा बुध्यते इति भावः । **यत्नः**-उत्साहः । 'क्षेत्रे वदते' इत्यस्य तद्विषयकमुत्साहमाविष्करोतीत्यर्थः । **विवदन्त इति ।** वैमत्यहेतुकं नानाविधं भाषन्ते इत्यर्थः । वदेर्व्यक्तवागर्थत्वेन 'व्यक्तवाचा'मित्युपादानसामर्थ्याद्येषां प्रसिद्धतरं व्यक्तवाक्त्वं त एवेह गृह्यन्ते । तेन 'वरतनु ! सम्प्रवदन्ति कुक्कुटाः' इत्यादौ न । रतिविराममनिच्छन्तीं तरुणीं प्रति तद्विरामौचित्यद्योतिकोक्तिरियं, तदाह-**मनुष्यादीनामिति ।** समुच्चेत्यादि किम् ? । क्रमेण संप्रवदन्ति । **विभाषा विप्र ।** युगपत् परस्परविरोधेन कथनं विप्रलापः ।

वा स्यात् । विप्रवदन्ते विप्रवदन्ति वा वैद्याः । **अवाद्ग्रः** ।१।३।५१। अवगिरते । गृणातिस्त्ववपूर्वो न प्रयुज्यत एवेति भाष्यम् । **समः प्रतिज्ञाने** ।१।३।५२। शब्दं नित्यं सङ्गिरते । प्रतिजानीत इत्यर्थः । प्रतिज्ञाने किम् ? । सङ्गिरति ग्रासम् । **उदश्चरः सकर्मकात्** ।१।३।५३। धर्ममुच्चरते । उल्लङ्घ्य गच्छतीत्यर्थः । सकर्मकात्किम् ? । बाष्पमुच्चरति । उपरिष्टाद्गच्छतीत्यर्थः । **समस्तृतीयायुक्तात्** ।१।३।५४। रथेन संचरते । **दाणश्च सा चेच्चतुर्थ्यर्थे** ।१।३।५५। संपूर्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं स्यात्तृतीया चेच्चतुर्थ्यर्थे । दास्या संयच्छते । पूर्वसूत्रे 'सम' इति षष्ठी । तेन सूत्रद्वयमिदं व्यवहितेऽपि प्रवर्तते । रथेन समुदाचरते । दास्या सम्प्रयच्छते । **उपाद्यमः स्वकरणे** ।१।३।५६। स्वकरणं स्वीकारः । भार्यामुपयच्छते । **विभाषोपयमने** ।१।२।५६। यमः सिच् किद्वा स्याद्विवाहे । रामः सीतामुपायत, उपायंस्त वा । उदवोढेत्यर्थः । गन्धनाङ्गे उपयमे तु पूर्वविप्रतिषेधान्नित्यं कित्वम् । ज्ञाश्रुस्मृ-

त.] **स्वकरणं स्वीकार इति** । स्वकरणमित्यत्र च्विर्न भवति, 'समर्थानां प्रथमाद्वे'ति विकल्पात् । स्वकरणशब्देन भार्यास्वीकारो गृह्यते इति वृत्तिकृत् । भट्टिस्तु स्वीकारमात्रेऽपि प्रायुङ्क्त 'उपायंस्त महाऽस्त्राणी'ति । **गन्धनाङ्गे इति** । पूर्वविप्रतिषेधश्च 'नवेति विभाषा'सूत्रे भाष्ये उक्तः । **नित्यं कित्वमिति** । 'यमो गन्धने' इति पूर्वसूत्रेणेत्यर्थः ।

**ज्ञाश्रुस्मृ** । 'अपह्नवे ज्ञः' इत्यादिना ज्ञाधातोः, 'अर्तिश्रुदृशिभ्यश्चे'ति श्रुदृशिभ्यां चात्मनेपदे कृते तस्मिन्विषये 'पूर्ववत्सनः'

बा.] **विरुद्धोक्तिरूपे इति** । **अवाद्ग्रः** । आत्मनेपद'मिति शेषः । 'गॄ' इत्यस्य 'ग्र' इति पञ्चमी । 'प्रकृतिवदनुकरण'मित्यस्याऽनित्यत्वात् 'ॠत इद्धातो'रिति न भवति । तदनित्यत्वे इदमेव मानम् । **अवगिरत इति** । शविकरणोऽयम् । 'अवगृणाती'त्यत्राप्यात्मनेपदमाशङ्क्य आह–**गृणातिस्त्विति** । एवंच तुदादेरेव ग्रहणमिति भावः । **समः प्रतिज्ञाने** । गिरतेरात्मनेमदमित्यर्थः । **प्रतिज्ञानम्**-अभ्युपगमः । **सङ्गिरति ग्रासमिति** । भक्षयतीत्यर्थः । **उदश्चरः** । उत्पूर्वाच्चरधातोः सकर्मकादात्मनेपदमित्यर्थः । **समस्तृतीया** । सकर्मकादिति निवृत्तम् । संपूर्वात्तृतीयान्तसमभिव्याहृताच्चरेरात्मनेपदमित्यर्थः । तृतीयायुक्तादिति किम् ? । रथिकाः संचरन्ति । अत्र यद्यपि रथेनेत्यर्थाद्गम्यते, तथापि तृतीयान्तश्रवणाऽभावान्नात्मनेपदम् । एतदर्थमेव योगग्रहणम् । अन्यथा 'तृतीयये'त्येवावक्ष्यत् । सकर्मकादप्येतदात्मनेपदं भवति, अविशेषात्, अत एवं 'तृतीयायुक्तादिति किम् ?' । उभौ लोकौ संचरसीमं चामुं च लोक'मिति भाष्यं सङ्गच्छते । **दाणश्च सा** । 'समस्तृतीयायुक्ता'दित्यनुवर्तते । तदाह–**संपूर्वादिति** । **उक्तं स्यादिति** । आत्मनेपदमित्यर्थः । **सा चेदिति** । तच्छब्देन तृतीया परामृश्यते । तदाह–**तृतीया चेदिति** । **दास्या संयच्छते इति** । 'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया वाच्या' इति तृतीया । ननु 'रथेन समुदाचरते' इत्यत्र 'समस्तृतीयायुक्ता'दिति पूर्वसूत्रस्य न प्रवृत्तिः, आङा व्यवहितत्वेन सम्पूर्वकत्वाऽभावात् 'तस्मादित्युत्तरस्ये'ति परिभाषया सम इति पञ्चम्या चरेरव्यवहितपरत्वलाभात् । तथा 'दास्या संप्रयच्छते' इत्यत्रापि 'दाणश्च सा चे'दिति कथं प्रवर्तते, प्रशब्देन व्यवधानादित्यत आह–**पूर्वसूत्रे सम इति षष्ठीति** । तथाच षष्ठ्या पौर्वापर्यमेव गम्यते, न त्वव्यवहितत्वमिति भावः । **तेनेति** । षष्ठ्याश्रयणेनेत्यर्थः । **सूत्रद्वयमिति** । 'समस्तृतीयायुक्ता'दिति पूर्वसूत्रस्थस्य षष्ठ्यन्तस्यैव समः 'दाणश्चे'ति सूत्रेऽप्यनुवृत्तेरिति भावः । **उपाद्यमः** । 'आत्मनेपद'मिति शेषः । ननु 'स्वं वस्त्रमुत्पादयती'त्यर्थे 'वस्त्रमुपयच्छती'त्यत्राप्यात्मनेपदं स्यादित्यत आह–**स्वकरणं स्वीकार इति** । अस्वस्य सतः स्वत्वेन परिग्रहः स्वकरणशब्देन विवक्षित इत्यर्थः । च्विप्रत्ययस्तु वैकल्पिकः, 'समर्थानां प्रथमाद्वे'त्युक्तेरिति भाष्ये स्पष्टम् । **भार्यामुपयच्छते इति** । अन्यदीयां कन्यां भार्यात्वेन परिगृह्णातीत्यर्थः । **विभाषोपयमने** । 'यमो गन्धने' इत्यतो यम इति, 'हनः सिच्' इत्यतः सिजिति, 'असंयोगा'दित्यतः किदिति चानुवर्तते । तदाह–**यमः सिच्किद्वा स्याद्विवाहे इति** । उपयमशब्दो विवाहे वर्तते इति भावः । **रामः सीतामुपायतेति** । भार्यात्वेन स्वीकृतवानित्यर्थः । सिचः कित्वपक्षे 'अनुदात्तोपदेशे'ति मकारलोपे 'ह्रस्वादङ्गा'दिति सिचो लोपः । **उदवोढेति** । भार्यात्वेन परिग्रहः–उद्वाहः । **गन्धनाङ्गे उपयमे त्विति** । हिंसापूर्वके विवाहे त्वित्यर्थः । राक्षसविवाहे त्विति यावत् । **'हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदतो हरेत् । स राक्षसो विवाहः–'** इति स्मृतेः । **नित्यं कित्वमिति** । 'यमो गन्धने' इति पूर्वसूत्रेणे'ति शेषः । यदि गन्धनाङ्गकेऽप्युपयमने परत्वादियं विभाषा स्यात्तर्हि एषा प्राप्तविभाषा स्यात् । ततश्च 'न वेति विभाषे'त्यत्र भाष्येऽप्राप्तविभाषास्वस्याः परिगणनं विरुध्येत । अतः पूर्वविप्रतिषेध आश्रयणीय इति भावः । **ज्ञाश्रु** । **प्राग्वदिति** । आत्मनेपदमित्यर्थः । यद्यपि 'अपह्नवे ज्ञः', 'अकर्मका-

शे.] [इति] **भाष्यमिति** । **समस्तृ** । एवं च तुदादेरेव ग्रहणमिति भावः । तृतीयेत्यादि किम् ? । उभौ लोकौ सञ्चरसीमञ्चामुञ्च देवलेति । **दाणश्च** । इदमशिष्टव्यवहारे दृश्यते । दानपूर्वके भोगेऽत्र दाण्धातुः । **सूत्रद्वयमिति** । 'शदेः' इति सूत्रभाष्यात्तु सर्वत्रैव षष्ठी, व्यवहिते प्रवृत्तिश्चेति लभ्यते । **स्वकरणं स्वीकार इति** । च्विस्तु प्रकृतिविकृतिभावाऽविवक्षणान्न ।

**ज्ञाश्रुस्मृदृशां सनः** ।१।३।५७। सन्नन्तानामेषां प्राग्वत् । धर्मं जिज्ञासते । शुश्रूषते । सुस्मूर्षते । दिदृक्षते । **नाऽनोर्ज्ञः** ।१।३।५८। पुत्रमनुजिज्ञासति । पूर्वसूत्रस्यैवायं निषेधः, 'अनन्तरस्ये'ति न्यायात् । तेनेह न—सर्पिषोऽनुजिज्ञासते । सर्पिषा प्रवर्तितुमिच्छतीत्यर्थः । 'पूर्ववत्सनः' इति तङ्, 'अकर्मकाच्चे'ति केवलाद्विधानात् । **प्रत्याङ्भ्यां श्रुवः** ।१।३।५९। आभ्यां सन्नन्ताच्छ्रुव उक्तं न स्यात् । प्रतिशुश्रूषति । आशुश्रूषति । कर्मप्रवचनीयात्स्यादेव । देवदत्तं प्रतिशुश्रूषते । **'शदेः शितः'** । **'म्रियतेर्लुङ्लिङोश्च'** । व्याख्यातम् । **पूर्ववत्सनः** ।१।३।६२। सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात् । एदिधिषते । शिशयिषते । निविविक्षते । पूर्ववत्किम् ? । बुभूषति । 'शदे'रित्यादिसूत्रद्वये 'सनो ने'त्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । तेनेह न—शिशत्सति । मुमूर्षति । **'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य'** । एधांचक्रे । **प्रोपाभ्यां युजेरयज्ञपात्रेषु** ।१।३।६४। प्रयुङ्क्ते । उपयुङ्क्ते । *स्वराद्यन्तोपसर्गादिति वक्तव्यम् । उद्युङ्क्ते । नियुङ्क्ते । अयज्ञपात्रेषु किम् ? । द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति । **समः क्ष्णुवः** ।१।३।६५। संक्ष्णुते शस्त्रम् । **भुजोऽनवने** ।१।३।६६। ओदनं

---

इत्यनेन सिद्धेऽपि विषयान्तरे सन्नन्तादनेन विधीयत इति ज्ञेयम् । **निविविक्षत इति** । 'नेर्विशः' इत्यात्मनेपदविधानात्सन्नन्तादपि आत्मनेपदम् । **सनो नेत्यनुवर्त्येति** । 'नानोर्ज्ञः', 'पूर्ववत्सनः' इति सूत्राभ्या'मिति शेषः । **समः क्ष्णुवः** । 'समो गम्यृच्छिक्ष्णुभ्यः' इति पठनीये पृथगस्य पाठः सकर्मकादपि विधानार्थ इति ध्वनयन्नुदाहरति—**संक्ष्णुते शस्त्रमिति** । **भुजोऽनवने** ।

---

बा.]च''सम्प्रतिभ्यामनाध्याने' इति सूत्रैः, 'अतिश्रुदृशिभ्यश्चे'ति वार्तिकेन च ज्ञादिभ्य आत्मनेपदे कृते 'पूर्ववत्सनः' इत्यात्मनेपदं सिद्धम्, तथाप्यपह्नवाद्यभावेऽप्यात्मनेपदार्थं ज्ञाश्रुदृशीनामिह ग्रहणमिति मत्वोदाहरति—**धर्मं जिज्ञासते इति** । ज्ञातुमिच्छतीत्यर्थः । **शुश्रूषते इति** । 'अज्झनगमां सनी'ति दीर्घः । 'इको झ'लिति सनः कित्त्वम् । 'श्र्युकः किती'ति इण्निषेधः । **सुस्मूर्षते इति** । स्मृधातोः सनि 'अज्झने'ति दीर्घे 'उदोष्ठ्यपूर्वस्ये'त्युत्वे रपरत्वे 'हलि चे'ति दीर्घः । **नानोर्ज्ञः** । अनुपूर्वाज्ज्ञाधातोः सन्नन्तान्नात्मनेपदमित्यर्थः । **पुत्रमनुजिज्ञासतीति** । अनुज्ञातुमिच्छतीत्यर्थः । ननु सर्पिषा प्रवर्तितुमिच्छतीत्यर्थे 'सर्पिषोऽनुजिज्ञासते' इत्यत्रापि 'अपह्नवे ज्ञः', 'अकर्मकाच्चे'त्यात्मनेपदस्याप्यनेनं निषेधे सति सन्नन्तात्परस्मैपदमेव स्यादित्यत आह—**पूर्वसूत्रस्यैवेति** । एवं च 'सर्पिषोऽनुजिज्ञासते' इत्यत्र 'अकर्मकाच्चे'त्यात्मनेपदं निर्बाधमिति भावः । ननु 'अकर्मकाच्चे'ति ज्ञाधातोरात्मनेपदे सन्नन्तात्कथमात्मनेपदलाभ इत्यत आह—**पूर्वेत्यादि**—? **केवलादिति** । केवलात्सन्विहीनाज्ज्ञाधातोरात्मनेपदविधानात्सन्नन्तादपि तस्मात् 'पूर्ववत्सनः' इत्यात्मनेपदमित्यर्थः । **प्रत्याङ्भ्यां श्रुवः** । उक्तं नेति । आत्मनेपदं नेत्यर्थः । प्रत्याङावितिहोपसर्गावेव गृह्येते, व्याख्यानात् । तदाह—**कर्मप्रवचनीयात्स्यादेवेति** । 'आत्मनेपद'मिति शेषः । **देवदत्तं प्रतीति** । 'लक्षणेत्थम्भूते'ति प्रतिः कर्मप्रवचनीयः । **पूर्ववत्सनः** । पूर्वेणेव पूर्ववत् । 'तेन तुल्य'मिति तृतीयान्ताद्वतिः । पूर्वशब्देन सन्प्रकृतिर्विवक्षिता । तदाह—**सनः पूर्व इत्यादि** । **एदिधिषते इति** । सन्प्रकृतेरेधधातोरात्मनेपदित्वात्तत्प्रकृतिकसन्नन्तादात्मनेपदम् । 'नेर्विशः' इत्यात्मनेपदविधानात्तत्प्रकृतिकसन्नन्तादपि आत्मनेपदम् । ननु 'शदेः शितः' 'म्रियतेर्लुङ्लिङोश्चे'त्यात्मनेपदविधानात् शिशत्सति मुमूर्षतीत्यत्रापि सन्नन्तादात्मनेपदं स्यादित्यत आह—**शदेरित्यादीति** । आदिना 'म्रियतेर्लुङ्लिङोश्चे'त्यस्य ग्रहणम् । 'शदे'रित्यादिसूत्रद्वये 'पूर्ववत्सनः' इति, 'नानोर्ज्ञः' इत्यतो नेति चानुवर्त्य शदेर्म्रियतेश्च सन्नन्तान्नात्मनेपदमिति व्याख्येयमित्यर्थः । नन्वेवं सति शीयते म्रियते इत्यादावात्मनेपदं न लभ्येतेत्यत आह—**वाक्यभेदेनेति** । 'शदेः शितः' 'म्रियतेर्लुङ्लिङोश्चे'त्येकं वाक्यम् । शिद्भाविनः शदेरात्मनेपदं स्यात्, मृङो लुङ्लिङ्प्रकृतिभूतात्, शित्प्रकृतिभूताच्चात्मनेपदं स्यादित्यर्थः । तेन शीयते म्रियते ममारेत्यादि सिध्यति । 'सनो ने'त्यपरं वाक्यम् । शदेः, म्रियतेश्च सन्नन्तान्नात्मनेपदमित्यपरम् । तेन शिशत्सति, मुमूर्षति इत्यादौ नात्मनेपदमित्यर्थः । **प्रोपाभ्यां** । 'आत्मनेपद'मिति शेषः । **स्वरेति** । स्वरौ अचौ आद्यन्तौ यस्य सः स्वराद्यन्तः । तथाभूतोपसर्गात्परत्व एव युजेरात्मनेपदमित्यर्थः । **द्वन्द्वमिति** । द्वन्द्वंद्विशः, न्यञ्चि—अधोबिलानीत्यर्थः । **समः क्ष्णुवः** । 'आत्मनेपद'मिति शेषः । 'समो गम्यृच्छिभ्या'मित्यत्रैव 'समो गम्यृच्छिक्ष्णुव'इति न सूत्रितं, तथा सति अकर्मकादित्यनुवृत्त्या सकर्मकान्न स्यात् । तत्सूचयन्नुदाहरति—**संक्ष्णुते शस्त्रमिति** । तीक्ष्णीकरोतीत्यर्थः । **भुजोऽनवने** । अवनं—रक्षणम् । ततोऽन्यत्र भुजेरात्मनेपदमित्यर्थः । ननु

---

शे.]स्वत्वोत्पादने इत्यर्थात् । स्वीकार इत्यव्युत्पन्नं प्रातिपदिकमिति बोध्यम् । **पूर्वसूत्रस्यैवेति** । एवञ्च तस्य सकर्मकविषयत्वेन सकर्मकस्यैव निषेधोऽकर्मके तु परत्वात् 'पूर्ववत्सनः' इत्यात्मनेपदमिति भावः । **प्रत्याङ्भ्याम्** । प्रत्यासत्त्या श्रुधात्वर्थविशेषकावेव प्रत्याङौ गृह्येते, तौ च उपसर्गावेवेत्याशयेनाह—**कर्मप्रवचनीयादिति** । ते हि सम्बन्धपरिच्छेदका न क्रियाविशेषका इति स्पष्टमेव । **पूर्ववत्सनः** । प्रत्यासत्त्या सनः पूर्व इत्यर्थलाभः । प्रकृतिगतमेव निमित्तं सना व्यवधानेऽप्यात्मनेपदं प्रवर्त्तयतीत्यर्थः । ननु 'शिशत्सती'त्यादौ शिदादिविषयशदेरात्मनेपदविधानाच्छिद्विषयसन्नन्तादपि प्राप्नोतीत्यत आह—**वाक्यभेदेनेति** । **स्वराद्यन्तेति** । स्वराद्युपसर्गात्स्वरान्तोपसर्गाच्चेत्यर्थः ।

भुङ्क्ते । अभ्यवहरतीत्यर्थः । 'बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्' । 'वृद्धो जनो दुःखशतानि भुङ्क्ते' । इहो-पभोगो भुजेरर्थः । अनवने किम् ? । महीं भुनक्ति । **णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने ।१।३।६७।** ण्यन्तादात्मनेपदं स्यात्। अणौ या क्रिया सैव चेण्ण्यन्तेनोच्यते, अणौ यत्कर्मकारकं स चेण्णौ कर्ता स्यात् । नत्वना-

---

त.] **अवनं**-पालनम्।'अदने' इति वक्तव्ये अनवन इति पर्युदासस्य प्रयोजनद्वयम्।संयोगवद्विप्रयोगस्यापि विशेषावधारण-हेतुत्वाद्रौधादिकस्यैव भुजेर्ग्रहणमित्येकम्, अदनादर्थान्तरेऽप्युपभोगादौ आत्मनेपदं भवतीति द्वितीयम्, तदाह-**बुभुजे पृथिवीपाल इति । इहेति ।** उपभोग इत्युपलक्षणमात्मसात्करणस्यापि । पृथिवीं बुभुजे- स्वाधीनां चकारेत्यर्थः। भुज पालनाभ्यवहारयोरित्यस्य रुधादेरेव ग्रहणमिति भुजो कौटिल्य इत्यस्मात्तुदादेः परस्मैपदमेव । पाणिं विभुजति । मूलानि विभुजति । **णेरणौ यत्कर्म**।आत्मनेपदमित्यधिक्रियते। इहावान्तरवाक्यानि चत्वारि प्रतीयन्ते । '**णेरात्मनेपद**'मित्येकं वाक्यम्।तच्च स्यादित्यन्तेन व्याख्यातम्।'**अणौ यत्कर्म णौ चे**'दिति द्वितीयम्। कर्मशब्दः क्रियापरः 'कर्तरि कर्मव्य-तिहारे' इतिवत्।तथा च अणौ या क्रिया सैव ण्यन्ते चेदित्यर्थः।एवं स्थिते फलितमाह-**सैव चेण्ण्यन्तेनोच्यतेति**।'**स कर्ते**'ति तृतीयं वाक्यम्।अणावित्यादि चेच्छब्दान्तमिहानुवर्तते। कर्मशब्दश्चात्र कारकविशेषपरः, शब्दाधिकाराश्रयणात्, तदेतद्व्याचष्टे-**अणौ यदित्यादिना, स्यादित्यन्तेन**।'**अनाध्याने**' इति वाक्यान्तरं व्याचष्टे-**न त्विति**। आध्यान-मुत्कण्ठापूर्वकं स्मरणम् । वस्तुतस्तु पर्युदास एव लाघवादाश्रयणीयः । अस्मिन्पक्षे आध्यानभिन्ने इत्यर्थे सति फलितो-'न

---

बा.] 'भुज पालनाऽभ्यवहारयो'रिति धातुपाठे स्थितम्।तत्र 'बुभुजे पृथिवी'मित्यत्र न पालनमर्थः।तथा सति 'अनवने' इति पर्युदासादात्मनेपदाऽयोगात् । नाप्यभ्यवहरणम्, असंभवात् । नहि पृथिव्या अभ्यवहरणं संभवति । तथा 'वृद्धो जनो दुःखशतानि भुङ्क्ते' इत्यपि न युज्यते, दुःखशतानां पालनस्य अभ्यवहरणस्य चाऽसंभवात् । तत्राह-**इह उपभोगो भुजेरर्थ इति** । धातूनामनेकार्थत्वादिति भावः । **महीं भुनक्तीति** । रक्षतीत्यर्थः । अत्र रौधादिकस्यैव 'भुज पालनाभ्यवहारयो'रित्यस्य ग्रहणम्-ननु 'भुजो कौटिल्ये' इति तौदादिकस्याऽपीति भाष्यम्। **भुजति वासः** = कुटिली-भवतीत्यर्थः । **णेरणौ** । इह चत्वार्यवान्तरवाक्यानि । 'णे'रिति प्रथमं वाक्यम् । प्रत्ययग्रहणपरिभाषया णेरिति तदन्तग्रहणम् । आत्मनेपदमित्यधिकृतं । तदाह-**ण्यन्तादात्मनेपदं स्यादिति** । '**अणौ यत्कर्म णौ चे**'दिति द्वितीयं वाक्यम् । 'कर्तरि कर्मव्यतिहारे' इतिवत्कर्मशब्दोऽत्र क्रियापरः । यत्तदोर्नित्यसम्बन्धात्तदिति लभ्यते । तथाच अणौ या क्रिया सा ण्यन्ते चेदिति लभ्यते । एवं सति पचति पाचयतीत्यादौ सर्वत्र अणौ क्रियाया ण्यन्ते अवश्यं सत्त्वा-द्वाक्यमिदमनर्थकम् । तस्मात् अणौ या क्रिया सैव ण्यन्ते चेदित्येवकारो लभ्यते । ततश्च द्वितीयवाक्यस्य फलितमाह-**अणौ या क्रिया सैव चेण्ण्यन्तेनोच्यतेति** । '**स कर्ते**'ति तृतीयं वाक्यम् । अत्र 'अणौ यत्कर्म णौ चे'दि-त्यनुवर्तते । कर्मशब्दोऽत्र कारकविशेषपरः, शब्दाधिकाराश्रयणात् । तदेतदाह-**अणौ यत्कर्मकारकं स चेण्णौ कर्ता स्यादिति** । अत्र तच्छब्दस्य विधेयसमर्पककर्तृशब्दानुसारेण पुंलिङ्गता ज्ञेया, 'शैत्यं हि यत्सा प्रकृतिर्जलस्ये'-तिवत् । अथ '**अनाध्याने**' इति चतुर्थं वाक्यं व्याचष्टे-**न त्वाध्याने इति । आध्यानमुत्कण्ठापूर्वकं स्मरणम्** । तत्र नात्मनेपदमिति प्रसज्यप्रतिषेधोऽयमिति मन्यते । वस्तुतस्तु आध्याने आत्मनेपदं नेत्यर्थाश्रयणे भवतीत्यत्र नञो-ऽन्वितत्वेन असामर्थ्यादाध्यानशब्देन समासाऽसंभवात्पर्युदास एवाऽयम् । 'न त्वाध्याने' इति मूलं तु फलितार्थकथनपर-मेव । तथाच आध्यानभिन्नेऽर्थे विद्यमानाण्ण्यन्तादात्मनेपदं स्यादित्येवं प्रथमवाक्य एव आध्याने इत्यस्यान्वयात्त्रीण्येवाऽत्रा वान्तरवाक्यानीति युक्तम् । 'वाक्यत्रय'मित्येव च भाष्ये दृश्यते । ननु 'णिचश्चे'ति सिद्धे किमर्थमिदं सूत्रमित्यत

---

शे.] **णेरणौ** । इह वाक्यत्रयम् । 'णे'रिति, 'अणौ यत्कर्म णौ चे'दिति च, 'स कर्ते'ति च । तत्र **स्यादित्यन्ते-**नाऽऽद्यं व्याख्यातम् । द्वितीयं व्याचष्टे-**अणाविति**। कर्माऽत्र क्रिया । यत्तदोर्नित्यसम्बन्धाद्यच्छब्देन तच्छब्दाक्षेपा-त्सैव चेदित्यर्थलाभः । न चाऽत्र सत्त्वैव प्रतिपाद्यताङ्किमेवकारेणेति वाच्यम्, अध्यारोपितप्रेषणद्वितीयकस्यायामधिकप्रवे-शेऽपि तत्सत्ताया अक्षत्या वाक्यवैयर्थ्यापत्तेः । तृतीयं व्याचष्टे-**अणौ यत्कर्मेत्यादि** । अत्र पूर्ववाक्यमनुवर्तते, कर्म-शब्दश्च कारकपरो व्याख्यानादिति भावः । **स कर्तेति** । सर्वनाम्नां पर्यायेणोद्देश्यविधेयान्यतरलिङ्गतेति भावः। तत्राऽ-सति प्रतिबन्धके उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य व्युत्पत्तिसिद्धतयाऽण्यन्तावस्थास्थकर्मकारकत्वावच्छेदेन णौ कर्तृत्वलाभः । तेन 'देवदत्तो गां याचते यज्ञदत्तम्' 'यज्ञदत्तो गां याचते' 'देवदत्तो गां याचयति यज्ञदत्तेन, यज्ञदत्तो गां याचयति' इत्यादौ नात्मनेपदम् । यच्छब्देन तच्छब्दाक्षेपेऽपि 'स' इति स्पष्टार्थम्। ननु 'णौ चे'दिति व्यर्थम्, 'अणौ यत्कर्म स कर्ते'त्यत्र कुत्रेत्याकाङ्क्षायां प्रत्यासत्त्या यत्रात्मनेपदं तत्रेत्यर्थलाभादिति चेन्न, यत्तच्छब्दवत्स्पष्टार्थत्वात् । अत्र

**ज्ञाश्रुस्मृदृशां सनः** ।१।३।५७। सन्नन्तानामेषां प्राग्वत् । धर्मं जिज्ञासते । शुश्रूषते । सुस्मूर्षते । दिदृक्षते । **नाऽनोर्ज्ञः** ।१।३।५८। पुत्रमनुजिज्ञासति । पूर्वसूत्रस्यैवायं निषेधः, 'अनन्तरस्ये'ति न्यायात् । तेनेह न-सर्पिषोऽनुजिज्ञासते । सर्पिषा प्रवर्तितुमिच्छतीत्यर्थः । 'पूर्ववत्सनः' इति तङ्, 'अकर्मकाच्चे'ति केवलाद्विधानात् । **प्रत्याङ्भ्यां श्रुवः** ।१।३।५९। आभ्यां सन्नन्ताच्छ्रुव उक्तं न स्यात् । प्रतिशुश्रूषति । आशुश्रूषति । कर्मप्रवचनीयात्स्यादेव । देवदत्तं प्रतिशुश्रूषते । '**शदेः शितः**' । '**म्रियतेर्लुङ्लिङोश्च**' । व्याख्यातम् । **पूर्ववत्सनः** ।१।३।६२। सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात् । एदिधिषते । शिशयिषते । निविविक्षते । पूर्ववत्किम् ? । बुभूषति । 'शदे'रित्यादिसूत्रद्वये 'सनो ने'त्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । तेनेह न-शिशत्सति । मुमूर्षति । '**आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य**' । एधांचक्रे । **प्रोपाभ्यां युजेरयज्ञपात्रेषु** ।१।३।६४। प्रयुङ्क्ते । उपयुङ्क्ते । ***स्वराद्यन्तोपसर्गादिति वक्तव्यम्** । उद्युङ्क्ते । नियुङ्क्ते । अयज्ञपात्रेषु किम् ? । द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति । **समः क्ष्णुवः** ।१।३।६५। संक्ष्णुते शस्त्रम् । **भुजोऽनवने** ।१।३।६६। ओदनं

---

इत्यनेन सिद्धेऽपि विषयान्तरे सन्नन्तादनेन विधीयत इति ज्ञेयम्। **निविविक्षत इति**। 'नेर्विशः' इत्यात्मनेपदविधानात्सन्नन्तादपि आत्मनेपदम्। **सनो नेत्यनुवर्त्यैति**। 'नानोर्ज्ञः', 'पूर्ववत्सनः' इति सूत्राभ्या'मिति शेषः। **समः क्ष्णुवः**। 'समो गम्यृच्छि-क्ष्णुभ्यः' इति पठनीये पृथगस्य पाठः सकर्मकादपि विधानार्थ इति ध्वनयन्नुदाहरति-**संक्ष्णुते शस्त्रमिति**। **भुजोऽनवने**।

---

बा.]च''सम्प्रतिभ्यामनाध्याने' इति सूत्रैः, 'अर्तिश्रुदृशिभ्यश्चे'ति वार्तिकेन च ज्ञादिभ्य आत्मनेपदे कृते 'पूर्ववत्सनः' इत्यात्मनेपदं सिद्धम् , तथाप्यपह्नवाद्यभावेऽप्यात्मनेपदार्थं ज्ञाश्रुदृशीनामिह ग्रहणमिति मत्वोदाहरति-**धर्मं जिज्ञासते इति**। ज्ञातुमिच्छतीत्यर्थः । **शुश्रूषते इति** । 'अज्झनगमां सनी'ति दीर्घः । 'इको झ'लिति सनः कित्त्वम् । 'श्र्युकः किती'ति इण्निषेधः । **सुस्मूर्षते इति** । स्मृधातोः सनि 'अज्झने'ति दीर्घे 'उदोष्ठ्यपूर्वस्ये'त्युत्त्वे रपरत्वे 'हलि चे'ति दीर्घः । **नानोर्ज्ञः** । अनुपूर्वाज्ज्ञाधातोः सन्नन्तान्नात्मनेपदमित्यर्थः । **पुत्रमनुजिज्ञासतीति** । अनुज्ञातुमिच्छतीत्यर्थः । ननु सर्पिषा प्रवर्तितुमिच्छतीत्यर्थे 'सर्पिषोऽनुजिज्ञासते' इत्यत्रापि 'अपह्नवे ज्ञः', 'अकर्मकाच्चे'त्यात्मनेपदस्याप्यनेन निषेधे सति सन्नन्तात्परस्मैपदमेव स्यादित्यत आह-**पूर्वसूत्रस्यैवेति**। एवं च 'सर्पिषोऽनुजिज्ञासते' इत्यत्र 'अकर्मकाच्चे'त्यात्मनेपदं निर्बाधमिति भावः । ननु 'अकर्मकाच्चे'ति ज्ञाधातोरात्मनेपदे सन्नन्तात्कथमात्मनेपदलाभ इत्यत आह-**पूर्ववदिति** । केवलात्सन्विहीनाज्ज्ञाधातोरात्मनेपदविधानात्सन्नन्तादपि तस्मात् 'पूर्ववत्सनः' इत्यात्मनेपदमित्यर्थः । **प्रत्याङ्भ्यां श्रुवः** । **उक्तं नेति** । आत्मनेपदं नेत्यर्थः । प्रत्याङाविहोपसर्गावेव गृह्येते, व्याख्यानात् । तदाह-**कर्मप्रवचनीयात्स्यादेवेति** । 'आत्मनेपद'मिति शेषः। **देवदत्तं प्रतीति** । 'लक्षणेत्थम्भूते'ति प्रतिः कर्मप्रवचनीयः । **पूर्ववत्सनः**। पूर्वेणेव पूर्ववत् । 'तेन तुल्य'मिति तृतीयान्ताद्वतिः । पूर्वशब्देन सन्प्रकृतिर्विवक्षिता । तदाह-**सनः पूर्व इत्यादि** । **एदिधिषते इति** । सन्प्रकृतेरेधधातोरात्मनेपदित्वात्तत्प्रकृतिकसन्नन्तादात्मनेपदम् । 'नेर्विशः' इत्यात्मनेपदविधानात्तत्प्रकृतिकसन्नन्तादपि आत्मनेपदम् । ननु 'शदेः शितः' 'म्रियतेर्लुङ्लिङोश्चे'त्यात्मनेपदविधानात् शिशत्सति मुमूर्षतीत्यत्रापि सन्नन्तादात्मनेपदं स्यादित्यत आह-**शदेरित्यादीति** । आदिना 'म्रियतेर्लुङ्लिङोश्चे'त्यस्य ग्रहणम् । 'शदे'रित्यादिसूत्रद्वये 'पूर्ववत्सनः' इति, 'नानोर्ज्ञः' इत्यतो नेति चानुवर्त्य शदेर्म्रियतेश्च सन्नन्तान्नात्मनेपदमिति व्याख्येयमित्यर्थः । नन्वेवं सति शीयते म्रियते इत्यादावात्मनेपदं न लभ्येतेत्यत आह-**वाक्यभेदेनेति** । 'शदेः शितः' 'म्रियतेर्लुङ्लिङोश्चे'त्येकं वाक्यम् । शिद्भाविनः शदेरात्मनेपदं स्यात्, मृङो लुङ्लिङ्प्रकृतिभूतात् , शित्प्रकृतिभूताच्चात्मनेपदं स्यान्नान्यत्रेत्यर्थः । तेन शीयते म्रियते ममारेत्यादि सिध्यति । 'सनो ने'त्यपरं वाक्यम् । शदेः, म्रियतेश्च सन्नन्तान्नात्मनेपदमित्यपरम् । तेन शिशत्सति, मुमूर्षति इत्यादौ नात्मनेपदमित्यर्थः । **प्रोपाभ्यां** । 'आत्मनेपद'मिति शेषः । **स्वरेति** । स्वरौ अचौ आद्यन्तौ यस्य सः स्वराद्यन्तः । तथाभूतोपसर्गात्परत्व एव युजेरात्मनेपदमित्यर्थः । **द्वन्द्वमिति** । द्वन्द्वं-द्विशः, **न्यञ्चि**-अधोविलानीत्यर्थः । **समः क्ष्णुवः** । 'आत्मनेपद'मिति शेषः । 'समो गम्यृच्छिभ्या'मित्यत्रैव 'समो गम्यृच्छिक्ष्णुव'इति न सूत्रितं, तथा सति अकर्मकादित्यनुवृत्त्या सकर्मकान्न स्यात् । तत्सूचयन्नुदाहरति-**संक्ष्णुते शस्त्रमिति** । तीक्ष्णीकरोतीत्यर्थः । **भुजोऽनवने** । अवनं-रक्षणम् । ततोऽन्यत्र भुजेरात्मनेपदमित्यर्थः । ननु

---

शे.]स्वत्वोत्पादने इत्यर्थात् । स्वीकार इत्यव्युत्पन्नं प्रातिपदिकमिति बोध्यम् । **पूर्वसूत्रस्यैवेति** । एवञ्च तस्य सकर्मकविषयत्वेन सकर्मकस्यैव निषेधोऽकर्मके तु परत्वात् 'पूर्ववत्सनः' इत्यात्मनेपदमिति भावः । **प्रत्याङ्भ्याम्** । प्रत्यासत्त्या श्रुधात्वर्थविशेषकावेव प्रत्याङौ गृह्येते, तौ च उपसर्गावेवेत्याशयेनाह-**कर्मप्रवचनीयादिति** । ते हि सम्बन्धपरिच्छेदका न क्रियाविशेषका इति स्पष्टमेव । **पूर्ववत्सनः** । प्रत्यासत्त्या सनः पूर्वं इत्यर्थलाभः । प्रकृतिगतमेव निमित्तं सना व्यवधानेऽप्यात्मनेपदं प्रवर्त्तयतीत्यर्थः । ननु 'शिशत्सती'त्यादौ शिदादिविषयशदेरात्मनेपदविधानाच्छिद्विषयसन्नन्तादपि प्राप्नोतीत्यत आह-**वाक्यभेदेनेति** । **स्वराद्यन्तेति** । स्वराद्युपसर्गात्स्वरान्तोपसर्गाच्चेत्यर्थः ।

भुङ्क्ते । अभ्यवहरतीत्यर्थः ।· 'बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्' । 'वृद्धो जनो दुःखशतानि भुङ्क्ते' । इहोपभोगो भुजेरर्थः । अनवने किम् ?· । महीं भुनक्ति । **णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने** ।१।३।६७। ण्यन्तादात्मनेपदं स्यात्। अणौ या क्रिया सैव चेण्ण्यन्तेनोच्येत, अणौ यत्कर्मकारकं स चेण्णौ कर्ता स्यात्। नत्वना-

---

त.] अवनं–पालनम्। 'अदने' इति वक्तव्ये अनवन इति पर्युदासस्य प्रयोजनद्वयम्।संयोगवद्विप्रयोगस्यापि· विशेषावधारण· हेतुत्वाद्रौधादिकस्यैव भुजेर्ग्रहणमित्येकम्, अदनादर्थान्तरेऽप्युपभोगादौ आत्मनेपदं भवतीति द्वितीयम्; तदाह–**बुभुजे-पृथिवीपाल इति । इहेति ।** उपभोग इत्युपलक्षणमात्मसात्करणस्यापि । पृथिवीं बुभुजे· स्वाधीनां चकारेत्यर्थः। भुज पालनाभ्यवहारयोरित्यस्य रुधादेरेव ग्रहणमिति भुजो कौटिल्य इत्यस्मात्तुदादेः परस्मैपदमेव । पाणिं विभुजति । मूलानि विभुजति । **णेरणौ यत्कर्म।** आत्मनेपदमित्यधिक्रियते। इहावान्तरवाक्यानि चत्वारि प्रतीयन्ते । '**णेरात्मनेपद**'मित्येकं वाक्यम्।तच्च स्यादित्यन्तेन व्याख्यातम्।'**अणौ यत्कर्म णौ चे**'दिति द्वितीयम्। कर्मशब्दः क्रियापरः 'कर्तरि कर्मव्य· तिहारे' इतिवत्।तथा च अणौ या क्रिया सैव ण्यन्ते चेदित्यर्थः।एवं स्थिते फलितमाह–**सैव चेण्ण्यन्तेनोच्येतेति।'स कर्ते**'ति तृतीयं वाक्यम्।अणावित्यादि चेच्छब्दान्तमिहानुवर्तते। कर्मशब्दश्चात्र कारकविशेषपरः, शब्दाधिकाराश्रयणात्, तदेतद्व्याचष्टे–**अणौ यदित्यादिना, स्यादित्यन्तेन।'अनाध्याने**' इति वाक्यान्तरं व्याचष्टे–**न त्वित्ति।** आध्यान-मुत्कण्ठापूर्वकं स्मरणम् । वस्तुतस्तु पर्युदास एव लाघवादाश्रयणीयः । अस्मिन्पक्षे आध्यानभिन्ने इत्यर्थे सति फलितो-'न

---

बा.] 'भुज पालनाऽभ्यवहारयो'रिति धातुपाठे स्थितम्।तत्र 'बुभुजे पृथिवी'मित्यत्र न पालनमर्थः।तथा सति 'अनवने' इति पर्युदासादात्मनेपदाऽयोगात् । नाप्यभ्यवहरणम्, असंभवात् । नहि पृथिव्या अभ्यवहरणं संभवति । तथा 'वृद्धो जनो दुःखशतानि भुङ्क्ते' इत्यपि न युज्यते, दुःखशतानां पालनस्य अभ्यवहरणस्य चाऽसंभवात् । तत्राह–**इह उपभोगो भुजेरर्थ इति ।** धातूनामनेकार्थकत्वादिति भावः । **महीं भुनक्तीति ।** रक्षतीत्यर्थः । अत्र रौधादिकस्यैव 'भुज पालनाभ्यवहारयो'रित्यस्य ग्रहणम्–नतु 'भुजो कौटिल्ये' इति तौदादिकस्याऽपीति भाष्यम्। **भुजति वासः** = कुटिली· भवतीत्यर्थः । **णेरणौ ।** इह चत्वार्यवान्तरवाक्यानि । 'णे'रिति प्रथमं वाक्यम् । प्रत्ययग्रहणपरिभाषया णेरिति तदन्तग्रहणम् । आत्मनेपदमित्यधिकृतं । तदाह–**ण्यन्तादात्मनेपदं स्यादिति । 'अणौ यत्कर्म णौ चे**'दिति द्वितीयं वाक्यम् । 'कर्तरि कर्मव्यतिहारे' इतिवत्कर्मशब्दोऽत्र क्रियापरः । यत्तदोर्नित्यसम्बन्धात्तदिति लभ्यते । तथाच अणौ या क्रिया सा ण्यन्ते चेदिति लभ्यते । एवं सति पचति पाचयतीत्यादौ सर्वत्र अणौ क्रियाया ण्यन्ते अवश्यं सत्त्वा· द्वाक्यमिदमनर्थकम् । तस्मात् अणौ या क्रिया सैव ण्यन्ते चेदित्येवकारो लभ्यते । ततश्च द्वितीयवाक्यस्य फलितमाह–**अणौ या क्रिया सैव चेण्ण्यन्तेनोच्येतेति** । '**स कर्ते**'ति तृतीयं वाक्यम् । अत्र 'अणौ यत्कर्म णौ चे'दि· त्यनुवर्तते । कर्मशब्दोऽत्र कारकविशेषपरः, शब्दाधिकाराश्रयणात् । तदेतदाह–**अणौ यत्कर्मकारकं स चेण्णौ कर्ता स्यादिति ।** अत्र तच्छब्दस्य विधेयसमर्पककर्तृशब्दानुसारेण पुंलिङ्गता ज्ञेया, 'शैत्यं हि यत्सा प्रकृतिर्जलस्ये'-तिवत् । अथ '**अनाध्याने**' इति चतुर्थं वाक्यं व्याचष्टे–**न त्वाध्याने इति । आध्यान**मुत्कण्ठापूर्वकं स्मरणम् । तत्र नात्मनेपदमिति प्रसज्यप्रतिषेधोऽयमिति मन्यते । वस्तुतस्तु आध्याने आत्मनेपदं नेत्यर्थाश्रयणे भवतीत्यत्र नञो-ऽन्वितत्वेन असामर्थ्यादाध्यानशब्देन समासाऽसंभवात्पर्युदास एवाऽयम् । 'न त्वाध्याने' इति मूलं तु फलितार्थकथनपर-मेव । तथाच आध्यानभिन्नेऽर्थे विद्यमानाण्ण्यन्तादात्मनेपदं स्यादित्येवं प्रथमवाक्य एव आध्याने इत्यस्यान्वयात्त्रीण्येवाऽत्रा वान्तरवाक्यानीति युक्तम् । 'वाक्यत्रय'मित्येव च भाष्ये दृश्यते । ननु 'णिचश्चे'ति सिद्धे किमर्थमिदं सूत्रमित्यत

---

शे.] **णेरणौ ।** इह वाक्यत्रयम् । 'णे'रिति, 'अणौ यत्कर्म णौ चे'दिति च, 'स कर्ते'ति च । तत्र **स्यादित्यन्ते**-नाऽऽद्यं व्याख्यातम् । द्वितीयं व्याचष्टे–**अणाविति।** कर्माऽत्र क्रिया । यत्तदोर्नित्यसम्बन्धाद्यच्छब्देन तच्छब्दाक्षेपा-त्सैव चेदित्यर्थलाभः । न चाऽत्र सत्तैव प्रतिपाद्यताङ्किमेवकारेणेति वाच्यम्, अध्यारोपितप्रेषणद्वितीयकक्ष्यायामधिकप्रवे-शेऽपि तत्सत्ताया अक्षत्या वाक्यवैयर्थ्यापत्तेः । तृतीयं व्याचष्टे–**अणौ यत्कर्मेत्यादि।** अत्र पूर्ववाक्यमनुवर्त्तते, कर्म· शब्दश्च कारकपरो व्याख्यानादिति भावः । **स कर्तेति ।** सर्वनाम्नां पर्यायेणोद्देश्यविधेयान्यतरलिङ्गतेति भावः। तत्राऽ-सति प्रतिबन्धके उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य व्युत्पत्तिसिद्धतयाऽण्यन्तावस्थास्थकर्मकारकत्वावच्छेदेन णौ कर्तृत्वलाभः । तेन 'देवदत्तो गां याचते यज्ञदत्तम्' 'यज्ञदत्तो गां याचते' 'देवदत्तो गां याचयति यज्ञदत्तेन, यज्ञदत्तो गां याचयति' इत्यादौ नात्मनेपदम् । यच्छब्देन तच्छब्दाक्षेपेऽपि 'स' इति स्पष्टार्थम्। ननु 'णौ चे'दिति व्यर्थम्, 'अणौ यत्कर्म स कर्ते'त्यत्र कुत्रेत्याकाङ्क्षायां प्रत्यासत्त्या यत्रात्मनेपदं तत्रेत्यर्थलाभादिति चेन्न, यत्तच्छब्दवत्स्पष्टार्थत्वात् । अत्र

ध्याने । 'णिचश्चे'ति सिद्धेऽकर्त्रभिप्रायार्थमिदम् । कर्त्रभिप्राये तु 'विभाषोपपदेने'ति विकल्पे, 'अणावकर्मका'-दिति परस्मैपदे च परत्वात्प्राप्ते पूर्वविप्रतिषेधेनेदमेवेष्यते । कर्तृस्थभावकाः, कर्तृस्थक्रियाश्चोदाहरणम् । तथा हि

त.]त्वाध्याने' इति नेयः। तथा च अत्र वाक्यत्रयमेवेति बोध्यम्। **विकल्प इति**।'परत्वात्प्राप्ते' इत्युत्तरेणान्वयः। **पूर्वविप्रतिषेधेनेति** । 'विभाषोपपदेने'त्यस्यावकाशः–स्वं यज्ञं यजति । स्वं यज्ञं यजते इत्यादि । 'णेरणा'वित्यस्य तु–दर्शयते राजेत्यादि । तथा 'अणावकर्मका'दित्यस्य–शेते कृष्णस्तं गोपी शाययतीत्यवकाशः । 'णेरणौ' इत्यस्य तु–लावयते केदारः स्वयमेवेति । तत्र हि लूयते केदार इति द्वितीयकक्षायामणावकर्मकत्वादिति भावः । न च 'पश्यति भव' इतिवद्वितीयकक्षायां 'लुनाति केदार' इत्येव प्रयोग इति भ्रमितव्यम्। लवनस्य कर्मस्थक्रियात्वेन 'कर्मवत्कर्मणे'ति यगात्मनेपदप्रवृत्तेः । नन्वास्तु 'अणावकर्मका'दित्यस्य बाधे 'दर्शयते राजे'ति भाष्यप्रयोगो मानम् । तत्र हि निवृत्तप्रेषणपक्षे दृशेरणावकर्मकत्वाच्चित्तवत्कर्तृकत्वाच्च परस्मैपदप्राप्तेः।'विभाषोपपदेने'ति विकल्पबाधे तु न किंचिन्मानम्।किं च 'अणावकर्मका'-दित्यस्य बाधेऽपि नास्त्येव प्रमाणम्, पूर्वोक्तभाष्यस्य परगामिनि क्रियाफले चरितार्थत्वात् । तथा च कर्तृगामिनि क्रियाफले परत्वात् 'अणावकर्मका'दित्यस्य प्रवृत्तौ न किंचिद्बाधकमस्तीति 'पूर्वविप्रतिषेधेनेदमेवेष्यते' इत्येतच्चिन्त्यमित्याहुः ।

**वस्तुतस्तु** 'णेरणौ' इति सूत्रस्याऽचित्तवत्कर्तृकेऽपि लावयते केदार इत्यादौ चरितार्थत्वात् 'अणावकर्मका'-दित्यनेन परगामिनि क्रियाफलेऽपि परत्वात्परस्मैपदे प्राप्ते दर्शयते राजेति भाष्यप्रयोगबलात्पूर्वविप्रतिषेधाभ्युपगमेन 'णेरणौ' इत्यात्मनेपदप्रवृत्तावपि 'आत्मार्थं दर्शयते' 'स्वार्थं दर्शयते' इत्यादौ परत्वात् 'विभाषोपपदेने'त्यस्य प्रवृत्तौ न किंचिद्बाधकमस्ति । ततोऽपि परत्वात् 'अणावकर्मका'दिति परस्मैपदमेव स्यादिति तद्बाधेन पूर्वविप्रतिषेधे स्वीकृते 'विभाषोपपदेने'त्यस्याप्यर्थात्पूर्वविप्रतिषेधेन बाधो जात एवेति चेत्, एवं तर्हि 'दर्शयते राजे'ति भाष्यप्रयोगस्य केवले चरितार्थत्वात्सोपपदप्रयोगे 'अणावकर्मका'दिति परस्मैपदमेवास्तु । तत्रापि पूर्वविप्रतिषेधेन 'णेरणौ' इत्यस्य प्रवृत्तौ मानाऽभावादिति दिक् । 'कर्मवत्कर्मणे'त्यनेन गतार्थत्वशङ्कां निरस्यति–**कर्तृस्थभावका इति** । अपरिस्पन्दनसाधनसाध्यो धात्वर्थो **भावः** । सपरिस्पन्दनसाधनसाध्या तु **क्रिया** । साधनं=कारकं, तत्साध्यत्वाद्धात्वर्थस्य। ननु 'नृत्यन्तं भवं पश्यती'त्यत्र दृशेः कर्तृस्थभावकता न स्यात्, किं तु कर्तृस्थक्रियाकतैव स्यात्। न च साधनशब्देन लकारवाच्यं कारकं विवक्षितमिति

बा.]आह–**णिचश्चेतीति** । परगामिन्यपि फले आत्मनेपदार्थमित्यर्थः। स्यादेतत् । 'विभाषोपपदेन प्रतीयमाने' इति सूत्रं वक्ष्यते । कर्तृगामिनि क्रियाफले यदात्मनेपदं विहितं तदुपपदेन क्रियाफलस्य कर्तृगामित्वे गम्ये वा स्यादिति तदर्थः । 'स्वं यज्ञं यजति यजते वे'त्याद्युदाहरणम् । 'णेरणौ'इत्यस्य तु दर्शयते भव इत्यनुपदमेव उदाहरणं वक्ष्यते इति स्थितिः। तत्र 'दर्शयते भवः स्वयमेवे'त्यत्र फलस्य कर्तृगामित्वविवक्षायां 'णेरणा'विति नित्यमात्मनेपदमिष्यते । तत्र परत्वात् 'विभाषोपपदेने'ति विकल्पः स्यात्,'णेरणौ' इत्यस्य फले आत्मगामित्वगमकोपपदाऽभावे सावकाशत्वात्। किंच 'अणावकर्मकाच्चित्तवत्कर्तृका'दिति वक्ष्यते । अण्यन्ते यो धातुरकर्मकः, चित्तवत्कर्तृकश्च तस्माण्ण्यन्तात् परस्मैपदं स्यादिति तदर्थः । शेते कृष्णः । तं गोपी शाययतीत्युदाहरणम् । णेरणावित्यस्य तु दर्शयते भव इत्युदाहरणविषय इति स्थितिः । तत्र लूधातोर्लुनाति केदारं देवदत्त इत्यत्र चित्तवत्कर्तृकत्वात्, लूयते केदार इति कर्मकर्तरि कर्मणः केदारस्य कर्तृत्वेन विवक्षिततया अकर्मकत्वाच्च 'लावयते केदार' इति ण्यन्तात् 'णेरणौ' इत्यात्मनेपदं बाधित्वा परत्वात् 'अणावकर्मका'दिति परस्मैपदमेव स्यात्,णेरणावित्यस्य दर्शयते भव इत्यत्र सावकाशत्वादित्यत आह–**कर्त्रभिप्राये त्विति। पूर्वविप्रतिषेधेनेति** । पूर्वविप्रतिषेधाश्रयणे 'राजा दर्शयते' इति भाष्यप्रयोगो मानम्, अन्यथा तत्र 'अणावकर्मका'दिति परस्मैपदापत्तेः, दर्शनविषयो भवतीत्यर्थे पश्यति भव इत्यत्र दृशेरणावकर्मकत्वाच्चित्तवत्कर्तृकत्वाच्च । 'विभाषोपपदेने'ति विकल्पबाधविषये पूर्वविप्रतिषेधाश्रयणे तु व्याख्यानमेव शरणम् । अन्ये तु 'दर्शयते राजे'ति भाष्यप्रयोगः फलस्य परगामित्वविषयो भविष्यति।एवं च कर्तृगामिनि क्रियाफले परत्वादणावकर्मकादित्यस्य प्रवृत्तौ न किंचिद्बाधकमिति पूर्वविप्रतिषेधाश्रयणं चिन्त्यमित्याहुः। तच्चिन्त्यम्, 'अणावकर्मका'दित्यस्य परगामिन्यपि फले परत्वात्प्रवृत्तेर्दुर्वारत्वात् । नह्यणावकर्मकादित्यत्र कर्त्रभिप्राय इत्यस्ति, 'स्वरितञितः कर्त्रभिप्राये' इत्यस्य बहुव्यवहितत्वादिति शब्दरत्ने प्रपञ्चितम् । ननु दर्शनविषयो भवतीत्यर्थे दर्शयते भव इत्यत्र वस्तुतो दर्शनकर्मीभूतस्यैव भवस्य कर्तृत्वविवक्षायां तस्य 'कर्मवत्कर्मणे'ति कर्मवद्भावात् 'भावकर्मणो'रित्यात्मनेपदसिद्धेः 'णेरणौ' इति सूत्रं व्यर्थमित्यत आह–**कर्तृस्थेति** । कर्तृस्थो भावो येषां ते कर्तृस्थभावकाः, कर्तृस्था क्रिया येषां ते कर्तृस्थक्रियाः, एवंविधा धातव इह सूत्रे उदाहरणम् । 'कर्मवत्कर्मणे'-

शे.]फलकल्पना तु भाष्यानुक्तत्वादयुक्तेति **प्रामाणिकाः।अणावकर्मकादिति**।यत्र क्वाप्यण्यन्तावस्थायामकर्मकादित्यर्थेन प्राप्तिरिति भावः । **पूर्वविप्रतिषेधेनेति** । अत्र च मानं 'दर्शयते राजा' इति भाष्योदाहरणम् । **प्रेरणेति** ।

(१) पश्यन्ति भवं भक्ताः । चाक्षुषज्ञानविषयं कुर्वन्तीत्यर्थः। प्रेरणांशत्यागे-(२) पश्यति भवः । विषयो भवतीत्यर्थः। ततो हेतुमण्णिच् ,-(३) दर्शयन्ति भवं भक्ताः । पश्यन्तीत्यर्थः । पुनर्ण्यर्थस्याऽविवक्षायां-(४) दर्शयते भवः । इह प्रथमतृतीययोरवस्थयोर्द्वितीयचतुर्थ्योश्च तुल्योऽर्थः । तत्र तृतीयकक्ष्यायां न तङ् , क्रियासाम्येऽप्यणौ

त.]वाच्यं,नृत्यन्भवः पश्यतीत्यत्र तद्दोषतादवस्थ्यादिति चेत्।अत्राहुः-आरोहणादौ सपरिस्पन्द एव देवदत्तादिर्यथा साधनं तथा दर्शनश्रवणादौ न भवति किंतु स्पन्दनरहितोऽपीति नोक्तदोष इति । कर्तृस्थभावकमुदाहरति-**पश्यन्तीति**। **प्रेरणांशेति** । सौकर्यविवक्षयेति भावः । **तत इति** । त्यक्तप्रेरणांशकाद्धातोरित्यर्थः । **पुनर्ण्यर्थस्येत्यादि** । न चैवं णिजपि गच्छतीति 'दर्शयते भव' इति न सिध्येदिति वाच्यम् , उपायनिवृत्तावप्युपेयाऽनिवर्तनादिति कैयटोक्तेः। एवं च स्वार्थ एव णिजिति पर्यवसानादाह-**द्वितीयचतुर्थ्योरिति**। **तुल्योऽर्थ इति** । न्यूनाऽधिकभावरहितः। **तत्र तृतीयेति** । प्रथमाद्वितीययोस्तु ण्यन्तत्वाऽभावात्तङः प्रसक्तिरेव नास्तीति भावः। **क्रियासाम्येऽपीति** । प्रथमकक्षया सहे-

बा.]त्यस्य तु कर्मस्थभावकाः,कर्मस्थक्रियाश्चोदाहरणमिति प्रकृतसूत्रे,'कर्मवत्कर्मणे'ति सूत्रे च भाष्ये स्पष्टम्।अतो विषयभेदात् 'कर्मवत् कर्मणे'त्यनेन 'णेरणौ'इत्यस्य न गतार्थतेति भावः।अपरिस्पन्दनसाधनसाध्यो धात्वर्थो **भावः**।यथा दर्शनश्रवणादिः। सपरिस्पन्दनसाधनसाध्यो धात्वर्थः **क्रिया**।यथा पाकादिः । यद्यपि दर्शने चक्षुरुन्मीलनादिरूपं स्पन्दनमस्ति तथापि तद्भिन्नहस्तपादादिचेष्टैवाऽत्र स्पन्दनमित्यविरोधः। तत्र कर्तृस्थभावकमुदाहरति-**पश्यन्ति भवं भक्ता इति** । सकर्मकेषु धातुषु फलव्यापारयोर्धातुर्वर्तते । यथा पचेर्विक्लित्त्यनुकूलो व्यापारः।तत्र विक्लित्तिः फलम्। तदनुकूलोऽधिश्रयणादिर्व्यापारः। धातूपात्तव्यापाराश्रयः कर्ता देवदत्तादिः। व्यापारव्यधिकरणधातूपात्तफलाश्रयभूतं कर्म। यथा तण्डुलान् पचतीत्यत्र विक्लित्याश्रयास्तण्डुला इति स्थितिः। प्रकृते च दृशेश्चाक्षुषज्ञानानुकूलव्यापारार्थकत्वे सकर्मकत्वानुपपत्तिः, फलस्य चाक्षुषज्ञानस्य तदनुकूलप्रयत्नादेश्च समानाधिकरणत्वात्। अतो दृशेश्चाक्षुषज्ञानविषयत्वापत्त्यनुकूलव्यापारोऽर्थः । तत्र ज्ञानविषयत्वापत्तिः फलम्। तदनुकूलः प्रयत्नादिव्यापारो देवदत्तनिष्ठः । एवंच प्रयत्नादिव्यापारव्यधिकरणचाक्षुषज्ञानविषयत्वरूपफलाश्रयो घटादिः कर्मेति युज्यते। तदेतदाह-**चाक्षुषज्ञानविषयं कुर्वन्तीत्यर्थ इति**। **प्रेरणेति** । यदा चाक्षुषज्ञानविषयत्वापत्तिरेव दृशेरर्थो विवक्षितो नतु तदनुकूलव्यापारः कृञ्धातुगम्यः प्रेषणांशस्तदा पश्यति भव इत्यस्य चाक्षुषज्ञानविषयः संपद्यते इत्यर्थः । सौकर्यातिशयविवक्षया अनुकूलव्यापारांऽशस्य अविवक्षा बोध्या । तथाच चाक्षुषज्ञानविषयत्वापत्तेरेव दृश्यर्थत्वात्तदाश्रयस्य भवस्य कर्तृत्वमेवं । तदाह-**विषयो भवतीत्यर्थ इति** । लक्षणया चाक्षुषज्ञानविषयो भवतीत्यर्थ इत्यर्थः । नचाऽत्र भवस्य वस्तुतो दर्शनकर्मण इह कर्तृत्वात् 'कर्मवत्कर्मणा तुल्यक्रियः' इति कर्मवत्त्वाद्यगादिकमेव स्यान्न तु शबादीति शङ्क्यं, 'कर्मवत्कर्मणे'त्यस्य कर्मस्थभावकेषु, कर्मस्थक्रियेषु च प्रवृत्तेः । अतः कर्मकर्तर्यपि शबादिकमेवेति भावः । **तत इति** । कृञ्धातुगम्यं प्रेषणांशं विहाय चाक्षुषज्ञानविषयत्वापत्तिवृत्तेर्दृशेर्हेतुमण्णिजित्यर्थः । **दर्शयन्ति भवं भक्ता इति** । चाक्षुषज्ञानविषयत्वमापादयन्तीति णिजन्तस्य फलितोऽर्थः । तदाह-**पश्यन्तीत्यर्थ इति** । चाक्षुषज्ञानविषयं कुर्वन्तीत्यर्थः । **पुनरिति** । चाक्षुषज्ञानविषयत्वमापादयन्तीत्यर्थके 'दर्शयन्ति भवं भक्ता' इत्युक्तोदाहरणे णिजर्थस्य आपादनांऽशस्याऽविवक्षायां प्रकृतसूत्रेणात्मनेपदे सति 'दर्शयते भव' इत्युदाहरणमित्यर्थः। अत्र ण्यन्तस्य प्रेरणारहितेऽर्थे लक्षणा । 'गङ्गायां घोष' इत्यत्र टाप इव णिचः स्थितिः । चुरादेराकृतिगणत्वात्स्वार्थिको णिजित्यन्ये । **इहेति**। **अवस्था**=पदविशेषात्मकावयवसंनिवेशविशेषः । प्रथमा च तृतीया च प्रथमतृतीये। तयोरवस्थयोरिति विग्रहः । 'सर्वनाम्नो वृत्तिमात्रे' इति प्रथमाशब्दस्य पुंवत्त्वम् । पश्यन्ति भवं भक्ता इति प्रथमावस्था । पदविशेषसंदर्भ इति यावत् । अवस्थैव कक्ष्येति व्यवहरिष्यते मूले । कक्ष्या हि राजधान्यादौ जनविशेषसङ्घातनिवासात्मिका अनन्तरस्थानप्रापिका । तद्यथा रामायणे-'आपञ्चमायाः कक्ष्याया नैनं कश्चिदवारय'दित्यादि । इदं च प्रथमवाक्यं प्रेरणांशत्यागे पश्यति भव इति द्वितीयवाक्यस्य उपपादकम् । चाक्षुषज्ञानविषयत्वापादने दृश्यर्थे प्रेरणांऽशत्यागस्य प्रेरणाविशिष्टार्थकदृशिघटितप्रथमवाक्याऽभावे असंभवात्।प्रेरणांऽशत्यागे पश्यति भव इति द्वितीया कक्ष्या तु दर्शनविषयत्वापत्तिमात्रार्थकाद्धेतुमण्णिचि दर्शयन्ति भवं भक्ता इति तृतीयवाक्यस्य पश्यन्ति भवं भक्ता इति प्रथमवाक्यसमानार्थकस्य उपपादिका, चाक्षुषज्ञानविषयत्वापादनानुकूलव्यापारार्थवृत्तेर्दृशेर्हेतुमण्णिचि चाक्षुषज्ञानविषयत्वापत्त्यनुकूलव्यापारान्तरस्यापि प्रवेशापत्तेः। द्वितीयतृतीयं वाक्यं त्विदं दर्शयन्तीति-ण्यर्थस्याऽविवक्षायां दर्शयते भव इति चतुर्थवाक्यस्य दर्शनविषयो भवतीति द्वितीय-

शे.]सौकर्यविवक्षयेति भावः। अत्र कर्मस्थक्रियत्वाऽभावेन कर्मकर्तर्यपि शबादि। **तत इति** । फलवाचकात्तद्व्यधिकरणे व्यापारे इत्यर्थः। **पुनर्ण्यर्थस्येति** । ण्यन्तस्य तद्रहितेऽर्थे लक्षणा । गङ्गादिपदस्य तीरलक्षणायामपि टाप्स्थितिवैण्णिचःस्थितिरिति भावः। **प्रथमतृतीययोरिति**। 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत् । एवं **तृतीयकक्ष्यायामित्यत्रापि** । याव-

कर्मकारकस्य णौ कर्तृत्वाऽभावात् । चतुर्थ्यां तु तङ् , द्वितीयामादाय क्रियासाम्यात् । प्रथमायां कर्मणो भवस्येह कर्तृत्वाच्च । एवमारोहयते हस्तीत्यप्युदाहरणम् । (१) आरोहन्ति हस्तिनं हस्तिपकाः। न्यग्भावयन्तीत्यर्थः। ततः

---

त.]त्यर्थः।द्वितीयामादायेति।'अणौ या क्रिया सैव चेण्ण्यन्ते' इत्यस्य न्यूनाधिकभावव्यवच्छेदपरत्वमभ्युपेत्येदमुक्तम्। यदा त्वधिकव्यवच्छेदमात्रपरत्वमभ्युपगम्यते तदा प्रथमामादाय तत्संभवति । इदानीं कर्तृस्थक्रियाकमुदाहरति-एवमि-

---

बा.]वाक्यसमानार्थकस्य ण्यन्तघटितस्योपपादकमिति स्पष्टमेव । तथाच प्रथमतृतीययोः कक्ष्ययोः पश्यन्ति भवं भक्ताः, दर्शयन्ति भवं भक्ता इत्यनयोः, तथा पश्यति भवः, दर्शयते भव इति द्वितीयचतुर्थ्योः कक्ष्ययोश्च तुल्योऽर्थ इत्यर्थः । तत्र प्रथमद्वितीययोः कक्ष्ययोर्दर्शेर्ण्यन्तत्वाऽभावादेव तङो न प्रसक्तिरिति मत्वा आह-**तत्र तृतीयकक्ष्यायां न तङिति** । कुत इत्यत आह-**क्रियासाम्येऽपीति** । 'दर्शयन्ति भवं भक्ता' इति तृतीयकक्ष्यायाः, 'पश्यन्ति भवं भक्ता' इति प्रथमकक्ष्यासमानार्थकतया 'अणौ या क्रिया सैव चेण्ण्यन्तेनोच्येते'त्यंशस्य सत्त्वेऽपि प्रथमकक्ष्यायामणौ कर्मकारकस्य भवस्य 'दर्शयन्ति भवं भक्ता' इति तृतीयकक्ष्यायां णौ कर्तृत्वाऽभावादित्यर्थः। एवं चतुर्थकक्ष्योपपादिका तृतीयकक्ष्यैषा प्रत्युदाहरणं चेत्युक्तं भवति। अणौ या क्रिया सैव चेण्ण्यन्तेनोच्येतेत्यंशस्य तु अध्यारोपितप्रेरणपक्षे द्वितीयकक्ष्यायां न तङिति फलं वक्ष्यते । चतुर्थकक्ष्या तु प्रकृतसूत्रस्योदाहरणमित्याह-**चतुर्थ्यां तु तङिति** । 'णेरणौ' इति प्रकृतसूत्रेणे'ति शेषः । तदेवोपपादयति-**द्वितीयामादायेति** । 'पश्यति भव' इति द्वितीयकक्ष्यायां या चाक्षुषज्ञानविषयत्वापत्तिरूपा क्रिया तस्या एव 'दर्शयते भव' इति चतुर्थकक्ष्यायां ण्यन्तदृश्यर्थत्वादित्यर्थः । अनेन 'अणौ या क्रिया सैव चेण्ण्यन्तेनोच्येते'त्यंश उपपादितः। अथ 'अणौ यत्कर्मकारकं णौ स चेत्कर्ता स्या'दित्यंशमुपपादयति-**प्रथमायामिति** । 'पश्यन्ति भवं भक्ता' इति प्रथमकक्ष्यायामण्यन्तदृशिकर्मणो भवस्य 'दर्शयते भव' इति चतुर्थकक्ष्यायां ण्यन्तदृशिकर्तृत्वाच्चेत्यर्थः।अथ कर्तृस्थक्रियधातुमुदाहरति-**एवमारोहयते हस्तीत्यादि**।तत्र प्रथमकक्ष्यामाह-**आरोहन्ति हस्तिनं हस्तिपका इति** । हस्तिनं पान्तीति हस्तिपाः । त एव हस्तिपकाः । स्वार्थे कः । उपरिभागाक्रमणानुकूलव्यापारो रुहेरर्थः । तत्र प्रासादमारोहतीत्यादौ उपरिभागाक्रमणानुकूलव्यापारः सोपानगमनादिः । इह तु उच्चस्य हस्तिनो न्यग्भावनमेव उपरिभागाक्रमणानुकूलो व्यापारो विवक्षितः । तच्च नीचीकरणं । तदाह-**न्यग्भावयन्तीति** । अत्र उपरिभागाक्रमणानुकूलन्यग्भवनानुकूलोऽङ्कुशपातादिर्व्यापारः। उपरिभागाक्रमणानुकूलन्यग्भवनं फलम्। तदाश्रयत्वाद्धस्ती कर्म। तादृशव्यापाराश्रयत्वाद्धस्तिपकाः कर्तारः। अथ द्वितीयकक्ष्यामाह-**तत इति** । प्रेरणांशपरित्यागे सति उपरिभागाक्रमणानुकूलन्यग्भवनार्थकाद्रुहेः आरोहति, हस्तीति न्यग्भवतीत्यर्थः । प्रेषणांऽशपरित्यागे फलितमाह-**न्यग्भवतीत्यर्थ इति** । अथ तृतीयकक्ष्यामाह-**ततो णिजिति** । प्रेषणांऽशं परित्यज्य न्यग्भवनार्थकत्वमाश्रिताद्धातोः प्रेषणविवक्षायां

---

शे.]तीषु सोपानस्थानीयास्वर्थविभागभूमिषु पदं विन्यस्येयं प्रायोगिकी भूमिः प्राप्यते ता भूमयः 'कक्ष्या' इत्युच्यन्तेऽवस्था इति च । तथा हि-'आरोहन्ति हस्तिनं हस्तिपकाः' इत्येका कक्ष्या । ततो णिचि व्यापारान्तरप्रतीतिः स्यादतो मध्येऽन्या कक्ष्या 'आरुह्यते हस्ती स्वयमेवे'ति । अत्र न्यग्भवनमात्रमर्थः। ततो णिच्यारोहन्तीत्यनेन समानार्था तृतीया । इयञ्च तृतीयवाक्यार्थव्यावर्त्यभूता, उदाहरणकक्षोपपादिका च । ततो व्यापारत्यागे 'आरोहयते हस्ती स्वयमेवे'त्युदाहरणभूता । तदुक्तम्-न्यग्भावना न्यग्भवनं रुहौ शुद्धे प्रतीयते । न्यग्भावना न्यग्भवनं ण्यन्तेऽपि प्रतिपद्यते ॥ अवस्थां पञ्चमीं प्राहुर्ण्यन्ते तां कर्मकर्तरि । निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते' ॥ इति । अत्र पञ्चमीत्वं यथाकथञ्चिदुपपाद्यम् । न्यग्भवनमधोदेशस्थित्यनुकूलो व्यापारः । तदनुकूलो व्यापारश्च न्यग्भावना । तत्राऽऽद्यकक्ष्यायां न्यग्भवने स्वरूपयोग्यतानिश्चयेन न्यग्भावनायां कर्तुः प्रवृत्तिरिति प्रतीतिः । अन्यथा शिलायामङ्कुरोत्पादनायेवाऽप्रवृत्त्यापत्तिः । द्वितीयायान्तु प्रयोज्यस्य स्वव्यापारेणैव प्रवृत्तिरिति सौकर्यप्रतीतिः। तृतीयायां न्यग्भवने स्वत एव प्रवृत्तं दृष्ट्वा तत्क्षेमाय कर्तृप्रवृत्तिरिति सौकर्यप्रतीतिः । उदाहरणे तु क्षेमार्थमपि न स्वव्यापारभिन्नप्रयोजकव्यापाराऽपेक्षेति सौकर्यातिशयप्रतीतिरिति बोध्यम् । अत्र 'रुहौ शुद्धे प्रतीयते' इत्यनेनार्थी प्रतीतिर्न तु तद्वाच्यत्वन्तयोरिति सूचयति । तथाहि-ऊर्द्ध्वदेशावच्छिन्नसंयोगानुकूलव्यापारो रुह्यर्थः, 'रुहिर्गत्यर्थः' इति 'यद्वितुपर'मित्यत्र भाष्यात् । तदवच्छिन्नसंयोगाश्रयत्वेनैन गजस्य कर्मत्वम् । अत एवाऽयं कर्तृस्थक्रियः, संयोगस्य कर्तर्यपि सत्त्वात् । उपरिगमनस्य न्यग्भवनं विनाऽसम्भवात्तस्यापि मानसो बोध इति बोध्यम् । **यद्वेति** । अत्रापि पक्षे क्रियासाम्यं निवृत्तप्रेषणद्वितीयकक्ष्यामादाय बोध्यम् , तस्या अप्येतन्मूलभूतत्वात् । आधिक्यमात्रव्यवच्छेदे त्वेतत्पक्षीयप्रथमामादायाऽपि तद्बोध्यम् । अयमपि पक्ष उक्तो हरिणा,-'केपाञ्चिद्देवदत्तादेर्व्यापारो यः सकर्मके । स विना देवदत्तादेः कटादिषु विवक्ष्यते'। स यदा प्रयोजककर्तारमन्तरेणापि कर्मणि विवक्ष्यते तदेत्यस्या अर्थः । 'स्वीकृतप्रेषणं कर्म स्वस्य कर्तुः प्रयोजकम् । प्रेरणान्तर-

(२) आरोहति हस्ती। न्यग्भवतीत्यर्थः। ततो णिच्,-(३) आरोहयन्ति। आरोहन्तीत्यर्थः। ततः-(४) आरोहयते। न्यग्भवतीत्यर्थः। यद्वा-(१) पश्यन्त्यारोहन्तीति प्रथमकक्षा प्राग्वत्। ततः कर्मण एव हेतुत्वारोपाण्णिच्। (२)दर्शयति भवः। आरोहयति हस्ती। पश्यत आरोहतश्च प्रेरयतीत्यर्थः। ततो णिज्भ्यां तत्प्रकृतिभ्यां च उपात्तयोर्द्वयोरपि प्रेषणयो-

---

त.]त्यादिना। आरोहति हस्तीति। प्रेषणांशत्यागे उदाहरणमिदम्। ततो णिजिति। निवृत्तप्रेषणाद्धातोः प्रेषणांऽशाविवक्षायां णिजित्यर्थः। पुनर्ण्यर्थस्याऽविवक्षायामुदाहरणमाह-आरोहयते इति। एवं निवृत्तप्रेषणपक्षमुपपाद्येदानीमध्यारोपितप्रेषणपक्षमाह-यद्वेति। हेतुत्वारोपादिति। प्रयोजककर्तृत्वारोपादित्यर्थः। अत्रापि सौकर्यविवक्षैव बीजम्। पश्यत इति। पश्यतो भक्तान्, आरोहतो हस्तिपकानिति क्रमेणाऽर्थः। आधिक्यादिति। 'अस्मिन्पक्षे णौ चेत्सा क्रिये'-त्यनेन आधिक्यमात्रं व्यवच्छिद्यते न तु न्यूनत्वमपि। अन्यथा तृतीयकक्षायामपि तङ् न स्यात्, प्रकृत्युपात्तप्रेषणांशस्य त्यागेन न्यूनतायाः सत्त्वादिति भावः। णेरिति किम्? । पश्यत्यारोहतीत्यादिनिवृत्तप्रेषणान्माभूत्। न च 'णौ चे'दिति श्रुतत्वाण्ण्यन्तादेव स्यादिति वाच्यम्, अणावित्यस्यापि श्रुतत्वात्। तस्याऽग्रिमयोगार्थमवश्यं कर्तव्यस्य स्पष्टार्थमिहैव कर्तुमौचित्याच्च। अणौ या क्रिया सैव चेण्ण्यन्ते इति किम्? । दर्शयति भवः, आरोहयति हस्तीत्यध्यारोपितप्रेषणपक्षे द्वितीय-

---

बा.]हेतुमण्णिजिति भावः। आरोहयन्तीति। 'हस्तिनं हस्तिपका' इति शेषः। प्रेषणांशनिवृत्तौ णिजन्तस्य फलितमर्थमाह-आरोहन्तीत्यर्थ इति। आक्रमणाय हस्तिनं न्यग्भावयन्तीति यावत्। चतुर्थकक्ष्यामाह-तत इति। अविवक्षितप्रेषणाण्ण्यन्तात्प्रकृतसूत्रेणात्मनेपदे आरोहयते इति रूपमित्यर्थः। प्रेषणांऽशत्यागे सति ण्यन्तस्य फलितमर्थमाह-न्यग्भवतीत्यर्थ इति। तदेवं 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते' इति पक्षमाश्रित्योदाहृतम्। इदानीमध्यारोपितप्रेषणपक्षमाश्रित्य आह-यद्वेति। पश्यन्तीति। पश्यन्ति भवं भक्ता इति, आरोहन्ति हस्तिनं हस्तिपका इति च प्रथमकक्ष्या पूर्ववद्व्याख्येयेत्यर्थः। द्वितीयकक्ष्यामाह-ततः कर्मण इति। दृशे रुहेश्च प्रथमकक्ष्यायां कर्मीभूतस्य भवस्य हस्तिनश्च प्रयोजककर्तृत्वरूपहेतुत्वारोपाद्धेतुमण्णिजित्यर्थः। दर्शयति भव इति। 'भक्ता'निति शेषः। तदाह-पश्यत आरोहतश्च प्रेरयतीत्यर्थ इति। चाक्षुषज्ञानविषयत्वमापादयतो भक्तान्भवः प्रेरयति, न्यग्भावयतो हस्तिपान् हस्ती प्रेरयतीत्यर्थः। उभयत्र हेतुमण्णिच्। तत्र प्रकृतिभ्यां दृशिरुहिभ्यामेकैकं प्रेरणम्। णिचा तु तद्विषयकमेकैकं प्रेरणान्तरं प्रतीयते इति स्थितिः। चतुर्थकक्ष्यामाह-ततो णिज्भ्यामिति। हेतुमण्णिज्भ्यां, तत्प्रकृतिभूतदृशिरुहिभ्यां च उपात्तयोः प्रेरणयोस्त्यागे सति चाक्षुषज्ञानविषयो भवति भव इति, न्यग्भवति हस्तीति चार्थः पर्यवस्यति। तत्र प्रकृतसूत्रेणात्मनेपदे दर्शयते भवः, आरोहयते हस्तीति च सिद्धमित्यर्थः। पश्यन्ति भवं भक्ता इति, आरोहन्ति हस्तिनं हस्तिपका इति च प्रथमकक्ष्यायां कर्मणो भवस्य हस्तिनश्च तृतीयकक्ष्यायां कर्तृत्वात्, प्रथमकक्ष्यायामणौ या क्रिया तस्या एवाऽत्र तृतीयकक्ष्यायां सत्त्वाच्चेति तृतीयकक्ष्यायामुदाहरणे सूत्रप्रवृत्तिरुपपाद्या। न च प्रथमकक्ष्यायां चाक्षुषज्ञानविषयं कुर्वन्तीति, न्यग्भावयन्तीति प्रकृत्युपात्तस्य प्रेषणांशस्य तृतीयकक्ष्यायां त्यागादणौ या क्रिया सैव चेण्ण्यन्तेनोच्येतेत्यंशस्य कथं प्रवृत्तिरिति वाच्यम्, 'सैव चेण्ण्यन्तेने'त्यत्र आधिक्यमात्रं व्यवच्छिद्यते, नतु न्यूनत्वमपीत्यदोषात्। ननु द्वितीयकक्ष्यायामेव कुतो

---

शे.]संबन्धे ण्यन्ते स्वेनाभिधीयते'। इति। प्रेरणास्वीकारे सौकर्यातिशयप्रतीतिः प्रयोजनम्। प्रेरणान्तरसंबन्धे-कर्तृविषयप्रेरणान्तरसंबन्धे। तेन स्वविषयप्रेरणा सर्वत्र स्वस्मिन्नस्तीति दर्शितम्। अत्र पक्षे स्वयंदूती स्पष्टं निदर्शनम्। आद्यपक्षे-आदौ या दूती साऽपेक्षा, ततस्तदनपेक्षा साऽपि निदर्शनम्। द्वितीयकक्ष्यायां न तङिति। नन्वेतत्समानार्थोन्तर्भावितण्यर्थस्यापि वक्तुं शक्यत्वेन तामादाय क्रियासाम्यमत्रापि। न च सा ण्यन्तस्य न मूलभूता, तत्तत्कक्ष्यास्थण्यन्तधातुप्रकृतित्वं हि ण्यन्तमूलत्वमिति वाच्यम्, एवं हि निवृत्तप्रेषणचतुर्थकक्ष्यायां कर्मणः कर्तृत्वमाद्यकक्ष्यामादायोपपाद्यमानमनुपपन्नं स्यात्, तुर्यकक्ष्यायां तत्प्रकृतिकण्यन्तत्वाऽभावात्। द्वितीयकक्ष्यास्थप्रकृतिकण्यन्तत्वस्यैव तत्र सत्त्वात्। न च यदर्थकाद्यदर्थकमूलकाद्वा प्रयोगात् कक्ष्यान्तरेऽर्थस्य त्यागो वृद्धिर्वा, सा मूलभूता। अस्ति ह्याद्यकक्ष्यार्थैकदेशस्योदाहरणभूतकक्ष्यायां त्यागः, द्वितीयकक्ष्यार्थैकदेशस्यापि तस्यां त्यागाच्च तस्या अपि मूलत्वं, नैव प्रकृते इति वाच्यं, कक्ष्ययोर्मूलमूलिभावस्य सूत्रभाष्याक्षराद्यनारूढत्वात्। अन्तर्भावितण्यर्थकक्ष्यास्थधातोर्निवृत्तप्रेषणतां कृत्वा णिचि कृते तत्समानार्थैण्यन्तप्रयोगेण तस्या अपि तन्मूलत्वाऽक्षतेश्च, तदर्थमूलकात्तत्र वृद्धेः सत्त्वादिति चेन्न, गमकं विनाऽन्तर्भावितण्यर्थताया अभावात्। अणाविति किम्?। निवृत्तप्रेषणपक्षीयतृतीयकक्ष्यास्थकर्मणो हेतुत्वारोपेण द्वितीयहेतुमण्णौ 'दर्शयति भवो भक्तैः' इत्यत्रैव माभूदिति। कर्मनिष्ठप्रयोजकव्यापारश्च ज्ञानविषयीभवनमेवेति दिक्। 'मध्वपाययत स्वच्छं सोत्पलं दयितान्तिके। आत्मानं सुरताभोगविश्रम्भोत्पादनं मुहुः'। इति भट्टिश्लोके आत्मानं सुरताभोगविश्रम्भोत्पादनं-'दर्शयित्वे'ति शेषः, स मधु पिबति, मध्वपाययतेत्यर्थादनेनैवात्मनेपदम्। ध्वनितश्चेदं जयमङ्गलायाम्। 'करेणुरारोहयते निषादि'नित्यत्रैवा-

स्यागे-(३)दर्शयते आरोहयते इत्युदाहरणम् अर्थस्तु प्राग्वत्।अस्मिन्पक्षे द्वितीयकक्षायां न तङ्।समानक्रियत्वाऽभावात्,णिजर्थस्याधिक्यात्। अनाध्याने किम्?।स्मरति वनगुल्मं कोकिलः। स्मरयति वनगुल्मः। उत्कण्ठापूर्वकस्मृतौ विषयो भवतीत्यर्थः। **'भीस्म्योर्हेतुभये'**। व्याख्यातम्। **गृधिवञ्च्योः प्रलम्भने ।१।३।६९।** प्रतारणेऽर्थे ण्यन्ताभ्यामाभ्यां प्राग्वत्। माणवकं गर्द्धयते वञ्चयते वा। प्रलम्भने किम्?। श्वानं गर्द्धयति। अभिकाङ्क्षामस्योत्पादयतीत्यर्थः। अर्हिं वञ्चयति। वर्जयतीत्यर्थः। **'लियः संमाननशालीनीकरणयोश्च'**। व्याख्यातम्।

त.]कक्षायां माभूत्।कथं तर्हि 'करेणुरारोहयते निषादिन'मिति माघप्रयोगः,'स सन्ततं दर्शयते गतस्मयः कृताधिपत्यामिव साधु बन्धुता'मिति भारविप्रयोगश्च सङ्गच्छत इति चेत्। अत्राहुः-'णिचश्चे'त्यनेन क्रियाफले कर्तृगामिनि तङ्, न तु प्रकृतसूत्रेणेति। अणौ यत्कर्म कारकं णौ चेत्स क[illegible]म्?। दर्शयन्ति भवमिति निवृत्तप्रेषणपक्षे तृतीयकक्षायां माभूत्। **स्मरति वनगुल्ममिति**। पक्षद्वयेऽपीयं प्रथमक[illegible] **स्मरयति वनगुल्म इति**। निवृत्तप्रेषणपक्षे चतुर्थकक्षेयम्। आध्यारोपितपक्षे तु तृतीयकक्षेति ज्ञेयम्। केचित्तु एतत्सूत्रस्थे भाष्ये दर्शयते भृत्यान् राजेत्युदाहरणं, स्मरयत्येनं वनगुल्म इति प्रत्युदाहरणं च दृश्यते। ततश्च अध्यारोपितप्रेषणपक्षे द्वितीयकक्षायामेवाऽनेनात्मनेपदं भवति, न तु तृतीयकक्षायामिति प्रतीयते।तथा च कर्मपदमावर्त्य तस्य क्रियावाचित्वं स्वीकृत्याऽणौ या क्रिया सैव चेण्ण्यन्तेनोच्येतेति वाक्यान्तराभ्युपगमेऽप्येवकारेणाऽधिक्यं न व्यवच्छिद्यते,किं तु न्यूनतैवेत्यस्मादेव भाष्यादवगम्यते। एवं च 'दर्शयते भवः' 'आरोहयते हस्ती'ति कर्मप्रयोगरहितं मूलग्रन्थस्योदाहरणं, 'स्मरयति वनगुल्म' इति प्रत्युदाहरणं च भाष्यविरुद्धमेवेत्याहुः। अन्यैस्त्वविवक्षितमिह कर्मेत्युक्त्वाऽत्र मूलग्रन्थाऽविरोधेनैव भाष्यग्रन्थः समर्थितः।तेषामयमाशयः-'गभीरायां नद्यां घोष' इत्यत्र गभीराऽभिन्ननद्यामिति गभीरनदीपदार्थयोरभेदबोधानन्तरं तीरलक्षणायां तीरस्य गभीरत्वाऽभावात्,नद्यास्तु गभीरत्वेऽप्येकदेशान्वयाऽसंभवाच्च अनर्थकमपि गभीरायामिति पदं प्राथमिकबोधमादाय यथा सार्थकं, तद्वदिहापि अध्यारोपितप्रेषणपक्षे द्वितीयकक्षायां कर्मण्यन्वितं, ततो णिजर्थस्यैव कर्मणोऽपि त्यागे णिचः कर्मपदस्य च प्राथमिकबोधमादाय सार्थक्यम्। स्वबोध्यसंबन्धो लक्षणेत्यभ्युपगमात्,विशिष्टवाक्यार्थस्य चेह बोध्यत्वेन तत्संबन्धस्य बोधकतारूपस्य वाक्ये सत्त्वात्। एवैवार्थवादैः प्राशस्त्यलक्षणायां गतिः। अन्यथा 'वायव्यं श्वेतमालभेत भूतिकामः' इत्यादिविधिवाक्यस्य योऽर्थवादः 'वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति' 'स एवैनं भूतिं गमयति' इत्यादिस्तत्र 'वायुमेव स्वेन भागधेयेन' 'स एवैन'मित्यादिरूपस्य विभक्तिभेदेन प्रयोगस्य वैयर्थ्यं स्यादिति।नन्वेतत्सूत्रस्योदाहरणं प्रत्युदाहरणं च यथाश्रुतभाष्यानुसारेण सकर्मकमेवास्तु किमनेन विद्यमानकर्मणोऽविवक्षितत्वोपपादनक्लेशेनेति चेत्।मैवम्।निवृत्तप्रेषणपक्षे दर्शयते भव इत्याद्युदाहरणस्य प्रत्युदाहरणस्य च कर्मरहितस्य स्वीकर्तव्यतया तदैकरूप्यस्याऽस्मिन्नपि पक्षे अकर्मकोदाहरणप्रत्युदाहरणयोः सिद्धये कर्मणोऽविवक्षितत्वव्याख्याया उचितत्वात्। किंच 'कर्मवत्कर्मणे'त्यनेनैव सिद्धे कर्तृस्थभावक्रियार्थं सूत्रमिति भाष्यग्रन्थस्वारस्यादप्यकर्मकमेवोदाहरणं प्रत्युदाहरणं चायाति। न च 'कर्मवत्कर्मणे'ति सूत्रे तुल्यशब्देनापि कर्मस्थक्रियातो न्यून-

बा.]न तङित्यत आह-**अस्मिन्पक्षे द्वितीयेति**।कुत इत्यत आह-**समानक्रियत्वाभावादिति**। द्वितीयकक्ष्यायामणौ या क्रिया सैव चेण्ण्यन्तेनोच्येतेत्यंशस्याऽभावादिति यावत्। तदेवोपपादयति-**णिजर्थस्येति**। णेरिति किम्?। पश्यत्यारोहतीति निवृत्तप्रेषणान्मा भूत्। **स्मरति वनगुल्मं कोकिल इति**। स्मृतिविषयत्वमापादयतीत्यर्थः। पक्षद्वयेऽप्येषा प्रथमकक्ष्या द्वितीयतृतीयकक्ष्योरप्युपलक्षणम्। तत्र निवृत्तप्रेषणपक्षे 'स्मरति वनगुल्म' इति द्वितीयकक्ष्या। स्मृतिविषयो भवतीत्यर्थः। 'स्मरयति वनगुल्मं कोकिल' इति तृतीयकक्ष्या। स्मृतिविषयत्वमापादयतीत्यर्थः। अध्यारोपितप्रेषणपक्षे तु 'स्मरयति वनगुल्मः कोकिल'मिति द्वितीयकक्ष्या। स्मरन्तं प्रेरयतीत्यर्थः। **स्मरयति वनगुल्म इति**। प्रत्युदाहरणमिदम्। निवृत्तप्रेषणपक्षे चतुर्थकक्ष्यैषा। अध्यारोपितप्रेषणपक्षे तु तृतीयकक्ष्येति बोध्यम्। 'स्मृ आध्याने' इति घटादिकत्वेन मित्वाद्ध्रस्वः। विस्तरस्त्वत्र प्रौढमनोरमाशब्दरत्नशब्देन्दुशेखरेष्वनुसन्धेयः। **गृधिवञ्च्योः**। प्रलम्भनं प्रतारणमिति मत्वाऽऽह-**प्रतारणेऽर्थे इति। प्राग्वदिति**। आत्मनेपदमित्यर्थः। धातूनामनेकार्थत्वादनयोः

शे.]त्रापि 'णिचश्चे'त्येवात्मनेपदमित्यन्ये। **स्मरयतीति**। मित्वाद्ध्रस्वः। **अपरे तु** 'कर्तरि कर्मव्यतिहारे' इति सूत्रे 'क्रियाग्रहणं कर्तव्य'मिति सूत्रकारशिक्षां कुर्वतो वार्तिककृतः कर्मपदस्य क्रियापरत्वं नाऽभिप्रेतमिति-'अण्यन्तस्य यत्कर्म यदा ण्यन्ते तदेव कर्म भवति तदा आत्मनेपद'मित्युपक्रमवार्तिकस्थकर्मशब्दस्य क्रियापरत्वेन व्याख्यानं न युक्तमित्युभयत्रापि कर्मशब्दः कारकपर एव। अत एव तद्व्याख्यानभाष्येऽपि कर्मशब्दप्रयोग एव कृतो न क्रियाशब्दप्रयोगः। नापि कर्मवद्भाव इवाऽत्र सकर्मकाणां प्रतिषेधो वार्तिककृतोक्तः। तत्र द्वितीयवाक्येनाऽणौ यत्कर्म णौ चेत्तदेव कर्मेति कर्मान्तरनिवृत्तिः प्रतिपाद्यते, न त्वणौ कर्मणो णौ कर्मत्वम्। उत्तरवाक्येन तस्य कर्तृत्वप्रतिपादनात्।एकस्यैकस्यां क्रियायामुभयरूपत्वाऽस-

**मिथ्योपपदात्कृञोऽभ्यासे** ।१।३।७१। णेरित्येव । पदं मिथ्या कारयते । स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः ।

---

त.]तैव व्यवच्छिद्यते न त्वाधिक्यमिति स्वीकृते नास्ति भाष्यग्रन्थस्वारस्यभङ्ग इति वाच्यं,तथा हि सति 'कर्मवत्कर्मस्थक्रिय' इत्युक्तेऽपि कर्मस्था क्रिया यस्य कर्तुः स कर्ता कर्मवदित्यर्थलाभात्तत्समीहितसिद्धौ 'कर्मणा तुल्यक्रिय' इत्यस्य वैयर्थ्यापत्तेः। द्वितीयकक्षायां भत्रे हस्तिनि च विषयत्वापादनविषयकप्रेरणायाश्च न्यग्भवनविषयकप्रेरणायाश्च क्रमेण सत्त्वेऽपि विषयत्वापत्तिरूपाया न्यग्भवनरूपायाश्च कर्मस्थक्रियायाः सत्त्वात् । यदि तु 'कर्मणा तुल्यक्रियः' इत्येतत्सार्थक्याय तुल्यशब्देनात्र न्यूनाधिकव्यवच्छेदः क्रियत इत्युच्यते,तदा 'कर्मवत्कर्मणे'ति सूत्रस्य द्वितीयकक्षायामप्रवृत्तेः 'कर्मवत्कर्मणेत्यनेनैव सिद्धे' इत्यादिभाष्यग्रन्थस्वारस्यभङ्गो भवत्येव । ततश्च अध्यारोपितप्रेषणपक्षे तृतीयकक्षायामेवोदाहरणं, न तु द्वितीयकक्षायामित्यभ्युपगन्तव्यम् । एतेनाध्यारोपितप्रेषणपक्षे णौ चेत्सा क्रियेत्यनेनाधिक्यमात्रं व्यवच्छिद्यते न्यूनत्वं नेत्यत्र विनिगमनाऽभावान्न्यूनत्वव्यवच्छेद एव स्वीकृते, द्वितीयकक्षायां तद् दुर्वार इति न्यूनाधिकव्यवच्छेद एव ग्राह्यस्तेन कक्षाचतुष्टयपक्ष एव साधीयानिति वदन्तः परास्ताः । दर्शयते भृत्यान् राजेति भाष्योदाहरणबलेन अध्यारोपितपक्षस्यैव प्रबलत्वादिति दिक् । **गृधिवञ्च्योः प्रलम्भने** । अकर्त्रभिप्रायार्थ आरम्भः। **मिथ्योपपदात्कृञोऽभ्यासे** । इह करोतिरुच्चारणा-

---

बा.]प्रतारणे वृत्तिः । **मिथ्योपपदात्** । अभ्यासवृत्तेर्मिथ्याशब्दोपपदकात्कृञ आत्मनेपदमित्यर्थः । इत ऊर्ध्वं 'णे'रिति

---

शे.]म्भवात्।न च 'दर्शयते भृत्यान् राजा' इति भाष्योदाहरणविरोधो भृत्यरूपस्य कर्मणः सत्त्वादिति वाच्यम् ,एतद्भाष्योदाहरणप्रामाण्यादणौ ये कर्तृकर्मणी तद्भिन्नकर्मव्युदासे तात्पर्यात् । 'कर्त्तरि कर्मे'त्यतः कर्तृग्रहणमनुवर्त्य प्रथमया विपरिणमय्य यच्च यश्च यदित्येकशेषेणाऽयमर्थो लब्धः । कर्मान्तरनिवर्तकवाक्यफलन्तु–'आरोहन्ति हस्तिनं हस्तिपकाः' 'आरोहयमाणो हस्ती स्थलमारोहयति मनुष्या'निति भाष्योक्तम् । तत्र हि स्थलमधिकं कर्म, तस्य मूलभूताऽण्यन्तावस्था 'मनुष्या हस्तिनमारोहन्ती'त्येव । सौकर्यातिशयप्रतिपादनाय प्रेरणावृद्धिवत्तत्प्रतिपादनायैव फलांऽशवृद्ध्या द्विकर्मत्वम् । अत्रोर्ध्वदेशतत्स्थवस्तु एतदुभयसंयोगानुकूलो व्यापारो धात्वर्थः । स्थलशब्देन गजपृष्ठस्थं काष्ठादिमयमुपवेशनस्थानमुच्यते । गजोर्ध्वदेशसंयोगानुकूलव्यापारेण तन्न्यग्भवनरूपेण तत्स्थवस्तुसंयोगोऽपि जात इति सौकर्यातिशयोऽत्र बोध्यः । 'आरोहन्ति हस्तिनं हस्तिपका' इत्येषा त्वारोहयमाण इत्यस्यैव मूलभूता । 'आरोहयमाण' इत्यन्तं सूत्रोदाहरणप्रदर्शनं दृष्टान्तार्थम् । यथा तत्राऽनेनात्मनेपदं तथाऽत्रापि स्यादिति तदाशयः।किं चास्योदाहरणस्य न 'मनुष्याः स्थलमारोहन्ती'ति मूलकक्ष्या। नापि तान् स्थलमारोहयतीति स्थलं कर्तृ, आरोहयमाणो हस्तीति शानजन्तप्रयोगेण मनुष्यकर्मकारोहणे स्वरसतो हस्तिन एव कर्तृत्वप्रतीतेः । शतृशानजाद्यन्तार्थानां स्वभावतः क्रियान्तरसाकाङ्क्षत्वात् । क्रियान्तरस्य चाऽनुपस्थितेः । एवञ्च त्वद्रीत्या मूलकक्ष्यानिरूपणेऽणौ कर्मणो णौ कर्तृत्वाऽभावादप्राप्तेः प्रत्युदाहरणाऽसङ्गतिस्तव । हस्तीत्यन्तस्य शुद्धदृष्टान्तार्थत्वे तु तिङन्तमेवोच्चारयेत् । किं च कर्मपदस्य क्रियापरत्वे समानक्रियत्वप्रदर्शनाय द्वितीयकक्ष्याप्युदाहर्त्तुमुचिता कर्मणः कर्तृत्वबोधनाय प्रथमकक्ष्यावदिति तदनुक्त्या कारकपरत्वमेवाभिप्रेतं लक्ष्यते।एवं प्रथमप्रघट्टकेनाऽकर्मकाणामेवैतदुदाहरणत्वं मन्यमानेन सकर्मकाणां प्रतिषेधस्य सूत्रकृताऽनुक्तत्वेन सूत्ररीत्या तेष्वपि कर्मवद्भावप्रवृत्तिं मन्यमानेन वाऽऽचार्यदेशीयेन 'कर्मकर्तृत्वात्सिद्ध'मित्युक्ते अनाध्याने इति प्रतिषेधस्य प्रतिषेध्यसमर्पणायेदमित्याशङ्क्याऽऽध्यानार्थकानां कर्तृस्थभावकत्वात्तत्र कर्मवद्भावस्यैवाऽप्राप्तेर्निषेधे न फलमित्यन्तेन मध्यमप्रघट्टकेन सूत्रवैयर्थ्ये आचार्यदेशीयेन शङ्किते,यथा तवाध्यानविषये कर्तृस्थभावकत्वादप्राप्तेर्निषेधवैयर्थ्यं तथा कर्मवद्भावाऽप्राप्तियोग्ये विषये आत्मनेपदार्थं सूत्रमित्याशयेनाचार्येण–एतदेव ज्ञापयति–भवत्येवंजातीयकानामात्मनेपद'मिति विध्यर्थमिदमिति तृतीयप्रघट्टके सिद्धान्तितम्।तत्र एवंजातीयकानामित्यस्य कर्तृस्थभावकजातीयानामित्यर्थः।तज्जातीयत्वं च कर्मवद्भावाऽप्राप्तियोग्यत्वेन।एवञ्च कर्तृस्थभावक्रियवत् सकर्मकाण्यप्यस्योदाहरणानीति ध्वनयतोदाहृतं 'दर्शयते भृत्यान् राजे'ति।अत एव द्वितीयपक्षव्युत्पादक[हरि]कारिकयोः प्रेरणावृद्धिप्रदर्शनवत्प्रेरणाद्वयत्यागविषयोदाहरणकक्ष्याप्रदर्शनं न कृतमाद्यपक्ष इव, तेन तत्र द्वितीयकक्ष्याप्युदाहरणमिति सूचितम् । किं च 'गभीरायां नद्या'मित्यादौ गभीरनदीतीरबोधेन लक्षणातात्पर्यग्राहकतया गभीरादिपदसार्थक्यवदिह कर्मपदस्य णिचश्च सार्थक्यमन्वयो वा नोपपादयितुं शक्यः।न च कर्मपदणिज्घटितस्य तद्रहिते स्वार्थसम्बद्धे लक्षणेति दोषः, अत एव णिच्स्थितिरिति वाच्यम् , प्रेरणारूपेऽर्थे शास्त्रेण साधुतया बोधितस्याऽन्यार्थे लक्षणयाऽपि साधुत्वस्य वक्तुमशक्यत्वात् । तस्माद्दर्शनविषयीभवनसमानाधिकरणा प्रेरणा वास्तवी आरोपिता वा णिजर्थ इति णिचः साधुत्वं, कर्तृत्वं च स्वस्योपपन्नम् । अत एव ण्यन्ताऽण्यन्तयोर्न्यग्भवनतदनुकूलव्यापारयोः प्रतीत्युपपत्तये पञ्चम्यामवस्थायां णिजुपपत्तये च हरिणा–'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते। ब्रवीति पचतेरर्थं, सिध्यतिर्न विना णिचा। स ण्यन्तः पचतेरर्थे सर्वथैवाऽवतिष्ठते । तद्वद्रुहेरणौ णौ च तुल्यार्थत्वं प्रतीयते'–इत्युक्तम् । इदमुक्ततृतीयकक्ष्योदाहरणभूतपञ्चमकक्ष्योभयसाधारणम् । तत्र

मिथ्योपपदात्किम् ? । पदं सुष्ठु कारयति । अभ्यासे किम् ? । सकृत्पदं मिथ्या कारयति । **'स्वरितञितः कर्त्रभिप्राये क्रियाफले'** । यजते । सुनुते । कर्त्रभिप्राये किम् ? । ऋत्विजो यजन्ति । सुन्वन्ति । **अपाद्वदः ।१।३।७३।** न्यायमपवदते । कर्त्रभिप्राय इत्येव । अपवदति । **'णिचश्च'** । कारयते । **समुदाङ्भ्यो यमोऽग्रन्थे ।१।३।७५।** अग्रन्थे इति च्छेदः । व्रीहीन्संयच्छते । भारमुद्यच्छते । वस्त्रमायच्छते । अग्रन्थे किम् ? । उद्यच्छति वेदम् । अधिगन्तुमुद्यमं करोतीत्यर्थः । कर्त्रभिप्राये इत्येव। **अनुपसर्गाज्ज्ञः ।१।३।७६।** गां जानीते। अनुपसर्गात्किम् ? । स्वर्गं लोकं न प्रजानाति । कथं तर्हि भट्टिः-'इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्ये'ति ?। कर्मणि लिट् । 'नृपेणे'ति विपरिणामः। **विभाषोपपदेन प्रतीयमाने ।१।३।७७।** 'स्वरितञित' इत्यादिपञ्चसूत्र्या यदात्मनेपदं विहितं तत्समीपोच्चारितेन पदेन क्रियाफलस्य कर्तृगामित्वे द्योतिते वा स्यात् । स्वं यज्ञं यजति यजते वा । स्वं कटं करोति कुरुते वा । स्वं पुत्रमपवदति अपवदते वा । स्वं यज्ञं कारयति

---

त ]र्थत्वादकर्मकः । **उच्चारणं**-निःसरणम् । ण्यन्तस्तूच्चारणवृत्तिः सकर्मकः । **उच्चारयतीति** । निःसारयतीत्यर्थः । असकृदुच्चारणे तु धातोर्लक्षणा, आत्मनेपदं तु द्योतकं, तेनैव द्योतितत्वात् 'नित्यवीप्सयो'रिति न द्विर्वचनम् । **ऋत्विजो यजन्तीति** । दक्षिणादिकं तु न यागफलम् ,'स्वर्गकामो यजेते'त्यादिना स्वर्गाद्युद्देशेन यागादिविधानात्स्वर्गादिरेव फलमिति भावः । **समुदाङ्भ्यो** । 'आङो यमहनः' इत्येव सिद्धे आङ्पूर्वकस्य वचनं सकर्मकार्थमिति ध्वनयन्नुदाहरति- **वस्त्रमायच्छत इति**।**अनुपसर्गाज्ज्ञः**।अकर्मकाच्चेत्येव सिद्धे सकर्मकार्थ आरम्भः।**विभाषोपपदेन**।उपपदेन फलस्य कर्तृगामित्वे द्योतिते तङोऽप्राप्तावप्राप्तविभाषेयम् । कर्तृगामिनि क्रियाफले नित्ये प्राप्ते प्राप्तविभाषेत्यन्ये । **स्वं यज्ञमिति**।

---

बा.]निवृत्तम् । **अपाद्वदः** । अपपूर्वाद्वदधातोरात्मनेपदमित्यर्थः ।

**न्यायमपवदते इति**। वचनेन निरस्यतीत्यर्थः। 'किमिह वचनं न कुर्यान्नास्ति वचनस्यातिभारः' इति न्यायात्। **समुदाङ्भ्यो** । सम्, उत्, आङ् एतत्पूर्वादग्रन्थविषयकाद्यमेरात्मनेपदमित्यर्थः । **व्रीहीन्संयच्छते इति** । संगृह्णातीत्यर्थः । **भारमुद्यच्छते इति** । उद्गृह्णातीत्यर्थः । **वस्त्रमायच्छते इति** । कट्यादौ निबध्नातीत्यर्थः । **कर्त्रभिप्राये इत्येवेति । व्रीहीन् संयच्छतीति** । परार्थं संगृह्णातीत्यर्थः । 'आङो यमहनः' इत्येव सिद्धे आङ्ग्रहणं सकर्मकार्थम्, तस्य अकर्मकादेव प्रवृत्तेरिति बोध्यम् । **अनुपसर्गाज्ज्ञः** । अनुपसर्गाज्ज्ञाधातोरात्मनेपदमित्यर्थः । 'अकर्मकाच्चे'त्येव सिद्धे सकर्मकार्थमिदम् । तदाह-**गां जानीते इति । कथमिति** । अनुपूर्वकस्य अनुमत्यर्थकस्य ज्ञाधातोरुपसर्गपूर्वकतया प्रकृतसूत्रस्याऽप्रवृत्तेः सकर्मकतया 'अकर्मकाच्चे'त्यस्याप्यप्रवृत्तेरनुजज्ञे इति कथमात्मनेपदमित्यर्थः । समाधत्ते-**कर्मणि लिडिति** । तथाच 'भावकर्मणो'रित्यात्मनेपदमिति भावः । सुतस्य गमनमनुज्ञातमित्यर्थः फलति। नन्वेवं सति 'नृप' इति प्रथमान्तस्य कथमिहान्वय इत्यत आह-**नृपेणेति विपरिणाम इति** । अवालुलोचे इत्यत्रान्वितं नृप इति प्रथमान्तं तृतीयया विपरिणमितमत्रानुषज्यते इत्यर्थः । **विभाषोपपदेन** । **स्वरितञित इत्यादीति** । 'स्वरितञितः कर्त्रभिप्राये क्रियाफले', 'अपाद्वदः', 'णिचश्च', 'समुदाङ्भ्यो यमोऽग्रन्थे', 'अनुपसर्गाज्ज्ञः' इति पञ्चसूत्रीत्यर्थः । समीपोच्चारितं पदमुपपदम्, नतु 'तत्रोपपदं सप्तमीस्थ'मिति सङ्केतितम् , असंभवात् । तदाह-**समीपोच्चारितेन पदेनेति** । फलस्य कर्तृगामित्वे नित्यमात्मनेपदे पञ्चसूत्र्या प्राप्ते विभाषेयमिति 'न वेति विभाषा' इति सूत्रे भाष्ये स्पष्टम् । **स्वं यज्ञमिति** । स्वीयमित्यर्थः । अत्र स्वशब्देनैव फलस्याऽऽत्मगामित्वावगमात्

---

शे.]द्वितीयकक्ष्यायां न्यग्भवनसमानाधिकरणो व्यापारोऽर्थः। ततो णिचि तृतीया कक्ष्या । तत्र णिजर्थव्यापारस्य, प्रकृत्यर्थव्यापारस्य च त्यागे 'आरुह्यते हस्ती'ति तुर्या कक्ष्या । ततो न्यग्भवनसमानाधिकरणे प्रवर्त्तनात्वेनाऽपि विवक्षिते व्यापारे णिच्युदाहरणभूता कक्ष्या । एवञ्च तस्या हर्युक्तं पञ्चमकक्ष्यात्वं स्वरसत उपपद्यते । एवञ्च पूर्वण्यन्तादयं ण्यन्तस्तत्समानाकारो भिन्नार्थ एव । एतत्सर्वमन्वाख्यानोपायमात्रमिति बोध्यम् । एवञ्च समानक्रियत्वाऽसम्भवोऽपि बोध्यः। 'कर्मवद्भावात्सिद्ध'मिति प्रतीकमुपादाय 'लावयति केदारो देवदत्तेने'त्यत्र कैयटे परस्मैपदं तु तद्रीत्या बोध्यम् । प्रायेणात्मनेपदपाठ एव तत्र दृश्यते । करिष्यमाणसिद्धान्तानुसारी तु सः। एवं पूर्वविप्रतिषेधोऽपि चिन्त्यः।भाष्याऽनुक्तेः।'दर्शयते राजे'-त्यत्र 'अणावकर्मका'दित्यस्याऽप्राप्तेः स भाष्यप्रयोगो न मानम् । 'अणावकर्मका'दित्यत्रोद्देश्यतावच्छेदकावच्छेदेनान्वयस्य लोकव्युत्पत्तिसिद्धतयाऽण्यन्तावस्थात्वावच्छेदेनाऽकर्मकत्वप्रतीत्याऽत्यन्ताऽविद्यमानकर्मकेष्वेव तत्प्रवृत्तेः, इदञ्चाऽण्यन्त सकर्मकेष्विति विषयभेदात् । 'विभाषोपपदेने'त्यस्य च बाधे नैव मानं पश्याम इति प्राहुः। **विभाषोप**। इयं प्राप्तविभाषेति 'न वा' इति सूत्रे भाष्ये । 'स्वरितः' इत्यादि पञ्चसूत्र्यत्रानुवर्त्तते । कर्त्रभिप्रायक्रियाफलविषये आत्मनेपदमिति तदर्थः । अथाऽपि तदर्थद्योतकमात्मनेपदमेवमपि 'व्यतिलुनीते' इत्यादौ व्यतिभ्यां द्योतिते कर्मव्यतिहारे आत्मनेपदमिवे-

कारयते वा । स्वं व्रीहिं संयच्छति संयच्छते वा । स्वां गां जानाति जानीते वा । इत्यात्मनेपदप्रक्रिया ।

## अथ परस्मैपदप्रक्रिया ।

'शेषात्कर्तरि परस्मैपदम्' । अस्ति । अनुपराभ्यां कृञः।१।३।७९। कर्तृगेऽपि फले गन्धनादौ च परस्मैपदार्थमिदम् । अनुकरोति । पराकरोति। कर्तरीत्येव।भावकर्मणोर्मा भूत्।न चैवमपि कर्मकर्तरि प्रसङ्गः, कार्यातिदेशपक्षस्य मुख्यतया तत्र 'कर्मवत्कर्मणे'त्यात्मनेपदेन परेणाऽस्य बाधात्। शास्त्रातिदेशपक्षे तु 'कर्तरि श'-बित्यतः, 'शेषा'दित्यतश्च कर्तृग्रहणद्वयमनुवर्त्य 'कर्तैव यः कर्ता नतु कर्मकर्ता,तत्रे'ति व्याख्येयम्। अभिप्रत्यतिभ्यः क्षिपः।१।३।८०। क्षिप प्रेरणे। स्वरितेत्। अभिक्षिपति। [प्रतिक्षिपति। अतिक्षिपति।] प्राद्वहः।१।३।८१। प्रवहति। परेर्मृषः।१।३।८२। परिमृष्यति। भौवादिकस्य तु परिमर्षति । इह 'परे'रिति योगं विभज्य वहेरपीति

त.]स्वमित्युपलक्षणम् । 'स्वार्थं यज्ञं यजति । आत्मार्थं यज्ञं यजती'त्याद्यपि बोध्यम् । इति आत्मनेपदप्रक्रिया ।

शेषात्कर्तरि । 'अनुदात्तङित' इत्यादिष्वात्मनेपदमेवेति नियमाच्च तत्र परस्मैपदस्य संभवः । तथा च 'कर्तरि परस्मैपद'मित्यनेन 'परस्मैपदमेवे'ति नियमिते तद्भिन्नानामेव तद्भविष्यतीति शेषग्रहणं स्पष्टप्रतिपत्त्यर्थमित्याहुः। 'अनुदात्तङितः' इत्यादिष्वेवात्मनेपदमिति नियमात् 'शेषात्कर्तरी'त्यनेन परस्मैपदमेव तत्र भविष्यतीति परस्मैपदग्रहणं स्पष्टप्रतिपत्त्यर्थमिति केचित् । अस्य बाधादिति । 'अनुपराभ्या'मित्यस्येत्यर्थः। अतएव 'कर्मवत्कर्मणे'ति सूत्रे कार्यातिदेशोऽयमिति वक्ष्यति।शास्त्रातिदेशपक्षे 'कर्मवत्कर्मणे'त्यनेनात्मनेपदं न विधीयते, किं तु तद्विधायकं 'भावकर्मणो'-रिति शास्त्रमतिदिश्यते, तस्य च पूर्वत्वात्परेण 'अनुपराभ्या'मित्यनेन बाधमाशङ्क्याह-शास्त्रातिदेश इत्यादि। स्वरितेदिति । तथा च कर्तृगामिनि क्रियाफलेऽपि परस्मैपदार्थः सूत्रारम्भ इति भावः । परेर्मृषः । स्वरितत्वात्पदद्वये

बा.]'स्वरितञितः' इति नित्यात्मनेपदस्यानेन विकल्पः।स्वं यज्ञं कारयतीत्यत्र 'णिचश्चे'त्यस्याऽनेन विकल्पः।स्वं व्रीहिमिति । अत्र 'समुदाङ्भ्यो यमः' इत्यस्याऽनेन विकल्पः । स्वां गामिति । अत्र 'अनुपसर्गाज्ज्ञः' इत्यस्याऽनेन विकल्पः । इत्यात्मनेपदप्रक्रिया ।

अथ परस्मैपदव्यवस्थां निरूपयितुमुपक्रमते-शेषात्कर्तरीति । अनुपराभ्यां कृञः । 'परस्मैपद'-मिति शेषः । ननु 'स्वरितञितः' इत्यात्मनेपदस्य कर्तृगामिन्येव फले विधानादकर्तृगामिनि फले 'शेषात्कर्तरी'ति परस्मैपदस्य सिद्धत्वात् किमर्थमिदमित्यत आह-कर्तृगेऽपीति । गन्धनादाविति । गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु इत्यर्थः । मा भूदिति । भावे कर्मणि लकारस्य कर्तृगे फले परस्मैपदनिवृत्त्यर्थं कर्तरीत्यस्याऽनुवृत्तिरिति भावः। ननु कर्तरीत्यस्यानुवृत्तावपि 'अनुक्रियते शब्दः स्वयमेवे'त्यत्र कर्मकर्तरि परस्मैपदं दुर्वारमित्याशङ्क्य परिहरति-नचेति । एवमपि=कर्तरीत्यस्यानुवृत्तावपि कर्मकर्तरि आत्मनेपदस्य प्रसङ्गो न शङ्क्य इत्यर्थः । कुत इत्यत आह-कार्यातिदेशेति । तत्र कर्मकर्तरि 'कर्मवत्कर्मणा तुल्यक्रियः' इत्यात्मनेपदेन परेणाऽस्य परस्मैपदस्य बाधादित्यन्वयः । ननु कर्मणि यच्छास्त्रं तत् 'कर्मवत्कर्मणे'ति कर्मकर्तर्यतिदिश्यते, तथा चाऽत्र कर्मकर्तरि 'भावकर्मणो'रित्यात्मनेपदशास्त्रमिह प्राप्तम्। तस्य च परत्वाऽभावात् 'अनुपराभ्यां कृञः' इत्यनेन कथं बाधः स्यादित्यत आह-कार्यातिदेशपक्षस्य मुख्यतयेति । शास्त्रातिदेशस्य कार्यातिदेशार्थतया कार्यातिदेशस्य मुख्यत्वम् । ततश्च 'कर्मवत् कर्मणे'त्यनेन कर्मणि विहितमात्मनेपदं कर्मकर्तरि विधीयते । तस्य च परत्वात्तेनात्मनेपदेन 'अनुपराभ्या'मिति परस्मैपदं कर्मकर्तरि बाध्यमर्हतीति भावः । 'कर्मवत्कर्मणे'त्यत्र शास्त्रातिदेशमभ्युपगम्य आह-शास्त्रातिदेशपक्षे त्विति । 'अनुपराभ्यां कृञः' इत्यत्र 'कर्तरि कर्मव्यतिहारे' इत्यस्मादेकं कर्तृग्रहणमनुवर्तते । तथा 'शेषात्कर्तरि परस्मैपद'मित्यस्माद्द्वितीयं कर्तृग्रहणमनुवर्तते । तथा च 'स्वभावत एव यः कर्ता, नतु विवक्षाधीनः कर्मकर्ता तथाविधकर्तर्येव अनुपराभ्यां कृञः परस्मैपद'मिति लभ्यते । एवंच कर्मकर्तरि नास्य प्रवृत्तिरित्यर्थः। अभिप्रति । 'परस्मैपद'मिति शेषः। स्वरितेदिति । ततश्च कर्तृगामिनि फले आत्मनेपदे प्राप्ते अनेन तत्रापि परस्मैपदमिति भावः । अभिक्षिपतीति । प्रतिक्षिपति अतिक्षिपतीत्यप्युदाहार्यम् । प्राद्वहः । प्रपूर्वाद्वहेः परस्मैपदमित्यर्थः । वहेः स्वरितेत्त्वात्कर्तृगामिन्यात्मनेपदे प्राप्ते तत्राप्यनेन परस्मैपदम् । परेर्मृषः । 'परस्मैपद'मिति शेषः। 'मृष तितिक्षाया'मिति दैवादिकस्य स्वरितेत्त्वात्पदद्वये प्राप्तेऽयं विधिः । तदाह-परिमृष्यतीति। चौरादिकस्याऽपि 'आधृषाद्वे'ति णिजभावे स्वरितेत्त्वेऽपि परस्मैपदमेव-परिमर्षतीति। भौवादिकस्य त्विति । 'मृषु सहने सेचने चे'ति भौवादिकस्य तु परस्मैपदित्वात्परिमर्षतीत्येव रूपं सिद्धम् । अतो-

शे.]ह्यपि प्राप्नोतीति प्राप्तविभाषैवेति तदाशयः । इत्यात्मनेपदप्रक्रिया ।

कर्त्तैव य इति।कार्यातिदेशेऽप्यतिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इति मते इयमेव कल्पना बोध्या।अत्रत्य

केचित्। **व्याङ्परिभ्यो रमः** ।१।३।८३। विरमति। **उपाच्च** ।१।३।८४। यज्ञदत्तमुपरमति। उपरमयतीत्यर्थः। अन्तर्भावितण्यर्थोऽयम्। **विभाषाऽकर्मकात्** ।१।३।८५। उपाद्रमेरकर्मकात्परस्मैपदं वा। उपरमति, उपरमते वा। निवर्तत इत्यर्थः। **बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः** ।१।३।८६। एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात्। 'णिचश्चे'त्यस्याऽपवादः। बोधयति पद्मम्। योधयति काष्ठानि। नाशयति दुःखम्। जनयति सुखम्। अध्यापयति वेदम्। प्रावयति। प्रापयतीत्यर्थः। द्रावयति। विलापयतीत्यर्थः। स्रावयति। स्यन्दयतीत्यर्थः। **निगरणचलनार्थेभ्यश्च** ।१।३।८७। निगारयति। आशयति। भोजयति। चलयति। कम्पयति।

---

त.]प्राप्तेऽयमारम्भः। **परिमर्षतीति**। 'आ धृषाद्वे'ति वैकल्पिकत्वाण्णिजभावः। **उपाच्च**। 'व्याङ्पर्युपेभ्य' इति नोक्तम्, उत्तरसूत्रे उपेत्यस्यैवानुवृत्तिर्यथा स्यादिति। **निगरणचलनार्थेभ्यश्च**। **निगरणं**–भक्षणम्। प्रुद्रुस्रूणां चलनार्थानामनेनात्मनेपदे सिद्धेऽप्यचलनार्थानां तत्सिद्धये पूर्वसूत्रे ग्रहणम्। अत एव तत्र विवृतं 'प्रापयतीत्यर्थ' इत्यादिना। कथं तर्हि 'इमां किमाचामयसे न चक्षुषी' इति श्रीहर्षः। आङ्पूर्वाच्चमेरनेन परस्मैपदौचित्यादिति चेत्। अत्राहुः–आचामयेति पृथक्पदम्। ई लक्ष्मीस्तया सहिता सेस्तस्याः संबोधने 'हे से' इति। केचित्तु सा त्वम् इने चक्षुषी इनचक्षुषी=

---

बा.]ऽस्मिन् सूत्रे तस्य न ग्रहणमिति भावः। **इहेति**। 'परे'रिति योगो विभज्यते। 'वह' इत्यनुवर्तते। परेर्वहः परस्मैपदमित्यर्थः। परिवहति। 'मृष' इति योगान्तरम्। तत्र परेरित्यनुवर्तते, परेर्मृषः परस्मैपदमित्युक्तोऽर्थ इति केचिदाहुरित्यर्थः। भाष्ये त्वयं योगविभागो न दृश्यते। **व्याङ्परिभ्यो रमः**। 'परस्मैपद'मिति शेषः। रमेरनुदात्तेत्वाद्विधिरयम्। **विरमतीति**। आरमति, परिरमतीत्यप्युदाहार्यम्। **उपाच्च**। उपपूर्वादपि रमेः परस्मैपदमित्यर्थः। उत्तरसूत्रे उपादित्यस्यैवाऽनुवृत्तये 'व्याङ्पर्युपेभ्यो रमे'रिति नोक्तम्। अत्र विरमतीत्यर्थे उपरमतीति नोदाहरणम्, तस्य अकर्मकतया उत्तरसूत्रेण परस्मैपदविकल्पविधानात्। अतः सकर्मकमुदाहरति–**यज्ञदत्तमुपरमतीति**। ननु विरामार्थकत्वात्कथं सकर्मकतेत्यत आह–**उपरमयतीत्यर्थ इति**। ननु णिजभावात्कथमयमर्थो लभ्यते इत्यत आह–**अन्तर्भावितण्यर्थोऽयमिति**। धातूनामनेकार्थत्वादिति भावः। **विभाषाऽकर्मकात्**। उपादिति, रम इति, परस्मैपदमिति चानुवर्तते। तदाह–**उपाद्रमेरिति**। **बुधयुध**। बुध युध नश जन इङ् प्रु द्रु स्रु एषां द्वन्द्वः। **बोधयति पद्ममिति**। 'सूर्य' इति शेषः। बुधिर्विकसनार्थकः। विकसति पद्मम्। तद्विकासयति सूर्य इत्यर्थः। 'अणावकर्मकाच्चित्तवत्कर्तृका'दिति परस्मैपदं तु न सिध्यति, अणौ पद्मस्य कर्तृतया चित्तवत्कर्तृकत्वाऽभावात्। **योधयति काष्ठानीति**। काष्ठानि युध्यन्ते स्वयमेव। तानि योधयतीत्यर्थः। अणावचित्तवत्कर्तृकत्वात् 'अणावकर्मका'दित्यस्य न प्राप्तिः। अत एव योधयति देवदत्तमिति नोदाहृतम्, 'अणावकर्मकाच्चित्तवत्कर्तृका'दित्येव सिद्धेः। एवमग्रेऽपि ज्ञेयम्। **नाशयति दुःखमिति**। दुःखं नश्यति, तन्नाशयति हरिरित्यर्थः। **जनयति सुखमिति**। जायते सुखम्, तज्जनयति हरिरित्यर्थः। **अध्यापयतीति**। अधीते वेदं विधिः, तमध्यापयतीत्यर्थः। 'प्रु गतौ' इत्यस्योदाहरति–**प्रावयतीति**। गत्यर्थकत्वं मत्वा आह–**प्रापयतीत्यर्थ इति**। **द्रावयतीति**। द्रवत्याज्यं, तद्द्रावयतीत्यर्थः। धातोर्द्रवीभावार्थकत्वं मत्वा आह–**विलापयतीत्यर्थ इति**। **स्रावयतीति**। स्रवति जलं, तत्स्रावयतीत्यर्थः। धातोः स्यन्दनार्थकत्वं मत्वा आह–**स्यन्दयतीत्यर्थ इति**। 'प्रीतिं भक्तजनस्य यो जनयते' इत्यात्मनेपदं तु प्रामादिकमेव। यद्वा भक्तजनो हरौ प्रीतिं जनयत्यात्मविषये, तां हरिर्जनयते इति ण्यन्ताण्णौ रूपम्। प्रयोज्यकर्तुः शेषत्वविवक्षया भक्तजनस्येति षष्ठीत्याहुः। **निगरण**। निगरणं भक्षणम्। चलनं–कम्पनम्। एतदर्थकेभ्यो ण्यन्तेभ्यः परस्मैपदमित्यर्थः। पूर्वसूत्रे प्रुद्रुस्रूणां ग्रहणं तु अचलनार्थानामेव। अत एव मूले प्रापयतीत्यादि व्याख्यातम्। पानमपि भक्षणमेव, 'अपोऽश्नाति' इति श्रुतेः। अत एव 'न पादम्याङ्यमाङ्यसे'ति सूत्रे पाग्रहणमर्थवत्। 'न पीयतां नाम चकोरजिह्वया कथं चिदेतन्मुखचन्द्रचन्द्रिका। इमां किमाचामयसे न चक्षुषी चिरं चकोरस्य भवन्मुखस्पृशी'। इति श्रीहर्षश्लोके आचामयेति पृथक्पदम्। अः विष्णुः, तस्य स्त्री ई=लक्ष्मीः। तया सहिता से इत्येकारान्तस्य सेशब्दस्य संबोधनम्। 'एङ्ह्रस्वात्' इति सम्बुद्धिलोप इति व्याख्येयमिति प्रौढमनोरमायां स्थितम्। वस्तुतस्तु चक्षुषोर्मुखचन्द्रि-

---

शे.]भाष्यस्वरसोऽप्यत्रैव पक्षे। तृज्वत्सूत्रेऽपि भाष्ये शास्त्रातिदेशकार्यातिदेशयोरभेद एव सूचितः। एवमग्रेऽपि। **केचिदिति**। नैतद्भाष्ये दृष्टम्। **उपाच्च**। उत्तरत्रोपेत्यस्यैवानुवृत्तये योगविभागः। **बुधयुध**। अत्राऽकर्मकाणां यदाऽन्तर्भावितण्यर्थत्वेन,सोपसर्गत्वेन वा सकर्मकत्वं तदर्थमचित्तवत्कर्तृकार्थं चाऽकर्मकग्रहणम्। चित्तवत्कर्तृकाणान्तु सकर्मकार्थम्। 'प्रीतिं भक्तजनस्य यो जनयते' इत्यादि प्रामादिकम्। यद्वा भक्तजनः प्रीतिं जनयत्यात्मनः,तस्य तामीश्वरो जनयते इति ण्यन्ताण्णौ साधु, प्रयोज्यकर्तुः शेषत्वविवक्षायां भक्तजनस्येति षष्ठीत्याहुः। **निगरणच**। अत्र निगरणशब्देन 'न पादमी'ति

* **अदेः प्रतिषेधः।** आदयते देवदत्तेन ।'गतिबुद्धी'ति कर्मत्वम् 'आदिखाद्योर्ने'ति प्रतिषिद्धम् 'निगरणचलने'ति सूत्रेण प्राप्तस्यैवाऽयं निषेधः । 'शेषा'दित्यकर्त्रभिप्राये परस्मैपदं स्यादेव । आदयत्यन्नं बटुना । **अणावकर्मकाच्चित्तवत्कर्तृकात्।** १।३।८८।ण्यन्तात्परस्मैपदं स्यात्।शेते कृष्णस्तं गोपी शाययति।**न पादम्याड्यमाङ्यसपरिमुहरुचिनृतिवदवसः** ।१।३।८९। एभ्यो ण्यन्तेभ्यः परस्मैपदं न । पिबतिर्निगरणार्थः । इतरे चित्तवत्कर्तृका अकर्मकाः । नृतिश्चलनार्थोऽपि । तेन सूत्रद्वयेन प्राप्तिः । पाययते । दमयते । आयामयते । आयासयते । परि-

त.]श्रेष्ठचक्षुषी आचामय किमिति व्याचक्षते। **अणावकर्मकात्** । क्रियाफलस्य कर्तृगमित्वविवक्षायामात्मनेपदे प्राप्ते परस्मैपदार्थमिदम् । अणाविति किम् ?। हेतुमण्ण्यन्तादकर्मकात्परस्मैपदं[मिति]नियमो माभूत्।आरोहमाणं प्रयुङ्क्ते आरोहयते। न्यग्भवन्तं प्रेरयतीत्यर्थः । 'णेरणौ' इति सूत्रे उदाहरणत्वेन य आरोहयतिरकर्मको निर्णीतस्तस्माद्द्वितीये णिचि प्रत्युदाहरणमिदम् । केचित्तु अणाविति किम् । चुरादिण्यन्तात्परस्मैपदनियमो माभूत् । तद्यथा पुट्ट चुट्ट अल्पीभावे । पुट्टयति। चुट्टयति । अल्पीभवतीत्यर्थः।अकर्मकाविमौ । ततो हेतुमण्णिचि-पुट्टयते चुट्टयते। इति प्रत्युदाहरन्ति, तद्भाष्यादिविरुद्धम्। तथाहि बुधादिसूत्रादिह णेरिति वर्तते, बुधादिभ्यश्च हेतुमण्णिरेव संभवतीति तदन्तादेवायं विधिः। अणाविति प्रतिषेधोऽपि प्रत्यासत्तेस्तस्यैव न्याय्यः । तेन चुरादिण्यन्ताद्धेतुमण्णौ परस्मैपदं भवत्येवेति भाष्यादौ स्थितम् । तथा च हेतुमण्णेः प्राग्योऽकर्मको हेतुमण्ण्यन्तभिन्नस्तस्माद्धेतुमण्णावात्मनेपदं नेति फलितोऽर्थः । अकर्मकात्किम् ? । कटं यः करोति तं प्रयुङ्क्ते कटं कारयति । चित्तवत्कर्तृकादिति किम् ?। शुष्यन्ति व्रीहयस्ताञ्शोषयते । **न पाद । चित्तवत्कर्तृका अकर्मका इति ।** दिवादौ दमिः सकर्मक इत्युक्तम्, इह त्वकर्मक इति पूर्वोत्तरविरोधो यद्यप्यस्ति तथापि कर्मणः कर्तृत्वविवक्षायां दमिरत्राऽकर्मक इत्याहुः । **पाययत इति ।** 'शाच्छासे'ति युक् । **आयामयत इति ।** 'यमोऽपरि-

बा.]काकर्मकपानात्मकाचमनाऽसंभवादाचामिरादरे लाक्षणिकः अतो निगरणार्थकत्वाऽभावान्न परस्मैपदम्।नचैवं सति प्रत्यवसानार्थकत्वाऽभावाच्चक्षुषोः 'गतिबुद्धी'ति कर्मत्वं न स्यादिति शङ्क्यम्, न ह्याचामिरत्र केवले आदरे वर्तते, किंतु दर्शनपूर्वकादरे वर्तते । सादरज्ञाने लाक्षणिक इति यावत् । ततश्च बुद्ध्यर्थकत्वादाचामेश्चक्षुषोः कर्मत्वं निर्बाधमित्यादि शब्देन्दुशेखरे प्रपञ्चितम् । **अदेः प्रतिषेध इति ।** अदेर्ण्यन्तान्निगरणार्थकतया प्राप्तस्य परस्मैपदस्य प्रतिषेधो वक्तव्य इत्यर्थः । 'आदयते देवदत्तेने'त्यत्र अदेः प्रत्यवसानार्थत्वात् प्रयोज्यकर्तुर्देवदत्तस्य कर्मत्वमाशङ्क्य आह-**गतिबुद्धीति ।** नन्वादयत्यन्नं बटुनेति कथम् । निगरणार्थकतया प्राप्तस्य परस्मैपदस्य अदेः प्रतिषेधादित्यत आह-**निगरणचलनेति सूत्रेण प्राप्तस्यैवायं निषेध इति ।** ननु शेषात्कर्तरीति प्राप्तस्येत्येवकारार्थः, 'अनन्तरस्य' इति न्यायादिति भावः । **अणावकर्मकात् ।** ण्यन्तादिति शेषपूरणम्, णेरित्यनुवृत्तेरिति भावः । अणौ यो धातुरकर्मकः, चित्तवत्कर्तृकश्च, तस्माण्ण्यन्तात्परस्मैपदमिति यावत् । चित्तवत्कर्तृकादिति किम् ? । व्रीहयः शुष्यन्ति, तान् शोषयते । अकर्मकात्किम् ?। कटं करोति तं प्रयुङ्क्ते । कटं कारयते । **न पादम्याड्यम् ।** पा दमि आङ्यम् आङ्यस परिमुह रुचि नृति वद वस् एषां समाहारद्वन्द्वात्पञ्चमी । प्राप्तस्य निषेध्यत्वात् प्राप्तिमुपपादयति-**पिबतिर्निगरणार्थ इति ।** ततश्च 'निगरणचलनार्थेभ्यः' इति प्राप्तिरिति भावः । **इतरे इति ।** दम्यादयोऽणौ चित्तवत्कर्तृका अकर्मकाश्चेत्यर्थः-। ततश्च 'अणावकर्मकाच्चित्तवत्कर्तृका'दिति प्राप्तिरिति भावः । **नृतिरिति ।** नृतिश्चलनार्थकः । अणौ चित्तवत्कर्तृकः, अकर्मकश्चेत्यर्थः । **सूत्रद्वयेनेति ।** 'अणावकर्मका'दिति, 'निगरणचलनार्थेभ्यश्च' इति च सूत्रद्वयेनेत्यर्थः । **पाययते इति ।** 'शाच्छासाह्वाव्यावेपां यु'गिति पुकोऽपवादो युक् । **दमयते इति ।** 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्चे'ति मित्त्वाद्ध्रस्वः । ननु दिवादौ दमिः सकर्मक इत्युक्तम्, अतः कथमिह 'अणावकर्मका'दिति प्राप्तिरिति चेद्दमेः परस्मैपदनिषेधादेव दमिरकर्मकोऽपि । अतो दमिः सकर्मक इत्यस्य न विरोधः । **आयामयते इति ।** 'यमोऽपरिवेषणे' इति मित्त्व-

शे.]सूत्रे पाग्रहणात्पानमपि गृह्यते।'इमां किमाचामयसे न चक्षुषी' इति श्रीहर्षपद्ये 'इमा'मित्यस्यैतन्मुखचन्द्रचन्द्रिकामित्यर्थेनाचामयतेः सादरज्ञानलाक्षणिकतया निगरणार्थत्वाऽभावान्नानेन परस्मैपदम् । अत एव चक्षुषोः कर्मत्वं, ज्ञानार्थत्वादिति बोध्यम् । यदि तु तृप्तिनिवर्तकस्तत्तद्व्यापार एव पानं,सर्वेन्द्रियाणाञ्च स्वस्वविषयविषयके क्षुत्तृषे इत्यर्थस्यैतरेयोपनिषदि स्पष्टत्वादत्र न लक्षणा, किं तु मुख्यमेव निगरणं तदा चिन्त्य एवायं प्रयोग इति बोध्यम् । **प्राप्तस्यैवायमिति ।** 'अनन्तरस्ये'ति न्यायादिति भावः । **अणावकर्मका ।** चित्तवदित्यादि किम् ?। शुष्यन्ति व्रीहयः, तान् शोषयते । अकर्मकात्किम् ?। कटङ्करोति, तं प्रयुङ्क्ते-कटङ्कारयते । **इतरे इति ।** दमिरकर्मकोऽपि, एतत्प्रामाण्यात् । अत एव 'दमिः सकर्मक' इति दिवादिस्थग्रन्थेनाऽविरोधः। **परे तु**-अकर्मकत्वेऽस्य सूत्रस्य मानत्वेऽपि सकर्मकत्वे मानं चिन्त्यमित्याहुः।

मोहयते । रोचयते । नर्तयते । वादयते । वासयते । * **धेट उपसङ्ख्यानम्** । 'धापयेते शिशुमेकं समीची' । अकर्त्रभिप्राये 'शेषा'दिति परस्मैपदं स्यादेव । वत्सान्पाययति पयः । 'दमयन्ती कमनीयतामदम्' । भिक्षा वासयति । **'वा क्यषः'** । लोहितायति । लोहितायते । **'द्युद्भ्यो लुङि'** । अद्युतत् । अद्योतिष्ट । **'वृद्भ्यः स्यसनोः'** । वर्त्स्यति । वर्तिष्यते । विवृत्सति । विवर्तिषते । **'लुटि च क्लृपः'** । कल्प्ता । कल्प्तासि । कल्पितासे । कल्प्तासे । कल्प्स्यति । कल्पिष्यते । कल्प्स्यते । चिक्लृप्सति । चिकल्पिषते । चिक्लृप्सते । **इति परस्मैपदप्रक्रिया । समाप्ता पदव्यवस्था ।**

# अथ भावकर्मप्रक्रिया ।

अथ भावकर्मणोर्लडादयः । 'भावकर्मणो'रिति तङ् । **सार्वधातुके यक्** ।३।१।६७। धातोर्यक्

त.]वेषणे' इति मित्त्वनिषेधः । **वासयत इति** । वस निवास इत्यस्य ग्रहणं । वस आच्छादने इत्यस्य तु न निषेधः, सकर्मकत्वेन तस्य प्राप्त्यभावात्। कर्मकर्तृत्वविवक्षायामकर्मकत्वेऽपि लुग्विकरणपरिभाषया नाऽत्र ग्रहणमित्याहुः। **समीची इति** । प्रथमाद्विवचनम् । 'वा छन्दसी'ति पूर्वसवर्णदीर्घः । **परस्मैपदं स्यादेवेति** । 'अनन्तरस्य' इति न्यायेन योगद्वयेन प्राप्तस्यैव परस्मैपदस्य प्रतिषेध इति भावः । **[इति परस्मैपदप्रक्रिया] । इति पदव्यवस्था ।**

**सार्वधातुके यक्** । 'धातोरेकाचः' इत्यतो धातोरिति, 'चिण् भावकर्मणो'रित्यतो भावकर्मणोरिति चानुवर्तते । **भावो भावनेति** । उत्पत्त्यर्थाद्भवतेर्णिजन्तादेरजिति भावः । 'एरजण्यन्ताना'मिति ल्वनार्षमिति तस्मिन्नेव सूत्रे कैयटः । भवतेरुत्पत्त्यर्थत्वं, ण्यन्तस्य भवतेः शुद्धेन करोतिना तुल्यार्थत्वं च दर्शयति–**उत्पादना क्रियेति** । यथा करोति घटमित्यादावुत्पत्त्यनुकूलो व्यापारः कुलालनिष्ठः, तथा भावयति घटमित्यादावपि । भवति घट इत्यत्रापि घटनिष्ठ उत्पत्त्यनुकूलो व्यापारोऽस्त्येव, परंतु फलसमानाधिकरणः सः, कुलालनिष्ठस्तु फलव्यधिकरण इतीयान्भेदः । अतएव फलव्यापारयोः सामानाधिकरण्याद्भवत्यादिरकर्मकः,तयोस्तु वैयधिकरण्यात्करोत्यादिः सकर्मक इत्याहुः । एतेन 'भावो भावने'त्यादिग्रन्थेन 'भूवादयो धातवः' इत्यत्र क्रियावाचिनः किम् ? । विकल्पार्थकवाशब्दाद्भावे लिण् माभूत् ।

बा.]निषेधाच्च ह्रस्वः। **वासयते इति** । 'वस निवासे' इति भौवादिकस्यैवात्र ग्रहणम्, नतु 'वस आच्छादने' इत्यादादिकस्याऽपि, तस्य सकर्मकत्वादेवाऽप्राप्तेः, 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहण'मित्युक्तेश्च।**धेट उपसङ्ख्यानमिति** । 'परस्मैपदनिषेधस्ये'ति शेषः। **धापयेते शिशुमिति** मन्त्रः।ननु 'वत्सान् पाययति पयः', 'दमयन्ती कमनीयतामदं', 'भिक्षा वासयती'ति च कथम् । 'न पादम्याङ्यमे'ति परस्मैपदस्य निषेधादित्यत आह–**अकर्त्रभिप्राये इति** । 'अनन्तरस्ये'ति न्यायेन 'निगरणचलनार्थेभ्यश्च', 'अणावकर्मका'दिति सूत्रद्वयप्राप्तस्यैव 'न पादम्याङ्यमाङ्यसे'ति निषेध इति भावः । **'वा क्यषः'** इत्यादि प्राग्व्याख्यातमपि सूत्रक्रमेण पुनरुपात्तम् । **इतिपरस्मैपदव्यवस्था ।**

अथ भावकर्मतिङ्प्रकरणं निरूप्यते । 'लः कर्मणी'त्यत्र सकर्मकेभ्यो धातुभ्यः कर्मणि कर्तरि च; अकर्मकेभ्यस्तु भावे कर्तरि च लकारा विहिताः। तेषु कर्तरि लकारा निरूपिताः । अथेदानीं भावकर्मणोर्लकारा निरूप्यन्ते इति प्रतिजानीते–**अथेति** । 'निरूप्यन्ते' इति शेषः । तत्र 'शेषात्कर्तरि परस्मैपदम्', 'अनुपराभ्यां कृञः' इत्यादिपरस्मैपदविधिषु प्राप्तेष्वाह–**भावकर्मणोरिति तङिति । सार्वधातुके यक् । धातोरिति** । 'धातोरेकाचः' इत्यतस्तदनुवृत्तेरिति भावः । **भावकर्मवाचिनीति** । 'चिण्भावकर्मणो'रित्यतस्तदनुवृत्तेरिति भावः । घटस्य भावो घटत्वमित्यादौ प्रकृतिजन्यबोधे प्रकारो भावः । कवेरयं भाव इत्यादौ अभिप्रायः। 'भावः पदार्थसत्तायां क्रियाचेष्टात्मयोनिषु । विद्वल्लीलस्वभावेषु भूत्यभिप्रायजन्तुषु' इति नानार्थरत्नमाला । 'भावः सत्तास्वभावाभि-

शे.]**वासयत इति**।लुग्विकरणपरिभाषयाऽदादेः सकर्मकतया च भ्वादेरेव वसेर्ग्रहणम्।**परस्मैपदं स्यादेवेति**।'अनन्तरस्ये'ति न्यायेन योगद्वयप्रापितपरस्मैपदस्यैव निषेधादिति भावः।**पाययतीति**।'शाच्छासे'इति युक्।**इति पदव्यवस्था।**

**सार्वधातुके यक्** । 'धातोरेकाचः' इत्यतो धातोरिति, 'चिण्भावे'त्यतो भावकर्मणोरिति चानुवर्तते । **उत्पादना**–फलोत्पत्त्यनुकूलो व्यापारः । **फलत्वञ्च** कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थविशेषणत्वे सति तद्धात्वर्थत्वम् । अनेकपर्यायोपादानं चेतनाऽचेतनवृत्तिफूत्कारयत्नादीनां क्रियात्वं धात्वर्थत्वञ्च बोधयितुम्।अत एव पचति=पाकं करोतीत्यादिक्रमेण कृञा सर्वधातूनां विवरणमिति 'भूवादि'सूत्रे भाष्ये स्पष्टम् । क्रियात्वं धातुवाच्यत्वसमानाधिकरणो जातिविशेषः। तद्घटकधातुत्वञ्च जातिविशेषः । तत्परिचायकञ्च भूवादिसूत्रम् । **धातुत्वेनेति** । तद्व्याप्यपचित्वादिनेत्यर्थः । फूत्कारादीनां च तत्तद्रूपेण शक्यता । प्रामाणिकत्वाच्च नानाशक्तिकल्पना न दोषाय । धातुत्वन्तु न शक्यतावच्छेदकम् , तद्-

प्रत्ययः स्याद्भावकर्मवाचिनि सार्वधातुके परे । भावो भावना उत्पादना क्रिया । सा च धातुत्वेन सकलधातु-

त.]अन्यथा भ्वादिगणे वाशब्दमात्रपठनादक्रियावाचिनोऽपि वाशब्दस्य धातुत्वे 'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते' इति विकल्पस्यापि भावत्वापत्त्या तद्वाचकवाशब्दाल्लिट् स्यादेवेति केषांचिद्व्याख्यानं परास्तम् , भावनावाचकादेव भावे लिटः स्वीकारात् । विकल्पस्य तु भावनाभिन्नत्वात् । अन्यथा 'क्रियावाचिन' इति विशेषणे दत्तेऽपि तद्दोषतादवस्थ्यात् । विकल्पवाचकाल्लिडभावेऽपि लडादयः स्युरिति तु न शङ्कनीयमेव, वर्तमानक्रियादिवृत्तेरेव लडादीनां विधानात् । किमर्थं तर्हि क्रियावाचिनो भ्वादय इति सर्वैरेव तत्र-व्याख्यातम् ?। 'याः पश्यसी'त्यत्रापि लक्षणप्रतिपदोक्तपरिभाषया याशब्दस्य धातुत्वाऽसंभवात् 'आतो धातोः' इति तत्राऽऽल्लोपाप्रसक्तिरिति चेत् । अत्राहुः-'कार्यकालं संज्ञापरिभाष'मिति पक्षे 'आतो धातो'रिति कार्यप्रदेशे भ्वादयो धातव इत्युपतिष्ठते भ्वादिषु याशब्दमात्रपठनाद्द्रव्यवाचकोऽपि याशब्दस्तत्रोपतिष्ठते।वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तेः, 'आतो धातो'रित्यत्र त्वात इति वर्णग्रहणात् । तस्माद्द्रव्यवाचकस्य याशब्दस्य धातुसंज्ञा माभूदिति क्रियावाचिन इति विशेषणमवश्यं वक्तव्यमेवेति । 'उत्पादना क्रिये'त्यनेन तु क्रियावाची धातुर्धात्वर्थः क्रियेत्यन्योन्याश्रयोऽत्र दुष्परिहर इति केषांचिदाक्षेपो निरस्तः । उत्पत्त्यनुकूलव्यापारस्य क्रियात्वात् । तदुक्तम्-'व्यापारो भावना सैवोत्पादना सैव च क्रिये'ति । **धातुत्वेनेति** । सकलधातुषु धातुत्वं जातिरखण्डोपाधिर्वेत्यन्यदेतत् । तच्च वाचकतावच्छेदकम् । क्रियात्वं तु वाच्यतावच्छेदकमिति भावः । **धातुवाच्येति** । नन्वेवं पचतीत्यादावेककर्तृका वर्तमाना पचिक्रियेति क्रियाविशेष्यको बोधो न स्यात् , प्रत्ययार्थं प्रति प्रकृत्यर्थस्य विशेषणताया औपगवादौ क्लृप्तत्वात् । तथा च 'भावना तिङ्प्रत्ययवाच्ये'ति मीमांसकमतमेव रमणीयमिति चेत्। अत्राहुः-'प्रत्ययार्थः प्रधान'मिति उत्सर्गः, स चेह त्यज्यते, 'क्रियाप्रधानमाख्यात'मिति स्मरणात् । टावाद्यर्थत्वेन मीमांसकैरभ्युपगतस्य स्त्रीत्वस्य पाचिकादौ विशेषणत्वाभ्युपगमात्प्रत्ययार्थः प्रधानमिति नियमस्य त्यक्तत्वाच्च । किं च भोक्तव्यमित्यादौ तिङं विनापि भावना प्रतीयते, कारकापेक्षा च दृश्यते। अस्ति च करोतिसामानाधिकरण्यम्। किं कर्तव्यं?, भोक्तव्यम् , किं कृतवान् ?, भुक्तवानिति। न च कृतामपि तव्यदादीनां भावनावाचकत्वमस्त्विति शङ्क्यम् ,नामार्थयोरभेदान्वयानुरोधेन 'कर्तरि कृ'दिति तव्यदादयः कर्मादाविति परैरप्यभ्युपगमात् । अन्यथा पाचको देवदत्तः, पक्तव्य ओदन इत्यत्राऽभेदबोधो न स्यात्। तथा च धातुवाच्यत्वं भावनाया इत्येव मतं रमणीयतरमिति । लकारस्य सामानाधिकरण्यं कर्तृकर्माभिधायिन एव संभवति न भावाभिधायिन

बा.]प्रायचेष्टात्मजन्तुषु' इत्यमरः।इह तु 'लः कर्मणि' इत्यत्र भावशब्दो भावनायां यौगिक इत्याह-**भावो भावनेति** । लः कर्मणी'त्यत्र भावशब्देन भावना विवक्षितेति भावः । भावनाशब्दस्य चिन्तायामपि प्रसिद्धत्वादाह-**उत्पादनेति** । उत्पत्त्यनुकूलो व्यापार इत्यर्थः । एवंच भूधातोरुत्पत्त्यर्थकाद्धेतुमण्णौ वृद्ध्यावादेशयोर्भाविशब्दात् 'एर'जिति भावे अचि णिलोपे भावशब्दः,भावयतेरुत्पत्त्यर्थकाद्धेतुमण्यन्तात् स्त्रियामित्यधिकारे 'ण्यासश्रन्थो यु' जिति युचि अनादेशे टापि भावनाशब्द इति बोध्यम् । उत्पादना चेयं धात्वर्थान्नातिरिच्यते इति दर्शयितुमाह-**क्रियेति** । धात्वर्थात्मकक्रियैव उत्पादनेत्यर्थः । तथाहि 'फलव्यापारयोर्धातु'रिति सिद्धान्तः । पचधातोः पाकोऽर्थः । पाको-विक्लित्त्यनुकूलव्यापारः। तत्र विक्लित्त्यंशः फलम् । अधिश्रयणादिस्तदनुकूलो व्यापारः । तथाविधव्यापाराश्रयो देवदत्तादिः कर्ता, 'धातूपात्तव्यापाराश्रयः कर्ते'ति सिद्धान्तात् । अधिश्रयणादिव्यापारजन्या विक्लित्तिः फलं, तदाश्रयत्वादोदनं कर्म, 'व्यापारजन्यफलशालि कर्मे'ति सिद्धान्तात् । एवं सकर्मकेषु सर्वत्र ज्ञेयम् । 'एध वृद्धौ' इत्यस्मिन्नकर्मकेऽपि वृद्ध्यनुकूलव्यापारो धात्वर्थः । नचैवं सति 'एधते देवदत्त' इत्यत्र धातूपात्तव्यापाराश्रयत्वाद्व्यापारजन्यवृद्धिरूपफलाश्रयत्वाच्च कर्तृत्वं कर्मत्वं च स्यादिति वाच्यं, 'धातूपात्तव्यापारजन्यतद्व्यापारव्यधिकरणफलाश्रयत्वं कर्मत्व'मिति सिद्धान्तात् । एवंच फलोत्पत्त्यनुकूलव्यापारात्मिका क्रिया धात्वर्थ इति सिद्धम् । एतेन क्रियावाची धातुः, धातुवाच्या क्रियेत्यन्योन्याश्रयोऽपि निरस्तः । उत्पत्त्यनुकूलव्यापारस्यैव क्रियात्वात् । तदुक्तं-'व्यापारो भावना सैवोत्पादना .सैव च क्रिये'ति । ननूत्पत्त्यनुकूलव्यापारस्यैव सर्वत्र धातुवाच्यत्वे सर्वेषां धातूनामेकार्थत्वापत्तिः। विक्लित्त्यादितत्तत्फलोत्पत्त्यनुकूलव्यापारार्थकत्वं तु न संभवति,एकैकस्य धातोर्विक्लित्त्यादितत्तत्फलांशे,तदनुकूलव्यापारात्मकव्यापारसामान्ये च वाचकत्वानुपपत्तेरित्यत आह-**सा चेत्यादि** । पच्यादयो धातुत्वेन रूपेण उत्पत्त्यनुकूलव्यापारात्मिकां क्रियामाहुः । पचित्वादिविशेषरूपेण तु विक्लित्त्यादितत्तत्फलांशमाहुः । तथाच वाचकतावच्छेदकभेदाद्विक्लित्त्यादिफलविशेषस्य, क्रियासामान्यस्य च वाच्यता सङ्गच्छते इति भावः । तथाच भट्टिराह-'विभज्य सेनां परमार्थकर्मा सेनापतींश्चापि पुरन्दरोऽथ । नियोजयामास स शत्रुसैन्ये करोतिरर्थेष्विव सर्वधातून् ॥'

शे.]जानतोऽपि बोधात् ,सर्वधातुभ्यः सर्वक्रियाबोधापत्तेश्च।**सकलेति**।अकर्मकाणामप्यंशद्वयाभिधायकत्वात्। फलव्यापारयोर्वैयधिकरण्ये सकर्मकत्वं, सामानाधिकरण्येऽकर्मकत्वं बोध्यम् । **धातुवाच्येति**। 'करोति' 'कर्ता' इत्यादौ तथा क्लृप्त-

वाच्या भावार्थकलकारेणानूद्यते। युष्मदस्मद्भ्यां सामानाधिकरण्याऽभावात्प्रथमपुरुषः। तिङ्वाच्यभावनाया असत्त्वरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि। किंत्वेकवचनमेव। तस्यौत्सर्गिकत्वेन सङ्ख्यानपेक्षत्वात्। अनभिहिते कर्तरि तृतीया। त्वया मयाऽन्यैश्च भूयते। बभूवे। **स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झन-**

त.]इत्याशयेन व्याचष्टे—**सामानाधिकरण्याभावादिति**।न चैवं युष्मदस्मद्भिन्नोपपदे समानाधिकरणे देवदत्तः पचतीत्यादाविव प्रथमपुरुषेण भाव्यमिति प्रथमपुरुषोऽप्यत्र न स्यादिति वाच्यं, 'शेषे प्रथमः' इत्यत्र 'मध्यमोत्तमयोरविषये प्रथमः स्या'दिति व्याख्यानात्। **तिङ्वाच्येति**। घञादिवाच्यायास्तु सत्त्वरूपत्वमिष्टमेवेति पाकं पाकेनेत्यादौ यथायथं द्वितीयादयः प्रवर्तन्ते। अतएव भाष्यकृतोक्तं 'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति। द्रव्यधर्मा॑ल्लिङ्गसङ्ख्याकारकादीन् गृह्णातीत्यर्थः। **एकवचनमेवेति**। प्रायोवादोऽयम्। अन्यथा 'उष्ट्रासिका आस्यन्ते' 'हतशायिकाः शय्यन्ते' इति भाष्ये धात्वर्थनिर्देशे ण्वुलि कृदभिहितो भावो द्रव्यवत्प्रकाशत इत्यासिकाः शायिका इत्यत्र बहुवचनसिद्धावपि आस्यन्ते शय्यन्ते इत्यत्र तन्न सिध्येत्। न च कर्मण्येवाऽत्र लकारोऽस्त्विति शङ्क्यम्, धातुद्वयस्याप्यकर्मकत्वेन तदसंभवात्,अर्थाऽसङ्गतेश्च।तत्र ह्युष्ट्राणां यादृशान्यासनानि हतानां यादृशानि शयनानि तादृशानि देवदत्तादिकर्तृकान्यासनादीनीत्यर्थः। सादृश्यावगमादिह आख्यातवाच्यस्यापि भावस्य भेदाऽवभासाद्बहुवचनम्।नचैवं सङ्ख्यान्वयित्वे असत्त्वरूपता न स्यादिति वाच्यम्,लिङ्गक्रियाऽनाधारकारकयोगाऽभावमात्रेणाऽसत्त्वरूपत्वमुपपद्यत इति कारकेषूक्तत्वात्। केचिदिह उष्ट्रासिका–हतशायिकाशब्दयोस्तत्सदृशे लक्षणां स्वीकृत्य आस्यन्त इत्यादिना अभेदान्वयमाहुः।मनोरमायां तु आसिकाः शायिका इति च द्वितीयाबहुवचनं,क्रियाविशेषणत्वेन कर्मत्वात्।न चैवं क्लीबत्वमेकवचनान्तत्वं च स्यादिति वाच्यम्, 'स्त्रियां क्ति'न्नित्यधिकारात्स्त्रीत्वाऽवधारणेन 'सामान्ये नपुंसक'मित्यस्याऽप्रवृत्तेः।बहुवचनत्वावधारणेनैकवचनाप्रवृत्तेश्चेत्युक्तम्। **स्यसिच्सीयुट्तासिषु**।यद्यप्यजादयो द्वन्द्वेन निर्दिष्टास्तथाप्युपदेश इत्यच एव विशेषणं न हनादीनाम्,अव्यभिचारा-

बा.]इति। अस्तिभवतिविद्यतीनामपि-सत्तानुकूलव्यापार एवार्थः। तत्र सत्ता आत्मभरणम्। तदनुकूलव्यापारस्तु जायते, अस्ति, विपरिणमते, वर्द्धते, अपक्षीयते, विनश्यतीति वार्ष्यायणिप्रणीतषड्भावविकारेष्वन्यतमो यथायथं ज्ञेयः। भूवादिसूत्रे भाष्ये स्पष्टमेतत्। प्रपञ्चितं च मञ्जूषायामित्यलम्। ननूत्पादनात्मकक्रियारूपस्य भावस्य धातुवाच्यत्वे 'लः कर्मणि च भावे चे'ति भावे कथं लकारविधिः। अनन्यलभ्यस्यैव शब्दार्थत्वादित्यत आह—**भावार्थकलकारेणानूद्यते इति**। 'द्वौ' 'त्रयः' इत्यादौ द्विवचनबहुवचनवदिति भावः। **युष्मदस्मद्भ्यामिति**। युष्मदि अस्मदि च तिङ्समानाधिकरणे उपपदे मध्यमोत्तमपुरुषौ विहितौ। युष्मदस्मदोस्तिङ्समानाधिकरण्यं च तिङ्वाच्यकारकवाचित्वमेव। भावे लकारे तु 'आस्यते त्वया' 'आस्यते मये'त्यादौ भाव एव तिङ्वाच्यो नतु युष्मदस्मदर्थौ, अतो न मध्यमोत्तमावित्यर्थः। कर्मलकारे तु 'त्वं वन्द्यसे','अहं वन्द्ये' इत्यादौ लकारस्य, युष्मदस्मदोश्च सामानाधिकरण्यसंभवात्पुरुषत्रयमपि यथायथमुदाहरिष्यते। **तिङ्वाच्येति। सत्त्वं**=द्रव्यं–लिङ्गसङ्ख्यान्वययोग्यम्। तिङ्वाच्या या भावना क्रिया सा असत्त्वरूपा=लिङ्गसङ्ख्यान्वयाऽयोग्या, शब्दशक्तिस्वभावात्। ततश्च तस्यां तिङ्वाच्यभावनायां द्वित्वबहुत्वयोरप्रतीतेर्युवाभ्यां युष्माभिर्वा आस्यते इत्यादौ न द्विवचनं, बहुवचनं चेत्यर्थः। **तिङ्वाच्येत्य**नेन कृद्वाच्यायाः क्रियाया लिङ्गसङ्ख्यान्वयित्वात्मकं सत्त्वरूपत्वमस्तीत्युक्तं भवति। तद्यथा—पाकौ पाका इत्यादि। तदुक्तं–'सार्वधातुके य'गिति सूत्रे भाष्ये—'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति। द्रव्यवल्लिङ्गसङ्ख्यान्वयं लभते इत्यर्थः, शब्दशक्तिस्वभावादिति भावः। ननु तिङ्वाच्यभावनाया असत्त्वरूपतया द्विवहुवचनाऽभावे आस्यते इत्यादौ एकवचनं च न स्यादित्यत आह—**किं त्वेकवचनमेवेति**। 'तिङ्वाच्यभावलकारस्ये'ति शेषः। **तस्येति**। 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचन'मिति सूत्रन्यासं भङ्क्त्वा 'एकवचनं' 'द्विबहुषु द्विबहुवचने' इति सूत्रन्यासः कर्तव्यः। तत्र द्वित्वबहुत्वयोर्द्विबहुवचननियमे सति तयोरविषये एकवचनमिति लभ्यते इति भाष्ये स्पष्टम्। एवंच एकवचनस्य एकत्वमुत्सृज्य द्विबहुवचनान्यविषये विहितत्वेन औत्सर्गिकतया एकत्वसङ्ख्यानपेक्षत्वाद्भावलकारस्य असत्त्वरूपभाववाचित्वेऽप्येकवचनमेवेति भावः। **अनभिहिते इति**। भावलकारे कर्तुस्तिङ्वाच्यत्वाऽभावेन अनभिहितत्वात्तृतीयेत्यर्थः। **त्वया मयेति**। त्वत्कर्तृकं मत्कर्तृकम् अन्यकर्तृकं भवनमित्यर्थः। **स्यसिच्।**

शे.]त्वादिति भावः।**सामानाधिकरण्याऽभावादिति**।असत्त्वभूतक्रियायाः सत्त्वार्थकयुष्मदादिसामानाधिकरण्याऽसम्भव इति भावः। **तिङ्वाच्येति**। तदनूद्येत्यर्थः। लिङ्गाद्यनन्वयित्वं,सर्वनामपरामर्शाऽयोग्यत्वं वाऽसत्त्वम्। **औत्सर्गिकत्वेनेति**। 'एकवचन'मित्येव सूत्रमुत्सर्ग इति भावः। **परे** तु क्रियायामेकत्वमस्त्येव, 'एका क्रिये'तिरूपबादिसूत्रभाष्यात्। एवञ्च तस्य प्रकृत्यर्थेऽन्वयादेकवचनं, द्वित्वादिकं स्वोत्तरतिङ्वाच्यकारकगतं तत्रारोप्यते इति कर्तृकर्मतिङ्षु द्विवचनादि सिद्ध्यति। तस्याप्यन्वयः प्रकृत्यर्थे एव,—यथा 'हतशायिकाः शय्यन्ते' इत्यादौ हतशयनसदृशानि शयनानीत्यर्थके

**ग्रहदृशां वा चिण्वदिट् च** ॥६।४।६२॥ उपदेशे योऽच् तदन्तानां, हनादीनां च चिणीवाऽङ्गकार्यं वा स्यात्स्यादिषु परेषु, भावकर्मणोर्गम्यमानयोः, स्यादीनामिडागमश्च। अयमिट् चिण्वद्भावसन्नियोगशिष्टत्वात्तदभावे न । इहार्द्धधातुक इत्यधिकृतं सीयुटो विशेषणं,नेतरेषाम्,अव्यभिचारात्। चिण्वद्भावाद्वृद्धिः।भाविता। भविता। भाविष्यते।

त.]तदाह–**उपदेशेयोऽजिति।** 'उपदेशे अजन्ताना'मिति न व्याख्यातम्,तथाहि सति णिजन्तस्य न स्यात्,तस्योपदेशाऽभावात्।उपदेशो हि साक्षादुच्चारणम् । न च ण्यन्तस्य तदस्ति। चिण्वदिति सप्तम्यन्ताद्वतिः, 'स्यसिच्सीयुट्तासिषु'इति प्रतियोगिनि सप्तमीनिर्देशादतो व्याचष्टे–**चिणीवेति।** ननु चिणि दृष्टमात्रस्य वृद्ध्यादिकार्यस्याऽतिदेशे घानिष्यते आयिष्यते अध्यायिष्यते इत्यत्र हनो वधादेशः, इणो गादेशः, इङो गाङादेशोऽपि स्यादिति चेत्। मैवम्। अङ्गाधिकारबलेन आङ्गस्यैव कार्यस्यातिदेशात्। न चैते हनिणिङादेशा आङ्गाः,तदेतदाह–**अङ्गकार्यं वा स्यादिति। सीयुट इति।** तथा च सीयुट्शब्देन तद्विशिष्टं लक्ष्यत इति भावः। आर्द्धधातुकं इत्यनेन व्यावर्त्यस्तु विधिलिङ्। तेन भूयेतेत्यत्र न भवति। न चाऽत्र 'लिङः सलोपः' इति सलोपाद्वलादित्वं नास्तीति वाच्यं, तस्येहानपेक्षणात्। यदाहुः–'**चिण्वद्वृद्धिर्युक्च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति। इट् चाऽसिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वलिनिमित्तो विघाती।**' इति। अस्यार्थः–'चिण्व'दित्यतिदेशस्य वृद्ध्यादिकं प्रयोजनम्। तथा हि 'भाविता'

बा.]अच् हन ग्रह दृश् एषां द्वन्द्वात्षष्ठी। उपदेश इत्यच एव विशेषणम्, नेतरेषाम्, अव्यभिचारात्। तदाह–**उपदेशे योऽजिति।** 'अ'जित्ययं उपदेशान्तर्गतत्वेऽपि सौत्रः समासः। 'अ'जिति लुप्तषष्ठीकं वा। 'चिण्व'दिति सप्तम्यन्ताद्वतिः, 'स्यसिच्सीयुट्तासिष्वि'त्युपमेयतः सप्तमीदर्शनात्। तदाह–**चिणीवेति। अङ्गकार्यमिति।** अङ्गस्येत्यधिकृतत्वादिति भावः। 'भावकर्मवाचिषु स्यादिष्वि'ति नार्थः, सीयुटो लिङागमतया भावकर्मवाचित्वेऽपि स्यसिच्तासीनां भावकर्मवाचित्वाऽभावात्। नापि 'भावकर्मवाचिनि प्रत्यये परे ये स्यादयस्तेष्वि'त्यर्थः, स्यसिच्तासीनां भावकर्मवाचिप्रत्ययपरत्वसंभवेऽपि सीयुटस्तदसंभवात्। सीयुडागमविशिष्टस्यैव लिङो भावकर्मवाचितया केवलसीयुटो न भावकर्मवाचिप्रत्ययपरकत्वमस्ति। अतो विषयसप्तमीति मत्वाऽऽह–**भावकर्मणोर्गम्यमानयोरिति।** इड्विधौ स्यसिच्सीयुट्तासिषु इति सप्तमी षष्ठ्या विपरिणम्यते इति मत्वाऽऽह–**स्यादीनामिडागमश्चेति।** अत्र अज्हनग्रहदृशां, स्यादीनां च न यथासङ्ख्यं, व्याख्यानात्। 'स्यादिषु परेषु अङ्गस्य इ'डिति नार्थः, 'आर्द्धधातुकस्येड्वलादे'रित्यत्र 'आर्द्धधातुके' इति योगं विभज्य 'यावानिट् स आर्द्धधातुकस्यैवे'ति भाष्ये उक्तत्वात्। चिणि यदङ्गाधिकारविहितं कार्यं तस्यैवात्रातिदेशो, ननु चिणि दृष्टमात्रस्य। तेन 'घानिष्यते' इत्यत्र 'हनो वध लिङि, लुङि चे'ति चिणि दृष्टो वधादेशश्चिण्वदिति नातिदिश्यते, तस्य द्वैतीयीकत्वेन अङ्गाधिकारविहितत्वाऽभावात्। तथा आयिष्यते इत्यत्र इणो गादेशो न। 'अध्यायिष्यते' इत्यत्र इङो गाङादेशो न, द्वैतीयीकत्वात्। चिण्वत्त्वाऽभावे अयमिण्नेत्याह–**अयमिडिति।** सेट्कस्य वलादित्वलक्षण इट् तु स्यादेवेति भावः। ननु भूयेतेति विधिलिङि चिण्वत्त्वम् इट् च स्यातामित्यत आह–**इहार्द्धधातुके इति। नेतरेषामिति।** स्यसिच्तासीनां न विशेषणमित्यर्थः। **अव्यभिचारादिति।** स्यसिच्तासीनां सर्वत्राऽऽर्द्धधातुकत्वनियमादिति भावः। अत्र वार्तिकम्–'चिण्वद्वृद्धिर्युक्च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति। इट्चाऽसिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं, वलिनिमित्तो विघाती ॥' इति। स्यसिच्सीयुडिति सूत्रस्य वृद्ध्यादि प्रयोजनमित्यर्थः। तत्र वृद्धिं दर्शयति–**चिण्वद्भावाद्वृद्धिरिति।** लुटि भू ता इति स्थिते चिण्वत्त्वात् 'अचोऽञ्णिती'ति वृद्धिरित्यर्थः। इडागमश्चेत्यपि

शे ]उपमाने बहुत्वोपादानसामर्थ्येनोपमेये तिङर्थक्रियारूपे उपमानगतबहुत्वारोपेणैव बहुवचनं,तद्वत्। तिङ्वाच्यकारकगताया एवारोपो, नान्यकारकगताया इत्यत्राऽर्थशक्तिस्वभाव एव बीजम्। तदुक्तं हरिणा–'एकत्वेऽपि क्रियाख्याते साधनाश्रयसङ्ख्यया। भिद्यते, न तु लिङ्गाख्यो भेदस्तत्र तदाश्रयः'। इति। न च प्रथमपुरुषोऽपि न स्यात्, तस्यापि शेषसामानाधिकरण्यनियतत्वादिति वाच्यम्, शेषग्रहणं त्यक्त्वा प्रथमस्य उत्सर्गत्वकरणेन तत्सिद्धेः,तच तत्रैकवचनवत्। 'एकवचन'मित्युत्सर्गेण तु अव्ययप्रकरणोक्तरीत्याऽव्ययेभ्य इव सर्वैकवचनापत्तेः। स्पष्टञ्चेदं 'युष्मदी'ति सूत्रे भाष्ये इति वदन्ति।

**स्यसिच्।** अत्र यथासङ्ख्यं न,अस्वरितत्वात्। उपदेशे इति अच एव विशेषणं, नान्येषाम्,अव्यभिचारात्तदाह–**उपदेशे य इति।** 'अ'जिति पृथक्पदं लुप्तविभक्तिकं, सौत्रो वा समास इति भावः। इड्विधायके स्यादीनामिति विभक्तिविपरिणामः।अङ्गस्य तु नेट्।भाष्ये आर्द्धधातुकस्येति योगं विभज्य 'यावानिट् स आर्द्धधातुकस्यैवे'ति परिभाषणात्, लक्ष्यानुरोधाच्च। **चिण्वदिति** सप्तम्यन्ताद्वतिः, उपमेये सप्तमीदर्शनात्। चिण्वद्भावोऽत्र प्रधानम्, इट् तु चेन तत्सन्नियोगशिष्टः।'भावकर्मणो'रिति न स्यादीनां विशेषणं, सीयुटो भावकर्मवाचित्वेऽपि स्यसिच्तासीनां तत्त्वाऽभावात्। नापि 'भावकर्मवाचिनि प्रत्यये परे स्यादय' इत्यर्थः,स्यादीनां तादृक्प्रत्ययपरत्वसम्भवेऽपि सीयुटोऽसम्भवात्, आगमविशिष्टे प्रत्यय-

भविष्यते । भूयताम् । अभूयत । भूयेत । भाविषीष्ट । भविषीष्ट । **चिण् भावकर्मणोः** ।३।१।६६। च्लेश्चिण् स्याद्भाव-कर्मवाचिनि तशब्दे परे । अभावि । अभाविष्यत । अभविष्यत ॥ तिङोक्तत्वात्कर्मणि न द्वितीया । अनुभूयते आनन्दश्चैत्रेण त्वया मया च । अनुभूयेते । अनुभूयन्ते । त्वमनुभूयसे । अहमनुभूये । अन्वभावि । अन्वभाविषाताम् । अन्वभविषाताम् ॥ णिलोपः । भाव्यते । भावयांचक्रे । भावयांबभूवे । भावयामासे । इह तशब्दस्य एशि इट एत्वे च कृते 'ह एती'ति हत्वं न, तासिसाहचर्यादस्तेरपि 'व्यतिहे' इत्यादौ सार्वधातुके एव हत्वप्रवृत्तेरित्याहुः । भाविता । चिण्वदिट आभीयत्वेनाऽसिद्धत्वाण्णिलोपः । पक्षे-भावयिता । भाविष्यते।

---

त.]'भाविष्यते' इत्यादौ वृद्धिः।'दायिता'.'दायिषीष्टे'त्यादौ युक्,'घानिता' घानिष्यते' इत्यादौ घत्वम्। हेतुमण्यन्तात्कर्मणि लकारे 'शामिता' 'शमिता' 'शामिष्यते' 'शमिष्यते' इत्यादौ चिण्णमुलोरिति, मितामुपधाया वा दीर्घः । अत्रैव शामिते-त्यादौ 'स्यसिच्सीयु'डित्यनेन कृत इट् आभीयत्वेनाऽसिद्धः,तेनाऽनिटीति निषेधो न प्रवर्तत इति णेर्लोपो भवति । 'भावि-ष्यते' इत्यादौ भू-स्य इति स्थिते परमपि वलादिलक्षणमिटं बाधित्वा चिण्वदिडेव भवति । यतोऽयं नित्यः । विल्नमित्तो विघाती त्वनित्यः । साप्तमिके तस्मिन्कृतेऽयं चिण्वदिड्भवति। अस्मिन्कृते तु स न भवति । वलादिनिमित्तस्य विहित-त्वात् । एवं च नित्यत्वात्सेड्कयोऽप्ययमेवेड्भवति । एतदभावपक्षे तु सेड्कयो वलादिलक्षण इड्भवतीति बोध्यम् । **चिण्भाव-कर्मणोः** । 'च्लेः सि'जित्यतश्च्लेरिति, 'चिण्ते पदः' इत्यतस्ते इति चानुवर्तते । तत्रत्यं तु चिण्ग्रहणं 'न रुधः' इति निषेधेन तिरोहितमिति पुनरत्र चिण्ग्रहणं कृतम् । तशब्दे किम् ? । अभाविषाताम् । **चिण्वदिट इति** । ण्यन्तस्य

---

बा.]बोध्यम्। तत्फलं तु वक्ष्यते।तथा दाधातोर्लुटि 'आतो युक् चिण्कृतो'रिति युक् ।तथा लृटि 'घानिष्यते' इत्यत्र 'होह-न्तेर्ञ्णिन्नेषु' इति घत्वम् । शमेर्हेतुमण्ण्यन्तााल्लुटि—शामिता शमितेत्यत्र 'चिण्णमुलो'रिति वा दीर्घः। तथा अनेनैवाऽत्र इटि कृते तस्य आभीयत्वेनाऽसिद्धत्वादनिटीति निषेधाऽभावाण्णिलोपः । तथा 'भाविष्यते' इत्यत्र भू-स्य इति स्थिते परमपि वलादिलक्षणं इटं बाधित्वा नित्यत्वादनेन इट्, वल्निमित्ते इटि कृतेऽकृते च चिण्वदिटः प्रवृत्त्या कृताऽकृतप्रसङ्गित्वात् । वलादिलक्षणस्त्विण्न नित्यः, चिण्वदिटि कृते वलादित्वस्य विहतत्वेन वलादिलक्षणस्य इटोऽप्रवृत्तेः । **नित्यश्चायमित्यस्य** 'चिण्वदि'डिति शेषः । **'वल्निमित्त'** इत्यनन्तरम् 'इडनित्य' इति शेषः। अनित्यत्वे हेतुः—**'विघाती'ति**। चिण्वदिटो वलादिनिमित्तविघातकत्वादित्यर्थः । एवंच सेड्कत्वेऽप्यनेनैव इट् । एतदभावपक्षे तु सेड्कत्वे वलादिलक्षण इडिति बोध्यम् । तदाह—**भवितेति** । चिण्वदिडभावपक्षे वलादिलक्षण इडिति भावः । **चिण्भावकर्मणोः । च्लेरिति ।** 'च्लेः सि'जित्यतस्तदनुवृत्तेरिति भावः। **तशब्दे परे इति।** 'चिण् ते पदः' इत्यतस्तदनुवृत्तेरिति भावः। **अभावीति।** च्लेश्चिणि कृते 'चिणो लु'गिति तशब्दस्य लोपः।चिण्विधौ तशब्दे किम् ?। अभाविषातम्। अथ अनुपूर्वाद्भूधातोरुपभोगा-र्थकात्सकर्मकात्कर्मणि लकारे विशेषमाह—**तिङोक्तत्वादिति** । कर्तुस्त्वनभिहितत्वात्तृतीयैवेति भावः । तदाह—**अनु-भूयते आनन्दश्चैत्रेण त्वया मया चेति** । इहाऽऽनन्दस्य तिङाभिहितत्वात्प्रथमेति भावः । युष्मदस्मदुपात्तयोः कर्त्रोस्त्वनभिहितत्वात्तृतीया । **अनूभूयेते इति** । 'सुखदुःखे' इति शेषः । **अनुभूयन्ते इति** । 'सुखानी'ति शेषः । **णिलोप इति** । भूधातोर्णौ वृद्धौ आवादेशे भावीति ण्यन्तात्कर्मणि लटस्तादेशे यकि णिलोप इत्यर्थः । **भावयामासे इति** । प्रथमपुरुषैकवचने, उत्तमपुरुषैकवचने च रूपम् । **इहेति** । 'भावयामासे' इत्यत्र प्रथमैकवचनतशब्दस्य 'लिट-स्तझयो'रिति एशादेशे उत्तमपुरुषैकवचनस्य इटश्च 'टित आत्मनेपदाना'मित्येत्वे च कृते भावयामास् ए इति स्थिते 'ह एती'ति सकारस्य हकारः प्राप्तो न भवतीत्यर्थः । कुत इत्यत आह—**तासीति** । 'ह एती'त्यत्र तासस्त्योरित्यनुवर्तते । तत्र एधिताहे इत्यादौ तासेः सार्वधातुक एव एति परे हकार इति निर्विवादम्। तथाविधतासिसाहचर्यादस्तेरपि सकारस्य 'व्यतिहे' इत्यादौ सार्वधातुक एव परे प्रवृत्तिः। अतो 'भावयामासे' इत्यत्र नाऽस्तेः सकारस्य हकारः, एकारस्यार्द्धधातुक-त्वादित्यर्थः। **भावितेति** । ण्यन्तात् भावि-ता इति स्थिते परत्वाद्वलादिलक्षणमिटं बाधित्वा चिण्वदिटि तस्याऽऽभीयत्वे-नाऽसिद्धत्वादनिटीति निषेधाऽभावाण्णिलोपे भावितेति रूपम्। अत एव चिण्वदिड्विधौ 'उपदेशे योऽ'जित्येव व्याख्यातम् , नतु 'उपदेशे अजन्तस्ये'ति, तथा सति हि णिजन्तस्य उपदेशाऽभावान्न स्यादिति भावः। वलादिलक्षणे इटि कृते तु तस्य अनाभीयत्वेन असिद्धत्वाऽभावादनिटीति निषेधाण्णिलोपाऽभावे णेर्गुणाऽयादेशयोः कृतयोर्भावयितेति रूपमिति मत्वा आह—

---

शे.]त्वार्यवस्त्वायङ्गीकारात् । अतो विषयसप्तमीत्याह—**गम्यमानयोरिति । चिण्भाव** । च्लेरिति, 'चिण्ते' इत्यतस्ते इति चानुवर्तते । पुनश्चिण्ग्रहणन्तु 'न रुधः' इति निषेधाऽननुवृत्तये।**इत्याहुरिति** । अत्राऽरुचिबीजन्तु साहचर्याश्रयणे दृढमानाऽभावः । ननु ण्यन्तस्योपदेशाऽभावात्तत्र चिण्वदिण्न स्यात् । 'उपदेशे योऽच् तदन्ताङ्गस्ये'त्यर्थेऽपि 'आरिता' 'स्मारिते'त्यादौ नित्यत्वाद्गुणे रपरत्वे च चिण्वदिण्न स्यात् । न हि रान्तस्योपदेशे योऽच् तदन्तत्वमस्ति । भूप्रभृतीनां

भावयिष्यते। भाव्यताम्। अभाव्यत। भाव्येत। भाविषीष्ट। भावयिषीष्ट। अभावि। अभाविषाताम्। अभावयिषाताम्॥ बुभूष्यते। बुभूषांचक्रे। बुभूषिता। बुभूषिष्यते॥ बोभूय्यते। यङ्लुगन्तात्तु बोभूयते। बोभवांचक्रे। बोभाविता। बोभविता॥ 'अकृत्सार्वे'ति दीर्घः—स्तूयते विष्णुः। तुष्टुवे। स्ताविता। स्तोता। स्ताविष्यते। स्तोष्यते। अस्तावि। अस्ताविषाताम्। अस्तोषाताम्॥ 'गुणोर्ती'ति गुणः। अर्यते। आरे। स्मर्यते। सस्मरे। परत्वान्नित्यत्वाच्च गुणे रपरे कृतेऽजन्तत्वाऽभावेऽप्युपदेशग्रहणाच्चिण्वदिट्। आरिता। अर्ता। स्मारिता। स्मर्ता॥ गुणोऽर्तीत्यत्र नित्यग्रहणानुवृत्तेरुक्तत्वान्नेह गुणः—संस्क्रियते। 'अनिदिता'मिति नलोपः—स्रस्यते। इदितस्तु—नन्द्यते॥ संप्रसारणम्। इज्यते। '**अयङ्यि क्ङिति**'। शय्यते। **तनोतेर्यकि** ।६।४।४४। आकारोऽन्तादेशो वा स्यात्। तायते। तन्यते। '**ये विभाषा**'। जायते। जन्यते। **तपोऽनुतापे च** ।३।१।६५। तपश्च्लेश्चिण्न स्यात्कर्म-

त.]धातोरुपदेशाभावेऽप्युपदेशे योऽजिति व्याख्यानाच्चिण्वदिडिह प्रवर्तत एवेति भावः। **परत्वादिति**। चिण्वदिडपेक्षया। **नित्यत्वादिति**। न च कृते चिण्वदिटि वृद्धिप्रवृत्त्या गुणस्य नित्यत्वं नेति शङ्क्यम्, 'अचो ञ्णिती'ति वृद्धिं बाधित्वा परत्वाद्गुणे रपरत्वे च पश्चात् 'अत उपधायाः' इति वृद्धिप्रवृत्त्या गुणस्य नित्यत्वाऽनपायात्। **उपदेशग्रहणादिति**। तत्सामर्थ्यादुपदेशे योऽच्, तदन्तत्वमृधातोर्व्यपदेशिवद्भावेन यत्स्थितं तदादाय ण्यन्तादप्यारितेत्यादौ चिण्वदिट् प्रवर्तत इति भावः। नन्वेवं स्मारितेत्यादिर्न सिध्येत्, 'स्मृ' इत्यस्य उपदेशे योऽच् तदन्तत्वाऽभावात्। 'उपदेशेऽजन्ताना'मिति व्याख्याने तु ण्यन्तस्य न स्यादित्युक्तत्वादिति चेत्। सत्यम्। अतएवाऽपरितोषान्मनोरमायामुक्तम्—'अस्तु वा उपदेशे यदजन्तं तस्ये'ति व्याख्यानम्। 'अङ्गस्ये'ति व्यधिकरणषष्ठी। 'अङ्गावयवस्याजन्तस्येत्यर्थ' इति। एवं च णिजन्तेऽपि शामितेत्यादौ चिण्वदिट् सिध्यति, व्यपदेशिवद्भावेन णिजेव णिजन्तः,तदवयवकं शामीत्यङ्गमित्याश्रयणात्। आरिता स्मारितेत्याद्यपि सिध्यति। ऋधातुः स्मृधातुश्चोपदेशेऽजन्तस्तदवयवकं भवत्यार् स्मारित्यङ्गमिति दिक्। **नित्यग्रहणानुवृत्तेरिति**। 'नित्यं छन्दसी'ति सूत्रात्। काशिकायां तु—सुटो बहिरङ्गलक्षणस्याऽसिद्धत्वादभक्तत्वाद्वा संयोगादित्वमङ्गस्य नास्तीति गुणोऽत्र न प्रवर्तत इत्युक्तम्। 'सुट्कात्पूर्व' इति विधीयमानः कभक्तो, न त्वङ्गभक्तस्तेनाऽसंयोगाद्येव अङ्गमित्यभक्तत्वादित्यस्याशयः। **तनोतेर्यकि**। 'विड्वनो'रिति सूत्रादादिति, 'ये विभाषे'त्यतो विभाषेति चानुवर्तते। यकि किम्?। तंतन्यते। **तपोऽनु** चकारेण 'अचः कर्मकर्तरी'त्यतः कर्मकर्तरीत्येतदनुकृष्यते। कर्मण्युदाहरणमिति

बा.]पक्षे **भावयितेति**। अथ सन्नन्ताद्भूधातोर्भावलकारे उदाहरति—**बुभूष्यते इति**। यकि सनोऽकारस्य 'अतो लोपः' इति लोपः। **बुभूषिता। बुभूषिष्यते इति**। चिण्वदिटि वलादिलक्षणे इटि च रूपं तुल्यम्। चिण्वदिड्भावपक्षेऽपि तदतिदेशेन प्राप्तां वृद्धिं बाधित्वा परत्वादतो लोपः। अथ यङन्ताद्भूधातोर्भावलकारे उदाहरति—**बोभूय्यते इति**। यकि यङोऽकारस्य पूर्ववदतो लोपः। द्वियकारकं रूपम्। यङ्लुगन्ताद्बोभूयते इति एकयकारं रूपम्। ष्टुञ्धातोः कर्मलकारे यकि तस्यार्द्धधातुकत्वात् 'अतो दीर्घो यञी'त्यप्राप्तावाह—**अकृत्सार्वेति**। **स्ताविता स्तोतेति**। चिण्वदिडभावपक्षेऽनिट्त्वान्नेट्। अथ ऋधातोः कर्मणि लकारे यकि कृते क्ङित्वाद्गुणनिषेधे प्राप्ते आह—**गुणोऽर्तीति**। **अर्यते इति**। गुणे कृते रपरत्वम्। 'स्मृ'धातोः कर्मणि लकारे आह—**स्मर्यते इति**। 'गुणेऽर्ती'ति संयोगादित्वाद्गुणे रपरत्वमिति भावः। ननु लुटि ऋ ता, स्मृ ता इति स्थिते चिण्वदिटं बाधित्वा परत्वाद्गुणः प्राप्नोति, नित्यत्वाच्च,अकृते कृते च चिण्वदिटि गुणस्य प्राप्तेः। कृते तु गुणे रपरत्वेऽजन्तत्वाभावाच्चिण्वदिडभावे अनिट्त्वाद्वलादिलक्षणेडभावे अर्ता स्मर्तेत्येव स्यात्, आरिता स्मारितेति न स्यादित्यत आह—**परत्वादित्यादि**। कृते गुणे रपरत्वे अजन्तत्वाऽभावेऽपि उपदेशे योऽच् तदन्तस्येत्युक्तेश्चिण्वदिण्निर्बाध इत्यर्थः। **आरितेति**। कृतेऽपि गुणे रपरत्वे चिण्वदिटि उपधावृद्धिः। **अर्तेति**। चिण्वदिडभावे रूपम्। एवं स्मारिता स्मर्तेत्यपि। ननु संपूर्वात्कृञः कर्मणि लकारे यकि 'रिङ् शयग्लिङ्क्षु' इति रिङादेशे 'संपरिभ्यां करोतौ भूषणे, समवाये चे'ति सुटि संस्क्रियते इति वक्ष्यते। तत्र 'गुणोऽर्ती'ति संयोगादित्वाद्गुणः स्यादित्यत आह—**नित्यग्रहणानुवृत्तेरिति**। 'नित्यं छन्दसी'त्यतो नित्यमित्यनुवृत्तेः 'गुणोऽर्ती'त्यत्र नित्यं यः संयोगादिस्तस्यैव संयोगादिलक्षणो गुण इति लभ्यते। कृञ्तु न नित्यं संयोगादिः, संपरिपूर्वकत्वाऽभावे तदभावादिति भावः।अथ स्रंस्धातोर्भावलकारे यकि विशेषमाह—**अनिदितामिति नलोप इति**। **इदितस्त्विति**। 'टु नदि समृद्धौ' इत्यस्माद्भावलकारे यकि इदित्त्वान्नलोपो नेत्यर्थः।

अथ यजधातो कर्मलकारे यकि विशेषमाह—**संप्रसारणमिति**। 'वचिस्वपियजादीना'मित्यनेनेति भावः। शीङ्धातोर्भावलकारे यकि विशेषमाह—**अयङ्यि क्ङितीति**। **तनोतेर्यकि**। 'विड्वनो'रित्यत आदिति, 'ये विभाषे'त्यतो विभाषेति चानुवर्तते। तदाह—**आकारोऽन्तादेशो वा स्यादिति**। शेषपूरणमिदम्। **तायते तन्यते इति**। कर्मणि लकारः। **तपोऽनुतापे च**। 'च्लेः सि'जित्यतश्च्लेरिति, 'चिण् ते' इत्यतश्चिणिति,

शे.]गुणे उपदेशे योऽच् तदन्तत्वाऽभावाद्दोष एवेति चेन्न,'अतो लोपः'इत्यत्रेवाऽर्द्धधातुकोपदेशे यदजन्तमित्यर्थेऽनादोषात्। तत्रेवाऽत्राप्यावृत्त्या सीयुड्विशेषणत्वमपि। ऋधातोस्तदुपदेशेऽजन्तत्वं तु व्यपदेशिवद्भावेन बोध्यम्। **तपोऽनुता**। चात्

कर्तर्यनुतापे च ॥ अन्वतप्त पापेन । पापं कर्तृ । तेनाऽभ्याहत इत्यर्थः । कर्मणि लुङ् । यद्वा पापेन पुंसा कर्त्रा अशोचीत्यर्थः ॥ 'घुमास्थे'तीत्वम् । दीयते । धीयते । 'आदेच' इत्यत्राऽशितीति कर्मधारयादित्संज्ञकशकारादौ निषेधः । एश आदिशित्त्वाऽभावान्न तस्मिन्नात्वम् । जग्ले । **आतो युक् चिण्कृतोः** ।७।३।३३। आदन्तानां युगागमः स्याच्चिणि ञ्णिति णिति कृति च । दायिता । दाता । दायिषीष्ट । दासीष्ट । अदायि । अदायिषाताम् ॥ 'स्थाघ्वोरिच्चे' । अदिषाताम् । अधायिषाताम् । अधिषाताम् । अग्लायिषाताम् । अग्लासाताम् ॥ हन्यते । 'अचिण्णलो'रित्युक्तेर्हनस्तो न । 'हो हन्ते'रिति कुत्वम् । घानिता हन्ता । घानिष्यते । हनिष्यते । आशीर्लिङि

त.] ध्वनयति—**अभ्याहत इत्यर्थ इति**। भावेऽपीदमुदाहरणमित्याह—**पापेन पुंसेति**। अविचार्य कर्म कृत्वा पश्चादशोचीत्यर्थः। कर्मकर्तरि तु तत्प्रक्रियायामुदाहरिष्यति। **आतो युक्**। 'अचो ञ्णिती'त्यतो ञ्णितीत्यनुवर्तते । तच्च कृतो विशेषणं न तु चिणः, तस्य णित्त्वेनाऽव्यभिचारात् । चिण्कृतोः किम् ? । चौडिः । बालाकिः। बाह्वादित्वादिञ् । ददौ । ञ्णितीति किं ? । पानीयम् । दानीयम् । **अदायिषातामिति** । 'स्थाघ्वोरिच्चे'त्येतद्बाधित्वा परत्वाच्चिण्वदिटि कृते 'घुमास्थे'-तीत्वं न भवति, अजादित्वात् । 'स्थाघ्वोरिच्चे'त्यपि पुनर्न भवति, अज्झलादित्वादित्याहुः । तेषामयमाशयः—'इको झ'लिति सूत्राज्झलनुवर्तते। तथा च झलादिरेव सिच् किन्न त्वयमिडादिः सिच् । एवं च तत्संनियोगशिष्टत्वादित्त्वमप्यत्र न भवतीति । वस्तुतस्तु सत्यपि तस्मिन्नेह काचित्क्षतिः—सिचः कित्त्वेऽप्यनिग्लक्षणाया अनिषेधात् 'अचो ञ्णिती'ति वृद्ध्या रूपनिष्पत्तेः । **आशीर्लिङीति** । न तु लुङि । तत्र चिण्वद्भावात् 'आत्मनेपदेष्वन्यतरस्या'मिति वधादेशस्यापि

बा.] 'न रुधः' इत्यतो नेति चानुवर्तते। चकारात् 'अचः कर्मे'त्यतः कर्मकर्तरीति समुच्चीयते। तदाह—**तपश्चलेरित्यादि** । तत्र कर्मकर्तरि कर्मकर्तृप्रक्रियायामुदाहरिष्यति । अनुतापे कर्मलकारे उदाहरति—**अन्वतप्त पापेनेति** । पापेनेति कर्तरि तृतीयेति मत्वाऽऽह—**पापं कर्त्रिति** । अनुपूर्वस्य तपेः पश्चात्तापार्थकत्वे असङ्गतिः । नहि पापस्य सूर्यादिवत्तपनशक्तिरस्ति । शोकार्थकत्वेऽकर्मकत्वापत्तिरित्यत आह—**अभ्याहत इति** । अनुपूर्वस्तपिरिह उपसर्गवशादभिहननार्थक इति भावः । तस्य च सकर्मकत्वात् कर्मलकार उपपद्यते इति मत्वाह—**कर्मणि लुङिति** । शोकार्थकत्वमाश्रित्य भावे वा लुङित्याह—**यद्वा पापेन पुंसा कर्त्रेति** । परिणाममसमीक्ष्य सहसा किञ्चिदकृत्यं कृत्वा पश्चाद्दुःखमन्वभवदित्यर्थः । दुःखानुभवः **शोकः** । धात्वर्थेनोपसङ्ग्रहादकर्मकः । 'शुच शोके' अकर्मकः । 'पुत्रमनुशोचती'त्यत्र तु वियुक्तं पुत्रं स्मृत्वा शोचतीत्यर्थः । स्मरणे पुत्रस्य कर्मत्वाद्द्वितीयेत्यविरोधः । अथ दाधातोर्धाधातोश्च कर्मलकारे यकि विशेषमाह—**घुमास्थेतीत्त्वमिति** । ग्लैधातोर्भावे लिटस्तादेशस्य एशादेशे 'आदेचः' इत्यात्त्वस्य अशितीति निषेधमाशङ्क्याह—**आदेच इत्यत्रेति** । श् चासाविच्च इति कर्मधारयाश्रयणादित्संज्ञशकारादौ प्रत्यये परे आत्त्वस्य निषेधो लभ्यते। एशः शित्त्वेऽपि आदिभूतशकारेत्त्वाऽभावान्निषेधाऽभावात्तस्मिन् एशि परे आत्त्वं भवत्येवेत्यर्थः। **जग्ले इति** । आत्त्वे कृते 'आतो लोप इटि चे'ति तस्य लोप इति भावः । **आतो युक्** । अङ्गस्येत्यधिकृतमाता विशेषितं, तदन्तविधिः । 'अचो ञ्णिती'त्यतो ञ्णितीत्यनुवृत्तं कृत एव विशेषणं, नतु चिणः, तस्य णित्त्वाऽव्यभिचारात् । तदाह—**आदन्तानामित्यादि** । **दायितेति** । चिण्वदिट्पक्षे युक् । **अदायिषातामिति** । 'स्थाघ्वोरिच्चे'त्येतद्बाधित्वा परत्वाच्चिण्वदिटि कृते 'घुमास्थे'तीत्वं न, अजादित्वात् । पुनः 'स्थाघ्वोरिच्चे'रिति तु न भवति, अझलादित्वात् । तत्र हि 'इको झ'लिति सूत्राज्झलित्यनुवृत्तं । तथाच झलादिरेव सिच् किदिति लभादिडादिः सिज्न कित्, तत्संनियोगादित्त्वमपि न भवतीत्याहुः। वस्तुतस्तु सत्यपि तस्मिन्नाऽत्र काचित् क्षतिः। सिचः कित्त्वेऽप्यनिग्लक्षणया वृद्ध्या रूपसिद्धेरिति दिक् । अथ हनधातोः कर्मलकारे आह—**हन्यते इति**। **अचिण्णलोरिति**। लुटि चिण्वदिटि वृद्धौ 'हनस्तोऽचिण्णलो'-रिति हनो नकारस्य तकारो न भवति, चिण्वत्त्वादित्यर्थः । **कुत्वमिति** । तस्य णिति विहितस्याऽत्र चिण्वत्त्वात्प्राप्तिरिति भावः । **घानिष्यते इति** । 'ऋद्धनो'रिति बाधित्वा नित्यत्वाच्चिण्वदिट् । 'ऋद्धनो'रिति तु चिण्वदिटि कृते न भवतीत्यनित्यं, तत्र वलीत्यनुवृत्तेरिति भावः। नन्वाशीर्लिङि घानिषीष्टेत्यत्र हन् सीष्ट इति स्थिते परमपि चिण्वत्त्वं बाधित्वा वधादेशः प्राप्नोति, आर्द्धधातुके विवक्षिते विहितत्वेन वधादेशस्याऽन्तरङ्गत्वादित्यत आह—**आशीर्लिङीत्यादि** । ननु

शे.] 'अचः कर्मकर्तरी'त्यतः कर्मकर्त्तरीत्यनुवर्त्तते, 'चिण्ते' इति सूत्राच्चिणिति, 'न रुधः' इत्यतो नेति च वर्त्तते। भावे वा लुङित्याह—**पापेनेति** । अविचार्य कर्म कृत्वा पश्चादशोचीत्यर्थः। कर्मकर्त्तरि तूदाहरिष्यते । 'अचिण्णलो'रिति प्रसज्यप्रतिषेधे चिण्वद्भावे न निषेधः। पर्युदासेऽपि न दोषः, अतिदिश्यमानधर्मनिरुद्धस्वाश्रयस्यातिदेशस्वाभाव्येनाऽनङ्गीकारादिति भावः। **घानिष्यत इति** । 'ऋद्धनो'रिति बाधित्वा नित्यत्वाच्चिण्वदिट् । वलीति हि तत्र वर्त्तते । नन्वार्द्धधातुके इत्यादेर्विषयसप्तमीत्वेन वधादेशस्याऽन्तरङ्गत्वेन चिण्वत्त्वं बाधित्वा स एव स्यादत आह—**आशीर्लिङीति**। **अपवाद इति**। वाक्या-

वधादेशस्यापवादश्चिण्वद्भावः, 'आर्द्धधातुके सीयुटी'ति विशेषविहितत्वात्। घानिषीष्ट। पक्षे—वधिषीष्ट। अघानि। अघानिषाताम्। अहसाताम्। पक्षे—वधादेशः। अवधि। अवधिषाताम्। अघानिष्यत। अहनिष्यत। न च स्यादिषु 'चिण्व'दित्यतिदेशाद्वधादेशः स्यादिति वाच्यम्, 'अङ्गस्ये'त्यधिकारादाङ्गस्यैवातिदेशात्॥

गृह्यते। चिण्वदिटो न दीर्घत्वम्, प्रकृतस्य वलादिलक्षणस्यैवेटो 'ग्रहोऽलिटी'त्यनेन दीर्घविधानात्। ग्राहिता। ग्रहीता। ग्राहिष्यते। ग्रहीष्यते। ग्राहिषीष्ट। ग्रहीषीष्ट। अग्राहि। अग्राहिषाताम्। अग्रहीषाताम्॥ दृश्यते। [दर्शिता द्रष्टा]। अदर्शि। अदर्शिषाताम्। सिचः कित्त्वादम्। अदृक्षाताम्॥ गिरतेर्लुङि ध्वमि चतुरधिकं शतम्। तथा हि

---

त.] वैकल्पिकतया येन नाप्राप्तिन्यायाऽभावादिति भावः। **आर्द्धधातुके सीयुटीत्यादि**। यद्यपि 'हनो वध लिङी'त्यत्रापि आर्द्धधातुकाधिकारादार्द्धधातुके लिङीत्यपि समानं, तथापि लिङीति पदद्वयसाधारणं, सीयुट् तु आत्मनेपद एवेति विशेषविहितत्वमस्तीति भावः। **अहसातामिति**। चिण्वदिटोऽभावे 'हनः सि'जिति कित्वात् 'अनुदात्तोपदेशे'त्यनुनासिकलोपः। चिणि वधादेशस्य दृष्टत्वाच्चिण्वद्भावेन स्यादिषु प्राप्तिमाशङ्क्य परिहरति—**नचेत्यादिना**। **अदर्शिषातामिति**। 'न दृशः' इति क्सस्य निषेधादिह सिचि चिण्वदिट्। **सिचः कित्त्वादिति**। 'लिङ्सिचावात्मनेपदेषु'

---

बा.] घानितेत्यादौ अप्राप्तेऽपि वधादेशे आरम्भात्कथं वधादेशस्य चिण्वद्भावोऽपवादः स्यादित्यत आह—**आर्द्धधातुके सीयुटीति**। 'स्यसिच्सीयु'डिति सूत्रे अजन्तस्य स्ये, अजन्तस्य सिचि, अजन्तस्य आर्द्धधातुके सीयुटि, अजन्तस्य तासौ,—इत्यजन्तस्य चत्वारि वाक्यानि। एवं हनग्रहदृशामप्येकैकस्य चत्वारि वाक्यानीति स्थितिः। तत्र हन आर्द्धधातुके सीयुटि चिण्वदिड्विधिर्निरवकाशत्वाद्वधादेशापवादः, अप्राप्त एव वधादेशे आरम्भात्। वधादेशस्तु न चिण्वदिटोऽपवादः, तस्य वध्यादित्यत्र कर्तरि लिङि चरितार्थत्वादिति भावः। **पक्षे इति**। चिण्वत्त्वाऽभावपक्षे। 'हनो वध लिङी'ति वधादेशे वलादिलक्षणे इटि अतो लोपे रूपम्, वधादेशस्याऽदन्तत्वात्। नच हनधातोरनुदात्तत्वादुपदेशे एकाच्त्वात्तदीयवधादेशस्यापि तथाविधत्वादिह कथं वलादिलक्षण इडिति वाच्यम्, 'एकाच उपदेशे' इत्यत्र 'अच' इत्येकत्वसामर्थ्यादेकत्वे सिद्धे पुनरेकग्रहणबलेन 'य उपदेशे एकाजेव नतु कदाप्यनेका'जिति लभ्यते। तेन वधेर्हन्त्युपदेशमादाय एकाचोऽपि न निषेधः। आदेशोपदेशे अनेकाच्त्वादित्युक्तं प्राक्। लुङि तु सिचश्चिणि उपधावृद्धौ कुत्वेन घः। 'आत्मनेपदेष्वन्यतरस्या'मिति वधादेशाऽभावः। **अघानिषातामिति**। चिण्वदिटि वधादेशाऽभावपक्षे रूपम्। **अहसातामिति**। चिण्वदिडभावपक्षे 'हनः सि'जिति कित्वादनुदात्तोपदेशेत्यनुनासिकलोपः। **पक्षे अवधीति**। 'आत्मनेपदेष्वन्यतरस्या'मिति वधादेशपक्षे इत्यर्थः। **अवधिषातामिति**। 'आत्मनेपदेष्वन्यतरस्या'मिति वधादेशस्यापि पाक्षिकतयाऽप्राप्तेपि वधादेशे चिण्वत्त्वस्यारम्भणापवादत्वमिति भावः। ननु चिणि वधादेशस्य दृष्टत्वात्स्यादिषु चिण्वत्त्वाद्वधादेशः स्यादित्याशङ्क्य परिहरति—**न चेत्यादिना**। **आङ्गस्यैवेति**। वधादेशस्तु द्वैतीयीकः, न लङ्गाधिकारस्थ इति भावः। अथ 'ग्रह उपादाने' इत्यस्माद्दुपधात्कर्मलकारे उदाहरति—**गृह्यते इति**। 'ग्रहिज्ये'ति संप्रसारणम्। अथ लुटि तासि चिण्वदिटि 'ग्रहोऽलिटी'ति दीर्घमाशङ्क्याह—**चिण्वदिटो न दीर्घत्वमिति**। कुत इत्यत आह—**प्रकृतस्येति**। वलादिलक्षणस्य इटः प्रकृतत्वात्तस्यैव 'ग्रहोऽलिटी'ति दीर्घविधौ ग्रहणं नतु चिण्वदिट इति भाष्ये स्पष्टम्। **ग्राहितेति**। चिण्वदिटि रूपम्। **ग्रहीतेति**। चिण्वदिडभावपक्षे वलादिलक्षणस्य इटो दीर्घे रूपम्। अथ दृशेः कर्मलकारे उदाहरति—**दृश्यते इति**। लिटि—ददृशे। लुटि तासि चिण्वदिट्पक्षे—दर्शिता। चिण्वत्त्वाऽभावे 'सृजिदृशो'रित्यम्। द्रष्टा। दर्शिष्यते। द्रक्ष्यते। दर्शिषीष्ट। चिण्वदिडभावे तु 'लिङ्सिचावात्मनेपदेषु' इति कित्वात् 'सृजिदृशो'रित्यम्न। नापि लघूपधगुणः। दृक्षीष्ट। **अदर्शीति**। चिणि लघूपधगुणः। **अदर्शिषातामिति**। चिण्वदिटि रूपम्। चिण्वत्त्वाऽभावे त्वाह—**सिचः कित्त्वादम्नेति**। 'लिङ्सिचावात्मनेपदेषु' इति सिचः कित्वात् 'सृजिदृशो'रित्यम्न भवति, अकितीति पर्युदासादित्यर्थः। अथ गृधातोः कर्मलकारे यकि ऋत इत्वे 'हलि चे'ति दीर्घे—गीर्यते। जगरे। लुटि तासि चिण्वत्त्वपक्षे—गारिता। चिण्वत्त्वाऽभावे वलादिलक्षणे इटि गुणे रपरत्वे—गरिता गरीता। 'वृतो वे'ति वा दीर्घः। गारिष्यते गरिष्यते गरीष्यते। गीर्यताम्। अगीर्यत। गीर्येत। गारिषीष्ट। चिण्वत्त्वाऽभावपक्षे तु 'लिङ्सिचोरात्मनेपदेषु' इति इड्विकल्पः। इडभावपक्षे 'उश्चे'ति कित्त्वम्। इत्वम्।

---

शे.] र्थबोधवेलायां बाधकाऽभावेन हन्तेरपि सीयुटा सम्बन्धेन तस्य निरवकाशत्वात् पश्चाल्लक्ष्यसंस्कारवेलोपस्थितवधबाधस्तेन न्याय्यः, सीयुट् तु तदविषयेऽचरितार्थ इति भावः। **परे** तूभयत्रापि द्वन्द्वनिर्देशात्समुदायस्य समुदायेन सम्बन्धो न्याय्यो, न तु प्रत्येकं चतुर्णां सम्बन्धः शब्दाल्लभ्यते। एवञ्च न निरवकाशत्वम्। अत एव भाष्ये विप्रतिषेध उक्तः—'वधिभावात्सीयुटि चिण्वत्त्वं विप्रतिषेधेने'ति। चिण्वद्भाववाक्येऽपि 'स्यादिष्वि'ति विषयसप्तमीति भाष्याशय इत्याहुः। **अदर्शिषातामिति**। 'न दृश' इति निषेधाच्च्लेः क्सो न। **सिचः कित्त्वादिति**। 'लिङ्सिचावात्मनेपदेषु' इत्यनेन। **लत्वम्** 'अचि

'चिण्वदिटो दीर्घो ने'त्युक्तम् । अगारिध्वम् । द्वितीये त्विटि 'वृतो वे'ति वा दीर्घः। अगरीध्वम् । अगरिध्वम् । एषां त्रयाणां लत्वं ढत्वं द्वित्वत्रयं चेति पञ्च वैकल्पिकानि । इत्थं षण्णवतिः (९६) । 'लिङ्सिचो'रिति विकल्पत्वादिडभावे 'उश्चे'ति कित्त्वम् । इत्वम् । रपरत्वं । 'हलि चे'ति दीर्घः । 'इणः षीध्व'मिति नित्यं ढत्वम् । अगीढ्वम् । ढवमानां द्वित्वविकल्पेऽष्टौ । उक्तषण्णवत्या सह सङ्कलने उक्ता सङ्ख्येति । 'इड् दीर्घश्चिण्वदिट् लत्वढत्वे द्वित्वत्रिकं तथा । इत्यष्टानां विकल्पेन चतुर्भिरधिकं शतम्' । हेतुमण्ण्यन्तात्कर्मणि लः । यक् । णिलोपः। शम्यते मोहो मुकुन्देन । चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ।६।४।९३। चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा स्यात् । प्रकृतो मितां ह्रस्व एव तु न विकल्पितः, ण्यन्ताण्णौ ह्रस्वविकल्पाऽसिद्धेः ।

त.]इत्यनेन । लत्वमिति । 'अचि विभाषे'ति। गिरते रेफस्य लत्वे षट् । ढत्वमिति । 'विभाषेटः' इत्यनेन । षण्णां ढत्वे द्वादश । द्वित्वत्रयं चेति । 'अनचि चे'ति । द्वादशानां मध्ये षण्णां ढस्य, षण्णां धस्य च द्वित्वे चतुर्विंशतिः (२४) । 'मय' इति पञ्चमी 'यण' इति षष्ठीति पक्षे वकारस्य द्वित्वे त्वष्टाचत्वारिंशत् (४८) । अनचि चे'ति मकारस्य द्वित्वे षण्णवतिः (९६) । ढवमानामिति । 'अचो रहाभ्या'मिति ढस्य द्वित्वे द्वयम् (२) । द्वयोरपि वस्य 'यणो मयः' इति द्वित्वे चत्वारि (४) । चतुर्णामपि मस्य 'अनचि च' इति द्वित्वे त्वष्टौ (८) । चिण्णमुलोः । शामितेत्यादौ 'जनीजॄ'षित्यादिना मित्त्वेन मितामुपधाया नित्यं ह्रस्वे प्राप्ते दीर्घोऽनेन विकल्प्यते । ण्यन्ताण्णाविति । णि-

बा.]रपरत्वम् । 'हलि चे'ति दीर्घः। षत्वम्। गीर्षीष्ट । इट्पक्षे तु–गरिषीष्ट। लुङि–अगारि । अगारिषाताम् अगीर्षाताम्–अगरिषातामिति सिद्धवत्कृत्य आह–लुङि ध्वमि चतुरधिकं शतमिति। 'रूपाणी'ति शेषः।तदेवोपपादयति–तथाहीति। अगारिध्वमिति। गॄ स् ध्वम् इति स्थिते चिण्वदिटि वृद्धौ रपरत्वे 'धि चे'ति सलोपे रूपमिति भावः।द्वितीये त्विटीति । चिण्वदिडभावपक्षे वलादिलक्षणे सिच इटि ॠकारस्य गुणे रपत्वे 'धि चे'ति सलोपे 'वतो वा' इति दीर्घविकल्पे अगरिध्वम्, अगरीध्वमिति रूपद्वयमित्यर्थः । एषामिति । एषां त्रयाणां मध्ये एकैकस्मिन् रेफस्य 'अचि विभाषे'ति लत्वम् । 'विभाषेटः' इति वा धस्य ढत्वम् । तथा धस्य, तदादेशढस्य, वस्य, मस्य च द्वित्वत्रयमित्येवं पञ्च वैकल्पिकानीत्यर्थः तत्र धढयोर्मस्य च 'अनचि चे'ति द्वित्वविकल्पः। वकारस्य तु 'मय' इति पञ्चमीमाश्रित्य 'यणो मयः' इति द्वित्वविकल्प इति विवेकः । यद्यपि धढयोर्वस्य मस्य च द्वित्वचतुष्टयमिति वक्तुमुचितं, तथापि ढस्य धस्थानिकतया धढयोरेकत्वमभिप्रेत्य 'द्वित्वत्रय'मित्युक्तिः।इत्थमिति।एवंच त्रयाणामेषां लत्वविकल्पे रेफवन्ति त्रीणि,लकारवन्ति त्रीणीति षट् (६)। एषु षट्सु धस्य द्वित्वविकल्पे एकधानि षट् ,द्विधानि च षडिति द्वादश (१२)।तथा रेफवत्सु त्रिषु लकारवत्सु च त्रिषु ढस्य द्वित्वविकल्पे एकढानि षट्, द्विढानि च षडिति द्वादश (१२)। उभयेषामपि द्वादशानां मेलने चतुर्विंशतिः। (२४)।एषु वस्य द्वित्वविकल्पे एकवानि चतुर्विंशतिः,द्विवानि चतुर्विंशतिरित्यष्टाचत्वारिंशत्।(४८)।एषु मस्य द्वित्वविकल्पे एकमान्यष्टाचत्वारिंशत्, द्विमान्यष्टाचत्वारिंशदिति (९६) षण्णवतिरित्यर्थः । लिङ्सिचोरितीति । चिण्वदिडभावपक्षे वलादिलक्षणस्य इटो 'लिङ्सिचो'रिति विकल्पितत्वात्तदभावपक्षे 'उश्चे'ति सिचः कित्त्वाद्गुणाऽभावे ॠत इत्त्वे रपरत्वे 'हलि चे'ति दीर्घे रेफादिणः परत्वात् 'इणः षीध्व'मिति नित्यं ढत्वे अगीर्ढ्वमिति रूपमित्यर्थः । ढवमानामिति । ढस्य 'अचो रहाभ्या'मिति द्वित्वविकल्पे एकढं द्विढमिति द्वे रूपे । तयोर्वस्य 'यणो मयः' इति द्वित्वविकल्पे एकवे द्वे, द्विवे द्वे इति चत्वारि (४) । एषु चतुर्षु मस्य 'अनचि चे'ति द्वित्वविकल्पे एकमानि चत्वारि, द्विमानि चत्वारीत्यष्टौ (८) रूपाणीत्यर्थः । षण्णवत्येति । उक्तषण्णवत्या अष्टानां मेलने सति या सङ्ख्या सिध्यति सा चतुरुत्तरशतसङ्ख्या (१०४) उक्तेति ज्ञेयमित्यर्थः। उक्तप्रक्रियां श्लोकेन सङ्गृह्णाति–इट्दीर्घ इत्यादिना । वलादिलक्षण इट् , 'वृतो वे'ति दीर्घः। अजन्तलक्षणश्चिण्वदिट् , 'अचि विभाषे'ति लत्वं, 'विभाषेट' इति वा ढत्वं, धढवमानां द्वित्वत्रिकमित्यष्टानां विकल्पाच्चतुरधिकं शतं रूपाणीत्यर्थः । 'शम्यते मोहो मुकुन्देने'त्यत्र प्रक्रियां दर्शयति–हेतुमण्ण्यन्तादिति । शमधातोर्हेतुमण्णौ उपधावृद्धौ अमन्तत्वेन मित्त्वाद्ध्रस्वे शमीत्यस्मात्कर्मणि लः, नतु भावे, हेतुमण्ण्यन्तस्य सकर्मकत्वनियमादिति भावः । यगिति । तङि कृते 'सार्वधातुके य'गित्यनेने'ति शेषः । णिलोप इति । 'णेरनिटीत्यनेने'ति शेषः । लुटि तासि शमि इ ता इति स्थिते अमन्तत्वेन मित्त्वान्मित्यमुपधाह्रस्वे प्राप्ते–चिण्णमुलोः। 'दोषो णौ' इत्यतो णाविति, 'ऊदुपधाया गोहः' इत्यस्मादुपधाया इति, 'मितां ह्रस्वः' इत्यतो मितामिति चानुवर्तन्ते । तदाह–चिण्परे इत्यादिना । नन्विह दीर्घग्रहणं व्यर्थं, 'चिण्णमुलोरन्यतरस्या'मित्येतावतैव 'मितां ह्रस्वः' इते पूर्वसूत्रादनुवृत्तस्य ह्रस्वस्य विकल्पे दीर्घविकल्पस्य सिद्धेरित्यत आह–प्रकृत इत्यादि । कुत इत्यत आह–ण्यन्ताण्णाविति । शमधातोर्ण्यन्ताण्णौ पूर्वणेर्लोपे लुटि तासि

बो.]विभाषे'त्यनेन, ढत्वं–'विभाषेटः' इत्यनेन।द्वित्वत्रयम्–मस्य, ढधयोश्च 'अनची'ति,वस्य 'यणो यमः' इति–त्रयम्।

दीर्घविधौ हि णिचो लोपो न स्थानिवदिति दीर्घः सिध्यति । ह्रस्वविधौ तु स्थानिवत्त्वं दुर्वारम् । भाष्ये तु 'पूर्वत्राऽसिद्धे न स्थानिव'दित्यवष्टभ्य द्विर्वचनसवर्णाऽनुस्वारदीर्घजश्चरः प्रत्याख्याताः । णाविति जातिपरो निर्देशः । [दीर्घग्रहणं चेदं मास्त्विति तदाशयः] । शामिता । शमिता । शमयिता । शामिष्यते । शमिष्यते । शमयिष्यते ॥ यङन्ताण्णिच् । शंशम्यते । शंशामिता । शंशमिता । शंशमयिता । यङ्लुगन्ताण्णिच्यप्येवम् । भाष्यमते तु यङन्ताच्चिण्वदिटि दीर्घो नास्तीति विशेषः, ण्यन्तत्वाऽभावे-

त.]लोपस्य स्थानिवत्त्वेन व्यवधानादिति भावः। **दीर्घः सिध्यतीति** । 'न पदान्ते'ति निषेधादित्यर्थः। ननु त्रिपादीस्थे दीर्घे कर्तव्ये स्थानिवत्त्वाऽभावः 'पूर्वत्राऽसिद्ध'मित्यनेनैव सिद्ध इति दीर्घग्रहणस्योपयोगाऽभावेऽपि ण्यन्ताण्णौ 'चिण्णमुलो'रिति दीर्घे कर्तव्ये स्थानिवद्भावनिवारणाय दीर्घग्रहणमावश्यकमित्यत आह–**जातिपरो निर्देश इति । इदं मास्त्विति**। ह्रस्वविकल्पेनाऽपीष्टं सिध्यतीति भावः। वस्तुतस्तु 'चिण्णमुलो'रिति सूत्रे दीर्घग्रहणं कर्तव्यमेव। तथाहि–'हेडृ अनादरे' घटादिः । मितां ह्रस्वे कर्तव्य एच इक् । हिडयति । अत्र चिण्णमुलोः कृतयोर्ह्रस्वे विकल्प्यमाने अहिडि अहेडि इति स्यात् । दीर्घे तु–अहिडि अहीडीति भवति। एतच्चात्रैव सूत्रे कैयटे स्पष्टम् । **शंशामितेत्यादि**। चिणि–अशंशमि।अशंशामि।णमुलि,–शंशमं-शंशमं। शंशामं-शंशाममित्यादि द्रष्टव्यम्।**दीर्घोनास्तीति**। यङोऽल्लोपस्य स्थानिव-

वा.]ण्यन्तस्याऽजन्तत्वाच्चिण्वदिटि तस्याऽऽभीयत्वेनाऽसिद्धतया 'अनिटी'ति निषेधाऽभावाण्णिलोपे दीर्घविकल्पे सति शमिता शामितेति रूपद्वयमिष्यते । ह्रस्वविकल्पस्य विधौ तु ह्रस्वविकल्पो न स्यात्, प्रथमणिलोपस्य 'अचः परस्मि'न्निति स्थानिवत्त्वेन व्यवहिततया चिण्परकणिपरकत्वाऽभावादित्यर्थः । दीर्घविकल्पविधौ तु न दोष इत्याह–**दीर्घविधाविति** । दीर्घविकल्पविधौ हि प्रथमस्य णिचो लोपो न स्थानिवत्, दीर्घविधौ स्थानिवत्त्वनिषेधात्, अतोऽत्र दीर्घविकल्पः सिध्यति । ह्रस्वविधौ तु प्रथमणिलोपस्य स्थानिवत्त्वं दुर्वारं, तत्र स्थानिवत्त्वनिषेधाऽभावादित्यर्थः । **भाष्ये त्विति** । न पदान्तसूत्रस्थभाष्ये तु 'पूर्वत्राऽसिद्धे न स्थानिव'दित्येव सिद्धत्वान्न पदान्तसूत्रे द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः प्रत्याख्याताः । 'सुद्ध्युपास्य' इत्यत्र 'अनचि चे'ति द्विर्वचनस्य, शिण्ढीत्यत्र 'नश्चे'त्यनुस्वारस्य, 'अनुस्वारस्य ययी'ति परसवर्णस्य च, प्रतिदीव्न इत्यत्र 'हलि चे'ति दीर्घस्य, सग्धिरित्यत्र 'झलां जश् झशी'ति जश्त्वस्य, जक्षतुरित्यत्र 'खरि चे'ति चर्त्वस्य च पूर्वत्राऽसिद्धीयत्वादित्यर्थः। ननु ण्यन्ताण्णौ 'चिण्णमुलो'रिति दीर्घे कर्तव्ये प्रथमणिलोपस्य स्थानिवत्त्वं दुर्वारम्, 'चिण्णमुलोः' इति दीर्घस्य पूर्वत्रासिद्धीयत्वाऽभावात् । ततश्च प्रथमणिचा व्यवहितत्वाद्दीर्घोऽनापत्तिः।एवंच तत्र दीर्घे कर्तव्ये स्थानिवत्त्वनिवारणाय दीर्घग्रहणस्यावश्यकत्वात्कथं दीर्घग्रहणप्रत्याख्यानमित्यत आह–**णावितीति** । 'चिण्णमुलो'रिति दीर्घविधौ चिण्परे णमुल्परे च 'णौ' इत्यत्र णाविति णित्वजातिप्रधानो निर्देशः। चिण्णमुल्परकणित्वजातौ परत इति लभ्यते। णित्वजातिश्च णिद्वयेऽस्तीति प्रथमणेः स्थानिवत्त्वेऽपि दीर्घो निर्बाध इति 'न पदान्त'सूत्रे दीर्घग्रहणप्रत्याख्यानभाष्यस्याशय इत्यर्थः । **शामिता शमितेति** । शमधातोर्ण्यन्ताल्लुटि तासि चिण्वदिटि दीर्घविकल्पः। **शमयितेति** । चिण्वत्त्वाऽभावे वलादिलक्षणे इटि रूपम्।**यङन्तादिति**।शमधातोर्यङि शंशम्येत्येतस्माद्धेतुमण्णौ 'यस्य हलः' इति यकारलोपे अतो लोपे शंशमीत्यस्मात्कर्मलकारे णिलोपे 'शंशम्यते' इति रूपमित्यर्थः। **शंशामिता शंशमितेति** । 'चिण्णमुलो'रिति दीर्घविकल्पः । **शंशमयितेति** । चिण्वत्त्वाऽभावे वलादिलक्षणे इटि रूपम् । **भाष्यमते त्विति** । 'न पदान्त'सूत्रे दीर्घग्रहणप्रत्याख्यानपरभाष्यमते त्वित्यर्थः । **यङन्तादिति** । 'ण्यन्ता'दिति शेषः । यङन्ताण्णिचि यलोपे अल्लोपे च

शे.]ढवमानामिति।'अचो रहाभ्यां' 'यणो मयः' 'अनचि चे'त्येतैः। **न स्थानिवदिति**।आभीयाऽसिद्धत्वन्तु न, व्याश्रयत्वादिति भावः । **भाष्ये त्विति** । 'नपदान्त' सूत्रस्थे' इत्यादिः। नन्वेवं ण्यन्ताण्णौ दीर्घविकल्पाऽनापत्तिर्व्यवधानादत आह–**णावितीति** । 'नपदान्त'सूत्रस्थभाष्यापेक्षया प्रकृतसूत्रस्थं 'णिज्व्यवेतानां यङ्लोपे चोपसङ्ख्यान'मिति वार्त्तिकस्य स्थानिवत्त्वनिषेधेन प्रत्याख्यानपरं भाष्यं दुर्बलं,प्रकारान्तरेणाऽपि प्रत्याख्यानसम्भवादित्य**भिमानः**। प्रकृतसूत्रस्थे, 'कर्मणि'ङिति सूत्रस्थे च भाष्ये'ऽत्रापि दीर्घे स्थानिवत्त्वनिषेधः। अत एव दीर्घग्रहणचरितार्थ'मित्युक्तं,तत्प्रामाण्यात् 'वरे-यलोपस्वरवर्जन्द्विर्वचनादीनि न कर्तव्यानी'ति वार्तिके वर्ज्यकोटौ दीर्घोऽप्युपलक्षणीयः । हेडधातुश्च घटादावसांप्रदायिकः, ण्याकृतिनिर्देशस्य वक्तुमशक्यत्वञ्चोपपादितं प्राक्। किं च मिच्यो यङ्लुक्सत्त्वे वार्तिकवैयर्थ्यापत्त्या तदनभिधानावश्यकत्वेन 'यङ्लोपे चे'त्यंशस्य प्रत्याख्यानाऽसम्भवः । 'दीर्घे न स्थानिव'दित्यंशस्यापादिकपर इत्यभिमानेन वचनारम्भः,तदभिमानत्यागेन भाष्यकृत उत्तरमिति न मे कश्चिद्दोषः । **तदाशय इति** । नपदान्त' सूत्रभाष्याशय इत्यर्थः । **निर्देश इत्युत्तरं** 'दीर्घग्रहणञ्चेदं मास्त्वि'त्यपाठः। हेडेर्घटादौ पठिताच्चिणि 'अहिडि' 'अहीडी'ति रूपार्थन्तत्सत्त्वात् । ह्रस्वविकल्पे तु 'अहेडी'ति स्यात् । इदं कैयटादौ स्पष्टम् । भाष्यरीत्या तु स्थानिवत्त्वनिषेधायैव दीर्घग्रहणमावश्यकमित्याहुः । **शामि-**

शम्यते मुनिना । **नोदात्तोपदेशस्य मान्तस्याऽनाचमेः** ।७।३।३४। उपधाया वृद्धिर्न स्याच्चिणि ञ्णिति णिति कृति च । अशमि । अदमि । उदात्तोपदेशस्येति किम् ? । अगामि । मान्तस्य किम् ? । अवादि । अनाचमेः किम् ? । आचामि । ***** **अनाचमिकमिवमीनामिति वक्तव्यम्** । चिणि 'आयादयः' इति णिङभावे–अकामि । णिङ्णिचोरप्येवम् । अवामि । वध हिंसायाम् । हलन्तः । 'जनिवध्यो'रिति न वृद्धिः । अवधि । 'जाग्रोऽविचिण्णल्ङित्सु' इत्युक्तेर्न गुणः–अजागारि । **भञ्जेश्च चिणि** ।६।४।३३। नलोपो वा स्यात् । अभाजि । अभञ्जि । **विभाषा चिण्णमुलोः** ।७।१।६९। लभेर्नुमागमो वा स्यात् । अलम्भि–अलाभि । व्यवस्थितविकल्पत्वात्प्रादेर्नित्यं नुम् । प्रालम्भि । द्विकर्मकाणां तु–'**गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्व-**

त.]त्त्वेन णिच्परत्वाऽभावादुपधादीर्घस्योपधावृद्धेश्चाऽप्रवृत्तेः।तथा च फलभेदाद्दीर्घग्रहणप्रत्याख्यानं न युज्यत इति भावः। **शम्यते मुनिनेति।** अकर्मकत्वाद्भावे लः । **नोदात्तोपदेशस्य । ञ्णिति कृति**–शमः। दमः। घञ् । **णिति कृति** शमकः । दमकः। ण्वुल्। उपदेशे इति किम् ?। शमी। दमी। इह घिनुणि कृते वर्ज्यमानस्वरेण उदात्तत्वाऽभावान्निषेधो न स्यात् । कथं तर्हि 'हरेर्यदक्रामि पदैककेन ख'मिति श्रीहर्षप्रयोग इति चेत् । अत्राहुः–निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिचि ततश्चिण् बोध्यः । तथा च णिचोऽकृत्त्वाद्वृद्धेर्न निषेधः। 'मिता'मिति ह्रस्वस्तु न भवति, 'वा चित्तविरागे' इत्यतो वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणादिति घटादावुक्तत्वात् । किं च ह्रस्वे जातेऽपि न क्षतिः, 'चिण्णमुलो'रिति दीर्घविकल्पनादिति। कथमड उद्यमे यम उपरमे इति प्रयोगः?। संज्ञापूर्वकविधेरनित्यत्वाद्वृद्ध्यभाव इति ज्ञेयम् । अथवा उद्यमोपरमशब्दौ घञर्थे कविधानाद्बोध्यौ । **णिङ्णिचोरप्येवमिति ।** णिङन्ताण्णिजन्ताद्वा कर्मणिचिणि 'णेरनिटी'ति णिलोपे सति रूपं तुल्यमिति भावः। **विभाषा ।** 'लभेश्चे'त्यतो लभेरिति वर्तते। णमुलि–लम्भंलम्भम्। लाभंलाभम् । प्रादेस्तु–प्रलम्भंप्रलम्भमित्येव । अथ ये द्विकर्मकास्तेषु लकृत्यक्तखलर्थाः किं मुख्ये कर्मणि, उत गौणे, किं वोभयोरिति संदेहे व्यवस्थामाह–

बा.]कृते 'शंशमी'त्यस्माल्लुटि तासि चिण्वदिटि कृते तस्याऽसिद्धत्वाण्णिलोपे 'शंशमिते'त्यत्र अल्लोपस्य स्थानिवत्त्वेन णिच्परकत्वाऽभावात् 'चिण्णमुलो'रिति दीर्घो नास्ति,भाष्यमते 'न पदान्त'सूत्रे दीर्घग्रहणाऽभावेन स्थानिवत्त्वनिषेधाऽभावादित्यर्थः । **शम्यते मुनिनेति ।** अकर्मकत्वाद्भावे ल इति भावः। **नोदात्तोपदेशस्य ।** 'मृजेर्वृद्धि'रित्यतो वृद्धिरिति, 'अत उपधायाः' इत्यत उपधाया इति, 'अचो ञ्णिती'त्यतो ञ्णितीति, 'आतो युक्' इत्यततश्चिण्कृतोरिति चानुवर्तते । तत्र णितीति कृत एव विशेषणं,नतु चिणः,अव्यभिचारात् । तदाह–**उपधाया इत्यादिना।**अनुदात्तोपदेशाः–सङ्गृहीताः। ततोऽन्यः सर्वोऽपि धातुरुदात्तोपदेशः । आङ्पूर्वश्चमिराचमिः, तद्वर्जस्येत्यर्थः । **अशमि अदमीति ।** शमधातोर्दमधातोश्च लुङि चिणि 'अत उपधायाः' इति वृद्धिर्न । **अगामीति ।** गमेरनुदात्तोपदेशत्वादिति भावः । **अवादीति ।** वदधातुर्न मान्त इति भावः । **आचामीति ।** 'अनाचमे'रित्युक्तेरिह नोपधावृद्धिनिषेधः । **अनाचमिकमिवमीनामिति ।** आचमिकमिवमिवर्जानामित्यर्थः । एवं च कमिवम्योरपि न निषेध इति फलितम् । ननु कर्मणिङन्तत्वात्केवलस्य तस्य चिणादौ प्रयोग एव नास्तीत्यत आह–**चिण्यायादय इति । णिङ्णिचोरप्येवमिति ।** णिङन्ताण्णिजन्ताद्वा कर्मणिचिणि णिलोपे सति पूर्ववद्रूपं शिष्यते इत्यर्थः । ननु 'जनिवध्योश्चे'ति वधेरुपधावृद्धिनिषेधो व्यर्थः, वधादेशस्याऽदन्ततया अल्लोपस्य स्थानिवत्त्वादेव अवधीत्यादौ उपधावृद्ध्यभावसिद्धेरित्याशङ्क्य वधिर्धात्वन्तरं हलन्तमेव 'जनिवध्योश्चे'त्यत्र गृह्यत इत्यभिप्रेत्य आह–**वध हिंसायां हलन्त इति । भञ्जेश्च चिणि ।** 'श्नान्नलोपः' इत्यतो नेति लुप्तषष्ठीकं, लोप इति चानुवर्तते । 'जान्तनशां विभाषा' इत्यतो विभाषेति मत्वा शेषं पूरयति–**नलोपो वा स्यादिति। अभाजीति ।** नलोपपक्षे उपधावृद्धिः । **विभाषा चिण्णमुलोः ।** 'लभेश्चे'त्यतो लभेरिति, 'इदितो नु'मित्यतो नुमिति चानुवर्तते इति मत्वा शेषं पूरयति–**लभेर्नुमागमो वेति ।** ननु प्रालम्भि उपालम्भीत्यादौ उपसर्गपूर्वस्यापि लभेर्नुम्विकल्पः स्यादित्यत आह–**व्यवस्थितेति ।** प्रादेरुपसर्गात्परस्य लभेर्नित्यं नुम् , अनुपसर्गात्परस्य तु लभेर्विभाषा नुमिति व्यवस्थितविकल्पाश्रयणादुपसर्गपूर्वस्य लभेर्नित्यं नुमित्यर्थः । 'चिण्णमुलोरनुपसर्गस्ये'ति वार्तिकात्, भाष्ये 'उपसर्गात् खल्घञो'रित्यत उपसर्गादिति 'न सुदुर्भ्यां'मित्यतो नेति चानुवर्त्य उपसर्गात्परस्य लभेः 'विभाषा चिण्णमुलो'रिति नेति व्याख्यातम् । एतेन प्रपूर्वस्य लभेर्नित्यं नुमिति व्याख्यानं परास्तम् । 'लः कर्मणी'ति लकारा

बो.]ष्यत इति। स्यादीनाञ्चिण्वत्त्वाद्दीर्घः। **शम्यते मुनिनेति।**अकर्मकत्वाद्भावे लः। **नोदात्तोपदेश ।** उपदेशेत्यनेन 'शमी'त्यादौ घिनुणि वर्ज्यमानस्वरेणाऽनुदात्तत्वेऽपि निषेधः। **अनाचमीति।** यद्यपि भाष्ये आङ्रहित एव पठ्यते तथापि 'आचामः' इत्येव भाष्ये उदाहरणादाङ्पूर्व एव पर्युदस्यत इति भावः । **विभाषा चि ।** 'लभेश्चे'त्यतो लभेरिति वर्त्तते । प्रादेरित्युपसर्गोपलक्षणं, भाष्यस्वरसात् ।तत्र हि 'उपसर्गात्ख'ल्वित्यत उपसर्गादित्यनुवर्त्य 'न सुदुर्भ्यां'मित्यतो नेति चानुवर्त्योपसर्गात्परस्य लभेर्विभाषा नेति व्याख्यातम्। 'चिण्णमुलोरनुपसर्गस्येति वक्तव्य'मिति वचनमेव वार्त्तिककृता कृतम् ।

हाम्। बुद्धिभक्षार्थयोः शब्दकर्मणां च निजेच्छया। प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः'। गौर्दुह्यते पयः। अजा ग्रामं नीयते। ह्रियते। कृष्यते। उह्यते। बोध्यते माणवकं धर्मः। माणवको धर्ममिति वा। भोज्यते माणवकमोदनः। माणवक ओदनं वा। [पाठ्यते माणवकं वेदः। माणवको वेदमिति वा]। देवदत्तो ग्रामं गम्यते। 'अकर्मकाणां कालादिकर्मकाणां कर्मणि भावे च लकार इष्यते'।

---

त.] द्विकर्मकाणां त्विति। दुह्यादेरिति। दुह्याच्पचिति श्लोके पूर्वार्धोपात्ता द्वादश दुह्यादयस्तेभ्यो गौणे कर्मणि लादयो मता इत्यन्वयः। 'अकथितं चे'ति सूत्रेण यस्य कर्मसंज्ञा तद्गौणम्। 'गतिबुद्धी'ति सूत्रेण ये द्विकर्मकास्तत्र व्यवस्थामाह— बुद्धिभक्षार्थयोरिति। निजेच्छयेति। गौणे वा मुख्ये वा कर्मणीत्यर्थः। इह 'गतिबुद्धी'ति सूत्रेण यस्य कर्मसंज्ञा तद्गौणम्। प्रयोज्येति। अणौ कर्तुणौ कर्मसंज्ञा यस्य तत्प्रयोज्यकर्म। अन्येषामिति। गत्यर्थाऽकर्मकहृक्रोतीनाम्। लादय इति। कृत्यक्तखलर्था आदिशब्देन ग्राह्याः। गौर्दुह्यते इति। 'देवदत्तेने'ति शेषः। कृत्यादिषु गौर्दोग्धव्या।

---

बा.] विहिताः, तथा 'तयोरेव कृत्यक्तखलर्थाः' इति कर्मणि कृत्यादिप्रत्यया वक्ष्यन्ते। ते तावद्द्विकर्मकधातुषु कतरस्मिन् कर्मणि भवन्तीत्यत्र व्यवस्थामाह—द्विकर्मकाणां त्विति। 'कर्मप्रत्ययव्यवस्था वक्ष्यते' इति शेषः। तां व्यवस्थां सार्द्धश्लोकेन दर्शयति—गौणे कर्मणीत्यादिना। दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषां गौणे कर्मणि लादयो मता इत्यन्वयः। 'अकथितं चे'ति सूत्रेण यस्य कर्मसंज्ञा तद्गौणं कर्मेति बोध्यम्। प्रधाने इति। नीहृकृष्वहां प्रधाने कर्मणि लादयो मता इत्यन्वयः। 'अकथितं चे'ति सूत्रादन्येन यस्य कर्मसंज्ञा तत्प्रधानं कर्मेति बोध्यम्। अथ 'गतिबुद्धी'ति सूत्रेण ये द्विकर्मकास्तेषु व्यवस्थामाह—बुद्धीति। बुध्यर्थकस्य भक्षार्थकस्य शब्दकर्मकाणां च प्रधाने वा गौणे वा कर्मणि स्वेच्छया लादयो मता इत्यन्वयः। इह 'गतिबुद्धी'त्यनेन यस्य कर्मसंज्ञा तद्गौणं कर्म। तदितरत्तु प्रधानं कर्म। प्रयोज्येति। अन्येषां=गत्यर्थानामकर्मकाणां 'हृक्रो'रिति सूत्रोपात्तहृक्रोश्च प्रयोज्यकर्मणि लादयो मता इत्यन्वयः। अयं सार्द्धश्लोकः 'अकथितं चे'ति सूत्रस्थवार्तिकभाष्यसङ्ग्रह इति बोध्यम्। गौर्दुह्यते पय इति। 'गोपेने'ति शेषः। अत्र गोरप्रधानकर्मत्वात्तस्मिन् कर्मणि लकारः। तिङाऽभिहितत्वाद्गोः प्रथमा। प्रधानकर्मत्वात्पय इति द्वितीयान्तं, तस्य तिङाऽनभिहितत्वात्। बलिर्याच्यते वसुधाम्। अविनीतो विनयं याच्यते। तण्डुला ओदनं पच्यन्ते। गर्गाः शतं दण्ड्यन्ते। व्रजो रुध्यते गाम्। माणवकः पन्थानं पृच्छ्यते। वृक्षोऽवचीयते फलानि। माणवको धर्ममुच्यते, शिष्यते वा। शतं जीयते देवदत्तः। सुधां क्षीरोदधिर्मथ्यते। देवदत्तः शतं मुष्यते। एतेषु गौणकर्मणि लकारः। अथ 'प्रधाने नीहृकृष्वहा'मित्यत्रोदाहरति—अजा ग्रामं नीयते इत्यादि। प्रतिक्रियमजा ग्राममित्यन्वेति। उह्यत इत्यत्र वहतेर्यजादित्वात्संप्रसारणम्। अत्र अजायां प्रधानकर्मणि लकारः, ग्रामस्याऽनभिहितत्वाद्द्वितीया। बुध्यर्थस्योदाहरति—बोध्यते माणवकं धर्मः, माणवको धर्ममिति वेति। 'गुरुणे'ति शेषः। अत्र माणवके गौणकर्मणि, धर्मे वा प्रधानकर्मणि ण्यन्ताल्लकारः। भक्षार्थस्य तु अश्यन्ते देवा अमृतं हरिणा, अश्यतेऽमृतं देवानिति वा उदाहार्यम्। शब्दकर्मकस्य तु वेदोऽध्याप्यते विधिं हरिणा, वेदमध्याप्यते विधिरिति वेत्युदाहार्यम्। यदुक्तं 'गत्यर्थानामकर्मकाणां हृक्रोश्चेत्येतेषां प्रयोज्यकर्मणि लकार' इति। तत्र गत्यर्थस्योदाहरति—देवदत्तो ग्रामं गम्यते इति। 'यज्ञदत्तेने'ति शेषः। अत्र प्रयोज्यकर्मणि देवदत्ते गमेर्ण्यन्ताल्लः। ननु अकर्मकाणां ण्यन्तानां प्रयोज्यकर्मण्येव लादय इति व्यवस्था व्यर्था। तत्र प्रयोज्यं विना अन्यस्य कर्मणोऽभावादित्याशङ्क्य 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्य'मिति वार्तिकेन अकर्मकधातूनामपि देशकालादिकर्मत्वेन ण्यन्तानां तेषां द्विकर्मकतया प्रयोज्यकर्मण्येव तत्र लादय इति व्यवस्था प्रयोजनवतीत्यभिप्रेत्य 'मासमास्यते माणवक' इति ण्यन्ते प्रयोज्यकर्मणि माणवके एव लो, नतु मासे कर्मणीत्युदाहरिष्यते। एवं तर्हि अण्यन्तेऽकर्मकेषु 'मासमास्यते देवदत्तेने'ति भावे लकारो न स्यात्, 'सकर्मकेभ्यः कर्मणि कर्तरि च ल' इति नियमात्। 'मास आस्यते देवदत्तेने'त्येव कर्मणि मासे लकारः स्यादित्याशङ्क्य आह—अकर्मकाणामित्यादि। ये अकर्मकाः 'कर्तुरी-

---

शे.] द्विकर्मकेषु लादीनां व्यवस्थामाह—द्विकर्मकाणान्त्विति। 'दुह्यादे'रित्यनेन 'अकथितञ्चे'ति सूत्रविषयाणां ग्रहणम्। प्रधाने इति। एतेन तेषां दुह्यादिपाठोऽसङ्गत इति दर्शितम्। अन्येषाम्—गत्यर्थाऽकर्मकहृक्रोतीनाम्। एतद्वाचनिकमेव। स्पष्टं चेदम् 'अकथितञ्चे'ति सूत्रे भाष्ये। एतदप्यनेकसन्निधौ। तदभावे तु मुख्येऽपि भवति 'गवा दोग्धव्यं पयः' इत्यादि। तदुक्तम् 'अकथितञ्चे'ति सूत्रे भाष्ये—'गुणकर्मणि लादिविधिः सपरे ध्रुवचेष्टितयुक्तिषु चाप्यगुणे'। अपर आह—प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्। अप्रधाने दुहादीनां, ण्यन्ते कर्तुश्च कर्मणः'। इति। उत्तरमते—आद्यार्द्धे नयतिस्तुर्यपादे[चे]गमिरुदाहृतः। अकर्मकाणामिति। 'लः कर्मणी'ति सूत्रे निर्णीतमेतत्। इति भावकर्मप्रक्रिया।

मासो मासं वा आस्यते देवदत्तेन । णिजन्तात्तु प्रयोज्ये प्रत्ययः। मासमास्यते माणवकः। इति भावकर्मप्रक्रिया।

## अथ तिङन्ते कर्मकर्तृप्रक्रिया ।

यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते, स्वव्यापारे स्वतन्त्रत्वात् । तेन पूर्वं करणत्वादिसत्त्वेऽपि संप्रति कर्तृत्वात्कर्तरि लकारः । साध्वसिश्छिनत्ति । काष्ठानि पचन्ति । स्थाली पचति । कर्मणस्तु कर्तृत्वविवक्षायां प्राक्सकर्मका अपि प्रायेणाऽकर्मकाः, तेभ्यो भावे

---

त.]दोह्नीया पयः। गौः सुदोहा दुर्दोहा पयः। अजा ग्रामं नेतव्या । नयनीया। हर्तव्या। हरणीया । अजा ग्रामं नेया इत्याद्युदाहर्तव्यम् । **ग्रामं गम्यत इति**। 'यज्ञदत्तेने'त्यध्याहारः । **माणवक इति** । अयं प्रयोज्यः कर्ता । देवदत्तेनेति प्रयोजकस्त्वध्याहर्तव्यः । **इति भावकर्मप्रक्रिया ।**

**कर्मणस्त्विति** । सौकर्यातिशयं द्योतयितुमित्यनुषङ्गः। **प्रायेणेति** । ये भिदिच्छिदिप्रभृतय एककर्मकास्ते अकर्मका ये तु द्विकर्मकास्ते सकर्मका इति भावः। अकर्मकत्वस्य फलमाह-**भावे कर्तरि चेति** । 'भावे चाऽकर्मकेभ्य'

---

बा.]प्सिततमं कर्म','तथायुक्तं चानीप्सित'मिति सूत्रसिद्धकर्मरहिताः'आस उपवेशने','वृतु वर्तने' इत्यादयः,तेषाम् 'अकर्मकधातुभिर्योगे' इति वार्तिकसिद्धकर्मणां कर्मणि भावे च लकार इष्यते इत्यर्थः । न चेदं वार्तिकमिति भ्रमितव्यं, भाष्ये अदर्शनात् । किंतु न्यायमूलकमेव, अकर्मकधातुभिर्योगे देशकालादीनां कर्मसंज्ञाविकल्पस्य भाष्याद्यभिमतत्वात् । यथा चैतत्तथा कारकाधिकारे 'अकर्मकधातुभिर्योगे' इति वचनव्याख्यावसरे अवोचाम । तदाह-**मासो मासं वा आस्यते देवदत्तेनेति** । अत्र मासस्य कर्मत्वपक्षे कर्मणि लकारः, मासस्याऽभिहितत्वात्प्रथमा। मासस्य कर्मत्वाऽभावपक्षे तु भावे लकारः । मास इति सप्तमी । मासमिति त्वपपाठः । अथ प्रकृतमनुसरति-**णिजन्तात्त्विति** । आसधातो प्रकृतिसिद्धकर्मरहितत्वेन अकर्मकाण्णौ मासस्य कर्मत्वपक्षेऽपि प्रयोज्यकर्मण्येव लकार इत्यर्थः। **मासमास्यते माणवक इति।** ण्यन्तात्प्रयोज्यकर्मणि माणवके लः । मासस्याऽनभिहितत्वाद्द्वितीया । हृक्रोस्तु हार्यते कार्यते वा भृत्यः कटं देवदत्तेन ।

**इति भावकर्मप्रक्रिया ।**

अथ कर्मकर्तृप्रक्रियां निरूपयिष्यन्कर्मणः कर्तृत्वं साधयितुमाह-**यदेति**।'फलव्यापारयोर्धातु'रिति सिद्धान्तः। पचिर्हि विक्लित्यनुकूलव्यापारे वर्तते। तत्र विक्लित्तिः फलम्।तदाश्रय ओदनं कर्म।तदनुकूलो व्यापारः-अधिश्रयणादिःपुरुषप्रयत्नरूपो व्यापारः । तत्राधिश्रयणं चुल्ल्या उपरि तण्डुलयुक्तस्थाल्याः स्थापनम् । स्थापनं स्थित्यनुकूलव्यापारः । तत्र स्थितिः स्थालीतण्डुलनिष्ठा । तदनुकूलः पुरुषचेष्टाविशेषः। धातूपात्तव्यापाराश्रयः पुरुषः कर्ता, स्वतन्त्रत्वात् । स्वातन्त्र्यं प्राधान्यमिति भाष्यम् । कर्मकरणादिकं तु पुरुषप्रयत्नपरतन्त्रत्वान्न कर्तृत्वं लभते इति स्थितिः। तत्र यदा सौकर्यातिशयविवक्षया कर्तुः पुरुषस्य व्यापारः प्रयत्नो न विवक्ष्यते, किंतु कर्मादिगत एव व्यापारो विक्लित्यादिफलानुकूलत्वेन विवक्ष्यते तदा कर्मादिकारकाण्यपि कर्तृसंज्ञां लभन्ते इत्यर्थः ।-ननु कर्मादिगतव्यापारस्य पुरुषप्रयत्नाधीनत्वादस्वतन्त्रत्वात्कथं कर्मणः कर्तृत्वमित्यत आह-**स्वव्यापारे स्वतन्त्रत्वादिति** । स्वातन्त्र्येण विवक्षितत्वादित्यर्थः । तदुक्तं 'कर्मवत्कर्मणे'त्यत्र भाष्ये-'कर्मकर्तरि कर्तृत्वं स्वातन्त्र्यस्य विवक्षितत्वात्' इति । अत्र कर्मग्रहणं करणादिकारकस्याप्युपलक्षणम् । **तेनेति** । असिना छिनत्तीत्यादिप्रयोगदशायामसिकुठारादीनां करणत्वादिसत्त्वेऽपि, 'असिश्छिनत्ती'त्यादिप्रयोगदशायां कर्तृत्वेन विवक्षितत्वात्कर्तरि लकार इत्यर्थः। **साध्वसिश्छिनत्तीति** । अत्र करणस्य कर्तृत्वविवक्षा। 'साधु' इति क्रियाविशेषणं सौकर्यातिशयद्योतनाय । अतितैक्ष्ण्यात् पुरुषप्रयत्नविशेषमाघातातिशयं विना स्वयमेव असिश्छिनत्तीत्यर्थः। **काष्ठानि पचन्तीति** । अत्रापि करणानां कर्तृत्वविवक्षा । **स्थाली पचतीति** । अत्राऽधिकरणस्य कर्तृत्वविवक्षा। काष्ठानामतिशुष्कत्वाद्धमनफूत्कारानपेक्षया स्थाल्या अतिलघुत्वादविलम्बश्रपणतया सौकर्यं बोध्यम् । **कर्मणस्त्विति** । ये छिदिभिदिप्रभृतय एककर्मकास्तत्र कर्मणः कर्तृत्वविवक्षायां 'वृक्षश्छिनत्ती'त्यादौ प्राक् सकर्मकत्वेऽपि संप्रति कर्मणः कर्तृत्वविवक्षायामकर्मका एते इत्यर्थः। ये तु द्विकर्मकास्तत्र एकस्य कर्मणः कर्तृत्वविवक्षायामपि इतरेण कर्मणा सकर्मकत्वसत्त्वात्प्रायेणेत्युक्तिः । ततश्च तेषु द्विकर्मकेषु कर्मणि कर्तरि च लकारः । तत्र कर्मणि लकारे यथा-'सुधां क्षीरसागरो मथ्यते' । कर्तरि यथा-'सुधां क्षीरसागरो मथ्नाति' । अथ यदुक्तम्-एककर्मकेषु कर्मणः कर्तृत्वविवक्षायामकर्मकत्वमिति, तस्य प्रयोजनमाह-**तेभ्यो भावे कर्तरि च लकारा इति**। ननु कर्मणि, असंभवात्।

---

शे.] **न विवक्ष्यत इति**। ततत्कारकव्यापारश्च प्रधानधात्वर्थत्वेन विवक्ष्यते इत्यपि बोध्यम्। **कर्मणस्त्विति** । फलसमानाधिकरणतद्व्यापारस्यैव प्राधान्येन विवक्षायामित्यर्थः। **प्रायेणाऽकर्मका इति** । व्यापारव्यधिकरणफलाश्रयस्याऽभावादिति भावः। द्विकर्मकाणां कर्मणः कर्तृत्वविवक्षायामपि सकर्मकत्वात्-**प्रायेणेति** । अकर्मकत्वफलमाह-**तेभ्यो**

कर्तरि च लकाराः । पच्यते ओदनेन । भिद्यते काष्ठेन । कर्तरि तु–। **कर्मवत्कर्मणा तुल्यक्रियः** ।३।१।८७। कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात् । कार्यातिदेशोऽयम् । तेन यगात्मनेपदचिण्चिण्वदिटः स्युः । कर्तुरभिहितत्वात्प्रथमा । पच्यते ओदनः । भिद्यते काष्ठम् । अपाचि । अभेदि । ननु भावे लकारे कर्तुर्द्वितीया

---

त.]इत्युक्तत्वादिति भावः।द्विकर्मकेषु कर्मणः कर्तृत्वविवक्षायामुदाहरणम्–'मथ्नाति सागरोऽमृतं' 'स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी'ति। 'प्रदुग्धे' इत्यत्र 'कर्मवत्कर्मणे'ति प्राप्तस्य 'सकर्मकाणा'मिति निषेधे दुहिपच्योरिति प्रतिप्रसूतस्य यको 'न दुहस्नुनमा'मिति निषेधः । उक्तप्रयोगानुरोधाद्द्विकर्मकेषु गौणस्यैव कर्मणः कर्तृत्वविवक्षा न मुख्यस्येत्याहुः । तच्चिन्त्यम् । 'अजां ग्रामं नयती'त्यत्र मुख्यकर्मणः कर्तृत्वविवक्षादर्शनात्। अत्रेदमवधेयम्–अधिकरणत्वाऽविवक्षायां व्रजो गौणकर्मेति 'रुणद्धि व्रजो गां स्वयमेवे'ति भवति। यदा तु व्रजस्य न कर्मत्वं तदा मुख्यकर्मणोऽपि कर्तृत्वविवक्षा भवति । रुध्यते व्रजे गौः स्वयमेवेति । तथा गोरपादानत्वविवक्षायां गौर्दुह्यते पयः स्वयमेवेत्यादि । **कर्मवत्कर्मणा** । वत्करणं किमर्थम् ?। यथा अब्रह्मदत्ते प्रयुज्यमानो ब्रह्मदत्तशब्दः ब्रह्मदत्तवदित्यर्थं वदति तथा कर्मेत्युच्यमानेऽपि कर्मवदित्यर्थलाभात् । सत्यम् । कर्मणा तुल्यक्रियः कर्ता कर्मेत्युच्यमाने कर्मसंज्ञक इत्यर्थः स्यात्। तथा हि सति अकर्मकव्यपदेशाऽभावाद्भावे लकारो न स्यात्–किं तु कर्मणि स्यात्–'पच्यते ओदनः भिद्यते काष्ठ'मिति । यद्यप्ययं प्रयोगः सिद्धान्ते इष्ट एव तथापि 'पच्यते ओदनेन, भिद्यते काष्ठेने'ति भावे न स्यादिति बोध्यम् । कर्मशब्देनाऽत्र कर्मस्थक्रिया लक्ष्यत इत्याह–**कर्मस्थयेति** । कर्मकारकस्थयेत्यर्थः । 'कर्तरि श'बित्यतः कर्तरीत्यनुवर्त्य प्रथमया विपरिणम्यते । स च विशेष्यस्तदाह–**तुल्यक्रियः कर्तेति**।**कार्यातिदेशोऽयमिति**।यद्यपि शास्त्रातिदेशेऽपि लक्ष्यं सिध्यति तथापि शास्त्रस्यापि कार्यार्थतया मुख्यत्वात्कार्यातिदेश एवाश्रितः । **भावे लकारे इति** । तत्र कर्तुरनभिहितत्वादिति

---

बा.]अत एव 'अकर्मकेभ्यो भावे कर्तरि ल' इत्युक्तमिति भावः। तत्र एककर्मकेभ्यः कर्मणः कर्तृत्वविवक्षायां भावे लकारमुदाहरति–**पच्यते ओदनेनेति** । ओदनकर्तृकः पाक इत्यर्थः। एवं भिद्यते काष्ठेनेत्यपि। यद्यपि पचेर्द्विकर्मकत्वं तथापि तण्डुलानामविवक्षायामेककर्मकत्वं पचेराश्रितम् । **कर्तरि त्विति** । एककर्मकेषु कर्मणः कर्तृत्वविवक्षायां कर्तरि लकारे विशेषो वक्ष्यते इत्यर्थः । **कर्मवत्कर्मणा** । 'कर्तरि श'बित्यतः कर्तरीत्यनुवृत्तं प्रथमया विपरिणम्यते । तुल्या क्रिया यस्य स तुल्यक्रियः कर्ता । 'कर्मणे'त्यनेन कर्मकारकस्था क्रिया विवक्षिता, क्रियायाः कर्मकारकेण तुल्यत्वस्य तत्स्थक्रियामादायैव उपपाद्यत्वात् । तदाह–**कर्मस्थयेत्यादिना** । कर्मणः कर्तृत्वेन विवक्षायां कर्ता कर्मवदिति यावत् । वत्करणाऽभावे तु कर्मसंज्ञक इत्यर्थशङ्का स्यात्। तथा सति सकर्मकत्वात्पच्यते ओदनेन भिद्यते काष्ठेनेति भावे लो न स्यात्। **कार्यातिदेशोऽयमिति** । यद्यपि शास्त्रातिदेशे कार्यातिदेशे वा न फलभेदः,तथापि शास्त्रातिदेशस्यापि कार्यातिदेशार्थत्वान्मुख्यत्वात्कार्यातिदेश एवाश्रयणीय इत्यर्थः । **तेनेति** । 'स्यु'रित्यत्रान्वेति। कर्मवत्त्ववचनेन कर्मकार्याणि 'सार्वधातुके य'गिति यक्, 'भावकर्मणो'रित्यात्मनेपदम्, 'चिण् भावकर्मणो'रिति चिण्, 'स्यसिच्सीयुट्तासिषु' इति चिण्वत्त्वं, तत्संनियोगशिष्ट इट् च स्युरित्यर्थः।कर्मणः कर्तृत्वविवक्षायां कर्तरि विहितानि शास्त्राण्येव न स्युरिति भावः।**कर्तुरिति**। कर्मणः कर्तृत्वविवक्षायां कर्तरि लकारे सति तदादेशतिङा कर्तुरभिहितत्वादित्यर्थः । **पच्यते ओदन इति** । फूत्कारादिपुरुषश्रमातिशयविशेषं विना विक्लित्त्याश्रयो भवतीत्यर्थः। **भिद्यते काष्ठमिति** । कुठारादिदृढाघातं पुरुषश्रमं विना द्विधा भवतीत्यर्थः । अत्र कर्मणः कर्तृत्वेऽपि कर्मत्वाऽतिदेशाद्यक् । **अपाचि अभेदीति** । अत्र कर्मवत्त्वाच्चिण् । ननु कर्मणः कर्तृत्वविवक्षायां भावलकारे पच्यते ओदनेन, भिद्यते काष्ठेनेत्यत्र कर्मकर्तुस्तिङाऽनभिहितत्वाद्द्वितीया स्यात्, कर्मवत्त्वातिदेशादित्याशङ्कते-**नन्विति** । परिहरति–**नेति** । नायमाक्षेप उन्मिषतीत्यर्थः । कुत इत्यत आह–**लकार-**

---

शे.]**भावे इति**। क्रियायाः कर्मणा साधनेन तुल्यत्वाऽसम्भवात्कर्मशब्दस्तत्स्थक्रियालक्षकः 'मञ्चाः क्रोशन्ती'तिवत्। 'तुल्यक्रिय' इति बहुव्रीहिः। एकरूपयोरपि क्रिययोः कर्तृकर्मावस्थाभेदेनौपाधिकभेदारोपेण तुल्यत्वं संपाद्यम् । 'कर्तरि श'बित्यतः कर्तरीत्यनुवर्त्य प्रथमया विपरिणम्यत इत्याह–**कर्तेति** । कर्मसञ्ज्ञक इत्यर्थशङ्कावारणाय वतिः । तादृशेऽर्थे हि सकर्मकत्वाद्भावे लो न स्यात् । **कार्यातिदेश इति** । प्राधान्यादिति भावः । न च कार्यातिदेशेऽप्यतिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इति भाष्यसम्मते पक्षे परत्वाच्छप्परस्मैपदे एव स्यातां न तु यगात्मनेपदे इति वाच्यम्, 'न दुहस्नुनमां यक्चिणौ' 'कुषिरञ्जोः' इत्याद्यारम्भसामर्थ्येन परमपि बाधित्वा तयोरतिदेशात्, तदाह–**तेनेत्यादि** । **द्वितीया स्यादिति** । न च पूर्वोक्तरीत्या परत्वाद्द्वितीयां बाधित्वा तृतीयैव स्यादिति वाच्यं, द्वितीयेतिक्तादीनामुपलक्षणम् । अतएव भाष्ये क्तादीनामेवोपादनं कृतम् । कार्यातिदेशमते मूलमित्यन्ये । अत्राऽरुचिस्तु कार्यातिदेशेऽप्युपदेशदेश एवेतिपूर्वोक्तौ । अतिदेशेन स्वनिष्ठाऽकर्मकत्वस्य निवारणेन भावे लो न स्यादिति न शङ्कितम् ।

स्यादस्मादतिदेशादिति चेन्न, लकारवाच्य एव कर्ता कर्मवत्। 'व्यत्ययो बहुलल्ँल्लिङ्याशिष्य'ङ्ङिति द्विलकार-काल्ल इत्यनुवृत्तेः। भावे प्रत्यये च कर्तुर्लकारेणाऽनुपस्थितेः। अतएव कृत्यक्तखलर्थाः कर्मकर्तरि न भवन्ति, किं तु भावे एव। भेत्तव्यं कुसूलेन। ननु पचिभिद्योः कर्मस्था क्रिया विक्लित्तिर्द्विधाभवनं च, सैवेदानीं कर्तृस्था न तु तत्तुल्या। सत्यम्। कर्मत्वकर्तृत्वावस्थाभेदोपाधिकं तत्समानाधिकरणक्रिय[ा]भेदमाश्रित्य व्यवहारः।

---

त.]भावः। द्विलकारकादिति। 'व्यत्ययो बहुलल्ँ-ल्लिङ्याशिष्य'ङ्ङिति संहितया पाठेऽनुस्वारस्य परसवर्णेन जाते लकारे तस्योपरि लद्वयमित्यर्थः। तेन 'लकारवाच्यः कर्ता कर्मव'दित्यर्थलाभाद्यगादिकमेव भवति न तु द्वितीयेत्यभिमतसिद्धिः। यत्र लकारवाच्यः कर्ता तत्रैव कर्मवत्त्वमिति व्युत्पादनस्य फलमाह-अतएवेति। न भवन्तीति। लकारेणैव कर्मकर्तु-रुपस्थानात्कृत्यादीनां प्रसक्तिर्नास्ति, उक्तार्थानामप्रयोगात्। लविधेः पूर्वं तु सुतरां नास्ति, लकारोपस्थाप्यकर्तुरभावेन कर्म-त्वाऽभावादिति भावः। अत्रेदं बोध्यं-'कृत्यक्तखलर्था' इत्यत्र क्तग्रहणं त्यक्तुमुचितं, तस्य कर्मकर्तरि इष्टत्वात्-'भिन्नः कुसूलः स्वयमेवे'ति। वक्ष्यति च स्वयमपि-'सिनोतेर्ग्रासकर्मकर्तृकस्ये'ति वार्तिके-'सिनो ग्रासः स्वयमेवे'ति। ननु 'गत्य-र्थाऽकर्मके'त्यत्राऽविवक्षितकर्माणोऽकर्मका इति न गृह्यन्ते,दत्तवान् पक्ववानित्यर्थे दत्तः पक्व इत्यापत्तेरिति चेत्। अत्राहुः-'सिनोतेर्ग्रासकर्मकर्तृकस्ये'ति निष्ठातकारस्य नकारविधानसामर्थ्यादविवक्षितकर्माणोऽपि क्वचिद्गृह्यन्ते। अन्यथा निष्ठातकार-स्तत्र न लभ्येत, तेन 'सिनो ग्रासः स्वयमेव, 'भिन्नः कुसूलः स्वयमेवे'त्यादि सङ्गच्छते इति। अत्र केचिद्वदन्ति लकारवाच्यस्यैव कर्तुः कर्मवत्त्वे 'कर्मवत्कर्मणे'त्यत्र वद्ग्रहणं व्यर्थम्। न च कर्तुः कर्मसंज्ञायां भावे लकारो न स्यादित्यु-क्तमिति वाच्यं, कर्मणः कर्तृत्वविवक्षायां धातुरकर्मक इत्यकर्मकात्कर्तरीव भावे लकारस्य निर्बाधत्वात्।लकारवाच्यस्य कर्म-संज्ञायामपि केवलकर्तुस्तदनभ्युपगमात्। न हि भावे लकारः कर्तारं वक्ति। न च वत्करणाऽभावे कर्तुः कर्मसंज्ञायां कर्तृ-व्यपदेशाऽभावान्नमते दण्ड इत्यत्र 'न दुहस्नुनमा'मिति यक्चिणोर्निषेधेऽपि शप् न स्यात्,वत्करणे कृते तु कर्तृकार्यमपि स्यादिति वाच्यम्, एकसंज्ञाधिकारादन्यत्र संज्ञाद्वयसमावेशादिष्टसिद्धेरिति। न तु तत्तुल्येति। तुल्यत्वं हि सादृश्यम्। तच्च भेदनिबन्धनम्, न च प्रकृते भेदोऽस्ति, कर्मणः कर्तृत्वविवक्षायां कर्मस्थफलरूपक्रियाया एव कर्तृस्थत्वात्, तथा च सूत्र-मिदमसमञ्जसमिति भावः। वास्तविकभेदाभावेऽप्यौपाधिकभेदोऽस्तीत्याह-कर्मत्वेति। कर्मत्वकर्तृत्वाऽवस्थयोर्भेदस्तद्भे-

---

बा.]वाच्य एवेति।तच्च कुत इत्यत आह-लिङ्याशिषीति।'व्यत्ययो बहुलँल्लिङ्याशिष्य'ङ्ङिति संहितया पाठे लका-रात् पूर्वं लकारान्तरं 'हलो यमा'मिति लुप्तं प्रश्लिष्यते। ततश्च ल् ल् इति द्विलकारात्सूत्रात् ल् इति षष्ठ्यन्तं 'कर्मवत्क-र्मणा' इत्यत्रानुवर्तते। तथाच लः कर्ता कर्मवदिति लभ्यते। वाच्यत्वं षष्ठ्यर्थः। तथाच लकारवाच्यः कर्ता कर्मवदिति पर्यवस्यतीत्यर्थः। अस्त्वेवं, प्रकृते किमायातमित्यत आह-भावे प्रत्यये च कर्तुर्लकारेणानुपस्थितेरिति। तत्र भावस्यैव तद्वाच्यत्वादिति भावः। अत एवेति। लकारवाच्यस्यैव कर्मकर्तुः कर्मवत्त्वविधानादेव कृत्यक्तखलर्थाः प्रत्ययाः कर्मणि विहिताः कर्मकर्तरि न भवन्ति, तस्य लकारवाच्यत्वाऽभावेन कर्मवत्त्वस्य तत्राऽप्रवृत्तेरित्यर्थः। एतच्च भाष्ये स्पष्टम्। ननु 'सिनोतेर्ग्रासकर्मकर्तृकस्ये'ति निष्ठानत्ववार्तिके 'सिनो ग्रासः स्वयमेवे'ति भाष्ये कथमुदाहृतं, क्तप्रत्य-यस्य कर्मकर्तर्यभावादिति चेदुच्यते-अत एव भाष्यात् 'निष्ठे'ति सूत्रविहितकर्मार्थकक्तप्रत्ययस्यैव कर्मकर्तर्यभाव इति विज्ञायते। 'सिनो ग्रासः स्वयमेवे'त्यत्र तु 'गत्यर्थाऽकर्मके'त्यादिना कर्तरि विहितः क्तप्रत्ययः कर्मकर्तरि भवत्येवेति शब्देन्दुशेखरे विस्तरः। भेत्तव्यं कुसूलेनेति। पुरुषप्रयत्नमनपेक्ष्य कुसूलकर्तृका भिदिक्रियेत्यर्थः। शङ्कते-नन्विति। इदानीमिति। कर्मणः कर्तृत्वविवक्षादशायामित्यर्थः। न तु तत्तुल्येति। तुल्यत्वस्य भेदघटितत्वादिति भावः। अर्द्धाङ्गीकारेण परिहरति-सत्यमिति। विक्लित्तिर्द्विधाभवनं च कर्मस्थमेव संप्रति कर्तृस्थमिति युक्तं तथापि तयोस्तुल्य-त्वाऽभावस्तु नेत्यर्थः। कर्मत्वेति। कर्मत्वकर्तृत्वे ये अवस्थे=धर्मविशेषौ तयोर्भेदः स एव उपाधिः=निमित्तं यस्य

---

शे.]यदि तु अतिदिश्यमानविरुद्धस्वाश्रयाऽभावोऽतिदेशस्वाभाव्यात्तदा सोऽपि दोषो बोध्य इति केचित्। लकार-वाच्य इति। तत्र तस्य विधानादिति भावः। द्विलकारकादिति। सूत्रं,निर्देशो वाऽन्यपदार्थः।ल इतीति। अनेन तस्य लुप्तषष्ठ्यन्तत्वं दर्शयति। कृत्यक्तेति। इदमुपलक्षणं 'कतीह भिन्दानाः कुसूलाः' इत्यत्र चानशि न कर्मवत्त्व-मिति न यगित्यपि बोध्यम्। क्तोऽत्र 'निष्ठा' इति सूत्रविहितः कर्मार्थको गृह्यते। तेनाऽकर्मकत्वप्रयुक्तः कर्तरि क्तो भवत्येव। अत एव 'सिनोतेर्ग्रासकर्मकर्तृकस्ये'ति सङ्गच्छते। तेन 'परशुभिन्नः कुसूलः' इत्यादौ 'तृतीया कर्मणी'ति पूर्वपदप्रकृतिस्वरस्याऽभावसिद्धिः। एतेन 'सृजस्यात्मानमात्मने'त्यादाविवौपाधिकभेदमाश्रित्य स्वयमित्यस्यात्मनेत्यर्थात्क-र्तृत्वेनौदनस्य कर्मत्वान्मुख्ये कर्मण्येव प्रत्ययोऽस्तु,किमतिदेशेनेत्यपास्तम्। क्तादीनामप्यापत्तेः। निवृत्तप्रेषणतायां 'साध्वसि-श्छिनत्ती'ति वत् 'पचत्योदनः' इत्यस्यापत्तेश्च। 'नमते दण्डः' इत्यादौ यक्चिणोः प्रतिषेधे शप्चङोरनापत्तेश्च। क्वचि-त्प्रयुज्यमानं 'स्वयमेवे'ति तु कर्त्रन्तराऽभावप्रतिपादनपरमिति दिक्। व्यवहार इति। उपपादितमेतत्। प्रत्यासत्त्या

कर्मणेति किम्?। करणाधिकरणाभ्यां तुल्यक्रिये पूर्वोक्ते साध्वसिरित्यादौ मा भूत्। किंच कर्तृस्थक्रियेभ्यो माभूत्। गच्छति ग्रामः। आरोहति हस्ती। **'अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति च'**। यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते यथा पक्वेषु तण्डुलेषु यथा वा छिन्नेषु काष्ठेषु तत्र कर्मस्था क्रिया, नेतरत्र। न हि पक्वाऽपक्वतण्डुलेष्विवं गताऽगतग्रामेषु वैलक्षण्यमुपलभ्यते। करोतिरुत्पादनार्थः। उत्पत्तिश्च कर्मस्था। तेन कारिष्यते

---

त.]दौपाधिकमवस्थाभेदसमानाधिकरणं क्रियाभेदमाश्रित्येत्यर्थः।एवं चावस्थाभेदेन क्रियाभेदात्कर्मस्थक्रियातुल्यक्रियत्वं कर्तुरस्तीति भावः। **करणाधिकरणाभ्यामिति**। 'तुल्यक्रियः कर्ते'त्येतावत्युच्यमाने 'असिना छिनत्ति' 'स्थाल्यां पचती'त्यादौ करणाधिकरणयोर्यो व्यापारः स एवेदानीमसिश्छिनत्ति स्थाली पचतीत्यादौ कर्तृस्थ इत्यतिप्रसङ्गः स्यात्, तन्माभूदित्यथः। नच कर्मत्वाऽवस्थायां विक्लित्यादिरिव करणत्वाद्यवस्थायामपि स्थाल्या व्यापारो वस्तुतः सन्नपि धातुना नोपात्त इति कथमतिप्रसङ्ग इति वाच्यं, सादृश्यप्रतियोगिक्रियाया धातूपात्तत्वेनाऽविशेषितत्वात्। न ह्येतस्मिन्सूत्रे धातूपात्तक्रियया तुल्यक्रिय इत्युक्तमस्ति येनातिप्रसङ्गो न भवेत्। ननु तुल्यक्रियः कर्ता कर्मवद्भवतीत्युक्ते केनेत्याकाङ्क्षायामनेककारकोपस्थितावपि कर्मवदिति प्रत्यासत्त्या कर्मणेति लभ्यत एवेत्यत आह-**किं चेति**। अधिगच्छतीत्यादिश्लोकस्योत्तरार्द्धन्तु 'यत्कृपालेशतस्तस्मै नमोऽस्तु गुरवे सदा'। ननु फलं व्यापारश्च धात्वर्थः, स एव क्रियाशब्दवाच्यः। तत्र व्यापाराश्रयः कर्ता, फलाश्रयस्तु कर्म। एवं च पचिभिदिप्रभृतीनां, गमिरुहिप्रभृतीनां च सकर्मकत्वे फलस्य कर्मनिष्ठत्वे च तुल्ये कर्तृस्थभावका गम्यादय इति कथं ज्ञातव्या इत्यत आह-यत्र **कर्मणीति**। **ग्रामेष्विति**।आरूढाऽनारूढहस्तिषु अधिगतानधिगतशास्त्रार्थेष्वित्यादावपि वैलक्षण्यं नोपलभ्यत इति बोध्यम्। **कारिष्यते इति**। 'स्यसिच्सीयु'डिति वैकल्पिकश्चिण्वदिट्।

---

बा.]तथाविधं कर्मत्वकर्तृत्वसमानाधिकरणक्रियाभेदमाश्रित्य तुल्यत्वव्यवहार इत्यर्थः।वास्तवभेदाऽभावेऽपि औपाधिकभेदात्कर्मस्थक्रियातुल्यक्रियत्वं कर्मकर्तुरिति भावः। **करणाधिकरणाभ्यामिति**। 'असिना छिनत्ति' स्थाल्यां पचती'त्यत्र करणाऽधिकरणयोर्यो व्यापारः स एव 'असिश्छिनत्ति' स्थाली पचती'त्यत्र कर्तृस्थ इति तत्रापि कर्मवत्त्वं स्यात्,तन्निवृत्त्यर्थं कर्मणेति पदमित्यर्थः। ननु 'कर्मवत्कर्मणे'त्यत्र 'धातोरेकाच' इत्यतो धातोरित्यनुवर्तते। धातोर्वाच्यया क्रियया तुल्यक्रिय इत्यर्थः। करणत्वाद्यवस्थायां वस्तुतः सन्नपि असिस्थाल्योर्व्यापारो न धातूपात्त इति नोक्तदोष इत्यस्वरसादाह-**किंचेति**। **गच्छति ग्राम इति**। मार्गस्य अविषमनिष्कण्टकतया प्रत्यासन्नतया च श्रमं विना प्राप्त्याश्रयो भवतीत्यर्थः। **आरोहति हस्तीति**। अङ्कुशाऽऽघातादिहस्तिपकव्यापारं विना स्वयमेव न्यग्भवन् आरोहणाश्रयो भवतीत्यर्थः। **अधिगच्छतीति**। पूर्वार्द्धमिदम्। 'यत्कृपालेशतस्तस्मै नमोऽस्तु गुरवे सदा' इत्युत्तरार्द्धम्। गुरुकृपालेशादेव श्रमं विना स्वयमेव शास्त्रार्थोऽधिगच्छति=निश्चयविषयो भवति, स्मृतिविषयो भवति, श्रद्धाविषयो भवतीत्यर्थः। अत्र कर्मकर्तुर्ग्रामादेः कर्तृस्थक्रियावत्त्वेन कर्मस्थक्रियावत्त्वाऽभावान्न कर्मवत्त्वम्। अतो न कर्मकार्यं यगादि। किंतु कर्तृकार्यं शबाद्येवेति भावः। ननु कर्मकर्तुर्ग्रामादेः प्राप्त्याद्याश्रयत्वेन कर्मस्थक्रियत्वमस्त्येवेत्यत आह-**यत्रेति**। यत्र क्रियाकृतो विशेषो=वैलक्षण्यं दृश्यते=प्रत्यक्षमुपलभ्यते, तत्र कर्मणि विद्यमाना क्रिया कर्मस्थक्रियेत्युच्यते इत्यन्वयः। तदुदाहृत्य दर्शयति-**यथा पक्वेषु तण्डुलेष्विति**। 'तण्डुलावस्थापेक्षया विक्लित्तिकृतो विशेषो दृश्यते' इति शेषः। अन्यत्रापि क्रियाकृतं वैलक्षण्यमुदाहृत्य दर्शयति-**यथा वा छिन्नेषु काष्ठेष्विति**। 'अच्छिन्नापेक्षया वैलक्षण्यं दृश्यते' इति शेषः। 'गच्छति ग्राम' इत्यादौ तु नैवमित्याह-**न हीति**। **ग्रामेष्विति**। उपलक्षणमिदम्। पक्वाऽपक्वतण्डुलेषु यथा क्रियाकृतं वैलक्षण्यमुपलभ्यते तथा गताऽगतग्रामे आरूढाऽनारूढहस्तिनि अधिगताऽधिगते स्मृताऽस्मृते श्रद्धिताऽश्रद्धिते च शास्त्रार्थे क्रियाकृतवैलक्षण्यं न दृश्यते इत्यर्थः। ग्रामगमनादौ कर्तर्येव श्रमादिवैलक्षण्यदर्शनादिति भावः। ननु ज्ञानेच्छयोरिव यत्नस्याऽपि कर्तृस्थत्वात्तद्वाचिनः कृञोऽपि कर्ता न कर्मवत्स्यात्। ततश्च 'क्रियते घटः स्वयमेवे'ति यगादिर्न सिध्येदित्याशङ्क्य कृञो न यत्नार्थत्वमित्याह-**करोतिरुत्पादनार्थ इति**। उत्पत्त्यनुकूलव्यापारार्थक इत्यर्थः। एतच्च भूवादिसूत्रे भाष्ये स्पष्टम्। करोतेरुत्पादनार्थकत्वे तु कर्मस्थक्रियत्वं तत्कर्तुरुपपादयति-**उत्पत्तिश्च कर्मस्थेति**। उत्पन्ने अनुत्पन्ने च वैलक्षण्यस्य प्रत्यक्षत्वादिति भावः। **तेनेति**। कृञः कर्तुः कर्मस्थक्रियत्वेनेत्यर्थः। तथाच 'क्रियते घटः स्वयमेवे'त्यत्र यक्। तासि तु चिण्व-

---

शे ]समानधातौ कर्मस्थक्रियया तुल्यक्रियत्वाश्रयणात्'पचत्योदनं देवदत्तः' इत्यत्र कर्मणो 'राध्यत्योदनः' इत्यत्र कर्तृत्वेऽपि न कर्मवत्त्वमिति बोध्यम्। ननु करणत्वाद्यवस्थायां वस्तुतः सन्नप्यसिस्थाल्योर्व्यापारो न धातुनोपात्तः, प्रकृतसूत्रे च 'धातोरेकाचः' इत्यतो धातोरित्यनुवर्त्य धातोर्वाच्यया क्रियया तुल्यक्रिय इत्यर्थोऽतो नायं दोषोऽत आह-**किंचेति**।'कर्मणे'त्येतत्सामर्थ्याद्दृश्यमानकर्मनिष्ठविशेषप्रयोजककर्मस्थक्रिया लभ्यत इति भावः। [ **नेतरत्रेति**। राजदर्शनग्रामगमनादौ कर्तर्येव हर्षश्रमादिलक्षणविशेषदर्शनात् कर्तृस्थेत्येव व्यवहार इति भावः] । **उत्पादनार्थ इति**। उत्पत्त्यनुकूलव्यापारार्थे

घट इत्यादि । यत्नार्थत्वे तु नैतत्सिध्येत् । ज्ञानेच्छादिवद्यत्नस्य कर्तृस्थत्वात् । एतेन 'अनुव्यवस्यमानेऽर्थे' इति व्याख्यातम् । कर्तृस्थत्वेन यगभावाच्छ्यनि कृते ओल्लोपे च रूपसिद्धेः । ताच्छील्यादावयं चानश्, न त्वात्मने पदम् । *सकर्मकाणां प्रतिषेधो वक्तव्यः । अन्योन्यं स्पृशतः । अजा ग्रामं नयति । *दुहिपच्योर्बहुलं

त.]पक्षे 'ऋद्धनोः स्ये' इतीट् । करिष्यते। एवं लृङि अकारिष्यत अकरिष्यत । सिचश्चिण्वदिटि-अकारिष्ट । पक्षे अकृत। सीयुटश्चिण्वदिटि-कारिषीष्ट । पक्षे-कृषीष्ट । तासि तु कारिता कर्ता । यक्चिणोस्तु क्रियते घटः स्वयमेव, अकारीत्यादि । **नैतत्सिध्येदिति** । 'कर्मवत्कर्मणे'ति कर्मवत्त्वं न सिध्येदित्यर्थः । एतेन पचति पाकं करोतीति विवरणादाख्यातस्य यत्ने शक्तिरिति नैयायिकोक्तिः परास्ता । करोतेर्यत्नार्थत्वे तु यतते इति वत्सकर्मकतापि न स्यादिति । **एतेनेति** । ज्ञानस्य कर्तृस्थत्वाभ्युपगमेनेत्यर्थः।**यगभावादिति**।सति तु यक्यनुव्यवसीयमान इति स्यादिति भावः। **ओल्लोप इति**। 'ओतः श्यनी'त्यनेन । ननु कर्मवत्त्वाऽभावे कथमिह शानजित्यत आह-**ताच्छील्यादाविति** । **न त्विति** । शानज भवतीत्यर्थः । 'देवदत्तयज्ञदत्तावन्योन्यं स्पृशत' इत्यत्र तयोरेव कर्मत्वं कर्तृत्वं चास्तीति कर्मस्थक्रियायाः कर्तृस्थत्वात्कर्मवद्भाव-प्राप्तिमाशङ्क्याह-**सकर्मकाणामिति**। न चाऽत्र 'देवदत्तो यज्ञदत्तं स्पृशति, यज्ञदत्तस्तु देवदत्त'मिति क्रियाभेदोऽवश्य-माश्रयितव्यः । तथा च स्वनिष्ठां क्रियां प्रति कर्तृत्वम्, इतरक्रियां प्रति तु कर्मत्वं भवति । अन्यथा द्वयोरपि कर्तृत्वमेव स्यात्, 'इमौ गङ्गां स्पृशत' इत्यत्र यथा । एवं च कर्मस्थक्रियायाः कर्तृस्थत्वाऽभावात्कर्मवद्भावो न प्राप्नोति । न च संयोगस्य द्विष्ठत्वात्कर्मस्थफलस्य कर्तृस्थत्वाऽचास्त्येवेति शङ्क्यं, तत्तन्निरूपितसंयोगस्य भिन्नत्वात् । अन्यथा फलव्यापारयोरेका-श्रयत्वे सकर्मकत्वमेव न लभ्येत । किंच रुहिगम्योः कर्तृस्थक्रियत्वादारोहते हस्ती, गच्छति ग्राम इत्यत्र कर्मवद्भावो नेति भाष्यकैयटादिसंमतम् । तथा च संयोगरूपफलस्य सर्वत्र तुल्यतया रुहिगमिभ्यां स्पृशेर्वैषम्यं दुरुपपादमिति नाऽत्रकर्मव-त्त्वप्रसक्तिरित्युदाहरणान्तरमाह-**अजा ग्रामं नयतीति**। इह प्रतिषेधाऽभावे यक् स्यात्, क्रियाफलस्याऽकर्तृगामित्वेऽ

बा.]दिद्पक्षे कारिता,तदभावे तु कर्तेति सिद्धवत्कृत्याह-**करिष्यते घट इत्यादीति**।चिण्वदिट्पक्षे 'कारिष्यते' इति रूपं, तदभावपक्षे तु 'ऋद्धनोः स्ये' इतीट्-करिष्यते । सीयुटश्चिण्वदिटि-कारिषीष्ट । तदभावे तु-कृषीष्ट । लुङि-अकारि अकृत। **नैतदिति** । कर्मवत्त्वं न सिद्ध्येदित्यर्थः। 'यतते' इतिवत्सकर्मकत्वमेव न स्यादित्यपि बोध्यम् । **एतेनेति**। ज्ञानस्य कर्तृ-स्थत्वव्युत्पादनेनेत्यर्थः । **अनुव्यवस्यमानेऽर्थे इति**। अर्थे स्वयमेव निश्चयविषयतां संपद्यमाने इत्यर्थः । **व्याख्यातमिति** । समर्थितमित्यर्थः । कथं समर्थितमित्यत आह-**कर्तृस्थत्वेन यगभावादिति**। अनुव्यवसायः=निश्चयः, तत्र कर्मकर्ता अर्थः, स न कर्मस्थक्रियः, अर्थे अनुव्यवसायकृतवैलक्षण्याऽभावात्, किंतु कर्तृस्थक्रिय एव, अनुव्यवसाय-कर्तरि देवदत्ते हर्षादिदर्शनात् । ततश्च कर्मवत्त्वाऽभावान्न यक् । यकि तु कित्त्वात् 'घुमास्थागापाजहातिसां'मिति ईत्वे 'अनुव्यवसीयमान' इति स्यादित्यर्थः । ननु यगभावे कथं यकारश्रवणमित्यत आह-**श्यनीति** । 'षो अन्तकर्मणि' इति धातोरनुव्यवपूर्वादुपसर्गवशेन निश्चयवृत्तेरानेकृते श्यनि 'ओतः श्यनी'त्योकारलोपे'अनुव्यवस्यमान'इति रूपसिद्धेरित्यर्थः। ननु कर्मवत्त्वाऽभावे 'भावकर्मणो'रित्यात्मनेपदाऽभावात्कथमिह लटः शानच् ,तस्यात्मनेपदत्वा,दित्यत आह-**ताच्छील्यादाविति** । 'ताच्छील्यवयोवचनशक्तिषु चान'शित्यनेन चानशित्यर्थः । तस्य च लादेशत्वाऽभावेन आत्मनेपदत्वाऽभावात् कर्मवत्त्वाऽभावेऽपि कर्मकर्तरि प्रवृत्तिर्निर्बाधा। तदाह-**न त्वात्मनेपदमिति**।ननु 'अन्योन्यं स्पृशतः स्वयमेव यज्ञदत्त-देवदत्ता'वित्यत्रापि कर्मत्वाद्यगादि स्यात्।तत्र हि स्पृशिः संयोगानुकूलव्यापारार्थकः। उभावपि कर्तारौ,कर्मभूतौ च।स्पर्शन-क्रियाया एकत्वेऽपि आश्रयभेदात्तद्भेदमाश्रित्य यज्ञदत्तनिष्ठां स्पर्शनक्रियां प्रति देवदत्तस्य कर्मत्वम्।एवं देवदत्तनिष्ठां स्पर्शन-क्रियां प्रति यज्ञदत्तस्य कर्मत्वम्।एवं कर्तृत्वमप्युभयोर्ज्ञेयम् । एवंच उभयोः कर्तृत्वकर्मत्वसत्त्वादेकस्मिन् कर्तरि कर्मणि वा स्पृशिक्रिया सैवेतरस्मिन् कर्तरि कर्मणि वा वर्तते इति कर्मवत्त्वं स्यात्, आश्रयनिबन्धनं भेदमाश्रित्य तुल्यक्रियत्वोपपत्तेः। स्पृष्टाऽस्पृष्टयोरन्योन्यसंयोगकृतहर्षादितदभावदर्शनाच्चेत्यत आह-**सकर्मकाणां प्रतिषेध इति** । एककर्मकाणां छिदि-

शे.]इत्यर्थः। 'उत्पत्तिफलको यत्नो वाच्य' इति तु न युक्तं,'बीजेनाङ्कुरः कृतः' इत्यनापत्तेः।**एतेन**-ज्ञानस्य कर्तृस्थत्वेन। [नन्वेवं पैच्यादिकर्त्तर्यपि श्रमादिरूपविशेषदर्शनादिदमयुक्तम्, किञ्चैवं पश्यत्यादीनां कर्तृस्थभावकत्वानुपपत्तिः, कर्तरि क्रियाकृतविशेषाऽभावादितिवाच्यं, येन धातुना कर्तृकर्मसाधारणं फलं शब्देन प्रतिपाद्यते स कर्तृस्थभावकः । यथा पश्य गच्छतीत्यादौ । तत्र विषयतासमवायाभ्यां ज्ञानमुभयनिष्ठम् । संयोगश्चोभयनिष्ठः । एवं हासोऽपि । यत्र तु कर्तृवृत्ति-धर्मरूपं फलं स कर्मस्थभावकादि । यथा भिदादिरित्यत्र तात्पर्यात् ] । **न त्वात्मनेपदमिति** । शानजित्यर्थः। यगात्मनेपदयोस्त्वनुव्यवसीयमाने इति स्यादिति भावः । **अन्योन्यं स्पृशत इति** । अयं भावः-कर्मपदेन तत्स्था क्रिया लक्ष्यते, न तु कर्मत्वोपयोगिनी तत्स्था क्रिया, मानाऽभावात् । एवञ्च 'अन्योन्य'मित्यादावु-

**सकर्मकयोरिति वाच्यम्** । **न दुहस्नुनमां यक्चिणौ** ।३।१।८९। एषां कर्मकर्तरि यक्चिणौ न स्तः । दुहेरनेन यक एव निषेधः । चिण् तु विकल्पेनेष्यते । शब्लुक् । गौः पयो दुग्धे । **अचः कर्मकर्तरि** ।३।१।६२। अजन्ताच्च्लेश्चिण् वा स्यात्कर्मकर्तरि तशब्दे परे । अकारि । अकृत । **दुहश्च** ।३।१।६३। अदोहि । पक्षे क्सः।

---

त.]ध्यात्मनेपदं स्यादिति भावः।नन्विहापि कर्मणि क्रियाकृतो विशेषो नोपलभ्यत इति कर्मस्थक्रियत्वं दुरुपपादमिति चेत् । अत्राहुः–क्रियाकृतविशेषोपलम्भाऽनुपलम्भवदुद्देश्यताऽपि नियामिका । यत्र कर्मस्थांऽशस्योद्देश्यता सा कर्मस्थक्रिया, यत्र तु व्यापारांऽशस्य सा कर्तृस्थेति । तथा हि–दर्शनारोहणाभ्यां विषये न्यग्भूते च विशेषानुपलम्भात्कर्तृस्थता । उद्देशानुरोधाच्च अहं पश्येयमित्युद्देशो, न त्वयं विषयो भवत्विति । एवमहमुपरि गच्छेयमित्युद्देशो न तु हस्तिनो न्यग्भावो भवत्विति । ऊर्ध्वदेशसंयोगानुकूलव्यापारविशेष उपरिगमनं, तदेव रुहेरर्थो न तु न्यग्भावमात्रम् । वृक्षस्य शाखां हस्ताभ्यामवनमयत्यपि भूमिष्ठे पुरुष आरोहतीत्यप्रयोगात् । अतएव हि 'यद्धितुपरं छन्दसी'त्यत्र भाष्यं 'रुहिर्गत्यर्थ' इति। अतएव चारोहन्ति हस्तिनं हस्तिपकास्तानारोहयति महामात्र इत्यादिप्रयोगेष्वणौ कर्तुर्णौ कर्मत्वं सङ्गच्छते । पचिभिद्योस्तु विक्लित्तिर्द्विधाभवनरूपो विशेषः कर्मणि दृष्टस्तदुद्देशेनैव कारकव्यापार इति कर्मस्थक्रियत्वात्पच्यते ओदनः, भिद्यते काष्ठमित्यत्र कर्मवद्भावो भवत्येव । अजा ग्रामं नयतीत्यत्रापि कर्मस्थांऽशस्य संयोगस्योद्देश्यता, न तु व्यापारांशस्येति कर्मवद्भावे प्राप्ते प्रतिषेधोऽयमावश्यक इति दिक् । **दुहिपच्योरिति** । द्विकर्मकत्वादनयोरेकस्य कर्मणः कर्तृत्वविवक्षायामपि सकर्मकत्वान्निषेधे प्राप्तेऽयमारम्भः। **गौः पयो दुग्धे इति** । अत्र कर्मवद्भावेनात्मनेपदं नित्यं। 'गौणे कर्मणि दुह्यादेः' इत्युक्त्वाऽमुख्यकर्मणः कर्तृत्वविवक्षायां पयो गां दुग्धे इति नोदाहृतमित्याहुः । एवं च 'प्रधाने नीहृकृष्वहा'मित्युक्तत्वात्तुल्यन्यायेन न्यादीनां मुख्यकर्मण एव कर्तृत्वविवक्षेति फलितम् । **अचः कर्म**। 'चिण् ते पदः' इत्यतश्चिण्तेशब्दावनुवर्तेते, 'दीपजने'-

---

बा.]भिदिप्रभृतीनां कर्मणः कर्तृत्वविवक्षया अकर्मकाणां कर्तुः कर्मवत्त्वमुक्तम्।ये तु द्विकर्मकाः कर्मणः कर्तृत्वविवक्षायामपि सकर्मका धातवस्तेषां धातूनां कर्मकर्तुः कर्मवत्त्वप्रतिषेधो वक्तव्य इत्यर्थः । **अन्योन्यं स्पृशत इति** । कर्मवत्त्वे तु यकि तङि च 'स्पृश्येते' इति स्यादिति भावः। 'सकर्मकाणां प्रतिषेधः' इत्यस्योदाहरणान्तरमाह–**अजा ग्रामं नयतीति** । अजा ग्रामं स्वयमेव प्राप्नोतीत्यर्थः । अत्र नयनं प्रत्यजायाः कर्मणः कर्तृत्वविवक्षायामपि ग्राममादाय सकर्मकत्वान्न कर्मवत्त्वमिति भावः । वस्तुतस्तु गते अगते च ग्रामे वैलक्षण्याऽभावादेवाऽत्र कर्मवत्त्वस्याऽप्राप्तिरिति नेदमस्य वार्तिकस्योदाहरणम् । अत एव भाष्ये 'अन्योन्यमाश्लिष्यतः, अन्योन्यं स्पृशतः, अन्योन्यं सङ्गृह्णीत' इत्येवोदाहृतमिति शब्देन्दुशेखरे स्पष्टम् । **दुहिपच्योरिति** । 'कर्मवत्त्व'मिति शेषः। अनयोर्द्विकर्मकत्वादेकस्य कर्मणः कर्तृत्वविवक्षायामपि अन्यकर्मणा सकर्मकत्वात्पूर्ववार्तिकेन कर्मवत्त्वनिषेधे प्राप्ते प्रतिप्रसवोऽयम् । **न दुह** । दुह स्नु नम् एषां द्वन्द्वः। **कर्मकर्तरीति** । एतत्तु नाऽनुवृत्तिलभ्यं, पूर्वत्रानुपलम्भात् । किंतु 'कर्मवत्कर्मणा तुल्यक्रियः' इति समभिव्याहारलभ्यमेव । 'अचः कर्मकर्तरी'त्यतो मण्डूकप्लुत्या तदनुवृत्तिर्वा । **दुहेरनेनेति** । 'न दुहस्नुनमा'मित्यनेन दुहेः कर्मकर्तरि यक एव निषेधः । चिण्तु 'दुहश्चे'ति वक्ष्यमाणसूत्रेण विकल्पितो वक्ष्यत इत्यर्थः । कर्मकर्तरि तशब्दे परे दुहेश्चिण्वेति तदर्थः । 'चिण्तु विकल्पेनेष्यते' इति क्वचित्पाठः । दुग्धे इत्यत्र प्रक्रियां दर्शयति–**शप् लुगिति** । दुहेः कर्मकर्तरि यकि निषिद्धे शप्प्रवर्तते, तस्य 'अदिप्रभृतिभ्यः' इति लुगित्यर्थः । **गौः पयो दुग्धे इति** । गौः स्वयमेव पय उत्सृजतीत्यर्थः । कर्मकर्तृभूतायां गवि लट् । स्वरितेत्त्वेऽपि 'भावकर्मणो'रित्यात्मनेपदमेव । 'न दुहे'ति न यक् । गां पयो दुग्धे इति तु नोदाहृतम्, 'गौणे कर्मणि दुह्यादेर्लादयो मताः' इत्युक्तेः । **अचः कर्मकर्तरि** । 'च्लेः सि'जित्यतश्च्लेरिति, 'चिण् ते पदः' इत्यतश्चिण्ते इति, 'दीपजने'त्यतोऽन्यतरस्यामिति चानुवर्तते । 'धातोरेकाचः' इत्यतोऽनुवृत्तस्य धातुग्रहणस्य अचा विशेषितत्वात्तदन्तविधिः । तदाह–**अजन्तादित्यादिना** । **अकारीति** । 'कटः स्वयमेवे'ति

---

शे.]भयोः शब्दभेदेन कर्तृत्वकर्मत्वसत्त्वात्यैवैकस्मिन्संयोगानुकूलक्रिया संयोगो वा सैवापरस्मिन्कर्तरीति कर्मस्थक्रियया तुल्यक्रियकर्तृसत्त्वात्प्राप्तिः । आश्रयभेदाद्भेदेन च तुल्यत्वाऽव्याघातः । यद्यपि 'इमौ गङ्गां स्पृशतः' इत्यत्र कर्तृस्थः स्पर्शस्तथापि प्रकृते कर्मणोस्तयोरन्योन्यसंयोगकृतहर्षादिलक्षणविशेषदर्शनात्कर्मस्थः स इति। **अजा ग्राममिति** । इदन्तु चिन्त्यम् । गमनानुकूलव्यापाररूपेणाऽजानिष्ठफलेन नेतृव्यापारेण वा तत्र विशेषाऽदर्शनेन कर्मस्थक्रियत्वाऽभावात्। यदि ग्रामे संयोगस्तथेत्युच्यते तर्हि 'ग्रामङ्गच्छती'त्यादौ ग्रामेऽपि पुरुषसंयोगरूपविशेषदर्शनाद्गम्यर्थस्यापि कर्मस्थत्वं स्यात्। अत एव 'अन्योन्यमाश्लिष्यतः' इत्येव भाष्ये उदाहृतम् । **दुहिपच्योरिति** । अनयोर्द्विकर्मकतयैकस्य कर्मणः कर्तृत्वेऽप्यपरेण सकर्मकत्वादप्राप्ते वचनम् । द्व्यर्थत्वात्पचेः 'तण्डुलानोदनं पचती'तिवद्द्विकर्मकत्वम् । यद्वा–वृक्षपाकमन्तरेण फलपाकाऽसम्भवात्पचिरत्र विषये द्विकर्मकः,कालस्तु तदा कर्ता। बहुलग्रहणं नेह पक्षे परस्मैपदार्थं, तस्याऽत्राऽनिष्टत्वात्। **विकल्पेनेष्यत इति** । 'दुहश्चे'त्यनेनेति भावः । कर्मकर्तरि तशब्दे परे दुहेश्चिण्वेति तदर्थः। **गौः पय इति**। अप्रधानगोरूपकर्मण एव तथा विवक्षा नाऽन्यस्येति भावः। 'गौः पयस्त्यजती'ति–एतदर्थः। **अचः कर्म**। 'चिण् ते' इत्यत-

'लुग्वे'ति पक्षे लुक्। अदुग्ध। अधुक्षत। उदुम्बरः फलं पच्यते। *सृजियुज्योः श्यंस्तु। अनयोः सकर्मकयोः कर्ता बहुलं कर्मवद्यगपवादश्च श्यन्वाच्य इत्यर्थः। *सृजेः श्रद्धोपपन्ने कर्तर्येवेति वाच्यम्। सृज्यते स्रजं भक्तः। श्रद्धया निष्पादयतीत्यर्थः। असर्जि। युज्यते ब्रह्मचारी योगम्। * भूषाकर्मकिरादिसनां चा-

---

त.]त्यतोऽन्यतरस्यामिति च। तदाह-अजन्तादित्यादि। अचः किम्?। अभेदि काष्ठम्। अत्र नित्यं चिण्। कर्मकर्तरि किम्?। अकारि घटः कुलालेन। अत्रापि नित्यमेव। दुहश्च। कर्मकर्तरीत्येव। अदोहि गौर्गोपेनेत्यत्र तु नित्यम्। उदुम्बरः फलमिति। 'कालः उदुम्बरं फलं पचती'ति स्थिते गौणकर्मण उदुम्बरस्य कर्तृत्वविवक्षायामिह कर्मवद्भावः। ननु द्विकर्मकेषु पचेरप्रामाणिकः पाठ इति ये वदन्ति तेषामयं ग्रन्थः कथं सङ्गच्छत इति चेत्। अत्राहुः-'उदुम्बरः फलं पचती'त्यत्र 'कर्मवत्कर्मणे'त्यस्याऽप्राप्तौ 'दुहिपच्यो'रित्यनेन कर्मवद्भावो बहुलं विधीयते सृजियुज्योरिवेति न काप्यनुपपत्तिरिति। सृजियुज्योः श्यंस्तु। श्यनो नित्त्वमाद्युदात्तार्थम्। यकि तु 'तास्यनुदात्ते'दित्यादिना लसार्वधातुकानुदात्तत्वे कृते यक उदात्तत्वं श्रूयेत। श्रद्धोपपन्न इति। अश्रद्धायुक्ते कर्तरि तु यगेव। भूषाकर्मेति। कर्मशब्दः क्रियावाचीत्याह-

---

बा.]शेषः। कर्मकर्तरि लुङ्। च्लेश्चिण्। वृद्धिः। रपरत्वम्। 'चिणो लु'गिति तशब्दस्य लुक्। अकृतेति। चिणभावपक्षे 'ह्रस्वादङ्गा'दिति सिचो लोपः। दुहश्च। 'अच' इतिवर्जं पूर्वसूत्रं तत्रानुवृत्तं यत्तत्सर्वमिहानुवर्तते। कर्मकर्तरि तशब्दे परे दुहेश्चिण्वा स्यादित्यर्थः स्पष्ट इति न व्याख्यातम्। अनुवृत्तिसौकर्यार्थमेव पूर्वसूत्रं प्रकृतदुहधातावनुपयुक्तमप्युपन्यस्तम्। अदोहीति। दुहेः कर्मकर्तरि लुङ्। 'स्वयमेव गौः पय' इति शेषः। चिण्पक्षे लघूपधगुणः। चिणभावपक्षे आह-पक्षे क्स इति। 'शल इगुपधा'दित्यनेनेति भावः। लुग्वेति। 'लुग्वा दुहदिहलिहगुहा'मिति क्सस्य पाक्षिको लुगित्यर्थः। अथ 'दुहिपच्यो'रित्यत्र पचेरुदाहरति-उदुम्बरः फलं पच्यते इति। 'उदुम्बरवृक्षं फलं पचति कालविशेष' इत्यत्र द्विकर्मकः पचिः। इह तु उदुम्बरो वृक्षः स्वयमेव कालविशेषमनपेक्ष्य फलं पक्वाश्रयं करोतीत्यर्थः। अत्र उदुम्बरस्य गौणकर्मणः कर्तृत्वेन विवक्षायां फलेन प्रधानकर्मणा सकर्मकत्वात् 'सकर्मकाणां प्रतिषेधः' इति कर्मवत्त्वस्य प्रतिषेधे प्राप्ते 'दुहिपच्यो'रिति कर्मवत्त्वस्य प्रतिप्रसवाद्यगादिकमिति भावः। वस्तुतस्तु भाष्ये द्विकर्मकेषु पचेरपरिगणनान्न द्विकर्मकत्वमिति कारकाधिकारे प्रपञ्चितमस्माभिः। तथाच कर्मकर्तरि 'फलं पच्यते' इत्यत्र फलस्यैव कर्मतया तस्य कर्तृत्वविवक्षायां पचेरकर्मकत्वात् 'सकर्मकाणा'मिति प्रतिषेधस्याऽप्रसक्तेः प्रतिप्रसवविधिरयं व्यर्थ इति यद्यपि, तथाप्यत्र मते 'उदुम्बरः फलं पचती'त्यत्र कर्तृलकारे पचेः कर्तृस्थक्रियत्वात् कर्मस्थक्रियत्वाऽभावादुदुम्बरः फलं पच्यत इति कर्मकर्तरि 'कर्मवत्कर्मणे'ति कर्मवत्त्वस्याऽप्राप्तौ 'दुहिपच्यो' रिति कर्मवत्त्वस्य बहुलं पचेरपूर्वविधिरित्यन्यत्र विस्तरः। 'सृजियुज्योः श्यंस्तु' इति वार्तिकम्। 'अनयोः सकर्मकयो'रित्यादि तद्भाष्यम्। अत्र सृजियुज्योर्दैवादिकयोर्न ग्रहणं, तयोरकर्मकताया उक्तत्वात्, किंतु 'सृज विसर्गे' इति तौदादिकस्य, 'युजिर्योगे' इति रौधादिकस्य च ग्रहणं, तत्र विसर्गः=उत्पादनम्। यथा प्रजाः सृजतीति। योगः-संयोजनम्। यथा अश्वं युनक्तीति। रथादिना संयोजयतीति गम्यते। सृजेः श्रद्धोपपन्ने इति। श्रद्धायुक्ते मुख्यकर्तर्येव उक्तो विधिरित्यर्थः। तत्र मुख्यकर्तरि अत्यन्ताऽप्राप्तं कर्मवत्त्वमिह बहुलं विधीयते। 'युजेस्तु कर्मकर्तर्येव उक्तविधि' रिति भाष्यात्तत्रापि कर्मणि क्रियाकृतवैलक्षण्याऽभावादप्राप्तं कर्मत्वमिह बहुलं विधीयते। कर्मत्वे सति यकि प्राप्ते तदपवादः श्यन्विधीयते। तेन 'ञ्नित्यादिर्नित्य'मित्याद्युदात्तत्वं सिध्यति। यकि तु 'तास्यनुदात्ते'दित्यादिना लसार्वधातुकानुदात्तत्वे प्रत्ययस्वरेण यक उदात्तत्वं स्यात्। सृज्यते स्रजं भक्त इति। अत्र मुख्यकर्तरि लकारः। कर्मवत्त्वादात्मनेपदम्। यगपवादः श्यन्। श्रद्धया निष्पादयतीत्यर्थ इति। धातूनामनेकार्थत्वादिति भावः। 'सृज्यते स्रजं भक्त' इत्यत्र यदा तु निष्पादयतीत्येवाऽर्थः, नतु श्रद्धयेति तदा सृजति स्रजमित्येव भवति। अथ युजेरुदाहरति—युज्यते ब्रह्मचारी योगमिति। अत्र 'कर्मकर्तरि यगपवादः श्यन्नि'ति भाष्यम्। योगश्चित्तवृत्तिनिरोधः योगशास्त्रप्रसिद्धः। ब्रह्मचर्यं-स्त्रीसङ्गराहित्यम्। तद्योगाङ्गमिति च योगशास्त्रप्रसिद्धम्। स योगः ब्रह्मचारिणं युनक्ति=आत्मदर्शनेन संयोजयतीति कर्तृलकारे संयोजनक्रियायां योगो मुख्यकर्ता, ब्रह्मचारी तु कर्मेति स्थितिः। तत्र कर्मणो ब्रह्मचारिणः कर्तृत्वविवक्षायां 'युज्यते ब्रह्मचारी योग'मिति कर्मकर्तरि ब्रह्मचारिणि लकारः, कर्मवत्त्वात्तदैव यगपवादः श्यन्। ब्रह्मचारी प्राणायामाभ्यासादिश्रमबाहुल्यं विना स्वयमेव योगेन संबध्यते इत्यर्थः। तत्र ब्रह्मचारिणि कर्मकर्तरि धात्वर्थसंबन्धोऽनुयोगितया वर्तते, योगे तु प्रतियोगि-

---

शे.]श्चिणिति, 'दीपजने'त्यतोऽन्यतरस्यामिति च वर्तते। इदं सूत्रमत्राऽस्थाने पतितं, करोतिप्रसङ्गे तूचितम्। श्रद्धोपपन्ने इति। स च मुख्यकर्त्तैवेति तत्राऽत्यन्ताऽप्राप्तकर्मवद्भावार्थं, युजेस्तु कर्मकर्त्तरि सकर्मकत्वेन प्रतिप्रसवविध्यर्थम्। युज्यते ब्रह्मेति। योगो ब्रह्मचारिणं युनक्ति, सम्बन्धानुकूलव्यापारवान् भवतीति पूर्वकक्षा, ततो युजेः प्रतियोगित्वावच्छिन्नसम्बन्धार्थकत्वे ब्रह्मचारिणः कर्तृत्वं, प्रतियोगिताश्रयत्वाच्च योगस्य कर्मत्वं बोध्यम्। भूषाकर्मेति। 'कर्म'शब्दः

न्यत्रात्मनेपदात् । भूषावाचिनां किरादीनां सन्नन्तानां च यक्चिणौ चिण्वदिट् च नेति वाच्यमित्यर्थः अलङ्कुरुते कन्या । अलमकृत । अवकिरते हस्ती । अवाकीर्ष्ट । गिरते । अगीर्ष्ट । आद्रियते । आदृत । किरादिस्तुदाद्यन्तर्गणः । चिकीर्षते कटः । अचिकीर्षिष्ट । इच्छायाः कर्तृस्थत्वेऽपि करोतिक्रियापेक्षमिह कर्मस्थक्रियात्वम् । न रुधः ।३।१।६४। अस्माच्च्लेश्चिण्न । अवारुद्ध गौः ।.कर्मकर्तरीत्येव । अवारोधि गौर्गोपेन । तपस्तपःकर्मकस्यैव ।३।१।८८। कर्ता कर्मवत्स्यात् । विध्यर्थमिदम् । एवकारस्तु व्यर्थ एवेति वृत्त्यनुसारिणः । तप्यते तपस्तापसः । अर्जयतीत्यर्थः । 'तपोऽनुतापे चे'ति चिण्निषेधास्सिच् । अतप्त । तपःकर्मक-

त.] भूषावाचिनामिति । अन्यत्रेति । आत्मनेपदादन्यस्य निषेध आत्मनेपदमेव भवतीत्यर्थस्तदेतदाह—यक्चिणाविति । अवाकीर्ष्टेति । 'लिङ्सिचौ' इति वेट् । आद्रियत इति । तुदादित्वाच्छे 'रिङ् शयग्लिङ्क्षु' इति रिङि इयङ् । आदृतेति । 'उश्चे'ति किरवम् । 'ह्रस्वादङ्गा'दिति सिचो लोपः । न रुधः । 'चिण् ते पदः' इत्यतश्चिणनुवर्तते।

बा.] तया वर्तेत इति स्थितिः तत्र यद्यपि प्रतियोगिनो योगात् 'सहयुक्तेऽप्रधाने' इति तृतीयया भवितव्यं, तथापि युजेः प्रतियोगित्वावच्छिन्नसंबन्धोऽर्थः । तत्र प्रतियोगित्वं फलं, संबन्धो व्यापारः । प्रतियोगित्वरूपफलाश्रयत्वाद्द्वितीयेति समाहितं शब्देन्दुशेखरे । अत्र भाष्यप्रयोगादेव योगाद्द्वितीयेत्यन्ये । भूषाकर्मेति वार्तिकम् । भूषाकर्म, किरादि, सन्, एषां द्वन्द्वः । अन्यत्रेति।प्रथमान्तात्स्वार्थे त्रल् । आत्मनेपदादन्यत्कर्मकार्यमिति लभ्यते। भूषा कर्म क्रिया येषां वाच्यतया ते भूषाकर्माणो धातवः । भूषणक्रियावाचिनामिति यावत् । तदाह—भूषावाचिनामित्यादिना । अलङ्कुरुते कन्येति । स्वयमेव अन्यप्रयत्नं विना भूषणक्रियावतीत्यर्थः । अत्र भूषार्थकत्वात्कर्मकर्तरि तङेव, नतु यक् । अलमकृतेति । अत्र तङेव नतु चिण् । लुटि तु अलङ्कर्तैत्येव, नतु चिण्वदिटौ । अवकिरते हस्तीति । हस्तिनमवकिरति कुसुमादिरित्यत्र मुख्यकर्तरि लकारः । तत्र हस्ती कर्म । तस्य कर्तृत्वविवक्षायां स्वयमेव पुरुषप्रयत्नं विना वृक्षादिसमीपं गच्छन् पुष्पादिभिरवकीर्णवान् भवतीत्यर्थः । अत्रापि तङेव, नतु यगादि । अवाकीर्ष्टेति । 'लिङ्सिचोरात्मनेपदेषु' इति वेट् । गिरते इति । 'ओदनं स्वयमेवे'ति शेषः । 'गॄ निगरणे' अयं किरादिः । आद्रियते इति । 'दृङ् आदरणे' अयमपि किरादिः । शप्रत्यये 'रिङ् शयग्लिङ्क्षु' इति रिङ् । अतिथिमाद्रियते इति मुख्यकर्तरि । आद्रियतेऽतिथिरिति कर्मकर्तरि । स्वयमेव आदरणाश्रय इत्यर्थः । अत्र यद्यपि शे यकि च न विशेषस्तथापि न्याय्यः श एव, यको निषिद्धत्वात् । स्वरे वा विशेषः । तङ् तु ङित्वादेव सिद्धः । अतिथेरभिहितत्वात् प्रथमेति विशेषः । आदृतेति । चिणोऽनेन निषेधे 'ह्रस्वादङ्गा'दिति सिचो लोपः । 'उश्चे'ति किरवम् । अथ सन्नन्तस्योदाहरति—चिकीर्षते कट इति । स्वयमेव कर्तुमिच्छाविषय इत्यर्थः । नन्विच्छायाः पुरुषरूपकर्तृनिष्ठत्वात्कटरूपकर्मनिष्ठत्वाऽभावादिच्छायां सत्यामसत्यां च कटे कर्मणि वैलक्षण्याऽदर्शनाच्च कर्मस्थक्रियत्वाऽभावादिह कर्मवत्त्वस्याऽप्रसक्तेस्तन्निषेधो व्यर्थ इत्यत आह—इच्छाया इति । न रुधः । 'च्लेः सि'जित्यतश्च्लेरिति, 'चिण्ते पदः' इत्यतश्चिणिति चानुवर्तते। तदाह—अस्माच्च्लेश्चिण्नेति। अवारुद्ध गौरिति। स्वयमेवे'ति शेषः। कर्मकर्तरीत्येवेति। 'अचः कर्मकर्तरी'त्यतस्तदनुवृत्तेरिति भावः। अवारोधि गौर्गोपेनेति। इह गोः कर्मणः कर्तृत्वविवक्षाया अभावान्न चिण्निषेध इति भावः। तपस्तपःकर्मकस्यैव।आद्यं तप इति षष्ठ्यन्तम्।तपःकर्मकस्यैत्र तपधातोरिति लभ्यते।'कर्तरिश'बित्यतः'कर्मरीत्यनुवृत्तं प्रथमया विपरिणम्यते।'कर्मवत्कर्मणे'त्यतः कर्मवदित्यनुवर्तते इति मत्वा सूत्रशेषं पूरयति—कर्ता कर्मवदिति। विध्यर्थमिदमिति । एतच्चानुपदमेव उदाहरणव्याख्यावसरे स्पष्टीभविष्यति । ननु विध्यर्थत्वे एवकारो व्यर्थ इत्यत आह—एवकारस्त्विति ।

शे.] क्रियापारः । यद्यपि भूषावाचिण्यन्तेषु 'णिश्री'त्यनेन यक्चिणोः प्रतिषेधः सिद्धस्तथापि चिण्वदिड्भावार्थमिदम् । 'अन्यत्रात्मनेपदा'दित्युक्तेस्त्रयाणामपि निषेध इत्याह—यगित्यादि । अवकिरते इति । 'कश्चित्परस्वादिना हस्तिनमवकिरति' इति पूर्वकक्ष्या । क-गॄ-दृ-धृ-प्रच्छः किरादयः । तत्राऽऽद्ययोः कर्मस्थक्रियतयाऽऽत्मनेपदव्यतिरिक्तनिषेधार्थम्, अन्येषां कर्तृस्थक्रियत्वेनात्मनेपदविध्यर्थमिदम् । विध्यर्थमिदमिति । अयं भावः—उपवासादितपस्तापसं तपति । दुःखयतीत्यर्थः । एवञ्च तापसस्य कर्मत्वे तपेर्दुःखजननमर्थः, कर्तृत्वे त्वर्जनमर्थः। तापसस्तप्यते । अर्जयतीत्यर्थः । एवञ्च क्रियाभेदात्सकर्मकत्वाच्चाऽप्राप्ते विधिरिति । वृत्त्यनुसारिण इति । भाष्ये त्वेवकारसामर्थ्यान्नियमार्थत्वमुक्तम्। तत्र हि "सकर्मकाणां प्रतिषेधो वक्तव्यः'इत्यस्य प्रत्याख्यानाय-'तपेर्वा सकर्मकस्य वचनं नियमार्थं-तपेरेव सकर्मकस्य नान्यस्ये'ति। 'तपे'रिति योगविभागेनायं नियमः-'तस्य च तपः कर्मकस्यैव कर्ता कर्मव'दिति। तेनेह न-'उत्तपति सुवर्णं सुवर्णकारः' उत्तप्यमानं सुवर्णं सुवर्णकारमुत्तपती"त्युक्तम्। तस्यायं भावः—यद्युपवासादिरूपन्तपस्तापसन्तपतीत्यत्र तपिर्दुःखार्थः, तपस्तं दुःखयतीत्यर्थात्, तापसस्तप्यत इति तापसस्य कर्तृत्वेऽर्जनार्थः, तापसस्तदर्जयतीत्यर्थात्; एवञ्च कर्मस्थक्रियया तुल्यक्रियत्वस्य कर्तरि अभाव इति न कर्मवद्भावप्राप्तिस्तथापि शरीरसन्तापलक्ष-

स्येति किम् ? । उत्तपति सुवर्णं सुवर्णकारः । **'न दुहस्नुनमां यक्चिणौ'** । प्रस्नुते । प्रास्नाविष्ट । प्रास्नोष्ट। नमते दण्डः । अनंस्त । अन्तर्भावितण्यर्थोऽत्र नमिः । ***यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसङ्ख्यानम्** । कारयते। अचीकरत। उच्छ्रयते दण्डः । उदशिश्रियत । चिण्वदिट् तु स्यादेव। कारिष्यते। उच्छ्रायिष्यते।

त.]'अचः कर्मकर्तरी'त्यतोऽनुवर्तनादाह -**कर्मकर्तरीत्येवेति** । **अतप्तेति** । तपस्तापस इत्यनुषज्यते । **न दुहस्नु** । ननु दीप्तिपर्यायत्वेन स्नौतेरपि द्विकर्मकत्वाद्गोरूपकर्मणः कर्तृत्वविवक्षायामपि पयोरूपकर्मणो विद्यमानत्वात्सकर्मकाणां प्रतिषेधेन यक्चिणोः प्राप्तिरेव नास्तीति चेत् । अत्राहुः-वत्सादियोगेन क्षीरप्रस्रवणानुकूला उत्कण्ठा स्नुधातोरर्थः । सा च गोनिष्ठा । स्नु प्रस्रवणे इत्यत्रापि करणे ल्युट् । प्रस्नूयतेऽनेनेति प्रस्रवणं । सा चोत्कण्ठा । 'स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी'ति प्रयोगे उपस्नुता=उत्कण्ठितेत्यर्थः। वत्सो गां प्रस्नौति=उत्कण्ठयति । अन्तर्भावितण्यर्थोऽत्र स्नौतिः । गोः कर्तृत्वविवक्षायां प्रस्नुते गौरिति । **प्रास्नाविष्टेति** । चिण्वदिट् । न च चिणि निषिद्धे चिण्वदिडपि न स्यादिति शङ्क्यं, 'चिण्व'दित्यनेन हि चिणीव कार्यमतिदिश्यते।न च चिण्नेत्युक्त्या सोऽतिदेशो निषेद्धुं शक्यते येन चिण्वदिटो निषेधः स्यात् । **प्रास्नोष्टेति** । 'स्नुक्रमोरनात्मनेपदनिमित्ते' इति नियमाद्वलादिलक्षण इण्न । **नमते दण्ड इति** । इह नमिताऽनमितयोर्विशेषदर्शनादुद्देश्यानुरोधाच्च कर्मस्थक्रियत्वमस्ति। कर्मस्थांशस्य उद्देश्यता न तु तदनुकूल-

बा.]तप्यते **तपस्तापस इति**। अत्र तपिरर्जनार्थक इत्याह-**अर्जयतीत्यर्थ इति** । प्राजापत्यचान्द्रायणादिकृच्छ्राद्यात्मकं तपः संपादयतीत्यर्थः । मुख्यकर्तरि लः । संपादनस्य तापसात्मककर्तृस्थत्वात्तपोरूपकर्मस्थत्वाऽभावात् 'कर्मवत्कर्मणे'त्यप्राप्तं कर्मवत्त्वमनेन सूत्रेण विधीयते । तेन यगात्मनेपदादि । यदा तु तदपि दुःखजननात्मके संतापे वर्तते तदा 'तापसं तपस्तपती'त्येव भवति । दुःखयतीत्यर्थः । अत्र मुख्यकर्तृ तपः । तापसस्तु कर्म । अत्रापि दुःखजननव्यापारस्य तपोरूपकर्तृस्थतया तापसरूपकर्मस्थत्वाऽभावात् 'कर्मवत्कर्मणे'त्यनेन कर्मवत्त्वं न भवति । तपः कर्मकत्वाऽभावादनेनापि न कर्मवत्त्वम्। अतो न यगादि कर्मकार्यम् । अथ लुङि अतप्तेत्यत्र कर्मवत्त्वाच्चिणमाशङ्क्य आह-**तपोऽनुतापे चेति चिण्निषेधात्सिजिति** । तस्य 'झलो झली'ति लोपे परिनिष्ठितमाह-**अतप्तेति** । **उत्तपति सुवर्णं सुवर्णकार इति** । अत्र तपःकर्मकत्वाऽभावान्न कर्मवत्त्वमिति भावः । भाष्ये तु एवकारादिदं सूत्रं नियमार्थमित्युक्तमिति शब्देन्दुशेखरे प्रपञ्चितमेतत् । **वृत्त्यनुसारिण** इत्यनेन भाष्यविरोधः सूचित इत्यलम् । 'दुहिपच्योर्बहुल'मिति कर्मवत्त्वविधिस्थदुहिप्रसङ्गात् 'न दुहस्नुनमा'मिति सूत्रमुपन्यस्तं प्राक् । इदानीं सिंहावलोकनन्यायेन स्नुनमोरुदाहर्तुं पुनः सूत्रमुपन्यस्यति-**न दुहस्नुनमां यक्चिणाविति** । तत्र स्नुधातोरुदाहरति-**प्रस्नुते इति** । स्नुधातुः क्षीरप्रस्रवणविषये उत्कण्ठीकरणे वर्तते । वत्सो गां प्रस्नौतीति मुख्यकर्तरि लकारे वत्सो गां क्षीरप्रस्रवणविषये उत्कण्ठयतीत्यर्थः । अन्तर्भावितण्यर्थोऽत्र स्नुधातुः । अत्र गौः कर्म । उत्कण्ठनव्यापारस्तु कर्तृभूतवत्सनिष्ठः । उत्कण्ठा तु गोरूपकर्मनिष्ठा । गोः कर्मणः कर्तृत्वविवक्षायां तु-प्रस्नुते गौः । स्वयमेव क्षीरप्रस्रवणविषये उत्कण्ठावतीत्यर्थः । तत्र उत्कण्ठा पूर्वं कर्मगता, संप्रति तु-कर्तृगता । उत्कण्ठाकृतं च वैलक्षण्यं प्रस्रवणं दृश्यत एव । ततश्च कर्मस्थक्रियत्वात् कर्मवत्त्वेन यक्प्राप्तेऽनेन निषेधः । **प्रास्नाविष्टेति** । अत्र कर्मवत्त्वात्प्राप्तश्चिण् न । किंतु चिण्वदिटौ पक्षे स्तः । चिण्वदिडभावे तु 'स्नुक्रमो'रिति नियमाद्वलादिलक्षण इण्न । तदाह-**प्रास्नोष्टेति** । णम उदाहरति-**नमते दण्ड इति** । नमति दण्डं कश्चित् । नमयतीत्यर्थः । कर्मणः कर्तृत्वविक्षायां तु 'नमते दण्डः' । अत्र कर्मवत्त्वेऽपि न यक् । **अनंस्तेति** । अत्र कर्मवत्त्वेऽपि न चिण् । ननु णमधातोः प्रह्वीभावार्थकस्याऽकर्मकत्वात्कर्थं वत्त्वाऽप्रसक्तेर्यक्चिणोर्न प्रसक्तिरित्यत आह-**अन्तर्भावितण्यर्थोऽत्र नमिरिति** । धातूनामनेकार्थकत्वादिति भावः । **यक्चिणोरिति** । 'न दुहस्नुनमा'मिति

शे.]णायाः क्रियाया अवस्थाद्वयेऽपि तुल्यत्वात्तत्प्राप्तिः।तथा हि- तपस्तापसन्तपतीत्यत्र ज्ञानजनकोपवासादिरूपसन्तापविशेषस्तापसं तापयतीत्यर्थः।अन्तर्भावितण्यर्थोऽत्र तपिः। तापसवृत्तिशरीरसन्तापसामान्यानुकूलव्यापारः सन्तापविशेषवृत्तिरिति बोधः । तदनुकूलव्यापारश्च सन्तापविशेषे स्वरूपावस्थानरूप एव । तापसे शरीरसन्तापसामान्यनुकूलव्यापारविशेषस्वीकार एव । ण्यर्थत्यागे तापसस्य कर्तृत्वम् । 'तापसस्तपः सन्तप्यते' इत्यत्र सन्तापविशेषाऽभिन्नशरीरसन्तापानुकूलव्यापारस्तापसकर्तृक इति बोधः।स व्यापार एव चाऽर्जनं, तत्र क्रियाविशेषणत्वात् 'स्तोकमेधते'इत्यादाविव तपसः कर्मत्वम्।भाष्यप्रामाण्यादेव सामान्यविशेषान्वयिनि क्रियाविशेषणे'तापसेन तपस्तप्यते'इत्यादौ कर्मणि लकारो भवत्येवेति बोध्यम्। तदुक्तं भाष्ये 'यथा 'गोपोषमपुष'दित्यादौ सामान्यपुषेरवयवपुषिः कर्म, एवं 'तापसेन तपस्तप्यते' इत्यादौ सामान्यतपेरवयवतपिः कर्मे'ति । **अवयवतपिरित्यस्य**-विशेषतपिर्ज्ञानजनकोपवासादिरूपन्तप इत्यर्थः । अत एव 'कर्मणि ले कः प्रत्ययार्थः' इति प्रश्ने,-'स एव संतापः' इति भाष्ये उक्तम् । **प्रस्नुते इति** । प्रस्रवनानुकूलोत्कण्ठोत्पादनं स्नौतेरर्थः

ब्रूते कथा । अवोचत । भारद्वाजीयाः पठन्ति—ॐ णिश्रन्थिग्रन्थिब्रूआत्मनेपदाऽकर्मकाणामुपसङ्ख्यानम् । पुच्छमुदस्यति उत्पुच्छयते गौः । अन्तर्भावितण्यर्थतायाम्—उत्पुच्छयते गाम् । पुनः कर्तृत्वविवक्षायाम्—उत्पुच्छयते गौः ।, उदपुपुच्छत । यक्चिणोः प्रतिषेधाच्छप्चङौ । श्रन्थिग्रन्थ्योराधृषीयत्वाण्णिजभावपक्षे ग्रहणम् । ग्रन्थति ग्रन्थम् । श्रन्थति मेखलां देवदत्तः । ग्रन्थते ग्रन्थः । अग्रन्थिष्ट । श्रन्थते । अश्रन्थिष्ट । क्रैयादिकयोस्तु—श्रथ्नीते ग्रथ्नीते स्वयमेव । विकुर्वते सैन्धवाः । वल्गन्तीत्यर्थः । 'वेः शब्दकर्मणः' 'अकर्मकाच्चे'ति तङ् । अन्तर्भावितण्यर्थस्य पुनः प्रेषणत्यागे—विकुर्वते सैन्धवाः । व्यकारिष्ट ।

त.]व्यापारस्येति कर्मवद्भावस्य प्राप्तिरस्तीति भावः।अचीकरतेति। चिणि प्रतिषिद्धे 'णिश्री'ति चङ्। णिश्रन्थीति । णेः सामान्यग्रहणस्य फलमाह—पुच्छमुदस्यतीत्यादि । 'पुच्छभाण्डे'ति णिङ् । आत्मनेपदविधौ योऽकर्मकस्तमुदा-

बा.]यक्चिणोः प्रतिषेधसूत्रे दुहस्नुनमां, हेतुमण्णिश्रिब्रूञामिति च वाच्यमित्यर्थः । कारयते इति। 'स्वयं देवदत्त' इति शेषः । करोति देवदत्तः, तं प्रेरयति यज्ञदत्त इति ण्यन्तान्मुख्यकर्तरि लकारः । अत्र ण्यन्तकर्मणो देवदत्तस्य यज्ञदत्तप्रेरणमनपेक्ष्य कर्तृत्वविवक्षायां कर्मकर्तरि लकारः । कर्मवत्त्वेऽपि तङेव, न यगिति भावः। अचीकरतेति। अत्र कर्मवत्त्वेऽपि न चिण्, 'णिश्री'ति चङेव। उच्छ्रयते दण्ड इति। 'स्वयमेवे'ति शेषः। 'दण्डमुच्छ्रयति कश्चि'दिति मुख्यकर्तरि लकारः । तत्र कर्मणो दण्डस्य कर्तृव्यापारमनपेक्ष्य कर्तृत्वविवक्षायां कर्मकर्तरि लकारः। कर्मवत्त्वेऽपि न यक्, तङेव । उदशिश्रियतेति । कर्मवत्त्वेऽपि चिणभावात् 'णिश्री'ति चङ् । ननु 'कारिष्यते' इत्यत्र कथं चिण्वदिटौ, ण्यन्तस्याऽजन्तस्य उपदेशाऽभावादित्यत आह—चिण्वदिट् तु स्यादेवेति ; 'स्यसिच्सीयुट्तासिषु' इत्यत्र हि उपदेशे अजन्तस्येति नाऽर्थः, किंतु उपदेशे योऽच् तदन्तस्येत्यर्थः।तथाच णिजन्तस्योपदेशाऽभावेऽपि णेरुपदेशसत्त्वान्न दोष इति भावः। उच्छ्रायिष्यते इति । श्रिञ उपदेशे योऽच् तदन्तत्वाच्चिण्वदिटौ । ब्रूते कथेति । 'स्वयमेवे'ति शेषः। कथां ब्रवीति कश्चिदिति मुख्यकर्तृलकारे कथा कर्म, तस्य पुरुषप्रयत्नाऽविवक्षायां कर्मकर्तरि लकारः। कर्मवत्त्वात्तङ् । न यक् । अवोचतेति । कर्मवत्त्वेऽपि न चिण् किंतु 'ब्रुवो वचिः' 'अस्यतिवक्तिख्यातिभ्योऽङ्' 'वच उ'मिति भावः । उच्चारणेन शब्देषु प्राकट्यरूपविशेषदर्शनात् कर्मस्थक्रियत्वं बोध्यम् । णिश्रन्थीति । ण्यन्तस्य श्रन्थेः ग्रन्थेः ब्रूञ आत्मनेपदविधावकर्मकस्य च यक्चिणोः प्रतिषेधो भारद्वाजीयाऽभिमत इत्यर्थः। अत्र णीति सामान्यस्य ग्रहणं नतु हेतुमण्णिच एव । ततश्च णिङन्तस्यापि न यक्चिणाविति मत्वाऽऽह—पुच्छमुदस्यति उत्पुच्छयते गौरिति । 'पुच्छादुदसने' इति णिङ् । नन्वत्र उदसने पुच्छं कर्म, गौर्मुख्यकर्त्री, नतु कर्मकर्त्री। ततश्च नाऽत्र यक्चिणोः प्रसक्तिरित्यत आह—अन्तर्भावितण्यर्थतायामिति । 'उदस्यती'त्यस्य उदासयतीत्यन्तर्भावितण्यर्थताश्रयणे उत्पुच्छयते गां देवदत्त इत्यत्र गौः कर्म,तस्य गोरूपकर्मणः प्रेरयितृपुरुषप्रयत्नानपेक्षया कर्तृत्वविवक्षायां कर्मकर्तरि लकारे उत्पुच्छयते गौरिति भवतीत्यर्थः। स्वयमेव पुच्छमुदस्यति गौरिति बोधः । उदपुपुच्छतेति । अत्र न चिण् । शप्चङाविति ; 'उत्पुच्छयते गौ'रित्यत्र यकः प्रतिषेधाच्छप् । उदपुपुच्छतेत्यत्र चिणः प्रतिषेधाच्चङित्यर्थः । ननु 'श्रन्थ मोक्षणे, ग्रन्थ ग्रथने' इति श्रन्थिग्रन्थ्योश्चौरादिकतया णिग्रहणेनैव सिद्धेः पुनर्ग्रहणं व्यर्थमित्यत आह—श्रन्थिग्रन्थ्योरिति । ग्रन्थति ग्रन्थमिति। रचयतीत्यर्थः । श्रन्थति मेखलां देवदत्त इति । विस्रंसयतीत्यर्थः । 'देवदत्त' इत्युभयत्रान्वेति । अत्र कर्मणो ग्रन्थस्य, मेखलायाश्च कर्तृत्वविवक्षायां ग्रन्थते ग्रन्थः, श्रन्थते मेखलेति च भवति। स्वयमेव ग्रन्थरचनाश्रयः, स्रंसनाश्रयश्चेत्यर्थः । तत्र कर्मवत्त्वेऽपि न यगिति भावः । अग्रन्थिष्ट, अश्रन्थिष्टेत्यत्र च न चिण् । क्रैयादिकयोस्त्विति । कर्मवत्त्वेऽपि तयोर्यकि निषिद्धे श्नाविकरण इति भावः । आत्मनेपदविधावकर्मको यस्तमुदाहरति—विकुर्वते सैन्धवा इति। सैन्धवाः=अश्वाः। अत्र विपूर्वः कृञ् वल्गने वर्तते, उपसर्गवशात् । तदाह—वल्गन्तीति। शब्दं कुर्वन्तीत्यर्थः। धात्वर्थेनोपसङ्ग्रहादकर्मकोऽयम्। मुख्यकर्तरि लकारः । वेरिति । 'वेः शब्दकर्मणः' इत्यनन्तरं पठितेन 'अकर्मकाच्चे'ति सूत्रेण परगामिन्यपि फले तङित्यर्थः। नन्वस्याऽकर्मकतया अश्वानां कर्मकर्तृत्वाऽभावान्न यकः प्रसक्तिरित्यत आह—अन्तर्भावितेति । विपूर्वकः कृञ् शब्दं कुर्वाणस्य प्रेरणे यदा वर्तते तदा विकुर्वते सैन्धवानिति भवति । अश्वान् शब्दायतीत्यर्थः । तत्र सैन्धवानां कर्मणां पुरुषप्रेरणाऽविवक्षया कर्तृत्वविवक्षायां विकुर्वते सैन्धवा इति भवति । वल्गन्तीत्यर्थः । अत्र सैन्धवानां कर्मकर्तॄणां कर्मवत्त्वेऽपि न यगित्यर्थः । व्यकारिष्टेति। चिणि निषिद्धे ण्यन्तत्वाऽभावाच्चङभावे सिच-

शे.]प्रास्नोष्टेति । 'स्नुक्रमो'रिति नियमाद्वलादिलक्षण इण्न । केवलनमतेरकर्मकत्वादाह—अन्तर्भावितेति।चिण्वदिट्स्विति । उक्तबीजमेतत् । ब्रूते कथेति । उच्चारणेन शब्दे प्राकट्यरूपविशेषदर्शनात्कर्मस्थक्रियत्वमस्येति बोध्यम् । णिश्रन्थि। अत्र कर्मकर्तृत्वं विना येऽकर्मकास्ते आत्मनेपदाकर्मशब्देन गृह्यन्ते,कर्मकर्तृत्वेनाऽकर्मकत्वस्याऽव्यभिचरितत्वात्। तेषामन्तर्भावितण्यर्थत्वेन सकर्मकतां कृत्वा पुनः सौकर्यातिशयविवक्षायां कर्मकर्तृत्वं बोध्यम्। उदपुपुच्छतेति । पुच्छमुदस्तवानित्यर्थः। व्यकारिष्टेति । चिणि निषिद्धे ण्यन्तत्वाऽभावाच्चङभावे सिचि चिण्वदिटि वृद्धिः । तदभावपक्षे

व्यकारिषाताम् । व्यकारिषत । व्यकृत । व्यकृषाताम् । व्यकृषत । **कुषिरजोः प्राचां श्यन्परस्मैपदं च ।३।१।९०।** अनयोः कर्मकर्तरि न यक् किंतु श्यन्परस्मैपदं च । आत्मनेपदापवादः । कुष्यति कुष्यते पादः [स्वयमेव] । रज्यति रज्यते वस्त्रम् । यगविषये तु नाऽस्य प्रवृत्तिः । कोषिषीष्ट । रङ्क्षीष्ट । इति कर्मकर्तृप्रक्रिया ।

## अथ तिङन्ते लकारार्थप्रक्रिया ।

**अभिज्ञावचने लट् ।३।२।११२।** स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् स्यात् । लङोऽपवादः । स्मरसि कृष्ण ! गोकुले वत्स्यामः । एवं बुध्यसे चेतयसे इत्यादियोगेऽपि, तेषामपि प्रकरणादिवशेन स्मृतौ वृत्ति-

---

त.]हरति-विकुर्वते सैन्धवा इति । **कुषिरजोः** । 'न दुहस्नुनमा'मित्यतो नेति वर्तते । तदाह-**न यगिति । किन्तु श्यन्निति** । तस्मिन्नेव विषय इति भावः । 'न गिरा गिरेति ब्रूयादेरं कृत्वोद्गेय'मित्यत्र गिरापदं प्रतिषिध्यैरापदं विधीमानं गिरापदस्थान एव यथा भवत्येवमिहापि यकः प्रतिषेधं कृत्वा विधीयमानः श्यन् तदीयस्थान एव भवत्यतो व्याचष्टे-**यगविषये तु नास्येति** । श्यना सन्नियोगशिष्टं परस्मैपदं श्यनभावे न भवतीत्यात्मनेपदमेवोदाहरति-**कोषिषीष्टेति** । कोषिष्यते । चुकुषे । कोषिष्यते । अकोषि । अकोषिष्यत । ररञ्जे । रङ्क्ष्यते । अरञ्जि । अरङ्क्ष्यत । इत्याद्यपि ज्ञेयम् । श्यन्पक्षे कुष्यन्तीत्यत्र नित्यं नुम्, । यक्पक्षे तु 'आच्छीनद्यो'रिति विकल्पः । स्वरे विशेषोऽप्यस्त्येव । इह प्रकरणे 'भिद्यते काष्ठं स्वयमेवे'ति वृत्त्यादौ प्रयुज्यते तत्र स्वयंशब्दः करणार्थको ज्ञेयः । आत्मना करणेनेति । कर्त्रर्थत्वे तु कर्मणि लः स्यात् । स्पष्टं चेदं कैयटादौ । **इति कर्मकर्तृप्रक्रिया** ।

**अभिज्ञा** । भूते इत्यधिक्रियते । 'अनद्यतने ल'ङित्यतोऽनद्यतन इति वर्तते । **अभिज्ञा**=स्मृतिः, सा उच्यते बोध्यतेऽनेनेति विग्रहः । तदाह-**स्मृतिबोधिनीत्यादि । वत्स्याम इति** । अवसामेत्यर्थः । 'पश्य मृगो धावती'त्यत्र वाक्यार्थरूपमृगकर्तृकधावनमिव स्मरसीत्यत्र गोकुलाधिकरणकाऽस्मत्कर्तृकभूतानद्यतनवासो वाक्यार्थः कर्म ।

---

बा.]श्चिण्वदिटि वृद्धिरिति भावः । चिण्वदिडभावपक्षे आह-**व्यकृतेति** । 'ह्रस्वादङ्गा'दिति सिचो लोपः । **कुषिरजोः** । **अनयोरिति** । 'कुष निष्कर्षे रञ्ज रागे' इत्यनयोरित्यर्थः । **कर्मकर्तरीति** । 'अचः कर्मकर्तरी'त्यतो मण्डूकप्लुत्या तदनुवृत्तेरिति भावः । 'न दुहस्नुनमा'मित्यतो नेति, यगिति चानुवर्तते । तदाह-**न यगिति । किंतु श्यन्निति** । यग्विषये इत्यर्थः । एवंच यग्विषयादन्यत्र न श्यनः प्रवृत्तिः । 'न य'गित्यनुक्त्वा श्यनो विधाने तु यग्विषयादन्यत्रार्द्धधातुकेऽपि श्यन् स्यादिति भावः । 'प्राचां'ग्रहणाद्विकल्पः । तदाह-**कुष्यति कुष्यते वा पाद इति** । 'स्वयमेवे'ति शेषः । कुष्णाति पादं देवदत्त इति मुख्यकर्तृलकारे पादः कर्म । तस्य पुरुषप्रयत्नमनपेक्ष्य कर्तृत्वविवक्षायां श्यनि परस्मैपदे च कुष्यतीति रूपम् । तदुभयाऽभावे यकि आत्मनेपदे च कुष्यते इति रूपमिति भावः । यक्श्यनोः स्वरे विशेषः । श्यनि 'कुष्यन्ती वधू'रित्यत्र 'शप्श्यनोर्नित्य'मिति नित्यं नुम् । यकि तु 'आच्छीनद्यो'रिति विकल्पः स्यात् । **रज्यति रज्यते वा वस्त्रमिति** । अन्तर्भावितण्यर्थतायां दैवादिकत्वाच्छ्यनि 'रज्यति वस्त्र'मित्यत्र रञ्जयतीत्यर्थः । मुख्ये कर्तरि लः । कर्मणः कर्तृत्वविवक्षायां तु रज्यति रज्यते वा वस्त्रमिति भवतीत्यर्थः । **यगविषये तु नास्त्येवेति** । 'श्य'निति शेषः । यकं प्रतिषिध्य तत्स्थाने श्यनो विधिसामर्थ्यादित्यर्थः । **कोषिषीष्टेति** । आर्द्धधातुकत्वेन यगविषयत्वाच्च श्यन् । तत्संनियोगशिष्टत्वात् परस्मैपदं च श्यनभावे सति न भवतीति भावः । **रङ्क्षीष्टेति** । रञ्जेः सीयुटि जस्य कुत्वेन गः । तस्य चर्त्वेन कः । अनुस्वारपरसवर्णौ । अत्र कर्मकर्तृप्रकरणे सर्वत्र पच्यते ओदनः स्वयमेवेति, भिद्यते काष्ठं स्वयमेवेत्यादौ स्वयंशब्दस्य आत्मना करणेनेत्यर्थः, न त्वात्मना कर्त्रेति, तथा सति कर्मण्येव लः स्यादिति 'णेरणौ' इति सूत्रे कैयटे स्पष्टम् । **इति कर्मकर्तृप्रक्रिया** ।

अथ लकारार्थप्रक्रिया निरूप्यते । **अभिज्ञावचने लट्** । **अभिज्ञा**=स्मृतिः, सा उच्यते बोध्यते अनेनेति विग्रहः । तदाह-**स्मृतिबोधिन्युपपदे इति** । स्मृतिबोधकपदे समीपे प्रयुज्यमाने सतीत्यर्थः । 'भूते' इत्यधिकृतम् । 'अनद्यतने ल'ङित्यतोऽनद्यतने इत्यनुवर्तते । तदाह-**भूतानद्यतने इति । लङ इति** । 'अनद्यतने ल'ङित्यस्यापवाद इत्यर्थः । **स्मरसीति** । हे कृष्ण ! गोकुले अवसामेति यत्तत्स्मरसीत्यर्थः । अत्र वाक्यार्थः कर्म । कृतं गोकुलवासं स्मरसीति यावत् । **एवमिति** । स्मरसीति पदयोग इव बुध्यसे इत्यादिस्मृतिबोधकपदयोगेऽपि लृडित्यर्थः । ननु बुध्यत्यादेः स्मृतित्वेन रूपेण स्मृत्यर्थकत्वाऽभावात्कथमिह लृडित्यत आह-**तेषामपीति** । पर्यवसानगत्या स्मृतिबोधकत्वात्तद्योगेऽपि

---

शे.]आह-**व्यकृतेति** । 'ह्रस्वादङ्गा'दिति सिचो लोपः । **इति कर्मकर्तृप्रक्रिया** ।

लकाराणां कालविषये उत्सर्गापवादशास्त्राण्याह-**अभिज्ञा** । 'भूते' इत्यधिकारः, 'अनद्यतने लङि'त्यतोऽनद्यतन इति वर्त्तते । **एवं बुध्यसे इत्यादि** । अत्र मानं दृढं चिन्त्यम् । **अभुञ्ज्महीति** । 'अभिज्ञे'ति लृटोऽनेन

संभवात् । **न यदि** ।३।२।११३। यद्योगे उक्तं न । अभिजानासि कृष्ण!यद्वने अभुञ्ज्महि । **विभाषा साकाङ्क्षे** ।३।२।११४। उक्तविषये लृङ्वा स्याल्लक्ष्यलक्षणभावेन साकाङ्क्षश्चेद्वक्तेत्यर्थः।स्मरसि कृष्ण! वने वत्स्यामस्तत्र गाश्चारयिष्यामः। वासो लक्षणं, चारणं लक्ष्यम्।पक्षे लङ् [अवसाम।अचारयाम]।यच्छब्दयोगेऽपि'न यदी'ति बाधित्वा परत्वाद्विकल्पः। **'परोक्षे लिट्'**। चकार। उत्तम:पुरुषे चित्तविक्षेपादिना पारोक्ष्यम्। 'सुप्तोऽहं किल विललाप'। 'बहु जगद पुरस्तात्तस्य मत्ता किलाऽहम्'।ॐ **अत्यन्तापह्नवे लिड्वक्तव्यः** । कलिङ्गेष्ववात्सीः ?। नाहं कलिङ्गान् जगाम । **हशश्वतोर्लङ् च** ।३।२।११६। अनयोरुपपदयोर्लिड्विषये लङ् स्याच्चाल्लिट् । इतिहाऽकरोत् । चकार वा । शश्वदकरोत् । चकार वा । **प्रश्ने चासन्नकाले** ।३।२।११७। प्रष्टव्यः प्रश्नः । आसन्नकाले पृच्छ्यमानेऽर्थे

---

त.]कृष्णेति संबोधनं स्मरणक्रियायां विशेषणम् । तथा च पूर्वोक्तनिवासकर्मकं कृष्णसंबोध्यकं स्मरणमिति फलितोऽर्थः ।

**न यदि** । लटः प्रतिषेधे उत्सर्गो लङ्।**वासो लक्षणमिति**। प्रसिद्धत्वाज्ज्ञापकमित्यर्थः।**चारणं लक्ष्यमिति** । सहसा बुद्ध्यनारोहाज्ज्ञाप्यम् । **पक्षे लङिति** । वने अवसाम, गा अचारयाम । **यच्छब्दयोगेऽपीति** । अतएव 'न यदी'ति योगात्पूर्वं 'विभाषा साकाङ्क्षे' इति न कृतमिति भावः । **अत्यन्तापह्नव इति** । अपह्नवोऽपलपस्तत्र आत्यन्तिकत्वं नामैवं यदभियुक्तस्तद्धेतोरप्यपह्नुतिः । **नाहमित्यादि** । कलिङ्गो नाम निषिद्धो देशः, **'अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च। तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति'**इति स्मरणात्, तस्मिन्देशे त्वया गत्वा चिरं स्थितमिति केनचित्कश्चिदुक्तः सन्नाह–**'नाहं कलिङ्गाञ्जगामे'ति**। न केवलमवस्थानमेव निषिध्यते किं तर्हि तद्धेतुभूतं गमनमपीति भवत्यत्यन्ताऽपह्नवः । यदा तु कलिङ्गेष्वगम इत्युक्तः सन्गमनमेवापलपति न तदात्यन्तापह्नव इति लङेव भवति, 'न कलिङ्गेष्वगच्छ'मिति । **प्रश्ने चा** । भूतानद्यतनपरोक्षे इति वर्तते । प्रश्न इत्यत्र कर्मणि नङित्याह–**प्रष्टव्य इति । आसन्नेति** । पञ्चवर्षाभ्यन्तरमासन्नकालं, पञ्चवर्षाऽतीतं तु विप्रकृष्टकालमित्याहुः । **पृच्छ्यमान इति** । आसन्नकालिके भूतानद्यतनपरोक्षार्थवृत्तिधात्वर्थे प्रष्टव्ये सतीत्यर्थः । प्रश्ने किम् ? । भूतानद्यतनपरोक्षे लिडेव ।

---

बा.]लट् । एतदर्थमेव वचनग्रहणमिति भावः। **न यदि** । 'यदी'ति सप्तमीति मत्वाह–**यद्योगे इति । उक्तं नेति** । 'अभिज्ञावचने' इति लृण भवतीत्यर्थः । **अभिजानासीति**। वने अभुञ्ज्महीति यत्तत्स्मरसीत्यर्थः । **विभाषा । उक्तविषये इति** । अभिज्ञाबोधिन्युपपदे इत्यर्थः । **लक्ष्यलक्षणभावेनेति** । ज्ञाप्यज्ञापकभावेनेत्यर्थः। अत्र व्याख्यानमेव शरणम् । **स्मरसीति** । पूर्वं वने अवसाम, तत्र वने गा अचारयामेति यत्तत् हे कृष्ण ! स्मरसीत्यर्थः । अत्र यदित्यस्य गम्यत्वेऽपि तस्य प्रयोगाऽभावान्न यद्योगः । **वासो लक्षणमिति** । 'चारणस्ये'ति शेषः । उभयत्रापि लृङ्विकल्पः, अभिज्ञावचनयोगस्य अविशिष्टत्वादिति भावः । नच यद्योग एव 'विभाषा साकाङ्क्षे' इति विकल्पोऽस्त्विति भ्रमितव्यं, 'यदि च अयदि चाऽयं विकल्प'इति भाष्यात्तदाह–**यच्छब्दयोगेऽपीति**।'परोक्षे लि'डिति प्राग्व्याख्यातमपि विशेषविवक्षया स्मार्यते।अहमर्थस्य प्रत्यक्षत्वात् परोक्षत्वाऽभावात्कथमस्य लिट् उत्तमपुरुष इत्यत आह–**उमत्तपुरुषे चित्तेति**। **सुप्त इति** । सुप्तत्वादहं विललापेत्यर्थः । अत्र स्वापाच्चित्तविक्षेपः । **बहु जगदेति** । मत्तत्वात्तस्य पुरस्तादहं बहु जगदेत्यर्थः । अत्र उन्मादाच्चित्तविक्षेपः। आदिना व्यासङ्गसङ्ग्रहः । **अत्यन्तापह्नवे इति** । अपरोक्षार्थमिदम् । **कलिङ्गेष्ववात्सीरिति** । अतस्त्वं न सहवासयोग्य इति प्रश्नः । **'अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च । तीर्थयात्रां विना यातः पुनः संस्कारमर्हति ।'** इति वचनादिति भावः । **नाहं कलिङ्गान् जगामे**त्युत्तरम् । कलिङ्गशब्दस्य जनपदविशेषवाचित्वाद्बहुवचनम्।अत्र तद्देशगमनोत्तरकालिकवासविषयकप्रश्ने कारणीभूतगमनस्यैवापलापात्त्वन्तापह्नवो ज्ञेयः । **कलिङ्गेष्ववात्सी**रित्यत्र 'अकर्मकधातुभिर्योगे देशः कालो भावः' इति कर्मसंज्ञायाः पाक्षिकत्वान्न द्वितीयेति कारकाधिकारे निरूपितम् । **हशश्वतोर्लङ् च**।स्पष्टम् । **प्रश्ने चासन्नकाले**। 'प्रश्ने इत्यनेन प्रश्नविषयो विवक्षित इत्याह–**प्रष्टव्यः प्रश्न इति । अर्थे** इत्यन्तरं 'वर्तमानाद्धातो'रिति शेषः । प्रयोक्तृदृष्टिपथातिक्रान्तत्वमनासन्नकालत्वम् । वृत्तौ तु पञ्चवर्षातीतकालोऽनासन्नकाल इत्युक्तम् । **लट् स्मे** । 'स्मे'त्यव्ययम् । तद्योगे लिड्विषये लट्

---

शे.]निषेधे औत्सर्गिको लङ्। **साकाङ्क्ष इति**। विद्यमानाकाङ्क्षे इत्यर्थः।तेनाकाङ्क्षानिरूपके तद्विषये च सिध्यति।**वत्स्याम इति** । लक्ष्यलक्षणभावस्य विवक्षितत्वात्साकाङ्क्षता बोध्या । लक्षणं=ज्ञापकं, लक्ष्यं=ज्ञाप्यम् । **परत्वादिति** । तेनोभयत्रविभाषेयमिति भावः । **चित्तविक्षेपादिनेति** । आदिना स्वापमनोऽसन्निधानादिसङ्ग्रहः । **अत्यन्तेति** । अपरोक्षार्थमिदम् । तद्देशगमनोत्तरकालिकवासप्रश्ने तत्कारणगमनस्यैवापलापादत्यन्तापह्नव उदाहरणे बोध्यः । अबाधितपरोक्तविपरीतबोधनाय तदुपपादकाऽभावप्रतिपादनम्–**अत्यन्तापह्नवः** । अत्र कलिङ्गवासाद्युपपादकं कलिङ्गगमनादि, तेन विना तदसम्भवात् । 'नाहं कलिङ्गाञ्जगामे'त्येव पाठः । जनपदवाचिनो नित्यबहुवचनान्तत्वात् । **प्रश्ने चासन्न** । प्रश्नविषयी-

लिङ्विषये लङ्लिटौ स्तः। अगच्छत्किम्।जगाम किम्। अनासन्ने तु कंसं जघान किम्। **लट् स्मे**।३।२।११८।लिटोऽपवादः।यजति स्म युधिष्ठिरः। **अपरोक्षे च**।३।२।११९।भूतानद्यतने लट् स्यात् स्मयोगे। एवं स्म पिता ब्रवीति। **ननौ पृष्टप्रतिवचने**।३।२।१२०।अनद्यतनपरोक्ष इति निवृत्तम्। भूते लट् स्यात्। अकार्षीः किम् ?। ननु करोमि भोः।**नन्वोर्विभाषा**।३।२।१२१।[नशब्दे नुशब्दे च लङ्वा स्यात्]।अकार्षीः किम्?।न करोमि। नाऽकार्षम्। अहं नु करोमि । अहं न्वकार्षम् । **पुरि लुङ् चाऽस्मे** ।३।२।१२२। अनद्यतनग्रहणं मण्डूकप्लुत्याऽनुवर्तते । पुराशब्दयोगे भूतानद्यतने विभाषा लुङ् , चाल्लट् नतु स्मयोगे । पक्षे यथाप्राप्तम् । वसन्तीह पुरा छात्राः । अवात्सुः । अवसन् । ऊषुर्वा । अस्मे किम् ?। यजति स्म पुरा। भविष्यतीत्यनुवर्तमाने-**यावत्पुरानिपातयोर्लट्**।३।३।४। यावद्भुङ्क्ते । पुरा भुङ्क्ते। निपातावेतौ निश्चयं द्योतयतः। निपातयोः किम्?। यावद्दास्यते तावद्भोक्ष्यते। करणभूतया पुरा यास्यति । **विभाषा कदाकर्ह्योः** ।३।३।५। भविष्यति लङ्वा स्यात् । कदा कर्हि वा भुङ्क्ते । भोक्ष्यते । भोक्ता वा । **किंवृत्ते लिप्सायाम्** ।३।३।६। भविष्यति लङ्वा स्यात् । कं कतरं कतमं वा भोजयसि, भोजयि-

---

त.]जगाम चैत्रः। **लट् स्मे**। 'स्मे' इत्यव्ययं भूतकालद्योतकम् । **ननौ** । पृष्टस्य प्रतिवचनमिति विग्रहः। समाहारद्वन्द्वे तूभयत्र स्यात्, इष्यते च प्रतिवचने एव लट् । तदाह-**ननु करोमीति** । न च पृष्टग्रहणं व्यर्थं यावता प्रश्नपूर्वकमेव प्रतिवचनं भवतीति वाच्यम्, विरुद्धमपि वचनं प्रतिवचनं, वचनाभिमुख्यमपि प्रतिवचनमिति पृष्टग्रहणं कर्तव्यमिति कैयटे स्थितत्वात् । **नन्वोः** । भूत इत्येव । पक्षे लुङ् । अनद्यतने तु लङ् । **पक्षे यथाप्राप्तमिति** । लुङ्लटोरभावपक्षे लङ्, पारोक्ष्ये तु लिडित्यर्थः । **भविष्यतीति** । 'भविष्यति गम्यादयः' इति सूत्रात् । **यावत्पुरा** । लक्षणप्रतिपदोक्तपरिभाषाऽनित्येति निपातग्रहणेन ज्ञाप्यते । **यावद्भुङ्क्ते इति** । निश्चितं भोक्ष्यते इत्यर्थः । **यावद्दास्यत इति** । अनद्यतनभविष्यति तु 'यावद्दाता तावद्भोक्ते'ति प्रत्युदाहर्तव्यम् । **विभाषा** । ननु 'अनद्यतने र्हिलन्यतरस्या'मित्यनद्यतने किमो र्हिल्विहितस्तत्श्च कर्हियोगे लुटैव भाव्यमिति कथमुदाहियते-कर्हि भोक्ष्यत इति । अत्राहुः-भविष्यत्सामान्ये भोक्ष्यते इति लृट् । कर्हियोगे तु अनद्यतनावगतिर्लक्षणयेति । **भोक्ता वेति**। ननु भविष्यत्सामान्येऽयं लङ्विहित-

---

बा.]स्यादित्यर्थः। **यजति स्मेति**। स्मशब्दो भूतकालद्योतकः । **अपरोक्षे च। एवं स्मेति**। पिता एवमुक्तवानित्यर्थः। **ननौ पृष्ट** । निवृत्तमिति । व्याख्यानादिति भावः । **अकार्षीःकिमिति** प्रश्नः। **ननु करोमीत्युत्तरम्** । अकार्षमित्यर्थः । नन्विति संबोधने । **नन्वोर्विभाषा** । न तु अनयोर्द्वन्द्वः। तदाह-**नशब्दे नुशब्दे चेति** । **लङ्वा स्यादिति** 'भूते' इति शेषः । **अकार्षीः किमिति** प्रश्नः। **न करोमि, नाकार्षमित्युत्तरम्** । **अहं नु करोमि, अहं न्वकार्षमिति** च।'तर्के नु स्या'दित्यमरः। **पुरि लुङ् चास्मे**।'अस्मे इति च्छेदः। पुरेत्याकारान्तमव्ययम्। पुरीति तस्य सप्तम्येकवचनम् । आत इति योगविभागाद्लोपः। **मण्डूकप्लुत्येति** । अत्र व्याख्यानमेव शरणम् । **चाल्लडिति** । तथाच लुङ् लट् च वेति फलितम् । **पक्षे इति** । एतदुभयाऽभावपक्षे इत्यर्थः । **यथाप्राप्तमिति** । अनद्यतनपरोक्षभूते लिट् । परोक्षत्वाऽविवक्षायां तु लङित्यर्थः । 'अभिज्ञावचने' इत्यारभ्य एतदन्ता विधयस्तृतीयस्य द्वैतीयीकाः ।

अथ तृतीयस्य तार्तीयीका विधयो वक्ष्यन्ते।**भविष्यतीत्यनुवर्तमाने इति**।'भविष्यति गम्यादयः' इति सूत्रादिति भावः । **यावत्पुरा** । यावत् पुरा इति द्वे पदे । अनयोः प्रयुज्यमानयोर्लट् स्यादित्यर्थः । लुडादेरपवादः । **निश्चयं द्योतयत इति** । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः । **यावद्दास्यते तावद्भोक्ष्यते इति** । यत्परिमाणकं तत्परिमाणकमित्यर्थः । 'यत्तदेतेभ्यः परिमाणे वतु'बिति वतुबन्तत्वेन निपातत्वाऽभावान्न लडिति भावः । **करणभूतयेति** । 'पुरा यास्यती'ति प्रत्युदाहरणान्तरम् । पुरशब्दस्य पुरेति तृतीयान्तमिदम् । तत्स्फोरणाय करणभूतयेत्युक्तम् । **विभाषा कदाकर्ह्योः** । 'भविष्यति लङ्वा स्या'दिति शेषपूरणम् । लडभावपक्षे लुट्लटौ यथाप्राप्तम् । तदाह-**कदा कर्हि वा भुङ्क्ते भोक्ष्यते भोक्ता वेति** । नच कर्हियोगे लडभावपक्षे लुडेवोचितो, ननु लृट् ।

---

शे.]भूतासन्नकालिकभूतानद्यतनपरोक्षार्थाद्धातोरित्यर्थः। **यजति स्मेति** । 'स्म'शब्दो भूतकालद्योतकः। **एवं स्मेति** । एवंशब्दोऽपरोक्षत्वद्योतकः । **ननौ पृष्ट** पृष्टग्रहणं वचनंवचनं प्रतीत्यायर्थंसम्भावनावारणाय । यदा भ्रमादिदर्शनेन तत्क्रियानुवृत्तिमारोप्य वर्तमाने लट् तदा'ननु कुर्वन्तं पश्ये'ति शत्रादि भवति।सूत्रन्तु तदनारोपे भूतत्वविवक्षायांलुङ्बाधनार्थं। यता 'अनन्तरस्ये'ति न्यायात् 'वर्तमाने ल'डिति विहितस्यैवेति स्पष्टयाकरे। **नन्वोः**। अनयोर्योगे भूतसामान्ये पृष्टप्रतिवचने लङ् वेत्यर्थः।पक्षे लुङ् । अनद्यतने तु लङेव। **अनुवर्त्तते इति**। यदि भूते एव स्याल्लुङ्ग्रहणमनर्थकं स्यादिति भावः। [**यथाप्राप्तमिति** । लङित्यर्थः । पारोक्ष्ये तु लिडेव] । **अनुवर्तमाने इति** । 'भविष्यति गम्यादयः' इति सूत्रात् । **किंवृत्ते**। किमा वृत्तं-निष्पन्नं तस्मिन्नुपपदे इत्यर्थः। ते च कः कतरः कतम इतित्रय एवेति वृत्तिः। 'यद्वृत्तान्नित्य'मिति

ष्यसि, भोजयितासि वा । लिप्सायां किम् ? । कः पाटलिपुत्रं गमिष्यति ?। **लिप्स्यमानसिद्धौ च** ।३।३।७। लिप्स्यमानेनाऽन्नादिना स्वर्गादेः सिद्धौ गम्यमानायां भविष्यति लड्वा स्यात्। योऽन्नं ददाति दास्यति दाता वा स स्वर्गं याति यास्यति याता वा । **लोडर्थलक्षणे च** ।३।३।८। लोडर्थः प्रैषादिर्लक्ष्यते येन तस्मिन्नर्थे वर्तमानाद्धातोर्भविष्यति लड्वा स्यात् । कृष्णश्चेद्भुङ्क्ते त्वं गाश्चारय । पक्षे लुड्लृटौ । **लिङ् चोर्ध्वमौहूर्तिके** ।३।३।९। ऊर्ध्वं मुहूर्ताद्भव ऊर्ध्वमौहूर्तिकः । निपातनात्समासः, उत्तरपदवृद्धिश्च । ऊर्ध्वमौहूर्तिके भविष्यति लोडर्थलक्षणे वर्तमानाद्धातोर्लिङ्लटौ वा स्तः । मुहूर्तादुपरि उपाध्यायश्चेदागच्छेत्, आगच्छति, आगमिष्यति, आगन्ता वा, अथ त्वं छन्दोऽधीष्व । **वर्तमानसामीप्ये वर्तमानवद्वा** ।३।३।१३१। समीपमेव सामीप्यम् । स्वार्थे ष्यञ् । 'वर्तमाने लि'डित्यारभ्य 'उणादयो बहुल'मिति यावद्येनोपाधिना प्रत्यया उक्तास्ते तथैव वर्तमान-

---

त.]स्तस्य लुटा सह कथं विकल्पो,विषयभेदादिति चेत्,अत्राहुः-'अनद्यतने लु'डित्यत्र 'विभाषा कदे'त्यादीनि कानिचित्सूत्राणीष्टानुरोधेनानुवर्तन्ते तेन, लुड्विषयेऽपि लड्भवति, न त्वनद्यतने लुटा लड् बाध्यत इति । **किंवृत्ते** । किमा वृत्तं किंवृत्तम् । केचित्तु यद्यपि कदाकर्त्रेत्याद्यपि किंवृत्तं, तथापि तन्न गृह्यते, अनभिधानात् । तेन कदा भोजयिष्यसीत्यादौ भविष्यति लण्नेत्याहुः । **लिप्स्यमान** । लिप्स्यमानसिद्धौ लिप्सायाः सत्त्वात्पूर्वेण सिद्धेऽप्यकिंवृत्तार्थमिदमिति ध्वनयन्नुदाहरति-**योऽन्नमिति** । **लोडर्थे** । लोडर्थस्य लक्षणमिति षष्ठीतत्पुरुषः । कृष्णभोजनं लोडर्थस्य गोचारणप्रैषस्य लक्षणम् । भोजनकाले गोचारणं त्वया कर्तव्यमित्यर्थः । **पक्षे लुडिति** । कृष्णश्चेद्भोक्ता, कृष्णश्चेद्भोक्ष्यते, त्वं गाश्चारयेत्यर्थः । **लिङ् चोर्ध्व** । 'कालाट्ठञ्' । 'तद्धितार्थोत्तरपदे'त्यत्र 'दिक्सङ्ख्ये' इत्यनुवर्तनादिह समासो दुर्लभ इत्याशङ्कायामाह-**निपातनादिति** । **वर्तमान** । **स्वार्थे ष्यञिति** । अस्मादेव सामीप्य इति निर्देशात्ष्यञि सिद्धे 'चतुर्वर्णादिभ्यः' इति वार्तिकं प्रपञ्चार्थमित्याहुः । न चाऽत्र 'पूरणगुणे'ति निषेधात्षष्ठीसमासो न प्राप्नोतीति वाच्यम्, अनेनैव निर्देशेन तन्निषेधस्याऽनित्यत्वाभ्युपगमात् । तेन 'बुद्धिमान्द्य'मित्यादि सिद्धम् । **येनोपाधिनेति** । धातुविशेषा-

---

बा.]'अनद्यतने र्हिलन्यतरस्या'मिति र्हिलन्तकर्हियोगविरोधादिति वाच्यं,लडुदाहरणस्य कदायोगमात्रविषयत्वादित्याहुः।**किंवृत्ते लिप्सायां** । किंशब्देन वृत्तं निष्पन्नं किंवृत्तमित्यभिप्रेत्य आह-**विभक्त्यन्तमिति** । **लड्वेति** । लडभावे तु लुट्लृटौ यथाप्राप्तम् । किंवृत्तशब्देन विभक्त्यन्तडतरडतमान्तानामेव ग्रहणमिति वृत्तिः।तेन कदादियोगे भविष्यति लट् । 'यद्वृत्तान्नित्य'मिति सूत्रभाष्यरीत्या तु किंवृत्तानां सर्वेषां कदेत्यादीनामपि ग्रहणमिति युक्तम्।**कं कतरं कतमं वेति**।'क्षुधितमन्नलिप्सु'मिति शेषः । **लिप्स्यमानसिद्धौ च** । **लड्वेति** । पक्षे यथाप्राप्तम् । लिप्स्यमानसिद्धौ लिप्सायायाः सत्त्वेऽप्यकिंवृत्तार्थमिदमिति मत्वोदाहरति-**योऽन्नमिति** । योऽन्नं ददाति स स्वर्गं याति, योऽन्नं दास्यति स स्वर्गं यास्यति, योऽन्नं दाता स स्वर्गं यातेत्यन्वयः । **लोडर्थलक्षणे च** । **लोडर्थः प्रैषादिरिति** । 'विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु' इत्यनुवृत्तौ 'लोट् चे'ति लोड्विधानादिति भावः । **कृष्णश्चेदिति** । कृष्णभोजनकाले त्वं गाश्चारयेत्यर्थः । अत्र कृष्णभोजनं लोडर्थस्य गोचारणप्रैषस्य लक्षणम्, परिच्छेदकमिति यावत् । **पक्षे लुट्लृटाविति** । कृष्णश्चेद्भोक्ता, भोक्ष्यते वा, त्वं गाश्चारयेत्युदाहार्यम् । **लिङ् चोर्ध्वमौहूर्तिके** । 'ऊर्ध्व'मिति विभक्तिप्रतिरूपकमव्ययम्। ऊर्ध्वं मुहूर्ताद्भव इति विग्रहः । केचित्तु 'ऊर्ध्व'मिति द्वितीयान्तम् ,'अकर्मकधातुभिर्योगे' इति कर्मत्वादित्याहुः । **ऊर्ध्वमौहूर्तिक इति** । ऊर्ध्वमुहूर्तशब्दाद्भवार्थे कालाट्ठञिति भावः । ननु तद्धितार्थेत्यत्र दिक्सङ्ख्ये इत्यनुवृत्तेः समानाधिकरणाधिकाराच्चात्र कथं समास इत्यत आह-**निपातनादिति** । पूर्वपदे आदिवृद्धिमाशङ्क्य आह-**उत्तरपदवृद्धिश्चेति** । निपातनादित्यनुषज्यते । **ऊर्ध्वमौहूर्तिके इति** । मुहूर्तादूर्ध्वकालीने इत्यर्थः । इदं च लोडर्थलक्षण इत्यत्रान्वेति । **लिङ्लटाविति** । चाल्लट् समुच्चीयत इति भावः । **वा स्त इति** । पक्षे लुट्लृटौ यथाप्राप्तम् । **छन्द इति** । वेदमित्यर्थः । इति तृतीयस्य तृतीये भविष्यतीत्यधिकारस्था लविधयः । अथाऽस्मिन्नेव तृतीयपादे कतिपयान्विधीनाह-**वर्तमानसामीप्ये** । **स्वार्थे ष्यञिति** । अस्मादेव निर्देशाच्चतुर्वर्णादेराकृतिगणत्वादिति भावः । **इत्यारभ्येति** :

---

शे.]सूत्रस्थभाष्यरीत्या सर्वग्रहणमित्यन्ये । उदाहरणे तादृशप्रश्नेन प्रष्टुर्लिप्सा गम्यते। उत्तरसूत्रोदाहरणेऽपि तादृशप्रयोगेण वक्तुर्लिप्सा गम्यते । अत्र किंवृत्तग्रहणन्तु लिप्स्यमानसिद्धिरहितायां लिप्सायामकिंवृत्ते लटो निवृत्त्यर्थम्।**लोडर्थे**। लोडर्थप्रैषादिविषयधात्वर्थलक्षणे इत्यर्थः । कृष्णभोजनं प्रैषविषयगोचारणस्य लक्षणं बोध्यम् । **ऊर्ध्वमिति द्वितीयान्तम्** , अकर्मकधातुयोगे कालादीनां कर्मत्वोक्तेः।'ऊर्ध्व'मिति दिक्शब्दयोगे 'मुहूर्ता'दिति पञ्चमी । 'तद्धितार्थ' इत्यत्र 'दिक्सङ्ख्ये' इत्यनुवर्तनात्समानाधिकरणाधिकाराच्चेह समासो दुर्लभोऽत आह-**निपातनादिति**।भवार्थे कालाट्ठञ्।**स्वार्थे ष्यञिति**। चातुर्वर्ण्यादित्वात् । वस्करणलभ्यमर्थमाह-**येनोपाधिनेति** । **आशंसायाम्** । अप्राप्तप्राप्तीच्छा-**आशंसा**, तस्या

समीपे भूते भविष्यति च वा स्युः । कदा आगतोऽसि ? । अयमागच्छामि, अयमागमम् । कदा गमिष्यसि? । एष गच्छामि । गमिष्यामि वा । **आशंसायां भूतवच्च** ।३।३।१३२। वर्तमानसामीप्य इति नानुवर्तते । भविष्यति काले भूतवद्वर्तमानवच्च प्रत्यया वा स्युराशंसायाम् । देवश्चेदवर्षीत्, वर्षति, वर्षिष्यति वा, धान्यमवाप्स्म, वपामो, वप्स्यामो वा । **'सामान्यातिदेशे विशेषानतिदेशः'** । तेन लङ्लिटौ न । **क्षिप्रवचने लृट्** ।३।३।१३३। क्षिप्रपर्याये उपपदे पूर्वविषये लृट् स्यात् । वृष्टिश्चेत्क्षिप्रमाशु त्वरितं वाऽयास्यति, शीघ्रं वप्स्यामः । 'ने'ति वक्तव्ये लृङ्ग्रहणं लुटोऽपि विषये यथा स्यात् । श्वः शीघ्रं वप्स्यामः । **आशंसावचने लिङ्** ।३।३।१३४।

---

त.]द्युपाधिना। तथाहि पूङ्यजोः शानन्विहितः, स ताभ्यामेव धातुभ्यां भवति, न तु धात्वन्तरात्। तच्छीलादिविशिष्टे कर्तरि 'अलङ्कृ'ञित्यारभ्य 'भ्राजभासे'ति यावत् ये इष्णुजादय उक्तास्तेऽपि कृञादिभ्यो धातुभ्यस्तस्मिन्नुपाधौ सत्येव भवन्ति । **'कदा आगतोऽसी'**ति भूतकालेन प्रश्नवाक्यम्, **'आगच्छामी'**त्युदाहरणे भूतकालाभिव्यक्तयेऽयमिति प्रयोगस्त्विदानीमेवागमममिति वर्तमानसमीपभूतकालद्योतनार्थं । तेन ह्यागमनाऽविनाभूतं यद्रूपं धूलीधूसरताप्रस्वेदादियुक्तं तत्प्रतिनिर्दिश्यते । एवं **'कदा गमिष्यसी'**ति भविष्यत्कालेन प्रश्नवाक्यम् । **'गच्छामी'**त्युदाहरणे भविष्यत्कालाभिव्यक्तये 'एष' इति प्रयोगस्तु इदानीमेव गमिष्यामीति वर्तमानसमीपंभविष्यत्कालद्योतनाय । तेन हि गमनाऽविनाभूतं यद्रूपं परिकरबन्धादियुक्तं तत्प्रतिनिर्दिश्यते । न च 'कदे'ति प्रश्ने उत्तरवाक्ययोः कालानुपादानादसङ्गतिः शङ्क्या, उत्तरत्राऽयमेषशब्दाभ्यामिदानीमिति कालावगमात् । सामीप्ये किम् ?। कदा आगतो भवान् ?। अस्मान्मासात्पूर्वस्मिन्मासे आगच्छम् । एतच्च सूत्रमाकरे प्रत्याख्यातम् । गङ्गासमीपे गङ्गात्वारोपवद्वर्तमानसमीपे वर्तमानत्वारोपसंभवात् । **आशंसायाम्** । आशंसनमाशंसा=अप्राप्तस्य प्राप्तुमिच्छा । आशंसायां वर्तमानत्वेऽपि तद्विषयस्य वर्षादेर्भविष्यत्कालसंबन्धाद्भविष्यतीत्युक्तम् । आशंसायां किम् ? । गमिष्यति । **क्षिप्रवचने** । वचनग्रहणं स्वरूपग्रहणनिरासार्थम् । तदाह—**क्षिप्रपर्याय इति । पूर्वविषय इति** । आशंसायामित्यर्थः । तेन पूर्वलकारापवादोऽयम् । **आशंसावचने** । भूतवद्वर्तमानवत्प्र-

---

बा.]तृतीयस्य द्वितीये 'वर्त्तमाने ल'डित्यारभ्य आपादसमाप्तेः 'उणादयो बहुल'मिति तृतीयपादादिमसूत्रात्प्राग्वर्तमानाधिकारः । तस्मिन्नधिकारे येन विशेषणेन याभ्यः प्रकृतिभ्यो वर्तमाने प्रत्यया विहितास्ते सर्वे तेनैव विशेषणेन ताभ्यः प्रकृतिभ्यो वर्तमानसमीपकाले भूते भविष्यति च वा भवन्तीत्यर्थः । अत्र भूते भविष्यति चेत्यार्थिकं, तयोरेव वर्तमानसामीप्यसत्त्वात् । **कदा आगतोऽसी**त्यागतं प्रति प्रश्नः । **अयमागच्छामी**त्युत्तरम् । अव्यवहितपूर्वकाले आगतवानस्मीत्यर्थः । वर्तमानसमीपकाले भूते लट् । 'अय'मित्यनेन आगमनकालीनं प्रस्वेदपरिकरबन्धादियुक्तं रूपं निर्दिश्यते इदानीमागमनं सूचयितुम् । **आगममिति** । वर्तमानवत्त्वाऽभावे भूते लुङ् । कदा गमिष्यसीति गमनात्प्राक् प्रश्ने, **एष गच्छामी**त्युत्तम् । अव्यवहितोत्तरकाले गमिष्यामीत्यर्थः । 'एष' इति तु अयमितिवद्व्याख्येयः । वर्तमानकालसमीपे भविष्यति लट् । **गमिष्यामि वेति** । वर्तमानवत्त्वाऽभावे भविष्यति लृट् । **आशंसायां भूतवच्च । नानुवर्तते इति** । अत्र व्याख्यानमेव शरणम् । अप्राप्तस्य प्रियस्य प्राप्तीच्छा आशंसा । सा च भविष्यद्विषयैव। भूते इच्छाविरहात्। तदाह—**भविष्यति काले इति । देवश्चेदिति** । देव=पर्जन्यः, अवर्षीच्चेद्धान्यमवाप्स्म । वर्षति चेद्वपामः । वर्षिष्यति चेद्वप्स्याम इत्यन्वयः। भूतवद्भावाद्भविष्यति लुङ्—अवर्षीदिति अवाप्स्मेति च भवति। वपधातोर्लुङि उत्तमपुरुषबहुवचने अवाप्स्मेति भवति । वृष्टिवापयोरुभयोरप्याशंसाविषयत्वादुभयत्रापि लुङ। वर्तमानवत्त्वपक्षे तु लट् । तदुभयाऽभावे तु लृट् । ननु भूतवत्त्वपक्षे लङ्लिटावपि कुतो न स्यातामित्यत आह—**सामान्यातिदेशे इति**। भूतत्वसामान्ये विहितस्याऽतिदेशादनद्यतनभूतत्वविशेषविहितयोर्लङ्लिटोर्नाऽतिदेश इत्यर्थः । एतच्च भाष्ये स्पष्टम् । **क्षिप्रवचने लृट्** । वचनग्रहणात्क्षिप्रपर्याये इति लभ्यते । तदाह—**क्षिप्रपर्याये इति । पूर्वविषये इति** । आशंसायामित्यर्थः । 'आशंसायां भूतवच्चे'त्यस्यापवादः। ननु 'क्षिप्रवचने ने'त्येतावतैव आशंसायां क्षिप्रपर्याये उपपदे भविष्यति न भूतवन्न वर्तमानवदिति लाभाल्लृङ्ग्रहणमनर्थकमित्यत आह—**नेति वक्तव्ये इति** । 'क्षिप्रवचने ने'त्युक्ते 'सामान्यातिदेशे विशेषानतिदेशः' इति न्यायेन भविष्यत्सामान्ये विहितस्य लृट एव निषेधः स्यान्नतु लुटः, तस्य अनद्यतनभविष्यद्विशेषविधानात् । लृड्ग्रहणे तु उक्तविषये लृडेव स्यात्, नतु लकारान्तरमिति लाभाल्लुटोऽपि विषये लृडेवेति लभ्यत इत्यर्थः । **श्वः शीघ्रं वप्स्याम इति** । अनद्यतनत्वद्योतनाय श्वश्शब्दः । अत्र न लुडिति भावः । **आशंसावचने लिङ्** । आशंसायाः प्राप्तीच्छाया भूते असंभवाद्भविष्यतीति लभ्यत इति मत्वाह—**भविष्यतीति** । 'आशंसायां भूतवच्चे'त्यस्या-

---

शे.]वर्तमानत्वेऽपि तद्विषयस्य वर्षादेर्भविष्यत्त्वाद्भविष्यतीत्युक्तम्। आशंस्यमानक्रियावाचकाद्धातोरित्यर्थः। **देवश्चेदिति** । वृष्टिवापयोरुभयोरप्याशंसाविषयत्वादुभयत्रापि लकारः । **पूर्वविषये इति** । 'आशंसाया'मित्यर्थः। तेन तदपवादोऽयं ।

आशंसावाचिन्युपपदे भविष्यति लिङ् स्यान्न भूतवत् । गुरुश्चेदुपेयादाशंसेऽधीयीय । आशंसे क्षिप्रमधीयीय।
**नाऽनद्यतनवत्क्रियाप्रबन्धसामीप्ययोः** ।३।३।१३५। क्रियायाः सातत्ये सामीप्ये च गम्ये लङ्लुटौ न।
यावज्जीवमन्नमदाद्दास्यति वा । सामीप्यं तुल्यजातीयेनाऽव्यवधानम् । येयं पौर्णमास्यतिक्रान्ता तस्यामग्नीनाधित।
सोमेनाऽयष्ट । येयममावास्याऽऽगामिनी तस्यामग्नीनाधास्यते । सोमेन यक्ष्यते । **भविष्यति मर्यादावचनेऽवरस्मिन्** ।३।३।१३६। भविष्यति काले मर्यादोक्तावरस्मिन्प्रविभागेऽनद्यतनवन्न । योऽयमध्वा गन्तव्य आ पाटलिपुत्रात्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तून्पास्यामः।**कालविभागे चाऽनहोरात्राणाम्**।३।३।१३७।पूर्वसूत्र

त.]त्ययोरपवादः। **न भूतवदिति**।न वर्तमानवदित्यपि बोध्यम्।**आशंसेऽधीयीयेति**।एवं प्रार्थये अधीयीय, इच्छामो वयमधीयीमहीत्यादि ज्ञेयम् । **क्षिप्रमिति** । क्षिप्रयोगेऽपि परत्वाल्लिङेवेति भावः। **नाऽनद्यतन** । भूतानद्यतने लङ्विहितो, भविष्यत्यनद्यतने तु लुट् ,तौ चानयोरर्थयोर्निषिध्येते। तदाह–**लङ्लुटौ नेति** । एवं च भूते लुङ् ,भविष्यति तु लृडित्याशयेनोदाहरति–**अन्नमदात्, दास्यतीत्यादि**। **अग्नीनिति**। आहवनीयादीन् । **भविष्यति मर्यादा** । अक्रियाप्रबन्धार्थमसामीप्यार्थं चेदं वचनम् । 'नाऽनद्यतनव'दित्यनुवर्तते इत्याह–**अनद्यतनवन्नेति** । लुडत्र नेत्यर्थः । इह सूत्रे देशकृता मर्यादा, उत्तरत्र कालकृता। तत्र विशेषं वक्ष्यति–**तस्य यदवरमिति**। पाटलिपुत्रावधिकमार्गस्य यदवरं कौशाम्ब्याः सकाशादित्यर्थः । कौशाम्ब्याः पूर्वमिति यावत् । भविष्यति किम् ? । योऽध्वा अतिक्रान्त आपाटलिपुत्रात्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तूनपिबाम । मर्यादावचने इति किम्?। योऽध्वा गन्तव्यो निरवधिकस्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तूनपास्यामः । अवरस्मिन्निति किम् ? । योऽध्वा गन्तव्य आपाटलिपुत्रात्तस्य यत्परं कौशाम्ब्यास्तत्र सक्तून्पाता स्मः । **कालविभागे च** । **कालविभागः**=कालविशेषः। अनहोरात्राणामिति संबन्धषष्ठी । **पूर्वसूत्रमिति**।

बा.]पवादः। तदाह–**नतु भूतवदिति** । **गुरुश्चेदिति** । गुरुरुपेयाच्चेत् क्षिप्रमधीयीयेत्याशंसे इत्यन्वयः। क्षिप्रयोगेऽपि परत्वाल्लिङेव, नतु लृडिति भावः । **नाऽनद्यतनवत्** । क्रियायाः प्रबन्धः=सातत्यम् । तदाह–**क्रियायाः सातत्ये इति** । **अनद्यतनवदित्यनेन** अनद्यतने भूते भविष्यति च विहितौ लङ्लुटौ विवक्षितौ । तदाह–**लङ्लुटौ नेति** । अनद्यतने भूते लङ् न भवति, भविष्यत्यनद्यतने तु लुण्नेत्यर्थः । क्रियासातत्ये लङ्निषेधमुदाहरति–**यावज्जीवमन्नमदादिति** । लुङि 'गातिस्थे'ति सिचो लुक् । सामीप्ये उदाहरिष्यन्नाह–**सामीप्यमिति** । **येयमिति** । पौर्णमास्या उपरि कृष्णपक्षे कतिपयाहोरात्रे व्यवधानेऽपि सामीप्यमस्त्येव, पौर्णमास्यन्तरेण सजातीयेन व्यवधानाऽभावात् । **आधितेति** । धाधातोर्लुङि 'स्थाघ्वोरिच्चे'ति धाधातोरित्त्वं, सिचः कित्त्वं च 'ह्रस्वादङ्गा'दिति सिचो लोपः। **सोमेनायष्टेति** । 'येयं पौर्णमास्यतिक्रान्ता तस्या'मित्यनुषज्यते। अथ क्रियासातत्ये लुटो निषेधमुदाहरति–**येयममावास्येति** । **सोमेन यक्ष्यते इति** । 'येयममावास्या आगामिनी तस्या'मित्यनुपज्यते । **भविष्यति मर्यादा** । 'अवरस्मि'न्निति च्छेदः । **अनद्यतनवन्नेति** । लुण्नेत्यर्थः। । 'अक्रियाप्रबन्धार्थ'मिति भाष्यम् । 'असामीप्यार्थं चे'ति कैयटः । **योऽयमिति** । कस्मिंश्चिज्जनपदविशेषे वसतः पाटलिपुत्राख्यं नगरविशेषं जिगमिषोरिदं वाक्यम्। मध्येमार्गं कौशाम्बी नाम काचिन्नगरीति स्थितिः । तत्र आपाटलिपुत्राद्योऽयं गन्तव्योऽध्वा तस्य अध्वनो मध्यवर्तिन्याः कौशाम्ब्या यदवरं पूर्वप्रदेशस्तत्र सक्तून् श्वःप्रभृति पास्याम इति योजना । अत्र **कौशाम्ब्या** इति मर्यादा गम्यते । 'अवर'मित्यनेन अवरत्वं गम्यते । अत्र भविष्यत्यनद्यतने लुण्न, किंतु लृडेवेति भावः। **कालविभागे**।**पूर्वसूत्रमिति**।'भविष्यति मर्यादावचनेऽवरस्मि'न्निति

शे.]तदाह–**नेतीति** । **न भूतवदिति** । नापि वर्त्तमानवदित्यपि बोध्यम्, अस्य 'आशंसाया'मित्येतदपवादत्वात् । क्षिप्रप्रयोगेऽपि परत्वादिदमेवेत्याह–**आशंसे क्षिप्रमिति** । **नानद्यतनवत्** । **प्रबन्धः**–सातत्यम् । **लङ्लुटौ नेति** । भूताऽनद्यतने लङ् , भविष्यत्यनद्यतने लुट् च नेति भावः । सामीप्यमत्र कालकृतं, तच्च प्रयोगकालाऽपेक्षया । कालस्य सामीप्यन्तुल्यजातीयेनाऽव्यवधानम्।देशसामीप्ये, योऽयं देशोऽतिक्रान्त आगामी वा तस्मिन् आधित आधास्यते इत्युदाहरणमिति **केचित्** । **भविष्यति म** । अक्रियाप्रबन्धार्थमसामीप्यार्थञ्चेदम् । यद्यपि भाष्ये'ऽक्रियाप्रबन्धार्थमिदं, क्रियाप्रबन्धार्थत्वे वचनानर्थक्यं, सिद्धं क्रियाप्रबन्धे पूर्वेणैवे'त्युक्तं, तथापि तदसामीप्यस्याप्युपलक्षणमिति कैयटः।असामीप्ये एतद्विषयोदाहरणाऽनभिधानमित्यन्ये। अभविष्यति अमर्यादायां परस्मिन्नहोरात्रविभागे वा क्रियाप्रबन्धे 'नाऽनद्यतनव'दिति पूर्वसूत्रमेवेष्यत इति भाष्ये स्पष्टम् । भविष्यति किम् ? । 'योऽयमध्वाऽतिक्रान्तः' इत्यादौ 'सक्तूनपिबामे'त्येव । मर्यादेति किम् ? । 'योऽयमध्वा गन्तव्यो निरवधिकस्तस्य यदवरं साकेता'दित्यादौ 'पातास्मः' इत्येव । अवरस्मिन्निति किम् ? । 'तस्य यत्पर'मिति प्रयोगे 'पातास्मः' इत्येव यथा स्यादिति । **कालवि** । कालकृतमर्यादोक्तावरप्रविभागे

सर्वमनुवर्तते । अहोरात्रसंबन्धिनि विभागे प्रतिषेधार्थमिदम् । योगविभाग उत्तरार्थः । योऽयं वत्सर आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे । अनहोरात्राणां किम् ? योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रस्तत्राऽध्येतास्महे । **परस्मिन्विभाषा** ।३।३।१३८। अवरस्मिन्वर्ज्यं पूर्वसूत्रद्वयमनुवर्तते । अप्राप्तविभाषेयम् । योऽयं संवत्सर आगामी तस्य यत्परमाग्रहायण्यास्तत्राऽध्येष्यामहे । अध्येतास्महे । **'लिङ्निमित्ते लृङ् क्रियातिपत्तौ'**। भविष्यतीत्येव । सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्। **भूते च** ।३।३।१४०। पूर्वसूत्रं संपूर्णमनुवर्तते । **वोताप्योः** ।३।३।१४१। 'वा–आ उताप्यो'रिति छेदः। 'उताप्यो'रित्यतः प्राग्भूते लिङ्निमित्ते लृङ् वेत्यधिक्रियते । पूर्वसूत्रं तु 'उताप्यो'रित्यादौ प्रवर्तते इति विवेकः । **गर्हायां लडपिजात्वोः** ।

त.]तदयमर्थः–मर्यादोक्तौ कालविशेषावधदवरं तस्मिन्प्रविभागे भविष्यत्यनद्यतनवन्न, स चेत्कालविभागोऽहोरात्रसंबन्धी न चेदित्यर्थः । इह कालविभागे सत्यवरस्मिन्ननद्यतनवन्नेत्युक्ते कस्मादित्यपेक्षायामर्थात्कालविशेषादिति लभ्यत इत्येके । केचित्तु कालविभाग इति पञ्चम्यर्थे सप्तमीत्याहुः। **उत्तरार्थ इति** । 'परस्मिन्विभाषे'ति सूत्रे कालमर्यादाया एवानुवृत्तिर्यथा स्यात् । भविष्यतीति किम् ? । यः संवत्सरोऽतीतस्तस्य यदवरं मासात्तत्र पयोऽपिबाम । मर्यादायामिति किम् ।? यो निरवधिः समयस्तस्य यदवरं मासात्तत्र पयः पातास्मः । **पञ्चदशरात्र इति** । नन्वत्र 'सङ्ख्यापूर्वं रात्र'मिति क्लीबत्वेन भाव्यम् । न च पञ्चदश रात्रयो यस्मिन्पक्षे इति बहुव्रीह्याश्रयणात्पुंलिङ्गः सिद्ध इति वाच्यम्, 'अहःसर्वैकदेशे'त्यच्प्रत्ययस्याऽभावप्रसङ्गादिति चेत् । सत्यम् । अतएव हि भाष्यप्रयोगात्क्लीबत्वं नेत्याहुः । **परस्मिन्** । 'भविष्यत्यनद्यतनवन्ने'ति विकल्पेन निषिध्यते । **वर्ज्यमिति** । णिजन्तात् 'अचो य'दिति कर्मणि यत् । **वर्जमिति** पाठे तु 'द्वितीयायां चे'ति णमुल् । अनहोरात्राणामित्येव । योऽयं वत्सर आगामी तस्य यत्परं पञ्चदशरात्रात्तत्र पयः पातास्म [इत्यादि] । **लिङ्निमित्त इति । अतिपत्तिः**–अनिष्पत्तिः। **भूते च** । लिङ्निमित्ते लृङ् स्याद्भूते भविष्यति च क्रियातिपत्तौ । अद्यतनाऽनद्यतनसाधारणं भूतसामान्यमिह ज्ञेयम् । अस्योदाहरणानि–'उताप्योः समर्थयोर्लिङ्' इत्यारभ्य 'समानकर्तृकेषु तुमु'न्निति विहाय सप्तसूत्र्यां बोध्यानि, ततः प्राचीनेषु 'वोताप्यो'रित्यनेन विकल्पोक्तेः । **लृङ् वेति** । लिङ्निमित्ते भूत एवायं विकल्पो, भविष्यति तु नित्यमेव लृङ् । **गर्हायाम्** । अत्र 'वोताप्यो'रिति न संबध्यते । वर्तमाने

बा.]सूत्रमित्यर्थः । ननु कालमर्यादायामपि पूर्वसूत्रेणैव सिद्धमित्यत आह–**अहोरात्रेति** । तथाच आहोरात्रसंबन्धिनि प्रविभागे 'भविष्यति मर्यादावचने' इत्युक्तविधिर्न भवतीत्यर्थः । ननु 'भविष्यति मर्यादावचनेऽवरस्मिन्कालविभागे चानहोरात्राणा'मित्येकमेव सूत्रं कुतो नेत्यत आह–**योगविभाग उत्तरार्थ इति** । इदमुत्तरसूत्रे स्पष्टीभविष्यति । **योऽयं वत्सर आगामीति** । कालतो मर्यादायामुदाहरणम् । **आग्रहायण्या इति** । मार्गशीर्षपौर्णमास्या इत्यर्थः । **युक्ता इति** । नियमयुक्ता इत्यर्थः । **अध्येष्यामहे इति** । अत्र न लुट्, किंतु लृडेवेति भावः । **पञ्चदशरात्र इति** । पञ्चदश रात्रयो यस्य पक्षस्येति बहुव्रीहिः । 'अच्प्रत्यन्ववपूर्वा'दित्यत्र अजिति योगविभागादच्समासान्तः। यद्वा पञ्चदशानां रात्रीणां समाहारः पञ्चदशरात्रः । 'अहःसर्वैकदेशे'त्यच्समासान्तः । 'सङ्ख्यापूर्वं रात्रं क्लीब'मिति तु 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्ये'ति वचनान्न भवति । **परस्मिन्विभाषा । अनुवर्तते इति** । तथाच भविष्यति काले मर्यादोक्तौ परस्मिन् विभागे अनद्यनवद्वेति फलितम् । **'लिङ्निमित्ते लृङ् क्रियातिपत्तौ'** इति व्याख्यातं भूधातुनिरूपणे । **भूते च** । अधिकारोऽयम् । **अनुवर्तते इति** । तथाच लिङ्निमित्ते लृङ् क्रियातिपत्तौ भूत इति अधिक्रियते इति फलितमिति भावः । **वोताप्योः** । अयमप्यधिकारः । वा आ उताप्योरिति छेदः । भूते इति, लिङ्निमित्ते लृङिति चानुवर्तते।तदाह–**उताप्योरित्यतः प्रागिति** । 'उताप्योः समर्थयो'रित्यतः प्रागित्यर्थः । नन्वनेन 'उताप्यो'रित्यतः प्राग्भूते लिङ्निमित्ते लृङ्वेत्याधिकाराक्रान्तत्वाद्भूते चेति पूर्वमधिकारसूत्रं निर्विषयमित्यत आह–**पूर्वसूत्रं त्विति**। 'उताप्योः समर्थयोर्लि'ङ्इत्यारभ्य 'इच्छार्थेभ्यो विभाषे'त्यतः प्राक् 'भूते चे'ति पूर्वमधिकारसूत्रं प्रवर्तत इत्यर्थः।

शे.]सतीत्यर्थः। **अहोरात्रसम्बन्धिनीति**।'अनहोरात्राणा'मिति शेषषष्ठी,न कर्तरि,नापि कर्मणीति भावः। मर्यादाऽवरयोरन्यतरस्मिन्नप्यन्ते रसंबन्धिनि नेति तात्पर्यम् । **प्रतिषेधार्थमिति**। क्रियासातत्याद्यसत्त्वे इत्यर्थः। तत्सत्त्वेऽहोरात्रसंबन्धिनि विभागेऽपि 'नानद्यतनव'दित्यस्येष्टेः। **तस्य योऽवरः पञ्चदशरात्र इति** । 'पञ्चदशरात्र' इति बहुव्रीहिः । 'अच्प्रत्यन्ववे'ति योगविभागात्समासान्तोऽच्, पुंस्त्वं, पक्षोऽन्यपदार्थः।पृषोदरादित्वान्मयूरव्यंसकादित्वाद्वा साधुत्वम्। **परस्मिन् वि** । कालविभागे एवेदमिति भाष्ये स्पष्टम्।**वर्ज्यमिति**।ण्यन्तात्कर्मणि अचो यत्।**भूते च** । **पूर्वसूत्रमिति** । अनुवृत्तपूर्वसूत्रकोऽयमधिकारः 'समानकर्तृकेषु' इति यावत् । 'उताप्यो'रित्यतः पूर्वन्तु वाग्रहणसम्बद्धमेतदधिक्रियते । तत्र 'गर्हायां लडपी'त्यत्र नाऽस्य सम्बन्धः, लड्विधानेन तद्विषये लिङ्निमित्ताऽभावात्।**परत्वादिति** । उत्क्रान्तत्वात्।

३।३।१४२। आभ्यां योगे लट् स्यात्कालत्रये गर्हायाम् । लुङादीन्परत्वादयं बाधते । अपि जायां त्यजसि ! जातु गणिकामाधत्से !!, गर्हितमेतत् । **विभाषा कथमि लिङ् च** ।३।३।१४३। गर्हायामित्येव । कालत्रये लिङ् । चाल्लट् । कथं धर्मं त्यजेस्त्यजसि वा । पक्षे कालत्रये लकाराः। अत्र भविष्यति नित्यं लङ्, भूते वा। कथं नाम तत्रभवान् धर्ममत्यक्ष्यत् । [अत्याक्षीद्वा]। **किंवृत्ते लिङ्लृटौ** ।३।३।१४४। गर्हायामित्येव। विभाषा तु नानुवर्तते । कः कतरः कतमो वा हरिं निन्देत् , निन्दिष्यति वा। लङ् प्राग्वत् । **अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि** ।३।३।१४५। गर्हायामिति निवृत्तम् । अनवक्लृप्तिरसंभावना। अमर्षोऽक्षमा । न संभावयामि न मर्षये वा

त.] लडुक्तः कालत्रये तु न प्राप्नोतीति विधिरयम् । **कालत्रय इति** । कालविशेषानुपादानादिति भावः । **परत्वादिति** । निरवकाशत्वादित्यपि बोध्यम् । **अपि जायामिति** । त्यक्ष्यसि अत्याक्षीरित्यादिविषयेऽपि त्यजसीत्यादि लडेव प्रयुज्यत इति भावः । एवं–यो जायां तत्याज, अत्यजत् , अत्याक्षीत्, त्यक्ता, त्यक्ष्यतीत्यादिऽविषयेऽपि 'यो जायामपि त्यजति जातु गणिकामाधत्ते' इति लडेव कालत्रयलकारापवादतया प्रयोक्तव्यः। लिङ्निमित्ताऽभावादिह क्रियातिपत्तौ लङ्न भवति । **कालत्रये लकारा इति** । परोक्षानद्यतनभूते लिट्–कथं धर्मं तत्यक्थ। भूतानद्यतने लङ्–कथं धर्ममत्यजः। भूतसामान्ये लुङ्–अत्याक्षीः। भविष्यत्यनद्यतने लुट्–त्यक्तासि। भविष्यत्सामान्ये लृट्–कथं धर्मं त्यक्ष्यसीत्यादि। **अत्रेति**। क्रियातिपत्ताविति ज्ञेयम् । **किंवृत्ते** । लिङ्लृटौ कालत्रये स्तः । **नानुवर्तत इति** । एवं चाऽस्मिन्विषये निन्दति निन्दिष्यत्यनिन्ददिति कालत्रये लकाराः पक्षे न भवन्तीति भावः । **प्राग्वदिति** । क्रियातिपत्तौ भविष्यति नित्यं लङ्, भूते वेत्यर्थः । **अनवक्लृप्त्यमर्षयोः** । लिङ्लृटावनुवर्तेते, तौ च कालत्रये भवतस्तेन सर्वलकाराणामपवादौ। किंवृत्तस्यानधिकारादेवाऽविशेषादुभयोर्भविष्यतीत्यकिंवृत्तेऽपीति न कर्तव्यम् । पूर्वनिपाताऽर्हस्याऽल्पाऽचः परनिपातो यथासङ्ख्यनिवृत्त्यर्थः । **लङ् प्राग्वदिति** । भूते वा, भविष्यति नित्यमित्यर्थः । नाऽहं भावयामि चैत्रो हरिमनिन्दिष्यदित्याद्युदा-

बा.]इमावधिकारौ यत्र लिङ्विधिस्तत्रैव प्रवर्तेते, नतु लडादिविधौ,लिङ्निमित्ताऽभावात् । **गर्हायाम्**। अपि जातु अनयोर्द्वन्द्वः । अत्र 'वोताप्यो'रिति भूते लिङ्निमित्ते लङ् वा इत्यधिकारो न संबध्यते । लड्विधानेन तद्विषये लिङ्निमित्ताऽभावात् । **कालत्रये इति** । वर्तमाने भूते । भविष्यति चेत्यर्थः । भविष्यतीति निवृत्तम् । अतः कालसामान्ये लडिति भावः । **परत्वादिति** । अनवकाशत्वाच्चेत्यपि द्रष्टव्यम् । 'अपि जाया'मित्यत्र, 'जातु गणिका'मित्यत्र च अपि–जातुशब्दौ निन्दाद्योतकौ । तदाह–**गर्हितमेतदिति** । **विभाषा कथमि** । **गर्हायामित्येवेति** । अनुवर्तत एवेत्यर्थः । 'कालत्रये लि'ङिति शेषपूरणम् । भविष्यतीति निवृत्तमिति । भावः **चाल्लडिति** । 'समुच्चीयते' इति शेषः । तथाच कथमित्यस्मिन् प्रयुज्यमाने कालत्रये गर्हायां लिङ्लटौ वा स्त इति फलितम् । **कथं धर्मं त्यजेरिति** । त्यक्तवान् त्यक्ष्यसि त्यजसि वेत्यर्थः । 'गर्हितमेत'दिति कथंशब्दाद्गम्यते । लटि उदाहरति–**त्यजसि वेति** । उक्तोऽर्थः। **पक्षे इति**।विभाषाग्रहणाल्लिङ्लटोरभावपक्षे भूते वर्तमाने भविष्यति च कालत्रये लिट्लङ्लुङ्लट्लुट्लृट इत्यर्थः। **अत्रेति**। अत्र=उक्तविषये भविष्यति काले क्रियाया अनिष्पत्तौ गम्यमानां 'लिङ्निमित्ते लङ् क्रियातिपत्तौ' इति नित्यमेव लङ्, कथमो गर्हायाश्च लिङ्निमित्तस्य सत्त्वादित्यर्थः, विशेषविहितत्वादिति भावः।**भूते वेति**।'वोताप्यो'रिति भूते लिङ्निमित्ते लङ् वेत्यधिकृतत्वादुक्तविषये भूतकाले लङ् वेत्यर्थः।भविष्यति नित्यं लङित्यत्रोदाहरति–**कथं नामेति**। 'तत्रभवा'निति समुदायः पूज्यवाची। वेदप्रामाण्याभ्युपगन्तेति यावत्। एवंविधः कथं धर्ममत्यक्ष्यत् , तत्त्यागस्य गर्हितत्वादितिभावः। **किंवृत्ते लिङ्लटौ** । **नानुवर्तते इति**। व्याख्यानादिति भावः। विभक्त्यन्तं डतरडतमान्तं च किंशब्दनिष्पन्नं किंवृत्तमित्युक्तम् । तस्मिन्प्रयुज्यमाने गर्हायां लिङ्लटौ स्त इत्यर्थः । सर्वलकाराणामपवादाविति वृत्तिः । **लङ् प्राग्वदिति** । भविष्यति नित्यं लङ्, भूते वेति प्रागुक्तमिहाप्यनुसन्धेयमित्यर्थः,। लिङ्निमित्तस्य किंवृत्तस्य गर्हायाश्च सत्त्वादिति भावः । **अनवक्लृप्त्यमर्ष** । **निवृत्तमिति** । व्याख्यानादिति भावः । अनवक्लृप्त्यमर्षयोर्लिङ्लटोश्च यथासङ्ख्यं नेष्यते, अल्पाच्तरस्य अमर्षशब्दस्य पूर्वनिपातत्यागादिति वृत्तिः । **न सम्भावयामीति** । अकिंवृत्ते उदाहरणम् । भवान् हरिं निन्देदिति यत्तन्न संभावयामि, न मर्षये वेत्यन्वयः । किंवृत्ते उदाहरति–कः **कतर इति**। **लङ्प्राग्व-**

शे.]अनवकाशत्वादित्यर्थः। **गर्हायामिति**।'भविष्यती'त्यादि निवृत्तं, तदाह–**कालत्रये इति**। **अत्र भविष्यतीति** । क्रियातिपत्तावित्यपि बोध्यम् । कथमो, गर्हायाश्च लिङ्निमित्तस्य सत्त्वादिति भावः । **किंवृत्ते** । कालत्रये एतौ स्तः । 'लङ् वे'ति नोक्तं, लड्वारणाय । **प्राग्वदिति** । भूते वा, भविष्यति नित्यमित्यर्थः । 'लिङ्निमित्ते' इति सूत्रमत्रानुवर्त्य वाक्यभेदेन सम्बध्यत इति भावः । एतेन तद्विषयेऽपि परत्वादिदमेवोचितमित्यपास्तम् । **अनवक्लृ** । एतयोर्विषये

भवान् हरिं निन्देत्, निन्दिष्यति वा। [ कः कतरः कतमो वा हरिं निन्देत् । निन्दिष्यति वा ]। लृङ् प्राग्वत्। **किङ्किलाऽस्त्यर्थेषु लृट्** ।३।३।१४६। अनवक्लृप्त्यमर्षयोरित्येतत् 'गर्हायां चे'ति यावदनुवर्तते। 'किङ्किले'ति समुदायः क्रोधद्योतक उपपदम्। **अस्त्यर्थाः**--अस्तिभवतिविद्यतयः। लिङोऽपवादः। न श्रद्दधे न मर्षये वा किङ्किल त्वं शूद्रान्नं भोक्ष्यसे। अस्ति भवति विद्यते वा शूद्रीं गमिष्यसि। अत्र लृङ् न। **जातुयदोर्लिङ्** ।३।३।१४७। ॐ **यदायद्योरुपसङ्ख्यानम्**। लृटोऽपवादः। जातु यद्यदा यदि वा त्वादृशो हरिं निन्देन्नावकल्पयामि न मर्षयामि। लृङ् प्राग्वत्। **यच्चयत्रयोः** ।३।३।१४८। यच्च यत्र वा त्वमेवं कुर्याः, न श्रद्दधे न मर्षयामि। **गर्हायां च** ।३।३।१४९। अनवक्लृप्त्यमर्षयोरिति निवृत्तम्। यच्चयत्रयोर्योगे गर्हायां लिङेव स्यात्। यच्च यत्र वा त्वं शूद्रं याजयेः। अन्याय्यं तत्। **चित्रीकरणे च** ।३।३।१५०। यच्च यत्र वा त्वं शूद्रं याजयेः, आश्चर्यमेतत्!!। **शेषे लृडयदौ** ।३।३।१५१। यच्चयत्राभ्यामन्य-

---

व.]हर्तव्यम्। **किंकिलास्त्यर्थेषु**। लिङ्लृटोः प्राप्तयोरिह लृङ्ग्रहणाल्लिङ् निवर्तत इत्याशयेनाह-**लिङोऽपवाद इति**। **अस्ति भवतीति**। त्वत्कर्तृकं शूद्रागमनमस्तीत्यादिरर्थः। **लृङ् नेति**। लिङो निवृत्तत्वेन तन्निमित्तत्वाऽभावात्। **जातुयदोर्लिङ्**। अनवक्लृप्त्यमर्षयोरिति वर्तते। तथाच 'अनवक्लृप्त्यमर्षयो'रिति लिङ्लृटोः प्राप्तयोर्वचनमिदं लृटो बाधनार्थम्। तदाह-**लृटोऽपवाद इति**। अयं कालत्रये। **लृङ् प्राग्वदिति**। क्रियाऽतिपत्तौ भूते वा, भविष्यति नित्यमित्यर्थः। 'जातु भवान् हरिमनिन्दिष्य'दित्याद्युदाहर्तव्यम्। अगर्हार्थमिदम्। गर्हायां तु जातुयोगे लङुक्तः। **यच्चयत्रयोः**। 'अनवक्लृप्त्यमर्षयो'रिति वर्तते। यथासङ्ख्यमिह नेष्यते। अयमपि लिङ्लृटोरपवादः। योगविभागस्तु उत्तरसूत्रद्वये यच्चयत्रयोरेवाऽनुवृत्तिर्यथा स्यादित्येतदर्थः। क्रियातिपत्तौ लृङ् प्राग्वत्। यच्च यत्र वा त्वमेवमकरिष्यो न श्रद्दधे न मर्षयामीत्यादि। **गर्हायां च**। कालत्रयेऽयं भवतीति सर्वलकारापवादः। **लिङेव स्यादिति**। गर्हायां 'विभाषा कथमी'ति लट् प्राप्तस्तत्रैव 'किंवृत्ते' इति लृट् प्राप्तस्तयोरपवादो यच्चयत्रयोर्योगे विहितोऽयं लिङिति भावः। लृङ् प्राग्वत्। 'यच्च यत्र वा त्वं शूद्रमयाजयिष्यस्तदन्याय्य'मित्यादि। **चित्रीकरणे च**। अयमपि कालत्रये। लृङ् प्राग्वत्।

---

बा.]दिति। भविष्यति नित्यं लृङ्, भूते वेत्युक्तमिहाप्यनुसंधेयमित्यर्थः। **किङ्किला**। किङ्किलेति समुदायस्य, अस्त्यर्थानां च द्वन्द्वः। **यावदिति**। 'गर्हायां चे'त्यतः प्रागित्यर्थः। किङ्किलेत्यस्मिन् अस्त्यर्थेषु च प्रयुज्यमानेषु अनवक्लृप्त्यमर्षयोर्लृट् स्यादित्यर्थः। पूर्वसूत्रेण लिङ्लृटोः प्राप्तौ लृडेवेत्यर्थमिदम्। तदाह-**लिङोऽपवाद इति**। **न श्रद्दधे इति**। न संभावयामीत्यर्थः। त्वं शूद्रान्नं भोक्ष्यसे इति यत्तन्न श्रद्दधे, न मर्षये वा किङ्किलेत्यन्वयः। किङ्किलेति क्रोधं द्योतयति। **अस्तीति**। शूद्रस्य स्त्री शूद्री। तां गमिष्यसीत्यस्ति भवति विद्यते वेत्यन्वयः। **अत्र लृङ् नेति**। भविष्यति नित्यं लृङ्, भूते वेत्युक्तमिह न संभवति, अत्र लिङो विध्यभावेन लिङ्निमित्तविरहात्। **जातुयदोर्लिङ्**। जातु यत् अनयोः प्रयोगे अनवक्लृप्त्यमर्षयोर्लिङ् स्यादित्यर्थः। यदिति विभक्तिप्रतिरूपकमव्ययम्। 'अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपी'ति लिङ्लृटौ प्राप्तौ लिङेवेत्यर्थमिदम्। तदाह-**लृटोऽपवाद इति**। **यदायद्योरिति**। यदायद्योः प्रयोगेऽपि उक्तविषये लिङ उपसङ्ख्यानमित्यर्थः। जात्वादिशब्दा उदाहरणे अनवक्लृप्त्यमर्षद्योतकाः। त्वादृशो हरिं निन्देदित्येतन्नावकल्पयामि, न मर्षयामि वेत्यन्वयः। **नावकल्पयामीत्यस्य** न संभावयामीत्यर्थः। **लृङ् प्राग्वदिति**। भविष्यति नित्यं लृङ् भूते वेत्युक्तमिहाप्यनुसंधेयमित्यर्थः, जात्वादियोगस्य, अनवक्लृप्त्यमर्षयोश्च लिङ्निमित्तत्वादिति भावः। **यच्चयत्रयोः**। यच्चेति समुदाये यत्रशब्दे च प्रयुज्यमाने अनवक्लृप्त्यमर्षयोर्लिङ् स्यादित्यर्थः। लृटोऽपवादः। योगविभागस्तु उत्तरसूत्रे अनयोरेवानुवृत्त्यर्थः। उदाहरणे यच्चेति यत्रेति च अनवक्लृप्त्यमर्षद्योतकौ। त्वमेवं कुर्या इत्येतन्न श्रद्दधे, न मर्षयामि वेत्यन्वयः। अत्रापि 'भविष्यति नित्यं लृङ्, भूते वे'त्युक्तमनुसंधेयम्, लिङ्निमित्तस्य सत्त्वात्। **गर्हायां च**। **निवृत्तमिति**। व्याख्यानादिति भावः। 'यच्चयत्रयो'रिति, लिङिति चानुवर्तते। तदाह-**यच्चयत्रयोर्योगे इति**। **लिङेवेति**। नतु लकारान्तरमित्यर्थः। उदाहरणे यच्चेति यत्रेति च गर्हाद्योतकम्। 'त्वं शूद्रं याजये'रिति यत्तदन्याय्यमित्यन्वयः। लृङ् प्राग्वत्। **चित्रीकरणे च**। यच्चयत्रयोः प्रयोगे आश्चर्ये गम्ये लिङेव स्यान्न तु लकारान्तरमित्यर्थः। उदाहरणे यच्चेति यत्रेति चाश्चर्यद्योतकम्। त्वं शूद्रं याजयेरिति यत्तदाश्चर्यमित्यन्वयः। **शेषे लृडयदौ**। यच्चयत्राभ्यामन्यः शेषः। तदाह-**यच्चयत्राभ्यामन्यस्मिन्निति**। 'यदिभिन्ने' इति शेषः। **लृट्स्यादिति**। नतु लकारान्तरमित्यर्थः।

---

शे.]कालत्रयेऽपि लिङ्लृटावित्यर्थः। इह यथासङ्ख्यं नेष्यते। **प्राग्वदिति**। भूते वा, भविष्यति नित्यमित्यर्थः। **लिङोऽपवाद इति**। पूर्वसूत्रेणोभयोः प्राप्तयोर्लृङ्ग्रहणेन लिङो निवृत्तिः [इति भावः]। **अत्र लृङ्नेति**। लिङो निवृत्त्या एतद्युक्तानवक्लृप्त्यादेर्लिङ्निमित्तत्वाऽभावादिति भावः। **यच्चयत्रयोः**। अयमपि लृडपवादः। योगविभाग उत्तरत्राऽनयोरेवानुवृत्त्यर्थः। लृङ् प्राग्वत्। **लिङेवेति**। अनेन परत्वात् 'विभाषा कथमी'ति लटः, 'किंवृत्ते' इत्यस्य च बाधा-

स्मिन्नुपपदे चित्रीकरणे गम्ये धातोर्लृट् स्यात् । आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति । अयदौ किम् ?। आश्चर्यं यदि सोऽधीयीत । **उताप्योः समर्थयोर्लिङ्** ।३।३।१५२। बाढमित्यर्थेऽनयोस्तुल्यार्थता । उत अपि वा हन्यादघं हरिः । समर्थयोः किम् ? । उत दण्डः पतिष्यति । अपिधास्यति द्वारम् । प्रश्नः प्रच्छादनं च गम्यते । इतः प्रभृति लिङ्निमित्ते क्रियातिपत्तौ भूतेऽपि नित्यो लृङ् । **कामप्रवेदनेऽकच्चिति** ।३।३।१५३। स्वाभिप्रायाविष्करणे गम्यमाने लिङ् स्यान्न तु कच्चिति । कामो मे, भुञ्जीत भवान् । अकच्चितीति किम् ?। कच्चिज्जीवति । **संभावनेऽलमिति चेत्सिद्धाऽप्रयोगे** ।३।३।१५४। अलमर्थोऽत्र प्रौढिः । संभावनमित्यलमिति च प्रथमया सप्तम्या च विपरिणम्यते । संभावनेऽर्थे लिङ् स्यात्तच्चेत्संभावनमलमर्थे। अलमिति सिद्धाऽप्रयोगे सति ।

---

त.]यच्च यत्र वा त्वं शूद्रमयाजयिष्यः,आश्चर्यमेतत् ॥ । **शेषे।** सर्वलकारापवादः।**सोऽधीयीतेति।** यदायदोरुपसङ्ख्यानात् 'जातुयदो'रिति लिङ् । लिङ्निमित्ताऽभावादिह लृङ् न । **उताप्योः।** धातोर्लिङ् स्यात्कालत्रये। **भूतेऽपि नित्य इति।** वाग्रहणस्य निवृत्तत्वाद्भविष्यतीव भूतेऽपि नित्यं लृङ्। उताऽहनिष्यद्दस्युं राजा । नाऽहन्,न हनिष्यतीति गम्यते । **कामप्रवेदने । लिङ् स्यादिति।** कालत्रये। सर्वलकारापवादः। **कच्चिज्जीवतीति ।** 'कामो मे' इत्यनुषञ्जनीयम् । 'वर्तमानसामीप्ये' इति लट् । **संभावनेऽल । प्रौढिरिति ।** पर्याप्तिरित्यर्थः । **प्रथमया सप्तम्या चेति ।** 'संभावने' इति सप्तम्यन्तं प्रथमया विपरिणम्यते । 'अल'मिति प्रथमान्तं सप्तम्येति संबन्धः । **संभावनेऽर्थे इति ।** ननु प्रथमया विपरिणमितत्वात्कथमत्र सप्तम्यर्थलाभ इति चेत् , अत्राहुः—'संभावनेऽल'मित्यावर्त्त्य द्वितीयस्यैव विपरिणामात्सवैष्टसिद्धिरिति । **संभावनं ।** क्रियासु योग्यताऽध्यवसायः । **अलमितीति ।** तच्च संभावनं समर्थ इति चेद्भवति तदा लिङ् स्यादित्यर्थः । **सिद्धेति ।** सिद्धः अप्रयोगो यस्य तस्मिन्नलमि सति । यत्राऽलंशब्दो न प्रयुज्यते तदर्थस्तु गम्यते तत्रेति फलितोऽर्थः। मनोरमायां तु—'अलमिति संभावने सिद्धाऽप्रयोगश्चे'दिति सूत्रयितुमुचित'मित्युक्तम् । तत्र सिद्धस्या-

---

बा.]**आश्चर्यमिति।**अन्धः कृष्णं द्रक्ष्यतीत्याश्चर्यमित्यन्वयः।नामेत्यव्ययमाश्चर्यद्योतकम्।**मूक इति।**मूकोऽधीयीत इत्याश्चर्यमित्यन्वयः।यदीत्याश्चर्यद्योतकम्।**उताप्योः।** समौ अर्थौ ययोरिति विग्रहः। शकन्ध्वादित्वात्पररूपम् । एकार्थकयोरित्यर्थः । कमर्थमादायानयोरेकार्थकत्वमित्यत आह—**बाढमिति ।** तथाच बाढार्थकयोः उत अपि इत्यनयोः प्रयोगे लिङ् स्यान्न तु लकारान्तरमित्यर्थः।**उत अपि वेति।** उत हन्यादघं हरिः, अपि हन्यादघं हरिरित्यन्वयः । 'उताऽपी'बाढमित्यर्थकौ।**गम्यते इति।**'उत दण्डः पतिष्यती'त्यत्र उतशब्देन प्रश्नो गम्यते। 'अपिधास्यति द्वार'मित्यत्र अपिना धाधातोः प्रच्छादनार्थकत्वं गम्यत इत्यर्थः।**इतः प्रभृतीति।** 'वोताप्यो'रिति मर्यादायामाङ् । 'उताप्यो'रित्यतः प्राग्भूते लिङ्निमित्ते लृङ् वेत्यधिक्रियते।'उताप्यो'रित्यादिसूत्रेषु भूते 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इत्येवाधिक्रियते इत्युक्तम्। एवंच 'उताप्यो'रिति सूत्रप्रभृति लिङ्निमित्ते क्रियातिपत्तौ भूते लृङित्येवाधिक्रियते,नतु वाग्रहणम्।अतो नित्यमेवाऽत्र विषये क्रियातिपत्तौ भूते भविष्यति च लृङित्यर्थः।**कामप्रवेदनेऽकच्चिति ।** 'अकच्चिती'ति च्छेदः।तदाह—**न तु कच्चितीति।**सर्वलकारापवादः।**अभिप्रायः**=इच्छा । **काम इति।** भवान् भुञ्जीतेति मे कामः।इच्छेत्यर्थः।अत्र लिङ्निमित्तस्य सत्त्वात् क्रियातिपत्तौ भूतेऽपि नित्यं लिङ् । प्रश्न एवायं कामप्रवेदनद्योतक इति प्राप्तिः। अत्र कच्चिच्छब्दस्य इच्छार्थकत्वाऽभावादिच्छार्थेष्विति वक्ष्यमाणं नाऽत्र प्रवर्तते । **संभावने। अलमर्थोऽत्र प्रौढिरिति।** पर्याप्तिरित्यर्थः । **विपरिणम्यते इति।** संभावने इति यत् सप्तम्यन्तं तदावर्त्त्य प्रथमया संभावनमिति च विपरिणम्यते, यत्तु अलमिति प्रथमान्तं तदावर्त्त्य सप्तम्या अलमि इति च विपरिणम्यत इत्यर्थः । 'छान्दसं विभक्तिव्यत्ययमाश्रित्ये'ति शेषः। तथाच संभावने इति सप्तम्यन्तं, संभावनमिति प्रथमान्तं च लभ्यते । तथा अलमिति प्रथमान्तमलमि इति सप्तम्यन्तं च लभ्यते।तत्र संभावने इति सप्तम्यन्तमर्थनिर्देशपरं । तदाह—**संभावनेऽर्थे लिङ्स्यादिति ।** उत्कटान्यतरकोटिकं ज्ञानं संभावनमित्युच्यते । संभावनमितिप्रथमान्तं तु अलमिति प्रथमान्तेन विशेष्यते।इतिहैतौ।तदाह—**तच्चेदिति।**तत्=संभावनम् , अलं=पर्याप्तिहेतुकं चेदित्यन्वयः । षिधधातोर्ज्ञानार्थकात् 'मतिबुद्धी'ति वर्तमाने कर्मणि क्ते सिद्धशब्दः । सिद्धे गम्यमानेऽप्यलमर्थे अप्रयोगो यस्य

---

शे.]दिति भावः । लृङ् प्राग्वत् । **शेषेल्।** अत्र लृङ् न। **यदि सोऽधीयीतेति।** 'जातुयदो'रित्यत्र 'यदायदो'रित्युपसङ्ख्यानाल्लिङ् । **भूतेऽपीति ।** वाग्रहणस्य निवृत्तत्वाद्भविष्यतीव भूतेऽपि नित्यमित्यर्थः। **कामप्रवेद।** सर्वलाऽपवादः। **अकच्चितीत्यस्य** कच्चिच्छब्दप्रयोगाऽभावे इत्यर्थः । तदाह—**न त्विति ।** **कच्चिज्जीवतीति ।** अयं प्रश्न एव कामप्रवेदनद्योतक इति भावः । कच्चिच्छब्दस्येच्छार्थकत्वाऽभावात् 'इच्छार्थेषु' इत्यप्यत्र न प्रवर्त्तते । **प्रौढिः**—क्रियायाः कृत्यसाध्यताविरहबोधनम् । **संभावनं**—क्रियायोग्यताविषयोत्कटकोटिकं ज्ञानम् । **विपरिणम्यत इति ।** आवर्त्त्य विपरिणम्यत इत्यर्थः । **तच्चेदिति ।** इमां क्रियामनुष्ठातुं समर्थ इत्येवंरूपश्चेत्तत्सम्भावनमिति भावः । अत्राऽपि लृङ्

अपि गिरिं शिरसा भिन्द्यात्। सिद्धाऽप्रयोगे किम् ?। अलं कृष्णो हस्तिनं हनिष्यति। **विभाषा धातौ सम्भावनवचनेऽयदि** ।३।३।१५५। पूर्वसूत्रमनुवर्तते। सम्भावनेऽर्थे धातावुपपदे उक्तेऽर्थे लिङ् वा स्यान्न तु यच्छब्दे। पूर्वेण नित्ये प्राप्ते वचनम्। संभावयामि भुञ्जीत भोक्ष्यते वा भवान्। अयदि किम् ?। संभावयामि यद्भुञ्जीथास्त्वम्। **हेतुहेतुमतोर्लिङ्** ।३।३।१५६। वा स्यात्। कृष्णं नमेच्चेत्सुखं यायात्। कृष्णं नंस्यति चेत्सुखं यास्यति। * भविष्यत्येवेष्यते। नेह-हन्तीति पलायते। **इच्छार्थेषु लिङ्लोटौ** ।३।३।१५७। इच्छामि भुञ्जीत, भुंक्तां वा भवान्। एवं-कामये प्रार्थये इत्यादियोगे बोध्यम्। * काम-

---

त.]ऽप्रयोग इति विग्रहः। कस्याऽप्रयोग इत्यांकाङ्क्षायामर्थादलंशब्दस्येति बोध्यम्। **अपि गिरिमिति**। संभावनद्योतकोऽपिशब्दः। गिरिविदारणे पर्याप्त इति संभवनाऽत्र गम्यते। कालसामान्येऽयं लिङ्। लृङ् प्राग्वत्। अपि गिरिं शिरसाऽभेत्स्यत्। अलमिति चेत्किम् ?। प्रायेण गमिष्यति। **विभाषा धातौ**। संभावनमुच्यते येन तत्संभावनवचनं, तस्मिन्धातौ। संभावनार्थकधातावित्यर्थः। **भुञ्जीथास्त्वमिति**। अत्र पूर्वेण नित्यो लिङ्। धातौ किम् ?। संभावनवचने स्वरूपग्रहणं माभूत्। कृते तु संभावनवचने तद्वाचकधातोरप्रयोगादिह विभाषा न भवति। भुञ्जीत भवान्। पूर्वेणाऽत्र नित्यो लिङ्। **हेतुहेतु**। विभाषेत्यस्याऽनुवर्तनादाह-**वा स्यादिति**। **नमेच्चेदिति**। कृष्णनतिः सुखप्राप्तौ हेतुः। **भविष्यत्येवेति**। लिङित्यनुवर्तमाने पुनर्लिङ्ग्रहणं कालविशेषप्रतिपत्त्यर्थमिति भावः। **हन्तीत्यादि**। ननु 'लक्षणहेत्वोः क्रियायाः' इति हन्तेः शतृप्रत्ययः स्यात्, हननस्य पलायने हेतुत्वात्। मैवम्। **'देवत्रातो गलो ग्राह इतियोगे च सद्विधिः। मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः'** इति 'शाच्छोरन्यतरस्या'मिति सूत्रे भाष्ये व्यवस्थापितत्वात्। व्याख्यातं च कैयटेन तत्रैव सूत्रे,-'देवत्रात' इति संज्ञा। तत्र 'नुदविदोन्दत्राघ्राहीभ्योऽन्यतरस्या'मिति न णत्वं भवति-देवत्राण इति। किं तु देवत्रात इत्येव। 'ग्रो यङि', 'अचि विभाषा' इति प्राप्यङ्गे नित्यं लत्वम्। गलः। विषवाचके 'गर' इत्यत्र न भवति। 'विभाषा ग्रहः' इति णप्रत्ययो जलचरे भवति-ग्राहः। ज्योतिषि न,-ग्रहः। 'लक्षणहेत्वो'रिति सूत्रे 'नन्वोर्विभाषे'त्यतो विभाषेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणादितिशब्दयोगे सद्विधिः=शतृशानचौ न भवतः। हन्तीति पलायते। वातायने-'गवाक्षः'। अन्यत्र त्ववङ् न भवति-गोऽक्षः। संशितव्रत इति बहुव्रीहिः। अत्र 'शाच्छोरन्यतरस्या'मिति संशात इतीत्वविकल्पो न भवति। अन्यत्र तु-शातः। शितः। **ते**=पूर्वोक्तनत्वादिविषयो,**मिथः**=परस्परम् एकविषये,-**न विकल्प्यन्ते**-तत्तद्विधायकसूत्रे व्यवस्थितविभाषाश्रयणादिति भावः। क्रियातिपत्तौ तु भूते भविष्यति च नित्यं लृङ्। यद्यवर्षिष्यत् सस्यमुदपत्स्यत्। **इच्छार्थेषु लिङ्लोटौ**।

---

बा.]स सिद्धाऽप्रयोगस्तस्मिन्निति विग्रहः। अलमीति सप्तम्यन्तमत्र विशेष्यसमर्पकं संबध्यते।अलंशब्दप्रयोगं विनापि तदर्थे गम्यमाने इति यावत्। तदाह-**सिद्धाऽप्रयोगे सतीति**। 'अलमी'ति शेषः। **अपि गिरिमिति**। बलवन्तं पुरुषमधिकृत्य अत्युक्तिरियम्। प्रायेण शिरसा गिरिं भेत्तुमयं समर्थ इत्यर्थः। गिरिभेदसंभावनस्य सामर्थ्यहेतुकत्वद्योतकोऽपिशब्दः। अत्र लिङ्निमित्तसत्त्वात् क्रियातिपत्तौ भूते लृङ्। 'अलमिति संभावने सिद्धाऽप्रयोगश्चे'दिति सुवचम्। **विभाषा धातौ**। 'अयदी'ति छेदः। तदाह-**नतु यदिति**। लिङ्भावे लृट्, 'शेषे लड्यदौ' इत्यतस्तदनुवृत्तेः। **संभावयामीति**। प्रायेण भोक्तुं समर्थ इत्यर्थः। **हेतुहेतुमतोर्लिङ्**। पूर्वसूत्राद्विभाषानुवृत्तिं मत्वा आह-**वा स्यादिति**। पक्षे लृट्। हेतुभूते फलभूते चाऽर्थे वर्तमानाद्धातोर्लिङ् वा स्यादिति यावत्। **भविष्यत्येवेति**। लिङित्यनुवर्तमाने पुनर्लिङ्ग्रहणादिति भावः। **हन्तीति**। इतिर्हेतौ। वर्तमानकालिकहननाद्धेतोरित्यर्थः। अत्र लिङ्निमित्तसत्त्वाद्भविष्यति तु क्रियातिपत्तौ भूते च लृङ्। **इच्छार्थेषु लिङ्लोटौ**। इच्छार्थकधातुषु प्रयुज्यमानेषु लिङ्लोटौ स्तः। सर्वलकारापवादः। असमानकर्तृकविषयमिदम्। समानकर्तृकेषु तु 'लिङ् चे'ति वक्ष्यते। **इच्छामीति**। भुञ्जीत भवा-

---

शे.]प्राग्वत्। **सिद्धाप्रयोगे इति**। यत्र तत्प्रयोगं विनापि तदर्थो गम्यत इत्यर्थः। **अपि गिरिमिति**। सम्भावनस्य धात्वर्थविषयसामर्थ्यविषयताध्वनकोऽपिशब्दः, क्वचित्प्रकरणादिकमपि तथेति बोध्यम्। **सम्भावयामीति**। 'भोजने भवाञ्शक्तः' इत्युत्प्रेक्षे इत्यर्थः। प्रत्युदाहरणे पूर्वेण लिङ्। **वा स्यादिति**। 'विभाषे'ति पूर्वसूत्रादनुवर्तते। **इष्यत इति**। 'लि'ङिति वर्तमाने पुनर्लिङ्ग्रहणादेतद्विशेषलाभः। **हन्तीति**। हननं-**हेतुः**, पलायनं-**कार्यम्**। 'गर्हायां लडपी'त्यतो भविष्यतीति निवृत्त्या कालत्रयेऽप्येते प्रत्यया इति अत्र प्राप्तिः। लृङ् प्राग्वत्। उपसंवादाशङ्कयोरपि लिङ् वाच्यः। **उपसंवादः**-कर्तव्ये पणबन्धः। 'यदि मे भवानिदं कुर्यादहमपि ते इदं दद्या'मित्युदाहरणम्। अत्राऽवध्यवधिमद्भाव एव प्रतीयते न हेतुहेतुमद्भाव इति न 'हेतुहेतुमतो'रित्यनेन सिद्धिः। **आशङ्का**-उत्प्रेक्षा, तेन 'सर्पिषोऽपि स्यात्' 'प्रासाद आसामिष्टकानां स्या'दित्यादेः सिद्धिः। स्पष्टं चेदम् 'उपसंवादाशङ्कयो'रिति सूत्रे भाष्ये। **इच्छार्थेषु**।

**प्रवेदन इति वक्तव्यम्।** नेह-इच्छन् करोति। **लिङ् च।३।३।१५९।** समानकर्तृकेषु इच्छार्थेषूपपदेषु लिङ् स्यात्। भुञ्जीयेतीच्छति। **इच्छार्थेभ्यो विभाषा वर्तमाने।३।३।१६०।** लिङ् स्यात्। पक्षे लट्। इच्छेत्। इच्छति। कामयेत। कामयते। 'विधिनिमन्त्रणे'ति लिङ्। विधौ-यजेत। निमन्त्रणे-इह भुञ्जीत भवान्। आमन्त्रणे इहासीत। अधीष्टे-पुत्रमध्यापयेद्भवान्। संप्रश्ने-किं भो वेदमधीयीय उत तर्कम्? प्रार्थने-भो भोजनं लभेय। एवं लोट्। **प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च।३।३।१६३।** प्रैषो-विधिः। अतिसर्गः-कामचारानुज्ञा। भवता यष्टव्यम्। भवान्यजताम्। चकारेण लोटोऽनुकर्षणं प्राप्तकालार्थम्। **लिङ् चोर्ध्वमौहूर्तिके।३।३।१६४।**

त.] एषूपपदेषु धातोरेतौ स्तः। सर्वलकाराणामपवादः। 'लिङ् चे'त्यनेन समानकर्तृकेषु लिङो विधानादिह लिङ्लोटावसमानकर्तृकेषु भवत इति बोध्यम्। **इच्छन् करोतीति।** अत्राऽनभिधानात् 'समानकर्तृकेषु' इति तुमुन् न। ननु 'कामप्रवेदनेऽकच्चिती'त्यनेनैव लिङः सिद्धत्वादिह लिङ्ग्रहणं मास्तु, लोडेव विधीयतामिति चेन्न, लोटा लिङो बाधा माभूदिति लिङ्ग्रहणस्याऽत्रावश्यकत्वात्। न चैवम् 'इच्छार्थेषु लोट् चे'त्येव सूत्र्यतामिति वाच्यम्। चकारेण लिङोऽनुकर्षे तत्संबद्धविभाषाग्रहणस्याऽनुकर्षणप्रसक्त्या लकारान्तरमपि स्यादिति। न चैवमपि 'कामप्रवेदने' इत्युपसङ्ख्यानादनेनैव सिद्धे 'कामप्रवेदनेऽकच्चिती'ति सूत्रं मास्त्विति वाच्यम्, यत्राऽर्थप्रकरणादिना कामप्रवेदनं गम्यते इच्छार्थकमुपपदं नास्ति तदर्थं तदारम्भात्। **लिङ् च।** 'समानकर्तृकेषु तुमुन्नि'त्यनेन 'इच्छार्थेषु लिङ्लोटौ' इति विहितयोर्लिङ्लोटोर्बाधे प्राप्ते लिङः प्रतिप्रसवार्थं सूत्रम्। न चाऽत्र वासरूपविधिना लिङ्लोटोर्नित्यं बाधा नेति शङ्क्यम्, क्तल्युट्तुमुन्खलर्थेषु तदभावात्। अथाऽपि वासरूपविधिः स्यात्, एवमपि लिङेव यथा स्याल्लोट् माभूदित्येवमर्थं तदारम्भव्यमेव। क्रियातिपत्तौ लृङ् प्राग्वत्। **इच्छार्थेभ्यः।** इच्छार्थेभ्यः किम्? पचति गच्छति। **प्रैषातिसर्ग। प्रैषो विधिरिति।** विधिग्रहणे कर्तव्ये प्रैषग्रहणं शिष्यबुद्धिवैशद्यार्थमित्याहुः। **लोटोऽनुकर्षणमिति।** 'लोट् चे'ति योगस्येदमेव प्रयोजनम्। एकयोगत्वे तु लिङोऽप्यनुकर्षणं स्यात्। **प्राप्तकालार्थमिति।** प्रैषातिसर्गयोः पूर्वेणैव सिद्धत्वादिति भावः। **लिङ् चोर्ध्व।** प्राप्तकालविशेषेऽप्राप्तस्य लिङो विधानार्थमिदं सूत्रम्। प्रैषातिसर्गयोस्तु पूर्वेण-

बा.] निति इच्छामीत्यन्वयः। **कामप्रवेदने इति।** परं प्रति स्वाभिप्रायाविष्करणे 'इच्छार्थेषु लिङ्लोटा'विति विधिरित्यर्थः। **इच्छन्करोतीति।** परं प्रति स्वाभिप्रायाविष्करणाऽभावान्न लिङ्लोटाविति भावः। 'कामप्रवेदनेऽकच्चिती'ति सूत्रं तु प्रकरणादिना यत्र कामप्रवेदनं, नत्विच्छार्थकमुपपदमस्ति तद्विषयमिति बोध्यम्। इत उत्तरसूत्रं 'समानकर्तृकेषु तुमु'न्निति तु कृदधिकारे व्याख्यास्यते। **लिङ् च।** समानकर्तृकेष्विति, इच्छार्थेष्विति चानुवर्तते। तदाह-**समानेत्यादि। भुञ्जीयेतीच्छतीति।** अत्र भोक्तुरेव इषिकर्तृत्वात्समानकर्तृकत्वम्। 'समानकर्तृकेषु इच्छार्थेष्वि'ति लोटो निवृत्त्यर्थमिदं सूत्रम्। क्रियातिपत्तौ तु भविष्यति नित्यं लृङ्, भूते चेत्यधिकारः संपूर्णः। **इच्छार्थेभ्यो।** लिङित्येवानुवर्तते। समानकर्तृकेष्विति तु निवृत्तम्। तत् सूचयन्नुदाहरति-**इच्छेत् इच्छतीति। 'विधिनिमन्त्रणे'**ति भूधातौ व्याख्यातमपि सूत्रक्रमप्राप्तत्वात्स्मारितम्। **एवं लोडिति।** लोट् चेति विध्यादिषु विहितो लोडप्येवमुदाहर्तव्य इत्यर्थः। **प्रैषातिसर्ग। लोट् चेति।** पूर्वसूत्रोपात्तो लोट् चकारात्समुच्चीयते। कृत्यसंज्ञकाः प्रत्यया वक्ष्यमाणा, लोट् च प्रैषादिषु भवन्तीत्यर्थः। प्रैषे अतिसर्गे च कृत्यप्रत्ययमुदाहरति-**भवता यष्टव्यमिति।** भावे तव्यप्रत्ययः। लोटमुदाहरति-**भवान्यजतामिति।** ननु चकारेण लोटोऽनुकर्षणं व्यर्थं, प्रैषस्य विधिरूपतया, अतिसर्गस्य आमन्त्रणरूपतया च 'लोट् चे'त्यनेनैव सिद्धेरित्यत आह-**चकारेणेति।** प्राप्तकाले यथा-गुरुणा भोक्तव्यम्। गुरुर्भुञ्जीत। भोजनं प्राप्तावसरमित्यर्थः। 'प्राप्तकाले च कृत्यार्थे'त्युक्तौ तु निमन्त्रणादिष्वपि कृत्याः स्युः। अतः प्रैषादिग्रहणम्। **लिङ् चोर्ध्वमौहूर्तिके।** 'लोडर्थलक्षणे चे'त्युत्तरमेवंजातीयकमेव सूत्रं लिङ्लङ्लुङ्लृङ्विधायकं प्राक् पठितम्। तत्र ऊर्ध्वमौहूर्तिकशब्दो व्याख्यातः। **प्रैषादय इति।** तथाच मुहूर्तादुपरितनकालके धात्वर्थे विद्यमानाद्धातोः प्रैषातिसर्गप्राप्तकालेषु लिङ् च स्यात्, लोट्, कृत्याश्चेत्यर्थः। क्रमेण लिङादीनुदाहरति-**मुहूर्तादूर्ध्वं यजेत यजतां यष्टव्यमिति।** अत्र प्राप्तकालेऽप्राप्तस्य लिङो विधिः, विध्यादिसूत्रे लिङ्विधौ प्राप्तकालस्य ग्रहणाऽभावात्। प्रैषातिसर्गयोस्तु विध्यादिसूत्रेणैव लिङ्

शे.] सर्वलाऽपवादः। लृङ् प्राग्वत्। इच्छार्थे उपपदे इति सूत्रार्थः। **कामप्रवेदन-**स्वाभिप्रायाविष्करणम्। तच्च प्रयोक्तुरिति बोध्यम्। इदं न स्वतन्त्रं विधायकं, किन्तु सूत्रशेषभूतमन्यव्यावर्त्तकमेव। अतो व्यावर्त्यमेव दर्शयति-**नेहेच्छन्निति। विधिनि।** प्रवर्तनाविचारप्रार्थनाविषयार्थवाचकाद्धातोरित्यर्थः। **प्रैषाति।** अनयोर्विध्यामन्त्रणाभ्यामभेदेऽपि निमन्त्रणादिषु कृत्यव्यावर्त्तयेऽत्र ग्रहणम्। 'प्राप्तकाले च कृत्यार्थे'त्युक्ते हि तेष्वपि ते स्युः। सामान्यविहितकृत्यानां प्रैषादिषु लोटा बाधा माभूदिति कृत्यविधिः। **प्राप्तकालार्थमिति।** प्रैषातिसर्गयोः पूर्वेण 'लोट् चे'ति सूत्रेण सिद्धत्वादिति भावः। **लिङ् चो।** प्राप्तकालेऽप्राप्तस्य लिङो विधानार्थमिदम्। अन्ययोर्विध्यादिसूत्रेण सिद्धेः। चाद्यथाप्राप्तं लोट् कृत्याश्च।

प्रैषादयोऽनुवर्तन्ते । मुहूर्तादूर्ध्वं यजेत, यजतां, यष्टव्यम् । **स्मे लोट्** ।३।३।१६५। पूर्वसूत्र[स्य] विषये । लिङः कृत्यानां चापवादः । ऊर्ध्वं मुहूर्ताद्यजतां स्म । **अधीष्टे च** ।३।३।१६६। स्मे उपपदेऽधीष्टे लोट् स्यात् । त्वं स्माऽध्यापय । **लिङ्यदि** ।३।३।१६८। यच्छब्दे उपपदे कालसमयवेलासु च लिङ् स्यात् । कालः समयो वेला वा यद्भुञ्जीत भवान् । **अर्हे कृत्यतृचश्च** ।३।३।१६९। चाल्लिङ् । त्वं कन्यां वहेः । **शकि लिङ् च** ।३।३।१७२। शक्तौ लिङ् स्यात्। चात्कृत्याः । त्वं भारं वहेः । **'माङि लुङ्'** । मा कार्षीः । कथं मा भवतु मा भविष्यतीति ? । नायं माङ्, किंतु माशब्दः । **धातुसंबन्धे प्रत्ययाः** ।३।४।१। धात्वर्थानां संबन्धे यत्र

त.]प्राप्त एव लिङ्लोट्कृत्यानां कालविशेषेऽस्मिन् लिङा बाधा माभूदिति चकारः। **पूर्वसूत्रस्यविषय इति।** प्रैषादयः, ऊर्ध्वमौहूर्तिके इति चानुवर्तत इति भावः । **अधीष्टे च** । लिङोऽपवादः । योगविभागस्तु ऊर्ध्वमौहूर्तिकाऽननुवृत्त्यर्थः । **लिङ् यदि । कालसमयवेलासु चेति** । 'उपपदेष्वि'ति वचनविपरिणामेन संबध्यते । तुमुनोऽपवादः। **यद्भुञ्जीतेति** । यत्कालः पचतीत्यत्र तु न, प्रैषादीनामनुवृत्तेः । **अर्हे** । योग्ये कर्तरि गम्यमाने कृत्यतृचो भवन्ति । त्वया कन्या वोढव्या, वहनीया। त्वं कन्यां वोढा। **कन्यां वहेरिति** । कन्योद्वहने योग्यस्त्वमित्यर्थः। नन्वर्हे किमर्थं कृत्यतृचो विधीयन्ते यावता सामान्येन विहितत्वादनर्हेऽपि भविष्यन्तीति चेत् । अत्राहुः-अर्हतायां द्योत्यायामप्राप्तो लिङ् विधीयते, तेन तु लिङा बाधा माभूदिति कृत्यतृचोर्विधानम् । न च वासरूपविधिना समीहितसिद्धिः, स्त्र्यधिकारादूर्ध्वं तदप्रवृत्तेरिति। **धातुसंबन्धे** । इह धात्वोर्विशेषणविशेष्यभावादिसंबन्धोऽनुपपन्नः, स्वार्थस्मारणेनोपक्षीणत्वात् , पदार्थसंसर्गो वाक्यार्थः, कारकविशिष्टा क्रिया चेति स्वीकारात् । 'शब्दानुगमादृते न शाब्दोऽस्ति प्रत्यय' इत्यवष्टभ्य शाब्दबोधे शब्दोऽपि भासत इत्यभ्युपगमेऽपि शब्दस्य स्वार्थं प्रत्येव प्रकारत्वं न तु शब्दान्तरं प्रति । तथा च धातुसंबन्धो वाक्येन न बुध्यते इति तस्य वाक्यार्थत्वाऽसंभवाद्धातुशब्देन धात्वर्थो लक्ष्यते । ननु 'धातोः कर्मणः समानकर्तृका'दिति सन्विधौ

बा.]सिध्यति । लिङ एवात्र विधौ तु तेन लोटः कृत्यानां च बाधः स्यात्,अतश्चकारेण तेषामपि विधिरिति ज्ञेयम् । **स्मे लोट् । पूर्वसूत्रेति** । तथाच मुहूर्तादुपरितनकाले प्रैषातिसर्गप्राप्तकालेषु लोडेव स्यान्नतु लिङ् कृत्याश्चेत्यर्थः । तदाह-**लिङः कृत्यानां चापवाद इति । अधीष्टे च । लोट् स्यादिति** । अधीष्टे विहितस्य लिङोऽपवादः । अधीष्टं सत्कारपूर्वको व्यापार इत्युक्तम् । **त्वं स्माध्यापयेति** गुरुं प्रत्युक्तिः । 'स्मे लोडधीष्टेचे'त्येकसूत्रत्वेन सिद्धे योगविभागस्तु ऊर्ध्वमौहूर्तिक इत्यनुवृत्तिनिवृत्त्यर्थः। 'कालसमयवेलासु तुमु'नित्युत्तरसूत्रं तु कृदधिकारे व्याख्यास्यते । **लिङ् यदि** । कालसमयवेलास्वित्यनुवर्तते। सर्वलकारापवादः, तुमुनपवादश्च । भुञ्जीत भवानिति यत्तस्य कालः समयो वेला वेत्यन्वयः । **अर्हे कृत्यतृचश्च । चाल्लिङिति** । योग्ये कर्तरि गम्ये कृत्याः, तृच् , लिङ् चेत्यर्थः । **त्वं कन्यां वहेरिति** । कन्याविवाहस्य योग्य इत्यर्थः । **शकि लिङ् च** । 'शक्' इति भावे क्विबन्तम् । शक्तौ गम्यमानायामित्यर्थः । **भारं त्वं वहेरिति** । वोढुं शक्त इत्यर्थः । **'माङि लु'ङिति** व्याख्यातमपि क्रमप्राप्तं विशेषविवक्षया पुनः स्मार्यते । ननु सर्वलकारापवादोऽयमित्युक्तम् , एवं सति मा भवतु मा भविष्यतीति कथमिति शङ्कते-**कथमिति।** परिहरति-**नायं माङिति । किंत्विति** । ङकारानुबन्धविनिर्मुक्तस्यापि अव्ययेषु पाठादिति भावः । नच माशब्दमादाय मा भवत्वित्यादिप्रयोगसत्त्वे 'माङि लु'ङिति व्यर्थमिति वाच्यं, सर्वलकारविषये 'न माङ्योगे' इत्यडाङ्विहितलुङन्तप्रयोगार्थं तदावश्यकत्वात् । **धातुसंबन्धे** । धातुशब्देन धात्वर्थो लक्ष्यते । धात्वोः संबन्ध इति विग्रहः, संबन्धस्य द्विनिष्ठत्वात्। तथाच धात्वर्थयोः संबन्धे सति प्रत्ययाः स्युरिति लब्धम् । कस्मिन्नर्थे इत्याकाङ्क्षायां काले इति गम्यते, 'वर्तमाने ल'-डित्यारभ्य तत्तत्कालविशेषेष्वेव प्रत्ययविधिदर्शनात् । तत्र तत्तद्विधिभिरेव तत्तत्कालविशेषे प्रत्ययसिद्धेस्ततोऽन्यस्मिन्काले इति गम्यते । तदाह-**धात्वर्थानामित्यादिना** । धात्वर्थयोरित्यर्थः । उदाहरणबहुत्वाभिप्रायं बहुवचनम् ।' वर्तमान-

शे.]अन्यथा लिङा तयोर्बाधः स्यात्।मुहूर्तादूर्ध्वं यजनं प्राप्तकालमित्यर्थः। **स्मे लोट्** । प्रैषादय ऊर्ध्वमौहूर्तिक इति चानुवर्तते । **यजतां स्मेति** । 'स्म'शब्दोऽधिकारसूचकः, भवानत्राधिकृत इत्यर्थः । **अधीष्टे** । लिङोऽपवादः । योगविभागादूर्ध्वमौहूर्तिक इति निवृत्तम् । **लिङ् यदि** । 'कालसमयवेलास्वि'त्यनुवर्तते । यद्भवान् भुञ्जीत तस्य काल इत्युदाहरणार्थः । भावे परत्वात्तुमुनमयं बाधते । सर्वलापवादोऽयम् । **अर्हे कृ** । योग्ये कर्तरि गम्यमाने कृत्यादय इत्यर्थः । **शकि लि।** भावे क्विप्। शक्तौ गम्यमानायामित्यर्थः। सर्वलापवादत्वाच्छङ्कते-**कथमिति । माशब्द इति ।** सूत्रं सर्वलकारविषयेऽडाङ्विहितलुङन्तप्रयोगार्थम् । वस्तुतः स नास्त्येव । 'आङ्माङोश्चे'ति सूत्रभाष्ये तथा ध्वनितत्वात्। **धातुसम्बन्धे** । 'प्रत्यया' इत्युक्तेर्विधिरयम् । धातुसम्बन्ध इत्युत्तरत्राप्यनुवर्तते, स्वरितत्वात् । सम्बन्धस्य द्विष्ठत्वाद्विवचनान्तेन समासः। **धातुशब्देन** तदर्थो लक्ष्यते । तेन गोमानासीद्भवितेति सिध्यति । तदाह-**धात्वर्थानामिति** ।

काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युः।तिङन्तवाच्यक्रियायाः प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्ययाः। वसन् ददर्श । भूते लट् । अतीतवासकर्तृकर्तृकं दर्शनमर्थः । सोमयाज्यस्य पुत्रो भविता। सोमेन यक्ष्यमाणो यः

त.]कर्मत्वं समानकर्तृकत्वं च धातोरर्थद्वारकं विशेषणमाश्रितं तथेहापि धात्वोरर्थद्वारकः संबन्धोऽस्त्विति चेत्।मैवम्। तथा हि सति परस्परसंबन्धार्थबोधकाऽनेकधातुप्रयोग एव प्रत्ययाः स्युस्ततश्च गोमानासीत् गोमान् भवितेत्यादि न सिध्येत्। न ह्यत्र 'वसन् ददर्शे'त्यत्र वर्तमानकालो वसिरिव वर्तमानकालोऽस्तिः प्रयुज्यते । न चाऽप्रयुज्यमानस्य धात्वन्तरेण संबन्धोऽस्ति । अर्थयोः संबन्धाभ्युपगमे धातुद्वयाऽभावेऽपि धात्वर्थद्वयस्य सत्त्वाद्गोमानासीदित्यादौ नाऽनुपपत्तिः। तदेतदभिप्रेत्याह–**धात्वर्थानामिति**। विषयबहुत्वापेक्षं बहुवचनम् । एकैकविषयापेक्षायां तु धात्वर्थयोरिति बोध्यम् । एतच्च मनोरमानुसारेण व्याख्यातम्।**केचित्तु**–धात्वोरर्थद्वारकसंबन्धेऽभ्युपगते 'गोमानासीद्भविते'त्यादि न सिध्येदिति मनोरमोक्तं चिन्त्यमेव । 'तत्करोति तदाचष्टे' इत्यत्रेव 'तदस्यास्त्यस्मि'न्नित्यत्राप्येकत्ववर्तमानत्वयोरविवक्षितत्वात्प्रकृतसूत्रानपेक्षयैव तत्सिद्धेः । न ह्यत्र मतुब्विधौ 'वर्तमाने ल'डित्यादाविव कालविशेषपरिग्रहोऽस्तीत्याहुः । तद्भाष्यकैयटाद्यननुगुणम् । तथा हि भाष्ये–प्रत्यय इत्यनुवर्तमाने पुनरत्र प्रत्ययग्रहणं किमर्थमित्याक्षिप्य अधातुप्रत्ययानामपि संबन्धे साधुत्वं यथा स्यात्, गोमानासीत् भविता वेति समाहितम् । कैयटेन तु–'तदस्यास्त्यस्मिन्निति मतुप् प्रत्ययो वर्तमानसत्ताविशिष्टप्रकृत्यर्थयुक्तो विहित' इत्युक्तम् । तथा च मतुब्विधावस्तीत्यत्र एकत्वस्याऽविवक्षितत्वेऽपि वर्तमानत्वं विवक्षितमिति तद्ग्रन्थबलादवगम्यते । किंच 'दण्डिनमानये'त्युक्ते वर्तमानसत्ताविशिष्टदण्डयुक्त एवानीयते नाऽन्यः । तथा च 'आसीत्' 'भविते'ति तिङन्तपदानुरोधेन 'गोमा'नित्यत्र गावोऽस्यासन् गावोऽस्य भवितार इत्यतीतानागतसत्ताविशिष्टप्रकृत्यर्थयुक्तो मतुप्प्रत्ययः प्रकृतसूत्रेणैव विधीयते न तु तदुक्तरीत्या लभ्यत इति दिक् । ननु तत्तद्विधिवाक्यैरेव स्वविषये प्रत्ययाः सिद्धाः किमनेन सूत्रेणेत्यत आह–**अत्र काल इति** । 'वर्तमानसामीप्ये' इत्यारभ्य कालाऽन्यत्वं प्रायेण प्रतिपाद्यते तदेव चेह गृह्यत इति भावः। 'वनानि पश्यन् ययौ'वित्यादौ वर्तमानभूतकालादिप्रत्ययेषु को वा स्वकालात्प्रच्युतो भवतीत्याकाङ्क्षायामाह–**तिङन्तवाच्येति**। प्रधानानुरोधेन गुणस्य नयनमुचितं न तु विपरीतमिति भावः। **प्रत्यया इति** । कालान्तरभाजो भवन्तीत्यर्थः । **भूते लडिति** । एवं चोषित्वा ददर्शेत्यर्थः । **अतीतेति** । अतीतवासकर्ता कर्ता यस्य दर्शनस्येति बहुव्रीहिः । **सोमयाजीति** । 'करणे यजः' इति भविष्यति णिनिः । अतएवाह–**सोमेन यक्ष्यमाण इति**। एवं च 'पश्यन् ययौ'वित्यत्र दृशेर्भूते लट् । दृष्ट्वा ययावित्यर्थः। 'निवेदयिष्यतो ''मनो न विव्यथे'

बा.]सामीप्ये वर्तमानवद्वे'त्यादिसूत्रे यत्र काले ये प्रत्यया उक्तास्ते धात्वर्थयोः सम्बन्धे गम्ये ततोऽन्यस्मिन्नपि काले स्युरिति यावत् । तथाच 'वसन् ददर्शे'त्यत्र लडादेशः शतृप्रत्ययो भूतकाले इति सिद्धं भवति । ननु 'वसन् ददर्शे'त्यत्र भूते लडिव वर्तमाने लिडित्यपि स्यादित्यत आह–**तिङन्तेति**। 'वसन् ददर्शे'त्यादौ तिङन्तवाच्या दर्शनादिक्रिया प्रधानम् । वासादिक्रिया तु दर्शनादिक्रियार्थत्वाद्गुणभूता । अतः प्रधानभूतदर्शनादिक्रियानुसारेण गुणभूतवासादिक्रियावाचिभ्य एव इह प्रत्ययाः कालान्तरेषु विधीयन्त इत्यर्थः । **भूते लडिति** । एवंच उषित्वा ददर्शेत्यर्थः। तदाह–**अतीतेति**। अतीतवासे कर्ता यस्येति विग्रहः । 'सप्तमीविशेषणे बहुव्रीहौ' इति ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः । उदाहरणान्तरमाह–**सोमयाजीति** । सोमेन इष्टवान्यः स सोमयाजी । करणे यजः' इति भूते विहितो णिनिः, इह भवितेत्यनद्यतनभविष्यल्लुडन्तप्रधानक्रियानुसारेण अनद्यतनभविष्यति बोध्यः। तदाह–**सोमेन यक्ष्यमाण इति** । **भवनमिति** । उत्पत्तिरित्यर्थः । 'गोमानासी'दित्यप्युदाहार्यम् । अत्र गौरस्यास्तीति अस्तिक्रियायां वर्तमानायां 'तदस्यास्ती'ति विहितो मतुप् गौरस्यासीदिति भूतायामस्तिक्रियायां भवति, धात्वर्थद्वयसंबन्धस्य सत्त्वात् । एतेन अर्थद्वारके धात्वोः संबन्धे इत्यपि व्याख्यानं परास्तम् । तथा सति परस्परसंबन्धार्थबोधकधातुद्वयप्रयोगे प्रत्यया इत्यर्थलाभाद्गोमानासीदित्यत्र मतुबनापत्तेः। नहि धात्वोरिह प्रयोगोऽस्ति । धात्वर्थयोः सम्बन्धे इत्यर्थाभ्युपगमे तु गोमानासीदित्यत्र धातुद्वयप्रयोगाभावेऽपि धात्वर्थ-

शे.]द्विवचनान्तत्वमुचितम्।**यत्र काले इति**।'वर्तमानसामीप्ये' इत्यारभ्य कालान्यत्वप्रतिपादनस्यैव दर्शनादिति भावः। नन्वेवं 'वसन् ददर्शे'त्यादौ भूते लडिव वर्त्तमाने लिडित्यपि स्यादत आह–**तिङन्तेति** । **भूते लडिति** । अयं भावः–अनेन प्रयोगे श्रूयमाणानां कालान्तरे विधानं क्रियते । एवञ्च भूते शतुः साधुत्वे बोधितेऽर्थापत्त्या तदर्थको लडपि कल्प्यते । एतेनाऽनेन लड्यपि पुनरेतद्व्यापारे मानाऽभावाच्छता दुर्लभ इत्यपास्तम् । भाष्यकृतस्तु 'भाविकृत्यमासीत्' 'जनिष्यमाणः पुत्र आसी'दित्यत्र भाव्यादिशब्देऽनेन प्रत्यये आसीच्छब्दपर्यायतया युगपत्प्रयोगाऽनुपपत्तिः,यदि 'यदियन्तं कालं भावित्वादिना व्यवहृतं तदासी'दित्यन्वयस्तर्हि ज्योतिष्टोमयाजीत्येवंव्यवहरिष्यमाणो भवितेत्येवमत्रापि बोधसम्भवाद्गोमानासीदित्यत्राऽपि गोमानित्येवंव्यवहृत आसीदिति बोधसम्भवाद्गोमद्रूपस्यातीतत्वाद्वा। भूते प्रत्ययेऽर्थाद्भवामप्यतीतत्व-

पवर्गान्तादुपधाद्यत्स्यात् । ण्यतोऽपवादः । शप्यम् । लभ्यम् । 'नानुबन्धकृतमसारूप्यम्' । अतो न ण्यत् । तव्यदादयस्तु स्युरेव। **आङो यि** ।७।१।६५। आङः परस्य लभेर्नुम् स्याद्यादौ प्रत्यये विवक्षिते। नुमि कृतेऽदुपधत्वाऽभावाण्ण्यदेव । आलम्भ्यो गौः। **उपात्प्रशंसायाम्** ।७।१।६६। उपलम्भ्यः साधुः। स्तुतौ किम् ?। उपलब्धुं शक्य उपलभ्यः । **शकिसहोश्च** ।३।१।९९। शक्यम्। सह्यम्। **गदमदचरयमश्चानुपसर्गे** ।३।१।१००। गद्यम्। मद्यम्। चर्यम्। [यम्यम्]।* **चरेराङि चाऽगुरौ**।आचर्यो देशः। गन्तव्य इत्यर्थः।अगुरौ किम्?।आचार्यो गुरुः । यमेर्नियमार्थम्,–सोपसर्गान्मा भूदिति । प्रयाम्यम् । निपूर्वात्स्यादेव, 'तेन न तत्र भवेद्विनियम्य'मिति वार्तिकप्रयोगात्।एतेन–'अनियम्यस्य नाऽयुक्तिः'।'त्वया नियम्या ननु दिव्यचक्षुषे'त्यादि व्याख्यातम्।नियमे साधु-

---

त.]पाक्यम् । अदुपधात्किम्?। कोप्यम् । तपरकरणं किम् ?। आप्लृ व्याप्तौ। आप्यम् । **नानुबन्धेति**। अनुबन्धानामनवयवत्वात्तत्कृतमसारूप्यं नाश्रीयते । एकान्तत्वपक्षेऽपि 'ददातिदधात्योर्विभाषा' इति विभाषाग्रहणाल्लिङ्गान्नाश्रीयते । अन्यथा अनुबन्धकृतादसारूप्यादेव शविषये णो भविष्यतीति किं तेन विभाषाग्रहणेन ?। ततश्च पक्षद्वयेऽपि शप्यमित्यादौ ण्यन्न भवतीति भावः । एतच्च ददातीत्यादिसूत्रे विभाषाग्रहणमनुबन्धानामनेकान्तत्वपक्षे शविषये णस्याऽप्राप्तौ विभाषा, एकान्तत्वपक्षे तु प्राप्तविभाषेति पक्षद्वयसाधारणं विभाषाग्रहणं लिङ्गं मनोरमायामेकान्तत्वपक्ष एवोपन्यस्तमिति तदनुसारेणेहाप्युक्तम् । अनेकान्तत्वपक्षे त्वसाधारणं लिङ्गम् 'उदीचां माङः' इति सूत्रे माङो ग्रहणम् । मेङ इत्यत्र हि सत्यपि ङकारानुबन्धे तस्यानवयवत्वादेजन्तत्वमविहतमिति 'आदेच उपदेशे' इत्यात्वस्वीकारादिति दिक् । **ण्यदेवेति** । तेन 'तित्स्वरित'मिति स्वरिते सति आलम्भ्यं इत्यत्र समासान्तोदात्तत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेण स्वरितान्तत्वमिष्टं सिध्यति, यति तु 'यतोऽनावः' इत्याद्युदात्तत्वेनोत्तरपदाद्युदात्तत्वं प्रसज्येत, तच्चाऽनिष्टमिति भावः । **उपात्प्रशंसायाम्** । यादौ प्रत्यये विवक्षिते उपपूर्वाल्लभेर्नुम् स्यात्प्रशंसायाम् । सा चेह गम्यमानतया विशेषणम् । धात्वर्थस्तु प्राप्तिरेव, तेन यस्य प्राप्तिर्यस्माद्वा प्राप्तिः प्रशंसाहेतुर्भवति तदिहोदाहरणम् । विपरीतं तु प्रत्युदाहरणम् । इहापि 'यादौ प्रत्यये विवक्षिते' इत्यर्थान्नुमि कृते ण्यति सत्यन्तस्वरितत्वं भवति । यति तु सत्युत्तरपदाद्युदात्तत्वं स्यात् । प्राचा तु स्वरे विशेषमनालोच्य 'पोरदुपधा'दिति यतमेव स्वीकृत्य यति परे नुमिति व्याख्यातं, तदाकरविरोधादुपेक्ष्यमित्याहुः। **गदमद** । व्यत्ययेन पञ्चम्यर्थे सप्तमी । एभ्योऽनुपसर्गेभ्यो यत्स्यात् । ण्यतोऽपवादः। अनुपसर्गे किम् ?। 'न नैषधे कार्यमिदं निगाद्य'मिति श्रीहर्षः । **यमेरिति** । 'पोरदुपधा'दित्यनेनैव सिद्धेरिति भावः । **नियमे साधुरिति** । 'यमः समुपनिविषु च' इति वैकल्पिकेऽप्प्रत्यये कृते 'तत्र साधुः' इति तद्धितो यदित्यर्थः । यद्यप्यस्मिन्पक्षे 'कृत्यानां कर्तरि वा'

---

बा.]**नानुबन्धकृतमसारूप्यमिति**। वाऽसरूपसूत्रे भाष्ये स्थितमिदम्।अनुबन्धविनिर्मुक्तस्यैव असारूप्यं विवक्षितमित्यर्थः । प्रकृते च यण्ण्यतोरनुबन्धरहितयोः सारूप्याद्वासरूपविधेरप्रवृत्तेः शप्यमित्यादौ ण्यदपवादो यदेवेति भावः । **आङो यि** । 'इदितो नुम् धातो'रित्यतो नुमिति, 'लभेश्चे'त्यतो लभेरिति चाऽनुवर्तते । तदाह–**आङः परस्येति** । **विवक्षिते इति** । 'यी'ति विषयसप्तमीति भाष्ये स्पष्टम् । 'विवक्षिते' इत्यस्य प्रयोजनमाह–**नुमि कृते इति** । यत्प्रत्यये विवक्षिते तत्प्रवृत्तेः प्रागेव नुमि कृते अदुपधत्वाऽभावाद्यत्प्रत्ययस्याऽप्रवृत्तेर्ण्यदेवेत्यर्थः। 'यति परे नु'मित्यर्थे तु अदुपधत्वाद्यदेव स्यान्नतु ण्यदिति भावः। **आलम्भ्यो गौरिति** । यद्यपि यण्ण्यतोर्न रूपभेदस्तथापि ण्यति कृते 'तित्स्वरित'मिति स्वरितत्वम्, यति तु 'यतोऽनावः' इत्याद्युदात्तत्वमिति स्वरभेदः फलम् । **उपात्प्रशंसायाम्** । उपात्परस्य लभेर्नुम् स्याद्यादौ प्रत्यये विवक्षिते, प्रशंसायां गम्यमानायामित्यर्थः। **उपलम्भ्यः साधुरिति** । समीपे प्राप्य इत्यर्थः। साधुशब्दात् प्रशंसा गम्यते । इहापि नुमि कृते अदुपधत्वाऽभावाण्ण्यदेव । स्वरे विशेषः पूर्ववत् । **शकिसहोश्च** । पञ्चम्यर्थे षष्ठी । आभ्यां यदित्यर्थः । ण्यतोऽपवादः । **गदमद** । गद, मद, चर, यम् एषां चतुर्णां द्वन्द्वः । अनुपसर्गे इति सप्तमी पञ्चम्यर्थे । एभ्योऽनुपसर्गेभ्यो यदित्यर्थः । ण्यतोऽपवादः । उपसर्गाण्ण्यदेव । प्रगाद्यमित्यादि । **चरेराङि चाऽगुराविति** । वार्तिकमिदम् । आङि उपसर्गे सत्यपि चरेर्यत्स्यादगुरौ इत्यर्थः। **आचार्यो गुरुरिति**। शुश्रूषणीय इत्यर्थः । ननु 'पोरदुपधा'दित्येव सिद्धे यमेरिह ग्रहणं व्यर्थमित्यत आह–**यमेर्नियमार्थमिति** । अनुपसर्गादेव यमेर्यदिति नियमार्थमित्यर्थः । तत्फलमाह–**सोपसर्गान्मा भूदिति** । ननु 'अनियम्यस्य नाऽयुक्तिः' इत्यत्र, 'त्वया नियम्या ननु दिव्यचक्षुषा' इत्यादौ च निपूर्वाद्यमेः कथं यत् ,अनुपसर्गादिति निषेधादित्यत आह–**निपूर्वात्स्यादेवेति**। 'य'तेति शेषः । कुत इत्यत आह–**तेन न तत्रेति**। प्रकारान्तरेण समाधत्ते–**नियमे साधुरिति वेति**। 'यमः समुप-

---

शे.]नुमिति, 'लभेश्चे'त्यतो लभेरिति च वर्तते। **विवक्षित इति**। एतदत्रैव भाष्ये स्पष्टम्। **गदमद**।**अनुपसर्गे** इत्यर्थाऽभावे नञ्तत्पुरुषः । प्रत्यासत्त्या गदादिसंबन्ध्युपसर्गाऽभावे सतीत्यर्थ इत्येके । **नियमार्थमिति** । 'पोरदुपधा'दित्येव

रिति वा । **अवद्यपण्यवर्या गर्ह्यपणितव्याऽनिरोधेषु**।३।१।१०१।वदेर्नञि उपपदे 'वदः सुपी'ति यत्क्यपोः प्राप्तयोर्यदेव, सोऽपि गर्हायामेवेत्युभयार्थं निपातनम् । अवद्यं पापम्।गर्ह्येति किम्? अनुद्यं गुरुनाम। तद्धि न गर्ह्यं वचनानर्हं च।'आत्मनाम गुरोर्नाम नामातिकृपणस्य च।श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः।' इति स्मृतेः । पण्या गौः। व्यवहर्तव्येत्यर्थः। पाण्यमन्यत्। स्तुत्यर्हमित्यर्थः।अनिरोधोऽप्रतिबन्धस्तस्मिन्विषये वृङो यत् । शतेन वर्या कन्या। वृत्याऽन्या। **वह्यं करणम्** ।३।१।१०२।वहन्त्यनेनेति वह्यं शकटम्।करणं किम्।वाह्यम्। वोढव्यम्। **अर्यः स्वामिवैश्ययोः**।३।१।१०३।ऋ गतौ।अस्माद्यत्। ण्यतोऽपवादः।अर्यः स्वामी वैश्यो वा। अनयोः किम् ? । आर्यो ब्राह्मणः । प्राप्तव्य इत्यर्थः। **उपसर्या काल्या प्रजने** ।३।१।१०४। गर्भग्रहणे प्राप्तकाला चेदि-

त.]इत्यस्याऽप्रवृत्तेः कर्तरि तृतीया दुर्लभा तथापि त्वयेति च तेनेति च करणत्वविवक्षया तृतीयेति स्थितस्य गतिर्बोध्या । केवलाद्यतं कृत्वा निशब्देन समास इत्यपरे । यद्वा 'यमोऽपरिवेषणे मि'दिति मतमाश्रित्य 'पर्यवसितं नियमय'न्नित्यादाविव मित्त्वं स्वीकृत्य ण्यन्ताद्यद्बोध्यः । अथ वा संज्ञापूर्वकविधेरनित्यत्वाण्ण्यत्येव वृद्धिर्न प्रवृत्तेति दिक् । एवं च वार्तिकप्रयोगोऽप्यन्यथासिद्ध इति तद्बलेन निपूर्वाद्यदिति न कल्पनीयमिति भावः । **अनुद्यमिति** । अत्र वदेः क्यबेव भवति। यजादित्वात्संप्रसारणम् । 'नलोपो नञः'। 'तस्मान्नुडचि' । **व्यवहर्तव्येति** । यद्यपि पणितव्यशब्दोऽर्थद्वयसाधारणस्तथापि निपातनस्येह रूढ्यर्थत्वाद्व्यवहर्तव्य एवाऽयं निपात्यते। उक्तं च हरिणा—'धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च । अनुबन्धविकाराणां रूढ्यर्थं च निपातन'मिति । अनुबन्धविकाराणां नियमस्य च प्राप्त्यर्थमिति पूर्वेणान्वयः। **शतेनेति** । शतशब्दोऽनियतपरः । कन्याया वरणे वरयितॄणां नियमो नास्तीत्यर्थः । **वर्येति** । संभक्तव्येत्यर्थः । वृङ् संभक्तावित्यस्येदं निपातनम् , तत्रैवाऽनिरोधरूपस्याऽर्थस्य संभवादिति भावः । अनिरोधेष्वित्यस्याऽनुक्तौ वृञोऽपि स्यादिति ध्वनयति—**वृत्येति** । 'एतिस्तुशास्' इत्यादिना वृञः क्यप् । इह सूत्रेऽवद्यादीनि निर्विभक्तिकानि पृथक्पदानि, तत्र वर्याशब्दष्टाबन्तोऽनुक्रियते। न त्वयं द्वन्द्वेन जसन्तेन निर्देशः।तेन वर्येति स्त्रियामेव निपात्यते।अस्त्रियां तु वृङः 'ऋहलोर्ण्यत्' । वार्यो ऋत्विजः।ऋत्विजामपि यज्ञमात्रे वरणीयत्वादनिरोधोऽस्ति,स्त्रीत्वं तु नास्तीति ण्यदेव भवति । एतच्च वृत्तिकारमतम् । न चाऽत्र 'एतिस्तु' इति क्यप् शङ्क्यः, तत्र वृञ एव ग्रहणं न तु वृङ इति सिद्धान्तात् । भट्टिस्तु द्वन्द्वाज्जसा निर्देश इति मत्वा पुंलिङ्गेऽपि यतं प्रायुङ्क्त—'सुग्रीवो मम वर्योऽसौ' इति । **वाह्यमिति** । वहनकर्मेत्यर्थः । **उपसर्या** । उपपूर्वात्सरतेः सर्तेर्वा यन्निपात्यते । कालः प्राप्तोऽस्याः काल्या । 'तदस्य प्राप्त'मिति वर्तमाने 'कालाद्यत्'

बा.]निविषु चे'ति निपूर्वाद्यमेर्भावे अप्प्रत्यये नियमशब्दः। नियमे साधुरित्यर्थे 'तत्र साधुः' इति प्राग्घितीये यत्प्रत्यये नियम्यशब्दो व्युत्पाद्य इत्यर्थः । **अवद्यपण्य** । अवद्य, पण्य, वर्य एषां द्वन्द्वात्प्रथमाबहुवचनम्। गर्ह्य, पणितव्य, अनिरोध एषां द्वन्द्वात्सप्तमीबहुवचनम् । अवद्यादयस्त्रयः क्रमाद्गर्ह्यादिषु त्रिष्वर्थेषु निपात्यन्ते इत्यर्थः । ननु 'वदः सुपि' इत्येव सिद्धे अवद्यग्रहणं व्यर्थमित्यत आह—**नञ्युपपदे इति** । यत्क्यपोः स्वरे विशेषः, संप्रसारणतदभावौ चेति भावः। **अवद्यं पापमिति** । गर्हितत्वादवाच्यमित्यर्थः । **अनुद्यं गुरुनामेति** । अत्र नञि उपपदे 'वदः सुपी'ति क्यपि 'वचिस्वपियजादीनां किती'ति संप्रसारणे रूपम्। वचनाऽनर्हमित्यर्थः। अत्र गर्हाया अप्रतीतेर्यदेवेति न नियम इति भावः। ननु गुरुनाम्नोऽगर्ह्यत्वात्कथं वचनानर्हत्वमित्यत आह—**तद्धि न गर्ह्यं वचनानर्हं चेति** । कुत इत्यत आह—**आत्मनामेति। पण्या गौरिति** । पणधातोर्व्यवहारार्थकाद्यन्निपात्यते इति भावः । यद्यपि 'पण व्यवहारे स्तुतौ च' इति धातोरर्थद्वयमस्ति, तथापि पण्यशब्दस्य प्रयोगबलेन व्यवहर्तव्य एव रूढत्वादिह व्यवहारार्थक एव गृह्यते । तदाह—**व्यवहर्तव्येति**। क्रेतव्येत्यर्थः । **पाण्यमन्यदिति** । ण्यति उपधावृद्धिरिति भावः । व्यवहर्तव्यादन्यदित्यर्थः। तदाह—**स्तुत्यर्हमिति** । **अप्रतिबन्ध इति** । अनियम इत्यर्थः । **वृङो यदिति** । 'वृङ् संभक्तौ' इति क्र्यादिकस्यैवाऽत्र ग्रहणं, नतु 'वृञ् वरणे' इत्यस्य, अनिरोधरूपार्थस्य संभक्तिवाचित्व एव सामञ्जस्यादिति भावः । **शतेन वर्या कन्येति** । पुरुषशतेन परिग्रहीतुमर्हा । अनेनैव वरणीयेति नियमो नास्तीत्यर्थः। **वृत्या अन्येति**। अनुरूपेण वरणीयेत्यर्थः । 'एतिस्तुशास्वृदृजुषः क्य'बिति क्यपि तुक् । अत्र अनियमस्य अप्रतीतेर्न यत् । अत्र वर्याशब्दस्य स्त्रीलिङ्गस्य ग्रहणात्पुंसि 'वार्यो ऋत्विज' इति वृत्तिः । **वह्यं करणम्** । वहेः करणे यन्निपात्यते। ण्यतोऽपवादः । **अर्यः स्वामिवैश्ययोः** । **अस्माद्यदिति** । निपात्यत इति शेषः । **ण्यतोऽपवाद इति** । 'ऋहलो'रिति प्राप्तस्य ण्यतोऽपवाद इत्यर्थः । यति ऋकारस्य गुणे रपरत्वम् । तदाह—**अर्यः स्वामीति** । **आर्यो ब्राह्मण इति** । ण्यति वृद्धौ रपरत्वमिति भावः। **उपसर्या**। प्रजननं प्रजनः = गर्भग्रहणम्। भावे घञ् । 'जनिवध्योश्चे'ति वृद्धिनिषेधः। कालः प्राप्तोऽस्याः

शे.]सिद्धेरिति भावः।**गर्हायामेवेति**। 'वदः सुपी'त्यत्र भाव इति नापकृष्यते इति सिद्धान्त इति भावः। **अनुद्यं गुरु-**

त्यर्थः। उपसर्या गौः। गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः। प्रजने काल्येति किम् ?। उपसार्या काशी। प्राप्येत्यर्थः। अजर्यं सङ्गतम् ।३।१।१०५। नञ्पूर्वाज्जीर्यतेः कर्तरि यत्, सङ्गतं चेद्विशेष्यम्। न जीर्यतीत्यजर्यम्। 'तेन सङ्गतमार्येण रामाजर्यं कुरु द्रुत'मिति भट्टिः। 'मृगैरजर्यं जरसोपदिष्टमदेहबन्धाय पुनर्बबन्धे'त्यत्र तु सङ्गतमिति विशेष्यमध्याहार्यम्। सङ्गतं किम् ?। अजरिता कम्बलः। भावे तु सङ्गतकर्तृकेऽपि ण्यदेव। अजार्यं सङ्गतेन। वदः सुपि क्यप् च ।३।१।१०६। उत्तरसूत्रादिह भाव इत्याकृष्यते। वदेर्भावे क्यप्स्यात्, चाद्यत्, अनुपसर्गे सुप्युपपदे। ब्रह्मोद्यम्। ब्रह्मवद्यम्। ब्रह्म=वेदः, तस्य वदनमित्यर्थः। कर्मणि प्रत्ययावित्येके। उपसर्गे तु ण्यदेव। अनुवाद्यम्। अपवाद्यम्। भुवो भावे ।३।१।१०७। क्यप्स्यात्। ब्रह्मणो भावो ब्रह्मभूयम्। सुप्युपपदे इत्येव। भव्यम्। अनुपसर्ग इत्येव। प्रभव्यम्। हनस्त च ।३।१।१०८। अनुपसर्गे सुप्युपपदे हन्तेर्भावे क्यप्स्यात्तकारश्चान्तादेशः। ब्रह्मणो हननं ब्रह्महत्या। स्त्रीत्वं लोकात्। एतिस्तुशास्वृदृजुषः क्यप् ।३।१।१०९। एभ्यः

---

त.]इति यत्। प्रजननं प्रजनो=गर्भग्रहणम्। भावे घञ्। 'जनिवध्योश्च' इति वृद्धिनिषेधः। **उपसार्येति**। कर्मणि ण्यत्। **कर्तरि यदिति**। 'तयोरेव' इति भावे प्राप्ते कर्तरि यन्निपात्यत इति भावः। **संगतं चेदिति**। नपुंसके भावे क्तः। **विशेष्यमिति**। इह्राऽजर्यमिति समुदायस्य सङ्गतं वाच्यमित्यर्थो न ग्राह्यः, पर्यायाणां युगपत्प्रयोगाऽसंभवेनाऽजर्यं सतां सङ्गतमिति प्रयोगाऽनापत्तेः, 'तेन सङ्गत'मिति भट्टिप्रयोगानुपपत्तेश्च। **वदः**। सकर्मकत्वाद्भावे कृत्यप्रत्ययो दुर्लभः, 'लः कर्मणि' इति सूत्र इव 'तयोरेव' इत्यत्रापि सकर्मकेभ्यः कर्मणि, अकर्मकेभ्य एव भावे इति सिद्धान्तात्। अत आह-**भाव इत्याकृष्यत इति**। 'भुवो भावे' इत्यत्राऽनुपसर्ग इत्यनुवर्तनात्, निरुपसर्गस्य भवतेरकर्मकत्वात् 'तयोरेव कृत्ये'ति भावे कृत्यप्रत्ययसिद्धौ भावग्रहणस्य वैयर्थ्यशङ्कायां भावग्रहणमुत्तरार्थमिति भाष्ये स्थितम्। तद्भाष्यस्वारस्यग्राहिणां मतमाह-**कर्मणीति**। **अनुपसर्ग इति**। सुपि किम् ?। 'हनस्तोऽचिण्णलोः' घातः। अनुपसर्गे किम् ?। प्रघातः। भावे घञ्। **एतिस्तु**। एभ्य इति, सुप्यनुपसर्गे भावे इति च निवृत्तमिति भावः। एतीतीण एव ग्रहणं, नेङिकोः, तयोरधिपूर्वयोरेव ग्रहणादेतीति निर्देशानुपपत्तेः। तथा च 'रक्षार्थं वेदानामध्येयं

---

बा.]काल्या। 'तदस्य प्राप्त'मित्यनुवर्तमाने 'कालाद्य'दिति यत्। चेदित्यध्याहार्यम्। तदाह-**गर्भग्रहणे प्राप्तकाला चेदिति**। गर्भग्रहणे प्राप्तकाला स्त्रीपशुव्यक्तिर्विवक्षिता चेदुपसर्या इति निपात्यते इत्यर्थः। उपपूर्वात् सृधातोर्यदिति फलितम्। ण्यतोऽपवादः। **अजर्यम्। कर्तरि यदिति**। 'कर्तरीति वक्तव्य'मिति वार्तिकम्। निपातनात्कर्तरीति लभ्यत इति तदाशयः। **सङ्गतमिति**। **सङ्गतं=सङ्गमः। न जीर्यतीत्यजर्यमिति**। 'मित्रत्व'मिति शेषः। जरितृ न भवतीत्यर्थः। अत्र भट्टिप्रयोगमाह-**तेनेति**। हे राम! तेन आर्येण अजर्यम्=अनश्वरं, सङ्गतं=सङ्गमं द्रुतं कुरु इत्यन्वयः। ननु 'मृगैरजर्यं जरसा' इत्यत्र सङ्गतशब्दाऽभावात्कथं यदित्यत आह-**मृगैरित्यादि**। कालिदासकाव्यमिदम्। **अजरितेति**। तृजन्तम्। अत्र सङ्गतशब्दाऽभावान्न यदिति भावः। **भावे त्विति**। भावस्य सङ्गतकर्तृकत्वेऽपि सङ्गतस्य प्रत्ययवाच्यत्वाऽभावान्न यदित्यर्थः। **वदः सुपि**। **उत्तरेति**। 'भुवो भावे' इत्युत्तरसूत्राद्भावे इत्यपकृष्यते इत्यर्थः। भूधातोरकर्मकत्वेन उत्तरसूत्रे भावग्रहणस्य वैयर्थ्यादिति भावः। **अनुपसर्गे इति**। 'वदः सुप्यनुपसर्गग्रहण'मिति भाष्यादिति भावः। **ब्रह्मोद्यमिति**। वदेः क्यपि 'वचिस्वपी'ति संप्रसारणम्। 'वस्तुतस्तु नेह भावग्रहणमपकृष्यते, तत्र भावग्रहणमुत्तरार्थमिति भाष्या'दिति मतमनुसृत्य आह-**कर्मणि प्रत्ययावित्येके इति**। क्यब्यतावित्यर्थः। **भुवो भावे**। **ब्रह्मभूयमिति**। कित्त्वान्न गुणः। क्लीबत्वं लोकात्। **भव्यमिति**। भाव इत्यर्थः। अत्र सुबुपपदत्वाऽभावाद्यदेव, गुणः, 'वान्तो यी'त्यवादेशः। **प्रभव्यमिति**। प्रभाव इत्यर्थः। **हनस्त च**। **अन्तादेश इति**। 'प्रकृते'रिति शेषः। भावे किम् ?। घात्यो वृषलः। अनुपसर्गे किम् ?। प्रघातः। निरुपपदं हत्येति लसाध्वेव। **एतिस्तु**। एति, स्तु, शास्,

---

शे.]नामेति। नञोऽन्यत्र 'मावाद्यम्'। पक्षान्तरे 'मोद्य'मिति। **अजर्यम्**। **सङ्गच्छति** = प्राप्नोति पुरुषमिति **सङ्गतं** मैत्री। कर्तरि क्तः। अजर्यमिति च निपातनात्कर्तरीति बोध्यम्। **वदः सुपि**। अत्र सुब्ग्रहणे उपसर्गग्रहणं न, 'सत्सू'-इति सूत्रे 'उपसर्गेऽपी'त्युक्तेः। तत्र हि सुपीत्येव सम्बध्यते। **इत्याकृष्यत इति**। भुवोऽकर्मकत्वेनोत्तरत्र व्यर्थत्वात्। यद्यपि प्राप्तावन्तर्भावितण्यर्थत्वे वा सकर्मकस्तथापि अप्रसिद्धत्वान्न तद्ग्रहणमिति भावः। इदं चिन्त्यं, 'भुवो भावे' इति सूत्रे 'उत्तरार्थं भावग्रहण'मिति भाष्योक्तेः। सोपपदस्य कालादिकर्मयोग एव नास्ति, अनभिधानादिति तदाशयः। **एक इति**। सकर्मकत्वादिति भावः। अयमेव युक्तः पक्षः, भाष्यवृत्त्यादिसम्मतत्वात्। भावे 'ब्रह्मोद्य'मित्यादि तु छान्दसं, बाहुलकाद्वेति बोध्यम्। अत एवाऽनुपसर्ग इत्यस्य प्रवाद्यमिति प्रत्युदाहरणम्। एतत्तु अस्मात्कर्मण्येव। अन्यथा 'प्रवादः' इति भावघञन्तम्प्रत्युदाहर्तव्यं स्यात्। **हनस्त च**। तकारस्याऽऽदेशत्वं, व्याख्यानात्। सुपीति किम्?। घातः।

क्यप्स्यात् । ह्रस्वस्य पिति कृति तुक् ।६।१।७१। इत्यः। स्तुत्यः। 'शास इदङ्हलोः'। शिष्यः। * वृ इति वृञो ग्रहणं। न [तु] वृङः। वृत्यः। वृङस्तु वार्या ऋत्विजः। आदृत्यः। जुष्यः। पुनः क्यब्ग्रहणं परस्यापि ण्यतो बाधनार्थं। अवश्यस्तुत्यः। 'शंसिदुहिगुहिभ्यो वे'ति काशिका। शस्यम्। शंस्यम्। दुह्यम्। दोह्यम्। गुह्यम्। गोह्यम्। 'प्रशस्यस्य श्रः' 'ईडवन्दवृशंसदुहां ण्यतः' इति सूत्रद्वयबलाच्छंसेः सिद्धम्। इतरयोस्तु मूलं मृग्यम्। * आङ्पूर्वादञ्जेः संज्ञायामुपसङ्ख्यानम्। 'अञ्जू व्यक्तिम्रक्षणादिषु'। बाहुलकात्करणे क्यप्। 'अनिदिता'मिति नलोपः। आज्यम्। ऋदुपधाच्चाऽक्लृपिचृतेः ।३।१।११०। वृत्-वृत्यम्। वृध्-वृध्यम्। क्लृपिचृत्योस्तु-कल्प्यम्। चर्त्यम्। तपरकरणं किम्?। कृत्-कीर्त्यम्। अनित्यण्यन्ताश्चुरादय इति णिजभावे क्यप्। णिजन्तात्तु यदेव। ई च खनः ।३।१।१११। चात्क्यप्। आद्गुणः। खेयम्। 'इ चे'ति ह्रस्वः सुपठः। भृञोऽसंज्ञायाम्

त.]व्याकरण'मिति भाष्ये यदेव प्रयुक्तः।केचित्तु 'इण्वदिक-इति वक्तव्यम्' इति वचनादिकोऽपि भवतीत्यधीत्या मातेत्युदाहरन्ति। [अधीत्या=स्मर्त्तव्या]। इत्य इति। कथं तर्हि उपेयमिति?।ईङ्गतावितिं दैवादिकाद्यत्। न वृङ इति। 'ईडवन्दे'ति ज्ञापकात्। तत्र हि ईडवन्दिभ्यां साहचर्यादात्मनेपदिनो वृङ एव ग्रहणमिति भावः। परस्यापीति। 'ओरावश्यके' इति प्राप्तस्य ण्यस्यावकाशोऽवश्यलाव्यमिति। आवश्यकाऽविवक्षायां स्तुत्य इत्यादौ क्यपोऽवकाशः। अवश्यस्तुत्य इत्यादावुभयप्राप्तौ 'विप्रतिषेधे पर'मिति ण्यत्स्यात्, तन्माभूदिति पुनः क्यब्ग्रहणमिति भावः। आङ्पूर्वादञ्जेरिति। ननु ण्यत्येव नलोपः कस्मान्नोक्त इति चेन्न, कुत्वप्रसङ्गात्तित्स्वरप्रसङ्गाच्च। तस्मात्क्यबन्त एवाऽऽज्यशब्दः। नन्वेवमवग्रहः प्राप्नोति। न चेष्टापत्तिः। 'आज्यं किमासी'दित्यादौ पदकारैस्तदकरणादिति चेन्न। अत्र भाष्यम्-न लक्षणेन पदकारा अनुवर्त्याः पदकारैस्तु लक्षणमनुवर्त्यमिति। सत्यपि अवान्तरपदत्वे 'ऋत्विजं', 'पूर्वेभिः' इत्यादाविव संप्रदायानुरोधेन क्वचिदवग्रहो न क्रियते इत्यादि तदाशयः। क्लृपिचृत्योस्त्विति। क्लृपू सामर्थ्ये। चृती हिंसाग्रन्थनयोः। कल्प्यमिति। क्लृपेर्लत्वस्याऽसिद्धत्वात्, ऋलृवर्णयोः सावर्ण्यविधानाच्च ऋदुपधत्वम्। ह्रस्वः सुपठ इति। दीर्घं पठतः सूत्रकृतस्त्वय-

बा.]वृ, दृ, जुष् एषां षण्णां समाहारद्वन्द्वात्पञ्चमी। सुप्यनुपसर्गे भाव इति निवृत्तम्। तदाह-एभ्यः क्यप्स्यादिति। ह्रस्वस्य। स्पष्टमिति न व्याख्यातम्। इत्य इति। इणः क्यपि तुक्।उपेयमित्यत्र तु ईङो दैवादिकाद्यत्।वृञो ग्रहणमिति। वार्तिकमिदम्। न वृङ इति। 'वृङ् संभक्तौ' इति ङितः क्रैयादिकस्य न ग्रहणमित्यर्थः। वार्या ऋत्विज इति। अवश्यं भजनीया इत्यर्थः। अत्र 'वृङ् संभक्तौ' इत्यस्माण्ण्यदित्यर्थः।'अवद्यपण्यवर्या' इति निपातनसिद्धो यत्तु न, अत्र निरोधस्य नियमस्य विवक्षितत्वात्। ननु 'वदः सुपी'त्यतोऽनुवृत्त्यैव सिद्धे क्यब्ग्रहणमिह व्यर्थम्। नच चकारानुकृष्टयतोऽप्यनुवृत्तिनिवृत्तये क्यब्ग्रहणमिति वाच्यं, चकारस्य अस्वरितत्वेन 'भुवो भावे' इत्याद्युत्तरसूत्रेष्वनुवृत्त्यभावादित्यत आह-परस्यापीति। 'ओरावश्यके' इति विहितस्येत्यर्थः। वेति काशिकेति। वा क्यप्। तदभावे हलन्तत्वाण्ण्यत्। भाष्ये त्वेतन्न दृश्यते इति भावः। शस्यं शंस्यमिति। क्यप्पक्षे 'अनिदिता'मिति नलोपः। दुह्यमिति। क्यप्पक्षे कित्त्वान्न गुणः। अत्र 'शंसिदुहिगुहिभ्यो वे'त्यस्य भाष्येऽदर्शनेऽपि शंसेर्ण्यत्क्यपौ प्रामाणिकावित्याह-प्रशस्यस्येति। 'प्रशस्यस्य श्रः' इति निर्देशबलाच्छंसेः क्यप्सिद्धः। 'ईडवन्दवृशंसदुहां ण्यतः' इत्याद्युदात्तत्वविधौ शंसेर्ण्यदन्तत्वानुवादबलाण्ण्यत्सिद्धः। ततश्च शस्यं शंस्यमिति रूपद्वयं सिद्धम्। इतरयोस्तु दुहिगुह्योः क्यब्विकल्पे मूलं नास्तीत्यर्थः। उपसङ्ख्यानमिति। 'क्यप्' इति शेषः। आज्यमिति। न चाङ्पूर्वकत्वे पदपाठे अवग्रहः स्यादिति वाच्यम्, इष्टापत्तेः।पदकाराणामवग्रहाऽभावस्त्वप्रामाणिक एव, पदपाठस्याऽऽधुनिकत्वादिति भाष्ये स्पष्टम्। एवंच 'अस्मद्र्यगित्यस्म-द्र्य'गित्यवग्रहोऽप्रामाणिक एव। अस्मद्रि-अक् इत्येवाऽवग्रहो युक्तः, अस्मच्छब्दस्य टेरद्र्यादेशविधानादित्याद्यूह्यम्। ऋदुपधाच्चा। क्लृप्चृती वर्जयित्वा ऋदुपधाद्धातोः क्यबित्यर्थः। ननु तपरकरणमिह व्यर्थमित्यत आह-अनित्यण्यन्ता इति। णिजन्तात्तु यदेवेति। 'अचो य'दित्यनेनेति भावः। ई च खनः। चात्क्यबिति। खनेः क्यप् स्यात्प्रकृतेरीकारोऽन्तादेशश्चेत्यर्थः। ह्रस्वः सुपठ इति। ह्रस्वस्य इकारस्य आद्गुणेन

शे.]ण्यत्तु न। सकर्मकत्वेन तदप्राप्तेः। भावे किम्?। श्वघात्यो वृषलः। अनुपसर्गे किम्?। प्रघातः। निरुपपदं 'हत्ये'ति त्वसाधु। शिष्य इति। 'शास इदङ्' 'सर्तिशास्ती'त्यादौ प्रसिद्धत्वाच्छास्तेरेव ग्रहणं, न त्वाशास्तेरिति भावः। न वृङ इति। 'वृञो ग्रहणं कर्तव्य'मिति वार्तिकमूलाद्व्याख्यानादिति भावः। वार्या इति। अत्र निरोधस्य विवक्षणान्न 'अवद्ये'त्यस्य प्राप्तिरिति भावः। पुनरिति। तकारस्यादेशत्वेन चकारं विनाऽपि पूर्वसूत्रे क्यप्संबन्धसम्भवेन तत्र तस्य चाऽनुकृष्टत्वाऽभावादिति भावः।स्पष्टश्चेदं भाष्ये।आङ्पूर्वादिति। ण्यति तु कुत्वनलोपाऽभावतित्स्वराणामापत्तिरितिभावः। ह्रस्वः सुपठ इति। 'ये विभाषा' इत्यत्र 'ये' इत्यस्य विषयसप्तमीत्वेऽपि जनादिसाहचर्येण यादिप्रत्ययोत्पत्ति-

।३।१।११२। भृत्याः कर्मकराः । भर्तव्या इत्यर्थः। क्रियाशब्दोऽयं न तु संज्ञा । * समश्च बहुलम् । संभृत्याः। संभार्याः । असंज्ञायामेव विकल्पार्थमिदं वार्तिकम् । असंज्ञायां किम् ?। भार्या नाम क्षत्रियाः । अथ कथं भार्या वधूरिति । इह हि 'संज्ञायां समजे'ति क्यपा भाव्यम् । संज्ञापर्युदासस्तु पुंसि चरितार्थः । सत्यम् । बिभर्तेर्भृ इति दीर्घान्तात्, क्र्यादेर्वा ण्यत् । क्यप्तु भरतेरेव, 'तदनुबन्धकग्रहणे [नातदनुबन्धकस्ये']ति परिभाषया । **मृजेर्विभाषा**।३।१।११३। मृजेः क्यब्वा स्यात्।पक्षे ण्यत्। मृज्यः। **चजोः कु घिण्ण्यतोः**।७।३।५२।चस्य जस्य च कुत्वं स्याद्घिति ण्यति च प्रत्यये परे। [निष्ठायामनिट इति वक्तव्यम् । तेनेह न। गर्ज्यम् ]। 'मृजेर्वृद्धिः'। मार्ग्यः । **न्यङ्क्वादीनां च** ।७।३।५३। कुत्वं स्यात् । न्यङ्कुः । नावञ्चेरित्युप्रत्ययः । **राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याऽव्यथ्याः**।३।१।११४। एते सप्त क्यबन्ता निपात्यन्ते । राज्ञा सोतव्योऽभिषवद्वारा

त.]माशयः-दीर्घनिर्देशः इ-इ इति प्रश्लेषार्थस्तत्र द्वितीय इकारो 'ये विभाषा' इत्यात्वबाधनार्थः।अन्यथा 'ये विभाषा' इत्यस्यावकाशः-खायते खन्यते।इत्वस्यावकाशो यस्मिन्पक्षे आत्वंनास्ति।आत्वपक्षे तु उभयप्रसङ्गे परत्वादन्तरङ्गत्वाच्चात्वं स्यात्। 'ये विभाषा' इत्यत्र हि ये इति विषयसप्तमी। तथा च यकारादौ बुद्धिस्थे एव प्राप्तमात्वमन्तरङ्गम् । इकारस्तु क्यपा सह विधानाद्बहिरङ्गः । तथा चान्तरङ्गस्यात्वस्य बाधनाय प्रश्लेषेण द्वितीय इकारविधिरावश्यक इति ई चेति दीर्घोच्चारणं कृतमिति । दीर्घं प्रत्याचक्षाणस्य भाष्यकृतस्त्वयमाशयः,-इत्वमन्तरङ्गं, परनिमित्तमनपेक्ष्य विधानात् , क्यप्संनियोगशिष्टं हि तत् । आत्वं तु बहिरङ्गं,ये इति परसप्तम्याश्रयात् । एवं च इत्वेनाऽऽत्वबाधो न्याय्य एवेति दीर्घो न पठनीयः। ह्रस्वपाठे मात्रालाघवमस्तीति तदनुरोधेन ये इति परसप्तम्याश्रयणमपि युक्तमिति । स्यादेतत्-इ चेति ह्रस्वादेशाभ्युपगमे तस्यादेशस्य पूर्वेण सह आद्गुणे तस्याऽसिद्धतया 'ह्रस्वस्य पिति' इति तुक् स्यात् ,'षत्वतुकोरसिद्धः' इति षत्वे तुकि च कर्तव्ये एकादेशशास्त्रस्याऽसिद्धत्वस्वीकारात् । अतो दीर्घ एव विधेय इति चेत् । मैवम् । 'पदान्तपदाद्योरादेशोऽसिद्धो न त्वन्योऽपी'ति सिद्धान्तात् । अन्यथा वृक्षे छत्रमित्यत्र ङवाद्गुणस्याऽसिद्धतया छे चेति ह्रस्वाश्रयो नित्यस्तुक् स्यात् । इष्यते तु दीर्घात्पदान्ताद्वेति वैकल्पिक इति दिक् । 'मृञोऽसंज्ञाया'मित्यसंज्ञाग्रहणसामर्थ्याद्भार्येत्यत्र सूत्रान्तरेणापि क्यन्न भविष्यतीत्यत आह-**पुंसि चरितार्थ इति**। भार्या नाम क्षत्रिया इत्यत्रेत्यर्थः। **तदनुबन्धेति** । डुभृञ् इत्यनेकानुबन्धत्वाद्बिभर्तेः क्यपोऽप्रसङ्ग इति भावः । **मृजेर्विभाषा** । ऋदुपधत्वान्नित्यं क्यपि प्राप्तेऽयमारम्भः । **चजोः** । यथासङ्ख्यं नेह विवक्षितं, 'तेन रक्तं रागात्' इति लिङ्गादिति कैयटहरदत्तादिभिरुक्तं । तदालोच्याह-**चस्य जस्य चेत्यादि** । घिति ण्यति च चस्य कुत्वं, घिति ण्यति च जस्य कुत्वमिति विवेकः । **न्यङ्कुरिति** । 'कृष्णसाररुरुन्यङ्कु-

बा.]'खेय'मिति सिद्धेरिति भावः । **भृञोऽसंज्ञायाम्** । 'क्य'बिति शेषः । **भृत्याः कर्मकरा इति** । भृत्यर्थं कर्म कुर्वाणा इत्यर्थः । 'कर्मणि भृतौ' इति कृञ्स्पष्टः । **भर्तव्या इति** । वेतनदानेन परार्थे कर्मणि प्रेषयितव्या इत्यर्थः । ननु भृत्यशब्दस्य कर्मकरेषु रूढत्वात्संज्ञाशब्दत्वमेवेत्यत आह-**क्रियाशब्द इति** । **भार्या नाम क्षत्रिया इति** । क्षत्रियविशेषेषु रूढः संज्ञाशब्दोऽयमिति भावः। **अथ कथं भार्येति** । क्यपा भवितव्यमित्याक्षेपः । ननु वध्वां भार्याशब्दस्य संज्ञाशब्दत्वात् 'भृञोऽसंज्ञाया'मित्यस्याऽप्रवृत्तेरयमाक्षेपोऽनुपपन्न इत्यत आह-**इह हीति** । 'स्त्रियां क्ति'न्नित्यतः स्त्रियामित्यनुवृत्तौ 'व्रजयजोर्भावे क्यप्' 'संज्ञायां समजनिषदे'ति सूत्रेण क्यप् स्यादित्यर्थः । ननु संज्ञायां भृञः क्यब्विधौ 'भृञोऽसंज्ञाया'मित्यत्र असंज्ञायामिति व्यर्थमित्यत आह-**संज्ञापर्युदासस्त्विवति** । समाधत्ते-**सत्यमिति**। 'डु भृञ् धारणपोषणयोः' इति जुहोत्यादौ ह्रस्वान्तो ङित्, ञिच्च । 'भृ भर्त्सने, भरणेऽपी'ति क्र्यादौ दीर्घान्तः । आभ्यामृहलोर्ण्यदिति ण्यदेवेत्यर्थः । **क्यप्तु भरतेरेवेति** । 'भृञ् भरणे' इति भ्वादौ ह्रस्वान्तो ञित् । अस्यैव 'संज्ञायां समजनिषदे'त्यत्र, 'भृञोऽसंज्ञाया'मित्यत्र च भृञ्ग्रहणेन ग्रहणम् , नतु डुभृञो जौहोत्यादिकस्य । न च क्र्यादिकस्य निरनुबन्धकस्य दीर्घान्तस्येति भावः।कुत इत्यत आह-**तदनुबन्धकेति**।'तदनुबन्धकग्रहणे नातदनुबन्धकस्ये'ति परिभाषयेत्यर्थः । बिभर्तेः क्यबभावे बीजमिदम् । क्र्यादिकस्य दीर्घान्तत्वान्न क्यबिति बोध्यम् । **मृजेर्विभाषा** । क्यप्पक्षे उदाहरति-**मृज्य इति** । कित्त्वान्न गुणः । **चजोः कु**। 'कु' इत्यविभक्तिको निर्देशः । चजोर्घिण्ण्यतोश्च यथासङ्ख्यं तु न, 'तेन रक्तं रागा'दिति घञि जस्य कुत्वनिर्देशात् । **राजसूय** । **राज्ञेति** । क्षत्रियेणेत्यर्थः । **अभिषवेति**।

शे.]पूर्वकाले नान्तस्यैवात्वविधानेनाऽत्र तदप्राप्त्या नस्येत्वे आद्गुणेन रूपसिद्धेरिति भावः।एतत्क्लेशपरिहारायैव दीर्घोच्चारणमिति तत्त्वम् । **क्यच्चिति** । अयं, इत्यधिकारस्थश्च, युक्तः साम्यात् । नन्वेवं भार्या वधूरितिवत् 'भार्याः क्षत्रियाः' इत्यस्यापि सिद्धावसञ्ज्ञायामिति व्यर्थमिति चेन्न, भरतेर्भार्यायाञ्क्यब्वारणाय तस्य सत्त्वात् । **मृजेर्वि** । ऋदुपधत्वात्प्राप्तविभाषेयम् । **चजोः कु** । यथासङ्ख्यं न, रागादित्यादिनिर्देशात् । **न्यङ्क्वादीनाञ्च** । एषु उणादिपाठो व्युत्पत्ति-

निष्पादयितव्यः।यद्वा लतात्मकः सोमो राजा,स सूयते कण्ड्यतेऽत्रेति।अधिकरणे क्यप् ,निपातनात् ;-दीर्घः। राजसूयः।राजसूयम् । अर्धर्चादिः । सर्त्याकाशे सूर्यः। कर्तरि क्यप्।निपातनादुत्वम्।यद्वा षू प्रेरणे तुदादिः। सुवति= कर्मणि लोकं प्रेरयति । क्यपो रुट्। मृषोपपदाद्वदेः कर्मणि नित्यं क्यप्। मृषोद्यम्। विशेष्यनिघ्नोऽयम्। 'उच्छ्राय-सौन्दर्यगुणा मृषोद्याः' । रोचते रुच्यः । गुपेरादेः कत्वं च संज्ञायाम् । सुवर्णरजतभिन्नं धनं कुप्यम् । गोप्यमन्यत् । कृष्टे स्वयमेव पच्यन्ते कृष्टपच्याः । कर्मकर्तरि । शुद्धे तु कर्मणि-कृष्टपाक्याः । न व्यथते अव्यथ्यः । **भिद्योद्ध्यौ नदे** ।३।१।११५। भिदेरुज्झेश्च क्यप् । उज्झेर्धत्वं च । भिनत्ति कूलं भिद्यः। उज्झत्युदकमुद्ध्यः । नदे किम् ?। भेत्ता । उज्झिता । **पुष्यसिद्ध्यौ नक्षत्रे** ३।१।११६। अधिकरणे क्यन्निपात्यते।पुष्यन्त्यस्मिन्नर्थाः-पुष्यः। सिध्यन्त्यस्मिन्निति सिध्यः।**विपूयविनीयजित्या मुञ्जकल्कहलिषु**।३।१।११७। पूङ्नीजिभ्यः क्यप् । विपूयो मुञ्जः। रज्ज्वादिकरणाय शोधयितव्य इत्यर्थः। विनीयः कल्कः।पिष्ट ओषधिविशेष इत्यर्थः । पापमिति वा। जित्यो हलिः । बलेन कृष्टव्य इत्यर्थः। कृष्टसमीकरणार्थं स्थूलकाष्ठम् । अन्यत्र तु विपव्यम् । विनेयम् । जेयम्। **प्रत्यपिभ्यां ग्रहेः**।३।१।११८। * **छन्दसीति वक्तव्यम्** । प्रतिगृह्यम् । अपिगृह्यम् । लोके तु प्रतिग्राह्यम्। अपिग्राह्यम्।**पदाऽस्वैरिबाह्यापक्ष्येषु च**।३।१।११९।[एषु ग्रहेः क्यप् ]। अवगृह्यं प्रगृह्यं पदम् । अस्वैरी परतन्त्रः।

त.]रङ्कुशम्बररौहिषाः' इत्यमरः।**राजसूय**।**यद्वेति** । 'राजानं क्रीणन्ति' इत्यादौ तथा दर्शनादिति भावः। षुञ् अभिषव इत्यस्य ह्रस्वान्तत्वादाह-**निपातनाद्दीर्घ इति** । निपातनं च रूढ्यर्थमपि । तेनाद्यपक्षे अश्वमेधादौ, द्वितीयपक्षे ज्योतिष्टोमादौ च नातिप्रसङ्गः ।'**उत्वमिति** । तस्य रपरत्वात् 'हलि च' इति दीर्घ इति भावः । **नित्यं क्यबिति** । तेन 'वदः सुपि क्यप् च' इति यत्प्रत्ययो नेति भावः । **भिद्योद्ध्यौ** । **क्यबिति** । 'कर्तरी'ति शेषः । **उद्ध्य इति** । 'तोयदागम इवोद्ध्यभिद्ययोर्नामधेयसदृशं विचेष्टित'मिति रघुः । **पुष्यसिध्यौ** । नक्षत्रे किम् ? । पोषणं, सेधनम् । अधिकरणे ल्युट् । पुष्यसिध्ययोः पर्यायत्वेऽपि स्वरूपपरत्वात्सूत्रे द्वन्द्वः । 'पुष्ये तु सिध्यतिष्यौ' इत्यमरः । **पापमिति वेति**।'तपो न कल्कोऽध्ययनं न कल्कः' इत्युपक्रम्य 'तान्येव भावोपहतानि कल्कः' इति भारते दर्शनात्। 'कल्कः पापाशये पापे दम्भे विट्किट्टयोरपि' इति कोशाच्चेति भावः । **वक्तव्यमिति** । वृत्तिकृता तु सूत्रे प्रक्षिप्तम् । क्यप् उदाहरणं तु छन्दस्येव । 'मत्तस्य न प्रतिगृह्यं तस्मान्नाऽपिगृह्यम्' । **लोके त्विति** । ण्यदेवेति भावः । **पदास्वैरि** ।

बा.]प्राचभी रसनिष्पत्त्यर्थं सोमलतानां कुट्टनमभिषवः,तत्प्रणाडिकया निष्पादयितव्यो यज्ञविशेषो राजसूय इत्यन्वयः।**यद्वेति**। लताविशेषात्मकः सोमो राजशब्देन विवक्षितः, 'राजानं क्रीणाती'त्यादौ तथा प्रसिद्धेः । स राजा सूयते=अभिषूयते अत्र यज्ञविशेषे इति व्युत्पत्त्या राजसूय इत्यन्वयः। 'कर्तरि कृ'दित्यधिकारात्कथमधिकरणव्युत्पत्तिरित्यत आह-**अधिकरणे क्यबिति** । कुत इत्यत आह-**निपातनादिति** । ननु षुञ्धातोः क्यपि कथं दीर्घः, 'अकृत्सार्वधातुकयो'रित्यस्य कृत्यप्रवृत्तेरित्यत आह- **निपातनाद्दीर्घ इति** । निपातनादित्युभयत्रान्वेति । **उत्वमिति** । तस्य रपरत्वे 'हलि चे'ति दीर्घ इत्यपि बोध्यम् । **मृषोद्यमिति** । क्यपि 'वचिस्वपी'ति संप्रसारणम् । **रोचतेरिति** । रुचधातोः क्यपि 'रुच्य' इति रूपमित्यर्थः। **गुपेरिति**। गुपधातोः क्यप् ,प्रकृतेरादिवर्णस्य ककारश्च संज्ञायां निपात्यते इत्यर्थः।सुवर्णरजतभिन्नं धनं कुप्यमिति ज्ञेयम्। तथाच 'हेमरूप्ये कृताऽकृते' इत्युक्त्वा अमर आह-'ताभ्यां तदन्यत्तत्कुप्य'मिति।**कृष्ट इति**। कृष्टप्रदेशे ये स्वयं पच्यन्ते=फलन्ति ते कृष्टपच्या इत्यर्थः।**कर्मकर्तरीति**।अत्र कर्मकर्तरि क्यबित्यर्थः। निपातनादिति भावः। **शुद्धे त्विति**।मुख्यकर्मणि तु ण्यति उपधावृद्धौ 'चजो'रिति कुत्वे 'कृष्टपाक्य' इति रूपमित्यर्थः।**अव्यथ्य इति**।अत्र निपातनात्कर्तरि क्यबिति भावः।**भिद्योद्ध्यौ नदे**। **क्यबिति**।'नदविशेषे कर्तरि निपात्यते' इति शेषः।**पुष्यसिध्यौ**।'निपात्येते' इति शेषः। नक्षत्रविशेषे गम्ये इत्यर्थः।**विपूय**।विपूय,विनीय,जित्य-एते यथाक्रमं मुञ्जकल्कहलिषु क्यबन्ता निपात्यन्ते । तदाह-**पूङित्यादिना** । न्यादिसाहचर्याद्धौवादिकस्यैव पूधातोर्ग्रहणमिति भावः । **कल्कः** = शोधकद्रव्यम् । **पापमिति वेति** । कल्कशब्दस्य शोधनीये पापेऽपि प्रसिद्धत्वादिति भावः। हलिशब्दस्य विवरणं-**कृष्टेति** । **प्रत्यपिभ्यां ग्रहेः** । **छन्दसीति** । वार्तिकमिदम् । वृत्तिकृता तु सूत्रे प्रक्षिप्तम् । ननु छान्दसस्य किमर्थमिहोपन्यास इत्यत आह-**लोके त्विति** । **पदाऽस्वैरि** । पद, अस्वैरि, बाह्या, पक्ष्य एष्वर्थेषु ग्रहेः क्यबित्यर्थः । **अवगृह्यं प्रगृह्यं वा**

शे.]वादिव्याकरणान्तराभिप्रायेणेत्याहुः। **राजसूयो**-यज्ञविशेषः। **निपातनादिति**। पूर्वोत्तरान्वयि। **क्यपो रुडिति**। 'निपातना'दिति शेषः। एवमग्रेऽपि। **रुच्यो**-निपातनात्कर्तरि। एवमग्रेऽपि **धनं**-धातुपात्रादिरूपं न तु वस्त्रादि, तस्वेनाऽप्रसिद्धेः। **पूङिति** । न्यादिसाहचर्येण शब्विकरणस्यैव ग्रहणमिति भावः। **कल्कः** = पिष्टौषधिविशेषः। **पापमिति**। तैलादावौषधे क्षिप्ते पाकानन्तरं यदजीर्णं तच्चेत्याहुः । **जित्य इति** । जि अभिभवे । **काष्ठमिति** । हलिशब्दवाच्यमित्यर्थः । **पदास्वै** । एषु चतुर्षु ग्रहेः क्यबित्यर्थः । पदविषयेऽसन्निकर्षो ग्रहेरर्थः। यस्य पदस्यावग्रहः, प्रगृह्यसञ्ज्ञा च

गृह्यकाः शुकाः । पञ्जरादिबन्धनेन परतन्त्रीकृता इत्यर्थः । बाह्यायाम्-ग्रामगृह्या सेना । ग्रामबहिर्भूतेत्यर्थः । स्त्रीलिङ्गनिर्देशात्पुंनपुंसकयोर्न । पक्षे भवः पक्ष्यः । दिगादित्वाद्यत् । आर्यैर्गृह्यते आर्यगृह्यः । तत्पक्षाश्रित इत्यर्थः । **विभाषा कृवृषोः** ।३।१।१२०। क्यप्स्यात् । कृत्यम् । वृष्यम् । पक्षे-**ऋहलोर्ण्यत्** ।३।१।१२४। ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत्स्यात् । कार्यम् । वर्ष्यम् । **युग्यं च पत्रे** ।३।१।१२१। पत्रं वाहनम् । युग्यो गौः । अत्र क्यप् , कुत्वं च निपात्यते । **अमावस्यदन्यतरस्याम्** ।३।१।१२२। अमोपपदाद्वसेरधिकरणे ण्यत् । वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते । अमा सह वसतोऽस्यां चन्द्रार्कौ-अमावस्या । अमावास्या । 'ऋहलोर्ण्यत्' । 'चजो'रिति कुत्वम् । पाक्यम् । ❋ **पाणौ सृजेर्ण्यद्वाच्यः** । ऋदुपधलक्षणस्य क्यपोऽपवादः । पाणिभ्यां सृज्यते पाणिसर्ग्या रज्जुः । ❋ **समवपूर्वाच्च** । समवसर्ग्या । **न क्वादेः** ।७।३।५९। क्वादेर्धातोश्चजोः कुत्वं न । गर्ज्यम् । वार्तिककारस्तु 'चजो'रिति सूत्रे 'निष्ठायामनिट' इति पूरयित्वा 'न क्वादे'रित्यादि प्रत्याचख्यौ ।

---

त.]एष्वर्थेषु ग्रहेः क्यप् स्यात् । **अवगृह्यमिति**। यस्य पदस्याऽवग्रहः क्रियते तत्पदम् । अवग्रहो=विच्छेदः । अवान्तरपदसंज्ञां सूचयितुं पाठकाले किंचित्कालमवसानम् । **प्रगृह्यमिति** । यस्य प्रग्रहस्तत्पदम् । प्रग्रहस्तु प्रकृतिभावात् यणाद्यभावे परस्परमचोरसन्निकर्षः । 'यस्य प्रगृह्यसंज्ञा विहिता तत्प्रगृह्य'मिति वृत्तिः । यद्यपि पदावयवस्य द्विवचनादेः प्रगृह्यसंज्ञा न तु पदस्य, तथाप्यवयवधर्मस्य समुदाये उपचारो बोध्यः।अवगृह्यप्रगृह्यशब्दौ प्रातिशाख्यादिषु पदविशेषपरतया निरूढौ । **अस्वैरीति** । स्वेन ईरितुं शीलमस्य स्वैरी=स्वतन्त्रः। 'स्वादीरेरिणोः' इति वृद्धिः । नञ्पूर्वस्तु अस्वैरी । **गृह्यका इति** । 'अनुकम्पाया'मिति कन् । 'गृह्यासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते' इत्यमरः । **विभाषा कृ** । करोतेः क्यप्यप्राप्ते, वृषेस्तु ऋदुपधत्वान्नित्यं प्राप्तेऽयमारम्भः। **पत्रं वाहनमिति** । पतन्त्यनेनेत्यर्थे 'दाम्नीशसे'त्यादिना करणे ष्ट्रन् । **युग्यो गौरिति**। यद्यपि 'तद्वहति रथयुगप्रासङ्ग'मिति तद्धितयताऽपि इदं सिध्यति तथापि ण्यतं व्यावर्तयितुमिदं सूत्रम् । अन्यथा हि योग्यो गौरिति स्यात् । अन्ये त्वाहुः-युग्यो हस्तीति हि वृत्तावुदाहृतं, तत्तु तद्धितेन न सिध्यति । न हि हस्ती युगं वहति । कृता तु सिध्यति । युज्यते संबध्यते ह्यसौ कुथादिनेति । ततश्चात्र वैयर्थ्यशङ्कैव नास्तीति दिक् । **वृद्धौ सत्यामिति**। तेन 'अमावास्याया वे'ति विहितस्तद्धितो ह्रस्वपक्षेऽपि सिध्यति, एकदेशविकृतस्याऽनन्यत्वात् । यदि तु यत्प्रत्ययान्तस्येदं पाक्षिकं निपातनमित्याश्रीयेत तदा यता मुक्तेऽधिकरणे ण्यदेव तावद्दुर्लभः । अथापि बाहुलकाल्लभ्येत, एवमपि ण्यदन्तमनूद्य विहितस्तद्धितो यदन्तान्न स्यादिति दिक् । **ऋहलोः**। पञ्चम्यर्थे षष्ठी।'ऋ' इति ऋधातोर्न ग्रहणं किंतु ऋवर्णस्य,हला साहचर्यात्, परं कार्यमिति निर्देशात्,'ईडवन्दे'इत्यादिलिङ्गाच्च।'ऋहलो'रित्येतदनुवर्तमानस्य धातोर्विशेषणं।विशेषणेन तदन्तविधिस्तदेतदाह-**ऋवर्णान्तादिति**।अत्रेदमवधेयं-मूलपुस्तकेषु सर्वत्र 'विभाषा कृवृषो'रित्यत्र पक्षे ण्यद्भवतीति वक्तुं 'ऋहलोर्ण्य'दिति सूत्रं पठित्वा पश्चात् 'युग्यं च पत्रे','अमावस्यदन्यतरस्या'मिति पठितम्। मनोरमायां तु सूत्रपाठक्रमेण 'युग्यं च पत्रे','अमावस्यदन्यतरस्या'मिति व्याख्याय 'ऋहलोर्ण्य'दिति सूत्रं व्याख्यातं

---

बा.]पदमिति।समस्तपदस्य अवान्तरपदविच्छेदोऽवग्रहः।'अप्रावेत्यादिपदमितिशिरस्कं प्रग्रहः' इति प्रातिशाख्ये प्रसिद्धम्। 'ईदूदेद्द्विवचनं प्रगृह्य'मिति सूत्रोदाहरणं च प्रगृह्यम् । **विभाषा कृवृषोः** । पञ्चम्यर्थे षष्ठी । कृञ ऋदन्तत्वान्नित्यं ण्यति प्राप्ते, वृषेर्ऋदुपधत्वान्नित्यं क्यपि प्राप्ते च क्यब्विकल्पोऽयम् । **पक्षे इति** । क्यबभावपक्षे विशेषो वक्ष्यते इत्यर्थः । **ऋहलोर्ण्यत्** । पञ्चम्यर्थे षष्ठी । तदाह-**ऋवर्णान्तादिति** । **युग्यं च पत्रे** । क्यबन्तं निपात्यते । ण्यतोऽपवादः । **युग्यो गौरिति** । शकटादिना योक्तव्य इत्यर्थः। क्यपि कुत्वं निपातनात् । **पत्रं वाहनमिति** । पतन्ति गच्छन्त्यनेनेत्यर्थे 'दाम्नीशसे'त्यादिना करणे ष्ट्रन् । ण्यति तु योग्यमिति स्यात् । **अमावस्यद । अधिकरणे इति** । निपातनलभ्यमिदम् । 'अमे'त्यस्य विवरणम्-**सहेति** । 'ऋहलोर्ण्य'दित्यनुपदमेव प्राक् प्रसंगाद्व्याख्यातमपि सूत्रक्रमात्पुनरुपात्तम् । **कुत्वमिति** । पचेर्ण्यति 'चजो'रिति कुत्वमिति भावः । ननु 'पाणौ सृजेर्ण्य'दिति व्यर्थम्, 'ऋहलो'रित्येव सिद्धेरित्यत आह-**ऋदुपधलक्षणस्येति**।'ऋदुपधाच्चाऽक्लृपिचृतेः' इति ण्यदपवादस्य क्यपो बाधनार्थमित्यर्थः । **पाणिसर्ग्या रज्जुरिति** । ण्यति 'चजो'रिति कुत्वम् । **समवपूर्वाच्चेति** । वार्तिकमिदम् । 'सृजेर्ण्य'दिति शेषः । **न क्वादेः** । कुः आदिर्यस्येति विग्रहः। 'चजोः कु' इत्यनुवर्तते । तदाह-**क्वादेरिति** । कवर्गादेरित्यर्थः।

---

शे.]क्रियते तदाभ्यामुच्यते । **'गृह्यका'** इत्यनुकम्पायां कन्।**ग्रामगृह्येति**।बहिर्भावोऽत्र ग्रहेरर्थः। **युग्य इति**। युज्यते शकटादिनेत्यर्थः। 'युग्य'मिति सूत्रे सामान्ये नपुंसकं, 'पत्रपात्रवहित्रछत्राःपुंसि चे'ति लिङ्गानुशासनात्पत्रशब्दः पुंस्यपि। 'युग्यं पत्रञ्च वाहन'मिति कोश उपलक्षणम् । 'युग्या युग्या इति क्रुद्धाः सारथींश्च व्यनोदयन्' इत्युद्योगपर्वणि प्रयोगः । तेन युग्य इत्यसङ्गतमित्यपास्तम् । **अमाव**। अत्राऽन्यतरस्यामिति निपात्यमानह्रस्वसम्बद्धं,ण्यत्तु नित्य एव। सूत्रे तकारो-

तेन अर्जितर्जिप्रभृतीनां न कुत्वम्, निष्ठायां सेट्त्वात्। प्रुचुग्लुचुप्रभृतीनां तु कादित्वेऽपि कुत्वं स्यादेव। सूत्रमते तु यद्यपि विपरीतं प्राप्तं, तथापि यथोत्तरं मुनीनां प्रामाण्यम्। **अजिव्रज्योश्च** ।७।३।६०। न कुत्वम्। समाजः। परिव्राजः। **भुजन्युब्जौ पाण्युपतापयोः** ।७।३।६१। एतयोरेतौ निपात्यौ। भुज्यतेऽनेनेति भुजः पाणिः। 'हलश्चे'ति घञ्। न्युब्जन्त्यस्मिन्निति न्युब्जः। उपतापो रोगः। पाण्युपतापयोः किम्?। भोगः। समुद्गः। **प्रयाजाऽनुयाजौ यज्ञाङ्गे** ।७।३।६२। एतौ निपातौ यज्ञाङ्गे। पञ्च प्रयाजाः। त्रयोऽनुयाजाः। यज्ञाङ्गे किम्?। प्रयागः। अनुयागः। **वञ्चेर्गतौ** ।७।३।६३। कुत्वं न। वञ्च्यम्। गतौ किम्?। वङ्क्यं काष्ठम्। कुटिलीकृतमित्यर्थः। **ओक उचः के** ।७।३।६४। उचेर्गुणकुत्वे निपात्येते के परे। 'ओकः शकुन्तवृषलौ'। इगुपधलक्षणः कः। घञा सिद्धेऽन्तोदात्तार्थमिदम्। **ण्य आवश्यके** ।७।३।६५। कुत्वं न। अवश्यपाच्यम्। **यजयाचरुचप्रवचर्चश्च** ।७।३।६६। ण्ये कुत्वं न। याज्यम्। याच्यम्। रोच्यम्। प्रवाच्यं ग्रन्थविशेषः। ऋच [स्तुतौ तुदादिः]। अर्च्यम्। ऋदुपधत्वेऽप्यत एव ज्ञापकाण्ण्यत्। *त्यजेश्च। त्याज्यम्। 'त्यजिपूज्योश्चे'ति काशिका। तत्र

---

त.] तथैवात्रापि व्याख्यातमिति। **गर्ज्यमिति**। गर्ज शब्दे 'ऋहलो'रिति ण्यति चजोरिति कुत्वे प्राप्तेऽयं निषेधः। **कुत्वं स्यादेवेति**। 'उदितो वे'ति क्त्वायामिड्विकल्पात् 'यस्य विभाषे'ति निष्ठायामनिट्त्वादिति भावः। **विपरीतमिति**। सूत्रकारमते प्रुचुग्लुचुप्रभृतीनां 'न क्वादे'रिति कुत्वं न भवति, वार्तिकारमते तु निष्ठायामनिट्त्वात् 'चजो'रिति कुत्वं भवतीति परस्परविरुद्धमित्यर्थः। **यथोत्तरमिति**। तथा च वार्तिककानुरोधेन कुत्वं स्वीकर्तव्यमिति भावः। **समाज इति**। 'अज गतिक्षेपणयो'रित्यस्माद्घञि 'चजो'रिति कुत्वे प्राप्तेऽयं निषेधः। एवं व्रजेरपि। **न्युब्ज इति**। उब्ज आर्जवे। निपूर्वस्याऽस्य जस्य कुत्वाऽभावो, दस्य च बकारो निपात्यते। **घञा सिद्धे इति**। 'उच समवाये' इत्यस्माद्घञि 'चजो'रिति कुत्वे लघूपधगुणे च 'ओक' इति रूपं सिध्यति, परं तु 'ञ्नित्यादिर्नित्य'मित्याद्युदात्तत्वमनिष्टं स्यादिति भावः। **ण्य आवश्यके**। अवश्यंभावः—आवश्यकम्। मनोज्ञादित्वाद्वुञ्। 'अव्ययानां भमात्रे टिलोपः'। **अवश्यपाच्यमिति**। 'आवश्यकाधमर्ण्ययोर्णिनिः' 'कृत्याश्चे'ति ण्यत्। आवश्यकशब्दोऽर्थद्योतनार्थो न तु प्रयोगार्थः। तेनाऽर्थप्रकरणादिगम्येऽपि तस्मिन् ण्यत्, कुत्वाऽभावश्च भवति। यथा 'अशोच्यानन्वशोचस्त्व'मिति। केचित्तु—शोचितुमर्हाः शोच्याः, न शोच्या अशोच्या इति भगवद्गीतास्विदं व्याचक्षते, तच्चिन्त्यम्। 'अर्हे कृत्यतृचश्चे'ति ण्यति 'चजोः' कुत्वप्रसङ्गात्। 'चजो'रिति कुत्वं 'निष्ठायामनिटः' इति वार्तिकमते तु सम्यगेवेति दिक्। **यज**। यज देवपूजादौ। **टुयाचृ** याच्ञायाम्। **रुच** दीप्तौ। प्रपूर्वो वच परिभाषणे। **ऋच** स्तुतौ। **ग्रन्थविशेष इति**। तथा च संज्ञेयमिति 'वचोऽशब्दसंज्ञाया'मित्यस्याऽप्रसङ्गा-

---

बा.] **वार्तिककारस्त्विति**। 'चजोः कु घिण्ण्यतोः' इति सूत्रे 'निष्ठायामनिटः' इति पूरितम्। तथा च निष्ठायां योऽनिट् तद्धात्ववयवयोश्चजोः कुः स्याद्धिति ण्यति चेत्यर्थः फलति। तथा 'न क्वादे'रिति सूत्रम् 'अजिव्रज्योश्चे'ति सूत्रं 'यजयाचरुचप्रवचर्चश्चे'त्यत्र याचरुचग्रहणं च न कर्तव्यमिति प्रत्याचख्यावित्यर्थः। किं तत इत्यत आह—**तेनेति**। सूत्रमते अर्जितर्जिप्रभृतीनां ण्यति कुत्वं स्यात्, 'न क्वादेः' इति निषेधस्य तत्राऽप्रवृत्तेरिति भावः। तदेवं सूत्रमतेऽतिव्याप्तिमुक्त्वा अव्याप्तिमाह—**प्रुचुग्लुचुप्रभृतीनामिति**। तेषां कवर्गादित्वेऽपि ण्यति प्रोक्यमित्यादौ कुत्वमिष्टं स्यादेव, वार्तिकमते 'न क्वादे'रिति निषेधस्य प्रत्यख्यातत्वात्, सूत्रमते तु 'न क्वादे'रिति निषेधात् 'प्रोक्य'मित्यादौ कुत्वमिष्टं न स्यादित्यव्याप्तिरिति भावः। नन्विदं वार्तिकं विपरीतफलमपि संमतत्वाद्ग्राह्यमेव, विरोधे विकल्पस्य वक्तुं शक्यत्वादिति शङ्कते—**सूत्रमते तु यद्यपीति**। परिहरति—**तथापीति**। **यथोत्तरमिति**। अयं वैयाकरणसमयः। **अजिव्रज्योश्चेत्यादि** स्पष्टम्। **वञ्चेर्गतौ**। **कुत्वं नेति**। शेषपूरणमिदम्। 'चजोः कु घिण्ण्यतो'रित्यतः कुग्रहणस्य, 'न क्वादे'रित्यतो नेत्यस्य चाऽनुवृत्तेरिति भावः। **ण्य आवश्यके**। **कुत्वं नेति**। शेषपूरणमिदम्। आवश्यकेऽर्थे यो ण्यस्तस्मिन् परे 'चजोः कु घिण्ण्यतो'रिति कुत्वं नेत्यर्थः। **यजयाच**। **ण्ये कुत्वं नेति**। शेषपूरणमिदम्। यज, याच, रुच, प्रवच, ऋच् एषां द्वन्द्वात् षष्ठी। एषां ण्ये परे 'चजोः कु घिण्ण्यतो'रिति कुत्वं नेत्यर्थः। ननु अर्च्यमित्यत्र

---

शे.] च्चारणन्तु प्रकरणप्राप्तक्यपि सम्प्रसारणाऽभावनिपातनशङ्कावारणायेति बोध्यम्। **यथोत्तरमिति**। वार्तिकस्य सूत्रदूषणाय प्रवृत्तत्वाद्भाष्यकृता च वार्तिकमते 'शोकः' इत्यस्याऽसिद्धिमाशङ्क्य सूत्रकारमतेऽपि ण्यति कुत्ववारणाय नियमार्थमावश्यकेन 'शुचेर्घञी'ति वचनेन समाधानाद्वार्तिकमतस्यैवाभ्यनुज्ञानाच्चेति भावः। **भुजन्युब्जौ**। भुजेरगुणत्वं निपातनात्। बाहौ भुज इति अर्शआद्यजन्तम्। **न्युब्जन्तीति**। चेष्टारहिता अवाङ्मुखाः शेरत इत्यर्थः। यद्यपि न्युब्जयतीति अचि रोगे न्युब्जः सिद्धस्तथापि न्युद्जे इत्येतद्व्यावृत्तये न्युब्जग्रहणमिति बोध्यम्। **अवश्यपाच्यमिति**। 'आवश्यकाधमर्ण्ययो'रित्यनुवर्तमाने 'कृत्याश्चे'ति ण्यत्। **प्रवाच्यमिति**। इदं वृत्त्यनुरोधेन। भाष्ये तु प्रवाच्यः शब्दसञ्ज्ञायामेवेति

पूजेर्ग्रहणं चिन्त्यम्। भाष्याऽनुक्तत्वात्। 'ण्यत्प्रकरणे त्यजेरुपसङ्ख्यान'मिति हि भाष्यम्। **वचोऽशब्दसंज्ञायाम्** ।७।३।६७। वाच्यम्। शब्दसञ्ज्ञायां तु-वाक्यम्। **प्रयोज्यनियोज्यौ शक्यार्थे** ।७।३।६८। प्रयोक्तुं शक्यः प्रयोज्यः। [नियोक्तुं शक्यो] नियोज्यो भृत्यः। **भोज्यं भक्ष्ये** ।७।३।६९। भोग्यमन्यत्। * **ण्यत्प्रकरणे लपिदभिभ्यां चेति वक्तव्यम्**। लाप्यम्। दभिर्धातुष्वपठितोऽपि वार्तिकबलात्स्वीकार्यः। दाभ्यः। **ओरावश्यके** ।३।१।१२५। उवर्णान्ताद्धातोर्ण्यत्स्यादवश्यंभावे द्योत्ये। लाव्यम्। पाव्यम्। **आसुयुवपिरपि[लपि]त्रपिचमश्च** ।३।१।१२६। षुञ्। आसाव्यम्। 'यु मिश्रणे'। याव्यम्। वाप्यम्। राप्यम्। [लाप्यम्]। त्राप्यम्। आचाम्यम्। **आनाय्योऽनित्ये** ।३।१।१२७। आङ्पूर्वान्नयतेर्ण्यदायादेशश्च निपात्यते। दक्षिणाऽग्निविशेष एवेदम्। स हि गार्हपत्यादानीयतेऽनित्यश्च, सततमप्रज्वलनात्। आनेयोऽन्यो घटादिः, वैश्यकुलादेरानीतो दक्षिणाऽग्निश्च। प्रणा-

त.]न्निषेधोऽयमिति भावः। **ज्ञापकादिति**। सरूपत्वाद्वाऽसरूपविधिना ण्यद्भवेदिति न शङ्कनीयमिति भावः। **वाक्यमिति**। 'तिङ्सुबन्तचयो **वाक्यम्**'। **भोज्यम्**। भक्ष्यमिहाभ्यवहार्यमात्रं विवक्षितं, नतु खरविशदमभ्यवहार्यम्। तेन भोज्या यवागूरित्यपि भवतीत्याहुः। **भोग्यमन्यदिति**। पालनीयमुपभोग्यं चेत्यर्थः। **लपिदभिभ्यां चेति**। 'पोरदुपधा'दिति प्राप्तस्य यतोऽपवादः। **जयादित्यस्तु**-'आसुयुवपिरपी'ति सूत्रे लपिं प्रक्षिप्य 'रपिलपित्रपी'ति पठित्वाऽनुक्तसमुच्चयार्थेन चकारेण दभेः सङ्ग्रह इत्युक्तवान्, तत्र वैषम्येण व्याख्यानं निर्बीजं, भाष्यविरोधश्च स्पष्ट एवेति बोध्यम्। **स्वीकार्य इति**। 'कास्यनेकाच आम्वक्तव्यश्चुलुम्पाद्यर्थ'मिति वार्तिकबलाद्यथा चुलुम्पादिभ्य आम् स्वीक्रियते तद्वदिति भावः। तथा च प्रयुज्यते-'न ता नशन्ति न दभाति तस्करः', 'विष्णुर्गोपा अदाभ्यः' इत्यादि। **लाव्यमिति**। 'आवश्यके उपपदे' इति व्याख्याने तु नेदं सिध्यतीति भावः। क्वचित्तु लघवं प्रत्यनादराद्यतिसे इत्यादौ व्यतिशब्दवद्द्योतितार्थस्याऽपि प्रयोगो दृश्यते। अवश्यलाव्यम्। अत्रोपपदसमासाऽसंभवेऽपि मयूरव्यंसकादेराकृतिगणत्वात्समासः। **आसु**। **षुञ् आसाव्यमिति**। 'षुञ् अभिषवे' इत्ययं गृह्यते, न तु 'षु प्रसवैश्वर्ययो'रिति। 'कृत्यल्युटो बहुल'मिति बहुलग्रहणादिति भावः। **यु मिश्रण इति**। 'युज् बन्धने' इति तु न गृह्यते, सानुबन्धकत्वादिति भावः। अत्र युप्रभृतीनां द्वन्द्वं कृत्वा पश्चादासुशब्देन द्वन्द्वः। तेन 'अल्पाच्तर'मिति युशब्दस्य न पूर्वनिपातः शङ्क्यः। इहाद्ययोः 'अचो य'दित्यनेन, रपित्रपिचमां तु 'पोरदुपधा'दित्यनेन यत्प्रत्यये प्राप्तेऽयमारम्भः। अनित्यमात्रे यदि प्रयोगस्तर्हि घटादावतिप्रसङ्ग इत्यत आह-**दक्षिणाग्निविशेष इत्यादि**। **वैश्यकुलादेरिति**। दक्षिणाग्नेर्हि योनिर्विकल्प्यते,-'वैश्यकुलाद्वित्तवतो

बा.]कथं ण्यत्,'ऋदुपधाच्चाऽक्लृपिचृते'रिति ऋदुपधत्वलक्षणस्य क्यपो ण्यदपवादत्वादित्यत आह-**ऋदुपधत्वेऽपीति**। **त्यजिपूज्योश्चेति**। 'ण्ये कुत्वं ने'ति शेषः। **वचोऽशब्दसंज्ञायाम्**। वचधातोर्ण्ये कुत्वं न, शब्दसंज्ञां वर्जयित्वेत्यर्थः। **वाच्यमिति**। 'वस्त्वि'ति शेषः। 'अशब्दसंज्ञाया'मित्यस्य प्रयोजनमाह-**शब्दाख्यायां तु वाक्यमिति**। 'एकतिङ् वाक्य'मिति संज्ञाशब्दोऽयमिति भावः। 'प्रवाच्य'मित्यत्र तु ग्रन्थविशेषसंज्ञात्वेऽपि नायं कुत्वनिषेधस्य निषेधः, 'यजयाचे'त्यत्र प्रवचेति विशिष्योपादानात्,असंज्ञायामित्यस्य प्रपूर्वाद्वचेरन्यत्र चरितार्थत्वात्। एतदभिप्रायेणैव 'प्रवाच्यं ग्रन्थविशेष' इत्युक्तं प्राक्। **प्रयोज्यनियोज्यौ**। शक्यार्थे ण्ये कुत्वाऽभावो निपात्यते। 'शक्ति लिङ् चे'ति कृत्यानां शक्यार्थेऽपि विहितत्वाण्ण्यदन्तस्य शक्यार्थकत्वमपि। **भोज्यं भक्ष्ये**। भक्ष्ये गम्ये ण्ये भुजेः कुत्वाऽभावो निपात्यते। इति प्रासङ्गिकम्। अथ प्रकृतम्-**लपिदभिभ्यां चेति**। वार्तिकमिदम् 'ऋहलोर्ण्य'दिति सूत्रस्थम्। 'पोरदुपधा'दिति प्राप्तस्य ण्यदपवादस्य यतोऽपवादः। **ओरावश्यके**। **लाव्यं पाव्यमिति**। 'अचो ञ्णिती'ति वृद्धौ 'वान्तो यी'त्यवादेशः। **आसुयुवपि**। आसु, यु, वपि, रपि, त्रपि, चम्-एषां समाहारद्वन्द्वः। 'ण्य'दिति शेषः। **आसाव्यमिति**। आङ्पूर्वस्य षुञो ग्रहणमिति भावः। **अनाय्योऽनित्ये**। 'अनित्ये' इति च्छेदः। **दक्षिणाग्निविशेष एवेति**। वार्तिकमिदम्। **स हीति**। दक्षिणाग्निर्हि अग्निहोत्रार्थमहरहर्गार्हपत्यादेः प्रणीयत इत्यर्थः। एतेन आङ्पूर्वकस्य नयतेरर्थ उक्तः। **अनित्यश्चेति**। गार्हपत्यवन्नित्यधारणाऽभावादिति भावः। तदाह-**सततमिति**। सततं धारणाऽभावादित्यर्थः। प्रणीतस्य दक्षिणाऽग्नेस्तत्तत्कर्मणि समाप्ते लौकिकत्वमुक्तं कल्पसूत्रेषु-'अप्रवृत्ते कर्मणि लौकिकं संपद्यते' इति। ततश्च पुनःपुनः प्रणयनादनित्यत्वं दक्षिणाग्नेरिति बोध्यम्। यद्यप्याहवनीयस्यापि पुनःपुनः प्रणयनमस्ति, तथापि

श्ने.]'वचोऽशब्दे'त्येव सिद्धिरिति-अत्र प्रवचिग्रहणं प्रत्याख्यातम्। **चिन्त्यमिति**। पूजेर्नित्यण्यन्तत्वेन तद्ग्रहे फलाऽभाव इति भावः। तदाह-**भाष्येति**। **भोज्यं भ**। भक्ष्यमत्र सर्वं, न तु खरविशदमेव, व्याख्यानात्। **षुञिति**। सुनोतेरित्यादौ व्यवहृतत्वेन प्रसिद्धत्वादिति भावः। निरनुबन्धकपरिभाषा युगपद्द्वयोरुपस्थितावेवेति तात्पर्यम्। **आचाम्यमिति** पाठः। चाम्यमिति पाठे वृद्धिर्दुर्लभा। **विशेष इति**। यो गार्हपत्यादानीयते तत्रेत्यर्थः। **प्रणाय्यो**। असम्मताविति

**प्रणाय्योऽसंमतौ** ।३।१।१२८। संमतिः=प्रीतिविषयीभवनं कर्मव्यापारः। तथा भोगेष्वादरोऽपि संमतिः। प्रणाय्यश्चोरः। प्रीत्यनर्ह इत्यर्थः। प्रणाय्योऽन्तेवासी विरक्त इत्यर्थः। प्रणेयोऽन्यः। **पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु** ।३।१।१२९। मीयतेऽनेन पाय्यं मानम्। ण्यत्, धात्वादेः पत्वं च। 'आतो युक्' इति युक्। सम्यङ् नीयते होमार्थमग्निं प्रतीति सान्नाय्यं हविर्विशेषः। ण्यदायादेशः, समो दीर्घश्च निपात्यते। निचीयतेऽस्मिन्धान्यादिकं निकाय्यो निवासः। अधिकरणे ण्यत्, आय्, धात्वादेः कुत्वं च निपात्यते। धीयतेऽनया समिदिति धाय्या ऋक्। **क्रतौ कुण्डपाय्यसंचाय्यौ** ।३।१।१३०। कुण्डेन पीयतेऽस्मिन्सोमः कुण्डपाय्यः क्रतुः। संचीयतेऽसौ संचाय्यः। **अग्नौ परिचाय्योपचाय्यसमूह्याः** ।३।१।१३१। अग्निधारणार्थे

त०]भ्राष्ट्राद्वा गार्हपत्याद्वे'ति। **कर्मव्यापार इति**।तथा चायमर्थः—लोकानां या प्रीतिस्तद्विषयीभवनं यस्मिन्नास्ति चोरादौ सोऽसंमतिरिरिति। वस्तुतस्तु प्रीतिविषयीभवनापेक्षया लाघवात्प्रीतिरेव संमतिः, सा यस्मिन् चोरादौ नास्ति लोकानां सोऽसंमतिः। यद्वा संमतिः प्रीतिविषयेषु यस्य नास्ति स विरक्तोऽसंमतिः। तन्त्रेणाऽर्थद्वयमपि गृह्यते। **पाय्यसान्नाय्य।** चतुर्षु अर्थेषु चत्वारो निपात्यन्ते। पीयतेऽनेनेति माङः करणे ण्यत्। पेयमन्यत्। **हविर्विशेष इति**। 'ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्याया'मिति विहितो दधिपयोविशेषरूपः। **धीयते अनयेति**। अत्र सर्वा सामिधेनी न ग्राह्या, किंतु समिध्यमानवतीं समिद्धवतीं चान्तरेण विकृतिषु प्रक्षिप्यमाणा 'पृथुपाजा अमर्त्यः' इत्यादिकैव। अयं च विशेषो निपातनस्य रूढ्यर्थत्वाल्लभ्यते। नन्वेवं निपातनात्सामिधेनीविशेषवाचकत्वे सामिधेनीग्रहणं व्यर्थमिति चेत्। अत्राहुः—**सूत्रे** सामिधेनीग्रहणं प्रयोगविशेषोपलक्षणार्थम्। तथा चाऽसामिधेन्यामपि दृश्यते—'धाय्या शंसती'ति। न हि शस्त्रेण समित् प्रक्षिप्यते। **कुण्डपाय्य**। कुण्डशब्दे तृतीयान्ते उपपदे पिबतेरधिकरणे यत्प्रत्ययो युगागमश्च निपात्यते। नन्वत्र ण्यदेव निपात्यतां प्रकृतत्वात्, एवं च 'आतो युक् चिण्कृतो'रिति सिद्धत्वाद्युक् न निपातनीय इति लाघवमस्तीति चेत्। मैवम्। तित्स्वरप्रसङ्गात्। इष्यते तु 'यतोऽनावः' इत्याद्युदात्तः कृदुत्तरपदप्रकृतिस्वरः। तथा च प्रयुज्यते 'प्रणाय्यात् कुण्डपाय्य' इति। संपूर्वाच्चिनोतेस्तु ण्यदायौ निपात्येते। क्रतौ किम्? । कुण्डपानम्। संचेयम्। **अग्नौ परि**। अग्निरिह न ज्वलनः,किं तु तद्धारणार्थमिष्टकाचयनेन निर्मितं स्थलं,

बा०]'दक्षिणाऽग्निविशेष एवे'ति वार्तिकाद्वाहवनीयस्य ग्रहणमित्यर्थः।विशेषग्रहणान्नित्यधारणपक्षे दक्षिणाग्निरिह न गृह्यते इति सूचितम्, गतश्रियां दक्षिणाग्नेरपि नित्यधार्यत्वात्, 'गतश्रियो नित्यधार्या अग्नयः' इति वचनादित्यलं पल्लवितेन। **वैश्यकुलादानीत इति**। दक्षिणाग्निं प्रकृत्य हि श्रूयते—'अहरहरेवैनं वैश्यकुलादाहरन्' इति। तथाविधदक्षिणाग्नौ वाच्ये आनेयशब्द एवेति भावः। **प्रणाय्योऽसंमतौ**। असंमतौ गम्यायां 'प्रणाय्य' इति निपात्यते। तत्र असंमतिशब्दैकदेशं संमतिशब्दं विवृणोति—**प्रीतिविषयीभवनमिति**। तच्च कर्मनिष्ठमित्याह—**कर्मव्यापार इति**। **तथेति**। भोगेषु=सुखदुःखानुभवेषु आसक्तिरपि संमतिरित्यर्थः। एवंविधा संमतिर्न भवतीति असंमतिरिति फलितम्। **प्रणाय्यश्चोर इति**। ण्यति वृद्धौ आयादेशः। **पाय्यसान्नाय्य**। पाय्य, सान्नाय्य, निकाय्य, धाय्य—एषां द्वन्द्वात्प्रथमाबहुवचनम्। मान, हविः, निवास, सामिधेनी—एषां द्वन्द्वात्सप्तमी। मानादिषु गम्येषु क्रमात् पाय्यादयो निपात्यन्ते। **मीयते अनेनेति**। माधातोः करणे ण्यत्, धातवादेर्मकारस्य पत्वं च निपात्यते इत्यर्थः।**आत इति**। ण्यति 'मीनाती'त्यात्वे कृते आतो युगिति भावः। **ण्यदिति**। संपूर्वान्नीधातोः कर्मणि निपात्यत इत्यर्थः। **आयादेश इति**। सन्नीय इति स्थिते आयादेशो निपात्यते इत्यन्वयः। **निवास इति**। कुसूलादिरित्यर्थः। **अधिकरणे इति**। चिञ्धातोरधिकरणे ण्यन्निपात्यते इत्यन्वयः। **आयिति**। अच्परकत्वाऽभावादायादेशोऽप्राप्तो निपात्यते इत्यन्वयः। **धाय्या ऋगिति**। धाधातोः करणे ण्यति आयादेशो निपात्यते इति भावः। सामिधेन्यो नाम समिदाधानार्था ऋग्विशेषाः। तत्र 'समिध्यमानो अध्वरे' इति ऋच उपरि प्रक्षेप्या 'पृथुपाजा अमर्त्यः' इत्याद्या ऋक्प्रसिद्धा। **क्रतौ कुण्डपाय्य**। क्रतुविशेषे गम्ये एतौ निपात्येते। **कुण्डेनेति**। अत्सरुकैश्चमसैरित्यर्थः। सामान्येनैकवचनम्। 'यदत्सरुकैश्चमसैर्भक्षयन्ति तदेषां कुण्ड'मिति श्रुतिः। **कुण्डपाय्य इति**। सत्रविशेषात्मकः क्रतुः। कुण्डेनेति तृतीयान्ते उपपदे अधिकरणे ण्यत्। आतो युक्। **संचाय्य इति**। संपूर्वाच्चिञः कर्मणि ण्यत्, आयादेशश्च निपात्यते इति भावः। **संचाय्यो** नाम क्रतुविशेषः क्वचिच्छाखायामन्वेषणीयः। **अग्नौ परिचाय्य**। अग्नौ गम्ये—परिचाय्य, उपचाय्य, समूह्य एते निपात्यन्ते। अग्निशब्द इष्टकारचितस्थण्डिलविशेषे वर्तते, 'इष्टकाभिरग्निं चिनोती'ति श्रुतेः। इष्टकाकृतचयनेन अग्न्याख्यं स्थण्डिलं निष्पादयेदित्यर्थः। 'ब्रह्मवादिनो वदन्ति

शे०]बहुव्रीहिः। **आतोयुगिति**। 'मीनाती'त्यात्वे कृते इति भावः। माने वा। **हविर्विशेष इति**। ऐन्द्रं-पयो,दधि

स्थलविशेषे एते साधवः। अन्यत्र तु परिचेयम्। उपचेयम्। संवाह्यम्। **चित्याग्निचित्ये च** ।३।१।१३२। चीयतेऽसौ चित्योऽग्निः। अग्नेश्चयनमग्निचित्या। '**प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च**'। त्वया गन्तव्यम्। गमनीयम्। गम्यम्। इह लोटा बाधा माभूदिति पुनः कृत्यविधिः,–'स्त्र्यधिकारादूर्ध्वं वासरूपविधिः क्वचिन्ने'ति ज्ञापयति। तेन 'क्त्ल्युट्तुमुन्खलर्थेषु ने'ति सिद्धम्। '**अर्हे कृत्यतृचश्च**'। स्तोतुमर्हः स्तुत्यः–स्तुतिकर्म। स्तोता–स्तुतिकर्ता। 'लिङा बाधा माभू'दिति कृत्यतृचोर्विधिः। **भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा** ।३।४।६८। एते कृत्यान्ताः कर्तरि वा निपात्यन्ते। पक्षे 'तयोरेवे'ति सकर्मकात्कर्मणि,

---

त.]तदाह–**स्थलविशेष इति**। **एते साधव इति**। स्थलविशेषेऽभिधेये परिपूर्वाच्चिनोतेर्ण्यदायादेशयोः, संपूर्वस्य वहेस्तु संप्रसारणदीर्घयोश्च निपातनादिति भावः। **चित्योऽग्निरिति**। चिनोतेः कर्मणि क्यप्। यतोऽपवादः। इह सूत्रे अग्नावित्यनुवर्तते, तच्च चित्यशब्दस्यैव विशेषणं, न द्वितीयस्य। तस्य भावार्थकत्वेनाऽग्निवाचकत्वाऽसंभवात्। अग्नेरन्यत्र चेयमित्येव। शब्दकौस्तुभादौ तु अग्निचित्येत्यत्र भावे यकारप्रत्ययस्तुक् च निपात्यते न तु क्यप्। तेनान्तोदात्तत्वं भवति। क्यपि तु कृते क्यपः पित्त्वादनुदात्तत्वे धातुस्वरेण चित्य इवाद्युदात्तः स्यादिति स्थितम्। ननु वासरूपविधिना कृत्या अपि भविष्यन्तीत्यत आह–**स्त्र्यधिकारादूर्ध्वमित्यादि**। **क्तल्युडिति**। हसितं हसनं छात्रस्य। 'नपुंसके भावे क्तः' 'ल्युट् चे'त्यनयोर्विषये भावे इति घञ्न। इच्छति भोक्तुम्। अत्र 'इच्छार्थेषु लिङ्लोटौ' इति लोण्न। लिङ् तु भवत्येव, 'समानकर्तृकेषु तुमुन्' 'लिङ् चे'ति वचनात्। ईषत्पानः। 'अतो युजि'ति युच्। अत्र 'ईषद्दुःसुषु' इति खल् न। **लिङा बाधेति**। चकारेण 'लिङ् यदी'त्यतो लिङनुकृष्यत इति भावः। **भव्य**। 'तयोरेवे'ति नियमा-

---

बा.]यन्मृदा चाद्भिश्चाग्निश्चीयतेऽथ कस्मादग्निरुच्यत इति यच्छन्दोभिश्चिनोत्यग्नयो वै छन्दांसि तस्मादग्निरुच्यतेऽथो इयं वा अग्निर्वैश्वानरो यन्मृदा चिनोति तस्मादग्निरुच्यते' इति वाक्यशेषाच्च। तदाह–**अग्निधारणेति**। तत्र परिपूर्वादुपपूर्वाच्च चिञः कर्मणि ण्यत्, आयादेशश्च निपात्यते। संपूर्वस्य वहेस्तु कर्मणि ण्यति संप्रसारणं, दीर्घश्च निपात्यते। 'समूह्यं चिन्वीत पशुकामः, परिचाय्यं चिन्वीत ग्रामकामः' इति तैत्तिरीयश्रुतौ परिचाय्यसमूह्यौ प्रसिद्धौ। उपचाय्यस्त्वग्निः क्वचिच्छाखायामन्वेषणीयः। **चित्याग्निचित्ये च**। चित्यश्च अग्निचित्या चेति द्वन्द्वः। अमौ निपात्येते। **चित्योऽग्निरिति**। कर्मणि ण्यत्, तुक् च निपात्यते। **अग्नेश्चयनमिति**। अग्निशब्दे षष्ठ्यन्ते उपपदे चिणो ण्यत्, तुक् च। स्त्रीत्वं लोकात्। '**प्रैषातिसर्गे**'ति व्याख्यातमपि स्मार्यते। **गम्यमिति**। 'पोरदुपधा'दिति ण्यदपवादः क्यप्।

ननु सामान्येन भावकर्मणोर्विहितानां कृत्यानां प्रैषादिषु तदभावे च सिद्धेः प्रैषादिषु कृत्यविधिर्व्यर्थ इत्यत आह–**लोटा बाधेति**। इह प्रैषादिषु कृत्यविध्यभावे लोट् चेति प्रैषादिषु लोटा विशेषविहितेन कृत्यानां बाधः स्यात्, कृत्यानां प्रैषाद्यभावे भावकर्मणोश्चरितार्थत्वात्। अतः प्रैषादिषु कृत्यानां लोटा बाधनिवृत्तये पुनः कृत्यविधिरित्यर्थः। ननु वासरूपविधिनैव लोटा प्रैषादिषु कृत्यानां बाधो न भविष्यतीत्यत आह–**स्त्र्यधिकारादूर्ध्वमिति**। 'स्त्रियां क्ति'न्नित्यत ऊर्ध्वमित्यर्थः। 'प्राक् स्त्रिया वासरूपविधिः' इति भाष्यम्। ननु स्त्र्यधिकारादूर्ध्वं वाऽसरूपविधेरप्रवृत्तौ 'स्त्रियां क्ति'न्निति सामान्यविहितस्य क्तिनः 'षिद्भिदादिभ्योऽङि'ति विशेषविहितेन नित्यबाधः स्यात्, ततः–क्षमा क्षान्तिः, भिदा भित्तिरित्यादि न स्यादित्यत आह–**क्वचिन्नेति**। 'क्वचि'दित्यस्याऽनिर्धारणादाह–**तेनेति**। **सिद्धमिति**। एषु वासरूपविधिर्नास्तीत्यर्थः। 'स्त्र्यधिकारात्प्राग्वासरूपविधिः, ननु तत ऊर्ध्व'मिति भाष्यस्य 'क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ती'त्यत्र सङ्कोच इति भावः। अत्र व्याख्यानमेव शरणम्। **अर्हे कृत्यतृचश्चेति**। प्राग्व्याख्यातं विशेषविवक्षया स्मार्यते। 'लिङ्यदी'त्यतो लिङनुकर्षार्थश्चकार इत्युक्तं प्राक्। ननु अर्हे अनर्हे च सामान्यविधानादेव अर्हेऽपि कृत्यतृचोः सिद्धयोः पुनस्तद्विधिर्व्यर्थ इत्यत आह–**लिङा बाधेति**। 'अर्हे चे'त्येतावत्येव उक्ते चकारानुकृष्टस्य लिङ एवार्हे विधिः स्यात्, तथा च अर्हे कृत्यतृचोर्विधिर्न स्यात्, अर्हे विशेषविहितेन लिङा बाधात्, अनर्हे कृत्यतृचोश्चरितार्थत्वात्। वासरूपविधिस्तु स्त्र्यधिकारादूर्ध्वं न प्रवर्तते इत्युक्तमेव। अतो लिङा बाधा मा भूदिति कृत्यतृचोर्विधिरित्यर्थः। **भव्यगेय**। **कर्तरि वेति**। 'कर्तरि कृ'दित्यतः कर्तरीत्यनुवृत्तं वेत्यनेन संबध्यते। तथा च कर्तरि वा एते निपात्यन्ते। अन्यत्र नेति फलति। तत्र अन्यत्रेत्यस्याऽनिर्धारणादाह–**पक्षे इति**। अन्यत्रापि न सर्वत्र, किंतु 'तयोरेव कृत्यक्त-

---

शे.]वेत्यर्थः। **संवाह्यमिति**। वहिसमानार्थ–ऊहेर्ण्यता सिद्धे सूत्रे समूह्येति व्यर्थमिति भाष्यम्। **क्वचिन्नेति**। अत एव क्त्वाप्रत्ययेन तुमुनो न नित्यबाध इति 'आसित्वा भुङ्क्ते' 'आस्यते भोक्तु'मिति च भवतीति भावः। **कर्त्तरि वेति**। 'कर्तरि कृ'दित्यतः कर्त्तरीत्यनुवर्त्तते इति भावः। 'आवश्यकाऽऽधमर्ण्ययो'रित्यनुवर्त्तमाने 'कृत्याश्चे'ति सूत्रं, तच्च भव्या-

अकर्मकात्तु भावे ज्ञेयाः । भवतीति भव्यः। भव्यमनेन वा । गायतीति गेयः साम्नामयम् । गेयं सामाऽनेन वा इत्यादि। 'शकि लिङ् च'। चात्कृत्याः। वोढुं शक्यो वोढव्यः, वहनीयो,वाह्यः।लिङा बाधा माभूदिति कृत्योक्तिः। लाघवादनेनैव ज्ञापनसंभवे प्रैषादिसूत्रे कृत्याश्चेति सुत्यजम् , अर्हे कृत्यतृचोर्ग्रहणं च । इति कृत्यप्रक्रिया ।

## अथ पूर्वकृदन्तप्रकरणम् ।

ण्वुल्तृचौ ।३।१।१३३। धातोरेतौ स्तः । 'कर्तरि कृ'दिति कर्त्रर्थे। 'युवोरनाकौ'। कारकः। कर्ता। वोढुमर्हो वोढा । कारिका । कर्त्री । 'गाङ्कुटे'ति ङित्त्वम् । कुटिता । 'अञ्णि'दित्युक्तेर्न ङित्त्वम् । कोटकः। 'विज

---

त.] त्कर्तर्यप्राप्ते वचनम् । साम्नामिति। कर्मणि षष्ठी । इत्यादीति । प्रवक्तीति प्रवचनीयो गुरुः स्वाध्यायस्य। प्रवचनीयो गुरुणा स्वाध्यायः । उपस्थानीयः शिष्यो गुरोः। उपस्थानीयो गुरुः शिष्येण । जायते जन्यः, जन्यमनेन वा । आप्लवते आप्लाव्यः । ण्यत् ।आप्लाव्यमनेन वा । शकि लिङ् च । वोढव्य इति । वह प्रापणे इत्यस्मात्तव्यः । हस्य 'हो ढः' इति ढत्वे 'झषस्तथो'रिति धत्वे 'ष्टुना ष्टु'रिति ष्टुत्वे 'ढो ढे लोपः'। 'सहिवहो'रित्यवर्णस्यौत्वम् । अत्र ढलोपे कर्तव्ये ष्टुत्वमसिद्धमिति न शङ्क्यम् , आश्रयाऽसिद्धत्वात् । बाधा माभूदिति । 'कृत्याना'मिति शेषः । कृत्योक्तिरिति । कृत्याऽनुकर्षकचकारोक्तिरित्यर्थः। इति कृत्यप्रकरणम् ।

ण्वुल्तृचौ । णकारो वृद्ध्यर्थः । लकारो 'लिती'ति स्वरार्थः । तृचश्चकारस्तु 'तुरिष्ठेमेयस्सु', 'तुश्छन्दसि' इत्यादौ सामान्यग्रहणाऽविघातार्थः । 'चितः' इत्यन्तोदात्तार्थस्तु न भवति, 'आद्युदात्तश्चे'त्यनेनैव सिद्धेः। एवं च 'अप्तृन्' इति सूत्रे तृन्तृचोः पृथग्ग्रहणं विहाय 'अप्तृस्वसृ' इत्येव सुवचमित्येके । अन्ये तु 'सामान्यग्रहणेऽपि क्वचिद्विशेषस्यैव ग्रहणं भवती'ति ज्ञापनार्थम् 'अप्तृन्नि'ति सूत्रे तृन्तृचोरुभयोर्ग्रहणम् । तेन 'क्रोपधग्रहणे तद्धितवुग्रहण'मित्येतत्सिद्ध-

---

बा.] खलर्थाः' इति सूत्रेण सकर्मकात्कर्मणि, अकर्मकाद्भावे एते कृत्या ज्ञेया इत्यर्थः। 'तयोरेव कृत्ये'ति सूत्रे 'लः कर्मणि चे'त्यस्मात्सकर्मकेभ्यः कर्मणि अकर्मकेभ्यो भावे इत्यनुवर्तते इति भावः । भव्य इति । कर्तरि अचो यत् । भव्यमनेन वेति । भावे यत् । गेयः साम्नामयमिति । गाधातोः कर्तरि यत्। 'ईद्यती'ति प्रकृतेरीत्वम् । गुणः । साम्नां कर्मणामनभिहितत्वात्कृद्योगे षष्ठी । कर्तुरभिहितत्वात्प्रथमा । गेयं सामाऽनेनेति । कर्मणि यत्, सकर्मकत्वात्, नतु भावे, कर्तुरनभिहितत्वात्तृतीया । कृद्योगषष्ठी तु कृत्ययोगे कर्तरि वैकल्पिकी, 'कृत्यानां कर्तरि वा' इत्युक्तेः । इत्यादीति । 'प्रवचनीयो गुरुर्वेदस्य' । प्रवक्तेत्यर्थः । कर्तरि अनीयर् । 'प्रवचनीयो वेदो गुरुणे'ति वा । 'उपस्थानीयः शिष्यो गुरोः', 'उपस्थानीयो गुरुः शिष्येणे'ति वा । 'जन्योऽसौ' । जायते इत्यर्थः । 'जन्यमनेने'ति वा । आप्लवतेऽसौ 'आप्लाव्यः' । 'ओरावश्यके' इति कर्तरि ण्यत् । 'आप्लाव्यमनेने'ति वा । आपतत्यसौ 'आपात्यः' । 'ऋहलो'रिति कर्तरि ण्यत् । 'आपात्यमनेन वा' । 'शकि लिङ् चे'त्यपि व्याख्यातं प्राक् विशेषविवक्षया सूत्रक्रमादिहोपन्यस्तम्। नन्विह चकारानुकृष्टकृत्यविधिर्व्यर्थः, शक्तौ अशक्तौ च भावकर्मणोः सामान्यतः कृत्यविधित एव शक्तावपि सिद्धेरित्यत आह–लिङा बाधेति। 'शकि लि'ङित्येतावत्येवोक्ते शक्तौ विशेषविहितेन लिङा कृत्यानां बाधः स्यात् ,अशक्तौ कृत्यानां चरितार्थत्वात्। वासरूपविधिस्तु त्र्यधिकाराद्रूर्ध्वं नेत्युक्तमेवेति भावः । लाघवादिति । इह चकारमात्रेण वासरूपविधेः त्र्यधिकाराद्रूर्ध्वमनित्यताज्ञापनं संभवति, अतः 'प्रैषातिसर्गे'ति सूत्रे कृत्यग्रहणेन 'अर्हे कृत्यतृचश्चे'त्यत्र कृत्यतृज्ग्रहणेन च तज्ज्ञापनाश्रयणे गौरवमिति भावः। इति कृत्यप्रक्रिया ।

अथ कृदन्तप्रकरणं । ण्वुल्तृचौ ।अनयोर्वर्तमानकालादन्यत्र न प्रयोग इति भाष्यम् । वोढुमर्ह इति । 'अर्हे कृत्यतृचश्चे'त्युक्तेरिति भावः। वोढेति । वहेस्तृच्यनुदात्तत्वादिड्भावे ढत्वधत्वष्टुत्वढलोपेषु 'सहिवहो'रित्योत्त्वम् । कुटितेत्यत्र लघूपधगुणमाशङ्क्याह–गाङिति । तर्हि ण्वुलि कोटक इत्यत्रापि गुणो न स्यादित्यत आह–अञ्णिदित्युक्तेरिति । विजितेत्यत्र लघूपधगुणमाशङ्क्याह–विज इडिति । 'इति ङित्त्व'मिति शेषः। विजितेति । ङित्त्वाच्च

---

शे.] यर्थम् । इति कृत्यप्रक्रिया[ः] ।

ण्वुल्तृचौ । अनयोर्वर्तमानकालादन्यत्राऽप्रयोगोऽनभिधानादिति भाष्यम्।तत्र हि 'तृजादिषु वर्त्तमानकालोपादानं कर्तव्यम् । न कर्तव्यम् । अन्येषां प्रत्ययानां कालमात्रे दर्शनात् , चर्चापारः' इत्युक्तं । तृचश्चकारः'तुश्छन्दसि' 'तुरिष्ठेमेयस्सु' इत्यत्र तृन्तृचोः [सामान्यग्रहणाऽविघाताय]'सामान्यग्रहणाऽविघातार्थश्चकार' इति भाष्ये स्पष्टम्। उणादीनांव्युत्पन्नत्वमते तृप्रत्ययान्तमात्रादिष्ठन्छन्दसि नेष्टेयसोर्दर्शनमिति तद्भावः । अव्युत्पत्तिपक्षाश्रयणेन 'मातयती'त्यादौ नेष्ठवद्भावात्तृलोप इति 'र ऋतः' इति सूत्रे कैयटे। वोढुमर्ह इति । 'अर्ह कृत्यतृचः' इत्युक्तेरिति भावः । वोढेति । अनुदात्तत्वादिड्भावे ढत्व–धत्व–ष्टुत्व–ढलोपेषु 'सहिवहो'रित्योत्त्वम् । विज इडिति । ङित्त्वविधायकम् । वध

इट् । विजिता । 'हनस्तोऽचिण्णलोः' । घातकः । 'आतो युक्' । दायकः । 'नोदात्तोपदेशस्ये'ति न वृद्धिः । शमकः । दमकः । अनिटस्तु-नियामकः । 'जनिवध्योश्च' । जनकः । वध हिंसायाम् । वधकः । 'रधिजभोरचि' । रन्धकः । जम्भकः । 'नेट्यलिटि रधेः' । रधिता । रद्धा । 'मस्जिनशो'रिति नुम् । मङ्क्ता । नंष्टा । नशिता । 'रभेरशब्लिटोः' । रम्भकः । रब्धा । 'लभेश्च' । लम्भकः । लब्धा । 'तीषसहे'ति वेट् । एषिता । एष्टा । सहिता । सोढा । दरिद्रातेरालोपः । दरिद्रिता । ण्वुलि न । दरिद्रायकः । 'कृत्यल्युटः' इत्येव सूत्रमस्तु, यत्र विहितास्ततोऽन्यत्रापि स्युरित्यर्थात् । एवं च बहुलग्रहणं योगविभागेन कृन्मात्रस्याऽर्थव्यभिचारार्थम् । पादाभ्यां ह्रियते पादहारकः । कर्मणि ण्वुल् । * क्रमेः कर्तर्यात्मनेपदविषयात्कृत इण्निषेधो

त.]मित्याहुः । वोढेति । 'अर्हे कृत्यतृचश्चे'ति तृच्, ढत्वादयस्तु वोढव्य इत्यत्रेवात्राऽप्यूह्याः । रधितेति । 'रधादिभ्यश्चे'ति वेट् । रद्धेति । इह 'नेट्यलिटी'ति निषेधाऽप्रवृत्तावपि 'रधी'त्यनेन अच्परत्वाऽभावान्नुम्न । मङ्क्तेति । 'टुमस्जो शुद्धौ' अस्मात्तृच् । 'मस्जी'ति नुमन्त्यात्पूर्वः । 'स्को'रिति सलोपः । जस्य कुत्वे चर्त्वम् । अनुस्वारपरसवर्णौ । 'बहूनां समवाये द्वयोर्द्वयोः संयोगः' इति पक्षे तु नुमागमस्याऽच्परत्वेऽपि 'स्को'रिति सलोपो भवत्येवेति ज्ञेयम् । नंष्टेति । रधादित्वादिड्भावपक्षे नुम् । लब्धेति । 'झषस्तथो'रिति धः, भकारस्य जश्त्वम् । 'लभेश्चे'ति नुम् तु न भवति, अचीत्यनुवर्तनात् । ण्वुलि नेति । 'सनि ण्वुलि ल्युटि च ने'ति वचनात् । योगविभागेनेति । 'कृत्यल्युटो बहुल'-

बा.]गुणः । अनिटस्त्विति । तस्यानुदात्तोपदेशत्वादिति भावः । 'जनक' इत्यत्रोपधावृद्धिमाशङ्क्य वृद्धिनिषेधं स्मारयति-जनिवध्योश्चेति । वध हिंसायामिति,-धात्वन्तरं भौवादिकं, भ्वादेराकृतिगणत्वात् । नत्वयं हन्तेर्वधादेशः । तथा सति 'जनिवध्योश्चे'ति वृद्धिनिषेधसूत्रे वधिग्रहणवैयर्थ्यात्, वधादेशस्याऽदन्ततया अल्लोपस्य स्थानिवत्त्वादेव वृद्ध्यभावसिद्धेः । वधक इति । 'जनिवध्योश्चे'ति वृद्धिनिषेधः । रन्धकः जम्भक इत्यत्र इदित्त्वाऽभावादप्राप्ते नुमि तद्विधिं स्मारयति-रधिजभोरचीति । रधितेत्यत्र 'रधिजभो'रिति नुममाशङ्क्याह-नेट्यलिटीति । रधिता रद्धेति । 'रधादिभ्यश्चे'ति वेट् । मस्ज् तृ इति स्थिते आह-मस्जिनशोरिति । नुम्विधिरयम् । मङ्क्तेति । मस्ज् तृ इति स्थिते 'मस्जेरन्त्यात् पूर्वो नुम् वाच्यः' इति सकारादुपरि जकारात् प्राङ्नुम् । मस्न्ज् तृ इति स्थिते 'स्को'रिति सलोपः, जस्य कुत्वेन गः, तस्य चर्त्वेन कः, अनुस्वारः,परसवर्णेन ङ इति भावः । नंष्टा नशितेति । रधादित्वादिट् । इड्भावपक्षे 'मस्जिनशो'रिति नुमि, नन्श् तृ इति स्थिते 'व्रश्चे'ति शस्य षः । नस्याऽनुस्वारः । ष्टुत्वम् । रभेरशब्लिटोरिति नुम्विधिरयम् । लब्धेति । 'झषस्तथो'रिति तस्य धः, जश्त्वेन भस्य बः । तीषसहेति । इड्विकल्पोऽयम् । सोढेति । ढत्वधत्वष्टुत्वढलोपाः । 'सहिवहो'रित्योत्त्वम् । दरिद्रातेरालोप इति । 'दरिद्रातेरालोपो वक्तव्यः' इत्यनेनेति भावः । ण्वुलि नेति । दरिद्रातेर्ण्वुलि आल्लोपो नेत्यर्थः । 'न दरिद्रायके लोपः' इति वार्तिकादिति भावः । दरिद्रायक इति । 'अतो यु'गिति युगिति भावः । पादाभ्यां ह्रियते पादहारक इत्यत्र कर्मणि ण्वुलं साधयितुमाह-कृत्यल्युट इत्येवेति । 'कृत्यल्युटः' इत्येतावतैव पुनर्वचनबलाद्येष्वर्थेषु ते कृत्यल्युटो विहितास्ततोऽन्येष्वप्यर्थेषु भवन्तीत्यर्थलाभाद्बहुलग्रहणं योगविभागार्थं-'कृत्प्रत्यया येष्वर्थेषु विहितास्ततोऽन्यत्रापि क्वचिद्भवन्ती'ति । एवंच कर्मण्यपि ण्वुल् सिध्यतीत्यर्थः । 'कृतो बहुल'मिति वार्तिकं तु एतद्योगविभागसिद्धकथनपरमिति भावः । क्रमेरिति । आत्मनेपदविषयात्क्रमेः परस्य

शे.]हिंसायामिति । अत एव 'जनिवध्यो'रित्यत्र वधिग्रहणं चरितार्थम् । वधादेशे त्वल्लोपस्य स्थानिवद्भावात्सिद्धम् । एतेनाऽस्यार्द्धधातुके प्रयोगो नेत्यपास्तम् । इदं सर्वं वृत्तौ स्पष्टम् । परे त्वेवं सति 'चक्षिङः' इतिसूत्रे 'बहुलन्तण्यन्नवधकगात्रविचक्षणाजिराद्यर्थ'मिति वार्त्तिके वधकग्रहणवैयर्थ्यापत्तिः, अनेन धातुना सिद्धत्वात् । 'घातकः' इति त्विष्यत एव, बाहुलकात् । 'वधक'मित्युपादाय ण्वुलि च वधादेश इति कैयटः । तथा स्थानिवत्सूत्रे वार्तिकं 'वध्यादेशे वृद्धितत्वयोः प्रतिषेधः,वधकं पुष्कर'मिति,'अन्योऽयं क्रिदौणादिको वधकशब्दो,रुचक इति यथा' इति भाष्यञ्चाऽसङ्गतं स्यात् । तस्मादयं निर्मूलः । आर्द्धधातुके चास्य प्रयोगो निर्मूलः । 'जनिवध्योश्चे'ति सूत्रे वधिग्रहणन्त्वादेशो हलन्त इत्यभिप्रायेण । अत एव 'हनो वधे'ति सूत्रे 'किमयमदन्त आहोस्विद्व्यञ्जनान्तः ? । किञ्चाऽतः ?। यदि व्यञ्जनान्तो वृद्धितत्वप्रतिषेध इड्विधिश्च । अथाऽदन्तो, न दोषः' इति भाष्यमुपादाय कैयट आह-'अवधीदित्यत्र हलन्तलक्षणा वृद्धिः प्राप्नोति तत्प्रतिषेधो वक्तव्यः । वधक इति ण्वुलि 'बहुलन्तणी'ति वधादेशे 'अत उपधायाः' इति प्राप्ता वृद्धिः 'जनिवध्योश्चे'ति प्रतिषिध्यते । स्थानिवद्भावात् 'हनस्तः' इति तत्वं प्राप्तं तत्प्रतिषेधो वक्तव्यः । अवधीदित्यादावेकाच्त्वादिण्निषेधे प्राप्ते इड् विधेयः, अदन्तत्वे त्वल्लोपस्य स्थानिवद्भावाद्वृद्ध्याद्यभाव इड्भावश्चे'ति । एवञ्चाऽदन्तत्वपक्षे वधिग्रहणं सूत्रे न कर्त्तव्यमिति स्पष्टमेवोक्तमिति वृत्तिश्चिन्त्येत्याहुः । नेट्यलिटि । 'रधिजभो'रिति प्राप्तनुमो निषेधोऽयम् । 'रभेरि'ति 'लभेश्चे'ति च

वाच्यः। प्रक्रन्ता। कर्त्तरीति किम्?। प्रक्रमितव्यम्। आत्मनेपदेति किम्?। सङ्क्रमिता। अनन्यभावे विषयशब्दः। तेन 'अनुपसर्गाद्वे'ति विकल्पार्हस्य न निषेधः। क्रमिता। तदर्हत्वमेव तद्विषयत्वम्। तेन क्रन्तेत्यपीति केचित्। 'गमेरि'डित्यत्र परस्मैपदग्रहणं तङानयोरभावं लक्षयति। संजिगमिषिता। एवं-'न वृद्भ्यश्चतुर्भ्यः'। विवृत्सिता। यङन्तात् ण्वुल्। अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः। पापचकः। यङ्लुगन्तात्तु पापाचकः। **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** ।३।१।१३४। नन्द्यादेर्ल्युर्ग्रह्यादेर्णिनिः पचादेरच् स्यात्। नन्दयतीति नन्दनः। जनमर्दयतीति जनार्दनः। मधुसूदनः। विशेषेण भीषयतीति विभीषणः। लवणः। नन्द्यादिगणे निपातनाण्णत्वम्। ग्राही। स्थायी। मन्त्री। विशयी। वृद्ध्यभावो निपातनात्। विषयी। इह षत्वमपि।

---

त.]मिति सूत्रे 'कृतो बहुल'मित्येवाकरे स्थितम्। तथा च योगविभागं विनैव सर्वेष्टसिद्धिरित्याहुः। **प्रक्रन्तेति**। 'प्रोपाभ्यां समर्थाभ्या'मिति क्रमेरात्मनेपदविषयता। **अनन्यभावे विषयशब्द इति**। तदन्याऽविषयत्वे सति तद्विषयत्वमनन्यभावः। तथा च विकल्पार्हस्य क्रमेः परस्मैपदात्मनेपदोभयप्राप्तिविषयत्वान्निषेधो नेति भावः। **संजिगमिषितेति**। संपूर्वाद्गमेः सन्। 'सन्यङो'रिति द्वित्वे हलादिः शेषे 'सन्यतः' इत्यभ्यासस्येत्वम्। 'आर्द्धधातुकस्ये'ति सन इट्, षत्वं, सन्नन्तात्तृच्। पुनरिट्। **अल्लोपस्येति**। प्राचां तु 'न धातुलोपे'इति सूत्रे 'इक' इत्यनुवृत्तेर्वृद्धेरनिषेधः-'पापाचक' इत्युक्तं, तन्न, यङन्ते अल्लोपस्य स्थानिवत्त्वेन वृद्धेः प्राप्त्यभावात्। ननु यङ्लुगन्तपापाचकरूपाभिप्रायेण तथोक्तम्, तत्र हि अकारविशिष्टस्यैव यङो लुगिति सर्वसंमतत्वेन स्थानिवत्त्वाऽभावादिति चेत्। मैवम्। एवं तर्हि आर्द्धधातुकस्य धात्ववयवलोपनिमित्तत्वाऽभावेन यङ्लुगन्ते 'न धातुलोपे' इति निषेधस्य प्रसक्तेरभावात्। **नन्दिग्रहि**। द्वन्द्वान्ते श्रूयमाण आदिशब्दः प्रत्येकं संबध्यते। तदाह-**नन्द्यादेर्ल्युरित्यादि**। **मधुसूदन इति**। मधुं दैत्यं सूदयतीति विग्रहः। षूद क्षरणे। इह अर्दिसूदिभ्यां कर्मण्यणि प्राप्ते नन्द्यादिपाठाल्ल्युः। **विभीषण इति**। 'भियो हेतुभये षुक्'। **ग्राहीति**। णिनेर्णित्त्वादुपधावृद्धिः। **स्थायीति**। आतो युक्। **मन्त्रीति**। 'मत्री'ति चुरादाविदित्पाठान्नुम्, 'णेरनिटी'-

---

बा.]कर्तरि कृतो नेडित्यर्थः। 'स्नुक्रमो'रिति सूत्रस्थमिदं वार्तिकम्। **प्रक्रन्तेति**। 'प्रोपाभ्यां समर्थाभ्या'मित्यात्मनेपदविषयोऽयम्। नन्वेवं सति क्रमितेत्यत्र कथमिडित्यत आह-**अनन्यभावे विषयशब्द इति**। 'वर्तते'इति शेषः। आत्मनेपदाऽविनाभाव इति यावत्। 'क्रमेः कर्तर्यात्मनेपदिन' इत्येतावतैव सिद्धे विषयपदोपादानादयमर्थो लभ्यते इति भावः। तथा च नित्यमात्मनेपदिन इति फलितम्। **तेनेति**। 'क्रमिते'त्यत्र क्रमेः 'अनुपसर्गाद्वे'त्यात्मनेपदविकल्पविधानान्नित्यमात्मनेपदित्वाऽभावादिण्निषेधो नेत्यर्थः। मतान्तरमाह-**तदर्हत्वमेवेति**। आत्मनेपदार्हत्वमेवात्मनेपदविषयत्वम्। ततश्च आत्मनेपदपक्षे इण्निषेधे सति क्रन्तेति रूपम्, आत्मनेपदाऽभावपक्षे तु क्रम इटि क्रमितेति रूपमिति केचिदाहुरित्यर्थः। अत्र पक्षे विषयपदस्य न प्रयोजनमित्यस्वरसः। ननु संजिगमिषितेत्यत्र सनः कथमिट्,गमेरनिट्सु पाठात्, सनः परस्मैपदपरत्वाऽभावेन 'गमेरिट् परस्मैपदेषु' इत्यस्याऽप्रवृत्तेरित्यत आह-**गमेरिडित्यत्रेति**। **एवमिति**। 'न वृद्भ्यश्चतुर्भ्यः' इत्यत्रापि परस्मैपदग्रहणमनुवृत्तं तङानयोरभावं लक्षयतीत्यर्थः। **विवृत्सितेति**। वृतेः सनि रूपम्। 'हलन्ताच्चे'ति कित्त्वान्न गुणः। **यङन्तादिति**। पचिधातोर्यङन्तात् पापच्येत्यस्माण्ण्वुलित्यर्थः। तस्य अकादेशे 'यस्य हलः' इति यकारलोपे अतो लोपे पापच् अक इति स्थिते उपधावृद्धिमाशङ्क्याह-**स्थानिवत्त्वान्न वृद्धिरिति**। **यङ्लुगन्तात्त्विति**। यङः सङ्घातस्य लुकोऽजादेशत्वाऽभावेन स्थानिवत्त्वाऽसंभवादुपधावृद्धिर्निर्बाधा। 'न धातुलोपे' इति निषेधस्तु न, यङ्लुकोऽनैमित्तिकत्वादुपधावृद्धेरिग्लक्षणत्वाऽभावाच्च।

**नन्दिग्रहि**। नन्दि, ग्रहि,पच एषां द्वन्द्वः। नन्दिग्रहिपचा आदिर्येषामिति विग्रहः।आदिशब्दस्य प्रत्येकमन्वयः फलति। ल्यु, णिनि, अच्-एषां द्वन्द्वात्प्रथमा। यथासङ्ख्यमन्वयः। तदाह-**नन्द्यादेरित्यादि**। नन्दीति ण्यन्तग्रहणम्। तदाह-**नन्दयतीत्यादि**। ल्योरनादेशः,'णेरनिटी'ति णिलोपः। **मधुं सूदयतीति**। मधुरसुरविशेषः, तं सूदयति=हन्तीति मधुसूदनः। ल्युः। अनादेशः 'णिलोपः।'सात्पदाद्यो'रिति न षत्वम्। नन्द्यादयो वृत्तौ पठिताः।तत्र केचिण्ण्यन्ताः केचिदण्यन्ताः। सूत्रे 'ग्रह उपादाने' इत्यस्य ग्रहीति इका निर्देशः। सौत्रत्वात् 'ग्रहिज्ये'ति संप्रसारणं न। **ग्राहीति**। ग्रहधातोरदुपधाण्णिनिः। नकारादिकार उच्चारणार्थः। उपधावृद्धिः। **विशयीति**। विपूर्वात् 'शीङ् स्वप्ने' इति धातोर्णिनिः। गुणाऽयादेशौ। 'अचोऽञ्णिती'ति वृद्धिमाशङ्क्याऽऽह-**वृद्ध्यभाव इति**। **विषयीति**। 'षिञ् बन्धने' अस्मा-

---

शे.]नुम्विधायके। **क्रमेः कर्त्तरीति**।'स्नुक्रमोः' इत्यत्र वार्त्तिकम्। **अनन्यभाव इति**। अत एव भाष्ये सोपसर्गमेवोदाहृतम्। **केचिदिति**। कैयटस्वरसस्त्वत्र पक्षे दृश्यते।**तङानयोरभावमिति**।फलोपहिततङाननिमित्तत्वाऽभावं लक्षयतीत्यर्थः।**पापाचक इति**।यङ्लुकोऽत्राऽनैमित्तिकत्वात् 'नधातु' इति निषेधो न,इग्लक्षणत्वाऽभावाच्च।**मधुसूदने**-'सात्पदाद्यो'रिति षत्वनिषेधः। **स्थायीति**। आदन्तलक्षणे णे स्थायोऽपि। के प्रस्थादिरपि।**षत्वमपीति**।निपातनादित्यनुकृष्यते।

परिभावी। परिभवी। पाक्षिको वृद्ध्यभावो निपात्यते। पचादिराकृतिगणः। 'शिवशमरिष्टस्य करे' 'कर्मणि घटोऽठ'जिति सूत्रयोः करोतेर्घटेश्चाऽच्प्रयोगात् ,अच्प्रत्यये परे यङ्लुग्विधानाच्च। केषांचित्पाठस्त्वनुबन्धासञ्जनार्थः। केषांचित्प्रपञ्चार्थः। केषांचिद्बाधकबाधनार्थः। पचवीति पचः। नदट् चोरट् देवडित्यादयष्टितः। नदी। चोरी। देवी। दीव्यतेः 'इगुपधे'ति कः प्राप्तः। जारभरा। श्वपचा। अनयोः 'कर्मण्यण्' प्राप्तः। न्यङ्क्वादिषु पाठात् श्वपाकोऽपि। 'यङोऽचि चे'ति लुक्। 'न धातुलोपे' इति गुणवृद्धिनिषेधः। चेक्रियः। नेन्यः। लोलुवः। पोपुवः। मरीमृजः। ***चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाऽभ्यासस्येति वक्तव्यम्**। आ[गा]गमस्य दीर्घत्वसामर्थ्यादभ्यासह्रस्वो, हलादिः शेषश्च न। चराचरः। चलाचलः। पतापतः। वदावदः। * **हन्तेर्घत्वं च**। घत्वमभ्यासस्य, उत्तरस्य तु 'अभ्यासाच्चे'ति कुत्वम्। घनाघनः। * **पाटेर्णिलुक्चोक्च दीर्घश्चाभ्यासस्य**। पाटूपटः। पक्षे-चरः। चलः। पतः। वदः। हनः। पाटः। 'रात्रेः कृती'ति वा मुम्। रात्रिञ्चरः। रात्रिचरः।

---

त.]ति णिलोपः। **विषयीति**। षिञ् बन्धने। 'धात्वादे'रिति षस्य सत्वे 'आदेशप्रत्यययो'रिति प्राप्तस्य षत्वस्य 'सात्पदाद्यो'रिति निषेधादाह-**इह षत्वमपीति**। 'निपातना'दित्यनुषज्यते। 'परिनिविभ्यः' इति सूत्रे 'सितसये'ति क्तान्ताऽजन्तसिनोतेर्ग्रहणाण्णिन्यन्तसिनोतेर्निपातनं विना षत्वं दुर्लभमिति भावः। **जारभरेत्यादि**। जारं बिभर्ति, श्वानं पचतीति विग्रहः। **श्वपाकोऽपीति**। कर्मण्यणपि पक्षे भवतीति भावः। **चेक्रिय इति**। संयोगपूर्वत्वात् 'एरनेकाचः' इति न यण्। **लोलुव इति**। इह सुबभावात् 'ओः सुपी'ति यण्नेति 'अचि श्नुधातु' इत्युवङ्। **मरीमृज इति**। 'रीगृदुपधस्य चे'ति रीगागमः। **हलादिः शेषश्च नेति**। सति तु हलादिःशेषे आगमस्य आदेशस्य वा विशेषो नास्तीत्या-चाऽभ्यासस्येत्येव ब्रूयादिति भावः। **पाटेर्णिलुगिति**। 'णेरनिटी'ति लोपे हि प्रत्ययलक्षणन्यायेन 'पाटूपट' इत्यत्रोपधावृद्धिः

---

बा.]कृतषत्वाण्णिनिः। गुणाऽयादेशौ। नन्विह कथं न वृद्धिः,कथं च षत्वं,पदादित्वादित्यत आह-**षत्वमपीति**। निपातनाद्वृद्ध्यभावः षत्वं चेत्यर्थः। परिभावी परिभवीत्यत्र णित्वान्नित्यवृद्धिमाशङ्क्य आह-**पाक्षिक इति**। ग्रह्यादयो वृत्तौ पठिताः। **पचादिराकृतिगण इति**। पच वप इत्यादिकतिपयधातून् पठित्वा आकृतिगण इति गणपाठे वचनादिति भावः। गणपाठे आकृतिगणत्ववचनाऽभावेऽप्याह-**शिवशमिति**। सूत्रे करशब्दस्य पचादिगणेऽपठितस्य कृञोऽच्प्रत्ययान्तस्य, 'कर्मणि घट' इति सूत्रे घटेरचि घटशब्दस्य च प्रयोगदर्शनादित्यर्थः। **अच्प्रत्यय इति**। यङन्तादच्प्रत्यये परे 'यङोऽचि चे'ति यङो लुग्विधीयते। नहि पचादिगणे यङन्तं पठितमस्ति। अतोऽपि पचादेराकृतिगणत्वं विज्ञायते इत्यर्थः। पचादेराकृतिगणत्वे नदट् चोरडित्यादीनां तत्र पाठो व्यर्थ इत्यत आह-**केषांचिदिति**। टकारानुन्धासञ्जनार्थं इत्यर्थः। नन्वेवमपि वद चल इत्यादीनामनुबन्धरहितानां तत्र किमर्थः पाठ इत्यत आह-**केषांचित्प्रपञ्चार्थ इति**। **बाधकेति**। 'जारभर' 'श्वपचे'त्यादौ पचाद्यजपवादस्य कर्मण्यणो बाधनार्थं भरपचादीनां पाठ इति भाष्यम्। देवः सेव इत्यादौ 'इगुपधज्ञाप्रीकिरः कः' इति विशिष्य विहितस्य कस्य बाधनार्थं च। तदेतदुपपादयति-**नदडित्यादि**। ननु पचादिगणे श्वपचशब्दस्य बाधकबाधनार्थत्वे श्वपाक इति कथमित्यत आह-**न्यङ्क्वादिषु पाठाच्छ्वपाकोऽपीति**। कदाचिदण्प्रत्ययः, कुत्वं चेत्यर्थः। चेक्रियः, मरीमृज इत्यादौ प्रक्रियां दर्शयति-**यङोऽचि चेति**। क्रीआदिधातोरचि यङो लुगित्यर्थः। द्वित्वादौ चेक्री अ इत्यादिस्थितौ आह-**न धातुलोप इति**। **चेक्रिय इति**। गुणाऽभावे संयोगपूर्वत्वान्न यण्। **नेन्य इति**। 'एरनेकाचः' इति यण्। **लोलुव इति**। उवङ्। यण्तु न, 'ओः सुपी'त्युक्तेः। **मरीमृज इति**। अत्र 'न धातुलोपे' इति निषेधान्न मृजेर्वृद्धिः। **चरिचलीति**। एषामच्प्रत्यये परे द्वित्वम्, अभ्यासस्य आगागमश्चेत्यर्थः। ननु 'चराचर' इत्यत्राऽभ्यासे रेफादाकारस्य ह्रस्वः स्यात्, हलादिशेषेण तत्र रेफस्यापि निवृत्तिः स्यादित्यत आह-**आगागमस्येति**। ह्रस्वत्वे सत्यागागमे दीर्घोच्चारणं व्यर्थम्, आगागमस्यैव विधातुं शक्यत्वात्। तथा हलादिशेषेण रेफस्य निवृत्तौ ह्रस्वत्वेऽपि सवर्णदीर्घेण 'चाचर' इति सिद्धेर्दीर्घोच्चारणं हलादिशेषाऽभावं गमयतीत्यर्थः। **हन्तेरिति**। वार्तिकमिदम्। हनधातोरचि घत्वं द्वित्वमाक् चेत्यर्थः। ननूत्तरखण्डे 'अभ्यासाच्चे'ति कुत्वसिद्धेः किमर्थमिह घत्वविधानमित्यत आह-**घत्वमभ्यासस्येति**। 'इह विधीयते' इति शेषः। **पाटेरिति**। वार्तिकमिदम्। पाटेर्णौ पाटि इत्यस्मादचि णेर्लुक्, द्वित्वम्, अभ्यासस्य

---

शे.]**बाधकेति**।तेन मेषसेवदेवादयः सिद्धाः।**आगमस्येति**।न च दीर्घागमोच्चारणं सवर्णदीर्घबाधार्थं स्यादिति वाच्यम्, 'अनन्तरस्ये'ति न्यायेन हलादिःशेषस्यैव बाध इत्याशयात्। वस्तुतो दीर्घप्रवृत्तिकाले एव वैयर्थ्योपस्थितेस्तद्बाध एव न्याय्यः, हलादिःशेषबाधनन्तु 'अभ्यासस्याऽनचीं'ति भाष्योक्तन वचनेन साध्यम्।[अभ्यासस्य यदुच्यते तदज्निमित्ताऽभ्यासभिन्नस्येत्यर्थः]।अत एव 'लोलुवः' इत्यादौ गुणः। यद्यप्यत्र वचने 'वे'ति भाष्ये नास्ति तथापि 'रात्रिञ्चरः' इत्यादिप्रयोगदर्शनादाश्रितम्। तत्र'ट' इत्यन्ये। **घत्वञ्चेति**। चाद्द्वित्वम्,आक्च। **णिलुक्चेति**। चाद्द्वित्वम्।णिलुक्करणमवृद्धये।क्षे-आलोपः,

**इगुपधज्ञाप्रीकिरः कः** ।३।१।१३५। एभ्यः कः स्यात् । क्षिपः । लिखः । बुधः । कृशः । ज्ञः । प्रीणातीति प्रियः । किरतीति किरः। वासरूपविधिना पक्षे ण्वुल्तृचावपि। क्षेपकः। क्षेप्ता । **आतश्चोपसर्गे** ।३।१।१३६। कः स्यात् । 'श्याद्व्ये'ति णस्यापवादः । सुग्लः । प्रज्ञः । **पाघ्राध्माधेट्दृशः शः** ।३।१।१३७। पिबतीति पिबः । जिघ्रः । धमः। धयः। धया कन्या । 'धेटष्टित्वात्स्तनन्धयीति' ङीप् प्राप्तः, खशोऽन्यत्र नेष्यते' इति हरदत्तः। पश्यतीति पश्यः।* **घ्रः संज्ञायां न** । 'व्याघ्रादिभि'रिति निर्देशात् । **अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च** ।३।१।१३८। शः स्यात् । लिम्पः । विन्दः । धारयः । पारयः ।

---

त.] स्यादिति भावः । इहापि पूर्ववद्धस्वहलादिःशेषयोरभावः । **इगुपध** । इक् उपधा यस्य सः । ज्ञा अवबोधने, प्रीञ् तर्पणे, कॄ विक्षेपे। एषामितरेतरयोगद्वन्द्वे व्यत्ययेन पञ्चम्येकवचने कशब्दस्य धात्वनुकरणत्वेन 'प्रकृतिवदनुकरण'मित्यतिदेशात् 'ऋत इद्धातो'रिति इत्वम्। समाहारद्वन्द्वे तु नपुंसकह्रस्वत्वे सति इत्वं न स्यात्। **ज्ञ इति**।जानातीति ज्ञः। 'आतो लोप इटि चे'त्यालोपः । **पाघ्राध्मा** । पा पाने । पा रक्षणे इत्ययं तु न गृह्यते, लुग्विकरणत्वात् । इह सूत्रे उपसर्ग इति केचिदनुवर्तयन्ति, तद्बहूनामसंमतम् । तथा च श्रीहर्षः-'फलानि धूमस्य धयानधोमुखा'निति । श्रूयते च-'यदा पश्यः पश्यते रुक्मवर्णं'मिति । **अनुपसर्गाल्लिम्पविन्द** । इह लिम्पविन्देति भाविना नुमा सनुम्कौ निर्दिष्टौ । तेन लाभार्थस्यैव विन्देर्ग्रहणं, न तु सत्ताद्यर्थकानाम् । **धारय इति** । धृञ् धारणे, धृङ् अवस्थाने, ण्यन्तयोर्द्वयोरपि ग्रहणम् । अथ कथं 'न मद्यमन्त्रोत्तरधारयस्य ते' इति श्रीहर्षः। परत्वाद्धि सूत्रधारादिष्विव कर्मण्यणा भाव्यम् । तथाच वार्तिकम्-'अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेने'ति । सत्यम् । कर्मणः शेषत्वविवक्षायामणोऽप्राप्त्या शे कृते शेषषष्ठ्यन्तेन समासो भविष्यति । एतेन गङ्गाधरभूधरजलधरादयो व्याख्याताः। **पारय इति** । पार कर्मसमाप्तौ चुरादिण्यन्तः। पॄ पालनपूर-

---

बा.]ऊगागमः । अभ्यासस्य आकारस्य ह्रस्वे तस्य दीर्घश्चेत्यर्थः। वृद्धिनिवृत्तये णेर्लुग्विधिः । आगमे दीर्घोच्चारणाद्धलादिशेषेण टकारस्य न निवृत्तिः, हलादिशेषे तु आड्गुणे पोपट इति रूपस्य उगागमेऽपि सिद्धेः। **इगुपधज्ञा** । 'कॄ विक्षेपे' इत्यस्य इत्वे रपरत्वे च किरिति रेफान्तम् । इगुपध, ज्ञा, प्री, किर् एषां द्वन्द्वात्पञ्चमी । कित्वं गुणनिषेधार्थम् । **ज्ञ इति** । आतो लोपः । **प्रिय इति**। प्रीञ् के इयङ्। **किर इति**। कॄधातोः कप्रत्यये इत्वे रपरत्वम् । **आतश्चोपसर्गे** । **कः स्यादिति** । शेषपूरणम् । उपसर्गे उपपदे आदन्ताद्धातोः कः स्यादिति फलति । **णस्यापवाद इति** । तस्य उपसर्गेऽनुपसर्गे च आदन्तसामान्यविहितत्वादिति भावः। **सुग्ल इति**। ग्लैधातोः 'आदेच:' इत्यात्वे कृते कप्रत्यये आतो लोप इति भावः । **प्रज्ञ इति** । ज्ञाधातोरातो लोपः । **पाघ्रा** । अत्र 'लुग्विकरणाऽलुग्विकरणयोरलुग्विकरणस्य ग्रहण'मिति मत्वाऽऽह-**पिबतीति पिब इति**। पाधातोः शप्रत्यये तस्य शित्त्वेन सार्वधातुकत्वात् 'पाघ्राध्मे'ति पिबादेशः।स चाऽदन्त इत्युक्तम् । शप् । पररूपम् । **जिघ्र इति** । 'पाघ्रे'ति घ्राधातोर्जिघ्रादेशः । **धम इति** । ध्माधातोर्धमादेशः । **धय इति** । धेटः शः, शप् , अयादेशः, पररूपमिति भावः । **धया कन्येति** । अत्र धेड्धातुष्टित् । स अदन्तो न भवति, यस्त्वदन्तो धयशब्दः, स न टित् , अतोऽत्र 'टिड्ढाण'ञिति न ङीबिति भावः । **धेटष्टित्त्वादित्यारभ्य** हरदत्तमतम् । **स्तनन्धयीतीति** । स्तनशब्दे उपपदे धेड्धातोः 'नासिकास्तनयो'रिति खशि कृते 'खित्यनव्ययस्ये'ति मुमि स्तनन्धयशब्दः । तत्र खशि कृते धेटष्टित्वमाश्रित्य यथा 'टिड्ढाण'ञिति ङीप् , तथा धया कन्येत्यत्रापि ङीप् प्राप्तः, स ङीप् खशोऽन्यत्र नेष्यते इति हरदत्त आहेत्यर्थः। वस्तुतस्तु 'टिड्ढाण'ञिति सूत्रे टिदाद्यवयवाऽकारस्यैव ग्रहणमिति भाष्यविरोधादिदं चिन्त्यम् । नच टित्त्वसामर्थ्यादेव स्तनन्धयीशब्दान्ङीबिति वाच्यं, धया कन्येत्यत्रापि ङीप्प्रसङ्गात् ,खशोऽन्यत्र नेष्यते इत्यत्र प्रमाणाऽभावात्। तस्मात्स्तनन्धयीत्यप्रामाणिकमेव।तस्य प्रामाणिकत्वे गौरादित्वं कल्प्यम्, ङीष्यप्युदात्तनिवृत्तिस्वरप्राप्त्या स्वरे विशेषाऽभावादिति शब्देन्दुशेखरे स्थितम् । दृश उदाहरति-**पश्य इति** । 'पाघ्रे'ति पश्यादेशः । **घ्रः संज्ञायां नेति** । घ्राधातोः संज्ञायां शो नेत्यर्थः । कुत इत्यत आह-**व्याघ्रादिभिरिति** । अन्यथा 'व्याजिघ्रादिभि'रिति निर्दिशेदिति भावः । **अनुपसर्गात्** । **शः स्यादिति** । शेषपूरणम् । **लिम्पः विन्द इति** । 'लिप उपदेहे' 'विद्लृ लाभे' इति तुदादौ, ताभ्यां शः। 'शे मुचादीना'मिति नुम् । सूत्रे कृतनुमौ लिम्पविन्दौ निर्दिष्टौ,

---

शे.]प्रिये इयङ् । **किरे**-ऋत इत्।सूत्रे सौत्रमेकवचनम्। **प्रज्ञ इति**। परत्वादिदमेव न्याय्यमित्यभिमानः।[यद्यपीदमुपसर्गापेक्षत्वेन बहिरङ्गं, तथापि 'अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेने'ति भाष्योक्तेरत्राऽनित्यतया तदप्रवृत्तिरिति तात्पर्यम् ]। **पाघ्रा** । अत्राऽलुग्विकरणत्वात्पिबतेरेव ग्रहणम्। **हरदत्त इति** । अत्राऽरुचिबीजन्तु भाष्याऽननुग्रहः। 'टिड्ढे'ति सूत्रे प्रत्यासत्त्या टिदाद्यवयवाऽकारस्यैव ग्रहणौचित्यात् । टित्त्वसामर्थ्यादिति चेत्,धयेत्यत्राप्यापत्तिः। तस्मात् 'स्तनन्धयी'त्यस्य प्रामाणिकत्वे गौरादित्वं बोध्यं, ङीष्यप्युदात्तनिवृत्तिस्वरप्राप्त्या स्वरे विशेषाऽभावादित्याहुः । **लिम्पो विन्द**

वेदयः। उद्वेजयः। चेतयः। **सातिः सुखार्थः सौत्रो हेतुमण्ण्यन्तः।** सातयः। वाऽसरूपन्यायेन क्विपि सात् परमात्मा। सात्वन्तो भक्ताः। 'षह मर्षणे' चुरादिः, हेतुमण्ण्यन्तो वा। साहयः। अनुपसर्गात्किम्?। प्रलिपः। *** नौ लिम्पेर्वाच्यः।** निलिम्पा देवाः। *** गवादिषु विन्देः संज्ञायाम्।** गोविन्दः। अरविन्दम्। **ददातिदधात्योर्विभाषा** ।३।१।१३९। शः स्यात्। ददः। दधः। पक्षे वक्ष्यमाणो णः। अनुपसर्गादित्येव। प्रदः। प्रधः। **ज्वलितिकसन्तेभ्यो णः** ।३।१।१४०। इतिशब्द आद्यर्थः। ज्वलादिभ्यः कसन्तेभ्यो णः स्याद्वा। पक्षेऽच्। ज्वालः। ज्वलः। चालः। चलः। अनुपसर्गादित्येव। उज्ज्वलः। *** तनोतेरुपसङ्ख्यानम्।** इहाऽनुपसर्गादिति, विभाषेति च न संबध्यते। अवतनोतीत्यवतानः। **श्याद्व्यधास्रुसंस्र्वतीणवसावहलिहश्लिषश्वसश्च** ।३।१।१४१। श्यैङ्प्रभृतिभ्यो नित्यं णः स्यात्। श्यैङोऽवस्यतेश्चाऽऽदन्तत्वात्सिद्धे पृथग्ग्रहण-

---

त.]णयोरिति वा हेतुमण्ण्यन्तः। **वेदय इति।** विद चेतनाख्याननिवासेषु चुरादिः, ज्ञानाद्यर्थानामन्यतमो वा हेतुमण्ण्यन्तः। इहोदाहरणेषु लिपिविदिभ्यां 'तुदादिभ्यः शः'। 'शे मुचादीना'मिति नुम्। धार्यादिभ्यस्तु शप्, गुणायाऽऽदेशौ। **अरविन्दमिति।** चक्रस्य नाभिनेम्योरन्तराले स्थितानि काष्ठानि अराः, तदाकाराणि दलानि तत्सादृश्यादराः, तान् विन्दति लभते इत्यर्थे कर्मण्यणो बाधनार्थेदम्। **ददातिदधात्योर्विभाषा। ददः दध इति।** शे परे 'जुहोत्यादिभ्य' इति श्लुः, 'श्लौ' इति द्वित्वम्। अपित्सार्वधातुकस्य शस्य ङित्वात् 'आतो लोपः' इत्यालोपः। **वक्ष्यमाणो ण इति।** 'श्याद्व्यधे'ति णप्रत्यये आतो युक्ति-दायः धायः। **प्रदः प्रध इति।** 'आतश्चोपसर्गे' इति कः। स्यादेतत्-दद दाने, दध धारणे, आभ्यामचि ददो दध इति सिद्धम्, दाधाभ्यामादन्तलक्षणे णप्रत्यये दायो धाय इत्यपि, ततश्चेदं सूत्रं व्यर्थमिति चेत्। सत्यम्। स्वरार्थमिदं सूत्रम्। अददः। अदधः। इह हि अव्ययपूर्वपदप्रकृतिस्वर इष्यते। अजन्तत्वे तु 'अचकावशक्ता'वित्यन्तोदात्तत्वं स्यात्। **इतिशब्द आद्यर्थ इति।** निपातानामनेकार्थत्वादिति भावः। **श्याद्व्यधा।** अनुपसर्गादिति निवृत्तम्, उत्तरसूत्रे पुनरनुपसर्गग्रहणात्। एवं च तत्सम्बद्धं विभाषाग्रहणमपि निवृत्तं। तदाह-**नित्यमिति।**

---

बा.]अतस्तौदादिकयोरेव ग्रहणम्। **धारय इति।** 'धृञ् धारणे' 'धृङ् अवस्थाने' आभ्यां हेतुमण्ण्यन्ताभ्यां शः, शप्, गुणाऽयादेशौ। **पारय इति।** पृधातोर्ण्यन्ताच्छः, शप्, गुणाऽयादेशौ। विद वेदनाख्यादिषु, चुरादिण्यन्ताच्छः, शप् गुणाऽयादेशौ। **उद्वेजय इति।** उत्पूर्वादेजधातोर्ण्यन्ताच्छः, शप्, गुणाऽयादेशौ। **चेतय इति।** 'चिती संज्ञाने' ण्यन्ताच्छः, शप्, गुणाऽयादेशौ। एवं सातयः। सादिति रूपं साधयितुमाह-**वाऽसरूपन्यायेन क्विबिति।** सातयति सुखयतीत्यर्थे क्विप्। णिलोपः। यद्यपि क्विप् सामान्यविहितः सातेः शप्रत्ययस्तु तदपवादः, तथापि वासरूपविधिना क्विबपि भवतीत्यर्थः। **सात्परमात्मेति।** 'एष ह्येवानन्दयाती'ति श्रुतेः तस्य सुखयितृत्वावगमादिति भावः। **सात्वन्त इति।** **सात्**=परमात्मा भजनीय एषामित्यर्थे मतुप्। 'मादुपधायाः' इति मस्य वः। 'तसौ मत्वर्थे' इति भत्वात्पदत्वाऽभावान्न जश्त्वम्। **साहय इति।** साहेः शः। शप्। गुणाऽयादेशौ। **प्रलिप इति।** इगुपधलक्षणः कः।

**नौ लिम्पेरिति।** वार्तिकमिदम्। 'नी'त्युपसर्गे उपपदे लिम्पेः शो वाच्य इत्यर्थः। 'अनुपसर्गा'दित्युक्तेः पूर्वेणाऽप्राप्तौ वचनम्। **गवादिष्विति।** वार्तिकमिदम्। गवादिषु उपपदेषु विन्देः शो वाच्य इत्यर्थः। 'संज्ञायामेवे'ति नियमार्थमिदम्। **गोविन्द इति।** गाः=उपनिषद्वाचः प्रमाणतया विन्दतीत्यर्थः। **अरविन्दमिति।** चक्रे नाभिनेम्योरन्तरालप्रोतानि काष्ठानि अराणि, तत्सदृशानि दलानि विन्दतीत्यर्थः। कर्मण्यणोऽपवादः शः। **ददातिदधात्योर्विभाषा।** दाञ्, धाञ् आभ्यां शो वा स्यात्। **ददः दध इति।** शः, शप्, श्लुः। 'श्लौ' इति द्वित्वम्। आतो लोपः। **वक्ष्यमाण इति।** 'श्याद्व्यधे'त्यनेनेति भावः। **प्रदः प्रध इति।** 'आतश्चोपसर्गे' इति कः। **ज्वलिति। आद्यर्थ इति।** तथा च ज्वल् इति=आदिर्येषां ते ज्वलितयः, ते च ते कसन्ताश्चेति ज्वलितिकसन्ताः, तेभ्य इति विग्रहः। तदाह-**ज्वलादिभ्य इति।** 'ज्वल दीप्तौ' इत्यारभ्य 'कस गतौ' इत्येवमन्तेभ्य इत्यर्थः। **वा णः स्यादिति।** विभाषेत्यनुवर्तते इति भावः। **पक्षेऽजिति।** 'इगुपधेभ्यः कः' इत्यपि बोध्यम्। **उपसङ्ख्यानमिति।** 'णस्ये'ति शेषः। **न संबध्यते इति।** 'अवतानः' इत्येव भाष्ये उदाहरणादिति भावः। **श्याद्व्यधास्रु।** श्या, आत्, व्यध, आस्रु, संस्रु, अतीण्, अवसा, अवह्, लिह्, श्लिष, श्वस् एषामेकादशानां समाहारद्वन्द्वात्पञ्चमी। अनुपसर्गादिति निवृत्तम्, उत्तरसूत्रेऽनुपसर्गग्रहणात्। एवंच तत्सम्बद्धं विभाषाग्रहणं च नानुवर्तते। तदाह-**नित्यमिति।**

---

शे.]इति। 'शे मुचादीना'मिति नुम्। **धारयादयो** हेतुमण्ण्यन्तास्तेभ्यः शे शपि गुणाऽयादेशौ। **अरविन्दमिति।** भाष्ये 'अरविन्दः' इति पुँल्लिङ्गं दृश्यते। **पक्षेऽजिति।** इदमुपलक्षणम्,-'इगुपधेभ्यः कः' इत्यस्य। **इहेति।** 'अवतानः' इति भाष्योदाहरणादिति भावः। **श्याद्व्यधा।** 'श्या-आ'दिति छेदो, व्याख्यानात्। **तेन जलचरे इति।** इदं

मुपसर्गे कं बाधितुम् । अवश्यायः । प्रतिश्यायः । आत्-दायः । धायः । व्याधः । स्रु गतौ आङ्पूर्वः संपूर्वश्च । आस्रावः । संस्रावः । अत्यायः । अवसायः । अवहारः । लेहः । श्लेषः । श्वासः । दुन्योरनुपसर्गे ।३।१।१४२। णः स्यात् । दुनोतीति दावः । नीसाहचर्यात्सानुबन्धकादुनोतेरेव णः । दवतेस्तु पचाद्यच् । दवः । नयतीति नायः । उपसर्गे तु-प्रदवः । प्रणयः । विभाषा ग्रहः ।३।१।१४३। णो वा । पक्षेऽच् । व्यवस्थितविभाषेयम् । तेन जलचरे ग्राहः, ज्योतिषि ग्रहः । भवतेश्चेति काशिका । भवो देवः, संसारश्च । भावाः पदार्थाः । भाष्यमते तु प्राप्त्यर्थाच्चुरादिण्यन्तादच् । भावः । गेहे कः ।३।१।१४४। गेहे कर्तरि ग्रहेः कः स्यात् । गृह्णाति धान्यादिकमिति गृहम् । तात्स्थ्याद्गृहा दाराः । शिल्पिनि ष्वुन् ।३।१।१४५। क्रियाकौशलं

त.]इह सूत्रे श्यैङ् गतावित्यस्य आत्वे श्या आदिति प्रश्लेषो, न तु शीङो यणादेशेन, नाप्यततेः,अच्छब्दान्तानां वा यतिप्रभृतीनां, नाप्यकारान्तानां वा प्रश्लेषेण ग्रहणं, व्याख्यानादिति भावः । कं बाधितुमिति । अन्यथा 'आतश्चोपसर्गे' इति विशेषविहितः कः सामान्यविहितस्य णस्य बाधकः स्यादित्यर्थः । स्रु गतौ । प्राचा तु सूत्रे आश्रु संश्रु इति तालव्यं पठित्वा शृणोतिरुदाहृतस्तदनाकरम् । तथा च प्रयुज्यते-'अनाश्रवा वः किमहं कदापि वक्तुं विशेषः परमस्ति शेषः' इति नैषधादौ । अमरोऽप्याह-'वचने स्थित आश्रवः' इति । यदि तु सूत्रे अस्मिन् शृणोतेर्ग्रहणं स्यात्तर्हि 'ऋदोरप्' इति सामान्यविहितमपं बाधित्वा आङ्पूर्वकाच्छृणोतेर्विशेषविहितो ण एव स्यात्, तथा च 'आश्रव' इति रूपं न स्यात्, किंत्वाश्राव इति स्यादिति दिक् । लेहः श्लेष इति । 'इगुपधे'ति कप्रत्यये गुणो न स्यादिति भावः । दुनोतेरिति । टुदु उपतापे इत्यस्मात् । दवतेरिति । दु गतावित्यस्मात् । दव इति । 'दवदावौ वनारण्यवह्नी' इत्यमरः । काशिकेति । भाष्ये त्वेतद्वार्तिकं नास्तीति तन्मते भावशब्दोऽसाधुरित्यत आह-भाष्यमते त्विति । गेहे कः । गेह इति प्रत्ययार्थस्य कर्तुर्विशेषणं, नोपपदम्, 'गृहपतिना संयुक्ते ञ्यः' इति निर्देशादित्यभिप्रेत्याह-गेहे कर्तरीति । एतत्सूत्रं तु शक्यमकर्तुम् । गृहू ग्रहणे इति भ्वादेरिगुपधलक्षणे कप्रत्यये कृते गृहशब्दस्य सिद्धेः । तात्स्थ्यादिति । भवति हि तात्स्थ्यात्ताच्छब्द्यम् । 'मञ्चाः क्रोशन्ती'त्यादौ मञ्चशब्देन पुरुषा अपि व्यपदिश्यन्ते । एवं च गृहशब्दो वेश्मनि मुख्यो, दारेषु त्वौपचारिक इत्यर्थः । अत्रेदमवधेयम्-गृहशब्दोऽयमर्द्धर्चादित्वादुभयलिङ्गः । तत्र नपुंसकलिङ्गोऽभिधेयवचनः, पुँल्लिङ्गस्तु बहुवचनान्त एव । 'गृहाः पुंसि च भूम्न्येवे'त्यमरोक्तेरिति । शिल्पिनि ष्वुन् । पूर्वेण साहचर्याच्छिल्पिनीत्यपि प्रत्यया-

बा.]श्यैङ इति । श्यैङ्धातोरवपूर्वकस्य षोधातोश्च कृतात्त्वयोः सूत्रे निर्देशः । तयोरादन्तत्वादेव सिद्धे पुनर्ग्रहणम् 'आतश्चोपसर्गे' इति कप्रत्ययबाधनार्थमित्यर्थः । अवश्यायः प्रतिश्याय इति । श्यैङ आत्वे कृते णः । आतो युक् । आदिति । आदन्तस्योदाहरणसूचनम् । दायः धाय इति । णे आतो युक् । व्याध इति । व्यधेर्णे उपधावृद्धिः । आस्रावः, संस्राव इति । णे 'अचोऽञ्णिती'ति वृद्धिः, आवादेशः । अत्याय इति । अतिपूर्वादिण्धातोर्णे वृद्ध्यायादेशौ । अवसाय इति । अवपूर्वात् 'षोऽन्तकर्मणि' इत्यस्माण्णे आतो युक् । लेहः श्लेष इति । णे लघूपधगुणः । श्वास इति । णे उपधावृद्धिः । दुन्योरनुपसर्गे । दुनोतेर्नयतेश्चेत्यर्थः । 'दव' शब्दं साधयितुमाह-नीसाहचर्यादिति । नीञ्धातुः सानुबन्धकः, तत्साहचर्यात् 'टु दु उपतापे' इति स्वादिगणस्थादेव णप्रत्यय इत्यर्थः । दवतेस्त्विति । 'दु द्रु गतौ' इति भौवादिकान्निरनुबन्धकात्पचाद्यजित्यर्थः । विभाषा ग्रहः । व्यवस्थितविभाषेयमिति । इदं 'शाच्छो'रिति सूत्रे भाष्ये स्पष्टम् । तेनेति । जलचरे मत्स्यादौ वाच्ये णप्रत्यये उपधावृद्धौ 'ग्राह' इत्येव भवति, ज्योतिषि सूर्यचन्द्रादौ वाच्ये अच्प्रत्यये 'ग्रह' इत्येव भवतीत्यर्थः । भवतेश्चेति । 'णो वे'ति शेषः । पक्षे अच् । काशिकेति । भाष्ये तु न दृश्यते इति भावः । इयमपि व्यवस्थितविभाषैव । तदाह-भवो देव इति । महादेव इत्यर्थः । अत्र अजेवेति भावः । भावाः पदार्था इति । अत्र ण एवेति भावः । ननु 'भवतेश्चे'ति णविकल्पस्य भाष्ये अदर्शनात् कथं भाष्यमते भावशब्द इत्यत आह-भाष्यमते त्विति । भावयति प्रापयति स्वस्वकार्यमित्यर्थे 'भू प्राप्तौ' इति चुरादिण्यन्ताद्भावीत्यस्मादच्प्रत्यये णिलोपे भावशब्द इत्यर्थः । गेहे कः । 'विभाषा ग्रहः' इत्यस्यापवादः । गृहमिति । 'ग्रहिज्ये'ति संप्रसारणं, पूर्वरूपं च । ननु 'गृहा दारा' इति कथम्, गेहे कर्तर्येव वाच्ये कप्रत्ययविधानादित्यत आह-तात्स्थ्यादिति । गृहशब्दो गेहस्थे लाक्षणिक इति भावः । गृहा दारा इति । 'दारेष्वपि गृहाः'

शे ]'शाच्छो'रित्यत्र भाष्ये स्पष्टम् । गेहे कः । यत्तु 'गृह ग्रहणे' इति चुरादेरदन्तात्णिचि पचाद्यचि, भ्वादेर्वा 'गृहू'-धातोरिगुपधलक्षणे के गृहं सिद्धं, रूढिस्वीकाराच्च नाऽतिप्रसङ्गस्तस्थेषु दारेष्विव इतीदं सूत्रं शक्यमकर्तुमिति, तन्न, तौ धातू छान्दसाविति सूत्राशयात् । धातुषु पाठार्थादावागमभ्रंशस्य क्षीरस्वामिनोक्तत्वेन सूत्रपाठे च तद्ग्रंशाभावेनैवमवौचित्यात् । उच्छृङ्खलास्तु-तयोर्धात्वोरप्रामाणिकः पाठः । वेदे तत्साध्यप्रयोगो यदि भवेत्स वर्णव्यत्ययादिना ग्रहेरेव

शिल्पं, तद्वति कर्तरि ष्वुन् स्यात् । * **नृतिखनिरञ्जिभ्य एव** । नर्तकः। नर्तकी । खनकः। खनकी । ***असि अकेऽने च रञ्जेर्नलोपो वाच्यः** । रजकः । रजकी । भाष्यमते तु नृतिखनिभ्यामेव ष्वुन् । रञ्जेस्तु 'कुन् शिल्पिसंज्ञयो'रिति कुन् । टाप् । रजिका । पुंयोगे तु रजकी । **गस्थकन्** ।३।१।१४६। गायतेस्थकन् स्यात् शिल्पिनि कर्तरि। गाथकः। **ण्युट् च** ।३।१।१४७। गायनः। टित्त्वाद्गायनी। **हश्च व्रीहिकालयोः** ।३।१।१४८। हाको हाङश्च ण्युट् स्याद्व्रीहौ काले च कर्तरि । जहात्युदकमिति हायनो व्रीहिः । जहाति भावानिति हायनो वर्षम् । जिहीते प्राप्नोति वा । **प्रुसृल्वः समभिहारे वुन्** ।३।१।१४९। समभिहारग्रहणेन साधुकारित्वं लक्ष्यते । प्रवकः । सरकः । लवकः । **आशिषि च** ।३।१।१५०। आशीर्विषयार्थवृत्तेर्धातोर्वुन् स्यात्कर्तरि । जीवतात्-[इति] जीवकः। नन्दतात्-[इति]नन्दकः। आशीः प्रयोक्तुर्धर्मः। आशासितुः पित्रादेरियमुक्तिः। **कर्मण्यण्** ।३।२।१ कर्मण्युपपदे धातोरण्प्रत्ययः स्यात् । उपपदसमासः । कुम्भं करोतीति कुम्भकारः । आदित्यं पश्यती-

---

त.]र्थस्य विशेषणं न तूपपदमित्याह-**तद्वति कर्तरीति** । **भाष्यमते त्विति** । तथा च षष्ठे 'रजकरजनरजःसूपसङ्ख्यान'मिति वार्तिकं प्रत्याख्यातुं भाष्यकृतोक्तम्-'रजकरजनरजःसु कित्त्वात्सिद्धं। कित एवैते औणादिका' इति।तत्र कैयट आह-''**रजक इति**।'कुन् शिल्पी'ति कुन्। **रजनमिति**।'रञ्जेः क्यु'न्निति क्युन्। **रज इति**। 'भूरञ्जिभ्यां कि'दित्यसुन् प्रत्यय'' इत्यादि । **गस्थकन्** । गामादाग्रहणेष्वविशेषेऽपि गै शब्द इत्ययमेवेह गृह्यते न तु गाङ् गताविति, थकन् प्रत्ययो हि गायत्यर्थविषयमेव शिल्पिनमभिधातुं समर्थ इत्याशयेनाह-**गायतेरिति** । **ण्युट् च** । योगविभाग उत्तरत्र अस्यैवाऽनुवृत्त्यर्थः। **गायन इति** । 'आतो युक्'। **जहात्युदकमिति** । उदकादधिक[म्]वर्द्धनात् । **भावानिति** । भावाः पदार्थाः, तान् जिहीते इति । ओहाङ् गतौ । 'भृञामि'दित्यभ्यासस्येत्वम् । **प्रुसृल्वः** । पञ्चमीस्थाने व्यत्ययेन जस् । 'ओः सुपी'ति यण् । **लक्ष्यत इति** । भूयःसहचारात् । यो हि यां क्रियां पुनःपुनरनुभवति स तत्र प्रायेण कौशलं लभते, तेन सकृदपि यः सुष्ठु करोति तत्र वुन्, यस्तु बहुशोऽपि दुष्टं करोति तत्र नेति भावः। **आशिषि च** । अप्राप्तप्रार्थनमाशीः । सा च प्रयोक्तृधर्मो न प्रत्ययार्थः, 'कर्तरि कृ'दिति कर्त्रर्थे विधानादित्याशयेनाह-**आशीर्विषयार्थेत्यादिना** । **जीवतादिति** । जीवनं तव भूयादित्यर्थः । **जीवक इति** । स्त्रियां तु टापि 'आशिषि वुनश्च ने'ति निषेधात् 'प्रत्ययस्था'दिति इत्त्वाऽभावः । जीवका । **कर्मण्यण्** । **उपपदसमास इति** । 'तत्रोपपद'मिति कर्मादिवाच्यकुम्भादिवाचकपदस्योपपदसंज्ञायाम् 'उपपद[मति'ङिति]समास इत्यर्थः। **कुम्भकार इति**। अणि कृते 'कर्तृकर्मणोः

---

बा.]इत्यमरः । **शिल्पिनि ष्वुन्** । **नृतिखनिरञ्जिभ्य एवेति** । वार्तिकमिदम् । **नर्तकीति** । षित्त्वान्ङीषिति भावः । 'दंशसञ्जस्वञ्जां शपी'ति सूत्रे 'रजकरजनरजःसूपसङ्ख्यान'मिति वार्तिकम् । तदर्थतः सङ्गृह्णाति—**असि अके अने चेति** । **रजक इति** । रञ्जेः शिल्पिनि ष्वुनि अकादेशे नलोपः । **रजकीति** । षित्त्वान्ङीष् । 'नृतिखनिरञ्जिभ्य एवे'ति परिगणनात् 'वेञ् तन्तुसन्ताने' इत्यस्मात् कृतात्वात् 'श्याद्व्यधे'ति णप्रत्यये आतो युक्ति'वाय' इति सिध्यति । **भाष्यमते तु नृतिखनिभ्यामेवेति** । इदं च 'दंशसञ्जस्वञ्जां शपी'ति सूत्रे भाष्ये स्पष्टम् । ननु भाष्यमते कुनि 'रजकी'ति कथमित्यत आह-**पुंयोगे तु रजकीति** । **गस्थकन्** । 'गः-थक'न्निति च्छेदः । गैधातोः कृतात्वस्य 'ग' इति पञ्चम्यन्तम् । तदाह-**गायतेरिति** । **ण्युट् च** । चकार उक्तसमुच्चये । गायतेर्ण्युट् , थकन् च शिल्पिनि कर्तरि । **गायन इति** । आत्वे युक् । 'आदेचः' इत्यात्वस्य अनैमित्तिकत्वेन वृद्ध्यपेक्षया अन्तरङ्गत्वात् । यद्यपि 'गस्थकन्-ण्युट् चे'त्येकमेव सूत्रमुचितम् , तथापि ण्युट एवोत्तरसूत्रे अनुवृत्त्यर्थो योगविभागः । **हश्च** । 'ओ हाक् त्यागे' इत्यस्य, 'ओ हाङ् गतौ' इत्यस्य च 'ह' इति पञ्चम्यन्तम् । तदाह-**हाको हाङश्चेति** । **प्रुसृल्वः** । **लक्ष्यते इति** । एतच्च भाष्ये स्पष्टम् । प्रु, सृ, लू एषां समाहारद्वन्द्वात्पञ्चमी । **आशिषि च** । **जीवक इति** । आशास्यमानजीवनक्रियाश्रय इत्यर्थः । एवं नन्दकः । **आशीरिति** । **आशासनम्**=अयमित्थं भूयादिति प्रार्थनं, शब्दप्रयोक्तृकर्तृकमिति यावत् । तत आशासितुः पित्रादेरियमुक्तिः । **इयं**=नन्दकशब्दप्रयोगः । औचित्यादिति भावः । [इति तृतीयाध्यायस्य प्रथमः पादः] । अथ तृतीयाध्यायस्य द्वितीयः पादः। **कर्मण्यण्** । **कर्मण्युपपदे इति**। 'तत्रोपपदं सप्तमीस्थ'मित्यत्र 'तत्रे'त्यनेनेदं लभ्यत इति तत्रैवोक्तम् । प्रत्ययस्तु कर्तर्येव । **उपपदसमास इति** । 'उपपदमति'ङित्यनेनेति भावः । **कुम्भं करोतीति** । अस्वपदो लौकिकविग्रहोऽयम् । कुम्भ अस् कार इत्यलौकिकविग्रह-

---

शे.]साध्य इत्याहुः। अत एव भाष्यवार्तिककाराभ्यां नेदं प्रत्याख्यातम्। **नृतिखनीति**-वार्तिकम्। **एवेति** । तेन वेञो वायकः सिद्धः । **रञ्जेस्त्विति** । इदम् 'अनिदिता'मिति सूत्रे भाष्ये स्पष्टम् । ननु भाष्यमते 'रजकी'ति न स्यादत आह-**पुंयोगे त्विति** । तत्रैवेत्यर्थः । 'रजनी'त्यत्र तु गौरादित्वान्ङीषित्याहुः । **नन्दक इति** । आशास्यमाननन्दन-

त्यादावनभिधानान्न । * **शीलिकामिभक्ष्याचरिभ्यो णः** । अणोऽपवादार्थं वार्तिकम् । मांसशीला । मांसकामा । मांसभक्षा । कल्याणाचारा । * **ईक्षिक्षमिभ्यां च** । सुखप्रतीक्षा । बहुक्षमा । कथं तर्हि गङ्गाधरभूधरादयः ?। कर्मणः शेषत्वविवक्षायां भविष्यन्ति । **ह्वावामश्च** ।३।२।२। अण् स्यात् । कापवादः। स्वर्गह्वायः। तन्तुवायः । धान्यमायः । **आतोऽनुपसर्गे कः** ।३।२।३। आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यात्नाऽण् । आतो लोपः । गोदः । पार्ष्णित्रम् । अनुपसर्गे किम् ? । गोसंदायः । * **कविधौ सर्वत्र प्रसारणिभ्यो ड़ः** । ब्रह्म जिनाति ब्रह्मज्यः । 'सर्वत्र'ग्रहणात् '**आतश्चोपसर्गे**' । आह्वः । प्रह्वः । **सुपि स्थः** ।३।२।४।

त.]कृति' इति षष्ठ्यन्तस्य कुम्भशब्दस्य कारशब्देन समासः। **शेषत्वविवक्षायामिति** । पदसंस्कारपक्षे तु धरतीति धरः, गङ्गाया धर इति कर्मणि या षष्ठी तदन्तेन समास इति सुवचम् । स्यादेतत्—धातोर्विधीयमानस्याऽणादेः पदविधित्वाऽभावेन समर्थपरिभाषाया अनुपस्थानात्पश्यति कुम्भं, करोति कटमित्यादावसमर्थादपि धातोरणादयः स्युरिति चेत् । अत्राहुः— कुम्भाद्युपपदे विधीयमानस्याऽणादेरपि पदाश्रितविधित्वात्समर्थपरिभाषोपस्थानान्नोक्तदोषः । उपोच्चारितं पदं ह्युपपदं, पदं च सुप्तिङन्तमिति प्रागेवोक्तत्वादिति । **ह्वावामश्च** । **कापवाद इति** । 'आतोऽनुपसर्गे'इति प्राप्तिर्बोध्या । **स्वर्गह्वाय इत्यादि** । ह्वेञ्वेञोः 'आदेच' इत्यात्वे 'आतो यु'गिति युक् । माङ् माने, मेङ् प्रणिदाने अनयोरिह ग्रहणं, न तु मा माने इत्यस्य, अकर्मकत्वात् । कविधानस्य फलमाह–**आतो लोप इति** । **पार्ष्णित्रमिति** । पार्ष्णिं त्रायत इति ।त्रैङ् पालने । **गोसंदाय इति** । अण् । युक् । **प्रसारणिभ्य इति** । प्रसारणमिति संप्रसारणपर्यायः । **जिनातीति** । ज्या वयोहानौ । 'क्र्यादिभ्य' इति श्नाप्रत्यये 'ग्रहिज्ये'ति संप्रसारणे पूर्वरूपे 'हलः' इति दीर्घे च कृते 'प्वादीना'मिति ह्रस्वः । **ब्रह्मज्य इति** । डित्वसामर्थ्यादभस्यापि टेर्लोपः । पूर्वेण के हि सति किस्वा-

बा.]वाक्ये सुबुत्पत्तेः प्रागेव कारशब्देन कृदन्तेन कुम्भ अस् इति षष्ठ्यन्तस्य समास इति प्रागेवोक्तम्।ननु आदित्यं पश्यतीत्यादित्यदर्शः, हिमवन्तं शृणोतीति हिमवच्छ्रवः, ग्रामं गच्छतीति ग्रामगाम इत्यादि स्यादित्यत आह–**आदित्यं पश्यतीत्यादावनभिधानान्नेति** । एतच्च भाष्ये स्पष्टम् । **शीलीति**। शीलि, कामि,भक्षि, आचरि एभ्यो णप्रत्ययो वाच्य इत्यर्थः।ननु 'कर्मण्य'णित्यणैव सिद्धे किमर्थमिदमित्यत आह–**अणोऽपवादार्थमिति**।अणन्तत्वे तु ङीप् स्यात् , तन्निवृत्त्यर्थं णविधानमिति भावः। तदाह–**मांसशीलेति** ।'शील समाधौ' इति भ्वादिः।इह तु स्वभावतः सेवने वर्तते । मांसं स्वभावतः सेवमानेत्यर्थः। **मांसकामेति**। मांसं कामयते इति विग्रहः। **मांसभक्षेति**। मांसं भक्षयते इति विग्रहः। **कल्याणाचारेति**। कल्याणमाचरतीति विग्रहः। सर्वत्र टाप् । **ईक्षिक्षमिभ्यामिति**। वार्तिकमिदम् । 'ण' इति शेषः। **कथमिति**। कर्मण्यणि गङ्गाधार इत्यादि स्यादित्याक्षेपः। **कर्मणः शेषत्वेति**। तथाच कर्मोपपदाऽभावान्नाऽणिति भावः। **ह्वावामश्च**। 'ह्वेञ् स्पर्धायाम्' 'वेञ् तन्तुसन्ताने' अनयोः कृतात्वयोर्निर्देशः, 'माङ् माने' एषां द्वन्द्वात्पञ्चम्येकवचनम्। **एभ्य इति** । कर्मण्युपपदे एभ्योऽण् स्यादित्यर्थः । ननु 'कर्मण्य'णित्येव सिद्धे किमर्थमिदमित्यत आह–**कापवाद इति** । 'आतोऽनुपसर्गे कः' इत्यस्याऽणपवादस्य वक्ष्यमाणस्य बाधनार्थमित्यर्थः । माङ्मेङोरिह ग्रहणं, नतु 'मा माने' इत्यस्य, अकर्मकत्वात् । **स्वर्गह्वाय इति**।यद्यपि पराभिभवेच्छायां स्पर्धायां पराभिभवस्य कर्मणो धात्वर्थत्वेनोपसङ्ग्रहादकर्मक इत्युक्तम् , तथापि इहाऽभिभवेच्छा धात्वर्थः । स्वर्गमभिभवितुं वाञ्छतीत्यर्थः । अन्तरङ्गत्वादात्वे कृते आतो युक् । एवमग्रेऽपि । **आतोऽनुपसर्गे कः** । **पार्ष्णित्रमिति** । **पार्ष्णिः**–पादमूलभागः । तं त्रायते इति विग्रहः । 'त्रैङ् पालने' आत्वे कृते कः । **गोसंदाय इति** । अणि–आतो युक् । **कविधौ सर्वत्रेति** । वार्तिकमिदम् । सर्वत्र कप्रत्ययविधौ संप्रसारणार्हेभ्यः कापवादो डप्रत्ययो वाच्य इत्यर्थः । **ब्रह्मज्य इति**। 'ज्या वयोहानौ' अस्माड्डः । डित्वसामर्थ्यादभस्यापि टेर्लोपः । अत्र कप्रत्यये सति कित्त्वात् 'ग्रहिज्ये'ति संप्रसारणं प्रसक्तम् , अतो ड एव, नतु कः ।

शे.]क्रियाकर्त्रेत्यर्थः। **कर्मणः शेषत्वेति** । ओदनपचादयस्तु यदि नेष्यन्तर्ह्यनभिधानेन वारणीयाः। **ह्वा** । ह्वेञ्साहचर्यात्सानुबन्धकस्य वेञ एव ग्रहणम्। **आतोऽनुपस**। उपसर्गाऽभावे सतीत्यर्थः। तत्फलितमाह–**अनुपसर्गादिति । गोसन्दाय इति** । 'सत्सू' इति सूत्रे उपसर्गेऽपीत्यनेनाऽत्र प्रकरणे सुप्पदेनोपसर्गाऽग्रहणबोधनान्न 'सुपी'ति कः। 'आतोऽनुपे'ति सूत्रारम्भसामर्थ्येन तस्य कर्मण्युपपदेऽप्रवृत्तेर्वा । अत्रोपसर्गाणामव्यवहितप्रयोगाद्विशिष्टक्रियायां कर्मकारकान्वयाच्च गतिसमासगर्भोपपदसमासः । अत्र कर्माद्युपपदे बुद्धिस्थे एव प्रत्ययः । एतेन कुम्भं करोतीति द्वितीयान्तस्योपपदत्वे कुम्भ असित्यस्यानुपपदत्वेन तेन समास इति सिद्धान्ताऽसङ्गतिः, अणुत्पत्तेः प्राक् षष्ठ्यभावेन षष्ठ्यन्तस्याऽनुपपदत्वात् । किञ्चोपसर्गसंबन्धात्पूर्वं कारकवाचिभिन्नपदाऽसम्बन्धेन, साधनकार्यात्पूर्वमुपसर्गसम्बन्धेन च 'प्रे दाज्ञः' इत्यादेरसङ्गतिरित्यपास्तम्। **आह्व इति** । न चात्र केऽप्यालोपं बाधित्वा नित्यत्वात् संप्रसारणे ततो 'वार्णा'दिति न्यायेन पूर्वत्वं बाधित्वा

'सुपी'ति योगो विभज्यते। सुपि उपपदे आदन्तात्कः स्यात्। द्वाभ्यां पिबतीति द्विपः। समस्थः। विषमस्थः। ततः-स्थः। सुपि तिष्ठतेः कः स्यात्। आरम्भसामर्थ्याद्भावे। आखूनामुत्थानमाखूत्थः। **प्रष्ठोऽग्रगामिनि** ।८।३।९२। प्रतिष्ठत-इति प्रष्ठो गौः। अग्रतो गच्छतीत्यर्थः। अग्रेति किम्? प्रस्थः। **अम्बाम्बगोभूमिसव्याऽपद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः** ।८।३।९७। 'स्थ'इति कप्रत्ययान्तस्यानुकरणम्। षष्ठ्यर्थे प्रथमा। एभ्यः स्थस्य सस्य षः स्यात्। द्विष्ठः। त्रिष्ठः। इत ऊर्ध्वं कर्मणि, सुपीति द्वयमप्यनु-

---

त.]त्संप्रसारणादौ च 'ब्रह्मजिय' इति स्यात्। **आह्वः प्रह्व इति।** के हि सति 'वचिस्वपी'त्यादिना ह्वेञः संप्रसारणे सति आहुवः प्रहुव इति स्यादिति बोध्यम्। **सुपि स्थः।** 'सु'बिति प्रत्याहारो गृह्यते; न तु सप्तमीबहुवचनम्, कृत्रिमाऽकृत्रिमयोः कृत्रिमस्यैव ग्रहणात्। **आरम्भसामर्थ्यादिति।** कर्तरि पूर्वेणैव सिद्धत्वादिह 'कर्तरि कृ'दिति न संबध्यते, अनिर्दिष्टार्थश्च स्वार्थे, धातोः स्वार्थो भाव एव। नन्वेवं 'घञर्थे कविधान'मित्यनेन गतार्थतेति चेत्। न। वार्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्तेः। किंच 'षष्ठी'ति सूत्रेण पाक्षिकसमासे प्रसक्ते 'उपपदमति'ङिति नित्यसमासार्थमिदम्। अतएव ल्युडन्तेनाऽस्वपदविग्रहमाह-**आखूनामुत्थानमिति।** नन्वेवं 'घञर्थे कविधाने स्थास्नापाव्यधिहनियुध्यर्थ'मिति वार्तिके स्थाग्रहणं व्यर्थमिति चेत्। अत्राहुः-'अकर्तरि कारके विधानार्थं तत्र स्थाग्रहण'मिति। **आखूत्थ इति।** स्था इत्यस्य के परे 'आतो लोपः' इत्यालोपः, 'उदः स्थास्तम्भो'रिति उदः परस्य सस्य थः, उदो दस्य चर्त्वम्। अत्र प्राचा आखूत्थं वर्तत इति नपुंसकं पठितं, तदुपेक्ष्यमिति मनोरमायामुक्तम्, भाष्यादौ सर्वत्र पुंलिङ्गस्यैवोदाहृतत्वात्। 'ल्युः कर्तरीमनिज् भावे को घोः किः प्रादितोऽन्यतः' इत्यमरकोशे भावे कस्य पुंस्त्वविधानात्, 'भावे नणकचिद्भ्योऽन्ये' इति नपुंसकविधाने कस्य पर्युदासाच्चेति। 'नणकचिद्भ्य' इत्यत्र चकार इद्यस्य स चित्, नश्च णश्च कश्च चिच्च नणकचितस्तेभ्योऽन्य इति विग्रहः। **अम्बाम्ब। कप्रत्ययान्तस्येति।** तेन भूमिस्थितं गोस्थानमित्यादौ नेति भावः। प्राचा तु-'स्थस्य सस्ये'ति व्याख्यातव्ये 'स्थः सस्ये'ति व्याख्यातं, तदाकरविरोधेन 'कप्रत्ययान्तस्ये'त्यध्याहृत्य व्याख्येयम्। **द्विष्ठः त्रिष्ठ इति।** द्वयोस्तिष्ठतीत्यादि विग्रहः। एवमम्बष्ठः आम्बष्ठः गोष्ठः भूमिष्ठः सव्यष्ठः अपष्ठः कुशेष्ठः कुष्ठः शङ्कुष्ठः

---

बा.]**सर्वत्रेति।** उपसर्गे उपपदे आतोऽपि ड एव, नतु 'आतश्चोपसर्गे' इति कः, 'सर्वत्र'ग्रहणादित्यन्वयः। अन्यथा 'अनन्तरस्य विधि'रिति न्यायात् 'आतोऽनुपसर्गे कः' इत्येव बाध्येत, नतु 'आतश्चोपसर्गे इति कप्रत्यय इति भावः। **आह्वः प्रह्व इति।** अत्र 'आतश्चोपसर्गे' इति कं बाधित्वा ड एव। तस्य अकित्त्वाद्यजादिलक्षणं संप्रसारणं न। **सुपि स्थः। योगो विभज्यते इति।** इदं भाष्ये स्पष्टम्। तत्र 'सुपी'त्यंशं व्याचष्टे-**सुप्युपपदे इति** इदं केवलोपसर्ग व्यर्थम्, 'आतश्चोपसर्गे' इत्येव सिद्धेः, कर्मण्युपपदेऽप्येतद्व्यर्थमेव, 'आतोऽनुपसर्गे कः' इत्यारम्भादिति मत्वोदाहरति-**द्वाभ्यामिति। तत इति।** 'सुपी'त्यंशस्य व्याख्यानानन्तरं 'स्थ' इत्यंशो व्याख्यायत इत्यर्थः। ननु 'सुपी'त्यंशेनैव सिद्धे किमर्थमिदमित्यत आह-**आरम्भसामर्थ्यादिति।** कर्तरि 'सुपि' इति पूर्वेण सिद्धे 'कर्तरि कृ'दिति नानुवर्तते। अनिर्दिष्टार्थत्वात् 'गुप्तिज्किद्भ्यः स'न्नित्यादिवत्स्वार्थिकोऽयम्, स्वार्थश्च भाव एवेति भाष्ये स्पष्टम्। नच एवं सति 'घञर्थे कविधान'मित्येव सिद्धमिति वाच्यम्, नित्योपपदसमासार्थत्वात्। अत एव ल्युडन्तेन अस्वपदविग्रहं दर्शयन्नाह-**आखूनामुत्थानमाखूत्थ इति। प्रष्ठोऽग्रगामिनि।** प्रपूर्वात्स्थाधातोः 'आतश्चोपसर्गे' इतिं कप्रत्यये आतो लोपे प्रस्थशब्दः। स च अग्रगामिनि वाच्ये कृतषत्वो निपात्यते। इण्कवर्गाभ्यां परत्वाऽभावात्षत्वस्य न प्राप्तिः। **प्रतिष्ठत इति।** अग्रे गच्छतीत्यर्थः, उपसर्गवशात्। **प्रष्ठो गौरिति।** अग्रगामीत्यर्थः। एवं प्रष्ठोऽश्व इत्यादि।

**अम्बाम्ब।** अम्ब,आम्ब,गो,भूमि,सव्ये, अप, द्वि, त्रि, कुशे, कु, शङ्कु, अङ्गु,मञ्जि,पुञ्जि,परमे,बर्हिस्,दिवि, अग्नि-एषामष्टादशानां द्वन्द्वः। अम्बष्ठः, आम्बष्ठः, गोष्ठः, भूमिष्ठः। सव्येष्ठः। निपातनादलुक्। 'हलदन्तात्सप्तम्याः' इति वा। अपष्ठः। एषु कतिपयेषु इण्कवर्गाभ्यां परत्वाऽभावात् षत्वस्य न प्राप्तिः। कतिपयेषु 'सात्पदाद्यो'रिति निषेधः प्राप्तः। एवमग्रेऽपि। **द्विष्ठ इति।** द्वाभ्यां तिष्ठतीति विग्रहः। एवं त्रिष्ठः, कुशेष्ठः, कुष्ठः, शङ्कुष्ठः अङ्गुष्ठः मञ्जिष्ठः, पुञ्जिष्ठः। परमेष्ठः,निपातनादलुक्, 'हलदन्ता'दिति वा। बर्हिष्ठः। दिविष्ठः। पूर्ववदलुक्। अग्निष्ठः। कप्रत्ययान्तस्येति किम्? भूमिस्थितम्। **इत ऊर्ध्वमिति।** 'तुन्दशोकयो'रित्यारभ्येत्यर्थः। **सुपीत्यस्येति।** ननु कर्मणी-

---

शे.]लोपे तस्याऽऽभीयाऽसिद्धत्वेनोवङोऽप्राप्तौ यणि 'आह्वः' इति सिद्धमिति वाच्यम्, आभीयाऽसिद्धत्वाऽनित्यत्वे, 'वार्णा'दिति न्यायाऽनित्यत्वे वाऽस्य ज्ञापकत्वात्। तेन 'जुहुवतु'रित्यपि सिद्धमित्याहुः। **योगो विभज्यते इति।** इदं केवलोपसर्गे न, 'आतश्चोपसर्गे' इत्येव सिद्धेः। कर्मण्युपपदेऽपि न, 'आतोऽनुपे'त्यारम्भात्। तदाह-**द्वाभ्यामिति। प्रष्ठो गौरिति।** 'आतश्चोपसर्गे' इति कः। अग्रगामित्वेन मुख्यत्वं लक्ष्यते। **द्वयमपीति।** 'चरेष्टः' इति सूत्रे

वर्तते । तत्राऽकर्मकेषु सुपीत्यस्य संबन्धः । **तुन्दशोकयोः परिमृजापनुदोः** ।३।२।५। तुन्दशोकयोः कर्मणो-रुपपदयोराभ्यां कः स्यात् । ※ **आलस्यसुखाहरणयोरिति वक्तव्यम्** । तुन्दं परिमार्ष्टीति तुन्दपरिमृजो-ऽलसः । शोकापनुदः सुखस्याऽऽहर्ता । अलसादन्यत्र तुन्दपरिमार्ज एव । यश्च संसाराऽसारत्वोपदेशेन शोक-मपनुदति स शोकापनोदः । ※ **कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानम्** । मूलानि विभुजतीति मूल-विभुजो रथः । आकृतिगणोऽयम् । महीध्रः । कुध्रः । गिलतीति गिलः । **प्रे दाज्ञः** ।३।२।६। दारूपाज्जानातेश्च प्रोपसृष्टात्कर्मण्युपपदे कः स्यात् । अणोऽपवादः । सर्वप्रदः । पथिप्रज्ञः । अनुपसर्ग इत्युक्तेः प्रादन्यस्मिन्सति न कः । गोसंप्रदायः । **समि ख्यः** ।३।२।७। गोसङ्ख्यः । **गापोष्टक्** ।३।२।८। अनुपसृष्टाभ्यामाभ्यां टक् स्या-त्कर्मण्युपपदे । सामगः । सामगी । उपसर्गे तु—सामसङ्गायः ※ **पिबतेः सुराशीध्वोरिति वाच्यम्** । सुरापी । शीधुपी । अन्यत्र—क्षीरपा ब्राह्मणी । सुरां पाति रक्षतीति सुरापा । **हरतेरनुद्यमनेऽच्** ।३।२।९। अंशहरः। अनुद्यमने किम् ? । भारहारः । ※ **शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरुपसङ्ख्या-**

त.]अङ्गुष्ठः मञ्जिष्ठः पुञ्जिष्ठः परमेष्ठः बर्हिष्ठः दिविष्ठः अग्निष्ठः। **आभ्यामिति**। 'परिमृजापनुदो'रित्यत्र पञ्चम्यर्थे षष्ठीति भावः । **तुन्दपरिमृज इति** । अत्र 'मृजेरजादा'विति वैकल्पिकी वृद्धिर्व्यवस्थितविभाषया नेत्येके । स्यादेवेत्यन्ये । **मूलविभुजादिभ्य इति** । तादर्थ्ये एषा चतुर्थी । मूलविभुजादिसिद्ध्यर्थमित्यर्थः । **प्रे दा** । गामादाग्रहणेष्वविशेषा-दाह—**दारूपादिति** । **पथिप्रज्ञ इति**। पन्थानं प्रकर्षेण जानातीत्यर्थः । **प्रादन्यस्मिन्निति** । प्रशब्दमात्रोपपदे अस्य सूत्रस्य चरितार्थत्वादुपसर्गान्तरे सति 'आतोऽनुपसर्गे' इत्यनेनापि न भवतीति भावः। **गोसङ्ख्य इति** । गाः संचष्टे इति विग्रहः । 'चक्षिङः ख्याञ्' । ख्या प्रकथन इत्यस्य तु संपूर्वस्य प्रयोगो नास्तीति न्यासकारः । सार्वधातुकमात्रविषयोऽसौ धातुरिति च मनोरमादौ स्थितम् । **गापोष्टक्** । इह गामादाग्रहणेष्वविशेषेऽपि गायतेरेव ग्रहणं, न तु गाङ् गतौ, गा स्तुतौ इत्यनयोः, अनभिधानात् । **सामगः सामगीति** । एतेन टकः कित्त्वमालोपार्थं टित्त्वं तु ङीबर्थमिति ध्वनितम्। प्रत्ययाऽधिकाराट्टकः प्रत्ययत्वेन 'प्रत्ययः' 'परश्चे'ति धातोः पर एव स्यादिति 'आद्यन्तौ टकितौ' इत्यस्याऽत्र आशङ्कैव नास्तीति बोध्यम् । **सामसङ्गाय इति** । कर्मण्यणि सति 'आतो युक्' गिति युक् । **पिबतेरिति** । 'लुग्विकरणाऽलु-ग्विकरणयोः' इति परिभाषालभ्यार्थकथनम् , उपपदपरिगणनं तु वाचनिकमेव। **क्षीरपेति** । क्षीरं पिबतीत्यातोऽनुपसर्गे कः । **शक्तीति** । घटग्रहणेनैव सिद्धे घटीग्रहणं लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थं, तेन मद्रराज्ञीत्यत्र टच्,

बा.]त्यस्य, असंभवादिति भावः। **तुन्दशोकयोः** । तुन्दशोकयोरिति सप्तमी। परिमृज, अपनुद, अनयोर्द्वन्द्वात्पञ्चम्यर्थे षष्ठी । तदाह—**उपपदयोराभ्यामिति**।**तुन्दपरिमृज इति**।तुन्दम् = उदरम्।अत्र 'मृजेरजादौ' इति पाक्षिकवृद्धिर्न भवति, व्यवस्थितविभाषाश्रयणादित्याहुः । **मूलानि विभुजतीति** । विमर्दयतीत्यर्थः । 'भुजो कौटिल्ये' तुदादिः । इहोपसर्गबलान्मर्दने वृत्तिः। **महीध्र इति** । महीं धरतीति विग्रहः । कित्त्वान्न गुणः । ऋकारस्य यण् रेफः । अणि तु 'महीधार' इति स्यात्। **कुध्र इति**।कुः = पृथ्वी, तां धरतीति विग्रहः। **गिल इति** । 'गॄ निगरणे' अस्मात्कः, कित्त्वान्न गुणः, इत्त्वं, रपरत्वम् । 'अचि विभाषे'ति लत्वम् । **प्रे दाज्ञः**। 'प्रे' इति सप्तमी पञ्चम्यर्थे । दा, ज्ञा—अनयोर्द्वन्द्वा-त्पञ्चम्येकवचनम्। **प्रोपसृष्टादिति** । प्रेत्युपसर्गपूर्वकादित्यर्थः। सोपसर्गार्थ आरम्भः। **समि ख्यः**। 'समी'ति पञ्चम्यर्थे सप्तमी । **गोसङ्ख्य इति**। गाः संचष्ट इति विग्रहः। संपूर्वाच्चक्षिङः ख्याञि रूपम् । 'ख्या प्रकथने' इत्यस्य तु संपूर्वस्य प्रयोगाऽभावात्, सार्वधातुकमात्रविषयत्वाच्च नेह सम्बध्यते । **गापोष्टक्** । 'गै शब्दे' 'पा पाने' इत्यनयोः टक् स्यात्क-र्मण्युपपदे।**सामग इति**।टकि आतो लोपः।**सामगीति**।टित्त्वान्ङीबिति भावः। **सामसङ्गाय इति** । सोपसर्गाद्गैधातोः कर्मण्यणि आतो युकि रूपम् । **पिबतेरिति**। वार्तिकमिदम्। पाधातोः सुराशीध्वोरुपपदयोः टक् स्यादित्यर्थः । **क्षीर-पेति** । क्षीरं पिबतीत्यर्थे सुराशीध्वोरन्यतरत्वाऽभावात् 'आतोऽनुपसर्गे कः' इति कप्रत्यये टाप् । **पाति रक्षतीति** । 'पा रक्षणे' इति लुग्विकरणस्य पिबतिग्रहणेन अग्रहणमिति भावः।**हरतेरनुद्यमनेऽच्** ।अनुद्यमने विद्यमानात्कर्मण्युपपदे अजित्यर्थः । **उद्यमनम्—उद्ग्रहणम्** । **अंशहर इति** । अंशस्य स्वीकर्तेत्यर्थः । **भारहार इति** । भारम् उद्धराती-

शे.]'कर्मणीत्यपि वर्त्तते' इति भाष्यदर्शनेन'सुपी'त्यधिकारं दृष्ट्वाऽपि न तन्निवृत्तिः। तेन 'तुन्दशोकयो'रित्यादीनां कर्मण्येव प्रवृत्तिः, सुपीत्येतत्त्वकर्मकेषु सावकाशमिति भावः । **आलस्येति** । तयोर्गम्यमानयोरित्यर्थः ! तत्र सामर्थ्यादलस-सुखाहर्त्रोः कर्त्रोरिति बोध्यम्। **'मूलविभुजादिभ्य' इति**, तादर्थ्ये चतुर्थी।**प्रे दाज्ञः**।जनेर्नाऽयं निर्देशः,'खनो घ च' इत्यादौ धातुनिर्देशेऽल्लोपाऽकरणात् , व्याख्यानाच्च । **इत्युक्तेरिति** । अनुवृत्तेरित्यर्थः। **गोसङ्ख्ये**—चक्षिङः ख्याञादेशः। **हरतेर** । उत्क्षेपणादन्यत्राऽर्थे वर्त्तमानादित्यर्थः। **'शक्तिलाङ्गले'ति** तूद्यमनार्थम्। शक्तिः=शस्त्रविशेषः। **सूत्रे चेति**।

नम् । शक्तिग्रहः । लाङ्गलग्रहः । * **सूत्रे च धार्येऽर्थे** । सूत्रग्रहः । यस्तु सूत्रं केवलमुपादत्ते न तु धारयति तत्राऽणेव । सूत्रग्राहः । **वयसि च** ।३।२।१०। उद्यमनार्थं सूत्रम् । कवचहरः कुमारः । **आङि ताच्छील्ये** ।३।२।११। पुष्पाण्याहरति तच्छीलः पुष्पाहरः । ताच्छील्ये किम् ? । भारहारः । **अर्हः** ।३।२।१२। अर्हतेरच् स्यात्कर्मण्युपपदे । अणोऽपवादः । पूजार्हा ब्राह्मणी । **स्तम्बकर्णयो रमिजपोः** ।३।२।१३। ***हस्तिसूचकयोरिति वक्तव्यम्*** । स्तम्बे रमते स्तम्बेरमो हस्ती । 'तत्पुरुषे कृती'ति, 'हलदन्ता'दिति वा ङेरलुक् । कर्णेजपः सूचकः । **शमि धातोः संज्ञायाम्** ।३।२।१४। शंभवः । शंवदः । पुनर्धातुग्रहणं बाधकविषयेऽपि प्रवृत्त्यर्थम् । कृञो हेत्वादिषु टो मा भूत् । शङ्करा नाम परिव्राजिका तच्छीला । **अधिकरणे शेतेः** ।३।२।१५। खे शेते खशयः । ***पार्श्वादिषूपसङ्ख्यानम्*** । पार्श्वाभ्यां शेते पार्श्वशयः । पृष्ठशयः । उदरेण शेते उदरशयः । ***उत्तानादिषु कर्तृषु*** । उत्तानः शेते उत्तानशयः । अवमूर्धशयः । अवनतो मूर्धा यस्य स अवमूर्धा । अधोमुखः शेते इत्यर्थः । ***गिरौ डश्छन्दसि*** । गिरौ शेते गिरिशः । [लोके गिरिशयः] । कथं तर्हि— 'गिरिशमुपचचार प्रत्यहं सा सुकेशी'ति ? । गिरिरस्यास्तीति विग्रहे लोमादित्वाच्छः । **चरेष्टः** ।३।२।१६। अधिकरणे उपपदे । कुरुचरः । कुरुचरी । भिक्षा-

---

त.]'द्विषतीताप' इत्यत्र 'द्विषत्परयो'रिति खच् नेति दिक् । **कवचहर इति** । कवचोद्यमनं क्रियमाणं, संभाव्यमानं वा वयो गमयति । तेनाऽसत्यपि कवचग्रहणे 'कवचहर' इति भवत्येव । **हस्तिसूचकयोरिति** । अन्यत्र तु स्तम्बे रन्ता । कर्णे जपिता । **शमि धातोः** । शमि उपपदे धातुमात्रात्संज्ञायामच् स्यात् । **पुनर्धातुग्रहणमिति** । असति धातुग्रहणे 'शमि सञ्ज्ञाया'मित्यस्यावकाशः,—शंभवः । शंवदः । 'कृञो हेतुताच्छील्ये'त्यस्यावकाशः—'श्राद्धकरः' । 'शङ्कर' इत्यत्रोभयप्रसङ्गे परत्वाट्ट एव स्यात् । धातुग्रहणे कृते तु तत्सामर्थ्यादजेव भवति । तदाह—**शङ्करा नामेत्यादि** । अनधिकरणार्थमुपसङ्ख्यानमिति दर्शयति—**पार्श्वाभ्यामित्यादिना** । **कुरुचर इति** । कुरुषु देशेषु चरति । अटतीत्यर्थः ।

---

बा.]त्यर्थः । **ग्रहेरुपसङ्ख्यानमिति** । 'अच्प्रत्ययस्ये'ति शेषः । 'ग्रह उपादाने' अदुपधः । 'गृहे'रिति पाठे तु कृतसंप्रसारणस्य इका निर्देशो बोध्यः । **शक्तिग्रह इति** । अकित्त्वान्न संप्रसारणम् । **लाङ्गलग्रह इति** । एवम्—'अङ्कुशग्रह' इत्याद्यप्युदाहार्यम् । **सूत्रे चेति** । वार्तिकमिदम् । सूत्रे कर्मण्युपपदे धारणार्थकाद्ग्रहधातोरजित्यर्थः । **वयसि च** । कर्मण्युपपदे वयसि गम्ये हरतेरजित्यर्थः । ननु 'हरतेरनुद्यमनेऽ'जित्येव सिद्धे किमर्थमिदमित्यत आह—**उद्यमनार्थमिति** । **आङि ताच्छील्ये** । आङ्पूर्वाद्धरतेः कर्मण्युपपदे अच् स्यात्ताच्छील्ये गम्ये । **ताच्छील्यं**—तत्स्वभावता । **पुष्पाहर इति** । पुष्पाहरणे फलानपेक्षमेव स्वाभाविकी प्रवृत्तिरस्येत्यर्थः । **अर्हः** । **अणोऽपवाद इति** । यद्यपि अणि अचि च पूजार्हरूपे न विशेषः, अदुपधत्वाऽभावेन वृद्धेरप्रसक्तेः, तथापि स्त्रियामण्णन्तत्वे ङीप्स्यात् , तन्निवृत्तये अज्विधिः । तदाह—**पूजार्हेति** । **स्तम्बकर्णयोः** । रम जप अनयोरकर्मकत्वात्कर्मणीतिं न संबध्यते । जपेः शब्दोच्चारणार्थकस्य धात्वर्थोपसङ्ग्रहादकर्मकत्वं बोध्यम् । दर्भादितृणनिचयः—**स्तम्बः** । **सूचकः**—पिशुनः । हस्तिसूचकयोः किम् ? । स्तम्बे रन्ता गौः । कर्णे जपिता गुरुः, मशको वा । **शमि धातोः** । 'शमी'ति सप्तम्यन्तम् । 'श'मिति सुखार्थकमव्ययम् । तस्मिन्नुपपदे धातोरच् स्यात्संज्ञायाम् । ननु धातुग्रहणं व्यर्थम् , न च रमिजपोरननुवृत्त्यर्थं तदिति वाच्यम् , अस्वरितत्वादेव तदननुवृत्तिसिद्धेरित्यत आह—**पुनर्धातुग्रहणमिति** । 'कृञो हेतुताच्छील्यानुलोम्येषु' इति टप्रत्ययोऽच्प्रत्ययबाधको वक्ष्यते, तद्बाधनार्थमित्यर्थः । **अधिकरणे** । सुबन्तेऽधिकरणवाचिन्युपपदे शीङ्धातोरच् स्यादित्यर्थः । **पार्श्वादिष्विति** । अत्राऽधिकरणवाचिनीति न संबध्यते । तद्ध्वनयन्नुदाहरति—**पार्श्वाभ्यामिति** । **उत्तानादिषु कर्तृष्विति** । वार्तिकमिदम् । उत्तानादिशब्देषु कर्तृवाचिषूपपदेषु शीङोऽजित्यर्थः । **गिराविति** । वार्तिकमिदम् । गिरावुपपदे शीङो डप्रत्यय इत्यर्थः । 'अधिकरणे शेते'रित्यचोऽपवादः । 'नमो गिरिशाय च शिपिविष्टाय चे'ति । शीङो डप्रत्यये डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । यद्यपि वैदिकप्रक्रियायामेवेदं व्याख्येयम् , तथापि लोके डप्रत्ययस्य न प्रवृत्तिः किं त्वजेवेति प्रदर्शनार्थमिह तद्व्याख्यानमित्यभिप्रेत्य लोके अच्प्रत्ययमुदाहरति—**गिरिशय इति** । **कथमिति** । लोके डप्रत्ययाऽसंभवादिति भावः । समाधत्ते—**गिरिरस्यास्तीत्यादि** । **चरेष्टः** । ट इति च्छेदः । 'अधिकरणे उपपदे' इति शेषः । 'अधिकरणे शेते'रित्यतस्तदनुवृत्तेरिति भावः । **कुरुचर इति** । कुरुषु चरतीति विग्रहः । न च 'अकर्मकधातुभिर्योगे' इति

---

शे.]धार्यर्थे गम्यमाने सति सूत्रशब्दे उपपद इत्यर्थः । **स्तम्बकर्णयोः** । रमिजपावकर्मकौ । **टो माभूदिति** । परत्वादिति भावः । **शङ्करेति** । 'गृणातेः शङ्करैषा, न शङ्करे'ति भाष्येणेदं प्रयोजनं खण्डितम् । [शम्युपपदे स्थः क्विपो बाधनार्थं धातुग्रहणं 'स्थः क च' इत्यत्र भाष्ये] । **अधिकरणे शेतेः** । 'इत उत्तरम्—अधिकरणे इति, सुपि, कर्मणीति त्रयमनुवर्त्तते, यथायोगं सम्बन्धः' इति 'चरेष्टः' इत्यत्र भाष्यम् । **उत्तानादिष्विति** । कर्तृभूतेषूत्तानादिषूपपदेष्वित्यर्थः ।

**सेनादायेषु च** ।३।२।१७ भिक्षां चरतीति भिक्षाचरः। सेनाचरः। आदायेतिल्यबन्तम्। आदायचरः। कथं–'प्रेक्ष्य स्थितां सहचरी'मिति?।पचादिषु 'चर'डिति पाठात्।**पुरोऽग्रतोऽग्रेषु सर्तेः**।३।२।१८। पुरस्सरः । अग्रतस्सरः। 'अग्रमग्रेणाऽग्रे वा सरतीत्यग्रेसरः।सूत्रेऽग्रे इति एदन्तत्वमपि निपात्यते।कथं तर्हि–'यूथं तदग्रसरगर्वितकृष्णसार'-मिति?।बाहुलकादिति हरदत्तः।**पूर्वे कर्तरि**।३ २।१९।कर्तृवाचिनि पूर्वशब्दे उपपदे सर्तेष्टः स्यात्। पूर्वः सरतीति पूर्वसरः।कर्तरि किम्?।पूर्वं देशं सरतीति पूर्वसारः। **कृञो हेतुताच्छील्यानुलोम्येषु** ।३।२।२०। एषु द्योत्येषु करोतेष्टः स्यात्। 'अतः कृकमी'ति सः।यशस्करी विद्या।श्राद्धकरः।वचनकरः। **दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु** ३।२।२१। एषु कृञष्टः स्यादहेत्वादावपि । दिवाकरः । विभाकरः । निशाकरः । कस्कादित्वात्सः । भास्करः । बहुकरः ।

---

त.]**भिक्षासेना** । अनधिकरणार्थं आरम्भः । **भिक्षां चरतीति** । चरतिरत्र चरणपूर्वके अर्जने वर्तते । चरणेन भिक्षामर्जयतीत्यर्थः । **सेनाचर इति** । सेनां चरति = प्रविशतीत्यर्थः । **पचादिष्विति** । टविधानं तु 'उपपदमति'-ङिति नित्यसमासार्थम् । सहचरः। सहचतीत्यत्र तु सुप्सुपेति वैकल्पिकः समासः । **कृञोहेतु** । हेतुरिह लौकिको न तु तत्प्रयोजको हेतुश्चे'ति कृत्रिमः, केवले कृञि तदसंभवात्। **द्योत्येष्विति** । न तु वाच्येषु, 'कर्तरि कृ'दित्यस्य बाधापत्तेरिति भावः । हेत्वादिषु क्रमेणोदाहरति–**यशस्करीत्यादि** । एषु किम् ? । कुम्भकारः । इह प्रसिद्धतरत्वाद्व्यनुबन्धोऽपि करोतिरेव गृह्यते, न तु कृञ् हिंसायामिति । **हेतुः**–कारणम् । **आनुलोम्यमाराध्यचित्तानुवर्तनम्** । **दिवाविभा** । ननु अन्तकरशब्देन नञ्समासे स्वीकृतेऽपीष्टसिद्धौ सूत्रे त्वन्तशब्दात्पृथगनन्तग्रहणं व्यर्थमिति चेत्। अत्राहुः–स्वरे तु विशेषोऽस्ति । नञ्समासे हि अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तः स्यात्, अनन्तशब्दस्योपपदत्वे तु 'गतिकारकोपपदात्कृ'दिति कृदुत्तरपदप्रकृतिस्वरेणाऽन्तोदात्तत्वमिति । **दिवाकर इति** । दिवा=दिवसं करोतीति विग्रहः। दिवाभूता रात्रिरित्यादाविव दिवाशब्दस्य वृत्तिविषये शक्तिमत्परत्वात् । मूलेऽनुक्तान्यपि कानिचिदुदाहरणानि ऊह्यानि । कर एव कारः । प्रज्ञादित्वादण् । कारं करोतीति कारकरः, आदिकरः,नान्दीकरः किंकरः बलिकरः भक्तिकरः कर्तृकरः चित्रकरः

---

बा.]कर्मत्वं शङ्क्यं, तस्य वैकल्पिकतायास्तत्रैव प्रपञ्चितत्वात्। तत्र अत्रत्यमपि भाष्यं प्रमाणम्। **भिक्षासेना**।भिक्षा,सेना, आदाय–एषु चोपदेषु चरेष्टः स्यादित्यर्थः । **भिक्षां चरतीति** । चरतिरत्र चरणपूर्वके आर्जने वर्तते। चरणेन भिक्षामार्जयतीत्यर्थः । **सेनाचर इति** । सेनां प्रापयतीत्यर्थः । **ल्यबन्तमिति** । अत्र व्याख्यानमेव शरणम् । **आदाय चरतीति** । लब्धं द्रव्यं गृहीत्वा चरतीत्यर्थः। **कथमिति** । अधिकरणे भिक्षासेनाऽऽदायेषु उपपदेषु च विहितस्य टप्रत्ययस्य सहपूर्वाच्चरेरसंभवादिति भावः। समाधत्ते–**पचादिष्विति** । यद्यपि 'भिक्षाचर' इत्यादौ पचाद्यचि रूपसिद्धिः, तथापि नित्योपपदसमासार्थमज्विधानमित्याहु.। **पुरोऽग्रतः**। पुरस्, अग्रतस्, अग्रे–एषूपपदेषु सर्तेः टः स्यादित्यर्थः। **अग्रेसर इति**। ननु समासाऽवयवत्वात्सुपो लुकि अग्रसर इति स्यादित्यत आह–**सूत्र इति** । **कथमिति**। एदन्तत्वनिपातनात्कथमग्रसरशब्द इत्यर्थः । समाधत्ते–**बाहुलकादिति** । **पूर्वे कर्तरि** । कर्तृशब्दः कर्तृवाचिनि गौणः । तदाह–**कर्तृवाचिनीति** । **कृञो हेतु**। **हेतुः**–कारणम् । **आनुलोम्यम्**–आराध्यचित्तानुवर्तनम् । **द्योत्येष्विति**। कर्तुरेव प्रत्ययवाच्यत्वादिति भावः। हेत्वादिषूपपदेष्विति तु नार्थः, व्याख्यानात् । कर्मण्युपपदे इत्यपि द्रष्टव्यम्। 'कुप्वो'-रिति जिह्वामूलीयमाशङ्क्याह–**अतः कृकमीति** । हेतावुदाहरति–**यशस्करी विद्येति** । विद्या यशोहेतुः। **श्राद्धकर इति** । श्राद्धक्रियाशील इत्यर्थः। **वचनकर इति** । गुर्वादिवचनानुवर्तीत्यर्थः । **दिवाविभा** । दिवा, विभा, निशा, प्रभा, भास्, कार, अन्त, अनन्त, आदि, बहु, नान्दी, किम्, लिपि, लिबि, बलि, भक्ति, कर्तृ, चित्र, क्षेत्र, सङ्ख्या, जङ्घा, बाहु, अहर्, यद्, तद्, धनुस्, अरुस्–एषां सप्तविंशतेर्द्वन्द्वात्सप्तमी । **एष्विति** । 'उपपदेष्वि'ति शेषः । **अहेत्वादिष्वपीति**। हेतुताच्छील्यानुलोम्येषु अगम्येष्वपीत्यर्थः।हेत्वादिग्रहणस्य अननुवृत्तेरिति भावः। एतेन अहेत्वाद्य-

---

शे.]चरेः सकर्मकत्वेऽपि चरेष्टः कर्मण्युपपदे न,'भिक्षासेने'ति सूत्रे भिक्षाग्रहणात्। स्पष्टश्चेदं भाष्ये,तदाह–**अधिकरणे इति** । **सेनाचरे**–सेनायां भ्रमतीत्य[र्थः]र्थः । **आदायचर इति** । गृहीत्वा गच्छतीत्यर्थः। **अग्रेणेति** । पुरोऽग्रतः-शब्दयोरव्ययत्वेन कर्मत्वाऽसम्भवात्तदसंबन्धे तत्साहचर्येणाऽग्रशब्देऽपि तदसम्बन्धादिति भावः। **हरदत्त इति** । अत्राऽरुचिरग्रेसर इत्यस्याऽलुका सिद्ध्या एदन्तत्वनिपातने न मानम्, पूर्वनिपातस्तु बहुशो व्यभिचरित इति । **कृञो हे** । **हेतुः**=कारणमात्रम् । **आनुलोम्यम्**–आराध्यचित्ताऽनुवर्त्तनम् । **द्योत्येष्विति** । उपपदानि तु न, व्याख्यानात् । **दिवाविभा** । दिवापदार्थस्यापि वृत्तिविषये शक्तिमत्परत्वेन कर्मत्वादत्र कर्मणीति सम्बध्यते । **अहेत्वादावपीति** । हेत्वादिग्रहणाननुवृत्तेरिति भावः। 'अत' इति तपरकरणात् 'अतः कृ' इत्यस्याऽप्राप्तेराह–**कस्कादित्वादिति** । नन्नि

बहुशब्दस्य वैपुल्यार्थं सङ्ख्यापेक्षया पृथग्ग्रहणम् । लिपिलिबिशब्दौ पर्यायौ। सङ्ख्या–एककरः । द्विकरः । कस्कादित्वादहस्करः । 'नित्यं समासेऽनुत्तरपदस्थस्ये'ति षत्वम् । धनुष्करः । अरुष्करः । * **किंयत्तद्बहुषु कृञोऽज्विधानम्** । इति वार्तिकम् । किङ्करा । यत्करा । तत्करा । हेत्वादौ टं बाधित्वा परत्वादच् । पुंयोगे ङीष् । किङ्करी ।**कर्मणि भृतौ** ।३।२।२२। कर्मशब्दे उपपदे करोतेष्टः स्यात् । कर्मकरो भृतकः । कर्मकारोऽन्यः । **न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु** ।३।२।२३। एषु कृञष्टो न । हेत्वादिषु प्राप्तः प्रतिषिध्यते। शब्दकार इत्यादि।**स्तम्बशकृतोरिन्**।३।२।२४ ***व्रीहिवत्सयोरिति वक्तव्यम्**। स्तम्बकरि'र्व्रीहिः।शकृत्करि'-र्वत्सः । व्रीहिवत्सयोः किम्?। स्तम्बकारः। शकृत्कारः । **हरतेर्दृतिनाथयोः पशौ**।३।२।१५।दृतिनाथयोरुपपदयो-

---

त.]क्षेत्रकरः जङ्घाकरः बाहुकर इति। **वार्तिकमिति**–कैयटहरदत्तादिरीत्योक्तम् । माधवस्तु इष्टिरियमित्याह । **पुंयोगे ङीषिति** । यत्तु न्यासकृतोक्तं–'हेत्वादिषु पूर्वसूत्रेण ट एव भवति, तेन किङ्करणशीला किङ्करीत्युपपन्नं भवती'ति, तन्नादर्तव्यम् ,परत्वादचा टचो बाधितत्वात्,पूर्वविप्रतिषेधस्य निर्मूलत्वाच्चेति भावः।वृत्तौ तु पक्षान्तरमप्युक्तम्–'अथवा पचादिषु पाठः करिष्यते' इति । 'दिवाविभे'त्यस्मिन् सूत्रे किमादिग्रहणमनीय पचादिष्वेव 'किंयत्तद्बहुषु कृञः' इति पठितव्यं, वार्तिकमपीत्थमेव नेयमिति तस्याशयः । अस्मिन्पक्षे कर्मण्यणं बाधित्वा चरितार्थमिदं वचनं हेत्वादिविवक्षायां परत्वाट्टेन बाध्यते, तेन पुंयोगं विनापि किङ्करी स्यादेव,पुंयोगविवक्षायां तु निर्विवादो ङीष् , 'किंयत्तद्बहुष्वज्वे'ति प्रक्रियायां विकल्पोक्तिस्त्वाकरविरुद्धत्वात्कर्मण्यणोऽपि पक्षे प्रसङ्गाच्चाऽयुक्तैव।न चाऽजभावे 'दिवाविभे'ति टः स्यादिति वाच्यम् ,सूत्रे किमादिग्रहणापनयनस्य हरदत्तादिभिरुक्तत्वात् । अथवा सूत्रे किमाद्यपनयनं मास्त्विति प्रौढिवादेन प्रक्रियाग्रन्थः प्रवृत्त इति स्वीक्रियते। तथा च हेत्वाद्यविवक्षायां 'किंयत्त'दिति वार्तिकेनाऽच् ,तद्विवक्षायां तु परत्वाट्ट इति विषयविशेषे व्याख्याभेदात् फलितं विकल्पमाश्रित्य प्रक्रियायामज्वेति प्राचोक्तमिति स्थितस्य गतिः समर्थनीया । **कर्मणि भृतौ** । भृतिर्वेतनम् । कर्मानुवृत्तौ पुनः कर्मग्रहणात्स्वरूपपरतेत्याह–**कर्मशब्द इति** । **स्तम्बकरिरित्यादि** । इनो नित्त्वात् कृदु-

---

बा.]र्थमिदं सूत्रमुक्तं भवति । अत्र कर्मणीति सुपीति चानुवृत्तं यथायोगमन्वेति। **दिवाकर इति** । दिवेत्याकारान्तमव्ययमहीत्यर्थं । तस्याऽधिकरणशक्तिप्रधानस्यापि वृत्तिविषये कर्मत्वं बोध्यम्। दिवा = अहनि अर्थात् प्राणिनश्चेष्टायुक्तान् करोतीति वा विग्रहः । **विभाकर इति** । विभां करोतीति विग्रहः । **निशाकर इति**। निशां करोतीति विग्रहः । एवं प्रभाकरः । भाः करोतीति विग्रहे 'अतः कृकमी'त्यत्राऽत इति तपरकरणात्सत्वस्याऽप्राप्तेः 'कुप्वो'रिति जिह्वामूलीयविसर्गावाशङ्क्याह–**कस्कादित्वादिति**।कारकरः,अन्तकरः,अनन्तकरः,आदिकर इति सिद्धवत्कृत्य आह–**बहुकर इति**। ननु सङ्ख्याग्रहणेनैव सिद्धे बहुग्रहणं व्यर्थमित्यत आह–**बहुशब्दस्येति** । वैपुल्यवाचिनस्तस्य न सङ्ख्याशब्दत्वमिति 'बहुगणवतुडति सङ्ख्ये'त्यत्रोक्तम् । नान्दीकरः किङ्कर इति सिद्धवत्कृत्य आह–**लिपिलिबिशब्दाविति** । तथा च लिपिकरः लिबिकरः क्षेत्रकर इत्यन्तं सिद्धवत्कृत्य आह–**सङ्ख्येति** । 'उदाह्रियते' इति शेषः । जङ्घाकरः बाहुकर इति सिद्धवत्कृत्य अहस्करशब्दे 'कुप्वो'रिति जिह्वामूलीयविसर्गावाशङ्क्याह–**कस्कादित्वादिति** । नञि जहातेरुत्पन्ने अहन्शब्दे हन्शब्दस्योत्तरपदतया तद्विसर्गस्य उत्तरपदस्थत्वात् 'अतः कृकमी'त्यस्य न प्राप्तिरिति भावः । धनुष्करशब्दे आह–**नित्यं समास इति** । प्रत्ययावयवत्वात् 'इदुदुपधस्य चे'त्यस्य न प्राप्तिरिति भावः। **कृञोऽज्विधानमिति**। टस्याऽपवादः । **किङ्करेति** । टप्रत्यये तु टित्त्वान्ङीप्स्यादिति भावः। हेत्वादिषु पूर्वविप्रतिषेधमाश्रित्य 'कृञो हेतु' इति किङ्करादिषु ट एव । 'किङ्करी'ति न्यासकारमतं दूषयितुमाह–**हेत्वादाविति** । पूर्वविप्रतिषेधाश्रयणस्य निर्मूलत्वादिति भावः । तर्हि किङ्करीति कथमित्यत आह–**पुंयोगे ङीषिति** । **कर्मणि भृतौ** । कर्मणीत्यनुवृत्तौ पुनः कर्मग्रहणं तु कर्मशब्दस्वरूपग्रहणाऽर्थम् । **कर्मकरो भृतक इति** । वेतनं गृहीत्वा यः परार्थं कर्म करोति स भृतक इत्युच्यते ।

**न शब्दश्लोक**।शब्द,श्लोक,कलह, गाथा,वैर,चाटु, सूत्र, मन्त्र, पद–एषां नवानां द्वन्द्वः। **हेत्वादिष्विति** । 'कृञो हेतुताच्छील्यानुलोम्येषु' इति प्राप्तः टप्रत्ययोऽनेन प्रतिषिध्यते इत्यर्थः । **स्तम्बशकृतोरिन्** । स्तम्बे शकृति च कर्मण्युपपदे कृञ इन् स्यात् । नकार इत् । **व्रीहिवत्सयोरिति** । व्रीहौ वत्से च कर्तरीत्यर्थः। स्तम्बशकृतोर्यथासङ्ख्यमन्वयः । **स्तम्बकरिर्व्रीहिरिति** । स्तम्बं तृणनिचयं करोतीति विग्रहः। **हरतेर्दृतिनाथयोः** । दृतिः चर्मभस्त्रिका ।

---

शे.]जहातेरुत्पन्नत्वेनोत्तरपदस्थत्वात् 'अतः कृ' इत्यस्याऽप्राप्तेराह–**कस्कोति**। पाणिनिसम्मतेऽव्युत्पत्तिपक्षे तु 'अतः कृ' इत्येव । **नित्यं समासे इति** । प्रत्ययाऽवयवत्वात्सस्य 'इदुदुपधस्ये'त्यस्य न प्राप्तिः । **परत्वादिति** । अच् अहेत्वादौ चरितार्थः, सूत्रे च किमादिग्रहणं न कार्यमित्यभिमानः । **कर्मशब्दे इति** । 'कर्मणी'ति चाऽस्य विशेषणं, तेन करणादौ नातिप्रसङ्गः । **पशाविति**–कर्तृविशेषणम् । पशुरत्र प्रत्ययोपाधिः,प्रत्ययान्तवाच्यत्वात् । एवं व्रीह्यादिष्वपि

हृञ इन् स्यात्पशौ कर्तरि । दृतिं हरतीति दृतिहरिः। नाथं = नासारज्जुं हरतीति नाथहरिः। पशौ किम्? । दृतिहारः। नाथहारः। **फलेग्रहिरात्मम्भरिश्च**।३।२।२६। फलानि गृह्णातीति फलेग्रहिः। उपपदस्य एदन्तत्वं ग्रहेरिन्प्रत्ययश्च निपात्यते। आत्मानं बिभर्तीति आत्मम्भरिः। आत्मनो मुमागमः। भृञ इन्। चात्कुक्षिम्भरिः। चान्द्रास्तु 'आत्मोदरकुक्षिष्वि'ति पेठुः। 'ज्योत्स्नाकरम्भमुदरम्भरयंश्चकोराः' इति मुरारिः। **एजेः खश्** ।३।२।२८। ण्यन्तादेजेः खश् स्यात्। **अरुर्द्विषदजन्तस्य मुम्** ।६।३।६७। अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात् खिदन्ते उत्तरपदे, न त्वव्ययस्य। शित्त्वाच्छबादि। जनमेजयतीति जनमेजयः। * **वातशुनीतिलशर्द्धेष्वजधेट्तुदजहातिभ्यः खश उपसङ्ख्यानम्**। वातमजा मृगाः। **खित्यनव्ययस्य** ।६।३।६६। खिदन्ते परे पूर्वपदस्य ह्रस्वः स्यात्। ततो मुम्। शुनिन्धयः। तिलन्तुदः। शर्द्धंजहा माषाः। शर्द्धोऽपानशब्दः, तं जहतीति विग्रहः। जहातिरन्तर्भावितण्यर्थः। **नासिकास्तनयोर्ध्माधेटोः** ।३।२।२९। अत्र वार्तिकम्—* स्तने धेटो

त.]त्तरपदप्रकृतिस्वरेणोत्तरपदमाद्युदात्तम्। **कुक्षिम्भरिरिति**। एवं च 'गिरिस्तु कनकाचलः, कति न सन्ति चाश्मव्रजाः, किटिस्तु धरणीधरः, कति न सन्ति भूदारकाः। मरुत्तु मलयानिलः, कति न सन्ति झञ्झानिलाः, प्रभुस्तु विबुधाश्रयः, कति न सन्ति कुक्षिम्भराः' इति केषांचित्प्रयोगः प्रामादिक एव।

**एजेः खश्**। एजृ कम्पने। एजेरिति ण्यन्तस्य निर्देशो, न तु शुद्धस्यैका निर्देशः, खशः शित्करणाल्लिङ्गात्। तद्धि सार्वधातुकत्वे सति शब्यथा स्यादिति। न च शुद्धस्य [शब्दस्य] शपि सत्यसति वा विशेषोऽस्ति। न चोत्तरार्थं शित्त्वमिति वाच्यम्, इहाऽर्थवत्वे संभवति केवलोत्तरार्थत्वस्याऽन्याय्यत्वात्।तदेतदाह—**ण्यन्तादेजेरिति**। **अरुर्द्विषत्**। वर्णग्रहणे तदन्तविधेः सिद्धावप्यन्तग्रहणं शुनिन्धय इत्यादौ ह्रस्वे कृते मुम्प्रवृत्त्यर्थम्। तथा हि अन्तःशब्दः समीपपरः, अचाऽसावन्तश्चेति विग्रहः।निपातनाद्विशेषणस्य परनिपातः। समीपः 'खित्यनव्ययस्ये'ति सूत्रेण विहितो योऽच् तदन्तस्य मुमिति व्याख्यायते। एवं च 'जनमेजय' इत्यादौ स्वतो ह्रस्वेऽपि मुम्सिद्धये प्रथमं खितीति ह्रस्वः प्रवर्तनीय इत्यवधेयम्। **शर्द्धंजहा इति**। शर्धनं शर्धः। शृधु कुत्सायाम्। घञ्। तं जहति इति। ननु माषाः शर्द्धमपानशब्दं त्याजयन्ति न तु स्वतो जहतीत्याशङ्कायामाह—**अन्तर्भावितण्यर्थ इति**। यथासङ्ख्यं वारयितुमाह—**अत्रेति**। **धेटष्टित्वा-**

बा.]दृतिहरिः श्वा इति वृत्तिः। 'नाथ'शब्दस्य विवरणम्—**नासारज्जुमिति**।नासिकाप्रोतरज्जुमित्यर्थः। **नाथहरिरिति**। नासिकाप्रोतरज्जुके पशुविशेषे रूढोऽयम्। **फलेग्रहिः**। **ग्रहेरिन्निति**। ननु 'ग्रहू ग्रहणे' इति ऋदुपधादित्यर्थः। **मुमागम इति**। आत्मन्शब्दस्य नलोपे कृते अकारादुपरि मुमित्यर्थः। चकारोऽनुक्तसमुच्चयार्थ इति मत्वा आह—**चात्कुक्षिम्भरिरिति**। भाष्ये तु 'भृञः कुक्ष्यात्मनोर्मुम्' चेति वक्तव्य'मिति स्थितम्। 'स्यादवन्ध्यः फलेग्रहिः' इति वृक्षपर्याये अमरः। 'उभावात्मम्भरिः कुक्षिम्भरिः स्वोदरपूरके' इति विशेष्यनिघ्नवर्गे। उदरम्भरिशब्दं समर्थयितुमाह—**चान्द्रास्त्विति**। **एजेः खश्**। एजेरिति ण्यन्तस्य एजृधातोर्ग्रहणम्, न लिका निर्देशः, व्याख्यानादिति भावः। खकारशकारावितौ। कर्मण्युपपदे इत्यपि ज्ञेयम्। **अरुर्द्विषत्**। अरुस्, द्विषत्, अजन्त एषां समाहारद्वन्द्वात् षष्ठी। 'अलुगुत्तरपदे' इत्यधिकारादुत्तरपदे इति लभ्यते। 'खित्यनव्ययस्य' इत्यतः खितीत्यनुवृत्तम्। खितः प्रत्ययत्वात्तदन्तविधिः। तदाह—**खिदन्ते उत्तरपदे इति**। **जनमेजय इति**। जनान् एजयतीति विग्रहः। खशः शित्त्वात्सार्वधातुकत्वं। शप्, गुणायादेशौ, पररूपम्, सुपो लुकि, मुम्। **वातशुनीति**। वार्तिकमिदम्। वात, शुनी, तिल, शर्ध एषां द्वन्द्वात्सप्तमी। अज, धेट्, तुद, जहाति एषां द्वन्द्वात्पञ्चमी। यथासङ्ख्यमन्वयः। **वातमजा इति**। वातमजन्तीति विग्रहः। सुपो लुकि मुम्। अथ शुनीं धयतीति विग्रहे शुनीशब्दे उपपदे धेटः खशि शपि अयादेशे पररूपे शुनी धय इति स्थिते आह—**खित्यनव्ययस्य**। **ह्रस्वः स्यादिति**। 'इको ह्रस्वोऽङ्यो गालवस्य' इत्यतस्तदनुवृत्तेरिति भावः। अत्र ह्रस्वश्रुत्या अच इत्युपस्थितं द्रष्टव्यम्। **ततो मुमिति**। पूर्वं ह्रस्वे कृते ततो मुमित्यर्थः। पूर्वं मुमि कृते तु अजन्तत्वाऽभावाद्ध्रस्वो न स्यादिति भावः। **शर्धञ्जहा माषा इति**। भाष्ये तु 'मृगा' इति पाठः। शर्द्धः अपानद्वारे स्थितः शब्द इति माधवादयः। **अन्तर्भावितेति**। तथाच शर्द्धं हापयन्तीति विग्रहः फलितः। भाष्ये तु 'वातशुनी'ति वार्तिके गर्धेष्विति पठितम्। **नासिका**। नासिका, स्तन अनयोर्द्वन्द्वात्सप्तमी। ध्मा, धेट् अनयोः द्वन्द्वात्पञ्चम्यर्थे षष्ठी। 'ख'शिति शेषः। यथासङ्ख्यमन्वये प्राप्ते आह—**अत्र वार्तिकमिति**। **धेटष्टित्वादिति**। यद्यपि

शे.]द्रष्टव्यम्। 'स्यादवन्ध्यः फलेग्रहिः'।[**ण्यन्तादिति**। अत एवाऽस्मात् खविधानं चरितार्थम्]।**अरुर्द्विषत्**। कालिमन्यादावनवकाशत्वात्पूर्वं ह्रस्वे कृते ततो मुम्। अन्यथा मुम्यनजन्तत्वात्स न स्यात्। इहाऽनव्ययस्येति वर्तते, तेन दिवामन्यादावव्ययानां न मुम्। **'वातशुनी'ति वार्तिके 'गर्धेषु'** इति पाठान्तरम्। **माषा इति**। 'मृगा' इति भाष्ये

**नासिकायां ध्मश्चेति वाच्यम्** । स्तनं धयतीति स्तनन्धयः। धेटष्टित्वात् स्तनन्धयी। नासिकन्धमः । नासिकन्धयः । **नाडीमुष्ट्योश्च** ।३।२।३०। एतयोःकर्मणोरुपपदयोर्ध्माधेटोः खश् स्यात् । *** यथासङ्ख्यं नेष्यते** । नाडिन्धमः । नाडिन्धयः । मुष्टिन्धमः । मुष्टिन्धयः । *** घटीखारीखरीषूपसङ्ख्यानम्** । घटिन्धमः । घटिन्धय इत्यादि । खारी–परिमाणविशेषः । खरी–गर्दभी । **उदि कूले रुजिवहोः** ।३।२।३१। उत्पूर्वाभ्यां रुजिवहिभ्यां कूले कर्मण्युपपदे खश् स्यात् । कूलमुद्रुजः । कूलमुद्वहः । **वहाऽभ्रे लिहः** ।३।२।३२। वहः स्कन्धः, तं लेढीति वहंलिहो गौः । अदादित्वाच्छपो लुक् । खशो ङित्वान्न गुणः । अभ्रंलिहो वायुः । **परिमाणे पचः** ।३।२।३३। प्रस्थम्पचा स्थाली । खारिम्पचः कटाहः । **मितनखे च** ।३।२।३४। मितम्पचा ब्राह्मणी । नखम्पचा यवागूः । पचिरत्र तापवाची । **विध्वरुषोस्तुदः** ।३।२।३५। विधुन्तुदः । मुमि कृते संयोगान्तस्य लोपः । अरुन्तुदः । **असूर्यललाटयोर्दृशितपोः** ।३।२।३६। असूर्यमित्यसमर्थसमासः, दृशिना नञः संबन्धात् । सूर्यं न पश्यन्तीत्यसूर्यम्पश्या राजदाराः । ललाटन्तपः सूर्यः । **उग्रंपश्येरंमदपाणिन्धमाश्च**

---

त.]दिति। अवयवे अचरितार्थत्वादिति भावः।खश्प्रत्ययान्तादेव धेटो ङीबिष्टो नान्यत इति वर्द्धमानक्षीरस्वामिहरदत्तादयः। तेन 'पाघ्राध्माधे'ङिति शप्रत्यये 'आतोऽनुपसर्गे कः' इति कप्रत्यये च टाबेव । धया–कन्या । गां धयतीति गोधा । अत्र च संप्रदाय एव शरणम् । **नासिकंधम इति** । 'पाघ्राध्मे'ति धमादेशः । **नाडीमुष्ट्योश्च** । **यथासङ्ख्यं नेति** । एतच्चेहैव सूत्रे भाष्ये, वृत्तौ च स्थितम् । यत्तु 'यथासङ्ख्य'मिति सूत्रे नाडीमुष्ट्योरित्युदाहृतं भाष्ये तत्प्राप्तिमात्राभिप्रायेणेत्येके । शब्दकौस्तुभे तु मतभेदेन तद्बोध्यमिति स्थितम् । **घटीखारीखरीष्विति** । जयादित्यस्तु वातशब्दमप्युदाजहार–वातंधमः वातंधय इति, तत्तु भाष्यादौ न दृश्यत इति मूलेऽत्रोपेक्षितम् । **उदि कूले** । ननु कूलस्येवोच्छब्दस्यापि सप्तम्यन्तत्वादुपपदत्वं स्यात्ततश्च रुजिवहिभ्यां सह यथासङ्ख्यं स्यादिति चेत् । अत्राहुः–नाडीमुष्ट्योरितिवल्लाघवादुत्कूलयोरिति वक्तव्ये उदीति व्यस्तोच्चारणान्नोपपदम् । एवं चोदीति पञ्चम्याः स्थाने सप्तमी, रुजिवहोरिति तु पञ्चम्याः स्थाने षष्ठीति । एतच्च यथासङ्ख्यसूत्रे कैयटे स्पष्टम् । किं च रुजेः सकर्मकत्वात्कर्मणीत्युपतिष्ठते, तेन कूलं विशेष्यते, नोच्छब्दः,असत्त्ववाचित्वेनाऽसंभवात्। तदेतदाह–**उत्पूर्वाभ्यामित्यादिना**। **विधुन्तुद इति**। 'अरुर्द्विषदजन्तस्य' इत्युकारात्परो मुम् । 'तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः' इत्यमरः । **अरुन्तुद इति** । 'अरुन्तुदं तु मर्मस्पृक्' इत्यमरः । 'व्रणोऽस्त्रियामीर्ममरुः' इति च । **असूर्यपश्या इति** । 'पाघ्राध्मे'ति पश्यादेशः । गुप्तिपरं चेदम् । एवं नाम राजदारा गुप्ताः, यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्ति, किं पुनः परपुरुषमिति। तेन सत्यपि सूर्यदर्शने प्रयोगो न विरुध्यते । यदा तु सूर्याऽभावदर्शनमात्रं, सूर्येतरचन्द्रादेर्दर्शनं वा विवक्षितं तदा खश् न भवत्यन-

---

बा.]'टिड्ढे'त्यत्र टिदाद्यन्तं यददन्तं प्रातिपदिकमिति व्याख्यातम् ,तथापि टित्त्वस्यावयवे अचरितार्थत्वान्ङीबिति हरदत्तः। अत्र यद्वक्तव्यं तत् 'पाघ्राध्माधेट्दृशः शः' इत्यत्रोक्तम्।**नासिकन्धम इति**।ह्रस्वे कृते मुम्। **नासिकाया ध्मश्चेति**। चकाराद्धेटश्चेति लभ्यते। तस्योदाहरति–**नासिकन्धय इति**।**नाडीमुष्ट्योश्च**।**यथासङ्ख्यं नेष्यते इति**।इदं तु भाष्ये स्पष्टम् । **घटीखारीत्यादि** स्पष्टम्। **उदि कूले**।उदीति दिग्योगपञ्चम्यर्थे सप्तमी।रुजिवहोरिति पञ्चम्यर्थे षष्ठी।'रुजो भङ्गे' तुदादिः। अत्र रुजेः सकर्मकत्वात्कर्मण्युपपदे इति लब्धं, तेन कूलं विशेष्यते,नतूच्छब्दः,तस्याऽसत्त्ववाचित्वात्। तदाह–**उत्पूर्वाभ्यामित्यादि**। **कूलमुद्रुज इति** । सुपो लुकि मुमिति भावः। **वहाभ्रे लिहः**।वहे अभ्रे च कर्मण्युपपदे-लिहः खशित्यर्थः।वहशब्दस्य विवरणम्–**स्कन्ध इति**।**शपो लुगिति**।खशः शित्वेन सार्वधातुकत्वात्कृतस्य शपो लुगित्यर्थः।**परिमाणे पचः**।परिमाणं प्रस्थादि। तस्मिन् कर्मण्युपपदे पचेः खशित्यर्थः। **खारिम्पच इति** । 'खित्यनव्ययस्य' इति ह्रस्वः।मुम्।**मितनखे च**।मिते नखे च कर्मण्युपपदे पचेः खशित्यर्थः।नखानां विक्लित्त्यसंभवादाह–**पचिरत्रेति**।**विध्वरुषोस्तुदः**।विधु,अरुस् अनयोः कर्मणोरुपपदयोस्तुदः खशित्यर्थः। **विधुंतुद इति**।विधुश्चन्द्रः,तं तुदतीति विग्रहः। राहुरित्यर्थः। अरुस्शब्दे उकारादुपरि मुमि कृते सकारस्य संयोगान्तलोप इत्यर्थः । **अरुन्तुद इति** । अरुः मर्म, तत्तुदतीति विग्रहः । **असूर्यललाट** । दृशितपोरिति पञ्चम्यर्थे षष्ठी । असूर्ये ललाटे च कर्मण्युपपदे दृशेस्तपेश्च खशित्यर्थः । **असूर्यमितीति** । 'असूर्यपश्या' इत्युदाहरणे असूर्यमित्यसमर्थसमासः सौत्र इत्यर्थः । कुतोऽसामर्थ्यमित्यत आह–**दृशिनेति**। सूर्यं न पश्यन्तीत्यर्थे नञो दृशिनाऽन्वितत्वेन सूर्यशब्देनाऽन्वयाऽभावादित्यर्थः। **ललाटन्तपः सूर्य इति** । ललाटं तपतीति विग्रहः । सूर्यं पश्यतो ललाटस्य अवश्यं तापादिति भावः। **उग्रम्पश्य** । उग्रम्पश्य, इरम्मद, पाणिन्धम–एषां द्वन्द्वः । **उग्रम्पश्य इति** । खशि शप् , पश्यादेशः । इराशब्दस्य विवरणम्–**उदकमिति** ।

---

शे.]पाठः। **असूर्य**। यथासङ्ख्यमत्र। असूर्यशब्दस्यानर्थकत्वेऽपि 'उपपद'मिति महासञ्ज्ञया तस्य सुबन्तत्वम् । सुप् च

।३।२।३७। एते निपात्यन्ते।उग्रमिति क्रियाविशेषणं, तस्मिन्नुपपदे दृशेः खश् । उग्रं पश्यतीत्युग्रंपश्यः । इरा=उदकं, तेन माद्यति=दीप्यतेऽबिन्धनत्वादिति इरंमदो मेघज्योतिः । इह निपातनाच्छ्यन्। पाणयो ध्मायन्तेऽस्मिन्निति पाणिंधमोऽध्वा । अन्धकारावृत इत्यर्थः । तत्र हि सर्पाद्यपनोदनाय पाणयः शब्द्यन्ते । प्रियवशे वदः खच् ।३।२।३८। प्रियंवदः । वशंवदः । * गमेः सुपि वाच्यः ।-असंज्ञार्थमिदम् । मितङ्गमो हस्ती । * विहायसो विह इति वाच्यम् । * खच्च डिद्वा वाच्यः । विहङ्गमः । विहङ्गः । भुजङ्गमः । भुजङ्गः । द्विषत्परयोस्तापेः ।३।२।३९। खच् स्यात्।खचि ह्रस्वः ।६।४।९४। खच्परे णौ उपधाया ह्रस्वः स्यात्। द्विषन्तं परं वा तापयतीति द्विषन्तपः । परन्तपः। घटघटीग्रहणाल्लिङ्गविशिष्टपरिभाषा अनित्या। तेनेह न-द्विषतीं तापयतीति द्विषतीतापः । वाचि यमो व्रते ।३।२।४०। वाक्शब्दे उपपदे यमेः खच् स्याद्व्रते गम्ये । वाचंयमपुरन्दरौ च ।६।३।६९। वाक्पुरोरमन्तत्वं निपात्यते । वाचंयमो मौनव्रती । व्रते किम् ? । अशक्त्यादिना वाचं

त.]मिधानादिति न्यासकारादयः।प्रियवशे वदः खच् । खकारो मुमर्थः, चकारस्तु 'खचि ह्रस्वः'इति विशेषणार्थ इति वृत्तिः । खे ह्रस्व इत्युच्यमाने एजेः खश् जनमेजय इत्यत्रापि स्यादिति तदाशयः । 'एकानुबन्धग्रहणे द्व्यनुबन्धस्य न ग्रहण'मिति खशि न भविष्यतीत्यादिना वृत्तिग्रन्थस्याऽयुक्तत्वमाहुः । खशि प्रकृते प्रत्ययान्तकरणमुत्तरार्थम् , द्विषन्तप इत्यत्र हस्वणिलोपौ यथा स्यातां शप् च माभूदिति । नन्वेवमुत्तरत्रैव क्रियतामिति चेत् । सत्यम् । इह करणमन्यतोऽपि क्वचिद्भवतीति ज्ञापनार्थं, तेन 'गमेः सुपी'ति नाऽपूर्वं वार्तिकं, किंतु ज्ञापकसिद्धमेव । असंज्ञार्थमिति । संज्ञायां तु वक्ष्यमाणेन 'गमश्चे'ति सूत्रेणैव सिद्धमिति भावः । विहङ्गम इति । विहायसा=आकाशेन गच्छतीति विग्रहः । पूर्ववार्तिकेनैक्यमकृत्वा 'खच्च डिद्वे'ति पृथक्करणसामर्थ्यादन्यत्रापि क्वचिद्भवतीत्याशयेनोदाहरति-भुजङ्गमः । भुजङ्ग इति । इह 'गमेः सुपी'ति खच् । द्विषन्तप इति । 'अरुर्द्विषदि'ति मुमि कृते संयोगान्तलोपः । वाचि यमो व्रते । निपात्यत इति । न चैवं खच् प्रत्ययोऽप्यत्रैव निपात्यतामिति वाच्यं, व्रतादन्यत्रापि प्रसङ्गात् । यदि तु निपातनबलादेव व्रतविषयता आश्रीयते,तत्रैव वा व्रतग्रहणं क्रियते,-'वाचंयमो व्रते पुरन्दरश्चे'ति तदा इह 'वाचि यमो

बा.]इरम्मद इति। 'खित्यनव्ययस्ये'ति ह्रस्वः। मदेर्देवादिकत्वाच्छ्यनमाशङ्क्य आह-निपातनाच्छ्यन्निति।पाणिन्धम इति । शपि 'पाघ्रे'ति धमादेशः । प्रियवशे । प्रिये वशे च कर्मण्युपपदे वदधातोः खजित्यर्थः । खशि प्रकृते खज्विधेरुत्तरसूत्रे प्रयोजनं वक्ष्यते । गमेः सुपि वाच्य इति । 'ख'जिति शेषः। ननु संज्ञायामित्यनुवृत्तौ 'गमश्चे'ति वक्ष्यमाणसूत्रेणैव सिद्धे किमर्थमिदं वार्तिकमित्यत आह-असंज्ञार्थमिदमिति । विहायस इति । विहायःशब्दः आकाशे वर्तते। तस्मिन्नुपपदे गमेः खच्। 'गमश्चे'ति वक्ष्यमाणसूत्रेण, पूर्ववार्तिकेन वा सिद्धः खच् 'चे'त्यनूद्यते। प्रकृते-र्विहायश्शब्दस्य विहादेशो वाच्यः, स च खच् डिद्वा वाच्य इत्यर्थः । विहङ्ग इति । डित्त्वपक्षे तत्सामर्थ्याद्भस्यापि टेर्लोपः । विहङ्गम इति । विहायसा गच्छतीति विग्रहः । भुजङ्गम इति । भुजैर्गच्छतीति विग्रहः। द्विषत्परयोः। 'तप दाहे' चुरादिः, 'तप सन्तापे' भ्वादिः । द्वयोरपि ण्यन्तयोस्तापेरिति निर्देशः । खच् स्यादिति । द्विषत्, पर अनयोः कर्मणोरुपपदयोस्तापेः खजित्यर्थः । द्विषत् तापि अ इति स्थिते आह-खचि ह्रस्वः । 'दोषो णौ' इत्यतो णाविति, 'उदुपधायाः' इत्यत 'उपधाया' इति चानुवर्तते । तदाह-खच्परे णाविति । खशि प्रकृते खचो विधिरिह ह्रस्वार्थोऽणिलोपार्थश्च । खशि तु तदुभयं न स्यात्, खशः शित्त्वेन सार्वधातुकतया णिलोपाऽसंभवात् । न च इहैव सूत्रे खज्विधीयतां, पूर्वसूत्रे खशेवाऽनुवर्ततामिति वाच्यम्, अन्यतोऽपि विधानार्थत्वात् । एवं च 'गमेः सुपी'ति वार्तिकमेतल्लब्धार्थकथनपरमेवेत्याहुः। द्विषन्तप इति । 'अरुर्द्विष'दिति तकारात्प्राक् मुम् । परन्तप इति । परः-शत्रुः । ननु लिङ्गविशिष्टपरिभाषया द्विषतीशब्देऽप्युपपदे तापेः खचि 'द्विषतीतप' इति स्यात् 'द्विषतीताप' इत्यणन्तं न स्यादित्यत आह-घटघटीति । 'शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसङ्ख्यान'मित्यत्र घटग्रहणेनैव लिङ्गविशिष्टपरिभाषया घटीशब्दस्यापि सिद्धे पुनर्घटीग्रहणाल्लिङ्गविशिष्टपरिभाषा अनित्येति विज्ञायते इत्यर्थः। 'उपपदविधौ लिङ्गविशिष्टपरिभाषा ने'ति व्याप्सूत्रे भाष्याच्चेत्यपि द्रष्टव्यम्।वाचि यमो व्रते।इत्यादि व्यक्तम् वाचंयमपुरन्दरौ च।वाक्पुरोरिति।

शे.]द्वितीयैव, प्रकृत्येकदेशस्य कर्मत्वेनाऽन्यापेक्षया युक्तत्वात् , ललाटसाहचर्याच्चेति बोध्यम्।प्रियवशे।खचश्चित्त्वं व्यर्थं, 'खचि ह्रस्वः' इत्यादौ खे इत्येव खशो व्यावृत्तिः सिद्धा । 'कुलीनः' इत्यादौ च णावित्यनुवृत्त्या न दोष इत्याहुः। मितङ्गम इति । वृत्तौ 'मतङ्गमः' इति पाठः। खच्च डिद्वेति।योगविभागादत्र 'विहायस' इत्यस्याऽसम्बन्धस्तदाह-भुजङ्ग इति। [भुजैर्भ्यां गच्छतीत्यर्थः।अत एव वार्तिके कर्मणीति प्रकृते 'सुपी'त्युक्तम्].तापेरिति। चुरादेर्हेतुमण्ण्यन्तभ्वादेश्च ग्रहणमिति वृत्तिः। अनित्येति। 'उपपदविधावेषा ने'ति व्याप्सूत्रे भाष्योक्तेरिति भावः वाचि य । वाक्शब्दे कर्मणी-....

यच्छतीति वाग्यमः । **पूःसर्वयोर्दारिसहोः ।३।२।४१।** पुरं दारयतीति पुरन्दरः । सर्वंसहः । सहिग्रहणमसंज्ञार्थम् । भगे च दारेरिति काशिका । बाहुलकेन लब्धमिदमित्याहुः । भगं दारयतीति भगन्दरः । **सर्वकूलाभ्रकरीषेषु कषः ।३।२।४२।** सर्वङ्कषः खलः । कूलङ्कषा नदी । अभ्रङ्कषो वायुः । करीषङ्कषा वात्या । **मेघर्तिभयेषु कृञः ।३।२।४३।** मेघङ्करः। ऋतिङ्करः। भयङ्करः। भयशब्देन तदन्तविधिः। अभयङ्करः। **क्षेमप्रियमद्रेऽण् च ।३।२।४४।** एषु कृञोऽण् स्यात् । चात् खच् । क्षेमङ्करः । क्षेमकारः । प्रियङ्करः । प्रियकारः । मद्रङ्करः । मद्रकारः । 'वे'ति वाच्येऽण्ग्रहणं हेत्वादिषु टो मा भूदिति । कथं तर्हि 'अल्पारम्भाः क्षेमकरा' इति ? । कर्मणः शेषत्वविवक्षायां पचाद्यच् । **आशिते भुवः करणभावयोः ।३।२।४५।** आशितशब्दे उपपदे भवतेः खच् । आशितो भवत्यनेनाऽशितंभव ओदनः । आशितस्य भवनम् आशितम्भवः । **संज्ञायां भृतॄवृजिधारिसहितपिदमः ।३।२।४६।** विश्वं बिभर्तीति विश्वम्भरः । विश्वम्भरा । रथन्तरं साम । इह रथेन तरतीति व्युत्पत्तिमात्रं न त्ववयवार्थोऽनुगमः। पतिंवरा कन्या। शत्रुञ्जयो हस्ती। युगन्धरः पर्वतः । शत्रुंसहः। शत्रुन्तपः ।

---

त.]व्रते' इति सूत्रं,'पूःसर्वयो'रित्यत्र पुरि दारेरित्यंशश्च शक्यमकर्तुम् । **पूःसर्वयोः।** दॄ विदारणे अयमेव गृह्यते. न तु दॄ भये दृङ् आदर इत्येताविति संप्रदायः। **असंज्ञार्थमिति।** संज्ञायां तु 'संज्ञायां भृतॄवृजि' इति वक्ष्यमाणेन सिध्यतीति भावः। **आशितंभव इति।** यावता ओदनेन अतिथ्यादिर्भोजितो भवति स एवमुच्यते। इह वासरूपविधिना ल्युडपि।[आशितेभवनः।भावे]–आशितभवनम्। घञ् तु बाध्यत एव, सरूपत्वादित्याहुः । नचाऽत्र क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नेति ल्युटो निषेधः शङ्क्यः।यत्र हि घञादेर्बाधकत्वेन क्तल्युडादयः प्रसक्तास्तत्र नित्यं बाधो न तु विकल्पेनेति तस्यार्थः। इह तु ल्युटोऽप्यपवादः खच् । अत्र वासरूपन्यायो निर्बाध एव । एतच्च आशितभवनमित्युदाहरतो जयादित्यस्यापि संमतमेवेति दिक् । **संज्ञायां भृतॄ ।** 'विश्वम्भरः कैटभजित्'। 'रसा विश्वम्भरा स्थिरा' इत्यमरः । **व्युत्पत्तिमात्रमिति ।** तत्फलं तु स्वरावग्रहौ । 'रथन्तरमाजभारा वसिष्ठः' इत्यत्र हि रथमित्यवगृह्णन्ति । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वं

---

बा.]वाच्यं यच्छतीति, पुरं दारयतीति च विग्रहे यमेर्दारेश्च खच् । सुपो लुकि वाच् यम, पुर्,दार इति स्थिते वाक्पुरोरमन्तत्वं निपात्यते इत्यर्थः। 'अरुर्द्विषदजन्तस्य' इति मुमस्तु न प्रसक्तिः । **पूःसर्वयोर्दारिसहोः ।** दारिसहोरिति पञ्चम्यर्थे षष्ठी। पुर्शब्दे सर्वशब्दे च कर्मवाचिन्युपपदे दारेः सहेश्च खजित्यर्थः।यथासङ्ख्यमन्वयः।'दारी'ति ण्यन्तस्य ग्रहणम्। **पुरन्दर इति ।** पुरं दारयतीति विग्रहे दारेः खचि णिलोपे 'खचि ह्रस्वः' इत्युपधाह्रस्वे सुपो लुकि 'वाचंयमपुरन्दरौ चे'ति निपातनाददन्तत्वम्। ननु 'संज्ञायां भृतॄवृजिधारिसहितपिदमः' इत्येव सिद्धे सहधातोरिह ग्रहणं व्यर्थमित्यत आह–**असंज्ञार्थमिति ।** **भगे चेति ।** इत्यादि स्पष्टम् । **ऋतिङ्कर इति ।** ऋतिर्गमनम् । अभयङ्करशब्दं साधयितुमाह–**भयशब्देन तदन्तविधिरिति ।** इदं च 'येन विधि'रित्यत्र भाष्ये स्पष्टम् । **क्षेमप्रिय ।** ननु 'क्षेमप्रियमद्रे वे'ति खचो विकल्पविधौ खजभावे 'कर्मण्य'णित्यस्य सिद्धत्वादण्ग्रहणं व्यर्थमित्यत आह–**वेति वाच्ये इति। हेत्वादिष्विति ।** 'कृञो हेतुताच्छील्यानुलोम्येषु' इति विहित इत्यर्थः । **कथं तर्हीति ।** 'कृञो हेतु' इत्यस्य अणा बाधात् क्षेमकार इति भवितव्यम् , खचि तु मुम् स्यादित्याक्षेपः । समाधत्ते–**कर्मणः शेषत्वेति ।** तथाच कर्मोपपदाऽभावादणभावे चाऽजिति भावः । क्षेमङ्करीति तु गौरादित्वान्ङीषित्याहुः । **आशिते ।** करणे उदाहरति–**आशितो भवत्यनेनेति ।** भावे उदाहरति–**आशितस्य भवनमिति । संज्ञायाम् ।** 'ख'जिति शेषः । भृ, तॄ, वृ, जि, धारि, सहि, तपि, दमि–एषामष्टानां समाहारद्वन्द्वात्पञ्चमी। **विश्वम्भर इति ।** विष्णोरियं संज्ञा । **विश्वम्भरेति ।** पृथिव्याः संज्ञा इयम् । **रथन्तरमिति ।** तॄधातोः खच् । रथेन तरितृत्वस्य सामविशेषे असंभवादाह–**इहेति।** वृधातोरुदाहरति–**पतिंवरेति। शत्रुञ्जय इति ।** जिधातोः खच् । 'धारी'ति ण्यन्तग्रहणं, तस्योदाहरति–**युगन्धर इति ।** युगं धारयतीति विग्रहः । 'खचि ह्रस्वः' इत्युपधाह्रस्वः। णिलोपः । **शत्रुंसह इति।** शत्रून् सहते विग्रहः । ह्रस्वादि पूर्ववत् । एवमग्रेऽपि । **शत्रुन्तप इति ।** शत्रून् तपतीति विग्रहः । **अरिन्दम इति ।** अरिषु निग्रहविषये शाम्यतीत्यर्थः ।

---

शे.]त्यर्थः । [शास्त्रबोधितः] संकल्पविशेषो–**व्रतम् । भयशब्देनेति ।** 'येन विधि'रितिसूत्रस्थभाष्यप्रामाण्याच्छब्दरूपं विशेष्यमादाय तदन्तविधिरत्रेति बोध्यम् । **क्षेमङ्कर इति।** 'क्षेमङ्करी'त्यत्र गौरादित्वान्ङीष् । **आशिते भुवः।** 'अश भोजने' इत्यतो ण्यन्तात्प्रयोज्ये कर्मणि क्तः। उत्तरसूत्रात्सञ्ज्ञायामित्याकृष्यते । तेनाऽसञ्ज्ञायां न। अत एव 'ध्रौव्यगती'त्यादिना भावकर्माधिकरणेषु यः क्तस्तदन्तो न गृह्यते।सोपसर्गस्य प्राप्त्यर्थस्य वा भुवः सकर्मकत्वेऽपि 'कर्मणी'ति न सम्बध्यते, तस्याऽप्रसिद्धत्वात् , व्याख्यानाच्च, तदाह–**आशितो भवतीति । अन्यत्रापीति ।** अनेनैव सर्वत्र सिद्धौ 'सर्वत्रे'त्यादि प्रपञ्चार्थम्.वस्तुतः 'सप्तम्याञ्जनेः'इति प्रकरणस्थेन 'अन्येष्वपि दृश्यते' इत्यनेन सिद्धे इदमपि प्रपञ्चार्थमेव।

अरिन्दमः। दमिः शमनायां, तेन सकर्मक इत्युक्तम्। मतान्तरे तु अन्तर्भावितण्यर्थोऽत्र दमिः। **गमश्च** ।३।२।४७। सुतङ्गमः। **अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः**।३।२।४८। संज्ञायामिति निवृत्तम्। एषु गमेर्डः स्यात्। डित्वसामर्थ्यादभस्यापि टेर्लोपः। अन्तं गच्छतीत्यन्तग इत्यादि। * **सर्वत्रपन्नयोरुपसङ्ख्यानम्**। सर्वत्रगः। पन्नं=पतितं गच्छतीति पन्नगः। 'पन्न'मिति पद्यतेः क्तान्तं क्रियाविशेषणम्। * **उरसो लोपश्च**। उरसा गच्छतीत्युरगः। * **सुदुरोरधिकरणे**। सुखेन गच्छत्यत्र सुगः। दुर्गः। * **अन्यत्रापि दृश्यत इति वक्तव्यम्**। ग्रामगः। * **डे च विहायसो विहादेशो वक्तव्यः**। विहगः। **आशिषि हनः** ।३।२।४९। शत्रुं वध्याच्छत्रुहः। आशिषि किम्?। शत्रुघातः। * **दारावाहनोऽणन्तस्य च टः संज्ञायाम्**। दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण्, टकारश्चान्तादेशो वक्तव्य इत्यर्थः। दार्वाघाटः। * **चारौ वा**। चार्वाघाटः। * **कर्मणि समि च**। कर्मण्युपपदे संपूर्वाद्धन्तेरुक्तं वेत्यर्थः। वर्णान्संहन्तीति वर्णसङ्घाटः। वर्णसङ्घातः। पदसङ्घाटः। पदसङ्घातः। **अपे क्लेशतमसोः**।३।२।५०। अपपूर्वाद्धन्तेर्डः स्यात्। अनाशीरर्थमिदम्। क्लेशापहः पुत्रः। तमोपहः सूर्यः। **कुमारशीर्षयोर्णिनिः** ।३।२।५१। कुमारघाती। शिरसः शीर्षभावो निपात्यते। शीर्षघाती। **लक्षणेजायापत्योष्टक्** ।३।२।५२। हन्तेष्टक् स्याल्लक्षणवति कर्तरि। जायाघ्नो ना। पतिघ्नी स्त्री।

---

त.]चाधीयते। अखण्डत्वे त्ववग्रहो न स्यात्, 'नव्विषयस्ये'त्याद्युदात्तश्च स्यात्। **इत्युक्तमिति**।माधवाद्यनुरोधेनेत्यर्थः। **मतान्तरे त्विति**। हरदत्तादिमत इत्यर्थः। चित्तव्यापारोपरमः **शमः**, इन्द्रियव्यापारोपरमस्तु **दम**' इत्यादि वेदान्तग्रन्थाश्चेहानुकूलाः। संज्ञायां किम्?। कुटुम्बं बिभर्तीति कुटुम्बभारः। **गमश्च**। पूर्वसूत्र एव गमिर्नोक्तः, उत्तरसूत्रे गमेरेवानुवृत्तिर्यथा स्यात्, भृञ्प्रभृतीनां माभूदिति। **सुदुरोरधिकरणे**। कर्मणि तु 'ईषद्दुःसुषु' इति खलेव। सुखेन गम्यत इति सुगमः पन्थाः। दुर्गमः। **दाराविति** शब्दापेक्षया पुंलिङ्गता। तदाह—**दारुशब्दे इति**। 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः। टविधानार्थमिदम्। अण् तु 'कर्मण्य'णित्येव सिद्धः। 'अलोऽन्त्यस्ये'त्येव सिद्धेरन्तग्रहणं स्पष्टार्थम्। अन्यथा हि टप्रत्ययः संभाव्येत। दार्वाहन्तीति दार्वाघाटः। 'गोधाकालकादार्वाघाटस्ते वनस्पतीनाम्'। **कुमारशीर्षयोर्णिनिः**। एतयोः कर्मणोरुपपदयोर्हन्तेर्णिनिः स्यात्। 'सुप्यजातौ' इत्यादिभिः सिद्धे ताच्छील्यावश्यकाऽधमर्ण्यविरहेऽपि णिन्यर्थं, शिरसः शीर्षभावार्थं च वचनम्। **लक्षणवतीति**। सूत्रे लक्षणशब्दोऽर्शआद्यजन्त इति

---

बा.]**दमिः शमनायामिति**। 'दमु उपशमे' इति धातुपाठे उपशमशब्दे शमेर्ण्यन्ताद्धञ्। तथाच दाम्यतीत्यस्य उपशमयतीत्यर्थाश्रयणात्सकर्मकत्वमिति माधवादिमते सकर्मकोऽयमित्यर्थः। **मतान्तरे त्विति**। 'दमु उपशमे' इत्युपशमार्थस्य दमेरकर्मकत्वमिति हरदत्तादिभिरुक्तमित्यर्थः। **गमश्च**। 'संज्ञायां ख'जिति शेषः। **अन्तात्यन्त**। इत्यादि व्यक्तम्। **सर्वत्रपन्नयोरिति**। सर्वत्रशब्दे, पन्नशब्दे चोपपदे गमेर्डस्योपसङ्ख्यानमित्यर्थः। **उरस इति**। उरसि उपपदे गमेर्डः, उरःशब्दान्त्यस्य लोपश्चेति वक्तव्यमित्यर्थः। **सुदुरोरिति**। सु, दुर्—अनयोरुपपदयोर्गमेर्डः स्यात् अधिकरणे वाच्ये इत्यर्थः। **अन्यत्रापि दृश्यत इति**। अन्येष्वप्युपपदेषु अन्येभ्योऽपि धातुभ्यो डो दृश्यते इत्यर्थः। अनेनैव सिद्धे '**सर्वत्रपन्नयो**'रित्यादि प्रपञ्चार्थमेव। एवं च 'सप्तम्यां जनेर्डः' इत्यत्रापि 'अन्येष्वपि दृश्यते' इति प्रपञ्चार्थमेव। **डे चेति**। 'विहायसो विहे'त्युक्तस्य खज्विषयत्वादिदं वचनम्। **विहग इति**। खचि तु मुमि विहङ्गम इति रूपम्। **आशिषि हनः**। कर्मण्युपपदे हन्तेर्डः स्यादाशिषि गम्यायामित्यर्थः। **शत्रुघात इति**। आशीरभावाड्डाऽभावे अण्। 'हनस्त' इति तत्वम्। **दारावाहन इति**। वार्तिकमिदम्। दारौ, आहनः, अण्, अन्तस्येति च्छेदः। अण्संनियोगेन टत्वविधानार्थमिदम्। **चारौ वेति**। वार्तिकमिदम्। चारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण्, अन्तस्य टो वा स्यादित्यर्थः। **कर्मणि समि चेति**। वार्तिकमिदम्। **उक्तं वेति**। अण्, अन्तस्य ट इत्यर्थः। चाराविलस्यानुवृत्तिनिवृत्तये कर्मणीत्युक्तिः। **अपे क्लेशतमसोः**। 'आशिषि हनः' इत्येव सिद्धे किमर्थमिदमित्यत आह—**अनाशीरर्थमिति**। **कुमारशीर्षयोर्णिनिः**। अनयोरुपपदयोर्हन्तेर्णिनिः स्यादित्यर्थः। नकारादिकार उच्चारणार्थः। **लक्षणे**। **लक्षणवतीति**। सूत्रे लक्षणशब्दोऽर्शआद्यजन्त इति भावः। **जायाघ्नो नेति**। जायाहननसूचकलक्षणवान् पुरुष

---

शे.]तत्राऽपिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वादिति बोध्यम्। **दाराविति**,—शब्दापेक्षया पुंस्त्वम्, अन्तग्रहणं स्पष्टार्थम्। **कुमारशी**। अयं णिनिर्भविष्यद्वर्तमानयोरेव, न भूते। 'भूते' इत्यधिकारे 'कर्मणि हनः' इत्यस्य पाठेनाऽयमेव णिनिर्भूते इति एतदारम्भसामर्थ्येन तत्र नियमात्। यत्तु 'तक्रकौण्डिन्य'न्यायात्कुमारशीर्षयोर्विशेषविहितेन णिनिना 'कर्मणि हनः' इत्येतद्विहितणिनिसहचरितभूतकालो बाध्यते। अत एव 'कुमारे'त्यादि पुनर्विधानं चरितार्थम्। न च तत्सामर्थ्याद्धासरूपबाधः, शास्त्रबाधापेक्षया कालबाधस्यैवौचित्यात्। अत एव 'कुमारहन्ते'त्यपीति, तन्न। तस्य न्यायस्य विधेय-

**अमनुष्यकर्तृके च** ।३।२।५३। जायाघ्नस्तिलकालकः। पतिघ्नी पाणिरेखा। पित्तघ्नं घृतम्। अमनुष्येति किम् ?। आखुघातः शूद्रः। अथ कथं बलभद्रः प्रलम्बघ्नः शत्रुघ्न इत्यादि ?। मूलविभुजादित्वात्सिद्धम्। चोरघातो नगरघातो हस्तीति तु बाहुलकादणि। **शक्तौ हस्तिकपाटयोः** ।३।२।५४। हन्तेष्टक् स्यात्, शक्तौ द्योत्यायाम्। मनुष्यकर्तृकार्थमिदम्। हस्तिघ्नो ना। कपाटघ्नश्चोरः। 'कवाटे'ति पाठान्तरम्। **पाणिघताडघौ शिल्पिनि** ।३।२।५५। हन्तेष्टक् टिलोपो घत्वं च निपात्यते, पाणिताडयोरुपपदयोः। पाणिघः। ताडघः। शिल्पिनि किम् ?। पाणिघातः। ताडघातः। * **राजघ उपसङ्ख्यानम्**। राजानं हन्ति राजघः। **आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्** ।३।२।५६। एषु च्व्यर्थेष्वच्व्यन्तेषु कर्मसूपपदेषु कृञः ख्युन् स्यात्। अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यङ्करणम्। अच्वौ किम् ?।आढ्यीकुर्वन्त्यनेन। इहप्रतिषेधसामर्थ्या-

---

त.]भावः। **जायाघ्न इति**। जायामरणसूचकं पाणिरेखाविशेषादिकं यस्यास्ति स तां हन्तीति गौणो व्यवहारः। एवं पतिघ्नीत्यत्रापि बोध्यम्। **अमनुष्यकर्तृके च**। मनुष्यभिन्नकर्तृकेऽर्थे वर्तमानाद्धन्तेः कर्मण्युपपदे टक् स्यात्। यद्यप्यमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाहेति प्रागुक्तं, तथापीह लक्ष्यानुरोधेन व्याख्यातव्यमित्याशयेनाह–**तिलकालक इत्यादि**। 'नानुबन्धकृतमसारूप्य'मिति टगणोः सारूप्याद्वासरूपविध्यप्रवृत्तेराह–**बाहुलकादिति**। **शक्तौ हस्ति**। शक्तौ किम् ?। विषेण हस्तिनं हन्तीति हस्तिघातः। यद्यपीह शक्तिरस्ति, अशक्तस्य कर्तृत्वानुपपत्तेस्तथापि शक्तिग्रहणसामर्थ्यात्प्रकर्षो विज्ञायते, तेन स्वबलेनैव हन्तुं या शक्तिः सा गृह्यते। **कपाटघ्न इति**। कं=शिरः पाटयति प्रविशत इति कपाटम्। पाठान्तरे तु अटतेः पचाद्यच्। 'कवं चोष्णे' इत्यत्र योगविभागात्कोः कवादेश इति हरदत्तः। **आढ्यसुभग**। **च्व्यर्थेष्विति**। अभूततद्भावविषयेष्वित्यर्थः। **आढ्यङ्करणमिति**। लिङ्गविशिष्टपरिभाषया आढ्यशब्देऽप्युपपदे यदा ख्युन् तदापि 'खित्यनव्ययस्ये'ति ह्रस्वेन एतदेव रूपम्। **आढ्यीकुर्वन्त्यनेनेति**। नन्विह ख्युनोऽभावेऽपि 'करणाधिकरणयोश्चे'ति ल्युटा भवितव्यमित्यत आह–**प्रतिषेधसामर्थ्यादिति**। तथाहि आढ्यीकरणमिति रूपं ल्युट्ख्युनोस्तुल्यम्। न च ख्युनि मुम्ह्रस्वौ स्यातामिति वाच्यम्, 'अनव्ययस्ये'ति पर्युदासात्। 'ऊर्यादिच्विडाचश्चे'ति निपातसंज्ञकत्वेन च्व्यन्तस्य अव्ययत्वात्। न च ख्युनि सति 'उपपदमति'ङिति नित्यसमासो लभ्यते, ल्युटि तु नेति वाच्यं, ल्युट्यपि गतिसमासस्य संभवात्। तस्यापि नित्यसमासत्वात्। न च स्त्रीप्रत्यये विशेषः, ल्युटि 'टिड्ढे'ति सूत्रेण, ख्युनि तत्रत्येन ख्युन उपसङ्ख्यानेन च ङीपस्तुल्यत्वात्। नापि स्वरे विशेषः, ल्युटि लित्स्वरेण, ख्युनि नित्स्वरेण

---

बा.]इत्यर्थः। 'गमहने'त्युपधालोपः। **पतिघ्नी स्त्रीति**। पतिहननसूचनलक्षणवतीत्यर्थः। टित्त्वान्ङीप्। **अमनुष्य**। अमनुष्यकर्तृके धात्वर्थे वर्तमानाद्धन्तेः कर्मण्युपपदे टगित्यर्थः। **जायाघ्नस्तिलकालक इति**। तिलाकृतिकृष्णबिन्दुरित्यर्थः। पूर्वसूत्रस्य लक्षणवति कर्तरि प्रवृत्तिरिति भावः। **अथ कथमिति**। प्रलम्बघ्नादौ हन्तेर्मनुष्यकर्तृकतया टकोऽसंभवादित्याक्षेपः। समाधत्ते–**मूलविभुजादित्वात्सिद्धमिति**। कप्रत्ययेनेति भावः। ननु 'चोरघातो हस्ती'त्यादि कथम्, अमनुष्यकर्तृकत्वेन हन्तेष्टको दुर्वारत्वादित्यत आह–**चोरघात इत्यादीति**। **बाहुलकादणीति**। 'कृत्यल्युटो बहुल'मिति बहुलग्रहणादणि समाधेयमिति भावः। **शक्तौ हस्तिकवाटयोः**। **हस्तिघ्न इति**। हस्तिनं हन्तुं शक्त इत्यर्थः। एवं कवाटघ्नः। **पाणिघताडघौ**। पाणिना हन्तीति पाणिघः। ताडः = ताडनं, तेन हन्तीति ताडघः= मल्लादिः। **राजघ उपसङ्ख्यानमिति**। राजघशब्दे उक्तनिपातनस्य उपसङ्ख्यानमित्यर्थः। **आढ्यसुभग**। आढ्य, सुभग, स्थूल, पलित, नग्न, अन्ध, प्रिय एषां सप्तानां द्वन्द्वात्सप्तमी। **ख्युन् स्यादिति**। 'करणे वाच्ये' इति शेषः। 'करणाऽधिकरणयोश्चे'ति ल्युडपवादोऽयम्। 'कर्तरी'ति त्वत्र न संबध्यते। **आढ्यङ्करणमिति**। 'राजाद्यनुवर्तन'मिति शेषः। कृञः ख्युन्। अनादेशः, 'अरुर्द्विषदजन्तस्ये'ति मुम्। 'सुभगङ्करण'मित्याद्यप्युदाहार्यम्। **आढ्यीकुर्वन्त्यनेनेति**। अत्र च्विप्रत्ययसत्त्वान्न ख्युन्निति भावः। ननु ल्युडपवादभूतख्युनभावपक्षे उत्सर्गभूतो ल्युट् कुतो नेत्यत आह–**इहेति**। यदि ल्युडपवादख्युनभावे उत्सर्गभूतो ल्युट् स्यात्; तदा ख्युन्विधिरनर्थकः स्यात्; च्व्यन्ते उपपदे ख्युन्ल्युटोः रूपे विशेषाऽभावात्। नच ख्युनि मुम्, ल्युटि तदभाव इत्यस्ति विशेष इति वाच्यम्, च्विप्रत्ययान्तस्या-

---

शे.]विषयत्वात्, तत्कालवृत्तेर्धातोरित्यर्थेन कालस्यानुवाद्यत्वात्, 'भूते' इत्यधिकारसत्त्वे चोक्तनियमोपपत्तिरिति अस्य भूताधिकारप्रयोजनत्वोक्तिः 'भूते' इति सूत्रे भाष्ये इति दिक्। **पतिघ्नीति**। 'गमहने'त्युपधालोपः, टित्त्वान्ङीप्। **पाणिघ**। शिल्पिनि कर्तरीत्यर्थः। **आढ्यसु**। च्व्यर्थेषु किम् ?। आढ्यंकुर्वन्त्यनेन। कर्तरि तु नायम्, करणरूपार्थेन तक्रकौण्डिन्यन्यायेन कर्तृरूपाऽर्थबाधनात्, अर्थस्यापि विधेयत्वात्। अत एव कार्यशब्दवादे नियोगतः कर्तारं ब्रुवन् स कृत्सञ्ज्ञ इत्यर्थो भाष्ये दर्शितः। **नियोगः** = शास्त्रम्। नित्यशब्दवादे तु स्वभावतः कर्तारं ब्रुवन् कृत्सञ्ज्ञः, स्वभावतः

ल्युडपि नेति काशिका । भाष्यमते तु ल्युट् स्यादेव । अच्वावित्युत्तरार्थम् । **कर्तरि भुवः खिष्णुच्खुकञौ** ।३।२।५७। आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु भवतेरेतौ स्तः । अनाढ्य आढ्यो भवतीति आढ्यम्भविष्णुः । आढ्यम्भावुकः । **'स्पृशोऽनुदके क्विन्'** । घृतस्पृक् । 'कर्मणी'ति निवृत्तम् । मन्त्रेण स्पृशतीति मन्त्रस्पृक् । **'ऋत्विग्दधृक्[स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च']।** व्याख्यातम् । **'त्यदादिषु दृशोऽनालोचने कञ्च'**।* **समानान्ययोश्चेति वाच्यम्** । सदृक् । सदृशः । अन्यादृक् । अन्यादृशः । ***क्सोऽपि वाच्यः** । तादृक्षः । सदृक्षः । अन्यादृक्षः । **सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्** ।३।२।६१।

त.]कृञ उदात्तत्वाऽविशेषात् । न चोत्तरार्थमच्वावित्युक्तमिति वाच्यं, केवलोत्तरार्थत्वे हि तत्रैव ब्रूयात् । तदेतदुक्तम् **ल्युडपि नेति । भाष्यमते त्विति ।** भाष्यवार्तिकस्वरसेन ल्युडिष्ट इति केवलोत्तरार्थत्वं लभ्यते । अतस्तद्विरोधा वृत्तिकृन्मतमयुक्तमिति कैयटः । **कर्तरि भुवः । अच्व्यन्तेष्विति ।** अच्वावित्यनुवर्तते । अन्यथा आढ्यीभविष्णुः आढ्यीभावुक इति स्यादिति भावः । 'कर्तृग्रहणं करणाऽनुवृत्तिभ्रमनिरासार्थमुत्तरार्थं चे'ति प्राञ्चः । वस्तुतस्तु व्यर्थमेव, अस्वरितत्वादेवाऽननुवृत्तिसिद्धेः, उत्तरत्राप्युपयोगो नेति स्पष्टीकरिष्यमाणत्वाच्च । खकारो मुमर्थः । चकारः 'चितः' इत्यन्तोदात्तार्थः । ञकारो वृद्ध्यर्थः । स्यादेतत्-खिष्णु न इकारो मास्तु, ख्ष्णुरित्येवोच्यताम्, एवं चकारोऽपि न कर्तव्यः, प्रत्ययस्वरेणैवाऽभिमतसिद्धेः, इकारादित्वसिद्धये इडागमे कृतेऽपि 'आगमा अनुदात्ताः' इति तस्याऽनुदात्तत्वात् । न च 'कृत्योकेष्णुच्चार्वादयश्चे'ति स्वरसूत्रे अस्य ग्रहणं न स्यात्, चकारानुबन्धाऽभावादिकारस्य लाक्षणिकत्वात्षत्वणत्वयोरसिद्धत्वेनेष्णु इति रूपाऽभावाच्चेति वाच्यम्, कृतेऽपि इकारे 'तदनुबन्धकग्रहणे नाऽतदनुबन्धकस्ये'ति परिभाषया अलङ्कृञादीष्णुच एव ग्रहणं स्यान्न त्वेतस्य । इकारोच्चारणसामर्थ्यादस्याऽपि ग्रहणमिति चेद्धन्तैवं ख्ष्णुजयमस्तु, तत्र टि कृते चकारानुबन्धसामर्थ्यादस्यापि ग्रहणमस्त्विति किमिकारेणेति चिन्त्यमेतत् । न चेह लाघवाऽभावादिकारोऽस्तु, चकार एव मास्त्विति शङ्क्यम्, 'एकमात्रो ह्रस्वो व्यञ्जनं त्वर्द्धमात्रक'मिति सर्वसंमतत्वात् । यत्तु हरदत्तेनोक्तं-षत्वणत्वयोः सामर्थ्यादस्य ग्रहणमिति, तदापाततः, ख्ुजपेक्षया ष्णुजुक्तौ प्रत्युत प्रक्रियालाघवेन षत्वणत्वयोः करणस्यौचितितया सामर्थ्याऽयोगादिति दिक् । **निवृत्तमिति ।** ननु स्पृशेः सकर्मकत्वात्कर्मण्युपद इत्येव प्राप्येतेति चेत् । अत्र प्राञ्चः-पूर्वसूत्रात्कर्तरि इत्यनुवर्तते, सा चानुवृत्तिः 'कर्तरि कृ'दित्यनेनैव कर्तरि क्विनः सिद्धत्वाद्व्यर्था सती कर्तृप्रचयार्था, कर्मण्युपपदे एकः कर्ता, करणादौ चाऽपर इत्येवं कर्तृप्रचयः, तथा च 'सुवन्ते उपपदे' इति फलितं भवतीति मन्त्रस्पृगित्याद्यपि सिद्धमिति । वस्तुतस्तु कर्तृग्रहणं व्यर्थमिति पूर्वसूत्र एवोक्तम् । न चेह कर्तृप्रचयार्थं तदावश्यकमिति शङ्क्यं, मन्त्रस्पृगित्यादेः क्विपाऽपि सिद्धेः । न च क्विपि कुत्वं न स्यादिति वाच्यं, 'क्विन्प्रत्ययो यस्मा'दिति बहुव्रीहिबलादेव कुत्वसंभवादिति दिक् । **सदृगिति ।** तमिवेमं पश्यन्ति जनाः, स इवायं पश्यति=ज्ञानविषयो भवतीति व्युत्पत्त्या कर्मकर्तरि प्रत्ययः, रूढ्यर्थानुगुणत्वात् ।

**सत्सूद्विष** । षद्लृ विशरणादौ । 'सू' इति द्विषा साहचर्यात्सूतेरादादिकस्य ग्रहणं न तु सुवतिसूयत्योः । युजिर् योगे, युज समाधौ, द्वयोरपि ग्रहणम् । विद ज्ञाने, विद विचारणे, विद सत्तायां,-त्रयाणामपि ग्रहणम् । विद्लृ लाभे

बा.]व्ययत्वेन ख्युनि सत्यपि मुमभावात्, 'अरुर्द्विषदजन्तस्ये'त्यत्राऽनव्ययस्येत्यनुवृत्तेः । एवंच 'अच्वौ' इति च्व्यन्ते उपपदे ख्युनः प्रतिषेधसामर्थ्यात् ख्युनभावे ल्युडपि नेति विज्ञायत इति काशिकामतमित्यर्थः । एवंच 'अच्वौ' इति च्व्यन्ते उपपदे ख्युन्प्रतिषेधः ख्युनभावपक्षे ल्युडभावार्थ इति स्थितम् । **भाष्यमते त्विति ।** भाष्ये 'ख्युनि च्विप्रतिषेधानर्थक्यम्, ल्युट्ख्युनोरविशेषात् । मुमर्थमिति चेन्न, अव्ययत्वात्'-इत्यादिसन्दर्भेण अच्विग्रहणं ख्युन्विधौ प्रत्याख्याय 'अच्वौ' इत्युत्तरार्थ'मित्युक्तम् । तन्मते तु च्व्यन्ते उपपदे ख्युना मुक्ते ल्युट् स्यादेवेत्यर्थः । **कर्तरि भुवः ।** खिष्णुचि खचावितौ । खुकञि खञावितौ । **आढ्यम्भविष्णुरिति ।** अनाढ्य आढ्यो भवतीति विग्रहः । **आढ्यम्भावुक इति ।** ञित्वाद्वृद्धिः । करणग्रहणाऽनुवृत्तिनिवृत्तये कर्तृग्रहणम् । खिष्णुचि इकारस्तु व्यर्थ एव, इटा सिद्धेः । अच्वौ किम्? आढ्यीभविता । **स्पृशोऽनुदके क्विन्निति**-व्याख्यातं हलन्ताधिकारे । **निवृत्तमिति ।** अत्र व्याख्यानमेव शरणम् ।

**समानान्ययोश्चेति** । अनयोरुपपदयोर्दृशः क्विन्कञावित्यर्थः । **सदृक् सदृश इति** । समानो दृश्यते इति न विग्रहः, कर्तर्येव क्विन्विधानात् । किन्तु कर्मकर्तरि क्विन्कञौ । समानः पश्यतीति विग्रहः । समानत्वेन ज्ञानविषयो भवतीत्यर्थ इति भाष्ये स्पष्टम् । 'दृग्दृशवतुषु' इति समानस्य सभावविकल्पः । तत्र 'विभाषोदरे' इत्यतो विभाषानुवृत्तेः, 'समानदृक् सदृक् । समानदृशः सदृश' इति भाष्याच्च । **अन्यादृगिति ।** 'आ सर्वनाम्नः' इत्यात्वम् । **क्सोऽपीति ।**

शे.]करणं ब्रुवन् ख्युन् कृत्सञ्ज्ञ इत्यादिक्रमेणार्थस्तदा कर्तर्येस्याऽप्रसक्तिरेवेति दिक् । **कर्तरि भुवः ।** अच्व्यन्तेषु किम्? आढ्यीभविता । इष्णुच् तु न, गतिपूर्वेभ्यः प्रायेण ताच्छीलिकाऽप्रवृत्तेः । **स्पृशो ।** अनुदके किम् ? । उदक-

एभ्यः क्विप्स्यादुपसर्गे सत्यसति च सुप्युपपदे । द्युसत् । उपनिषत् । अण्डसूः । प्रसूः । मित्रद्विट् । प्रद्विट् । [मित्रध्रुट् । प्रध्रुट् ]।मित्रध्रुक् । प्रध्रुक्। गोधुक्। प्रधुक्। अश्वयुक्। प्रयुक्। वेदवित्।निविदित्यादि।॥अग्रग्रामाभ्यां नयतेर्णो वाच्यः। अग्रणीः । ग्रामणीः । **भजो ण्विः** ।३।२।६२। सुप्युपसर्गे चोपपदे भजेर्ण्विः स्यात् । अंशभाक् । प्रभाक् । **अदोऽनन्ने** ।३।२।६८। विट् स्यात् । आममत्ति आमात् । सस्यात् । अनन्ने किम् ?। अन्नादः। **क्रव्ये च** ।३।२।६९। अदेर्विट् । पूर्वेण सिद्धे वचनमण्बाधनार्थम् । क्रव्यात्–आममांसभक्षकः।कथं तर्हि 'क्रव्यादोऽस्रप आशर' इति ?। पक्वमांसशब्दे उपपदेऽण् , उपपदस्य क्रव्यादेशः, पृषोदरादित्वात् । **दुहः कब्घश्च** ।३।२।७०। कामदुघा । **अन्येभ्योऽपि दृश्यन्ते** ।३।२।७५।छन्दसीति निवृत्तम् । मनिन् क्वनिप् वनिप् विच एते प्रत्यया धातोः स्युः । **नेड्वशि कृति** ।७।२।८। वशादेः कृत इण्न स्यात् । शॄ–सुशर्मा । प्रातरित्वा । **विड्वनोरनुनासिकस्याऽऽत्**।६।४।४१।अनुनासिकस्य आत्स्यात् [विटि वनि च परे]। विजायत इति

---

त.]इत्यस्य तु न ग्रहणम् , विदेत्यकारस्य विवक्षितत्वात्। **द्युसदिति** । 'पूर्वपदा'दिति षत्वं तु न भवति, छन्दसीत्यनुवृत्तेः । तथा च माघः–'मनस्सु येन द्युसदां न्यधीयते'ति । 'आदितेया दिविषदः' इत्यत्र तु सुषामादित्वात्षत्वमिति माधवादयः। **उपनिषदित्यत्र** तु 'सदिरप्रते'रिति षः। **अग्रग्रामाभ्यामिति**।'स एषां ग्रामणी'रिति निर्देशेन ज्ञापितमेतत् । नीरूपप्रत्ययविषयत्वे चेदं, तेन कर्मण्यणि णत्वं न भवति । ग्रामनायः । ज्ञापकस्य सामान्यविषयत्वादग्रशब्दोपपदादपि णत्वं, तेनाऽग्रणीरित्यपि सिद्धमित्याहुः। **अदोऽनन्ने** । **विट् स्यादिति** । 'जनसनखनक्रमगमो विट्' इति पूर्वसूत्रादनुवृत्तेः। पूर्वसूत्रं त्विह नोपन्यस्तम् , तत्र हि 'छन्दसि सहः' इत्यतश्छन्दसीत्यनुवर्तनात् । **कामदुघेति** । 'धेनु'रिति शेषः । कामं दोग्धीति विग्रहः । **अन्येभ्योऽपि दृश्यन्ते** । इह 'विजुपे छन्दसि' इत्यतो विच्प्रत्ययः । 'आतो मनि'न्निति सूत्रान्मनिनादयश्चानुवर्तन्ते । तदाह–**मनिन्क्वनिबित्यादि** । **सुशर्मेति** । सुष्ठु शृणातीति विग्रहः। प्रातः एतीति प्रातरित्वा । इणः क्वनिपि 'ह्रस्वस्य पिती'ति तुक् । **अवावेति** । अनुनासिकस्य आत्वे अवादेशः। सौ

---

बा.]त्यदादिषु समानान्ययोश्च दृशेः क्सोऽपि वाच्य इत्यर्थः । **सत्सूद्विष** । सद् , सू , द्विष, द्रुह, दुह, युज, विद, भिद,छिद, जि, नी, राज् एषां द्वन्द्वात्पञ्चम्यर्थे षष्ठी । 'अनुपसर्गे' इत्यस्य निवृत्त्यैव सिद्धे 'उपसर्गेऽपी'ति वचनमन्यत्र सुब्ग्रहणे उपसर्गग्रहणं नेति ज्ञापनार्थम् । तेन 'वदः सुपि क्यप् चे'ति विधिरुपसर्गे न भवतीति भाष्ये स्पष्टम् । **द्युसदिति** । दिवि सीदतीति विग्रहः । 'सात्पदाद्यो'रिति न षत्वम् । 'पूर्वपदा'दिति षत्वं तु न भवति, तस्य च्छान्दसत्वात्। 'आदितेया दिविषदः' इत्यत्र सुषामादित्वात्षत्वमित्याहुः । **उपनिषदिति** । 'सदिरप्रते'रिति षत्वम् । **इत्यादीति** । काष्ठभित् , रज्जुच्छित् । शत्रुजित् । अत्र 'ह्रस्वस्य पिती'ति तुक् । सेनानीः। विराट् । **अग्रग्रामाभ्यामिति** । असमानपदत्वादप्राप्ते णत्वे वचनम् । **भजो ण्विः**। सुपि उपसर्गे चोपपदे भजेर्ण्विरित्यर्थः। **अंशभागिति** । णित्वादुपधावृद्धिः । **अदोऽनन्ने** । **विट् स्यादिति** । शेषपूरणमिदम् । अन्नशब्दभिन्ने सुप्युपपदे अदेर्विट् स्यादिति फलितम् । 'जनसनखनक्रमगमो वि'डिति छान्दससूत्राद्विडित्यनुवर्तते । **सस्यादिति** । सस्यमत्तीति विग्रहः । **अन्नाद इति**। कर्मण्यण् । **क्रव्ये च** । **अदेर्विडिति** । शेषपूरणमिदम् । **अण्बाधनार्थमिति** । क्रव्ये अदेर्विडेव, न त्वणित्यर्थलाभादिति भावः। **कथं तर्हीति**। 'क्रव्ये उपपदे अदेर्विडेवे'ति नियमादणोऽसंभवादित्याक्षेपः।समाधत्ते–**पक्वमांसशब्द इति** । तर्हि 'पक्वमांसाद' इति स्यादित्यत आह–**उपपदस्य क्रव्यादेश इति**। कुत इत्यत आह–**पृषोदरादित्वादिति** । **दुहः कब्घश्च** । सुप्युपपदे दुहेः कप्स्यात् , प्रकृतेर्घश्चान्तादेश इत्यर्थः । **कामदुघेति** । 'धेनु'रिति शेषः । कामम्=अपेक्षितं दुग्धे इति विग्रहः।**अन्येभ्योऽपि दृश्यन्ते**।'विजुपे छन्दसि''आतो मनिन्क्वनिब्वनिपश्चे'त्यधिकारे इदं सूत्रम्। **निवृत्तमिति**। व्याख्यानादिति भावः। मनिनि अन्त्यो नकार इत् , इकार उच्चारणार्थः। क्वनिपि वनिपि च पकार इत् ,इकार उच्चारणार्थः।विचि चकार इत् इकार उच्चारणार्थः।**नेड्वशि कृति**।षष्ठ्यर्थे सप्तम्यौ।वशा कृद्विशेष्यते।तदादिविधिः। तदाह–**वशादेरिति**। **सुशर्मेति**। शॄधातोर्मनिन्। **प्रातरित्वेति**। इण्धातोः क्वनिप्। **विड्वनोरनुनासिकस्याऽऽत्**।

---

शे.]स्पर्शः। अनुदके इत्येतत्सामर्थ्यात्क्विबपि न। **द्युसदिति**।सप्तम्यन्तेतरत् पूर्वपदं, सप्तम्यन्तत्वे 'हृद्युभ्या'मितित्यलुगापत्तिः । **सत्सू** । अनुपसर्ग इत्यस्य निवृत्त्यैव सिद्धे 'उपसर्गेपी'ति 'अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं ने'ति ज्ञापनार्थम् । तेन 'वदः सुपी'त्युपसर्गे ने'ति भाष्यम् । 'गदमदे'त्यत्रानुपसर्गे इत्यस्याऽस्वरितत्वमेव, मध्येऽसम्बन्धात् । अत एव प्रगद्यमित्यादिसिद्धिः। प्रष्ठे–'आतश्चोपसर्गे' इति क इति दिक् । **भजो ण्विः**। सुपि उपसर्गेऽपीति च वर्तते । **अण्बाधनार्थमिति**।स्पष्टञ्चेदं भाष्ये। **उपपदस्येति**। 'क्रव्ये चे'ति सूत्रं तु आममांसभक्षके 'क्रव्यादः' इत्येतद्व्यावृत्त्यर्थमिति भावः।अन्ये तु गङ्गाधरादिवत्पचाद्यचि सवर्णदीर्घे स साधुरित्याहुः। वस्तुतोऽयमसाधुरेवेति **परे** । **निवृत्तमिति**।'आतो

विजावा। ओणृ-अवावा। विच्-रोट्। रेट्। सुगण्। क्विप् च।३।२।७६।अयमपि दृश्यते। 'सत्सूद्विषे'ति स्वस्यैव प्रपञ्चः।उखास्रत्। पर्णध्वत्। वाहभ्रट्। अन्तः।८।४।२०। १दान्तस्थाऽनितेर्नस्य णत्वं स्यादुपसर्गस्थान्निमित्तात्पर-श्चेत्। हे प्राण्। 'शास इ'दितीत्त्वम्। मित्राणि शास्ति मित्रशीः। ❋ आशासः क्वावुपधाया इत्त्वं वाच्यम्। आशीः। इस्वोत्त्वे। गीः। पूः। इसमन्त्रन्क्विषु च।६।४।९७। एषु छादेर्ह्रस्वः स्यात्। तनुच्छत्। 'अनुनासिकस्य क्वी'ति दीर्घः। 'मो नो धातोः'। प्रतान्। प्रशान्। 'च्छ्वो'रित्यूठ्। अक्षद्यूः। 'ज्वरत्वरे'त्यूठ्। जूः। जूरौ। जूरः। तूः[तुरौ तुरः]। स्रूः। ऊः। वृद्धिः। जनानवतीति जनौः। जनावौ। जनावः। मूः। मुवौ। मुवः।

---

त.]दीर्घनलोपौ। रोट् रेडिति। रुष रिष हिंसायाम्। उपधागुणः। जश्त्वचर्त्वे। वाहभ्रडिति। वाहादश्वाद्भ्रंशतीति विग्रहः। वृत्तौ तु वहाभ्रडिति पाठः। वहः=स्कन्धः, 'अन्येषामपि दृश्यते' इति पूर्वपदान्तस्य दीर्घ इति हरदत्तः। अन्तः। अनितेरिति वर्तते, अन्तोऽत्र पदापेक्षो गृह्यते, नाऽनितेरपेक्षया, अव्यभिचारादत आह-पदान्तस्येति। हे प्राणिति। अन प्राणने। क्विप्। 'अनुनासिकस्ये'ति दीर्घः। 'न ङिसंबुद्ध्यो'रिति नलोपनिषेधः। अन्यत्र तु नलोपेन भाव्यमिति संबुद्ध्यन्तमुदाहृतम्। मित्रशीरिति। लुप्तेऽपि क्विप्प्रत्यये प्रत्ययलक्षणन्यायेन हलादिक्ङित्प्रत्ययपरत्वमस्ति, 'वर्णाश्रये नास्ति प्रत्ययलक्षण'मित्येतद्वर्णप्राधान्य एवेत्युक्तत्वादिति भावः। आशास इति। शासु अनुशिष्टौ। आङः शासु इच्छायाम्,आत्मनेपदी।'शास इ'दित्यादिना सिद्धे 'क्वावेव उपधाया इत्त्व'मिति नियमार्थमिदम्। तेन आशास्ते इति सिद्ध-मित्येके। अन्ये तु विध्यर्थमेवेदं, न नियमार्थं, प्राप्त्यभावात्। न च 'शास इदङ्हलो'रिति इत्वस्य प्राप्तिरस्तीति वाच्यं, तत्राङ्साहचर्यात्परस्मैपदिन एव शासेर्ग्रहणात्। यद्यपि 'सर्तिशास्ती'ति सूत्रे पृथग्योगकरणादर्तेर्लुङि आरत समारतेति पदद्वयेऽप्यङिति सिद्धान्तस्तथाप्युत्तरार्थतया परस्मैपदग्रहणानुवृत्तेरप्याकरे स्पष्टतया परस्मैपदे दृष्टो यः शासिस्तस्मात्परस्या-ऽङिति निष्कर्षः। तथा चाशास्ते इत्यत्र इत्वप्रसक्तिरेव नास्तीत्याहुः। वस्तुतस्तु 'आशिषि लिङ्लोटौ', 'क्षियाशीःप्रैषेषु' इत्यादिनिर्देशेनैव सिद्धमिति नेदमपूर्वं वार्तिकम्।ततश्च 'इत्वं वाच्य'मित्यस्य इत्वं व्याख्येयमित्यर्थः। आशिषीत्याद्युक्त-

---

बा.]विड्वनोरिति सप्तमी। अनुनासिकस्य-आदिति छेदः। विजावेति। जनेर्वनिप्। जनेर्नकारस्य आकारः। सवर्णदीर्घः। अवावेति। ओणेर्वनिप्। णकारस्य आकारः। अत्रादेशः। विजिति। 'उदाह्रियते' इति शेषः। रोट् रेडिति। 'रुष, रिष हिंसायाम्' विच्। 'वेरपृक्तस्ये'ति वलोपः। सुगणिति। गणेर्विच्। क्विप् च। अयमपीति। सर्वधातुभ्यः सोपपदेभ्यो निरुपपदेभ्यश्च छन्दसि लोके च क्विप् दृश्यते इत्यर्थः। नन्वनेनैव सिद्धे 'सत्सूद्विषे'ति सूत्रं व्यर्थमित्यत आह-सत्सूद्विषेति। 'सत्सूद्विषे'ति सूत्रं तु 'क्विप् चे'त्यस्यैव प्रपञ्च इत्यर्थः। उखास्रदिति। उखायाः स्रंसत इति विग्रहः। स्रंसेः क्विप्, 'अनिदिता'मिति नलोपः, 'वसुस्रंसु' इति दत्वम्। एवं पर्णध्वत्। पर्णात् ध्वंसत इति विग्रहः। वाहभ्रडिति। वाहात् भ्रश्यति इति विग्रहः। व्रश्चादिना षः। अन्तः। 'अनिते'रिति सूत्रमनुवर्तते, 'रषाभ्यां नो णः' इति च। अन्त इति षष्ठ्यर्थे प्रथमा।पदस्याऽन्तो विवक्षितः। 'उपसर्गादसमासेऽपी'त्यत उपसर्गादित्यनुवर्तते। तदाह-पदान्तस्येत्यादिना। हे प्राणिति। प्रपूर्वादनेः क्विबन्तात्संबोधनैकवचनस्य हल्ङ्यादिलोपः, नस्य णः। नलोपस्तु न, 'न ङिसंबुद्ध्योः' इति निषेधात्। मित्रशीरिति। मित्राणि शास्तीति विग्रहः। शासेः क्विप्। 'शास इदङ्हलोः' इत्युपधाया इत्वम्, 'र्वोरुपधायाः' इति दीर्घः। मित्रशिषावित्यादौ अपदान्तत्वान्न दीर्घः। आशासः क्वाविति। 'आङः शासु इच्छाया'मित्यात्मनेपदी।तस्य 'शास इदङ्हलोः' इति इत्वं तु न भवति,तत्र परस्मैपदिन एव शासेर्ग्रहणात्। अन्यथा आशास्ते इत्यादावपि इत्वापत्तेः। अत 'आशासः क्वा'विति विधिः। इस्वोत्त्वे इति। गॄधातोः क्विपि,ॠत इत्वे, रपरत्वे, सोर्लोपे, 'र्वोरुपधायाः' इति दीर्घे गीरिति रूपम्। पॄधातोः क्विपि, 'उदोष्ठ्यपूर्वस्ये'ति ॠत उत्त्वे, रप-रत्वे, सुलोपे, उपधादीर्घे पूरिति रूपमित्यर्थः। इसमन्त्रन्। इस्, मन्, त्रन्, क्वि एषां चतुर्णां द्वन्द्वः। 'छादेर्घे-ऽद्व्युपसर्गस्ये'त्यतश्छादेरिति, 'खचि ह्रस्वः' इत्यतो ह्रस्व इति चानुवर्तते। तदाह-एषु छादेरिति। अर्थादाकारस्येति गम्यते, अलोन्त्यपरिभाषामाश्रित्य इकारस्य ह्रस्वविधौ प्रयोजनाऽभावात्।एवंच 'ऊदुपधायाः' इत्यत उपधाया इति नानु-वर्तनीयम्, ण्यन्तस्य छादेर्दकारोपधत्वात्। इस्-छदिः। मन्-छद्म। त्रन्-छत्रम्। क्वौ उदाहरति-तनुच्छदिति। तनुं छादयतीति विग्रहः। अथ तनेः शमेश्च क्विपि विशेषमाह-अनुनासिकस्येति। 'अक्षद्यू'रित्यत्र आह-च्छ्वोरिति। अक्षैर्दीव्यतीति विग्रहे दिव्धातोः क्विपि वकारस्य ऊठि इकारस्य यणिति भावः।ज्वरेति। ज्वरधातोः क्विपि अकारवकार-योरेकस्मिन् ऊठिजूरिति रूपम्। एवं त्वरेः तूरिति रूपम्। स्रिवेः क्विपि इकारवकारयोरूठि स्रूरिति रूपम्। अवधातोः क्विपि

---

शे.]मनि'न्नित्यत्र 'विजुपे' इत्यतोऽनुवर्तमानमित्यर्थः।दृशिग्रहणादुपपदस्यापि व्यभिचारः।वनिपः 'शर्वरी'त्युदाहरणम्।रोट् रेडिति। 'रुष' 'रिष' हिंसायाम्। क्विप्च। अत्रापि दृशिग्रहणमनुवर्तते। 'क्विप् चान्येभ्योऽपि दृश्यते' इति ताच्छी-लिकप्रकरणे भाष्योक्तेः।तदाह-दृश्यत इति। अन्येभ्योपि दृश्यते। अत्र विचोऽपि सम्बन्ध इति 'यू इयाख्यौ' इति

सुमूः । सुम्वौ । सुम्वः । 'राल्लोपः' । मूर्च्छा–मूः । मुरौ । मुरः । धुर्वी–धूः । गमः क्वौ ।६।४।४०। अनुनासिकलोपः स्यात् । अङ्गगत् । * गमादीनामिति वक्तव्यम् । पुरीतत् । संयत् । सुनत् । * ऊङ् च गमादीनामिति वक्तव्यम् । लोपश्च । अग्रेगूः । अग्रेभ्रूः । स्थः च क ।३।२।७७। चात् क्विप् । शंस्थः । शंस्था: । 'शमि धातो'रित्यचं बाधितुं सूत्रम् । सुप्यजातौ णिनिस्ताच्छील्ये ।३।२।७८। अजात्यर्थे सुपि धातोर्णिनिः

त.]निर्देशादिति दिक् । सुम्वाविति । 'ओः सुपि' इति यण् । स्थः क च । शंस्था इति । क्विपि लुप्ते 'घुमास्थे'ति ईत्वं न, स्थानिवद्भावस्य अनल्विधादिति निषेधात् । प्रत्ययलक्षणसूत्रं तु प्रत्ययस्याऽसाधारणं रूपं यत्राश्रीयते तत्रैवेति नियमार्थमिति निष्कर्षात् । यत्तु कैयटेनोक्तम्–'ईत्वमवकारादाविति वचनाद्भाष्यकारीयोदाहरणप्रामाण्याद्वा प्रत्ययलक्षणेनं ईत्वं ने'ति, तत् 'अतृणेडित्यादिसिद्धये प्रत्ययप्राधान्ये अल्विध्यर्थं प्रत्ययलक्षणसूत्र'मिति पक्षमभिप्रेत्य । तत्राप्यवकारादाविति वचनस्वीकारे सुधीवेति न सिध्येदित्यपरितोषेण पक्षान्तरस्वीकार इति बोध्यम् । ननु 'नियमार्थ'मिति निष्कर्षपक्षे तु प्रागुक्त मत्रशीरित्यत्र कथमित्वं भवेदिति चेत् । अत्राहुः–शास इदिति । ततः–अङि । नियमार्थमिदम् । अजादौ चेदित्वं स्यादङ्येव नान्यत्रेति हल्ग्रहणं मास्त्विति ज्ञेयमिति । न चैवमपि हलादौ पिति सार्वधातुके तृणह इमो विधानादतृणेडित्यादि तु नियमपक्षे न सिध्यतीत्यल्विध्यर्थमिति पक्षोऽपि स्वीकार्य इति वाच्यम् , 'उतो वृद्धि'रिति सूत्राद्धल्ग्रहणमनुवर्त्य तृणढानीत्यत्राऽनिष्टवारणाय 'नाभ्यस्तस्याचि'ति सूत्रादचि नेत्यनुवर्त्य व्याख्यानात् । एतच्च रुधादिगण एव व्याख्यातम् । स्यादेतत्–'सुपि स्थः' 'क्विप् चे'ति सूत्राभ्यां कक्विपौ सिद्धौ । तत्राह–शमीत्यादि । धातुग्रहणसामर्थ्याद्धि धातुमात्राद्भवन्नच्प्रत्ययो हेत्वादिषु कृञष्टं यथा बाधते तथा तिष्ठतेः कक्विपावपि बाधेतेति 'स्थः क चे'त्यारम्भ इति भावः । नन्वेवं 'शमि धातो'रित्यस्याऽनन्तरं 'स्थः क चे'ति सूत्र्यतां,चकारेणाऽचि समुच्चिते सवर्णदीर्घे शंस्था इति भविष्यति,एवं चोत्सर्गापवादयोः समानदेशतया संदर्भशुद्धिरपि लभ्यते, इत्त्वाऽभावार्थं च न यतनीयमिति महल्लाघवमिति चेत् । अत्राहुः–अशंस्था इत्यत्र 'अचकावशक्तौ' इति सूत्रेणोत्तरपदमन्तोदात्तं स्यात् । 'कृद्ग्रहणे गतिकारकपूर्वस्यापी'ति शंस्था-

बा.]अकारवकारयोरूठि ऊरिति रूपम् । वृद्धिरिति । जनानवतीति विग्रहे, अवेः क्विपि, अकारवकारयोरूठि, जन ऊ इति स्थिते, आद्गुणं बाधित्वा 'एत्येधत्यूठ्सु' इति वृद्धिरौकारादेश इत्यर्थः । मूरिति । मवेः क्विपि, अकारवकारयोरूठ् । सुम्वौ सुम्व इति । अनेकाच्त्वाद्धतिपूर्वत्वाच्च यणिति भावः । राल्लिति । मुर्छाधातोः क्विपि 'राल्लोपः' इति छकारस्य लोपे सुलोपे 'वौं'रिति दीर्घे मूरिति रूपम् । मुरौ मुर इति । अपदान्तत्वान्नोपधादीर्घः । धुर्वीति । धुर्वीधातोः क्विपि 'राल्लोपः' इति वकारस्य लोपे सुलोपे 'वौं'रिति दीर्घे धूरिति रूपमिति भावः । गमः क्वौ । अनुनासिकलोपः स्यादिति । शेषपूरणमिदम् । 'अनुदात्तोपदेशे'त्यतस्तदनुवृत्तेरिति भावः । झलादिप्रत्ययपरकत्वाऽभावादनुदात्तोपदेशेत्यप्राप्तौ वचनम् । अङ्गगदिति । अङ्गाख्यं देशं गच्छनीति विग्रहः । क्विपि मकारलोपे तुक् । एवं वङ्गगत् । कलिङ्गगदित्यादि । गमादीनामिति । 'क्वावनुनासिकलोप' इति शेषः । पुरीतदिति । पुरिः = हृदयाख्यो मांसखण्डविशेषः, तं तनोति = आच्छादयतीति विग्रहः । हृदयकमलाच्छादको मेदोविशेषः । 'पुरीतता हि हृदयमाच्छाद्यते' इति श्रुति'रिति कर्किभाष्यम् । तनेः क्विपि नकारलोपे तुक् । 'नहिवृतिवृषी'ति पूर्वपदस्य दीर्घः । संयदिति । यमेः क्विप् । मलोपे तुक् । सुनदिति । नमेः क्विपि मलोपे तुक् । ऊ चेति । गमादीनामुपधाया ऊभावश्चेति वक्तव्यमित्यर्थः । लोपश्चेति । चकारादनुनासिकलोपः समुच्चीयते इति भावः । अग्रेगूरिति । अग्रे गच्छतीति विग्रहः । गमेरकारस्य ऊभावः, मलोपश्च । 'तत्पुरुषे कृति बहुल'मित्यलुक् । अग्रेभ्रूरिति । भ्रमेरकारस्य ऊभावः, मलोपश्च । स्थः क च । 'के'त्यविभक्तिकम् । स्थ इति पञ्चम्यन्तम् । चात् क्विबिति । उपसर्गे अनुपसर्गे च सुबन्ते उपपदे स्थाधातोः कप्रत्ययः स्यात् , क्विप् चेति फलितम् । शंस्थ इति । शमित्यव्ययं सुखे । तत्पूर्वात्स्थाधातोः कप्रत्यये आतो लोपः । शंस्था इति,–क्विपि रूपम् । सुखं स्थापयतीत्यर्थः । तिष्ठतिरन्तर्भावितण्यर्थः । 'शंस्था' इति भाष्यप्रयोगात्पृषोदरादित्वाच्च 'घुमास्थे'ति ईत्वं न । केचित्तु 'क चे'ति चकाराद्विजेवानुकृष्यते इत्याहुः । ननु 'सुपि स्थः' इति कप्रत्यये 'क्विप् चे'ति क्विपि च सिद्धे किमर्थमिदमित्यत आह–शमिधातोरित्यचमिति । अन्यथा धातुग्रहणसामर्थ्यात्कृञो हेत्वादिषु टप्रत्ययमिव शम्पूर्वात् स्थाधातोः कं क्विपं च अच्प्रत्ययो बाधेतेति भावः । सुप्यजातौ । 'सुपि स्थः' इत्यतः सुपीत्यनुवृत्तौ पुनः सुब्ग्र-

शे.]सूत्रे भाष्ये । इस्मन् । 'खचि ह्रस्वः' इत्यतो ह्रस्व इति,'छादेर्घे' इत्यतश्छादेरिति चानुवर्तते । लोपश्चेति । 'अन्यस्ये'ति शेषः । शंस्था इति । अत्राऽन्तर्भावितण्यर्थत्वे 'शं'मित्यस्य कर्मत्वम् , अन्यथा तु न तत्त्वम् । प्रत्ययस्तूभयथापि, सुपीत्यस्यैव सम्बन्धात् ॥ अत्र विच् । 'चाक्कि'बित्यत्र क्विप्पदेन साहश्याद्विजेवोच्यते । अत एव नेत्त्वम् । अचं बाधितुमिति । अन्यथा धातुग्रहणसामर्थ्येन कृञोहेत्वादिषु टबाधवत् शंपूर्वकस्थाधातोः कक्विपावप्यच् बाधेतेत्यर्थः ।

स्यात्ताच्छील्ये द्योत्ये । उष्णभोजी । शीतभोजी । अजातौ किम् ? । ब्राह्मणानामन्त्रयिता । ताच्छील्ये किम् ?। उष्णं भुङ्क्ते कदाचित् । इह वृत्तिकारेणोपसर्गभिन्न एव सुपि णिनिरिति व्याख्याय 'उत्प्रतिभ्यामाङि सर्तेरुप-सङ्ख्यान'मिति पठितम् । हरदत्तमाधवादिभिश्च तदेवानुसृतम् । तच्च भाष्यविरोधादुपेक्ष्यम् । प्रसिद्धश्चोपसर्गेऽपि णिनिः । 'स बभूवोपजीविनाम्' । 'अनुयायिवर्गः' । 'पतत्यधो धाम विसारि' । 'न वञ्चनीयाः प्रभवोऽनुजीविभि'-रित्यादौ । * साधुकारिण्युपसङ्ख्यानम् । * ब्रह्मणि वदः । अताच्छील्यार्थं वार्तिकद्वयम् । [ साधुकारी ]। साधुदायी । ब्रह्मवादी । कर्तर्युपमाने ।३।२।७९। णिनिः स्यात् । उपपदार्थः कर्ता प्रत्ययार्थस्य कर्तुरुपमानम् । उष्ट्र इव क्रोशति उष्ट्रक्रोशी । ध्वाङ्क्षरावी । अताच्छील्यार्थं, जात्यर्थं च सूत्रम् । कर्तरि किम् ? । अपूपानिव भक्षयति माषान् । उपमाने किम् ? । उष्ट्रः क्रोशति । व्रते ।३।२।८०। णिनिः स्यात् । स्थण्डिलशायी । बहुलमाभीक्ष्ण्ये ।३।२।८१। पौनःपुन्ये द्योत्ये सुप्युपपदे णिनिः स्यात् ।

---

त.]शब्दस्याजन्तत्वात् । क्विबन्तेन नञ्समासे नञ्पूर्वपदप्रकृतिस्वरः सिध्यतीति । उष्णभोजीति । उष्णं भोक्तुं शीलमस्य । आमन्त्रयितेति । मन्त्रि गुप्तपरिभाषणे, चुरादिराङ्पूर्वः । इदित्वान्नुम्, ताच्छील्यस्य विवक्षितत्वात्तृन् । अतएव 'न लोके'ति निषेधात् 'ब्राह्मणा'नित्यत्र कर्मणि षष्ठी न कृता । उपसर्गभिन्न एवेति । 'सत्सूद्विषे'ति सूत्रे 'उपसर्गेऽपी'त्युक्तत्वादुपसर्गभिन्नस्यैव सुपो लभायाऽस्मिन्सूत्रे पुनः सुब्ग्रहणं कृतमिति भावः । भाष्यविरोधादिति । उक्तं च भाष्ये–'सुबिति वर्तमाने पुनः सुब्ग्रहणं किमर्थमनुपसर्ग इत्येव तदभूत्, इदं तु सुब्मात्रे यथा स्यादुदासारिण्यः प्रत्यासारिण्य' इति । अस्यायमाशयः–'सत्सूद्विषे'ति सूत्रे 'सुपि स्थः' इत्यतः सुपीत्यनुवर्तते, तच्च उपसर्गेतरपरम्, उपसर्गेऽपीति पृथगुक्तेः । तदिहानुवर्तमानमर्थाधिकाराद्उपसर्गेतरपरमेव स्यादिति । निष्कर्षे तु मा भूदिह सुब्वचनग्रहणम्, उपसर्गेऽपीत्यंशस्याप्यनुवृत्त्या निर्वाहात् । सर्वथापि सुब्मात्रे उपपदे णिनिर्न त्वनुपसर्गे एवेति सिद्धान्तः । एतच्च शब्दकौस्तुभे स्पष्टम् । प्रसिद्धश्चेति । एवं च 'पाणिनीयानुसारिणी'मिति प्रक्रियाकारप्रयोगोऽपि निर्बाध एव । अमरश्च प्रायुङ्क्त–लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः'इ[ती]ति दिक् । साधुकारिणीति । एतच्च ज्ञापकसिद्धम् । 'आ क्वे'रिति सूत्रे हि तच्छीलात्पृथक् साधुकारी गृह्यते, तच्च ताच्छील्यं विनापि णिनौ सत्येव सङ्गच्छते । ब्रह्मणि वद इति । इदं तु वाचनिकमेव । अताच्छील्यार्थमिति । एतच्च कैयटहरदत्तादिग्रन्थे स्पष्टम् । यत्तु भट्टवार्तिके ब्रह्मवादिशब्दस्य तच्छीलतद्धर्मतत्साधुकारिपरतया व्याख्यानं कृतम् । 'आ क्वे'रित्यधिकारे तु ब्रह्मणि वदेर्णिनिविधायकं वचनं नास्त्येवेति कथमिदं सङ्गच्छेतेति चेत्, अत्राहुः–भट्टपादानामयमाशयः–'सुप्यजातौ' इति सूत्रेण ताच्छील्ये णिनिः । उपसङ्ख्यानेन ज्ञापकेन वा साधुकारिणि णिनिः ।

---

बा.]हणमुपसर्गेऽपि विधानार्थम् । अन्यथा 'आतोऽनुपसर्गे' इत्यतोऽनुपसर्गे इत्यनुवर्तेत । तद्ध्वनयन्नुदाहरति–उष्णभोजीति । उष्णभोजनशील इत्यर्थः । उपसर्गभिन्न एवेति । अनुपसर्ग इत्यनुवर्तते । सुब्ग्रहणं तु 'सत्सूद्विषे'ति सूत्रादुपसर्गेऽपीत्यनुवृत्तिनिवृत्तये इति भावः । उत्प्रतिभ्यामिति । उत्प्रतिभ्यां परे आङि प्रयुज्यमाने सति तत्पूर्वात्सर्तेर्णिनेरुपसङ्ख्यानमिति तदर्थः । उदासारिणी प्रत्यासारिणीत्युदाहरणम् । भाष्यविरोधादिति । सुब्ग्रहणमुपसर्गग्रहणाऽनुवृत्तिनिवृत्त्यर्थम्, उपसर्गे अनुपसर्गे च सुबन्ते उपपदे धातोर्णिनिरित्येव भाष्ये उदाहृतत्वादिति भावः । तथाच 'उत्प्रतिभ्यामाङि सर्ते'रिति वचनं नादर्तव्यम् । भाष्ये तत्पाठस्तु प्रक्षिप्त एवेति भावः । अत एव 'अनुगादिनष्ठ'गिति सूत्रप्रयोगश्च सङ्गच्छते इति ज्ञेयम् । 'उपसर्गभिन्न एव सुपि णिनि'रिति मतं शिष्टप्रयोगविरुद्धं चेत्याह–प्रसिद्धश्चोपसर्गेऽपि णिनिरिति । 'इत्यादा'वित्यत्रान्वयः । साधुकारिणीति । कृञ्ग्रहणं सर्वधातूपलक्षणम् । साधुकारीत्यादिशब्दविषये तत्सिद्ध्यर्थं णिनेरुपसङ्ख्यानमित्यर्थः । साधुशब्दे उपपदे धातोर्णिनिरिति यावत्, भाष्ये 'साधुकारी साधुदायी'-त्युदाहरणात् । ब्रह्मणि वद इति । 'णिनेरुपसङ्ख्यान'मिति शेषः । ननु 'सुप्यजातौ' इत्येव सिद्धे किमर्थमिदं वार्तिकमित्यत आह–अताच्छील्यार्थमिति । साधुदायीति । आतो युक् । ब्रह्मवादीति । ब्रह्म–वेदः । कर्तर्युपमाने । कर्तुरुपमानमिति । 'चे'दित्यध्याहार्यम् । ननु 'सुप्यजातौ' इति सिद्धे किमर्थमिदमित्यत आह–अताच्छील्यार्थमिति । व्रते । णिनिः स्यादिति । सुप्युपपदे णिनिः स्याद्व्रते गम्ये इति यावत् । स्थण्डिलेशायीति । 'तत्पुरुषे कृती'ति [सप्तम्या] अलुक् । बहुलमाभीक्ष्ण्ये । जातावप्युपपदे प्राप्त्यर्थमिदम् । तद्ध्वनयन्नुदाहरति–क्षीर-

---

शे.]उपसर्गभिन्न एवेति । सुपीति वर्त्तमाने पुनः सुब्ग्रहणेनोपसर्गेऽपीत्यस्य निवृत्तेरिति भावः । भाष्येति । अत एव 'उपसर्गोद्दती'ति सूत्रे 'सुवापी'ति भाष्यप्रयोगः, 'अनुगादिनः' 'विसारिणः' इति सौत्रप्रयोगश्च सङ्गच्छते । साधुकारिणीति । करोतिरत्र सर्वधात्वर्थानुवादकः । तदाह–साधुदायीति । कर्तर्यु । कर्तृभूतोपमानवाचके उपपदे इत्यर्थः । व्रते । सुप्युपपदे व्रते गम्ये णिनिरित्यर्थः । स्थण्डिलेति । स्थण्डिल एव शेते इत्येवं व्रतमत्र गम्यते । 'स्थण्डिले शेत एवे'ति तु न,तस्य [शास्त्रबोधितत्वाऽभावेन]व्रतत्वाऽप्रसिद्धेः । बहुलमा[भीक्ष्ण्ये] । बहुलग्रहणादाभीक्ष्ण्यो-

क्षीरपायिण उशीनराः। **मनः** ।३।२।८२। सुपि मन्यतेर्णिनिः स्यात्। दर्शनीयमानी। **आत्ममाने खश्च** ।३।२।८३। स्वकर्मके मनने वर्तमानान्मन्यतेः सुपि खश् स्यात्। चाणिनिः। पण्डितमात्मानं मन्यते पण्डितंमन्यः। पण्डितमानी। **'खित्यनव्ययस्य'**। कालिंमन्या। अनव्ययस्य किम्?। दिवामन्या। **इच एकाचोऽम्प्रत्ययवच्च** ।६।३।६८। इजन्तादेकाचोऽम् स्यात्स च स्वाद्यम्वत्खिदन्ते परे। **'औतोऽम्शसोः'**। गांमन्यः। **'वाऽम्शसोः'**। स्त्रियंमन्यः। स्त्रींमन्यः। नृ-नरंमन्यः। सुवम्मन्यः। श्रियमात्मानं मन्यते श्रिमन्यं कुलम्।

त.]'आवश्यकाधमर्ण्ययोर्णिनि'रित्यावश्यके णिनिस्तु तद्धर्मे पर्यवस्यति न त्विह'आ क्वे'रिति सूत्रस्य व्यापारोऽस्तीति। ननु ब्रह्मवादिनो वदन्ति इत्यत्र ब्रह्म वेद इति ब्रह्मशब्दस्यापि जातिवाचकत्वात्कथमिह ताच्छील्ये णिनिरिति समर्थनमिति चेत्। अत्र नव्याः–'सुप्यजातौ' इत्यत्र प्राणिजातिरेव पर्युदस्यते, ताच्छील्यसमभिव्याहारात्, 'ब्राह्मणानामन्त्रयिते'ति प्रत्युदाहरणानुगुण्याच्चेति न काप्यनुपपत्तिरिति। **मनः**। बहुलग्रहणानुवृत्तेरिह मन ज्ञान इति दैवादिकस्यैव ग्रहणं न तु मनु अवबोधन इति तानादिकस्य। तेन उत्तरसूत्रे खशि श्यनेव भवति न तूप्रत्ययः। तदाह–**मन्यतेरिति**। **आत्ममाने**। मननं मानः, भावे घञ्, आत्मनो मान इति कर्मणि षष्ठ्या समासः। स्वपर्याय आत्मशब्दः प्रत्ययार्थत्वेन सन्निहितः कर्ता स्वपदार्थस्तदाह–**स्वकर्मक इत्यादि**। **चादिति**। ननु वासरूपविधिना लभ्यत एव णिनिरिति किमर्थश्चकार इति चेत्। अत्राहुः–चकारेणाऽविच्छेदाय णिनिः समुच्चीयते। तेन 'करणे यजः' इत्यादौ णिनिरेवाऽनुवर्तते न तु खश्, एवं चोक्तप्रयोजनानुरोधेन 'चानुकृष्टं नोत्तरत्रे'तीह न प्रवर्त्तते इति। **पण्डितमात्मानमिति**। एकस्याप्यात्मनः स्वरूपेण कर्तृत्वं, पण्डितत्वविशिष्टरूपेण च कर्मत्वं बोध्यम्। आत्ममाने किम्?। दर्शनीयमानी देवदत्तो यज्ञदत्तस्य। **कालिंमन्येति**। 'स्त्रियाः पुंव'दिति प्राप्तं पुंवद्भावं बाधित्वा परत्वाद्ध्रस्वः। यत्त्वत्र 'क्यङ्मानिनो'रिति प्राप्तः पुंवद्भाव इति प्रसादकृतोक्तं, तद्भ्रमसोक्तमेव, मानिन्रूपाऽभावस्य स्पष्टत्वात्। **दिवामन्येति**। अधिकरणशक्तिप्रधानस्याप्यस्य वृत्तिस्वभावात्कर्मत्वम्। **इच एकाचः**। अम्ग्रहणमिहाऽऽवर्तते, तत एकेन अम् विधीयते, परेण प्रत्ययो विशेष्यते।तदाह–**स्वाद्यम्वदिति**।

बा.]पायिण इति।मनः। दैवादिकस्यैव मनेर्ग्रहणं न तु तानादिकस्य, बहुलग्रहणाऽनुवृत्तेः।तदाह–**सुपि मन्यतेरिति**। मनुतेर्ग्रहणे तु बाधकमुत्तरसूत्रे वक्ष्यते। **आत्ममाने खश्च**। आत्मनः=स्वस्य, मानः=मननम्–आत्ममानः। तदाह–**स्वकर्मके मनने इति**। **पण्डितम्मन्य इति**। खशः शित्त्वेन सार्वधातुकत्वाच्छ्यन्। खित्वात् 'अरुर्द्विष'दिति मुम्। तानादिकस्य मनेर्ग्रहणे तु उविकरणः स्यात्। कालीमात्मानं मन्यते इत्यर्थे खशि श्यनि कृते आह–**खित्यनव्ययस्येति**। 'स्त्रियाः पुंव'दिति पुंवत्त्वं बाधित्वा परत्वाद्ध्रस्व इत्यर्थः। **दिवामन्येति**। अधिकरणशक्तिप्रधानस्यापि दिवाशब्दस्य वृत्तिविषये कर्मत्वं बोध्यम्। **इच एकाचः**। एकाच अमिति छेदः। अम् च अम् चेत्येकशेषः। एकं विधेयसमर्पकम्। 'इच एकाचो'ऽमिति प्रथमं वाक्यम्। इच इत्येकाच इति च पञ्चमी। 'अलुगुत्तरपदे' इत्युत्तरपदाधिकारादाक्षिप्तं पूर्वपदमिचा विशेष्यते। तदन्तविधिः। तदाह–**इजन्तादेकाचोऽम्स्यादिति**। मुमोऽपवादः। द्वितीयमम्पदं 'प्रत्ययव'दित्येकदेशेन प्रत्ययेन समानाधिकरणं संबध्यते। असामर्थ्येऽपि वतिप्रत्यय आर्षः।'अम्प्रत्ययव'दिति द्वितीयं वाक्यं संपद्यते। स्वादिप्रत्ययेषु यद्द्वितीयैकवचनं तदेवाऽत्र अमिति विवक्ष्यते, व्याख्यानात्। तदाह–**स च स्वाद्यम्वदिति**। एतत्सर्वं भाष्ये स्पष्टम्। **खिदन्ते पर इति**। खिदन्ते उत्तरपदे परत इत्यर्थः। 'खित्यनव्ययस्ये'त्यतः खितीत्यनुवर्तते इति भावः। 'अम्प्रत्ययव'दित्यतिदेशस्य प्रयोजनमाह–**औतोम्शसोरिति**। **गाम्मन्य इति**। गामात्मानं मन्यते इत्यर्थे मनेः खशि श्यन्, सुपो लुक्, गोशब्दादम्, 'अम्प्रत्ययव'दित्यतिदेशान्मकारस्य 'न विभक्तौ' इति नेत्त्वम्। 'औतोऽम्शसो'रित्योकारस्य आकार इति भावः। 'अम्प्रत्ययव'दित्यस्य प्रयोजनान्तरमाह–**वाऽम्शसोरिति**। **स्त्रियम्मन्य इति**। स्त्रियमात्मानं मन्यते इत्यर्थे मनेः खशि श्यन्। सुपो लुक्। स्त्रीशब्दात् 'वाऽम्शसोः' इति इयङ्विकल्पः। अत्र यकारादकारस्य श्रवणार्थमम्विधिः। मुमि तु अकारो न श्रूयेत। **स्त्रीम्मन्य इति**। इयङभावपक्षे 'अमि पूर्वः'। 'अम्प्रत्ययव'दित्यस्य प्रयोजनान्तरमाह–**नृ–नरम्मन्य इति**। 'नृ' इत्यविभक्तिकम्, उदाहरणे नृशब्दस्य समावेशसूचनार्थम्। नरमात्मानं मन्यते इत्यर्थे मनेः खश्, श्यन्, सुपो लुक्, नृशब्दादम्। 'अम्प्रत्ययव'दित्यतिदेशात् 'ऋतोऽङी'ति गुणः। अत्राऽपि रेफादकारश्रवणार्थोऽम्विधिः। मुमि त्वकारो न श्रूयेत। 'अम्प्रत्ययव'दि-

शे.]पपदयोरभावेऽपि 'व्रते' इति सूत्रभाष्यबोधिते 'व्रतार्थं स्थायी'त्यादौ णिनिः।**आत्ममाने ख**। आत्ममाने इति किम्?। दर्शनीयमानी देवदत्तो यज्ञदत्तस्येति। सूत्रे 'अम्' इति तन्त्रेणाऽम्पदद्वयनिर्देशः, एकं विधेयसमर्पकम्, अपरं प्रत्ययविशेषणमिति भाष्ये स्पष्टं, तदाह–**स च स्वादीति**। अन्यस्याऽमः प्रत्ययस्यातिदेशायोग्यकार्याऽभावात्स्वाद्यमेव गृह्यते इति भावः। **श्रिमन्यमिति**। **परे** तु 'स्वमो'रिति लुगत्र न, बाध्यसामान्यचिन्तया 'सुपो धातु' इति लुग्वदस्यापि

भाष्यकारवचनात् श्रीशब्दस्य ह्रस्वो, मुममोरभावश्च । भूते ।३।२।८४। अधिकारोऽयम् , 'वर्तमाने लट्'इति यावत् ।, करणे यजः ।३।२।८५। करणे उपपदे भूतार्थाद्यजेर्णिनिः स्यात्कर्तरि । सोमेनेष्टवान् सोमयाजी ।

---

त.]एवं च 'न विभक्तौ तुस्माः' इति निषेधान्मकारस्य नेत्संज्ञा,अतएव परश्च भवति। 'औतोऽम्शसो'रित्यत्र शसा साहचर्यात्सुबेवाऽम् गृह्यत इत्युक्तत्वादोत आकारश्च भवतीत्याशयेनोदाहरति–**गामन्य इति । नरंमन्य इति ।** 'ऋतोऽङि'त्यादिना गुणः । **भाष्यकारेति।** अयं भावः–यथा प्रष्ठादयः शब्दाः पुंयोगात्स्त्रियां वर्तन्ते–प्रष्ठी गणिकेति,तथेह श्रीशब्दः परित्यक्तस्वलिङ्गः क्लीवः सन् कुले वर्तते, तत्र 'ह्रस्वो नपुंसके' इति ह्रस्वः, मुम् तु न, अपवादेन अमा बाधात् । 'स्वमोर्नपुंसका'दित्यमो लुक्। न चैवं गामन्य इत्यादावपि 'सुपो धातुप्रातिपदिकयो'रिति लुक् स्यादिति वाच्यम् ,अम्विधिसामर्थ्यादेव तद्बाधादित्याहुः । अम्प्रत्ययस्तु 'मध्येऽपवादा' इति न्यायेन 'सुपो धातुप्रातिपदिकयो'रिति लुकमेव बाधते न तु 'स्वमोर्नपुंसका'दिति लुकमिति भाष्यादौ स्थितम् । स्यादेतत्–नपुंसकह्रस्वे कृते मुमः प्राप्तिरेव नास्ति, कथमत्रापवादेन अमा बाधादित्युक्तिः सङ्गच्छेत,'अरुर्द्विष'दिति सूत्रे हि अन्तग्रहणस्य समीपवाचित्वेन 'खित्यनव्ययस्ये'ति ह्रस्वे कृते पश्चान्मुमिति व्याख्यातत्वात् । सत्यम् । जनमेजय इत्यत्र स्वतःसिद्धेऽपि ह्रस्वे यथा 'खित्यनव्ययस्ये'ति पुनर्ह्रस्वो मुमर्थः स्वीक्रियते तथात्रापि भवेदित्यस्त्येव मुमः प्राप्तिरिति । **भूते ।** धातोरित्यधिकाराद्धात्वर्थस्य विशेषणमिदम् । भूतेऽर्थे विद्यमानाद्धातोरित्यर्थः।**करणे।** स्वरितत्वाण्णिनिरेवानुवर्तते, न तु खशित्याह–**णिनिः स्यादिति ।** सोमेन लताविशेषेण यागं कृतवानित्यर्थः।**अग्निष्टोमेति।**अग्निष्टोमस्तोत्रेण समाप्यमानो यो यागः स लक्षणयाऽग्निष्टोमस्तेनाऽपूर्वं भावितवानित्यर्थः।

---

बा.]त्यस्य प्रयोजनान्तरमाह–**भुवमन्य इति।**भुवमात्मानं मन्यते इत्यर्थे मनेः खश् ,श्यन्, सुपो लुक्। भूशब्दादम्, 'अम्प्रत्ययव'दित्यतिदेशात् 'अचि श्नुधातु' इत्युवङ् । अतिदेशाऽभावे तु उवङ् न स्यात्, तस्याऽजादिप्रत्यये विधानात्। **श्रिमन्यमिति ।** मनेः खश् । श्यन् । अत्र मननक्रियां प्रति कुलत्वेन रूपेण कुलं कर्तृ, तस्यैव कुलस्य अध्यारोपितश्रीत्वेन रूपेण कर्मत्वं चेति स्थितिः । एवंच श्रीशब्दस्य नित्यस्त्रीलिङ्गस्यापि कुले लक्षणया वृत्तेर्नपुंसकत्वम् । यत्र हि प्रातिपदिकस्यैव लक्षणा प्रसिद्धा तत्र पूर्वलिङ्गत्यागः । यथा प्रकृते श्रीशब्दः । यत्र तु पदस्य लक्षणा, न तत्र पूर्वलिङ्गत्यागः, यथा 'गङ्गायां घोष' इत्यादाविति 'पुंयोगादाख्याया'मिति सूत्रे, प्रकृतसूत्रे च भाष्यकैयटयोर्मर्यादा स्थिता । एवंच 'कालिम्मन्यं कुल'मित्यत्र कालीशब्दस्य न स्त्रीलिङ्गपरित्यागः,प्रयोगानुसारेण तत्र पदलक्षणाया एवाभ्युपगमात्। 'श्रिमन्यं कुल'मित्यत्र तु प्रयोगाऽनुसाराच्छ्रीशब्दस्य प्रातिपदिकस्यैव लक्षणेति पूर्वलिङ्गपरित्यागान्नपुंसकलिङ्गत्वमेवाश्रीयते । ततश्च श्रीशब्दस्याऽत्र नपुंसकत्वात् 'खित्यनव्ययस्ये'ति बहिरङ्गं ह्रस्वं बाधित्वा 'ह्रस्वो नपुंसके प्रातिपदिकस्ये'ति ह्रस्व एव न्याय्यः। मुमपवादे 'इच एकाचः' इत्यमि कृते तस्य 'स्वमोर्नपुंसका'दिति लुक् । तथाच 'श्रिमन्यं कुल'मिति सिद्धम् । नच गाम्मन्य इत्यादावपि 'सुपो धातुप्रातिपदिकयो'रिति लुक् स्यादिति वाच्यम्, 'इच एकाचः' इत्यमः 'सुपो धातु' इति लुगपवादत्वात् । 'स्वमोर्नपुंसका'दिति लुकस्तु नायमम्विधिर्बाधकः,मध्येऽपवादन्यायादिति प्रकृतसूत्रे भाष्यकैयटयोः स्पष्टम्। तदाह–**भाष्यकारेत्यादि ।** 'ह्रस्वो नपुंसके' इत्यनेने'ति शेषः। **मुममोरभावश्चेति।** मुमपवादस्य अमः 'स्वमोर्नपुंसका'दिति लुकि सति तयोः प्रयोगाऽभावः फलतीत्यर्थः । **भूते । अधिकारोऽयमिति ।** धातोरित्यधिकृतम्। ततश्च भूतार्थवृत्तेर्धातोरित्युत्तरत्राऽनुवर्तते इति फलति । **वर्तमाने इति ।** 'वर्तमाने लट्'डित्यतः प्रागित्यर्थः । अत्र व्याख्यानमेव शरणम् । **करणे यजः । सोमेनेति ।** सोमाख्यलताविशेषरसेन यागं कृतवानित्यर्थः । सोमलतारसद्रव्यकेन यागेन अपूर्वमुत्पादितवानिति मीमांसकाः । एतच्च द्वितीयस्य द्वितीये 'द्रव्यसंयोगाच्चोदना पशुसोमयो'रित्यधिकरणेऽध्वरमीमांसाकुतूहलवृत्तौ प्रपञ्चितमस्माभिः । **अग्निष्टोमयाजीति ।** अग्निष्टोमाख्ययागेन अपूर्वं भावितवानित्यर्थः । **कर्मणि**

---

शे.]अम्विधानसामर्थ्येन बाधात्।किं चाऽस्याऽमो बहिरङ्गतयाऽसिद्धत्वादपि न 'सुपो धातु' इति लुक् । 'उत्तरपदाधिकारे एषा परिभाषा ने'त्युक्तिस्तु भाष्ये उक्तिप्रत्युक्तिक्रमेण पूर्वपक्षिण इति स्पष्टं तद्विदाम् । 'परन्तपः' इत्यस्य त्रिपाद्यां बहिरङ्गपरिभाषाया अप्रवृत्त्या सुसाधत्वेन फलाऽभावेन, मानाऽभावेन चोत्तरपदाधिकारे तत्प्रवृत्तेः सत्त्वात्। तस्मात् 'श्रियंमन्यः' इत्येव भाष्यसम्मतं रूपम् । अत एवोपक्रमे 'श्रियंमन्य इति भवितव्य'मिति भाष्ये सिद्धान्तिनोक्तम्। एवञ्च पूर्वपक्ष्युक्तात् 'श्रिमन्यमित्येव भवितव्य'मिति भाष्यस्थात् 'श्रिमन्य'मिति प्रयोगाद्ध्रस्वस्य, मुममोरभावस्य च कल्पनमनुचितमित्याहुः । अयमम् प्रत्ययत्वादेव परः। मुमा सिद्धेऽजादिप्रत्ययनिबन्धनेयङादिसिद्ध्यर्थमिदम् । **सोमेनेति। सोमेन** = लताविशेषेण यागं कृतवानित्यर्थः । **अग्निष्टोमेति ।** अग्निष्टोमसंस्थाकयागेनाऽपूर्वं भावितवानित्यर्थः । यजेश्च यागकरणके व्यापारे शक्तिः । तत्र व्यापाररूपभावनायां भाव्याकाङ्क्षायां धात्वर्थयागस्य करणत्वेनोपस्थितेः [ स्वतः ] पुरुषार्थत्वाऽभावाच्च साक्षात्सुखसाधनमपूर्वं भाव्यत्वेनान्वेति । यागस्य करणत्वञ्च भावनाभाव्यभावकत्वमेव । सर्वत्र करणानामीदृशमेव करणत्वम् । संस्थावचनस्यापि ज्योतिष्टोमशब्दस्य तद्वति लक्षणया यागसामानाधिकरण्यात्करणत्वम् । स्वर्गादेः कर्मत्वमपि

अग्निष्टोमयाजी। **कर्मणि हनः** ।३।२।८६। पितृव्यघाती। 'कर्मणी'त्येतत् 'सहे चे'ति यावदधिक्रियते। **ब्रह्मभ्रूणवृत्रेषु क्विप्** ।३।२।८७।एषु कर्मसूपपदेषु हन्तेर्भूते क्विप्स्यात्। ब्रह्महा। [ब्रह्मघ्नौ]। भ्रूणहा। वृत्रहा। 'क्विप् चे'त्येव सिद्धे नियमार्थमिदम्। 'ब्रह्मादिष्वेव','हन्तेरेव', 'भूते एव', 'क्विबेवे'ति चतुर्विधोऽत्र नियम इति काशिका। 'ब्रह्मादिष्वेव' 'क्विबेवे'ति द्विविधो नियम' इति भाष्यम्। **सुकर्मपापमन्त्रपुण्येषु कृञः** ।३।२।८९। सौ कर्मादिषु च कृञः क्विप्स्यात्। 'त्रिविधोऽत्र नियम' इति काशिका। सुकृत्। कर्मकृत्। पापकृत्।

त.]उक्तं च काशिकायाम्—'अग्निष्टोमः फलभावनायां करण'मिति। **कर्मणि हनः। पितृव्यघातीनि**। अत्र काशिका—'कुत्सितग्रहणं कर्तव्यम्।इह माभूत्, चोरं हतवा'निति। यद्यपीदं भाष्ये नास्ति तथापि शब्दशक्तिस्वाभाव्यादिदं लभ्यत इत्याहुः। **चतुर्विध इति**। अयमाशयः—इह सूत्रे श्रुतत्वात्पूर्वं ब्रह्मादय उद्देश्यास्ततोऽनन्तरं प्रकृतित्वाद्धन्तिस्ततः परिशेषाद्भूत इति। क्विप् तु सर्वान्ते निर्देष्टव्यः, विधेयत्वात्। तदेवं वचनव्यक्तिः—'ब्रह्मादिषूपपदेषु हन्तेर्भूते क्वि'-बिति। एवं स्थिते 'यत्रैवकारस्ततोऽन्यत्र नियम' इति न्यायेन नियमोऽत्र भवन्ननन्तरे भवति। ततश्च ब्रह्मादिष्वेवेत्यव-धारणे हन्तेस्तदनन्तरनिर्दिष्टत्वादुपपदान्तरनिवृत्तिफलः [प्रकृति] नियमो भवति। 'ब्रह्मादिषु हन्तेरेव भूते' इत्यवधारणे त्वनन्तरत्वाऽविशेषेऽपि प्राथम्यादुपपदनियमो धात्वन्तरनिवृत्तिफलकः। 'ब्रह्मादिषु हन्तेर्भूते एव क्वि'बित्यवधारणे तु क्विब्हन्त्योरानन्तर्येऽविशिष्टेऽपि प्राधान्यात्कालान्तरसंबन्धनिवृत्तिफलकः प्रत्ययनियमः।'ब्रह्मादिषु हन्तेर्भूते क्विबेवे'ति वचनव्यक्तौ प्रत्ययान्तरसंबन्धनिवृत्तिफलकः कालनियमः। सोऽयं प्रकृत्युपपदप्रत्ययकालनियमानां विवेकः। अगृह्यमाण-विशेषत्वात्तु चतुर्विधस्यापीह ग्रहणम्। तत्र 'ब्रह्मादिष्वेव हन्ते'रिति प्रकृतिनियमे भूतइत्याश्रयणाद्वर्त्तमानकाले भविष्यत्काले चोपपदान्तरेऽपि भवत्येव। पुरुषं हन्ति हनिष्यति वा पुरुषहा। 'अरिहयोऽरिहयोगविचक्षणः'। अरीन् हन्तीति अरिहा, स चासौ योगश्च अरिहयोगस्तत्र विचक्षण इत्यर्थः। प्रकृतिनियमफलं तु पुरुषं हतवान् पुरुषहा इति भूतार्थे प्रयोगाऽभावः। 'ब्रह्मादिषु हन्तेरेवे'त्युपपदनियमेऽपि भूत इत्याश्रयणाद्वर्तमानभविष्यत्कालयोर्धात्वन्तरादपि भवत्येव,—वृत्रं जयति जेष्यति वा वृत्रजिदिति।उपपदनियमफलं तु वृत्रं जितवान् वृत्रजिदिति प्रयोगाऽभावः।'भूत एव क्वि'बिति प्रत्यय-नियमेऽपि ब्रह्मादिष्वित्युक्तेरुपपदान्तरे वर्तमानभविष्यत्कालयोर्हन्तेः क्विब्भवत्येव। पुरुषं हन्ति हनिष्यति वा पुरुषहा। अरिहेति प्राग्वत्। प्रत्ययनियमफलं तु ब्रह्माणं हन्ति ब्रह्महेत्यादिप्रयोगाऽभावः। 'भूते क्विबेवे'ति कालनियमेऽपि ब्रह्मादिष्वित्युक्तेरुपपदान्तरे भूतेऽपि प्रत्ययान्तरं भवत्येव,—पितृव्यं हतवान् पितृव्यघाती। इह 'कर्मणि हनः' इति भूते णिनिः। कालनियमफलं तु ब्रह्माणं हतवान् ब्रह्मघातीति प्रयोगाऽभावः। सोपपदश्च प्रत्ययो नियमेन व्यावर्त्यते, निष्ठा तु भवत्येव वृत्रं हतवानिति। भाष्यकारस्तु प्रकृतिकालनियमावेवाऽशिश्रियत्। तस्यायमाशयः—धातुकालौ हि नेह सूत्रे श्रुतौ, किं तु प्रकरणलक्षणजघन्यप्रमाणेनोपस्थितौ। अतस्तयोरेवोपरोधो न्याय्यो न तूपपदप्रत्यययोः, श्रुत्युपस्थापितत्वात्। एवं न्यायोपष्टब्धेन भाष्येण सह विरोधाद्वृत्तिमतमुपेक्ष्यमेवेति कैयटे स्थितम्। यत्त्विह हरदत्तेनोक्तं—धातूपपदविषयं नियमद्वयं भाष्ये प्रदर्शितमिति, तत्र धातुकालविषयमिति वक्तव्ये उपपदग्रहणं प्रामादिकमित्यवधेयम्। **सुकर्म**।

बा.]हनः। कर्मण्युपपदे भूतार्थाद्धनेर्णिनिः स्यात्। **पितृव्यघातीति**। पितृव्यं हतवानित्यर्थः। 'हनस्तः' इति तः, 'हो हन्ते'रिति हस्य घः। **ब्रह्मभ्रूण**। पूर्वसूत्रात्कर्मग्रहणाऽनुवृत्तेराह—**कर्मस्विति**। **हन्तेर्भूते इति**। भूतार्थवृत्तेर्हन्ते-रित्यर्थः। **चतुर्विध इति**।.पुनर्विधानलब्धस्य एवकारस्य विनिगमनाविरहाच्चतुर्ष्वपि निवेश इति भावः। तत्र 'ब्रह्मादिष्वेव हन्ते'रिति नियमात् पुरुषं हतवानित्यत्र न क्विप्। 'ब्रह्मादिषु हन्तेरेवे'ति नियमाद्ब्रह्म अधीतवानित्यत्र न क्विप्। 'ब्रह्मादिषु हन्तेर्भूतकाले एवे'ति नियमाद्ब्रह्म हन्ति हनिष्यति वेत्यत्र न क्विप्। 'क्विबेवे'ति नियमाद्ब्रह्म हतवानित्यत्र अण् न भवति, किंतु 'ब्रह्मभ्रूणे'ति क्विबेव। निष्ठा तु भवत्येव, सोपपदप्रत्ययस्यैव नियमेन व्यावृत्तेः। **द्विविध इति**। 'उभयतो नियमोऽयम्'—'ब्रह्मादिष्वेव' 'क्विबेवे'ति च भाष्यमित्यर्थः। एवंच 'हन्तेरेव', 'भूत एवे'ति नियमद्वयमुपेक्ष्यमिति भावः। **सुकर्म**। सु, कर्म, पाप, मन्त्र, पुण्य एषां पञ्चानां द्वन्द्वः। **त्रिविध इति**। 'सुकर्मादिषु भूते कृञः

शे.]भाव्यत्वरूपमेव, न तु फलाश्रयत्वरूपम्। अत एवेदृशानां कामान्तपदेनैवोल्लेखः।**केचित्तु** यागानुकूलव्यापार एव यजे-रर्थः, ज्योतिष्टोमादिशब्दाश्च शब्दपराः, शब्दस्यापि सङ्कल्पद्वारा करणत्वमित्याहुः। **कर्मणि**। कर्मण्युपपदे भूतार्थाद्धन्ते-र्णिनिरित्यर्थः। इदं शब्दशक्तिस्वभावात्कुत्सायामेव। तेन 'चोरं हतवा'नित्यादौ नेति वृत्तिः। **चतुर्विध इति**। ब्रह्मादिषूपपदेषु भूते वर्त्तमानाद्धन्तेः क्विबिति सूत्रार्थः। तथाऽविशेषाच्चतुर्ष्वप्येवकारो, विनिगमनाविरहात्। तत्र 'ब्रह्मादिष्वेव भूतार्थाद्धन्ते'रिति नियमे हन्तेरुपपदान्तरसंबन्धनिवृत्तिफलो धातुनियमः।'ब्रह्मादिषु भूतार्थादेव हन्ते'रिति नियमे नान्यार्थाद्धन्तेरिति प्रत्ययनियमः। 'ब्रह्मादिषु भूतार्थाद्धन्तेरेवे'ति ब्रह्मादीनान्धात्वन्तरसंबन्धनिवृत्तिफलो धातुनियमः।'ब्रह्मादिषु भूतार्थाद्धन्तेः क्विबेवे'ति नियमे नान्यार्थादिति कालनियम इति भावः। **भाष्यमिति**। तथा च भाष्यम्—'उभयतो नियमो-

मन्त्रकृत् । पुण्यकृत् । 'क्विबेवे'ति नियमात्कर्म कृतवानित्यत्राऽण्न । 'कृञ एवे'ति नियमान्मन्त्रमधीतवान्मन्त्राध्यायः,—अत्र न क्विप् । 'भूत एवे'ति नियमान्मन्त्रं करोति करिष्यति वेति विवक्षायां न क्विप् । 'स्वादिष्वेवे'ति नियमाऽभावादन्यस्मिन्नप्युपपदे क्विप् । शास्त्रकृत् । भाष्यकृत् । **सोमे सुञः** ।३।२।९०। सोमसुत् । 'चतुर्विधोऽत्र नियम' इति काशिका । एवमुत्तरसूत्रेऽपि । **अग्नौ चेः** ।३।२।९१। अग्निचित् । **कर्मण्यग्न्याख्यायाम्** ।३।२।९२। कर्मण्युपपदे कर्मण्येव कारके चिनोतेः क्विप्स्यात्, अग्न्याधारस्थलविशेषस्याख्यायाम् । श्येन इव चितः श्येनचित् । **कर्मणीनि विक्रियः** ।३।२।९३। कर्मण्युपपदे विपूर्वात्क्रीणातेरिनिः स्यात् । ** कुत्सितग्रहणं कर्तव्यम्** । सोमविक्रयी । घृतविक्रयी । **दृशेः क्वनिप्** ।३।२।९४। कर्मणि भूत इत्येव । पारं दृष्टवान् पारदृश्वा । **राजनि युधि कृञः** ।३।२।९५। क्वनिप्स्यात् । युधिरन्तर्भावितण्यर्थः । राजानं योधितवान्

---

त.]स्त्रिविध इति । धातुनियमस्त्विह नेष्यत इति भावः । **क्विबेवेतीति** । 'भूते क्विबेवे'ति प्रत्ययान्तरसंबन्धनिवृत्तिफलककालनियमादित्यर्थः । **कृञ एवेतीति** । 'सुकर्मादिषु कृञ एवे'ति धात्वन्तरसंबन्धनिवृत्तिफलकोपपदनियमादित्यर्थः । **भूत एवेतीति** । 'भूत एव क्वि'बिति कालान्तरसंबन्धनिवृत्तिफलकप्रत्ययनियमादित्यर्थः । **स्वादिष्वेवेतीति** । 'स्वादिष्वेव कृञ' इत्युपपदान्तरसंबन्धनिवृत्तिफलकधातुनियमाऽभावादित्यर्थः । **सोमे सुञः** । इहापि चतुर्विधो नियम इति वृत्तिः । एवमुत्तरसूत्रेऽपि । तत्र भूतकालस्य क्विपि नियतत्वात्सोमं सुतवान् सोमसावः, अग्निं चितवान् अग्निचाय इत्यण्न भवति । सुनोतेः सोम एव उपपदे नियतत्वाच्चिनोतेस्त्वग्नावेवोपपदे नियतत्वात् सुरां सुतवान् सुरासुत्, इष्टकाश्चितवानिष्टकाचिदिति न भवति, किं तु सुरासावः इष्टकाचाय इत्यणेव भवति । सोमस्य सुनोतावेव धातोर्नियतत्वात्, अग्नेस्तु चिनोतावेव नियतत्वात्-सोमं क्रीतवान् सोमक्रीः, अग्निं मृतवान् अग्निमृदिति क्विन्न भवति, किं तु सोमक्रायः अग्निमार इत्यणेव भवति । भूत एव क्विपो नियतत्वात्सोमं सुनोति सोष्यति वेत्यर्थे क्विन्न भवति । तथा अग्निं चिनोति चेष्यति वेत्यर्थे क्विबभावः, किंत्वणेव । **कर्मण्यग्न्याख्यायम्** । **श्येनचिदिति** । समुदायोऽयमाहवनीयधारणार्थे इष्टकानिर्मितस्थलविशेषे निरूढः । **कर्मणीनिं** । **कुत्सितग्रहणमिति** । एतच्च वार्तिकं पुनः कर्मग्रहणसामर्थ्याल्लभ्यते, यत्कर्म क्रियया संबध्यमानं कर्तृकुत्सामावहति तत्रेत्यर्थः । सोमादयश्च विक्रीयमाणाः शास्त्रे प्रतिषेधात्कुत्सावहाः । कुत्सितग्रहणान्नेह,—धान्यविक्रायः । **दृशेः क्वनिप्** । 'अन्येभ्योऽपि दृश्यन्ते' इति सिद्धे नियमार्थमिदं—'क्वनिबेव यथा स्यात्तत्सहनिर्दिष्टौ मनिन्वनिपौ माभूतां, न वा अणादय' इति । सोपपदप्रत्ययस्यैव नियमेन निवर्तनान्निष्ठा तु भवत्येव-पारं दृष्टवानिति । एवं स्थिते 'विश्वदृश्वनयना वयमेवे'त्यादौ विश्वं पश्यन्ति विश्वदृश्वानि, तानि नयनानि येषां ते विश्वदृश्वनयना इत्येवं क्वनिबन्तस्य ल्टा विग्रहेऽपि न क्षतिः । प्रत्ययान्तरनिवृत्त्यर्थं सूत्रमित्येवं वृत्तिकारादिभिर्व्याख्यातत्वात्, कालान्तरनिवृत्त्यर्थमिदमिति कैरप्यभियुक्तैरनुक्तत्वादिति दिक् । **राजनि युधि कृञः** । **सहे च** । इदमपि सूत्र-

---

बा.]क्विबेवे'ति, 'सुकर्मादिषु भूते कृञ एव क्वि'बिति, 'सुकर्मादिषु भूते कृञ एव क्वि'बिति, 'सुकर्मादिषु भूत एव कृञ' इति त्रिविध इत्यर्थः । **अण् नेति** । क्तवतुस्तु भवत्येव, सोपपदप्रत्ययस्यैव नियमेन व्यावृत्तेरिति भावः । **स्वादिष्वेवेति** । सुकर्मादिषु पञ्चस्वित्यर्थः । **सोमे सुञः** । सोमे कर्मण्युपपदे भूते सुनोतेः क्विबित्यर्थः । **चतुर्विध इति** । पूर्ववद्व्याख्येयम् । **एवमिति** । 'अग्नौ चे'रित्युत्तरसूत्रेऽपि चतुर्विधो नियम इत्यर्थः । **अग्नौ चेः** । अग्नौ कर्मण्युपपदे भूतार्थवृत्तेश्चिनोतेः क्विप् स्यादित्यर्थः । **अग्निचिदिति** । अग्न्याख्यं स्थण्डिलविशेषमिष्टकाभिश्चितवानित्यर्थः । **कर्मण्यग्न्याख्यायाम्** । कर्मणीत्यनुवृत्तमुपपदसमर्पकम् । अत्रत्यं तु कर्मणीत्येतत्प्रत्ययार्थसमर्पकम् । तथा चाऽत्र कर्तरीति न सम्बध्यते । तदाह—**कर्मण्युपपदे इत्यादि** । **चिनोतेरिति** । भूतार्थादित्यपि बोध्यम् । **श्येन इवेति** । श्येनशब्दः श्येनसदृशे लाक्षणिक इति भावः । श्येनाकृतिक इति यावत् । **कर्मणीनि विक्रियः** । 'इनि' इत्यविभक्तिकम् । विपूर्वस्य क्रीञ्धातोर्विक्रिय इति पञ्चम्यन्तम् । **कुत्सितेति** । कुत्सिते कर्मण्युपपदे उक्तविधिर्भवतीत्यर्थः । **सोमविक्रयीति** । सोमद्रव्यं च विक्रीयमाणं विक्रेतुः कुत्सामावहति, तद्विक्रयस्य निषिद्धत्वादिति भावः । **दृशेः क्वनिप्** । 'आतो मनिन्क्वनिब्वनिपश्च', 'अन्येभ्योऽपि दृश्यन्ते' इत्येव क्वनिपि सिद्धे तत्सहचरितमनिनादिव्यावृत्त्यर्थमिदं, सोपपदाऽणादिबाधनार्थं च । निष्ठा तु भवत्येव, सोपपदप्रत्ययस्यैवाऽत्र पुनः क्विब्ग्रहणेन निवृत्तेः । पारं दृष्टवान् । **राजनि युधि कृञः** । युधि, कृञ् अनयोः समाहारद्वन्द्वात्पञ्चमी । **क्वनिप् स्यादिति** । राजनि कर्मण्युपपदे भूतार्थाद्युधेः कृञश्च क्वनिबित्यर्थः ।

---

शे.]ऽयं ब्रह्मादिष्वेवेति, क्विबेवेति च' । युक्तश्चैतत्—श्रुत्युपस्थितोपपदप्रत्यययोरुपरोधापेक्षया प्रकरणलक्षणजघन्यप्रमाणोपस्थितधातुकालयोरेवोपरोधो न्याय्यः । एवञ्च तद्विरोधाद्वृत्तिरयुक्तेति भावः । **काशिकेति** । धातुनियमस्त्विह नेष्यत इति तद्भावः । अत्रापि द्विविध एव नियमः—'कर्मादिष्वेव', 'कृञ एवे'ति च । एवं 'सोमे सुञः' इत्यादावपि । **कुत्सितेति** ।

राजयुध्वा । राजकृत्वा । **सहे च** ।३।२।९६। कर्मणीति निवृत्तम् । सहयुध्वा । सहकृत्वा । **सप्तम्यां जनेर्डः** ।३।२।९७। सरसिजम् । मन्दुरायां जातो मन्दुरजः । 'ङ्यापो'रिति ह्रस्वः । **पञ्चम्यामजातौ** ।३।२।९८। जातिशब्दवर्जिते पञ्चम्यन्ते उपपदे जनेर्डः स्यात् । संस्कारजः । अदृष्टजः । **उपसर्गे च संज्ञायाम्** ।३।२।९९। 'प्रजा स्यात्सन्ततौ जने'। **अनौ कर्मणि**।३।२।१००। अनुपूर्वाज्जनेः कर्मण्युपपदे डः स्यात्।पुमांसमनुरुध्य जाता पुमनुजा । **अन्येष्वपि दृश्यते** ।३।२।१०१। अन्येष्वप्युपपदेषु जनेर्डः स्यात् । अजः । द्विजः । ब्राह्मणजः । अपिशब्दः सर्वोपाधिव्यभिचारार्थः । तेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचित् । परितः खाता परिखा ।

**क्तक्तवतू निष्ठा**।१।१।२६। एतौ निष्ठासंज्ञौ स्तः। **निष्ठा** ।३।२।१०२। भूतार्थवृत्तेर्धातोर्निष्ठा स्यात् । तत्र 'तयोरेवे'ति भावकर्मणोः क्तः । 'कर्तरि कृ'दिति कर्तरि क्तवतुः । उकावितौ । स्नातं मया । स्तुतस्त्वया विष्णुः । विष्णुर्विश्वं कृतवान् । **निष्ठायामण्यदर्थे** ।६।४।६०। ण्यदर्थो भावकर्मणी, ततोऽन्यत्र निष्ठायां क्षियो दीर्घः

---

त.]द्वयं 'दृशेः क्वनि'बितिवन्नियमार्थमिति न्याय्यम् । वस्तुतस्तु दृशिग्रहणेन निर्वाहस्याऽगतिकत्वादियं त्रिसूत्री त्रिधात्रीत्यपि सुवचम् । प्राचां ग्रन्थास्त्विहोदासीना एवेति शब्दकौस्तुभे स्थितम् । **मन्दुरायामिति** । 'वाजिशाला तु मन्दुरा' इत्यमरः । **पुमनुजेति** । इह जनिः सकर्मकः, अनुरोधविशिष्टजननवृत्तित्वात् । **अन्येष्वपि दृश्यते** । 'सप्तम्यां जने'रित्युक्तमसप्तम्यामपि दृश्यत इत्याह–**अजः । द्विज इति** । न जायत इत्यजः। द्विर्जातो द्विजः। 'जन्मना जायते शूद्रः कर्मणा जायते द्विजः' इत्यभियुक्तोक्तेः । 'पञ्चम्यामजातौ' इत्युक्तं, जातावपि दृश्यत इत्याह **ब्राह्मणज इति** । **अपिशब्द इति**। यत्तु 'अन्तात्यन्ताध्वे'ति प्रकरणे 'अन्यत्राऽपि दृश्यते' इत्युपसङ्ख्यातं तद्भूतकालं विनापि यथा स्यादित्येवमर्थम् । वस्तुतस्तु प्रकृतसूत्रस्थस्याऽपिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात्तद्वार्तिकमनेनैव गतार्थम् । विभावितं चेदं 'इको गुणवृद्धी' इति सूत्रे जनेर्ड प्रक्रम्य 'गमेरप्ययं डो वक्तव्यः' इति वदता भाष्यकारेण । एवं च प्रकृतसूत्रस्थम् 'अन्येभ्योऽपि दृश्यते' इति वार्तिकमपि गतार्थमिति बोध्यम् । **क्तक्तवतू निष्ठा** । ननु क्तक्तवत्वोः सिद्धयोर्निष्ठेति संज्ञासिद्धिः, सिद्धायां निष्ठासंज्ञायां क्तक्तवत्वोर्विधानमित्यन्योन्याश्रय इति चेत् । अत्राहुः–भाविनी संज्ञाऽत्र विज्ञायते,–'स भूते भवति यस्योत्पन्नस्य निष्ठेति संज्ञा भवती'त्याश्रयणे सामर्थ्यात् क्तक्तवत्वोर्विधानमेतदिति नास्त्युक्तदोष इति । **ण्यदर्थो भावकर्मणी इति** । यद्यपि धाय्या ऋगित्यादौ करणादावपि बहुलकाण्ण्यद्भवति, तथापि 'तयोरेवे'ति

---

बा.]ननु युधेरकर्मकत्वात्तत्र कर्मण्युपपदे इत्यस्य कथमन्वय इत्यत आह- **युधिरन्तर्भावितेति**।**राजकृत्वेति**। राजानं कृतवानित्यर्थः । **सहे च** । सहशब्दे उपपदे युधिकृञ्भ्यां क्वनिबित्यर्थः । **सप्तम्यां जनेर्डः** । सप्तम्यन्ते उपपदे जनेर्भूतार्थाड्ड इत्यर्थः। **सरसिजमिति** । डित्वसामर्थ्यादभस्यापि टेर्लोपः। 'हलदन्ता'दिति,'तत्पुरुषे कृती'ति वा अलुक् । **मन्दुरज इति**। 'वाजिशाला तु मन्दुरे'त्यमरः। **पञ्चम्यामजातौ**। **जनेरिति** । 'भूतार्था'दिति शेषः । **संस्कारज[म्]इति** । संस्काराज्जात[म्]इत्यर्थः।**उपसर्गे च**। 'जनेर्ड' इति शेषः।संज्ञायामिति समुदायोपाधिः।**अनौ कर्मणि**। ननु जनेरकर्मकत्वात्तत्र कर्मण्युपपदे इत्यर्थस्य कथमन्वय इत्यत आह–**पुमांसमनुरुध्येति** । अनुरुध्य जननं धात्वर्थ इति भावः । **पुमनुजेति** । पुंसिति पूर्वपदे संयोगान्तलोप इति भावः । **अन्येष्वपि दृश्यते** । **अज इति** । न जात इत्यर्थः । **द्विजो ब्राह्मण इति** । द्विर्जात इत्यर्थः । 'मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धना'दित्यादिस्मृतेरिति भावः । **अपिशब्द इति** । 'सप्तम्यां जनेर्डः' इत्यादिसूत्रेषु डविधिषु यानि विशेषणान्युपात्तानि प्रकृतिविशेषरूपाणि, भूते कर्तरीति प्रत्ययार्थविशेषणं च तदतिक्रमार्थ इत्यर्थः । **क्तक्तवतू निष्ठा** । क्त, क्तवतु अनयोर्द्वन्द्वः । निष्ठेति प्रत्येकाभिप्रायमेकवचनम् । **निष्ठा** । भूते इति धातोरिति चाधिकृतम् । तदाह–**भूतार्थेत्यादि** । **भावकर्मणोः क्त इति** । तथाच क्तप्रत्ययविषये कर्तरीति न संबध्यते इति भावः । **कर्तरि क्तवतुरिति** । कृत्यक्तखलर्थानामेव भावकर्मणोर्विधानादिति भावः । 'तयोरेव कृत्यक्ते'त्यत्र 'लः कर्मणी'त्यस्मात्सकर्मकेभ्यः कर्मणि कर्तरि च अकर्मकेभ्यो भावे कर्तरि चेत्यनुवर्तते । ततश्च अकर्मकेभ्यो भावे क्तः, सकर्मकेभ्यस्तु कर्मणीति व्यवस्था लभ्यते इति मत्वोदाहरति–**स्नातं मयेति** । अकर्मकत्वाद्भावे क्तः । **स्तुतस्त्वया विष्णुरिति** । सकर्मकत्वात्कर्मणि क्तः । कर्तरि क्तवतुमुदा-

---

शे.]वार्तिकमिदम्। यत्कर्म क्रियया सम्बध्यमानं कर्तुः कुत्सामावहति तत्रेत्यर्थः।सोमादयश्च विक्रीयमाणाः शास्त्रनिषिद्धत्वात्तदावहाः । तेनेह न–धान्यविक्रायः। **निवृत्तमिति**। असत्त्ववचनत्वेनेहाऽनन्वयादुत्तरत्राऽनुपयोगाच्च । **सहयुध्वेति** । तेन सह युद्धवानित्यर्थः। **सर्वोपाधीति**।अत एव–भाष्ये 'अन्येभ्योऽपि दृश्यते, परिखा'–इत्युक्तम् । **क्तक्तवतू** । यद्यपि प्रयोगेऽनुबन्धा न श्रूयन्ते तथापि तदुपलक्षितकालकारकादिदर्शनेन तत्रानुबन्धस्मृतौ निष्ठात्वप्रयुक्तकार्यसिद्धिः । इत्सञ्ज्ञककककारवानित्याकाराऽत्र स्मृतिः। अत एव 'लोतः' इत्यादौ न तत्प्रयुक्तकार्यं। 'प्राभित्ते'त्यादौ एकत्वावगमाल्लुङन्त-

स्यात् । **क्षियो दीर्घात्** ।८।२।४६। दीर्घात् क्षियो निष्ठातस्य नः स्यात् । क्षीणः । क्षीणवान् । भावकर्मणोस्तु क्षितः कामो मया । 'श्र्युकः किति' । श्रितः । श्रितवान् । भूतः । भूतवान् । क्षुतः । * **ऊर्णोतेर्णुवद्भावो वाच्यः** । तेन एकाच्त्वान्नेट् । ऊर्णुतः । नुतः । वृतः । **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** ।८।२।४२। रेफदकाराभ्यां परस्य निष्ठातस्य नः स्यात् ,निष्ठापेक्षया पूर्वस्य धातोर्दकारस्य च । शॄ हिंसायाम् । 'ॠत इत्' । रपरः। णत्वम् । शीर्णः। बहिरङ्गत्वेन वृद्धेरसिद्धत्वान्नेह,-कृतस्यापत्यं कार्तिः । भिन्नः । छिन्नः। **संयोगादेरातो धातोर्यण्वतः** ।८।२।४३। निष्ठातस्य नः स्यात् । द्राणः । [स्त्यानः] । ग्लानः। म्लानः। **ल्वादिभ्यः** ।८।२।४४। एकविंशतेर्लूञादिभ्यः प्राग्वत् । लूनः । ज्या,-'ग्रहिज्या'-जीनः । * **दुग्वोर्दीर्घश्च** । 'दु गतौ' । दूनः ।

---

त.]वचनाद्भावकर्मणी एव साक्षादुपात्तोऽर्थ इति स एवेह विवक्षित इति भावः।**क्षियो**। क्षि क्षये, क्षि निवासगत्योः, द्वयोरपि ग्रहणम् । **क्षितः काम इति** । अन्तर्भावितण्यर्थत्वेन सकर्मकत्वात्कर्मणि क्तः । एतच्च 'अक्षितोतसनेदिम'मिति मन्त्रव्याख्यायां माधवग्रन्थे स्पष्टम् । भावे तु क्षितं कामेनेत्याद्युदाहरणीयम् । इण्निषेधसूत्रं स्मारयति-**श्र्युकः कितीति** । **क्षुत इति** । टुक्षु शब्दे । **नुत इति** । णु स्तुतौ । **वृत इति** । वृङ् संभक्तौ. वृञ् वरणे । **रदाभ्याम्** । इह रदाभ्यामित्यनेन तकारो विशेष्यते, न निष्ठा, तेन चरितमुदितमित्यत्र न, तकारस्येटा व्यवहितत्वात् । तदेतदाह-**परस्य निष्ठातस्येति** । **बहिरङ्गत्वेनेति**। निष्ठातकाराद्बहिर्भूतं तद्धितञित्प्रत्ययमाश्रित्याऽङ्गस्यादेरचो विधीयमानत्वाद्वृद्धिर्बहिरङ्गेति भावः । **द्राण इति** । द्रा कुत्सायां गतौ । **ग्लानः म्लान इति** । ग्लै म्लै हर्षक्षये । **एकविंशतेरिति** । क्र्यादिषु प्वादयो द्वाविंशतिः पठ्यन्ते, तत्र पूञं विहाय ल्वादयो ज्ञेयाः । **जीन इति** । 'हल' इति दीर्घः ।

---

बा.]हरति-**विष्णुर्विश्वमिति**। **निष्ठायामण्यदर्थे**। **ण्यदर्थो भावकर्मणी इति**।'ऋहलो'रिति ण्यतः कृत्यसंज्ञकस्य 'तयोरेवे'ति भावकर्मणोरेव प्रवृत्तेरिति भावः । **ततोऽन्यत्रेति** । कर्तरीत्यर्थः । क्तवताविति फलितम् । **क्षियो दीर्घः स्यादिति** । क्षिय इति पूर्वसूत्रमनुवर्तते, 'युप्लुवोर्दीर्घश्छन्दसी'त्यतो दीर्घ इति चेति भावः । **क्षियो दीर्घात्**। दीर्घादिति क्षियो विशेषणं । तदाह-**दीर्घात्क्षियं इति** । दीर्घान्तादित्यर्थः । **निष्ठातस्य न इति** । 'रदाभ्या'मित्यतस्तदनुवृत्तेरिति भावः । **क्षीणवानिति** । क्षिधातोः कर्तरि क्तवतुः, 'निष्ठायामण्यदर्थे' इति दीर्घः, तकारस्य नत्वम्, षात्परत्वाण्णः । **क्षितः कामो मयेति** । क्षपित इत्यर्थः । 'क्षि क्षये' इत्यस्मादन्तर्भावितण्यर्थात्कर्मणि क्तः । भावे तु क्षितं कामेनेत्युदाहार्यम् । अत्र ण्यदर्थयोर्भावकर्मणोर्विहिते क्ते दीर्घो न भवति, अण्यदर्थ इत्युक्तेः । दीर्घान्तत्वाऽभावात् 'क्षियो दीर्घा'दिति नत्वं न । **श्र्युकः कितीति** । 'श्रित'इत्यादौ इण्निषेधस्मारकमिदम् । **क्षुत इति** । 'टु क्षु शब्दे' अस्मात्क्तः । ननु ऊर्णुत इति कथम् , अनेकाच्कत्वेन 'श्र्युक' इति निषेधस्याऽप्रवृत्तेरित्यत आह-**ऊर्णोतेर्णुवदिति** । वार्तिकमिदम् । **रदाभ्यां** । रदाभ्यामित्यकारावुच्चारणाऽर्थौ । तदाह-**रेफदकाराभ्यामिति** । निष्ठायाः-त्-निष्ठात्, तस्य निष्ठात इति विग्रहः । तदाह-**निष्ठातस्येति** । निष्ठातकारस्येत्यर्थः । **नः स्यादिति** । नकारः स्यादित्यर्थः । सूत्रे 'न' इति प्रथमान्तम् । अकार उच्चारणार्थः। **दकारस्य चेति** 'नकार' इत्यनुषज्यते । सूत्रे 'द' इति षष्ठ्यन्तमिति भावः । चरितम् उदितमित्यत्र तु नत्वं न, निष्ठातकारस्य इटा व्यवहितत्वेन रदाभ्यां परत्वाऽभावात् । रेफात्परस्योदाहरति-**शॄ इति** । शॄधातोः क्तप्रत्ययसूचनमिदम् । ननु कृतस्यापत्यं कार्तिः । अत इञ्, आदिवृद्धिः, रपरत्वम् । अत्र निष्ठातकारस्य रेफात् परस्य नत्वं स्यादित्यत आह-**बहिरङ्गत्वेनेति** । दात्परस्योदाहरति-**छिन्नः भिन्न इति** । अत्र निष्ठातकारस्य, धात्वन्तदकारस्य च नत्वमिति भावः । **संयोगादेः** । **निष्ठातस्य नः स्यादिति** । शेषपूरणमिदम् । **द्राण इति** । 'द्रा कुत्सायां गतौ' अस्मात् क्तः, नत्वम् , णत्वम् । **ग्लान इति** । 'ग्लै हर्षक्षये' 'आदेचः' इत्यात्वे नत्वम् । **ल्वादिभ्य एकविंशतेरिति** । क्र्यादिषु प्वादयो द्वाविंशतिः, तेषु आद्यं पूञं विहाय ल्वादिभ्य एकविंशतेरित्यर्थः । **ज्येति** । धातुसूचनम् । **ग्रहिज्येति** । संप्रसारणसूचनम् । **जीन इति** । ज्या-त इति स्थिते 'संयोगादे'रिति निष्ठानत्वस्याऽसिद्धत्वात्ततः प्रागेव संप्रसारणे पूर्वरूपे च कृते आतः परत्वाऽभावात् 'संयोगादेरातः'

---

शे.]मेतदिति निर्णयान्न दोषः । **क्षियो दी** । यद्यपि निर्देशादेव दीर्घग्रहणमत्र, अन्यथा गुणः स्यात्, तथापि 'क्षियो निष्ठायामण्यदर्थे' इत्यत्रैव 'चिक्षियतु'रित्यादावजादौ यद्रूपं तदनुकरणत्वस्य सत्त्वादत्र दीर्घग्रहणम् । स्पष्टञ्चेदं भाष्ये । अत एव दीर्घविधायकवृत्तावपि 'क्षिय' इत्येवोक्तम् । **रदाभ्याम्** । चो वाक्यभेदार्थः । तदाह-**निष्ठापेक्षयेति** । रदाभ्यां किम् ? । चरितम् । तद्धि निष्ठासंबन्धितकारविशेषणम् । पूर्वग्रहणं 'भिन्नवद्भ्या'मित्यादौ परदस्य माभूदिति स्पष्टं भाष्ये । **कार्त्तिक्षैत्योर्वृद्ध्युत्तरं** नत्ववारणाय 'वृद्धेः परस्य नत्वप्रतिषेधः' इति वक्तव्यं, बहिरङ्गाऽसिद्धत्वन्तु त्रैपादिकेऽन्तरङ्गे नास्तीति निरूपितम् । **संयोगादेः** । [निष्ठया धातोराक्षेपे सिद्धे धातोरिति संयोगादेरित्यस्य धातु-

टुदु उपताप इत्ययं तु न गृह्यते, सानुबन्धकत्वात् । 'मृदुतया दुतये'ति माघः । गूनः । * **पूञो विनाशे ।** पूना यवाः । विनष्टा इत्यर्थः । पूतमन्यत् । * **सिनोतेर्ग्रासकर्मकर्तृकस्य ।** सिनो ग्रासः । ग्रासेति किम् ? । सिता पाशेन सूकरी । कर्मकर्तृकेति किम् ? । सितो ग्रासो देवदत्तेन । **ओदितश्च ।८।२।४५।** भुजो,-भुग्नः । टुओश्वि,-उच्छूनः।ओहाक्। [घुमास्थे'तीत्वम् । 'कृत्यच' इति णत्वम् ]।प्रहीणः । **'स्वादय ओदित'** इत्युक्तम् । सूनः। सूनवान्।दूनः।दूनवान्।ओदिन्मध्ये डीङः पाठसामर्थ्यान्नेट् । उड्डीनः। **द्रवमूर्तिस्पर्शयोः श्यः।६।१।२४।** द्रवस्य मूर्तौ काठिन्ये स्पर्शे चार्थे श्यैङः संप्रसारणं स्यान्निष्ठायाम्। **श्योऽस्पर्शे ।८।२।४७।** श्यैङो निष्ठातस्य नः स्यादस्पर्शेऽर्थे। 'हल' इति दीर्घः । शीनं घृतम्।अस्पर्शे किम्?। शीतं जलम्।द्रवमूर्तिस्पर्शयोरिति किम्?।संश्यानो

---

त.]सिद्धत्वान्निरूत्वाच्च 'ग्रहिज्ये'ति संप्रसारणे कृते 'संयोगादेरातः' इत्यस्याऽप्राप्तिः । **गून इति ।** गु पुरीषोत्सर्गे । **विनष्टा इति ।** धातूनामनेकार्थत्वात्पूञ् पवन इत्यस्य विनाशेऽपि वृत्तिः । **सिनोतेरिति ।** षिञ् बन्धने । ग्रासरूपं कर्म ग्रासकर्म, तत्कर्तृ यस्य सिनोतेस्ततः परस्य निष्ठातस्य नः स्यादित्यर्थः । **सिनो ग्रास इति ।** पिण्डीक्रियमाणो ग्रासो यदा दध्यादिव्यञ्जनवशाद्बन्धनेऽनुकूलो भवति तदा कर्मण्येव कर्तृत्वमिति बोध्यम् । **ग्रासेति किमिति।** 'ग्रासकर्मकर्तृकस्ये'ति किमर्थमित्यर्थः । **कर्मकर्तृकेति किमिति ।** 'ग्रासकर्मकस्ये'त्येवास्तु कर्तृपदं किमर्थमित्यर्थः। कर्मपदं विहाय 'ग्रासकर्तृकस्ये'त्युक्तौ तु 'ग्रासेन कण्ठः सित' इत्यत्रापि स्यादिति बोध्यम् । **भुग्न इति ।** भुजो कौटिल्ये । नत्वस्याऽसिद्धत्वाज्झलि परतः कुत्वम्। **उच्छून इति।** श्वयतेर्यजादित्वात्संप्रसारणे पूर्वरूपे च 'हलः' इति दीर्घः। **प्रहीण इति।** 'घुमास्थे'ति ईत्वम्। **सून इति।** षूङ् प्राणिप्रसवे। **दून इति।** दूङ् परितापे । **ओदिन्मध्ये इति ।** यदि डीङ इट् स्यात्तर्हि धातोः परो निष्ठातकारो न संभवतीति नत्वार्थः पाठोऽनर्थकः स्यादिति भावः। न च ओदिन्मध्ये पाठसामर्थ्यादिटा व्यवधाने नत्वं भवेदिति वैपरीत्यं किं न स्यादिति शङ्क्यम् , लक्ष्यानुरोधेन इडभावकल्पनाया एव न्याय्यत्वात्। अन्ये तु सत्यपि इडागमे सवर्णदीर्घे चैकादेशस्य पूर्वान्तत्वेन ग्रहणादिटा व्यववधानं नास्त्येवेतीष्टं सिध्यतीत्याहुः ।

---

बा.]इति नत्वस्याऽप्राप्तावनेन नत्वम् । **दुग्वोर्दीर्घश्चेति ।** वार्तिकमिदम् । दु गु आभ्यां परस्य निष्ठातस्य नत्वं प्रकृतेदीर्घश्च इत्यर्थः । 'मृदुतया दुतया' इति माघकाव्ये दुतशब्दं साधयितुमाह- **टु दु उपतापे इत्यादि ।** **गून इति ।** गुधातोः क्ते दीर्घः । **पूञो विनाशे इति ।** वार्तिकमिदम् । विनाशार्थात् पूञः परस्य निष्ठातस्य नत्वमित्यर्थः । **सिनोतेरिति ।** वार्तिकमिदम् । कर्मैव कर्ता कर्मकर्ता, ग्रासः कर्म कर्ता यस्य स ग्रासकर्मकर्तृकः, तस्मात् 'षिञ् बन्धने' इत्यस्मात्परस्य निष्ठातस्य नत्वमित्यर्थः । **ओदितश्च ।** ओकारेतो धातोः परस्य निष्ठातस्य नत्वमित्यर्थः । **भुग्न इति ।** नत्वस्याऽसिद्धत्वाजस्य पूर्वं कुत्वम् । ततो नत्वम् । **उच्छून इति ।** उत्पूर्वात् 'टु ओ श्वि' इति धातोः क्तः, यजादित्वात्संप्रसारणम् , पूर्वरूपम् , 'श्वीदितः' इति नेट् ,'हल' इति दीर्घः,निष्ठानत्वम्। **प्रहीण इति ।**'घुमास्थे'-तीत्वं, नत्वं, 'कृत्यचः' इति णत्वम् । **स्वादय इति ।** 'षूङ् प्राणिप्रसवे' इत्याद्या नव धातव ओदित इति दिवादिगणे उक्तमित्यर्थः । **सून इति ।** षूङः क्तः, नत्वं। 'श्र्युकः क्ङिती'तीण्निषेधः । **दून इति ।** 'दूङ् परितापे' अस्मात् क्तः, स्वादित्वेन ओदित्वान्नत्वम् । ननु 'डीङ् विहायसा गतौ' इत्यस्य उड्डीन इति कथं रूपं, सेट्कत्वादुगन्तत्वाऽभावेन 'श्र्युकः क्ङिती'ति निषेधस्याऽप्रवृत्तेरित्यत आह- **ओदिन्मध्ये डीङः पाठसामर्थ्यान्नेडिति ।** इटि सति निष्ठातस्य ओदितो डीङः परत्वाऽभावान्नत्वाऽप्रसक्तेस्तस्य ओदित्सु पाठो व्यर्थः स्यादित्यर्थः । **द्रवमूर्ति ।** 'श्यैङ् गतौ' इत्यस्य कृतात्वस्य 'श्य' इति षष्ठी । द्रवमूर्तिश्च, स्पर्शश्चेति विग्रहः । मूर्तावित्यस्य विवरणं-**काठिन्ये इति । संप्रसारणं स्यादिति ।** 'ष्यङः संप्रसारण'मित्यतस्तदनुवृत्तेरिति भावः। तथाच श्यैङः क्ते आत्वे संप्रसारणे पूर्वरूपे शि त इति स्थिते-**श्योऽस्पर्शे ।** श्यः-अस्पर्शे इति छेदः । **दीर्घ इति ।** नत्वात्प्रागेव 'हल' इति दीर्घ इत्युचितम् , नत्वस्य त्रैपादिकत्वात् । **शीनं घृतमिति ।** घनीभूतमित्यर्थः । धातूनामनेकार्थत्वात् । यद्यपि घृतेऽप्यनुष्णस्पर्शोऽस्त्येव, तथापि शीताख्यस्पर्शविशेष एव विवक्षित इति भावः । **अस्पर्शे किमिति ।** श्यैङो निष्ठातस्य नत्वं स्यादित्येतावदेवास्त्वित्यर्थः । **शीतं जलमिति ।** शीतस्पर्शवदित्यर्थः । अत्र 'द्रवमूर्ती'ति संप्रसारणमेव, नतु निष्ठानत्वमित्यर्थः । एवं च 'द्रवमूर्तिस्पर्शयो'रित्यस्य स्पर्शे इदमुदाहरणम् 'श्योऽस्पर्शे' इत्यस्य तु प्रत्युदाहरणमिति बोध्यम् । सूत्रयोः स्पर्शशब्दः प्रधानभूते गुणभूते च वर्तते। तत्र गुणभूते विशेष्यनिघ्नः। शीता आपः, शीतं जलमित्यादि । यदा तु स्पर्शविशेषो गुणः प्राधान्येन विवक्षितस्तदा क्लीबत्वमेव।'शीतं गुणे'इत्यमरः। संप्रसारणविधौ पृच्छति-**द्रवमूर्तिस्पर्शयोःकिमिति ।**

---

शे ]विशेषणत्वार्थम् । अन्यथा श्रुतत्वादात एव विशेषणं स्यात्।तथा च 'निर्यातः' इत्यादावतिव्याप्तिरिति भावः।]**ओदितश्च ।** अस्मात्परस्य निष्ठा तस्य न इत्यर्थः । **स्वादयो** दिवाद्यन्तर्गणभूताः । **शीतं जलमिति ।** अनेन सूत्रे [स्पर्शशब्देन] गुण एव प्रसिद्धत्वाद्व्याख्यानाच्च गृह्यते, नतु रोग इति ध्वनितम् । 'प्रतेश्चे'ति सार्थकं । तद्विषये नत्वञ्च ।

वृश्चिकः।शीतात्सङ्कुचित इत्यर्थः।प्रतेश्च।६।१।२५।प्रतिपूर्वस्य श्यः संप्रसारणं स्यान्निष्ठायाम्।प्रतिशीनः।विभाषाऽ-
भ्यवपूर्वस्य।६।१।२६।श्यः संप्रसारणं वा स्यात्।अभिश्यानं घृतम्।अभिशीनम्।अवश्यानोऽवशीनो वृश्चिकः।व्यव-
स्थितविभाषेयम्। तेनेह न,—समवश्यानः। अञ्चोऽनपादाने।८।२।४८।अञ्चो निष्ठातस्य नः स्यात्,न त्वपादाने।
यस्य विभाषा।७।२।१५।यस्य क्वचिद्विभाषयेड्विहितस्ततो निष्ठाया इण्न स्यात्।'उदितो वे'ति क्त्वायां वेट्कत्वा-
दिह नेट्। समक्नः।अनपादाने किम्?।उदक्तमुदकं कूपात्।नत्वस्याऽसिद्धत्वात् 'व्रश्चे'ति षत्वे प्राप्ते—।*निष्ठादेशः
षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्यः।वृक्णः।वृक्णवान्।परिस्कन्दः प्राच्यभरतेषु।८।३।७५। पूर्वेण मूर्धन्ये
प्राप्ते तदभावो निपात्यते।परिस्कन्दः।[पचाद्यच्]। प्राच्येति किम्?। परिष्कन्दः। परिस्कन्दः। 'परेश्चे'ति[षत्वे]-
विकल्पः। 'स्तन्भे'रिति षत्वे प्राप्ते। प्रतिस्तब्धनिस्तब्धौ च।८।३।११४। अत्र षत्वं न स्यात्। दिवोऽवि-
जिगीषायाम्।८।२।४९। दिवो निष्ठातस्य नः स्यादविजिगीषायाम्। [ 'सेनीवन्ते'ति वेट्कत्वादिह नेट्]। द्यूनः।

त.]संश्यान इति। श्यैङ् गतावित्यस्य 'आदेच' इत्यात्वे 'संयोगादेरातः'इति निष्ठातस्य नः। यस्य विभाषा।
यस्येत्यार्द्धधातुकापेक्षया षष्ठी। यदीयस्यार्द्धधातुकस्येत्यर्थः। समक्न इति। अञ्चु गतिपूजनयोः संपूर्वः, नत्वस्याऽसि-
द्धत्वाज्झलि परतः कुत्वम्। उदक्तमिति। उद्धृतमित्यर्थः। व्यक्तमित्येतत्तु 'अञ्जू व्यक्तौ'त्यस्य, न त्वञ्चेः। तेनात्र
नत्वाऽभावः। वृक्ण इति। ओव्रश्चू छेदने। 'ग्रहिज्ये'ति संप्रसारणम्। नत्वस्याऽसिद्धत्वात् 'स्को'रिति सलोपः,'चोः
कुः' इति कुत्वं च। ऊदित्त्वेन वेट्कत्वात् 'यस्य विभाषे'ति निष्ठाया इडभावः। तुक्विधिलादेशविनामेषु वर्णैकदेशस्यापि
वर्णत्वेन ग्रहणादकारैकदेशो रेफो निमित्तमिति 'अट्कुप्वा'डिति नस्य णत्वम्। णत्वस्य 'विनाम' इति प्राचां संज्ञा।
'ऋवर्णान्नस्य णत्व'मिति यथाश्रुतपक्षेऽपि णत्वनिषेधार्थं क्षुभ्नादिषु नृमनशब्दपाठादकारं निमित्तीकृत्याऽपि 'अट्कुप्वा'डिति
णत्वं भवत्येवेति दिक्। परिस्कन्दः। अचि निपातनम्। अथ वा निष्ठातकारस्य लोप इति काशिका। द्यून इति।

बा.]संश्यान इति। अत्र स्पर्शस्याऽप्रतीतेर्न संप्रसारणम्। नत्वं तु भवत्येवेति भावः। प्रतेश्च। द्रवमूर्तिस्पर्शाभ्यामन्य-
त्रापि संप्रसारणप्राप्त्यर्थमिदम्। प्रतिशीन इति। प्रतिगत इत्यर्थः। अत्र 'श्योऽस्पर्शे'इति नत्वम्। विभाषा। 'श्यैङ'इति
शेषः।संप्रसारणं वा स्यादिति। शेषपूरणमिदम्। द्रवमूर्तिस्पर्शयोर्नित्यं संप्रसारणे प्राप्ते,ततोऽन्यत्राऽप्राप्ते विभाषेयम्।
अभिश्यानं घृतमिति। अत्र द्रवमूर्तौ संप्रसारणविकल्पः। अवश्यानः अवशीनो वृश्चिक इति। अत्र द्रव-
मूर्तिस्पर्शाऽभावेऽपि संप्रसारणविकल्पः।समवश्यान इत्यत्रापि संप्रसारणविकल्पमाशङ्क्याऽऽह—व्यवस्थितेति।अञ्चोऽ
नपादाने। न त्वपादाने इति। अपादानसमभिव्याहारे असतीत्यर्थः। यस्य विभाषा। यस्येति। यस्मादित्यर्थः।
निष्ठाया इण्न स्यादिति। 'श्वीदितः' इत्यतो निष्ठायामिति, 'नेड्वशी'त्यतो नेडिति चानुवर्तत इति भावः। नन्वञ्चे-
र्नित्यं सेट्कत्वात् कथं तस्य क्वचिद्वेट्कत्वमित्यत आह—उदितो वेति। समक्न इति। सङ्गत इत्यर्थः। संपूर्वादञ्चु-
धातोः क्तः। 'आर्द्धधातुकस्ये'डिति प्राप्तस्य इटो निषेधः। 'अनिदिता'मिति नलोपः। चस्य कुत्वम्। उदक्तमुदकं
कूपादिति। उद्धृतमित्यर्थः। अत्राऽपादानसमभिव्याहारसत्त्वान्नत्वं नेति भावः। 'ओ व्रश्चू छेदने' सस्य श्चुत्वेन निर्देशः,
अस्मात्क्तः, 'ग्रहिज्ये'ति संप्रसारणम्, ऊदित्त्वेन वेट्कत्वादिह 'यस्य विभाषे'ति नेट्, चस्य कुत्वेन कः, 'ओदितश्चे'ति
निष्ठानत्वं, तस्याऽसिद्धत्वेन झल्परत्वात् 'स्को'रिति सलोपः, णत्वम्। वृक्ण इति रूपमिति स्थितिः। तत्र नत्वस्याऽसि-
द्धत्वेन झल्परत्वात् 'व्रश्चे'ति षत्वं स्यादित्यत आह—निष्ठादेशः षत्वेति। तथा च 'व्रश्चभ्रस्जे'ति षत्वे कर्तव्ये नत्व-
स्याऽसिद्धत्वाऽभावेन झल्परकत्वाऽभावान्न षत्वमित्यर्थः। स्वरप्रत्ययेड्विधिषूदाहरणानि भाष्ये स्पष्टानि। परिस्कन्दः प्रा-
च्यभरतेषु। 'अपदान्तस्य मूर्धन्यः' इत्यधिकारे इदं सूत्रम्। पूर्वेणेति। 'परेश्चे'ति पूर्वसूत्रम्। परेः परस्य स्कन्देः
सस्य षो वा स्यादिति तदर्थः। तेन षत्वविकल्पे प्राप्ते प्राच्यभरतेषु षत्वाऽभावो निपात्यत इत्यर्थः। परिस्कन्द इति।

शे.]विभाषाभ्य। पूर्वग्रहणम् 'अभिसंशीनः' इत्यर्थमिति वृत्तिः। व्यवस्थितेति। एतदपि वृत्तौ स्पष्टम्। भाष्ये तु
एतन्न दृश्यते। वृत्तावपि 'यदि नेष्यते ततो व्यवस्थितविभाषे'ति वदतैषामनभिधानं सूचितम्। न त्वपादाने इति।
चेत्तदीयमपादानं न प्रयुज्यत इत्यर्थः। 'व्यक्त'मिति त्वञ्जेः प्रकाशार्थस्य रूपं, तदर्थादञ्चेस्तु निष्ठाऽनभिधानमिति बोध्यम्।
यस्य विभाषा। आर्द्धधातुकस्येत्यनुवर्तते, इड्विहित इत्यध्याहारः। [ 'यस्ये'ति यदर्थेप्यध्याहारेण लब्धुं शक्यं तथापि
स्पष्टार्थं तत्]। अत्रैकाच इति वर्त्तते,तेन 'दरिद्रितः' इत्यत्र न निष्ठादेश इति। स्वरप्रत्यययोरुदाहरणं 'क्षीबः' 'क्षैबिकः'।
अत्र च 'निष्ठा च द्व्यजना'दिति निष्ठान्तस्य द्व्यचो विधीयमानमाद्युदात्तत्वं, नौद्व्यचष्ठन् न प्राप्नोति। इदन्तेदूसहितस्य
निष्ठातकारस्य लोपो निपात्यत इति पक्षे।यदा तु तकारमात्रस्य लोपो निपात्यते तदा नेदं प्रयोजनमिति व्यर्थन्तयोर्ग्रहणम्।
इड्विधिग्रहणन्तु क्षीबे उल्लाघे चेड्वृत्तये। परिस्कन्दः प्रा। अत्रैव [निपातना]न्निष्ठायां तलोप इति मते अस्याऽत्रोप-

विजिगीषायां तु-द्यूतम् । **निर्वाणोऽवाते** ।८।२।५०। अवाते इति छेदः । निर्पूर्वाद्वातेर्निष्ठातस्य नत्वं स्याद्वातश्चेत्कर्ता न । निर्वाणोऽग्निर्मुनिर्वा । वाते तु-निर्वातो वातः । **शुषः कः** ।८।२।५१। निष्ठात इत्येव । शुष्कः । **पचो वः** ।८।२।५२। पक्वः । **क्षायो मः** ।८।२।५३। क्षामः । **स्त्यः प्रपूर्वस्य** ।६।१।२३। प्रात् स्त्यः संप्रसारणं स्यान्निष्ठायाम् । **प्रस्त्योऽन्यतरस्याम्** ।८।२।५४। निष्ठातस्य मो वा स्यात् । प्रस्तीमः । प्रस्तीतः । प्रात्किम् ? । स्त्यानः । **अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः** ।८।२।५५। ञिफला-फुल्लः । निष्ठातस्य लत्वं निपात्यते । क्तवत्वेकदेशस्याऽपीदं निपातनमिष्यते । फुल्लवान् । क्षीबादिषु तु क्तप्रत्ययस्यैव तलोपः, तस्याऽसिद्धत्वात्प्राप्तस्येटोऽभावश्च निपात्यते । क्षीबो मत्तः । कृशस्तनुः । उल्लाघो नीरोगः । अनुपसर्गात्किम् ? । आदितश्च

---

त.]'च्छ्वोः शू'डित्यूठ् । क्षीण इत्यर्थः । **द्यूतमिति** । विजिगीषया हि तत्राऽक्षाः पात्यन्ते इति गम्यते विजिगीषा । **निर्वाणोऽवाते**।वा गतिगन्धनयोः,निर्पूर्वादस्मान्निष्ठातस्य नत्वे णत्वम् । **वातश्चेत्कर्ता नेति**। एवं च 'वातेन हेतुना निर्वाणो दीप' इत्यत्र निषेधो नेत्याहुः । **निर्वान इति** । 'गत्यर्थाकर्मके'ति कर्तरि क्तः । नितरां वातो गत इत्यर्थः । **शुष्क इति** । शुष शोषणे । **क्षाम इति** । क्षै क्षये । 'आदेचः' इत्यात्वम् । **प्रस्तीमः प्रस्तीत इति** । स्त्यै ष्ट्यै शब्दसङ्घातयोः । आत्वे कृते 'संयोगादे'रित्यस्याऽसिद्धत्वात्पूर्वं संप्रसारणे पूर्वरूपे च कृते 'हलः' इति दीर्घः, पश्चाद्यण्वत्त्वादन्तत्वयोर्विरहान्न नत्वम् । 'संस्त्यान' इत्यत्र तु भवत्येव । **क्षीबादिष्विति** । क्षीबृ मदे, कृश तनुत्वे, लाघृ

---

बा.]परिपूर्वात् स्कन्देर्निष्ठायास्तकारलोपः।द्विवो। 'अविजिगीषाया'मिति च्छेदः। **द्यून इति**।स्तुत इत्यर्थः।'च्छ्वो'रित्यूठ् । **विजिगीषायां तु द्यूतमिति** । द्यूतस्य विजिगीषया प्रवृत्तेरिति भावः । **निर्वाणोऽवाते** । **कर्ता नेति** । निरित्युपसर्गपूर्वो वाधातुर्विनाशे वर्तते, उपरमे च । तस्मिन् धात्वर्थे यदि वायुः कर्ता तदा नत्वं नेत्यर्थः । **निर्वाणोऽग्निर्मुनिर्वेति** । नष्ट, उपरत इति क्रमेणार्थः । 'गत्यर्थाकर्मके'त्यादिना कर्तरि क्तः । **निर्वातो वात इति** । अत्र वातस्य कर्तृत्वान्नत्वं नेति भावः ।' निर्वाणो दीपो वातेने'त्यत्र तु वातस्य करणत्वेन विवक्षितत्वात्कर्तृत्वाऽभावान्नत्वं निर्वाह्यम् । भावे तु-निर्वातं वातेन । **शुषः कः** । **निष्ठात इति** । शुषः परस्य निष्ठातस्य कः स्यादिति फलितम् । **पचो वः** । पचेः परस्य निष्ठातस्य वः स्यादित्यर्थः । **पक्व इति** । नत्वस्याऽसिद्धत्वात्कुत्वम् । **क्षायो मः** । 'क्षै क्षये' इत्यस्मात् परस्य निष्ठातस्य मः स्यादित्यर्थः । **क्षाम इति** । 'आदेचः' इत्यात्वम् । 'गत्यर्थाकर्मके'ति कर्तरि क्तः। क्षीण इत्यर्थः। अन्तर्भावितण्यर्थत्वे क्षपित इत्यर्थः। **स्त्यः प्रपूर्वस्य**।'स्त्यै' इत्यस्य कृताऽऽत्वस्य 'स्त्य' इति षष्ठ्यन्तम् । 'ष्यङः संप्रसारण'मित्यतः संप्रसारणमिति, 'स्फायः स्फी'त्यतो निष्ठायामिति चानुवर्तते । तदाह-**प्रादित्यादि** । संप्रसारणे पूर्वरूपे 'हलः' इति दीर्घे प्रस्ती-त इति स्थिते-**प्रस्त्योऽन्यतरस्याम्** । 'प्रस्त्य' इति पञ्चमी। प्रपूर्वात्स्त्यैधातोरित्यर्थः।'निष्ठातस्य म' इति शेषः। **प्रस्तीम इति**। सङ्घीभूत इत्यर्थः। **अनुपसर्गात्** । एते निपात्यन्ते, उपसर्गात्परा न चेदित्यर्थः। **लत्वमिति** । 'आदितश्चे'ति इडभावः, 'ति चे'त्युत्वं च सिद्धमिति भावः । 'फल निष्पत्तौ' इत्यस्य तु नाऽत्र ग्रहणम्, इडभावस्याऽपि निपात्यत्वापत्तेः। ननु क्तवतुप्रत्यये फुल्लवानिति कथं,क्तवतुप्रत्यये क्तस्याऽनर्थकत्वेन फुल्लशब्देनाऽग्रहणादित्यत आह-**क्तवत्वेकदेशस्यापीति** । **क्षीबादिष्विति** । क्षीबकृशोल्लाघेष्वित्यर्थः। **क्तप्रत्ययस्यैवेति** । नतु क्तवत्वेकदेशस्यापीत्यर्थः । अनर्थकत्वादिति भावः । **तस्येति** । तलोपस्येत्यर्थः। **क्षीबो मत्त इति** । क्षीबेः क्तः, तलोपः, इडभावश्च । **कृशस्तनुरिति**। कृशेः क्तः, इडभावश्च । **उल्लाघो नीरोग इति**। लाघेः क्तः,तलोपः, इडभावश्च। अत्र मत्तादिरेवार्थः, निपातनबलात् । **अनुपसर्गात्किमिति** । अत्र 'प्रफुल्त' इति प्रत्युदाहरणं विवक्षंस्तत्र विशेषमाह-

---

शे.]न्यासः।क्तप्रत्ययान्ते षत्वाऽभावनिपातनमिदमित्यन्ये । एतन्मतद्वयमपि वृत्तौ स्पष्टम् । **वातश्चेदिति**। इदं वृत्तिरीत्या। एतन्मते 'निर्वाणोदीपो वातेने'ति प्रयोगो वातस्य करणत्वे बोध्यः । भावे 'निर्वातं वातेने'त्येव । भाष्ये तु 'अवाताभिधान इति वक्तव्यं, निर्वाणोऽग्निर्वातेने'त्युक्तम् । भावे 'निर्वाणं वातेने'त्येवेति तदाशयः । **क्षाम इति** । 'क्षै क्षये' इत्यस्य । 'आदेचः' इत्यात्वम् । **स्त्यः** ! प्रेत्यत्र पूर्वग्रहणं 'प्रसंस्तीतः' इत्यर्थं,मत्वन्तु न,'प्रस्त्यः' इत्युक्तेः। अत्र 'स्त्यै' 'ष्ट्यै' इत्युभयोरपि ग्रहणमिति वृत्तिः । एतत्सर्वं भाष्ये न दृष्टम्।**लत्वमिति**।उत्वं तु चरफलोरित्यनुवर्त्तमाने 'ति चे'त्येव सिद्धम् । तत्र हि 'फल निष्पत्तौ' 'ञिफला' इत्युभयोरपि ग्रहणं, व्याख्यानात्।एकानुबन्धकपरिभाषाया असार्वत्रिकत्वात्। फलनिष्पत्तावित्यस्य नाऽत्र निपातनम् ,इडभावस्यापि निपात्यतापत्तेः।एतेन 'फुल्ल विकसने' इत्यस्य निष्ठातलोपो निपात्यत इत्यपास्तम्।'फलेर्लत्वे' इत्यादिभाष्यविरोधाच्च।न चाऽनुपसर्गादित्युक्तेः 'परिकृश' इत्यस्यानुपपत्तिः,परितः प्राप्तः कार्श्येनेत्यर्थेन परेः कृशं प्रत्यनुपसर्गत्वात् । वृत्तौ कृशशब्दः कार्श्यपर इति भाष्ये स्पष्टम् । **इष्यत इति**। 'वृत्तिकारै'रिति शेषः। **इटोऽभावश्चेति** । 'निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धः' इति सिद्धत्ववार्त्तिके इड्विधिग्रहणमेतन्निपातनसिद्धार्थानुवाद

।७।२।१६। आकारेतो निष्ठाया इण्न स्यात्। **ति च** ।७।४।८९। चरफलोरत उत्स्यात्तादौ किति। प्रफुल्तः। प्रक्षीबितः। प्रकृशितः। प्रोल्लाघितः। कथं तर्हि 'लोध्रद्रुमं सानुमतः प्रफुल्ल'मिति। फुल्ल विकसने, पचाद्यच्। सूत्रं तु फुल्लादिनिवृत्त्यर्थम्। ✱ **उत्फुल्लसंफुल्लयोरुपसङ्ख्यानम्**। **नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्** ।८।२।५६। एभ्यो निष्ठातस्य नो वा स्यात्। नुन्नः। नुत्तः। विद विचारणे रौधादिक एव गृह्यते, उन्दिना परेण साहचर्यात्। विन्नः। वित्तः। वेत्तेस्तु-विदितः। विद्यतेर्विन्नः। उन्दी। **श्वीदितो निष्ठायाम्**।७।२।१४। श्वयतेरीदितश्च निष्ठाया इण्न स्यात्। उन्नः। उत्तः। त्राणः। त्रातः। घ्राणः। घ्रातः। ह्रीणः। ह्रीतः। **न ध्याख्यापॄमूर्च्छिमदाम्** ।८।२।५७। एभ्यो निष्ठातस्य नत्वं न। ध्यातः। ख्यातः। पूर्तः। 'राल्लोपः'। मूर्तः। मत्तः। **वित्तो भोगप्रत्यययोः** ।८।२।५८। विन्दतेर्निष्ठान्तस्य निपातोऽयं भोग्ये प्रतीते चाऽर्थे। वित्तं धनम्। वित्तः

त.]शब्दाद्युत्पूर्वः, एभ्यः क्तः। ननु फुल्ल विकसन इत्यस्मादुल्लाघेश्च पचाद्यचि इतराभ्यामिगुपधलक्षणे कप्रत्यये च फुल्लादयः सिध्यन्ति तत्किं सूत्रेणेत्यत आह-**सूत्रं त्विति**। निवृत्त्यर्थमित्युपलक्षणम्। फुल्लवानिति रूपस्य, 'निष्ठा च द्व्यजना'दित्याद्युदात्तस्य च सिद्ध्यर्थमिति बोध्यम्। **उत्फुल्लसंफुल्लयोरिति**। यद्यपि प्रफुल्ल इतिवत् फुल्लेः पचाद्यचा सिद्धं, तथापि उत्फुल्तः, संफुल्त इति प्रयोगनिवृत्त्यर्थं वचनम्। **नुदविदो**। 'रदाभ्यां' 'संयोगादेरातः' इति नित्ये प्राप्ते, ह्रीत्यस्याऽप्राप्ते उभयत्र विभाषेयम्। **वेत्तेस्त्विति**। तथा च भाष्यम्-'**वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते। विन्तेर्विन्नश्च वित्तश्च भोगे वित्तश्च विन्दतेः**' इति। **नुन्नः नुत्त इति**। 'अनिदिता'मिति नलोपः। **न ध्या**। ध्यै चिन्तायाम्। ख्या प्रकथने। पृ पालनपूरणयोः। मुर्छा मोहसमुच्छ्राययोः। मदी हर्षे। **पूर्त इति**। 'श्र्युकः किती'ति इण्निषेधः। छ्लोपविधिं स्मारयति-**राल्लोप इति**। **मूर्त इति**। 'आदितश्चे'ति नेट्। **मत्त इति**। 'श्वीदितः' इति नेट्। **वित्तो**। ज्ञानार्थकाद्विदेरिटा भाव्यं, सत्तार्थकविदेर्विचारणार्थकविदेश्च भोगप्रत्यययोर्वृत्तिर्न संभवतीत्याशयेनाह-**विन्दतेरिति**। विद्लृ लाभ इत्यस्येत्यर्थः। भुज्यत इति भोगः। प्रतीयत इति प्रत्ययः इति कर्मसाधनावेताविति

बा.]**आदितश्च**। **निष्ठाया इण्न स्यादिति**। 'श्वीदितः' इत्यतो निष्ठायामिति, 'नेड्वशी'त्यतो नेडिति चानुवर्तते इति भावः। **ति च**। 'चरफलोश्चे'ति सूत्रानुवृत्तिं मत्वाह-**चरफलोरिति**। **अत उत्स्यादिति**। 'उत्परस्याऽतः' इत्यतस्तदनुवृत्तेरिति भावः। **कितीति**। 'दीर्घ इणः किती'त्यतो मण्डूकप्लुत्या तदनुवर्तते इति भावः। वस्तुतस्तु कितीत्यनुवृत्तिर्निर्मूला, निष्फला च, तयोः सेट्कत्वेन निष्ठां विना तकारादिप्रत्ययाऽभावात्। **कथं तर्हीति**। प्रफुल्लमित्यस्य सोपसर्गत्वेन निष्ठातस्य ल्त्वाऽसंभवादिति भावः। समाधत्ते-**फुल्लेति**। ननु फुल्लेः पचाद्यचैव फुल्ल इत्यस्य सिद्धेः फुल्ल इत्यस्य निपातनं व्यर्थमित्यत आह-**सूत्रं त्विति**। **उत्फुल्लसंफुल्लयोरिति**। 'निष्ठातस्य ल्त्वनिपातन'मिति शेषः। सोपसर्गार्थं वचनम्। **नुदविदोन्द**। ह्रीधातोरप्राप्ते, इतरेभ्यो नित्यं प्राप्ते नत्वविकल्पोऽयम्। **रौधादिक इति**। 'विद विचारणे' इत्ययमित्यर्थः। **वेत्तेस्त्विति**। 'विद ज्ञाने' इत्यस्येत्यर्थः। अयं सेट्, अनिट्केष्वनन्तर्भावात्। तदाह-**विदित इति**। अत्र निष्ठातस्य इटा व्यवहितत्वान्नत्वं नेति भावः। **विद्यतेर्विन्न इति**। 'विद सत्ताया'मित्ययमनिट्। 'रदाभ्या'मिति नित्यं नत्वमिति भावः। **उन्दीति**। उदाहरणसूचनम्। **श्वीदितो निष्ठायाम्**। श्वि, ईदित् अनयोः समाहारद्वन्द्वात्पञ्चमी। 'नेड्वशी'त्यतो नेडित्यनुवर्तते। तदाह-**श्वयतेरिति**। **न ध्याख्या**। पञ्चम्यर्थे षष्ठी। तदाह-**एभ्य इति**। **ध्यात इति**। ध्यैधातोः क्तः। 'आदेचः' इत्यात्वम्। अत्र 'संयोगादेरातः' इति प्राप्तं नत्वं न। **ख्यात इति**। ख्याञादेशपक्षे यण्वत्त्वात् 'संयोगादेरातः' इति प्राप्तं नत्वं न। ख्यादेशस्य शस्य यत्वे तु यस्य णत्वप्रकरणगतस्याऽसिद्धत्वाद्यण्वत्त्वाऽभावात् 'संयोगादेरातः' इति नत्वस्य न प्रसक्तिः। स्वतः सिद्धख्याधातोस्तु आर्द्धधातुके प्रयोगो नाऽस्त्येवेति ख्याग्रहणं व्यर्थमेव। **पूर्त इति**। पृधातोः क्तः। 'श्र्युकः किती'ति नेट्। 'उदोष्ठ्यपूर्वस्ये'ति उत्त्वं, रपरत्वम्। इह 'रदाभ्या'मिति प्राप्तं नत्वं न। मुर्छाधातोः क्ते आह-**राल्लोप इति**। छस्य लोप इति भावः। **मूर्त इति**। 'आदितश्चे'ति नेट्। छ्लोपे 'रदाभ्या'मिति प्राप्तं नत्वं न। 'हलि चे'ति दीर्घः। **मत्त इति**। 'मदी हर्षग्लेपनयोः' अस्मात् क्तः। 'श्वीदितः' इति नेट्। अत्र 'रदाभ्या'मिति प्राप्तं नत्वं न। **वित्तो भोग**। भुज्यत इति भोगः-भोग्यम्।

शे.]इति भावः। **तादौ किन्नीति**। कितीति निर्मूलं निष्फलञ्च। ताभ्यां परस्य तादेः कित एव सम्भव इत्याशयो वा। **नुदविदोन्द**। मण्डूकप्लुत्या 'रदाभ्या'मित्यतो 'न' इति वर्त्तते। ह्रियोऽप्राप्तेऽन्येषां प्राप्ते विभाषेयम्। **परेणेति**। यदि तु पूर्वसाहचर्यमन्तरङ्गमित्युच्यते तदा व्याख्यानादेवाऽस्य ग्रहणं बोध्यम्। **उत्त इति**। एतेन 'ओलस्जी' इत्यादेर्लग्न इत्यत्रेण्निषेधे नस्य सिद्धत्वात् 'नेड्वशी'ति निषेधे सिद्धेऽत्रेदिद्ग्रहणं व्यर्थमित्यपास्तम्। 'वरमनादा'विति परिगणनेनाऽत्र तदप्राप्तेः। **ख्यात इति**। ख्यादेशस्य ख्शादित्वात्स्वतन्त्रस्यार्द्धधातुके प्रयोगाऽभावाच्चाऽत्र ख्याग्रहणं व्यर्थमिति बोध्यम्।

पुरुषः । अनयोः किम् ? । विन्नः । 'विभाषा गमहने'ति क्सौ वेट्त्वादिह नेट् । **भित्तं शकलम्** ।८।२।५९। भिन्नमन्यत् । **ऋणमाधमर्ण्ये** ।८।२।६०। ऋधातोः क्ते तकारस्य नत्वं निपात्यते अधमर्णव्यवहारे । ऋतमन्यत् । **स्फायः स्फी निष्ठायाम्** ।६।१।२२। स्फीतः । **इण्निष्ठायाम्** ।७।२।४७। निरः कुषो निष्ठाया इट् स्यात् । 'यस्य विभाषे'ति निषेधे प्राप्ते पुनर्विधिः । निष्कुषितः । **वसतिक्षुधोरिट्** ।७।२।५२। आभ्यां क्त्वानिष्ठयो- र्नित्यमिट् स्यात् । उषितः।क्षुधितः।**अञ्चेः पूजायाम्** ।७।२।५३। पूजार्थादञ्चेः क्त्वानिष्ठयोरिट् स्यात् । अञ्चितः । गतौ तु—अक्तः। **लुभो विमोहने**।७।२।५४। लुभः क्त्वानिष्ठयोर्नित्यमिट् स्यात्तु गार्ध्ये। लुभितः।गार्ध्ये तु लुब्धः।

---

त.]व्याचष्टे—भोग्ये प्रतीते चार्थे इति। **भित्तं शकलम्**। भिदेः क्ते 'रदाभ्या'मिति प्राप्तनत्वस्याऽभावो निपात्यते । 'भित्तं शकलखण्डे वा' इत्यमरः । **भिन्नमन्यदिति** । विदीर्णमित्यर्थः । **ऋणमाधमर्ण्ये** । अधमं दुःखप्रदमृणमस्य सोऽधमर्णः, तस्य भाव आधमर्ण्यं।तेन व्यवहारविशेषो लक्ष्यते ।ततश्च उत्तमर्णेऽपि सिध्यतीत्याशयेन व्याचष्टे—**अधम- र्णव्यवहार इति**। स च व्यवहारो दातृग्रहीत्रोः संबन्धी भवतीत्युत्तमर्णेऽपि प्रयोगो न विरुध्यते। लक्षणायां तु 'धारेरुत्त- मर्णः' इति निर्देशो लिङ्गम्। **स्फायः स्फी** । स्फायी वृद्धौ । कथं तर्हि स्फीतिकाम इति ?। स्फीतमाष्टे इति ण्यन्तादच इः, अल्लोपणिलोपौ । **यस्येति** । 'निरः कुषः' इति विकल्पितेट्त्वादिति भावः । **उषित इति** । यजादित्वात्संप्रसार- णम् । 'शासिवसी'ति षः । 'वसती'ति शपा निर्देशः स्पष्टार्थः । वस्तेः सेट्त्वाद्भवितव्यमेवेटा । **क्षुधित इति** । एवं च 'तस्याऽलमेषा क्षुधितस्ये'ति प्रयोगो निर्बाध एवेति क्षुधेर्धातोर्भावे क्विपि 'तारकादित'जिति धातुवृत्तिषु यदुक्तं, तत्रा दर्तव्यम् । समानन्यायतया कुधितादावुपयोक्ष्यत इति वा कथंचिन्नेयम् । **अञ्चेः** । उदित्वात् क्त्वायां विकल्पे प्राप्ते, निष्ठायां 'यस्य विभाषे'ति निषेधे प्राप्ते वचनम् । **अञ्चित इति** । 'नाञ्चेः पूजाया'मिति नलोपनिषेधः । **अक्त इति** ।

---

बा.]प्रतीयते इति **प्रत्ययः**—प्रख्यातः। अत्र विन्दतेरेव ग्रहणमिति भाष्ये स्पष्टम् । तदाह—**विन्दतेरिनि।निपानोय- मिति** । 'नुदविदोन्दे'ति प्राप्तस्य पाक्षिकनत्वस्य अभावंनिपातनमित्यर्थः । तस्य भोगप्रत्यययोः कदाऽपि नत्वं नेत्यर्थः । **प्रतीते इति** । प्रख्याते इत्यर्थः । **वित्तः पुरुष इति** । प्रख्यात इत्यर्थः । **विन्न इति** । लब्धश्चोरादिरित्यर्थः । अत्र 'यस्य विभाषे'ति इण्निषेधमुपपादयति—**विभाषा गमेति**। 'एकाच' इति निषेधाच्चेत्यपि बोध्यम् । **भित्तं शक- लम्** । शकले वाच्ये भिदेः क्तस्य नत्वाऽभावो निपात्यते । शकलत्वजातिविशिष्टेऽवयवार्थमनपेक्ष्य रूढोऽयम् । ततश्च भित्तशकलयोः पर्यायत्वान्न सहप्रयोगः। भिदिक्रियाविवक्षायां तु 'भित्तं भिन्न'मिति भवतीति भाष्ये स्पष्टम् । **ऋणमा- धमर्ण्ये** । अधमर्णस्य कर्म—आधमर्ण्यम् । **आधमर्ण्यव्यवहारे इति** । स च अन्यदीयं द्रव्यं गृहीतमियता कालेन इयत्या वृद्ध्या प्रतिदीयते इति संविद्रूपः, तस्मिन्विषये इत्यर्थः । **ऋतमन्यदिति** । सत्यमित्यर्थः । **स्फायः स्फी** । 'स्फायी वृद्धौ' अस्य स्फीभावः स्यान्निष्ठायां परत इत्यर्थः । **इण्निष्ठायाम्** । 'निरः कुषः' इति सूत्रमनुवर्तते । तदाह—**निर इति** । ननु 'आर्द्धधातुकस्ये'डित्येव सिद्धे किमर्थमिदं सूत्रमित्यत आह—**यस्येति** । कुषधातोस्तृजादौ 'निरः कुषः' इति पूर्वसूत्रेण वेट्त्वात् 'यस्य विभाषे'ति प्राप्तस्येण्निषेधस्य बाधनार्थं पुनरिह विधानमित्यर्थः । इडित्य- नुवर्त्तमाने पुनरिड्ग्रहणं तु 'स्वरतिसूती'त्यतो वाग्रहणानुवृत्तिनिवृत्तये । **वसतिक्षुधोरिट्** । पञ्चम्यर्थे षष्ठी । **क्त्वा- निष्ठयोरिति**। 'क्लिशः क्त्वानिष्ठयो'रित्यतस्तदनुवृत्तेरिति भावः। **नित्यमिति**।इडित्यनुवर्तमाने पुनरिड्ग्रहणस्य 'स्वरति- सूती'त्यतो वाग्रहणानुवृत्तिनिवृत्त्यर्थत्वादिति भावः । 'एकाच उपदेश' इति इण्निषेधबाधनार्थमिदं सूत्रम् । **उषित इति** । यजादित्वात्संप्रसारणम्, 'शासिवसिघसीनां चे'ति षः। **अञ्चेः पूजायाम्**। 'उदितो वे'ति क्त्वायां विकल्पे प्राप्ते, निष्ठायां तु 'यस्य विभाषे'ति निषेधे प्राप्ते वचनम् । **अञ्चित इति** । 'नाऽञ्चेः पूजाया'मिति नलोपनिषेधः । **लुभो विमोहने** । 'लुभ' इति पञ्चमी । 'लुभ विमोहने' तुदादिः । 'विमोहनं व्याकुलीकरण'मिति वृत्तिः । 'लुभ गार्ध्ये' दिवादिः । अत्र तौदादिकस्यैव ग्रहणं, तस्यैव विमोहनार्थकत्वात् । ननु दैवादिकस्य, तस्य गार्ध्यार्थकत्वात् । तदाह—**न तु गार्ध्ये इति** । 'तीषसहे'ति क्त्वायां विकल्पे प्राप्ते, निष्ठायां तु 'यस्य विभाषे'ति निषेधे प्राप्ते वचनम्। **लुभित इति**। विमोहित इत्यर्थः । **गार्ध्ये तु लुब्ध इति** । अभिकाङ्क्षावानित्यर्थः । 'मतिबुद्धिपूजार्थेभ्यश्चे'ति कर्तरि क्तः । **क्लिशः**

---

शे.]**क्सौ वेट्त्वादिति** । 'एकाचः' इति निषेधाच्चेत्यपि बोध्यम्। **भित्तमिति**। शकलत्वजातिविशिष्टे रूढोऽयम्। तेन भित्तशकलयोः पर्यायत्वान्न सहप्रयोगः।निष्पन्नस्य शकलस्याऽन्यस्मिन्विदारणे प्रतिपाद्ये 'भित्तं भिन्न'मिति भवत्येव।किंच भिन्नं विदीर्णमिति सामान्योपक्रमे भिन्नं भित्त'मिति प्रयोग इति स्पष्टं भाष्ये।**इण्निष्ठायाम्**।इडिति वर्त्तमाने पुनरिड्ग्रहणं नित्यत्वाय । 'निष्ठाया'मित्येतत्तु 'यस्य विभाषे'ति निषेधबाधनार्थं स्यात्। **वसतिक्षु**।अत्राऽपीड्ग्रहणं प्राग्वत् । **पूजार्था- दिति** । पूजाविषयार्थकादित्यर्थः। 'नागाश्चाऽञ्चितगामिनः' इत्यादौ समाधानेन पूजा गम्यत इति तत्रापि इण्निदः । **न तु**

**क्लिशः क्त्वानिष्ठयोः** ।७।२।५०। इड्वा स्यात् । क्लिश उपतापे,—नित्यं प्राप्ते, क्लिशू विबाधने,—अस्य क्त्वायां विकल्पे सिद्धेऽपि निष्ठायां निषेधे प्राप्ते विकल्पः । क्लिशितः । क्लिष्टः । **पूङश्च** ।७।२।५१। पूङः क्त्वानिष्ठयोरिड्वा स्यात् । **पूङः क्त्वा च** ।१।२।२२। पूङः क्त्वा निष्ठा च सेट् किन्न स्यात् । पवितः । पूतः । क्त्वाग्रहणमुत्तरार्थम् । 'नोपधा'दित्यत्र हि क्त्वैव संबध्यते । **निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः** ।१।२।१९। एभ्यः सेण्निष्ठा किन्न स्यात् । शयितः । शयितवान् । अनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थः । शेशयितः । शेशयितवान् ।
*** आदिकर्मणि निष्ठा वक्तव्या । आदिकर्मणि क्तः कर्तरि च** ।३।४।७१।आदिकर्मणि यः क्तः स कर्तरि स्यात् । चाद्भावकर्मणोः । **विभाषा भावादिकर्मणोः** ।७।२।१७। भावे आदिकर्मणि च—आदितो निष्ठाया इड्वा स्यात् । प्रस्वेदितश्चैत्रः । प्रस्वेदितं तेन । ञिष्विदेति श्वादिरत्र गृह्यते, ञीद्भिः साहचर्यात् । स्विद्यतेस्तु स्विदित

त.]'अनिदिता'मिति नलोपः। **लुभो**। 'तीषसहे'ति क्त्वायां विकल्पे, निष्ठायां निषेधे च प्राप्ते वचनम्। **पूङश्च** । 'श्र्युकः किती'ति निषेधे प्राप्ते वचनम्।**पूङः क्त्वा च**।'न क्त्वा से'डित्यनेनैव सिद्धे क्त्वाग्रहणमिह व्यर्थमित्यत आह-**उत्तरार्थमिति**। **क्त्वैवेति** । ननु निष्ठा,चानुकृष्टत्वादिति भावः। **शेशयित इति** । 'एरनेकाचः' इति यण् । **आदिकर्मणीति** । आद्येषु क्षणेषु भूतेषु सर्वस्याः क्रियाया भूतत्वाऽभावान्निष्ठा न प्राप्नोतीति वचनम् , आदिकर्मणि क्तस्य कर्तरि विधानार्थं चेत्याहुः। **चादिति**। अन्यथा तक्रकौण्डिन्यन्यायेन भावकर्मणोर्न स्यादिति भावः।**प्रस्वेदित इति** । प्रशब्द आदिकर्मद्योतनार्थः। स्वेदितमित्यादि भावे । **श्वादिरत्रेति**। 'ञिष्विदा स्नेहनमोचनयोः' इति पठितः । **स्विद्यतेस्त्विति** । 'ष्विदा गात्रप्रक्षरणे' इति दिवादिषु पठितस्य स्विदित इत्येवेति, कित्त्वनिषेधाऽभावादिति भावः। न च ष्विदेति दैवादिकोऽपि ञीदिति वाच्यम् , हरदत्तग्रन्थविरोधादिति भावः । अत्र हरदत्तः—ञिक्ष्विदा स्नेहनमोचनयोरिति दिवादिर्गृह्यते न तु ञिक्ष्विदा

बा.]**क्त्वानिष्ठयोः** । 'इड्वा स्या'दिति शेषः । 'स्वरतिसूती'त्यतो वेत्यनुवृत्तेरिति भावः।**नित्यं प्राप्त इति**। 'आर्द्धधातुकस्येड्वलादे'रित्यनेनेति भावः । **विकल्पे सिद्ध इति** । ऊदित्त्वादिति भावः । **निष्ठायां निषेधे प्राप्ते इति** । 'यस्य विभाषे'त्यनेनेति भावः । **पूङश्च** । **क्त्वानिष्ठयोरिति** । 'क्लिशः क्त्वानिष्ठयो'रित्यतस्तदनुवृत्तेरिति भावः । **इड्वेति** । 'स्वरतिसूती'त्यतो वाग्रहणस्य, 'इण्निष्ठाया'मित्यत इडित्यस्य चाऽनुवृत्तेरिति भावः । 'श्र्युकः' इति निषेधे प्राप्ते विकल्पोऽयम् । **पूङः क्त्वा च** । 'न क्त्वा से'डित्यतो न् सेडित्यनुवर्तते । 'असंयोगा'दित्यतः किदिति, 'निष्ठा शीङि'त्यतो निष्ठेति च । तदाह-**पूङः क्त्वा निष्ठा चेत्यादि** । ननु 'न क्त्वा से'डित्येव सिद्धे किमर्थमिह क्त्वाग्रहणमित्यत आह-**क्त्वाग्रहणमुत्तरार्थमिति**। तदेवोपपादयति-**नोपधादित्यत्रेति**। तत्र हि क्त्वाप्रत्ययस्यैवानुवृत्तिरिष्टा। 'पूङश्चे'त्येवोक्तौ तु 'निष्ठा शी'ङित्यतो निष्ठाग्रहणमेवाऽनुवर्तेतेति भावः । **निष्ठा शीङ्** । 'न क्त्वा से'डित्यतो न सेडित्यनुवर्तते । 'असंयोगा'दित्यतः किदिति च । तदाह-**एभ्यः सेडिति** । शीङिति ङकारस्य फलमाह-**अनुबन्धेति** । यङ्लुकि 'श्तिपा शपे'ति निषेधार्थं इत्यर्थः । **शेशयितवानिति** । अत्र कित्त्वनिषेधाऽभावात्कित्त्वान्न गुण इति भावः । **आदिकर्मणि निष्ठा वक्तव्येति** । दीर्घकालव्यासक्तायाः कटाद्युत्पादनक्रियाया आरम्भकालविशिष्टोंऽश आदिकर्म । तत्र विद्यमानाद्धातोर्निष्ठा वक्तव्येत्यर्थः । तत्र आद्येषु क्रियाक्षणेषु भूतेष्वपि क्रियाया भूतत्वाऽभावाद्भूते विहिता निष्ठा न प्राप्तेत्यारम्भः । **आदिकर्मणि क्तः कर्तरि च** । **चाद्भावकर्मणोरिति** । 'तयोरेव कृत्ये'त्यतस्तदनुवृत्तेरिति भावः । 'प्रकृतः कटं देवदत्तः, प्रकृतवान् कटं देवदत्तः' इति भाष्ये उदाहृतम् । आरभ्यमाणकरणक्रियेति बोधः । **विभाषा भावादिकर्मणोः** । **आदितो निष्ठाया इड्वेति** । 'आदितश्चे'त्यत आदित इति,'श्वीदितः' इत्यतो निष्ठाग्रहणं, 'नेड्वशी'त्यतो नेति चानुवर्तते इति भावः। निषेधस्य वैकल्पिकत्वात्पक्षे इडभ्यनुज्ञायते । **प्रस्वेदितश्चैत्र इति**। चैत्रकर्तृका आरभ्यमाणप्रस्वेदनक्रियेत्यर्थः । **ञीद्भिरिति** । ञिरिद्येषां ते ञीतः, तैर्मिदिप्रभृतिभिरिति तदर्थः। स विषयः कित्त्वप्रतिषेधस्येति बोध्यम् । **स्विद्यतेस्त्विति** । 'ञि ष्विदा गात्रप्रक्षरणे' इति दैवादिकस्यैव कित्त्वनिषेधविधौ ग्रहणमित्यर्थः । **स्विदित इति**। 'विभाषा भावे'ति पक्षे इट् । कित्त्वनिषेधविधौ स्विद्यतेर्ग्रहणाऽभावात्कित्त्वान्न

शे.]**गार्ध्ये इति**। गार्ध्यार्थदैवादिकस्याऽत्र सूत्रे न ग्रहणं,किंतु विमोहनार्थतौदादिकस्यैव। विमोहने किम्?।लुब्धो वृषलः। धनाकाङ्क्षावानित्यर्थः। उदाहरणे-प्राप्तमोह इत्यर्थः। **पूङः क्त्वा च** । ङकारोच्चारणं स्पष्टार्थम् । इड्विधौ ङकारनिर्देशेनापि पूञो निवृत्तिसिद्धेः। **आदिकर्मणि निष्ठेति**। आद्येषु क्रियाक्षणेषु भूतेष्वपि क्रियाभूतत्वाऽभावादप्राप्ता निष्ठेति वचनम् । आदिभूते एवाऽवयवे समुदायरूपमारोप्य तस्य समाप्त्या भूतत्वं यदाश्रीयते तदेदं प्रत्याख्यातम्। तदुक्तं 'यत्कृतं तदभिसमीक्ष्यैतत्प्रयुज्यते 'प्रकृतः कटं','प्राकार्षीत्कटं देवदत्त' इति।यदा त्वैकान्तः कटोऽभिसमीक्षितस्तदा 'प्रकरोति कट'मित्येव भवती'ति भाष्ये । **विभाषा भा** । 'आदितश्चे'ति निषेधे प्राप्ते इदम् । **सेण्निष्ठेति** । अस्याऽनिटोऽभावादिदं स्वरूप-

इत्येव । जिमिदा जिष्विदा–दिवादी भ्वादी च । प्रमेदितः । प्रमेदितवान् । प्रक्ष्वेदितः । प्रक्ष्वेदितवान् । प्रधर्षितः । प्रधर्षितवान् । प्रधर्षितं तेन । सेट् किम् ? । प्रस्विन्नः । स्विन्नं तेनेत्यादि । **मृषस्तितिक्षायाम्** ।१।२।२०। सेण्निष्ठा किन्न स्यात् । मर्षितः । मर्षितवान् । तितिक्षायां किम् ?। अपमृषितं वाक्यम् । अविस्पष्टमित्यर्थः । **उदुपधाद्भावादिकर्मणोरन्यतरस्याम्** ।१।२।२१। उदुपधात्परा भावाऽऽदिकर्मणोः सेण्निष्ठा वा किन्न स्यात् । द्युतितम् द्योतितम्, मुदितम् मोदितं साधुना । प्रद्युतितः प्रद्योतितः, प्रमुदितः प्रमोदितः साधुः । उदुपधात्किम् ? । विदितम् । भावेत्यादि किम् ? । रुचितं कार्षापणम् । सेट्किम् ? । कुष्टम् । * **शब्विकरणेभ्य एवेष्यते** । नेह–गुध्यतेर्गुधितम् । **निष्ठायां सेटि** ।६।४।५२। णेर्लोपः स्यात् । भावितः । भावितवान् । 'श्वीदित' इति नेट् । संप्रसारणम् । शूनः । दीप्तः । गुहू–गूढः । वनु, तनु–वतः ततः । पतेः सनि वेट्कत्वादिडभावे प्राप्ते 'द्वितीयाश्रिते'ति सूत्रे निपातनादिट् पतितः।'सेऽसिची'ति वेट्कत्वात्सिद्धे कृन्तत्यादीना-

त.]अव्यक्ते शब्दे इति भ्वादिरपि, मिदिना साहचर्यादित्याह। तच्चिन्त्यम् । भ्वादिष्वपि मिदेः पठ्यमानत्वात्।तस्मादविशेषादुभयोर्ग्रहणं न्याय्यं । तदेतदाह–**दिवादी भ्वादी चेति** । क्ष्विदादीनाम् 'आदितश्चे'तीण्निषेधात्सेण्निष्ठा न संभवतीत्यादिकर्मणि निष्ठोदाहृता । **अविस्पष्टमिति** । मृषधातोस्तितिक्षायामेव वृत्तिसत्त्वेऽपि सूत्रस्थतितिक्षाग्रहणमेव ज्ञापयत्यनेकार्था धातव इति । **रुचितमिति** । रुच दीप्तौ । 'गत्यर्थाऽकर्मके'ति कर्तरि क्तः । **क्रुष्टमिति** । क्रुश आह्वाने रोदने च । व्रश्चादिना षत्वे ष्टुत्वम् । **गुधितमिति** । गुध परिवेष्टने दिवादिः । **संप्रसारणमिति** । 'वचिस्वपी'त्यनेन । **शून इति** । टुओश्वि गतिवृद्ध्योः । 'हलः' इति दीर्घः । 'ओदितश्च' इति निष्ठातस्य नः । **गूढ इति** । 'यस्य विभाषे'ति नेट् । ढत्वधत्वष्टुत्वढलोपदीर्घाः । **वतः तत इति** । 'अनुदात्तोपदेशे'ति नलोपः । **सनि वेट्कत्वादिति** । 'तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः' इति वचनात् । **कृन्तत्यादीनामिति** । 'श्वीदित' इति निष्ठायामनिट्त्वार्थं कृती छेदने, चृती हिंसाग्रन्थनयोः, नृती गात्रविक्षेपे इत्येतेषामीदित्वकरणेन 'यस्य विभाषे'त्यस्याऽनित्यत्वज्ञापनाद्वा

बा.]गुणः । अत्र स्विदादीनाम् 'आदितश्चे'ति इट् प्रतिषिध्यते । भावादिकर्मणोस्तु पक्षे इट् । **मृषस्तितिक्षायाम्** । **तितिक्षा–क्षमा** । **सेण्निष्ठा किन्नेति**–शेषपूरणमिदम् । 'निष्ठा शी'ङित्यतो निष्ठेति, 'न क्त्वा से'डित्यतः सेण्णेति, 'असंयोगा'दित्यतः किदिति चानुवर्तत इति भावः। **उदुपधाद्भावादिकर्मणोः**। भवे उदाहरति–**मुदितमित्यादि**। आदिकर्मण्युदाहरति–**प्रद्युतितः प्रद्योतितः साधुरिति** । आदिकर्मणि कर्तरि क्तः । **उदुपधात्किं, विदितमिति** । 'विद ज्ञाने' इति वेत्तेः रूपम् । **गुध्यतेर्गुधितमिति** । 'गुध परिवेष्टने' दिवादिः सेट्कः । **निष्ठायां सेटि** । **णेर्लोपः स्यादिति** । शेषपूरणमिदम् । 'णेरनिटी'त्यतो णेरिति, 'आतो लोपः' इत्यस्माल्लोप इति चानुवर्तते इति भावः । 'अनिटी'ति निषेधादप्राप्ते आरम्भः। 'टु ओ श्वि गतिवृद्ध्योः' अस्मात् क्ते आह **श्वीदित इति नेडिति**। **संप्रसारणमिति** । यजादित्वादिति भावः । संप्रसारणे सति पूर्वरूपे 'हलः' इति दीर्घे 'ओदितश्चे'ति निष्ठानत्वे रूपमाह–**शून इति** । यद्यपि गूले 'ओदितश्चे'त्यत्र उच्छून इत्युदाहृतमेव, तथापि विशेषविवक्षया पुनरिहोपन्यासः । अत्र अल्विधित्वेऽपि 'हल' इत्यारम्भसामर्थ्यादेव पूर्वरूपस्य संप्रसारणत्वम् । न च नित्यत्वात्संप्रसारणपूर्वरूपयोः 'श्र्युकः किती'त्येव निषेधसिद्धेः श्विग्रहणं व्यर्थमिति वाच्यम्, 'श्र्युकः किती'त्यत्र 'एकाच उपदेशे' इत्यत उपदेशे इत्यनुवृत्तेः। तथाच उपदेशे उगन्तत्वाऽभावान्निषेधाऽप्राप्तौ श्विग्रहणम् । अत एव 'स्तीर्वे'त्यादौ उपदेशे उगन्तत्वमादाय इण्निषेधसिद्धिरित्यलम्। ईदित उदाहरति–**दीप्त इति** । 'दीपी दीप्तौ' दिवादिः । ईदित्वान्नेट् । **गूढ इति**। ऊदित्वेन वेट्कत्वात् 'यस्य विभाषे'ति नेट् । ढत्वधत्वष्टुत्वढलोपदीर्घाः । **वनु वतः । तनु तत इति** । 'उदितो वे'ति क्त्वायां वेट्कत्वात् 'यस्य विभाषे'ति नेट् । 'अनुदात्तोपदेशे'ति नकारलोपः । **पतेः सनीति** । 'पत्लृ गतौ' अस्य 'तनिपतिदरिद्राणामुपसङ्ख्यान'मिति सनि वेट्कत्वात् 'यस्य विभाषे'ति निष्ठायामिण्निषेधे प्राप्ते इत्यर्थः । 'पतित'शब्दे इटं साधयितुं युक्त्यन्तर माह–**सेऽसिचीति**। 'कृती छेदने' 'चृती हिंसाश्रन्थनयोः' 'नृती गात्रविक्षेपे' एषामीदित्वं 'श्वीदितः' इति इण्निषेधार्थमिति वक्तव्यम्, तत्तु न संभवति । एषां 'सेऽसिचि कृतचृतछृदतृदनृतः' इति सकारादौ वेट्कतया 'यस्य विभाषे'त्येव निष्ठायां नित्यमिण्निषेधसिद्धेः । ततश्च एषामीदित्करणात् 'यस्य विभाषे'ति इण्निषेधस्य अनित्यत्वं विज्ञायते । एवंच

शे']कथनम्। अत्र मृषिः सर्वोऽपि गृह्यते। [**अविस्पष्टमिति**।धात्वर्थनिर्देशस्योपलक्षणत्वे तितिक्षाग्रहणमेवेदं मानम् ]। **श्वीदित इतीति** । नन्वन्तरङ्गत्वात्संप्रसारणपूर्वत्वयोः 'श्र्युकः' इत्येव निषेधे सिद्धे श्विग्रहणं व्यर्थमिति चेन्न, 'श्र्युकः' इत्यत्रोपदेश इत्यनुवृत्तेः । अत एव 'स्तीर्वे'त्यादिसिद्धिः। **शून इति** । अत्राऽल्विधित्वेऽपि 'हलः' इत्यारम्भसामर्थ्या-

मीदित्त्वेनाऽनित्यत्वज्ञापनाद्वा। तेन 'धावितमिभराजधिये'त्यादि। 'यस्य विभाषे'त्यत्र 'एकाच' इत्येव। दरिद्रितः।

**क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताऽविस्पष्टस्वराऽनायासभृशेषु** ।७।२।१८। क्षुब्धादीन्यष्टावनिङ्कानि निपात्यन्ते समुदायेन मन्थादिषु वाच्येषु। द्रवद्रव्यसंपृक्ताः सक्तवो मन्थो, मन्थनदण्डश्च। क्षुब्धो मन्थश्चेत्। स्वान्तं मनः। ध्वान्तं तमः। लग्नं सक्तम्। निष्ठानत्वमपि निपातनात्। म्लिष्टमविस्पष्टम्। विरिब्धः स्वरः। म्लेछ रेभृ अनयोरुपधाया इत्वमपि निपात्यते। फाण्टम्—अनायास-साध्यः कषायविशेषः। माधवस्तु नवनीतभावात्प्रागवस्थापन्नं द्रव्यं फाण्टमिति वेदभाष्ये आह। बाढं भृशम्। अन्यत्र तु क्षुभितम्। 'क्षुब्धो राजे'ति त्वागमशास्त्रस्याऽनित्यत्वात्। स्वनितम्। ध्वनितम्। लगितम्। म्लेच्छि-तम्। विरेभितम्। फणितम्। वाहितम्।

**धृषिशसी वैयात्ये**।७।२।१९। एतौ निष्ठायामविनये एवाऽनिटौ स्तः।

त.]पतित इति सिद्धमित्यर्थः। **क्षुब्ध**। क्षुभ संचलने 'झषस्तथो'रिति धत्वम्। स्वन ध्वन शब्दे। इडभावे 'अनुनासिकस्य क्विझलो'रिति दीर्घः। लगे सङ्गे, म्लेच्छ अव्यक्ते शब्दे, 'व्रश्चे'ति षत्वे ष्टुत्वम्। रेभृ शब्दे, फण गतौ। दीर्घः, ष्टुत्वम्। बाहृ प्रयत्ने। इडभावे ढत्वधत्वष्टुत्वढलोपाः। अनायासशब्देन तत्साध्यो लक्ष्यत इत्याह—**अनायाससाध्य इति**। 'क्षुण्णमौषधजातमुष्णोदके प्रक्षिप्य सद्योऽभिषुत्य पूत्वा यत्पीयते तत्फाण्ट'मित्याहुः। **वेदभाष्ये इति**। 'तद्वै नवनीतं भवति। घृतं देवानां फाण्टं मनुष्याणा'मिति शतपथश्रुतेर्व्याख्यायामित्यर्थः। **अन्यत्र त्विति**। मन्थादेरवाच्यत्वे त्वि-त्यर्थः। **धृषिशसी**। ञिधृषा प्रागल्भ्ये। शसु हिंसायाम्। अनयोः 'आदितश्च' 'यस्य विभाषे'ति सूत्राभ्यामिण्निति-षेधे सिद्धेऽप्यनयोर्वैयात्य एवाऽनिट्त्वं नान्यत्रेति नियमार्थमित्याह—**अविनये एवेति**। विरुद्धं यातो वियातः=अविनीतः, तस्य भावो वैयात्यम्। ननु धृषेः 'विभाषा भावादिकर्मणो'रिति विकल्पे प्राप्ते नित्यार्थं कस्मान्न भवतीत्याशङ्कायामाह—

बा.]क्तादीनां 'यस्य विभाषे'ति इण्निषेधस्याऽभावसंभावनायां 'श्वीदितः' इण्निषेधार्थमीदित्त्वमर्थवत्। तथा च पतितशब्दे 'यस्य विभाषे'त्यनित्यत्वान्न भवतीत्यर्थः। **तेनेति**। 'यस्य विभाषे'त्यस्याऽनित्यत्वज्ञापनेनेत्यर्थः। **धावितमिति**। 'स्वरतिसूती'ति धूञो वेट्कत्वेऽपि 'यस्य विभाषे'ति इण्निषेधो नेति भावः। ननु दरिद्राधातोः 'तनिपतिदरिद्राणामुपस-ङ्ख्यान'मिति सनि वेट्कत्वात् 'यस्य विभाषे'ति निष्ठायामिण्निषेधः स्यादित्यत आह—**यस्य विभाषेत्यत्रेति**। **क्षुब्ध-स्वान्त**। क्षुब्ध, स्वान्त, ध्वान्त, लग्न, म्लिष्ट, विरिब्ध, फाण्ट, बाढ एषामष्टानां द्वन्द्वात्प्रथमाबहुवचनम्। मन्थ, मनः, तमः, सक्त, अविस्पष्ट, स्वर, अनायास, भृश एषामष्टानां द्वन्द्वात्सप्तमी। यथासङ्ख्यमन्वयः। **समुदायेनेति**। मन्था-दिष्वेते रूढाः। अवयवार्थोऽभिनिवेशो न कर्तव्य इत्याह—**द्रवद्रव्येति**। अत्र याज्ञिकप्रसिद्धिरेव शरणीकर्तव्या। **मन्थन-दण्डश्चेति**। 'वैशाखमन्थमन्थानमन्थानो मन्थदण्डके' इत्यमरः। **क्षुब्ध इति**। 'क्षुभ संचलने' अस्मात् क्तः, इडभावो निपात्यते। 'झषस्तथो'रिति धः, जश्त्वम्। **स्वान्तमिति**। स्वनधातोः क्तः, 'अनुनासिकस्य क्वी'ति दीर्घः, निपातनान्नेट्। 'स्वान्तं हृन्मानसं मनः' इत्यमरः। **ध्वान्तं तम इति**। ध्वनेः क्तः। 'अनुनासिकस्य क्वी'ति दीर्घः। 'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः' इत्यमरः। **लग्नं सक्तमिति**। संबद्धमित्यर्थः। लगेः क्तः, इडभावः। तत्र रदाभ्यां परत्वाऽभावात्कथं निष्ठानत्वमित्यत आह—**निपातनादिति**। **म्लिष्टमविस्पष्टमिति**। इडभावे 'व्रश्चे'ति षः। तकारस्य ष्टुत्वेन टः। 'अथ म्लिष्टमविस्पष्ट'मित्यमरः। **विरिब्धः स्वर इति**। स्वरविशेष इत्यर्थः। 'रेभृ शब्दे' अस्मात् क्तः, इडभावे 'झषस्तथोर्धोऽध' इति धः। उभयत्र धातुस्वरूपं प्रदर्शयन्नाह—**म्लेछ रेभृ अनयोरिति**। **इत्वमपीति**। इडभावश्चेत्यर्थः। **फाण्टमिति**। फणेः क्तः, इडभावः, निष्ठातस्य टत्वं च निपात्यते। तस्याऽसिद्ध-त्वात् 'अनुनासिकस्ये'ति दीर्घः। 'अनायासकृतं फाण्ट'मित्यमरः। वृत्तिकृन्मतमाह—**कषायविशेष इति**। 'यद-शृतमपिष्टं च कषायमुदकसंसर्गमात्राद्विभक्तरसमीषदुष्णं तत्फाण्टमित्युच्यते' इति वृत्तौ स्थितम्। **वेदभाष्ये आहेति**। 'तद्वै नवनीतं भवति। घृतं वै देवानां फाण्टं मनुष्याणा'मिति शतपथब्राह्मणव्याख्यावसरे आहेत्यर्थः। **बाढं भृशमिति**। 'बाहृ प्रयत्ने' अस्मात् क्तः, इडभावः, ढत्वधत्वष्टुत्वढलोपाः। **अन्यत्र त्विति**। मन्थादेर्वाच्यत्वाऽभाव इत्यर्थः। **धृषिशसी**। **वियातः** = अविनीतः, तस्य भावो वैयात्यम्। तत्र 'ञि धृषा प्रागल्भ्ये' इत्यस्य आदित्त्वादेवेण्निषेधः सिद्धः, 'शसु हिंसाया'मित्यस्य तु 'उदितो वे'ति क्त्वायां वेट्कत्वात् 'यस्य विभाषे'तीण्निषेधः सिद्धः, अतो नियमार्थ-

शे.]त्पूर्वरूपस्य संप्रसारणत्वम्। तत्सामर्थ्यादेव 'कृदतिङ्'सूत्रस्थभाष्यरीत्यैकादेशस्य 'अचः परस्मि'न्निति स्थानिवत्त्वं न। **वतः तत इति**। 'अनुदात्तोपदेशे'त्यनुनासिकलोपः। **अनित्यत्वज्ञापनाद्वेति**। इदं भाष्ये न दृश्यते। कुन्ततेरी-दित्त्वमनार्षमिति **परे**। **दरिद्रित इति**। 'तनिपती'ति वेट्कत्वात्प्राप्तिः। यदि मन्थादिसाधने धात्वर्थे क्षुब्धादयो निपा-त्यन्ते तदा 'क्षुभितं मन्थेने'ति न स्यादत आह—**समुदायेनेति**। अन्यत्र प्रयोगस्तु सादृश्यात्। 'स्वान्तशब्देन बाह्य-विषयेषु अविक्षिप्तमनाकुलं मन उच्यते' इति कैयटः। ननु धृषेरादित्त्वाद्विकल्पे प्राप्ते तदंशे नित्यार्थो विधिः स्यात्तत्श्च-

धृष्टः। विशस्तः। अन्यत्र-धर्षितः। विशसितः। भावादिकर्मणोस्तु वैयात्ये धृषिर्नास्ति। अतएव 'नियमार्थमिदं सूत्र'मिति वृत्तिः। धृषेरादित्वे फलं चिन्त्यमिति हरदत्तः। माधवस्तु भावाऽऽदिकर्मणोरवैयात्ये विकल्पमाह। धृष्टम्-धर्षितम्। प्रधृष्टः-प्रधर्षितः। **दृढः स्थूलबलयोः** ।७।२।२०। स्थूले बलवति च निपात्यते। दृह दृहि वृद्धौ। क्तस्येडभावः। तस्य ढत्वम्। हस्य लोपः। इदितो नलोपश्च। दृहितः। दृंहितोऽन्यः। **प्रभौ परिबृढः** ।७।२।२१। बृह बृहि वृद्धौ। निपातनं प्राग्वत्। परिबृहितः परिबृंहितोऽन्यः। **कृच्छ्रगहनयोः कषः** ।७।२।२२। कषो निष्ठाया इण्न स्यादेतयोरर्थयोः। कष्टं दुःखं, तत्कारणं च। 'स्यात्कष्टं कृच्छ्रमाभीलम्'। कष्टो मोहः। कष्टं शास्त्रम्। दुरवगाहमित्यर्थः। कषितमन्यत्। **घुषिरविशब्दने** ।७।२।२३। घुषिर्निष्ठायाम-

---

त.]**नास्तीति**। अनभिधानादिति भावः। अत्र प्रमाणमाह-**अतएवेति**। **माधवस्त्विति**। एवं च आदित्वस्य फलवत्त्वाद्धरदत्तोक्तं यच्चिन्त्यं तदेव चिन्त्यमिति भावः। **दृढः स्थूल**। बलमस्यास्तीति बलः। 'अर्श आदिभ्योऽच्'। तदाह-**बलवतीति**। स्थूलो=मांसलः, स च निर्बलोऽपि, बलवांस्तु कृशोऽपि दृढ इति फलितोऽर्थः। **तस्येति**। तकारस्येत्यर्थः। **हस्येति**। ननु 'हो ढः' इति ढत्वे ढो ढे लोपेनैव सिद्धमिति तस्य ढत्वं, हस्य लोपश्च न निपात्यतामिति चेन्मैवम्। तथाहि सति ढलोपस्याऽसिद्धत्वेन द्रढिमेत्यत्र 'र ऋतो हलादेर्लघो'रिति रभावो न स्यात्, 'परिद्रढय्य गत' इत्यत्र 'ल्यपि लघुपूर्वा'दित्ययादेशो न स्यात्, परिदृढस्यापत्यं पारिदृढी कन्येत्यत्र गुरूपोत्तमलक्षणः ष्यङ् स्यात्। अतोऽसिद्धत्वनिवृत्तये हलोपो निपात्यत इति भाष्यादौ स्थितम्। अतएव 'ढ्रलोपे' इति सूत्रे 'अणः किं दृढ' इति प्राचो ग्रन्थस्य प्रामादिकतामभिप्रेत्य तृढो वृढ इति प्रत्युदाहृतम्। **प्रभौ**। **निपातनमिति**। हलोपे प्रयोजनमपि व्रढिमा परिव्रढय्येत्यादिसिद्धिरिति प्राग्वदेव बोध्यम्। **कृच्छ्रगहनयोः**। कृच्छ्रं दुःखं, तत्कारणं च लक्षणया गृह्यते। कषतिर्हिंसार्थः। **कष्टो मोह इति**। दुःखहेतुरित्यर्थः। **घुषिरवि**। घुषिरविशब्दार्थ इति भ्वादिः, घुषिरविशब्दन इति चुरादिः, द्वयो-

---

बा.]मित्याह-**अविनय एवेति**। **धृष्टो विशस्त इति**। अविनीत इत्यर्थः। **अन्यत्रेति**। वैयात्याऽभावे इत्यर्थः। **धर्षित इति**। बलात्कृत इत्यर्थः। **विशसित इति**। हिंसित इत्यर्थः। अत्र वैयात्याऽभावादिण्निषेधो नेति भावः। ननु धृषेरादित्वात् 'विभाषा भावादिकर्मणो'रिति भावे आदिकर्मणि च इड्विकल्पे प्राप्ते तदंशे नित्यार्थोऽत्र विधिरस्तु, ततश्च भावादिकर्मभ्यामन्यत्र वैयात्याऽभावेऽपि 'आदितश्चे'तीण्निषेध एव स्यादित्यत आह-**भावादिकर्मणोस्त्विति**। **नास्तीति**। अनभिधानाद्रिति भावः। तत्र वृद्धसंमतिमाह-**अत एवेति**। भावकर्मणोर्धृषेरनभिधानादेवेत्यर्थः। अन्यथा धृषेरादित्वात् 'विभाषा भावादिकर्मणो'रिति भावे आदिकर्मणि च इड्विकल्पे प्राप्ते तदंशे नित्यार्थतया विधानार्थत्वापत्तेरिति भावः। **चिन्त्यमिति**। धृषेरादित्वं हि न वैयात्ये आदित्वलक्षणेण्निषेधार्थं, 'धृषिशसी वैयात्ये' इत्येव सिद्धेः, नापि वैयात्यादन्यत्र आदित्वलक्षणेण्निषेधार्थम्, धृषेर्वैयात्य एव इण्निषेधनियमेन ततोऽन्यत्र आदित्वलक्षणनिषेधाऽभावात्। नापि धृषेर्वैयात्ये भावादिकर्मणोर्विषये 'विभाषा भावादिकर्मणो'रिति इड्विकल्पार्थं, भावादिकर्मणोर्वैयात्ये धृषेरनभिधानात्। तस्माद्धृषेरादित्वं व्यर्थमिति हरदत्त आहेत्यर्थः। **माधवस्त्विति**। अवैयात्ये भावादिकर्मणोरनभिधाने प्रमाणाऽभावादिति भावः। तत्र अवैयात्ये भावे उदाहरति-**धृष्टं धर्षितमिति**। आदिकर्मण्युदाहरति-**प्रधृष्टः प्रधर्षित इति**। **दृढः स्थूलबलयोः**। बलशब्द अर्शआद्यजन्तो बलवत्परः। तदाह-**बलवति चेति**। **तस्येति**। निष्ठातकारस्य ढत्वं निपात्यते इत्यर्थः। **हस्य लोप इति**। 'निपात्यते' इति शेषः। **इदित इति**। अनिदितस्तु नलोपः सिद्ध एवेति भावः। ननु हस्य ढत्वे कृते 'झषस्तथोर्धोऽधः' इति तकारस्य धत्वे तस्य ष्टुत्वेन 'ढो ढे' इति ढलोपे दृढ इति सिद्धम्, ततश्च इडभाव एव निपात्यतां, न तु हकारलोपो ढत्वं चेति चेत्। मैवम्। तथाहि सति द्रढीयानित्यादौ ढलोपस्याऽसिद्धत्वेन ऋकारस्य संयोगपरतया लघुत्वाऽभावात् 'र ऋतो हलादेर्लघो'रिति रभावो न स्यात्। अत्र हकारलोपस्य ढत्वस्य च निपातने तु ऋकारस्य न संयोगपरकत्वम्, अस्य हलोपस्य साप्तमिकत्वेन असिद्धत्वाऽभावादिति भाष्ये स्पष्टम्। **प्रभौ परिबृढः**। **प्राग्वदिति**। तकारढत्वस्य हलोपस्य चेत्यर्थः। **कृच्छ्रगहनयोः**। कृच्छ्रशब्दो दुःखे, तत्कारणे च वर्तते। **कष्टं दुःखं, तत्कारणं चेति**। 'स्यात्कष्टं कृच्छ्रमाभील'मित्यमरकोशवाक्यम्। दुःखकारणे उदाहरति-**कष्टो मोह इति**। गहने उदाहरति-**कष्टं शास्त्रमिति**। गहनशब्दं विवृणोति-**दुरवगाह-**

---

शे.]भावादिकर्मभ्यामन्यत्र वैयात्याऽभावेऽपि 'आदितश्चे'ति निषेध एव स्यादत आह-**भावादीति**। **वैयात्यम्**-अविनीतता। **हरदत्त इति**। अत्राऽरुचिबीजन्तु अवैयात्ये भावादिकर्मणोरनभिधाने मानाऽभाव इति तत्रादित्वं सफलमिति। तदाह-**माधवस्त्विति**। **इदितो नलोपश्चेति**। अनिदितस्तु नलोपवर्जमिति भावः। इदं वृत्तिरीत्या। भाष्ये तु 'इदित एव निपातनम्, अनिदितस्तु दृहितमेवे'त्युक्तम्। **बृह बृहीति**। प्रभौ तदर्थस्यैवाऽनुगमादिति भावः। **घुषिर**। शब्देना-

निट् स्यात्। घुष्टा रज्जुः। अविशब्दने किम्?। घुषितं वाक्यम्। शब्देन प्रकटीकृताऽभिप्रायमित्यर्थः। **अर्देः संनिविभ्यः** ।४।२।२४। एतत्पूर्वादर्देर्निष्ठाया इण्न स्यात्। समर्णः। न्यर्णः। व्यर्णः। अर्दितोऽन्यः। **अभेश्चाऽऽविदूर्ये** ।७।२।२५। अभ्यर्णम्। नाऽतिदूरमासन्नं वा। अभ्यर्दितमन्यत्। **णेरध्ययने वृत्तम्** ।७।२।२६। ण्यन्ताद्वृतेः क्तस्येडभावो णिलुक्चाऽधीयमानेऽर्थे। वृत्तं छन्दश्छात्रेण। संपादितम्। अधीतमिति यावत्। अन्यत्र तु-वर्त्तिता रज्जुः। **शृतं पाके** ।६।१।२७। श्रातिश्रपयत्योः क्ते शृभावो निपात्यते, क्षीरहविषोः पाके। शृतं क्षीरम्। स्वयमेव विक्लिन्नं, पक्वं वेत्यर्थः। क्षीरहविर्भ्यामन्यत्तु-श्राणं श्रपितं वा। **वा दान्तशान्तपूर्णदस्त-**

त.]रपि सामान्येन ग्रहणम्। ननु विशब्दनार्थाद्घुषेश्चुरादिणिचा भाव्यं, ततश्च णिचा व्यवधानाद्घुषेः परा निष्ठा नास्तीति कथमिण्निषेधप्रसङ्गः; किं च विशब्दने त्विण्निषेधाऽभावाण्णिच्युपधागुणे 'निष्ठायां सेटी'ति णिलोपे च 'घोषितं वाक्य'मित्यपि स्यादिति चेत्। अत्राहुः-एवं तर्हि विशब्दनप्रतिषेध एव ज्ञापकः,-विशब्दनार्थस्य चुरादिणिजनित्य इति[इति] नास्त्युक्तदोष इति दिक्। **अभेः**। विशेषेण दूरं विदूरं, ततोऽन्यदविदूरं, तस्य भाव आविदूर्यम्। ब्राह्मणादित्वात्ष्यञ्। अस्मादेव निर्देशात् 'न नञ्पूर्वात्तत्पुरुषा'दिति निषेधो न भवति। सामीप्य इत्येव तु नोक्तं, नातिदूरस्याऽसङ्ग्रहापत्तेः, तदेतद्ध्वनयन्व्याचष्टे-**नातिदूरमासन्नं वेति**। एवं च सामीप्य इति प्राचीनव्याख्यानमुपलक्षणतया नेयमित्याहुः। **णेः**। अधीयत इति अध्ययनम्। 'कृत्यल्युटः' इति बहुलवचनात्कर्मणि ल्युट्। **णिलुक् चेति**। 'निपात्यते' इति शेषः। लोपे हि प्रत्ययलक्षणेन गुणः स्यादिति भावः। **शृतम्**। **श्रातिश्रपयत्योरिति**। श्रा पाके इत्यदादौ पठ्यते, चुरादावपि, घटादिष्वपि पठ्यते मित्त्वार्थम्, श्रै पाक इति च भ्वादौ, तस्यापि कृतात्वस्येह ग्रहणम्। निपातनसामर्थ्याल्लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयत इत्याहुः। **शृभावो निपात्यत इति**। 'ष्यङः संप्रसारण'मिति प्रकृतमेव संप्रसारणं न विहितम्, श्रपयतेरपि श्रितमेव यथा स्यादिति। अत्र 'विभाषाभ्यवपूर्वस्ये'ति विभाषाऽनुवर्तते, सा च व्यवस्थिता, तेन क्षीरहविषोरेव शृभावो नित्यश्च, अन्यत्र तु नैव भवतीत्याशयेनाह—**क्षीरहविषोः पाक इति**। **अन्यत्त्विति**। शाकादि। **श्रपितमिति**। णौ मितां ह्रस्वः। **वा दान्त**। शमु दमु उपशमे, पूरी आप्यायने, दिवादिश्चुरादिश्च। दसु उप-

बा.]मिति। **घुषिरविशब्दने**। **घुष्टा रज्जुरिति**। उत्पादितेत्यर्थः। आयामितेति वा। शब्देन अभिप्रायप्रकाशनं विशब्दनम्। तदाह-**शब्देनेति**। **अर्देः संनिविभ्यः**। **समर्ण इति**। सम् अर्द् त इति स्थिते 'रदाभ्या'मिति निष्ठातस्य पूर्वदकारस्य च नत्वं। णत्वम्। **अभेश्चाविदूर्ये**। अविदूरस्य भाव आविदूर्यम्। तस्मिन् गम्ये अभेः परोऽर्दिरनिडित्यर्थः। सामीप्य इत्येव तु नोक्तम्, अनतिदूरस्य असङ्ग्रहापत्तेः। तत्सूचयन्नाह-**नातिदूरमिति**। **णेरध्ययने**। **णिलुक् चेति**। णिलोपे तु लघूपधगुणः स्यादिति भावः। **अधीयमान इति**। सूत्रे अध्ययनशब्दः कर्मणि ल्युडन्त इति भावः। **शृतं पाके**। 'श्रा पाके' घटादिः। तस्माद्धेतुमण्णिचि पुकि मित्त्वाद्ध्रस्वे श्रपि इति भवतीति स्थितिः। **श्रातिश्रपयत्योरिति**। अण्यन्तस्य, ण्यन्तस्य च श्राधातोरित्यर्थः। **क्षीरहविषोरिति**। एतच्च वार्तिकाल्लभ्यते। अण्यन्तं व्याचष्टे-**स्वयमेव विक्लिन्नमिति**। श्राधातुरण्यन्तः पाके वर्तते। पाकश्चाऽत्र विक्लित्तिरेव विवक्षिता, न तु तदनुकूलव्यापारोऽपि। तथाच श्राधातोर्विक्लित्तावकर्मकत्वात् 'गत्यर्थाऽकर्मके'ति कर्तरि क्तः। तथाच क्षीरं विक्लित्त्याश्रय इति फलितम्। ततो णिचि विक्लित्त्यनुकूलव्यापारार्थकपचिना समानार्थकात् 'श्रपी'त्यस्मात्कर्मणि क्तप्रत्यये फलितमाह-**पक्वमिति**। एतच्च भाष्यकैयटयोः स्पष्टम्। 'क्षीराज्यहविषां शृत'मित्यमरस्य तु प्रमाद एव, 'क्षीरहविषो'रिति वार्तिकविरोधात्। **वा दान्त**। 'णेरध्ययने वृत्त'मित्यतो णेरित्यनुवर्तते। 'दमु शमु उपशमे'

शे.]ऽभिप्रायप्रकाशनं-**विशब्दनम्**। तदाह-**शब्देनेति**। **णिलुक् चेति**। तेनोपधागुणो न। **अधीयमाने [इति]**। तदर्थे चेत् क्तान्तं वर्त्तते इत्यर्थः। **वृत्तं छन्द इति**। कर्मणि क्तः। 'वृत्तं छन्दस' इति प्रयोगस्तु केवलाद्वृतेरकर्मकाद्भावे बोध्यः। तस्यैं हि 'यस्य विभाषे'तीट्प्रतिषेधः, ण्यन्तात्तु भावे क्तो दुर्लभः। 'नपुंसके भावे' इत्यस्याप्यकर्मकेभ्य एव विधानादिति स्पष्टं भाष्यादौ। केवलः श्रातिः कर्मव्यापारे वर्त्तते, ततोऽकर्मकत्वात्कर्तरि क्तस्तदाह-**स्वयमेवेति**। ततो णिचि पचिना समानार्थात्कर्मणि, तदाह-**पक्वमिति**। व्यवस्थितविभाषालभ्यवार्तिकसिद्धार्थकथनं-**क्षीरेत्यादि**। तथा च भाष्यं-'किं निपात्यते ?। श्राश्रप्योः शृभाव' इति। श्रातिः पच्यमानकर्तृकव्यापाररूपे कर्मकर्तृविषयपच्यर्थे वर्त्तते, ततोऽकर्मकत्वात्कर्त्तरि क्तः। णिजन्तस्तु मुख्यपच्यर्थे, ततः कर्मणि क्तः-शृतं क्षीरं देवदत्तेन' इति कैयटः। 'क्षीरहविषोरिति वक्तव्यम्। क्व माभूत् ?। श्राणा श्रपिता वा यवागूः' इति। श्रपेः पुनर्व्यापारे णिचि पाचनालक्षणेऽर्थे 'श्रपितक्षीरं देवदत्तेन यज्ञदत्तेने'त्येव न तु शृतमिति, 'श्रपेः शृतमन्यत्र हेतोरिति वक्तव्य'मिति वार्तिकात्। अन्तर्भावितण्यर्थपचेर्घञि पाकपदेन तस्याऽप्यभिधानसम्भव इति तदाशयः। एतेन तस्य पाकत्वाऽभावादेव निपातनाऽप्राप्त्या इदं वार्तिकं

**स्पष्टच्छन्नज्ञप्ताः** ।७।२।२७। एते णिचि निष्ठान्ता वा निपात्यन्ते। पक्षे–दमितः। शमितः। पूरितः। दासितः। स्पाशितः। छादितः। ज्ञापितः। **रुष्यमत्वरसङ्घुषाऽऽस्वनाम्** ।७।२।२८। एभ्यो निष्ठाया इड्वा। रुषितः। रुष्टः। आन्तः। अमितः। तूर्णः। त्वरितः। अस्याऽऽदित्वे फलं मन्दम्। सङ्घुष्टः। सङ्घुषितः। आस्वान्तः। आस्वनितः। **हृषेर्लोमसु** ।७।२।२९। हृषेर्निष्ठाया इड्वा स्याल्लोमसु विषये। हृष्टं हृषितं लोम। * **विस्मितप्रतिघातयोश्च**। हृष्टो हृषितो मैत्रः। विस्मितः प्रतिहतो वेत्यर्थः। अन्यत्र तु–हृषु अलीके। उदित्वान्निष्ठायां नेट्। हृष तुष्टौ। इट्। **अपचितश्च**।७।२।३०।चायतेर्निपातोऽयं वा।अपचितः–अपचायितः।**च्यायः पी** ।६।१।२८।

---

त.]क्षये, स्पश बाधने, छद अपवारणे। ज्ञपिर्मित्संज्ञायां 'मारणतोषणनिशामनेष्वि'त्युक्तः। रुष्य। रुष रोषे 'तीषसहे'ति विकल्पितेड्कत्वात् 'यस्य विभाषे'ति नित्ये निषेधे प्राप्ते विकल्पो विधीयते। अम गत्यादिषु। अम रोगे इति चौरादिकस्तु न गृह्यते, 'एकाचः' इत्यधिकारादित्याहुः। **आन्त इति**। 'अनुनासिकस्ये'ति दीर्घः। **तूर्ण इति**। जित्वरा संभ्रमे, 'ज्वरत्वरे'त्यूठ्। निष्ठानत्वम्। 'आदितश्चे'ति निषेधे प्राप्ते विकल्पः। एवं च आदित्वस्य फलमात्मनेपदमात्रं, तच्च एधत्यादिवद्ङ्स्वानुबन्धत्वेऽपि सिध्यत्येवेत्याशयेनाह–**फलं मन्दमिति। संघुष्ट इति**। संपूर्वाद्घुषेर्विशब्दने इटि प्राप्ते विकल्पोऽयम्। अविशब्दनेऽपि संपूर्वस्य परत्वादयं विकल्प एव। **आस्वान्त इति**। आङ्पूर्वस्य स्वनेर्मनोभिधानेऽप्ययमेव विकल्पः, परत्वात्। आस्वान्तं मनः। आस्वनितं मन इति। **हृषेः**। हृषु अलीके। उदित्वान्निष्ठाया-

---

बा.]ण्यन्ताभ्यामिडभावो निपात्यते।'अनुनासिकस्ये'ति दीर्घः। णिलोपस्तु न स्थानिवत्, निपातनाद्दीर्घविधौ तन्निषेधाच्च। दान्तः। शान्तः। 'पूरी आप्यायने' ण्यन्तात्क्तः, इडभावो निपात्यते, णिलोपः। रात्परत्वाच्चत्वं, णत्वं। पूर्णः। एतेन 'न ध्याख्यापॄमूर्च्छी'त्येव सिद्धे पूर्णग्रहणं व्यर्थमित्यपास्तम्, पूरीधातोर्ण्यन्तात्पूर्णरूपार्थत्वात्। 'दसु उपक्षये' ण्यन्तात् इडभावो निपात्यते, उपधावृद्ध्यभावश्च। णिलोपः। 'स्पश बाधने' ण्यन्तात् क्तः, इडभावो निपात्यते, उपधावृद्ध्यभावश्च। णिलोपः। स्पष्टम्। 'छद अपवारणे'। ण्यन्तात्क्तः। इडभावो वृद्ध्यभावश्च निपात्यते। णिलोपः। 'रदाभ्या'मिति नत्वं,–छन्नः। 'ज्ञप मिच्चे'ति चुरादिण्यन्तात् क्तः। इडभावो णिलोप इति कैयटः। ज्ञप्तः। **पक्ष इति**। निपातनाऽभावपक्ष इत्यर्थः। **दमितः शमित इति**। अमन्तत्वेन मित्वाद्ध्रस्वः। **ज्ञापित इति**। अचौरादिकस्य रूपम्। चौरादिकस्य तु ज्ञपित इत्येव। **रुष्यमत्वर**। रुषि, अम, त्वर, संघुष्, आस्वन्–एषां द्वन्द्वः। णेरिति निवृत्तम्। पञ्चम्यर्थे षष्ठी। तदाह–**एभ्य इति। वा स्यादिति**। 'वा दान्ते'त्यतस्तदनुवृत्तेरिति भावः। **रुष्टः रुषित इति**। 'तीषसहे'ति रुषो वेड्त्वात् 'यस्य विभाषे'ति निषेधे प्राप्ते विकल्पोऽयम्। **आन्तः अमित इति**। 'अम गत्यादिषु' क्तः। इडभावपक्षे 'अनुनासिकस्ये'ति दीर्घः। **तूर्णः त्वरित इति**। 'जि त्वरा संभ्रमे' क्तः,इडभावपक्षे 'ज्वरत्वरे'त्यूठ्। 'रदाभ्या'मिति नत्वम्। णत्वम्। 'आदितश्चे'ति नित्यमिण्निषेधे प्राप्ते विकल्पोऽयम्। आदित्वस्य तु फलमात्मनेपदमात्रं। तदाह–**अस्य आदित्वे फलं मन्दमिति**। तथा च 'एध वृद्धौ' इत्यादिवद्ङ्स्वानुबन्धत्वमेव न्याय्यमिति भावः। **संघुष्टः संघुषित इति**। 'घुषिरविशब्दने' इति घुषेः संपूर्वस्य नित्यमिण्निषेधे प्राप्ते विकल्पोऽयम्। **आस्वान्तः आस्वनित इति**। आङ्पूर्वात् स्वनेः क्तः। इडभावपक्षे 'अनुनासिकस्ये'ति दीर्घः। 'क्षुब्धस्वान्ते'ति निपातनं तु आङ्पूर्वस्य स्वनेर्न भवति,परत्वादस्यैव विकल्पस्य प्राप्तेरित्याहुः। 'न वे'ति सूत्रभाष्ये तु 'सङ्घुषाऽऽस्वनोर्विषये उभयत्र विभाषे'त्युक्तम्। **हृषेर्लोमसु**। लोमसु कर्तृष्विति बोध्यम्। इदंच 'अजर्य'मिति सूत्रे भाष्ये स्पष्टम्। **हृष्टं हृषितं लोमेति**। 'गत्यर्थाऽकर्मके'ति कर्तरि क्तः। रोमाञ्चितभूतमित्यर्थः। **विस्मितप्रतिघातयोश्चेति**। वार्तिकमिदम्। 'हृषेर्निष्ठाया इड्वे'ति शेषः। **उदित्वादिति**। 'उदितो वे'ति क्त्वायां वेड्त्वात् 'यस्य विभाषे'ति निष्ठायां नेडित्यर्थः। तथा अलीकेऽर्थे हृष्ट इत्येव। मृषोक्तवानित्यर्थः। **इडिति**। 'हृष तुष्टौ' इति धातोः क्ते इडेव भवतीत्यर्थः। हृषितः। तुष्ट इत्यर्थः। विस्मितप्रतिघातयोस्तु धातूनामनेकार्थत्वाद्वृत्तिः। तत्र लोमसु, विस्मितप्रतिघातयोश्च 'हृषु अलीके' इत्यस्मात् 'यस्य विभाषे'ति नित्यमिण्निषेधे प्राप्ते विभाषेयम्। 'हृष तुष्टौ' इत्यस्मात्तु नित्यमिट्प्राप्तौ विभाषेति विवेकः। **अपचितश्च**। 'अपपूर्वस्य चिञो ण्यन्तस्य निष्ठायां चिभावो निपात्यते' इति भाष्यं। तदाह–**चायेर्निपातोऽयमिति**।

---

शे.]व्यर्थमिति कैयटोक्तं परास्तम्। 'क्षीराज्यहविषां शृत'मित्यमरस्य तु प्रमादः। **वा दान्त**। दान्तशान्तयोर्णिलोपेडभावौ निपात्येते। 'अनुनासिकस्ये'ति दीर्घः। **दस्तस्पष्टच्छन्नेषु**–णिलुगिडभावौ। **ज्ञप्ते**–अमित एव णिलुगिडभावौ, पक्षे 'ज्ञापित' इति केचित्। 'ज्ञप मिच्चे'ति चुरादेर्णिलोपेडभावौ' इति कैयटः। **छन्न** इति त्वमित एव निपातनमिति स्पष्टं भाष्ये। **रुष्यम**। 'सङ्घुषाऽऽस्वनोर्विषये उभयत्र विभाषे'ति 'नवे'ति सूत्रे भाष्यम्। **लोमस्विति**। कर्तृष्वित्यर्थः। इदम् 'अजर्य'मित्यत्र भाष्ये स्पष्टम्। केशानामपि लोमत्वात्तत्रापि विकल्पः। **अन्यत्र त्विति**। अर्थभेदेन रूपद्वयम्। अर्थैक्येऽपि ईदृशे विषये द्वैरूप्याय सूत्रम्। **अपचिते**–चायश्चिभावः, इडभावश्च निपात्यते। 'क्तिनि नित्यं चिर्वाच्यः'।

वा स्यान्निष्ठायाम्। व्यवस्थितविभाषेयम्। तेन स्वाङ्गे नित्यम्। पीनं मुखम्। अन्यत्र-प्यानः पीनः स्वेदः। सोपसर्गस्य न-प्रप्यानः। आङ्पूर्वस्यान्धूधसोः स्यादेव। आपीनोऽन्धुः। आपीनमूधः। **ह्लादो निष्ठायाम्।** ।६।४।९५। ह्रस्वः स्यात्। प्रह्लन्नः। **द्यतिस्यतिमास्थामित्ति किति** ।७।४।४०। एषामिकारोऽन्तादेशः स्यात्तादौ किति। ईत्त्वदद्भावयोरपवादः। दितः। सितः। मा माङ् मेङ्-मितः। स्थितः। **शाच्छोरन्यतरस्याम्** ।७।४।४१। शितः। छितः। छातः। व्यवस्थितविभाषात्वाद्व्रते विषये श्यतेर्नित्यम्। संशितं व्रतम्। सम्यक्संपादितमित्यर्थः। संशितो ब्राह्मणः। व्रतविषयकयत्नवानित्यर्थः। **दधातेर्हिः** ।७।४।४२। तादौ किति। अभिहितम्। निहितम्। **दो दद्घोः** ।७।४।४६। घुसंज्ञकस्य दा इत्यस्य दथ् स्यात्तादौ किति। चर्त्वम्। दत्तः घोः किम्? दातः। तान्तो वाऽयमादेशः। न चैवं विदत्तमित्यादावुपसर्गस्य 'दस्ती'ति दीर्घापत्तिः, तकारादौ तद्विधानात्।

त.]मर्निट्, हृष तुष्टौ सेट्, उभयोरपि ग्रहणमित्युभयत्र विभाषेयम्। **पीनमिति।** ओदित्त्वान्निष्ठानत्वम्। **प्यान इति।** 'श्वीदितो निष्ठाया'मितीडभावे यलोपः। नत्वे व्यवस्थान्तरमाह-**सोपसर्गस्य नेत्यादि।** अन्धुः-कूपः। **प्रह्लन्न इति।** ह्लादी सुखे। ईदित्त्वादिडभावे 'रदाभ्या'मिति नत्वम्। **द्यतिस्यति।** दोऽवखण्डने, षोऽन्तकर्मणि, मा माने, माङ् माने, मेङ् प्रणिदाने, ष्ठा गतिनिवृत्तौ। श्तिपा निर्देशो धातुविशेषणार्थः। न हि श्तिपं विना श्यन् सुलभः। यत्तु प्रसादकृतोक्तं-'श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः, दादत्तः [सासातः]' इति। तन्न। यङ्लुकि हि इटा भाव्यं-दादितः सासित इति। तत्र 'ति किती'ति वचनान्नाऽस्ति प्रसङ्गः। किं च 'दो दद्घो'रिति विधीयमान आदेशोऽनेकाल्त्वात्सर्वस्येति निर्विवादम्। तथा च हन्तेर्यङ्लुगन्तस्य वधादेशवत्साभ्यासस्य प्रवर्तेतेति दादत्त इति त्वदुदाहृतरूपं कथमुक्तिसम्भवं लभेतेत्याहुः। **शाच्छो।** शो तनूकरणे। छो छेदने। **दधातेर्हिः।** श्तिपा निर्देशो धेटो निवृत्त्यर्थः। तीत्यनुवृत्तेर्यङ्लुकि न। दाधितः। अत्रापि प्रसादकृता-श्तिपा निर्देशस्य यङ्लुङ्निवृत्त्यर्थत्वादाधीत इति 'घुमास्थे'तीत्वमुदाहृतं, तत्पूर्ववदेव हेयम्। **दो दद्घोः।** इहादेशः थान्त एव, न तु त-द-धान्तः, जश्त्वे कृते संहितायास्तुल्यत्वेऽपि प्रक्रियायां दोषादिति प्राञ्चः। तथा चाहुः-'तान्ते दीर्घत्वाख्यो दोषो, दान्ते दोषो निष्ठानत्वम्। धान्ते दोषो घत्वाख्यः स्यान्निर्दोषत्वात्थान्तो ग्राह्यः' इति। तदनुसारेणाह-**दथ्स्यादिति।** **दात इति।** दाप् लवने। 'अदा'विति निषेधान्न घुत्वम्। इह सर्वे पक्षाः सूपपादा इत्याह-**तान्तो वेत्यादिना।** **दीर्घापत्तिरिति।** विदत्तमित्यादावुप-

बा.]**प्यायः पी। वा स्यान्निष्ठायामिति।** शेषपूरणमिदम्। 'विभाषाऽभ्यवपूर्वस्ये'त्यतो विभाषेति, 'स्फायः स्फी'त्यतो निष्ठायामिति चानुवर्तते इति भावः। **व्यवस्थितविभाषेति।** अत्र व्याख्यानमेव शरणम्। 'सोपसर्गस्य ने'त्यादि भाष्ये स्पष्टम्। **ह्लादो निष्ठायाम्। ह्रस्वः स्यादिति।** शेषपूरणमिदम्। 'खचि ह्रस्वः' इत्यतस्तदनुवृत्तेरिति भावः। **प्रह्लन्न इति।** 'ह्लादी सुखे'। क्तः। 'श्वीदितः' इति नेट्। 'रदाभ्या'मिति नत्वम्। **द्यतिस्यति।** एषां चतुर्णां द्वन्द्वात्षष्ठी। 'दो अवखण्डने' इत्यस्य द्यतीति निर्देशः। 'षो अन्तकर्मणि'त्यस्य तु स्यतीति निर्देशः। इत्-ति-कितीति च्छेदः। **ईत्त्वेति।** 'घुमास्थे'ति ईत्त्वस्य, 'दो दद्घो'रिति दद्भावस्य च यथासंभवमपवाद इत्यर्थः। दोधातोरुदाहरति-**दित इति। मा माङ् मेङिति।** 'गामादाग्रहणेष्वविशेषः' इति वचनादिति भावः। **शाच्छोः।** शो तनूकरणे' 'छो छेदने' अनयोः कृतात्वयोर्निर्देशः। अनयोरिकारोऽन्तादेशो वा स्यात्तादौ कितीत्यर्थः। **व्यवस्थितेति।** एतच्च भाष्ये स्पष्टम्। **दधातेर्हिः। तादौ कितीति।** शेषपूरणमिदम्। 'द्यतिस्यती'त्यतस्तदनुवृत्तेरिति भावः। **दो दद्घोः** 'द' इति षष्ठ्यन्तम्। तदाह-**दा इत्यस्येति।** 'दथ्' इति च्छेदः। तदाह-**दथ् स्यादिति।** तवर्गद्वितीयान्तोऽयमादेशः। **तादौ कितीति।** 'ति किती'त्यनुवृत्तेरिति भावः। **चर्त्वमिति।** 'खरि चे'ति थकारस्य तकार इत्यर्थः। **दात इति।** दाप्देपो रूपम्। 'अदा'विप्युक्तेर्घुत्वाऽभावान्न दद्भावः। **तान्तो वेति।** तवर्गप्रथमान्त इत्यर्थः। नन्वेवं सति 'विदत्त'मित्यादौ 'दस्ती'त्युपसर्गस्य दीर्घत्वापत्तिः। तत्र हि 'द' इति षष्ठी सप्तम्यर्थे। इगन्तोपसर्गस्य दीर्घः स्यात्तकारान्ते ददातौ परत इत्यर्थ इत्याशङ्क्य निराकरोति-**न चैवमिति।** आदेशस्य तवर्गप्रथमान्तत्वे सतीत्यर्थः। **तकारादाविति।** 'दस्ती'त्यत्र द इति षष्ठी तीत्यत्रान्वेति। तथाच इगन्तोपसर्गस्य दीर्घः स्याद्दादेशतकारादावुत्तरपदे

शे.]अपचितिः। **प्यायः पी।** अत्र भाष्यम्-'आङ्पूर्वादन्धूधसोरेव। नेह-आप्यानश्चन्द्रः। तथा आङ्पूर्वादेवाऽन्धूधसोः। नेह-प्रप्यानोऽन्धुः, प्रप्यानमूधः' इति। आङ्पूर्वादेवेति नियमेनोपसर्गान्तरमेव निवर्त्यते, न केवलः प्यायतिः। आङाश्रयणेन नियमद्वयविधानात्केवलस्य सर्वत्र पीभावः-पीनोऽन्धुः पीनमूधः, पीनं पुण्यं, पीनमुखी कन्येति। तेन विभाषाग्रहणाऽननुवृत्तिरेवात्र लभ्यते। **व्यवस्थिते**त्यादिमूलन्तु ग्रन्थानुरोधेनेति बोध्यम्। **द्यतिस्य।** 'दोसोमास्थे'ति सिद्धे श्तिपा निर्देशः 'उपसर्गात्सुनोती'तिवत्। **ईत्त्वेत्यादि।** तत्वन्तु स्वविषये परत्वादस्य बाधकमिति भावः। **मा माङिति।** गामादाग्रहणेष्वविशेषादिति भावः। **तकारादाविति।** 'यस्मिन्विधि'रिति न्यायादयमेवार्थो न तु तान्ते दधाताबि[ती]ति

दान्तो वा धान्तो वा । न च दान्तत्वे निष्ठानत्वं, धान्तत्वे 'झषस्तथो'रिति धत्वं शक्यं, सन्निपातपरिभाषाविरोधात् । **अच उपसर्गात्तः** ।७।४।४७। अजन्तादुपसर्गात्परस्य दा इत्यस्य घोरचस्तः स्यात्तादौ किति । चर्त्वम् । प्रत्तः । अवत्तः । **'अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि । सुदत्तमनुदत्तं च निदत्तमिति चेष्यते'**। चशब्दाद्यथाप्राप्तम् । **दस्ति** ।६।३।१२४। इगन्तोपसर्गस्य दीर्घः स्याद्दादेशो यस्तकारस्तदादावुत्तरपदे ।'खरिचे'ति चर्त्वमाश्रयात्सिद्धम् । नीत्तम् । सूत्तम् । 'घुमास्थे'तीत्वम् । धेट् । धीतम् । गीतम् । पीतम् । 'जनसने-

---

त.]सर्गस्येत्यर्थः।'दस्ती'त्यत्र द्वौ पक्षौ–'दा इत्यस्य य आदेशः स तकारान्तः' 'तकारादिर्वे'ति ? । तत्राद्ये पक्षेऽयं दोषो नान्त्ये इत्याशयेनोक्तदोषं परिहरति–**तकारादाविति** । **निष्ठानत्वमिति** । 'रदाभ्या'मित्यनेन । **सन्निपातेति** । तादिं निमित्तीकृत्य विहितो यो दान्ताद्यादेशः स तकारविघातकनत्वादिविधेर्निमित्तं न भवतीति भावः । **अच उपसर्गात्तः** । तकारादकार उच्चारणार्थः । 'अच' इत्यावर्तते । तत्रैकं पञ्चम्यन्तमुपसर्गं विशिनष्टि । अपरं षष्ठ्यन्तं स्थानलाभायेति व्याचष्टे–**अजन्तादित्यादिना**। यद्वा 'अच' इत्यनावृत्तं पञ्चम्यन्तमेवास्तु किं तु द्वितकारकोऽयमादेशस्तेनानेकाल्त्वात्सर्वस्य घोर्भविष्यति।एकतकारो हि 'अलोऽन्त्यस्ये'ति बाधित्वा 'आदेः परस्ये'त्यादेरेव स्यादच इति पञ्चमीनिर्देशात्। यद्येवम् 'अपो भी'त्युत्तरसूत्रेऽपि द्वितकार एवेति सर्वादेशः स्यादिति चेत्।अत्राहुः–पञ्चम्यन्तस्याऽच इत्यनुवृत्तेरचः परस्य पकारस्यैव भविष्यति तत्रान्त्यस्य संयोगान्तलोपे पूर्वस्य जश्त्वेन सिद्धमिष्टमिति । **अवदत्तमित्यादि** । आदिकर्मणीत्येतत्प्रदत्तमित्यस्यैव विशेषणं, नेतरेषाम् ,असंभवात् । दातुं प्रक्रान्तमारब्धमिति **प्रदत्तमित्यस्याऽर्थः** । **इष्यते इति** । तादेशबाधनार्थं निपातनमिष्यत इत्यर्थः । अन्ये तु अवादीनामुपसर्गप्रतिरूपकत्वाश्रयणे ह्यवदत्तं विदत्तमित्यादि सिध्यति, उपसर्गत्वाश्रयणे तु पूर्वोक्तमवत्तं वीत्तमित्यादीति नाऽपूर्वमिदं वचनमित्याहुः। **दस्ति** । 'इकः काशे' इत्यत 'इक' इति, 'उपसर्गस्य घञी'त्यत उपसर्गस्येति, 'ढ्लोपे पूर्वस्ये'त्यतो दीर्घ इति चानुवर्तते । 'अलुगुत्तरपदे' इत्यतोऽनुवृत्तस्योत्तरपदे इत्यस्य तीति विशेषणं । 'यस्मिन्विधि'रिति तदादिविधिः, तदेतत्सकलमभिप्रेत्य व्याचष्टे–**इगन्तोपसर्गस्येत्यादिना** । ननु चर्त्वस्याऽसिद्धत्वाद्दादेशतकारो नास्तीत्यत आह–**आश्रयात्सिद्धमिति** । 'अतो रो'रित्युत्वं प्रति रुत्ववदिति भावः । **धीतमिति** । 'दधातेर्हि'रित्यत्र लुग्विकरणस्य निर्देशात् धेट् पान इति भ्वादेर्हिर्न भवति, नापि दत्

---

बा.]इत्यर्थः। उत्तरपदाधिकारात् । ततश्च उत्तरपदस्याऽत्र तकारादित्वाऽभावाच्च दीर्घ इति भावः। **दान्तो वा धान्तो वेति** । तवर्गतृतीयान्तो वा, चतुर्थान्तो वा अयमादेश इत्यर्थः। **न चेति** । दान्तत्वे निष्ठानत्वं, धान्तत्वे 'झषस्तथो'रिति धत्वं च न शक्यमित्यन्वयः । **संनिपातेति** । दान्तादेशस्य, धान्तादेशस्य च तकारादिप्रत्ययोपजीव्यतया तद्विघातकनत्वधत्वे प्रति निमित्तत्वाऽसंभवादिति भावः । **अच उपसर्गात्तः** । त इत्यत्राऽकार उच्चारणार्थः। 'अच' इत्यावर्तते, एकमुपसर्गविशेषणं, द्वितीयं तु स्थानिसमर्पकं । तदाह–**अजन्तादिति** । **घोरिति** । घोरवयवस्येत्यर्थः । **तः स्यादिति** : तकारः स्यादित्यर्थः । ददादेशापवादः । **चर्त्वमिति** । प्र दा त इति स्थिते दकारादाकारस्य तकारादेशे दकारस्य चर्त्वेन तकार इत्यर्थः। **अवदत्तं विदत्तं चेति** । भाष्यस्थश्लोकोऽयम् । अत्र आदिकर्मणीत्येतत् प्रदत्तमित्यत्रैव संबध्यते । नाऽयम् 'अच उपसर्गात्तः' इत्यस्याऽपवाद इति भ्रमितव्यमित्याह–**चशब्दाद्यथाप्राप्तमिति** । तथा चाऽवदत्तादिशब्देषु ददादेशोऽपि कदाचिल्लभ्यते इत्यर्थः । अत एव प्रकृतसूत्रभाष्ये 'अच उपसर्गात्तः' इत्यस्यावकाशः–प्रत्तमवत्तमिति सङ्गच्छते इति भावः । **दस्ति** । 'इकः काशे' इत्यत इक इति, 'उपसर्गस्य घञ्यमनुष्ये' इत्यत उपसर्गस्येति, 'ढ्लोपे' इत्यतो दीर्घ इति चानुवर्तते । उत्तरपदे इत्यधिकृतं तीत्यनेन विशेष्यते । तदादिविधिः । द इति षष्ठी ति इत्यत्रान्वेति । तथाच दाधातोरादेशो यस्तकारस्तदादौ उत्तरपदे इति लभ्यते । तदाह–**इगन्तस्यादि** । ननु नि दा त इति स्थिते 'अच उपसर्गात्तः' इति दकारादाकारस्य तकारे दकारस्य 'खरि चे'ति चर्त्वे प्रकृतसूत्रेण उपसर्गस्य दीर्घे नीत्तमिति रूपं वक्ष्यति, तदयुक्तम् , दीर्घे कर्तव्ये चर्त्वस्याऽसिद्धत्वे दादेशे तकाराद्युत्तरपदत्वाऽभावादित्यत आह–**चर्त्वमाश्रयात्सिद्धमिति** । दादेशतकारमाश्रित्य विधीयमाने दीर्घे चर्त्वं नाऽसिद्धं, चर्त्वसिद्धं तकारमाश्रित्य विधिबलादित्यर्थः । **सूत्तमिति** तु चिन्त्यम् , 'गतिश्चे'ति सूत्रभाष्यवार्तिकयोः सुदत्तमित्यत्र 'अच उपसर्गात्तः' इति तत्वे कर्तव्ये सोरुपसर्गत्वं नेति प्रपञ्चितत्वात् । अथ धेङ्पाधातुभ्यः क्ते आह–**घुमास्थेति** । **धीतमिति**। 'दधातेर्हिः'

---

शे.]भावः । स्वशास्त्रकृत्पठितचर्त्वाऽसिद्धत्वबाधापेक्षया 'यस्मिन्विधि'रित्यस्या व्याकरणान्तरपठिताया बाधेन तान्तदाधातुघटितोत्तरपद इत्येवार्थ उचित इति। 'तान्ते दोषो दीर्घत्वं स्याद्दान्ते दोषो निष्ठानत्वं। धान्ते दोषो धत्वप्राप्तिस्थान्तेऽदोषस्तस्मात्थान्तः' इत्येतद्भाष्याशयः।'द' इति च षष्ठी सप्तम्यर्थे।**सन्निपातेति**।न च नत्वधत्वयोरसिद्धत्वादस्या अप्रवृत्तिरिति वाच्यम् , असिद्धस्यापि तद्विघातकविधेरनया वारणस्य क्नमेजन्तसूत्रे भाष्ये ध्वनितत्वात् । जग्धमित्यादौ धत्वाऽनापत्त्या ईदृशे विषये सन्निपातपरिभाषाया अनित्यत्वाश्रयणमावश्यकमिति तु भाष्याशयः।**चशब्दादिति**। अतएव

त्यात्वम् । जातम् । सातम् । खातम् । **अदो जग्धिर्ल्यप्ति किति** ।२।४।३६। 'ल्य'बिति लुप्तसप्तमीकम् । अदो जग्धिः स्याल्ल्यपि तादौ किति च । इकार उच्चारणार्थः । धत्वम् । '**झरो झरि**' । जग्धः '**आदिकर्मणि क्तः कर्तरि च**' । प्रकृतः कटं सः । प्रकृतः कटस्तेन । '**निष्ठायामण्यदर्थे**' इति दीर्घः । 'क्षियो दीर्घा'दिति णत्वम् । प्रक्षीणः सः । **वाऽऽक्रोशदैन्ययोः**।६।४।६१। क्षियो निष्ठायां दीर्घो वा स्यादाक्रोशे दैन्ये च । क्षीणायुर्भव । क्षितायुर्वा । क्षीणोऽयं तपस्वी । क्षितो वा । **निनदीभ्यां स्नातेः कौशले** ।८।३।८९। आभ्यां स्नातेः सस्य षः स्यात्कौशले गम्ये । निष्णातः शास्त्रेषु । [नद्यां स्नातीति] नदीष्णः । 'सुपी'ति कः । **सूत्रं प्रतिष्णातम्** ।८।३।९०। प्रतेः स्नातेः षत्वम् । प्रतिष्णातं सूत्रम् । शुद्धमित्यर्थः । अन्यत्र-प्रतिस्नातम् । **कपिष्ठलो गोत्रे** ।८।३।९१। कपिष्ठलो नाम यस्य[स] कापिष्ठलिः पुत्रः । गोत्रे किम् ? । कपीनां स्थलं कपिस्थलम् । **विकुशमिपरिभ्यः स्थलम्** ।८।३।९६। एभ्यः स्थलस्य सस्य षः स्यात् । विष्ठलम् । कुष्ठलम् । शमिष्ठलम् । परिष्ठलम् । **गत्यर्थाऽकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** ।३।४।७२। एभ्यः कर्तरि क्तः स्याद्भावकर्मणोश्च । गङ्गां गतः । गङ्गां प्राप्तः । ग्लानः सः । लक्ष्मीमाश्लिष्टो हरिः । शेषमधिशयितः । वैकुण्ठमधिष्ठितः । शिवमुपासितः । हरिदिनमुपोषितः । राममनुजातः । गरुडमारूढः । विश्वमनुजीर्णः । पक्षे-प्राप्ता गङ्गा तेनेत्यादि ।

त.]'दो दद्घो'रिति द इत्युपादानादिति भावः । **उच्चारणार्थ इति** । इदित्वे तु नुम् स्यादिति भावः । **धत्वमिति** । 'झषस्तथो'रित्यनेन।**झरो झरीति**।अनेन पाक्षिको धलोप इत्यर्थः।इदानीं क्तार्थान्प्रपञ्चयति-**आदिकर्मणि**। व्याख्यातम्।

**प्रकृतः कटमिति** । कटं कर्तुमारब्धवानित्यर्थः । 'प्र'शब्द आदिकर्मद्योतनार्थः । क्तेनोक्तत्वात्कर्तरि प्रथमा । कर्मण्यनुक्तत्वाद्द्वितीया । **प्रकृतः कटस्तेनेति** । कर्मणि प्रयोगे तु विपर्ययः । **नदीष्ण इति** । नद्यां स्नातो, नदीस्नाने कुशल इत्यर्थः । **गत इति** । 'अनुदात्तोपदेशे'ति मलोपः । **प्राप्त इति** । प्रपूर्व आप्लृ व्याप्तौ । व्याप्तिरपीह सूत्रे गतिशब्देन विवक्षितेति भावः । **ग्लान इति** । ग्लै हर्षक्षये । अकर्मकोऽयम् । 'आदेच' इत्यात्वे 'संयोगादेरात' इति नत्वम् । **शेषमिति** । 'अधिशीङ्स्थासां कर्मे'ति कर्मत्वम् । **अधिष्ठित इति** । 'द्यतिस्यती'ति इत्वम् । **उपोषित**

बा.]इत्यत्र श्रुविकरणग्रहणान्न हिभावः । **अदो जग्धिः** । **धत्वमिति** । जग्ध् त इति स्थिते 'झषस्तथो'रिति तकारस्य धकार इत्यर्थः । **झरो झरीति** । अनेन पाक्षिको धकारलोप इत्यर्थः । **आदिकर्मणि क्त इति** । व्याख्यातं प्राक् । उदाहरणान्तरविवक्षया पुनरुपन्यासः । **प्रकृतः कटं स इति** । कर्तुमारब्धवानित्यर्थः । कटस्य कर्मणोऽनभिहितत्वाद्द्वितीया । कर्तुरभिहितत्वात्तच्छब्दात्प्रथमा । चकाराद्भावे कर्मणि चेत्युक्तम् । तत्र कर्मण्युदाहरति-**प्रकृतः कटस्तेनेति**। **प्रक्षीणः स इति** । आदिकर्मणि क्तः । **वाऽऽक्रोशदैन्ययोः** । अण्यदर्थ इत्यनुवर्तते । 'ण्यदर्थो भावकर्मणी' इत्युक्तम् । आक्रोशे उदाहरति-**क्षीणायुर्भवेति** । 'गत्यर्थाकर्मके'ति कर्तरि क्तः । दैन्ये उदाहरति-**क्षीणोऽयं तपस्वीति** । कृश इत्यर्थः । **निनदीभ्यां** । **सस्य षः स्यादिति** । 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते, 'अपदान्तस्य मूर्द्धन्यः' इत्यप्यधिकृतमिति भावः । **निष्णात इति** । कुशल इत्यर्थः । **नदीष्ण इति** । नद्यां कुशलं स्नातीति विग्रहः । **सुपीति क इति** । 'सुपि स्थः' इत्यत्र 'सुपी'ति योगविभागात्क इत्यर्थः । **गत्यर्थ** । गत्यर्थ, अकर्मक, श्लिष, शीङ्, स्था, आस, वस, जन, रुह, जीर्यति एषां दशानां द्वन्द्वः । 'लः कर्मणि च भावे चे'त्यतो भावे कर्मणीति 'आदिकर्मणि क्तः कर्तरि चे'त्यतः कर्तरि इति चानुवर्तते । तदाह-**एभ्य इत्यादिना** । कर्तरीत्येवानुवृत्तौ भावकर्मणोर्न स्यादिति तयोरप्यनुवृत्तिः । **गङ्गां गत इति** । कर्तरि क्तः । **गङ्गां प्राप्त इति** । 'आप्लृ व्याप्तौ' उपसर्गवशाद्गतौ वर्तते । अकर्मकादुदाहरति-**ग्लान इति** । क्षीण इत्यर्थः । 'संयोगादेः' इति निष्ठानत्वम् । **आश्लिष्ट इति** । आलिङ्गितवानित्यर्थः । नन्वकर्मकत्वादेव सिद्धे शीङादीनां पुनर्ग्रहणं व्यर्थमित्यत आह-**शेषमधिशयित इति** । शेषे शयितवानित्यर्थः । 'अधीशीङ्स्थासा'मिति शेषः कर्म, अतो नाऽकर्मकत्वादिह प्राप्तिरिति भावः । **वैकुण्ठमधिष्ठित इति** । वैकुण्ठे स्थितवानित्यर्थः । 'अधिशीङ्स्थासा'मिति वैकुण्ठः कर्म । अतो नाऽकर्मकत्वादिह प्राप्तिः । **शिवमुपासित इति** । शिवं परिचरितवानित्यर्थः । उपवेशनार्थकत्वे अकर्मकत्वेऽपि इह उपसर्गवशेनाऽर्थान्तरे सकर्मकत्वादकर्मकेत्यनेन न प्राप्तिरिति भावः । **हरिदिनमुपोषित इति** । 'वसतिक्षुधो'रिति इट् । यजादि-

शे.]प्रकृतसूत्रस्थं 'प्रत्तमवत्तमित्यवकाशः' इति भाष्यं,'दस्ती'ति सूत्रस्थ[म्]'नीत्ता' 'वीत्ता' इत्युदाहरणपरभाष्यञ्च सङ्गच्छते । **नीत्तमित्युत्तरं वीत्तमित्येव पाठः** । '**सूत्त**'मिति त्वपपाठः, 'गतिश्चे'ति सूत्रे भाष्ये सोस्तत्वे उपसर्गत्वप्रतिषेधात् । **वाऽऽक्रोश** । अत्राप्यण्यदर्थ इति वर्तते। **निनदीभ्याम्**। निपूर्वस्नातेः कौशलेऽर्थे निष्ठान्तस्यैव प्रचुरप्रयोगदर्शनादिदमत्रोपन्यस्तम् । **कपिष्ठलो** । गोत्रमिह पारिभाषिकमिति भाष्यस्वरसः । गोत्रप्रत्यय[स्य]प्रकृतित्वेन दृष्टो यः कपिष्ठलशब्द इति व्याख्येयम् । अस्याऽत्रोपन्यासः प्रासङ्गिकः । एवं 'विकुशमी'त्यस्यापि । **गत्यर्थाक** । 'आदिकर्मणि क्तः कर्तरि चे'ति सूत्रात् क्तः कर्तरि चेति वर्तते। **क्तोऽधिका**स्थैर्यार्थाः प्रायेणाऽकर्मकाः । **अत्र वदन्ति-'गत्यर्थे'**-

**क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः** ।३।४।७६। एभ्योऽधिकरणे क्तः स्यात् । चाद्यथाप्राप्तम् । ध्रौव्यं स्थैर्यम्। 'मुकुन्दस्याऽऽसितमिदमिदं यातं रमापतेः। भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः'। पक्षे आसेरकर्मकत्वात्कर्तरि भावे च। आसितो मुकुन्दः। आसितं तेन। गत्यर्थेभ्यः कर्तरि कर्मणि च। रमापतिरिदं यातः। तेनेदं यातम् । भुजेः कर्मणि । अनन्तेनेदं भुक्तम् । कथं भुक्ता ब्राह्मणा इति ?। भुक्तमस्त्येषामिति मत्वर्थीयोऽच् । वर्तमाने इत्यधिकृत्य-। **ञीतः क्तः** ।३।२।१८७। ञिक्ष्विदा-क्ष्विण्णः । ञिइन्धी-इद्धः। **मतिबुद्धिपूजार्थेभ्यश्च** ।३।२।१८८। मतिरिहेच्छा, बुद्धेः पृथगुपादानात् । राज्ञां मतः, इष्टः । तैरिष्यमाण

त.]इति । 'वसतिक्षुधो'रितीट् । 'शासिवसी'ति षत्वम्। **अनुजीर्ण इति**। जॄष् वयोहानौ। 'ॠत इद्धातोः' 'हलि चे'-ति दीर्घः । नत्वणत्वे । **मुकुन्दस्येति** । आस्यतेऽस्मिन्नित्यासितम् । आसनमित्यर्थः । यायतेऽस्मिन्निति यानं मार्गः। भुज्यतेऽस्मिन्निति भुक्तं। भोजनमित्यर्थः। त्रिष्वपि 'अधिकरणवाचिनश्चे'ति कर्तरि षष्ठी । **क्ष्विण्ण इति**। 'आदितश्चे'ति नेट् । **इद्ध इति** । 'श्वीदितः' इति नेट् । नलोपः । **राज्ञामिति** । 'क्तस्य च वर्तमाने' इति षष्ठी । **इष्ट इति**। 'तीषसहे'ति वेड्क्त्वात् 'यस्य विभाषे'ति नेट् । **शीलित इत्यादि** । शील समाधौ, रक्ष पालने, क्षमूष् सहने, क्रुश

बा.]त्वात्संप्रसारणम् । 'शासी'ति षः। हरिदिने न भुक्तवानित्यर्थः। 'उपान्वध्याङ्वसः' इति हरिदिनं कर्म । ततश्चाऽकर्मकत्वाऽभावादप्राप्तिः । **राममनुजात इति** । अनुकृतवानित्यर्थः। अनुसृत्य जातवानिति वा । ततश्चाऽकर्मकत्वाऽभावादप्राप्तिः । **गरुडमारूढ इति** । उपर्याक्रान्तवानित्यर्थः । **विश्वमनुजीर्ण इति** । हतवानित्यर्थः । व्याप्तवानिति वा । अकर्मकत्वाऽभावादप्राप्तिः । जॄधातोः कर्तरि क्तः। 'ॠतः' इति इत्वं । रपरत्वं । 'हलि चे'ति दीर्घः । 'रदाभ्या'-मिति नत्वं । णत्वम् । **पक्षे इति** । कर्तरि प्रत्यथाऽभावपक्षे इत्यर्थः । **क्तोऽधिकरणे च** । ध्रौव्यं, गतिः, प्रत्यवसानं च अर्थो येषामिति विग्रहः । ध्रौव्यार्थेभ्यो, गत्यर्थेभ्यः, प्रत्यवसानार्थेभ्यश्चेति यावत् । **चाद्यथाप्राप्तमिति** । कर्मकर्तृभावेष्वपि यथासंभवमित्यर्थः । ध्रौव्यमित्यस्य विवरणं-**स्थैर्यमिति** । स्थिरीभवनम् । उपवेशनशयनादिक्रियेति यावत् । **मुकुन्दस्यासितमिदमिति** । श्लोकोऽयम् । आस्यते अस्मिन्नित्यासितम्। आसनमित्यर्थः । ध्रौव्यार्थस्योदाहरणमिदम् । **इदं यातं रमापतेरिति** । गत्यर्थस्योदाहरणम् । यायते गम्यते अस्मिन्निति यातं, मार्ग इत्यर्थः । **भुक्तमेतदनन्तस्येति** । भुज्यते अस्मिन्निति भुक्तम् । भोजनस्थानमित्यर्थः । 'अधिकरणवाचिनश्चे'ति त्रिष्वपि कर्तरि षष्ठी । **पक्षे इति** । अधिकरणे प्रत्यथाऽभावपक्षे इत्यर्थः । **आसेरकर्मकत्वादिति** । ततश्च न कर्मणि क्त इत्यर्थः । **आसितो मुकुन्द इति** । आसितवानित्यर्थः । **आसितं तेनेति** । भावे उदाहरणम् । **गत्यर्थेभ्य इति** । तेषां सकर्मकतया कर्तरि कर्मणि च क्तः, न तु भावे इत्यर्थः, 'लः कर्मणि चे'त्यत्राऽदर्शनादिति भावः । **भुजेः कर्मणीति**। भक्षणार्थात्कर्मणि क्तः, न तु भावे, सकर्मकेभ्यो भावे प्रत्ययस्य 'लः कर्मणी'त्यत्राऽदर्शनात् । नापि प्रत्यवसानार्थेभ्यः कर्तरि, अनभिधानादित्यर्थः । **कथमिति** । भुजेः कर्तरि क्ताऽभावस्योक्तत्वादिति भावः । समाधत्ते-**भुक्तमस्त्येषामिति** । अत्र गत्यर्थेभ्यो भावेऽपि क्तप्रत्ययोऽस्त्येव, अविशेषात्, 'अजर्यं सङ्गत'मिति सूत्रे, 'अनेकमन्यपदार्थे' इति सूत्रे च भाष्ये गत्यर्थेभ्यो भावे क्तप्रत्ययस्य अभ्युपगमाच्चेति शब्देन्दुशेखरे विस्तरः । **इत्यधिकृत्येति** । 'वर्तमाने ल'डित्यतो मण्डूकप्लुत्या अनुवर्तमान इत्यर्थः, चानशादीनां सर्वकालतायाः 'भूते' इति सूत्रे भाष्ये उक्तत्वादित्याहुः। **ञीतः क्तः** । ञि इयस्य तस्माद्वर्तमानक्रियावृत्तेः क्त इत्यर्थः । 'तयोरेव कृत्यक्त'ेति भावकर्मणोरेव भूते विहितः क्तो वर्तमाने न प्राप्नोतीत्यारम्भः । **क्ष्विण्ण इति** । 'आदितश्चे'ति नेट् । **इद्ध इति** । श्वीदितः' इति नेट् । **मतिबुद्धि** । मति, बुद्धि, पूजा, अर्थ एषामिति विग्रहः । 'वर्तमाने क्त' इति शेषः । 'तयोरेवे'ति भावकर्मणोरेव । **मतः इष्ट**

शे.]त्यनेन सकर्मकेभ्योऽपि भावे क्तः, विशेषविधानात्। अत एव 'भ्रान्तं देश'मित्यादि सिद्धम्।अत एव 'अजर्यं सङ्गत'-मिति सूत्रे 'गत्यर्थानां क्त' इति सङ्गते कर्तरि क्तस्य दृष्टत्वात्कर्तरीदं निपातनं। तर्हि कर्मण्यपि तत्र तस्य दृष्टत्वात्कर्मण्यपि स्यात्। जीर्यतेरकर्मकत्वात्तत्र न।एवन्तर्हि भावे ततः क्तस्य दृष्टत्वात्तत्र प्राप्नोति,तस्मात् 'कर्तरि निपातनमिति वक्तव्य'मिति भाष्ये उक्तम्। अत एव 'अन्यपदार्थे' इति सूत्रे 'मत्वर्थे बहुव्रीहिरिति वक्तव्यम्',इह माभूत्-कष्टं श्रितमनेने'ति भाष्ये । अत्र हि भावे क्तो, न कर्तरि, कर्मणि वा । तथा हि सति 'कर्तृकर्मवाचकेनाऽप्रथमाया' इत्युत्तरवार्तिकेन तत्र समासो दुर्वारः स्यात् । 'क्तोऽधिकरणे चे'त्यनेन भक्षणार्थेभ्यस्तु न भावे, व्यवहितपाठेन तत्र कर्तरि भावकर्मणोरित्यननुवृत्तेः । अत एव 'पीता ब्राह्मणाः' इत्यादिसिद्धये कर्मक्तान्तादर्शआद्यजन्तताऽऽश्रिता भाष्यकैयटयोः। अत एवाऽत्र सूत्रे 'चाद्यथाप्राप्त'मित्येव व्याख्यातम् । गत्यर्थेति सूत्रेऽविवक्षितकर्म[का]णामपि ग्रहणम् । नच 'आशितः कर्ता' इत्यत्रस्यभाष्यविरोधः। तत्रहि 'आङ्पूर्वादशेः सकर्मकत्वात्कर्तर्यप्राप्तः क्तो निपात्यते' इत्युक्तम्। अन्यथा 'मातुः स्मर्यते' इतिवदविवक्षितकर्मत्वेनाऽकर्मकतायां सूत्रेणैव सिद्धे निपातनं व्यर्थं स्यादिति वाच्यम् , तस्य भाष्यस्य 'आशित ओदनं देवदत्तः'इत्याद्युदाहृत्येष्टत्वेन तदर्थं निपातनमित्याशयस्यापि वक्तुं शक्यत्वात् । अत एव 'आशितः कर्ता' इति निर्देशस्याऽयुक्तत्वं न विचारितं भगवता । दत्तवानित्यर्थे दत्त इत्यादि तु नाऽऽपाद्यं, विवक्षायाः प्रयोगाधीनत्वादित्यलम्। **भुक्तमस्तीति** । भुक्तमस्मि-

इत्यर्थः । बुद्धः । विदितः । पूजितः । अर्चितः । चकारोऽनुक्तसमुच्चयार्थः । शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यादि । **नपुंसके भावे क्तः** ।३।३।११४। क्लीबत्वविशिष्टे भावे कालसामान्ये क्तः स्यात् । जल्पितम् । शयितम् । हसितम् । **सुयजोर्ङ्वनिप्** ।३।२।१०३। सुनोतेर्यजेश्च ङ्वनिप्स्याद्भूते । सुत्वा । सुत्वानौ । यज्वा । यज्वानौ । **जीर्यतेरतृन्** ।३।२।१०४। भूत इत्येव । जरन् । जरन्तौ । जरन्तः । वाऽसरूपन्यायेन निष्ठापि । जीर्णः । जीर्णवान् । **छन्दसि लिट्** ।३।२।१०५। **लिटः कानज्वा** ।३।२।१०६। **क्वसुश्च** ।३।२।१०७। इह भूतसामान्ये छन्दसि लिट्, तस्य विधीयमानौ क्वसुकानचावपि छान्दसाविति त्रिमुनिमतम् ।

त.]आह्वाने, जुषी प्रीतिसेवनयोः। **सुयजोर्ङ्वनिप्**। **सुनोतेरि**ति। षुञ् अभिषवे। यद्यपीह षु गतौ, षु प्रसवैश्वर्ययोरिति निरनुबन्धकयोरेव ग्रहणं न्याय्यं, तथाप्यनभिधानादुभयपदिना साहचर्याद्वा तयोर्ग्रहणं न भवतीति भावः । ङकारः सुनोतेर्गुणप्रतिषेधार्थः । पकारस्तु स्वरार्थस्तुगर्थश्च । यज्वेत्यादि । क्वनिपि कृते त्वत्र 'वचिस्वपी'ति संप्रसारणं स्यादिति ङ्वनिबुक्तः । **अतृनिति** । नकारः स्वरार्थः, ऋ इत् । **जरन्निति** । ऋकारस्य गुणे रपरोऽकारः। 'उगिदचा'मिति नुम् । संयोगान्तलोपस्याऽसिद्धत्वान्न दीर्घः । **छन्दसि लिडिति** सूत्रस्यार्थमाह-**भूतसामान्ये इति** । न च 'छन्दसि लुङ्लङ्लिटः' इत्यनेन गतार्थता शङ्क्या, धातुसंबन्धाधिकारे हि स विधिः, इदं तु धातुसंबन्धं विनापि भवतीति विशेषात् । अत्र व्याचख्युः-कानचः कित्करणं तित्विराण इत्यत्र 'ऋच्छत्यृता'मिति गुणस्य निषेधार्थं सति प्रतिषेधविषये आरभ्यते । 'चक्राण' इत्यत्र तु 'असंयोगाल्लिट्कि'दित्येव सिद्धं कित्वमिति । **त्रिमुनिमतमिति** । सूत्रकृता छन्दसीति प्रक्रान्तत्वादुत्तरसूत्रे भाषाग्रहणाच्च, भाष्यवार्तिकयोरपि क्वसुकानचोः 'छन्दस्युभयथे'ति वचनात्सार्वधातुकत्वेन 'सार्वधातुकमपि'दिति ङित्वादेव आजिवानित्यादौ नलोपादीनां कित्कार्याणामन्यथासिद्धिमाशङ्क्य तितीर्वान् तित्विराण इत्यादौ 'ऋच्छत्यृता'मिति प्राप्तस्य गुणस्य बाधनार्थं कित्करणमिति सिद्धान्तितत्वात् । अतएव कित्करणसामर्थ्या-

बा.]**इति**। इच्छार्थकान्मनेरिषेश्च क्तः।'तीषसहे'ति वेट्त्वात् 'यस्य विभाषे'ति नेट्। **शीलितो रक्षित इति**। भाष्यस्थश्लोकोऽयम् । **इत्यादीति** । आदिना '**रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि । हृष्टतुष्टौ तथाक्रान्तस्तथोभौ संयतोद्यतौ । कष्टं भविष्यतीत्याहुरमृतः पूर्ववत्स्मृतः ।**' इति सङ्ग्रहः । कष्टशब्दो भविष्यति, अमृतशब्दो वर्त्तमाने इत्यर्थः । **नपुंसके भावे क्तः** । **कालसामान्ये इति** । अस्य वर्तमानाद्यधिकारानन्तर्भावादिति भावः। अकर्मकेभ्य एव नपुंसके भावे क्तः, नतु सकर्मकादिति 'णेरध्ययने वृत्त'मिति सूत्रे भाष्यकैयटयोः स्पष्टम् । तद्ध्वनयन्नकर्मकेभ्य एवोदाहरति—**जल्पितमित्यादि** । गतं भुक्तमित्यादौ त्वविवक्षितकर्मकत्वादकर्मकत्वं बोध्यम् । अत एव गतं हंसस्य, भुक्तमोदनस्येत्यादौ शेषत्वविवक्षया षष्ठीति दिक् । **सुयजोर्ङ्वनिप्** । पञ्चम्यर्थे षष्ठी। सुनोतेर्यजेश्च ङ्वनिबित्यर्थः । **भूते इति** । अस्य भूताधिकारस्थत्वादिति भावः । **सुत्वा सुत्वानाविति** । ङ्वनिपि ङपावितौ, इकार उच्चारणार्थः । ङित्वान्न गुणः । **जीर्यतेरतृन्** । **भूते इत्येवेति** । भूतार्थवृत्तेर्जॄधातोरतृन् स्यादित्यर्थः। ऋकारनकारावितौ । अःप्रत्ययः शिष्यते । **जरन्निति** । उगित्वान्नुम् । **जीर्ण इति** । 'ॠत इत्'। रपरत्वम् । 'हलि च' इति दीर्घः। निष्ठानत्वम् । **छन्दसि लिट्** । **लिटः कानज्वा** । **क्वसुश्च** । त्रीणीमानि सूत्राणि । अत्र प्रथमसूत्रे भूत इत्यनुवृत्तिमभिप्रेत्य व्याचष्टे-**भूतसामान्ये छन्दसि लिडिति** । अनद्यतनपरोक्षत्वं छन्दसि न विवक्षितमिति भावः । 'लिटः कानज्वे'ति द्वितीयं सूत्रम् । तत्र छन्दसीत्यनुवर्तते, भूते इति च । छन्दसि भूते लिटः कानजादेशः स्यादित्यर्थः। लिङ्ग्रहणं लिण्मात्रस्य ग्रहणार्थम् । तेन 'परोक्षे लि'डिति यो लिड्विहितस्तस्यापि ग्रहणार्थः । अन्यथा 'अनन्तरस्ये'ति न्यायेन प्रकृतस्यैव लिटो ग्रहणं स्यादिति वृत्तौ स्पष्टम् । वाग्रहणं तु पक्षे लिटः श्रवणार्थं,वासऽरूपविधिर्लादेशेषु नेति ज्ञापनार्थं वा । तत्प्रयोजनं तु 'भाषायां सदवसे'त्यत्र अनुपदमेव वक्ष्यते । 'क्वसुश्चे'ति तृतीयं सूत्रम् । छन्दसि भूते लिटः क्वसुश्चादेशः स्यादित्यर्थः । योगविभागस्तु उत्तरसूत्रे क्वसोरेवानुवृत्त्यर्थः । इमौ कानच्क्वसू आदेशौ छान्दसाविति—अत्रैव भाष्यकैयटयोः स्पष्टम् । तदाह-**तस्येत्यादि, त्रिमुनिमतमित्यन्तम्** । 'विभाषा पूर्वाह्णाऽपराह्णे'ति सूत्रभाष्ये तु पपुष आगतं पपिवद्रूप्यमिति प्रयुक्तम् । तेन लोकेऽपि क्वचित्क्वसोः साधुत्वं सूचितम् । तदाह—

शे.]त्यर्थः । **इत्यादीति** । अत एव 'सुवतेः सूत इत्यत्र वर्त्तमाने क्तः' इति 'अजेर्वी'त्यत्र कैयटः। 'मीतः क्तः' इत्यादौ मण्डूकप्लुत्या वर्त्तमान इति सम्बध्यते, चानश्—नजिङोः सर्वकालताया 'भूते' इति सूत्रे भाष्ये उक्तेः । **जीर्ण इति** । 'जीनो जीर्णो जरन्नपी'त्यमरः । **तस्येति** । 'अनन्तरस्ये'ति न्यायेन 'लिटः कानज्वा' इत्यत्र पूर्वलिट एव ग्रहणात् । योगविभाग उत्तरत्र क्वसोरेव सम्बन्धार्थः । 'कानज्वे'ति वाग्रहणन्तु पक्षे तिङश्रवणार्थम् । वाऽसरूपन्यायस्त्वादेशेषु न । अत्रेदं वाग्रहणमेव लिङ्गमिति ध्वनितं भाष्यकैयटयोरिति स्पष्टमेव । तेन सदादिभ्यो भूतसामान्ये लिटः पक्षे तिङामश्रवणम् । शतृविषये यथा तिङस्तथा वक्ष्यते। इमौ कानच्क्वसू छान्दसौ इति—अत्रैव भाष्ये स्पष्टम् । 'विभाषा पूर्वाह्णापराह्णाभ्या'मिति सूत्रे 'पपुष इदं पपिवद्रूप्य'मिति प्रयुक्तं, तेन लोकेऽपि क्वचित् क्वसोः साधुतेति सूचितम् । प्रकृतसूत्रस्थ-

कवयस्तु बहुलं प्रयुञ्जते 'तं तस्थिवांसं नगरोपकण्ठे', 'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' इत्यादि । **वस्वेकाजाद्घसाम्**।७।२।६७।कृतद्विर्वचनानामेकाचामादन्तानां घसेश्च वसोरिट् ,नान्येषाम्। एकाच्—आदिवान्। आरिवान्। आत्—ददिवान्। जक्षिवान्। एषां किम् ?। बभूवान्। **भाषायां सदवसश्रुवः** ।३।२।१०८। सदादिभ्यो भूतसामान्ये भाषायां लिड्वा स्यात्, तस्य च नित्यं क्वसुः। 'निषेदुषीमासनबन्धधीरः'। 'अध्यूषुषस्तामभव-

त.]द्भाषायामपि क्वसुकानचौ स्त इति केषांचिदुत्प्रेक्षा नादर्तव्येति हरदत्तमाधवादिग्रन्थे स्पष्टमिति भावः।**कवयस्त्विति**। गतानुगतिकतयेति भावः। . **वस्वे**। 'वस्वि'त्यविभक्तिको निर्देशस्तथा च व्याख्यास्यते—**वसोरिति**। नित्यत्वाद्द्वित्वे कृते एकाच्त्वमेव नेति कथमिट् स्यादित्यत आह—**कृतद्विर्वचनानामेकाचामिति**। कृतेऽपि द्वित्वे एकाच एव ये अवशिष्यन्ते तेषामित्यर्थः। 'नेड्वशि कृती'ति निषेधं बाधित्वा क्रादिनियमात्सर्वत्र प्राप्तस्येटो नियमोऽयमित्याह—**नान्येषामिति**। **आदिवानिति**। अद भक्षणे, द्वित्वहलादिशेषाभ्यासदीर्घसवर्णदीर्घेषु कृतेषु कृतद्वित्वोऽप्ययमेकाजेवेतीड्वति। **आरिवानिति**। ऋ गतौ। 'ऋच्छत्यृता'मिति गुणे कृते द्वित्वादिषु पूर्ववत्कृतेष्वयमप्येकाच्। **ददिवानिति**। डुदाञ् दाने। कृते द्वित्वे नायमेकाच् ,इण्निमित्तश्चातो लोपो नाऽसति तस्मिन्भवतीत्यनेकाजर्थमाद्ग्रहणम्।**जक्षिवानिति**। 'लिट्यन्यतरस्या'मित्यदेर्घस्लादेशः। द्वित्वे कृते नाऽयमेकाजिति घसिग्रहणम्। अत्र व्याचख्युः—द्वित्वात्पूर्वं परत्वात् 'घसिभसोर्हली'त्युपधालोपः स्यात्तस्मिंश्च कृतेऽनच्कत्वाद्द्वित्वमेव न स्यात्। . न चाऽस्य द्वित्वे कर्तव्ये 'द्विर्वचनेऽची'त्यनेन स्थानिवद्भावो,निषेधो वा शङ्क्यः,द्वित्वनिमित्तस्याऽचोऽभावात्। ततश्च नाऽयं कृतद्विर्वचन एकाज्भवतीति घसिग्रहणं, तत्सामर्थ्यात्तु परत्वादुपधालोपमिडागमो बाधते, कृते त्विडागमे 'गमहने'त्युपधालोपस्तस्य चाऽजिमित्तत्वेन स्थानिवत्त्वाद्द्वित्वम्। यद्वा 'द्विर्वचनेऽची'ति निषेधपक्षे तूपधालोपात्प्रागेव द्वित्वं, पश्चादुपधालोपः 'शासिवसिघसीनां चे'ति षत्वं चर्त्वं क्षः। 'अभ्यासे चर्चे'त्यभ्यासघकारस्य जश्त्वमिति। **निषेदुषीमिति**। षद्लृ विशरणादौ। 'लिटि धातो'रिति द्वित्वे 'अत एकहल्मध्ये' इत्येत्वाऽभ्यासलोपौ। 'उगितश्चे'ति ङीपि 'वसो'रिति सम्प्रसारणे वलादित्वाऽभावान्नेट्। 'सदिरप्रते'रिति षत्वम्। पुंसि तु निषेदिवान्। अध्यूषुष इति। वस निवासे अधिपूर्वः। 'वचिस्वपी'ति संप्रसारणं। द्वित्वह-

बा.]**कवयस्त्विति**। **तस्थिवांसमिति**। स्थाधातोर्लिटः क्वसुः। द्वितीयैकवचने 'अत्वसन्तस्ये'ति दीर्घः। उगित्त्वान्नुम्। **अधिजग्मुष इति**। अधिपूर्वाद्गमेर्लिटः क्वसुः, 'गमहने'त्युपधालोपः, शसि वसोः संप्रसारणं, पूर्वरूपम्, षत्वम्। **वस्वे**। 'वसु' इत्यविभक्तिको निर्देशः।तथाच व्याख्यास्यति—**वसोरिति**। नित्यत्वाद्द्वित्वे कृते एकाच्त्वमेव नेति कथमिट् स्यादित्यत आह—**कृतद्विर्वचनानामेकाचामिति**। कृतेऽपि द्वित्वे एकाच एव ये अवशिष्यन्ते तेषामित्यर्थः। 'नेड्वशि कृती'ति निषेधं बाधित्वा क्रादिनियमात्सर्वत्र प्राप्तस्य इटो नियमोऽयमित्याह—**नान्येषामिति**। **आदिवानिति**। अद भक्षणे। द्वित्वहलादिशेषाऽभ्यासदीर्घसवर्णदीर्घेषु कृतेषु कृतद्वित्वोऽप्ययमेकाजेवेति इट्। **आरिवानिति**। 'ऋ गतौ' 'ऋच्छत्यृता'मिति गुणे कृते द्वित्वादिषु पूर्ववत्कृतेषु अयमेकाच्। **ददिवानिति**। डु दाञ् दाने। कृते द्वित्वे नाऽयमेकाच्। इण्निमित्तश्चाऽऽतो लोपो नाऽसति तस्मिन् भवतीति अनेकाजर्थमाद्ग्रहणम्।**जक्षिवानिति**।'लिट्यन्यतरस्या'मित्यदेर्घस्लादेशः। द्वित्वे कृते नायमेकाजिति घसिग्रहणम्। **भाषायाम्**। सद, वस, श्रु एषां द्वन्द्वात्पञ्चमी। पुंस्त्वमेकवचनं चार्षम्। **तस्य च नित्यं क्वसुरिति**। वाग्रहणं लिटैव संबध्यते, तस्य क्वसुस्तु नित्य इति भाष्ये स्पष्टम्। पक्षे लुङ्, तस्य भूतसामान्ये विहितत्वात्। वाग्रहणानुवृत्तौ तु भूतसामान्ये लिडयं नित्यं लुङपवादः स्यात्, सरूपत्वात्। अस्य च भूतसामान्ये लिटो न तिङ्, अस्य क्वसोस्तदपवादत्वात्। वासरूपविधिस्तु लादेशेषु नेति 'लिटः कानज्वे'त्यत्र उक्तमिति शब्देन्दुशेखरे विस्तरः। **निषेदुषीमिति**। निपूर्वात्सदेर्लिटः क्वसुः, द्वित्वम्, 'अत एकहल्मध्ये' इत्येत्वाभ्यासलोपौ, वसोः संप्रसारणं, पूर्वरूपं, षत्वम्। **अध्यूषुष इति**। अधिपूर्वाद्वसधातोर्लिटः क्वसुः, यजादित्वाद्धातोर्वस्य संप्रसारणम्। पूर्वरूपम्। उस् इत्यस्य द्वित्वं, हलादिशेषः, सवर्णदीर्घः। शसि वसोः संप्र-

दी.]भाष्यं त्वञ्जूप्रकृतिकक्वसुपरमिति बोध्यम्। एकाज्ग्रहणसामर्थ्यलभ्यमाह—**कृतद्वित्वेति**। द्वित्वोत्तरमभ्यासादिकार्येषु कृतेष्वेकाचामित्यर्थः। तद्धि नाऽनेकाज्व्यावृत्तये,तत्र लिड्यामः सत्त्वात्,मन्त्रे तथा प्रयोगाऽभावाच्च।न चामभावे जागर्तिव्यावर्त्यः, 'न चैकमुदाहरण'मिति न्यायात्। दरिद्रातेस्तु कृतद्वित्वानामित्यर्थाऽभावे आद्ग्रहणस्य भूतपूर्वाऽऽकारान्तग्रहणेन दरिद्रात्यर्थतया न तद्व्यावृत्त्यर्थत्वमिति एकाज्ग्रहणसामर्थ्येन कृतद्वित्वानामित्यर्थलाभ इति भावः। सिद्धान्ते तु सांप्रतिकग्रहणेन आत्पदस्य चारितार्थ्येन दरिद्रातौ न भवत्येवेडिति बोध्यम्। घसिग्रहणाऽभावे तु द्वित्वात्परत्वाच्चित्वाच्च 'घसिभसो'रिति लोपे द्वित्वनिमित्ताऽजिमित्तत्वाऽभावेन 'द्विर्वचनेऽची'त्यस्याऽप्राप्त्याऽनच्कत्वेन द्वित्वं न स्यात्, तत्सत्त्वे त्विड्लोपयोरपि नित्यत्वेन परत्वादिटि ततो हल्ग्रहणानर्थक्यमन्यत्रापि भावादित्युक्तेलोपे 'द्विर्वचनेऽची'ति सिद्धमिष्टम्। **नान्येषामिति**। क्रादिनियमात्प्राप्तस्य नियमोऽयमिति भावः। न च 'पपिवा'नित्यादौ सन्निपातपरिभाषया आतो लोपो न स्यादिति वाच्यं, तस्या अनित्यत्वात्। **लिड्वेति**। व्याख्यानाद्वाग्रहणमेतद्विधेयलिटैव सम्बध्यते। तेन पक्षे लुङादि।

जनस्य' । शुश्रुवान् । **उपेयिवाननाश्वाननूचानश्च** ।३।२।१०९। एते निपात्यन्ते । उपपूर्वादिणो भाषायामपि भूतमात्रे लिङ्वा, तस्य नित्यं क्वसुः । इट् । उपेयिवान् । 'उपेयुषः स्वामपि मूर्तिमग्र्याम्' । उपेयुषी । 'उपे'त्य-विवक्षितम् । ईयिवान् । समीयिवान् । नञ्पूर्वादश्नातेः क्वसुरिडभावश्च । 'धृतजयधृतेरनाशुष' इति भारविः । अनुपूर्वाद्वचेः कर्तरि कानच् । वेदस्यानुवचनं कृतवान्–अनूचानः । **विभाषा गमहनविदविशाम्** ।७।२।६८। एभ्यो वसोरिड्वा । जग्मिवान् । जगन्वान् । जघ्निवान् । जघन्वान् । विविदिवान् । विविद्वान् । विविशिवान् । विविश्वान् । विशिना साहचर्याद्विन्दतेर्ग्रहणम् । वेत्तेस्तु–विविद्वान् । 'नेड्वशि कृती'ति निषेधः । * दृशेश्च । ददृशिवान् । ददृश्वान् । **लटः शतृशानचावप्रथमासमानाधिकरणे** ।३।२।१२४। अप्रथमान्तेन सामानाधिकरण्ये सतीत्यर्थः । शबादि । पचन्तं चैत्रं पश्य । **आने मुक्** ।७।२।८२। अङ्गस्याऽतो मुमागमः स्यादाने

त.]ल्लादिशेषसवर्णदीर्घाः।ङसि भत्वात्संप्रसारणम् । प्रथमैकवचने तु अध्यूषिवान्।**उपेयिवानना** । **इडिति**। वलादिलक्षण एवेट् 'नेड्वशि कृती'ति निषिद्धः । क्र्यादिनियमात्पुनः प्राप्तः 'वस्वेकाजाद्घसा'मिति सूत्रेण कृतद्वित्वानामेकाचामादन्तानां घसेश्च वसोरिट् स्यान्नान्येषामिति नियच्छता प्रतिषिद्धः, नित्यत्वाद्द्वित्वे कृतेऽनेकाच्त्वात् । न च सवर्णदीर्घेणैकाच्त्वम् । 'दीर्घ इणः किती'त्यभ्यासस्य दीर्घे कृते तत्सामर्थ्यात्सवर्णदीर्घाऽभाव इति पक्षाश्रयणात् । स एव वलादिलक्षण इडिह प्रतिप्रसूयते, नाऽपूर्वो विधीयते, तेन संप्रसारणविषये न भवति । अत एवोदाहरति–**उपेयुष इति** । सति त्विटि तस्य यणादेशे उपेय्युष इति स्यादिति भावः । **अविवक्षितमिति** । व्याख्यानमेवाऽत्र शरणम् । **ईयिवानिति** । इणो द्वित्वे सवर्णदीर्घं बाधित्वा आन्तरत्वात् 'इणो य'णिति यण् भवति, वसोरिडागमे हि परत्राऽजादिप्रत्ययस्य सत्त्वात् । **वचेरिति** । वच परिभाषणे इत्यस्माद्ब्रुवो वचेर्वा कर्तरि, न तु भावकर्मणोः । एतच्च निपातनाल्लब्धम् । **जग्मिवानित्यादि**। इडभावपक्षे 'गमहने'त्युपधालोपः । **लटः शतृ । सामानाधिकरण्ये सतीति** । यद्यप्यादेशरहितस्य लटः प्रयोगाऽभावात्सामानाधिकरण्यं दुर्लभं तथापि शतृशानचोस्तद्दृष्ट्या स्थानिन्यपि सामानाधिकरण्यं कल्प्यते । **शबादीति** । शित्त्वेन सार्वधातुकत्वादिति भावः । **पचन्तमिति** । शतुरुगित्त्वान्नुम् । विक्लित्त्यनुकूलवर्तमानव्यापाराश्रयमित्यर्थः ।

**आने मुक्** । 'अतो येयः' इति पूर्वसूत्रादनुवृत्तं पञ्चम्यन्तमप्यत इति पदं षष्ठ्या विपरिणम्यते,'आने' इति सप्तमीबलात्।न चाऽत इति पञ्चमीबलादान इति सप्तम्यन्तं पदं षष्ठ्या विपरिणम्यते इति शङ्क्यं,पञ्चम्याः पूर्वसूत्रे चरितार्थत्वात्सप्तम्याश्चाऽचरितार्थत्वात् । तदेतदाह–**अङ्गस्याऽत इति** । प्राचा त्वदन्ताङ्गस्येति व्याख्यातं, तदयुक्तम् । 'पचमान' इत्यादौ 'अदुपदेशाल्लसार्वधातुकमनुदात्त'मिति शानचः स्वरस्याऽसिद्धिप्रसङ्गात्। 'अदन्ताङ्गस्ये'ति पक्षे हि 'अङ्गभक्तो मुक् स चाङ्गमेव न व्यवदध्यात् , तदवयवमकारं तु व्यवदध्यादेव । अकारमात्रभक्तत्वे तु तदवयवत्वान्नास्ति व्यवधानमित्यदोषः । ननु 'स्वरविधौ व्यञ्जनमविद्यमानव'दिति परिभाषया मुकोऽविद्यमानवत्त्वेन व्यवधानाऽभावात्स्यादेवानुदात्तत्वमिति

बा.]सारणं,पूर्वरूपम्। **शुश्रुवानिति**। श्रुधातोर्लिटः क्वसुः। द्वित्वम्। **उपेयिवान्** । **इडिति** । उपपूर्वादिण्धातोर्लिटः क्वसुः, नित्यत्वाद्द्वित्वम् । वलादिलक्षण इट् 'नेड्वशि कृती'ति प्रतिषिद्धः, स तावत्क्र्यादिनियमात्पुनरुत्थितः । पुनश्च 'वस्वेकाजाद्घसा'मिति 'सूत्रेण एकाचश्च आदन्ताच्च घसेश्च परस्य वसोरिट् स्यान्नान्येभ्य' इत्यर्थकेन द्वित्वानन्तरमनेकाच्त्वात्प्रतिषिद्धः, सोऽयमिट् अनेन निपातनेन प्रतिसूयते इति भाष्ये स्पष्टम् । इटि कृते उत्तरखण्डस्य इकारस्य यण् । अभ्यासस्य दीर्घस्तु न निपात्यते । नन्वत्र अपूर्व एव इट् निपात्यतामित्यत आह–**उपेयुषीति** । उगित्त्वान्ङीपि वसोः संप्रसारणम् । प्रतिसूतो वलादिलक्षण इट् तु न, तन्निमित्तस्य वकारस्य संप्रसारणेन विनाशोन्मुखत्वात् । अत्र अपूर्वस्य इटो निपातने तु अत्रापि इट् स्यादिति भावः । **उपेत्यविवक्षितमिति** । अत्र व्याख्यानमेव शरणम् । **अश्नातेरिति** । 'अश भोजने' श्नाविकरणः क्र्यादिः, लिटः क्वसुः, द्वित्वम् , 'अत आदे'रिति दीर्घः, सवर्णदीर्घः, द्विहल्त्वाऽभावान्न नुट् । 'अश्नोतेश्चे'त्यपि न नुट् , श्नुविकरणस्यैव तत्र ग्रहणात् । नञ उपपदसमासः। 'नलोपो नञः' 'तस्मान्नुडची'ति भावः । **वचेः कर्तरीति** । न तु भावकर्मणोरिति भावः । कानचि यजादित्वात्संप्रसारणं, पूर्वरूपं, सवर्णदीर्घः । **'विभाषा गमहने'त्यादि** स्पष्टम् । **लटः शतृशानचौ** । 'वर्तमाने ल'डिति पूर्वसूत्रविहितस्यैव एतौ शतृशानचौ, अनन्तरस्येति न्यायादिति 'वर्तमानसामीप्ये' इत्यादिभाष्ये स्पष्टम् । शतृप्रत्यये शकारऋकारावितौ । **पचन्तमिति** । पाकानुकूलव्यापाराश्रयमित्यर्थः, 'क्रियाप्रधानमाख्यातं, सत्त्वप्रधानानि नामानी'ति सिद्धान्तात् । शतुः शित्त्वेन सार्वधातुकत्वाच्छपि 'अतो गुणे' इति पररूपम् । शानचि शचावितौ । **आने मुक्** । 'अङ्गस्ये'त्यधिकृतम्

शे.]'छन्दसी'त्यस्य निवृत्त्यैव सिद्धे[:]भाषाग्रहणं सर्वत्र प्रवृत्त्यर्थम्,तेन 'अनद्यतने लङ्' 'परोक्षे लि'डित्येतद्विषयेऽप्यस्य प्रवृत्तिः।अस्य लिटो वैकल्पिकत्वात्पक्षे तयोः प्रवृत्तौ तिङां श्रवणमिति दिक्। **अश्नातेरिति**।अत एव न नुट् ।**साहचर्यादिति** । लुग्विकरणपरिभाषासहकृतादित्यर्थः । एतेन हनिसाहचर्याद्विन्तेरपि ग्रहणं स्यादित्यपास्तम् । **दृशेश्चेति**–वार्तिकम्।**लटः श**।'अनन्तरस्ये'ति न्यायेनैतौ 'वर्तमाने ल'डिति विहितस्यैवेति 'वर्तमानसामीप्ये' इत्यादौ भाष्ये स्पष्टम्।

परे। पचमानं चैत्रं पश्य। 'ल'डित्यनुवर्तमाने पुनर्लड्ग्रहणमधिकविधानार्थम्। तेन प्रथमासामानाधिकरण्येऽपि क्वचित्। सन् ब्राह्मणः। * माङ्याक्रोशे इति वाच्यम्। 'मा जीवन् [यः परावज्ञादुःखदग्धोऽपि जीवति'।] 'माङि लु'ङिति प्राप्ते एतद्वचनसामर्थ्याल्लट्। **संबोधने च** ।३।२।१२५। हे पचन्!। हे पचमान!। **लक्षणहेत्वोः क्रियायाः** ।३।२।१२६। क्रियायाः परिचायके, हेतौ चाऽर्थे वर्तमानाद्धातोर्लटः शतृशानचौ स्तः। शयाना भुञ्जते यवनाः। अर्जयन्वसति। हरिं पश्यन्मुच्यते। हेतुः फलं, कारणं च। 'कृत्यचः'। प्रपीयमाणः सोमः। **ईदासः** ।७।२।८३। आसः परस्याऽऽनस्य ईत्स्यात्। **'आदेः परस्य'**। आसीनः। **विदेः शतुर्वसुः** ।७।१।३६। वेत्तेः परस्य शतुर्वसुरादेशो वा स्यात्। विदन्!। विद्वान्। विद्वान्। विदुषी। **तौ सत्** ।३।२।१२७।

---

त.]चेत्। अत्राहुः–हलः स्वरप्राप्तौ व्यञ्जनमविद्यमानवच्चान्यत्रेत्याकरारूढम्। न चाऽत्र हलः स्वरप्राप्तिरस्तीति प्रकृते परिभाषेयं नोपयुज्यते। अन्यथा मरुत्त्वानित्यादावपि 'ह्रस्वनुड्भ्यां मतु'बिति मतुप उदात्तत्वं स्यादिति दिक्। **लडिति**। यद्यपि प्रथमान्तं प्रकृतं, तथापि धातोरित्यधिकारात्पञ्चम्यन्तात्परं प्रथमान्तं षष्ठ्या विपरिणम्यत इति भावः। न च 'वर्तमाने ल'डित्यत्रैवोक्तरीत्या विपरिणामोऽस्त्विति शङ्क्यं, प्रत्ययविधौ पञ्चम्याः प्रकल्पकत्वं नास्तीति 'गुप्तिज्किद्भ्यः स'नित्यत्र भाष्यकारैः स्वीकृतत्वात्। **प्रथमासामानाधिकरण्येऽपीति**। उपलक्षणमिदम्। अप्रथमान्तेन सामानाधिकरण्याऽभावेऽपीत्यर्थः। तेन कुर्वतोऽपत्यं कौर्वतः। कुर्वतो भक्तिः कुर्वद्भक्तिः, कुर्वाणभक्तिरिति प्रत्ययोत्तरपदयोरपि सिध्यति। अन्यथा कुर्वतोऽपत्यमित्यादौ तद्धितसमासौ न स्याताम्। **लक्षणहेत्वोः**। लक्ष्यतेऽनेनेति लक्षणं=परिचायकम्। **शयाना इति**। शीङ आत्मनेपदित्वात्परस्य लटः शानच्। अत्र शयनं लक्षणं=चिह्नं यवनकर्तृकभोजनस्य, न तु फलं, नापि करणमिति हेत्वपेक्षया लक्षणस्य पृथङ्निर्देशः। **अर्जयन्निति**। अर्ज प्रतियत्ने चुरादिः। अर्जनार्थो वास इत्यर्थः। **हरिमिति**। हरिदर्शनं मुक्तौ कारणमित्यर्थः। **विदेः**। स्थानिवत्त्वादेव सिद्धे वसोरुगित्करणं 'वसोः संप्रसारण'मित्यत्र क्वसोरपि सामान्यग्रहणार्थम्। तत्सामर्थ्याच्च 'एकानुबन्धग्रहणे न द्व्यनुबन्धकस्ये'त्येतदपि न प्रवर्तते।

---

बा.]'अतो येयः' इति पूर्वसूत्रादनुवृत्तेन षष्ठ्या विपरिणतेन अता विशेष्यते। तदन्तविधिः।तदाह–**अदन्तस्येति**। मुकि ककार इत्, उकार उच्चारणार्थः, कित्त्वादन्तावयवः। **अनुवर्तमाने इति**। 'वर्तमाने ल'डिति पूर्वसूत्रादनुवृत्तस्य लडित्यस्य षष्ठ्या विपरिणामेन उक्तार्थलाभे सतीत्यर्थः। **अधिकेति**। सूत्राक्षराऽनारूढस्यापि अर्थस्य लाभार्थमित्यर्थः। **सन् ब्राह्मण इति**। 'अस भुवि' शतृप्रत्यये शपो लुक्, श्नसोरल्लोपः। **माङीति**। माङि प्रयुज्यमाने आक्रोशे गम्ये लटः शतृशानचाविति वक्तव्यमित्यर्थः। **मा जीवन्निति**। न जीवत्वयम्। अनुपकारित्वान्मृतप्राय इत्यर्थः। 'मा पचमान' इत्यप्युदाहार्यम्। 'लटः शतृशानचौ' इत्येव सिद्धेः किमर्थमिदमित्यत आह–**माङि लुङितीति**। **संबोधने च**। 'शतृशानचा'विति शेषः। प्रथमासमानाधिकरणार्थं आरम्भः। पूर्वसूत्रस्थपुनर्लड्ग्रहणस्य अधिकविधानार्थत्वादेव सिद्धे प्रपञ्चार्थमिदम्। **लक्षणहेत्वोः**। लक्ष्यते ज्ञाप्यतेऽनेनेति लक्षणं=ज्ञापकम्। तदाह–**क्रियायाः परिचायके इति**। धात्वर्थस्य लक्षणत्वे हेतुत्वे च द्योत्ये इति यावत्। कर्तैव प्रत्ययार्थः। **शयाना भुञ्जते यवना इति**। अत्र भोजनकालीनं शयनं भोक्तृयवनत्वसूचकम्। हेतावुदाहरति–**अर्जयन्वसतीति**। अर्जनाय वसतीत्यर्थः। हेतावुदाहरणान्तरमाह–**हरिं पश्यन्निति**। हरिदर्शनेन संसारदुःखान्मुच्यते इत्यर्थः।ननु धनाद्यार्जनस्य वाससाध्यतया कथं तस्य वासहेतुत्वमित्यत आह–**हेतुः फलं कारणं चेति**। इष्टसाधनताज्ञानस्य वासप्रवृत्तौ हेतुतया इष्टस्यार्जनस्यापि वासहेतुत्वमिति भावः। **प्रपीयमाण इति**। अत्र भिन्नपदस्थत्वात् कथं णत्वमित्यत आह–**कृत्यच इति**। **ईदासः**। आस इति पञ्चमी। **आनस्येति**। 'आने मु'गित्यतस्तदनुवृत्तेरिति भावः। **विदेः शतुर्वसुः**। **वेत्तेरिति**। 'विद ज्ञाने' इति लुग्विकरणस्यैव ग्रहणम्, शतुः परस्मैपदत्वात्, विद्यतेर्विन्तेश्चात्मनेपदित्वात्। यद्यपि विन्दतिरुभयपदी, तथापि तस्य न ग्रहणं, 'निरनुबन्धकग्रहणे न सानुबन्धकस्ये'त्युक्तेरिति भावः। **वा स्यादिति**। 'तुह्योस्तात'ङ्ङित्यतस्तदनुवृत्तेरिति भावः। **विदुषीति**। उगित्वान्ङीप्, वसोः संप्रसारणं, पूर्वरूपम्, षत्वम्। **तौ सत्**। 'लटः शतृशानचौ'

---

शे.]**पचमानमिति**। अत्र 'आतो ङितः' इति न,मुक इयपवादत्वात्।[किञ्च 'अङ्गकार्ये' इति निषेधान्न इयं]।अत इति तपरत्वाच्चेति तु चिन्त्यम्।'यदागमाः' इत्येतल्लब्धस्य तपरत्वेनाऽव्यावृत्तेः।अत्र एवाऽदुपदेशात्परत्वप्रयुक्तस्वरसिद्धिरिति दिक्। **क्वचिदिति**। कदाचिदित्यपि बोध्यम्। तेन 'पचति ब्राह्मणः' इत्यादिसिद्धिः।वाऽसरूपन्यायस्तु आदेशेषु नेति स्पष्टमेव। भाष्ये तु 'लटः शतृशानचौ'। विभाषेतिवर्तते।ततः–अप्रथमासमानाधिकरणे नित्यार्थमिद'मित्युक्तम्। तेन यत्प्रथमासमानाधिकरणे विकल्पबोधकं 'सदादिभ्यो बहुलम् इङ्धार्योर्वे'ति वार्तिककारेणोक्तं, तन्न कार्यं,योगविभागेन सिद्धेरिति बोध्यम्। **संबोधने च**। इदमुत्तरञ्च सूत्रं प्रथमासमानाधिकरणे नित्यार्थम्। **शयाना इति**। शयनं भुज्यर्थपरिचायकम्। तदुपलक्षितभुज्यर्थेन च यवनाः परिचाय्यन्ते इत्यन्यत्। अर्जनं वासस्य फलम्। हरिदर्शनं मोक्षसाधनम्। इह लक्षणत्वादि द्योत्यम्, शत्राद्यर्थस्तु कर्त्रादिरेव। क्रियाया इति किम्? । 'यः कम्पते सोऽश्वत्थः' इत्यादौ माभूदिति। **वेत्तेरिति**। सत्ताविचारार्थयोरात्मनेपदित्वात्तयोः शतुरसम्भवः, लाभार्थस्य विकरणेन व्यवधानमिति भावः।

तौ=शतृशानचौ सत्संज्ञौ स्तः। लृटः सद्वा ।३।३।१४। व्यवस्थितविभाषेयम्। तेनाऽप्रथमासामानाधिकरण्ये, प्रत्ययोत्तरपदयोः, संबोधने, लक्षणहेत्वोश्च नित्यम्। करिष्यन्तं करिष्यमाणं पश्य। करिष्यतोऽपत्यं कारिष्यतः। करिष्यद्भक्तिः। हे करिष्यन्! । अर्जयिष्यन्वसति। प्रथमासमानाधिकरणेऽपि क्वचित्। करिष्यतीति करिष्यन्। पूङ्यजोः शानन् ।३।२।१२८। वर्तमाने। पवमानः। यजमानः। ताच्छील्यवयोवचनशक्तिषु चानश् ।३।२।१२९। एषु द्योत्येषु कर्तरि चानश्। भोगं भुञ्जानः। कवचं बिभ्राणः। शत्रुं निघ्नानः। इङ्धार्योः शत्रकृच्छ्रिणि ।३।२।१३०। आभ्यां शतृ स्यादकृच्छ्रिणि कर्तरि। अधीयन्। धारयन्। अकृच्छ्रिणि किम्? । कृच्छ्रेणाधीते। धारयति। द्विषोऽमित्रे ।३।२।१३१। द्विषन् शत्रुः। सुञो यज्ञसंयोगे ।३।२।१३२। सर्वे सुन्वन्तः। सर्वे यजमानाः सत्त्रिणः। अर्हः प्रशंसायाम् ।३।२।१३३। अर्हन्। आ क्वेस्तच्छीलतद्धर्मतत्साधु-

त.] पूङ्यजोः। शाननः शकारः सार्वधातुकत्वार्थः। नकारः स्वरार्थः। ण्वुलादिवत्स्वतन्त्रोऽयं न तु शत्रादिवल्लादेशः, तथाहि सति वेति वाच्यं स्यात्, पवते यजते इति तिङोऽपि यथा स्युरिति। न च वाऽसरूपन्यायेन निर्वाहः, लादेशेषु वाऽसरूपविधिर्नास्तीत्याकरे स्थितत्वात्। किंच लादेशत्वे 'लः कर्मणि चे'ति भावकर्मणोर्विहितस्य लस्यापि स्यादिति भावकर्मणोरपि प्रयुज्येत, इष्यते तु कर्तर्येव। एवं चानशः 'इङ्धार्यो'रिति शतुश्च स्वातन्त्र्यं बोध्यम्। अत्र केचित्-शाननो लादेशत्वे लसार्वधातुकानुदात्तत्वं स्यादित्याहुः। तच्चिन्त्यम्। परत्वाच्चित्स्वरप्रवृत्त्या पवमान इत्यादेराद्युदात्तत्वे शाननोऽनुदात्तत्वस्येष्टत्वात्। नन्वेषां लादेशत्वाऽनङ्गीकारे 'सोमं पवमान' इत्यादौ कर्मणि षष्ठी स्यादिति चेन्मैवम्। 'न लोके'ति सूत्रे तृन्निति प्रत्याहारनिर्देश इत्युक्तत्वात्। ताच्छील्य। वचनग्रहणं स्पष्टार्थम्। चानशो लादेशत्वाऽभावेनाऽऽत्मनेपदत्वाऽभावात्परस्मैपदिभ्योऽपि विधानमिति ध्वनयन्नुदाहरति-निघ्नान इति। 'गमहने'त्युपधालोपः। इङ्धार्योः। इङ आत्मनेपदित्वात् शता न सिध्यति, धारयतेरपि कर्तृगामिनि क्रियाफले न सिध्यति, लसार्वधातुकानुदात्तत्वं च प्राप्नोतीत्ययमारम्भः। सुञो यज्ञसंयोगे। सुनोतेः शतृप्रत्ययः स्याद्यज्ञेन संयुज्यमाने वृत्तिश्चेत्। नन्विह 'सुञो यज्ञे' इत्येवास्तु, यज्ञविषयकश्चेत्सुनोत्यर्थ इति व्याख्यायां सुरां सुनोतीत्यादेर्व्यावर्तयितुं शक्यत्वात्। अत्राहुः-संयोगग्रहणं प्रधानकर्तृसंप्रत्ययार्थं, तेन यजमानादन्यत्र न भवतीति। एवं चाऽप्रधाने कर्तरि 'लृटः शतृशानचौ' इत्यनेनाऽपि न भवति, संयोगग्रहणसामर्थ्यादिति हरदत्तः। 'यः सुन्वन्तमवती'त्यादीनामेकवचनान्तानां यजमानपरत्वसंभवेऽपि बहुवचनान्तानां तु न

बा.] इति सूत्रोपात्तौ शतृशानचौ तच्छब्दः परामृशति। तदाह-तौ शतृशानचाविति। लृटः सद्वा। लृटः शतृशानचौ वा स्त इत्यर्थः। व्यवस्थितेति। व्याख्यानादिति भावः। नित्यमिति। तेन तिङां निवृत्तिः। अप्रथमासामानाधिकरण्ये उदाहरति-करिष्यन्तमिति। प्रत्यये परत उदाहरति-कारिष्यत इति। उत्तरपदे उदाहरति-करिष्यद्भक्तिरिति। करिष्यन्ती भक्तिरिति कर्मधारयः। सम्बोधने उदाहरति-हे करिष्यन्निति। 'शयिष्यमाणा भोक्ष्यन्ते यवना' इति लक्षणे उदाहार्यम्। हेतावुदाहरति-अर्जयिष्यन्वसतीति। प्रथमासामानाधिकरण्येऽपि क्वचिदिति। अप्रथमासामानाधिकरण्याऽभावेऽपि क्वचिदित्यर्थः। कदाचिदित्यपि द्रष्टव्यम्। इदंच 'लृट् शेषे चे'ति भविष्यदधिकारविहिते लृट्येव प्रवर्तते इति 'अनवक्लृप्त्यमर्षे'त्यत्र भाष्ये स्पष्टम्। पूङ्यजोः शानन्। पञ्चम्यर्थे षष्ठी। वर्तमाने इति। शेषपूरणमिदम्। 'वर्तमाने लं'डित्यतस्तदनुवृत्तेरिति भावः। लड्ग्रहणं तु निवृत्तम्। ततश्च ण्वुलादिवत्स्वतन्त्रोऽयं, नतु शत्रादिवल्लादेशः। तथा च कर्तर्येवायं, नतु भावकर्मणोः। नच लादेशत्वाऽभावे 'सोमं पवमानं' इत्यत्र कर्मणि षष्ठी स्यादिति वाच्यं, 'न लोके'ति सूत्रे 'तृन्'इति प्रत्याहार इत्युक्तत्वात्। ताच्छील्य। चानशि शचावितौ। भोगं भुञ्जान इति। भोगशील इत्यर्थः। कवचं बिभ्राण इति। यौवनबलादिति भावः। शत्रुं निघ्नान इति। निहन्तुं शक्त इत्यर्थः। अतः परत्वाऽभावाच्च मुक्। चानशो लादेशत्वाऽभावादनात्मनेपदत्वात् परस्मैपदिभ्योऽपि प्रवृत्तिः। इङ्धार्योः। शतृ-अकृच्छ्रिणीति छेदः। अकृच्छ्रम्=अदुःखम्, तदस्यास्तीति अकृच्छ्री। इङ्, धारि अनयोर्द्वन्द्वात् पञ्चम्यर्थे षष्ठी। अधीयन्निति। सुखमध्येतेत्यर्थः। धारयन्निति। सुखेन धारयितेत्यर्थः। द्विषोऽमित्रे। द्विषः शतृप्रत्ययः स्यादमित्रे कर्तरीत्यर्थः। सुञो यज्ञ। यज्ञसंयुक्तेऽभिषवे वर्तमानात् सुनोतेः शतृप्रत्यय इत्यर्थः। संयोगग्रहणं यज्ञस्वामिपरिग्रहार्थम्। तेन याजकेषु न भवति। तत्र सुन्वन्नित्येकवचनान्तं दर्शपूर्णमासज्योतिष्टोमादिविषयम्, एककर्तृकत्वात्। बहुवचनान्तं तु सत्त्रविषयमेव, तत्र ऋत्विजामपि यजमानत्वादिति मत्वा आह-सर्वे सुन्वन्त इति। अर्हः प्रशंसायाम्। अर्ह इति पञ्चमी। 'शतृप्रत्यय' इति शेषः। अर्हन्निति।

शे.] तौ सत्। अनुवृत्त्यैव सिद्धे 'तौ'ग्रहणं शतृशानज्मात्रग्रहणार्थम्। तेन 'द्विषन्' 'द्वेक्ष्यमाणः' इत्यादावपि 'पूरणगुणे'ति निषेधः। क्वचिदिति। कदाचिदित्यपि बोध्यम्। तेन तिङां सिद्धिः। 'लृटः सद्वा' इत्यस्यापि भविष्यदधिकारविहित-'लृट्शेषेचे'ति लृट्येव प्रवृत्तिरिति 'अनवक्लृप्त्यमर्षे'त्यत्र भाष्ये स्पष्टम्। अकृच्छ्रिणीति। अनायासेन क्रियानिर्वर्तक इत्यर्थः। द्विषोऽमि। अमित्रे किम्? । द्वेष्टि पतिं भार्या। नाभिनन्दतीत्यर्थः। सर्वे इति। सत्त्रिणः सर्वे यजमाना 'एवमुच्यन्ते' इति शेषः। आ क्वेः। 'भ्राजभासे'ति क्विपमा इत्यर्थः। ताच्छीलिकाः प्रायेण सोपसर्गेभ्यो नेति 'आल्वे'ति

**कारिषु** ।३।२।१३४। क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छील-तद्धर्म-तत्साधुकारिषु कर्तृषु बोध्याः। **तृन्** ।३।२।१३५। कर्ता कटान् । **अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्** ।३।२।१३६। अलङ्करिष्णुरित्यादि । [निराकरिष्णुः। प्रजनिष्णुः। उत्पतिष्णुः। उत्पचिष्णुः।उन्मदिष्णुः।रोचिष्णुः। अपत्रपिष्णुः । वर्त्तिष्णुः । वर्द्धिष्णुः । सहिष्णुः। चरिष्णुः] । **णेश्छन्दसि** ।३।२।१३७। 'वीरुधः पारयिष्णवः'। **भुवश्च** ।३।२।१३८। छन्दसीत्येव । भविष्णुः । कथं तर्हि-'जगत्प्रभोरप्रभविष्णु वैष्णव'मिति ? । निरङ्कुशाः कवयः । चकारोऽनुक्तसमुच्चयार्थः । भ्राजिष्णुरिति वृत्तिः । एवं क्षयिष्णुः । नैतद्भाष्ये दृष्टम् । **ग्लाजिस्थश्च ग्स्नुः** ।३।२।१३९। छन्दसीति निवृत्तम् । गिदयं न तु कित् । तेन स्थ ईत्वं न । ग्लास्नुः । गित्वान्न गुणः ।

---

त.]संभवति, एकस्मिन्यागे एकस्यैव यजमानत्वादित्याशङ्क्य यागविशेषे तु संभवतीति दर्शयितुमुदाहरति-**सर्वे सुन्वन्त इत्यादि** । सत्रयागे हि बहवो यजमानास्त एव ऋत्विजो कर्म सोमाभिषवनं कुर्वन्तीति 'सुन्वन्त' इत्यादिबहुवचनान्तस्यापि यजमानपरत्वं संभवतीति भावः । **अर्हः** । प्रशंसायां किम् ? । अर्हति चौरो वधम् । **आ क्वेः** । शीलादीनां त्रयाणां विशेषणं समर्थयितुं निर्दिष्टैस्त्रिभिस्तच्छब्दैः प्रकृतिभूतधात्वर्थो निर्दिश्यते । **क्विपमभिव्याप्येति** । 'भ्राजभासधुर्विद्युतोर्जि'ति वक्ष्यमाण'मिति शेषः। **कर्ता कटानिति** । 'न लोकाव्यये'ति षष्ठीनिषेधः । **अलङ्कृञ्** । कृञिति डुकृञ् करण इत्यस्यैव ग्रहणं न तु कृञ् हिंसायामित्यस्य, 'प्रसिद्धाऽप्रसिद्धयोः प्रसिद्धस्यैव ग्रहण'मिति न्यायात् । निराङ्पूर्वोऽपि कृञ् स एव। प्रपूर्वो जनी प्रादुर्भावे। इह डुपचष् पाके,पत्लृ गतौ, मदी हर्षे, एते त्रयोऽपि उत्पूर्वाः पठ्यन्ते। तत्र 'उदः पचपतमद' इत्येव वक्तव्ये प्रत्येकमुत्पूर्वस्य पाठ उपसर्गान्तरनिवृत्त्यर्थस्तेन समुत्पतिष्णुरित्यादि न भवतीत्याहुः। रुच दीप्तौ । अपपूर्वः त्रपूष् लज्जायाम्, वृतु वर्तने, वृधु वृद्धौ, षह मर्षणे, चर गतौ। **इत्यादीति**। आदिशब्दग्राह्यास्तु निराकरिष्णुः, प्रजनिष्णुः उत्पचिष्णुः, उत्पतिष्णुः, उन्मदिष्णुरिति । 'उत्पतिष्णूसहिष्णू च चेरतुः खरदूषणौ' इति भट्टिः। कालिदासोऽप्याह-'फलनामुत्पतिष्णवः' इति। केचित्तु-पत इति स्थाने दान्तं सूत्रे पठित्वा पद गतावित्यस्मात्प्रत्ययमाहुः। उन्मदिष्णुः, रोचिष्णुः, अपत्रपिष्णुः,वर्तिष्णुः,वर्द्धिष्णुः,सहिष्णुः, चरिष्णुः। **पारयिष्णव इति** । 'अयामन्ते'ति णेरय् । **नैतदिति** । चकारस्याऽनुक्तसमुच्चयार्थत्वमित्यर्थः । **ईत्वं नेति** । 'घुमास्थे'त्यादिः । गित्वा-

---

बा.]पूजां प्राप्तुं योग्य इत्यर्थः । अत्र प्रशस्तस्यैव पूजायोग्यत्वात्प्रशंसा गम्यते । **आ क्वेः**। आङभिविधौ। तदाह-**क्विपमभिव्याप्येति** । 'भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्वि'बिति सूत्रमभिव्याप्येति यावत् । तत्र ताच्छीलिकाः प्रत्ययाः प्रायेण सोपसर्गेभ्यो नेति 'आढ्यसुभगे'ति सूत्रे भाष्ये स्पष्टम् । **तच्छीलः** = तत्स्वभावः । फलमनपेक्ष्य स्वभावादेव प्रवर्तमान इति यावत् । स धर्मो यस्य स **तद्धर्मा** । स्वधर्मोऽयमिति प्रवर्तमानः। तस्य=धात्वर्थस्य साधुकर्ता **तत्साधुकारी** । **तृन्** । धातोस्तृन्प्रत्ययः स्यात्तच्छीलादिषु कर्तृषु । तच्छीले उदाहरति-**कर्ता कटमिति** । कटकरणक्रियाशील इत्यर्थः । 'न लोके'ति षष्ठीनिषेधः, 'न लोके'ति सूत्रे 'तृ'न्नित्यनेन 'लटः शतृ' इत्यारभ्य एतत्सूत्रस्थनकारेण प्रत्याहाराश्रयणात् । तद्धर्मणि यथा-'मुण्डयितारः श्राविष्ठायना भवन्ति ऊढां वधूम्' । श्राविष्ठायना नाम देशविशेषीया वधूमुण्डनं स्वधर्मं इत्यनुष्ठातार इत्यर्थः। तत्साधुकारिणि 'कर्ता कट'मित्येवोदाहरणम्। कटं साधु करोतीत्यर्थः।**अलङ्कृञ्**। अलङ्कृञ्, निराकृञ्, प्रजन, उत्पच, उत्पत, उन्मद, रुचि, अपत्रप, वृतु, वृधु, सह, चर एषां द्वादशानां द्वन्द्वात्पञ्चमी । एभ्यस्तच्छीलादिषु कर्तृषु इष्णुच् स्यात् । **इत्यादीति** । निराकरिष्णुः प्रजनिष्णुः, उत्पचिष्णुः, उत्पतिष्णुः, उन्मदिष्णुः, रोचिष्णुः, अपत्रपिष्णुः, वर्तिष्णुः, वर्धिष्णुः, सहिष्णुः, चरिष्णुः। **णेश्छन्दसि**। ण्यन्ताद्धातोरिष्णुच् स्याच्छन्दसीत्यर्थः । **पारयिष्णव इति** । पृधातोर्ण्यन्तादिष्णुचि णेर्लोपं बाधित्वा 'अयामन्ताल्वाय्ये'त्यय् । इदं सूत्रं वैदिकप्रक्रियायामेव व्याख्यातुमुचितम् । **भुवश्च । छन्दसीत्येवेति** । भूधातोरिष्णुच् स्यात्तच्छीलादिषु छन्दसीत्यर्थः । अण्यन्तार्थ आरम्भः । **ग्लाजिस्थश्च । निवृत्तमिति** । व्याख्यानादिति भावः । चाद्भुव इत्यनुकृष्यते । ग्ला, जि, स्था एषां द्वन्द्वात्पञ्चमी । ग्ला, जि, स्था, भू इत्येभ्यः क्स्नुः स्यात्तच्छीलादिष्वित्यर्थः । ककार इत् । 'स्थास्नु' इत्यत्र कित्वलक्षणं 'घुमास्थे'तीत्वमाशङ्क्याह-**गिदयमिति** । सूत्रे चर्त्वेन ककारनिर्देश इति भावः । **गित्वान्न गुण इति**। 'क्ङिति चे'त्यत्र गस्य चर्त्वेन ककारान्तरप्रश्लेषादिति भावः । ननु भूष्णुरित्यत्र इट् स्यात्, 'श्र्युकः किती'ति कित एव

---

शे.]सूत्रे भाष्ये स्पष्टम् । **तच्छीलः**-फलनिरपेक्षप्रवृत्तिः, **तद्धर्मा**-'स्वधर्मोऽय'मिति यः प्रवर्त्तते, **साधुकारी**-तौ विनाऽपि धात्वर्थस्य साधुकर्ता । **तृन्** । **कर्तेति** । 'न लोके'ति षष्ठीनिषेधः । **तद्धर्मे**-'मुण्डयितारः श्राविष्ठायना भवन्ति वधूमूढाम्' । **साधुकारिणि**-'कर्त्ताऽऽखेट'मिति । **भुवश्च** । योगविभाग उत्तरार्थः । इदं लोकवेदसाधारणमिति 'आढ्यसुभगे'ति सूत्रस्थभाष्यस्वरसः । तत्र हि अच्वावित्यनुवर्त्य 'आढ्यीभविते'त्यत्र 'कर्तरि भुवः' इति खिष्णुच्खुकञौ नेत्युक्ता ताच्छीलिक इष्णुच् कस्मान्न भवतीत्याशङ्क्य-'हढिशब्दप्रकारास्ताच्छीलिकाः, न च रूढिशब्दा

जिष्णुः । स्थास्नुः । चाङ्गुवः । 'श्र्युकः क्किती'त्यत्र गकारप्रश्लेषान्नेट् । भूष्णुः । * **दंशेश्छन्दस्युपसङ्ख्यानम्** । दङ्क्ष्णवः पशवः । **त्रसिगृधिधृषिक्षिपेः क्नुः** ।३।२।१४०। त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः । **शमित्यष्टाभ्यो घिनुण्** ।३।२।१४१। उकार उच्चारणार्थ इति काशिका । अनुबन्ध इति भाष्यम् । तेन शमिनितरा शमिनीतरेत्यत्र 'उगितश्चे'ति ह्रस्वविकल्पः । न चैवं शमी शमिनावित्यादौ नुम्प्रसङ्गः, झल्ग्रहणमपकृष्य झलन्तानामेव तद्विधानात् । 'नोदात्तोपदेशस्ये'ति वृद्धिनिषेधः । शमी । तमी । दमी । श्रमी । भ्रमी । क्षमी । क्लमी । प्रमादी । उत्पूर्वान्मदेरलङ्कृञादिसूत्रेणेष्णुजुक्तो, वासरूपविधिना घिनुणपि । उन्मादी । 'ताच्छीलिकेषु वाऽसरूपविधिर्नास्ती'ति तु प्रायिकम् । **संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च** ।३।२।१४२। घिनुण्स्यात् । संपर्की । अनुरोधी । आयामी । आयासी । परिसारी । संसर्गी । परिदेवी । संज्वारी । परिक्षेपी । परिराटी । परिवादी । परिदाही । परिमोही । दोषी । द्वेषी । द्रोही । दोही । योगी । आक्रीडी । विवेकी । त्यागी । रागी । भागी । अतिचारी । अपचारी । आमोषी । अभ्याघाती । **वौ कषलसकत्थस्रम्भः** ।३।२।१४३। विकाषी । विलासी । विकत्थी । विस्रम्भी । **अपे च लषः** ।३।२।१४४। चाद्वौ । अपलाषी ।

त.]दिति। 'क्ङिति चे'त्यत्र गकारं प्रश्लिष्य गिति किति ङितीति व्याख्यानादिति भावः। **गकारप्रश्लेषादिति**। नन्वेवं गकारे चर्त्वस्याऽसिद्धत्वात् 'हशि चे'त्युत्वं स्यादिति चेत् । सत्यम् । सौत्रोऽयं निर्देशः । तथा च वार्तिकं—**'स्नोर्गित्वान्न स्थ ईकारः क्ङितोरीत्त्वशासनात् । गुणाऽभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं कगोरितोः'** इति। **दङ्क्ष्णव इति**। दंश दशने। 'व्रश्चे'त्यादिना षत्वे 'षढोः कः सी'ति कत्वम्।'आदेशप्रत्यययो'रिति षत्वम्।'अनिदिती'मिति नलोपो न, स्नोर्गित्त्वेन प्राप्त्यभावात्। **त्रस्नुरिति**। 'नेड्वशि' इति नेट्। **शमित्यष्टाभ्यो**। इतिशब्द आद्यर्थः । **शमिनीतरेत्यत्रेति** । अत्र नव्याः—विद्वत्तरेतिवत्तसिलादिष्विति पुंवद्भावेन शमितरेति भाव्यम् । न च उगित्त्वाभ्युपगमस्य फलाऽभावाद्ध्रस्वविकल्प एव भवतीति वाच्यं,पाक्षिकह्रस्वेन उगित्करणस्य चरितार्थत्वात्।ह्रस्वाऽभावपक्षे तु पुंवद्भावस्य दुर्वारत्वादित्याहुः। **संपृचा** । **संपर्कीति** । पृची संपर्के । 'चजो'रिति कुत्वं । गुणः। **परिदेवीति** । देवृ देवने भ्वादिः।ण्यन्तस्य दीव्यतेस्तु नेह ग्रहणं,लाक्षणिकत्वात्, अण्यन्तैः साहचर्याच्च । **अभ्याघातीति**। अभ्याङ्पूर्वाद्धन्तेर्हस्य कुत्वेन घः। 'हनस्तोऽचिण्णलोः' इति नस्य तः । 'अत उपधायाः' इति वृद्धिः । **वौ कष** । कष हिंसार्थः, लस श्लेषण-

बा.]इण्निषेधात् , अस्य च गित्त्वादित्यत आह—**श्र्युक इति**।**प्रश्लेषादिति**। चर्त्वेनेति भावः। **त्रसिगृधि** । 'तच्छीलादिषु कर्तृष्वि'ति शेषः । **त्रस्नुरिति** । 'नेड्वशी'ति नेट् । गृध्नुः धृष्णुरित्यत्र क्त्त्वान्न गुणः । **शमित्यष्टाभ्यः** । इतिशब्द आदिपर्यायः । शमादयो दिवादौ स्थिताः। तेभ्योऽष्टाभ्यो घिनुण् स्यात्तच्छीलादिष्वित्यर्थः। घित्वमुत्तरसूत्रार्थम्। 'अकर्मकेभ्य एव घिनु'णिति भाष्यम् । **शमिनितरा शमिनीतरेति** । शमिन्शब्दात्स्त्रियां नान्तलक्षणङीबन्तात्तरबन्ताट्टाप् । **ह्रस्वविकल्प इति** । भाष्यमते उगित्त्वाद्ध्रस्वः । काशिकामते तु उगित्त्वाऽभावान्न ह्रस्वः । नच ह्रस्वाऽभावे 'तसिलादिषु' इति पुंवत्त्वं शङ्क्यं, 'संज्ञापूरण्योश्चे'ति निषेधात् । ननु भाष्यरीत्या उगित्त्वाभ्युपगमे शमी शमिनौ इत्यादौ 'उगिदचा'मिति नुम् स्यादित्याशङ्क्य निराकरोति—**न चैवमिति** । **झल्ग्रहणमपकृष्येति** । 'नपुंसकस्य झलचः' इति उत्तरसूत्रादिति भावः । एतच्च प्रकृतसूत्रे, 'युवोरनाकौ' इति सूत्रे च भाष्ये स्पष्टम् । शमादिभ्यो घिनुणि उपधावृद्धिमाशङ्क्याह—**नोदात्तेति** । **प्रमादीति** । मान्तत्वाऽभावान्न वृद्धिनिषेधः । ननु उत्पूर्वान्मदेरुन्मादीति कथं घिनुण् , अलङ्कृञादिसूत्रे उत्पूर्वान्मदेर्विशिष्य इष्णुचो विधानादित्यत आह—**उत्पूर्वादित्यादिना** । ननु कथमत्र ताच्छीलिके घिनुणि वाऽसरूपविधिप्रवृत्तिः, 'ताच्छीलिकेषु वाऽसरूपविधिर्नास्ती'ति निषेधादित्यत आह—**ताच्छीलिकेष्विति**। इयं परिभाषा 'निन्दहिंसे'त्यादिवक्ष्यमाणसूत्रे ज्ञापितेति भाष्ये स्पष्टम् । **प्रायिकमिति** । एतच्च 'सूददीपदीक्षश्चे'ति दीपग्रहणादिति 'जुचङ्क्रम्यदन्द्रम्ये'ति सूत्रे भाष्ये स्पष्टम् । **संपृचानु** । संपृच, अनुरुध, आङ्यम, आङ्यस, परिसृ, संसृज, परिदेवि, संज्वर, परिक्षिप, परिरट, परिवद, परिदह, परिमुह, दुष, द्विष, द्रुह, दुह, युज, आक्रीड, विविच, त्यज, रज, भज, अतिचर, अपचर, आमुष, अभ्याहन्, एषां सप्तविंशतेर्द्वन्द्वात्पञ्चमी । **संपर्कीति** । 'चजो'रिति कुत्वम् । **अनुरोधीत्यादौ** लघूपधगुणः । अदुपधेषु उपधावृद्धिः । **परिदेवीति** । 'देवृ देवने' भ्वादिः । दीव्यतेस्तु ण्यन्तस्य न ग्रहणं, लाक्षणिकत्वात्, अण्यन्तैः साहचर्याच्च । **अभ्याघातीति** । 'हनस्तोऽचिण्णलो'रिति तत्वम् । 'हो हन्ते'रिति कुत्वम् । **वौ कषलस** । कष, लस, कत्थ, स्रम्भ् एषां द्वन्द्वात्पञ्चमी । एभ्यो घिनुण् स्यात्ताच्छील्यादिष्वित्यर्थः । **अपे च लषः** । **चाद्वाविति** । वौ उपपदेऽपीत्यर्थः । अपे वौ च उपपदे लषेर्घिनुणित्यर्थः । ताच्छील्यादि-

शे.]गतिभिर्विशेष्यन्ते' इत्युक्तम् । **नैतदिति**। छान्दसत्वमनुक्तसङ्ग्राहकत्वं चेत्यर्थः।**शमिनीतरेति**। 'सञ्ज्ञापूरण्योश्चे'ति निषेधात् पक्षे पुंवत्त्वं नेति बोध्यम् । **झल्ग्रहणमिति** । 'युवोरनाकौ' इत्यत्र भाष्ये स्फुटमेतत् । 'घिनुणकर्मकेभ्य एवे'ति भाष्यम् । घित्वं-संपर्क्यादौ कुत्वार्थम् । **रागीति** । अत्र 'रजे'ति निपातनान्नलोप' इति 'अनिदिता'मित्यत्र

विलाषी। प्रे लपसृद्रुमथवदवसः।३।२।१४५। प्रलापी। प्रसारी। प्रद्रावी। प्रमाथी। प्रवादी। प्रवासी। निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषाऽसूयो वुञ्।३।२।१४६। पञ्चम्यर्थे प्रथमा। एभ्यो वुञ् स्यात्। निन्दकः। हिंसक इत्यादि। ण्वुला सिद्धे वुञ्वचनं ज्ञापकं-'तच्छीलादिषु वाऽसरूपन्याय्येन तृजादयो ने'ति। देविक्रुशोश्चोपसर्गे।३।२।१४७। आदेवकः। आक्रोशकः। उपसर्गे किम्? देवयिता। क्रोष्टा। चलनशब्दार्थादकर्मकाद्युच्।३।२।१४८। चलनाऽर्थाच्छब्दार्थाच्च [अकर्मकात्] युच् स्यात्। चलनः। चोपनः। कम्पनः। शब्दनः। रवणः। अकर्मकात्किं? पठिता विद्याम्। अनुदात्तेतश्च हलादेः।३।२।१४९। अकर्मकाद्युच्। वर्त्तनः। वर्द्धनः। अनुदात्तेतः किम्? भविता। हलादेः किम्? एधिता। अकर्मकात्किं? वसिता वस्त्रम्। जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः।३।२।१५०। 'जु' इति सौत्रो धातुर्गतौ वेगे च। जवनः। चङ्क्रमणः। दन्द्रमणः। सरणः। पूर्वेण सिद्धे पदिग्रहणं 'लषपतपदे'त्युकञा बाधा माभूदिति। तेन 'ताच्छीलिकेषु परस्परं वासरूपविधिर्नास्ती'ति। तेनाऽलङ्कृञस्तृन्न।

---

त.] क्रीडनयोः, कत्थ श्लाघायाम्, स्रम्भु विश्वासे। अपे च लषः। लष कान्तौ। प्रे लप। रप लप व्यक्तायां वाचि। प्रमाथीति। मथे विलोडने। निन्दहिंस। इह सूत्रे विनाशेति विपूर्वस्य नशेर्ण्यन्तस्य भाविना णिलोपेन निर्देशः, अकारस्त्वागन्तुकः। केचित्तु विनाशीति ण्यन्तमेव पठन्ति। परिवादीति तु वदेर्ण्यन्तस्य पाठो निर्विवाद एव। असूयतिः कण्ड्वादियगन्तः, निन्दादीनामसूयान्तानां समाहारद्वन्द्वे सौत्रं पुंस्त्वम्। स्यादेतत्-असूयतेरेव वुञ् विधेयो नेतरेभ्यः, निन्दादीनां ण्वुलैव सिद्धेः। न हि तत्र लित्स्वरनित्स्वरयोर्विशेषोऽस्ति, उभयथाप्याद्युदात्तत्वात्। असूयतेस्तु ण्वुलि 'लिती'ति प्रत्ययात्पूर्वमुदात्तं, वुञि तु 'ञ्नित्यादिर्नित्य'मित्यादिरुदात्त इति विशेषः। तत्राह-ण्वुलेति। तृजादयो नेति। नेदं ण्वुल्विषयकमेव ज्ञापकं किंतु सामान्यतः प्रत्ययमात्रविषयकमित्यर्थः। देविक्रुशोः। दीव्यतेर्हेतुमण्ण्यन्तस्य, दिवु कूजने इति चुरादिण्यन्तस्य च ग्रहणम्। चलनशब्दार्थात्। चल कम्पने, चुप मन्दायां गतौ, कपि चलने, शब्द शब्दने चुरादिः, रु शब्दे। चलन इत्यादि। 'युवो'रित्यनादेशः। अनुदात्तेतश्च हलादेः। ननु सर्वोऽप्यनुदात्तेद्धलन्त एवेति तदन्तविधिं बाधित्वा सामर्थ्याद्धलादिरेव ग्रहीष्यते, तत्किमादिग्रहणेनेति चेत्। अत्राहुः-आदिग्रहणाऽभावे हलन्तादित्यर्थः स्यात्। तथाहि सत्येधितेत्यादावतिप्रसङ्गः स्यात्, जुगुप्सत इत्यादि च न सिध्येत्। अस्ति चेहानुदात्तेत्त्वं, गुपादिष्वचरितार्थस्याऽनुबन्धस्य समुदायविशेषकत्वादिति दिक्। जुचङ्क्रम्य। क्रमिद्रमी यङन्तौ। क्रमु पादविक्षेपे, द्रम हम्म मीमृ गतौ। पूर्वेणेति। 'अनुदात्तेतश्चे'त्यनेन। इह 'पदिग्रहणं सकर्मकार्थ'मिति वृत्तिकृतोक्तम्। भाष्ये तु अनभिधानादेव सकर्मकान्न भविष्यतीत्युक्तत्वात्। ज्ञापनार्थमेव तदित्याशयेनाह-बाधा माभूदित्यादि। परस्परमिति।

---

बा.] ष्वेव। प्रे लप। लप, सृ, द्रु, मथ, वद, वस्, एषां षण्णां द्वन्द्वात्पञ्चमी। प्रे उपपदे एभ्यो घिनुण् स्यात्ताच्छील्यादिष्वित्यर्थः। निन्दहिंस। निन्द, हिंस, क्लिश, खाद, विनाश, परिक्षिप, परिरट, परिवादि, व्याभाष, असूय एषां दशानां द्वन्द्वः। पञ्चम्यर्थे प्रथमेति। सौत्रं पुंस्त्वमेकवचनं चेति भावः। विनाशेति-विपूर्वस्य नशेर्ण्यन्तस्य भाविना णिलोपेन निर्देशः। शकारादकार उच्चारणार्थः। केचित्तु 'विनाशी'ति ण्यन्तमेव पठन्ति। परिवादीतिं-तु ण्यन्तमेव। असूयेति-कण्ड्वादियगन्तः। इत्यादीति। क्लेशकः, खादकः, विनाशकः, परिक्षेपकः, परिराटकः, परिवादकः, व्याभाषकः, असूयकः। ननु 'असूयो वु'ञिति असूयतेरेव वुञ्विधीयतां, न तु निन्दादिभ्योऽपि, तेषां ण्वुलैव सिद्धेः। लित्स्वरञित्स्वरयोस्तु नास्ति विशेषः, उभयथाप्याद्युदात्तत्वात्। असूयतेस्तु ण्वुलि 'लिती'ति प्रत्ययात्पूर्व ऊकार उदात्तः। वुञि तु 'ञ्नित्यादिर्नित्य'मिति धातोरकार उदात्त इति विशेषः। तस्मादसूयतेरेव वुञ्विधिरिति युक्तमित्यत आह-ण्वुला सिद्धे इति। तृजादयो नेतीति। तच्छीलादिषु वासरूपविधिसत्त्वे हि तद्विषये ण्वुलः सरूपतया वुञा नित्यं बाधेऽपि तृजादयः स्युः। अत्र वाऽसरूपविध्यप्रवृत्तौ तु 'तृ'न्निति सूत्रेण तच्छीलादिषु तृनि प्राप्ते वुञ्विधिरर्थवान्। अतस्तच्छीलादिषु वासरूपविधिर्न प्रवर्तत इति भावः। इदं च प्रायिकम्। तत्फलं तु उत्पूर्वान्मदेरलङ्कृञादिसूत्रेण इष्णुजुक्तो, वासरूपविधिना घिनुणपीति मूल एवानुपदमुक्तम्। देविक्रुशोः। देवीति चुरादिण्यन्तस्य, 'दिवु क्रीडा' इत्यस्य च ग्रहणम्। उपसर्गे उपपदे देवयतेः क्रुशेश्च तच्छीलादिषु वुञ् स्यादित्यर्थः। चलन। शब्दन इति। 'शब्द शब्दने' चुरादिः। शब्दनं-शब्दोच्चारणम्। धात्वर्थोपसङ्ग्रहादकर्मकः। अनुदात्तेतश्च। आदिग्रहणाऽभावे हलन्तादित्यर्थः स्यात्, ततश्च जुगुप्सन इति न स्यात्, सन्नन्तस्य हलन्तत्वाऽभावात्। अस्ति चाऽनुदात्तेत्त्वं सन्नन्तस्य, 'गुप' इत्यनुदात्तेत्त्वस्य केवले प्रयोजनाऽभावेन सन्नन्तार्थत्वात्। जुचङ्क्रम्य। जु, चङ्क्रम्य, दन्द्रम्य, सृ, गृधि, ज्वल, शुच, लष, पत पद एषां दशानां द्वन्द्वात्पञ्चमी। एभ्यस्तच्छीलादिषु युच् स्यादित्यर्थः। धातुपाठे जुधातोरदर्शनादाह-सौत्र इति। चङ्क्रमण इति। यङन्ताद्युच्। 'यस्य हलः' इति यकारलोपः, अतो लोपः। एवं दन्द्रमणः, सरणः, गर्द्धनः, ज्वलनः, शोचनः, लषणः, पतनः, पदन इत्यप्युदाहार्यम्। पूर्वेणेति। 'अनुदात्तेतश्च हलादे'रित्यनेनेत्यर्थः। तेनेति। उकञ् ह्ययं तच्छीलाधिकारस्थः। तत्र वाऽसरूपविधिनैव उकञा 'अनुदात्तेतश्च हलादे'रिति विहितस्य पदेर्युचो बाधो न

---

शे.] भाष्ये स्पष्टम्। पूर्वेणेति। सकर्मकपदेस्तु युचोऽनभिधानमिति भावः। ननु वाऽसरूपन्यायेन युजपीत्यत आह-तेनेति।

**क्रुधमण्डार्थेभ्यश्च** ।३।२।१५१। क्रोधनः । रोषणः । मण्डनः । भूषणः । **न यः** ।३।२।१५२। यकारान्ताद्युच्न स्यात् । क्नूयिता । क्ष्मायिता । **सूददीपदीक्षश्च** ।३।२।१५३। युच्न [स्यात्]। सूदिता । दीपिता । दीक्षिता । 'नमिकम्पी'ति रेण युचो बाधे सिद्धे दीपेर्ग्रहणं ज्ञापयति—'ताच्छीलिकेषु वासरूपविधिर्नास्तीति प्रायिक'मिति । तेन कम्रा कमना युवतिः । कम्प्रा कम्पना शाखा । यदि सूदेर्युच्न, कथं मधुसूदनः ? । नन्द्यादिः । **लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्** ।३।२।१५४। लाषुकः । पातुकः । इत्यादि । **जल्पभिक्षकुट्टलुण्टवृङः षाकन्** ।३।२।१५५। जल्पाकः । भिक्षाकः । कुट्टाकः। लुण्टाकः । वराकः । वराकी । **प्रजोरिनिः** ।३।२।१५६। प्रजवी । प्रजविनौ । प्रजविनः । **जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च** ।३।२।१५७। जयी । दरी । क्षयी । विश्रयी । अत्ययी । वमी । अव्यथी । अभ्यमी । परिभवी । प्रसवी ।

---

त.]निन्दादिसूत्रे हि तच्छीलादिषु वासरूपविधिना तृजादयो नेति ज्ञापितम् ,इह तु 'ताच्छीलिकेषु परस्परं ने'ति ज्ञापितमिति विवेक इति भावः।**क्रुध**।क्रुध क्रोधे, रुष रोषे,मडि भूषायाम् , भूष अलङ्कारे। **न यः**। अय वय पय मय चय तय णय गताविति पठितस्य नयतेर्नोऽयं निर्देशः,अनुदात्तेत्त्वादेव युचः सिद्धत्वात् , किंतु नेति पृथक् पदमिति मत्वाऽऽह—**यकारान्तादिति**। **क्नूयिता क्ष्मायितेति**।क्नूयी शब्दे उन्दे च, क्ष्मायी विधूनने । **सूददीप**। सूद क्षरणे, दीपी दीप्तौ, दीक्ष मौण्ड्येज्यादौ । **ताच्छीलिकेष्विति**। 'परस्पर'मिति शेषः । **प्रायिकमिति**। न केवलं यथाश्रुत[म्] भाष्यमवलम्ब्य युज्रथोरेव समावेश इति मन्तव्यं, किंतु प्रायिकत्व एव भाष्यस्य तात्पर्यम् । तेन गमेः 'लषपतपदे'त्युकञ्विषये तृन्नपि । गन्ता । गामुकः । तथा 'वौ कषलसे'ति घिनुण्विषये युजपि,—विकत्थी विकत्थन इत्यादि सिध्यतीति भावः । **जल्प** । जप जल्प व्यक्तायां वाचि, भिक्ष भिक्षायामलाभे लाभे च, कुट्ट छेदने, लुण्ट स्तेये, चौरादिकाविमौ । अत्र व्याचख्युः—जल्पेः 'चलनशब्दार्था'दिति, भिक्षेः 'अनुदात्तेतश्चे'ति युचि प्राप्ते, कुट्टलुण्टयोः 'णेश्छन्दसी'ति इष्णुचि प्राप्ते, वृङस्तु 'आदृगमहनजने'ति किकिनोः प्राप्तयोरयं विधिरिति। षो ङीषर्थ इत्याह—**वराकीति**। **प्रजवीति**। 'जु' इति सौत्रो गत्यर्थः । **जिदृक्षि** । जि जये, जि अभिभवे, दृङ् आदरे, क्षि क्षये, क्षि निवासगत्योः, श्रिञ् सेवायां विपूर्वः, व्यथ भयसंचलनयोर्नञ्पूर्वः । निपातनान्नञो धातुना समासे नलोपे ततः प्रत्ययः। अम गत्यादिषु अभिपूर्वः । **प्रसवीति** । षू प्रेरणे । अस्मादिनिः । षूङ् प्राणिगर्भविमोचने, षूङ् प्राणिप्रसवे, इमौ न गृह्येते, सानुबन्धत्वात् । 'जिदृ-

---

बा.]भविष्यतीति 'जुचङ्क्रम्ये'ति युज्विधिरनर्थकः स्यादतस्ताच्छीलिकेषु परस्परं वासरूपविधिर्नास्तीति विज्ञायते इत्यर्थः । 'निन्दहिंसे'ति सूत्रे 'तच्छीलादिषु वासरूपविधिना तृजादयो ने'ति ज्ञापितम्।इह तु 'ताच्छीलिकेषु परस्परं वासरूपविधिर्नास्ती'ति ज्ञाप्यते इति न पौनरुक्त्यम् । **तृन्नेति** । अलम्पूर्वात्कृञोऽलङ्कृञित्यादिसूत्रविहितेन तच्छीलाधिकारस्थेन इष्णुचा 'तृ'न्निति सामान्यविहितस्तच्छीलाधिकारस्थो बाध्यते इत्यर्थः। **क्रुधमण्डार्थेभ्यश्च**। 'क्रुध कोपे' 'मडि भूषायाम्' एतदर्थेभ्यो धातुभ्यो युच् स्यात्तच्छीलादिष्वित्यर्थः । **न यः** । 'य' इति पञ्चम्यन्तं धातुविशेषणं । तदन्तविधिः । तदाह—**यकारान्तादिति** । **क्नूयिता** । **क्ष्मायितेति** । 'क्नूयी शब्दे उन्दने च' 'क्ष्मायी विधूनने' । 'अनुदात्तेतश्च हलादे'रिति युच् निषिध्यते । तृनेव भवति। **सूददीप**। सूद, दीप, दीक्ष, एषां द्वन्द्वात्पञ्चमी। **युज्नेति**। शेषपूरणमिदम् । 'अनुदात्तेतश्चे'ति प्राप्तो युच् प्रतिषिध्यते । नन्विह दीपग्रहणं व्यर्थं, 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' इति विशेषविहितेन रप्रत्ययेन युचो बाधसिद्धेः । नच वाऽसरूपविधिना तद्बाधः शङ्क्यः, ताच्छीलिकेषु वासरूपविधेः प्रतिषेधादित्यत आह—**नमिकम्पीति** । **रेणेति** । रप्रत्ययेनेत्यर्थः । **प्रायिकमिति** । तथा चाऽत्र वासरूपविधिना ताच्छीलिकेनापि रप्रत्ययेन युचो बाधासंभवादिह दीपेर्युचो निषेधोऽर्थवानिति भावः । **तेनेति** । ताच्छीलिकेऽपि क्वचिद्वासरूपविधेः सत्त्वादित्यर्थः । **कम्रा कमनेति** । इच्छाशीलेत्यर्थः । अनुदात्तेतश्चे'ति युचो 'नमिकम्पी'ति रेण पक्षे बाध इति भावः । **कम्प्रा कम्पनेति** । चलनशीलेत्यर्थः । अत्रापि 'नमिकम्पी'ति रेण युचः पक्षे बाध इति भावः । आक्षिपति— **यदीति** । यदि 'सूददीपदीक्षश्चे'ति सूदेर्युच्प्रतिषिध्यते तदा 'मधुसूदन' इति कथमित्यन्वयः । समाधत्ते— **नन्द्यादिरिति** । 'सूदि'रिति शेषः । तथाच 'नन्दिग्रही'ति ल्युप्रत्यय इति भावः । **लषपत** । एभ्यो दशभ्य उकञ् स्यात्तच्छीलादिष्वर्थेषु । **इत्यादीति** । पादुकः । आतो युक् । स्थायुकः । भावुकः। वर्षुकः । घातुकः। 'हनस्तः' इति तत्वम् । 'हो हन्तेति' कुत्वम् । कामुकः । गामुकः । शारुकः । **जल्पभिक्ष** । एभ्यः पञ्चभ्यः षाकन् स्यात्तच्छीलादिष्वित्यर्थः । षनावितौ । स्त्रियां षित्त्वान्ङीष् । जल्पाक इत्यादि । **प्रजोरिनिः** । जुः सौत्रो धातुः । प्रपूर्वादस्मादिनिप्रत्ययः स्यात्तच्छीलादिष्वित्यर्थः । नकारादिकार उच्चारणार्थः । **जिदृक्षि** । जि, दृ, क्षि, विश्रि, इण् , वम, अव्यथ, अभ्यम, परिभू, प्रसू, एषां दशानां द्वन्द्वः । जि जये, जि अभिभवे, दृङ् आदरे, क्षि क्षये, क्षि निवासगत्योः, श्रिञ् सेवायां विपूर्वः । इण् गतौ । वमु उद्गिरणे । व्यथ भयसंचलनयोः—नञ्पूर्वः । निपातनान्नञो धातुना समासे 'न लोपो नञः' इति नकारलोपः । अम गत्यादिषु—अभिपूर्वः । भू सत्तायाम्—परिपूर्वः । षू प्रेरणे प्रपूर्वः । एभ्य इनिः स्यात्तच्छील-

---

शे.]'ज्ञाप्यते' इति शेषः।**क्नूयितेति**।तृन्नयम्।**शयालुरिति**।[पृ० ४५२]लुप्रत्यये प्रयोजनाऽभावाल्लस्येत्त्वाऽभावे शप्यतो

**स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्** ।३।२।१५८। आद्यास्त्रयश्चुरादावदन्ताः । स्पृहयालुः। गृहयालुः । पतयालुः । दयालुः। निद्रालुः । तत्पूर्वो द्रा । तदो नान्तत्वं निपात्यते । तन्द्रालुः। श्रद्धालुः। *शीङो वाच्यः । शयालुः। **दाधेट्सिशदसदो रुः** ।३।२।१५९। दारुः । धारुः। सेरुः । शद्रुः । सद्रुः । **सृघस्यदः क्मरच्** ।३।२।१६०। सृमरः । घस्मरः । अद्मरः । **भञ्जभासमिदो घुरच्** ।३।२।१६१। भङ्गुरः । भासुरः । मेदुरः । **विदिभिदिच्छिदेः कुरच्** ।३।२।१६२। विदुरः। भिदुरम् । छिदुरम् । **इण्नशजिसर्तिभ्यः क्वरप्** ।३।२।१६३। इत्वरः । इत्वरी । नश्वरः । जित्वरः । सृत्वरः । **गत्वरश्च** ।३।२।१६४। गमेरनुनासिकलोपोऽपि निपात्यते । गत्वरी। **जागुरूकः** ३।२।१६५। जागर्तेरूकः स्यात् । जागरूकः। **यजजपदशां यङः** ।३।२।१६६। एभ्यो यङन्तेभ्य ऊकः स्यात् । 'दशा'मिति भाविना नलोपेन निर्देशः । यायजूकः । जञ्जपूकः । दन्दशूकः । **नमिकम्पिस्म्यजसकमहिंसदीपो रः** ।३।२।१६७। नम्रः। कम्प्रः । स्मेरः। जसिर्नञ्पूर्वः क्रियासातत्ये वर्तते।

---

त.]क्षी'त्यत्रैव प्रजुं पठित्वा पूर्वसूत्रं त्यक्तुमुचितम् । एवं हि पृथग्विभक्तिश्चकारश्च मास्त्विति सुवचम् । **स्पृहि** । स्पृह ईप्सायाम्, गृहू ग्रहणे, पत गतौ । **त्रयश्चुरादाविति** । तेन णेरयादेशेन रूपसिद्धिरिति भावः। यद्येवं णिचि उपधागुणवृद्धी स्यातामत आह—**अदन्ता इति** । ततश्चाऽल्लोपस्य स्थानिवत्त्वात्तदभाव इति भावः । **तत्पूर्व इति** । तच्छब्दस्य समासोऽपि निपातनादिति बोध्यम् । डुधाञ् श्रत्पूर्वः । **श्रद्धालुः**। धेटस्तु नेदं रूपम् , श्रत्पूर्वस्य तस्य प्रयोगाऽभावादिति व्याचख्युः। ननु कथं कृपालुः स्पर्द्धालुरिति ?। कृपां स्पर्द्धां च लातीति विग्रहे मृगय्वादित्वात्कुः। **दाधेट्** । डुदाञ्दोदेङां त्रयाणामेव ग्रहणं, न तु दाण्दापोरित्याहुः । **भङ्गुर इति** । 'चजो'रिति कुत्वम् । अभिधानस्वभावाद्भञ्जेः कर्मकर्तर्येवेत्याहुः । **विदिभिदि** । विदेर्ज्ञानार्थस्यैव ग्रहणं न तु लाभार्थस्य, व्याख्यानात् । **छिदुरमिति** । कर्मकर्तरि प्रत्यय इति वृत्तिः। नैतद्भाष्ये दृष्टम् । तथा च माघो मुख्येकर्तरि प्रायुङ्क्त—'प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयाऽदुरयाचितमङ्गना'—इति । इह अदुरिति च्छेदः । **इत्वरः** । **इत्वरीति** । इण् गतौ 'ह्रस्वस्य पिती'ति तुक् । कित्त्वाद्गुणाऽभावः। 'टिड्ढे'त्यादिना स्त्रियां ङीप् । **जागुरूकः** । 'जागु'रिति पञ्चम्यन्तं । तद्व्याचष्टे—**जागर्तेरिति** । जागरूक इति सिद्धरूपमेव न तु निपातितम्, उत्तरसूत्रे ऊकस्याऽननुवृत्तिप्रसङ्गात् । **यजजप** । **यायजूक इति** । यजेर्यङि द्वित्वादि । 'दीर्घोऽकितः' इत्यभ्यासदीर्घः । अतो लोपे 'यस्य हलः' इति यलोपः । **जञ्जपूक इत्यादि** । 'जपजभदहदशे'त्यादिना नुक् । वावदूकशब्दस्तु 'उलूकादयश्चे'त्यत्र वक्ष्यते । माधवस्त्वाह—कुर्व्रादिगणे वावदूक इति पाठादेव यङन्ताद्वदे-

---

बा.]दिष्वित्यर्थः। सूतिसूयत्योस्तु सानुबन्धकत्वान्नेह ग्रहणम् । **स्पृहिगृहि** । स्पृहि, गृहि, पति, दयि, निद्रा, तन्द्रा, श्रद्धा, एभ्यः सप्तभ्य आलुच् स्यात्तच्छीलादिष्वित्यर्थः । **स्पृहयालुरिति** । स्पृहधातोरदन्तादालुच् । 'अयामन्ते'ति णेरय् णिलोपापवादः। अल्लोपस्य स्थानिवत्त्वान्न लघूपधगुणः। एवं गृहयालुः। पतयालुरित्यत्र तु अल्लोपस्य स्थानिवत्त्वान्नोपधावृद्धिः । **निद्रालुरिति** । 'द्रा कुत्सायां गतौ' निपूर्वादालुच् । **तत्पूर्वो द्रेति** । तच्छब्दपूर्वो द्राधातुस्तन्द्रेत्यनेन गृह्यत इत्यर्थः । **श्रद्धालुरिति** । 'श्र'दित्यव्ययं, तत्पूर्वाद्धाधातोरालुच् । **शीङो वाच्य इति** । 'आलु'जिति शेषः। **दाधेट्** । दा, धेट्, सि, शद्, सद् एषां द्वन्द्वात्पञ्चमी । एभ्यो रुप्रत्ययः स्यात्तच्छीलादिष्वित्यर्थः । **सृघस्यदः** । सृ, घसि, अद् एषां द्वन्द्वात्पञ्चमी । घसिः प्रकृत्यन्तरम् । **भञ्जभास** । भञ्ज, भास, मिद्, एषां द्वन्द्वात्पञ्चमी । एभ्यो घुरच् स्यात्तच्छीलादिष्वित्यर्थः । घचावितौ । **भङ्गुर इति** । 'चजो'रिति कुत्वम् । **विदिभिदि** । तच्छीलादिष्वित्येव । विदेर्ज्ञानार्थस्य ग्रहणं, नतु लाभार्थस्य, व्याख्यानादित्याहुः । **विदुर** इत्यादौ कित्त्वान्न लघूपधगुणः । **इण्नशिजि** । इण्, नशि, जि, सृ एभ्यः क्वरप् स्यात्तच्छीलादिष्वित्यर्थः । कित्त्वान्न गुणः । पित्त्वं तु तुगर्थम् । **गत्वरश्च** । **गमेरिति** । गमेः क्वरप्, अनुनासिकलोपश्च निपात्यते इत्यर्थः । झलादिप्रत्ययपरकत्वाऽभावादनुनासिकलोपस्याऽप्राप्तिः । पित्त्वात्तुक् । **गत्वरीति** । 'टिड्ढे'ति ङीप् । **जागुरूकः** । 'जागृ' इत्यस्य जागुरिति पञ्चम्यन्तं पदम् । तदाह— **जागर्तेरिति** । तच्छीलादिष्वित्येव । **जागरूक इति** । ऋकारस्य गुणः, रपरत्वम् । सिद्धरूपं तु न निपातितम्, उत्तरसूत्रे ऊक इत्यननुवृत्तिप्रसङ्गात् । **यजजपदशां यङः** । यज, जप, दश एषां त्रयाणां द्वन्द्वः । पञ्चम्यर्थे षष्ठी । तदाह—**एभ्य इति** । तच्छीलादिष्वित्येव । ननु दंशेर्नोपधत्वात्कथं दशामिति निर्देश इत्यत आह—**भाविनेति** । ऊके कृते सति भविष्यतो नलोपस्याऽत्र निर्देश इति यावत् । **यायजूक इति** । 'यस्य हलः' इति यलोपः । 'अतो लोपः' 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घः । **जञ्जपूक इति** । 'जपजभदहदशभञ्जपशां चे'त्यभ्यासस्य नुक् । एवं दन्दशूकः । **नमिकम्पि** । नमि, कम्पि, स्मि, अजस, कम, हिंस, दीप् एषां द्वन्द्वात्पञ्चम्येकवचनम् । एभ्यः सप्तभ्यो रप्रत्ययः स्यात्तच्छीलादिष्वित्यर्थः । अजसधातोर्धातुपाठेऽदर्शनादाह—**जसिर्नञ्पूर्व इति** । 'जसु मोक्षणे' अयं नञ्पूर्वः

---

शे.]दीर्घेण स्पृहयालुप्रभृतौ सिद्धे, निपातनादेव श्रच्छब्दस्य धाशब्देन समासे [अजस्राऽव्यथितन्द्रावत् ] विशिष्टात्प्रत्यये धातोर्विधानाऽभावात्सार्वधातुकत्वाऽभावाच्छप आलोपस्य चाऽभावे श्रद्धालौ च सिद्धे आलुज्विधानमन्यतोऽपि विधानार्थम्। तेनेदं सिद्धमिति स्पष्टं भाष्ये। **घस्मरे**—घसिः प्रकृत्यन्तरम्। **भङ्गुरः**—कर्मकर्तर्येव। घित्त्वात्कुत्वम्। [**भाविनेति**। तत्फलं

अजस्रम् । सततमित्यर्थः । कम्रः । हिंस्रः । दीप्रः । **सनाशंसभिक्ष उः** ।३।२।१६८। चिकीर्षुः । आशंसुः । भिक्षुः । **विन्दुरिच्छुः** ।३।२।१६९। वेत्तेर्नुम् ,इषेश्छत्वं च निपात्यते । वेत्ति तच्छीलो विन्दुः । इच्छतीति इच्छुः। **क्याच्छन्दसि** ।३।२।१७०। देवाञ्जिगाति सुम्नयुः। **आदृगमहनजनः किकिनौ लिट् च** ।३।२।१७१। आदन्ताद्दन्ताद्गमादिभ्यश्च किकिनौ स्तश्छन्दसि, तौ च लिड्वत्। बभ्रिर्वज्रम्। पपिः सोमम् । ददिर्गाः। जग्मिर्युवा [नृपदनं]। जघ्निर्वृत्रममित्रियम्। जज्ञिः।***भाषायां धाञ्कृसृगमिजनिनमिभ्यः**। दधिः। चक्रिः। सस्रिः।जग्मिः। जज्ञिः । नेमिः। ***सासहिवावहिचाचलिपापतीनामुपसङ्ख्यानम्**। यङन्तेभ्यः सहत्यादिभ्यः किकिनौ, पते-

त.]रुकप्रत्यय इति। **सनाशंस**।'स'निति प्रत्ययग्रहणात्तदन्तग्रहणम् । षणु दाने, षण संभक्ताविति धात्वोस्तु नेह ग्रहणं, गर्गादिषु विजिगीषुशब्दस्य पाठात् । **आशंसे**त्याङः शसि इच्छायामित्ययं गृह्यते, न शंसु स्तुताविति, आङा सह निर्देशात् । **विन्दुरिच्छुः** । 'विद ज्ञाने' इत्यस्यैव ग्रहणं नेतरेषाम् । एवमिषेरपि इच्छार्थकस्यैव ग्रहणं, नत्विष गतौ, इष आभीक्ष्ण्ये इत्यनयोः, अनभिधानान्निपातनाद्वेति भावः । बिन्दुशब्दस्तु पवर्गीयादिः–बिदि अवयवेऽस्मान्मृगय्वादित्वात्कुः प्रत्यये बोध्यः । **क्याच्छन्दसि** । 'क्य' इति क्यच्क्यङ्क्यषां सामान्यग्रहणम् । क्यन्ताद्धातोश्छन्दसि विषये ताच्छीलादिषु उप्रत्ययो भवतीति काशिका। किचः क्य इति व्याख्यानात्कण्ड्वादियगपि गृह्यते । तेन 'तुरण्यवोऽङ्गिरसो नक्षन्त', 'सपर्येम सपर्यवः', 'यमस्य योनौ शकुनं भुरण्यु'मित्यादि सिद्धम् । तुरण त्वरायां, सपर पूजायां, भुरण धारणपोषणयोरित्येते कण्ड्वादिषु पठिताः । अथ कथं 'सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः' इति भट्टपादाः ? । मृगय्वादिषु असूयशब्दो द्रष्टव्य इति हरदत्तः । **सुम्नयुरिति** । सुम्नशब्दात्क्यचि तदन्तादुः । 'न छन्दस्यपुत्रस्ये'ति निषेधात् 'क्यचि चे'ति ईत्वम् ,'अकृत्सार्वे'ति दीर्घश्च न भवति । **आदृग** । 'ऋदोर'बितिवदादिति दकारो मुखसुखार्थो, न त्वयं तकारः।तेन तत्परत्वाऽभावाद् इत्यनेन दीर्घोऽपि गृह्यते। ततुरिः।जगुरिः। तॄ प्लवनतरणयोरित्यस्य, गॄ निगरण इत्यस्य च 'बहुलं छन्दसी'त्युत्वे रूपमिति प्राञ्चः । वस्तुतस्तु आदित्यादि प्रकृतिविशेषणम्।उदाहरणं प्रपञ्चमात्रम् । किकिनौ लिट्चेत्येतावन्मात्रमेव विवक्षितम् । तथाच वार्तिकं–'किकिनावुत्सर्गश्छन्दसि सदादिभ्यो दर्शना'दिति । उदाहृतं च भाष्ये–सेदिर्नेमिरित्यादि । एवं स्थिते आदिति तपरकरणेऽपि न क्षतिरिति ध्वनयन्नाह–**आदन्ताद्दन्तादिति** । **बभ्रिर्वज्रमिति**। 'न लोके'ति षष्ठीनिषेधाद्द्वितीया।किकिनोः स्थाने तिबादयो न, 'लिड्व'दित्यतिदेशेन स्वरूपाऽबाधेनैव कार्यातिदेशात्। छान्दससूत्रद्वयोपन्यसनं **भाषायां धाञि**त्यादिवार्तिकविषयविवेचनार्थम् । इह च वार्तिके गमिर्यद्यपि न दृश्यते तथापि धातुवृत्तौ, क्वचिद्वृत्तिपुस्तके च दर्शनादुपन्यस्तः । **जग्मिरिति** । 'गमहनजने'त्युपधालोपः । **जज्ञिरिति** । 'अभ्यासाच्चे'ति कुत्वम् । **दधिरिति** । आतो लोपः । **नेमिरिति** । एत्वाभ्यासलोपौ । **सासहीत्यादि** । यङोऽतोलोपे

बा.]शक्तिस्वभावात् क्रियासातत्ये वर्तते इत्यर्थः। निपातनाद्धातुना नञः समासे 'नलोपो नञः' इति नलोपः।**सनाशंस** । सन् , आशंस, भिक्ष् एषां त्रयाणां द्वन्द्वात्पञ्चम्येकवचनम् । 'स'निति सन्प्रत्ययान्तं गृह्यते । 'षणु दाने','षण संभक्तौ' इत्यनयोस्तु न ग्रहणं, गर्गादिषु विजिगीषुशब्दपाठाल्लिङ्गात् । एभ्य उप्रत्ययः स्यात्तच्छीलादिष्वित्यर्थः । **आशंसुरिति** । 'आङः शसि इच्छाया'मित्यस्मादुः। **विन्दुरिच्छुः**। **वेत्तेरिति**। 'विद ज्ञाने' इत्यस्यादुप्रत्यये प्रकृतेर्नुमागमः।इषु इच्छायामित्यस्मादुप्रत्यये षकारस्य छत्वं च निपात्यते इत्यर्थः । **वेत्तीति** । धातुप्रदर्शनम् । **तच्छील इति** । वेदनशील इत्यर्थः। **इच्छतीति** । 'इषु इच्छाया'मिति धातुप्रदर्शनम्। **इच्छुरिति** । एषणशील इत्यर्थः। **क्याच्छन्दसि** । क्यप्रत्ययान्तादुप्रत्ययः स्यात्तच्छीलादिषु छन्दसीत्यर्थः।**सुम्नयुरिति**।**सुम्नं**–सुखम् । तदात्मन इच्छतीत्यर्थे सुम्नशब्दात् क्यच्। 'न च्छन्दस्यपुत्रस्ये'ति निषेधात् 'क्यचि चे'ति ईत्वम्,'अकृत्सार्वे'ति दीर्घश्च न। 'सुम्नये'ति क्यजन्तादुप्रत्ययः। अतो लोपः।**आदृगम**।आत्, ॠ,गम, हन, जन्, एषां द्वन्द्वात्पञ्चमी।कि किन् अनयोर्द्वन्द्वः।लिट् चेति व्याचष्टे–**तौ च लिड्वदिति** । तच्छीलादिष्वित्येव । **पपिरिति** । पाधातोः किः। द्वित्वादि, आल्लोपः । **ददिरिति** । दाधातोः किः। द्वित्वादि । **बभ्रिर्वज्रमिति** । भृञः किः, द्वित्वादि । **जघ्निरिति** । हनः किः। द्वित्वादि । 'गमहने'त्युपधालोपः । 'हो हन्ते'रिति कुत्वम् । **जज्ञिरिति** । जनेः किः। द्वित्वादि । एवं किन्यपि बोध्यम् । स्वरे विशेषः । छान्दसमप्येतत्सूत्रद्वयं **भाषाया**मित्यादिवक्ष्यमाणवार्तिकविवेचनाय इहोपन्यस्तम् । **भाषायामिति**। वार्तिकमिदम्। धाञ्, कृ, सृ, गमि, जनि, नमि एभ्यः षड्भ्यः किकिनौ, तौ च लिड्वदिति वक्तव्यमित्यर्थः । **दधिरित्यादि** । किकिनोः कृतयोर्द्वित्वादि यथासंभवं ज्ञेयम् । **नेमिरिति** । नमेः किः । द्वित्वम् । एत्वाभ्यासलोपौ । **सासहीति** । सहेर्यङि द्वित्वादौ 'दीर्घोऽकितः' इति दीर्घे, किकिनोः कृतयोः 'यस्य हलः' इति यकारलोपे, अतो लोपे 'सासही'ति निर्देशः । एवं वहेः चलेः पतेश्च यङन्तस्य किकिनन्तस्य निर्देशः । एषां निपातनस्य उपसङ्ख्यानमित्यर्थः। तदाह–**यङन्तेभ्यः सहत्या-**

शे.]दंशेर्यङ्लुगन्तान्न ऊकः]। **अजस्रमिति** । निपातनाद्धातुना समासे कृते रः।**आदृग** । अत्र 'क्याच्छन्दसि' इत्यतः छन्दसीत्यनुवर्तते । अत्र एव 'भाषायां धाञ्कृसृ' इति वार्तिके भाषाग्रहणं चरितार्थम् । आदिति दकारः, तेन ॠग्रहणेन

नींगभावश्च निपात्यते । **स्वपितृषोर्नजिङ्** ।३।२।१७२। स्वप्नक् । तृष्णक् । तृष्णजौ । तृष्णजः । 'धृषेश्चेति वाच्य'मिति काशिकादौ । धृष्णक् । **शॄवन्द्योरारुः** ।३।२।१७३। शरारुः । [वन्दारुः] । **भियः क्रुक्लुकनौ** ।३।२।१७४। भीरुः । भीलुकः । * **क्रुकन्नपि वाच्यः** । भीरुकः । **स्थेशभासपिसकसो वरच्** ।३।२।१७५। स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः । **यश्च यङः** ।३।२।१७६। यातेर्यङन्ताद्वरच् स्यात् । 'अतो लोपः' । [तस्य 'अचः परस्मि'न्निति स्थानिवद्भावे प्राप्ते पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत् ]। तस्य यलोपं प्रति स्थानिवद्भावनिषेधात् 'लोपो व्यो'रिति यलोपः । अल्लोपस्य स्थानिवत्त्वमाश्रित्य आतो लोपे प्राप्ते।वरे लुप्तं न स्थानिवत्। यायावरः।**भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्** ।३।२।१७७।विभ्राट्।भाः।भासौ।धूः। धुरौ।विद्युत्।ऊर्क्। पूः पुरौ। दृशिग्रहणस्याऽपकर्षाज्जवतेर्दीर्घः।जूः। जुवौ जुवः। ग्रावशब्दस्य धातुना समासः सूत्रे निपात्यते।ततः क्विप्। ग्रावस्तुत्।**अन्येभ्योऽपि दृश्यते**।३।२।१७८।क्विप्।छित्। भित्। दृशिग्रहणं विध्यन्तरोपसङ्ग्रहार्थम् । क्वचिद्दीर्घः।क्वचित्सम्प्रसारणम्। क्वचिद्द्वे। क्वचिद्ध्रस्वः। तथा च वार्तिकं-

---

त.]यलोपः । अभ्यासदीर्घः। **नीगभावश्चेति**। 'नीग्वञ्चु' इत्यादिना प्राप्तस्य नीगागमस्याऽभाव इत्यर्थः। **तृष्णगिति** । ङित्त्वान्न गुणः । नजिङ इकार उच्चारणार्थः । **क्रुकन्नपीति** । अतएव' भीलुभीलुकभीरुकाः' इत्यमरः । **ईश्वर इति** । 'नेड्वशी'तीडभावः । **पेस्वर इति** । पिसृ पेसृ गतौ । **कस्वर इति** । कस गतौ । **भ्राज** । 'आ क्वे'रित्युक्तत्वात्तच्छीलादिष्वयं क्विप् । भ्राजृ दीप्तौ, भासृ दीप्तौ, धुर्वी हिंसायां, द्युत दीप्तौ, ऊर्ज बलप्राणनयोः, पॄ पालनपूरणयोः, जु गतौ सौत्रः । ग्रावपूर्वः-ष्टुञ् स्तुतौ । **विभ्राडिति** । 'व्रश्चे'ति षत्वम् । जश्त्वचर्त्वे । **धूरिति** । 'राल्लोपः' इति वलोपः । 'र्वोरुपधायाः' इति दीर्घः। **ऊर्गिति** । 'चोः कुः' । 'रात्सस्ये'ति नियमान्न संयोगान्तलोपः । **पूरिति** । 'उदोष्ठ्यपूर्व-

---

बा.]स्य इति। **नीगभाव इति**।'नीग्वञ्चु' इति प्राप्तस्य नीगागमस्याऽभाव इत्यर्थः। **स्वपितृषोर्नजिङ्**। पञ्चम्यर्थे षष्ठी । स्वपेर्नजिङ् स्यात्तच्छीलादिष्वित्यर्थः । जकारादिकार उच्चारणार्थः। ङकार इत् । **स्वप्नगिति** । स्वपनशील इत्यर्थः । स्वप्नजौ स्वप्नजः। एवं **तृष्णक्**। तर्षणशील-इत्यर्थः। **धृषेश्चेति**। 'नजि'ङिति शेषः । **काशिकादाविति**। भाष्ये तु न दृश्यते इति भावः । **शॄवन्द्योरारुः** । पञ्चम्यर्थे षष्ठी । 'शॄ हिंसायां' 'वदि अभिवादनस्तुत्योः' । आभ्याम् आरुप्रत्ययः स्यात्तच्छीलादिष्वित्यर्थः । **भियः** । भीधातोः क्रु क्रुकन् एतौ स्तच्छीलादिष्वित्यर्थः । क्त्त्वान्न गुणः । **स्थेश** । 'ष्ठा गतिनिवृत्तौ, ईश ऐश्वर्ये, भासृ दीप्तौ, पिसृ पेसृ गतौ, कस गतौ, एभ्यो वरच् स्यात्तच्छीलादिष्वित्यर्थः । **ईश्वरीति** तु पुंयोगे ङीष् । **यश्च यङः** । 'या प्रापणे' इत्यस्य धातोरनुकरणस्य या इत्यस्य 'यः' इति षष्ठ्यन्तम् । तदाह-**यातेरिति** । याधातोर्यङ् । द्वित्वादि। 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घः। 'यायाये'ति यङन्ताद्वरचि विशेषमाह-**अतो लोप इति**। हलः परत्वाऽभावात् 'यस्य हलः' इति यकारलोपो न ।'यायाय्-वर' इति स्थिते आह-**लोपो व्योरिति यकारलोप इति**। ननु अतो लोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वादकारेण व्यवधानाद्वलपरत्वाऽभावात्कथमिह यलोप इत्यत आह-**तस्येति**। तस्य=अल्लोपस्य यलोपे कर्तव्ये 'न पदान्ते'ति स्थानिवत्त्वनिषेधादित्यर्थः। एवंच यङोऽकारस्य यकारस्य च लोपे यायावर इत्यत्र 'आतो लोप इटि चे'त्याल्लोपमाशङ्क्य निराकरोति-**अल्लोपस्येति**। यङकारलोपस्य 'अचः परस्मि'न्निति स्थानिवत्त्वमाश्रित्य तदकारात्मकार्द्धधातुकपरत्वादाकारस्य 'आतो लोप इटि चे'त्याल्लोपे प्राप्ते सति परिहार उच्यते इत्यर्थः। परिहारमेवाह-**वरे लुप्तं न स्थानिवदिति** । 'लुप्त'मिति भावे क्तः । 'न पदान्ते'ति सूत्रे 'वरे' इत्यनेन वरे परे विहितं न स्थानिवदिति लभ्यते । अल्लोपोऽयमार्द्धधातुके वरे परे विहितः। अतस्तस्य स्थानिवत्त्वाऽभावान्न यङोऽकारमाश्रित्य 'आतो लोप इटि चे'त्यस्य प्रवृत्तिरित्यर्थः । एवंच 'न पदान्ते'ति सूत्रे 'वरे' इत्यंशस्य, 'यलोपे' इत्यंशस्य च यायावर इत्युदाहरणमिति बोध्यम् । **भ्राजभास** । भ्राज, भास, धुर्वि, द्युत, ऊर्जि, पॄ, जु, ग्रावस्तु, एभ्योऽष्टभ्यः क्विप्स्यात्तच्छीलादिषु कर्तृष्वित्यर्थः । **विभ्राडिति** । 'व्रश्चे'ति षः । **भा इति**। भासेः क्विपि सकारान्तस्य रुत्वविसर्गौ । **धूरिति** । धुर्वीधातोः क्विप् । 'राल्लोपः' इति वकारस्य लोपः । 'धु'रिति रेफान्तम् । सुलोपः । 'र्वोरुपधायाः' इति दीर्घः । **पूरिति** । पॄधातोः क्विप् । 'उदोष्ठ्ये'त्युत्त्वम् , रपरत्वम् । 'पु'रिति रेफान्तम् , सुलोपे 'र्वो'रिति दीर्घः । जुधातोः क्विपि दीर्घं साधयितुमाह-**दृशिग्रहणस्यापकर्षादिति**। उत्तरसूत्रादिति भावः। अत्र व्याख्यानमेव शरणम् । ननु 'ग्रावस्तु' इति कथं समस्तनिर्देशः, सुबन्तस्य ग्रावशब्दस्य धातुना समासाऽसंभवादित्यत आह-**ग्रावशब्दस्येति** । **ग्रावस्तुदिति** । पित्त्वात्तुक् । **अन्येभ्योऽपि** । **क्विबिति** । शेषपूरणमिदम् । 'भ्राजभासे'त्यादिसूत्रोपात्तापेक्षया अन्येभ्योऽपि धातुभ्यस्तच्छीलादिषु कर्तृषु क्विप् दृश्यते इत्यर्थः । **विध्यन्तरेति** । विधीयते इति विधिः = कार्यं । कार्यान्तरोपसङ्ग्रहार्थमित्यर्थः। तदेव दर्शयति-**क्वचिद्दीर्घ इत्यादि** ।

---

शे.]दीर्घान्तस्यापि ग्रहणं-तॄ गॄ दॄ इत्यादेः।स्वरूपाऽबाधेनातिदेशप्रवृत्तेस्तिबादयो न ।लिङ्वदित्यस्य लिडादेशतिङ्वदित्यर्थः। 'असंयोगा'दित्येव कित्त्वे सिद्धे पुनः कित्त्वं 'जगुरिः' 'तत्नरि'रित्यादौ 'ऋच्छत्यॄता'मिति गुणनिषेधार्थम् । **काशिकेति** । भाष्ये तु नेत्यर्थः । **ईश्वर इति** । 'ईश्वरी'ति पुंयोगे । **विभ्राडिति** । 'व्रश्चे'ति षत्वम् । **धूरिति** ।

***क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च** । 'क्विब्वची'त्यादिना उणादिसूत्रेण केषां-चित्सिद्धे तच्छीलादौ तृना बाधा मा भूदिति वार्तिके ग्रहणम्। वक्तीति वाक्।पृच्छतीति प्राट्। आयतं स्तौतीति आयतस्तूः। कटं प्रवते कटप्रूः। जूः—उक्तः। श्रयति हरिं श्रीः। *** द्युतिगमिजुहोतीनां द्वे च** । दशिग्रहणा-दभ्याससंज्ञा। दिद्युत्। जगत्। *** जुहोतेर्दीर्घश्च** । जुहूः। दृ भये। अस्य ह्रस्वश्च। दीर्यतेति दद्रत्। ***ध्यायतेः संप्रसारणं च** । धीः। **भुवः संज्ञान्तरयोः** ।३।२।१७९। मित्रभूर्नाम कश्चित्। धनिकाऽधमर्णयो-रन्तरे यस्तिष्ठति विश्वासार्थं स-प्रतिभूः। **विप्रसंभ्यो ड्वसंज्ञायाम्** ।३।२।१८०। एभ्यो भुवो डुः स्यान्न तु संज्ञायाम्। विभुर्व्यापकः। प्रभुः स्वामी। संभुर्जनिता। संज्ञायां तु विभूर्नाम कश्चित्। *** मितद्र्वादिभ्य**

त.]स्ये'त्युलम्। 'वॉ'रिति दीर्घः। **वाक् प्राडिति** । इह दीर्घः, संप्रसारणाऽभावश्च। संप्रसारणप्राप्तिस्तु 'वचिस्वपि' 'ग्रहिज्यावयी'त्यादिना। **श्रयति हरिं श्रीरिति** । प्राचा तु श्रयन्त्येतामिति कर्मणि क्विबुदाहृतः। तत्र 'कर्तरि कृ'दिति सूत्रविरोधः स्पष्ट एव। बाहुलकं तु अगतिकगतिः। **द्वे चेति** । कृतेऽपि द्वित्वे अभ्याससंज्ञेह दुर्लभा, प्रत्यासत्त्या षाष्ठद्वित्व एव प्रवृत्तेः, अत एव आष्टमिके सा नेत्याशङ्कायामाह—**दशिग्रहणादिति** । **दिद्युदिति**। 'द्युतिस्वाप्यो'रित्य-भ्यासस्य संप्रसारणम्। **जगदिति** । 'गमः क्वौ' इति मलोपे तुक्। अत्र 'द्वे च'ेति चकारेण दीर्घः समुच्चीयमानो द्युति-गम्योर्न भवति,दीर्घश्रुत्या 'अचश्चे'ति परिभाषोपस्थानात्।अजन्तस्य जुहोतेरेव संभवतीत्याशयेनाह—**जुहोतेर्दीर्घश्चेति**। जुहोतीति जुहूः।**ह्रस्वश्चेति**। चकारेण द्वित्वं समुच्चीयते। **धीरिति**। ध्यायतीति धीः। 'हलः' इति दीर्घः। ननु ध्यायति पुरुषो न तु धीः, एवं जुहोत्यनया पुरुष इति सर्वसंमतत्वात् कथं तर्हि भवदुक्तार्थः सङ्गच्छत इति चेत्। अत्राह हर-दत्तः—करणस्य कर्तृत्वविवक्षायां क्विब् भवति। **भुवः संज्ञा** । **धनिकेत्यादि** । तेन प्रमयोरन्तरे यस्तिष्ठति तत्र नेति भावः। एतच्च दशिग्रहणाऽनुवृत्त्या लभ्यते। नन्वेवं प्रतिभूशब्दः संज्ञेति फलितं, तत्र 'संज्ञाया'मित्येव सिद्धं किमन्तरग्रहणेन ?। अत्राहुः—यावद्द्रव्यभाविन्यः संज्ञाः। प्रतिभूशब्दस्तु सत्येव तस्मिन् ऋणप्रदानेन निवर्तत इत्युभयो-र्भेद इति। शं सुखं भावयतीति शम्भुरित्यर्थाभ्युपगमेनाह—**अन्तर्भावितेति** । शं भवति=सुखस्वरूपो भवतीति शम्भुरित्यन्ये। शं भवत्यस्मादिति व्युत्पत्तिस्तु अपादाने डुप्रत्ययाऽभावाचिन्त्येति माधवः। **घः कर्मणि** । कर्मणीति

बा.]**क्विब्वचीत्यादिनेति** । 'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं चे'त्यौणादिकसूत्रेणेत्यर्थः। **तृना बाधा मा भूदिति** । वासरूपविधिस्तु ताच्छीलिकेषु नेति भावः। **वागिति** । वचधातोः क्विप्, वचनादुपधाया दीर्घः, 'वचिस्वपी'ति संप्रसारणाऽभावश्च। एवं **कटप्रूरित्यत्र** दीर्घः। **प्राडिति** । वचनान्न संप्रसारणम्। **जुरुक्त इति** । 'भ्राजभासे'त्यत्रे'ति शेषः। अतोऽत्र तद्ग्रहणं मास्त्विति भावः। **श्रीरिति** । श्रिञः क्विपि दीर्घः। **द्युतीति** । 'द्युतिगमिजुहोत्यादिनां द्वित्वं क्विप्चे'ति वाच्यमित्यर्थः। 'पूर्वोऽभ्यासः' इत्यत्र षाष्ठद्विर्वचन एव पूर्वखण्डस्याऽभ्याससंज्ञा-वचनादाह—**दशिग्रहणादिति** । 'अन्येभ्योऽपि दृश्यते' इत्यत्रेत्यर्थः। ततश्चाऽभ्यासकार्यं हलादिशेषादीति भावः। **दिद्युदिति** । 'द्युतिस्वाप्यो'रिति संप्रसारणम्। **जगदिति**। गमेः क्विप् 'गमः क्वौ' इति मलोपे तुक्। **जुहोतेर्दीर्घ-श्चेति** । वार्तिकमिदम्। चात्क्विब्द्वित्वे। **ह्रस्वश्चेति** । वार्तिकमिदम्। **दद्रदिति** । ह्रस्वे कृते तुक्। **ध्यायते-रिति** । वार्तिकमिदम्। चात्क्विप्। **धीरिति** । ध्यैधातोः क्विपि संप्रसारणे पूर्वरूपे 'हलः' इति दीर्घ इति भावः। अत्र 'ध्यायतेः संप्रसारणं चे'त्युणादिषु पठितत्वादिदं वार्तिकं माऽस्त्वित्याहुः। वस्तुतस्तु उणादिसूत्राणि न पाणिनीयानि किन्तु ऋष्यन्तरप्रणीतानीति वक्ष्यते अतो न पौनरुक्त्यशङ्का। **भुवः संज्ञान्तरयोः** 'क्वि'बिति शेषः। 'संज्ञान्तरयोरे-वे'ति नियमार्थं सूत्रम्। संज्ञायामुदाहरति—**मित्रभूर्नामेति** । अन्तरे उदाहरति—**धनिकेत्यादि** । यावद्द्रव्यभाविन्यः संज्ञाः। प्रतिभूशब्दस्तु सत्येव पुरुषे कदाचिन्न भवति, ऋणे प्रतिदत्ते सति प्रातिभाव्यस्य निवृत्तेः।**विप्रसंभ्यः**। 'डु-अ-संज्ञाया'मिति छेदः। **विभुरिति** । डित्त्वसामर्थ्यादभस्यापि टेर्लोपः। **सम्भुरिति** । संभवति उत्पादयतीति सम्भुः। तदाह-**जनितेति** । **मितद्र्वादिभ्य इति** । मितद्र्वादिसिद्ध्यर्थं डुप्रत्ययस्य उपसङ्ख्यानमित्यर्थः। **शम्भुरिति** ।

शे.]'राल्लोपः' इति वलोपः। **तत्रेति** । वासरूपविधिस्तु ताच्छीलिकेषु निषिद्ध इति भावः। **दीर्घोऽसंप्रसारणं चेति** । अत्रा'ऽसंप्रसारणं चे'ति दीर्घवचनसामर्थ्यलब्धार्थानुवादः। तथा हि प्रत्ययसन्नियोगेन विधानादन्तरङ्गतया दीर्घत्वे कृते संप्रसारणे पूर्वत्वे च कृते 'लक्ष्ये लक्षणस्ये'ति पुनर्दीर्घोऽप्रवृत्तेर्वचिप्रच्छ्योस्तद्विधानमनर्थकं स्यात्। अन्यथा [आभ्यां ?] क्विपः सूत्रेण सिद्धेस्तयोस्तत्र ग्रहणं व्यर्थमेव स्यादिति स्पष्टं भाष्ये। एतद्भाष्यप्रामाण्यादेव 'लक्ष्ये लक्षणस्ये'ति न्याये विकारकृतलक्ष्यभेदानाश्रयणमित्याहुः। **तृनेति** । वासरूपविधिस्तु ताच्छीलिकेषु निषिद्ध इति भावः। **वार्तिके इति** । 'अन्येभ्योऽपि दृश्यते' इति सूत्रमप्येवमेवेति बोध्यम्। वस्तुत उणादिसूत्राण्यपाणिनी-यानीत्यनुपदं निरूपयिष्यामः। **दिद्युदिति**। 'द्युतिस्वाप्यो'रिति संप्रसारणम्। **जगदिति** । 'गमः क्वौ' इति मलोपे तुक्। **दीर्यतीति** । 'दीर्यतेर्ना दद्द'दिति भाष्यादिवादावप्ययमिति भावः। **भुवः सञ्ज्ञा** । इदं 'संज्ञान्तरयोः क्विबे-

उपसङ्ख्यानम्। मितं द्रवतीति मितद्रुः[समुद्रः। शतद्रुः]।शम्भुः।अन्तर्भावितण्यर्थोऽत्र भवतिः।**घः कर्मणि ष्ट्रन्** ।३।२।१८१। धेटो धाञश्च कर्मण्यर्थे ष्ट्रन् स्यात्। 'धात्री जनन्यामलकीवसुमत्युपमातृषु' ।**दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे** ।३।२।१८२। दाबादेः ष्ट्रन् स्यात्करणेऽर्थे। दान्त्यनेन दात्रम्। नेत्रम्। **तितुत्रतथसिसुसरकसेषु च** ।७।२।९। एषां दशानां कृत्प्रत्ययानामिण्न स्यात्। शस्त्रम्। योत्रम्। योक्त्रम्। स्तोत्रम्। तोत्त्रम्। सेत्रम्। सेक्त्रम्। मेढ्रम्। पत्त्रम्। दंष्ट्रा। नद्ध्री। **हलसूकरयोः पुवः** ।३।२।१८३। पूङ्-पूञोः करणे ष्ट्रन् स्यात्,तच्चेत्करणं हलसूकरयोरवयवः। हलस्य सूकरस्य वा पोत्रम्। मुखमित्यर्थः। **अर्तिलूधूसूखनसहचर इत्रः**।३।२।१८४।अरित्रम्। लवित्रम्। धुवित्रम्। [घवित्रम्]।सवित्रम्। खनित्रम्।सहित्रम्। चरित्रम्। **पुवः संज्ञायाम्** ।३।२।१८५। पवित्रं।-येनाज्यमुत्पूयते, यच्चाऽनामिकावेष्टनम्। **कर्तरि चर्षिदेवतयोः** ।३।२।१८६। पुव इत्रः स्यादृषौ करणे, देवतायां कर्तरि। ऋषिर्वेदमन्त्रः, 'तदुक्तमृषिणे'ति दर्शनात्। पूयतेऽनेनेति पवित्रम्। देवतायां तु-'अग्निः पवित्रं स मा पुनातु'। इति **पूर्वकृदन्तम्।**

---

त.]नोपपदम्, 'ह्वावामश्चे'त्यनन्तरमेव 'धः ष्ट्र'न्निति वक्तव्ये पृथक्कर्मग्रहणाद्व्याख्यानाद्वेत्याशयेनाह-**कर्मण्यर्थे इति**। अतएव धीयते पीयत इति धात्री=स्तनदायिनीत्यादि व्याचक्षते। **दाम्नी। मेढ्रमिति**। 'हो ढः'। घलष्टुत्वढलोपाः। **दंष्ट्रेति**। षित्त्वेऽपि ङीषिह न भवति, 'अनित्यः षितां ङी'षित्युक्तत्वात्। अन्ये लजादिपाठाट्टापमाहुः। **नद्ध्रीति**। 'नहो धः' इति धत्वम्।'झषस्तथोर्धोऽधः' इति जश्त्वम्।सूत्रे 'दशे'ति नलोपिनो निर्देशो ज्ञापकः-'क्वचिदकित्यपि दंशेर्नलोपो भवती'ति।तेन दंश दशने इत्यस्माल्ल्युटि 'दशना दन्ता' इति सिद्धम्।न च सन्निधानात् ष्ट्रन्येव नलोपः स्यादिति वाच्यम्,'शुनो दन्तदंष्ट्रे'ति निर्देशात्। **तच्चेत्करणमित्यादि**।एतेन हलसूकरयोरभिधेयत्वमुपपदत्वं च निरस्तम्।**मुखमित्यर्थ इति**। तत्रैव रूढेरिति भावः। **अर्तिलूधूसू।** धू विधूनने इति कुटादिरेव गृह्यते, निरनुबन्धकत्वात्। अतएव 'गाङ्कुटे'ति ङित्वाद्गुणनिषेधे उवङ्। तदाह-**धुवित्रमिति। पुवः।** पूङ्पूञोरुभयोर्ग्रहणमविशेषात्। करण इत्यनुवृत्तेराह-**येनाज्यमिति। कर्तरि चर्षि। इत्रः स्यादिति**। करणे कर्तरि चेत्यर्थः। काशिकानुसारेण यथासङ्ख्यं व्याचष्टे-**ऋषौ करणे इति**। 'कर्तरि कृ'दिति सूत्रस्थभाष्यकैयटयोस्तु यथासङ्ख्यं नेति गम्यत इति शब्दकौस्तुभे स्थितम्। **इति पूर्वकृदन्तम्** ॥*॥

---

बा.]**शं**=सुखं, **भवति**=उत्पादयतीत्यर्थः। तदेवोपपादयति-**अन्तर्भावितेति। घः कर्मणि ष्ट्रन्**। धेटः कृतात्वस्य धाञश्च ध इति पञ्चम्यन्तम्। तदाह-**धेट इत्यादि**। षकारात्तकारस्य ष्टुत्वसंपन्नटकारेण निर्देशः, षस्य इत्संज्ञायां लोपे सति ष्टुत्वसंपन्नस्य टस्य निवृत्तिः। तदाह-**धात्रीत्यादि। दाम्नी।** दाप्, नी, शस, यु, युज, स्तु, तुद, सि, सिच, मिह, पत, दश, नह, एषां त्रयोदशानां द्वन्द्वः। 'दाप् लवने' इत्यस्य पकारस्य स्थाने 'यरोऽनु' इति कृतमकारस्य निर्देशः। अत्र शसेः पतेश्च त्रप्रत्यये इटमाशङ्क्याऽऽह-**तितुत्रत**। ति, तु, त्र, त, थ, सि, सु, सर, क, स एषां दशानां द्वन्द्वः। अत्र 'सरे'त्येकम्। **ति,**-तन्तिः। 'स्त्रियां'मिति क्तिन्। **तु,**-सक्तुः। 'तनिगमी'त्यादिना 'तु'प्रत्ययः। **त्र,**-शस्त्रम्, पत्त्रम्। 'दाम्नी'ति त्रप्रत्ययः। **त,**-हस्तः। औणादिकस्तप्रत्ययः। क्तप्रत्यये तु हसितमित्येव। **थ**-कुष्ठम्। औणादिकः क्थप्रत्ययः। **सि**-कुक्षिः। कुषेरौणादिकः क्सिप्रत्ययः। **सु**-इक्षुः। इषेरौणादिकः क्सुप्रत्ययः। **सर,**-अक्षरम्। अशेः सरन्। **क**-शल्कः। शलेः कः। **स**-वत्सः। 'वदेः सः'। **मेढ्रमिति**। 'मिह सेचने' त्रः। ढत्वधत्वष्टुत्वढलोपाः। **दंष्ट्रेति**। दंशधातोस्त्रः। ङित्प्रत्ययाऽभावान्नलोपो न। सूत्रे दशेति शपा निर्देशात् 'दंशसञ्जे'ति नलोपः। केचित्तु दशेरयकार उच्चारणार्थः। नलोपनिर्देशात्क्वचिदन्यस्मिन्नपि प्रत्यये अङ्कित्यपि नलोप इति 'दशना दन्ताः' इत्याहुः। **नद्ध्रीति**। नह्यते अनयेति विग्रहः। चर्मरज्जुः। 'नह बन्धने' त्रः। 'नहो धः' 'झषस्तथो'रिति तस्य धः। षित्त्वान्ङीष्। **हलसूकरयोः पुवः। पोत्रमिति**। 'तितुत्रतथसिसुसरे'ति नेट्। **अर्तिलूधू।** अर्ति, लू, धू, सू, खन, सह, चर एषां सप्तानां द्वन्द्वात्पञ्चमी। **पुवः संज्ञायाम्।** 'इत्र' इति शेषः। करणे इत्येव। **पवित्रमिति**। पूयते अनेनाऽऽज्यमिति विग्रहः। तदाह-**येनाज्यमिति**।पूयते आचमनोदकादिकमनेनेति विग्रहं मत्वाऽऽह-**यच्चानामिकेति। अनामिका**-उपकनिष्ठिकाङ्गुलिः। **कर्तरि च। पवित्रमिति**। पावमान्यादिसूक्तम्। **अग्निः पवित्रमिति**। पुनातीत्यर्थः। सामान्याभिप्रायमेकवचनं,नपुंसकत्वं च। **इति पूर्वकृदन्तम्** ॥*॥

---

शे.]वे'ति नियमार्थम्। विपरीतनियमस्तु न, विधेयसङ्कोचापत्तेः। **मितद्रुरिति**। क्विपि तुक् स्यात्, 'मितद्रवः' इत्यत्र चोवङ् स्यात्। **धेटो धाञश्चेति**।प्रयोगेषु द्वयोर[प्य]र्थनिर्देशादिति भावः। अत्र कर्मणीति नोपपदं,व्याख्यानात्। **दाम्नी**। दशेति शपा निर्देशः,'दंशसञ्जे'ति नलोपः। **दंष्ट्रायामजादित्वाट्टाप्। नद्ध्रीति**। 'नहो धः'। षित्वान्ङीष्। 'करणे' इति नोपपदं, व्याख्यानात्। **वृत्तिरीत्या** यथासङ्ख्यमभिप्रेत्याह-**ऋषौ करणे इति**। एवमन्वये द्वन्द्वस्याऽसाधुत्वापत्त्योभयान्वय इति 'कर्त्तरि कृदि'ति सूत्रस्थभाष्यस्वरसः। **पवित्रमिति**। पावमान्यादिसूक्तमित्यर्थः। **इति पूर्वकृदन्तम्** ॥*॥

## अथ उणादिप्रकरणम् ।

### अथ प्रथमपादः ।

१ । कृवापाजिमिस्वदिसाध्यशूभ्य उण् । करोतीति कारुः शिल्पी कारकश्च । 'आतो युक्' ।

त.] अथोणादयः । कृवापा । डुकृञ् करणे, वा गतिगन्धनयोः, पा पाने, पा रक्षणे, जि अभिभवे, डुमिञ् प्रक्षेपणे, स्वद आस्वादने, साध संसिद्धौ, अशू व्याप्तौ । 'विश्वकर्मणि ना कारुस्त्रिषु कारकशिल्पिनोः' इति मेदिनीकोशः । 'कारुः शिल्पिनि कारके' इति धरणिकोशस्तदेतदभिप्रेत्याह—कारुरित्यादि । आद्ये योगरूढिर्द्वितीये तु

बा.] अथ कृवापाजीत्यादीन्युणादिसूत्राणि मूले प्रौढमनोरमायां च स्फुटं व्याख्यातानि । अथाप्यस्माभिरपि अनतिविस्तरेण व्याख्यायन्ते । तानि चेमानि सूत्राणि शाकटायनमुनिप्रणीतानि नतु पाणिनिना प्रणीतानीति, 'उणादयो बहुल'मिति सूत्रे भाष्ये 'नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोक'मिति वार्तिकव्याख्यावसरेऽभिहितम् । उणादीनां शास्त्रान्तरपठितानां साधुत्वाभ्यनुज्ञानार्थं बहुलग्रहणमिति कैयटः । नह्येषां पाणिनीयत्वे शास्त्रान्तरशब्दो युज्यते । उणादिप्रत्ययान्ताः शब्दाः पाणिनिमतेऽव्युत्पन्ना एव । अत एव 'आयनेयी'ति सूत्रे 'प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्धम्, उणादयो ह्यव्युत्पन्नानि प्रातिपदिकानी'ति भाष्ये उक्तम् । अत एव च 'आदेशप्रत्यययो'रिति सूत्रभाष्ये 'उणादयो ह्यव्युत्पन्नानि प्रातिपदिकानी'त्युक्त्वा 'तर्हि सर्पिषा यजुषेत्यादौ अप्रत्ययत्वात्षत्वाऽभावमाशङ्क्य, बहुलग्रहणात्प्रत्ययसंज्ञामवलम्ब्य षत्वं साधितम्, व्युत्पत्तिपक्षश्च निराकृतः । अतोऽप्युणादिसूत्राणां न पाणिनीयत्वम् । अत एव 'अजेर्व्यघञपोः' इति सूत्रभाष्ये अजधातोर्युप्रत्यये प्रकृतेर्वीभावे वायुशब्दो व्युत्पादितः । उणादिसूत्राणां पाणिनीयत्वे हि 'कृवापाजी'त्युणादिसूत्रेणोण्प्रत्ययमाश्रित्यैव व्युत्पाद्येत । एवं च क्वचिद्भाष्ये उणादीनां व्युत्पन्नत्वाश्रयणं शास्त्रान्तरमूलकमेवेति शब्देन्दुशेखरे प्रपञ्चितम् । तथा च 'क्विब्वची'त्युणादिसूत्राणां, तथाविधवार्तिकानां च न पौनरुक्त्यशङ्का । अथोणादयः । कृवापाजि । डु कृञ् करणे, वा गतिगन्धनयोः, पा पाने, जि

शे.] अथोणादयः । प्राय उणादिसूत्रप्रत्ययान्ता रूढिशब्दा अवयवार्थशून्या असन्तमप्यवयवार्थमाश्रित्य व्युत्पाद्यन्ते । तत्रापि प्रायः कर्तरि । बाहुलकादन्यत्रापीति बोध्यम् । तत्रापि प्रायो वर्तमानकाल एवेति 'भूते' इति सूत्रे भाष्ये । तत्र हि 'नन्दि हन एध चे'त्युणादिसूत्रविहिताऽसिप्रत्ययान्ताऽनेहस्शब्दो वर्तमानकाल एव । अन्यत्र अनाद्यन्तेत्युक्तं, तृच्ण्वुलोर्वर्तमानकाले एव साधुतया 'ण्वुल्तृचौ' इतिसूत्रे भाष्ये उक्तत्वेनेदं भाष्यमेकदेश्युक्तिः । अत्र वदन्ति-'कृवेत्यादिसूत्राणि 'सर्वं नाम धातुज'मिति नैरुक्तमतानुसारिशाकटायनादिप्रणीतव्याकरणान्तरादभियुक्तैः सङ्गृहीतानि । अत एव 'उणादयः' इति सूत्रे 'बहुलवचनं किमर्थ'मिति प्रतीकमुपादाय 'उणादय इत्येवोणादीनां शास्त्रान्तरपठितानां साधुत्वाऽभ्यनुज्ञानार्थमस्त्विति भावः' इति कैयटेनोक्तम् । न ह्येषां पाणिनीयत्वे शास्त्रान्तरशब्दप्रयोगो युज्यते । अत एव 'अमेर्गुरिश्च लो वा' इत्युणादिसूत्रैर्बोधितसाधुत्वानामप्यङ्गुलिलोमगुञ्जादीनां साधुत्वाय रस्य लत्वार्थं 'कृपो रो लः' इति सूत्रे वचनमारब्धं वार्तिककृता । 'बाहुलकं प्रकृतेस्तनुदृष्टेः प्रायसमुच्चयनादपि तेषां । कार्यसशेषविधेश्च तदुक्तं नैगमरूढिभवं हि सुसाधु' इति बहुलग्रहणप्रयोजनमुक्तम् । शास्त्रान्तरे तन्वीभ्यः प्रकृतिभ्य उणादयो दृश्यन्ते, प्रत्यया अपि प्रायेण समुच्चिता, न सर्वे, तथा कार्याण्यपि सशेषाणि कृतानि अतो बाहुलकमुक्तम् । ननु यावदुक्तमेव प्रकृतिप्रत्ययकार्यमस्तु किं बाहुलकग्रहणेनेत्यत्रोक्तं—नैगमेत्यादि । वैदिकानां, रूढानां सञ्ज्ञाशब्दानाञ्च सर्वेषां प्रातिस्विकरूपेण साधुत्वबोधनस्याऽशक्यत्वाच्छास्त्रान्तरे प्रायसमुच्चयनादि कृतम् । तेषां साधुत्वाभ्यनुज्ञानाय चाऽनेनाऽऽचार्येण बहुलग्रहणं कृतम् । तेनात्र व्याकरणे सर्वेषां सङ्ग्रहादसन्दिग्धं साधुत्वं बोधितम् । पाणिनिशास्त्रबोधितानामेवेदानीं साधुत्वात् । ननु के ते वैयाकरणा यैर्नैगमरूढिभवानां प्रकृतिप्रत्ययविभागेन व्युत्पादनं कृतम् ?, तत्रोक्तं वार्तिककृता—नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकमिति । निरुक्ते=नैरुक्तव्याकरणे शाकटायनश्च सर्वं नाम धातुजमाहेति,—ते व्युत्पन्नत्ववादिनः । एवं च पाणिनिर्नैतद्व्युत्पन्नत्ववादीति स्पष्टमेवोक्तम् । ननु यत्रावयवार्थानुगमो नास्ति तत्र कथं व्युत्पादनं शक्यमत उक्तं—'यन्न विशेषपदार्थसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्य'मिति । अवयवार्थज्ञानपूर्वकं न यत्र समुदायार्थप्रतीतिः शास्त्रज्ञानामित्यर्थः । उक्तप्रत्ययसादृश्यं दृष्ट्वा तदितरो भागः प्रकृतित्वेन कल्प्यः, उक्तप्रकृतिसादृश्यं दृष्ट्वा तदितरः प्रत्ययत्वेन कल्प्यः । नैवं सर्वत्रोहः कार्यः किंतु साधुत्वेनाभिमतासु सञ्ज्ञास्वेवेत्युक्तम्—'सञ्ज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे । कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु' । इति । एतदुपलक्षणं कार्यान्तराणामपि । तदुक्तं 'कार्यसशेषविधेश्चे'ति । अनेन भाष्यवार्तिकसमूहेन 'उणादयो बहुल'मिति व्याकरणान्तरव्यवस्थापकमिति स्पष्टमेवोक्तम् । उणाद्यन्ता ये शास्त्रान्तरे व्युत्पादिताः शब्दास्तत्र बहुलमिति वक्तव्यं, वर्तमानाधिकारे च ते वक्तव्याः भूतेपीति वक्तव्यमिति सूत्रार्थश्च सूचितः । स्वशास्त्रे तेषां साधुत्वबोधनं चैतावतैव कृतम् । पाणिनेस्तु तेष्वव्युत्पत्तिपक्ष एवाभिमतः । तदुक्तम्—'आयनेयी'ति सूत्रे भाष्ये—'प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्ध'मिति ।

वातीति वायुः । पायुर्गुद[स्थान]म् । जयत्यभिभवति रोगान् जायुरौषधम् । मिनोति प्रक्षिपति देहे ऊष्माण-

---

त.] योगमात्रमिति विवेकः। अतएव द्वितीये धात्वर्थं प्रति कारकान्वयो भवत्येव। तथा च भट्टिः–'राघवस्य ततः कार्यं कारुर्वानरपुङ्गवः। सर्ववानरसेनानामाश्वागमनमादिश'दिति । पिबत्यनेन तैलादिकमिति पायुर्गुदस्थानम्। 'गुदं त्वपानं पायुर्ना' इत्यमरः। पाति रक्षतीति विग्रहे रक्षकोऽपि। तथा च मन्त्रः 'भुवस्तस्य स्वतवाँः पायुरग्ने' इति। 'स्वतवान् पायौ' इति नस्य रुत्वम्। 'अगदो जायुरित्यपि' इत्यमरः। पुंलिङ्गसाहचर्याज्जायुः पुंसि। 'मायुः पित्तं कफः श्लेष्मा' इत्य-

---

बा.] अभिभवे, डु मिञ् प्रक्षेपणे, स्वद आस्वादने, साध संसिद्धौ, अशू व्याप्तौ, एषां द्वन्द्वात्पञ्चमी। एभ्य उण्प्रत्ययः स्यात्कर्त्रर्थ इत्यर्थः। **कारुरिति**। कर्तरि उणि 'अचो ञ्णिती'त्यनेन वृद्धौ च रूपम्। 'विश्वकर्मणि ना कारुस्त्रिषु कारकशिल्पिनोः' इति मेदिनी। वाधातोरुण्प्रत्यये युग्विधिं स्मारयति—**आतो युगिति**। **पायुर्गुदस्थानमिति**। उणि 'आतो यु'गिति भावः। 'गुदं त्वपानं पायुर्ना' इत्यमरः। 'पा रक्षणे' इत्यस्मादुणि तु रक्षकोऽप्यभिधीयते। **जायुरिति**। उणि वृद्धौ आयादेशे रूपम्। 'अगदो जायु'रित्यमरकोशः। डु मिञ्प्रक्षेपणे इत्यस्मादुणि वृद्धिं बाधित्वा 'मीनातिमिनोती'त्यादिना आत्वे 'आतो युक्चिण्कृतो'रिति युकि रूपम्। 'मायुः पित्तं कफः श्लेष्मा' इत्य-

---

शे.] तत्र 'पाणिने'रित्युक्त्या तस्याऽव्युत्पन्नान्युणादयः प्रातिपदिकानीति सूचितम्। 'सर्पिषा' 'यजुषा' इत्यादौ षत्वं बहुलग्रहणादेव। अत एव 'आदेशप्रत्यययो'रिति सूत्रे 'कृसरः' 'वर्सं' 'तर्स'मित्यादौ व्याकरणान्तरे सरक्-सादिप्रत्ययोक्तेः षत्वमाशङ्क्य सिद्धान्तिना–'उणादयोऽव्युत्पन्नानी'त्युक्तम्। ततः शङ्कित्रा येषां सर्पिरादीनां 'सर्पिरि'त्यादौ रुत्वानुरोधेन सान्तानां 'सर्पिषा' इत्यादौ षत्वं दृश्यते तादृशेषु षत्वविषयोदाहरणेष्वव्युत्पत्तिपक्षाश्रयणं न शक्यं कर्तुम्, सर्पिषेत्यादौ षत्वानापत्तेरिति शङ्किते, सिद्धान्तिनोक्तम् 'एवन्तर्हि बहुलवचनात्सिद्धं, बहुलं प्रत्ययसञ्ज्ञा भवती'त्युक्तम्। बहुलमित्युक्तेरव्युत्पन्नत्वेऽपि प्रत्ययसञ्ज्ञानिमित्तं कार्यं भवति। व्युत्पन्नत्वे च कार्यविशेषे प्रत्ययत्वं, कार्यविशेषे तदभाव इति 'वर्स'मित्यादावङ्गत्वप्रयुक्तगुणस्य, षत्वाऽभावस्य च सिद्धिरिति तदर्थः। एवञ्च 'अयामन्ते'ति सूत्रे इत्न्वादीनां ग्रहणं, 'न्यङ्क्वादीनां चे'ति सूत्रे उणादिव्युत्पन्नन्यङ्क्वादिग्रहणञ्च व्याकरणान्तरस्थ-प्रत्ययानुवादेन तदनुमतिपरम्। 'अनेहा वर्तमानकाल एवे'ति 'भूते' इति सूत्रस्थं भाष्यं व्युत्पत्तिवादिव्याकरणान्तररीत्या। अव्युत्पन्नत्ववादिपाणिनिमते तु न तदिति बोद्धव्यम्। एवन्तृचश्चकाराऽभावे मात्रादिशब्दे दीर्घापादनादिपरं 'ण्वुल्तृचौ' इति सूत्रस्थभाष्यमपि तद्रीत्यैव। अत एव 'मातयति इत्यादाविष्ठवद्भावात् 'तुरिष्ठेमेयःसु' इतिलोपो न, उणादीनामव्युत्पन्नत्वा'दिति 'र ऋत' इति सूत्रे कैयटः। अत एव 'अयामन्ते'ति सूत्रे भाष्यं—'किमयं क्नुः, आहोस्वित् इत्नुः ?। कश्चात्र विशेषः ?। क्नाविटि णेर्गुणवचनम्। तत्र णेर्गुणो वक्तव्यः—स्तनयित्नुः, गदयित्नुः। अस्तु तर्हि इत्नुः। प्रत्ययान्तरं कर्तव्यम्, अयादेशे चोपसंख्यानम्। उभयं क्रियते न्यास एवे'ति। अस्यार्थः–'अयामन्ते'ति सूत्रं नाऽपूर्वाऽयादेशविधायकं किन्तु 'एचोयवायावः' इत्येतद्विहितानुवादकं, लाघवात्। तत्फलन्तु णिलोपाऽभावबोधनम्। तत्र किमन्तादिवद्व्याकरणान्तरविहितः क्नुरेव कृतेडागमोऽत्र सूत्रे निर्दिष्टः, अथ ततोऽन्य इत्नुः प्रत्ययान्तरमिति प्रश्नः। **क्नाविटीति**। तस्येडादित्वाण्णिलोपाऽभावे कित्त्वाद्गुणाऽभावेनास्या-नुवादत्वाऽसम्भवेनाऽपूर्वस्य विधानेनं गुण एव विधेयो व्याकरणान्तरवत्। अन्यथाऽस्य सूत्रस्यान्तांशेऽनुवादत्वमेतदंशे विधित्वमिति वैरूप्यापत्तिरिति भावः। **इत्नुः प्रत्ययान्तरमिति**। व्याकरणान्तरेऽस्याऽसत्त्वादपूर्वप्रत्ययस्वरूपं कल्प्यम्। **अयादेशे चेति**। अयादेशविषये 'ढकि लोपः' इति सूत्रे निमित्तत्वाश्रयणेन पितृष्वसुर्ढगुपसङ्ख्यानवत् ण्यन्तेभ्यो यथाप्रयोगं निमित्तत्वाश्रयण-मूलकमुपसङ्ख्यानं कर्त्तव्यमित्यर्थः। आनुमानिकं वचनमेवात्रोपसंख्यानपदेनोच्यते। 'सूत्रपाठ एवोपसङ्ख्यानमत्रोच्यते' इति कैयटोक्तं तु न युक्तम्, क्नुग्रहणेऽप्यत्र सूत्रे, गुणविधायके वा तत्पाठस्यावश्यकत्वेनाऽत्र पक्ष एव विशिष्य तदुक्तौ बीजाऽलाभात्। मम तु तत्पक्षे व्याकरणान्तरे विहितस्य स्वानुमतत्वानुमानमात्रं न तु धर्मिणः कल्पनेति नैतदुक्तिः। **उभयङ्क्रियते इति**। इत्नुः प्रत्ययान्तरं, तस्य च निमित्तत्वबोधनद्वारा ण्यन्तेभ्यो विधानानुमानरूपमुपसङ्ख्यानं चेत्यर्थः। एवञ्चाऽस्य सूत्रस्यैकरूपतया-ऽयादेशानुवादकत्वसिद्धिरिति लाघवमिति भावः। एतेन—यद्यत्र क्नुग्रहणमयादेशार्थं क्रियते स्तन्यादिभ्यश्च क्नुरेव, तदा स्यादेव लाघवमिति कैयटोक्तमपास्तम्। तत्तदिष्टस्वरविशिष्टानामेवाऽन्तादीनामनुवादात्स्वरविशेषोऽपि नास्ति। एवञ्च 'स्तनिहृषी'ति सूत्रं व्याकरणान्तरस्य-उणादिसूत्रेषु प्रक्षिप्तमिति बोद्धव्यम्। अन्यथा बहुलग्रहणात्क्वचिदन्यदेवेत्यर्थकात्कार्यान्तरवदेषामपि कार्याणां सिद्धौ तवाप्येतद्वैयर्थ्यं स्पष्टमेव। एतेन 'क्विब्वची'त्युणादिसूत्रेण सिद्धे क्विब्वचीत्यादिवार्त्तिकं तच्छीलादौ तृना बाधा मा भूदि-त्येतदर्थमित्यपास्तम्। तेषां पाणिनीयत्वाऽभावात्। अत एव 'अजेर्वी'ति सूत्रे 'वा लिटी'त्यतो वाग्रहणमनुवर्त्य व्यवस्थितविभाषा-मुक्त्वा 'न तर्हीदानीं 'वायौ' इति वक्तव्यम् ?। वक्तव्यश्च। किं प्रयोजनम् ?। नेयं विभाषा किं तर्ह्यादेशो विधीयते, वा इत्या-देशो भवति अजेर्यौ परतः, वायुः' इति भाष्योक्तं सङ्गच्छते। अन्यथा 'कृवापाजी'त्युणादिसूत्रेण वायोः सिद्ध्या तस्याऽकर्तव्य-तामेव वदेत्। युश्चानेनैवानुमेयः, उपसङ्ख्याने अनुनासिकयण्त्वाऽभावादनो न। न च कैयटोक्तरीत्या 'यजिमनी'ति बाहुल-

मिति मायुः पित्तम् । स्वादुः । साध्नोति परकार्यं साधुः । अश्नुते आशु शीघ्रम् । 'आशुर्व्रीहिः पाटलः स्यात्' । २ । छन्दसीणः । 'मा न आयौ' । ३ । दृसनिजनिचरिचटिभ्यो ञुण् । दीर्यत इति दारु । 'स्नुः प्रस्थः सानुरस्त्रियाम्' । जानु । जानुनी । इह 'जनिवध्योश्चे'ति न निषेधः, अनुबन्धद्वयसामर्थ्यात् । चारु रम्यम् । 'चाटु

त.]मरः । गोपूर्वाद्गां वाचं विकृतां मिनोति प्रक्षिपतीति गोमायुः शृगाल इत्युज्ज्वलदत्तः । वस्तुतस्तु मायुः शब्दः, 'यत्पशुर्मायुमकृत' 'गोमायुरेकोऽजमायुरेकः' इत्यादौ वेदभाष्यकारादिभिस्तथैव व्याख्यातत्वात् । स्वदते रोचते इति स्वादुः । विशेष्यनिघ्नोऽयम् । एवं साधुरपि । **आशु शीघ्रमिति** । विलम्बाऽभावमात्रे क्लीबं, तद्विशिष्टद्रव्यपरत्वे तु त्रिलिङ्गम् । 'अथ शीघ्रं त्वरित'मित्युपक्रम्य 'क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां सत्त्वगामि य'दित्यमरः । व्रीहौ पुंस्येव । 'उणादयो बहुल'मिति बहुलवचनादन्यस्मादप्युण्भवति । रहँ त्यागे । गृहीत्वा चन्द्रं रहति त्यजतीति राहुः । वस निवासे । वसत्यस्मिन्सर्वमिति, सर्वत्रासौ वसतीति वा वासुः । वासुश्चासौ देवश्च वासुदेवः । वसुदेवस्यापत्यमित्यस्मिन्नर्थे 'ऋष्यन्धकवृष्णिकुरुभ्यश्चे'त्यणि कृते वासुदेव इति व्युत्पत्त्यन्तरमिति दिक् । **छन्दसीणः** । उणनुवर्तते । एति गच्छतीत्यायुः । **मा न आयौ इति** । आयुशब्दो मनुष्यपर्यायेषु वैदिकनिघण्टौ पठितः । अत एव 'त्वामग्ने प्रथममायुमायवे' 'मा नस्तोके तनये मा न आयौ' इत्यादिमन्त्रेषु वेदभाष्ये तथैव व्याख्यातम् । अर्वाचीनास्तु 'छन्दसीणः' इति सूत्रं बहुलवचनाद्भाषायामपि प्रवर्तत इति स्वीकृत्य 'आयुर्जीवितकालो ना' इत्यमरग्रन्थे आयुशब्दमुकारान्तं व्याचख्युः । ननु 'एतेर्णिच्चे'त्युस्प्रत्यये सकारान्तो वक्ष्यमाण आयुःशब्दस्तु लोकवेदयोर्निर्विवाद एव, अतएव जटा आयुरस्येति विग्रहे 'गृध्रं हत्वा जटायुष'मिति रामायणप्रयोगः, 'यदि त्रिलोकी गणनापरा स्यात्तस्याः समाप्तिर्यदि नायुषः स्या'दिति श्रीहर्षप्रयोगश्च सङ्गच्छते । तथा च 'आयुर्जीवितकालो ना' इत्यत्रायुःशब्दः सकारान्त इत्येव व्याख्यायतां किमुकारान्ताभ्युपगमेनेति चेत् । अत्राहुः—सकारान्त आयुःशब्दो नपुंसक इति तस्य पुँल्लिङ्गता नेत्याशयेन तथोक्तमिति । अन्ये तु 'छन्दसीणः' इति सूत्रस्य भाषायां प्रवृत्त्यभावे 'मा वधीष्ट जटायुं मा'मिति भट्टिप्रयोगः, 'तटीं विन्ध्यस्याऽद्रेरभजत जटायोः प्रथमजः' इति विन्ध्यवर्णने अभिनन्दोक्तप्रयोगश्च न सङ्गच्छेतेत्याहुः । वस्तुतस्तु जटां याति प्राप्नोतीति जटायुः । मृगय्वादित्वात्कुः । आयातीत्यायुः । एवं च 'जटायुषा जटायुं च विद्यादायुं तथायुषा' इति द्विरूपकोशः, 'वायुना जगदायुना' इति वर्णविवेकश्च सुसाध इति दिक् । **दृसनि** । दॄ विदारणे, षणु दाने, जन जनने, चर गतौ, चट भेदने । **दार्विति** । 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः । **चाट्विति** । 'चटु चाटु प्रियं वाक्य'मिति

बा.]मरः । **स्वादुरिति** । स्वदते रोचते इति स्वादुः पटः । विशेष्यनिघ्नोऽयम् । स्वादु फलमित्यादि बोध्यम् । साध्नोति परकार्यमित्यर्थे कर्तरि उण् । **आशु शीघ्रमिति** । विलम्बाऽभावमात्रपरत्वे क्लीबम् । तद्विशिष्टद्रव्यपरत्वे तु त्रिलिङ्गमिति बोध्यम् । 'उणादयो बहुल'मिति बहुलवचनाल्लक्ष्यानुसारेण व्यवस्था । रह त्याग इत्यस्मादुणि उपधावृद्धौ राहुरिति भवति । एवं वस निवास इत्यस्मादुण् । वसत्यस्मिन्सर्वमिति वासुः । वासुश्चासौ देवश्च वासुदेवः । यद्यपि वसुदेवस्यापत्यमित्यर्थे 'ऋष्यन्धकवृष्णिकुरुभ्यश्चे'त्यणि वासुदेव इति रूपं सिद्धं तथापि तद्व्युत्पत्त्यन्तरमिति भावः ।

**छन्दसीणः** । उणित्यनुवर्तते । इणगतावित्यस्माद्धातोश्छन्दसि उण् भवतीत्यर्थः । एति गच्छतीत्यायुः । पुंलिङ्गोऽयम् । **दृसनिजनि** । दॄ विदारणे, षणु दाने, जन जनने, चर गतौ, चट भेदने एषां द्वन्द्वात्पञ्चमी । **दार्विति** । 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः । 'अचो ञ्णिती'ति वृद्धिः । सानुः प्रस्थः । अस्मिन्नर्थे कोशं प्रमाणयति—**स्नुः प्रस्थः सानुरस्त्रियामिति** । जनधातोर्ञुणि रूपमाह—**जानु इति** । 'अत उपधायाः' इत्यनेनोपधावृद्धिरिति भावः । ननु यदुक्तम्—'अत उपधाया वृद्धौ जानु इति रूप'मिति, तदसङ्गतं, 'जनिवध्योश्चे'त्यनेनाऽनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति चेत्यर्थकेन वृद्धिनिषेधादित्याशङ्क्याह—**अनुबन्धद्वयसामर्थ्यादिति** । एकैनैवानुबन्धेनाऽन्यत्र वृद्धौ अत्र निषेधे च सिद्धे द्व्यनुबन्धकरणमत्रापि वृद्धिर्भवितव्येति ज्ञापनार्थमिति बोध्यम् । चरधातो-

शे.]कायुचि 'अव्युः' इति रूपवारणार्थं तत् । न्यायं तत्तदभावेन तद्रूपापत्त्यभावात् । मम तु तेषामपाणिनीयत्वात्पाणिनिशास्त्रे तदारम्भोऽयुक्तः । यत्तु 'विप्रतिषेध'सूत्रे 'येनविधिः' इति सूत्रे च बहिरङ्गपरिभाषायां स्योनः स्योना इत्युदाहृतं, तद्व्याकरणान्तररीत्यैव । तत्र हि बाहुलकादौणादिको 'न'प्रत्ययः । यथा विप्रतिषेधसूत्रेऽन्तरङ्गपरिभाषाया अन्तरङ्गत्वाद्यणादेशे 'वैयाकरणः' इत्यादौ इकारोकारयोर्वृद्धिप्रसङ्गे इयुवौ' इति व्याकरणान्तरलक्षणविहितयोरियुवोरप्राप्तिरूपो दोषः शङ्कितः, 'प्रैयमेधः' इत्यत्र तयोर्वारणायाऽचीत्यस्यावश्यकत्वेन अनैवकाशत्वेन समाधानमुक्तम् । यदपि कर्मवत्सूत्रे 'किमिदन्तप इति ? । तपेरयमौणादिकोऽस्कारो भावसाधनः' इत्युक्तं, तदपि परीत्या योगप्रदर्शनेनैव स्वमते तदर्थं तच्छब्दस्य रूढिद्योतनायेति न तद्विरोधः । एवमन्यदप्येवंजातीयकं व्याख्येयमिति सुधियो विभावयन्तु । **अनुबन्धद्वयेति** । स्वरार्थं तित्वमेवास्त्विति भावः ।

प्रियं वाक्यम् । मृगय्वादित्वात्कुप्रत्यये चटु इत्यपि । ४ । **किञ्जरयोः श्रिणः** । किं शृणोतीति किंशारुः सस्यशूकं बाणश्च । जरामेति जरायुर्गर्भाशयः । 'गर्भाशयो जरायुः स्यात्' । ५ । **त्रो रश्च लः** । तरन्त्यनेन वर्णा इति तालु । ६ । **कृके वचः कश्च** । कृकेन = गलेन वक्तीति कृकवाकुः । 'कृकवाकुर्मयूरे च सरटे चरणायुधे' इति विश्वः । ७ । **भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः** । भरति बिभर्ति वा भरुः स्वामी हरश्च । म्रियन्तेऽस्मिन् भूतानि मरुर्निर्जलदेशः । शेते शयुरजगरः । तरुर्वृक्षः । चरन्ति भक्षयन्ति देवता इममिति चरुः । त्सरुः खड्गादिमुष्टिः । तनु स्वल्पम् । 'स्त्रियां मूर्तिस्तनुस्तनूः' । धनुः शस्त्रविशेषः । 'धनुषा च धनुं विदुः' । 'धनुरिवाऽजनि वक्र' इति श्रीहर्षः । मयुः किंनरः । 'मद्गुः पानीयकाकिके'ति रभसः । न्यङ्क्वादित्वात्कुत्वम् । जश्त्वेन सस्य दः । ८ । **अणश्च** । लवलेशकणाऽणवः । चात्कटिवटिभ्याम् । कटुः । वटुः । ९ । **धान्ये नित्** । धान्ये वाच्येऽण उप्रत्ययः स्यात् स च नित् । नित्त्वादाद्युदात्तः । 'प्रियङ्गवश्च मेऽणवश्च मे' ।

---

**त.]** हृद्यचन्द्रः । 'चाटुर्नरि प्रियोक्तिः स्यात्' इति रत्नमालाकोशः । नरि=पुंसि । 'चकार च बहु चाटून् प्रौढयोषिद्वदस्य' इति माघः । माघे तु नपुंसकमपि दर्शितम् । 'चाटु चाऽकृतकसंभ्रममासा'मिति । **किंजरयोः** । शॄ हिंसायाम्, इण् गतौ, आभ्यामुण् स्यात् । **सस्येति** । 'किंशारुर्ना सस्यशूके विशिखे कङ्कपक्षिणि' इति मेदिनीकोशः । **त्रो रश्च लः** । तॄ प्लवनतरणयोः । त्रः रश्चेति च्छेदः । केचित्तु 'तॄ' 'ॠ' इति प्रश्लिष्य द्वयोरपि सवर्णदीर्घे त्रौ, तयोस्त्रोरित्युक्त्वा ॠ गतावित्यस्मादपि ञुण् रस्य ल इति व्याख्याय इयर्ति अर्यते वा आलुः शाकविशेषो, घटी चेत्याहुः । 'कर्कर्यालुर्गलन्तिका' । **भृमृशी** । भृञ् भरणे, मृङ् प्राणत्यागे, शीङ् स्वप्ने, तॄ प्लवनतरणयोः, चर गतौ, अयं भक्षणेऽपि, त्सर छद्मगतौ, तनु विस्तारे, धन धान्ये, डुमिञ् प्रक्षेपणे, टुमस्जो शुद्धौ । **भरुरिति** । 'भरुः स्वर्णे हरे पुंसि' इति मेदिनी । 'भरुर्भर्तृकनकयोः' इति हेमचन्द्रः । **शयुरिति** । 'अजगरे शयुर्वाहस इत्युभौ' इत्यमरः । **तरुरिति** । तरन्ति नरकमनेन रोपकाः । **चरुरिति** । अनवस्रावितान्तरूष्मपक्व ओदन इति याज्ञिकाः । तृषद्वर्चर्वधिकरणेऽप्येवमुक्तम् । 'उगवादिभ्यो य'दिति सूत्रे कैयटस्त्वाह—स्थालीवाची चरुशब्दस्तात्स्थ्यादोदने भाक्त इति । 'तनुः काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे' इति मेदिनी । 'धनुः पुमान् प्रियालद्रौ राशिभेदे शरासने' इति नान्ते मेदिनी । विश्वप्रकाशमुदाहरति—**धनुषा चेत्यादि** । धनुषा सार्धं धनुं विदुरित्यर्थः । 'स्यात्तनुस्तनुषा सार्धं'मित्यतः सार्धमित्यनुषज्यते । 'शुद्धवंशजनितोऽपि गुणस्य स्थानतामनुभवन्नपि शक्रः । क्षिप्नुरेनमृजुमाशु सपक्षं सायक'मिति श्रीहर्षश्लोकशेषः । 'धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यती'ति धन्वन्तरिः । इह पूर्वत्र च धनुरिति उकारान्तः सकारान्तो वा बोध्यः । न च सकारान्तधनुःशब्दो नपुंसक एवेति शङ्क्यम् । 'अथाऽस्त्रियाम्', 'धनुश्चापौ' इत्यमरोक्त्या तस्यापि पुंस्त्वात् । **किंनर इति** । 'तुरंगवदनो मयुः' इत्यमरः । 'मीनातिमिनोती'त्यात्वं तु नेह, बाहुलकात् । 'मयुस्तुरंगवदनो मृगेऽपि मयुरिष्यते' इति विश्वः । मजति पानीये इति मद्गुः । **अणश्च** । अण शब्दे अस्मादुप्रत्ययः स्यात् । **चादिति** । कटे वर्षादौ, वट वेष्टने । कटति रसनामिति कटुः । 'कटुः स्त्री कटुरोहिण्यां लताराजिकयोरपि । नपुंसकमकार्ये स्यात्पुंलिङ्गो रसमात्रके । त्रिषु तद्वत्सुगन्ध्योश्च मत्सरेऽपि स्वरेऽपि च' इति मेदिनी । **वटुरिति** । वटतीति वटुः । 'वटुर्द्विजसुतः स्मृतः' इति संसारावर्तः । नटवटुरिति तूपचारात् । **अभिव्याप्येति** ।

---

**बा.]** ञुणि उपधावृद्धौ चारु इति रूपम् । नपुंसकलिङ्गोऽयम् । **चाटु इति** । ननु उपधावृद्धेर्नित्यत्वाच्चाटु इत्येव भाव्यं नतु चटु इति, प्रयुञ्जते तु कवयः कथमित्याशङ्कायामाह—**मृगय्वादित्वादिति** । **किंजरयोः श्रिणः** । किं जर एतयोः शॄ इण् आभ्यां ञुण् स्यात् । यथासङ्ख्यमन्वयः । किमि शॄधातोर्ञुण्युदाहरति—**किंशारुरिति** । **सस्यशूकमिति** । 'किंशारुर्ना सस्यशूके विशिखे कङ्कपक्षिणि' इति मेदिनी । **त्रो रश्च लः** । त्रः र इति छेदः । तॄ प्लवनतरणयोरित्यस्माञ्ञुण्स्यात्, रेफस्य च लकारो भवतीत्यर्थः । तरन्त्यनेनेति तालुः । वृद्धौ रेफस्य लकार इत्यर्थः । **कृके वचः कश्च** । कृके उपपदे वचधातोर्ञुण्स्यात्, चकारस्य च ककार इत्यर्थः । 'चजोः कु घिण्ण्यतो'रित्यनेनाऽप्राप्तौ कविधिरयम् । **कृकवाकुरिति** । वचधातोर्ञुणि उपधावृद्धौ चस्य कत्वे रूपम् । कृकवाकुशब्दार्थे विश्वकोशमाह—**कृकवाकुर्मयूरे चेत्यादिना** ।

**भृमृशीतॄ** । भृञ् भरणे, मृङ् प्राणत्यागे, शीङ् स्वप्ने, तॄ प्लवनतरणयोः, चर गतौ, त्सर छद्मगतौ, तनु विस्तारे, धन धान्ये, डु मिञ् प्रक्षेपणे, टु मस्जो शुद्धौ—एषां द्वन्द्वात्पञ्चमी । एभ्य उः प्रत्ययः स्यात् । उणि प्रकृते उविधानं वृद्ध्यभावार्थम् । भृञ्धातोरुप्रत्यये उदाहरति—**भरुरिति** । **स्वामी हरश्चेति** । 'भरुः स्वर्णे हरे पुंसि' इति कोषादिति भावः । **शयुरिति** । 'अजगरे शयु'रित्यमरादाह—**शयुरजगर इति** । **अणश्च** । 'अण शब्दे' इत्यस्मादुप्रत्ययः स्यात् । अणुः । चकारप्रयोजनमाह—**चादिति** । कटे वर्षादौ, वटे वेष्टने, आभ्यामपि उप्रत्ययो

'व्रीहिभेदस्त्वणुः पुमान्'। निद्धरणं 'फलिपाटी'त्यादि सूत्रमभिव्याप्य संबध्यते । १० । **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** । शृणातीति शरुः । 'शरुरायुधकोपयोः' । स्वरुर्वज्रम् । स्नेहुर्व्याधिः । चन्द्र इत्यन्ये । त्रपु सीसम् । 'पुंसि भूम्न्यसवः प्राणाः' । 'वसुर्हदेऽग्नौ योक्त्रेऽशौ वसु तोये धने मणौ' । हनुर्वक्त्रैकदेशः । क्लेदुश्चन्द्रः । बन्धुः । मनुः । चात्-बिदि अवयवे । बिन्दुः । ११ । **स्यन्देः संप्रसारणं धश्च** । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रिया'मित्यमरः । १२ । **उन्देरिच्चादेः** । उनत्ति इन्दुः । १३ । **ईषेः किच्च** । ईषेरुः स्यात्स च कित्, आदेरिकारादेशश्च । ईषते हिनस्ति इषुः शरः । 'इषुर्द्वयोः' । १४ । **स्कन्देः सलोपश्च** । कन्दुः । १५ । **सृजेरसुम् च** । चात्सलोप उप्रत्ययश्च । रज्जुः । १६ । **कृतेराद्यन्तविपर्ययश्च** । ककारतकारयोर्विनिमयः । तर्कुः सूत्रवेष्टनम् । १७ । **नावञ्चेः** । न्यङ्क्वादित्वात्कुत्वम् । नियतमञ्चति न्यङ्कुर्मृगः । १८ । **फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च** । फलेर्गुक् । फल्गु । पाटेः पटिः । पाट्यतीति पटुः ।

---

**त.]** यद्यपि 'फलिपाटी'ति सूत्रं यावदनुवर्तत इति न्यासग्रन्थेन मर्यादीकृत्येत्यपि प्रतीयते तथाप्यभिव्याप्येत्येवोचितम्, 'पिबतं सौम्यं मधु' इत्यादौ मधुशब्दस्याद्युदात्ततादर्शनात् । 'वोतो गुणवचना'दिति सूत्रे हरदत्तेनाप्यभिव्याप्येति स्पष्टमभिधानाच्चेति भावः । **शॄस्वृस्निहि** । शॄ हिंसायाम्, स्वृ शब्दोपतापयोः, ष्णिह उपतापे, त्रपूष् लज्जायाम्, असु क्षेपणे, वस निवासे, हन हिंसागत्योः, क्लिदू आर्द्रीभावे, बन्ध बन्धने, मन ज्ञाने । **शररिति** । 'शरुः कोपे शरे वज्रे' इति हेमचन्द्रः । **स्वरुर्वज्रमिति** । 'शतकोटिः स्वरुः शम्बः' इत्यमरः । **त्रपु सीसमिति** । तद्धि अग्निं दृष्ट्वा त्रपते=लज्जत इव । 'रङ्गसीसकयोस्त्रपु' इति मेदिनी । अस्यन्ति क्षिपन्ति शरीरमित्यसवः प्राणाः । **हनुरिति** । 'हनुः पुमान्परो गण्डा'दिति वररुचिकोशः । स्त्रीलिङ्गोऽप्ययम् । 'हनुर्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम् । द्वयोः कपोलावयवे' इति मेदिनीकोशः । अतिशायने मतुप् । हनुमान् । 'अन्येषामपि दृश्यते' इति दृशिग्रहणात्पाक्षिको दीर्घः । हनूमान् । स्नेहेन बध्नातीति बन्धुः । प्रज्ञादित्वाद्बान्धवः । 'बन्धुर्बन्धूकपुष्पे स्याद्बन्धुर्भ्रातरि बान्धवे' इति विश्वः । मनुराद्विराजो, मन्त्रश्च । **स्यन्देः** । स्यन्दू प्रस्रवणे । **उन्देः** । उन्दी क्लेदने । **ईषेः** । ईष गतिहिंसादानेषु । **स्कन्देः** । स्कन्दिर् गतिशोषणयोः । **कन्दुरिति** । स्कन्दत्यस्मिञ्जनताप इति व्युत्पत्त्या भोगस्थानमिति केचित् । अन्ये तु स्कन्दति शोषयतीति कन्दुर्लोहादिपात्रमित्याहुः । अतएव 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रिया'मित्यमरः । 'कन्दुर्वा ना' इति पूर्वेणान्वयाद्वा पुमानित्यर्थः । **सृजेः** । सृज विसर्गे । सृजतीति रज्जुः स्त्रियाम् । आगमसकारस्य श्चुत्वेन शः । जश्त्वेन जः । 'सृजेरसुम् चे'ति सुवचमिति नव्याः । 'रज्जुर्वेण्यां गुणेऽपि' च इति मेदिनी । **कृतेराद्यन्त** । कृती छेदने । **तर्कुरिति** । कृन्त्यतेऽनेनेति तर्कुः सूत्रवेष्टनयन्त्रविशेषः । 'तर्कुटी सूत्रला तर्कुः' इति हारावली । **नावञ्चेः** । अञ्चु गतौ । 'न्यङ्कुर्मुनौ मृगे पुंसि' इति मेदिनी । **फलिपाटि** । फल निष्पत्तौ, पट

---

**बा.]** भवतीत्यर्थः । **वद्धुरिति** । 'वद्धुर्द्विजसुतः स्मृतः'इति मेदिनी । **धान्ये नित्** । अण इत्यनुवर्तते, उरिति च । अणधातोर्धान्यरूपेऽर्थे उप्रत्ययः, स च निद्भवतीत्यर्थः । नित्त्वप्रयोजनमाह—**आद्युदात्त इति** । **अभिव्याप्येति** । तस्मिन्नपि सूत्रेऽनुवर्तत इत्यर्थः । **शॄस्वृस्निहि** । शॄ हिंसायां, स्वृ शब्दोपतापयोः, ष्णिह उपतापे, त्रपूष् लज्जायां, असु क्षेपणे, वस निवासे, हन हिंसागत्योः, क्लिदू आर्द्रीभावे, बन्ध बन्धने, मन ज्ञाने, एषां द्वन्द्वात्पञ्चमी । उरित्यनुवर्तते । **त्रपु सीसमिति** । तद्धि अग्निं दृष्ट्वा त्रपते=लज्जत इव । **स्यन्देः** । स्यन्दू प्रस्रवण इत्यस्मादुप्रत्ययः स्यात्, संप्रसारणं यकारस्य भवति, दकारस्य धकारश्च भवति । **उन्देरिच्चादेः** । उनत्ति क्लेदयति विरहिण इति इन्दुः । उप्रत्ययो भवति, आदेरुकारस्य इकारश्च भवति । **ईषेः किच्च** । ईषधातोरुप्रत्ययः स्यात्, स च कित्, आदेरीकारस्य इकारादेशश्च । इषुः । **स्कन्देः सलोपश्च** । स्कन्दिर् गतिशोषणयोरित्यस्माद्धातोरुप्रत्ययः स्यात्, सकारस्य लोपश्च । कन्दुः । स्कन्दत्यस्मिन् जनताप इति कन्दुः । **सृजेरसुम् च** । सृज विसर्गे इत्यस्मादुप्रत्ययः स्यात्, तत्संनियोगेनाऽसुम्, आदेः सकारस्य लोपश्चेत्यर्थः । असुमो मित्त्वादन्त्यादचः परो भवति । सृ अस्ज् इति स्थिते ऋकारस्य यणि, सस्य श्चुत्वेन शः, जश्त्वेन जः,आदेः सकारस्य लोपः । उप्रत्यये रज्जुरिति भवति । **कृतेराद्यन्तविपर्ययश्च** । कृती छेदने इत्यस्मादुप्रत्ययो भवति, आदेः ककारस्यान्ते निवेशः, अन्त्यस्य तकारस्यादौ निवेशः । उप्रत्यये परतो गुणः । तर्कुरिति रूपम् । स च यन्त्रविशेषः । **नावञ्चेः** । अञ्चु गतावित्यस्मात् नाबुपसर्गे उप्रत्ययः स्यात् । कुत्वविधिं स्मारयति—**न्यङ्क्वादित्वादिति** । **न्यङ्कुर्मृग इति** । 'न्यङ्कुर्मुनौ मृगे पुंसि' इति मेदिनी । **फलिपाटिनमिमनिजनां** । फल निष्पत्तौ, पट गतौ, ण्यन्तस्याऽत्र पाटीति ग्रहणम्, णम प्रह्वत्वे शब्दे, मन ज्ञाने, जनी प्रादुर्भावे, एषां द्वन्द्वात्षष्ठी । एभ्य उप्रत्ययो भवति । जनामिति षष्ठी उत्तरत्र विधीयमानगुगाद्यपेक्षया । गुगित्यागमः, कित्वाल्लिङ्गात् । इतरे आदेशाः । अत्र एकापि षष्ठी विषयभेदाद्भिद्यत इति

नम्यतेऽनेन नाकुर्वल्मीकम् । मन्यते इति मधु । जायते इति जतु । १९ । **वलेर्गुक्च** । वल संवरणे । वल्गु । २० । **शः कित्सन्वच्च** । श्यतेरुः स्यात्स च कित्सन्वच्च । शिशुर्बालः । २१ । **यो द्वे च** । 'ययुरश्वोऽश्वमेधीयः' । सन्वदिति प्रकृते द्वेग्रहणमित्वनिवृत्त्यर्थम् । २२ । **कुर्भ्रश्च** । 'बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गलौ' । चादन्यतोऽपि । चक्रुः कर्ता । जघ्नुर्हन्ता । पपुः पालकः । २३ । **पॄभिदिव्यधिगृधिधृषिभ्यः** । कुः स्यात् । पुरुः । भिनत्ति भिदुर्वज्रम् । 'ग्रहिज्ये'ति संप्रसारणम् । विरहिणं विध्यति विधुः । 'विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे' । गृधुः कामः । धृषुर्दक्षः । २४ । **कृग्रोरुच्च** । करोतीति कुरुः । गृणातीति गुरुः । २५ **अपदुःसुषु स्थः** ।

---

त.] गतौ, ण्यन्तः । णम प्रह्वत्वे शब्दे, मन ज्ञाने, जनी प्रादुर्भावे, एभ्य उः स्यादेषां च यथाक्रमं गुगागमः पटि नाकि ध त इत्यादेशाश्च भवन्ति । इह एकापि षष्ठी विषयभेदाद्भिद्यते । गुगागमे हि फलेरवयवषष्ठी, पट्याद्यादेशचतुष्टयविधौ तु पाठ्यादिभ्यः स्थानषष्ठी । सापि धतयोर्विधौ अन्तेऽप्युपसंह्रियत इति विवेकः । अनागमकानां सागमका आदेशा इति पक्षे तु स्थानषष्ठ्यैवेति बोध्यम् । 'फल्गु सारेऽभिधेयवत् । नदीभेदे मलय्वां स्त्री' इति मेदिनी । **नाकुर्वल्मीकमिति** । 'वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्' इत्यमरः । **मध्विति** । 'मधुश्चैत्रे च दैत्ये च मद्ये पुष्परसे मधु' इति हट्टचन्द्रः । 'मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः । अर्धर्चादिगणे पाठात्पुंनपुंसकयोर्मधुः' इति शाश्वतः । बल संवरण इति दन्त्योष्ठ्यादिः । 'वल्गुः स्याच्छगले पुंसि सुन्दरे चाभिधेयवत्' इति मेदिनी । यत्तु उज्ज्वलदत्तेन 'बलेर्गुक् चे'ति ओष्ठ्यादिं पठित्वा बल प्राणने इत्युपन्यस्तं तल्लक्ष्यविरोधादुपेक्ष्यम् । 'अयं नाभावदति वल्गु वो गृहे' इत्यादौ दन्त्योष्ठ्यपाठस्य निर्विवादत्वात् । **शः कित्** । शो तनूकरणे अस्मादुप्रत्ययः 'आदेच उपदेशे' इत्यात्वं द्वित्वं 'सन्यतः' इत्यभ्यासस्येत्वम् । 'आतो लोप इटि चे'त्याकारलोपः । शिशुः । **यो द्वे च** । या प्रापणे । **कुर्भ्रश्च** । भृञ् भरणे अस्मात्कुप्रत्ययो धातोर्द्वित्वं च । भरतीति बभ्रुः । धरणिकोशस्थमाह—**बभ्रुरित्यादि** । 'बभ्रुर्वैश्वानरे शूलपाणौ च गरुडध्वजे । विशाले नकुले पुंसि पिङ्गले त्वभिधेयवत्' इति मेदिनीकोशः । **चादन्यतोऽपीति** । 'भ्रः कुश्चे'ति वक्तव्ये प्राक् प्रत्ययनिर्देशादित्येके । 'भ्रश्चे'ति प्रकृतिसंसृष्टेन चकारेण प्रकृत्यन्तरसमुच्चयादित्यन्ये । **पॄभिदि** । पॄ पालनपूरणयोः, भिदिर् विदारणे, व्यध ताडने, गृधु अभिकाङ्क्षायाम्, ञिधृषा प्रागल्भ्ये । **पुरुरिति** । कुप्रत्यये परतः 'उदोष्ठ्यपूर्वस्ये'त्युत्वे रपरत्वम् । 'पुरुः प्राज्येऽभिधेयवत् । पुंसि स्याद्देवलोके च नृपभेदपरागयोः' इति मेदिनी । विधुः शशाङ्के' इत्यादिस्तु विश्वकोशः । इह सूत्रे 'धृषिहृषिभ्यश्चे'ति पठित्वा हृषुर्हर्षः । 'सूर्याग्निशनिराहवोऽपि हृषवः' इति केचित् । **कृग्रोरुच्च** । डुकृञ् करणे, गॄ शब्दे, आभ्यां कुः स्यादुकारोऽन्तादेशश्च । 'उरण् रपरः' । 'कुरुर्नृपान्तरे भक्ते पुमान् पुंभूम्नि नीवृति' इति मेदिनी । **अपदुःसु** । ष्ठा गतिनिवृत्तौ । **सुषामेत्यादि** ।

---

बा.] गुगपेक्षया अवयवषष्ठी, इतरादेशान्प्रति तु स्थानषष्ठीति बोध्यम् । वस्तुतस्तु 'अनागमानां सागमका आदेशा' इति पक्षस्यापि परिभाषेन्दुशेखरादौ दर्शनात् स्थानषष्ठ्यपि सम्यगेव । फलधातोरुप्रत्यये गुगागमेऽन्तावयवे कृते फल्गु इति रूपम् । पाटेरुप्रत्यये प्रकृतिभूतपाटेः पटिरादेशः । इकारः 'इक्श्तिपौ धातुनिर्देशे' इत्युक्तरीत्या बोध्यः । पद्धुरिति रूपम् । **नाकुर्वल्मीकमिति** । नमधातोर्नाकिरादेशः । 'वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसक'मित्यमरः । **मध्विति** । मनधातोरुप्रत्यये धकारेऽन्तादेशे रूपम् । **जत्विति** । जनधातोरुप्रत्यये नकारस्य तकारोऽन्तादेशः ।

**वलेर्गुक् च** । वल संवरण इत्यस्माद्धातोरुप्रत्ययो भवति, तत्संनियोगेन प्रकृतेर्गुगागमश्च । वल्गु इति रूपम् । अत्र केचित् बल्गु इति पठन्ति, तत् 'तद्वल्गुना युगपदुन्मिषितेन तावत्' इत्यादिलक्ष्यविरोधादुपेक्ष्यम् । **शः कित्सन्वच्च** । शो तनूकरणे इत्यस्मादुप्रत्ययः, स च कित्, सन्वच्च भवति । **शिशुरिति** । शो इत्यस्मादुप्रत्यये तस्य कित्वात् 'आदेच' इत्यात्वे तस्य द्वित्वे 'सन्यतः' इत्यभ्यासस्येत्वे 'आतो लोप इटि चे'त्यालोपः । तस्याऽजादावार्धधातुकक्ङिति विधानात् । तथाच शिशुरिति रूपम् । **यो द्वे च** । या प्रापण इत्यस्य य इति षष्ठ्यन्तम् । या प्रापण इत्यस्मादुप्रत्ययो भवति, प्रकृतेर्द्वित्वं च भवतीत्यर्थः । सन्वत्त्वे तु 'सन्यतः' इतीत्त्वं स्यात् । तस्मात्स न विहितः । तदेवाह—**सन्वदितीत्यादिना** । **कुर्भ्रश्च** । चकाराद्द्वे इत्यनुवर्तते । भृञ् भरण इत्यस्मात्कुप्रत्ययो भवति, प्रकृतेर्द्वित्वं चेत्यर्थः । भरतीति बभ्रुः । कोशमाह—**बभ्रुर्मुन्यन्तरे इति** । धरणिकोशोऽयम् । ननु चक्रुरित्यादि कथमित्याशङ्कायामाह—**चादन्यतोऽपीति** । अन्येभ्योऽपि धातुभ्यः कुप्रत्ययः, प्रकृतिद्वित्वं च भवतीत्यर्थः । **जघ्नुरिति** । 'गमहने'त्युपधालोपः । **पॄभिदि** । पॄ पालनपूरणयोः, भिदिर् विदारणे, व्यध ताडने, गृधु अभिकाङ्क्षायां, ञि धृषा प्रागल्भ्ये, एषां द्वन्द्वात्पञ्चमी । एभ्यः कुः स्यात् । **पुरुरिति** । कुप्रत्यये परतः 'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । रपरत्वम् । विधुरित्यत्र प्रक्रियामाह—**ग्रहिज्येति संप्रसारणमिति** । व्यधधातोस्ताडनार्थत्वादाह—**विरहिणमिति** । कोशं प्रमाणयति—**विधुः शशाङ्क इत्यादिना** । विश्वकोशोऽयम् । **कृग्रोरुच्च** । डु कृञ्

---

**शे.]** वल्गु इति । कण्ड्वादिपठितप्रातिपदिकेनैव सिद्धे इदं व्यर्थम् ।

'सुषामादिषु चे'ति षत्वम्। अपष्ठु प्रतिकूलम्। दुष्ठु। सुष्ठु। २६। **रपेरिच्चोपधायाः** । अनिष्टं रपतीति रिपुः। २७। **अर्जिदृशिकम्यमिपशिबाधामृजिपशितुक्धुक्दीर्घहकाराश्च** ।- अर्जयति गुणान् ऋजुः। सर्वानविशेषेण पश्यतीति पशुः'। कन्तुः [कन्दर्पः।] अन्धुः कूपः। 'पांशुर्ना न द्वयो रजः'। 'तालव्या अपि दन्त्याश्च सम्बसूकरपांसवः'। बाधते इति बाहुः। 'बाहुः स्त्रीपुंसयोर्भुजः'। २८ **प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च** । त्रयाणां कुः संप्रसारणं, भ्रस्जेः सलोपश्च। पृथुः। मृदुः। न्यङ्क्वादित्वात्कुत्वम्। भृज्जति तपसा भृगुः। २९। **लङ्घिबंह्योर्नलोपश्च** । लघुः। (वा) **बालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते** । रघुर्नृपभेदः। बहुः। ३०। **ऊर्णोतेर्नुलोपश्च** । ऊरुः सक्थि। ३१। **महति ह्रस्वश्च** । उरु महत्। ३२। **श्लिषेः कश्च** । श्लिष्यतीति श्लिकुर्भृत्यः, उद्यतो ज्योतिश्च। ३३। **आङ्परयोः खनिशृभ्यां डिच्च** । आखनतीत्याखुः। परं

त.] एतच्च न्यासाद्यनुरोधेनोक्तम्। वार्त्तिककृता तु स्थास्थिन्स्थूणामित्युपसंख्यातम्। 'अपष्ठुः पुंसि बाले च वामे स्याद्-न्यलिङ्गकः' इति मेदिनी। वामे=प्रतिकूले। एषां त्रयाणां मृगय्वादिपाठेन सिद्धत्वात्सूत्रमिदं न्यासकारस्य न संमतमिति रक्षितः। **अर्जिदृशि** । अर्ज अर्जने अस्य ऋजिरादेशः, दृशेः पशिरादेशः, कमेस्तुगागमः। अम रोगे गत्यादौ वा। अस्य धुगागमः। पशि नाशने सौत्रो धातुः। अस्य दीर्घः। बाधृ लोडने अस्य हादेशः। षड्भ्योऽपि कुप्रत्ययः स्यादित्यर्थः। **अविशेषेणेति** । चादिगणे पश्विति पठितम्। 'पशु इत्यर्थमव्ययम्' इति धरणिः। कन्तुः कन्दर्पः। 'इः कन्तुर्मकराङ्कः' इति त्रिकाण्डशेषः। **पांसुरिति** । पशि पसि नाशने चुरादिर्दन्त्यान्तः। **स्त्रीपुंसयोरिति** । उक्तं ह्यमरेण 'द्वौ परौ द्वयोः। भुजबाहू' इति। परौ द्वौ=भुजबाहुशब्दौ, द्वयोः=स्त्रीपुंसयोरिति तदर्थः। आकारान्तोऽप्ययम्। अतएव 'बाहोऽश्वभुजयोः पुमान्' इति दामोदरः। 'बाहा भुजे पुमान्मानमेदाऽश्ववृषवायुषु' इति मेदिन्यां टाबन्तोऽप्ययम्। **प्रथिम्रदि** । प्रथ प्रख्याने, म्रद मर्दने, भ्रस्ज पाके। प्रथते इति पृथुः। 'पृथुः स्यान्महति त्रिषु। त्वक्पत्र्यां कृष्णजीरेऽथ पुमानग्नौ नृपान्तरे' इति मेदिनी। म्रदितुं शक्यतेऽकठिनत्वादिति मृदुः कोमलः। 'भृगुः शुक्रे प्रपाते च जमदग्नौ पिनाकिनि' इति विश्वः। **लङ्घि** । लघि गतौ, बहि महि वृद्धौ। **लघुरिति** । 'पृक्कायां स्त्री लघुः क्लीबं शीघ्रे कृष्णाऽगुरुण्यपि' इति त्रिकाण्डशेषः। 'लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत्क्लीबम्। शीघ्रे कृष्णागुरुणि च पृक्कानामौषधौ स्त्रियाम्' इति मेदिनी। **नृपभेद इति** । एतेन 'अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभव'मिति कालिदासवचनं व्याख्यातम्। **बहुरिति** । 'बहुः स्त्र्यादिसङ्ख्यासु विपुले त्वभिधेयव'दिति मेदिनी। **ऊरुरिति** । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः। ऊर्णूयते आच्छाद्यते इत्यूरुः। कर्मणि प्रत्ययः। **उरु महदिति** । कर्तरि प्रत्ययः। **श्लिषेः** । श्लिष आलिङ्गने अस्मात्कुप्रत्ययः, कश्चान्तादेशः। **उद्यत इति** । स हि यावत्कार्यं श्लिष्यति=लगति। व्याप्रियत इति यावत्। **आङ्परयोः** । खनु अवदारणे, शॄ हिंसायाम्। **पर्शुरपीति** । पर्शुः

बा.]करणे, गॄ निगरणे इत्याभ्यां कुः स्यात्। उकारोऽन्तादेशश्च। रपरः। कुरुः, गुरुरिति रूपम्। **अपदुस्सुषु स्थः** । अप, दुस्, सु एषु उपपदेषु स्थाधातोः कुप्रत्ययः स्यात्। आतो लोपे अपष्ठु दुःष्ठु सुष्ठु इत्यादिरूपम्। **रपेरिच्चोपधायाः** । रपधातोः कुप्रत्ययः स्यात्, उपधाया इकारादेशश्च। **अर्जिदृशि** । अर्ज अर्जने, दृशिर् प्रेक्षणे, कमु कान्तौ, अम गत्यादिषु, पशि नाशने, सौत्रोऽयं धातुः, बाधृ लोडने, एषां षण्णां द्वन्द्वात् षष्ठी। एभ्यः कुप्रत्ययः स्यात्, तत्संनियोगेन प्रकृतिभूतानां षण्णामर्ज्यादीनां मध्ये अर्जिदृश्योः ऋज पश एतौ सर्वादेशौ, कमेस्तुगागमः। अमेर्धुगागमः। पशिरिदित्, इदित्वान्नुम्। दीर्घोऽनेन विधीयते। बाधधातोरन्त्यस्य हकारादेशः। एकापि षष्ठी विषयभेदाद्भिद्यत इत्युक्तत्वात्। षष्ठ्या आदेशागमयोरन्वयः। कन्तुर्मदनः। **प्रथिम्रदिभ्रस्जाम्** । प्रथ प्रख्याने, म्रद मर्दने, भ्रस्ज पाके, एभ्यः कुप्रत्ययः स्यात् संप्रसारणं च। भ्रस्जधात्ववयवसकारस्य लोपश्चेत्यर्थः। सलोप इत्यन्यत्राऽसंभवात् भ्रस्जधातावेवान्वेति। प्रथधातोः कुप्रत्यये संप्रसारणे पृथुरितिं रूपम्। भृगुरित्यत्र कुत्वं समर्थयते—**न्यङ्क्वादित्वादिति** । **लङ्घिबंह्योर्नलोपश्च** । लघि गतौ, बहि वृद्धौ, आभ्यां कुप्रत्ययः स्यात्, नकारलोपश्च। लघु बहु इति रूपम्। लघु इत्यत्र विशेषमाह—**बालमूलेति** । ल इति षष्ठ्यन्तम्। एतदवयवस्य लकारस्य रत्वं वा आपद्यत इत्यर्थः। एवं च रघुरिति रूपम्। **ऊर्णोतेर्नुलोपश्च** । ऊर्णुधातोः कुप्रत्ययः स्यात्, तत्संनियोगेन नुकारस्य लोपश्च। ऊरु इति रूपम्। **महति ह्रस्वश्च** । महति विशेष्ये ह्रस्वश्च भवति। उरु इति रूपम्। **श्लिषेः कश्च** । श्लिष आलिङ्गन इत्यस्मात् कुप्रत्ययः, कश्चान्तादेशः। **श्लिकुर्भृत्य इति** । षस्य कत्वे रूपम्। श्लिकुरित्यस्यार्थान्तरमाह—**उद्यतो ज्योतिश्चेति** । **आङ्परयोः** । आङ्पराभ्यां खनु अवदारणे, शॄ

शृणातीति परशुः । पृषोदरादित्वादकारलोपात्पर्शुरपि । ३४ । **हरिमितयोर्द्रुवः** । द्रु गतौ अस्मात् हरिमितयोरुपपदयोः कुः स च डित् । हरिभिर्द्रूयते हरिद्रुर्वृक्षः । मितं द्रवति मितद्रुः समुद्रः । ३५ । **शते च** । शतधा द्रवति शतद्रुः । बाहुलकात्केवलादपि । द्रवत्यूर्ध्वमिति द्रुर्वृक्षः, शाखा च । तद्वान् द्रुमः ।

३६ । **खरुशङ्कुपीयुनीलङ्गुलिगु** । पञ्चैते कुप्रत्ययान्ता निपात्यन्ते । खनते रेफश्चान्तादेशः । खरुः कामः क्रूरो मूर्खः अश्वश्च । 'शङ्कुर्ना कीलशल्ययोः' । पिबतेरीत्वं युगागमश्च । पीयुर्वायसः कालः सुवर्णं च । निपूर्वाल्लगि गतावस्मात्कुत्वं नेर्दीर्घश्च । नीलङ्गुः क्रिमिविशेषः शृगालश्च । 'नीलाङ्गु'रिति पाठान्तरम् । तत्र धातोरपि दीर्घः । लगे सङ्गे अस्य अत इत्वं च । लगतीति लिगु चित्तम् । लिगुर्मूर्खः । ३७ । **मृगय्वादयश्च** । कुप्रत्ययान्ता निपात्यन्ते । मृगं यातीति मृगयुर्व्याधः । देवयुर्धार्मिकः । मित्रयुर्लोकयात्राभिज्ञः । आकृतिगणोऽयम् । ३८ । **मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच्** । मन्दुरा वाजिशाला । वाशुरा रात्रिः । मथुरा । चतुरः । चङ्कुरो रथः । अङ्कुरः । खजूरादित्वादङ्कूरोऽपि । ३९ । **व्यथेः संप्रसारणं किच्च** । 'विथुरश्चोररक्षसोः' ।

---

त.]परशुना सहेति विश्वः । **हरिमितेति** । द्रु गतौ,अस्माद्धरिमितयोरुपपदयोः कुः स्यात्स च डित् । हरिद्रुर्वृक्ष **इति** । दारुहरिद्रा इत्येके । शतद्रुर्नदीभेदः । 'शतद्रुस्तु शुतुद्रिः स्यात्' इत्यमरः । **तद्वानिति** । 'द्युद्रुभ्यां मः' इति मः । **खरुशङ्कु** । खनु अवदारणे, शकि शङ्कायाम् । **काम इत्यादि** । खरुः पतिंवरा कन्येत्यपि बोध्यम् । 'खरुर्दर्पे हरे दन्ते हये श्वेते तु वाच्यवत्' इति विश्वत्रिकाण्डशेषौ । शङ्कते अस्मादिति शङ्कुः । 'शङ्कुः कीले गरे शस्त्रे संख्यापादपभेदयोः । यादोभेदे च पापे च स्थाणावपि च दृश्यते' इति विश्वः । **पीयुरिति** । 'पीयुः काले खौ घोरे' इति मेदिनी । **क्रिमिविशेष इति** । 'नीलङ्गुः क्रिमिजातौ स्याद्भम्भरालीप्रसूनयोः' इति विश्वः । 'नीलङ्गुः स्यात्कृमौ पुंसि भम्भराल्यां तु योषिति' इति मेदिनीकारः । **पाठान्तरमिति** । 'नीलङ्गुरपि नीलाङ्गुः' इति विश्वः । **धातोरपीति** । केचित्तु नीलशब्दे उपपदे गमेष्टिलोपः, उपपदस्य मुम्, दीर्घश्च पाक्षिको निपात्यते इत्याहुः । 'लिगु चित्ते नपुंसकम्' इति वररुचिः । **मृगय्वादयश्च** । 'मृगयुः पुंसि गोमायौ व्याधे च परमेष्ठिनि' इति मेदिनी । 'मृगयुर्ब्रह्मणि ख्यातो गोमायुव्याधयोरपि' इति विश्वः । 'देवयुर्वाच्यलिङ्गः स्याद्धार्मिके लोकयात्रिके' इति मेदिनी ।
**आकृतिगण इति** । तेन पील प्रतिष्टम्भे अस्मात्कुः । 'पीलुर्गजे द्रुमे काण्डे परमाणुप्रसूनयोः' इति विश्वः । **भाट्टास्तु**—पीलुशब्दस्य वृक्षे आर्यप्रसिद्धिर्गजे तु म्लेच्छप्रसिद्धिरित्याश्रित्य व्यवजह्रुः । पडि गतौ अस्मात्कुः धातोर्वृद्धिश्च । पाण्डुः । कडि मदे । कण्डुरित्यादि बोध्यम् । **मन्दिवाशि** । मदि स्तुत्यादौ, वाश्ट शब्दे, मथे विलोडने, चते याचने । चङ्क इति सौत्रो धातुः । अकि लक्षणे । **वाशुरा रात्रिरिति** । वाश्यन्ते अस्यामिति विग्रहः । वाशुरो गर्दभ इत्यन्ये । 'वाशुरा वाशितारात्र्योः' इति मेदिनीहेमचन्द्रौ । **चङ्कुर इति** । 'चङ्कुरः स्यन्दने वृक्षे' इति मेदिनी । 'अङ्कुरो रुधिरे लोम्नि पानीयेऽभिनवोद्भिदि इति च । **खर्जूरादित्वादिति** । ऊरप्रत्ययोऽपीति भावः ।

---

बा.]हिंसायम्, आभ्यां कुप्रत्ययः, स च डिद्भवति । डित्त्वाट्टिलोपः । **आखुरिति** । **आखनतीति** । 'भूमि'मिति शेषः । **परं शृणातीति** । शत्रुं हिनस्तीत्यर्थः । पर्शुरित्यत्र व्युत्पत्तिमाह—**पृषोदरादित्वादिति** । **हरिमितयोर्द्रुवः** । द्रु गतावित्यस्माद्धातोर्हरिमितयोरुपपदयोः कुप्रत्ययः स्यात्, स च डिद्भवति । **हरिद्रुरिति** । कुप्रत्ययः । डित्वाट्टिलोपः । मितद्रुरिति चेत्यमेव रूपम् । **शते च** । शतशब्दे चोपपदे द्रु गतावित्यस्माद्धातोः कुप्रत्ययो भवति, स च डिदिति सूत्रार्थः । टिलोपः । द्रुरित्यत्र कथं कुप्रत्ययः, केवलात्कुप्रत्ययविधेः कुत्राप्यदृष्टत्वादित्यत आह—**बाहुलकादिति** । **तद्वानिति** । 'द्युद्रुभ्यां म' इति मत्वर्थीयो मप्रत्ययः । **खरुशङ्कु** । खनु अवदारणे, शकि शङ्कायां, पा पाने, निपूर्वो लगि गतौ, लगे सङ्गे, इत्येतेभ्यः पञ्चभ्यो धातुभ्यः कुप्रत्यये एते निपात्यन्ते । निपातनमेवाह—**खनते रेफश्चान्तादेश इति** । नकारस्य रेफे आदेशे खरुरिति रूपम् । खरुरित्यस्यार्थं विवृणोति—**काम इत्यादिना** । 'खरुः पतिंवरा कन्ये'त्यपि बोध्यम् । शङ्कुशब्दं कोशपूर्वकं विवृणोति—**शङ्कुर्नेति** । 'शङ्कुः कीले गरे शस्त्रे सङ्ख्यापादपभेदयोः । यादोभेदे च पापे च स्थाणावपि च दृश्यते ।' इति विश्वः । **पीयुरिति** । ईत्वं युगागमश्च निपात्यते । **नीलङ्गुरिति** । 'नीलङ्गुः स्यात्कृमौ पुंसि भम्भराल्यां तु योषिति' इति मेदिनी । **मृगय्वादयश्च** । मृगयु इत्यादयः शब्दाः कुप्रत्यान्ता निपात्यन्ते । मृगयुः देवयुरित्यादय उदाहरणम् । **आकृतिगण इति** । तेन पीलु-पाण्डुरित्यादिसिद्धिः । **मन्दिवाशि** । मदि स्तुत्यादौ, वाश्ट शब्दे, मन्थ विलोडने, चते याचने, चङ्क इति सौत्रो धातुः, अकि लक्षणे, एभ्य उरच् स्यात् । मन्दुरा । 'वाजिशाला तु मन्दुरा' इत्यमरः । **वाशुरेति** । 'वाशुरा वाशितारात्र्योः' इति मेदिनी । **चङ्कुर इति** । 'चङ्कुरः स्यन्दने वृक्षे' इति मेदिनी ।

४०। **मकुरदर्दुरौ**। मकुरो दर्पणः। बाहुलकान्मुकुरोऽपि। दृ विदारणे धातोर्द्विवचनमभ्यासस्य रुक्, टिलोपश्च। 'दर्दुरस्तोयदे भेके वाद्यभाण्डाऽद्रिभेदयोः। दर्दुरा चण्डिकायां स्याद्ग्रामजाले च दर्दुर'मिति विश्वः। ४१। **मद्गुरादयश्च**। उरजन्ता निपात्यन्ते। माद्यतेर्गुक्। मद्गुरो मत्स्यभेदः। कर्बु वर्णे। रुगागमः। 'कर्बुरः श्वेतरक्षसोः'। बध्नातेः खर्जूरादित्वादूरोऽपि। 'बन्धूरबन्धुरौ स्यातां नम्रसुन्दरयोस्त्रिषु' इति रन्तिदेवः। ४२। (वा) **कोकतेर्वा कुक्**। कुकुरः। कुक्कुरः। ४२। **असेरुरन्**। असुरः। प्रज्ञाद्यण्। आसुरः। ४३। **मसेश्च**। पञ्चमे पादे 'मसेरूर'न्निति वक्ष्यते। 'मसूरा मसुरा व्रीहिप्रभेदे पण्ययोषिति'। 'मसूरा मसुरा वा ना वेश्या-व्रीहिप्रभेदयोः। मसूरी पापरोगे स्यादुपधाने पुनः पुमान्। मसूरमसुरौ च द्वा'विति विश्वः। ४४। **शावशेरासौ**। 'शु' इति आश्चर्ये। शवशुरः। 'पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयो'रित्यमरः। ४५। अविम-

---

त.]'अङ्कुरोऽङ्कूर एव च' इति विश्वप्रकाशः। **व्यथेः**। व्यथ भयसंचलनयोरस्मादुरच् कित्स्याद्धातोः संप्रसारणं च। दशपाद्यां तु 'व्यथेः संप्रारणं धः किच्चे'ति सूत्रं पठित्वा धकारमन्तादेशं विधाय 'विधुरोऽनमिक' इत्युदाहृतम्। माधवप्रसादकारादिभिरपि तदेवाऽनुसृतं। तत्त्वेतद्युक्तम्। 'त्वमेषां विथुरा शवांसि' 'अथ विद्धा विथुरेणाऽचिदस्रा'इत्यादि-मन्त्रेषु थकारपाठस्य निर्विवादत्वात्। यद्यपि माधवेनोक्तं-'विदिभिदिच्छिदी'त्यत्र 'व्यथेः संप्रसारण'मिति वचनात्कु-रचि धान्तरूपमिति,तदपि स्थवीयः। कुरज्विधायके सूत्रे व्यथेरुपसङ्ख्यानस्याऽप्रसिद्धत्वात्। तस्मादिह 'धः किच्चे'ति दशपादीपाठ उपेक्ष्य एव। कथं तर्हि विधुर इतीष्टप्रयोगस्य निर्वाह इति चेत्, धुरो विगत इति प्रादिसमासेनेत्यव-धेहि। 'समासान्ताः' इति सूत्रे वृत्तिपदमञ्जर्योस्तथैवोक्तत्वात्। इह 'व्यथेः किच्चे'त्येवास्तु, 'ग्रहिज्ये'त्यनेन संप्रसारणं स्यादेवेति न भ्रमितव्यम्। ग्रहिज्यादिषु व्यधिर्वर्गचतुर्थो न त्वयमिति निष्कर्षात्। **मकुर इति**। मकि मण्डने अस्मादुरच्,लोपश्च। **बहुलकादिति**। धातोरुपधायाः पक्षे उकार इति भावः। 'मकुरो मुकुरोऽपि च' इति विश्वः। 'मकुरः स्यान्मुकुरवद्दर्पणे बकुलद्रुमे। कुलालदण्डे' इति मेदिनी। **धातोर्द्विवचनमिति**। केचित्तु गुणे दुगागमश्च निपात्यत इत्याहुः। **ग्रामजाले चेति**। 'यामजाले चे'ति पाठान्तरम्। **मद्गुरादयश्च**। मदी हर्षे। **कर्बुर इति**। 'कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसोः। कर्बुरा कृष्णवृन्तायां शबले पुनरन्यव'दिति मेदिनी। **बन्धूरबन्धुरा-विति**। बन्ध बन्धने। **कुक्कुर इति**। कुक आदाने। 'कुक्कुरः कुकुरो मतः' इति हट्टचन्द्रः। 'कुक्कुरः सारमेये ना ग्रन्थिपर्णे नपुंसक'मिति मेदिनी। अत सातत्यगमने। आदिदीर्घः। आतुरः। वा गतिगन्धनयोः। गुगागमः। 'वागुरा मृगबन्धिनी'त्यादिरपि ज्ञेयम्। **असेः**। असु क्षेपणे। **मसेश्च**। मसी परिणामे। 'मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोः। मसूरी पापरोगे स्यादुपधाने पुनः पुमा'निति मेदिनी। **शावशेः**। 'शु' इति कृताऽऽकारलोप

---

बा.]ननु अङ्कूर इति कथम्, अनेनोरच्प्रत्यये अङ्कुरशब्दस्यैव साधुत्वादित्याशङ्कायामाह-**खर्जूरादित्वादिति**। तेन ऊरप्रत्यये अङ्कूरशब्दोऽपि साधुरेवेति भावः। **व्यथेः संप्रसारणं किच्च**। व्यथ भयसंचलनयोरित्यस्माद्धातोरुरच् स्यात्। स च कित्। धातोः संप्रसारणं चेत्यर्थः। 'विथुर' इत्युदाहरणम्। न चात्र उरचः कित्त्वविधानेनैव 'ग्रहि-ज्ये'ति धातोः संप्रसारणे सिद्धे पृथक् संप्रसारणविधानं व्यर्थमिति वाच्यम्, ग्रहिज्येति सूत्रे तवर्गचतुर्थान्तव्यध-धातोर्ग्रहणात्, अस्य च तवर्गद्वितीयान्तत्वेन तेनाऽप्राप्तेः। **मुकुरदर्दुरौ**। मकि मण्डने, दृ विदारणे इत्यनयोः मुकुर दर्दुर इति निपात्यते इत्यर्थः। आद्ये उरच्, धातोरुपधाया उकारश्च निपात्यते। नन्वेवं कथं मकुर इति, अनेन निपातितस्य उपधाया उत्वस्य नित्यत्वादित्यत आह-**बाहुलकादिति**। बाहुलकादुपधाया उत्त्वविकल्प इति भावः।

दृधातोर्निपातनमाह - **धातोर्द्विवचनमित्यादिना**। दृधातोर्द्वित्वे गुणे अभ्यासस्योरदत्वे हलादिशेषे अभ्यासस्य रुकि, टिलोपेन अरित्यस्यापहारे उरचि दर्दुर इति रूपमिति भावः। दर्दुरशब्दार्थं विवृण्वन् कोशमाह— **दर्दुरस्तोयदे भेक इत्यादिना**। केचित्तु दृधातोर्गुणो दुगागमश्च उरच्प्रत्ययसंनियोगेन निपात्यत इत्याहुः। **मद्गुरादयश्च**। मदी हर्षे, बन्ध बन्धने, कर्बृ वर्णे इत्यादय उरजन्ता निपात्यन्त इत्यर्थः। मदी हर्षे इत्यस्मा-दुरच्। तत्संनियोगेन गुगागमश्च निपात्यते। कर्बृ वर्ण इत्यस्मादुरच्, तत्संनियोगेन रुगागमो विधीयते। मित्त्वा-दन्त्यादचः परो भवति। **बन्धुर इति**। ननु बन्धूर इति कथमित्यत आह-**खर्जूरादीति**। **कोकतेर्वा कुक्**। कुकुरः कुक्कुर इति रूपद्वयम्, वाग्रहणात्कुको वैकल्पिकत्वात्। **असेरुरन्**। **असुर इति**। उरचि प्रकृते उरन्-विधानात् स्वरे भेदः। आसुर इत्यत्र प्रक्रियामाह—**प्रज्ञाद्यणिति**। स्वार्थिकोऽणिति भावः। **मसेश्च**। मसी परिणामे। 'उर'न्निति शेषः। मसुरा इति रूपम्। मसुरा इति शब्दं साधयति— **मसेरूरन्निति वक्ष्यत इति**। **शावशेरासौ**। शु इति कृताकारलोप आशुशब्दः। तस्मिन्नुपपदे अशू व्याप्तावित्यस्मात् उरन्। आसौ गम्यमानाया-

**ह्योष्टिषच्** । अविषः । महिषः । ४६ । **अमेर्दीर्घश्च** । 'आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि' । ४७ । **रुहेर्वृद्धिश्च** । 'रङ्कुशम्बररौहिषाः' । 'रौहिषो मृगभेदे स्याद्रौहिषं च तृणं मत'मिति संसारावर्तः । ४८ । **तवेर्णिद्वा** । 'तवे'ति सौत्रो धातुः । तविषताविषावब्धौ स्वर्गे च । स्त्रियां तविषी ताविषी नदी देवकन्या भूमिश्च । 'तविषी बल'मिति वेदभाष्यम् । ४९ । **नञि व्यथेः** । 'अव्यथिषोऽब्धिसूर्ययोः' । 'अव्यथिषी धराराभ्योः' । ५० । **किलेर्बुक् च** । किल्बिषम् । ५१ । **इषिमदमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच्** । इषिरोऽग्निः । मदिरा सुरा । 'मुदिरः कामुकाऽभ्रयो'रिति विश्वमेदिन्यौ । खिदिरश्चन्द्रः । 'छिदिरोऽसिकुठारयोः' । भिदिरं वज्रम् । मन्दिरं गृहम् । स्त्रियामपि । 'मन्दिरं मन्दिरापि स्या'दिति विश्वः । 'चन्दिरौ चन्द्रहस्तिनौ' । तिमिरं तमोऽक्षिरोगश्च । मिहिरः सूर्यः । 'मुहिरः काम्यसम्ययोः' । मुचिरो दाता । रुचिरम् । रुधिरम् । बधिरः । शुष शोषणे । शुषिरं छिद्रम् । शुष्कमित्यन्ये । ५२ । **अशेर्णित्** । 'आशिरो वह्निरक्षसोः' । ५३ । **अजिरशिशिरशिथिलास्थिरस्फिरस्थविरखदिराः** । अजेर्वीभावाऽभावः । अजिरमङ्गणम् । शशेरुपधाया इत्वम् ।

---

**त.]** आशुशब्दस्तस्मिन्नुपपदे आप्तौ गम्यमानायाम् अशू व्याप्ताविस्यस्माद्धातोरुरन्स्यात् । श्वशुरो दम्पत्योः पिता । 'पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः' इत्यमरः । **अवि** । अव रक्षणादौ । मह पूजायाम् । **अविष इति** । राजा समुद्रश्च । महिषो महान् । 'तुरीयं धाम महिषो विवक्ति' । 'उत माता महिषमन्ववेनत्' । टित्वान्ङीप् । महिषी राजपत्नी । **रुहेः** । रुह बीजजन्मनि । 'रौहिषो मृगभेदः स्याद्रौहिषं च तृणं मत'मिति संसारावर्तः । **वेदभाष्यमिति** । 'इन्द्रो वृत्रस्य तविषीम्' । 'इन्द्रस्याऽत्र तविषीभ्यो विरप्शिन्' इत्यादिमन्त्रेष्विति भावः । वैदिकनिघण्टौ 'ओजः पाजः' इत्यादिषु बलनामसु तविषीशब्दस्य पाठश्चेह मूलमिति बोध्यम् । 'तविषः शोभनाकारे बलेऽब्धिव्यवसाययोः । तविषी देवकन्यायां पुंसि स्वर्गे महोदधौ । ताविषी चेन्द्रकन्यायां ना स्वर्गाम्बुधिकाञ्चने' इति मेदिनी । **नञि व्यथेः** । व्यथ भयसंचलनयोः । **किलेः** । किल श्वैत्यक्रीडनयोः । अस्माट्टिषच्धातोर्बुगागमश्च । 'किल्बिषं पापरोगयोः । अपराधेऽपि' इति मेदिनी । **इषिमदि** । इष इच्छायाम्, मदी हर्षे, मुद हर्षे, खिद दैन्ये, छिदिर् द्वैधीकरणे, भिदिर् विदारणे, मदि स्तुत्यादौ, चदि आह्लादने, तिम आर्द्रीभावे, मिह सेचने, मुह वैचित्त्ये, मुच्लृ मोक्षणे, रुच दीप्तौ, रुधिर् आवरणे, बन्ध बन्धने, शुष शोषणे । **इषिरोऽग्निरिति** । आहार इत्यन्ये । 'छिदिरः पावके रज्जौ करवाले परश्वधे' इति मेदिनी । 'मन्दिरं नगरेऽगारे क्लीबं ना मकरालये' इति मेदिनी । 'चन्दिरोऽनेकपे चन्द्रे' इति च । 'तिमिरं ध्वान्ते नेत्रामयान्तरे' इति च । 'मिहिरः सूर्यबुद्धयोः' इति च मेदिनी । 'मिहिरः कामिमूर्खयोः' इति च । 'सुन्दरं रुचिरं चारु' इत्यमरः । 'रुधिरोऽङ्गारके पुंसि क्लीबं तु कुङ्कुमाऽसृजोः' इति मेदिनी । बधिरः श्रोत्रेन्द्रियरहितः । 'शुषिरं विवरं बिल'मित्यमरः । **अशेः** । अश भोजने । **अजिर** । अज गतौ, शश प्लुतगतौ, ष्ठा गतिनिवृत्तौ, स्फायी वृद्धौ, खद हिंसायाम् । **अजिरमिति** । दशपादीवृत्तौ तु नञ्पूर्वस्य जीर्यतेर्ऋवर्णलोपो निपात्यते इत्युक्तं तदपि ग्राह्यम् । 'आशु द्रुतमजिरं प्रत्नमीड्यम्' इत्यादौ न जीर्यतीत्यर्थः ।

---

**बा.]** श्वशुर इति रूपम् । अमरकोशमाह—**पतिपत्न्योरिति** । **अविमह्योष्टिषच्** । अव रक्षणे, मह पूजायाम् । आभ्यां टिषच् प्रत्ययो भवति । टचावितौ । टित्त्वं ङीबर्थम् । अविषः अविषी । महिषः महिषी । **अमेर्दीर्घश्च** । अमधातोष्टिषच् भवति, प्रकृतेरकारस्य दीर्घश्च भवति । आमिषमिति रूपम् । **रुहेर्वृद्धिश्च** । रुह बीजजन्मनि इत्यस्मात् टिषच् भवति प्रकृतेर्वृद्धिश्च । रौहिषमिति रूपम् । **तवेर्णिद्वा** । तवेति सौत्रो धातुः, अस्माट्टिषच्, स च णिद्विकल्पेन भवतीत्यर्थः । णित्त्वपक्षे उपधावृद्धिः । तदभावे वृद्ध्यभावः । **नञि व्यथेः** । नञि उपपदे व्यथधातोः टिषच् भवति । अव्यथिषः । टित्वात् स्त्रियां ङीप् । अव्यथिषी । **किलेर्बुक् च** । किलधातोः टिषच् प्रकृतिभूतधातोर्बुगागमश्च । किल्बिषमिति रूपम् । **इषिमदि** । इषु इच्छायां, मदी हर्षे, मुद हर्षे, खिद दैन्ये, छिदिर् द्वैधीकरणे, भिदिर् विदारणे, मदि स्तुत्यादौ, चदि आह्लादे, तिमि आर्द्रीभावे, मिह सेचने, मुह वैचित्त्ये, मुच्लृ मोक्षणे, रुच दीप्तौ, रुधिर् आवरणे, बन्ध बन्धने, शुष शोषणे, एषां द्वन्द्वात्पञ्चमी । एभ्यः किरच् स्यात् । **इषिर इति** । कित्त्वान्न लघूपधगुणः । **अशेर्णित्** । अश भोजन इत्यस्मात्किरच् स्यात्, स च णिद्भवति, णित्त्वादुपधावृद्धिः । आशिर इति रूपम् । **अजिरशिशिर** । अज गतिक्षेपणयोः, शश प्लुतगतौ, श्रथ मोचने, ष्ठा गतिनिवृत्तौ, स्फायी वृद्धौ, ष्ठा गतिनिवृत्तौ, खद हिंसायाम्, एभ्यः किरचि कृते निपातनमिदम् । प्रथमतोऽज गतिक्षेपणयोरित्यस्मात् किरचि प्रकृतेर्वीभावाऽभावो निपात्यते । शिशिरमित्यत्राह—**शशेरुपधाया इति** । शश प्लुतगता-

---

**शे.]** तवेति सौत्र इति । तु इति सौत्रात्प्रत्ययो णिद्वेति युक्तं वक्तुम् ।

'शिशिरः स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत्' । अथ मोचने । उपधाया इत्वं रेफलोपः । प्रत्ययरेफस्य लत्वम् । शिथिलम् । स्थास्फाय्योष्टिलोपः । स्थिरं निश्चलम् । स्फिरं प्रभूतम् । तिष्ठतेर्वुक् ह्रस्वत्वं च । स्थविरः । खदिरः । बाहुलकात् शीङो वुक् ह्रस्वत्वं च । शिबिरम् । ५४ । **सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डि-तुण्डिकुकिभूभ्य इलच्** । सलति गच्छति निम्नमिति सलिलम् । कलिलम् । अनिलः । महिला । पृषो-दरादित्वान्महेलाऽपि । भड इति सौत्रो धातुः । 'भडिलौ शूरसेवकौ' । भण्डिलो दूतः कल्याणं च । शण्डिलो मुनिः । पिण्डिलो गणकः । तुण्डिलो मुखरः । कोकिलः । भविलो भव्यः । बाहुलकात्–कुटिलः । ५५ । **कमेः पश्च** । कपिलः । ५६ । **गुपादिभ्यः कित्** । गुपिलो राजा । तिजिलो निशाकरः । गुहिलं वनम् । ५७ । **मिथिलादयश्च** । मथ्यन्तेऽत्र रिपवो मिथिला नगरी । पथिलः=पथिकः । ५८ । **पतिकठिकुठिगडिगुडि-दंशिभ्य एरक्** । पतेरः पक्षी गन्ता च । कठेरः कृच्छ्रजीवी । कुठेरः पर्णाशः । बाहुलकान्नुम्न । गडेरो मेघः ।

---

त.] त्यजिर इत्यस्याऽनुगुणत्वात् । **अङ्गणमिति** । अङ्गेर्ल्युटि अनादेशः । नकारस्य बाहुलकाण्णत्वमित्येके। अन्ये तु दन्त्यमेवेच्छन्ति । 'अजिरं प्राङ्गणे काये विषये दर्दुरेऽनिले' इति मेदिनी । 'शिशिरो ना हिमे, न स्त्री ऋतुभेदे, जडे त्रिषु' इति च । विश्वकोशस्थमाह—**शिशिरं स्यादिति** । खदिरो वृक्षभेदः । 'खदिरी शाकभेदे स्त्री ना चन्द्रे दन्तधावने' इति मेदिनी । **शिबिरमिति** । शेरतेऽस्मिन् राजबलानि । 'निवेशः शिबिरं शण्ढे' इत्यमरः । **सलि-कलि** । षल गतौ, कल सङ्ख्याने, अन प्राणने, मह पूजायाम्, भडि परिभाषणे, भडि कल्याणे, शडि रुजायाम्, पिडि सङ्घाते, तुडि तोडने, कुक आदाने, भू सत्तायाम्, कुट कौटिल्ये । **कलिल इति** । मिश्रो गह-नश्च । 'कलिलं गहनं समे' इत्यमरः । **महिलेति** । 'महिला फलिनीस्त्रियोः' इति मेदिनी । 'प्रियङ्गुः फलिनी फली'त्यमरः । **पृषोदरेति** । तथा च दमयन्तीकाव्ये प्रयोगः-'परमहेलारतोऽप्यपारदारिकः' इति । परस्य महेला= स्त्री, अथ च परमा उत्कृष्टा हेला=क्रीडा तत्र रत इत्यर्थः । **कमेः** । कमु कान्तौ । अस्मादिलच् पश्चान्तादेशः । 'कपिला रेणुकायां च शिंशपागोविशेषयोः । पुण्डरीके करिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम् । नाऽनले वासुदेवे च मुनि-भेदे च कुक्कुरे' इति मेदिनी । रेणुकेह लताविशेषः 'हरेणू रेणुका कुन्ती कपिला भस्मगन्धिनी' इत्यमरात् । **गुपा-दिभ्यः** । गुपू रक्षणे, तिज निशाने, गुहू संवरणे । **मिथिलादयश्च** । मथे विलोडने । अकारस्येत्वं निपातनात् । पथे गतौ । **पतिकठि** । पत्लृ गतौ, कठ कच्छ्रजीवने, कुठि च, गड सेचने, गुड रक्षायाम्, दंश दशने । कुठि-

---

बा.] वित्यस्मात्किरचि उपधाभूतस्याऽकारस्य स्थाने इत्वं निपात्यते । शिशिर इति रूपम् । शिथिलशब्दे आह–**श्रथे-त्यादिना** । प्रत्ययस्थस्य रेफस्य लत्वम् । शिथिलमिति रूपम् । स्थिरस्फिरशब्दयोराह—**ष्ठास्फाय्योरिति** । स्थविरशब्दे आह–**तिष्ठतेरिति** । तिष्ठतेः किरचि तत्संनियोगेन धातोर्वुक्, आकारस्य ह्रस्वश्च निपात्यत इत्यर्थः । खदिरो वृक्षभेदः । शिबिरशब्दं साधयति—**शीङ इति** । शीङ् स्वप्ने इत्यस्मात् किरचि प्रकृतेर्वुक्, ईकारस्य ह्रस्वत्वं च निपात्यते । शिबिरमिति रूपम् । **सलिकल्यनिमहि** । षल गतौ, कलि सङ्ख्याने, अन प्राणने, मह पूजायां, भडि परिभाषणे, भडि कल्याणे, शडि रुजायां, पिडि सङ्घाते, तुडि तोडने, कुक आदाने, भू सत्तायाम् । **सलिलमिति** । सलतीति सलिलमिति । निम्नप्रदेशमिति शेषः । जलस्य निम्नगत्वादिति भावः । 'सलिलं कमलं जल'मित्यमरः । **कलिलमिति** । 'कलिलं गहनं समे' इत्यमरः । अनिलो वायुः । **महिलेति** । पूज्येत्यर्थः । ननु कथं महेलेति, इलचि महिला इत्यस्य साधनादित्यत आह—**पृषोदरादित्वादिति** । इकारस्य गुण इति भावः । तथाच श्रीहर्षः—'परमहेलारतोऽप्यपारदारिकः' इति प्रायुङ्क्त । परस्य महेला स्त्री तस्यां रतोऽपि अपारदारिक इति विरोधाभासाऽलङ्कारः । परमा उत्कृष्टा हेला क्रीडा तस्यां रत इति विरोधपरिहारः । कुट कौटिल्ये इत्यस्मादनुपादाना-दाह—**बाहुलकादिति** । **कमेः पश्च** । कमु कान्तावित्यस्मात् इलच्स्यात्, तत्सन्नियोगेन धातोः पकारो-ऽन्तादेशो भवति । कपिल इति रूपम् । 'कपिला रेणुकायां च शिंशपागोविशेषयोः । पुण्डरीककरिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम् । नाऽनले वासुदेवे च मुनिभेदे च कुक्कुरे' इति मेदिनी । **गुपादिभ्यः कित्** । गुपू रक्षणे, तिज निशाने, गुहू संवरणे, एभ्य इलच्, स च कित् । कित्त्वान्न लघूपधगुणः । गुपिलः । तिजिलः । गुहिलः । **मिथि-लादयश्च** । मिथिलादय इलच्प्रत्ययान्ता निपात्यन्ते । मिथिला इत्यत्र मन्थ विलोडने इत्यस्मात् इलचि तस्य कित्वादनुनासिकलोपोऽकारस्य इकारो निपात्यते । पथे गतावित्यस्मात्पथिल इति रूपम् । **पतिकठिकुठि** ।

---

शे.] **टिलोप इति** । तत्र स्थाधातोः 'आतो लोपः' इत्यनेन, अन्यस्य तु निपातनादिति बोध्यम् ।

गुडेरो गुडकः । दंशेरो हिंस्रः । ५९ । **कुम्बेर्नलोपश्च** । कुबेरः । ६० । **शदेस्त च** । शतेरः शत्रुः । ६१ । **मूलेरादयः** । एरगन्ता निपात्यन्ते । मूलेरो जटा । गुधेरो गोप्ता । गुहेरो लोहघातकः । मुहेरो मूर्खः । ६२ । **कबेरोतच् पश्च** । कपोतः पक्षी । ६३ । **भातेर्डवतुः** । भातीति भवान् । ६४ । **कठिचकिभ्यामोरन्** । कठोरः । चकोरः । ६५ । **किशोरादयश्च** । किंपूर्वस्य शृणातेष्टिलोपः, किमोऽन्त्यलोपः । किशोरोऽश्वशावः । सहोरः साधुः । ६६ । **कपिगडिगण्डिकटिपटिभ्य ओलच्** । कपीति निर्देशान्नलोपः । कपोलः । गडोल-गण्डोलौ गुडकपर्यायौ । कटोलः=कटुः । पटोलः । ६७ । **मीनातेरूरन्** । मयूरः । ६८ । **स्यन्देः संप्रसारणं च** । सिन्दूरम् । ६९ । **सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्** । सिनोतीति सेतुः । 'तितुत्रे'ति नेट् । तन्तुः । गन्तुः । मस्तु दधिमण्डम् । सच्यत इति सक्तुः । अर्धर्चादिः । 'ज्वरत्वरे'त्यूठ् । 'तत्र क्ङितीत्यनुवर्तते'

---

त.] धातोरिदित्वान्नुमि प्राप्ते आह—**बाहुलकादिति** । **कुम्बेः** । कुबि आच्छादने । अन्येषामैश्वर्यं कुम्बतीति कुबेरः । 'कुबेरस्त्र्यम्बकसखः' । **शदेः** । शद्लृ शातने । **मूलेरा** । मूल प्रतिष्ठायाम्, गुध परिवेष्टने, गुहू संवरणे, मुह वैचित्ये । **कबेः** । कबृ वर्णे । 'कपोतः स्याच्चित्रकण्ठे पारावतविहङ्गयोः' इति मेदिनी । 'कपोतः पक्षिमात्रेऽपी'ति त्रिकाण्डशेषः । अत्र ओतचश्चित्त्वं प्रामादिकम् । 'यत्कपोतः पदमग्नौ कृणोति,' 'देवाः कपोत इषितो यदिच्छन्' इत्यादौ सर्वत्र प्रत्ययस्वरेण मध्योदात्तस्यैव पठ्यमानत्वादित्याहुः । **भातेः** । भा दीप्तौ । **भवानिति** । सर्वनामशब्दो-ऽयम् । **कठि** । कठ कृच्छ्रजीवने, चक तृप्तौ । कठोरः कठिनः पूर्णश्च । 'कठोरताराधिपलाञ्छनच्छविः' इति माघः । चकोरः पक्षिभेदः । **किशोरा** । शॄ हिंसायाम् । षह मर्षणे । 'किशोरोऽश्वस्य शावके । तैलपर्ण्योषधौ च स्यात्तरुणा-वस्थसूर्ययोः' इति मेदिनी । **कपिगडि** । कपि चलने, गड सेचने, गडि वदनैकदेशे, कटे वर्षावरणयोः, पट गतौ । **कपोल इति** । केचित्तु सूत्रे कडिं पठन्ति । कडि मदे । कण्डोलश्चाण्डालः । 'चण्डालिका तु कण्डोलवीणा चण्डालवल्लकी' इत्यमरः । **पटोल इति** । 'पटोलं वस्त्रभेदे नौषधौ ज्योत्स्न्यां तु योषिति' इति मेदिनी । कल्ल शब्दे । बाहुलकादतोऽप्योलच् । 'कल्लोलः पुंसि हर्षे स्यान्महत्सूर्मिषु वारिणः' इति मेदिनी । **स्यन्देः** । स्यन्दू प्रस्र-वणे । 'सिन्दूरस्तरुभेदे स्यात्सिन्दूरं रक्तवर्णके' इति मेदिनीविश्वप्रकाशौ । **सितनि** । षिञ् बन्धने, तनु विस्तारे, गम्लृ गतौ, मसी परिणामे, षच सेचने, अव रक्षणादौ, डुधाञ् धारणपोषणयोः, क्रुश आक्रोशे । 'सेतुर्नाऽऽलौ कुमा-रके' इति मेदिनी । 'सेतुरालौ स्त्रियां पुमान्' इत्यमरः । 'सूत्राणि नरि तन्तवः' इत्यमरः । 'मण्डं दधिभवं मस्तु'

---

बा.] पल्ल गतौ, कठ कृच्छ्रजीवने, कुठि कृच्छ्रजीवने, गड सेचने, गुड रक्षायां, दंश दशने, एषां द्वन्द्वात्पञ्चमी । एभ्य एरक् स्यात् । पतेरः, कठेरः, कुठेरः । ननु कुठिधातोरिदित्त्वात् 'इदितो नुम्धातो'रिति नुम् स्यादत आह—**बाहु-लकादिति** । **कुम्बेर्नलोपश्च** । कुबि आच्छादने इत्यस्मात् एरक् । कुबेर इति रूपम् । **शदेस्त च** । शद्लृ शातन इत्यस्मात् एरक् स्यात्, तकारश्चान्तादेशः । शतेर इति रूपम् । **मूलेरादयः** । एरगन्ता निपात्यन्ते । **मूलेर इति** । मूल प्रतिष्ठायामित्यस्मादेरक् । **गुधेर इति** । गुध परिवेष्टने । **गुहेर इति** । गुहू संवरणे । **मुहेर इति** । मुह वैचित्ये । **कबेरोतच् पश्च** । कबेरोतच् पश्चेति छेदः । कबृ वर्णे इत्यस्मात् ओतच्स्यात्पकार-श्चान्तादेशः । कपोतः पक्षिविशेषः । 'कपोतः स्याच्चित्रकण्ठे पारावतविहङ्गयोः' इति मेदिनी । **भातेर्डवतुः** । भाते-रिति भा दीप्तावित्यस्य श्तिपा निर्देशः । **भवानिति** । सर्वनामशब्दोऽयम् । **कठिचकिभ्यामोरन्** । कठ कृच्छ्र-जीवने, चक तृप्तौ, आभ्यामोरन्प्रत्ययः स्यात् । कठोरः चकोर इति रूपम् । **किशोरादयश्च** । एते ओरन्प्रत्य-यान्ता निपात्यन्ते । **किंपूर्वस्येति** । किंपूर्वस्य शॄ हिंसायामिति धातोरोरन् । तस्मिन्परे शृणातेः टिलोपः, किंशब्दा-न्तस्य मकारस्य लोपश्च निपात्यत इत्यर्थः । **सहोर इति** । षह मर्षणे इत्यस्मान्निपातनम् । **कपिगडि** । कपि चलने, गड सेचने, गडि वदनैकदेशे, कटे वर्षावरणयोः, पट गतौ, एषां द्वन्द्वात्पञ्चमी । एभ्यः कोलच्प्रत्ययो भवति । कपोलः गडोलः गण्डोलः कटोलः पटोलः । ननु कपि चलन इत्यस्य इदित्वान्नुम्स्यादित्यत आह—**कपीति निर्देशादिति** । कम्पीति निर्देशे कर्तव्ये नलोपकरणपूर्वकं निर्देशो नलोपविवक्षार्थं भवतीति भावः । **मीनातेरू-रन्** । गुणे अयादेशे मयूर इति रूपम् । **स्यन्देः संप्रसारणं च** । स्यन्दू प्रस्रवण इत्यस्मात् ऊरन्प्रत्ययो भवति, प्रकृतिभूतस्य स्यन्दू इत्यस्य संप्रसारणं च भवति । सिन्दूरमिति रूपम् । 'सिन्दूरस्तरुभेदे स्यात् सिन्दूरं रक्तचूर्णके' इति मेदिनी । **सितनिगमि** । षिञ्बन्धने, तनु विस्तारे, गम्लृ गतौ, मसी परिणामे, सच समवाये, अव रक्षणे, डु धाञ्धारणपोषणयोः, क्रुश आक्रोशे, एषां द्वन्द्वात्पञ्चमी । एभ्यस्तुन्प्रत्ययो भवतीत्यर्थः । सेतुः । ननु इडागमः स्यादित्यत आह—**तितुत्रेति नेडिति** । अव रक्षणे इत्यस्मात्तुनि आह—**ज्वरत्वरेत्यूठिति** । अव् तु इति स्थिते

इति मते तु बाहुलकात् । ओतुर्बिडालः । धातुः क्रोष्टा । ७० । पः किच्च । पिबतीति पितुः । 'पितुर्वह्नौ दिवाकरे' । ७१ । **अर्तेश्च तुः** । अर्तेस्तुः स्यात्स च कित् । 'ऋतुः स्त्रीपुष्पकालयोः' । ७२ । **कमिमनिजनिगाभायाहिभ्यश्च** । एभ्यस्तुः स्यात् । 'कन्तुः कन्दर्पचित्तयोः' । मन्तुरपराधः । जन्तुः प्राणी । 'गातुः पुंस्कोकिले भृङ्गे गन्धर्वे गायनेऽपि च' । भातुरादित्यः । 'यातुरध्वगकालयोः' । रक्षसि क्लीबे । हेतुः कारणम् । ७३ **चायः किः** । 'केतुर्ग्रहपताकयोः' । ७४ । **आप्नोतेर्ह्रस्वश्च** । अप्तुः शरीरम् ।७५। **वसेस्तुन्** । वस्तु । ७६ । **अगारे णिच्च** । 'वेदमभूर्वास्तुरस्त्रियाम्' । ७७ । **कृञः कतुः** । क्रतुर्यज्ञः । ७८ । **एधिवह्योश्चतुः** । एधतुः पुरुषः । वहतुरनड्वान् । ७९ । **जीवेरातुः** । 'जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे' । ८० । **आतृकन् वृद्धिश्च** । जीवेरित्येव । 'जैवातृकस्त्विन्दुभिषगायुष्मत्सु कृषीवले' । ८१ । **कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः** । 'कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यां स्त्रियां मता' । चमूः । तनूः । धनूः शस्त्रम् । सर्जूः सर्जने ।

---

**त.]** इति च । 'धातुर्ना नेन्द्रिये त्रिषु । शब्दयोनिमहाभूततद्गुणेषु रसादिषु । मनःशिलादौ श्लेष्मादौ विशेषाद्गैरिकेऽस्थ्नि च' इति मेदिनी । 'श्लेष्मादिरसरक्तादिमहाभूतानि तद्गुणाः । इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः' इत्यमरः । **पः किच्च** । पा पाने अस्मात्तुन् , स च कित् । कित्त्वात् 'घुमास्थे'तीत्त्वम् । **अर्तेश्च तुः** । ऋ गतौ । तुनि प्रकृते अन्तोदात्तार्थं तुः क्रियते । 'ऋतुना यज्ञं य ऋतुर्जनीनामि'त्यादि । 'ऋतुर्वर्षादिषट्सु च । आर्तवे मासि च पुमान्' इति मेदिनी । 'ऋतुः स्त्रीकुसुमेऽपि च' इत्यमरः । **कमिमनि** । कमु कान्तौ, मन ज्ञाने, जनी प्रादुर्भावे, गै शब्दे, भा दीप्तौ, या प्रापणे, हि गतौ वृद्धौ च । कमिग्रहणं प्रपञ्चार्थम् । 'अर्जिदृशि' इत्यादिना कुप्रत्यये तुकि सिद्धत्वात् । **मन्तुरिति** । 'मन्तुः पुंस्यपराधेऽपि मनुष्येऽपि प्रजापतौ' इति मेदिनी । 'गातुर्ना कोकिले भृङ्गे गन्धर्वे त्रिषु रोषणे' इति च मेदिनी । 'भातुर्ना किरणे सूर्ये' इति च । **चायः किः** । चायृ पूजानिशामनयोः । अस्मात्तुर्धातोः किरादेशश्च । 'केतुर्ना रुक्पताकाविग्रहोत्पातेषु लक्ष्मणि' इति मेदिनी । **आप्नोतेः** । आप्लृ व्याप्तौ । **अप्तुः शरीरमिति** । अभिलषितार्थश्च, आप्तव्यत्वात् । अतएव यागविशेषवाचकस्याऽऽप्तोर्यामशब्दस्याभिलषितार्थप्रापक इत्यवयवार्थमाहुः । **वसेः** । वस निवासे । **कृञः** । डुकृञ् करणे । कतोः कित्त्वाद्गुणाऽभावे यणादेशः । 'क्रतुर्यज्ञे मुनौ पुंसि' इति मेदिनी । **एधिवह्योश्चतुः** । एध वृद्धौ, वह प्रापणे । चित्त्वादन्तोदात्तः । 'स्योनं पत्ये वहतुं कृणुष्व' । 'वहतुः पथिके वृषभे पुमान्' इति मेदिनी । **जीवेः** । जीव प्राणधारणे । **आतृकन्** । 'जैवातृकः पुमान् सोमे कृषकायुष्मतोस्त्रिषु' इति मेदिनी । **कृषिचमि** । कृष विलेखने, चमु अदने, तनु विस्तारे, धन धान्ये । रभसकोशस्थमाह—**कर्षूः पुंसीत्यादि** । 'कर्षूः पुमान् करीषाऽग्नौ स्त्रियां कुल्याऽल्पखातयोः' इति मेदिनी । 'चमूः सेनाविशेषे च सेनामात्रे च योषिति' इति मेदिनी । 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः । 'सर्जूर्वणिजि विद्युति । स्त्रियां स्वर्गे विधौ रुद्रे'

---

**बा.]** वकारस्य संप्रसारणे उकारे गुणे ओतुरिति रूपम् । मतान्तरे आह—**बाहुलकादिति** । क्रोष्टुशब्दात्तुप्रत्यये तृज्वत्क्रोष्टुरित्यस्य प्रवृत्तेराह—**क्रोष्टेति** । **पः किच्च** । **पितुरिति** । तुनः कित्त्वादित्त्वम् । **अर्तेश्च तुः** । ऋ गतौ । तुनि प्रकृते तुविधानं स्वरार्थम् । **कमिमनिजनि** । कमु कान्तौ, मन ज्ञाने, जनी प्रादुर्भावे, गै शब्दे, भा दीप्तौ, या प्रापणे, हि गतौ, एषां द्वन्द्वात्पञ्चमी । एभ्यस्तुप्रत्ययः स्यात् । तन्तुः मन्तुः जन्तुः पातुः भातुः यातुः हेतुरिति । कन्तुरिति पूर्वोक्त–'अर्जिदृशि' इत्यादिसूत्रेण कुप्रत्ययतुकोर्निपातनात् सिद्धे पुनरुक्तिर्व्युत्पत्तिवैचित्र्याय । **चायः किः** । 'चायृ पूजानिशामनयो'रित्यस्मात्तुप्रत्ययः, प्रकृतेः किरादेशश्च । गुणे केतुरिति रूपम् । **आप्नोतेर्ह्रस्वश्च** । आप्लृ व्याप्तावित्यस्मात्तुप्रत्ययः, प्रकृतेर्ह्रस्वश्च भवति । **अप्तुः शरीरमिति** । आप्नोतीति विग्रहः । **वसेस्तुन्** । वस निवास इत्यस्मात्तुन्स्यात् । वस्तु । **अगारे णिच्च** । अगारे वाच्ये वसधातोर्जायमानस्तुन्प्रत्ययो णिद्भवतीत्यर्थः । णित्त्वादुपधावृद्धिः । **कृञः कतुः** । डु कृञ्करणे इति धातोः कतुप्रत्ययो भवति । तस्य कित्त्वाद्गुणाऽभावे यणादेशे च क्रतुरिति रूपम् । **एधिवह्योश्चतुः** । एध वृद्धौ, वह प्रापणे, आभ्यां चतुः स्यात् । एधतुः वहतुः । **जीवेरातुः** । जीव प्राणने, अस्मादातुप्रत्ययः । जीवातुः । **आतृकन्वृद्धिश्च** । जीवेरित्यनुवर्तते । जीव प्राणने इत्यस्मादातृकन्प्रत्ययो भवति, प्रकृतेरिको वृद्धिश्च भवति । जैवातृक इति रूपम् । **कृषिचमितनि** । कृष विलेखने, चमु अदने, तनु विस्तारे, धन धान्ये, सृज विसर्गे इत्यस्य न ग्रहणं तस्य इका निर्देशेऽपि इकः कित्त्वाद्गुणाऽभावे सृजीत्येव निर्देष्टव्यत्वात्, किंतु सर्ज सर्जन इत्यस्य ग्रहणं,खर्ज व्यथने, एषां द्वन्द्वात्पञ्चमी । रभसकोशमाह-**कर्षूः पुंसीति** । 'कर्षूः पुमान्करीषाग्नी कर्षूर्नद्यां स्त्रियां मता' इति मेदिनी । चमूः सेना । **तनूरिति** । 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः ।

---

**शे.]** कणिमनि । अनेनैव कन्तोः सिद्धौ 'अर्जिदृशि' इति सूत्रे कमिग्रहणं व्यर्थम् ।

सर्जूर्वणिक् । खर्ज व्यथने । खर्जूः पामा । ८२ । **मृजेर्गुणश्च** । मर्जूः शुद्धिकृत् । ८३ । **वहो धश्च** । 'वधूर्जायास्नुषास्त्रीषु । ८४ । **कषेश्छश्च** । कच्छूः पामा । ८५ । **णित्कसिपद्यर्तेः** । कासूः शक्तिः । 'पादूश्चरणधारिणी' । आरूः पिङ्गलः । ८६ । **अणो डश्च** । आडूर्जलप्लवद्रव्यम् । ८७ । **नञि लम्बेर्नलोपश्च** । 'तुम्ब्यलाबूरुभे समे' इत्यमरः । ८८ । **के श्र एरङ् चाऽस्य** । कशब्दे उपपदे श्रृणातेरूः स्यादेरङादेशः । 'कशेरूस्तृणकन्दे स्त्री' । बाहुलकादुप्रत्यये कशेरुः क्लीबे पुंसि च । ८९ । **त्रो दुट् च** । तरतेरूः स्यात्तस्य दुट् । 'तर्दूः स्याद्दारुहस्तकः' । ९० । **दरिद्रातेर्यालोपश्च** । इश्च आश्च यौ, 'तयोर्लोपः । दर्द्रूः कुष्ठप्रभेदः । ९१ । **नृतिशृध्योः कूः** । नृतूर्नर्तकः । श्रृधूरपानम् । ९२ । **ऋतेरम् च** । ऋतिः सौत्रो धातुः । ततः कूरमागमश्च । रन्तूर्देवनदी सत्यवाक् च । ९३ । **अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः** । एते कूप्रत्ययान्ता निपात्यन्ते ।

त.]इति मेदिनी।'खर्जूः कीटान्तरे नृ(वृ?)तौ','खर्जूरीपादपे कण्डू'मिति च । **मृजेः** । मृजू शुद्धौ । अस्मादूः स्याद्वृद्ध्यपवादो गुणश्च । 'मर्जूः स्त्री शुद्धौ धावकेऽपि च' इति मेदिनी । **वहो धश्च** । वह प्रापणे । 'वधूः स्नुषा नवोढा स्त्री भार्यापृक्काङ्गनासु च' इति विश्वः । 'पृक्का महिला च वधूः' इति त्रिकाण्डशेषः । **कषेश्छश्च** । कषशिषेति दण्डके हिंसार्थः । अस्मादूः स्याच्छश्चान्तादेशः । 'कच्छ्वां तु, पाम पामा विचर्चिका' इत्यमरः । **णित्कसि** । कस गतौ, पद गतौ, ऋ गतौ । 'कासूर्विकलवाचि स्यात्तथा शक्त्यायुधे स्त्रियाम्' इति मेदिनी । 'कासूः शक्त्यायुधे रुजि । बुद्धौ विकलवाचि स्यात्' इति हेमचन्द्रः । **अणो डश्च** । अण दण्डके शब्दार्थः । अस्मादूः स्यात्स च णित् । डश्चान्तादेशः । **नञि लम्बेः** । लबि अवस्रंसने । न लम्बते जले इत्यलाबूः । **के श्रः** । शॄ हिंसायाम् । **त्रो दुट् च** । तॄ प्लवनतरणयोः । **तर्दूरिति** । 'नेड्वशी'ति नेट् । 'वरमनादा'विति परिगणनं तु बाहुलकान्नाश्रीयते इत्याहुः । केचित्तु इडभावे 'त्रो दुक् चे'ति पठित्वा धातोर्दुगागममाहुस्तेषां तु धातोर्गुणो दुर्लभः । दुगागमात्पूर्वं यत्प्राप्तं तदपि भवतीत्येवं चकारबलेन व्याख्याय वा गुणः साधनीयः । **दरिद्रातेः** । दरिद्रा दुर्गतौ । **इश्च आश्चेति** । भोजदेवस्तु 'र्यालोप' इति रेफाघटितं पदं छित्त्वा द्वेधा व्याख्यत् । इश्च आश्चेति व्याख्याने—दर्द्रूः । रश्च इश्च आश्चेति व्याख्याने तु 'अन्त्यबाधेऽन्त्यसदेशस्ये'ति द्वितीयस्यैव रेफस्य लोपाद्दर्दूरिति । मृगय्वादित्वात्कुप्रत्यये दर्द्दुरित्यन्ये । 'दर्द्रुणो दद्रुरोगी स्यात्' इत्यमरः । इत्थं चत्वारि रूपाणि । **नृति** । नृती गात्रविक्षेपे, श्रृधु शब्दकुत्सायाम् । **अन्दूदृम्भू** । अदि बन्धने । 'नृतिश्रृध्योः कूः' इत्यत्रादिग्रहणं न कृतं वैचित्र्यार्थमित्याहुः । ला

बा.]**मृजेर्गुणश्च** ।'मृजेर्वृद्धि'रिति वृद्ध्यभावः,ऊप्रत्ययसंनियोगेन गुणो विधीयते । मर्जूरिति रूपम् । **वहो धश्च** । वह प्रापण इत्यस्मादूप्रत्ययः । तत्संनियोगेन धातोर्धकारोऽन्तादेशश्च । **वधूरिति** । 'वधूः स्नुषा नवोढा स्त्री भार्यापृक्काङ्गनासु चे'ति विश्वः । **कषेश्छश्च** । कष हिंसायां, अस्मादूप्रत्ययो भवति, तत्संनियोगेन छकारश्चान्तादेशः । कच्छूरिति रूपम् । 'कच्छ्वां तु, पाम पामा विचर्चिका' इत्यमरः । **णित्कसिपद्यर्तेः** । कस गतौ, पद गतौ, ऋ गतौ, एषां समाहारद्वन्द्वात्पञ्चमी । एभ्य ऊप्रत्ययः स्यात्, स च णिद्भवति । णित्कार्यं प्रवर्तयतीत्यर्थः । **कासूः शक्तिरिति** । 'कासूर्विकलवाचि स्या'दिति मेदिनीकारः । **अणो डश्च** । अण शब्दे अस्मादूः स्यात्, स च णित्, प्रकृतेर्डकारश्चान्तादेशो भवतीत्यर्थः । आडूरिति रूपम् । **नञि लम्बेर्नलोपश्च** । अवस्रंसनार्थकाल्लबिधातोर्नञि उपपदे ऊप्रत्ययो भवति, स च णित्, धातारिदित्वाल्लब्धस्य नकारस्य लोपश्च भवतीत्यर्थः । न लम्बते=नावस्रंसते जले इत्यर्थेऽनेन उप्रत्ययेऽनुनासिकलोपे च 'अतः उपधायाः' इत्यनेनोपधावृद्धौ अलाबूरिति रूपम् । **के श्र एरङ् चास्य** । शॄ हिंसाया'मित्यस्यं श्र इति पञ्चम्यन्तम् । शेषं स्पष्टम् । ननु कशेरुरिति कथम्, ऊप्रत्ययस्यैवानुशासनादित्यत आह—**बाहुलकादिति** । **त्रो दुट् च** । तॄ प्लवनतरणयोरित्यस्मादूप्रत्ययः, दुडागमश्च । अयं चागमः प्रत्ययस्य । नन्वेवं प्रत्ययस्य वलादित्वादार्द्धधातुकत्वाच्च इडागमो दुर्वार इति वाच्यं, 'नेड्वशि कृती'ति निषेधात् । केचित्तु 'त्रो दुक्चे'ति पठित्वा ऊप्रत्ययसंनियोगेन प्रकृतेर्दुगागममाहुः । तेषां यद्यपि इडागमाऽभावः सिद्धः, तथापि इगन्तत्वाऽभावादङ्गस्य गुणो न स्यात् । नच 'पुगन्ते'ति गुणो भविष्यतीति वाच्यं, तॄधातोर्ऋकारान्तत्वेन लघूपधत्वाऽभावात् । यदि कथंचिदेतन्मते आग्रहस्तर्हि दुक्चेत्यत्र चकारो दुगागमात्पूर्वं यत्कार्यं भवितव्यं तदपि भवतीति बोधनार्थमिति क्लिष्टकल्पनं शरणम् । **दरिद्रातेर्यालोपश्च** । दरिद्रा दुर्गतावित्यस्मादूप्रत्ययः, यालोपश्च भवतीत्यर्थः । यालोप इत्येतद्विवृणोति—**इश्च आश्चेति** । या औ इत्यत्र वृद्धौ यौ, तयोर्लोप इत्यर्थः । **नृतिशृध्योः कूः** । नृती गात्रविक्षेपे, श्रृधु हिंसायाम्, आभ्यां कूप्रत्ययः स्यात् । **ऋतेरम् च** । ऋतिः सौत्रो धातुः । तस्मात्कूप्रत्ययः स्यात्, प्रकृतेरमागमश्चेत्यर्थः । ऋत् इति स्थिते अमागमे ऋकारात्परे सति ऋकारस्य यणि चरन्तूरिति रूपम् । **अन्दूदृम्भूजम्बू** । अदि बन्धने, दृभी ग्रन्थे ईदित्, जन जनने, ला आदाने कफपूर्वः, डु धाञ्

अन्दूर्बन्धनम् । दृभी ग्रन्थे । निपातनान्नुम् । दृम्भूः । अनुस्वाराऽभावोऽपि निपातनादित्येके । दृन्भूः । जनेर्बुक् । जम्बूः । जमु अदने इत्यस्येत्येके । बाहुलकाद्ध्रस्वोऽपि । जम्बुः । कफं लाति कफेलूः श्लेष्मातकः । निपातनादेत्त्वम् । कर्कं दधाति कर्कन्धूर्बदरी । निपातनान्नुम् । दिधिं धैर्यं स्यति त्यजतीति दिधिषूः=पुनर्भूः । केचित्तु 'अन्दूदृम्फूजम्बूकम्बू' इति पठन्ति । दृम्फ उत्क्लेशे । दृम्फूः सर्पजातिः । 'कमेर्बुक्' । कम्बूः परद्रव्यापहारी । ९४ । मृग्रोरुतिः । मरुत् । गरुत्पक्षः । ९५ । ग्रो मुट् च । गिरतेरुतिस्तस्य च मुट् । गर्मुत्सुवर्णं, तृणविशेषश्च । ९६ । हृषेरुलच् । 'हृर्षुलो मृगकामिनोः' । बाहुलकाचटतेः । चटुलं शोभनम् । ९७ । हृसृरुहियुषिभ्य इतिः । 'हरित्ककुभि वर्णे च तृणवाजिविशेषयोः' । सरिन्नदी । 'रोहिन्मृगविशेषस्य

त.] आदाने-कफपूर्वः । डुधाञ् धारणपोषणयोः कर्कपूर्वः । षोऽन्तकर्मणि-दिधिपूर्वः षत्वं च । अन्दूर्बन्धनमिति । 'अन्दूः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य च' इति मेदिनी । 'अन्दुको हस्तिनि गदे' इत्यमरः । संज्ञायां कन् । 'केऽणः' इति ह्रस्वः । केचित्तु अम गतौ अस्य दुक् । अन्दूर्दुद्रिरिति व्याचख्युः । दृभी ग्रन्थ इति । तुदादिरयम् । दृभतीति दृम्भूः संदर्भकर्तेत्यर्थः । कथक इत्यन्ये । कैयटमतानुरोधेनास्य रूपाणि दृभूवदित्युक्तम् । माधवादयस्तु दृढशब्दे उपपदे भुवः कूप्रत्ययः, उपपदस्य दृन्नादेशो निपात्यते । यद्वा दृढार्थकं दृन्निति नान्तमव्ययमुपपदम् । दृम्भूस्तु सर्पः कपिर्वेति व्याख्याय 'दृन्करे'ति यणि वर्षाभूवद्रूपमस्येत्याहुः । ह्रस्वोऽपीति । अतएव विक्रमादित्येनोक्तं-'तस्या जम्वोः फलरसो नदीभूय प्रवर्तते' इति । केचित्तु 'परिणतजम्बुफलोपभोगहृष्टाः' इति भारविप्रयोगं ह्रस्वान्तत्वे साधकत्वेनोदाजहुस्तच्च । 'इको ह्रस्वोऽङ्य' इत्युत्तरपदाधिकारस्थह्रस्वविधायकसूत्रेण गतार्थत्वात् । दिधिमिति । केचित्तु दधातेरित्वं द्वित्वं षुक् च निपात्यते । दधात्यसौ दिधिषूरित्याहुः । पुनर्भूरिति । 'पुनर्भूर्दिधिषूरूढा द्विः' इत्यमरः । द्विरूढा=द्विवारं विवाहितेत्यर्थः । उज्ज्वलदत्तोक्तपाठमाह -केचित्त्विति । एतच्च कैयटमाधवादिग्रन्थविरुद्धम् । अतएव 'दृम्भूः स्त्री सर्पचक्रयोः' इति भान्ते मेदिनी । मृग्रोः । मृङ् प्राणत्यागे, गॄ निगरणे, आभ्यामुतिः । इकारस्तकारस्येत्संज्ञापरित्राणार्थः । मरुदिति । प्रज्ञादित्वादणि मारुतोऽपि । मरुत-शब्दोऽप्यव्युत्पन्नोऽस्ति । तथा च विक्रमादित्यकोशः 'मरुतः स्पर्शनः प्राणः समीरो मारुतो मरुत' इति । 'कोऽयं वाति स दाक्षिणात्यमरुतः' इति कविराजश्लोकेऽनुपपत्तिं मत्वा 'दाक्षिणात्यपवन' इति पाठं केचित्कल्पयन्त्यल्पदृश्वान इति वर्णविवेकः । गरुदिति । यवादिरयम् । तेनाऽस्मात्परस्य मतुपो मस्य 'झयः' इत्यनेन वत्वं न । गरुत्मान् । गर्मुदिति । 'गर्मुत्स्त्री स्वर्णलतयोः' इति मेदिनी । हृषेः । हृष तुष्टौ । चटतेरिति । चटे वर्षावरणयोः । हृसृ । हृञ् हरणे, गतौ, रुह बीजजन्मनि । विश्वकोशस्थमाह—हरिदिति । 'हरिद्दिशि स्त्रियां पुंसि हर्षवर्णविशेषयोः । अस्त्रियां स्यात्तृणे च' मेदिनी । ऋश्यसंग्रेति । एतेन 'गतं रोहिद्भूतां रिरमयिषुमृश्यस्य वपुषा-'

बा.] धारणपोषणयोः कर्कपूर्वः, षोऽन्तकर्मणि दिधिपूर्वः, एषां समाहारद्वन्द्वात्प्रथमा । एते कूप्रत्ययान्ता निपात्यन्ते । अदिधातोरीदित्त्वान्नुम् । दृभीधातोरीदित्त्वात्कथं नुमित्यत्राह-निपातनान्नुमिति । केचित् दृन्भूरिति पठन्ति, तन्मतेऽनुस्वाराऽभावोऽपि निपातसाध्य इत्याह-अनुस्वाराऽभाव इति । जनधातोराह—जनेर्बुगिति । बुगागमोऽपि कूप्रत्ययसंनियोगेन विधीयत इत्यर्थः । ततश्चानुस्वारे परसवर्णे मकारे जम्बूरिति रूपम् । ननु कथं जम्बुशब्द इत्यत्राह—बाहुलकादिति । मृग्रोरुतिः । मृङ् प्राणत्यागे, गॄ निगरणे, आभ्याम् उतिप्रत्ययः स्यात् । मरुत् । मरुतशब्दोऽप्यस्ति । तथाच विक्रमादित्यकोशः—'मरुतः स्पर्शनः प्राणः समीरो मारुतो मरुत' इति । एतेन 'कोऽयं वाति स दाक्षिणात्यमरुतः' इति कविराजश्लोके मरुत इत्यनुपपन्नमिति मत्वा दाक्षिणात्यपवन इति पठन्तः प्रत्युक्ताः । 'गरुत्मा'नित्यत्र 'मादुपधायाः' इत्यनेन वत्वाऽभावस्तु अस्य यवादित्वात् सिद्धः, अयवादिभ्य इति निषेधात् । ग्रो मुट् च । गॄ निगरणे इत्यस्मात् उतिः स्यात्तत्संनियोगेन मुडागमश्च । गर्मुदिति रूपम् । 'गर्मुत् स्त्री स्वर्णलतयोः' इति कोशादाह—स्वर्णं लताविशेषश्चेति । हृषेरुलच् । हृष हृष्टौ, अस्मात् उलच्प्रत्ययः स्यात् । हृर्षुल इति । लघूपधगुणः । चटुल इति रूपं साधयितुमाह—बाहुलकादिति । चटतेरिति । चटे वर्षावरणयोरित्यस्मादित्यर्थः । हृसृरुहियुषिभ्य इतिः । हृञ् हरणे, सृ गतौ, रुह बीजजन्मनि, युषि, एषां द्वन्द्वात्पञ्चमी । एभ्य इतिप्रत्यय इत्यर्थः । इकारस्तकारस्येत्संज्ञातः परित्राणार्थः । हरिच्छब्दार्थं विवरिषुः विश्वकोशमाह—हरित्ककुभीति । 'हरिद्दिशि स्त्रियां पुंसि हर्षवर्णविशेषयो'रिति मेदिनीकारः । सरिन्नदीति

शे.] केचित्त्विति । अत्राऽरुचिः कैयटमाधवादिग्रन्थविरोधः । ग्रो मुट् च । गर्मुच्छब्दः प्रत्ययस्वरेणान्तोदात्तः । अत एव गार्मुतम्' इत्यत्राञ् । क्वचिद्वेदे आद्युदात्तपाठस्त छान्दसः ।

स्त्री'। युष इति सौत्रो धातुः। 'ऋश्यस्य रोहित् पुरुषस्य योषित्'-इति भाष्यम्। ९८। **ताडेर्णिलुक् च।** ताडयतीति तडित्। ९९। **शमेर्ढः।** बाहुलकादित्संज्ञा एयादेश इट् च न। 'शण्ढः स्यात्पुंसि गोपतौ'। शण्ढः क्लीबः। १००। **कमेरठः।** कमठः। 'कमठः कच्छपे पुंसि भाण्डभेदे नपुंसक'मिति मेदिनी। बाहुलकाजरठः। १०१। **रमेर्वृद्धिश्च।** रामठं हिङ्गु। १०२। **शमे खः।** शङ्खः। १०३। **कणेष्ठः।** कण्ठः। १०४। **कलस्तृपश्च।** तृपतेः कलप्रत्ययः। चात्तृफतेः। तृपला लता। 'त्रिफला तु फलत्रिके'। १०५। **शपेर्बश्च।** शबलः। १०६। **वृषादिभ्यश्चित्।** वृषलः। पललम्। बाहुलकाद्गुणः। सरलः। तरलः। **(ग) कमेर्बुक् [च]।** कम्बलः। मुस खण्डने। मुसलम्। **(ग) लङ्गेर्वृद्धिश्च।** लाङ्गलम्।

---

**त.]** इति पुष्पदन्तप्रयोगो व्याख्यातः। 'रोहिन्मृग्यां लताभेदे स्त्री नाऽर्के' इति मेदिनी। **ताडेः।** 'तड आघाते' ण्यन्तः। 'तडित्सौदामनी विद्युत्' इत्यमरः। **शमेः।** शम उपशमे। **बाहुलकादिति।** यद्यपि 'नेड्वशि कृती'त्यनेनैव इडभावस्य सिद्धत्वादिट् च नेत्येतदयुक्तं तथापि 'नेड्वरमनादा'विति परिगणनाद्बहुलग्रहणमाश्रित्यैव इडभावोऽपि साधितः। 'शण्ढः स्यात्पुंसि गोपतौ। आकृष्टाऽण्डे वर्षवरे तृतीयप्रकृतावपि' इति मेदिनी। **कमेः।** कमु कान्तौ। 'कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकम्' इति मेदिनी। **जरठ इति।** जॄ वयोहानौ। 'जरठः कठिने पाण्डौ कर्कशेऽप्यभिधेयवत्' इति विश्वमेदिन्यौ। 'जरठः कठिने जीर्णे' इति वैजयन्ती। **रमेः।** रम क्रीडायाम्। **शमेः।** शम उपशमे। 'शङ्खो निधौ ललाटाऽस्थ्नि कम्बौ न स्त्री' इत्यमरः। 'शङ्खः कम्बौ न योषिद्वा भालास्थिनिधिभिन्नखे' इति मेदिनी। **कणेः।** 'कण्ठो गले सन्निधाने ध्वनौ मदनपादपे' इति विश्वमेदिन्यौ। **कल।** तृप प्रीणने। **फलत्रिके इति।** 'त्रिफला तृफला च सा' इति विश्वः। त्रिफलाशब्दसमानार्थस्तृफलाशब्द इति 'द्विगोः' इति सूत्रे रक्षितः। **शपेः।** शप आक्रोशे। **वृषादिभ्यः।** वृषु सेचने, पल गतौ, सृ गतौ, तॄ प्लवनतरणयोः। 'शूद्राश्चाऽवरवर्णाश्च वृषलाश्च जघन्यजाः' इत्यमरः। 'वृषलस्तुरगे शूद्रे' इति हेमचन्द्रः। 'पललं तिलचूर्णे च पिके मांसे नपुंसकम्। ना राक्षसे' इति मेदिनी। कलप्रत्ययस्य कित्त्वादाह—**बाहुलकादिति।** 'सरलः पूतिकाष्ठे नाऽथोदारा ऽवक्रयोस्त्रिषु' इति मेदिनी। 'सरला विरलायन्ते घनायन्ते किल द्रुमाः। न शमी न च पुन्नागा अस्मिन्संसारकानने' इत्यभियुक्तप्रयोगः। **कमेः।** कमु कान्तौ। अस्माद्वृषादित्वेन कलप्रत्यये बाहुलकादित्यनुषज्यत इति बुक्। 'कम्बलो नागराजे स्यात्सास्नाप्रावारयोरपि। कृमावप्युत्तरासङ्गे सलिले तु नपुंसकम्' इति मेदिनी। 'मुसलं स्यादयोऽग्रे च पुंनपुंसकयोः स्त्रियाम्। तालमूल्यामाखुपर्णीगृहगोधिकयोरपि' इति मेदिनी। मूर्धन्यमध्योऽप्ययमिति **वर्णदेशना।** मुस खण्डन इति धातोर्दन्त्यान्तेषु मूर्धन्यान्तेषु च बोपदेवादिभिः पठितत्वात्। उज्ज्वलदत्तादयस्तु

---

**बा.]** सुप्रसिद्धम्। रोहिच्छब्दार्थमाह—**मृगविशेषस्य स्त्रीति।** 'रोहिन्मृग्यां लताभेदे' इति मेदिन्याम्। ननु युषधातुर्धातुपाठे नोपलभ्यत इत्यत आह—**युषधातुः सौत्र इति।** **ताडेर्णिलुक्च।** तड ताडने चुरादिः। अस्माद्धातोरितिप्रत्ययः स्याण्णिलुक्चेति सूत्रार्थः। **तडिदिति।** 'तडित्सौदामनी विद्यु'रित्यमरः। 'णेरनिटी'ति सूत्रेणैव लोपे सिद्धेऽनेन लुग्विधानं उपधावृद्ध्यभावार्थम्। लोपे हि प्रत्ययलक्षणेन उपधावृद्धिर्भवेदेव। अत एव च भाव्यत इत्यादौ णिलोपेऽपि वृद्धिर्भवति। ननु ण्यन्तस्य केवलस्य वा तडधातोः सेट्कत्वादिडागमेनैव रूपं सिध्यति, इडार्धधातुकत्वेन णेर्लोपाऽभावेऽपि अनेन लुग्विधानात्। ततश्च तिप्रत्यय एव विधीयतामिति वाच्यम्, तिप्रत्ययमात्रविधाने 'तितुत्रे'ति इण्निषेधप्रसङ्गात्। तस्माद्यथोक्तमेव रमणीयम्। **शमेर्ढः।** ननु ढप्रत्यये 'चुटू' इत्यनेन इत्संज्ञा ढकारस्य दुर्वारा। किंच 'आयनेयी'तिसूत्रेण एयादेशश्च दुर्वारः। किंच वलाद्यार्धधातुकत्वादिडागमश्च दुर्वारः। न च ढप्रत्ययस्य वशादिकृत्त्वात् 'नेड्वशि कृती'ति निषेधो भविष्यतीति वाच्यं, तस्मिन्सूत्रे 'नेड्वरमनादा'विति परिगणितत्वात्। एवंच शण्ढ इति रूपमसाध्वेवेति शङ्कायामाह—**बाहुलकादिति।** **कमेरठः।** कमु कान्तौ, अस्मादठप्रत्ययः स्यात्। कमठ इति रूपम्। जरठशब्दायाह—**बाहुलकादिति।** जॄ वयोहानावित्यस्मादठप्रत्ययः। 'जरठः कठिने पाण्डौ कर्कशेऽप्यभिधयव'दिति मेदिनी। **रमेर्वृद्धिः।** रमु क्रीडायामित्यस्मादठप्रत्ययः वृद्धिश्चेत्यर्थः। रामठमिति रूपम्। **शमेः खः।** शम उपशमे इत्यस्माद्धातोः खप्रत्ययः। बाहुलकादीनादेशाऽभावः। 'शङ्खो निधौ ललाटास्थ्नि' इत्यमरः। **कणेष्ठः।** कण निमीलने इत्यस्माट्ठप्रत्ययो भवति। कण्ठः। 'कण्ठो गले संनिधाने ध्वनौ मदनपादपे' इति मेदिनी। **कलस्तृपश्च।** तृप प्रीणन इत्यस्माद्धातोः कलप्रत्ययः। तृपलेति रूपम्। तृफलेति रूपं साधयति—**चादिति।** चकारः तृफधातोः समुच्चायक इति भावः। **शपेर्वश्च।** शप आक्रोशे इत्यस्मात् कलप्रत्ययो भवति। धातोः पकारस्य बकारश्चान्तादेश इत्यर्थः। शबल इति रूपम्। **वृषादिभ्यश्चित्।** वृष सेचने, पल गतौ, इत्यादिभ्यः कलप्रत्ययः। स चे

(ग) कुटिकशिकौतिभ्यः प्रत्ययस्य मुट् । कुट्मलः । कुडेरपि-कुड्मलः । कश्मलम् । बाहुलकाद्गुणः । कोमलम् । १०७ । मृजेष्टिलोपश्च । मलम् । १०८ । चुपेरच्चोपधायाः । चपलम् । १०९ । शकिशम्योर्नित् । शकलम् । शमलम् । ११० । छो गुग्घ्रस्वश्च । छगलः । प्रज्ञादित्वाच्छागलः । १११ । अमन्ताड्डः । दण्डः । रण्डा । खण्डः । मण्डः । वण्डश्छिन्नहस्तः । अण्डः । बाहुलकात्सत्वाऽभावः । षण्डः सङ्घातः । तालव्यादि-

त.] तालव्यमध्यमप्याहुः । अतएव 'मुसलो मुषलोऽपि च' इति विश्वकोशे । 'मुशलोऽपि चे'ति पाठान्तरम् । लङ्केः । लगि गतौ । अस्मात्कलप्रत्यये बाहुलकादित्यनुषज्जाद्वृद्धिरिति भावः । एवमग्रेऽपि । मुडागमो बाहुलकादेव । **कुटिकशि** । कुट कौटिल्ये, कश गतिशासनयोः, कु शब्दे, अस्मात्कलप्रत्यये गुणो नेत्याशङ्क्याह—**बाहुलकादिति** । 'कोमलं मृदुलं मृदु' । बाहुलकादन्यत्रापि बोध्यः । तद्यथा—कुस श्लेषणे । दन्त्यान्तोऽयम् । बोपदेवमते तु तालव्यान्तोऽपि । गुणः । कोशलः कोसलो वा देशविशेषः । 'वृद्धेत्कोसले'ति सूत्रे तु दन्त्यान्त एव सांप्रदायिकः । संब संबन्धे, शंब च । संबलं शंबलम् । 'शंबलोऽस्त्री संबलवत् कूलपाथेयमत्सरे' इति मेदिनी । कदि आह्वाने । नलोपः । गौरादित्वान्ङीषि-कदली । 'मन्दान्दोलितकर्पूरकदलीदलसंज्ञया । विश्रमाय श्रमापन्नानाह्वयन्तीमिवाध्वगा'निति काशीखण्डेम् । अजादेराकृतिगणत्वाट्टाबपि । 'कदलाकदलौ पृश्न्यां कदलीकदलौ पुनः । रम्भावृक्षेऽथ कदली पताका-मृगभेदयोः । कदली विम्बिकायां च' इति मेदिनी । कुश इति सौत्रो धातुः । 'कुशलः शिक्षिते त्रिषु । क्षेमे च सुकृते चापि पर्याप्तौ च नपुंसक'मिति मेदिनी । कमु कान्तौ । 'कमलं सलिले ताम्रे जलजे व्योम्नि भेषजे । मृगभेदे तु कमलः कमला श्रीवरस्त्रियोः' इति विश्वमेदिन्यौ । मडि भूषायाम् । 'मण्डलं परिघौ कोठे देशे द्वादशराजके' इति मेदिनी । 'कोठो मण्डलकं क्लीबे' इत्यमरः । 'बिम्बोऽस्त्री मण्डलं त्रिषु' इति च । **मृजेः** । मृजू शुद्धौ । 'मलोऽस्त्री पापविट्किट्टे कृपणे त्वभिधेयवत्' इति मेदिनी । **चुपेः** । चुप मन्दायां गतौ । 'चपलः पारदे मीने चोरके प्रस्तरान्तरे । चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च । नपुंसके तु शीघ्रे स्याद्वाच्यवत्तरले चले' इति मेदिनी । **शकिशम्योः** । शक्लृ शक्तौ, शम उपशमे । शकलं खण्डे रोहितादीनां त्वचि च । तद्योगात् शकली मत्स्यः । 'मत्स्यान् शकला'निति भाष्यम् । 'शकलं त्वचि खण्डे स्याद्रागवस्तुनि वल्कले' इति मेदिनी । **छो गुक्** । छो छेदने । 'छगलं नीलवस्त्रे ना छागे स्त्री वृद्धदारके' इति मेदिनी । **अमन्ताड्डः** । 'अ'मिति प्रत्याहारः । दमु उपशमे, रमु क्रीडायाम्, खनु अवदारणे, मन ज्ञाने, वन संभक्तौ, अम गत्यादिषु, षणु दाने, गम्लृ गतौ, चण दाने, पण व्यवहारे स्तुतौ च । काशिकायां तु 'त्रिभ्य एव कणमाः स्यु'रित्युक्तम् । अम् प्रत्याहारस्तु न स्वीकृतः । अष्टाध्याय्यां तस्य विषयाऽभावात् । **दण्ड इति** । बाहुलकात् 'चुटू' इति नेत्संज्ञा । 'दण्डोऽस्त्री लगुडेऽपि स्यात्'

बा.] चिह्नवति । चित्त्वं स्वरार्थम् । नन्वेवमपि सरल इत्यादौ कथं गुणः, प्रत्ययस्य कित्त्वादित्यत आह—**बाहुलकादिति** । कम्बल इत्यत्र प्रक्रियामाह—**बुगिति** । **लङ्केर्वृद्धिश्च** । लगि गतौ इत्यस्मात्कलप्रत्ययो भवति, प्रकृतेर्वृद्धिश्च । लाङ्गलमिति रूपम् । **कुटिकशिकौतिभ्यः** । कुट कौटिल्ये, कश गतिशासनयोः, कु शब्दे, एषां द्वन्द्वात्पञ्चमी । एभ्यः कलप्रत्ययो भवति, तस्य मुडागमश्च भवतीत्यर्थः । कुट्मलमित्येव रूपम् । कुड्मलशब्दस्तर्हि असाधुरित्याशङ्कायामाह – **कुडेरपीति** । बाहुलकादिति भावः । ननु कोमलमिति कथं, कलप्रत्ययस्य कित्त्वेन गुणाऽसंभवादित्यत आह—**बाहुलकादिति** । एवमन्येऽपि कोसलादयः शब्दा बोध्याः । **मृजेष्टिलोपश्च** । कलप्रत्ययस्तत्संनियोगेन टेः ऋजित्यस्य लोपः । मलमिति रूपम् । 'मलोऽस्त्री पापविट्किट्टे कृपणे त्वभिधेयवत्' इति मेदिनी । **चुपेरच्चोपधायाः** । 'चुप मन्दायां गतौ' अस्माद्धातोः कलप्रत्यये उपधाया उकारस्य अकारे चपल इति रूपम् । **शकिशम्योर्नित्** । शक्लृ शक्तौ, शम उपशमे, आभ्यां कलप्रत्ययः, नित्च भवति । शकलं शमलमिति रूपम् । **छो गुक् ह्रस्वश्च** । छो छेदने, अस्मात्कलप्रत्ययः, गुगागमः, प्रकृतेरवयवस्याकारस्य ह्रस्वश्च भवतीत्यर्थः । ननु कथं छागल इति, अनेन ह्रस्वस्य दुर्निवारत्वादित्यत आह—**प्रज्ञादित्वादिति** । 'प्रज्ञादिभ्यश्च' इत्यणि छागल इति भवतीत्यर्थः । स्वार्थिकोऽयं प्रत्ययः ।

**अमन्ताड्डः** । अम् प्रत्याहारः । अमन्ताद्धातोर्डप्रत्ययः स्यात् । **दण्ड इति** । दमु उपशमे अस्माड्डप्रत्ययः । 'नेड्वशि कृती'ति निषेधादिडागमो न । बाहुलकात् 'चुटू' इतीत्संज्ञा न । 'दण्डोऽस्त्री लगुडेऽपि स्या'दित्यमरः । **रण्डेति** । रमु क्रीडायाम् इत्यस्माड्डप्रत्ययः । 'रण्डा मूषकपर्ण्यां च विधवायां च योषिती'ति मेदिनी । **खण्ड इति** । खनु अवदारणे । 'खण्डोऽस्त्री शकले नेक्षुविकारमणिभेदयोः' इति कोशः । **मण्ड इति** । मन ज्ञान इत्यस्माड्डप्रत्ययः । 'मण्डः पञ्चाङ्गुले शाकभेदे क्लीबं तु मस्तुनि' इति मेदिनी । **वण्ड इति** । वन संभक्तावित्यस्माड्डप्रत्ययः । **अण्ड इति** । अम गत्यादिषु । **षण्ड इति** । षणु दाने इत्यस्माड्डप्रत्ययः । 'धात्वादेः षः सः' इति सत्वमाशङ्क्याह–

रित्यपरे। शण्डः। गण्डः। चण्डः। पण्डः क्लीबः। पण्डा बुद्धिः। ( फण्डः )। ११२। **क्वादिभ्यः कित्।** कवर्गादिभ्यो डः कित्स्यात्। कुण्डम्। काण्डम्। गुड्। गुडः। घुण भ्रमणे। घुण्डो भ्रमरः। ११३। **स्थाचतिमृजेरालज्वालञालीयचः।** तिष्ठतेरालच्। स्थालम्। स्थाली। चतेर्वालञ्। चात्वालः। मृजेरालीयच्। मार्जालीयो बिडालः। ११४। **पतिचण्डिभ्यामालञ्।** पातालम्। चण्डालः। प्रज्ञादित्वादणि चाण्डालोऽपीत्येके। ११५। **तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन्।** तमालः।

---

**त.]** इत्यमरः। 'रण्डा मूषकपर्ण्यां च विधवायां च योषिति। खण्डोऽस्त्री शकले नेक्षुविकारमणिभेदयोः।' 'मण्डः पञ्चाङ्गुले शाकभेदे क्लीबं तु मस्तुनि।' 'वण्डा तु पांसुलायां स्त्री त्रिषु हस्तादिवर्जिते'। अमन्ति संप्रयोगं यान्ति अनेनेति अण्डः प्राण्यवयवः। 'षण्डः पद्मादिसङ्घाते नं स्त्री स्याद्गोपतौ पुमान्'। शडि रुजायाम्, अस्माद्धलि शण्डशब्दस्तालव्यादिरपि सङ्गते वर्तते इत्याशयेन मतान्तरमाह—**तालव्यादिरित्यपरे इति।** 'गण्डः स्यात्पुंसि खड्गिनि। चिह्नवीरकपोलेषु हयभूषणबुद्बुदे। चण्डो ना तिन्तिणीवृक्षे यमकिङ्करदैत्ययोः। चण्डी कात्यायनीदेव्यां हिंस्राकोपनयोषितोः। 'पण्डः पण्डे धियि स्त्री स्या'दिति मेदिनी। फण गतौ फण्डः। प्रज्ञादित्वादण्। फाण्डमुदरम्। **क्वादिभ्यः कित्।** कुण शब्दोपकरणयोः। **कुण्डमिति।** इह कुण्डमित्यत्र प्रायेणानुस्वारमेव लिखन्ति, तत्तु प्रमादकृतम्। एवमन्यत्रापि बोध्यम्। डस्य कित्वाच गुणः। 'अनुनासिकस्य क्विझलो'रिति दीर्घस्तु न भवति, बाहुलकात्संज्ञापूर्वकविधेरनित्यत्वाद्वेत्याहुः। 'कुण्डमग्न्यालये मानभेदे देवजलाशये। कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमान्। पिठरे तु न ना' इति मेदिनी। 'अमृते जारजः कुण्डो मृते भर्तरि गोलकः' इत्यमरः। **काण्डमिति।** कमु कान्तौ। 'अनुनासिकस्ये'ति दीर्घः। 'काण्डोऽस्त्री दण्डबाणाऽर्ववर्गावसरवारिषु' इत्यमरः। अर्वाङ् कुत्सितः। अतएव 'काण्डं स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयोः। कुत्सिते वृक्षभिन्नाडीवृन्दे रहसि न 'स्त्रिया'मिति मेदिनी। गुड् अव्यक्ते शब्दे। 'गुडो गोलेक्षुपाकयोः' इत्यमरः। गुडा स्नुही, तद्वत्केशा यस्य स गुडाकेशः=शिवः, जटाधारित्वात्। 'गुडः स्याद्गोलके हस्तिसन्नाहेक्षुविकारयोः। गुडा स्नुह्यां च कथिता गुडिकायां च योषिति' इति मेदिनी। गुडाका=निद्रा, तस्या ईश इति वा, जितेन्द्रियत्वादिति भावः। **स्थाचति।** ष्ठा गतिनिवृत्तौ, चते याचने, मृजू शुद्धौ। लचा सिद्धे आलच आकारश्चिन्त्यप्रयोजनः। चित्स्वरं बाधित्वा पक्षे आद्युदात्तार्थमित्येके। 'स्थालं भाजनभेदेऽपि स्थाली स्यात् पाटलोखयोः' इति मेदिनी। 'चात्वालो यज्ञकुण्डे स्याद्दर्भे च' इति विश्वः। 'मार्जालीयः स्मृतः शूद्रे बिडाले कायशोधने' इति मेदिनी। **पतिचण्डि।** पत्लृ गतौ, चडि कोपे। पतन्त्यस्मिन्नधर्मेणेति पातालम्। उपधावृद्धिः। 'अधोभुवनपातालं बलिसद्म रसातलं' मित्यमरः। 'पातालं नागलोके स्याद्विवरे वडवानले' इति मेदिनी। **चण्डाल इति।** इदित्वान्नुमि अदुपधत्वाऽभावान्न वृद्धिः। माधवेन तु 'पतिचण्डिभ्यामालन्' इति नितं पठित्वा पातालशब्दे बाहुलकाद्वृद्धिमुक्त्वा 'वृद्ध्यर्थमालञिति केषांचित्पाठे. तु चण्डालशब्देऽपि वृद्धिः स्यादित्युक्तं तदतिरभसात्। **एके इति।** उज्ज्वलदत्तादयः। एतच्च 'कुलालवरुडकर्मारनिषादचण्डालमित्राऽमित्रेभ्यश्छन्दसी'ति चण्डालात्स्वार्थेऽणं विदधता वार्तिकेन तद्भाष्येण च सह विरुद्धमिति बोध्यम्। **तमिविशि।** तमु काङ्क्षायाम्, विश प्रवे-

---

**बा.]** **बाहुलकादिति। शण्ड इति।** गम्लृ गतौ। **चण्ड इति।** चण दाने। **पण्ड इति।** पण व्यवहारे स्तुतौ च। एवं फाण्ड इत्यादिरूह्यः। **क्वादिभ्यः कित्।** कुः=कवर्गः, तदादिभ्यो धातुभ्यो जायमानो डप्रत्ययः कित्स्यात्। **कुण्डमिति।** कुण शब्दोपकरणयोः। डप्रत्ययस्य गुणः। 'अनुनासिकस्य क्विझलोः क्ङिती'ति दीर्घस्तु न भवति, संज्ञापूर्वकविधेरनित्यत्वादिति भावः। **काण्डमिति।** कमु कान्तावित्यस्माड्डप्रत्यये 'अनुनासिकस्य क्वी'ति दीर्घः। अनित्यत्वाश्रयणं तु लक्ष्यानुरोधादिति भावः। 'काण्डोऽस्त्री दण्डबाणाऽर्ववर्गावसरवारिषु' इत्यमरः। गुड्धातोर्डप्रत्यये गुड इति रूपम्। 'गुडो गोलेक्षुपाकयोः' इत्यमरः। **घुण्ड इति।** कित्वाद्गुणाऽभावः। **स्थाचतिमृजे।** ष्ठा गतिनिवृत्तौ, चते याचने, मृजू शुद्धौ, एभ्यः क्रमादालच्, वालञ्, आलीयच् एते प्रत्ययाः स्युः। स्थालं चात्वालः मार्जालीय इति रूपम्। अत्र लचा सिद्धे आलचि आकारोच्चारणं निष्फलमेव। **स्थालमिति।** 'स्थालं भाजनभेदेऽपि स्थाली स्यात्पाटलोखयोः' इति मेदिनी। **चात्वाल इति।** 'चात्वालो यज्ञकुण्डे स्यात्' इति मेदिनी। **मार्जालीय इति।** 'मार्जालीयः स्मृतः शूद्रे बिडाले कायशोधने' इति मेदिनी। **पतिचण्डिभ्यामालञ्।** पत्लृ गतौ, चडि कोपे, आभ्यामालञ्प्रत्ययः स्यात्। आलञो ञित्त्वादुपधावृद्धिः। पातालः। पतन्त्यस्मिन्निति पातालः। चण्डालः। इदित्वान्नुमि अदुपधत्वाऽभावान्न वृद्धिः। चाण्डाल इति तु प्रज्ञादित्वाद्बोध्य इति उज्ज्वलदत्तादयो वदन्ति। तदाह—**एक इति।** अत्राऽस्वरसबीजं तु 'कुलालवरुडनिषादचण्डालाऽमित्रेभ्य' इति वार्तिकतद्भाष्यविरोध एव। तत्र एतेभ्यः स्वार्थेऽणिहितः। **तमिविशि।** तमु काङ्क्षायां, विश प्रवेशने, बिड आक्रोशे, मृण हिंसायां, कुल

विशालः । विडालः । मृणालम् । कुलालः । कपालम् । पलालम् । पञ्चालाः । ११६ । पतेरङ्गच् पक्षिणि । पतङ्गः । ११७ । तरत्यादिभ्यश्च । तरङ्गः । लवङ्गम् । ११८ । विडादिभ्यः किन् । विडङ्गः । मृदङ्गः । कुरङ्गः । बाहुलकादुत्वं च । ११९ । सृवृञोर्वृद्धिश्च । सारङ्गः । वारङ्गः खड्गादिमुष्टिः । १२० । गन् गम्यद्योः । गङ्गा । अद्गः पुरोडाशः । १२१ । छापूखडिभ्यः कित् । छागः । पूगः । खड्गः । बाहुलकात् षिट अनादरे गन् , सत्वाऽभावश्च । षिङ्गः तरलः । षिङ्गैरगयत ससंभ्रममेवमेका' इति माघः । १२२ । भृञः किन्नुट् च । भृङ्गो

---

त.]शने, विड आक्रोशे, मृण हिंसायाम्, कुल संस्त्याने, कपि चलने, निर्देशान्नलोपः । पल गतौ, पचि विस्तारे । 'तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे' इति मेदिनी । 'विशाला त्विन्द्रवारुण्यामुज्जयिन्यां तु योषिति । नृपवृक्षभिदोः पुंसि पृथुलेऽप्यभिधेयवत्' इति मेदिनी । 'विडालो नेत्रपिण्डे स्याद्वृषदंशकके पुमान्' इति च मेदिनी । 'ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक्' इत्यमरः । 'मृणालं नलदे क्लीबे पुंनपुंसकयोर्बिसे' इति मेदिनी । 'कुलालः ककुभे कुम्भकारे स्त्रीत्वञ्जनान्तरे' इति च मेदिनी । 'कुलालो घूकपक्षिणि । ककुभे कुम्भकारे च' इति हेमचन्द्रः । 'कपालोऽस्त्री शिरोऽस्थ्नि स्याद्घटादेः शकले व्रजे' इति मेदिनीविश्वप्रकाशौ । 'पाञ्चाली पुत्रिकागीत्योः स्त्रियां पुंभूम्नि नीवृति' इति मेदिनी । बाहुलकात् श्यतेरपि कालन् । 'आदेच उपदेशे' इत्यात्वम् । शाला । शल चलने । अस्मात् घञि शाला । 'सेनासुराच्छायाशालानिशाना'मिति निपातनात्स्त्रीत्वमिति न्यासः । 'शाला द्रुस्कन्धशाखायां गृहगेहैकदेशयोः । ना झषे' इति मेदिनी । **पतेरङ्गच्** । पत्लृ गतौ । पक्षिणीत्युपलक्षणम् । 'पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः । क्लीबं सूते' इति मेदिनी । सूते पारद इत्यर्थः । **तरत्या** । तॄ प्लवनतरणयोः । लूञ् छेदने । तरङ्ग ऊर्मिः । 'तरङ्गस्तुरगादीनामुत्फाले वस्त्रभङ्गयोः' इति विश्वः । 'लवङ्गं देवकुसुमे' । आकृतिगणोऽयम् । **विडादिभ्यः** । विड आक्रोशे, मृद क्षोदे, कॄ विक्षेपे, एभ्योऽङ्गच् कित्स्यात् । विडङ्ग ओषधिविशेष इति उज्ज्वलदत्तः । 'विडङ्गः कृमिसङ्घघ्ने विडङ्गो नागरेऽन्यवत्' इति विश्वः । 'विडङ्गस्त्रिष्वभिज्ञे स्यात् कृमिघ्ने पुंनपुंसक'मिति मेदिनी । 'मृदङ्गः पटहे घोषे' इति च । कुरङ्गो मृगविशेषः । **बाहुलकादुत्वं चेति** । कुर शब्दे इत्यस्मादङ्गच् । तस्य कित्वेन गुणाऽभाव इत्यन्ये । **सृवृञोः** । सृ गतौ, वृञ् वरणे । 'सारङ्गः पुंसि हरिणे चातके च मतङ्गजे । शबले त्रिषु' इति मेदिनी । बाहुलकात् नॄ नये । 'अथ नारङ्गः पिप्पलीरसे । यमजप्राणिनि विटे नागरङ्गद्रुमेऽपि चे'ति मेदिनी । **गन् गम्य** । गम्लृ गतौ, अद भक्षणे, बाहुलकादम गत्यादिषु । अस्मादपि गन् । 'अङ्गं गात्रे उपाये च प्रतीके चाऽप्रधानके । अङ्गो देशविशेषे स्यादङ्ग संबोधनेऽव्यय'मिति विश्वः । 'अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति । क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके' इति मेदिनी । **छापू** । छो छेदने, पूञ् पवने, खड भेदने । छायते छिद्यते यज्ञार्थमिति छागः । पूयते मुखमनेनेति पूगः । 'पूगस्तु क्रमुके वृन्दे' इति मेदिनी । 'खड्गो गण्डकशृङ्गे स्यान्निस्त्रिंशे गण्डकेऽपि चे'ति शब्दतरङ्गिणी । 'खड्गो गण्डक शृङ्गाऽसिबुद्धभेदेषु गण्डके' इति मेदिनी । **भृञः** । डुभृञ् धारणपोषणयोः । किदित्यनुवर्तनात्किद्ग्रहणमिह स्पष्टार्थम् ।

---

बा.]संस्त्याने, कपि चलने, पल गतौ, पचि विस्तारे, एतेषां द्वन्द्वात्पञ्चमीबहुवचनम् । **तमाल इति** । 'तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे' इति मेदिनी । विशालः । बिडालः । 'आखुर्बिडालो मार्जारः' इत्यतरः । मृणालः । कुलालः । 'कुलालः ककुभे कुम्भकारे' इति मेदिनी । **पतेरङ्गच्पक्षिणि** । पत्लृ गतौ इत्यस्मादङ्गच्प्रत्ययः, पक्षिणि वाच्य इत्यर्थः । **पतङ्ग इति** । 'पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः' इति मेदिनी । **तरत्यादिभ्यः** । अङ्गजित्यनुवर्तते । तरत्यादिभ्यो धातुभ्योऽङ्गच्प्रत्ययः स्यादित्यर्थः । **तरतीति** । तॄ प्लवनतरणयोरित्यस्य श्तिपा निर्देशः । **लवङ्गमिति** । लूञ्छेदने इत्यस्मादङ्गच् । आकृतिगणोऽयम् । **विडादिभ्यः कित्** । विड आक्रोशे इत्यादिभ्यो धातुभ्यो जायमानोऽङ्गच्प्रत्ययः किद्भवतीत्यर्थः । **विडङ्ग इति** । कित्वान्न गुणः । 'विडङ्गस्त्रिष्वभिज्ञे स्यात्कृमिघ्ने पुंनपुंसक'मिति मेदिनीकारः । **मृदङ्ग इति** । मृद क्षोदे इत्यस्मात्प्रत्ययः । तस्य कित्वान्न गुणः । **कुरङ्ग इति** । प्रत्यये परत उत्वं साधयति-**बाहुलकादिति** । कुर शब्दे इत्यस्मादङ्गच्प्रत्यये तु महल्लाघवम् । **सृवृञोर्वृद्धिश्च** । सृ गतौ, वृञ् वरणे, आभ्यामङ्गच्प्रत्ययः, प्रकृतेर्धातोर्वृद्धिश्चेत्यर्थः । **सारङ्ग इति** । 'सारङ्गः पुंसि हरिणे चातके शबले त्रिषु' इति मेदिनी । **गन्गम्यद्योः** । गम्लृ गतौ, अद भक्षणे, आभ्यां गन्प्रत्ययः स्यात् । गङ्गा । अद्गः । बाहुलकादङ्गादयोऽपि । अमधातोर्गन्प्रत्ययः । **छापूखडिभ्यः कित्** । छो छेदने, पूञ् पवने, खड भेदने, आहत्य त्रिभ्यो धातुभ्यो गन्प्रत्ययो भवति । स च कित्स्यात् । **छागः पूग इति** । कित्त्वाद्गुणाऽभावः । छायते छिद्यते यज्ञार्थमिति छागः । पूयते मुखमनेनेति पूगः । 'पूगः क्रमुकवृन्दयोः' इत्यमरः । **खड्ग इति** । 'खड्गो गण्डकशृङ्गाऽसिबुद्धभेदेषु गण्डके' इति मेदिनी । **भृञः किन्नुट् च** । भृञ्भरणे, अस्माज्जायमानो गन्प्रत्ययः किद्भ-

गन् कित्स्यात्तस्य नुट् च। 'शृङ्गः षिङ्गाऽलिधूम्याटाः'। १२३। शृणातेर्ह्रस्वश्च। शृङ्गम्। १२४। गण् शकुनौ। नुट् चेत्यनुवर्तते। शार्ङ्गः। १२५। मुदिग्रोर्गग्गौ। मुद्गः। गर्गः। १२६। अण्डन् कृसृभृवृञः। करण्डः। सरण्डः पक्षी। भरण्डः स्वामी। वरण्डो मुखरोगः। १२७। शृदृभसोऽदिः। शरत्। 'दरद्धृदयकूलयोः'। भसज्जघनम्। १२८। दृणातेः पुग्घ्रस्वश्च। दृषत्। १२९। त्यजितनियजिभ्यो डित्। त्यद्। तद्। यद्। सर्वादयः। १३०। एतेस्तुट् च। एतद्। १३१। सर्तेरटिः। 'सरट् स्याद्वातमेघयोः'। वेदभाष्ये तु 'याभिः कृशानु'-मिति मन्त्रे सरड्भ्यो मधुमक्षिकाभ्य इति व्याख्यातम्। १३२। लङ्घेर्नलोपश्च। लघट् वायुः। १३३। पारयतेरजिः। पारक् सुवर्णम्। १३४। प्रथः कित्संप्रसारणं च। पृथक्। स्वरादिपाठादव्ययत्वम्।

---

त.] 'शृङ्गो धूम्याटषिङ्गयोः। मधुव्रते भृङ्गराजे पुंसि शृङ्गं गुडत्वचि' इति मेदिनी। शृणातेः। शॄ हिंसायामस्माद्गन्, धातोर्ह्रस्वत्वं प्रत्ययस्य तु कित्त्वं नुट् च। 'शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाऽम्बुयन्त्रके। विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कूर्चशीर्षके। स्त्री विषायां स्वर्णमीनभेदयोर्ऋषभौषधौ' इति मेदिनी। 'शृङ्गं विषाणमाख्यातं शैलाग्रे जलयन्त्रके। मीनौषधिसुवर्णानां भेदे शृङ्गी प्रयुज्यते' इत्युत्पलिनीकोशः। गण् शकुनौ। शृणातेः शकुनौ वाच्ये गण् स्यात्तस्य नुट्। 'अचोऽञ्णिती'ति धातोर्वृद्धिः। शार्ङ्गः पक्षी। शार्ङ्गं धनुरिति तु शृङ्गस्य विकार इति बोध्यम्। मुदिग्रोः। मुद हर्षे, गॄ निगरणे, आभ्यां यथासंख्यं गक् ग इत्येतौ स्तः। मुद्गः सस्यभेदः। गर्गो मुनिविशेषः। अण्डन्। डुकृञ् करणे, सृ गतौ, भृञ् भरणे, वृञ् वरणे। 'करण्डो मधुकोशाऽसिकारण्डेषु दलाढके' इति मेदिनी। 'वरण्डोऽप्यन्तरावेदौ समूहमुखरोगयोः' इति विश्वमेदिन्यौ। बाहुलकात्-तॄ प्लवनतरणयोरपि। 'तरण्डो बडिशीसूत्रबद्धकाष्ठादिके प्लवे' इति मेदिनी। शॄ दॄ। शॄ हिंसायाम्, दॄ विदारणे, भस भर्त्सनदीप्त्योः। 'शरत् स्त्री वत्सरेऽप्यृतौ'। 'दरत्त्रियां प्रपाते च भयपर्वतयोरपि'। 'भसत् स्त्री भास्करे योनौ' इति मेदिनी। 'उवे अम्बसुलाभिक' इति मन्त्रव्याख्यायां भसद्भग इति वेदभाष्यम्, 'जार्घन्यां पत्नीः संयाजयन्ति। भसद्वीर्या हि स्त्रियः' इत्यत्र भसज्जघनमिति व्याख्यातारः। दृणातेः। दॄ विदारणे। 'दृषच्चिप्पेषणशिलापट्टप्रस्तरयोः स्त्रियाम्' इति मेदिनी। त्यजि। त्यज हानौ, तनु विस्तारे, यज देवपूजादौ। त्यदित्यादि। अदेर्डित्त्वाट्टिलोपः। एतेः। इण् गतौ अस्मादद्दिः। तस्य तुटि गुणः। एतद्। सर्तेः। सृ गतौ। लङ्घेः। लघि शोषणे। पारयतेः। पार तीर कर्मसमाप्तौ चुरादिः। पारगिति। णिलोपः कुत्वम्।

---

बा.] वति नुडागमश्च भवतीत्यर्थः। 'छापूखडिभ्यः कित्' इति पूर्वसूत्रात्किदित्यनुवर्तमाने पुनरिह किद्ग्रहणं विस्पष्टार्थम्। 'शृङ्गो धूम्याटषिङ्गयोः' इति मेदिनी। शृणातेर्ह्रस्वश्च। शॄ हिंसायामस्माद्धातोर्गन्प्रत्ययो भवति। धातोर्ह्रस्वश्च भवति। प्रत्ययस्य च कित्त्वं नुट् चेत्यर्थः। शृङ्गमिति रूपम्। 'शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके। विषाणोत्कर्षयोश्चाऽथ शृङ्गः स्यात्कूर्चशीर्षके। स्त्री विषायां स्वर्णमीनभेदयोः ऋषभौषधौ' इति मेदिनी। गण्शकुनौ। शृणातेरित्यनुवर्तते। शकुनौ वाच्ये शृणातेर्गन्प्रत्ययो नुडागमश्च। शार्ङ्ग इति। णित्त्वात् 'अचो ञ्णिती'ति वृद्धिः, नुटोऽनुस्वारपरसवर्णौ। शार्ङ्गः पक्षी। शार्ङ्गं धनुरिति तु शृङ्गस्य विकार इत्यर्थे बोध्यम्। मुदिग्रोर्गग्गौ। मुद हर्षे, गॄ निगरणे। आभ्यां यथासङ्ख्यं गक् ग एतौ प्रत्ययौ स्तः। मुद्गः सस्यविशेषः। द्राविडभाषायां 'पयरु' इति प्रसिद्धः। गकः कित्वान्नोपधागुणः। गर्ग इति। मुनिविशेषः। गप्रत्यये गुणः। एतदर्थमेव गक् ग इति पृथग्विहितौ। अण्डन्कृसृभृवृञः। डु कृञ्करणे, सृ गतौ, भृञ्भरणे, वृञ्वरणे, एषां समाहारद्वन्द्वात्पञ्चमी। एभ्यः अण्डन्प्रत्ययः स्यात्। करण्ड इति। प्रत्यये परतो गुणः। शृदृभसोऽदिः। शॄ हिंसायां, दॄ विदारणे, भस भर्त्सनदीप्त्योः, एभ्यः अदिप्रत्ययः। इकार उच्चारणार्थः। शरदिति। प्रत्यये परतो गुणः। 'शरत्स्त्री वत्सरेऽप्यृतौ'। 'दरत्त्रियां प्रपाते च भयपर्वतयोरपि'। 'भसत्स्त्री भास्वरे योनौ' इति मेदिनी। दृणातेः पुक् ह्रस्वश्च। दॄ विदारणे इत्यस्मात् अदिप्रत्ययः, प्रकृतेः पुगागमो ह्रस्वश्च भवतीति सूत्रार्थः। दृषदिति रूपम्। त्यजितनियजिभ्यो डित्। त्यज हानौ, तनु विस्तारे, यज देवपूजादौ, एभ्यो जायमानः अदिप्रत्ययो डित् भवति। त्यदिति। अदिप्रत्ययस्य डित्वाट्टिलोपः। एतेस्तुट् च। इण्गतावित्यस्माददिप्रत्ययः, तस्य तुडागमश्च भवतीत्यर्थः। एतदिति रूपम्। सर्तेरटिः। सृ गतावित्यस्मादटिप्रत्ययः। सरट्शब्दार्थं विश्वन्कोशमाह—सरट् स्याद्वातमेघयोरिति। लङ्घेर्नलोपश्च। लघि शोषणे, अस्मादटिप्रत्ययः, नकारस्य लोपश्च। पारयतेरजिः। पारधातुश्चुरादिण्यन्तः। अस्मादजिप्रत्ययः स्यादित्यर्थः। पारगिति। अजिप्रत्यये 'णेरनिटी'त्यनेन णिलोपः। तस्य प्रत्ययलक्षणेन उपधावृद्धिर्भवत्येव। कुत्वे रूपम्। प्रथेः कित्संप्रसारणं च। प्रथ प्रख्याने, अस्मादजिप्रत्ययः, स च किद्भवति, धातोः संप्रसारणं च। पृथक्। स्वरादिपाठादिति। पृथग्विनार्थ इति पाठादिति भावः। भियः षुक् ह्रस्वश्च। ञि भी

**१३५ । भियः षुग्घ्रस्वश्च** । भिषक् । **१३६ । युष्यसिभ्यां मदिक्** । युष् सौत्रो धातुः । युष्मद् । अस्मद् । त्वम् । अहम् । **१३७ । अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्** । एभ्यश्चतुर्दशभ्यो मन् । अर्मश्चक्षूरोगः । स्तोमः सङ्घातः । सोमः । होमः । सर्मो गमनम् । धर्मः । क्षेमं कुशलम् । क्षोमम् । प्रज्ञाद्यणि क्षौमं च । भाम आदित्यः । यामः । 'वामः. शोभनदुष्टयोः' । पद्मम् । यक्ष पूजायाम् । यक्ष्मो रोगराजः । नेमः । **१३८ । जहातेः सन्वदालोपश्च** । 'जिह्मः कुटिलमन्दयोः' **१३९ । अवतेष्टिलोपश्च** । मन्प्रत्ययस्यायं टिलोपो न प्रकृतेः । अन्यथा डिदित्येव ब्रूयात् । 'ज्वरत्वरे'ति ऊठौ । तयोर्दीर्घे कृते गुणः । चादिपाठादव्ययत्वमित्युज्ज्वलदत्तस्तन्न । तेषामसत्त्वार्थत्वात् । वस्तुतस्तु स्वरादिपाठादव्ययत्वम् । अवतीति ओम् । **१४० । ग्रसेरा च** । ग्रामः । **१४१ । अविसिविसिशुषिभ्यः कित्** ।

---

त.]**प्रथेः** । प्रथ प्रख्याने । **भियः** । ञिभी भये । **युष्यसि** । असु क्षेपणे । **अर्तिस्तु** । ऋ गतौ, ष्टुञ् स्तुतौ, षुञ् अभिषवे, हु दानादनयोः, सृ गतौ, धृञ् धारणे, क्षि क्षये, टुक्षु शब्दे, भा दीप्तौ, या प्रापणे, वा गतिगन्धनयोः, पद गतौ, णीञ् प्रापणे । 'सोमस्तु हिमदीधितौ । वानरे च कुबेरे च पितृदेवे समीरणे । वसुप्रभेदे कर्पूरे नीरे सोमलतौषधौ' इति मेदिनी । **होम इति** । देवतोद्देशेन हविःप्रक्षेपः । 'धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ । अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे' इति च । 'धर्मः पुण्ये यमे न्याये स्वभावाचारयोः क्रतौ' इति विश्वः । 'क्षौमं पट्टे दुकूलेऽस्त्री क्षौमं वल्कलजांऽशुके । शणजेऽतसिजे' इति मेदिनी । 'भामः क्रोधे रवौ दीप्तौ' इति च । 'यामस्तु पुंसि प्रहरे संयमेऽपि प्रकीर्तितः' इति च । 'वामं धने पुंसि हरे कामदेवे पयोधरे । वल्गुप्रतीपसव्येषु त्रिषु नार्यां स्त्रियामथ । वामी शृगालीवडवारासभीकरभीषु चे'ति । 'पद्मोऽस्त्री पद्मके व्यूहनिधिसंख्यान्तरेऽम्बुजे । ना नागे' इति च मेदिनी । **यक्ष पूजायामिति** । अयमन्तस्थादिः । मनिन्प्रत्यये तु नकारान्तः शब्दः । 'क्षयः शोषश्च यक्ष्मा च' इत्यमरः । 'राजयक्ष्मेव रोगाणा'मिति माघः । 'यक्ष्मणाऽपि परिहाणिराययौ' इति रघुः । अत्र जकारयकारयोर्भेदाऽग्रहेण जक्ष भक्षहसनयोरित्युज्ज्वलदत्तेनोपन्यस्तम् । तन्न । तस्य चवर्गतृतीयादित्वात् । अतएव 'अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां चुबुकादधि । यक्ष्मं सर्वस्मात्' इति मन्त्रे यक्ष्मशब्दस्यान्तःस्थादित्वम् । 'जक्षन् क्रीडन् रममाण' इत्यादिमन्त्रे तु जक्षच्छब्दस्य चवर्गतृतीयादित्वं वेदभाष्यकृतो व्याचख्युः । 'नेमः कीलेऽवधौ गर्ते प्राकारे कैतवेऽपि च' इति मेदिनी । 'नेमस्त्ववधौ प्राकारगर्तयोः । अवधौ कैतवे च' इति हेमचन्द्रः । **जहातेः** । ओहाक् त्यागे । **जिह्म इति** । मन्प्रत्ययस्य सन्वत्त्वाद्द्वित्वे 'सन्यतः' इतीत्वम् । 'जिह्मस्तु कुटिले मन्दे क्लीबं तगरपादपे' इति मेदिनी । **अवतेः** । अव रक्षणादौ । 'ॐ प्रश्ने स्वीकृतौ रोषे' इति विश्वः । **ग्रसेरा च** । ग्रसु अदने । अतो मन्, धातोराकारश्च । 'ग्रामः स्वरे संवसथे वृन्दे शब्दादिपूर्वकः' इति विश्वः । शब्दादिपूर्वको ग्रामशब्दो वृन्दे । शब्दग्रामो गुणग्राम इति यथा । 'शब्दादिपूर्वो वृन्देऽपि ग्रामः' इत्यमरः । संपूर्वोऽयं युद्धे । तदुक्तं 'संपूर्वः संयुगे स्मृतः' इति । **अविसिवि** । अव रक्षणादौ, षिवु तन्तुसन्ताने, षिञ् बन्धने, शुष शोषणे, एभ्यो मन्स्यात्स च कित् । ऊठादिकं

---

बा.]भये इत्यस्मादजिप्रत्ययः, प्रकृतेः षुगागमश्च भवतीत्यर्थः । भिषगिति रूपम् । **युष्यसिभ्यां मदिक्** । धातुपाठे युषधातोरदर्शनादाह—**युष्सौत्रो धातुरिति** । असु क्षेपणे दिवादिः । आभ्यां मदिक्प्रत्ययः । युष्मदिति रूपम् । अस्मदिति च रूपम् । **त्वम् अहमिति** । 'त्वाहौ सौ' इति त्वाहादेशाविति भावः । **अर्तिस्तुसुहु** । ऋ गतौ, ष्टुञ् स्तुतौ, षुञ् अभिषवे, हु दानादनयोः, सृ गतौ, धृञ्धारणे, क्षि क्षये, टु क्षु शब्दे, भा दीप्तौ, या प्रापणे, वा गतिगन्धनयोः, पद गतौ, यक्ष पूजायां चुरादिः, णीञ्प्रापणे, एषां द्वन्द्वात्पञ्चमी । एभ्यो मन्प्रत्ययो भवति । **अर्म इति** । मन्प्रत्यये गुणे च रूपम् । **स्तोम इति** । सङ्घात इत्यर्थः । **सोम इति** । 'सोमस्तुहिनदीधितौ' । क्षौमशब्दं साधयितुमाह—**प्रज्ञाद्यणीति** । **जहातेः सन्वदालोपश्च** । ओ हाक् त्यागे, अस्मान्मन्प्रत्ययः, स च सन्वद्भवति । आकारलोपश्च । जिह्म इति रूपम् । **अवतेष्टिलोपश्च** । अव रक्षणादौ, अस्मान्मन्प्रत्ययः, मन्प्रत्ययस्य टेर्लोपश्चेत्यर्थः । ननु टिलोपश्चेत्यत्र अस्मिन्नेव सूत्रे विधेयभूतस्य मन्प्रत्ययस्योद्देश्यत्वं न स्यात्, अतष्टिलोप इत्यत्र प्रकृतेरेवोद्देश्यत्वं स्यादित्यत आह—**अन्यथेति** । प्रकृतेष्टिलोपाङ्गीकार इत्यर्थः । **डिदित्येवेति** । 'टे'रिति टिलोपसंभवादित्यर्थः । **ज्वरत्वरेत्यूठाविति** । वकारस्य उपधायाश्च स्थाने इत्यर्थः । **तयोरिति** । अकारवकारस्थानिकयोरूठोरित्यर्थः । प्रत्येकमूठ् इति पक्षाभिप्रायेणेदम् । उपधावकारयोः स्थाने एक एवोठिति मते तु न कापि विप्रतिपत्तिः । अस्याऽव्ययत्वे साधकमाह—**चादिपाठादिति** । **तन्नेति** । तन्मतं खण्डयति—**तेषामसत्त्वादिति** । **ग्रसेरा च** । ग्रसु अदने, अस्मान्मन्प्रत्ययः धातोराकारश्चान्तादेशः । ग्राम इति रूपम् । **अविसिवि** । अव रक्षणादौ, षिवु तन्तुसन्ताने, षिञ्बन्धने, शुष शोषणे, एभ्यो मन्स्यात्स च कित् । ऊठादिकं पूर्ववत् ।

ऊमं नगरम् । स्यूमो रश्मिः । सिमः सर्वः । 'शुष्ममग्निसमीरयोः' । १४२ । **इषियुधीन्धिदसिश्याधूसूभ्यो मक्** । 'इष्मः कामवसन्तयोः' । ईषीति पाठे दीर्घादिः । युध्मः शरो योद्धा च । इध्मः समित् । दस्मो यजमानः । श्यामः धूमः । सूमोऽन्तरिक्षम् । बाहुलकादीर्मं व्रणः । १४३ । **युजिरुचितिजां कुश्च** । युग्मम् । रुक्मम् । तिग्मम् । १४४ । **हन्तेर्हि च** । हिमम् । १४५ । **भियः षुग्वा** । भीमः । भीष्मः । १४६ । **घर्मः** । घृधातोर्मगुणश्च निपात्यते । १४७ । **ग्रीष्मः** । ग्रसतेर्निपातोऽयम् । १४८ । **प्रथेः षिवन् संप्रसारणं च** । पृथिवी । षवन्नित्येके । 'पृथवी पृथिवी पृथ्वी'ति शब्दार्णवः । १४९ । **अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्** । अश्वः । प्रुष स्नेहनादौ । 'प्रुष्वः स्याद्दतुसूर्ययोः' । प्रुष्वा जलकणिका । लट्वा पक्षिभेदः, फलं च । कण्वं

---

त.]पूर्ववत् । **ऊमं नगरमिति** । 'त्वे क्रतुम्' इति मन्त्रे ऊमास्तर्पका यजमाना इति वेदभाष्यम् । टापि बाहुलकाद्ध्रस्वत्वे 'उमाऽतसीहैमवतीहरिद्राकान्तिकीर्तिषु'इति मेदिनी । **स्यूमो रश्मिरिति** । सूत्रतन्तुरित्यन्ये । सिमः सर्वनामगणे पठितः । 'शुष्मं तेजसि सूर्ये ना' इति मेदिनी । शुष्मं बलमिति वेदभाष्यम् । **इषियुधि** । इष गतिहिंसादानेषु । ईष गताविति केचित् । इष्मः । युध संप्रहारे, ञिइन्धी दीप्तौ, दसु उपक्षये, श्यैङ् गतौ, धूञ् कम्पने, षूङ् प्राणिगर्भविमोचने । **युध्म इति** । 'युध्मो धनुषि संयुगे', इति मेदिनी । 'दस्मस्तु यजमाने स्यादपि चौरे हुताशने' इति च । 'त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिवा निशा' इत्यमरः । 'श्यामो वटे प्रयागस्य वारिदे वृद्धदारके । पिके च कृष्णहरितोः पुंसि स्यात्तद्वति त्रिषु । मरीचे सिन्धुलवणे क्लीबं स्त्री शारिवौषधौ । अप्रसूताऽङ्गनायां च प्रियङ्गावपि गुग्गुलौ । यमुनायां त्रियामायां कृष्णत्रिवृतिकौषधे । नीलिकाया'मिति मेदिनी । **ईर्ममिति** । ईर गतौ । 'व्रणोऽस्त्रियामीर्ममरुः क्लीबे' इत्यमरः । बाहुलकाज्जन जनने इत्यस्मादपि । जन्मम् । रुह बीजजन्मनीति निर्देशान्मनिनन्तोऽप्यस्ति स तु नान्तः । 'जनुर्जननजन्मानि' इत्यमरस्तु अकारान्तनकारान्तोभयसाधारणः । **युजि** । युजिर् योगे, रुच दीप्तौ, तिज निशाने, एभ्यो मक् , कवर्गश्चान्तादेशः । 'रुक्मं तु काञ्चने लोहे'इति विश्वमेदिन्यौ । तिग्मं तीक्ष्णम् । **हन्तेः** । हन हिंसागत्योरस्मान्मक् ,धातोर्हिरादेशश्च । 'हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम् । शीतले वाच्यलिङ्गः' इति मेदिनी । **भियः** । ञिभी भये । बिभेत्यस्मादिति विग्रहः । 'भीष्मो गाङ्गेयघोरयोः । 'भीमोऽम्लवेतसे घोरे शम्भौ मध्यमपाण्डवे' इति मेदिनी । **घर्मः** । घृ क्षरणदीप्त्योः । **ग्रीष्मः** । ग्रसु अदने । 'घर्मः स्यादातपे ग्रीष्मेऽप्युष्णस्वेदाम्भसोरपि' । 'ग्रीष्म ऊष्मर्तुभेदयोः' इति च मेदिनी । **प्रथेः** । प्रथ प्रख्याने । षित्त्वान्ङीप् । 'पृथवी पृथिवी पृथ्वी धरा सर्वंसहा रसा' इति शब्दार्णवः । **अशूप्रुषि** । अशू व्याप्तौ, लट बाल्ये, कण निमीलने, खटि काङ्क्षायाम् , विश प्रवेशने । 'अश्वः पुंजातिभेदे च तुरङ्गे च पुमानय'मिति मेदिनी । 'अश्वः पुंभेदवाजिनोः' इति विश्वः । 'लट्वा करञ्जभेदे स्यात्फले वाद्ये

---

बा.]**ऊममिति** । अवधातोर्मन्प्रत्यये ज्वरत्वरेत्यूठि सवर्णदीर्घे रूपम् । **स्यूम इति** । षिवुधातोर्मन्प्रत्यये च्छ्वोरिति वस्य ऊठि यणि रूपं बोध्यम् । **सिम इति** । षिञ्धातो रूपम् । सर्वादिगणे पठितोऽयम् । **इषियुधीन्धि** । इष गतिहिंसादानेषु, युध संप्रहारे, ञि इन्धी दीप्तौ, दसु उपक्षये, श्यैङ्गतौ, धूञ्कम्पने, षूङ्प्राणिगर्भविमोचने, एषां द्वन्द्वात्पञ्चमी । **युध्म इति** । 'युध्मो धनुषि संयुगे' इति मेदिनी । **दस्म इति** । 'दस्मस्तु यजमाने स्यादपि चौरे हुताशने' इति मेदिनी । **श्याम इति** । 'त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिवा निशा' इत्यमरः । **युजिरुचितिजाम्** । युजिर् योगे, रुच दीप्तौ, तिज निशाने, एषां द्वन्द्वात्षष्ठी । एभ्यो मक्प्रत्ययः स्यात्, अन्त्यस्य च कुत्वम् । **हन्तेर्हि च** । हन हिंसागत्योः, अस्माद्धातोर्मक्, धातोर्हिरादेशश्च । **भियः षुग्वा** । ञि भी भये । अस्माद्धातोर्मक्स्यात् । धातोः षुगागमश्च वा स्यात् । **भीम इति** । षुगभावे रूपम् । **भीष्म इति** । षुकि रूपम् । **घर्मः** । मकि घर्म इति निपात्यत इत्यर्थः । प्रकृतिप्रत्ययविभागेन दर्शयति—**घृधातोर्मगिति** । घृ क्षरणदीप्त्योरित्यस्मादिति भावः । मकः कित्त्वेन क्ङिति चेति निषेधादाह—**गुणश्चेति** । **ग्रीष्मः** । ग्रसु अदने, अस्मात् मकि निपातोऽयम् । उपधाया ईत्वं निपात्यत इति भावः । **प्रथेः षिवन्संप्रसारणं च** । प्रथ प्रख्याने, अस्माद्धातोः षिवन्प्रत्ययः, धातोः संप्रसारणं चेत्यर्थः । षिवनः षित्त्वान्ङीष् । **षवन्नित्येक इति** । प्रथधातोः षवन्प्रत्यय इत्यर्थः । तथात्वे तु पृथवी इति रूपम् । 'पृथिवी पृथवी पृथ्वी'त्यमरः ।

**अशूप्रुषिलटि** । अशू व्याप्तौ, प्रुष स्नेहनादौ, लट बाल्ये, कण निमीलने, खटि काङ्क्षायां, विश प्रवेशने, एषां द्वन्द्वात्पञ्चमी । एभ्यः क्वन्स्यात् । **अश्व इति** । 'घोटके वीतितुरगतुरङ्गाऽश्वतुरङ्गमाः' इत्यमरः । **प्रुष्व इति** । प्रुषधातो रूपम् । **लट्वेति** । 'झल्लरा चर्चरी पारी होरा लट्वा च सिध्मला' इत्यमरः । 'लट्वा करञ्जभेदे स्यात्

पापम् । बाहुलकादित्वे किण्वमपि । खट्वा । विश्वम् । १५० । **इण्शीभ्यां वन्** । एवो गन्ता । 'ये च एवा मरुतः' । असत्त्वे निपातोऽयम् । 'शेवं मित्राय वरुणाय' । १५१ । **सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अस्वतन्त्रे** । अकर्तर्येते निपात्यन्ते । सृतमनेन विश्वमिति सर्वम् । निपूर्वाद्घृषेर्गुणाऽभावोऽपि । निघृष्यतेऽनेन निघृष्वः खुरः । रिष्वो हिंस्रः । लष्वो नर्तकः । लिष्व इत्यन्ये । तत्रोपधाया इत्वमपि । शेतेऽस्मिन् सर्वमिति शिवः शम्भुः । शीङो ह्रस्वत्वम् । पद्वो रथो भूलोकश्च । प्रह्वयते इति प्रह्वः । ह्वेञ आकारवकारलोपः । जहातेरालोपो वा । ईर्ष्यैवन् । ईष्व आचार्यः । इष्व इत्यन्ये । अस्वतन्त्रे किम् ? । सर्ता । सारकः । बाहुलकाद्ध्रसतेर्ह्रस्वः । १५२ । **शेवयह्वजिह्वाग्रीवाऽऽप्वामीवाः** । शेव इत्यन्यगोदात्तार्थम् । यान्त्यनेन यह्वः । ह्रस्वो हुगागमश्च । लिहन्त्यनया जिह्वा । लकारस्य जो गुणाऽभावश्च । गिरन्त्यनया ग्रीवा । ईडागमश्च । आप्नोतीत्याप्वा वायुः । मीवा उदरकृमिः । वायुरित्यन्ये । १५३ । **कॄगॄशॄदॄभ्यो वः** । कर्वः कामं आखुश्च । गर्वः । शर्वः । दर्वो राक्षसः । १५४ । **कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः** । यौतीति युवा । वृषा इन्द्रः ।

त.] खगान्तरे' इति विश्वमेदिन्यौ । 'कण्वं पापे मुनौ पुंसि' इति मेदिनी । 'किण्वं बीजाऽपसीधुपु' इति च पठ्यते । शयनार्थिभिः काङ्क्ष्यते इति खट्वा । 'विश्वा ह्यतिविषायां स्त्री जगति स्यान्नपुंसकम् । न ना शुण्व्यां पुंसि देवप्रभेदेष्वखिले त्रिषु' इति मेदिनी । इण् । इण् गतौ । शीङ् स्वप्ने । शेवं सुखमिति वेदभाष्यम् । शेवं मेढ्रमित्युज्ज्वलदत्तः । **सर्वनिघृष्व** । सृ गतौ, घृषु संघर्षे, रिष हिंसायाम्, लष कान्तौ, शीङ् स्वप्ने, पट गतौ, ह्वेञ् स्पर्धायां शब्दे च, ओहाक् त्यागे इति वा, ईष गत्यादिषु । तन्त्रशब्दोऽत्र कर्तृवाचीत्याह—**अकर्तरीति** । **निपात्यन्त इति** । 'वन्प्रत्ययान्ततये'ति शेषः । **ह्रस्व इति** । ह्रस शब्दे । 'ह्रस्वो न्यक्खर्वयोस्त्रिषु' इति मेदिनी । **शेवयह्व** । एते वन्प्रत्ययान्ता निपात्यन्ते । **अन्तोदात्तार्थमिति** । 'इण्शीभ्या'मित्यनेन आद्युदात्तत्वसिद्धेरिति भावः । शीङ् स्वप्ने । शेवा लिङ्गाकृतिः । दशपादीवृत्तिरीत्याह—**यान्त्यनेनेति** । उज्ज्वलदत्तस्तु यज देवपूजादौ जकारस्य हकारो, यह्वो यजमान इत्याह । वैदिकनिघण्टौ महन्नामसु यह्वशब्दः पठितः । 'प्रवो यह्वं पुरूणां' । यह्वं महान्तमिति वेदभाष्यम् । लिह आस्वादने । लिहन्त्यनयेति जिह्वा । जि जये हुगागमः । जिह्वा रसनेत्युज्ज्वलदत्तः । **ग्रीवेति** । गॄ निगरणे, आप्लृ व्याप्तौ, मीङ् हिंसायाम् । **मीवेति** । वेदे तु अमीवेति छित्त्वा अम रोग इत्यस्माद्वः, इट् चेत्युक्तम् । 'अमीवहा वास्तोष्पते' इत्यादिमन्त्रास्तत्रानुकूलाः । **कॄगॄ** । कॄ विक्षेपे, गॄ निगरणे, शॄ हिंसायाम्, दॄ विदारणे ।

बा.] फले वाद्ये खगान्तरे' इति विश्वः । **कण्वमिति** । 'कण्वं पापे मुनौ पुंसि' इति मेदिनी । **खट्वेति** । 'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः' इत्यमरः । **विश्वमिति** । 'आदित्या विश्ववसवः' इत्यमरः । 'विश्वा ह्यतिविषायां स्त्री जगति स्यान्नपुंसक मिति मेदिनी । **इण्शीभ्यां वन्** । इण् गतौ, शीङ् स्वप्ने, आभ्यां वन्प्रत्ययः स्यात् । **एव इति** । **इण्धातो रूपम्** । **शेव इति** । शीङ्धातोः रूपम् । **सर्वनिघृष्वरिष्व** । सृ गतौ, घृषु संघर्षे, रिष हिंसायां, लष हिंसायां, शीङ् स्वप्ने, पद गतौ, ह्वेञ् स्पर्धायां शब्दे च, ईष गत्यादिषु । अत्र तन्त्रशब्दः कर्तृवाचकः । अतन्त्रे= अकर्तरीत्यर्थः । **निपात्यन्त इति** । 'वन्प्रत्ययान्ततये'ति शेषः । वन्प्रत्यये गुणे च सर्वमिति रूपम् । **निघृष्व इति** । निपूर्वाद्घृषधातोर्वन्प्रत्यये गुणाऽभावोऽपि निपात्यत इत्यर्थः । **रिष्वो हिंस्र इति** । अत्रापि गुणाऽभावो, निपातनात् । लिष्व इत्यत्र व्युत्पत्तिमाह—**उपधाया इत्वमिति** । **शिव इति** । 'शम्भुः शर्वः शिवः स्थाणुः' इत्यमरः । प्रह्व इत्यत्र वन्प्रत्यये रूपमाह—**ह्वेञ इति** । वनो वकारस्य लोपः, धातोराकारस्य लोपश्च निपात्यत इत्यर्थः । धात्वन्तरं प्रकृतिं दर्शयति—**जहातेरिति** । ओ हाक् त्यागे इत्यस्मादित्यर्थः । वन्प्रत्यये आकारस्य लोपो निपात्यत इत्यर्थः । **शेवयह्वजिह्वा** । एते वन्प्रत्ययान्ता निपात्यन्त इत्यर्थः । ननु 'इण्शीभ्या'मिति सूत्रेणैव शेव इति रूपे सिद्धे किमर्थमिदमित्यत आह—**अन्तोदात्तार्थमिति** । शीङ् स्वप्ने इत्यस्माद्वन्प्रत्यये रूपम् । या प्रापणे इत्यस्माद्वन्प्रत्यये तत्संनियोगेन प्रकृतेर्हुगागमे ह्रस्वे च यह्व इति रूपम् । यद्वा यजधातोर्वन्प्रत्यये जकारस्य हकारश्च निपात्यते । जिह्वेति शब्दं साधयति—**लिहन्त्यनयेति** । लिह आस्वादने इत्यस्माद्वन्प्रत्यये लकारस्य जकारो गुणाऽभावश्च निपात्यत इत्यर्थः । यद्वा जि जये इत्यस्माद्वन्प्रत्ययो हुगागमश्च निपात्यत इति व्याख्येयम् । **गिरन्त्यनयेति** । गॄ निगरणे इत्यस्माद्वन्प्रत्यये ईडागमो निपात्यत इत्यर्थः । यणादेश इति भावः । आप्लृ व्याप्तौ इत्यस्माद्वन्प्रत्यये आप्वेति रूपम् । **मीवेति** । मीञ् हिंसायामित्यस्माद्वनि रूपम् । **कॄगॄशॄदॄभ्यो वः** । कॄ विक्षेपे, गॄ निगरणे, शॄ हिंसायां, दॄ विदारणे, एषां द्वन्द्वात्पञ्चमी । **कर्व इति** । कॄधातो रूपम् । **गर्व इति** । 'गर्वोऽभिमानो-

शे.] सर्वनिघृष्व । अतन्त्र इति व्याचष्टे—अकर्तरीति । 'इण्शीभ्याम्' इत्येव सिद्धे 'शेव' इति व्यर्थमत आह—

तक्षा । राजा । धन्वा मरुः । धन्व शरासनम् । द्युवा सूर्यः । प्रतिदीव्यन्त्यस्मिन् प्रतिदिवा दिवसः । १५५ । सप्यशूभ्यां तुट् च । सप्त । अष्ट । १५६ । नञि जहातेः । अहः । १५७ । श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति । एते त्रयोदश कनिप्रत्ययान्ता निपात्यन्ते । श्वयतीति श्वा । उक्षा । पूषा । प्लिह गतौ । इकारस्य दीर्घत्वम् । प्लेहतीति प्लीहा कुक्षिव्याधिः । क्लिदू आर्द्रीभावे । क्लिद्यति क्लेदा चन्द्रः । स्निह्यतेर्गुणः । स्निह्यतीति स्नेहा सुहृच्चन्द्रश्च । मुह्यन्त्यस्मिन्नाहते मूर्धा । मुहेरुपधाया दीर्घो धोऽन्तादेशो रमागमश्च । मज्जत्यस्थिषु मज्जा अस्थिसारः । अर्यपूर्वो माङ् । अर्यमा । विश्वं प्सातीति विश्वप्सा-अग्निः । परिजायते परिज्मा चन्द्रोऽग्निश्च । जनेरुपधालोपो मश्चान्तादेशः । मातरि अन्तरिक्षे श्वयतीति मातरिश्वा । धातोरिकारलोपः । मह पूजायाम् । हस्य घो वुगागमश्च ।

त.] गर्वोऽहंकारः । शर्वो रुद्रः । कनिन्यु । 'यु मिश्रणे, वृषु सेचने, तक्षू तनूकरणे राजृ दीप्तौ, धन्वि (वि) गत्यर्थः, द्यु अभिगमने, दिवु क्रीडादौ । 'युवा स्यात्तरुणे श्रेष्ठे निसर्गबलशालिनी'ति । 'वृषा कर्णे महेन्द्रे ना' इति च मेदिनी । 'तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठतट्' इत्यमरः । 'राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः' इति च । 'समानौ मरुधन्वानौ' इति च । 'अथाऽस्त्रियाम् । धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इति चाऽमरः । 'धन्वा तु मरुदेशे ना क्लीबे चापे स्थलेऽपि च' इति मेदिनी । **सप्यशूभ्याम्** । षप समवाये, अशू व्याप्तौ । **नञि** । ओहाक् त्यागे, कनिनि आतो लोपः । **श्वन्नुक्षन्** । टुओश्वि गतिवृद्ध्योः, उक्ष सेचने, पूष वृद्धौ, ष्णिह प्रीतौ, मुह वैचित्ये, मुर्वी बन्धने । उकारस्य दीर्घत्वे वकारस्य धकार इत्युज्ज्वलदत्तः । टुमस्जो शुद्धौ । मस्जेः सकारस्य शकारस्तस्य जश्त्वेन जः । माङ् माने शब्दे च, प्सा भक्षणे, जनी प्रादुर्भावे, टुओश्वि गतिवृद्ध्योः । **कनिप्रत्ययान्ता इति** । नायं निदिति भावः । केचित्तु नित्त्वं स्वीकृत्य उक्षन्नादीनां सूत्रेऽन्तोदात्तनिपातनमाहुस्तच्च गौरवग्रस्तमित्युपेक्ष्यम् । **श्वेति** । इकारलोपो निपात्यते । **पूषेति** । 'सौ चे'त्युपधादीर्घः । 'इन्हन्' इति नियमात्पूषणौ पूषण इत्यादौ न दीर्घः । 'क्लिदौषधिशशाङ्कयोः' इति यादवः । **मूर्धेति** । 'मूर्धा ना मस्तकोऽस्त्रियाम्' इत्यमरः । **मज्जेति** । नकारान्तोऽयं । टाबन्तोऽप्यभ्युपगम्यते । 'ऊष्मया सार्धमूष्मापि मज्जोक्तो मज्जया सह' इति द्विरूपकोशात् । 'अर्यमा तु पुमान्सूर्ये पितृदेवान्तरेऽपि चे'ति मेदिनी । **परिजायत इत्यादि** । एतच्च दशपादीवृत्त्यनुरोधेनोक्तम् । 'परिज्मानं सुखं रथ'मिति मन्त्रस्य वेदभाष्ये तु परिज्मा परितो गन्ता । अज्जेः परिपूर्वस्य 'श्वन्नुक्षन्' इत्यादिना मन्प्रत्ययः, अकारलोपः, आद्युदात्तत्वं च निपात्यत इत्युक्तम् । उज्ज्वलदत्तस्तु परिज्वेति पठित्वा ज्वु इति सौत्रो धातुः परिपूर्वः, यणादेशः परिज्वा चन्द्र इत्याह, तल्लक्ष्यविरोधादुपेक्ष्यम् । **मातरिश्वेति** । सप्तम्या अलुक् । इह भत्वविषये संप्रसारणं न भवति, 'श्वयुवे'ति सूत्रे अभिव्यक्ततरत्वेन कुक्कुरवाचकस्यैव श्वशब्दस्य, तदन्तस्य

बा.] ऽहङ्कारः' इत्यमरः । **शर्व इति** । ईश्वरः शर्व ईशानः' इत्यमरः । **दर्व इति** । दृधातोः रूपम् । **कनिन् युवृषि** । यु मिश्रणे, वृषु सेचने, तक्षू तनूकरणे, राजृ दीप्तौ, धन्वि गतौ, द्यु अभिगमने, दिवु क्रीडादौ एषां समाहारद्वन्द्वात्पञ्चमी । एभ्यः कनिन्प्रत्ययः । **युवेति** । 'बालस्तु स्यान्माणवको वयःस्थस्तरुणो युवा' इत्यमरः । 'युवा स्यात्तरुणे श्रेष्ठे निसर्गबलशालिनि' इति मेदिनी । **वृषेति** । वृषधातोः कनिन्प्रत्ययः । 'चित्रोपचित्रा न्यग्रोधी द्रवन्ती शम्बरी वृषा' इत्यमरः । **तक्षेति** । तक्षू तनूकरणे इत्यस्मात्कनिन्प्रत्ययः । 'तक्षा तु वर्धकिस्त्वष्टा रथकारस्तु काष्ठतट्' इत्यमरः । **राजेति** । 'राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः' इत्यमरः । **धन्वेति** । 'समानौ मरुधन्वानौ' इत्यमरः । **सप्यशूभ्यां तुट् च** । षप समवाये, अशू व्याप्तौ आभ्यां कनिन्प्रत्ययस्तुडागमश्च । सप्त अष्टेति रूपम् । **नञि जहातेः** । नञि उपपदे ओ हाक् त्यागे इत्यस्मात् कनिन्प्रत्ययः । कनिन्यातो लोपः ।

**श्वन्नुक्षन्पूषन्प्लीहन्** । टु ओ श्वि गतिवृद्ध्योः, उक्ष सेचने, पूष वृद्धौ, प्लिह गतौ, क्लिदू आर्द्रीभावे, ष्णिह प्रीतौ, मुह वैचित्ये, टु मस्जो शुद्धौ, माङ् माने अर्यपूर्वः, प्सा भक्षणे विश्वपूर्वः, जनी प्रादुर्भावे परिपूर्वः, टु ओ श्वि गतिवृद्ध्योः, मह पूजायाम्, एते कनिप्रत्ययान्ता निपात्यन्त इत्यर्थः । **श्वेति** । इकारलोपो निपात्यते । 'शुनको भषकः श्वा स्या'दित्यमरः । **उक्षेति** । 'उक्षा भद्रो बलीवर्दः' इत्यमरः । **पूषेति** । 'सौ चे'त्युपधादीर्घः । पूषणावित्यादौ तु इन्हन्निति नियमान्न दीर्घः । 'विकर्तनार्कमार्तण्डमिहिरारुणपूषणः' इत्यमरः । **प्लिह गताविति** । अस्मात् कनिप्रत्यये उपधाया इकारस्य दीर्घ इत्यर्थः । 'अन्त्रं पुरीतद्गुल्मस्तु प्लीहा पुंस्यथ वस्नसा' इत्यमरः । **मूर्धेति** । 'मूर्धा ना मस्तकोऽस्त्रिया'मित्यमरः । **मज्जेति** । मज्जन्शब्दस्य नकारान्तत्वेऽपि स्त्रीत्वविवक्षायां टाबप्यभ्युपेयते । 'सारो मज्जा नरि त्वक् स्त्री' इत्यमरः । **अर्यमेति** । 'अर्यमा तु पुमान्सूर्ये पितृदेवान्तरेऽपि चे'ति मेदिनी । 'सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः' इत्यमरः । परिज्मेत्यत्र प्रक्रियायाह—जनेरुपधालोप इत्यादि । **मातरिश्वेति** । सप्तम्या अलुक् निपातनात् । 'श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः' इत्यमरः । मघवन्शब्दे

शे.] अन्तोदात्तेति । इति प्रथमः पादः ।

मघवा इन्द्रः। इत्युणादिषु प्रथमः पादः।

अथ द्वितीयः पादः।

१५८। **कृहृभ्यामेणुः**। करेणुः। हरेणुर्गन्धद्रव्यम्। १५९। **हनिकुषिनीरमिकाशिभ्यः क्थन्**। हथो विषण्णः। कुष्ठम्। नीथो नेता। रथः। काष्ठम्। १६०। **अवे भृञः**। अवभृथः। १६१। **उषिकुषिगार्तिभ्यस्थन्**। ओष्ठः। कोष्ठम्। गाथा। अर्थः। बाहुलकात् शोथः। १६२। **सर्तेर्णित्**। सार्थः समूहः। १६३। **जॄवॄभ्यामूथन्**॥ जरूथं मांसम्। 'वरूथो रथगुप्तौ ना'। १६४। **पातॄतुदिवचिरिचिसिचिभ्यस्थक्**। 'पीथो रविर्घृतं पीथम्'। 'तीर्थं शास्त्राऽध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु। अवतारर्षिजुष्टाम्भःस्त्रीरजःसु च

त.]च ग्रहणात्। तेन मातरिश्वनः, मातरिश्वनेत्येव। इह सूत्रे इतिशब्द आद्यर्थस्तेनाऽन्येभ्योऽपि यथादर्शनं कनिः प्रयोक्तव्यः। दशपाद्यां तु इतिशब्दोऽत्र न पठ्यते। इत्युणादिषु प्रथमः पादः।

**कृहृभ्याम्**। डुकृञ् करणे, हृञ् हरणे। 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः। 'करेणुर्गजयोषायां स्त्रियां पुंसि मतङ्गजे' इति मेदिनी। **गन्धद्रव्यमिति**। कलायश्चेति बोध्यम्। 'कलायस्तु सतीनकः' इत्यमरः। 'हरेणुखण्डिके चास्मिन्' इत्यमरः। 'हरेणुर्ना सतीने स्त्री रेणुकाकुलयोषितोः' इति मेदिनीविश्वप्रकाशौ। **हनिकुषि**। हन हिंसागत्योः, कुष निष्कर्षे, णीञ् प्रापणे, रमु क्रीडायाम्, काशृ दीप्तौ। 'कुष्ठं रोगे पुष्करे स्त्री' इति मेदिनी। 'कुष्ठं रोगे सुगन्धे च' इति विश्वः। 'नीथे नीथे मघवानं सुतासः' इति मन्त्रे नीथशब्दस्याऽन्तोदात्तत्वं बाहुलकात्। नीथे नीथे= स्तोत्रे स्तोत्रे इति वेदभाष्यम्। 'रथः पुमानवयवे स्यन्दने वेतसेऽपि च' इति मेदिनी। 'रथः स्यात्स्यन्दने काये चरणे वेतसेऽपि च' इति विश्वः। 'काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः। स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकम्' इति मेदिनी। **अवे**। डुभृञ् धारणपोषणयोः। अवभृथो यज्ञावसानम्। **उषिकुषि**। उष दाहे, कुष निष्कर्षे, गै शब्दे, ऋ गतौ, एभ्यस्थन्। 'कोष्ठं कुक्षिकुसूलयोः'। 'गाथा श्लोके संस्कृतान्यभाषायां शेषवृत्तयोः' इति मेदिनी। 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः। शोथः श्वयथुः। शु गतौ। **सर्तेः**। सृ गतौ। 'सार्थो वणिक्समूहे स्यादपि सङ्घातमात्रके' इति मेदिनीविश्वप्रकाशौ। **जॄवॄञ्**। ज्या वयोहानौ क्र्यादिः, जॄष् दिवादौ। वृञ् वरणे। जरूथोऽसुरविशेष इति वेदभाष्यम्। 'वरूथः स्यात्तनुत्राणे रथगोपनवेश्मनोः' इति हेमचन्द्रः। **पातॄ**। पा पाने, तॄ प्लवनतरणयोः, तुद व्यथने, वच परिभाषणे, रिचिर् विरेचने, षिच क्षरणे, ऋच

बा.]प्रक्रियामाह—**हस्य घ इति**। 'इन्द्रो मरुत्वान्मघवा बिडौजाः पाकशासनः' इत्यमरः। इत्युणादिषु प्रथमः पादः।

अथ द्वितीयः पादः। **कृहृभ्यामेणुः**। डु कृञ् करणे, हृञ् हरणे, आभ्यामेणुप्रत्ययः। तस्मिन्प्रत्यये परे धातोर्गुण इति भावः। 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः। 'करेणुर्गजयोषायां स्त्रियां पुंसि मतङ्गजे' इति मेदिनी। **हरेणुरिति**। हरेणुः खण्डिके चाऽस्मिन्' इत्यमरः। 'हरेणुर्ना सतीने स्त्री रेणुकाकुलयोषितोः' इति मेदिनी। **हनिकुषिनी**। हन हिंसागत्योः, कुष निष्कर्षे, णीञ् प्रापणे, रमु क्रीडायां, काशृ दीप्तौ, एषां द्वन्द्वात्पञ्चमी। एभ्यः क्थन्प्रत्ययः स्यात्। **हथ इति**। 'अनुदात्तोपदेशवनतितनोत्यादीना मित्यनुनासिकलोपः। **कुष्ठमिति**। 'व्याधिः कुष्ठं पारिभाव्य'मित्यमरः। 'कोठो मण्डलकं कुष्ठश्वित्रे दुर्नामकाऽर्शसी' इत्यमरः। 'कुष्ठं मुण्डं शीधु बुस्त'मित्यमरः। 'कुष्ठं रोगे पुष्करेऽस्त्री'ति मेदिनीकोशश्च। **रथ इति**। 'रथाभ्रपुष्पविदुरे'त्यमरः। 'रथः पुमानवयवे स्यन्दने वेतसेऽपि चे'ति मेदिनी। **काष्ठमिति**। 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः। **अवे भृञः**। डु भृञ्धारणपोषणयोः, अस्मादवे उपपदे क्थन्प्रत्ययः स्यात्। **अवभृथ इति**। 'दीक्षान्तोऽवभृथे यज्ञे तत्कर्मार्हं तु यज्ञिय'मित्यमरः। **उषिकुषिगर्तिभ्यस्थन्**। उष दाहे, कुष निष्कर्षे, गै शब्दे, ऋ गतौ, एषां द्वन्द्वात्पञ्चमी। **ओष्ठ इति**। 'ओष्ठाधारौ तु रदनच्छदौ दशनवाससी' इत्यमरः। **कोष्ठमिति**। 'पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा' इत्यमरः। 'कोष्ठं कुक्षिकुसूलयोः' इत्यमरः। **गाथेति**। 'गाथा श्लोके संस्कृतान्यभाषायां शेषवृत्तयोः' इति मेदिनी। **अर्थ इति**। 'अर्थरैविभवा अपि' इत्यमरः। **बाहुलकात्। शोथ इति**। शोफस्तु श्वयथुः शोथः' इत्यमरः। शु गतावित्यस्मात्प्रत्ययः। **सर्तेर्णित्**। सृ गतावित्यस्मात्थन्प्रत्ययः। स च णिद्भवतीत्यर्थः। सार्थ इति रूपम्। 'सार्थो वणिक्समूहे स्यादपि सङ्घातमात्रके' इति मेदिनी। **जॄवॄभ्यामूथन्**। जॄ वयोहानौ, जॄष्धातुश्च गृह्यते। वृञ् वरणे, आभ्यामूथन्स्यात्। **जरूथ इति**। जॄधातोः रूपम्। तस्यार्थमाह—**मांसमिति**। **वरूथ इति**। रथगुप्तिर्वरूथो ना कूबरस्तु युगन्धरः' इत्यमरः। **पातॄतुदिवचि**। पा पाने, तॄ प्लवनतरणयोः तुद व्यथने, वच परिभाषणे, रिचिर् विरेचने, षिचिर् क्षरणे, एषां द्वन्द्वात्पञ्चमी। एभ्यस्थक्प्रत्ययः स्यात्। **पीथ इति**। घुमास्थेती-

विश्रुत'मिति विश्वः। तुत्थोऽग्निः। उक्थं सामभेदः। रिक्थम्। बाहुलकाद्धचेपि। 'रिक्थमृक्थं धनं वसु'। १६५। अर्तेर्निरि। निर्ऋथं साम। १६६। निशीथगोपीथाऽवगथाः। निशीथोऽर्धरात्रो, रात्रिमात्रं च। गोपीथं तीर्थम्। अवगथः प्रातःस्नातः। १६७। गश्चोदि। उद्गीथः साम्नो भागविशेषः। १६८। समीणः। समीथो वह्निः, सङ्ग्रामश्च। १६९। तिथपृष्ठगूथयूथप्रोथाः। तिजेर्जलोपः। तिथोऽनलः कामश्च। पृष्ठम्। गूथं विष्ठा। यूथं समूहः। 'प्रोथमस्त्री तुरङ्गस्यास्ये प्रोथः प्रस्थित उच्यते'। १७०। स्फायितञ्चिवञ्चिशकि-

---

त.] स्तुतौ। 'तुत्थोऽग्नावञ्जने तुत्था नीलीसूक्ष्मैलयोरपि' इति विश्वः। 'तुत्थमञ्जनभेदे स्यान्नीलीसूक्ष्मैलयोः स्त्रियाम्'। 'सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम्' इति मेदिनी। अर्तेः। ऋ गतौ। 'द्रोघवाचस्ते निर्ऋथं सचन्ताम्' इति मन्त्रे निर्ऋथो हिंसेति वेदभाष्यम्। निशीथ। शीङ् स्वप्ने निपूर्वः, पा पाने गोपूर्वः। 'घुमास्थे'तीत्वम्। गाङ् गतौ। अवपूर्वस्य धातोर्ह्रस्वत्वम्। 'निशीथस्तु पुमानर्द्धरात्रे स्याद्रात्रिमात्रके' इति मेदिनी। 'प्रति त्यं चारुमध्वर'मिति मन्त्रे 'गोपीथः सोमपान'मिति वेदभाष्यम्। तीर्थमिति तु वृत्तिकारः। गश्चोदि। उदि उपपदे गै शब्दे इत्यस्मात्थक्। समीणः। इण् गतावस्मात्समि उपपदे थक्। समिथशब्दः सङ्ग्रामपर्यायेषु वैदिकनिघण्टौ पठितः। 'श्रिये जातः' इति मन्त्रे 'समिथाः युद्धानी'ति वेदभाष्यम्। तच्च युक्तमेव। सम्यगेति जयार्थमत्रेति व्युत्पत्तेः। संपूर्वस्येणः क्विन्नाद्यन्तस्य लोकेऽपि युद्धार्थत्वदर्शनाच्च। उक्तं ह्यमरेण 'समित्याजिसमिद्युधः' इति। तिथपृष्ठ। तिज निशाने, पृषु सेचने, गु पुरीषोत्सर्गे, यु मिश्रणे, प्रुङ् गतौ। एते थक्प्रत्ययान्ता निपात्यन्ते। 'पृष्ठं तु चरमं तनोः' इत्यमरः। 'पृष्ठं चरममात्रेऽपि देहस्यावयवान्तरे' इति मेदिनी। स्तोत्रविशेषोऽपि 'पृष्ठैः स्तुवते' इत्यादौ तथा निर्णयात्। गूथमिति। निपातनाद्दीर्घः। एवं यूथोऽपि। ['यूथं तिर्यक्समूहेऽस्त्री पुष्पभेदेऽपि योषिती'ति मेदिनी। यूथी पुष्पप्रभेदे स्यान्मागध्यां च कुरण्टके] 'यूथं तिर्यक्समूहेऽपि वृन्दमात्रेऽपि भाषित'मिति विश्वः। 'यूथं तदग्रसरगर्वितकृष्णसार'मिति रघुः। प्रोथमिति। निपातनाद्गुणः। 'प्रोथोऽस्त्री हयघोणायां ना कट्यां मध्वगे त्रिषु' इति मेदिनी। स्फायितञ्चि। स्फायी वृद्धौ, तञ्चु संकोचने, वञ्चु प्रलम्भने, शक्लृ शक्तौ, क्षिप प्रेरणे, क्षुदिर् संपेषणे, सृप्लृ गतौ, तृप प्रीणने, दृप हर्षमोचनयोः, वदि अभिवादनस्तुत्योः, उन्दी क्लेदने, श्विता वर्णे, वृतु

---

बा.] त्वमिति भावः। तीर्थमिति। ऋत इत्त्वे रपरत्वे दीर्घ इति भावः। 'अङ्गुल्यग्रे तीर्थं दैवं स्वल्पाङ्गुल्योर्मूले काय'-मित्यमरः। 'निपानागमयोस्तीर्थमृषिजुष्टे जले गुरौ' इत्यमरः। विश्वकोशमाह—तीर्थं शास्त्राध्वरेत्यादि। तुत्थ इति। 'रजनी श्रीफली तुत्था द्रोणा दोला च नीलिनी। सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः' इत्यमरः। उक्थमिति। सामभेदः। रिक्थमिति। 'द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु' इत्यमरः। सिक्थ इति। 'सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसक'मिति मेदिनी। 'मधु क्षौद्रं माक्षिकादि मधूच्छिष्टं तु सिक्थक'मित्यमरः। अर्तेर्निरि। ऋ गतौ, अस्मात्थगिति शेषः। निर्ऋथं साम। निशीथगोपीथावगथाः। शीङ् स्वप्ने निपूर्वः, पा पाने गोपूर्वः, गाङ्गतौ अवपूर्वः, एतेभ्यस्थक्प्रत्ययः स्यात्। निशीथ इति। कित्त्वान्न गुणः। 'अर्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ' इत्यमरः। 'निशीथस्तु पुमानर्धरात्रे स्याद्रात्रिमात्रके' इति मेदिनी। गोपीथः— सोमपानम्। तीर्थमिति तु वृत्तिः। घुमास्थेतीत्वम्। अवगथ इति। थकि धातोराकारस्य ह्रस्वत्वं निपात्यते। गश्चोदि। गै शब्दे इत्यस्य कृतात्वानुकरणस्य ग इति षष्ठ्यन्तम्। 'आतो धातो'रित्याकार-लोपः। उदि उपपदे गैधातोस्थक्प्रत्यय इत्यर्थः। 'दतिसीमान्तहरितो रोमन्थोद्गीथबुद्बुदाः' इत्यमरः। समीणः। समि उपपदे इण्धातोस्थगित्यर्थः। समिथ इति। वेदभाष्ये त्वस्य सङ्ग्रामपरत्वमुक्तम्। तिथपृष्ठगूथयूथ-प्रोथाः। तिज निशाने, पृषु सेचने, गु पुरीषोत्सर्गे, यु मिश्रणे, प्रुङ् गतौ, एते थक्प्रत्ययान्ता निपात्यन्त इत्यर्थः। तिज निशाने इत्यस्मात् थकि आह—तिजेर्जलोप इति। तस्यार्थमाह—काम इति। पृष्ठमिति। 'पृष्ठं तु चरमं तनोः' इत्यमरः। 'पृष्ठं चरममात्रेऽपि देहस्यावयवान्तरे' इति मेदिनी। गूथमिति। धातोर्दीर्घत्वं च निपात्यते। विष्ठेति। 'पुरीषगूथे वर्चस्कमस्त्री विष्ठाविशौ स्त्रिया'मित्यमरः। यूथमिति। अत्रापि निपातनाद्दीर्घः। समूह इति। 'सजातीयैः कुलं यूथं तिरश्चां पुंनपुंसक'मित्यमरः। प्रोथमिति। प्रुधातो रूपम्। ननु थकः कित्त्वेन कथं गुण इत्यत आह—निपातनादिति। क्वचिदिदं वाक्यं मूलपुस्तकेषु नोपलभ्यते। 'गतयोऽमूः पञ्च धाराः घोणा तु प्रोथमस्त्रिया'मित्यमरः। 'प्रोथोऽस्त्री हयघोणाया'मिति मेदिनी। स्फायितञ्चिवञ्चि। स्फायी वृद्धौ, तञ्चु सङ्कोचने, वञ्चु प्रलम्भने, शक्लृ शक्तौ, क्षिप प्रेरणे, क्षुदिर् सम्पेषणे, सृप्लृ गतौ, तृप प्रीणने, दृप हर्षमोचनयोः, वदि अभिवादनस्तुत्योः, उन्दी क्लेदने, श्विता वर्णे, वृतु वर्तने, अज गतिक्षेपणयोः, णीञ् प्रापणे, पद गतौ, मदी हर्षे, मुद हर्षे, खिद दैन्ये, छिदिर् द्वैधीकरणे, भिदिर् विदारणे, मदि स्तुतौ, चदि आह्लादने, दह भस्मीकरणे,

क्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्विवितिवृत्यजिनीपदमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्। द्वात्रिंशतो रक् स्यात्। 'वलि' यलोपः। स्फारम्। न्यङ्क्वादित्वात्कुत्वम्। तक्रम्। वक्रम्। शक्रः। क्षिप्रम्। क्षुद्रः। सृप्रश्चन्द्रः। तृप्रः पुरोडाशः। दृप्रो बलवान्। वन्द्रः पूजकः। उन्दी-। उन्द्रो जलचरः। श्वित्रं कुष्ठम्। 'वृत्रो रिपौ ध्वनौ ध्वान्ते शैले चक्रे च दानवे'। अजेर्वी,-वीरः। नीरम्। पद्रो ग्रामः। मद्रो हर्षो देशभेदश्च। 'मुद्रा प्रत्ययकारिणी'। खिद्रो रोगो दरिद्रश्च। छिद्रम्। भिद्रं वज्रम्। मन्द्रः। चन्द्रः। पचाद्यचि चन्दोऽपि। 'हिमांशुश्चन्द्रमाश्चन्द्रः शशी चन्दो हिमद्युतिः'। दह्रोऽग्निः। दस्रः स्वर्वैद्यः। दभ्रः समुद्रः स्वल्पं च। वसेः संप्रसारणे-। **न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्** ।८।३।११०। रेफपरस्य सकारस्य सृप्यादीनां सवनादीनां च मूर्धन्यो न स्यात्। 'पूर्वपदा'दिति प्राप्तः प्रतिषिध्यत इति वृत्तिर्भूयोऽभिप्राया, तेन 'शासिवसी'ति प्राप्तमपि न। उस्रो रश्मिः। उस्रा गौः। वाश्रो दिवसः। वाश्रं मन्दिरम्। शीरोऽजगरः। हस्रो मूर्खः। सिध्रः साधुः। शुभ्रम्। मुसे रक्। बाहुलकात्। मुस्रम्। अश्रु। १७१। **चकिरम्योरुच्चोपधायाः**। चुक्रमम्लद्रव्यम्। रुम्रोऽरुणः।

---

त.]वर्तने, अज गतिक्षेपणयोः, णीञ् प्रापणे, पद गतौ, मदी हर्षे, मुद हर्षे, खिद दैन्ये, छिदिर् द्वैधीकरणे, भिदिर् विदारणे, मदि स्तुतौ, चदि आह्लादने, दह भस्मीकरणे, दसु उपक्षेपे, दम्भु दम्भने, वस निवासे, वाशृ शब्दे, शीङ् स्वप्ने, हसे हसने, षिध गत्याम्, शुभ दीप्तौ। **द्वात्रिंशत इति**। दशपाद्यां तु त्रयस्त्रिंशदुक्ताः। 'दम्भिवहिवसी'ति पठित्वा वह प्रापणे ऊह्रोऽनड्वानित्युदाहरणात्। माधवोऽप्येवम्। **स्फारमिति**। 'नेड्वशि कृती'ति नेट्। वलि यलोपः। 'स्फारः स्यात्पुंसि विकटे करकादेश्च बुद्बुदे' इति मेदिनी। [**तक्रमिति**]। 'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जल'मित्यमरः। 'वक्रः स्याज्जटिले क्रूरे पुटभेदे शनैश्चरे' इति विश्वः। 'शक्रः पुमान् देवराजे कुटजार्ज्जुनभूरुहोः' इति मेदिनी। 'क्षुद्रः स्यादधमक्रूरकृपणाऽल्पेषु वाच्यवत्' इति मेदिनी। **तृप्रः पुरोडाश इति**। 'न तृप्रा उरुव्यचस'मिति मन्त्रे वेदभाष्यकारैरित्थं व्याख्यातं, प्रकृतसूत्रे उज्ज्वलदत्तादिभिश्च। दशपादीवृत्तौ तु तृप्रमाज्यं काष्ठं चेत्युक्तम्। तृप्रं दुःखमिति सुब्धातुवृत्तौ माधवः। **हिमांशुरित्यादि हिमद्युतिरित्यन्तं** शब्दार्णवः। दस्यति रोगान् क्षिपतीति दस्रः। 'दस्रः खरेऽश्विनीसुते' इति मेदिनी। 'दस्रः खरे चाऽश्विनयोः' इति विश्वः। **शासिवसीति प्राप्तमपि नेति**। एवं च 'अविन्द उस्रियाः' इति मन्त्रे षत्वाऽभावः सिद्धः। माधवस्तु वृत्तिग्रन्थानुरोधेन बाहुलकादिह षत्वं नेति व्याचष्टे। 'उस्रो वृषे च किरणे उस्राऽर्ज्जुन्युपचित्रयोः' इति मेदिनी। 'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी'त्यमरः। 'वाश्रो ना दिवसे क्लीबं मन्दिरे च चतुष्पथे' इति मेदिनी। 'वाश्रो रासभपक्षिणोः' इति केचित्। माधवेन तु 'वाश्रेव विद्युन्मिमाति' इति मन्त्रे शब्दयुक्ता प्रस्नुतस्तना धेनुर्वाश्रेति व्याख्या-

---

बा.]दसु उपक्षये, दम्भु दम्भने, वस निवासे, वाशृ शब्दे, शीङ् स्वप्ने, हसे हसने, षिध गत्यां, शुभ दीप्तौ, एषां द्वन्द्वात्पञ्चमी। एभ्यो धातुभ्यो रक्प्रत्यय इत्यर्थः। यकारलोपमाह—**वलि यलोप इति**। **स्फारमिति**। 'नेड्वशि कृती'ति निषेधादिडागमो न भवति। 'स्फारं भूयश्च भूरि चे'त्यमरः। 'स्फारः स्यात्पुंसि विकटे करकादेश्च बुद्बुदे' इति मेदिनी। तञ्चुधातो रक्प्रत्यये कुत्वविधिं स्मारयति—**न्यङ्क्वादित्वादिति**। **तक्रमिति**। 'तक्रं ह्युदश्विन्मथितम्' इत्यमरः। **वक्र इति**। वञ्चिधातोः रूपम्। कित्वान्नलोपः। न्यङ्क्वादित्वात्कुत्वम्। 'आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपी'त्यमरः। **शक्र इति**। शक्लृधातोः रूपम्। 'जिष्णुर्लेखर्षभः शक्रः' इति, 'जयोऽथ कुटजः शक्रः' इति चामरः। 'शक्रः पुमान् देवराजे कुटजार्ज्जुनभूरुहोः' इत्यपि मेदिनी। **क्षिप्रमिति**। 'क्षिप्रक्षुद्राभीप्सितपृथुपीवरबहुप्रकर्षार्थाः' इत्यमरः। **क्षुद्र इति**। 'कदर्ये कृपणक्षुद्रकिम्पचानमितंपचाः' इत्यमरः। 'क्षुद्रः स्यादधमक्रूरकृपणाऽल्पेषु' इति मेदिनी। इत्यादि स्पष्टम्। **न रपरसृपिसृजि**। रपर इति बहुव्रीहिः। 'अपदान्तस्य मूर्धन्य' इत्यधिकृतम्। सृप्लृ गतौ, सृज विसर्गे, स्पृश संस्पर्शने, स्पृह ईप्सायां चुरादिः, सवनादि, एतेषां द्वन्द्वात्षष्ठी। अवयवावयविभावः षष्ठ्यर्थः। तथा चैतदवयवस्य सकारस्य षत्वं न स्यादित्यर्थः। **उस्र इति**। वसधातो रकि तस्य कित्वात्संप्रसारणेऽनेन षत्वनिषेधे च रूपम्। नन्वत्रानेन षत्वाऽभावकथनमसङ्गतम्, अस्य सूत्रस्य 'पूर्वपदात्संज्ञायामगः' इति प्राप्तस्य षत्वस्य निषेधकताया वृत्त्यादिषु उक्तत्वात्। अत्र तु न तेन षत्वप्राप्तिः, अपि तु 'शासिवसी'त्यनेनैवेत्याशङ्कायामाह—**भूयोऽभिप्रायेति**। तस्माद्वृत्तिग्रन्थ एतन्निषेधकत्वस्यापि बोधक एवेति भावः। **उस्रो रश्मिरिति**। 'किरणोऽस्रमयूखांशु' इत्यमरादिति भावः। 'उस्रो वृषे च किरणे' इति मेदिनी। **उस्रेति**। 'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी'त्यमरः। **वाश्र इति**। वाश्रधातोः रूपम्। **मुस्र**-

।१७२। **वौ कसेः** । विकुसश्चन्द्रः ।१७३। **अमितम्योर्दीर्घश्च** । आम्रम् । ताम्रम् ।१७४। **निन्देर्नलोपश्च** । निद्रा । १७५ । **अर्देर्दीर्घश्च** । आर्द्रम् । १७६ । **शुचेर्दश्च** । शूद्रः । १७७ । **दुरीणो लोपश्च** । दुःखेन ईयते प्राप्यते इति दूरम् । १७८ । **कृतेश्छः क्रू च** । कृच्छ्रम् । क्रूरः । १७९ । **रोदेर्णिलुक् च** । रोदयतीति रुद्रः । १८० । **बहुलमन्यत्रापि संज्ञाछन्दसोः** । णिलुगित्येव । 'वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे ।

---

त.]तम् । 'शुभ्रं स्यादभ्रके क्लीबमुद्दीप्तशुक्लयोस्त्रिषु' इति मेदिनी । **मुस्रमिति** । मुस खण्डने । **चकि** । चक तृप्तौ, रमु क्रीडायम् , 'चुक्रस्त्वम्लेऽम्लवेतसे । चुक्री चाङ्गेरिकायां स्याद्वृक्षाम्ले चुक्रमिष्यते' इति विश्वः । **वौ कसेः** । कस गतौ । विपूर्वादस्माद्रक् स्यादुत्वं चोपधायाः । **अमि** । अम गत्यादिषु, तमु काङ्क्षायाम् । आभ्यां रक् स्यादुपधाया दीर्घश्च । **निन्देः** । णिदि कुत्सायाम् । **अर्देः** । अर्द गतौ । 'आर्द्रा नक्षत्रभेदे स्यात्त्रियां क्लिन्नेऽभिधेयव'दिति मेदिनी । **शुचेः** । शुच शोके, अस्माद्रक् दश्चान्तादेश, धातोर्दीर्घश्च । शूद्रो वृषलः । 'अहहा रे त्वा शूद्र' इति श्रुतौ तु रूढेर्बाधाद्योग एव पुरस्कृतः । तथा चोत्तरतन्त्रे भगवता व्यासेन सूत्रितं–'शुगस्य तदनादरश्रवणा'दिति । **दुरीणो** । इण् गतावित्यस्मादुरुपपदे रक् स्याद्धातोर्लोपश्च । 'रो री'ति रेफस्य लोपे 'ढ्रलोपे' इति दीर्घः । **कृतेः** । कृती च्छेदने इत्यस्माद्रक् स्याच्छक्रू इत्येतावादेशौ च स्तः । छस्त्वन्त्यस्यादेशः । 'क्रू' त्वनेकाल्वात्सर्वस्यादेशः । 'कृच्छ्रमाख्यातमाभीले पापसंतापनादिनोः' इति विश्वमेदिन्यौ । 'स्यात्कष्टं कृच्छ्रमाभील'मित्यमरः । 'क्रूरस्तु कठिने घोरे नृशंसे चाभिधेयवदि'ति विश्वः । 'नृशंसो घातुकः क्रूरः पापो धूर्तस्तु वञ्चकः' इत्यमरः । **रोदेः** । रुदिर् अश्रुविमोचने, ण्यन्तादस्माद्रक् , णेश्च लुक् । 'णेरनिटी'ति लोपे तु 'पुगन्ते'ति गुणः स्यादिति णिलुक् चेत्युक्तम् । **रोदयतीति रुद्र इति** । नन्वेवं 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्व'मिति श्रुत्या सह विरोधोऽत्र स्यादिति चेत् । अत्राहुः– 'कर्तरि कृ'दिति सूत्रानुरोधेन शम्भुरित्यत्र शं भावयतीत्यन्तर्भावितण्यर्थता यथा स्वीक्रियते तथा अरोदीदित्यत्राप्यन्तर्भावितण्यर्थतायां स्वीकृतायां रोदनं कारितवानित्यर्थलाभान्नास्ति श्रुतिविरोधः । न च देवैरग्नौ वामं वसु स्थापितं तच्च धनं देवैर्याचितं चेदग्निस्तु रोदनं कृतवानिति सोऽरोदीदित्यादिश्रुत्यर्थादिहान्तर्भावितण्यर्थकल्पनं न संभवतीति श्रुतिविरोधस्त्वपरिहार्य एवेति वाच्यम् , देवैः स्थापितं वामं वसु देवेभ्योऽग्निना न दत्तं, ते देवा एव रोदनं कृतवन्तः । अग्निस्तु तदीयमदत्वा रोदनं कारितवानित्यर्थकल्पनायाः संभवात् । अथवाऽग्नौ प्रयुज्यमानरुद्रशब्दस्य रोदितीति रुद्र इत्येवार्थोऽस्तु, परन्तु ब्रह्मविष्णुरुद्रा इति व्यवह्रियमाणो यो रुद्रस्तद्वाचकरुद्रशब्दस्य रोदेरित्युणादिसूत्रानुरोधेन रोदयतीति रुद्र इत्येवार्थकल्पनायां बाधकाऽभावात् श्रुतिविरोधोऽत्र नास्त्येवेति । **अन्यत्रापीति** । धात्वन्तरात्प्रत्ययान्तरेऽपि णेर्लुगित्यर्थः । संज्ञायामुदाहरणम्–बृंहयति वर्धयति प्रजा इति ब्रह्मा । शं सुखं भावयतीति शम्भुरित्यादि । छन्दसि तु वृधु वृद्धौ । 'वर्धन्तु त्वा सुष्टुतयः' । वर्धयन्त्वित्यर्थः । 'य इमा जजान' । जनी प्रादुर्भावे

---

बा.]मिति । मुस खण्डने इत्यस्माद्रूपम् । **चकिरम्योरुच्चोपधायाः** । चक तृप्तौ, रमु क्रीडायां, रक्प्रत्ययः, उपधाया उकारश्चेत्यर्थः । **चुक्र इति** । 'सहस्रवेधी चुक्रोऽम्लवेतसः' इत्यमरः । **वौ कसेः** । कस गतौ, विपूर्वादस्मात् रक् स्यादुत्वं चोपधायाः । विकुस इति रूपम् । **अमितम्योर्दीर्घश्च** । अम गत्यादिषु, तमु काङ्क्षायाम् , आभ्यां रक्प्रत्ययः, प्रकृतेरचो दीर्घश्चेत्यर्थः । **आम्रमिति** । 'आम्रश्चूतो रसालोऽसौ' इत्यमरः । **ताम्रमिति** । तमुधातो रूपम् । **निन्देर्नलोपश्च** । णिदि कुत्सायामस्माद्धातो रक्प्रत्ययः, तत्संनियोगेन धातोर्नकारस्य लोपश्चेत्यर्थः । **निद्रेति** । इदित्वान्नुमि तस्य लोप इत्यर्थः । 'स्यान्निद्रा शयनं स्वापः' इत्यमरः । **अर्देर्दीर्घश्च** । अर्द गतौ याचने च, अस्मात् रक्प्रत्ययः, धातोर्दीर्घश्चेत्यर्थः । आर्द्रमिति रूपम् । 'आर्द्रं सार्द्रं क्लिन्नं तिमितम्'इत्यमरः । **शुचेर्दश्च** । शुच शोके, अस्मात् रक् , धातोर्दकारश्चान्तादेशः, उपधाया दीर्घश्चेत्यर्थः । 'शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः' इत्यमरः । **दुरीणो लोपश्च** । इण् गतावित्यस्माद्दुर्युपपदे रक्स्यात् , धातोर्लोपश्चेत्यर्थः । रकि रोरीति रेफस्य लोपे ढ्रलोप इति दीर्घ इति भावः । **कृतेश्छः क्रू च** । कृती छेदने इत्यस्मात रक्स्यात्प्रकृतेरन्त्यस्य तकारस्य छकारादेशः, 'क्रू' इति अनेकाल्वात्सर्वादेशश्च स्यादित्यर्थः । 'स्यात्कष्टं कृच्छ्रमाभीलं त्रिष्वेषां भेद्यगामि यत् । देवभूयादिकं तद्वत्कृच्छ्रं सान्तपनादिकम्'। 'नृशंसो घातुकः क्रूरः प्रायो धूर्तस्तु वञ्चकः ।' इत्यमरः । **रुदेर्णिलुक्च** । रुदिर् अश्रुविमोचने ण्यन्तादस्माद्रक्प्रत्ययः, णेर्लुक्च स्यात् । णेरनिटीति लोपे सिद्धे लुग्वचनं प्रत्ययलक्षणेन गुणाऽभावार्थम् । **रुद्र इति** । रकि रूपम् । **बहुलमन्यत्रापि** । संज्ञाच्छन्दसोरन्यत्रापि धात्वन्तरात्प्रत्ययान्तरेऽपि बहुलं णेर्लुक् वक्तव्य इत्यर्थः। संज्ञायामुदाहरणं–बृंहयति वर्द्धयति प्रजा इति ब्रह्मा। णेर्लुक्। छन्दसि तु 'वर्धन्तु त्वा सुष्टुतयः'। वर्द्धयन्त्वित्यर्थः । बाहुलकात्संज्ञाछन्दसोरभावेऽपि क्वचित् भवतीत्याह–**वान्ति पर्णशुष इति** । प्रथमतः पर्णशुषो

---

शे'] कृतेः छः । 'ऊ' आदेशेनैव सिद्धे 'क्रू' आदेसविधानं प्रक्रियालाघवार्थम् ।

ततः पर्णरुहो वान्ति, ततो देवः प्रवर्षति'।

१८१। **जीरी च**। जीरोऽणुः। उग्रश्च। इत्येके। १८२। **सुसूधागृधिभ्यः क्रन्**। सुरः। सूरः। धीरः। गृध्रः। १८३। **शुसिचिमीनां दीर्घश्च**। शूः सौत्रः। शूरः। सीरम्। चीरम्। मीरः समुद्रः। १८४। **वा विन्धेः**। वीध्रं विमलम्। १८५। **वृधिवपिभ्यां रन्**। वर्ध्रं चर्म। वप्रः प्राकारः। १८६। **ऋज्रेन्द्राग्रवज्रविप्रकुब्र-**

---

**त.**] लिटि रूपम्। जनयामासेत्यर्थः। इह णलि परतः 'अत उपधायाः' इति वृद्धिर्भवत्येव, 'जनिवध्योश्च' इति निषेधस्य चिणि ञिति णिति किति च स्वीकारात्। न च णिलोपे सति प्रत्ययान्तत्वात् 'कास्प्रत्ययाः'दित्याम्स्यादिति वाच्यम्, अमन्त्र इति पर्युदासादामोऽप्रसक्तेः। 'कास्यनेकाच' इति वार्तिकेन तु आम्शङ्का दूरापास्तैव, लिटि णिलोपे सत्यनेकाच्त्वाऽभावात्। ननु णलि 'णेरनिटी'त्यनिडादावार्द्धधातुके णिलोपे जजानेति रूपं सिद्धमिति किमनेन छुक्युदाहरणेनेति चेन्मैवम्। णिलोपे सति 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्चे'ति णौ मित्त्वे 'मितां ह्रस्वः' स्यात्, प्रत्ययलक्षणन्यायेन णिपरत्वसंभवात्। ततश्च जजेनेति स्यात्। लुकि सति तु प्रत्ययलक्षणन्यायो न प्रवर्तत इति मित्वाऽभावादिष्टं सिध्यति। बाहुलकादसंज्ञाछन्दसोरपि क्वचिद्भवतीत्याशयेनोदाहरति—**वान्तीत्यादि**। पर्णानि शोषयन्तीति पर्णशुषः। पर्णानि मोचयन्तीति पर्णमुचः। **जोरी च**। जु गतौ सौत्रोऽस्माद्रक्, ईकारश्चान्तादेशः। 'जीरः खड्गे वणिग्द्रव्ये' इति विश्वः। 'जीरस्तु जरणे खड्गे' इति मेदिनी। **उग्रश्चेति**। ज्या वयोहानौ। अस्माद्रक् 'ग्रहिज्ये'ति संप्रसारणं पूर्वरूपम् 'हलः' इति दीर्घः। **एके इति**। मुख्या इत्यर्थः। तथा च 'न धातुलोपे' इति सूत्रे जीवेरदानुरित्यस्य प्रत्याख्यानार्थं नैतज्जीवे रूपं किं तु रकि 'ज्यः संप्रसारण'मिति भाष्ये उक्तम्। **सुसूधा**। षुञ् अभिषवे, षूञ् प्राणिगर्भविमोचने, डुधाञ् धारणादौ, गृधु अभिकाङ्क्षायाम्। 'सुरा चषकमद्ययोः। पुंलिङ्गस्त्रिदिवेशे स्यात्' इति मेदिनी। 'सुरो देवे सुरा मद्ये चषकेऽपि सुरा क्वचित्' इति विश्वः। सुवति प्रेरयति कर्मणि लोकमिति सूरः सूर्यः। 'सूरसूर्यार्यमादित्ये'त्यमरः। 'धीरो धैर्यान्विते स्वैरे बुधे क्लीबं तु कुङ्कुमे। स्त्रियां श्रवणतुल्याया'मिति मेदिनी। 'गृध्रः खगान्तरे पुंसि वाच्यलिङ्गोऽथ लुब्धके' इति च। **शुसिचि**। शु गतौ, षिञ् बन्धने, चिञ् चयने, डुमिञ् प्रक्षेपणे, एभ्यः क्रन्, एषां दीर्घत्वं च। 'शूरः स्याद्यादवे भटे' इति मेदिनी। 'शूरश्चारु(र)भटे सूर्ये' इति विश्वहेमचन्द्रौ। 'सीरोऽर्कहलयोः पुंसि चीरी झिल्ल्यां नपुंसकम्। गोस्तने वस्त्रभेदे च रेखालेखनभेदयोः' इति मेदिनी। 'चीरं तु गोस्तने वस्त्रे चूडायां सीम(स)केऽपि च। चीरी कृच्छ्राटिकाझिल्ल्योः' इति विश्वः। **वा विन्धेः**। ञिइन्धी दीप्तौ। विपूर्वादस्मात् क्रन्। 'अनिदिता'मिति नलोपः। 'वीध्रं तु विमलात्मक'मिति विशेष्यनिघ्नेऽमरः। **वृधि**। वृधु वृद्धौ, डुवप् बीजसन्ताने। 'वप्रः पितरि केदारे वप्रः प्राकाररोधसोः' इति धरणिरन्तिदेवौ। 'वप्रस्तातें पुमानस्त्री रेणौ क्षेत्रे चये तटे' इति मेदिनी। **ऋज्रेन्द्राग्र**। ऋज गतिस्थानादिषु, इदि परमैश्वर्ये, अगि गतौ, वज गतौ, डुवप् बीजसन्ताने,

---

**वा.**] वाता वान्ति। पर्णं शोषयन्तीत्यर्थः। पर्णशोषान्तरं पर्णमुचो वाताः वान्ति पर्णं मोचयन्तीति पर्णमुचः। पर्णमोचनान्तरं पर्णरुहो वाता वान्ति। पर्णं रोहयन्तीति पर्णरुहः। ततो देवो वृष्टिं करोतीत्यर्थः। अत्र संज्ञाछन्दसोरभावेऽपि णेर्लुक्। **जोरी च**। जु इति सौत्रो धातुः। अस्मात् रक् स्यात्। ईकारश्चान्तादेश इत्यर्थः। **जीर इति**। 'जीरस्तु जरणे खड्गे' इति मेदिनी। **उग्रश्चेत्येक इति**। ज्या वयोहानौ, अस्मात् रकि ग्रहिज्येति संप्रसारणं, पूर्वरूपं, 'हल' इति दीर्घे च जीर इति रूपमित्यर्थः। इदमेव च सम्यक्। अत एव भाष्ये न धातुलोपसूत्रे 'जीवेरदानुः' इति वार्तिकस्य प्रत्याख्यानार्थं 'नैतत् जीवेः रूपम्, अपितु ज्याधातोः रकि' इति उक्तम्। **सुसूधागृधिभ्यः क्रन्**। षुञ् अभिषवे, षूङ् प्राणिगर्भविमोचने, डु धाञ् धारणपोषणयोः, गृधु अभिकाङ्क्षायाम्, एषां द्वन्द्वात् पञ्चमी। एभ्यः क्रन्प्रत्ययः स्यादित्यर्थः। **सुरेति**। कित्त्वान्न गुणः। रका सिद्धे क्रन्विधिर्नित्स्वरार्थः। सुरा हलिप्रिया हाला' इत्यमरः। **सूर इति**। 'सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः' इत्यमरः। **धीर इति**। घुमास्थेतीत्वम्। 'धीरो मनीषी ज्ञः प्राज्ञः' इत्यमरः। **शुसिचिमीनां दीर्घश्च**। शु गतौ, षिञ्बन्धने, चिञ् चयने, डु मिञ्प्रक्षेपणे, एभ्यः क्रन्प्रत्ययः स्यात्, प्रकृतिभूतानामेषां दीर्घश्च। शु गतावित्यस्य धातुपाठेऽदर्शनादाह—**शुः सौत्र इति। चीरमिति**। 'माणिक्यभाष्यसिन्दूरचीरचीवरपिञ्जरम्' इत्यमरः। **मीर इति**। मिञ्धातोः रूपम्। **वाविन्धेः**। वावुपपदे इन्धी दीप्तावित्यस्मात्क्रन्स्यादित्यर्थः। **वीध्रमिति**। 'अनिदिता'मिति नलोपः। 'वीध्रं तु विमलात्मकम्' इत्यमरः। **वृधिवपिभ्यां रन्**। वृधु वृद्धौ, डु वप् बीजसन्ताने, आभ्यां रन्प्रत्ययः स्यात्। **वर्ध्रमिति**। रनि उपधागुणः। 'नध्री वर्ध्री वरत्रा स्यात्' इत्यमरः। **वप्र इति**। 'वप्रस्तातें पुमानस्त्री वेणुक्षेत्रचये तटे' इत्यमरः। **ऋज्रेन्द्राग्र**। ऋज गतिस्थानादिषु, इदि परमैश्वर्ये, अगि गतौ, वज गतौ, डु वप्बीजसन्ताने, कुबि आच्छादने, चुबि वक्त्रसंयोगे, क्षुर विलेखने, खुर छेदने, भदि कल्याणे, उच समवाये, ञि भी भये, शुच शोके, गुङ् अव्यक्ते

**चुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्रेरामालाः।** रन्नन्ता ऊनविंशतिः। निपातनाद्गुणाऽभावः। ऋज्रो नायकः। इदि-, इन्द्रः। अङ्गेर्नलोपः। अग्रम्। 'वज्रोऽस्त्री हीरके पवौ'। डुवप्। उपधाया इत्वम्। विप्रः। कुम्बिचुम्ब्योर्नलोपः। कुब्रमरण्यम्। चुब्रं मुखम्। 'क्षुर विलेखने' रेफलोपः। अगुणः। क्षुरः। खुर छेदने। रलोपे गुणाऽभावश्च। खुरः। भन्देर्नलोपः। भद्रम्। उच समवाये। चस्य गः। उग्रः। ञिभी। भेरी। [पिप्पल्यादेराकृतिगणत्वान्ङीष्]। पक्षे लः। भेलो जलतरणद्रव्यम्। शुचेश्चस्य कः। शुक्रः। पक्षे लः। शुक्लः। गुङ्। वृद्धिः। 'गौरोऽरुणे सिते पीते'। वन संभक्तौ। वन्रो विभागी। इणो गुणाऽभावः। 'इरा मद्ये च वारिणि'। मा माने। माला। १८७। **समि कस उकन्।** कस गतौ। सम्यक्कसन्ति पलायन्ते जना अस्मादिति सङ्कसुको दुर्जनोऽस्थिरश्च। १८८। **पचिनशोर्णुकन् कनुमौ च।** पचेः कः। पाकुकः सूपकारः। नशेर्नुम्। नंशुकः। १८९। **भियः क्रुकन्।** भीरुकः। १९०। **कुन् शिल्पिसंज्ञयोरपूर्वस्यापि।** रजकः। इक्षुकुट्टकः। चरकः। चप भक्षणे। चषकः। शुनकः।

---

त.] कुबि आच्छादने, चुबि वक्त्रसंयोगे, भदि कल्याणे, शुच शोके, गुङ् अव्यक्ते शब्दे, इण् गतौ। **नायक इति।** 'ऋज्राश्वः पृष्टिभिरम्बरीषः' इति मन्त्रे ऋज्रा गतिमन्तोऽश्वा यस्य स ऋज्राश्व इति वेदभाष्यम्। 'इन्द्रः शचीपतावन्तरात्मन्यादित्ययोगयोः' इति विश्वः। 'अग्रं पुरस्तादुपरि परिमाणे पलस्य च। आलम्बने समूहे च प्रान्ते स्यात्पुंनपुंसकम्। अधिके च प्रधाने च प्रथमे चाभिधेयवत्' इति मेदिनी। क्षुरो लोमच्छेदकः। 'क्षुरः स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे' इति विश्वमेदिन्यौ। 'खुरः कोलदले शफे' इति मेदिनी। 'भद्रः शिवे खञ्जरीटे वृषभे तु कदम्बके। करिजातिविशेषे ना क्लीवं मङ्गलमुस्तयोः' इति च। 'उग्रः शूद्रासुते क्षत्राद्रुद्रे पुंसि त्रिषूत्कटे। स्त्रीवचांक्षुद्रयोः' इति मेदिनी। **भेरीति।** गौरादित्वान्ङीष्। 'भेरी स्त्री दुन्दुभिः पुमा'नित्यमरः। 'भेलः प्लवे भीरुके च निर्बुद्धिमुनिभेदयोः' इति विश्वः। 'भेलः प्लवे मणौ पुंसि भीरावज्ञे च वाच्यव'दिति। 'शुक्रः स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमान्। रेतोऽक्षिरुग्भिदोः क्लीबं शुक्लो योगान्तरे सिते। नपुंसकं तु रजते' इति च। 'गौरः पीतेऽरुणे श्वेते विशुद्धेऽप्यभिधेयवत्। ना श्वेतसर्षपे चन्द्रे न द्वयोः पद्मकेसरे। गौरी त्वसंजातरजःकन्याशङ्करभार्ययोः। रोचने रजनीपिङ्गाप्रियङ्गुवसुधासु च। आपगाया विशेषेऽपि यादसांपतियोषिति' इति च मेदिनी। 'नदीभेदे च गौरी स्याद्वरुणस्य च योषिति' इति विश्वः। 'अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते। सा गौरी तत्सुतो यस्तु स गौरः परिकीर्तितः' इति ब्रह्माण्डवचनं श्राद्धकाण्डे हेमाद्रिणोदाहृतम्। एतेन 'गौरः शुच्याचारः' इत्यादि भाष्यं व्याख्यातम्। 'इरा भूवाक्सुराप्सु स्या'दित्यमरः। **मालेति।** प्रत्ययरेफस्य लत्वम्। 'मालं क्षेत्रे स्त्रियां पृक्काम्रजोर्जात्यन्तरे पुमा'निति मेदिनी। 'मालं क्षेत्रे जिने मालो माला पुष्पादिदामनी'ति विश्वः। 'मालमुन्नतभूतल'मित्युत्पलः। 'क्षेत्रमारुह्य माल'मिति मेघदूतः। मणिपूर्वोऽयमर्थान्तरे रूढः। 'मणिमाला स्मृता हारे स्त्रीणां दन्तक्षताऽन्तरे' इति विश्वः। [बाहुलकात्तिज निशाने। रन् दीर्घत्वं जस्य वः। 'तीव्रा तु कटुरोहिण्यां राजिकागण्डदूर्वयोः। त्रिष्वत्युष्णे नितान्ते च कटौ' इति मेदिनी] **समि कस।** 'संकसुकोऽस्थिरः' इति विशेष्यनिघ्नेऽमरः। **पचिनशोः।** डुपचष् पाके, णश अदर्शने। आभ्यां णुकन् प्रत्ययः स्यात्। णकारो वृद्ध्यर्थः। अनयोर्यथाक्रमं कादेशनुमागमौ च भवतः। **भियः।** ञिभी भये। 'अधीरे कातरस्त्रस्तो भीरुभीरुकभीलुकाः' इत्यमरः। **कुन्।** शिल्पिन्यभिधेये संज्ञायां गम्यमानायां च कुन् स्यादपूर्वस्य निरुपपदस्य च। अपिशब्दात्सोपपदस्य। पञ्चम्यर्थे षष्ठी। यद्वा अर्थद्वारकसंबन्धे षष्ठी, प्रकृतिप्रत्यया-

---

बा.] शब्दे, वन संभक्तौ, इण् गतौ, मा माने, एते रन्नन्ता निपात्यन्ते। ऋज्र इत्यत्र उपधागुणमाशङ्क्याह-**निपातनादिति।** अगिधातोरिगित्त्वादाह—**अङ्गेर्नलोप इति।** शेषं स्पष्टम्। **समि कस उकन्।** कस गतौ, अस्मात्समि उपपदे उकन्प्रत्यय इत्यर्थः। सङ्कसुक इति रूपम्। **पचिनशोर्णुकन्कनुमौ च।** डु पचष्पाके, णश अदर्शने, आभ्यां णुकन्प्रत्ययः स्यात्। अनयोः क्रमेण कादेशनुमागमौ च भवत इत्यर्थः। णुकनो णित्वाद्वृद्धिः। पाकुकः, नंशुक इति रूपम्। **भियः क्रुकन्।** ञि भी भये इत्यस्मात्क्रुकन्प्रत्यय इत्यर्थः। भीरुक इति रूपम्। 'भीरुकः कातरः त्रस्तो भीरुभीरुकभीलुकाः' इत्यमरः। **कुन्शिल्प।** शिल्पिन्यभिधेये संज्ञायां च गम्यमानायां कुन्स्यात्। अपूर्वस्य=निरुपपदस्येत्यर्थः। पञ्चम्यर्थे षष्ठी। अपिशब्दात्सोपपदादपि। शिल्पिन्युदाहरति—**रजक इति।** रञ्ज रागे इत्यस्मात् कुनि नलोपे अकादेशे च रूपम्। 'निर्णेजकः स्याद्रजकः शौण्डिको मण्डहारकः' इत्यमरः। सोपपदादुदाहरति—**इक्षुकुट्टक इति।** कुट्ट छेदने, इक्षून्कुट्टयतीति इक्षुकुट्टकः। संज्ञायामुदाहरति—**चरक इति।** 'पातकोद्योगचरकतमालमलका नडः' इत्यमरः। **चषक इति।** 'चषकोऽस्त्री पानपात्रं सरकोऽप्य-

भषकः । १९१ । **रमे रश्च लो वा** । रमको विलासी । लमकः । १९२ । **जहातेर्द्वे च** । जहकस्त्यागी, कालश्च ।१९३। **ध्मो धम च** । धमकः कर्मकारः ।१९४। **हनो वध च** । वधकः ।१९५। **बहुलमन्यत्रापि** । कुह विस्मापने । कुहकः । कृतकम् । १९६ । **कृषेर्वृद्धिश्चोदीचाम्** । कार्षकः । कृषकः । १९७ । **उदकं च** । प्रपञ्चार्थम् ।१९८। **वृश्चिकृष्योः किकन्** । वृश्चिकः । कृषिकः ।१९९। **प्राङि पणिकषः** । प्रापणिकः पण्यविक्रयी । प्राकषिकः परदारोपजीवी । २०० । **मुषेर्दीर्घश्च** । मूषिक आखुः । २०१ । **स्यमेः संप्रसारणं च** । चाद्दीर्घः । सीमिको वृक्षभेदः । २०२ । **क्रिय इकन्** । क्रयिकः क्रेता । २०३ । **आङि पणिपनिपतिखनिभ्यः** । आपणिकः । आपनिक इन्द्रनीलः, किरातश्च । आपतिकः श्येनो दैवायत्तश्च । आखनिको मूषिको वराहश्च । २०४ । **श्यास्त्याहृञविभ्य इनच्** । श्येनः । स्त्येनः । हरिणः । अविनोऽध्वर्युः । २०५ । वृजेः

---

त.]र्थयोः क्रियाकारकभावात् । एवं च निरुपपदप्रकृत्यर्थनिरूपितकर्तृकारके कुन्नित्याद्यर्थः फलितः । शिल्पिनि तावत्—रञ्ज रागे । 'रजको धावके शुके' इति विश्वः । 'रजकौ धावकशुकौ' इति हेमचन्द्रः । 'कुट्ट च्छेदने' । इक्षून् कुट्टयति गौडिकः । चर गतिभक्षणयोः । संज्ञायां तु 'चषकोऽस्त्री पानपात्रम्' । शुन गतौ, भष भर्त्सने । शुनकः भषकः श्वा । **लमक इति** । ऋषिविशेषः । **जहातेः** । ओहाक् त्यागे । **ध्मो धम च** । ध्मा शब्दाग्निसंयोगयोः । कुहको दाम्भिकः । **कृतकमिति** । कृती छेदने । **कृषेः** । कृष विलेखने । अस्मात्कुन् । [वृद्धिश्च] । कार्षकः कृषीवलः । कृषकः स एव । 'कृषकः पुंसि फाले स्यात्कर्षके त्वभिधेयवत्' इति मेदिनी । **उदकं च** । उन्दी क्लेदने अस्मात्कुन् । ननु 'कुन् शिल्पि' इत्यादिना गतार्थमित्याशङ्कायामाह—**प्रपञ्चार्थमिति** । **वृश्चिकृष्योः** । ओव्रश्चू छेदने, कृष विलेखने । **प्राङि** । पण व्यवहारे । कषशिषेति दण्डके हिंसार्थकः । **मुषेः** । मुष स्तेये अस्मात्किकन् धातोर्दीर्घश्च । **स्यमेः** । स्यमु शब्दे । **क्रियः** । डुक्रीञ् द्रव्यविनिमये । **आङि पणि** । पण व्यवहारे स्तुतौ च, पन च, पत्लृ गतौ, खनु अवदारणे, एभ्य आङि उपपदे इकन् स्यात् । **आपणिक इति** । नन्वत्रैव प्रपूर्वे आङि प्रापणिक इति सिद्धौ 'प्राङि पणी'त्यत्र पणिग्रहणं प्रपञ्चार्थमित्युज्ज्वलदत्तः । उपसर्गान्तरनिवृत्त्यर्थमिति तु मनोरमायाम् । आपणिकशब्दोऽयं णित्स्वरेणाद्युदात्तः । आपणेन व्यवहरतीत्यर्थे ठकि तु किति इत्यन्तोदात्तः । **श्यास्त्या** । श्यैङ् गतौ, स्त्यै ष्ट्यै शब्दसंघातयोः, हृञ् हरणे, अव रक्षणादौ । 'श्येनः पत्त्रिणि पाण्डुरे' इति मेदिनी । स्त्येनश्चौरः । स्तेन चौर्ये इति चौरादिकात्पचाद्यचि तु स्तेन इति निर्यकारोऽपि । केचित्तु 'स्तायूनां पतये नमः' इत्यादिप्रयोगोपष्टम्भेन

---

बा.]नुतर्षण'मित्यमरः । **शुनक इति** । शुन गतावित्यस्मात्कुनि रूपम् । **भषक इति** । भष भर्त्सने इत्यस्माद्रूपम् । 'शुनको भषकः श्वा स्यादलर्कस्तु स योगितः' इत्यमरः । **रमे रश्च लो वा** । रमु क्रीडायामित्यस्मात्क्वुन्स्यात्, धातो रेफस्य लकारश्च वेत्यर्थः । रमकः लमक इति रूपम् । **जहातेर्द्वे च** । ओ हाक्त्यागे, अस्मात्कुन्स्यात्, धातोर्द्वित्वं च स्यादित्यर्थः । जहक इति रूपम् । **ध्मो धम च** । ध्मा शब्दाग्निसंयोगयोः, अस्मात्क्वुन्स्यात्, धातोर्धमादेशश्चेत्यर्थः । धमक इति रूपम् । **हनो वध च** । **वधक इति** । हन हिंसागत्योः, क्वुनि धातोर्वधादेशे च रूपम् । **बहुलमन्यत्रापि** । अन्यधातोरपि क्वुन्स्यात् । कुहधातोः क्वुनि कुहक इति रूपम् । **कृतकमिति** । कृती छेदने । **कृषेर्वृद्धिश्चोदीचाम्** । कृष विलेखने, अस्मात्क्वुन्, उदीचां मते वृद्धिश्चेत्यर्थः । उदीचांग्रहणाद्विकल्पोऽयं वृद्धिविधिः । कार्षकः कृषक इति रूपम् । **उदकं च** । उन्दी क्लेदने, अस्मात्क्वुन् । ननु क्वुन्शिल्पिसंज्ञयोरित्यादिना संज्ञात्वात्सिद्धमित्यत आह—**प्रपञ्चार्थमिति** । **वृश्चिकृष्योः किकन्** । ओ व्रश्चू छेदने, कृष विलेखने, आभ्यां किकन्स्यात् । वृश्चिक इति रूपम् । 'किष्कुर्हस्ते वितस्तौ च शूककीटे च वृश्चिके' इत्यमरः । **कृषिक इति** । 'क्षेत्राजीवः कर्षकश्च कृषिकश्च कृषीवलः' इत्यमरः । **प्राङि पणिकषः** । प्राङि उपपदे पण व्यवहारे स्तुतौ च, कष हिंसायामिति धातुभ्यां किकन्स्यादित्यर्थः । **प्रापणिक इति** । प्र आङ्पूर्वकपणधातोः रूपम् । **प्राकषिक इति** । कषधातोः रूपम् । **मुषेर्दीर्घश्च** । मुष स्तेये, इत्यस्मात्किकन्स्याद्धातोर्दीर्घश्चेत्यर्थः । मूषिक इति रूपम् । 'उन्दुरुर्मूषिकोऽप्याखुः' इत्यमरः । **स्यमेः संप्रसारणं च** । स्यमु शब्दे अस्मात्किकन्, धातोः संप्रसारणं, दीर्घश्चेत्यर्थः । सीमिक इति रूपम् । **क्रिय इकन्** । डु क्रीञ्द्रव्यविनिमये इत्यस्मादिकन्प्रत्ययः इत्यर्थः । **क्रयिक इति** । गुणे अयादेशे च रूपम् ।

**आङि पणिपनि** । पण व्यवहारे स्तुतौ च, पन च, पत्लृ गतौ, खनु अवदारणे एषां द्वन्द्वात् पञ्चमी । आङि उपपदे एतेभ्य इकन्प्रत्ययः । आङि उपपदेऽनेन इकना रूपसिद्धेः 'प्राङि पणिकष' इत्यत्र पणिग्रहणं प्रपञ्चार्थम् । उपसर्गान्तरनिवृत्त्यर्थं वा तत् । **श्यास्त्याहृञविभ्य इनच्** । श्यैङ्गतौ, ष्ट्यै शब्दसङ्घातयोः, हृञ् हरणे, अव रक्षणादौ, एभ्य इनच् स्यात् । **श्येन इति** । 'पत्त्री श्येन उलूकस्तु वायसारातिपेचकौ' इत्यमरः ।

**किच्च** । वृजिनम् । २०६ । **अजेरज च** । **वीभावबाधनार्थम्** । अजिनम् । २०७ । **बहुलमन्यत्रापि** । कठिनम् । नलिनम् । कुण्डिनम् । २०८ । **द्यतेः** । 'यत्परुषि दिनम्' । दिवसोऽपि दिनम् । २०९ । **द्रुदक्षिभ्यामिनन्** । द्रविणम् । दक्षिणः । दक्षिणा । २१० । **अर्तेः किदिच्च** । इरिणं शून्यम् । २११ । **वेपितुह्योर्ह्रस्वश्च** । विपिनम् । तुहिनम् । २१२ । **तलिपुलिभ्यां च** । 'तलिनं विरले स्तोके स्वच्छेऽपि तलिनं त्रिषु' । पुलिनम् । २१३ । **गर्वेरत उच्च** । गौरादित्वान्ङीष् । गुर्विणी=गर्भिणी । २१४ । **रुहेश्च** । रोहिणः । २१५ । **महेरिनण् च** । चादिनन् । 'माहिनं महिनं राज्यम्' । २१६ । **क्विब्वचिप्रच्छिश्रिस्रुद्रु-**

---

**त.]** निर्यकारस्यापि ष्टैधातोर्माधवादिभिर्वादिषु स्वीकृतत्वात्प्रकृतसूत्रेऽपि ष्टैधातुमेव पठन्तः स्तेनशब्दो निर्यकार एवेत्याहुः । 'हरिणः पुंसि सारङ्गे विशदे तदभिधेयवत् । हरिणी हरितायां च नारीभिद्वृत्तभेदयोः । सुवर्णप्रतिमायां च' इति मेदिनी । **वृजेः** । वृजी वर्जने । वृजिनं पापम् । 'वृजिनं कल्मषे क्लीबं क्लेशे ना कुटिलेऽन्यव'दिति मेदिनी । **अजेः** । अज गतिक्षेपणयोरस्मादिनच् । अजेरजादेशविधानं व्यर्थमित्यत आह—**वीभावबाधनार्थमिति** । 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः । **बहुलमन्यत्रापि** । अन्यस्मादपीत्यर्थः । कठ कृच्छ्रजीवने, णल गहने, मल मल्ल धारणे, कुडि दाहे, दो अवखण्डने । 'कठिनमपि निष्ठुरे स्यात्स्तब्धे तु त्रिषु· नपुंसकं स्थाल्याम् । कठिनी खटिकायामपि कठिना गुडशर्करायां च' इति मेदिनी । 'मलिनं दूषिते कृष्णे ऋतुमत्यां तु योषिति' इति मेदिनी । **कुण्डिनमिति** । 'नगरं कुण्डिनमण्डजो ययौ' इति श्रीहर्षः । कुण्डिन ऋषिः । तस्यापत्यं कौण्डिन्यः । **[यत्परुषीति]** । 'यत्परुषि=पर्वणि दिनं खण्डितं तद्देवाना'मिति तैत्तिरीयश्रुत्यर्थः । **द्रुदक्षि** । द्रु गतौ, दक्ष वृद्धौ । 'द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे' इति मेदिनी । 'दक्षिणो दक्षिणोद्भूतसरलच्छन्दवृत्तिषु । अवामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम्' इति च । 'दक्षिणः सरलोदारपरच्छन्दानुवृत्तिषु । वाच्यवद्दक्षिणावाची यज्ञदानप्रतिष्ठयोः' इति विश्वः । **अर्तेः** । ऋ गतौ, अस्मादिनन्कित्स्यात् । इकारश्च धातोः । रपरत्वम् । 'इरिणं शून्यमूषरम्' इत्यमरः । 'इरिणं तूषरे शून्येऽपि' इति मेदिनी । **वेपि** । टुवेपृ कम्पने, तुहिर् अर्दने, आभ्यामिनन् ह्रस्वश्च धातोः । 'अटव्यरण्यं विपिनम्' इत्यमरः । **तुहिनमिति** । लघूपधगुणे कृते ह्रस्वः । **तलि** । तल प्रतिष्ठायाम्, पुल महत्त्वे । 'तलिनं विरले स्तोके स्वच्छेऽपि वाच्यलिङ्गकम्' इति मेदिनी । **गर्वेः** । गर्व मोचने, अस्मादिनन् अकारस्य उत् । **रुहेश्च** । रुह बीजजन्मनि प्रादुर्भावे । **रोहिण इति** । प्रज्ञादित्वादणि रौहिणश्चन्दनतरुः । **महेः** । मह पूजायाम् । 'कुतस्त्वमिन्द्र माहिनः सन्' । माहिनो महनीयः पूजनीय इति वेदभाष्यम् । **क्विब्वचि** । वच परिभाषणे, प्रच्छ ज्ञीप्सायाम्,

---

**वा.]** स्त्येनश्चोरः । **हरिण इति** । 'मृगे कुरङ्गवातायुहरिणाऽजिनयोनयः' इत्यमरः । **वृजेः किच्च** । वृजी वर्जने, अस्मात् इनच् स्यात्, स च किद्भवतीत्यर्थः । **वृजिनमिति** । 'कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम्' इत्यमरः । 'वृजिनं कल्मषे क्लीबम्' इति मेदिनी । **अजेरज च** । अज गतिक्षेपणयोः, अस्मादिनच् अजेरजादेशश्चेत्यर्थः । न चाऽजेरजादेशविधानं व्यर्थमिति वाच्यम्, वीभावबाधनार्थं तदावश्यकत्वात् । 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः । **बहुलमन्यत्रापि** । अन्येभ्योऽपि धातुभ्य इनच् वक्तव्य इत्यर्थः । **कठिनमिति** । कठ कृच्छ्रजीवने इत्यस्माद्रूपम् । **नलिनमिति** । णल गहने इत्यस्माद्रूपम् । **मलिनमिति** । मल धारणे इत्यस्माद्रूपम् । **कुण्डिनमिति** । कुडि दाहे इत्यस्माद्रूपम् । **द्यतेरिति** । दो अवखण्डने इत्यस्मादिनच् स्यादित्यर्थः । दिनमिति रूपम् । **द्रुदक्षिभ्यामिनन्** । द्रु गतौ, दक्ष वृद्धौ, आभ्यामिनन् स्यादित्यर्थः । **द्रविणमिति** । 'हिरण्यं द्रविणं द्युम्नम्' इत्यमरः । **दक्षिण इति** । 'दक्षिणे सरलोदारौ सुकलो दातृभोक्तरि' इत्यमरः । **अर्तेः किदिच्च** । ऋ गतौ, अस्मादिनन् । स च कित् । धातोरित्त्वं चादेशः । रपरत्वम् । **इरिणमिति** । 'इरिणं शून्यमूषरम्' इत्यमरः । **वेपितुह्योर्ह्रस्वश्च** । टु वेपृ कम्पने तुहिर् अर्दने, आभ्यामिनन्, धातोर्ह्रस्वश्चेत्यर्थः । एकारस्य ह्रस्व इकारः । 'अटव्यरण्यं विपिनम्' इत्यमरः । **तुहिनमिति** । लघूपधगुणो, ह्रस्वः । **तलिपुलिभ्यां च** । तल प्रतिष्ठायां, पुल महत्त्वे, आभ्यामिनन्स्यात् । तलिनशब्दार्थं विवृण्वन्नाह— **तलिनं विरले स्तोक इति** । **पुलिनमिति** । 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्' इत्यमरः । **गर्वेरत उच्च** । गर्व मोचने, अस्मादिनन्, अकारस्य उकार आदेशश्चेत्यर्थः । स्त्रीत्वविवक्षायामाह—**गौरादित्वादिति** । **गुर्विणीति** । 'आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमरः । **रुहेश्च** । रुह बीजजन्मनि प्रादुर्भावे च, अस्मादिनन्प्रत्यय इत्यर्थः । **रोहिण इति** । उपधागुणे रूपम् । गौरादित्वात् रोहिणी । 'अर्जुन्यघ्न्या रोहिणी स्यात्' इति वैश्यवर्गे अमरः । **महेरिनण् च** । मह पूजायाम्, अस्मादिनण् स्यात् । चकारादिनन्नपि । **माहिनमिति** । इनणो णित्त्वादुपधावृद्धिः । **महिनमिति** । इननि रूपम् । **क्विब्वचिप्रच्छि** । वच परिभाषणे, प्रच्छ ज्ञीप्सायां, श्रिञ् सेवायां, स्रु गतौ, द्रूङ् गतौ, प्रुङ् गतौ, ज्रु गतौ सौत्रः,

**प्रुज्वां दीर्घोऽसंप्रसारणं च** । वाक् । प्राट् । श्रीः । स्रवत्यतो घृतादिकमिति सूर्यज्ञोपकरणम् । द्रूर्हिरण्यम् । कटप्रूः कामरूपी कीटश्च । 'जूराकाशे सरस्वत्यां पिशाच्यां जवने स्त्रियाम्' । २१७ । **आप्नोतेर्ह्रस्वश्च** । आपः । अपः । अद्भिः । अब्भ्यः । २१८ । **परौ व्रजेः षः पदान्ते** । व्रजेः क्विब्दीर्घौ स्तः, पदान्ते तु षश्च । परिव्राट् । परिव्राजौ । २१९ । **हुवः श्लुवच्च** । जुहूः । २२० । **स्रुवः कः** । स्रुवः । २२१ । **चिक् च** । इकार उच्चारणार्थः । क इत् । कुत्वम् । स्रुक् । 'स्रुवं च स्रुचश्च संमृड्ढि' । २२२ । **तनोतेरनश्च वः** । तनोतेश्चिक् प्रत्ययो, अनो वशब्दादेशश्च । त्वक् । २२३ । **ग्लानुदिभ्यां डौः** । ग्लौः । नौः । २२४ । **च्विरव्ययम्** । डौरित्येव । ग्लौकरोति । 'कृन्मेजन्तः' इति सिद्धे नियमार्थमिदम्—'उणादिप्रत्ययान्तश्च्व्यन्त एवे'ति ।

---

**त.]** श्रिञ् सेवायाम्, स्रु गतौ, द्रु गतौ, प्रुङ् गतौ, जु गतौ सौत्रः । **वागिति** । 'वच्चिस्वपि' इति संप्रसारणाऽभावः । पृच्छतीति प्राट् । 'ग्रहिज्ये'ति संप्रसारणाऽभावः । 'छ्वोः शूड्' इति शः । 'व्रश्च' इति षत्वं, जश्त्वचर्त्वे, प्राशौ प्राशः । **श्रीरिति** । 'कृदिकारा'दिति ङीष् तु न भवति, 'कृत्प्रत्ययस्य य इकार' इति व्याख्यानात् । 'कृदन्तं यदिकारान्त'मिति पक्षे तु यद्यपि ङीषः प्राप्तिरस्ति तथापि कारग्रहणसामर्थ्येन केवलस्यैकारस्य ग्रहणादिकारान्तपक्षो दुर्बल इत्याहुः । दुर्घटस्तु—ङीषि श्रीमित्यपि रक्षित इच्छतीत्याह । 'श्री वेषरचनाशोभाभारतीसरलद्रुमे । लक्ष्म्यां त्रिवर्गसंपत्तिविद्योपकरणेषु च । विभूतौ च मतौ च स्त्री'ति मेदिनी । **'जूराकाशे'** इत्यादिमूलोदाहृतमपि मेदिनी । **आप्नोतेः** । आप्लृ व्याप्तौ, अस्मात्क्विप् धातोर्ह्रस्वश्च । 'आपः स्त्री भूम्नि वार्वारि' इत्यमरः । **परौ** । व्रज गतौ । **हुवः** । हु दानादनयोः । अस्मात्क्विप् धातोश्च दीर्घः । श्लुवद्भावाद्द्विर्वचनम् । **स्रुवः कः** । स्रु गतौ । स्रुवो यज्ञपात्रविशेषः । 'अयं स्रुवो अभिजिहर्ति' 'स्रुवेण पार्वणौ जुहोति' इत्यादौ प्रसिद्धः । **चिक्च** । स्रुव इत्येव । योगविभाग उत्तरार्थः । **क इदिति** । तेन स्रुक् स्रुचौ स्रुच इत्यादौ गुणो न । [**तनोते**] । तनु विस्तारे । व इति सङ्घात-ग्रहणं । तदाह—**वशब्दादेश इति** । 'स्त्रियां तु त्वगसृग्धरा' इत्यमरः । **ग्लानुदि** । ग्लै हर्षक्षये, णुद प्रेरणे । 'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः । 'स्त्रियां नौस्तरणिस्तरिः' इति च । **ग्लौकरोतीति** । अग्लौः ग्लौः संपद्यते तथा

---

**बा.]** एषां द्वन्द्वात् षष्ठी । एभ्यः क्विप् स्यात्, दीर्घः, कित्त्वात्प्राप्तसंप्रसारणाऽभावश्च स्यादित्यर्थः । **वागिति** । क्विपः सर्वलोपितया कुत्वे दीर्घे 'वचिस्वपियजादीना'मिति प्राप्तसंप्रसारणाऽभावे च रूपम् । **प्राडिति** । प्रच्छधातोः क्विपि 'ग्रहिज्ये'ति संप्रसारणाऽभावे दीर्घे छस्य 'छ्वोः शूडनुनासिके च' इति शकारे व्रश्चेति षत्वे जश्त्वे चर्त्वे च रूपम् । **श्रीरिति** । दीर्घे रूपम् । 'कृदिकारा'दिति ङीष् तु न शङ्क्यः, कृतो य इकार इति व्याख्यानात् । अत्र इकारस्य कृदवयवत्वं नास्ति, कृत्प्रत्ययस्तु सर्वलुप्तः । **स्रूरिति** । स्रुधातोर्दीर्घे रूपम् । **द्रूरिति** । द्रुधातोः रूपम् । जूशब्दार्थविवृण्वन्मेदिनीकोशमाह—**जूराकाशे सरस्वत्यामिति** । **आप्नोतेर्ह्रस्वश्च** । आप्लृ व्याप्तौ, अस्मात्क्विप् स्यात्, प्रकृतेर्ह्रस्वश्चेत्यर्थः । **आप इति** । अप्तृन्निति दीर्घः । ह्रस्वश्रवणायाह—**अप इति** । **अद्भिरिति** । 'अपो भि' इति तकारादेशः, जश्त्वम् । **परौ व्रजेः षः पदान्ते** । परावुपपदे व्रज गतावित्यस्मात्क्विप् दीर्घश्च भवतः । पदान्तस्य तु जकारस्य षकारश्चेत्यर्थः । पदान्तविषये षत्वे कृते उदाहरति—**परिव्राडिति** । जश्त्वचर्त्वे इति भावः । **परिव्राजाविति** । पदान्तत्वाऽभावान्न षत्वम् ।

**हुवः श्लुवच्च** । हु दानादनयोः, अस्मात्क्विप्, धातोर्दीर्घः, श्लुवत्त्वं च भवतीत्यर्थः । **जुहूरिति** । श्लुवद्भावाद्द्विर्वचने अभ्यासह्रस्वे च रूपम् । **स्रुवः कः** । स्रु गतावित्यस्मात् कप्रत्यय इति भावः । **स्रुव इति** । कित्त्वाद्गुणाऽभावे उवङि च रूपम् । 'स्रुवोऽपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः' इत्यमरः । अयं स्रुवोऽभिजिहर्ति होमानिति मूल एव जुहोत्यादिव्याख्याप्रकरणे उक्तम् । **चिक् च** । स्रुव इत्यनुवर्तते । स्रु गतावित्यस्मात् चिक्प्रत्ययो भवतीत्यर्थः । कित्त्वं गुणनिषेधार्थम् । इकार उच्चारणार्थः । चस्य कुत्वे च स्रुगिति रूपम् । **तनोतेरनश्च वः** । चिगित्यनुवर्तते । तनु विस्तारे इत्यस्मात् चिक्प्रत्ययः । तन्धात्ववयवस्य अन् इति सङ्घातस्य व इत्यकारविशिष्टः सङ्घातो भवतीत्यर्थः । चस्य कुत्वे च रूपमाह—**त्वगिति** । 'स्त्रियां तु त्वगसृग्धरा' । **ग्लानुदिभ्यां डौः** । ग्लै हर्षक्षये, णुद प्रेरणे, आभ्यां डौप्रत्यय इति भावः । **ग्लौरिति** । टेलोपः । 'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः । **नौरिति** । टिलोपे रूपम् । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः । **च्विरव्ययम्** । डौरित्यनुवर्तते । प्रत्ययग्रहणपरिभाषयातदन्तपरम् । डौप्रत्ययान्तं शब्दस्वरूपं च्व्यन्तं चेदव्ययसंज्ञकं स्यादित्यर्थः । **ग्लौकरोतीति** । अग्लौः ग्लौः संपद्यते तथा करोतीत्यर्थः । अव्ययत्वप्रयोजनं तु सुपो लुक् । अस्य नियमार्थत्वमाह—**कृन्मेजन्त इत्यादिना** । नियमाकारमाह—**उणादिप्रत्ययान्त इत्यादिना** । **च्व्यन्त इति** । तेन नौग्लौरित्यादौ नाव्ययत्वम् । **रातेर्डैः** । रा दाने

२२५ । **रातेर्डैः** । राः । रायौ । रायः । २२६ । **गमेर्डोः** । 'गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु' । बाहुलकाद्द्युतेरपि डोः । 'द्यौः स्त्री स्वर्गान्तरिक्षयोः' । २२७ । **भ्रमेश्च डूः** । भ्रूः । चाद्गमेः । अग्रेगूः । २२८ । **दमेर्डोसिः** । दोः । दोषौ । २२९ । **पणेरिज्यादेश्च वः** । वणिक् । स्वार्थेऽण् । 'नैगमो वाणिजो वणिक्' । २३० । **वशेः कित्** । 'उशिगग्नौ घृतेऽपि च' । २३१ । **भृञ ऊच्च** । भूरिक् भूमिः । २३२ । **जसिसहोरुरिन्** । जसुरिर्वज्रम् । सहुरिरादित्यः पृथिवी च । २३३ । **सुयुरुवृञो युच्** । सवनश्चन्द्रमाः । यवनः । रवणः कोकिलः । वरणः । २३४ । **अशो रश च** । अश्नोतेर्युच् स्यात्, रशादेशश्च । रशना काञ्ची । जिह्वावाची तु दन्त्यसकारवान् ।

---

त.] करोतीत्यर्थः । अव्ययत्वात्सुपो लुक् । च्व्यन्त **एवेति** । तेन ग्लौनौगौरित्यादीनां नाव्ययत्वमिति भावः । **रातेः** । रा दाने । **रा इति** । 'रायो हली'त्यात्वम् । 'रा स्मृतः पावके तीक्ष्णे राः पुंसि स्वर्णवित्तयोः' इति मेदिनी । 'रास्तीक्ष्णे दहने रास्तु सुवर्णे जलदे घने' इति हेमचन्द्रः । **गमेः** । गम्लृ गतौ । 'गोतो णित्' । गौः । केशवोक्तमाह— **गौर्नादित्य इत्यादि** । 'गौः स्वर्गे वृषभे रश्मौ वज्रे चन्द्रे पुमान् भवेत् । अर्जुनी नेत्रदिग्बाणभूवाग्वारिषु गौर्मता' इत्यमरः । **द्युतेरपीति** । द्युत दीप्तौ । द्योतन्ते देवा अस्यामिति द्यौः । **भ्रमेश्च** । भ्रमु अनवस्थाने, गम्लृ गतौ । अग्रेगूः सेवकः । **दमेः** । दमु उपशमे । डित्त्वाट्टिलोपः । **दोरिति** । 'दोषं तस्ये'ति श्रीहर्षप्रयोगात्पुंस्त्वम् । 'ककुद्दोषणी' इति भाष्यप्रयोगान्नपुंसकत्वम् । 'दोर्दोषा च भुजो बाहुः' इति धनञ्जयकोशात्स्त्रीलिङ्गोऽप्ययमित्यादि प्रागेव प्रपञ्चितम् । **पणेः** । पण व्यवहारे स्तुतौ च । अमरकोश[स्थ]माह—**नैगम इत्यादि** । **वशेः** । वश कान्तौ, अस्मादिनिः कित्स्यात् । 'ग्रहिज्ये'ति संप्रसारणम् । **भृञः** । भृञ् भरणे, अस्मादिनिः कित्स्याद्धातोरूकारान्तादेशश्च । **जसि** । जसु मोक्षणे । षह मर्षणे । 'जसुरये स्तर्यं पिप्यथुर्गा'मिति मन्त्रे जसुरये श्रान्तायेति, 'नीचायमानं जसुरिं न श्येन'मित्यत्र जसुरिं क्षुधितं श्येनं न=श्येनपक्षिणमिवेति । 'उतस्य वाजी सहुरिर्ऋतौ' इति मन्त्रे सहुरिः सहनशील इति च वेदभाष्यम् । **सुयु** । षुञ् अभिषवे, यु मिश्रणे, रु शब्दे, वृञ् वरणे । 'सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च' इति मेदिनी । यवनो म्लेच्छविशेषः । 'रवणः शब्दने स्वरे' इति च मेदिनी । रवणः कोकिल इत्येके । वरणो वृक्षभेदः । टापि तु वरणा नदी । 'वरणस्तिक्तशाकेऽपि प्राकारे वरणं वृतौ' इति विश्वः । 'वरुणो वरणः सेतुस्तिक्तशाकः कुमारकः' इत्यमरः । **अशेः** । अशू व्याप्तौ । **जिह्वावाची त्विति** । रस आस्वादने चौरादिकः । ततो नन्द्यादित्वाल्ल्युः । 'ण्यासश्रन्थ' इति युज्वा । रसयत्यास्वादयतीति रसना । 'रसनं स्वदने ध्वनौ । जिह्वायां तु न पुंसि स्याद्गाम्नायां रसना स्त्रियाम्' इति मेदिनी । काञ्चीवाची तालव्यशकारवान्, जिह्वावाची तु दन्त्य-

---

वा.] इत्यस्माड्डैप्रत्ययो भवतीत्यर्थः । **रा इति** । 'रायो हली'त्यात्वम् । 'अर्थरैविभवा अपि' इत्यमरः । **गमेर्डोः** । गम्लृ गतावित्यस्मात् डोप्रत्यय इत्यर्थः । **गौरिति** । टिलोपे 'गोतो णि'दिति णिद्वद्भावे वृद्धौ च रूपम् । गोशब्दार्थं विवृण्वन् केशवोक्तमाह—**गौर्नादित्ये इत्यादिना** । 'गोरिला कुम्भिनी क्षमा' 'अनड्वान् सौरभेयो गौः' 'माहेयी सौरभेयी गौः' इति चामरः । **द्यौरिति** रूपमाह—**बाहुलकादिति** । द्युत दीप्तावित्यस्मात्प्रत्यये टिलोपे च रूपम् । 'द्योदिवौ द्वे स्त्रियामभ्रम्' इत्यमरः । **भ्रमेश्च डूः** । भ्रमु अनवस्थाने, चात् गम्लृ गतौ, आभ्यां डूप्रत्ययः स्यादित्यर्थः । डित्त्वाट्टिलोपः । **भ्रूरिति** । 'ऊर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियाम्' इत्यमरः । **अग्रेगूरिति** । सेवक इत्यर्थः । **दमेर्डोसिः** । दमु उपशमे, अस्माड्डोसप्रत्यय इत्यर्थः । डित्त्वाट्टिलोपः । 'भुजबाहू प्रवेष्टो दोः' इत्यमरः । **पणेरिज्यादेश्च वः** । पण व्यवहारे स्तुतौ च, अस्मात् इजिप्रत्ययः, आदेः पकारस्य वकारश्चेत्यर्थः । **वणिगिति** । कुत्वे चर्त्वे च रूपम् । अमरकोशस्थवाणिज इत्यस्योपपत्तिमाह—**स्वार्थेऽणिति** । **वशेः कित्** । वश कान्तावित्यस्मात् इजिः, स च कित्स्यात्, कित्त्वात्संप्रसारणम्, कुत्वचर्त्वे । **भृञ ऊच्च** । भृञ् भरणे, अस्मादिजिः कित्स्यात्, धातोरूकारोऽन्तादेशश्च । **भूरिगिति** । ऊत्वं रपरत्वम् । **जसिसहोरुरिन्** । जसु मोक्षणे, षह मर्षणे, आभ्यामुरिन्प्रत्यय इत्यर्थः । **सुयुरुवृञो युच्** । षुञ् अभिषवे, यु मिश्रणे, रु शब्दे, वृञ् वरणे, एभ्यो युच्प्रत्यय इत्यर्थः । 'युवोरनाकौ' इति अनादेशः । गुणे अवादेशे च सवनमिति रूपम् । 'अभिषवः सवनं च सा' इत्यमरः । 'सवनं त्वध्वरे स्नाने सीमनिर्दलनेऽपि च' इति मेदिनी । यवनो म्लेच्छविशेषः । **रवण इति** । 'रषाभ्याम्' इति णत्वम् । 'रवणः शब्दनो नान्दी' इत्यमरः । **वरण इति** । गुणः रपरत्वं णत्वम् । 'सेतौ च वरणे वेणी नदीभेदकचोच्चये' इत्यमरः । 'प्राकारो वरणः सालः' इति च । **अशो रश च** । अशू व्याप्तौ इत्यस्मात् युच् स्यात् प्रकृते रशादेशश्चेत्यर्थः । नायमादेशः शित्, सर्वादेशत्वं त्वनेकाल्त्वात् । **रशनेति** । 'स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा' इत्यमरः । **जिह्वावाची त्विति** । 'रसज्ञा रसना जिह्वा' इति प्रसिद्ध इति भावः । **दन्त्यसकारेति** । रस

२३५। उन्देर्नलोपश्च । ओदनः ।२३६। गमेर्गश्च । गमेर्युच् स्याद्गश्चादेशः । गगनम् ।२३७। बहुलमन्यत्रापि । युच् स्यात् । स्यन्दनः । रोचना । २३८ । रञ्जेः क्युन् । रजनम् । २३९ । भूसूधूभ्रस्जिभ्यश्छन्दसि । भुवनम् । सुवन आदित्यः । धुवनो वह्निः । निधुवनं सुरतम् । भृज्जनमम्बरीषम् । २४० । कृपृवृजिमन्दिनिधाञः क्युः । किरणः । पुरणः समुद्रः । वृजनमन्तरिक्षम् । मन्दनं स्तोत्रम् । निधनम् । २४१ । धृषेर्धिष् च संज्ञायाम् । धिषणो गुरुः । धिषणा धीः ।२४२। वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च । अतिप्रत्ययान्ताः

त.] सकारवानित्येषा व्यवस्था भूरिप्रयोगाभिप्रायेणोक्ता । वस्तुतस्तु तालव्यशकारवान् रशनाशब्दोऽपि काञ्च्यां जिह्वायां च, दन्त्यसकारवान् रसनाशब्दोऽप्यर्थद्वये बोध्यः । तथा हि 'तालव्या अपि दन्त्याश्च शम्बशूकरपांशवः । रशनापि च जिह्वाया'मिति विश्वकोशाज्जिह्वायामुभयं साधु । 'रसनं निःस्वने स्वादे रसना काञ्चिजिह्वयोः' इत्यजयधरणिकोशाभ्यां काञ्च्यामप्युभयं साधु । एवं च 'अशेरश चे'ति सूत्रे अशू व्याप्तौ, अश भोजने, इति धातुद्वयमपि ग्राह्यम् । रस आस्वादने, रस शब्दे इति धातुभ्यां तु 'बहुलमन्यत्रापि' इत्यनुपदमेव वक्ष्यमाणो युच् । तेन सर्वत्रावयवार्थानुगमोऽपि सूपपाद इत्याहुः । उन्देः । उन्दी क्लेदने अस्माद्युच् । 'ओदनं न स्त्रियां भक्ते बलायामोदनी स्त्रिया'मिति मेदिनी । गमेः । गम्लृ गतौ । 'नभोऽन्तरिक्षं गगन'मित्यमरः । बहुलम् । स्यन्दू प्रस्रवणे, रुच दीप्तौ । 'स्यन्दनं तु श्रुतौ नीरे तिनिशे ना रथे स्त्रिया'मिति मेदिनी । 'रोचना रक्तकह्लारे गोपित्तवरयोषितोः । रोचनः कूटशाल्मल्यां पुंसि स्याद्रोचके त्रिषु' इति च । चदि आह्लादे । 'चन्दनं मलयोद्भवे । चन्दनः कपिभेदे स्यान्नदीभेदे तु चन्दनी' इति विश्वः । 'चन्दनी तु नदीभिदि । चन्दनोऽस्त्री मलयजे भद्रकाल्यां नपुंसक'मिति मेदिनी । भद्रकाली ओषधिविशेषः । 'भद्रकाली तु गन्धोल्यां कात्यायन्यामपि स्त्रिया'मिति मेदिनी । असु क्षेपणे । 'असनं क्षेपणे क्लीबं पुंसि स्याज्जीवकद्रुमे' इति मेदिनी । अत सातत्यगमने राजपूर्वः । 'राजातनः क्षीरिकायां प्रियाले किंशुकेऽपि च' इति विश्वमेदिन्यौ । एवमन्येऽपि द्रष्टव्याः । रञ्जेः । रञ्ज रागे । ल्युटि तु रञ्जनम् । 'रञ्जनो रागजनने रञ्जनं रक्तचन्दने' इति मेदिनी । बाहुलकात्कृपेरपि क्युन् । 'कृपो रो लः' इति प्राप्तलत्वाऽभावश्च । कृपणः । भूसू । भू सत्तायां, षूङ् प्राणिप्रसवे, धूञ् कम्पने, भ्रस्ज पाके, बहुलवचनाद्भाषायामपि क्वचित् । 'भुवनं विष्टपेऽपि स्यात्सलिले गगने जने' इति मेदिनी । 'विष्टपं भुवनं जग'दित्यमरः । भृज्जनामति । 'ग्रहिज्ये'ति संप्रसारणम् । सस्य जश्त्वेन दः, दस्य श्चुत्वेन जः । 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना' इत्यमरः । कृपॄ । कॄ विक्षेपे, पॄ पालनादौ, वृजी वर्जने, मदि स्तुत्यादौ, डुधाञ् धारणपोषणयोः । 'निधनं स्यात्कुले नाशे' इति मेदिनी । 'निधनं कुलनाशयोः' इति हेमचन्द्रः । धृषेः । ञिधृषा प्रागल्भ्ये, अस्मात्क्युः, धिषादेशश्च धातोः । 'धिषणस्त्रिदशाचार्ये धिषणा धियि योषिति' इति मेदिनी । 'गीष्पतिर्धिषणो गुरुः' इत्यमरः । वर्तमाने । शतृवच्चेति । तथा च 'उगिदचा'मिति नुमि महान् । स्त्रियां तु 'उगितश्च' इति ङीपि महतीत्यादि सिध्यतीति भावः । ननु पृषन्महदादयः 'लटः शतृशानचौ' इति शतृप्रत्ययान्ता एव भवन्तु । ततश्च वर्तमान इति शतृवच्चेति च न कर्तव्यमिति महदेव लाघवमिति चेदत्राहुः—शतृप्रत्ययान्तत्वे

बा.] आस्वादने चौरादिकः । ततो नन्द्यादित्वात् ल्युप्रत्यये अनादेशे रूपमिति भावः । उन्देर्नलोपश्च । उन्दी क्लेदने, अस्मात् युच्, धातोर्नकारस्य लोपश्चेत्यर्थः । उपधागुणः । ओदन इति । 'ओदनोऽस्त्री स दीदिविः' इत्यमरः । गमेर्गश्च । गम्लृ गतावित्यस्माद्युच्प्रत्ययः गश्चान्तादेश इत्यर्थः । 'नभोऽन्तरिक्षं गगनम्' इत्यमरः । बहुलमन्यत्रापि । स्यन्दन इति । स्यन्दू प्रस्रवण इत्यस्मात् युजिति भावः । रोचनेति । रुच दीप्तावित्यस्मात्प्रत्ययः । रञ्जेः क्युन् । रञ्ज रागे अस्मात्क्युन्स्यात् । रजनमिति । कित्त्वान्नलोप इति भावः । ल्युटि तु रञ्जनमिति भावः । 'रञ्जनं रक्तचन्दनम्' इत्यमरः । भूसूधू । भू सत्तायां, षूङ् प्राणिप्रसवे, धूञ् कम्पने, भ्रस्ज पाके, एभ्यः क्युन्स्यात् । भुवनमिति । कित्त्वान्न गुणः । उवङिति भावः । 'विष्टपं भुवनं जगत्' इत्यमरः । एवं सुवन इत्यपि । निधुवनमिति । 'मैथुनं निधुवनं रतम्' इत्यमरः । भृज्जनमिति । क्युनः कित्त्वात् 'ग्रहिज्ये'ति संप्रसारणम् । सस्य जश्त्वेन दः । दस्य श्चुत्वेन जः । कृपृवृजि । कॄ विक्षेपे, पॄ पालनपूरणयोः, वृजी वर्जने, मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु, निपूर्वकडुधाञ्धारणपोषणयोः, एभ्यः क्युप्रत्यय इत्यर्थः । किरण इति । इत्वं रपरत्वम् णत्वम् । पुरण इति । 'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । निधनमिति । 'आतो लोप इटि च' इत्यालोपः । 'निधनं कुलनाशयोः' इत्यमरः । धृषेर्धिष् च संज्ञायाम् । ञिधृषा प्रागल्भ्ये, अस्मात्क्युः, धातोर्धिषादेशश्च । धिषण इति । 'गीष्पतिर्धिषणो गुरुः' इत्यमरः । धिषणेति । 'बुद्धिर्मनीषा धिषणा' इत्यमरः । वर्तमाने । पृषु सेचने, बृह वृद्धौ, मह पूजायां, गम्लृ गतौ, एभ्यः अतिप्रत्यय इत्यर्थः । शतृवच्चेति । तेन उगित्त्वान्नुमिति भावः । अतिप्रत्यये

शे.] रञ्जेः क्युन् । रजनीति गौरादित्वान्ङीषि बोध्यम् ।

[निपात्यन्ते]। पृषु सेचने गुणाऽभावः। पृषन्ति। बृहत्=महान्। गमेर्जगादेशः। जगत्। २४३। **संश्चत्तृपद्वेहत्**। एते निपात्यन्ते। पृथक्करणं शतृवद्भावनिवृत्त्यर्थम्। संचिनोतेः सुट्, इकारलोपः। संश्वत्-कुहकः। तृपत् छत्रम्। विपूर्वाद्धन्तेष्टिलोपः। इत एं चं। 'वेहद्गर्भोपघातिनी' ।२४४। **छन्दस्यसानच् शुजृभ्याम्।** शवसानः पन्थाः। जरसानः पुरुषः।२४५। **ऋञ्जिवृधिमन्दिसहिभ्यः कित्**। ऋञ्जसानो मेघः। वृधसानः पुरुषः। मन्दसानोऽग्निर्जीवश्च। सहसानो यज्ञो मयूरश्च। २४६। **अर्तेर्गुणः शुट् च**। अर्शसानोऽग्निः। २४७। **सम्यानच् स्तुवः**। संस्तवानो वाग्मी। २४८। **युधिबुधिदृशः किच्च**। युधानः। बुधानः। 'दृशानो लोकपालकः'। २४९। **हुर्छेः सनो लुक् छलोपश्च**। जुहुराणश्चन्द्रमाः। २५०। **श्वितेर्दश्च**।

त.]तु 'कर्तरि शप्' इति शप्प्रत्यये महतीत्यादौ 'आच्छीनद्योः' इति नुम् स्यात्, महानित्यादौ तु 'तास्यनुदात्तेन्ङिददुपदेशात्' इति लसार्वधातुकस्वरः स्यात्, अतिप्रत्ययान्तत्वे तु तस्याऽतिप्रत्ययस्यार्द्धधातुकत्वाभ्युपगमेन शवभावान्नोक्तदोष इत्याशयेनाऽतिप्रत्ययान्तत्वेन निपातनं स्वीकृतमिति। वृह वृद्धौ, मह पूजायाम्, गम्लृ गतौ। **पृषन्तीति।** बिन्दुवाची पृषच्छब्दो नपुंसकमिति ध्वननाय बहुवचनमुदाहृतम्। 'पृषन्मृगे पुमान् बिन्दौ न द्वयोः पृषतोऽपि ना। अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ' इति मेदिनी। 'बृहती क्षुद्रवार्ताक्यां कण्टकार्यां च वाचि च। वारिधान्यां महत्यां च छन्दोवसनभेदयोः' इति विश्वः। शतृवद्भावात् 'उगिदचाम्' इति नुम्। बृहन्-विपुलः। 'महती वल्लकीभेदे राज्ये तु स्यान्नपुंसकम्। तत्त्वभेदे पुमान् श्रेष्ठे वाच्यव'दिति मेदिनी। **महती**—नारदवीणा। 'विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती। महती नारदस्य स्यात्सरस्वत्यास्तु कच्छपी'ति वैजयन्ती। 'अवेक्ष्यमाणं महतीं मुहुर्मुहुः' इति माघः। 'जगत्स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु। जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि चे'ति मेदिनी। तत्र वायुवाचिनः पुंलिङ्गस्य शतृवद्भावादुगित्त्वेन नुमि 'जगन् जगन्तौ जगन्त' इत्यादि भवति। 'द्युतिगमिजुहोतीनां द्वे चे'ति व्युत्पादितस्य तु नुमभावाज्जगत् जगतौ जगत इत्यादीति बोध्यम्। **संश्चत्तृ।** चिञ् चयने, तृप प्रीणने, हन हिंसागत्योः। **निपात्यन्त इति।** 'अतिप्रत्ययान्ता' इति शेषः। **निवृत्त्यर्थमिति।** एवं च संश्चदित्यत्र 'उगिदचा'मिति नुमः शङ्कैव नास्ति। वेहदित्यत्र तु'उगितश्चे'ति ङीब्नेति भावः। **सञ्चिनोतेरिति।** प्रभूतिचन्द्रस्तु संपूर्वाच्छ्यतेः संश्चदित्याह। **तृपच्छत्रमिति।** चन्द्रमा इत्यन्ये। विहन्ति गर्भमिति वेहत्। **इत ए चेति।** विशब्दसम्बन्धिन इकारस्य एकार इत्यर्थः। गौरित्यनुवृत्तौ 'वेहद्गर्भोपघातिनी' इत्यमरः। **छन्दसि।** शु गतौ, जॄष् वयोहानौ। **पन्था इति।** 'प्रथंन्मह' इत्यादिमन्त्रद्वये शवसानशब्दो गन्तृपरतया व्याख्यातः। **ऋञ्जि।** ऋजि भर्जने, वृधु वृद्धौ, मदि स्तुत्यादौ, षह मर्षणे, एभ्यः असानच् कित्स्यात्। **ऋञ्जसानो मेघ इति।** ऋजेरिदित्त्वान्नुम्। इदित्त्वादेव नलोपाऽभावः। एवं चायं मन्दिसही च त्रयोऽपि पूर्वसूत्र एव पठितुं शक्याः। कित्त्वं तु वृधुधातावेवोपयुज्यते। उत्तरसूत्रेऽपि गुणग्रहणं सुत्यजम्, अर्तेः सुट् च वृधेः किदित्युक्तौ सर्वसामञ्जस्यादित्याहुः। 'ऋञ्जसानः पुरुवार उक्थैः' 'अस्मिन् यज्ञे मन्दसाना वृषण्वसू' इत्यादिमन्त्राणां भाष्ये तु यौगिकार्थ एव पुरस्कृतः। **अर्तेः।** ऋ गतौ धातोर्गुणः प्रत्ययस्य सुडागमः। 'आसाविषदर्शसानाये'ति मन्त्रस्य भाष्ये तु अर्शसानाय=शत्रूणां हिंसित्रे इति व्याख्यातम्। **समि।** ष्टुञ् स्तुतौ। अस्मात्सम्युपपदे आनच्। **युधि।** युध संप्रहारे। युधानो रिपुः। बुधिर् बोधने। बुधान आचार्यः। दृशिर् प्रेक्षणे। बाहुलकात् कृपेरप्यानच्। कृपाणः खड्गः। 'कृपाणेन कथङ्कारं कृपणः सह गण्यते। परेषां दानसमये यः स्वकोशं विमुञ्चति'।

वा.] लघूपधगुणमाशङ्क्याह—**गुणाभाव इति।** निपात्यत इति शेषः। शतृवत्त्वातिदेशस्य फलप्रदर्शनायाह—**पृषन्तीति।** गम्धातोरतिप्रत्यये जगादेशे च जगदिति रूपम्। लटः शतरि तु महतीत्यादौ शपि 'आच्छीनद्योः' इति नुम् स्यात्। अतिप्रत्यये तु तस्यार्द्धधातुकतया न शप्। **संश्चत्तृपद्वेहत।** चिञ् चयने, तृप प्रीणने, हन हिंसागत्योः, एते अतिप्रत्ययान्ता निपात्यन्त इत्यर्थः। ननु पूर्वसूत्र एव पठितव्ये पृथक् पठनं व्यर्थमित्यत आह—**पृथक्करणमिति।** संश्चदित्यत्राह—**इकारलोप इति।** वेहदित्यत्राह—**इत ए इति।** विशब्दसम्बन्धिन इकारस्येत्यर्थः। **छन्दस्य।** शु गतौ, जॄष् वयोहानौ आभ्यामसानच्प्रत्यय इत्यर्थः। **ऋञ्जिवृधि।** ऋजि गतौ, वृधु वृद्धौ, मदी हर्षे, षह मर्षणे, एभ्यः असानच्प्रत्ययः कित्स्यादित्यर्थः। **अर्तेर्गुणः।** ऋ गतौ, अस्मात् असानच्प्रत्ययः, धातोर्गुणः, प्रत्ययस्य शुडागमश्चेत्यर्थः। **सम्यानच् स्तुवः।** समि उपपदे ष्टुञ् स्तुतावित्यस्मात् आनच्प्रत्यय इत्यर्थः। गुणोऽवादेशः। **युधिबुधि।** युध संप्रहारे, बुधिर् अवबोधने, दृशिर् प्रेक्षणे एभ्यः आनच् कित्स्यादित्यर्थः। **युधान इति। हुर्छेः सनो।** हुर्छा कौटिल्ये, अस्मात्सन्नन्तात् आनच् स्यात्, सनो लुक्,

शिश्विदानः पुण्यकर्मा ।२५१। **तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चाऽनिटौ** । शंसादिभ्यः क्षदादिभ्यश्च क्रमात्तृन्तृचौ स्तस्तौ चाऽनिटौ । शंस्ता स्तोता । शंस्तरौ । शंस्तरः । क्षदिः सौत्रो धातुः शकलीकरणे भक्षणे च। अनुदात्तेत् । 'वृक्ष्ये चक्षदान'मिति मन्त्रात् । 'ऋक्षाणं वा वेहतं वा क्षदन्ते' इति ब्राह्मणाच्च । 'क्षत्ता स्यात्सारथौ द्वाःस्थे वैश्यायामपि शूद्रजे' । २५२ । **बहुलमन्यत्रापि** । मन्—मन्ता । हन्—हन्ता । [इत्यादि] ।२५३। **नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ** । न पतन्त्यनेन नप्ता पौत्रो, दौहित्रश्च । नयतेः षुग्गुणश्च । नेष्टा । त्विषेरितोऽत्वम् । त्वष्टा । होता । पोता [ऋत्विग्भेदः] । भ्राजतेर्जलोपः । भ्राता । जायां माति जामाता । मान पूजायां । नलोपः । माता । पातेराकारस्य इत्वम् । पिता । दुहेस्तृच इट्, गुणाऽभावश्च । दुहिता । २५४ । **सुञ्यसेर्ऋन्** । स्वसा । २५५ । **यतेर्वृद्धिश्च** । याता । 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्' । २५६ । **नञि च नन्देः** । न नन्दति ननान्दा । इह वृद्धिर्नानुवर्तत इत्येके ।

---

त.] **हुर्च्छेः** । हुर्च्छा कौटिल्ये, अस्मात्सन्नन्तादानच्स्यात्सनो लुक् छलोपश्च । 'युयोध्यस्मज्जुहुराणमेनः' इति मन्त्रे जुहुराणं=कौटिल्यकारि एनः=पापं युयोधि=पृथक् कुरु इति भाष्यम् । **श्वितेः** । श्विता वर्णे अस्मात्सन्नन्तादानच् । 'सन्यङोः' इति द्वित्वम् । सनो लुक् । तकारस्य च दकारः । किदित्यनुवृत्तेर्न गुणः । **पुण्यकर्मेति** । 'शिश्विदानोऽकृष्णकर्मे'ति विशेष्यनिघ्ने अमरः । अकृष्णं=शुक्लं निष्पापत्वात् शुद्धं कर्म यस्येत्यर्थः । क्षीरस्वामिना तु प्रकृतसूत्रं विस्मृत्य श्विदि श्वैत्ये अस्माल्लिटः कानजिति व्याख्यातं, तदसङ्गतं, कानचश्छान्दसत्वात् । इदित्त्वेन नलोपानुपपत्तेश्चेति दिक् । **तृन्तृचौ** । **शंस्तेति** । शंसु स्तुतावस्मात्तृन् । 'अप्तृन्–' इति सूत्रे नप्त्रादिग्रहणं नियमार्थमौणादिकतृजन्तानां चेदुपधादीर्घस्तर्हि नप्त्रादीनामेवेत्युक्तम् । तेनात्र दीर्घो नेत्युदाहरति— **शंस्तरौ शंस्तर इति** । नित्त्वादाद्युदात्तः । तथा च मन्त्रः 'ग्रावग्राभ उत शंस्ता सुविप्रः' । आदिशब्दाच्छासु अनुशिष्टौ । शास्ति विनयति सत्त्वान् शास्ता बुद्धः । शास्तरौ । शास्तरः । 'शास्ता समन्तभद्रे ना शासके पुनरन्यवत्' इति । प्रपूर्वस्य तु नप्त्रादिषु पाठात् 'अप्तृन्' इति दीर्घः । प्रशास्तारौ प्रशास्तारः । 'क्षत्ता शूद्राच्च वैश्याजे प्रतीहारे च सारथौ । भुजिष्यातनयेऽपि स्यान्नियुक्तत्रेऽसोः पुमान्' इति मेदिनीकोशानुसारेणाह—**वैश्यायामिति**। अमरस्तु 'क्षत्रियायां च शूद्रजे' इत्याह । णीञ् प्रापणे उत्पूर्वः । उन्नेता ऋत्विग्भेदः । **बहुलमन्यत्रापि** । अन्यत्रापि धातोर्बहुलं तृन्तृचौ भवतः । पूर्वसूत्रस्थादिशब्देनैव मन्ता हन्तेत्यादेः सिद्धत्वात्प्रपञ्चार्थमिदं सूत्रम् । **नप्तृनेष्टृ** । नप्त्रादयो दश तृन्तृजन्ता निपात्यन्ते । **नप्तेति** । नञः प्रकृतिभावः । पत्लृ गतावित्यस्याऽच्छब्दलोपः । णीञ् प्रापणे, त्विष दीप्तौ, हु दानादनयोः, पूञ् पवने, भ्राजृ दीप्तौ, मा माने, पा रक्षणे, दुह प्रपूरणे । 'त्वष्टा पुमान् देवशिल्पितक्ष्णोरादित्यभिद्यपि' इति मेदिनी । **जायां मातीत्यन्तर्भावितण्यर्थः** । **सुञ्यसे** । सुञि उपपदे असु क्षेपणे इत्यस्मात् ऋन्, यणादेशः । स्वसा भगिनी । सावसेरिति तु क्वाचित्कः पाठः । **यतेः** । यती प्रयत्ने । **नञि च**।

---

बा.] छलोपश्च । **जुहुराण इति** । प्रत्ययलक्षणेन सनमाश्रित्य द्वित्वम् । नच 'न लुमता'इति निषेधः,लुप्तप्रत्यये परतः तन्निमित्ताङ्गसंज्ञकस्य कार्यं नेति तदर्थात् । द्वित्वं तु न सनि परतस्तन्निमित्ताङ्गसंज्ञस्य विधीयते, अपितु तदन्तस्य । **श्वितेर्दश्च** । श्विता वर्णे, अस्मात् सन्नन्तादानच् सनो लुक्, तकारस्य दकारश्च । **शिश्विदान इति** । पूर्ववद्द्वित्वम्। 'शिश्विदानः पुण्यकर्मा चपलश्चिकुरः समौ' इत्यमरः । 'शिश्विदानोऽकृष्णकर्मे'ति क्वचित्पाठः । तस्याप्येष एवार्थः । **तृन्तृचौ शंसि** । शंसु स्तुतौ, क्षदधातुः सौत्रः, आभ्यां तृन्तृचौ क्रमात्स्तः, तौ चाऽनिटावित्यर्थः । **शंस्तेति** । तृन् । **शंस्तराविति** । अप्तृन्निति सूत्रे नप्त्रादिग्रहणं नियमार्थम्–'औणादिकतृन्तृजन्तानां यद्युपधादीर्घस्तर्हि नप्त्रादीनामेवे'ति । तस्मादत्र न दीर्घ इति भावः । प्रशास्तारावित्यादौ तु आदिग्रहणात्तृचि दीर्घो भवत्येव, नप्त्रादिषु पाठात् । **क्षत्तेति** । 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः । **नप्तृनेष्टृत्वष्टृ** । एते तृन्तृजन्ता निपात्यन्ते । नप्तृशब्दस्य व्युत्पत्तिमाह—**न पतन्त्यनेनेति** । नञि उपपदे पत्लृ गतावित्यस्मात्तृनि नञः प्रकृतिभावः, अच्छब्दलोपश्च निपात्यते । नेष्टेत्यत्राह—**नयतेरिति** । णीञ् प्रापणे इत्यस्मात्प्रत्ययः । त्वष्टेत्यत्राह— **त्विषेरितोऽत्वमिति** । त्विष दीप्तावित्यस्मात्प्रत्यये इकारस्य अकार इत्यर्थः । **होतेति** । हु दानादनयोरित्यस्मात् प्रत्ययः । गुण इति भावः । **पातेति** । पूञ् पवने इत्यस्मात् प्रत्ययः । भ्रातेत्यत्राह—**भ्राजतेरिति** । भ्राजृ दीप्तावित्यस्मात् प्रत्ययः । **सावसेर्ऋन्** । सावुपपदे असु क्षेपणे इत्यस्मात् ऋन्प्रत्यय इत्यर्थः । **स्वसेति** । यणादेशः । अप्तृन्निति दीर्घः । **यतेर्वृद्धिश्च** । यती प्रयत्ने. अस्मात् ऋन् वृद्धिश्चेत्यर्थः । यातेत्यस्यार्थमाह—**भार्यास्त्वि-**

---

शे.] **तृन्तृचौ** । शास्तिक्षदादिभ्य इति पाठान्तरम् । शास्ता । मूलस्थपाठे तु क्षदादित्वादयं साधुः । इति द्वितीयः पादः ।

'ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनी च से'ति शब्दार्णवः । २५७ । दिवेर्ऋः । देवा देवरः । ['स्वामिनो देवृदेवरौ'] । २५८ । नयतेर्डिच्च । ना । नरौ । नरः । २५९ । सव्ये स्थश्छन्दसि । 'अम्बाम्बे'त्यत्र ॐ स्थास्थिन्स्थूणामुपसङ्ख्यानम् । सव्येष्ठा सारथिः । सव्येष्ठरौ । सव्येष्ठरः । २६० । अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः । अष्टभ्योऽनिप्रत्ययः स्यात् । अरणिरग्नेर्योनिः । सरणिः । धरणिः । धमनिः । अमनिर्गतिः । अशनिः । अवनिः । तरणिः । बाहुलकात् रजनिः । २६१ । आङि शुषेः सनश्छन्दसि । आशुशुक्षणिरग्निर्वातश्च । २६२ । कृषेरादेश्च चः । चर्षणिर्जनः । २६३ । अदेर्मुट् च । अद्मनिरग्निः । २६४ । वृतेश्च । वर्तनिः । गोवर्धनस्तु चकारान्मुट् वर्त्मनिरित्याह । २६५ । क्षिपेः किच्च । क्षिपणिरायुधम् । २६६ । अर्चि-

---

त.]टुनदि समृद्धौ अस्मान्नञ्युपपदे ऋन् । न नन्दतीति । कृतायामपि सेवायां न तुष्यतीत्यर्थः । 'उषाप्यूषा ननान्दा च ननन्दा च प्रकीर्तिता' इति द्विरूपकोशः । दिवेः । दिवु क्रीडाविजिगीषादौ । देवेति । भ्रातर इत्यनुवृत्तौ 'स्वामिनो देवृदेवरौ' इत्यमरः । ['देवे धवे देवरि माधवे चे'ति श्रीहर्षः] । नयतेः । णीञ् प्रापणे । अस्माद् ऋप्रत्ययः स च डित् । डित्वाट्टिलोपः । 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः' इत्यमरः । सव्ये । ष्ठा गतिनिवृत्तौ अस्मात्सव्यशब्दे उपपदे ऋः स्यात्स च डित् । 'तत्पुरुषे कृती'ति सप्तम्या अलुक् । उपसंख्यानमिति । 'षत्वस्ये'ति शेषः । अर्ति । ऋ गतौ, सृ गतौ, धृञ् धारणे, धमिः सौत्रः, अम गतौ, अश भोजने, अव रक्षणादौ, तॄ प्लवनतरणयोः । 'अरणिर्वह्निमन्थे ना द्वयोर्निर्मथ्यदारुणि' इति मेदिनी । 'सरणिः श्रेणिवर्त्मनोः' इति दन्त्यादौ रभसः । 'सरणिः पङ्क्तौ मार्गे स्त्री' इति मेदिनी । शॄ हिंसायां ततोऽतिप्रत्ययः । शरणिरित्येके । 'शरणिः पथि चाऽऽवलौ' इति तालव्यादावजयः । 'इमामग्ने शरणि'मिति मन्त्रे शरणिं हिंसां व्रतलोपरूपां मीमृषः क्षमस्वेति वेदभाष्यम् । धरणिर्भूमिः । 'धमनी तु शिराहट्टविलासिन्यां तु योषिति' इति मेदिनी । अमनिर्गतिः । अश्यते भुज्यते राज्यमिन्द्रेणानयेति अशनिर्वज्रम् । 'अशनिः स्त्रीपुंसयोः स्याच्चञ्चलायां स्वावपी'ति मेदिनी । अवनिः पृथिवी । 'तरणिर्द्युमणौ पुंसि कुमारीनौकयोः स्त्रिया'मिति मेदिनी । कुमारी लताविशेषः । 'तरणी रामतरणी कर्णिका चारुकेसरा । सहा कुमारी गन्धाढ्या' इति धन्वन्तरिनिघण्टुः । रजनिरिति । रञ्ज रागे अस्मादप्यनिः । नलोपोऽपि बाहुलकात् । 'कृदिकारा'दिति ङीष् । रजनी । 'रजनी नीलिनी रात्रिर्हरिद्राजतुकासु च' इति मेदिनी । आङि । शुष शोषणे अस्मात्सन्नन्तादाङि उपपदे अनिः स्यात् । कृषेरादेः । कृष विलेखने । चर्षणिर्जन इति । वैदिकनिघण्टौ चर्षणिशब्दस्य मनुष्यनामसु पाठात्, 'ओमासश्चर्षणीधृतः' इत्यादिमन्त्रेषु वेदभाष्यकारैस्तथैव व्याख्यातत्वाच्च । उज्ज्वलदत्तेन तु आदेश्च ध इति पठित्वा धर्षणिर्बन्धकीति व्याख्यातम् । तदयुक्तम् । तथा सति धृषेरित्येव सूत्रयेत्, प्रागल्भ्यरूपावयवार्थानुगमात् । 'आदेश्च ध' इत्यंशस्य त्यागेन लाघवाच्च, तस्मादादेश्च च इति दशपादीवृत्तिपाठ एव युक्त इत्याहुः । अदेः । अद भक्षणे अस्मादनिस्तस्य मुडागमश्च । वृतेश्च । वृतु वर्तने अस्मादप्यनिः । वर्तनिरिति । 'कृदिकारा'दिति ङीषि तु वर्तनी । 'सरणिः पद्धतिः पद्या वर्तन्येकपदीति चे'त्यमरः । क्षिपेः । क्षिप प्रेरणे । क्षिपणिरायुधमिति । 'उतस्य वाजी क्षिपणिं तुरण्यती'ति मन्त्रस्य वेदभाष्ये तु क्षिपणिं=क्षेपणमनु, तुरण्यति=त्वरयति, गन्तुमिति व्याख्यातम् । अर्चि । अर्च पूजायाम्, शुच शोके, हु दानादनयोः' सृप्लृ गतौ, छद अपवारणे, ण्यन्तः । छर्द वमने,

---

बा.]ति । अमरकोशोऽयम् । नञि च नन्देः । टु नदि समृद्धौ, अस्मान्नञ्युपपदे ऋन् । न नन्दतीति । 'सेवायां कृतायामपी'ति शेषः । ऋनि वृद्धिरप्यनेनैव, पूर्वसूत्रादनुवृत्तेः । मतान्तरमाह—इहेति । अत्र मानमाह—ननान्दा तु स्वसा पत्युरिति । दिवेर्ऋः । दिवु क्रीडादिषु, अस्मात् ऋप्रत्ययो भवतीत्यर्थः । ऋनि प्रकृते ऋविधिर्नित्स्वराऽभावार्थम् । 'स्वामिनो देवृदेवरौ' इत्यमरः । नयतेर्डिच्च । णीञ् प्रापणे, अस्मात् ऋप्रत्ययः, स च डिद्भवतीत्यर्थः । डित्त्वं टिलोपार्थम् । 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः' इत्यमरः । सव्ये स्थश्छन्दसि । ष्ठा गतिनिवृत्तौ, अस्मात् सव्यशब्दे उपपदे ऋप्रत्ययः, स च डिदित्यर्थः । सव्येष्ठ इति स्थले षत्वार्थमाह—अम्बाम्बेत्यत्रेति । 'तत्पुरुषे कृती'त्यलुक् । 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः । सव्येष्ठृदक्षिणस्थौ च' इत्यमरः । अर्तिसृधृ । ऋ गतौ, सृ गतौ, धृञ् धारणे, धमिधातुः सौत्रः, अम गतौ, अश भोजने, अव रक्षणे, तॄ प्लवनतरणयोः, एभ्यः अनिप्रत्यय इत्यर्थः । अरणिरिति । 'निर्मन्थ्यदारुणि त्वरणिर्द्वयोः' इत्यमरः । आङि शुषेः । आङि उपपदे शुष शोषणे इत्यस्मात्सन्नन्तादनिप्रत्यय इत्यर्थः । आशुशुक्षणिरिति । शुशुक्षेति सन्नन्तम् । 'रोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः' इत्यमरः । कृषेरादेश्च चः । कृष विलेखने अस्मादनिप्रत्यय इत्यर्थः । ककारस्य चकारश्च । चर्षणिरिति । 'पुगन्तलघूपधस्य च' इति गुणः । अदेर्मुट् च । अद भक्षणे, अस्मादनिप्रत्ययः, मुडागमश्च प्रत्ययस्य भवतीत्यर्थः । वृतेश्च । वृतु वर्तने, अस्मादनिप्रत्यय इत्यर्थः । 'सरणिः पद्धतिः पद्या

**शुचिहुसृपिछादिछर्दिभ्य इसिः** । अर्चिर्ज्वाला । इदन्तोऽप्ययम् । 'अग्नेर्भ्राजन्ते अर्चयः' । शोचिर्दीप्तिः । हविः सर्पिः । 'इस्मन्' इति ह्रस्वः । छदिः पटलम् । छर्दिर्वमनव्याधिः । इदन्तोऽपि । 'छर्दतीसारशूलवान्' । २६७ । **बृंहेर्नलोपश्च** । 'बर्हिर्ना कुशशुष्मणोः' । २६८ । **द्युतेरिसिन्नादेश्च जः** । ज्योतिः । २६९ । **वसौ रुचेः संज्ञायाम्** । वसुरोचिर्यज्ञः । २७० । **भुवः कित्** । भुविः समुद्रः । २७१ । **सहो धश्च** । सिधिरनड्वान् । २७२ । **पिबतेस्थुक्** । 'पाथिश्चक्षुःसमुद्रयोः' । २७३ । **जनेरुसिः** । जनुर्जननम् । २७४ । **मनेर्धश्छन्दसि** । मधुः । २७५ । **अर्तिपृवपियजितनिधनितपिभ्यो नित्** । अरुः । परुर्ग्रन्थिः । वपुः । यजुः । तनुः । तनुषी । तनूंषि । धनुरस्त्रियाम् । 'धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति' । सान्तस्य उदन्तस्य वा रूपम् । 'तपुः सूर्याऽग्निशत्रुषु' । २७६ । **एतेर्णिच्च** । आयुः । आयुषी । २७७ । **चक्षेः शिच्च** । चक्षुः । २७८ । **मुहेः किच्च** । 'मुहुरव्ययम्' । २७९ । **बहुलमन्यत्रापि** । आचक्षुः । परिचक्षुः । २८० । **कृगृशॄ-**

त.]अर्चिरिति सान्तम् । 'तमर्चिषा स्फूर्जयन्' इति मन्त्रः । 'नयनमिव सनिद्रं घूर्णते दैवमर्चिः' इति माघः । ज्वालाभासोर्नपुंस्यर्चिः' इति नानार्थे सान्तेष्वमरः । **इदन्तोऽपीति** । णिजन्तादर्चेरत इरिति भावः । 'अर्चिर्हेतिः शिखा स्त्रिया'मित्यमरः । 'रोचिः शोचिरुभे क्लीबे' इति च । सर्पिर्घृतम् । छाद्यतेऽनया छदिः । 'छदिः स्त्रियामेवे'ति लिङ्गानुशासनसूत्रम् । एवं च 'पटलं छदि'रित्यमरग्रन्थे पटलसाहचर्याच्छदिषः क्लीबतां वदन्त उपेक्ष्याः । **छर्दतीति** । छर्दिश्चातिसारश्च शूलञ्च तानि यस्य सन्तीति विग्रहः । **बृंहेः** । बृहि वृद्धौ अस्मादिसिः । **कुशशुष्मणोरिति** । शुष्मा नाम अग्निः । 'अग्निर्वैश्वानरो वह्निः' इत्युपक्रम्य 'बर्हिः शुष्मे'त्यमरेणोक्तत्वात् । ['बर्हिः पुंसि हुताशने । न स्त्री कुशे' इति मेदिनी] । **द्युतेः** । द्युत दीप्तौ । 'ज्योतिरग्नौ दिवाकरे । पुमान्नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः' इति मेदिनी । **वसौ** । रुच दीप्तावस्माद्वसुशब्दे उपपद इसिन्स्यात्संज्ञायाम् । बाहुलकात्केवलादपि । 'रोचिः शोचिरुभे क्लीबे' इत्यमरः । **भुवः** । भवतेरिसिन् स्यात्स च कित् । **सहो** । षह मर्षणेऽस्मादिसिन् धश्चान्तादेशः । **पिबतेः** । पा पाने अस्मादिसिन्धातोश्च थुगागमः । **जनेः** । जनी प्रादुर्भावे । **मनेः** । मनु अवबोधनेऽस्मादुसिः स्याच्छन्दसि धकारश्चान्तादेशः । मधु पवित्रद्रव्यम् । **अर्तिपृ** । ऋ गतौ, पॄ पालनपूरणयोः, डुवप् बीजसन्ताने, यज देवपूजादौ, तनु विस्तारे, धन धान्ये, तप सन्तापे, एभ्य उसिर्नित्स्यात् । व्रणोऽस्त्रियामीर्ममरुः क्लीबे' इत्यमरः । 'ग्रन्थिर्ना पर्वपरुषी' इति च । 'वपुः क्लीबं तनौ शस्ताकृतावपि' इति मेदिनी । शस्ताकृतिः प्रशस्ताकृतिरित्यर्थः । यजुरिति यजुर्वेदः । तनुः शरीरम् । 'तनुषे तनुषेऽनङ्ग'मिति सुबन्धुः । 'स्यात्तनुस्तनुषा सार्धं धनुषा च धनुं विदुः' इति द्विरूपेषु विश्वः । 'अथाऽस्त्रियाम् । धनुश्चापौ' इत्यमरः । 'धनुः प्रियाले ना न स्त्री राशिभेदे शरासने । धनुर्धरे त्रिषु' इति सान्ते मेदिनी । **एतेः** । इण् गतावित्यस्मादुसिः, णित्त्वाद्वृद्धौ कृतायामायादेशः । **चक्षेः** । चक्षिङ् व्यक्तायां वाचि, अस्मादुसिः शिद्भवति । शित्त्वात्ख्याञादेशाऽभावः । चक्षते रूपमनुभवन्त्यनेनेति चक्षुः । **मुहेः** । मुह वैचित्ये । 'मुहुः पुनःपुनः शश्वदभीक्ष्णमसकृत्समाः' इत्यव्ययेष्वमरः । [अस्मात्परं बहुलमन्यत्रापि इति सूत्रं

बा.]वर्तन्येकपदीति च' इत्यमरः । वर्तिनीत्यत्र कृदिकारादिति ङीष् । **क्षिपेः किच्च** । क्षिप प्रेरणे, अस्मादनिप्रत्ययः, स च किद्भवतीत्यर्थः । कित्त्वान्न गुणः । क्षिपणिः । **अर्चिशुचि** । अर्च पूजायां, शुच शोके, हु दानादनयोः, सृप्लृ गतौ, छद अपवारणे ण्यन्तः, छर्द वमने, एभ्य इसिप्रत्यय इत्यर्थः । **अर्चिरिति** । सान्तोऽयम् । 'ज्वालाभासोर्नपुंस्यर्चिः' इत्यमरः । **इदन्तोऽप्ययमिति** । ण्यन्तादर्चेः अच इरिति इप्रत्यये साधुरिति भावः । छादि इति ण्यन्तादिसि णिलोपे उपधाह्रस्वार्थमाह—**इस्मन्निति** । **छर्दतीसारेति** । छर्दिश्चाऽतिसारश्च शूलं च यस्य सन्तीति विग्रहः । **बृंहेर्नलोपश्च** । बृहि वृद्धौ, अस्मादिसिः, नकारस्य लोपश्चेत्यर्थः । **बर्हिरिति** । उपधागुणे रूपम् । **द्युतेरिसिन्नादेश्च जः** । द्युत दीप्तौ, अस्मादिसिन्प्रत्ययः । आदेर्दकारस्य जकारश्चेत्यर्थः । **वसौ रुचेः संज्ञायाम्** । वसुशब्दे उपपदे रुच दीप्तावित्यस्मादिसिन्प्रत्ययः स्यात्संज्ञायामित्यर्थः । **वसुरोचिरिति** । **भुवः कित्** । भू सत्तायामित्यस्मात् इसिन्प्रत्ययः, स च कित् भवतीत्यर्थः । कित्त्वान्न गुणः । **सहो धश्च** । षह मर्षणे इत्यस्मात् इसिन्प्रत्ययः, अन्त्यस्य धकारश्चेत्यर्थः । **पिबतेस्थुक्** । पा पाने, अस्मादिसिन्, धातोश्च थुगागम इत्यर्थः । पाथिरिति रूपम् । **जनेरुसिः** । जनी प्रादुर्भावे अस्मादुसिप्रत्यय इत्यर्थः । **मनेर्धश्छन्दसि** । मनु अवबोधने, अस्मादुसिप्रत्ययः, धातोरन्तादेशश्च धकार इत्यर्थः । **अर्तिपृवपि** । ऋ गतौ, पॄ पालनपूरणयोः, डु वप् बीजसन्ताने, यज देवपूजनादौ, तनु विस्तारे, धन धान्ये, तप सन्तापे, एभ्य उसिप्रत्ययः स्यात्, स च नित् भवतीत्यर्थः । नित्त्वं स्वरार्थम् । **एतेर्णिच्च** । इण् गतावित्यस्मादुसिप्रत्ययः, स च णिद्भवतीत्यर्थः । णित्त्वाद्वृद्धिः । **आयुरिति** । **चक्षेः शिच्च** । चक्षिङ् व्यक्तायां वाचि, अस्मादुसिः, स च शिद्भवतीत्यर्थः । शित्त्वफलमाह—

वृञ्चतिभ्यः ष्वरच् । 'कर्वरो व्याघ्ररक्षसोः'। गर्वरोऽहंकारी । शर्वरी रात्रिः । 'वर्वरः प्राकृतो जनः'। चत्वरम् । २८१ । नौ सदेः । 'निषद्वरस्तु जम्बालः' । निषद्वरी रात्रिः । इत्युणादिषु द्वितीयः पादः ।

अथ तृतीयः पादः ।

२८२ । छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः । एकादश ष्वरच्प्रत्ययान्ता निपात्यन्ते । छिदिर् छद अनयोस्तकारोऽन्तादेशः, छिदेर्गुणाऽभावश्च । छित्वरो धूर्तः । 'छत्वरो गृहकुञ्जयोः' । धीवरः कैवर्तः । पीवरः स्थूलः । मीवरो हिंसकः । चिनोतेर्दीर्घश्च । चीवरं भिक्षुकप्रावरणम् । तीवरो जातिविशेषः । नीवरः परिव्राट् । गाहतेर्ह्रस्वत्वम् । गह्वरम् । कटे वर्षादौ । कट्वरं व्यञ्जनम् । यमेर्दंकारः संयद्वरो नृपः । पदेः संपद्वर इत्येके । २८३ । इण्सिञ्जिदीङुष्यविभ्यो नक् । 'इनः सूर्ये नृपे पत्यौ' । सिनः

---

त.][स्पष्टत्वात्त्यक्तम्] । कॄ गॄ । कॄ विक्षेपे, गॄ निगरणे, शॄ हिंसायाम् , वृञ् वरणे, चते याचने । 'नैर्ऋतः कर्वरः क्रव्यात्कर्वुरो यातुरक्षसोः' इति शब्दार्णवः । 'शर्वरी यामिनीस्त्रियोः' इति मेदिनी । 'वर्वरः पामरे केशविन्यासे नीवृदन्तरे । वर्वरः फञ्जिकायां तु वर्वरा शाकपुष्पयोः' इति विश्वः । 'वर्वरः पामरे केशवक्रले नीवृदन्तरे । फञ्जिकायां पुमान् शाकपुष्पभेदभिदोः स्त्रियाम्' इति मेदिनी । 'चत्वरं स्थण्डिले गणे' इति च । नौ सदेः । षद्लृ विशरणादौ । निपूर्वादस्मात्ष्वरच् स्यात् । 'सदिरप्रतेः' इति षत्वम् । 'निषद्वरः स्मरे पङ्के निशायां तु निषद्वरी'ति मेदिनी ।

इत्युणादिषु द्वितीयः पादः ।

छित्वर । अनयोरिति । छिदिर् द्वैधीकरणे, छद अपवारणे, 'छित्वरश्छेदने द्रव्ये धूर्ते वैरिणि च त्रिषु' इति मेदिनी । डुधाञ् धारणपोषणयोः, पा पाने, मा माने, एषां त्रयाणामीत्वमन्त्यस्य निपात्यत इत्येके । अन्ये तु पीव मीव तीव नीव स्थौल्ये । एभ्यः ष्वरचि 'लोपो व्योः' इति लोपमाहुः । 'पीवरः कच्छपे स्थूले' इति मेदिनी । मीवर इति । हिंसक इत्यर्थानुगुण्येन मीञ् हिंसायामित्यस्मात्ष्वरजिति केचिदाहुः । 'तीवरो नाऽम्बुधौ व्याधे' इति मेदिनी । 'स्यात्तीवरो वाणिजके वास्तवेऽपि च दृश्यते' इति मेदिनीविश्वप्रकाशौ । गाहतेरिति । गाहू विलोडने । 'कट्वरं कुत्सिते वाच्यलिङ्गं तक्रे नपुंसकम्' इति मेदिनी । बाहुलकादुपपूर्वकात् हुदानादनयोरित्यस्मात्ष्वरच्युकारलोपः । 'उपह्वरं समीपे स्यादेकान्तेऽपि नपुंसकम्' इति मेदिनी । उपह्वरो रथ इति केचित् । 'तद्गु प्रयक्षतम्' इति मन्त्रे तु उपह्वरे उपगन्तव्ये समीपदेशे ] । इण् । इण् गतौ, षिञ् बन्धने, जि जये, दीङ् क्षये, उष दाहे, अव रक्षणे । 'इनः पत्यौ नृपाऽर्कयोः' इति मेदिनी । 'जिनोऽर्हति च वृद्धे च पुंसि स्यात्रिषु जित्वरे' इति च । 'दीना मूषिकयोषायां दुर्गते कातरेऽन्यवत्' इति विश्वः । 'उष्णो ग्रीष्मे पुमान् दक्षाऽशीतयोरन्यलिङ्गकः' इति मेदिनी ।

---

वा.]सार्वधातुकत्वेनेति । चक्षते रूपादिकमनुभवत्यनेनेति चक्षुः । मुहेः किच्च । मुह वैचित्त्ये, अस्मादुसिः, स च किदित्यर्थः, कित्वान्न गुणः । 'मुहुः पुनः पुनः शश्वत्' इत्यमरः । कॄगॄशॄ । कॄ विक्षेपे, गॄ निगरणे, शॄ हिंसायां, वृञ् वरणे, चते याचने, एभ्यः ष्वरच् स्यादित्यर्थः । षित्त्वं ङीषर्थम् । नौ सदेः । नावुपपदे षद्लृ विशरणगत्यवसादनेष्वित्यस्मात् ष्वरच् स्यादित्यर्थः । षित्वफलं दर्शयन्नुदाहरति–निषद्वरो रात्रिरिति ।

इत्युणादिषु द्वितीयः पादः ।

अथ तृतीयः पादः । छित्वरछत्वरधीवर । एते ष्वरच्प्रत्ययान्ता निपात्यन्त इत्यर्थः । निपातनमेवाह—अनयोस्तकार इति । छिदिर् द्वैधीकरणे, छद अपवारणे, आभ्यां ष्वरच्प्रत्ययः, तत्सन्नियोगेन धातोस्तकारोऽन्तादेशः, गुणाऽभावश्च निपात्यत इत्यर्थः । 'छित्वरश्छेदने द्रव्ये धूर्ते वैरिणि च त्रिषु' इति मेदिनी । धीवर इति । डु धाञ् धारणपोषणयोः, अस्मात्ष्वरचि धातारन्त्यस्य ईत्वं निपात्यत इत्यर्थः । एवं पा पाने, मा माने, आभ्यां ष्वरचि ईत्त्वं निपात्यत इति बोध्यम् । 'कैवर्ते दाशधीवरौ' 'पीनपीव्नी तु स्थूलपीवरे' इत्यमरः । मीवर इति । डु मीञ् हिंसायामित्यस्मादपि ष्वरचि साधुः । चीवरमिति । चिञ्चयने इत्यस्मात्श्नुविकरणात्ष्वरचि दीर्घो निपात्यत इत्यर्थः । तीवर इति । तायृ पूजानिशामनयोरित्यस्मात् ष्वरचि 'लोपो व्योः' इति यलोपे, ईत्त्वं निपात्यते । यद्वा तीवधातो प्रत्यये 'लोपो व्योः' इति वलोपे रूपम् । नीवर इति । णीञ्प्रापणे इत्यस्मात् ष्वरचि रूपम् । गह्वरेत्यत्राह—गाहतेरिति । गाहू विलोडने इत्यस्मादिति भावः । 'गह्वरं गण्डशैलास्तु' इत्यमरः । षित्वान्ङीषि गह्वरीति रूपम् । 'विपुला गह्वरी धात्री' इत्यमरः । कट्वरेति । कटे वर्षादौ, अस्मात्प्रत्ययः । संयद्वर इत्यत्राह—यमेर्दकार इति । इण्सिञ्जि । इण्गतौ, षिञ्बन्धने, जि जये, दीङ्क्षये, उष दाहे, अव रक्षणे, एभ्यो नक्प्रत्यय इत्यर्थः । कित्वान्न गुणः । इन इति । 'इनो भगो धामनिधिश्चांशुमाल्यब्जनीपतिः । इनः सूर्ये प्रभौ राजा' इत्यमरः । जिन इति । 'मारजिल्लोकजिज्जिनः' इत्यमरः । दीन इति । 'निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः' ।

काणः । जिनोऽर्हन् । दीनः । उष्णः । ऊनः । २८३ । **फेनमीनौ** । एतौ निपात्येते । स्फायतेः फेनः । मीनः । २८४ । **कृषेर्वर्णे** । कृष्णः । २८५ । **बन्धेर्ब्रधिबुधौ च** । ब्रध्नः । बुध्नः । २८६ । **धापॄवस्यज्यतिभ्यो नः।** 'धाना भृष्टयवे स्त्रियः' । पर्णं पत्रम् । पर्णः किंशुकः । 'वस्नो मूल्ये वेतने च' । अजेर्वी । वेनः । अन्न आदित्यः । बाहुलकात् श्रणोतेः-श्रोणः पङ्गुः । २८७ । **लक्षेरट् च** । लक्षेश्चुरादिण्यन्ताच्च स्यात्तस्याऽडागमश्च । चान्मुडित्येके । लक्षणं लक्ष्मणं नाम्नि चिह्ने च । लक्षणो लक्ष्मणश्च रामभ्राता । 'लक्षणा हंसयोषायां सारसस्य च लक्ष्मणा' ।२८८। **वनेरिच्चोपधायाः** । वेन्ना नदी । २८९ । **सिवेष्टेर्यू च** । दीर्घोच्चारणसामर्थ्यान्न गुणः । स्यून आदित्यः । बाहुलकात् केवलो नः । ऊठ् । अन्तरङ्गत्वाद्यण् । गुणः । स्योनः । २९० । **कॄवॄजॄसिद्रु-**

---

**त.]** 'ज्वरत्वरे'त्यूठ् । ऊनमसंपूर्णम् । **फेन** । स्फायी वृद्धौ, अस्य फे इत्यादेशः 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः । मीञ् हिंसायाम् । 'मीनो राश्यन्तरे मत्स्ये' इति विश्वः । **कृषेः** । कृष विलेखने अस्माद्वर्णे वाच्ये नक् स्यात् । 'कृष्णः सत्यवतीपुत्रे केशवे वायसेऽर्जुने । कृष्णा स्याद्द्रौपदीनीलीकणाद्राक्षासु योषिति । मेचके वाच्यलिङ्गः स्यात्क्लीबे मरिचलोहयोः' इति मेदिनी । **बन्धेः** । बन्ध बन्धने अस्मान्नक् । 'भास्करोऽहस्करो ब्रध्नः प्रभाकरदिवाकरौ' इत्यमरः । 'बुध्नो ना मूलरुद्रयोः' इति मेदिनी । **धापॄ** । डुधाञ् धारणादौ, पॄ पालनादौ, वस निवासे, अज गतौ, अत सातत्यगमने, एभ्यो नः स्यात् । नक्प्रत्यये सति तु वस्न इत्यत्र संप्रसारणं स्यात् । वेन इत्यत्र तु गुणो न स्यादिति भावः । 'धाना भृष्टयवे प्रोक्ता धान्याकेऽभिनवोद्भिदि' इति विश्वः । 'पर्णं पत्रं किंशुके ना' इति मेदिनी । 'वस्नस्त्ववक्रये पुंसि वेतने स्यान्नपुंसक'मिति च । वेनः लुण्टाकः प्रजापतिश्च । **लक्षेः** । लक्ष दर्शनाङ्कनयोः । **लक्ष्मणमित्यादि** । लक्षणलक्ष्मणशब्दौ द्वावपि नामचिह्नयोः क्लीबौ । रामभ्रातरि तु पुंलिङ्गौ । हंसयोषायां लक्षणा, सारसस्य योषायां तु लक्ष्मणेति व्यवस्थेत्यर्थः । 'लक्षणं नाम्नि चिह्ने च सौमित्रिरपि लक्षणः । लक्ष्मणं लाञ्छने नाम्नि रामभ्रातरि लक्ष्मणः' इति विश्वः । 'लक्ष्मणो लक्षणोऽपि चे'ति द्विरूपेषु च विश्वः । 'लक्षणं नाम्नि चिह्ने च सारस्यां लक्षणा क्वचित् । लक्ष्मणा त्वौषधीभेदे सारस्यामपि योषिति । रामभ्रातरि पुंसि स्यात्सश्रीके चाभिधेयव'दिति मेदिनी । कोशे तु 'सारस्यामपि लक्षणा' इति निर्मकारः पाठः स्वीकृतः । **वनेः** । वन संभक्तावस्मान्नः, उपधाया इत्वं च । **वेन्नेति** । लघूपधगुणः । **सिवेः** । षिवु तन्तुसन्ताने । **बाहुलकादिति** । एतच्च 'छ्वोः शूड्' इति सूत्रे वृत्तौ 'येन विधिः' इति सूत्रे कैयटग्रन्थे च स्पष्टम् । **यणिति** । लघूपधगुणे कृते त्वेकारस्याऽयादेशे ऊठोऽपि 'सार्वधातुके'त्यादिना गुणे कृते सयोन इति स्यादिति भावः । 'स्योनः किरणसूर्ययोः' इति मेदिनी । **कॄवॄ।**

---

**बा.]** इत्यमरः । **ऊन इति** । ऊयधातोः रूपम् । नकः कित्वात् 'ज्वरत्वर' इत्यूठ् । **फेनमीनौ** । स्फायी वृद्धौ, मीञ् हिंसायाम्, आभ्यां नकि एतौ निपात्येते इत्यर्थः । आद्ये स्फाय् इत्येतस्य फे इत्यादेशः । 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः । **कृषेर्वर्णे** । कृष विलेखने, अस्माद्वर्णेऽभिधेये नक्स्यादित्यर्थः । 'कृष्णे नीलाऽसितश्यामकालश्यामलमेचकाः' इत्यमरः । **बन्धेर्बुधिब्रधी च** । बन्ध बन्धने, अस्मान्नक्स्यात्, प्रकृतेर्बुधि ब्रधि इत्यादेशौ च भवत इत्यर्थः । **ब्रध्न इति** । 'भास्करोऽहस्करो ब्रध्नः' इत्यमरः । **बुध्न इति** । 'शिरोऽग्रं शिखरं वा ना मूलं बुध्नोऽङ्घ्रिनामकः' इत्यमरः । **धापॄवस्यज्यतिभ्यो नः** । डु धाञ्धारणपोषणयोः, वस निवासे, अज गतौ, अत सातत्यगमने, एभ्यो नप्रत्यय इत्यर्थः । नकि प्रकृते नप्रत्ययविधानं वेन इत्यादौ गुणार्थं, वस्न इत्यत्र संप्रसारणाऽभावार्थं च । धाना इत्यत्र अमरकोशमाह—**धाना भृष्टयवे स्त्रिय इति** । **वस्न इति** । 'मूल्यं वस्नोऽप्यवक्रयः' इत्यमरः । **वेन इति** । अजेर्वीआदेशः । **श्रोण इति** । 'पृश्निरल्पतनौ श्रोणः पङ्गौ मुण्डस्तु मुण्डिते' इत्यमरः । **लक्षेरट् च** । लक्ष दर्शनाङ्कनयोः, लक्ष आलोचने, आभ्यां चुरादिण्यन्ताभ्यां नप्रत्ययः स्यादित्यर्थः, अडागमश्च प्रकृतेः । लक्ष्मण इति रूपसिद्ध्यर्थमाह—**चान्मुडिति** । **वनेरिच्चोपधायाः** । वन षण संभक्तौ, अस्मान्नप्रत्ययः, उपधाया इत्वं चेत्यर्थः । **वेन्नेति** । उपधाया इत्वे गुणः । **सिवेष्टेर्यू च** । षिवु तन्तुसन्ताने, अस्मान्नप्रत्ययः, टेरिव् इत्यस्य स्थाने यूआदेशश्चेत्यर्थः । स्यून इत्यत्र यू आदेशे कृते 'सार्वधातुकार्धधातुकयोः' इति गुणमाशङ्क्याह **दीर्घोच्चारणसामर्थ्यादिति** । यदि गुण इष्टस्तर्हि यु इति ह्रस्वमेव विदधीत, गुणे कृते विशेषाऽभावात् । एवं सति दीर्घोच्चारणं गुणाऽभावार्थं विज्ञायेतेति भावः । ननु तर्हि कथं स्योन इति, अत्राह—**बाहुलकात् केवलो न इति** । 'यू' आदेशरहित इत्यर्थः । एवंच नप्रत्यये छ्वोरिति वस्य ऊठि गुणात्पूर्वमन्तरङ्गत्वाद्यणि गुणे च रूपमिति भावः । **कॄवॄजॄसिद्रु** । कॄ विक्षेपे, वृञ्वरणे, वॄ इति पाठे तु वॄ वरणे, जॄष्वयोहानौ, षिञ्बन्धने, द्रु गतौ, पन स्तुतौ,

---

**शे.]** सिवेष्टेः । ऊकारादेशेनैव सिद्धे यूकरणं स्पष्टार्थम् । **स्योन इति** । अनित्यत्वात् 'वार्णे'त्यस्या अप्रवृत्तेर्नोपधागुणः ।

पन्यनिस्वपिभ्यो नित् । कर्णः । वर्णः । 'जर्णश्चन्द्रे च वृक्षे च' । सेना । द्रोणः । पन्नो नीचैर्गतिः । अन्नमोदनः । स्वप्नो निद्रा । २९१ । **धेट इच्च** । 'धेनः सिन्धुर्नदी धेना' । २९२ । **तृषिशुषिरसिभ्यः कित्** । तृष्णा । शुष्णः सूर्यो वह्निश्च । रस्नं द्रव्यम् । २९३ । **सुञो दीर्घश्च** । सूना वधस्थानम् । २९४ । **रमेस्त च** । रमयतीति रत्नम् । २९५ । **रास्नासास्नास्थूणावीणाः** । रास्ना गन्धद्रव्यम् । सास्ना गोगलकम्बलः । स्थूणा गृहस्तम्भः । वीणा वल्लकी । २९६ । **गादाभ्यामिष्णुच्** । गेष्णुर्गायनः । देष्णुर्दाता । २९७ । **कृत्यशूभ्यां क्स्नः** । कृत्स्नम् । अक्ष्णमखण्डम् । २९८ । **तिजेर्दीर्घश्च** । तीक्ष्णम् । २९९ । **श्लिषेरच्चोपधायाः** । श्लक्ष्णम् । ३०० । **यजिमनिशुन्धिदसिजनिभ्यो युच्** । यज्युरध्वर्युः । 'मन्युर्दैन्ये क्रतौ क्रुधि' । शुन्ध्यु-

---

त.]कॄ विक्षेपे, वृञ् वरणे, दीर्घपाठे तु वॄ वरणे, जॄष् वयोहानौ, दिवादिः । जॄ इति क्र्यादौ चुरादौ च । षिञ् बन्धने, द्रु गतौ, पन स्तुतौ, अन प्राणने, ञिष्वप् शये, एभ्यो नप्रत्ययो नित्स्यात् । 'कर्णः पृथाज्येष्ठसुते सुवर्णालौ श्रुतावपि' इति विश्वमेदिन्यौ । 'वर्णो द्विजादिशुक्लादियशोगुणकथासु च । स्तुतौ ना न स्त्रियां भेदे रूपाक्षरविलेखने' इति मेदिनी । विश्वमेदिनीस्थमाह—**जर्णश्चन्द्र इति** । 'जर्णो जीर्णद्रुमेन्दुषु' इति हेमचन्द्रः । 'ध्वजिनी वाहिनी सेना' इत्यमरः । 'द्रोणोऽस्त्रियामाढके स्यादाढकादिचतुष्टये । पुमान्कृपीपतौ कृष्णकाकेऽस्त्री नीवृदन्तरे । स्त्रियां काष्ठाम्बुवाहिन्यां गवादन्यामपीष्यते' । 'अन्नं भक्ते च भुक्ते स्या'दिति मेदिनी । 'स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्' इति मेदिनी । **धेटः** । धेट् पाने अस्मान्नः स्यादिच्चान्तादेशः । 'धेना नद्यां नदे पुमा'निति मेदिनी । 'धेनः समुद्रे नद्यां च धेना' इति विश्वः । श्लोको धारा इत्यादिषु वाङ्नामसु धेनेति वैदिकनिघण्टौ पठितम् । अत एव 'धेना जिगाति दाशुषे' 'इन्द्र धेनाभिरिह मादयस्व' इत्यादिमन्त्रेषु धेना वागिति व्याख्यातं भाष्ये । **तृषि** । ञितृषा पिपासायाम्, शुष शोषणे, रस शब्दे । 'तृष्णा लिप्सापिपासयोः' इति विश्वः । **सुञः** । षुञ् अभिषवे अस्मान्नः स्याद्धातोर्दीर्घश्च । 'सूनाऽधोजिह्विकापि चे'ति नान्तेऽमरः । 'सूनं प्रसवपुष्पयोः । सूना पुत्र्यां वधस्थानगलकण्ठिकयोः स्त्रिया'मिति मेदिनी । **रमेः** । रमेर्ण्यन्तान्नः स्यात्तकारश्चाऽन्तादेशः । 'रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसक'मिति मेदिनी । **रास्ना** । रस आस्वादने उपधादीर्घः । 'रास्ना तु स्याद्भुजङ्गाक्ष्यामेलापर्ण्यामपि स्त्रिया'मिति मेदिनी । षस स्वप्ने उपधादीर्घः । 'सास्ना तु गलकम्बलः' इत्यमरः । 'सास्ना गोगलकम्बलः' इति पाठान्तरम् । ष्ठा गतिनिवृत्तावित्यस्य ऊत्वं प्रत्ययस्य णत्वं च । 'अथ स्थूणा स्यात्सूर्म्यां स्तम्भे गृहस्य चे'ति मेदिनी । सूर्मी लोहप्रतिमा । वी गत्यादिषु । गुणाऽभावो णत्वं च । 'वीणा विद्युति वल्लक्या'मिति मेदिनी । **गादाभ्याम्** । गै शब्दे, डुदाञ् दाने । 'गेष्णुर्नटे गायके च देष्णुर्दातरि दुर्दमे' इति विश्वः । **कृत्यशू** । कृती वेष्टने, अशू व्याप्तौ । 'कृत्स्नं सर्वाम्बुकुक्षिषु' इति मेदिनी । **तिजेः** । तिज निशाने अस्मात्क्स्नः, धातोर्दीर्घश्च । 'तीक्ष्णं सामुद्रलवणे विषलोहाऽऽजिमुष्कके । क्लीबं यवाग्रके पुंसि तिग्मात्मत्यागिनोस्त्रिषु' इति मेदिनी । **यजि** । यज देवपूजादौ, मन ज्ञाने, शुन्ध शुद्धौ, दसु

---

बा.]अन प्राणने, ञि ष्वप् शये, एभ्यो नप्रत्ययः स्यात्, स च निदित्यर्थः । नित्त्वं स्वरार्थम् । **कर्ण इति** । 'रषाभ्याम्' इति णत्वम् । **धेट इच्च** । धेट् पाने, अस्मान्नप्रत्ययः स्यात्, इकारश्चान्तादेश इत्यर्थः । **धेन इति** । इकारस्य गुणे रूपम् । इत्वाऽविधाने तु आदेच इत्यात्वं स्यादिति भावः । **तृषिशुषिरसिभ्यः** । ञि तृषा पिपासायां, शुष शोषणे, रस शब्दे, एभ्यो नप्रत्ययः स्यात्, स च किदित्यर्थः । **तृष्णेति** । कित्त्वान्न गुणः । **सुञो दीर्घश्च** । षुञ् अभिषवे, अस्मान्नप्रत्ययः स्याद्धातोर्दीर्घश्चेत्यर्थः । **सूनेति** । धातोर्दीर्घविधिसामर्थ्यान्न गुणः, किदित्यनुवर्तनाद्वा । 'सूनाऽधोजिह्विकापि च' इत्यमरः । **रमेस्त च** । रमु क्रीडायामस्माण्ण्यन्तान्नप्रत्ययः स्यात्, तकारोऽन्तादेशश्चेत्यर्थः । रमेरिति ण्यन्तस्य निर्देशः । मित्त्वादुपधाह्रस्वः । **रास्नासास्ना** । रस आस्वादने, षस सस्ति स्वप्ने, ष्ठा गतिनिवृत्तौ, वी गतिव्याप्तिप्रजनादिषु, एभ्यो नप्रत्यये इत्थं निपात्यन्त इत्यर्थः । **रास्नेति** । रसधातोः नप्रत्यये उपधादीर्घ इति भावः । 'नाकुली सरसा रास्ना' इत्यमरः । **सास्नेति** । उपधादीर्घो निपात्यते । 'सास्ना तु गलकम्बले' इत्यमरः । **स्थूणेति** । ष्ठा गतिनिवृत्तावित्यस्य रूपम् । प्रत्ययसन्नियोगेन धातोरूत्वं, प्रत्ययस्य णत्वं च निपात्यते । 'स्थूणा स्तम्भे च वेश्मनः' इत्यमरः । **वीणेति** । वीधातोः रूपम् । णत्वं निपात्यते । **गादाभ्यामिष्णुच्** । गै शब्दे, डु दाञ् दाने, आभ्यां इष्णुच्प्रत्यय इत्यर्थः । **गेष्णुरिति** । आद्गुणे रूपम् । **कृत्यशूभ्यां क्स्नः** । कृती छेदने, अशू व्याप्तौ आभ्यां क्स्नप्रत्यय इत्यर्थः । **कृत्स्नमिति** । कित्त्वान्नोपधागुणः । **अक्ष्णमिति** । व्रश्चेति षत्वे, षढोरिति कत्वे, कवर्गात्परत्वात्षत्वे, रषाभ्यामिति णत्वे च रूपम् । **तिजेर्दीर्घश्च** । तिज निशाने, अस्मात्क्स्नप्रत्ययः, धातोर्दीर्घश्चेत्यर्थः । **श्लिषेरच्चोपधायाः** । श्लिष आलिङ्गने अस्मात्क्स्नप्रत्ययः, धातोरुपधाया अकारश्चेत्यर्थः । **यजिमनि** । यज देवपूजनादौ, मन ज्ञाने, शुन्ध शुद्धौ, दसु उपक्षये, जनी

रश्मिः । दस्युस्तस्करः । जन्युः शरीरी । ३०१ । **भुजिमृङ्भ्यां युक्त्युकौ** । 'भुज्युर्भाजनम् । मृत्युः । ३० । **सर्तेरयुः** । सरयुर्नदी । अयूरिति पाठान्तरम् । सरयूः । ३०३ । **पानीविषिभ्यः पः** । पाति रक्षन्त्यस्मादात्मानमिति पापम् । तद्योगात्पापः । नेपः पुरोहितः । बाहुलकाद्गुणाऽभावे नीपो वृक्षविशेषः । वेष्पः पानीयम् । ३०४ । **च्युवः किच्च** । च्युपो वक्त्रम् । ३०५ । **स्तुवो दीर्घश्च** । स्तूपः समुच्छ्रायः । ३०६ । **सुशृभ्यां निच्च** । चान्कित् । सूपः । बाहुलकादूत्वम् । शूर्पम् । ३०७ । **कुयुभ्यां च** । कुवन्ति मण्डूका अस्मिन् कूपः । युवन्ति बध्नन्त्यस्मिन्पशुमिति यूपो यज्ञस्तम्भः । ३०८ । **खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः** । खसैते पप्रत्ययान्ता निपात्यन्ते । खनतेर्नकारस्य षत्वम् । 'खष्पौ क्रोधबलात्कारौ' । शीलतेर्ह्रस्वः । शिल्पं कौशलम् । शसु हिंसायाम् । निपातनात्षत्वम् । शष्पं बालतृणं, प्रतिभाक्षयश्च । बाधतेः षः । 'बाष्पो नेत्रजलोष्मणोः' । बाष्पं च । रौतेर्दीर्घः । 'रूपं स्वभावे सौन्दर्ये' । पृ । पर्पं गृहं बालतृणं पङ्गुपीठं च । तल प्रतिष्ठाकरणे । चुरादिणिचो लुक् । 'तल्पं शय्याऽट्टदारेषु' । ३०९ । **स्तनिहृषिपुषिगदिमदिभ्यो णेरिलुच्** । 'अयाम-

---

त.] उपक्षये, जनी प्रादुर्भावे । 'दस्युश्चौरे रिपौ पुंसि' इति मेदिनी । 'अथ जन्युः स्यात्पुंसि प्राण्यग्निधातृषु' इति च । **भुजि** । भुज पालनादौ, मृङ् प्राणत्यागे, आभ्यां यथासंख्यं युक्त्युकौ स्तः । 'मृत्युर्ना मरणे यमे' इति मेदिनी । **सर्तेः** । सृ गतौ । **पानी** । पा रक्षणे, णीञ् प्रापणे, विष्लृ व्याप्तौ । 'नीपः कदम्बबन्धूकनीलाऽशोकद्रुमेऽपि च' इति मेदिनी । **च्युवः** । च्युङ् गतौ । धातूनामनेकार्थत्वादिह भाषणे । च्यवन्ते भाषन्तेऽनेनेति विग्रहः । दशपाद्यां तु 'चुपः किच्चे'ति पठ्यते । चुप मन्दायां गतौ । चोपतीति च्युपः मन्दगमनकर्ता । **स्तुवः** । ष्टुञ् स्तुतौ । अस्मात्पः स्याद्धातोर्दीर्घश्च । **सुशृ** । षुञ् अभिषवे, शॄ हिंसायाम् । आभ्यां पः स्यात्स च निद्भवति । निस्त्वं तु स्वरार्थम् । 'सूपो व्यञ्जनसूदयोः' इति मेदिनी । **शूर्पमिति** । बाहुलकादुत्वं रपरत्वं 'हलि च' इति दीर्घः । 'प्रस्फोटनं शूर्पमस्त्री' इत्यमरः । **कुयु** । कु शब्दे, यु मिश्रणे । आभ्यां पः, स च निद्धातोर्दीर्घत्वं च । **खष्पशिल्प** । खनु अवदारणे, शील समाधौ, बाधृ लोडने, रु शब्दे, पॄ पालनादौ । 'खष्पः क्रोधे बलात्कृतौ' इति विश्वः । 'शष्पं बालतृणेऽपि च । पुंसि स्यात्प्रतिभाहानौ' इति मेदिनी । विश्वोक्तिमाह—**बाष्प इति** । 'बाष्पमूष्मणि चाश्रुणि' इति कोशान्तरमभिप्रेत्याह—**बाष्पं चेति** । 'रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोः । ग्रन्थवृत्तौ नाटकादावाकारश्लोकयोरपि' इति विश्वमेदिन्यौ । 'तल्पमट्टे कलत्रे च शयनीये च न द्वयोः' इति मेदिनी । अमरोक्तिमाह—**तल्पं शय्येति** । **स्तनिहृषि** । स्तनगदी देवशब्दे चुरादिण्यन्तौ, हृष तुष्टौ, पुष पुष्टौ, मदी हर्षग्लेपनयोः, घटादिः, एभ्यो ण्यन्तेभ्यो इलुच् स्यात् । 'स्तनयित्नुः पुमान्वारिधरेऽपि स्तनितेऽपि चे'ति मेदिनी । 'स्तनयित्नुः पयोवाहे तद्ध्वनौ मृगरोगयोः' इति विश्वः । 'हर्षयित्नुः सुते हेम्नि पोषयित्नुः पिके द्विजे' इति च । 'गदयित्नुः पुमान्कामे

---

बा.] प्रादुर्भावे, एभ्यो युच्प्रत्यय इत्यर्थः । **यज्युरिति** । 'युवोरनाकौ' इत्यनादेशस्तु न, तत्र यु वु इति उकारेत्संज्ञकयोरेव ग्रहणात् । **मन्युरिति** । 'मन्युशोकौ तु शुक्स्त्रिया'मित्यमरः । **भुजिमृङ्भ्याम्** । भुज पालनाभ्यवहरणयोः, मृङ् प्राणत्यागे, आभ्यां क्रमाद्युक्त्युकौ प्रत्ययौ स्तः । **भुज्युरिति** । युकः कित्त्वान्न गुणः । एवं **मृत्युरि**त्यपि । **सर्तेरयुः** । सृ गतौ, अस्मात् अयुप्रत्यय इत्यर्थः । **सरयुरिति** । अयुप्रत्यये गुण इति भावः । **पानीविषिभ्यः पः** । पा पाने, णीञ् प्रापणे, विष्लृ व्याप्तौ, एभ्यः पप्रत्यय इत्यर्थः । नीप इति सिद्धवदर्थमाह—**बाहुलकादिति** । 'तूलं च नीपप्रियककदम्बास्तु हलिप्रिये' इत्यमरः । **च्युवः किच्च** । च्युङ्गतौ, अस्मात् पः स्यात्स च कित्स्यात्, कित्त्वान्न गुणः । **स्तुवो दीर्घश्च** । ष्टुञ् स्तुतौ, अस्मात्पः स्यात्, धातोर्दीर्घश्चेत्यर्थः । 'फेनस्तूपौ सयूपकौ' इत्यमरः । **सुशृभ्यां निच्च** । षुञ् अभिषवे, शॄ हिंसायां, आभ्यां पः स्यात्, स च नित् भवति, चाद्दीर्घश्चेत्यर्थः । **सूप इति** । धातोर्दीर्घविधिसामर्थ्यान्न गुणः । शूर्पमित्यत्राह—**बाहुलकादुत्वमिति** । रपरत्वं दीर्घत्वं चेति भावः । **कुयुभ्यां च** । कु शब्दे, यु मिश्रणे, आभ्यां पः, स च नित्, धातोर्दीर्घत्वं चेत्यर्थः । 'तूदस्तु यूपः क्रमुकः' इत्यमरः । **खष्पशिल्प** । खनु अवदारणे, शील समाधौ, शसु हिंसायां, बाधृ लोडने, रु शब्दे, पॄ पालनपूरणयोः, तल प्रतिष्ठाकरणे चुरादिण्यन्तः, एते पप्रत्ययान्ता इत्थं निपात्यन्त इत्यर्थः । निपातनमेवाह—**खनतेर्नकारस्येति** । 'खष्पः क्रोधे बलात्कारे' इति विश्वकोशादाह—**खष्पौ क्रोधबलात्काराविति** । शिल्पमित्यत्राह—**शीलतेर्ह्रस्व इति** । ह्रस्वनिपातनसामर्थ्यात्, किदित्यनुवर्तनाद्वा गुणाऽभावः । शष्पमित्यत्राह—**निपातनात्षत्वमिति** । 'शष्पं बालतृणं घासः' इत्यमरः । बाष्प इत्यत्राह—**बाधतेरिति** । 'बाष्पमूष्माश्रुकशिपु' इत्यमरः । शेषं स्पष्टम् । **स्तनिहृषिपुषि** । स्तन देवशब्दे, हृष तुष्टौ, पुष पुष्टौ, मदी हर्षग्लेपनयोः, गदी देवशब्दे, एभ्यो

न्ते'ति णेरयादेशः । स्तनयित्नुः । हर्षयित्नुः । पोषयित्नुः । गदयित्नुर्वावदूकः । मदयित्नुर्मदिरा । ३१० । **कृहनिभ्यां क्त्नुः** । कृत्नुः शिल्पी । हत्नुर्व्याधिः शस्त्रं च । ३११ । **गमेः सन्वच्च** । जिगत्नुः । ३१२ । **दाभाभ्यां नुः** । दानुर्दाता । भानुः । ३१३ । **वचेर्गश्च** । वग्नुः । ३१४ । **धेट इच्च** । धयति सुतानिति धेनुः । ३१५ । **सुवः कित्** । 'सूनुः पुत्रेऽनुजे रवौ' । ३१६ । **जहातेर्द्वे अन्तलोपश्च** । जह्नुः । ३१७ । **स्थो णुः** । 'स्थाणुः कीले स्थिरे हरे' । ३१८ । **अजिवृरीभ्यो निच्च** । अजेर्वी । वेणुः । 'वर्णुर्नददेशभेदयोः' । 'रेणुर्द्वयोः स्त्रियां धूलिः' । ३१९ । **विषेः किच्च** । विष्णुः । ३२० । **कृदाधारार्चिकलिभ्यः कः** । बाहुलकान्न कस्येत्संज्ञा ।

---

त.]जल्पाके कार्मुकेऽपि च' इति विश्वमेदिन्यौ । 'मदयित्नुः कामदेवे पुमान्मद्ये नपुंसक'मिति मेदिनी । **कृहनि** । डुकृञ् करणे, हन हिंसागत्योः । **कृत्नुरिति** । कर्तेत्यर्थः । कित्त्वान्न गुणः । **हत्नुरिति** । 'अनुदात्तोपदेशे'त्यादिनाऽनुनासिकलोपः । एवमुत्तरत्र गमेः क्नुप्रत्यये जिगत्नुरित्यत्रापि बोध्यः । **शस्त्रं चेति** । चाद्धन्ता । दशपादीवृत्तौ तु क्नुरिति तकाररहितं पठित्वा कृणुः कर्ता । इनुर्वेत्र्यैकदेशः । बाहुलकान्नलोपः । गमेस्तु जिगत्नुरित्युदाहृतं तत्सर्वं प्रामादिकम् । लक्ष्यविसंवादात् । तथा च श्रूयते—'सुरूपकृत्नुमूतये' 'ज्येष्ठराजं भरे कृत्नु' 'अयं कृत्नुरगृभीतः' 'मा नो वधाय हत्नवे' 'मृगं न भीममुपहत्नुमुग्रम्' 'यो नः सनुत्य उत वा जिगत्नु' रित्यादि । अतएव हन्तिधातुं विवृण्वता माधवेन उपहत्नुरित्युदाहृत्य क्त्नोः कित्त्वादनुनासिकलोप इत्युक्तम् । [यत्तु तेनैव 'सुरूपकृत्नु'मिति मन्त्रं विवृण्वता तकारोपजनश्छान्दस इत्युक्तं, तद्दशपादीवृत्तिमनुसृत्य, नतु वस्तुस्थितिमनुरुध्येति सहृदयैराकलनीयमित्याहुः] । **दाभाभ्याम्** । डुदाञ् दाने, भा दीप्तौ । 'दानुर्दातरि विक्रान्ते' इति मेदिनी । 'भानू रश्मिदिवाकरौ' इत्यमरः । **वचेः** । वच परिभाषणे । वग्नुर्वाचालः । **धेटः** । धेट् पाने अस्मान्नुः स्यादिकारश्चान्तादेशः । 'धेनुः स्यान्नवसूतिका' इत्यमरः । **सुवः** । षूङ् प्राणिप्रसवे । अस्मान्नुः स्यात्स च कित् । विश्वोक्तिमाह—**सूनुः पुत्रे इति** । **जहातेः** । ओहाक् त्यागे । 'जह्नुः स्यात्पुंसि राजर्षिभेदे च मधुसूदने' इति मेदिनी । **स्थो णुः** । ष्ठा गतिनिवृत्तौ । अस्माण्णुः स्यात् । विश्वोक्तिमाह—**स्थाणुरिति** । 'स्थाणुः कीले हरे पुमान् । अस्त्री ध्रुवे' इति मेदिनी । **अजिवृ** । अज गतौ, वृङ् संभक्तौ, री गतिरेषणयोः, एभ्यो णुर्नित्स्यात् । 'वेणुर्नृपान्तरे वंशे' इति विश्वः । 'रेणुः स्त्रीपुंसयोर्धूलौ पुंलिङ्गः पर्पटे मुनः' इति मेदिनी । **विषेः** । विष्लृ व्याप्तौ । अस्माण्णुः स्यात्स च कित् । चान्नित् । नित्त्वादाद्युदात्तत्वम् । विष्णुरिच्छा । 'विष्णुर्नारायणः कृष्णः' इत्यमरः । **कृदा** । डुकृञ् करणे, डुधाञ् धारणपोषणयोः, रा दाने, अर्च पूजायाम्, कल गतौ । 'कर्कः कर्केतने वह्नौ शुक्लाश्वे दर्पणे घटे' इति विश्वमेदिन्यौ । 'राका नद्यन्तरे कच्छ्वां नवजातरजःस्त्रियाम् । संपूर्णेन्दुतिथौ' इति मेदिनी । 'राका तु सरिदन्तरे । राका नवरजःकन्या पूर्णेन्दुः पूर्णिमापि च' इति विश्वः । इह दा धा रा एषां 'केणः' इति ह्रस्वोऽपि बाहुलकात्संज्ञापूर्वकविधेरनित्यत्वाद्वा नेति बोध्यम् । 'अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ' इति विश्वमेदिन्यौ । 'कल्कोऽस्त्री घृततैलादिशेषे दम्भे बिभीतके । विट्-

---

बा.]ण्यन्तेभ्य इत्नुच् स्यात् । इत्नुचि कृते णेरयादेशविधिं स्मारयति—**अयामन्तेति णेरयादेश इति** । 'स्तनयित्नुर्बलाहकः' इत्यमरः । **कृहनिभ्यां क्त्नुः** । डु कृञ् करने, हन हिंसागत्योः, आभ्यां क्त्नुप्रत्यय इत्यर्थः । **कृत्नुरिति** । कित्त्वान्न गुणः । कर्तेत्यर्थः । **हत्नुरिति** । 'अनुदात्तोपदेशवनती'त्यादिना अनुनासिकलोपः । **गमेः सन्वच्च** । गम्लृ गतौ, अस्मात् क्त्नुप्रत्ययः, स च सन्वद्भवतीत्यर्थः । **जिगत्नुरिति** । 'अनुदात्तोपदेशे'त्यादिना अनुनासिकलोपः । सन्वत्त्वात् द्वित्वं, अभ्यासाऽकारस्य इत्वादिकार्यम् । **दाभाभ्यां नुः** । डु दाञ् दाने, भा दीप्तौ, आभ्यां नुप्रत्यय इत्यर्थः । 'भानुर्हंसः सहस्रांशुः' इत्यमरः । **वचेर्गश्च** । वच परिभाषणे, अस्मात् नुप्रत्ययः, गकारश्चान्तादेश इत्यर्थः । **धेट इच्च** । धेट् पाने, अस्मान्नुप्रत्ययः स्यात्, इकारश्चान्तादेशः । 'आदेच' इत्यात्वे प्रसक्ते तदपवादोऽयम् । 'धेनुः स्यान्नवसूतिका' इत्यमरः । **सुवः कित्** । षूङ् प्राणिप्रसवे, अस्मात् नुप्रत्ययः स्यात्, स च किद्भवतीत्यर्थः । **सूनुरिति** । कित्त्वान्न गुणः । **जहातेर्द्वे अन्तलोपश्च** । ओ हाक् त्यागे, अस्मान्नुप्रत्ययः, धातोर्द्वित्वम्, अन्तस्याऽऽकारस्य लोपश्चेत्यर्थः । नुप्रत्ययस्य कित्त्वेऽप्यनजादित्वात् 'आतो लोप इटि च' इत्याकारलोपाऽप्राप्तेरयमारम्भः । **जह्नुरिति** । धातोर्द्वित्वे आलोपे च रूपम् । **स्थो णुः** । ष्ठा गतिनिवृत्तौ, अस्मात् णुः स्यादित्यर्थः । क्वचित्तु स्थाणुरित्येव पाठः । तस्मिन्पाठे यद्यपि अत्र स्थाधातोर्नुप्रत्यये णत्वं निपात्यत इति वक्तुं शक्यते, तथापि उत्तरत्रानुवृत्त्यर्थं णुप्रत्ययविधानमेव वरम् । **अजिवृरी** । अज गतिक्षेपणयोः, वृङ् संभक्तौ, री गतिरेषणयोः, एभ्यो णुर्नित्स्यादित्यर्थः । नित्त्वं स्वरार्थम् । अजधातोर्णुप्रत्यये आह—**अजेर्वी इति** । **वेणुरिति** । 'वेणुमस्करतेजनाः' इत्यमरः । **विषेः किच्च** । विष्लृ व्याप्तौ, अस्मात् णुः स्यात्, स च कित्, चकारात् निच्च । **विष्णुरिति** । कित्त्वान्न गुणः, नित्त्वं स्वरार्थम् । 'विष्णुर्नारायणः कृष्णः' इत्यमरः । **कृदाधारार्चिकलिभ्यः** । डु कृञ् करणे, डु दाञ्

'कर्को धवलघोटकः' । दाको दाता । धाकोऽनड्वानाधारश्च । राका पौर्णमासी । अर्कः । 'कल्कः पापाशये पापे दम्भे विट्किट्टयोरपि' । ३२१ । **सृवृभूशुषिमुषिभ्यः कक्** । 'सृक उत्पलवातयोः' । 'वृकः श्वापदकाकयोः' । भूकं छिद्रम् । शुष्कः । मुष्कोऽण्डम् । ३२२ । **शुकवल्कोल्काः** । शुभेरन्त्यलोपः । शुकः । 'वल्कं वल्कलम-स्त्रियाम्' । उष दाहे । षस्य लः । उल्का । ३२३ । **इण्भीकापाशल्यतिमर्चिभ्यः कन्** । 'एके मुख्यान्य-केवलाः' । 'भेको मण्डूकमेघयो'रिति विश्वमेदिन्यौ । काकः । पाकः शिशुः । शल्कं शकलम् । अत्कः पथिकः, शरीरावयवश्च । मर्कः शरीरवायुः । ३२४ । **नौ हः** । जहातेः कन् स्यान्नौ । निहाका गोधिका । ३२५ । **नौ सदेर्डिच्च** । 'निष्कोऽस्त्री हेम्नि तत्पले' । ३२६ । **स्यमेरीट् च** । स्यमीको वल्मीकः, वृक्षभेदश्च । इट् ह्रस्व इति केचित् । स्यमिकः । ३२७ । **अजियुधुनीभ्यो दीर्घश्च** । 'वीकः स्याद्वातपक्षिणोः' । यूका । धूको

त.] किट्टयोश्च पापे च त्रिपु पापाशये पुनः' इति मेदिनी । बाहुलकाद्गमेरपि कः । 'रङ्कः कृपणमन्दयोः' इति मेदिनी । कपिलकादित्वाल्लत्वं । टाप् । 'लङ्का रक्षःपुरीशाखाशाकिनीकुलटासु च' इति विश्वमेदिन्यौ । **सृवृ** । सृ गतौ, वृञ् वरणे, भू सत्तायाम्, शुष शोषणे, मुष स्तेये । **सृक इति** । 'सृकं संशाय पविमिन्द्र तिग्म'मिति मन्त्रस्य वेद-भाष्ये तु सृकं=सरणशीलं पविं=वज्रं संशाय सम्यक् तीक्ष्णीकृत्येति व्याख्यातम् । 'भूकं छिद्रे च काले चे'ति मेदिनी । 'मुष्को मोक्षकवृक्षे स्यात्संघाते वृषणेऽपि च' इति स एव । 'शुको व्याससुते कीरे रावणस्य च मन्त्रिणि । शिरीष-पादपे पुंसि ग्रन्थिपर्णे नपुंसकम्' । 'वल्कं वल्कलशल्कयोः' इति च । 'उल्का ज्वालाविभावसोः' इति सुभूतिचन्द्रः । **इण्भी** । इण् गतौ, ञिभी भये, कै शब्दे, पा पाने, शल गतौ, अत सातत्यगमने । 'एकं संख्यान्तरे श्रेष्ठे केवले-तरयोस्त्रिषु' इति मेदिनी । 'काकः स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि । शिरोऽवक्षालने मानप्रभेदद्वीपभेदयोः । काका स्यात्काकनासायां काकोलीकाकजङ्घयोः । रक्तिकायां मलय्यां च काकमाच्यां च योषिति । काकं सुरतबन्धे स्यात्का-कानामपि संहतौ' इति मेदिनीविश्वप्रकाशौ । 'पाकः परिणतौ शिशौ । केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च' इति मेदिनी । 'शल्कं तु शकले 'वल्के' इति च । मर्च इति सौत्रो धातुरिति बहवः । मर्च शब्दे चौरादिक इति 'मिदचोऽन्त्यात्परः' इति सूत्रे कैयटः । 'मर्तो मर्तं मर्चयति द्वयेन' इति मन्त्रे मर्चयति विधेयीकरोति भर्त्स-यति वेति वेदभाष्यम् । न चैवं णिलोपस्य स्थानिवद्भावेन कुत्वाऽभावान्मर्क इति न सिध्येदिति वाच्यम्, पूर्वत्रा-सिद्धे तदभावात् । शो तनूकरणे अस्मादपि बाहुलकात्कन् । 'शाको द्वीपान्तरेऽपि च । शक्तौ द्रुमविशेषे च पुमान् हरितके स्त्रियाम्' इति मेदिनी । **नौ हः** । ओहाक् त्यागे । अस्मान्निशब्दे उपपदे कन्स्यात् । 'निहाका गोधिका समे' इत्यमरः । **नौ सदेः** । षद्लृ विशरणे अस्मान्निशब्दे उपपदे कन् स्यात्स च डित् । डित्वाट्टिलोपः । 'सदि-रप्रतेः' इति षत्वम् । 'निष्कमस्त्री साऽष्टहेमशते दीनारकर्षयोः । वक्षोऽलङ्करणे हेममात्रे हेमपलेऽपि च' इति मेदिनी । **स्यमेः** । स्यमु शब्दे अस्मात्कन्स्यात्तस्य च ईडागमः । 'स्यमीका नीलिकायां स्त्री स्यमीको नाकवृक्षयोः' इति मेदिनी । **अजि** । अज गतिक्षेपणयोः, यु मिश्रणे, धूञ् कम्पने, णीञ् प्रापणे, एभ्यः कन् स्यादेषां दीर्घश्च ।

बा.] दाने, डुधाञ् धारणपोषणयोः, रा दाने, अर्च पूजायां, कल शब्दसंख्यानयोः, एभ्यः कप्रत्ययः स्यादित्यर्थः । ननु कप्रत्ययावयवककारस्य 'लशक्वतद्धिते' इतीत्संज्ञा प्राप्नोतीत्यत आह—**बाहुलकादिति** । 'पृष्ठ्यः स्थौरी सितः कर्कः' इत्यमरः । **दाको दातेति** । कर्तरि प्रत्ययादिति भावः । **राकेति** । 'पूर्णे राका निशाकरे' इत्यमरः । दाक धाक राक इत्यत्र यद्यपि 'केऽणः' इत्यनेन ह्रस्वः प्राप्नोति, तथापि बाहुलकान्न भवति । **सृवृभूशुषिमुषिभ्यः कक्** । सृ गतौ, वृञ् वरणे, भू सत्तायां, शुष शोषणे, मुष स्तेये, एभ्यः कक्प्रत्यय इत्यर्थः । कित्त्वं गुणाऽभावा-र्थम् । **सृक इति** । **शुकवल्कोल्काः** । शुभ शुम्भ भाषणे, वल वल्ल संवरणे, उष दाहे, एते कक्प्रत्ययान्ता निपात्यन्त इत्यर्थः । निपातनमेवाह—**शुभेरन्त्यलोप इति** । भलोप इत्यर्थः । कित्वान्न गुणः । 'ग्रन्थिपर्णं शुकं बर्हपुष्पं स्थौणेयकुक्कुरे' इत्यमरः । **वल्कमिति** । 'वल्कं वल्कलमस्त्रियाम्' इत्यमरः । **उल्केति** । 'प्राचिकोल्का पिपीलिका' इत्यमरः । **इण्भीकापा** । इण् गतौ, ञि भी भये, कै शब्दे, पा पाने, शल गतौ, अत सातत्यगमने, मर्च शब्दे चुरादिः, एभ्यः कन्प्रत्ययः स्यात् । नित्त्वं स्वरार्थम् । **नौ हः** । नावुपपदे ओ हाक् त्यागे इत्यस्माद् कन् स्यादित्यर्थः । 'निहाका गोधिका समे' इत्यमरः । **नौ सदेर्डिच्च** । नावुपपदे षद्लृधातोः कन्स्यात्, स च डिद्भवतीत्यर्थः । डित्वाट्टिलोपः । षत्वं 'सदिरप्रतेः' इत्यनेन । निष्कमिति रूपम् । **स्यमेरीट् च** । स्यमु शब्दे अस्मात्कन्स्यात्, तस्य चेडागमः । स्यमीक इति रूपम् । **अजियुधूनीभ्यो** । अज गतिक्षेपणयोः, यु मिश्रणेऽमिश्रणे च, धूञ् कम्पने, णीञ् प्रापणे, एभ्यः कन्स्यादेषां दीर्घश्चेत्यर्थः । **वीक इति** । अजधातोः कनि प्रकृतेर्वीभावे, तस्य

शे.] 'दाके'त्यादौ 'केऽणः' इति ह्रस्वो न, 'न कपी'ति साहचर्येण तद्धितस्यैव कस्य तत्र ग्रहणात् ।

वायुः। नीको वृक्षविशेषः। ३२८। ह्रियो रश्च लो वा। 'ह्रीका ह्लीका त्रपा मता'। ३२९। शकेरुनोन्तोन्त्युनयः। उन उन्त उन्ति उनि एते चत्वारः स्युः। शकुनः। शकुन्तः। शकुन्तिः। शकुनिः। ३३०। भुवो झिच्। भवन्तिर्वर्तमानकालः। बाहुलकादवेश्च। अवन्तिः। वदेर्वदन्तिः। 'किंवदन्ती जनश्रुतिः'। ३३१। कन्युच् क्षिपेश्च। चाद्भुवः। क्षिपण्युर्वसन्त इत्युज्ज्वलदत्तः। 'भवन्युः स्वामिसूर्ययोः'। ३३२। अनुङ् नदेश्च। चात्क्षिपेः। नदनुर्मेघः। क्षिपणुर्वातः। ३३३। कृवृदारिभ्य उनन्। 'करुणो वृक्षभेदः स्यात्करुणा च कृपा मता'। वरुणः। दारुणम् [दारुणः]। ३३४। त्रो रश्च लो वा। 'तरुणस्तलुनो युवा'। ३३५। क्षुधिपिशिमिथिभ्यः कित्। क्षुधुनो म्लेच्छजातिः। पिशुनः। मिथुनम्। ३३६। फलेर्गुक् च। फल्गुनः पार्थः। प्रज्ञाद्यणि-फाल्गुनः। ३३७। अशेर्लशश्च। लशुनम्। ३३८। अर्जेर्णिलुक् च। अर्जुनः। ३३९।

---

त.]तत्सामर्थ्याद्गुणाऽभावः। अजेर्वीभावः। ह्रियः। ह्री लज्जायामस्मात्कन्धातोर्दीर्घत्वं च। तत्सामर्थ्याद्गुणाऽभावः। शकेः। शक्लृ शक्तौ। 'शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः' इत्यमरः। 'शकुनस्तु पुमान्पक्षिमात्रपक्षिविशेषयोः। शुभाशंसिनिमित्ते च शकुनं स्यान्नपुंसकम्' इति मेदिनी। 'शकुन्तः कीटभेदे स्याद्भासपक्षिविहङ्गयोः' इति। 'शकुनिः पुंसि विहगे सौबले करणान्तरे' इति च। भुवः। भू सत्तायाम्। अस्मात् झिच् स्यात्। 'झोऽन्तः' 'कृदिकारात्–' इति ङीष्। भवन्ती लटः संज्ञा। [भवन्तीति स्पष्टार्थः]। तथा च 'अस्तिर्भवन्तीपरः प्रयोक्तव्यः' इति भाष्यम्। बाहुलकात्कमेरपि प्रत्ययादिलोपे धातोः कुशब्दादेशः। कुन्तिः। 'इतो मनुष्यजातेः' इति ङीष्। 'कुन्ती पाण्डुप्रियायां च शल्लक्यां गुग्गुलद्रुमे' इति मेदिनी। अवन्तिरित्यादि। अव रक्षणे, वद व्यक्तायां वाचि, आभ्यामपि झिच्। वदन्तिरिति। 'कृदिकारा'दिति वा ङीष्। कन्युच्। क्षिप प्रेरणे, भू सत्तायाम्। 'क्षिपण्युस्तु पुमान् देहे सुरभौ वाच्यलिङ्गकः' इति मेदिनी। 'भुवन्युः स्यात्पुमान्भानौ ज्वलने शशलाञ्छने' इति विश्वमेदिन्यौ। अनुङ्। णद अव्यक्ते शब्दे। अस्मादनुङ्प्रत्ययः स्यात्। क्षिपणुरिति। ङित्त्वाद्गुणाऽभावः। कृवृ। कृ विक्षेपे, वृञ् वरणे, दॄ विदारणे, ण्यन्तः। 'करुणस्तु रसे वृक्षे कृपायां करुणा मता' इति विश्वमेदिन्यौ। 'वरुणस्तरुभेदेऽप्सु प्रतीचीपतिसूर्ययोः' इति विश्वः। 'दारुणं भीषणं भीष्मम्' इत्यमरः। 'दारुणो रसभेदे ना त्रिषु तु स्याद्भयावहे' इति मेदिनी। त्रो रश्च। तॄ प्लवनतरणयोरस्मादुनन्स्यात्। 'तरुणं कुब्जपुष्पे ना रुबके यूनि तु त्रिषु' इति मेदिनी। गौरादित्वान् ङीष्। 'तरुणी तलुनीति च' इति द्विरूपेषु विश्वः। क्षुधि। क्षुध बुभुक्षायाम्, पिश अवयवे, अयं दीपनायामपि। मिथिः सौत्रो धातुः। 'पिशुनो दुर्जनः खलः' इत्यमरः। 'पिशुनं कुङ्कुमे स्मृतम्। कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु। पृक्कायां पिशुना स्त्री स्यात्' इति मेदिनी। 'मिथुनं न द्वयो राशिभेदे स्त्रीपुंसयुग्मके' इति च। फलेः। फल निष्पत्तौ, अस्मादुनन्, गुगागमश्च धातोः। 'फल्गुनस्तु गुडाकेशे नदीजाऽर्जुनभूरुहे। तपस्यसंज्ञमासे तत्पूर्णिमायां च फाल्गुनी' इति मेदिनी। फाल्गुन इति। 'फल्गुनः फाल्गुनोऽर्जुने' इति द्विरूपकोशः। अशेः। अश भोजने अस्मादुनन्, धातोर्लशादेशश्च। लशुनं महाकन्दः। 'लशुना लशुनं वेश्म कश्मलं विश्वमश्ववत्' इति मध्यतालव्येषु विश्वः। लस चेति दन्त्यमध्यपाठस्तु प्रामादिकः। अर्जेः। ऋज गतिस्थानार्जनोपार्जनेषु, अस्माण्ण्य-

---

बा.]दीर्घत्वे दीर्घविधानसामर्थ्याद्गुणाऽभावः। यूकेति। कनि धातोर्दीर्घः। ह्रियो रश्च लो वा। ह्री लज्जायाम्, अस्मात्कन्, धातोर्दीर्घत्वं, रेफस्य लकारश्च वेत्यर्थः। ह्रीकेति। दीर्घविधानसामर्थ्याद्गुणाऽभावः। ह्लीकेति। रेफस्य लकारे रूपम्। शकेरुनोन्तोन्त्युनयः। शक्लृ शक्तौ, अस्मात् उन उन्त उन्ति उनि एते चत्वारः प्रत्ययाः स्युः। 'शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः' इत्यमरः। भुवो झिच्। भू सत्तायामस्मात् झिच् स्यात्। 'झोऽन्तः' इत्यन्तादेशः। भवन्तिरिति। अन्तादेशे गुणेऽवादेशे च रूपम्। 'अस्तिर्भवन्तिपरोऽप्यप्रयुज्यमानोऽस्ती'ति भाष्यम्। अवन्तिरित्यादिसिद्ध्यर्थमाह—बाहुलकादिति। कन्युच् क्षिपेश्च। क्षिप प्रेरणे, चकारात् भवतेरपि कन्युच्प्रत्यय इत्यर्थः। क्षिपण्युरिति। अट्कुप्वाङ्' इति णत्वम्। भुवन्युरिति। कन्युचः कित्त्वाद्गुणाऽभावे उवङादेशे च रूपम्। अनुङ् नदेश्च। नद अव्यक्ते शब्दे। चकारात्क्षिपेरनुङ् स्यात्। क्षिपणुरिति। अनुङो ङित्त्वाद्गुणाऽभावः। कृवृदारिभ्य उनन्। कृ विक्षेपे, वृञ् वरणे, दॄ विदारणे ण्यन्तः, एभ्य उनन्प्रत्यय इत्यर्थः। त्रो रश्च लो वा। तॄ प्लवनतरणयोः, अस्मात् उनन् स्यात्, रेफस्य लकारो वेत्यर्थः। तरुण इति। उननि धातोर्गुणः। 'वयस्थस्तरुणो युवा' इत्यमरः। क्षुधिपिशिमिथिभ्यः कित्। क्षुध बुभुक्षायां, पिश अवयवे, मिथः सौत्रः, एभ्य उनन् कित्स्यादित्यर्थः। क्षुधुन इति। कित्त्वान्न गुणः। फलेर्गुक् च। फल निष्पत्तौ, अस्मादुनन्स्यात्, धातोर्गुगागमश्चेत्यर्थः। फल्गुन इति। अर्जुन इत्यर्थः। ननु कथं फाल्गुन इत्यत आह—प्रज्ञाद्यणि[णो ?]ति। अशेर्लशश्च। अश भोजने, अस्मादुनन्धातो-

**तृणाख्यायां चित्** । 'चित्त्वादन्तोदात्तः । अर्जुनं तृणम् । ३४० । **अर्तेश्च** । अरुणः । ३४१ । **अजियमिशीङ्भ्यश्च** । 'वयुनं देवमन्दिरम्' । यमुना । शयुनोऽजगरः । ३४२ । **वृतृवदिहनिकमिकषिभ्यः सः** । वर्सः । 'तर्सः प्लवसमुद्रयोः' । वत्सः । वत्सम् । वक्षः । हंसः । 'कंसोऽस्त्री पानभाजनम्' । कक्षं नक्षत्रम् । ३५० । **प्लुषेरच्चोपधायाः** । प्लक्षः । ३५१ । **मनेर्दीर्घश्च** । मांसम् । ३५२ । **अशेर्देवने** । अक्षः । ३५३ ।

त.]न्तादुनन् स्यात् णेश्च लुक् । इह 'णेरनिटि' इति णिलोपेनैव सिद्धे णिलुक् चेत्युक्तेः फलं चिन्त्यम् । 'अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः । मातुरेकसुतेऽपि स्याद्धवले पुनरन्यवत् । नपुंसकं तृणे नेत्ररोगे वाप्यर्जुनी गवि । उषायां बाहुदानव्यां कुट्टन्यामपि च क्वचित्' इति विश्वमेदिन्यौ । **अर्तेश्च** । ऋ गतावस्मादुनन्स्यात्स च चित् । 'अरुणोऽव्यक्तरागेऽर्के सन्ध्यारागेऽर्कसारथौ । निःशब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु । अरुणाऽतिविषाश्यामामञ्जिष्ठात्रिवृतासु च' इति मेदिनी । **अजि** । अज गतिक्षेपणयोः, यम उपरमे, शीङ् स्वप्ने, एभ्य उनन् स्यात्स च चित् । अजेर्वीभावः । वीयते गम्यतेऽत्रेति वयुनम् । 'विश्वानि देव वायुनानि विद्वान्' इति मन्त्रे वयुनानि प्रज्ञानानीति वेदभाष्यम् । वैदिकनिघण्टौ प्रज्ञापर्याये प्रशस्यपर्याये च वयुनशब्दः पठितः । 'यमुना शमनस्वसा' इत्यमरः । **वृ तृ** । वृ वरणे, तॄ प्लवनतरणयोः, वद व्यक्तायां वाचि, हन हिंसागत्योः, कमु कान्तौ, कष हिंसायाम् । **वर्सः** । **तर्स इति** । 'तितुत्रे'ति नेट् । षत्वं तु न भवति, बाहुलकेन षत्वे कर्तव्ये प्रत्ययसंज्ञाया अप्रवृत्तेः । कक्षशब्दे तु षत्वं भवत्येव । एतच्च भाष्यकैयटादिपर्यालोचनयोक्तम् । कथं तर्हि सर्वैरप्युणादिवृत्तिकारैरिह षत्वमुदाहृतमिति चेत् । अत्राहुः— अस्तु भाष्यप्रामाण्यात् वर्सं तर्समिति दन्त्यपाठोऽपि साधुः । पक्षे तु षत्वमस्तु । बाहुलकलभ्यषत्वाऽभावस्य पाक्षिकत्वेऽपि बाधकाऽभावात् ,वृषितृषिभ्यां घञि कृते ण्यन्तादेरचि 'घनर्थे कविधान'मिति ण्यन्तात्कप्रत्यये वा कृते वर्षतर्षशब्दयोर्दुर्वारत्वात्, अज्विधौ भयादीनामुपसङ्ख्यानं नपुंसके क्तादिनिवृत्त्यर्थमित्यत्र वर्षमित्याकरे उदाहृतत्वाच्च । तस्मादिह द्विरूपता फलितेति । 'वर्षोऽस्त्री भारतादौ स्याज्जम्बूद्वीपाऽब्दवृष्टिषु । प्रावृट्काले स्त्रियां भूम्नी'ति मेदिनी । 'तर्षो लिप्सोदन्ययोः' इति च । 'पुत्रादौ तर्णके वर्षे वत्सः क्लीबं तु वक्षसी'ति त्रिकाण्डशेषः । 'सद्योजातस्तु तर्णकः' । 'हंसः स्यान्मानसौकसि । निर्लोभनृपविष्ण्वर्कपरमात्मसु मत्सरे । योगभेदे मन्त्रभेदे शारीरमरुदन्तरे । तुरङ्गमप्रभेदे चे'ति मेदिनी । 'कंसोऽस्त्री तैजसद्रव्ये कांस्ये मानेऽसुरे तुना' इति च । 'कंसो दैत्यान्तरे स्मृतः । कांस्ये च कांस्यपात्रे च मानभेदे च कीर्तितः' इति विश्वः । 'कक्षः स्यादन्तरीयस्य पश्चाद्बलपल्लवे । स्पर्धायां ना तु दोर्मूले कच्छवीरुत्तृणेषु चे'ति मेदिनी । प्लुषेः । प्लुष दाहे, अस्मात्सः स्यादुपधाया अकारश्च । 'प्लक्षो जटी गर्दभाण्डद्वीपभित्कुञ्जराशने' इति मेदिनी । 'प्लक्षो द्वीपविशेषे स्यात्पर्कटीगर्दभाण्डयोः । पिप्पले द्वारपार्श्वे च गृहस्य परकीर्तितः' इति विश्वः । मनेः । मन ज्ञाने । 'मांसं स्यादामिषे क्लीबं कक्कोलीजटयोः स्त्रिया'मिति मेदिनी ।

बा.]र्लशादेशश्चेत्यर्थः । **लशुनमिति** । 'लशुनं गृञ्जनाऽरिष्टमहाकन्दरसोनकाः' इत्यमरः । **अर्जेर्णिलुक्च** । ऋज गतिस्थानार्जनोपार्जनेषु, अस्मादुनन्प्रत्ययः, तत्संनियोगेन णेर्लुक्चेत्यर्थः । **अर्जुन इति** । जकारेण व्यवधानान्न णत्वम् । 'वलक्षो धवलोऽर्जुनः' इत्यमरः । अत्र णेरनिटीत्यनेनैव णेर्लोपे सिद्धे णिलुक्चेति लुग्विधानं चिन्त्यप्रयोजनमेव । नच प्रत्ययलक्षणेन प्राप्तं लघूपधगुणं वारयितुं लुग्विधानमावश्यकम्, लुकि तु 'न लुमताङ्गस्ये'ति निषेधान्न प्राप्तिरिति वाच्यम्, लुग्विधानेऽपि उननमाश्रित्य लघूपधगुणस्य दुर्वारत्वात् । अथ यदि यथाकथंचित् एतद्ग्रन्थसमर्थने आग्रहस्तर्हि एवं वक्तव्यम्-अस्मिन्सूत्रे किदित्यनुवर्तेत,ततश्च उननः कित्त्वेन गुणो न भवति, लोपे तु स्यादेव गुण इति वैपरीत्ये पर्यवस्यतीति । एवं सति अर्जुन इति रूपमेव न सिध्येत्, तस्मात्किदिति नानुवर्तनीयमेव, लुग्विधानं च व्यर्थम् । **तृणाख्यायाम्** । तृणस्याख्या तृणाख्या, तस्यां सत्याम् ऋजेर्जायमान उनन् चित्स्यादित्यर्थः । चित्त्वफलमाह—**चित्त्वादन्तोदात्त इति** । **अर्तेश्च** । ऋ गतौ, अस्मादुनन्स्यात्, स च चित्स्यादित्यर्थः । **अरुण इति** । रषाभ्यामिति णत्वम् । 'अरुणो भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु' इत्यमरः । **अजियमिशीङ्भ्यश्च** । अज गतिक्षेपणयोः, यमु उपरमे, शीङ् स्वप्ने, एभ्य उनन् स्यात्, स च चिदित्यर्थः । **वयुनमिति** । अजेर्वीभावः, गुणः, अयादेशः । **यमुनेति** । 'यमुना शमनस्वसा' इत्यमरः । **वृतृवदि** । वृ वरणे, तॄ प्लवनतरणयोः, वद व्यक्तायां वाचि, हन हिंसागत्योः, कमु कान्तौ, कष हिंसायाम्, एभ्यः सप्रत्यय इत्यर्थः । **वर्षमिति** । प्रत्ययावयवत्वात्षत्वम् । **तर्षमिति** । 'तर्षो जग्धिस्तु भोजनम्' इत्यमरः । अत्रापि गुणे कृते षत्वम् । **कक्षमिति** । षढोरिति कत्वम् । **प्लुषेरच्चोपधाया** । प्लुष दाहे, अस्मात्सः स्यात्, उपधाया अकारश्चेत्यर्थः । 'प्लक्षश्च तिन्तिडी चिञ्चा' इत्यमरः । **मनेर्दीर्घश्च** । मन ज्ञाने, अस्मात्सप्रत्ययः, धातोर्दीर्घश्चेत्यर्थः । **मांसमिति** । 'नश्चापदान्तस्य' इत्यनुस्वारः । **अशेर्देवने** । अशू व्याप्तौ, अस्मात्सप्रत्ययः, देवने वाच्ये इत्यर्थः । **अक्ष इति** । प्रश्चेति

**स्नुव्रश्चिकृत्यृषिभ्यः कित्** । स्नुषा । वृक्षः । कृत्समुदकम् । ऋक्षं नक्षत्रम् । ३५४ । **ऋषेर्जातौ** । 'ऋक्षोऽद्रिभेदे भल्लूके' [ इति च ] । ३५५ । **उन्दिगुधिकुषिभ्यश्च** । 'उत्सः प्रस्रवणम्' । गुत्सः स्तबकः । कुक्षी जठरम् । ३५६ । **गृधिपण्योर्दकौ च** । गृत्सः कामदेवः । पक्षः । ३५७ । **अशेः सरः** । अक्षरम् । ३५८ । **वसेश्च** । वत्सरः । ३५९ । **सपूर्वाच्चित्** । संवत्सरः । ३६० । **कृधूमदिभ्यः कित्** । बाहुलकात् षत्वम् ।

---

**त.]अशेः** । अशू व्याप्तौ, अस्मादेवने वाच्ये सः स्यात् । 'व्रश्चभ्रस्जे'त्यादिना षत्वादिकार्यम् । 'अथाऽक्षमिन्द्रिये । ना द्यूताङ्गे कर्षे चक्रे व्यवहारे कलिद्रुमे' इत्यमरः । **'अक्षो** ज्ञानात्मशकटव्यवहारेषु पाशके । रुद्राक्षेन्द्राऽक्षयोः सर्पे बिभीतकतरावपि । चक्रे कर्षे पुमान् क्लीबं तुत्थसौवर्चलेन्द्रिये' इति मेदिनी । **स्नुव्रश्चि** । स्नु प्रस्रवणे, ओव्रश्चू छेदने, कृती छेदने, ऋषी गतौ, एभ्य सः कित्स्यात् । स्नुषा पुत्रवधूः । **वृक्ष इति** । सस्य कित्त्वात् 'ग्रहिज्या' इति संप्रसारणम् । 'ऋक्षः पर्वतभेदे स्याद्भल्लूके शोणके पुमान् । कृतवेधेऽप्यन्यलिङ्गं नक्षत्रे पुंनपुंसक'मिति मेदिनी । **ऋषेर्जातौ** । पूर्वसूत्रेणैव सिद्धे ऋषेर्जातावेवेति नियमार्थं सूत्रम् । तेनाऽन्येभ्यस्त्रिभ्यः केवलयौगिकत्वेऽपि सप्रत्ययो भवति । **उन्दिगुधि** । उन्दी क्लेदने, गुध रोषे, कुष निष्कर्षे, एभ्यः सः कित्स्यात् । 'अनिदिता'मिति नलोपः । **'उत्सः** प्रस्रवणं वारी'त्यमरः । **'गुत्सः** स्यात्स्तबके स्तम्बे हारभिद्ग्रन्थिपर्णयोः' इति मेदिनी । गुच्छश्च । 'गुत्सो गुच्छो गुलुञ्छव'दिति द्विरूपकोशात् । 'स्याद्गुच्छः स्तबके स्तम्बे हारभेदकलापयोः' इति चवर्गद्वितीयान्ते मेदिनीकोशाच्च । **गृधि** । गृधु अभिकाङ्क्षायाम्, पण व्यवहारे स्तुतौ च । ननु गृधेश्चर्त्वेन गृत्स इति सिद्धे दकारविधानं व्यर्थमिति चेत् । मैवम् । चर्त्वस्याऽसिद्धत्वेन 'एकाचो बश' इति भष्भावप्रसङ्गात् । न चैवमपि प्रक्रियालाघवाय तकार एव विधीयतामिति शङ्क्यं, 'चयो द्वितीयाः' इति पक्षे तकारस्य थकारापत्तेः । **'पक्षो** मासाऽर्धके पार्श्वे ग्रहे साध्यविरोधयोः । केशादेः परतो वृन्दे बले सखिसहाययोः । चुल्लीरन्ध्रे पतत्रे च राजकुञ्जरपार्श्वयोः' इति विश्वमेदिन्यौ । **अशेः** । अशू व्याप्तौ 'व्रश्चे'त्यादिना षत्वादिकार्यम् । **'अक्षरं** स्यादपवर्गे परमब्रह्मवर्णयोः' इति हेमचन्द्रः । 'अशेः सरन्' इत्युज्ज्वलदत्तादिपाठस्तु प्रामादिकः, नित्स्वरापत्तेः । इष्यते तु प्रत्ययस्वरेणाऽक्षरशब्दस्य मध्योदात्तत्वम् । 'ऋचो अक्षरे परमे व्योमन्' इत्यादिऋङ्मन्त्रेषु,'त्रीणि च शतानि षष्टिश्चाक्षराणी'ति यजुषि च तथैव पाठात् । अत एवाऽश्नोतेर्वा सरोऽक्षरमिति द्वितीयाह्निकान्ते भाष्यकृतोक्तम् । **वसेश्च** । वस निवासे, अस्मादपि सरः स्यात् । 'सः स्यार्द्धधातुके' इति तत्वम् । **सपूर्वाच्चित्** । पूर्वसहिताद्वसतेः परः सः स्यात्स च चित् । चित्त्वादन्तोदात्तः । 'इद्वत्सराय परिवत्सराय' । **सपूर्वादिति** पाठान्तरम् । तच्च लक्ष्यविरोधादुपेक्ष्यम् । **कृधू** । डुकृञ् करणे, धूञ् कम्पने, मदी हर्षे, एभ्यः सरः कित्स्यात् । **'कृसरः स्या'**दि-

---

**बा.]**षत्वं, कत्वं, षत्वमिति भावः । **स्नुव्रश्चि** । स्नु प्रस्रवणे, ओ व्रश्चू छेदने, कृती छेदने, ऋषी गतौ, एभ्यः सप्रत्ययः स्यात्, स च कित्स्यादित्यर्थः । **स्नुषेति** । कित्त्वान्न गुणः । **वृक्ष इति** । व्रश्चधातोः सनि तस्य कित्त्वाद्ग्रहिज्येति संप्रसारणे, स्कोरिति सलोपः, चोः कुरिति कुत्वं, सस्य षत्वे च रूपम् । **ऋषेर्जातौ** । ऋषी गतावित्यस्मात् जातौ सप्रत्ययः स्यात्, स च किदित्यर्थः । पूर्वसूत्रेणैव सिद्धे इदं सूत्रं नियमार्थम्—'ऋषेर्जातावेव सप्रत्यय' इति । तेन यौगिके न भवति । अन्येभ्यस्तु उभयत्रापि भवति । **उन्दिगुधि** । उन्दी क्लेदने, गुध रोषे, कुष निष्कर्षे, एभ्यः सः कित्स्यादिति भावः । **उत्स इति** । 'अनिदिता'मिति नलोपः । 'उत्सः प्रस्रवणं वारि' इत्यमरः । **गुत्स इति** । खरि चेति चर्त्वम् । **कुक्ष इति** । षढोरिति कः । **गृधिपण्योर्दकौ च** । गृधु अभिकाङ्क्षायां, पण व्यवहारे स्तुतौ च, आभ्यां सप्रत्ययः, धातोरन्त्यस्य क्रमेण दकारककारौ चादेशौ स्त इत्यर्थः । **गृत्स इति** । किदित्यनुवर्तनान्न गुणः । धकारस्य दकार आदेश इति भावः । ननु धकारस्य खरि चेति चर्त्वेन तकारे गृत्स इति रूपसिद्धौ किमर्थमेवं दकारविधिप्रयास इति चेत्,अत्राहुः-'खरि चे'ति चर्त्वस्याऽसिद्धत्वात् 'एकाचो बशो भ'षिति भष्भावः प्रसज्येत, तदर्थं दकारविधिरिति । प्रक्रियालाघवाय तकार एव तु न विहितः, 'चयो द्वितीयाः' इति पक्षे थकारप्रसङ्गात् । दकारविधाने तु चर्त्वस्याऽसिद्धत्वान्न भवति । **पक्ष इति** । पणधातोः रूपम् । कात्परत्वात्षत्वम् । **अशेः सरः** । अशू व्याप्तौ, अस्मात्सरप्रत्यय इत्यर्थः । **अक्षरमिति** । व्रश्चेत्यादिना षत्वं, षढोरिति कत्वम्, सस्य षत्वम् । **वसेश्च** । वस निवासे, अस्यात्सरप्रत्यय इत्यर्थः । **वत्सर इति** । 'सः स्यार्द्धधातुके' इति तत्वम् । **सपूर्वाच्चित्** । समित्युपसर्गपूर्वकाद्वसेर्जायमानः सरप्रत्ययः चिदित्यर्थः । चित्त्वप्रयोजनं तु अन्तोदात्तस्वरः । अत्र सपूर्वाच्चिदिति स्वारसिकः पाठः, समितरपूर्वादपि सरप्रत्ययदर्शनात् । 'संवत्सरोऽसि परिवत्सरोऽसि इदावत्सरोऽसि इद्वत्सरोऽसि' इत्यादौ यथा । **कृधूमदिभ्यः कित्** । डु कृञ् करणे धूञ् कम्पने, मदी हर्षे, एभ्यः सरप्रत्ययः, स च कित्स्यादित्यर्थः । ननु कृसर इत्यत्र इणः परत्वात्प्रत्ययावयवत्वाच्च षत्वं कुतो नेत्यत आह—**बाहुलका-**

'कृसरः स्यात्तिलौदनम्' । धूसरः । मत्सरः । 'मत्सरा मक्षिका ज्ञेया भ्रमराली च सा मता' । ३५४ । **पते रश्च लः** । पत्सलः पन्थाः । ३५५ । **तन्यृषिभ्यां क्सरन्** । 'तसरः सूत्रवेष्टने' । ऋक्षरः ऋत्विक् । ३५६ । **पीयुक्कणिभ्यां कालन् ह्रस्वः संप्रसारणं च** । पीयुः सौत्रः । पियालो वृक्षभेदः । कुणालो देशभेदः । ३५७ । **कठिकुषिभ्यां काकुः** । कठाकुः पक्षी । कुषाकुरग्निः सूर्यश्च । ३५८ । **सर्तेर्दुक् च** । 'सृदाकुर्वात-सरितोः' । ३५९ । **वृतेर्वृद्धिश्च** । वार्ताकुः । बाहुलकादुकारस्य अत्वम् । वार्ताकम् । ३६० । **पर्देर्नित्संप्रसारणमल्लोपश्च** । 'पृदाकुर्वृश्चिके व्याघ्रे चित्रके च सरीसृपे' । ३६१ । **सृयुवचिभ्योऽन्युजागूजक्नुचः** । अन्युच् आगूच् अक्नुच् एते क्रमात्स्युः । 'स्मरण्युर्मेघवातयोः' । यवागूः । 'वचक्नुर्विप्रवाग्मिनोः' । ३६२ ।

त.]त्यादि हारावलीस्थम् । '**धूसरी** किन्नरीभेदे ना खरे त्रिषु पाण्डुरे' इति मेदिनी । **मत्सरा** मक्षिकायां स्यान्मात्सर्यक्रोधयोः पुमान् । असह्यपरसंपत्तौ कृपणे चाभिधेयव'दिति च । '**मत्सरो**ऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु' इत्यमरः । 'अथ **मत्सरः** । असह्यपरसंपत्तौ मात्सर्ये कृपणे क्रुधी'ति विश्वः । वेदे तु मदी हर्षे इति योगार्थं पुरस्कृत्य प्रयुज्यते—'इन्दुमिन्द्राय मत्सरम्' । 'तं सिन्धवो मत्सरमिन्द्रियाणमि'त्यादि । मत्सरं हर्षहेतुमिति तद्भाष्यम् । **पतेः** । पत्लृ गतावस्मात्सरः स्याद्रेफस्य लश्च । **तन्यृषि** । तनु विस्तारे, ऋषी गतौ । अमरोक्तिमाह—**तसर इति** । कित्त्वात् 'अनुदात्तोपदेशे'त्यादिनाऽनुनासिकलोपः । **ऋक्षर ऋत्विगिति** । 'ऋक्षरं वारिधारायामृक्षरस्त्वृत्विजि स्मृतः' इति मेदिनी । 'अनृक्षरा ऋजवः सन्तु पन्थाः' इति मन्त्रस्य वेदभाष्ये तु ऋक्षरः कण्टक इति व्याख्यातम् । **पीयुक्कणिभ्याम्** । अण रण इति दण्डके क्कणिः पठ्यते स च शब्दार्थकः । आभ्यां कालन् स्याद्यथाक्रमं ह्रस्वः, संप्रसारणं च । 'राजादनः **प्रियालः** स्या'दित्यमरः । '**प्रियालः** स्यात्पियालव'दिति द्विरूपकोशः । बाहुलकाद्धञ्जेरपि कालन् । किरवाच्चलोपः । न्यङ्क्वादित्वात्कुत्वम् । '**भगालं** नरमस्तकम्' । मत्वर्थे इनिः । 'चण्डिकान्तो **भगाली** च लेलिहानो वृषध्वज' इति राजशेखरः । **कठिकुषि** । कठ कृच्छ्रजीवने, कुष निष्कर्षे । '**कुषाकुः** कपिवह्न्यर्के ना परोत्तापिनि त्रिषु' इति मेदिनी । उज्ज्वलदत्तस्तु 'कटिकषिभ्या'मिति पठित्वा कषशिषेति दण्डकधातुमुपन्यस्य कषाकुरित्युदाजहार, तत्कोशविरुद्धम् । मेदिनीकोशे ह्युकारप्रक्रमे पाठात् । **सर्तेः** । सृ गतावस्मात्काकुः स्याद्धातोर्दुगागमश्च । '**सृदाकुर्ना**ऽनिले चक्रे ज्वलने प्रतिसूर्यके' इति मेदिनी । **वृतेः** । वृतु वर्तने । '**वार्ताकुः** प्रियवार्ताकी वृन्ताकोऽपि च दृश्यते' इति द्विरूपे विश्वः । '**वार्ताको** हिङ्गुली सिंही भाण्टाकी दुष्प्रधर्षणी'त्यमरः । '**वार्ताकं** पित्तलं किंचिदङ्गारपरिपाचित'मिति वैद्यशास्त्रम् । **पर्देः** । पर्द कुत्सिते शब्दे । अस्मात्काकुः स्यात्स च नित् । धातोः रेफस्य संप्रसारणमकारलोपश्च । विश्वकोशस्थमाह—**पृदाकुरिति** । 'पृदाकुर्वृश्चिके व्याघ्रे सर्पचित्रकयोः पुमा'निति मेदिनी । **सृयु** । सृ गतौ, यु मिश्रणे, वच परिभाषणे । '**सरण्युस्तु** पुमान् वारिवाहे स्यान्मातरिश्वनी'ति मेदिनी । 'सरण्युरस्य सूनुरश्वः' इति मन्त्रस्य भाष्ये सरण्युः शीघ्रगामीति व्याख्यातम् । 'यवागूरुष्णिका श्राणा विलेपी तरला च सा' इत्यमरः । '**वचक्नुस्तु** पुमान् विप्रे वावदूकेऽभिधेयव'दिति मेदिनी । **आनकः** ।

वा.]दिति । कृसरशब्दार्थे विवृण्वन्नमरकोशमाह—**कृसरः स्यादिति** । **धूसर इति** । कित्त्वान्न गुणः । 'ईषत्पाण्डुस्तु धूसरः' । **मत्सर इति** । 'मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु' इत्यमरः । **पते रश्च लः** । पत्लृ गतौ, अस्मात् सरः स्यात्, रेफस्य लश्चेत्यर्थः । पत्सल इति रूपम् । **तन्यृषिभ्यां क्सरन्** । तनु विस्तारे, ऋषी गतौ, आभ्यां क्सरन्प्रत्यय इत्यर्थः । **तसर इति** । प्रत्ययस्य किरवादनुदात्तोपदेशेत्यादिनाऽनुनासिकलोपः । ऋषधातोः ऋक्षर इति रूपम् । कित्त्वान्न गुणः । कत्वं षत्वम् । **प्रीयुक्कणिभ्याम्** । प्रीयुधातोर्धातुपाठे अदर्शनादाह—**सौत्र इति** । क्कण शब्दे । आभ्यां कालन्प्रत्ययः, क्रमेण प्रीयुधातोर्ह्रस्वः, क्कणधातोः सम्प्रसारणं चेत्यर्थः । **प्रियाल इति** । ह्रस्वे रूपम् । **कुणाल इति** । सम्प्रसारणे वकारस्योकारे पूर्वरूपे च रूपम्, 'राजादनं प्रियालः स्यात्सन्नकद्रुर्धनुःपटः' इति वनौषधिवर्गे अमरः । **कटिकुषिभ्यां काकुः** । कटे वर्षावरणयोः, कुष निष्कर्षे, आभ्यां काकुप्रत्ययः । कटाकुः कुषाकुरिति रूपम् । **सर्तेर्दुक्च** । सृ गतौ, अस्मात्काकुप्रत्ययः स्यात्, धातोर्दुगागमश्चेत्यर्थः । **सृदाकुरिति** । प्रत्ययस्य कित्त्वान्न गुणः । **वृतेर्वृद्धिश्च** । वृतु वर्तने, अस्मात्काकुः स्यात्, धातोर्वृद्धिश्चेत्यर्थः । **वार्ताकुरिति** । वार्ताकशब्दं साधयति—**बाहुलकादिति** । **पर्देर्नित्संप्रसारणमल्लोपश्च** । पर्द कुत्सिते शब्दे, अस्मात्काकुः स्यात्, स च नित्, धातो रेफस्य संप्रसारणमृकारो भवति, पकारोत्तराऽकारस्य लोपश्चेत्यर्थः । 'सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः' इत्यमरः । **सृयुवचिभ्यो** । सृ गतौ, यु मिश्रणे, वच परिभाषणे, एभ्यो धातुभ्यः क्रमात् अन्युच, आगूच्, अक्नुच् इति प्रत्ययाः स्युः । **सरण्युरिति** ।

आनकः शीङ्भियः । शयानकोऽजगरः । भयानकः । ३६३ । आणको लूधूशिङ्घिधाञ्भ्यः । लवाणकं दात्रम् । धवानको वातः । शिङ्घाणकः श्लेष्मा । पृषोदरादित्वात्पक्षे कलोपः । 'शिङ्घाणं नासिकामले' । धाणको दीनारभागः । ३६४ । उल्मुकदर्विहोमिनः । उष दाहे । षस्य लः, मुकप्रत्ययश्च । 'उल्मुकं ज्वलदङ्गारे' । दृणातेर्विः । दर्विः । जुहोतेर्मिनिः । होमी । ३६५ । ह्रियः कुक् रश्च लो वा । ह्रीकुः ह्लीकुर्लज्जावान् । ३६६ । हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन् । दशभ्यस्तन् स्यात् । 'तितुत्रे'ति नेट् । हस्तः । मर्तः । गर्तः । एतः कर्बुरः । वातः । अन्तः । दन्तः । 'लोतः स्यादश्रुचिह्नयोः' । 'पोतो बालवहित्रयोः' । धूर्तः । बाहुलकात्तुसेर्दीर्घश्च । तूस्तं पापम्, धूलिर्जटा च ।३६७। नञ्याप इट् च । नापितः । ३६८ । तनिमृङ्भ्यां किच्च । ततम् । मृतम् ।३६९। अञ्जिघृसिभ्यः क्तः । अक्तम् । घृतम् । सितम् ।३७०। दुतनिभ्यां दीर्घश्च ।

---

त.] शीङ् स्वप्ने,ञिभी भये । बिभेत्यस्मादिति भयानको भयङ्करः ।'भयानकः स्मृतो व्याघ्रे रसे राहौ भयङ्करे' इति मेदिनी । आणको । लूञ् छेदने, धूञ् कम्पने, शिघि आघ्राणे, डुधाञ् धारणपोषणयोः । हारावलीस्थमाह— शिङ्घाणमिति । 'शिङ्घाणं काचपात्रे स्याल्लोहनासिकयोर्मले' इति विश्वः । 'शिङ्घाणः फेनडिण्डीरो नक्रेतश्च पिच्छिलः' इति विक्रमादित्यकोशः । उल्मुक । एते निपात्यन्ते । निपातनप्रकारमेवाह—उष दाहे इत्यादि । हारावलीस्थमाह—उल्मुकमिति । 'दर्विः कम्बिः खजाका च' इत्यमरः । ह्रियः । ह्री लज्जायामस्मात्कुक्प्रत्ययः स्यात् । ककारो गुणनिषेधार्थः । हसि । हसे हसने, मृङ् प्राणत्यागे, गॄ निगरणे, इण् गतौ, वा गतिगन्धनयोः, अम गत्यादिषु, दमु उपशमे, लूञ् छेदने, पूञ् पवने, धुर्वी हिंसायाम् । 'हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च । ऋक्षे केशात्परो व्राते' इति मेदिनी । अत्रायमर्थः-केशवाचकात्परो यो हस्तशब्दः स समूहवाची । तथा च केशहस्तशब्दः केशसमूहशब्दपर्याय इति । मर्तो भूलोकस्तत्र भवो मर्त्यः । दिगादेराकृतिगणत्वाद्यत् । 'गर्तस्त्रिगर्तभेदे स्यादवटे च कुकुन्दरे' इति मेदिनी । 'एतः कर्बुर आगते । अन्तःस्वरूपे नाशे ना न स्त्री शेषेऽन्तिके त्रिषु' इति च । 'दन्तोऽद्रिकटके कुञ्जे दशने चौषधौ स्त्रियाम्' इति च मेदिनी । 'लोतमश्रुणि चोरिते' इति विश्वः । 'क्तक्तवतू निष्ठा' इति सूत्रे 'लोतो मेष' इति कैयटः । 'पोतः शिशौ वहित्रे च' इति विश्वमेदिन्यौ । धूर्त इति । 'लोपो व्योर्वली'ति वलोपः, 'राल्लोपः' इत्यनेन लोपस्तु क्ङितीत्यनुवृत्तिपक्षे बोध्यः । 'हलि चे'ति दीर्घः । 'धूर्तं तु खण्डलवणे धत्तूरे ना शठे त्रिषु' इति मेदिनी । तूस्तमिति । तुस खण्डन इत्यस्मात्तन् । नञ्या । आप्लृ व्याप्तौ । अस्मान्नञ्युपपदे तन्स्यादिडागमश्च । बाहुलकान्नञो नलोपाऽभावः । तनि । तनु विस्तारे, मृङ् प्राणत्यागे, आभ्यां तन्प्रत्ययः स्यात्स च कित् । कित्त्वादनुनासिकलोपः । 'ततं वीणादिकं वाद्य'मित्यमरः । 'अथ ततं व्याप्ते विस्तृते च त्रिलिङ्गकम् । क्लीबं वीणादिवाद्ये स्यात्पुंलिङ्गस्तु समीरणे' इति मेदिनी । 'मृतं तु याचिते मृत्यौ क्लीबं मृत्युमति त्रिषु' इति च । अञ्जि । अञ्जू व्यक्तिम्रक्षणादौ, घृ क्षरणदीप्त्योः,

---

बा.] अन्युचि कृते धातोर्गुणे णत्वे च रूपम् । यवागूरिति । गुणे अवादेशे च रूपम् । 'यवागूरुष्णिका श्राणा' इत्यमरः' । 'वचक्नुस्तु पुमान्विप्रे' इति मेदिनीकोशः । आनकः शीङ्भियोः । शीङ् स्वप्ने, ञि भी भये, आभ्याम् आनक इत्यर्थः । शयानको भयानक इति । गुणे अयादेशे च रूपम् । आणको । लूञ् छेदने, धूञ्कम्पने, शिघि आघ्राणे, डु धाञ् धारणपोषणयोः, एभ्य आणकप्रत्यय इत्यर्थः । शिङ्घाणकमिति । इदित्वान्नुम् । उल्मुकदर्विहोमिनः । उल्मुक, दर्वि होमी इति त्रयो निपात्यन्त इत्यर्थः । निपातनमेवाह—उष दाह इति । ननु तर्हि षकारोऽपि श्रूयेत इत्यत आह—षस्य ल इति । प्रत्ययमाह—मुकप्रत्ययश्चेति । निपात्यत इति शेषः । 'अङ्गारोऽलातमुल्मुक'मित्यमरः । दर्विरित्यत्राह—दृणातेरिति । 'दर्विः कम्बिः खजाका च' इत्यमरः । होमीत्यत्राह —जुहोतेरिति । ह्रियः कुक् रश्च लो वा । ह्री लज्जायामस्मात्कुक्प्रत्ययः स्यात्, धातुसंबन्धिरेफस्य लकारस्य वेत्यर्थः । ह्लीकुरिति । कित्त्वाद्गुणनिषेधः । हसिमृग्रिण्वामि । हसे हसने, मृङ् प्राणत्यागे, गॄ निगरणे, इण् गतौ, वा गतिगन्धनयोः, अम गत्यादिषु, दमु उपशमे, लूञ् छेदने, पूञ् पवने, धुर्वी हिंसायाम्, एभ्यो धातुभ्यस्तन्प्रत्ययः । हस्त इत्यादौ वलादिलक्षणेटमाशङ्क्याह-तितुत्रेति नेडिति । तनः कित्त्वाऽभावाद्दन्त इत्यादौ 'अनुनासिकस्य क्विझलोः' इति दीर्घो न । मर्त इति । भूलोक इत्यर्थः । तत्र भवो मर्त्यः । दिगादित्वाद्यत् । धूर्त इति । तनि कृते 'लोपो व्योर्वलि' इति वलोपः, हलि चेति दीर्घः । नञ्याप इट् च । नञि उपपदे आप्लृ व्याप्तावित्यस्मात्तन्प्रत्ययः, इडागमश्चेत्यर्थः । नापित इति । बाहुलकान्नञो नलोपाऽभावः । 'क्षुरी मुण्डी दिवाकीर्तिनापिताऽन्तावसायिनः' इत्यमरः । तनिमृङ्भ्यां किच्च । तनु विस्तारे, मृङ् प्राणत्यागे, आभ्यां तन्स्यात्, स च किदित्यर्थः । ततमिति । कित्त्वादनुनासिकलोपः । 'ततं वीणादिकं वाद्य'मित्यमरः । अञ्जिघृसिभ्यः क्तः । अञ्जू

दूतः । तातः । ३७१ । जेर्मूट् चोदात्तः । जीमूतः ।३७२। लोष्टपलितौ । लुनातेः क्तः, तस्य सुट्, धातोर्गुणः । लोष्टम् । पलितम् । ३७३ । ह्रश्याभ्यामितन् । हरितश्येतौ वर्णभेदौ । ३७४ । रुहे रश्च लो वा । 'रोहितो मृगमत्स्ययोः' । लोहितं रक्तम् । ३७५ । पिशेः किच्च । पिशितं मांसम् । ३७६ । श्रुदक्षिस्पृहिगृहिभ्य आय्यः । श्रवाय्यो यज्ञपशुः । दक्षाय्यो गरुडो गृध्रश्च । स्पृहयाय्यः । गृहयाय्यो गृहस्वामी ।

त.] षिञ् बन्धने, एभ्यः क्तः स्यात् । निष्ठासंज्ञात्वेतस्य न भवति, उणादीनामव्युत्पन्नत्वाद्बाहुलकाद्वा । अन्यथा 'निष्ठा च द्व्यजना'दित्याद्युदात्तत्वं स्यादिति 'क्तक्तवतू निष्ठे'ति सूत्रे कैयटः । अक्तं-परिच्छिन्नम् । 'अक्तपरिमाणवाचक' इति भाष्यस्य कैयटेन तथा व्याख्यातत्वात् । 'अक्तं व्याप्ते च सङ्कुले इति विश्व' इत्युज्ज्वलदत्तेनोक्तम्, तच्च लिपिभ्रमप्रयुक्तम् । विश्वकोशे हि 'व्यस्तं व्याप्ते च संकुले' इति स्थितत्वात् । मेदिन्यां वकारादिप्रक्रमे 'व्यस्तं तु व्याकुले व्याप्ते' इत्युक्तम् । 'घृतमाज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवत्' । 'सितमवसिते च बद्धे धवले त्रिषु शर्करायां स्त्री' इति मेदिनी । बाहुलकात् ऋ गतावित्यस्मात् क्तः । ऋतमुञ्छशिले जले । सत्ये दीप्ते पूजिते स्या'दिति मेदिनी । दुतनि । दु गतौ, तनु विस्तारे, आभ्यां क्तः स्याद्धातोर्दीर्घश्च । दूतः प्रेष्यः । गौरादित्वान्ङीष् । दूती । कथं तर्हि 'तेन दूति ! विदितं निषेदुषा' इति रघुरिति चेत् । अत्राहुः—दूङ् परितापे इत्यस्मात् क्तिचि दूतिरिति । 'दूत्यां दूतिरपि स्मृता' इति द्विरूपकोशः । 'तातोऽनुकम्प्ये जनके' इति विश्वमेदिन्यौ । बाहुलकात् शीङ् स्वप्ने इत्यस्मादपि क्तः । शीता लाङ्गलपद्धतिः । रामपत्नी च शीता । 'शीता नभःसरिति लाङ्गलपद्धतौ च शीता दशाननरिपोः सहधर्मिणी च । शीतं स्मृतं हिमगुणे च तदन्विते च शीतोऽलसे च बहुवारतरौ च दृष्टः' इति तालव्यादौ धरणिः । सीता दन्त्यादिरप्यस्ति । 'सीता लाङ्गलपद्धतिः । वैदेहीस्वर्गगङ्गासु' इति दन्त्यादौ मेदिनी । 'सीता लाङ्गलरेखा स्याद्व्योमगङ्गा च जानकी'ति दन्त्यादौ रभसकोशाच्च । जेः । जि जये, अस्मात् क्तप्रत्ययस्तस्योदात्तमुडागमः स्यात् । दीर्घ इत्यनुवृत्त्या धातोर्दीर्घश्च स्यात् । इदं सूत्रमनार्षमिति केचित् । अतएव वृत्त्यादिग्रन्थे पृषोदरादिषु जीमूतशब्द उदाहृतः । 'जीमूतोऽद्रौ भृतिकरे देवताडे पयोधरे' इति मेदिनी । 'वेणी खरा गरी देवताडो जीमूतः' इत्यमरः । 'जीमूतः स्याद्भृतिकरे शक्रेऽद्रौ घोटके घने' इति विश्वः । लोष्ट । लूञ् छेदने, पल गतौ, एतौ क्तान्तौ निपात्येते । 'लोष्टानि लेष्टवः पुंसि' इत्यमरः । अत्र पुंसीत्युभयान्वयि । तेन पुंनपुंसकलिङ्गो लोष्टशब्दः । तथाच 'स्थानेऽन्तरतमः' इति सूत्रे भाष्यं 'लोष्टः क्षिप्तो बाहुवेगं गत्वे'त्यादि । अत एव 'लेष्टुः शण्डेऽपि लोष्टः स्यात्' इति पुंलिङ्गकाण्डे बोपालितः । 'पलितं शैलजे तापे केशपाके च कर्दमे' इति मेदिनी । हृश्या । हृञ् हरणे, श्यैङ् गतौ । 'हरिता स्त्री च दूर्वायां हरिद्वर्णयुतेऽन्यव'दिति मेदिनी । 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः' इत्यमरः । रुहेः । रुह बीजजन्मनि प्रादुर्भावे च । अस्मादितन् । 'रोहितं कुङ्कुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे रोहितकद्रुमे' इति मेदिनी । 'लोहितं रक्तगोशीर्षकुङ्कुमाजिकुचन्दने । पुमान् नदान्तरे भौमे वर्णे च त्रिषु तद्वति' इति च । पिशेः । पिश अवयवे । अयं दीपनायामपि । अस्मादितन्स्यात्स च कित् । 'पिशितं मांसम्, मांस्यां स्त्री'ति मेदिनी । मांस्यां—जटामांस्याम् । तथा च 'जटा च पिशिता पेशी'ति धन्वन्तरिः । श्रुदक्षि । श्रु श्रवणे, दक्ष वृद्धौ, स्पृह ईप्सायाम्, गृह ग्रहणे, चुरादावदन्तौ । 'उग्रतमुचे भवसि श्रवाय्यः' इति मन्त्रे श्रवाय्यो=मन्त्रैः श्रवणीय इति वेदभाष्यम् । 'दक्षाय्यो यो दम आस नित्यः' इत्यादिष्वपि यौगिकार्थ एव भाष्ये पुरस्कृतः । स्पृहयाय्यः ।

बा.] व्यक्तिम्रक्षणकान्तिगतिषु, घृ क्षरणदीप्त्योः, षिञ् बन्धने, एभ्यः क्तः स्यात् । अक्त इति । नलोपे कुत्वे च रूपम् । दुतनिभ्यां दीर्घश्च । दु गतौ, तनु विस्तारे, आभ्यां क्तः स्यात्, धातोर्दीर्घश्च । तात इति । क्तस्य कित्वान्नलोपे दीर्घे च रूपम् । जेर्मूट् चोदात्तः । जि जये, अस्मात्क्तप्रत्ययः स्यात्, तस्य चोदात्तो मूडागमो धातोर्दीर्घश्च स्यात् । जीमूत इति रूपम् । लोष्टपलितौ । एतौ निपात्येते । निपातनप्रकारमेवाह—लुनातेरिति । लूञ् छेदने इत्यस्मात्क्तप्रत्ययः, सुडागमः, धातोर्गुणश्च निपात्यत इत्यर्थः । 'लेष्टानि लेष्टवः पुंसि' इत्यमरः । 'पलितं जरसा शौक्ल्य'मिति च । हृश्याभ्यामितन् । हृञ् हरणे, श्यैङ्गतौ, आभ्यामितन्प्रत्यय इत्यर्थः । श्येत इति । इतनि आद्गुणः । वर्णभेदाविति । 'पालाशो हरितो हरित्' 'शुक्लशुभ्रशुचिश्वेते'ति चामरः । रुहे रश्च लो वा । रुह बीजजन्मनि, अस्मादितन् स्यात्, धातुसम्बन्धिरेफस्य लकारो वेत्यर्थः । रोहित इति । 'रोहिताश्चमरो मृगाः' 'रोहितो मद्गुरः शालः' 'लोहितो रक्तः' इति चाऽमरः । पिशेः किच्च । पिश अवयवे, अस्मादितन् स्यात्, स च किदित्यर्थः । पिशितमिति । कित्वान्न लघूपधगुणः । श्रुदक्षिस्पृहिगृहिभ्य आय्यः । श्रु

शे.] लोष्टमिति । तुज्वत्सूत्रे लुशेर्लोष्टमिति भाष्यं । 'समलोष्टाश्मकाञ्चनः' इत्यत्रोभयोरुपादानङ्गोबलीवर्दन्यायेन । लोष्टरूपाऽश्मकाञ्चनयोरित्यर्थः । अश्मपदेन मणयः । लोष्टतुल्यत्वेनाऽत्यादरणीयेऽप्यादराभावध्वननार्थत्वदिति वा ।

३७७। **दिधिषाय्यः**। दधातेर्द्वित्वमित्वं षुक् च। मित्रं इवयो दिधिषाय्यः। ३७८। **वृञ एण्यः**। वरेण्यः। ३७९। **स्तुवः क्सेय्यश्छन्दसि**। स्तुषेय्यं पुरुवर्चसम्। ३८०। **राजेरन्यः**। राजन्यो वह्निः। ३८१। **शॄरम्योश्च**। शरण्यम्। रमण्यम्। ३८२। **अर्तेर्निच्च**। अरण्यम्। ३८३। **पर्जन्यः**। पृषु सेचने। षस्य जः। 'पर्जन्यः शक्रमेघयोः'। ३८४। **वदेरान्यः**। 'वदान्यस्त्यागिवाग्मिनोः'। ३८५। **अमिनक्षियजिवधिपतिभ्योऽत्रन्**। अमत्रं भाजनम्। नक्षत्रम्। यजत्रः। वधत्रमायुधम्। 'पतत्रं च तनूरुहम्'। ३८६। **गडेरादेश्च कः**। कडत्रम्। डलयोरेकत्वस्मरणात् कलत्रम्। ३८७। **वृञश्चित्**। वरत्रा चर्ममयी रज्जुः। ३८८। **सुविदेः कत्रः**। 'सुविदत्रं कुटुम्बकम्'। ३८९ **कृतेर्नुम् च**। कृन्तत्रं लाङ्गलम्। ३९०।

---

त.] 'अयामन्ते'ति णेरयादेशः। एवं-**गृहयाय्य इति**। **दिधिषाय्य इति**। डुधाञ् धारणपोषणयोः। उज्ज्वलदत्तस्तु दधिषाय्य इति सूत्रं पठित्वा दधिपूर्वात्स्यतेराय्यः षत्वं च, दधिषाय्यो घृतमिति व्याख्यत्। दशपादीवृत्तिकारस्तु धिषु शब्दे अस्य द्वित्वं, गुणाऽभावः, अत्वं चाऽभ्यासस्य निपात्यत इत्याह, प्रसादकारादयोऽप्येवमेवाहुस्तदेतत्सर्वं प्रामादिकम्। 'मित्र इव यो दिधिषाय्योऽभूत्' इति वैदिकप्रयोगाद्दिधिषाय्य इत्येव सूत्रं युक्तमिति प्रामाणिकाः। **वृञः**। वृञ् वरणे। **वरेण्यः**=श्रेष्ठः। **स्तुवः**। ष्टुञ् स्तुतौ। स्तुषेय्यं स्तोतव्यम्। **पुरुवर्चसं**=बहुरूपमिति वेदभाष्यम्। स्तुवः केय्य इति पठित्वा कित्वाद्गुणाऽभावे उवङि सति स्तुवेय्यः पुरन्दर इत्युदाहरन्नुज्ज्वलदत्तस्तु उदाहृतश्रुतितद्भाष्यादिविरोधादुपेक्ष्यः। तस्मादिह क्सेय्यप्रत्ययं पठन् दशपादीवृत्तिकृदेव ज्यायानित्याहुः। **राजेः**। राजृ दीप्तौ। क्षत्रियजातौ तु 'राजश्वशुराद्य'दिति यत्प्रत्यये राजन्य इत्यन्तस्वरितः। **शॄरम्योः**। शॄ हिंसायाम्, रम क्रीडायाम्। आभ्यामन्यः स्यात्। **अर्तेः**। ऋ गतौ। अस्मादन्यः, स च नित्। 'अटव्यरण्यं विपिन'मित्यमरः। **पर्जन्यः**। पृषु सेचने, षस्य जः। 'पर्जन्यो मेघशब्देऽपि ध्वनदम्बुदशक्रयोः' इति मेदिनी। **वदेः**। वद व्यक्तायां वाचि। अजयकोशस्थमाह—**वदान्य इति**। **अमिनक्षि**। अम गत्यादिषु, नक्ष गतौ, यज देवपूजादौ, वध हिंसायाम्, पत्लृ गतौ। **नक्षत्रमिति**। 'नभ्राण्नपा'दिति सूत्रे नञः प्रकृतिभावेन नक्षत्रमिति साधितं तत्तु व्युत्पत्त्यन्तरमिति बोध्यम्। यजत्रमग्निहोत्रमिति प्राञ्चः। वस्तुतस्तु यजत्रो यष्टव्यदेवता। 'संतो वायुर्वातेन गच्छतां सं यजत्रैरङ्गानि' इति मन्त्रे तथैव व्याख्यातत्वात्। अमरकोशस्थमाह—**पतत्रं चेति**। **गडेः**। गड सेचने, अस्मादत्रन्स्यादादेर्गकारस्य ककारादेशश्च। 'कलत्रं श्रोणिभार्ययोः' इत्यमरः। **वृञः**। वृञ् वरणे अस्मादत्रन् चित्स्यात्। चित्त्वादन्तोदात्तः। 'नध्री वध्री वरत्रा स्यात्' इत्यमरः। 'वरत्रायां दार्वानह्यमानः' इत्यादौ चित्स्वरः स्पष्टः।

---

बा.] श्रवणे, दक्ष वृद्धौ, स्पृह हिंसायां, गृहू ग्रहणे, एभ्य आय्यप्रत्ययः स्यात्। अत्र 'स्पृहि' 'गृहि' इति ण्यन्तौ। ताभ्यामाय्यप्रत्यये 'अयामन्ते'ति णेरयादेश इति भावेनोदाहरति-**स्पृहयाय्य इति**। **दिधिषाय्यः**। इत्थं निपात्यत इत्यर्थः। निपातनप्रकारमेवाह—**दधातेरिति**। डु धाञ् धारणपोषणयोरित्यस्मादाय्यप्रत्ययः, द्वित्वमाकारस्येत्वं षुक्च निपात्यत इत्यर्थः। दिधिषाय्य इति प्रयोगस्थलमाह—**मित्र इवेति**। **वृञ एण्यः**। वृञ्वरणे, अस्मादेण्यप्रत्ययः। गुणे वरेण्य इति रूपम्। 'मुख्यवर्यवरेण्याश्चे'त्यमरकोशः। **स्तुवः क्सेय्यश्छन्दसि**। ष्टुञ् स्तुतौ, अस्माच्छन्दसि क्सेय्यप्रत्यय इत्यर्थः। **स्तुषेय्यमिति**। कित्त्वान्न गुणः, प्रत्ययावयवत्वात्षत्वम्। **राजेरन्यः**। राजृ दीप्तौ, अस्मादन्यप्रत्ययः। **राजन्यो वह्निरिति**। 'मूर्धाभिषिक्तो राजन्यः' इति क्षत्रियवाची तु 'राजश्वशुराद्य'दिति यत्प्रत्यये बोध्यः। **शॄरम्योश्च**। शॄ हिंसायां, रमु क्रीडायाम्, आभ्यामन्यप्रत्ययः स्यात्। **शरण्यं रमण्यमिति**। 'रषाभ्या'मिति णत्वम्। **अर्तेर्निच्च**। ऋ गतौ, अस्मादन्यप्रत्ययः, स च निदित्यर्थः। नित्त्वं स्वरार्थम्। **अरण्यमिति**। अन्यप्रत्यये गुण इति भावः। 'अटव्यरण्यं विपिन'मित्यमरः। **पर्जन्यः**। इत्थं निपात्यत इत्यर्थः। निपातनमेवाह-**पृषु सेचन इति**। अस्मादन्यप्रत्ययः, षकारस्य जकारः, लघूपधगुण इति भावः। जकारेण व्यवधानान्न णत्वम्। **वदेरान्यः**। वद व्यक्तायां वाचि, अस्मादान्यप्रत्यय इत्यर्थः। **वदान्य इति**। 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' इत्यमरः। **अमिनक्षियजिवधिपतिभ्योऽत्रन्**। अम गत्यादिषु, नक्ष गतौ, यज देवपूजादौ, वध हिंसायां, पत्लृ गतौ, एभ्योऽत्रन्प्रत्यय इत्यर्थः। यद्यपि तत्पुरुषप्रकरणे 'नभ्राण्नपात्' इति सूत्रेण नक्षत्रमिति साधितं तथापि तद्व्युत्पत्त्यन्तरमिति बोध्यम्। **गडेरादेश्च कः**। गड सेचने, अस्मादत्रन् स्यात्, आदेर्गकारस्य ककारश्चेत्यर्थः। **कडत्रमिति**। गकारस्य ककारे रूपम्। ननु कथं कलत्रमिति प्रयुज्यत इत्याशङ्क्याह—**डलयोरिति**। 'कलत्रं श्रोणिभार्ययोः'। **वृञश्चित्**। वृञ्वरणे, अस्मादत्रन् चित्स्यादित्यर्थः।

**भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच्।** दशभ्योऽतच्स्यात्। भरतः। मरतो मृत्युः। 'दर्शतः सोमसूर्ययोः'। यजत ऋत्विक्। पर्वतः। पचतोऽग्निः। अमतो रोगः। तमतस्तृष्णापरः। नमतः प्रह्वः। हर्यतोऽश्वः। ३९१। **पृषिरञ्जिभ्यां कित्।** पृषतो मृगो बिन्दुश्च। रजतम्। ३९२। **खलतिः।** खलतेः सलोपः, अतच्प्रत्ययान्तस्य इत्वं च। खलतिर्निष्केशशिराः। ३९३। **शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः।** सप्तभ्योऽथः स्यात्। शयथोऽजगरः। शपथः। रवथः कोकिलः। गमथः पथिकः पन्थाश्च। वञ्चथो धूर्तः। वन्दीति पाठे वन्दतेर्वन्द्यतेर्वा वन्दथः स्तोता स्तुत्यश्च। जीवथ आयुष्मान्। प्राणथो बलवान्। बाहुलकाच्छमिदमिभ्याम्। 'शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः'।३९४। **भृञश्चित्।** भरथो लोकपालः। ३९५। **रुदिविदिभ्यां ङित्।** रोदितीति रुदथः शिशुः। वेत्तीति विदथः। ३९६। **उपसर्गे वसेः।** आव

---

त.] **सुविदेः कत्रः।** विद ज्ञाने। इह कत्रनिति नितं केचित्पठन्ति, तत्प्रामादिकम्। 'बृहस्पतेः सुविदत्राणि राध्या' इत्यादौ नित्स्वराऽदर्शनात्। कृदुत्तरपदप्रकृतिस्वरेण प्रत्ययस्वरस्यैव दर्शनाच्चेत्याहुः। **कृतेः।** कृती छेदने, अस्मात्कत्रः स्याद्धातोर्नुमागमश्च। 'धन्व च यत्कृन्तत्रं चे'ति मन्त्रे कृन्तत्रं कर्तनीयमरण्यमिति वेदभाष्यम्। **भृमृ।** भृञ् भरणे, मृङ् प्राणत्यागे, दृशिर् प्रेक्षणे, यज देवपूजादौ, पर्व पूरणे, डुपचष् पाके, अम गतौ, तमु काङ्क्षायाम्, णम प्रह्वत्वे शब्दे च, हर्य गतिकान्त्योः। दशपाद्यां तु मृदृशीङिति पठित्वा दृङ् आदरे द्रियते दरतः शेते शयतः इत्युदाहृतम्। तन्न। 'रुशन्तमग्निं दर्शतं बृहन्तम्,' 'तरणिर्विश्वदर्शतः' 'दैव्यो दर्शतो रथः' इत्यादिमन्त्रैस्तद्भाष्येण च विरोधात्। '**भरतो** नाट्यशास्त्रे मुनौ नटे। रामानुजे च दौष्यन्तौ' इति मेदिनी। **यजत ऋत्विगिति।** उज्ज्वलदत्ताद्यनुरोधेनैवमुक्तम्। वेदभाष्ये तु 'हिरण्यशृङ्गं यजतौ बृहन्त'मित्यादिषु यजतशब्दो यष्टव्यपरतया व्याख्यातः। '**पर्वतः** पादपे पुंसि शाकमत्स्यप्रभेदयोः। देवमुन्यन्तरे शैले' इति मेदिनी। **हर्यतोऽश्व इति।** 'परि त्यं हर्यतं हरिम्' ['आनर्यताय धृष्णवे'] इत्यादिमन्त्रेषु हर्यतः सर्वैः स्पृहणीय इति वेदभाष्यम्। **पृषि।** पृषु सेचने, रञ्ज रागे, आभ्यामतच् कित्स्यात्। 'पृषन् मृगे पुमान् बिन्दौ न द्वयोः पृषतोऽपि ना। अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ' इति मेदिनी। 'रजतं त्रिषु शुक्ले स्यात् क्लीबं हारे च दुर्वर्णे'. इति च। **खलतिः।** स्खल संचलने। **शीङ्शपि।** शीङ् स्वप्ने, शप आक्रोशे, रु शब्दे, गम्लृ गतौ, वञ्चु गतौ भ्वादिः, वञ्चु प्रलम्भने चुरादिः, जीव प्राणधारणे, अन प्राणने प्रपूर्वः। उज्ज्वलदत्तेनाऽत्र वञ्चिजीवीति पठ्यते। अन्यैस्तु वञ्चिस्थाने वन्दिः पठ्यते। वञ्चथवन्दथयोरन्यतरं वेदादावुपलभ्य बहुश्रुतैः पाठो निर्णेयः। **वन्दथ इति।** कर्मणि कर्तरि वा प्रत्ययः। **प्राणथ इति।** 'अनितेः' इति णत्वम्। **शमिदमिभ्यामिति।** शम उपशमे, दमु उपशमे। 'शमथः शान्तिमन्त्रिणोः' इति मेदिनी। 'दमथस्तु पुमान् दण्डे दमे च परिकीर्तितः' इति च। **भृञः।** डुभृञ् धारणपोषणयोः। अस्मादथः स्यात्स च चित्। **रुदि।** रुदिर् अश्रुविमोचने, विद ज्ञाने, आभ्यामथः स्यात्स च ङित्। '**विदथो** योगिकृतिनोः' इति मेदिनी। अत्रोज्ज्वलदत्तो रुविदिभ्यां किदिति पठित्वा रौतीति रुवथः श्वेत्युदाजहार। दशपादीवृत्तिकारस्तु रुदिविदिभ्यां किदिति पपाठ। इह तु भाष्यानुरोधेन ङिदिति पठितम्। तथाहि 'गाङ्कुटादि'सूत्रे 'के पुनश्चङादयः ? चङ्अङ्नजिङ्अथङ्नङ्' इति भाष्यम्। किदिति पठतां तु अथङिति भाष्यं न सङ्गच्छेतेति दिक्। **उप।** वस निवासे, अस्मादुपसर्गे अथः स्यात्। उज्ज्वलदत्तेन तु सोपसर्गाद्वसेरिति पठितम्, अन्यैस्तु

---

बा.] चित्त्वं स्वरार्थम्। **वरत्रेति।** अत्रनि धातोर्गुणः। 'नध्री वध्री वरत्रा च' इत्यमरः। **सुविदेः कत्रन्।** सावुपपदे विद ज्ञाने इत्यस्मात्कत्रनित्यर्थः। **सुविदत्रमिति।** कित्त्वान्न लघूपधगुणः। **कृतेर्नुम्च।** कृती छेदने, अस्मात् कत्रन् स्यात्, धातोर्नुमागमश्च। **कृन्तत्रमिति।** नुमि रूपम्। **भृमृदृशियजि।** भृञ्भरणे, मृङ् प्राणत्यागे, दृशिर् प्रेक्षणे, यज देवपूजादौ, पर्व पूरणे, डु पचष् पाके, अम गत्यादिषु, तमु काङ्क्षायां, णम प्रह्वत्वे शब्दे, हर्य गतिकान्त्योः, एभ्योऽतच् प्रत्यय इत्यर्थः। **पृषिरञ्जिभ्यां कित्।** पृषु सेचने, रञ्ज रागे, आभ्यामतच् कित्स्यात्। 'पृषन्ति बिन्दुपृषताः' इत्यमरः। **खलतिः।** इत्थं निपात्यत इत्यर्थः। निपातनप्रकारमाह—**स्खलतेरिति।** स्खल संचलन इत्यस्मादिति भावः। **शीङ्शपिरुगमि।** शीङ् स्वप्ने, शप आक्रोशे, रु शब्दे, गम्लृ गतौ, वञ्चु गतौ, जीव प्राणधारणे, प्रपूर्वः अन प्राणने, एभ्योऽथप्रत्ययः स्यादित्यर्थः। **शयथ इति।** गुणेऽयादेशः। **प्राणथ इति।** 'अनिते'रिति णत्वम्। **भृञश्चित्।** डु भृञ्धारणपोषणयोरस्मादथप्रत्ययः, स च चित्। चित्त्वं स्वरविशेषार्थम्। **रुदिविदिभ्यां ङित्।** रुदिर् अश्रुविमोचने, विद ज्ञाने, आभ्यामथप्रत्ययो ङित्स्यात्। **रुदथ इति।** ङित्त्वान्न गुणः। **उपसर्गे वसेः।** उपसर्गे उपपदे वस निवासे अस्मादथः स्यात्। **आवसथ इति।** आङि

३७७ । **दिधिषाय्यः** । दधातेर्द्वित्वमित्वं षुक् च । मित्रं इवयो दिधिषाय्यः । ३७८ । **वृञ एण्यः** । वरेण्यः[2] ।
३७९ । **स्तुवः क्सेय्यश्छन्दसि** । स्तुषेय्यं पुरुवर्चसम् । ३८० । **राजेरन्यः** । राजन्यो वह्निः
३८१ । **शॄरम्योश्च** । शरण्यम् । रमण्यम् । ३८२ । **अर्तेर्निच्च** । अरण्यम् । ३८३ । **पर्जन्यः** । पृषु सेचने ।
षस्य जः । 'पर्जन्यः शक्रमेघयोः' । ३८४ । **वदेरान्यः** । 'वदान्यस्त्यागिवाग्मिनोः' । ३८५ । **अमिनक्षि-
यजिवधिपतिभ्योऽत्रन्** । अमत्रं भाजनम् । नक्षत्रम् । यजत्रः । वधत्रमायुधम् । 'पतत्रं च तनूरुहम्' ।
३८६ । **गडेरादेश्च कः** । कडत्रम् । डलयोरेकत्वस्मरणात् कलत्रम् । ३८७ । **वृञश्चित्** । वरत्रा चर्ममयी
रज्जुः । ३८८ । **सुविदेः कत्रः** । 'सुविदत्रं कुटुम्बकम्' । ३८९ **कृतेर्नुम् च** । कृन्तत्रं लाङ्गलम् । ३९० ।

---

त.]'अयामन्ते'ति णेरयादेशः । एवं-**गृहयाय्य इति** । **दिधिषाय्य इति** । डुधाञ् धारणपोषणयोः । उज्ज्वल-दत्तस्तु दधिषाय्य इति सूत्रं पठित्वा दधिपूर्वात्स्यतेराय्यः षत्वं च, दधिषाय्यो घृतमिति व्याख्यत् । दशपादीवृत्ति-कारस्तु धिषु शब्दे अस्य द्वित्वं, गुणाऽभावः, अत्वं चाऽभ्यासस्य निपात्यत इत्याह, प्रसादकारादयोऽप्येवमेवाहुस्तदेत-त्सर्वं प्रामादिकम् । 'मित्र इव यो दिधिषाय्योऽभूत्' इति वैदिकप्रयोगाद्दिधिषाय्य इत्येव सूत्रं युक्तमिति प्रामाणिकाः । **वृञः** । वृञ् वरणे । **वरेण्यः**=श्रेष्ठः । **स्तुवः** । ष्टुञ् स्तुतौ । स्तुषेय्यं स्तोतव्यम् । **पुरुवर्चसं**=बहुरूपमिति वेदभा-ष्यम् । स्तुवः केय्य इति पठित्वा कित्वाद्गुणाऽभावे उवङि सति स्तुवेय्यः पुरन्दर इत्युदाहरन्नुज्ज्वलदत्तस्तु उदाहृत-श्रुतितद्भाष्यादिविरोधादुपेक्ष्यः । तस्मादिह क्सेय्यप्रत्ययं पठन् दशपादीवृत्तिकृदेव ज्यायानित्याहुः । **राजेः** । राजृ दीप्तौ । क्षत्रियजातौ तु 'राजश्वशुराद्य'दिति यत्प्रत्यये राजन्य इत्यन्तस्वरितः । **शॄरम्योः** । शॄ हिंसायाम् , रम क्रीडायाम् । आभ्यामन्यः स्यात् । **अर्तेः** । ऋ गतौ । अस्मादन्यः, स च नित् । 'अटव्यरण्यं विपिन'मित्यमरः । **पर्जन्यः** । पृषु सेचने, षस्य जः । 'पर्जन्यो मेघशब्देऽपि ध्वनदम्बुदशक्रयोः' इति मेदिनी । **वदेः** । वद व्यक्तायां वाचि । अजयकोशस्थमाह—**वदान्य इति** । **अमिनक्षि** । अम गत्यादिषु, नक्ष गतौ, यज देवपूजादौ, वध हिंसायाम् , पत्लृ गतौ । **नक्षत्रमिति** । 'नभ्राण्नपा'दिति सूत्रे नञः प्रकृतिभावेन नक्षत्रमिति साधितं तत्तु व्युत्पत्त्य-न्तरमिति बोध्यम् । यजत्रमग्निहोत्रमिति प्राञ्चः । वस्तुतस्तु यजत्रो यष्टव्यदेवता । 'संतो[2] वायुर्वातेन गच्छतां सं यज-त्रैरङ्गानि' इति मन्त्रे तथैव व्याख्यातत्वात् । अमरकोशस्थमाह—**पतत्रं चेति** । **गडेः** । गड सेचने, अस्मादत्र-न्स्याद्गकारस्य ककारादेशश्च । 'कलत्रं श्रोणिभार्ययोः' इत्यमरः । **वृञः** । वृञ् वरणे अस्मादत्रन् चित्स्यात् । चित्त्वादन्तोदात्तः । 'नध्री वध्री वरत्रा स्यात्' इत्यमरः । 'वरत्रायां दार्वानह्यमानः' इत्यादौ चित्स्वरः स्पष्टः ।

---

चा.] श्रवणे, दक्ष वृद्धौ, स्पृह हिंसायां, गृहू ग्रहणे, एभ्य आय्यप्रत्ययः स्यात् । अत्र 'स्पृहि' 'गृहि' इति ण्यन्तौ । ताभ्यामाय्यप्रत्यये 'अयामन्ते'ति णेरयादेश इति भावेनोदाहरति-**स्पृहयाय्य इति** । **दिधिषाय्यः** । इत्थं निपात्यत इत्यर्थः । निपातनप्रकारमेवाह—**दधातेरिति** । डु धाञ् धारणपोषणयोरित्यस्मादाय्यप्रत्ययः, द्वित्वमाकारस्येत्वं षुक्च निपात्यत इत्यर्थः । दिधिषाय्य इति प्रयोगस्थलमाह—**मित्र इवेति** । **वृञ एण्यः** । वृञ्वरणे, अस्मादेण्य-प्रत्ययः । गुणे वरेण्य इति रूपम् । 'मुख्यवर्यवरेण्याश्चे'त्यमरकोशः । **स्तुवः क्सेय्यश्छन्दसि** । ष्टुञ् स्तुतौ, अस्माच्छन्दसि क्सेय्यप्रत्यय इत्यर्थः । **स्तुषेय्यमिति** । कित्त्वान्न गुणः, प्रत्ययावयवत्वात्षत्वम् । **राजेरन्यः** । राजृ दीप्तौ, अस्मादन्यप्रत्ययः । **राजन्यो वह्निरिति** । 'मूर्धाभिषिक्तो राजन्यः' इति क्षत्रियवाची तु 'राजश्वशुरा-द्य'दिति यत्प्रत्यये बोध्यः । **शॄरम्योश्च** । शॄ हिंसायां, रमु क्रीडायाम् , आभ्यामन्यप्रत्ययः स्यात् । **शरण्यं रम-ण्यमिति** । 'रषाभ्या'मिति णत्वम् । **अर्तेर्निच्च** । ऋ गतौ, अस्मादन्यप्रत्ययः, स च निदित्यर्थः । नित्त्वं स्वरार्थम् । **अरण्यमिति** । अन्यप्रत्यये गुण इति भावः । 'अटव्यरण्यं विपिन'मित्यमरः । **पर्जन्यः** । इत्थं निपात्यत इत्यर्थः । निपातनमेवाह-**पृषु सेचन इति** । अस्मादन्यप्रत्ययः, षकारस्य जकारः, लघूपधगुण इति भावः । जका-रेण व्यवधानान्न णत्वम् । **वदेरान्यः** । वद व्यक्तायां वाचि, अस्मादान्यप्रत्यय इत्यर्थः । **वदान्य इति** । 'स्युर्व-दान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' इत्यमरः । **अमिनक्षियजिवधिपतिभ्योऽत्रन्** । अम गत्यादिषु, नक्ष गतौ, यज देवपूजादौ, वध हिंसायां, पत्लृ गतौ, एभ्योऽत्रन्प्रत्यय इत्यर्थः । यद्यपि तत्पुरुषप्रकरणे' नभ्राण्नपात्' इति सूत्रेण नक्षत्रमिति साधितं तथापि तद्व्युत्पत्त्यन्तरमिति बोध्यम् । **गडेरादेश्च कः** । गड सेचने, अस्मादत्रन् स्यात्, आदेर्गकारस्य ककारश्चेत्यर्थः । **कडत्रमिति** । गकारस्य ककारे रूपम् । ननु कथं कलत्रमिति प्रयुज्यत इत्याशङ्क्याह—**डलयोरिति** । 'कलत्रं श्रोणिभार्ययोः' । **वृञश्चित्** । वृञ्वरणे, अस्मादत्रन् चित्स्यादित्यर्थः ।

**भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच्।** दशभ्योऽतच्स्यात्। भरतः। मरतो मृत्युः। 'दर्शतः सोमसूर्ययोः'। यजत ऋत्विक्। पर्वतः। पचतोऽग्निः। अमतो रोगः। तमतस्तृष्णापरः। नमतः प्रह्वः। हर्यतोऽश्वः। ३९१। **पृषिरञ्जिभ्यां कित्।** पृषतो मृगो विन्दुश्च। रजतम्। ३९२। **खलतिः।** खलतेः सलोपः, अतच्प्रत्ययान्तस्य इत्वं च। खलतिर्निष्केशशिराः। ३९३। **शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः।** सप्तभ्योऽथः स्यात्। शयथोऽजगरः। शपथः। रवथः कोकिलः। गमथः पथिकः पन्थाश्च। वञ्चथो धूर्तः। वन्दीति पाठे वन्दतेर्वन्द्यतेर्वा वन्दथः स्तोता स्तुत्यश्च। जीवथ आयुष्मान्। प्राणथो बलवान्। बाहुलकाच्छमिदमिभ्याम्। 'शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः'। ३९४। **भृञश्चित्।** भरथो लोकपालः। ३९५। **रुदिविदिभ्यां ङित्।** रोदितीति रुदथः शिशुः। वेत्तीति विदथः। ३९६। **उपसर्गे वसेः।** आव-

त.] **सुविदेः कत्रः।** विद ज्ञाने। इह कत्रचिति नितं केचित्पठन्ति, तत्प्रामादिकम्। 'बृहस्पतेः सुविदत्राणि राध्या' इत्यादौ नित्स्वराऽदर्शनात्। कृदुत्तरपदप्रकृतिस्वरेण प्रत्ययस्वरस्यैव दर्शनाच्चेत्याहुः। **कृतेः।** कृती छेदने, अस्मात्कत्रः स्याद्धातोर्नुमागमश्च। 'धन्व च यत्कृन्तत्रं चे'ति मन्त्रे कृन्तत्रं कर्तनीयमरण्यमिति वेदभाष्यम्। **भृमृ।** भृञ् भरणे, मृङ् प्राणत्यागे, दृशिर् प्रेक्षणे, यज देवपूजादौ, पर्व पूरणे, डुपचष् पाके, अम गतौ, तमु काङ्क्षायाम्, णम प्रह्वत्वे शब्दे च, हर्य गतिकान्त्योः। दशपाद्यां तु मृदृशीति पठित्वा दृङ् आदरे द्रियते दरतः शेते शयतः इत्युदाहृतम्। तच्च। 'रुशन्तमग्निं दर्शतं बृहन्तम्,' 'तरणिर्विश्वदर्शतः' 'दैव्यो दर्शतो रथः' इत्यादिमन्त्रैस्तद्भाष्येण च विरोधात्। '**भरतो** नाट्यशास्त्रे मुनौ नटे। रामानुजे च दौष्यन्तौ' इति मेदिनी। **यजत ऋत्विगिति।** उज्ज्वलदत्ताद्यनुरोधेनैवमुक्तम्। वेदभाष्ये तु 'हिरण्यश्रृङ्गं यजतौ बृहन्त'मित्यादिषु यजतशब्दो यष्टव्यपरतया व्याख्यातः। '**पर्वतः** पादपे पुंसि शाकमत्स्यप्रभेदयोः। देवमुन्यन्तरे शैले' इति मेदिनी। **हर्यतोऽश्व इति।** 'परि त्यं हर्यतं हरिम्' ['आनर्यताय धृष्णवे'] इत्यादिमन्त्रेषु हर्यतः सर्वैः स्पृहणीय इति वेदभाष्यम्। **पृषि।** पृषु सेचने, रञ्ज रागे, आभ्यामतच् कित्स्यात्। '**पृषन्** मृगे पुमान् विन्दौ न द्वयोः पृषतोऽपि ना। अनयोश्च त्रिषु श्वेतविन्दुयुक्तेऽप्युभाविमौ' इति मेदिनी। '**रजतं** त्रिषु शुक्ले स्यात् क्लीबं हारे च दुर्वर्णे'. इति च। **खलतिः।** स्खल संचलने। **शीङ्शपि।** शीङ् स्वप्ने, शप आक्रोशे, रु शब्दे, गम्लृ गतौ, वञ्चु गतौ भ्वादिः, वञ्चु प्रलम्भने चुरादिः, जीव प्राणधारणे, अन प्राणने प्रपूर्वः। उज्ज्वलदत्तेनाऽत्र वञ्चिजीवीति पठ्यते। अन्यैस्तु वञ्चिस्थाने वन्दिः पठ्यते। वञ्चथवन्दथयोरन्यतरं वेदादावुपलभ्य बहुश्रुतैः पाठो निर्णेयः। **वन्दथ इति।** कर्मणि कर्तरि वा प्रत्ययः। **प्राणथ इति।** 'अनितेः' इति णत्वम्। **शमिदमिभ्यामिति।** शम उपशमे, दमु उपशमे। 'शमथः शान्तिमन्त्रिणोः' इति मेदिनी। 'दमथस्तु पुमान् दण्डे दमे च परिकीर्तितः' इति च। **भृञः।** डुभृञ् धारणपोषणयोः। अस्मादथः स्यात्स च चित्। **रुदि।** रुदिर् अश्रुविमोचने, विद ज्ञाने, आभ्यामथः स्यात्स च ङित्। '**विदथो** योगिकृतिनोः' इति मेदिनी। अत्रोज्ज्वलदत्तो रुविदिभ्यां किदिति पठित्वा रौतीति रुवथः श्वेत्युदाजहार। दशपादीवृत्तिकारस्तु रुदिविदिभ्यां किदिति पपाठ। इह तु भाष्यानुरोधेन ङिदिति पठितम्। तथाहि 'गाङ्कुटादि'सूत्रे 'के पुनश्चङादयः? चङ्अङ्नजिङ्अथङ्नङ्' इति भाष्यम्। किदिति पठतां तु अथङिति भाष्यं न सङ्गच्छेतेति दिक्। **उप।** वस निवासे, अस्मादुपसर्गे अथः स्यात्। उज्ज्वलदत्तेन तु सोपसर्गाद्वसेरिति पठितम्, अन्यैस्तु

बा.] चित्त्वं स्वरार्थम्। **वरत्रेति।** अत्रनि धातोर्गुणः। 'नध्री वध्री वरत्रा च' इत्यमरः। **सुविदेः कत्रन्।** सावुपपदे विद ज्ञाने इत्यस्मात्कत्रनित्यर्थः। **सुविदत्रमिति।** कित्त्वान्न लघूपधगुणः। **कृतेर्नुम्च।** कृती छेदने, अस्मात् कत्रन् स्यात्, धातोर्नुमागमश्च। **कृन्तत्रमिति।** नुमि रूपम्। **भृमृदृशियजि।** भृञ्भरणे, मृङ् प्राणत्यागे, दृशिर् प्रेक्षणे, यज देवपूजादौ, पर्व पूरणे, डु पचष् पाके, अम गत्यादिषु, तमु काङ्क्षायां, णम प्रह्वत्वे शब्दे, हर्य गतिकान्त्योः, एभ्योऽतच् प्रत्यय इत्यर्थः। **पृषिरञ्जिभ्यां कित्।** पृषु सेचने, रञ्ज रागे, आभ्यामतच् कित्स्यात्। 'पृषन्ति विन्दुपृषताः' इत्यमरः। **खलतिः।** इत्थं निपात्यत इत्यर्थः। निपातनप्रकारमाह—**स्खलतेरिति।** स्खल संचलन इत्यस्मादिति भावः। **शीङ्शपिरुगमि।** शीङ् स्वप्ने, शप आक्रोशे, रु शब्दे, गम्लृ गतौ, वञ्चु गतौ, जीव प्राणधारणे, प्रपूर्वः अन प्राणने, एभ्योऽथप्रत्ययः स्यादित्यर्थः। **शयथ इति।** गुणेऽयादेशः। **प्राणथ इति।** 'अनिते'रिति णत्वम्। **भृञश्चित्।** डु भृञ्धारणपोषणयोरस्मादथप्रत्ययः, स च चित्। चित्त्वं स्वरविशेषार्थम्। **रुदिविदिभ्यां ङित्।** रुदिर् अश्रुविमोचने, विद ज्ञाने, आभ्यामथप्रत्ययो ङित्स्यात्। **रुदथ इति।** ङित्त्वान्न गुणः। **उपसर्गे वसेः।** उपसर्गे उपपदे वस निवासे अस्मादथः स्यात्। **आवसथ इति।** आङि

स्थो गृहम्। संवसथो ग्रामः।३९७। अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच्। त्रयोदशभ्योऽसच् स्यात्। अततीत्यतसो वायुरात्मा च। अवतीत्यवसो राजा भानुश्च। चमन्त्यस्मिन् चमसः सोमपानपात्रम्। ताम्यन्त्यस्मिन् तमसोऽन्धकारः। नमसः अनुकूलः। 'रभसो वेगहर्षयोः'। लभसो धनं याचकश्च। नमते नम्यते वा नभस आकाशः। तपसः [पक्षी चन्द्रश्च]। पतसः पक्षी। 'पनसः कण्टकिफलः'। पणसः पण्यद्रव्यम्। महसं ज्ञानम्। ३९८। वेञस्तुट् च। बाहुलकादात्वाऽभावः। वेतसः। ३९९। वहियुभ्यां णित्। वाहसोऽजगरः। 'यावसस्तृणसङ्घातः'। ४००। वयश्च। वय गतौ। वायसः काकः। ४०१। दिवः कित्। दिवसम्। दिवसः। ४०२। कृशृशलिकलिगर्दिभ्योऽभच्। करभः। शरभः। शलभः। कलभः। गर्दभः। ४०३। ऋषिवृषिभ्यां कित्। ऋषभः। वृषभः। ४०४। रुषेर्नित्लुप् च। रुष हिंसायाम्, अस्मादभच् नित्कित्स्यात्, लुपादेशश्च। 'लुषभो मत्तदन्तिनि'। ४०५। रासिवल्लिभ्यां च। रासभः। वल्लभः। ४०६। जॄविशिभ्यां झच्। जरन्तो महिषः। वेशन्तः पल्वलम्।४०७। रुहिनन्दिजीविप्राणिभ्यः

त.] आशि वसेरिति पठितम्। अत्यवि। अत सातत्यगमने, अव रक्षणादौ, चमु अदने, तमु काङ्क्षायाम्, णम प्रह्वत्वे शब्दे च, रभ राभस्ये, डुलभष् प्राप्तौ, णभ तुभ हिंसायाम्, भ्वादौ क्र्यादौ चायम्। तप सन्तापे, पत्ल गतौ, पण व्यवहारे स्तुतौ च, पन च, मह पूजायाम्। गौरादित्वात् ङीष्। 'अतसी स्यादुमा क्षुमा' इत्यमरः। 'चमसो यज्ञपात्रस्य भेदेऽस्त्री पिष्टके स्त्रिया'मिति मेदिनी। 'पनसः कण्टकिफले कन्दके वानरान्तरे। स्त्रियां रोगप्रभेदे स्यात्' इति च। वेञः। वेञ् तन्तुसन्ताने, अस्मादसच् स्यात्तस्य तुट्। दशपादीवृत्तौ तु 'वियस्तुट् चे'ति पठित्वा वी गतिप्रजनकान्त्यादिष्विति धातुरुदाहृतः। वहि। वह प्रापणे, यु मिश्रणादौ, 'अजगरे' शयुर्वाहस इत्युभौ' इत्यमरः। 'वा तु क्लीबे दिवसवासरौ' इति च। यावस इति। असचो णित्वाद्वृद्धिः। दिवः। दिवु क्रीडादौ। कृशृ। कृ विक्षेपे, शॄ हिंसायाम्, शल गतौ, कल विलेखने, गर्द शब्दे। 'करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते' इति मेदिनी। 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः। 'शरभस्तु पशोर्भिदि'। 'करभो वानरभिदि' इति मेदिनी। 'समौ पतङ्गशलभौ' इत्यमरः। 'कलभः करिपोतकः' इति च। 'गर्दभः श्वेतकुमुदे गर्दभो गन्धभिद्यपि। रासभे गर्दभी क्षुद्रजन्तुरोगप्रभेदयोः' इति मेदिनी। ऋषि। ऋषी गतौ, वृषु सेचने, आभ्यां अभच् स्यात्स च कित्। 'ऋषभस्त्वौषधान्तरे। स्वरभिद्वृषयोः कर्णरन्ध्रगर्दभपुच्छयोः। उत्तरस्थः स्मृतः श्रेष्ठे स्त्रीनराकारयोषिति। शूकशिम्ब्यां शिरालायां विधवायां क्वचिन्मता' इति मेदिनी। 'वृषभः श्रेष्ठवृषयोः' इति च। रासिवल्लि। रासृ शब्दे, वल्ल संवरणे। 'वल्लभो दयितेऽध्यक्षे सुलक्षणतुरङ्गमे' इति मेदिनी। जॄविशि। जॄ वयोहानौ, विश प्रवेशने। 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः। बाहुलकादर्हतेरपि झच्। अर्हन्तः क्षपणको जिनः' इति विक्रमादित्यकोशः। रुहि। रुह बीजजन्मनि प्रादुर्भावे च, टुनदि समृद्धौ, जीव प्राणधारणे, अन प्राणने प्रपूर्वः। एभ्य आशिषि झच्,स

बा.] उपपदे वसेः प्रत्ययः। अत्यविचमितमि। अत सातत्यगमने, अव रक्षणादौ, चमु अदने, तमु काङ्क्षायां, णम प्रह्वत्वे शब्दे, रभ राभस्ये, डु लभष् प्राप्तौ, णभ हिंसायां, तप सन्तापे, पत्ल गतौ, पन व्यवहारे स्तुतौ च, पण च, मह पूजायाम्, एभ्योऽसच्प्रत्यय इत्यर्थः। अतस इति।'अतसी स्यादुमा क्षुमा' इत्यमरः। गौरादित्वान्ङीष्। शेषं स्पष्टम्। वेञस्तुट् च। वेञ्तन्तुसन्ताने, अस्मादतसच् स्यात्, प्रत्ययस्य तुडागमश्चेत्यर्थः। ननु वेतस इति वक्ष्यमाणमसङ्गतम्, आदेच इत्यात्वस्य दुर्वारत्वादित्यत आह-बाहुलकादिति। वहियुभ्यां णित्। वह प्रापणे, यु मिश्रणे, आभ्यामसच् प्रत्ययः, स च णिदित्यर्थः। वाहस इति। णित्वादुपधावृद्धिः। 'शयुर्वाहस इत्युभौ' इत्यमरः। यावस इति। णित्वाद्वृद्धिः। वयश्च। वय गतौ, अस्मात् असच्, स च णिदित्यर्थः। वायस इति। 'बलिभुग्वायसा अपि' इत्यमरः। दिवः कित्। दिवु क्रीडादौ, अस्मादसच् कित्स्यात्। दिवस इति। कित्वान्न लघूपधगुणः। 'क्लीबे दिवसवासरौ' इत्यमरः। कृशृशलि। कृ विक्षेपे, शॄ हिंसायां, शल गतौ, कल शब्दे, गर्द शब्दे, एभ्योऽभच्प्रत्यय इत्यर्थः। 'मणिबन्धादाकनिष्ठं करस्य करभो बहि'रित्यमरः। ऋषिवृषिभ्यां कित्। ऋषी गतौ, वृषु सेचने, आभ्यामभच्स्यात्, स च कित्। ऋषभ इति। कित्वान्न लंघूपधगुणः। रुषेर्नित्लुष् च। रुष हिंसायामस्मादभच्, नित्कित्स्यात्, प्रकृतेर्लुषादेशश्च। रासिवल्लिभ्यां च। रासृ शब्दे, वल्ल संवरणे, आभ्याममच्प्रत्ययः, स च निदित्यर्थः। जॄविशिभ्यां झच्। जॄ वयोहानौ, विश प्रवेशने, आभ्यां झच्प्रत्यय इत्यर्थः। जरन्त इति। 'झोऽन्त' इति झकारस्यान्तादेशः। गुण इति भावः। एवं वेशन्त इत्यपि। 'वेशन्तः पल्वलं चाल्पसरो, वापी तु दीर्घिका' इत्यमरः। रुहिनन्दिजीवि। रुह बीजजन्मनि, टु नदि समृद्धौ,

षिदाशिषि । रोहन्तो वृक्षभेदः । नन्दन्तः पुत्रः । जीवन्त औषधम् । प्राणन्तो वायुः । षित्त्वान्ङीप् । रोहन्ती। ।४०८। तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च।दृश्भ्यो झच् स्यात्स च षित्।तरन्तः समुद्रः। तरन्ती नौका । भवन्तः कालः । वहन्तो वायुः । वसन्त ऋतुः । भासन्तः सूर्यः । साधन्तो भिक्षुः । गडेर्घटादित्वान्मित्त्वं ह्रस्वः । 'अयामन्ते'ति णेरयः । गण्डयन्तो जलदः । मण्डयन्तो भूषणम् । जयन्तः शक्रपुत्रः । नन्दयन्तो नन्दकः । ४०९ । हन्तेर्मुट् हि च । हेमन्तः । ४१० । भन्देर्नलोपश्च। भदन्तः प्रव्रजितः ।४११। ऋच्छेररः । ऋच्छरा वेश्या । बाहुलकाज्जर्जरझर्झरादयः ।४१२। अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चित् । षड्भ्योऽरश्चित् स्यात् । अररं कपाटम् । कमरः कामुकः । भ्रमरः । चमरः । देवरः । वासरः । ४१३ । कुवः क्ररन् । कुररः पक्षिभेदः । ४१४ । अङ्गिमदिमन्दिभ्य आरन् । अङ्गारः । मदारो वराहः । मन्दारः ।४१५। गडेः कड च । कडारः । ४१६ । शृङ्गारभृङ्गारौ । शृभृञ्भ्यामारन्नुम् गुक् ह्रस्वश्च । शृङ्गारो रसः । 'भृङ्गारः

---

त.]च षिद्भवति । प्राणन्त इति । 'अनितेः' इति णत्वम् । तॄभू । तॄ प्लवनतरणयोः, भू सत्तायाम्, वह प्रापणे, वस निवासे, भासृ दीप्तौ, साध संसिद्धौ, गड सेचने, मडि भूषायाम्, उभौ ण्यन्तौ । जि जये, टुनदि समृद्धौ, ण्यन्तः । नन्दयन्त इति । उज्ज्वलदत्तस्तु नन्दन्त इत्युदाहृत्य पूर्वसूत्रेण गतार्थतामाशङ्क्य अनाशीरर्थं नन्दिग्रहणमित्याह, तच्चिन्त्यम् । इहाप्याशिषीत्यस्य स्वयमेवानुवर्तितत्वात् । हन्तेः । हन हिंसागत्योरस्मात् झच्प्रत्ययः स्यात्तस्य मुडागमः, धातोर्हिरादेशश्च । भन्देः । भदि कल्याणे सुखे च । अस्मात् झच् स्याद्धातोर्नकारलोपश्च । ऋच्छेः । ऋच्छ गतौ । बाहुलकादिति । जर्ज चर्च झर्झ परिभाषणहिंसातर्जनेषु । परिभाषणभर्त्सनयोरिति तुदादौ । 'जर्जरं शैवले शक्रध्वजे त्रिषु जरत्तरे । झर्झरः स्यात्कलियुगे वाद्यभेदे नदान्तरे' इति च मेदिनी । बाहुलकादेव झस्य जादेशे जर्झर इत्युज्ज्वलदत्तः । अर्तिकमि । ऋ गतौ, कमु कान्तौ, भ्रमु अनवस्थाने, चमु अदने, दिवु क्रीडादौ, वस निवासे, उभावपि ण्यन्तौ। 'अररं छदकपाटयोः' इति मेदिनी । 'कपाटमररं तुल्ये' इत्यमरः । 'भ्रमरः कामुके भृङ्गे' इति मेदिनी । 'चमरं चामरे स्त्री तु मञ्जरीमृगभेदयोः' इति च। चमरो मृगभेदः। देवरः पत्युः कनिष्ठभ्राता। वासर इति । केचित्तु सूत्रे वाशिभ्य इति तालव्यं पठित्वा वाश्र शब्द इत्यस्मादरप्रत्यये वाश्यत इति वाशरः कोकिल इत्याहुः । कुवः । कु शब्दे । अङ्गि । अगिर्गत्यर्थः, मदी हर्षे, मदि स्तुत्यादौ । 'अङ्गार उल्मुके न स्त्री पुंल्लिङ्गस्तु महीसुते' इति मेदिनी । 'मन्दारः स्यात्सुरद्रुमे ।पारिभद्रेऽर्कपर्णे च मन्दारो हस्तिधूर्तयोः' इति च। मदि स्तुत्यादावित्यस्माद्बाहुलकादारुरपि । 'पारिभद्रे तु मन्दारुर्मन्दारः पारिजातकः' इति शब्दार्णवः । गडेः ।गडि वदनैकदेशे, गड सेचने, अस्मादारन्प्रत्ययः स्यात्कडादेशश्च।'कडारः कपिले दासे' इति मेदिनी । 'कडारः कपिलः पिङ्गः' इत्यमरः । शृङ्गार । शॄ हिंसायाम् , डुभृञ् धारणपोषणयोः, एतौ निपात्येते । आभ्यामारन्नुम् गुग् ह्रस्वश्च ।

---

बा.]जीव प्राणधारणे, प्रपूर्वः अन प्राणने, एभ्य आशिषि झच् , स च षिदित्यर्थः । रोहन्त इति ।झस्याऽन्तादेशे उपधागुणे रूपम् । षित्त्वफलं दर्शयन् 'षिद्गौरादिभ्यश्चे'ति ङीषि उदाहरणमाह--रोहन्तीति । तॄभूवहिवसि । तॄ प्लवनतरणयोः, भू सत्तायां, वह प्रापणे, वस निवासे, भासृ दीप्तौ, साध संसिद्धौ, गड सेचने, मडि भूषायां, जि जये, टु नदि समृद्धौ, एभ्यो झच्स्यात् , स च षिदित्यर्थः । तरन्त इति ।झस्याऽन्तादेशः । षित्त्वफलं दर्शयितुमाह-तरन्ती नौकेति । गण्डयन्त इति । गडि सेचने, अस्माण्ण्यन्तात्प्रत्ययः । ननु तर्हि णिचि उपधावृद्धिः कथं न श्रूयत इत्यत आह--घटादय इति। मित्त्वे प्रकृते किमायातमित्यत आह--ह्रस्व इति । 'मितां ह्रस्व इत्यनेने'त्यादिः । ननु 'णेरनिटी'ति णेर्लोपः स्यादित्यत आह--अयामन्तेति । एवं मण्डयन्त इत्यपि । हन्तेर्मुट् हि च । हन हिंसागत्योः, अस्माज्झच्प्रत्ययः स्यात् , तस्य मुडागमः । धातोर्हिंशब्दादेशश्च । हेमन्त इति । धातोर्हिंआदेशे गुणः । भन्देर्नलोपश्च । भदि कल्याणे, अस्माज्झच्स्यात् । धातोरिदित्त्वाल्लब्धनकारस्य लोपश्चेत्यर्थः । भदन्त इति । नलोपे झस्याऽन्तादेशे च रूपम् । ऋच्छेररः । ऋच्छ गतौ, अस्मादरप्रत्यय इत्यर्थः । जर्जरझर्झरादिशब्दानामपि लोके प्रयोगदर्शनादाह--बाहुलकादिति । अर्तिकमिभ्रमि । ऋ गतौ, कमु कान्तौ, भ्रमु अनवस्थाने, चमु अदने, दिवु क्रीडादौ, वस निवासे, एभ्योऽरप्रत्ययः स्यात् , स च चिदित्यर्थः। चित्त्वं स्वरार्थम् । अररमिति । ऋधातोर्गुणे रूपम् । 'कपाटमररं तुल्ये', भ्रातर इत्यनुवृत्तौ 'स्वामिनो देवृदेवरौ' इति चामरः । कुवः क्ररन् । कु शब्दे, अस्मात्क्ररन्प्रत्ययः । ककारनकारावितौ । कुरर इति । कित्त्वान्न गुणः । 'उत्क्रोशकुररौ समौ' इत्यमरः । अङ्गिमदि । अगि मगि इति दण्डकपठितो गत्यर्थः अगिः, मदि स्तुतिमोदादौ, मदी हर्षे, एभ्य आरन्स्यात् । अङ्गार इत्यादि । गडेः कड च । गड सेचने, अस्मादारन्प्रत्ययः स्यात्, कडादेशश्चेत्यर्थः । 'कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ' इत्यमरः । शृङ्गारभृङ्गारौ । एते निपात्येते । निपातन-

कनकालुका'। ४१७ कञ्जिमृजिभ्यां चित् । कञ्जिः सौत्रः । कञ्जारो मयूरः । मार्जारः । ४१८ । कमेः किदुच्चोपधायाः । चिदित्यनुवृत्तेरन्तोदात्तः । कुमारः । ४१९ । तुषारादयश्च । तुषारः । कासारः । सहार आम्रभेदः । ४२० । दीङो नुट् च । दीनारः सुवर्णाभरणम् । ४२१ । सर्तेरपः षुक् च । सर्षपः । ४२२ । उषिकुटिदलिकचिखजिभ्यः कपन् । 'उषपो वह्निसूर्ययोः' । कुटपो मानभाण्डम् । दलपः प्रहरणम् । कचपं शाकपत्रम् । खजपं घृतम् । ४२३ । क्वणेः संप्रसारणं च । कुणपम् । ४२४ । कपश्चाक्रवर्मणस्य । स्वरे भेदः । ४२५ । विटपपिष्टपविशिपोलपाः । चत्वारोऽमी कपन्प्रत्ययान्ताः । विट शब्दे । विटपः । विशतेरादेः पः, प्रत्ययस्य तुट्, षत्वम् । 'पिष्टपं भुवनम्' । विशतेः प्रत्ययादेरित्वम् । विशिपं मन्दिरम् । वलतेः संप्रसारणम् । 'उलपं कोमलं तृणम्' । ४२६ । वृतेस्तिकन् । [वर्त्तिका] वर्तिका । ४२७ ।

त.]'शृङ्गारः सुरते नाट्ये रसे च गजमण्डने । नपुंसकं लवङ्गेऽपि नागसंभवचूर्णयोः' इति मेदिनी । 'भृङ्गारो झिल्लिकायां स्यात्कनकालौ पुनः पुमान्' इति च । कञ्जि । मृजू शुद्धौ, चित्वादारन्प्रत्ययः, अन्तोदात्तः । कञ्जारो जरठे सूर्ये विरञ्चौ वारणे मुनौ' इति विश्वमेदिन्यौ । 'मार्जार ओतौ खट्वाङ्गे' इति च । 'ओतुर्बिडालो मार्जारः' इत्यमरः । कमेः । कमु कान्तौ, अस्मादारन्कित्स्यात् । 'कुमारः स्याच्छुके स्कन्दे युवराजेऽश्ववारके । बालके वरुणद्रौ ना न द्वयोर्जात्यकाञ्चने । कुमारी शैलतनयावनकाल्योर्नदीभिदि । सहापराजिताकन्याजम्बुद्वीपेषु च स्त्रिया' मिति मेदिनी । विश्वप्रकाशे तु 'कुमारी रामतरणी'ति पाठः । रामतरणी लताविशेषः । सहेति प्रसिद्धः । 'तरणी रामतरणी कर्णिका चारुकेसरा । सहा कुमारी गन्धाढ्या' इति धन्वन्तरिनिघण्टुः । 'जम्बूद्वीपसहाकन्याः कुमार्योऽथाश्ववारके । बालके कार्तिकेये च कुमारो भर्तृदारके' इति त्रिकाण्डशेषः । तुषारा । एते निपात्यन्ते । तुष तुष्टौ आरन् । 'तुषारस्तुहिनं हिमम्' इत्यमरः । कासृशब्दकुत्सायाम् । 'कासारः सरसी सरः' इत्यमरः । सहार इति । षह मर्षणे । दीङो । दीङ् क्षये, अस्मादारम्, चस्य नुडागमश्च । सर्तेः । सृ गतौ अस्मादपः स्याद्धातोः षुगागमश्च । उषि । उष दाहे, कुट कौटिल्ये, दल विदारणे, कच बन्धने, खज मन्थे । क्वणेः । क्वण शब्दे । अस्मात्कपन् धातुवकारस्य संप्रसारणं च । 'कुणपः पूतिगन्धे शवेपि चे'ति मेदिनी । 'कुणपः शवमस्त्रिया'मित्यमरः । विटप । 'विटपो न स्त्रियां स्तम्बशाखाविस्तारपल्लवे । विटाधिपे ना' इति मेदिनी । विशतेरिति । विश प्रवेशने । आदेः प इति । एतच्च उज्ज्वलदत्तरीत्योक्तम् । अन्ये तु सूत्रे विष्टपेति दन्त्यौष्ठ्यादिमेव पठन्ति । युक्तं चैतत् । 'अत्र त्रप्रस्य विष्टपम्'

बा.]प्रकारमेवाह--शृभृङ्भ्यामिति । शॄ हिंसायां, डु भृञ् धारणपोषणयोः, आभ्यामारन्प्रत्ययः, धातोर्नुम्, ह्रस्वः, गुणागमश्च निपात्यत इत्यर्थः । शृङ्गारो रस इति । 'शृङ्गारः शुचिरुज्ज्वलः' इत्यमरः । 'भृङ्गारः कनकालुका' इति च । कञ्जिमृजिभ्यां चित् । कञ्जधातोर्धातुपाठेऽदर्शनादाह--सौत्र इति । मृजू शुद्धौ । आभ्यामारन्प्रत्ययः, स च चिदित्यर्थः । मार्जार इति । मृजेर्वृद्धिः । 'ओतुर्बिडालो मार्जारः' इत्यमरः । कमेः किदुच्चोपधायाः । कमु कान्तौ, अस्मादारन्प्रत्ययः, स च कित्, उपधाया अकारस्य उकारश्चेत्यर्थः । कुमार इति । कित्त्वान्न गुणः । तुषारादयश्च । एते निपात्यन्ते । तुषार इति । तुष तुष्टौ, अस्मादारन्, कित्, कित्त्वान्न लघूपधगुणः । कासार इति । कासृ शब्दकुत्सायां । भ्वादिः, अस्मादारनि रूपम् । सहार इति । षह मर्षणे । 'कासारः सरसी सरः' इत्यमरः । दीङो नुट् च । दीङ्क्षये, अस्मादारन्, तस्य नुडागमश्च । किदित्यनुवर्तत एव । तस्मान्न गुणः । दीनार इति । 'दीनारेऽपि च निष्कोऽस्त्री'त्यमरः । सर्तेरपः षुक् च । सृ गतौ, अस्मादपप्रत्ययः षुक् च धातोरागमः । सर्षप इति । अपप्रत्यये धातोर्गुणः । 'वनमुद्गे, सर्षपे तु' इत्यमरः । उषिकुटिदलि । उष दाहे, कुटकौटिल्ये, दल विदारणे, कच बन्धने, खज मन्थे, एभ्यः कपन्प्रत्ययः स्यात् । कनावितौ । उषप इति । कित्त्वान्न लघूपधगुणः । नित्वं स्वरार्थम् । शेषं स्पष्टम् । क्वणेः संप्रसारणं च । क्वण शब्दे अस्मात्कपन्, धातुवकारस्य संप्रसारणं चेत्यर्थः । कुणपमिति । वकारस्य संप्रसारणे उकारे संप्रसारणाच्चेत्युकाराकारयोः पूर्वरूपे रूपम् । 'कुणपः शवमस्त्रिया'मित्यमरः । कपश्चाक्रवर्मणस्य । 'क्वणेः संप्रसारण'मित्यनुवर्तते । चाक्रवर्मणस्य मते क्वणधातोः कपप्रत्ययः, संप्रसारणं चेत्यर्थः । अत्रापि कुणपमित्येव रूपम् । ननु रूपे विशेषाऽभावत्किमर्थमयमित्यत आह-स्वरेभेद इति । कपनि नित्स्वरः, अत्र तु नेति भेद इति भावः । विटपपिष्टप । एते निपात्यन्त इत्यर्थः । निपातनप्रकारमेवाह--विट शब्द इति । 'अस्मात्कपन्प्रत्यय' इति शेषः । कित्त्वान्न गुणः । पिष्टपे आह-विशतेरिति । विश प्रवेशने इत्यस्मात्कपन्प्रत्ययः । कित्त्वान्न गुणः, आदेर्वकारस्य पकारः, प्रत्ययस्य तुडागमश्च निपात्यते इत्यर्थः । व्रश्चेति षत्वे ष्टुत्वे च रूपं सिध्यति । विशिपमित्यत्राह—विशतेरिति । वलतेरिति । वल संवरणे इत्यस्मादित्यर्थः । संप्रसारणमिति । 'आदेर्वकारस्ये'त्यादिः । 'विष्टपं भुवनं जगत्' इत्यमरे विष्टपशब्दो वकारा-

शे.]वर्त्तिकेति । शकुनौ प्राचां मते वर्त्तकेत्यर्थमुदीनां मते वर्त्तिकेत्येवरूपार्थं 'वर्त्तका शकुनौ प्राचा'मितीत्वप्रकरणस्थं वचनं बोद्धव्यम् ।

**कृतिभिदिलतिभ्यः कित्** । कृत्तिका । भित्तिका भित्तिः । लत्तिका गोधा । ४२८ । **इष्यशिभ्यां तकन्** । इष्टका । अष्टका । ४२९ । **इणस्तशन्तशसुनौ** । एतशो ब्राह्मणः । स एव एतशाः । ४३० । **वीपतिभ्यां तनन्** । वी गत्यादौ । वेतनम् । पत्तनम् ।४३१। **दृदलिभ्यां भः** । दर्भः । 'दल्भः स्यादृषिचक्रयोः' । ४३२ । **अर्तिगृभ्यां भन्** । अर्भः । गर्भः । ४३३ । **इणः कित्** । इभः ।४३४ । **असिसञ्जिभ्यां क्थिन्** । अस्थि । सक्थि । ४३५। **प्लुषिकुषिशुषिभ्यः क्सिः** । प्लुक्षिर्वह्निः । कुक्षिः । शुक्षिर्वातः । ४३६ । **अशेर्नित्** । अक्षि । ४३७ । **इषेः क्सुः** । इक्षुः । ४३८ । **अवितॄस्तृतन्त्रिभ्यः ईः** । 'अवीर्नारी रजस्वला' । तरीर्नौः । स्तरीर्धूमः । तन्त्रीर्वीणादेर्गुणः । ४३९ । **यापोः किद्द्वे च** । 'ययीरश्वः' । 'पपीः स्यात्सोमसूर्ययोः' ।४४०। **लक्षेर्मुट् च** । लक्ष्मीः । इत्युणादिषु तृतीयः पादः ।

त.]इत्यादौ तथा दर्शनात्।अमरकोशेऽपि 'विष्टपं भुवनं जगत्' इति प्रचुरपाठाच्च । **वलतेः** । वल वल्ल संवरणे संचरणे च । '**उलपो** न स्त्री गुल्मिन्यां ना तृणान्तरे' इति मेदिनी । **वृतेः** । वृतु वर्तने । **कृतिभिदि** । कृती छेदने, भिदिर् विदारणे, लतिः सौत्रो धातुः । **इष्यशि** । इष इच्छायाम्, अशू व्याप्तौ, आभ्यां तकन् कित्स्यात् । **इष्टकेति** । 'इष्टकेषीकामालानां'मिति निर्देशात् 'प्रत्ययस्था'दिति नेत्त्वम् । केचित्तु प्रत्ययस्थादितीत्वमिह न भवति, अनित्यत्वात् । तज्ज्ञापकं तु 'मृदस्तिकन्' इति इकारोच्चारणमित्याहुः।**इणस्तश** । **एतशा इति** । 'अत्वसन्तस्ये'ति दीर्घः। एतशसौ । एतशसः । **वीपति** । पत्लृ गतौ । 'पत्तनं पुटभेदन'मिति पुरीपर्यायेष्वमरः । **दृदलि** । दृ विदारणे, दल विकसने । **अर्तिगृ** । ऋ गतौ । इयर्तीति अर्भः शिशुः । संज्ञायां कनि अर्भकः । 'गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके' इति मेदिनी । **इणः** । इण् गतौ, अस्माद्भन् कित्स्यात् । 'इभः स्तम्बेरमः पद्मी' इत्यमरः । **असि** । असु क्षेपणे, षञ्ज सङ्गे । 'कीकसं कुल्यमस्थि च' इत्यमरः, 'सक्थि क्लीबे पुमानूरुः' इति च । **प्लुषि** । प्लुष दाहे, कुष निष्कर्षे, शुष शोषणे । **अशेः** । अशू व्याप्तौ, अस्मात् क्सिन्, नित्स्यात् । अक्षि नयनम् । **इषेः** । इष इच्छायाम् । 'रसाल इक्षुः' इत्यमरः । **अवि** । अव रक्षणादौ, तॄ प्लवनतरणयोः, स्तृञ् आच्छादने, तन्त्रि कुटुम्बधारणे, चुरादिण्यन्तः । **तरीरिति** । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः । **यापोः** । या प्रापणे, पा पाने, आभ्यामीः कित्स्याद्द्वित्वं च धातोः । **लक्षेः** । लक्ष दर्शनाङ्कनयोश्चुरादिण्यन्तः । अस्मादीप्रत्ययः स्यात्तस्य मुडागमो णिलोपश्च ।

बा.]दिरेव पठ्यते, सूत्रं त्वन्यमतानुसारेण । गुल्मिन्युलप इत्यपि इत्यमरः । **वृतेस्तिकन्** । वृतु वर्तने, अस्मात्तिकन् कित्यर्थः । **वर्त्तिकेति** । लघूपधगुणः । **वर्तिकेति** । 'हलो यमा'मिति यमस्तकारस्य लोपविकल्पः । **कृतिभिदिलतिभ्यः** । कृती छेदने, भिदिर् विदारणे, लतिः सौत्रः, एभ्यस्तिकन्प्रत्ययः स्यात्, स च किदित्यर्थः । **कृत्तिकेति** । कित्वान्न लघूपधगुणः । **इष्यशिभ्यां तकन्** । इष इच्छायाम्, अशू व्याप्तौ, आभ्यां तकन्प्रत्ययः, स च किदित्यर्थः । **इष्टकेति** । कित्वान्न गुणः । प्रत्ययस्थादिति इत्वं तु 'इष्टकेषीकामालानां चिततूलभारिषु' इति निर्देशान्न भवति । **अष्टकेति** । व्रश्चादिना षत्वं ष्टुत्वम् । 'अष्टका पितृदेवत्ये' इत्युक्तत्वान्नेत्त्वम् । **इणस्तशन्तशसुनौ** । इण् गतावित्यस्मात्तशन्, तशसुन्निति प्रत्ययौ स्त इत्यर्थः । **एतश इति** । गुणः । नकार इत् । **एतशा इति** । तशसुन्प्रत्यये उकारनकारयोरित्संज्ञकत्वात्सान्तोऽयं शब्दः । 'अत्वसन्तस्ये'ति दीर्घः । तशसुनि उकार उच्चारणार्थः । नकारो नित्स्वरार्थः । **वीपतिभ्यां तनन्** । वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु, पत्लृ गतौ, आभ्यां तनन्प्रत्यय इत्यर्थः । **वेतनमिति** । गुणः । 'भृत्याभृतयो भर्म वेतनम्', 'पत्तनं पुटभेदन'मिति चाऽमरः । **दृदलिभ्यां भः** । दृ विदारणे, दल विकसने, आभ्यां भप्रत्यय इत्यर्थः । **दर्भ इति** । काकासुरस्याक्षि दृणातीति दर्भः । कर्तरि भप्रत्ययः, गुणः । **अर्तिगृभ्यां भन्** । ऋ गतौ जुहोत्यादिः, गॄ निगरणे, आभ्यां भन्नित्यर्थः । **अर्भ इति** । गुणः । अर्भक इति तु संज्ञायां कनि बोध्यम् । **इणः कित्** । इण् गतौ, अस्माद्भन् कित्स्यात् । **इभ इति** । कित्वान्न गुणः । 'इभः स्तम्बेरमः पद्मी'त्यमरः । **असिसञ्जिभ्यां क्थिन्** । असु क्षेपणे, षञ्ज सङ्गे, आभ्यां क्थिन्स्यात् । **प्लुषिकुषिशुषिभ्यः क्सिः** । प्लुष दाहे, कुष निष्कर्षे, शुष शोषणे, एभ्यः क्सिः स्यात् । प्लुक्षिरित्यादौ कित्वाद्गुणाऽभावे 'षढोः' इति कः । **अशेर्नित्** । अशू व्याप्तौ, अस्मात्क्सिन् नित्स्यात् । **अक्षीति** । व्रश्चेति षः, कत्वं षत्वम् । **इषेः क्सुः** । इष इच्छायाम्,अस्मात्क्सुः स्यादित्यर्थः । **अवितॄस्तॄ** । अव रक्षणादौ, तॄ प्लवनतरणयोः, स्तृञ् आच्छादने, तन्त्रि कुटुम्बधारणे, एभ्य ईप्रत्यय इत्यर्थः । **अवीरिति** । रजस्वलेत्यर्थः । **यापोः किद्द्वे च** । या प्रापणे, पा पाने, आभ्यामीप्रत्ययः कित्स्याद्धातोर्द्वित्वं च । **ययीरिति** । कित्वात् 'आतो लोप इटि च' इत्यालोपः । **लक्षेर्मुट् च** । लक्ष दर्शनाङ्कनयोः, अस्मादीप्रत्ययः स्यात्, स च किन्, तस्य मुडा-

शे.] अस्थीति । क्थिनो नित्त्वं चिन्त्यप्रयोजनम्, तद्विषयत्वेनाद्युदात्तत्वसिद्धेः । इति तृतीयः पादः ।

## अथ चतुर्थः पादः ।

४४१ । **वातप्रमीः** । वातशब्दे उपपदे माधातोरीप्रत्ययः, स च कित् । वातप्रमीः । अयं स्त्रीपुंसयोः । ४४२ । **ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निज्यतुजलिजिष्ठुजिष्ठजिसन्स्यनिथिनुल्यसासानुकः** । द्वादशभ्यः क्रमात्स्युः । अर्तेः कत्निच् । यण् । 'बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृताङ्गुलिः' । तनोतेर्यतुच् । तन्यतुर्वायू रात्रिश्च । अञ्जेरलिच् । अञ्जलिः । वनेरिष्ठुच् । वनिष्ठुः स्थविरान्त्रम् । अञ्जेरिष्ठच् । अञ्जिष्ठो भानुः । अर्पयतेरिसन् । अर्पिसोऽग्रमांसम् । मदेः स्यन् । मत्स्यः । अतेरिथिन् । अतिथिः । अङ्गेरुलिः । अङ्गुलिः । कौतेरसः । कवसः । अच इत्येके । कवचम् । यौतेरासः । यवासो दुरालभा । कृशेरानुक् । कृशानुः । ४४३ । **श्रः करन्** । उत्तरसूत्रे किद्ग्रहणादिह ककारस्य नेत्त्वम् । शर्करा ।

---

त.] 'लक्ष्मीः पद्मा विभूतिश्च' । 'कृदिकारा'दिति ङीषि लक्ष्मीत्यपि भवतीपि रक्षितः । 'लक्ष्मीः संपत्तिशोभयोः । ऋद्धयोषधौ च पद्मायां'मिति मेदिनी । इत्युणादिषु तृतीयः पादः ।

**माधातोरिति** । मा माने, कित्त्वात् 'आतो धातोः' इत्यालोपः । 'वातप्रमीर्वातमृगः' इत्यमरः । **अयमिति** । 'द्विचतुःषट्पदोरगाः' इत्यमरेण चतुष्पाद्वाचिनामुभयलिङ्गतोक्तेः, सुभूतिचन्द्रादिभिरपि वातप्रमीशब्दस्य द्विलिङ्गतोक्तेश्चेति भावः । तत्र 'कृदिकारा'दिति पाक्षिको ङीष् कैश्चिदिष्यते । न च ह्रस्वादेव 'कृदिकारा'दिति ङीष् भवति न तु दीर्घादिति शङ्क्यं, वर्णनिर्देशे कारप्रत्ययस्य विधानेन दीर्घादपि 'कृदिकारा'दिति ङीषः संभवात् । अतएव वातप्रमीश्रीलक्ष्मीति पक्षे ङयन्ताः सुसाधव इति रक्षितः । एतच्च दुर्घटग्रन्थे स्पष्टम् । 'आशीराश्यहिदंष्ट्रायां लक्ष्मीर्लक्ष्मी हरिप्रिया'मिति द्विरूपकोशः । अतएव 'आशीविषो विषधरः' इत्यमरकोशः सङ्गच्छते । अश भोजन इत्यस्मात् 'इणजादिभ्यः' इति इण्प्रत्यये उपधावृद्धौ 'कृदिकारा'दिति ङीषः स्वीकारात् । 'आशीमिव कलामिन्दोः' इति राजशेखरः । 'आशीर्हिताशंसाऽहिदंष्ट्रयो'रिति सान्तेऽमरात्सान्तोऽप्याशीःशब्दोऽस्तीत्यन्यदेतत् । **ऋतनि** । ऋ गतौ, तनु विस्तारे, अञ्जू व्यक्त्यादौ, वनु याचने, अञ्जू स एव, ऋ गतौ ण्यन्तः, मदी हर्षे, अत सातत्यगमने, अगि गत्यर्थः, कु शब्दे, यु मिश्रणे, कृश तनूकरणे । प्रसङ्गादाह-**अरत्निरिति** । न रत्निः अरत्निरिति नञ्समासः । प्रसृताङ्गुलिः स=हस्तः अरत्निरित्यर्थः । दशपादीवृत्तौ तु कत्निजित्यत्र ककारमपठित्वा अर्तेरत्निचमकितं विधाय अरत्निः साधितः । उज्ज्वलदत्तानुसारेणाह—**वायू रात्रिश्चेति** । तन्यतुः शब्दो मेघः अशनिश्चेत्यपि बोध्यम् । 'आविष्कृणोमि तन्यतुर्न वृष्टि'मिति मन्त्रे तन्यतुर्गर्जितमिति, 'सृजा वृष्टिं न तन्यतुः' इति मन्त्रे तन्यतुर्मेघ इति, 'उतस्माऽस्य तन्यतोरिव द्यौः' इति मन्त्रे'दिवश्चित्रं न तन्यतु'मिति मन्त्रे च तन्यतुरशनिरिति वेदभाष्ये व्याख्यातत्वात् । 'अञ्जलिस्तु पुमान् हस्तसंपुटे कुडवेऽपि चे'ति मेदिनी । **स्थविरान्त्रमिति** । 'वनिष्ठोर्हृदयादधि' इति मन्त्रस्य भाष्ये तथोक्तत्वात् । **अञ्जिष्ठ इति** । केचिदञ्जेरिष्णुचमिच्छन्ति तेषामञ्जिष्णुरुदाहरणम् । **अर्पिस इति** । 'अर्तिह्री'त्यादिना पुक् । 'णेरनिटी'ति णिलोपः । **मदेरिति** । 'मत्स्यो मीनेऽथ पुंभूम्नि देशे' इति मेदिनी । 'अतिथिः कुशपुत्रे स्यात्पुमानागन्तुके त्रिषु' इति च । 'अङ्गुलिः करशाखायां कर्णिकायां गजस्य चे'ति च । कवसः सन्नाहः कङ्कटजातिश्च । **अच इति** । 'कवचो गर्दभाण्डे च संनाहे पर्पटेऽपि च' इति मेदिनी । **यौतेरिति** । 'दुरालभा कटुस्पर्शा यासो धन्वयवासकः' इति धन्वन्तरिनिघण्टुः । 'कृशानुः पावकोऽनलः' इत्यमरः । **श्रः** । शॄ हिंसायाम् ।

---

बा.] गमश्च । अयं धातुश्चुरादिण्यन्तः असादीप्रत्यये णिलोपः । 'लक्ष्मीः पद्मालया पद्मा' इत्यमरः । **इति तृतीयः पादः** ।

**अथ चतुर्थः पादः । वातप्रमीः** । इत्थं निपात्यत इत्यर्थः । निपातनमेवाह-**वातशब्दे उपपदे इति** । **माङ्धातोरिति** । मा माने इत्यस्मादिति भावः । **स च किदिति** । कित्वात् 'आतो लोप' इत्याल्लोपः । 'वातप्रमीर्वातमृगः' इत्यमरः । **अयमिति** । वातप्रमीशब्द इत्यर्थः । **ऋतन्यञ्जिवन्यञ्जि** । ऋ गतौ, तनु बिस्तारे, अञ्जू व्यक्त्यादौ,वनुयाचने,अञ्जू व्यक्त्यादौ,ऋ गतौ ण्यन्तः,मदी हर्षे,अत सातत्यगमने,अगिवगिमगीति दण्डकपठितः अगिर्गत्यर्थः,कु शब्दे, यु मिश्रणे, कृश तनूकरणे, एषां द्वन्द्वात्पञ्चमी । कत्निच्,यतुच्, अलिच्,इष्ठुच्, इष्ठच्, इसन्, स्यन्, इथिन्, उलि, अस, आस, आनुक्, एषां द्वन्द्वात्प्रथमाबहुवचनम् । पूर्वोक्तेभ्यो द्वादशभ्यो धातुभ्य एते द्वादश प्रत्ययाः क्रमात्स्युः । **अर्तेः कत्निजिति** । ककारचकारावितौ । कित्वान्न गुणः,किंतु यणादेशे रत्निरिति रूपम् । रत्निशब्दार्थमाह—**बद्धमुष्टिः करो रत्निरिति** । 'हस्तो मुष्ट्या तु बद्धया, स रत्निः स्यादरत्निस्तु' इत्यमरः । **अरत्निरिति** । न रत्निः अरत्निरिति नञ्समासे साधुः । शेषं स्पष्टम् । **श्रः करन्** । शॄ हिंसायामस्मात्करन्प्रत्यय इत्यर्थः । **शर्करेति** । करनि गुणे रूपम् । नन्वेतदयुक्तं करनः ककारस्य 'लशक्वतद्धिते' इतीत्संज्ञा दुर्वारा । न चोच्चारणसामर्थ्यात्काम्यजादाविव न लोपः,लोपाऽभावे च फलाऽभावादित्संज्ञापि नेति वाच्यं, क्ङिति चेति निषेधसत्त्वेन

**४४४ । पुषः कित् ।** पुष्करम् । **४४५ । कलश्च ।** पुष्कलम् । **४४६ । गमेरिनिः ।** गमिष्यतीति गमी । **४४७ । आङि णित् ।** आगामी । **४४८ । भुवश्च ।** भावी । **४४९ । प्रे स्थः ।** प्रस्थायी । **४५० । परमे कित् ।** परमेष्ठी । **४५१ । मन्थः ।** मन्थतेरिनिः कित्स्यात् । कित्वान्नकारलोपः । मन्थाः । मन्थानौ । मन्थानः । **४५२ । पतेः स्थ च ।** पन्थाः । पन्थानौ । **४५३ । खजेराकः ।** खजाकः पक्षी । **४५४ । बलाकादयश्च ।** बलाका । शलाका । पताका । **४५५ । पिनाकादयश्च ।** पातेरित्वं नुम् च ।

त.] 'शर्करा खण्डविकृतौ उपलाकर्पराऽशयोः । शर्करान्वितदेशे च रुग्भेदे शकलेऽपि च' इति मेदिनी । **पुषः** । पुष पुष्टौ, अस्मात्करन्स्यात्स च कित् । 'पुष्करं खेऽम्बुपद्मयोः । तूर्यवक्त्रे खड्गफले हस्तिहस्ताऽग्रकाण्डयोः । कुष्ठौषधिद्वीपतीर्थभेदयोश्च नपुंसकम् । ना रोगनागविहगनृपभेदेषु वारुणौ' इति मेदिनी । **कलश्च** । पुष्यतेः कलन् स च कित् । 'पुष्कलस्तु पूर्णे श्रेष्ठे' इति हेमचन्द्रः । **गमेः** । गम्लृ गतौ । 'भविष्यति गम्यादयः' इत्याशयेनाह—**गमिष्यतीति** । **आगामीति** । इनिप्रत्ययस्य णित्त्वादुपधावृद्धिः । आगमिष्यतीत्यर्थः । **भुवश्च** । भू सत्तायाम् । अस्मादिनिः स च णित्स्यात् । भविष्यतीति भावी । **प्रे स्थः** । ष्ठा गतिनिवृत्तौ, प्रपूर्वादस्मादिनिः स च णित् । णित्त्वात् 'आतो युक्' इति युक् । प्रस्थायी गन्तुकामः । **परमे** । परमशब्दे उपपदे तिष्ठतेरिनिः कित्स्यात् । कित्त्वादातो लोपः । 'हलदन्ता'दित्यलुक् । 'परमेष्ठी पितामहः' इत्यमरः । **मन्थः** । मन्थ विलोडने । **मन्था इति** । 'पथिमथि' इत्यात्वम् । 'इतोऽत्सर्वनामस्थाने' । 'मन्था मन्थनदण्डे च वज्रे वातेऽपि च स्मृतः' । **पतः** । पत्लृ गतावित्यस्मादिनिः स्थश्चान्तादेशः । पथे गतावित्यस्मात्पचाद्यचि अकारान्तोऽप्यस्ति । 'वाटः पथश्च मार्गश्चे'ति सुभूतिचन्द्रः । 'त्वचि त्वचः किरोऽपि स्यात्किरौ प्रोक्तः पथ पथि' इति द्विरूपेषु विश्वः । इह ऋभवो देवाः क्षयन्त्यस्मिन्निति विग्रहे 'अन्येभ्योऽपि दृश्यते' इति डः । 'ऋभुक्षः स्वर्गवज्रयोः' इति विश्वः । ततो मत्वर्थीयेनिः । ऋभुक्षिन्निति नान्तं प्रातिपदिकम् । 'पथिमथी'त्यात्वे 'इतोऽ'दित्यत्वे च ऋभुक्षा इन्द्रः, ऋभुक्षाणौ ऋभुक्षाण इत्युज्ज्वलदत्तः । दशपाद्यां तु 'अर्तेः भुक्षिनक्' इति सूत्रमुपन्यस्य तस्य ऋभुक्षिन्नित्युदाहृतम् । 'ऋभुक्षिणमिन्द्रमाहुव ऊतये' इति मन्त्रस्य वेदभाष्ये तत्सूत्रमुदाहृतम् । अत्रायं विवेकः—इनिप्रत्ययान्ता इति मते अन्तोदात्तत्वं न्याय्यं, प्रत्ययस्वरेण इनेरिकारस्योदात्तत्वात् । अवग्रहाऽभावो बाहुलकात् । द्वितीयमते त्ववग्रहाऽभावो न्याय्यः, परन्तु प्रत्ययस्वरेणोकारस्योदात्ततया भुक्षिनक्प्रत्ययान्तस्य मध्योदात्तत्वे प्रसक्ते बाहुलकादन्तोदात्तः स्वीकर्तव्य इति । **खजेः** । खज मन्थे । **बलाका** । बल प्राणने, शल गतौ, पत्लृ गतौ, एते आकप्रत्ययान्ता निपात्यन्ते । '**बलाका** बकपङ्क्तिः स्याद्बलाका बिसकण्ठिका । बलाका कामुकी प्रोक्ता बलाकश्च बको मतः' इति विश्वशाश्वतौ । '**शलाका**ऽञ्जनयष्टिका' । '**पताका** वैजयन्त्यां च सौभाग्येऽङ्के ध्वजेऽपि च' इति विश्वः । 'पताका वैजयन्त्यां च सौभाग्ये नाटकाङ्कयोः' इति मेदिनी । **पिनाका** ।

बा.] गुणनिषेधसंपादकत्वेन साफल्यसंभवात् । तस्मादित्संज्ञा दुर्वारैवेत्यत्राह—**उत्तरसूत्र इति** । उत्तरत्र 'पुषः कि'दिति पठ्यते । तत्र करन्नेवानुवर्तते । करनः कित्त्वं विधीयते । यद्यस्य ककारस्येत्त्वं स्यात्तर्हि कित्त्वे स्वतः सिद्धे किमनेन कित्वविधानेन ? । एवं चाऽत्रेत्संज्ञा न भवतीत्यर्थः । **पुषः कित् । पुष्करमिति** । कित्वान्न लघूपधगुणः । **कलश्च** । पुषः किदित्यनुवर्तते । कलन्प्रत्ययः कित्स्यात् । **गमेरिनिः** । गम्लृ गतावित्यस्मादिनिप्रत्ययः । कस्मिन्नर्थे इत्याकाङ्क्षायामाह—**गमिष्यतीति** । उत्तरकृदन्ते 'भविष्यति गम्यादय' इति सूत्रं व्याख्यास्यते मूलकृता । अस्माभिश्चोणादिनिरूपणात्प्रागेव निरूपितम् । तेन सूत्रेण भविष्यतीति नियमनादत्र भविष्यतीति लब्धम् । **आङि णित्** । आङि उपपदे गमेर्भविष्यति जायमान इनिप्रत्ययो णिदित्यर्थः । णित्वादुपधावृद्धिः । **भुवश्च** । भू सत्तायाम्, अस्मादिनिप्रत्ययः, स च णित्स्यादित्यर्थः । **भावीति** । णित्त्वात् 'अचो ञ्णिती'ति वृद्धिः । अयमपि भविष्यदर्थ एव, गम्यादय इत्युक्तत्वात् । **प्रे स्थः** । प्रपूर्वात् ष्ठा गतिनिवृत्तावित्यस्मादिनिप्रत्ययः, स च णित् । **प्रस्थायीति** । इनेर्णित्त्वात् 'आतो युक्चिण्कृतो'रिति युक् । युकः कित्वेऽपि अजादित्वाऽभावान्नाऽऽकारलोपः । **परमे कित्** । परमशब्दे उपपदे ष्ठाधातोरिनिप्रत्ययः, स च कित् । **परमेष्ठीति** । इनेः कित्त्वादातो लोपः, 'हलदन्तात्सप्तम्याः' इति परमे इत्यत्र सप्तम्या अलुक् । **मन्थः** । मन्थ विलोडने, अस्मादिनिप्रत्ययः किदित्यर्थः । कित्वाद्धातुनकारस्य लोपः । मथिन्शब्दः । **मन्था इति** । 'पथिमथी'त्यात्वम् । 'इतोऽत्सर्वनामस्थाने' इतीकारस्याऽत्वम् । 'थो न्थः' इति न्थादेशः । **पतस्थ च** । पत्लृ गतौ इत्यस्मादिनिस्थकारश्चान्तादेश इत्यर्थः । **पन्था इति** । पथिन्शब्दः । पूर्ववत्प्रक्रिया । **खजेराकः** । खज मन्थे, अस्मादाकप्रत्यय इत्यर्थः । 'दर्विः कम्बिः खजाका च' इत्यमरः । **बलाकादयश्च** । एते आकप्रत्ययान्ता निपात्यन्ते । अनेनैव सिद्धे 'खजेराक' इति पूर्वसूत्रं प्रपञ्चार्थम् । **बलाकेति** । बल प्राणने । **शलाकेति** । शल गतौ । **पिनाकादयश्च** । एते आकप्रत्ययान्ता निपात्यन्त इत्यर्थः । निपातन-

'क्लीबपुंसोः पिनाकः स्याच्छूलशङ्करधन्वनोः'। तड आघाते। तडाकः। ४५६। **कषिदूषिभ्यामीकन्।** कषिका पक्षिजातिः। 'दूषिका नेत्रयोर्मलम्'। ४५७। **अनिहृषिभ्यां किच्च।** अनीकम्। हृषीकम्। ४५८। **चङ्कणः कङ्कणश्च।** कण शब्दे। अस्माद्यङ्लुगन्तादीकन्, धातोः कङ्कणादेशश्च। 'घण्टिकायां कङ्कणीका सैव प्रतिसराऽपि च'। ४५९। **शॄपॄवृञां द्वे रुक्चाभ्यासस्य।** शर्शरीको हिंस्रः। 'पर्परीको दिवाकरः'। वर्वरीकः कुटिलकेशः। ४६०। **पर्फरीकादयश्च।** स्फुर स्फुरणे अस्मादीकन् धातोः पर्फरादेशः। 'पर्फरीकं किसलयम्'। दर्दरीकं वादित्रम्। झर्झरीकं शरीरम्। तित्तिडीको वृक्षभेदः। ( ग ) **चरेर्नुम् च।** चञ्चरीको भ्रमरः। मर्मरीको हीनजनः। 'कर्करीका गलन्तिका'। पुणतेः—पुण्डरीकं वादित्रम्। पुण्डरीको

---

त.]एते आकप्रत्ययान्ता निपात्यन्ते। पा रक्षणे, 'पिनाकोऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोः' इति मेदिनी। अमरोक्तिमाह—**क्लीबपुंसोरिति।** किञ्च पिष्ल संचूर्णने, षकारस्य णत्वं धातोर्यगागमः। 'पिण्याकोऽस्त्री तिलकल्के हिङ्गुबाह्लीकसिह्लके' इति मेदिनी। **कषि।** कष खषेति दण्डके हिंसार्थकः। दुष वैकृत्ये ण्यन्तः। 'दोषो णौ' इत्युपधाया ऊकारः। अमरोक्तिमाह—**दूषिकेति।** किञ्च अकृतेऽपि ईकनि दूषयतेः 'अच इः' इति इप्रत्यये दूषिः। 'कृदिकारा'दिति ङीषि दूषी। उभाभ्यामपि स्वार्थे कनि दूषिका ह्रस्वमध्यैव। 'केऽणः' इति ङीषोऽपि ह्रस्वादेशात्। 'पिचण्डी दूषिका दूषी पिचाटं च दृशोर्मल'मिति विक्रमादित्यकोशः। 'दूषिका तूलिकायां च मले स्याल्लोचनस्य चे'ति मेदिनी। **अनिहृषि।** अन प्राणने, हृष तुष्टौ, आभ्यामीकन्स्यात् स च कित्। 'अनीकोऽस्त्री रणे सैन्येऽपि' इति मेदिनी। 'हृषीकं विषयीन्द्रिय'मित्यमरः। **चङ्कणः।** कणधातोर्यङ्लुकि प्रत्ययलक्षणन्यायेन 'सन्यङोः' इति द्वित्वे 'कुहोश्चुः' इत्यभ्यासस्य चुत्वे 'नुगतोऽनुनासिकान्तस्य' इति नुकि चङ्कण्। ङसिङसोस्तु चङ्कणः। **धातोरिति।** चङ्कणित्यस्य।

**शॄ पॄ।** शॄ हिंसायाम्, पॄ पालनादौ, वृञ् वरणे, एभ्य ईकन्, एषां द्विर्वचनमभ्यासस्य रुगागमश्च। **शर्शरीक इत्यादि।** उरदत्वे रपरत्वम्। **पर्फरीका।** ईकन्नन्ता एते निपात्यन्ते। **पर्फरादेश इति।** एतच्चोज्ज्वलदत्तरीत्योक्तं, वस्तुतस्तु धातोर्द्वित्वमुकारस्याऽकारः, सलोपः, रुक् चाभ्यासस्येति दशपाद्यां यदुक्तं तदेव न्याय्यम्। 'चरेर्नुम् चे'त्युत्तरमन्थानुरोधेन 'द्वे रुक् चे'त्याद्यनुवृत्तेर्न्याय्यत्वात्। **किसलयमिति।** 'नैतोशव तुर्फरीपर्फरीका' इति मन्त्रस्य वेदभाष्ये तु भिफला विशरणे, पॄ पालनपूरणयोः, पर्व पुर्व पूरणे, एषामन्यतमस्य निपातनमिदमित्याश्रित्य शत्रूणां विदारयितारौ, स्तोतॄणां पालकौ, इष्टार्थस्य पूरयितारौ चेति व्याख्यातम्। **दर्दरीकमिति।** दॄ विदारणे, अस्मादीकन्धातोर्दर्दरादेशः। **झर्झरीकमिति।** झॄष् वयोहानौ, अस्मादीकन्धातोर्झर्झरादेशः। वस्तुतस्तु दर्दरीकझर्झरीकावपि पर्फरीकवद्धातोर्द्वित्वं रुक् चाभ्यासस्येति व्याख्येयौ। उत्तरखण्डे ऋकारस्य गुणे रपरत्वम्। **तित्तिडीक इति।** तिम ष्टिम ष्टीम आर्द्रीभावे, मकारस्योकारः, अभ्यासस्य तुक् च। 'तित्तिडी चिञ्चाऽम्लिका' इत्यमरे तु शब्दान्तरं बोध्यम्। तथा च 'तित्तिडी त्वम्लिका चिञ्चा तित्तिडीका कपिप्रिया' इति वाचस्पतिः। 'अम्लीका चाम्लिका चिञ्चा तित्तिडीका च तित्तिडा' इति चन्द्रः। 'अम्लीका चुक्रिका चुक्रा साम्ला शुकाथ शुक्तिका। अम्लिका चिञ्चका

---

बा.]प्रकारमाह-**पातेरिति।** पा रक्षणे इत्यस्मादाकप्रत्ययः, धात्वन्त्यस्य इत्वं नुमागमश्च धातोर्निपात्यत इत्यर्थः। अमरकोशमाह—**क्लीबपुंसोः पिनाकः स्यादिति।** **कषिदूषिभ्यामीकन्।** कष हिंसायां, दुष वैचित्त्ये आभ्यामीकन्। **दूषीकेति।** ण्यन्तात्प्रत्ययः। 'दोषो णा'वित्यूकार उपधायाः। अमरकोशस्थमाह—**दूषिकेति।** 'आः कीदगत्रिमुनिलोचनदूषिकाया'मिति मुरारिः। **अनिहृषिभ्यां किच्च।** अन प्राणने, हृष तुष्टौ, आभ्यामीकन्स्यात्स च किदित्यर्थः। **हृषीकमिति।** कित्वान्न गुणः। 'हृषीकं विषयीन्द्रिय'मित्यमरः। **चङ्कणः चङ्कणश्च।** चङ्कण इति षष्ठी। कण निमीलने यङ्लुकि प्रत्ययलक्षणमाश्रित्य 'सन्यङोः' इति द्वित्वे, 'कुहोश्चु'रित्यभ्यासककारस्य चकारे 'नुगतोऽनुनासिकान्तस्य' इति नुकि अनुस्वारे परसवर्णे च चङ्कण् इति धातुः, तस्येत्यर्थः। अस्मादीकन्प्रत्ययः, धातोः कङ्कणादेशश्चेत्यर्थः। **कङ्कणीकेति-**[रूपम्]। **शॄपॄवृञां द्वे।** शॄ हिंसायां, पॄ पालनपूरणयोः, वृञ् वरणे, एभ्य ईकन्प्रत्ययः, धातोर्द्वित्वं, तदभ्यासस्य रुगागमश्च। **शर्शरीक इति।** शॄ इत्यस्य द्वित्वे उरदत्वे रपरत्वे हलादिशेषेण रेफनिवृत्तौ अनेन रुकि रूपम्। एवं **पर्परीक इति।** **पर्फरीकादयश्च।** निपातनमेवाह-**स्फुर स्फुरण इति।** अस्मादीकनित्यर्थः। **दर्दरीकमिति।** दॄ विदारणे, अस्मादीकन्, धातोर्दर्दरादेशः। यद्वा धातोर्द्वित्वं, रुक् चाभ्यासस्य निपात्यते। **झर्झरीकमिति।** झॄष् वयोहानौ, अस्मादीकन् धातोर्झर्झरादेशः। यद्वाऽत्रापि धातोर्द्वित्वं रुक् चाभ्यासस्य निपात्यत इति व्याख्येयम्। **तित्तिडीकमिति।** तिमधातोरीकनि धातोरन्त्यस्य डकारादेशे द्वित्वे अभ्यासस्य तुक् च निपात्यते। **चञ्चरीक इति।** चर गतिभक्षणयोः, अस्मादीकनि धातोर्द्वित्वम्, अभ्यासस्य

व्याघ्रोऽग्निर्दिग्गजश्च । ४६१ । ईषेः किद्ध्रस्वश्च । इषीका शलाका । ४६२ । ऋजेश्च । ऋजीक उपहतः । ४६३ । सर्तेर्नुम् च । सृणीका लाला । ४६४ । मृडः कीकचकङ्कणौ । मृडीको मृगः । मृडङ्कणः शिशुः । ४६५ । अलीकादयश्च । कीकजन्ता निपात्यन्ते । अल भूषणादौ । अलीकं मिथ्या । विपूर्वाद्व्यलीकं विप्रियं खेदश्च । 'वलीकं पटलप्रान्ते' इत्यादि ।४६६। कॄतॄभ्यामीषन् । 'करीषोऽस्त्री शुष्कगोमये' । तरीषः । तरीता । ४६७। शॄपॄभ्यां किच्च । शिरीषः । पुरीषः । पुरीषम् ।४६८। अर्जेर्ऋज च । 'ऋजीषं पिष्टपचनम्' । ४६९ । अम्बरीषः । अयं निपात्यते । अबि शब्दे । 'अम्बरीषः पुमान् भ्राष्ट्रम्' । अमरस्तु 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना' ।४७०। कॄशॄपॄकटिपटिशौटिभ्य ईरन् । करीरो वंशाङ्कुरः । शरीरम् । परीरम् फलम् । कटीरः कन्दरो जघनदेशश्च ।

---

त.] चिञ्चा तिन्तिडीका शुतिन्तडा' इति धन्वन्तरिनिघण्टुः । चरेरिति । चर गतिभक्षणयोरस्मादीकन् द्विर्वचनमभ्यासस्य नुमागमश्च । 'भ्रमरश्चञ्चरीकः स्याद्रोलम्बो मधुसूदनः । इन्दिन्दिरः पुष्पकीटो मधुव्रो मधुकेशटः' इति त्रिकाण्डशेषः । मर्मरीक इत्यादि । मृङ् प्राणत्यागे, डुकृञ् करणे, आभ्यामीकन् धातोर्द्वित्वम् अभ्यासस्य रुक् । 'कर्कर्यालुर्गलन्तिका' इत्यमरः । पुण कर्मणि शुभे, णस्य डः, प्रत्ययस्य रुडागमश्च । 'पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे । पुंसि व्याघ्रेऽग्निदिङ्नागे कोशकारान्तरेऽपि च' इति मेदिनी । इषेः । ईष गतावस्मादीकन् ह्रस्वश्च । कित्त्वाद्गुणाऽभावः । ह्रस्वविधानसामर्थ्यादेव गुणाऽभावे सिद्धेऽप्युत्तरार्थं कित्त्वमित्याहुः । 'इषीकास्यादीषिकापि वानायुजवनायुजौ' इति द्विरूपकोशः । ऋजेः । ऋज गतौ । सर्तेः । सृ गतावस्मादीकन्कित्स्याद्धातोर्नुमागमश्च । 'सृणिका स्यन्दिनी लाला' इत्यमरः । मृडः कीकच् । मृड सुखने । मृडः कीकन्नित्युज्ज्वलदत्तादिपाठः प्रामादिकः । मृडीकशब्दस्य चित्स्वरेणान्तोदात्तत्वात् । 'मृडीके अस्य सुमतौ स्याम' इत्यादौ चित्स्वरस्यैव दर्शनात् । अलीकाद । 'अलीकमप्रियेऽपि स्याद्दिव्यसत्ये नपुंसक'मिति मेदिनी । 'अलीकमप्रिये प्रोक्तमलीकमनृते दिवि' इति विश्वः । 'अलीकमप्रिये भाले वितथे' इति हेमचन्द्रः । तथा चाऽभियुक्तैः प्रयुज्यते-'ते दृष्टिमात्रपतिता अपि कस्य नाऽत्र क्षोभाय पक्ष्मलदृशामलकाः खलाश्च । नीचाः सदैव सविलासमलीकलग्ना ये कालतां कुटिलतां च न संत्यजन्ति' इति । इहाऽलीकलग्नाः=माललग्नाः, अप्रिये लग्ना इत्यादयर्थो यथायोग्यं बोध्यः । 'व्यलीकमप्रियाऽकार्यवैलक्ष्येष्वपि पीडने । ना नागरे' इति मेदिनी । वल संवरणे । 'वलीकनीध्रे पटलप्रान्ते' इत्यमरः । वलतेर्मुगागमे वल्मीकम् । 'वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसक'मित्यमरः । वहतेर्वृद्धिश्च । वाहीको गोरश्वश्च । सुप्रपूर्वादिणस्तुट् च । सुप्रतीकः । शाम्यतेः शमीक ऋषिः । एवमन्येऽप्यूह्या इत्याशयेनाह—इत्यादीति । कॄतॄ । कॄ विक्षेपे, तॄ प्लवनतरणयोः । शॄपॄ । शॄ हिंसायाम्, पॄ पालनादौ, आभ्यामीषन् कित्स्यात् । 'ऋत इद्धातोः' इति इत्वे रपरत्वम् । शिरीषो वृक्षभेदः । 'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । 'पुरीषं गूथं वर्चस्कमस्त्री विष्ठाविशौ स्त्रियाम्' इत्यमरः । अर्जेः । अर्ज षर्ज अर्जने, अस्मादीषन् कित्स्यात्, धातोर्ऋजादेशश्च । अमरोक्तिमाह—ऋजीषमिति । किंच उद्धृतरसः सोमलतायाः शेषोऽपि ऋजीषम् । एतच्च 'ऋजीषिणं वृषणसश्चत श्रिये' 'असत्यो पातु मघवाँऋजीषी' इत्यादिमन्त्रे भाष्ये स्पष्टम् । अयमिति । ईषन्प्रत्ययस्तस्य अरुडागमश्चेत्यर्थः । बोपालितोक्तिमाह-अम्बरीषमिति ।

---

बा.] नुगागमश्च निपात्यते । मर्मरीक इति । मृङ् प्राणत्यागे, अस्मादीकनि धातोर्द्वित्वमभ्यासस्य रुक् च निपात्यते इत्यर्थः । एवं कर्करीकेति डुकृञ् करणे इत्यस्माद्बोध्यः । पुणतेरिति । पुण कर्मणि शुभे, अस्मादीकन्, तस्य रुगागमः, धातोर्डगागमश्च निपात्यत इत्यर्थः । ईषेः किद्ध्रस्वश्च । ईष गतौ, अस्मादीकन्, ह्रस्वश्च धातोः, प्रत्ययस्य कित्त्वं च । इषीकेति । कित्त्वाद्गुणाऽभावः । अत्र यद्यपि धातोर्ह्रस्वविधानसामर्थ्यादेव गुणाऽभावोऽपि सिध्यति, गुणे ईकारस्य इकारस्य चाऽविशेषात्, तथाप्युत्तरार्थमावश्यकमेव । ऋजेश्च । ऋज गतावित्यस्मादीकन्, स च किदित्यर्थः । ऋजीक इति । कित्त्वाद्गुणाऽभावः । सर्तेर्नुम् च । सृ गतौ, अस्मादीकन् कित्स्याद्धातोर्नुमागमश्च । सृणीकेति । नुमि णत्वं, कित्त्वान्न गुणः । मृडः कीकचकङ्कणौ । मृड सेचने, अस्मादीकन्, धातोः कीकच् कङ्कण इत्यादेशौ च पर्यायेण स्त इत्यर्थः । मृडेः कीकीनः कङ्कणीन इति च रूपमिति केचिद्वदन्ति, तदसङ्गतमेव । किं त्वेतौ द्वावपि प्रत्ययौ । मृडीनः मृडङ्कण इति रूपम् । अलीकादयश्च । एते कीकनन्ता निपात्यन्ते इत्यर्थः । वलीकमिति । वल संवरणे इत्यस्मात् प्रत्ययः । कॄतॄभ्यामीषन् । कॄ विक्षेपे, प्लवनतरणयोः तॄ प्रसिद्धः, आभ्यामीषन्प्रत्यय इत्यर्थः । करीष इति । 'तत्तु शुष्कं करीषोऽस्त्री' इत्यमरः । शॄपॄभ्यां किच्च । शॄ हिंसायां, पॄ पालनपूरणयोः, स च किदित्यर्थः । शिरीषमिति । 'ऋत इद्धातोः' इति इत्वम् । पुरीषमिति । 'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । अर्जेर्ऋज च । अर्ज आर्जने, अस्मादीषन्, स च कित्, धातोर्ऋजादेशश्च । ऋजीषमिति । 'ऋजीषं पिष्टपचनं कंसोऽस्त्री पानभाजन'मित्यमरः । अम्बरीषः । निपातनप्रकारमेवाह—अबि

पटीरश्चन्दनः कण्टकः कामश्च। 'शौटीरस्त्यागिवीरयोः'। ब्राह्मणादित्वात् ष्यञ्। शौटीर्यम्। ४७१। **वशेः कित्।** उशीरम्। ४७२। **कशेर्मुट् च।** कश्मीरो देशः। ४७३। **कृञ उच्च।** कुरीरं मैथुनम्। ४७४ **घसेः किच्च।** क्षीरम्। ४७५। **गभीरगम्भीरौ।** गमेर्भः पक्षे नुम् च। ४७६। **विषा विहा।** स्यतेर्जहातेश्च विपूर्वाभ्यामाप्रत्ययः। विषा बुद्धिः। विहा स्वर्गः। अव्यये इमे। ४७७। **पच एलिमच्।** 'पचेलिमो वह्निरव्योः'। ४७८। **शीङो धुक्लक्वलञ्वालनः।** चत्वारः प्रत्ययाः स्युः। शीधु[:] मद्यम्। शीलं स्वभावः। शैवलः। शेवालम्। बाहुलकाद्वस्य पोऽपि। 'शेवालं शैवलो न स्त्री शेपालो जलनीलिका'। ४७९। **मृकणिभ्यामूकोकणौ।** मरूको मृगः। काणूकः काकः। ४८०। **वलेरूकः।** वलूकः पक्षी, उत्पलमूलं च।

---

त.] 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना' इत्यमरः। 'अम्बरीषो रणे भ्राष्ट्रे क्लीबं पुंसि नृपान्तरे। नरकस्य प्रभेदे च किशोरे भास्करेऽपि च। आम्रातकेऽनुतापे च' इति मेदिनी। **कॄशॄपॄ।** कॄ विक्षेपे, शॄ हिंसायाम्, पॄ पालनपूरणयोः, कटे वर्षावरणयोः, इट किट कटी गतौ, चुरादौ पट पुटेति दण्डके भाषार्थः, शौटृ गर्वे। 'वंशाङ्कुरे करीरोऽस्त्री वृक्षभिद्घटयोः पुमान्। करीरा चीरिकायां च दन्तमूले च दन्तिना'मिति मेदिनी। शीर्यत इति शरीरम्। 'शरीरं वर्ष्म विग्रहः' इत्यमरः। अर्द्धर्चादित्वाच्छरीर इति पुंलिङ्गोऽपि। **परीरमिति।** पूर्यतेऽनेनेति विग्रहः। बाहुलकात् हिडि गत्यनादरयोः। हिण्डते इतस्ततो गच्छतीति हिण्डीरः। 'हिण्डीरोऽब्धिकफः फेनः' इत्यमरः। 'डिण्डीरोऽपि च हिण्डीरः' इति द्विरूपकोशः। किर्मीरजम्बीरतूणीरादयोऽपि बाहुलकादेव बोध्याः। 'किर्मीरो नागरङ्गे च कर्बुरे राक्षसान्तरे' इति मेदिनी। 'जम्बीरः प्रस्थपुष्पे स्यात्तथा दन्तशठद्रुमे' इति च। **वशेः।** वश कान्तौ, अस्मादीरन्कित्स्यात्। कित्वात्संप्रसारणादि। उशीरं वीरणमूलमुशीरोऽपि। 'मूलेऽस्योशीरमस्त्रियाम्। अभयं नलदं सेव्य'मित्यमरः। **कशेः।** कश इति सौत्रो धातुः, अस्मादीरन् तस्य मुडागमश्च। पृषोदरादित्वात्काश्मीरः। **कृञः।** डुकृञ् करणे अस्मादीरन्, धातोरन्त्यस्य उदादेशो रपरः। **घसेः।** घस्लृ अदने। अस्मादीरन् कित्स्यात्। 'गमहने'-त्युपधालोपे कत्वं षत्वं च। 'क्षीरं दुग्धे च नीरे च' इति विश्वः। **गभीर।** गम्लृ गतौ। अस्मादीरन् भकारोऽन्तादेशः पक्षे नुमागमश्च निपात्यते। 'निम्नं गभीरं गम्भीर'मित्यमरः। **विष।** षोऽन्तकर्मणि, ओहाक् त्यागे, आभ्यां विपूर्वाभ्यामाप्रत्ययो निपात्यते। **पचः।** डुपचष् पाके, अस्मादेलिमच् स्यात्। कर्तरि अयम्। कृत्यप्रत्ययेषु तु केलिमर् उपसङ्ख्यातः। **शीङः।** शीङ् स्वप्ने। शेरतेऽनेनेति शीधुर्मद्यविशेषः। 'मैरेयमासवः शीधुः' इत्यमरः। अर्धर्चादिपाठात् क्लीबं च। 'पुंनपुंसकयोर्दारुजीवातुस्थाणुशीधवः' इति त्रिकाण्डशेषः। 'शीलं स्वभावे सद्वृत्ते' इति मेदिनी। 'जलनीली तु शेवालं शैवलः' इत्यमरः। 'शैवलं पद्मकाष्ठे स्यात् शैवाले तु पुमानय'मिति मेदिनी। शब्दार्णवोक्तिमाह—**शैवालं शेवल इति।** **मृकणि।** मृङ् प्राणत्यागे, कण शब्दार्थः। ऊकश्च उकण् च ऊकोकणौ

---

वा.] **शब्दे इति।** इदित्वान्नुमि अम्ब, अस्मात् ईषनि अरुडागमो निपात्यत इत्यर्थः। अमरकोशमाह—**क्लीबेऽम्बरीषमिति।** **कॄशॄपॄ।** कॄ विक्षेपे, शॄ हिंसायां, पॄ पालनपूरणयोः, कटे वर्षावरणयोः, पट भाषार्थः, शौटृ गर्वे, एषां द्वन्द्वात्पञ्चमी। एभ्य ईरन्प्रत्ययः स्यात्। **करीर इति।** 'वंशाङ्कुरे करीरोऽस्त्री तरुभेदे घटे च ना' इत्यमरः। **पटीर इति।** [ प्रज्ञायणि पाटीरोऽपि ]। **वशेः कित्।** वश कान्तौ, अस्यादीरन् कित्स्यात्। **उशीरमिति।** कित्वात्संप्रसारणम्। **कशेर्मुट् च।** कशधातुः सौत्रः, तस्मादीरन् स्यात्तस्य मुडागमश्च। **कृञ उच्च।** डु कृञ् करणे, अस्मादीरन्स्याद्धातोरन्त्यस्य उकार आदेशश्च रपरो भवतीत्यर्थः। **कुरीरमिति।** उत्वं रपरत्वम्। **घसेः किच्च।** घस्लृ अदने, अस्मादीरन्स्यात्, स च कित्। **क्षीरमिति।** गमहनेत्युपधालोपे खरि चेति चर्त्वे षत्वम्। **गभीरगम्भीरौ।** एतौ निपात्येते। निपातनमाह—**गमेरिति।** गम्लृ गतावित्यस्मादीरन्प्रत्ययो, भकारश्चान्तादेशो नुमागमविकल्पश्च निपात्यत इत्यर्थः। 'निम्नं गभीरं गम्भीर'मित्यमरः। **विषा विहा।** इमे निपात्येते। तदेवाह—**स्यतेरिति।** षोऽन्तकर्मणि, ओ हाक् त्यागे, आभ्यामित्यर्थः। विषा वृक्षभेदेऽपि। 'विश्वा विषा प्रतिविषा' इत्यमरः। **पच एलिमच्।** डु पचष् पाके, अस्मादेलिमजित्यर्थः। कृत्यप्रक्रियायां तु 'केलिमर उपसङ्ख्यान'मित्युक्तम्। **शीङो धुक्।** शीङ् स्वप्ने, अस्माद्धुक्, लक्, वलञ्, वालन्, एते चत्वारः प्रत्ययाः स्युः। **शीधु इति।** धुकः कित्वान्न गुणः। 'मैरेयमासवः शीधुः' इत्यमरः। **शीलमिति।** लकः कित्वाद्गुणाऽभावः। **शैवलमिति।** ञित्वात् 'अचो ञ्णिति' इति वृद्धिः। **शेवालमिति।** वालनि गुणः। 'जलनीली तु शेवालं शैवले तु कुमुद्वती'त्यमरः। **मृकणिभ्यामूकोकणौ।** मृङ् प्राणत्यागे, कण निमीलने, आभ्यामूक-ऊकणप्रत्ययौ क्रमात्स्त इत्यर्थः। **मरूक**

४८१ । **उलूकादयश्च।** वलेः संप्रसारणमूकश्च । 'उलूकाविन्द्रपेचकौ' । वावदूको वक्ता । भल्लूकः । (ग) **शमेर्बुक्च** । शम्बूको जलशुक्तिः । ४८२ । **शलिमण्डिभ्यामूकण्** । शालूकं कन्दविशेषः । मण्डूकः । ४८३ । **नियो मिः** । नेमिः । ४८४ । **अर्तेरूच्च** । ऊर्मिः । ४८५ । **भुवः कित्** । भूमिः । ४८६ । **अश्नोते रश् च** । रश्मिः किरणो रज्जुश्च । ४८७ । **दल्मिः** । दल विशरणे । दल्मिरिन्द्रायुधम् । ४८८ । **वीज्याज्वरिभ्यो निः** । बाहुलकाण्णत्वम् । 'वेणिः स्यात्केशविन्यासः प्रवेणी च स्त्रियामुभे' । ज्यानिः । जूर्णिः । ४८९ । **सृवृषिभ्यां कित्** । सृणिरङ्कुशः । 'वृष्णिः क्षत्रियमेषयोः' । ४९० । **अङ्गेर्नलोपश्च** ।

त.] एतौ प्रत्ययौ यथाक्रमं भवतः । वलेः । वल संवरणे । 'उलूकः पुंसि काकाराविन्द्रे भारतयोधिनि' इति मेदिनी । वदेर्यङ्लुगन्तादूकः । 'वाचोयुक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि' इत्यमरः । **भल्लूक इति** । भल्ल परिभाषणे इत्यस्मादूकः । **शमेः** । शम उपशमे अस्मादूकः, धातोर्बुगागमश्च । **शम्बूको** गजकुम्भान्ते घोण्टे च शूद्रतापसे' इति मेदिनी । बाहुलकादुकप्रत्यये ह्रस्वमध्योऽपि । 'जम्बूकं जम्बुकं प्राहुः शम्बूकमपि शम्बुकमिति द्विरूपकोशः । जम्बूकबन्धूकादयोऽप्यत्रैव द्रष्टव्याः । **जम्बूकः** फेरवे नीचे पश्चिमाशापतावपि' इति मेदिनीविश्वप्रकाशौ । **'बन्धूकं** बन्धुजीवे स्याद्बन्धूकः पीतसारके' इति च । **शलिमण्डि** । शल गतौ, मडि भूषायां हर्षे च । 'सौगन्धिकं तु कह्लार'मित्याद्युपक्रम्य 'शालूकमेषां कन्दः स्यात्' इत्यमरः । एषां च सौगन्धिकादीनां कुमुदकैरवान्तानां कन्दो मूलं शालूकमित्यर्थः । मण्डते वर्षासमयमिति मण्डूको भेकः । **नियो मिः** । णीञ् प्रापणे । नयति चक्रमिति नेमिश्चक्रावयवः । **'नेमिर्ना** तिनिशे कूपत्रिकाचक्रान्तयोः स्त्रिया'मिति मेदिनी । बाहुलकादन्यतोऽपि । या प्रापणे । 'यामिः स्वसृकुलस्त्रियोः' इत्यन्तस्थादौ रभसः । **'जामिः** स्वसृकुलस्त्रियोः' इति चवर्गतृतीयादावजयकोशः । 'चवर्गादिरपि प्रोक्तो जामिः स्वसृकुलस्त्रियोः' इति द्विरूपेषु विश्वः । **अर्तेरूच्च** । ऋ गतावित्यस्मान्मिः, धातोरूकारादेशश्च । उच्चेति वक्तुमुचितम्, रपरत्वे 'हलि चे'ति दीर्घसंभवात् । **'ऊर्मिः** स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः । वस्त्रसंकोचरेखायां वेदनापीडयोरपि' इति मेदिनी । **भुवः** । भवतेर्मिः कित्स्यात् । भवन्ति भूतान्यस्यामिति भूमिः । **'भूमिर्वसुन्धरायां** स्यात्स्थानमात्रेऽपि च स्त्रिया'मिति मेदिनी । 'भूर्भूमिरचलाऽनन्ता' इत्यादिस्त्वमरः । **अश्नोतेः** । अशू व्याप्तौ, अस्मान्मिः, धातो रशादेशश्च । 'रश्मिः पुमान् दीधितौ स्यात्पक्ष्मप्रग्रहयोरपी'ति मेदिनी । **वीज्या** । वी गतौ, ज्या वयोहानौ, ज्वर रोगे । अमरोक्तिमाह—**वेणिः स्यादित्यादि** । 'कृदिकारा'दिति ङीष् । **'वेणी** केशस्य बन्धने । नद्यादेरन्तरे देवताडे' इति मेदिनी । **'वेणी** खरा गरी देवताडो जीमूत इत्यपि' इत्यमरः । **'ज्यानिर्हानौ** स्रवन्त्यां च' इति विश्वः । 'ज्वरत्वरे'त्युपधाया वकारस्य च ऊठ् । **जूर्णिः** रुग्रोगः । **सृवृषि** । सृ गतौ, वृषु सेचने, आभ्यां निः कित्स्यात् । 'अङ्कुशोऽस्त्री सृणिः स्त्रिया'मित्यमरः । 'सृणिः स्यादङ्कुशे पुमा'निति कोशान्तरम् । अत एव 'आरक्षमग्नमवमत्य सृणिं शिताग्र'मिति माघे पुंलिङ्गप्रयोगः । **'वृष्णिस्तु** यादवे मेषे वृष्णिः पाखण्डमेषयोः' इति

बा.] **इति** । ऊके गुणः । **काणूक इति** । ऊकणो णित्त्वादुपधावृद्धिः । **वलेरूकः** । वलं संवरणे, अस्मादूकप्रत्यय इत्यर्थः । **उलूकादयश्च** । निपात्यन्त इत्यर्थः । निपातनमेवाह—**वलेरिति** । **संप्रसारणमिति** । वकारस्येत्यर्थः । 'उलूकः करिणः पुच्छमूलोपान्ते च पेचके' इत्यमरः । **वावदूक इति** । वदेर्यङ्लुगन्तादूकः । 'वावदूकश्च वक्तरी'त्यमरः । **भल्लूक इति** । भल भल्ल परिभाषणहिंसादानेष्विति पठितभल्लधातो रूपम् । 'ऋक्षाऽच्छभल्लभल्लूकाः' इत्यमरः । **शमेर्बुक् च** । शम उपशमे, अस्मादूकः, धातोर्बुगागमश्च । 'शम्बूका जलशुक्तयः' इत्यमरः । **शलिमण्डिभ्यामूकण्** । शल गतौ, मडि भूषायाम्, आभ्यामूकण्प्रत्यय इत्यर्थः । **शालूक इति** । ऊकणो णित्त्वादुपधावृद्धिः । 'शालूकमेषां कन्दः स्या'दित्यमरः । **मण्डूक इति** । प्रत्ययस्य णित्त्वेऽपि अकारस्योपधात्वाऽभावान्न वृद्धिः । **नियो मिः** । णीञ् प्रापणे, अस्य निय इति पञ्चम्यन्तम् । अस्मान्मिप्रत्यय इत्यर्थः । **नेमिरिति** । 'चक्रं रथाङ्गं तस्याऽन्ते नेमिः स्त्री स्यात्प्रधिः पुमा'नित्यमरः । **अर्तेरूच्च** । मिरित्यनुवर्तते । ऋ गतावित्यस्मान्मिप्रत्ययो धातोरूकारश्चादेश इत्यर्थः । **ऊर्मिरिति** । धातोरूत्वे रपरत्वम् । **भुवः कित्** । भू सत्तायामित्यस्मान्मिप्रत्ययः, स किदित्यर्थः । **भूमिरिति** । कित्त्वान्न गुणः । अत्र 'अर्तिभुवोरूच्चे'त्येव सूत्रं कर्तुं शक्यम्, भुवः किदिति च त्यक्तुं शक्यम् । न च भूमिरित्यत्र गुणप्रसङ्गः, ऊकारस्य ऊकारविधानसामर्थ्येन गुणाऽभावस्य सिद्धत्वात् । **अश्नोते रश्च** । अशू व्याप्तौ, अस्मात् मिः, धातोः रशादेशश्च । **रश्मिरिति** । 'किरणप्रग्रहौ रश्मी' इत्यमरः । **दल्मिः** । इत्थं निपात्यत इत्यर्थः । धातुं प्रदर्शयति—**दल विशरणे इति** । **वीज्याज्वरिभ्यो निः** । वी गतिव्याप्त्यादौ, ज्या वयोहानौ, ज्वर रोगे, एभ्यो निप्रत्यय इत्यर्थः । ननु वेणिरित्यत्र कथं णत्वं, रषाभ्यां परत्वाऽभावादित्यत्राह—

शे.] जूर्णिरिति । बाहुलकादाङ्पूर्वादृतेरपि । आर्त्निः=धनुःकोटिः, ङीषि आर्त्नी त्यपि । 'आर्तिः पीडाधनुःकोट्यो'रित्यार्तिशब्दस्तु आङ्पूर्वादृतेः क्तिनि बोद्धव्यः । अयं ह्रस्वादिरपि उणादिषु साधुः ।

अग्निः। ४९१। **वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्**। वह्निः। श्रेणिः। श्रोणिः। योनिः। द्रोणिः। ग्लानिः। हानिः। तूर्णिः। बाहुलकान्म्लानिः। ४९२। **घृणिपृश्निपार्ष्णिचूर्णिभूर्णि**। एते पञ्च निपात्यन्ते। घृणिः किरणः। स्पृशतेः सलोपः। पृश्निरल्पशरीरः। पृषेर्वृद्धिश्च। पार्ष्णिः पादतलम्। चरेरुपधाया उत्वम्। 'चूर्णिः कपर्दकशतम्'। बिभर्तेरुत्वम्। भूर्णिर्धरणी। ४९३। **वृदृभ्यां विन्**। वर्विर्घस्मरः। दर्विः। ४९४। **जॄशॄस्तॄजागृभ्यः क्विन्**। जीर्विः पशुः। शीर्विर्हिंस्रः। स्तीर्विरध्वर्युः। जागृविर्नृपः। ४९५। **दिवो द्वे दीर्घश्चाभ्यासस्य**। 'दीदिविः स्वर्गमोक्षयोः'। ४९६। **कृविघृष्विछविस्थविकिकीदिवि**। कृविस्तन्तु-

---

त.]विश्वः। 'ऐन्द्रे वृष्णि षोडशिनि तृतीय'मिति श्रुतौ वृष्णिं मेषमित्यर्थः। **अङ्गेः**। अगिर्गत्यर्थः। 'अग्निर्वैश्वानरेऽपि स्याच्चित्रकाख्यौषधौ पुमा'निति मेदिनी। **वहि**। वह प्रापणे, श्रिञ् सेवायाम्, श्रु श्रवणे, युमिश्रणे, द्रु गतौ, ग्लै म्लै हर्षक्षये, ओहाक् त्यागे, ञित्वरा संभ्रमे, एभ्यो निः प्रत्ययः स्यात्स च नित्। 'वह्निर्वैश्वानरेऽपि स्याच्चित्रकाख्यौषधौ पुमा'निति मेदिनी। **श्रेणिः** पङ्क्तिः। '**निःश्रेणिस्त्वधिरोहिणी**'। **श्रेणिः** स्त्रीपुंसयः पङ्क्तौ समाने शिल्पिसहतौ' इति मेदिनी। **श्रोणिः** कटिप्रदेशः। 'कटिः **श्रोणिः** ककुद्मती'त्यमरः। **योनिर्भगम्**। '**योनिः** स्त्रीपुंसयोश्च स्यादाकरे स्मरमन्दिरे' इति मेदिनी। **द्रोणिः** सेचनी। 'कृदिकारा'दिति ङीषि **द्रोणी**। '**द्रोणोऽस्त्रि**यामाढके स्यादाढकादिचतुष्टये। पुमान् कृपीपतौ कृष्णकाके स्त्री नीवृदन्तरे' इति मेदिनी। **ग्लानिर्दौर्बल्यम्**। **हानि**रपचयः क्षयश्च। **तूर्णिर्मानः**। **घृणि**। घृ सेचने, स्पृश संस्पर्शने, पृषु सेचने, चर गतौ, डुभृञ् धारणपोषणयोः। निप्रत्ययो गुणाभावश्च निपात्यते। '**घृणिः** पुनः। अंशुज्वालातरङ्गेषु' इति हेमचन्द्रः। '**पृश्नि**रल्पतनौ' इत्यमरः। '**पार्ष्णिः** स्यादुन्मदस्त्रियाम्। स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि चे'ति मेदिनी। **भूर्णिरिति**। 'तक्वा न भूर्णिः' इति मन्त्रभाष्ये तु भूर्णिर्धारकः पोषको वेति व्याख्यातम्। **वृदृ**। वृञ् वरणे, दृङ् आदरे। स्त्रियां 'कृदिकारा'दिति ङीष्। दर्वी। **जॄशॄ**। जॄ वयोहानौ, शॄ हिंसायाम्, स्तॄञ् आच्छादने, जागृ निद्राक्षये। क्विनः कित्त्वात् 'ॠत इद्धातोः' इति इत्वे रपरत्वे जीर्विरित्यादि। **दिवो**। दिवु क्रीडादौ अस्मात् क्विन्। कित्त्वाद्गुणाऽभावः। 'दीदिविर्धिषणाऽन्नयोः' इति विश्वः। 'दीदिविर्ना धिषणेऽन्नेतदस्त्रिया'मिति मेदिनी। **धिषणो** बृहस्पतिः। 'दीदिविर्द्वादशकरश्चक्षुः सुरगुरुर्गुरुः' इति त्रिकाण्डशेषः। 'दीदिविर्द्वादशार्चिः स्याज्जीवः प्राक्फल्गुनीसुतः' इति हारावली। 'ओदनोऽस्त्री सदीदिविः' इत्यमरः। अत्र सदीदिविर्दीदिविसहित इति व्याख्यानं न्याय्यम्। अत्र स इति विशेषणाद्दीदिविः पुंलिङ्ग इति केषांचिद्व्याख्यान नादर्तव्यम्। स इति छेदने तु अस्त्रियामिति न लभ्येत। ततश्चान्ते'तदस्त्रिया'मिति पूर्वोक्तमेदिनीग्रन्थो विरुध्येतेति ध्येयम्। 'गोपामृतस्य दीदिविम्'इति मन्त्रे तु द्योतमानमित्यर्थः। **कृवि घृष्वि**। डुकृञ् करणे,घृषु सेचने,

---

-बा.]बाहुलकादिति। अमरकोशमाह—**वेणिः स्यादिति**। **ज्यानिरिति**। हानिरित्यर्थः। **जूर्णिरिति**। ज्वरधातोर्निप्रत्यये ज्वरत्वरेत्यूठ्। **सृवृषिभ्यां कित्**। सृ गतौ, वृषु सेचने, आभ्यां निः कित्स्यात्। **सृणिरिति**। ऋकारात्परत्वाण्णत्वम्। कित्त्वान्न गुणः। 'अङ्कुशोऽस्त्री सृणिः स्त्रिया'मित्यमरः। **वृष्णिरिति**। रषाभ्यामिति णत्वम्। **अङ्गेर्नलोपश्च**। अगिर्गत्यर्थः, अस्मान्निः स्यात्, धातोरिदित्त्वाल्लब्धनकारस्य लोपश्चेत्यर्थः। किदित्यनुवर्त्त्य नेः कित्त्वविधानेऽपि धातोरिदित्त्वात् 'अनिदिता'मिति लोपो न स्यादिति नकारलोपविधानं कृतम्। **वहिश्रिश्रुयु**। वह प्रापणे, श्रिञ् सेवायां, श्रु श्रवणे, यु मिश्रणे, द्रु गतौ, ग्लै हर्षक्षये, ओ हाक् त्यागे, ञि त्वरा संभ्रमे, एभ्यो निप्रत्ययः स्यात्, स च नित्। नित्त्वं स्वरार्थम्। **तूर्णिरिति**। त्वरधातोः प्रत्यये ज्वरत्वरेत्यूठि रषाभ्यामिति णत्वम्। **घृणिपृश्नि**। एते निपात्यन्ते। **घृणिरिति**। घृ क्षरणदीप्त्योरित्यस्मान्निप्रत्यये णत्वम्। गुणाऽभावो निपातनात्। **पृश्निरिति**। स्पृश संस्पर्शने इत्यस्मात्प्रत्यये सकारलोपो गुणाऽभावश्च निपात्यते। **पार्ष्णिरिति**। पृषु सेचने, अस्मान्निप्रत्यये धातोर्वृद्धिर्निपात्यते। ऋकारस्य आर् वृद्धिः, रषाभ्यामिति णत्वम्। **चूर्णिरिति**। चर गतावित्यस्मान्निप्रत्यये रषाभ्यामिति णत्वम्, उपधाया ऊत्वं निपात्यत इत्यर्थः। **भूर्णिरिति**। डु भृञ् धारणपोषणयोः, अस्मान्निप्रत्यये धातोरन्त्यस्य ऊत्वं निपात्यते, रपरत्वं, रषाभ्यामिति णत्वम्। **वृदृभ्यां विन्**। वृञ् वरणे, दृङ् आदरे, आभ्यां विन्नित्यर्थः। **वर्विरिति**। धातोर्गुणः। **जॄशॄस्तॄ**। जॄ वयोहानौ, शॄ हिंसायां, स्तॄञ् आच्छादने, जागृ निद्राक्षये, एभ्यः क्विन् स्यात्, कनावितौ। **जीर्विरिति**। कित्त्वाद्गुणाऽभावे 'ॠत इद्धातो'रिति इत्वे 'हलि चे'ति दीर्घे रूपम्। 'वेरपृक्तस्ये'ति लोपस्तु न, अपृक्तस्येत्युक्तेः। **दिवो द्वे**। दिवु क्रीडाविजिगीषादिषु, अस्मात्क्विन्, धातोर्द्वित्वम्, अभ्यासस्य दीर्घश्च स्यात्। **दीदिविरिति**। पुनर्ह्रस्व इत्यभ्यासह्रस्वस्तु न शङ्क्यः, लक्ष्ये लक्षणस्येति न्यायात्। न चाऽभ्यासदीर्घात्पूर्वमिकारस्य ह्रस्वविधाने फलाऽभावात् ह्रस्वो न प्रवर्तते, एवं च न 'लक्ष्ये लक्षण'मिति न्यायविरोध इति वाच्यम्, फलाऽभावेऽपि पर्जन्यवच्छास्त्रप्रवृत्त्या दीर्घात्पूर्वं ह्रस्वप्रवृत्तेर्दुर्वारत्वात्। 'ओदनोऽस्त्री स दीदिविः'

वायद्रव्यम् । घृष्विर्वराहः । छास्योर्हस्वत्वं च । छविर्दीप्तिः । स्थविस्तन्तुवायः । दीव्यतेः किकीपूर्वात् किकीदिविश्चाषः । बाहुलकाद्ध्रस्वदीर्घयोर्विनिमयः । 'चाषेण किकिदीविना' । ४९७ । पातेर्डतिः । पतिः । ४९८ । शकेर्ऋतिन् । शकृत् । ४९९ । अमेरतिः । अमतिः कालः । ५०० । वहिवस्यर्तिभ्यश्चित् । वहतिः पवनः । 'वसतिर्गृहयामिन्योः' । अरतिः क्रोधः । ५०१ । अञ्चेः को वा । अकतिः, अञ्चतिर्वातः । ५०२ । हन्तेरंह च । हन्तेरतिः स्यादंहादेशश्च धातोः । हन्ति दुरितमनया अंहतिर्दानम् । 'प्रादेशनं निर्वपणमपवर्जनमंहतिः' । ५०३ । रमेर्नित् । 'रमतिः कालकामयोः' । ५०४ । सूङः क्रिः । सूरिः । ५०५ । अदिशदिभूशुभिभ्यः क्रिन् । अद्रिः । शद्रिः शर्करा । भूरि प्रचुरम् । शुभ्रिर्ब्रह्मा । ५०६ । वङ्क्र्यादयश्च । क्रिन्नन्ता निपात्यन्ते । वङ्क्रिर्वाद्यभेदो गृहदारु पार्श्वास्थि च । वभ्रिः क्षेत्रम् । अंह्रिरङ्घ्रिश्च चरणः । तदिः सौत्रो धातुः । तन्द्रिर्मोहः । बाहुलकाद्गुणः । भेरिः । ५०७ । राशदिभ्यां त्रिप् । रात्रिः । शत्रिः कुञ्जरः ।

त.] छो छेदने,ष्ठा गतिनिवृत्तौ,दिवु क्रीडादौ,एते क्रिन्नन्ता निपात्यन्ते। घृष्विर्वराह इति । 'उग्रस्य यूनः स्थविरस्य घृष्वेः' इति मन्त्रे तु घृष्वेः=कामानां वर्षकस्येत्यर्थ इति व्याख्यातम् , घृषु सेचने इति धात्वर्थानुगमात् । 'छविः शोभारुचोर्योषित्' इति मेदिनी । 'अथ चाषः किकीदिविः' इत्यमरः । विनिमय इति । 'किकिदीविः किकीदिवौ' इति द्विरूपकोशः । पातेः । पा रक्षणे डित्त्वाट्टिलोपः । 'पतिर्धवे ना त्रिष्वीशे' इति मेदिनी । शकेः । शक्लृ शक्तौ । 'उच्चाराऽवस्करौ शमलं शकृत्' । गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविशौ स्त्रिया'मित्यमरः । अमेः । अम गतौ । 'अथाऽमतिः पुंसि हिमदीधितिकालयोः'इति मेदिनी। अमितिश्चामतिः काले' इति द्विरूपेषु विश्वः। वहि । वह प्रापणे,वस निवासे,ऋ गतौ । 'वहतिः सचिवे गवि' इति विश्वः । 'वसतिः स्यात् स्त्रियां वासे यामिन्यां च निकेतने'इति मेदिनी । अञ्चेः । अञ्चु गतौ,अस्मादतिः स्यात्ककारश्चान्तादेशो विकल्पेन । हन्तेः। हन हिंसागत्योः। अमरोक्तिमाह-प्रादेशनमित्यादि । रमेः । रमतेरतिः स्यात्स च नित् । 'रमतिर्नायके नाके पुंसि स्यात्' इति मेदिनी। नित्त्वमाद्युदात्तार्थम् । 'रन्तिरसि रमतिरसि' । सूङः । षूङ् प्राणिप्रसवे । किस्त्वाद्गुणाऽभावः । 'धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः' इत्यमरः । दशपाद्यां तु 'सुवोरिन् दीर्घश्च' इति पाठः । तत्र रिनो नकारो नानुबन्धः, उत्तरसूत्रे क्रिन्प्रत्ययारम्भात् । अनुबन्धत्वे हि लाघवादिहैव क्रिनुच्येत । तथा च सूरी सूरिणौ सूरिण इत्यादि रूपम्। अतएवाभिधानमालायां सूरीति नान्तमुदाहृतमित्यभिधेयम् । दशपादीवृत्तिकारैस्तु निरवं स्वीकृत्य सूरिरित्युदाहृतं,तदेतेन प्रत्युक्तम् । स्वरविरुद्धमपि 'सदा पश्यन्ति सूरयः' 'विसूरयो दधतो विश्वमायुः' इत्यादौ सूरिशब्दस्यान्तोदात्तत्वदर्शनात् । अदि । अद भक्षणे, शद्लृ शातने, भू सत्तायाम्, शुभ शुम्भ शोभार्थे । 'अद्रयो द्रुमशैलार्काः' इत्यमरः । 'भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि । नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गकः' इति मेदिनी । वङ्क्र्यादयश्च । वकि कौटिल्ये, टुवप् बीजसन्ताने । निपातनात्संप्रसारणाऽभावः । अहिर्भार्थात्र्धुरादिण्यन्तः । अघि गतौ गत्यारम्भे च । ञिभी भये ।

बा.] इत्यमरः । कृविघृष्विछवि । डु कृञ् करणे,घृषु सेचने, छो छेदने,ष्ठा गतिनिवृत्तौ,दिवु क्रीडादौ,किकिपूर्वः,एते क्रिन्नन्ता निपात्यन्ते इत्यर्थः । तत्र कृविरित्यत्र कित्त्वान्न गुणः । एवं घृष्विरित्यत्रापि । छविरिति । छो छेदने इत्यस्मात् प्रत्यये 'आदेच' इत्यात्वे ह्रस्वोऽनेन निपात्यते । एवं स्थविरित्यपि । किकीदिविरिति । दिव्धातोः किकिपूर्वात् क्रिनि किस्त्वात् लघूपधगुणाऽभावे 'लोपो व्योर्वलि' इति धातुवकारस्य लोपे किकिशब्दावयवस्यान्त्यस्य इकारस्य दीर्घो निपात्यते । 'अथ चाषः किकीदिविः' इत्यमरः । विनिमय इति । दिव्शब्देकारस्य दीर्घः, किकिशब्दावयवस्य ह्रस्व इत्यपि निपात्यते । लोके उभयोरपि दर्शनादिति भावः । तदेवाह—चाषेण किकिदीविनेति । पातेर्डतिः । पा रक्षणे, अस्माड्डतिप्रत्यय इत्यर्थः । पतिरिति । डित्त्वाट्टिलोपः । शकेर्ऋतिन् । शक्लृ शक्तौ, अस्मादृतिन्नित्यर्थः । 'शमलं शकृत्' इत्यमरः । अमेरतिः । अम गत्यादौ, अस्मादतिप्रत्यय इत्यर्थः । वहिवस्यर्तिभ्यः । वह प्रापणे, वस निवासे, ऋ गतौ, एभ्योऽतिप्रत्ययः स्यात्, स च चित् । वसतिरिति । 'वसती रात्रिवेश्मनोः' इत्यमरः । अञ्चेः को वा । अञ्चु गतौ, अस्मादतिः स्यात् , ककारश्चान्तादेशो विकल्पेन । हन्तेरंह च । हन हिंसागत्योः, अस्मादतिप्रत्ययः, धातोरंहादेशश्चेत्यर्थः । अंहतिरित्यस्याऽर्थं विवृण्वन्नमरोक्तिमाह—प्रादेशनं निर्वपणमिति । रमेर्नित् । रमु क्रीडादौ, अस्मादतिप्रत्ययः, स च नित्स्यात् , नित्त्वं स्वरार्थम् । सूङः क्रिः । षूङ् प्राणिप्रसवे, अस्मात् क्रिः प्रत्यय इत्यर्थः । सूरिरिति । किस्त्वाद्गुणाऽभावः ।'धीमान्सूरिः कृती कृष्टिः' इत्यमरः। अदिशदि । अद भक्षणे, शद्लृ शातने, भू सत्तायां, शुभ शोभार्थे, एभ्यः क्रिन्नित्यर्थः । कनावितौ, नित्त्वमाद्युदात्तार्थम् । वङ्क्र्यादयश्च । एते निपात्यन्ते । प्रत्ययमाह—क्रिन्नन्ता इति । वङ्क्रिरिति । वकि कौटिल्ये,

शे.] अञ्चेः को वेति । अत्र चिदित्यनुवृत्त्याऽन्तोदात्तोऽयम् । मध्योदात्तोऽपि बाहुलकात् ।

५०८। **अदेस्त्रिनिश्च** । चात्त्रिप् । अत्री । अत्रिणौ । अत्रिणः। अत्रिः । अत्री । अत्रयः।५०९। **पतेरत्रिन्**। पतत्रिः पक्षी । ५१० । **मृकणिभ्यामीचिः** । मरीचिः । कणीचिः पल्लवो निनादश्च ।५११। **श्वयतेश्चित्** । श्वयीचिर्व्याधिः । ५१२ । **वेञो डिच्च** । वीचिस्तरङ्गः । नञ्समासे-अवीचिर्नरकभेदः । ५१३ । **ऋहनिभ्यामूषन्** । अरूषः सूर्यः । हनूषो राक्षसः।५१४। **पुरः कुषन्** । पुर अग्रगमने । पुरुषः । 'अन्येषामपि' इति दीर्घः। पूरुषः। ५१५। **पॄनहिकलिभ्य उषच्** । परुषम् । नहुषः । कलुषम् । ५१६ । **पीयेरूषन्** । पीय इति सौत्रो धातुः । पीयूषम् । बाहुलकाद्गुणे-'पेयूषोऽभिनवं पयः' ।५१७। **मस्जेर्नुम् च** । [मस्जेरन्त्यात्पूर्वो नुम् वाच्यः] मञ्जूषा ।

---

**त.]** **तन्द्रिरिति** । 'कृदिकारा'दिति पक्षे ङीष् । 'तन्द्री निद्राप्रमीलयोः' इति मेदिनी । 'तन्द्री तन्द्रिश्च तन्द्राया'मिति द्विरूपकोशः । 'विभज्य नक्तंदिवमस्ततन्द्रिणा' इति भारविः । प्रत्ययस्य कित्त्वाद्गुणाऽभावमाशङ्क्याह—**बहुलकादिति** । **राशदि** । रा दाने, शद्लृ शातने । 'शत्रिर्नाम्भोधरे विष्णौ' इति मेदिनी । 'शत्रिमग्र उपमां केतुमर्यः' इति मन्त्रस्य वेदभाष्ये तु उपमाम्=उपमानभूतं केतुं=प्रख्यातं, शत्रिम्=एतन्नामकं राजर्षिमिति व्याख्यातम् । **अदेः** । अद भक्षणे । अत्री भक्षकः, अत्रिर्मुनिभेदः । उज्ज्वलदत्तस्तु अदेस्त्रिन्निति पठित्वा अत्रिरित्युदाजहार । तन्न । त्रिचैवेष्टसिद्धौ प्रत्ययान्तरवैयर्थ्यात् । गोवर्द्धनस्तु अदेस्त्रिन्निचेति पठित्वा निदिति वचनान्नकारस्य नेत्संज्ञा, अत्री अत्रिणौ अत्रिण इत्याह । तदपि न । नित्त्वे सत्याद्युदात्तत्वापत्तेः । न चेष्टापत्तिः । जहीन्या १ अत्रिणं पणिं' ।['दूरे वा ये अन्ति वा केचिदत्रिणः' ।] 'अग्ने हंसिन्या २ अत्रिणम्' इत्यादावन्तोदात्तस्य निर्विवादत्वात् । अतएव 'न लुमताङ्गस्य' इति सूत्रे 'अदेस्त्रिनिश्चे'त्येव कैयटोऽप्याहेति दिक् । **पतेः** । पत्लृ गतौ । **पतत्रिरिति** । पक्षवाचकात्पतत्रशब्दान्मत्वर्थे इनि तु नान्तः । पतत्री पतत्रिणौ पतत्रिण इत्यादि । **मृकणि** ।मृङ् प्राणत्यागे, कण शब्दार्थः । '**मरीचिः** कृपणे दीप्तौ ऋषिभेदे च दृश्यते' इति विश्वः । '**मरीचिर्मुनिभेदे** ना भगस्त्वावनपुंसक'मिति मेदिनी । '**कणीचिः** पुष्पितलतागुञ्जयोः शकटे स्त्रिया'मिति च । **श्वयतेः** । टुओश्वि गतिवृद्ध्योः,अस्मादीचिप्रत्ययश्चित्स्यात् । **वेञः** । वेञ् तन्तुसन्तानेऽस्मादीचिर्डित्स्यात् । '**वीचिः** स्वल्पे तरङ्गे स्यादवकाशे सुखे द्वयोः' इति विश्वमेदिन्यौ । **ऋहनि** । ऋ गतौ,हन हिंसागत्योः ।**पुरः** ।कुष निष्कर्षे। कित्त्वाद्गुणाऽभावः।'पुरुषः पुरुषे साङ्ख्यज्ञे च पुंनागपादपे' इति विश्वमेदिन्यौ । **पॄनहि** । पॄ पालनपूरणयोः, णह बन्धने, कल शब्दसङ्ख्यानयोः । 'परुषं कर्बुरे रूक्षे निष्ठुरोक्तौ च वाच्यवत्' इति मेदिनी । 'नहुषो राजविशेषे नागभिदपि' इति हेमचन्द्रः । उषचश्चित्त्वान्नहुषशब्दस्यान्तोदात्तत्वे प्राप्ते ग्रामादित्वाद्वृषादित्वाद्वा आद्युदात्तत्वमित्याहुः । एतच्च 'देवा अकृण्वन्नहुषस्य विश्व'मिति मन्त्रस्य भाष्ये स्पष्टम् । 'कलुषं त्वाविलैनसोः' इति विश्वः । **पीयेः** । 'पीयूषममृतं सुधा' इत्यमरः । 'पीयूषं सप्तदिवसावधि क्षीरे तथाऽमृते' इति मेदिनी ।अमरोक्तिमाह—**पेयूष इत्यादि** । **मस्जेः** । टुमस्जो शुद्धौ, अस्मादूषन्स्यान्नुमागमश्च धातोः । 'मिदचोऽन्त्यात्परः' । सस्य श्चुत्वेन शः । तस्य जश्त्वेन जः । तस्य 'झरो झरि'ति वा लोपः । लोपाऽभावपक्षे जकारद्वयम् ।मञ्जूषा काष्ठमयं द्रव्यम् । पेटक इति यावत् । 'पिटकः पेटकः पेटा मञ्जूषा' इत्यमरः । **गडेः** । गडि वदनैकदेशे । 'गण्डूषो मुखपूरणः'

---

**बा.]** अस्मात्क्निन् धातोरिदित्वान्नुम् ,अनुस्वारपरसवर्णौ । **वप्रिरिति** । डु वप् बीजसन्ताने इत्यस्माद्रूपम् । प्रत्ययस्य कित्त्वेऽपि निपातनात्संप्रसारणाऽभावः ।अङ्घ्रिर्भाषार्थः, अघि वघि मघि गत्याक्षेपे इति पठितोऽघिः,ताभ्यां क्रिनि,अंह्रिः अङ्घ्रिरिति रूपे । उभयत्रापि धातोरिदित्त्वान्नलोपो न । **राशदिभ्यां त्रिप्** । रा दाने, शद्लृ शातने, आभ्यां त्रिप् स्यात् । **अदेस्त्रिनिश्च** । अद भक्षणे अस्मात् त्रिनिः, चकारात्त्रिप् च स्याताम् । त्रिन्याह-**अत्री** । **अत्रिणाविति** । नकारान्तत्वप्रदर्शनायोक्तम् । **अत्रिरिति** । त्रिपि रूपम् । **पतेरत्रिन्** । पत्लृ गतौ, अस्मादत्रिन्प्रत्यय इत्यर्थः । **पतत्रिरिति** । नित्वादाद्युदात्तः । 'पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः' इत्यमरः । **मृकणिभ्यामीचिः** । मृङ् प्राणत्यागे, कण शब्दार्थः, आभ्यामीचिप्रत्यय इत्यर्थः । **श्वयतेश्चित्** । टु ओ श्वि गतिवृद्ध्योः, अस्मादीचिप्रत्ययः स्यात् , स च चिदित्यर्थः । चित्त्वमन्तोदात्तत्वार्थम् । **वेञो डिच्च** । वेञ् तन्तुसन्ताने, अस्मादीचिर्डित्स्यात् । **वीचिरिति** । डित्त्वाट्टिलोपः । अन्यथा अयादेशे श्वयीचिवत् वयीचिरिति स्यात् । **ऋहनिभ्यामूषन्** । ऋ गतौ, हन हिंसागत्योः, आभ्यामूषन्स्यात् । **अरूष इति** । ऊषनि गुणः । **पुरः कुषन्** । पुर अग्रगमने,अस्मात्कुषन्स्यात् । **पुरुष इति** । कुषनः कित्वाद्गुणाऽभावः । ननु कथं तर्हि पूरुष इति ? । अत्राह—**अन्येषामपीति** । **पॄनहिकलिभ्य उषच्** । पॄ पालनपूरणयोः, णह बन्धने, कल शब्दसङ्ख्यानयोः, एभ्य उषच् स्यात् । **पीयेरूषन्** । पीयधातोर्धातुपाठेऽदर्शनादाह— **सौत्र इति** । **मस्जेर्नुम् च** । टु मस्जो शुद्धौ, अस्मादूषन् नुम् च वाच्य इत्यर्थः । **मञ्जूषेति** । ननु नुमो मित्त्वात् 'मिदचोऽन्त्यादि'ति मकारोत्तराकारात्स्यात् , सकारश्च श्रूयेतेत्यत आह-**मस्जेर-**

---

**शे.]** मरीचिरिति । मिदचोन्त्यात्सूत्रभाष्ये 'मर्चेर्ण्यन्तादच इः, ईमागमश्चे'त्युक्तम् ।

५१८ । **गण्डेश्च** । गण्डूषः । गण्डूषा ।५१९। **अर्तेररुः** । अररुः शत्रुः । अररू । अररवः ।५२०। **कुटः किच्च** । कुटरुर्वस्त्रगृहम् । कित्त्वप्रयोजनं चिन्त्यम् । ५२१ । **शकादिभ्योऽटन्** । 'शकटोऽस्त्रियाम्' । शकिर्गत्यर्थः । कङ्कटः सन्नाहः । देवटः शिल्पी । करट इत्यादि । ५२२ । **कृकदिकडिकटिभ्योऽम्बच्** । कारम्बं व्यामिश्रम् । कदिकडी सौत्रौ । कदम्बो वृक्षभेदः । कडम्बोऽग्रभागः । कटम्बो वादित्रम् । ५२३ । **कदेर्णित्पक्षिणि** । कादम्बः कलहंसः । ५२४ । **कलिकर्द्योरमः** । कलमः । कर्दमः । ५२५ । **कुणिपुल्योः किन्दच्** । कुण शब्दोपकरणयोः । कुणिन्दः शब्दः । पुलिन्दो जातिविशेषः । ५२६ । **कुपेर्वा वश्च** । कुपिन्दकुविन्दौ तन्तुवाये । ५२७ । **नौ षञ्जेर्घथिन्** । निषङ्गथिरालिङ्गकः । ५२८ । **उदयर्तेश्चित्** । उदरथिः समुद्रः ।५२९। **सर्तेर्णिच्च** ।

त.] ['गण्डूषो मुखपूर्तौभपुष्करप्रसृतोन्मिते' इति मेदिनी]। **अर्तेः** । ऋ गतौ, उकारान्तोऽयं प्रत्ययो न तु सकारान्त इति स्फोरयति–**अररू अररव** इत्यनेन । न चोकारान्तत्वे विवदितव्यम् । 'कश्चियावीररुं शूरमर्त्यम्' 'अपाररुमदेवयजनो जहि' इत्यादिमन्त्रेषु तथा दर्शनात् । अत्र व्याचक्षते—'मा नः शंसो अररुषः' इति मन्त्रस्य भाष्ये सान्तोऽयमिति माधवेनोक्तं, यत्तत्प्रौढिवादमात्रं, न तु वास्तवम् । अररुष इति पदस्य आद्युदात्तत्वापत्तिप्रसङ्गात् । तस्माद्रातेर्लिटः क्वसुश्चेति क्वसोररिवानित्यनेन नञ्समासे ङस्यररुष इति व्याख्येयम् । ततश्च 'तत्पुरुषे तुल्यार्थे'त्यादिना पूर्वपदप्रकृतिस्वरे सत्याद्युदात्तत्वं सिध्यति । 'गुरुद्वेषो अररुषे दधन्ति' इत्यत्र स्वयमेव रातेः क्वसन्तस्य नञ्समास इत्यादि व्याख्यानात् । 'यो नो अग्ने अररिवाँ अघायुः' इत्यादिमन्त्रान्तरसंवादाच्चेति । **कुटः** । कुट कौटिल्येऽस्मादरुः स्यात्स च कित् । **चिन्त्यमिति** । 'गाङ्कुटादिभ्यः' इति ङित्त्वेनैव गुणाऽभावसिद्धेरिति भावः । **शकादि** । **शकिर्गत्यर्थ इति** । शक्लृ शक्तावित्यस्मादटन्नित्येके । 'क्लीबेऽयः शकटोऽस्त्री स्यात्' इत्यमरः । **देवट इति** । देवृ देवने । **करट इति** । डुकृञ् करणे, कॄ विक्षेपे इत्यस्माद्वा अटन् । 'काकेभगण्डौ करटौ' इत्यमरः । '**करटो** गजगण्डे स्यात्कुसुम्भे निन्द्यजीविनि । एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे' इति मेदिनी । **कृकदि** । डुकृञ् करणे, कटे वर्षावरणयोः । '**करम्बो** मिश्रिते वान्तो, भान्तु दधिसक्तुषु' इति विश्वः । '**कदम्बं** निकुरम्बे स्यान्नीपसर्षपयोः पुमान्' इति च । **कदेः** । 'कादम्बः स्यात्पुमान्पक्षिविशेषे सायकेऽपि चे'ति मेदिनी । **कलि** । कल सङ्ख्याने, कर्द कुत्सिते शब्दे । '**कलमः** पुंसि लेखन्यां शालौ पाटच्चरेपि च' इति मेदिनी । **कुणिपुल्योः** । पुल महत्त्वे । **कुपेः** । कुप क्रोधेऽस्मात्किन्दच् स्यात्, वकारश्चान्तादेशो विकल्पेन । 'तन्तुवायः कुविन्दः स्यात्' इत्यमरः । बाहुलकात् अल भूषणादौ । अलिन्दम् । 'यस्यामलिन्देषु न चक्रुरेव मुग्धाङ्गना-गोमयगोमुखानि' इति माघः । **नौ षञ्जेः** । षञ्ज सङ्गे । निपूर्वादस्मात् घथिन्स्यात् । 'उपसर्गात्सुनोती'-त्यादिना षत्वम् । 'चजो'रिति कुत्वम् । 'आभुरस्य निषङ्गथिः' । रथकूवर इत्यर्थः । **उदयर्ते** । ऋ गतावुत्पूर्वा-

बा.]न्स्यात्पूर्व इति । तथाच सकारात्परत्र नुमि 'स्को'रिति सलोपे च रूपमिति भावः । **गडेश्च** । गडि वदनैकदेशे, अस्मादूषन्स्यात् । **गण्डूष इति** । इदित्त्वान्नुम्यनुस्वारपरसवर्णौ । **अर्तेररुः** । ऋ गतौ, अस्मादरुप्रत्यय इत्यर्थः । **अररुरिति** । धातोर्गुणः । प्रत्ययस्य सकारान्तत्वभ्रमवारणायाऽऽह—**अररू इति** । **कुटः किच्च** । कुट कौटिल्ये, अस्मादरुः स्यात्, स च कित् । **कुटररिति** । कित्त्वान्न लघूपधगुणः । नन्वत्र कित्त्वं व्यर्थं, गाङ्कुटादिभ्य इति प्रत्ययस्य ङित्त्वेनैव गुणाऽभावसिद्धेरित्यत आह—**कित्त्वमिहेति** । **शकादिभ्योऽटन्** । अटनि नकार आद्युदात्तत्वार्थः । **शकट इति** । शक्लृ शक्तावित्यस्माद्रूपम् । **शकिर्गत्यर्थ इति** । अस्मादटन्निति शेषः । 'उरश्छदः कङ्कटकः' इत्यमरः । **देवट इति** । दिवु क्रीडाविजिगीषादिषु, अस्मादटनि 'पुगन्ते'ति गुणः । **कृकदिकडि** । डु कृञ् करणे, कदिकडी सौत्रौ, कटे वर्षादौ, एभ्योऽम्बच् इत्यर्थः । **करम्बमिति** । धातोर्गुणः । 'कलम्बश्च वेसवार उपस्करः' इत्यमरः । **कदेर्णित्पक्षिणि** । सौत्रात्कदधातोर्जायमानोऽम्बच्प्रत्ययः पक्षिण्यभिधेये णिदित्यर्थः । **कादम्ब इति** । णित्त्वादुपधावृद्धिः । **कलिकर्द्योरमः** । कल सङ्ख्याने, कर्द कुत्सिते शब्दे, आभ्याममः स्यात् । **कलम इति** । 'शालयः कलमाद्याश्च' इत्यमरः । **कुणिपुल्योः किन्दच्** । कुण शब्दोपकरणयोः, पुल महत्त्वे, आभ्यां किन्दच् स्यात्, कचावितौ । **पुलिन्द इति** । कित्त्वान्न लघूपधगुणः । 'किरातशबरपुलिन्दा म्लेच्छजातयः' इत्यमरः । **कुपेर्वा वश्च** । कुप क्रोधे, अस्मात्किन्दच्, धातोर्वकारोऽन्तादेशश्च वेत्यर्थः । **कुविन्द इति** । 'तन्तुवायः कुविन्दः स्यात्' इत्यमरः । **नौ षञ्जेर्घथिन्** । नावुपपदे षञ्ज सङ्गे इत्यस्मात् घथिन् स्यादित्यर्थः । **निषङ्गथिरिति** । 'उपसर्गात्सुनोती'ति षत्वम् । घथिनो घित्त्वात् 'चजोः कु घिण्ण्यतोः' इति कुत्वम् । **उदयर्तेश्चित्** । उदि उपपदे ऋ गतावित्यस्माद्घथिन्प्रत्ययः, स च चिदित्यर्थः । **उदरथिरिति** । घथिनि कृते धातोर्गुणः ।

सारथिः ।५३०। **खर्जिपिञ्जादिभ्य ऊरोलचौ** । खर्जूरः । कर्पूरः । वल्लूरं शुष्कमांसम् । पिञ्जूलं कुशवर्तिः । (वा) **लङ्गेर्वृद्धिश्च** । लाङ्गूलम् । कुसूलम् । (ग) **तमेर्बुग्वृद्धिश्च** । ताम्बूलम् । (ग) **शृणातेर्दुग्वृद्धिश्च** । शार्दूलः । (ग) **दुकोः कुक्च** । दुकूलम् । कुकूलम् । ५३१ । **कुवश्चट् दीर्घश्च** । कूची चित्रलेखनिका । ५३२ । **समीणः** । समीचः समुद्रः । समीची हरिणी । ५३३ । **सिवेष्टेरू च** । सूचो दर्भाङ्कुरः । सूची । ५३४ । **शमेर्वन्** । शम्बो मुसलम् । ५३५ । **उल्बादयश्च** । बन्नन्ता निपात्यन्ते । उच समवाये । चस्य लत्वं गुणाऽभावश्च । उल्बो गर्भाशयः । शुल्वं ताम्रम् । निम्बः । बिम्बम् ।५३६। **स्थः स्तोऽम्बजबकौ** । तिष्ठतेरम्बच् अबक एतौ स्तः स्तादे-

त.] दस्मात् घथिन् स्यात्, स च चित् । **सर्तेः** । सृ गतावस्माद्धथिन् णित्स्यात् । 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः । **खर्जि** । खर्ज मार्जने, पिञ्ज हिंसायाम् । खर्जादिभ्यः, पिञ्जादिभ्यश्च यथाक्रमं ऊरऊलचौ स्तः । '**खर्जूरं** रूप्यफलयोः खर्जूरः कीटवृक्षयोः' इति मेदिनीहेमचन्द्रौ । कृपू सामर्थ्ये । बाहुलकात् 'कृपो रो लः' इति लत्वाऽभावः । 'अथ **कर्पूरमस्त्रियाम्** । घनसारश्चन्द्रसंज्ञः सिताऽभ्रो हिमवालुका' इत्यमरः । वल्ल संवरणे । वल्लूरम् । 'उत्तप्तं शुष्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गक'मित्यमरः । एवं शाल्लूरादयो द्रष्टव्याः । 'भेके मण्डूकवर्षाभूशाल्लूरप्लवदर्दुराः' इत्यमरः । **लङ्गेः** । लगिर्गत्यर्थः । **लाङ्गूलं** पुच्छशेफसोः' इति मेदिनी । **कुसूल इति** । कुस श्लेषणे दन्त्यसकारवान् । '**कुसूलं** च कुसीदं च मध्यदन्त्यमुदाहृत'मिति विश्वः । **ताम्बूलादयो**ऽप्यत्र द्रष्टव्याः । तमु ग्लानौ, बुग् दीर्घत्वं च । '**ताम्बूली** नागवल्ल्यां स्त्री क्रमुके तु नपुंसक'मिति मेदिनी । शृ हिंसायाम्, धातोर्वृद्धिर्दुगागमश्च । '**शार्दूलो** राक्षसान्तरे । व्याघ्रे च पशुभेदे च सत्तमे तूत्तरस्थितः' इति मेदिनीविश्वप्रकाशौ । **उत्तरस्थितः**=उत्तरपदभूतः शार्दूलशब्दस्तु श्रेष्ठवाची । 'राजशार्दूल' इति यथा । दु गतौ, कुङ् शब्दे, अनयोः कुक् च । '**दुकूलं** श्लक्ष्णवस्त्रे स्यात् क्षौमे चे'ति मेदिनी । '**कुकूलं** शङ्कुसङ्कीर्णे श्वभ्रे ना तु तुषाऽनले' इति विश्वमेदिन्यौ । 'शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना । अयं क्व च कुकूलाऽग्निकर्कशो मदनानलः' इति प्रयोगश्च । **कुवः** । कु शब्दे । कुचः=स्तनः । '**कुचकूचौ** स्तनौ मतौ' इति विश्वः । **कूचीति** । टित्वान्ङीप् । **समीणः** । इण् गतावस्मात्सम्युपपदे चट् स्याद्दीर्घश्च धातोः । **सिवेः** । षिवु तन्तुसन्तानेऽस्माच्चट् प्रत्ययः स्याट्टेरूत्वं च । टित्वान्ङीप् । '**सूची** तु सीवनद्रव्येऽप्याङ्गिकाभिनयान्तरे' इति मेदिनी । **शमेः** । शम उपशमे । '**शम्बः** स्यान्मुसलाऽग्रस्थलोहमण्डलके पवौ । शुभान्विते त्रिषु' इति विश्वमेदिन्यौ । **उल्बा** । **उल्वमिति** । 'गर्भाशयो जरायुः स्यादुल्वं च कललोऽस्त्रिया'मित्यमरः । शुच शोके । चस्य लत्वं, गुणाऽभावश्च प्राग्वत् । '**शुल्वं** ताम्रे यज्ञकर्मण्याचारे जलसंनिधौ' इति मेदिनीहेमचन्द्रौ । वी गतिप्रजनकान्त्यसनखादनेषु । अस्य मुमागमो ह्रस्वत्वं च । बवयोरभेदाद्बिम्बम् । '**बिम्बस्तु** प्रतिबिम्बे स्यान्मण्डले पुंनपुंसकम् । बिम्बिकायाः फले क्लीबं कृकलासे पुनः

बा.] **सर्तेर्णिच्च** । सृ गतावित्यस्माद्धथिन् स्यात्, स च णिदित्यर्थः । **सारथिरिति** । णित्वाद्वृद्धिः । 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः । **खर्जिपिञ्जादिभ्यः** । खर्ज पूजने च, पिञ्ज हिंसायामित्यादिभ्यः ऊर ऊलच् इति प्रत्ययौ क्रमात्स्याताम् । खर्जादिभ्य ऊरः, पिञ्जादिभ्य ऊलजित्यर्थः । **कर्पूर इति** । कृपू सामर्थ्ये चेत्यस्माद्रूपम् । बाहुलकात्कृपो रो ल इति लत्वाऽभावः । **वल्लूरमिति** । वल वल्ल संवरणे इत्यत्र पठिताद्रूपम् । **लङ्गेर्वृद्धिश्च** । अगि वगि मगि इति दण्डकपठितो लगिर्गत्यर्थः । अस्मात्पिञ्जादेरूलच् सिद्धः । वृद्धिरपि भवतीत्यर्थः । **कुसूलमिति** । पिञ्जादित्वादूलच् । कुस श्लेषणे धातुः । **तमेर्बुग्वृद्धिश्च** । तमु ग्लानौ, अस्मादूलच्संनियोगेन बुगागमो, धातोर्वृद्धिश्च स्यात्—ताम्बूलमिति । **शृणातेर्दुग्वृद्धिश्च** । शॄ हिंसायाम्, अस्मादूलच्संनियोगेन दुगागमो, वृद्धिश्च स्यातामित्यर्थः । **दुकोः कुक् च** । दु गतौ, कु शब्दे, आभ्यामूलच्संनियोगेन कुक् च निपात्यत इत्यर्थः । **कुवश्चट् दीर्घश्च** । कु शब्दे, अस्माच्चट्प्रत्ययो, दीर्घश्च धातोरित्यर्थः । कूचः कुचपर्यायः । 'कुचकूचौ स्तनौ मतौ' इति कोशात् । प्रत्ययस्य टित्वे फलमाह—**कूचीति** । **समीणः** । सम्युपपदे इण् गतावित्यस्माच्चट् स्याद्दीर्घश्च धातोः । **समीच इति** । धातोर्दीर्घे रूपम् । टित्वफलं दर्शयन्नुदाहरति—**समीचीति** । **सिवेष्टेरू च** । षिवु तन्तुसन्ताने, अस्माच्चट्प्रत्ययः स्याद्धातोष्टेरूत्वं चेत्यर्थः । **शमेर्वन्** । शम उपशमे, अस्माद्वन् स्यात् । शम्ब इति रूपम् । **उल्बादयश्च** । एते बन्नन्ता निपात्यन्त इत्यर्थः । धातुं दर्शयति—**उच समवाय इति** । अस्माद्वनि चकारस्य लत्वं धातोर्गुणाऽभावश्च निपात्यत इत्यर्थः । 'गर्भाशयो जरायुः स्यादुल्वं तु कललोऽस्त्रिया'मित्यमरः । **शुल्बमिति** । शुच शोके, अस्माद्वनि चकारस्य लत्वं गुणाऽभावश्च निपा-

**शे** कवश्चन्नि ति । दीर्घविधानसामर्थ्याच्च गुणः । बाहुलकाद्दीर्घगुणयोरभावे कुचोऽपि । **समीणः** । चट्दीर्घश्चेति वर्त्तते ।

शश्च । 'स्तम्बो गुच्छस्तृणादिनः' । स्तबकः पुष्पगुच्छः । ५३७ । शाशपिभ्यां ददनौ । 'शादो जम्बालशष्पयोः' । शब्दः । ५३८ । अब्दादयश्च । अवतीत्यब्दः । (ग)कौतेर्नुम् । कुन्दः । ५३९ । वलिमलितनिभ्यः कयन् । वलयम् । मलयः । तनयः । ५४० । वृहोः पुग्दुकौ च । वृपयः—आश्रयः । हृदयम् । ५४१ । मिपीभ्यां रुः । मेरुः । पेरुः सूर्यः । बाहुलकात् पिबतेरपि । 'संवत्सरवपुः पारुः पेरुर्वासीर्दिनप्रणीः' । ५४२ । जत्वादयश्च । जत्रु । जत्रुणी । अश्रु । अश्रुणी । ५४३ । रुशातिभ्यां क्रुन् । रुरुर्मृगभेदः । शातयतीति शत्रुः । प्रज्ञादौ पाठाद्ध्रस्वत्वम् । ५४४ । जनिदाच्युसृवृमदिपमिनमिभृञ्भ्य इत्वन् त्वन् त्वण् क्विन् शक् स्य-ढडटाटचः । 'जनित्वौ मातापितरौ' । दात्वो दाता । च्यौत्नो गन्ता, अण्डजः क्षीणपुण्यश्च । सृणिरङ्कुशश्चन्द्रः

---

त.]पुमान्' इति मेदिनी । स्थः स्तः । ष्ठा गतिनिवृत्तौ । 'स्तम्बो गुल्मे तृणादीनामप्रकाण्डद्रुमेऽपि च' इति विश्वः । 'स्तम्बोऽप्रकाण्डद्रुमगुच्छयोः' इति मेदिनी । 'स्याद्गुच्छकस्तु स्तबकः' इत्यमरः । शाशपि । शो तनूकरणे, शप आक्रोशे । 'शादो जम्बालशष्पयोः' इत्यमरः । 'शष्पं बालतृणं घासः' इति च । 'शादः स्यात्कर्दमे शष्पे' इति मेदिनी । शब्दो=निनादः । अब्दादयः । एते दनन्ता निपात्यन्ते । अव रक्षणे । वस्य बः । 'अब्दः संवत्सरे वारिवाहमुस्तकयोः पुमान्' इति मेदिनी । कौतेः । कु शब्दे । 'कुन्दो माघ्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना' इति च मेदिनी । वलिमलि । वल संवरणे [संचरणे च], मल मल्ल धारणे, तनु विस्तारे । 'वलयः कण्ठरोगे ना कङ्कणे पुंनपुंसक'मिति मेदिनी । 'मलयः पर्वतान्तरे । शैलांशे देशआरामे त्रिवृतायां तु योषिति' इति च । 'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रिया'मित्यमरः । वृहोः । वृञ् वरणे, हृञ् हरणे, आभ्यां कयन् स्यात्, यथाक्रमं पुग्दुकावागमौ च भवतः । कयनः कित्त्वं त्विह गुणाऽभावार्थम् । ह्रियते विषयैरिति हृदयं मनः । मिपीभ्याम् । डुमिञ् प्रक्षेपणे, पीङ् पाने । 'मेरुः सुमेरुर्हेमाद्रिः' इत्यमरः । पीयते रसानिति पेरुः । पिबतेरिति । पा पाने । हट्टचन्द्रोक्तिमाह—संवत्सरवपुरित्यादि । जत्वादयः । रुप्रत्ययान्ता निपात्यन्ते । जनी प्रादुर्भावे । नकारस्य तकारः । जत्रुः स्कन्धसन्धिः । 'सन्धी तस्यैव जत्रुणी' इत्यमरः । तस्य=पूर्वोक्तस्य स्कन्धस्य सन्धी इत्यर्थः । असु क्षेपणे, अशू व्याप्तौ सङ्घाते च । असु अश्रु च नयनजलम् । बाहुलकात् शीङो ह्रस्वत्वं गुगागमश्च । 'शिग्रुर्ना शाकमात्रेऽपि शोभाञ्जनमहीरुहे' इति मेदिनी । रुशाति । रु शब्दे, शद्लृ शातने ण्यन्तः । 'कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः' इत्यमरः । 'रुरुर्दैत्ये मृगेऽपि च' इति मेदिनी । जनिदा । जनी प्रादुर्भावे, डुदाञ् दाने, च्युङ् गतौ, सृ गतौ, वृञ् वरणे, मदी हर्षे, षम ष्टम अवैकल्ये, णम प्रह्वत्वे शब्दे च, डुभृञ् धारणपोषणयोः । एभ्यो नवभ्यो यथासङ्ख्यं नव स्युः । जनेरित्वन् । जनेरिडागमेनापि जनित्वेति रूपसिद्धाविकारोच्चारणमुत्तरार्थम् । च्यौत्न इति । त्वणो णित्त्वा-

---

बा.]त्यते । 'शुल्वं वराटकं स्त्री तु'इत्यमरः । बिल्वमिति । बिल भेदने, अस्माद्वन् । वबयोरभेदाद्विल्वमित्यपि । स्थः स्तोऽम्बजबकौ । ष्ठा गतिनिवृत्तौ, अस्मात् अम्बच्, अवक इति प्रत्ययौ स्तः । तत्संनियोगेन धातोः स्तादेशश्च । स्तादेशस्यानेकाल्त्वात्सर्वादेशः । स्तम्ब इति । अमरकोशमाह—स्तम्बो गुच्छस्तृणादिन इति । शाशपिभ्यां ददनौ । शो तनूकरणे, शप आक्रोशे, आभ्यां द-दन्प्रत्ययौ यथाक्रमं स्याताम् । अमरकोशस्थमाह—जम्बालशष्पयोरिति । शब्द इति । 'झलां जश् झशि' इति जश्त्वम् । अब्दादयश्च । एते दन्नन्ता निपात्यन्ते । अवतीत्यब्द इति । वकारस्य बकारो निपात्यते । कौतेर्नुम् । कु शब्दे, अस्माद्दन्प्रत्ययो नुमागमश्चेत्यर्थः । कुन्द इति । 'माघ्यं कुन्दं रक्तकस्तु' इति वनौषधिवर्गेऽमरः । वलिमलितनिभ्यः कयन् । वल संवरणे, मल धारणे, तनु विस्तारे, एभ्यः कयन्प्रत्ययः स्यात् । कयनः कित्त्वमुत्तरार्थम् । वलयमिति । वृहोः पुग्दुकौ च । वृञ् वरणे, हृञ् हरणे, आभ्यां कयन्स्यात्, यथासङ्ख्यं पुक् दुक् चागमौ स्तः । वृषय इति । कयनः कित्त्वान्नेह गुणः । हृदयमिति । ह्रियते विषयैरिति हृदयम् । मिपिभ्यां रुः । डु मिञ् प्रक्षेपणे, रि पि गतावित्यत्र पठितः पिधातुर्गत्यर्थकः, आभ्यां रुप्रत्ययः स्यात् । मेरुरिति । रुप्रत्यये गुणः । 'मेरुः सुमेरुर्हेमाद्रिः' इत्यमरः । जत्वादयश्च । एते रुप्रत्ययान्ता निपात्यन्ते । जत्रु इति । जनी प्रादुर्भावे इत्यस्माद्रौ नकारस्य तकारो निपात्यते । अश्रु इति । अशू व्याप्तौ, अस्माद्रुप्रत्ययः । रुशातिभ्यां क्रुन् । रु गतौ, शद्लृ शातने ण्यन्तः । 'शदेरगतौ तः' इति तकारे शातीति निर्देशः । रुरुरिति । 'कृष्णसाररुरुन्यङ्कु' इत्यमरः । ननु शत्रुरित्यत्र कथं ह्रस्वत्वमित्याशङ्कायामाह-प्रज्ञादाविति । जनिदाच्युसृवृमदि । जनी प्रादुर्भावे, डु दाञ् दाने, च्युङ् च्युतौ, सृ गतौ, वृञ् वरणे, मदी हर्षे, षम अवैकल्ये, णमु प्रह्वत्वे शब्दे च, डु भृञ् धारणपोषणयोः, एभ्यः

---

शे.] जम्बालेति । कर्दमेत्यर्थः ।

सूर्यो वायुश्च । वृश आर्द्रकं मूलकं च । मत्स्यः । षण्ढः । डित्वाट्टिलोपः । नमतीति नटः शैलूषः । बिभर्ति भरटः कुलालो भृतकश्च । ५४५ । अन्येभ्योऽपि दृश्यन्ते । पेत्वममृतम् । भृशम् । ५४६ । कुसेरुम्भोमेदेताः । कुसुम्भम् । कुसुमम् । कुसीदम् । कुसितो जनपदः । ५४७ । सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः । सनोतेरसिप्रत्यय उपधावृद्धिश्च । सानसिर्हिरण्यम् । वृञो नुक् च । वर्णसिर्जलम् । पॄ—पर्णसिर्जलगृहम् । तड आघाते । तण्डुलाः । अकि लक्षणे, उशच् । अङ्कुशः । चषेरालः । चषालो यूपकटकः । इल्वलो दैत्यभेदः । पल्वलम् । ञिधृषा ण्यः । ऋकारस्य इकारः । धिष्ण्यम् । शलेर्यः । [शल्यम्] ।

---

त.] वृद्धिः । सृणिरिति । क्निनः कित्त्वान्न गुणः । नित्त्वं तु आद्युदात्तार्थम् । 'सृवृषिभ्यां कि'दिति निप्रत्यये त्वन्तोदात्तः साधितः । वृश इति । शकः कित्त्वान्न गुणः । मत्स्य इति । स्यप्रत्यये चर्त्वेन दस्य तः । अन्तोदात्तोऽयम् । 'ऋतन्यञ्जी'ति सूत्रे तु आद्युदात्तः साधितः । षण्ढ इति । बाहुलकाद्धात्वादेः षस्य सकारो न । प्रत्ययादेर्ढस्य तु प्रयोजनाऽभावान्नेत्संज्ञा । 'शमेर्ढः' इति सूत्रे तु तालव्यादिः साधितः । 'सायं सायो भवेत्कोशः कोषः षण्ढश्च शण्डवदि'ति द्विरूपकोशः । 'षण्ढो वर्षवरः' इत्यमरः । 'नटी नल्यौषधी स्त्री स्याच्छैलूषाऽशोकयोः पुमान्' इति मेदिनी । भरट इति । बिभर्तेरटच् । नट इति । नमतेर्डट् । अन्येभ्योऽपि । इत्वन्नादयोऽनुवर्तन्ते । पेत्वमिति । पा पानेऽस्मादित्वन् । भृशमिति । भृञः शक् । कुसेः । कुस संश्लेषणेऽस्मादुम्भ उम ईद इत एते प्रत्ययाः स्युः । 'कुसुम्भं हेमनि महारजने ना कमण्डलौ' इति मेदिनी । 'कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः' इति च । 'कुसीदं जीवने वृद्ध्यां क्लीबं त्रिषु कुसीदके' इति च । इह सूत्रे तृतीयो ह्रस्वादिर्दीर्घादिश्च तन्त्रेणोपात्तः । 'वृषाकप्यग्नी'ति सूत्रे ह्रस्वादिरेवेति वृत्तिकारहरदत्तादिग्रन्थोपष्टम्भेन निर्णीतम् । 'पारलौकिककुसीदमसीद'दिति श्रीहर्षप्रयोगात्तु दीर्घादिरपि । सानसि । सनोतेरिति । षणु दाने । वृञो नुक् चेति । वृञ् वरणेऽस्मादसिः । दशपाद्यां तु–'सानसिधर्णसी'ति पठित्वा धृञो नुक् च । धर्णसिर्लोकपाल इति व्याख्यातम् । युक्तं चैतत् । 'धर्णसिं भूरिधायस'मित्यादिमन्त्रानुगुणत्वात् । पर्णसिरिति । पॄ पालनपूरणयोरस्मादसिप्रत्ययो नुक् च । तण्डुला इति । उलच्प्रत्ययो नुमागमश्च धातोः । 'त्रेधा तण्डुलान्विभजेत्' । इह चित्स्वरः । 'तण्डुलः स्याद्विडङ्गे च धान्यादिनिकरे पुमा'निति मेदिनी । अङ्कुश इति । अयमपि चित्स्वरेणान्तोदात्तः । तथाच मन्त्रः 'दीर्घं ह्यङ्कुशं यथा' इति 'अङ्कुशोऽस्त्री सृणिः स्त्रिया'मित्यमरः । चषेराल इति । चष भक्षणे । प्रत्ययस्वरेणाद्युदात्तः । उज्ज्वलदत्तस्त्वालजिति चितमाह । तन्न । 'चषालं ये अश्वयूपाय तक्षति' । 'चषालवन्तः स्वरवः पृथिव्या'मित्यादौ चित्स्वराऽदर्शनात् । अमरोक्तिमाह–चषाल इति । इल्वल इति । इल स्वप्नप्रेरणयोः । वलच् । गुणाऽभावः । 'इल्वलस्तारकाराजभेदे ना दैत्यमत्स्ययोः' इति मेदिनी । 'इल्वलास्तच्छिरोदेशे तारका निवसन्ति याः' इत्यमरः । पा पाने अस्माद्वलच्, लुगागमो ह्रस्वत्वं च । पिबन्त्यस्मिन्निति पल्वलमल्पसरः । 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः । इकार इति । रपरत्वाऽभावो ण्यप्रत्ययश्चेति बोध्यम् । 'धिष्ण्यं स्थाने गृहे भेऽग्नौ' इत्यमरः । 'धिष्ण्यं स्थानाग्निसद्मसु ।

---

बा.] इत्वन्, त्वन्, त्नण्, क्निन्, शक्, स्य, ढ, डट, अटच् इति प्रत्ययाः स्युः । च्यौत्न इति । त्नणो णित्त्वाद्वृद्धिः । सृणिरिति । क्निनः कित्त्वान्न गुणः । वृश इति । कित्त्वान्न गुणः । मत्स्य इति । स्ये खरि चेति चर्त्वम् । षण्ढ इति । बाहुलकाद्धात्वादेरिति सो न । नट इति । डित्त्वाट्टिलोपः । टित्त्वान्नटी । अन्येभ्योऽपि । अन्येभ्योऽपि धातुभ्य इत्वन्नादयो भवन्तीत्यर्थः । पेत्वमिति । पा पाने इत्यस्मादित्वनि आद्गुणः । भृशमिति । भृञः शक् । कित्त्वान्न गुणः । कुसेरुम्भोमेदेताः । कुस श्लेषणे, अस्मादुम्भ, उम, ईद, इत, एते प्रत्ययाः स्युः । कुसुम्भमिति । बाहुलकान्न लघूपधगुणः । 'स्यान्महारजनं क्लीबं कुसुम्भं करके पुमा'नित्यमरः । सानसिवर्णसि । षणु अदने इत्यादिभ्य इत्थं निपात्यन्त इत्यर्थः । सानसिरित्यत्राह—सनोतेरिति । उपधावृद्धिश्चेति । धातोरकारस्येत्यर्थः । वृञो नुक् चेति । वृञ् वरणे, अस्मादसिः, धातोर्नुगागमश्चेत्यर्थः । धातोर्गुणे 'रषाभ्या'मिति णत्वे च वर्णसिरिति रूपम् । पर्णसिरिति । पॄ पालनपूरणयोः, अस्मादसिप्रत्ययो नुक् च निपात्यते । धातोर्गुणे रषाभ्यामिति णत्वे रूपम् । तण्डुला इत्यत्राह तडि आघाते इति । अस्मादुकच्प्रत्ययः, नुम् च निपात्यते । इदित्त्वाद्वा नुम् सिद्धः । अनुस्वारपरसवर्णौ । अङ्कुश इत्यत्राह—अकि लक्षण इति । इदित्त्वान्नुम्यनुस्वारपरसवर्णौ । चषाल इत्यत्राह—चषेरिति । चष भक्षणे इत्यस्मादित्यर्थः । 'चषालो यूपकटकः' इत्यमरः । इल्वल इति । इलधातुः सौत्रः, तस्माद्वलच् गुणाऽभावश्च निपात्यते । पल्वलेति । पा पाने इत्यस्माद्वलच्, लगागमो निपात्यते, ह्रस्वत्वं च । पिबत्यस्मिन्नित्यधिकरणे प्रत्ययः । धिष्ण्य इति । ञि धृषा प्रागल्भ्ये, अस्माण्ण्यप्र-

---

शे.] षण्ड इति । शण्ढः प्रागुक्तः । 'ठस्येकः' इति सूत्रे शण्ठ इति प्रतीकमुपादाय 'जनिदाच्यु' इति ठप्रत्यय इति कैयटः ।

'वा पुंसि शल्यं शङ्कुर्ना'। मू[ङ्]शक्यविभ्यः क्लः। मूलम्। 'शक्लः प्रियंवदे'। अम्लो रसः। बाहुलकादमेः-अम्लः। **माच्छाससिभ्यो यः**। माया। छाया। सस्यम्। बाहुलकात्सुनोतेः। 'सव्यं दक्षिणवामयोः। ।५५०। **जनेर्यक्**। 'ये विभाषा'। जन्यं युद्धम्। जाया भार्या। ।५५१। **अघ्न्यादश्च**। यगन्ता निपात्यन्ते। हन्तेर्यक् अडागम उपधालोपश्च। अघ्न्या माहेयी। अघ्न्यः प्रजापतिः। कूनी दीप्तौ। कन्या। बवयोरैक्यम्। वन्ध्या। **स्नामदिपद्यर्तिपॄशकिभ्यो वनिप्**। स्नावा रसिकः। मद्वा शिवः। पद्वा पन्थाः। 'अर्वा तुरङ्गगर्ह्ययोः'। पर्व-ग्रन्थिः प्रस्तावश्च। शक्वा हस्ती। ङीब्रौ। शक्वरी अङ्गुलिः। ।५५३। **शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप्**। शीवा अजगरः। क्रुश्वा सृगालः। रुह्वा वृक्षः। जित्वा जयी। क्षित्वा वायुः। सृत्वा प्रजापतिः। धृत्वा विष्णुः। ५५४। **ध्याप्योः संप्रसारणं च**। धीवा कर्मकरः। पीवा स्थूलः।

त.] ऋक्षे शक्तौ च' इति मेदिनी। 'धिष्ण्यं स्थाने च ऋक्षे च धिष्ण्योऽग्नौ धिष्ण्यमालये' इति धरणि। **शलेः**। शल गतौ 'शल्यं तु न स्त्रियां शङ्कौ क्लीवं क्ष्वेडेषुतोमरे। मदनद्रुश्वाविधोर्ना'इति मेदिनी। **मूशकि**। मूङ् बन्धने, शक्लृ शक्तौ, अबि शब्दे। 'मूलं शिफाऽऽद्ययोः। मूलं वित्तेऽन्तिके' इति मेदिनी। 'शक्लः प्रियंवदे' इति विशेष्यनिघ्नेऽमरः। **अमेरिति**। अम रोगे चुरादिण्यन्तः। बाहुलकादेवोपधाह्रस्वः। 'अम्लो रसविशेषे स्यादम्ली चाङ्गेरिकौषधौ' इति मेदिनी। **माछा**। मा माने, छो छेदने, षस स्वप्ने। '**माया** स्याच्छाम्बरीबुद्ध्योर्मायः पीताम्बरेऽसुरे' इति मेदिनी। '**छाया** स्यादातपाऽभावे प्रतिबिम्बार्कयोषितोः। पालनोत्कोचयोः कान्तिसच्छोभापङ्क्तिषु स्त्रिया'मिति विश्वमेदिन्यौ। 'वृक्षादीनां फलं सस्य'मित्यमरः। **सुनोतेरिति**। षुञ् अभिषवे। 'सव्यं वामे प्रतीपे चे'ति मेदिनी। **जनेः**। जन जनने। यकः कित्त्वमुत्तरार्थम्। 'जन्यं हट्टे परीवादे सङ्ग्रामे च नपुंसकम्। **जन्या** मातृवयस्यायां जन्यः स्याज्जनके पुमान्। त्रिषूत्पाद्यजनित्रोश्च नवोढाज्ञातिभृत्ययोः। स्निग्धे' इति मेदिनी। आत्वपक्षे रूपमाह— **जायेति**। **अघ्न्यादयश्च**। **अघ्न्य इति**। यकः कित्त्वात् 'गमहने'त्युपधालोपे 'हो हन्ते'रिति कुत्वेन हस्य घः। अडागममनुक्त्वा नञ्पूर्वाद्धन्तेर्यगित्यन्ये। **अघ्न्येति**। स्त्रियां टाप्। 'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी। अर्जुन्यघ्न्या रोहिणी स्या'दित्यमरः। संपूर्वाद्ध्यो यक् आतो लोपश्च। '**संध्या** पितृप्रसूनद्यन्तरयोर्युगसन्धिषु' इति मेदिनी। '**कन्या** कुमारिकानार्योरोषधीराशिभेदयोः'इति विश्वमेदिन्यौ। **वन्ध्येति**। बन्ध बन्धने। '**वन्ध्य**स्त्वफलवृक्षादौ स्त्रियां स्यादप्रजस्त्रिया'मिति मेदिनी। कौतेर्यति डुक्। कुड्यमित्युज्ज्वलदत्तः। 'यतोऽनावः'इत्याद्युदात्तः। ड्यक्प्रत्ययान्तोऽयमन्तोदात्त इत्यन्ये इति। 'निवाते वातत्राणे' इति सूत्रे वृत्तिः। डित्त्वाट्टिलोपे सति कित्करणं व्यर्थं स्यादिति गुणप्रतिषेधार्थात्ककाराडुकारस्येत्त्वं नेति तत्रैव हरदत्तः। एवं स्थितेऽघ्न्यादयो यगन्ता इति प्रायोवादः। **स्नामदि**। ष्णा शौचे। मदी हर्षे, पद गतौ, ऋ गतौ, पॄ पालनपूरणयोः, शक्लृ शक्तौ। '**अर्वा** तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः' इति मेदिनी। 'पर्व क्लीबं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे। दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपी'ति च। **ङीब्राविति**। 'वनो र चे'त्यनेन। **अङ्गुलिरिति**। एतच्च 'आरोहतं दशतं शक्वरीर्ममे'त्यादिमन्त्रव्याख्यायां स्पष्टम्। '**शक्वरी** छन्दसो भेदे नदीमेखलयोरपी'ति मेदिनी। **शीङ्**। शीङ् स्वप्ने, क्रुश आह्वाने रोदने च, रुह बीजजन्मनि प्रादुर्भावे च, जि जये, क्षि निवासगत्योः, सृ गतौ, धृञ् धारणे। **ध्याप्योः**। ध्यै चिन्तायाम्, प्यैङ्

बा.] त्ययः, धातोरुपधाया ऋकारस्य इकारः, रपरत्वाऽभावः, गुणाऽभावश्च निपात्यते। 'धिष्ण्यं स्थाने गृहे भेऽग्नौ भाग्यं कर्म शुभाऽशुभ'मित्यमरः। शल्यमित्यत्राह-**शलेरिति**। शल गतावित्यस्मादित्यर्थः। **मूशक्यबिभ्यः क्लः**। मूङ् बन्धने, शक्लृ शक्तौ, अबि शब्दे, एभ्यः क्लप्रत्यय इत्यर्थः। **मूलमिति**। कित्त्वान्न गुणः। **शक्ल इति**। 'दुर्मुखौ मुखराबद्धमुखौ, शक्लः प्रियंवदे' इत्यमरः। **माच्छाससिभ्यो यः**। मा माने, छो छेदने, षस स्वप्ने, एभ्यो यप्रत्यय इत्यर्थः। स्पष्टम्। **जनेर्यक्**। जन जनने, अस्माद्यगित्यर्थः। यकः कित्त्वमुत्तरार्थम्। आत्वं स्मारयति- **ये विभाषेति**। **अघ्न्यादयश्च**। यगन्ता निपात्यन्ते। निपातनमेवाह--**हन्तेरिति**। यक् अडागमश्च निपात्यते। उपधालोपस्तु 'गमहनजनखने'त्येव सिद्धः। उपधालोपे 'हो हन्ते'रिति कुत्वम्। **अघ्न्येति**। स्त्रियां टाप्। 'अर्जुन्यघ्न्या रोहिणी स्या'दित्यमरः। **कन्येति**। यकि रूपम्। बन्ध बन्धने, अस्माद्यकि बन्ध्येत्येव स्यात्, न तु वन्ध्येतीत्यत आह--**बवयोरिति**। **स्नादिपद्यर्ति**। ष्णा शौचे, मदी हर्षे, पद गतौ, ऋ गतौ, पॄ पालनपूरणयोः, शक्लृ शक्तौ, एभ्यो वनिप्स्यात्। **स्नावेति**। उपधादीर्घनलोपादि। **अर्वेति**। ऋधातोर्वनिपि गुणः। 'वाजिवाहाऽर्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः। **ङीब्राविति**। 'वनो र चेत्यनेने'त्यादिः। **शीङ्क्रुशिरुहि**। शीङ् स्वप्ने, क्रुश आह्वाने, रुह बीजजन्मनि, जि जये, क्षि निवासगत्योः, सृ गतौ, धृ धारणे, एभ्यः क्वनिप्स्यात्। **जित्वेति**। क्वनिपः पित्त्वात् 'ह्रस्वस्य पिति कृति'ति तुक्। एवं क्षित्वा सृत्वेत्यादि। **ध्याप्योः संप्रसारणं च**।

५५५। अदेर्घ च। अध्वा। ५५६। प्र ईरशदोस्तुट् च। प्रेत्वा प्रशत्वा च सागरः। प्रेत्वरी प्रशत्वरी च नदी। ५५७। सर्वधातुभ्य इन्। पचिरग्निः। तुडिः। तुण्डिः। वलिः। वटिः। यजिः। देवयजिः। काशत इति काशिः। यतिः। मल्लिः। मल्ली। केलिः। मसी परिणामे। मसिः। बाहुलकाद्गुणः। कोटिः। हेलिः। [ हलिः ]। बोधिः। नन्दिः। कलिः। ५५८। हृपिषिरुहिवृतिविदिच्छिदिकीर्तिभ्यश्च। 'हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ। चन्द्रे कोले प्लवङ्गे च यमे वाते च कीर्तितः'। पेषिर्वज्रम्। रोहिर्व्रती। वर्तिः। वेदिः। छिदिश्छेत्ता। कीर्तिः। ५५९। इगुपधात्कित्। कृषिः। ऋषिः। शुचिः। लिपिः। बाहुलकाद्वत्वे लिबिः। तूल निष्कर्षे। तूलिः। तूली कूर्चिका। ५६०। भ्रमेः संप्रसारणं च। भृमिर्वातः। बाहुलकाद्भ्रमिः। ५६१। क्रमितमिशतिस्तम्भामत इच्च। क्रिमिः। संप्रसारणानुवृत्तेः कृमिरपि।

त.] वृद्धौ, आभ्यां क्वनिप्स्यात्संप्रसारणं च। धातोर्हल इति दीर्घः। अदेः। अद भक्षणेऽस्मात्क्वनिप्, धकारश्चान्तादेशः। अध्वा मार्गः। प्र ईर। ईर गतौ, शद्लृ शातने, आभ्यां प्रपूर्वाभ्यां क्वनिप्स्यात्तस्य तुडागमश्च। प्रेत्वरीति। स्त्रियां 'वनो र च'ेति ङीप्। सर्वधातुभ्य इन्। डुपचष् पाके, तुडि तोडने, तोडनं दारणं हिंसनं च, वल संवरणे, वट वेष्टने, यज देवपूजादौ, काशृ दीप्तौ, यती प्रयत्ने। 'यतिः स्त्री पाठविच्छेदे निकारयतिनोः पुमान्' इति मेदिनी। मल मल्ल धारणे, केलृ चलने भ्वादिः, केला विलासे कण्ड्वादिः, किल श्वैत्यक्रीडनयोः तुदादिः, कुट कौटिल्ये, हिल भावकरणे, बुध अवगमने, टुनदि समृद्धौ, कल शब्दसङ्ख्यानयोः। 'गाङ्कुटादिभ्यः' इति ङित्त्वाद्गुणाऽभावमाशङ्क्याह—बाहुलकादिति। 'कोटिः स्त्री धनुषोऽग्रेऽश्री संख्याभेदप्रकर्षयोः' इति मेदिनी। 'बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे' इति च। 'नन्दिर्द्यूताङ्ग आनन्दे स्त्री नन्दिकेश्वरे पुमान्' इति च। इह इञित्येव सूत्रम्। 'सर्वधातुभ्य' इति तु प्रक्षिप्तं व्यर्थं च। एवं 'सर्वधातुभ्यष्ट्रन्नि'त्यादावपि बोध्यमित्याहुः। अत एव दशपाद्यां 'ष्ट्र'न्नित्येव पठितमिति दिक्। हृपिषि। हृञ् हरणे, पिष्लृ संचूर्णने, रुह बीजजन्मनि प्रादुर्भावे च, वृतु वर्तने। वर्तिर्दीपोपकरणम्। विद सत्तायाम्। विद्यते पुण्यमस्यामिति वेदिः। 'वेदिः परिष्कृता भूमिः'। छिदिर् द्वैधीकरणे, कृत संशब्दने, हरतेः कीर्तयतेश्च 'अच इः' इति प्राप्ते, इतरेषां तु 'इगुपधा'दिति कप्रत्यये प्राप्ते वचनमिदम्। 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः। 'हरिश्चन्द्रार्कवाताश्वशुकभेकयमाहिषु। कपौ सिंहे हरेऽजेंऽशौ शक्रे लोकान्तरे पुमान्। वाच्यवत्पिङ्गहरितोः' इति मेदिनी। 'वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः। गात्रानुलेपनीदीपदशादीपेषु योषिति' इति मेदिनी। 'वेदिः स्यान्मण्डले पुमान्। स्त्रियामङ्गुलिमुद्रायां स्यात्परिष्कृतभूतले' इति च। 'कीर्तिः प्रसादयशसोर्विस्तारे कर्दमेऽपि च'ेति विश्वः। इगुपधात्। कृष विलेखने, ऋषी गतौ, शुच शोके, लिप उपदेहे इत्यादेरिगुपधाद्धातोरिन्स्यात्स च कित्। केचित्तु इगुपधात्किरिति पठित्वा इणोऽपवादः किप्रत्यय इति व्याचख्युः। तन्न। प्रत्ययस्वरेण ऋष्यादीनामन्तोदात्ततापत्तेः। न चेष्टापत्तिः। 'अग्निः पूर्वेभिर्ऋषिभिः' 'ऋषिर्विप्रः काव्येन' 'शुचिर्विप्रः शुचिः कविः' इत्यादौ ऋषिशुचिप्रभृतीनामाद्युदात्तत्वदर्शनात्। न चैवम् 'अक्षैर्मा दीव्यः कृषिमित्कृषस्वे'त्यादौ कृषिशब्दस्यान्तोदात्तता न सिध्येदिति वाच्यम्, 'इक्कृष्यादिभ्यः' इतीक्प्रत्यये सत्यन्तोदात्तत्वसिद्धेः। 'ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानय' मिति मेदिनी। 'शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणी'ति च। भ्रमेः। भ्रमु अनवस्थानेऽस्मादिन्स्यात्, स च कित्, संप्रसारणं च। 'भृमिं विद्यथा

बा.] ध्यै चिन्तायां, प्यैङ् वृद्धौ, आभ्यां क्वनिप्स्यात्, संप्रसारणं चेत्यर्थः। धीवेति। संप्रसारणे इकारे 'हल' इति दीर्घः। अदेर्घ च। अद भक्षणे, अस्मात्क्वनिप्, धकारश्चान्तादेश इत्यर्थः। प्र ईरशदोस्तुट् च। ईर गतौ, शद्लृ शातने, आभ्यां प्रे उपपदे क्वनिप् स्यात्तस्य तुडागमश्च। प्रेत्वेति। प्र ईत्वेति स्थिते आद्गुणः। प्रेत्वरीति। 'वनो र च'ेति ङीप्, रश्चान्तादेशः। एवं प्रशत्वरीति। सर्वधातुभ्य इन्। धातुभ्य इन्प्रत्यय इत्यर्थः। पचिरिति। डुपचष् पाके, अस्मादिनिप्रत्ययः। ननु कोटिरित्यत्र 'गाङ्कुटादिभ्य' इतीन्प्रत्ययस्य ङित्त्वात्कथं गुण इत्यत्राह—बाहुलकादिति। हृपिषिरुहिवृति। हृञ् हरणे, पिष्लृ संचूर्णने, रुह बीजजन्मनि, वृतु वर्तने, विद ज्ञाने, छिदिर् द्वैधीकरणे, कृत संशब्दने, एभ्य इन्प्रत्यय इत्यर्थः। पूर्वसूत्रेणैव सिद्धे इदं वचनम्, 'अच इः', 'इगुपधे'ति कप्रत्ययः, एतदुभयबाधनार्थम्। हरिरिति। इनि गुणः। 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः। अत्र 'अच इः' प्राप्तः। पेषिरिति। इगुपधात्कः प्राप्तः। इगुपधात्कित्। इन्नित्यनुवर्तते। अन्येभ्योऽपि इगुपधेभ्यो धातुभ्य इन्प्रत्ययः स्यात्, स च किदित्यर्थः। पूर्वसूत्रे पिषादीनां ग्रहणं कित्त्वाऽभावार्थम्। अत एव पेषिरिति गुणः सिध्यति। कृषिरिति। कित्वान्न गुणः। कृष विलेखने

शे.] प्रेत्वरीति। 'यदागमाः' इति न्यायेन तुड्विशिष्टस्य ग्रहणान्ङीप्। नच हृदान्ताद्विहितत्वेन निषेधापत्तिः। 'कृशस्त्र

तिमिर्मत्स्यभेदः । 'शितिर्मेचकशुक्लयोः' । स्तिम्भिः समुद्रः ।५६२। **मनेरुच्च** । मुनिः । ५६३ । **वर्णेर्वलिश्चाऽहिरण्ये** । वर्णिः सौत्रः । अस्य बलिरादेशः । 'करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्' । हिरण्ये तु वर्णिः सुवर्णम् । ५६४ । **वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ्** । 'वासिस्छेदनवस्तुनि' । वापिः । वापी । याजिर्यष्टा । राजिः । राजीः । व्राजिर्वातालिः । सादिः सारथिः । 'निघातिर्लोहघातिनी' । वाशिरग्निः । वादिर्विद्वान् । वारिर्गजबन्धनी । जले तु क्लीबम् । बाहुलकात्-'हारिः पथिकसंहतौ' ।५७५। **नहो भश्च** । 'नाभिः स्यात्क्षत्रिये पुंसि प्राण्यङ्गे तु स्त्रियां मता' । पुंस्यपीति केचित् ।५६६। **कृषेर्वृद्धिश्छन्दसि** । कार्षिः । ५६७ । **शॄः शकुनौ** । शारिः-शारिका । ५६८ । **कृञ उदीचां कारुषु** । कारिः शिल्पी ।

त.]वसवः पुषन्ति' इति मन्त्रे भृमिं=भरणशीलं दरिद्रं जनमिति वेदभाष्यम् । **क्रमिं** । क्रमु पादविक्षेपे, तमु काङ्क्षायाम्, शतिस्तम्भौ सौत्रौ, एभ्य इन्स्यात्स च कित् । एषामत इकारादेशश्च । क्रिमिः क्षुद्रजन्तुः । 'क्रमिर्ना क्रिमिवत्कीटे लाक्षायां क्रिमिले खरे' इति विश्वमेदिन्यौ । 'पारतं पारदं, वास्तो वासरः, क्रिमिवत्क्रमिः' इति द्विरूपकोशः ।

**तिमिरिति** । 'अस्ति मत्स्यस्तिमिर्नाम तथा चास्ति तिमिङ्गिलः । तिमिङ्गिलगिलोऽप्यस्ति, तद्गिलोऽप्यस्ति लक्ष्मणे'ति रामायणे सप्तमे काण्डे रामवाक्यम् । केचित्तु 'तद्गिलोऽप्यस्ति राघवे'ति पठित्वा राघवं प्रति लक्ष्मणवाक्यमित्याहुः । '**शितिः** कृष्णे सिते भूर्जे' इति विश्वः । 'शितिर्भूर्जे ना सिताऽसितयोस्त्रिषु' इति मेदिनी । **मनेः** । मन ज्ञाने, अस्मादिन्स्यात्स च किदकारस्योकारादेशश्च स्यात् । मन्यते जानातीति मुनिः । **मुनिः** पुमान्वसिष्ठादौ वज्रसेनतरौ जिने' इति मेदिनी । **वर्णेः** । अस्मादिन्स्यात्स च कित् । ['बलिर्दैत्यप्रभेदे च करचामरदण्डयोः । उपहारे पुमान्स्त्री तु जरया श्लक्ष्णचर्मणि । गृहदारुप्रभेदे च जठरावयवेऽपि चे'ति मेदिनी] । **वसि** । वस निवासे, डुवप् बीजसन्ताने, यज देवपूजादौ, राजृ दीप्तौ, व्रज गतौ, षद्लृ विशरणादौ, हन हिंसागत्योः, वाश्ट शब्दे, वद व्यक्तायां वाचि ण्यन्तः, वृञ् वरणे ण्यन्तः । **वासिरिति** दन्त्यसकारवान् । सूत्रेऽष्टमस्तु तालव्यशकारवान् । द्वयमपि छेदनसाधने प्रयुज्यते । 'वास्यादीनामिव करणानां कर्तृव्यापार्यत्वनियमा'दिति वैशेषिकाः । 'वास्यर्थमित्यत्र 'स्कोः' इति सलोपः प्राप्नोती'ति भाष्यम् । वापिरुदकाधारः । वापी प्रसिद्धा । '**राजिः** स्त्री पङ्क्तिरेखयोः' इति मेदिनी । इह वादीति ण्यन्तनिर्देशेऽपि बाहुलकादण्यन्तादपि इञ्, तथा च भूवादिसूत्रे वदन्तीति वादयो वाचका इति न्यासकारादयः । '**वारिः** स्मृता सरस्वत्यां **वारि** ह्रीबेरनीरयोः । **वारी** घटीभबन्धन्योः' इति विश्वः । हृञ् हरणेऽस्मादिञ् । '**हारिः** पथिकसन्तानद्यूतादिभङ्गयोः स्त्रियाम्' इति मेदिनी । **नहः** । णह बन्धनेऽस्मादिञ् स्याद्भश्चान्तादेशः ।

**स्त्रियामिति** । लिङ्गानुशासने ह्रियामित्यधिकारे 'नाभिरक्षत्रिये' इति सूत्रितत्वादिति भावः । **पुंस्यपीति** । तथा च मेदिनी—'**नाभिर्मुख्यनृपे** चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदे' इति । भारविश्च पुंसि प्रायुङ्क्त- 'समुच्छ्वसत्पङ्कजकोशकोमलैरुपाहितश्रीण्युपनीविनाभिभिः' इति । **कृषेः** । कृष विलेखनेऽस्मादिञ्, वृद्धिश्च । 'इको गुणवृद्धी' इतीकः स्थाने एव वृद्धिरित्युदाहरति—**कार्षिरिति** । भाषायां तु कृषिरित्येव । **शॄः** । शॄ हिंसायामस्माच्छकुनौ वाच्ये इन्स्यात् । **शारिर्ना**ऽक्षोपकरणे स्त्रियां शकुनिकान्तरे । युद्धार्थगजपर्याणे व्यवहारान्तरेऽपि चे'ति मेदिनी । कपिलकादित्वाल्लत्वम् ।'**शालिस्तु** कलमादौ च गन्धमार्जारके पुमान्'इति मेदिनी ।

बा.] धातुः । **भ्रमेः संप्रसारणं च** । भ्रमु अनवस्थाने, अस्मादिन् स्यात्, स च कित्, संप्रसारणं चेत्यर्थः । **भृमिरिति** । कित्वान्न गुणः । ननु कथं भ्रमिरित्यत आह--**बाहुलकादिति** । **क्रमितमि** । क्रमु पादविक्षेपे, तमु काङ्क्षायां, शतिः स्तम्भश्च सौत्रः, एभ्य इन्स्यात्स च कित्, एषामकारस्य इकारादेशश्च । **क्रिमिरिति** । अत इत्त्वे रूपम् । क्रमिरित्यर्थमाह—**संप्रसारणमित्यनुवृत्तेरिति** । संप्रसारणेत्वे च पर्यायेण भवतः, संप्रसारणपक्षे इत्वस्य फलाऽभावात्, संप्रसारणाच्चेति पूर्वरूपे विशेषाऽभावात् । **मनेरुच्च** । मन ज्ञाने, अस्मादिन्प्रत्ययः, अकारस्य उकारश्चेत्यर्थः । **मुनिरिति** । कित्वान्न गुणः । 'वाचंयमो मुनिः' इत्यमरः । **वर्णेर्बलिश्चाऽहिरण्ये** । वर्णधातोर्धातुपाठेऽदर्शनादाह-**वर्णिःसौत्र इति** । अस्मादिन् स्यादहिरण्येऽभिधेये, बलिरादेशश्चेत्यर्थः । **वसिवपियजिराजि** । वस निवासे, डुवप् बीजसन्ताने, यज देवपूजादौ, राजृ दीप्तौ, व्रज गतौ, षद्लृ विशरणादौ, हन हिंसागत्योः, वाश्ट शब्दे, वद व्यक्तायां वाचि-ण्यन्तः, वृञ् वरणे-ण्यन्तः, एभ्य इञ्प्रत्यय इत्यर्थः । **वाशिरिति** । इञो ञित्वादुपधावृद्धिः । शेषं स्पष्टम् । **नहो भश्च** । णह बन्धने,अस्मादिञ् स्यात्, हकारस्य भकारश्च । नाभिरिति रूपम् । **कृषेर्वृद्धिश्छन्दसि** । कृष विलेखने इत्यस्मादिञ्, वृद्धिश्चेत्यर्थः । **कार्षिरिति** । ऋकारस्य आर् वृद्धिः ।

शे.]तुक् ? । छान्दसत्वात्' इति 'वनो र चे'ति सूत्रस्थभाष्येणाऽस्य छान्दसत्वबोधने तत एव तदप्रवृत्तेः । वर्णिः सौत्र इति । ण्यन्तस्य वर्णेरादेश इत्युचितम् । किं च 'बल प्राणने' इत्यस्य बलौ सिद्धे वर्णेरादेशविधानं व्यर्थमिति बोध्यम् । 'वसिवपी'ति

५६९ । **जनिघसिभ्यामिण्** । जनिर्जननम् । घासिर्भक्ष्यमग्निश्च । ५७० । **अज्यतिभ्यां च** । आजिः सङ्ग्रामः । आतिः पक्षी । ५७१ । **पादे च** । पदाजिः । पदातिः । ५७२ । **अशिपणाय्यो रुडायलुकौ च** । अशो रुट् । राशिः पुञ्जः । पणायतेरायलुक् । पाणिः करः । ५७३ । **वातेर्डिच्च** । विः पक्षी । स्त्रियां वीत्यपि । ५७४ । **प्रे हरतेः कूपे** । प्रहिः कूपः ।५७५। **नौ व्यो यलोपः पूर्वस्य च दीर्घः** । व्येञ इण्स्याद्यलोपश्च, नेर्दीर्घः । नीविः । नीवी वस्त्रग्रन्थौ मूलधने च । ५७६ । **समाने ख्यः स चोदात्तः** । समानशब्दे उपपदे ख्या इत्यस्मादिण्स्यात्स च डिच्च, यलोपश्च, समानस्य तूदात्तः स इत्यादेशश्च । समानं ख्यायते जनैरिति सखा । ५७७ । **आङि श्रिहनिभ्यां ह्रस्वश्च** । इण्स्यात्, स च डित, आङो ह्रस्वश्च । 'स्त्रियः पाल्यश्रि-

---

त.] कृञः । करोतेरिञ्स्यादुदीचां मते कारुषु वाच्येषु । '**कारिः** स्त्रियां क्रियायां स्याद्वाच्यलिङ्गस्तु शिल्पिनी'ति मेदिनी । **जनि** । जनी प्रादुर्भावे, घस्लृ अदने, आभ्यामिण् । 'जनिवध्योश्चे'ति वृद्धिप्रतिषेधः । **जनिरिति** स्त्रीलिङ्गम् । 'कृदिकारा'दिति पक्षे ङीष् । '**जनी** सीमन्तिनीवध्वोरुत्पत्तावौषधीभिदि' इति मेदिनी । **अजि** । अज गतिक्षेपणयोः, अत सातत्यगमने । बाहुलकादजेर्वीभावो न । **पादे च** । पादे चोपपदे अज्यतिभ्यामिण् स्यात । 'पादस्य पदाज्यातिगोपहतेषु' इति पदादेशः । पदाजिः पादचारी । 'पदातिपत्तिपदगपादातिक**पदाजयः** । पद्गश्च पदिकश्च' इत्यमरः । **अशिपणाय्योः** । अशिश्च पणायिश्चाऽशिपणायी, तयोरिति विग्रहः । अशू व्याप्तौ, पण व्यवहारे आयप्रत्ययान्तः, आभ्यामिण् स्यादनयोर्यथाक्रमं रुडायप्रत्ययलुकौ च भवतः । '**राशि**र्मेषादिपुञ्जयोः' इति मेदिनी । '**वातेः**' । वा गतिगन्धनयोरस्मादिण् स्यात् । डित्त्वाट्टिलोपः । **प्रे हर** । प्रपूर्वाद्धरतेः कूपे वाच्ये इण् । 'पुंस्येवाऽन्धुः प्रहिः कूप उदपानं तु पुंसि वा' इत्यमरः । **नौ व्यो** । व्येञ् संवरणे । 'स्त्रीकटीवस्त्रबन्धेऽपि **नीवी** परिपणेऽपि च' इत्यमरः । परिपणो=मूलधनम् । **समाने** । ख्या प्रकथने । **इञ् स्यादिति** । यत्तूज्ज्वलदत्तेनोक्तमिञ् स्यात्स चोदात्त इति । तन्न । संनिहितेन 'जनिघसिभ्यामिण्' इत्यनेन 'वसिवपियजी'त्यादिना विहितस्येञो विच्छिन्नत्वात् । यद्यपि तेनैव 'नौ व्यः'इति पूर्वसूत्रे उक्तम्–'इञत्रानुवर्तते न त्विण्, उत्तरसूत्रे उदात्तवचनाज्ज्ञापका'दिति । तदपि न । 'स चोदात्त' इति हि नायं धातोः परत्र विहितं प्रत्ययं निर्देष्टुं तच्छब्दः, किन्तु समानशब्दस्य स्थाने विधीयमानमादेशं निर्देष्टुं शब्दस्वरूपपरः । तथा च कथं ज्ञापकता स्यात् । यदपि 'स इञ् उदात्त' इति व्याख्याय समानस्य सभाव इति प्रक्रियास्मरणमात्रं कृतं, तदपि न, सभावविधायकस्याऽभावात् । यदपि स्वरमञ्जरीकारादिभिरुक्तं 'समानस्य च्छन्दसी'ति सूत्रेण सभाव इति, तदपि न, लोके सखिशब्दस्याऽसाधुत्वापत्तेः । अपि च 'सखा सखायमब्रवीत्' ['सखा सख्ये अपचन्'] 'सखायस्त्वा ववृमहे' । 'सखा सखिभ्य ईड्यः' इत्यादिमन्त्रेषु सर्वत्र सखिशब्द आद्युदात्त एवेति निर्विवादम् । एवं च इञुदात्त इत्युज्ज्वलदत्तादिव्याख्यानं वेदवार्तानभिज्ञत्वप्रयुक्तमेवेति दिक् । **आङि** । श्रिञ् सेवायाम्,

---

बा.] लोके तु इगुपधात्किदित्यनेन इनि कृषिरित्येव । **श्रः शकुनौ** । शॄ हिंसायामस्माच्छकुनौ वाच्ये इञ् स्यात् । **शारिरिति** । इञो ञित्त्वाद्वृद्धिः । **कृञ उदीचां कारुषु** । डु कृञ् करणे, अस्मात्कारुषु=शिल्पिषु वाच्येषु इञ् स्यात् । कारिः । **जनिघसिभ्यामिण्** । जनी प्रादुर्भावे, घस्लृ भक्षणे, आभ्यामिण् स्यात् । **जनिरिति** । 'जनिवध्योश्चे'ति निषेधः । **अज्यतिभ्यां च** । अज गतिक्षेपणयोः, अत सातत्यगमने, आभ्यामिण् स्यात् । **आजिरिति** । इणि उपधावृद्धिः । वीभावस्तु बाहुलकान्न । 'समे क्ष्मांऽशे रणेप्याजिः' इत्यमरः । **पादे च** । पादशब्दे उपपदे अज अत आभ्यां इण् स्यादित्यर्थः । **पदाजिरिति** । 'पादस्य पदाज्यातिगोपहतेषु' इति पदादेशः । **अशिपणाय्योः** । अशू व्याप्तौ, पण व्यवहारे–आयप्रत्ययान्तः, अशिश्च पणायिश्च तयोरिति विग्रहः । आभ्यामिण् स्यात् । अनयोर्यथाक्रमं रुडागमः, आयप्रत्ययलुक् एतौ स्याताम् । **राशिरिति** । रुडागमे उपधावृद्धौ च रूपम् । **पाणिरिति** । इणि आयप्रत्ययस्य लुकि अत उपधाया वृद्धौ रूपम् । **वातेर्डिच्च** । वा गतिगन्धनयोः, अस्मादिण् स्यात्, स च डित्, डित्वाट्टिलोपः । तदाह–**विरिति** । 'नगौकोवाजिविकिरविविष्किरपतत्रयः' इत्यमरः । **स्त्रियामिति** । 'कृदिकारादक्तिन' इति ङीष् । **प्रे हरतेः कूपे** । प्रपूर्वात् हृञ् हरणे इत्यस्मादिण् स्यात्, स च डिदित्यर्थः । तदाह—**प्रहिरिति** । डित्वाट्टिलोपः । 'पुंस्येवाऽन्धुः प्रहिः कूपः' इत्यमरः । **नौ व्यो यलोपः** । नावुपपदे व्येञ् संवरणे इत्यस्मादिण् स्यात्, स च डित्, धातुयकारस्य लोपः, उपसर्गेकारस्य दीर्घश्चेत्यर्थः । **नीविरिति** । व्येञ्धातोरिणि डित्वाट्टिलोपे धातुयकारस्य लोपे नेर्दीर्घे च रूपम् । 'स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि चे'त्यमरः । परिपणं=मूलधनम् । तदाह—**वस्त्रग्रन्थौ मूलधने चेति** । **समाने ख्यः** । समानशब्दे उपपदे ख्या प्रकथन इत्यस्मादिण् स्यात् । 'स चोदात्त' इत्यत्र 'स च उदात्त' इति छेदः । एवं च स च=इण् डित्स्याद्यलोपश्च, समानस्य तूदात्तः 'स' इत्यादेशश्चेत्यर्थः । समानशब्दस्य सादेशे सखेति रूपम् । **आङि श्रि** । आङि उपपदे श्रिञ् सेवायां

---

शो.] सूत्रे वादिण्यंन्तो निर्दिष्टो, बाहुलकादण्यन्तादपि । एतच्च भूवादिसूत्रे आकरे ।

कोट्यः' । 'सर्पे वृत्रासुरेऽप्यहिः' । ५७८ । **अच इः** । रविः । पविः । तरिः । कविः । अरिः । अलिः । ५७९ । **खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचलिभ्यश्च** । खनिः । कषिर्हिंस्रः । अजिः । असिः । वसिर्वस्त्रम् । वनिरग्निः । सनिर्भक्तिर्दानं च । ध्वनिः । ग्रन्थिः । चलिः पशुः । ५८० । **वृतेश्छन्दसि** । वर्तिः । ५८१ । **भुजेः किच्च** । भुजिः । ५८२ । **कॄगॄशॄपॄकुटिभिदिच्छिदिभ्यश्च** । इः कित्स्यात् । किरिर्वराहः । 'गिरिर्गोत्राऽक्षिरोगयोः' । गिरिणा काणः गिरिकाणः । शिरिः शलभो हन्ता च । पुरिर्नगरं राजा नदी च । कुटिः शाला शरीरं च । भिदिर्वज्रम् । छिदिः परशुः । ५८३ । **कुडिकम्प्योर्नलोपश्च** । कुडि दाहे । कुडिर्देहः । कपिः । ५८४ । **सर्वधातुभ्यो मनिन्** । क्रियत इति कर्म । चर्म । भस्म । जन्म । शर्म । स्थाम

---

त.] हन हिंसागत्योः । अमरोक्तिमाह—**स्त्रिय इति** । एवं च 'सुप्रातसुश्वे'ति सूत्रे चतुरश्रेति तालव्यपाठः सङ्गच्छत एव । तत्सूत्रे केषाञ्चिद्दन्त्यपाठस्तु एतत्सूत्राऽपर्यालोचनामूलक एवेत्यवधेयम् । नन्वेवं चतुरस्रमिति दन्त्यप्रयोगस्य कथं निर्वाह इति चेदत्राहुः—अकारान्तेन दन्त्यगर्भिणाऽस्रशब्देन विग्रहे तत्प्रयोगः साधीयान् । न च तादृशो शब्दे विप्रतिपत्तव्यम् , 'अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते' इति मेदिनीकोशादिति । **'अहिर्वृत्राऽसुरे सर्पे'** इति मेदिनी । **अच इः** । अजन्ताद्धातोरिः स्यात् । रु शब्दे, पूञ् पवने,पविर्वज्रम् । तॄ प्लवनतरणयोः । **तरिर्वस्त्रादि**स्थापनभाण्डम् । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः । कु शब्दे । **'कविर्वाल्मीकिशुक्रयोः** । सूरौ काव्यकरे पुंसि स्यात्खलीने तु योषिति' इति मेदिनी । ऋ गतौ । अरिः शत्रुः । कपिलकादित्वाद्वैकल्पिकं लत्वम् । अलिर्भ्रमरः । **खनि** । खनु अवदारणे । कष खषेति दण्डके हिंसार्थकः । अज गतिक्षेपणयोः, असु क्षेपणे, वस आच्छादने, वन षण संभक्तौ, वनु याचने, षणु दाने । ध्वन शब्दे, ग्रन्थ बन्धने उभौ चुरादौ । चल कम्पने, एभ्य इः स्यात् । **'खनिः** स्त्रियामाकरः स्यात्' इत्यमरः । ण्यन्तात् 'अच इः' इति इप्रत्यये खानिरपि । 'खनिरेव मता खानिः' इति द्विरूपकोशः । **'ग्रन्थिस्तु** ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्वणोः' इति मेदिनी । **'ग्रन्थिर्ना** पर्वपरुषी' इत्यमरः । **वनिरग्निरिति** । वनु याचने इत्यस्मादिप्रत्यये वनिर्याच्ञा इत्याहुः । **चलिः पशुरिति** । 'चरिभ्यश्चे'ति पाठान्तरम् । चर गतौ, चरतिर्भक्षणेऽपि । चरिः पशुः । **वृतेः** । वृतु वर्तनेऽस्मादिः स्यात् । बाहुलकाल्लोकेऽपि–'साज्यं च वर्तिसंयुक्त'मिति प्रयोगः । **'वर्तिर्भेषजनिर्माणे** नयनाञ्जनलेखयोः । गात्रानुलेपनीदीपदशादीषेषु योषिति' इति मेदिनी । **भुजेः** । भुज पालनाभ्यवहारयोरस्मादिः स्यात्स च कित् । भुजिरग्निः । **कॄगॄशॄ** । कॄ विक्षेपे, गॄ निगरणे, शॄ हिंसायाम् , पॄ पालनपूरणयोः, कुट कौटिल्ये, भिदिर् विदारणे, छिदिर् द्वैधीकरणे । **'वराहः** सूकरो घृष्टिः कोलः पोत्री किरिः किटिः' इत्यमरः । 'इगुपधज्ञाप्रीकिरः' इति कप्रत्यये किर इत्यकारान्तोऽपि । 'त्वचिः त्वचः, किरोऽपि स्यात् किरौ प्रोक्तः, पथ पथि' इति द्विरूपकोशः । **'गिरिर्ना** नेत्ररुग्भिदि । अद्रौ गिरिजके योषिद्गीर्णौ पूज्ये पुनस्त्रिषु' इति मेदिनी । **कुटिरिति** । ङीषि तु कुटी । 'कुटीशमीशुण्डाभ्यो रः' । कुटीरः । **'कुटिः** कोटे पुमानस्त्री घटे स्त्रीपुंसयोर्गृहे । **कुटी** स्यात्कुम्भदास्यां च सुरायां चित्रगुच्छके' इति मेदिनी । **कुडि** । कुडि दाहे, कपि चलने, आभ्यामिः कित्स्याद्धातोर्नलोपश्च । **'कपिर्ना** सिंहके शाखामृगे च मधुसूदने' इति च । **सर्वधातुभ्यः** । डुकृञ् करणे, चर गतौ, चरतिर्भक्षणेऽपि, जन जनने, भस भर्त्सनदीप्त्योः, शॄ हिंसायाम्, शर्म सुखे, ष्ठा गतिनिवृत्तौ, छद अपवारणे चुरादिः, त्रैङ् पालने । सुष्ठु त्रायते इति सुत्रामा इन्द्रः । **'कर्म** व्याप्ये क्रियायां च पुंनपुंसकयोर्मतम्' इति रुद्रः । **'चर्म** कृत्तौ च फलके' इति

---

बा.] हन हिंसागत्योः, आभ्यामिण् स्यात् , स च डित् , आङो ह्रस्वश्चेत्यर्थः । अंहिः । अहिः । अत्राऽमरोक्तिमाह—**स्त्रिय इत्यादिना** । **अच इः** । धातोरित्यस्य विशेषणात्तदन्तविधिः । अजन्ताद्धातोरिप्रत्यय इत्यर्थः । **रविरिति** । रु शब्दे अस्मादिप्रत्ययः । डिदित्यननुवर्तनान्न टिलोपः । **पविरिति** । पूञ् पवने । **खनिकष्य** । खनु अवदारणे, कष हिंसायाम् , अज गतिक्षेपणयोः, असु क्षेपणे, वस आच्छादने, वन षण संभक्तौ, ध्वन शब्दे, ग्रन्थ बन्धने, चल कम्पने, एभ्य इप्रत्ययः स्यात् । 'खनिः स्त्रियामाकरः स्या'दित्यमरः । **अजिरिति** । बाहुलकाद्वीभावाऽभावः । **वृतेश्छन्दसि** । वृतु वर्तने अस्मादिः स्यात् । **वर्तिरिति** । लघूपधगुणः । **भुजेः किच्च** । भुज पालनाभ्यवहरणयोः, अस्मादिः कित्स्यात् छन्दसि । क्वचिल्लोकेऽपि प्रयुज्यते । **कॄगॄशॄ** । कॄ विक्षेपे, गॄ निगरणे, शॄ हिंसायां, पॄ पालनपूरणयोः, कुट कौटिल्ये, भिदिर् विदारणे, छिदिर् द्वैधीकरणे, एभ्य इप्रत्ययः स्यात् , स च किदित्यर्थः । **किरिरिति** । 'ॠत इ'दिति इत्वं, रपरत्वम् । 'वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः' इत्यमरः । **गिरिरिति** । 'अद्रिगोत्रगिरिग्रावा' इत्यमरः । **पुरिरिति** । 'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । **कुडिकम्प्यो** । कुडि दाहे, कपि चलने, आभ्यामिः कित्स्यात् , धातोर्नलोपश्चेत्यर्थः । प्रत्ययस्य कित्त्वेऽपीदित्त्वान्न नलोपप्राप्तिरतस्तद्विधानम् । **कुडिरिति** । कित्त्वान्न लघूपधगुणः । **कपिरिति** । 'कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः' इत्यमरः । **सर्वधातु-**

बलम् । 'ह्रस्वः' इति ह्रस्वः । छद्म । सुत्रामा । ५८५ । **बृंहेर्नोऽच्च** । नकारस्याऽकारः । 'ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः' । ५८६ । **अशिशकिभ्यां छन्दसि** । अश्मा । शक्मा । ५८७ । **हृभृधृसृस्तृशृभ्य इमनिच्** । हरिमा कालः । भरिमा कुटुम्बम् । धरिमा रूपम् । सरिमा वायुः । स्तरिमा तल्पम् । शरिमा प्रसवः । ५८८ । **जनिमृङ्भ्यामिमनिन्** । जनिमा जन्म । मरिमा मृत्युः । ५८९ । **वेञः सर्वत्र** । छन्दसि भाषायां चेत्यर्थः । वेमा तन्तुवायदण्डः । अर्धर्चादिः । सामनी वेमनी इति वृत्तिः । ५९० । **नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् ध्यामन्** । सप्त अमी निपात्यन्ते । म्नायतेऽनेनेति नाम । सिनोतेर्दीर्घः । सीमा । सीमानौ । सीमानः । पक्षे डाप् । सीमे । सीमाः । व्येञोऽन्त्यस्योत्वं गुणः । व्योम । रौतेः रोम । लोम । पाप्मा पापम् । ध्यामा परिमाणं तेजश्च । ५९१ । **मिथुने मनिः** । उपसर्गक्रियासम्बन्धो मिथुनम् । स्वरार्थमिदम् । सुशर्मा । ५९२ । **साऽतिभ्यां मनिन्मनिणौ** । स्यति-साम । सामनी । आत्मा ।

---

त.] मेदिनी । **बृंहेः** । बृहि वृद्धावस्मान्मनिन्, नुमो नकारस्याकारे ऋकारस्य यणादेशः । 'ब्रह्म तत्त्वं तपो वेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदोर्विप्रे' इति मेदिनी । **अशि** । अशू व्याप्तौ सङ्घाते च, शक्लृ शक्तौ । शक्मा इन्द्रः । छन्दसीत्यस्य शकिना सम्बन्धो न त्वशिना । अतएव 'अश्मानमारोपयतः स्मरारेः' इति प्रयोगः । **हृभृ** । हृञ् हरणे डुभृञ् धारणपोषणयोः, धृ धारणे, सृ गतौ, स्तृञ् आच्छादने, शॄ हिंसायाम् । **शरिमेति** । एतच्चोज्ज्वलदत्तरीत्योक्तम् । दशपाद्यां तु शॄणातिर्न पठ्यते, तत्स्थाने सृधातुं प्रक्षिप्य प्रत्ययं च दीर्घादिं नितं च कृत्वा, स्तृसृभ्यामीमनिति पठ्यते, छन्दोग्रहणं चानुवर्तितम् । युक्तं चैतत् । 'पिपृतां नो भरीमभिः' । 'वातस्य सर्गे अभवत्सरीमणि' । 'स्तर्णे बर्हिः सुष्टरीमा जुषाणा' 'यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिः' इत्यादिमन्त्राणां, तद्भाष्यस्य चानुगुणत्वात् । उक्तप्रयोगाणां भाषायामदर्शनेन च्छन्दोऽनुवृत्तेर्न्याय्यत्वाच्च । अतएव 'वेञः सर्वत्रे'ति सूत्रे सर्वत्रग्रहणं करिष्यति । **जनि** । जन जनने, मृङ् प्राणत्यागे । **वेञः** । वेञ् तन्तुसन्ताने । **निपात्यन्त इति** । 'मनिनन्ता' इति शेषः । म्ना अभ्यासे । मलोपो, नाभावो वा । नाम=संज्ञा । षिञ् बन्धने । '**सीमसीमे** स्त्रिया मुभे' इत्यमरः । व्येञ् संवरणे, रु शब्दे । रोम गात्रकेशः । लूञ् छेदने । लोम स एव । पा पाने । पुगागमः । ध्यै चिन्तायाम् । बाहुलकादन्येभ्योऽपि । यक्ष पूजायाम् । 'क्षयः शोषश्च यक्ष्मा च' इत्यमरः । षू प्रेरणे । सोमा चन्द्रः । डुधाञ् धारण पोषणयोः । 'धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः' इति मेदिनी । **मिथुने** । शॄ हिंसायाम् । सुष्ठु शृणाति इति सुशर्मा राजविशेषः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तं पदम् । मनिनि तु मध्योदात्तं स्यात् । **साति** । षोऽन्तकर्मणि, अत सातत्यगमने, आभ्यां यथासंख्यमेतौ स्तः । स्यति दुःखयति दुरध्येयत्वात्साम । '**साम** क्लीबमपायस्य भेदे वेदान्तरेऽपि च' इति मेदिनी । '**आत्मा** पुंसि स्वभावे स्यात्प्रयत्नमनसोरपि । धृतावपि मनीषायां शरीरब्रह्म-

---

**वा.]भ्यो मनिन्** । सर्वेभ्योऽपि धातुभ्यो मनिन्स्यात् । **कर्मेति** । डु कृञ् करणे, अस्मान्मनिनि गुणः । **चर्मेति** । चर गतौ । **सुत्रामेति** । त्रैङ् पालने । सुष्ठु त्रायत इति सुत्रामा । **बृंहेर्नोऽच्च** । बृंहेः नः अदिति छेदः । बृहि वृद्धौ अस्मान्मनिन्, नुमा निष्पन्नस्य नकारस्याऽकारश्चेत्यर्थः । **ब्रह्मेति** । नकारस्याकारे ऋकारस्य यणादेशः । अमरकोशमाह—**ब्रह्म तत्त्वमिति** । **अशिशकिभ्यां छन्दसि** । अशू व्याप्तौ, शक्लृ शक्तौ, आभ्यां मनिन्स्यादित्यर्थः । **अश्मेति** । 'पाषाणप्रस्तरग्रावोपलाऽश्मानः शिला दृष'दित्यमरः । **हृभृधृसृ** । हृञ् हरणे, डु भृञ् धारणपोषणयोः, धृ धारणे, सृ गतौ, स्तृञ् आच्छादने, शॄ हिंसायाम्, एभ्य इमनिच्प्रत्यय इत्यर्थः । **हरिमेति** । इमनिचि इचावितौ, धातोर्गुणः । **जनिमृङ्भ्यामिमनिन्** । जन जनने, मृङ् प्राणत्यागे, आभ्यामिमनिन्स्यात्, नित्स्वरो विशेषः । **वेञः सर्वत्र** । वेञ् तन्तुसन्ताने अस्मादिमनिन्प्रत्ययः छन्दसि लोके च भवतीत्यर्थः । **वेमेति** । 'पुंसि वेमा वायदण्डः' इत्यमरः । **नामन्सीमन्व्योमन्** । **निपात्यन्त इति** । 'मनिन्नन्ता' इति शेषः । निपातनप्रकारमेवाह—**म्नायत इति** । म्ना अभ्यास इत्यस्मान्मनिनि धातोर्नाभावो निपात्यते । अथवा आदेर्मकारस्य लोपो निपात्यत इत्यर्थः । **सिनोतेरिति** । षिञ् बन्धने, अस्मान्मनिनि धातोर्दीर्घो निपात्यत इत्यर्थः । **पक्षे डाबिति** । 'डाबुभाभ्यामन्यतरस्या'मित्यनेन । **व्येञ इति** । व्येञ् संवरणे, अस्मान्मनिनि एकारस्योत्वं निपातनात् । 'व्योम पुष्करमम्बर'मित्यमरः । **रौतेरिति** । रु शब्दे । **लोमेति** । लूञ् छेदने । **पाप्मेति** । पा पाने अस्मान्मनिनि पुगागमो निपात्यते । **मिथुने मनिः** । मिथुनशब्दार्थं व्याचष्टे—**उपसर्गेति** । स एवेह विवक्षित इति भावः । एवं च सोपसर्गाद्धातोर्मनिप्रत्यय इत्यर्थः । ननु सर्वधातुभ्यो मनिन्निति मनिनैव सिद्धे किमर्थं मनिप्रत्ययविधिक्लेश इत्यत आह—**स्वरार्थमिति** । नित्स्वरे मध्योदात्तः स्यादिति भावः । **सातिभ्यां मनिन्मनिणौ** । षो अन्तकर्मणि, अत सातत्यगमने, आभ्यां यथाक्रमं मनिन् मनिण् एतौ स्त इत्यर्थः । **समेति** । मनिनि 'आदेचः'

५९३। हनिमशिभ्यां सिकन् । 'हंसिका हंसयोषिति' । मक्षिका । ५९४ । कोररन् । कवरः । ५९५ । गिर उडच् । गरुडः । ५९६ । इन्देः कमिर्नलोपश्च । इदम् । ५९७ । कायतेर्डिमिः । किम् । ५९८। सर्वधातुभ्यः ष्ट्रन् । वस्त्रम् । अस्त्रम् । शस्त्रम् । शास्त्रम् । 'इत्मन्' इति ह्रस्वत्वम् । छादनाच्छत्रम् । ५९९। भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च । भ्राष्ट्रः । गान्त्रं शकटम् । नान्त्रं स्तोत्रम् । हान्त्रं मरणम् । वैष्ट्रं जगत् । आष्ट्रमाकाशम् । ६०० । दिवेर्द्युच्च । द्यौत्रं ज्योतिः । ६०१ । उषिखनिभ्यां कित् । उष्ट्रः । खात्रं खनित्रं मेरणं जलाधारश्च । ६०२ । सिविमुच्योष्टेरू च । सूत्रम् । मूत्रम् । ६०३ । अमिचिमिदिशसिभ्यः क्त्रः । आन्त्रम् । चित्रम् । मित्रम् । शस्त्रम् । ६०४ । पुवो ह्रस्वश्च । पुत्रः । ६०५ । स्त्यायते-

---

त.] णोरपि' इति च । हनि । हन हिंसागत्योः,मश शब्दे रोषकृते च । 'मक्षिका भम्भराली स्यात्' इति हारावली । कोररन् । कु शब्दे । कवरः-पार्वकः । बवयोरैक्यात्कबरी केशविन्यासः । 'जानपदे'ति ङीष् । अन्यत्र कबरा । गिरः । गॄ निगरणे । केचित्तु सूत्रमिदं परित्यज्य गरुता डयत इति विगृह्य डीङो डप्रत्यये पृषोदरादित्वाद्गरुतस्तकारलोपे गरुडशब्दं क्लेशेन व्युत्पादयन्ति । इन्देः । इदि परमैश्वर्ये । उज्ज्वलदत्तस्तु कमिचिति नितं पपाठ, तच्चिन्त्यम् । 'इदं त्यत्पात्रमिन्द्रपानम्' । 'इदं ते सोम्यं मधु' इत्यादौ नित्स्वराऽभावात् । दशपाद्यां तु 'इणो दमक्' इति सूत्रितम् । इदमिति । सर्वनामशब्दोऽयं संनिहितपरामर्शी । कायतेः । कै गै शब्दे । प्रयोजनाऽभावादेव मकारस्येत्संज्ञाविरहे सिद्धे डिमेरिकार उच्चारणार्थः । डकारस्तु टिलोपार्थः । दशपाद्यां तु मान्तमेव डिमिति सूत्रितम् । किमिति सर्वनाम । सर्वधातुभ्यः । दशपाद्यां तु अर्थात्सर्वधातुभ्यो भविष्यतीत्याशयेन 'ष्ट्र'न्नित्येव सूचितम् । अतएवाधिकं प्रक्षिप्तमित्याहुः । वस निवासे, असु क्षेपणे, शसु हिंसायाम्, छद अपवारणे ण्यन्तः । 'अस्त्रं प्रहरणे चापे करवाले नपुंसक'मिति मेदिनी । पत्लृ गतौ । 'पत्त्रं तु वाहने पर्णे स्यात्पक्षे शरपक्षिणोः' इति मेदिनी । पा पाने । पात्रम् । षित्वान् ङीष् । 'पात्राऽमत्रे त्रिषु क्लीबं स्रुवादौ राजमन्त्रिणि । तीरद्वयान्तरे योग्ये' इति मेदिनी । दंश दशने । व्रश्चादिना षत्वे ष्टुत्वं । षितां ङीषोऽनित्यत्वाट्टाप् । दंष्ट्रा । भ्रस्जि । भ्रस्ज पाके, गम्लृ गतौ, णम प्रह्वत्वे शब्दे च, हन हिंसागत्योः, विश प्रवेशने, अशू व्याप्तौ, एभ्यः ष्ट्रन् स्यादेषां वृद्धिश्च । भ्राष्ट्र इति । संयोगादिलोपः । 'व्रश्चे'ति षत्वे ष्टुत्वम् । 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना' इत्यमरः । वैष्ट्रं=विष्टपम् । दिवेः । दिवु क्रीडादौ,अस्मात् ष्ट्रन् स्यात् । द्युदादेशो वृद्धिश्च धातोः । उषि । उष दाहे, खनु अवदारणे, आभ्यां ष्ट्रन् कित्स्यात् । उष्ट्रः क्रमेलकः । 'उष्ट्रे क्रमेलकमयमहाङ्गाः' इत्यमरः । सिवि । षिवु तन्तुसन्ताने, मुच्लृ मोक्षणे, आभ्यां ष्ट्रन्कित्स्यात्, टेरूकारादेशश्च । सूत्रिमूत्रिभ्यां चुरादिण्यन्ताभ्यामेरचा रूपसिद्धेराद्युदात्तार्थमिदं सूत्रम् । न च घञा तत्सिद्धिः 'एर'जित्यस्य घञो बाधकत्वात् । 'सूत्रं तु सूचनाग्रन्थे सूत्रतन्तुव्यवस्थयोः' इति विश्वः । अमि । अम गतिशब्दसंभक्तिषु, चिञ् चयने, ञिमिदा स्नेहने, शसु हिंसायाम् । आन्त्रमिति । 'अनु-

---

बा.]इत्यात्वम् । आत्मेति । मनिणौ णित्वादुपधावृद्धिः । हनिमशिभ्यां सिकन् । हन हिंसागत्योः, मश शब्दे, आभ्यां सिकनित्यर्थः । हंसिकेति मक्षिकेति । शस्य व्रश्चेति षत्वे, षढोरिति कत्वम्, षत्वं च । कोररन् । कु शब्दे अस्मादरन्प्रत्यय इत्यर्थः । कवर इति । गुणः । अवादेशः । गिर उडच् । गॄ निगरणे, अस्मादुडच् स्यात् । 'गरुत्मान्गरुडस्तार्क्ष्यः' इत्यमरः । इन्देः कमिर्नलोपश्च । इदि परमैश्वर्ये, अस्मात्कमिः स्यान्नकारलोपश्चेत्यर्थः । इदमिति । सर्वनामशब्दोऽयम् । कायतेर्डिमिः । कै शब्दे, अस्माड्डिमिप्रत्यय इत्यर्थः । डित्त्वाट्टिलोपः । अयमपि सर्वादिरेव । सर्वधातुभ्यः ष्ट्रन् । सर्वेभ्योऽपि धातुभ्यः ष्ट्रन्प्रत्यय इत्यर्थः । वस्त्रमिति । वस आच्छादने । छादनादिति । छद अपवारणे ण्यन्तः । भ्रस्जिगमिनमि । भ्रस्ज पाके, गम्लृ गतौ, णम प्रह्वत्वे शब्दे च, हन हिंसागत्योः, विश प्रवेशने, अशू व्याप्तौ, एभ्यः ष्ट्रन् स्यात्, एषां वृद्धिश्च । भ्राष्ट्र इति । व्रश्चेति षत्वम्, वृद्धिः । 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना' इत्यमरः । दिवेर्द्युच्च । दिवु क्रीडादौ, अस्मात्ष्ट्रन् स्यात्, धातोर्द्युदादेशो वृद्धिश्च । द्यौत्रमिति रूपम् । उषिखनिभ्यां कित् । उष दाहे, खनु अवदारणे, आभ्यां ष्ट्रन् कित्स्यात् । उष्ट्र इति । 'उष्ट्रे क्रमेलकमयमहाङ्गाः' इत्यमरः । खात्रमिति । 'जनसनखनां सञ्झलोः' इत्यात्वम् । सिविमुच्योष्टेरू च । षिवु तन्तुसन्ताने, मुच्लृ मोक्षणे, आभ्यां ष्ट्रन् कित्स्यात् । सूत्रमिति । सिव्धातोः ष्ट्रनि च्छ्वोरिति वस्य ऊठि, उपधाया ऊकारे, सवर्णदीर्घे रूपम् । ष्ट्रन्निति ष्टुत्वसंपन्नस्य निर्देशः । षस्येत्त्वे त्रनिति शिष्यते । मूत्रमिति । टेरुत्वे रूपम् । अमिचिमिदि । अम गत्यादिषु, चिञ् चयने, ञि मिदा स्नेहने, शसु हिंसायाम्, एभ्यः क्त्रप्रत्यय इत्यर्थः । आन्त्रमिति । 'अनुनासिकस्य क्वी'ति दीर्घः । शेषं स्पष्टम् । पुवो ह्रस्वश्च । पूञ् पवने, अस्मात्क्त्रः

ड्रंट् । स्त्री । ६०६ । **गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः** । 'गोत्रं स्यान्नामवंशयोः' । गोत्रा पृथिवी । धत्रं गृहम् । वेत्रम् । पक्त्रम् । वक्त्रम् । यन्त्रम् । सत्रम् । क्षत्रम् । ६०७ । **हुयामाश्रुभसिभ्यस्त्रन्** । होत्रम् । यात्रा । मात्रा । श्रोत्रम् । भस्त्रा । ६०८ । **गमेरा च** । गात्रम् । ६०९ । **दादिभ्यश्छन्दसि** । दात्रम् । पात्रम् । ६१० । **भूवादिगृभ्यो णित्रन्** । भावित्रम् । वादित्रम् । गारित्रमोदनम् । ६११ । **चरेर्वृत्ते** । चारित्रम् । ६१२ । **अशित्रादिभ्य इत्रोत्रौ** । अशित्रम् । वहित्रम् । धरित्री मही । त्रैङ् एवमादिभ्य उत्रः । त्रोत्रं प्रहरणम् । वृञ-वरुत्रं प्रावरणम् । ६१३ । **अमेर्द्विषति चित्** । अमित्रः शत्रुः । ६१४ । **आः समि-**

---

त.] नासिकस्ये'ति दीर्घः । 'श्रोणिलम्बिगुरुषाऽऽन्त्रमेखला'मिति कालिदासः । 'आख्याश्चर्ययोश्चित्र'मित्यमरः । 'मित्रं सुहृदि न द्वयोः । सूर्ये पुंसि' इति मेदिनी । 'शस्त्रं लोहाऽस्त्रयोः क्लीबं क्षुरिकायां तु योषिति' इति च । प्रत्ययस्वरेणैतेऽन्तोदात्ताः । 'शुन आन्त्राणि पेचे' । 'चित्रं देवानाम्' । 'मित्रं नयनम्' । 'शस्त्रस्य शस्त्रमसि' इत्यादि । **पुवः** । पूञ् पवनेऽस्मात्त्रः स्यात्, धातोर्ह्रस्वत्वं च । पुनाति स्ववंशानिति पुत्रः । पुंनामा नरकस्तस्मात् त्रायते इत्यर्थे 'आतोऽनुपसर्गे कः' इति कप्रत्यये पुत्र इति व्युत्पत्त्यन्तरम् । **स्त्यायतेः** । स्त्यै ष्ट्यै शब्दसङ्घातयोः । **स्त्रीति** । डित्त्वाट्टिलोपः । 'लोपो व्यो'रिति यलोपः । टित्त्वान्ङीप् । 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः । **गुधृ** । गुङ् अव्यक्ते शब्दे, धृञ् धारणे, वी गतिप्रजनादौ, डुपचष् पाके, वच परिभाषणे, यम उपरमे, षद्लृ विशरणगत्यादौ, क्षद इति सौत्रः । '**गोत्रा** भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्ययोः । संभावनीयबोधे च काननक्षेत्रवर्त्मसु' इति मेदिनी । '**सत्त्र**माच्छादने यज्ञे सदादाने धनेऽपि च' इत्यमरः । '**सत्त्रं** यज्ञसदादानच्छादनाऽरण्यकैतवे' इति मेदिनी । क्षत्त्रं ब्राह्मणानन्तरजातिः । **हुयामा** । हु दानादनयोः, या प्रापणे, मा माने, श्रु श्रवणे, भस भर्त्सनदीप्त्योः । होत्रमाहुतिः । होत्राशब्द ऋत्विक्ष्वपि स्त्रीलिङ्ग इति 'होत्राभ्यश्छः' इति सूत्रे हरदत्तादयः । '**यात्रा** तु यातनेऽपि स्याद्गमनोत्सवयोः स्त्रिया'मिति मेदिनी । '**मात्रा** कर्णविभूषायां वित्ते माने परिच्छदे । अक्षराऽवयवे स्वल्पे क्लीबं कात्स्न्र्येऽवधारणे' इति च । 'कर्णशब्दग्रहौ **श्रोत्रं** श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः । '**भस्त्रा** चर्मप्रसेविका' इति च । **गमेः** । गम्लृ गतावस्मात्त्रन्स्याद्धातोराकारान्तादेशश्च । '**गात्रमङ्गे** 'कलेवरे । स्तम्बेरमाग्रजङ्घादिविभागेऽपि समीरित'मिति विश्वः । **दादिभ्यः** । दाप् लवने एवमादिभ्यस्त्रन् । दात्रं धान्यादिच्छेदनसाधनम् । पा पाने । 'योग्यभाजनयोः **पात्र**'मित्यमरः । क्षि निवासगत्योः । क्षेत्रमित्यादि योज्यम् । **भूवादि** । भू सत्तायाम् । भावित्रं-त्रैलोक्यम् । वद व्यक्तायां वाचि ण्यन्तः । वादित्रं-तूर्यादि । गॄ निगरणे । **चरेः** । चर गतौ, अस्माण्णित्रन्स्याद्वृत्ते वाच्ये । 'वृत्तं पद्ये चारित्रे च' इत्यमरः । ननु इत्रन्प्रत्यये चरित्रमित्युक्तं, ततश्च प्रज्ञाद्यणि चारित्रमिति सिद्धौ किमनेनेति चेत् । मैवम् । स्वरे विशेषात् । **अशि** । अशू व्याप्तावेवमादिभ्य इत्रः, त्रैङ् पालने एवमादिभ्य उत्रश्च स्यात् । **वहित्रमिति** । वह प्रापणे । **धरित्रीति** । धृञ् धारणे, गौरादित्वात् ङीष् । **अमेः** । अम गतौ, अस्मादित्रः स्यात्स च चित् । उत्रस्तु नानुवर्तते, अस्वरितत्वात् । मित्रं नेति विग्रहे

---

बा.]स्यात्, धातोर्ह्रस्वत्वं च । **पुत्र इति** । कित्त्वान्न गुणः । **स्त्यायतेड्र्ट्** । स्त्यै ष्ट्यै शब्दसङ्घातयोः अस्माड्ड्रट् स्यात् । **स्त्रीति** । डित्त्वाट्टिलोपः । 'लोपो व्योः' इति यलोपः । टित्त्वान्ङीप् । 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधू'रित्यमरः । **गुधृवीपचि** । गुङ् अव्यक्ते शब्दे, धृञ् धारणे, वी गतिप्रजननादौ, डु पचष् पाके, वच परिभाषणे, यम उपरमे, षद्लृ विशरणादौ, क्षदिः सौत्रः, एभ्यस्त्रप्रत्यय इत्यर्थः । **गोत्रमिति** । त्रे गुणः । 'अद्रिगोत्रगिरिग्रावा' 'सन्ततिर्गोत्रजनने'ति चामरः । **सत्त्रमिति** । 'सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च' इत्यमरः । **हुयामा** । हु दानादनयोः, या प्रापणे, मा माने, श्रु श्रवणे, भस भर्त्सनदीप्त्योः, एभ्यस्त्रन्प्रत्यय इत्यर्थः । 'भस्त्रा चर्मप्रसेविका' इत्यमरः । **गमेरा च** । गम्लृ गतौ, अस्मात्त्रन्स्यात्, धातोरन्त्यस्य मकारस्य आकारश्चेत्यर्थः । **गात्रमिति** । **दादिभ्यश्छन्दसि** । दाप् लवने इत्यादिभ्यस्त्रन्स्याच्छन्दसि । **दात्रमिति** । 'दात्रं लवित्रमाबन्धः' इत्यमरः । **पात्रमिति** । 'योग्यभाजनयोः पात्र'मित्यमरः । **भूवादिगृभ्यो** । भू सत्तायां, वद व्यक्तायां वाचि ण्यन्तः, गॄ निगरणे, एभ्यो णित्रन् स्यात् । **भावित्रमिति** । णित्त्वाद्वृद्धिः । **वादित्रमिति** । 'चतुर्विधमिदं वाद्यं वादित्रातोद्यनामक'मित्यमरः । **चरेर्वृत्ते** । चर गतावस्माण्णित्रन् स्यात् वृत्ते गम्ये । **चारित्रमिति** । णित्त्वादुपधावृद्धिः । **अशित्रादिभ्य इत्रोत्रौ** । अशिश्च त्रश्च अशित्रौ, तौ आदी येषामिति विग्रहः । द्वन्द्वान्ते श्रूयमाणस्याऽऽदिशब्दस्य प्रत्येकं योगः । अश्वादि त्रादि एभ्यः क्रमात् इत्र उत्र इत्येतौ प्रत्ययौ स्तः । **अशित्रमिति** । अशू व्याप्तौ अस्मादित्रः । **वहित्रमिति** । वह प्रापणे । **धरित्रीति** । धृञ् धारणे । गौरादित्वान्ङीष् । **त्रोत्रमिति** । त्रैङ् पालने, आत्वे आद्गुणः । **अमेर्द्विषति चित्** । अम गत्यादौ, अस्मात् इत्रः स्यात्, स च चित्,

**णिनिकषिभ्याम्** । संपूर्वादिणो निपूर्वात्कषेश्च आः स्यात् । स्वरादित्वादव्ययत्वम् । समया । निकषा । ६१५। **चितेः कणः कश्च** । बाहुलकादगुणः । 'चिक्कणं मसृणं स्निग्धम्' ।६१६। **सूचेः स्मन्** । सूक्ष्मम् । ६१७ । **पातेर्डुम्सुन्** । पुमान् । ६१८ । **रुचिभुजिभ्यां किष्यन्** । रुचिष्यमिष्टम् । भुजिष्यो दासः । ६१९ । **वसेस्तिः** । 'वस्तिर्नाभेरधो द्वयोः' । 'वस्तयः स्युर्दशासूत्रे' । बाहुलकात् शासः । शास्तिः राजदण्डः । विन्ध्या-स्यमगमस्यतीत्यगस्तिः । शकन्ध्वादिः । ६२० । **सावसेः** । स्वस्ति । स्वरादित्वादव्ययत्वम् । ६२१ । **वौ तसेः** । वितस्तिः । ६२२ । **पदिप्रथिभ्यां नित्** । पत्तिः । प्रथितिः । 'तितुत्रेष्वग्रहादीना'मितीट् ।

त.]त्वमित्रमिति नपुंसकम् । **आः समिण्** । इण् गतौ । अस्मादाप्रत्यये गुणे सत्ययादेशः । **कषेरिति** । कष खषेति दण्डकः । समयानिकषाशब्दौ समीपवाचकौ । बाहुलकात् दुषेः । दोषा । दिवेराप्रत्यये बाहुलकादेवाऽस्य गुणाऽभावे दिवा । स्वदेराप्रत्यये बाहुलकादेव धातोर्धान्तादेशश्च । स्वधेत्यादि । **चितेः** । चिती संज्ञानेऽस्मात्कणः प्रत्ययः स्यात्कश्चाऽन्तादेशः । अमरोक्तमाह-**चिक्कणमिति** । **सूचेः** । सूच पैशुन्ये चुरादिरस्मात्स्मन् , णिलोपः । कुत्वषत्वे । 'सूक्ष्मं स्यात्कण्टकेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके' इति मेदिनी । **पातेः** । 'पा रक्षणेऽस्माड्डुम्सुन्स्यात । डित्वा-ट्टिलोपः । 'उकार उच्चारणार्थ' इत्युज्ज्वलदत्तः । वस्तुतस्तूगित्कार्यार्थः-सुपुंसीति । 'उगितश्चे'ति ङीप् । नकारः स्वरार्थः । 'पुंसोऽसु'ङिति सूत्रे न्यासरक्षिताभ्यां पुनातेर्मक्सुन् ह्रस्वश्चेति पठितम् । पूञो ड्डुम्सुनित्यन्ये । भाष्ये तु सूतेः सप्रत्यये पुमानित्युक्तम् । 'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः' इति तत्त्वम् । **रुचि** । रुच दीप्तावभि-प्रीतौ च, भुज पालनादौ । '**भुजिष्यस्तु** स्वतन्त्रे च हस्तसूत्रकदासयोः । स्त्रियां दासीगणिकयोः इति मेदिनी । **वसेः** । वस निवासे, वस आच्छादने । '**वस्तिर्द्वयोर्निरुहे** नाभ्यधोभूदिशासु च' इति मेदिनी । **शास इति** । शासु अनुशिष्टौ । **अस्यतीति** । असु क्षेपणे । 'अगस्तिः कुम्भयोनौ च वङ्गसेनतरौ पुमान्' इति मेदिनी । **सावसेः** । अस् भुवि अस्मात्सावुपपदे तिः स्यात् । बहुलवचनाच्च भूभावः । **वौ**। तसु उपक्षयेऽस्माद्विपूर्वात्तिः स्यात् । 'अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः' इत्यमरः । 'स्त्रीपुंसयोर्वितस्तिः स्या'दित्यमरमाला । **पदि** । पद गतौ, प्रथ प्रख्याने, आभ्यां तिः स्यात्स च नित् । **पत्तिरिति** पदातिः । **प्रथितिरिति** । प्रख्यातिः । **तितुत्रेष्विति** । ग्रहादित्वादिडागमनिषेधो नेति भावः । **दृणातेः** । दॄ विदारणे । अस्मात्तिः स्याद्धातोर्ह्रस्वत्वं च चात् ।

बा.]शत्रौ वाच्ये ।'द्विड्विपक्षाहिताऽमित्रदस्युशात्रवशत्रवः' इत्यमरः । **आः समिण्** । संपूर्वकः इण् गतौ,निपूर्वककष हिंसार्थकः, आभ्यामाः स्यात् । **समयेति** । गुणेऽयादेशे रूपम् । 'समयाऽन्तिकमध्ययोः' इत्यमरः । **चितेः कणः क च** । चिती संज्ञाने, अस्मात्कणप्रत्ययः, धातोरन्त्यस्य च ककारादेश इत्यर्थः । अमरकोशमाह-**चिक्कणमिति** । **सूचेः स्मन्** । सूच पैशुन्ये चुरादिण्यन्तः, अस्मात्स्मनि णिलोपे कुत्वे षत्वे च सूक्ष्ममिति रूपम् । **पातेर्डुम्सुन्** । पा रक्षणे अस्माड्डुम्सुन्प्रत्ययः । **पुमानिति** । डुम्सुनो डित्त्वाट्टिलोपः । उकार उच्चारणार्थ इति केचित् । तेषामपी-त्संज्ञामन्तरा लोपाऽसंभवादुगित्कार्यसिद्धिः, उच्चारणार्थानामपि वर्णानामित्संज्ञालोपाभ्यामेव निवृत्त्यङ्गीकारात् । एतच्च दिवऔत्सूत्रे शेखरे स्पष्टम् । तत्फलं तु सुपुंसीत्यादौ 'उगितश्चे'ति ङीप् । भाष्ये तु 'सूतेः सप् प्रसवे पुमा'निति व्यु-त्पादितम् । तत्रेत्थं व्युत्पत्तिः, षूङ् प्राणिगर्भविमोचने अस्मान्म्सुन्प्रत्ययः, धातुसकारस्य पकारः, ऊकारस्य ह्रस्वश्चे-त्यर्थः । एतच्च शेखरे हलन्तपुंलिङ्गे 'पुंसोऽ'ङिति सूत्रव्याख्यावसरे स्पष्टम् । **रुचिभुजिभ्यां किष्यन्** । रुच दीप्तौ, भुज पालनादौ, आभ्यां किष्यन्नित्यर्थः । **रुचिष्यमिति** । कित्वान्न लघूपधगुणः । **वसेस्तिः** । वस निवासे अ-स्मात्तिप्रत्यय इत्यर्थः । **वस्तिरिति** । शास्तिरित्यर्थमाह—**बाहुलकादिति** । शासु अनुशिष्टावित्यस्मात्तिप्रत्ययः । **अगमिति** । पर्वतमित्यर्थः । ननु कथं तर्हि सवर्णदीर्घाऽभाव इत्यत आह—**शकन्ध्वादिरिति** । शकन्ध्वादिपर रूपस्य सवर्णदीर्घबाधकत्वादिति भावः । **सावसेः** । सावुपपदे अस भुवीत्यस्मात् तिप्रत्यय इत्यर्थः । 'स्वस्त्याशीः क्षेमपुण्यादौ' इत्यमरः । ननु कथं तर्हि सुपोऽश्रवणमित्यत्राह—**स्वरादिपाठादिति** । **वौ तसेः** । वावुपपदे तसु उपक्षये अस्मात्तिः स्यात् । 'अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः' इत्यमरः । **पदिप्रथिभ्यां नित्** । पद गतौ, प्रथ प्रख्याने, आभ्यां तिप्रत्ययो नित्स्यादित्यर्थः । **पत्तिरिति** । 'पदातिपत्तिपदगपादातिकपदातयः' इत्यमरः । **प्रथितिरिति** । ख्यातिरित्यर्थः । ननु प्रथितिरित्यत्र कथमिट् , वलादीटस्तितुत्रेति निषेधादित्यत आह—**अग्रहा-**

शे.] पातेर्डुमिति । 'सूतेः सस्य पः ह्रस्वो म्सुन् प्रत्ययः' इति 'स्त्रिया'मिति सूत्रे भाष्ये उक्तम् । **अगस्तिरिति** । अत्र 'क्तिच्क्तौ चे'ति क्तिजित्यन्ये । एतत्समानार्थोऽगस्त्यशब्दोऽपि, अगं स्त्यायतीति विग्रहे आतोऽनुपसर्गेकः' इति कान्तः । द्वयोरपत्ये ऋष्यणि यकाररहितम् 'आगस्तः' इत्याद्यस्य, 'आगस्त्यः' इति द्वितीयस्य । आद्यस्य बहुत्वे 'आगस्ता' इति । द्वितीयस्य 'अगस्तय' इति, 'आगस्त्यकौण्डी'त्यगस्त्यादेशः । अगस्तिशब्दो गर्गादिष्वित्यन्ये ।

६२३ । **दृणातेर्ह्रस्वश्च** । दृतिः । ६२४ । **कॄतॄकृपिभ्यः कीटन्** । किरीटं शिरोवेष्टनम् । तिरीटं सुवर्णम् । 'कृपीटं कुक्षिवारिणोः' । ६२५ । **रुचिवचिकुचिकुटिभ्यः कितच्** । रुचितमिष्टम् । उचितम् । कुचितं परिमितम् । कुटितं कुटिलम् । ६२६ । **कुटिकुषिभ्यां क्मलन्** । कुड्मलम् । कुष्मलम् ।६२७। **कुषेर्लश्च** । कुल्मलं पापम् ।६२८। **सर्वधातुभ्योऽसुन्** । चेतः । सरः । पयः । सदः [सभा,]।६२९। **रपेरत एच्च** । रेपोऽवद्यम् । ६३० । **अशेर्देवने युट् च** । देवने=स्तुतौ । यशः । ६३१ । **उब्जेर्बले बलोपश्च** । ओजः । ६३२ । **श्वेः संप्रसारणं च** । शवः । शवसी । बलपर्यायोऽयम् । ६३३ । **श्रयतेः स्वाङ्गे शिरः किच्च** ।

---

त.]'दृतिश्चर्मपुटे मत्स्ये ना' इति मेदिनी । **कॄतॄ** । कॄ विक्षेपे, तॄ प्लवनतरणयोः, कृपू सामर्थ्ये । **'किरीटं** मुकुटे न क्री'ति **चन्द्रगोमी** । 'कृपीटमुदरे नीरे' इति विश्वः । दशपाद्यां तु 'कॄतॄकृपिकपिभ्य' इति पठित्वा कम्पीट इति चतुर्थमुदाहृतम् । ['कृपो रो लः' इत्यत्र न्यासे तु 'कॄकृपिभ्या'मिति पठयते । अतस्तरतिरत्र प्रक्षिप्त इति कश्चित् । 'तरतेश्चे'ति पृथक्पठित्वा तिरीटः कूलवृक्ष' इति कश्चिद्व्याख्यत् ] । **रुचिवचि** । रुच दीप्तावभिप्रीतौ च, वच परिभाषणे, कुच शब्दे तारे, अयवा कुच कौटिल्याल्पीभावयोः । इकः कित्वात्सूत्रे नलोपेन निर्देशः । कुट कौटिल्ये । **उचितमिति** । 'वचिस्वपी'त्यादिना संप्रसारणम् । **कुटिकुषि** । **'कुड्मलो** मुकुले पुंसि न द्वयोर्नरकान्तरे' इति मेदिनी । कुष निष्कर्षे । कुष्मलं छर्दनम् । विकसितमित्यन्ये । **सर्वधातुभ्योऽसुन्** । दशपाद्यां तु असुन्नित्येव सूत्रम् । चिती संज्ञाने, चित संचेतने चुरादिः, सृ गतौ । गौरादित्वान्ङीष् । **'सरसी** तु महासरः' इति शब्दार्णवः । 'महान्ति सरांसि सरस्यः'इति भाष्यम् । पय गतौ,पीङ् पाने ।**'पयः** स्यात्क्षीरनीरयोः' इति मेदिनी । षद्लृ विशरणादौ । सदः सभा । वर्च दीप्तौ । **'वर्चो** नपुंसकं रूपे विष्ठायामपि तेजसि । पुंसि चन्द्रस्य तनये' इति मेदिनी । रुदिर् अश्रुविमोचने । **'रोदश्च** रोदसी चापि दिवि भूमौ पृथक् पृथक् । सहप्रयोगेऽप्यनयो रोदस्यावपि रोदसी इति' विश्वः । वी गत्यादिषु । 'वयः पक्षिणि बाल्यादौ यौवने च नपुंसक'मिति मेदिनी । अन प्राणने । अनो भक्तम् । 'अनोऽश्मायःसरसां जातिसञ्ज्ञयो'रिति टचि तु अनसम् । 'पाकस्थानं महानस'मित्यमरः । तमु ग्लानौ । **'तमः** । क्लीवं गुणे शोके सैंहिकेयान्धकारयोः' इति रभसः । **'तमो** ध्वान्ते गुणे शोके क्लीबं वा ना विधुंतुदे' इति मेदिनी । षह मर्षणे । **'सहो** बले ज्योतिषि च पुंसि हेमन्तमार्गयोः' इति मेदिनी । तप संतापे । 'तपो लोकान्तरेऽपि च । चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयोः' इति च । मह पूजायाम् । 'मह उत्सवतेजसोः' इति मेदिनी । नभ हिंसायां भौवादिकः क्र्यादिकश्च । 'नभोऽन्तरिक्षं गगन'मित्यमरः ।'नभं तु नभसा सार्धं तपं तु तपसा सह । सहं च सहसा सार्धं महं च महसा सह । तमेन च तमः प्रोक्तं रजेनाऽपि रजः समम्'इति द्विरूपकोशः । नन्वसुन्प्रत्यये नभः सहस्तम इत्यादिशब्दाः सिध्यन्ति, पचाद्यचि तु नभं सहं ,तममित्याद्यजन्ता अपि सिध्यन्ति, परन्तु रज इति अकारान्तसकारान्तौ नलोपवच्छब्दौ न सिध्यत इति 'रजेनाऽपि रजः सम'मिति कोशश्चिन्त्य एवेति चेदत्राहुः—रञ्ज रागे इत्यस्मादसुनि 'भूरञ्जिभ्यां कि'दिति वक्ष्यमाणेनाऽसुनः कित्वान्नलोपे रज इति सिध्यति । 'घञर्थे कविधान'मिति कप्रत्यये तु रज इत्यदन्तोऽपि सिध्यतीति । **रपेः** । रप व्यक्तायां वाचि, अस्मादसुन्स्यादत एकारश्च । **रेपोऽवद्यमिति** । 'अरेपसा तन्वा' इति मन्त्रे निरवद्ययेति भाष्ये उक्तं, नञ्पूर्वकरेपःशब्दस्याऽनवद्यवाचकत्वात् । **अशेः** । अशू व्याप्तौ सङ्घाते च, अस्मादसुन्स्याद्धातोर्युडागमश्च । यशः कीर्तिः । **उब्जेः** । उब्ज आर्जवे अस्मादसुन्स्याद्बले वाच्ये, बकारस्य लोपश्च । **'ओजो** दीप्ताववष्टम्भे प्रकाशबलयोरपि' इति मेदिनी । **श्वेः** । टुओश्वि गतिवृद्ध्योः । अस्मादसुन्स्यात्सम्प्रसारणं

---

बा.]दीति । अस्य प्रथधातोर्ग्रहादित्वादिति भावः । **दृणातेर्ह्रस्वश्च** । दॄ विदारणे अस्मात्तिः स्यात्, धातोर्ह्रस्वत्वं च । **दृतिरिति** । 'दृतिसीमन्तहरित' इत्यमरः । **कॄतॄकृपिभ्यः कीटन्** । कॄ विक्षेपे, तॄ प्लवनतरणयोः, कृपू सामर्थ्ये, एभ्यः कीटन् स्यात् । **किरीटमिति** । कित्त्वान्न धातोर्गुणः, किन्तु 'ॠत इद्धातो'रिति इत्त्वम् । 'किरीटस्त्विल्वमार्जनौ' इत्यमरः । **रुचिवचिकुचिभ्यः** । रुच दीप्तावभिप्रीतौ च, वच परिभाषणे, कुच शब्दे, एभ्यः कितच् स्यात् । **रुचितमिति** । कित्त्वान्न गुणः । **उचितमिति** । कित्वात्संप्रसारणम् । बाहुलकादाह-**कुटितमिति** । क्वचित्तु सूत्र एव पाठः । **कुडिकुषिभ्यां क्मलन्** । कुडि दाहे, कुष निष्कर्षे, आभ्यां क्मलन्नित्यर्थः । **कुषेर्लश्च** । पूर्वोक्ताद्धातोर्लकारश्चान्तादेश इत्यर्थः । **कुल्मलमिति** । योगविभागान्नाऽयं नित्यः । तेन कुष्मलमिति पूर्वोक्तमपि । **सर्वधातुभ्योऽसुन्** । **चेत इति** । चिती संज्ञाने अस्मादसुनि रूपम् । सृ गतौ, पीङ् पाने, षद्लृ विशरणादौ । **रपेरत एच्च** । रप व्यक्तायां वाचि अस्मादसुन्स्यात्, अकारस्य एकारश्चेत्यर्थः । **अशेर्देवने युट् च** । अशू व्याप्तौ अस्मादसुन् स्याद्धातोर्युडागमश्च । देवनं स्तुतिः । **उब्जेर्बले बलोपश्च** । उब्ज आर्जवे, अस्माद्बलेऽभिधेयेऽसुन् स्यात्, बकारस्य लोपश्चेत्यर्थः । **श्वेः संप्रसारणं च** । टु ओ श्वि गतिवृद्ध्योः । अस्मादसुन्,

श्रयतेः शिर आदेशोऽसुन् किच्च । शिरः । शिरसी ।६३४। **अर्तेरुच्च** । उरः ।६३५। **व्याधौ शुट् च** । अर्शो गुदव्याधिः ।६३६। **उदके नुट् च** । अर्तेरसुन् स्यात्तस्य च नुट् । अर्णः । अर्णसी ।६३७। **इण आगसि** । एनः । [एनसी]६३८। **रिचेर्धने घिच्च** । चात्प्रत्ययस्य नुट् । घित्त्वात्कुत्वम् । रेक्णः सुवर्णम् । ६३९ । **चायतेरन्ने ह्रस्वश्च** । चनो भक्तम् । ६४० । **वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च** । वर्पो रूपम् । शेपो गुह्यम् । ६४१ । **स्रुरीभ्यां तुट् च** । स्रोतः । रेतः । ६४२ । **पातेर्बले जुट् च** । पाजः । पाजसी । ६४३ । **उदके थुट् च** । पाथः । ६४४ । **अन्ने च** । पाथो भक्तम् । ६४५ । **अदेर्नुम् धौ च** । अदेर्भक्ते वाच्येऽसुन् नुमागमो धादेशश्च । अन्धोऽन्नम् । ६५६ । **स्कन्देश्च स्वाङ्गे** । स्कन्धः । स्कन्धसी । ६४७ । **आपः कर्मा-**

---

**त.]** च । **श्रयतेः** । श्रिञ् सेवायामस्मात्स्वाङ्गे वाच्येऽसुन्स्यात्स च किद्धातोः शिरादेशश्च। 'उत्तमाङ्गं शिरः शीर्ष'मित्यमरः । घञर्थे कप्रत्यये तु शिर इत्यदन्तोऽपि । 'शिरोवाची शिरोऽदन्तो रजोवाची रजस्तथा' इति कोशान्तरम् । 'पिण्डं दद्याद्गयाशिरे' इति वायुपुराणे । 'कुण्डलोद्घृष्टगण्डानां कुमाराणां तरस्विनाम् । निचकर्त शिरान्द्रौणिर्नालेभ्य इव पङ्कजान्' इति महाभारतम् । **अर्तेः** । ऋ गतावस्मादसुन् कित्स्याद्धातोरुत्वं च । रपरत्वम् । **'उरो** वत्सं च वक्षश्च' इत्यमरः । **व्याधौ** । अर्तेरेव व्याधौ वाच्येऽसुन्, तस्य शुडागमश्च स्यात् । **अर्ण इति** । पानीयमित्यर्थः । **इणः** । इण् गतौ अस्मात्पापे वाच्येऽसुन् स्यात्तस्य नुडागमश्च । एनः पापम् । **रिचेः** । रिचिर् विरेचने, रिच वियोजनसंपर्चनयोरित्यस्माद्वा धने वाच्येऽसुन् । । **रेक्ण इति** । 'चजो'रिति कुत्वे 'अट्कुप्वा'ङिति णत्वम् । इह दशपादीवृत्तौ नुटं नानुवर्त्य रेकः रेकसी इत्युदाहृतम् । तन्न । उत्तरसूत्रे नुडनुवृत्तेर्निर्विवादत्वात्, मण्डूकप्लुतौ मानाऽभावाल्लक्ष्यविसंवादाच्च । उज्ज्वलदत्तेन तु 'रिचेर्धने चिच्चे'ति पठित्वा नुटं चानुवर्त्य कित्त्वाद्गुणाऽभावे नुटश्चुत्वेन ञकारे रिच्ञमिति साधितं तल्लोकवेदयोरप्रसिद्धत्वादुपेक्ष्यम् । 'नित्यं रेक्णो अमर्त्यः परिषद्यं ह्यरणस्य रेक्णः' इत्यादिमन्त्रेषु रेक्ण इति शब्दस्य प्रसिद्धत्वात् । वैदिकनिघण्टौ च सुवर्णपर्यायेषु तथा पाठात् । वेदभाष्ये तु प्रकृतसूत्रेणैव तस्य साधितत्वाच्च रेक्ण इति प्रयोग एव साधीयानिति दिक् । **चायतेः** । चायृ पूजानिशामनयोः । अस्मादन्ने वाच्येऽसुन्स्यात्तस्य नुट् च धातोर्ह्रस्वत्वं च । यलोपः । 'चनो दधिष्व पवता' 'सुते दधिष्व नश्चनः' इत्यादिमन्त्रेषु प्रसिद्धोऽयं चनशब्दः । एतेन चणोऽन्नमित्युदाहृत्य बाहुलकाण्णत्वमिति वदन्तो दशपादीवृत्तिकारास्तदनुसारिणः प्रसादकारादयश्च परास्ताः । **वृङ्** । वृङ् संभक्तौ, शीङ् स्वप्ने, आभ्यां यथाक्रमं रूपे स्वाङ्गे च वाच्येऽसुन्स्यात्तस्य पुडागमश्च । **वर्पो रूपमिति** । 'प्रच्छिन्नदेवा अभिवर्पसाऽभूत्' इत्यादिमन्त्रेषु प्रसिद्धमिदम् । 'शेपः स्याद्वृषणं पेल'मिति सुभूतिचन्द्रः । अकारान्तोऽप्ययम् । 'शेपपुच्छलाङ्गूलेषु शुनः' इति वार्तिके शेप इति निर्देशात् , 'यस्यामुशन्तः प्रहराम शेप'मिति वैदिकप्रयोगाच्च । ['शेपः शेपो च शेवश्च शेवं प्रोक्तं च शेफसि' इति द्विरूपकोशः] । **स्रुरीभ्याम्** । स्रु गतौ, रीङ् स्रवणे, आभ्यामसुन्स्यात्तस्य तुट् च । **'स्रोतोऽम्बुवेगेन्द्रिययोः'** इति विश्वः । **'रेतः शुक्रे पारदे च'** इति मेदिनी । **पातेः** । पा रक्षणेऽस्माद्बले वाच्येऽसुन् जुडागमश्च [ वर्गतृतीयादिः ] । जुट् चेत्यन्तस्यादिपाठस्तूज्ज्वलदत्तस्य प्रामादिकः । 'पृथुपाजा अमर्त्यः' इत्यादिमन्त्रतद्भाष्यविरोधात् । **उदके** । पातेरुदके वाच्येऽसुन्स्यात्तस्य थुडागमश्च । 'कबन्धमुदकं पाथः' इत्यमरः । **अदेः** । अद भक्षणे । 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरः । 'द्विजातिशेषेण यदेतदन्धसा' इति भारविः ।

---

**बा.]** धातोः संप्रसारणं चेत्यर्थः । शव इति रूपम् । **श्रयतेः स्वाङ्गे** । श्रिञ् सेवायामस्मात्स्वाङ्गेऽभिधेयेऽसुन्,धातोः शिरआदेशः, प्रत्ययश्च किदित्यर्थः । **अर्तेरुच्च** । ऋ गतौ अस्मादसुन् कित्स्याद्धातोरुत्वं च । उर इति । रपरत्वम् । **व्याधौ शुट् च** । अर्तेर्व्याधावभिधेयेऽसुन्स्यात् । शुडागमश्चेत्यर्थः । **अर्श इति** । 'अर्शो रोगयुतोऽर्शसः' इत्यमरः । **उदके नुट् च** । अर्तेरित्येव । अर्तेरुदके वाच्येऽसुन् तस्य नुडागमश्च । **अर्ण इति** । 'रषाभ्या'मिति णत्वम् । **इण आगसि** । इण् गतौ अस्मादसुन् स्यात् पापे वाच्ये, तस्य नुडागमश्चेत्यर्थः । **रिचेर्धने घिच्च** । रिचिर् विरेचने अस्माद्धने वाच्ये असुन्, स च कित्, तस्य नुडागमश्च । **रेक्ण इति** । 'चजो'रिति कुत्वम्, 'अट्कुप्वा'ङिति णत्वम् । **चायतेरन्ने ह्रस्वश्च** । चायृ पूजानिशामनयोः, अस्मादन्ने वाच्ये असुन्स्यात्, तस्य नुट् , धातोर्ह्रस्वत्वं च । **चन इति** । 'लोपो व्यो'रिति यलोपः । **वृङ्शीङ्भ्याम्** । वृङ् संभक्तौ, शीङ् स्वप्ने, आभ्यां क्रमेण रूपे स्वाङ्गे च वाच्येऽसुन्स्यात् , तस्य पुडागमश्च । **शेप इति** । असुनि पुकि गुणः । **स्रुरीभ्यां तुट् च** । स्रु गतौ, रीङ् श्लेषणे, आभ्यामसुन् , तस्य तुडागमश्चेत्यर्थः । **पातेर्बले जुट् च** । पा रक्षणे अस्माद्बले वाच्येऽसुन् स्यात्तस्य जुडागमश्च [बले वाच्ये] । **उदके थुट् च** । पातेरुदके वाच्येऽसुन्स्यात्तस्य थुडागमश्चेत्यर्थः । **अन्ने च** । अन्ने वाच्येऽपि पातेरसुन् थुडागमश्चेत्यर्थः। **अदेर्नुम्धौ च** । अद भक्षणे अस्मादसुन् स्यात् । अन्ध

ख्यायां [ह्रस्वौ नुट् च वा] । कर्माख्यायां ह्रस्वो नुट् च वा । अप्नः । अपः । बाहुलकात्-आपः । आपसी ।६४८। रूपे जुट् च । अब्जो रूपम् । ६४९ । उदके नुम्भौ च । अम्भः । ६५० । नहेर्दिवि भश्च । नभः ।६५१। इण आग अपराधे च । 'आगः पापाऽपराधयोः' ।६५२। अमेर्हुक्च । अंहः ।६५३। रमेश्च । रंहः । ६५४ । देशे ह च । रमन्तेऽस्मिन् रहः । ६५५ । अञ्च्यञ्जियुजिभृजिभ्यः कुश्च । एभ्योऽसुन्, कवर्गश्चान्तादेशः । 'अङ्कश्चिह्नशरीरयोः' । अङ्गः पक्षी । योगः समाधिः । भर्गस्तेजः । ६५६ । भूरञ्जिभ्यां कित् । भुवः । रजः । ६५७ । वसेर्णित् । वासो वस्त्रम् । ६५८ । चन्देरादेश्च छः । छन्दः । ६५९ । पचि-

त.] स्कन्देः । स्कन्दिर् गतिशोषणयोः । अस्मात्स्वाङ्गे वाच्येऽसुन्, धश्चान्तादेशः । आपः । आप्लृ व्याप्तौ । अस्मात्कर्माख्यायामसुन्, ह्रस्वश्च धातोः । प्रत्ययस्य नुडागमस्तु वा स्यात् । 'अप्नस्वतीमश्विना' 'अपांसि यस्मिन्नधि संदधुः' बाहुलकादिति । उपलक्षणं, ह्रस्वनुटौ वा स्त इति व्याख्यानस्यापि संभवात् । तथा च 'भुवते कतमेऽपि नपुंसकमापः' इति कोशमुदाहृत्य 'सर्वमापोमयं जग'दिति प्रयोगो दुर्घटवृत्तौ समर्थितः । रूपे । रूपे वाच्ये आप्नोतेरसुन्, ह्रस्वत्वं च धातोः, प्रत्ययस्य जुडागमश्च स्यात् । अब्ज इति । 'झलां जश् झशी'ति पकारस्य बकारः । उदके । उदके वाच्ये आप्नोतेरसुन्, ह्रस्वत्वं, नुमागमो भश्चान्तादेशः । नहेः । णह बन्धने अस्माद्गगने वाच्येऽसुन्भश्चान्तादेशः स्यात् । 'नभो व्योम्नि नभो मेघे श्रावणे च पतद्ग्रहे । घ्राणे मृणालसूत्रे च वर्षासु च नभः स्मृत'मिति विश्वः । 'नभः क्लीवं व्योम्नि पुमान्घने । घ्राणश्रवणवर्षासु बिसतन्तौ पतद्ग्रहे' इति मेदिनी । 'नभः खं श्रावणो नभाः' इत्यमरः । 'नभं तु नभसा सार्धं'मिति द्विरूपकोशादकारान्तोऽपि । इणः । इणोऽसुन्स्यादपराधे वाच्ये, धातोरागादेशश्च । विश्वोक्तिमाह - आग इति । अमेः । अम गत्यादौ । अस्मादसुन्, हुगागमश्च धातोः स्यात् । अमन्ति गच्छन्त्यनेनाऽधस्तादित्यंहो दुरितम् । रमेश्च । रमेरसुन्स्यात्, हुगागमश्च धातोः । रहो वेगः । अहिरहिभ्यामसुना सिद्धे अघिरघिभ्यामसुनि अङ्घो रङ्घ इति माभूदिति सूत्रद्वयमिति गोवर्द्धनः । तथा च 'स्यान्मध्योष्मचतुर्थत्वमंहसो रंहसस्तथा' इति द्विरूपकोशः । एवं च 'दत्तार्घाः सिद्धसङ्घैर्बिदधतु घृणयः शीघ्रमङ्घोविघात'मिति, 'रङ्घःसङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः' इत्यत्र अङ्घो रङ्घ इति घकारपाठोऽनुप्रासरसिकानां प्रामादिक इति वदन्ति । देशे । देशे वाच्ये रमेरसुन्, हकारश्चान्तादेशः स्यात् । 'रहस्तत्त्वे रते गुह्ये' इति मेदिनी । अञ्चि । अञ्चु गतिपूजनयोः, अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, युजिर् योगे, युज समाधौ, भृजी भर्जने । अङ्कः अङ्कसी अङ्कांसि । अङ्गः अङ्गसी अङ्गांसि । योगः योगसी योगांसि । भर्गस्तेज इति । 'हरः स्मरहरो भर्गः' इत्यत्र तु भर्गशब्दो घञन्तः पुंलिङ्ग इति बोध्यः । उच समवायेऽस्मादसुनि बाहुलकात्कुत्वम् । न्यङ्क्वादित्वाद्वा । 'ओक आश्रयमात्रेऽपि मन्दिरेऽपि नपुंसक'मिति मेदिनी । भूरञ्जि । भू सत्तायाम्, रञ्ज रागे, आभ्यामसुन्कित्स्यात् । भुवोऽन्तरिक्षम् । षष्ठ्यन्तप्रतिरूपकमव्ययमिदम् । रजो रेणुः । 'रजः क्लीवं गुणान्तरे । आर्तवे च परागे च रेणुमात्रेऽपि दृश्यते' इति मेदिनी । घञर्थे कप्रत्यये तु अकारान्तोऽप्ययम् । 'रजोऽयं रजसा सार्द्धं स्त्रीपुष्पगुणधूलिषु' इत्यजयकोशः । वसेः । वस निवासेऽस्मादसुन् स्यात्स च णित् । णित्वाद्वृद्धिः । चन्देः । चदि आह्लादने, अस्मादसुन्, आदेः छकारश्च । 'छन्दः पद्यप्रभेदेऽपि

बा.] इति । 'भिस्सा स्त्री भक्तमन्धोऽन्न मित्यमरः । स्कन्देश्च स्वाङ्गे । स्कन्दिर् गतिशोषणयोः, अस्मात्स्वाङ्गे वाच्येऽसुन्, धातोश्चान्तादेशो धः । स्कन्धः । आपः कर्माख्यायाम् । आप्लृ व्याप्तौ अस्मात्कर्माख्यायामसुन् धातोर्ह्रस्वश्च । प्रत्ययस्य नुडागमस्तु वा भवतीत्यर्थः । बाहुलकादिति । धातोर्ह्रस्वो नेत्यर्थः । रूपे जुट् च । रूपे वाच्ये आप्नोतेरसुन्, धातोर्ह्रस्वः, प्रत्ययस्य जुडागमश्चेत्यर्थः । अब्ज इति । 'झलां जश् झशी'ति बकारः । उदके नुम् भौ च । उदके वाच्ये आप्लृधातोरसुन्, नुगागमो, ह्रस्वत्वं भकारश्चान्तादेश इत्यर्थः । नहेर्दिवि भश्च । णह बन्धने अस्माद्गगने वाच्येऽसुन्, भकारश्चान्तादेशः । नभ इति । हकारस्य भकारः । इण आगोऽपराधे च । इण् गतावित्यस्मादसुन् स्यादपराधे वाच्ये, धातोरागादेशश्च । 'पापापराधयोरागः' इत्यमरः । अमेर्हुक्च । अम गत्यादिषु, अस्मादसुन्, हुगागमश्च धातोः स्यात् । 'अंहोदुरितदुष्कृत'मित्यमरः । रमेश्च । रमु क्रीडादौ अस्मादसुन्प्रत्ययो, हुगागमश्चेत्यर्थः । देशे ह च । रमेरित्येव । रमतेर्देशे वाच्येऽसुन् हकारश्चान्तादेश इत्यर्थः । अञ्च्यञ्जियुजि । अञ्चु गतिपूजनयोः, अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, युजिर् योगे, भृजि भर्जने, एभ्योऽसुन्स्यात्कवर्गश्चान्तादेश इत्यर्थः । भूरञ्जिभ्यां कित् । भू सत्तायां, रञ्ज रागे, आभ्यामसुन्कित्स्यात् । भुव इति । कित्वान्न गुणः । उवङ् । रज इति । 'अनिदिता'मिति नलोपः । वसेर्णित् । वस आच्छादने, अस्मादसुन् णित्स्यात् ।

शे.] भूरञ्जिभ्यामिति । 'शूरञ्जिभ्या'मिति पाठ इति 'अनिदिता'मिति सूत्रे हरदत्तः । 'पूरञ्जिभ्या'मिति इति कैयटः ।

**वचिभ्यां सुट् च।** 'पक्षसी तु स्मृतौ पक्षौ'। वक्षो हृदयम्। ६६०। **वहिहाधाञ्भ्यश्छन्दसि।** वक्षाः अनड्वान्। हासाश्चन्द्रः। धासाः पर्वत इति प्राञ्चः। वस्तुतस्तु णिदित्यनुवर्तते न तु सुट्। तेन वहेरुपधावृद्धिः, इतरयोः 'आतो यु'गिति युक्। 'शोणा धृष्णू नृवाहसा'। 'श्रोता हवं गृणत स्तोमवाहाः'। 'विश्वो विहायाः'। 'वाजम्भरो विहायाः'। 'देवो न यः पृथिवीं विश्वधायाः'। 'अधारयत् पृथिवीं विश्वधायसम्'। 'धर्णसिं भूरिधायसम्' इत्यादि। ६६१। **इण आसिः।** अयाः वह्निः। स्वरादिपाठादव्ययत्वम्। ६६२। **मिथुनेऽसिः पूर्ववच्च सर्वम्।** उपसर्गविशिष्टो धातुर्मिथुनं, तत्रासुनोऽपवादोऽसिः स्वरार्थः। यस्य धातोर्यत्कार्यमसुन्प्रत्यये उक्तं तदत्रापि भवतीत्यर्थः। सुयशाः। ६६३। **नञि हन एह च।** अनेहा। अनेहसौ। ६६४। **विधाञो वेध च।** विदधातीति वेधाः। ६६५। **नुवो धुट् च।** नोधाः। ६६६। **गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं च।** असिः स्यात्। सुतपाः। जातवेदाः। 'गतिकारकोपपदात् कृ'दित्युत्तरपदप्रकृतिस्वरत्वे सति शेषस्यानुदात्तत्वे प्राप्ते तदपवादार्थमिदम्। ६६७। **चन्द्रे मो डित्।** चन्द्रोपपदान्माङोऽसिः स्यात्स च डित्। चन्द्रमाः। ६६८। **वयसि धाञः।** वयोधास्तरुणः। ६६९। **पयसि च।**

---

**त.]** स्वैराचाराभिलाषयोः' इति मेदिनी। अकारान्तोऽप्ययम्। 'अभिप्रायवशो छन्दौ' इत्यमरद्विरूपकोशौ। **पचि।** डुपचष् पाके, वच परिभाषणे, आभ्यामसुन्स्यात्तस्यं सुडागमश्च। चस्य कुत्वे सस्य षत्वम्। पक्षः पक्षसी पक्षांसि। 'यथा शालायै पक्षसी' इति श्रुतिः। 'पूर्वोत्तरे द्वे पक्षसी' इति अनीकाधिकरणे शाबरभाष्यम्। माधवस्तु पक्ष परिग्रह इत्यस्मादसुनित्याह। **वहि।** वह प्रापणे, ओहाक् त्यागे, डुधाञ्धारणादौ, एभ्योऽसुन्स्यात्। अत्र पूर्वसूत्रात्सुटमनुवर्तयतामुज्ज्वलदत्तादीनां मतेनोदाहरणमाह—**वक्षाः हासाः धासा इति। प्राञ्च इति।** सकलवृत्तिकृतः, प्रसादकारादयश्चेत्यर्थः। एतच्चाऽयुक्तम्। उक्तोदाहरणानि हि न तावल्लोके दृश्यन्ते न वा संभवन्ति, सूत्रेऽस्मिन्छन्दसीत्युक्तत्वात्। वेदे तु विपरीतान्येवोदाहरणानि दृश्यन्त इत्याह—**वस्तुतस्त्विति।** वेदभाष्यकारादयश्चेह्यानुकूला इत्यवधेयम्। **इणः।** इण्गतौ, अस्मादासिः स्यात्। **मिथुने। सुयशा इति।** 'अशेर्देवने युट् चे'त्यादि पूर्ववत्। सुपयाः सुस्रोता इत्याद्युदाहार्यम्। **नञि।** हन्तेर्नञ्युपपदेऽसिः स्याद्धातोरेहादेशश्च। 'ऋदुशनस्पुरुदंसे'त्यादिना सावनङ्। **विधाञः।** डुधाञ् धारणादौ, विपूर्वादस्मादसिः स्याद्वेधादेशश्च सोपसर्गधातोः। '**वेधाः** पुंसि हृषीकेशे बुधे च परमेष्ठिनी'ति मेदिनी। **नुवः।** णु स्तुतौ, अस्मादसिः स्यात्तस्य धुडागमश्च। **नोधा इति।** 'सद्यो भवद्वीर्याय नोधाः' इति मन्त्रे 'नोधा ऋषिर्भवती'ति निरुक्तम्। नवं दधातीति तु नैरुक्तं व्युत्पत्त्यन्तरं बोध्यम्। **गति।** गतौ कारके चोपपदेऽसिः स्यात्। तप संतापे, विद ज्ञाने, विद्लृ लाभे। **चन्द्रे।** चन्द्रं रजतममृतं च, तदिव मीयतेऽसौ चन्द्रमा इति हरदत्तः। **स च डिदिति।** डित्त्वाट्टिलोपे चन्द्रमसौ

---

**बा.] वास इति।** णित्त्वादुपधावृद्धिः। 'वस्त्रमाच्छादनं वासः' इत्यमरः। **चन्देरादेश्च छः।** चदि आह्लादने, अस्मादसुन् प्रत्ययश्छकारादेशश्च। **पचिवचिभ्यां सुट् च।** डु पचष् पाके, वच परिभाषणे, आभ्यामसुन्स्यात्तस्य सुडागमश्च। **पक्ष इति।** चस्य कुत्वे सस्य षत्वम्। **वहिहाधाञ्भ्यश्छन्दसि।** वह प्रापणे, ओ हाक् त्यागे, डु धाञ् धारणादौ, एभ्योऽसुन्स्यात्। **वक्षा इति।** 'अत्वसन्तस्ये'ति दीर्घः। सुडागमे हस्य ढत्वे षढोरिति कत्वे षत्वमिति भावः। **इति प्राञ्च इति।** 'प्राञ्च' इत्यस्वरसद्योतनाय। तथाहि उक्तोदाहरणानि हि लोके न दृश्यन्ते, छन्दस्येव एतत्सूत्रप्रवर्तनात्, वेदे तु मद्भुक्तरीत्यैव दृश्यते इत्याह—**वस्तुतस्त्विति। णिदित्यनुवर्तत इति।** 'वसेर्णि'दित्यतः। **उपधावृद्धिरिति।** असुनो णित्त्वादिति भावः। युकि रूपमाह—**विश्वो विहाया इति। इण आसिः।** इण् गतावस्मादासिः स्यात्। **अया इति।** गुणे आदेश इति भावः। **मिथुनेऽसिः।** मिथुनशब्दार्थमाह—**उपसर्गविशिष्टो धातुर्मिथुनमिति।** तथाच सोपसर्गादशुधातोरसिप्रत्यय इत्यर्थः। **पूर्ववदिति।** अशेर्देवने स्तौ युडित्यर्थः। **सुयशा इति।** असुनोऽपवादोऽसिः। **नञि हन एह च।** नञ्युपपदे हन हिंसागत्योरित्यस्मादसिप्रत्ययः, धातोरेहादेशश्चेत्यर्थः। **विधाञो वेध च।** विपूर्वात् डु धाञ् धारणपोषणयोरित्यस्मादसिः स्याद्वेधादेशश्चेत्यर्थः। अयमादेशः सोपसर्गधातोः। **वेधा इति।** 'विष्णौ च वेधाः स्त्री त्वाशीः' इत्यमरः। **नुवो धुट् च।** णु स्तुतौ अस्मादसिः स्यात्तस्य धुडागमश्च। **नोधा इति।** धातोर्गुणः। **गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं च।** गतौ कारके चोपपदे धातोरसिः स्यात्। **सुतपा इति।** स्वावुपपदे तप सन्तापे इत्यस्मादसिः। **जातवेदा इति।** जातशब्दे कर्मकारके उपपदे विद ज्ञाने इत्यस्मादसिः। पूर्वपदप्रकृतिस्वरविधानस्य कृत्यमाह—**गतिकारकोपपदादिति। चन्द्रे मो डित्।** चन्द्रशब्दे उपपदे माङ् माने इत्यस्मादसिः स्यात्स च

---

'उरुव्यचाः' इति-आर्यैवोदाहरणमिति 'प्रह्वाय्या' इति सूत्रे कैयटस्वरसः।

**शे.] मिथुनेऽसिः।** धातूपपदयोर्मिथुनम्।

पयोधाः समुद्रो मेघश्च । ६७० । **पुरसि च** । पुरोधाः । ६७१ । **पुरूरवाः** । पुरुशब्दस्य दीर्घो रौतेरसिश्च निपात्यते । ६७२ । **चक्षेर्बहुलं शिच्च** । नृचक्षाः । ६७३ । **उषः कित्** । उषः । ६७४ । **दमेरुनसिः** । 'सप्तार्चिर्दमुनाः' । ६७५ । **अङ्गतेरसिरिरुडागमश्च** । अङ्गिराः । ६७६ । **सर्तेरप्पूर्वादसिः** । अप्सराः । प्रायेणायं भूम्नि । अप्सरसः । ६७७ । **विदिभुजिभ्यां विश्वे** । विश्ववेदाः । विश्वभोजाः । ६७८ । **वशेः कनसिः** । संप्रसारणम् । उशना । इत्युणादिषु चतुर्थः पादः ।

अथ पञ्चमः पादः ।

६७९ । **अदि भुवो डुतच्** । अद्भुतम् । ६८० । **गुधेरूमः** । गोधूमः । ६८१ । **मसेरूरन्** ।

---

त.] चन्द्रमस इत्यादि सिध्यति । **वयसि** । डुधाञ् धारणे अस्माद्वयस्युपपदेऽसिः स्यात्स च डित् । **पयोधा इति** । पयःशब्द उपपदे डुधाञः पूर्ववत् । **पुरसि च** । पुरःशब्दे उपपदे पूर्ववत् । 'पुरोधास्तु पुरोहितः' इत्यमरः । **रौतेरिति** । रु शब्दे । 'पुरूरवा बुधसुतो राजर्षिश्च पुरूरवाः' इत्यमरः । **चक्षेः** । चक्षिङ् व्यक्तायां वाचि, अस्मादसिः स्यात्स च बहुलं शित् । शित्त्वात्सार्वधातुकसंज्ञायां ख्याञ् न । नृचक्षाः राक्षसः । शित्वाऽभावपक्षे तु ख्याञादेशः । प्रख्याः प्रजापतिः । उषः । उष दाहेऽस्मादसिः स्यात्स च कित् । उषः प्रभातम् । दशपाद्यां तु 'वसः कि'दिति पाठः । वसति सूर्येण सहेति उषाः देवताविशेषः । 'अपो भि' इति सूत्रे 'उषसश्चेष्यते' इति वार्तिकस्थ-समुषद्भिरित्युदाहरणं विवृण्वद्भिर्हरदत्तादिभिरयं पाठः पुरस्कृतः । **दमेः** । दमु उपशमे । 'सप्तार्चिर्दमुनाः शुक्रः' इत्यमरः । पक्षे 'अन्येषामपि दृश्यते' इति दीर्घः । 'जुष्टो दमूनाः' 'दमूनसं गृहपतिं वरेण्यम्' । दशपाद्यां तु 'दमे-रूनसिः' इति सूत्र एव दीर्घः पठ्यते तन्मते बाहुलकाद्ध्रस्वो बोध्यः । अगिर्गत्यर्थः । अङ्गिरा ऋषिभेदः । **सर्तेः** । सृ गतौ । **प्रायेणेति** । 'स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपि' इति शब्दार्णवः । 'अप्सरस्त्वप्सराः प्रोक्ता सुमनाः सुमनस्तु च' इति द्विरूपकोशः । 'एकाप्सरःप्रार्थितयोर्विवादः' इति रघुः । **विदि** । विद ज्ञाने, भुज पालनाभ्यवहारयोः, आभ्यां विश्वशब्दे उपपदेऽसिः स्यात् । शब्दस्वरूपपरत्वाद्विश्वे इत्यत्र स्विन्नादेशो न कृतः । उदाहरणे विश्वं वेत्ति, भुङ्क्ते इति विग्रहः । यत्तु 'तत्पुरुषे कृती'ति सप्तम्या अलुक् विश्वेवेदाः=अग्निः, विश्वेभोजाः इन्द्र' इत्युज्ज्वलदत्तेनोक्तं, तन्न, तथा सति स्विन्नादेशस्य दुर्वारत्वापत्तेः । 'सुमृलीको भवतु विश्ववेदाः' 'पूषा भगः प्रभृथे विश्वभोजाः' इत्यादिमन्त्रेषु सुपो लुक एव दर्शनात्, वृत्त्यन्तरे तथैवोदाहरणाच्च । **वशेः** । वश कान्तौ । 'उशना भार्गवः कविः' इत्यमरः । **इत्युणादिषु चतुर्थः पादः** ।

**अदि भुवो** । 'अ'दित्यव्ययमाकस्मिकार्थे । अस्मिन्नुपपदे भूधातोर्डुतच्स्यात् । डित्त्वाट्टिलोपः । अद्भुतमाश्च-

---

बा.] डिदित्यर्थः । डित्त्वफलं तु चन्द्रमसावित्यादौ टिलोपः । **वयसि धाञः** । वयश्शब्दे उपपदेऽपि डु धाञ् धारणपोषणयोरित्यस्मादसिप्रत्ययः । **वयोधा इति** । रुत्वोत्वादि । **पयसि च** । पयश्शब्दे उपपदेऽपि धाञोऽसिप्रत्ययः, स च डिदित्यर्थः । **पुरसि च** । पुरश्शब्दे उपपदेऽपि धाञोऽसिप्रत्ययः, स च डिदित्यर्थः । 'पुरोधास्तु पुरोहितः' इत्यमरः । **पुरूरवाः** । इत्थं निपात्यत इत्यर्थः । निपातनमेवाह—**पुरुशब्दस्येति** । पुरून् रौतीति विग्रहः । रु शब्दे अस्मादसिः, गुणावादेशौ, पूर्वपदस्य दीर्घश्चेत्यर्थः । अलोऽन्त्यस्येति भावः । 'पुरूरवा बुधसुतो राजर्षिश्च पुरूरवाः' इत्यमरः । **चक्षेर्बहुलं शिच्च** । चक्षिङ् व्यक्तायां वाचि, अस्मादसिः स्यात्, स च बहुलं शिदित्यर्थः । **नृचक्षा इति** । नृशब्दे उपपदे चक्षिङ्धातोरसिः । तस्य च शित्त्वेन सार्वधातुकत्वाच्चक्षिङः ख्याञिति ख्याञादेशो न । **उषः कित्** । उष दाहे, अस्मादसिः स्यात्, स च कित् । **उष इति** । कित्त्वान्न लघूपधगुणः । 'प्रत्यूषोऽह-र्मुखं कल्यमुषःप्रत्युषसी अपि' इत्यमरः । **दमेरुनसिः** । दम उपशमे, अस्मादुनसिः प्रत्यय इत्यर्थः । सप्तार्चिर्द-मुनाः शुक्रः' इत्यमरः । **अङ्गतेरसिरिरुडागमश्च** । अगिधातोरसिप्रत्ययः, इरुडागमश्चेत्यर्थः । अङ्गिरा ऋषि-भेदः । **सर्तेरप्पूर्वादसिः** । सृ गतौ अस्मादप्पूर्वादसिप्रत्यय इत्यर्थः । **अप्सरा इति** । असिप्रत्यये धातोर्गुणः । **विदिभुजिभ्यां विश्वे** । विद ज्ञाने; भुज पालनाभ्यवहरणयोः, आभ्यां विश्वशब्दे उपपदेऽसिः स्यात् । सूत्रे विश्वे इति शब्दस्वरूपपरत्वेन सर्वार्थवाचकत्वाऽभावान्न स्विन्नादेशः । विश्वं वेत्तीति विश्ववेदाः । **वशेः कनसिः** । वश कान्तौ अस्मात्कनसिप्रत्यय इत्यर्थः । **संप्रसारणमिति** । कित्त्वादिति भावः । 'उशना भार्गवः कविः' इत्यमरः । **इत्युणादिषु चतुर्थः पादः** ।

अथ पञ्चमः पादः । **अदि भुवो डुतच्** । भू सत्तायामस्मादाकस्मिकार्थे 'अद्' इत्यव्यये उपपदे डुतच्प्र-

---

शे.] दीर्घ इति । बाहुलकात्तदभावे 'पुरुरवाः' अपि । **प्रायेणेति** । तेन 'अप्सराः' इत्येकवचनान्तमपि । ध्वनितश्चेदं वर्णद्वित्वप्रकरणे भाष्ये । **इत्युणादिषु चतुर्थः पादः** ।

मसूरः । प्रथमे पादे असेरुरन् 'मसेश्चे'त्यत्र व्याख्यातः । ६८२ । स्थः किच्च । स्थूरो मनुष्यः ।६८३। पातेरतिः । पातिः स्वामी । संपातिः पक्षिराजः । ६८४ । वातेर्नित् । 'वातिरादित्यसोमयोः' । ६८५ । अर्तेश्च । अरतिरुद्वेगः । ६८६ । तृहेः क्नो हलोपश्च । तृणम् । ६८७ । वृञ्लुटितनिताडिभ्य उलच् तण्डश्च । व्रियन्ते लुट्यन्ते तन्यन्ते ताड्यन्त इति वा तण्डुलाः । ६८८ । दंसेष्टटनौ न आ च । 'दासः सेवकशूद्रयोः' । ६८९ । दंशेश्च । दाशो धीवरः । ६९० । उदि चेर्डैसिः । स्वरादिपाठादव्ययत्वम् । उच्चैः । ६९१ । नौ दीर्घश्च । नीचैः । ६९२ । सौ रमेः क्तो दमे पूर्वपदस्य च दीर्घः । रमेः सुपूर्वाद्दमे वाच्ये क्तः स्यात् । कित्त्वादनुनासिकलोपः । सूरत उपशान्तो दयालुश्च । ६९३ । पूञो यण् णुक् ह्रस्वश्च । यत्प्रत्ययः । पुण्यम् । ६९४ । स्रंसेः शिः कुट् किच्च । स्रंसतेः शिरादेशः, यत्प्रत्ययः कित्, तस्य कुडागमश्च । शिक्यम् । ६९५ । अर्तेः क्युरुच्च । उरणो मेषः । ६९६ । हिंसेरीरन्नीरचौ । 'हिंसीरो व्याघ्रदुष्टयोः' । ६९७ । उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च । उदरम् । ६९८ । डित् खनेर्मुट् स चोदात्तः । अच्

---

त.]र्थम् । गुधेः । गुध परिवेष्टने । गुध्यते परिवेष्ट्यते प्राणिभिरिति । 'गोधूमो नागरङ्गे स्यादोषधिव्रीहिभेदयोः' इति मेदिनी । मसेः । मसी परिणामे । स्थः । ष्ठा गतिनिवृत्तावस्मादूरन् । कित्त्वादालोपः । स्थूरो मनुष्य इति । 'स्थूरस्य रायो बृहतो य ईशे' इति मन्त्रे तु योगपुरस्कारात्स्थिरस्येत्यर्थ इति व्याख्यातम् । पातेः । पा रक्षणे । वातेः । वा गतिगन्धनयोः । रभसकोशस्थमाह–वातिरिति । अर्तेः । ऋ गतौ, अस्मादतिः स्यात्स च नित् । तृहेः । तृह हिंसायाम्, क्नस्य कित्त्वाद्गुणाऽभावः । वृञ् । वृञ् वरणे, लुट विलोडने, तनु विस्तारे, तड आघाते, चुरादि एभ्य उलच्स्यात्, तण्डादेशश्च धातोः । यद्यपि 'सानसिवर्णसी'ति सूत्रे तण्डुलशब्दो निपातितस्तथापि प्रत्ययस्वरेण मध्योदात्तः सः, अयं तु चित्स्वरेणाऽन्तोदात्त इति विवेकः । दंसेः । दसि दंशनदर्शनयोः, अस्माट्टटनौ स्यातां नकारस्याऽऽकारश्च । टनो नकार आद्युदात्तार्थः । 'दासः शूद्रे दानपात्रे भृत्यधीवरयोरपि' इति विश्वः । दंशेः । दंश दशनेऽस्मादपि टटनौ स्तो, नकारस्य चात्वं स्यात् । 'कैवर्ते दाशधीवरौ' इत्यमरः । उदि । चिञ् चयने । डैसो डित्त्वाट्टिलोपः । सौ रमेः । रमु क्रीडायाम् । पूञः । पूञ् पवने । 'पुण्यं मनोज्ञेऽभिहितं तथा सुकृतधर्मयोः' इति विश्वः । स्रंसेः । स्रंसु अधःपतने, कित्त्वं तु गुणाऽभावार्थम् । अर्तेः । ऋ गतावस्मात्क्युप्रत्ययः स्याद्धातोरुत्वं च । रपरत्वम् । 'युवोरनाकौ' । 'मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके' इत्यमरः । हिंसेः । हिसि हिंसायाम् । उदि । दॄ विदारणे । डित्खनेः । खनु अवदारणे, अस्मादजलौ स्तः । 'मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि । सन्ध्य-

---

बा.]न्तय इत्यर्थः । डित्त्वाट्टिलोपः । अद्भुतम् । गुधेरूमः । गुध परिवेष्टने अस्मादूमप्रत्ययः । गोधूम इति । लघूपधगुणः । मसेरूरन् । मसी परिणामे, अस्मादूरन्प्रत्यय इत्यर्थः । 'मङ्गल्यको मसूरोऽथ मकुष्टकमयुष्टकौ' इत्यमरः । स्थः किच्च । ष्ठा गतिनिवृत्तौ, अस्मादूरन् कित्स्यात् । स्थूर इति । कित्त्वादातो लोपः । पातेरतिः । पा रक्षणे अस्मादतिः स्यात् । वातेर्नित् । वा गतिगन्धनयोरस्मादतिः स्यात्, स च नित् । अर्तेश्च । ऋ गतौ अस्मादतिः स्यात्, स च नित् । तृहेः क्नो हलोपश्च । तृह हिंसायामस्मात्क्नः स्यात्, हकारस्य लोपश्च । तृणमिति । क्नस्य कित्वाद्गुणाऽभावः । वृञ्लुठितनिताडिभ्यः । वृञ् वरणे, लुठ विलोडने, तनु विस्तारे, तड आघाते, एभ्य उलच् स्यात्, धातोस्तण्डादेशश्चेत्यर्थः । दंसेष्टटनौ न आ च । दसि सेवने, अस्मात् टटनौ स्यातां, धातोर्नकारस्याकारश्चेत्यर्थः । दंशेश्च । दंश दशने, अस्मादपि टटनौ स्यातां, नकारस्याऽऽकारश्च । दाश इति । 'कैवर्ते दाशधीवरौ' इत्यमरः । पूर्वसूत्रेऽस्मिन्सूत्रे च टनो विधिराद्युदात्तत्वाय । उदि चेर्डैसिः । उदि उपपदे, चिञ् चयने इत्यस्माड्डैसिरित्यर्थः । उच्चैरिति । डित्त्वाट्टिलोपः । नौ दीर्घश्च । नावुपपदे चिञो डैसिः, उपसर्गस्थस्येकारस्य दीर्घश्चेत्यर्थः । नीचैरिति । डित्त्वाट्टिलोपः । सौ रमेः क्तो दमे । सावुपपदे रमु क्रीडायामित्यस्माद्दमे वाच्ये क्तः स्यात्पूर्वपदस्य सोरन्त्यस्य दीर्घश्चेत्यर्थः । कित्त्वादिति । 'अनुदात्तोपदेशवनती'त्यादिना । पूञो यण्णुक् । पूञ् पवने अस्माद्यत्प्रत्ययो, णुगागमो, ह्रस्वश्च । पुण्यमिति । 'स्याद्धर्मस्त्रियां पुण्य'मित्यमरः । स्रंसेः शिः कुट् किच्च । स्रंसु ध्वंसु अधःपतने, अस्माद्यत्प्रत्ययः स च कित्, तस्य कुडागमः, धातोः शिः सर्वादेशश्च । शिक्यमिति । 'भारयष्टिस्तदालम्बि शिक्यं काचोऽथ पादुका' इत्यमरः । अर्तेः क्युरुच्च । ऋ गतौ अस्मात्क्युप्रत्ययः, धातोरुकारादेशश्चेत्यर्थः । उरण इति । उत्वं रपरत्वम् । 'युवोरनाका'वित्यनादेशे 'रषाभ्या'मिति णत्वम् । 'अट्कुप्वा'ङिति तु एतत्सूत्रस्यैव प्रवृत्त्युपपादकम् । हिंसेरीरन्नीरचौ । हिसि हिंसायामस्मात् ईरन् ईरजिति प्रत्ययौ स्तः । स्वरे भेदः । उदि दृणातेरजलौ । उदि उपपदे दॄ विदारणे इत्यस्मादच् अलिति प्रत्ययौ स्तः, उदो दकारस्य लोपश्चेत्यर्थः । उदरमिति । अजलोः स्वरे भेदः । धातोर्गुणः । डित्खनेर्मुट् । अजलावित्यनुवर्तते । खनु अवदारणे अस्मादच्

अल् च डित्स्याद्धातोर्मुट्, स चोदात्तः । मुखम् । ६९९ । **अमेः सन्** । अंसः । ७०० । **मुहेः खो मूर्च** । मूर्खः । ७०१ । **नहेर्हलोपश्च** । नखः । ७०२ । **शीङो ह्रस्वश्च** । शिखा । ७०३ । **माङ ऊखो मय् च** । मयूखः । ७०४ । **कलिगलिभ्यां फगस्योच्च** । कुल्फः शरीरावयवो रोगश्च । गुल्फः पादग्रन्थिः । ७०५ । **स्पृशेः श्वण् शुनौ पृ च** । श्वण् शुनौ प्रत्ययौ पृ इत्यादेशः । 'पार्श्वोऽस्त्री कक्षयोरधः' । पर्शुरायुधम् । ७०६ । **श्मनि श्रयतेर्डुन्** । श्मन्शब्दो मुखवाची । मुखमाश्रयत इति श्मश्रुः । ७०७ । **अश्वादयश्च** । अश्रु नयनजलम् । ७०८ । **जनेष्टन् लोपश्च** । जटा । ७०९ । **अच् तस्य जङ्घ च** । तस्य= जनेर्जङ्घादेशः स्यादच् । जङ्घा । ७१० । **हन्तेः शरीरावयवे द्वे च** । जघनम् । 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' । ७११ । **क्लिशेरन् लो लोपश्च** । लकारस्य लोपः' । केशः । ७१२ । **फलेरितजादेश्च**

---

त.]न्तरे नाटकादेः शब्देऽपि च नपुंसक'मिति मेदिनी । **अमेः** । अम गतौ । 'स्कन्धो भुजशिरोंसोऽस्त्री' इत्यमरः । 'अंसः स्कन्धे विभागे च' इति दन्त्यान्ते विश्वः । **मुहेः** । मुह वैचित्त्येऽस्मात्खप्रत्ययो धातोर्मूरादेशश्च । मुह्यतीति मूर्खः । 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः' इत्यमरः । **नहेः** । णह बन्धने । अस्मात्खः स्यात् । 'नखी करुहे षण्डे गन्धद्रव्ये नखं नखी' इति विश्वः । 'नखी स्त्रीक्लीबयोः शुक्तौ नखरे पुंनपुंसकम्' इति मेदिनी । **शीङः** । शीङ् स्वप्नेऽस्मात्खः स्याद्धातोर्ह्रस्वश्च । ह्रस्वविधानसामर्थ्याद्गुणाऽभावः । '**शिखा** शाखाबर्हिचूडालाङ्गलिक्यग्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च'इति मेदिनी । **माङः** । माङ् माने । 'मयूखस्त्विट्करज्वालासु'इत्यमरः ।

**कलि** । कल शब्दसङ्ख्यानयोः, गल अदने, आभ्यां फक्स्यात्, धातोरकारस्योत्वं च । **गुल्फ इति** । 'तद्ग्रन्थी घुटिके **गुल्फौ**' इत्यमरः । तयोः पादयोर्ग्रन्थी इत्यर्थः । **स्पृशेः** । स्पृश संस्पर्शे । '**पार्श्वं** कक्षाऽधरे चक्रोपान्ते पर्शुगणेऽपि च' इति विश्वमेदिन्यौ । **श्मनि** । श्रिञ् सेवायाम्, अस्मात् श्मन्युपपदे डुन्स्यात् । डित्त्वाट्टिलोपः । 'तद्वृद्धौ **श्मश्रु पुंमुखे**'इत्यमरः । पुरुषस्य मुखे तेषां रोम्णां वृद्धौ श्मश्रुशब्दो वर्तत इत्यर्थः । **अश्वादयः** । अशू व्याप्तावस्माड्डुन्प्रत्ययो,नञ्पूर्वात् श्रयतेर्डुन् च । यत्तूज्ज्वलदत्तेनोक्तम्–'अश्नातेर्डुन् रुट् चे'ति, तदयुक्तम्, डित्त्वाट्टिलोपे सति धातोरश्रवणप्रसङ्गात् । न च टिलोपाऽभावो निपात्यत इति वाच्यं, तथा सति डित्त्वोत्प्रेक्षणस्य निष्फलत्वापत्तेरिति दिक् । **जनेः** । जनी प्रादुर्भावे अस्माट्टन्प्रत्ययः स्याद्धातोरन्त्यलोपश्च । '**जटा** लग्नकचे मूले मांस्यां लक्षे पुनर्जटी'ति मेदिनी । **जङ्घेति** । जनेरच्प्रत्यये सति 'अजाद्यतः' इति टाप् । **हन्तेः** । देहावयवे वाच्ये हन्तेरच्प्रत्ययः स्याद्द्वित्वं च धातोः । अभ्यासकार्यम् । 'अभ्यासाच्चे'ति कुत्वम् । अमरोक्तिमाह—**पश्चान्नितम्ब इति** । 'जघनं च स्त्रियाः श्रोणिपुरोभागे कटावपि' इति मेदिनी । **क्लिशेः** । क्लिशू विबाधनेऽस्मादन्स्यात् । '**केशः** स्यात्पुंसि वरुणे ह्रीबेरे कुण्डलेऽपि च' इति मेदिनी । **फलेः** । फल निष्पत्तौ । '**पलितं** जरसा शौक्ल्य'मित्यमरः । '**पलितं**

---

**बा.**]अल् इति प्रत्ययो स्तः, तौ च डितौ,धातोर्मुडागमश्चेत्यर्थः । **मुखमिति** । डित्त्वाट्टिलोपः । **अमेः सन्** । अम गत्यादिषु, अस्मात्सन्प्रत्यय इत्यर्थः । **अंस इति** । 'स्कन्धो भुजशिरोंसोऽस्त्री' इत्यमरः । **मुहेः खो मूर्च** । मुह वैचित्त्ये अस्मात्खप्रत्ययो धातोर्मूरादेशश्च । **नहेर्हलोपश्च** । णह बन्धने, अस्मात्खप्रत्ययः, हकारस्य लोपश्चेत्यर्थः । **शीङो ह्रस्वश्च** । शीङ् स्वप्ने, अस्मात्खप्रत्ययः, धातोर्ह्रस्वश्चेत्यर्थः, । **शिखेति** । ह्रस्वविधानसामर्थ्यान्न गुणः । **माङ ऊखो** । माङ् माने अस्मादूखप्रत्ययो, धातोर्मयादेशश्चेत्यर्थः । **मयूख इति**। 'मयूखस्त्विट्करज्वालास्वलिबाणौ शिलीमुखौ' इत्यमरः । **कलिगलिभ्यां फगस्योच्च** । कल शब्दसंख्यानयोः, गल अदने, आभ्यां फक् स्यात्, अकारस्योकारश्चेत्यर्थः । **गुल्फ इति** । 'तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः । **स्पृशेः श्वण्शुनौ पृ च** । स्पृश संस्पर्शे अस्मात् श्वण् शुन् स्यातां, धातोः 'पृ' आदेशश्च । **पार्श्वमिति** । श्वणो णित्त्वाद्वृद्धिः । **श्मनि श्रयतेर्डुन्** । श्रिञ् सेवायामस्मान्मुखवाचिनि श्मन्शब्दे उपपदे डुन्प्रत्ययः । **श्मश्रु इति** । श्मनो नस्य लोपः, डित्त्वात् श्रिञ इकारस्य लोपः । 'तद्वृद्धौ श्मश्रु पुंमुखे' इत्यमरः । **अश्वादयश्च** । 'निपात्यन्ते' इति शेषः । **अश्रु इति** । अशू व्याप्तौ अस्माड्डुन्प्रत्ययः । **जनेष्टन् लोपश्च** । जनी प्रादुर्भावे अस्माट्टन्प्रत्ययः स्यात्, धातोरन्त्यनकारस्य लोपश्च । **अच् तस्य जङ्घ च** । तस्येत्यर्थमाह—**जनेरिति** । जनेरच्प्रत्ययो धातोर्जङ्घादेशश्चेत्यर्थः । 'अजाद्यत-

---

**शे.] समाने ख्यः इति** [पृष्ठ ५२० । सू०५७६] । इणिति डिदिति यलोप इति चानुवर्तते । स चोदात्त इत्यस्य–समानस्य सादेश उदात्त इत्यर्थः । स च समासोत्तरमिति नित्स्वरेण व्यवस्था।समानस्येति योगविभागेन सदृशपर्यायसदृशशब्देन वा समासे सादेशसिद्धेरस्याऽनुवादत्वात् । **शीङो** । अत्र 'ङित्खनेः' इत्यत उदात्तग्रहणमनुवर्त्तते, तच्च शीङो विशेषणम् । तेनाद्युदात्तोऽयम् । ह्रस्वविधिसामर्थ्याद्गुणो न । **लोप इति** । अङ्गोऽन्त्यस्य । **इति पञ्चमः पादः** ।

पः। पलितम्। ७१३। **कृञादिभ्यः संज्ञायां वुन्।** करकः। करका। कटकः। नरकम्। नरकः। 'नरको नारकोऽपि चे'ति द्विरूपकोशः। सरकं गगनम्। कोरकः। कोरकं च। ७१४। **चीकयतेराद्यन्तविपर्ययश्च।** कीचको वंशभेदः। ७१५। **पचिमच्योरिच्चोपधायाः।** पेचकः। मेचकः। ७१६। **जनेररष्ठ च।** जठरम्। ७१७। **वचिमनिभ्यां चिच्च।** वठरो मूर्खः। 'मठरो मुनिशौण्डयोः'। बिदादित्वान्माठरः। गर्गादित्वान्माठर्यः। ७१८। **ऊर्जि दृणातेरलचौ पूर्वपदान्तलोपश्च।** 'ऊर्दरः शूररक्षसोः'। ७१९। **कृदरादयश्च।** कृदरः कुसूलः। मृदरं विलसत्। सृदरः सर्पः। ७२०। **हन्तेर्युग्नाद्यन्तयोर्घत्वतत्वे।** घातनो मारकः। ७२१। **क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च।** क्रान्तुः पक्षी। गान्तुः पथिकः। क्षान्तुर्मशकः। ७२२। **हर्यतेः कन्यन् हिरच्।** कन्यन् प्रत्ययः। हिरण्यम्। ७२३। **कृञः पासः।** कर्पासः। बिल्वादित्वात्कार्पासं

---

त.] शैलजे तापे केशपाशे च कर्दमे' इति मेदिनी। **कृञादिभ्यः।** डुकृञ् करणे। करकः कमण्डलुः। '**करकस्तु** पुमान्पक्षिविशेषे दाडिमेऽपि च। द्वयोर्मेघोपले न स्त्री करके च कमण्डलौ' इति मेदिनी। करका वृष्टिपाषाणः। कटे वर्षावरणयोः। '**कटको** वलये सानौ'। 'क्वुन् शिल्पिसंज्ञयोः' इति क्वुनाप्ययं सिद्धः। तथा च गुणभाज इहैव वुनि उदाहार्याः, गुणनिषेधभाजस्तु क्वुनि। उदासीनास्तु यत्र कुत्रचिदिति भावः। नॄ नये। 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रिया'मित्यमरः। '**नरकः** पुंसि निरये देवाऽरातिप्रभेदयोः' इति मेदिनी। उदयनाचार्यास्तु—'नच नरकाण्येव सन्ती'ति क्लीबं प्रयुञ्जते, तन्निर्मूलमित्याहुः। सृ गतौ। '**सरकोऽस्त्री** शीधुपात्रे शीधुपानेक्षुशीधुनोः' इति मेदिनी। कुर शब्दे। '**कोरकोऽस्त्री** कुड्मले स्यात्कक्कोलकमृणालयोः' इति मेदिनी। 'विचकार कोरकाणी'ति माघः। 'कोरकः पुमान्' इत्यमरोक्तिस्तु नादर्तव्येत्याहुः। अपवरकादयोऽपि इहैव बोध्याः। **चीकयतेः।** चिक आमन्त्रणे, चीक च चुरादिः। अस्याद्यन्तविपर्ययः। पचिमच्योरित्वं चानुपदं वक्ष्यमाणं बाहुलकबललभ्यं बोध्यम्। '**कीचको** दैत्यभिद्वाताहतसस्वनवंशयोः' इति मेदिनी। डुपचष् पाके। 'उलूके करिणः पुच्छमूलोपान्ते च पेचकः' इत्यमरः। '**पेचको** गजलाङ्गूलमूलोपान्ते च कौशिके' इति मेदिनी। मचि मुचि कल्कने। '**मेचकस्तु** मयूरस्य चन्द्रके श्यामले पुमान्। तद्युक्ते वाच्यवत्क्लीबं स्रोतोऽञ्जनान्धकारयोः' इति मेदिनी। **जनेः।** जन जनने, जनी प्रादुर्भावे वा। 'जठरः कठिनेऽपि स्या'दित्यमरः। '**जठरो** न स्त्रियां कुक्षौ वृद्धकर्कटयोस्त्रिषु' इति मेदिनी। **वचि।** वच परिभाषणे, मन ज्ञाने, आभ्यामरप्रत्ययः स्यात्स च चित्। ठश्चान्तादेशः। '**वठरः** कुक्कुटे वण्टे शठे च' इति मेदिनी। **ऊर्जि।** दॄ विदारणेऽस्मादूर्ज्युपपदे अलचौ प्रत्ययौ स्तः। **कृदरादयश्च।** कु मृ सृ-एतदव्ययपूर्वकदृणातिप्रकृतिकाऽलजन्ता निपात्यन्ते। **हन्तेः।** हन हिंसागत्योः। **क्रमि।** क्रमु पादविक्षेपे, गम्लृ गतौ, क्षमूष् सहने, एभ्यस्तुन्स्यादेषां वृद्धिश्च। **हर्यतेः।** हर्य गतिकान्त्योः। '**हिरण्यं** रेतसि द्रव्ये शातकुम्भवराटयोः।

---

बा.] ष्टाप्'। **हन्तेः शरीरावयवे।** शरीरावयवे वाच्ये हन्तेरच्प्रत्ययो धातोर्द्वित्वं चेत्यर्थः। **जघनमिति।** 'हो हन्ते'रिति कुत्वम्, 'अभ्यासाच्चे'ति वा। अमरोक्तिमाह—**पश्चान्नितम्ब इति।** **क्लिशेरन् लो लोपश्च।** क्लिशू विबाधने अस्मादन् स्याल्लकारस्य लोपश्चेत्यर्थः। **फलेरितजादेश्च पः।** फल निष्पत्तौ अस्मादितच्प्रत्ययः, आदेः फकारस्य पकारादेशश्चेत्यर्थः। **पलितमिति।** 'पलितं जरसा शौक्ल्य'मित्यमरः। **कृञादिभ्यः संज्ञायां वुन्।** डुकृञ् करणे इत्यादिभ्यः संज्ञायां वुन्स्यात्। **करक इति।** 'युवोरनाका'वित्यकादेशः। 'कमण्डलौ च करकः' इत्यमरः। **कटक इति।** कटे वर्षावरणयोः, अस्माद्वुन्। 'भूभृन्नितम्बवलयचक्रेषु कटकोऽस्त्रिया'मित्यमरः। **चीकयतेराद्यन्तविपर्ययश्च।** चीक आमन्त्रणे अस्मात्संज्ञायां वुन् स्यात्, धातोराद्यन्तवर्णयोर्विपर्ययश्चेत्यर्थः। 'कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः। दैत्यभेदे च। **पचिमच्योरिच्चोपधायाः।** डु पचष् पाके, मच कल्कने; आभ्यां वुन्स्यात्, उपधाया इकारादेशश्च। **पेचक इति।** उपधाया इकारे लघूपधगुणे च रूपम्। 'उलूके करिणः पुच्छमूलोपान्ते च पेचकः' इत्यमरः। **जनेररष्ठ च।** जनी प्रादुर्भावे, अस्मादरप्रत्ययः, धातोष्ठकारश्चान्तादेशः। 'जठरः कठिनेऽपि स्या'दित्यमरः। **वचिमनिभ्यां चिच्च।** वच परिभाषणे, मन ज्ञाने, आभ्यामरप्रत्ययः स्यात्, स च चित्, ठकारश्चान्तादेशः। **ऊर्जि दृणातेर।** ऊर्क् शब्दे दॄ विदारणे इत्यस्मादलचौ प्रत्ययौ स्तः, पूर्वपदान्त्यवर्णस्य लोपश्च। **ऊर्दर इति।** पूर्वपदान्त्यस्य लोपे धातोर्गुणे च रूपम्। **कृदरादयश्च।** एते निपात्यन्ते। **कृदर इति।** कु इत्यव्ययपूर्वकदॄधातोरालप्रत्यये रूपम्। एवं सुपूर्वकात्सूदर इति। **हन्तेर्युग्घा।** हन हिंसागत्योः, अस्माद्युन् स्यात्, आद्यन्तयोर्हकारनकारयोर्यथासङ्ख्यं घकारतकारौ स्तः। **क्रमिगमिक्षमि।** क्रमु पादबिक्षेपे, गम्लृ गतौ, क्षमूष् सहने, एभ्यस्तुन्स्यात्, वृद्धिश्च। **हर्यतेः कन्यन् हिरच्।** हर्य गतिकान्त्योः अस्मात्कन्यन्प्रत्ययः, प्रकृतेर्हिरजित्यर्थः। हिरचि चकार इत्संज्ञकः, अकार उच्चारणार्थः। **हिरण्यमिति।**

वज्रम् । ७२४ । **जनेस्तु रश्च** । जर्तुर्हस्ती योनिश्च । ७२५ । **ऊर्णोतेर्डः** । ऊर्णा । ७२६ । **दधातेर्यत् नुट् च** । धान्यम् । ७२७ । **जीर्यतेः क्रिन् रश्च वः** । 'जिव्रिः स्यात्कालपक्षिणोः' । बाहुलकात् 'हलि चे'ति दीर्घो न । ७२८ । **मव्यतेर्यलोपो मश्चाऽपतुट् चालः** । मव्यतेरालप्रत्ययः स्यात्तस्यापतुडागमो धातोर्यलोपो मकारश्चान्त्यस्य । ममापतालो विषये । ७२९ । **ऋजेः कीकन्** । ऋजीक इन्द्रो धूमश्च । ७३० । **तनोतेर्डउः सन्वच्च** । तितउः पुंसि क्लीबे । ७३१ । **अर्भकपृथुकपाका वयसि** । ऋधु वृद्धौ । अतो वुन् । मकारश्चान्तादेशः । प्रथेः कुकन्संप्रसारणं च । पिबतेः कन् । ७३२ । **अवद्याऽवमाऽधमाऽर्वरेफाः कुत्सिते** । वदेर्नञि यत् । अवद्यम् । अवतेरमः । वस्य पक्षे धः । अवमः । अधमः । अर्तेर्वन् । अर्वा । रिफतेस्तौदादिकात् 'अः' । रेफः । ७३३ । **लीरीङोर्ह्रस्वः पुट् च त रौ श्लेषणकुत्सनयोः** । त-रौ प्रत्ययौ क्रमात् स्तो, धातोर्ह्रस्वः,

---

त.] अक्षये मानभेदे स्यादकुप्ये च नपुंसक'मिति मेदिनी । **कृञः** । डुकृञ् करणे । **जनेः** । 'तु' इत्यविभक्तम् । जनेस्तुप्रत्ययो रेफश्चान्तादेशः स्यात् । **ऊर्णोतेः** । ऊर्णुञ् आच्छादनेऽस्माड्डः स्यात् । डित्त्वाट्टिलोपः । टाप् । 'ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः' इत्यमरः । भ्रुवोर्मध्ये य आवर्तस्तत्रेत्यर्थः । 'अन्तरान्तरेणे'ति द्वितीया । **दधातेः** । डुधाञ् धारणादौ । अस्माद्यत् प्रत्ययः स्यात्तस्य नुडागमश्च । '**धान्यं** व्रीहिषु धान्याके' इति मेदिनी । **जीर्यतेः** । जॄ वयोहानावस्मात् क्रिन्स्यात् । 'ॠत इद्धातोः' । रपरत्वम् । रेफस्य वकारादेशः । **मव्यतेः** । मव्य बन्धने । **अन्त्यस्येति** । वकारस्येत्यर्थः । **ऋजेः** । ऋजी गतौ । **तनोतेः** । तनु विस्तारेऽस्माड्डउः प्रत्ययस्तस्य सन्वद्भावाद्द्वित्वमभ्यासस्येत्वं च । डित्त्वाट्टिलोपः । पृथगुच्चारणसामर्थ्याद्गुणो न । तितउः चालनी । 'सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत' । 'तितउः परिपवनं भवति' इति पस्पशायां भाष्यम् । 'चालनी तितउः पुमा'नित्यमरः । 'चालनं तितउन्युक्त'मिति कोशान्तरम् । 'स्याद्वास्तु द्विङ्ग तितउ' इति पुंनपुंसकवर्गे त्रिकाण्डशेषः । **अर्भक** । एते निपात्यन्ते । निपातनप्रकारमेवाह—**ऋधु वृद्धावित्यादि** । **प्रथेरिति** । प्रथ प्रख्याने, पा पाने । पिबति स्तनादिकमिति पाकः । 'पोतः **पाको**ऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः । '**अर्भकः** कथितो बाले मूर्खेऽपि च कृशेऽपि च' । '**पृथुकः** पुंसि चिपिटे शिशौ स्यादभिधेयवत्' । '**पाकः** परिणतौ शिशौ । केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च' इति मेदिनी । **अवद्य** । एते कुत्सिते निपात्यन्ते । वद व्यक्तायां वाचि, अव रक्षणादौ, ऋ गतौ, 'रिफ कत्थनयुद्धनिन्दाहिंसादानेषु । 'निकृष्टप्रतिकृष्टार्व**रेफ**याप्याऽवमाऽधमाः' इत्यमरः । 'कुपूयकुत्सिताऽवद्यखेटगर्ह्याऽणकाः समाः' इति च । '**अधमः** स्याद्गर्ह्ये ऊनेऽपि' इति मेदिनी । '**अर्वा** तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः' । '**रेफो** रवर्णे पुंसि स्यात्कुत्सिते पुनरन्यव'दिति च मेदिनी । **लीरीङोः** । लीङ् श्लेषणे । रीङ् श्रवणे । **क्रमादिति** । श्लेषणे वाच्ये तप्रत्ययः, कुत्सिते वाच्ये रप्रत्यय इत्यर्थः । '**लिप्तं** विषाक्ते भुक्ते च

---

वा.] कित्त्वान्न लघूपधगुणः । **कृञः पासः** । डु कृञ् करणे अस्मात्पासः प्रत्यय इत्यर्थः । **कर्पास इति** । धातोर्गुणः । **जनेस्तु रश्च** । जन जनने अस्मात्तुप्रत्ययो रेफश्चान्तादेश इत्यर्थः । **जर्तुरिति** । नकारस्य रेफादेशः । **ऊर्णोतेर्डः** । ऊर्णुञ् आच्छादने अस्माड्डप्रत्यय इत्यर्थः । डित्त्वाट्टिलोपः । 'ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः' इत्यमरः । **दधातेर्यन्नुट् च** । डु धाञ् धारणपोषणयोः, अस्माद्यप्रत्ययः, तस्य नुडागमश्च । **जीर्यतेः क्रिन् रश्च वः** । ज वयोहानौ, अस्मात्क्रिन् स्यात्, धातो रेफस्य वकारादेशश्चेत्यर्थः । **जिव्रिरिति** । क्रिमि 'ॠत इद्धातो'रिति इंत्वे रपरत्वे रेफस्य वत्वे च रूपम् । नन्वत्र 'हलि चे'ति दीर्घो दुर्वार इत्यत आह-**बाहुलकादिति** । **मव्यतेर्यलोपो** । मव्य बन्धने अस्मादालप्रत्ययः स्यात्, तस्यापतुडागमः, धातोर्यलोपः, परिशिष्टान्त्यस्य वकारस्य मकारश्चेत्यर्थः । **ममापताल** इति रूपम् । **ऋजेः कीकन्** । ऋज गतौ अस्मात्कीकन्स्यात् । **ऋजीक इति** । कित्त्वान्न गुणः । **तनोतेर्डउः सन्वच्च** । तनु विस्तारे अस्माड्डउप्रत्ययः, स सन्वच्च भवति । **तितउरिति** । डउप्रत्ययस्य सन्वत्त्वाद्द्वित्वमभ्यासेत्त्वम्, डित्त्वाट्टिलोपः । डउरिति पृथगुच्चारणसामर्थ्यान्न गुणः । 'प्रस्फोटनं शूर्पमस्त्री चालनी तितउः पुमान्' इत्यमरकोशः । **अर्भकपृथुकपाका वयसि** । एते निपात्यन्ते । निपातनप्रकारमेवाह—**ऋधु वृद्धाविति** । अस्माद्वुन्, अकादेशः, धकारस्य भकारः, लघूपधगुणः । पृथुक इत्यत्राह—**प्रथेरिति** । प्रथ प्रख्याने, अस्मात्कुकन् धातोः संप्रसारणेन रेफस्य ऋकारः । कित्त्वान्न लघूपधगुणः । **पिबतेरिति** । पा पाने इत्यस्मादित्यर्थः । 'पोतः पाकोऽर्भको डिम्भः', 'पृथुकौ चिपिटार्भकौ' इति चाऽमरः । **अवद्यावमाधमार्वरेफाः** । एते निपात्यन्ते । निपातनमेवाह—**वदेरिति** । वद व्यक्तायां वाचि, अस्मान्नञि उपपदे यत्प्रत्यय इत्यर्थः । **अवतेरिति** । अव रक्षणादौ । अधम इत्यत्राह—**वस्यपक्षे ध इति** । **अर्तेरिति** । ऋ गतौ । **रिफतेरिति** । रिफ कत्थनादिषु, अस्मादप्रत्यय इत्यर्थः । 'निकृष्टप्रतिकृष्टाऽर्वरेफयाऽप्यावमाऽधमाः' इत्यमरः । **लीरीङोर्ह्रस्वः** । लीङ्

प्रत्ययस्य पुट् । लिप्तं श्लिष्टम् । रिप्रं कुत्सितम् । ७३४ । **क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् च ।** क्लिशेः कन् स्यात्, उपधाया ईत्वं, लस्य लोपो, नामागमश्च । कीनाशो यमः । किस्वफलं चिन्त्यम् । ७३५ । **अश्नोतेराशुकर्मणि वरट् च ।** चकारादुपधाया ईत्वम् । ईश्वरः । ७३६ । **चतेरुरन् ।** चत्वारः । ७३७ । **प्राऽततेररन् ।** प्रातः । ७३८ । **अमेस्तुट् च ।** अन्तर्मध्यम् । ७३९ । **दहेर्गो लोपो दश्च नः ।** गप्रत्ययो, धातोरन्त्यस्य लोपो, दकारस्य नकारः । नगः । ७४० । **सिचेः संज्ञायां हनुमौ कश्च ।** सिञ्चतेः कप्रत्ययो, हकारादेशो, नुम् च स्यात् । सिंहः । ७४१ । **व्याङि घ्रातेश्च जातौ ।** कप्रत्ययः स्यात् । व्याघ्रः ।७४२ । **हन्तेरच् घुर च ।** घोरम् । ७४३ । **क्षमेरुपधालोपश्च ।** चादच् । क्ष्मा । ७४४ । **तरतेर्ड्रिः ।** त्रयः । त्रीन् । ७४५ । **ग्रहेरनिः ।** ग्रहणिः । ङीष् । ग्रहणी व्याधिभेदः । ७४६ । **प्रथेरमच् ।** प्रथमः ।

---

**त.]** वाच्यवत्स्याद्विलेपिते' इति विश्वः । **क्लिशेः ।** क्लिशू विबाधने । **नामागमश्चेति ।** 'प्रत्ययस्ये'ति शेषः । **चिन्त्यमिति ।** ईत्वविधानसामर्थ्यादेव गुणाऽभावसिद्धेरिति भावः । **'कीनाशः** कर्षकः क्षुद्रोपांशुघातिषु वाच्यवत् । यमे ना' इति मेदिनी । **अश्नोतेः ।** अशू व्याप्तौ अस्माद्वरट् स्यात् । **ईश्वरी ।** आशुकर्म वरदानादिक्रिया यस्य तस्मिन्वाच्ये । शीघ्रदातरीत्यर्थः । **ईश्वर इति ।** स्त्रियां तु टित्त्वान्ङीप् । ईश्वरी प्रत्ययस्वरेण मध्योदात्ता । ईशेर्वनिपि 'वनो र चे'ति ङीब्रयोस्तु धातुस्वरेणाद्युदात्ता । पुंयोगलक्षणे ङीषि अन्तोदात्ता । 'स्थेशभासपिसकसः' इति वरचि तदन्ताट्टापि ईश्वरेति विवेकः । **'ईश्वरो** मन्मथे शम्भौ नाढ्ये स्वामिनि वाच्यवत् । **ईश्वरी** चेश्वरोमाया'मिति मेदिनी । ईश्वरा—उमायामिति छेदः । **'ईश्वरः** शङ्करेऽधीशे तत्पत्न्यामीश्वरीश्वरा' इति बोपालितः । 'विन्यस्तमङ्गलमहौषधिरीश्वरायाः' इति भारविः । दशपाद्यां तु सूत्रान्तरमपि **'हन्ते रन् घश्चेति ।** हन हिंसागत्योरस्माद्रन्प्रत्ययः स्याद्धश्चान्तादेशः । हन्यते गम्यतेऽतिथिभिरिति घरः=गृहम् । **चतेः ।** चते याचनेऽस्मादुरन्स्यात् । अकार उच्चारणार्थः । 'चतुरनडुहोरामुदात्तः' इत्याम् । चत्वारः । **प्राततेः ।** अत सातत्यगमने प्रपूर्वादस्मादरन्स्यात् । रेफादकार उच्चारणार्थः । स्वरादिपाठादव्ययत्वम् । प्रातर् । **अमेः ।** अम गतिशब्दसंभक्तिषु, अस्मादरन्स्यात्तस्य तुडागमश्च । अन्तःशब्दोऽपि प्रातःशब्दवदव्ययम् । **दहेः ।** दह भस्मीकरणे । **'नगो** महीरुहे शैले भास्करे पवनाऽशने' इति मेदिनी । **सिचेः ।** षिच क्षरणे । **हकारादेश इति ।** धातोरन्त्यस्येत्यर्थः । **'सिंहः** कण्ठीरवे राशौ सत्तमे चोत्तरस्थितः । **सिंही** क्षुद्रबृहत्योः स्याद्वासके राहुमातरि' इति विश्वः । **व्याङि ।** घ्रा गन्धोपादानेऽस्माज्जातौ वाच्यायां कः स्यात् । कित्त्वादातो लोपः । 'व्याघ्रः स्यात्पुंसि शार्दूले रक्तैरण्डकरञ्जयोः । श्रेष्ठे नराद्युत्तरस्थः कण्टकार्यां च योषिति' इति मेदिनी । **हन्तेः ।** हन्तेरच्स्याद्धातोर्घुरादेशश्च । **'घोरं** भीमे हरे' इति विश्वः । **क्षमेः ।** क्षमूष् सहने । 'क्ष्माऽवनिर्मेदिनी मही'त्यमरः । **तरतेः ।** तॄ प्लवनतरणयोरस्मात् ड्रिः स्यात् । डित्त्वाट्टिलोपः । **ग्रहेः ।** ग्रह उपादाने । **ङीपिति ।** 'कृदिकारा'दित्यनेन । 'ग्रहणी रुक् प्रवाहिका' इत्यमरः । **प्रथेः ।** प्रथ

---

**बा.]** श्लेषणे, रीङ् श्रवणे, आभ्यां तप्रत्ययरप्रत्ययौ क्रमात्स्तः, तस्य पुडागमः, धातोर्ह्रस्वश्चेत्यर्थः, प्रकृतिप्रत्ययसमुदायेन क्रमाच्छ्लेषणे कुत्सने च वाच्ये । **क्लिशेरीच्चोपधायाः ।** क्लिशू विबाधने अस्मात्कन्स्याद्धातोरुपधाया ईत्वं, लकारस्य लोपो नामागमश्च । **कीनाश इति ।** 'कृतान्ते पुंसि कीनाशः' इत्यमरः । **चिन्त्यमिति ।** उपधाया ईत्वविधिसामर्थ्यादेव गुणो न भविष्यतीति भावः । **अश्नोतेराशुकर्मणि ।** अशू व्याप्तौ अस्माद्वरट् स्यात्, उपधाया ईत्वं च, आशुकर्मणि वाच्ये । **ईश्वर इति ।** ईश्वरो हि प्रार्थितः सन्वरादिकं शीघ्रं दातुं शक्तो भवति । **चतेरुरन् ।** चते याचने अस्मादुरन्स्यात् । उरनि अकार उच्चारणार्थः, नकार इत् । **चत्वार इति ।** 'चतुरनडुहो'रित्याम् ।

**प्राततेररन् ।** प्रपूर्वादत सातत्यगमने इत्यस्मादरन् प्रत्ययः । अकार उच्चारणार्थः । **प्रातरिति ।** स्वरादिपाठादव्ययत्वम् । **अमेस्तुट् च ।** अम गत्यादिषु अस्मादरन् स्यात्, तस्य तुडागमश्च । **दहेर्गो लोपो दश्च नः ।** दह भस्मीकरणे अस्माद्गप्रत्ययो, धातोरन्त्यस्य लोपः, दकारस्य नकारश्चेत्यर्थः । **सिचेः संज्ञायां ।** षिच क्षरणे अस्मात्कप्रत्ययो धातोरन्त्यस्य हकारादेशो नुम् च स्यात् । **व्याङि घ्रातेश्च जातौ ।** वि आङित्युपसर्गे उपपदे घ्रा गन्धोपादान इत्यस्मात्कप्रत्ययः स्याज्जातौ वाच्यायाम् । **व्याघ्र इति ।** कित्त्वादातो लोप इति चेत्यालोपः । **हन्तेरच् घुर च ।** हन हिंसागत्योः, अस्मादच्प्रत्ययः, धातोर्घुरादेशश्च । **घोरमिति ।** लघूपधगुणः । **क्षमेरुपधालोपश्च ।** क्षमूष् सहने अस्मादच्प्रत्ययः, धातोरुपधाया लोपश्चेत्यर्थः । 'क्ष्माऽवनिर्मेदिनी मही'त्यमरः । **तरतेर्ड्रिः ।** तॄ प्लवनतरणयोः, अस्मात् ड्रिः स्यात् । **त्रिरिति ।** डित्त्वाट्टिलोपः । तस्य नित्यं बहुवचनान्तत्वादाह—**त्रय इति ।** **ग्रहेरनिः ।** ग्रह उपादाने अस्मादनिप्रत्ययः । **ग्रहणिरिति ।** 'अट्कुप्वा'ङिति णत्वम् । **ङीषिति ।**

७४७ । **चरेश्च** । चरमः । ७४८ **मङ्गेरलच्** । मङ्गलम् । **इत्युणादिषु पञ्चमः पादः** ।

---

त.] प्रख्याने । 'प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्' इति मेदिनी । 'प्रथमचरमे'ति वैकल्पिकसर्वनामत्वा त्पक्षे जसः शीभावः । प्रथमे प्रथमाः । **चरेश्च** । चर गतिभक्षणयोरस्मादमच्स्यात् । चरमे चरमाः । योगविभाग-श्चिन्त्यप्रयोजनः । 'प्रथिचरिभ्या'मित्येव सुवचम् । **मङ्गेः** । उख उखीत्यादिदण्डके गत्यर्थको मगिः पठ्यते । 'कल्याणं मङ्गलं शुभम्' । **मङ्गलो** ग्रहभेदः । '**मङ्गला** सितदूर्वायामुमायां पुंसि भूमिजे । नपुंसकं तु कल्याणे सर्वार्थे रक्षणेऽपि च' इति मेदिनी । भावे ष्यञि—माङ्गल्यम् । 'तत्र साधुः' इति यत् । '**मङ्गल्यः** स्यात्त्रायमाणा-ऽश्वत्थबिल्वमसूरके । स्त्रियां शम्यामधःपुष्प्यां मिसिशुक्लवचासु च । रोचनायामथो दध्नि क्लीबं शिवकरे त्रिषु' इति मेदिनी । **इत्युणादिषु पञ्चमः पादः** ।

**उणादिप्रत्ययाः सन्ति पादोत्तरशतत्रयम् (३२५) । तेषां विवेचनं त्वत्र ज्ञानेन्द्रस्वामिभिः कृतम् ॥ १ ॥**

प्राचा तु कतिपयानामेवोणादीनामुपन्यासः कृतो न तु सर्वेषां, सोऽप्युपन्यासो नैकप्रघट्टकतया कृतः, किंतु विच्छिद्येति स्पष्टम् । तत्रापि केचित्प्रमादा मनोरमायां प्रदर्शितास्तेष्वेव कांश्चित्प्रमादान्दर्शयामः । [**द्वितीयपादे**–] 'भजो ण्विः' इति ण्विप्रकरणे 'छन्दसि सहः' 'वहश्चे'त्युपन्यस्य 'परौ व्रजेः षः पदान्ते' इति ण्विस्तेनैव षः, परिव्रा-डित्ययं हि प्राचो ग्रन्थः । तद्व्याख्यायां तत्पौत्रेण 'पञ्चपाद्युणादिसूत्रे इदं पठ्यते' इत्युक्तं, तदुभयमपि प्रामादिकम् । 'क्विब्वची'ति क्विब्दीर्घौ हि प्रक्रम्य 'परौ व्रजे'रिति सूत्रस्य पाठात् । अस्मिन्नंशे पञ्चपादीदशपाद्योरेकवाक्यत्वात् । [यदपि प्राचो ग्रन्थे क्वचित्पठ्यते चिणिति, तदप्यपाणिनीयत्वादुपेक्ष्यम् । एतेन प्रघट्टकान्तरे 'स्तुद्रुपरिव्राजां दीर्घश्चे'ति केचि'दिति प्राचो ग्रन्थोऽपि प्रत्युक्तः । सूत्रारूढे सर्वसंमते चार्थे केचिदित्युक्तेरप्रामाणिकत्वात् ] । यदपि 'धनर्तिचक्षि-त्वपितपिजनियजेरुस्' इति पठितं, तदप्यनाकरम् । तथा हि—'जनेरुसिः' 'अर्तिपॄवपियजितनिधनितपिभ्यो नित्' । 'एतेर्णिच्च' । 'चक्षेः शिच्चे'ति सर्वसंमतः पाठः, 'तपूंषि तस्मै वपुषो वपुष्टर'मित्यादिमन्त्रेषु आद्युदात्ततायाः अनुकू-लश्च । वेदभाष्ये एवमेव स्थितम् । इत्यादयो **द्वितीयपादे** प्रमादाः । **तृतीयपादेऽपि**—'स्तनिदूषिपुषिगदिमदि-हृदिभ्यो णेरित्नु'जिति प्राचा पठितं, तत्र दूषिहृदी केषामपि वृत्तिकृतां ग्रन्थे न पठितौ । दूषयित्नुः हृदयित्नुरिति प्रयोगोऽप्याकरे न दृष्टः । 'स्तनिहृषिपुषिमुदिगदिमदिभ्य' इति हि पञ्चपादीपाठः । 'घुषिगन्धिमण्डिजनिनसिभ्यः' इति दशपाद्यामधिकं पठितमित्यन्यदेतत् । यदपि 'श्रुदक्षिस्पृहिदॄगृहिजॄभ्य आय्यः' इति पठित्वा दराय्य जराय्य इति प्राचोक्तं, तदपि न, दॄजॄग्रहणस्याऽकरानारूढत्वात् । [ यदपि 'जॄविशिभ्यां झच्' 'गण्डिमण्डिजनिनन्दिभ्यश्चे'त्युक्त्वा गण्डयतो जनयन्त इत्युदाहृतं प्राचा, यच्च गण्डयन्त इति प्रतीकमुपादाय मेघनामेदमिति व्याख्याय गडि वदनैक-देशे इति व्याख्यातृभिर्विवृतं, तत्सर्वं प्रामादिकम् । तथाहि उणादिषु गडीति निरनुषङ्गं पठित्वा गड सेचने इति विवृतं, 'अयामन्ते'ति सूत्रे वृत्तिन्यासहरदत्तादिसकलग्रन्थेष्वेवं, माधवग्रन्थेऽप्येवमेव । युक्तं चैतत् । मेघ इति व्याख्यानं प्रति सेचनार्थस्यैवाऽनुगुणत्वात् । जनेः पाठोऽप्यप्रामाणिकः । जिधातुं पठित्वा 'जयन्तः पाकशासनि'रिति सर्वैर्विवृत-त्वात्, जनयन्त इति लक्ष्यस्य कैरपि अप्रदर्शितत्वात् । अप्रसिद्धत्वाच्च] इत्यादयस्**तृतीयपादे प्रमादाः** ।

**अथ चतुर्थे**—यदपि 'कॄगॄस्तॄजागृभ्यः क्विन् । कीर्विः गीर्विः स्तीर्वि'रिति प्राचोक्तं, तदपि लिपिभ्रमप्रयुक्तमेव । कॄ विक्षेपे, गॄ निगरणे, स्तॄञ् आच्छादने इति प्राचो ग्रन्थं विवृण्वतामुक्तिरपि मूलाऽशुद्धयैवाऽशुद्धा । 'जॄशॄस्तॄजागृभ्यः क्विन्' इति हि पाठ उणादिवृत्तिकृतां माधवादीनां च संमतः । जीर्विः पशुः । शीर्विर्हिंस्रः । स्तीर्विरध्वर्युरिति च तद्ग्रन्थेषूपपादितम् । स्तॄ इत्यस्य दीर्घान्तत्व एवहि 'ॠत इद्धातोः' इतीत्वं लभ्यते न तु ह्रस्वान्तत्वेऽपि, तस्मा-द्यथाकरमेव हि ग्रहीतुमुचितमिति दिक् । यदपि प्राचोक्तं–'ग्लाज्याहात्वरिभ्यो निः' इति, तदप्यनाकरम् । आकरे हि 'वीज्याज्वरिभ्यो निः' इति पठित्वा सूत्रद्वयानन्तरं 'वहिश्री'ति सूत्रे 'ग्लाहात्वरिभ्यो नि'दिति सूत्रितत्वात् । 'तूर्णी' रथः सदानवः' इत्यादावाद्युदात्तदर्शनाच्च । नच 'स्त्रियां क्ति'न्नित्यधिकारस्थं वार्तिकमेवेदं प्राचोदाहृतं न तूणादिसूत्र-स्थमिति वाच्यम्, एवमपि त्वरतेः पाठस्याऽनुचितत्वात् । न ह्यसौ वार्तिकेऽस्तीति दिक् । एवं 'संस्त्याने स्त्यायतेड्'-डित्यपि प्राचोदाहृतमनाकरम् । 'स्त्यायतेड्र'डित्येव सूत्रस्याकरे पञ्चपाद्यां दशपाद्यां चोपलम्भात् । 'संस्त्याने स्त्याय-तेर्ड्रट् स्त्री सूतेः सप्प्रसवे पुमान्'इति भाष्ये श्लोकपाठः, [स एव माधवेनोपन्यस्तो] न तु सूत्रपाठस्य तथात्वं दृश्यते,

---

वा.] 'कृदिकारादक्तिन' इत्यनेन । 'ग्रहणी रुक् प्रवाहिका' इत्यमरः । **प्रथेरमच्** । प्रथ प्रख्याने अस्मादमच् स्यात् । प्रथम इति रूपम् । **चरेश्च** । चर गतिभक्षणयोरस्मादमच्स्यात् । 'प्रथिचरिभ्या'मित्येकयोग एव कर्तुं शक्यः । **मङ्गेरलच्** । मगिर्गत्यर्थः । अस्मादलच्प्रत्यय इत्यर्थः । **मङ्गलमिति** । धातोरिदित्त्वान्नुम् । 'श्वश्श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभ'मित्यमरः । **इत्युणादिषु पञ्चमः पादः** ।

## अथ उत्तरकृदन्तम् ।

**उणादयो बहुलम्** ।३।३।१। एते वर्तमाने संज्ञायां च बहुलं स्युः । केचिदविहिता अप्यूह्याः । संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे । कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु । **भूतेऽपि दृश्यन्ते** ।३।३।२। **भविष्यति गम्यादयः** ।३।३।३। **दाशगोघ्नौ संप्रदाने** ।३।४।७३। एतौ संप्रदाने कारके निपात्येते । दाशन्ति तस्मै दाशः । गां हन्ति तस्मै गोघ्नोऽतिथिः । **भीमादयोऽपादाने** ।३।४।७४। भीमः । भीष्मः । प्रस्कन्दनः । प्रश्नक्षः । मूर्खः । खलतिः । **ताभ्यामन्यत्रोणादयः** ।३।४।७५। संप्र[दानाऽपा]दानपरामर्शार्थं ताभ्यामिति । ततोऽसौ भवति तन्तुः । वृत्तं तदिति वर्त्म । चरितं तदिति चर्म । **तुमुन्ण्वुलौ क्रियायां क्रियार्था-**

---

**त.]** एवं तद्ग्रन्थव्याख्यातॄणामपि प्रमादा ऊह्याः । तद्यथा 'पाणिन्यादिमुनी'निति व्याचक्षाणैरुक्तम् 'मनेरुच्चोपधायाः' इति, न ह्येवंविधं सूत्रं पञ्चपाद्यां दशपाद्यां वास्ति, अत इत्यनुवर्तमाने 'मनेरुच्च' इत्येव सूत्रितत्वादिति दिक् । **इति चतुर्थपादे प्राचः प्रमादाः । इत्युणादयः ।**

**उणादयो बहुलम्** । 'वर्तमाने ल'डित्यतो वर्तमानग्रहणं, 'पुवः संज्ञाया'मित्यतः संज्ञाग्रहणं चानुवर्तते । तदाह—**एते इति** । अत्र हि सूत्रे 'धातोः' 'प्रत्ययः' 'कृदति'ङिति चानुवर्तते, तेन 'कृवापाजिमी'त्यादिना विहितानामष्टाध्यायीबहिर्भूतानामप्युणादीनां प्रत्ययसंज्ञा,कृत्संज्ञा च सिध्यति । तथा चोणादिप्रत्ययाः सर्वे धातोः परत्र 'कर्तरि कृ'दिति कर्त्रर्थे भवन्ति । उणादिप्रत्ययान्तस्य 'कृत्तद्धिते'ति प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिरित्यादिसर्वमपीष्टं सिध्यति । अपरिपूर्णानामुणादीनां परिपूरणार्थं बहुलग्रहणम् । तस्य फलमाह—**केचिदविहिता अपीति** । हृषेरुलज्विहितः, स तु शङ्केरपि भवति, शङ्कुलेति प्रयोगदर्शनात् । किञ्च फिडफिड्डप्रत्ययौ क्वापि न विहितौ अतौ रुद्येते ऋफिडः ऋफिड्ड इति, तयोः कित्त्वं च कल्प्यते । तथा षण्ढ इत्यत्र सत्वाऽभावश्चेत्यादि । **संज्ञास्विति** । अनादिसंज्ञास्वेव, न तु सर्वास्वित्याहुः । 'हृषेरुल'जिति प्रत्ययं दृष्ट्वा शङ्किः प्रकृतिरुह्यते । तेन शङ्कुलेति सिद्धम् । ऋ गतावित्यादिभ्यः फिडफिड्डादिप्रत्यया गृह्यन्ते । **कार्याद्विद्यादिति** । 'ऋफिड' इत्यादौ गुणप्रतिषेधादिकार्यानुरोधादनुबन्धं ककारादिकं विद्यात् । **अनूबन्धमित्यत्र** 'उपसर्गस्य घञी'ति दीर्घः । एतदुणादिषु **शास्त्रं**=शासितव्यमित्यर्थः । **भूतेऽपि दृश्यन्ते** । नन्वेवं वर्तमानग्रहणं च 'उणादयो बहुल'मित्यत्र नानुवर्त्यताम्, एतच्चोत्तरसूत्रं च त्यज्यताम् । अविशेषेण कालत्रयेऽपि प्रत्ययलाभादिति चेदत्राहुः—'बाहुल्येन वर्तमाने भवन्ति, भूतभविष्यतोस्तु क्वचिदेवे'ति विवेकप्रदर्शनायेदमिति । **भविष्यति गम्यादयः** । गमिष्यतीति—गमी ग्रामम् । आगमिष्यतीति आगामी । गमेरिनिः । 'आङि णित्' इत्याङ्पूर्वस्य तु णित्त्वादुपधावृद्धिः । **भीमः । भीष्म इति** । 'भियो हेतुभये षु'गिति मप्रत्ययसंनियोगेन वैकल्पिकः षुक् । प्रस्कन्दत्यस्मादिति प्रस्कन्दनः । अपादाने ल्युट् । प्रश्नक्षत्यस्मादिति प्रश्नक्षः । पचाद्यच् । मुह्यत्यस्मादिति मूर्खः । 'मुहेः खो मूर्च' । स्खलत्यस्मादिति खलतिर्निष्केशशिरा इति प्रागुक्तम् । **ताभ्यामितीति** । 'ताभ्या'मित्यनुक्तौ तु सन्निहिताऽपादानस्यैव परामर्शादपादानादन्यत्रेत्यर्थः स्यादिति भावः । **ततोऽसाविति** । तनोतेः कर्तरि क्तः । 'अनुदात्तोपदेशे'त्यनुनासिकलोपः । असौ ततो भवति=विस्तृतो भवतीत्यर्थे तनोतेस्तुन् ।

---

**बा.]** अथ उत्तरकृदन्तप्रक्रिया निरूप्यन्ते—**उणादयो बहुलं** । तृतीयेऽध्याये तृतीयपादस्येदमादिमं सूत्रम् । **वर्तमाने संज्ञायां चेति** । 'वर्तमाने ल'डित्यतः, 'पुवःसंज्ञाया'मित्यतश्च तदनुवृत्तेरिति भावः । अत एव 'नञि हन एह च' नञ्पूर्वाद्धन्तेरसिप्रत्यये प्रकृतेरेहादेशो व्युत्पन्नोऽनेहस्शब्दो वर्तमानकाल एवेत्युक्तं भाष्ये । संज्ञाशब्दश्चाऽत्र रूढशब्दपरः । वैदिकानामपि शब्दानामुपलक्षणम् । अत एव 'नैगमरूढिभवं हि सुसाधु' इति वार्तिकम्, 'वैदिका रूढशब्दाश्चौणादिका' इति भाष्यं च सङ्गच्छते । रूढाश्चैते उणादिप्रत्ययान्ता अवयवार्थशून्या असन्तमप्यवयवार्थमाश्रित्य प्रायः कर्तरि व्युत्पाद्याः । 'उणादयो वे'त्यनुक्त्वा बहुलग्रहणस्य प्रयोजनमाह—**केचिदिति** । तदेवाह—**संज्ञास्वित्यादि** । भाष्यस्थोऽयं श्लोकः । डित्थो डवित्थ इत्यादौ धातुरूपाणि प्रत्ययांश्च यथासंभवमूह्याः । गुणनिषेधादिकार्यवशादनूबन्धं विद्यात् । **अनूबन्धमित्यत्र** 'उपसर्गस्य घञ्यमनुष्ये' इति दीर्घः । **एतत्**—उणादिषु **शास्त्रं**=शासितव्यम् । 'कृवापाजी'त्यादिसूत्राणि तु शाकटायनप्रणीतानि अस्यैव बहुलग्रहणस्य प्रपञ्च इत्यर्थः । **भूतेऽपि दृश्यन्ते** । 'उणादय' इति शेषः । वर्तमानाधिकारादिदं भूतग्रहणम् । दृशिः प्रयोगानुसारार्थः । इदं सूत्रं बहुलग्रहणप्रपञ्चार्थम् । **भविष्यति गम्यादयः** । भविष्यति काले गम्यादयः शब्दा इनिप्रत्ययान्ता निपात्यन्त इत्यर्थः ।

---

**शे.]** उणादयो । अत्रोणादिशब्देन व्याकरणान्तरप्रसिद्धपञ्चपाद्युक्ता एव, नाऽष्टाध्यायीस्थाः । तथा सति 'कृत्यल्युटः' इत्यत्र, 'रोगाख्यायां'मित्यत्र च बहुलग्रहणवैयर्थ्यापत्तेः । एवञ्चाऽत्र निर्णीतत्वात् 'ताभ्यामन्यत्रे'त्यत्रापि पञ्चपाद्युक्तानामेव ग्रहणम् । बहुलग्रहणप्रपञ्चभूतानि सूत्राणि व्याचष्टे—भूतेऽपीत्यादि । **तुमुन्ण्वुलौ** । भविष्यतीत्यनुवर्तते । 'उपपद'मिति महासञ्ज्ञया

याम् ।३।३।१०। क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः। मान्तत्वादव्ययत्वम्। कृष्णं द्रष्टुं याति। कृष्णं दर्शको याति। अत्र वाऽसरूपेण तृजादयो न, पुनर्ण्वुलुक्तेः। **समानकर्तृकेषु तुमुन्**।३।३।१५८। अक्रियार्थोपपदार्थमेतत्। इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुमुन् स्यात्। इच्छति भोक्तुम्। वष्टि वाञ्छति वा। **शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्**।३।४।६५। एषूपपदेषु धातोस्तुमुन् स्यात्। शक्नोति

---

त.] **वृत्तमिति**। गमनादिना निष्पन्नं यत्तद्वर्त्म। वृतेः कर्मणि मनिन्। 'अयनं वर्त्ममार्गाऽध्वे'त्यमरः। **तुमुन्ण्वुलौ**। क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था, तस्याम्। अत्रेदं बोध्यं-तुमुन्ण्वुलोः कृत्वाऽविशेषेऽपि 'अव्ययकृतो भावे' इति वचनाद्भावे तुमुन्। ण्वुल्तु कर्तरि। क्रियायामिति सप्तमीनिर्देशात्तद्वाचकस्य यातीत्यादेः 'तत्रोपपदं सप्तमीस्थ'-मित्युपपदत्वमिति। **कृष्णं द्रष्टुमिति**। कृष्णकर्मकं यद्भविष्यद्दर्शनं तत्प्रयोजकं यानमित्यर्थः। **कृष्णं दर्शक इति**। कृष्णकर्मकभविष्यद्दर्शनकर्तृकर्तृकं दर्शनप्रयोजनकं च यानमित्यर्थः। क्रियायां किम्?। भिक्षिष्ये इत्यस्य जटाः। इह भिक्षार्था जटाः, ताश्च द्रव्यं, न तु क्रिया, 'भिक्षितुं जटा' इति प्रयोगस्तु धारयतीत्यध्याहारेण समर्थनीयः। क्रियार्थायां किम्?। 'धावतस्ते पतिष्यति दण्डः'। अस्त्यत्र धावत इति क्रिया, न त्वसौ दण्डपतनार्था। धावनं तु दण्डपतने हेतुर्भवति न तूद्देश्यमिति दिक्। **समानकर्तृकेषु**। **अक्रियार्थेति**। 'भोक्तुमिच्छती'त्यत्र भोजनविषयिणीच्छेति प्रतीयते न भोजनार्थेच्छेति। अतः पूर्वेणाऽप्राप्तिरिति भावः। सूत्रस्थसमानशब्द एकतावचन इत्याह—**एककर्तृकेष्विति**। एकेति किम्?। पुत्रस्य पठनमिच्छति। पुत्रस्येति कर्तरि षष्ठी। पुत्रकर्तृकं पठनमित्यर्थः। इह सूत्रे 'समानकर्तृके'ति पदाभावे 'पुत्रस्य पठितुमिच्छती'ति प्रयोगः स्यात्। देवदत्तं भुञ्जानमिच्छतीति काशिका। अत्र काशिकायामुक्तम्-'इच्छन् करोतीत्यत्राऽनभिधानान्ने'ति। अत्र निष्कर्षमाहुः—उक्तविषये इच्छन्कर्तुमिति प्रयोगाऽभावेऽपि इच्छन् कर्तुं गच्छतीत्यादौ तु 'तुमुन्ण्वुलौ' इति सूत्रेण स्यादिति। तच्चिन्त्यम्। करोतीत्यर्थे तुमुनः प्राप्तेरेवाऽभावात्, तस्य भावार्थकत्वात्। इह च लटा कर्तृप्रतीतेः। किंचेच्छन्कर्तुमिति प्रयोगो नेष्यते इति रिक्तं वचः, कर्तुमिच्छन्निति प्रयोगस्य सकलसंमतत्वात्। पदानुपूर्व्याश्चाहर पात्रं पात्रमाहरेत्यादाविव स्वेच्छायत्तत्वात्। विस्तरस्त्विह मनोरमादावनुसन्धेयः। **वष्टीति**। वश कान्तौ, कान्तिरिच्छेति वशधातुरपीच्छार्थकः। **शकधृष**। अयम-

---

वा.] ग्रामङ्गमीति निपातनाच्चात्र णित्वम्। गमिष्यन्नित्यर्थः। प्रस्थायी।प्रस्थास्यमान इत्यर्थः। **तुमुन्ण्वुलौ**। **क्रियार्थायामिति**। क्रियोद्देश्यभूतक्रियावृत्तिधातौ उपपदे इत्यर्थः। भविष्यतीत्यनुवर्तते। तुमुनि नकार इत्। मकारादुकार उच्चारणार्थः। ण्वुलि णलावितौ। वोरकादेशः। **मान्तत्वादिति**। तुमुनो मान्तकृत्त्वात् 'कृन्मेजन्तः' इत्यव्ययत्वमित्यर्थः। ततश्च 'अव्ययकृतो भावे' इति वचनाद्भावे तुमुन्। ण्वुल् तु कर्तर्येव। **कृष्णं द्रष्टुमिति**। 'न लोकाव्यये'ति न षष्ठी। कृष्णकर्मकभविष्यद्दर्शनाऽर्थं यानमित्यर्थः। अत्र यातीत्युपपदम्। अत्र तुमुन्प्रत्ययप्रकृत्यर्थस्य दर्शनस्य यानार्थत्वं तुमुना द्योत्यं, वाच्यं वा। **कृष्णं दर्शको यातीति**। कृष्णं द्रक्ष्यन् तदर्थं यातीत्यर्थः। 'अकेनोर्भविष्यदाधमर्ण्ययो'रिति न षष्ठी। ननु तुमुनो भावार्थकत्वे तद्विषये कर्तरि विहितानां तृजादीनामप्रवृत्तावपि ण्वुल्विषये कर्तरि तृजादयः कुतो न स्युः?। न च विशेषविहितेनाऽनेन ण्वुला तृजादयो बाध्यन्ते इति वाच्यं, वासरूपविधिना तद्बाधस्य पाक्षिकत्वादित्यत आह—**अत्रेति**। क्रियार्थक्रियोपपदे विषये वाऽसरूपविधिना पक्षे प्राप्ता ये तृजादयस्ते न भवन्तीत्यर्थः। आदिना 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इत्यादिसङ्ग्रहः। कुतोऽत्र तृजादयो नेत्यत आह—**पुनर्ण्वुलुक्तेरिति**। 'ण्वुल्तृचौ' इति कालसामान्ये कर्तरि विहितो ण्वुल् क्रियार्थक्रियोपपदे विषये भवतीति पुनरिह ण्वुल्विधानात्तदितरतृजादयो न भवन्तीति विज्ञायत इति भावः। **समानकर्तृकेषु**। 'तुमुन्ण्वुलौ क्रियाया'-मित्येव सिद्धे किमर्थमिदमित्यत आह—**अक्रियार्थेति**। **इच्छार्थेष्विति**। 'इच्छार्थेषु लिङ्लोटौ' इत्यतस्तदनुवृत्तेरिति भावः। **इच्छति भोक्तुमिति**। अत्र इच्छतीत्युपपदार्थस्य इच्छाया भोजनोद्देश्यत्वाऽभावेऽपि तुमुन्। 'इच्छार्थेष्वि'त्यर्थग्रहणस्य प्रयोजनमाह—**वष्टि वाञ्छति वेति**। यद्यपि वशेश्छान्दसेषु परिगणनं धातुपाठे तथापि 'वष्टि भागुरि'रिति वार्तिकप्रयोगाल्लोकेऽपि प्रयोग इति भावः। **शकधृष**। 'शकधृषज्ञे'ति सूत्रमप्यक्रियोपपदार्थम्। **शक्नोति भोक्तुमिति**। अत्र शक्तेर्भोजनोद्देश्यत्वाऽभावेऽपि तुमुन्। **एवमिति**। धृष्णोति जानाति ग्ला-

---

शे.] क्रियापदं तद्वाचकपरं। क्रिया चाऽत्र तिङन्तोपरथाप्यैव। तेन 'भोक्तुं पाकः' इति न। 'उपपदमतिङि'ति सूत्रस्थभाष्यस्वरमादिति निरूपितम्। **पुनर्ण्वुलिति**। 'अकेनो'रित्यत्र भविष्यदधिकारविहितस्याऽकस्य योग इति व्याख्याने न फलम्। न च 'वर्षशतस्य पूरक' इत्यादौ 'ण्वुल्तृचौ' इति ण्वुलि पदान्तरसम्बन्धाद्भविष्यत्त्वप्रतीतावपि षष्ठीसिद्धिः फलं, तथा एतत्कर्मकयाजनकर्तरि इत्यर्थके 'अङ्ग ! यजतां, लप्स्यन्तेऽस्य याजकाः' इत्यादौ षष्ठीसिद्धिरपि फलमिति वाच्यं, शब्दशक्तिस्वाभाव्येन क्रियानुपपदकाऽकान्तस्य कर्तृप्रतिपादकतया पदान्तरसम्बन्धादिना भविष्यत्त्वप्रतीतावपि अकस्य भविष्यदर्थकत्वाऽभावेन तत्र निषेधाऽप्राप्तेरिति

भोक्तुम् । एवं धृष्णोतीत्यादौ । अर्थग्रहणमस्तिनैव संबध्यते, अनन्तरत्वात् । अस्ति भवति विद्यते वा भोक्तुम् । **पर्याप्तिवचनेष्वलमर्थेषु** ।३।३।६६। पर्याप्तिः पूर्णता । तद्वाचिषु सामर्थ्यवचनेषूपपदेषु तुमुन् स्यात् । पर्याप्तो भोक्तुं, प्रवीणः कुशलः पटुरित्यादि । पर्याप्तिवचनेषु किम् ? । अलं भुक्त्वा । अलमर्थेषु किम् ? । पर्याप्तं भुङ्क्ते । प्रभूततेह गम्यते न तु भोक्तुः सामर्थ्यम् । **कालसमयवेलासु तुमुन्** ।३।३।१६७। पर्यायोपादानमर्थो-पलक्षणार्थम् । कालार्थेषूपपदेषु तुमुन् स्यात् । कालः समयो वेला अनेहा वा भोक्तुम् । प्रैषादिग्रहणमिहानुवर्तते । तेनेह न-'भूतानि कालः पचतीति वार्ता' । **भाववचनाश्च** ।३।३।११। भाव इत्यधिकृत्य वक्ष्यमाणा घञादयः क्रियार्थायां क्रियायां भविष्यति स्युः । यागाय याति । [तुमर्थाच्चेति चतुर्थी] । **अण् कर्मणि च** ।३।३।१२। कर्म-ण्युपपदे क्रियार्थायां क्रियायां चाऽण् स्यात् । ण्वुलोऽपवादः । काण्डलावो व्रजति । परत्वादयं कादीन् बाधते ।

---

त.] प्यक्रियार्थोपपदार्थ आरम्भः । 'भोक्तुं शक्नोति धृष्णोति जानाती'त्यत्र हि भुज्यर्थो विषयतया संबध्यते, नैपुण्यं च गम्यते । ग्लायति भोक्तुमित्यत्र भोजनविषयिण्यशक्तिर्गम्यते । 'भोक्तुं घटते' इत्यत्र तु भोक्तुमर्हतीति योग्यता । 'आरभते भोक्तु'-मित्यत्र भोक्तुं प्रक्रमते=उत्सहते इति भुजेराद्यावस्था । 'लभते' इत्यत्राऽप्रत्याख्यानम् । 'अस्ति भोक्तु'मित्यादौ तु संभव-मात्रम् । **पर्याप्तो भोक्तुमिति** । भोक्तुं समर्थ इत्यर्थः । **उपलक्षणार्थमिति** । तस्य फलमाह-**अनेहा इति** । 'कालो दिष्टोऽप्यनेहापी'त्यमरः । **तेनेह नेति** । अनुवादे न भवतीत्यर्थः । **यागायेति** । यष्टुमित्यर्थः । 'तुमर्थाच्च भाववच-ना'दिति चतुर्थी । **ण्वुलोऽपवाद इति** । 'अव्ययकृतो भावे' इति भावे विहितत्वात्तुमुनः प्राप्तिरेव नास्तीति भावः ।

---

वा.] यति घटते आरभते लभते क्रमते उत्सहते अर्हति वा भोक्तुमित्युदाहार्यम् । **अस्तिनैवेति** । न तु शकादिने-त्यर्थः । कुत इत्यत आह-**अनन्तरत्वादिति** । संनिहितत्वादित्यर्थः । **पर्याप्तिवचने** । 'पर्याप्ती'त्यस्य विवरणं— **पूर्णतेति** । 'अलमर्थेष्वि'त्यस्य विवरणं-**सामर्थ्यवचनेष्विति** । **पर्याप्तो भोक्तुमिति** । अन्यूनसामर्थ्यवानि-त्यर्थः । वचनग्रहणस्य फलमाह—**प्रवीण इत्यादि** । **अलं भुक्त्वेति** । अत्र अलमिति प्रतिषेधार्थकं नतु पर्या प्त्यर्थकमिति भावः । **पर्याप्तं भुङ्क्ते इति** । बहुलमन्नं भुङ्क्ते इत्यर्थः । **प्रभूततेति** । 'अन्नस्ये'ति शेषः । **कालसमय** । अक्रियोपपदेऽपि प्रवृत्त्यर्थमिदं । ननु कालपर्यायाणां कतिपयानां ग्रहणात्तदितरस्मिन् अनेहआदिशब्दे उपपदे न स्यादित्यत आह-**पर्यायोपादानमिति** । **अनुवर्तते इति** । प्रैषातिसर्गसूत्रादिति भावः । **भूतानीति** । पृथिव्यादिपञ्चभूतानि, कालः **पचति**=उपचयापचयादिविकारं प्रापयति, **इति वार्ता**=लोकवृत्तान्त इत्यर्थः । **भाव-वचनाश्च** । 'क्रियार्थायां क्रियाया'मिति, भविष्यतीति चानुवर्तते । 'भावे चे'त्येव सिद्धे वचनग्रहणस्य प्रयोजनमाह— **भाव इत्यधिकृत्येति** । भावे इत्यधिकृत्य घञादयो विधास्यन्ते ये सामान्यतस्ते क्रियार्थायाङ्क्रियायामुपपदे भविष्यति काले विशेषविहितेनाऽपि तुमुना समुच्चिता भवन्तीत्यर्थः । न च वाऽसरूपविधिना सिद्धमेतदिति शङ्क्यं, 'क्ल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्ती'त्युक्तेरिति भावः । ननु 'यागाय याती'त्यत्र यागस्य संप्रदानत्वाऽभावात्-कथं चतुर्थी ? । नापि तादर्थ्यचतुर्थी, तादर्थ्यस्य प्रत्ययेनैव लाभादित्यत आह—**तुमर्थादिति** । **अण्कर्मणि च** । चकारेण क्रियार्थायां क्रियायामिति समुच्चीयते । तदाह—**क्रियार्थायां क्रियायां चेति** । तथा च क्रियार्थायां क्रियायां कर्मणि चेत्युपपदद्वयसत्त्वेवास्य प्रवृत्तिर्नान्यतरस्मिन्निति भाष्ये स्पष्टम् । कर्त्रर्थकोऽयमण् , 'कर्तरि कृ'दि-त्यधिकारात् । अत्र 'ण्वुल्तृचौ' इति बाधित्वा 'कर्मण्य'णिति सामान्यविधिना अण् प्राप्तस्तं तावत्क्रियार्थायां क्रियाया-मुपपदे विशेषविहितस्तुमुन्ण्वुलाविति ण्वुल् बाधितुमुद्युङ्क्ते, पुनर्ण्वुल्विधिसामर्थ्येन वाऽसरूपविधेरत्राऽप्रवृत्तेरुक्त-त्वात् । तमिमं ण्वुलं बाधितुमयमण्विधिः । तदाह—**ण्वुलोऽपवाद इति** । 'तुमुन्ण्वुलौ' इति विहितस्य ण्वुलो-

---

शे.] भावः । लृट् तु सामर्थ्याद्भवत्येवेति बोद्धव्यम् । **अनन्तरत्वादिति** । अत्र व्याख्यानमेव शरणम् । **कालः पचतीति** । अत्र धात्वर्थमात्रं विवक्षितं, न [ तु ] वर्तमानत्वादि, भूतभविष्यत्पाकस्यापि विवक्षितत्वादिति प्राप्तिरिति भावः । **भाववचना इति** । बाहुलकात्कर्मणि ल्युट् । भावाधिकारविहिताश्च भाववचनाः । न च 'भावे' इत्येतावतैव भावे ये विहितास्ते ततोऽन्यत्रापीत्यर्थेनेष्टसिद्धिरिति वाच्यं,याभ्यः प्रकृतिभ्यो येन विशेषेण भावे प्रत्यया विहितास्ताभ्यस्तेनैव विशेषेण ते भवन्त्वित्यर्थं वचनग्रहणसत्त्वात्, तदाह-**भावे इत्यधिकृत्येति** । **अण्कर्मणि च** । चात्क्रियार्थायामित्याद्याकृष्यते,उपपदसन्नियोगश्च क्रियते । उपपदत्वन्तु प्रत्येकमेव, प्रत्येकं सप्तमीनिर्देशात् । इदं सूत्रं ण्वुलाऽणो बाधा मा भूदित्यर्थम् । न च 'वाऽसरूप'न्यायेन निर्वाहः, पुनर्ण्वुल्विधानेनैतद्विषये न्यायाऽप्रवृत्तेः । अत एवैतद्विषये तृजचौ न । कृते चाऽस्मिन् 'वाऽसरूप'न्यायेन ण्वुलपि । तदाह— **ण्वुलोऽपवाद इति** । एवञ्च प्रतिप्रसवविधिरयम् । पुनरनुवादेन ज्ञापकसिद्धवाऽसरूपनिषेधाऽप्रवृत्तिमात्रम् । अत एवाऽपूर्व-विध्यपेक्षया लाघवम् । नन्वेवं 'कम्बलदायः' इत्यादावण् न स्यादनेन सूत्रेण ण्वुला प्राप्तबाधस्य प्रतिप्रसवेऽपि केन बाधस्य दुर्वारत्वात्, अत आह—**परत्वादिति** । आवश्यकाऽस्य पुनरण्विधायकत्वेनाऽण उत्कृष्टत्वात्कस्यापि बाध इत्यर्थः । वचनग्रहण-

कम्बलदायो व्रजति । **पदरुजविशस्पृशो घञ्** ।३।३।१६। भविष्यतीति निवृत्तम् । पद्यतेऽसौ पादः । रुजतीति रोगः । विशतीति वेशः । स्पृशतीति स्पर्शः । **सृ स्थिरे** ।३।३।१७। 'सृ' इति लुप्तविभक्तिकम् । सर्तेः स्थिरे कर्तरि घञ् स्यात् । सरति कालान्तरमिति सारः । ***** **व्याधिमत्स्यबलेषु चेति वाच्यम्** । अतीसारो व्याधिः । अन्तर्भावितण्यर्थोऽत्र सरतिः । रुधिरादिकमतिशयेन सारयतीत्यर्थः । विसारो मत्स्यः । सारो बलम् । ['सारो बले स्थिरांशे च'] । **भावे** ।३।३।१८। सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् स्यात् । पाकः । मार्गः । **स्फुरतिस्फुलत्योर्घञि** ।६।१।४७। अनयोरेच आत्वं स्याद्घञि । स्फारः । स्फालः । 'उपसर्गस्य घञी'ति दीर्घः । परीहारः । '**इकः काशे**' । काशे उत्तरपदे इगन्तस्यैव प्रादेर्दीर्घः । नीकाशः । अनूकाशः । इकः किम् ? । प्रकाशः । 'नोदात्तोपदेशे'ति न वृद्धिः । शमः । आचमादेस्तु—आचामः । कामः । वामः । 'विश्राम' इति त्वपाणिनीयम् । **स्यदो जवे** ।७।४।२८। स्यन्देर्घञि नलोपो वृद्ध्यभावश्च निपात्यते । स्यदो वेगः । अन्यत्र स्यन्दः ।

---

त.] पदरुज । **पद्यतेऽसाविति** । करणस्य कर्तृविवक्षाऽत्र बोध्या । पद्यते गच्छति येनेति फलितोऽर्थः । **सृ स्थिरे** । सर्तेरिति भ्वादेर्जुहोत्यादेश्च ग्रहणं, स्थिरग्रहणं प्रत्ययार्थस्य कर्तुर्विशेषणं न तूपपदमिति ध्वनयन्नाह— **स्थिरे कर्तरीति** । अर्धर्चादिषु सारशब्दपाठोऽत्र मानम् । **व्याधीत्यादि** । अस्थिरार्थमिदं वचनम् । तेन 'विसारो मत्स्य' इत्यत्र विविधं सरतीत्यर्थः सङ्गच्छते । **अतीसार इति** । 'उपसर्गस्य घञी'ति दीर्घः । **सारो बलमिति** । अत्रापि सृधातुरन्तर्भावितण्यर्थः, सारयति चेष्टयतीत्यर्थानुरोधात् । बलवानेव हि चेष्टते । **सिद्धावस्थापन्न इति** । पचतीत्यादौ तु साध्यावस्थापन्नो धात्वर्थ इति भावः । **आचमेति** । 'नोदात्ते'ति सूत्रे 'अनाचमे'रित्युक्तत्वादिति भावः । तत्रैव सूत्रे'ऽनाचमिकमिवमीना'मिति वार्तिकाद्वृद्धिनिषेधो नेत्याह— **कामः वाम इति** । **अपाणिनीयमिति** । श्रमेरुदात्तोपदेशत्वाद्घञि, वृद्धेर्दुर्लभत्वात् । यदि तु 'घुर्योन्विश्रामय'त्वित्यादिवण्णिचि वृद्धिमाश्रित्य णिजन्तादेरच् क्रियते तदा रूपं सिध्यति । न च णिच्यपि वृद्धिनिषेधः

---

बा.]ऽपवाद इत्यर्थः । एवं च ण्वुला बाधितस्य 'कर्मण्य'णित्यस्य अयमण्विधिः प्रतिप्रसवार्थ इति स्थितम् । ननु ण्वुला बाधितस्याऽणः प्रतिप्रसवेऽपि 'आतोऽनुपसर्गे' इति कप्रत्ययः 'कम्बलदायो व्रजती'त्यत्र दुर्निवारः । कप्रत्ययस्य कर्मण्यणपवादत्वात्, सरूपत्वेन च वाऽसरूपविध्यप्रवृत्तेः । नचायं वैशेषिकोऽण्विधिः कप्रत्ययस्याप्यपवाद इति शङ्क्यं, न ह्ययमपूर्वोऽण्विधिः । किंतु लाघवात् 'कर्मण्य'णित्यणेवाऽत्र प्रतिप्रसूयते । स च 'कर्मण्य'णित्यण् सामान्यविहितः 'आतोऽनुपसर्गे कः' इति वैशेषिकस्य नाऽपवादः, प्रत्युत कप्रत्यय एव तदपवादः । अतः 'कम्बलदायो व्रजती'त्यत्र कर्मण्यणपवादं 'तुमुन्ण्वुलौ क्रियायां क्रियार्थाया'मिति ण्वुलं बाधित्वा कप्रत्ययः स्यादित्यत आह—**परत्वादयमिति** । आदिना 'सामगो गुरुकुलं व्रजती'त्यादौ 'गापोष्ट'गित्यादिसङ्ग्रहः । 'अण्कर्मणि चे'ति ह्यावर्तते । प्रतिप्रसवविधिरपूर्वविधिश्च । तत्र प्रतिप्रसवविधिना ण्वुला अणो बाधनिवृत्तिः । अपूर्वविधिविहितस्य त्वणस्तृतीयपादीयस्य द्वितीयपादस्थकप्रत्ययापेक्षया परत्वात्कादिप्रत्यया अणा अनेन बाध्यन्त इत्यर्थः । एतच्च भाष्ये स्पष्टम् । इत ऊर्ध्वम्—'लृट् शेषे च'त्यादिसूत्रेषु क्रियार्थायां क्रियायामिति निवृत्तम् । भविष्यतीत्येवानुवर्तते इति बोध्यम् । **पदरुज** । कर्तरीत्येव । **पद्यतेऽसाविति** । करणस्याऽप्यत्र विवक्षातः कर्तृत्वम् । 'एर'जित्यतः प्राक् घञधिक्रियते । **सृ स्थिरे** । **लुप्तविभक्तिकमिति** । लुप्तपञ्चमीकमित्यर्थः । **स्थिरे कर्तरीति** । 'स्थिरे' इति कर्तृविशेषणं न तूपपदमिति भावः । **सर्तेरिति** । भ्वादेर्जुहोत्यादेश्च ग्रहणं, न तु जुहोत्यादेरेव, व्याख्यानात् । तदाह-**सरतीत्यादि** । अर्धर्चादिपाठात् पुंस्त्वं, क्लीबत्वं च । अत एव च स्थिर इति नोपपदम् । **व्याधीति** । वार्तिकमस्थिरार्थम् । **सारो बलमिति** । भाष्ये तु बले खदिरसार इत्युदाहृतम् । **भावे** । 'भावो भावना क्रिया, सा च धातुत्वेन सकलधातुवाच्ये'त्यादिमूलव्याख्यावसरे, सर्वधातुवाच्यं क्रियासामान्यं, तद्विशेषः पाकादिश्च धातुविशेषवाच्यः, तत्र क्रियासामान्यं भावशब्दार्थः, तिङ्वाच्यं लिङ्गसंख्यान्वयाऽयोग्यं साध्यावस्थापन्नं, कृद्वाच्यं तु लिङ्गसंख्यान्वययोग्यं सिद्धावस्थापन्नं, 'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति भाष्यादिति प्रपञ्चितम् । तदाह—**सिद्धावस्थापन्न इत्यादिना** । **घञिति** । 'पदरुजे'त्यतस्तदनुवृत्तेरिति भावः । **इकः काशे** । **उत्तरपदे इति** । 'अलुगुत्तरपदे' इत्यतस्तदनुवृत्तेरिति भावः । 'ढ्रलोपे पूर्वस्ये'त्यतो दीर्घ इत्यनुवर्तते । 'उपसर्गस्य घञ्यमनुष्ये' इत्यतो घञीति । तेनैव सिद्धे नियमार्थमिदम् । तदाह—**इगन्तस्यैवेति** । **दीर्घः स्यादिति** । 'घञी'ति शेषः । **आचाम इति** । 'अनाचमे'रिति पर्युदासाच्च वृद्धिनिषेध

---

शे.] सामर्थ्याच्चाऽऽवृत्तिरिति भाष्ये स्पष्टम् । पदरुज । 'एर'जित्यतः प्राक् घञधिक्रियते । अयं कर्तरि । **सारो बलमिति** । भाष्ये तु बले 'खदिरसारः' इत्युदाहृतम् । **सिद्धावस्थेति** । अत एवाऽस्य क्रियामिति विशेषणं सङ्गच्छते । **इगन्तस्यैवेति** ।

**अवोदैधौद्मप्रश्रथहिमश्रथाः** ।६।४।२९। अवोदः-अवक्लेदनम् । एध इन्धनम् । ओद्म उन्दनम् । श्रन्थेर्नलोपो वृद्ध्यभावश्च । **अकर्तरि च कारके संज्ञायाम्** ।३।३।१९। कर्तृभिन्ने कारके घञ् स्यात् । **घञि च भावकरणयोः** ।६।४।२७। रञ्जेर्नलोपः स्यात् । रागः । अनयोः किम् ? । रजत्यस्मिन् रङ्गः । प्रास्यते इति प्रासः । संज्ञायामिति प्रायिकम् । को भवता लाभो लब्धः । इत उत्तरं 'भावे' 'अकर्तरि च कारके' इति, 'कृत्यल्युटो बहुल'मिति यावद्द्वयमप्यनुवर्तते । **परिमाणाख्यायां सर्वेभ्यः** ।३।३।२०। घञ् । अजपोर्बाधनार्थमिदम् । एकस्तण्डुलनिचायः । द्वौ शूर्पनिष्पावौ । द्वौ कारौ । * **दारजारौ कर्तरि णिलुक्च** । दारयन्तीति

त.] शङ्क्यः । 'नोदात्ते'त्यत्र 'कृती'त्यनुवृत्त्या णिचि निषेधाऽभावात् । न चैवमपि 'मितां ह्रस्वः' इति ह्रस्वः स्यादिति शङ्क्यं, वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणेन ह्रस्वाऽभावसिद्धेः । परन्तु णिजन्तकल्पनायामर्थो भिद्यत इति भावः । वस्तुतस्तु 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णि'जिति विवक्षायां तु न दोष इत्यवधेयम् । एवं च 'रोगी चिरप्रवासी परान्नभोजी परावसथशायी । यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः' इत्यादिकविप्रयोगाः साधव एवेति बोध्यम् । **अवोदै** । **अवोद इति** । उन्दी क्लेदनेऽवपूर्वः । घञि नलोपो निपात्यते । **एध इति** । इन्धेर्घञि नलोपो गुणश्च निपात्यते । 'न धातुलोपे' इति निषेधादप्राप्ते गुणस्य निपातनमिति ज्ञेयम् । **ओद्म इति** । उन्देरौणादिके मन्प्रत्ययो नलोपो गुणश्चाऽत्रापि निपात्यते । **श्रन्थेरिति** । प्रपूर्वस्य हिमपूर्वस्य च घञि निपात्यते इति बोध्यम् । **प्रायिकमिति** । सर्वात्मना संज्ञाग्रहणत्यागे 'कृतः कट' इत्यत्र 'कारः कट' इति स्यादिति भावः । भाष्ये त्वनभिधानमाश्रित्य प्रत्याख्यातम् । **परिमाणाख्यायाम्** । **सर्वेभ्यः**-धातुभ्यः । **परिमाणं**-परिच्छित्तिः । आख्यानमाख्या उक्तिः । परिच्छित्तेरुक्तौ सत्यामित्यर्थः । कस्य पुनः परिच्छित्तिरिति चेत्प्रत्ययार्थस्येत्युच्यते । आख्याग्रहणं रूढिनिरासार्थं, तेन परिमाणग्रहणेन सङ्ख्याऽत्र गृह्यते । सर्वेभ्यः किम् ? । अन्यथा पुरस्तादपवादन्याये-नाऽचमेव घञ् बाधेत, न त्वपम् । **तण्डुलनिचाय इति** । निचीयते राशीक्रियते इति निचायः । अत्र राश्येकत्वेन समुदायिनां परिच्छित्तिरर्थाद्गम्यते । 'एर'जित्यचि प्राप्ते घञ् । निष्पूयते शोध्यते तुषाद्यपनयनेन यस्तण्डुलादिभ्यः निष्पावः । 'ॠदोर'बित्यपि प्राप्ते घञ् । **शूर्पेणेति** करणे तृतीयान्तस्य 'कर्तृकरणे कृता बहुल'मिति समासः । अत्र शूर्पसङ्ख्यया

वा.] इति भावः । **अपाणिनीयमिति** । 'नोदात्तोपदेशस्ये'ति वृद्धिनिषेधादिति भावः । **अकर्तरि** । कारके इति प्रत्ययार्थनिर्देशो,न तूपपदं,व्याख्यानात् । संज्ञाशब्देन रूढिर्विवक्षिता । तेन राग इति वक्ष्यमाणमुदाहरणं सङ्गच्छते । **घञि** । 'अनिदिता'मिति नलोपप्रकरणे 'रञ्जेश्चे'त्युत्तरमिदं सूत्रं । तदाह—**रञ्जेर्नलोपः स्यादिति** । सूत्रे शेषपूरणमिदम् । **राग इति** । 'चजोः कु घिण्ण्यतो'रिति जस्य गः । नलोपे कृते उपधावृद्धिः । रञ्जनक्रियेत्यर्थः । रञ्जनद्रव्यं वा । **प्रास्यत इति** । प्रपूर्वात् 'असु क्षेपणे' इत्यस्मात् 'अकर्तरि चे'ति करणे घञि प्रास इति रूपमित्यर्थः । प्रास्यन्ते क्षिप्यन्ते शत्रवोऽनेनेति प्रास आयुधविशेषः । **प्रायिकमिति** । स्पष्टमिदं भाष्ये । ततश्च असंज्ञायामपि क्वचिदयं घञ् भवतीति भावः । तदाह— **को भवतेति** । **लाभ इति** । भावे घञ् । को लाभो=हिरण्यादिप्राप्तिरूपो लब्धः=सम्पन्न इत्यर्थः । भवतेत्यस्य लब्ध इत्यत्रान्वयात् 'न लोके' इति षष्ठीनिषेधः । **अनुवर्तत इति** । अत्र व्याख्यानमेव शरणम् । 'स्यन्दू प्रस्रवणे' इत्यस्मात् 'अकर्तरि च' इति घञि क्ङिदभावात् 'अनिदिता'मिति नलोपो न प्राप्तः । तत्र 'स्यन्देश्चे'त्युक्तौ यद्यपि नलोपः सिध्यति तथापि कृते नलोपे उपधावृद्धिः स्यात् । तत्र नलोपमुपधावृद्ध्यभावं च प्रापयितुमाह—**स्यदो जवे** । **स्यदो वेग इति** । वेगे रूढोऽयम् । **अन्यत्रेति** । प्रस्रवणे इत्यर्थः । **अवोदैधौद्म** । अवोद, एध, ओद्म, प्रश्रथ, हिमश्रथ एषां द्वन्द्वः । **अवोद इति** । घञि नलोपो निपात्यते । कृते नलोपे आद्गुणः । लघूपधगुणस्तु न भवति, 'न धातुलोपे' इति निषेधात् । **एध इति** । 'ञि इन्धी दीप्तौ' इत्यस्माद्घञि नलोपः । 'न धातुलोपे' इति निषेधं बाधित्वा गुणश्च निपात्यते । **ओद्म इति** । उन्देरौणादिके मन्प्रत्यये नलोपो गुणश्च निपात्यते । **श्रन्थेरिति** । 'प्रपूर्वस्य हिमपूर्वस्य च घञी'ति शेषः । **परिमाणाख्यायां** । **घञिति** । शेषपूरणम् । सर्वेभ्यो धातुभ्योऽकर्तरि कारके वाच्ये घञ्स्यात्प्रत्ययार्थस्य परिच्छेदे गम्ये इत्यर्थः । ननु 'अकर्तरि कारके' इत्येव सिद्धे किमर्थमिदमित्यत आह-**अजपोरिति** । 'एरच्' 'ॠदोर'बिति वक्ष्यमाणयोर्बाधनार्थमित्यर्थः । 'अकर्तरि चे'ति घञ् तु ताभ्यां विशेषविहिताभ्यां बाध्यते, सरूपत्वेन वाऽसरूपविधेरप्रवृत्तेरिति भावः । **एकस्तण्डुलनिचाय इति** । निष्कृष्य चीयते सङ्घीक्रियते इति निचायः । कर्मकारके वाच्ये 'एर'जित्यस्यापवादो घञ् । तण्डुलावयवकसङ्घातात्मको राशिरेकत्वेन परिच्छिद्यते इत्यर्थः । **द्वौ शूर्पनिष्पावाविति** । निष्पूयते तुषा-

शे.] अत्र घञीत्यनुवृत्त्या 'उपसर्गस्य घञी'त्येव सिद्धे नियमोऽयमिति भावः । प्रायिकमिति । स्पष्टं चेदं भाष्ये ।

दाराः। जरयन्तीति जाराः। इङश्च ।३।३।२१। घञ्। अचोऽपवादः। उपेत्य अस्मादधीयते उपाध्यायः। * अपादाने स्त्रियामुपसङ्ख्यानं, तदन्ताच्च वा ङीष्। उपाध्याया। उपाध्यायी। * शॄ वायुवर्णनिवृतेषु। 'शॄ' इत्यविभक्तिको निर्देशः। शारो वायुः। करणे घञ्। शारो वर्णः। चित्रीकरणमिह

त.] तण्डुलादेरपि परिच्छित्तिः। शूर्पद्वित्वं तु आर्थिकं,नतु शाब्दं,निष्पावगतद्वित्वं तु शाब्दम्। यद्यप्यत्र 'निरभ्योः पूल्वो'रिति घञ् लभ्यते तथापि सर्वग्रहणबलादनेनापि भवितुमर्हतीति भावः। अप्रत्ययस्य मुख्योदाहरणमाह-द्वौ काराविति। कॄ विक्षेपे। कर्मणि घञ्। शूर्पादिना विक्षिप्तो धान्यादिराशिः कारः। इह प्रकृत्याश्रय एवापवादो नत्वर्थाश्रयः, 'सर्वेभ्य इति पञ्चमीनिर्देशेन तथैवावगमात्। तेनाऽयं प्रकृत्याश्रयो घञ् क्तिनोऽपवादो न भवति। एका तिलोच्छ्रितिः। उत्पूर्वकाच्छ्रयतेः कर्मणि भावे वा क्तिन्। ऊर्ध्वीकृतो राशीकृत इत्यर्थः। तदेतत्सूचयितुमुक्तम्-'अजपोरपवाद इति'। तयोरपि प्रकृत्याश्रयत्वात्, अपवादापवादयोः समानविषयत्वौचित्यात्। स्त्रियां क्तिन् त्वर्थाश्रय इति दिक्। दारजाराविति। अकर्तरि कारके इत्यधिकारात् 'ॠदोर'बित्यस्य घञपवादत्वाच्च कर्तरि घञर्थमिदं वचनम्। णिलुक्चेति। चाद्वुञ्। लोपे हि सति घञाश्रया वृद्धिर्न स्याण्णिलोपस्य स्थानिवद्भावेन व्यवधानात्। न च णिञ्निमित्तैव वृद्धिरस्त्विति वाच्यं, जारशब्दे 'मितां ह्रस्वः' इति ह्रस्वापत्तेः। 'जनीजॄ'षिति जॄधातोर्णौ मित्त्वात्। लुकि तु सति तस्य परनिमित्तत्वाऽभावेन, 'क्विलुगुपधे'ति क्वौ लुप्तस्य निषेधेन वा स्थानिवत्त्वाऽभावाज्जार इति रूपं सिध्यतीति भावः। एतेन दीर्यते यैस्ते दाराः, जीर्यतेऽनेनेति जार इत्यण्यन्ताभ्यामेव करणे घञस्तु किमनेन वचनेनेति केषांचिदुक्तिः परास्ता। 'ॠदोर'बित्यपवादविषये उत्सर्गस्य घञो दुर्लभत्वात्। स्त्र्यधिकारादूर्ध्वं वाऽसरूपविधेरनङ्गीकारादपवादोऽप्यच् 'करणाधिकरणयो'रिति ल्युटा बाधादिह दुर्लभ इत्यन्यदेतत्। उपेत्येति। गुरुसमीपमेत्येत्यर्थः। अपादान इति। पुरस्तादपवादन्यायेन इङश्चेत्यस्याऽच एवापवादत्वात्स्त्रियां तु क्तिन् स्यादिति तद्बाधनायाऽयमारम्भः। 'घञनुक्रमणमजपोर्विषये' इति वचनात्स्त्रियां घञ् न स्यादिति स्त्रियाङ्ग्रहणम्। उपाध्यायेति। यां स्वयमध्यापयति तस्या-

बा.] पनयनेन शोध्यते इति निष्पावस्तण्डुलादिराशिः। कर्मणि घञ्। अबपवादः। शूर्पेण निष्पावः शूर्पनिष्पावः। 'कर्तृकरणे कृता बहुल'मिति समासः। द्वित्वं तु शूर्पद्वारा निष्पावेऽन्वेति। अतः शूर्पद्वित्वमार्थिकं न तु शाब्दमित्येकवचनं निर्बाधम्। तदाह-शूर्पेणेत्यादि। द्वौ काराविति। कीर्यते विक्षिप्यते इति कारः धान्यादिराशिः। कर्मणि घञ्, अबपवादः। तदाह-अत्रेत्यादि। न च धातोरित्यधिकारादेव धातुमात्रात्सिद्धे सर्वग्रहणं व्यर्थमिति शङ्क्यं,प्रकृत्याश्रय एवापवादो बाध्यते न त्वर्थाश्रय इत्येतदर्थत्वात्। तेनेह न-एका तिलोच्छ्रितिः। उच्छ्रीयते ऊर्ध्वीक्रियते इत्युच्छ्रितिः=ऊर्ध्वं कृतो राशिः। कर्मणि स्त्रियां क्तिन्। स च अर्थाश्रयत्वात्प्रकृत्याश्रयत्वाऽभावान्नानेन घञा बाध्यते। किन्तु 'एरच्' 'ॠदोर'बिति प्रकृत्याश्रयावेव अजपौ बाध्येते इति भाष्ये स्पष्टम्। दारजाराविति। वार्तिकम्। दॄ विदारणे, जॄ वयोहानौ, आभ्यां ण्यन्ताभ्यां कर्तरि घञ्। णिलोपं बाधित्वा णिलुक् चेत्यर्थः। दारयन्ति=चित्तं विद्रावयन्तीति दाराः=भार्या। 'दाराः पुंसि च भूम्न्येवे'त्यमरः। घञि णिलुक्। ण्याश्रयवृद्धौ निवृत्तायां घञाश्रया वृद्धिः। तदाह—दारयन्तीति दारा इति। जरयति नाशयति कुलमिति जारः। जॄधातोर्ण्यन्ताद्घञ्। णिलुक्। णिलोपे सति तु तस्य परनिमित्तकत्वेन 'अचः परस्मि'न्निति स्थानिवत्त्वाद्घञाश्रया वृद्धिर्न स्यात्। न च णिनिमित्तैव वृद्धिरस्त्विति वाच्यं, 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्चे'तिमित्त्वे 'मितां ह्रस्वः'इति णिनिमित्तकह्रस्वापत्तेः। णिलुकि तु तस्य परनिमित्तकत्वाऽभावेन स्थानिवत्त्वाऽभावान्न ह्रस्वप्रसङ्गः। तदाह-जरयतीति जार इति। उपपतिरिति। 'जारस्तूपपतिः समौ' इत्यमरः। इङश्च। घञिति। शेषपूरणम्। इङ् अध्ययने, नित्यमधिपूर्वः। अस्मादकर्तरि कारके घञित्यर्थः। अकर्तरि चेति सिद्धेराह—अचोऽपवाद इति। 'एर'जित्यस्यापवाद इत्यर्थः। उपेत्येति। समीपं प्राप्य यस्मादधीयते स उपाध्याय इत्यर्थः। अपादाने घञिति भावः। 'आख्यातोपयोगे' इत्यपादानत्वम्। अपादाने इति। अपादानकारके वाच्ये स्त्रीत्वे गम्ये इङो घञ उपसङ्ख्यानमित्यर्थः। तदन्ताच्च वा ङीषिति। वार्तिकम्। 'अपादाने स्त्रिया'मिति विहितघञन्तादित्यर्थः। अत्र पठितमेव वार्तिकं स्त्रीप्रत्ययाधिकारे 'या तु स्वयमेव अध्यापिका तत्र वा ङी'षित्युपन्यस्तं मूले। ननु 'अकर्तरि चे'त्येव सिद्धे किमर्थं घञो विधानमिति चेन्न, 'घञनुक्रमणमजपोर्विषये' इति 'एरच्' 'ॠदोर'बित्यजपोरेव विषये 'अकर्तरि चे'ति घञ्विधिरिति भाष्यवचनात्स्त्रीत्वे गम्ये 'स्त्रियां क्ति'न्निति क्तिन्विषये घञि अप्राप्ते 'अपादाने स्त्रिया'मिति घञ्वचनात्। उपाध्यायेति। उपेत्य अस्याः सकाशादधीयते इत्यर्थः। शॄवायुविति। वार्तिकम्। अविभक्तिक इति। लुप्तपञ्चमीक इत्यर्थः। वायौ वर्णे निवृते च कर्तरि शॄधातोर्घञित्यर्थः। अपोऽपवादः। शारो वायुरिति। शीर्यन्ते पर्णफलादीनि यैरिति विग्रहः। तदाह—करणे घञिति।

शे.] इङश्च। अयमपि प्रकृत्याश्रयस्यैव बाधको, न क्तिनो, व्याख्यानात्।

धात्वर्थः । निम्रियते आम्रियतेऽनेनेति निवृतमावरणम् । बाहुलात्करणे क्तः । 'गौरिवाऽकृतनीशारः प्रायेण शिशिरे कृशः' । अकृतप्रावरण इत्यर्थः । **उपसर्गे रुवः** ।३।३।२२। घञ् । संरावः । उपसर्गे किम् ? । रवः । **अभिनिसः स्तनः शब्दसंज्ञायाम्** ।८।३।८६। अस्मात्स्तनेः सस्य मूर्धन्यः । अभिनिष्टानो वर्णः । शब्दसंज्ञायां किम् ? । अभिनिःस्तनति मृदङ्गः । **समि युद्रुदुवः** ।३।३।२३। संयूयते=मिश्रीक्रियते गुडादिभिरिति संयावः पिष्टविकारोऽपूपविशेषः । संद्रावः । संदावः । **श्रिणीभुवोऽनुपसर्गे** ।३।३।२४। श्रायः । नायः । भावः । अनुपसर्गे किम् ? । प्रश्रयः । प्रणयः । प्रभवः । कथं प्रभावो राज्ञ इति ? । प्रकृष्टो भाव इति प्रादिसमासः । कथं राज्ञो नय इति ? । बाहुलकात् । **वौ क्षुश्रुवः** ।३।३।२५। विक्षावः । विश्रावः । वौ किम् ? । क्षवः । श्रवः । **अवोदोर्नियः** ।३।३।२६। अवनायः=अधो नयनम् । उन्नायः=ऊर्ध्वनयनम् । कथमुन्नय उत्प्रेक्षेति ? । बाहुलकात् । **प्रे द्रुस्तुस्रुवः** ।३।३।२७। प्रद्रावः । प्रस्तावः । प्रस्रावः । प्रे इति किम् ? । द्रवः । स्तवः । स्रवः । **निरभ्योः पूल्वोः** ।३।३।२८। निष्पूयते शूर्पादिभिरिति निष्पावो धान्यविशेषः । अभिलावः । निरभ्योः किम् ? । पवः । लवः । **उन्न्योर्ग्रः** ।३।३।२९। उद्गारः । निगारः । उन्न्योः किम् ? । गरः । **कॄ धान्ये** ।३।३।३०। 'कॄ' इत्यस्माद्धान्यविषयकादुन्न्योर्घञ् स्यात् । उत्कारो निकारो धान्यस्य । विक्षेप इत्यर्थः । धान्ये किम् ? । भिक्षोत्करः । पुष्पनिकरः । **यज्ञे समि स्तुवः** ।३।३।३१। समेत्य स्तुवन्ति यस्मिन् देशे छन्दोगाःस देशः संस्तावः । यज्ञे किम् ? । संस्तवः [स्यात्] परिचयः । **प्रे स्त्रोऽयज्ञे** ।३।३।३२। अयज्ञे इति छेदः, 'यज्ञे' इति प्रकृतत्वात् । प्रस्तारः । अयज्ञे किम् ? । बर्हिषः प्रस्तरो मुष्टिविशेषः । **प्रथने वावशब्दे** ।३।३।३३। विपूर्वात् स्तृणातेर्घञ् स्यादशब्दविषये प्रथने । पटस्य विस्तारः । प्रथने किम् ? । तृणविस्तरः । अशब्दे किम् ? । ग्रन्थविस्तरः । **छन्दोनाम्नि च** ।३।३।३४। 'स्त्र' इत्यनुवर्तते । [विपूर्वात्स्तृणातेर्घञ् ] । विष्टारपङ्क्तिश्छन्दः । विस्तीर्यन्तेऽस्मिन्नक्षराणीत्यधिकरणे घञ् । ततः कर्मधारयः । **छन्दोनाम्नि च** ।८।३।९४। विपूर्वात् स्तृणातेर्घञन्तस्य सस्य षत्वं

---

त.] मिदं रूपद्वयम् । पुंयोगे तु ङीषेव । आनुगागमश्च पाक्षिक इत्युक्तम् । **करणे क्त इति** । वृञ् वरण इत्यस्मादित्यर्थः । **नीशार इति** । 'उपसर्गस्य घञी'ति दीर्घः । ननु 'प्रदक्षिणप्रसव्यगामिनां शाराणा'मिति कथं प्रयोगः ?, 'वायुवर्णे'त्यर्थपरिगणनादिति चेत् । अत्राहुः—अतएव वार्तिकप्रयोगादक्षेष्वपि शृणातेर्घञिति । **रव इति** । 'ॠदोर'बित्यप् । **राज्ञो नय इति** । णीञ् प्रापणे इत्यस्मादचो यत् । **यज्ञे समि** । अधिकरणे ल्युटोऽपवादोऽयं घञ् । **छन्दो** । शब्दविषयत्वात्पूर्वेणाऽप्राप्ते वचनम् । केचित्तु 'प्रस्तारपङ्क्ति'रित्यादिप्रयोगानुरोधेनात्र वावितिं नानुवर्तयन्ति ।

---

बा.] **चित्रीकरणमिति** । शीर्यन्ते=चित्रीक्रियन्ते पटादयोऽनेनेति भावः । **गौरिवेति** । भाष्यस्थं श्लोकार्द्धम् । 'नीशार' इत्यत्र 'उपसर्गस्य घञी'ति दीर्घः । अक्षे शारशब्दं साधयति—**प्रदक्षिणेति** । **वार्तिककारप्रयोगादिति** । पञ्चमस्य द्वितीये 'अनुपदसर्वान्नायानय'मिति सूत्रभाष्ये स्थितमिदम् । **उपसर्गे रुवः** । 'घ'ञिति शेषः । उपसर्गे उपपदे रुधातोर्घञित्यर्थः । अबपवादः । **समि युद्रुदुवः** । समित्युपसर्गे उपपदे, यु द्रु दु एभ्यो घञित्यर्थः । अवपवादः । **श्रिणी** । उपसर्गे असति, श्रि, नी, भू एभ्यो घञित्यर्थः । अजपोरपवादः । **बाहुलकादिति** । 'कृत्यल्युटो बहुल'मिति बहुलग्रहणादित्यर्थः । **वौ क्षुश्रुवः** । वीत्युपसर्गे उपपदे क्षुश्रुधात्वोर्घञित्यर्थः । अबपवादः । **अवोदोर्नियः** । अव, उत्, अनयोरुपपदयोर्नीधातोर्घञित्यर्थः । अजपवादः । 'उन्नय' इत्यस्य विवरणम्—**उत्प्रेक्षेति** । **प्रे द्रुस्तुस्रुवः** । प्र इत्युपपदे, द्रु, स्तु, स्रु,—एभ्यो घञित्यर्थः । अबपवादः । **निरभ्योः** । निर्, अभि—अनयोरुपपदयोर्घञित्यर्थः । अबपवादः । **उन्न्योर्ग्रः** । उत्, नि, इत्युपपदयोर्घञित्यर्थः । अबपवादः । **कॄ धान्ये** । कॄ इति लुप्तपञ्चमीकं । तदाह—**कॄ इत्यस्मादिति** । **यज्ञे** । **समि** । समित्युपपदे स्तुधातोर्घञ्स्याद्यज्ञविषये प्रयोग इत्यर्थः । अधिकरणे ल्युटोऽपवादः । संस्तव इत्यस्य विवरणं—**परिचय इति** । **प्रे स्त्रोऽयज्ञे** । **प्रकृतत्वादिति** । यज्ञे इति तु च्छेदो न भवति, पूर्वसूत्राद्यज्ञग्रहणानुवृत्त्यैव सिद्धेरित्यर्थः । प्र इत्युपपदे स्तृधातोर्घञित्यर्थः । **प्रस्तार इति** । इष्टकासन्निवेशविशेष इति याज्ञिकाः । **प्रथने वावशब्दे** । वौ-अशब्दे इति च्छेदः । तदाह-**विपूर्वादिति** । **छन्दोनाम्नि च** । विपूर्वात् स्तॄधातोर्घञ्स्यात् । अक्षरेयत्तात्मकच्छन्दसः संज्ञायामित्यर्थः । शब्दविषयत्वात् पूर्वेणाऽप्राप्ते वचनम् । **कर्मधारय इति** । विष्टरश्चासौ पङ्क्तिश्चेति विग्रह इति भावः । ननु 'सात्पदाद्यो'रिति निषेधादादेशसकाराऽभावाच्च कथमिह षत्वमित्यत आह—**छन्दोनाम्नीति** । 'वृक्षासनयोर्विष्टरः'

---

शे.] 'अभिनिस' इति सङ्घातग्रहणं, व्याख्यानात् । तदाह—**अस्मादिति** । 'उन्नयः' इत्यस्य पर्यायः—**उत्प्रेक्षेति** । **निरभ्योः** । अत्रोपसर्गाभ्यां धात्वोर्यथासङ्ख्यम् । **धान्येति** । धान्यविषयक[प्र]क्षेपार्थप्रतिपादकादित्यर्थः । **यज्ञे समि** । यज्ञविषयकेऽर्थे

स्याच्छन्दोनाम्नि । [इति षत्वम्]। **उदि ग्रहः** ।३।३।३५। उद्ग्राहः । **समि मुष्टौ** ।३।३।३६। मल्लस्य सङ्ग्राहः । मुष्टौ किम् ? । द्रव्यस्य सङ्ग्रहः । **परिन्योर्नीणोर्द्यूताऽभ्रेषयोः** ।३।३।३७। परिपूर्वान्नयतेर्निपूर्वादिणश्च घञ् स्यात् क्रमेण द्यूतेऽभ्रेषे च विषये । परिणायेन शारान् हन्ति । समन्तान्नयनेनेत्यर्थः । एषोऽत्र न्यायः । उचितमित्यर्थः । द्यूताऽभ्रेषयोः किम् ? । परिणयो विवाहः । न्ययो नाशः । **परावनुपात्यय इणः** ।३।३।३८। क्रमप्राप्तस्य अनतिपातोऽनुपात्ययः । तव पर्यायः । अनुपात्यये किम् ? । कालस्य पर्ययः । अतिपात इत्यर्थः । **व्युपयोः शेतेः पर्याये** ।३।३।३९। तव विशायः । तव राजोपशायः। पर्याये किम् ?। विशयः=संशयः। उपशयः=समीपशयनम्। **हस्तादाने चेरस्तेये** ।३।३।४०। [चिनोतेर्घञ् हस्तादाने गम्ये] । हस्तादान इत्यनेन प्रत्यासत्तिरादेयस्य लक्ष्यते । पुष्पप्रचायः । हस्तादाने किम् ? । वृक्षाग्रस्थानां फलानां यष्ट्या प्रचयं करोति । अस्तेये किम् ? । पुष्पप्रचयश्चौर्येण । **निवासचितिशरीरोपसमाधानेष्वादेश्च कः** ।३।३।४१। एषु चिनोतेर्घञ्, आदेश्च ककारः । उपसमाधानं=राशीकरणं,तच्च धात्वर्थः । अन्ये प्रत्ययार्थस्य कारकस्योपाधिभूताः । **निवासे**-काशी निकायः । **चितौ**-आकायमग्निं चिन्वीत । **शरीरे**-चीयतेऽस्मिन्नस्थ्यादिकमिति कायः । **समूहे**-गोमयनिकायः । एषु किम् ? । चयः । 'चः क' इति वक्तव्ये 'आदे'रित्युक्तिर्यङ्लुक्यादेरेव यथा स्यादिति । गोमयानां निकेचायः । पुनःपुना राशीकरणमित्यर्थः । **सङ्घे चाऽनौत्तराधर्ये** ।३।३।४२। चेर्घञ्,आदेश्च कः । भिक्षुनिकायः ।

---

त.]**उदि ग्रहः** । भावादौ घञ् स्यात् । 'ग्रहवृद्द' इति प्राप्तस्याऽपोऽपवादः । **परिन्योः** । अक्षादिभिः क्रीडनं द्यूतम् । यथाप्राप्तकरणमभ्रेषः । **परावनु** । अत्र व्याचख्युः–द्विःपरिग्रहणमिह व्यर्थम् । सकृदेव कर्तुं शक्यम् । तथा हि–'परौ नियो द्यूते', 'इणोऽनुपात्यये', 'नावभ्रेषे' । इह इण इत्यनुवर्तनादिणोऽनुपात्यय इत्यत्र तु परावित्यनुवर्तनाच्चेष्टं सिध्यतीति भावः । ननु पूर्वसूत्रेऽनुपात्ययः पर्यायार्थकत्वेन व्याख्यातः, तथा च तदनुवृत्त्यैव सिद्धे पर्यायग्रहणमिह व्यर्थमिपि चेदत्राहुः—पर्यायग्रहणं पुनर्विधानार्थं, तेनाऽत्राभिविधिविवक्षायां परमपि 'अभिविधौ भाव इनु'णिति इनुणं बाधित्वाऽयमेव घञ् भवतीति । **आकायमिति** । आचीयन्तेऽस्मिन्निष्टका इत्याकायम् । अधिकरणे घञ् । **अग्निम्**=अग्निस्थानविशेषं, चिन्वीत=चयनेन निष्पादयेदिति श्रुत्यर्थः । **सङ्घे चानौत्तराधर्ये**। उत्तरे चाधरे चोत्तराधरास्तेषां

---

बा.] इत्युत्तरं सूत्रम् । वेदप्रसिद्धसंज्ञायां विष्टरशब्दो निपात्यते इत्यर्थः । **उदि ग्रहः** । उदित्युपपदे ग्रहधातोर्घञित्यर्थः । 'ग्रहवृदनिश्चिगमश्चे'त्यप्प्रत्ययस्य वक्ष्यमाणस्याऽपवादः । **समि मुष्टौ** । समित्युपपदे ग्रहेर्घञ् स्यान्मुष्टिविषये धात्वर्थे गम्ये इत्यर्थः । **मल्लस्य संग्राह इति** । दृढग्रहणं मुष्टेरित्यर्थः । **परिन्योः** । **द्यूते अभ्रेषे चेति** । द्यूतविषये नयने, अभ्रेषविषये गमने च विद्यमानादित्यर्थः । अचोऽपवादः । **शारान्**=अक्षान् । **एषोऽत्र न्याय इति** । अभ्रेषेण वर्तनमित्यर्थः । उचितस्यार्थस्य अनपचारः–अभ्रेषः । तदाह—**उचितमिति** । **परावनुपात्यय इणः** । परौ उपपदे इण्धातोर्घञ्, अनुपात्यये गम्ये इत्यर्थः । **तव पर्याय इति** । अनतिक्रमणमित्यर्थः । **कालस्य पर्यय इति** । अतिक्रम इत्यर्थः । तदाह—**अतिपात इति** । **व्युपयोः शेतेः** । वि, उप, इत्युपपदयोः शीङ्धातोर्घञ्स्यात्पर्याये गम्ये इत्यर्थः । अजपवादः । **पर्यायः**—प्राप्ताऽवसरता । **हस्तादाने** । हस्तादाने गम्ये चिञ्धातोर्घञ् न तु स्तेये इत्यर्थः । ननु वृक्षशिखरमात्रमारुह्य पुष्पावचयं करोतीत्यत्राऽतिव्याप्तिमाशङ्क्य आह—**प्रत्यासत्तिरिति** । आदेयस्य=पुष्पादिद्रव्यस्य भूमिस्थितपुरुषीयहस्तग्रहणयोग्यावस्थितिरित्यर्थः । **पुष्पप्रचयं चौर्येणेति** । 'करोती'ति शेषः । **निवास** । 'अकर्तरि च कारके' इति 'भावे' इति,चानुवर्तत एव । **अन्ये इति** । निवासचितिशरीरात्मका अर्था इत्यर्थः । **उपाधिभूता इति** । विशेषणभूता इत्यर्थः । अजपवादः । **काशी निकाय इति** । निचीयते मोक्षोऽत्रेत्यधिकरणे घञ् । काशी मोक्षार्जकस्य निवास इत्यर्थः । 'चजोः कु घिण्ण्यतो'रित्यस्य अव्यवहितयोरेव चजोः प्रवृत्तेरिह कत्ववचनम् । **आकायमिति** । आचीयते इति कर्मणि घञ् । **शरीरे इति** । उदाहरणसूचनमिदम् । **समूहे इति** । उपसमाधानस्योदाहरणसूचनम् । निचीयते राशीक्रियते इति भावे घञ् । ननु 'निवासचितिशरीरोपसमाधानेषु चः क' इत्येवास्तु, चकारस्य ककार इत्यर्थलाभादित्यत आह–**चः क इति वक्तव्य इति** । **पुनः पुना राशीति** । अत्र 'रो रि' इति लोपे 'ढ्रलोपे' इति दीर्घः । **सङ्घे चा** । **चेर्घञिति** । शेषपूरणमिदम् । चेर्घञ्स्यात्सङ्घे वाच्ये न त्वौत्तराधर्ये इत्यर्थः । उत्तराधरयोर्भावः—औत्तरा-

---

शे.] वर्त्तमानात्तुव इत्यर्थः । **समि मुष्टौ** । मुष्टिविषयकाऽर्थवृत्तेर्ग्रह इत्यर्थः । **परिन्योः** । द्यूताऽभ्रेषविषयकार्थाद्धातोरित्यर्थः । पदार्थानामनपचारो, यथाप्राप्तस्य च करणम्—अभ्रेषः । **राजोपशाय इति** । राजसमीपशयनस्य पर्याय इत्यर्थः । **हस्तादाने चेः** । 'निश्चेरयमेव वक्ष्यमाणाऽपः पूर्वविप्रतिषेधेने'ति भाष्ये । **काशी निकाय इति** । काशी निवासदेश इत्यर्थः । **गोमयनिकाये**-

प्राणिनां समूहः सङ्घः । अनौत्तराधर्ये किम् ? । सूकरनिचयः । सङ्घे किम् ? । ज्ञानकर्मसमुच्चयः । **कर्मव्यतिहारे णच् स्त्रियाम्** ।३।३।४३। स्त्रीलिङ्गे भावे णच् । **णचः स्त्रियामञ्** ।५।४।१४। [ णजन्तात्स्त्रियामञ् ] । **न कर्मव्यतिहारे** ।७।३।६। अत्र ऐज् स्यात् । व्यावक्रोशी । व्यावहासी । **अभिविधौ भाव इनुण्** ।३।३।४४। **अणिनुणः** ।५।४।१५। [ इनुणन्तादण्स्यात्स्वार्थे । आदिवृद्धिः ] । 'इनण्यनपत्ये' । [अनपत्यार्थेऽणि परे इन् प्रकृत्या स्यात् ]। सांराविणं वर्तते । **आक्रोशेऽवन्योर्ग्रहः** ।३।३।४५। अव नि एतयोर्ग्रहेर्घञ् स्यात् शापे । अवग्राहस्ते भूयात् । अभिभव इत्यर्थः । निग्राहस्ते भूयात् । बाध इत्यर्थः । आक्रोशे किम् ? । अवग्रहः पदस्य । निग्रहश्चोरस्य । **प्रे लिप्सायाम्** ।३।३।४६। पात्रप्रग्राहेण चरति भिक्षुः । **परौ यज्ञे** ।३।३।४७। उत्तरः परिग्राहः । स्फ्येन वेदेः स्वीकरणम् । **नौ वृ धान्ये** ।३।३।४८। 'वृ' इति लुप्तपञ्चमीकम् । नीवाराः ।

---

त.] भाव औत्तराधर्यम् । **सूकरेति** । स्तनपानार्थमुत्तराधरभावेन सूकराः शेरते तदेतत्प्रत्युदाहरणम् । यदा तु भिक्षुवत्पृथक्पृथगेवावतिष्ठन्ते तदेहापि घञ् । **कर्मव्यतिहारे णच्** । **कर्मव्यतिहारः**-क्रियाव्यतिहारः । परस्परकरणमिति यावत् । तत्र वर्तमानाद्धातोरित्यर्थः । **भावे णजिति** । कर्तृवर्जिते कारके न भवत्यनभिधानादित्याहुः । 'भावादा'विति प्राचोक्तं यत्तदुपेक्ष्यम्, आकरविरोधात् । **णचः स्त्रि** । अनेन णजिति चकारोऽत्र विशेषणार्थं इति ध्वनितम् । स्त्रियां किम् ? । व्यतिपाको वर्तते । **ऐच् नेति** । 'न य्वाभ्या'मिति प्राप्तस्य निषेधेनादिवृद्धिरेव । णचस्तद्धितत्वाऽभावेऽप्यञस्तद्धितत्वादिति भावः । कृद्ग्रहणपरिभाषया सोपसर्गधातोर्णजन्तत्वात्ततोऽञि तत्प्रयुक्तादिवृद्धिरुपसर्गस्येत्याशयेनोदाहरति—**व्यावक्रोशीति** । क्रुश आह्वाने, हसे हसने । स्यादेतत्-'स्त्रियां क्ति'निति प्रकरण एवायं णज्विधेयः । एवं च स्त्रियामिति न कर्तव्यमिति लाघवमिति चेन्मैवम् । स्त्रियामित्यधिकारे वासरूपविधिनिषेधापत्तेः । इष्यते तु व्यावक्रुष्टिरिति । स्त्रियां क्तिचपि अपवादविषये क्वचिदिष्यते—व्यावचोरी । इह 'ण्यासश्रन्थे'ति युच्प्राप्तः । व्यात्युक्षी । अत्र 'गुरोश्च हलः' इत्यकारप्रत्ययः प्राप्तः । क्वचिदकार एवेष्यते, न तु णच् । व्यतीक्षा, व्यतीहा । सैषा व्यवस्था न्यायतो दुर्लभाऽपि बाहुलकात्स्वीकार्या । **अभिविधौ** । अभिविधौ किम् ? । संरावः । वासरूपेण घञ् कस्थ न भवति, पुनर्भावग्रहणात् । नच कर्तृभिन्नकारकनिवृत्तये भावग्रहणमिति वाच्यं, पूर्वसूत्र इव शक्तिस्वाभाव्यादेवेनुणोऽप्रवृत्तेः । ल्युटा तु समावेश इष्यते-संरवणमिति । तच्च बाहुलकाल्लभ्यत इत्याकरः । **अणिनुणः** । अनेनेनुणो णानुबन्धो विशेषणार्थ इति ध्वनितम् । **सांराविणमिति** । समन्ताच्छब्द इत्यर्थः । संशब्दोऽभिविधिद्योतकः । पूर्ववत्सगतिकादण् । अणस्तद्धितत्वादादिवृद्धिः । 'इनण्यनपत्ये' इत्यनपत्याऽणि इनः प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपेन न निवृत्तिः । स्वभावतश्चेदमणिनुणन्तं नपुंसकम् । **आक्रोशे** । 'ग्रहवृदृ' इति–अपि प्राप्तेऽयमारम्भः । **अवग्रहः पदस्येति** । छेदविशेष इत्यर्थः । **निग्रहो**–निरोधः । **प्रे लिप्सायाम्** । लिप्सायां किम् ? । देवदत्तस्य प्रग्रहः । प्रकृष्टोऽभिनिवेश इत्यर्थः । **पात्रप्रग्राहेणेति** । भिक्षापात्रोपादानेन । पात्रं गृहीत्वेति यावत् । **नौ वृ** । नौ

---

बा.] धर्यम् । **प्राणिनां समूहः सङ्घ इति** । व्याख्यानमेवात्र शरणम् । **कर्मव्यतिहारे** । कर्मव्यतिहारः=क्रियाविनिमयः । परस्परकरणम्, तस्मिन्विषये धातोर्णच् स्यात् स्त्रीत्वे गम्ये इत्यर्थः । अत्र 'अकर्तरि च कारके' इति तु नानुवर्तते, व्याख्यानादिति बोध्यम् । **व्यावक्रोशीति** । परस्परं निन्दक इत्यर्थः । **व्यावहासीति** । परस्परं हासक इत्यर्थः । उभयत्रापि 'णचः स्त्रियाम'मिति स्वार्थिकोऽञ् तद्धितः । 'टिड्ढे'ति ङीप् । **अभिविधौ** । कार्त्स्न्येन सम्बन्धः—**अभिविधिः**, तस्मिन्गम्ये इनुण्स्याद्भावेऽर्थे इत्यर्थः । 'अणिनुण' इत्यनेन सूत्रेण इनुणन्तादण् तद्धितः स्वार्थिक इत्यर्थः । **आदिवृद्धिरिति** । 'तद्धितेष्वचामादे'रित्यनेने'ति शेषः । सांराविन्—अ इति स्थिते 'नस्तद्धिते' इति टिलोपमाशङ्क्य प्रकृतिभावं स्मारयति—**इनण्यनपत्य इति** । **स्वभावत इति** । लोकाश्रयत्वाल्लिङ्गस्येति भावः । **आक्रोशेऽवन्योर्ग्रहः** । **एतयोरिति** । 'उपपदयो'रिति शेषः । 'ग्रहवृदृनिश्चिगमश्चे'ति वक्ष्यमाणस्य अप्प्रत्ययस्याऽपवादः । 'अवग्रह' इत्यस्य विवरणं—**छेदः पदस्येति** । पुरोहितमित्यादिसमस्तपदस्य पुरः—हितमित्यादि विभज्य पठनमवग्रह इत्यर्थः । अत्र शापानवगमाच्च घञ् । 'निग्रह' इत्यस्य विवरणं —**निरोधश्चोरस्येति** । **प्रे लिप्सायाम्** । प्र इत्युपपदे ग्रहधातोर्घञ् स्याल्लिप्सायामित्यर्थः । 'ग्रहवृदृनिश्चिगमश्चे'त्यपोऽपवादः । **पात्रप्रग्राहेण चरति भिक्षुरिति** । 'भिक्षालाभाये'ति गम्यते । **अन्यत्रेति** । लिप्सायामगम्यायामित्यर्थः । **परौ यज्ञे** । परीत्युपपदे ग्रहधातोर्घञ्स्याद्यज्ञे प्रयुज्यमाने इत्यर्थः । 'ग्रहवृदृ' इत्यपोऽपवादः । **उत्तरः परिग्राह इति** । 'वसवस्त्वा' इत्यादिमन्त्रैः पूर्वः परिग्राहो वेदेरुक्तः । तदपेक्षया द्वितीय इत्यर्थः । **स्फ्येनेति** ।

---

शे.]—भावे घञ् । **कर्मव्यतिहारे** । णचश्चकारो 'णचः स्त्रिया'मित्यादौ विशेषणार्थः । **आक्रोशेऽवन्योः** । अनन्तरोऽपीनुण् न सम्बध्यते, अस्वरितत्वात् ।

धान्ये किम् ? । निवरा कन्या । क्तिन्विषयेऽपि बाहुलकादप् । प्रवरा सेतिवत् । **उदि श्रयतियौतिपूद्रुवः** ।३।३।४९। उच्छ्रायः । उद्यावः । उत्पावः । उद्द्रावः । कथं पतनान्ताः समुच्छ्रया इति ? । बाहुलकात् । **विभाषाऽऽङि रुप्लुवोः** ।३।३।५०। आरावः । आरवः । आप्लावः । आप्लवः । **अवे ग्रहो वर्षप्रतिबन्धे** ।३।३।५१। विभाषेति वर्तते । अवग्राहः । अवग्रहः । वर्षप्रतिबन्धे किम् ? । अवग्रहः पदस्य । **प्रे वणिजाम्** ।३।३।५२। प्रे ग्रहेर्घञ् वा, वणिजां सम्बन्धी चेत्प्रत्ययार्थः । तुलासूत्रमिति यावत् । तुलाप्रग्राहेण चरति, तुलाप्रग्रहेण [वा] । **रश्मौ च** ।३।३।५३। प्रग्रहः । प्रग्राहः । **वृणोतेराच्छादने** ।३।३।५४। विभाषा प्र इत्येव । प्रावारः । प्रवरः । **परौ भुवोऽवज्ञाने** ।३।३।५५। परीभावः । परिभवः । अवज्ञाने किम् ? । सर्वतो भवनं परिभवः । **परच्** ।३।३।५६। चयः । जयः । * **भयादीनामुपसङ्ख्यानम्** । नपुंसके क्तादिनिवृत्त्यर्थम् । भयम् । वर्षम् । **ऋदोरप्** ।३।३।५७। [ऋवर्णान्तादुवर्णान्तादप्] । करः । गरः । शरः । यवः । लवः । स्तवः ।

---

**त.]** उपपदे वृञो भावादौ घञ् स्यात् । **निवरा कन्येति** । 'ग्रहवृद' इत्यादिना कर्मण्यप् । ननु स्त्रीत्वविशिष्टे कर्मणि परत्वात्, क्तिना भाव्यम् 'अजब्भ्यां स्त्रीखलनाः' इत्युक्तेरत आह—**क्तिन्विषयेऽपीति** । एवं च प्रायेण भावार्थ एव 'घञजबन्ताः पुंसी'ति द्रष्टव्यम् । **रश्मौ च** । रथादियुक्तानामश्वानां संयमनार्था रज्जुः—**रश्मिः** । तस्यामभिधेयायां प्रे उपपदे ग्रहेर्घञ्वा स्याद्भावादौ । इह द्विःकृत्वो ग्रहिरुपात्तः, सकृदेव तु वक्तुं शक्यः । तथाहि—'उदि ग्रहः', 'समि मुष्टौ', 'आक्रोशेऽवन्योः', 'प्रे लिप्सायाम्', 'परौ यज्ञे', 'अवे वर्षप्रतिबन्धे विभाषा' 'प्रे वणिजा'मित्यादि 'परौ भुवोऽवज्ञाने' इत्यस्यानन्तरम् 'आङि रुप्लुवोः' इत्यस्तु, तथा तु न कृतमित्येव । **वृणोते** । [**प्रावारं इति** । 'उपसर्गस्य घञ्यमनुष्ये बहुल'मित्युपसर्गस्य दीर्घः] । आच्छादने किम् ? । प्रवरो गौः । प्रशस्त इत्यर्थः । **परिभावः** ।'अनादरः परिभवः परीभावस्तिरस्क्रिया' इत्यमरः । परत्वाद्धि क्तल्युटौ प्राप्तौ । तथा च पूर्वविप्रतिषेधोऽयं फलितः । एवं च वाऽसरूपन्यायोऽत्र न प्रवर्तते, अनपवादत्वादिति भावः । **वर्षमिति** । 'वृषभो वर्षणा'दिति भाष्यप्रयोगात्तु ल्युडपि । वर्षणम् । **ऋदोरप्** । ऋच्च उच्च तयोः समाहारे सौत्रं पुंस्त्वम् । 'ऋदो' रित्ययं न तकारः, किं तर्हि ? । दकारः ।

---

**वा.]** स्फ्यः खड्गाकृतिर्दारुमयः पात्रविशेषः । तेन समन्ताल्लेखया वेदिदेशस्य स्वीकरणं परिग्राह इत्यर्थः । **नौ वृ धान्ये** । नीत्युपपदे वृधातोर्घञित्यर्थः । 'ग्रहवृद' इत्यपोऽपवादः । **नीवारा इति** । 'उपसर्गस्य घञ्यमनुष्ये'इति दीर्घः । **निवरा कन्येति** । नितरां वरणीयेत्यर्थः । 'ग्रहवृद'-इत्यप् । ननु 'प्रवरा कन्ये'त्यत्र कथमप्, स्त्रियां क्तिनः प्रसङ्गात्, नह्यत्र वाऽसरूपविधिः प्रवर्तते, 'अजब्भ्यां स्त्रीखलनाः, [स्त्रियाः खलनौ] विप्रतिषेधेने'त्युक्तेरित्यत आह—**क्तिन्विषयेऽपीति** । तत्र वृद्धप्रयोगं प्रमाणयति—**प्रवरा सेना, प्रवरा गौरितिवदिति** । ननु 'घञजबन्ताः पुंसी'त्यबन्तस्य पुंस्त्वात्स्त्रीत्वं दुर्लभमित्यत आह—**एवं चेति** । उक्तवृद्धप्रयोगादित्यर्थः । लोकाश्रयत्वाल्लिङ्गस्येति भावः । **उदि श्रयति** । उदित्युपपदे श्रि, यु, पू, द्रु, एभ्यो घञित्यर्थः । अजपोरपवादः । **विभाषाऽऽङि रुप्लुवोः** । पञ्चम्यर्थे षष्ठी । आङि उपपदे रु, प्लु, आभ्यां घञित्यर्थः । अपोऽपवादः । **अवे ग्रहो** । अव इत्युपपदे ग्रहधातोर्घञ्वा स्याद्वर्षप्रतिबन्धे इत्यर्थः । पक्षे 'ग्रहवृद' इत्यप् । [**देवस्येति** । पर्जन्यस्येत्यर्थः । कर्तरि षष्ठी । तदाह—**देवकर्तृकमिति**] । **अवग्रहः पदस्येति** । समस्तस्य पदद्वयस्य विच्छिद्य पाठ इत्यर्थः । **प्रे वणिजाम्** । 'ग्रहवृद' इत्यपोऽपवादः । **तुलासूत्रमिति** । व्याख्यानादिति यावत् । **तुला=घटा** । **रश्मौ च** । प्रे उपपदे ग्रहधातोर्घञ् रश्मावपि वाच्ये इत्यर्थः । चकारः उक्तसमुच्चये । **वृणोतेराच्छादने** । प्रे उपपदे वृधातोर्घञ्वा स्यादाच्छादने इत्यर्थः । पक्षे 'ग्रहवृद' इत्यप् । **प्रावार इति** । पट इत्यर्थः । 'उपसर्गस्य घञी'ति दीर्घः । **परौ भुवोऽवज्ञाने** । परीत्युपपदे अवहेलनवृत्तेर्भूधातोर्घञ्स्यादित्यर्थः । **परच्** । इवर्णान्ताद्धातोरच्स्याद्भावे अकर्तरि च कारके इत्यर्थः । घञपवादः । **भयादीनामिति** । भयादीनां सिद्धये भीप्रभृतिधातुभ्योऽच्प्रत्ययस्योपसङ्ख्यानमित्यर्थः । ननु 'एरजि'त्येव सिद्धे भयग्रहणं व्यर्थमित्यत आह—**नपुंसके क्तादिनिवृत्त्यर्थमिति** । आदिना ल्युडादिसङ्ग्रहः । अन्यथा परत्वात् क्तादयः स्युः । वाऽसरूपविधिस्तु नाऽत्र भवति, अपवादत्वाऽभावादिति भावः । **वर्षमिति** । अत्र नपुंसके क्तल्युडादि बाधित्वा अच् अपूर्वो विधीयते । **ऋदोरप्** । पञ्चम्यर्थे षष्ठी । ऋत्, उ, अनयोः समाहारे सौत्रं पुंस्त्वम् । ऋदन्तादुवर्ण-

---

**शे.]** वृणोतेरा । समुदायेनाच्छादने गम्ये इत्यर्थः । आच्छेति किम् ? । प्रवरा गौः । 'कल्प्यादिभ्य एरज्ने'ति वार्तिकम् । कल्पः, अर्थः, मन्त्रः । 'एरजण्यन्ताना'मिति त्वनार्षम् । अचश्चकारः 'थाथे'ति सूत्रे विशेषणार्थः । **निश्चय इति** । अभिधानं-

पवः । **वृक्षासनयोर्विष्टरः** ।८।३।९३। अनयोर्विपूर्वस्य स्तः षत्वं निपात्यते । विष्टरो वृक्ष आसनं च । वृक्षे किम् ? । वाक्यस्य विस्तरः । **ग्रहवृदृनिश्चिगमश्च** ।३।३।५८। अप् स्यात् । घञचोरपवादः । ग्रहः । वरः । दरः । निश्चयः । गमः । ॐ **वशिरण्योरुपसङ्ख्यानम्** । वशः । रणः । ॐ **घञर्थे कविधानम्** । प्रस्थः । विघ्नः । ॐ **द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम्** । चक्रम् । चिक्लिदम् । [चङ्क्रमः] । चक्रसः । **उपसर्गेऽदः** ।३।३।५९। अप् स्यात् । **घञपोश्च** ।२।४।३८। अदेर्घस्लृ स्याद्घञि अपि च । प्रघसः । विघसः । उपसर्गे किम् ? । घासः । **नौ ण च** ।३।३।६०। नावुपपदे अदेर्णः स्यादप् च । न्यादः । निघसः । **व्यधजपोरनुपसर्गे** ।३।३।६१। अप् स्यात् । व्यधः । जपः । उपसर्गे तु-आव्याधः । उपजापः । **स्वनहसोर्वा** ।३।३।६२। अप् । पक्षे घञ् । स्वनः । स्वानः । हसः । हासः । अनुपसर्गे इत्येव । प्रस्वानः । प्रहासः । **यमः समुपनिविषु च** ।३।३।६३। एषु अनुपसर्गे च यमेरप् वा । संयमः । संयामः । उपयमः । उपयामः । नियमः । नियामः । वियमः । वियामः । यमः । यामः । **नौ गदनदपठस्वनः** ।३।३।६४। अप् वा स्यात् । निगदः । निगादः । निनदः । निनादः । निपठः । निपाठः । निस्वनः । निस्वानः । **क्वणो वीणायां च** ।३।३।६५।

---

त.]'निरभ्योः पूल्वोः' इत्यपवादतया घञ्विधानाज्ज्ञापकाद्दीर्घान्तादप्युदाहरति–लवः । **पव इति** । **घञचोरपवाद इति** । 'निश्चय' इत्यत्राऽचः प्राप्तिरन्यत्र घञ इति विवेकः । हस्तादाने तु प्रपूर्वकाच्चिनोतेर्घञुदाहृतः । **वशिरण्योरिति** । घञि प्राप्ते वचनम् । वशनं वशः । रणन्ति शब्दं कुर्वन्त्यस्मिन्निति रणः=सङ्ग्रामः । व्यद्यते विशेषेण भक्ष्यते इति **विघसः**=वैश्वदेवशिष्टमन्नम् । **घासश्चतुष्पदां** भक्ष्यम् । 'शष्पं बालतृणं घासः' इत्यमरः । **उपजापो**–मन्त्रभेदः । 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः । स्वान'–इत्यमरः । **क्वणो** । 'निक्वाणो निक्वणः क्वाणः क्वणः

---

बा.]न्ताच्च अप् स्याद्भावे अकर्तरि च कारके इत्यर्थः । घञपवादः । **ग्रहवृदृ** । ग्रह, वृ,दृ,निश्चि,गम्, एषां द्वन्द्वः । 'अप् स्या'दिति शेषः । **घञचोरिति** । निष्पूर्वाच्चिञोऽजपवादः; इतरेभ्यस्तु घञपवाद इति विवेकः । **वशिरण्योरिति** । वार्तिकम् । घञपवादोऽप् । **वश इति** । वश कान्तौ, भावे अप् । इच्छेत्यर्थः । यद्यपि वश्धातुश्छान्दसस्तथापि 'वष्टि भागुरि'रित्यादिप्रयोगाल्लोकेऽपि प्रयुज्यते इति भावः । **रण इति** । रणन्ति शब्दायन्ते अस्मिन्निति रणः=सङ्ग्रामः । **घञर्थे कविधानमिति** । वार्तिकमिदम् । 'स्थास्नापाव्यधिहनियुध्यर्थ'मिति वार्तिकशेषो भाष्ये पठितः । **प्रस्थ इति** । प्रतिष्ठन्तेऽस्मिन् धान्यानीति प्रस्थः । 'आतो लोप इटि चे'त्यात्लोपः । प्रस्नान्त्यस्मिन्निति प्रस्नः । प्रपिबन्त्यस्यामिति प्रपा । आविध्यन्त्यस्मिन्नित्याविधम् । 'ग्रहिज्यावयिव्यधी'ति संप्रसारणम् । इति सिद्धवत्कृत्याह—**विघ्न इति** । विहन्त्यस्मिन्मनांसीति विघ्नः । 'गमहने'त्युपधालोपः । 'हो हन्ते'रिति कुत्वम् । आयुध्यतेऽनेनेत्यायुधमित्यप्युदाहार्यम् । **द्वित्वप्रकरणे इति** । 'एकाचो द्वे प्रथमस्ये'ति द्वित्वप्रकरणे इत्यर्थः । **के कृञादीनामिति** । कप्रत्यये परे कृञादीनामेकाचः प्रथमस्य द्वे स्त इत्यर्थः । **चक्रमिति** । 'स्थास्ना' इत्यस्य उपलक्षणत्वात् कृञः कः । क्रियते शत्रुवधः अनेनेति विग्रहः । कित्त्वान्न गुणः । द्वित्वम् । अभ्यासकार्यम् । **चिक्लिदमिति** । कः । द्वित्वादि । **चङ्क्रम इति** । पूर्ववत् । **उपसर्गेऽदः** । 'अद' इति छेदः । 'अप् स्या'दिति शेषः । उपसर्गे उपपदे अदधातोरप् स्यादित्यर्थः । घञोऽपवादः । **घञपोश्च** । 'अदो जग्धि'रित्यतोऽद इति, 'लुङ्सनोर्घस्लृ' इत्यतो घस्लृ इति चानुवर्तते । तदाह-**अदेरिति** । **अपि चेति** । अप्प्रत्यये परे चेत्यर्थः । **विघस इति** । अतिथिशिष्टमन्नमुच्यते । **घास इति** । 'शष्पं बालतृणं घासः' इत्यमरः । **नो ण च** । णेति लुप्तप्रथमाकम् । **निघस इति** । 'घञपोश्चे'ति घस्लृभावः । **व्यधजपोः** । पञ्चम्यर्थे षष्ठी । 'अप् स्या'दिति शेषः । व्यध, जप्, आभ्याम् अप् स्यात्, न तूपसर्ग इत्यर्थः । **उपजापो मन्त्रभेद इति** । पैशुन्यमित्यर्थः । **स्वनहसोर्वा** । पञ्चम्यर्थे षष्ठी । 'अ'बिति शेषः । स्वन, हस, आभ्यामब्वेत्यर्थः । **यमः समुप** । सम्, उप, नि, वि, एषां द्वन्द्वः । चकारादनुपसर्गे इति समुच्चीयते । तदाह—**एष्वनुपसर्गे चेति** । **नौ गदनद** । गद, नद, पठ, स्वन, एषां द्वन्द्वः । **अब्वेति** । शेषपूरणमिदम् । **क्वणो वीणायां च** । **नाविति** । नौ उपपदे च, तदितरस्मिन्नुपसर्गे असति च वीणाविषयाच्चेत्यर्थः । ननु क्वणश्चे-

---

शे.] सामर्थ्येन थाथादिस्वरो न प्रवर्तते । एवञ्चोत्तरपदप्रकृतिस्वरेण मध्योदात्तमेवद् । एतेनाऽचैव सिद्धं,'थाथघ'मित्यस्य प्रवृत्त्या स्वरे विशेषाऽभावात । न च 'हस्तादाने चे'रिति घञो बाधनार्थम्, अरतेयेऽस्मादपोऽनिष्टेरिति परास्तम् । **घञर्थे क इति** । 'स्थाश्नापाव्यधिहनियुध्यर्थ'मित्युदाहरणमात्रं बोध्यम् । **प्रस्थविघ्नयोः**–अधिकरणे कः । 'प्रतिष्ठन्तेऽस्मिन् धान्यानीति प्रस्थः । विघ्नन्ति तस्मिन्मनांसीति विघ्नः' इति सभाष्योक्तेः । **व्यधजपो** । अनुपसर्गे इत्यस्योपसर्गे नेत्यर्थः । तदाह–**व्यध इति** । **उपजापो** मन्त्रभेदः । **अनुपसर्गे चेति** । उपसर्गाऽभावे चेत्यर्थः । तदाह–**क्वाण इति** ।

नावनुपसर्गे च वीणाविषयाच्च क्वणतेरप् वा स्यात् । वीणाग्रहणं प्राद्यर्थम् । निक्वणः । निक्वाणः । क्वणः । क्वाणः । वीणायां तु-प्रक्वणः । प्रक्वाणः । **नित्यं पणः परिमाणे** ।३।३।६६। अप् स्यात् । मूलकपणः । शाकपणः । व्यवहारार्थं मूलकादीनां परिमितो मुष्टिर्बध्यते सोऽस्य विषयः । परिमाणे किम् ? । पाणः । **मदोऽनुपसर्गे** ।३।३।६७। धनमदः । उपसर्गे तु-उन्मादः । **प्रमदसंमदौ हर्षे** ।३।३।६८। हर्षे किम् ? । प्रमादः । [संमादः] । **समुदोरजः पशुषु** ।३।३।६९। संपूर्वोऽजिः समुदाये, उत्पूर्वश्च प्रेरणे, तस्मात्पशुविषयकादप् स्यात् । अघञपोरित्युक्तेर्वीभावो न । समजः पशूनां सङ्घः । उदजः पशूनां प्रेरणम् । पशुषु किम् ? । समाजो ब्राह्मणानाम् । उदाजः क्षत्रियाणाम् । **अक्षेषु ग्लहः** ।३।३।७०। अक्षशब्देन देवनं लक्ष्यते । तत्र यत्पणरूपेण ग्राह्यं तत्र 'ग्लह' इति निपात्यते । अक्षस्य ग्लहः । 'व्यात्युक्षीमभिसरणग्लहामदीव्यन्' । अक्षेषु किम् ? । पादस्य ग्रहः । **प्रजने सर्तेः** ।३।३।७१। प्रजनः-प्रथमगर्भग्रहणम् । गवामुपसरः । कथमवसरः प्रसर इति ? । अधिकरणे 'पुंसि संज्ञाया'मिति घः । **ह्वः संप्रसारणं च न्यभ्युपविषु** ।३।३।७२। निहवः । अभिहवः । उपहवः । विहवः । एषु किम् ? । प्रह्वायः । **आङि युद्धे** ।३।३।७३। आहूयन्तेऽस्मिन्नित्याहवः । युद्धे किम् ? । आह्वायः

---

त.] क्वणनमित्यपि । वीणायाः क्वणिते प्रादेः प्रक्वाणप्रक्वणादयः' इत्यमरः । **मदो** । अनुपसर्गे सुप्युपपदे नित्यमप् स्यात्ग्लावादौ । **प्रमद** । 'प्रसंम्यां हर्षे' इति तु नोक्तम्, प्रसंमदः, संप्रमद इति हर्षे माभूदिति । **प्रजने सर्तेः** । प्रजननं प्रजनः । भावे घञ् । 'जनिवध्यो'रिति वृद्धिनिषेधः । प्रशब्दबलादत्र जनेरर्थान्तरत्वम् । प्रतिष्ठते इत्यत्र प्रादुर्भावो यथा । तदेतदाह-**प्रथमगर्भग्रहणमिति** । काशिकानुरोधेनेदमुक्तम् । प्रथमं द्वितीयं वेत्यनाग्रहः, किन्तु गर्भग्रहण-

---

बा.]त्येतावता नौ उपसर्गे च क्वणोऽब्वेत्यर्थलाभाद्वीणाविषयादपि क्वणः सिद्धेर्वीणायामिति व्यर्थमित्यत आह-**वीणाग्रहणं प्राद्यर्थमिति** । सोपसर्गार्थमित्यर्थः । **नित्यं पणः** । 'अ'बिति शेषः । 'पण व्यवहारे' इत्यस्मान्नित्यमप् स्यात्, परिमाणविशेषे गम्ये इत्यर्थः । नित्यग्रहणाद्वाग्रहणं निवृत्तम् । **व्यवहारार्थमिति** । विक्रयार्थमित्यर्थः । पण्यते विक्रयार्थं बध्यते मुष्टिमात्रमिति कर्मण्यप् । मूलकानां पण इति विग्रहः । **मदोऽनुपसर्गे** । अनुपसर्गे उपपदे मदेरबित्यर्थः ।

**प्रमदसंमदौ** । प्रमद, संमद, एतावबन्तौ निपात्येते हर्षे गम्ये इत्यर्थः । कन्यानां प्रमदः, कोकिलानां संमद इत्युदाहरणम् । 'प्रसमोर्मदो हर्षे' इत्येव सिद्धे निपातनं रूढिपरिग्रहार्थम् । **समुदोरजः** । समुदोः अज इति च्छेदः । सम्, उत्, अनयोरुपपदयोरित्यर्थः । **अक्षेषु ग्लहः** । अक्षशब्दे उपपदे इत्यर्थे अक्षेष्विति बहुवचनानुपपत्तिरित्यत आह—**अक्षशब्देनेति** । **लक्ष्यते इति** । प्रायेण देवनस्य अक्षसाध्यत्वादिति भावः । **तत्रेति** । देवने इत्यर्थः । **पणरूपेणेति** । देवने जितवते पराजितेन देयं द्रव्यं पणं, तेन रूपेण ग्राह्यं यद्द्रव्यं तस्मिन्कर्मणि 'ग्रह उपादाने' इति धातो'र्ग्रहवृद' इत्यप्प्रत्ययान्तः कृतलत्वो ग्लहशब्दो निपात्यते इत्यर्थः । 'गृहू ग्रहणे' इत्यत्र तु 'ग्लह चे'ति पठितम् । तत्र ग्लहेरप्प्रत्ययो निपात्यते । घञपवादः । **अक्षस्य ग्लह इति** । अक्षक्रीडायां पणत्वेन ग्राह्यमित्यर्थः । 'पणोऽक्षेषु ग्लहः' इत्यमरः । अत्र देवनत्वरूपेण देवनमक्षशब्दस्य लक्ष्यं, न त्वक्षदेवनत्वेनेत्यभिप्रेत्योदाहरति—**व्यात्युक्षीमिति** । माघकाव्यस्थमिदम् । 'दिवस्तदर्थस्ये'ति करणस्य कर्मत्वाद्द्वितीया । **अभिसरणग्लहाम्** । अभिसरणं=चौर्यसुरतार्थमभिगमनम्, तदेव ग्लहः=पणरूपेण ग्राह्यं द्रव्यं यस्यास्तथाविधां, **व्यात्युक्षीम्**—'उक्ष सेचने' परस्परं जलसेचनं व्यात्युक्षी । ताम् । तयेत्यर्थः । 'कर्मव्यतिहारे णच् स्त्रिया'मिति णच् । व्यत्युक्षशब्दात् 'णचः स्त्रियाम'ञिति स्वार्थे अञ् तद्धितः । आदिवृद्धिः । 'टिड्ढे'ति ङीप् । क्रीडायां जितवते पुंसे अभिसरणमेव पणत्वेन समयबन्धं कृत्वा प्रवृत्तेन परस्परजलसेचनेन अक्रीडन्निति यावत् । अत्र जलक्रीडायामभिसरणात्मकपणस्य अक्षसाधनकत्वाऽभावेऽपि ग्लहेरब्भवत्येव, सूत्रे अक्षशब्देन देवनसामान्यस्य विवक्षितत्वात् । अक्षक्रीडाया एव विवक्षितत्वे त्विह ग्लहेरप् न स्यादिति भावः । **अक्षेषु किमिति** । देवने किमित्यर्थः । **पादस्य ग्रह इति** । वन्दनाद्यर्थमिति भावः । अत्र ग्रहधातोः 'ग्रहवृद' इत्यप् । न तु लत्वम् । ग्लहेस्तु घञि 'पादस्य ग्लाह' इत्येव । **प्रजने सर्तेः** । **प्रथमगर्भग्रहणमिति** । प्रशब्द आद्यर्थकः । प्रथमं जायते इति भावे घञ् । 'जनिवध्योश्चे'ति नोपधावृद्धिरिति भावः । प्रजनाऽर्थकात्सृधातोरप्स्यादिति फलितम् । **कथमिति** । उपसरणं प्रसरणमित्यर्थे प्रजनाऽप्रतीतेरबभावाद्घञि उपधावृद्धिः स्यादित्याक्षेपः । समाधत्ते—**अधिकरण इति** । उपसरत्यस्मिन्निति, प्रसरत्यस्मिन्निति च अधिकरणकारके कालेऽर्थे 'पुंसि संज्ञायां घः प्रायेणे'ति घप्रत्यय इत्यर्थः । **ह्वः संप्रसारणं च** । नि, अभि, उप, वि एषु चतुर्षूपपदेषु ह्वयतेरप्स्यात्संप्रसारणं च । घञोऽपवादः । **निहव इति** । अप् । वस्य

---

शे.] मदोऽनु । उपसर्गभिन्ने उपपदे इत्यर्थः । ग्लह इत्यत्राऽप्प्रत्ययो लत्वं च निपात्यते ।

निपानमाहावः ।३।३।७४। आङ्पूर्वस्य ह्वयतेः संप्रसारणमप् वृद्धिश्चोदकाधारश्चेद्वाच्यः। 'आहावस्तु निपानं स्यादुपकूपजलाशये' । भावेऽनुपसर्गस्य ।३।३।७५। अनुपसर्गस्य ह्वयतेः संप्रसारणमप् च स्याद्भावे । हवः । हनश्च वधः ।३।३।७६। अनुपसर्गाद्धन्ते र्भावे अप् स्यात्, वधादेशश्चान्तोदात्तः। 'वधेन दस्युम्'। चाद्घञ् । घातः । मूर्तौ घनः ।३।३।७७। मूर्तिः-काठिन्यं, तस्मिन्नभिधेये हन्तेरप्स्यात्, घनश्चादेशः । अभ्रघनः । कथं सैन्धवघनमानयेति ? । धर्मशब्देन धर्मी लक्ष्यते । अन्तर्घनो देशे ।३।३।७८। वाहीकग्रामविशेषस्य संज्ञेयम् । 'अन्तर्घण' इति पाठान्तरम् । अगारैकदेशे प्रघणः प्रघाणश्च ।३।३।७९। द्वारदेशे द्वौ प्रकोष्ठावलिन्दौ आभ्यन्तरो बाह्यश्च । तत्र बाह्ये प्रकोष्ठे निपातनमिदम् । प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते इति प्रघणः । [प्रघाणः]। कर्मण्यप् । पक्षे वृद्धिः । उद्घनोऽत्याधानम् ।३।३।८०। अत्याधानमुपरि स्थापनम् । यस्मिन् काष्ठे अन्यानि काष्ठानि स्थापयित्वा तक्ष्यन्ते तदुद्घनः । अधिकरणेऽप् । अपघनोऽङ्गम् ।३।३।८१। अङ्गं शरीरावयवः । स चेह न सर्वः, किंतु पाणिः पादश्चेत्याहुः । करणेऽप् । अपघातोऽन्यः । करणेऽयोविद्रुषु ।३।३।८२। एषु हन्तेः करणेऽप्स्याद्घनादेशश्च । अयो हन्यतेऽनेनेत्ययोघनः । विघनः । द्रुघनः । द्रुघण इत्येके । 'पूर्वपदात्संज्ञाया'मिति णत्वम् । संज्ञैषा कुठारस्य । द्रुर्वृक्षः । स्तम्बे क च ।३।३।८३। स्तम्बे उपपदे हन्तेः करणे कः स्यात् । अप् च । अप्पक्षे घनादेशश्च । स्तम्बघ्नः । स्तम्बघनः । करण इत्येव । स्तम्बघातः । परौ घः ।३।३।८४। परौ हन्तेरप् स्यात्करणे । घशब्दश्चादेशः । परिहन्यतेऽनेनेति परिघः । परेश्च घाङ्कयोः ।८।२।२२। परे रेफस्य लो वा स्याद्घशब्दे अङ्कशब्दे च । पलिघः । परिघः । पर्यङ्कः । पल्यङ्कः । इह 'तरप्तमपौ घः' इति कृत्रिमस्य न ग्रहणं, व्याख्यानात् । उपघ्न आश्रये ।३।३।८५। उपपूर्वाद्धन्तेरप् स्यादुपधालोपश्च । आश्रयशब्देन सामीप्यं लक्ष्यते । पर्वतेनोपहन्यते सामीप्येन गम्यते इति पर्वतोपघ्नः । सङ्घोद्घौ गणप्रशं-

त.] मित्यन्ये । हनश्च वधः । अन्तोदात्त इति । सूत्रे वधशब्दोऽन्तोदात्ततयोच्चारित इति भावः ।
अगारैक । 'प्रघाणप्रघणाऽलिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः । सङ्घोद्घौ । 'मतल्लिका मचर्चिका प्रकाण्डमुद्घ-

बा.]संप्रसारणमुकारः, पूर्वरूपं, तस्य गुणाऽवादेशौ । प्रह्वाय इति । घञि वृद्ध्यायादेशौ । आङि युद्धे । आङि उपपदे ह्वयतेरप्; संप्रसारणं च युद्धे वाच्ये इत्यर्थः । निपानमाहावः । आहाव इति निपात्यते निपानं चेद्वाच्यमित्यर्थः । फलितमाह-आङ्पूर्वस्येति । हनश्च वधः । चकारो व्युत्क्रमः । तदाह-वधादेशश्चेति । अन्तोदात्त इति । सूत्रे वध इत्यन्तोदात्तस्योच्चारणादिति भावः । यद्यपि स्वतन्त्रवधेरेव 'घञर्थे कविधान'मित्येव सिध्यति तथाप्यनुपसर्गादिति विशेषं वक्तुमिदम् । वस्तुतो वधिः स्वतन्त्रो नास्त्येवेति शब्देन्दुशेखरे । वधेन दस्युमिति । ऋग्वेदस्थोऽयं मन्त्रः स्वरप्रदर्शनाय पठितः । घात इति । 'हनस्तोऽचिण्णलो'रिति तत्वम् । 'चजो'रिति कुत्वम् । मूर्तौ घनः । अभ्रघन इति । अभ्रस्य काठिन्यमित्यर्थः,भाव इत्यनुवृत्तेः । कथमिति । सैन्धवकाठिन्यस्यानयनाऽन्वयाऽसंभवादिति भावः। समाधत्ते-धर्मशब्देनेति । अन्तर्घनो देशे । देशविशेषे वाच्ये अन्तरित्युपपदे हन्तेरप्प्रकृतेर्घनादेशश्चेत्यर्थः । निपातनात्'पूर्वपदात्संज्ञाया'मिति णत्वाऽभावः। अगारैकदेशे । अगारैकदेशशब्देन अगारैकदेशविशेषो विवक्षितः, व्याख्यानात् । तदाह-द्वारैकदेश इत्यादि । प्रकोष्ठौ दीर्घचतुरस्रधिष्ण्यौ, तौ अलिन्दनामानौ प्रवेशयोग्यौ । उद्घनोऽत्याधानम् । अत्याधानं चेदुत्पूर्वाद्धन्तेरप् । हस्य घत्वं च 'उद्घन' इति निपात्यते इत्यर्थः । अपघनोऽङ्गम् । अङ्गं वाच्यं चेदपपूर्वाद्धन्तेरप् । हस्य घत्वं चाऽपघन इति निपात्यत इत्यर्थः। पाणिः पादश्चेति । अत्र व्याख्यानमेव शरणम् । करणे इति । अपहन्यतेऽनेनेति करणव्युत्पत्तेरिति भावः । करणेऽयो । अयस्, वि, द्रु एषां द्वन्द्वः । द्रुघन इति । असंज्ञात्वात् 'पूर्वपदात्संज्ञाया'मिति न णत्वमिति भावः । संज्ञात्वमते आह-द्रुघण इति । स्तम्बे क च । केति लुप्तप्रथमाकम् । अप् च पक्षे इति । अप्संबद्धस्यैव घनादेशस्यानुवृत्तेरिति भावः । स्तम्बघ्न इति । कप्रत्यये सति 'गमहने'त्युपधालोपः । स्तम्बघात इति । घञि 'चजो'रिति कुत्वम् । परौ घः । 'करणे हन्' इति, अबिति चानुवर्तते । तदाह—परौ हन्तेरिति । परेश्च घाङ्कयोः । रेफस्य लो वेति । 'कृपो रो लः' इत्यतो 'रो ल' इति, 'अचि विभाषा' इत्यतो विभाषेति चानुवर्तत इति भावः । ननु 'कृत्रिमाऽकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः' इति न्यायादिह घसंज्ञकयोस्तरप्तमपोरेव ग्रहणं स्यात्तु घशब्दस्य, 'स्वं रूपं शब्दस्ये'त्यत्राऽशब्दसंज्ञेति पर्युदासाच्चेत्यत आह—इहेति । उपघ्न आश्रये । आश्रये गम्ये उपघ्न इति निपात्यते इत्यर्थः । फलितमाह—उपपूर्वादिति । लक्ष्यते इति । व्याख्यानादिति भावः । सङ्घोद्घौ । यथासङ्ख्यमन्वयः ।

शे.] हनश्च व । 'चो' 'वध' इत्यस्यानन्तरं प्रत्ययसमुच्चायको [ 'योज्यो'], व्याख्यानात् । अत्र वधादेशोऽन्तोदात्तो निपात्यत

त्ययोः ।३।३।८६। संहननं सङ्घः । भावेऽप् । उद्धन्यते उत्कृष्टो ज्ञायते इत्युद्घः । कर्मण्यप् । गत्यर्थानां बुद्ध्यर्थत्वाद्धन्तिर्ज्ञाने । **निघो निमितम्** ।३।३।८७। समन्तान्मितं निमितम् । निर्विशेषं हन्यन्ते ज्ञायन्ते इति निघा वृक्षाः । समारोहपरिणाहा इत्यर्थः । **ड्वितः क्त्रिः** ।३।३।८८। अयं भाव एव स्वभावात् । 'क्त्रेर्मम्नित्यम्'। क्त्रिप्रत्ययान्तान्मप् निर्वृत्तेऽर्थे। नित्यग्रहणात्क्त्रिर्मब्विषयः।अतएव क्त्र्यन्तेन न विग्रहः। डुपचष्-पाकेन निर्वृत्तं पक्त्रिमम् । डुवप्-उप्त्रिमम् । **ट्वितोऽथुच्** ।३।३।८९। अयमपि स्वभावाद्भाव एव । टुवेपृ-वेपथुः । श्वयथुः । **यजयाचयतविच्छप्रच्छरक्षो नङ्** ।३।३।९०। यज्ञः । याच्ञा । यत्नः । विश्नः । प्रश्नः । 'प्रश्ने चासन्ने'ति ज्ञापकाच्च संप्रसारणम् । ङित्त्वं तु विश्न इत्यत्र गुणनिषेधाय । रक्ष्णः । **स्वपो नन्** ।३।३।९१।

त.]तल्लजौ। प्रशस्तवाचकान्यमूनि'इत्यमरः। **ड्वितः।अयमिति** ।अतएव पाकेन निर्वृत्तमिति विगृह्यते नतु पक्त्रेति। यत्तु प्राचोक्तं 'भावादा'विति, तन्नेति भावः। **क्त्रेर्मप्** । तद्धितेषु व्याख्यातमिदम् । **नित्यग्रहणादिति** । तत्र हि नित्यमिति योगो विभज्यते तत्सामर्थ्यादर्थविशेषानादरेणैव मब्विषयत्वं निर्णीयते । एकयोगत्वे तु निर्वृत्त इत्यधिकारान्निर्वृत्तार्थस्याऽविवक्षायां स्वातन्त्र्यं प्रसज्येत, ततश्च मपं विनापि पक्त्रिरिति प्रयोगः स्यादिति भावः । **उप्त्रिममिति** । वपेर्यजादित्वात्किति संप्रसारणम् । वापेन निर्वृत्तमित्यर्थः । **यजयाच** । भावेऽकर्तरि कारके चेति वर्तते। अतएव 'यज्ञेन यज्ञमयजन्त देवाः' इत्यत्र इज्यते इति यज्ञ इति व्याचक्षते । [ **विश्न इति** । 'च्छ्वोः शूडनु-

बा.]गणे सङ्घ इति, प्रशंसायामुद्घ इति निपात्यते इत्यर्थः । सम्, उत्, अनयोरुपपदयोः हन्तेरप्प्रत्ययष्टिलोपो घत्वं च निपात्यते इति यावत् । **संहननमिति** । मेलनमित्यर्थः, उपसर्गवशात् । **गत्यर्थानामिति** । 'सर्वे गत्यर्था ज्ञानार्थाः' इति न्यायादिति भावः। **निघो** । निमितं वाच्यं चेन्निघ इति निपात्यते इत्यर्थः । इहाप्यप् टिलोपो घत्वं च निपात्यते इत्यर्थः । निमितशब्दं व्याचष्टे-**समन्तादित्यादि** । निः-समन्तादित्यर्थे । अव्ययानामनेकार्थत्वादिति भावः ।**निर्विशेषमिति** । इह 'नी'त्यव्ययं निर्विशेषे,हन्तिर्ज्ञानार्थे इति भावः । **समेति** । समौ आरोहपरिणाहौ-औन्नत्यस्थौल्ये येषामिति विग्रहः । **ड्वितः क्त्रिः** । डुरित्यस्य स ड्वित्तस्मात्, क्त्रिप्रत्ययः स्यादित्यर्थः। ककार इत् । **भाव एवेति** । अत्र भावे इत्येवानुवर्तते,न तु'अकर्तरि च कारके' इत्यपीति भावः।**स्वभावादिति** । पाकादिना निर्वृत्तमित्यर्थे पक्त्रिममित्यादौ क्त्रिप्रत्ययान्तानां पाकादिष्वेव लोके प्रयोगदर्शनादिति भावः । **क्त्रेर्मन्नित्यम्** । चतुर्थस्य चतुर्थपादे इदं सूत्रम् । मप् नित्यमिति छेदः । **निर्वृत्ते इति** । 'निर्वृत्तेऽक्षद्यूतादिभ्यः' इत्यतस्तदनुवृत्तेरिति भावः । तद्धितप्रकरणे व्याख्यातमप्येतदिह स्मरणाय पुनर्व्याख्यातम् । नन्विह नित्यग्रहणं व्यर्थम् । न च 'समर्थानां प्रथमाद्वे'ति महाविभाषानिवृत्त्यर्थं तदिति वाच्यम्, अत्र हि निर्वृत्तग्रहणमनुवर्तते। तथा च निर्वृत्तार्थविवक्षायां क्त्रिप्रत्ययान्तान्मप्प्रत्ययस्य नित्यतया पक्त्र्यादिना निर्वृत्तमिति वाक्यनिवृत्तावपि पाकोऽस्तीत्यादिवत् 'पक्त्रिरस्ति, भविष्यती'त्याद्यपि प्रसज्येत, तच्चाऽनिष्टम् । क्त्रिप्रत्ययान्तस्य निर्वृत्तार्थाऽविवक्षायामपि सर्वदा मप्प्रत्ययशिरस्कताया एवेष्टत्वादित्यत आह—**नित्यग्रहणादिति** । न हि महाविभाषानिवृत्त्यर्थं नित्यग्रहणम् । 'निर्वृत्तेऽक्षद्यूतादिभ्यः क्त्रेस्तु मप्' इत्येकसूत्रत्वेनैव सिद्धे पृथग्योगकरणादेव महाविभाषानिवृत्तिसिद्धेः । तथा च नित्यग्रहणसामर्थ्यान्नित्यमिति योगान्तरं विज्ञायते । तथा च निर्वृत्ते इति निवृत्तम् । तथा च 'क्त्रिप्रत्ययान्तो निर्वृत्तार्थयोगे तदयोगे च सर्वदा मप्प्रत्ययान्त एव स्या'दिति लभ्यते। एवंच क्त्रिप्रत्ययो मप्प्रत्ययं विना केवलः क्वापि न प्रयुज्यते इति लभ्यत इत्यर्थः । एतच्च भाष्ये स्पष्टम् । **अत एवेति** । क्त्रिप्रत्ययस्य मप्प्रत्ययं विना प्रयोगाऽभावात् 'पक्त्र्या निर्वृत्त'मिति स्वपदविग्रहो नास्ति, किन्तु पाकेन निर्वृत्तमित्यस्वपदविग्रह इत्यर्थः । **उप्त्रिममिति** । किरवाद्वचिस्वपीति संप्रसारणमिति भावः । **ट्वितोऽथुच्** । अथुजिति छेदः । टु इद्यस्येति विग्रहः । **श्वयथुरिति** । 'टु ओ श्वि गतिवृद्धयो'रित्यस्य रूपम् । **यजयाच** । 'अकर्तरि च कारके' इति, भाव इति चानुवर्तते । **याच्ञेति** । नस्य श्चुत्वेन ञः । **विश्न इति** ।

दो.] इति उदात्तनिवृत्तिस्वरेण प्रत्यय उदात्तः । स्वतन्त्रवधेर्घञर्थे केन सिद्धेऽनुपसर्गादिति विशेषं वक्तुमिदम् । वस्तुतो वधिः स्वतन्त्रो नास्त्येवेत्युक्तम् । यत्तु माधवेन-वधेर्घञा सिद्धेऽन्तोदात्तार्थमिति, तन्न । 'पर'जित्युत्तरं 'वधः' इत्येव सिद्धे 'हन' इत्यस्य वैयर्थ्यतादवस्थ्यात् । घनान्तघनप्रघणप्रघाणोद्घनापघनेति निपातनम् । हनेरदन्ता एते आदेशा अप्प्रत्ययश्च वेति पक्षद्वयमपि 'स्तम्बे क्च'ेति सूत्रे भाष्ये स्पष्टम् । अन्त्ये अतो लोपे कृते अप् उदात्तनिवृत्तिस्वरेणोदात्तः । आद्ये 'फिषोऽन्तः' इत्यन्तोदात्तत्वं बोध्यम् । अन्त्ये हन इत्यस्य पूर्वत्रसम्बन्धः । अभ्रघने-अभ्रसम्बन्धिघन इति विग्रहः ।

स्वप्नः । **उपसर्गे घोः किः** ।३।३।९२। प्रधिः । अन्तर्धिः । उपाधीयतेऽनेनेत्युपाधिः । **कर्मण्यधिकरणे च** ।३।३।९३। कर्मण्युपपदे घोः किः स्यादधिकरणेऽर्थे । जलानि धीयन्तेऽस्मिन्निति जलधिः । **स्त्रियां क्तिन्** ।३।३।९४। स्त्रीलिङ्गे भावादौ क्तिन् स्यात् । घञोऽपवादः । अजपौ तु परत्वाद्बाधते । कृतिः । चितिः । स्तुतिः । स्फायी-स्फातिः । 'स्फीतिकाम' इति तु प्रामादिकम् । क्तान्तादात्वर्थे णिचि 'अच इ'रिति वा समाधेयम् । *** श्रुयजीषिस्तुभ्यः करणे** । श्रूयतेऽनया श्रुतिः । यजेरिषेश्च-इष्टिः । स्तुतिः । *** ॠल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः** । तेन नत्वम् । कीर्णिः । गीर्णिः । लूनिः । धूनिः । पूनिः । 'ह्लादः' इति योगविभागात् क्तिनि ह्रस्वः । प्रह्लत्तिः ।'ति च' । चूर्तिः । फुल्तिः । *** चायतेः क्तिनि चिभावो वाच्यः** । अपचितिः ।

---

**त.]** नासिके चे'ति शः ] । **उपसर्गे** [**घोः किः** । बाहुलकात्कर्तर्यपीति माधवः । अतएव उप=समीपे स्वधर्ममादधातीत्युपाधिरिति व्याचक्षते] । किस्वादातो लोपः । **अन्तर्धिरिति** । 'अन्तः शब्दस्याऽङ्किविधी'ति वार्तिकादुपसर्गत्वम् । **उपाधीयतेऽनेनेति** । एतेन 'उप=समीपे स्वधर्ममादधातीत्युपाधिः । बाहुलकात्कर्तरि कि'रिति माधवादिग्रन्थो नादर्तव्य इति ध्वनितम् । 'विधाता विश्वसृड्विधि'रित्यत्रापि कर्तरि माभूत् किः, किंतु विध विधाने इत्यस्मादिगुपधात्किदितीति रूपसिद्धेः । **स्त्रियां क्तिन्** । **घञोऽपवाद इति** । यत्तु प्रक्रियाग्रन्थं व्याचक्षाणा आहुः—'भाष्ये त्वधिकः कारोऽधिकार' इति घञप्युदाहृत' इति, तद्भ्रमसात् । न हि तत्र स्त्रीत्वविशिष्टो भावोऽर्थः, किंतु पुंस्त्वविशिष्ट इति ध्येयम् । **अजपौ त्विति** । तयोरवकाशः-चयः । लवः । क्तिनोऽकाशः-कृतिः । हृतिः । चिनोतिस्तौतिभ्यां तु स्त्रियामुभयप्रसङ्गे परत्वात् क्तिन्नित्यर्थः । [**प्रामादिकमिति** । 'स्फायः स्फी निष्ठाया'मिति निष्ठायामेव स्फीभावविधानादिति भावः] । **श्रुयजीति** । परत्वात् 'करणाधिकरणयोश्चे'ति ल्युटि प्राप्ते वचनम् । **श्रुतिः**-श्रोत्रम् । **यजेरिति** । यजेः क्तिनि 'वचिस्वपी'ति संप्रसारणे 'व्रश्चभ्रस्जे'ति षत्वे इष्टिरिति रूपम् । इज्यतेऽनयेति विग्रहः । एवमिष्यतेऽनया इष्टिः । स्तूयतेऽनया स्तुतिः । **तेन नत्वमिति** । कीर्णिरित्यादौ 'रदाभ्या'मित्यनेन नत्वम् । लूनिरित्यादौ तु 'ल्वादिभ्यः' इत्यनेनेति विवेकः । **ह्लाद इति** । 'ह्लादो निष्ठाया'मित्यत्रेत्यर्थः । **चूर्तिरिति** । 'ति चे'ति चरफलोरुत्वे

---

**बा.]** विच्छेर्नङ् । 'च्छ्वो'रिति शः । एवं प्रच्छेर्नङि रूपम् । 'ग्रहिज्ये'ति संप्रसारणमाशङ्क्याह—**प्रश्ने चेति** । ननु संप्रसारणाऽभावे ङित्वं व्यर्थमित्यत आह-**ङित्त्वं त्विति** । **स्वपो नन्** । नकारो नित्स्वरार्थः । **उपसर्गे घोः किः** । भावे अकर्तरि च कारके । कित्वमातो लोपार्थम् । **प्रधिरिति** । धाञो रूपम् । **उपाधीयते इति** । स्वनिष्ठधर्मोऽन्यत्राऽऽसज्यते इत्यर्थः । **कर्मण्यधिकरणे च** । इह कर्म उपपदम्, अधिकरणमर्थः, व्याख्यानात् । तदाह—**कर्मण्युपपद इत्यादि** । **स्त्रियां क्तिन्** । 'कृत्यल्युटो बहुल'मित्यतः प्राक् स्त्रियामित्यधिक्रियते । **स्त्रीलिङ्ग इति** । स्त्रीत्वविशिष्टे भावे, अकर्तरि च कारके इत्यर्थः । धातुमात्रादयं क्तिन् । **घञोऽपवाद इति** । 'हलश्चे'ति वक्ष्माणघञोऽपवाद इत्यर्थः । एवंच स्त्रीत्वविशिष्टे भावादौ क्तिनेव । घञ् तु पुंस्त्वविशिष्टभावादाविति लभ्यते । वाऽसरूपविधिर्नाऽत्र प्रवर्तते, 'अक्तियां'मित्युक्तेः । ननु तर्हि इकारान्तात्, ॠकारान्तात्,उकारान्ताच्च स्त्रीत्वविशिष्टे भावादौ 'एर'जिति 'ॠदोर'विति च अजपावेव क्तिनं बाधित्वा स्यातां, विशेषविहितत्वात्' । क्तियां वाऽसरूपविध्यभावाच्चेत्यत आह—**अजपौ त्विति** । तौ तु पुंस्त्वविशिष्टे भावादौ सावकाशाविति भावः । **स्फातिरिति** । 'लोपो व्यो'रिति यलोपः । 'तितुत्रे'ति नेट् । **प्रामादिकमिति** । 'स्फायः स्फी निष्ठाया'मिति स्फीभावस्य निष्ठायामेव प्रवृत्तेरिति भावः । कथंचित्समाधत्ते—**क्तान्तादिति** । स्फायेः क्तप्रत्यये स्फीभावे स्फीतशब्दः । स्फीतस्याख्यानं क्रिया वा स्फीतिः । 'तत्करोति तदाचष्टे' इति णिच्, अल्लोपः । 'अच इः' इति भावे इप्रत्ययः । स्फीतिं कामयते इति स्फीतिकाम इति वा कथंचित्समाधेयमिति भावः । **श्रुयजीषिस्तुभ्यः करणे** । वार्तिकम् । एभ्यश्चतुर्भ्यः करणे स्त्रियां क्तिन्नित्यर्थः । श्रुधातोः, स्तुधातोश्च 'एर'जिति 'ओर'बिति च प्राप्ते, यजीष्योस्तु 'हलश्चे'ति घञि च प्राप्ते वचनम् । भावे, कर्तृव्यतिरिक्तकारके च सर्वत्र प्राप्ते करणग्रहणम् । **इष्टिरिति** । यजेः 'वचिस्वपी'ति संप्रसारणम् । व्रश्चादिना षत्वम् । **ॠल्वादिभ्य इति** । ॠकारान्ताल्ल्वादिभ्यश्च पर इत्यर्थः । **तेनेति** । निष्ठावद्वचनेनेत्यर्थः । **नत्वमिति** । 'रदाभ्यां निष्ठातः' इति नत्वस्य प्रकृतत्वादिति भावः । **कीर्णिरिति** । कॄधातोः क्तिनि इत्वे रपरत्वे 'हलि चे'ति दीर्घः । तकारस्य नत्वं, णत्वम् । एवं गधातोः—गीर्णिः । ल्वादिभ्य उदाहरति—**लूनि-**

---

**शे.]** कर्मण्यधि । व्याख्यानात्कर्मोपपदम्, अधिकरणमर्थः । अधिकरणग्रहणमर्थान्तरनिरासार्थम् ।

भावादाविति । तत्र यथाऽभिधानं व्यवस्था । 'अयमनेकाज्भ्यो ने'त्याद्यन्तवत्सूत्रस्थकैयटस्वरसः । 'स्त्रिया'मित्यधिकारः 'कृत्यल्युटः' इति यावत् । अजपौ त्विति । 'अजब्भ्यां स्त्रीखलनाः' इति वार्त्तिकोक्तेरिति भावः । प्रह्लत्तिरिति । भाष्ये

*सम्पदादिभ्यः क्विप्। सम्पत्। विपत्। * क्तिन्नपीष्यते। संपत्तिः। विपत्तिः। **स्थागापापचो भावे** ।३।३।९५। क्तिन् स्यात्। अङोऽपवादः। प्रस्थितिः। उपस्थितिः। सङ्गीतिः। संपीतिः। पक्तिः। कथमवस्था संस्थेति?। व्यवस्थायामिति ज्ञापकात्। **ऊतियूतिजूतिसातिहेतिकीर्तयश्च** ।३।३।९७। अवतेः 'ज्वरत्वरे'-त्यूठ्। ऊतिः। स्वरार्थं वचनम्। उदात्त इति हि वर्तते। यूतिः। जूतिः। अनयोर्दीर्घत्वं च निपात्यते। स्यतेः- सातिः। ['द्यतिस्यती'तीत्वे प्राप्ते] इत्वाऽभावो निपात्यते। सनोतेर्वा 'जनसने'त्यात्वे कृते स्वरार्थं निपातनम्। हन्तेर्हिनोतेर्वा हेतिः। कीर्तिः। **व्रजयजोर्भावे क्यप्** ।३।३।९८। व्रज्या। इज्या। **संज्ञायां समजनिषद-**

---

त.] 'वोरुपधाया दीर्घः' इति दीर्घः। [चायतेः। चायृ पूजानिशामनयोः]। क्तिन्नपीति। अस्त्रियामिति प्रतिषेधेन स्त्रियां वासरूपविधेरबाधादिदमुक्तम्। **अङोऽपवाद इति**। पुरस्तादपवादन्यायेन स्थादिभ्यः 'आतश्चोपसर्गे' इति, पचेस्तु 'षिद्भिदादिभ्यः' इति प्राप्तस्याऽङोऽपवादो नतु ण्वुलिञोरिति भावः। ण्वुलिञौ तु परत्वाद्भवत एव। 'कां त्वं स्थायिकां,कां त्वं स्थायि'मिति भाष्यकारप्रयोगात्। **प्रस्थितिरिति**। 'द्यतिस्यतिमास्था'मित्यात इत्वम्। **सङ्गीतिरिति**। 'घुमास्थे'त्यादिना ईत्वम्। **उदात्त इतीति**। 'मन्त्रे वृषेषे'ति सूत्रादनुवर्तत इत्यर्थः। एवं च क्तिन्नन्तस्याद्युदात्तत्वे प्राप्ते 'ऊतियूती'त्यादयोऽन्तोदात्ता इति पर्यवसन्नोऽर्थः। **इत्वाऽभाव इति**। 'द्यतिस्यती'ति प्राप्तस्याऽभाव इत्यर्थः। **हन्तेरिति**। नकारस्येत्वं, हिनोतेस्तु गुण इति बोध्यम्। **कीर्तिरिति**। कीर्तयतेः 'ण्यासश्रन्थो'-ति युचि प्राप्ते क्तिन्निपात्यते, उदात्तत्वं च। 'तां सुते कीर्तिम्'। **व्रजयजोः**। उदात्त इत्येव। पित्करणं तूत्तरत्र

---

वा.]रित्यादि। अथ 'प्रह्लत्ति'रित्यत्र उपधाह्रस्वं साधयति--**ह्लाद इतीति**। 'ह्लादो निष्ठाया'मित्युपधाह्रस्वविधौ 'ह्लाद' इति योगविभागादनिष्ठायामपि क्वचिद्ध्रस्व इति भावः। भाष्ये तु नैतद्दृष्टम्। अथ चरेः फलेश्च क्तिनि अकारस्य उत्वं स्मारयति-ति **चेति**। 'चरफलोश्च', 'उत्परस्याऽतः' इत्युत्तरमिदं सूत्रम्। तादौ प्रत्यये परे चरफलोरत उकारः स्यादिति व्याख्यातं यङ्लुक्प्रकरणे। **चूर्तिरिति**। चरेः क्तिनि अकारस्य उत्वे 'हलि चे'ति दीर्घः। **फुल्तिरिति**। फलेः क्तिनि उत्वे रूपम्। रेफवान्तत्वाऽभावान्न दीर्घः। उभयत्रापि 'तितुत्रे'ति नेट्। **सम्पदादिभ्यः क्विप्**। वार्तिकम्। 'भावे अकर्तरि च कारके स्त्रिया'मिति शेषः। ननु अस्त्रियामिति निषेधेन वाऽसरूपविधेरभावात् क्विपाऽनेन क्तिनो बाधात् संपत्तिरित्यादि कथमित्यत आह--**क्तिन्नपीष्यते इति**। 'कृत्यल्युटो बहुल'मिति बहुलग्रहणेन सिद्धमित्याहुः। भाष्ये तु नैतद्दृश्यते। **स्थागापा**। **क्तिन् स्यादिति**। क्विप्तु अस्वरितत्वान्नानुवर्तत इति भावः। **अङ इति**। स्थादिभ्यस्त्रिभ्यः 'आतश्चोपसर्गे'इति वक्ष्यमाणस्य, पचेस्तु 'षिद्भिदादिभ्यः' इति विहितस्याऽङ्प्रत्ययस्यापवाद इत्यर्थः। **प्रस्थितिरित्यादि**। 'द्यतिस्यतिमास्था'मिति इत्वम्। 'घुमास्थागापे'ति च ईत्वम्। **कथमिति**। 'स्थागापे'ति क्तिना 'आतश्चोपसर्गे' इति वक्ष्यमाणस्य अङो बाधादिति भावः। समाधत्ते- **व्यवस्थायामितीत्यादि**। **ऊतियूति**। एते स्त्रियां क्तिन्नन्ता निपात्यन्त इत्यर्थः। **ऊठिति**। अकारवकारयोरित्यर्थः। ननु 'स्त्रियां क्ति'न्नित्येव सिद्धे किमर्थमिदमूतिग्रहणमित्यत आह—**स्वरार्थमिति**। कः स्वर इत्यत आह—**उदात्त इतीति**। 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' इति पूर्वसूत्रस्थमुदात्तग्रहणमेकवचनान्ततया विपरिणतमिहानुवर्तत इत्यर्थः। तथा च क्तिन उदात्तत्वं लभ्यते। अन्यथा 'ञ्नित्यादिर्नित्य'मिति प्रकृतेरुदात्तत्वं स्यादित्यर्थः। **अनयोरिति**। युधातोर्जुधातोश्चेत्यर्थः। **स्यतेरिति**। 'षोऽन्तकर्मणी'त्यस्मात्-क्तिनि सातिरिति रूपमित्यर्थः। 'आदेचः' इत्यात्त्वम्। तत्र 'द्यतिस्यतिमास्थामित्ति किती'ति इत्वमाशङ्क्याह---**इह इत्वाभाव इति**। सनधातोर्वा सातीति निपातनमित्याह—**सनोतेर्वेति**। सनेर्वा क्तिनि 'जनसने'त्यात्वे कृते सातीति निपातनमित्यर्थः। अत्र 'द्यतिस्यती'तीत्वस्याऽप्रसक्तेस्तदभावो न निपात्यते इति लाघवमिति भावः। ननु सनोतेः स्त्रियां क्तिनि सातीति रूपसिद्धेः किमर्थमिह सातीति निपातनमित्यत आह—**स्वरार्थमिति**। 'मन्त्रे वृषे'ति पूर्वसूत्रादुदात्तग्रहणाऽनुवृत्तेः क्तिन उदात्तत्वं सिध्यति, अन्यथा प्रकृतेरुदात्तत्वं स्यादित्यर्थः। **हन्तेरिति**। हनः क्तिनि नकारस्य निपातनादित्त्वे आद्गुणे हेतिरिति रूपम्। **हिनोतेरिति**। हिधातोः क्तिनि तु 'क्ङिति चे'ति निषेधं बाधित्वा निपातनाद्गुणे रूपमित्यर्थः। **कीर्तिरिति**। कॄत संशब्दने। स्वार्थिकण्यन्तात् 'ण्यासश्रन्थो यु'जिति युचं बाधित्वा क्तिन्निपात्यते। उदात्तश्च सः। **व्रजयजोः**। पञ्चम्यर्थे षष्ठी। स्त्रियामित्येव। **व्रज्येति**। 'व्रज गतौ' क्यप्। 'वृजयजो'रिति पाठे 'वृजी वर्जने' इत्यस्मात् क्यप्, वृज्या। **इज्येति**। 'वचिस्वपी'ति संप्रसारणम्। **संज्ञायां समज**। समज, निषद, निपत,मन, विद, षुञ्, शीङ्, भृञ्, इण्, एषां नवानां समाहारद्वन्द्वात्पञ्चमी।

---

शे.] नैतद्दृष्टम्। **इष्यत इति**। बाहुलकादिति भावः। **ज्ञापकादिति**। तेन बाहुलकादङपीति भावः। **वर्तते इति**। 'मन्त्रे वृषेषे'ति सूत्रादिति भावः। **भावादाविति**। क्यब्विधौ 'अधिकरणे चे'ति वार्त्तिकात्। तत्र चेन करणसङ्ग्रहः। भृञोऽयं क्यपि

**निपतमनविदषुञ्शीङ्भृञिणः** ।३।३।९९। समजादिभ्यः स्त्रियां भावादौ क्यप्स्यात्स चोदात्तः संज्ञायाम् । *** अजेः क्यपि वीभावो नेति वाच्यम्** । समजन्ति तस्यामिति समज्या सभा । निषीदन्त्यस्यामिति निषद्या आपणः । निपतन्त्यस्यामिति निपत्या पिच्छिला भूमिः । मन्यतेऽनयेति मन्या गलपार्श्वशिरा । विदन्त्यनया विद्या । सुत्या अभिषवः । शय्या । भृत्या । ईयतेऽनया इत्या शिबिका । **कृञः श च** ।३।३।१००। कृञ इति योगविभागः । कृञः क्यप्स्यात् । कृत्या । *** श च** । चात् क्तिन् । क्रिया । कृतिः । **इच्छा** ।३।३।१०१। इषेर्भावे शो, यगभावश्च निपात्यते । इच्छा । *** परिचर्यापरिसर्यामृगयाऽटाट्यानामुपसङ्ख्यानम्** । शो यक् च निपात्यते । परिचर्या पूजा । परिसर्या परिसरणम् । अत्र गुणोऽपि । मृग अन्वेषणे चुरादावदन्तः । अतो लोपाऽभावोऽपि । शे यकि णिलोपः । मृगया । अटतेः शे यकि व्यशब्दस्य द्वित्वं, पूर्वभागे यकारनिवृत्तिर्दीर्घश्च । अटाट्या । *** जागर्तेरकारो वा** । पक्षे शः । जागरा । जागर्या । **अ प्रत्ययात्** ।३।३।१०२। प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारप्रत्ययः स्यात् । चिकीर्षा । पुत्रकाम्या । **गुरोश्च हलः** ।३।३।१०३। गुरुमतो हलन्तात् स्त्रियामकारः स्यात् । ईहा । ऊहा । गुरोः किम् ? । [चित्तिः] भक्तिः । हलः किम् ? ।

---

त.] तुगर्थम् । **गलपार्श्वेति** । तया हि क्रुद्धो ज्ञायत इति भावः । शेरतेऽस्यामिति **शय्या** । भरणं भृत्या=जीविका । 'कुमारभृत्या-गर्भिण्याः परिचर्याऽभिधीयते' इति हारावली । 'कुमारभृत्याकुशलैरधिष्ठिते' इति रघुः । संज्ञायां किम् ? । मतिः । सृतिः । आसुतिः । तथा च व्यवहृतं-'मतिबुद्धिपूजार्थेभ्यश्च' 'कर्मणि भृतौ' 'रजःकृष्यासुती'त्यादि । एतेन 'मतिबुद्धी'त्यादिसूत्रप्रयोगादेव मतिमृतीत्यादीनां साधुत्वमिति दुर्घटायुक्तिः प्रत्युक्ता । **क्रियेति** । यदा भावकर्मणोः शस्तदा 'सार्वधातुके यक्' । 'रिङ् शयग्लिङ्क्षु' इति रिङादेशः । अन्यत्र तु यगभावेऽपि शे परतो रिङादेशे कृते इयङि सति रूपं तुल्यम् । **इच्छा** । **इषेर्भाव इति** । न त्वकर्तरि कारकेऽपीत्यर्थः । अतएव करणेऽर्थे इष्यतेऽनया इष्टिरिति प्रागुक्तम् । **यकारनिवृत्तिरिति** । हलादिःशेषस्तु नास्ति, षाष्ठद्वित्वे धातुद्वित्वे वाऽभ्याससंज्ञास्वीकारात् । इह च तदुभयाऽभावादिति भावः । **अटाट्येति** । यदा तु अटतेर्यङन्तादप्रत्ययादित्यकारस्तदाऽतोलोपे 'यस्य हलः' इति यलोपेऽटाटेति रूपं बोध्यम् । द्वित्वे हलादिःशेषे सति 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घप्रवृत्तेः । **जागर्तेरिति** । शे परतः 'सार्वधातुके यक्' । 'जाग्रोऽविचिण्ण'लिति गुणः । **गुरोश्च** । धातोरित्यनुवृत्त्या हल इति धातोर्विशेषणात्तदन्तविधौ हलन्तो धातुर्लभ्यते । न चाऽयं गुरुरिति संभवति । अज्विषयो हि गुरुः, अतो मत्वर्थो लक्ष्यते ।

---

बा.] 'अजेर्व्यघञपो'रिति प्राप्ते आह—**अजेः क्यपीति** । **समजन्तीति** । सङ्गीभवन्तीत्यर्थः । **समज्येति** । संपूर्वादजेः क्यप् । 'समज्या तु सभा गोष्ठी'त्यमरः । **निषद्येति** । निपूर्वात्सदेः क्यप् । 'सदिरप्रते'रिति षत्वम् । 'आपणस्तु निषद्यायां'मित्यमरः । **निपत्येति** । निपूर्वात्पतेः क्यप् । **पिच्छिलेति** । निम्नोन्नता भूमिरित्यर्थः । **गलेति** । 'पश्चाद्ग्रीवा शिरा मन्ये'त्यमरः । **विद्येति** । वेदशास्त्रादिरित्यर्थः । **सुत्येति** । सोमेज्या । षुञः क्यप् । तुक् । **इत्या शिबिकेति** । कोशो मृग्यः । **कृञः श च** । चात् क्यप् । 'श'ेति लुप्तप्रथमाकम् । कृञः शः स्यात् क्यप् चेति प्रतीयमानोऽर्थः । एवं सति कृतिरिति क्तिन् स्यात्, स्त्रियां वाऽसरूपविध्यभावात् । तत्राह—**कृञ इति योगविभाग इति** । तत्र क्यबित्यनुवृत्तिं मत्वाह—**क्यप् स्यादिति** । **कृत्येति** । कृञः क्यपि तुक् । **'श चे'ति** द्वितीयखण्डोऽयम् । **चात्क्तिन्निति** । क्यपः पूर्वेणैव खण्डेन सिद्धत्वादिति भावः । **क्रियेति** । कृञः शः । 'रिङ्शयग्लिङ्क्षु' इति रिङ् । शित्त्वेन सार्वधातुकतया ङित्त्वान्न गुणः । इयङिति भावः । **इच्छा** । **भावे श इति** । न त्वकर्तरि कारके चेत्यर्थः, निपातनसामर्थ्यादिति भावः । **यगभावश्चेति** । अन्यथा शित्त्वेन सार्वधातुकत्वाद्यक् स्यादिति भावः । **परिचर्येति** । परिपूर्वाच्चरेर्भावे शः, यक् च । **परिसर्येति** । परिपूर्वात्सृधातोः शः, यक् च । अत्र शप्रत्ययस्य शित्त्वेन सार्वधातुकतया ङित्त्वाद्गुणनिषेधमाशङ्क्याह—**अत्र गुणोऽपीति** । परिसर्याशब्दे गुणोऽपि निपातित इत्यर्थः । **द्वित्वमिति** । 'निपात्यते' इति शेषः । **यकारनिवृत्तिरिति** । 'निपात्यते' इति शेषः । हलादिशेषस्तु नाऽत्र प्रवर्तते, तस्य षाष्ठद्वित्वविषयत्वादित्याहुः । यङन्तात्तु 'अ प्रत्यया'दिति वक्ष्यमाणोऽकारप्रत्ययः । तत्र अतो लोपे यलोपे च अटाटेति बोध्यम् । **जागर्तेरकारो वेति** । 'भावे वक्तव्य' इति शेषः । अकारप्रत्यये उदाहरति—**जागरेति** । आर्द्धधातुकलक्षणो गुणः । शप्रत्यये उदाहरति—**जागर्येति** । शित्त्वेन सार्वधातुकत्वाद्यक् । 'जाग्रोऽविचिण्णल्ङित्सु' इति च गुणः । **अ प्रत्ययात्** । 'अ' इति लुप्तप्रथमाकम् । भावे, अकर्तरि च कारके इत्येव । **गुरोश्च हलः** । धातोरित्यनुवृत्तं हला विशेष्यते । तदन्तविधिः । हलन्तधातो-

---

शे.] भावे एवेति 'मृगोऽसञ्ज्ञाया'मिति सूत्रस्थभाष्यस्वरसः । **परिचर्येत्यादि** । भावे शो निपात्यते, यक् तु सिद्ध एव । अकर्त्तरि कारके ऽभिधानसत्त्वे तत्र यगपि निपात्यः । **मृगयेति** । णिनिमित्ताऽजन्तलक्षणवृद्ध्यभावः, 'अकृत्सार्व'ेति दीर्घाऽभावश्च

['शीतिः'] । नीतिः । *निष्ठायां सेट इति वक्तव्यम् । नेह-आप्तिः । 'तितुत्रे'ति नेट् । दीप्तिः । *तितुत्रेष्वग्रहादीनामिति वाच्यम् । निगृहीतिः । निपठितिः । षिद्भिदादिभ्योऽङ् ।३।३।१०४। षिद्भ्यो भिदादिभ्यश्च स्त्रियामङ् । जृष् । ['ऋदृशोऽङि गुणः'] । जरा । त्रपूष्-त्रपा । भिदा । विदारण एवायम् । भित्तिरन्या । छिदा । मृजा । ( ग ) क्रपेः संप्रसारणं च । कृपा । चिन्तिपूजिकथिकुम्बिचर्चश्च ।३।३।१०५। अङ् स्यात् । युचोऽपवादः । चिन्ता । पूजा । कथा । कुम्बा । चर्चा । [चात्तुला] । आतश्चोपसर्गे ।३।३।१०६। अङ् स्यात् । क्तिनोऽपवादः । प्रदा । उपदा । 'श्रदन्तरोरुपसर्गवद्वृत्तिः' । श्रद्धा । अन्तर्द्धा । ['उपसर्गे घोः किः'रित्यनेन

त.] तदाह–गुरुमत इति । ननु विपरीतमस्तु 'गुर्वन्ताद्धल' इति, तादृशस्यापि धातोर्डुक्रीञित्यादेः सत्त्वादिति चेन्मैवम् । 'चेष्टायामनध्वनि' 'आशंसायां भूतवच्चे'ति निर्देशेन विपरीतशङ्काया अप्रवृत्तेः । षिद्भिदा । कथं तर्हि 'मुखाब्जगन्धलब्धे'रिति माघः । 'प्रेक्षोपलब्धि'रित्यमरश्च । षित्त्वादङि 'लभे'त्येव ह्युचितम् । सत्यम् । 'अनर्थकास्तु प्रतिवर्णमनुपलब्धे'रिति भाष्यप्रयोगाद्बाहुलकाद्वा क्तिन्नपि बोध्यः । विस्तरस्त्विह मनोरमायां बोध्यः । भिदेति । एवमादयोऽदन्ताः समुदाया एव गणे पठ्यन्ते तत्र ये प्रकृतिभागा भिद-छिद इत्यादयस्ते आदिशब्देन सूत्रे निर्दिष्टाः । गणे विशिष्टपाठस्तु लोकप्रसिद्धार्थविशेषस्य क्वचिदलाक्षणिककार्यस्य सङ्ग्रहार्थः । भित्तिरन्येति । भिद्यत इति भित्तिः= कुड्यम् । छिदेति । द्वैधीकरण एवायम् । अन्यत्र तु छित्तिश्छिद्रम् । मृजेति । मृजू शुद्धौ, अस्याऽषित्त्वाद्भिदादौ पाठः । चिन्तिपूजि । चकारोऽनुक्तसमुच्चयार्थः । तेन तोलयतेस्तुलेति हरदत्तः । अतएव 'तुलां यदारोहति दन्तवाससा' इति नैषधकृदाह । युचोऽपवाद इति । 'ण्यासश्रन्थे'ति वक्ष्यमाणस्येत्यर्थः । आसनेति । आस्यतेऽस्या-

या.] गुरुत्वाऽसंभवाद्गुरुमान् लक्ष्यते । तदाह-गुरुमत इति । भावे अकर्तरि च कारके इत्येव । निष्ठायामिति । निष्ठायां परतो यः सेट्, तस्मादेव गुरुमतो हलन्तादकारप्रत्यय इत्यर्थः । आप्तिरिति । आप्धातोर्निष्ठायां सेट्त्वाऽभावान्नायमकारप्रत्ययः, किन्तु क्तिनेवेति भावः । दीप्तिरित्यत्र इटमाशङ्क्याह—तितुत्रेति । तितुत्रेष्विति । 'तितुत्रतथसिसु' इति सूत्रे अग्रहादीनामिति वाच्यमित्यर्थः । निगृहीतिरिति । इटि 'ग्रहोऽलिटी'ति दीर्घः । 'ग्रहिज्ये'ति संप्रसारणम् । निगृहीतिः उपस्निहितिः निकुचितिः निपठितिरिति ग्रहादयो भाष्ये स्थिताः । षिद्भिदादिभ्योऽङ् । भावे अकर्तरि च कारके इत्येव । जरेति । ङित्वलक्षणं गुणनिषेधं बाधित्वा 'ऋदृशोऽङी'ति गुणः । विदारण इति । वार्तिकम् । विदारणम्—ऊर्ध्वविदलनम् । तस्मिन्नेवार्थे भिदेत्यङन्तमित्यर्थः । [छिदा द्वैधीकरण इति । इदमपि वार्तिकम् । यथाकथंचित्तिर्यगतिर्यग्वा द्वैधीभावे एव छिदेत्यङन्तमित्यर्थः । छित्तिरित्यस्य विवरणं—छित्तिश्छिद्रमिति । भिदिर् विदारणे, छिदिर् द्वैधीकरणे, विद ज्ञाने, क्षिप प्रेरणे, गुह संवरणे, डुधाञ् धारणपोषणयोः, मिथृ मेथृ हिंसासेचनयोः, ऋ गतौ, हृञ् हरणे, क्षि क्षये, क्षि निवासगत्योः, तॄ प्लवनतरणयोः, धृञ् धारणे, लिख अक्षरविन्यासे, चुद प्रेरणे, पीड अवगाहने, डु वप् बीजसन्ताने, कॄ विक्षेपे, वस निवासे, मृजू शुद्धौ, कृप कृपायामिति भिदादिगण । गुहा गिर्योषध्योरिति । वार्तिकम् । गूढिरिति । क्तिनि ढत्वधत्वष्टुत्वढलोपदीर्घाः । आरा हारा कारा तारा धारा । अत्रेति । ऋ, हृ, कॄ, तॄ, धृञ्, एभ्योऽङि 'ऋदृशोऽङि गुणः' इति गुणे उपधाया दीर्घत्वं चेत्यर्थः । आरा शस्त्र्यामिति ।-वार्तिकम् । शस्त्री प्रतोदः, तस्यामेव आरेत्यङन्तमित्यर्थः । ननु ऋधातोः क्तिनि ऋतिरित्येवोचितम्, न त्वार्तिरित्यत आह—आङोऽर्तेश्चेति । आङ्पूर्वादृधातोः क्तिनि 'उपसर्गादृति धातौ' इति वृद्धिरेकादेश इत्यर्थः । रेखा लेखेति । गणसूत्रम् । गुण इति । लिखेरङि उपधागुणः, लकारस्य रेफश्चेत्यर्थः । चूडेति । गणसूत्रम् । धारा प्रपात इति । वार्तिकम् । द्रवद्रव्यप्रपातने इत्यर्थः ] । कृपेः संप्रसारणं चेति । गणसूत्रम् । कृपधातुर्घटादावकारमध्यः । अत्र भाष्ये दृष्टानां गणसूत्रत्वं विज्ञेयम् । चिन्तिपूजि । एते चुरादयः । तेभ्यो 'ण्यासश्रन्थो यु'जिति प्राप्ते अङ्विधिः । तदाह—युचोऽपवाद इति । चिन्तेत्यादौ अङि णिलोपः । चकारोऽनुक्तसमुच्चयार्थः । अतस्तोलयतेरपि सङ्ग्रहः । [तदाह—चात्तुलेति] । आतश्चोपसर्गे । अङ् स्यादिति । उपसर्गे उपपदे आदन्ताद्धातोरङ् स्याद्भावे अकर्तरि च कारके इत्यर्थः । प्रदेति । प्रपूर्वाद्दाधातोरङ् । 'आतो लोप इति चे'त्याल्लोपः । एवमुपदा । ननु श्रदिति अन्तरिति च अव्ययपूर्वाद्धाञः कथमङ्, तयोरुपसर्गत्वाऽभावादित्यत आह-श्रदन्तरोरुपसर्गवदिति । 'श्रच्छब्दस्य अङ्विधौ उपसर्गत्वं

शे.] निपातनादिति बोद्धव्यम् । श्रदन्तरोरिति । तत्र श्रतोऽङ्विधावेव, अन्तःशब्दस्याऽङ्किविधिणत्वेष्विति भाष्ये स्पष्टम् । तेन

किः । अन्तर्द्धिः । **ण्यासश्रन्थो युच्** ।३।३।१०७। अकारस्याऽपवादः। कारणा । हारणा । आसना । श्रन्थना । *घट्टिवन्दिविदिभ्यश्चेति वाच्यम्* । घट्टना । वन्दना। वेदना। *इषेरनिच्छार्थस्य*। अन्वेषणा ।*परेर्वा*। पर्येषणा । परीष्टिः । **रोगाख्यायां ण्वुल्बहुलम्** ।३।३।१०८। प्रच्छर्दिका । [ वमिः ] ।प्रवाहिका [ ग्रहणी ]। विचर्चिका [पाम] । क्वचिन्न-[ अर्द- ] शिरोऽर्तिः । * *धात्वर्थनिर्देशे ण्वुल्वक्तव्यः* । आसिका । शायिका । *इक्श्तिपौ धातुनिर्देशे* । पचिः । पचतिः । *वर्णात्कारः*। निर्देशे इत्येव ।अकारः। ककारः। *रादिफः* ।

त.] मिति विग्रहः । 'ऋहलोर्ण्य'दिति ण्यत्प्रत्यये त्वास्या । न च स्त्रीप्रत्यये वाऽसरूपविधिर्नेति शङ्क्यम्, अपवादस्य युचः स्त्रीप्रकरणस्थत्वेऽपि उत्सर्गस्य ण्यतस्तदभावात् । **घट्टिवन्दि** । विदिर्लाभार्थो गृह्यते । ज्ञानार्थस्य तु संवित्तिः । **इषेरिति** । अनिच्छार्थस्य युच् । इच्छार्थस्य त्विषेरिच्छेत्येव । **रोगाख्या** । धातोर्बहुलं ण्वुल् स्यात्प्रत्ययान्तं चेद्रोगस्य संज्ञा । क्तिन्नादीनामपवादः । **प्रच्छर्दिकेति** । छर्द वमने । **प्रवाहिकेति**। प्रवाहयति=मुहुर्मुहुः प्रवर्तयतीति **प्रवाहिका**=ग्रहणी । **विचर्चिकेति** । चर्च अध्ययने । प्रत्ययोपसर्गाभ्यां रोगप्रतीतिः । 'पाम पामा विचर्चिका' इत्यमरः । **शिरोर्तिरिति** । शिरःपीडा । अर्द हिंसायाम् । 'तितुत्रे'ति नेट् । **धात्वर्थनिर्देश इति** । क्रियानिर्देश इत्यर्थः । **आसिका** । **शायिकेति** । आसनं, शयनमित्यर्थः । **इक्श्तिपौ** । धातोर्निर्देशः-अनुकरणम् । बहुलमित्यनुवृत्तेः क्वचिन्न । 'गुप्तिज्किद्भ्यः सन्' 'भुवो वुग्लुङ्लिटोः' । **पचतिरिति** । 'उपसर्गात्सुनोतिसुवतिस्यति' 'ध्यायतेः संप्रसारणं चे'त्यादिनिर्देशादकर्तृवाचिन्यपि सार्वधातुके परे शबादयः । एवं भावकर्मवाचिन्यपि सार्वधातुके क्वचिद्यक्, 'विभाषा लीयतेः' इति यथा । तत्र हि 'लीलीङोर्यका निर्देशो, न तु श्यने'त्युक्तम् । यत्तु प्राचा 'श्तिपः शित्करणसामर्थ्याच्छबादय' इत्युक्तम् । तन्न । पिबतिर्ग्लायतिरित्यादौ पिबाद्यादेशप्रवृत्त्या, आत्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वात् । **वर्णादिति**। वर्णानुकरणादित्यर्थः । न तु वर्णादुच्चार्यमाणादिति । तथा हि सत्यकार इत्यादावेव स्यान्न तु ककार इत्यादौ । अत्र हि सङ्घातस्योच्चारणात् । अनुकार्यं त्विह वर्णमात्रम्, अकारस्योच्चारणार्थत्वात् । कथं तर्हि 'समुच्चयार्थश्चकारः' 'एवकारोऽन्यनिवृत्त्यर्थ' इत्यादिप्रयोगा इति चेदत्राहुः—क्वचित्सङ्घातादपि भवति, 'उच्चैस्तरां वा वषट्कारः' इति सूत्रनिर्देशात् । 'सर्वे चकाराः प्रत्याख्यायन्ते' भाष्यप्रयोगाद्बहुलवचनाच्चेति । इह कारप्रत्ययस्य धातोरविहितत्वेऽपि धात्वधिकारस्थत्वात्कृत्संज्ञा । तेन कृदन्तत्वात्प्रातिपदिकत्वम् । प्रयोजनाऽभावान्न ककारस्येत्संज्ञा । आर्द्धधातुकत्वाऽभावादिडागमो न । 'अस्य च्वौ' इत्यादौ तु कारप्रत्ययाऽभावो बाहुलकादेव । **रादिफः** । नाऽसरूपविधिना कारोऽपि । तेन 'रकारादीनि नामानि शृण्वतो मम पार्वति' इत्यादि-

बा.]वाच्य'मिति,'अन्तश्शब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्य'मिति च वार्तिकात्तयोरुपसर्गत्वात्तत्पूर्वकादादन्ताद्धातोरङ्प्रत्ययात्मककृत्प्रत्ययरूपा वृत्तिरित्यर्थः। **वृत्तिरिति** । णत्वस्याप्युपलक्षणम् । तेन अन्तर्द्धा अन्तर्द्धिः अन्तर्णयतीत्यादीति दिक् । **ण्यास** । णि, आस, श्रन्थ्, एभ्यः स्त्रियां भावादिषु युच्स्यादित्यर्थः । **अकारस्येति** । 'अ प्रत्यया'दिति विहितस्येत्यर्थः । **घट्टिवन्दीति** । अण्यन्तत्वाद्युचो विधिः । **वेदनेति** । लाभार्थाद्विदेर्युच्, व्याख्यानात् । 'विद ज्ञाने' इत्यस्य तु वित्तिः । 'विद वेदनाज्ञाननिवासेषु' इति चुरादेस्तु 'ण्यासश्रन्थे'ति युचि वेदनेत्यपि। **इषेरनिच्छार्थस्येति**। 'युज्वक्तव्य' इति शेषः । **अन्वेषणेति** । मार्गणेत्यर्थः। इच्छायां तु अन्विष्टिः । **परेर्वेति**। परिपूर्वकादिषेर्युज्वेत्यर्थः। **परीष्टिरिति**। 'व्रश्चे'ति षः। **रोगाख्यायाम्**। स्त्रियामित्येव। [**प्रच्छर्दिकेत्यस्य विवरणं—वमिरिति**। वमनमित्यर्थः । **प्रवाहिकेत्यस्य विवरणं—ग्रहणीति** । अतिसारविशेषः। **विचर्चिकेत्यस्य विवरणं—पामेति**।] **क्वचिन्नेति** । 'ण्वु'लिति शेषः । बहुलग्रहणादिति भावः । [ **अर्देति** । अर्तिशब्दस्य 'अर्द हिंसाया'मिति प्रकृतिदर्शनमिदम् ] । **शिरोऽर्त्तिरिति** । शिरःपीडेत्यर्थः । 'अर्देः क्तिन् । 'तितुत्रे'ति नेट् । **धात्वर्थनिर्देश इति** । धात्वर्थे निर्देष्टव्ये धातोः स्वार्थे ण्वुल् बहुलमित्यर्थः । स्त्रियामित्येव । **आसिका शायिकेति** । आसनं, शयनमित्यर्थः । **इक्श्तिपाविति** । धातुस्वरूपे निर्देष्टव्ये इक्श्तिपौ वक्तव्यावित्यर्थः। धातुस्वरूपमेव वाच्यमिति फलितम् । पचिः **पचतिरिति** । पचधातुरित्यर्थः । शित्त्वेन सार्वधातुकत्वाच्छप् । अकर्तृकवाचकत्वेऽपि 'उपसर्गात्सुनोतिसुवती'ति निर्देशाच्छबादिविकरणाः । शित्त्वसामर्थ्यादिति तु प्राञ्चः, तन्न, पिबतिः गायतिरित्यादौ पिबाद्यादेशप्रवृत्त्या, आत्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वादित्यलम् । अत्र स्त्रियामिति न संबध्यते, व्याख्यानात् । **वर्णात्कार इति** । वार्तिकम् । **निर्देश इत्येवेति** । अ, इ, उ इत्यादिवर्णनिर्देशे कर्तव्ये वर्णानुकरणात्-अ, इ, उ, इत्यादिप्रातिपदिकात्स्वार्थे कारप्रत्ययः स्यादित्यर्थः । **अकार इति** । अवर्ण इत्यर्थः । इह कारप्रत्ययस्य धातोरविहितत्वेऽपि अधिकार-

शे.] 'अन्तर्द्धा' 'अन्तर्द्धिः' 'अन्तर्णयती'त्यादिसिद्धिः । एवञ्च 'अन्तरदेशे' 'अयनञ्चे'ति सूत्रद्वयं न कर्तव्यम् । देशे प्रतिषेधः क्षुभ्नादित्वात्सिद्ध इति 'अन्तरपरिग्रहे' इति सूत्रे कैयटः । आद्यं-'प्रज्ञाश्रद्धे'ति निर्देशसिद्धम् । **रादिफः** ।

रेफः । ॐमत्वर्थाच्छः । बहुलवचनादकारलोपः । मत्वर्थीयः । ॐइणजादिभ्यः । आजिः । आतिः । ॐइञ्वपादिभ्यः । वापिः । वासिः । स्वरे भेदः । ॐ इक्कृष्यादिभ्यः । कृषिः । गिरिः । **संज्ञायाम्** ।३।३।१०९। अत्र धातोर्ण्वुल् । उद्दालकपुष्पभञ्जिका । **विभाषाख्यानपरिप्रश्नयोरिञ्च** ।३।३।११०। परिप्रश्ने आख्याने च गम्ये नञ् स्यात् । चाण्वुल् । विभाषोक्तेर्यथाप्राप्तमन्येऽपि । कां त्वं कारिं कारिकां क्रियां कृत्यां कृतिं वाऽकार्षीः ? । सर्वां कारिं कारिकां क्रियां कृत्यां कृतिं वाऽकार्षम् । एवं गणिं गणिकां गणनाम् । पाचिं पाचिकां पचां पक्तिम् [ इज्याम् । इष्टिम् ] । **पर्यायाऽर्हर्णोत्पत्तिषु ण्वुच्** ।३।३।१११। पर्यायः-परिपाटी,क्रमः । अर्हण-

---

त.] प्रयोगः साधुरेव । **अकारलोप इति** । अतद्धितपरत्वादभत्वाच्च 'यस्ये'ति लोपस्याऽप्राप्तिरिति भावः । कृदन्तत्वात्प्रातिपदिकत्वमिह पूर्ववद्बोध्यम् । 'तसौ मत्वर्थे' इत्यत्र बाहुलकाच्छो न । 'शैषिकान्मतुबर्थीया'दित्यत्र तु बाहुलकादेव मतुबर्थशब्दाच्छः । अन्ये तु नैतत्कृदन्तं, मत्वर्थे भव इति विगृह्य गहादित्वाच्छप्रत्यये तद्धितान्तमेवेत्याहुः । **इणजा** । धात्वर्थनिर्देशे प्राप्तस्य ण्वुलोऽपवादोऽयम् । एवमग्रेऽपि । **आजिरिति** । बाहुकादजेर्वीभावो न । **संज्ञायाम्** । अधिकरणे ण्वुलर्थोऽयमारम्भः । **उद्दालकः**=श्लेष्मातकः, तस्य पुष्पाणि भज्यन्ते यस्यां क्रियायां सा तथा। भञ्जनं भञ्जिका । भावे ण्वुल् । उद्दालकपुष्पाणां भञ्जिकेत्यन्ये । सूत्रे आख्यानशब्दस्याऽल्पाच्तरत्वेन पूर्वनिपाते कृते व्याख्यानस्य प्रश्नपूर्वकतयाऽर्थप्राप्तक्रममनुसृत्य व्याचष्टे—**परिप्रश्ने आख्याने चेति** । **परिपाटीति** । पट गतौ

---

बा.] बलात्कृत्संज्ञा । अतः प्रातिपदिकत्वात्सुबुत्पत्तिः । ककारस्य नेत्संज्ञा, प्रयोजनाऽभावात् । अनार्द्धधातुकतया 'आकार' इत्यादौ आतो लोपाऽप्रसक्तेः । अनार्द्धधातुकत्वादेव नेट् । बहुलग्रहणानुवृत्तेः क्वचिन्न—'अस्य च्वौ' इत्यादौ । **ककार इति** । कवर्ण इत्यर्थः । प्रकृतावकार उच्चारणार्थः । 'न पुनरन्तरेणाऽचं व्यञ्जनस्योच्चारणं भवती'ति 'उच्चैरुदात्त' इति सूत्रभाष्यात् । क्वचित्सङ्घातादपि कारप्रत्ययः, यथा 'एवकार' इत्यादौ, 'वषट्कार' इति सूत्रनिर्देशात्, 'सर्वे चकाराः प्रत्याख्यायन्ते' इति भाष्याच्च । **रादिफ इति** । 'वाच्य' इति शेषः । वाऽसरूपविधिना कारप्रत्ययोऽपि । अत्र स्त्रियामित्यस्य अनुवृत्तेरनभ्युपगमेन अस्त्रियामिति निषेधाऽभावात् । **मत्वर्थाच्छ इति** । मत्वर्थशब्दात्स्वार्थे छप्रत्ययो वाच्य इत्यर्थः । ननु 'मत्वर्थीय' इत्यत्र कथं 'यस्येति चे'त्यकारलोपः, अतद्धितपरत्वात्, अभत्वाच्चेत्यत आह—**बहुलवचनादकारलोप इति** । **मत्वर्थीय इति** । मतोरर्थो यस्य प्रत्ययस्य स मत्वर्थः । स एव मत्वर्थीयः । 'तसौ मत्वर्थे' इत्यत्र तु बहुलग्रहणान्न । 'शैषिकान्मतुबर्थीया'दित्यत्र भवार्थे गहादित्वाच्छो बोध्यः । **इणजादिभ्य इति** । 'वाच्य' इति शेषः । स्त्रियामित्येव । [आजिरित्यत्र अजेर्वीभावमाशङ्क्य आह—**बहुलमिति**] । **इञ्वपादिभ्य इति** । 'वाच्य' इति शेषः । स्त्रियामित्येव ।

ननु इणोऽनुवृत्त्यैव सिद्धे इञ्ग्रहणमनर्थकमित्यत आह—**स्वरे भेद इति** । 'ञ्नित्यादिर्नित्य'मिति स्वरविशेष इञ्विधेः फलमित्यर्थः । **इक्कृष्यादिभ्य इति** । 'वाच्य' इति शेषः । **कृषिरिति** । कित्त्वान्न लघूपधगुणः । **गिरिरिति** । गॄधातोरिक् । कित्त्वान्न गुणः । 'ॠत इद्धातो'रिति इत्त्वे रपरत्वम् । **संज्ञायाम्** । **वरणेति** । वरणो वृक्षविशेषः—'वारणान्यहोमार्थानी'त्यादौ याज्ञिकानां प्रसिद्धः । [ अभ्यूष इत्यस्य विवरणं—**पूरिकेति** । तस्यापि विवरणम्—**अपूपविशेष इति** । 'समितावेसने जीरहिङ्गुमारीचयोजिते । घृताक्ते जलसंयुक्ते पीठस्योपरि वेल्लिते । घृतेन वाऽथ तैलेन भर्जिता पूरिका मता' इति **भोजनकौतूहले** तल्लक्षणात् ] । **विभाषाख्यान** । स्त्रियामित्येव । पूर्वं परिप्रश्नः, पश्चादुक्तकथनमाख्यानम् । अल्पाच्तरत्वादाख्यानशब्दस्य पूर्वनिपातः । तदाह—**परिप्रश्न इति** । वाऽसरूपविधिना सिद्धे विभाषाग्रहणं व्यर्थमित्यत आह—**विभाषोक्तेरिति** । स्त्रियां वाऽसरूपविधेरप्रवृत्त्या विभाषाग्रहणाऽभावे इञ्ण्वुलावेव स्याताम् , न तु प्रत्ययान्तरमित्यर्थः । परिप्रश्ने उदाहरति—**कां त्वमिति** । कां त्वं कारिमकार्षीरित्यन्वयः । इञि रूपम् । एवं **कारिकामित्यादावपि** कां त्वमित्यस्य, कार्षीरित्यस्य चान्वयो बोध्यः । **कारिकामिति** । ण्वुलि रूपम् । **क्रियामित्यत्र** 'कृञः श च'ेति शः । **कृत्यामित्यत्र** 'कृञः श चे'ति चकारात्क्यपि तुक् । **कृतिमित्यत्र** क्तिन् 'कृञः श चे'ति चकारादित्युक्तम् । आख्याने उदाहरति—**सर्वां कारिमित्यादि** । अत्रापि 'सर्वां कारि'मित्यादिपक्षेषु 'सर्वां'मित्यस्य'अकार्ष'मित्यस्य चान्वयः । **एवं गणिमिति** । अत्रापि 'कामकार्षीः''सर्वामकार्ष'मिति प्रश्नप्रतिवचनानि योज्यानि । गणधातोरदन्ताच्चुरादिणिजन्तादिञादि । अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । **गणनामिति** । 'ण्यासश्रन्थः' इति युच् । अत्र क्तिन् तु न, युचा बाधात् । **पचामित्यत्र** 'षिद्भिदादिभ्यः' इति षित्त्वादङ् । **इज्यामित्यत्र** 'व्रजयजोर्भावे' इति क्यप् । 'वचिस्वपी'ति संप्रसारणम् । इष्टिरि-

---

शे.] रादिति निर्देशात्पक्षे प्रत्ययसामान्याऽभावोऽपि । **मत्वर्थीय इति** । 'मतु'शब्देन तदर्थो लक्ष्यते, ततो बहुव्रीहिः, स्वार्थे छो

महः=योग्यता । पर्यायादिषु द्योत्येषु ण्वुच् वा स्यात् । भवत आसिका । शायिका । अग्रगामिका । भवानिक्षुभक्षिकामर्हति । ऋणे—इक्षुभक्षिकां मे धारयसि । उत्पत्तौ-इक्षुभक्षिका उदपादि । **आक्रोशे नञ्यनिः** ।३।३।११२। विभाषेति निवृत्तम् । नञि उपपदेऽनिः स्यादाक्रोशे । अजीवनिस्ते शठ ! भूयात् । अप्रयाणिः । **'कृत्यल्युटो बहुलम्'** । भावेऽकर्तरि च कारके [ संज्ञायाम् ] इति च निवृत्तम् । राज्ञा भुज्यन्ते [ इति । राजभोजनाः शालयः । **'नपुंसके भावे क्तः'** । **ल्युट् च** ।३।३।११५। हसितम् । हसनम् । योगविभाग उत्तरार्थः । **कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम्** ।३।३।११६। येन स्पृश्यमानस्य कर्तुः शरीरसुखमुत्पद्यते तस्मिन्कर्मण्युपपदे ल्युट् स्यात् । पूर्वेण सिद्धे नित्यसमासार्थं वचनम् । पयःपानं सुखम् । कर्तुरिति किम् ? । गुरोः स्नापनं सुखम् । नेह गुरुः कर्ता, किंतु कर्म । **वा यौ** ।२।४।५७।

त.] परिपूर्वः । 'इणजादिभ्यः' इतीण् । 'कृदिकारा'दिति ङीष् । **आक्रोशे** । आक्रोशः—शापः । नपुंसके भावे क्तः । ननु 'तयोरेव कृत्यक्तखलर्थाः' इति लिङ्गत्रयसाधारण्येन भावकर्मणोः कृत्यादिविधानात्तेनैव नपुंसके भावे क्तः सिध्यति, किमनेन पुनर्विधानेनेति चेत् । अत्राहुः—'भूते' इत्यधिकृत्य 'निष्ठा' इति सूत्रेण विहितस्य क्तस्य भावोऽर्थः 'तयोरेवे'ति सूत्रेण विहितः, अनेन तु कालसामान्ये नपुंसके भावे क्तो विधीयते । एवं च स्वविषये परत्वाद्घञपां बाधक इति परिशेषादेवैषां पुंविषयत्वं सिध्यति । किंच इह 'भावे चाऽकर्मकेभ्य' इत्यस्याऽसन्निधानात्सकर्मकेभ्योऽप्ययं भवति, घञादिवत् । 'गतं तिरश्चीनमनूरुसारथेः' इत्यादिदर्शनात् । तथा च नास्त्यत्र शङ्केति । नन्वेवं कृद्योगे कर्मणि द्वितीया स्यात्, कृद्योगलक्षणषष्ठ्या 'न लोके'ति निषेधात् । एवं च 'घटं कृतं' 'वृक्षं भिन्न'मित्यादि प्रसज्येत । 'अनूरुसारथे'रित्यत्र तु कर्तरि तृतीया नापद्यते, कारकषष्ठ्या निषेधेऽपि शेषत्वविवक्षया षष्ठीति समाधानसंभवादिति चेन्मैवम् । नपुंसके भावे क्तस्य योगे षष्ठ्या उभयसङ्ख्यातत्वात्कर्मणि द्वितीयाया अभावात् । शेषत्वविवक्षामाश्रित्य वार्तिकमिदं प्रत्याख्यातमाकरे इति चेत्तर्हि तत्प्रामाण्यात्प्रायेण शेषत्वविवक्षैवेत्यस्तु । तथा च 'घटं कृत'मित्यादि तु न प्रसज्यत एव । क्वचित्तु द्वितीयाऽपि दृश्यते 'भ्रान्तं देशमनेकदुर्गविषम'मि[ती]ति दिक् । **कर्मणि च** । कर्तुरिति कर्मणि षष्ठी, 'उभयप्राप्तौ कर्मणि' इति नियमात् । येनेति तृतीया । तदाह—**येन स्पृश्यमानस्य कर्तुरिति** । **ल्युट् स्यादिति** । नपुंसके भावे इति बोध्यम् । अत एवाह—**पूर्वेणेति** । 'ल्युट् चे'त्यनेनेत्यर्थः । **नेहेति** । स्नानकर्तृ-

बा.] त्यत्र यजेः क्विन्, व्रश्चेति षः । **पर्यायार्ह** । पर्यायशब्दस्य विवरणं—**परिपाटीति** । तस्यापि विवरणं—**क्रम इति** । परिपूर्वात्पटेः क्रमार्थादिणजादिभ्य इति स्त्रियां भावे इण् । 'कृदिकारादक्तिनः' इति ङीष् । **अर्हणमर्ह इति** । भावे घञिति भावः । **द्योत्येष्विति** । भाव एवार्थे प्रत्यय इति भावः । क्रमे उदाहरति—**भवत आसिकेति** । आदौ आसनं, ततः शयनं, ततोऽग्रगमनमित्यर्थः । अर्हे उदाहरति—**भवानिति** । 'ऋणे' इत्युदाहरणसूचनम् । इक्षुभक्षणमृणत्वेन धारयसीत्यर्थः । **'उत्पत्ता'** इत्युदाहरणसूचनम् । **उदपादीति** । उत्पन्नेत्यर्थः । उत्पूर्वात्पदेः कर्तरि लुङि 'चिण् ते पदः' इति चिण् । **आक्रोशे नञ्यनिः** । **निवृत्तमिति** । व्याख्यानादिति भावः । **अजीवनिरिति** । अजीवनमित्यर्थः । **अप्रयाणिरिति** । अप्रयाणमित्यर्थः । क्तिन् तु न भवति, अनिना बाधात् । स्त्रियां वाऽसरूपविधेरभावात् । विभाषानुवृत्तौ क्वचित्क्तिन्स्यादिति भावः । इति स्त्र्यधिकारः । **कृत्यल्युटो बहुलम्** । कृत्यसंज्ञकाः प्रत्ययाः 'तयोरेव कृत्यक्तखलर्थाः' इति भावे कर्मणि च विहिताः । करणे अधिकरणे भावे च ल्युड्विहितः । ततोऽन्यत्रापि कृत्यल्युटः स्युरित्यर्थः । स्नानीयं चूर्णम् । 'करणे अनीय'रिति सिद्धवत्कृत्य ल्युटि उदाहरति—**राज्ञेति** । कर्मणि ल्युडिति भावः । **नपुंसके भावे क्तः** । इदं सूत्रं 'निष्ठे'ति सूत्रप्रस्तावे प्रागेव प्रसङ्गाद्व्याख्यातं मूले । इह तु क्रमप्राप्तत्वात्पुनरुपन्यस्तम् । **ल्युट् च** । चात् क्तः । नपुंसके भावे इत्येव । ननु 'नपुंसके भावे क्तल्युटौ' इत्येव सिद्धे योगविभागो व्यर्थ इत्यत आह—**योगेति** । 'कर्मणि च येने'त्युत्तरसूत्रे ल्युट एवानुवृत्त्यर्थः । **कर्मणि च येन** । संस्पर्शशब्दः कृदन्तः, कृद्योगे कर्तुरिति कर्मणि षष्ठी । येनेति कर्तरि तृतीया । 'उभयप्राप्तौ कर्मणी'ति नियमात् । **येन कर्मणेति** । **कर्तुः शरीरस्येति** । शरीरावच्छिन्नस्येत्यर्थः । अर्द्धर्चादित्वाच्छरीरशब्दः पुंलिङ्गोऽपि । तेन 'कर्तृण' इत्येव भाव्यमिति निरस्तम् । **ल्युट् स्यादिति** । 'भावे नपुंसके' इति शेषः । **पूर्वेणेति** । 'ल्युट् चे'ति पूर्वसूत्रेणेत्यर्थः । **नित्येति** । उपपदसमासार्थमित्यर्थः । तस्य नित्य-

शे.] बोद्धव्यः । **शरीरसुखमिति** । अर्थात्स्पृश्यमानस्य कर्तुः शरीरस्वास्थ्यजनकं सुखमित्यर्थः । कर्मणि किम् ? । तूलिकाया उत्थानं सुखम् । स्पर्शादिति किम् ? । अग्निकुण्डस्योपासनं सुखम् । शरीरेति किम् ? । पुत्रस्य परिष्वञ्जनं सुखम् । मानस

अजेर्वी वा स्याद्यौ । प्रवयणम् । प्राजनम् । **करणाधिकरणयोश्च** ।३।३।११७। ल्युट् स्यात् । इध्मप्रव्रश्चनः कुठारः । गोदोहनी स्थाली । खलः प्राक्करणाधिकरणयोरित्यधिकारः । **अन्तरदेशे** ।८।४।२४। अन्तःशब्दाद्धन्तेर्नस्य णः स्यात् । अन्तर्हणनम् । देशे तु अन्तर्हननो देशः । अत्पूर्वस्येत्येव । अन्तर्घ्नन्ति । तपरः किम् ? । अन्तरघानि । **अयनं च** ।८।४।२५। अयनस्य नस्य णोऽन्तःशब्दात्परस्य । अन्तरयणम् । अदेश इत्येव । अन्तरयनो देशः । **पुंसि संज्ञायां घः प्रायेण** ।३।३।११८। **छादेर्घेऽद्व्युपसर्गस्य** ।६।४।९६। द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वः स्याद्घे परे । दन्ताश्छाद्यन्तेऽनेन दन्तच्छदः । प्रच्छदः । अद्वीति किम् ? । समुपच्छादः । आकुर्वन्त्यस्मिन् आकरः । **गोचरसंचरवहव्रजव्यजापणनिगमाश्च** ।३।३।११९। घान्ता निपात्यन्ते । 'हलश्चे'ति वक्ष्यमाणस्य घञोऽपवादः । गावश्चरन्त्यस्मिन्निति गोचरो देशः । संचरन्तेऽनेन संचरो मार्गः । वहन्त्यनेन वहः स्कन्धः । व्रजः । व्यजस्तालवृन्तम् । निपातनाद्वीभावो न । आपणः पण्यस्थानम् । निगच्छन्त्यनेन निगमश्छन्दः । चात्कषः । निकषः । **अवे तॄस्त्रोर्घञ्** ।३।३।१२०। अवतारः कूपादेः । अवस्तारो जवनिका । **हलश्च** ।३।३।१२१। हलन्ताद्घञ् स्यात् । घापवादः । रमन्ते [योगिनो]ऽस्मिन्निति रामः । अपमृज्यतेऽनेन व्याध्यादीत्यपामार्गः । विमार्गः समूहनी । **अध्यायन्यायोद्यावसंहाराश्च** ।३।३।१२२। अधीयतेऽस्मिन् अध्यायः । नियन्ति, उद्यवन्ति, संहरन्त्यनेनेति विग्रहः ।

---

त.]त्वेऽपि स्नापने न गुरुः कर्ता, किंतु शिष्य इत्यर्थः । शरीरग्रहणं किम् ? । पुत्रस्य परिष्वजनं सुखम् । मानसी प्रीतिरत्र । **करणाऽधिकरणयोः** । येन नाऽप्राप्तिन्यायेन घञोऽपवादोऽयमजपौ स्त्रीप्रत्ययांश्च परत्वाद्बाधते । उक्तं हि- 'अजब्भ्यां स्त्रीखलनाः, स्त्रियाः खलनौ विप्रतिषेधेने'ति । **इध्मेति** । इध्मानि प्रव्रश्च्यन्ते येन, गौर्दुह्यते यस्यामिति विग्रहः । **आकुर्वन्तीति** । एत्य कुर्वन्त्यस्मिन्व्यवहारमित्याकर उत्पत्तिस्थानम् । **अवे** । अवे उपपदे तॄस्तॄभ्यां करणाधिकारणयोः पुंसि संज्ञायां घञ्स्यात् । घस्यापवादः । **अवहारेत्यादि** । वृत्तिकारस्त्वाधारावायशब्दौ सूत्रे

---

बा.] त्वात् । **पयःपानं सुखमिति** । पयसा स्पृश्यमानशरीरावच्छिन्नस्य सुखजनकमित्यर्थः । उदाहरणान्तरमाह—**ओदनभोजनं सुखमिति** । शङ्कते—**अत्र पानादिति** । पानादेव सुखम्, न तु संस्पर्शनेनेत्यर्थः । भोजनादित्यपि द्रष्टव्यम् । अत्र दृष्टान्तमाह—**चन्दनानुलेपनं सुखमितिवदिति** । तथा च पयसा ओदनेन च स्वरूपतस्तावद्देवदत्तसुखाऽभावात् कथमिदमुदाहरणमिति भावः । समाधत्ते—**सत्यमिति** । **यत्र संस्पर्शमिति** । यत्र विषये संस्पर्शं विना स्वरूपतस्तैव सुखं नोत्पद्यते तादृशविषयोपलक्षणं संस्पर्शग्रहणमित्यर्थः । फलितमाह-**यत्रेति** । स्पर्शनेन यत्र सुखं, यथा चन्दनानुलेपनं सुखमिति, यत्र संस्पर्शपूर्वकपानादेर्वा सुखम् यथा 'पयःपानं सुख'मित्यादौ, तत्र सर्वत्राऽस्य प्रवृत्तिरित्यर्थः । [**तूलिकाया उत्थानं सुखमिति** । अत्र न कर्मोपपदमिति भावः । **अग्निकुण्डस्येति** । 'शीतकाले' इति शेषः । अत्राग्निकुण्डेन संस्पर्शो नास्ति, दाहप्रसङ्गादिति भावः । ननु 'तूलिकाया उत्थान'मित्यादिप्रत्युदाहरणेषु पूर्वसूत्रेण ल्युट् स्यादेवेति 'कर्मणी'त्यादि व्यर्थमित्यत आह-**प्रत्युदाहरणेष्विति** । **असमास इति** । नित्यस्योपपदसमासस्याऽभाव इत्यर्थः ।] **करणाधिकरणयोश्च** । अर्थनिर्देशोऽयं, न तूपपदं, व्याख्यानात् । अजपौ परत्वादयं बाधते । तदुक्तं 'अजब्भ्यां स्त्रीखलनाः, स्त्रियाः खलनौ विप्रतिषेधेने'ति । **इध्मप्रव्रश्चन इति** । प्रव्रश्च्यतेऽनेनेत्यर्थे ल्युट् । इध्मस्य प्रव्रश्चन इति विग्रहः । **गोदोहनीति** । दुह्यतेऽस्यामित्यर्थे ल्युट् । गोर्दोहनीति विग्रहः । **खलः प्रागिति** । व्याख्यानादिति भावः । **पुंसि** । करणाधिकरणयोरित्येव । पूर्वसूत्रापवादः । **छादेर्घे** । 'अद्व्युपसर्गस्ये'ति छेदः । **ह्रस्वः स्यादिति** । 'खचि ह्रस्वः' इत्यतस्तदनुवृत्तेरिति भावः । 'णिच्प्रकृतिभूतस्य छाद उपधाया' इति शेषः । 'ऊदुपधायाः' इत्यतस्तदनुवृत्तेः । एतेन णेरेव ह्रस्वः, तत्सामर्थ्यात्तस्य लोपो नेति परास्तम् । **गोचर** । ननु 'पुंसि संज्ञायां घः' इत्येव सिद्धे किमर्थमिदमित्यत आह-**हलश्चेति वक्ष्यमाणस्येति** । **चात्कष इति** । व्याख्यानादिति भावः । **अवे तॄस्त्रोः** । अवेत्युपसर्गे उपपदे तॄ स्तॄ आभ्यां घञ् स्यात्, पुंसि संज्ञायां प्रायेणेत्यर्थः । **घापवाद इति** । 'पुंसि संज्ञाया'मिति विहितस्य घस्याऽपवाद इत्यर्थः । **हलश्च** । स्पष्टम् । **अध्याय** । अधिपूर्वक इङ्, निपूर्वक इण्, उत्पूर्वको युधातुः, संपूर्वको हृञ्,

---

शो.]प्रीतिरत्र । **वा यौ** । इदं सूत्रम्-'अजेर्यौ परतो वा इत्यादेशे 'वायु'रित्येवं भाष्ये व्याख्यातम् । छादेर्घे । अत्रोपधाया इति वर्तते, णाविति च । छादेरिति णिप्राग्भागानुकरणमागन्तुनेकारेण । घपरे णावङ्गस्य छाद उपधाया ह्रस्व इत्यर्थः । एतेन णेरेव ह्रस्वः स्याचत्सामर्थ्याच्च णिलोपो न स्यादित्यपास्तम् । **अवे तॄस्त्रोः** । करणाधिकरणयोरित्यनुवृत्तावपि यथासङ्ख्यं न, अस्वरित-

❀ **अवहाराधारावायानामुपसङ्ख्यानम्** । **उदङ्कोऽनुदके** ।३।३।१२३। उत्पूर्वादञ्चतेर्घञ् स्यान्न तूदके । घृतमुदच्यते=उद्ध्रियतेऽस्मिन्निति घृतोदङ्कश्चर्ममयं भाण्डम् । अनुदके किम् ? । उदकोदञ्चनः । **जालमानायः** ।३।३।१२४। आनीयन्ते मत्स्यादयोऽनेनेत्यानायः । जालमिति किम् ? । आनयनः । **खनो घ च** ।३।३।१२५। चाद्घञ् । आखनः । आखानः । घित्करणमन्यतोऽप्ययमिति ज्ञापनार्थम् । तेन भगः पदमित्यादि । ❀ **खनेर्डडरेकेकवका वाच्याः** । आखः । आखरः । आखनिकः । आखनिकवकः । एते खनित्रवचनाः । **ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** ।३।३।१२६। करणाधिकरणयोरिति निवृत्तम् । एषु दुःखसुखार्थेषूपपदेषु खल् स्यात् । 'तयोरेवे'ति भावे कर्मणि च । कृच्छ्रे-दुष्करः कटो भवता । अकृच्छ्रे-ईषत्करः । सुकरः । ❀ **निमिमीलियां खलचोरात्त्वं नेति वाच्यम्** । ईषन्निमयः । दुष्प्रमयः । सुविलयः । निमयः । मयः । लयः । **उपसर्गात्खल्घञोः** ।७।१।६७। उपसर्गादेव लभेर्नुम् स्यात् । ईषत्प्रलम्भः । दुष्प्रलम्भः । सुप्रलम्भः । उपालम्भः । उपसर्गात्किम् ? । ईषल्लभः । लाभः । **न सुदुर्भ्यां केवलाभ्याम्** ।७।१।६८। उपसर्गान्तररहिताभ्यां सुदुर्भ्यां लभेर्नुम् न स्यात् खल्घञोः । सुलभम् । दुर्लभम् । केवलाभ्यां किम् ? । सुप्रलम्भः । अतिदुर्लम्भः । कथं

---

**त.]** प्रश्लिष्य चकारेणाऽवहारशब्दं संजग्राह, तदसंबद्धमिति स्पष्टमेव । **उदङ्को** । 'हलश्चे'त्येव सिद्धे उदकप्रतिषेधार्थमिदम् । **उदकोदञ्चन इति** । 'पुंसि संज्ञाया'मिति घे प्राप्ते घञ्विहितः । उदके तु घञि प्रतिषिद्धे घ एव स्यान्न तु ल्युडिति चेन्मैवम् । प्रतिषेधसामर्थ्याद्घस्याऽप्यप्रवृत्तेः । न हि इह घे घञि वा रूपे विशेषोऽस्ति । न च स्वरे विशेषः, घे सति कृदुत्तरपदप्रकृतिस्वरेणाऽन्तोदात्तता, घञ्यपि थाथादिस्वरेण तथैवेति । **जालमा** । जल घातने । [धान्ये?] 'ज्वलितिकसन्तेभ्यो णः' इति णप्रत्यये जालशब्दः सिद्धः । तेन जालशब्दोऽत्र निपात्यत इति न भ्रमितव्यम् । **खनो** । **घित्करणमिति** । 'आखन' इत्यादौ 'चजो'रिति कुत्वस्य प्रसक्त्यभावादिति भावः । **भगः** । **पदमिति** । ननु पदमित्यत्र घस्य किं प्रयोजनमिति चेदत्राहुः-'करणाधिकरणयोः' 'पुंसि संज्ञाया'मिति यदि घः स्यात्तदा 'पद'मिति नपुंसकं न स्यात्, अनेन चेद्घो भवति तदा त्विष्टसिद्धिरिति । **एते इति** । आखनादयः षडित्यर्थः । **ईषद्दुःसुषु** । इह सामान्योक्तावपि योग्यतावलाद्विशेषणस्य विषयविभागो लभ्यते । दुरिति कृच्छ्रार्थे, इतरौ त्वकृच्छ्रार्थे । तदेतद्दर्शयति-**कृच्छ्रे दुष्कर इत्यादिना** । **भवतेति** । 'न लोके'ति षष्ठीनिषेधात्कर्तरि तृतीया । कृच्छ्रेत्यादि किम् ? । ईषत्कार्यम् । स्वल्पं कार्यमित्यर्थः । **खलिति** । लकारः स्वरार्थः, खित्करणं तूत्तरत्र मुमर्थम् । **निमिमीति** ।

---

**बा.]** एते घञन्ता निपात्यन्ते । 'पुंसि संज्ञाया'मिति घापवादः । **अवहारेति** । अवहारः, आधारः, आवायः, एषां घञन्तानां निपातनस्योपसङ्ख्यानमित्यर्थः । **उदङ्कोऽनुदके** । घस्यापवादः । **घृतोदङ्क इति** । 'चजोः कु घिण्ण्यतो'रिति कुत्वम् । **जालमानायः** । जालं वाच्यं चेदानाय इति घञन्तमित्यर्थः । **खनो घ च** । 'घे'ति लुप्तप्रथमाकम् । खनो घञ् स्यात् घश्चेत्यर्थः । नन्वत्र घित्करणं व्यर्थम्, चजोरभावेन कुत्वस्याऽप्रसक्तेरित्याशङ्क्य आह—**घित्करणमिति** । **भजेर्भग इति** । भज्यते इति कर्मणि घः । **पदमिति** । पद्यते गम्यतेऽनेनेति विग्रहः । **खनेरिति** । ड, डर, इक, इकवक, एषां चतुर्णां द्वन्द्वः । **आख इति** । डे रूपम् । **आखर इति** । डरे रूपम् । उभयत्रापि डित्त्वसामर्थ्याट्टिलोपः । इके उदाहरति—**आखनिक इति** । इकवके उदाहरति—**आखनिकवक इति** । **ईषद्दुःसुषु** । **निवृत्तमिति** । व्याख्यानादिति भावः । तर्हि 'कर्तरि कृ'दिति कर्तरि स्यादित्यत आह—**तयोरेवेति** । इह दुरिति कृच्छ्रार्थ एवान्वेति, अकृच्छ्रार्थे तु ईषदिति, सु इति चान्वेति । योग्यताबलात् । तदेतदाह-**कृच्छ्रे दुष्कर इत्यादिना** । **भवतेति** । 'न लोके'ति षष्ठीनिषेधात्कर्तरि तृतीया । कृच्छ्रेत्यादि किम् ? । ईषत्कार्यम् । अल्पमित्यर्थः । **निमीति** । निपूर्वो मिञ्, मीनातिः, लीङ्, एषामित्यर्थः । 'मीनातिमिनोतिदीङां ल्यपि च' 'विभाषा लीयते'रिति प्राप्तमात्त्वं खलचोर्निषिध्यते । खलि उदाहरति—**ईषन्निमय इत्यादि** । 'एर'जित्यचि उदाहरति—**निमय इत्यादि** । **उपसर्गात्खल्घञोः** । **लभेर्नुमिति** । 'लभेश्चे'त्यतः 'इदितो नुम्' इत्यतश्च तदनुवृत्तेरिति भावः । **न सुदुर्भ्याम्** । 'केवलाभ्या'मित्येतद्व्याचष्टे-**उपसर्गान्तरेति** । **सुप्रलम्भः अतिदुर्लम्भ इति** । अत्र

---

**शे.]** त्वात् । हलश्च । अत्रापि प्रायेणेति वर्त्तते । अवहारादयस्त्वयोऽप्यधिकरणसाधनाः । उदङ्कोऽनु । अनुदकविषयकार्थप्रतिपादकाऽञ्चेः 'उदङ्क' इति निपात्यत इत्यर्थः । घृतोदङ्क इति । वाऽसरूपन्यायेन घृतोदञ्चनोऽपीति कश्चित् । गोदोहनप्रसाधनयोर्बाहुलकाद्घघञौ नेति बोध्यम् । आनाय [इति । आनाय] इति निपात्यते जालञ्चेद्वाच्यमित्यर्थः । जालशब्दस्तु 'जल घातने' इति धातोः 'ज्वलिती'ति णान्तः । 'भगः पद'मिति क्वचित्प्रयोगः । ईषद्दुःसु । खित्त्वमुत्तरार्थं, लकारः स्वरार्थः । खलचोरिति । पचाद्यच्, परश्च गृह्यते । न सुदुर्भ्याम् । तृतीया पञ्चमी चेयम् । आद्ये प्रत्युदाहरति-सुप्रलम्भ इति । द्वितीये आह-अतिदुर्लभमिति ।

तर्हि अतिसुलभमतिदुर्लभमिति ? । यदा स्वती कर्मप्रवचनीयौ तदा भवष्यति । **कर्तृकर्मणोश्च भूकृञोः** ।३।३।१२७। कर्तृकर्मणोरीषदादिषु चोपपदेषु भूकृञ्भ्यः खल् स्यात् । यथासङ्ख्यं नेष्यते । कर्तृकर्मणी च धातोरव्यवधानेन प्रयोज्ये, ईषदादयस्तु ततः प्राक् । ॐ **कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम्** । खित्त्वान्मुम् । अनाढ्येनाढ्येन दुःखेन भूयते दुराढ्यम्भवम् । ईषदाढ्यम्भवम् । स्वाढ्यम्भवम् । ईषदाढ्यङ्करः । दुराढ्यङ्करः । स्वाढ्यङ्करः । च्व्यर्थयोः किम् ? । आढ्येन सुभूयते । **आतो युच्** ।३।३।१२८। खलोऽपवादः । ईषत्पानः सोमो भवता । दुष्पानः । सुपानः । ॐ**भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः** । दुःशासनः । दुर्योधन इत्यादि । **षात्पदान्तात्** ।८।४।३५। नस्य णो न । निष्पानम् । सर्पिष्पानम् । षात्किम् ? । निर्णयः । पदान्तात्किम् ? । पुष्णाति । पदे अन्तः पदान्तः इति सप्तमीसमासोऽयम् । तेनेह न—सुसर्पिष्केण । **आवश्यकाऽऽधमर्ण्ययोर्णिनिः** ।३।३।१७०। अवश्यङ्कारी । शतंदायी । **कृत्याश्च** ।३।३।१७१। आवश्यकाऽऽधम-

---

**त.]** 'मीनातिमिनोतिदीङां ल्यपि च' 'विभाषा लीयतेः' इति प्राप्तं निषिध्यते । **निमय इत्यादि** । 'एरच्' उपसर्गात्खल्घञोः । 'लभेश्चे'त्यनेनैव सिद्धे नियमार्थमिदमित्याह—**उपसर्गादेवेति** । **यदा स्वती इति** । 'सुः पूजायाम्', 'अतिरतिक्रमणे चे'ति तयोः कर्मप्रवचनीयत्वम् । **कर्तृकर्मणोः** । चकारः संनियोगार्थः । यदा कर्तृकर्मणोरीषदादीनां च युगपत्प्रयोगस्तदैव प्रत्ययो यथा स्यात् । न च कर्तृकर्मणोः प्रत्ययार्थत्वमेवास्तु न तूपपदत्वमिति वाच्यम् , ईषदादीनामेवोपपदत्वे तु खलः खित्त्वस्य वैयर्थ्यापत्तेः । मुमर्थं हि तत् । मुम् चानव्ययस्य विधीयते । तस्मात्कर्तृकर्मणोरिति उपपदत्वमेव । तदेतदाह—**ईषदादिषु चेति** । कर्तृकर्मणी द्वे, भूकृञौ च द्वौ, तयोर्यथासङ्ख्यं प्राप्तम् , स्वीकृतं च काशिकाकृता, न्यासकारहरदत्तादिभिश्च, प्राचापि तथैवोक्तं, तद्व्याख्यातृभिश्चानुमोदितं, तत्सर्वं नादर्तव्यम् , यथासङ्ख्यसूत्रस्थभाष्यविरोधादिति ध्वनयन्नाह—**यथासङ्ख्यं नेष्यत इति** । ननूपपदयोर्मध्ये पूर्वापरीभावव्यवस्था न सिध्यति, भूकृञोरव्यवहितत्वं कर्तृकर्मणोरेवेष्यते न त्वीषदादीनाम् । एवं च कथमत्रेष्टव्यवस्था सिध्यतीति चेदत्राहुः—बहुलग्रहणानुवृत्त्या दुराढ्यम्भव इति भाष्योदाहरणाच्चेष्टव्यवस्था सिध्यतीति । तदेतदभिप्रेत्याह—**कर्तृकर्मणी चेति** । भवतेः कर्तर्युदाहरति—**अनाढ्येनाढ्येनेति** । कर्मणि त्वनाढ्य आढ्यो भूयते इति विग्रहः । भाव्यते

---

**बा.]** सुदुरोरुपसर्गान्तरसहितत्वात् पूर्वसूत्रप्राप्तस्य न निषेधः । **कथं तर्हीति** । सुदुरोरुपसर्गान्तरसहितत्वेन नुमोऽनिषेधादिति भावः । समाधत्ते—**यदेति** । 'स्वती पूजायाम्' । यदा पूजार्थकाविमौ कर्मप्रवचनीयौ तदा उपसर्गत्वाऽभावान्न सुदुरोरुपसर्गसहितत्वम् । अतो निषेधो भविष्यतीति भावः । सोः पूजार्थतया उपसर्गत्वाऽभावात्पूर्वसूत्रान्न तत्र प्राप्तिरित्यपि बोध्यम् । **कर्तृकर्मणोश्च** । कर्तृकर्मणोरिति सप्तमी । उपपदयोरिति लभ्यते, व्याख्यानात् । चकारादीषद्दुस्सुष्विति समुच्चीयते । भूकृञोरिति पञ्चम्यर्थे षष्ठी । तदाह —**कर्तृकर्मणोरीषदादिषु चोपपदेष्विति** । अत्र कर्तृकर्मणोरन्यतरस्मिन् ईषद्दुःसूनामन्यतमे च इत्युभयस्मिन् समुच्चिते उपपदे इत्यर्थौ विवक्षितः । न तु प्रत्येकमुपपदत्वम् , व्याख्यानात् । भाष्ये तथैवोदाहरणाच्च । **नेष्यत इति** । भूकृञोः, कर्तृकर्मणोरित्यस्य च न यथासङ्ख्यमित्यर्थः । ननु कर्तृकर्मणोरन्यतरस्य ईषदादीनामन्यतमस्य च उपपदस्य प्रयोगसंनिपाते कथं पौर्वापर्यमित्यत आह—**कर्तृकर्मणी चेत्यादि** । भाष्ये तथैवोदाहरणादिति भावः । **च्व्यर्थयोरिति** । अभूततद्भाव इत्यर्थः । **भूयत इति** । भावे लट् । **दुराढ्यम्भवमिति** । भावे खल् । अत्राढ्यस्य दुरुपपदस्य भूधातोः प्रागव्यवधानेन प्रयोगः । दुरस्तु ततः प्राक् । **दुराढ्यङ्कर इति** । अनाढ्यः आढ्यो दुःखेन क्रियते इत्यर्थः । अत्र आढ्यः कर्म उपपदम् । ईषदाढ्यम्भवमित्याद्यप्युदाहार्यम् । अत्र ईषद्दुस्सूनां व्यवहितत्वात् पूर्वसूत्रेणाऽप्राप्ताविदमारब्धमिति बोध्यम् । **आतो युच्** । कर्तृकर्मणोरिति नानुवर्तते, अस्वरितत्वात् । ईषदादिषु कृच्छ्राऽकृच्छ्रार्थेषूपपदेषु आदन्ताद्धातोर्युच् स्यादित्यर्थः । तयोरेवेति भावे कर्मणि च । **खलोऽपवाद इति** । वाऽसरूपविधिस्तु न भवति, 'क्तल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्ने'त्युक्तेः । **दुष्पान इति** । 'इदुदुपधे'ति षः । **भाषायामिति** । 'छन्दसि गत्यर्थेभ्यः' 'अन्येभ्योऽपि दृश्यन्ते' इत्युत्तरमिदं वार्तिकम् । ईषद्दुस्सुष्वित्येव । खलोऽपवादः । **इति खलर्थाः प्रत्ययाः** । **आवश्यकाध** । कर्तरि कृदित्येव । **अवश्यङ्कारीति** । अवश्यमित्यव्ययम् । **शतंदायीति** । 'अकेनोर्भविष्यदा-

---

**शे.]** अत्र केवलशब्देन सूत्रोपस्थितातिरिक्तं सजातीयमुपसर्गान्तरं व्यावर्त्यते, न कर्मप्रवचनीयः, इतरः शब्दो वा, तद्ध्वनयन्नाह—**यदा स्वतीति** । 'सूत्रोपात्ताऽतिरिक्ते'ति विशेषणात्सुदुर्लभमित्यस्य सिद्धिरिति कैयटः । सुदुरोरुपसर्गत्वप्रतिषेधस्तु केवलसुदुर्विषय एव, 'अतिसुलभ'मित्यत्रैव भाष्यप्रयोगात् । **आतो युच्** । [आढ्येन सुभूयते इत्यर्थे न खल् , किं तु तव्यादय एवेति भावः] । ईषदादयोऽनुवर्त्यन्ते न तु कर्तृकर्मणोरिति । **दुष्पाने**—'इदुदुपधस्ये'ति षः । **षात्पदा** । 'कृत्यचः' इति 'वा भावकरणयोः'

पर्य्ययोरित्येव । अवश्यं हरिः सेव्यः । शतं देयम् । **क्तिच्क्तौ च संज्ञायाम्** ।३।३।१७४। धातोः क्तिच् क्तश्च स्यादाशिषि संज्ञायाम् । 'तितुत्रे'ति नेट् । भवतात्-भूतिः । **न क्तिचि दीर्घश्च** ।६।४।३९। अनिटां वनतितनोत्यादीनां च दीर्घानुनासिकलोपौ न स्तः क्तिचि परे । यन्तिः । रन्तिः । वन्तिः । तन्तिः । **सनः क्तिचि लोपश्चास्यान्यतरस्याम्** ।६।४।४५। सनोतेः क्तिचि आत्वं वा स्याल्लोपश्च वा । सनुतात्-सातिः । सतिः । सन्तिः । देवा एनं देयासुः-देवदत्तः । **अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा** ।३।४।१८। प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात् । प्राचांग्रहणं पूजार्थम् । 'अमैवाव्ययेने'ति नियमान्नोपपदसमासः । 'दो दद्घोः' । अलं दत्त्वा । '**घुमास्था**' । पीत्वा खलु । अलंखल्वोः किम् ? । मा कार्षीत् । प्रतिषेधयोः किम् ? । अलङ्कारः । **उदीचां माङो व्यतीहारे** ।३।४।१९। व्यतीहारेऽर्थे माङः क्त्वा स्यात् । अपूर्वकालार्थमिदम् । **मयतेरिद-**

त.] इति तदर्थः । एवमग्रेऽपि विग्रहद्वयमुन्नेयम् । अनाढ्यैनाढ्येन स्वयमेव क्रियते, अनाढ्य आढ्यः क्रियत इति । **इत्यादीति** । आदिशब्देन दुर्दर्शनः । दुर्धर्षणः । दुर्मर्षणः । **क्तिच्क्तौ** । क्तिचश्चकारो 'न क्तिची'ति विशेषणार्थः । 'न क्त्वा'वित्युक्ते हि क्तिनोऽपि ग्रहणं स्यादिति भावः । तत्र एकानुबन्धपरिभाषयैव क्तिनो व्यावृत्तिसिद्धेरिति हरदत्तः । यत्तु वदन्ति - 'तितुत्रे'त्यत्र सामान्यग्रहणार्थश्चकारः । अन्यथा एकानुबन्धत्वादस्यैव ग्रहणं स्यान्न तु क्तिन इति, तद्भ्रमसात्, 'तितुत्रे'ति सूत्रेऽनुबन्धविशिष्टरूपानुच्चारणेनैकानुबन्धपरिभाषाया उक्तिसंभवस्यैवाऽभावात् । एतेन 'तितुत्रे'ति सूत्रे एकानुबन्धत्वात्तिवेव गृह्यते न त्वयं क्तिच् । ततश्च रोदितीति रूपं न स्यादिति शङ्काप्यपास्ता । **भूतिरिति** । यद्यपीह परत्वात् 'श्र्युकः क्किति' इत्येवेण्निषेधो न्याय्यस्तथापि वन्तितन्त्योरिण्निषेधार्थमावश्यकत्वात्फले विशेषाऽभावाच्च 'तितुत्रे'त्युपन्यस्तम् । **दीर्घानुनासिकेति** । 'अनुनासिकस्य क्विझलो'रिति दीर्घस्य 'अनुदात्तोपदेशे'त्यादिनाऽनुनासिकलोपस्य च प्राप्तिरिति बोध्यम् । **यन्तिरित्यादि** । यम उपरमे, रम क्रीडायाम्, वनु याचने, तनु विस्तारे । **अलंखल्वोः । पूजार्थमिति** । ननु विकल्पार्थमेवास्तु, अलं रुदित्वा अलं रोदनेनेति रूपद्वयसिध्यर्थमिति चेन्मैवम् । वासरूपन्यायेनैतत्सिद्धेः । न च 'क्तल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्ने'ति सिद्धान्ताल्ल्युटि वासरूपन्यायो नास्तीति वाच्यं, 'क्तल्युडादयोऽपवादभूताः स्वबाध्यं नित्यं बाधन्ते' इति हि तस्य निष्कृष्टोऽर्थः । इह तु ल्युटोऽपवादः क्त्वेति वैषम्यात् । ननु 'प्रैषादिषु कृत्याश्चे'ति वचनेन स्त्र्यधिकारादूर्ध्वं वासरूपविधिर्नावश्यमस्तीति ज्ञापितमिति चेत्किं ततः ? । 'ज्ञापकसिद्धं न सर्वत्रे'तीष्टानुरोधेन तदभ्युपगमे बाधकाऽभावात् । **अलं दत्त्वेति** । अपात्रे न देयमिति फलितोऽर्थः । **उदीचाम्** । व्यतीहारो व्यतिक्रमः । मेङः कृतात्वस्यायं माङ इति निर्देशो 'नानुबन्ध-

वा.] धमर्ण्ययो'रिति षष्ठी न । **कृत्याश्चेत्यादि** । स्पष्टम् । **क्तिच्क्तौ च** । **आशिषीति** । 'आशिषि लिङ्लोटौ' इत्यतस्तदनुवृत्तेरिति भावः । **भवतादिति** । आशिषि लोट् । भूतिरित्यस्य विवरणमिदम् । कर्तरि क्तिच् । **न क्तिचि दीर्घश्च** । **अनिटामिति** । 'अनुदात्तोपदेशे'ति सूत्रमिहानुवर्तते इति भावः । **रन्तिरिति** । अत्र श्र्युकः किती'त्यस्याऽप्रवृत्तेः 'तितुत्रे'त्येव नेट् । भूतिरित्यत्र तु परत्वात् 'श्र्युकः किती'त्येवोचितम् । **सनः । आत्वमिति** । 'विड्वनोरनुनासिकस्या'दित्यतस्तदनुवृत्तेरिति भावः । **लोपश्चेति** । 'अन्त्यस्य नकारस्ये'ति शेषः । क्ते उदाहरिष्यन्नाह—**देवा एनं देयासुरिति** । आशीर्लिङ् । **देवदत्त इति** । 'तयोरेवे'ति कर्मणि क्तः । क्तिचा बाधा मा भूदिति क्तविधिः । अन्यथा अपवादेन क्तिचा क्तो बाध्येत । वाऽसरूपविधिस्तु 'स्त्रियां क्तिन्' इत्यतः प्रागेवेति 'प्रैषातिसर्गे'ति सूत्रे भाष्ये स्पष्टम् । **अलंखल्वोः** । **क्त्वा स्यादिति** । भावार्थकोऽयम्, 'अव्ययकृतो भावे' इति वचनात् । एतच्च 'तुमर्थे सेसेने'ति सूत्रे भाष्ये स्पष्टम् । ननु 'उदीचां माङो व्यतीहारे' इत्युत्तरसूत्रे उदीचांग्रहणादस्य नित्यत्वावश्यकत्वात् प्राचांग्रहणं व्यर्थमित्यत आह—**प्राचांग्रहणं पूजार्थमिति** । न च वाऽसरूपविधिराशङ्क्यः, तस्य 'स्त्रियां क्ति'न्नित्यतः प्रागेव प्रवृत्तेरुक्तत्वात् । 'अलंरोदनेने'त्यादि तु बहुलग्रहणात्समाधेयमित्यलम् । उपपदसमासे ल्यपमाशङ्क्य आह—**अमैवाव्ययेनेति** । **अलं दत्त्वेति** । दानेन किञ्चिदपि साध्यं नास्तीत्यर्थः । ईत्वं स्मारयति—**घुमास्थेति** । **पीत्वा खल्विति** । पानेन साध्यं नास्तीत्यर्थः । **उदीचां माङो** । व्यतीहारो=विनिमयः । 'समानकर्तृकयोः पूर्वकाले' इत्यनेन सिद्धिमाशङ्क्य आह—**अपूर्वकालार्थमिति** । **मयते-**

शे.] इति च प्राप्तं निषिध्यते । **पदे अन्त इति** । अत्र चाऽन्तग्रहणमेव मानम् । **क्तिच्क्तौ च** । क्तिचा बाधा मा भूदिति पुनः क्तविधिः । **न क्तिचि** । 'अनुदात्तोपदेशवनती'त्याद्यनुवर्त्तते । **दीर्घश्चेति** । 'अनुनासिकस्ये'ति प्राप्तः । **वन्तितन्त्योः**—'तितुत्रे'ति नेट् । **सनः क्तिचि** । अस्य विकल्पत्वाद्द्वयोर्ग्रहणे फलाऽभावादाह—**सनोतेरिति** । 'सन' इत्येव वक्तुं युक्तम् । **अलंख[ल्वोः]** । छन्दसि, भावलक्षणे इति निवृत्तम् । अव्ययकृत्त्वादसत्त्वभूतो भावः क्त्वार्थः । पक्षे ल्युडादौ तु स सत्त्वभूत इत्यन्यत् । **अलङ्कार इति** ।

न्यतरस्याम् ।६।४।७०। मेङ इकारोऽन्त्यादेशः स्याद्वा ल्यपि । अपमित्य याचते । अपमाय । उदीचाङ्ग्रहणा-द्यथाप्राप्तमपि । याचित्वा अपमयते । **परावरयोगे च** ।३।४।२०। परेण पूर्वस्याऽवरेण परस्य योगे गम्ये धातोः क्त्वा स्यात् । अप्राप्य नदीं पर्वतः । परनदीयोगोऽत्र पर्वतस्य । अतिक्रम्य पर्वतं [स्थिता] नदी। अवर-पर्वतयोगोऽत्र नद्याः । **समानकर्तृकयोः पूर्वकाले** ।३।४।२१। समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमाना-द्धातोः क्त्वा स्यात् । क्त्वो तु–'अव्ययकृतो भावे' इति भावे। भुक्त्वा व्रजति। द्वित्वमतन्त्रम् । स्नात्वा भुक्त्वा पीत्वा

त.] कृतमनेजन्तत्व मिति परिभाषां ज्ञापयति, तेन घुसंज्ञायां दैपोऽप्यदाबिति पर्युदासः सिध्यति । **अपमित्येति** । 'समासेऽनञ्पूर्वे'ति वक्ष्यमाणेन क्त्वो ल्यपि तुक् । याचित्वा प्रणिददातीत्यर्थः । **परावर । अप्राप्येति** । दक्षिण-देशस्थानां गङ्गामप्राप्य विन्ध्यः । गङ्गाप्राप्तिविरहविशिष्टदेशस्थो विन्ध्य इत्यर्थः । अत्र विन्ध्यात्परा गङ्गेति गम्यते । **अतिक्रम्येति** । दक्षिणदेशस्थानामेवायमपि प्रयोगः । अत्र हि गङ्गायाः पूर्वो विन्ध्य इति गम्यते । इह त्रिसूत्र्यां क्त्वाप्रत्ययस्य भावमात्रार्थत्वेऽपि विशेषणविशेष्यसंसर्गा भिद्यन्त इति नास्ति वैयर्थ्यमिति दिक् । **समानकर्तृक** । इह धात्वधिकारेऽपि समानकर्तृकत्वं क्रिययोरेव सम्भवतीत्याशयेनाह—**धात्वर्थयोरिति** । निर्धारणे षष्ठी सप्तमी वा । धात्वर्थयोर्मध्ये पूर्वः कालो यस्य धात्वर्थस्य तस्मिन्विद्यमानादित्यर्थः । एवं च निर्धारणविभक्तिरेव पूर्वकाल इत्यस्य बहुव्रीहित्वद्योतिकेति फलितम् । **क्त्वा स्यादिति** । स च भावे, 'अव्ययकृत' इति वचनात् । भावोऽपि घञादाविव नेह सिद्धावस्थः, किन्तु साध्यावस्थः । स च धातुनैव लब्धः । क्त्वाप्रकृत्यर्थभूता क्रिया च क्रियान्तरं प्रति विशेषणं, धातुसंबन्धाधिकारात् । संसर्गश्चेह सामानाधिकरण्यं, पूर्वोत्तरकालत्वं च । नत्र संसर्गविशेषतात्पर्यग्राहकाः क्त्वाणमुलादयः । अत्र च 'समानकर्तृकयो'रिति सूत्रांशेन सामानाधिकरण्यमुपनिबद्धम् , धातूपात्तव्यापाराश्रयस्य कर्तृतया तथा पर्यवसानादिति दिक् । **द्वित्वमिति**। नन्वमीषां ब्राह्मणानां पूर्वमानयेत्युक्ते मध्यमो नानीयते, तथेहापि

बा.] **रिदन्यतरस्याम्** । 'वाऽन्यस्य संयोगादेः' इत्यतो वेति, 'न ल्यपी'त्यतो ल्यपीति चानुवर्तते इति भावः । **अपमित्य याचत इति** । त्वया गौर्दत्ता चेन्मया महिषो दीयते इत्येवं विनिमयं कर्तुं गां याचते इत्यर्थः । इह विनिमयस्य पूर्वकालिकत्वाऽभावात् 'समानकर्तृकयो'रित्यस्य न प्राप्तिः । प्रत्युत याचनाया एव पूर्वकालिकत्वाद्याचेः क्त्वाप्राप्तिः । गतिसमासे क्त्वो ल्यप् । इत्वं । तुक् । **अपमायेति** । इत्वाऽभावे रूपम् । 'ईद्यती'ति ईत्वं तु न, 'न ल्यपी'ति इति निषेधात । **उदीचाङ्ग्रहणादिति** । तेन मेङः क्त्वाप्रत्ययस्य विकल्पलाभात्तदभावे याचेः पूर्वकाल-क्रियावृत्तित्वात्समानकर्तृकयोरिति क्त्वेति भावः । **परावरयोगे च** । परावरयोर्योगे इति विग्रहः । योगशब्दस्य प्रत्येकमन्वयः । परयोगे अवरयोगे च क्त्वेति लभ्यते । परेण कस्य योग इत्याकाङ्क्षायामवरस्येति लभ्यते । अवरेण कस्य योग इत्याकाङ्क्षायां परस्येति लभ्यते । तदाह—**परेण पूर्वस्येति** । अवरस्येत्यर्थः । पराऽवरशब्दौ हि क्रमा-व्यवहिताऽव्यवहितदेशवृत्तिवाचिनौ । **क्त्वा स्यादिति** । 'अव्ययकृतो भावे' इति वचनादयमपि भावार्थक एव । अव-रस्य परयोगे उदाहरति—**अप्राप्य नदीं पर्वत इति** । विन्ध्यपर्वताद्दक्षिणदेशे निवसतो विन्ध्यं गङ्गां च नदीम-धिकृत्य प्रवृत्तमिदं वाक्यम् । विन्ध्यस्योत्तरत एव हि गङ्गा । तथा च दक्षिणदेशस्थानां गङ्गोत्तरणेन विना विन्ध्य-पर्वतः प्राप्यत्वेन स्थित इत्यर्थः, विन्ध्यस्य दक्षिणतो गङ्गाया अभावादिति भावः । तथा च दक्षिणदेशस्थानां विन्ध्य-व्यवहिता गङ्गा । दक्षिणदेशीयापेक्षया अव्यवहितस्य विन्ध्यस्य दाक्षिणात्यापेक्षया व्यवहितया गङ्गया योगो गम्यते । तदाह--**परनदीयोगोऽत्रेति** । अथाऽपरेण परस्य योगे उदाहरति--**अतिक्रम्येति** । दाक्षिणात्यानाम-व्यवहितविन्ध्यपर्वतातिक्रमेणैव व्यवहिता गङ्गा प्राप्यत्वेन स्थितेत्यर्थः । अत्राऽव्यवहितेन विन्ध्येन दाक्षिणात्यापेक्षया व्यवहिताया गङ्गाया योगो गम्यते । तदाह-**अवरपर्वतेत्यादि** । इह अप्राप्तेरतिक्रमणस्य च विन्ध्यस्थितिपूर्वकाल-त्वाऽभावात् 'समानकर्तृकयोः पूर्वे'त्यस्य न प्राप्तिः । **समानकर्तृकयोः** । 'समानकर्तृकयो'रिति निर्धारणे षष्ठी । **पूर्वकाले** इत्यस्य पूर्वकालके धात्वर्थे इत्यर्थः । 'विद्यमाना'दिति शेषः । **क्त्वा स्यादिति** । अव्ययकृत्त्वाद्भावार्थको-ऽयम् । **भुक्त्वा व्रजतीति** । पूर्वकालिकाद्भोजनादुत्तरकालिकं व्रजनमित्यर्थः । **द्वित्वमिति** । समानकर्तृकयोरिति

शे.] भावे घञ् । 'मेङ् प्रणिदाने' इत्युक्त्या व्यवहारार्थस्य तस्यैव कृतात्वस्य सूत्रे निर्देशः । 'समानकर्तृकयो'रित्यनेन सिद्धिमा-शङ्क्याह—**अपूर्वेति** । पूर्वं ह्यसौ याचित्वा पश्चादपमयते=वस्त्रादि परिवर्त्तयतीत्यर्थो विवक्षित इति भावः । **परावर** । 'अवर'-शब्दोऽत्र पूर्ववृत्तिवाची । **समानक** । कप्रत्ययदर्शनाद्बहुव्रीहिः । **पूर्वकाले इति** । तद्विशिष्टेऽर्थे वर्तमानाद्धातोरित्यर्थः । अत एव 'समानकर्तृकयोः पूर्वकाल इति क्रियाप्रधानो निर्देशः' इति भाष्ये उक्तम् । **द्वित्वमिति** । पूर्वत्वस्य, समानकर्तृकत्वस्य च भेद-घटितत्वेनाऽनेकक्रियालाभेऽपि सौत्रो द्विवचननिर्देश इति भावः । पूर्वकालत्वञ्च व्यवहिताऽव्यवहितमपि । व्यवधानस्य च तात्पर्यवलेन

व्रजति। 'अनुदात्ते'त्यनुनासिकलोपः। विष्णुं नत्वा स्तौति। **क्षस्वरत्यादेः** 'श्र्युकः किती'ति नित्यमिडभावः पूर्वविप्रतिषेधेन। स्वृत्वा। सूत्वा। धूत्वा। **क्त्वि स्कन्दिस्यन्दोः** ।६।४।३१। एतयोर्नलोपो न स्यात् क्त्वि परे। स्कन्त्वा। ऊदित्त्वादिड्वा-स्यन्त्वा। स्यन्दित्वा। **न क्त्वा सेट्** ।१।२।१८। सेट् क्त्वा किन्न स्यात्। शयित्वा। सेट् किम् ?। कृत्वा। **मृडमृदगुधकुषक्लिशवदवसः क्त्वा** ।१।२।७। एभ्यः सेट् क्त्वा कित्। मृडित्वा। 'क्लिशः क्त्वे'ति वेट्। क्लिशित्वा। क्लिष्ट्वा। उदित्वा। उषित्वा। 'रुदविदे'ति कित्त्वम्। रुदित्वा। विदित्वा। मुषित्वा। गृहीत्वा। **नोपधात्थफान्ताद्वा** ।१।२।२३। सेट् क्त्वा कित्स्याद्वा। श्रथित्वा। श्रन्थित्वा। गुफित्वा। गुम्फित्वा। नोपधात्किम् ?। कोथित्वा। रेफित्वा। **वञ्चिलुञ्च्यृतश्च** ।१।२।२४। सेट् क्त्वा किद्वा। वचित्वा। वञ्चित्वा। लुचित्वा। लुञ्चित्वा। ऋतित्वा। अर्तित्वा। **तृषिमृषिकृशेः काश्यपस्य** ।१।२।२५। एभ्यः सेट् क्त्वा

---

त.] बहुक्रियासमभिव्याहारे मध्यमक्रियावाचकात् क्त्वाप्रत्ययो न स्यादिति चेदत्राहुः—इहाप्याख्यातवाच्या क्रिया प्रधानं, तां प्रति क्त्वान्तोपस्थिताः क्रियाः सर्वा एव विशेषणं, न तु तासां परस्परसंबन्धः, 'गुणानां च परार्थत्वा'दिति न्यायात्। अतएव स्नात्वा पीत्वा भुक्त्वा व्रजतीत्याद्यनियमेन प्रयुज्यत इति। 'स्वरतिसूती'त्यादिना विकल्पे प्राप्ते नित्यार्थमाह—**स्वरत्यादेरिति**। **क्त्वि स्कन्दि**। स्कन्दिर्गतिशोषणयोः। 'इर इत्संज्ञे'ति वार्तिकादिकारमात्रस्येत्संज्ञा नेति 'अनिदिता'मिति पर्युदासोऽत्र न प्रवर्तत इति स्कन्दिग्रहणम्। **स्कन्त्वेति**। 'एकाच' इति नेट्। **मृडमृद**। मृड सुखने, मृद क्षोदे, गुध परिवेष्टने, गुध रोषे च, कुष निष्कर्षे, क्लिश हिंसायां—दिवादिः, क्लिशू विबाधने—क्र्यादिः, वद व्यक्तायां वाचि, वस निवासे। **किदिति**। 'असंयोगाल्लिट्' कि'दित्यतः किदित्यनुवर्तत इति भावः। **उदित्वेति**। यजादित्वात्संप्रसारणम्। **उषित्वेति**। 'वसतिक्षुधो'रितीट्। यजादित्वात्संप्रसारणम्। 'शासिवसी'ति षः। **गृहीत्वेति**। 'ग्रहिज्ये'ति संप्रसारणम्, 'ग्रहोऽलिटी'ति इटो दीर्घः। **नोपधात्थ**। अन्तग्रहणं स्पष्टार्थम्। 'थफा'-दित्युक्तेऽपि धातोरेव क्त्वाप्रत्ययविधानाद्विशेष्यसंनिधानेन तदन्तविधिना थफान्तादिति लाभात्। **कोथित्वा**। **रेफित्वेति**। कुथ पूतीभावे, रिफ कत्थनयुद्धनिन्दाहिंसादानेषु। इह 'रलो व्युपधा'दिति विकल्पोऽपि न भवति, नोपधग्रहणसामर्थ्यात्। **वचित्वेति**। वञ्चु प्रलम्भने। **लुचित्वेति**। लुञ्च अपनयने। **ऋतित्वेति**। ऋतिः सौत्रो धातुर्घृणार्थकः,

---

द्वित्वमविवक्षितमिति भावः। **स्नात्वेति**। स्नानभोजनपानोत्तरकालिकं व्रजनमित्यर्थः। अत्र व्रजनापेक्षया स्नानादीनां बहूनां पूर्वकालिकत्वेऽपि क्त्वेति भावः। एतच्च भाष्ये स्पष्टम्। 'पूर्वं भुङ्क्ते ततो व्रजती'त्यत्र तु पूर्वशब्देनैव पूर्वत्वस्यावगमात् 'उक्तार्थानामप्रयोगः' इति न्यायान्न क्त्वा। 'पूर्वं भुक्त्वा ततो व्रजती'त्यत्र तु न क्रिययोः पौर्वापर्यं, किंतु कर्त्रोरेव। अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा पश्चाद्व्रजत्यन्येभ्यो भोक्तृभ्य इत्यर्थः। 'आस्यते भोक्तु'मित्यत्र तु वाऽसरूपविधिना लडिति भाष्यादौ विस्तरः। नमधातोः क्त्वाप्रत्यये आह—**अनुदात्तेतीति**। स्वरतिसूतिसूयतिधूञ्भ्यः क्त्वाप्रत्ययस्य 'श्र्युकः किती'ति निषेधं बाधित्वा 'स्वरतिसूतिसूयती'ति इड्विकल्पमाशङ्क्याह—**स्वरत्यादेरिति**। 'आर्द्धधातुकस्ये'डित्यादेरिड्विधिकाण्डात्प्राक् 'नेड्वशि कृती'त्यादेरिण्निषेधकाण्डस्यारम्भसामर्थ्यादिह पूर्वविप्रतिषेधमाश्रित्य 'श्र्युकः किती'ति इण्निषेध एव प्रवर्तते इति भावः। **क्त्वि स्कन्दि**। **नलोपो नेति**। 'श्नान्नलोपः' इत्यतो 'नलोप' इति, 'नाञ्चेः पूजाया'मित्यतो नेति चानुवर्तते इति भावः। **क्त्वीति**। क्त्वाशब्दस्य सप्तम्येकवचनम्। 'आत' इति योगविभागादाल्लोपः। **स्कन्त्वेति**। स्कन्दिर्धातो रूपम्। अनुदात्तोपदेशत्वानेट्। स्यन्दूधातोः क्त्वाप्रत्यये आह—**ऊदित्त्वादिड्वेति**। **न क्त्वा सेट्**। **किन्नेति**। 'असंयोगाल्लिट् कि'दित्यतः किदित्यनुवृत्तेरिति भावः। **शयित्वेति**। कित्त्वाऽभावान्न गुणनिषेधः। **मृडमृद**। 'न क्त्वा से'डिति निषेधस्यापवादः। **मृडित्वेति**। कित्त्वान्न लघूपधगुणः। मृदित्वेत्याद्यप्युदाहार्यम्। **क्लिश इति**। 'क्लिश हिंसायां' दिवादौ। ततः क्त्वाप्रत्ययस्य 'क्लिशः क्त्वानिष्ठयो'रिति वेडित्यर्थः। 'क्लिशू विबाधने' इत्यस्य तु ऊदित्त्वाद्वेट्। **उदित्वेति**। वदधातोः क्त्वाप्रत्ययः। 'वचिस्वपी'ति संप्रसारणम्। **उषित्वेति**। वसधातोः क्त्वा। 'वसतिक्षुधो'रिति इट्। संप्रसारणम्। 'शासिवसी'ति षः। **रुदविदे'ति कित्त्वमिति**। 'न क्त्वा से'डिति निषेधस्यापवाद इति भावः। **नोपधात्थफान्ताद्वा**। थफौ अन्तौ यस्येति विग्रहः। 'न क्त्वा से'डिति नित्यनिषेधे प्राप्ते विकल्पोऽयम्। कित्त्वे सति नलोपः। तदभावे तु नेति मत्वाह—**श्रथित्वेत्यादि**। **कोथित्वा रेफित्वेति**। कुथ पूतीभावे, रिफ कत्थनयुद्धहिंसादानेषु। इह 'रलो व्युपधा'दिति विकल्पोऽपि न भवति, नोपधग्रहणसामर्थ्यात्। **वञ्चिलुञ्च्यृतश्च**। 'न क्त्वा से'डित्यस्यापवादः। कित्त्वविकल्पान्नलोपविकल्पः। ऋतेरुदाहरति—**ऋतित्वा**

---

शे.] व्यवस्था। अत एव 'भुक्त्वा व्रजति' 'अद्य भुक्त्वा श्वो व्रजिष्यती'त्याद्युपपत्तिः। **पूर्वविप्रतिषेधेनेति**। पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादित्यर्थः। **न क्त्वा सेट्**। अनेन कित्कार्यं निषिध्यते। कित्त्वनिषेधे हि कम्रवणं स्यात्। क्त्वेतिकिम् ?। निगृहीतम्।

किह्वा । तृषित्वा । तर्षित्वा । मृषित्वा । मर्षित्वा । कृशित्वा । कर्शित्वा । 'रलो व्युपधा'दिति वा कित्त्वम् । द्युतित्वा । द्योतित्वा । लिखित्वा । लेखित्वा । व्युपधात्किम् ? । वर्तित्वा । रलः किम् ? । सेवित्वा । हलादेः किम् ? । एषित्वा । सेट् किम् ? । भुक्त्वा । 'वसतिक्षुधोरिट्' । उषित्वा । [ओषित्वा] । क्षुधित्वा क्षोधित्वा । 'अञ्चेः पूजाया'मिति नित्यमिट् । अञ्चित्वा । गतौ तु-अक्त्वेत्यपि । लुभित्वा । लोभित्वा । 'लुभो[ऽ]विमोहने' इतीट् । [अ]विमोहने तु-लुब्ध्वा । **जॄव्रश्च्योः क्त्वि** ।७।२।५५। आभ्यां परस्य क्त्व इट् स्यात् । जरीत्वा । जरित्वा । व्रश्चित्वा । **उदितो वा** ।७।२।५६। उदितः परस्य क्त्व इड्वा । शमित्वा । 'अनुनासिकस्य क्वी'ति दीर्घः । शान्त्वा । द्यूत्वा । देवित्वा । **क्रमश्च क्त्वि** ।६।४।१८। क्रम उपधाया वा दीर्घः स्यात् झलादौ क्त्वि परे । क्रान्त्वा । क्रन्त्वा । झलि किम् ? । क्रमित्वा । 'पूङश्चे'ति वेट् । पवित्वा । पूत्वा । **जान्तनशां विभाषा** ।३।४।३२। जान्तानां नशेश्च नलोपो वा स्यात् क्त्वि परे । भक्त्वा । भङ्क्त्वा । रक्त्वा । रङ्क्त्वा । 'मस्जिनशो'रिति नुम् । तस्य पक्षे लोपः । नष्ट्वा । नंष्ट्वा । 'रधादिभ्यश्चे'तीट् । पक्षे-नशित्वा । ॐ **झलादाविति वाच्यम्** । नेह-अञ्जित्वा । ऊदित्त्वाद्वेट् । पक्षे अक्त्वा । अङ्क्त्वा । 'जनसने'त्यात्वम् । खात्वा । खनित्वा । 'द्यतिस्यती'-

---

त.]तस्यार्द्धधातुकविषये 'ऋतेरीय'ङित्यस्य वैकल्पिकत्वात्तदभावे कित्त्वमनेन विकल्प्यते । **तृषिमृषि** । ञितृषा पिपासायां, मृष तितिक्षायां, कृश तनूकरणे । 'नोपधा'दित्यतो वेत्यनुवर्तनात्काश्यपग्रहणं पूजार्थम् । **अञ्चेरिति** । 'उदितो वे'ति विकल्पप्राप्तावयमारम्भः । **अञ्चित्वेति** । 'न क्त्वा से'डिति कित्त्वाऽभावान्नलोपो न । एवं चेह 'नाञ्चेः पूजाया'मिति नलोपो नेति प्रसादकारोक्तिर्वृथेत्याहुः । **जॄव्रश्च्योः** । जॄ इत्यस्मात् 'श्र्युकः किती'ति निषेधे प्राप्ते व्रश्चेरूदित्वाद्विकल्पे प्राप्ते वचनमिदम् । **जरीत्वेति** । 'वॄतो वा' इति इटो वा दीर्घः । **व्रश्चित्वेति** । इह 'न क्त्वा से'डिति कित्त्वनिषेधात् 'ग्रहिज्ये'ति संप्रसारणं न । **द्यूत्वेति** । इडभावपक्षे 'च्छ्वो'रित्यूठ् । **झलादावितीति** । 'जान्तनशा'मिति

---

बा.] **अर्तित्वेति** । कित्त्वविकल्पाल्लघूपधगुणनिषेधविकल्पः । ऋतिः सौत्रो धातुर्घृणायाम् । तस्यार्द्धधातुकविषये 'ऋतेरीय'ङित्यस्य विकल्पनात्तदभावे कित्त्वमिह विकल्प्यते । **तृषिमृषि** । 'न क्त्वा से'डित्यस्याऽपवादः । **रल इति** । उकारोपधात्, इकारोपधाच्च रलन्ताद्धलादेः परः सन् क्त्वा च सेटौ वा किताविति व्याख्यातं प्राक् । रल्-प्रत्याहारः । **वर्तित्वेति** । 'वृतु वर्तने इत्यस्य रूपम् । **एषित्वेति** । इषधातो रूपम् । इह हलादित्वाऽभावान्न कित्त्वविकल्पः, किन्तु 'न क्त्वा से'डिति नित्यमेव कित्त्वाऽभावान्न गुणनिषेधः । वसधातोः क्षुधधातोश्चाऽनुदात्तोपदेशत्वादिण्निषेधे प्राप्ते तदपवादं स्मारयति – **वसतिक्षुधोरिडिति** । **उषित्वेति** । 'मृडमृदे'ति कित्त्वात् 'वचिस्वपी'ति संप्रसारणम् । 'शासिवसी'ति षः । अञ्चुधातोः क्त्वाप्रत्ययस्य 'उदितो वे'ति इड्विकल्पे प्राप्ते आह—**अञ्चेः पूजायामिति** । **गतौ त्विति** । तत्र 'उदितो वे'ति वेट्कत्वात् । **लुभित्वा लोभित्वेति** । व्याकुलीकृत्वेत्यर्थः । 'लुभ विमोहने' तुदादिः । '**विमोहनं** व्याकुलीकरण'मिति वृत्तिः । 'रलो व्युपधा'दिति कित्त्वविकल्पः । तत्र 'तीषसहे'ति इड्विकल्पे आह—**लुभो विमोहने इतीडिति** । 'नित्य'मिति शेषः । विमोहनार्थाल्लुभः क्त्वानिष्ठयोरिट् स्यान्न तु गार्ध्य इति व्याख्यातं प्राक् । **अविमोहने त्विति** । गार्ध्ये तु 'तीषसहे'ति इड्विकल्पे लुभित्वेत्यपि भवति । अभिकाङ्क्ष्येत्यर्थः । '**विमोहने तु लुब्ध्वे**'त्यपपाठः । **जॄव्रश्च्योः क्त्वि** । **जरीत्वा जरित्वेति** । 'श्र्युकः किती'ति निषेधे प्राप्ते विधिः । 'वॄतो वे'ति इटो दीर्घविकल्पः । **व्रश्चित्वेति** । अत्र ऊदित्त्वादिड्विकल्पे प्राप्ते नित्यमिट् । 'न क्त्वा से'डिति कित्त्वनिषेधान्न संप्रसारणम् । **उदितो वा** । **क्त्व इति** । 'जॄव्रश्च्यो'रिति पूर्वसूत्रात्तदनुवृत्तेरिति भावः । अप्राप्तविभाषेयम् । शमुधातोरिट्पक्षे उदाहरति—**शमित्वेति** । इडभावे त्वाह—**अनुनासिकस्येति** । **द्यूत्वा देवित्वेति** । दिव्धातोरुदित्त्वात् क्त्वायामिड्विकल्पः । इडभावपक्षे 'च्छ्वो'रिति वस्य ऊठि इकारस्य यणि द्यूत्वेति रूपम् । इट्पक्षे तु 'न क्त्वा से'डिति कित्त्वनिषेधादुपधागुण इति भावः । **क्रमश्च क्त्वि** । 'नोपधायाः' इत्यत उपधाया इति, 'तनोतेर्विभाषे'त्यतो विभाषेति, 'ढ्लोपे पूर्वस्ये'त्यतो दीर्घ इति, 'अनुनासिकस्य क्वी'त्यतो झल्ग्रहणं चानुवर्तते । तदाह—**क्रम उपधाया इत्यादि** । 'अनुनासिकस्य क्वी'ति नित्ये प्राप्ते विकल्पोऽयम् । **क्रान्त्वेति** । क्रमुधातोरुदित्वादिड्विकल्पः । दीर्घपक्षे रूपम् । **जान्तनशाम्** । 'श्नान्नलोपः' इत्यतो नलोप इति, 'क्त्वि स्कन्दिस्यन्दो'रित्यतः क्त्वीति चानुवर्तते । तदाह—**जान्तानामित्यादि** । **भक्त्वा भङ्क्त्वेति** । 'भञ्जो आमर्दने' इत्यस्य रूपम् । **रक्त्वा रङ्क्त्वेति** । 'रञ्ज रागे' इत्यस्य रूपम् । **नष्ट्वा नंष्ट्वेत्यत्राह—मस्जि इति** । **तस्येति** । नशो नकारस्य 'जान्तनशा'मित्यनेन पाक्षिको लोप इत्यर्थः ।

---

शो.] **झलादाविति** । 'अनुनासिकस्य क्वी'त्यतो झलीति वर्त्तते । **झलादावितीति** । 'अनिदिता'मित्यतः कितीत्यनुवर्त्य 'किति

तोत्वम् । दित्वा । सित्वा । मित्वा । स्थित्वा । '**दधातेर्हिः**' । हित्वा । **जहातेश्च क्त्वि** ।७।४।४३। हित्वा । हाङस्तु-हात्वा । '**अदो जग्धिः**' । जग्ध्वा । **समासेऽनञ्पूर्वे क्त्वो ल्यप्** ।७।१।३७। अव्ययपूर्वपदे अनञ्समासे क्त्वो ल्यबादेशः स्यात् । तुक् । प्रकृत्य । अनञ् किम् ? । अकृत्वा । पर्युदासाश्रयणान्नेह-परमकृत्वा । **षत्वतुकोरसिद्धः** ।६।१।८६। षत्वे तुकि च कर्तव्ये एकादेशशास्त्रमसिद्धं स्यात् । कोऽसिचत् । इह षत्वं न । अधीत्य । प्रेत्य । '**ह्रस्वस्ये**'ति तुक् । **वा ल्यपि** ।६।४।३८। अनुदात्तोपदेशानां वनतितनोत्यादीनामनुनासिकलोपो वा स्याल्ल्यपि । व्यवस्थितविभाषेयम् । तेन मान्तानिटां वा, नान्ताऽनिटां वनादीनां च नित्यम् । आगत्य ।

---

त.] सूत्रे वक्तव्यमित्यर्थः । **खात्वा** । **खनित्वेति** । 'उदितो वे'ति वेट् । **जग्ध्वेति** । 'झरो झरी'ति पाक्षिको घलोपः । **समासेऽनञ्** । नञ्भिन्नं नञ्सदृशम् । अव्ययमिति यावत् । तत्पूर्वं पूर्वपदं यस्य समासस्येति व्याचष्टे-**अव्ययेति** । **प्रकृत्येति** । प्रशब्दः क्त्वाप्रत्ययार्थगतप्रकर्षस्य द्योतकः, स तु 'कुगतिप्रादयः' इति क्त्वान्तेन नित्यं समस्यते । **पर्युदासेति** । प्रसज्यप्रतिषेधाश्रयणे तु स्यादेवात्र ल्यबिति भावः । **षत्वतुकोः** । प्रासङ्गिकषत्वविषयमुदाहरति—**कोऽसिचदिति** । को-असिचदिति स्थिते 'एङः पदान्तादती'ति पूर्वरूपमेकादेशः । तस्य 'अन्तादिवच्चे'ति परादिवत्त्वेन 'सात्पदाद्यो'रिति निषेधाऽभावादिणः परत्वेन षत्वं प्राप्तमेकादेशस्याऽसिद्धत्वे सति अकारेण व्यवधानादिणः परत्वाऽभावान्न भवति । प्रकृतं ल्यपि कार्यमुदाहरति-**अधीत्येति** । **विधायेति** । दधातेर्हिर्न । **प्रदायेति** । 'दो

---

बा.] **झलादावित्ति** । 'जान्तनशां विभाषे'ति नलोपविकल्पो झलादावित्यर्थः । **अङ्क्त्वेति** । इटि झलादित्वाऽभावात् 'जान्तनशा'मिति नलोपो नेति भावः । **पक्षे इति** । इडभावपक्षे झलादित्वान्नलोपविकल्प इति भावः । **आत्त्वमिति** । 'खनु अवदारणे' । उदित्त्वाद्वेट् । इडभावपक्षे झलादित्वात् 'जनसनखना'मित्यात्त्वमित्यर्थः । **दित्वेति** । 'दो अवखण्डने' इत्यस्य रूपम् । **सित्वेति** । 'षोऽन्तकर्मणी'त्यस्य रूपम् । **मित्वेति** । माधातोः रूपम् । **स्थित्वेति** । स्थाधातो रूपम् । धाधातोः क्त्वाप्रत्यये आह—**दधातेर्हिरिति** । 'ओ हाक् त्यागे' इत्यस्य क्त्वायां हिभावं दर्शयति—**जहातेश्च क्त्वि** । **हित्वेति** । त्यक्त्वेत्यर्थः । **हाङस्त्विति** । 'जहातेश्च क्त्वी'ति हिभावविधौ 'जहाते'रिति निर्देशात् 'ओ हाक्त्यागे' इत्यस्य ग्रहणं, न तु 'ओ हाङ्गतौ' इत्यस्य । तस्य 'भृञामि'दिति इत्त्वे 'जिहाते'रिति निर्देशापत्तेः । **जग्ध्वेति** । जघ्-क्त्वा इति स्थिते 'झषस्तथोर्धोऽधः' इति धः । 'झरो झरी'ति प्रकृतिधकारस्य पाक्षिको लोपः । **समासे** । 'अनञ्पूर्वे' इति पर्युदासादव्ययपूर्वपद इति लभ्यते इति मत्वाऽऽह—**अव्ययेत्यादि** । **तुगिति** । 'ह्रस्वस्य पिती'त्यनेनेति भावः । **प्रकृत्येति** । प्रशब्दः प्रकर्षे । तस्य 'कुगती'ति क्त्वान्तेन नित्यसमासः । **परमकृत्वेति** । अव्ययपूर्वपदत्वाऽभावान्न ल्यबिति भावः । **षत्वतुकोरसिद्धः** । 'एकः पूर्वपरयोः' इत्येकादेशप्रकरणे उक्तमिदं सूत्रम् । ततश्च '**असिद्ध**' इत्यस्य 'एकादेश' इति शेषः । फलितं त्वाह—**एकादेशशास्त्रमिति** । कार्याऽसिद्धत्वं निराकृत्य शास्त्राऽसिद्धत्वस्यैव भाष्ये सिद्धान्तितत्वादिति भावः । **कोऽसिचदिति** । 'एङः पदान्तादती'ति पूर्वरूपमिहैकादेशः । तस्य 'अन्तादिवच्चे'ति परादित्वे ओसिचदिति पदम् । 'तस्य सकारस्याऽपदादितया 'सात्पदाद्यो'रिति निषेधाऽभावात् 'आदेशप्रत्यययो'रिति षत्वं प्राप्तमेकादेशस्याऽसिद्धत्वान्न भवति, एकादेशस्याऽसिद्धत्वेन को-असिचदिति स्थिते सकारस्य अकारेण व्यवधानादिणः परत्वाऽभावात् । तदाह—**इह षत्वं नेति** । षत्वे एकादेशस्याऽसिद्धत्वे प्रासङ्गिकमुदाहृत्य प्रकृते ल्यपि तुग्विधावसिद्धमुदाहरति—**अधीत्येति** । 'इङ् अध्ययने' नित्यमधिपूर्वः, तस्मात्क्त्वो ल्यप् । **प्रेत्येति** । प्रपूर्वादिण्धातोः क्त्वो ल्यप् । इहोभयत्र सवर्णदीर्घस्य आद्गुणस्य चाऽसिद्धत्वात् 'ह्रस्वस्य पिती'ति तुक् । एकादेशस्याऽसिद्धत्वाऽभावे तु ह्रस्वाऽभावत्तुन्न स्यात् । तदाह—**ह्रस्वस्येति तुगिति** । **वा ल्यपि** । 'अनुदात्तोपदेशवनतितनोत्यादीना'मित्युत्तरमिदं सूत्रम् । तदाह —**अनुदात्तेत्यादि** । अनुदात्तोपदेशानां, वनतितनोत्यादीनां च अनुदात्तोपदेशेत्युक्तो नलोपो ल्यपि वा स्यादित्यर्थः । **व्यवस्थितविभाषेति** । व्याख्यानादिति भावः । **मान्तानिटां वेति** । गम्-नम्-रम् यमां पाक्षिको मलोप इत्यर्थः । **नान्तेति** । नान्तेषु मन्यहनावनिटौ, तयोर्वनादीनां च 'अनुदात्तोपदेशे'त्यनेन नलोपो नित्यं स्यादित्यर्थः । **नान्ताऽनिटामिति** बहुवचनं प्रयोगबहुत्वाभिप्रायम् । मान्तानामुदाहरति—**आगत्येति** ।

---

शे.] क्त्वी'ति व्याख्येयमित्यर्थः । सेट् क्त्वा च न किदिति भावः । **समासेऽनञ्** । अनञिति पर्युदासः । तेन नञ्सदृशाऽव्ययपूर्वपदके प्रत्यासत्त्या क्त्वान्तोत्तरपदके इत्यर्थः । तेन 'स्नात्वा कालकः' इत्यादौ न दोषः । 'अनञ' इत्येव सिद्धे पूर्वग्रहणं स्पष्टार्थम् । **अधीत्येति** । यद्यपि पदान्तपदाद्योरेकादेशोऽसिद्धः, अत्र च उत्तरखण्डे सुबुत्पत्तेः पूर्वमेव समासस्तथापि तत्र पदशब्देनाऽर्थवत उपलक्षणान्न दोषः । 'गतिकारक'इत्यस्योऽनित्यत्वात्सुबन्तेन वा समासः । 'वौ ल्यपी'त्यस्य स्थाने 'ल्यपि च वामः'

आगम्य । प्रणत्य । प्रणम्य । प्रहत्य । प्रमत्य । प्रवत्य । वितत्य । 'अदो जग्धिः'। अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधते, जग्धिविधौ ल्यब्ग्रहणात् । तेन हित्वदत्त्वात्वेत्त्वदीर्घत्वशूठिटो ल्यपि न । विधाय । प्रदाय । प्रखन्य । प्रस्थाय । प्रक्रम्य । आपृच्छ्य । प्रदीव्य । प्रपव्य । **न ल्यपि** ।६।४।६९। ल्यपि परे घुमास्थादेरीत्वं न । धेट्-प्रधाय । मा-प्रमाय । प्रगाय । प्रपाय । प्रहाय । प्रसाय । 'मीनातिमिनोती'त्यात्वम् । प्रमाय । निमाय । उपदाय । 'विभाषा लीयतेः'। विलाय । विलीय । णिलोपः । उत्तार्य । विचार्य । **ल्यपि लघुपूर्वात्** ।६।४।५६। लघुपूर्वात्परस्य णेरयादेशः स्याल्ल्यपि । विगणय्य । प्रणमय्य । प्रवेभिदय्य । लघुपूर्वात्किम् ? । संप्रधार्य ।

त.]दद्धोः'रिति न । **प्रखन्येति** । 'जनसनखना'मित्यात्वं न । **प्रस्थायेति** । 'द्यतिस्यती'तीत्वं न । **प्रक्रम्येति** । 'क्रमश्च क्त्वी'ति दीर्घो न । **आपृच्छ्य** । **प्रदीव्येति** । छकारवकारयोश्छ्वोरिति शूठौ न । इडभावस्योदाहरणं तु प्रखन्य प्रदीव्येत्यादावेव बोध्यः । **न ल्यपि** । कथं तर्हि 'निपीय यस्ये'ति श्रीहर्षप्रयोग इति चेदत्राहुः—पीङ् पाने इति दिवादिगणस्थात् ल्यपि न दोष इति । इह प्रशाय प्रच्छायेत्यत्र 'शाच्छोरन्यतरस्या'मिति प्राप्तस्येत्वस्याप्यभावो बोध्यः । **लघुपूर्वादिति** । लघुः पूर्वो यस्माद्वर्णात् । लघुपूर्ववर्णात्परस्येत्यर्थः । **विगणय्येति** । नन्विह णौ कृतस्याऽल्लोपस्य पूर्वस्माद्विधौ स्थानिवद्भावाल्लघुपूर्वकवर्णात्परत्वं नास्ति । न चारम्भसामर्थ्यम्, अनुगमय्येत्यादौ मित्सु चरितार्थत्वात् । अत्रोच्यते—पूर्वस्माद्विधौ स्थानिवत्त्वमनित्यं, 'निष्ठायां सेटी'ति लिङ्गात् । तथा चात्र स्थानिवत्त्वाऽभावाण्णेरयादेशो भवत्येव । 'निष्ठायां सेटी'त्यस्याऽनित्यत्वज्ञापकत्वं तु 'अचः परस्मि'न्निति सूत्र एवास्माभिरुपपादितमिति नात्रोपपाद्यते । **प्रणमय्येति** । अमन्तत्वान्मित्त्वे,मितां ह्रस्वः । **प्रवेभिदय्येति** । भिदेर्यङन्ताद्वेभिदेत्य-

वा.]गमेरनुनासिकलोपे तुक् । **प्रणत्येति** । नमेरनुनासिकलोपपक्षे तुक् । विनम्य विरत्य,प्रयत्य-प्रयम्य-इत्यप्युदाहार्यम् । नान्तयोरुदाहरति-**प्रहत्य प्रमत्येति** । हनो मन्यतेश्च नित्यं नलोपः । **प्रवत्येति** । वनेर्नित्यं नलोपः । तुक् । **वितत्येति** । तनोतेर्नित्यं नलोपः । तुक् । भाष्ये तु 'वा ल्यपी'ति सूत्रं न दृश्यते । 'अनुदात्ते'ति सूत्रे 'अनुदात्तोपदेशेऽनुनासिकलोपो ल्यपि चे'ति 'वा मः' इति च वार्तिकं पठितम्, ल्यपि च 'अनुदात्तोपदेशे'ति नलोपो भवति, मकारान्तानां तु वेत्यर्थः । अथ प्रजग्ध्येत्युदाहरणं मनसि निधाय तत्र अदधातोः क्त्वो ल्यपि 'अदो जग्धिर्ल्यप्ति किती'ति जग्ध्यादेशविधिं स्मारयति—**अदो जग्धिरिति** । आदेशे इकार उच्चारणार्थः । ननु विधायेत्यत्र 'दधातेर्हि'रिति हिभावः प्राप्नोति । न च तस्य तादौ किति विधानाल्ल्यपि कृते कथं तत्प्राप्तिः, अलाश्रयविधौ स्थानिवत्त्वाऽभावादिति वाच्यं, परस्मादपि ल्यपः प्रागेवाऽन्तरङ्गत्वाद्धिभावप्रवृत्तेर्दुर्निवारत्वात् । तथा प्रदायेत्यत्र तादौ किति विहितमित्त्वं ल्यपः प्रागेवाऽन्तरङ्गत्वात्प्राप्नोति । तथा प्रखन्येत्यत्र 'जनसनखनां सन्झलो'रिति झलादिलक्षणमात्वं ल्यपः प्रागेव प्राप्नोति । तथा 'द्यतिस्यतिमास्थामित्ति किती'ति इत्त्वं ल्यपः प्रागेव प्राप्नोति । तथा प्रक्रम्येत्यत्र 'क्रमश्च क्त्वी'ति झलादौ क्त्वि विहितमुपधादीर्घत्वं ल्यपः प्रागेव प्राप्नोति । तथा आपृच्छ्य प्रदीव्येत्यत्र 'च्छ्वो'रिति शूठौ झलादित्वलक्षणौ ल्यपः प्रागेव स्याताम् । तथा प्रदीव्येत्यत्र वलादिलक्षण इट् ल्यपः प्रागेव प्राप्नोतीत्याशङ्क्याह—**अन्तरङ्गानपीति** । कुत एतदित्यत आह—**जग्धिविधाविति** । 'अदो जग्धिक्ति किती' इत्येतावतैव प्रजग्ध्य इत्यत्रापि ल्यपः प्रागेवाऽन्तरङ्गत्वाज्जग्ध्यादेशः सिद्धः । अतो ल्यब्ग्रहणं 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते' इति ज्ञापयति । एवं च अन्तरङ्गजग्ध्यादेशापेक्षया प्राबल्याल्ल्यपि कृते सति तकारादित्वलक्षणजग्धिभावस्याऽप्रसक्तेर्जग्धिविधौ ल्यब्ग्रहणमर्थवदिति भावः । **तेनेति** । हित्वं, दत्वम्, आत्वम्, इत्त्वं, दीर्घत्वं, शूठौ, इट् च ल्यपि नेत्यर्थः । **न ल्यपि** । 'घुमास्थागापाजहातिसा'मित्यनुवर्तते । 'इद्यती'त्यत ईत् इति च । तदाह—**ल्यपि परे इत्यादि** । **धेडिति** । प्रकृतिप्रदर्शनम् । **प्रधायेति** । 'आदेचः' इत्यात्त्वम् । **प्रपायेति** । निपीयेति तु पीङ् पाने इत्यस्य रूपम् । **प्रसायेति** । 'षोऽन्तकर्मणी'त्यस्य रूपम् । लीङः क्त्वो ल्यपि आत्वविकल्पं स्मारयति—**विभाषा लीयतेरिति** । **णिलोप इति** । उत्पूर्वात्तॄधातोर्णिचि वृद्धौ रपरत्वे उत्तारि इति रूपम् । विपूर्वाच्चरधातोर्णिचि उपधावृद्धौ विचारीति रूपम्, ताभ्यां क्त्वो ल्यपि णिलोप इत्यर्थः । **ल्यपि लघुपूर्वात्** । 'णेरनिटी'त्यतो णेरिति, 'अयामन्ताल्वाय्ये'त्यतोऽयिति चानुवर्तते । तदाह—**लघुपूर्वादिति** । लघुः पूर्वो यस्माद्वर्णादिति विग्रहः । णिलोपापवादः । **विगणय्येति** । 'गण सङ्ख्याने' चुरादिः, कथादिरदन्तः । तस्माण्णिच् । अतो लोपः । क्त्वो ल्यपि णेरयादेशः । **प्रवेभिदय्येति** । भिदधातोर्यङि द्वित्वम् ।

शे.] इति वार्तिकन्यासः । नान्तानिटामिति प्रयोगाभिप्रायेण बहुवचनम् ।

**विभाषाऽऽपः** ।६।४।५७। आप्नोतेर्णेरयादेशो वा स्याल्ल्यपि । प्रापय्य । प्राप्य । **क्षियः** ।६।४।५९। क्षियो ल्यपि दीर्घः स्यात् । प्रक्षीय । **ल्यपि च** ।६।१।४१। वेञो ल्यपि संप्रसारणं न स्यात् । प्रवाय । **ज्यश्च** ।६।१।४२। प्रज्याय । **व्यश्च** ।६।१।४३। उपव्याय । **विभाषा परेः** ।६।१।४४। परेर्व्येञो वा संप्रसारणं स्याल्ल्यपि । तुकं बाधित्वा परत्वात् 'हल' इति दीर्घः । परिवीय । परिव्याय । कथं मुखं व्यादाय स्वपिति, नेत्रे निमील्य हसतीति ? । व्यादानसंमीलनोत्तरकालेऽपि स्वापहासयोरनुवृत्तेस्तदंशविवक्षया भविष्यति । **आभीक्ष्ण्ये णमुल् च** ।३।४।२२। पौनःपुन्ये द्योत्ये पूर्वविषये णमुल् स्यात् , क्त्वा च । द्वित्वम् । स्मारं स्मारं नमति

---

त.] क्षाणिणच्यल्लोपे 'यस्य हलः' इति यलोपः। ननु हस्वयलोपाऽल्लोपानामाभीयत्वेनाऽसिद्धत्वाल्लघुपूर्वकवर्णात्परो णिर्नास्तीति कथमिह णेरयादेशः स्यादिति [गणयतीत्यादौ वा कथं स्यादिति] चेन्मैवम्, 'असिद्धवदत्राभा'दित्यत्र 'समानाश्रये तस्मिन्कर्तव्ये तदसिद्धं स्या'दिति हि व्याख्यातम् । तेनात्राशङ्कैव नास्ति,हस्वादयो हि णौ,णेरयादेशस्तु ल्यपि परत इति व्याश्रयत्वात्। **विभाषा परेः** । अप्राप्तविभाषेयम्। **आप्नोतेरिति** । यद्यपीङो णिचि परतः 'क्रीङ्जीनां णौ' इत्यात्वे 'अर्तिह्री'त्यादिना पुकि आपिति शब्दोऽस्ति, तथापि तस्य नेह ग्रहणं, लाक्षणिकत्वादिति भावः । **प्राप्येति** । एतेन 'अयमयोगिवधूवधपातकैर्भ्रमिमवाप्य दिवः खलु पात्यते' इति श्रीहर्षप्रयोगा व्याख्याताः । 'अवाप्ये'त्यस्याऽवप्येत्यर्थसंभवात् । एतेन तत्राऽन्तर्भावितण्यर्थतेति क्लेशमनुभवन्तः परास्ताः । ल्यप्स्थानिनां कित्वात् 'वचिस्वपी'ति प्राप्तं संप्रसारणं निषेधयितुमाह—**ल्यपि चेति** । **ज्यश्च** । संप्रसारणं न स्यात् । एवं व्यश्चेत्यत्रापि व्याख्येयम् । **कथमिति** । ल्यबादेशस्य स्थानिभूतः क्त्वाप्रत्ययो दुर्लभः, तद्विधौ पूर्वकाल इत्युक्तेः । न चेह तदस्ति । पूर्वं ह्यसौ स्वपिति पश्चान्मुखं व्यादत्ते। यदैव हसति तदैव नेत्रे संमीलयति। तथा च क्त्वाप्रत्ययस्य दुर्लभत्वाल्ल्यपः प्रसक्तिरेव नास्तीति प्रश्नः । समाधत्ते—**व्यादानेत्यादिना** । एतेनेश्वरः सर्वं व्याप्य वर्तते, ज्ञात्वा तिष्ठतीत्यादि व्याख्यातम् । 'श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यते' इत्यादौ तु समानकर्तृकतानिर्वाहार्थं 'स्थितस्ये'त्यादि यथासंभवमध्याहार्यम् । **आभीक्ष्ण्ये णमुल् च** । ननु वाऽसरूपन्यायेन क्त्वाप्रत्ययो भविष्यतीति 'च'ग्रहणमिह व्यर्थमिति

---

बा.] 'गुणो यङ्लुको'रित्यभ्यासस्य गुणः, जश्त्वं, 'यस्य हलः' इति यकारलोपः, अतो लोपः,क्त्वो ल्यपि णेरयादेशः । **विभाषाऽऽपः** । लघुपूर्वत्वाऽभावात् पूर्वेण अप्राप्ते विभाषेयम् । **क्षियः** । 'ल्यपि लघुपूर्वा'दित्यतो ल्यपीति 'युप्लुवोर्दीर्घश्छन्दसी'त्यतो दीर्घ इति चानुवर्तते । तदाह—**क्षियो ल्यपीति** । **ल्यपि च** । 'वेञः' इति सूत्रमनुवर्तते । 'न संप्रसारणे संप्रसारण'मित्यतो न संप्रसारणमिति च । तदाह—**वेञो ल्यपीत्यादि** । **प्रवायेति** । 'वेञ् तन्तुसन्ताने' क्त्वो ल्यप् । 'आदेच उपदेशे' इत्यात्त्वम् । इह 'ग्रहिज्ये'ति संप्रसारणं न । **ज्यश्च** । ज्याघातोर्ल्यपि संप्रसारणं न स्यादित्यर्थः । **प्रज्यायेति** । इह 'ग्रहिज्यावयी'ति संप्रसारणं न । **व्यश्च** । व्येञो ल्यपि संप्रसारणं नेत्यर्थः । **उपव्यायेति** । 'व्येञ् संवरणे' क्त्वो ल्यपि 'आदेचः' इत्यात्त्वम् । 'ग्रहिज्यावयी'ति संप्रसारणं न । **विभाषा परेः** । 'व्यः' इति, ल्यपीति, संप्रसारणमिति चानुवर्तते । तदाह—**परेर्व्येञ इति** । परिपूर्वाद्व्येञः क्त्वो ल्यपि यकारस्य संप्रसारणे पूर्वरूपे च कृते परि वि य इति स्थिते आह—**तुकमिति** । **कथमिति** । स्वापकाल एव मुखव्यादानं, हासकाल एव नेत्रनिमीलनम् ।एवं च व्यादाननेत्रनिमीलनयोः स्वापहासपूर्वकालकत्वाऽभावात् कथं क्त्वाप्रत्यय इत्याक्षेपः । समाधत्ते—**व्यादानेति** । यद्यपि स्वापहसनोत्पत्त्युत्तरकालके व्यादाननिमीलने न तु तत्पूर्वकालके, तथापि व्यादानोत्पत्त्युत्तरकाले निमीलनोत्पत्त्युत्तरकालेऽपि च स्वापहासौ अनुवर्तेते । तत्र स्वापोत्पत्तिकालीनव्यादानस्य हासोत्पत्तिकालीननिमीलनस्य च तत्कालीनस्वापहासपूर्वकालकत्वाऽभावेऽपि तदुत्तरकालानुवृत्तस्वापहासापेक्षया पूर्वकालकत्वसत्त्वात् क्त्वाप्रत्यय इत्यर्थः। 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' इत्यादौ तु समानकर्तृकताऽविघाताय 'स्थितस्ये'त्याद्यध्याहार्यम् । **आभीक्ष्ण्ये णमुल् च** । 'समानकर्तृकयोः पूर्वकाले' इत्युत्तरमिदं सूत्रम् । तदाह—**पूर्वविषये इति** । यद्यपि वाऽसरूपविधिना क्त्वा सिद्धः । स्त्र्यधिकारात्प्रागेव वाऽसरूपविधिपक्षेऽपि क्त्वाविधौ वाऽसरूपवचनस्य वाऽसरूपसूत्रभाष्ये प्रपञ्चितत्वात् , तथापि 'विभाषाग्रेप्रथमे'ति सूत्रे उभयोर्विधानाय चकारः । तत्र हि 'अग्रे भोजं व्रजति देवदत्तः' 'अग्रे भुक्त्वे'त्यादौ देवदत्तकर्तृकभोजने यज्ञदत्तादिकर्तृकभोजनापेक्षया पूर्वकालत्वमग्रादिशब्देन बोध्यते, न तु व्रजनादिक्रियापेक्षया पूर्वकालत्वम् । ततश्च 'समानकर्तृकयो'रिति

---

शे.] आभीक्ष्ण्ये [णमुल् च] । यद्यपि वाऽसरूपन्यायेन क्त्वा सिद्धस्तथापि 'विभाषाऽग्रे' इति सूत्रेणोभयोर्विधानाय चकारः । तत्र सूत्रे साधनान्तरजन्यस्वसजातीयक्रियापेक्षपौर्वकाल्यरूपसाधनपौर्वकाल्यविषयाऽग्रादीनामेव ग्रहणेन तद्विषये समानादिसूत्रेण क्त्वस्तेन न्यायेन दुर्लभत्वात्, नाप्यनेन, आभीक्ष्ण्ये पूर्वविप्रतिषेधेनाऽस्यैवेष्टत्वेनाऽनाभीक्ष्ण्ये एव तत्प्रवृत्तेः । द्वित्वमिति ।

शिवम् । स्मृत्वा स्मृत्वा । पायं पायम् । भोजं भोजम् । श्रावं श्रावम् । 'चिण्णमुलो'रिति णमुल्परे णौ वा दीर्घः । गामं गामम् । गमं गमम् । 'विभाषा चिण्णमुलो'रिति नुम् वा । लम्भं लम्भम् । लाभं लाभम् । व्यवस्थितविभाषया उपसृष्टस्य नित्यं नुम् । प्रलम्भं प्रलम्भम् । 'जाग्रोऽविचिण्ण'ल्डिति गुणः । जागरं जागरम् । ण्यन्तस्याप्येवम् । **न यद्यनाकाङ्क्षे** ।३।४।२३। यच्छब्दे उपपदे पूर्वकाले यत्प्राप्तं तन्न, यत्र पूर्वोत्तरे क्रिये तद्वाक्यमपरं नाकाङ्क्षते चेत् । यदयं भुङ्क्ते ततः पठति । इह क्त्वाणमुलौ न । अनाकाङ्क्षे किम् ? । यदयं भुक्त्वा व्रजति ततोऽधीते । **विभाषाऽग्रेप्रथमपूर्वेषु** ।३।४।२४। आभीक्ष्ण्ये इति नानुवर्तते । एषूपपदेषु समानकर्तृकयोः पूर्वकाले क्त्वाणमुलौ वा स्तः । अग्रे भोजं व्रजति । अग्रे भुक्त्वा । प्रथमं भोजम् । प्रथमं भुक्त्वा । पूर्वं भोजम् । पूर्वं भुक्त्वा । पक्षे लडादयः । अग्रे भुङ्क्ते ततो व्रजति । आभीक्ष्ण्ये तु पूर्वविप्रतिषेधेन

---

त.] चेन्मैवम् । उक्तन्यायस्वीकारे तु लडादिरपीह प्रवर्तेत । न चेष्टापत्तिः, 'विभाषाऽग्रे' इति वक्ष्यमाणसूत्रस्थविभाषाग्रहणस्य वैयर्थ्यप्रसङ्गात् । तत्र हि क्त्वाणमुलौ विभाषाग्रहणेन लडादिसमावेशार्थं विकल्प्येते । यद्यपि वाऽसरूपन्यायेनैव लडादिः सिध्यति तथापि णमुला सहैव क्त्वाप्रत्ययो यत्र विधीयते तत्र वाऽसरूपविधिर्न प्रवर्तत इति ज्ञापनार्थं विभाषाग्रहणम् । तत्फलं तु 'आभीक्ष्ण्ये णमुल् च' इत्यत्र लडाद्यप्रवृत्तिः । ततश्च चकारेणैव क्त्वाप्रत्ययो लभ्यत इति नास्त्येव तस्य वैयर्थ्यम् । किं च वाऽसरूपं विनैव क्त्वालडाद्योः स्वीकारे तु 'न यद्यनाकाङ्क्षे' इत्यत्र क्त्वाप्रत्ययवल्लडादिरपि न सिद्ध्येत् । तथा च 'यदयं भुङ्क्ते ततः पठती'त्युदाहरणं न स्यात् । सिद्धान्ते तु 'आभीक्ष्ण्ये णमुल्चे'ति विशेषविहितयोः क्त्वाणमुलोरेव निषेधात्सामान्यविहितलडादिर्भवत्येवेति नास्त्येवाऽनुपपत्तिरिति दिक् । **पूर्वविषय इति** । 'समानकर्तृकयोः पूर्वकाले' इत्यर्थे । **पायंपायमिति** । 'आतो युक्' । **वा दीर्घ इति** । गमेर्ण्यन्ताण्णमुलि मितां ह्रस्वे च कृते वा दीर्घ इत्यर्थः । **ण्यन्तस्यापीति** । यत्तु प्राचा ण्यन्तजागर्तेश्चिण्णमुलोर्वा वृद्धिरिति मतमुपन्यस्तं, तदपाणिनीयमिति भावः । **न यदि** । अनाकाङ्क्ष इति पचाद्यजन्तेन नञ्समासः । तद्दर्शयति—**नाकाङ्क्षते चेदिति** । **इहेति** । नन्वेवम् 'अनन्तरस्ये'ति न्यायाण्णमुलमा भूत्, क्त्वा तु 'समानकर्तृकयो'रिति सूत्रान्तरेण स्यादेवेति चेदत्राहुः—'पूर्वकाले यत्प्राप्नोति तन्ने'ति व्याख्यानात् क्त्वाप्रत्ययोऽपि न भवतीति । **विभाषाऽग्रे** । यद्यप्यग्रेशब्दो देशविशेषवचनोऽप्यस्ति, 'प्रभोरग्रे भुङ्क्ते' इत्यादिप्रयोगात्, तथापीह कालविशेषवाच्येव गृह्यते, प्रथमशब्दसाहचर्यात् । 'प्रथमं भुङ्क्ते' इत्यादौ तु काल एव हि प्रतीयते । 'अग्रे' इति सप्तम्यन्तस्यानुकरणम् । 'प्रकृतिवदनुकरण'मित्यस्य वैकल्पिकत्वाद्विभक्तेर्लुङ् कृतो'ऽस्यवामीय'मिति वत् । **अग्रेभोजमिति** । 'अमैवाव्ययेने'ति

---

बा.] क्त्वाप्रत्ययस्य तत्र न प्रसक्तिः । नापि 'विभाषाऽग्रे' इत्यनेन आभीक्ष्ण्ये तत्राऽप्राप्तविधिरिति युज्यते । आभीक्ष्ण्ये पूर्वविप्रतिषेधेन 'आभीक्ष्ण्ये णमुल् च' इत्यस्यैव प्रवृत्तेरिष्टत्वादिति शब्देन्दुशेखरे विस्तरः । **द्वित्वमिति** । 'नित्यवीप्सयोरित्यनेने'ति शेषः । **स्मृत्वास्मृत्वेति** । 'नमति शिव'मित्यनुषज्यते । **पायंपायमिति** । 'आतो युक् चिण्कृतो'रिति युक् । **वा दीर्घ इति** । गमेर्ण्यन्ताण्णमुलि 'मितां ह्रस्वः' इति ह्रस्वे कृते 'चिण्णमुलो'रिति दीर्घविकल्प इत्यर्थः । **व्यवस्थितेति** । व्याख्यानादिति भावः । **उपसृष्टस्येति** । उपसर्गपूर्वस्येत्यर्थः । जागृधातोर्णमुलि वृद्धिमाशङ्क्याह—**जाग्र इति** । **ण्यन्तस्याप्येवमिति** । जागृधातोर्णौ वृद्धिं बाधित्वा 'जाग्रोऽविचिण्णल्ङित्सु' इति गुणे णिलोपे 'जागर'मित्येव रूपमिति भावः । **न यद्यनाकाङ्क्षे** । **यत्प्राप्तमिति** । क्त्वा, णमुल् चेत्यर्थः । **यत्रेति** । यस्मिन्वाक्ये पूर्वोत्तरकालिकक्रियापदे स्तः, तद्वाक्यं वाक्यान्तरं नाकाङ्क्षति चेदित्यर्थः । पूर्वोत्तरकालिकक्रियापदद्वययुक्तं वाक्यं वाक्यान्तरं नाकाङ्क्षति चेदिति यावत् । **यदयमिति** । 'य'दित्यव्ययम् । यदोऽयं भुङ्क्ते ततः परं पठतीत्यर्थः । इदमेकं वाक्यं भुजिपठिक्रियापदद्वययुक्तं न वाक्यान्तरमाकाङ्क्षतीति भावः । **यदयं भुक्त्वा व्रजतीति** । भुजिव्रजिक्रियापदद्वययुक्तमिदं वाक्यम् । ततो'ऽधीते' इति वाक्यान्तरमाकाङ्क्षति । नाऽत्रायं निषेध इति भावः । **विभाषाऽग्रे** । अग्रे, प्रथम, पूर्व, एषां द्वन्द्वः । 'अग्रे' इत्यव्ययम्, एदन्तं वा निपातनात् । **नानुवर्तते इति** । एतच्च भाष्ये स्पष्टम् । **प्रथमं भोजमिति** । 'प्रथम'मिति क्रियाविशेषणम् । **पूर्वंभोजमिति** । 'पूर्व'मिति क्रियाविशेषणम् । **पक्षे इति** । क्त्वाणमुलौ तावदव्ययकृत्त्वाद्भावार्थकौ । यदा तु कर्तृविवक्षा तदा लडादय इत्यर्थः ।

---

शे.] 'नित्यवीप्सयो'रित्यनेन । यद्यप्याभीक्ष्ण्यं णमुलादिना द्योतितं तथाप्यर्थान्तरेऽपि तद्विधानाद्वित्वरहितयोर्न तद्द्योतने सामर्थ्यमिति भावः । **नाकाङ्क्षते इति** । यद्यपि क्त्वाप्रकृत्यर्थक्रियायाः सर्वत्राकाङ्क्षाऽस्ति, तथाऽप्याख्यातोपात्तक्रियायाआकाङ्क्षा निषेधविषयः । 'नाकाङ्क्षतश्चे'दिति युक्तः पाठः । **पक्षे लडादय इति** । कर्त्रादिविवक्षापक्षे इत्यर्थः । भावे स्तौ । तदाह—**अग्रे भुङ्क्ते इति** । अत्रैवार्थे विभाषाग्रहणं तात्पर्यग्राहकम् । एतद्विषये कर्त्रादिविवक्षाऽपि, पूर्वसूत्रविषये तु न सा,

नित्यमेव विधिः। अग्रे भोजं-भोजं व्रजति। भुक्त्वा-भुक्त्वा। **कर्मण्याक्रोशे कृञः खमुञ्** ।३।४।२५। कर्मण्युपपदे आक्रोशे गम्ये [कृञः खमुञ् स्यात्]। चोरङ्कारमाक्रोशति। करोतिरुच्चारणे। चोरशब्दमुच्चार्येत्यर्थः। **स्वादुमि णमुल्** ।३।४।२६। स्वाद्वर्थेषु कृञो णमुल् स्यादेककर्तृकयोः पूर्वकाले। पूर्वपदस्य मान्तत्वं निपात्यते। अस्वाद्वीं स्वाद्वीं कृत्वा भुङ्क्ते स्वादुङ्कारं भुङ्क्ते। संपन्नङ्कारम्। लवणङ्कारम्। संपन्नलवणशब्दौ स्वादुपर्यायौ। वाऽसरूपेण क्त्वापि। स्वाद्वीं कृत्वा भुङ्क्ते। **अन्यथैवङ्कथमित्थंसु सिद्धाऽप्रयोगश्चेत्** ।३।४।२७। एषु कृञो णमुल् स्यात्, सिद्धोऽप्रयोगोऽस्य एवंभूतश्चेत् कृञ्। व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः। अन्यथाकारम्। एवङ्कारम्।

त.] नियमाद्व्यस्तमेवेदं, न त्वत्रोपपदसमासः। नन्वग्रेप्रथमपूर्वशब्दैः पूर्वकालत्वमुच्यत इति कथमिह क्त्वाणमुलौ स्यातामिति चेदत्राहुः—अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा व्रजतीति हि वाक्यार्थः। तत्राग्रेप्रभृतिभिर्भोक्त्रपेक्षया पूर्वत्वमुच्यते चेदत्रापि अन्येभ्यो भोक्तृभ्यः पूर्वं व्रजतीति व्रजनापेक्षया पूर्वत्वं तु क्त्वाणमुलभ्यां द्योत्यत इत्याशङ्कैवात्र नास्तीति। **नित्यमेव विधिरिति**। अग्रे भुङ्क्ते इत्येव लडादिर्न प्रयुज्यत इति भावः। **स्वादुमि**। 'स्वादुमी'-त्यर्थग्रहणं, व्याख्यानात्। तदाह--**स्वाद्वर्थेष्विति**। **मान्तत्वमिति**। ननु 'स्वादौ' इत्येव सूत्रमस्तु, मास्त्वत्र णमुल्। खमुञेवानुवर्त्यताम्। 'अरुर्द्विष'दिति मुम्भविष्यति। एवं च निपातनं विनापि मान्तत्वं सिध्यतीति महल्लाघवमिति चेन्मैवम्। च्व्यन्तस्य मुन्न स्यात्,अनव्ययस्येति वचनात्,ततश्च स्वादुङ्कारमित्यत्र 'च्वौ चे'ति दीर्घः स्यात्, 'सम्पन्नङ्कार'मित्यादिषु 'अस्य च्वौ' इतीत्वं स्यात्। किं च स्त्रियां 'वोतो गुणवचना'दिति ङीषि स्वाद्वीकारमिति स्यादतोऽत्र स्वादुमिति रूपं निपात्यते। ततश्चानजन्तत्वान्नेत्वदीर्घौ, न वा ङीष्। निपातनमिह भावप्रत्ययमात्रविषयकम्। तेन स्वादुङ्कृत्वेत्यपि सिध्यति। स्यादेतत्--उक्तदोषपरिहाराय 'स्वादुमी'त्येव सूत्रमङ्गीक्रियतां, णमुल्तु त्यज्यतां, कृञः खमुञि कृतेऽपि 'स्वादुङ्कार'मित्यादिरूपसिद्धिरिति चेन्मैवम्। तथा सत्युत्तरसूत्रेषु सन्निहितत्वात् खमुञेवाऽनुवर्तेत इति कन्यादर्शं ब्राह्मणवेदमित्यादिषु पूर्वपदस्य मुमागमः स्यादिति दिक्। **व्यर्थत्वादिति**।

बा.] ननु अग्रेप्रथमपूर्वपदेषूपपदेषु क्त्वाणमुलौ परत्वादाभीक्ष्ण्येऽपि स्यातामित्यत आह-**पूर्वविप्रतिषेधेनेति**। व्याख्यानादिति भावः। **कर्मण्याक्रोशे**। कर्मणीत्युपपदनिर्देशः, आक्रोश इति द्योत्यार्थ इति मत्वा व्याचष्टे—**कर्मण्युपपदे इत्यादि**। स्पष्टत्वान्न व्याख्येयमिति भावः। **चोरङ्कारमिति**। उपपदसमासे 'अरुर्द्विषदजन्तस्ये'-ति मुम्। **स्वादुमि णमुल्**। स्वादुमीत्यर्थग्रहणम्, व्याख्यानात्। तथा च स्वादुपर्याये उपपद इति लभ्यते। 'कर्मण्याक्रोशे' इति पूर्वसूत्रात्कृञ इत्यनुवर्तते, नतु खमुञ्, अस्वरितत्वात्। ततश्च 'आभीक्ष्ण्ये णमुल् चे'त्यतो णमुलित्यनुवर्तते, 'समानकर्तृकयोः पूर्वकाले' इति सूत्रं च। तदाह—**स्वाद्वर्थेष्वित्यादिना**। ननु स्वादुशब्दस्य स्वादावित्येव निर्देश उचित इत्यत आह—**स्वादुशब्दस्येति**। नन्वत्र खमुञेवानुवर्तताम्। एवं च स्वादुमि मान्तत्वनिपातनमपि न कर्तव्यमित्याशङ्क्य स्त्रियां च्व्यन्तमुदाहरति—**अस्वाद्वीमिति**। यवागूमपूपिकामित्यादि विशेष्यम्। अत्र णमुलि विवक्षिते मान्तत्वे निपातिते उदन्तत्वाऽभावात् 'वोतो गुणवचना'दिति न ङीष्। खमुञि कृते 'अरुर्द्विष'दिति मुमि तु स्वाद्वीङ्कारमित्येव प्रसज्येत। किंच च्व्यन्तस्याऽव्ययत्वात् 'अरुर्द्विष'दिति मुम् दुर्लभः, तत्र मुम्विधौ 'अनव्ययस्ये'त्यनुवृत्तेः। ततश्च अस्वादुं स्वादुं कृत्वा भुङ्क्ते स्वादुङ्कारं भुङ्क्ते इत्यत्रापि मुम् न स्यात्, खमुञः खित्त्वस्य चोरङ्कारमित्यत्र सावकाशत्वात्। किंच 'च्वौ' इति दीर्घापत्तिः। अतो णमुलि स्वादुशब्दे मान्तत्वनिपातनमिति भावः। स्वादुमीत्यर्थग्रहणस्य प्रयोजनमाह—**संपन्नङ्कारमिति**। अत्र 'अस्य च्वौ' इति ईत्वाऽभावोऽपि मान्तत्वनिपातनस्य फलं बोध्यम्। **स्वादुपर्यायाविति**। वृत्त्यादिग्रन्थेषु तथा दर्शनादिति भावः। **वाऽसरूपेण क्त्वापीति**। यद्यपि 'स्त्रियां क्ति'न्नित्यतः प्रागेव वाऽसरूपविधिरिति भाष्ये स्थितन्तथापि तत्रैव भाष्ये 'क्त्वायां वावचन'मिति क्त्वाप्रत्ययविषये वाऽसरूपविधिप्रवृत्तेर्विशिष्य वचनादिह क्त्वापि भवतीत्यर्थः। 'वाऽसरूपविधिः स्त्रियामित्यधिकारात् प्रागूर्ध्वं च भवती'ति पक्षान्तरमपि तत्रैव भाष्ये स्थितम्। तत्पक्षे क्त्वायां वाऽसरूपप्रवृत्तिर्निर्बाधैवेत्यास्तां तावत्। **अन्यथैवम्**। अन्यथा, एवम्, कथम्, इत्थम्, एषामव्ययानां द्वन्द्वात्सप्तमीबहुवचनम्। सिद्धः अप्रयोगः=प्रयोगाऽभावो यस्य कृञः स सिद्धाऽप्रयोग इति विग्रहः। तदाह-**एषु कृञ इत्यादि**। ननु कृञोऽप्रयोगे कथं तदर्थावगतिः, अर्थाऽवगत्यभावे तत्प्रयोगो वा किमर्थ इत्यत आह-**व्यर्थत्वादिति**। निष्फलत्वादिति भावः। अर्थस्याऽविवक्षितत्वेऽपि णमुल्प्रत्ययसाधुत्वार्थं तत्प्रयोग इति भावः। तदेव दर्शयति-**इत्थं**

शे.] मानाऽभावादिति दिक्। **चोरङ्कारमाक्रोशतीति**। चोरशब्दमुच्चार्येत्यर्थः। न चात्र 'अनुकरणबानिती'ति निपातत्वाऽव्ययत्वयोः सत्त्वान्मुमनापत्तिः, 'अरुर्द्विष'दित्यत्र 'खित्यनव्ययस्ये'त्यनुवृत्तेरिति वाच्यम्, खित्करणसामर्थ्यात्तत्सिद्धेः।

कथङ्कारम् । इत्थङ्कारं भुङ्क्ते । इत्थम्भुङ्क्ते इत्यर्थः । सिद्धेति किम् ? । शिरोऽन्यथा कृत्वा भुङ्क्ते । **यथातथयोरसूयाप्रतिवचने** ।३।४।२८। कृञः सिद्धाऽप्रयोग इत्येव । असूयया प्रतिवचने । यथाकारमहं भोक्ष्ये तथाकारं भोक्ष्ये, किं तवानेन ? । **कर्मणि दृशिविदोः साकल्ये** ।३।४।२९। कर्मण्युपपदे णमुल् स्यात् । कन्यादर्शं वरयति । सर्वाः कन्या इत्यर्थः । ब्राह्मणवेदं भोजयति । यं यं ब्राह्मणं जानाति लभते विचारयति वा तं सर्वं भोजयतीत्यर्थः । **यावति विन्दजीवोः** ।३।४।३०। यावद्वेदं भुङ्क्ते । यावल्लभते तावदित्यर्थः । यावज्जीवमधीते । **चर्मोदरयोः पूरेः** ।३।४।३१। कर्मणीत्येव । चर्मपूरं स्तृणाति । उदरपूरं भुङ्क्ते । **वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्** ।३।४।३२। कर्मण्युपपदे पूरेर्णमुल् स्यादूकारलोपश्च वा, समुदायेन वर्षप्रमाणे गम्ये । गोष्पदप्रं वृष्टो देवः । गोष्पदपूरं वृष्टो देवः । अस्येति किम् ? । उपपदस्य मा भूत् । मूषिकाबिलप्रम् । **चेले क्नोपेः** ।३।४।३३। चेलार्थेषु कर्मसूपपदेषु क्नोपेर्णमुल् स्याद्वर्षप्रमाणे । चेलक्नोपं वृष्टो देवः । वस्त्रक्नोपम् ।

---

त.] निष्प्रयोजनत्वादित्यर्थः । तदेतद्दर्शयति—**इत्थं भुङ्क्त इत्यर्थ इति** । इह शाब्दबोधे विशेषसत्त्वेऽपि फलितार्थकथनपरतया कारमिति णमुलन्तस्य निष्फलत्वमुक्तम्, अनतिप्रयोजनत्वात् । विस्तरस्तु मनोरमादावनुसन्धेयः । **शिरोऽन्यथेति** । इह शिरोऽन्यथा कृत्वौदनादिकं भुङ्क्त इत्यर्थलाभाय करोतेः प्रयोग आवश्यकः । तदभावे तु भुजिक्रियागत एव प्रकारो गम्येत न तु शिरसोऽन्यथाकरणम्, अतः करोतेः प्रयोगार्हत्वमस्तीति णमुलन्तः करोतिरिह न प्रयुज्यत इति भावः । **यथाकारमिति** । प्रष्टुमनर्हः सन्यदि पृच्छति तदेदमुत्तरम् । अत्रापि वाऽसरूपन्यायेन पक्षे क्त्वाप्रत्ययो बोध्यः । **कन्यादर्शमिति** । अत्र दर्शनविषयीभूतानां सर्वासां कन्यानां वाक्यार्थेऽन्वयात्साकल्यं बोध्यम् । **सर्वा इति** । दर्शनविषयीभूताः सर्वा इत्यर्थः । अतिशयप्रतिपादनपरमेतत् । **ब्राह्मणवेदमिति** । विद ज्ञाने, विद्लृ लाभे, विद विचारणे इति धात्वर्थान्पर्यालोच्य व्याचष्टे—**जानातीत्यादि** । सत्तार्थस्य विदेरनेकार्थत्वान्नेह ग्रहणमिति भावः । **यावति विन्द** । विदेर्लाभार्थस्यानुकरणम् । तस्य हि 'विन्दती'त्यादौ 'शे मुचादीना'मिति नुमस्ति । **यावल्लभत इति** । असाकल्यमनेन दर्शयति । साकल्ये हि 'कर्मणि दृशिविदो'रित्यनेनैव सिद्धम् । **चर्मोदर** । **कर्मणीत्येवेति** । एवं च पूरेरिति ण्यन्तस्य निर्देशो, न तु केवलस्य 'इक्श्तिपौ' इति इका निर्देशः । तस्याऽकर्मकत्वादिति भावः । **चर्मपूरमित्यादि** । चर्म पूरयित्वा । उदरं पूरयित्वा । उदरपूरणविशिष्टा भुजिक्रियेत्यर्थः । इह पूर्वकाले इति न संबध्यतेऽसंभवात्, अप्रतीतेश्च । एवमन्यत्रापि यथासंभवं बोध्यम् । **चेलेः** । व्याख्यानादर्थग्रहणमित्याहुः । **चेलार्थेष्विति** । **चेलक्नोपमित्यादि** । यथा वर्षणे चेलानि शब्दायन्ते तथा वृष्ट

---

बा.] **भुङ्क्ते इत्यर्थ इति** । 'समानकर्तृकयोः पूर्वकाले' इत्यसंभवान्नानुवर्तते इति भावः । **सिद्धेति किमिति** । सिद्धाऽप्रयोगश्चेदिति किमर्थमित्यर्थः । भाष्ये 'अन्यथा कृत्वा चोदित'मिति प्रयोगात् समानकर्तृकत्वाऽभावेऽपि क्त्वाप्रत्ययो बोध्यः । **यथातथयोः** । **इत्येवेति** । यथा तथा अनयोरुपपदयोः कृञो णमुल् स्यात्सिद्धाऽप्रयोगश्चेत् कृञिति फलितम् । असूयया प्रतिवचनमिति विग्रहः । 'कर्तृकरणे कृता बहुल'मिति समासः । तदाह—**असूययेति** । **कर्मणि दृशिविदोः** । कर्मणीति नाऽर्थनिर्देश इत्याह—**कर्मण्युपपदे इति** । कर्मण्युपपदे तदर्थस्य धात्वर्थं प्रति कर्मभूतस्य साकल्ये गम्ये दृशिविदिभ्यां णमुलिति फलितम् । 'समानकर्तृकयोः पूर्वकाले' इत्यनुवर्तत एव । **वरयतीति** । 'वर ईप्सायाम्' चुरादौ कथादिरदन्तः । अल्लोपस्य स्थानिवत्त्वान्नोपधावृद्धिः । विदिं विवृणोति—**जानाति लभते विचारयति वेति** । 'सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे । विन्दते विन्दति प्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात्' इति प्रागुक्तम् । तत्र सत्तार्थकस्य विदेरिह न ग्रहणम्, अकर्मकत्वादिति भावः । **यावति विन्दजीवोः** । यावच्छब्दे उपपदे विदन्तेर्जीवतेश्च णमुलित्यर्थः । इह पूर्वकाल इति न संबध्यते, अयोग्यत्वात्, अप्रतीतेश्च । एवमन्यत्रापि । यावज्जीवमधीते । यावन्तं कालं जीवति तावन्तं कालमधीते इत्यर्थः । 'अकर्मकधातुभिर्योगे' इति कर्मत्वाद्यावच्छब्दाद्द्वितीया । **चर्मोदरयोः पूरेः** । चर्मणि उदरे च कर्मण्युपपदे पूरयतेर्णमुलित्यर्थः । **चर्मपूरं स्तृणातीति** । चर्म पूरयन् छादयतीत्यर्थः । **गोष्पदप्रमिति** । पूरेर्णमुलि णिलोपे ऊलोपपक्षे च रूपम् । अत्र वृष्टेर्गोष्पदपूरणक्षमत्वादल्पत्वं गम्यते । **अस्येति किमिति** । पूरेरित्यर्थकम् 'अस्ये'ति किमर्थमित्यर्थः । **मूषिकाबिलप्रमिति** । 'अस्ये'त्यनुक्तौ उपपदेऽपि ऊकारस्य लोपः स्यादिति भावः । **चेले क्नोपेः** । चेल इत्यर्थग्रहणम्,

---

शे.] यद्वा कृञ् साधुत्वार्थः, चोरमाक्रोशतीत्येव बोधः । **यथातथयोर** । असूयया प्रतिवचने इति विग्रहः ।
वर्षप्रमाणे । वर्षो—वृष्टिः । **गोष्पदप्रमिति** । गोष्पदपूरन्तरामितीष्टम् । 'गोष्पदप्रन्तरा'मिति तु न, अनभिधानात् ।

वसनक्नोपम् । **निमूलसमूलयोः कषः** ।३।४।३४। कर्मणीत्येव । कषादिष्वनुप्रयोगं वक्ष्यति । अत्र प्रकरणे पूर्वकाले इति न संबध्यते । निमूलकाषं कषति । समूलकाषं कषति । निमूलं समूलं कषतीत्यर्थः । एकस्यापि धात्वर्थस्य निमूलादिविशेषणसंबन्धाद्भेदः । तेन सामान्यविशेषभावेन विशेषणविशेष्यभावः । **शुष्कचूर्णरूक्षेषु पिषः** ।३।४।३५। एषु कर्मसु पिषेर्णमुल् । शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीत्यर्थः । चूर्णपेषम् । रूक्षपेषम् । **समूलाऽकृतजीवेषु हन्कृञ्ग्रहः** ।३।४।३६। कर्मणीत्येव । समूलघातं हन्ति । अकृतकारं करोति । जीवग्राहं गृह्णाति । जीवतीति जीवः । इगुपधलक्षणः कः । जीवन्तं गृह्णातीत्यर्थः । **करणे हनः** ।३।४।३७। पादघातं हन्ति । पादेन हन्तीत्यर्थः । यथाविध्यनुप्रयोगार्थः सन्नित्यसमासार्थोऽयं योगः । भिन्नधातुसंबन्धे तु 'हिंसार्थानां चे'ति वक्ष्यते । **स्नेहने पिषः** ।३।४।३८। स्निह्यते येन तस्मिन् करणे पिषेर्णमुल् । उदपेषं पिनष्टि । उदकेन पिनष्टीत्यर्थः । **हस्ते वर्तिग्रहोः** ।३।४।३९। हस्तार्थे करणे । हस्तवर्तं वर्तयति । करवर्तम् । हस्तेन गुलिकां करोतीत्यर्थः । हस्तग्राहं गृह्णाति । करग्राहम् । पाणिग्राहम् । **स्वे पुषः** ।३।४।४०। करण इत्येव । स्व इत्यर्थग्रहणम् । तेन स्वरूपे पर्याये विशेषे च णमुल् । स्वपोषं पुष्णाति । धनपोषम् । गोपोषम् । **अधिकरणे बन्धः** ।३।४।४१।

---

**त.]** इत्यर्थः । अन्ये तु क्नूयी शब्दे उन्दे च, उन्दी क्लेदने, क्लिदू आर्द्रीभावे इत्येवं क्नोपमिति णमुलन्तस्य प्रकृत्यर्थं पर्यालोच्य यथा वर्षणेन चेलान्यार्द्रीभवन्ति तावद्वृष्ट इति व्याचख्युः । **निमूलमिति** । नियतं मूलमस्य निमूलम् । सह मूलेन समूलम् । निमूलसमूलकषणाऽभिन्नं कषणमिति शाब्दबोधः । **तेनेति** । अत्रेदं बोध्यं–सामान्यं विशेष्यं, विशेषस्तु विशेषणम् । 'आम्रो वृक्ष' इत्यादौ आम्रो विशेषणं,वृक्षस्तु विशेष्यमिति सर्वजनानुभवात् । ततश्चात्र निमूलकषणादिकं विशेषणं, केवलकषणं तु विशेष्यमिति । **स्नेहने** । 'शुष्कचूर्णे'ति सूत्रे एव स्नेहनग्रहणं न कृतम् । तत्र हि 'कर्मणि दृशिविदो'रिति सूत्रात्कर्मणीत्यनुवर्तते, इह तु पूर्वसूत्रात्करण इत्यनुवर्तनीयमिति । **हस्ते** । हस्त इत्यर्थ-

---

**बा.]** व्याख्यानादिति भावः । 'क्नूयी शब्दे' इति भ्वादौ । तदाह—**चेलक्नोपमिति** । क्नोपशब्दार्थं स्फोरयति–**शब्दायथन्निति** । वर्षप्रमाणं स्फोरयितुमाह–**यथा वर्षण इति** । **निमूलसमूलयोः कषः** । निमूले समूले च कर्मण्युपपदे कषेर्णमुलित्यर्थः । **वक्ष्यतीति** । 'कषादिषु यथाविध्यनुप्रयोगः' इति णमुल्प्रकृतेरनुप्रयोगं वक्ष्यतीत्यर्थः । **न संबध्यते इति** । अयोग्यत्वादप्रतीतेश्चेति भावः । णमुल्प्रकृतेरनुप्रयुज्यमानधातोश्च पौनरुक्त्यं परिहरति–**एकस्यापीति** । निमूलसमूलकषणापेक्षया केवलकषणमन्यत्, यथा इन्द्रो महेन्द्र इति भावः । **तेन सामान्येति** । निमूलसमूलकषणात्मकं कषणमिति बोधः, यथा महादेवो देव इत्यादाविति भावः । **शुष्कचूर्णरूक्षेषु पिषः** । **कर्मस्विति** । 'उपपदेष्वि'ति शेषः । अत्र पिषधातोरनुप्रयोगः । **समूलाकृत** । समूल अकृत जीव एषां द्वन्द्वः । कर्मणीत्येव । समूलादिषु कर्मसूपपदेषु हन् कृञ् ग्रह एभ्यो णमुलित्यर्थः । यथासङ्ख्यमत्रेष्यते । जीवशब्दस्य भावघञन्तत्वे प्राणधारणं गृह्णातीत्यर्थः स्यात्, न तु जीवन्तं गृह्णातीत्यर्थः स्यादित्यत आह—**जीवतीति जीव इति** । ननु 'अकर्तरि च कारके' इति पर्युदासात्कथं कर्तरि घञित्यत आह—**इगुपधेति** । **करणे हनः** । ननु 'हिंसार्थानां च समानकर्मकाणा'मित्यनुपदं वक्ष्यमाणसूत्रेणैव सिद्धे किमर्थमिदमित्यत आह–**यथाविधीत्यादि** । कषादिषु यथाविध्यनुप्रयोगसिद्ध्यर्थः सन् 'उपपदमति'ङिति नित्यसमासार्थोऽयमारम्भ इत्यर्थः । अनुप्रयोगार्थो, नित्यसमासार्थश्चेति यावत् । 'हिंसार्थानां चे'ति सूत्रं च कषादिबहिर्भूतं, तस्यात्र प्रवृत्तौ तु अनुप्रयोगो न स्यात् । किंच 'हिंसार्थानां चे'ति सूत्रम् 'उपदंशस्तृतीयाया'मित्युत्तरं पठितम् । तस्याऽत्र प्रवृत्तौ 'तृतीयाप्रभृतीन्यन्यतरस्या'मिति वैकल्पिक उपपदसमासः स्यादिति भावः । भाष्ये तु अहिंसार्थं, नित्यसमासार्थं चेति स्थितम् । तर्हि 'हिंसार्थानां चे'त्यस्य को विषय इत्यत आह–**भिन्नेति** । णमुल्प्रकृतिभूतहनधात्वपेक्षया धात्वन्तरयोगे तु 'दण्डोपघातं गाः कालयति' 'दण्डेनोपघात'मित्यत्र 'हिंसार्थानां चे'त्यस्य प्रवृत्तिर्वक्ष्यते इत्यर्थः । **स्नेहने पिषः** । **उदपेषमिति** । 'पेषंवासवाहनधिषु चे'ति उदकशब्दस्य उदादेशः । **हस्ते वर्तिग्रहोः** । पञ्चम्यर्थे षष्ठी । हस्त इत्यर्थग्रहणं, व्याख्यानात् । तथा च हस्तार्थक इति लभ्यते, करण इत्यनुवर्तते, तदाह–**हस्तार्थे करणे इति** । करणकारकीभूतहस्तपर्याये उपपदे ण्यन्तवृतु धातोर्ग्रह धातोश्च णमुलित्यर्थः । **स्वे पुषः** । **अर्थग्रहणमिति** । व्याख्यानादिति भावः । **तेनेति** । स्वरूपे स्वशब्दे, स्वपर्याये धनादिशब्दे, विशेषेषु स्वविशेषवाचिगवादिशब्देषु चोपपदेषु णमुलित्यर्थः ।

---

**शे.]** प्रातः के गोष्पदप्रेण, गोष्पदप्रतरामिति चेष्यते' इति भाष्ये स्पष्टम् । **समूलाकृत** । यथासङ्ख्यमत्रेष्यते । **करणे हनः** । 'हिंसार्थानाञ्च समाने'त्येवं सिद्धेऽहिंसार्थं वचनं,हिंसायां नित्यसमासार्थञ्च । तेन प्रत्यये तु 'तृतीयाप्रभृतीनी'ति विकल्पेन समासः स्यात् । तदाह–**यथाविधीति** । **हस्तार्थे इति** । व्याख्यानादर्थग्रहणम् । **अधिकरणे बन्धः** । अत्र संज्ञायामित्याकृष्यते ।

चक्रबन्धं बध्नाति । चक्रे बध्नातीत्यर्थः । **संज्ञायाम्** ।३।४।४२। बध्नातेर्णमुल् संज्ञायाम् । क्रौञ्चबन्धं बद्धः । मयूरिकाबन्धम् । अट्टालिकाबन्धम् । बन्धविशेषाणां संज्ञा एताः । **कर्त्रोर्जीवपुरुषयोर्नशिवहोः** ।३।४।४३। जीवनाशं नश्यति । जीवो नश्यतीत्यर्थः । पुरुषवाहं वहति । पुरुषो वहतीत्यर्थः । **ऊर्ध्वे शुषिपूरोः** ।३।४।४४। ऊर्ध्वे कर्तरि । ऊर्ध्वशोषं शुष्यति । वृक्षादिरूर्ध्व एव तिष्ठन् शुष्यतीत्यर्थः । ऊर्ध्वपूरं पूर्यते । ऊर्ध्वमुख एव घटादिर्वर्षोदकादिना पूर्णो भवतीत्यर्थः । **उपमाने कर्मणि च** ।३।४।४५। चात्कर्तरि । घृतनिधायं निहितं जलम् । घृतमिव सुरक्षितमित्यर्थः । अजकनाशं नष्टः । अजक इव नष्ट-इत्यर्थः । **कषादिषु यथाविध्यनुप्रयोगः** ।३।४।४६। यस्माण्णमुलुक्तः स एवानुप्रयोक्तव्य इत्यर्थः । तथैवोदाहृतम् । **उपदंशस्तृतीयायाम्** ।३।४।४७। इतः प्रभृति पूर्वकाल इति संबध्यते । 'तृतीयाप्रभृतीन्यन्यतरस्या'मिति वा समासः । मूलकोपदंशं भुङ्क्ते । मूलकेनोपदंशम् । दश्यमानस्य मूलकस्य भुजिं प्रति करणत्वात्तृतीया । यद्यप्युपदंशिना सह न शाब्दः संबन्धस्तथाप्यार्थोऽस्त्येव, कर्मत्वात् । एतावतैव सामर्थ्येन प्रत्ययः, समासश्च, 'तृतीयाया'मिति वचनसामर्थ्यात् । **हिंसार्थानां च समानकर्मकाणाम्** ।३।४।४८। तृतीयान्ते उपपदेऽनुप्रयोग-

---

त.] ग्रहणं, तदाह-**हस्तार्थे इति** । **संज्ञायाम्** । अनधिकरणार्थ आरम्भः । **तथैवेति** । 'निमूलकाषं कषती'त्याद्युदाहृतमित्यर्थः । **मूलकोपदंशमिति** । अयमर्थः-मूलकेन भुङ्क्ते । किं कृत्वा ? उपदश्य । किमुपदश्य ? । अर्थान्मूलकमिति संबध्यते । **एतावतैवेति** । शाब्दान्वयाऽभावेऽपि आर्थिकान्वयमात्रेणेत्यर्थः । **वचनसामर्थ्यादिति** । यदि हि तृतीयान्तेन शाब्दान्वये सत्येव प्रत्ययो भवेत्तर्हि 'करणे हनः' इतिवत् 'उपदंशः करणे' इत्येव ब्रूयात् । ततश्च क्रियान्तरं प्रति करणत्वं मूलकेनेत्यस्येष्टमिति भावः । एतच्च मनोरमाग्रन्थानुसारेणोक्तम् । अत्र केचित्-नन्वेवम् 'उपदंशः कर्मणी'त्येव सूत्रमस्तु । अथवोपदंश इत्येवाऽस्तु । 'उपमाने कर्मणी'त्यतः कर्मणीत्यनुवर्त्य कर्मण्युपपदे उपपूर्वकाद्दशेर्णमुलिति व्याख्यायतां, किमनया कुसृष्ट्येति । न चैवं कर्मण्युपपदे नित्यसमासः स्यादिति वाच्यं, करणे इत्युक्तेऽप्युक्तदोषस्य तुल्यत्वात् । न च 'तृतीयाप्रभृतीनी'ति सूत्रे 'करणप्रभृतीनी'त्युक्ते नास्त्येव दोषः, 'करणे हनः' इत्यारभ्य विकल्प इति सन्देहवारणाय 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षण'मिति परिभाषास्वीकारादिति वाच्यं, 'तृतीयाप्रभृतीनी'ति सूत्रे 'कर्मणिप्रभृतीनी'त्युक्तेऽपि दोषाऽभावात् । 'कर्मण्याक्रोशे कृञः खमुञ्' 'कर्मणि दृशिविदो'रित्यारभ्य वा विकल्प इति सन्देहस्य 'व्याख्यानतो विशेषप्रतिपत्ति'रिति परिभाषया वारयितुं शक्यत्वात् । तस्मात् 'उपदंशः करणे' इत्येव ब्रूया'दिति मनोरमा चिन्त्येत्याहुः । वस्तुतस्तु 'कर्मणिप्रभृतीन्यन्यतरस्या'मित्युक्ते 'उपमाने कर्मणि चे'त्यतः कर्मणीत्यनुवर्त्य 'उपदंश' इत्येव सूत्रमिति स्वीकार-

---

बा.] एतच्च 'स्वं रूप'मिति सूत्रे भाष्ये स्पष्टम् । तत्र स्वशब्दे उपपदे उदाहरति-**स्वपोषमिति** । धनेन पुष्णातीत्यर्थः । पर्याये उपपदे उदाहरति—**धनपोषमिति** । स्वविशेष उपपदे उदाहरति-**गोपोषमिति** । **अधिकरणे** । अधिकरणे उपपदे बन्धधातोर्णमुलित्यर्थः । **संज्ञायाम्** । अनधिकरणार्थ आरम्भः । **कर्त्रोः** । 'नशिवहो'रिति पञ्चम्यर्थे षष्ठी । कर्तरि जीवे उपपदे नशेः, कर्तरि पुरुषे उपपदे वहधातोर्णमुलित्यर्थः । **ऊर्ध्वे शुषि** । **ऊर्ध्वे कर्तरीति** । 'उपपदे शुषेः पूरेश्च णमु'लिति शेषः । **उपमाने** । **चात्कर्तरीति** । कर्मणि कर्तरि च उपमाने उपपदे धातोर्णमुलित्यर्थः । **कषादिषु** । **यस्मादिति** । 'धातो'रिति शेषः । **णमुलुक्त इति** । 'निमूलसमूलयोः कषः' इत्यारभ्य 'उपमाने कर्मणि चे'त्यन्तैः सूत्रै'रिति शेषः । **तथैवोदाहृतमिति** । 'निमूलकाषं कषतीत्यादी'ति शेषः । एवं च पृथगिह नोदाहर्तव्यमिति भावः । **उपदंशस्तृतीयायाम्** । **संबध्यते इति** । 'मण्डूकप्लुत्ये'ति शेषः । तृतीयान्ते उपपदे उपपूर्वाद्दंशधातोर्णमुल् समानकर्तृकयोः पूर्वकाले इत्यर्थः । नित्यमुपपदसमासमाशङ्क्याह-**तृतीयाप्रभृतीनीति** । ननु 'मूलकेनोपदंशं भुङ्क्ते' इत्यत्र मूलकस्य उपदंशनं प्रति कर्मत्वात्कथं मूलकात्तृतीया, कथं वा उपदंशाण्णमुलित्यत आह-**दश्यमानस्येत्यादि** । प्रधानक्रियानुरोधात्परत्वाच्चेति भावः । ननु मूलकस्य भुजिक्रियां प्रति करणत्वे उपदंशनेनाऽसामर्थ्यात्समासानुपपत्तिरिति शङ्कते-**यद्यपीति** । उपदंशिना सह मूलकस्य कर्मत्वेनान्वयः शब्दगम्यो न भवति, तस्य भुजिक्रियां प्रति करणत्वेनान्वयस्योक्तत्वादित्याक्षेपः । समाधत्ते-**तथापीति** । भुजिक्रियां प्रति शाब्दमर्यादया करणत्वेनान्वितस्यापि मूलकस्योपदंशनं प्रति आर्थिकः कर्मत्वान्वयोऽस्त्येव । मूलकस्योपदंशनं प्रति वस्तुतः कर्मत्वस्य सत्त्वादित्यर्थः । नन्वार्थिककर्मत्वान्वयमादाय कथं तृतीया, कथं वा णमुल्, कथं वा समास इत्यत आह-**एतावतैवेति** । कुत एतदित्यत आह-**तृतीयायामिति** । **वचनसामर्थ्यादिति** । यदि तृतीयान्ते शाब्दान्वय एवात्र विवक्ष्येत, तदा करण इत्येवावक्ष्यत् 'करणे हनः' इतिवदिति भावः । मूलकस्य भुजिक्रियां प्रति

---

शे.] तेन 'ग्रामे बद्धः' इत्यर्थे 'ग्रामबन्धं बद्धः' इति न । **कषादिषु** । **स एवेति** । स चाऽविशेषात्कृदन्तस्तिङन्तश्चेति

धातुना समानकर्मकाद्धिंसार्थाण्णमुल् स्यात्। दण्डोपघातं गाः कालयति, दण्डेनोपघातम्। दण्डताडम्। समानकर्मकाणामिति किम्? । दण्डेन चोरमाहत्य गाः कालयति। **सप्तम्यां चोपपीडरुधकर्षः** ।३।४।४९। उपपूर्वेभ्यः पीडादिभ्यः सप्तम्यन्ते तृतीयान्ते चोपपदे णमुल् स्यात्। पार्श्वोपपीडं शेते। पार्श्वयोरुपपीडम्। पार्श्वाभ्यामुपपीडम्। व्रजोपरोधं गाः स्थापयति। व्रजेन व्रजे वा उपरोधम्। पाण्युपकर्षं धानाः सङ्गृह्णाति। पाणावुपकर्षम्। पाणिनोपकर्षम्। **समासत्तौ** ।३।४।५०। तृतीयासप्तम्योर्धातोर्णमुल् स्यात्सन्निकर्षे गम्यमाने। केशग्राहं युध्यन्ते। केशेषु गृहीत्वा। हस्तग्राहम्। हस्तेन गृहीत्वा। **प्रमाणे च** ।३।४।५१। तृतीयासप्तम्यो-रित्येव। द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति। द्व्यङ्गुलेन द्व्यङ्गुले वोत्कर्षम्। **अपादाने परीप्सायाम्** ।३।४।५२। परीप्सा त्वरा। शय्योत्थायं धावति। [शय्याया उत्थायम्] **द्वितीयायां च** ।३।४।५३। परीप्सायामित्येव। यष्टिग्राहं युध्यन्ते।

**त.]** पक्षे कषादिषु यथाविध्यनुप्रयोगोऽपि विकल्पेन स्यात्। मण्डूकप्लुत्याश्रयणं त्वगतिकगतिः। 'उपदंशः कर्मणो'ति सूत्रस्वीकारपक्षेऽपि 'मूलकोपदंश'मिति समासस्य वैकल्पिकत्वात्समासाऽभावपक्षे 'मूलकमुपदंश'मिति वाक्यं स्यात्, इष्यते तु 'मूलकेनोपदंश'मिति। 'करणे प्रभृतीनी'ति मनोरमोक्तौ तु समासाऽभावपक्षे 'मूलकेनोपदंश'मिति सिध्य-त्येव, करणतृतीयायाः प्रवृत्तेरिति दिक्। **कालयतीति**। कल विक्षेपे चुरादिः। प्रेरयतीत्यर्थः। **दण्डताडमिति**। तड आघाते। अयमपि चुरादिरेव। **सप्तम्यां चो**। **उपपूर्वेभ्य इति**। सूत्रे पीडादीनां समाहारद्वन्द्वं कृत्वा उपपूर्वः पीडरुधकर्ष इति उत्तरपदलोपी समास इति भावः। इह सौत्रं पुंस्त्वं, पञ्चम्यर्थे प्रथमेति च ज्ञेयम्। कर्षेति शपा निर्देशः, कृष विलेखने इत्यस्य गुणसहितस्योच्चारणात्। तत्फलं तुदादेर्व्युदासः। यद्यपि विलेखन एव सोऽपि दृश्यते तथापि क्षेत्रविषयकविलेखन एव स प्रयुज्यते। पञ्चभिर्हलैः कर्षतीति दर्शनात्। एवंच तौदादिकात् कृषेः क्त्वाप्रत्यय एव भवति, क्षेत्रे उपकृष्य, हलेनोपकृष्येति, न त्विह णमुलिति स्थितमाकरे। **समासत्तौ**। **केशग्राहमिति**। केशेषु ग्रहणं भवतु वा, मा भूत्, सन्निकर्षप्रतिपादनपरमेतत्। **द्व्यङ्गुलोत्कर्षमिति**। द्वयोरङ्गुल्योः समाहारो द्व्यङ्गु-लम्। 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः' इत्यच् समासान्तः। द्व्यङ्गुलेनोत्कृष्य। परिच्छिद्येत्यर्थः। स्वल्पः खण्डः खण्डिका। ह्रस्वः खण्डः खण्डिकेति मनोरमायामुक्तम्। यद्यपि ह्रस्वशब्दो वामनपर्यायतया चेतनेष्वेव प्रायेण प्रयुज्यते, अल्पे ह्रस्वे इति पृथक्सूत्रस्वारस्यात्, तथापि ह्रस्वदीर्घेत्यादिनिर्देशादचेतनेष्वपि क्वचिद्भवतीत्याहुः। **द्वितीयायां। परीप्सायामित्येवेति**। कथं तर्हि 'अनुदात्तं पदमेकवर्ज'मिति, नह्यत्र त्वरा गम्यते?। अत्राहुः-अस्यां हि परिभाषायां त्वरा विवक्षिता। तेनायमर्थः-उदात्तः स्वरितो वा यत्र विधीयते तत्र तत्समकालमेवैकमचं वर्जयित्वा परिशिष्टमनुदात्तं

**बा.]** करणत्वान्वयः शाब्दः। उपदंशे कर्मत्वान्वय आर्थिक इत्येतदुपपादयति-**ततश्चायमर्थ इति**। 'मूलकेन भुङ्क्ते' इत्यन्वयः शाब्दः, प्रधानक्रियानुरोधात्परत्वाच्च तृतीयाविभक्तेः प्रवृत्तेरिति भावः। **किं कृत्येति**। किं कृत्वा मूलकेन भुङ्क्ते इत्याकाङ्क्षायामुपदश्येत्यन्वेतीत्यर्थः। **तदेवेति**। किमुपदश्येत्याकाङ्क्षायां तदेव मूलकमर्थात् कर्मत्वेनान्वेती-त्यर्थः। **हिंसार्थानां च**। **दण्डोपघातं गाः कालयतीति**। 'कल विक्षेपे' चुरादिः। तत्रानुप्रयुज्यमानकालयतेरु-पहन्तेश्च गावः कर्म। अतः समानकर्मकत्वमुपहन्तेरिति भावः। **दण्डेनोपघातमिति**। 'तृतीयाप्रभृतीन्यन्यतर-स्या'मिति उपपदसमासविकल्प इति भावः। **दण्डताडमिति**। 'तड आघाते' चुरादिः। **सप्तम्यां चोपपीड**। चात्तृतीयायामिति समुच्चीयते। 'कृष विलेखने' इति धातोः शपि कृतलघूपधगुणस्य कर्षेति निर्देशः। अतस्तौदादिकस्य निरासः। पीड, रुध, कर्ष, एषां समाहारद्वन्द्वात्पञ्चम्यर्थे प्रथमा। पुंस्त्वं चार्षम्। उपपूर्वः पीडरुधकर्ष इति मध्यम-पदलोपिसमासः। तदाह-**उपपूर्वेभ्य इति** 'तृतीयाप्रभृतीन्यन्यतरस्या'मित्युपपदसमासविकल्पं मत्वाह-**पार्श्वयो-रुपपीडमिति**। तौदादिकात्तु कृषेः क्त्वाप्रत्यय एव, न तु णमुल्। क्षेत्रे उपकृष्य बीजान्यावपति, हलेनोपकृष्येति। यद्यपि तौदादिकोऽपि विलेखनार्थक एव तथापि क्षेत्रविषयविलेखन एव तस्य प्रवृत्तेरि-त्याहुः। **समासत्तौ**। 'समासत्ति' पदं विवृणोति-**संनिकर्षे गम्यमाने इति**। संनिकर्षोऽव्यवधानेन संयोगः। **केशग्राहमिति**। संनिकर्षपरमेतत्। अत्यन्तं संनिहिता युध्यन्ते इत्यर्थः। तदाह-**युद्धसंरम्भादिति**। युद्धातिशयवशाद्योद्धारः परस्परमत्यन्तं संनिहिता भवन्तीत्यर्थः। **प्रमाणे च**। **इत्येवेति**। तृतीयान्ते सप्तम्यन्ते चोपपदे धातोर्णमुल् स्यात् प्रमाणे गम्ये इत्यर्थः। ह्रस्वः खण्डः-**खण्डिका**। **द्व्यङ्गुलेनेति**। 'तत्पुरुषस्याङ्गुले'रिति टजिति भावः। **अपादाने**। अपादाने उपपदे धातोर्णमुल् स्यात् परीप्सायां गम्यमानायामित्यर्थः। त्वरां दर्शयि-

**शे.]** बोध्यम्। **शय्येति**। एवं हि नाम त्वरा यदावश्यकं मुखक्षालनाद्यकृत्वैव धावतीत्यर्थः। येन विनेति। एवञ्च येन विना

[यष्टिं ग्राहम्] लोष्टग्राहम्। **अपगुरो णमुलि**।६।१।५३।गुरी उद्यमने इत्यस्यैचो वा आत्स्याण्णमुलि। अस्यपगोरं युध्यन्ते। अस्यपगारम्। **स्वाङ्गेऽध्रुवे**।३।४।५४। द्वितीयायामित्येव। अध्रुवे स्वाङ्गे द्वितीयान्ते धातोर्णमुल्। भ्रूविक्षेपं कथयति। भ्रुवं विक्षेपम्। अध्रुवे किम् ?। शिर उत्क्षिप्य। येन विना न जीवनं तद्ध्रुवम्। **परिक्लिश्यमाने च**।३।४।५५। सर्वतो विबाध्यमाने स्वाङ्गे द्वितीयान्ते[धातो]र्णमुल् स्यात्। उरःप्रतिपेषं युध्यन्ते। कृत्स्नमुरः पीडयन्त इत्यर्थः। उरोविदारं प्रतिचस्करे नखैः। ध्रुवार्थमिदम्। **विशिपतिपदिस्कन्दां व्याप्यमानाऽऽसेव्यमानयोः**।३।४।५६। द्वितीयायामित्येव। द्वितीयान्ते उपपदे विश्यादिभ्यो णमुल् स्याद्व्याप्यमाने, आसेव्यमाने चार्थे गम्ये। गेहादिद्रव्याणां विश्यादिक्रियाभिः साकल्येन सम्बन्धो व्याप्तिः। क्रियायाः पौनःपुन्यमासेवा। 'नित्यवीप्सयो'रिति द्वित्वं तु न भवति, समासेनैव स्वभावतस्तयोरुक्तत्वात्। यद्यप्याभीक्ष्ण्ये णमुलुक्त एव, तथापि उपपदसंज्ञार्थमासेवायामिह पुनर्विधिः। गेहानुप्रवेशमास्ते। गेहंगेहमनुप्रवेशम्। गेहमनुप्रवेशमनुप्रवेशम्। एवं गेहानुप्रपातम्। गेहानुप्रपादम्। गेहानुस्कन्दम्। असमासे तु गेहस्य, णमुलन्तस्य च पर्यायेण द्वित्वम्। **अस्यतितृषोः क्रियान्तरे कालेषु**।३।४।५७। क्रियामन्तरयति व्यवधत्त इति क्रियाऽन्तरः। तस्मिन्धात्वर्थे वर्तमानादस्यतेस्तृष्यतेश्च कालवाचिषु द्वितीयान्तेषूपपदेषु णमुल् स्यात्। द्व्यहात्यासं गाः पाययति। द्व्यहमत्यासम्। द्व्यहतर्षम्। द्व्यहन्तर्षम्। अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयते। अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः। **नाम्न्यादिशिग्रहोः**।३।४।५८। द्वितीयायामित्येव। नामादेशमाचष्टे। नामग्राहमाह्वयति। **अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ**।३।४।

---

त.] कर्तव्यं, न विलम्बितव्यमिति। **यष्टिग्राहमित्यादि**। एवं खलु युद्धाय त्वरन्ते यदासन्नं यष्ट्यादिकमपि गृहीत्वा धावन्ति नायुधं प्रतीक्षन्त इति भावः। **अस्यपगोरमिति**। असिमुद्यम्येत्यर्थः। **उपपदसंज्ञार्थमिति**। 'विशिपती'ति सूत्रे द्वितीयायामित्यनुवर्तनात्तदन्तस्योपपदसंज्ञार्थमित्यर्थः। **अव्यये**। **अयथेति**। न यथाभिप्रेतमयथाभिप्रेतं तथाख्यान

---

बा.] तुमाह-एवं **नामेत्यादि**। **द्वितीयायां च**। द्वितीयान्ते उपपदे धातोर्णमुलित्यर्थः। **स्वाङ्गेऽध्रुवे**। 'अध्रुवे' इति छेद इति मत्वा आह-**अध्रुव इति**। ननु 'शिर उत्क्षिप्ये'ति कथं प्रत्युदाहरणम्, शिरसोऽपि अध्रुवत्वादित्यत आह-**येनाङ्गेनेति**। **परिक्लि**। **उरोविदारमिति**। कृत्स्नमुर इत्यर्थः। **प्रतिचस्कर इति**। कॄ विक्षेपे प्रतिपूर्वात्कर्मणि लिट्। 'सुट्कात्पूर्व' इति, 'अडभ्यासव्यवायेऽपी'ति चानुवृत्तौ 'किरतौ लवने' 'हिंसायां प्रतेश्चे'ति सुट्। नखैः प्रतिचिक्षिपे इत्यर्थः। ननु 'उरःप्रतिपेष'मित्यादौ स्वाङ्गत्वादेव पूर्वसूत्रेणैव सिद्धमित्यत आह-**ध्रुवार्थमिति**। उरो विना जीवनाऽभावादुरो ध्रुवमिति भावः। **विशिपति**। **गेहादिद्रव्याणामिति**। तथा च गेहानुप्रवेशमास्ते इत्यत्र सर्वाणि गेहान्यनुप्रविश्येति, पुनःपुनर्गेहमनुप्रविश्येति वा अर्थः। उभयथापि न द्वित्वमित्याह-**द्वित्वं तु न भवतीति**। कुत इत्यत आह-**समासेनैवेति**। ननु समासेन कथमिह कथनं व्याप्त्यासेवयोरित्यत आह-**स्वभावत इति**। ननु 'अभीक्ष्ण्ये णमुल् चे'त्यनेनैव सिद्धत्वादिह आसेवाग्रहणं व्यर्थम्। न च क्त्वानिवृत्तिः फलमिति शङ्क्यं, क्त्वाप्रत्ययस्यापि पक्षे इष्टत्वादिति शङ्कते-**यद्यपीति**। समाधत्ते-**तथापीति**। द्वितीयान्तस्योपपदसञ्ज्ञार्थमित्यर्थः। नन्विह आसेवाग्रहणाऽभावे 'तत्रोपपद'मिति उपपदसंज्ञा कुतो नेत्यत आह-**असति हीति**। यद्यप्यासेवायां णमुल्विध्यभावेऽपि 'आभीक्ष्ण्ये णमुल् चे'ति णमुल् सिध्यति, तथापि 'आभीक्ष्ण्ये णमुल् चे'ति सूत्रे द्वितीयान्तस्य सप्तम्या निर्देशेन ग्रहणाऽभावादुपपदसंज्ञा न स्यात्। ततश्च 'तृतीयाप्रभृतीन्यन्यतरस्या'मित्युपपदसमासविकल्पो न स्यादिति भावः। **असमासे त्विति**। व्याप्तौ णमुलि गेहस्य व्याप्यमानत्वाद्द्वित्वम्। आसेवायां णमुलि तु णमुलन्तस्य द्वित्वम्। क्रियापौनःपुन्यस्यैव आसेवात्वादिति भावः। **अस्यतितृषोः**। **द्व्यहात्यासमिति**। द्व्यहमतिक्रम्येत्यर्थः। अतिपूर्वादस्यतेर्णमुल्। **द्व्यहतर्षमिति**। द्व्यहं तृष्णावतीः कृत्वेत्यर्थः। **नाम्न्यादिशिग्रहोः**। नाम्नि आदिशिग्रहोरिति छेदः। पञ्चम्यर्थे षष्ठी। द्वितीयान्ते नामन्शब्दे उपपदे आङ्पूर्वकदिशेर्ग्रहधातोश्च णमुलित्यर्थः। **अव्ययेऽयथाभि**। अप्रियस्य नोचैःकथनं, प्रियस्योच्चैःकथनं च अभि-

---

शे.] जीवनं तदध्रुवमिति फलितम्। **यद्यपीति**। क्त्वानिवृत्तिस्तु नेष्टेति भावः। **उपपदेति**। 'द्वितीयान्तस्ये'त्यादिः। तेन पाक्षिकोपपदसमाससिद्धिरिति भावः। **गेहस्येति**। व्याप्यमानतया द्रव्यस्य द्वित्वम्, आसेव्यमानत्वेन णमुलन्तस्येति भावः। केवलेन णमुला समासाऽभावे द्वित्वं विना तयोर्वक्तुमशक्यत्वमिति तात्पर्यम्। **अस्यतितृषोः**। अनयोः किम् ?। द्व्यहमुपोष्य भुङ्क्ते। क्रियान्तरे इति किम् ?। अहरत्यस्येषून् गतः। न गतिर्व्यवधीयते। कालेषु किम् ?। योजनमत्यस्य गाः पाययति। **नाम्न्यादि**।

५९। अयथाभिप्रेताख्यानं नाम अप्रियस्योच्चैः, प्रियस्य नीचैः कथनम् । उच्चैःकृत्य उच्चैःकृत्वा उच्चैःकारम-प्रियमाचष्टे । नीचैःकृत्य नीचैःकृत्वा नीचैःकारं प्रियं ब्रूते । तिर्यच्यपवर्गे ।३।४।६०। तिर्यक्छब्दे उपपदे कृञः क्त्वाणमुलौ स्तः समाप्तौ गम्यमानायाम् । तिर्यक्कृत्य गतः । तिर्यक्कारम् । समाप्य गत इत्यर्थः । अपवर्गे किम् ? । तिर्यक्कृत्वा काष्ठं गतः । स्वाङ्गे तस्प्रत्यये कृभ्वोः ।३।४।६१। मुखतःकृत्य गतः । मुखतः-कृत्वा । मुखतःकारम् । मुखतोभूय, मुखतो भूत्वा, मुखतो भावम् । नाधार्थप्रत्यये च्व्यर्थे ।३।४।६२। नाधार्थप्रत्ययान्ते च्व्यर्थविषये उपपदे कृभुवोः क्त्वाणमुलौ स्तः । अनाना नाना कृत्वा नानाकृत्य, नाना कृत्वा, नानाकारम् । विनाकृत्य, विना कृत्वा, विनाकारम् । नानाभूय, नाना भूत्वा, नानाभावम् । अनेकं द्रव्यमेकं भूत्वा एकधाभूय, एकधा भूत्वा, एकधाभावम् । एकधाकृत्य, एकधाकृत्वा, एकधा-कारम् । प्रत्ययग्रहणं किम् ? । हिरुक्कृत्वा । पृथग्भूत्वा । तूष्णीमि भुवः ।३।४।६३। तूष्णींशब्दे उपपदे भुवः क्त्वाणमुलौ स्तः । तूष्णींभूय, तूष्णीं भूत्वा, तूष्णींभावम् । अन्वच्यानुलोम्ये ।३।४।६४। अन्वक्छब्दे

त.]इत्यर्थः । प्रियस्योच्चैः,अप्रियस्य नीचैः कथनं यथाभिप्रेताख्यानम् । तद्विपरीताख्याने इति यावत् । नन्वप्रियाख्याने इत्येव कुतो नोक्तमिति चेदत्राहुः-प्रियस्य नीचैः कथनमपि प्रियाख्यानमेव, न त्वप्रियाख्यानमिति 'नीचैःकृत्य नीचैः कारं प्रियं ब्रूते'इति प्रयोगो न स्यात् । तथा अप्रियस्य नीचैः कथनमप्यप्रियाख्यानमिति नीचैः कृत्य नीचैःकारमप्रियं ब्रूत इति प्रयोगोऽपि स्यादित्ययथाभिप्रेताख्याने इत्युक्तमिति । तिर्यक्कृत्वेति । अदृजुत्वादग्रतः स्थितं पार्श्वतः कृत्वा गत इत्यर्थः । स्वाङ्गे । तस्प्रत्ययो यस्मात्तस्प्रत्ययस्तस्मिन्स्वाङ्गे उपपदे इत्येके । प्रत्ययग्रहणपरिभाषया तस्प्रत्ययान्ते स्वाङ्गे इत्यन्ये । तस् चासौ प्रत्ययश्चेति कर्मधारयः । तस्प्रत्यये परतो यत्स्वाङ्गं तस्मिन्नुपपद इति तु प्राञ्चः । तत्र यद्यपि स्वाङ्गमात्रं नोपपदं तथापि तस्मिन्नित्येतत्प्रकृतिप्रत्ययसमुदायपरमिति बोध्यम् । मुखतःकारं मुखतोभू-येति । क्त्वाणमुलोः कृभुवोश्च यथासङ्ख्यं नेष्यत इति भावः । मुखत इत्यत्राद्यादित्वात्सप्तम्यर्थे तसिः । प्रत्ययग्रहणं किम् ? । मुखे तस्यति मुखतः । तसु उपक्षये क्विप् । धातुत्वादिह 'अत्वसन्तस्ये'ति दीर्घो न । मुखतः कृत्वा गत इति काशिकादौ स्थितम् । वस्तुतस्तु प्रत्ययाऽप्रत्ययपरिभाषयैवेष्टसिद्धेः प्रत्ययग्रहणं सुत्यजम् । नाधार्थ । नाञौ 'विन-ञ्भ्या'मिति विहितौ नानाञौ । धार्थाः—द्वित्र्योश्च धमुञादयः । 'सङ्ख्याया विधार्थे धे'ति धाप्रत्ययो धाऽर्थको भवतीत्याशयेनोदाहरति—एकधाभूयेत्यादि । एवं द्वैधङ्कृत्य द्वैधम्भूय द्वैधम्भावमित्याद्युदाहर्तव्यम् । ननु नानाञौ प्रत्ययौ, धा च प्रत्ययः, धमुञादिविधौ तु 'एकाद्धो ध्यमुञन्यतरस्या'मित्यतो'ध'इत्यनुवर्त्य तेषामादेशत्वाश्रयणेऽपि स्थानिवद्भावेन धमुञादिर्धप्रत्ययो भवतीति किमर्थं प्रत्ययग्रहणमित्याक्षिपति—प्रत्ययग्रहणमिति । यद्यप्युक्तरीत्या धाग्रहणेन धमुञादेर्ग्रहणं संभवतीत्यर्थग्रहणमिह व्यर्थं, तथापि 'धमुञन्तात्स्वार्थे डदर्शन'मिति डप्रत्ययान्तसङ्ग्रहार्थ-मर्थग्रहणं, तत्फलं तु द्वैधीकृत्येत्यादिप्रयोगः । तूष्णीमि । कृञो निवृत्त्यर्थं तूष्णीङ्ग्रहणम् । अन्वच्या । नन्विह 'अचः' इत्यकारलोपे 'च्वौ' इति पूर्वस्याऽणो दीर्घेऽनूचीति निर्देष्टुमुचितम् । 'धुप्रागपागि'ति सूत्रे 'प्रतीचो

बा.]प्रेतम्=इष्टम् । तद्विपरीतम्=अनभिप्रेतम् । तदाह—अयथाभिप्रेताख्यानं नामेत्यादि ।'तृतीया प्रभृतीन्यन्य-तरस्या'मिति समासविकल्पं मत्वाह—उच्चैःकृत्य उच्चैः कृत्वेति । समासपक्षे ल्यबिति भावः । उच्चैःकारमिति । अत्र समासतदभावयोर्नास्ति विशेषः । स्वरे तु विशेषः । तिर्यच्यपवर्गे । 'तिरश्ची'ति भवितव्यम् । सौत्रो निर्देश' इति भाष्यम् । 'अपवर्ग' इत्यस्य विवरणं—समाप्ताविति । स्वाङ्गे तस्प्रत्यये । पञ्चम्यर्थे षष्ठीद्विवचनम् । तस् प्रत्ययो यस्मादिति बहुव्रीहिः । तस्प्रत्ययान्ते स्वाङ्गे उपपदे कृञो भुवश्च क्त्वाणमुलावित्यर्थः । इह न यथा-सङ्ख्यं, व्याख्यानात् । नाधार्थ । 'विनञ्भ्यां नानाञौ नसहे'ति सूत्रे असहत्वे विनञ्भ्यां नाप्रत्ययो विहितः । 'संख्याया विधार्थे धा' इति धाप्रत्ययो विहितः । तस्य अर्थ इव अर्थो यस्य स धाऽर्थः । नाप्रत्ययो,धार्थकश्च प्रत्ययो यस्मादिति बहुव्रीहिः । तदाह—नाधार्थप्रत्ययान्ते इति । नाप्रत्ययान्ते धार्थप्रत्ययान्ते उपपदे इत्यर्थः । अर्थ-ग्रहणं धाप्रत्ययमात्रेऽन्वेति । तेन धमुञोऽपि ग्रहणं लभ्यते । नाप्रत्यये त्वर्थग्रहणं नान्वेति, नाप्रत्ययान्ते धार्थप्रत्य-यान्ते च्व्यन्तविषये उपपदे इत्यर्थः । अत एव भाष्ये 'अर्थग्रहणं किं ? । द्विधाकृत्य द्वैधङ्कृत्ये'त्येवोक्तम् । तूष्णीमि भुवः । ननु 'स्वाङ्गे तस्प्रत्यये कृभ्वो'रित्यतोऽनुवृत्त्यैव सिद्धे भूग्रहणं व्यर्थमित्यत आह—कृञो निवृत्त्यर्थमिति । अन्वच्यानुलोम्ये । 'अनूची'त्येव वक्तुमुचितं । सौत्रोऽयं निर्देशः, तिर्यच्यपवर्गे इतिवत् । आनुलोम्यम्—

शे.]नामशब्दे उपपदे आङ्पूर्वाद्दिशेर्ग्रहेश्च णमुलित्यर्थः । तिर्यचीति । 'सौत्रो निर्देशः' इति भाष्यम् । 'तिर्यक्कृत्ये'त्यत्र समु-दायोऽपवर्गे । तदाह—समाप्य गत इति । स्वाङ्गे त । तस्प्रत्ययान्ते स्वाङ्गे उपपदे इत्यर्थः । 'तस्प्रत्यये' इति कर्मधारयः ।

उपपदे भुवः क्त्वाणमुलौ स्त आनुकूल्ये गम्यमाने । अन्वग्भूय आस्ते, अन्वग्भूत्वा, अन्वग्भावम् । अग्रतः पार्श्वतः पृष्ठतो वाऽनुकूलो भूत्वा आस्त इत्यर्थः । आनुलोम्ये किम् ? । अन्वग्भूत्वा तिष्ठति । पृष्ठतो भूत्वेत्यर्थः ।

इत्थं लौकिकशब्दानां दिङ्मात्रमिह दर्शितम् ।
विस्तरस्तु यथाशास्त्रं दर्शितः शब्दकौस्तुभे ॥ १ ॥
भट्टोजिदीक्षितकृतिः सैषा सिद्धान्तकौमुदी ।
प्रीत्यै भूयाद्भगवतोर्भवानीविश्वनाथयोः ॥ २ ॥

इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यां कृदन्तं समाप्तम् ।

---

त.] य'दितिवत् । एवं 'तिर्यच्यपवर्गे' इति सूत्रेऽपि 'तिरश्ची'त्येव निर्देष्टुमुचितमिति चेत् । अत्र केचित्—शास्त्रोक्तं कार्यमर्थवत्येव भवति । अर्थश्च लोके प्रसिद्ध एव गृह्यते । 'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः । शास्त्रार्थस्तेषु कर्तव्यः' इति न्यायात् । अतोऽनुकरणे न भविष्यतीत्यन्वचीति सम्यगेवेति । तच्चिन्त्यम् । एवं तर्हि 'क्षियो दीर्घात्' इत्यादावियङादिकं न स्यात् । 'प्रतीचो य'दित्यपि न सिध्येदिति । वस्तुतस्तु 'प्रकृतिवदनुकरण'मित्यस्य वैकल्पिकत्वादन्वचीत्यादिनिर्देशो तु न दोषः । वैकल्पिकत्वं च 'यत्तदेतेभ्यः' इति सूत्रे त्यदाद्यत्वस्य करणादेकशेषाऽभावदर्शनाच्च निर्णीयत इति प्रागेव प्रपञ्चितम् । अग्रत इत्यादि । अन्वक्शब्दस्यानुकूल्यमात्रे विश्रान्तेर्देशविशेषवाचित्वे नियमो नेति ध्वनयितुमिदम् । पृष्ठतो भूत्वेत्यर्थ इति । इहान्वक्शब्देनानुकूलोऽननुकूलो वेति न स्पृश्यते, तस्य देशविशेषमात्रे पर्यवसानात् । प्रमाणान्तरेण क्वचिदिहानुकूल्यलाभेऽपि अन्वक्शब्दस्य तत्समर्पणे व्यापाराऽभावाण्णमुल् न, किन्तु क्त्वैव भवतीति व्यवस्था बोध्या । इत्युत्तरकृदन्तम् ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवामनेन्द्रस्वामिचरणसेवकज्ञानेन्द्रसरस्वतीकृतायां सिद्धान्तकौमुदीव्याख्यायां तत्त्वबोधिन्याख्यायां कृदन्तं समाप्तम् ।

समाप्ता चेयं तत्त्वबोधिनी ।



---

बा.] आनुकूल्यम् । पृष्ठतो भूत्वेति । 'अग्निप्रथमाः प्रतिपद्यन्ते अन्वगध्वर्यु'रित्यादौ अन्वक्छब्दस्य पृष्ठभागे प्रसिद्धेरिति भावः । इत्युत्तरकृदन्तप्रकरणम् ।

इति श्रीमत्सन्ततसन्तन्यमानश्येनकूर्मषोडशारस्थचक्राकारादिबहुगुणविराजमानप्रौढाऽपरिमितमहाध्वरस्य श्रीशाहजी शरभजी तुक्कोजी भोसल-चोलमहीमहेन्द्राऽमात्यधुरन्धरस्य श्रीमत आनन्दरायविद्वत्सार्वभौमस्याध्वर्युणा, पञ्चपुरुषीपोष्येण, बाल्य एव तद्दयानिर्वर्तिताऽपरिमिताऽग्निविजृम्भितवाजपेयसर्वपृष्ठाप्तोर्यामप्रमुखमखसन्तर्पितशतमखप्रमुखबर्हिर्मुखेन, पदवाक्यप्रमाणपारावारपारीणाऽग्रजन्मविश्वेश्वरवाजपेययाजितो लब्धविद्यावैशद्येन-अध्वरमीमांसाकुतूहलवृत्तिनिर्माणप्रकटितसर्वतन्त्रस्वातन्त्र्येण, बौधायनापस्तम्बसत्याषाढभारद्वाजकात्यायनाश्वलायनद्राह्यायणादिकल्पसूत्रतद्भाष्यपारीणमहादेववाजपेययाजिसुतेन अन्नपूर्णाम्बागर्भजातेन वासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां कृदन्तं समाप्तम् ।

समाप्ता चेयं बालमनोरमा ।



---

शे.] माधार्य । यथासङ्ख्यमत्र नेष्यते । आनुलोम्यम्—आनुकूल्यम्, तच्च परचित्तानुसरणमिति सर्वेष्टसिद्धिः । विस्तरस्तु बृहच्छब्देन्दुशेखरे द्रष्टव्यः ॥

इत्युपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते लघुशब्देन्दुशेखरे सिद्धान्तकौमुदीव्याख्याने कृदन्तं समाप्तम् ।

—

श्रीगणेशाय नमः ।

# अथ वैदिकी प्रक्रिया

## प्रथमोऽध्यायः ।

**छन्दसि पुनर्वस्वोरेकवचनम्** ।१।२।६१। द्वयोरेकवचनं वा स्यात्। पुनर्वसु नक्षत्रं, पुनर्वसू वा। लोके तु द्विवचनमेव। **विशाखयोश्च** ।१।२।६२। प्राग्वत्। विशाखा नक्षत्रम्, विशाखे [ वा ]। **षष्ठीयुक्तश्छन्दसि वा** ।१।४।९। षष्ठ्यन्तेन युक्तः पतिशब्दश्छन्दसि विसंज्ञो वा स्यात्। क्षेत्रस्य पतिना वयम्। इह 'वे'ति योगं विभज्य छन्दसीत्यनुवर्तते। तेन सर्वे विधयश्छन्दसि वैकल्पिकाः। 'बहुलं छन्दसी'त्यादिरस्यैव प्रपञ्चः। **'यचि भम्'**। * **नभोऽङ्गिरोमनुषां वत्युपसङ्ख्यानम्**। नभसा तुल्यं नभस्वत्। भत्वाद्रुत्वाऽभावः। अङ्गिरस्वदङ्गिरः। मनुष्वदग्ने। 'जनेरुसि'रिति विहित उसिप्रत्ययो मनेरपि, बाहुलकात्।

**सु.]** सिन्दूरेण विराजितं त्रिनयनं दिक्सङ्ख्यदोर्भिर्युतं भक्तानुग्रहकारकं प्रमदयाऽऽश्लिष्टं सदानन्दनम्।
अष्टाविंशतिवर्णकैश्च सततं यं चिन्तयन्ते जनास्तं देवं गणपं स्मरामि सततं चन्द्रार्धचूडं विभुम् ॥१॥
यस्तर्कादिसमस्ततन्त्रकमलव्रातप्रसादेष्विव प्रत्यक्षप्रमितः परः क्रिरणवानन्वर्थगोवर्द्धनः।
सोऽयं पण्डितमण्डलोद्भटरटद्वादीन्द्रवृन्दाग्रणीः श्रीरामाऽङ्घ्रिनिषेवकः समजनि **श्रीमौनिगोवर्द्धनः** ॥२॥
रघुनाथपदारविन्दसेवावशतस्तस्य बभूव नन्दनः। **रघुनाथ** इतीड्यनामगम्यो रघुनाथाङ्घ्रिनिषेवकः सुधीः ॥३॥
बभूवुस्तस्य चत्वारस्तनयाः सुनया बुधाः। **महादेवाभिधः** श्रेष्ठो महाभाष्यसुभाषितः ॥ ४ ॥
रामकृष्णो द्वितीयोऽसौ रामकृष्णाऽङ्घ्रिसेवकः। तृतीयो **जयकृष्णोऽस्मि** श्रीकृष्णायास्तनूद्भवः ॥ ५ ॥
श्रीमत्सिद्धान्तकौमुद्याः स्वरवैदिकखण्डयोः। नत्वा मुनित्रयं द्वयां टीकां कुर्वे **सुबोधिनीम्** ॥ ६ ॥
सुशब्दव्रातश्रीकुमुदवनविद्योतनकरी सदा सद्व्युत्पत्तिप्रसरणपरानन्दनकरी।
कुशब्दध्वान्तस्य प्रसभमभिविध्वंसनकरी कृतिर्भूयादेषा बुधजनमनःप्राङ्गणचरी ॥ ७ ॥

इयता प्रबन्धेन लौकिकेषु शब्देष्वन्वाख्यातेष्वपि वैदिकान्वाख्यानमवशिष्यते। न चेदमप्रयोजनम्, 'रक्षोहागमलघ्वसंदेहाः प्रयोजन'मिति वदता भाष्यकारेण वेदरक्षाया व्याकरणारम्भस्य प्रयोजनत्वेन मुख्यतयाऽभिधानात्। 'ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्चे'ति वेदार्थज्ञानोपायतया वेदाङ्गत्वेनैव व्याकरणाध्ययनविधानाच्च। नन्वेवमपि वैदिकशब्दानां लौकिकशब्दाऽभिन्नत्वात्तदनुशासनेनैन सिद्धे किमर्थन्तेषामनुशासनमिति चेन्न, लौकिकशब्देभ्यो भिन्ना अपि वैदिकशब्दाः सन्ति। तद्यथा 'त्मना देवेषु' 'मघ्वा जभार' 'गृभ्णामि ते' इत्यादयो वेदे दृश्यन्ते। लोके तु 'आत्मना' 'जहार' 'गृह्णामी'त्यादयः। अत एव भाष्यकारो लौकिकेभ्यो वैदिकान्भेदेन व्यपदिशति 'अथ शब्दानुशासनं, केषां शब्दानां, लौकिकानां वैदिकानां चेति' इति। तेषामन्वाख्यानमावश्यकमिति मनसि विभाव्याऽऽह—**छन्दसीत्यादि**। पुनर्वसुशब्देनोद्भूतावयवस्य ज्योतिःसमुदायस्याभिधानाद्द्वयोर्द्विवचने प्राप्ते एकवचनं विधीयते। तदाह—**द्वयोरित्यादि। वा स्यादिति**। 'जात्याख्याया'मि त्यतोऽन्यतरस्यामित्यनुवर्तनात्। **लोके त्विति**। 'गां गताविव दिवः पुनर्वसू' इत्यादौ। **विशाखयोः। प्राग्वदिति**। द्वयोरेकवचनं वा स्यादित्यर्थः। **विशाखेति**। अमरस्तु 'राधा विशाखे'ति प्रयुञ्जानो द्विवचननियमं नेच्छति। सूत्रं तूदासीनम्। **षष्ठीयुक्तश्छन्दसि वा**। 'पतिः समास एवे'त्यतः पतिरिति वर्तते। 'पतिः समास एवे'ति नियमादसमासे न प्राप्नोतीति वचनमारभ्यते—**पतिनेति**। घित्वात् 'आङो ने'ति नाभावः। षष्ठीति किम्?। 'मया पत्या जरदष्टिर्यथासः'। छन्दसीति किम्?। ग्रामस्य पत्ये। **योगं विभज्येति**। 'षष्ठीयुक्तश्छन्दसी'ति। उक्त एवार्थः। ततो 'वा'। 'छन्दसी'त्यनुवर्तते। यावदिह शास्त्रे कार्यं तच्छन्दसि वा भवति। तदाह—**तेनेत्यादिना। नभोऽङ्गिरसिति**। नभस् अङ्गिरस् मनुष् एषां वति परे भत्वं वक्तव्यमित्यर्थः। **नभस्वदिति**। 'तेन तुल्य'मिति वतिः। भत्वफलमाह—**रुत्वाऽभाव इति**। 'ससजुषो'रिति प्राप्तस्य। तत्र हि पदस्येत्यनुवर्तते। अङ्गिरसा तुल्यमङ्गिरस्वत्। अत्रापि देहलीदीपकन्यायेन **'रुत्वाऽभाव'** इति संबध्यते। **मनुष्वदिति**। मनुषा तुल्यम्। अत्र भत्वात् 'आदेशप्रत्यययो'रिति षः। पदसंज्ञायां तु रुत्वं स्यात्, न षत्वम्, अपदान्तस्येति वचनात्। **बाहुलकादिति**। बहूनर्थाल्लँतीति-बहुलम्।

**शे.]श्रीगणेशाय नमः**। अथ वैदिकेषु विशेषमाह—**छन्दसि पुन**। पुनर्वस्वोर्द्वे तारे। **लोके त्विति**। उद्भूतावयवभेदे समुदाये रूढत्वादिति भावः। एवं विशाखयोरपि द्वे तारे। तेन लोके द्विवचनमेव। योगविभागश्छन्दसीत्यस्योत्तरत्र निवृत्त्यर्थः। एवं हि चानुकृष्टत्वान्नोत्तरत्रानुवृत्तिः।

**वतीति**। वत्प्रत्यये इत्यर्थः। **मनेरिति**। 'आदेशप्रत्यययो'रिति षत्वम्। **अनङ्गत्वादिति**। 'अङ्गस्य' 'भस्ये'ति

*वृषण्वस्वंश्वयोः। वृष–वर्षुकं वसु यस्य स वृषण्वसुः। वृषा अश्वो यस्य स वृषणश्वः। इहान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वे सति नलोपः प्राप्तो भत्वाद्वार्यते। अत एव 'पदान्तस्ये'ति णत्वनिषेधोऽपि न। 'अल्लोपोऽनः' इत्यल्लोपो न, अनङ्गत्वात् ]। अयस्मयादीनि च्छन्दसि ।१।४।२०। एतानि छन्दसि साधूनि। भपदसंज्ञाधिकाराद्यथायोग्यं संज्ञाद्वयं बोध्यम्। तथा च वार्तिकम्–* उभयसंज्ञान्यपीति वक्तव्यम्। इति। स सुष्टुभा स ऋक्वता गणेन। पदत्वात्कुत्वम्। भत्वाज्जश्त्वाऽभावः। जश्त्वविधानार्थाया: पदसंज्ञाया भत्वसामर्थ्येन बाधात्। नैनं हिन्वन्त्यपि वाजिनेषु। अत्र पदत्वाज्जश्त्वम्। भत्वात्कुत्वाऽभावः। 'ते प्राग्धातोः'। छन्दसि परेऽपि ।१।४।८१। व्यवहिताश्च।१।४।८२। हरिभ्यां याह्योक आ। आ मन्द्रैरिन्द्र हरिभिर्याहि। इन्धिभवतिभ्यां च ।१।२।६। आभ्यां परोऽपिल्लिट् कित् स्यात्। समीधे दस्युहन्तम्। पुत्र ईधे अथर्वणः। बभूव। इदं प्रत्याख्यातम्। * इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यम्। इति। इति प्रथमोऽध्यायः।

## अथ द्वितीयोऽध्यायः।

तृतीया च होश्छन्दसि ।२।३।३। जुहोतेः कर्मणि तृतीया स्याद्द्वितीया च। यवाग्वाऽग्निहोत्रं जुहोति। अग्निहोत्रशब्दोऽत्र हविषि वर्तते। 'यस्याग्निहोत्रमधिश्रितममेध्यमापद्येते'त्यादिप्रयोगदर्शनात्। अग्नये हूयत इति

---

सु.]'ला आदाने'अस्मात् 'आतोऽनुपसर्गे'इति कः।बहुलस्य भावो–बाहुलकम्।मनोज्ञादित्वाद्वुञ्।वृष।वृषणित्येतद्वसु,अश्व, एतयोश्च परतो भं स्यात्। 'निपातनान्येतानि छन्दोविषयाणी'ति कैयटः। वृषण्वसुरिति। लोके–वृषवसुः। वृषाश्वः। नलोपः प्राप्त इति। 'नलोपः प्रातिपदिकान्तस्ये'त्यनेन। अत एवेति। भत्वादेवेत्यर्थः। अनङ्गत्वादिति। 'अल्लोपोऽनः' इत्यत्राऽङ्गस्येत्यधिकारात्। अयस्मयादीनि। आनन्तर्याद्भसंज्ञाद्वारेणैव निपातनं प्राप्तमित्याह–संज्ञाद्वयमिति। ननु 'अनन्तरस्ये' ति न्यायं बाधित्वोभयसंज्ञाविधाने किं प्रमाणमित्याशङ्क्याह–तथा च वार्तिकमिति। कुत्वमिति। 'चोः कु'रित्यनेन। जश्त्वाऽभाव इति। 'झलां जशोऽन्ते' इति प्राप्तस्य। ऋक्वतेति। अयस्मयादिषु 'ऋक्वते'त्यादयः समुदाया एव बोध्याः।तेन जश्त्वमस्तु कुत्वं मा भूदिति वैपरीत्यं न प्रसज्यते इति बोध्यम्। नैनमिति। वाचामिनाः प्रभवस्तेष्वप्येनं=विद्वांसं न हिन्वन्ति। विवदितुं न गच्छन्तीत्यर्थः। ते प्राक्। व्याख्यातम्। अस्यापवादमाह–छन्दसीत्यादि। गत्युपसर्गसंज्ञकाश्छन्दसि परेऽपि प्रयोक्तव्याः। अपिशब्दात्पूर्वे। व्यवहिता अपि गत्युपसर्गसंज्ञकाः प्रयोक्तव्याः।सूत्रद्वयस्योदाहरणे आह–हरिभ्यामित्यादि। 'आयाही'ति प्राप्तम्। 'ते प्राग्'इत्यत्र संज्ञानियमपक्षो भाष्ये उक्तः। 'ते' इत्यनेन प्रादीनुपेत्येतत्पर्यन्तान्स्वरूपेण परामृश्य धातोः प्राक् प्रयुक्तानामेषां पूर्वसूत्रैकवाक्यतया संज्ञाविधानात्। अस्मिंश्च पक्षे 'छन्दसि परेऽपि' 'व्यवहिताश्चे' ति सूत्रद्वयं न कर्तव्यम्। इन्धि। इन्धीत्युच्चारणार्थेनेकारेण निर्देशः, 'सुट्तिथो' रितिवत्, न तु 'इक्श्तिपौ' इति इका, नलोपापत्तेः। 'असंयोगा'दित्यतो लिट् किदित्यनुवर्तते। तदाह–लिट् किदिति। ञि इन्धी दीप्तौ, लिटः कित्त्वात् 'अनिदिता'मिति नलोपः। संयोगात्परत्वात्पूर्वेणाऽप्राप्तौ वचनम्। बभूवेति। कित्त्वाद्गुणाभावे 'भुवो वु'गिति वुकि कृते रूपम्। अत्र पित्त्वात्पूर्वेणाऽप्राप्तौ वचनम्। इदमिति। 'इन्धी'ति सूत्रम्। छन्दोविषयत्वादिति। अयमभिप्रायः–इन्धेर्भाषायाम् 'इजादेश्चे'त्यामा भाव्यम्।छन्दसि तु 'अमन्त्रे'इति प्रतिषेधाद्यद्यप्याम् नास्ति तथापि 'छन्दस्युभयथे'ति लिटः सार्वधातुकत्वे ङित्वात्समीधे इति नलोपः। श्नमभावस्त्वार्द्धधातुकत्वात्,छन्दसि दृष्टानुविधानात्। वुको नित्यत्वादिति। 'परनित्ये'ति परिभाषया पराच्चित्यस्य बलीयस्त्वात्। कृताऽकृतप्रसङ्गित्वेन नित्यत्वात्। इति प्रथमोऽध्यायः।

तृतीया। 'कर्मणि द्वितीये'त्यतः कर्मणीति वर्तते। अत्र द्वितीयायां प्राप्तायां तृतीया विधीयते। चशब्दात्साऽपि भवति। तदाह–कर्मणीति। यवाग्वेति। अत्र यवागूशब्दात्तृतीया, अग्निहोत्रशब्दाच्च द्वितीया। अग्निहोत्रशब्दो हविर्वाचकः। जुहोतिश्च प्रक्षेपणार्थः। यवाग्वभिन्नं हविरग्नौ प्रक्षिपतीत्यर्थः।तदाह–यवाग्वाख्यमित्यादि। अग्निहोत्रभिन्नविभक्त्यवरुद्धत्वेऽपि भिन्नार्थकविभक्त्यनवरुद्धत्वान्नामार्थयोरभेदान्वयः। भाष्ये चैतत्सूत्रं प्रत्याख्यातम्। अग्निहोत्रशब्दो ह्यग्नावपि वर्तते, 'यस्याग्निहोत्रं प्रज्वलित'मिति दर्शनात्। हूयतेऽस्मिन्निति व्युत्पत्तेश्च। तद्यदा यवागूशब्दात्तृतीया तदाऽग्निहोत्रशब्दो ह्यग्नौ वर्तते, जुहोतिश्च प्रीणने। यवाग्वा अग्निं प्रीणयतीत्यर्थः। यदा यवागूशब्दाद्द्वितीया तदाऽग्निहोत्र-

---

शे.]तत्राऽधिकारात्प्रत्यासत्त्याऽङ्गभसञ्ज्ञानिमित्तयोरेकत्वाश्रवणेन भसञ्ज्ञानिमित्तवसुशब्दनिरूपिताङ्गत्वाऽभावादिति भावः। एतद्वार्तिकद्वयं छन्दोविषयमिति कैयटः। संज्ञाद्वयमिति। तत्प्रयुक्तं कार्यमित्यर्थः।

अयस्मया। अयसो विकार इत्यर्थे 'द्व्यचश्छन्दसी'ति मयट्। 'ते प्रा'गित्यनुवृत्तिप्रदर्शनार्थम्। 'इन्धिभवतिभ्याञ्चे'त्यस्य क्रमप्राप्तप्रथमोपन्यासत्यागे बीजमाह–इन्धेरिति। इति प्रथमोऽध्यायः।

अथ द्वितीयः।हविषि वर्तत इति। हूयते तत्–होत्रं।ततोऽग्निपदेन षष्ठीतत्पुरुषः।'अग्नये हूयते'इति त्वर्थप्रदर्शनम्।

व्युत्पत्तेश्च । यवागवाख्यं हविर्देवतोद्देशेन त्यक्त्वा प्रक्षिपतीत्यर्थः । **द्वितीया ब्राह्मणे** ।२।३।६०। ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि द्वितीया स्यात् । षष्ठ्यपवादः । गामस्य तदहः सभायां दीव्येयुः **चतुर्थ्यर्थे बहुलं छन्दसि** ।२।३।६२। षष्ठी स्यात् । पुरुषमृगश्चन्द्रमसे - गोधाकालकादार्वाघाटस्ते वनस्पतीनाम् । वनस्पतिभ्य इत्यर्थः । * **षष्ठ्यर्थे चतुर्थीति वाच्यम्** । या खर्वेण पिबति तस्यै खर्वः । **यजेश्च करणे** ।२।३।६३। इह छन्दसि बहुलं षष्ठी । घृतस्य घृतेन वा यजते । **बहुलं छन्दसि** ।२।४।३९। अदो घस्लादेशः स्यात् । घस्तान्नूनम् । लुङि 'मन्त्रे घसे'ति च्लेर्लुक् । अडभावः । सग्धिश्च मे । **हेमन्तशिशिरावहोरात्रे च छन्दसि** ।२।४।२८। द्वन्द्वः पूर्ववल्लिङ्गः । हेमन्तश्च शिशिरश्च हेमन्तशिशिरौ । अहोरात्रे । **'अदिप्रभृतिभ्यः शपः'। बहुलं छन्दसि** ।२।४।७३। वृत्रं हनति वृत्रहा । अहिः शयत उपपृक्पृथिव्याः । अत्र लुङ् । अदादिभिन्नेऽपि क्वचिल्लुक् । त्राध्वं नो देवाः । **'जुहोत्यादिभ्यः श्लुः'। बहुलं छन्दसि** ।२।४।७६। दाति प्रियाणि चिद्वसु । अन्यत्रापि—पूर्णां विवष्टि । **मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः** ।२।४।८०। एभ्यो लेर्लुक् स्यान्मन्त्रे । अक्षन्नमीमदन्त हि । घस्लादेशस्य 'गमहने'त्युपधालोपे 'शासिवसी'ति षः । मा ह्वर्मित्रस्य । धूर्तिः प्रणङ्मर्त्यस्य ।

---

सु.]शब्दो हविषि वर्तते, जुहोतिश्च प्रक्षेपणे।यवागवाख्यं हविर्द्रव्यं प्रक्षिपतीत्यर्थः। **द्वितीया**। 'दिवस्तदर्थस्ये'ति वर्तते । तदाह- **ब्राह्मणेत्यादि**।सोपसर्गस्य च्छन्दसि 'विभाषोपसर्गे' इत्यनेन व्यवस्थितविभाषयाऽपि सिद्धे निरुपसर्गार्थ आरम्भः। **षष्ठ्यपवाद इति** । 'दिवस्तदर्थस्ये'ति प्राप्तायाः । **चतुर्थ्यर्थे** । बहुलग्रहणात् 'चन्द्रमसे कृष्णो रात्र्यै' इत्यादौ षष्ठ्यभावः । **यजेः** । यजेर्धातोः करणे कारके छन्दसि विषये बहुलं षष्ठी स्यात् । **बहुलम्** । 'अदो जग्धि'रित्यतोऽद इति, 'लुङ्सनो'रित्यतो घस्ल इति च । अदो बहुलं घस्लादेशः स्याच्छन्दसि । **घस्तामिति** । अदेर्लुङि रूपम् । **अडभाव इति** । 'बहुलं छन्दसि' 'न माङ्योगे' इत्यनेन । नन्विदं 'लुङ्सनो'रित्यनेन सिद्धमित्याशङ्क्योदाहरणान्तरमाह-**सग्धिरिति** । अदनं ग्धिः । अदेः क्तिनि घस्लादेशे 'घसिभसोर्हलि चे'त्युपधालोपे 'झलो झली'ति सलोपः । 'झषस्तथो'रिति धत्वम् । घस्य जश्त्वम् । नच जश्त्वे कर्तव्येऽल्लोपस्य स्थानिवत्त्वम् , न 'पदान्ते'ति सूत्रेण जश्त्वे तन्निषेधात् । ततः समानशब्देन समासे कृते 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' इति सूत्रेण समानस्य सः । **हेमन्तशिशिरा** । 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति प्राप्तम् । **अहोरात्रे इति** । अहश्च रात्रिश्चेति द्वन्द्वे कृते 'अहःसर्वैकदेशे'त्यनेन समासान्तोऽच्। 'यस्येति चे'तीकारलोपः। 'रात्राह्नाहाः पुंसि' इति प्राप्तं । द्वित्वमतन्त्रम् । 'अहोरात्राणि विदधत्' । छन्दसि किम्? । हेमन्तशिशिरे । अहोरात्रौ । यद्यपि पाठक्रमेणेदं 'बहुलं छन्दसी'ति घस्लादेशविधायकसूत्रात्पूर्वं व्याख्यातुं युक्तं तथापि 'व्यत्ययो बहुल'मिति वक्ष्यमाणेन लिङ्गव्यत्ययविधायकेन गतार्थमिति ध्वनयितुं तथा न व्याख्यातम् । **बहुलं छन्दसि** । बहुलं शपो लुक् स्यात् । 'अदिप्रभृतिभ्यः' इत्युक्तं, ततो न भवति । तथैवोदाहरति-**वृत्रं हनतीत्यादि** । हन्ति शेते इति लोके । **त्राध्वमिति** । त्रैङ् पालने 'आदेच उपदेशेऽशिति' इत्यात्वम् । 'त्रायध्व'मिति लोके । **दातीति**। 'ददाती'ति लोके । **अन्यत्रापीति** । जुहोत्यादिभिन्नेऽपि ।'श्लुर्भवती'ति शेषः। **विवष्टीति** । 'वश कान्तौ' अदादिः । 'श्लौ' इति द्वित्वम् । 'भृञामित्' 'बहुलं छन्दसी'ति. सूत्रेणाभ्यासस्येकारः। 'व्रश्चे'ति षत्वम् । ष्टुत्वम् । **मन्त्रे घस** । **घस**-अदेरादेशः । **ह्वर**-ह्वृ कौटिल्ये । अस्य कृतगुणानुकरणं ह्वरेति । अकारस्तूच्चारणार्थः । णश अदर्शने । वृञ् वरणे । वृङ् संभक्तौ । दह भस्मीकरणे । **आत्**-आकारान्ताः प्रा पूरणे इत्यादयः । वृजी वर्जने । डुकृञ् करणे । गम्लृ गतौ । जनी प्रादुर्भावे । **अक्षन्निति** । अत्तेर्लुङि झिः । **घस्लादेशस्येति** । 'लुङ्सनो'रिति विहितस्य । **मा ह्वरिति** । माङि उपपदे ह्वरतेर्लुङि तिप् । 'इतश्चे'तीकारलोपः । च्लेर्लुकि कृते 'सार्वधातुके'ति गुणे कृते रपरत्वे 'हल्ङ्या'बिति सलोपः । **प्रणगिति** । प्रपूर्वान्नशेर्लुङ् । 'हल्ङ्या'बिति लोपः । 'उपसर्गादसमासेऽपी'ति णत्वम् । **मर्त्यस्येति** । मकारेऽनुनासिके परे 'यरोऽनुनासिके' इति ङः । **कुत्वमिति** । पक्षे 'व्रश्चे'ति षत्वेन नडिति

---

शे.]**'यवाग्वा'** इति वाक्ये जुहोतिस्त्यागपूर्वके प्रक्षेपे वर्तते।**द्वितीया ब्राह्मणे**।सोपसर्गस्य दिवेः 'विभाषोपसर्गे' इति व्यवस्थितविभाषया सिद्धे निरुपसर्गार्थोऽयमारम्भः। **पुरुषमृगश्चन्द्रमसे इति** । बहुलग्रहणाच्चन्द्रमसश्चतुर्थी। 'व्यत्ययो बहुल'मित्यस्यैवायं प्रपञ्चः। **अडभाव इति**। 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्युक्तेः। **सग्धिरिति**।क्तिनि 'घसिभसोर्हलि चे'त्युपधालोपः। 'समानस्य छन्दसी'ति सः। न च भवति अत्ता। प्रकृत्यन्तरन्तु सार्वधातुकमात्रविषयमिति बोध्यम्।**हेमन्तशि** । शिशिरशब्दस्य 'हेमन्तः शिशिरोऽस्त्रिया'मित्यमरादुभयलिङ्गत्वेऽपि हेमन्तशिशिरे इत्येतन्निवृत्तये स्पष्टार्थम् । हेमन्तशिशिरावित्यमरस्य प्रमाद इत्यन्ये । **अहोरात्रे इति** । 'रात्राह्नाहाः' इति पुंस्त्वं प्राप्तम् । द्वित्वमतन्त्रम् । 'अहोरात्राणि विदधत्'। **घस्लादेशस्येति** । 'लुङ्सनो'रिति विहितस्य । **'वृ' इति**.-वृङ्वृञोः सामान्येन ग्रहणम् ।

'नशेर्वे'ति कुत्वम् । सुरुचो वेन आवः । मा न आधक् । आदित्याकारान्तग्रहणम् । आ प्रा द्यावापृथिवी । परावर्ग्भारभृद्यथा । अक्रन्नुषासः । त्वे रयिं जागृवांसो अनुग्मन् । मन्त्रग्रहणं ब्राह्मणस्याप्युपलक्षणम् । अह्नत वा अस्य दन्ताः । विभाषाऽनुवृत्तेर्नेह—न ता अगृभ्णन्नजनिष्ट हि षः । इति द्वितीयोऽध्यायः ।

## अथ तृतीयोऽध्यायः ।

**अभ्युत्सादयांप्रजनयांचिकयांरमयामकः पावयांक्रियाद्विदामक्रन्निति च्छन्दसि ।३।१।४२।** आद्येषु चतुर्षु लुङि आम् अक इत्यनुप्रयोगश्च । अभ्युत्सादयामकः । अभ्युदसीषददिति लोके । प्रजनयामकः । प्राजीजनदित्यर्थः । चिकयामकः । अचैषीदित्यर्थे चिनोतेराम् द्विर्वचनं कुत्वं च । रमयामकः । अरीरमत् । पावयांक्रियात् । पाव्यादिति लोके । विदामक्रन् । अवेदिषुः । **गुपेश्छन्दसि ।३।१।५०।** च्लेश्चङ्वा । गृहानजूगुपतं युवम् । अगौप्तमित्यर्थः । **नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ।३।१।५१।** च्लेश्चङ् न । मा त्वायतो जरितुः काममूनयीः । मा त्वाऽग्निर्ध्वनयीत् । **कृमृदृरुहिभ्यश्छन्दसि ।३।१।५९।** च्लेरङ्वा । इदं तेभ्योऽकरन्नमः । अमरम् । अदरत् । यत्सानोः सानुमारुहत् । **छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयो-**

---

[सु.]रूपं बोध्यम् । **आव इति** । वृञो रूपम् । **आधगिति** । माङ्पूर्वाद्दहेर्लुङ् । 'दादेर्धातो'रिति घः। एकाचो बश' इति भष्भावः । **आप्रा इति** । आङ्पूर्वात्प्राधातोः सिप् । रुत्वे यत्वे च यलोपः । **परावर्गिति** । परापूर्वाद्वृजेस्तिप् । उपधागुणे 'चोः कु'रिति कुत्वम् । **अक्रन्निति** । झेर्ङित्त्वाद्गुणाऽभावे यण् । **अनुग्मन्निति**। अनुपूर्वाद्गच्छतेर्झिः।'गमहने'त्युपधालोपः । ननु मन्त्रशब्दः संहितायां रूढ इति अह्नतेत्यादौ ब्राह्मणप्रयोगे लुङ्न प्राप्नोतीत्याशङ्क्याह—**मन्त्रग्रहणमित्यादि**। **अह्नतेति** । 'गमहने'त्युपधालोपः। ब्राह्मणप्रयोगोऽयम्। मन्त्रेति किम् ?। अघसत् । अह्वार्षीत् । अनशत् । अवारीत् । अधाक्षीत् । अप्रासीः। अवर्जीत् । अकार्षीत् । अगमत् । अजनि । अजनिष्ट । **इति द्वितीयोऽध्यायः ।**

**अभ्युत्सादयाम्** । अभ्युत्सादयामित्यादयश्छन्दसि विषयेऽन्यतरस्यां निपात्यन्ते । षद्लृ विशरणगत्यवसादनेषु । जनी प्रादुर्भावे । रमु क्रीडायाम् । ण्यन्तेभ्य एभ्यो लुङि आम्प्रत्ययो निपात्यते । चिञ् चयने । शुद्धादस्मादाम्प्रत्यये द्विर्वचनं कुत्वं च । 'अक' इति प्रत्येकं संबध्यते,तदाह—**आद्येष्विति**।**अक इति**।कृञो लुङि तिपि च्लेः 'मन्त्रे घसे'त्यादिना लुक् । तिपो हल्ङ्यादिलोपः । **अभ्युत्सादयामक इति** । 'आमः' इति लुङो लुक् । **अभ्युदसीषददिति**।सदेर्ण्यन्ताल्लुङि चङि 'णौ चङ्युपधायाः' इति ह्रस्वः।'चङी'ति द्विर्वचनम्। 'हलादिःशेषः'।'सन्वल्लघुनी'ति सन्वद्भावे 'सन्यतः' इतीत्त्वम् । 'दीर्घो लघो'रिति दीर्घः। **लोक इति** । वेदेऽपि पाक्षिकमिदं बोध्यम् ।'विदाङ्कुर्वन्तु' इति सूत्रादन्यतरस्याङ्ग्रहणानुवृत्तेः । **पावयामिति** । पवतेः पुनातेर्वा ण्यन्तादाशीर्लिङ्याम् । 'क्रिया'दित्यनुप्रयोगश्च । **क्रियादिति**—करोतेराशीर्लिङि रूपम् । 'लिङाशिषी'त्यार्द्धधातुकत्वाद्विकरणाऽभावः । 'रिङ् शय'गिति रिङ् । **विदामक्रन्निति** । विदेर्लुङि आम् , गुणाऽभावो लुङन्तकरोत्यनुप्रयोगश्च । **गुपेः**। आयप्रत्ययाऽभावस्थले एवेदं, सूत्रे केवलस्योच्चारणात् । **अजूगुपतमिति** । 'गुपू रक्षणे'। 'तस्थस्थमिपा'मिति थसस्तम् । 'तुजादीनां दीर्घोऽभ्यासस्ये'त्यभ्यासस्य दीर्घः । **अगौप्तमिति** । ऊदित्त्वादिडभावे 'वदव्रजे'ति वृद्धिः । 'झलो झली'ति सिचो लोपः । इट्पक्षे अगोपिष्टम् । आयप्रत्यये अगोपायिष्टम् । इत्थं चत्वारि च्छन्दसि । लोके तु चङं वर्जयित्वा त्रीण्येवेति विवेकः । **नोनयतीति** । ऊन परिहाणे । ध्वन शब्दे । इल प्रेरणे । अर्द गतौ याचने च । एभ्यो ण्यन्तेभ्यश्च्ले 'णिश्री'ति प्राप्तश्चङादेशो नेत्यर्थः। तत्रोनयत्येलयती चुरादी ण्यन्तौ । ध्वनयतिरपि चुरादिरदन्तो घटादिर्णान्तश्च । अर्दयतिस्तु हेतुमण्ण्यन्तः । **ऊनयीरिति** । मध्यमपुरुषैकवचनम् । 'न माङ्योगे' इति आडभावप्रतिषेधः। इदमिन्द्रं प्रति सव्यस्य ऋषेर्वचनम् । त्वायतः=त्वामिच्छतः, जरितुः = स्तोतुः मम, काममभिलाषं, मा ऊनयीः=ऊनं मा कार्षीरित्यर्थः।औननदिति भाषायाम् । **ध्वनयीदिति** । तिप् । 'न माङ्योगे' इत्यट्प्रतिषेधः । भाषायां तु घटादेरदिध्वनत् । चुरादेः—अदध्वनत् । ऐलयीत् । आर्दयीत् । आर्दिदत् । ऐलिलदिति लोके । **कृमृदृ** । 'च्लि लुङी'त्यतः च्लिरिति, 'अस्यतिवक्ती'त्यतोऽङिति, 'इरितो वे'त्यतो वेत्यनुवर्तते । तदाह—**च्लेरित्यादि** । **अकरमिति** । डु कृञ्करणे । मिप् । अङि कृते 'ऋदृशोऽङी'ति गुणः । **अमरदिति** । मृङ् प्राणत्यागे । व्यत्ययेन परस्मैपदम् । **अदरदिति** । दृ विदारणे । **अरुहदिति** । रुह बीजजन्मनि प्रादुर्भावे च । लोके तु—अकार्षीत् । अमृत । अदारीत् । अरुक्षत् । **छन्दसि** । निष्टर्क्यादयः शब्दाश्छन्दसि

---

[शे.]आप्रेति । 'प्रा' पूरणे,आङ्पूर्वः,मध्यमपुरुषैकवचनम् । **परावर्गिति**।परापूर्वस्य वृजेः। **अक्रन्निति**। कृञः।**अनुग्मन्निति**—गमेः। 'गमहने'त्युपधालोपः । 'अह्नतवे'त्यस्यैतरेयब्राह्मणे सत्त्वादाह—**मन्त्रग्रहणमिति** । **इति द्वितीयः।**

**अकरिति**।कृञो लुङि तिपि 'मन्त्रे घसे'ति च्लेर्लुकि सार्वधातुकगुणे तिपो हल्ङ्यादिलोपे रूपम्।**अजूगुपतमिति**। गुपेर्लुङ्। थसस्तम् । तुजादित्वादभ्यासस्य दीर्घः। **छन्दसि निष्टर्क्ये**।'निष्टर्क्ये व्यत्ययं विद्यान्निसः षत्वं निपातना'दिति

च्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ।३।१।१२३। कृत्स्वतेर्निरुपूर्वात्क्यपि प्राप्ते ण्यत् । आद्यन्तयोर्विपर्यासो, निसः षत्वं च । निष्टर्क्यं चिन्वीत पशुकामः। देवशब्दे उपपदे ह्वयतेर्जुहोतेर्वा क्यप् , दीर्घश्च । स्पर्धन्ते वा उ देवहूये । प्र उत् आभ्यां नयतेः क्यप् । प्रणीयः । उन्नीयः । उत्पूर्वाच्छिषेः क्यप् । उच्छिष्यः। मृङ्-स्तृञ्-ध्वृ-एभ्यो यत् ।मर्यः। स्तर्या। स्त्रियामेवायम् । ध्वर्यः । खनेर्यण्यतौ । खन्यः । खान्यः। यजेर्यः । शुन्धध्वं दैव्याय कर्मणे देवयज्यायै । आङ्पूर्वात्पृच्छेः क्यप् । आपृच्छ्यं धरुणं वाज्यर्षति । सीव्यतेः क्यप् षत्वं च । प्रतिषीव्यः । ब्रह्मणि वदेर्ण्यत् । ब्रह्मवाद्यम् । लोके तु 'वदः सुपि क्यप् चे'ति क्यब्यतौ । भवतेः स्तौतेश्च ण्यत् । भाव्यः । स्ताव्यः । उपपूर्वाच्चिनोतेर्ण्यत्, आयादेशश्च पृडे उत्तरपदे । उपचाय्यपृडम् । *हिरण्य इति वक्तव्यम् । उपचेयपृडमन्यत् । मृड सुखने पृड चेत्यस्मादिगुपधलक्षणः कः । छन्दसि वनसनरक्षिमथाम् ।३।२।२७। एभ्यः कर्मण्युपपदे इन् स्यात् । ब्रह्मवनिं त्वा क्षत्रवनिम् । उत नो गोषणिं धियम् । ये पथां पथिरक्षयः। चतुरक्षौ पथिरक्षी। हविर्मथीनामभि।छन्दसि सहः ।३।२।६३। सुप्युपपदे सहेर्ण्विः स्यात्।पृतनाषाट्। वहश्च ।३।२।६४। प्राग्वत्। दित्यवाट् [चँ मे दित्यौही चमे]। योगविभाग उत्तरार्थः।कव्यपुरीषपुरीष्येषु ञ्युट्।३।२।६५।एषु वहेर्ञ्युट् स्याच्छन्दसि । कव्यवाहनः। पुरीषवाहनः। पुरीष्यवाहनः। हव्येऽनन्तः पादम् ।३।२।६६। अग्निश्च हव्यवाहनः। पादमध्ये तु 'वहश्चे'ति ण्विरेव । हव्यवाळग्निरजरः पिता नः । जनसनखनक्रमगमो विट् ।३।२।६७। 'विड्वनो'रित्यात्वम् । अब्जाः । गोजाः । गोषा इन्द्रो नृषा असि । 'सनोतेरनः' इति षत्वम् । इयं शुष्मेभिर्बिसखा इवारुजत् । आ दधिक्राः शवसा पञ्च कृष्टीः । अग्रेगाः । मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ।३।२।७१। * श्वेतवहादीनां

सु.]निपात्यन्त इति सूत्रार्थः । क्यपि प्राप्त इति । 'ऋदुपधाच्चे'ति सूत्रेण । आपृच्छ्यमिति।प्रच्छ ज्ञीप्सायाम् । 'ग्रहिज्ये'ति संप्रसारणम् । प्रतिषीव्येति । षिवु तन्तुसंताने । 'हलि च' इति दीर्घः । उपचाय्यपृडमिति । उपचाय्यं च तत्पृडं चेति कर्मधारयः । हिरण्य इति । हिरण्येऽभिधेये इत्यर्थः । छन्दसि । एभ्य इति । वन षण संभक्तौ । रक्ष पालने। मन्थ विलोडने। एभ्य इत्यर्थः।'स्तम्बशकृतोरि'त्यित्यत इन्निति वर्तते।तदाह-इन्स्यादिति । वन षण संभक्ताविति भ्वादिगणेन सह निर्दिष्टयोरेव ग्रहणं न तु वनु याचने,षणु दाने इति तानादिकयोः,सानुबन्धकत्वात्। ब्रह्मवनिमिति । ब्रह्म वनति, क्षत्रं वनति,गां सनतीति विवक्षायामिन्। तदन्ताद्द्वितीयैकवचनम् । सुषामादित्वात्षत्वम् । पथिरक्षय इति । पन्थानं रक्षयन्तीति विग्रहः । पथिरक्षीति । पन्थानं रक्षतीति विग्रहः । हविर्मन्थतीति विग्रहः। छन्दसि । षह मर्षणे 'भजो ण्वि'रिति वर्तते। तदाह-ण्विःस्यादिति । ननु 'तुरासाहं पुरोषाये'ति लोकेऽपि प्रयोगा दृश्यन्ते तेषां का गतिरिति चेत् ,णिजन्ताक्विप् बोध्यः। पृतनाषाडिति 'सहेः साडः सः' इति षत्वम्। वहः । प्राग्वदिति । ण्विः स्यादित्यर्थः । हव्ये । अन्तशब्दो मध्यवाची । हव्यशब्दे उपपदे वहेर्ञ्युट् स्यात् पादमध्ये चेन्न। पादान्ते इति फलितोऽर्थः। हव्यवाळग्निरिति । अत्र डस्य ळः, 'द्वयोश्चास्य स्वरयोर्मध्यमेत्य संपद्यते स डकारो ळकार' इति प्रातिशाख्ये विहितः। जनसन । जनादिभ्यो धातुभ्यश्छन्दसि विट् स्यात् । अग्रेगा इति । 'हलदन्ता'दिति सप्तम्या अलुक् । मन्त्रे श्वेतवहो । श्वेतादिपूर्वेभ्यो वहादिभ्यो ण्विन्स्यात्। अलाक्षणिककार्यार्थं निपातनम् । श्वेतशब्दे कर्तृवाचिन्युपपदे वहेः कर्मणि कारके ण्विन्प्रत्ययः । उक्थे कर्मणि करणे वोपपदे शंसतेः प्रत्ययो

शे.]व्यत्ययोऽत्र प्रत्ययवर्णयोः। दीर्घश्चेति । अत एव गुणाभावः। शिषेरिति । शासेरित्यन्ये । 'ध्वृ हूर्च्छने' । यजेर्य इति । 'देवशब्दे उपपदे' इत्यादिः । प्रत्ययस्वरेणाऽन्तोदात्तत्वे कृदुत्तरपदप्रकृतिस्वरः । स्त्रीलिङ्गे एवेदं निपातनम् । पृच्छेः='प्रच्छज्ञीप्साया'मित्यतः। सीव्यतेरिति। 'प्रतिपूर्वा'दित्यादिः।ब्रह्मणीति । उपपदे इत्यर्थः। लोके त्विति । 'ब्रह्मोद्यं वेदन्ती'त्यादौ व्यत्ययेन क्यब्बोध्यः। गोषणिमिति । गां सनतीति विग्रहः।अत्र 'सनोतेरनः' इति नकारान्तस्य निषेधात् 'गोसनिशब्दस्य सवनादिषु पाठः करिष्यते' इति 'सनोतेरनः' इतिसूत्रस्थभाष्याच्च यद्यप्यत्र षत्वं न प्राप्नोति; तथापि दन्त्यस्यैव मूर्द्धन्यवत्पाठो वैदिकसंप्रदायात् । अत एव पदकाले दन्त्यमेव पठन्ति-गो-सनिमिति । यत्तु सुषामादित्वात्षत्वमिति, तन्न । उक्तसूत्रतद्भाष्यविरोधात् । ये पथामिति । पन्थानं रक्षन्ति, हविर्मन्थन्तीति विग्रहः। छन्दसि सहः। लोके 'तुरासाह'मित्यादिप्रयोगाश्चिन्त्या इति हरदत्तः । वहश्च । अस्य लोकेऽपि प्रवृत्तिं केचिदिच्छन्ति । हव्येऽनन्तः। हव्यशब्देउपपदे वहेर्ञ्युट् । पादयोर्मध्यस्थे नेत्यर्थः,तदाह-पादमध्ये त्विति। जनसन । उपसर्गे सुपि चोपपदे एभ्यश्छन्दसि विट् । 'विड्वनो'रित्यत्र विशेषणार्थष्टकारः, 'वेरपृक्तस्ये'त्यत्र सामान्यग्रहणार्थश्च । अप्सूत्पद्यते, गोषूत्पद्यते, गाः सनति, नॄन् सनति, बिसानि खनति, दधि क्रामति, अग्रेगच्छतीत्युदाहरणार्थः । सर्वत्र

**डस्पदस्येति वक्तम्**।यत्र पदत्वं भावि तत्र ण्विनोऽपवादो डस् वक्तव्य इत्यर्थः।श्वेतवाः। श्वेतवाहौ। श्वेतवाहः। उक्थानि उक्थैर्वा शंसति उक्थशा यजमानः। उक्थशासौ। [उक्थशासः]। पुरो दाश्यते दीयते पुरोडाः। **अवे यजः** ।३।२।७२। अवयाः। अवयाजौ। [अवयाजः]। **अवयाः श्वेतवाः पुरोडाश्च** ।८।२।६७। एते संबुद्धौ कृतदीर्घा निपात्यन्ते। चाडुक्थशाः। **विजुपे छन्दसि** ।३।२।७३। उपे उपपदे यजेर्विच्। उपयट्। **आतो मनिन्क्वनिब्वनिपश्च** ।३।२।७४। सुप्युपसर्गे चोपपदे आदन्तेभ्यो धातुभ्यश्छन्दसि विषये मनिनादयस्त्रयः प्रत्ययाः स्युः। चाद्विच्। सुदामा। सुधीवा। सुपीवा। भूरिदावा। घृतपावा। विच्-कीलालपाः। ['ब्रह्मभ्रूणवृत्रेषु क्विप्']। **बहुलं छन्दसि** ।३।२।८८। उपपदान्तरेऽपि हन्तेर्बहुलं क्विप् स्यात्। यो मातृहा।पितृहा। **'छन्दसि लिट्'**। भूतसामान्ये। अहं द्यावापृथिवी आततान। **'लिटः कानज्वा'**। **'क्वसुश्च'**। छन्दसि लिटः कानच्क्वसू वा स्तः। चक्राणा वृष्णिम्। यो नो अग्ने अररिवाँ अघायुः।['णेश्छन्दसि']। ण्यन्ताद्धातोश्छन्दसि इष्णुच् स्यात्तच्छीलादौ। वीरुधः पारयिष्णवः। **'भुवश्च'**। अस्मात्केवलात्प्राग्वत्। भविष्णुः]।* **छन्दसि परेच्छायां क्यच्वेक्तव्यः**। **'क्याच्छन्दसि'**। उप्रत्ययः स्यात्। अघायुः। * **परजधिकारे जवसवौ छन्दसि वाच्यौ**। [जवे याभिर्यूनः]। ऊर्वोऽस्तु मे जवः।देवस्य सवितुः सवे। **मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः** ।३।३।९६। वृषादिभ्यः क्तिन्स्यात्स चोदात्तः। वृष्टिं दिवः। सुम्नमिष्टये। पचात्पक्तीरुत। इयं ते नव्यसी मतिः। वित्तिः। भूतिः। अग्न आ याहि वीतये। रातौ स्यामोभयासः। [**छन्दसि गत्यर्थेभ्यः** ।३।३।१२९।

सु.]नलोपश्च। पुरःपूर्वस्य दाश्र दाने इत्यादेर्डत्वं,कर्मणि च प्रत्ययः।**डस्पदस्येति**। प्रत्येकमभिसंबध्यते। भाविपदत्वाश्रयेण चेदमुच्यते। तदाह-**यत्र पदत्वं भावीति**। डसन्तस्येत्यर्थः। **श्वेतवा इति**। श्वेता एनं वहन्ति श्वेतवा इन्द्रः। 'अत्वसन्तस्ये'ति दीर्घः। **उक्थशासाविति**। नलोपे कृते 'अत उपधायाः' इति वृद्धिः। **अवे**। योगविभाग उत्तरार्थः। 'पुरोडाशावयजोर्ण्वि'त्येकयोगे श्वेतवहादीनामप्युत्तरत्राऽनुवृत्तिः स्यात्। यजेश्चाऽवपूर्वस्यैवानुवृत्तिः स्यात्। केवलस्यैवेष्यत इति। **अवयाः श्वेतवाः**। ननु 'मन्त्रे श्वेतवहो'इत्यादिना डसि कृते सौ 'अत्वसन्तस्ये'इति दीर्घे रुत्वे च श्वेतवा इत्यादि सिद्धं, नार्थोऽनेन योगेनेत्याशङ्क्याह-**एते संबुद्धाविति**। संबुद्धौ हि 'अत्वसन्तस्ये'ति न प्राप्नोति, तत्राऽसंबुद्धावित्यनुवर्तनात्। **विजुपे**। ननु छन्दसीति व्यर्थं, 'मन्त्रे' इत्यनुवृत्तेरेव भाषायां न भविष्यतीति चेत्। सत्यम्। ब्राह्मणसङ्ग्रहार्थं छन्दोग्रहणम्। मन्त्रव्यतिरिक्तो वेदभागो ब्राह्मणम्। तदुक्तम्-'तच्चोदकेषु मन्त्राख्या शेषे ब्राह्मणशब्दः'। **सुधीवा। सुपीवेति**। 'घुमास्थे'तीत्वम्। **कीलालपा इति**। कीलालं जलम्। 'पयः कीलालममृतं जीवनं भुवनं वन'मित्यमरः। तत् पिबतीति। पा पाने विच्। **उपपदान्तरेऽपीति**। ब्रह्मभ्रूणवृत्रभिन्नेष्वपीत्यर्थः। **आततानेति**। 'णलुत्तमो वे'ति णित्त्वपक्षे वृद्धिः। **अररिवाँ इति**। रा दाने। लिटः क्वसुः। 'वस्वेकाजाद्घसा'मित्यादन्तत्वादिट्। ततो नञ्समासः। 'दीर्घादटी'ति वक्ष्यमाणेन नस्य रुत्वम्। 'आतोऽटि नित्य'मिति रोः पूर्वस्याऽऽतो नित्यमनुनासिकः।

प्रसङ्गादघायुशब्दं व्युत्पादयितुमाह-**छन्दसीति**। 'सुप आत्मनः' इत्यत्र आत्मन इति विशेषणात्परेच्छायां न प्राप्नोतीति वचनम्। **क्याच्छन्दसि**। 'सनाशंसभिक्ष उ'रित्यत उरिति वर्तते। क्यान्ताद्धातोरुः स्याच्छन्दसि। **अघायुरिति**। परस्याघमिच्छतीत्यर्थे क्यच्। 'अश्वाघस्या'दिति वक्ष्यमाणेनाऽऽकारादेशः। तदन्तादुप्रत्ययः। **जवसवाविति**। 'जु' इति सौत्रो धातुः। षूङ् प्राणिगर्भविमोचने, षु प्रसवैश्वर्ययोरिति। आभ्यां 'ऋदोर'बिति अपि प्राप्तेऽज्विधीयते। स्वरे भेदः। **मन्त्रे वृषेष**। 'स्त्रियां क्ति'मित्यतः क्तिनिति वर्तते। **वीरा इति**। पञ्चम्यर्थे प्रथमा। तदाह-**वृषादिभ्य इति**। **वृष्टिमिति**। वृषु सेचने। **इष्टये इति**। इषु इच्छायाम्। चतुर्थ्येकवचनम्। **मतिरिति**। 'मन ज्ञाने' क्तिन्। 'अनुदात्तोपदेशे' त्यनुनासिकलोपः। **वित्तिरिति**। विद सत्तायाम्।

शे.]'विड्वनो'रित्यात्वम्। **अग्नेगा इति**। सप्तम्या अलुक्। **अवे यज इति**। योगविभाग उत्तरार्थः।**विजुपे**। 'मन्त्रे' इत्यनुवर्त्तमाने छन्दोग्रहणं स्पष्टार्थम्।'छन्दोब्राह्मणानि' इति सूत्रबलेन ब्राह्मणे मुख्यछन्दस्त्वस्याऽनङ्गीकारात्। **'सुधीवे'**-त्यादौ 'घुमास्थे'तीत्वं। वनिपि तु कित्वाऽभावान्नेत्वम्। **उपपदान्तरे इति**। 'ब्रह्मभ्रूणे'ति नियमादप्राप्तः क्विप् प्रतिप्रसूयत इति भावः।बहुलग्रहणात्क्वचिन्न-पितृघातः। **छन्दसि लिट्**।'छन्दसिलुङ्लङ्लिटः' इति तु धातुसम्बन्धाधिकारस्थम्। 'क्वसुश्चे'ति योगविभाग उत्तरार्थः। अनन्तरस्यैव लिटोऽयमादेशः। **लिट इति** तु प्रत्ययान्तरत्वाऽभावाय। अनयोः कित्त्वन्तु 'ऋच्छत्यृता'मिति प्रतिषेधविषयगुणस्य 'तेरतु'रित्यादाविव 'तितिराणः' 'तितीर्वा'नित्यादौ प्रवृत्तिवारणाय। 'ईजानः' इत्यादौ लिटः कित्वादेव सम्प्रसारणं सिद्धम्। अजेः 'आजिवान्' इत्यादौ नलोपोऽपि 'छन्दस्युभयथे'त्यनेन सार्वधातुकत्वान्ङित्वादेव सिद्धः। न चैवमारिवानित्यत्रापि गुणो न स्यात्, ऋकारान्तरप्रश्लेषेण ऋधातौ पुनर्विधानादिति प्राञ्चः। **क्याच्छन्दसि**। 'क्यो य' इति व्याख्यानात्कण्ड्वादियगन्तादपि। 'यमस्य योनौ शकुनं भुरण्यु'मिति यथा। लोके 'अनसूयवः' इति तु लोहितादिसूत्रभाष्यरीत्या साधु। **मन्त्रे वृषेष**। सूत्रे पञ्चम्यर्थे प्रथमा।

ईषदादिषूपपदेषु गत्यर्थेभ्यो धातुभ्यश्छन्दसि युच् स्यात्। खलोऽपवादः। सूपसदनोऽग्निः। **अन्येभ्योऽपि दृश्यते** ।३।३।१३०। गत्यर्थेभ्यो येऽन्ये धातवस्तेभ्योऽपि छन्दसि युच् स्यात्। सुवेदनामकृणोर्ब्रह्मणे गाम्]। **छन्दसि लुङ्लङ्लिटः**।३।४।६। धात्वर्थानां संबन्धे सर्वकालेष्वेते वा स्युः। [पक्षे यथास्वं प्रत्ययाः]। देवो देवेभिरागमत्। लोडर्थे लुङ्। इदं तेभ्योऽकरं नमः। [लङ्]। अग्निमद्य होतारमवृणीतायं यजमानः। लिट्। अद्या ममार। अद्य म्रियते इत्यर्थः। **लिङर्थे लेट्** ।३।४।७। विध्यादौ, हेतुहेतुमद्भावादौ च धातोर्लेट् स्याच्छन्दसि। **सिब्बहुलं लेटि** ।३।४।३४। **इतश्च लोपः परस्मैपदेषु** ।३।४।९७। लेटस्तिङामितो लोपो वा स्यात्परस्मैपदेषु। **लेटोऽडाटौ** ।३।४।९४। लेटः अट् आट् एतावागमौ स्तः।तौ च पितौ। * सिब्बहुलं णिद्वक्तव्यः। वृद्धिः। प्रण आयूंषि तारिषत्। सुपेशस्करति जोषिषद्धि। आ साविषदर्शसानाय। सिप इलोपस्य चाऽभावे–पताति विद्युत्। प्रियः सूर्ये प्रियो अग्ना भवाति। **स उत्तमस्य** ।३।४।९८। लेडुत्तमसकारस्य वा लोपः स्यात्। करवावः। करवाव। टेरेत्वम्। **आत ऐ** ।३।४।९५। लेट आकारस्य ऐः स्यात्। सुतेभिः सुप्रयसा मादयैते। आतामित्याकारस्य ऐकारः। विधिसामर्थ्यादाट ऐत्वं न। अन्यथा हि ऐटमेव विदध्यात्। यो यजाति यजात इत्। **वैतोऽन्यत्र** ।३।४।९६। लेट एकारस्य ऐः स्याद्वा, 'आत ऐ' इत्यस्य विषयं विना। पशूनामीशै। ग्रहा गृह्णान्तै। अन्यत्र किम्?। सुप्रयसा मादयैते। **उपसंवादाऽऽशङ्कयोश्च**।३।४।८। पणबन्धे आशङ्कायां च लेट् स्यात्। अहमेव पशूनामीशै। नेजिह्मायन्तो नरकं पताम। **'हलः श्नः शानज्झौ'**। **छन्दसि शायजपि**

---

सु.]किरवात्र लघूपधगुणः। **वीतये इति**।वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु। **रातावितिं**। रा दाने। **छन्दसि लुङ्लङ्लिटः**। उदाहरणेषु धातुसंबन्धो मृग्यः। **अगमदिति**। गम्लृ गतौ 'पुषादी'ति लृदित्वादङ्। **अकरमिति**। 'कृमृदृरुहिंभ्यश्छन्दसी'ति च्लेरङ्। 'ऋदृशोऽङि' इति गुणः। **अवृणीतेति**। वृञ् वरणे। लङ्। 'क्र्यादिभ्यः श्ना'। 'ई हल्यघोः' इतीत्वम्। **इतश्च**। 'लेटोऽडाटौ' इत्यतो लेट इति, 'वैतोऽन्यत्रे'त्यतो वेति चानुवर्तते। तदाह–**लेट इत्यादि**। **लेटो**। **आगमौ स्त इति**। तौ च पर्यायेण, न तु यौगपद्येन, अङ्विधिसामर्थ्यात्। अन्यथा सवर्णदीर्घे कृते विशेषाऽभावात् 'आडुत्तमस्ये'ति सूत्रान्मण्डूकप्लुत्या पिच्चेत्यनुवर्तत इत्याशयेनाह–**तौ च पितावितिं**। तत्फलं तु 'विकन्दसी उर्वरासु ब्रवैते' इत्यादिषु गुणः। **वृद्धिरिति**। 'अचोऽञ्णिती'त्यनेन। **तारिषदिति**। तॄ प्लवनतरणयोः। तिप इकारलोपः। सिप्। इट्। **जोषिषदिति**। जुषी प्रीतिसेवनयोः। अनुदात्तेत्। व्यत्ययेन परस्मैपदम्। **असाविषदिति**। आङ्पूर्वात्–षु प्रसवैश्वर्ययोरित्यस्माल्लेट्। **पतातीति**। पत्लृ पतने। तिप्। आडागमः। **करवावेति**। कृञो लेडो वस्। 'तनादिकृञ्भ्यः' इति उः। गुणः। रपरः। 'लेटोऽडाटौ' इत्याट्। तस्य पित्त्वेनाऽङित्त्वाद्विकरणस्य गुणः। 'अत उत्सार्वधातुके' इत्युत्वाऽभावश्च। मदी हर्षे। णिच्। तदन्ताल्लेट्। आतामि कृते आह–**टेरेत्वमिति**। 'टित आत्मनेपदानामि'त्यनेन। **आकारस्येति**। प्रथमस्येत्यर्थः। द्वितीयस्य 'टित आत्मनेपदाना'मित्यनेनैत्वमेव, नित्यत्वात्। न च शब्दान्तरप्राप्त्याऽनित्यत्वं, कृताऽकृतप्रसङ्गित्वमात्रेण क्वचिन्नित्यताश्रयणात्। उत्तरसूत्रेऽन्यत्रेति लिङ्गाच्च। आट ऐत्वं नेत्युक्तं, तस्य फलमाह–**यजाति यजात इति**। यज देवपूजादौ। लेट् आडागमः। **वैतो**। अन्यत्वं किमपेक्षयेत्याकाङ्क्षायां पूर्वसूत्रविषयादिति लभ्यते, सन्निधानात्। तदाह–**आत इत्यादि**। **ईशै इति**। ईश ऐश्वर्ये। उत्तमैकवचनमिदं। 'इतश्चे'ति लोपो नास्ति, 'परस्मैपदेषु' इत्युक्तेः। टेरेत्वे तस्य ऐः। **गृह्णान्ता इति**। ग्रहेः कर्मणि लेट्। झिः। तस्याऽऽडागमः। यक्। 'ग्रहिज्या' इति संप्रसारणं। टेरेत्वं। पूर्ववदैत्वम्। **पणबन्ध इति**। 'यदि मे भवानिदं कुर्यात्तर्हीदमहं दास्यामी'ति समयकरणं **पणबन्धः**। **आशङ्का** संभावना। **अहमेवेति**। त्रिपुरविजये देवैः प्रार्थितस्य रुद्रस्येदं वचनम्। **पशवः**–संसारिणः। **नेदिति**। इच्छब्द आशङ्कां द्योतयति। जिह्माऽऽचरणेन नरकपातः, स माभूदित्यर्थः। **पतामेति**। 'स उत्तमस्ये'ति सलोपः। **छन्दसि शाय**। छन्दसि श्नः शायजप्यादेशः

---

शे.]'वृषु संचने,' 'इष इच्छायाम्,' 'मन ज्ञाने' 'मनु बोधने' इत्युभयोर्ग्रहणम्। विदादीनामपि यथादर्शनम्। क्तौ विधातव्ये उदात्तवचनमुत्तरार्थम्–व्रजयजोर्भावे क्यबुदात्तो यथा स्यादिति,प्रमतौ 'तादौ च निति' इति पूर्वपदप्रकृतिस्वरार्थञ्च। **लोडर्थ इति**।–पूर्वपरान्वयि। **अकरमिति**। 'कृमृदृरुहिभ्यश्छन्दसि' इति च्लेरङ्। 'ऋदृशोऽङि गुणः'। उदाहरणेषु धातुसम्बन्धो मृग्यः। **सिब्बहुलम्**। अयं विकरणः। 'यासिसीष्टाः' इत्यादौ सिपा व्यवधानादिण्निषेधो न, विहितविशेषणेऽपि छान्दसत्वान्, तत एव च लसार्वधातुकानुदात्तत्वम्। 'वैतोऽन्यत्र' इत्यतो वेति वर्तते, तदाह–**लोपो वेति**। **परस्मैपदेष्विति**। षष्ठ्यर्थे सप्तमी। परस्मैपदतिङामिकारान्तानामित्यर्थः। **पतातीति**। 'पत्लृ गतौ।' तिप् आट्। **जिह्मायन्त इति**। 'छन्दसि परेच्छायामि'ति क्यच्। 'अश्वाघस्या'दिति योगविभागेनात्मम्। अन्यस्य पापेच्छावन्त

।३।१।८४। अपिशब्दाच्छानच् । 'हृग्रहोर्भश्छन्दसी'ति हस्य भः । गृभाय जिह्वया मधु । बधान देव सवितः । 'अनिदिता'मिति बध्नातेर्नलोपः । गृभ्णामि ते । मध्वा जभार । **व्यत्ययो बहुलम्** ।३।१।८५। शबादिविकरणानां बहुलं व्यत्ययः स्याच्छन्दसि। आण्डा शुष्णस्य भेदति । भिनत्तीति प्राप्ते । जरसा मरते पतिः। म्रियत इति प्राप्ते । इन्द्रो वस्तेन नेषतु । नयतेर्लोट् शप्सिपौ द्वौ विकरणौ । इन्द्रेण युजा तरुषेम वृत्रम् । तरेमेत्यर्थः । तरतेर्विध्यादौ लिङ् । उः शप् सिप् चेति त्रयो विकरणाः । **सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥ १ ॥** धुरि दक्षिणायाः । दक्षिणस्यामिति प्राप्ते । चषालं ये अश्वयूपाय तक्षति । तक्षन्तीति प्राप्ते । उपग्रहः—परस्मैपदात्मनेपदे । ब्रह्मचारिणमिच्छते । इच्छतीति प्राप्ते । प्रतीपमन्य ऊर्मिर्युध्यति । युध्यत इति प्राप्ते । मधोस्तृप्ता इवासते । मधुन इति प्राप्ते । नरः—पुरुषः । अधा स वीरैर्दशभिर्वियूयाः । वियूयादिति प्राप्ते । कालः=कालवाची प्रत्ययः । श्वोऽग्नीनाधास्यमानेन । लुटो विषये लृट् । तमसो गा अदुक्षत् । अधुक्षदिति प्राप्ते । मित्र वयं च सूरयः । मित्रा वयमिति प्राप्ते । स्वरव्यत्ययस्तु वक्ष्यते । कर्तृशब्दः कारकमात्रपरः । तथा च तद्वाचिनां कृत्तद्धितानां व्यत्ययः । अन्नादाय । अण्विषये अच् । अवग्रहे विशेषः। यङो यशब्दादारभ्य 'लिङ्याशिष्य'ङिति ङकारेण प्रत्याहारः । तेषां व्यत्ययो भेदतीत्यादिरुक्त एव । **लिङ्याशिष्यङ्** ।३।१।८६। आशीर्लिङि परे धातोरङ् स्याच्छन्दसि । **'वच उम्'** । मन्त्रं वोचेमाग्नये । * **दृशेरग्वक्तव्यः** । पितरं च दृशेयं मातरं च । अङि

---

सु.]स्याद्धौ परे। **गृभायेति** । ग्रह उपादाने लोटः सेर्हिः। 'क्र्यादिभ्यः श्ना'। 'ग्रहिज्ये'ति संप्रसारणम्। **बधानेति**। बन्ध बन्धने । 'अतो हेः' इति हेर्लुक्प्रसङ्गात् 'हृग्रहोर्भश्छन्दसि' इत्यस्योदाहरणमाह—**गृभ्णामि त इति** । **जभारेति** । हृञ् हरणे । लिटो णलि वृद्धौ हस्य भः । गृह्णामि जहारेत्यर्थः । **भेदतीति** । भिदिर् विदारणे रौधादिकः । श्नमि प्राप्ते शप् । **म्रियत इति** । मृङ् प्राणत्यागे । 'तुदादिभ्यः' इति शे कृते 'रिङ् शयग्लिङ्क्षु' इति रिङादेशः। इयङ् । **नेषत्विति** । नयत्वित्यर्थः ।**द्वौ विकरणाविति** । तत्र शप् न्याय्यः, सिप्तु बाहुलकात् । एतेन 'सेमामविड्ढी'त्यादि व्याख्यातम् । अव रक्षणे। अस्माल्लोटि शपि प्राप्ते बाहुलकात्सिप्। 'हुझल्भ्यो हेर्धिः'। षत्वं ष्टुत्वम्। जश्त्वम्।**तरुषेमेति**। तरुष् मसिति जाते यासुट्। 'लिङः सलोपोऽनन्त्यस्य' । नित्यं ङितः' । 'अतो येयः' । 'लोपो व्योर्वलि' । 'आद्गुणः' । अत्रोप्रत्ययान्तस्य सिपं प्रत्यङ्गत्वात् 'सार्वधातुके'ति गुणः प्राप्तः, सिबन्तस्य शपि लघूपधगुणश्च प्राप्तो बाहुलकान्न भवति । **सुप्तिङिति** । **शास्त्रकृत्**=पाणिनिराचार्य **एषां** सुप्प्रभृतीनां व्यत्ययमिच्छति । **सोऽपि**—तथाविधो व्यत्ययो **बाहुलकेन सिध्यति** । बहुलस्य भावो बाहुलकम्। मनोज्ञादित्वाद्वुञ्।तत्पुनर्बहुलशब्दस्य प्रवृत्तिनिमित्तं-बह्वर्थादानत्वं। चशब्दौ हेतौ । यस्मादेवमुक्तप्रकारो व्यत्ययो बहुलग्रहणेनैव सिध्यति तस्माद्बहुलग्रहणं कृतमित्यर्थः । **वियूया इति** । यु मिश्रणे विपूर्वः । आशिषि लिङ् । **आधास्यमानेनेति** । आङ्पूर्वाद्धधातेः 'लृटः सद्वा' इत्यनेन शानजादेशः । 'स्यतासी'इति स्यः। 'आने मुगि'ति मुक् । **मित्र वयमिति**। दीर्घस्य ह्रस्वव्यत्ययः। **स्वरव्यत्ययस्त्विति**।गवामिव श्रियसे' इत्यत्र 'तुमर्थे' इत्यनेन क्सेनि कृते 'ञ्नित्यादि' रित्याद्युदात्ते प्राप्ते व्यत्ययेन मध्योदात्तता।**कृत्तद्धितानामिति**। 'तेन दीव्यती'त्यादौ विधीयमानानां ठगादीनां देवनादिकर्तृत्वादेवमुक्तम् । न त्विह कारकवाचित्वेऽप्याग्रहः, कृत्तद्धितमात्रे तात्पर्यात् । तथा च किमो विहितो डतिर्यच्छब्दादपि भवति । 'त्वं वेत्थ यति ते जातवेदः'।'विश्वेदेवासो मरुतो यतिष्ठन'॥ **अन्नादायेति** । अन्नमत्तीत्यन्नादः, तस्मै। अन्ने कर्मण्युपपदेऽदेः कर्मण्यणि प्राप्तेऽच् । **अवग्रह इति**। अणि कृते अन्न-आदायेति, अचि तु अन्न-अदायेति भावः। **वोचेमेति**। वचेराशीर्लिङो मस्। अङ्। वच उम्। यासुट् । **छन्दस्युभय**

---

शे.]इति। इदमेव जिह्माचरणं नाम। अन्ये तूपमानादन्यत्रापि छान्दसत्वादाचारे क्यचमाहुः। **अपिशब्दाच्छानजिति**। अपिशब्दादेवेहाऽपि—योऽस्कभायदुत्तरम् । 'अस्कभ्ना'दित्यर्थः । **व्यत्ययः**=व्यतिक्रम्य गमनम् । व्यतिपूर्वादिणो भावे णच् । तच्च क्वचिदन्यविषयावगाहनं, क्वचिद्द्वौ, क्वचित्त्रय इत्यादि । **लिङिति** । तस्य मस् , धातोर्गुणः। 'नित्यं ङितः' इति सलोपः। यासुट् , अतो येयः। यलोपः। आद्गुणः। विकरणप्रकरणे व्यत्यय इत्येव सिद्धे बहुलग्रहणं सर्वविधिव्यभिचारार्थं, तदाह—**सुप्तिङिति** । बह्वूनर्थान् लाति—आदत्ते इति बहुलं, तस्य भावो बाहुलकं । मनोज्ञादित्वाद्वुञ् । **दक्षिणाया** इत्यत्र स्याडभावश्छान्दसत्वात् । उपग्रहपदेन लादेशव्यङ्ग्यं स्वार्थत्वपरार्थत्वादि । तत्प्रतीतिनिमित्तलादेशोऽप्युपग्रहपदेनोच्यते इत्याशयेनाह—**उपग्रह इत्यादि** । **मधुन इति प्राप्ते इति** । अमृतक्षीरयोर्वाचको मधुशब्दो नित्यक्लीब इति भावः । **वियूयादिति** । 'यु मिश्रणे' विपूर्वः । **विशेष इति** । अचि अन्न अदायेत्यवग्रहः, अणि आदायेति स्यात्। 'न लक्षणेन पदकाराः' इति न्यायेनाऽत्र फलान्तराऽभावाद्व्यत्ययफलं चिन्त्यम्। **लिङ्याशिष्यङ्** । स्था-

तु 'ऋदृशोऽङी'ति गुणः स्यात् । **छन्दस्युभयथा** ।३।४।११७। धात्वधिकारे उक्तः प्रत्ययः सार्वधातुकार्द्धधातुकसंज्ञः स्यात् । वर्द्धन्तु त्वा सुष्टुतयः । वर्द्धयन्त्वित्यर्थः । आर्द्धधातुकत्वाण्णिलोपः । विशृण्विरे । सार्वधातुकत्वात् श्नुः, श्नभावश्च । 'हुश्नुवो'रिति यण् । 'आदृगमहनजनः किकिनौ लिट् च'। आदन्तादृवर्णान्ताद्गमादेश्च किकिनौ स्तस्तौ च लिड्वत् । बभ्रिर्वज्रम्। पपिः सोमं। ददिर्गाः। जग्मिर्युवा। जघ्निर्वृत्रममित्रियम्।जज्ञिः। लिड्वद्भावादेव सिद्धे 'ऋच्छत्यृता'मिति गुणबाधनार्थं कित्त्वम् । 'बहुलं छन्दसी'त्युत्त्वम् । ततुरिः । जगुरिः । **तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः** ।३।४।९। से–वक्षे रायः। सेन्–ता वामेषे । असे–शरदो जीवसे धाः । असेन्–नित्त्वादाद्युदात्तः । क्से–प्रेषे । कसेन्–गवामिव श्रियसे । अध्यै अध्यैन्–जठरं पृणध्यै । पक्षे आद्युदात्तम् । कध्यै–कध्यैन् ,—आहुवध्यै । पक्षे निःस्वरः । शध्यै–राधसः सह मादयध्यै । शध्यैन्–वायवे पिबध्यै । तवै–दातवाउ । तवेङ्–सूतवे । तवेन्–कर्तवे । **प्रयै रोहिष्यै अव्यथिष्यै** ।३।४।१०। एते तुमर्थे निपात्यन्ते । प्रयातुं रोढुमव्यथितुमित्यर्थः । **दृशे विख्ये च** ।३।४।११। द्रष्टुं, विख्यातुमित्यर्थः। **शकि णमुल्कमुलौ** ।३।४।१२। शक्नोतावुपपदे तुमर्थे एतौ स्तः । विभाजं नाशकत् । अपलुपं नाशकत् । विभक्तुमपलोप्तुमित्यर्थः । **ईश्वरे तोसुन्कसुनौ** ।३।४।१३। ईश्वरो विचरितोः । ईश्वरो विलिखः। विचरितुं विलेखितुमित्यर्थः।**कृत्यार्थे तवैकेन्केन्यत्वनः**।३।४।१४ न म्लेच्छितवै।अवगाहे।दृश-

सु.]थेति। लिङः सार्वधातुकसंज्ञाप्यस्ति, तेन यासुट इयादेशः। वलि लोपः। **आदृ**। परार्थे प्रयुज्यमानाः शब्दा वतिमन्तरेणापि वत्यर्थं गमयन्ति 'गौर्वाहीक' इतिवदित्याशयेनाह–**लिड्वदिति** । किकिनौ भवतः, लिड्वत्कार्यश्च भवतीत्ययमर्थस्तु न भवति, तथा हि सति लिङ्किकिन इत्येव ब्रूयात् । **बभ्रिरिति** । 'भृञ्' अस्मात् किः, लिड्वद्भावाद्द्वित्वम् । किकिनोः स्थाने तिबादयस्तु न,'लिड्व'दित्यतिदेशेन स्वरूपाऽबाधेनैव कार्यातिदेशात् । 'न लोकाव्यये'ति षष्ठीनिषेधे वज्रशब्दाद्द्वितीया । **जग्मिरिति** । 'गमहने' त्युपधालोपः । **जघ्निरिति** । 'हो हन्ते'रिति कुत्वम्। **जज्ञिरिति** । श्चुत्वम् । जज्ञोर्ज्ञः । ननु लिड्वद्भावे सति 'असंयोगाल्लिट्कि'दित्येव सिद्धे कित्त्वकरणमनर्थकमित्याशयेनाह–**लिड्वद्भावादिति** । 'असंयोगाल्लिट्कि'दिति कित्त्वं सिद्धमिति भावः । 'आ'दिति मुखसुखार्थो दकारो न तु तकारः । तेन तात्परत्वाऽभावाद्दीर्घस्यापि ऋकारस्य ग्रहणं । तदाह–**ततुरिः जगुरिरिति** । तॄ प्लवनतरणयोः । गॄ निगरणे । आभ्यां किः । द्वित्वात्परत्वात् 'बहुलं छन्दसी' त्युत्वे प्राप्ते 'द्विर्वचने' इति निषेधादुत्वाऽभावे द्वित्वम् । उदरत्वम् । उत्तरस्योत्वम् ।

**तुमर्थे**। तुमुनोऽर्थस्तुमर्थो=भावः।ननु 'कर्तरि कृ'दिति वचनात्कर्तरि तुमुनो विधानात्कथं भावोऽर्थ इति चेच्छृणु, 'अव्ययकृतो भावे' इति वचनात्तुमुनो भावे विधानात् । तुमर्थे पञ्चदश प्रत्यया भवन्ति । **वक्षे इति** । वचः से कुत्वे षत्वम् । कषसंयोगे क्षः । **एषे इति** । इणो गुणः। नकारो 'ञ्नित्यादिर्नित्य' मित्याद्युदात्ताऽर्थः । **प्रेषे इति** । इणः से कित्त्वादगुणे आद्गुणः । **श्रियसे इति** । इयङ् ।नित्त्वादाद्युदात्तः। इह मन्त्रे मध्योदात्तः पठ्यते । तत्र बाहुलकात्प्रत्ययस्वरो बोध्यः । **आहुवध्यै इति** । जुहोतेरुवङ् । **मादयध्यै इति** । मदी हर्षे ण्यन्ताच्छध्यैप्रत्ययः । तस्य भावगाचिसार्वधातुकत्वात्सार्वधातुके यकि प्राप्ते व्यत्ययेन शप्।गुणाऽयादेशौ। **पिबध्यै इति**। अत्रापि यक्प्रसङ्गे व्यत्ययेन शप्। 'पाघ्रे'ति पिबादेशः । **दातवा उ इति** । ददातेस्तवै । आयादेशे 'लोपः शाकल्यस्ये'ति. यलोपः । **सूतवे इति** । ङित्त्वान्न गुणः । **कर्तव इति** । कृञो गुणः। कर्तुमित्यर्थः। **प्रयै** । प्रपूर्वाद्यातेः कैप्रत्ययः । रुहेरिष्यैप्रत्ययैः। नञ्पूर्वाद्व्यथेश्च । **दृशे** । योगविभागश्चिन्त्यप्रयोजनः । दृशेः ख्यातेश्च केप्रत्ययः । कित्त्वाद्दृशेर्न गुणः । ख्यातेरालोपश्च । **विभाजमिति**। विपूर्वाद्भजतेर्णमुल्। णित्त्वात् 'अत उपधायाः' इति वृद्धिः। **अपलुपमिति**। लुप्लृ छेदने। कित्त्वाद्गुणाऽभावः। **ईश्वरे** । ईश्वरशब्दे उपपदे धातोस्तोसुन्कसुनौ स्तश्छन्दसि । **विचरितोरिति** । चर गतौ । इट् । **विलिख इति**। 'लिख विलेखने' । कित्त्वान्न गुणः । 'क्त्वातोसुन्कसुनः' इत्यव्ययत्वात् 'अव्ययादाप्सुपः' इति विभक्तेर्लुक्, 'न लुमता' इति निषेधात् 'अत्वसन्तस्ये'ति दीर्घो न । **कृत्यार्थे**। कृत्यानामर्थौ भावकर्मणी,तयोरेवेति कृत्यानां भावकर्मणोर्विधानात्, तत्र एते प्रत्ययाः स्युः । यद्यपि कृत्यानामर्थौ 'भव्यगेये' त्यादौ कर्ताऽपि, वह्यं स्नानीयमित्यादौ करणादिरपि, तथापि न तत्र कृत्यत्वेन कर्त्रादिषु विधानं, किं तर्हि, स्वरूपेण । कृत्यतया विधानं तु भावकर्मणोरेवेति भावः । **न म्लेच्छितवै**

शे.]गा–गमि–वचि–विदि–शकि–रुहिष्वेवायमङ् विकरणः प्रायेण दृश्यते । **बहुलं छन्दसीति** । अन्यथा 'ऋत इत्' इतीत्वं स्यात् । गुणस्तु न, कित्त्वादिति भावः । **तुमर्थे** । तुमर्थो–भावः, 'अव्ययकृतो भावे' इत्युक्तेः । भाव इत्येव सिद्धे तुमर्थग्रहणात्साध्यावस्थभावस्याऽत्र ग्रहणम् । **पृणध्यै इति** । बाहुलकादगुणत्वं 'पिबध्यै' इत्यादौ यगभाववत् । एवञ्च बाहुलकेनैव पिबाद्यादेशकित्त्वकार्ये स्वीकृत्य कध्यैकध्यैन्शध्यैशध्यैनिति प्रत्ययचतुष्टयं व्यर्थमिति सूचयति । आहु-

क्षेण्यः । भूर्यस्पष्ट कर्त्वम् । अवचक्षे च।३।४।१५।रिपुणा नावचक्षे। अवख्यातव्यमित्यर्थः।भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्।३।४।१६।आसंस्थातोः सीदन्ति।आसमाप्तेः सीदन्तीत्यर्थः।उदेतोः।अपकर्तोः। प्रवदितोः। प्रचरितोः। होतोः। आतमितोः। 'काममाविजनितोः संभवामः' [इति श्रुतिः] । सृपितृदोः कसुन् ।३।४।१७। भावलक्षणे इत्येव । पुरा क्रूरस्य विसृपो विरप्शिन् । पुरा जत्रुभ्य आतृदः ।इति तृतीयोऽध्यायः।

## अथ चतुर्थोऽध्यायः ।

**रात्रेश्चाऽजसौ** ।४।१।३१। रात्रिशब्दान्ङीप्स्यात्, अजस्विषये छन्दसि । रात्री व्यख्यदायती। लोके तु कृदिकारादिति ङीष्यन्तोदात्तः । **नित्यं छन्दसि** ।४।१।४६। बह्वादिभ्यश्छन्दसि विषये नित्यं ङीष् । बह्वीषु हि त्वा । नित्यग्रहणमुत्तरार्थम् । **भुवश्च** ।४।१।४७। ङीष् स्यौच्छन्दसि । विभ्वी । प्रभ्वी । 'विप्रसंभ्य' इति डुप्रत्ययान्तं सूत्रेऽनुक्रियते, उत इत्यनुवृत्तेः । उवङादेशस्तु सौत्रः । **मुद्गलाच्छन्दसि लिच्च** । ङीषो लित्त्वमानुगागमश्च । लित्स्वरः । रथीरभून्मुद्गलानी । **दीर्घजिह्वी च छन्दसि** ।४।१।५९। संयोगोपधत्वादप्राप्तो ङीष् विधीयते । आसुरी वै दीर्घजिह्वी देवानां यज्ञवाट् । **कद्रुकमण्डल्वोश्छन्दसि** ।४।१।७१। ऊङ् स्यात् । कद्रूश्च वै कमण्डलूः। * **गुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम्** । गुग्गुलूः। मधूः । जतूः। पतयालूः । '**अव्ययात्त्यप्**' । * **आविष्ट्यस्योपसङ्ख्यानं छन्दसि** । आविष्ट्यो वर्धते । छन्दसि ठञ्

---

सु.]इति । म्लेछ अव्यक्ते शब्दे'। न म्लेच्छितव्यमित्यर्थः।**अवगाहे इति**। गाहू विलोडने । **दिदृक्षेण्य इति** । दृशेः सन्नन्तात्केन्यः।अतो लोपः। **कर्त्वमिति**। कृञः त्वन्। कृत्यमित्यर्थः।यद्यपि 'तुमर्थे सेसेन्' इत्यनेन तुमर्थे तवै विहितस्तथापि भावभिन्नेऽपि कर्मकारके तवै यथा स्यादित्येवमर्थम्।**अवचक्षे**। अवपूर्वाच्चक्षिङ एश् प्रत्ययो निपात्यते। शित्त्वात्सार्वधातुकत्वं, तेन ख्याञादेशो न । **भावलक्षणे** । कृत्यार्थे इति निवृत्तम् ।तुमर्थे इति वर्तते। प्रकृत्यर्थविशेषणं भावलक्षणग्रहणम् । भावो लक्ष्यते येन तस्मिन्नर्थे वर्तमानेभ्यः स्थादिभ्यो धातुभ्यस्तुमर्थे तोसुन् स्याच्छन्दसि । संस्थानादीनामवधित्वेन लक्षणं=भावः । **आ समाप्तेरिति** । संपूर्वो हि तिष्ठतिः समाप्तौ रूढः, 'संतिष्ठते पिण्डपितृयज्ञ' इत्यादौ तथा दर्शनात् । **आतमितोरिति** । तमु ग्लानौ । **सृपितृदोः** । सृप्लृ गतौ । उतृदिर् हिंसाऽनादरयोः । भावलक्षणेऽर्थे वर्तमानयोः सृपितृदोस्तुमर्थे कसुन् स्यात् । **विसृप इति** । गमनादित्यर्थः । **इति तृतीयोऽध्यायः** ।

**रात्रेश्चाऽजसौ** । न जसिः अजसिस्तस्मिन् । इकार उच्चारणार्थः, 'आहो प्रभूतादिभ्यः' इतिवत् । **छन्दसीति** । ननु 'तिमिरपटैरवगुण्ठिता रात्र्यः' इति प्रयोगो न स्यात् , छन्दसीत्युच्यते, न चेदं छन्दः। अजसाविति निषेधाच्च । किं च वेदेऽपि 'रात्र्य' इति प्रयोगो न स्यादित्याशङ्क्याह–**लोके त्विति**। तुशब्दोऽनुक्तसमुच्चयार्थः । लोके, जसि वेदे चेत्यर्थः । **कृदिकारादिति** । 'राशदिभ्यां त्रि' बिति व्युत्पत्तिपक्षे कृदिकारान्तः। अव्युत्पत्तिपक्षे तु 'सर्वतोऽक्तिन्नर्था'दिति ङीष् बोध्यः। **नित्यम्** । 'बह्वादिभ्यश्चे'ति वर्तते, 'अन्यतो ङी' षित्यतो ङीषिति च । तदाह–**बह्वादिभ्य इति** । नन्वारम्भसामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणं व्यर्थमित्याशङ्क्याह–**नित्यग्रहणमुत्तरार्थमिति**। **भुवः**। **विभ्वीति** । 'विप्रसंभ्यो ड्वसंज्ञाया'मित्यतो डुप्रत्ययान्तान्ङीष् । ननु स्वयंभुरित्यत्रापि स्यादित्याशङ्क्याह–**डुप्रत्ययान्तमिति** । ननु डुप्रत्ययान्तानुकरणे किं प्रमाणमत आह–**उत इत्यनुवृत्तेरिति** । 'वोतो गुणवचना'दिति सूत्रात् । ननु तर्हि डुप्रत्ययान्तस्य 'घेर्ङिती'ति गुणे कृते भो इति निर्देशः प्राप्नोति । तत्राह–**उवङादेशस्तु सौत्र इति** । **मुद्गला** । 'इन्द्रवरुणे' ति सूत्रस्थं वार्तिकमिदम् । **लित्स्वर इति** । लितीत्यानुगाकारस्योदात्तत्वम् । **दीर्घजिह्वी** । दीर्घजिह्वीति निपात्यते छन्दसि । **अप्राप्तो ङीषिति** । 'स्वाङ्गाच्चोपसर्जना'दिति न प्राप्नोति, तत्र ह्यसंयोगोपधादिति प्रतिषेधात् । **कद्रु** । 'ऊङुतः' इत्यत ऊङिति वर्तते । कद्रुशब्दात्कमण्डलुशब्दाच्च स्त्रियामूङ् स्याच्छन्दसि । **गुग्गुलुमधु** । एषां व्यत्ययेन छन्दसि स्त्रीत्वम् । पतयालुशब्दः 'स्पृहिगृही'त्यादिना आलुजन्तः । **अव्यया** । व्याख्यातमपि त्यबनुवृत्तिप्रदर्शनार्थं स्मारितम् । **आविष्ट्यस्येति** । 'अव्ययात्त्य'बित्यत्र 'अमेहक्वतसित्रेभ्यः' इति

---

शे.]**वध्यै इति**। ह्वेञः संप्रसारणे उवङि रूपम्। **न म्लेच्छितवै इति**।भ्वादेर्म्लेच्छधातोस्तवै।इट् । **अवगाहे इति** । अत्र केन् । **भावलक्षणे** । भावस्य लक्षणत्वे गम्ये इत्यर्थः । **आविजनितोः**। आप्रसवादित्यर्थः। **इति तृतीयः** ।

**अथ चतुर्थः**। **रात्रेश्चाऽजसौ**। अजसादिष्विति वक्तव्यं, रात्रिं रात्रिं सहोषित्वा । अजसावितिकिम्-?, यास्ता रात्रयः । **लोके त्विति** । असञ्ज्ञाविषये इत्यर्थः । सञ्ज्ञायान्तु लोकेपि ङीबन्त एव । वृत्तौ सञ्ज्ञाछन्दसोरित्यनुवर्त्तनात् 'राशदिभ्यान्त्रिबि'ति त्रिबन्त आद्युदात्तो रात्रिशब्दः । **नित्यग्रहणमिति** । आरम्भसामर्थ्यान्नित्यत्वसिद्धेरिति भावः। **उत्तरार्थे–'भुवश्च'** इत्यर्थम् । डुप्रत्ययान्तस्य भोरिति स्यादत आह–**उवङिति** । **गुग्गुल्वादीनां**

।४।३।१९। वर्षाभ्यष्ठक्कोऽपवादः । स्वरे भेदः । वार्षिकम् । वसन्ताच्च ।४।३।२०। छन्दसि ठञ् स्यात् । वासन्तिकम् । हेमन्ताच्च ।४।३।२१। छन्दसि ठञ् स्यात् । हैमन्तिकम्।योगविभाग उत्तरार्थः ।'शौनकादिभ्यश्छन्दसि' । णिनिः प्रोक्तेऽर्थे । छाऽणोरपवादः । शौनकेन प्रोक्तमधीयते शौनकिनः । वाजसनेयिनः । छन्दसि किम् ? । शौनकीया शिक्षा । द्व्यचश्छन्दसि ।४।३।१५०। विकारे मयट् स्यात् । शरमयं बर्हिः । यस्य पर्णमयी जुहूः । नोत्वद्वर्ध्रबिल्वात् ।४।३।१५१। उत्वान्=उकारवान् । मौञ्जं शिक्यम् । वर्ध्रं चर्म, तस्य विकारो वार्ध्री रज्जुः । बैल्वो यूपः । ·'सभाया यः' । ढश्छन्दसि ।४।४।१०६। सभेयो युवा । भवे छन्दसि ।४।४।११०। सप्तम्यन्ताद्भवार्थे यत् । मेघ्याय च विद्युत्याय च । यथायथं शैषिकाणामणादीनां घादीनां चापवादोऽयं यत् । पक्षे तेऽपि भवन्ति, सर्वविधीनां छन्दसि वैकल्पिकत्वात् । तद्यथा मूजवान्नाम पर्वतः । तत्र भवो मौजवतः । सोमस्येव मौजवतस्य भक्षः । आ चतुर्थसमाप्तेश्छन्दोऽधिकारः । पाथोनदीभ्यां ड्यण् ।४।४।१११। तमु त्वा पाथ्यो वृषा । चनो दधीत नाद्यो गिरो मे । पाथसि भवः पाथ्यः । नद्यां भवो नाद्यः । वेशन्तहिमवद्भ्यामण् ।४।४।११२। भवेऽर्थे । वैशन्तीभ्यः स्वाहा । हैमवतीभ्यः स्वाहा । स्रोतसो विभाषा ड्यड्ड्यौ ।४।४।११३। पक्षे यत् । ड्यड्ड्ययोस्तु स्वरे भेदः । स्रोतसि भवः स्रोत्यः । स्रोतस्यः । सगर्भसयूथसनुताद्यन् ।४।४।११४। अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । यो नः सनुत्य उत वा जिघत्नुः । नुतिर्नुतम् । 'नपुंसके भावे क्तः' । सगर्भादयस्त्रयोऽपि कर्मधारयाः । 'समानस्य छन्दसी'ति सः । ततो भवार्थे यन् । यतोऽपवादः । तुग्राद्धन् ।४।४।११५। भवेऽर्थे । पक्षे यदपि । आ वः शर्म वृषभं तुग्र्यास्विति बह्वृचाः । 'तुग्रियास्वि'ति शाखान्तरे । धनाकाशयज्ञवरिष्ठेपु तुग्रशब्द इति वृत्तिः । अग्राद्यत् ।४।४।११६। घच्छौ च ।४।४।११७। चाद्यत् । अग्रे भवोऽग्र्यः । अग्रियः । अग्रीयः । समुद्राभ्राद्धः ।४।४।११८। समुद्रिया अप्सरसो मनीषिणम् । नानदतो अभ्रियस्येव घोषाः । बर्हिषि दत्तम् ।४।४।११९। 'प्राग्घिताद्य'दित्येव । बर्हि-

---

सु.]नियमादप्राप्तः शैषिकस्त्यब् विधीयते । आविष्ट्य इति । आविर्भूतमाविष्ट्यम् । 'ह्रस्वात्तादौ' इति षत्वं, तकारस्य ष्टुत्वम् । ठकोऽपवाद इति । 'वर्षाभ्यष्ठ'गिति प्राप्तस्य। ननु ठक्ठञोः को विशेषस्तत्राह–स्वरे भेद इति।ठञि कृते 'ञ्नित्यादिर्नित्य'मित्याद्युदात्तत्वं, ठकि तु सति 'कितः'-इत्यनेनाऽन्तोदात्तत्वं स्यादिति भावः। वार्षिकमिति।'ठस्येकः'। उत्तरार्थ इति । 'सर्वत्राऽण् च तलोपश्चे'त्येतदर्थः । तत्र ह्यस्यैवानुवृत्तिर्यथा स्यात्, वसन्तस्य माभूत् । शौनक । 'काश्यपकौशिकाभ्यामृषिभ्यां णिनि' रिति वर्तते । तदाह–णिनिरिति । प्रोक्ते इति । 'तेन प्रोक्त'मित्येतस्मिन्नर्थे । शौनकीयेति। 'वृद्धाच्छः'।द्व्यचः। 'मयड्वैतयोर्भाषाया'मित्युक्तेर्वेदेऽप्राप्तो विधीयते। नोत्वत् । उकारवतः प्रातिपदिकाद्वर्ध्रबिल्वशब्दाभ्यां च मयण् स्यात् । 'द्व्यचश्छन्दसी'ति प्राप्तः प्रतिषिध्यते । मौञ्जमिति । मुञ्जशब्दादौत्सर्गिकोऽण् । वार्ध्रीति। वर्ध्रशब्दादौत्सर्गिकोऽण्। 'टिड्ढाण'ञिति ङीप्। ढश्छन्दसि। सप्तम्यन्तात्सभाशब्दाड्ढः साध्वर्थे।अणादीनां चेति । 'तत्र भवः' इति प्राप्तानाम् । पाथोनदीभ्याम् । सप्तम्यन्ताभ्यामाभ्यां भवार्थे ड्यण् स्यात् । पाथसीति । पाथो जलम् ,'कबन्धमुदकं पाथः'इत्यमरात् । 'पाथोऽन्तरिक्षम्' इति वृत्तिः। वैशन्तीभ्य इति । विशेषेञ्च । वेशन्तः पल्वलम्।तत्र भवा आपः–वैशन्त्यः। सगर्भसयूथस । 'अतिगृभ्यां भन्'। गिरति गीर्यते वा गर्भः । युता भवन्त्यस्मिन्निति यूथम्।'तिथपृष्ठयूथगूथप्रोथाः' इति थक्प्रत्ययान्तो निपातितः।दीर्घोऽपि निपातनादेव। कर्मधारया इति। समानश्चासौ गर्भश्च । तत्र भवः सगर्भ्य इति विग्रहः।यतोऽपवाद इति। 'भवे छन्दसी'ति प्राप्तस्य। अग्राद्यत्।'भवे छन्दसी'त्येव सिद्धे घादिभिर्बाधा माभूदिति यद्विधीयते । समुद्रा । समुन्दतीति समुद्रः । 'स्फायितञ्ची'ति रक् । अपो बिभर्ति इत्यभ्रम्। मूलविभुजादित्वात्कः।'अभ्रसमुद्रा'दिति वक्तव्ये 'समुद्राभ्रा'दित्युक्तिः पूर्वनिपातस्याऽनित्यत्वज्ञापनार्था । बर्हिषि । तत्र भव इति निवृत्तम् । बर्हिःशब्दाद्दत्तमित्यर्थे यत्प्रत्ययो भवति । बर्हिष्येति । 'बृंहतेर्नलोपश्चे'तीस्प्रत्ययान्तो बर्हिः।तस्माद्यत् । दूतस्य। दूतशब्दात्षष्ठीसमर्थाद्भागे कर्मणि चाऽभिधेये यत्प्रत्ययः स्यात् । भागे 'तस्येद'मि-

---

शे.]छन्दसि व्यत्ययेन स्त्रीत्वम्। पतयालुर्विशेष्यलिङ्गः।शौनकादिभ्यश्छन्दसि । अस्याऽत्र लेखो लेखकप्रमादात् । छन्दसि अभिधेये इति तदर्थात् । अत एव 'शौनकीया शिक्षा' इति तत्प्रत्युदाहरणमाकरे । वर्ध्रमिति । 'वर्ध्री'ति तु वधेरौणादिके ष्ट्रनि बोध्यम् । 'वर्ध्रिका पञ्चन्ती'ति भाष्ये प्रयोगात्। मेघ्यायेति । 'यतोऽनावः' इत्याद्युदात्तत्वं प्राप्नोति, अन्तस्वरितश्च पठ्यते इति हरदत्तः । वैशन्तीभ्य इति । वेशन्ते–पल्वले भवा आप इत्यर्थः । स्रोतो–जलप्रवाहः । सगर्भस । यन्–नित् । यदपीति । छान्दसत्वात् । चाद्यनिति । यतः पूर्वेणैव सिद्धे व्यवहितस्याऽपि घनः समुच्चय इति भावः । लोके तु 'अग्रिमः' इत्येव । 'अग्रा'दित्येव सूत्रयितुमुचितं, यतोऽधिकारात् । बर्हिषि दत्तम् ।

ष्येषु निधिषु प्रियेषु । **दूतस्य भागकर्मणी** ।४।४।१२०। भागोंऽशः । दूत्यः । दूत्यम् । **रक्षोयातूनां हननी** ।४।४।१२१। या ते अग्ने रक्षस्या तनूः । यातव्या । **रेवतीजगतीहविष्याभ्यः प्रशस्ये** ।४।४।१२२। प्रशंसने यत्स्यात् । रेवत्यादीनां प्रशंसनं रेवत्यम् । जगत्यम् । हविष्यम् । **असुरस्य स्वम्** ।४।४।१२३। असुर्यं देवेभिर्धायि विश्वम् । **मायायामण्** ।४।४।१२४। आसुरी माया । **तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः** ।४।४।१२५। [ मत्वन्तप्रकृतिकात्प्रथमान्तादुपधानकरणीभूतमन्त्रार्थकादिष्टकारूपसम्बन्धिनि यत् स्यान्मतोश्च लुक् ] । वर्चस्वानुपधानो मन्त्र आसामिष्टकानां वर्चस्याः । ऋतव्याः । **अश्विमानण्** ।४।४।१२६। आश्विनीरुपदधाति । **वयस्यासु मूर्ध्नो मतुप्** ।४।४।१२७। 'तद्वानासा'मिति सूत्रं सर्वमनुवर्तते । मतोरिति पदमावर्त्य पञ्चम्यन्तं बोध्यम् । मतुबन्तो यो मूर्धशब्दस्ततो मतुप्स्यात्प्रथमस्य मतोर्लुक्, वयःशब्दवन्मन्त्रोपधेया-

---

सु.]त्यणि प्राप्ते वचनम् । कर्मणि तु 'दूतवणिग्भ्यां चे'त्यौपसङ्ख्यानिके ये दूत्यमित्यादि । दूतस्य भागो **दूत्यः** । कर्म **दूत्यम्** । **रक्षोयातूनाम्** । षष्ठीबहुवचनान्ताभ्यां रक्षस्यातुशब्दाभ्यां हननीत्यस्मिन्नर्थे यत्स्यात् । रक्षेरसुनि रक्षः । 'अमितनिमनी'त्यादिनां यातेस्तुन् । यातुशब्दो रक्षःशब्दपर्यायः । न च 'विरूपाणामपि समानार्थाना'मित्येकशेषः स्यादिति वाच्यम् , बह्वर्थाभिधायिस्वरूपवचनेन सूत्रे भिन्नार्थत्वात् । **रक्षस्येति** । हन्यतेऽनया सा हननी, रक्षसाम् [हननी रक्षस्या] । एवं-**यातव्या** । बहुवचनं स्तुतिवैशिष्ट्यज्ञापनाय । बहूनां रक्षसां हनने हि स्तुतिः प्रतीयते । **रेवतीजगती** । प्रशंसनं प्रशस्यम् । प्रपूर्वाच्छंसु स्तुतावित्यस्माद्भावे क्यप् । तदाह-**प्रशंसने इति** । रयिरस्यास्तीति रेवती । रयिशब्दान्मतुप् । 'छन्दसीरः' इति वत्वम् , 'रयेर्मतौ बहुल'मिति संप्रसारणम् । उगित्वान्ङीप् । नक्षत्रे गौरादित्वान्ङीष् । जगच्छब्दात् 'वर्तमाने' इत्यनेन शतृवद्भावात् 'उगितश्चे'ति ङीप् । हविषे हिता हविष्या । उगवादित्वाद्यत् । तासां प्रशंसनं-हविष्यं, 'यस्ये'ति लोपे कृते 'हलो यमां यमी'ति यलोपः । **असुरस्य स्वम्** । असुरशब्दात्षष्ठीसमर्थात्स्वमित्येतस्मिन्नर्थे यत्स्यात् । **असुर्यमिति** । न सुरोऽसुरः=सुरप्रतिपक्षी । अथ वा असेरुरच् । अस्यति अस्यते वा असुरः । तस्य स्वमसुर्यम् । **मायायामण्** । मीयतेऽनयेति माया=असदर्थप्रकाशनशक्तिः । माङ औणादिको यः । तस्यां वाच्यायामसुरशब्दादण् स्यात्पूर्वसूत्रापवादः । **आसुरीति** । 'टिड्ढाण'ञिति ङीप् । **तद्वानासा** । मत्वन्तात्प्रथमासमर्थादासामिति षष्ठ्यर्थे यत्स्याद्यत्प्रथमासमर्थमुपधानो मन्त्रश्चेत्स भवति, यत्तदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवन्ति । मतोश्च लुक् । **वर्चस्वानिति** । वर्चःशब्दो यस्मिन्मन्त्रेऽस्ति स वर्चस्वान् । कुम्भेष्टकोपधानमन्त्रः 'भूतं च स्थ भव्यं च स्थ देवस्य वः सवितुः प्रसवे' इत्यादिकः । उपधीयतेऽनेनेत्युपधानम् । चयनं । रचनमित्यर्थः । **ऋतव्या इति** । ऋतुशब्दो यस्मिन्मन्त्रेऽस्ति स ऋतुमान् । स च 'मधुश्च माधवश्चे'त्यादिकः । ऋतुमानुपधानो मन्त्र आसामिष्टकानामृतव्याः । तद्वानिति किम् ? । मन्त्रादेव समुदायान्माभूदिति काशिका । अत्र **हरदत्तः**-'ननु तद्वानित्यस्मिन्नसति 'समर्थानां प्रथमाद्वे'ति वचनादासामिति प्रथमानिर्दिष्टत्वात्षष्ठ्यन्तादिष्टकाऽभिधायिन उपधानमन्त्रे प्रत्ययः स्यादिति वाक्यार्थः स्यात् । तथा च समुदायान्न प्राप्नोतीति चेत्सत्यम् । आसामिति प्रथमं न करिष्यत इति मत्वा प्रश्नप्रतिवचने,ततश्च-'उपधानो मन्त्र आसामिष्टकासु लुक् च मतो'रिति योगः करिष्यते । तथा च तद्वानित्यस्याऽभावे 'भूतं च स्थ भव्यं च स्थे'त्ययमुपधानो मन्त्र आसामिष्टकाना'मिति वाक्यं स्यात् । तथा चेतिना परामृष्टान्मन्त्रसमुदायादेव प्रत्ययः प्राप्नोतीति भावः । उपधान इति किम् ? । वर्चस्वदभिमन्त्रणमासामित्यत्र माभूत् । 'शिवेन मा चक्षुषे'त्यनुवाकः कुम्भेष्टकाभिमन्त्रणे विनियुक्तः । मन्त्र इति किम् ? । अङ्गुलिमानुपधानो हस्त आसामित्यत्र माभूत् । इष्टकास्विति किम् ? । वर्चस्वानुपधान आसां शर्कराणामित्यत्र माभूत् । 'इति'करणं नियमार्थम् । अनेकपदसंभवे केनचिदेव पदेन तद्वान्मन्त्रो गृह्यते न सर्वेण । मतुब्ग्रहणमुत्तरार्थम् । अश्विमानित्यत्र मतुप एव लुग्यथा स्यात् , इनेर्माभूत् । इह तु मत्वन्तात्प्रत्ययविधानात्तस्यैव लुग्भविष्यति । **अश्विमान्** । अश्विशब्दो यस्मिन्मन्त्रेऽस्ति सोऽश्विमान्मन्त्रः । स च 'ध्रुवक्षिति'रित्यादिकः । प्रथमान्तादश्विमच्छब्दादासामिति षष्ठ्यर्थे अण् स्याद्यत्प्रथमानिर्दिष्टमुपधानो मन्त्रश्चेत्स भवति । यत्तदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवन्ति, मतोश्च लुक् । **आश्विनीरुपदधातीति** । अश्वशब्दात् 'अत इनिठनौ' इत्यस्त्यर्थे इनिः । तदन्तान्मतुप् । अश्विमान् । स उपधानो मन्त्र आसामिष्टकानामिति विगृह्याऽणि विहिते मतोश्च लुकि कृते 'इनण्यनपत्ये' इति प्रकृतिभावः ।

**वयस्यासु** । वयस्वानुपधानो मन्त्र आसामिष्टकानां ता वयस्यास्तास्वभिधेयासु प्रथमासमर्थान्मतुबन्तमूर्धशब्दादासामिति

---

शे.]भव इति निवृत्तम् । 'बर्हिः कुशहुताशयोः' । **दूतस्य** । **कर्म**=क्रिया । तत्र भागे 'तस्येद'मित्यणि, कर्मणि 'दूतवणिग्भ्याञ्चे'ति ये प्राप्ते वचनम् । **रक्षोयातूनां** । 'विरूपाणामपी'त्येकशेषो न कृतोऽसन्देहाय । शैषिकाऽण्छयोरपवादः । **प्रशस्ये इति** । बाहुलकाद्भावे क्यप् , तद्योगे कर्मणि षष्ठी । तदाह-**रेवत्यादीनामिति** । रयिरस्त्यस्या रेवती । 'रयेर्मतौ बहुल'मिति संप्रसारणम् । **मायाया** । असदर्थप्रकाशनशक्तिः-माया । असुरस्य-सुरप्रतिपक्षस्य, माया-

स्विष्टकासु । यस्मिन्मन्त्रे मूर्धवयःशब्दौ स्तस्तेनोपधेयासु । मूर्धन्वतीरुपदधातीति प्रयोगः। **मत्वर्थे मासतन्वोः** ।४।४।१२८। नभोऽभ्रम् । तदस्मिन्नस्तीति नभस्यो मासः । ओजस्या तनूः । **मधोर्ञ च** ।४।४।१२९। चाद्यत्। माधव्यः। माधवः। **ओजसोऽहनि यत्खौ**।४।४।१३०।ओजस्यमहः,ओजसीनं वा। **वेशोयशआदेर्भगाद्यल्खौ**।४।४।१३१। यथासङ्ख्यं नेष्यते । वेशो बलं तदेव भग इति कर्मधारयः। वेशोभग्यः । वेशोभगीनः। यशोभग्यः । यशोभगीनः।[**ख च** ।४।४।१३२। योगविभाग उत्तरार्थः, क्रमनिरासार्थश्च]।**पूर्वैः कृतमिनियौ च** ।४।४।१३३। गम्भीरेभिः पथिभिः पूर्विणेभिः । ये ते पन्थाः सवितः पूर्व्यासः। **अद्भिः संस्कृतम्** ।४।४।१३४। यस्येदमप्यं हविः। **सहस्रेण संमितौ घः** ।४।४।१३५। सहस्रियासो अपां नोर्मयः। सहस्रेण तुल्या इत्यर्थः। **मतौ च** ।४।४।१३६। सहस्रशब्दान्मत्वर्थे घः स्यात् । सहस्रमस्यास्तीति सहस्रियः । **सोममर्हति यः** ।४।४।१३७। सोम्यो ब्राह्मणः । यज्ञार्ह इत्यर्थः । **मये च** ।४।४।१३८। सोमशब्दाद्यः स्यान्मयडर्थे । सोम्यं मधु । सोममयमित्यर्थः । **मधोः** ।४।४।१३९। मधुशब्दान्मयडर्थे यः स्यात् । मधव्यः । मधुमय इत्यर्थः । **वसोः समूहे च** ।४।४।१४०। चान्मयडर्थे यत् । वसव्यः। ***अक्षरसमूहे छन्दस उपसङ्ख्यानम्** । छन्दःशब्दादक्षरसमूहे वर्तमानात्स्वार्थे यदित्यर्थः।आश्रावयेति चतुरक्षरम्।अस्तु श्रौषडिति चतुरक्षरं । ये यजामह इति पञ्चाक्षरं। यजेति द्व्यक्षरं। द्व्यक्षरो वषट्कारः। एष वै सप्तदशाक्षरश्छन्दस्यः। **नक्षत्राद्घः**।४।४।१४१।स्वार्थे। नक्षत्रि-

सु.]षष्ठ्यर्थे मतुप्स्यात् । यत्प्रथमानिर्दिष्टमुपधानो मन्त्रश्चेत्स भवति,यदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवन्ति। यस्मिन्मन्त्रे मूर्धशब्दो वयःशब्दश्च विद्यते स मूर्धवान् वयस्वान्, यथा 'मूर्धा वयः प्रजापतिश्छन्द' इति, तत्र वयस्वच्छब्दादिव मूर्धवच्छब्दादपि पूर्वेण यति प्राप्ते मतुब्विधीयतेइत्याशयेनाह-**यस्मिन्मन्त्रे इति । मूर्धन्वतीरिति** । 'अनो नु'डिति नुडागमः । 'मूर्धवत्' इति वक्तव्ये भाविनं मतुब्लुकं चेतसि कृत्वा मूर्ध इत्युक्तम् । **मत्वर्थे** । यस्मिन्नर्थे मतुब्विहितस्तस्मिन्नर्थे प्रथमान्ताद्यत्स्यान्मासतन्वोरभिधेययोः । ननु प्रथमासमर्थमिति कस्मादागतमिति चेन्मत्वर्थग्रहणादित्यवेहि । 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' इति ऊकारान्तस्तनूशब्दः सूत्रे निर्दिष्टः, न तु 'भृमृशीङ्तृचरित्सरितनिधनिमिमस्जिभ्य उः' इत्युकारान्तः । 'द्वन्द्वे घी'ति पूर्वनिपातप्रसङ्गात् । **ओजस्या इति**। ओजो यस्या यस्यां वा अस्तीत्योजस्या। **मधोः** । मधुशब्दान्मत्वर्थे ञः स्याचाद्यत्। **मधव्या इति**। ओर्गुणः । 'वान्तो यी'ति अवादेशः । **ओजसोऽहनि** । ओजःशब्दान्मत्वर्थे यत्खौ स्तोऽहन्यभिधेये । ननु यद्ग्रहणं व्यर्थं खश्चेत्येवास्त्विति चेन्नैवम् । खश्चेत्युच्यमानेऽनन्तरसूत्रविहितस्य ञमात्रस्य समुच्चयो विज्ञायेत, तस्माद्यद्ग्रहणम् । **वेशोयश** । वेशश्च यशश्च वेशोयशसी, ते आदी यस्य तस्माद्वेशोयशआदेर्भगात्प्रातिपदिकाद्यल्खौ स्तो मत्वर्थे । लकारः स्वरार्थः । **पूर्विणेभिरिति** । पूर्वैः कृताः-पूर्विणाः, तैः । एवं पूर्व्यासः पूर्विणाः । **अद्भिः** । तृतीयान्तादप्शब्दात्संस्कृतमित्यर्थे यत्स्यात् । **सहस्रेण** । तृतीयान्तात्सहस्रशब्दात्संमितमित्येतस्मिन्नर्थे घः स्यात् । संमितः=सदृशस्तुल्य इत्यर्थः । **सहस्रिया इति** । सहस्रेण संमिताः सहस्रियाः । 'यस्येति चे'त्यकारलोपः । 'समिता'विति पाठान्तरम । **मतौ** । 'तपःसहस्राभ्यां विनीनी' इत्यस्यापवादः । **सोममर्हति** । द्वितीयान्तात्सोमशब्दादर्हतीत्यस्मिन्नर्थे यत्स्यात् । **सोम्य इति** । सोममर्हतीति सोम्यः। **मये च** । आगतविकाराऽवयवप्रकृता मयडर्थाः । तत्रागते पञ्चमी समर्थविभक्तिः, विकारावयवयोः षष्ठी, प्रकृतवचने प्रथमा । **मधोः**। यः **स्यादिति**। वृत्तिकारस्तु यतमेवानुवर्तयति न तु यम् । **नक्षत्रात् । स्वार्थे इति** ।

शे.]आसुरी। **मूर्धन्वतीरिति**।यद्यपि 'मूर्धा वयः प्रजापतिश्छन्द' इत्यन्त्यमन्त्र एव मूर्धन्शब्दोऽस्ति तथाऽपि तत्साहचर्याच्छत्रिन्यायेन 'विष्टम्भो वय' इत्यादयश्चत्वारोऽपि मन्त्रा 'मूर्धन्वन्त' उच्यन्ते।वयस्यास्विति किम्?। 'अग्ने यशस्विन् यशसे समर्पयाऽयं मूर्धा परमेष्ठी'ति केवलमूर्धशब्दवता वयःशब्दरहितेन मन्त्रेणोपधेयासु माभूदिति । **मत्वर्थे मा** । मत्वर्थे यत् स्याच्छन्दसि मासतन्वोर्वाच्ययोः । मासतन्वोः किम् ? । स्वध्वरासो मधुमन्तोऽग्नयः । सूत्रे 'तनू'शब्दो दीर्घान्त इति हरदत्तः । 'अनन्तरार्थे वेति वक्तव्यम्' । मध्वनन्तरमस्मिन्-मधव्यो माधवो मासः । 'लुगकारेकाररेफाश्चेति वक्तव्यम्' । **लुक्**-मधुः, तपः, नभः। अन्त्ययोः क्लीबत्वमार्षम्। **अकारः**-इषः, ऊर्जः। इट्=अन्नम्, ऊर्क्=बलम्, तद्वानित्यर्थः । **इकारः**-आतपाधिक्येन देहशोषरूपा शुगस्मिन्नस्ति=शुचिः । **रेफो** रशब्दः-शुक्रः । अयस्मयादित्वाजश्त्वं न । **ओजसोऽह** । ओजःशब्दान्मत्वर्थे यत्खौ स्तोऽहनि वाच्ये । **वेशोय** । एतदादिकाद्भगशब्दाद्यल्खौ । '**भगः** श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु । **पूर्वैः कृत** । पूर्वशब्दात्तृतीयाबहुवचनान्तात् कृतमित्यर्थे इन इति, य इति च प्रत्ययः । **अद्भिः**। संस्कृतमित्यर्थे यदित्यर्थः। **सोममर्ह** । सोमशब्दाद्द्वितीयान्तादर्हतीत्यर्थे यप्रत्ययः। **मधोः** । 'य' इति निवृत्तम् । **चान्मयडर्थे इति** । स्वार्थे इत्यपि बोध्यम् । अग्निरीशेव सव्यस्येत्यादिः । **स्वार्थे**

येभ्यः स्वाहा। सर्वदेवात्तातिल् ।४।४।१४२। स्वार्थे। सविता नः सुवतु सर्वतातिम्। प्रदक्षिणिद्देवतातिमुराणः। **शिवशमरिष्टस्य करे** ।४।४।१४३। करोतीति करः। पचाद्यच्। शिवं करोतीति शिवतातिः। याभिः शन्ताती भवथो ददाशुषे। अथो अरिष्टतातये। **भावे च** ।४।४।१४४। शिवादिभ्यो भावे तातिः स्याच्छन्दसि। शिवस्य भावः शिवतातिः। शन्तातिः। अरिष्टतातिः। इति **चतुर्थोऽध्यायः**।

## अथ पञ्चमोऽध्यायः।

**सप्तनोऽञ्छन्दसि** ।५।१।६१। 'तदस्य परिमाण'मिति, वर्गे इति च। सप्त साप्तान्यसृजत्। *** शन्शतोर्डिनिश्छन्दसि तदस्य परिमाणमित्यर्थे वाच्यः**। पञ्चदशिनोऽर्द्धमासाः। त्रिंशिनो मासाः। *** विंशतेश्चेति वाच्यम्**। विंशिनोऽङ्गिरसः। *** युष्मदस्मदोः सादृश्ये वतुब्वाच्यः**। त्वावतः पुरूवसो। न त्वावाँ२ऽअन्यः। यज्ञ विप्रस्य मावतः। **छन्दसि च** ।५।१।६७। प्रातिपदिकमात्रात्तदर्हतीति यत्। सादन्यं विदथ्यम्। **वत्सरान्ताच्छश्छन्दसि** ।५।१।९१। निर्वृत्तादिष्वर्थेषु। इद्वत्सरीयः। **संपरिपूर्वात्ख च** ।५।१।९२। चाच्छः। संवत्सरीणः। संवत्सरीयः। परिवत्सरीणः। परिवत्सरीयः। **छन्दसि घस्** ।५।१।१०६। ऋतुशब्दात्तदस्य प्राप्तमित्यर्थे। भाग ऋत्वियः। **उपसर्गाच्छन्दसि धात्वर्थे**।५।१।११८।धात्वर्थविशिष्टे साधने वर्तमानात्स्वार्थे वतिः स्यात्। यदुद्वतो निवतः। उद्गतान्निर्गतादित्यर्थः। **थट् च छन्दसि** ।५।२।५०। नान्तादसङ्ख्यादेः परस्य डटस्थट् स्यान्मट् च। पञ्चथम्। पञ्चमम्। **'छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि'**। [पर्यवस्थाता शत्रुः]। अपत्यं परिपन्थिनम्। मात्वा परिपरिणो विदन्। **बहुलं छन्दसि** ।५।२।१२२। मत्वर्थे

---

सु.]समूह इति नानुवर्तते।तेनाऽनिर्दिष्टार्थत्वात्स्वार्थे प्रत्यय उत्पद्यत इत्यर्थः।**सर्वदेवात्**।सर्वशब्दाद्देवशब्दाच्च तातिल् स्यात्। **शिवशम**। करशब्दसामानाधिकरण्यात् 'शिवशमरिष्टस्ये'ति 'उभयप्राप्तौ कर्मणि' इति षष्ठी। इति **चतुर्थोऽध्यायः**।

**सप्तनोऽञ्**। सप्तन्शब्दादञ् स्याच्छन्दसि। **साप्तानीति**। सप्तन्शब्दादञि 'नस्तद्धिते' इति टिलोपे तद्धितान्तत्वात्प्रातिपदिकसंज्ञायां जस्। 'जश्शसोः शिः'। 'नपुंसकस्ये'ति नुम्। उपधादीर्घः। **शन्शतोः**। डित्करणं शदन्तस्य टिलोपार्थम्। **पञ्चदशिन इति**। पञ्चदशाऽहानि परिमाणमेषामिति डिनि कृते 'तिविंशतेर्डिती'ति तिशब्दलोपे कृते यस्येति लोपः। आङ्गिरसाऽयास्यगार्ग्यगौतमेत्यादिप्रवरभेदभिन्नानि विंशतिरवान्तरगोत्राणि परिमाणमेषामित्यर्थः। **त्वावत इति**। त्वमिव त्वावान्, तस्य त्वावतः। अहमिवेति मावान्, तस्य मावतः। 'प्रत्ययोत्तरपदयोश्चे'ति त्वमादेशौ। 'आ सर्वनाम्नः' इत्यात्वम्। **सादन्यमिति**। सदनं गृहमर्हतीति—सादन्यः। 'अन्येषामपी'ति दीर्घः। **विदथ्यमिति**। विदथो यज्ञस्तमर्हतीत्यर्थः। **इद्वत्सरीय इति**। इद्वत्सरेण निर्वृत्तः,इद्वत्सरमधीष्टो,भृतो, भूतो, भावी वा—इद्वत्सरीयः। इद्वत्सरेदावत्सरशब्दौ पञ्चवर्षे युगे द्वयोर्वर्षयोः संज्ञे। एवं संवत्सरपरिवत्सरशब्दावपि। **संपरिपूर्वात्**। संपरिपूर्वाद्वत्सरान्तात्प्रातिपदिकाच्छन्दसि विषये निर्वृत्तादिष्वर्थेषु खः स्याच्चाच्छः। **छन्दसि घस्**। 'समयस्तदस्य प्राप्त'मित्यतस्तदस्य प्राप्तमिति, 'ऋतोर' णित्यत ऋतोरिति चानुवर्तते। तदाह—**ऋतुशब्दादित्यादि**। **ऋत्विय इति**। 'सिति चे'ति पदत्वेन भत्वे निरस्ते 'ओर्गुणः' इति गुणाऽभावे यण्। **उपसर्गात्**। इह धातुशब्देन धातुवाच्या क्रिया लक्ष्यते। साऽर्थः प्रयोजनं यस्य साधनस्य तस्मिन् वर्तमानादित्यर्थस्तदाह—**धात्वर्थविशिष्ट इति**। उपसर्गाश्च पुनरेवमात्मकाः—यदुत—श्रुतायां क्रियायां तामेव विशिंषन्ति।यथा आगच्छति। यत्र तु न श्रूयते तत्र क्रियाविशिष्टसाधनमाहुः। यथा निष्कौशाम्बिः। तथा च यत्र क्रियापदं न श्रूयते तत्रैव यथा स्यादित्येवमर्थं धात्वर्थं इत्युक्तम्। **थट्च**। 'तस्य पूरणे' इत्यतो डडिति, 'नान्तादसङ्ख्यादे'रिति च। तदाह—**नान्तादित्यादि**। **पञ्चथमिति**। पञ्चानां पूरणमित्यस्मिन्नर्थे डटि कृते तस्य थडागमः। **छन्दसि**। परिपन्थिन् परिपरिन् एतौ निपात्येते छन्दसि पर्यवस्थातरि वाच्ये। पर्यवस्थाता=प्रतिपक्षः, सपत्न इत्युच्यते। निपातनं चात्र पर्यवस्थातृशब्दात्स्वार्थे इनिप्रत्ययोऽवस्थातृशब्दस्य पन्थि परि एतावादेशौ च निपात्येते।**बहुलं छन्दसि**।'अस्मायामेधास्रजो विनि'रिति वर्तते। तदाह—**विनिःस्यादिति**।

---

बो.]इति। समूह इति निवृत्तम्। **शिवशम**। **पचाद्यजिति**। एवञ्च कृद्योगलक्षणा षष्ठी समर्थविभक्तिः। फलितमाह—**शिवं करोतीति**। **अरिष्टाः**—प्रकृतयः। इति **चतुर्थः**।

अथ पञ्चमः। **साप्तानीति**। आर्षं क्लीबत्वम्। **वर्गः** = प्राण्यप्राणिविषयः। **विंशिन इति**। आङ्गिरस—अयास्य—गार्ग्य—गौतमेत्यादिप्रवरभेदभिन्नानि विंशतिस्वान्तरगोत्राणि परिमाणमेषामित्यर्थः। **सादन्यमिति**। सदनमर्हतीत्यर्थः। इद्वत्सरेदावत्सरसंवत्सरपरिवत्सराः पञ्चवर्षे युगचतुर्णां वर्षाणां सञ्ज्ञाः। **उद्वत इत्यादि**। देशविशेष्याः। साधनशब्देन शक्तिमद्द्रव्यमिति लिङ्गसङ्ख्यायोगादन्वर्थोऽव्ययसञ्ज्ञा न। **थट् च**। चात्पक्षे मट्। शुक्

विनिः स्यात्। ❀ छन्दोविन्प्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्चेति वक्तव्यम्।-इति दीर्घः। मंहिष्ठमुभयाविनम्। शुनमष्ट्राव्यचरत्। ❀ छन्दसीवनिपौ च वक्तव्यौ। ई-रथीरभूत्। सुमङ्गलीरियं वधूः। मघवानमीमहे। **तयोर्दाहिलौ च छन्दसि** ।५।३।२०। इदन्तदोर्यथासङ्ख्यं स्तः। इदाहि व उपस्तुतिम्। तर्हि। **था हेतौ च छन्दसि** ।५।३।२६। किमस्था स्याद्धेतौ प्रकारे च। कथा ग्रामं न पृच्छसि। कथा दाशेम। **पश्च पश्चा च छन्दसि** ।५।३।३३। अवरस्य अस्तात्यर्थे निपातौ। पश्च हि सः। नो तं पश्चा। **'तुश्छन्दसि'**। तृजन्तात्तृन्नन्ताच्च इष्ठनीयसुनौ स्तः। आसुतिं करिष्ठः। दोहीयसी धेनुः। **प्रत्नपूर्वविश्वेमात्थाल्छन्दसि** ।५।३।१११। इवार्थे। तं प्रत्नथा पूर्वथा विश्वथेमथा। **अमु च छन्दसि** ।५।४।१२। किमेत्तिङव्ययघादित्येव। प्रतं नय प्रतरम्। **वृकज्येष्ठाभ्यां तिल्तातिलौ चच्छन्दसि** ।५।४।४१। स्वार्थे। यो नो दूरेवो वृकतिः। ज्येष्ठतातिं बर्हिषदम्। **अनसन्तान्नपुंसकाच्छन्दसि** ।५।४।१०३। तत्पुरुषाट्टच् स्यात्समासान्तः। ब्रह्मसामं भवति। देवच्छन्दसानि। **बहुप्रजाश्छन्दसि** ।५।४।१२३। बहुप्रजा निर्ऋतिमाविवेश। **छन्दसि च** ।५।४।१४२। दन्तस्य दतृ स्याद्बहुव्रीहौ। उभयतोदतः प्रतिगृह्णाति। **ऋतश्छन्दसि**

---

सु.]अष्ट्रावीति। अशेः ष्ट्रन्। अष्ट्रा। दंष्ट्रापर्यायोऽयम्। मेखलावी द्वयावी उभयावी रुजावी हृदयावी। अत्र द्वयोभयहृदयान्येव दीर्घत्वं प्रयोजयन्ति। अन्येषां स्वत एव दीर्घत्वात्। **छन्दसि**। ईश्च वनिप् च ईवनिपौ। **ई इति**। ईप्रत्ययोदाहरणमुच्यते। **रथीरिति**। रथोऽस्यास्तीति रथीः। **सुमङ्गलीरिति**। सुष्ठु मङ्गलमिति 'सुः पूजाया'मिति समासः। ततोऽनेन मत्वर्थीय ईकारप्रत्ययः। **मघवानमिति**। मघं-धनं, तदस्यास्तीति वनिप्। मतुपि तु मघवच्छब्दः। **तयोः**। तच्छब्देन 'इदमोर्हिल्' 'तदो दा च' इति संनिहिताविदन्तदौ परामृश्येते। तदाह-**इदन्तदोरिति**। सूत्रे व्यत्ययेन पञ्चम्याः स्थाने षष्ठी। **यथासङ्ख्यं स्त इति**। इदंशब्दाद्दा, तच्छब्दात् र्हिल्। **इदा इति**। इदम्शब्दाद्दा। 'इदम इश्' इत्यनेनेशादेशः। **था हेतौ**। 'प्रकारवचने था'लित्यतः प्रकारवचन इति, किमश्चेति च। तदाह-**किमस्था स्यादित्यादि**। **कथा ग्रामं न पृच्छसीति**। केन हेतुना न पृच्छसीत्यर्थः। तस्य 'प्राग्दिशो विभक्ति'रित्यधिकाराद्विभक्तिसंज्ञायां 'किमः क' इति कादेशः। प्रकारवचने उदाहरणमाह-**कथा दाशेमेति**। केन प्रकारेणेत्यर्थः। **पश्च पश्चा**। अवरस्य पश्चभावः, अकाराऽऽकारौ च प्रत्ययौ निपात्येते। **अस्तात्यर्थे इति**। 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः'। **करिष्ठ इति**। कर्तृशब्दादिष्ठन्। 'तुरिष्ठेमेयःसु' इति तृलोपः। **दोहीयसीति**। अतिशयेन दोग्ध्रीत्यर्थः। लिङ्गविशिष्टपरिभाषया दोग्ध्रीशब्दात्प्रत्ययः। 'भस्याऽढे' इति पुंवद्भावेन ङीपो निवृत्तिः। ततः 'तुरिष्ठेमेयःसु' इति तृनि निवृत्ते निमित्ताऽभावाद्धत्वकुत्वयोरपि निवृत्तिः। **प्रत्नपूर्व**। प्रत्न पूर्व विश्व इम एभ्यस्थाल् स्यात्। **अमु च**। किमेत्तिङव्ययघाद्द्रव्यप्रकर्षे वर्तमानादमुप्रत्ययो भवति। **प्रतरमिति**। प्रकर्षार्थस्य प्रकर्षे तरप्। प्रकृष्टतर इतिवत्। तदन्तादमुः। स्वरादिषु अम् आम् इति पठ्यते, तेन तदन्तस्याऽव्ययत्वे सुपो लुक्। अत्रोदित्करणम् 'इच एकाचोऽम्प्रत्ययवच्चे'त्यत्रास्य ग्रहणं माभूत्। यदि स्यात्तर्हि अत्रापि यद्दृष्टं कार्यं तदप्यतिदिश्येत। तत्र को दोषः ?। इह श्रियंमन्यमानः। यस्येति लोपः प्राप्नोति। **अनसन्तात्**। अन्नन्तस्योदाहरणमाह-**ब्रह्मसाममिति**। असन्तस्याह-**देवच्छन्दसानीति**। **बहुप्रजाः**। 'बहुप्रजा' इति निपात्यते छन्दसि। **बहुप्रजा इति**। बह्वयः प्रजा यस्येति बहुव्रीहिः। असिच् प्रत्ययः। 'यस्येति चे'त्यकारलोपः। 'अत्वसन्तस्ये'ति दीर्घः। रुत्वविसर्गौ। **छन्दसि च**। 'वयसि दन्तस्य दतृ' इत्यतो 'दन्तस्य दतृ' इत्यनुवर्तते। तदाह-**दन्तस्य दतृ स्यादिति**। उभय-

---

शे.]अत्र न कृतः, नलोपाऽनापत्तेः। **दीर्घश्चेति**। द्वयोभयहृदयविषयमिदम्। **छन्दसीव**। चाद्वः। अन्यतरस्याङ्ग्रहणानुवृत्तेर्मतुप् च। रथोऽस्या अस्ति, सुमङ्गलमस्या अस्तीत्यर्थः। [छान्दसत्वात्कर्मधारयादप्यत्र मत्वर्थीयः]। मघं = धनमस्यास्ति-मघवा। उद्गतसम्बन्धिनीत्यर्थे उद्वा उद्वतीति वमतुपोरुदाहरणे। तयोरिति व्याचष्टे-**इदन्तदोरिति**। आनन्तर्ययोगे षष्ठी। **कथेति**। कुतो हेतोः; केन प्रकारेण वेत्यर्थः। **तुश्छन्दसि**। 'अजादी गुणवचनादेवे'ति नियमबाधेन प्रकृत्यन्तराभ्यनुज्ञामात्रमत्र क्रियते, न त्वपूर्वो विधिः। तेनोपाधिसङ्करो न। **करिष्ठ इति**। कर्तृशब्दात्तृन्नन्तादिष्ठनि कर्मणि द्वितीया। अतिशयरूपेष्ठनर्थस्य विशेषणत्वात्तृन्नन्तस्य शक्तेश्च न 'कृतपूर्वी'कटतुल्यता। तेन तद्वदत्र तृजन्तप्रकृतिकत्वेऽपि न षष्ठीति परास्तम्। दोग्ध्रीशब्दे 'सिद्धश्च प्रत्ययविधौ' इति वचनात् 'भस्याऽढे' इति पुंवत्त्वेन दोग्धृशब्दात्प्रत्यये 'तुरिष्ठेमेयस्सु' इति तृलोपः। ततः प्राग्घत्वजश्त्वे तु न, असिद्धत्वात्। **प्रत्नपूर्व[विश्वेमात्थाल्]**। इमशब्द इदमा समानार्थः प्रकृत्यन्तरम्। **प्रतरमिति**। प्रकर्षप्रकर्षे तरप्, प्रकृष्टतर इत्यर्थः। उदित्त्वम् 'इच एकाचोऽम्प्रत्ययव'दित्यत्रास्य ग्रहणं माभूदिति। तेन 'श्रियंमन्यः' इत्यादौ 'यस्ये'ति लोपो न। **स्वार्थे इति**। प्राशस्त्यविशिष्टे स्वार्थे इत्यर्थः। 'सन्नौ प्रशं-

।५।४।१५८। ऋदन्ताद्बहुव्रीहेर्न कप् । हता माता यस्य हतमाता । इति पञ्चमोऽध्यायः ।

## अथ षष्ठोऽध्यायः ।

'एकाचो द्वे [प्रथमस्य']। *छन्दसि वेति वक्तव्यम् । यो जागार । दाति प्रियाणि । तुजादीनां दीर्घोऽभ्यासस्य ।६।१।७। तुजादिराकृतिगणः। प्रभरा तूतुजानः । सूर्यं मामहानम् । दाधार यः पृथिवीम् । स तूताव । बहुलं छन्दसि ।६।१।३४। ह्वः संप्रसारणं स्यात् । इन्द्रमाहुव ऊतये । * ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि । ऋक्छब्दे परे त्रेः संप्रसारणमुत्तरपदादेर्लोपश्चेति वक्तव्यम् । तृचं सूक्तम् । छन्दसि किम् ?। त्र्यृचानि । * रयेर्मतौ बहुलम्। रेवान् । रयिमान्पुष्टिवर्द्धनः।चायः की ।६।१।३५। न्य१न्यं चिक्युर्न निचिक्युरन्यम् । लिटि उसि रूपम् । बहुलग्रहणानुवृत्तेर्नेह—अग्निं ज्योतिर्निचाय्य । अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताश्रितमाशीराशीर्ताः ।६।१।३६। एते छन्दसि निपात्यन्ते । इन्द्रश्च विष्णो यदपस्पृधेथाम् । स्पर्धेर्लङि आथाम् । अर्कमानृचुः । वसून्यानृहुः । अर्चेरर्हेश्च लिट्युसि । चिच्युषे । च्युङो लिटि थासि । यस्तित्याज । त्यजेर्णलि । श्रातास्त इन्द्र सोमाः । श्रिता नो ग्रहाः । श्रीञ् पाके, निष्ठायाम् । आशिरं दुहे । मध्यत आशीर्तः । श्रीञ एव क्विपि निष्ठायां च । खिदेश्छन्दसि ।६।१।५२। खिद

---

सु.]तोदत इति।उभयतो दन्ता यस्येति विग्रहः। हतमाता इति।'नद्यृतश्चे'ति नित्यं कप् प्राप्तः।इति पञ्चमोऽध्यायः।

जागारेति । जागृ निद्राक्षये । लिटि प्रथमपुरुषैकवचनम् । दातीति । डुदाञ् दाने लट् । शपः श्लुः । 'श्लौ' इतिं नित्यं द्वित्वे प्राप्ते विकल्पः। तूतुजान इति । तुजेर्लिट्। तस्य कानजादेशः। मामहानमिति। मह पूजायां कानच् । तूतावेति । तुः सौत्रो धातुः । तस्माल्लिट् । बहुलं छन्दसि । 'ह्वः संप्रसारण'मिति वर्तते । तदाह—ह्वः संप्रसारणं स्यादिति। आहुव इति । आङ्पूर्वात् ह्वेञो लडात्मनेपदोत्तमैकवचनम् । 'बहुलं छन्दसी'ति शपो लुकि कृते संप्रसारणमुवङादेशश्च। तृचं सूक्तमिति । तिस्र ऋचो यस्मिंस्तत् तृचम् । 'ऋक्पूरब्धूःपथा[मानक्षे'] इति समासान्तः—अः । रयेर्मतौ । रयिशब्दस्य मतौ परतः संप्रसारणं स्याच्छन्दसि । रेवानिति । 'छन्दसीरः' इति वत्वम् । रयिमानिति। बहुग्रहणात्संप्रसारणवत्वयोरभावः । चायः की । चायतेर्बहुलं कीत्ययमादेशः स्याच्छन्दसि । चिक्युरिति । 'कुहोश्चुः' इति चुः। निचाय्येति । 'चायृ पूजानिशामनयोः' अस्मात्क्त्वा । गतिसमासे 'समासेऽनञ्पूर्वे क्त्वो ल्य'बिति ल्यबादेशः । स्पर्धेर्लङ्याथामिति । द्विवचनं, रेफस्य संप्रसारणमकारलोपश्च निपातनात् । 'अस्पर्धथा'मिति भाषायाम् । अपरे तु अपपूर्वस्य स्पर्धेर्लङ्याथामि संप्रसारणमलोपश्च निपातनात् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडागमाऽभावः । तन्मते प्रत्युदाहरणमपास्पर्धेथामिति भाषायाम् । अर्चेरर्हेश्चेति । संप्रसारणमलोपश्च निपातनात् । ततो द्विर्वचनमुरदत्वम्। 'अत आदे'रिति दीर्घत्वम्। 'तस्मान्नुड् द्विहलः' इति नुडागमः । आनर्चुरानर्हुरिति भाषायाम् । च्युङो लिटीति। अभ्यासस्य संप्रसारणमनिट्त्वं च निपातनात् । चुच्युविषे इति भाषायाम् । त्यजेर्णलिति । त्यज वयोहानौ । अभ्यासस्य संप्रसारणं निपात्यते । तत्याजेति भाषायाम् । श्राता इति । श्रीञ् पाके इत्यस्य. निष्ठायां श्राभावः । श्रिता इति । तस्यैव श्रीणातेर्ह्रस्वत्वं च । आशिरमिति । आङ्पूर्वस्य श्रीणातेः क्विप् , धातोः शिर इति आदेशः। तस्माद्द्वितीयैकवचनम्। आशीर्त इति । श्रिञ आङ्पूर्वस्य शिर इत्यदेशः।

---

शे.]साया'मित्यतस्तदनुवृत्तेः।अनस।ब्रह्मणः साम, देवस्य छन्दांसीति विग्रहः।बहुप्रजा इति।बहुव्रीहिः।इति पञ्चमः।

अथ षष्ठः । छन्दसि वेतीति । 'लिटि धातोः' इति सूत्रे भाष्ये स्पष्टमेतत् । 'तुजादीनामित्यत्रापि छन्दसीति वक्तव्य'मिति भाष्यम् । तुजादीनां । छन्दसि सर्वविधीनां वैकल्पिकत्वात्–ममहान इत्यपि । माहुव इति । आङ्पूर्वात् ह्वयतेर्लटि आत्मनेपदोत्तमैकवचने 'बहुलं छन्दसि' इति शपो लुकि संप्रसारणे उवङ् । न च भवति–ह्वयामि मरुतः शिवानिति । रेवानिति । रयेर्यस्य संप्रसारणे इकारेण पूर्वरूपे आद्गुणे 'छन्दसीरः' इति वत्वम् , तत्र विहितविशेषणाश्रयणात् । चायः की । चायतेश्छन्दसि बहुलं कीत्यादेशः । स्पर्द्धेर्लङीति । अपपूर्वस्य स्पर्द्धेः संप्रसारणमकारलोपः। 'बहुलं छन्दस्ये'त्यडभावः। द्वे पदे,–अपेति, स्पृधेथामिति । प्रकारान्तरं–मनोरमायाम् । लिट्युसीति । 'संप्रसारणाऽकारलोपौ निपात्येते' इति शेषः । आनर्चुरानर्हुरिति भाषायाम् । थासीति।अभ्यासस्य सम्प्रसारणमनिट्त्वञ्च निपातनात् । थासः से, षत्वम् । चुच्युविषे इति भाषायाम् । णलीति । अभ्यासस्य संप्रसारणं निपातनात् । तत्याजेति भाषायाम् । निष्ठायामिति । आद्ये श्राभावोऽन्त्ये ह्रस्वो निपातनात् । बहुषु सोमेषु श्राभावोऽन्यत्र ह्रस्व एव । सोमादन्यत्र क्वचिदेकस्मिन्नपि श्राभावः–'यदि श्रातो जुहोतने'त्यादौ । श्राता इति बहुत्वमविवक्षितम् । सोमे तु बहुत्व एवेति भाष्ये स्पष्टम् । निष्ठायाञ्चेति । शिरादेशो निष्ठाया नलाऽभावश्च निपातनात् । खिदेति ।

दैन्ये । अस्यैव आद्वा स्यात् । चखादे । चिखेदेत्यर्थः । **शीर्षंश्छन्दसि** ।६।१।६०। शिरःशब्दस्य शीर्षन् स्यात् । शीर्ष्णः शीर्ष्णो जगतः । **वा छन्दसि** ।६।१।१०६। दीर्घाज्जसि इचि च पूर्वसवर्णदीर्घो वा स्यात् । वाराही । वाराह्यौ । मानुषीरीळते विशः । उत्तरसूत्रद्वयेऽपीदं वाक्यभेदेन संबध्यते, तेनाऽमि पूर्वत्वं वा स्यात् । शमीं च शम्यं च । सूर्म्यं सुषिरामिव । 'संप्रसारणाच्चे'ति पूर्वरूपमपि वा । इज्यमानः । यज्यमानः । **शेश्छन्दसि बहुलम्** ।६।१।७०। लोपः स्यात् । या ते गात्राणाम् । ता ता पिण्डानाम् । ※ **पमन्नादिषु छन्दसि पररूपं वक्तव्यम्** । अपां त्वेमन् । अपां त्वोद्मन् । **भय्यप्रवय्ये च छन्दसि** ।६।१।८३। बिभेत्यस्मादिति भय्यः । वेतेः प्रवय्या इति स्त्रियामेव निपातनम् । प्रवेयमित्यन्यत्र । छन्दसि किम् ? । भेयम् । प्रवेयम् । ※ **हृदय्या उपसङ्ख्यानम्** । हृदे भवा हृदय्या आपः । 'भवे छन्दसी'ति यत् । **प्रकृत्याऽन्तःपादमव्यपरे** ।६।१।११५। ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यादति परे, न तु वकारयकारपरेऽति । उपप्रयन्तो अध्वरम् । सुजाते अश्वसूनृते । अन्तःपादं किम् ? । एतास एतेऽर्चन्ति । अव्यपरे किम् ? । तेऽवदन् । **अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च** ।६।१।११६। एषु व्यपरेऽप्यति एङ् प्रकृत्या भवति । वसुभिर्नो अव्यात् । मित्रमहो अव-

सु.] निष्ठायाश्च नत्वाऽभावो निपातनात् । 'हलि चे'ति दीर्घः । **खिदेश्छन्दसि** । 'आदेच उपदेशे' इत्यत आदिति, एच इति च वर्तते, 'विभाषा लीयते'रित्यतो विभाषेति च । तदाह-**आद्वा स्यादिति** । **चखादेति** । व्यत्ययेन परस्मैपदम् । **शीर्ष्ण इति** । 'अल्लोपोऽनः' इत्यल्लोपः । 'रषाभ्या'मिति णत्वम् । 'पूर्वस्मादपि स्थानिवद्भावः' इति पक्षे तु 'अट्कुप्वा'ङित्यनेन । **वा छन्दसि** । 'नादिचि' 'दीर्घाज्जसि चे'ति वर्तते । तदाह-**दीर्घादित्यादि** । **वाराही इति** । वराहस्य विकार इति 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इति 'प्राणिरजतादिभ्योऽञ्' । ङीप् । द्विवचने पूर्वसवर्णदीर्घः । पूर्वसवर्णाऽभावे यणादेशः । **मानुषीरिति** । प्रथमाबहुवचनम् । 'मनोर्जातावञ्यतौ षुक् चे'ति अञ् । मनोः षुगागमः । **सूत्रद्वये इति** । 'अमि पूर्वः', 'संप्रसारणाच्चे'त्यत्र । **वाक्यभेदेनेति** । अकोऽमि पूर्वरूपं वा स्याच्छन्दसि, तथा 'संप्रसारणाच्चे'ति पूर्वरूपं वा स्याच्छन्दसि । तदाह-**तेनेति** । **शम्यं चेति** । विकल्पविधानसामर्थ्यात्पूर्वरूपत्वाऽभावे पूर्वसवर्णदीर्घोऽपि न भवति, तयोरत्र विशेषाऽभावादिति यणादेश एव भवति । **यज्यमान इति** । यजेर्लटः शानच् । 'सार्वधातुके' इति यक् । 'आने मुक्' इति मुक् । 'ग्रहिज्ये'ति संप्रसारणं । पूर्वरूपस्य विकल्पितत्वात्तदभावे यण् । **या ते इति** । यानीत्यर्थः । यच्छब्दात्परस्य शेर्लोपे कृते प्रत्ययलक्षणेन 'त्यदादीनामः' इति अत्वे 'नपुंसकस्य झलचः' इति नुम् । 'सर्वनामस्थाने चे'ति दीर्घः । नलोपः । **ता ता इति** । तानि तानीत्यर्थः पूर्ववत् । **भय्यप्रवय्ये** । बिभेतेः प्रपूर्वस्य, 'वी'त्येतस्य च यति प्रत्यये परतश्छन्दसि विषयेऽयादेशो निपात्यते । **भय्य इति** । 'कृत्यल्युटः' इति अपादाने यत् । **हृदय्या इति** । अकारस्याऽयादेशः । **प्रकृत्या** । पादस्य मध्ये इत्यन्तःपादमित्यव्ययीभावः । अन्तरित्यव्ययमधिकरणशक्तिप्रधानं मध्यमाचष्टे । पादश्चेह ऋक्पाद एव गृह्यते, न श्लोकस्य । 'वा छन्दसी'त्यतो मण्डूकप्लुत्या छन्दसीति वर्तते, तेनाऽस्य वैदिकत्वं संपद्यत इत्याशयेनाह-**ऋक्पादमध्यस्थ इति** । 'एङः पदान्ता'दिति सूत्रादेङ इति पञ्चम्यन्तमनुवृत्तं प्रथमया विपरिणम्यते, अन्यस्य कार्यिणोऽसंभवादित्यभिप्रेत्याह-**एङ् प्रकृत्येति** । सन्धिरूपं विकारं न यातीत्यर्थः । **उपप्रयन्तो अध्वरमिति** । 'एङः पदान्तादती'ति प्राप्तम् । **अन्तःपादं किमिति** । ऋचीत्येव किं नोक्तमित्यर्थः । **एतेऽर्चन्तीति** । 'कया मती कुत एतास एतेऽर्चन्ति शुष्मं वृषणो वसूया' इति । अत्र 'एते' इति पादस्यान्ते एङस्ति, अकारश्च परस्य पादस्यादाविति तन्निमित्तिनिमित्तयोः पादमध्यस्थत्वमिति सत्यपि ऋक्त्वे प्रकृतिभावाऽभावः । **अव्यात्** । एषामनुकरणत्वात्सुबन्तेन समासः । अव रक्षणे । आशीर्लिङ् । **अवद्यादिति** । पञ्चम्येकवचनान्तम् । **अवक्रमुरिति** । अपूर्वस्य क्रमेर्लिट्युसि । द्विर्वचनप्रकरणे 'छन्दसि वा वचन'मिति द्विर्वचनाऽभावे रूपम् । केचित्तु अवचक्रमुरिति सूत्रे कृतद्विर्वचनं ये पठन्ति तेषामुदाहरणं मृग्यम् । बह्वृचास्तावदवक्रमुरित्यधीयते । **अवतेति** । वृत्रघ्नो-

शे.] व्यत्ययेन परस्मैपदम् ,आलस्याऽनैमित्तिकत्वेन 'द्विर्वचनेऽचि' इत्यस्याऽभावादभ्यासेवर्णान्तर्तो । **चिखादेति** क्वचित्कोऽपपाठः । **इदं पदमञ्जर्यां स्पष्टम्** । **शीर्षन्** । छन्दसि सर्वविधीनां वैकल्पिकत्वाच्छिरःशब्दस्यापि वेदे प्रयोगः । **वाराहीति** । वराहस्य विकार इत्यञन्तान्ङीप् । द्विवचने पूर्वसवर्णदीर्घः । उपानहौ विशेष्ये । **मानुषीरिति** । जसि पूर्वसवर्णदीर्घः । **शम्यं चेति** । पूर्वत्वाऽभावे विकल्पविधानसामर्थ्यात्पूर्वसवर्णदीर्घो न, तयोरत्र विषये विशेषाऽभावात् । **या ते इति** । यानि ते इत्यर्थः । शेर्लोपे प्रत्ययलक्षणेन नुमि 'सर्वनामस्थाने चे'ति दीर्घे नलोपः । त्वा-एमनिति, त्वा-ओद्मनिति च विग्रहः । **हृदय्या इति** । अकारस्याऽयादेशः । **प्रकृत्याऽन्तः** । अतीति वर्त्तते । **प्रकृत्या** = स्वभावेन । न विकारमापद्यते इति यावत् । **अव्याद** । **अयमिति** । इदमः सौ । अवतेर्लोटि अवन्तु ।

यात् । मा शिवासो अवक्रमुः । ते नो अवत । शतधारो अयं मणिः । ते नो अवन्तु । कुशिकासो अवस्यवः । यद्यपि बह्वृचैस्तेनोऽवन्तु रथतूः, सोऽयमागात्, तेऽरुणेभिरित्यादौ प्रकृतिभावो न क्रियते तथापि बाहुलकात्समाधेयम् । प्रातिशाख्ये तु वाचनिक एवायमर्थः । **यजुष्युरः** ।६।१।११७। उरःशब्द एङन्तोऽति प्रकृत्या यजुषि । उरो अन्तरिक्षम् । यजुषि पादाऽभावादनन्तःपादार्थं वचनम् । **आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालेऽम्बिकेपूर्वे** ।६।१।११८। यजुषि अति प्रकृत्या । आपो अस्मान्मातरः । जुषाणो अग्निराज्यस्य । वृष्णो अंशुभ्याम् । वर्षिष्ठे अधि नाके । अम्बे अम्बाले अम्बिके । अस्मादेव वचनात् 'अम्बार्थे'ति ह्रस्वो न । **अङ्ग इत्यादौ च** ।६।१।११९। अङ्गशब्दे य एङ् तदादौ च अकारे य एङ्पूर्वः सोऽति प्रकृत्या यजुषि । प्राणो अङ्गे अङ्गे अदीध्यत् ।[अङ्गे अङ्गे अशोचिषम्]। **अनुदात्ते च कुधपरे** ।६।१।१२०। कवर्गधकारपरे अनुदात्तेऽति परे एङ् प्रकृत्या यजुषि । अयं सो अग्निः । अयं सो अध्वरः । अनुदात्ते किम् ? । अथोऽग्रे रुद्रे । अग्रशब्द आद्युदात्तः । कुधपरे किम् ? । सोऽयमग्निमन्तः । **अवपथासि च** ।६।१।१२१। अनुदात्ते अकारादौ अवपथाःशब्दे परतो यजुषि एङ् प्रकृत्या । त्रीरुद्रेभ्यो अवपथाः । वपेस्थासि लुङि 'तिङ्ङतिङ' इत्यनुदात्तत्वम् । अनुदात्ते किम् ? । यद्रुद्रेभ्योऽवपथाः । 'निपातैर्यद्यदी'ति निघातो न । **आङोऽनुनासिकश्छन्दसि** ।६।१।१२६। आङोऽचि परेऽनुनासिकः स्यात्, स च प्रकृत्या । अभ्र आँ अपः । गभीर आँ उग्रपुत्रे । ※ **ईषाअक्षादीनां छन्दसि प्रकृतिभावो वक्तव्यः** । ईषाअक्षो हिरण्ययः । ज्या इयम् । पुषा अविष्टु । **स्यश्छन्दसि बहुलम्** ।६।१।१३३। स्य इत्यस्य सोर्लोपः स्याद्धलि । एष स्य भानुः । **ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे** ।६।१।१५१। ह्रस्वात्परस्य चन्द्रशब्दस्योत्तर-

---

सु.]'मन्त्रे घसे'ति च्लेर्लुक् । 'आत्मनेपदेषु' इति झस्याऽदादेशः । **अयमिति** । इदमः सौ । 'इदोऽय् पुंसि' । अवतेर्लोट्– **अवन्तु** । **अवस्युरिति** । अवेरसुन् औणादिकः । ततः क्यच् । 'क्याच्छन्दसी'त्युः । **यजुष्युरः** । **उरो अन्तरिक्षमिति** । नन्वत्र 'प्रकृत्याऽन्तः पाद'मित्यनेनैव सिद्धे व्यर्थोऽयं योग इत्याशङ्क्याह–**यजुषि पादाऽभावादित्यादि** । **आपो जुषाणो** । 'आपो' इत्यादीनि पृथक्पदान्यनुकरणानि । विभक्तिस्तु अनुकार्याऽनुकरणयोर्भेदस्याऽविवक्षितत्वान्न भवति । 'सुपां सुलु'गिति विभक्तेर्लुग्वा । 'अम्बिकेपूर्वे' इत्येतदप्यनुकरणमेव । तत्र प्रथमं जसन्तमनुकरणम् । द्वितीयं स्वन्तम् । तृतीयं शसन्तम् । चतुर्थं ङ्यन्तम् । इतरे संबुद्ध्यन्ते । आपो जुषाणो वृष्णो वर्षिष्ठे इत्येते शब्दाः, अम्बिकेशब्दात्पूर्वौ यौ अम्बेअम्बालेशब्दौ तौ च, ते अति परतः प्रकृत्या स्युः । **अङ्ग इत्यादौ च** । **अङ्गशब्दे य एङिति** । 'प्रकृत्या भवती'ति वक्ष्यमाणेन संबन्धः । **तदादौ अकारे य एङ्पूर्व इति** । अत्रापि पूर्ववत्संबन्धः । अतिक्रान्तप्रत्यवमर्शिना तच्छब्देन इतिशब्दार्थमाचष्टे । तस्याऽङ्गशब्दस्य आदिस्तदादिः, तद्रूपो योऽकारस्तस्मिन्परे पूर्वो य एङ् स इत्यर्थः । नन्वत्र चकारः किमर्थ इति चेच्छृणु–असति चकारेऽङ्गशब्दस्यैवैङ् तदादावति परतः प्रकृत्या भवतीत्यर्थः स्यात् । ततश्चाऽङ्गे अङ्गे इत्यत्रैव स्यात्, अङ्गे अदीध्यदित्यत्र न स्यात् । सति तु तस्मिन्नङ्गशब्दस्य य एङ् यत्र कुत्र चिदति प्रकृत्या भवति, तदादौ चाऽति परतो यः कश्चिदेङ् स प्रकृत्या भवतीत्ययमर्थो भवति । तेन अङ्गे अङ्गे अदीध्यत्, प्राणो अङ्गे इत्युभयत्रापि भवति । **अनुदात्ते च कुधपरे** । कुधौ परौ यस्मात्स तथोक्तः । **कवर्गधकारेति** । धकारे अकार उच्चारणार्थः । **अग्निरिति** । अग्निशब्दो 'अङ्गेर्निर्नलोपश्चे'ति निप्रत्ययान्तोऽन्तोदात्तः । अध्वरशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । **आद्युदात्त इति** । 'ऋज्रेन्द्रे'त्यादिना सूत्रेण निपातितः । **आङो** । आङिति ङिद्विशिष्ट आकारो गृह्यते,–'**ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङि**'दित्यनेन लक्षितः । यद्यपि 'अभ्र आँ अप' इत्यत्र आकारो न ईषदर्थादिचतुष्टयवृत्तिः, सप्तम्यर्थद्योतकत्वात्, तथापि 'वाक्यस्मरणयोरङि'दित्यत्रैव तात्पर्यम् । अन्यत्र सैर्वत्राऽऽङ् ङिद्विदितव्यः । एवं तावद्भाष्ये स्थितम् । **अभ्र आँ अप इति** । सप्तम्यर्थद्योतकोऽत्राऽऽङ् । 'उपदेशेऽजनुनासिकः' इतीत्संज्ञा तु न, उपदेशग्रहणात् । **स्यश्छन्दसि** । 'स्य' इति 'त्य'दित्येतस्य प्रथमान्तस्यानुकरणम् । 'सुपां सुलु'गिति लुप्तषष्ठीकम् । **एषस्येति** । एतदस्त्यदश्च त्यदाद्यत्वं

---

शे.]आपो जु । 'आपो' इत्यादीनि लुप्तविभक्तिकानि पृथक्पदानि अनुकरणानि । आपो जुषाणो वृष्णो वर्षिष्ठे इत्येते शब्दाः, अम्बिकेशब्दात्पूर्वौ अम्बेऽम्बाले इत्येतौ च यजुषि स्थितावति प्रकृत्येत्यर्थः । अम्बिकेपूर्वे इति चाऽस्मादेव निपातनात्पञ्चमीसमासः । 'आपो' इति जसन्तं, 'जुषाणो'इति स्वन्तं, 'वृष्णो'इति शसन्तं, 'वर्षिष्ठे' इति ङ्यन्तम्, इतरे संबुद्ध्यन्ते, **अम्बेऽम्बालेऽम्बिके** इति यजुष्ये[वमे]व पठ्यते । **अस्मादेवेति** । 'अम्बे' इत्येतद्विषयमिदम् । **अङ्गशब्द इति** । विद्यमान इति शेषः । **तदादौ चेति** । षष्ठीतत्पुरुषः । सूत्रे 'इति'शब्दस्तच्छब्दसमानार्थः । **कुधपर इति** बहुव्रीहिः, धकारेऽकार उच्चारणार्थः । **आद्युदात्त इति** । 'ऋज्रेन्द्राग्रे'त्यत्र निपातनादिति भावः । **आङोऽनु** । विभक्त्यर्थवृत्तेराङोऽत्र ग्रहणमिति हरदत्तः । **प्रकृतिभाव इति** । तन्मात्रमित्यर्थः । न तु ह्रस्वोऽपि । **एष स्य इति** । एष स भानुरित्यर्थः ।

पदस्य सुडागमः स्यान्मन्त्रे । हरिश्चन्द्रो मरुद्गणः। सुश्चन्द्र दस्म।पितरामातरा च छन्दसि ।६।३।३३।द्वन्द्वे निपातः।आ मा गन्तां पितरा मातरा च।चाद्विपरीतमपि।न मातरापितरा नू चिदिष्टौ।'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' । समानस्य सः स्यान्मूर्द्धादिभिन्ने उत्तरपदे।सगर्भ्यः।*छन्दसि स्त्रियां बहुलम् । विष्वग्देवयोरद्र्यादेशो बहुलमित्यर्थः । विश्वाची च घृताची च । देवद्रीचीं नयत देवयन्तः। देवाँची। कद्रीची । सध मादस्थयोश्छन्दसि ।६।३।९६। सहस्य सधादेशः स्यात् । इन्द्र त्वास्मिन्सधमादे । सोमः सधस्थम् । पथि च छन्दसि ।६।३।१०८। पथिशब्दे उत्तरपदे कोः कवं का च । कवपथः । कापथः । कुपथः । साढ्यै साढ्वा साढेति निगमे ।६।३।११३। सहेः क्त्वाप्रत्यये आद्यं द्वयं, तृनि तृतीयं निपात्यते। मरुद्भिरुग्रः पृतनासु साळ्हा । 'अचोर्मध्यस्थस्य डस्य ळः, ढस्य ळ्हश्च प्रातिशाख्ये विहितः । आहह्वि-'द्वयोश्चास्य स्वरयोर्मध्यमेत्य संपद्यते स डकारो ळकारः, ळ्हकारतामेति स एव चास्य ढकारः सन्नूष्मणा संप्रयुक्त' इति । छन्दसि च ।६।३।१२६। अष्टन आत्वं स्यादुत्तरपदे । अष्टापदी । मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ।६।३।१३१। दीर्घः स्यान्मन्त्रे । अश्वावतीं सोमावतीम् । इन्द्रियावान्मदिन्तमः । विश्वकर्मणा विश्वदेव्यावता । ओषधेश्च विभक्तावप्रथमायाम् ।६।३।१३२। दीर्घः स्यान्मन्त्रे । यदोषधीभ्यः। अदधात्योपधीषु । ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ।

सु.]'तदोः सः सौ' इति सः। एतदस्त्यदश्च परस्य सोः 'एतत्तदोः सुलोपः' इति, 'स्यश्छन्दसी'ति च लोपः। ह्रस्वात् । चन्द्रशब्दे उत्तरपदे ह्रस्वात्परः सुडागमो भवति । स च भवन् चन्द्रशब्दस्यैव, उभयनिर्देशे पञ्चमीनिर्देशो बलीया'नित्याशयेनाह-चन्द्रशब्दस्योत्तरपदस्य[इति। ] सुडागमः स्यादिति । 'सुट् कात्पूर्वः' इत्यतः सुडित्यनुवर्तनात् । पितरा । पूर्वपदस्याऽरङादेशो निपात्यते । उत्तरपदे तु 'सुपां सुलु'गित्यादिना विभक्तेराकारादेशः । 'ऋतो ङिसर्वनामस्थानयो'रिति गुणः । समानस्य । सः स्यादिति । 'सहस्य सः' इत्यतः स इत्यनुवर्तते । सगर्भ्य इति । समानो गर्भः-सगर्भः । तत्र भवः सगर्भ्यः । 'सगर्भसयूथसनुताद्य'निति यन्प्रत्ययः । अमूर्धेत्यादि किम् ? । समानमूर्द्धा । समानप्रभृतयः। समानोदर्काः। छन्दसि स्त्रियां । 'विष्वग्देवयो'रिति सर्वनाम्नोऽप्युपलक्षणम् । बहुलग्रहणात्क्वचिन्न भवति । विश्वाची । देवद्रीचीति । विश्वमञ्चतीति देवानञ्चतीति क्विन् । 'उगितश्चे'ति ङीप् । 'अचः' इत्यकारलोपः । 'चौ' इति दीर्घत्वम् । अत्र विष्वग्देवयोरद्र्यादेशः प्राप्तो बाहुलकान्न । क्वचिच्च भवतीत्याह-कद्रीचीति। कुत्सितमञ्चतीति कद्रीची । किंशब्दस्य टेरद्र्यादेशः । ङील्लोपदीर्घौ पूर्ववत् । सध माद । 'सहस्य सध्रि'रित्यतः सहस्येति वर्तते । माद स्थ इत्येतयोरुत्तरपदयोः सहस्य सध इत्ययमादेशः स्यात् । 'सधे'त्यविभक्तिको निर्देशः । सधमादे इति । सह माद्यन्ति देवा अस्मिन्निति सधमादो यज्ञ इति । 'मदोऽनुपसर्गे' इत्यपि प्राप्ते 'अजब्भ्यां स्त्रीखलनाः' इति तद्बाधके ल्युटि 'हलश्चे'ति घञ् । सूत्रे मादेत्यकार उच्चारणार्थः । तेन मादयतेः क्विबन्तस्य मादिति यद्रूपं तत्रापि भवति । 'आ त्वा बृहन्तो हरयो युज्यमाना अर्वागिन्द्रः सधमादो वहन्तु' । सधस्थमिति । सह तिष्ठतीति सधस्थः। 'आतोऽनुपसर्गे' इति कः। साढ्यै । एते त्रयो निपात्यन्ते निगमे। सहेः क्त्वाप्रत्यय इति। पक्षे क्त्वाप्रत्ययस्य 'ध्यै'-आदेशश्च निपात्यते। साढ्यै। सहेः क्त्वाप्रत्ययस्य ध्यै।'हो ढः' ढत्वं 'ढोढे लोपः'। 'ढ्रलोपे' इति दीर्घः। साढ्वा इति। ढत्वादि पूर्ववत् । तृनि तृतीयमिति । तृचि त्वन्तोदात्तं स्यात् । तथा 'भूरि चक्रे'ति मन्त्रे साँढ्वेत्याद्युदात्तं पठ्यते तन्न सङ्गच्छेतेति भावः । सूत्रे इतिशब्दः प्रकारार्थः । तेन निष्ठायामपि निपातनं बोध्यम् ।· आषाळ्हो अमे वृषभः । द्वयोरिति । अस्य=आचार्यस्य द्वयोः स्वरयोर्मध्यमेत्य डकारो ळकारतां संपद्यते, ऊष्मणा संप्रयुक्तो ढकारो ळ्हकारतामेतीत्यन्वयः। अष्टापदीति । अष्टौ पादा अस्या इति बहुव्रीहौ 'संख्यासुपूर्वस्ये'ति पादस्य लोपे कृते 'पादोऽन्यतरस्या'मिति ङीप् । मन्त्रे । सोम, अश्व, इन्द्रिय, विश्वदेव्य, एषां मतुप्प्रत्यये परे दीर्घः स्यान्मन्त्रे । ओषधेश्च । न च 'कृदिकारादक्तिनः' इति ङीषा गतार्थता, अन्तोदात्ततापत्तेः । इष्यते त्वाद्युदात्तः, 'लघावन्ते' इति फिट्सूत्रात् । ऋचि तुनु । 'घ' इति स्वरूपग्रहणं, न तरप्तमपोः, छन्दसि घशब्दस्यैव दीर्घदर्शनात् । उत वेति । भार्याया त्राता श्यालः।

शे.]'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इत्याह-चन्द्रशब्दस्येति।विष्वग्देवयोरिति।इदं सर्वनाम्नोऽप्युपलक्षणं, तदाह-विश्वाचीति । विश्वमञ्चतीति विग्रहः । बहुलग्रहणादन्यत्रापि क्वचित् । तेन कद्रीची सिद्धा । सधस्थमिति । सह तिष्ठतीत्यर्थः।पथि च छन्दसि।'विभाषा पुरुषे' इत्यतो विभाषेति वर्त्तते, चात् 'का'। साढ्यै।द्वयोश्चेति।अस्य-आचार्यस्य । एत्य । 'स्थित' इति शेषः। स डकारः-जिह्वामूलतालुस्थानीयो डः। जिह्वामूलन्तालु चाचार्य आह स्थानं डकारस्य तु वेदे मित्र इत्युपक्रमात् । स एव=स्वरद्वयमध्यगः। ऊष्मणा सम्प्रयुक्तः। उष्मयोगे जात इत्यर्थः । यद्वा स ळकारो हकारेणोष्मणा संप्रयुक्तो ळ्हकारतामापद्यतेऽतोऽस्याचार्यस्य मतेन ढकारो ळ्हकारतां यातीत्यर्थः। छन्दसि च । अष्टन इति, दीर्घ इति चानुवर्त्तते । फलितमाह-आत्वं स्यादिति । नलोपे कृते टकाराऽकारस्य दीर्घः । ऋचि तु ।

ष्याणाम् ।६।३।१३३। दीर्घः स्यात् । आ तू न इन्द्र । नू मर्तः । उत वा घा स्यालात् । मक्षू गोमन्तमीमहे। भरता जातवेदसम् । 'त'ङिति-थादेशस्य ङित्त्वपक्षे ग्रहणम् । तेनेह न–श्रृणोत ग्रावाणः । कूमनाः । अत्रा ते भद्राः । यत्रा नश्चक्रा । उरुष्याणः । **इकः सुञि** ।६।३।१३४। ऋचि दीर्घ इत्येव । अभीषु णः सखीनाम् । 'सुञः' इति षः । 'नश्च धातुस्थोरुषुभ्यः' इति णः । **द्व्यचोऽतस्तिङः** ।६।३।१३५। मन्त्रे दीर्घः । विद्मा हि चक्रा जरसम् । **निपातस्य च** ।६।३।१३६। एवा हि ते । [ **अन्येषामपि दृश्यते** ।६।३।१३७। अन्येषामपि पूर्वपदस्थानां दीर्घः स्यात् । पूरुषः। दण्डादण्डि।] **छन्दस्युभयथा** ।६।४।५। नामि दीर्घो वा ।'धाता धातॄणा-मिति बह्वृचाः । तैत्तिरीयास्तु ह्रस्वमेव पठन्ति । **वा षपूर्वस्य निगमे** ।६।४।९। षपूर्वस्याऽच उपधाया वा दीर्घोऽसंबुद्धौ सर्वनामस्थाने [परे]। ऋभुक्षाणम् । ऋभुक्षणम् । निगमे किम् ?। [तक्षा]। तक्षाणौ । **जनिता मन्त्रे** ।६।४।५३। इडादौ तृचि णिलोपो निपात्यते । यो नः पिता जनिता । **शमिता यज्ञे** ।६।४।५४। शमयि-तेत्यर्थः । **युप्लुवोर्दीर्घश्छन्दसि** ।६।४।५८। ल्यपीत्यनुवर्तते । वियूय । विप्लूय । **'आङजादीनाम्'** । **छन्द-स्यपि दृश्यते** ।६।४।७३। अनजादीनामित्यर्थः । आनट् । आवः । **'न माङ्योगे'** । **बहुलं छन्दस्यमा-ङ्योगेऽपि** ।६।४।७५। [अडाटौ न स्तो, माङ्योगेऽपि स्तः]। जनिष्ठा उग्रः सहसे तुराय। मा वः क्षेत्रे परबीजा-न्यवाप्सुः । **इरयो रे** ।६।४।७६। प्रथमं दध्र आपः। रेभावस्याऽऽभीयत्वेनाऽसिद्धत्वादालोपः । अत्र रेशब्दस्येटि कृते पुनरपि रे भावः। तदर्थं[च]सूत्रे द्विवचनान्तं निर्दिष्टम्–'इरयो'रिति। **छन्दस्युभयथा** ।६।४।८६। भूसुधियो-

---

सु.]ततः पञ्चमी । **भरतेति** । लोण्मध्यमपुरुषबहुवचनस्य थस्य 'लोटो लङ्व'दित्यतिदेशात्तस्य स्थाने तादेशः 'तस्थस्थ-मिपा'मित्यनेन । **श्रृणोतेति** । 'तप्तनप्तनथनाश्चे'ति तबादेशः । अत्र पित्त्वान्ङित्त्वं नास्ति। **उरुष्याण इति** । उरुष्ये-ति कण्ड्वादिगन्तो रक्षणार्थः । लोटः सेर्हिः । 'अतो हे'रिति लुक् । 'न' इत्यस्य 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम् । **इकः** । इगन्तस्य सुञि परतो दीर्घः स्यादृचि । **द्व्यचो** । द्व्यचस्तिङन्तस्याऽतो दीर्घः स्यादृचि । **विद्मेति** । विद ज्ञाने लट् । 'विदो लटो वा' इति मसः स्थाने मः । **चक्रेति** । लिटो मध्यमपुरुषबहुवचनम् । **निपातस्य च** । दीर्घः स्या-न्मन्त्रे । एवशब्दश्चादिषु पाठान्निपातः। **छन्दस्यु**। नामीति वर्तते।'ढ्रलोपे' इत्यतो दीर्घ इति च । तदाह–**नामीत्यादि**। **ऋभुक्षाणमिति** । ऋभुक्षिन्शब्द उणादिषु निपातितः । 'इतोऽत्सर्वनामस्थाने' इतीकारस्याऽकारादेशः । **जनितेति**। जनयितेत्यर्थः । **शमिता** । निपातनं पूर्ववत् । **आनडिति** । नशेर्लुङि 'मन्त्रे घसे'ति लेर्लुक् । 'नशेर्वे'त्यस्याऽभावे 'व्रश्चे'ति षः । जश्त्वेन डः । तस्य चर्त्वेन टः । **आवरिति** । वृञो लुङि लेर्लुक् । गुणः । रेफस्य विसर्गः । **बहुलं छन्दसि** । माङ्योगेऽप्यमाङ्योगेऽपि बहुलमडाटौ भवतः । अमाङ्योगेऽपि न भवतः । माङ्योगेऽपि च भवतः । **जनिष्ठा इति** । जनेर्लुङ्। थास् । अडागमाऽभावः। माङ्योगेऽप्यडागममुदाहरति–**मा व इति** । वो=युष्माकं, क्षेत्रे= भार्यायां, परबीजानि=परेषां वीर्याणि, मा अवाप्सुः = उप्तानि मा भूवन् । वपेः कर्मणि लुङ् । व्यत्ययेन परस्मैपदम् । 'च्लेः सिच्' । 'वदव्रजे'ति वृद्धिः । इदं काशिकानुरोधेनोदाहृतम् । अध्ययनं तु वाप्सुरित्येव दृश्यते । माङ्यटस्तूदा-हरणान्तरमन्वेषणीयम् । **इरयो रे** । इरे इत्येतस्य रे आदेशः स्याच्छन्दसि । **दध्रे इति** । धाञो लिटि झस्य 'लिटस्त-झयो'रितीरेचि कृते रेभावः । ननु चाऽत्र परत्वाद्रेभावे कृतेऽनजादित्वादालोपो न प्राप्त इत्यत आह–**रेभावस्येति** । नन्वेवमपि रेभावस्यैव क्रादिनियमादिडागमः प्राप्नोति। न च रेभावस्य वैयर्थ्यं, कृसृभृप्रभृतिषु अनिट्त्सु चरितार्थत्वादत आह–**तत्रेति**।कथं पुनर्लाक्षणिकस्य रेशब्दस्य रेभावो भवेति?।तत्राह–**तदर्थं चेति**।द्विवचननिर्देशाल्लक्षणप्रतिपदोक्तपरि-

---

शे.][ऋग्वेदे इत्यर्थः]। अष्टानां दीर्घः।**थादेशस्येति**। 'तस्थस्थमिपा'मित्यनेन। **इकः सुञि**। **ऋचीति**। 'अन्येषामपी'-ति सूत्रे'मन्त्रे' इति निवृत्तमिति हरदत्तोक्तेर्मन्त्र इत्यस्यानुवृत्तिरेव युक्ता । **द्व्यचोऽतः** । द्व्यचस्तिङन्तस्याऽतो दीर्घः । [**मन्त्रे इति** । ऋग्रूपे इत्यर्थः]। द्व्यच इति किम् ?। अश्वा भवत वाजिनः। **धातॄणामिति** । वृत्तिकृतस्तिसृचतसोर-त्राऽनुवृत्तिस्त्वयुक्तेति भावः। **षपूर्वस्याच इति**। दीर्घश्रुत्योपस्थितस्याऽच इत्यस्य षपूर्वस्येति विशेषणम् , उपधाया इति च । अत एव पुंल्लिङ्गाऽविरोधः। **जनितेति** । जनयितेत्यर्थः। तृचि रूपम् । **शमिता यज्ञे**। यज्ञविषये प्रयोगे [मन्त्रे] इडादौ णिलोपो निपात्यते । सूत्रे प्रथमैकवचनमविवक्षितम्।'शमितारो यदत्र सुकृते' 'शमितृभ्यश्चैवैनं शामित्र'मित्यादि-दर्शनात् । **वियूयेति** । यु मिश्रणे । वियुत्य। **विप्लूये**।विप्लुत्येत्यर्थः। **आनडिति**। नशे रूपम् । **आवरिति** । वृञो लुङि 'मन्त्रे घसे'ति च्लेर्लुकि रूपम् । **अमाङ्योगेऽपीति** । अपिशब्दान्माङ्योगेऽपि । ननु परत्वाद्रेभावे कृतेऽनजादि-त्वादाते लोपो न प्राप्नोतीत्यत आह–**रेभावस्येति**।नन्वेवं रेभावे कृते तस्यैवेट् प्राप्नोति।न च रेभावो व्यर्थः, क्रादिष्वनिट्सु चरितार्थत्वादत आह–**अत्रेति**। ननु लाक्षणिकत्वात् ['लक्ष्ये लक्षणस्ये' इति न्यायाच्च] कथं रेभावः पुनरत आह–**तदर्थ-**

यँण् स्यादियङुवङौ च । वनेषु चित्रं विभ्वम् । विभुवं वा । सुध्यो नव्यमग्ने । सुधियो वा । * तन्वादीनां छन्दसि बहुलम् । तन्वं पुषेम । तनुवं वा । त्र्यम्बकम् । त्रियम्बकम् । तनिपत्योश्छन्दसि ।६।४।९९। एतयोरुपधालोपः स्यात् क्ङिति प्रत्यये परे। वितत्निरे कवयः । शकुना इव पप्तिम। [भाषायां–वितेनिरे । पेतिमँ]। घसिभसोर्हलि च ।६।४।१००। सग्धिश्च मे । बब्धां ते हरी धानाः। 'हुझल्भ्यो हेर्धिः'। श्रुशृणुपॄकृवृभ्यश्छन्दसि।६।४।१०२। श्रुधी हवम् । शृणुधी गिरः । रायस्पूर्धि।उरुणस्कृधि । अपावृधि।वा छन्दसि।३।४।८८। हिरपिद्वा । अङितश्च ।६।४।१०३। हेर्धिः स्यात् । रारन्धि । रमेर्व्यत्ययेन परस्मैपदम् । शपः श्लुरभ्यासदीर्घश्च । असमे प्रयन्धि । युयोधि जातवेदः । यमेः शपो लुक् । यौतेः शपः श्लुः । मन्त्रेष्वाङ्यादेरात्मनः ।६।४।१४१। आत्मन्शब्दस्याऽऽदेर्लोपः स्यादाङि । त्मना देवेषु।विभाषर्जोश्छन्दसि ।६।४।१६२। ऋजुशब्दस्य ऋतः स्थाने रः स्याद्वा इष्ठेमेयस्सु । त्वं रजिष्ठमनुनेषि । ऋजिष्ठं वा । ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि ।६।४।१७५। ऋतौ भवमृत्व्यम् । वास्तुनि भवं वास्त्व्यम्, वास्त्वं च । मधुशब्दस्याऽणि स्त्रियां यणादेशो निपात्यते । माध्वीर्नः सन्त्वोषधीः । हिरण्यशब्दाद्विहितस्य मयटो मशब्दस्य लोपो निपात्यते। हिरण्ययेन सविता रथेन । इति षष्ठोऽध्यायः ।

## अथ सप्तमोऽध्यायः ।

'शीङो रुट्' । बहुलं छन्दसि ।७।१।८। रुडागमः स्यात् । 'लोपस्त आत्मनेपदेषु' इति पक्षे

---

सु.]भाषा न प्रवर्तत इति भावः।तन्वादीनाम्।तन्वादीनां बहुलमियङुवङादेशः स्याच्छन्दसि।तनुवमिति।अचातुत्वात्प्राप्त उवङ् विधीयते । तन्वमिति । 'वा छन्दसी'त्यमि पूर्वत्वाऽभावे यण्। त्र्यम्बकमिति। त्रीणि अम्बकानि=नेत्राणि यस्याऽसौ त्र्यम्बको रुद्रः। वितत्निरे इति। तनु विस्तारे। लिटः प्रथमपुरुषबहुवचनम् । अत्राऽल्लोपस्याऽसिद्धत्वेऽपि 'अत एकहल्मध्ये' इति एत्वाऽभ्यासलोपौ न, लोपविधानसामर्थ्यात् । पप्तिमेति । पत्लृ पतने । लिटो मसो मस्य इट् । वितेनिरे पेतिमेति भाषायाम् । घसिभसोः । अनयोरुपधालोपः स्याद्धलादावजादौ च क्ङिति । सग्धिरिति । अदेः क्तिन् । 'बहुलं छन्दसी'ति घस्लादेशे, उपधालोपे च कृते झलो झलीति सलोपः । तकारस्य धत्वम् । घस्य जश्त्वम् । ततः समाना ग्धिरिति समासे कृते 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' इति सूत्रेण समानस्य सः । बब्धामिति । भसेर्लोटि ताम् । श्लुः । परं नित्यमप्युपधालोपं बाधित्वा बाहुलकात्प्रथमं 'श्लौ' इति द्वित्वम् । तत उपधालोपसलोपधत्वजश्त्वानि कर्तव्यानि।श्रुशृणु।एभ्यो हेर्धिः स्यात्।श्रुधीति।'बहुलं छन्दसी'ति शपो लुक्।'अन्येषामपी'ति दीर्घत्वम् । शृणुधीति। 'श्रुवः शृ चे'ति श्रुः, श्रुवः शृभावश्च । विधानसामर्थ्यात् 'उतश्च प्रत्यया'दिति न हेर्लुक् । दीर्घः पूर्ववत्। पॄ पालने । शपो लुक् । 'उदोष्ठ्यपूर्वस्ये'त्युत्वम् । 'हलि चे'ति दीर्घत्वम् । उरुणस्कृधीति । 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम् । 'कः कर'दित्यादिना विसर्जनीयस्य सत्वम् । अपावृधीति । दीर्घः पूर्ववत् । अभ्यासस्य दीर्घश्चेति । तुजादित्वादिति भावः । रारन्धीति । अत्र 'अनुदात्तोपदेशे'त्यादिना मलोपो न,हेरङित्त्वात् । यमेः शपो लुगिति । 'बहुलं छन्दसी'त्यनेन । एवमुत्तरत्रापि । विभाषर्जोः । 'र ऋतो हलादेर्लघोः' इत्यतो र ऋत इति, 'तुरिष्ठेमेयःसु' इति च। तदाह–ऋतः स्थाने इत्यादि।ऋत्व्यवास्त्व्य।ऋतुशब्दाद्यति, वास्तुशब्दादणि यति च यणादेशो निपात्यते । मशब्दस्येति । तस्याऽसिद्धत्वात् 'यस्ये'ति लोपो न । 'अकृत्सार्वे'ति दीर्घस्त्वकृत्तपरिभाषया वारणीयः । यद्वा मकारमात्रस्य लोपः । ततो 'यस्ये'ति लोपे कृते प्रत्ययाऽकारस्य श्रवणम् । इति षष्ठोऽध्यायः ।

बहुलं छन्दसि। छन्दसि विषये बहुलं रुडागमः स्यात्।दुह्रे इति।दुहेर्लट्। एकवचनस्य टेरेत्वे झस्याऽदादेशे रुट्

---

शे.] श्लेति । द्विवचनसामर्थ्यात्परिभाषाया अप्रवृत्तिरिति भावः । क्ङितीति । अजादावित्यर्थः । वितत्निर इति । वितेनिर इत्यर्थः। लोपविधानसामर्थ्यात्तस्याऽसिद्धत्वेऽप्येत्वाभ्यासलोपौ न । पप्तिमेति । लिट्। मस्। इट् । पेतिमेत्यर्थः । श्रुशृणु । एभ्यो हेर्धिः स्याच्छन्दसि। श्रुधी हवमिति ।'अन्येषामपी'ति दीर्घः।'पॄ पालनादौ'। उरुणसिति । 'नश्च धातुस्थोरुषुभ्य' इति णत्वम्। 'शृणुधी'त्यत्र धिभावविधानसामर्थ्यात् 'उतश्चे'ति लुक् न । इतोऽन्यत्र व्यत्ययेन शप्, 'बहुलं छन्दसी'ति लुक् । अङित इति हेर्विशेषणम् । छन्दसि पक्षे पित्त्वादङित्त्वम्। [अत एवं 'रारन्धी'त्यत्र नलोपो न] । शपो लुगिति । 'बहुलं छन्दसी'ति । आङिति टासञ्ज्ञा । त्मना समञ्जन्नित्यादावन्यत्रापि लोपदर्शनादाङीति व्यर्थम्। 'आत' इत्यनुवृत्तेरादेरित्यपि व्यर्थम् । ऋत्व्यवास्त्व्य । ऋतुवास्तुशब्दयोर्भवार्थे यति यणादेशो निपात्यते, वास्तोरणि च । इति षष्ठोऽध्यायः।

अथ सप्तमोऽध्यायः। पक्षे इति । सर्वविधीनां छन्दसि वैकल्पिकत्वात् । दुह्रे इति । झस्याऽत् ।

तलोपः। धेनवो दुह्रे । लोपाऽभावे–घृतं दुह्रते । अदृश्रमस्य। **'अतो भिस ऐस्'। बहुलं छन्दसि** ।७।१।१०। अग्निर्देवेभिः । **नेतराच्छन्दसि** ।७।१।२६। स्वमोरद्ड् न । वार्त्रघ्नमितरम् । छन्दसि किम् ? । इतरत्काष्ठम् । **'समासेऽनञ्पूर्वे क्त्वो ल्यप्'। क्त्वाऽपि छन्दसि** ।७।१।३८। यजमानं परिधापयित्वा । **सुपां सुलुक्पूर्वसवर्णाऽऽ-ऽऽच्छेयाडाड्यायाजालः** ।७।१।३९। ऋजवः सन्तु पन्थाः । पन्थान इति प्राप्ते 'सुः' । परमे व्योमन् । व्योमनीति प्राप्ते ङे'र्लुक्' । धीती मती सुष्टुती । धीत्या मत्या सुष्टुत्येति प्राप्ते 'पूर्वसवर्णः'। या सुरथा रथीतमोभा देवा दिविस्पृशा अश्विना । यौ सुरथौ दिविस्पृशावित्यादि प्राप्ते 'आ' । नताद्ब्राह्मणम्। नतमिति प्राप्ते 'आत्' । या देव विद्म ता त्वा । यमिति प्राप्ते । न युष्मे वाजबन्धवः । अस्मे इन्द्राबृहस्पती । युष्मासु अस्मभ्यमिति प्राप्ते 'शे' । उरुया । धृष्णुया । उरुणा धृष्णुनेति प्राप्ते 'या' । नाभा पृथिव्याः । नाभाविति प्राप्ते 'डा' । ता अनुष्ठ्योच्यावयतात् । अनुष्ठानमनुष्ठा । व्यवस्थावदङ् । आङो 'ड्या' । साधुया । साध्विति प्राप्ते 'याच्' । वसन्ता यजेत । वसन्ते इति प्राप्ते 'आल्' । *** इयाडियाजीकाराणामुपसङ्ख्यानम्** । उर्विया । दार्विया । उरुणा दारुणेति प्राप्ते 'इया' । सुक्षेत्रिया । सुक्षेत्रिणेति प्राप्ते 'डियाच्' । दृतिं न शुष्कं सरसी शयानम् । ङेरीकार इत्याहुः । तत्राद्युदात्ते पदे प्राप्ते व्यत्ययेनान्तोदात्तता । वस्तुतस्तु ङीषन्तान्ङेर्लुक् । ईकारादेशस्य तूदाहरणान्तरं मृग्यम्। *** आङयाजयारामुपसङ्ख्यानम्** । प्र बाहवा सिसृतम् । बाहुनेति प्राप्ते 'आ'ङादेशः। 'घेर्ङिती'ति गुणः। स्वप्नया । स्वप्नेनेति प्राप्ते 'अयाच्' । स नः सिन्धुमिव नावया। नावेति प्राप्ते

---

सु.]तलोपः । **लोपाऽभावे इति**। 'लोपस्त आत्मनेपदेषु' इत्यस्य वैकल्पिकत्वादित्यर्थः।**अदृश्रमिति**। दृशिर् प्रेक्षणे । लुङ् । व्यत्ययेन प्रथमपुरुषबहुवचनस्थाने उत्तमपुरुषैकवचनं मिप् । तस्य रुडागमः। **नेतरा** । इतरशब्दात्परयोः स्वमोरद्डादेशो न स्याच्छन्दसि । **इतरमिति** । 'अद्डतरादिभ्यः' इत्यद्डभावे 'अतोऽ'मित्यम्।**क्त्वो ल्यबिति** । 'समासेऽनञ्पूर्वे क्त्वो ल्य'बिति प्राप्ते छन्दसि क्त्वाऽपि विधीयते । तदाह–**क्त्वापि** । अनञ्पूर्वे समासे क्त्वा इत्ययमादेशः स्यात् । अपिशब्दाल्ल्यबपि । स च समासेऽसमासे च भवति।अप्राप्तविषये ल्यपः प्रापणार्थत्वादपिशब्दस्य। अन्यथा 'वा छन्दसी'त्येव ब्रूयात् । तथा च छन्दोविधिमनुविदधानाः कल्पसूत्रकारा अपि प्रयुञ्जते–आज्येनाऽक्षिणी अज्येति । **परिधापयित्वेति** । णिजन्तात्परिपूर्वाद्धधातेः क्त्वा। तस्य ल्यबादेशे प्राप्ते क्त्वादेशः। **सुपाम्**। सुपां स्थाने सुलुक् ,पूर्वसवर्णः,आ,आत् शे-या-डा-ड्या-याच् आल् एते आदेशाः स्युश्छन्दसि। **पन्था इति** । 'व्यत्ययो बहुल'मित्येव सिद्धमिदम् । उक्तं हि तत्र 'सुप्तिङुपग्रहे'त्यादि । तस्यैवाऽयं प्रपञ्चः । **धीतीत्यादि** । धीतीमतीसुष्टुतीशब्देभ्यस्तृतीयैकवचनस्य पूर्वसवर्ण ईकारः । प्रमाणत आन्तर्यात्सवर्णदीर्घत्वम् । **दिविस्पृशाविति प्राप्ते आ इति** । अनेनाऽऽदित्यत्राऽऽकारोऽपि प्रश्लिष्यत इति दर्शितम् । **नतादिति** । नतशब्दादम् । तस्याऽदादेशः । 'न विभक्तौ तुस्माः' इतीत्संज्ञाप्रतिषेधः । **या देवेत्यादि** । यत्तच्छब्दादम् । **न युष्मे इति**। युष्मदः सप्तमीबहुवचनस्य 'शे' आदेशः। 'शेषे लोपः'। **अस्मे इन्द्रेति** ।'शे' इति प्रगृह्यत्वादयादेशाऽभावः । **नाभा इति** । डित्वाट्टिलोपः। **ता अनुष्ठ्येति** । 'षड्विंशतिरस्य वङ्क्रय' इति प्रक्रम्य इदमध्वर्युप्रैषे पठितं **ताः**=वङ्क्रीः, अनुष्ठ्य=अनुष्ठानेन अनुक्रमेण गणनया गणयित्वा, **उच्यावयताद्भवान्**=विशसनं करोतु । पृथक् पृथक्करोतु भवानित्यर्थः । **अनुष्ठानमनुष्ठेति**।अनुपूर्वात्तिष्ठतेरङ् ।तृतीयैकवचनस्य ड्यादेशे डित्वाट्टिलोपः। नन्वनुपूर्वात्तिष्ठतेः 'आतश्चोपसर्गे' इत्यङं बाधित्वा 'स्थागापापचो भावे' इति क्तिना भाव्यमिति चेत्सत्यम् । 'पूर्वपरावरदक्षिणोत्तरे'ति सूत्रे 'व्यवस्थाया'मिति निर्देशादङपि, सामान्यापेक्षज्ञापकाश्रयणात् । तदेतद्ध्वनयति–**व्यवस्थावदिति** । **साधु इति प्राप्त इति** । सोर्लुकि प्राप्त इत्यर्थः । **वसन्ते इति प्राप्ते आल् इति** । पूर्वसवर्णे तु 'अतो गुणे' इति स्यात् । **उर्वियेति** । उरुदारुशब्दात्तृतीयैकवचनस्येयादेशः। **सुक्षेत्रियेति** । सुक्षेत्रिन्शब्दात्तृतीयैकवचनस्य डियाजादेशः। डित्वाट्टिलोपः। **बाहुनेति प्राप्त इति** । काशिकायां तु प्रबाहुनेति प्राप्त इत्युक्तं, तत्समासभ्रमादित्यवधेयम् । प्रेति न समस्तं, पृथक्स्वरदर्शनात्, पदकारैर्विच्छिद्य पाठाच्च । अत आख्यातान्वयीति ध्येयम् । **स्वप्नयेति** । अयाचोऽकारः

---

शे.]तलोपे रुटि अतो गुणे। **अदृश्रमिति** । इरित्वादङ् । **देवेभिरिति** । अतो न भवति । क्वचिदनतोऽपि भवति–नद्यैरिति । **क्त्वाऽपि** । अपिना ल्यबपि । उद्धृत्य तान् जुहोतीति । **सुपां सु** । सुपां स्थाने एते आदेशा इत्यर्थः । **पन्था इति** । जसः स्थाने सुः। छान्दसत्वात्सर्वादेशः । उकारोच्चारणसामर्थ्येन भौतपूर्विकाऽनेकाल्त्वेन वा । 'व्यत्ययो बहुल'मित्यस्यायं प्रपञ्चः । **'सुपां सुपा'** इत्याद्यप्येवम्। **पूर्वसवर्ण इति**। आन्तर्यादीकारस्ततः सवर्णदीर्घः । **'परमे व्योमन्'**।अत्र पूर्वसवर्णे दकारे'न ङी'ति निषेधान्नलोपाऽभावे संयोगान्तलोपेन सिद्धावपि संयोगान्तलोपस्याऽसिद्धत्वाल्लुगेवेति बोध्यम् । 'यत्सुन्वन्ती'त्यादौ यत् इ इति स्थिते पूर्वसवर्णे दकारे स्मिन्नापत्तिरिति तदर्थमनेकालमाद्यर्थंच्च लुगावश्यक इति दिक् । **यमिति प्राप्ते इति** । अम आत्। 'न विभक्तौ' इति इत्त्वनिषेधः । **आङः** = तृतीयैकवचनस्य । **मृग्य-**

'अयार्' । रित्स्वरः । **अमो मश्** ।७।१।४०। मिबादेशस्याऽमो मश् स्यात् । अकार उच्चारणार्थः । शित्वात्सर्वादेशः । 'अस्तिसिचः' इतीट् । वधीं वृत्रम् । अवधिषमिति प्राप्ते । **लोपस्त आत्मनेपदेषु** ।७।१।४१। छन्दसि । देवा अदुह्र। अदुह्रतेति प्राप्ते । दक्षिणतः शये। शेते इति प्राप्ते। आत्मने इति किम् ?। उत्सं दुहन्ति । **ध्वमो ध्वात्** ।७।१।४२। अन्तरेवोष्माणं वारयध्वात् । वारयध्वमिति प्राप्ते । **यजध्वैनमिति च** ।७।१।४३। एनमित्यस्मिन्परे ध्वमोऽन्तलोपो निपात्यते । यजध्वैनं प्रियमेधाः । वकारस्य यकारो निपात्यत इति वृत्तिः प्रामादिकी । **तस्य तात्** ।७।१।४४। लोटो मध्यमपुरुषबहुवचनस्य स्थाने तात्स्यात् । गात्रमस्या नूनं कृणुतात् । कृणुतेति प्राप्ते । सूर्यं चक्षुर्गमयतात् । गमयतेति प्राप्ते । **तप्तनप्तनथनाश्च** ।७।१।४५। तस्येत्येव । शृणोत ग्रावाणः। शृणुतेति प्राप्ते तप् । सुनोतन पचत ब्रह्मवाहसे। दधातन द्रविणं [चित्रमस्मै]। तनप् । मरुतस्तज्जुजुष्टन।तनं।जुषध्वमिति प्राप्ते व्यत्ययेन परस्मैपदं। श्लुश्च।विश्वेदेवासो मरुतो यतिष्ठन।यत्सङ्ख्याकाः स्थेत्यर्थः। यच्छब्दाच्छान्दसो डतिः । अस्तेस्तस्य थनादेशः । **इदन्तो मसि** ।७।१।४६। 'मसी'त्यविभक्तिको निर्देशः । इकार उच्चारणार्थः । मस् इत्ययमिकाररूपचरमावयवविशिष्टः स्यात् । मस इगागमः स्यादिति यावत् । नमो भरन्त एमसि । त्वमस्माकं तव स्मसि । इमः, स्म इति प्राप्ते । **क्त्वो यक्** ।७।१।४७। दिवं सुपर्णो गत्वाय ।

सु.]'सुपि चे'ति दीर्घनिवृत्त्यर्थः।'अतो गुणे' इति पररूपम्। **नावयेति**। नौशब्दाट्टा इत्यस्याऽयार्।**रित्स्वरइति**। 'रिती'ति सूत्रेण । **अमो** । अम इति मिबादेशो गृह्यते, न द्वितीयैकवचनं, छन्दसि दृष्टानुविधानात् । तदेतदाह–**मिबादेशस्येति। शित्वात्सर्वादेश इति** । शित्करणाऽभावे तु 'अलोऽन्त्यस्ये'ति मकारस्य स्यात्। 'आदेः परस्ये' ति तु न, पञ्चमीनिर्देशाऽभावात्। न च मकारस्य मकारवचने प्रयोजनाऽभावात्सर्वादेशो भविष्यतीति वाच्यं, मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थं स्यात्, 'मो राजि समः क्वौ' इत्यत्र यथा । **वधीमिति**। हन्तेर्लुङ् । 'हनो वध लिङि' 'लुङि चे'ति वधादेशः । 'च्लेः सिच्' । इट्। 'तस्थस्थे'ति मिपोऽम्भावः। तस्य मश्। 'अस्तिसिचः' इति मस्याऽपृक्तस्येट् । 'इट ईटी' ति सिचो लोपः। सवर्णदीर्घत्वम् । 'बहुलं छन्दसी'त्यडभावः । **लोपस्त** । आत्मनेपदेषु यस्तकारस्तस्य च्छन्दसि विषये लोपः स्यात् । **अदुह्रेति** । दुहेर्लुङ् । 'आत्मनेपदेष्वनतः' इसि झस्याऽदादेशः । 'बहुलं छन्दसी'ति रुट् । तकारस्य लोपे द्वयोरकारयोः 'अतो गुणे'इति पररूपम् । **शये इति** । 'शेते' इत्यत्र तलोपे कृतेऽयादेशः । **ध्वमो** । ध्वमो ध्वादित्यादेशः स्याच्छन्दसि। **वारयध्वादिति**। वृञो णिचिं लोट् । **यज**। वृत्तिकारस्तु 'यजध्यैन'मिति पाठं ज्ञात्वा वकारस्य यकारश्च निपात्यत इत्याह । तद्दूषयति–**वकारस्येत्यादि** । **प्रामादिकीति** । लक्ष्ये वकारपाठस्य निर्विवादत्वात्, वेदभाष्येऽपि प्रकृतसूत्रस्य मलोपमात्रपरतोक्तेश्चेति भावः । **तस्य मध्यमपुरुषबहुवचनस्येति** । प्रथमपुरुषैकवचनस्य तु न ग्रहणं, छन्दसि दृष्टानुविधानात्, पूर्वोत्तराभ्यां बहुवचनाभ्यां साहचर्याच्च । **कृणुतादिति** । कृवि हिंसाकरणयोश्च । 'धिन्विकृण्व्योर च'त्युप्रत्ययः, वकारस्य चाऽकारः । अतो लोपः । **गमयतादिति** । गमेर्णिच् । 'जनीजॄ'षिति अमन्तत्वान्मित्संज्ञायां 'मितां ह्रस्वः' । लोण्मध्यमपुरुषबहुवचनस्य तादेशः । **तप्तनप्** । तस्य स्थाने एते आदेशाः स्युः । **शृणोतेति** । श्रु श्रवणे । 'श्रुवः शृ च' इति श्नुप्रत्ययः शृभावश्च । पित्त्वेनाऽङित्त्वाद्गुणः । **सुनोतनेति** । षुञ् अभिषवे । 'स्वादिभ्यः श्नुः'। त इत्यस्य तनप् । **दधातनेति** । अत्राऽप्यङित्वात् 'श्नाभ्यस्तयो'रित्याकारलोपाऽभावः । **इदन्तो** । अन्तशब्दोऽवयववचनः । इत् अन्तो यस्य स इदन्तः । तपरकरणमसन्देहार्थम् । तथा चायमर्थः–मस् इत्ययं शब्द इकारान्तो भवति,मसः सकारान्तस्य इकार आगमो भवति,स च तस्यान्तो भवतीत्यर्थः। तदेतदाह–**मसित्ययमिति** । तत्र यदि सकारोपमर्देन इकारान्तत्वमभिप्रेतं स्यात्तर्हि मस् इदिति वाच्यं स्यात् । तस्मादवस्थित एव सकारे इकार उपसञ्जनीयः। अन्तग्रहणाच्च तद्ग्रहणेन गृह्यते । ततश्च टित्त्वादेरागमलिङ्गस्याऽभावेऽप्यर्थादागमोऽयं संपद्यते । तदेतद्ध्वनयन्नाह–**मस इगागमः स्यादिति** । एवं च 'मस इ'गिति वक्तव्यम् । प्रत्याहारसंदेहप्रसङ्गात्तथा नोक्तम् । **एमसीति** । इण् गतौ । मस् । तस्य इकारोऽन्तावयवः । **स्मसीति** । अस्तेर्मस् । 'श्नसोरल्लोपः' । **क्त्वो यक्** । क्त्वा इत्यस्य यगागमः स्याच्छन्दसि। **गत्वायेति**। गमेः क्त्वा। 'अनुदात्तोपदेशे'त्यनुनासिकलोपः ।

शे.]**मिति** । शाखान्तरे आद्युदात्तपाठादिदमेवेति भाष्यस्वरसः । तत्र च व्यत्ययेन ङीप् । **शित्वादिति** । मस्यापि मवचनमनुस्वारनिवृत्त्यर्थं स्यादिति भावः। **वधीमिति**।हन्तेर्लुङि वधादेशः, सिच इट्, मिपोऽमो मश्, तस्य 'अस्तिसिचः' इतीट्, सिज्लोपः, सवर्णदीर्घत्वम् । **लोपस्त** । आत्मनेपदेषु विद्यमानतकारस्य लोपः स्यात् । **अदुह्रेति** । दुहेर्लङो झस्याऽतो 'बहुलं छन्दसी'ति रुट्, तलोपे द्वयोरकारयोः पररूपम् । छान्दसत्वादेव क्वचिन्न । 'तत एवात्मानमादृतं कुरुते' । छन्दसि दृष्टानुविधानादाह–**मध्यमपुरुष इति** । **कृणुतादिति** । 'धिन्विकृण्व्योर च'त्युप्रत्ययः । वस्याऽकारेऽतो लोपः । **शृणोतेति** । पित्त्वेनाऽङित्त्वाद्गुणः । अत एव 'दधातने'त्यत्र 'श्नाभ्यस्तयो'रित्यालोपो न ।

**इष्ट्वीनमिति च** ।७।१।४८। क्त्वाप्रत्ययस्य ईनम् अन्तादेशो निपात्यते । इष्ट्वीनं देवान् । इष्ट्वेति प्राप्ते । **स्नात्व्यादयश्च** ।७।१।४९। आदिशब्दः प्रकारार्थः । आकारस्य ईकारो निपात्यते । स्विन्नः स्नात्वी मलादिव । पीत्वी सोमस्य वावृधे । स्नात्वा पीत्वेति प्राप्ते । **आज्जसेरसुक्** ।७।१।५०। अवर्णान्तादङ्गात्परस्य जसोऽसुक् स्यात् । देवासः [ब्राह्मणासः]। **श्रीग्रामण्योश्छन्दसि** ।७।१।५६। आमो नुट् । श्रीणामुदारो धरुणो रयीणाम् । सूतग्रामणीनाम् । **गोः पादान्ते** ।७।१।५७। विद्मा हि त्वा गोपतिं शूर गोनाम् । पादान्ते किम् ? । गवां शता पृक्षयामेषु । पादान्तेऽपि क्वचिन्न, छन्दसि सर्वेषां वैकल्पिकत्वात् । विराजं गोपतिं गवाम् । **छन्दस्यपि दृश्यते** ।७।१।७६। अस्थ्यादीनामनङ् । इन्द्रो दधीचो अस्थभिः । **ई च द्विवचने** ।७।१।७७। अस्थ्यादीनामित्येव । अक्षीभ्यां ते नासिकाभ्याम् । **दृक्स्ववस्स्वतवसां छन्दसि** ।७।१।८३। एषां नुम् स्यात्सौ । कीदृङ्ङिन्द्रः स्ववान् । स्वतवान् ।'**उदोष्ठ्यपूर्वस्य**'।**बहुलं छन्दसि**।७।१।१०३।ततुरिः। [जगुरिः परांचैः] । **हु ह्वरेश्छन्दसि** ।७।२।३१। ह्वरेर्निष्ठायां हु आदेशः स्यात् । अहुतमसि हविर्धानम् । **अपरिह्वृताश्च** ।७।२।३२। पूर्वेण प्राप्तस्याऽऽदेशस्याऽभावो निपात्यते । अपरिह्वृताः सनुयाम वाजम् । **सोमे ह्वरितः** ।७।२।३३। इड्गुणौ निपात्येते । मा नः सोमो ह्वरितः । **ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च** ।७।२।३४। अष्टादश निपात्यन्ते । तत्र ग्रसु स्कम्भु स्तम्भु एषामुदित्त्वान्निष्ठायामिट्प्रतिषेधे प्राप्ते इण्निपात्यते । युवं शचीभिर्ग्रसिताममुञ्चतम् । विष्कभिते

---

सु.]'**क्त्वे**'त्यस्य यगागमः।**इष्ट्वीन**। **क्त्वाप्रत्ययस्येति**। 'यजेः परस्ये'ति शेषः। **इष्ट्वीनमिति**। यजेः क्त्वा। 'वचिस्वपी'ति संप्रसारणम् । 'व्रश्चे'ति षत्वम् । ष्टुत्वम् । अकारस्येनमादेशः । **पीत्वेति** । पिबतेः क्त्वा । 'घुमास्थे'तीत्वम् । **आज्जसेः** । जसेरिति पूर्वाचार्यानुरोधेन निर्देशः । **देवास इति** । असुकि कृते जसः सकारस्य श्रवणम् । असुकः सकारस्य विसर्गः । **श्रीणामिति** । अस्य 'वाऽऽमी'ति नदीत्वकल्पाच्चदीत्वाऽभावे उदाहरणमिदं बोध्यम् । नदीत्वपक्षे तु 'ह्रस्वनद्यापो नु'डित्यनेनैव सिद्धम् । **सूतग्रामणीनामिति** । सूताश्च ग्रामण्यश्चतीतरेतरयोगः । **गोः पा** । गो इत्येतस्मादुत्तरस्याऽऽमो नुडागमः स्यात्पादान्ते । पादश्चेह ऋक्पादो गृह्यते, छन्दसीत्यधिकारात् । **छन्दस्य** । 'छन्दसि चे'त्येव सिद्धे 'अपि दृश्यते' इत्येतत्सर्वोपाधिव्यभिचारार्थम् । अन्यथा आरम्भसामर्थ्यात्क्वचिदेव व्यभिचारः संभाव्येत । 'टादावची'त्युक्तं हलादावपि भवति–अस्थभिः । विभक्तावित्युक्तमविभक्तावपि भवति । 'अस्थन्वन्तं यदनस्था बिभर्ति' । अस्थन्वन्तमित्यत्राऽस्थिशब्दान्मतुप् । अनङि कृते'ऽनो नु'डिति मतुपो नुट् । अनङो नकारस्य लोपः।**दृक्**।'आच्छीनद्योर्नुम्' 'सावनडुहः' इत्यतो नुम् सावित्यनुवर्तते । तदाह—**नुम्स्यादिति** । **कीदृङ्ङिन्द्र इति** । किम्शब्दे उपपदे 'त्यदादिषु दृशोऽनालोचने कञ्चे'ति दृशेः क्विन् । 'इदंकिमोरीश्की'ति किमः कीआदेशः । नुम् । 'संयोगान्तस्य लोपः'।'क्विन्प्रत्ययस्ये'ति कुत्वेन नस्य ङः। 'ङमो ह्रस्वादची'ति ङमुट्। **स्ववानिति**। अवतेरसुन्। सुष्ठु अवो यस्येति विग्रहः । स्ववःशब्दान्नुमि कृते 'सान्तमहतः' इति दीर्घः। संयोगान्तलोपः । तस्याऽसिद्धत्वान्नलोपो न। **स्वतवानिति**। तुधातुः सौत्रो वृद्ध्यर्थः । ततोऽसुन् । स्वं तवो=वृद्धिर्यस्येति विग्रहः । **ततुरिरिति**। तरतेः 'आदृगमे'ति क्विन्प्रत्ययः । उत्वं । तस्य 'द्विर्वचनेऽची'ति स्थानिवद्भावात्तृ इत्येतस्य द्विर्वचनम् । उरदत्वम् । **हु ह्वरे** । 'श्वीदितो निष्ठाया'मित्यतो निष्ठायामिति वर्तते । तदाह—**निष्ठायामिति** । **अहुतमिति** । न हुतमहुतम् । **अपरिह्वृताः** । छन्दसि बहुवचनान्तस्यैव प्रयोगदर्शाद्बहुवचनान्तस्य निर्देशः। **सोमे**। **इड्गुणाविति** । 'हु'इत्यादेशस्याऽभावोऽपि बोध्यः । **ग्रसित** । ग्रसु अदने । स्कम्भु स्तम्भु रोधनार्थौ सौत्रौ । चते याचने । कस गतौ । शसु हिंसायाम् । शंसु स्तुतौ । शासु अनुशिष्टौ । तॄ प्लवनतरणयोः । वृङ् संभक्तौ । वृञ् वरणे । ज्वल दीप्तौ । क्षर संचलने । क्षमूष् सहने । टुवम् उद्गिरणे । अम गत्यादिषु । **अष्टादशेति** । क्षमितेः पाठपक्षे तु एकोनविंशतिः। **उदित्त्वान्निष्ठायामिट्प्रतिषेधे प्राप्ते इति**।

---

शे.]शादेशस्यैते आदेशाः।**गृतीत्यस्य व्याख्या—यत्सङ्ख्याका इति**। **यतिष्ठनेति**।सुषामादित्वात् षत्वम्।**एमसीति**।इण आङ्पूर्वस्य रूपम् । यगागमेऽकारो विवक्षितः । **आज्जसेर** । असुकि कृते जसः सकारस्य श्रवणम् । असुकः सस्य विसर्गः । 'उभयासः'इत्यादौ परत्वादसुकि 'सकृद्गति'न्यायेन पुनः शी न । **श्रीग्रामण्योरिति**–पञ्चम्यर्थे षष्ठी । इदं व्यर्थं, श्रीणामित्यस्य 'वाऽऽमी'ति नदीत्वेन सिद्धेः । छन्दस्यापाद्यमानरूपाऽभावात् । 'सूतग्रामणीना'मित्यपि समाहारद्वन्द्वोत्तरमेकशेषे सिद्धम् । 'छन्दसी'ति तु 'गोः पादान्ते' इति सूत्रे ऋक्पादस्यैव ग्रहणार्थमावश्यकम् । ऋक्पादान्ते वर्तमानगोशब्दात्परस्याऽऽमो नुडिति तदर्थः। **छन्दस्यपि दृ**। यत्र विहितस्ततोऽन्यत्रापि दृश्यते।'अस्थाभिरस्थीन्युतक्रुल्य'। **अस्थन्वतेत्यादि** । 'अनो नु'डिति मतुपो नुटि अनङो नस्य लोपः । **ई च द्वि**। अस्थ्यादीनामीकार उदात्तो द्विवचने छन्दसि । **अपरिह्वृता इति**–बहुवचननिर्देशश्छन्दसि तदन्तस्यैव प्रयोगदर्शनात् ।

अजरे। येन स्वः स्तभितम्। सत्येनोत्तभिता भूमिः। स्तभितेत्येव सिद्धे उत्पूर्वस्य पुनर्निपातनमन्योपसर्गपूर्वस्य मा भूदिति। चत्ते याचने। कस गतौ। आभ्यां क्तस्येडभावः। चत्ता इतश्चत्ताऽमुतः। त्रिधा ह श्यावमश्विना विकस्तम्। उत्तानाया हृदयं यद्विकस्तम्। निपातनबहुत्वापेक्षं सूत्रे बहुवचनं 'विकस्ता' इति। तेनैकवचनान्तोऽपि प्रयोगः साधुरेव। शसु शंसु शासु एभ्यस्तृचि इडभावः। एकस्त्वष्टुरश्वस्याविशस्ता। प्रावग्राभ उत शंस्ता। प्रशास्ता। पोता। तरतेर्वृङ्वृञोश्च तृच उट् ऊट् एतावागमौ निपात्येते। तरुतारं रथानाम्। तरूतारम्। वरुतारम्। वरूतारम्। वरूत्रीभिः सुशरणो नो अस्तु। अत्र ङीबन्तनिपातनं प्रपञ्चार्थम्। वरूतृशब्दो हि निपातितः, ततो ङीपा गतार्थत्वात्। उज्ज्वलादिभ्यश्चतुर्भ्यः शप इकारादेशो निपात्यते। ज्वल दीप्तौ। क्षर संचलने। टुवम् उद्गिरणे। अम गत्यादिषु। इह क्षरितीत्यस्याऽनन्तरं क्षमितीत्यपि केचित्पठन्ति। तत्र क्षमूष् सहने इति धातुर्बोध्यः। भाषायां तु ग्रस्तस्कब्धस्तब्धोत्तब्धचत्तितविकसिताः। विशसिता। शंसिता। शासिता। तरिता। तरीता। वरिता। वरीता। उज्ज्वलति। क्षरति। पाठान्तरे-क्षमति। वमति। अमति। **'बभूथाऽऽततन्थजगृभ्मववर्थेति निगमे'**। विद्मा तमुत्सं यत आबभूथ। येनान्तरिक्षमुर्वा ततन्थ। जगृभ्मा ते दक्षिणमिन्द्र हस्तम्। त्वं ज्योतिषा वितमो ववर्थ। भाषायां तु-बभूविथ आतेनिथ जगृहिम ववरिथेति। **सनिंससनिवांसम्** ।७।२।६९। सनिमित्येतत्पूर्वात्सनतेः सनोतेर्वा क्वसोरिड्, एत्वाऽभ्यासलोपाऽभावश्च निपात्यते। [अग्निर्वाऽग्ने सनिंससनिवांसम्]। *** पावकादीनां छन्दसि प्रत्ययस्थात्कादित्वं नेति वाच्यम्**। हिरण्यवर्णाः शुचयः पावकाः। **घोर्लोपो लेटि वा** ।७।३।७०। दधद्रत्नानि दाशुषे। सोमो ददद्गन्धर्वाय। यदग्निरग्नये ददात्। **मीनातेर्निगमे** ।७।३।८१। शिति ह्रस्वः। प्रमिणन्ति व्रतानि। लोके प्रमीणन्ति। **'अस्तिसिचोऽपृक्ते'**। **बहुलं छन्दसि** ।७।३।९७। सर्वमा इदम्। [आसीदिति प्राप्ते। अस्तेर्लङ्। तिप्। ईडभावः, अपृक्तत्वाद्धल्ङ्यादिलोपः। रुत्वविसर्गौ। संहितायां तु 'भोभगो' इति यत्वम्। 'लोपः शाकल्यस्ये'ति यलोपः। गोभिरक्षाः। सिच इडभावश्छान्दसः। अट्। शेषं पूर्ववत्]। **'ह्रस्वस्य गुणः'**। **'जसि च'** ।*** जसादिषु छन्दसि वावचनं प्राङ् णौ चङ्युपधायाः**। अधा शतक्रत्वो यूयम्। शतक्रतवः। पश्वे नृभ्यो यथा गवे। पशवे। ***'नाभ्यस्तस्याऽचि'** इति निषेधे **'बहुलं**

---

सु.] 'उदितो वे'ति क्त्वायां वेट्त्वात् 'यस्य विभाषे'ति निषेधे प्राप्त इत्यर्थः। **विष्कभित इति**। 'अनिदितामि'ति नलोपः। 'वेः स्कभ्नातेर्नित्य'मिति षत्वम्। **उत्तभितेति**। 'उदः स्थास्तम्भोः पूर्वस्ये'ति पूर्वसवर्णः। सकारस्य थकारः। तस्य 'झरो झरि सवर्णे' इति लोपः। **अन्योपसर्गपूर्वस्य माभूदिति**। यदि स्यादुत्तभितग्रहणं व्यर्थं स्यात्। **चत्ता इति**। चत्ताशब्दाद्यपि उञा सह 'आद्गुणः'। निपातेन सह एकीकृत्य छेदस्तु पदकाराणां संप्रदायसिद्धः। 'भूयामो' इति मन्त्रे 'भूयामो इति यथा। **अश्वस्याविशस्तेति**। 'अन्येषामपी'ति पूर्वपदस्य दीर्घः। निपातनं बहुत्वापेक्षमिति। तेन छान्दसः प्रयोग एकवचनान्तोऽप्युदाहृत इति भावः। **ततो ङीपा इति**। 'ऋन्नेभ्यः' इति विहितेन। **बभूथा**। **निगमो-वेदः**। एषां वेद इडभावो निपात्यते। वृञः क्रादिसूत्रेणेडभावे सिद्धे 'निगम एवे'ति नियमार्थं निपातनं। तदेतदाह—**भाषायां तु ववरिथेति**। **सनिंस**। सनिपूर्वात्सनतेः सनोतेर्वा सनिंस-सनिवांसमिति निपात्यते। **क्वसोरिडिति**। 'नेड्वशि कृती'ति निषेधे प्राप्ते निपातनम्। **पावका इति**। पुनन्ति पावयन्ति वा पावकाः। पुनातेः पावयतेर्वा ण्वुल्। टाप्। **दधदिति**। दधातेर्लेट्। तिप्। 'श्लौ' इति द्वित्वम्। दधा-ति इति स्थिते आकारलोपः। 'लेटोऽडाटौ' इत्यडागमः। 'इतश्च लोपः परस्मैपदेषु' इतीकारलोपः। दाशुषे=यजमानाय रत्नानि दधत्। दधादित्यर्थः। **ददिति**। ददाते रूपम्। लोपाऽभावे उदाहरणमाह—**ददादिति**। **मीनातेः**। 'प्वादीनां ह्रस्वः' इत्यतो ह्रस्व इति वर्तते। तदाह—**शिति ह्रस्व इति**। **प्रमिणन्तीति**। 'हिनुमीने'ति णत्वम्। **आ इदमिति**। अस्तेर्लङ् तिप्। 'आडजादीनाम्' इत्यट्। शपो लुक्। 'अस्तिसिचः' इतीडभावे अपृक्तत्वाद्धल्ङ्यादिलोपः। रुत्वविसर्गौ। संहितायां तु 'भोभगो' इति रोर्यत्वम्। 'लोपः शाकल्यस्ये'ति यलोपः। **जसादिष्विति**। आदिशब्दः प्रकारे, तेन पूर्वयोगनिर्दिष्टानामपि ग्रहणम्। **शतक्रत्व इति**। 'जसि चे'ति गुणाऽभावपक्षे प्रथमयोः पूर्वसवर्णदीर्घोऽपि 'वा छन्दसी'ति वचनादत्र न भवतीति यणादेशः प्रवर्तते। **पश्वे**

---

शे.] **उत्तभिते**-'उदस्ये'ति पूर्वसवर्णः। **माभूदिति**। इणिति शेषः। सूत्रे इतिः प्रकारे। तेन क्वचिदीकारोऽपि। वित्तमभ्यमीति वरुण इतिवृत्तिः। **सनिंस**। 'सनि'मित्यस्य छान्दसत्वादानुपूर्व्या अविवक्षितत्वाच्छन्दस्येवैतन्निपातनम्। **पावका** इति। पुनन्ति पावयन्ति वेत्यर्थः। **घोर्लोपो**। घुसञ्ज्ञकानां लेटि परतो लोपो वा। दधातेर्ददातेश्च लेट्। तिप्। 'इतश्च लोपः परस्मैपदेषु' इतीकारलोपः। लोपेऽप्याडागमेन 'ददा'दित्यस्य सिद्धौ वाग्रहणं स्पष्टार्थम्। **जसादिष्विति**। आदिशब्दः प्रकारे। तेन दर्वे दर्वि

छन्दसी'ति वक्तव्यम्। आनुषग्जुजोषत्। **नित्यं छन्दसि।७।४।८।** छन्दसि विषये णौ चङ्युपधाया ऋवर्णस्य ऋदित्वम्। अवीवृधत्। **न छन्दस्यपुत्रस्य।७।४।३५।** पुत्रभिन्नस्याऽदन्तस्य क्यचि ईत्वदीर्घौ न। मित्रयुः। 'क्याच्छन्दसी'त्युः। अपुत्रस्य किम्?। पुत्रयन्तः सुदानवः। * **अपुत्रादीनामिति वाच्यम्।** जनीयन्तो-न्वग्रवः। जनमिच्छन्त इत्यर्थः। **दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति।७।४।३६।** एते क्यचि निपा-त्यन्ते। भाषायां तु उप्रत्ययाऽभावात्-दुष्टीयति। द्रविणीयति। वृषीयति। रिष्टीयति। **अश्वाघस्याऽऽत्।७।४।३७।** अश्व अघ एतयोः क्यचि आत्स्याच्छन्दसि। अश्वायन्तो मघवन्। मा त्वा वृका अघायवः। 'न च्छन्दसी'ति निषेधो नेत्वमात्रस्य, किंतु दीर्घस्यापीत्यत्रेदमेव सूत्रं ज्ञापकम्। **देवसुम्नयोर्यजुषि काठके।७।४।३८।** अनयोः क्यचि आत्स्याद्यजुषि कठशाखायाम्। देवायन्तो यजमानाः। सुम्नायन्तो हवामहे। इह यजुःशब्दो न मन्त्रमात्रपरः, किंतु वेदोपलक्षकः। तेन ऋगात्मकेऽपि मन्त्रे यजुर्वेदस्थे भवति। किं च ऋग्वेदे-ऽपि भवति, स चेन्मन्त्रो यजुषि कठशाखायां दृष्टः। यजुषीति किम्?। देवाञ्जिगाति सुम्नयुः। बह्वृचाना-मप्यस्ति कठशाखा, ततो भवति प्रत्युदाहरणमिति हरदत्तः। **कव्यध्वरपृतनस्यर्चि लोपः।७।४।३९।** [एषा-मन्त्यस्य लोपः स्यात्क्यचि ऋग्विषये]। सपूर्वया निविदा कव्यतायोः। अध्वर्युं वा मधुपाणिम्। दमयन्तं पृतन्युम्। **'दधातेर्हिः'। 'जहातेश्च क्त्वि'। विभाषा छन्दसि।६।४।४४।** हित्वा शरीरम्। हीत्वा वा।

**सुधितवसुधितनेमधितधिष्वधिषीय च।७।४।४५।** सु वसु नेम एतत्पूर्वस्य दधातेः क्तप्रत्यये इत्वं निपात्यते। गर्भं माता सुधितं वक्षणासु। वसुधितमग्नौ। नेमधिता न पौंस्या। क्तिन्यपि दृश्यते। उत श्वेतं वसुधितिं निरेके। धिष्व वज्रं दक्षिण इन्द्र हस्ते। धत्स्वेति प्राप्ते। सुरेता रेतो धिषीय। आशीर्लिङ्। इट्। 'इटोऽत्'। धासीयेति प्राप्ते। **'अपो भि'। * मासश्छन्दसीति वक्तव्यम्।** माद्भिः। शरद्भिः। * **स्ववः-स्वतवसोरुषसश्चेष्यते।** स्ववद्भिः। अवतेरसुन्। शोभनमवो येषां ते स्ववसः। तैः। 'तु' इति सौत्रो धातुस्त-स्मादसुन्। स्वं तवो येषां तैः स्वतवद्भिः। समुषद्भिरजायथाः। मिथुनेऽसिः। 'वसेः क्वि'त्यसिप्रत्यय इति हरदत्तः। पद्मपादीरीत्या तु-'उषः कि'दिति प्राग्व्याख्यातम्। **'न कवतेर्यङि'। कृपेश्छन्दसि।७।४।६४।**

---

सु.]इति। 'घेर्ङिती'त्यस्याऽभावे यण्। **जुजोषदिति।** जुषी प्रीतिसेवनयोः। लेट्। व्यत्ययेन परस्मैपदम्। तिप्। 'इतश्च लोपः परस्मैपदेषु'। लेटोऽडाटौ' इत्यट्। व्यत्ययेन शपः श्लुः। द्विर्वचनम्। **न छन्दसि।** इह यद्यानन्तर्यादीत्व-मात्रं प्रतिषिध्येत तर्हि 'अकृत्सार्वे'ति दीर्घः स्यात्, अपवादे पुनरुत्सर्गस्थितेः। अत आह-**ईत्वदीर्घौ नेति।** 'क्वचि यदुक्तं तन्ने'ति व्याख्यानादिति भावः। अत्र च ज्ञापकमनुपदमेव वक्ष्यति। **पुत्रीयन्त इति।** पुत्रमिच्छन्तः पुत्रीयन्तः। जनमिच्छन्तो जनीयन्तः। लटः शत्रादेशः। 'उगिदचा'मिति नुम्। **दुरस्यु।** दुष्टशब्दस्य दुरस्भावो, द्रविणशब्दस्य द्रविणस्भावो, वृषस्य वृषण्भावो, रिष्टस्य रिषण्भावश्च निपात्यते। **दुष्टीयतीति।** प्रकृतिमात्रे तात्पर्यम्। उप्रत्ययस्य समानार्थेन तृना दुष्टीयितेत्यादि बोध्यम्। **अश्वायन्त इति।** अश्वशब्दात्क्यच्। लटः शत्रादेशः। **अघायव इति।** 'छन्दसि परेच्छाया'मिति क्यच्।'क्याच्छन्दसी'त्युप्रत्ययः।**इयमेव सूत्रं ज्ञापकमिति।** अन्यथा दीर्घेणैव सिद्धत्वादाल-वचनमनर्थकं स्यात्। **देवाञ्जिगातीति।** नन्विदं प्रत्युदाहरणमङ्गद्वयविकलम्। यजुषि काठक इत्यंशद्वयस्यापि तत्राऽ-भावादित्याशङ्क्याह-**बह्वृचानामप्यस्तीति।** तत्रेदं दृष्टमिति भावः। काठक इति किम्?। यजुर्वेदे शाखान्तरे माभूत्। अन्यत्र सुम्नयुरिदमस्ति। **कव्यध्वर।** कवि अध्वर पृतना एषामन्त्यस्य लोपः स्यात् क्यचि परे ऋचि विषये। मृगय्वा-दिगणेऽध्वर्युशब्दः पठ्यते, तद्युत्पत्त्यन्तरं बोध्यम्। **विभाषा।** जहातेरङ्गस्य विभाषा हि-आदेशः स्यात्। **हीत्वेति।** हिआदेशाऽभावे 'घुमास्थे'तीत्वम्। क्वचित्तु 'हात्वे'ति पाठः, तत्र छान्दसत्वात् 'घुमास्थे'तीत्वाऽभावः। **वसुधितमिति।** कर्मधारय इति हरदत्तः। वसूनां धातारं = प्रदातारमित्यर्थ इति वेदभाष्यम्। **नेमधितमिति।** सामिपर्यायो नेम शब्दः। अयं कर्मधारयः। **धत्स्वेति।** 'श्नाभ्यस्तयोरातः' इत्याकारलोपः। 'दधस्तथोश्चे'ति भष्भावः। **धिषीयेति।** आशी-र्लिङात्मनेपदोत्तमपुरुषैकवचने दधातेरित्वं निपात्यते। तदाह—**आशीर्लिङीति। माद्भिरिति।** 'पद्दन्नोमास्हृ'न्निति मासशब्दस्य मासादेशः। **न कवतेरिति।** अनुवृत्त्यर्थ उपन्यासः। **करीकृष्यत इति।** 'रुग्रिकौ च लुकी'ति

---

शे.]अम्बे अम्बेत्यादि सिद्धम्। **नाभ्यस्तस्येत्यादि।** जुजोषदित्युदाहरणम्। **अपुत्रादीनामिति।** आदिग्रहणस्य प्रयोजना-न्तरं मृग्यमिति हरदत्तः। **यजुर्वेदस्थे**—यजुर्वेदीयकठशाखास्थे। **कव्यध्वर।** कव्येत्युदाहरणम्। **विभाषा।** जहातेर्हिर्वा स्यात् क्त्वि। 'हात्वे'ति पाठे छान्दसत्वादीत्वाऽभावः।**वसुधितमिति** कर्मधारय इति हरदत्तः।नेम इत्यर्धे। **नेमधिते** कर्मधारयः।**माद्भिरिति।**'पद्दन्नो' इति मासस्य मासादेशः।**आघायव इति।**छन्दः शपः श्लुरभ्यासस्य दीर्घः,

यङि अभ्यासस्य चुत्वं न । करीकृष्यते । दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्तेऽलर्ष्यापनीफणत्सं-सनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्यागनीगन्तीति च ।७।४।६५। एतेऽष्टादश निपात्यन्ते । आद्यास्त्रयो धृञो, धारयतेर्वा । भवतेर्यङ्लुगन्तस्य गुणाऽभावः।तेन भाषायां गुणो लभ्यते।तिजेर्यङ्लुगन्तात्तङ्। इयर्तेर्लटि हलादिःशेषापवादो रेफस्य लत्वमित्त्वाऽभावश्च निपात्यते । अलर्षि युध्म खजकृत्पुरन्दरम्। सिपा निर्देशो न तन्त्रम्। अलर्ति दक्ष उत । फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतरि अभ्यासस्य नीगागमो निपात्यते । अन्वापनीफणत् । स्यन्देः संपूर्वस्य यङ्लुकि शतरि अभ्यासस्य निक्। धातुसकारस्य षत्वम्।करोतेर्यङ्लुगन्तस्याऽभ्यासस्य चुत्वाऽभावः।क्रन्देर्लुङि च्लेरङ्, द्विर्वचनमभ्यासस्य चुत्वाऽभावो निगागमश्च । कनिक्रदज्जनुषम् । अक्रन्दीदित्यर्थः । बिभर्तेरभ्यासस्य जश्त्वाऽभावः । वि यो भरिभ्रदोषधीषु । ध्वरतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य विगागमो, धातोर्ऋकारलोपश्च । दविध्वतो रश्मयः सूर्यस्य । द्युतेरभ्यासस्य संप्रसारणाऽभावोऽत्वं विगागमश्च।दविद्युतद्दीद्यच्छोशुचानः।तरतेः शतरि श्लौ अभ्यासस्य रिगागमः।[सहोर्जा तरित्रतः]।सृपेः शतरि श्लौ, द्वितीयैकवचने रीगागमोऽभ्यासस्य । वृजेः शतरि श्लावभ्यासस्य रीक्। मृजेर्लिटि णल्। अभ्यासस्य रुक्। धातोश्च युक्।गमेराङ्पूर्वस्य लटि श्लावभ्यासस्य चुत्वाऽभावो नीगागमश्च। वक्षयन्ती वेदागनीगन्ति कर्णम्। ससूवेति निगमे ।७।४।७४। सूतेर्लिटि परस्मैपदं वुगागमोऽभ्यासस्य चाऽत्वं निपात्यते । गृष्टिः ससूव स्थविरम् । सुषुवे इति भाषायाम् । बहुलं छन्दसि ।७।४।७८। अभ्यासस्य इकारः स्याच्छन्दसि । पूर्णा विवष्टि । वशेरेतद्रूपम् । इति सप्तमोऽध्यायः ।

# अथ अष्टमोऽध्यायः ।

प्रसमुपोदः पादपूरणे ।८।१।६। एषां द्वे स्तः पादपूरणे । प्रप्रायमग्निः । संसमिद्युवसे । उपोप

---

सु.]रीगागमः । लोके तु 'चरीकृष्यते कृषीवलः'। **धृङ् इति** । धृङ् अवस्थाने। **धारयतेर्वेति** । स एव ण्यन्तः । तत्र दाधर्तीत्यत्र धारयतेः शपः श्लौ–णिलुक्, अभ्यासस्य दीर्घत्वं च निपात्यते। धृञो वा शे प्राप्ते व्यत्ययेन शप्। तत्र श्लावभ्यासस्य दीर्घत्वं च । अत्र परस्मैपदमपि निपात्य, तस्यैव यङ्लुक्यभ्यासस्य रुगाद्यपवादकं दीर्घत्वं निपात्यत इति । दर्धर्तीत्यत्र यङ्लुक्पक्षे दाधर्तीति निपातनेन प्राप्तस्य दीर्घस्याऽभावो निपात्यते । 'रुग्रिकौ च लुकि' 'ऋतश्चे'त्येव रुक् सिद्धः । श्लुपक्षे तु रुगपि निपात्यः । 'दर्धर्षी'त्यत्र यङ्लुक्पक्षे न किंचिन्निपातनं, किं तु श्लावेव। भवतेर्यङ्लुगन्ताल्लोट्, गुणाऽभाव इति । ननु 'भूसुवोस्तिङी'त्येव गुणनिषेधे सिद्धे निपातनमनर्थकमिति चेत्सत्यम् । ज्ञापकार्थं तर्हि निपातनम् । एतज्ज्ञापयति 'अन्यत्र यङ्लुगन्तस्य गुणप्रतिषेधो न भवती'ति। तेन बोभवीतीत्यत्र भाषायां गुणः सिद्धः। तदेतदाह—**तेन भाषायामिति** । तिजेर्यङ्लुक्यात्मनेपदं निपात्यते । तदाह—**तिजेरिति**। ऋ गतौ। लटि सिपि 'श्लौ' इति द्वित्वम् । अभ्यासस्य हलादिःशेषापवादो रेफस्य लत्वं निपात्यते । 'अर्तिपिपर्त्योश्चे'त्यभ्यासस्य प्राप्तस्येत्त्वस्याऽभावो निपात्यते । तदाह—**इयर्तेरिति** । करोतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य चुत्वाऽभावो निपात्यते। 'ऋतश्चे'ति रिगागमः। तदाह—**करोतेरिति । चुत्वाभाव इति** । 'कुहोश्चु'रिति प्राप्तस्य । बिभर्तेर्यङ्लुगन्तस्य शतरि अभ्यासस्य जश्त्वाऽभावो निपात्यते । तदाह–**बिभर्तेरिति । जश्त्वाभाव इति** । 'अभ्यासे चर्चे'ति प्राप्तस्य । **दविध्वत इति** । ध्वरतेर्यङ्लुगन्तस्य शतरि रूपम् । 'नाभ्यस्ताच्छतु' रिति नुम्प्रतिषेधः । द्युतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य संप्रसारणाऽभावोऽत्वं च निपात्यते । तदाह–**द्युतेरिति।संप्रसारणाऽभाव इति** । 'द्युतिस्वाप्योः संप्रसारण'मिति प्राप्तस्य । **ससूवेति निगमे**। दाधर्त्यादिष्वेतत्पठितव्यम् । **विवष्टीति** । वश कान्तौ । लटि तिपि शपः श्लौ। द्वित्वम् । अभ्यासस्येत्वम् । 'व्रश्चे'ति षत्वम् । ष्टुत्वम् । **इति सुबोधिन्यां सप्तमोऽध्यायः।**

**प्रसमुपोदः पादपूरणे** । समाहारद्वन्द्वः । समासान्तविधेरनित्यत्वात् 'द्वन्द्वाच्चुदषहान्ता'दिति न टज् । **प्रप्रायमग्निरिति** । नात्र द्विर्वचनस्य किंचिद्द्योत्यं केवलं पादपूरणमेव कार्यम् , नचैवंविधस्य भाषायां प्रयोगो-

---

शे.]परस्मैपदञ्च निपात्यते,धारयतौ तु श्लुणिलुगभ्यासदीर्घत्वानि, अन्त्ययोः श्लुणिलुग्रुगागमाः, धृङस्तु श्लुरुक्परस्मैपदानि। यद्वा धृञो यङ्लुकि रुगभावमात्रमार्थे, तन्निपातनप्राप्तरुगभावस्य बाधाय दर्धर्तीत्यत्र रुग्निपातनं । दर्धर्षीत्यत्र तु यङ्लुक्पक्षे न किंचिन्निपात्यं, किं तु श्लावेव। **यङ्लुगन्तस्येति**। 'लोटी'ति शेषः। **तेन भाषायामिति** । लोडतिरिक्ते च 'बोभवीति' 'बोभोति' इति । 'यङो वा' इति पक्षे ईट् । **संपूर्वस्येति** । 'संपूर्वत्वमतन्त्रम् , आसनिष्यदिति दर्शना'दिति वृत्तिः । **करोतेर्यङ्लुगन्तस्येति** । 'शतरी'ति शेषः । रिक्तु 'रुग्रिकौ चे'ति सिद्धः । **निगागमश्चेति** । चादङभावः। **बिभर्तेरिति**।'यङ्लुगन्तस्य शतरी'ति शेषः।**द्युतेरिति**।यङ्लुगन्ताच्छतरीति शेषः।**तरित्रत** इति जसन्तम्।'नाभ्यस्ता'दिति नुम्।'मर्मृज्ये'त्यत्र वृद्ध्यभावोपि छान्दसत्वात्।इतिशब्द एवंप्रकाराणामन्येषामपि सङ्ग्रहार्थः।'ससूवे'-त्यपि दाधर्त्यादिष्वेव पठितुं युक्तम्। **इकार इति**।'श्लौ'विति शेषः।न च भवति 'ददातीत्येवं ब्रूया'दिति। **इति सप्तमः।**

मे परास्पृश । किं नोदुदु हर्षसे । **छन्दसीरः** ।८।२।१५। इवर्णान्ताद्रेफान्ताच्च परस्य मतोर्मस्य वः स्यात् । हरिवते हर्यश्वाय । गीर्वान् । **अनो नुट्** ।८।२।१६। अन्नन्तान्मतोर्नुट् स्यात् । अक्षण्वन्तः कर्णवन्तः । अस्थन्वतं यदनस्था । **नाद्धस्य** ।८।२।१७। नान्तात्परस्य घस्य नुट् । सुपथिन्तरः । *** भूरिदाव्नस्तुड्वाच्यः** । भूरिदावत्तरो जनः । *** ईद्रथिनः** । रथीतरः । रथीतमं रथीनाम् । **नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि** ।८।२।६१। सदेर्नञ्पूर्वान्निपूर्वाच्च निष्ठायां नत्वाऽभावो निपात्यते। नसत्तमञ्जसा । निषत्तमस्य चरतः । असन्नं निषण्णमिति प्राप्ते । उन्देर्नञ्पूर्वस्याऽनुत्तम् । प्रतूर्तमिति त्वरतेः; तुर्वीत्यस्य वा । सूर्तमिति सृ इत्यस्य । गूर्तमिति गूरी त्वस्य । **अम्नरूधरवरित्युभयथा छन्दसि** ।८।२।७०। रुर्वा, रेफो वा । अम्न एव । अम्नरेव । ऊध एव । ऊधरेव। अवएव। अवरेव । **भुवश्च महाव्याहृतेः**।८।२।७१। भुवइति।भुवरिति । **ओमभ्यादाने** ।८।२।८७। ओमूशब्दस्य प्लुतः स्यादारम्भे । ओ३म् अग्निमीळे पुरोहितम् । अभ्यादाने किम् ?। ओमित्येकाक्षरम् । **ये यज्ञकर्मणि** ।८।२।८८। ये३यजामहे । यज्ञेति किम् ?। ये यजामहे । **प्रणवष्टेः** ।८।२।८९।

---

सु.]ऽस्तीति सामर्थ्याच्छन्दस्येवेदं विधानमित्याहुः । **छन्दसीरः । हरिवते इति** । हरयो विद्यन्ते यस्येति हरिवान् । तस्मै । हरिशब्दान्मतुप् । मकारस्य वकारः । **गीर्वानिति** । 'र्वोरुपधाया दीर्घ इकः' इति दीर्घः । **अक्षण्वन्त इति** । अक्षिशब्दान्मतुप् । 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' 'छन्दस्यपि दृश्यते' इत्यनङ् । नुटोऽसिद्धत्वात्पूर्वं नलोपे भूतपूर्वगत्या नुट् । णत्वम् । ननु यदि परादिर्नुट् क्रियते, तस्य मतुब्ग्रहणेन ग्रहणात् 'मादुपधायाः'इति वत्वं स्यात्, मतुपस्तु न स्यात्, नुटा व्यवधानात् । यदि तु पूर्वान्तो नुट् क्रियते तर्हि णत्वं न स्यात्, 'पदान्तस्ये'ति निषेधादिति चेत्सत्यं । नुटोऽसिद्धत्वान्नोक्तदोषः । नन्वेवमवग्रहे दोषः स्यात् । 'अक्ष'णिति णान्तं ह्यवगृह्णन्ति, 'अक्ष'न्त्यकारान्तमवग्रहीतुमुचितमिति चेत्सत्यम्।'न लक्षणेन पदकारा अनुवर्त्त्याः पदकारैर्नाम लक्षणमनुवर्तनीयं, तस्माद्यथालक्षणं पदं कर्तव्य'मिति महाभाष्ये स्थितम्। किंच ईयिवांसमित्यादौ पदत्वं विनापि अवग्रहः क्रियते। पूर्वैभिरग्निनेत्यादौ सत्यपि पदत्वे न क्रियते इति । **घस्येति** । तपप्तमपोरित्यर्थः। 'तरप्तमपौ घः इति तरप्तमपोर्घसंज्ञाविधानात् । **सुपथिन्तर इति** । सुपथिन्शब्दात् 'द्विवचनविभज्योपपदे' इति तरप्। नलोपः । तरपो नुट् । तस्यानुस्वारः परसवर्णः । **भूरिदाव्न इति** । भूरिदाव्नः परस्य घस्य तुड्वाच्य इत्यर्थः । **भूरिदावत्तर इति** । 'आतो मनि'न्नित्यादिना दाधातोर्वनिप् । तदन्तात्तरप् । 'नलोपः प्रातिपदिकान्तस्ये'ति नलोपः। तुडागमः । **ईद्रथिन इति** । रथिन ईकारोऽन्तादेशो घे परे । **रथीतर इति** । रथशब्दात् 'अत इनिठनौ' इति मत्वर्थीय इनिः । तदन्तात्तरप् । नकारलोपे कृते इकारस्य ईकारादेशः। यदि तु नकारलोपाऽपवादो नकारस्थाने ईकारो विधीयते तदा तस्याऽसिद्धत्वादेकादेशो न स्यात् । **रथीतममिति** । इह पदकारा ह्रस्वान्तमवगृह्णन्ति। 'अन्येषामपी'ति संहितायां दीर्घ इति तदाशयः। **नसत्त** । एतानि छन्दसि विषये निपात्यन्ते। **नत्वाऽभाव इति** । 'रदाभ्या'मिति प्राप्तस्य। **निषत्तमिति** । 'सदिरप्रते'रिति षत्वम् । **अनुत्तमिति** । 'अनुन्न'मिति भाषायाम् । एतन्निपातनारम्भसामर्थ्याद्भाषायां 'नुदविदोन्दत्रे'ति विकल्पो नेत्याहुः। **प्रतूर्तमिति**। यदा त्वरतेस्तदा 'ज्वरत्वरे'त्यादिना ऊठ् । यदा तुर्वी हिंसायामित्यस्य तदा 'राल्लोपः'। **सृ इत्यस्येति**। निपातनादुत्वम्। रपरत्वं तु 'उरण् रपरः' इत्येव सिद्धम्। कार्यकालपक्षाश्रयणेन परिभाषाणामसिद्धत्वप्रकरणेऽपि प्रवृत्तेः । **गूर्तमिति** । गूर्णमिति भाषायाम् । **अम्न** । 'उभयथे'ति व्याचष्टे-**रुर्वा रेफो वेति** । 'ससजुषो रु'रिति नित्यं रुत्वे प्राप्ते पक्षे रेफादेशार्थमिदम् । अम्नरशब्द ईषदर्थे । अम्नरस्तमितमिति यथा । अवो-रक्षणम् । **अम्न एवेति** । यदा रुत्वं तदा 'भोभगो' इति रोर्यत्वं, 'लोपः शाकल्यस्ये'ति लोपः । **भुवश्च** । महाव्याहृतेर्भुवस् इत्येतस्य छन्दसि विषये रुर्वा, रेफो वा । तिस्रो महाव्याहृतयः पृथिव्यन्तरिक्षस्वर्गाणां वाचिकाः । इह तु मध्यमाया ग्रहणम् । महाव्याहृतेरिति किम् ? । भुवो विश्वेषु सवनेषु । तिङन्तमेतद्भवतेः 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लङ् । सिप् । शपि गुणाऽभावश्छान्दसः।'बहुलं छन्दस्यमाङ्योगेऽपी'त्यडभावः। लाक्षणिकत्वादेवास्याऽग्रहणे सिद्धे महाव्याहृतिग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थं, तेन ज्ञापयतीत्यादौ पुक् सिध्यति । **भुव इति** । 'भुव' इत्येतदव्ययमन्तरिक्षवाचि महाव्याहृतिः। **ओम** । अभ्यादानमारम्भः। तदाह-**आरम्भे इति** । अत्र प्लुतश्रुत्याऽचपरिभाषोपस्थानाद्च एव प्लुतः । मकारस्त्वर्द्धमात्र इति समुदायोऽप्यर्द्धचतुर्थमात्रः संपद्यते । **ये यज्ञ** । 'ये' इत्येतस्य यज्ञकर्मणि प्लुतो

---

शे.] अथ अष्टमः । प्रसमु । समाहारद्वन्द्वः, अनित्यत्वाच्च टच् समासान्तः । **घस्येति** । तरप्तमपोरित्यर्थः । **नसत्तनि** । एषां शब्दपराणान्द्वन्द्वः । **निषत्ते**-'सदिरप्रतेः' इति षत्वम् । **अवो**-रक्षणम् । **भुवश्च म** । रुर्वा रेफो वा । महाव्याहृतेरिति किम् ? भुवो विश्वेषु सवनेषु । भवतेः 'छन्दसि लुङ्लङ्लिट' इति वर्तमाने लङ् । सिप् शप् । अगुणश्छान्दसः । तत एवाऽडभावः। **ओम** । अभ्यादानम्-आरम्भः, तत्र वर्त्तमानस्येत्यर्थ इति वृत्तिः । 'न सुब्रह्मण्यायां'

यज्ञकर्मणि टेरोमित्यादेशः स्यात्। अपां रेतांसि जिन्वतो३म्। टेः किम्?। हलन्तेऽन्त्यस्य मा भूत्। **याज्यान्तः ।८।२।९०।** ये याज्या मन्त्रास्तेषामन्त्यस्य टेः प्लुतो यज्ञकर्मणि। जिह्वामग्ने चकृषे हव्यवाहा३म्। अन्तः किम्?। याज्यानामृचां वाक्यसमुदायरूपाणां प्रतिवाक्यं टेः प्लुतः स्यात्। सर्वान्तस्य चेष्यते। **ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः ।८।२।९१।** एषामादेः प्लुतो यज्ञकर्मणि। अग्नयेऽनुब्रू३हि। अग्नये गोमयानि प्रे३ष्य। अस्तु श्रौ३षट्। सोमस्याग्ने वीही३ वौ३षट्। अग्निमा३वह। **अग्नीत्प्रेषणे परस्य च ।८।२।९२।** अग्नीधः प्रेषणे आदेः प्लुतस्तस्मात्परस्य च। ओ३श्रा३वय। **विभाषा पृष्टप्रतिवचने हेः ।८।२।९३।** प्लुतः। अकार्षीः कटम्। अकार्षं ही३। अकार्षं हि। पृष्टेति किम्?। कटं करिष्यति हि। हेः किम्?। कटं करोति ननु। **निगृह्यानुयोगे च ।८।२।९४।** अत्र यद्वाक्यं तस्य टेः प्लुतो वा। अद्याऽमावास्येत्यात्था३!। अमावास्येत्येवंवादिनं युक्त्या स्वमतात्प्रच्याव्य एवमनुयुज्यते। **आम्रेडितं भर्त्सने ।८।२।९५।** दस्यो३दस्यो३घातयिष्यामि त्वाम्।

---

सु.]भवति। प्रणवः। यज्ञकर्मणीति वर्तते। यज्ञकर्मणि टेः प्रणवादेशः स्यात्। तदाह—**यज्ञकर्मणीत्यादि**। **जिन्वतोमिति**। जिविः प्रीणनाऽर्थः। लट् तिप्। टेः प्रणवादेशः। **टेः किमिति**। 'वाक्यस्य टे'रित्यतष्टेरित्यनुवर्तमाने पुनष्टेर्ग्रहणं किमर्थमिति प्रश्नः। असति हि टिग्रहणे 'अलोऽन्त्यस्ये'ति वचनाट्टेर्योऽन्त्योऽल् तस्यौकारः स्यात्, तस्मात्सर्वादेशार्थं टिग्रहणमित्याह—**हलन्तेऽन्त्यस्य माभूदिति**। अजन्ते विशेषाऽभावाद्धलन्ते इत्युक्तम्। **याज्यान्तः**। **ये याज्या मन्त्रा इति**। याज्याकाण्डे पठ्यन्ते ये मन्त्राः। 'याज्यानुवाक्याकाण्ड'मिति समाख्याते प्रकरणे ये मन्त्रा इत्यर्थः। **तेषामिति**। मन्त्राणामित्यर्थः। **'तासा'**मिति पाठे **तासां**—याज्यानाम्। इहेदमन्तग्रहणं टेरित्यस्य निवर्तकं वा स्याद्विशेषणं वा। आद्येऽचाऽन्ते विशेषिते अजन्ताया एव याज्यायाः प्लुतः स्यात्। पक्षान्तरे त्वन्तग्रहणमनर्थकं, टेरन्तत्वाऽव्यभिचारादित्यभिप्रायेणमाह—**अन्तः किमिति**। इतरोऽपि विदिताभिप्राय आह—**यज्यानामृचामिति**। यज्या नाम ऋचः काश्चिद्वाक्यसमुदायरूपाः, तत्र यावन्ति वाक्यानि तेषां सर्वेषां टेः प्लुतः प्राप्नोति, स चान्तस्यैवेष्यते, तदर्थमन्तग्रहणमिति भावः। **अग्नीत्प्रेषणे परस्य च**। अग्नीधः प्रेषणमग्नीत्प्रेषणं [तस्मिन्]। तदाह—**अग्नीधः प्रेषण इति**। **विभाषा पृष्टप्रतिवचने**। विभाषा हेः प्लुतो भवति। **निगृह्य**। 'निगृह्ये'ति ल्यबन्तम्। स्वमतात्प्रच्यवनं निग्रहः। तस्यैव स्वमतस्य 'एवं किल त्वं निरुपपत्तिकमात्थे'ति शब्देन प्रतिपादनमनुयोगः, तत्र यद्वाक्यम्। तदाह—**अत्र यद्वाक्यमिति**। निगृह्यानुयोगे यद्वाक्यमित्यर्थः। 'अद्याऽमावास्ये'त्येवं केनचित्प्रतिज्ञातं, तमुपपत्तिभिर्निगृह्य साऽभ्यसूयमनुयुङ्क्ते **अद्यामावास्येत्यात्थेति**। तदेव विवृणोति—**अमावस्येत्येवमित्यादि**। **दस्यो३दस्यो३ इति**। 'वाक्यादेरामन्त्रितस्ये'त्यादिना द्विर्वचनम्। ननु द्विरुक्तसमुदाये परभागस्यैव प्लुतः प्राप्नोति, न तु पूर्वस्य 'तस्य परमाम्रेडित'मिति परभागस्यैवाम्रेडितसंज्ञाविधानात्, इष्यते द्वयोरपीत्याह—**आम्रेडितग्रहणमित्यादि**। **द्विरुक्तोपलक्षणार्थमिति**।

---

शे.]मिति सूत्रे कैयटस्तु 'सुब्रह्मण्यो'मित्यत्र 'ओमभ्यादाने' इति प्लुतोदात्तत्वं न भवति, तस्याऽयज्ञकर्मविषयत्वा'दिति वदन्प्रारम्भेऽपि अनेन प्लुतमाह। अत एव शुद्धप्रणवजपेऽपि तं प्लुतमेव जपन्ति। अभ्यादानपदेनाऽयज्ञकर्मोच्यते इति तदाशयं वर्णयन्ति। प्लुतश्रुत्या 'अचः' इत्युपस्थितेरचः प्लुतः, मकारस्त्वर्द्धमात्र इति अर्धचतुर्थमात्रोऽयम्। **ये यज्ञकर्मणि**। यज्ञेतिकिम्?। स्वाध्यायकाले माभूदिति। 'ये यजामहे' इत्यत्रैवाऽयं प्लुत इष्यते। तेनेह न—'ये देवासो दिव्येकादश स्थः' इति। 'पित्र्यायां ये३स्वधा' इत्यत्रापि भवति, एतत्स्थानाऽऽपन्नत्वात्तस्य। **प्रणवष्टेः**। टिस्थानिकस्त्रिमात्र ओकार ओङ्कारो वा प्रणव इति भाष्यादौ स्पष्टम्। इदञ्चाथर्वणप्रातिशाख्येऽपि स्पष्टम्। टेरिति तु प्रातिशाख्योक्तटिस्थानिकत्वानुवादः। **हलन्ते इति**। तदभावे टेरित्यनुवृत्त्या तदन्त्यस्यैव स्यात्। व्यभिचाराऽभावाद्धि प्रणवः प्लुतत्वेन न विशेष्यते, येनाऽच्परिभाषाप्रवृत्त्याऽदोषः स्यादिति भावः। **याज्या मन्त्रा इति**। 'याज्यानुवाक्याकाण्ड'मिति समाख्यातप्रकरणस्था इत्यर्थः। **अन्तः किमिति**। यद्यन्तग्रहणं टेरित्यस्य निवृत्त्यर्थन्तदा प्लुतश्रुत्योपस्थितेनाऽचाऽन्ते विशेषितेऽजन्ताया एव याज्यायाः स्यात्, टिविशेषणत्वे त्वनर्थकं, टेरन्तत्वाऽव्यभिचारादिति **प्रश्नः**। **ब्रूहि प्रे**। ब्रूहिस्थानापन्ने 'पित्र्यायामनुस्वधा' इति प्रैषेऽपि प्लुतो भवति, एवं श्रौषट्स्थानापन्ने 'अस्तु स्वधे'ति प्रत्याश्रावणेऽपि भवति, एवं वौषडिति [वोषट्] वौषट् वौश्ट् वौक्षाडित्येवंविधसर्ववषट्काराणामुपलक्षणमिति हरदत्तः। 'आवह देवान् यजमाने'त्यादौ न प्लुतः, छन्दसि सर्वविधीनां वैकल्पिकत्वात्। **तस्मादिति**। आदिभूतादित्यर्थः। 'ओ३ श्रा३ वय' 'आ३श्रा३वय' इत्यनयोरेवायम्। नेह—'अग्निदग्नीन्विहरे'ति। प्लुतमात्रस्य वैकल्पिकत्वात्सिद्धमिदम्। ओं३ स्व ३धेति प्रत्याश्रावणे तत्स्थानापन्नत्वाद्भवत्येव। **पृष्टप्रतिवचनं**—प्रश्नोत्तरम्। **निगृह्येति** ल्यबन्तं। वादिनं स्वमतात्प्रच्याव्येत्यर्थः। **अनुयोगः**—यस्मादसौ प्रच्यावितस्तस्य पक्षस्य शब्देन प्रकाशनम्—'एवन्त्वं निरुपपत्तिकमात्थे'ति। **आम्रेडितं भ**। ल्यबन्ते उदाहरणे 'वाक्यादेरामन्त्रि-

आम्रेडितग्रहणं द्विरुक्तोपलक्षणम्।चौरा३ चौरा३[चौरा३।चौरा३]। **अङ्गयुक्तं तिङाकाङ्क्षम्** ।८।२।९६।अङ्गेत्यनेन युक्तं तिङन्तं प्लवते। अङ्ग कूजा३इदानीं ज्ञास्यसि जाल्म!।तिङ् किम्?।अङ्ग देवदत्त!मिथ्या वदसि।आकाङ्क्षं किम्?। अङ्ग ! पच । नैतदपरमाकाङ्क्षति । भर्त्सन इत्येव । अङ्गाधीष्व, भक्तं तव दास्यामि । **विचार्यमाणानाम्** ।८।२।९७। वाक्यानां टेः प्लुतः । होतव्यं दीक्षितस्य गृहा३ इ, न होतव्य३ मिति । होतव्यं न होतव्यमिति विचार्यते । प्रमाणैर्वस्तुतत्त्वपरीक्षणं विचारः। **पूर्वं तु भाषायाम्** ।८।२।९८। विचार्यमाणानां पूर्वमेव प्लवते। अहिर्नु३ रज्जुर्नु । प्रयोगापेक्षं पूर्वत्वम् । भाषाग्रहणात्पूर्वयोगश्छन्दसीति ज्ञायते । **प्रतिश्रवणे च** ।८।२।९९। वाक्यस्य टेः प्लुतोऽभ्युपगमे, प्रतिज्ञाने, श्रवणाभिमुख्ये च । गां मे देहि भोः ! । हन्त ते ददामी ३ । नित्यः शब्दो भवितुमर्हतीति ३ । दत्त किमात्था ३। **अनुदात्तं प्रश्नान्ताभिपूजितयोः** ।८।२।१००। अनुदात्तः प्लुतः स्यात् । दूराद्धूतादिषु सिद्धस्य प्लुतस्याऽनुदात्तत्वमात्रमनेन विधीयते । अग्निभूता ३ इ । पटा३ उ । अग्निभूते पटो–एतयोः प्रश्नान्ते टेरनुदात्तः प्लुतः । शोभनः खल्वसि माणवका ! ३ । **चिदिति चोपमार्थे प्रयुज्यमाने** ।८।२।१०१। वाक्यस्य टेरनुदात्तः प्लुतः । अग्निचिद्भाया३ त् । अग्निचिदिव भाया३त् । उपमार्थे किम् ? ।

---

सु.]द्विरुक्तसमुदाये भागद्वयोपलक्षणमित्यर्थः।एतच्चाम्रेडितस्य भर्त्सने वृत्त्यसंभवाल्लभ्यते। **अङ्गयुक्तम्** । आकाङ्क्षतीत्याकाङ्क्षम् । पचाद्यच् । **तिङन्तमिति** । आकाङ्क्षं तिङन्तमित्यर्थः । **अङ्ग कूज ३ इति** । अङ्गशब्दोऽमर्षे । कूज अव्यक्ते शब्दे। लोण्मध्यमपुरुषैकवचनम्। **ज्ञास्यसि जाल्मेति**। कूजनफलमस्मिन्नेव क्षणे ज्ञास्यसीत्यर्थः। **अङ्ग देवदत्तेति** । अङ्गशब्दोऽत्रानुनये। 'अङ्ग देवदत्ते'त्येकं वाक्यम्। एतच्च 'मिथ्या वदसि'–एतदपेक्षते। **विचार्यमाणानाम्**। **'कोटिद्वयस्पृग्विज्ञानं विचार इति कथ्यते। विचार्यमाणस्तज्ज्ञानविषयीभूत उच्यते।'** इह तु विचार्यमाणविषयत्वाद्वाक्यानि विचार्यमाणानि–**गृहा ३इ इति** । सप्तम्येकवचनान्तस्य गृहे इत्यस्य 'एचोऽप्रगृह्यस्ये'ति प्लुतविकारः । **पूर्वं तु** । पूर्वेणैव सिद्धे नियमार्थमिदम्। तुशब्दिस्त्वष्टतोऽवधारणार्थः। यथैवं विज्ञायेत–'पूर्वमेव प्लुत' इति, मैवं विज्ञायि–'पूर्वं भाषायामेवे'ति। उदाहरणे 'तु'शब्दो वितर्के । **प्रतिश्रव**। प्रतिश्रवणार्थमाह–**अभ्युपगमे इत्यादि**। अङ्गीकारे इत्यर्थः। **प्रतिज्ञाने इति** । अत्रोभयत्रापि गतिसमासः। अर्थद्वयेऽपि प्रतिपूर्वः शृणोतिः प्रसिद्धः । **आभिमुख्ये चेति** । अत्र 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः । **दत्त किमात्थ ३ इति** । 'किं ब्रूषे' इत्येवं पृच्छ्यते । अत्र श्रवणाभिमुख्यं गम्यते । **अनुदात्तं प्रश्नान्त** । प्रश्नवाक्ये यच्चरमं प्रयुज्यते स प्रश्नान्तः । नाऽनेन प्लुतो विधीयते किं तु दूराद्धूतादिषु विहितस्य प्लुतस्योदात्तत्वे प्राप्ते प्रश्नान्ताभिपूजितयोरनुदात्तत्वगुणमात्रं विधीयते।तदाह–**दूराद्धूतादिष्विति** । तत्रैषा वचनव्यक्तिः,–'प्रश्नान्ते अभिपूजिते च यः प्लुतः सोऽनुदात्तो भवती'ति । तत्राभिपूजिते 'दूराद्धूते चे'ति प्लुत इति, इतरत्र तु 'अनन्त्यस्यापि 'प्रश्नाख्यानयो'रिति ।**अग्निभूता ३ इ इति। पटा ३ उ इति**। 'अगमाः३ पूर्वान् ग्रामा'नित्येतद्वाक्यं 'अग्निभूते पटो' इत्यनन्तरेण समाप्तं । तत्र 'अगम' इत्येवमादीना'मनन्त्यस्यापि प्रश्नाख्यानयो'रिति प्लुतः । 'अग्निभूते' 'पटो' अनयोरनुदात्तः । अभिपूजिते उदाहरणमाह–**शोभनः खल्वसीत्यादि। चिदिति चोप**। चिदित्येतन्निपाते उपमानाऽर्थे प्रयुज्यमाने वाक्यस्य टेरनुदात्तः प्लुतो भवतीत्यर्थः । प्लुतोऽप्यत्राऽज्विधीयते न गुणमात्रम्। इतीति किम् ?। अक्रियमाणे तस्मिन्नुपमानाऽर्थे कस्मिंश्चिच्छब्दे प्रयुज्यमाने चिच्छब्दः प्लुत इति विज्ञायते । इतिशब्दे तु सति 'प्रयुज्यमाने' इत्येतच्चिच्छशब्दस्य विशेषणं, प्लुतस्तु 'वाक्यस्य टे'रित्यधिकारात्तस्यैव भवतीति मनसि विभाव्योदाहरणमुखेनाह–**अग्निचिदिव भायादिति**। अत्र न चिच्छब्दस्य प्लुतः किं तु

---

शे.]तस्ये'ति द्वित्वम्। 'वाक्यस्य टे' रित्यधिकारेप्यत्रानन्त्यस्य भवति। वाक्यादेरेव पदस्य भर्त्सने द्वित्वविधानात्। **'उपलक्षण'मिति** । तत्रैकैकस्येत्यनुवृत्त्या पर्यायलाभः । **अङ्गयुक्तम्** । आकाङ्क्षतीत्याकाङ्क्षं, पचाद्यच् । **इदानीमिति** । कूजनफलमिदानीमेव ज्ञास्यसीत्यर्थः । 'अङ्ग'शब्दोऽमर्षे । प्रत्युदाहरणे त्वनुनये । 'अङ्ग ! देवदत्ते'त्येकं वाक्यम्। एतच्च 'मिथ्या वदसी'त्येतदपेक्षते । **विचार्य्य** । **कोटिद्वयस्पृक्ज्ञानं**–विचारः, तादृशज्ञानविषयीभूतो विचार्यमाणः । इह तु विचार्यमाणार्थविषयत्वाद्वाक्यानि विचार्यमाणानि। **गृहा३ इ इति** । गृहेशब्दस्य प्लुतविकारः। **पूर्वन्तु** ।पूर्वमेवेत्यर्थः। उदाहरणे 'नु'शब्दो वितर्के । **प्रतिश्रवणम्** = अभ्युपगमः,प्रतिज्ञानं,श्रवणाभिमुख्यञ्च । **हन्त ते इति** । प्रार्थिताङ्गीकारो गम्यते। आद्ययोरर्थयोः प्रतिश्रवणशब्दे गतिसमासः, तृतीये 'लक्षणेनाभिप्रती' इति अव्ययीभावः। क्रमेणोदाहरणानि । **अनुदात्तं प्र** । प्रश्नवाक्ये यच्चरमं प्रयुज्यते स प्रश्नान्तः । **दूराद्धूतादिष्विति**। प्रश्नान्ताभिपूजितयोर्यः प्लुतः सोऽनुदात्तो भवतीत्यर्थादिति भावः । तत्राऽभिपूजिते 'दूराद्धूते चे'ति प्लुतः । इतरत्र 'अनन्त्यस्यापि प्रश्नाख्यानयो'रिति । आद्योदाहरणे 'अगमः पूर्वा३न् ग्रामान्'इत्यादिः । **टेरनुदात्त इति**।'अगम' इत्यादौ 'अनन्त्यस्यापी'ति प्लुतः स्वरितः। **प्लुत इति** । स च पूर्वभागस्य, उत्तरस्य तु उदात्ताविदुतौ भवतः । 'अग्निचि'दिति व्याचष्टे—**अग्निरिवेति** । **कथ-**

कथंचिदाहुः । प्रयुज्यमाने किम् ? । अग्निर्माणवको भायात् । **उपरिस्विदासीदिति च** ।८।२।१०२। टेः प्लुतोऽनुदात्तः स्यात् । उपरिस्विदासी ३ त् । 'अधः स्विदासी३त्'–इत्यत्र तु 'विचार्यमाणाना'मित्युदात्तः प्लुतः । **स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु** ।८।२।१०३। स्वरितः प्लुतः स्यादाम्रेडिते परेऽसूयादौ गम्ये । **असूयायाम्**–अभिरूपका३ अभिरूपक! रिक्तं ते आभिरूप्यम्। **संमतौ**–अभिरूपका ३ अभिरूपक ! शोभनोऽसि । **कोपे**–अविनीतका ३ अविनीतक! इदानीं ज्ञास्यसि जाल्म !। **कुत्सने**–शाक्तीका ३ शाक्तीक ! रिक्ता ते शक्तिः । **क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्** ।८।२।१०४। आकाङ्क्षस्य तिङन्तस्य टेः स्वरितः प्लुतः स्यादाचारभेदे । स्वयं ह रथेन याती ३ उपाध्यायं पदातिं गमयति। **प्रार्थनायाम्**-पुत्रांश्च लप्सीष्टा ३ धनं च तात !। **व्यापारणे**–कटं कुरू ३ ग्रामं गच्छ । आकाङ्क्षं किम् ? । दीर्घायुरसि अग्नीदग्नीन्विहर। **अनन्त्यस्यापि प्रश्नाख्यानयोः** ।८।२।१०५। अनन्त्यस्याऽन्त्यस्यापि पदस्य टेः स्वरितः प्लुत एतयोः। अगमा:३ पूर्वा ३ न् ग्रामा३न् । सर्वपदानामयम् । **आख्याने**–अगमा३म् पूर्वा३न् ग्रामा३ न् । **प्लुतावैच इदुतौ** ।८।२।१०६। दूराद्धूतादिषु प्लुतो विहितस्तत्रैव ऐचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लवेते । ऐ३तिकायन !। औ३पगव !। चतुर्मात्रावत्र ऐचौ संपद्येते। **एचोऽप्रगृह्यस्याऽदूराद्धूते पूर्वस्यार्द्धस्याऽऽदुत्तरस्येदुतौ** ।८।२।१०७। अप्रगृह्यस्य एचोऽदूराद्धूते प्लुतविषये पूर्वस्याऽर्द्धस्याऽऽकारः प्लुतः स्यादुत्तरस्य त्वर्द्धस्येकारोकारौ स्तः। * **प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्वेव** । **प्रश्नान्ते**–अगमा:३पूर्वा३न् ग्रामा३न् अग्निभूता३ इ ।

---

सु.]भायादित्यस्यैव । अक्रियमाणे तु इतिशब्दे चिच्छब्दस्यैव प्लुतः स्यात् , अग्निचिन्नाया३दित्यत्र न स्यादिति भावः। **कथंचिदिति** । अत्र कष्टे चिच्छब्दः। **अग्निर्माणवको भायादिति**। अग्निरिव माणवको दीप्येतेत्यर्थः । अत्रोपमानार्थस्य गम्यमानत्वादस्ति चिच्छब्दस्य प्रतीतिः । प्रयोगस्तु नास्ति । यद्यन्येषामप्युपमानार्थानामिवादीनामस्ति प्रतीतिस्तथापि चिच्छब्दस्याऽपि तावदस्तीति भावः। **उपरिस्विदासीदिति** । अत्रापि 'विचार्यमाणाना'मिति विहितस्य प्लुतस्य गुणमात्रं विधीयते । **स्वरितमाम्रेडिते** । उदाहरणे सर्वत्र 'वाक्यादेरामन्त्रितस्ये'ति द्विर्वचनम् । **क्षियाशीः**। **क्षिया**–आचारोल्लङ्घनम् । इष्टाशंसनमाशीः । **दीर्घायुरसि अग्नीदग्नीन्विहरेति** । क्षियायां तु न प्रत्युदाहृतं, नित्यसाकाङ्क्षत्वात् । न हि 'स्वयं ह रथेन याती'त्युक्ते आचारभेदो गम्यते, किं तर्हि, 'उपाध्यायं पदातिं गमयती'त्युक्ते । **प्लुतावै**। उदाहरणे 'गुरोरनृतः' इति प्लुतः। **चतुर्मात्राविति** । एचौ समाहारवर्णौ, तत्र मात्रा अवर्णस्य, मात्रा–इवर्णोवर्णयोः । तत्र इदुतोः प्लुते कृते तयोस्तिस्रो मात्रा, अवर्णस्य चैका मात्रेति समुदायश्चतुर्मात्र इत्यर्थः। नन्वत्रार्द्धमात्राऽवर्णस्याऽध्यर्द्धमात्रेवर्णोवर्णयोरिति मतेऽर्द्धचतुर्मात्रावप्येचौ प्राप्नुतः। सत्यम् । 'चतुर्मात्रः प्लुत इष्यते' इति भाष्यात् समविभाग एवात्राश्रीयत इति भावः । परिगणनमाह–**प्रश्नान्तेत्यादि** । 'अनुदात्तं प्रश्नान्ताभिपूजितयोः' 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इति चाऽनुदात्तः, स्वरितो वा प्लुतः । **अभिपूजिते**–'अनुदात्तं प्रश्नान्ताभिपूजितयो'रिति प्लुतः । **विचार्यमाणे**–'विचार्यमाणाना'मिति प्लुतः । **प्रत्यभिवादे**–'प्रत्यभिवादेऽशूद्रे' इति प्लुतः । **याज्यान्ते**–'याज्यान्ते'

---

शे.]**श्चिदिति** । कृच्छ्रेऽत्र चिच्छब्दः। **अग्निर्माणवक इति**। अग्निरिव माणवको दीप्येतेत्यर्थः। यद्यप्यन्येषामप्युपमार्थानामिवादीनामस्ति प्रतीतिस्तथापि चिच्छब्दस्याप्यस्ति इति स्यादेव प्लुतः, प्रयोगाऽभावात्तु नेति भावः । चः प्लुतसमुच्चयार्थः।एतदेव ज्ञापयति–'पूर्वसूत्रे गुणमात्रं विधीयते' इ[ती]ति बोध्यम्। **उपरिस्वि**।अनेन 'विचार्यमाणाना'मिति विहितप्लुतस्यानुदात्तत्वमात्रं विधीयत इति हरदत्तः । 'उपरी'त्यादेः कृत्यं दर्शयति–**अधःस्विदिति** । **स्वरितमा** । उदाहरणे 'वाक्यादेरामन्त्रितस्ये'ति द्वित्वम् । अयमपि प्लुतो वैकल्पिकः । **क्षियाशीः** । **क्षिया**–आचारोल्लङ्घनम्। इष्टप्रार्थनम्–= आशीः । **प्रैषः** = प्रेषणम्। उदाहरणेषु पूर्वंतिङन्तमुत्तरमाकाङ्क्षति। **अनन्त्यापि प्र**।आद्योदाहरणे 'भो अग्निभूता३ इ'इति शेषः। तत्रान्त्यस्य तु 'अनुदात्तं प्रश्नान्ताभिपूजितयो'रिति अनुदात्तोऽपि पक्षे इति वृत्तिः। यद्यपि तत्र विकल्पो न श्रुतस्तथाप्यपिशब्देनान्त्यस्याप्यनेन स्वरितप्लुतविधानात्पाक्षिकत्वं फलति । **आख्यानम्**–प्रश्नस्योत्तरम् । **तदवयवाविति** । वचनसामर्थ्याद्वर्णैकदेशयोरिह ग्रहणम् । उदाहरणे दूराद्धूते 'गुरोरनृत' इति प्लुतः । **चतुर्मात्राविति** । ऐचोर्मात्राऽवर्णस्य मात्रेवर्णोवर्णयोरिति उत्तरखण्डस्य त्रिमात्रत्वे चतुर्मात्रतेति भावः । स्पष्टश्चेदं भाष्ये । अत्र चतुर्मात्रस्याऽच्त्वमपि, तेन प्रत्यङ्ङैतिकायनेत्यादौ ङमुडादि सिध्यतीति बोध्यम् । **याज्यान्तेष्वेवेति** । अनेनास्य परिगणनत्वं दर्शयति।'पूर्वार्धस्य आ'दिति च्छेदः।अत्राऽऽकारः प्लुतःस प्रश्नान्तेऽनुदात्तः,स्वरितो वा,शेषेषूदात्त इति बोध्यम्। इदुतौ 'टेरुदात्त' इत्यधिकारादुदात्तावेव । व्याख्यानादुदात्तग्रहणं प्लुतेनेदुद्भ्यां च संबध्यते। प्लुतपदं च अत एवाऽऽद्ग्रहणेनैव संबध्यते, नेदुद्भ्याम् । **अदूराद्धूत इति न वक्तव्यमिति** । परिगणनसत्त्वे तेनैव सिद्धत्वादिति भावः । इदञ्च

अभिपूजिते–भद्रं करोषि पट३ उ । विचार्यमाणे–होतव्यं दीक्षितस्य गृहा ३ इ, [न होतव्या ३ मिति] । प्रत्यभिवादे–[आयुष्मान्] एधि अग्निभूता ३ इ !। याज्यान्ते–स्तोमैर्विधेमाऽग्नया ३ इ । परिगणनं किम् ?। विष्णुंभूते३ घातयिष्यामि त्वाम् । अदूराद्धूत इति न वक्तव्यम् , पदान्तग्रहणं तु कर्तव्यम् । इह मा भूत्–भद्रं करोषि गौ३रिति । अप्रगृह्यस्य किम् ?। शोभने माले३ ।॥आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः । अग्ना ३ इ पत्नी वा३ । **तयोर्य्वावचि संहितायाम्** ।८।२।१२८। इदुतोर्यकारवकारौ स्तोऽचि संहितायाम् । अग्ना ३ याशा । पटा३ वाशा ।'अग्ना३ यिन्द्रम् । पटा ३ वुदकम् । अचि किम् ?। अग्ना ३इ[वरुणौ]। संहितायां किम् ?। अग्ना ३ इ इन्द्रम् । 'संहितायाः'मित्यध्यायसमाप्तेरधिकारः। इदुतोरसिद्धत्वादयमारम्भः। सवर्णदीर्घत्वस्य शाकल्यस्य वा निवृत्त्यर्थं, यवयोरसिद्धत्वात् 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्ये'त्यस्य बाधनार्थं वा ।

---

सु.]इति प्लुतः। **विष्णुभूते इति**। नन्विदं परिगणनस्योदाहरणमयुक्तं,यावता सूत्रे एवाऽदूराद्धूत इत्युच्यते, अत आह–**अदूराद्धूत इति न वक्तव्यमिति** । अन्यार्थमवश्यं कर्तव्ये परिगणने तेनैव सिद्धत्वाददूराद्धूत इति न वक्तव्यम् । **भद्रं करोषि गौ३रिति**। अत्राऽसर्वनामस्थान इति प्रतिषेधात्सौ परतः पूर्वं पदं न भवति। **शोभने माले ३ इति**। 'ईदूदेद्द्विवचन'मिति प्रगृह्यसंज्ञा । **आमन्त्रिते इति**। अप्राप्ते एव प्लुते वचनम्। **अग्ना ३ इ इति**।अग्निशब्दस्य संबुद्धौ रूपम्। 'सामन्त्रित'मित्यामन्त्रितसंज्ञा । **तयोर्य्वा** । नन्विदं व्यर्थम् , 'इको यणची'त्यनेनैव सिद्धमत आह–**इदुतोरसिद्धत्वादिति** । [ननु] सिद्धः प्लुतः स्वरसन्धिषु, कथं ज्ञायते ?। 'प्लुतप्रगृह्या अची'ति प्रकृतिभावविधानात् । यस्य हि विकारः प्राप्तस्तस्य प्रकृतिभावो विधेयः, प्लुतस्याऽसिद्धत्वेन तस्य स्वरसन्ध्याख्यो विकारः प्राप्नोति । अस्तु प्लुतः सिद्धः, किमायातमिदुतोः?। उच्यते । प्लुतप्रकरणे यत्कार्यं तत्स्वरसन्धिषु सिद्धमिति सामान्येन ज्ञापकमाश्रयिष्यते, ततश्चेदुतोरपि सिद्धत्वात्सिद्ध एव यणादेशोऽत आह–**सवर्णदीर्घत्वस्येति**। यदीदं नोच्येत अग्ना ३ इ इन्द्रं. पटा ३ उ उदकमित्यत्र षाष्ठिकं यणादेशं बाधित्वा सवर्णदीर्घः स्यात् । अग्ना ३ याशेत्यादौ च 'इकोऽसवर्णे शाकल्यस्ये'ति प्रकृतिभावः स्यात् , तद्बाधनार्थमिदं वक्तव्यमेव।ननु च तन्निवृत्तये यत्नान्तरमस्ति।किं पुनस्तत् ?। 'प्लुतपूर्वस्य यणादेशो वक्तव्यः, सवर्णदीर्घनिवृत्त्यर्थः शाकलनिवृत्त्यर्थश्च'।तच्चावश्यं वक्तव्यं य इक् प्लुतपूर्वो न च प्लुतविकारः–भो३इ इन्द्रं, भो ३ यिन्द्रं गायतीति। भोःशब्दस्य छान्दसः प्लुतः,ततः परस्येकारस्य निपातत्वात् प्रकृतिभावे प्राप्ते तं बाधित्वा यणादेशः।तदेवं तस्यावश्यं कर्तव्यत्वे तेनैव यणा सिद्धेऽत आह–**यवयोरित्यादि**। तथाचोक्तं वृत्तिकृता–'किं तु यणा भवतीह न सिद्धं य्वाविदुतोर्यदयं विदधाति। तौ च मम स्वरसन्धिषु सिद्धौ, शाकलदीर्घविधी तु निवर्त्यौ। इक् च यदा भवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादम् । तेन तयोश्च न शाकलदीर्घौ, यण्स्वरबाधनमेव तु हेतुः' । अयमर्थः–'इको यणचीति यणादेशेन किं रूपं न सिध्यति?, यतोऽयमाचार्यः इदुतोर्य्वौ विदधाति, तौ चेदुतौ स्वरसन्धिषु सिद्धौ ममेति सूत्रकारेणैकीभूतस्य वचनम् । एवं चोदिते परिहरति–'**शाकलदीर्घविधी तु निवर्त्या**'विति । शाकल्यस्येदं शाकलं । 'कण्वादिभ्यो गोत्रे' इत्यण् । पुनश्चोदयति–'**इक् च यदे**'ति । वार्तिककारोऽपि इकः प्लुतपूर्वस्य यणं विदधाति । स च प्रकृतिभावस्येव शाकलदीर्घविध्योरप्यपवादः।ततश्च तेनैव यणा एनयोरपि इदुतोः शाकलदीर्घौ न भविष्यत इति नार्थ एतेन।परि-

---

शे.]वृत्त्यनुरोधेन। के चित्तु परिगणनेऽपीदं कार्यमेव । अत्र दूराद्धूतपदं न संबोधनमात्रोपलक्षणं,किं तु यथाश्रुतमेवेति दूरादाह्वानसंबोधनविशिष्टाभिपूजितार्थे 'स्वागच्छ भो माणवकाभिभूते' इत्यादौ नाऽस्य प्रवृत्तिरिति न परिगणनेन प्रत्याख्यानं युक्तम्। 'अदूराद्धूत इति न वक्तव्य'मित्यनुक्तया भाष्यात्तथैव लाभादित्याहुः। **गौ३रिति** । 'सावपि पद'मिति पक्षे वाक्यान्तत्वाऽभावान्न दोषः.। पदशब्देन वाक्यमप्युच्यत इति बोध्यम् । **आमन्त्रिते छन्दसीति** । अप्राप्ते प्लुतविकारे इदम् । दूरादाह्वानस्वत्वात्परिगणनाच्चाऽप्राप्तिः। प्लुतस्तु 'गुरोरनृत' इति प्राप्नोत्येव । तेन वाक्यान्तपदाऽनन्त्यस्यैव प्लुत इत्यत्र तु न मानम्। **तयोर्य्वा**। **तयोः** = पूर्वसूत्राभ्यां विहितयोरिदुतोरित्यर्थः।ननु 'इको यणची'त्येव सिद्धे इदं व्यर्थमत आह–**इदुतोरसिद्धत्वादिति** । ननु प्लुतस्य प्रकृतिभावविधानात्सामान्यापेक्षज्ञापकात् प्लुतप्रकरणीयकार्यस्य स्वरसन्धिषु सिद्धत्वज्ञापनेन सिद्धो यणत आह–**सवर्णदीर्घत्वस्येति**। 'अग्ना ३ इ इन्द्र'मित्यादौ। **शाकल्यस्य वेति**। 'अग्ना ३ याशे'त्यादौ । **शाकल्यम्**–'इकोऽसवर्णे'इति प्रकृतिभावः। ननु भो इ इन्द्रेति स्थिते भोःशब्दस्य छान्दसे प्लुते ततः परस्येकारस्य निपातत्वात्प्रकृतिभावे प्राप्ते यणादेशार्थम् 'इकःप्लुतपूर्वस्य यणादेशो वक्तव्यः,सवर्णदीर्घशाकलनिवृत्त्यर्थ'मिति वचनमावश्यकम् । न च तत्राऽनेन सिद्धिः, इकः प्लुतविकारत्वाऽभावात् । एवञ्च तेनैव यणिसिद्धेऽत आह–**यवयोरसिद्धत्वादुदात्तेत्यादि** । तेन हि यणि तस्य सिद्धत्वादयं स्वरो दुर्वार इति भावः । यद्यपीह प्लुतप्रकरणे बहूनि सूत्राणि लोकवेदसाधारणानि,तथापि तस्य वैकल्पिकत्वेन लोके तदादराऽभावाद्वेदे च तदादराद्वैदिक्यामेव लिखिता-

मतुवसो रु संबुद्धौ छन्दसि ।८।३।१। 'रु' इत्यविभक्तिको निर्देशः।मत्वन्तस्य वस्वन्तस्य च रुः स्यात्। 'अलोऽन्त्यस्ये'ति परिभाषया नकारस्य । इन्द्र मरुत्व इह पाहि सोमम् । हरिवो मेदिनं त्वा । 'छन्दसीरः' इति वत्वम् । दाश्वान्साह्वान्मीढ्वांश्च ।६।१।१२। एते क्वसन्ता निपात्यन्ते । मीढुष्टोकाय तनयाय । * वन उपसङ्ख्यानम् । क्वनिब्वनिपोः सामान्यग्रहणम् ,[अनुबन्धपरिभाषा तु नोपतिष्ठते,] अनुबन्धस्येहाऽनिर्देशात् । यस्त्वायन्तं वसुना प्रातरित्वः । इणः क्वनिप् । उभयथर्क्षु ।८।३।८। अम्परे छवि नस्य रुर्वा । पशूँस्ताँश्चक्रे । दीर्घादटि समानपादे ।८।३।९। दीर्घान्नकारस्य रुर्वा स्यादटि,तौ चेन्नाऽटौ एकपादस्थौ स्याताम् । देवाँ ऽअच्छा सुमती । महाँऽइन्द्रो य ओजसा । उभयथेत्यनुवृत्तेर्नेह–आदित्यान्याचिषामहे । आतोऽटि नित्यम् ।८।३।३। अटि परतो रोः पूर्वस्याऽतः स्थाने नित्यमनुनासिकः। महाँऽइन्द्रः। तैत्तिरीयास्तु अनुस्वारमधीयते। तत्र छान्दसो व्यत्यय इति प्राञ्चः । एवं च सूत्रस्य फलं चिन्त्यम् । स्वतवान्पायौ ।८।३।११। रुर्वा । भुवस्तस्य स्वतवाँः पायुरग्ने। छन्दसि वाऽप्राऽऽम्रेडितयोः।८।३।४९। विसर्गस्य सो वा स्यात्कुप्वोः, प्रशब्दमाम्रेडितं च वर्जयित्वा । अग्ने त्रातर्ऋतस्कविः । गिरिर्न विश्वतस्पृथुः । नेह–वसुनः पूर्व्यः पतिः । अग्नेत्यादि किम् ? । अग्निः प्र

---

सु.]हरति–'यण्स्वरे'ति । यण्स्वरबाधनमेव हेतुः सूत्रारम्भस्येति । मतु । अनुबन्धपरित्यागेन सकारान्तस्य वस् इत्यस्य मतुपा सह द्वन्द्वः । अल्पाच्तरस्यापि सौत्रः परनिपातः । मरुत्व इति । मरुतो यस्य सन्तीति मतुप् । 'झयः' इति वत्वम्। 'तसौ मत्वर्थे' इति भत्वाज्जस्त्वं न। हरिवो मेदिनमिति । हरयो विद्यन्ते यस्येति मतुप् । हरिवच्छब्दात्संबुद्ध्येकवचने'उगिदचा'मिति नुम्। हल्ड्यादिलोपे संयोगान्तस्य च लोपे कृते नकारस्य रुः।'संयोगान्तलोपो रुत्वे सिद्धो वक्तव्यः' इति वचनात् 'हशि चे'त्युत्वम् । प्रसङ्गादाह–दाश्वानिति । क्वनिब्वनिपोः सामान्यग्रहणमिति। अनुबन्धाऽनिर्देशात्तदनुबन्धकपरिभाषाया अनुपस्थानात् क्वनिपोऽपि ग्रहणम् । प्रातरित्व इति । प्रातरेतीति 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप् । 'ह्रस्वस्य पिति कृति तुक्' । तदाह–इणः क्वनिबिति । उभयथा । 'नश्छव्यप्रशान्' इति वर्तते । तेनैव नित्ये प्राप्ते विकल्पार्थं वचनम् । पशूँस्ताँश्चक्रे इति । पशून्–तानिति स्थिते नस्य रुः । पूर्वत्र 'अत्रानुनासिकः' इति वाऽनुनासिकः । उत्तरत्र तु 'आतोऽटि नित्य'मित्यनुनासिकः । रेफस्य विसर्गः । तस्य 'विसर्जनीयस्ये'ति सः । दीर्घादटि समानपादे । एकपर्यायः समानशब्दः। तदाह–तौ चेन्नाटावेकपादस्थाविति। नाऽटौ–नकाराऽटौ। देवाँ अच्छा।महाँ इन्द्रो इति। देवान् अच्छा, महानिति नस्य रुः । 'आतोऽटि नित्य'मिति नित्यमनुनासिकः। नेहेति । एतेन 'महान् हि स' इति बह्वृचानां पाठोऽपि व्याख्यातः । आकरे तु 'महाँ ह्री'त्युदाहृतं तच्छाखान्तरेऽन्वेषणीयम् । एवं चेति । विकल्पस्यैव व्यवस्थिततया प्रकृतसूत्रत्यागेन महल्लाघवं, सूत्रारम्भे तु व्यत्ययोऽपि शरणीकरणीय इति महान् क्लेश इति भावः।स्वतवान्पायौ। स्वतवानित्येतस्य नकारस्य रुर्वा पायुशब्दे परे । स्वतवा इति । 'तु वृद्धौ' सौत्रो धातुः, ततोऽसुन् । स्वं तवो यस्यासौ स्वतवान् । 'ह्रस्ववःस्वतवसां छन्दसी'ति नुम्। परुषः परुष इति। वीप्सायां द्विर्वचनम् । कः करत्। 'क'रिति–कृञो लुङ् । 'मन्त्रे घसे'त्यादिना च्लेर्लुक् । तिपि गुणः । हल्ड्यादिलोपः । 'बहुलं छन्दस्यमाङ्योगेऽपी'त्यडभावः । 'कर'दिति कृञ एव लुङ् ।

---

शे.]नीनि ध्येयम् । मतुवसो रु । पदस्येति वर्त्तते । प्रसङ्गादाह–दाश्वानिति । दाशेः क्वसावद्वित्वमनिट्त्वंच निपात्यते । 'षह मर्षणे' इत्यस्य परस्मैपदं क्वसुरद्वित्वमनिट्त्वमुपधादीर्घत्वं च निपात्यते । 'मिह सेचने' इत्यस्मात्क्वसावद्वित्वमनिट्त्वं च निपात्यते । सूत्रे एकवचनमतन्त्रम् । 'दाश्वासः', 'दाशुषः सुत'मिति प्रयोगदर्शनात् । यद्यपीदं लोकवेदसाधारणं तथापि लोके प्रयोगप्राचुर्याऽभावादत्रैवोदाहृतम्। मीढ्व इति। अत्र 'मतुवसो' रिति रुत्वम्।'अत्रानुनासिकः' इत्यादि वसो रुत्वे फलम् । अनुबन्धस्येहेति । अत एव 'वनो र चे'ति सूत्रे सामान्यग्रहणमुक्तम् । एवञ्च 'इष व्रीही'त्यादौ सामान्यग्रहणस्य निर्बाधत्वे 'जहातेः ककारः सामान्यग्रहणनिर्वाहार्थ' इति प्राचां ग्रन्थाश्चिन्त्याः।इणः क्वनिबिति । प्रातरेतीत्यर्थे 'अन्येभ्योऽपि दृश्यन्ते' इत्यनेन । ह्रस्वस्य तुक् । नस्येति । नान्तपदस्येत्यर्थः। एकपादेति। ऋक्ष्विति प्रकृतत्वादृक्पाद एवेह गृह्यते । समानशब्द एकपर्यायः । देवाँ अच्छेति । वक्ष्यमाणेन 'आतोऽटि' इत्यनेनाऽनुनासिकः।उभयथेति। एवञ्चाऽटि समानपाद इति व्यर्थ, छन्दस्यापाद्यमानरूपाऽभावात् । एतेन 'महान् हि सः' इति बह्वृचानां पाठो व्याख्यातः । आकरे तु 'महाँ ह्री'त्युदाहृतं, तच्छाखान्तरेऽन्वेष्टव्यम् । भिन्नपादेऽपि क्वचिद् दृश्यते तत्सूत्ररीत्या छान्दसत्वाद्बोध्यम् । आतः । आकारस्य । महाँ इन्द्र इति । 'दीर्घादटि' इति रुत्वम् । एवञ्चेति । सर्वविकल्पानां छन्दसि व्यवस्थिततया प्रकृतसूत्रत्यागे महल्लाघवम् । सूत्रारम्भे तु व्यत्ययः शरणीकर्तव्य इति महान् क्लेश इति भावः। तुधातोरसुन् । स्वन्तवो यस्यासौ स्वतवान्। 'ह्रस्ववःस्वतवसां छन्दसी'ति नुम् । छन्दसि वा ।

विद्वान्। परुषः परुषस्परि। **कःकरत्करतिकृधिकृतेष्वनदितेः** ।८।३।५०। विसर्गस्य सः स्यात्। प्रदिवो अपस्कः। यथा नो वस्यसस्करत्। सुपेशसस्करति। उरुणस्कृधि। सोमं न चारुं मघवत्सु नस्कृतम्। अनदितेरिति किम्?। यथा नो अदितिः करत्। **पञ्चम्याः परावध्यर्थे** ।८।३।५१। पञ्चमीविसर्गस्य सः स्यादुपरिभावाऽर्थे परिशब्दे परतः। दिवस्परि प्रथमं जज्ञे। अध्यर्थे किम्?। दिवस्पृथिव्याः पर्योजः। **पातौ बहुलम्** ।८।३।५२। पञ्चम्या इत्येव। सूर्यो नो दिवस्पातु। **षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु** ।८।३।५३। वाचस्पतिं विश्वकर्माणम्। दिवस्पुत्राय सूर्याय। दिवस्पृष्ठं भन्दमानः। तमसस्पारमस्य। परिवीत इळस्पदे। दिवस्पयो दिधिषाणाः। रायस्पोषं यजमानेषु। **इडाया वा** ।८।३।५४। पतिपुत्रादिषु परेषु। इळायास्पुत्रः। इळायाः पुत्रः। इळायास्पदे। इळायाः पदे। **'निसस्तपतावनासेवने'**। निसः सकारस्य मूर्धन्यः स्यात्। निष्टप्तं रक्षो निष्टप्ता अरातयः। अनासेवने किम्?। निस्तपति। पुनःपुनस्तपतीत्यर्थः। **युष्मत्तत्ततक्षुष्वन्तःपादम्** ।८।३।१०३। पादमध्यस्थस्य सस्य मूर्धन्यः स्यात्तकारादिषु परेषु। युष्मदादेशाः त्वंत्वातेतवाः। त्रिभिष्ट्वं देव सवितः। तेभिष्ट्वा। अग्निष्टे। अप्स्वग्ने सधिष्टव। अग्निष्टद्विश्वम्। द्यावा पृथिवी निष्टतक्षुः। अन्तःपादं किम्?। तदग्निस्तदर्यमा। यन्म आत्मनो मिन्दाऽभूदग्निस्तत्पुनराहार्जातवेदा विचर्षणिः। अत्राऽग्निरिति पूर्वपादस्याऽन्तो न तु मध्यः। **यजुष्येकेषाम्** ।८।३।१०४। युष्मत्तत्ततक्षुष्षु परतः सस्य मूर्धन्यो वा। अर्चिभिष्ट्वम्। अग्निष्टे अग्रम्। अर्चिभिष्टतक्षुः। पक्षे अर्चिभिस्त्वमित्यादि। **स्तुतस्तोमयोश्छन्दसि** ।८।३।१०५। नृभिः ष्टुतस्य। नृभिः स्तुतस्य। गोष्टोमम्। गोस्तोमम्। पूर्वपदादित्येव सिद्धे प्रपञ्चार्थमिदम्। **पूर्वपदात्** ।८।३।१०६। पूर्वपदस्थान्निमित्तात्परस्य सस्य षो वा। यदिन्द्राग्नी दिवि ष्ठः। युवं हि स्थः स्वर्पती। **सुञः** ।८।३।१०७। पूर्वपदस्थान्निमित्तात्परस्य सुञो निपातस्य सस्य षः। ऊर्ध्व ऊ षु णः। अभी षु णः। **सनोते-**

---

सु.]'कृमृदृरुहिभ्यश्छन्दसी'ति च्लेरङ्।'ऋदृशोऽङी'ति गुणः।**करतीति**–लट्। व्यत्ययेन शप्। **कृधीति** लोट्। सेर्हिः। 'श्रुशृणुपृकृवृभ्यश्छन्दसी'ति हेर्धिरादेशः। **कृत इति**। कृञ एव क्तः। **पर्योज इति**।अत्र परिः सर्वतोभावे वर्तते। **पातौ च**। क्वचित्पठ्यते–पताविति। **धातुनिर्देश इति**। अन्ये तूदाहरणपर्यालोचनया लोडन्तानुकरणं मन्यन्ते। **षष्ठ्याः**। **वाचस्पतिमिति**। 'तत्पुरुषे कृति बहुल'मिति षष्ठ्यलुक्। **निसस्तपतौ**। **आसेवनं**–पौनःपुन्यं, ततोऽन्यस्मिन्नित्यर्थः। **युष्मत्तत्ततक्षुष्ष्विति**। सकारान्तानुकरणात् परस्य सुप्सकारस्य 'नुम्विसर्जनीयशर्व्यवायेऽपी'ति षत्वम्। 'ह्रस्वात्तादौ' इत्यतस्तादाविति वर्तते। तदाह–**तकारादिष्विति**। एतद्युष्मद एव विशेषणं, नेतरयोः, अव्यभिचारात्। **त्वंत्वातेतवा इति**। एतेषामेव संभव इत्यर्थः। **स्तुतस्तोमयोः**। एतयोः परतः सस्य षः स्यात्। **पूर्वपदादित्येव सिद्ध इति**। पूर्वं पदं पूर्वपदमिति सामान्येन आश्रीयते न तु समासावयव एवेति वाक्येऽपि तेनैव सिद्धं षत्वमिति भावः। ततश्च स्तुतस्तोमग्रहणं प्रपञ्चार्थं,छन्दोग्रहणं तूत्तरार्थं कर्तव्यमेव। **ऊषुण इत्यादि**। 'इकः सुञी'ति पूर्वपदस्य दीर्घत्वं, नस् इत्यादेशस्य 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम्। **सनोतेरनः**। अनन्तस्य सनोतेः सस्य षः

---

शो.]व्यवस्थितविकल्पेनैव सिद्धे'ऽग्रे'त्यादि स्पष्टार्थम्,एवमुत्तरसूत्राण्यपि।**करिति**। कृञो लुङ्।'मन्त्रे घसे'ति च्लेर्लुक्। तिपि गुणः। तिपो हल्ङ्यादिलोपः। 'बहुलं छन्दसी'त्यडभावः। **करदिति**। कृञ एव लुङ्। 'कृमृदृ' इति च्लेरङ्। **करतीति**। लट्।व्यत्ययेन शप्। **कृधीति**। कृञो लोट्।सेर्हिः। 'बहुलं छन्दसी'ति शपो लुक्, छान्दसत्वाद्विकरणाऽभावो वा। 'श्रुशृणुपृकृवृभ्यः' इति हेर्धिः। **कृतमिति**। कृञः क्तः। **सः स्यादिति**। षत्वस्याप्युपलक्षणम्। अत एवाऽदितिप्रतिषेधः। यत्र तु 'शं नः कर'दित्यादौ सत्वं न दृश्यते तत्र छान्दसत्वात्सत्वाऽभावो बोध्यः। **पञ्चम्याः प**। अध्यर्थे इति परेर्विशेषणम्। **दिवस्परीति**। दिव उपरीत्यर्थः। व्यत्ययेन षष्ठीस्थाने पञ्चमी। **पर्योज इति**। अत्र परिः सर्वतोभावे। **पातौ च**। न च भवति–'परिषदः पातु'। पाताविति लोडन्तं 'पातु' इत्यस्याऽनुकरणम्।

**षष्ठ्याः प**। षष्ठीविसर्गस्य सादेशः पत्यादिषु परेषु। **वाचस्पत्यादौ**–'तत्पुरुषे कृती'त्यलुक्। षष्ठ्या इति किम्?। मनुः पुत्रेभ्यो दायमिति। **इडाया इति** षष्ठ्यन्तानुकरणम्। पतीत्याद्यनुवर्तते। **निसस्तपता**। अस्य लोकवेदसाधारणत्वादत्रोपन्यासश्चिन्त्यः। उदाहरणे सकृत्तप्तमित्यर्थः। **युष्मत्तत**। 'ह्रस्वात्तादौ' इत्यतस्तादाविति वर्तते। तच्च युष्मदो विशेषणं, नेतरयोः, अव्यभिचारात्। **ततक्षुष्ष्विति** सान्तानुकरणात्परस्य सुप्सकारस्य 'नुम्विसर्जनीये'ति षत्वम्। पूर्वस्य ष्टुत्वम्। सूत्रे तादाविति विशेषणाद्युष्मदादेशानां ग्रहणं, तदाह—**त्वमित्यादि**। **यजुष्ये**। यजुर्विषये इत्यर्थः। **स्तुतस्तो**। एकेषामिति वर्तते। **प्रपञ्चार्थमिति**। पूर्वं पदं पूर्वपदमिति सामान्येन तत्राश्रीयते न तु समासावयव एव इति वाक्येऽपि तेनैव सिद्धं षत्वमिति भावः।**पूर्वपदात्**। छन्दसीति वर्तते, एकेषामिति च। पूर्वपदमात्रस्य ग्रहणमित्याशयेन षत्वाऽभावे उदाहरति—**युवं हि स्थ इति**।**सुञः**।सुञिति निपातग्रहणम्।

रनः ।८।३।१०८। गोषा इन्द्रो नृषा असि । अनः किम् ?। गोसनिः । **सहेः पृतनर्ताभ्यां च** ।८।३।१०९। पृतनाषाहम्। ऋताषाहम्। चात्–ऋतीषाहम्। **निव्यभिभ्योऽड्व्यवाये वा छन्दसि** ।८।३।११९। सस्य मूर्द्धन्यः। न्यषीदत्।[न्यसीदत्। व्यषीदत्। व्यसीदत्। अभ्यषीदत् । अभ्यसीदत् ]। अभ्यष्टौत्। अभ्यस्तौत्। **छन्दस्यृदवग्रहात्** ।८।४।२६। ऋकारान्तादवग्रहात्परस्य नस्य णः । नृमणाः। पितृयाणम् । **नश्च धातुस्थोरुषुभ्यः** ।८।४।२७। धातुस्थात्–अग्ने रक्षा णः। शिक्षा णो अस्मिन् । उरु णस्कृधि । अभीषु णः । मोषु णः । इत्यष्टमोऽध्यायः ।

**इति सिद्धान्तकौमुद्यां वैदिकप्रक्रिया ।**

---

सु.] स्यात्। **गोषा इति**। 'जनसनखनक्रमगमो विट्'। 'विड्वनो'रित्यात्वम् । **गोसनिरिति** । 'छन्दसि वनसनरक्षिमथा'मितीन्प्रत्ययः । **निव्यभिभ्यो** । 'न रपरे'त्यतो नेति वर्तते । तत्र निषेधविकल्पे विधिविकल्प एव फलतीत्याह–**मूर्धन्यो वा स्यादिति** । **अभ्यष्टौदिति** । 'उतो वृद्धिर्लुकि हली'ति वृद्धिः। **छन्दस्यृदव** । अवगृह्यते=विच्छिद्य पठ्यते इत्यवग्रहः। ऋच्चासाववग्रहश्च ऋदवग्रहस्तस्मात् । **नृमणा इत्यादि**।अत्र संहिताधिकारात्संहिताकाल एव एतेषां णत्वं। पदकाले चावग्रहः क्रियते । तेनाऽवग्रहयोग्यत्वादृकारोऽवग्रह इत्युक्तः, न तु तद्दशापन्नः। अत्र हि 'नृ–मना' इति पदकालेऽवगृह्यते । **नश्च** । धातुस्थान्निमित्तादुत्तरस्य, उरुशब्दात्, षुशब्दाच्च परस्य नस् इत्येतस्य णः स्यात् । धातौ तिष्ठतीति धातुस्थो रेफः षकारश्च। 'उरु' इति स्वरूपग्रहणम्। 'षु' इति कृतषत्वस्य सुञो ग्रहणं, न सप्तमीबहुवचनस्य । तेन 'इन्द्रो धर्ता गृहेषु नः' इत्यादौ न । 'न'सिति नासिकादेशस्य, नसादेशस्य च सामान्येन ग्रहणम् । **रक्षा ण इति** । रक्षेति लोटो मध्यमपुरुषैकवचनान्तं । 'द्व्यचोऽतस्तिङः' इति दीर्घः । **उरुणस्कृधीति** । कृञो लोटः सेर्हिः । 'श्रुशृणुपॄकृवृभ्यश्छन्दसि' इति हेर्धिरादेशः। 'कः कर'दित्यादिना विसर्जनीयस्य सत्वम् । **अभीषु ण इति** । 'इकः सुञी'ति दीर्घः । एवं **मोषु ण इत्यत्रापि** । सर्वत्रोदाहरणे अस्मदादेशो नस् । इति श्रीमन्मौनिकुलतिलकायमान-**श्रीगोवर्धनभट्टात्मजरघुनाथभट्टाऽङ्गजेन जयकृष्णेन** कृतायां **सिद्धान्तकौमुदीव्याख्यायां सुबोधिन्यां** वैदिकखण्डं समाप्तम् ।

---

शे.]छन्दसीति वर्त्तते । **अभिषुण इति** । 'इकः सुञी'ति दीर्घत्वम् । 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम् । **सनोतेरनः** । अनकारान्तसनोतेरिण्कुभ्यां परस्य सस्य षश्छन्दसि । **गोषा इति** । 'जनसने'ति विट् । 'विड्वनो'रित्यात्वम् । **गोसनिरिति** । 'छन्दसि वनसनरक्षिमथा'मितीन् प्रत्ययः । 'पूर्वपदा'दित्येव सिद्धे नियमार्थमिति भावः । केचिन्नोसनेः सवनादिपाठात्सिद्धिमङ्गीकृत्य सिसानयिषतीति नियमफलं वदन्ति । यद्यप्यण्यन्तः सूत्रे उपात्तस्तथाप्यण्यन्तस्य प्रतिषेधवचने फलाऽभावाण्ण्यन्तार्थत्वं विज्ञायते । 'स्तौतिण्योरेवे'ति नियमात् 'सिसनिषती'त्यादौ षत्वाऽप्राप्तेरिति तदाशयः । सिसनिषतेरप्रत्यये 'सिंसनी'रिति नियमफलमित्यन्ये। अत्र सन् षत्वभूतो नेति 'स्तौतिण्यो'रिति नियमाऽविषयोऽयम् । एवञ्च सामर्थ्याऽभावाण्ण्यन्तस्य नियमाऽभावात् 'सिषाणयिषती'त्यादौ षत्वं भवत्येव । सामर्थ्यात्पूर्वपदाऽभावेऽपि नियमप्रवृत्तिरिति तद्भावः । सर्वञ्चेदं भाष्ये स्पष्टम् । **सहेः पृ** । छन्दसीति वर्तते। चकारोऽनुक्तसमुच्चयार्थ इत्याशयेनाह-**चादिति** । ऋतिशब्दस्य संहितायां 'नहिवृती'ति दीर्घः, षत्वं च, उभयत्र संहिताधिकारात् , अवग्रहे ऋतिसाहमित्येव । 'छन्दसि सहः' इति ण्विः । ऋतिशब्दस्य 'अन्येषामपि' इति दीर्घ इति मनोरमा । **निव्यभि** । एभ्यः परस्य सुनोत्यादेः सस्याऽड्व्यवाये षत्वं वा।प्रकरणप्राप्तस्य षत्वमात्रस्याऽपि विकल्पः। **अभ्यष्टौदिति**।'उतो वृद्धिर्लुकि' इति वृद्धिः । **छन्दस्यृदव** । पूर्वपदादिति वर्तते । अवग्रहे विषयऋकारान्तपूर्वपदादुत्तरस्य नस्य णः । अवग्रहविषयत्वञ्च अवग्रहयोग्यत्वम् । संहिताकाले णत्वं, पदकाले चावग्रहात्। अत एव पदपाठे णत्वं न प्रयुञ्जते। **नश्च धा**। धातुस्थान्निमित्तादुरुशब्दात्षुशब्दाच्च परस्य नस्शब्दस्य नस्य णो भवति । धातौ तिष्ठतीति धातुस्थम् । षु इति कृतषत्वस्य सुञोऽनुकरणम् । तेन'गृहेषु नः' इत्यत्र न । 'न'सिति नासिकादेशस्याऽस्मदादेशस्य च सामान्येन ग्रहणम्। तत्र प्रकृतसूत्रेऽस्मदादेश एव कार्यी, तस्यैव धातुस्थात्परत्वसम्भवात् । 'उपसर्गादनोत्परः' इत्युत्तरसूत्रे तूभयोः कार्यित्वमिति हरदत्तः । 'उत्तरसूत्रे नस्ग्रहणानुवृत्तेर्न फलम् । भाष्ये'अनोत्पर'इत्यस्य स्थाने बहुलग्रहणस्य कृतत्वेन तेनैव सर्वाऽनिष्टवारणा'दित्यन्ये । **रक्षा ण इति** । रक्षेति लोण्मध्यमपुरुषैकवचनम् , 'द्व्यचोऽतस्तिङः' इति दीर्घत्वम् । एवं दानकर्मणः शिक्षतेः–**शिक्षा ण इति** । उरु=अधिकम् । **अभीषु ण इति** । 'इकः सुञि' इति दीर्घ इति शिवम् । **इत्यष्टमः । इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते** सिद्धान्तकौमुदीव्याख्याने **लघुशब्देन्दुशेखरे वैदिकी प्रक्रिया समाप्ता ।**

## अथ स्वरप्रक्रिया ।

**अनुदात्तं पदमेकवर्ज्जम्** ।६।१।१५८।परिभाषेयं स्वरविधिविषया । यस्मिन्पदे यस्योदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं तत्पदमनुदात्ताऽच्कं स्यात् । गो॒पा॒य॒तं॑ नः । अत्र 'सनाद्यन्ताः' इति

---

सु.] **अनुदात्तं पदमेकवर्ज्जं । परिभाषेयमिति**। नाऽधिकारोऽस्वरितत्वात् ।' आद्युदात्तश्च' 'समानोदरे शयित ओ चोदात्तः' इत्यादीनामसङ्ग्रहश्च स्यात् । परिभाषाया लिङ्गापेक्षायामाह-**स्वरविधीति** । सूत्रे अनुदात्तशब्दोऽर्श-आद्यजन्तः, पदसामानाधिकरण्यात् । अत्रानुदात्तस्य क्रियमाणत्वात्तद्भिन्न उदात्तः स्वरितो वा वर्ज्यत इत्याह-**तमेकमिति** । यत्तदोर्नित्यसंबन्धाद्यस्योदात्तस्वरितविधानं तस्यैव वर्जनम् । एकग्रहणं विधीयमानस्योपलक्षणम् । तेन 'तवै चान्तश्च युगप'दिति द्वयोर्वर्जनम् । 'इन्द्रा॒बृह॒स्पती॑' इत्यत्र 'देवताद्वन्द्वे चे'ति सूत्रेण पदद्वयस्यापि प्रकृतिस्वरे विधेये त्रयाणां वर्जनम्। बृहस्पतिशब्दो [हि] वनस्पत्यादित्वाद् द्व्युदात्त इति स्थितम् । **गोपायतमिति**। गुप इत्यस्य 'धातोः'

---

शे.] साधारण-प्रकृति-प्रत्यय-समास-तिङन्तविषयकतया पञ्चभिः प्रकरणैरुदात्तादिस्वरान् व्युत्पिपादयिषुः साधारण-स्वरांस्तावदाह-**अनुदात्तमिति । एकवर्जमिति** । 'द्वितीयायाञ्चे'ति णमुल् । ननु तत्र त्वरायामित्यर्थकपरीप्साया-मित्यनुवर्तत इति चेत्, इहाप्यस्ति परीप्सा । तथा हि-यत्रो दात्तादिर्विधीयते तत्र तत्समकालमेव शिष्टमनुदात्तं कर्तव्यं, न तु विलम्बितव्यमित्यर्थात् । एतच्च णमुल्विधायके **पदमञ्जर्यां** स्पष्टम् । यद्वा परीप्सायामिति प्रायिकम् । एतच्चाऽत्रैव **पदमञ्जर्यां** स्पष्टम् । **परिभाषेयमिति**। नाऽधिकारः, अस्वरितत्वात्, एकवर्जमित्यस्य वैयर्थ्यापत्तेश्च, तत्तत्सूत्रविधे-यानां वचनसामर्थ्यादेव निघाताऽप्रवृत्तेः। किं च 'आद्युदात्तश्च' 'समानोदरे शयित ओ चोदात्तः' इत्याद्यसङ्ग्रहापत्तेः। नापि विधिः । तथा सति क एको वर्जनीय इति न ज्ञायेत । एवञ्च विनिगमनाविरहाच्छास्त्रविहितोदात्तस्वरितकानां सर्वेषामेव वर्जनापत्तौ 'आमलकीजः' इत्यादावुदात्तचतुष्टयं श्रूयेत । तत्र हि ङीष् प्रत्ययस्वरेणोदात्तः । 'गतिकारक' इति कृत्स्वरः, 'दीर्घकाशतुषभ्राष्ट्रवटञ्जे'इति पूर्वपदान्तोदात्तत्वम्,'अन्त्यात्पूर्वं बह्वचः'इति लकाराऽकारस्योदात्तत्वमिति विरोधाऽभावाद्युग-पदुदात्तचतुष्टयं स्यात्, अस्य तु मकाराऽकारोऽवकाशः स्यादिति भावः । परिभाषाया लिङ्गमाह-**स्वरविधीति**। सूत्रे-ऽनुदात्तशब्दोऽर्शआद्यजन्तः, पदसामानाधिकरण्यात् । अनुदात्तस्य विधीयमानत्वात्तद्भिन्न उदात्तः स्वरितो वा वर्ज्यत इति तद्विधावेवाऽस्योपस्थानमित्याह-**यस्मिन् पदे इति**।अत्र पदत्वे भाविन्यन्तरङ्गत्वात्पूर्वमेव स्वरप्रवृत्तिः। पदग्रहणन्तु परिमाणार्थम् । अत एव 'धातो'रित्यादौ न दोषः । तद्व्यावर्त्यन्तु पदसमुदायः । यस्य पदत्वं भावि तस्यैवैकवर्जमनु-दात्तमित्यर्थात्। स्पष्टञ्चेदं विकाराधिकारे 'अनुदात्तादेश्चे'ति सूत्रे भाष्यकैयटयोः। **तमेकमिति** । एकग्रहणं विधी-यमानोपलक्षणम् । एवञ्च 'तवै चाऽन्तः' इत्यादौ द्व्यादीनां वर्जनसिद्धिः । 'इन्द्रा॒बृह॒स्पती॑' इत्यत्र 'देवताद्वन्द्वे च' इति पदद्वयस्यापि प्रकृतिस्वरे विधेये त्रयाणां वर्जनम् । बृहस्पतिशब्दो हि वनस्पत्यादित्वात् द्व्युदात्त इति बोध्यम् । [ नंचैवं 'समाने ख्यः स चोदात्तः' इत्यनेन प्रत्ययोदात्तत्वस्य, सादेशोदात्तत्वस्य चैकेनैव सूत्रेण विधानादुभयोर्वर्जनापत्तिरिति उदात्तद्वयश्रवणं स्यादिति वाच्यम्,'तवै चान्तश्च'इत्यादौ युगपद्ग्रहणेन यत्नं विनोभयोरेकत्राऽसमावेशज्ञापनादिति भावः]। अत्र यस्मिन् पदे यस्यामवस्थायां यस्याऽच उदात्तादिर्विधीयते तत्र पदे तस्यामवस्थायां सन्निहितमजन्तरं निहन्यत इति बोध्यम् । स्पष्टञ्चेदम् 'आद्युदात्तश्चे'ति सूत्रे पदमञ्जर्याम् । नचैवं 'चिनुत' इत्यत्र श्नोर्निघातो न सिद्ध्यति, तस्यो-दात्तत्वप्रवृत्तिकालेऽसन्निहितत्वादिति वाच्यम्, युगपद्ग्रहणेनाऽनुदात्तातिरिक्तस्वरयोरसमावेशज्ञापनात्तत्सिद्धेः । वस्तुतस्तु 'आद्युदात्तश्च' 'द्वित्रिभ्यां पाद्दन्' 'पुंसोऽसुङि'ति सूत्रस्थभाष्यप्रामाण्येन यावत्पदत्वं भावि तावत्सनिहिताऽजन्तस्य निघातप्रवृत्तिरित्यर्थाङ्गीकारेणाऽदोषात्। 'चिनु' इति तु 'अन्तरङ्गानपि' इति न्यायेन साध्यम् । एवंच 'आगमा अनुदात्ताः' इति नाऽपूर्वमितीति दिक् । यत्तु इयं यथोद्देशैव न कार्यकालेति त्रिपाद्यां न प्रवर्त्तते, अत एव तव्यतस्तित्वं चरितार्थम्। तद्धि 'तित्स्वरित'मित्यन्तस्वरितार्थम् । तत्र ह्यन्त इति वर्तते । त्रिपाद्यां परिभाषाप्रवृत्तौ प्रत्ययस्वरेणाद्युदात्तत्वे शेष-निघातेनाऽनुदात्तस्यान्तस्य 'उदात्तादनुदात्तस्ये'ति स्वरिते शेषनिघातेन सिद्धौ तद्वैयर्थ्यं स्पष्टमेव । एवं 'यतोऽनावः' इत्यपि ज्ञापकम् । अन्यथा 'यतोऽनावः' इत्याद्युदात्ते कृते शेषनिघाते 'उदात्तादनुदात्तस्ये'ति स्वरिते शेषनिघाते तित्स्वप्रयुक्ताऽन्तस्वरितादविशेषेण तद्वैयर्थ्यं स्पष्टमेवेति प्राञ्चः। तन्न । सन्निपातपरिभाषया 'उदात्तादनुदात्तस्ये'ति विषये शेषनिघाताऽप्रवृत्त्या तयोश्चारितार्थ्येन भवदुक्तार्थे दृढतरमानाऽभावात्। किं च 'क॒र्त॑व्यं॑ तत्र॑' 'क॒र्त॑व्यं॑ क्व॑'त्यादौ 'कण्व्यं॑ःक्व॑','कण्व्य॑स्तत्र॑''त्यादौ'नोदात्तस्वरितोदय'मिति'उदात्तादनुदात्तस्य'इत्यस्य निषेधविषये तव्यतस्तित्वं 'यतोऽनाव' इति चचरितार्थमिति ज्ञापकं दुरुपपादम्। तस्मादत्र लक्ष्यानुसारेण 'अनुदात्तं पद'मित्यस्याऽधिककार्यार्थत्स्वरितत्वप्रतिज्ञा-नाद सिद्धंऽप्रवृत्तिः। यथोद्देशत्वन्त्वस्या न युक्तम्। अत्रव सूत्रे 'कार्यकालं सञ्ज्ञापरिभाष'मिति भाष्यविरोधात् । अत एव

धातुत्वे धातुस्वरेण यकाराऽकार उदात्तः। शिष्टमनुदात्तम् । *सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य

सु.]इत्यन्त उदात्तः।तत आयप्रत्ययः 'आद्युदात्तश्चे'ति प्रत्ययस्वरेणाद्युदात्तः।ततः'सनाद्यन्ता धातव' इति धातुसंज्ञायां 'धातो'-रिति यकाराऽकार उदात्तः । स च प्रागुक्तयोरुदात्तयोः सतोः पश्चात्प्रवर्त्तमानत्वात्सतिशिष्टः, अतो बलवान् । तस्य 'अनुदात्तौ सुप्पितौ' इत्यनेनाऽनुदात्तेन शबकारेण सह 'अतो गुणे' इति पररूपे कृते 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः, थसस्तमादेशः । तस्य 'तास्यनुदात्तेन्ङिददुपदेशा'दित्यनेनाऽदुपदेशात्परत्वादनुदात्तत्वम् । तस्य 'उदात्तादनुदात्तस्ये'ति स्वरितः । नन्वत्र तमिति स्वरितमाश्रित्य 'अनुदात्तं पद'मिति परिभाषया शेषनिघातः स्यादिति चेन्मैवम् । यथोद्देशपक्षाश्रयणेनेयं परिभाषा त्रिपाद्यां न प्रवर्तते इत्यत्र ज्ञापकं तव्यतस्स्वरित्वं, 'यतोऽनावः' इति च । **सति शिष्टेति ।** यो हि यस्मिन् सति शिष्यते स शिष्टस्तस्य बाधको भवतीत्यर्थः । एतच्च सतिशिष्टस्य बाधकत्वं न्यायसिद्धम् । तथा हि उदात्तस्वरितविधिभिरेकवाक्यतामापन्नयाऽनया शेषनिघातः क्रियते, तत्रोत्सर्गस्याऽपवादस्य वा चरमा या प्रवृत्तिस्तत्रास्या उपस्थाने पूर्वा प्रवृत्तिर्बाध्यते। तद्यथा औपगवत्वमिति।अत्राऽण्प्रत्यये त्वप्रत्यये च 'आद्युदात्तश्चे'ति प्रवर्तमानं स्वस्यैव प्रथमप्रवृत्तिं बाधते, द्वितीयप्रवृत्त्या लक्ष्यं परिनिष्ठापयतीति दिक् । ननु यदि सतिशिष्टः स्वरो बलीयांस्तर्हि सतिशिष्टत्वाद्विकरणस्वरोऽपि बलीयान् स्यात् । तथा च 'गृणीत' इत्यादि मध्योदात्तं पदं स्यादत आह—**अन्यत्रेति ।** सतिशिष्टोऽपि विकरणस्वरः प्रत्ययस्वरं न बाधत इत्यर्थः । अत्र च ज्ञापकं तासेः परस्य लसार्वधातुकस्याऽनुदात्तत्वविधानम् । तथाहि—यद्यपि लावस्थायां तासिर्विधीयते तथापि लकारमात्रापेक्षत्वादन्तरङ्गेषु, परेषु च लादेशेषु कृतेषु पश्चात्तासिरिति तत्स्वर-

शे.]आमलकीज इत्यादौ 'दीर्घकाशे'त्यपेक्षयाऽन्त्यात्पूर्वं बह्वच इति परत्वादित्युपपद्यते । अन्ययोभयोः सम्भवेनाऽसम्भवाऽभावाद्विप्रतिषेधानुपपत्तिः । कार्यकालत्वे तूभाभ्यामप्यस्यैकवाक्यतया तेन वर्ज्यमानताऽनेन वेत्युपपद्यते विरोधः । अत एव 'अनुदात्तं पद'मित्यस्याधिकारत्वे षाष्ठ एकः सङ्गृहीतः, येऽन्ये सप्ताध्याय्यां स्वरास्ते न सङ्गृहीताः स्युरिति षाष्ठभाष्योक्तं सङ्गच्छते । अन्यत्वे षाष्ठस्य प्रतियोगित्वेन षाष्ठस्यापि सप्ताध्याय्यन्तर्गतत्वप्रतीतेः । अष्टमे प्रथमे पादेऽनुदात्तस्यैव विधानं, त्रिपाद्यान्तूक्तरीत्याऽप्रवृत्तिरेवेति तद्भावः। अत एव देवदत्तेत्यादौ प्लुताऽसिद्धत्वात्पूर्वं षाष्ठाद्युदात्तत्वे ततः प्लुते तदेकवाक्यतापन्नशेषनिघाताऽभावेनोदात्तत्रयसमावेशः। न च षाष्ठे प्रवृत्तेऽसिद्धेनाऽनेन सिद्धस्य तस्य कथं निवृत्तिरिति वाच्यम् , बाधकाऽभावात् । ध्वनितं चेदं 'गुरोरनृतः'इत्यत्र भाष्ये । अत एव कन्याऽनूपे इत्यत्र न शेषनिघातः । कन्याशब्दो हि 'कन्याराजमनुष्याणामन्तः' इत्यन्तस्वरितः । अनूपश्च'अनोरप्रधानकनीयसी' इत्यन्तोदात्तः । तयोः स्वरिताऽनुदात्तयोः सवर्णदीर्घ आन्तर्यतः स्वरितः। तदेकवाक्यतापन्नशेषनिघातेन पे'कारस्यानुदात्तत्वं स्यात्। इष्यते तूदात्तस्वरितयोः समावेशः। मम तु एकादेशस्य बहिरङ्गतयाऽसिद्धत्वेन तत्स्वरस्यापि तत्त्वेन नाऽनेनैकवाक्यतेति न दोषः । स्पष्टश्चेदं 'स्वरितो वाऽनुदात्ते पदादौ' इति सूत्रे भाष्ये इत्याहुः। **गोपायतमिति।** गुपेः 'धातोः' इत्यन्तोदात्तः । ततः प्रत्ययस्वरेणाद्युदात्ते आये गोपायेत्यायान्तस्य धातुत्वाद्धातुस्वरे यकाराऽकार उदात्तः । तस्य शबकारेण पित्त्वादनुदात्तेनैकादेश उदात्तः । तमित्यस्य लसार्वधातुकस्वरेणानुदात्तस्य 'उदात्तादनुदात्तस्य' इति स्वरितः । न च—अनुदात्तातिरिक्तस्वरयोरसमावेशस्य ज्ञापनात्कथमत्रोदात्तस्वरितयोः समावेशः ? । न च सन्निपातपरिभाषया निर्वाहः, तस्या अनित्यत्वेन स्वरविधावप्रवृत्तेः, अन्यथा 'अन्तोदात्तादुत्तरपदादन्यतरस्याम्' 'ह्रस्वनुड्भ्यां मतु'बित्यादिभिरपि स्वरे कृते शेषनिघातो न स्यात् । किंचाऽग्ने भद्रं करिष्यसीत्यादौ ककारनिष्ठस्वरितत्वमादाय स्यप्रभृतीनां निघातः स्यात् , न हि तत्र परिभाषाया उक्तिसम्भवोऽस्तीति वाच्यम् , अस्य स्वरितस्याऽसिद्धत्वेनाऽदोषादिति दिक् । ननु 'गोपायत'मित्यादौ गुपेरपि धातुत्वात्तन्निमित्तकोकारोदात्तत्वस्य, प्रत्ययस्वरनिमित्तक'पा'कारोदात्तत्वस्य च श्रवणापत्तिरत आह—**सतिशिष्टेति ।** तस्मिन्सति विहितेत्यर्थः । **सतीत्यस्य** उत्पन्ने इत्यर्थः, 'अस भुवि' इति स्मरणात् । 'यागात्स्वर्गो भवति' इत्यादौ भवतेरुत्पत्त्यर्थकत्वात् । एतच्च न्यायसिद्धम् । यदा यदा यो य उदात्तस्वरितविधिः प्रवर्त्तते तदा तदा तेन सह 'अनुदात्तं पद'मिति एकवाक्यतया प्रवर्तते । ततश्चोत्सर्गस्यापवादस्य वा यस्यैव चरमा प्रवृत्तिस्तदेकवाक्यतापन्नयाऽनया लक्ष्यं व्यवस्थाप्यते। अत एवौपगवत्वमित्यत्राऽण्प्रत्यये त्वप्रत्यये आवृत्त्या 'आद्युदात्तश्चे'ति प्रवर्त्तमानं स्वस्यैव प्रथमप्रवृत्तिबाधेन द्वितीयप्रवृत्त्या लक्ष्यं परिनिष्ठापयति।'आद्युदात्तश्च' 'धातोः' इत्यादीनां निमित्तभेदेन भिन्नत्वात् । एवञ्च यदा प्रत्ययाद्युदात्तत्वं तदा गुपो निहतत्वं, ततो धातुत्वे पुनर्धातुस्वरप्रवृत्तौ पाशब्दोऽप्यनुदात्त इत्यादि बोध्यम् ।

**अन्यत्रेति ।** अत्र च ज्ञापकं तासेः परस्य लसार्वधातुकस्य निघातविधानम् । अन्यथा परनिमित्तकत्वाऽभावेन

इति वाच्यम् । तेनोक्तोदाहरणे गुपेर्धातुस्वर, आयस्य प्रत्ययस्वरश्च न शिष्यते । अन्यत्रेति किम् ? । युञ्जं यज्ञ-मुभिवृधे गृणतः । अत्र सति शिष्टोऽपि श्ना इत्यस्य स्वरो न शिष्यते, किं तु तस एव । **अनुदात्तस्य च यत्रोदात्तलोपः** ।६।१।१६१। यस्मिन्ननुदात्ते परे उदात्तो लुप्यते तस्योदात्तः स्यात् । देवीं वाचम् । अत्र ङीपि-उदात्तः । **चौ** ।६।१।२२२। लुप्ताकारेऽञ्चतौ परे पूर्वस्यान्तोदात्तः स्यात् । उदात्तनिवृत्तिस्वरापवादः ।

सु.]स्य सतिशिष्टत्वाच्छेषनिघातेनैव सिद्धेरनर्थकं तत्स्यात् । **गृणीत इति**। अन्तोदात्तं पदम् । अत्र 'तास्यनुदात्ते'दिति लसार्वधातुकनिघातो न, अदुपदेशेति तपरकरणात्, श्नाप्रत्ययस्याऽदन्तत्वाऽभावात्। 'तिङ्ङतिङः'इति निघातस्तु न भवति, 'यद्वृत्तान्नित्य'मिति निषेधात् । स हि व्यवहितेऽपि प्रवर्तते । **तस एवेति** । तस 'आद्युदात्तश्चे'त्याद्युदात्तस्वरः शिष्यत इत्यर्थः। **अनुदात्तस्य।देवीमिति**।देवशब्दोऽच्प्रत्ययान्तत्वात् 'चितः' इत्यन्तोदात्तः। पचादिषु देवडिति पाठात् 'टिड्ढे'-ति ङीप् । तस्य 'अनुदात्तौ सुप्पित्तौ' इत्यनुदात्तत्वे 'यस्येति चे' त्यकारलोपः। नन्वनुदात्तस्येति व्यर्थं, न ह्युदात्ते स्वरिते वा परे उदात्तलोपोऽस्ति। न च प्रसज्यत इति प्रासङ्गः। कर्मणि घञ् । 'कर्षात्वतो घञोऽन्त उदात्तः' इत्यन्तोदात्तत्वम् । 'उपसर्गस्य घञ्यमनुष्ये बहुल' मित्युपसर्गस्य दीर्घः।'तं वहती'ति प्रासङ्ग्यः 'प्राग्घिताद्यत्'। तित्स्वात्स्वरितः। तस्मिन् परे 'यस्ये'ति लोपः । अत्र स्वरिते परे उदात्तलोपोऽस्त्येवेति वाच्यम् । स्वरिते हि विधीयमाने परिशिष्टम् 'अनुदात्तं पद-मेकवर्ज'मित्यनुदात्तं,तत्कुत उदात्तलोप इति चेत्सत्यम्। 'मा हि धुक्षाता'मित्यत्र दुहेर्लुङ्यात्मनेपदमाताम्। 'शल इगुपधे'ति च्लेः क्सः । आतामित्यस्य 'तास्यनुदात्तेन्ङिददुपदेशा'दिति लसार्वधातुकाऽनुदात्तत्वम् । क्सः प्रत्ययस्वरेणोदात्तः। 'क्स-स्याऽची'त्यकारलोपः। अत्र 'कर्षात्वतो घञोऽन्त उदात्तः' इत्यत अन्त इत्यधिकारादन्त्यस्योदात्तत्वं स्यात्, सति त्वस्मि-न्नादेर्भवति।ननु'यत्रोदात्तलोप'इत्युच्यमाने कथमन्त्यस्य प्रसङ्गः?। न हि तदुदात्तलोपस्य निमित्तमिति चेत्, तर्हि आदेरपि न प्राप्नोति। तस्याप्युदात्तलोपं प्रत्यनिमित्तत्वात्, 'क्सस्याऽची'त्यजादौ प्रत्यये विधानात् । तस्माद्यत्र प्रत्यये उदात्तलोप-स्तत्संबन्धिनोऽनुदात्तस्योदात्तो भवतीति सूत्रार्थेनाऽन्ताधिकारादन्त्यस्य प्रसङ्गः । यदि तु निमित्तत्वाऽनादरेण 'यत्रानुदात्ते परत उदात्तलोपस्तस्योदात्तो भवती'ति सूत्रार्थस्तदाऽनुदात्तस्येति न वक्तव्यम्, अन्त्यस्य प्रसङ्गाऽभावात् । न च 'मा हि धुक्षाता'मित्यत्र 'तिङ्ङतिङः' इति निघातः स्यादिति वाच्यम्, 'हि चे' ति निषेधात् । **उदात्तनिवृत्तीति** । कृदुत्तर-पदप्रकृतिस्वरेणोदात्तस्याऽञ्चत्यकारस्य 'अच' इति लोपे सति 'अनुदात्तस्य चे'ति सूत्रेणोदात्तः प्राप्तस्तस्याऽयमपवाद

शे.]तिबादीनामन्तरङ्गत्वेन तिबादिषु कृतेषु क्रियमाणस्य तासिस्वरस्य सतिशिष्टत्वाच्छेषनिघातेन सिद्धे तद्वैयर्थ्यं स्पष्टमेव। यदि तु 'स्यतासी' इत्यत्रार्द्धधातुक इत्यनुवर्त्य लावस्थायामेव स्यादयस्तदेदं वाचनिकमिति बोध्यम् । अस्य च विशेषापेक्षत्वात् सार्वधातुकस्वरापेक्षयैव विकरणस्वरस्य दुर्बलत्वं, धात्वादिस्वरापेक्षया तु प्राबल्यमेव । अत एव गृणाती-त्यादौ श्न उदात्तत्वेन धातोर्निघातसिद्धिः। इदमपि सार्वधातुकस्य श्रूयमाणत्वे एव । तेन 'चिनु' इत्यादौ न दोषः । **गृणीत इति** । अन्तोदात्तं पदम् । अत्र लसार्वधातुकनिघातो नास्ति, 'अदुपदेशे'ति तपरकरणात् । 'श्ना' इत्य-स्याऽदन्तत्वाऽभावात् । 'तिङ्ङतिङ' इति तु न, 'स होता यस्य रोदसी चिदुर्वी' इति पूर्वचरणे यद्वृत्तस्य सत्त्वेन 'यद्वृत्ता-न्नित्य'मिति निषेधात्।तस्य च व्यवहितेऽपि प्रवर्तनादिति बोध्यम्। **अनुदात्तस्य च यत्र।** अत्र 'कर्षात्वत' इत्यतोऽन्त इति नानुवर्त्तते,अयोग्यत्वात् । तथा हि यत्रेत्यनेनात्रानुदात्तवर्णपरामर्शः । उदात्तत्वानुदात्तत्वयोर्वर्णधर्मत्वात् । अनुवृत्तौ वा व्यपदेशिवद्भावेनैव तत्त्वं बोध्यम् । एवञ्च सप्तमीनिर्देशेनानुदात्तवर्णस्य बुध्या लोपात्परस्यैव ग्रहणात् 'युष्मभ्य'मित्यादा-वादेरुदात्तत्वसिद्धिः । न चैवमपि युष्मभ्यमित्यत्र सुप उदात्तलोपनिमित्तत्वेऽपि नावयवस्य तत्त्वमिति कथं 'यत्र'ग्रहणेन वर्णग्रहणमिति वाच्यम्, उदात्तयोरुदात्तस्वरितयोर्वैकत्र पदेऽभावेन तयोः परयोरुदात्तलोपाऽभावेन व्यर्थमनुदात्तस्येति-अनुदात्तमात्रग्रहणार्थम्, अतो निमित्तभूतसमुदायप्रविष्टस्याऽपि ग्रहणमिति न दोषः। तद्भावभावितामात्रेणापि निमित्तत्व-व्यवहारात् । ननु 'मा हि धुक्षाता'मित्यादौ एतत्प्रवृत्तिरिति भाष्यात्स्पष्टं तदसङ्गतम्, अत्र हि आताम् प्रत्ययस्वरेणोदात्तः। क्सोऽपि विकरणत्वादनुदात्तः।ततः 'अदुपदेशा'दिति स्वरं बाधित्वा परत्वात् 'क्सस्याऽचि' इति लोपे अनुदात्ते परे उदात्त-लोपाऽभाव इति चेन्न,अन्तरङ्गत्वाल्लावस्थायामेवोदात्ते क्से जातस्याऽऽतामोऽन्तरङ्गत्वाल्लसार्वधातुकानुदात्तत्वे ततो लोपेनाऽ-दोषात्।पक्षान्तरेऽपि एतद्भाष्यप्रामाण्येन ज्ञापकसिद्धस्याऽसार्वत्रिकतया क्वचिदन्यत्रविकरणेभ्य इत्यंशाऽप्रवृत्तेरदोषात्।अत्रा-नुदात्तपदेनाऽविद्यमानोदात्तस्यैव ग्रहणमिति स्पष्टं 'डारौरसः'इत्यत्र भाष्ये। **देवीमिति**। पचादौ 'देव'डिति पाठेन टित्त्वा-न्ङीप् । **'चौ'** । **उदात्तनिवृत्तीति** । 'देवद्रीची'मित्यादौ कृदुत्तरपदप्रकृतिस्वरेणोदात्तस्य अञ्च इत्यकारस्य 'अचः' इति लोपे ङीपः 'अनुदात्तस्य च' इति सूत्रेण प्राप्तस्येत्यर्थः । न च पराच इत्यादौ कृत्स्वरं बाधित्वा 'अनिगन्तोऽञ्चतौ' इति पूर्वपदप्रकृतिस्वरत्वेनाऽऽद्युदात्तत्वे 'अच'इत्यकारलोपे इदञ्चरितार्थं, न ह्यत्रोदात्तलोपोऽस्तीति वाच्यम्, 'अनिगन्तोऽञ्चतौ' इति विषये चुखराऽप्रवृत्तेर्वक्ष्यमाणत्वादित्याहुः । ननु 'दाधीच' इत्यादौ उदात्तेऽणि 'अचः' इति लोपे इदं चरितार्थमिति

दे॒व॒द्रीचीं॑ नयत देव॒यन्तः॑। *अतद्धित इति वाच्यम्। दा॒धी॒चः। मा॒धू॒चः। प्रत्ययस्वर एवात्र। आमन्त्रितस्य च ।६।१।१९८। आमन्त्रितस्याऽऽदिरुदात्तः स्यात्। अग्न॒ इन्द्र॒ वरु॑ण॒ मित्र॒ देवाः॑। आमन्त्रितस्य च ।८।१।१९। पदात्परस्याऽपादादिस्थस्याऽमन्त्रितस्य सर्वस्यानुदात्तः स्यात्। प्रागुक्तषाष्ठस्यापवादोऽयमाष्टमिकः। इ॒मं मे॑ गङ्गे यमुने सरस्वति।अपादादौ किम्? शुतु॑द्रि॒ स्तोम॑म्। 'आमन्त्रितं पूर्वमविद्यमानवत्'।अग्न॒ इन्द्र॒। अत्रेन्द्रादीनां निघातो न, पूर्वस्याऽविद्यमानत्वेन पदात्परत्वाऽभावात्। 'नामन्त्रिते समानाधिकरणे [सामान्यवचनम्]'। समानाधिकरणे आमन्त्रिते परे विशेष्यं पूर्वमविद्यमानवन्न। अग्ने॑ तेजस्विन्!। अग्ने॑! त्रातः!। सामान्यवचनं किम्? पर्यायेषु मा भूत्। अघ्न्ये॒ देवि॒ सर॑स्वति। [सामान्यवचनं] विभाषितं विशेषवचने ।८।१।७४। अत्र भाष्यकृता 'बहुवचन'मिति पूरितम्, 'सामान्यवचन'मिति च पूर्वसूत्रे योजितम्।आमन्त्रितान्ते विशेषणे परे पूर्वं बहुवचनान्तमविद्यमानवद्वा।देवीः॑ षळु॒र्वीरु॒रु नः॑ कृणोत।अत्र देवीनां विशेषणं षडिति। देवाः॑ शर॑ण्याः।[दे॑वाः शरण्याः]इह द्वितीयस्य निघातो वैकल्पिकः।सुबामन्त्रिते पराङ्गवत्स्वरे।२।१।२।सुबन्तमामन्त्रिते परे परस्याङ्गवत्स्वरे कर्तव्ये। द्रुव॑त्पाणी॒ शुभ॑स्पती। शुभ इति शुभेः क्विबन्तात्षष्ठ्यन्तस्य परशरीरानुप्रवेशे षाष्ठिकमामन्त्रिताद्युदात्तत्वम्। न चाष्टमिको निघातः शङ्क्यः, पूर्वामन्त्रितस्याऽविद्यमानत्वेन पादादि-

सु.]इत्यर्थः। देवद्रीचीमिति। देव अच् इति स्थिते 'विष्वग्देवयो'रिति देवशब्दस्याऽद्रि—आदेशः।'उगितश्च' इति ङीप्। 'अचः' इत्यत्रतेरकारलोपः। 'चौ' इति दीर्घत्वम्। 'द्री'तीकार उदात्तः। ततः परस्य 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितत्वम्। अतद्धित इति। चौ यः स्वरः स तद्धिते परतो न भवतीत्यर्थः। अन्यथा 'देवद्रीची'मित्यादौ यथोदात्तनिवृत्तिस्वरं बाधते तथा 'दाधीच' इत्यादौ प्रत्ययस्वरमपि सतिशिष्टस्वरो बाधेत। तस्मादतद्धित इति वक्तव्यम्। अस्मिंश्च सति उदात्तनिवृत्तिस्वरस्याऽयमपवाद इति फलितम्। दाधीच इति। दधि अच् अण् इति स्थितेऽण्स्वरे उदात्तत्वे कृते 'अचः' इत्यकारलोपः। ततः सति शिष्टत्वात् 'चौ' इति स्वरः प्राप्तो निषिध्यते। तथा चाऽणप्रत्ययस्वरेणैव व्यवस्था। तदाह—प्रत्ययस्वर एवाऽत्रेति। अग्न इत्यादि। 'सामन्त्रित'मित्यनेनाऽऽमन्त्रितत्वम्। प्रागुक्तषाष्ठस्येति। 'आमन्त्रितस्य चे' त्यस्य। इमं म इति। 'मे'शब्दात्परत्वमाश्रित्य गङ्गेप्रभृतीनां त्रयाणामनुदात्तः। स च पदपाठे स्पष्ट एव।संहितायां तु 'स्वरितात्संहितायामनुदात्ताना'मिति वक्ष्यमाणा प्रचयाऽपरपर्याया एकश्रुतिः प्रवर्तते। शुतुद्रीति। षाष्ठेन 'आमन्त्रितस्य चे'त्यनेनाद्युदात्तः। आमन्त्रितं पूर्वम्। अग्न इन्द्रेति। सर्वाणि षाष्ठेनाऽऽद्युदात्तानि। निघातो नेति। आष्टमिकेनेति भावः। नामन्त्रिते। अत्रोत्तरसूत्रस्थं सामान्यवचनमत्र संबन्धनीयमिति भाष्यम्। तद्याचष्टे—विशेष्यमिति। विशेष्यसमर्पकमित्यर्थः। क्वचित्तु 'नामन्त्रिते समानाधिकरणे सामान्यवचन'मिति पाठः, स वृत्त्यनुरोधेनेति ज्ञेयम्। अग्ने तेजस्विन्नित्यादि।'अग्ने' इत्यस्य अविद्यमानत्वात्तेजस्विन्नित्यस्य, त्रातरित्यस्य चाऽऽष्टमिकनिघातः। अघ्न्ये देवि सरस्वतीति। तैत्तिरीयके ब्राह्मणे सहस्रमतीं प्रकृत्य 'इडेरन्ते दिते सरस्वति प्रिये प्रेयसि महि विश्रुति एतानि ते अघ्निये नामानि'। वृत्तौ तु—'इडे काम्ये विहव्ये' इति पाठः स तु शाखान्तरे द्रष्टव्यः। समानाधिकरणग्रहणं पाणिनिमतेऽम इन्द्र वरुण इत्यादौ व्यधिकरणनिवृत्त्यर्थम्। भाष्यकृन्मते विस्पष्टार्थं, सामान्यवचनापेक्षत्वात्तत्र सामानाधिकरण्यस्याऽवश्यं स्थितत्वात्। सामान्य। 'बहुवचन'मिति पूर्वनिषेधस्यास्य विकल्पस्य च विषयविभागार्थम्। देवीः षडिति। अत्र देवीरित्यामन्त्रितं नाऽविद्यमानवत्। तेन षडित्यस्य निघातः। शरण्या इति। शरणं—रक्षितृत्वं,तत्र साधवः—शरण्याः। 'तत्र साधु'रिति यत्। द्वितीयस्येति। षष्शब्दस्य, शरण्यशब्दस्य चेत्यर्थः। सुबामन्त्रिते। परस्याङ्गवदिति। तस्यैव परस्यामन्त्रितस्याऽङ्गवत्—एकदेशवद्भवति। तद्ग्रहणेन गृह्यत इत्यर्थः।

शे.]कथं तदपवादत्वमत आह—अतद्धित इति। वस्तुतो 'न गोश्वन्' इति सूत्रे 'यत्किंचिल्लक्षणप्राप्तविभक्तिस्वरस्य निषेधक'मिति अत्र सूत्रे, 'असिद्धवत्'सूत्रे, 'विप्रतिषेध'सूत्रे च भाष्ये उक्तत्वेन दधीच इत्यादावुदात्तनिवृत्तिस्वराऽप्राप्तिविषयेऽस्य चरितार्थ्यान्नाऽस्य तदपवादत्वम्। परत्वेन तूक्तोदाहरणे तद्बाधकम्। 'दाधीच' इत्यादौ तु सतिशिष्टत्वेनैतत्प्राप्तौ 'अतद्धित' इत्यावश्यकमिति भाष्यारूढः पन्थाः। आमन्त्रितस्यादिरिति। 'आमन्त्रितविभक्त्यन्तस्ये'ति पाठस्तु लेखकप्रमादात्। एकपदस्वरे लुकि प्रतिषिद्धमपि प्रत्ययलक्षणं 'सर्वामन्त्रितसिज्लुक्स्वरवर्जे'मितिवचनादिहेष्यत एव—प्रियवारि। इमं मे इति। अत्र गङ्गेप्रभृतीनामविद्यमानवत्त्वेऽपि 'मे'शब्दमेवाश्रित्य सर्वेषामचां निघातः। स च पदपाठे स्पष्ट एव। संहितायान्तु 'स्वरितात्संहिताया'मित्येकश्रुतिः प्रचयाऽपरपर्याया प्रवर्तते। अग्ने त्रातरिति। अग्निरिह विशेष्यम्। त्राणकर्त्तेरिति विशेषणम्। 'अग्ने भ्रातः सहस्कृते'ति मन्त्रे छान्दसत्वाद्भ्रातरित्यस्याऽनिघातः। एवं तत उत्तरेषामपि बोध्यम्। देवीः षडिति। अत्र देवीरित्यामन्त्रितं वाऽविद्यमानवत्। तेन षडित्यस्य निघातो

स्वात् । यत्ते दिवो दुहितर्मर्त्त भोजनम् । इह दिवःशब्दस्याऽऽष्टमिको निघातः । परशुना वृश्चन् । * षष्ठ्यामन्त्रितकारकवचनम् । षष्ठ्यन्तमामन्त्रितान्तं प्रति यत्कारकं तद्वाचकं चेति परिगणनं कर्तव्यमित्यर्थः। तेनेह न अयमग्ने जरिता। एतेनाग्ने ब्रह्मणा। समर्थानुवृत्त्या वा सिद्धम्।*पूर्वाङ्गवच्चेति वक्तव्यम्। [छन्दसि परस्यापि पूर्वाङ्गवद्भावो भवति]।आ ते पितर्मरुताम्।प्रति त्वा दुहितर्दिवः।*अव्ययानां न। उच्चैरधीयान।*अव्ययीभावस्य त्विष्यते। उपाग्न्यधीयान । उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ।८।२।४। उदात्तस्थाने स्वरितस्थाने च यो यण् ततः परस्याऽनुदात्तस्व स्वरितः स्यात्।अभ्यभि हि। स्वरितयणः–खलप्व्याशा।अस्य स्वरितस्य

---

सु.]षष्ठ्यामन्त्रित।अत्र षष्ठीशब्देन षष्ठ्यर्था विभक्तिरुच्यते।तेन 'गोषु स्वामि'न्नित्यत्राऽपि पराङ्गवद्भावः सिध्यति।परशुना वृश्चन्निति। 'आङ्परयोः खनिशृभ्यां डिच्चे'ति कुप्रत्ययान्तोऽन्तोदात्तः । [षष्ठ्यन्तम् । ]आमन्त्रितान्तं प्रति यत्कारकमिति।यद्यप्यामन्त्रितस्य द्रव्यवचनत्वान्न कारकापेक्षा तथापि आमन्त्रिततया धातुवाच्या या क्रिया तस्यास्तदपेक्षाऽस्तीति तत्कारकमित्यर्थः। पितर्मरुतामिति । अत्र 'मरुता'मिति परं पदं पूर्वस्य 'पित'रित्यस्याऽङ्गवद्भवति।'पित'रित्यामन्त्रितनिघातेनाऽनुदात्तं, ततः परं 'मरुता'मित्येतदप्यनुदात्तमेव भवतीत्यर्थः। अव्ययानां नेति। तेनोच्चैरधीयानेत्यत्र 'आमन्त्रितस्य चे'त्याद्युदात्तत्वं न। न च निषेधवैयर्थ्यं, 'निपाता आद्युदात्ताः' इत्याद्युदात्तत्वस्याऽनिवारणादिति वाच्यम् , स्वरादिष्वन्तोदात्तयोरुच्चैर्नीचैःशब्दयोः पाठात् । अव्ययीभावस्य त्विति।'अव्ययीभावश्चे'त्यव्ययीभावस्याऽव्ययसंज्ञासूत्रे'लुङ्मुखस्वरोपचारा' इति परिगणनादन्यत्राऽव्ययसंज्ञाऽभावेन 'अव्ययानां न' इति निषेधो न प्रवर्तते इति भावः। उपाग्न्यधीयानेति। पराङ्गवद्भावेनामन्त्रितस्येत्याद्युदात्तत्वम् । अभ्यभीति । अभिशब्द 'उपसर्गाश्चाभिवर्जे' मित्याद्युदात्तनिषेधात्फिट्स्वरेणाऽन्तोदात्तः। तस्य 'नित्यवीप्सयो'रिति द्वित्वम्। 'तस्य परमाम्रेडितम्' 'अनुदात्तं चे'ति परस्यानुदात्तत्वं,तस्मिन्नेव परे इकारस्योदात्तस्य यणि कृते उदात्तयणः परत्वाद्यकाराऽकारः स्वरितः।खलपूशब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः।तस्य'ओःसुपि'इति यण्।स उदात्तयण्। ततःपरो ङिप्रत्ययः सुप्त्वादनुदात्तः।तस्याऽनेन स्वरितः। 'उदात्तयणो हल्पूर्वा' दित्युदात्तत्वं तु न, 'नोङ्धात्वो'रिति निषेधात् । तस्य च स्वरितेकारस्य यणि ततः परस्याऽऽशाशब्दाऽऽकारस्यानेनैव स्वरितः । आशाशब्दो हि 'आशाया अदिगाख्या चे'दित्यन्तोदात्तत्वादनुदात्तादिः । अस्येति । आशाशब्दप्रथमाकारस्थानिकस्येत्यर्थः। शेषेति । 'शा'शब्दस्य निघातो नेत्यर्थः । ननु यणादेशं प्रति स्वरितस्याऽसिद्धत्वात्स्थानिन्येव यण् प्रवृत्तः, यथा औजढदित्यत्र हूतशब्दे द्वित्वं प्रवर्तते न तु ढशब्दे। न च स्वरितयणः परस्येत्याश्रयणात्सिद्धत्वं शङ्क्यम् , तथा सति 'उदात्तादनुदात्तस्य स्वरितः' इत्यनेन यत्र स्वरितः क्रियते तत्रापि ह्यसिद्धत्वं न स्यात् । न चेष्टापत्तिः, लक्ष्यविरोधात् । 'प्रत्यग्नि रुषसामग्रमख्य'दित्यादौ स्वरिताऽदर्शनात् । न च 'नोदात्तस्वरितोदय'मिति निषेधः शङ्क्यः, 'अनन्तरस्ये'ति न्यायेन 'उदात्तादनुदात्तस्ये'ति यत्र प्राप्तिस्तन्मात्रस्य निषेधात् । अन्यथा

---

शे.]वैकल्पिकः। षष्ठ्यन्तमिति। अत्र षष्ठीशब्देन तदर्था विभक्तिरुच्यते । तेन 'गोषु स्वामि'न्नित्यत्रापि पराङ्गत्वं सिद्धमित्याहुः । आमन्त्रितान्तं प्रतीति । आमन्त्रितार्थैकदेशक्रियां प्रतीत्यर्थः। 'मद्राणां राजन्' 'सूच्या सीव्यन्' इत्युदाहरणे । अत्र विशिष्टस्यामन्त्रिताद्युदात्तत्वम् । अत्रेदं बोध्यं–षष्ठ्यन्तस्य कारकस्य च समानाधिकरणं यद्विशेषणं तस्यापि पराङ्गवत्त्वमिष्यते । तेन 'ऋद्धस्य राज्ञः पुरुषः' 'तीक्ष्णया सूच्या सीव्यन्नि'त्यादौ पदत्रयस्यैकमाद्युदात्तत्वं भवति । समर्थानुवृत्त्या वेति । सामर्थ्यञ्चाऽत्र व्यपेक्षैव, शब्दाधिकारात् । सा च 'वस्त्रं राज्ञः, पुरुषागच्छे'त्यादौ पराङ्गवत्त्ववारणाय तवाप्यावश्यकीति भावः।वस्तुतस्तन्निमित्तग्रहणञ्चार्थम् ।आमन्त्रितार्थं प्रति यन्निमित्तं, तत्प्रतिपादकं यत्तदेव पराङ्गवदित्यर्थः।अत एव गोषु स्वामिन्नित्यादेः पराङ्गवत्त्वसिद्धिः।समर्थग्रहणानुवृत्तिस्तु भाष्याऽसंमतेति निरूपितं मञ्जूषायां समासवादे।'स्वरे'इत्युक्तेः'कूपे सिञ्च'न्नित्यादौ षत्वादिकं न। न च पूर्वस्य पराङ्गवत्त्वेन पूर्वस्मिन् परप्रयुक्तकार्यप्रवृत्तिःस्वनिष्ठस्वाश्रयनिवृत्तिश्चास्तु, परस्मिंस्तु पूर्वनिष्ठकार्यप्रवृत्तौ, तन्निष्ठस्वाश्रयनिवृत्तौ च मानाऽभावात्पदादित्वेन न षत्वप्राप्तिः, तथा 'चर्मन्नम'न्नित्यादावखण्डपदत्वाऽभावेन णत्वप्राप्तिश्च नेति स्वरग्रहणं व्यर्थमिति वाच्यं, भाष्ये प्रत्याख्यातत्वेनेष्टापत्तेः।[परग्रहणं स्पष्टार्थम्]। अङ्गग्रहणमुभयोराद्युदात्तत्वाऽभावाय।[वत्करणात्स्वाश्रयमपि।तेनाऽऽम् कुण्डेनाटन्नित्यादौ 'आम एकान्तर'मिति 'अट'न्नित्यस्य निघाताऽभावे कुण्डेनेत्यस्यापि न भवति]। पूर्वाङ्गवदिति। सुबन्तमामन्त्रिते पूर्वस्मिन् पूर्वाऽङ्गवदित्यर्थः । छन्दोविषयमेतत् । उदात्तस्थाने इति। इदमत्रैवाकरे स्पष्टम् । अभ्यभीति । अभिः 'उपसर्गाश्चाऽभिवर्जे'मित्यन्तोदात्तः । 'नित्यवीप्सयो'रिति द्वित्वम्। 'अनुदात्तं चे'ति परोऽनुदात्तः पूर्वस्य यणि उदात्तयणः परत्वात्स्वरितः। 'खलपू'शब्दः कृदुत्तरपदप्रकृतिस्वरेणाऽन्तोदात्तः। ततः सप्तम्येकवचनस्य 'उदात्तयणो हल्पूर्वा'दिति प्राप्तोदात्तस्य 'नोङ्धात्वो'रिति निषेधेन स्वरितः।तस्य यणि ततः पराऽऽशाशब्दाद्याकारस्यानेन स्वरितः। आशाशब्द 'आशाया अदिगाख्या चे'दिति फिट्-

श्रैपादिकत्वेनाऽसिद्धत्वाच्छेषनिघातो न। **एकादेश उदात्तेनोदात्तः** ।८।२।५। उदात्तेन सहैकादेश उदात्तः स्यात् । वोऽश्वाः । क्वाऽवरं मरुतः । **स्वरितो वाऽनुदात्ते पदादौ** ।८।२।६। अनुदात्ते पदादौ परे उदात्तेन सहैकादेशः स्वरितो वा स्यात्। पक्षे पूर्वसूत्रेणोदात्तः। वी३दं ज्योतिर्हृदये। अस्य श्लोको दिवीयते। व्यवस्थितविभाषात्वादिकारयोः स्वरितः। दीर्घप्रवेशे तूदात्तः। किंच 'एङः पदान्ता-

सु.]'खलप्व्याशाऽन्या अग्निर्ग्राह्या अस्मा'नित्यादावपि निषेधापत्तिरिति चेत्, अत्राहुर्भाष्यकाराः–'योगविभागः करिष्यते, 'उदात्तयणः'। उदात्तयणः परस्याऽनुदात्तस्य स्वरितो भवति।ततः'स्वरितयणः'।उदात्तयण इत्यनुवर्तते,।'उदात्तयण'इत्येवं योऽभिनिर्वृत्तः स्वरितस्तद्यणः परस्याऽनुदात्तस्य स्वरितः स्यादित्यर्थः।एवं चास्यैवाश्रयात्सिद्धत्वं नान्यस्य।**एकादेश इति**। उदात्तयोरेव स्थानित्वे आन्तरतम्यादेव सिद्धम् । अन्यतरस्याऽनुदात्तत्वे स्वरितत्वे वा आन्तरतम्यात्स्वरिते प्राप्ते विधिरय-मिति ध्वनयन्नुदाहरणद्वयमाह–**वोऽश्वा इत्यादि**। 'बहुवचनस्य वस्नसौ' इत्यत्र 'अनुदात्तं सर्वमपादादौ' इत्यधिकाराद्वस् अनुदात्तः। अशेः क्वनिति व्युत्पादनादश्वशब्द आद्युदात्तः। वसो रुत्वम्।उत्वम्। 'एङः पदान्तादती'ति पूर्वरूपम्।**क्वेति**। 'किमोऽत्'। 'क्वाऽति' इति किमः क्वादेशः। 'तित्स्वरितम्'। अवरशब्दः 'स्वाङ्गशिटामदन्ताना'मित्याद्युदात्तः। तयोर्दीर्घे उदात्तः। **स्वरितो। वीदमित्यादि**। विशब्दो निपातत्वादाद्युदात्तः। इदंशब्दः फिट्स्वरेणान्तोदात्तः। तयोरेकादेशः स्वरितः। दिविशब्दे 'ऊडिदंपदा' दिति विभक्तिरुदात्ता। **ईयते**। 'इङ् गतौ' दिवादिः। 'तिङ्ङतिङः' इति निहतम्। अत्रैकादेश उदात्तः। **इकारयोः स्वरित इति**। ह्रस्वेकारयोरेवेत्यर्थः। **दीर्घप्रवेशे त्विति**। दिवीयत इत्यत्र। **उदात्त-**

शे.]सूत्रेणाऽन्तोदात्तः। **अस्येति**। आशाशब्दप्रथमाकारे जातस्येत्यर्थः। **शेषेति**। 'शा'शब्दाकारस्य निघातो नेत्यर्थः। नन्विकारस्थानिकयणं प्रति स्वरितस्याऽसिद्धत्वात्स्थानिन्येवै यण् प्रवृत्त इति नाऽस्य स्वरितयणः परत्वम्। न च प्रगृह्य-सञ्ज्ञासूत्रस्थभाष्यकैयटरीत्या 'औजढ'दित्यादावन्तरङ्गत्वाद्धलादिषु कृतेषु ढ्तशब्दबुद्ध्या ढशब्दे द्वित्वं प्रवर्तत इति प्रतीयते तथाऽत्र स्वरितबुद्ध्यभावेऽपि वस्तुतः स्वरितस्थानिकयणः सत्त्वाददोष इति वाच्यं, वाक्यसंस्कारपक्षे स्वरितयणो-रेककालप्रवृत्तिकत्वेन तथा वक्तुमशक्यत्वात्। न च 'स्वरितयण' इत्याश्रयात्सिद्धत्वम्, अतिप्रसङ्गात्। 'उदात्तादनुदात्तस्ये'-ति विहितस्यापि सिद्धत्वापत्तेः। तथा च प्रत्यग्निरित्यादावपि एतत्प्रवृत्त्यापत्तिः। न च 'नोदात्तस्वरितोदय'मिति निषेधः, 'अनन्तरस्ये'ति न्यायेन 'उदात्तादनुदात्तस्ये'ति स्वरितस्यैव तेन निषेधात्। अन्यथा 'खलप्व्याशाऽन्याऽग्नि'मित्यादाव-प्यस्य निषेधापत्तिः। अत एव 'तित्स्वरितं' 'स्वरितो वाऽनुदात्ते' इत्यादीनां न निषेध–इति चेन्न। योगविभागेन भाष्ये एव समाधानात्। **'उदात्तयणः'**। उक्तोऽर्थः। ततः–**'स्वरितयणः'**। इह पूर्वसूत्रमनुवर्त्तते। उदात्तयण इत्येवंनिर्वृत्त-स्वरितस्थानिकयणः परस्येत्यर्थः।एवञ्चास्यैवाश्रयात्सिद्धत्वं, नान्यस्येति न दोषः।यद्वा इह स्वरितग्रहणं न करिष्यते, 'खल-प्व्याशे'त्यादावप्युदात्तयणः परत्वादेव सिद्धं[3]। न च स्वरितयणा व्यवधानं, स्वरविधौ व्यञ्जनस्याऽविद्यमानवत्त्वात्। न चैवं'सन्त्यग्ने'इत्यादौ वेदे 'त्य'काराऽकारे पठ्यमानस्वरिताऽसङ्गतिः,तत्र हि सन्तीति इकारस्य 'उदात्तादनुदात्तस्ये'ति स्वरि-तत्वं, तत्र सन्तीति प्रत्ययस्वरेणाद्युदात्तं।ते शेषनिघातः,अग्ने इत्यामन्त्रितानुदात्तमिति वाच्यं, सशब्दाऽकारमाश्रित्योदात्ता-दनुदात्तस्येत्येवाऽग्निशब्दाऽकारस्य स्वरितसिद्धेः। न च स्थानिवद्भावादचा व्यवधानं, पूर्वत्रासिद्धीये तन्निषेधात्। एतेन 'द्वितीयपक्षोऽयुक्तः स्थानिवद्भावेनाऽचा व्यवधानात्, व्यञ्जनस्य ह्यविद्यमानवत्त्वं न त्वचः' इति वृत्युक्तमपास्तम्। 'स्वरे कर्त्तव्ये लोपाऽजादेश एव न स्थानिव'दिति नियमस्तु 'स्वरविधौ ने'ति प्रतिपदोक्तस्यैव निषेधस्य, न तु पूर्वत्राऽसिद्धीयत्व-प्रयुक्तस्येत्यन्यत्र विस्तरः। **एकादेश.उ**। उदात्तयोरेव स्थानित्वे आन्तरतम्यादेव सिद्धम्। अन्यतरस्याऽनुदात्तत्वे, स्वरि-तत्वे वा 'सिद्धन्तूभयान्तर्या'दिति न्यायेनान्तरतम्यादेव स्वरिते प्राप्ते विधिरयम्।तद्ध्वनयन्नुदाहरणद्वयमाह–**वोऽश्वाइति**। व इत्यनुदात्तम्।अश्वशब्दः क्वनन्तत्वादाद्युदात्तः।वसः सस्य रुः, तस्य उः,सोऽस्वरकः, स्रंसनधर्मेहल्स्थानिकत्वात्,अनुदात्तो वा,उभयथापि तदेकादेशोऽनुदात्तः प्राप्तः। क्वेति स्वरितम्। अवरशब्दः 'स्वाङ्गशिटा'मित्याद्युदात्तः। एवञ्च यद्वृत्तौ–पूर्व-सूत्रादनुदात्तस्येत्यत्रानुवर्त्य उदात्तानुदात्तयोरेकादेश इति व्याख्यातं, तच्चिन्त्यम्, क्वावरमित्यसिद्ध्यापत्तेः। तत्र हि वह्वृचानामुदात्तपाठो निर्विवाद इत्याहुः। वस्तुतस्तु 'तस्यादित' इति सूत्रस्थभाष्यादितोऽप्यनुवृत्तिरेव लभ्यते इति सैव युक्ता।तत्र हि सुब्रह्मण्याशब्देन स्वरितान्तेन ओमित्युदात्तस्यैकादेशः स्वरितः,तस्य'न सुब्रह्मण्याया'मित्यनेनोदात्तइत्युक्तम्। क्वावरमिति तु छान्दसत्वाद्बोध्यम्।तथा च बह्वृचप्रातिशाख्यम्–'उदात्तवत्येकीभावे उदात्तं सन्ध्यक्षरम्।अनुदात्तोदये पुनः स्वरितं स्वरितोपधे' इति। 'यस्मिन्नेकीभावे पूर्वमुत्तरं वोदात्तं भवति, इतरस्तूदात्तानुदात्तस्वरितप्रचितानामन्यतमस्तस्मिन्ने-कीभावे सन्ध्यमक्षरमुदात्तं ज्ञातव्यं।स्वरितोपधेऽनुदात्तोदये सन्ध्यमक्षरं स्वरितत्वमापद्यते।'क्षीरं सर्पिर्मधूदक'मित्युदाहरणम्। शौनकीयप्रातिशाख्येऽपि स्वराष्टकमुपक्रम्य 'एकादिष्टमुदात्तेन तं तमेव नयेत्स्वर'मिति। उदात्तेनैकादिष्टं तं स्वरं तमेव= उदात्तमेव, नयेत्=उदात्तत्वमेव प्रापये'दिति तदर्थइति तद्भाष्ययोः स्पष्टम्। लोके तु क्वावरमित्यादौ न भवत्येवोदात्त इति

दंती'ति पूर्वरूपे स्वरित एव। ते'ऽवदन्। सो'३ यमागात्। उक्तं च प्रातिशाख्ये–'इकारयोश्च प्रश्लेषे क्षैप्राऽभिनिहतेषु चे'ति। **उदात्तादनुदात्तस्य स्वरितः** ।८।४।६६। उदात्तात्परस्यानुदात्तस्य स्वरितः स्यात्। अग्निमी'ळे। अस्याप्यसिद्धत्वाच्छेषनिघातो न। तमी'शानासः। **नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्** ।८।४।६७। उदात्तपरः स्वरितपरश्चानुदात्तः स्वरितो न स्यात्। गार्ग्यादिमते तु स्यादेव। प्र य आरुः।

---

सु.]इति। 'एकादेश उदात्त' इत्यनेन। इयं च बह्वृचानां व्यवस्थोक्ता। अन्येषामपि तदीयप्रातिशाख्यानुसारेण ज्ञेया। **पूर्वरूपे इति**। 'तेऽवद'न्नित्यादौ ते इति तच्छब्दः फिट्स्वरेणान्तोदात्तः। जसः सुप्त्वात् 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तः। तयोरेकादेश उदात्तः। **अवदन्निति**। वदेर्लङि प्रथमपुरुषबहुवचनम्। 'ते'इत्यतिङन्तात्परस्य तस्य 'तिङ्ङतिङ' इति निघातः। **सोऽयमिति**। स इति तच्छब्दस्य प्रथमैकवचनम्। तच्छब्दः फिट्स्वरेणान्तोदात्तः। सुइति सुप्त्वादनुदात्तः। तस्य रुत्वे उत्वे गुणे च कृते एकादेशेनौकार उदात्तः। **अयमितीदमः** प्रथमैकवचनं फिट्स्वरेणान्तोदात्तम्। तयोः 'एङः पदान्तादती'ति पूर्वरूपे ओकारः स्वरितः। **इकारयोश्च प्रश्लेष इति**। ह्रस्वयोरिकारयोः सवर्णदीर्घे। ह्रस्वयोर्यत्र सवर्णदीर्घं सः **प्रश्लेष** इत्युच्यते। उदात्तस्वरितस्थाने यो यण् स क्षैप्रसन्धिः। यत्र 'एङः पदान्ता'दिति स **अभिनिहतसन्धि**रुच्यते। तेषु स्वरितः स्वीक्रियत इत्यर्थः। 'वी'३दं ज्योतिः', अभ्य'भि हि', 'ते'ऽवदन्'इति क्रमेणोदाहरणानि।

**उदात्तादनुदात्तस्य**। यत्र 'तयोर्य्वावची'त्यतः संहितायामित्यनुवर्तते। तेन पदकालेऽनुदात्तमेव। **अग्निमीळे इति**। अग्निशब्दः फिट्स्वरेण, प्रत्ययस्वरेण वाऽन्तोदात्तः। अम् सुप्त्वादनुदात्तः। 'अमि पूर्वः' इति एकादेश उदात्तः। ईळे इति डुं 'ईड स्तुतौ' लटि उत्तमपुरुषैकवचनम्। 'द्वयोश्चाऽस्य स्वरयोर्मध्यमेत्य संपद्यते स डकारो ळकारः' इति वक्ष्यमाणेन प्रातिशाख्येन डस्य ळः। 'तिङ्ङतिङः' इति निहतम्। ईकारस्य स्वरितः। न च मकारेण व्यवधानम्, 'स्वरविधौ व्यञ्जनमविद्यमानव'दिति परिभाषणात्। एवं सर्वत्र ज्ञेयम्। ननु 'तित्स्वरित' मित्यस्याऽनन्तरमिदं वक्तव्यम्, एवं च स्वरितग्रहणं न कर्तव्यं भवतीत्याशङ्क्याह–**अस्येति**। यदि तत्र क्रियेत 'अनुदात्तं पदमेकवर्जं' मित्येतत्प्रवर्तेत, इह तु प्रकरणे न प्रवर्तते, स्वरितस्याऽसिद्धत्वात्। तेन द्वयोरप्युदात्तस्वरितयोः श्रवणं सिद्धम्। **तमीशानास इति**। तमिति तच्छब्दस्य द्वितीयैकवचनमन्तोदात्तम्। ईशानशब्दाज्जसि 'आज्जसेरसु'गित्यसुगागमे कृते रूपम्। 'ईश ऐश्वर्ये' अस्माच्छानच्। चित्त्वादन्तोदात्तः। जसः सुप्त्वादनुदात्तत्वम्। [ईकारस्य सकाराऽकारस्य च स्वरितत्वम्]।

**नोदात्तस्वरितो**। उदात्तस्वरितौ उदयौ=परौ यस्मादिति बहुव्रीहिः। 'उदय'शब्दः परशब्देन समानार्थः प्रातिशाख्येषु प्रसिद्धः। लाघवार्थं परशब्दे प्रयोक्तव्ये मङ्गलार्थमुदयशब्दः प्रयुक्तः। तथा च भाष्यं 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि च'। इहादौ वृद्धिशब्दो, मध्ये शिवशब्दः–'शिवशमरिष्टस्य करे' इति, अन्ते चायमुदयशब्द इति पाणिनीये मङ्गलं कृतम्। **प्रय आरुरिति**। 'ये'इति यच्छब्दस्य प्रथमाबहुवचनं फिट्स्वरेणान्तोदात्तम्। **आरुरिति**। अर्तेर्लिटि प्रथमपुरुषबहुवचनं झिः। तस्य 'परस्मैपदाना'मित्युस् प्रत्ययस्वरेणोदात्तः। न च

---

शे.]युक्तमाभाति। अयमेकादेशस्वरोऽन्तरङ्गश्चैपादिकोऽपि सिद्धो वक्तव्य इति 'स्वरितो वा'इति सूत्रे भाष्ये स्पष्टम्। [अत एव 'शतुरनुम' इत्यत्राऽनुम इति प्रतिषेधश्चरितार्थः]। अन्तरङ्ग इत्युक्तेः 'प्रपचतीति'इत्यादौ एकादेशस्य पूर्वान्तत्वात् 'तिङि चोदात्तवती'ति न प्रवर्तते। 'सोमस्तुत् पचतीति' इत्यादौ 'तिङ्ङतिङ' इति निघातो न। सिद्धत्वफलन्तु 'वृक्षयि'दं' 'वृक्षावत्र'इत्यत्राऽयावावुदात्तौ भवतः। एतद्विषये शेषनिघातश्च। फलान्तराण्यपि भाष्ये स्पष्टानि। **वीदमिति**। विः–निपातत्वादाद्युदात्तः। इदम्शब्दः फिट्स्वरेणाऽन्तोदात्तः। **दिवीयत इति**। दिवीति विभक्तिः–'ऊडिदंपदादी'त्युदात्ता, ईङो दिवादेः 'ईयते' इति 'तिङ्ङतिङः' इति निहतम्। **इकारयोरिति**। ह्रस्वेकारयोरित्यर्थः। **किं चेति**। इदं वेद एव। अत एव 'गाङ्गेऽनूपे' इत्यत्रायमेकादेशः स्वरितो वेति भाष्ये उक्तम्। **त इति**। तच्छब्दस्य बहुवचनम्। **इकारयोश्च प्रश्लेषे इति**। ह्रस्वयोरिकारयोः प्रश्लेषे, क्षैप्रसन्धिषु चाऽभिनिहितसन्धिषु चाऽविशेषेण उदात्तपूर्वरूपेषु अनुदात्तोत्तररूपेषु शाकल्यस्य मते स्वरितः कार्यः। 'उदात्तपूर्वरूपेषु शाकल्यस्यैवमाचरे'दिति तद्वाक्यशेषात्। 'एव'मिति स्वरितनिर्देशः। 'स्रुचीव घृते' 'यो जान्विन्द्र ते हरी''तेऽवर्द्धन्त स्वतवस' इति क्रमेणोदाहरणानीति तद्भाष्यकृतः। 'सन्धिविशेषस्य क्षैप्रेति सञ्ज्ञा, तद्विशेषस्याभिनिहिते'ति प्रातिशाख्ये द्वितीयपटले स्पष्टम्। तत्र हि–'एङः पदान्ता'दित्यादिरभिनिहितसन्धिः, ह्रस्वद्वयस्थानिकसवर्णदीर्घगुणवृद्ध्यादिः प्रश्लिष्टसन्धिः, दीर्घद्वयस्थानिकसवर्णदीर्घयणादिः क्षैप्रसन्धिः' इत्युक्तम्। वस्तुतस्तु वेदे आपाद्यमानरूपाऽभावाद्व्यवस्थितविभाषाश्रयणे फलं चिन्त्यम्। **उदात्तादनुदात्तस्य**। अत्र 'तयोर्य्वावची'त्यतः संहितायामित्यनुवर्त्तते। तेन पदकाले न। **नोदात्तस्वरितोदय**। उदयशब्दः परवाची शास्त्रान्ते मङ्गलार्थं प्रयुक्तः। यद्यपि नञ्द्वयन्त्यक्त्वा 'गार्ग्यादीनामेवे'ति नियमो व्याख्यातुं शक्यते तथापि 'गार्ग्यादीनामुदात्तादिपर-

वोश्वाः क्का३ भीशवः । **एकश्रुति दूरात्संबुद्धौ** ।१।२।३३। दूरात्संबोधने वाक्यमेकश्रुति स्यात् । त्रैस्वर्यापवादः । आगच्छ भो माणवक। **यज्ञकर्मण्यजपन्यूङ्खसामसु** ।१।२।३४। यज्ञक्रियायां मन्त्र एकश्रुतिः स्याज्जपादीन्वर्जयित्वा। अग्निर्मूर्धा दिवः [ककुत्]।यज्ञेति किं।स्वाध्यायकाले त्रैस्वर्यमेव।[अग्निर्मूर्धा दिवः]।अजपेति किं। ममाग्ने वर्चो विहवेष्वस्तु। जपो नाम उपांशुप्रयोगः। यथा जले निमग्नस्य। न्यूङ्खा नाम षोडश ओंकाराः।

सु.]'तिङ्ङतिङः' इति निघातः शङ्क्यः,'यद्वृत्तान्नित्य'मिति निषेधात्।आकारस्य 'उदात्तस्वरितपरस्ये'ति वक्ष्यमाणेन सन्नतरादेशः । **वोऽश्वाः क्केति** । अत्रापि श्वेत्याकारस्य सन्नतरः । **क्केति** । 'किमोऽत्', 'तित्स्वरितम्'। **एकश्रुति** । संबोधनं संबुद्धिरित्यनेनान्वर्थस्य संबुद्धिशब्दस्य ग्रहणं,न 'एकवचनं संबुद्धि'रिति पारिभाषिकस्य। सति तु तस्य ग्रहणे 'आगच्छत देवा ब्राह्मणा' इत्यत्र न स्यात्तदाह-**दूरात्संबोधने इति**।अन्वर्थग्रहणं च 'दूरा'दित्यनेन संबन्धाल्लभ्यते ।न ह्यामन्त्रितविभक्तेर्दूरत्वमदूरत्वं च संभवति। संबोधनस्य तु क्रियारूपत्वादपादानत्वाद्दूरादिति विशेषणसंभवः। दूरत्वं च न देशस्वरूपमाश्रीयते,अनवस्थितत्वात् ,किं तर्हि,संबोधनक्रियापेक्षया दूरत्वं । यावति देशे प्रकृतिप्रयत्नोच्चारितं संबोध्यमानेन न श्रूयते किं त्वधिकं प्रयत्नमपेक्षते तत्संबुद्धौ दूरं भवति। **एकश्रुतिरिति** । उदात्तादीनां स्वराणामविभागेनाऽवस्थानमेकश्रुतिः । **आगच्छेत्यादि** । 'दूराद्धूते चे'ति वाक्यस्य टेः प्लुत उदात्तः । प्रत्युदाहरणे त्रैस्वर्यमेव भवति । तत्र आङ् 'उपसर्गाश्चाभिवर्ज'मित्याद्युदात्तः । गच्छेति तिङन्तस्य निघातः । भोशब्दो 'निपाता आद्युदात्ताः' इत्याद्युदात्तः। शेषस्यामन्त्रितनिघातः। **यज्ञ**। त्रैस्वर्येण वेदे मन्त्राः पठ्यन्ते, तेषां यज्ञक्रियायामपि तथैव प्रयोगे प्राप्ते एकश्रुतिर्विधीयते । **मन्त्र इति** । एतच्चाऽजपेति पर्युदासाल्लभ्यते, तेनोहादिषु न। अत एव स्वाहेन्द्रशत्रुर्वर्द्धस्वेति समासान्तोदात्तत्वे कर्तव्ये आद्युदात्तं प्रयुक्तमिति प्रसिद्धिः। **जपादीनिति** । जपन्यूङ्खसामानीत्यर्थः । **अग्निर्मूर्धेति** । 'अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वतो३म्'। 'अङ्गेर्निर्नलोपश्चे'ति अग्निशब्दः प्रत्ययस्वरेण, फिट्स्वरेण वाऽन्तोदात्तः । 'मुर्वी बन्धने' 'कनिन् युवृषितक्षिराजिधन्वी'त्यतः कनिनि वर्तमाने 'श्वन्नुक्षन्पूष' न्नित्यत्र मूर्धन्शब्दः कनिन्प्रत्ययान्तोऽन्तोदात्तो निपातितः । दिवशब्दात्परस्य षष्ठ्येकवचनस्य 'ऊडिदम्पदा'दित्युदात्तत्वम् । ककुच्छब्दः प्रातिपदिकस्वरेणान्तोदात्तः । पातेर्डतिः । पतिशब्दः प्रत्ययस्वरेणाद्युदात्तः । 'प्रथेः षिवन् संप्रसारणं च' । षित्त्वान्ङीष् । षष्ठ्येकवचनस्य 'उदात्तयणो हल्पूर्वा'दित्युदात्तत्वम् । **इदम्शब्दः** प्रातिपदिकस्वरेणान्तोदात्तः । आप्नोतेः क्विब् ह्रस्वश्च । 'ऊडिद'मिति विभक्तेरुदात्तत्वम्। 'रीङ्सृजिभ्यां तुट्चे'त्यसुन्प्रत्ययः। नित्स्वरेणाद्युदात्तो रेतःशब्दः। **जिन्वतीति**। जिन्वतेः प्रीणनार्थस्य तिपि 'तिङ्ङतिङः' इति निघातः । 'प्रणवष्टे'रिति प्रयोगकाले प्रणवः । **ममेत्यादि** । 'युष्मदस्मदोर्ङसी'त्याद्युदात्तत्वम् । अग्नेशब्दस्यामन्त्रितनिघातः । वर्चःशब्दोऽसुन्प्रत्ययान्तः । विपूर्वात् ह्वयतेः 'ह्वः संप्रसारणं चे'त्यप्प्रत्यये थाथादिस्वरेणाँ-

शे.]मेवे'ति विपरीतनियमशङ्कां वारयितुं नञ्द्वयोपादानम् । **प्र य आरुरिति** । ये इत्युदात्तम् । आरुरिति ऋधातोर्लिट्युसि रूपम्--अन्तोदात्तम् । **वोश्वाः क्काभीषव इति** । अश्वशब्द आद्युदात्तः । क्केति स्वरितम् । **एकश्रुति** । संबुद्धिग्रहणं संबोधनोपलक्षणम् । अन्यथा 'आगच्छत भो माणवकाः' इत्यादौ न स्यात् । तदाह-**दूरात्संबोधने इति** । स्वराणामविभागेनाऽवस्थानमेकश्रुतिः । यद्वोदात्तादिभ्यो भिन्नः स्वर एकश्रुतिः । आद्ये उच्चनीचसमुदितं स्थानं, परंतु भेदेनाऽनुपलब्धिरिति स्वरिताद्भेदः। अन्त्ये तु तयोर्मध्यमेकश्रुतेः स्थानम्। **आगच्छेति**। आङ् उपसर्गत्वादाद्युदात्तः । गच्छेति निहतम् । भोःशब्दो निपात आद्युदात्तः । माणवकेत्यस्यामन्त्रितनिघातः । अत्राऽन्त्यस्य पक्षे प्लुतोदात्तत्वमपि भवति, वचनसामर्थ्यात् । तदा चोभयोः समुच्चितयोर्दूरात्संबोधनं द्योत्यम् ।

**यज्ञकर्मण्यजप** । रूढश्च जपशब्दः करणमन्त्रेषु, यत्र 'जपती'ति कल्पसूत्रकृतां व्यवहारः । न्यूङ्खा नाम षोडश ओंकाराः। साम प्रसिद्धम् । **गीतिषु सामाख्येति** । यज्ञकर्म च यजतिनोदनानोदितं कर्म । जपादिपर्युदासान्मन्त्रेष्वेवैषा एकश्रुतिर्नोहितादिषु,तेषाममन्त्रत्वात्।तत्र संपूर्णो य ऊहितस्तस्यैवाऽतत्त्वम्,यत्किंचिदूहितपदघटिते तु मन्त्रत्वमेव, तन्मध्यपतितन्यायात्। तदाह-**मन्त्रे इति**। **ममाग्ने इति**। यद्यप्ययं मन्त्रो हविरभिमर्शने विनियुक्तस्तत्र चैकश्रुत्येनैव पठ्यते तथापि 'अधिश्रिते उन्नीयमाने वा 'ममाग्ने वर्चो विहवेष्वस्त्वि'ति चतस्रो जपित्वा' इत्यग्निहोत्रप्रकरणे आपस्तम्बसूत्रे उक्तत्वेन न दोषः। एषु यथाविहितं त्रैस्वर्यं भवति । न चैतेषु नित्यैकश्रुतेर्निषेधेऽपि 'विभाषा छन्दसी'ति विकल्पापत्तिरिति वाच्यं, 'यज्ञकर्मणि जपन्यूङ्खसामसु वा' 'उच्चैस्तरां वा वषट्कारः' 'विभाषा छन्दसी'त्येव सिद्धे नञुच्चारणवैयर्थ्यापत्तेः । यत्तु हरदत्तः--अजपेत्यादिप्रसज्यप्रतिषेधः । नचोहितानामच्छन्दस्त्वात्तत्र सावकाशस्य पूर्वसूत्रस्य मन्त्रेषु परत्वात् 'विभाषा छन्दसी'त्यनेन बाधः स्यादिति वाच्यं, 'यज्ञकर्मणी'ति कर्मग्रहणसामर्थ्यादूहिताऽनूहितेषु सर्वेषु पूर्वस्यैव प्रवृत्तेरिति, तन्न, पर्युदासस्य लघुत्वात् । अत एव 'इन्द्रशत्रुर्वर्द्धस्वे'त्यत्र समासान्तोदात्तत्वे कर्त्तव्ये पूर्वपदप्रकृतिस्वरत्वं प्रयुक्तमिति शतपथब्राह्मणतद्भाष्याद्युक्तं सङ्गच्छते । एवं हि तद्ब्राह्मणम्-'अथ यदब्रवीदिन्द्रशत्रुर्वर्धस्वेति

गीतिषु सामाख्या । **उच्चैस्तरां वा वषट्कारः** ।१।२।३५। यज्ञकर्मणि वौषट्शब्द उच्चैस्तरां वा स्यादेकश्रुतिर्वा। **विभाषा छन्दसि** ।१।२।३६। छन्दसि विभाषा एकश्रुतिः स्यात् । व्यवस्थितविभाषेयम् । संहितायां त्रैस्वर्यम्।

---

सु.]न्तोदात्तत्वम्।**उच्चैस्तरां**।वषट्शब्देनात्र वौषट्शब्दो लक्ष्यते,समानार्थत्वात्। द्वावपि हि तौ देवतासंप्रदानकस्य दानस्य द्योतकौ।नन्वेवं प्रतिपत्तिलाघवार्थं वौषट्शब्द एव कुतो नोक्त इति चेत् , विचित्रा हि सूत्रस्य कृतिः पाणिनेः । क्वचिदक्षर-लाघवमाश्रीयते,क्वचित्प्रतिपत्तिलाघवमिति।ननु वषट्कार इत्यत्र कारप्रत्ययो न स्यात्,वर्णनिर्देशे हि स विहित इति चेत्सत्यम्। एतदेव ज्ञापयति 'समुदायादपि कारप्रत्ययो भवती'ति । तेन 'एवकार' इत्यादि सिद्धम् । उच्चैःशब्दोऽधिकरणप्रधानोऽपि तद्विशिष्टभवनक्रियायां वर्तते,तेन क्रियाप्रधानत्वादाम्प्रत्ययः।उदात्ततरो भवतीति फलितोऽर्थः।'ब्रूहि प्रेष्ये'ति सूत्रेण वौषट्-शब्दस्याऽऽदेः प्लुत उदात्तो विहितः, तदपेक्षयाऽयमुदात्ततरोऽन्त्यस्य विधीयते। अन्ये तु स्वार्थिकस्तरबित्याहुः। **विभाषा**। वाग्रहणेऽनुवर्तमाने विभाषाग्रहणमच्छन्दसीति पदच्छेदेन तन्त्रादिना भाषायामपि विधानार्थम् । अत एव 'श्वेतो धावति अलम्बुसानां याते'ति द्व्यर्थं वाक्यमिति पस्पशान्ते भाष्यम् । तत्र श्वेति प्रातिपदिकस्वरेणान्तोदात्तम् । 'इत' इति इदं-शब्दात्तसिल् , 'ऊडिद'मित्यनेन अन्तोदात्तः। श्वेत इति 'वर्णानां तणे' त्याद्युदात्ते प्राप्ते घृतादित्वादन्तोदात्तम्। अलं शब्दो निपातत्वादाद्युदात्तः।बुसशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। अलंबुसशब्दः फिट्स्वरेणान्तोदात्तः। तत्र भाषायां यद्येकश्रुतिर्न

---

शे.]तस्मादुहैनमिन्द्र एव जघान । अथ यद्ध शश्वदवक्ष्यदिन्द्रस्य शत्रुर्वर्धस्वेति शश्वदुह स एवेन्द्रमहनिष्य'दिति । आद्ये-ऽनुकरणं पूर्वपदप्रकृतिस्वरविशिष्टस्य, अन्त्ये त्वेतदर्थकमन्तोदात्तं। यद्यवक्ष्यदित्यर्थ इति तद्भाष्यम् । अत एव महाभाष्ये-'मन्त्रो हीनः' इति पठितोऽपि श्लोको 'दुष्टः शब्द' इति पठितः।एवञ्च 'इषे त्वा'इत्यादियजुर्मन्त्रेषु शाखाच्छेदनादिकरणेषु एकश्रुतिरेव भवति । एतेन-'पर्युदासेऽपि यज्ञाऽङ्गशब्दत्वेन सादृश्यम् । एवञ्चोहविषये चरितार्थस्याऽस्य मन्त्रेषु पर-त्वा'द्विभाषा छन्दसी'त्यनेन बाधः । सा च व्यवस्थितविभाषा, अतो नातिप्रसङ्गः। अत एव बह्वृचानां संहितायां त्रैस्वर्यं, ब्राह्मणे ऐकश्रुत्यं, तैत्तिरीयाणामुभयत्रापि त्रैस्वर्यमिति व्यवस्था सङ्गच्छते । एवञ्च हौत्रमन्त्रेष्वेकश्रुतिरेव । 'इषेत्वे'-त्यादौ यजुषि त्रैस्वर्यमेव । अत एव सकलदेशीयशिष्टाचारविरोधोऽपि न'-इति परास्तम् । ऊहेषु चरितार्थस्य मन्त्रेषु बाध, उत मन्त्रेषु चरितार्थस्याऽछन्दसि 'विभाषे'त्यनेन ऊहेषु बाध इत्यत्र विनिगमनाविरहेणास्य विभाषा छन्दसीत्येतदप-वादकताया एव युक्तत्वाच्च। अत एव कात्यायनेन 'मन्त्रे स्वरक्रिया यथाऽऽम्नातमविशेषा'दिति पूर्वपक्षे 'तानो वा नित्य-त्वात्, स्मर्यते चैवं एकश्रुतिर्दूरात्संबुद्धौ यज्ञकर्मणि सुब्रह्मण्या-साम-जप-न्यूङ्ख-याजमानवर्ज'मित्युक्तम्।अत्र वाशब्दः पक्ष-व्यावृत्तौ। तान एवेत्यर्थः । 'तान एकश्रुति'रिति तद्भाष्यकृतः। यत्तु सूत्रस्थं वाशब्दं विकल्पार्थकमाहुस्तेषां 'नित्यत्वा'दिति वाक्यशेषविरोधः । तस्माद्यजुष्यप्येकश्रुतिरेव । अत्र सूत्रे जपादिग्रहणं याजमानमन्त्राणामप्युपलक्षणं, कात्यायनसूत्रस्वर-सात् । वस्तुतः कात्यायनप्रातिशाख्ये 'तानलक्षणमेकं स्वरमाहुर्यज्ञकर्मणि सामजपन्यूङ्खवर्जं, प्रवचनो वा यजुषि'इत्युक्ते-र्यजुषि त्रैस्वर्यमपि । तत्र प्रवचनशब्देन पाठ उच्यते । तत्र भवो वा स्वरो यजुषि यज्ञकर्मणि त्रैस्वर्यलक्षण इति तद्भाष्य-कृतः । यद्यपि तत् समाख्याबलात्तच्छाखीयानामेव, तथापि अविरुद्धत्वात्सर्वशाखां प्रत्येकं कर्मेति न्यायाच्चाऽन्येषामपि त्रैस्वर्यं, परन्तु प्रागुक्तकल्पसूत्र-पाणिनिसूत्र-तद्भाष्यादिपर्यालोचनया एकश्रुतौ धर्माधिक्यं बोध्यम् । 'वैकल्पिकेष्वादितो ऽवधारण'मिति न्यायात्संकल्पकाले एतदन्यतरोल्लेख आवश्यकः।यज्ञशब्देन यजतिचोदनाचोदितानामेव ग्रहणमिति स्मार्तेषु स्थालीपाकोपाकर्मादिप्रयोगेषु नैकश्रुत्यमित्यन्यत्र विस्तरः । **उच्चैस्तरां वा** । अधिकरणशक्तिप्रधानोच्चैःशब्दात्तद्विशिष्ट-भवनक्रियाकर्तरि वर्त्तमानात्क्रियाप्रकर्षे प्रत्ययः । तेनोदात्ततर इत्यर्थः । वषट्शब्देन वौषट्शब्दो लक्ष्यते, व्याख्यानात् । तत्रौकारस्य 'ब्रूहिप्रेष्ये'त्यनेन प्लुतोदात्तत्वविधानात् षकारस्याऽनेन तदपेक्षयोदात्ततरो विधीयत इत्येके। अन्ये तु द्वयोर-प्युदात्ततरत्वं, याज्यावाक्यीयैकश्रुत्यपेक्षया प्रकर्ष इत्याहुः । इदमेव युक्तं, भाष्यसम्मतत्वेति बहवः । अस्योदात्तस्य इत-उत्कृष्य शास्त्रान्ते कर्तव्यत्वेनोक्तत्वादसिद्धत्वात्, प्लुतोदात्तत्वस्याऽप्यसिद्धत्वाच्च शेषनिघातो नेति बोध्यम्। पक्षे एकश्रुतिः। **विभाषा छन्दसि**।ननु विभाषाग्रहणं व्यर्थं, वाग्रहणाऽनुवृत्त्यैव सिद्धेः।न च 'यज्ञकर्मणी'त्यस्य निवृत्त्यर्थम् , इष्टानुरो-धेन व्याख्यानत एव तन्निवृत्तेः सम्भवादिति चेदुच्यते । आवृत्त्या विभाषाऽछन्दसीति पदच्छेदार्थम् । तेन भाषायामपि पाक्षिकैकश्रुतिः । अत एव 'श्वेतो धावति अलम्बुसानां याता' इति द्व्यर्थं वाक्यमिति पस्पशान्ते भाष्यं सङ्गच्छते । अत्र श्वेत्यन्तोदात्तः । 'इत' इति 'ऊडिदम्' इत्यनेन । 'श्वेत' इति घृतादित्वादन्तोदात्तम्। अलमिति निपातत्वादाद्युदात्तं, बुस-शब्दोऽन्तोदात्तः, । एवमलम्बुसशब्दोऽपि । एकश्रुत्यभावे हि स्वरभेदे कथमेकं वाक्यं द्व्यर्थं स्यादिति बोध्यम् । अत एव 'दाण्डिनायने'ति सूत्रे भाष्ये उक्तम्-'एकश्रुतिः स्वरसर्वनाम' इति। अत एवाभियुक्तानां विरुद्धस्वरकतत्पुरुषबहुव्रीह्याश्रय-णेन श्लिष्टकाव्यादिनिर्माणं सङ्गच्छते।अत एव काव्यप्रकाशकृता 'वेद इव लोके स्वरो न विशेषावसायहेतु'रित्युक्तम्।एकश्रुत्या

ब्राह्मणे एकश्रुतिर्बह्वृचानाम् । अन्येषामपि यथासंप्रदायं व्यवस्था । **न सुब्रह्मण्यायां स्वरितस्य तूदात्तः** ।१।२।३७। सुब्रह्मण्याख्ये निगदे 'यज्ञकर्मणी'ति 'विभाषा छन्दसी'ति च प्राप्ता एकश्रुतिर्न स्यात्, स्वरितस्योदात्तश्च स्यात् । सुब्रह्मण्यो३म् । [ सुब्रह्मणि साधुरिति यत् । न च 'एकादेश उदात्तेनोदात्तः' इति सिद्धे पुनरत्रेदमुदात्तविधानं व्यर्थमिति वाच्यम्, तत्रानुदात्त इत्यस्याऽनुवृत्तेः] । * **असावित्यन्तः** । तस्मिन्नेव निगदे प्रथमान्तस्याऽन्त उदात्तः स्यात् । गार्ग्यो यजते । ञित्वात्प्राप्त आद्युदात्तोऽनेन बाध्यते । * **अमुष्येत्यन्तः** । षष्ठ्यन्तस्यापि प्राग्वत् । दाक्षेः पिता यजते । * **स्यान्तस्योपोत्तमं च** । चादन्तः। तेन द्वावुदात्तौ । गार्ग्यस्य पिता यजते । * **वा नामधेयस्य** । स्यान्तस्य नामधेयस्य उपोत्तममुदात्तं वा स्यात् । देवदत्तस्य पिता यजते । **देवब्रह्मणोरनुदात्तः** ।१।२।३८। अनयोः स्वरितस्याऽनुदात्तः स्यात्सुब्रह्मण्यायाम् । देवा ब्रह्माण आगच्छत ।

---

सु.]स्यात्तर्हि स्वरभेदे कथमेकं वाक्यं द्व्यर्थं स्यात्। **न सु। सुब्रह्मण्याख्ये निगदे इति**। अपादबन्धे गदिर्वर्तते। यथा गद्यमिति निःशब्दः प्रकर्षे । उच्चैरपादबन्धं यजुरात्मकं यन्मन्त्रवाक्यं पठ्यते स निगदः । नितरां गद्यत इति कर्मणि 'नौ गदनदे'त्यप् । तस्य च सुब्रह्मण्याशब्दोपलक्षकत्वात्सुब्रह्मण्याशब्दोऽपरित्यक्तस्त्रीलिङ्ग एव निगदविशेषस्य नाम । **सुब्रह्मण्योमिति** । 'तत्र साधुः' इति यत् । 'तित्स्वरितं'। 'यतोऽनावः' इति तु न, तत्र द्व्यच इत्यनुवृत्तेः। टापा सहैकादेशः 'स्थानेऽन्तरतमः' इति स्वरितः । ततो निपातत्वादाद्युदात्तेन ओम्शब्देन 'ओमाङोश्चे'त्युदात्तस्वरितयोरेकादेशः स्वरित एवेति हरदत्तादयः । **असाविति**–प्रथमान्तस्योपलक्षणम् । तदाह–**प्रथमान्तस्येति** । **गार्ग्य इति** । 'गर्गादिभ्यो यञ्' । **अमुष्येति**–षष्ठ्यन्तस्योपलक्षणम् । **दाक्षेरिति** । दक्षशब्दादपत्येऽत इञ् । अत्रापि ञित्स्वरः प्राप्तः । **स्यान्तस्येति**। 'स्ये'ति रूपं विवक्षितं, पूर्ववार्तिकारम्भात् । 'स्य'शब्दान्तस्योपोत्तममन्त्यश्चोभयमुदात्तं भवति। **देवब्रह्मणो** । सुब्रह्मण्यायामेव 'देवा ब्रह्माण' इति पठ्यते । तत्र पूर्वेण स्वरितस्योदात्तत्वे प्राप्तेऽनेनानुदात्तो विधीयते ।

---

शे.]व्यवहारादिति तदाशयः।किमर्थं तर्हि 'झल्युपोत्तम'मिति प्रक्रम्य 'विभाषा भाषाया'मिति सूत्रितमिति चेत्, त्रैस्वर्येण प्रक्रमे पाक्षिकानुदात्तत्वलाभायेति गृहाण। एतेन 'भाषायां स्वरो नास्त्येवे'ति भ्राम्यन्तः परास्ताः, स्वरविधौ छन्दोऽधिकाराऽभावाच्चेति दिक् । परे तु–संहितायां त्रैस्वर्यं, ब्राह्मणे एकश्रुतिर्बह्वृचानां।तैत्तिरीयाणामुभयत्रापि त्रैस्वर्यमिति व्यवस्थितविभाषात्वमस्य छन्दसि स्वीकृतं कैश्चित्, तन्न युक्तम्, 'शाच्छो'रिति सूत्रे भाष्ये परिगणितव्यवस्थितविभाषास्वपाठात्। तत्र हि–'देवत्रातो गलो ग्राह इतियोगे च सद्विधिः । मिथस्तेन विभाष्यन्ते गवाक्षः संशितव्रत' इत्युक्तम् । अत एव केषुचिद्देशेषु स्वाध्यायकाले सर्ववेदानामैकश्रुत्येन पाठो दृश्यते । न चैवं छन्दोग्रहणवैयर्थ्यं, छन्दसि त्रैस्वर्ये धर्माधिक्यं, लोके तु समतेत्येतदर्थन्तत्सत्त्वात् । त्वयापि छन्दोग्रहणसामर्थ्याद्भाषापेक्षया वैलक्षण्यं कल्प्यं व्यवस्थितविभाषात्वेन, मया त्वेवमिति विशेषाऽभावात् । न हि छन्दसीत्यनेन त्वदुक्तार्थोऽपि वाच्यवृत्त्या लभ्यते,'एकश्रुतिः स्वरसर्वनामे'ति भाष्येणाप्येवं बोधनाच्च । यथा सर्वनामशब्दास्तदादयः सर्वपदस्थाने प्रयुज्यन्ते, एवं सर्वस्वरस्थाने एकश्रुतिः प्रयोक्तव्येति तदर्थः। अनेन स्पष्टमेव त्रैस्वर्यैकश्रुत्योरैच्छिकविकल्पविषयतोक्ता। वृत्तिकारोऽपि छन्दसि ऐच्छिकमेवैकश्रुत्यमाह । इदानीं केषाञ्चिद्धर्माधिक्याय त्रैस्वर्येण पाठः, परंपरासंप्रदायेन अन्येषामैकश्रुत्येनेति संप्रदायश्रद्धाजाड्येन तु ते नान्यथा पठन्ति । नैतावता विकल्पस्यैच्छिकत्वभङ्गः । न च 'इन्द्रशत्रुर्वर्धस्वे'त्यूहे यज्ञकर्मणीत्यस्याऽप्रवृत्तौ अछन्दसीति च्छेदेन नैकश्रुत्यापत्तिः, धर्माधिक्याय त्रैस्वर्येण ऋत्विग्भिः पठेनाऽदोषादित्याहुः।**न सुब्रह्म**।ननु विभाषेत्यस्य व्यवस्थितविभाषात्वात्स्वरितस्य तूदात्त इति ज्ञापकाच्च सुब्रह्मण्यायां तदभावसिद्धौ 'ने'ति व्यर्थमिति चेन्न, व्यवहित'यज्ञकर्मणी'त्यस्यापि निषेधार्थं तत्सत्त्वात्।स्पष्टश्चेदं कात्यायनसूत्रे। तदाह–**यज्ञेत्यादि**।एवञ्चेदं सूत्रं यज्ञकर्मणि, स्वाध्यायकाले च प्रवर्त्तते इत्याहुः। केचित्तु यज्ञकर्मण्येवास्य प्रवृत्तिः।नेति तु स्पष्टार्थमेव।तेन स्वाध्यायकाले स्वरित एव।'विभाषा छन्दसी'ति तु व्यवस्थितविभाषात्वान्न। ततः परेषामनुदात्तानामेकश्रुतिश्चेति वदन्ति । **सुब्रह्मण्योमिति** । सुब्रह्मणि साधुरिति यत् । तित्स्वरितं। टापा सहैकादेशोऽन्तरतमत्वात्स्वरितः।**ओमिति** निपातत्वादाद्युदात्तम्। तेनैकादेशोऽप्यान्तरतम्यात्स्वरितः।'एकादेश उदात्तेन'इति तु न प्रवर्त्तते, 'अनुदात्तस्ये'त्यस्यानुवृत्तेः । तस्याऽनेनोदात्तः। स्पष्टञ्चेदं भाष्ये।'इन्द्रागच्छे'त्यत्र इन्द्रेत्यामन्त्रिताद्युदात्तं द्वितीयवर्णोऽनुदात्तः । स च 'उदात्तादनुदात्तस्ये'ति स्वरितः, तस्यानेनोदात्तः । न चात्र कर्त्तव्ये स्वरितोऽसिद्धः । 'एतत्काण्डमुत्कृष्यते' इत्युक्तेः । अत एवाऽस्मिन्नुदात्ते शेषनिघातो न। एवमग्रेऽप्यूह्यम् । **असावितीति** । **असाविति** प्रथमान्तोपलक्षणम् । एवममुष्येत्यपि षष्ठ्यन्तस्य । एतानि वार्तिकानि। **गार्ग्य इति** । नन्वनेनान्तस्योदात्तत्वेऽपि अस्याऽसिद्धत्वाच्छेषनिघाताऽभावे गाकारोऽनुदात्तो न स्यादिति चेन्न, इष्टापत्तेः । स्वरितोदात्तयोः समावेशवत्तयोरपि समावेशात् । **स्यान्तस्येति** । अत्र 'स्ये'ति विवक्षितं, पूर्ववार्तिकारम्भात् । **देवब्रह्मणोः**। सुब्रह्मण्यानिगदान्तर्गतयोरित्यर्थः। **देवा**

**स्वरितात्संहितायामनुदात्तानाम्**।१।२।३९। स्वरितात्परेषामनुदात्तानां संहितायामेकश्रुतिः स्यात् । इमं मे गङ्गे यमुने सरस्वति । **उदात्तस्वरितपरस्य सन्नतरः** ।१।२।४०। उदात्तस्वरितौ परौ यस्मात्तस्यानुदात्तस्यानुदात्ततरः स्यात् । सरस्वति शुतुद्रि । व्यचक्षयत्स्वः । **'तस्य परमाम्रेडितम्'** । **अनुदात्तं च** ।८।१।३।

---

सु.]**देवा ब्रह्माण इति**। देवब्रह्मणोर्वैयधिकरण्ये द्वयोरप्याद्युदात्तत्वम्। ततः परस्यानुदात्तस्य स्वरितः। तस्यानेनानुदात्तः। आमन्त्रितनिघातस्तूत्तरस्य न, पूर्वामन्त्रिताऽविद्यमानत्वेन पदात्परत्वाऽभावात् । यदा तु सामानाधिकरण्यं तदा 'विभाषितं विशेषवचने' इति पूर्वस्य पक्षे विद्यमानत्वात् पदात्परत्वाद्ब्रह्माण इत्यस्य निघातोऽपि भवति । अस्मिन् पक्षे देवशब्दे वशब्दस्यैवानेनानुदात्तत्वं विधेयम् । ब्रह्मग्रहणं तु न कर्तव्यम्। **स्वरिता। अनुदात्तानामिति।** जातौ बहुवचनम् । तेनैकस्य द्वयोर्बहूनां च भवति । एकस्य–पचति । द्वयोः–अग्निमीळे पुरोहितम् । बहूनां तु मूल एव दर्शितम् । **इमं मे इति** । इदम्शब्दः प्रातिपदिकस्वरेणाऽन्तोदात्तः। विभक्तिरनुदात्ता । त्यदाद्यत्वे 'अमि पूर्वः'।एकादेश उदात्तेनोदात्तः। 'मे' इत्यनुदात्तम्, 'अनुदात्तं सर्वमपादादौ' इत्यधिकारात्।तस्य उदात्तादनुदात्तस्य स्वरितः। तस्मात्परेषां गङ्गेप्रभृतीनामनुदात्तानामेकश्रुतिः । सर्वे एते आमन्त्रितनिघाताऽनुदात्ताः । ननु 'मे' इत्यस्य स्वरितस्य उदात्तविधायकं त्रिपादीस्थत्वादसिद्धं स्यात् । न च स्वरितादित्याश्रयात्सिद्धम् । 'क वः सुम्न' इत्यादौ चरितार्थत्वादिति चेन्मैवम् । 'तस्यादितः' इत्यारभ्य नवसूत्र्याः स्वस्थानादुत्कृष्य शास्त्रान्ते भाष्यवार्तिकयोर्निवेशात् । 'न सुब्रह्मण्याया'मिति सूत्रे 'स्वरितस्य तूदात्त' इति वदतैव काण्डोत्कर्षस्य ज्ञापितत्वाच्च । न च सुब्रह्मण्योमिति सिद्धः स्वरितोऽस्तीति वाच्यं, तत्र 'एकादेश उदात्तेने'ति सूत्रप्रवृत्तेरावश्यकत्वात् । तत्र ह्यनुदात्तस्य ग्रहणं नानुवर्तते । **उदात्त** । सन्नशब्दे नीचैरर्थ उच्यते, तेन त्वनुदात्तत्वं लक्ष्यत इत्याह–**अनुदात्ततर इति** । प्रकर्षस्त्वन्यानुदात्तापेक्षः। **सरस्वतीत्यादि** । अत्र मेशब्दमाश्रित्य सरस्वतीत्यस्यामन्त्रितनिघातः । शुतुद्रिशब्दस्य तु न, पादादित्वात् । 'आमन्त्रितस्ये'ति षाष्ठेन शुतुद्रीत्यस्योदात्तं प्रथममक्षरं, तस्मिन्परे पूर्वस्य सरस्वतीकारस्य सन्नतरः। **व्यचक्षयत्स्व इति**। 'वी'ति उपसर्गत्वादाद्युदात्तः । ततः परस्याऽचक्षय·

---

शे.]**ब्रह्माण इति**। इदं वैकल्पिकं 'देवब्रह्मणोरनुदात्तत्वमेके' इति भाष्यात्। पक्षे त्वेकश्रुतिः, दूरात्संबोधनसत्त्वात् । अत एव 'एकश्रुतिदूरा'दिति सूत्रे इदमेकश्रुतेरुदाहरणं भाष्ये उक्तम् । **स्वरितात्संहितायाम्**। अत्रानुदात्तानामिति बहुत्वमविवक्षितम् । तेन 'अग्निमीळे' इत्यादिसिद्धिः । बहुवचनोच्चारणन्त्वनेकत्वे सर्वेषां यथा स्यात् । अन्यथा तस्मादिति परिभाषयाऽऽद्यस्यैव स्यात् । यदि तु 'स्वरविधौ सङ्घातः कार्यी'त्युच्यते तदा स्पष्टार्थम् । संहितायामित्येतज्ज्ञापयति 'अन्यत्र पञ्चमीनिर्देशे कालो न व्यवधायक' इति । तेन 'तिङ्ङतिङ' इति निघातः पदपाठेऽपि सिध्यति। '**इमं मे इति** । मेशब्दोऽनुदात्तः, तस्योदात्तात्परत्वेन स्वरितः । न चाऽस्य स्वरितस्य प्रकृतसूत्रदृष्ट्याऽसिद्धत्वम्, न च स्वरितादित्याश्रयात्सिद्धत्वं,'क वः सुम्ने'त्यादौ चारितार्थ्यादिति वाच्यं,'तस्यादित' इत्यादिनवसूत्र्याः स्वस्थानादुत्कृष्य शास्त्रान्ते भगवता निवेशितत्वात् । अत एव 'देवब्रह्मणो'रिति सूत्रं सार्थकमित्याहुः। **उदात्तस्वरितपासन्नः–अनुदात्तः।तस्यानुदात्तस्येति** । 'एकश्रुतिदूरा'दिति सूत्रस्थभाष्ये "उदात्तादऽनुदात्ताऽनुरामवशादेकश्रुतिरुदात्ताऽनुदात्ता वेति सन्दिह्य, नोदात्ता, 'उच्चैस्तरां वा वषट्कारः' इति ज्ञापकात् । अतन्त्रन्तरनिर्देशः। नानुदात्ता,'उदात्तस्वरितपरस्ये'त्यत्र 'सन्नतर' इति ज्ञापकात्।अतन्त्रं तरनिर्देशः। **अपर आह**–एकश्रुतिरुदात्ता,उच्चैस्तरामिति ज्ञापकात्। तन्त्रं तरनिर्देशः,उच्चैर्दृष्ट्वा उच्चैस्तरामित्येतद्भवति । अनुदात्ता च, सन्नतर इति ज्ञापकात्,तन्त्रं तरनिर्देशः।सन्नं दृष्ट्वा सन्नतर इति भवती"त्युक्तम्।तत्राद्ये ज्ञापकमेवं कैयटनोक्तं–यद्येकश्रुतिरुदात्ता तदा,वषट्शब्दस्यापि 'यज्ञकर्मणी'त्येकश्रुतेः सिद्धत्वात् 'उच्चैस्तरा'मिति सूत्रं नाऽकरिष्यत् । तेन हि पक्षे उदात्तः, पक्षे एकश्रुतिर्विधीयते। एवमनुदात्तत्वे एकश्रुत्यनुवृत्त्यैव सिद्धे सन्नतरग्रहणमनर्थकम्। तस्मादुदात्तानुदात्तयोर्भेदतिरोधानमेकश्रुति'रिति।अन्त्यमते 'उच्चैर्दृष्ट्वे'ति प्रतीकमुपादाय 'सोमस्याग्ने वीही वौष'डिति मन्त्रे यज्ञकर्मणीत्येकश्रुतौ प्राप्तायां तदपेक्षया वौषट्शब्दस्योदात्ततरत्वं विधीयते। सति चैकश्रुतेरुदात्ताऽनुरागे तदपेक्षः प्रकर्षो युज्यते । यथा मलिने वस्त्रे शौक्ल्यानुरागे तदपेक्षो वस्त्रान्तरे शुक्लतरव्यपदेशः । '**सन्नं दृष्ट्वेति**' । एकश्रुतिगतमित्यर्थः । एवञ्च पक्षद्वयेऽपि स्वभाविकोदात्तानुदात्तापेक्षयोदात्ततरानुदात्ततरयोर्न कश्चिच्छ्रुतौ विशेषो, नाऽप्युच्चारणे यत्नविशेष इति लभ्यते।सप्तस्वरगणनायामपि भाष्ये उदात्ततरानुदात्ततरौ एकश्रुतिगतोदात्ताद्यपेक्षयैवातिशयविशिष्टौ बोध्यौ।अनुदात्तस्य च तद्विधानन्त्वेकश्रुतिबाधनार्थम् । यत्त्वेकश्रुतेः स्थाने सन्नतरविधानमिति, तन्न, मानाऽभावात् । किंचैकश्रुतिपदस्य षष्ठ्यन्तत्वकल्पने न मानम्। अपि चैकश्रुतिशब्दस्य स्त्रीलिङ्गत्वेन 'स्वरितपरस्ये'ति लिङ्गविरोधः।एवञ्चैकश्रुतिविषये एवाऽस्य विधानमिति 'अग्निं कन्ये'त्यादावपि सन्नतरापत्तिरित्यपास्तम् । अनुदात्तानामित्युपक्रमात्सर्वेषां माभूदन्त्यस्यैव यथा स्यादित्यर्थं परग्रहणम् । नन्वेवं सति नवसूत्र्याः शास्त्रान्ते उत्कर्षेणाऽस्याऽसिद्धत्वाद्गङ्गे इत्यादिवत्सरस्वतीकारस्यापि पूर्वेणैकश्रुतिः प्राप्नोति,

द्विरुक्तस्य परं रूपमनुदात्तं स्यात् । दि॑वे दि॑वे । इति साधारणस्वराः ।

## अथ धातुस्वराः ।

धातोः ।६।१।१६२। अन्त उदात्तः स्यात्।गो॒पा॒यतं नः॑ असि॑ स॒त्यः॥स्वपादिर्हिंसामच्यनिटि ।६।१।१८८। स्वपादीनां, हिंसेश्चाऽनिट्यजादौ लसार्वधातुके परे आदिरुदात्तो वा स्यात् । स्वपादिरदाद्यन्तर्गणः। स्वपन्ति । श्वसन्ति । हिंसन्ति।पक्षे प्रत्ययस्वरेण मध्योदात्तता–[स्व॒पन्ति॑। श्व॒सन्ति॑। हिं॒सन्ति॑]। ङ्कित्येवेष्यते । नेह–स्वपानि।हिनसानि।अभ्यस्तानामादिः।६।१।१८९।अनिट्यजादौ लसार्वधातुके परे अभ्यस्तानामादिरुदात्तः स्यात्। ये दद॑ति प्रि॒या वसु॑। परत्वाच्चित्स्वरमयं बाधते। दधा॑ना॒ इन्द्रे॑।अनुदात्ते च ।६।१।१९०। अविद्यमानोदात्ते लसार्वधातुके परेऽभ्यस्तानामादिरुदात्तः दधा॑सि॒ रत्नं॒ द्रवि॑णं च दा॒शुषे॑। अविद्यमानेति किं?। दधात्यत्र।

सु.]दिति तिङन्तस्य 'तिङ्ङतिङः' इति निघातः। स्वरिति 'न्यङ्स्वरौ स्वरिता'विति स्वरितः। तस्मिन् परे यकारस्य सन्नतरः । साधारणस्वरा इति । एकस्मिन् पदे पदद्वयेऽपि च वर्तमानत्वात्साधारण्यम् । 'आद्युदात्तश्च' 'ञ्नित्यादिर्नित्य'मित्यादयस्तु एकस्मिन्नेव पदे वर्तमानत्वान्न साधारणाः । इति साधारणस्वराः ।

प्रकृतिर्द्विधा । धातुः, प्रातिपदिकं च । तत्र धातुस्वरानाह–धातोरिति । 'कर्षात्वतः'इत्यत अन्तउदात्त इत्यनुवर्तते । तदाह–अन्त उदात्त इति । गोपायेति । यकाराऽकारस्योदात्तत्वे 'त'मित्यस्य 'तास्यनुदात्ते'दित्यनुदात्तत्वे 'उदात्तादनुदात्तस्ये'ति स्वरितः । 'बहुवचनस्य वस्नसौ' इति नसादेशस्य, 'स्वरितात्संहितायां'मिति प्रचयापरपर्याया एकश्रुतिः । असीति । अस्तेः सिप् । 'तासस्त्यो'रिति सलोपः । अकारस्योदात्तत्वम् । ततः परस्य स्वरितः । 'सत्य'शब्दे सकारस्य 'उदात्तस्वरितपरस्ये'त्यनुदात्ततरादेशः । स्वपादि । 'तास्यनुदात्ते'दित्यतो लसार्वधातुकमित्यनुवर्तते, तदच्यनिटीति संबन्धादिह सप्तम्यन्तं संपद्यते । तदाह–अनिट्यजादावित्यादि । अदाद्यन्तर्गण इति । आ गणान्तादिति भावः । हिंसन्तीति । हिसि हिंसायां रुधादिः । 'श्नान्नलोपः' । 'श्नसोरल्लोपः' । ङ्कित्येवेष्यत इति । वृत्त्यनुरोधादेतदुक्तम् । भाष्ये तु प्रायेणेदं न दृश्यते। एवं च 'हिनसानी'त्यत्राद्युदात्तत्वमपि पक्षे भवति । यदि तु आद्युदात्तत्व पक्षे नेष्यते तर्हि व्यवस्थितविभाषाश्रयणान्न। केचित्तु स्वपानीत्यत्रैतदभावे धातुस्वरेणाद्युदात्तत्वमेवेति विशेषाऽभावादयं विधिर्न प्रवर्तते, तत्साहचर्याद्धिनसानीत्यत्राप्ययं न प्रवर्तते इति वृत्तिकाराशयं कल्पयन्ति । हिनसानीति । अत्र श्नमः 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति न्यायाद्धातुग्रहणेन ग्रहणे नकाराऽकार उदात्तः । ततः परस्य स्वरितत्वम् । अनिटि किम् ? । स्व॒पि॑तः । 'रुधादिभ्यः सार्वधातुके' इतीट् । अभ्यस्तानाम् । 'आदिः सिचोऽन्यतरस्या'मित्यत आदिरिति वर्तमाने पुनरादिग्रहणं नित्यार्थम् । अन्यथाऽऽदिग्रहणसंबद्धमन्यतरस्याङ्ग्रहणमनुवर्तेत। अचि किम्?। दद्यात्। अनिटि किम् ?। ज॒क्षिथ । ये ददतीति । डुदाञ् दाने लटि झिः । तस्य 'अदभ्यस्ता'दित्यदादेशः । 'श्नाभ्यस्तयो'रित्यालोपः । चित्स्वरमिति । 'चितः' इत्यनेन विहितमन्तोदात्तस्वरमित्यर्थः । दधानेति । लटः शानजादेशः । अनुदात्ते च । न विद्यते उदात्तो यस्मिन्निति बहुव्रीहिः । तदाह–अविद्यमानेत्यादि । अन्यथा हि शास्त्रीयेऽनुदात्ते गृह्यमाणे 'मा हि स्म दद॑।'दित्यत्र नित्यत्वादन्तरङ्गत्वाद्वा[१] इकारलोपे कृते आद्युदात्तत्वं न स्यात् । बहुव्रीहौ विज्ञाते तु

शे.]मम तु न दोषः।तस्या एव स्थाने सन्नतरविधानादिति चेन्न।अत्र पाठेन परस्परं प्रति[३]नवसूत्र्या असिद्धत्वाऽभावबोधनात्। अन्यं प्रति त्वसिद्धत्वमस्त्येव। एतेनाऽयं सन्नतर एकश्रुतेरिव 'उदात्तादनुदात्तस्ये'ति स्वरितस्यापि परत्वाद्बाधकः स्यादिति 'नोदात्तस्वरितोदय'मिति सूत्रं व्यर्थं स्यादिति परास्तमित्याहुः । शुतुद्रीति । आमन्त्रितत्वेऽपि पादादित्वान्न निहतम् । इति साधारणस्वराः ।

अथ धातुस्वराः । प्रकृतिर्द्विधा–धातुः, प्रातिपदिकञ्च । तत्रादौ सर्वमूलत्वाद्धातुस्वरानाह–धातोः । 'कर्षात्वतः' इत्यतोऽन्त उदात्त इति वर्त्तते । गोपायतमिति । गुपेरन्तोदात्तादायः। तदन्तमप्यन्तोदात्तम् । एकाक्ष्वपि व्यपदेशिवद्भावादस्य प्रवृत्तेः । येऽपि उपदेशेऽनुदात्ताः पचादयस्तेष्वप्ययं विधिः, अनुदात्तोपदेशस्येण्निषेधविधौ चारितार्थ्यात् । पिबाद्यादेशानामाद्युदात्तत्वनिपातनसामर्थ्यात्तेषु नाऽयं विधिः । स्वपादि । अदादिषु आगणान्तात् स्वपादयः । 'लसार्वधातुक'मित्यस्य सप्तम्या विपरिणामः, 'अच्यनिटी'ति सप्तमीदर्शनात् । अनिटीति किं ? । स्वपितः । अचीति किम् ? । स्वप्यात् । लेति किं ? । चानशि–स्वपानः । सार्वधातुकेति किं ? । सुषुपतुः । ङ्कित्येवेति । नैतद्भाष्ये दृष्टम् । अभ्यस्तानामादिः । आदिरित्यनुवर्तमाने पुनरादिग्रहणं नित्यार्थम् । अचीति किं ? । दद्यात् । अनिटीति किं ? । जक्षिथ । इदं सूत्रं 'जक्षती'त्यत्र झिनिमित्तनिघाते प्राप्ते आद्युदात्तार्थम् । अनुदात्ते च। अच्यनिटीति निवृत्तम्। अनुदात्त इति बहुव्रीहिरित्याह–अविद्यमानेति।अत एव 'मा हि स्म दधा॑'दित्यादौ नित्यत्वादिकारलोपे कृतेऽप्ययं स्वरः प्रवर्तते एव । अभ्यस्तानामिति किम् ?। ऊर्णौति। चकास्तीत्यादावाद्युदात्तार्थमिदम् ।

**भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति** ।६।१।१९२। भीप्रभृतीनामभ्यस्तानां पिति लसार्वधातुके परे प्रत्ययात्पूर्वमुदात्तं स्यात् । यो॑ऽग्निहो॒त्रं जु॒होति॑ । म॒मत्तु॑ न॒ः परि॑ज्मा । जजनत् । मा॒ता यद्वी॒रं

---

सु.]भवति। हिशब्दो 'हि चे'ति निघातनिषेधार्थः। **भीह्री** । आद्युदात्तस्यापवादोऽयम्। तत्र मदिर्दिवादिः। दरिद्राजागरावदादी । अन्ये तु जुहोत्यादयः । उदाहरणानि-बिभेति जिह्रेति बिभर्ति । 'भृञामि'दित्यभ्यासस्येत्वम् । **ममत्त्विति** । मदेर्लोट् । 'बहुलं छन्दसि' इति शपः श्लुः । **जजनत् दधनदिति** । जन जनने, धन धान्ये । आभ्यां लेट्। तिप् । 'इतश्चे'तीकारलोपः। 'लेटोऽडाटौ' इत्यट् । दरिद्राति । जागर्ति । पिति किम् ?। दरिद्रति । अत्राऽपि परत्वादाकारलोपे कृते इकारस्योदात्तत्वं मा भूत्। ननु पूर्वग्रहणं व्यर्थं, 'प्रत्यये पिती'त्येवोक्ते 'तस्मिन्निति निर्दिष्टे' इति पूर्वस्यैव भविष्यति । न च पितः पूर्वमेव कार्यभाग्यथा स्यात्, पिदन्तं मा भूदित्येवमर्थं तदिति वाच्यम् , कथं पुनः सप्तमी-

---

शे.]ददातीत्यत्राऽप्यन्तरङ्गत्वात्पूर्वं धातुस्वरेऽन्तोदात्ते ततो द्वित्वे शेषनिघातेनोभयोरन्तोदात्तत्वाऽभावेऽपि पर्यायेणोभयोस्तत्स्वप्राप्ताविदम्। स्पष्टा चेयं रीतिः 'परस्मैपदाना'मिति सूत्रे भाष्ये । न च धातोरित्यस्याद्युदात्तप्रकरणपाठेनाद्युदात्तविधायकत्वे 'ऽनुदात्ते चे'ति न कर्तव्य'मिति धातोरिति सूत्रस्थभाष्यमसङ्गतम् , त्वद्रीत्या तस्याद्युदात्तविधायकत्वेप्यस्यावश्यकत्वादिति वाच्यं, स्थाने द्विर्वचनमाश्रित्य पूर्वपक्षिणा तथोक्तावपि पक्षद्वयेऽपि कर्तव्यत्वाभिप्रायेण 'क्रियते न्यास एवे'ति सिद्धान्त्युक्त्या दोषाऽभावात् । अस्य धातोरित्यत्रान्तग्रहणानुवृत्तिज्ञापकतापरकैयटस्तु चिन्त्य एवेत्यन्यत्र विस्तरः । **भीह्री** । अत्र 'लसार्वधातुक'मिति मण्डूकप्लुत्या संबध्यते। **ममत्त्विति**। मदी हर्षे इत्यस्य श्यन्विकरणत्वेऽपि छान्दसः शपः श्लुः। भ्यादीनां किं ?। ददाति । 'अनुदात्ते चे'ति तु'मिमीते'इत्यादौ सावकाशम्। तत्र हि माङो ङित्वाल्लसार्वधातुकानुदात्तत्वम्। अभ्यस्तानां किं ?। मायति । [सार्वधातुके किम् ?। बेभीयात् । यङ्लुगन्तादाशीर्लिङि]। पिति किं ?। जागृतम् । लसार्वधातुक इति स्पष्टार्थम् । ननु प्रत्ययादिति किमर्थं, भ्यादिभ्यः परस्य पितः प्रत्ययस्यैव सम्भवादिति चेन्न, प्रत्ययात्पूर्व एवोदात्तो यथा स्यात् , सङ्घात उदात्तो माभूदिति। नचोदात्तत्वादीनामज्धर्मत्वेन 'पिती'ति सप्तम्या निर्दिष्टपरिभाषाप्रवृत्त्या अलोऽन्त्यपरिभाषया चाऽन्त्यस्यैव भविष्यतीति वाच्यं,'स्वरविधौ सङ्घातः कार्यी'त्यर्थस्यापि ज्ञापनात्।एवञ्च 'अलोन्त्यस्ये'त्यादीनामप्रवृत्तिः। अत एव 'कर्षाऽऽत्वतः' इति सूत्रेऽन्तग्रहणं चरितार्थम्।यद्यप्यनेकोदात्तानां न यौगपद्यं, युगपद्ग्रहणात् , तथापि पर्यायेण सर्वेषां स्यात् , तदभावार्थं प्रत्ययादिति चरितार्थम् , तेन 'आसीनः'इत्यादौ 'चित्स्वरात्तास्यादिभ्योऽनुदात्तत्वं विप्रतिषेधेने'ति सिद्धम्। अन्यथा चित्स्वेनाऽन्तोदात्तत्वमनुदात्तत्वञ्चादेरित्यसम्भवाऽभावाद्विप्रतिषेधोऽसङ्गतः स्यादिति दिक् । नन्वेवमपि 'प्रत्यये पिती'त्येवोच्यतां किं पूर्वग्रहणेन?। नचाऽभ्यस्तानां लसार्वधातुके इत्यनुवृत्त्या पितोऽप्रत्ययस्याऽसम्भवेन प्रत्यय इति व्यर्थमिति वाच्यं, पूर्वोक्तार्थज्ञापनार्थमावश्यकत्वात्।'प्रत्यय' इत्युक्तौ तु सामर्थ्यान्निर्दिष्टपरिभाषायाः पुनः प्रवृत्त्याऽव्यवहितस्यैव ग्रहणमिति न दोष इति चेन्न, 'सौवर्यः सप्तम्यस्तदन्तसप्तम्यः' इति ज्ञापनार्थत्वात् । प्रत्ययादिति पञ्चम्योत्तराङ्गविकलपरिभाषाप्रवृत्त्याऽव्यवहितपूर्वस्य कार्यिण एव पूर्वशब्देन ग्रहणान्न दोषः । इदञ्च ज्ञापकस्य विशेषाऽपेक्षत्वान्निर्दिष्टपरिभाषाविषय एव प्रवर्तते । अत एव 'रिक्ते विभाषे'त्यादौ न दोषः । तत्र हि-पूर्वोत्तरसाहचर्यान्न परिभाषाविषयः । वस्तुतः 'षष्ठ्यर्थे सप्तमी'त्येव ज्ञाप्यते। तदन्तविधिस्तु 'येन विधि'रिति परिभाषया न्यायसिद्धः।'चतुरः शसी'त्यत्र च यथा नाऽस्याः प्रवृत्तिस्तथा वक्ष्यते । अत्र बहवः-इदं सामान्यापेक्षं, तेन 'ञ्नित्यादि'रित्यादावपि प्रवृत्तिः। न चैवं 'गर्गाः'इत्यादौ 'यञञोश्चे'ति लुकि आद्युदात्तत्वप्रसङ्गः, इत्पदघटितेऽनुबन्धनिमित्तस्वरे कर्तव्ये आङ्गत्वाऽभावेऽपि [प्रत्यये परतः पूर्वकार्यत्वाऽभावेऽपि] 'लुमता लुप्ते प्रत्ययलक्षणं नास्ती'त्यर्थस्य 'संज्ञायामुपमान'मित्यनेन ज्ञापनान्न दोषः। तद्धि चञ्चेत्यादावाद्युदात्तत्वाय । अन्यथा कनो लुपि प्रत्ययलक्षणेन 'ञ्नित्यादि'रित्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । अत एव 'अत्रयः' इत्यत्र ढको लुकि न दोषः । वस्तुतः 'अत्रयः' इत्यादौ न दोषः,कार्यिणोऽभावेन प्रत्ययलक्षणाऽप्रवृत्तेः। प्रत्ययलक्षणेन हि तन्निमित्तमन्यस्य कार्यमतिदिश्यते न तु तस्यैव स्थानिवत्त्वं प्रतिपाद्यते, असतः प्रसङ्गाऽभावेन स्थानिवत्त्वबाधात् । अत एव नखभिन्न इत्यादावैसादिकं न।'मा हि दाता'मित्यादौ 'आदिः सिच' इत्यस्य प्रवृत्तये-'इत्पदघटिते'ति। पथिप्रियो मथिप्रिय इत्यत्र च 'पथिमथोः सर्वनामस्थाने' इत्येतत्स्वरनिवृत्त्यर्थं 'न लुमताऽङ्गस्ये'ति सूत्रभाष्यपठितम्-'अत्र लुमता लुप्ते प्रत्ययलक्षणं नेष्यते'इति वचनमेव शरणम् । यदि प्रागुक्तं ज्ञापकं-'क्वचित्स्वरे कर्त्तव्ये प्रत्ययलक्षणं ने'त्येव, 'क्वचि' दित्युक्त्या च 'आमन्त्रितस्य च' 'सर्वस्य सुपी'त्यादौ न दोष इत्युच्यते, तदा न काचिद्दोषशङ्केति वदन्ति । केचित्तु विशेषापेक्षमेतत्-यत्र तदन्तग्रहणसत्त्वाऽसत्त्वाभ्यां स्वराश्रयकार्यिभेदस्तत्रैवैतत्प्रवृत्तिरिति । 'भीह्री'त्यत्र हि पूर्वग्रहणाऽभावे तदन्तस्य कार्यित्वे प्रत्ययान्तानां भ्यादीनामलोन्त्यस्य भवन्नुदात्तः प्रत्ययाऽन्त्यस्यैव स्यात् ।'सप्तम्यर्थंपुरस्कारे तु पितमपहाय भ्यादीनामेवोदात्तः स्यादिति स्पष्टस्तद्भेदः । 'उपोत्तमं रिति' 'चड्यन्यतरस्या'मित्यत्रापि

दुधनत् । जागर्षि त्वम् । **लिति**।६।१।१९३।लितिप्रत्ययात्पूर्वमुदात्तम्। चिकीर्षकः। **आदिर्णमुल्यन्यतरस्याम्** ।६।१।१९४। अभ्यस्तानामादिरुदात्तो वा णमुलि परे । लोलूयंलोलूयम् । पक्षे लित्स्वरः। [लोलूयं लोलूयम् ] । **अचः कर्तृयकि** ।६।१।१९५। उपदेशेऽजन्तानां कर्तृयकि परे आदिरुदात्तो वा । लूयते केदारः स्वयमेव ।

---

सु.]निर्देशे तदन्तस्य प्रसङ्गः? । एतदेव ज्ञापयति–'सौवर्यः सप्तम्यस्तदन्तसप्तम्य' इति । तेन **'उपोत्तमं रिति'**– रित्प्रत्ययान्ते उपोत्तममुदात्तं भवति । **'चङ्यन्यतरस्यां'**–चङन्तस्येत्यर्थो,न तु रिति परतश्चङि परत इति । नन्वेवं 'चतुरः शसी'त्यत्रापि शसन्तस्य प्राप्नोति । शस्ग्रहणंसामर्थ्यान्न भविष्यति । यदि हि 'चतुरः शसी'त्यनेन शस उदात्तत्वमिष्टं स्यात्तत 'ऊडिदंपदा'दित्यस्याऽनन्तरं 'चतुरश्चे'त्येव ब्रूयात् । तत्राऽसर्वनामस्थानग्रहणानुवृत्त्या 'षट्त्रिचतुर्भ्यो हलादि'रिति हलादेरुदात्तविधानाच्च शस एव भविष्यति । **लिति** । पूर्वसूत्रात्प्रत्ययात्पूर्वमिति वर्तते । तदाह– **प्रत्ययात्पूर्वमिति** । तेन स्वरविधौ सप्तम्यास्तदन्तत्वज्ञापनाल्लिदन्तस्य स्वरो न शङ्कनीयः । **चिकीर्षक इति** । 'चिकीर्षे'ति सन्नन्ताण्ण्वुल् । तस्याऽकादेशः । सनोऽतो लोपः । ककारेकार उदात्तः । नचाऽल्लोपस्य स्थानिवत्त्वं, स्वरविधौ तन्निषेधात् । क्वचित्पुस्तके–**भौरिकिविधम् । ऐषुकारिभक्त**मिति दृश्यते । तत्र 'भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ' इति 'विषयो देशे' इत्यस्मिन्नर्थे यथाक्रमं भौरिकिशब्दादैषुकारिशब्दाच्च विधल्भक्तलौ ज्ञेयौ । **आदिर्णमुलि। अभ्यस्तानामिति**। यद्यपि 'लोलूय'मिति प्रतीकमुपादाय 'एकाच्सु धातुषु लित्स्वरस्याऽस्य च विशेषाऽभावादनेकाजुदाहृत' इति हरदत्तग्रन्थादभ्यस्तेति निवृत्तमिति प्रतीयते तथाप्यार्थिकार्थकथनपरतया नेयम् । **णमुलि पर इति** । यद्यपि 'सौवर्यः संप्तम्यस्तदन्तसप्तम्य' इति 'भीह्री'ति सूत्रे व्यंवस्थापितत्वाण्णमुलन्तस्याऽऽदिरुदात्तो भवतीति सूत्रार्थेन भाव्यं, तथापि फले विशेषाऽभावादेवमुक्तमिति प्रतिभाति।**लोलूयं लोलूयमिति**। यङन्ताण्णमुल् । 'नित्यवीप्सयो'रिति द्वित्वम्।अत्र प्रथमो लोलूयशब्द आद्युदात्तः।'लो' इत्युदात्तः।'लू' इति स्वरितः। ततश्चत्वारः प्रचयाः । **अचः**। इह कीर्यत

---

शे.]दरिद्राधातुविषये फलभेदः। 'ञ्नित्यादि'रित्यादौ न तद्भेदः,उभयथापि प्रकृतेरादेरेवोदात्तत्वात्,अतस्तत्र परसप्तम्येव । एवञ्च 'गर्गाः' इत्यादौ 'न लुमते'ति निषेधादेव न दोष इति । पथिमथ्यर्थमपि वचनं नावश्यकम् । ननु सूत्रद्वये 'रितः' 'चङ' इति षष्ठीनिर्देश एवास्तु, किं परिभाषयेति चेन्न, लाघवार्थत्वात् । ननु 'चतुरः शसी'त्यत्र फलभेदस्य स्पष्टत्वेन पक्षद्वयेऽपि एतत्परिभाषाप्रवृत्तिर्दुर्वारा । तथा च शस एवोदात्तत्वं स्यादिति चेन्न, 'चतुरः शसै' इत्येव वक्तव्ये मध्ये विजातीयसप्तम्यन्तपाठेन तदप्रवृत्तेरित्याहुः । इदं चिन्त्यम् 'उपमानं 'सञ्ज्ञाया'मिति सूत्रस्थभाष्यविरोधात् । किंच 'सर्वस्य सुपी'त्यत्राऽप्येवं सति तदन्तसप्तमी न स्यात् । तथा च 'नलुमते'ति निषेधापत्तौ सर्वस्तोमाऽसिद्धिः । 'चतुरः शसी'त्यस्याऽपि लाघवार्थताया वक्तुं शक्यत्वाच्च।'न लुमता' इति सूत्रस्थभाष्यन्तु 'लुमति प्रतिषेधे एकपदस्वरस्योपसङ्ख्यानं सर्वामन्त्रितसिज्लुक्स्वरवर्जं, प्रयोजनं ञ्निति्किल्लुक्स्वराः,पथिमथोः सर्वनामस्थाने लुकी'ति वार्तिकव्याख्यानपरम्। 'उपमान'मिति सूत्रस्थन्तु तत्प्रत्याख्यानपरमिति न तयोर्विरोधः। इमानि च वार्तिकानि–'नलुमताऽङ्गस्येत्यत्राऽङ्गाधिकारः प्रतिनिर्दिश्यते' इति पक्ष इव 'प्रत्यये परतः पूर्वस्य कार्यमात्रे प्रतिषेध' इति पक्षेऽप्यावश्यकानि, सौवरीणां सप्तमीनान्तदन्तसप्तमीत्वात्।'उत्तरपदत्वे चाऽपदादिविधौ' इतिवत्। 'ञ्नित्कित्स्वरस्याऽनाङ्गत्वात् प्रतिषेधाऽप्राप्ति'रिति कैयटस्तूपलक्षणम्। इह 'किंचिदङ्गाधिकारे लुमता लुप्ते प्रत्ययलक्षणेन भवति,किञ्चिच्चाऽन्यत्र न भवती'ति सूत्रशेषस्थभाष्ये।'किञ्चिच्चे'तिशब्देनाहर्ददातीत्यत्राऽसुपीति प्रतिषेधो ग्राह्य इति न कश्चिद्भाष्यविरोधः । 'किञ्चिच्चे'ति प्रतीके ञ्नित्कित्स्वरा इति कैयट उपलक्षणतया व्याख्येय इति सुधियो विभावयन्तु । **लिति** । अत्राभ्यस्तानामिति न सम्बध्यते, छलो लित्करणात् । **चिकीर्षक इति** । अत्र परत्वादल्लोपः । न च स्वरो नित्यः, शब्दान्तरस्य प्राप्त्या तस्याऽनित्यत्वात् । लोपोऽप्यनित्यः, स्वरभिन्नस्य प्राप्तेः। स्वरदीर्घयलोपेषु लोपाऽजादेशस्य स्थानिवत्त्वनिषेधादीकार उदात्तः।**आदिर्ण। अभ्यस्तानामिति**। 'णमुली'त्यस्य 'सौवर्य' इति न्यायेन तदन्तसप्तमीत्वे एतत्पञ्चम्या विपरिणम्यते।अभ्यस्तात्परो यो णमुल् तदन्ते आदिरुदात्त इत्यर्थः । तेन जागरं-जागरं, लोलूयं-लोलूयमित्यादेः सिद्धिः। लोलूयिषं-लोलूयिषमित्यादौ च नातिप्रसङ्गः । लोलूयं-लोलूयमित्यादावल्लोपस्य स्थानिवत्त्वन्तु न,स्वरे तन्निषेधात्।एवञ्च विशेषाऽभावमभिप्रेत्य परसप्तम्येव मूले उक्ता। अभ्यस्तानामिति किं ?। कण्डूयंकण्डूयम्। एतेन 'अमैवे'ति सूत्रे 'उच्चैःकार'मित्युदाहरणेऽस्योपन्यासो हरदत्तकृतश्चिन्त्यः। अभ्यस्तानामित्यनुवृत्तिपरवृत्तिविरोधात् । यदि तु व्यवस्थितविभाषाश्रयणेनातिप्रसङ्गनिरासमङ्गीकृत्य तदनुवृत्तिरनावश्यकीति तदाशयस्तदा 'शाच्छो'रिति सूत्रस्थेन व्यवस्थितविभाषापरिगणनपरेण भाष्येण विरोधः । **लोलूयंलोलूयमिति** । आभीक्ष्ण्ये द्वित्वम् । परो लोलूयशब्दोऽनुदात्तः। लो-लू इत्युभयमप्युदात्तम् । न च तत्र कर्तव्येऽल्लोपस्य स्थानिवत्त्वम् , स्वरविधौ तन्निषेधात् । शेषनिघातः । **अचः कर्तृयकि** । अत्रापि तदन्तसप्तमीत्वे न फले विशेषः । उपदेशेऽजन्त-

[लूयते केदारः स्वयमेव]। **चङ्यन्यतरस्याम्** ।६।१।२१८। चङन्ते धातावुपोत्तममुदात्तं वा। मा हि चीकरताम् । धात्वकार उदात्तः। पक्षान्तरे चङुदात्तः–[ मा हि चीकरताम् ] । इति धातुस्वराः ।

## अथ प्रातिपदिकस्वराः ।

**कर्षात्वतो घञोऽन्त उदात्तः** ।६।१।१५९। कर्षतेर्धातोराकारवतश्च घञन्तस्याऽन्त उदात्तः स्यात्। कर्षः । शपा निर्देशात्तुदादेराद्युदात्त एव । कर्षः । पाकः। **उञ्छादीनां च** ।६।१।१६०। अन्त उदात्तः स्यात्। उञ्छादिषु युगशब्दो घञन्तोऽगुणो निपात्यते कालविशेषे रथाद्यवयवे च । वैश्वानरः कुशिकेभिर्युगेयुगे । अन्यत्र–योगेयोगे तवस्तरम् । भक्षशब्दो घञन्तः। नाव्रः सोमस्य प्रथमस्य भक्षः । उत्तमशश्वत्तमावपि ।

सु.]इत्यादौ इत्वे रपरत्वे च सति अयं स्वर इष्टस्तन्निर्वाहार्थं 'तस्यानुदात्ते'दिति सूत्रे समासैकदेशोऽप्युपदेशशब्द इहानुवर्तते, सप्तम्या च विपरिणम्यते। तदाह–**उपदेशेऽजन्तानामिति** । नन्वेवम् 'एकं द्वादशधा जज्ञे' इत्यादाविवाऽन्तर्भूतण्यन्तात्कर्मकर्तृविषयाज्जनेर्लटि 'जायते स्वयमेवे'त्यत्रैष स्वरो न स्यात् , 'ये विभाषा'त्यात्वे सति उत्तरकालमजन्तत्वेऽपि उपदेशेऽनजन्तत्वादिति चेन्मैवम्।'ये' इति विषयसप्तमीमाश्रित्य प्रत्ययोत्पत्तेः प्रागेवाऽऽत्वप्रवृत्तेरित्याहुः। **कर्तृयकीति** । कर्तृवाचिनि सार्वधातुके विहितो यो यक् , तस्मिन् परे । **लूयत इति**। आदिमध्यौ पर्यायेणोदात्तौ । 'तास्यनुदात्ते'दिति 'ते' इत्यस्याऽनुदात्तत्वम्। **चङ्यन्यतरस्याम्** । 'उपोत्तमं रिती'त्यत उपोत्तममिति वर्तते । तदाह–**उपोत्तममिति** । त्र्यादीनामन्त्यमुत्तमं, तस्य समीपमुपोत्तम् । **मा हि चीकरतामिति** । अदुपदेशात्परत्वेन लसार्वधातुकानुदात्तत्वे कृते चङ एव स्वरे प्राप्ते पक्षे धात्वकार उदात्तः । उपोत्तमग्रहणाऽनुवृत्त्या द्वयोर्न । मा हि दधत् । अत्र 'विभाषा धेट्श्व्यो'-रिति चङ् । **इति धातुस्वराः ।**

**कर्षाऽऽत्वतः**। 'ञ्नित्यादिर्नित्य'मित्यस्यापवादः । आदस्यास्तीति आत्वान् । 'तसौ मत्वर्थे' इति भत्वाज्जश्त्वाऽभावः। कर्षश्चाऽऽत्वांश्चेति समाहारद्वन्द्वः।कर्ष इति शबन्तस्यानुकरणं, न घञन्तस्य, तदाह–**शपा निर्देशादिति**। **पाक इति** । पचेर्घञ् । 'चजो'रिति कुत्वम् । **कालविशेष इति** । कृतद्वापरादौ । **भक्षशब्द इति** । भक्ष अदने चुरादिः । 'अनित्यण्यन्ताश्चुरादयः' इति यदा णिज्नास्ति तदा घञ् । ण्यन्तात्तु 'एर'जित्यचि सिद्धम् । 'एरजण्यन्ताना'मिति तु नास्तीत्याहुः। **उत्तमशश्वत्तमाविति** । तमबन्तावेतौ। तेन द्रव्यप्रकर्षविवक्षायामामभावः । पित्त्वा-

शे.]प्रकृतिककर्तृयगन्तस्याऽऽदिरुदात्त इत्यर्थात्। **लूयते केदार इति** । पक्षे यक्स्वरेण मध्योदात्तम् । उपदेशे किं ? । कीर्यते इत्यादावित्त्वे रपरत्वे चाऽयं स्वरो यथा स्यादिति।इदञ्च 'तास्यनुदात्ते'दिति सूत्रात्समासैकदेशस्याप्युपदेशपदस्यानुवृत्त्या सप्तम्या विपरिणामेन च लब्धम् । न चैवं जनेरन्तर्भावितण्यर्थात्कर्मकर्तरि 'जायते स्वयमेव' इत्यत्र न स्यात् उपदेशेऽजन्तत्वाऽभावादिति वाच्यं, ये इति विषयसप्तमीमाश्रित्य प्रत्ययोत्पत्तेः प्रागेवाऽऽत्वप्रवृत्तेः । 'उपदेशे' इत्यस्य च यगुपदेशे इत्यर्थ इति दिक् । **लू–य इत्यादिमध्यौ** पर्यायेणोदात्तौ । **चङ्यन्य** । 'उपोत्तमं रिति' इत्यत उपोत्तमग्रहणमनुवर्त्तते । **चङुदात्त इति** । तिङ् तु अदुपदेशात्परत्वेन 'तास्यनुदात्ते'दित्यनुदात्तः । उपोत्तमं किं ? । मा हि दधत्। अत्र चङ एव स्वरः। **इति धातुस्वराः ।**

श्री:।**अथ प्रातिपदिकस्वराः**।ते च प्रायेण कृत्तद्धितप्रत्ययबलेनैव ज्ञेयाः, उणादिषु उणादिप्रत्ययैः, अव्युत्पत्तिपक्षे फिट्सूत्रैः, क्वचिद्विशिष्य विधानादित्यूह्यम् । अत एव पुत्रीयतेः क्विपि पुत्रीरित्यादौ सर्वानुदात्तत्वमेव । अत एव 'कर्मण्य'णिति सूत्रे मांसशब्दस्य 'नब्विषयस्ये'ति फिट्स्वरमाशङ्क्य 'मनेर्दीर्घश्चे'त्यौणादिकसप्रत्ययान्तत्वादन्तोदात्तता कैयटेनोक्ता। 'मांसमेकः पिंशती'त्यादि लक्ष्यमपि तथैव।आज्यशब्दे तु 'आङ्पूर्वादञ्जेः क्य'बिति पक्षे आद्युदात्तत्वं स्पष्टमेव । ण्यत्पक्षे तु 'नब्विषयस्ये'त्याद्युदात्तत्वं बोध्यम् । **कर्षात्वतः**। कर्षतेराकारवतश्च परो यो घञ् तदन्तस्येत्यर्थः । 'ञ्नित्यादि'रित्यस्यापवादोऽयम् । वत्किम् ?। आदन्तादित्यर्थे युक्त आदन्तभक्तत्वाद्दाय इत्यत्रैव स्यान्न तु पाक इत्यादौ। घञाक्षिप्तधातुविशेषणत्वात्तदन्तविधिः । 'स्वरविधौ व्यञ्जनमविद्यमानव'दिति तु नास्ति, स्वरोद्देश्यकविधेरभावात् । युक्तो निर्दिश्यमानपरिभाषया आकारावयवत्वेऽपि आकारान्ताद्धातोर्विहित इत्यर्थः स्यादिति बोध्यम् । यद्यपि निर्दिश्यमानपरिभाषया घञ एवोदात्तत्वं, तथाप्यन्तग्रहणं 'स्वरविधौ सङ्घातः कार्यी'ति ज्ञापितत्वादादेरन्तस्य च पर्यायेण मा भूदित्यर्थम् । एवञ्च स्वरविधौ निर्दिश्यमानपरिभाषाया अप्यप्रवृत्तिरित्याहुः । **उञ्छादी** । उञ्छम्लेच्छजञ्जजल्पा घञन्ताः । जपव्यधाववन्तौ । वध इति पाठस्तु चिन्त्यः, उदात्तनिवृत्तिस्वरेण सिद्धेः । **गरो** विषेऽबन्तोऽन्तोदात्तः, अन्यत्राद्युदात्तः । **वेदवेगवेष्टबन्धाः**–करणे घञन्ताः; भावे आद्युदात्ता एव । 'स्तुयुद्युवश्छन्दसि' । समासार्थमिदं । परिष्टुत् सुयुत्, परिद्युत् । '**वर्त्तनिः** स्तोत्रे'। स्तोत्रे सामनि वर्तमानो वर्तनिशब्द उञ्छादिः, अन्यत्र मध्योदात्तः। **श्वभ्रे**–दरः,

उदुत्तमं वरुण । शश्वत्तममीळते । **चतुरः शसि** ।६।१।१६७। चतुरोऽन्त उदात्तः शसि परे। चतुरः। कल्पयन्तः । 'अचि र' इति रादेशस्य पूर्वविधौ स्थानिवत्त्वान्नेह-चतस्रः पश्य । 'चतेरुरन्' । नित्त्वादाद्युदात्तता । **झल्युपोत्तमम्** ।६।१।१८०। षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं स्यात् । अध्वर्युभिः पञ्चभिः । नवभिर्वाजैर्नवती च । सप्तभ्यो जायमानः । आ दशभिर्विवस्वतः। उपोत्तमं किम् ?। आ षड्भिर्हूयमानः । विश्वैर्देवैस्त्रिभिः। झलि किम् ?। नवानां नवतीनाम्। **विभाषा भाषायाम्** ।६।१।१८१। उक्तविषये । **सर्वस्य सुपि** ।६।१।१९१। सुपि परे सर्वशब्दस्याऽऽदिरुदात्तः स्यात् । सर्वे नन्दन्ति यशसा। **ञ्नित्यादिर्नित्यम्** ।६।१।१९७। ञिदन्तस्य निदन्तस्य चाऽऽदिरुदात्तः स्यात्।यस्मिन्विश्वानि पौंस्या। पुंसः कर्मणि

सु.]दनुदात्तत्वे प्राप्ते पाठः। **चतुरः**। 'चतेरुरन्'।नित्त्वादाद्युदात्तत्वे प्राप्तेऽन्तोदात्तार्थमिदम्।ननु 'चतस्रः पश्ये'त्यत्र चतसृ अस् इति स्थिते परत्वात् 'अचि र ऋतः' इति रेफादेशे तकाराऽकारस्योदात्तत्वं प्राप्नोति । अत आह-**अचि र इति । स्थानिवत्त्वादिति।** न च स्वरविधौ स्थानिवत्त्वनिषेधः, 'स्वरदीर्घयलोपेषु लोपाऽजादेश एव न स्थानिव'दिति नियमात् । **झल्युपोत्तमम्** । 'षट्त्रिचतुर्भ्यो हलादि'रित्यस्याऽपवादः । **पञ्चभिरित्यादि** । पञ्चनवसप्तदशशब्दाः कनिन्नन्ताः । **आ षड्भिरिति** । षट्शब्दः फिट्स्वरेणाऽन्तोदात्तः । 'तनोतेर्ड्रिः'। त्रिः । अयमपि फिट्स्वरेण, प्रत्ययस्वरेण वाऽन्तोदात्तः । उभयत्रापि 'षट्त्रिचतुर्भ्यो हलादि'रिति विभक्तेरुदात्तत्वम् । **नवानामिति** । अत्रापि विभक्तिरुदात्ता। **विभाषा । उक्तविषय इति** । षट्त्रिचतुर्भ्यः परा या झलादिर्विभक्तिस्तदन्तस्योपोत्तमं भाषायामुदात्तं वा स्यात् । पञ्चभिः सप्तभिः तिसृभिः चतुर्भिः । पक्षे 'षट्त्रिचतुर्भ्यो हलादि'रित्यन्तोदात्तानि । [ पञ्चभिः सप्तभिः तिसृभिः चतुर्भिः ] । **सर्वस्य** । सर्वशब्द उञ्छादिष्वन्तोदात्तो निपातितः, सर्वस्य विकारः सार्व इत्यत्र 'अनुदात्तादेर'नित्यनुदात्तलक्षणोऽञ् यथा स्यात् । श्रवणं तु सर्वत्राऽनुदात्तस्यैव, प्रत्ययलक्षणेनाऽपि सर्वस्वरस्येष्यमाणत्वात् । **ञ्नित्यादि** ।

शे.]अन्यत्राऽबन्तत्वादाद्युदात्तः। **साम्बतापौ**-भावगर्हायाम् , अन्यत्राद्युदात्तौ। **मन्थभोगदेहा**-घञन्ताः। उञ्छादिराकृतिगण इति बहवः । **घञन्त इति** । णिजभावे । णिचि तु एरचैव सिद्धेः । 'एरजण्यन्ताना'मिति तु नास्ति । **चतुरः शसि** । अत्र 'सौवर्यः सप्तम्यः' इति न प्रवर्त्तते, अन्यथा 'चतुरः शसै' इत्येव वदेत् । **नेहेति** । तकाराऽकारस्यै नेत्यर्थः । 'स्वरे ने'ति निषेधस्तु लोपरूपाऽजादेशस्यैव। स्वविधौ स्थानिवत्त्वाऽभावात्तस्यापि न । तस्मादाद्युदात्ततैवेति भावः । केचित्तु चतस्रादेशे आद्युदात्तनिपातनसामर्थ्यात् 'चतुरः शसि' इति न प्रवर्त्तते। न च चतसृणामित्यत्र 'षट्त्री'ति विभक्तिस्वरस्यापि बाधापत्तिः, हलादिग्रहणसामर्थ्येन तदबाधात् । तथा हि-षट्त्रिचतुरां बहुवचनविषयत्वाद्विवचनैकवचने न स्तः । उपसमस्ते सम्भवेऽपि विहितविशेषणान्न दोषः । तत्र षड्भ्यो जश्शसोर्लुगेव, अन्या हलादयः।त्रिशब्दे जसि नेदम् , असर्वनामस्थान इत्यधिकारात्, शसि 'एकादेश उदात्तेने'त्यनेन सिद्धम्, अन्या हलादयः । तिसर्यपि 'तिसृभ्यो जसः' इत्यनेन भाव्यम्, 'तिस्रः पश्ये'त्यत्र 'उदात्तयणः' इत्यनेन भाव्यम् । चतुःशब्दे जसि असर्वनामस्थान इत्यनुवृत्त्या न दोषः । तस्माच्चतस्रः पश्येत्येव व्यावर्त्यम् । यदि निपातस्वरोऽस्य विभक्तिस्वरस्य बाधकः स्याद्धलादिग्रहणमनर्थकं स्यात् । न च 'चतुरः पश्ये'ति तद्व्यावर्त्यम् । 'चतुरः शसी'त्यारम्भसामर्थ्येन तस्य बाधात् । न च गौणे चरितार्थम् , वार्तिकप्रामाण्येन तत्राऽप्रवृत्तेरित्याहुः, तन्न 'तिसृभ्यो जसः' इति सूत्रस्थेन 'उपसंमस्तार्थमेके' इति भाष्येण जस्ग्रहणवद्धलादिग्रहणस्याऽपि तदर्थकत्वसूचनात् । वार्तिकव्याख्यानभाष्ये स्थितमपि भगवता दूषितमेव । तस्मादिति परिभाषया न विहितविशेषणसम्भव इति तदाशयः। एवं हलादिग्रहणसार्थक्यं मनसि निधाय ज्ञापकाऽसम्भवं मत्वा 'नैव वा पुनश्चतस्रः पश्येत्यत्र स्वरः प्राप्नोती'त्यादिग्रन्थेन मूलोक्तयुक्त्यैव साधितम्।तस्माद्गौणे 'षट्त्री'त्यादे'श्चतुरः शसी'त्यादेश्च प्रवृत्तिरस्त्येव सत्यभिधाने इति भाष्यसम्मतमिति ध्येयम् । **झल्युपोत्तमम्। तदन्ते पदे इति** । सौवरीणां सप्तमीनां तदन्तसप्तमीत्वादिति भावः। 'षट्त्री'त्यस्यापवादः। **आ षड्भिरिति** । 'आ' इति भिन्नं पदम्। **विभाषा भाषायाम्** । पक्षे 'षट्त्री'त्यन्तोदात्तत्वम् । **सर्वस्य सुपि** । सर्वशब्दश्च गणेऽन्तोदात्तो निपातितः । उञ्छादिपाठाद्वाऽन्तोदात्तः । एवञ्च 'सुपि किं ?। सर्वतरः' इति वृत्त्युक्तं चिन्त्यम् , प्रत्ययलक्षणेन तत्राऽपि सुबन्तत्वात् । अत्यन्तस्वार्थिकस्तरबादिस्तु न भाष्यारूढः; अत्र सुपीत्युक्तेः । तत्फलन्तु सर्वस्य विकारः सार्व इत्यत्राऽनुदात्तादिप्रकृतिकसुबन्तलक्षणाऽञ्सिद्धिः । श्रवणन्त्वाद्युदात्तस्यैव । प्रत्ययलक्षणेनाऽपि सर्वस्वरस्येष्यमाणत्वात् । सप्तमीनिर्देशस्तु लाघवार्थः, सौवरीणां सप्तमीनां तदन्तसप्तमीत्वात् । 'सर्वस्वरोऽनकच्कस्ये'ति वक्तव्यम् । सर्वके । अत्रान्तोदात्त एव । **ञ्नित्यादि** । 'सौवर्यः' इत्यस्य सामान्यतः प्रवृत्तिमभिप्रेत्याह-**ञिदन्तस्येति** । ननु जुगुप्सेत्यादौ धातुसञ्ज्ञातः परत्वान्नित्स्वरे कृते सन्नन्तस्य धातुत्वे सतिशिष्टत्वाद्धातुस्वरः प्राप्नोतीति चेन्न, सनो नित्त्वसामर्थ्येन सतिशिष्टस्यापि बाधेनाद्युदात्तत्वसिद्धेः ।

ब्रह्मणादित्वात् ष्यञ् । सुते दधिष्व नश्चनः। चायतेरसुन् । 'चायेरन्ने ह्रस्वश्चे'ति चकारादसुनो नुडागमश्च । **पथिमथोः सर्वनामस्थाने**।६।१।१९९। आदिरुदात्तः स्यात् । अयं पन्थाः । सर्वनामस्थाने किम् ? । ज्योतिष्मतः पथो रक्ष । उदात्तनिवृत्तिस्वरेणाऽन्तोदात्तं पदम्। **अन्तश्च तवै युगपत्** ।६।१।२००। तवैप्रत्ययान्तस्याऽऽद्यन्तौ युगपदुदात्तौ स्तः । हर्षसे दातवा उ । **क्षयो निवासे** ।६।१।२०१। आद्युदात्तः स्यात् । स्वे क्षये शुचिव्रत । **जयः करणम्** ।६।१।२०२। करणवाची जयशब्द आद्युदात्तः स्यात् । जयत्यनेन जयोऽश्वः। **वृषादीनां च** ।६।१।२०३। आदिरुदात्तः । आकृतिगणोऽयम् । वाजेभिर्वाजिनीवती । इन्द्रं वाणीः । **संज्ञायामुपमानम्** ।६।१।२०४। उपमानशब्दः संज्ञायामाद्युदात्तः।चञ्चेव चञ्चा। कनोऽत्र लुप्। एतदेव ज्ञापयति–'क्वचित्स्वरविधौ प्रत्ययलक्षणं ने'ति। संज्ञायां किम्–?। अग्निर्माणवकः। उपमानं किम् ?। चैत्रः। **निष्ठा च द्व्यजनात्** ।६।१।२०५। निष्ठान्तस्य द्व्यचः संज्ञायामादिरुदात्तो, न त्वाकारः। दत्तः। द्व्यच् किम् ?। चिन्तितः। अनात्किम् ?। त्रातः। 'संज्ञाया'मित्यनुवृत्तेर्नेह–कृतम्। हृतम्। **शुष्कधृष्टौ** ।६।१।२०६। एतावाद्युदात्तौ स्तः। असंज्ञार्थमिदम्। अतसं न शुष्कम्। **आशितः कर्ता** ।६।१।२०७। कर्तृवाची आशितशब्द आद्युदात्तः। कृषन्नित्फाल आशितम्। **रिक्ते विभाषा** ।६।१।२०८। रिक्तशब्दे वाऽऽदिरुदात्तः। रिक्तः। रिक्तः। संज्ञायां तु

---

सु.]'भीह्री'ति सूत्रे पूर्वग्रहणेन 'सौवर्यः सप्तम्यस्तदन्तसप्तम्य' इति ज्ञापितत्वात्तदन्ता सप्तमीयमित्याह–**ञिदन्तस्येति**। **पथिमथोः** । 'गमेरिनिः'। 'उषः कित्'। 'मन्थः'। 'पतेः स्थ चे'तीनिप्रत्ययान्तावेतावन्तोदात्तौ । मन्थः कित्त्वादुपधालोपः । **पन्था इति** । 'पथिमथ्यृभुक्षामात्' । 'थो न्थः' । **पथ इति** । भस्य टेर्लोपः । **उदात्तनिवृत्तिस्वरेणेति**। 'अनुदात्तस्य च यत्रोदात्तलोपः' इति विभक्तिरुदात्ता। **दातवा उ इति** । ददातेः 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति तवैप्रत्ययः । ऐकारस्याऽऽयादेशः। 'लोपः शाकल्यस्य' इति यलोपः। युगपद्ग्रहणं पर्यायनिवृत्त्यर्थम् । अन्यथा 'एकवर्ज'मिति वचनाद्यौगपद्यं न स्यात्। **क्षयो** । निवासेऽभिधेये क्षयशब्द आद्युदात्तः । **स्वे क्षये इति** । क्षि निवासगत्योः । क्षयन्ति=निवसन्ति यस्मिन्नित्यधिकरणे 'पुंसि संज्ञाया'मिति घः। निवासे किम् ?। व्याधेः क्षयः। क्षि क्षये। 'एरच्' । कर्तरि षष्ठी । **जयः । जयोऽश्व इति** । पुंसीति करणे घः । करणे किम् ?। जयो ब्राह्मणानाम् । भावे 'एरच्' । **वृषादीनाम्** । वृषु सेचने । इगुपधलक्षणः कः । **वाजेभिरिति** । वजेर्घञ् । 'कर्षात्वतः' इत्यन्तोदात्ते प्राप्ते वृषादेराकृतिगणत्वादाद्युदात्तः । **संज्ञायाम्** । **चञ्चेति** । उपमानशब्दोऽयमुपमेयस्य संज्ञा । **कनो लुबिति** । 'इवे प्रतिकृतौ' इति कनो 'लुम्मनुष्ये' इति लुप् । ननु प्रत्ययलक्षणेन नित्त्वात् 'ञ्नित्यादिर्नित्य'मित्येव सिद्धमत आह–**एतदेवेति** । **निष्ठा** । **दत्त इति** । ददातेः क्तः। 'दो दद्घो'रिति ददादेशः। **चिन्तित इति** । चिति स्मृत्याम् । चुरादिः। **कृतं हृतमिति** । प्रत्ययस्वरेणाऽन्तोदात्तावेतौ । **असंज्ञार्थमिति** । संज्ञायां तु 'निष्ठा च द्व्यजना'दित्येव सिद्धम् । **शुष्कमिति** । शुषेः क्तः । तस्य 'शुषः कः' इति कादेशः । **आशितः** । **कर्तृवाचीति** । आङ्पूर्वादश भोजनेऽस्मात्कर्तरि क्तो निपात्यते । अपर आह–कर्तेत्यनेन भूतपूर्वगत्या अणौ कर्ता णौ कर्मीभूत एव विवक्षितः । तथा चाशि-

---

शे.]न च 'सन्यङो'रित्यादौ विशेषणार्थः सः, अन्यथा 'वत्स' इत्यत्रापि स्यादिति वाच्यम्, धातोरित्यनुवर्त्य सशब्दान्तधातोर्द्वित्वविधानेनाऽदोषात्। **पथिमथोः सर्वे** । पथिमथिशब्दावन्तोदात्तौ । अत्र सौवरीणां सप्तमीनां तदन्तपरत्वेऽपि 'लुमता लुप्ते प्रत्ययलक्षणं नेष्यते' इति भाष्यम् । तेन पथिप्रिय इत्यत्र पूर्वपदप्रकृतिस्वरेणान्तोदात्तएव । सुपन्था इत्यादावपि प्रत्ययलक्षणं नास्त्येव।समासाद्या विभक्तिः सा तु न पथिमथोर्विहितेति न तत्राप्यस्य प्रवृत्तिः।**क्षयो निवासे**। क्षियन्ति निवसन्त्यस्मिन्नित्यधिकरणे 'पुंसि सञ्ज्ञाया'मिति घः । निवासे किम् ?। क्षयश्चोराणामित्यादावेरजन्तत्वादन्तोदात्तत्वमेव । **जयोऽश्व इति** । तेनैव करणे घः । अन्यत्रैरच्यन्तोदात्तत्वम् । **वृषादीनाञ्च** । वृषु सेचने । इगुपधलक्षणः कः । **आकृतिगण इति** । फिट्सूत्रेषु 'ग्रामादीनाञ्चे'ति पठितं सोऽप्याकृतिगणः । एवञ्चाऽविहिताद्युदात्तस्य वृषादित्वं, ग्रामादित्वं वा बोध्यम्।अन्तोदात्तस्य तुञ्छादित्वं, घृतादित्वं वा बोध्यम्। एवञ्च द्वाभ्यामेव सूत्राभ्यां सर्वेष्टसिद्धावितरसूत्रद्वयप्रणयनं कर्तृभेदान्न दोषायेति दिक् । **एतदेवेति** । एतच्चोपपादितम् । **निष्ठा च द्व्यजनात्** । आकारभिन्न आदिरित्यर्थः।निष्ठेत्यादि षष्ठ्यर्थे प्रथमा।'अर्धात्क' इत्यादावेकादेशस्य बहिरङ्गाऽसिद्धत्वादनादिति प्रतिषेधो न । **आशितः क**। सकर्मकादप्यशेः कर्तरि क्त उपधादीर्घश्चात्रैव निपात्यते । आङ्पूर्वत्वे क्तमात्रम् । 'आङ्पूर्वादविवक्षितकर्मत्वेनाऽकर्मकत्वात्कर्तरि क्तः' इति वृत्तिः । विवक्षाऽविवक्षयोश्च प्रयोगाधीनत्वान्नाऽनिष्ठापादनमिति तदाशयः । आङ्पूर्वत्वे 'थाथघ'ञित्यस्याप्यपवादोऽयम्।अन्ये तु ण्यन्तात्कर्मण्येवाऽयं क्त इति कर्तेत्यनेन चाऽणौ कर्ता णौ कर्मीभूत एव विवक्षित इत्याहुः । तदुभयमपि भाष्याऽसम्मतम् । **रिक्ते विभाषा** । पूर्वोत्तरसाहचर्याद्रिक्तशब्दे विद्यमान आदिरित्यर्थः,

'निष्ठा च द्व्यजना'दिति नित्यमाद्युदात्तत्वं पूर्वविप्रतिषेधेन । **जुष्टाऽर्पिते च छन्दसि** ।६।१।२०९। आद्युदात्ते वा स्तः । **नित्यं मन्त्रे** ।६।१।२१०। एतत्सूत्रं शक्यमकर्तुम् । जुष्टो दमूनाः, षळर आहु रर्पितमित्यादेः पूर्वेणैव सिद्धेः । छन्दसि पाठस्य व्यवस्थिततया विपरीताऽऽपादनाऽयोगात् ,. 'अर्पिताः षष्टिर्न चलाचलासः' इत्यत्राऽन्तोदात्तदर्शनाच्च । **युष्मदस्मदोर्ङसि**।६।१।२११। आदिरुदात्तः स्यात् । नहिषस्तव नो मम। **ङयि च** ।६।१।२१२। तुभ्यं हिन्वानः । मह्यं वातः पवताम्। **यतोऽनावः** ।६।१।२१३। यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तो, नावं विना । युञ्जन्त्यस्य काम्या । कर्मणिङन्तादचो यत् । [ अनावः किम् ?। नवतिं नाव्यानाम् । ] **ईडवन्दवृशंसदुहां ण्यतः** ।६।१।२१४। एषां ण्यदन्तानामादिरुदात्तः । ईड्यो नूतनैरुत । आजुह्वान ईड्यो वन्द्यश्च।श्रेष्ठं नो धेहि वार्यम्।उक्थमिन्द्राय शंस्यम्।**विभाषा वेण्विन्धानयोः**।६।१।२१५।आदिरुदात्तो वा । इन्धानो अग्निम्।[इन्धानो अग्निम् ]।**त्यागरागहासकुहश्वठक्रथानाम्**।६।१।२१६।आदिरुदात्तो वा । आद्या-

सु.]ण्यन्तस्य प्रयोज्यकर्तरि 'गतिबुद्धिप्रत्यवसानार्थे'ति कर्मसंज्ञके निष्ठायामाशित इति रूपमिति । **रिक्त इति** । रिचिर् विरेचने । **संज्ञायामित्यादि** । 'निष्ठा च द्व्यजना'दित्यस्यावकाशः–दत्तः। गुप्तः। अस्य त्ववकाशो संज्ञायां–'रिक्तो घट' इति । संज्ञायामुभयप्रसङ्गे पूर्वविप्रतिषेधः–रिक्तो नाम कश्चित् । **जुष्टार्पिते** । जुष्टः अर्पित इत्येते शब्दरूपे छन्दसि विषये आद्युदात्तौ वा स्तः । जुषी प्रीतिसेवनयोः। क्तः । 'श्वीदितो निष्ठाया'मितीण्निषेधः । जुष्टः । अर्तेर्णिच् । 'अर्ती'त्यादिना पुक् । अर्पितः। **नित्यं** । जुष्टार्पिते शब्दरूपे मन्त्रविषये नित्यमाद्युदात्तौ स्तः । **पूर्वेणैव सिद्धेरिति** । ननु पक्षेऽन्तोदात्तत्वमपि प्राप्नोतीत्याशङ्क्याह–**छन्दसीत्यादि** । न केवलं गतार्थत्वमात्रं, किं त्वारभ्यमाणे सूत्रे दोषोऽप्यस्तीत्याह–**अर्पिताः षष्टिरित्यादिना** । **युष्मदस्मदोः** । 'युष्यसिभ्यां मदि'गिति मदिक्प्रत्ययान्तावन्तोदात्तौ । **ममेति** । 'युष्मदस्मद्भ्यां ङसोऽश्' 'तवममौ ङसि' इति मपर्यन्तस्य ममादेशः। शेषे लोपः । 'अतो गुणे' इति पररूपत्वम् । 'एकादेश उदात्तेनोदात्तः' इति विभक्तेरुदात्तत्वे प्राप्ते इदमुच्यते । **ङयि च** । योगविभागो यथासङ्ख्यनिवृत्त्यर्थः । **तुभ्यं मह्यमिति** । 'ङे प्रथमयोरम्' । 'तुभ्यमह्यौ ङयि' । **यतो** । 'तित्स्वरित'मित्यस्यापवादः । 'निष्ठा च द्व्यजना'दित्यतो द्व्यजनुवर्तते । तदाह–**द्व्यच इति** । अत्र 'अनावः' इति निषेधो ज्ञापयति–'स्वरविधौ व्यञ्जनमविद्यमानव'दिति। अन्यथा य आदिर्नकारो, नासौ स्वरयोग्यः, यश्च स्वरयोग्य आकारो, नासावादिरिति प्रतिषेधोऽनर्थकः स्यात् । अनावः किम् ?। नावा तार्यं नाव्यम् । 'नौवयोधर्मे'ति यत् । द्व्यच् किं ? । चिकीर्ष्यम् । उभयत्रापि तित्स्वरः । **ईडवन्द** । ईड स्तुतौ, वदि अभिवादनस्तुत्योः, वृङ् संभक्तौ, शंसु स्तुतौ, दुह प्रपूरणे । ण्यतो द्व्यनुबन्धकत्वाद्यद्ग्रहणेन ग्रहणं न प्राप्नोतीति वचनम् । **ईड्य इत्यादि** । 'ऋहलो'रिति ण्यत् । **वार्यमिति** । नन्वत्र 'एतिस्तुशासु' इत्यादिना विशेषविहितेन क्यपा भाव्यमिति चेत्सत्यम् । 'क्यब्विधौ वृञ एव ग्रहणं नास्ये'ति मूल एव स्पष्टम् । **विभाषा** । वेणुशब्दो नित्स्वरेण नित्यमाद्युदात्तः प्राप्तः । 'स्थो णु'रित्यनुवर्तमाने 'अजिवृरीभ्यो निच्चे'ति व्युत्पादनात् । इन्धानशब्दो यदि चानशन्तस्तदा चित्वादन्तोदात्तः । यदा शानजन्तस्तदा लसार्वधातुकानुदात्तत्वे कृते उदात्तनिवृत्तिस्वरेण मध्योदात्तः । 'श्नसोरल्लोपः'

शे.]न तु तत्र परे इत्यर्थः।**रिक्त इति**।पक्षे प्रत्ययस्वरेणाऽन्तोदात्तः।**जुष्टार्पिते**।**वा स्त इति** । पक्षे, भाषायाञ्च प्रत्ययस्वरेणाऽन्तोदात्तौ । 'जुषी प्रीती'त्यतः 'श्वीदितो निष्ठाया'मितीट्प्रतिषेधः । अर्तेर्णिच्। 'अर्तिह्री'ति पुक् । **नित्यं मन्त्रे**। न केवलं गतार्थतामात्रं, किन्त्वारभ्यमाणे सूत्रे दोषोऽप्यस्तीत्याह–**अर्पिताः षष्टिरित्यादिना** । 'सूत्रविरोधात्स पाठः प्रामादिकः । इदमेव ध्वनयितुं सूत्र'मित्यन्ये। **युष्मदस्मदोः** '**ङयि चे**'ति।योगविभागो यथासङ्ख्यनिवृत्त्यर्थः । 'एकादेश उदात्तेन' इति विभक्तेरुदात्ते प्राप्ते वचनम् । **यतोऽना** । 'निष्ठा च द्व्यजना'दित्यतो द्व्यज्ग्रहणमनुवर्तते । नौभिन्नाद्विहितो यो यत् , तदन्तस्येत्यर्थः।'अनाव' इति प्रतिषेधो ज्ञापयति–हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानव'दिति। हलादावादेरचोऽसम्भवात्तद्विषयकशास्त्रसामर्थ्येन हलोऽपि स्थाने उदात्तादिगुणकः कश्चित् स्यादित्यर्थाभिप्रायेण हलः स्वरप्राप्तिः । स्पष्टं चेदं भाष्ये। तित्स्वरितापवादोऽयम्। **ईडवन्द** । ण्यतो द्व्यनुबन्धकत्वात्पूर्वेणाऽसिद्धिरिति भावः। अयमपि तित्स्वरापवादः । 'अत्र वृङ एव ग्रहण'मिति 'एतिस्तुशासि'ति सूत्रे निरूपितम् । **विभाषा** । वेणुशब्दो नित्त्वादाद्युदात्तः प्राप्तः। 'स्थो णु'रित्यनुवर्त्तमाने 'अजिवृरीभ्यो निच्च' इति व्युत्पादितत्वात्। इन्धाने यदि चानश् तदाऽन्तोदात्तत्वं प्राप्तं,यदि शानच् तदाऽप्यन्तोदात्तत्वमेव प्राप्तम् । यत्तु श्नमोऽकारस्योदात्तस्य लोपाल्लसार्वधातुकानुदात्तत्वे उदात्तनिवृत्तिस्वरेण शानजन्तो मध्योदात्त इति, तन्न, विदीन्धिखिदिभ्यो लसार्वधातुकानुदात्तत्वप्रतिषेधात् । केचित्त्वस्य वचनस्य तिङन्ते एव प्रवृत्तिः । भाष्ये प्रथमतो लिङित्युक्त्वाऽग्रे विशेषेणेत्युक्तेर्लिङ्भिन्ने लिङ्सदृशेऽकृदादेशिन्येव प्रवृत्तिप्रतीतेरित्याहुः । यदा वेणुरिव वेणुरिति कनो'लुम्मनुष्ये' इति लुप्तदा 'सञ्ज्ञायामुपमान'मिति नित्यमाद्युदात्तत्वमिष्यते । **त्यागराग** । **आद्यास्त्रय**

त्रयो वजन्ताः । त्रयः पचाद्यजन्ताः । **मतोः पूर्वमात्संज्ञायां स्त्रियाम्** ।६।१।२१९। मतोः पूर्वमाकार उदात्तः स्त्रीनाम्नि । उदुम्बरावती । शरावती । **अन्तोऽवत्याः** ।६।१।२२०। अवतीशब्दस्याऽन्त उदात्तः । वेत्रवती । ङीपः पित्त्वादनुदात्तत्वं प्राप्तम् । **ईवत्याः** ।६।१।२२१। ईवत्यन्तस्यापि प्राग्वत् । अहीवती । मुनीवती । [इति प्रातिपदिकस्वरः] ।

## अथ फिट्सूत्राणि । तत्र प्रथमः पादः ।

१ । **फिषोऽन्त उदात्तः** । प्रातिपदिकं फिट् । तस्यान्त उदात्तः स्यात् । उच्चैः । २ । **पाटलाऽपालङ्काऽम्बासागरार्थानाम्** । एतदर्थानामन्त उदात्तः । पाटला, फलेरुहा, सुरूपा, पाकलेति पर्यायाः । लघावन्त इति प्राप्ते । अपालङ्क, व्याधिघात, आरेवत, आरग्वधेति पर्यायाः । अम्बार्थः—माता । 'उनर्वन्नन्तानां'मित्याद्युदात्तत्वे प्राप्ते । सागरः । समुद्रः । ३ । **गेहार्थानामस्त्रियाम्** । गेहम् । 'नब्विषयस्ये'ति प्राप्ते ।

---

सु.]इति उदात्तस्य श्नसोऽकारस्य लोपात् सर्वथाऽप्यप्राप्तमाद्युदात्तत्वं पक्षे विधीयते । **त्यागराग**। त्यज हानौ । 'चजो'-रिति कुत्वम् । रञ्ज रागे 'घञि च भावे'ति नलोपः । हसे हसने । एषां पक्षे 'कर्षात्वतो घञोऽन्त उदात्तः' इति भवति । **त्रयः पचाद्यजन्ता इति** । कुह विस्मापने, श्वठ असम्यग्भाषणे, चौरादिकावदन्तौ । क्रथ हिंसायाम् । अत्र प्रत्यय-स्वरेणाऽन्तोदात्तत्वं पक्षे भवति [ त्यागः राग इत्यादि ] । **मतोः** । **मतोः पूर्वमाकार इति** । अर्थव्याख्यानमेतत् । सूत्रे तु शब्दस्वरूपापेक्षो नपुंसकनिर्देशः । केचितु सूत्रे पूर्वशब्दं पुंलिङ्गमेव पठन्ति । **शरावतीति** । चातुरर्थिको 'नद्यां मतुप्' । 'मादुपधायाः' इति वत्वम् । 'मतौ बह्वचोऽनजिरादीनां' 'शरादीनां चे'ति दीर्घत्वम् । **वेत्रवतीति** । मतुप् । वत्वम् । न चाऽत्र वत्वस्याऽसिद्धत्वादवतीशब्दोऽयं न भवतीति शङ्क्यं, तस्याऽऽश्रयात्सिद्धत्वेनाऽसिद्धत्वाऽभावात् । 'अवत्या' इति निर्देशादिह न भवति—राजवतीति । स्वरविधौ व्यञ्जनस्याऽविद्यमानत्वाचायमवतीशब्दः । **अहीवतीति** । पूर्ववद्दीर्घः । 'संज्ञाया'मिति वत्वम् ।

**अथ फिट्सूत्राणि** । **फिषोऽन्त उदात्तः** । फिडिति पूर्वाचार्यप्रसिद्ध्या प्रातिपदिकमुच्यते । तदाह—**प्रातिपदिकं फिडिति** । ननु कथमपाणिनीयानि सूत्राण्युपन्यस्यन्ते, पाणिनीयसूत्रैर्यः स्वर आयाति स एव प्रमाणं, तथा च 'शताच ठन्यतावशते' इति सूत्रे कैयटः—'नियतकालाश्च स्मृतयो व्यवस्थाहेतव इति मुनित्रयमतेनाऽद्यत्वे साध्व-साधुप्रविभागः' इति । नैतत् । अपाणिनीयान्यपि फिट्सूत्राणि पाणिनीयैराश्रीयन्ते, भाष्याज्ज्ञापकात् । तथाच 'आद्यु-दात्तश्चे'ति सूत्रे भाष्यं—'प्रातिपदिकस्य चान्त इति प्रकृतेरन्तोदात्तत्वं शास्ती'ति । तथा—तस्मिन्नेव सूत्रे 'प्रत्ययाद्युदा-त्तत्वस्याऽवकाशः—यत्रानुदात्ता प्रकृतिः—'समत्वं सिमत्व'मिति । नहि 'फिषोऽन्त उदात्तः' 'त्वत्त्वसमसिमे'त्यादिफिट्-सूत्राश्रयणं विना प्रकृतेरन्तोदात्तत्वं सर्वानुदात्तत्वं च संभवतीति दिक् । **पाट** । पाटलेत्यादय ओषधिविशेषस्य वाचकाः । **लघावन्त इति प्राप्त इति** । इदं पूर्वेण परेण च संबध्यते । **पर्याया इति** । वृक्षविशेषस्य वाचकाः । सागर-

---

शे.]इति । तत्र 'कर्षात्वतः'इति पक्षेऽन्तोदात्तत्वं बोध्यम् । अन्येषु त्रिषु प्रत्ययस्वरेणान्तोदात्तत्वम् । तत्र कुहश्वठौ चुराद्य-वदन्तौ । **मतोः पूर्वे** । पूर्वमिति शब्दस्वरूपापेक्षया नपुंसकस्य आदित्यस्य विशेषणम् । केचित्तु सूत्रे पूर्वशब्दं पुँल्लिङ्गं पठन्ति । 'स्त्रियां सञ्ज्ञाया'मित्यस्य स्त्रियां वर्तमाना या सञ्ज्ञा तस्यां विद्यमान आदित्यर्थः । तदाह—**स्त्रीनाम्नीति** । मत्वन्तं चेत्स्त्रीनाम भवतीत्यर्थः । आत्किम् ? । इक्षुमती । अत्र 'ह्रस्वनुड्भ्यां मतु'बित्येव । सञ्ज्ञायां किं ? । खट्वावती । स्त्रियां किम् ? । उदुम्बरावान् । उदाहरणेऽत्र च 'मतौ बह्वचोऽनजिरादीनां' 'शरादीनां चे'ति दीर्घः, चातुरर्थिको 'नद्यां मतुप्' । मतोः किम् ? । गवादनी । तदभावे पूर्वग्रहणस्याऽप्यभावात्सञ्ज्ञाशब्दसंबन्धिन आकारमात्रस्य स्यादिति । पूर्वग्रहणान्नेह—सानुमती । अन्यथा स्त्रीनाम्नो मत्वन्तस्येत्यर्थः स्यात् । **अन्तोऽवत्याः** । वत्या—अन्त इति तु नोक्तम् , 'राजवती'त्यत्र माभूदिति । स्वरविधौ नलोपस्याऽसिद्धत्वान्नाऽवतीशब्दः, किन्त्वन्वतीशब्दः । वत्वं त्वाश्रयात्सिद्धम् । **अहीवतीति** । 'सञ्ज्ञाया'मिति वत्वम् । 'शरादीनां चे' ति दीर्घः । योगविभागश्चिन्त्यप्रयोजनः ।

**अथ फिट्सूत्राणि** । अपाणिनीयान्यप्येतानि 'आद्युदात्तश्च' 'उपसर्गादति' 'अवङ् स्फोटायनस्ये'त्यादिसूत्रेषु भाष्यादौ व्यवहृतत्वादनिरुद्धत्वाच्च साधुत्वव्यवस्थापकानि भवन्ति । यत्तु पाणिनीयान्येवैतानीति, तन्न, 'वृषादीनाञ्च' 'उञ्छादीनाञ्चे'त्याभ्यामाकृतिगणाभ्यां क्रमेणाद्युदात्तत्वाऽन्तोदात्तत्वयोः सिद्धयोः 'ग्रामादीनाञ्च' 'घृतादीनाञ्चे'त्यनयोर्वैयर्थ्यापत्तेः । मम तु भिन्नकर्तृकत्वान्न दोषः । **फिषोऽन्तः** । 'फि'डिति प्रातिपदिकस्य पूर्वाचार्यसञ्ज्ञा । **उच्चैर्वृक्ष-इति** । नन्वत्रोदि चेडैसि, अश्चेः सः किदिति व्युत्पादनात्प्रत्ययस्वरेणैवाऽन्तोदात्तत्वसिद्धिरिति चेन्न, अव्युत्पत्तिपक्षे आवश्यकत्वात् । **पाटलापालङ्का** । पाटलाऽपालङ्कौ ओषधिविशेषस्य वाचकौ । **लघावन्त इति प्राप्ते इति** । पूर्वपराऽन्व-यीदम् । इदमुपलक्षणं—क्वचिद्ध्रस्वान्तस्येत्यादीनामपि दुर्वारत्वादित्याहुः । **सागर इत्यादि** । अत्रापि 'लघावन्ते' इति

अस्त्रियां किम् । शाला । आद्युदात्तोऽयम् , इहैव पर्युदासाज्ज्ञापकात्। ४ । **गुदस्य च** । अन्त उदात्तः स्यात्त तु स्त्रियाम् । गुदम् । अस्त्रियां किम् ?। आन्त्रेभ्यस्ते गुदाभ्यः । 'स्वाङ्गशिटामदन्ताना'मित्यन्तरङ्गमाद्युदात्तत्वम् । ततष्टाप् । ५ । **ध्यपूर्वस्य स्त्रीविषयस्य** । धकारयकारपूर्वो योऽन्त्योऽच् स उदात्तः । अन्तर्द्धा । 'स्त्रीविषयवर्णे'ति प्राप्ते । छाया । माया । जाया । 'यान्तस्याऽन्त्यात्पूर्व'मित्याद्युदात्तत्वे प्राप्ते । स्त्रीति किम् ? । बाह्यम् । यञन्तत्वादाद्युदात्तत्वम् । विषयग्रहणं किम् ?। इभ्या । क्षत्रिया । 'यतोऽनावः' इत्याद्युदात्त इभ्यशब्दः। क्षत्रियशब्दस्तु 'यान्तस्याऽन्त्यात्पूर्व'मिति मध्योदात्तः। ६ । **खान्तस्याऽश्मादेः**। नखम् । उखा । सुखम्। दुःखम् । नखस्य 'स्वाङ्गशिटा'मित्याद्युदात्तत्वे प्राप्ते।उखा नाम भाण्डविशेषः। तस्य कृत्रिमत्वात्–'खय्युवर्णं कृत्रिमाख्या चे'दित्युवर्णस्योदात्तत्वे प्राप्ते । सुखदुःखयोर्नब्विषयस्येति प्राप्ते । अश्मादेः किम् ? । शिखा । मुखम् । मुखस्य 'स्वाङ्गशिटा'मिति,'नब्विषयस्ये'ति वा आद्युदात्तत्वम्। शिखायास्तु 'शीङः खो निह्रस्वश्चे'त्युणादिषु नित्त्वोक्तेः।अन्तरङ्गत्वाट्टापः प्रागेव 'स्वाङ्गशिटा'मिति वा बोध्यम् ।७। **हिष्ठवत्सरतिशत्थान्तानाम्**। एषामन्त उदात्तः स्यात् । अतिशयेन बहुलो बंहिष्ठः । नित्त्वादाद्युदात्तत्वे प्राप्ते । 'बंहिष्ठैरश्वैः सुवृता रथेन । यद्बंहिष्ठं नातिविधे' इत्यादौ व्यत्ययादाद्युदात्तः । परिवत्सरः । अव्ययपूर्वपदप्रकृतिस्वरोऽत्र बाध्यत इत्याहुः । सप्ततिः । अशीतिः । लघावन्त इति प्राप्ते । चत्वारिंशत् । इहापि प्राग्वत् । अभ्यूर्ण्वाना प्रभृथस्यायोः । अव्ययपूर्वपदप्रकृतिस्वरोऽत्र बाध्यत इत्याहुः । थाथादिस्वरेणैं गतार्थमेतत् ।८। **दक्षिणस्य साधौ** ।

---

सु.]समुद्रयोः 'लघावन्ते' इति प्राप्ते। **गेहा**। गेहार्थानामन्त उदात्तः स्यात्। स्त्रियां न।**गुद**।अगेहार्थमिदम्।**ध्यपूर्व।धकारस्येति** । 'नित्यस्त्रीलिङ्गस्ये'ति शेषः । **प्राप्ते इति** । आद्युदात्तत्वे प्राप्ते इत्यर्थः । **यञन्तत्वादिति** । 'बहिषष्टिलोपो यञ्चे'ति वचनात् । **यतोऽनाव इति**। इभमर्हतीति। दण्डादित्वाद्यत् । **यान्तस्यान्त्यादिति**। 'क्षत्राद्धः' इति प्रत्ययस्वरेणापीति वा बोध्यम्। **खान्तस्या** । श् च म् च श्मौ, तौ आदी यस्य स श्मादिः। न श्मादिरश्मादिः। तस्य । शकारमकारादिभिन्नस्य खशब्दस्याऽन्तोदात्तः स्यात् । **शीङः खो निह्रस्वश्चेत्यादि** । ननु बहुषूणादिपुस्तकेषु 'शीङो ह्रस्वश्चे'त्येव पठ्यते । 'मुहेः खो मूर्च' इत्यतः खोऽनुवर्तते। ह्रस्वविधानसामर्थ्याद्गुणाऽभाव इति। स्वयमप्युणादिष्वेवमेवोक्तम् । तस्मात्पूर्वापरविरुद्धोऽयं ग्रन्थ इत्यस्वरसादाह–**अन्तरङ्गत्वादित्यादि** । **हिष्ठ । एषामिति** । हिष्ठ वत्सर ति शत् थ एतदन्तानामित्यर्थः । **बंहिष्ठ इति** । बहुलशब्दात् 'अतिशायने तमबिष्ठनौ' इतीष्ठन् । 'प्रियस्थिरस्फिरे'त्यनेन बहुलस्य बंहिरादेशः । **परिवत्सर इति** । क्वचित्तु 'संवत्सरं' इति पाठस्तत्र 'वसेश्च', 'संपूर्वाच्चि'दिति सरप्रत्ययस्य चित्त्वादपि सिद्धम् । **सप्ततिरित्यादि** । 'पङ्क्तिविंशतित्रिंश'दित्यत्र व्युत्पादिता एते । **प्राग्वदिति** । 'लघावन्ते' इति प्राप्त इत्यर्थः । **दक्षिणस्य** । अस्याऽन्त उदात्तः स्यात्प्रावीण्येऽर्थे । वीणायां दक्षिणः। प्रवीण इत्यर्थः ।

---

शे.]प्राप्तम्। **आद्युदात्तोऽयमिति**।नन्वनेनाऽन्तोदात्तत्वाऽभावेऽपि नियमत आद्युदात्तत्वं केन स्यात् ,विधायकाऽभावात् , अतोऽनियम इति वक्तुं युक्तमित्यत आह–**इहैवेति** । एषां सूत्राणामाद्यसूत्रबाधकबाधनार्थत्वात् अस्त्रियामित्येतदभावे स्त्रियामप्यनेन बाधकं बाध्येत । बाधकं चाऽनेनैवानुमीयते । तच्च मध्योदात्तत्वस्याऽत्राऽसम्भवात्सर्वानुदात्तविधायकस्य च फिट्सूत्रेष्वदर्शनादाद्युदात्तविधायकमेवेति भावः । **स्त्रीविषयेति** । आद्युदात्तत्वमित्यन्ये । **गुदमिति** । 'नब्विषयस्ये'ति, 'स्वाङ्गशिटा'मिति वा प्राप्ते । ननु गुदाशब्दस्याऽदन्तत्वाऽभावात्कथं स्वाङ्गेत्यस्य प्राप्तिरत आह–**अन्तरङ्गमिति**। **स्त्रीविषयवर्णेति**।'स्त्रीविषयवर्णाक्षुपूर्वाणा'मित्यनेनेत्यर्थः।'स्त्रीविषयवर्णनाम्ना'मिति केषांचित्पाठः।'लघावन्ते'इत्येवाऽत्र, परत्वात् । अस्य तु 'वृद्धिः' इत्युदाहरण'मित्यन्ये । इभ्ये–दण्डादित्वाद्यत् । **यान्तस्यान्त्यादिति** । इदमुपलक्षणं 'क्षत्राद्धः' इति प्रत्ययस्वरेणाऽपि । नन्वव्युत्पन्नेष्वेव फिट्सूत्रप्रवृत्तेः 'इभ्या' इति प्रत्युदाहरणमयुक्तमिति चेन्न, अस्मादेव स्त्रीविषयग्रहणाज्ज्ञापकाद्व्युत्पत्तिमार्गप्राप्तस्वरस्यापि फिट्स्वरो बाधकइति वदन्ति।ध्वनितश्चेदम् 'एतिस्तुशास्त्रि'ति सूत्रे कैयटे। **खान्तस्याश्मादेरिति** । शकारमकारादिभिन्नस्य खशब्दान्तस्याऽन्त उदात्त इत्यर्थः। **शीङः खो निदिति** । इदन्दशपाद्यामुक्तम् । पञ्चपाद्यान्तु 'शीङः खो ह्रस्वश्चे'ति पठितं । तत्राप्याह–**अन्तरङ्गत्वादिति**।स्वरस्य स्वाङ्गत्वापेक्षत्वादन्तरङ्गत्वं चिन्त्यम्। तस्मात् 'स्वाङ्गशिटा'मिति सूत्रेऽन्तग्रहणात्सर्वनामप्रातिपदिकसञ्ज्ञाकालिकाऽदन्तत्वमादाय तत्प्रवृत्तिरिति बोध्यम्।[एवं पूर्वत्र गुदाशब्देऽपि बोध्यम् ]।अस्थ्यादिस्वाङ्गवाचकशङ्खशब्दे 'स्वाङ्गशिटा'मित्याद्युदात्तत्वप्राप्त्या सोऽप्यत्र प्रत्युदाहरणम् । 'ग्रीवायां बद्धो अपि कक्ष आसनी'त्यादौ ग्रीवाशब्दस्यान्तोदात्तत्वन्तु छान्दसत्वान्निर्वाह्यम्। **हिष्ठवत्सर। इत्याहुरिति** । अत्राऽरुचिबीजन्तु 'संपूर्वाच्चि'दिति सरप्रत्ययस्य चित्त्वात्सिद्धम्। **परिवत्सरस्तूदाहार्य इति**। 'अनेनैव

अन्त उदात्तः स्यात् । साधुवाचित्वाऽभावे तु व्यवस्थायां सर्वनामतया 'स्वाङ्गशिटा'मित्याद्युदात्तः । अर्थान्तरे तु 'लघावन्ते' इति गुरुरुदात्तः। 'दक्षिणः सरलोदारपरच्छन्दानुवर्तिष्वि'ति कोशः। ९ **स्वाङ्गाख्यायामादिर्वा** । इह दक्षिणस्याऽऽद्यन्तौ पर्यायेणोदात्तौ स्तः । दक्षिणो बाहुः। [दक्षिणो बाहुः] । आख्याग्रहणं किम् ? । प्रत्यङ्मुखस्यासीनस्य वामपाणिर्दक्षिणो भवति । १० । **छन्दसि च** । अस्वाङ्गार्थमिदम् । दक्षिणः। [ दक्षिणः ]। इह पर्यायेणाऽऽद्यन्तावुदात्तौ। ११। **कृष्णस्याऽमृगाख्या चेत्** [अन्त उदात्तः] । 'वर्णानां तणे'त्याद्युदात्तत्वे प्राप्ते अन्तोदात्तो विधीयते । कृष्णानां व्रीहीणाम् । कृष्णो नोनाव वृषभः । मृगाख्यायां तु-कृष्णो रात्र्यै । १२ । **वा नामधेयस्य** । कृष्णस्येत्येव । अयं वां कृष्णो अश्विना । कृष्ण ऋषिः । १३ । **शुक्लगौरयोरादिः** । नित्यमुदात्तः स्यादित्येके । वेत्यनुवर्तत इति तु युक्तम्, सरो गौरो यथा पिबेत्यत्रान्तोदात्तदर्शनात् । १४ **अङ्गुष्ठोदकबकवशानां छन्दस्यन्तः** । अङ्गुष्ठस्य 'स्वाङ्गानामकुर्वादीना'मिति द्वितीयस्योदात्तत्वे प्राप्तेऽन्तोदात्तार्थं आरम्भः । वशाग्रहणं नियमार्थ-'छन्दस्येवे'ति । तेन लोके आद्युदात्तेत्याहुः । १५ । **पृष्ठस्य च** । छन्दस्यन्त उदात्तः स्याद्वा भाषायाम्।पृष्ठम्।[पृष्ठम् ]।१६।**अर्जुनस्य तृणाख्या चेत्**।'उनर्वन्नन्ताना'मित्याद्युदात्तस्यापवादः। १७ । **अर्यस्य स्वाम्याख्या चेत्** । 'यान्तस्यान्त्यात्पूर्व'मिति, 'यतोऽनावः' इति वाऽऽद्युदात्ते प्राप्ते वचनम् । १८ । **आशाया अदिगाख्या चेत्** । दिगाख्याव्यावृत्त्यर्थमिदम् । अत एव ज्ञापकाद्दिक्पर्यायस्याद्युदात्तता । इन्द्र आशाभ्यस्परि । १९ । **नक्षत्राणामाब्विषयाणाम्**। अन्त उदात्तः स्यात् । आश्लेषाऽनुराधादीनां लघावन्त इति प्राप्ते । ज्येष्ठाश्रविष्ठाधनिष्ठानामिष्ठन्नन्तत्वेनाऽऽद्युदात्ते प्राप्ते वचनम् । २० । **न कुपूर्वस्य कृत्तिकाख्या चेत्** । अन्त उदात्तो न स्यात् । कृत्तिका नक्षत्रम् । केचित्तु 'कुपूर्वो य आप् तद्विषयाणा'मिति व्याख्याय आर्यिका बहुलिकेत्यत्राप्यन्तोदात्तो ने'त्याहुः। १। **घृतादीनां च**। अन्त उदात्तः । घृतं मिमिक्षे । आकृतिगणो-

---

सु.]**छन्दसि**।दक्षिणस्याऽऽद्यन्तौ पर्यायेणोदात्तौ स्यातां वेदे। **कृष्णस्य**।अस्याऽन्त उदात्तश्छन्दसि,न तु मृगाख्यायाम्। **एके इति**।तन्मतेऽस्मिन्सूत्रे 'नामधेयस्ये'त्यनुवर्तते। वचनविपरिणामेनान्वयः। नामधेययोः शुक्लगौरयोरादिरुदात्त इत्यर्थः। तेन 'सरो गौरो यथा पिबे'त्यत्रान्तोदात्तत्वमेव, नामधेयत्वाऽभावात् । **अङ्गुष्ठो** । एषामन्त उदात्तश्छन्दसि । **अङ्गुष्ठस्येति** । उपलक्षणमिदम् । बकशब्देऽपि 'प्राणिनां कुपूर्व'मित्याद्युदात्तेः प्राप्ते इति बोध्यम् । **वा भाषायाम्** । **पृष्ठमिति**। पक्षे 'स्वाङ्गशिटा'मित्याद्युदात्तत्वम्। [पृष्ठम् ] । **अर्जुनस्य** । अन्त उदात्तस्तृणाख्यायाम् । तृणाख्यायां किम् ? । अर्जुनो वृक्षः । 'उनर्वन्नन्ताना'मित्याद्युदात्तः । **अर्यस्य** । अन्त उदात्तः स्वाम्याख्यायाम् । 'अर्यः स्वामिवैश्ययो'रिति निपातितोऽयमर्यशब्दः । **आशाया** । अदिगाख्यायामाशाशब्द आद्युदात्तः स्यात् । **ज्येष्ठेत्यादि** । 'प्रशस्यस्य श्रः' 'ज्य चे'ति प्रशस्यशब्दादिष्ठनि ज्यादेशः। श्रवणं श्रवः । सोऽस्त्यस्याः सा श्रववती । धनं विद्यते यस्याः सा धनवती । अतिशयिता श्रववती धनवती-श्रविष्ठा, धनिष्ठा । इष्ठनि 'विन्मतोर्लुग्'गिति मतुपो लुक् । **आद्युदात्ते प्राप्त इति** । 'ञ्नित्यादि'रित्यनेन । **कृत्तिकेति**। 'लघावन्ते'इत्याद्युदात्तत्वम् । **घृतमिति** । 'नब्विषयस्ये'ति प्राप्ते । **ज्येष्ठ इति**।

---

शे.]सिद्धे तद्व्यर्थमित्याशय' इति तत्त्वम् । अत्र सूत्रे शतसाहचर्यात्तिशब्दः पङ्क्त्यादिसूत्रविहित एव गृह्यते । **दक्षिणस्य साधाविति** । प्रवीणे इत्यर्थः । 'वीणायां सामसु वा दक्षिण' इत्युदाहरणम् ।प्रवीण इत्यर्थः। **स्वाङ्गाख्यायामादि** । स्वाङ्गेति किं ?। दक्षिणो देशः। अत्र सर्वनामत्वादाद्युदात्तत्वम् । न च परत्वादेव तेनाद्युदात्तत्वमत्र भविष्यतीति वाच्यम्, अस्य प्रकरणस्य बाधकबाधनार्थत्वात् । **कृष्णस्या** । अत्र छन्दसीति वर्तते इत्याहुः । अन्तोदात्त इत्येव । आख्येति किं ? । कृष्णो मृगः। **वा नामधेय** । अन्तोदात्तत्वं वा। पक्षे आद्युदात्तत्वम् । **शुक्लगौरयोः** । नामधेयस्येति वर्तते । तेनाऽनामधेययोरन्तोदात्तत्वमेव । 'ऋज्रेन्द्रे'त्युणादिसूत्रनिपातिताऽन्तोदात्तत्वकस्य शुक्रशब्दस्य लत्वे शुक्लशब्दव्युत्पत्तेरिति बोध्यम् । **अङ्गुष्ठोदक** । 'अन्त' इति त्वादिग्रहणानुवृत्तिशङ्कानिराकरणार्थम् । **उदकस्य**-कर्दमादित्वादाद्यद्वितीययोः पर्यायेण प्राप्ते, बकस्य-'प्राणिनाम्न कुपूर्व'मित्याद्युदात्तत्वे प्राप्ते । **तेन लोके इति** । नियमकरणसामर्थ्यादिति भावः । वशाशब्दश्च वशेः पचाद्यचि टापीति तात्पर्यम् । **पृष्ठस्य च** । 'मृष्टस्ये'ति पाठान्तरम् । **वा भाषायामिति** । पक्षे 'स्वाङ्गशिटा'मित्याद्युदात्तत्वम् । मृष्टं-'निष्ठा च द्व्यजना'दिति तत् । **अर्यस्य स्वाम्या** । वैश्ये त्वाद्युदात्त एव । **अत एव ज्ञापकादिति**।'स्त्रीविषयवर्णे'ति द्वितीयपादस्थसूत्रेणेत्यन्ये। **नक्षत्राणामाब्विषयाणाम्**। नित्याऽऽबन्तानामित्यर्थः । नक्षत्राणां किं ? । खट्वा । आबित्यादि किम् ? । अश्विनी । **श्रविष्ठेत्यादि** । श्रववतीधनवतीशब्दाभ्यामिष्ठनि 'विन्मतो'रिति लुक् । विषयग्रहणं चिन्त्यम्। आबन्ताऽनाबन्तस्य नक्षत्रवाचकस्याऽसत्त्वात्। **न कुपू** । कवर्गपूर्व-

ऽयम्। २२। **ज्येष्ठकनिष्ठयोर्वयसि।** अन्त उदात्तः स्यात्। ज्ये॒ष्ठ आ॑ह चम॒साः। कनि॒ष्ठ आ॑ह च॒तुरः॑। वयसि किम्?। ज्येष्ठः—श्रेष्ठः। कनि॑ष्ठोऽलिष्ठः। इह नित्त्वादाद्युदात्त एव। २३। **बिल्वतिष्ययोः स्वरितो वा।** अनयोरन्तः स्वरितो वा स्यात्। पक्षे उदात्तः। [बिल्वः॑। बि॒ल्वः। तिष्यः॑। ति॒ष्यः]। **इति प्रथमः पादः।**

## अथ द्वितीयः पादः।

२४। **अथाऽऽदिः प्राक् शकटेः।** अधिकारोऽयम्। 'शकटिशकट्यो'रिति यावत्। २५। **ह्रस्वान्तस्य स्त्रीविषयस्य।** आदिरुदात्तः स्यात्। वलि॑ः। तनु॑ः। २६। **नब्विषयस्याऽनिसन्तस्य।** वने॒ न वा॒ यः। इसन्तस्य तु—स॒र्पिः। 'नप्'—नपुंसकम्। २७ **तृणधान्यानां च द्व्यषाम्।** -द्व्यचामित्यर्थः। कुशा॑ः। काशा॑ः। माषा॑ः। तिला॑ः। बह्वचां तु—गो॒धूमा॑ः। २८। **न्रः सङ्ख्यायाः।** पञ्च॑। चतु॑ष्कपा॑लः। २९। **स्वाङ्गशिटामदन्तानाम्।** शिट्—सर्वनाम। कर्णा॑भ्यां छुबु॑का॒दधि॑। ओष्ठा॑विव मधु॑। विश्वो॒ विहा॑याः। ३०। **प्राणिनां**

---

सु.] उदाहरणे वृद्धशब्दस्य 'वृद्धस्य च' इतीष्ठनि ज्यादेशः। 'युवाल्पयोः कनन्यतरस्या'मिति युवन्शब्दस्य कनादेशः। प्रत्युदाहरणे 'प्रशस्यस्य श्रः' 'ज्य चे'ति प्रशस्यशब्दस्य ज्यादेशः। अल्पस्य कन्। **नित्त्वादिति।** तथा च नित्स्वरापवादोऽयं योगः। **पक्षे उदात्त इति।** 'उदात्त' इत्यनुवृत्तेः। **इति प्रथमः पादः।**

**नब्विषयस्य।** इसन्तवर्जितस्य नित्यनपुंसकस्याऽऽदिरुदात्तः स्यात्। **सर्पिरिति।** 'अर्चिशुची'त्यादिना इसिः। **तृण।** तृणवाचिनां, धान्यवाचिनां च द्व्यचामादिरुदात्तः स्यात्। 'ष'षिति अचः प्राचां संज्ञा। तदाह—**द्व्यचामित्यर्थ इति। गोधूमा इति।** 'लघावन्ते' इति मध्योदात्तता। **न्रः सङ्ख्या।** नकाररेफान्तायाः सङ्ख्याया आदिरुदात्तः स्यात्। **चतुष्कपाल इति।** 'चत्वार' इत्यत्राऽऽम्स्वरेण भाव्यम्। 'चतुर' इत्यत्र 'चतुरः शसी'ति, चतुर्भिरित्यत्र 'झल्युपोत्तम'मिति, चतुर्णामित्यत्र 'षट्त्रिचतुर्भ्यः' इत्यनेनेति समास उदाहृतः। 'इगन्तकालकपालभगाले'ति पूर्वपदप्रकृतिस्वरेणाद्युदात्तोऽयम्। **स्वाङ्गशिटा।** स्वाङ्गवाचिनामदन्तानां सर्वनाम्नामादिरुदात्तः स्यात्। **उदकमिति।** छन्दसि

---

शे.] स्याऽऽब्विषयस्य नक्षत्रस्याऽन्त उदात्तो नेत्यर्थः। कुपूर्वस्येति किं?। बहुला। आख्येति किं?। कृत्तिकासु जाता माणविका कृत्तिका। **अत्रापीति।** अपिना कृत्तिका। 'आर्यिका बहुलिके'ति कृत्तिकापर्यायौ। अत्र पक्षे कृत्तिकेत्यादेः प्रयोजनं मघा विशाखेत्यादि। **आकृतीति।** 'वराह इन्द्र एमुष'मित्यादावन्तोदात्तदर्शनाद्वराहशब्दोऽप्यत्र बोध्यः। **ज्येष्ठकनिष्ठयोः।** वृद्धयुवशब्दयोर्ज्य—कनादेशौ। प्रशस्याऽल्पशब्दयोस्तावादेशौ यदा तदा प्रत्युदाहरणम्। **पक्षे उदात्त इति।** उदात्तग्रहणानुवृत्तेरिति भावः। **इति प्रथमः पादः।**

**अथ द्वितीयः पादः। ह्रस्वान्तस्य स्त्रीविषयस्य।** नित्यस्त्रीलिङ्गस्येत्यर्थः। **वलिरिति।** वलिशब्दोऽपि जरया श्लथचर्मणि, तनुश्च शरीरे नित्यस्त्रीलिङ्गः। ह्रस्वेति किम्?। नदी। स्त्रीति किं?। मुरुर्वायुः। विषयेति किं?। लघुः, बहुः। **नब्विषयस्य।** नपुंसकविषयस्य। 'स्त्रिया विषयस्य' 'नपोऽनिसन्तस्य' इति पाठेन विषयपदानुवृत्त्यैव सिद्धे पुनर्विषयपदं लिङ्गव्यत्यय—प्रत्ययलोपान्यतरेण लिङ्गान्तरोपसङ्क्रान्तस्य वा विषयतामात्रेणैतत्प्रवृत्त्यर्थं, यथा 'मधोस्तृप्ता इवासते' इत्यादौ, यथा वा 'मध्वस्मिन्नस्ति मधुर्मासः' 'मधोर्ञ च' इति यतो लुग्वार्तिकेन। ध्वनितश्चेदम् 'ई च द्विवचने' इति सूत्रे भाष्ये। नबिति किं? मूर्तः। विषयेति किम्?। लघुः। **सर्पिरिति।** इसिनन्तज्योतिःशब्दादौ तु नित्त्वादाद्युदात्तत्वमेव। **तिला इति।** यत्तु 'तिलोमाशब्दौ घृतादिपाठदन्तोदात्ता'विति 'संप्रोदश्चे'ति सूत्रे कैयटः, तच्चिन्त्यम्। 'तिला॑श्च मे' इत्यादावाद्युदात्तस्यैव पठ्यमानत्वात्, उमाशब्देऽपि 'मकरवरूडे'त्यनेन विशिष्य पर्यायेणाऽन्तोदात्तविधानात्। **शालिव्रीही**—घृतादित्वादन्तोदात्तौ। तृणेत्यादि किम्?। आम्रः। **गोधूमा इति।** अत्र परत्वादेव 'लघावन्ते' इति मध्योदात्तत्वसिद्धेः, पर्यायेणाद्युदात्तत्वसिद्धेश्चेदं चिन्त्यम्। **'चणका'** इत्युचितम्। **न्रः सं।** पञ्चेत्यादौ नलोपे कृते पाणिनीये 'अनुदात्तादेर'ञित्यादौ एषामिव एतेषु पाणिनीयशास्त्रप्रवृत्तौ बाधकाऽभावान्नलोपस्याऽसिद्धत्वेनैतत्प्रवृत्तिः। सप्ताऽष्टशब्दौ घृतादित्वादन्तोदात्तौ। रस्योदाहरणं—चतु॑ष्कपालः। 'इगन्तकालकपाले'ति पूर्वपदप्रकृतिस्वरेणाऽऽद्युदात्तत्वम्। 'चत्वार' इत्यत्राऽऽम्स्वरेण, शसि 'चतुरः शसी'ति', भिसादौ 'झल्युपोत्तमं' 'षट्त्री'त्यनेन भाव्यमिति समास उदाहृतः। न्रः क?। गणः। सङ्ख्यायाः किम्?। अन्तः। **स्वाङ्ग।** इदञ्च सर्वनामसञ्ज्ञाप्रवृत्तिकाले यददन्तं तत्रैव प्रवर्तते। तेन 'इमं स्तोममर्हते' इत्यादौ न दोषः। सर्वोभाऽन्यशब्दा गणेऽन्तोदात्ता निपात्यन्ते 'तयोर॒न्यः पि॑प्पल'मित्यादौ तथादर्शनात्। 'परो मात्रये'त्यादौ व्यत्ययेनाऽन्तोदात्तत्वं, 'परं मृत्यो'रित्यादावाद्युदात्तस्यापि दर्शनात्। स्वाङ्गेत्यादि किं?। घटः। अदन्तानां किं?। बाहू राजन्यः। **प्राणिनाङ्कुपूर्वमिति।** 'तस्य समूहः' इति सूत्रे न्यासहरदत्तयोः 'कुपूर्वाणा'मिति पाठो दृश्यते। कवर्गादेः पूर्वं तन्मध्ये आदिरित्यर्थः। सर्वनामकार्यन्तु सौत्रत्वात्। 'का'वित्येव सिद्धे पूर्वग्रहणं

कुपूर्वम्। कवर्गात्पूर्वं आदिरुदात्तः। काकः। वृकः। शुकेषु मे। प्राणिनां किम्?। क्षीरं सर्पिर्मधूदकम्। ३१। खय्युवर्णं कृत्रिमाख्या चेत्। खयि परे उवर्णमुदात्तं स्यात्। कन्दुकः। ३२। उनर्वन्नन्तानाम्। उन-वरुणं वो रिशादसम्। ऋ-स्वसारं त्वा कृणवै। वन्-पीवानं मेषम्। ३३। वर्णानां तणतिनितान्तानाम्। आदिरुदात्तः। एतः। हरिणः। शितिः। पृश्निः। हरित्। ३४। ह्रस्वान्तस्य ह्रस्वमनृत्ताच्छील्ये। ऋद्वर्ज्यं ह्रस्वान्तस्याऽऽदिभूतं ह्रस्वमुदात्तं स्यात्। मुनिः। ३५। अक्षस्याऽदेवनस्य। आदिरुदात्तः स्यात्। तस्य नाक्षः। देवने तु-अक्षैर्मा दीव्यः। ३६। अर्धस्याऽसमद्योतने। अर्धो ग्रामस्य। समेंऽशके तु अर्धं पिप्पल्याः। ३७। पीतद्र्वर्थानाम्। आदिरुदात्तः। पीतद्रुः। सरलः। ३८। ग्रामादीनां च। ग्रामः। सोमः। यामः। ३९। लुबन्तस्योपमेयनामधेयस्य। चञ्चेव चञ्चा। 'स्फिगन्तस्ये'ति पाठान्तरम्। 'स्फि'गिति लुपः प्राचां संज्ञा। ४०। न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम्। एषामुपमेयनाम्नामादिरुदात्तो न। ताल इव तालः। मेरुरिव मेरुः। व्याघ्रः। सिंहः। महिषः। ४१। राजविशेषस्य यमन्वा चेत्।'यमन्वा'-वृद्धः। आङ्गः-उदाहरणम्। अङ्गाः-प्रत्युदाहरणम्। ४२। लघावन्ते द्वयोश्च बह्वषो गुरुः। अन्ते लघौ, द्वयोश्च लघ्वोः सतोर्बह्वच्कस्य गुरुरुदात्तः। कल्याणः। कल्याणः। कोलाहलः। कोलाहलः। ४३।

---

सु.]'अङ्कुशोदकबकवशाना'मित्यन्तोदात्तः। भाषायां तु कर्दमादित्वादादिर्द्वितीयं चोदात्तम्। उनर्वन्। उन ऋ वन् एतदन्तानामादिरुदात्तः स्यात्। ह्रस्वान्तस्य। अनृत्किम्?। नृशंसः। अक्षस्य। अदेवनस्याऽक्षस्याऽऽदिरुदात्तः। अर्धस्य। असमद्योतनेऽर्धशब्दस्याऽऽदिरुदात्तः। ग्रामादीनां च। आदिरुदात्तः। लुबन्तस्य। उपमेयवाचिनो लुबन्तस्यादिरुदात्तः। चञ्चेवेति। 'इवे प्रतिकृतौ' इति विहितस्य 'लुम्मनुष्ये' इति कनो लुप्। लुबन्तस्य किम्। अग्निर्माणवकः।

न वृक्ष। पूर्वेण प्राप्तमाद्युदात्तत्वं निषिध्यते। अत्र वृक्षपर्वतविशेषग्रहणात्-वृक्ष इवायं वृक्षः। पर्वतः। अत्र पूर्वेणाद्युदात्तत्वं भवत्येव। राजविशेषस्य। लुबन्तस्योपमेयनामधेयस्य राजविशेषस्याऽऽद्युदात्तो यमन्वा चेन्नामधेयं भवति। पूर्वेणैव सिद्धे नियमार्थमिदम्-'राजविशेषस्य चेद्वृद्धस्यैवे'त्याहुः। फिड्वृत्तौ तु 'वृद्धस्य चेद्राजविशेषस्यैवे'ति नियमो दर्शितः। आङ्ग इति। आङ्ग इवायमाङ्गः। अङ्ग इवायमङ्गः। लघावन्ते। इह आदिरिति न संबध्यते, तेनाऽनादेरपि गुरोरुदात्तः। अत एव वृषाकपिशब्दस्य गुरुरुदात्त इति 'वृषाकप्यग्नी'ति सूत्रे वृत्त्यादिग्रन्थेषु विभावितम्। न च गुरूणां मध्ये य आदिरित्यर्थोऽस्त्विति वाच्यम्, 'अन्यतो ङीषि'ति सूत्रे सारङ्गकल्माषशब्दौ 'लघावन्ते' इत्यादिना मध्योदात्ताविति हरदत्तग्रन्थविरोधादित्याहुः। कल्याण इति।

---

शे.]व्यवहितस्यापि ग्रहणार्थम्। तेन 'कुपूर्वे'मिति पाठेऽपि चटकादावाद्युदात्तत्वं भवत्येव। उदकमिति। कर्दमादिरयम्। क्रित्यादि किं?। हरिणम्। अन्ये तूत्तरसूत्रवदत्रापि आदिरिति न सम्बध्यते, नपुंसकस्वरसात्, तेन चटकादावनेन मध्योदात्तत्वम्। हरदत्तोक्तपाठस्तु चिन्त्य एवेत्याहुः। खय्युवर्णम्। कृत्रिमेत्यादि किं?। बन्धुकः। उनर्वन्नन्तानाम्। 'पिता माता भ्रातर एनमाहुः' इत्यादौ पितृशब्दे छान्दसत्वादन्तोदात्तत्वं। मातुस्त्वस्वार्थत्वात्सिद्धमित्याहुः। वर्णानान्तणतिनिनन्तानां। 'तान्तानां'मिति पाठे त्वकारो व्यर्थ इति चिन्त्यम्। एत इति। श्वेतशब्दो घृतादित्वादन्तोदात्तो बोध्यः। ह्रस्वान्तस्य ह्रस्व। ह्रस्वान्तस्य किं?। वधूः। ह्रस्वं किं?। प्राज्ञम्। अनृत्किं?। तृणकम्। ताच्छील्ये किं?। जडः। बधिरः। कुशलशब्दोऽनेनाऽऽद्युदात्त इत्येके। अन्तोदात्त इत्युज्ज्वलदत्तः। सरल इति। वृक्षविशेषसञ्ज्ञात्वेन ताच्छील्यानवगमान्नेह 'ह्रस्वान्तस्ये'त्यस्य प्राप्तिरित्यन्ये। ग्रामादी। ग्रामादिराकृतिगणः। लुबन्तस्योपमेय। 'सञ्ज्ञायामुपमान'मित्यनेन समानार्थमेतत्। लुबिति किम्?। अग्निर्माणवकः। उपमेयेति किं?। वरणाः। 'अदूरभवश्चे'त्यणो 'वरणादिभ्यश्चे'ति लुप्। नामेत्यादि किं?। शुनक इवायं वृकः। देवपथादिराकृतिगणत्वात्कनो लुपि शुनक उपमेये वर्तते, न तु तस्येयं सञ्ज्ञा। न वृक्षपर्वत। यद्यपि फिट्सूत्रवृत्तौ 'न व्याघ्रमहिषसिंहवृक्षपर्वताना'मिति पठ्यते तथापि वृक्षपर्वतांशे विशेषाणामेव ग्रहणमिष्टमिति तद्घटितमेव सूत्रं पठितम्। सर्वत्र विशेषपदान्वयाऽभावबोधनाय व्युत्क्रमः कृतः। राजविशेषस्य। 'अत्रापि 'लुबन्तस्योपमेये'ति सूत्रमनुवर्तते। एवञ्च तेनैव सिद्धे 'वृद्धस्यैवे'ति नियमार्थं। तदाह-अङ्गाः प्रत्युदाहरणमिति। वृत्तौ तु 'वृद्धस्य चेद्राजविशेषस्यैवे'ति नियम उक्तस्तच्चिन्त्यम्, पूर्वसूत्रे व्याघ्रग्रहणवैयर्थ्यापत्तेः।'यमन्वा'शब्दः कृताऽऽदिवृद्धौ रूढः, न च व्याघ्रशब्दस्तथेति न वैयर्थ्यमित्यन्ये। अत्राऽऽङ्ग इत्युदाहरणं चिन्त्यम्। तस्य 'जनपदशब्दा'दित्यन्तस्वेनाद्युदात्तसिद्धेः। कालिङ्ग इत्युदाहार्यम्। तत्र हि 'द्व्यञ्मगधे'त्यण्। अन्ये तु लुबन्तस्येत्याद्यनुवर्त्याऽस्य विधिलमेवेच्छन्ति। लघावन्ते। अत्राऽऽदिशब्दो न सम्बध्यते, तेनाऽनादेरपि गुरोरुदात्तः। अत एव वृषाकपिशब्दोऽनेन मध्योदात्त इति 'वृषाकपी'ति सूत्रे वृत्तावुक्तं, खण्डिकादिषु उलूकशब्दोऽनेन मध्योदात्त इति कैयटेन चोक्तम्। वराहशब्दस्तु घृतादिरित्युक्तमेव। न च गुरूणां मध्ये

**स्त्रीविषयवर्णाऽक्षुपूर्वाणाम्** । एषां त्रयाणामाद्युदात्तः। स्त्रीविषय—मल्लिका । वर्ण—श्येनी । हरिणी । अक्षु-शब्दात्पूर्वोऽस्त्येषां ते—अक्षुपूर्वाः । तरक्षुः । ४४ । **शकुनीनां च लघु पूर्वम्** । पूर्वं लघु उदात्तं स्यात् । कुक्कुटः । तित्तिरिः । [खञ्जरीटः] । ४५ । **नर्तुप्राण्याख्यायाम्** । यथालक्षणं प्राप्तमुदात्तत्वं न । वसन्तः। कृकलासः।४६। **धान्यानां च वृद्धक्षान्तानाम्**।आदिरुदात्तः। कान्तानां—श्यामाकाः । षान्तानां—राजमाषाः । ४७ । **जनपदशब्दानामषन्तानाम्** । आदिरुदात्तः। केकयः ।४८। **ह्यादीनामसंयुक्तलान्तानामन्तः पूर्वं वा** । 'ह'यिति हलः—संज्ञा। पललं। पललम् । शललं। शललम् । ह्यादीनां किम् ?। एकलः। असंयुक्तेति किम्। मल्लः । ४९ । **इगन्तानां च द्व्यषाम्** । आदिरुदात्तः । कृषिः । इति **फिट्सूत्रेषु द्वितीयः पादः** ।

सु.]पर्यायेणाऽऽदिमध्यावुदात्तौ। **शकुनीनाम्** । पक्षिवाचिनाम् । **पूर्वमिति**। अन्त्यात्पूर्वमित्यर्थः । अत्राप्यादिरिति न संबध्यते, पूर्वग्रहणात् । **कुक्कुटेत्यादि** । मध्योदात्तावेतौ । **नर्तु** । ऋतुवाचिनां, प्राणिवाचिनां च यथालक्षणप्राप्तमुदात्तत्वं न । **धान्यानां** । धान्यवाचिनां—वृद्धकशब्दान्तानां, षशब्दान्तानां चादिरुदात्तः। **श्यामाकाः माषा इति** । अत्रो-शीरेत्यनेन, तृणधान्यानामित्यनेन चाद्युदात्तत्वस्य सिद्धत्वात् नैषादकाः राजमाषा इत्युदाहर्तव्यम् । फिड्वृत्तौ तु सूत्रे चशब्दो न पठितः । वृत्तौ गुरुरुदात्त इति व्याख्यातं, न त्वादिरुदात्त इति । नैषादकाः का(बा?)लाक्षा इत्युदाहृतं च। यत्तु 'धान्यानामिति किं श्यामाका' इत्युदाहृतं, तत्र श्यामाके धान्यत्वाऽभावश्चिन्त्यः। **जनपद** । जनपदवाचिनामजन्तानामा-दिरुदात्तः स्यात् । **केकय इति** । अत्र परत्वाद्यान्तस्यान्त्यात्पूर्वमिति स्वरेण भाव्यमतः—अङ्गा वङ्गा इत्युदाहर्तव्यमिति वदन्ति । **ह्यादीनाम्**। ह्यादीनामसंयोगपूर्वो यो लशब्दस्तदन्तानामादिरुदात्तः स्यात्। अन्त्यात्पूर्वं वा । केचित्तु अत्र जनपदानामित्यनुवर्तयन्ति । पञ्चालाः कोशला इत्युदाहृत्य पललमिति प्रत्युदाहरन्ति च । **इग** । अत्रापि जनपदानामित्य-

शे.]य आदिरित्यर्थोऽस्त्विति वाच्यं,वृषाकप्यादावप्रवृत्त्या वृत्त्यादिविरोधात्, 'अन्यतो ङी'षिति सूत्रे'सारङ्गकल्माषौ लघावन्ते इत्यनेन मध्योदात्तौ' इति हरदत्तविरोधाच्च।लघावित्यादि किं ?। वातप्रमीः, सभासन्नयनः, कपाली।नान्तत्वान्न लघुरन्तोऽत्र। बहुचः किं?। देवः। गुरुः किं?। किसलयम्। **कल्याण इति**। पर्यायेणाऽऽदिमध्यावुदात्तौ। **स्त्रीविषयवर्णाक्षुपू** । क्वचि-त्फिड्वृत्तौ 'स्त्रीविषयवर्णनाम्नामक्षु' इत्यादिपाठः, सोऽपि मूले 'घ्यपूर्वस्ये'ति सूत्रे दर्शितः । **मल्लिकेति** । अस्य प्राप्ति-मात्रेणेदमुदाहरणं, प्राप्तस्याऽस्य परत्वात् 'मादीनाञ्चे'त्यनेन बाधात् । 'ललना' इत्युदाहार्यम्। न चाऽनेनैव सिद्धे 'हस्वान्तस्य स्त्रीविषयस्ये'ति, 'वर्णानान्तणे'ति च सूत्रं व्यर्थमिति वाच्यम्, अत्र बह्वच इत्यनुवृत्तेर्न दोषः। अत एव 'श्येनी'त्युदाहरणं दत्त्वा 'हरिणी'त्युदाहणान्तरं दत्तम् । धवलादीन्यप्युदाहरणानि । नीलादयस्त्वन्तोदात्ता एवेति बोध्यम् । अत एव '**पिशङ्गसारङ्गकल्माषा**—लघावन्तेइति मध्योदात्ता' इति कैयटादिदर्शनादिदं बाधित्वा पूर्वविप्रतिषेधेन पूर्वमेव प्रवर्तते इत्याहुः । **अक्षुशब्दात्पूर्वं इति**। 'अक्ष्वादे'रिति वक्तव्ये 'अक्षुपूर्वाणा'मित्युक्तेः समानाधिकरणो बहुव्रीहिर्नेति भावः । 'अक्षुपूर्वे'त्यत्र पञ्चमीतत्पुरुषसमासस्तु न, अक्षावित्येव सिद्धे पूर्वग्रहणवैयर्थ्यापत्तेः,अनुवर्त्तमानपिफ इत्यनेन अन्वयाऽना-पत्तेश्च । **शकुनीनाञ्च** । **पूर्वमिति** । अन्त्यात्पूर्वमित्यर्थः । लघु पूर्वमित्यसमस्तं पदद्वयम् । अत्राप्यादिरिति न संबध्यते, पूर्वग्रहणात् । तेन **कुक्कुटतित्तिरी**—मध्योदात्तौ । कुक्कुटस्य वेदेऽन्तोदात्तपाठस्तु छान्दसः । तित्तिरिर्यजुः-शाखायां मध्योदात्तः पठ्यते।एतेन'तित्तिरिशब्दोऽन्तोदात्त' इति प्राणिरजतादिसूत्रस्थहरदत्तः परास्तः।लघुपूर्वमिति बहुव्री-हिस्तु न, लघोरिति पञ्चमीनिर्देशेनैव सिद्धे पूर्वग्रहणवैयर्थ्यापत्तेः । 'लघोः पूर्वे'मिति तत्पुरुषोऽपि न, सप्तमीनिर्देशेनैव सिद्धेः । **नर्तुप्रा** । ऋतुवाचिनां, प्राणिवाचिनाञ्चेत्यर्थः । **वसन्त इत्यादि** । अनयोः 'लघावन्ते' इति निषिद्धेऽन्तोदा-त्तत्वम् । एवञ्च 'कपोतमयूरशब्दौ लघावन्ते इति मध्योदात्तौ' इति प्राणिरजतादिसूत्रस्थहरदत्तश्चिन्त्यः । खण्डिकादिसूत्रे 'उलूको मध्योदात्त' इति कैयटश्च। **धान्यानाम्** । वृद्धसञ्ज्ञकधान्यवाचिककारषकारान्तानामित्यर्थः।**श्यामाका इति** । 'उशीरदासेरकपालपललशैवालश्यामाके'ति सूत्रे श्यामाकग्रहणं त्वधान्यवाचकश्यामाकग्रहणार्थम् । अत एव श्यामां कायतीत्यर्थेऽपि श्यामाकशब्द आद्युदात्त इत्याहुः । **माषा** इत्यस्य 'तृणधान्यानाञ्चे'त्यत्रोदाहृतत्वात् 'बालाक्षा' इत्युदाहरण-मुचितम् । हलन्तानामसंभवेनाऽकारविशिष्टस्य ग्रहणम् । धान्येति किम् ? । आलोकः । वृद्धेति किं ? । चणकाः । क्षेति किं ? । गोधूमाः । **जनपदश** । 'अ'षित्यचः सञ्ज्ञा । **केकय इति** । यत्तु 'यान्तस्यान्त्यात्पूर्व'मित्यनेन परत्वा-दत्र भाव्यमिति, तन्न । बाध्यसामान्यचिन्तामाश्रित्य तस्याप्यनेन बाधादित्याहुः । अङ्गाः, वङ्गा इत्यप्युदाहरणम् । जेत्यादि किम् ? । आम्रः । अङ्गो राजा । अजन्तानां किं ? । दरत् । **ह्यादीनाम्** । अत्र केचिज्जनपदशब्दानामि-त्यनुवर्तयन्ति। 'कुरुगार्ह'ेति सूत्रस्थहरदत्तस्वरसोऽप्येवं, तन्मते पञ्चालाः कोसला इत्युदाहार्यम् । [वार्शब्देनादेरित्यस्याप्य-

## अथ तृतीयः पादः ।

५० । **अथ द्वितीयं प्रागीषात्** । 'ईषान्तस्य हयादे'रित्यतः प्राग्द्वितीयाधिकारः । ५१ । **त्र्यचां प्राङ्मकरात्** । 'मकरवरूढे'त्यतः प्राक् त्र्यचामित्यधिकारः । ५२ । **स्वाङ्गानामकुर्वादीनाम्** । कवर्गरेफवकारादीनि वर्जयित्वा त्र्यचां स्वाङ्गानां द्वितीयमुदात्तम्। ललाटम्। कुर्वादीनां तु-कपोलः । रसना । वदनम्। ५३ । **मादीनां च** । मलयः । मकरः । ५४ । **शादीनां शाकानाम्** । शीतन्या[=]शतपुष्पा । ५५ । **पान्तानां गुर्वादीनाम्** । पादपः। आतपः। लघ्वादीनां तु-अनूपम्। द्व्यचां तु-नीपम्। ५६। **युतान्यण्यन्तानाम्** । युत-अयुतम् । अनि-धमनिः । अणि-विपणिः । ५७। **मकरवरूढपारेवतवितस्तेक्ष्वार्जिद्राक्षाकलोमाकाष्ठापेष्ठाकाशीनामादिर्वा** । एषामादिर्द्वितीयो वोदात्तः-मकरः [ मकरः ] । वरूढः [वरूढः]-इत्यादि । ५८ । **छन्दसि च** । अमकराद्यर्थ आरम्भः । लक्ष्यानुसारादादिर्द्वितीयं चोदात्तं ज्ञेयम् । ५९ । **कर्दमादीनां च** । आदिर्द्वितीयं वोदात्तम् । ६० । **सुगन्धितेजनस्य ते वा** । आदिर्द्वितीयं, 'ते'शब्दश्चेति त्रयः पर्यायेणोदात्ताः । सुगन्धितेजनाः । [ सुगन्धितेजनाः। सुगन्धितेजनाः ] । ६१ । **नपः फलान्तानाम्** । आदिर्द्वितीयं वोदात्तम् । राजादनफलम्। [ राजादनफलम् ] । ६२ । **यान्तस्यान्त्यात्पूर्वम्** । कुलायः। ६३ । थान्त-

---

सु.]नुवर्त्यं कुरवः,चेदय इत्युदाहृतं,कृषिरिति प्रत्युदाहृतम्। 'अक्षैर्मा दीव्यः कृषिमित्कृषस्वे'त्यत्र कृषिशब्दस्यान्तोदात्तत्वात्।

इति द्वितीयः पादः ।

**कपोल इति**। 'लघावन्ते' इति मध्योदात्तम्। **रसना वदनमिति**। 'स्वाङ्गशिटा'मित्याद्युदात्तत्वम्। **मादी। मलयः मकर इति**। अनयोर्मकरवरूढेति, 'यान्तस्यान्त्यात्पूर्व'मिति विशिष्य स्वरविधानान्महेन्द्र इत्युदाहर्तव्यम्। **शादीनां शा** । शकारादीनां शाकवाचिनां त्र्यचां द्वितीयमुदात्तं स्यात्।केचित्तु 'सादीना'मिति पठित्वा सर्षपा इत्युदाहरन्ति । **पान्तानां** । पशब्दान्तानां त्र्यचां द्वितीयमुदात्तं स्यात्। **अनूपे**-'अनोरप्रधानकनीयसी'त्यनेनान्तोदात्तत्वं,**नीपे**'नेरनिधाने' इत्यनेनेत्याहुः। **युता** । युत अनि अणि एतदन्तानां त्र्यचां द्वितीयमुदात्तं स्यात्।**इत्यादीति**। आदिशब्देन पारेवत वितस्ता इक्षु आर्जि द्राक्षा कला उमा काष्ठा पेष्ठा। काशीना। 'काशीनाना'मिति वक्तव्ये नुडभाव आर्षः।**छन्दसि** । छन्दसि मकरादीनामन्येषां चादिर्द्वितीयं वोदात्तम् । काश्यपः । कर्दमः । कुलटा । उदकं । गान्धारिः । **सुगन्धि। आदिरिति** । सुगन्धितेजनशब्दस्य । **नपःफलान्तानां** । नप्-नपुंसकम् । नपः किम् ? । दासीफलो वृक्षः । **यान्तस्य** । यशब्दान्तस्या-

---

शे.]नुवर्तनादादेरप्युदात्तत्वं भवतीत्येके]।**इगन्तानाञ्च द्व्य**। अत्र वेत्यनुवर्तते। अत एव 'अक्षैर्मा दीव्य कृषिमित्कृषस्वे'ति पठ्यमानमन्तोदात्तत्वं सङ्गच्छते, छान्दसत्वाद्वा । ये तु जनपदशब्दानामित्यनुवर्त्तयन्ति, तेषां न कश्चिद्दोषः । कुरवः, चेदय इति चोदाहार्यम् । द्व्यचां किम् ?। वसातयः । इगिति किम् ? । अङ्गाः । **इति द्वितीयः पादः ।**

**अथ तृतीयः** । **ललाटमिति** । 'लघावन्ते' इत्येतद्बाधित्वा परत्वादिदमेवोचितमित्यभिमानः । **कपोल इति** । यद्यप्यत्र 'लघावन्ते' इति मध्योदात्तत्वमेवेष्टं तथाप्युदाहरणदिग् बोध्या । **मादीनां । मलयो मकर इति** । **मलये** 'यान्तस्यान्त्यात्पूर्व'मित्यस्याऽस्य वा प्रवृत्तौ फले न विशेष इत्युदाहृतम्। **मकरः**-सञ्ज्ञाभूत इहोदाहरणम्। 'मकरवरूढे'त्यत्र तु 'अभिव्यक्तपदार्थाये'इति न्यायेन सञ्ज्ञाभूतस्य न ग्रहणम्। क चित्तु 'माकर' इति पाठः। तत्र स्वार्थेऽण् । **शादीनाञ्च शाकानाम्** । 'संप्रोदश्चे'ति सूत्रे कैयटे तु दन्त्यादिपाठः । इदञ्चाद्युदात्तत्वविधायकम् । अनेन सर्षपशब्दे आद्युदात्तत्वे प्राप्ते 'पान्तानाञ्च गुर्वादीना'मिति मध्योदात्तत्व'मित्युक्तं, तेन द्वितीयपादान्ते इदं सूत्रमिति ध्वनितम् । फिड्वृत्तौ तु ताल्व्यादिसूत्रमत्र पादे पठितम् । **शतपुष्पेति** क्वाचित्कोऽपपाठः, त्र्यच्त्वाऽभावात् । कैयटरीत्या आद्युदात्तविधायकत्वे तु तत्रापि प्रवृत्तिरिति ध्वनयितुमभ्यजपि उदाहृतमित्याहुः । केचित्तु त्र्यच्पदस्यैकाऽज्व्यच्कमेव व्यावर्त्यं वदन्ति । **पान्तानां गु**। पान्तानां किम् ?। गर्दभः । 'लघावन्ते' इति मध्योदात्तोऽयम् । 'न गर्द भं पुरः' इत्यन्तोदात्तं तु छान्दसम् । गुर्वादीनां किम् ?। कुणपः। 'क्वणेः संप्रसारणञ्चे'ति कपन् । **अयुतमिति** । अव्ययपूर्वपदप्रकृतिस्वरे प्राप्ते इदम् । **द्वितीयो वेति** । 'द्वितीय'मित्यधिकारादिति भावः । 'काशीनाना'मिति वक्तव्ये नुडभाव आर्षः । **वरूढ इतीति** । पारेवतः, वितस्ता, इक्षुः, आर्जिः, द्राक्षाकला, उमा, काष्ठा, पेष्ठा, काशीनम् । केचित्तु 'मकरवरूढपारेवते'ति, 'काष्ठापैश्रा' इति पठन्ति। कर्दमादिराकृतिगणः। **त्रय इति** । केचित्तु 'सुगन्धितेजनस्य चे'ति सूत्रं पठन्ति, आदिर्द्वितीयो वेति अनुवर्तयन्ति।अयं क्लीबोऽपि । **नपः फलान्तानाम्**।नपुंसकस्य फलशब्दान्तस्याऽऽदिर्द्वितीयो वेत्यर्थः। केचित्तु 'ले फो नपः' इति-अस्य स्थाने पठन्ति, नबिति नपुंसकं, लशब्दे परे क्लीबस्य फशब्द उदात्तः । फलं सफल-

स्य च 'ना'लघुनी । नाशब्दो लघु च उदात्ते स्तः । सनाथा सभा । [ सनाथा सभा ] । ६४ शिशुमारोदुम्बरबलीवर्दोष्ट्रारपुरूरवसां च । अन्त्यात्पूर्वमुदात्तं, द्वितीयं वा । ६५ । साङ्काश्यकाम्पिल्यनासिक्यदार्वाघाटानाम् । द्वितीयमुदात्तं वा । ६६ । ईषान्तस्य हयादेरादिर्वा । हलीषा । लाङ्गलीषा । ६७ । उशीरदाशेरकपालपलालशैवालश्यामाकशारीरशरावहृदयहिरण्याऽऽरण्याऽपत्यदेवराणाम् । एषामादिरुदात्तः स्यात् । ६८ । महिष्यषाढयोर्जायेष्टकाख्या चेत् । आदिरुदात्तः । महिषी-जाया । अषाढा उपदधाति । इति तृतीयः पादः ।

## अथ चतुर्थः पादः ।

६९ । शकटिशकट्योरक्षरमक्षरं पर्यायेण । उदात्तम् । शकटिः । शकटिः । शकटि । शकटी शकटी । शकटी । ७० । गोष्ठजस्य ब्राह्मणनामधेयस्य । अक्षरमक्षरं पर्यायेणोदात्तम् । गोष्ठजो ब्राह्मणः । [गोष्ठजः । गोष्ठजः] । अन्यत्र-गोष्ठजः पशुः । कृदुत्तरपदप्रकृतिस्वरेणाऽन्तोदात्तः । ७१ । पारावतस्योपोत्तमवर्जम् । शेषं क्रमेणोदात्तम् । पारावतः [ पारावतः । पारावतः ] । ७२ धूम्रजानुमुञ्जकेशकालवालस्थालीपाकानाम-धू-ज-ल-स्थानाम् । एषां चतुर्णां धूप्रभृतींश्चतुरो वर्जयित्वा शिष्टानि क्रमेणोदात्तानि । धूम्रजानुः ३ । मुञ्जकेशः ३ । कालवालः ३ । स्थालीपाकः ३ । ७३ । कपिकेशहरिकेशयोश्छन्दसि । कपिकेशः ४ । हरिकेशः ४ । ७४ न्यङ्स्वरौ

सु.]न्त्यात्पूर्वमुदात्तं स्यात् । थान्तस्य । केचित्तु 'आन्तस्य च नालघुनी' इति पठित्वा आकारान्तस्य नाशब्दस्य च लघुनी अन्त्यात्पूर्वे उदात्ते स्त इति व्याख्याय नाना दिवा सुधा इत्युदाजहुः । शिशुमारो । 'शिंशुमार' इति पाठान्तरम् । उष्ट्रार । 'उष्टार' इति पाठान्तरम् । सांकाश्य । साङ्काश्यकाम्पिल्यशब्दौ 'वुञ्छ'णिति ण्यान्तौ । दार्वाघाटशब्दो 'दारावाहनोऽणन्तस्य च टः संज्ञाया'मित्यण्प्रत्ययान्तः । ईषान्तस्य । ईषान्तस्य हलादेरादिरुदात्तो वा स्यात् । उशीर । अत्र श्यामाकग्रहणं चिन्त्यम् ,'धान्यानां च वृद्धक्षान्ताना'मित्यनेनैव सिद्धत्वात् । इदमेव ज्ञापयितुं मूले 'धान्याना'मित्यत्र श्यामाक इत्युदाहृतम् । देवरग्रहणमपि चिन्त्यम् । 'लघावन्ते'इत्यनेनैव सिद्धत्वात् । हृदयग्रहणं 'स्वाङ्गानामकुर्वादीना'मिति द्वितीयस्योदात्तत्वं बाधितुम् । अन्येषां 'लघावन्ते' इति प्राप्ते वचनम् ।

महिष्य । एतयोरादिरुदात्तः स्याद्यथासङ्ख्यं जायाख्यायामिष्टकाख्यायां च । इति तृतीयः पादः ।

शे.]मित्युदाहरन्ति । अन्ये तु 'फाशर्न्दस्ये'ति व्याख्याय सफालमित्युदाहरन्ति । कुलाय इति । 'लघावन्ते' इत्यस्य प्रवृत्तावपि न कश्चिद्विशेषः । गवयमलयावुदाहार्यौ । कुवलयार्थमन्त्यात्पूर्वग्रहणम् । आन्तस्य ना । आकारान्तस्येत्यर्थः, 'नाना नासा दिवा सुधा' इत्युदाहरणम् । क्वचित्तु 'थान्तस्ये'त्यपि पाठः, थाशब्दान्तस्येत्यर्थः । केचित्तु तन्त्रेण थशब्दोऽपि गृह्यते, तेन सनाथो देवदत्त इति सिद्धमित्याहुः । शिशुमारोदुम्बर । 'शिशुमारे'ति पाठान्तरम् । उष्ट्रार । उष्टारेति रेफवर्जितमपि पाठान्तरम् । चकारेणाऽन्त्यात्पूर्वमिति, द्वितीयमिति च संबध्यते । सांकाश्यकाम्पिल्य । अत्र सूत्रे मण्डूकप्लुत्याऽऽदिर्वेति वर्तते, तदाह-द्वितीयमुदात्तं वेति । अत एव 'पद्'न्निति सूत्रे 'राजन्यसाङ्काश्यकाम्पिल्यनासिक्यदार्वाघाटानामादिर्वाऽन्तो वा' इति कैयटेनोक्तम् । अत्राऽन्तशब्देनादेरपेक्षयाऽन्तो=द्वितीय एव, अतो न विरोधः । एवं 'सप्तमी सिद्धे'ति सूत्रे 'एषामन्तः पूर्वं वा' इति काशिकायामपि पूर्वशब्देनाऽऽदिस्तदपेक्षयाऽन्तश्चाऽन्तशब्देन गृह्यते इति बोध्यम् । 'अन्त्यात्पूर्व'मिति तु नाऽनुवर्तते, साङ्काश्यादीनान्त्र्याणाङ्ग्रहणस्य वैयर्थ्यापत्तेः । 'यान्तस्यान्त्या'दित्येव सिद्धेः । उत्तरसूत्रे 'आदिर्वे'ति तु स्पष्टार्थम् । ईषान्तस्य । 'ह'यिति हलो सञ्ज्ञा । पक्षेऽधिकाराद्वितीयम् । ईषान्तस्य किं ?। मञ्जूषा । हलादेः किम् ?। अम्बरीषम् । उशीरदाशेर । अत्र हृदयग्रहणं 'स्वाङ्गानामकुर्वादीना'मिति द्वितीयोदात्तत्वं बाधितुं, देवरग्रहणं 'लघावन्ते' इत्यस्याऽनित्यत्वज्ञापनार्थम् । केचित्तु घृतादिषु देवरशब्दः पठ्यते, एवञ्च पक्षे आद्युदात्तार्थङ्ग्रहणमित्याहुः । अत्र वेति नानुवर्तते इति केचित् । महिष्यषा । 'मे'त्यादि किं ?। सिंही असि । जेति किं ?। महिषी । अषाढा नक्षत्रम् । इति तृतीयः पादः ।

अथ चतुर्थः । शकटिशक । अत्र 'उभे वनस्पत्यादिषु युगप'दित्यादिसूत्रस्थयुगपद्ग्रहणबोधिताऽनेकोदात्तानां युगपन्न समावेश इत्यर्थानुवादकं-पर्यायेणेति । तत्फलन्तु 'अनुदात्तं पदमेकवर्ज'मित्यादेरेतद्विषयेऽपि प्रवृत्तिः । लिङ्गविशिष्टपरिभाषालब्धार्थानुवादकं-शकटीति । गोष्ठजस्य । ब्राह्मणवाचकस्य गोष्ठजशब्दस्येत्यर्थः । पारावत इति । अत्र 'व'शब्दो नोदात्तः । कपिकेशह । भाषायां बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरः । तत्र हरिशब्द इनन्तत्वादाद्युदात्तः । कपिरन्तोदात्तः । केचित्तु निरुदकादेराकृतिगणत्वादनयोरन्तोदात्तत्वमाहुः । न्यङ्स्व । 'न्यधी चे'तिपूर्व-

**स्वरितौ** । स्पष्टम् । न्यङ्ङुत्तानः । व्यंचक्षयस्त्वः । ७५ । **न्यर्बुदव्यल्कशयोरादिः** । स्वरितः स्यात् । ७६। **तिलयशिक्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः** ।स्वरितः स्यात्।तिलानां भवनं क्षेत्रं तिल्यम्। 'यतोऽनावः' इति प्राप्ते । ७७ । **बिल्वभक्ष्यवीर्याणि छन्दसि**। अन्तस्वरितानि। [ननो बिल्वस्य उदतिष्ठत्]। ७८ । **त्वत्त्वसमसिमेत्यनुच्चानि** । स्तरीरुत्वत् । उत त्वः पश्यन् । नभन्तामन्यके समे । सिमस्मै । ७९ । **सिमस्याथर्वणेऽन्त उदात्तः**। आथर्वण इति प्रायिकम् । तत्र दृष्टस्येत्येवंपरं वा । तेन वासस्तनुते सिमस्मै इत्यृग्वेदेऽपि भवत्येव । ८० । **निपाता आद्युदात्ताः** । स्वाहा । ८१। **उपसर्गाश्चाऽभिवर्जम्**। ८२ । **एवादीनामन्तः** । 'एवमादीना'मिति पाठान्तरम् । एव । एवम् । नूनम् । सह ते पुत्र सूरिभिः । षष्ठस्य तृतीये 'सहस्य सः' इति प्रकरणे सहशब्द आद्युदात्त इति प्राञ्चः । तच्चिन्त्यम् । ८३ । **वावाँऽऽदीनामुभावुदात्तौ** । उभौग्रहणमनुदात्तं पदमेकवर्जमित्यस्य बाधाय । ८४ । **चादयोऽनुदात्ताः** स्पष्टम् । ८५ । **यथेति पादान्ते** । तं नेमिमृभवो यथा । पादान्ते किम् ? । यथा नो अदितिः करत् । ८६ । **प्रकारादिद्विरुक्तौ परस्याऽन्त उदात्तः** । पटुपटुः । ८७ । **शेषं सर्वमनुदात्तम्** । शेषं=नित्यादिद्विरुक्तस्य परम्—इत्यर्थः । प्रप्रायम् । दिवेदिवे । इति **शान्तनवाचार्यप्रणीतेषु फिट्सूत्रेषु तुरीयः पादः** ।

## अथ प्रत्ययस्वराः ।

**आद्युदात्तश्च** ।३।१।३। प्रत्यय आद्युदात्त एव स्यात् । अग्निः । कर्तव्यम् । **अनुदात्तौ सुप्पितौ**

---

सु.] **त्वत्त्व**।एतानि सर्वानुदात्तानि।**सिमस्य**। सिमशब्दस्याथर्वणे वेदेऽन्त उदात्तः स्यात् । **उपसर्गाश्चाभि** । अभिशब्दं वर्जयित्वा उपसर्गा आद्युदात्ताः स्युः । **यथेति** । यथाशब्दः पादान्तेऽनुदात्तः स्यात् । **प्रकारादि** । 'प्रकारे गुणवचनस्ये'त्यादिद्विर्त्वे परस्यान्तोदात्तः स्यात् । **पटुपटुरिति** । ननु 'कर्मधारयवदुत्तरेषु' इति कर्मधारयवद्भावादेव 'समासस्ये'त्यन्तोदात्तत्वे सिद्धे व्यर्थमिदमिति वाच्यं, तस्य पाणिनीयात्पूर्वं प्रवृत्तत्वेनाऽदोषात्। **शेषं**। प्रकारादिद्वित्वादन्यस्मिन्द्वित्वे परं सर्वमनुदात्तं स्यात् । **इति चतुर्थः पादः** । श्रीमौनिकुलतिलकायमान० फिड्व्याख्या समासिमगमत् ।

**अथ प्रत्ययस्वराः**।**अग्निरिति**।'अङ्गेर्नलोपश्चे'ति निप्रत्ययः।**कर्तव्यमिति**।तव्यप्रत्ययः।तव्यतस्तु तित्स्वात्स्वरितो

---

शे.]पदप्रकृतिस्वरे कृते यणि 'उदात्तस्वरितयो'रिति सिद्धे न्यङ्ग्रहणं तदनुवादकम् । **तिल्यशिक्य** । केचिदत्र मर्त्यशब्दं पठन्ति, तदयुक्तं, 'तं त्वा हवन्त मर्त्याः' इत्यादावाद्युदात्तदर्शनात् । 'तयुक्तात्कर्मणः' इति सूत्रस्थवार्तिकेन यति 'यतोऽनावः' इत्याद्युदात्तत्वम् । यत्तु धान्यस्थाने धन्यं पठन्ति, तन्न, 'पत्यावैश्वर्ये' इति सूत्रे धान्यमन्तस्वरितमिति वृत्तिमुपादायास्यैव सूत्रस्य हरदत्तेनोपन्यासात्, प्रयुज्यते च—'धान्यमसि धिनुहि' इति। **बिल्वभक्ष्य** । भाषायां तु भक्ष्यवीर्यौ आद्युदात्तौ । वीरेषु साधुरिति यत्, भक्षयतेर्ण्यन्ताद्चो यत् । बिल्वः स्वरितान्तोऽन्तोदात्तो वा । केचित्तु 'बिल्व वस्ते'ति पठन्ति । **अनुच्चानीति** । सर्वानुदात्तानीत्यर्थः । अत्र सूत्रे छन्दसीति नानुवर्तते, 'आद्युदात्तश्चे'ति सूत्रस्थ भाष्यप्रामाण्यात्। **निपाता आ**। शुक्ली करोतीत्यादौ च्व्यन्तानां निपातत्वेऽपि च्वेश्चित्त्वादन्तोदात्तत्वम्। **उपसर्गाश्चाभिवर्जमिति** । आद्युदात्ता इत्यर्थः। अभिवर्जं किम् ?।अभ्यभिहि, अभिरामस्मात्। इदंसूत्रं व्यर्थम् ,उपसर्गाणां निपातत्वेनैव सिद्धेः। न च कर्मप्रवचनीयानां तदभावज्ञापनायेदम् , तेषामप्याद्युदात्तत्वस्येष्टत्वात् । अभिश्चैवमादिषु पाठ्य इति बहवः । अत एव 'मानो मर्त्ता अभिद्रुह'न्निति मन्त्रे 'एवमादीनामन्त' इति वेदभाष्यकृद्भिरुक्तम् । स्पष्टश्चेदमुपसर्गसंज्ञासूत्रे भाष्ये । केचित्तु उपसर्गस्यैवाऽभेराद्युदात्तत्वनिषेधो यथा स्यात् , कर्मप्रवचनीयस्य तु निपातत्वाद्भवत्येवेत्येतदर्थमिदं सूत्रमित्याहुः । **एवादीनामन्तः** । अहश्चच्छब्दौ गणे आद्युदात्तौ निपातौ वा । 'आदहस्वधामनु' क्वाह मित्रावरुणा शश्वदिन्द्र योऽप्रथद्धि'रिति प्रयोगदर्शनात् । **तच्चिन्त्यमिति** । चिन्ताबीजन्तु चिन्त्यम् । सहशब्दस्याऽपि निपातत्वादाद्युदात्तत्वमिति 'सहस्य सः' इति सूत्रे आकरात् । प्रयुज्यते च 'सह वै देवाना'मिति । 'ते पुत्रै सूरिभिः सहे'त्यत्र तु छान्दसमन्तोदात्तत्वमिति केचित् । **'वावादीनामुभौ'** इति सूत्रे **उदात्तावित्यनुवृत्तिप्रदर्शनम्**। इह त्रिसूत्र्यामादिशब्दः प्रकारे इत्याहुः। **चादयोऽनु** । निपाता इति वर्तते । नेह—पशुर्नेति। आद्युदात्तत्वापवादोऽयम् । **यथेतिपा** । अनुदात्त इति वर्तते।'शाकिनं वचो यथा' इत्यादौ छान्दसत्वान्नानुदात्तः।**प्रकारादिद्वि**। 'प्रकारे गुणवचनस्ये'त्यादिद्वित्वे इत्यर्थः । इदं कर्मधारयवद्भावसिद्धाऽन्तोदात्तत्वानुवादकम् । **शेषमिति** । प्रकारादिद्विरुक्तादन्यद्विरुक्तमित्यर्थं इत्येके । 'अनुदात्तं चे'त्यस्याऽनुवादकमेतत् । 'अनुदात्तं पदमेकवर्ज'मित्यस्यानुवादकमित्यन्ये । **इति शान्तनवेति** । इद 'मात्रोपज्ञ'इति सूत्रे हरदत्तग्रन्थे स्पष्टम्।शन्तनुराचार्यः प्रणेतेति 'द्वारादीनाञ्चे'ति सूत्रे हरदत्तः। **इति फिट्सूत्राणि**॥

**अथ प्रत्ययस्वराः**।**कर्त्तव्यमिति**।तव्योऽयं, तव्यत्तु तित्स्वात्स्वरितः । यद्यपि तव्यस्यापि आद्युदात्तं शेषनिघाते

।३।१।४ पूर्वस्यापवादः । यज्ञस्य । नयो युच्छति। शासिपोरनुदात्तत्वे स्वरितप्रचयौ। चितः ।६।१।१६३। अन्त उदात्तः स्यात् ।*चितः सप्रकृतेर्बह्वकजर्थम् । चिति प्रत्यये सति प्रकृतिप्रत्ययसमुदायस्याऽन्त उदात्तो वाच्य इत्यर्थः।[बहुपटुः] नमन्ता मन्यके[संमे]।यके सरं स्वतीम्[अनु]। तकत्सुते । तद्धितस्य ।६।१।१६४। चितस्तद्धितस्याऽन्त उदात्तः। पूर्वेण सिद्धे ञित्स्वरबाधनार्थमिदम् । कौञ्जायनाः। कितः ।६।१।१६५। कितस्तद्धितस्याऽन्त उदात्तः । यदाग्नेयः । तिसृभ्यो जसः ।६।१।१६६। अन्त उदात्तः । तिस्रो द्यावः सवितुः । सावेकाचस्तृतीयादिर्विभक्तिः।६।१।१६८। सुः सप्तमीबहुवचनम्। तत्र य एकाच् ततः परा तृतीयादिर्विभक्तिरुदात्ता स्यात्।

सु.]वक्ष्यते [कर्तव्यम्]। नच तव्यस्याप्याद्युदात्तत्वे 'उदात्तादनुदात्तस्ये'ति स्वरितो भवत्येवेति चेत्सत्यम्।किं त्वयमसिद्धः, तित्स्वरस्तु सिद्ध इति प्रवृत्त्यप्रवृत्तिभ्यां महान् फले विशेषः।तव्यतस्तित्त्वमेव शेषनिघातपरिभाषाया यथोद्देशप्रवृत्तौ ज्ञापकमिति ध्येयम् । युच्छतीति । युछ प्रमादे । 'धातोः' इत्यन्तोदात्तः। ततः परः शप् 'उदात्तादनुदात्तस्ये'ति स्वरितः । 'स्वरितात्संहितायामनुदात्तानाम्'मिति तिपः प्रचयः । चितः। चितः सप्रकृतेरिति । नन्विदं कथं लभ्यमिति चेच्छृणु । 'चित' इत्यवयववादेशा षष्ठी, न कार्यिणः। चितोऽवयवस्तस्य संबन्धी यः समुदायः स कार्यी।अथवा चिदस्यास्ति स चितः। अर्शआदेराकृतिगणत्वादच्प्रत्ययः। षष्ठ्यर्थे प्रथमा।तेन चिद्वतः समुदायस्येत्यर्थः। अत्र च लिङ्गमकचश्चित्करणम् , अन्यथा तस्यैकाच्त्वादनर्थकं तत्स्यात्, प्रत्ययस्वरेणैव सिद्धत्वात्। अन्यके इति।'अव्ययसर्वनाम्ना'मित्यकच् ।ततः परा टिरुदात्ता । एवं यके तकदित्यत्रापि यत्तच्छब्दादकच् । बहुच उदाहरणं तु–बहुपटव इत्यादि ज्ञेयम्। ञित्स्वरबाधनार्थमिति। चफञश्चकारो 'व्रातचफञोरस्त्रियाम्'मिति विशेषणे चरितार्थः । ञकारो वृद्धौ । तत्राऽसत्यस्मिन् परत्वाञ्नित्स्वरः स्यादिति भावः । कौञ्जायना इति। कुञ्जस्याऽपत्यानि बहूनि । 'गोत्रे कुञ्जादिभ्यश्चफञ्' 'व्रातचफञोरस्त्रिया'मिति ञ्यः। 'ञ्यादयस्तद्राजाः' 'तद्राजस्य बहुषु'इति लुक्। आग्नेय इति । 'अग्नेर्ढक्' । तिसृ । अर्थगतं बहुत्वं शब्दे आरोप्य बहुवचननिर्देशः । तिसृभ्यः परस्य जसोऽन्त उदात्तः स्यात् । तिस्र इति । अन्तोदात्तस्य त्रिशब्दस्य स्थाने तिस्रादेशः स्थानिवद्भावादन्तोदात्तः । 'अनुदात्तौ सुप्पित्तौ' इति जसनुदात्तः । अत्र 'अचि र ऋतः' इति रेफादेशे कृते 'उदात्तस्वरितयोर्यणः' इति जसः स्वरितत्वं प्राप्तमनेन बाध्यते । सप्तमीबहुवचनमिति । न प्रथमैकवचनम्,

शे.]कृते 'उदात्तादनुदात्तस्ये'ति स्वरितो भवत्येव तथापि तस्याऽसिद्धत्वात्तन्निमित्तकशेषनिघाताऽप्रवृत्त्या, तित्स्वनिमित्तके च तत्प्रवृत्त्या महान् फले विशेषः।युच्छतीति।युछ प्रमादे।प्रचय–एकश्रुतिः।चितः सप्रकृतेरिति।अत्राऽर्थेऽकचश्चित्त्वं ज्ञापकम्। अन्यथा तस्यैकाच्त्वात् प्रत्ययाद्युदात्तत्वेनैव सिद्धौ तद्वयर्थं स्यात्। हस्तः प्रमाणमस्य हस्तः।प्रमाणे ल इति लुक् । अत्र चित्स्वरो न,'अन्तरङ्गानपी'ति न्यायात्। प्रत्ययलक्षणन्तु न, प्रत्ययस्याऽसाधारणरूपाश्रयणाऽभावात् । कुण्डिनचोऽप्रत्ययस्यापि चितःसत्त्वात्।अनुबन्धलक्षणे स्वरे प्रत्ययलक्षणाऽभावस्य पूर्वमुक्तेश्च।हस्त शब्दश्च 'स्वाङ्गशिटा'मित्याद्युदात्तः।चतुःष्करोतीत्यादौ 'रात्सस्ये'त्यस्याऽसिद्धत्वात्सुजस्त्येव । अन्यके इति । अकच् । ततः पर उदात्तः। एवं यके तकदित्यत्राऽपि बोध्यम् । 'तद्धितस्य कित' इत्येकं सूत्रम् , 'गोत्रे कुञ्जादिभ्यः' इति सूत्रे भाष्ये 'योगविभागः कर्त्तव्यः' इत्युक्तेः। तदनुसारेण व्याचष्टे–चितस्तद्धितस्येति । ञित्स्वरबाधनेति । चफञश्चित्त्वन्तु 'व्रातचफञो'रित्यादौ विशेषणाऽर्थं सावकाशम् । अन्यथाऽऽश्वायनादपि ञ्यः स्यादिति भावः । ञित्त्वमपि वृद्ध्यर्थं सावकाशम् । ततश्चित्स्वरं बाधित्वा परत्वाञ्ञित्स्वरः प्राप्तोऽनेन बाध्यत इति तात्पर्यम् । कौञ्जायना इति । कुञ्जात् चफञि तदन्तात् 'व्रातचफञो'रिति ञ्ये ञ्यादीनान्तद्राजत्वाद्बहुषु लुक् । कितः। तद्धितस्येति किम्?। चक्तुः। कित्त्वातिदेशादन्तोदात्तत्वं माभूत्। यत्तु प्रत्युदाहरन्ति-इत्यः। क्यप् । पित्त्वस्य तुकि कित्त्वस्य गुणनिषेधे सावकाशत्वात् पित्स्वरं बाधित्वा परत्वादयं स्यादिति, तन्न, क्यप्चेदन्तोदात्तस्तदा 'व्रजयजोर्भावे क्यब्वे'ति नियमेन वारयितुं शक्यत्वादित्याहुः । कितः किम् ? । अविक्षम् । तिसृभ्यो जसः। बहुवचनं प्रयोगभेदेन शब्दबाहुल्यात् , 'ऋत्विग्भ्यः' इतिवत् । यत्तु वार्तिककृतोक्तं'तिसृभ्योजस्ग्रहणानर्थक्यमन्यत्रास्याऽप्राप्तेः, बहुवचनविषयत्वादस्यैकवचनद्विवचनयोरभाव एव,शसि 'उदात्तयण' इति सिद्धम् । अन्या हलादयः, तत्र 'षट्त्री'ति, 'झल्युपोत्तम'मिति च सिद्ध'मिति, तन्न, अतितिसावित्यादिव्यावृत्तेः फलस्य सत्त्वात् । तदुक्तं भाष्यकृता–'उपसमस्तार्थमेके जसो ग्रहणमिच्छन्ति–अतितिस्रौ' इति। 'तस्मा'दिति परिभाषासत्त्वाद्विहितविशेषणाऽसम्भव इत्याशयः । अनेन पूर्ववार्त्तिकेन कृतं प्रत्याख्यानमसङ्गतमिति सूचितम् । अतितिसृशब्दः–'अतेरकृत्पदे' इत्यत्र 'अतेर्धातुलोपे वाच्य'मित्युक्तेरन्तोदात्तः । तस्य यणि 'उदात्तस्वरितयोः' इत्यनेनौकारः स्वरितः । तिस्र इति । अन्तोदात्तत्रिशब्दस्यादेशस्तिसाऽपि तथा, तस्य 'अचि रः' इति कृते 'उदात्तस्वरितयोर्यणः' इति जसः स्वरितत्वं प्राप्तमनेन बाध्यते । सावेकाचः । सौ परे यदेकाज्रूपं ततः परेत्यर्थः । सौ य एकाच् तस्मात्परेत्यर्थे निष्पन्नेऽर्थवत्परिभाषया

वाचा वि॑रूपः । सौ किम् ?। राज्ञेत्यादावेकाचोऽपि राजशब्दात्परस्य मा भूत् । राज्ञो नु ते॑ । एकाचः किम् ?। विधत्ते राज॑नि त्वे । तृतीयादिः किम् ? । न द॑दर्श वाच॑म् । **अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे।६।१।१६९।** नित्याधिकारविहितसमासादन्यत्र यदुत्तरपदमन्तोदात्तमेकाच् , ततः परा तृतीयादिर्विभक्तिरन्तोदात्ता॑ वा स्यात् । परमवाचा। [परमवाचा॑]। **अञ्चेश्छन्दस्यसर्वनामस्थानम् ।६।१।१७०।** अञ्चेः परा

---

सु.]व्याख्यानात् । **राज्ञेति** । सावित्येतस्मिन्नसति एकाचः परा तृतीयादिर्विभक्तिरुदात्ता भवतीत्यर्थः । भवति चाऽयमल्लोपे कृते एकाच् । **राजे इति** । राजशब्द आद्युदात्तः, 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इति कनिनन्तत्वात्। **अन्तोदात्ता**।एकाच एति वर्तते, तृतीयादिर्विभक्तिरिति च।नित्यशब्दः स्वर्यते, तेन नित्याधिकारगतिर्भवतीत्याह–**नित्याधिकारेत्यादि**। अनित्यसमासे किम् ?। अग्निचित् । 'अग्नौ चे'रिति क्विप्प्रत्ययः।उपपदसमासः। 'गतिकारकोपपदात्कृ'दिति कृदुत्तरपदप्रकृतिस्वरेण चिच्छब्द उदात्तः । अधिकारग्रहणं किम् ? । विग्रहाऽभावमात्रेण यो नित्य-

---

शे.]प्रकृतेऽर्थवत एव सम्भवाच्च सौ यदर्थविशिष्टमेकाज्रूपं तदर्थविशिष्टात्तदेकाज्रूपात्परा विभक्तिरिति फलितम्। **राज्ञेति**। राजन्शब्दः कनिनन्तत्वादाद्युदात्तः । न च 'एकाचो विहिता या विभक्ति'रित्यर्थान्न दोषः । विहितविशेषणे प्रमाणाऽभावात् । एकाज्ग्रहणव्यावर्त्यमप्येतदेव । तदभावे हि सौ वर्त्तमानाच्छब्दात्परेत्यर्थः स्यात् । सावित्यस्य द्वाभ्यामित्यादिव्यावर्त्यं स्यात्।सप्तमीबहुवचनमिति किं?। याता याभ्यामित्यादि। प्रथमैकवचनग्रहणे तु तत्र यानिति रूपं, संयोगान्तलोपस्याऽसिद्धत्वेन यान्तिति वा । न हि तस्मादत्र शौ स्वभक्तिः। विकृतिग्रहणेन प्रकृतेरग्रहणात्, आगमसहितग्रहणेन केवलस्याऽग्रहणाच्च। तन्मध्यपतितन्यायोऽपि केवलेन विशिष्टग्रहणं बोधयति, न त्वेतावता प्रकृते इष्टसिद्धिः । न च रूपविवक्षामकृत्वा सौ य एकाच्ततः परेत्यर्थ एवास्त्विति वाच्यम् , दोःशब्दः सौ एकाच् , तस्य दोषन्नादेशे ततः परा विभक्तिरुदात्ता स्यात् , इष्यते तु मध्योदात्तं दोषभ्या॑मिति । अयं सप्तमीबहुवचनपक्षेऽपि रूपविवक्षाऽभावे दोषः । अस्ति च दोःषु इत्यत्र य एकाच् तस्मात्परा विभक्तिरिति । नन्वेवमपि [सप्तमीबहुवचने दृष्ट]दोःशब्दादेशत्वेन स्थानिवद्भावात्प्रवृत्तिर्दुर्वारा । न चेष्टापत्तिः । तैत्तिरीये 'दोषभ्यां स्वाहा' इति मध्योदात्तस्यैव पाठात्। अत एव 'न गोश्वन्' इति सूत्रे 'शुनः' 'शुना' इत्युदाहरणं सङ्गच्छते । अन्यथा सप्तमीबहुवचने नलोपस्याऽसिद्धत्वेऽपि श्वन्शब्दात्तृतीयादिविभक्तेरभावादसङ्गतिः स्पष्टैव, मम त्वेकदेशविकृतन्यायेन न दोष इति चेन्न, लक्ष्यानुरोधेनावृत्त्या यदेकाज्रूपं तत एकाच एव परेत्यर्थेन वारणात् । 'त्वये'त्यादौ तु प्रथमैकवचनग्रहणेऽपि न दोषः, प्रथमैकवचनप्रकृतेः स्थाने तृतीयादिप्रकृतेरविधानात् । स्पष्टञ्चेदं 'न गोश्वन्नि'ति सूत्रे, प्रकृते च भाष्ये । किं च काभ्यां कुलाभ्यामित्यादावेतदप्रवृत्ती रूपविवक्षाफलम् । रूपग्रहणे प्रमाणन्तु सप्तमीबहुवचनग्रहणे 'न गोश्व न्नि'ति निषेधो ज्ञापक इति भाष्यमेव । स्यादेतत्, स्त्रियाम् 'आभ्या'मित्यादौ 'एभिः' 'एषा'मित्यादौ चाऽन्वादेशे सर्वानुदात्तत्वं न लभ्येत, 'सावेकाचः' इत्यस्य प्राप्तेः । आसु एषु इति हि सौ रूपम् । न च प्रकृतसूत्रस्थकैयटरीत्या अत्राऽन्तोदात्तत्वमेवेष्टमिति वाच्यम् , 'एभिरग्ने पिबसि त्वमेषा'मित्यादिवैदिकप्रयोगविरोधात् , 'अन्ये त्वि'त्युक्त्या तेनाऽपि तत्राऽरुचिबोधनाच्च।न च विभक्तेरुदात्तत्वे शेषनिघातेन प्रकृतेरनुदात्तत्वे सिद्धे अशादेशस्याऽनुदात्तत्वविधानसामर्थ्यादन्वादेशे विभक्तिस्वरो नेति वाच्यम्, अस्त्रियाम् 'आभ्या'मित्यादौ चारितार्थ्यात्। न ह्यत्र 'सावेकाचः'इति प्राप्नोति। तत्र हि सप्तमोबहुवचने एषु इति रूपं[तत्र ए इति,] न च तादृगिहास्ति, नापि तस्य विकारः । न च स्त्रियाम् 'आसु' इति रूपस्य सत्त्वेन प्रवृत्तिर्दुर्वारा, अर्थभेदात् । न च 'न गोश्वन्' इति निषेधात् 'एभिः' इत्यादौ न दोष इति वाच्यम् , प्रथमैकवचनेऽवर्णान्तत्वाऽभावात् । न च 'ऊडिद'मित्यस्य दुर्वारत्वेन सर्वानुदात्तत्वं नेष्टमितिं वाच्यं, तत्रान्तोदादात्तादित्यनुवृत्त्या तदप्राप्तेः। अत्रैकाचः परेत्यस्यैकाच एव परेत्यर्थः कार्यः। तेन 'चित्सु' 'अग्निचिता' इत्यत्र न। **अन्तोदात्तादु**। नित्यशब्दस्य स्वरितत्वेनाऽधिकारगत्या नित्याधिकारविहितसमास एव गृह्यत इत्यत आह–**नित्येत्यादि**।इदञ्च वृत्तिपदमञ्जर्योः स्पष्टम् । **परमवाचेति**। पक्षे वाशब्द उदात्तः । अन्तोदात्तात्किम्?। अवा॑चा। नञ्तत्पुरुषः। अव्ययपूर्वपदप्रकृतिस्वरोऽत्र।उत्तरपदग्रहणमेकाच्त्वेनान्तोदात्तत्वेन चोत्तरपदं विशेषयितुम् । अन्यथा समासो विशेष्येत, तथा सति शुन ऊर्क्–'श्वोर्जा' इत्यादावेव स्यात् । एकाचिंक ? । राजदृषदा । षष्ठीसमासः । अनित्येत्यादि किम् ?। अग्निचिता । उपपदसमासः । कृदुत्तरपदप्रकृतिस्वरेण चिच्छब्द उदात्तः । यत्र तु समासघटकपदमात्रघटितविग्रहाऽभावेनैव नित्यसमासस्तत्र भवत्येवायं विकल्पः । यथा 'अवाचा ब्राह्मणेन' । अविद्यमाना वाग्यस्येति विग्रहः । बहुव्रीहौ 'नञ्सुभ्या'मित्यन्तोदात्तत्वम् । इदञ्च वृत्त्याद्यनुरोधेन व्याख्यातम् । 'उपपदमति'ङ्ङिति सूत्रे भाष्ये तु विग्रहाऽभावेन यो नित्यसमासस्ततोऽन्यत्रायं विकल्पः।अन्यथा 'उपस्वेन'इत्यादावव्ययीभावेऽप्ययं विकल्पः स्यादित्युक्तम्।एवञ्च बहुव्रीहौ 'अवाचा ब्राह्मणेन'इत्यत्रापि विकल्पो न भवत्येवेति प्रतीयते इति दिक् । **अञ्चेश्छन्दस्य।**

विभक्तिरुदात्ता । इन्द्रो' दधीचः। चाविति पूर्वपदान्तोदात्तत्वं प्राप्तम्। तृतीयादिरित्यनुवर्तमाने असर्वनामस्थान-ग्रहणं शस्परिग्रहार्थम् । प्रतीचो बाहून् । ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः ।६।१।१७१। एभ्योऽसर्वनामस्थान-विभक्तिरुदात्ता । प्रष्ठौहः। प्रष्ठौहा । * ऊठ्युपधाग्रहणं कर्तव्यम् । इह मा भूत् । अक्षद्युवा । अक्षद्युवे । इदम्-एभिर्नृभिर्नृतमः । अन्वादेशे न, अन्तोदात्तादित्यनुवृत्तेः । न च तत्राऽन्तोदात्तताऽप्यस्तीति वाच्यम्,

सु.]समासस्तत्र पर्युदासो माभूत् । अवाचा' ब्राह्मणेन । बहुव्रीहौ 'नञ्सुभ्या'मित्यन्तोदात्तत्वम् । अत्र विभक्तेर्वैकल्पिक उदात्तो भवत्येव । अन्तोदात्तात्किम् ?। अवाचा । नञ्समासोऽयं न तु बहुव्रीहिः, तेन 'नञ्सुभ्या'मित्यन्तोदात्तत्वं न भवति, किं त्वव्ययपूर्वपदप्रकृतिस्वर एव भवतीत्यर्थः । उत्तरपदग्रहणं तु एकाच्त्वेनोत्तरपदं विशेषयितुम् । अन्यथा समासविशेषणं स्यात्।तथा च शुनः ऊर्क् श्लोकं।श्वोर्जेत्यादावेवायं विधिः स्यात् । एकाच् किम्?'। राजदृषदा। षष्ठीसमासा-द्यप् । दधीच इति । दध्यञ्चतीति 'ऋत्विग्'गादिना क्विन् । 'अनिदिता'मिति नलोपः । 'अचः' इत्यकारलोपः । 'चौ' इति दीर्घत्वम् । अत्र 'चौ' इति पूर्वपदान्तोदात्तत्वं प्राप्तम् । शस्परिग्रहार्थमिति। शसादिग्रहणं तु न कृतं, नपुंसके शसि मा भूत्, सुटि यथा स्यादिति । ऊडिदम् । अत्रैकाच इति वर्तते, अन्तोदात्तादिति च। एकाजन्तोदात्तेभ्यः परा सर्वनामस्थानविभक्तिरुदात्ता स्यात् । प्रष्ठौह इति । 'छन्दसि सहः' 'वहश्चे'ति ण्विः । 'वाह ऊठ्' । उपपदसमासे प्रष्ठवाह्शब्दो 'गतिकारकोपपदात्कृ'दित्यन्तोदात्तः । अत्र प्रष्ठौहृशब्दस्याऽनेकाच्त्वेऽपि ऊठ्शब्दस्यैकाच्त्वमेव । ऊठ्यु-पधाग्रहणमिति । उपधाभूत ऊठ् गृह्यते, न त्वन्त्य इत्यर्थः। पञ्चमीनिर्देशात्परस्यैव ग्रहणे प्राप्ते वचनम् । तेनाऽक्षद्यू-रित्यादौ विभक्तेराद्युदात्तत्वं न । अत्र हि अक्षैर्दीव्यतीति क्विप् । अन्तरङ्गत्वादूठ् । यण् । उपपदसमासत्वात्कृत्स्वरेणान्तो-दात्तोऽयम् । अन्वादेशे नेति।अत एव 'सावेकाचः' इत्यपि स्वरो न।यदि स्यात्तर्हीहाऽन्तोदात्ताऽधिकारो व्यर्थः स्यात्।

शे.]'शसादि'रिति नोक्तम् । नपुंसके शसि मा भूत्, सुटि च यथा स्यादिति। 'अञ्चे'रित्यत्रेकः किंत्वेऽपि नलोपाऽकरणं सौत्रत्वात्। यत्तु सनकारो विवक्षितः, छन्दसि विधिर्भाषायां 'न गोश्व'न्निति निषेधः, 'श्व'न्निति निर्देशेन तस्यापि नलोपा-ऽभावे एव प्रवृत्तेरिति व्यवस्थेति, तन्न, 'प्रतीचो बाहू'नित्यादिलक्ष्यविरोधात्, 'अनिगन्तोऽञ्चतौ' इति सूत्रस्याऽऽकर-विरोधाच्च । अत्रोत्तरपदादिति वर्तते। तेनोत्तरपदभूताऽञ्चत्यन्तात्परा विभक्तिरित्यर्थः। तेन केवलाऽञ्चतेः क्विपि 'अग्भ्या'-मित्यादौ नाऽस्य प्रवृत्तिरित्याहुः। दधीच इति । दध्यञ्चति दध्यङ् । 'ऋत्वि'गित्यादिना क्विन्। चावितीति । तथा च तदपवादोऽयमिति भावः । लुप्ताऽकारनकारेऽञ्चतावित्यर्थेन तस्यापि विभक्त्युत्पत्त्युत्तरकालमेव प्रवृत्तेरित्याशयः । न च पूजायां 'दध्यञ्चा' इत्यादाविदं सावकाशम्, तत्र 'न गोश्व'न्निति निषेधेनाऽस्याऽप्रवृत्तेः । न चैवमपि 'दध्यग्भ्या'मि-त्यादौ अस्य सावकाशत्वेन 'दधीच' इत्यादौ परत्वाच्चुस्वरो दुर्वार इति वाच्यं, शस्परिग्रहार्थाऽसर्वनामस्थानग्रहण-सामर्थ्यात्तत्राऽपि प्रवृत्तेः। न च 'पराच' इत्यादौ सावकाशमिदम्, अनिगन्तपूर्वपदे 'चौ' इत्यस्याऽप्रवृत्तेर्वक्ष्यमाणत्वात्, तत्र 'अनिगन्तोऽञ्चतौ' इत्यस्यैवेष्टत्वादिति वाच्यम्, 'अनिगन्तोऽञ्चतौ' इति पूर्वपदप्रकृतिस्वरस्य सतिशिष्टचुस्वर-बाधकत्ववदेतस्यापि बाधकत्वेन तत्रैतदप्रवृत्तेरित्याहुः । केचित्त्वत्राऽन्तोदात्तादित्यपि वर्तते, अग्रेऽनुवृत्तिदर्शनेनाऽत्रापि तत्सम्बन्धात् । एवञ्चाऽन्तोदात्तोत्तरपदभूताऽञ्चेः परेत्यर्थः । अत एव 'पराचा' इत्यादावप्रवृत्तिः । 'अनिगन्तोऽञ्चतौ' इति पूर्वपदप्रकृतिस्वरेणाऽऽद्युदात्तत्वात्, अञ्चेरन्तोदात्तत्वं सामर्थ्याद्विभक्त्युत्पत्तिकालावच्छिन्नं ग्राह्यमित्याहुः । ऊडिदम् । अत्रैकाच इति,अन्तोदात्तादिति च वर्तते।तत्रैकाज्ग्रहणमूठो न विशेषणम्,अव्यभिचारात्।तद्घटितसमुदायस्य विशेषणत्वे-ऽपि न क्षतिः। अस्ति हि प्रष्ठौहृशब्दे तद्घटितोऽर्थवान् समुदाय 'ऊ'हिति । एवं पदाद्यंशेऽपि उपात्तानामेव विशेषणं, न विभक्त्याक्षिप्तप्रकृतेः । अत एव 'ब्राह्मणपदा' इत्यादावन्तोदात्तत्वसिद्धिः । इदमेव ध्वनितुं वृत्त्यादिषु 'जूरा'इत्यनुदाहृत्य 'प्रष्ठौहः' इत्युदाहृतम् । न च 'सावेकाचः' इत्यनेन सिद्धत्वात्तन्नोदाहृतम्, शसि तदप्राप्तेः। एकाच इति किम्?। 'अन्यै-रेनान्कन्यानामभि'रित्यादौ एनानित्यस्य सर्वानुदात्तत्वं यथा स्यात् । यद्यपि 'प्राग्दिशः' इति सूत्रस्थभाष्यादत्र तृतीयादि-ग्रहणमनुवर्तते इति प्रतीयते, तथापि तदेकदेश्युक्तिः, तत्रैव भाष्ये 'इत' इत्यत्रैतत्प्रवृत्त्युक्तेः, 'अपो याचामि पुंसः पुत्रानुतरायो देवी इतः पिशङ्ग यच्छसे' इत्यादिलक्ष्यविसंवादाच्च। अन्तोदात्तात्किम्?। अन्वादेशे 'आभ्या'मित्यादौ एतन्मा भूत् । 'सावेकाचः' इति तु नात्र, सौ 'एषु' इति रूपात् । प्रष्ठौह इति । प्रष्ठवाह्शब्द उपपदसमासेनाऽन्तोदात्तः । ऊठ्युपधेति । उपधाभूतस्यैवोठो ग्रहणमित्यर्थः। पञ्चमीनिर्देशादन्त्यस्यैव ग्रहणे प्राप्ते वचनम् । 'स्वरविधौ व्यञ्जनम-विद्यमानव'दिति परिभाषा तु अन्तोदात्तानुदात्तादिव्यवहारे एव प्रवर्तते । अत एव 'कर्षीवतः' इति मतुन्निर्देशश्चरितार्थ इति प्रागेव निरूपितम्। अक्षद्युवेति। अत्र क्विपि विवक्षिते ऊडनुदात्तो निपात्यते । ततो यणि उपपदसमासे कृत्स्वरेणा-न्तोदात्तोऽयम् । क्विपि परत ऊठि तु अनुनासिकादौ प्रत्यय ऊठ्स्वरः सतिशिष्टः स्यात् । तथा च स्योनशब्दोऽन्तोदात्तो

'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादा'विति सूत्रेणाऽनुदात्तस्य अशो विधानात् । प्र ते बभ्रू । माऽऽभ्यां गा अनु । 'पद्दन्नोमास्हृन्नि'शिति षट् पदादयः । पद्भ्यां भूमिः । दुद्भिर्न जिह्वा । [नसोः प्राणाः । अहरहर्जायते] मासिमासि । मनश्चिन्मे हृद आ । अप्–अपां फेनेन । पुम्–अभ्रातेव पुंसः । रै–राया वयम् । रायो धर्ता [विवस्वतः] दिव् [उपत्वाग्ने] दिवेदिवे । **अष्टनो दीर्घात्** ।६।१।१७२। शसादिर्विभक्तिरुदात्ता । अष्टाभिर्दश भिः । **शतुरनुमो नद्यजादी** ।६।१।१७३। अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी, अजादिश्च शसादिर्विभक्तिरुदात्ता स्यात् । अच्छा रवं प्रथमा जानती । कृण्वते । अन्तोदात्तात्किम् ? । दधती । 'अभ्यस्तानामादि'रित्याद्युदात्तः । अनुमः किम् ? । तुदन्ती । एकादेशोऽत्र उदात्तः । अदुपदेशात्परत्वाच्छतु 'र्लसार्वधातुके'ति निघातः । **उदात्तयणो हल्पूर्वात्** ।६।१।१७४। उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात्परा नदी, शसादिर्विभक्तिश्च उदात्ता स्यात् । चोदयित्री सूनृतानाम् । एषा नेत्री । ऋतं देवाय कृण्वते सवित्रे । **नोङ्धात्वोः** ।६।१।१७५। अनयोर्यणः परे शसा-

---

सु]प्र ते बभ्र–इति भिन्ना ऋक् अन्वादेशप्रदर्शनार्थं **माभ्यामित्यत्रोक्ता** । **माभ्यामिति** । अत्र पूर्वार्द्धे बभ्रूशब्देनोक्तयोरिहेदमा परामर्शेऽप्यन्वादेशोऽस्त्येव, 'अन्वादेशश्च कथितानुकथितमात्रं, न त्विदमा कथितस्येदमैवाऽनुकथन'मिति भाष्योक्तेः । **षड्दादय इति** । न तु ततः परे, एकाच इत्यनुवृत्तेः । **अष्टनो** । दीर्घान्तादष्टनः पराऽसर्वनामस्थानविभक्तिरुदात्ता । 'झल्युपोत्तम'मित्यस्यापवादः । अष्टन्शब्दो घृतादित्वादन्तोदात्तः । तेन उत्तरार्थमनुवर्तमानस्यान्तोदात्तादित्यस्येहाऽपि नाऽनन्वयः । दीर्घात्किम् ? । अष्टभिः । इह 'झल्युपोत्तम'मिति स्वरः । ननु चाऽत्रापि 'अष्टन आ विभक्तौ' इत्यनेन भवितव्यं, तद्विधौ विकल्पस्याऽभावादिति चेत्सत्यम्, इदमेव दीर्घग्रहणमष्टन आत्वविकल्पं ज्ञापयति । नित्ये त्वात्वे व्यावर्त्याऽभावाद्दीर्घग्रहणमनर्थकं स्यात् । कृतात्वस्य षट्संज्ञां च ज्ञापयति । अन्यथा ह्यात्वपक्षे सावकाशोऽष्टनः स्वरः परत्वादनात्वपक्षे षट्स्वरेण बाधिष्यत इति किं दीर्घग्रहणेन ? । **जानतीति** । 'ज्ञाजनोर्जे'ति जादेशः । 'श्नाभ्यस्तयोरातः' इति श्नाऽऽकारलोपः । अत्र प्रत्ययस्वरेण शत्रन्तमन्तोदात्तम् । **कृण्वते इति** । 'धिन्विकृण्व्योर च' । **तुदन्तीति** । तुदादित्वाच्छः । 'आच्छीनद्यो'रिति नुम् । प्रत्युदाहरणे व्यञ्जविकलतां परिहरति–**एकादेशोऽत्रोदात्त इति** । 'तुदन्ती'त्यत्र शे कृते तस्मात्परस्य शतुरदुपदेशात्परत्वात् 'तास्यनुदात्ते'दिति निघाते एकादेशः । तस्य 'एकादेश उदात्तेनोदात्तः' इत्युदात्तत्वम् । अस्मिन्कर्तव्ये तस्याऽसिद्धत्वं नास्ति, अनुम इति प्रतिषेधाज्ज्ञापकात् । न ह्येकादेशस्वरेण विना शत्रन्तं सनुम्कमन्तोदात्तं भवति । **उदात्तयणो** । 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्ये'ति प्राप्ते वचनम् । **'चोदयत्री' 'नेत्री' 'सवित्रे' इति** । तृजन्ता एते 'चितः' इत्यन्तोदात्ताः । हल्पूर्वादिति किम् ? । बहुतितवा ब्राह्मण्या । स्त्रीलिङ्गोपादनं नाभावनिवृत्त्यर्थम् ।

---

बो.]न स्यात् । उदात्तनिपातने चेदमेव भाष्यं प्रमाणम् । अत एव प्रयोगे ऊठ उदात्तत्वश्रुतिः, अन्यथा स्वरितः स्यादित्याहुः । **प्रते बभ्रू इति** । मा–आभ्यामिति च्छेदः । बभ्रूशब्देनोक्तयोरिदमा परामर्शादत्रान्वादेशोऽस्ति । कथितानुकथनस्यैव तत्त्वात् । **षट्पदादय इति** । सूत्रोपात्ताः षडित्यर्थः । तेन वार्तिकस्थानामपि ग्रहणे न दोषः । एकाच इत्यनुवृत्त्यैतदर्थलाभः । तेन 'आसनि' 'उदनि' इत्यादि मध्योदात्तमेव । पदाद्यादेशा अन्तोदात्ता निपात्यन्ते । इदं सूत्रं 'लिति' इत्यस्य पूर्वविप्रतिषेधेनाऽनुवृत्त्या वा बाधकम् । तेन 'इत' इत्यत्र विभक्त्युदात्तत्वमेवेति 'प्राग्दिशः' इति सूत्रे भाष्यकैयटयोः स्थितम् । इदमो हिलि लित्त्वसामर्थ्याल्लित्स्वर एवेत्याहुः । **अष्टनो** । अष्टन्शब्दो घृतादित्वादन्तोदात्त इति षड्भ्योऽज्ञासूत्रे भाष्ये ध्वनितम् । तेनोत्तरार्थतयाऽनुवर्त्तमानस्यापि 'अन्तोदात्ता'दित्यस्य न बाधः । अत एव 'अष्टौ' इत्यत्र 'एकादेश उदात्तेन' इत्यन्तोदात्तत्वसिद्धिः । 'झल्युपोत्तम'मित्यस्याऽपवादोयमिति स्पष्टं भाष्ये । [अत एवेदं समासादौ न प्रवर्तते] । दीर्घात्किम् ? । अष्टभिः । 'झल्युपोत्तम'मिति स्वरः । **शतुरनुमो** । अनुमिति बहुव्रीहिः । **शतुर्लसार्वधातुकेति** । न चाऽन्तरङ्गत्वादेकादेशे कृतेऽप्यपवर्गः, अन्तरङ्गपरिभाषाया अनित्यत्वात् । न चैकादेशस्वरोऽस्मिन्स्वरेऽसिद्धः, 'अनुम'इति निषेधेनाऽसिद्धत्वाऽभावात् । न ह्येकादेशस्वरेण विना सनुम्कमन्तोदात्तं भवति । [इदं च सामान्यापेक्षम् । तेनान्तरङ्ग एकादेशस्वरः सिद्धो वाच्य इति सिद्धम् ] । 'अनुम' इति च श्रुतत्वाच्छतुरेव विशेषणं, तेन 'मुञ्चता' इत्यादौ स्वरप्रवृत्तिः । 'अन्तोदात्ता'दिति तु तदन्तस्यैव विशेषणम् । अन्यथा 'तुदती'त्यत्र न स्यात् । अत एव नुम्प्रतिषेधः सार्थकः । अत्र वार्तिकं 'बृहन्महतोरुपसङ्ख्यान'मिति । बृहती, बृहता । महती । यद्यपि शतृवद्भावेनेदं सिद्धं तथापि बृहन्महतोरेवेति नियमार्थमिदम् । तेन पृषता पृषती इत्यादीनां न । ननु 'प्रियमहती'त्यादौ सूत्रेणाऽसिद्धेर्विधानार्थमेव स्यादिति चेत्, न, वार्तिकेऽप्यन्तोदात्तादित्यस्य सम्बन्धेनाऽत्र तस्याऽप्यप्रवृत्तेः । 'अतिमहती'त्यत्र 'अतेरकृत्पदे' इत्यन्तोदात्तत्वाद्भाव्यमेव । विदुषी विदुष इत्यादौ वसोः स्थानिवत्त्वेन शतृत्वात्ततः परयोर्नदीविभक्त्योरुदात्तः प्राप्तः, स्वरे वस्वादेशे स्थानिवत्त्वप्रतिषेधान्न भवति । **उदात्तयणो** । उदात्तस्वरितयोरित्यस्यापवादः । हल्पूर्वात्किम् ? । बहुतितवा ब्राह्मण्या । 'बह्वोर्नञ्व'दिति बहुव्रीहिरन्तोदात्तः । अत्रोदात्तस्वरितयोरिति विभक्तिः स्वरिता । अत्र 'उदात्तस्थानिकनकाराच्चे'ति

दय उदात्ता न स्युः । ब्रह्मबन्ध्वा । सेत्पृश्निः सुभ्वे । **ह्रस्वनुड्भ्यां मतुप्** ।६।१।१७६। ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुबुदात्तः । यो अब्दिमाँ उदनिमाँ इयर्ति । नुटः—अक्षण्वन्तः [कर्णवन्तः सखायः] । अन्तोदात्तात्किम्?। मा त्वा विदद्दिषुमान्।'स्वरविधौ व्यञ्जनमविद्यमानव'दित्येतदत्र नेष्यते।मरुत्वा निन्द्रः। नियुत्वान्वायवागहि। *रेशब्दाच्च। रेवाँ इद्रेवतः। **नामन्यतरस्याम्** ।६।१।१७७।मतुपि यो ह्रस्वस्तदन्तादन्तोदात्तात्परो नामुदात्तो वा।चेतन्ती सुमतीनां।[सुमतीनां]। **ङ्याश्छन्दसि बहुलम्**।६।१।१७८।ङ्याःपरो नामुदात्तो वा।देवसु.]

'तन्नोतेर्डउः सन्वच्चे'ति डउः।'चालनी तितउः पुमान्'। 'बहोर्नञ्वदुत्तरपदभूम्नी'ति बहुव्रीहिरन्तोदात्तः।तत्र 'उदात्तस्वरितयो'रिति विभक्तेः स्वरित्वम् । अस्मिन्सूत्रे नकारग्रहणं च कर्तव्यम् । उदात्तस्थाने यो नकारस्ततोऽपि परस्या नद्या उदात्तत्वं वक्तव्यमित्यर्थः । तेन वाचां पतिः वाक्पत्नीति सिद्धम् । अत्र हि 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरस्य 'न भूवाक्चिद्दिधिषु' इति प्रतिषेधात्समासान्तोदात्तत्वे 'विभाषा सपूर्वस्ये'ति नकारे, नान्तत्वान्ङीप्—अनेनोदात्तः ।

**नोङ्** । **शसादय इति**।यद्यपि पूर्वसूत्रे नद्यजादी इत्यनुवर्तते तथापि ऊङ्धात्वोर्यणः परा नदी न संभवतीति नानुवर्तिता । **ब्रह्मबन्ध्वेति** । ऊङ्प्रत्ययस्वरेणोदात्तः । तेन सह य एकादेशः सोऽप्युदात्तः । तस्मात्परस्योदात्तत्वे प्रतिषिद्धे 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्ये'ति विभक्तिः स्वरिता । **सुभ्वे इति** । क्विबन्तस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तस्य 'ओः सुपी'ति यण् । **अब्दिमानिति** । आपो दीयन्तेऽस्मिन्निति 'कर्मण्यधिकरणे चे'ति किः । उदनिशब्दोऽव्युत्पन्नः । अस्य घृतादित्वादन्तोदात्तत्वं बोध्यम्। अन्यथा 'युताऽन्यण्यन्ताना'मिति द्वितीयस्योदात्तत्वं प्रसज्येत । 'मतुवसो रु संबुद्धौ छन्दसी'ति रुः । 'आतोऽटि नित्य'मित्यनुनासिकः । **अक्षण्वन्त इति** । अक्षिशब्दान्मतुप् । 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इति 'छन्दस्यपि दृश्यते' इत्यनङ् । 'अनो नु'डित्यस्याऽसिद्धत्वात्पूर्वं नलोपः । ततो भूतपूर्वगत्या मतुपो नुट् । 'मादुपधायाः'इति वत्वम् । **इषुरिति** । 'धान्ये नि'दित्यधिकारे 'इषेः किच्चे'ति उप्रत्ययान्त आद्युदात्त इषुशब्दः, तस्मात्परो मतुबनुदात्त एव । ननु मरुतोऽस्य सन्तीति मरुत्वान् । अत्र मतुबुदात्तत्वं प्राप्नोति । 'मृग्रोरुति'रित्युतिप्रत्यये प्रत्ययस्वरेण मरुच्छब्दस्यान्तोदात्तत्वात् । नच तकारेण व्यवधानं, स्वरविधौ व्यञ्जनस्याऽविद्यमानत्वात् । अत आह—**स्वरविधा**वित्यादि। **नेष्यत इति**। 'समासस्ये'ति सूत्रे मरुत्वानित्यत्र 'ह्रस्वनुड्भ्यां मतु'बिति स्वरः प्राप्नोती'ति दोषमुद्भाव्य हल्स्वरप्राप्ताविति भाष्योक्तेरिति भावः । **रेवानिति** । रयिरस्यास्तीति मतुप् । 'रयेर्मतौ बहुल'मिति संप्रसारणम् । पूर्वरूपत्वम् । 'आद्गुणः'। ततो ह्रस्वाऽभावाद्वचनम् । **नामन्य** । ह्रस्वग्रहणमनुवर्तते, मतुब्ग्रहणं च । तद्धि सप्तम्या विपरिणम्यते। तेन ह्रस्वो विशेष्यते । तदाह—**मतुपि यो ह्रस्व इति**। **सुमतीनामिति** ।

शे.]वक्तव्यम् ,वाक्पत्नी।तत्पुरुषः।'पत्यावैश्वर्ये'इति प्राप्तस्य पूर्वपदप्रकृतिस्वरस्य 'न भूवाक्चिद्दिधिषु'इति निषेधे 'समासस्ये'त्यन्तोदात्तः। **नोङ्**। **शसादय इति**।असर्वनामस्थानोपलक्षणं। नदीग्रहणमसम्भवान्नानुवर्तितं। **सुभ्वे इति**। कृदुत्तरपदप्रकृतिस्वरेण सुभूरुदात्तः। **ह्रस्वनुड्भ्याम्**।अत्र मतुप्ग्रहणे ड्मतुपो ग्रहणं नेति 'चौ'इति सूत्रे भाष्ये स्पष्टम्।**अब्दिमाँ इति**।आपो दीयन्तेऽस्मिन्नित्यधिकरणे किः। उदनिरव्युत्पन्नो घृतादित्वादन्तोदात्तः।'मतुप उदात्तत्वे पूर्वस्य शेषनिघातः। न च सन्निपातपरिभाषया दोषः, स्वरे तदप्रवृत्तेः कृन्मेजन्तसूत्रे भाष्ये उक्तत्वात् । **अक्षण्वन्त इति**। 'छन्दस्यपि दृश्यते' इत्यनङुदात्तः। मतुपो 'अनो नुट्' । पूर्वं नस्य लोपः।नुटोऽसिद्धत्वात् 'मादुपधायाः' इति वत्वम्। **इषुमानिति** । इषुराद्युदात्तः । ह्रस्वेतिकिम् ?। प्रजावान् । ह्रस्वान्तादिति किं?। मरुत्वानिति। 'मृग्रोरुतिः' मरुत्। न च स्वरविधौ व्यञ्जनस्याऽविद्यमानवत्त्वेन ह्रस्वान्तत्वम् । स्वरोद्देश्यकविधावेव तत्प्रवृत्तेरन्तोदात्तत्वोदात्तात्परत्वादिव्यवहारस्यैव तेन लाभात् । अत एव 'कर्षात्वतः'इति सूत्रे मतुप् चरितार्थः।अन्यथा 'दायः' 'पाकः'इत्यादावपि व्यञ्जनस्याऽविद्यमानवत्त्वेनाऽऽकारान्तात्परत्वेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । अत एवाऽत्र नुड्ग्रहणं चरितार्थम्। अत एव स्वरे नलोपाऽसिद्धत्ववचनं सार्थकम् । अन्यथाऽसिद्धत्वेऽप्येतत्परिभाषया नस्याऽविद्यमानवत्त्वे तद्वैयर्थ्यं स्पष्टमेव। अत एव 'हल्स्वरप्राप्तौ' इति परिभाषान्तरं स्वरविधायकाऽर्थं भाष्ये पठितम् । तस्यास्तु प्रकृते विषय एव नास्ति । अत्र नुडप्यन्तोदात्तात्पर एव । तेनेह न-रोमण्वन्तौ । मनिनन्तत्वादाद्युदात्तो रोमन्शब्दः । शिरसः शीर्षन्नादेशोऽन्तोदात्तो निपात्यते । अत एव 'शीर्षण्वा'न्नित्यादौ भवत्येवैतत् । **रेशब्दाच्चेति** । वार्तिकमेतत् । **रेवानिति** । रयिरस्यास्तीति मतुप् । 'रयेर्मतौ बहुल'मिति संप्रसारणं, पूर्वत्वम् , आद्गुणः । रेशब्दान्मतुपो वत्वमिष्यते । ह्रस्वाऽभावाद्वचनम् । 'त्रेश्च प्रतिषेधो वक्तव्यः'। त्रिवती। **नामन्य** । ह्रस्वेति, मतुबिति च वर्तते । तत्र व्याख्यानान्मतुपा ह्रस्वो विशेष्यते । प्रथमान्तमपि मतुप्पदं सप्तम्या विपरिणम्यते, तदाह—**मतुपीति** । अत एव 'अग्नीना'मित्यादावेतत्प्रवृत्तिः। अन्यथा परत्वान्नित्यत्वाच्च दीर्घे ह्रस्वाऽभावा-

से नानामभिअतीनाम्। वेत्युक्तेर्नेह–जयन्तीनां मरुतो यन्तु। **षट्त्रिचतुर्भ्यो हलादिः।६।१।१७९।** एभ्यो हलादिर्विभक्तिरुदात्ता। आषड्भिर्हूयमानः। त्रिभिष्ट्वं देव। **न गोश्वन्साववर्णराडङ्कुङ्कृद्भ्यः।६।१।१८२।** एभ्यः प्रागुक्तं न। गवां शता। गोभ्यो गातुः। शुनश्चिच्छेपम्। सौ प्रथमैकवचनेऽवर्णान्तात्–तेभ्यो द्युम्नम्। तेषां पाहि श्रुधी हवम्।

---

सु.] सुमतिशब्दो बहुव्रीहिः 'नञ्सुभ्या'मित्यन्तोदात्तः। मतुपा ह्रस्वविशेषणं किम्?। भूतपूर्वेऽपि ह्रस्वे यथा स्वरः स्यात्–अग्नीनामित्यादौ। अन्यथा परत्वान्नित्यत्वाच्च दीर्घत्वे कृते ह्रस्वाऽभावान्न स्यात्। तिसृणामित्यत्र सांप्रतिके ह्रस्वे स्यात्। सांप्रतिकाऽभावे हि भूतपूर्वगतिर्भवति, न तु सत्यपि तस्मिन्। नन्वेवं तिसृणामित्यत्र न स्यात्। मतुपि तिसृभावस्यैवाऽभावात्। इष्टमेवैतत्संगृहीतम्। अत्र हि 'षट्त्रिचतुर्भ्यो हलादि'रिति नित्यमेव विभक्तेरुदात्तत्वमिष्यते। **षट्त्रि।** अन्तोदात्तादित्येतन्निवृत्तम्। यद्येतदनुवर्तेत पञ्चानां नवानां चतुर्णामित्यत्र न स्यात्। 'त्रः सङ्ख्यायाः' इत्याद्युदात्तत्वात्। हलादिः किम्?। चतस्रः पश्य। यद्येतदिह हलादिक तर्हि स्यात्?। सप्तानाम्। अष्टानाम्। सप्ताऽष्टशब्दौ घृतादित्वादन्तोदात्तौ। हलादिः किम्?। चतस्रः पश्य। यथैतदिह हलादिग्रहणस्य व्यावर्त्यं तथा 'चतुरः शसि' इत्यत्रैवाऽवोचाम। **न गो।** 'सा'विति यदि सप्तमीबहुवचनग्रहणं स्यात्, तेभ्यः केभ्य इत्यत्र न स्यात्, तत्किंशब्दयोः सप्तमीबहुवचने परतः त्यदाद्यत्वे कृते 'बहुवचने झल्ये'दित्येत्वविधानात्तेषु केषु इत्यत्राऽवर्णान्तत्वाऽभावात्। ताभिर्याभिरित्यादावेव स्यात्, तासु यास्वित्यत्राऽवर्णान्तत्वात्। तस्मात्प्रथमैकवचनमित्याह–**सौ प्रथमैकवचन इति।** अनन्तरप्रतिषेधस्याऽसंभवात् षाष्ठिकस्वरस्य प्रतिषेधो विज्ञायत इत्याह–**प्रागुक्तं नेति।** एवं च वीरवत्तममित्यत्र 'ह्रस्वनुड्भ्यां मतु'मिति न भवति। 'स्फायितञ्ची'त्यादिना रकि अन्तोदात्तो वीरशब्दः। **गोभ्य इति।** 'सावेकाचः' इति प्राप्तम्। **शुनश्चिच्छेपमिति।** अत्र 'चि'दिति पदं संहितापाठे बाहुलकात् शुनःशेपशब्दस्य मध्ये प्रक्षिप्यते। पदकाले तु 'शुनःशेपं चि'दिति पठ्यते। 'शेपपुच्छलाङ्गूलेषु शुनः' इत्यलुक्। वनस्पत्यादित्वादुभयपदप्रकृतिस्वरः। श्वन्शब्दे, तेभ्यः तेषामित्यत्र च 'सावेकाचः' इति प्राप्तं प्रतिषिध्यते। **राडिति**–क्विबन्तः। राजा। **अङिति।** अञ्चतिः क्विबन्तः। तस्य सनकारस्य ग्रहणं विषयावधारणार्थम्। यत्र नलोपो नास्ति तत्रैव प्रतिषेधो यथा स्यात्। प्राञ्चा। प्राङ्भ्याम्। 'नाऽञ्चेः पूजाया'मिति प्रतिषिध्यते नलोपः। 'अञ्चेश्छन्दस्यसर्वनामस्थान'मिति प्राप्तं प्रतिषिध्यते। गतौ तु–विभक्त्युदात्तः स्यादेव। प्राचे। **क्रुङिति** क्विन्नन्तः। क्रुञ्चा। क्रुञ्च कौटिल्याल्पीभावयोः। 'ऋत्वि'गित्यादिना क्विन्। तत्रैव सूत्रे 'क्रुञ्चे'ति निपातनान्नलोपाऽभावः। **कृत्**–करोतिः कृन्ततिर्वा क्विबन्तः। कृता कृते।

---

शे.] न स्यात्। वचनं तु 'तिसृणा'मित्यादौ चरितार्थम्। 'चतसृणा'मिति तु नावकाशः, तस्याद्युदात्तत्वात्। **सुमतीनामिति।** सुमतिशब्दो बहुव्रीहिः 'नञ्सुभ्या'मित्यन्तोदात्तः, पक्षे स्वरितान्तः। सनुड्ग्रहणं किं?। धेन्वाम्। अन्तोदात्तात्किं?। चतसृणाम्। **ङ्याश्छन्दसि।** 'अन्यतरस्या'मित्यनुवर्तमाने बहुलोक्तिरन्तोदात्तादित्यस्य निवृत्त्यर्था। तदाह–**चेत्यनुवृत्तेरिति।** बहुलग्रहणरहितपाठेऽपि अत्राऽन्तोदात्तादित्यस्य निवृत्तिर्व्याख्यानाद्बोध्या। तदाह–**चेत्युक्तेरिति। जयन्तीनामिति।** आद्युदात्तमेतत्। **षट्त्रि।** हलादिः किं?। चतस्रःपश्य। प्रियत्रीन्पश्येत्यादि। अत्र यद्वक्तव्यं तच्चतुरः शसीत्यत्रोक्तम्। **नगोश्वन्।** सौत्रत्वाद्द्वन्द्वः, सप्तम्यलुक् च। **एभ्य इति।** विभक्तेर्मतुपश्चेत्यर्थः। 'मतु'बित्यस्य, विभक्तिरित्यस्य चानुवृत्तेः। एतच्च 'चौ' इति सूत्रे भाष्यकैयटयोः स्पष्टम्। **प्रागुक्तमिति।** षाष्ठिकस्वर इत्यर्थः। तेन 'आद्युदात्तौ सुप्पितौ' इत्यस्य बाधः। एतच्चाऽनन्तरस्येति न्यायलब्धम्। न च तन्न्यायानुसरणे षट्त्रीत्यस्यैव बाधः स्यादिति वाच्यम्, गवादिषु असम्भवात्। एवं च 'वीरवत्तम'मित्यत्र 'ह्रस्वनुड्भ्या'मिति न भवति, 'देवी' 'कुमारी'त्यादावन्तोदात्तत्वं च सिध्यति। उदात्तनिवृत्तिस्वरेण हि तत्रान्तोदात्तत्वम्। यत्तु तृतीयादिविभक्तेरुदात्तत्वं नेत्येतत्सूत्रं विवृण्वते, तन्न, लक्ष्यविरोधात्। एतेन किञ्चित्स्वराणामपि बाधः स्यात्। तथा च 'कितः' इति सूत्रे 'आक्षिक' इत्युदाहरणपरवृत्तिविरोध इत्यपास्तम्। 'अनुदात्तं पद'मित्यस्य तु परिभाषात्वाद्विभक्त्यादिस्वरत्वाऽभावाच्च न बाधः। 'ऊडिद'मित्यस्य न निषेधः, पदादेः, रैशब्दस्य च ग्रहणवैयर्थ्यापत्तेः। **गवां शतेति।** 'सावेकाचः' इति प्राप्तिः। नन्वत्र सप्तमीबहुवचने सावेकाज्रूपं गो इति, न ततः परेयं विभक्तिः। न च स्थानिवद्भावः, 'गोः पूर्व[त्व]णित्त्वात्वस्वरेषु' इति वार्तिकेन स्वरे कर्तव्ये निषेद्धव्ये वा गोशब्दादेशस्य स्थानिवत्त्वनिषेधेन विधिनिषेधयोरुभयोरप्यप्राप्तेः। अत एव 'सुगुपाल' इत्यत्र 'गोतन्तियवं पाले' इति स्वरो न। एतेन 'सुगुना' 'बहुगुने'ति वृत्तिकारोक्तमपि परास्तम्। एवञ्च सुगुनेत्यादौ निषेधाऽभावे 'अन्तोदात्तादुत्तरपदा'दिति भवत्येवेत्यरुचेरुदाहरणान्तरमाह–**गोभ्य इति। शुनश्चिच्छेपमिति।** अत्र चिदिति संहितापाठे बाहुलकाच्छुनःशेपशब्दस्य मध्ये प्रक्षिप्यते। पदकाले तु शुनः शेपं चिदिति पठ्यते। 'शेपपुच्छलाङ्गूलेषु' इत्यलुक्। वनस्पत्यादित्वादुभयपदप्रकृतिस्वरः। सौ नलोपस्याऽसिद्धत्वात् श्वनिति रूपम्, एकदेशविकृतन्यायेन ततः परा विभक्तिरिति 'सावेकाचः' इति प्राप्तिः। **प्रथमैकवचने इति।** न तु 'सावेकाच' इतिवत्सुपो ग्रहणम्। यत्तदोः स्त्रियामवर्णान्तत्वेऽपि लिङ्गान्तरे दकारान्तत्वात्, व्याख्याना-

दिवो झल् ।६।१।१८३। दिवः परा झलादिर्विभक्तिर्नोदात्ता । द्युभि॑र्क्तुभिः॑ । झलिति किम् ?। उप॑ त्वाग्ने दि॒वेदि॑वे । नृ चाऽन्यतरस्याम् ।६।१।१८४। नुः परा झलादिर्विभक्तिर्वोदात्ता । नृभिर्ये॑मा॒नः। तित्स्वरितम् ।६।१।१८५। निगदव्याख्यातम् । क्व॑ नूनम् । तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तम-

---

सु.]दिवो । झलादिरिति । नन्वसति सप्तमीनिर्देशे कथं पुनरत्र तदादिविधिः ?। केवलझलात्मिकाया विभक्तेरेवाभावात्तदादिविधिः । ननु तर्हि तदन्तविधिरस्तु। का पुनर्झलन्ता विभक्तिः?। शसादिः सकारान्ता इति चेत्सत्यम् । 'षट्त्रिचतुर्भ्यो हलादि'रित्यत आदिरिति वर्तते। दिवः परा विभक्तिर्नोदात्ता भवति, कीदृशी, यस्या झल् आदिरिति। द्युभिरिति। 'सावेकाचः' इति वा 'ऊडिद'मिति वा प्राप्तः स्वरः प्रतिषिध्यते । दिवे दिवे इति। 'ऊडिदंपदा'दिति विभक्तिरुदात्ता ।

तित्स्वरितम्। तित्स्वरितः स्यात् । निगदव्याख्यातमिति। उच्चारणेनैव व्याख्यातमित्यर्थः। क्वेति। 'किमोऽत्' 'तित्स्वरितं' 'क्वाती'ति किमः क्वादेशः।तास्यनु।तास्यादीनां समाहारद्वन्द्वः । उपदेशग्रहणं संभवव्यभिचाराभ्यां ङिद्भ्यां संबध्यते, न तु तास्यनुदात्तेद्भ्याम् । ङिदिति कर्मधारयः । उपदिश्यत इत्युपदेशः । तस्याऽकारेण, ङिता च विशेषणात्तदन्तविधिः । तथा च सूत्रार्थः—'तसेरनुदात्तेतो ङिदुपदेशादकारान्तोपदेशाच्च परं लसार्वधातुकमनुदात्तं स्यात् , ह्नुङ्विङो

---

शे ]श्चेति भावः। तत्र सावित्यवर्णान्तविशेषणं। सौ यदवर्णान्तं दृष्टं तस्मादित्यर्थः। 'सावेकाचः' इतिवद्रूपविवक्षा त्वत्र न, व्याख्यानात् । एतेन तेभ्य इत्यत्र सौ यदवर्णान्तं रूपं ततः परत्वाऽभावात्कथमत्र निषेधप्राप्तिरिति परास्तम् । सौ यदवर्णान्तं दृष्टं ततोऽनवर्णान्तादपि सिद्धेः । नन्वेवमपि श्वन्ग्रहणं व्यर्थं, श्वा इति प्रथमैकवचनेऽवर्णान्तत्वादिति चेन्न, नलोपस्याऽसिद्धत्वेनाऽदोषात् । अत एव ज्ञापकात्स्वरनिषेधेऽपि नलोपाऽसिद्धत्वप्रवृत्तिः। अत एव 'पितृमा'नित्यादौ मतुप उदात्तत्वं भवत्येव । न चैवं नपुंसकप्रथमैकवचने 'त'दित्यादौ त्यदाद्यत्वाऽभावेन 'तेभ्यः कुलेभ्यः' इत्यादौ निषेधो न स्यात्। न चेष्टापत्तिः,'यत्तदोश्च ग्रहणं कर्तव्य'मिति भाष्यमते तत्प्राप्तेः-इति वाच्यं,सौ यस्य शब्दस्य क्वाऽपि अवर्णान्तत्वं दृष्टं ततः परविभक्तेः सर्वत्र निषेध इत्यर्थात् । वस्तुतस्तु अत्रापि रूपविवक्षाऽस्त्येव, परन्तु तादृशरूपात्परत्वं विभक्त्यादीनां तदुत्पत्तिकालावच्छिन्नं ग्राह्यम् । अत एव 'चौ' इति सूत्रस्थभाष्यविरोधो न । तत्र हि 'वेतस्वा'नित्यत्रास्य प्राप्तिः शङ्किता।अत एव'कुमारी'त्यादावुदात्तनिवृत्तिस्वरनिषेधशङ्कापरविप्रतिषेधसूत्राऽसिद्धवत्सूत्रस्थभाष्यविरोधोऽपि न। 'वीरवत्तमं वीराणा'मित्याद्युदाहरणम्।यत्तदर्थं भाष्यकृता वचनमेवारब्धम्।अत एव 'केभ्यः,'काभ्यः' इत्यादौ न निषेध इति भाष्योक्तमेव रमणीयम् । राट्—राजा, परमराजा। अङ्कित्यञ्चतिः क्विन्नन्तोऽलुप्तनकारो गृह्यते,यत्र नलोपो नास्ति तत्रैव प्रतिषेधो यथा स्यादित्यर्थं—प्राञ्चा, प्रत्यञ्चा । आद्ये 'सावेकाचः' इति प्राप्तिः । अञ्चशब्दैश्च 'अनिगन्तोऽञ्चतौ' इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तस्तदेकादेशोऽप्युदात्त एव । [अन्त्यस्तु इगन्तपूर्वपदत्वात्कृत्स्वरेणान्तोदात्तः] । तस्य 'अन्तोदात्तादुत्तरपदस्ये'ति प्राप्तिः । यदि तु 'अनिगन्तोऽञ्चतौ' इति सतिशिष्टविभक्तिस्वरस्यापि बाधकं, तदाऽन्त्यमेवोदाहरणम् । गतौ तु लुप्तनकारत्वाद्विभक्त्युदात्तः स्यादेव । वस्तुतश्चाविति सूत्रस्थभाष्याप्रामाण्यादत्र लुप्तनकारस्यापि ग्रहणम्। प्रतीचो बाहूनित्यादि तु छान्दसमिति बोध्यम् । क्रुङ्—क्विन्नन्त एव । कृदिति—करोतिः कृन्ततिर्वा क्विबन्तः ।

दिवो झल् । द्युभिरिति।'ऊडिद'मिति प्राप्तस्य निषेधः।ननु दिव्शब्दः फिट्स्वरेणाऽन्तोदात्तः,वकारस्थानिक उकारो हल्स्थानिकत्वादनुदात्तः, अस्वरको वा, सर्वथाऽप्यन्तोदात्तत्वाऽभावात्कथमत्र प्राप्तिरिति चेन्न, 'दिव उ'दित्यत्रोदात्त उकारो निपात्यते इत्यदोषात्। न चोदात्तनिपातनसामर्थ्याद्विभक्तिस्वराऽप्रवृत्तौ 'दिवो झलि'ति व्यर्थमिति वाच्यम्, 'अहर्विमल्द्यु' इत्यादौ अन्तरङ्गप्रकृतिस्वरस्य सतिशिष्टतया बाधेन चारितार्थ्यात् । दिवेदिव इति । अत्र 'ऊडिद'मित्येव भवति । नृचान्य।'सावेकाचः' इत्यस्याऽपवादोऽयम् । अत्र झलीत्यनुवर्तितं। तत्फलन्तु न्रा, न्रे, नरि। अत्र सुपि यद्रूपं नृ इति, स्थानिवद्भावेन ततः परत्वात् 'सावेकाच' इत्यस्य प्राप्तिः।[न्रा न्रे इति तु 'उदात्तयणः' इत्यनेनास्य बाधादपि सिद्धम्]।इदञ्च 'नामन्यतरस्या'मिति सूत्रे भाष्ये स्पष्टम्।वेदे क्वचिन्नरीत्याद्युदात्तं पठ्यमानन्तु छान्दसत्वाद्बोध्यम्।एतेन झलीति नानुवर्त्तते, 'य एक इन्नर्यपां स्त्री'त्यत्र नरीत्याद्युदात्तस्य दर्शनादित्यपास्तम् । लोके नरीत्यन्तोदात्तस्यैवेष्टत्वात् । न च योगविभागसामर्थ्येन विकल्पे लब्धेऽन्यतरस्याङ्ग्रहणेन व्यवस्थितविभाषात्वबोधनादिष्टसिद्धिरिति वाच्यं, झलीत्यस्याऽसम्बन्धे योगविभागस्य शसि नित्योदात्तत्वविधायकत्वाऽऽशङ्कावारणार्थत्वेनाऽन्यतरस्याङ्ग्रहणस्य चरितार्थत्वात् । भाष्याऽनुक्तव्यवस्थितविभाषाया अप्रामाणिकत्वाच्च।तित्स्वरितम्।'कर्षाऽऽत्वतः'इत्यतोऽन्त इति वर्त्तते,तित्प्रत्ययस्याऽन्तः स्वरितः स्यादित्यर्थः । क्व नूनं । तिरिंक ?। कर्त्तव्यम् । अन्तः किं ?। तव्यतः पर्यायेणाऽऽद्यन्तौ स्वरितौ मा भूताम् । ऋत उत् ,उदोष्ठ्यपूर्व,दिव उत् ,इदुद्भ्याम् , औदित्यादौ तिति प्रत्ययग्रहणेन न दोषः।तास्यनुदात्तेत्।तास्यादीनां समाहारद्वन्द्वः । अत्रोपदेशग्रहणं सम्भवव्यभिचाराभ्यां ङिद्भ्यामेव सम्बध्यते, न तु तास्यनुदात्तेद्भ्याम् । उपदिश्यत इत्युपदेशः। ङिदिति कर्मधारयः।इत्सञ्ज्ञकङकारेण, अकारेण चोपदिश्यमानस्य विशेषणात्तदन्तविधिः।तेन ङिदन्ताऽकारान्तोपदिश्यमाना-

ङ्विङोः ।६।१।१८६। अस्मात्परं लसार्वधातुकमनुदात्तं स्यात् । तासि-कर्ता । कर्तारौ । कर्तारः । प्रत्ययस्वरापवादोऽयम् । अनुदात्तेत्-य आस्ते । ङितः । अभिचष्टे अनृतेभिः । अदुपदेशात्-पुरुभुजा चनस्यतम् । चित्स्वरोऽप्यनेन बाध्यते । वर्धमानं स्वे दमे । तास्यादिभ्यः किम् ? अभि वृधे गृणीतः । उपदेशग्रहणान्नेह-हतो वृत्राण्यार्या । लग्रहणं किम् ? । कतीह पचमानाः । कतीह निघ्नानाः । सार्वधातुकं किम् ? । शिश्ये ।

सु.]वर्जयित्वा'।कर्त्तेत्यादि। लुटः प्रथमपुरुषस्य डारौरसः। एकवचने डित्वाट्टिलोपः।इतरत्र रि चे'ति सलोपः। आस्ते इति।अत्राऽदादित्वाच्छपो लुक् । ङित इति।अस्याप्युपदेशविशेषणान्नेह-श्रृणुतं जरितुर्हवम्। अत्र श्रुरतिदेशेन ङित् । चनस्यतमिति। चनोऽन्नं।तदात्मन इच्छतमित्यर्थः। क्यच् । लोट् । थसस्तं। शप् । स चानुबन्धस्यानेकान्तत्वाददुपदेशः। चित्स्वरोऽपीति । चित्स्वरस्यावकाशः-चलनः । 'चलनशब्दार्थादकर्मकाद्युच्' । अस्यावकाशः-आस्ते इत्यादौ । 'वर्द्धमान'मित्यत्र त्वयं निघातश्चित्स्वरं बाधते, परत्वादिति भावः । वर्द्धमानमिति । वृधु वृद्धौ। लटः शानच् । शप्, 'आने मु'गिति मुक्।न चाऽत्र मुका व्यवधानम्। यद्यकारस्यागमो मुक्तदाऽकारोपदेशात्परं लसार्वधातुकमिति सिद्धो निघातः। स्वावयवेन व्यवधानाऽभावात्। यद्यकारान्तस्याङ्गस्य भक्तो मुक्तदाऽदुपदेशलसार्वधातुकमात्रापेक्षत्वादन्तरङ्गस्वरं प्रत्ययकारान्तविशिष्टाऽङ्गप्रत्ययापेक्षस्य बहिरङ्गस्य मुकोऽसिद्धत्वात्सिद्धो निघातः । हत इति। 'अनुदात्तोपदेशे'त्यनुनासिकलोपे कृते सत्यकारान्तात्परं लसार्वधातुकं भवति, तथाप्युपदेशग्रहणान्न भवति। न हि हन्तिरदन्त उपदिश्यते। कतीह पचमाना इति।'ताच्छील्यवयोवचनशक्तिषु चानश्'।क्वचित्तु'कतीह निघ्नाना'इति दृश्यते तत्र निघ्नशब्दादाचारक्विबन्ताच्छान्दसो मुगागमाऽभावः।तत्तु तास्यादिभ्यः परत्वाऽभावाच्चिन्त्यं।शिश्य इति।'एरनेकाचः' इति यणादेशः।'लिट् चे'त्यार्द्धधातुकमेतत्।

शे.]दित्यर्थः।अदुपदेशादित्यस्य यथाश्रुतत्वे हि हतो हथ इत्यत्रापि स्यात्। कर्त्तेति। लुट् । आत्मनेपदप्रथमस्य डारौरसः, तासिः । एकवचने उदात्तनिवृत्तिस्वरेऽपि इतरयोः फले विशेषः । ङित इति । अस्याप्युपदेशविशेषणत्वान्नेह-श्रृणुतं जरितुर्हवम् । अत्र श्रुरतिदेशेन ङित् । नन्वनुबन्धानामनेकान्तत्वात्कथं चक्षिङोऽपि ङिदन्तत्वमिति चेन्न, अनुबन्धेष्वेकान्तपक्षस्यैव न्याय्यत्वात् । किंच विशेषणसामर्थ्याद्भविष्यति।चनस्यतमिति।चनोऽन्नं,तदात्मन इच्छतमित्यर्थे क्यच् । लोट्, थसस्तम्। शप् । स च पित्त्वशित्ववैशिष्ट्येनाऽकारोपदेश एव तात्पर्यादकारान्तोपदिश्यमानो भवत्येव।चित्स्वरोऽपीति । परत्वादिति भावः । वर्द्धमानमिति । मुक्तु अकारभक्तत्वात् 'यदागमाः' इति न्यायेन न तस्य व्यवधायक इति न दोषः। न च वर्णग्रहणे तदप्रवृत्तिः,'अकारान्तोपदिश्यमाना'दित्यर्थेनेह वर्णग्रहणाऽभावात् । 'वक्ष्यमाणः' इत्यादावपि अवयवावयवस्य समुदायाऽवयवत्वान्न मुक् स्यस्यं व्यवधायक इति बोध्यम्।ननु पच् झि इति स्थिते आयन्नादिवूपदेशिवद्भावादन्तौ, शपि, लसार्वधातुकानुदात्तत्वं बाधित्वा नित्यत्वादन्तरङ्गत्वाद्वा'अतो गुणे'इति कृते व्यपवर्गाऽभावादेतत्स्वराऽप्राप्तिः। अन्तवद्भावस्तूभयत आश्रयणे निषिद्धः। तत्प्रवृत्तावपि व्यपवर्गस्य तेनाऽनतिदेशाच्च, पचत इत्यादौ सावकाशत्वाद्भूतपूर्वगतिर्न युज्यते इति चेन्न, इष्टापत्तेः 'पचन्ति ते वृषभा'नित्यादावाद्युदात्तत्वन्तु छान्दसत्वादित्याहुः । 'स्वरभिन्नस्य प्राप्त्या न नित्यत्वम्, उभयोरपि पूर्वपरोभयापेक्षत्वेन नाऽन्तरङ्गत्वं, पञ्चमीसमासे 'अचः परस्मि'न्निति स्थानिवद्भावेन व्यपवर्गस्य सुलभत्वाच्चे'त्यन्ये । 'पचावः' इत्यादौ दीर्घे कृतेऽपि उपदेशग्रहणादिदं प्रवर्तते । 'पचे'दित्यादावपि शपः-परस्य यासुड्व्यवहितस्य सार्वधातुकस्याऽनुदात्तत्वं भवत्येव। यासुट उदात्तत्वन्तु आशीर्लिङि चिनुयादित्यादौ च सावकाशम्। अदुपदेशादिति तपरकरणात् 'क्रीणातो'त्यादौ लसार्वधातुकानुदात्तत्वं न । 'प्रत्ययाऽप्रत्यययो'रिति परिभाषया नेह-जहि शत्रुमन्तिके । एतत्परिभाषाप्रवृत्तये एवाऽकारान्तोपदिश्यमानादिति व्याख्यातम् , अन्यथा वर्णग्रहणे सा न प्रवर्तेत, छन्दसो वा व्यत्ययस्तत्र । नन्वास्ते इत्यादौ लुप्तं शपं गृहीत्वाऽदुपदेशादिति लसार्वधातुकानुदात्तत्वं सिद्धमिति व्यर्थमनुदात्तेन्ङिद्ग्रहणमिति चेन्न, लुप्तं विकरणमादायाऽस्याऽप्रवृत्तिज्ञापनार्थनत्तत्स्त्वात्। तेन 'अत्तः' इत्यादि अन्तोदात्तं सिद्धम् । प्रसङ्गात्किंचिदुच्यते-'रुणद्धी'त्यादौ श्नमि कृते तन्मध्यपतितन्यायेन विशिष्टस्य धातुत्वाद्धातुस्वरेणाऽन्तोदात्तत्वमिति 'येन विधि'रिति सूत्रे भाष्ये स्पष्टम्।श्नमो मित्त्वेन परश्चेति परत्वस्य तत्राऽप्रवृत्तौ तत्सन्नियोगशिष्टाद्युदात्तत्वस्यापि तत्राऽप्रवृत्तिरिति शेषनिघातेन तस्याऽनुदात्तत्वे प्राप्ते सतिशिष्टो धातुस्वरस्तत्रेष्टव्य इति तदाशयः । न चैवं 'रुन्द्धः' इत्यत्र पूर्वोक्तरीत्या श्नम उदात्तत्वे वर्ज्यमानस्वरेण तसोऽनुदात्तत्वं स्यादिति वाच्यं, 'सतिशिष्टोऽपि विकरणस्वरः सार्वधातुकस्वरं न बाधते' इत्युक्तेरदोषात् । हत इति । 'अनुदात्तोपदेशे'ति नलोपे कृते हन्तिरदन्तो, न तूपदेशे । निघ्नाना इति । निघ्नशब्दान्नामधातोश्चानश् , मुगभावश्छान्दसत्वात् । एतेन तास्यादिभ्यः परत्वाऽभावादिदं चिन्त्यमित्यपास्तम् । 'दीव्यमान' इत्यपि प्रत्युदाहरणम् । न च सतिशिष्टश्यन्स्वरेण चानश्स्वरस्य बाधापत्तिः, विकरणस्वरो लसार्वधातुकस्वरमेव न बाधते, इतरसार्वधातुकस्वरन्तु बाधेतैवेति वाच्यम्, 'आत्ममाने खश्चे'ति सूत्रे सार्वधातुकस्वरमात्राऽबाधकत्वस्यैव भाष्ये

अह्निङोः किम्? हुते। यदधीते। *विन्दीन्धिखिदिभ्यो नेति वक्तव्यम्। इन्धे राजा। एतच्च 'अनुदात्तस्य च यत्रे'ति सूत्रे भाष्ये स्थितम्। आदिः सिचोऽन्यतरस्याम् ।६।१।१८७। सिजन्तस्याऽऽदिरुदात्तो वा। यासिष्टं वर्तिश्विनौ। [यासिष्टम्]। थलि च सेटीडन्तो वा।६।१।१९६। सेटि थलन्ते पदे इडुदात्तः [स्यात्] अन्तो वा आदिर्वा स्यात्। यदा नैते त्रयस्तदा 'लिती'ति प्रत्ययात्पूर्वमुदात्तं स्यात्। लुलविथ। [लुलविथ। लुलविथ। लुलविथ]। अत्र चत्वारोऽपि पर्यायेणोदात्ताः। उपोत्तमं रिति ।६।१।१९७। रित्प्रत्ययान्तस्य उपोत्तममुदात्तं स्यात्। यदाहवनीये। इति प्रत्ययस्वराः।

## अथ समासस्वराः।

समासस्य ।६।१।२२३। अन्त उदात्तः। यज्ञश्रियम्। बहुव्रीहौ प्रकृत्या पूर्वपदम् ।६।२।१।

सु.] यदधीत इति। यच्छब्दप्रयोगो 'निपातैर्यद्यदिहन्ते'ति निघातप्रतिषेधार्थः। अत्र प्रत्ययाद्युदात्तत्वमेव। विद विचारणे, ञिइन्धी दीप्तौ, खिद दैन्ये इति त्रयोऽनुदात्तेतः। तेभ्यः परस्य सार्वधातुकस्याऽनुदात्तत्वे प्राप्ते आह—विन्दीत्यादि। एभ्यः परस्य लसार्वधातुकस्यानुदात्तत्वं नेति वक्तव्यमित्यर्थः। यासिष्टमिति। या प्रापणे। लुङ्। थसस्तम्। 'च्लि लुङि'। 'च्लेः सिच्'। 'यमरमनमाता'मितीडकौ। 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः। इदमाद्युदात्तत्वाऽभावे उदाहरणम्। आद्युदात्तत्वे तूदाहरणान्तरं मृग्यम्। थलि। 'णमुल्यन्यतरस्या'मित्यतोऽन्यतरस्यामित्यनुवर्तमाने वाग्रहणं कार्यिविकल्पार्थम्। अन्यतरस्याङ्ग्रहणेन कार्यविकल्पस्य सिद्धत्वात्। तेनेडादयः पर्यायेण कार्यं प्रतिपद्यन्ते। ननु 'तवै चान्तश्च युगप'दित्यादौ युगपद्ग्रहणादेवाऽन्यत्र पर्यायः सिद्धः। सत्यम्। आदेरपि प्राप्त्यर्थं वाग्रहणम्, अन्यथा श्रुतयोरिडन्तयोरेव कार्यित्वं विकल्प्येत। सेटीति किम्? पपाथ। लित्स्वरः। नन्विड्ग्रहणात्सेडेव थलग्रहीष्यत इति चेत्सत्यम्। इड्ग्रहणं तु यदेडागमः क्रियते तदा तस्योदात्तार्थं स्यात्। यथा 'कर्तुः क्यङ् सलोपश्चे'त्यत्र सः। ततश्च यथा लुलविथेत्यादौ चतुर्णां पर्यायेणोदात्तविधाने 'ययिथे'त्यादौ चतुर्थाऽभावेपि पर्यायेणोदात्तत्रयं भवति, एवमिडभावेऽपि स्यादित्यर्थः। आहवनीय इति। बाहुलकादधिकरणेऽनीयर्, प्रीणनार्थात्कर्मणि वा। ततो गतिसमासे कृदुत्तरपदप्रकृतिस्वरः। इति प्रत्ययस्वराः।
इति श्रीमन्मौनिकुलतिलकायमानेत्यादि० प्रत्ययस्वरप्रकरणम्।

समासस्य। यज्ञश्रियमिति। षष्ठीतत्पुरुषः। श्रीशब्दस्यैकारस्योदात्तत्वे कृते आन्तरतम्यादियडुदात्तः। बहुव्रीहौ। इहोदात्तस्वरितग्रहणमनुवर्तमानं तद्वति वर्तते, पूर्वपदसामानाधिकरण्यात्। सूत्रे प्रकृत्येत्येतावदुक्तेऽपि स्वरप्रकरणात्प्रकृतिस्वरेणैव प्रकृतिभावो विज्ञायते। पूर्वपदस्य प्रकृतिभावस्तत्स्थयोरुदात्तस्वरितयोः प्रकृतिभावद्वारेणेत्याशयेनाह—

शे.] व्यवस्थापितत्वादिति दिक्। विन्दीन्धि। एभ्यो लिङस्तङोऽनुदात्तत्वे प्रतिषिद्धे इन्धीतेत्यादौ प्रत्ययाद्युदात्तत्वेन व्यवस्था। ननु 'तास्यनुदात्ते'दिति सूत्र भाष्ये विदीन्धिखिदिभ्यः परस्यानुदात्तत्वं भवतीत्यर्थो लभ्यते, तत्कथं निषेध आरभ्यत इत्यत आह- एतच्चेति। एवञ्च तद्भाष्यविरोधात्प्रकृतसूत्रस्थं भाष्यं प्रौढिवाद इति भावः। आदिः सिचो। प्रत्ययस्वरापवादोऽयम्। परत्वात् 'चितः' इत्येतं बाधते। यासिष्टमिति। पक्षे 'चितः' इति मध्योदात्तम्। एवं 'मा हि कार्ष्टं'मित्यादावेतदभावे प्रत्ययस्वरेणाऽन्तोदात्तत्वं, सिचश्चित्त्वेन 'अनुदात्तं पद'मिति परिभाषालब्धागमाऽनुदात्तत्वबाधेऽपि सार्वधातुकप्रत्ययाद्युदात्तत्वस्य बाधे मानाऽभावात्, विकरणस्वरस्य सार्वधातुकस्वराऽबाधकत्वाच्चेत्याहुः। 'अनिटः सिचः परस्य पित उपसङ्ख्यानं'। माहि कार्षम्। [माहिकार्षम्]। पक्षे आद्युदात्तं, पक्षेऽन्तोदात्तम्। न च 'मा हि कार्ष'दित्यत्रापि ईटः पिद्वत्कस्याऽयं स्वरः प्राप्नोति। ईटः पूर्वमन्तरङ्गत्वात्स्वरे कृते तत ईटि 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनरप्रवृत्तेः। अत एवात्र भाष्ये 'मा हि कार्ष'मित्येवोदाहृतम्। 'भाष्योदाहरणस्योपलक्षणत्वाल्लक्ष्यभेदेन न्यायाऽप्रवृत्तेश्च शेषनिघातविषयाऽभावाच्च भवत्येव तत्रापि स्वर' इत्यन्ये। थलि च सेटीड। अत्र 'अचइति वर्तते' इति भाष्ये स्पष्टम्। अजन्तेभ्यो विहितो यस्थल् सेट् तदन्ते पदे इट् अन्त [आदिश्च] उदात्ता वा स्युरित्यर्थः। पक्षे लित्स्वरः। 'आदिर्णमुली'त्यतोऽन्यतरस्यामित्यनुवर्तमाने वाग्रहणं कार्यिविकल्पार्थं सत्—आदेरपि कार्यं प्रापयतीत्याह—आदिर्वेति। अन्यतरस्यामित्यनुवृत्तेः फलमाह—यदेति। पर्यायेणेति। न तु युगपत्। 'अन्तश्च तवै' इत्यादौ युगपद्ग्रहणाल्लिङ्गात्। थलि किं?। लुलविव। सेटीति किं?। पपाथ। इड्ग्रहणन्तु यदेडागमस्तदा तस्योदात्तार्थं स्यात्। ततश्च यथा 'लुलविथे'त्यादौ चतुर्णां, 'पपिथ' इत्यादौ त्रयाणामेवमिडभावेऽपि स्यात्, सेड्ग्रहणात्तु सेट्येव भवति। एवञ्च 'पपाथे'त्यत्र लित्स्वर एव। अजन्तेभ्यः किं?। बिभेदिथ। 'पपिथे'त्यादौ परत्वादातो लोपेऽजन्तात्परो नास्तीति विहित इत्युक्तम्। उपोत्तमं रिति। प्रत्ययस्वरापवादोऽयम्। आहवनीये बाहुलकादधिकरणेऽनीयः, प्रीणनार्थात्कर्मणि वा। ततो गतिसमासे कृदुत्तरपदप्रकृतिस्वरः। इतिप्रत्ययस्वराः।

अथ समासस्वराः। समासस्य। यज्ञश्रियमिति। षष्ठीतत्पुरुषः, श्रीशब्दैकारस्योदात्तत्वे आन्तर-

उदात्तस्वरितयोगि पूर्वपदं प्रकृत्या स्यात् । सत्यश्चित्रश्रवस्तमः । उदात्तेत्यादि किम् ? । सर्वानुदात्ते पूर्वपदे समासाऽन्तोदात्तत्वमेव यथा स्यात् । समपादः । **तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाऽव्ययद्वितीया-कृत्याः** ।६।२।२। सप्तैते पूर्वपदभूतास्तत्पुरुषे प्रकृत्या । तुल्यश्वेतः । सदृशश्वेतः । सदृक्श्वेतः । 'कृत्यतुल्याख्या अजात्ये'ति तत्पुरुषः । किरिणा काणः किरिकाणः । पतयन्मन्दयत्सखम् । मन्दयति=मादके इन्द्रे सखेति सप्तमीतत्पुरुषः । शस्त्रीश्यामा । * **अव्यये नञ्कुनिपातानाम्** । अयज्ञो वा एषः । परिगणनं किम् ? । स्नात्वाकालकः । मुहूर्तसुखम् । भोज्योष्णम् । **वर्णो वर्णेष्वनेते** ।६।२।३। वर्णवाचिन्युत्तरपदे एतवर्जिते वर्ण-

---

सु.]उदात्तस्वरितयोगीति । **चित्रेति**। श्रूयते इति श्रवः=कीर्तिः । चित्रं श्रवो यस्य स चित्रश्रवाः । ततस्तमप् । चित्रशब्दः फिट्स्वरेणाऽन्तोदात्तः । ततः परस्य 'उदात्तादनुदात्तस्ये'ति स्वरितः । ततः परस्य 'स्वरितात्संहितायामनुदात्ताना'मिति प्रचयः । **समपाद इति** । 'त्वत्वसमसिमेत्यनुच्चानी'ति सर्वानुदात्तः समशब्दः। पादशब्दो 'वृषादीनां चे'-त्याद्युदात्तः । अत्र समासान्तोदात्तत्वमेव । **तुल्यश्वेत इति** । 'नौवयोधर्मे'ति यति 'यतोऽनावः' इत्याद्युदात्तस्तुल्य-शब्दः । **सदृक्श्वेतः सदृशश्वेत इति** । 'समानान्ययोश्चे'ति क्विन्नन्तः सदृक्शब्दः 'गतिकारकोपपदात्कृ'दिति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः। एवं सदृशशब्दः कञन्तो मध्योदात्तः । **किरिणेति** । 'कॄगॄशॄपॄकुटिभिदिच्छिदिभ्यश्चे'-त्यौणादिक इः । स च कित्, 'भुजेः किच्चे'त्यतः किदित्यनुवर्तनात् । तेन 'किरिगिरि'शब्दौ प्रत्ययस्वरेणाऽन्तोदात्तौ । **मन्दयत्सखमिति** । मदि स्तुत्यादिषु । ण्यन्ताल्लटः शत्रादेशः । तस्य 'छन्दस्युभयथे'त्यार्द्धधातुकत्वेन शबभावात्—'तास्यनुदात्तेन्ङिददुपदेशा'दिति निघातो न, अतः प्रत्ययाद्युदात्तत्वमेव । 'णेरनिटी'ति णिलोपस्तु न, तं प्रति सार्व-धातुकत्वाश्रयणात् । न च वैपरीत्यमापादनीयं, छन्दसि दृष्टानुविधानात् । इत्थं मन्दयच्छब्दोऽन्तोदात्तः । **शस्त्रीश्यामेति** । 'उपमानानि सामान्यवचनै'रिति समासः । शस्त्रीशब्दो गौरादिङीषन्तोऽन्तोदात्तः । **अव्यये** । निपातत्वादेव सिद्धे नञ्ग्रहणमकरणिरित्यादौ परस्याऽपि कृत्स्वरस्य बाधनार्थम् । अकरणिरित्यादौ 'आक्रोशे नञ्यनिः' इत्यनिः । किंच 'तिस्रः' इत्यत्र 'तिसृभ्यो जसः' इति सतिशिष्टोऽपि विभक्तिस्वरो नञ्स्वरेण बाध्यते । अपि वा—चत्वारः अनड्वाह इत्यत्र सतिशिष्टोऽप्यामुस्वरो बाध्यते । अव्यथीत्यत्र 'जिदृक्षी'त्यादिना धातुना समासं निपात्य इनिः क्रियते, तस्यापि स्वरस्य बाधनार्थं कुग्रहणं, चादिषु पाठाऽभावात् । **स्नात्वेति** । मयूरव्यंसकादिरयम् । नन्वयं तत्रैवाऽन्तोदात्तो निपात्यतामिति

---

शे.]तम्यादियङ्प्युदात्तः।हल्स्वरप्राप्तौ व्यञ्जनस्याऽविद्यमानवद्भावात् 'राजदृष'दित्यादौ षकाराऽकार उदात्तः।पर्यायेण नाना-पदानां स्वरे प्राप्तेऽयमारम्भः । **उदात्तस्वरितयोगीति** । उदात्तस्वरितग्रहणमनुवर्त्तमानं तद्वति वर्त्तते, पूर्वपदसामाना-धिकरण्यात् । एवञ्च पूर्वपदस्य प्रकृतिभावस्तत्स्थयोरुदात्तस्वरितयोः प्रकृतिभावद्वारेणेति भावः । यद्वा पूर्वपदस्थेऽपि पूर्व-पदशब्दो वर्त्तते । इदं 'कुगती'त्यत्र कैयटे स्पष्टम् । **चित्रश्रव इति** । श्रूयत इति श्रवः—कीर्तिः । चित्रं श्रवो यस्येति चित्रश्रवाः। ततस्तमप् । बहुव्रीहाविति किं ?। राजपुरुषः । पूर्वसूत्रन्तु 'समपादः' इत्यत्र उदात्तस्वरिताऽयुक्त-पूर्वपदके सावकाशम् । **समपाद इति** । समशब्दः 'त्वत्वसमसिमेत्यनुच्चानी' त्यनुदात्तः । हरदत्तस्तु 'सूञो डम'-बित्याह । पादशब्दो वृषादित्वादाद्युदात्तः । नन्वत्राऽस्मिन्स्वरे सत्यपि समासान्तोदात्तत्वं भविष्यति, 'प्रियविश्व'इत्यादौ तु न, एकपदे द्वयोरुदात्तयोरसमावेशस्योक्तत्वेनाऽसम्भवादिति चेन्न, 'सत्यपि सम्भवे बाधनं भवती'त्यङ्गीकारादद्दोषः । अन्यथोदात्तस्वरितयोः समावेशाऽभावे ज्ञापकाऽभावान्मनुष्यनाथ इत्यत्रोभयोः समावेशः स्यादित्याहुः । **तत्पुरुषे । तुल्यश्वेत इति** । तुल्यशब्दो यदन्त आद्युदात्तः । **मन्दयत्सखमिति** । मन्देर्ण्यन्ताल्लः । शत्रादेशः । तस्य छान्द-सत्वादार्द्धधातुकत्वेन शबभावाददुपदेशादिति निघाताऽभावे प्रत्ययाद्युदात्तत्वमेव । णिलोपस्तु न, तं प्रति सार्वधातुकत्वा-श्रयणात् । छन्दसि दृष्टानुविधानान्न वैपरीत्यं शङ्क्यम् । इत्थं मन्दयच्छब्दोऽन्तोदात्तः । ततस्तत्पुरुषे टच्यपि छान्दसत्वा-देवाऽत्र चित्स्वराऽभावः । ननु 'परमं कारकं पश्य' 'परमेण कारकेण' 'परमे कारके' इत्यर्थे समासेऽतिप्रसङ्गः, द्वितीया-तृतीयासप्तम्यन्तपूर्वपदत्वात्, न हि विशेषणसमासः प्रथमान्तानामेवेति नियमोऽस्तीति चेन्न, लक्षणप्रतिपदोक्तपरिभाषया द्वितीयादिशब्दोच्चारणेन विहितसमासस्यैव ग्रहणात् । **शस्त्रीति** । गौरादिङीषन्तः । **अव्यये नञ्कु** । निपातत्वादेव सिद्धे नञ्ग्रहणम् 'अकरणि'रित्यादौ परस्यापि कृत्स्वरस्य बाधनार्थमित्याहुः।'अव्यथी'त्यत्र सतिशिष्टप्रत्ययस्वरबाधनार्थम्, अतिस्र इत्यत्र सतिशिष्टविभक्तिस्वरस्य, अचत्वार इत्यत्र सतिशिष्टाऽऽम्स्वरस्य च बाधनार्थमित्येके । भाष्ये त्वेतदर्थं वचनान्येवारब्धानि 'अनुदात्तं पद'मिति सूत्रे । कुग्रहणं चादिषु पाठाऽभावात् । केचित्तु चादिष्वेव कुः पाठ्यः, इह तु न पाठ्यः, एवञ्चाव्ययत्वमपि तस्य सिद्ध्यतीत्याहुः। **स्नात्वेति** । अत्र समासाऽन्तोदात्तत्वमेव । न च मयूरव्यंसकादिष्वेवा-स्याऽन्तोदात्तत्वं निपात्यतां किमनेनेति वाच्यं,सामिकृतं स्वयन्धौतमित्यादिवारणाय परिगणनस्यावश्यकत्वादिति कैयटादयः। भाष्यकृता त्वन्तोदात्तनिपातनमाश्रित्य परिगणनं प्रत्याख्यातम्। तस्यायं भावः—'सामिकृतं', 'स्वयन्धौत'मित्यादौ परिगणन-

वाचि पूर्वपदं प्रकृत्या तत्पुरुषे । कृष्णसारङ्गः । लोहितकल्माषः । कृष्णशब्दो नक्प्रत्ययान्तः । लोहितशब्द इतन्नन्तः । वर्णः किम् ? । परमकृष्णः । वर्णेषु किम् ? । कृष्णतिलाः । अनेते किम् ? । कृष्णैतः । **गाधलवणयोः प्रमाणे** ।६।२।४। एतयोरुत्तरपदयोः प्रमाणवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या स्यात् । अरित्रगाधमुदकम् । तत्प्रमाणमित्यर्थः। गोलवणम् । यावद्गवे दीयते तावदित्यर्थः। अरित्रशब्द इत्राऽन्तो मध्योदात्तः । प्रमाणमियत्तापरिच्छेदमात्रं, न पुनरायाम एव । प्रमाणे किम् ? । परमगाधम् । **दायाद्यं दायादे** ।६।२।५। तत्पुरुषे प्रकृत्या । धनदायादः । धनशब्दः क्युप्रत्ययान्तः प्रत्ययस्वरेणाद्युदात्तः । दायाद्यं किम् ? । परमदायादः । **प्रतिबन्धि चिरकृच्छ्रयोः** ।६।२।६। प्रतिबन्धिवाचि पूर्वपदं प्रकृत्या एतयोः परतस्तत्पुरुषे । गमनचिरम् । व्याहरणकृच्छ्रम्। गमनं कारणविकलतया चिरकालभावि कृच्छ्रयोगि वा प्रतिबन्धि जायते । प्रतिबन्धि किम् ?।

सु.]चेन्न, सामिकृतं स्वयंधौतमित्यादिवारणाय परिगणनस्यावश्यकत्वात्।अन्यथा तत्रापि पूर्वपदप्रकृतिस्वरः स्यात्। इष्यते तु समासस्यैवान्तोदात्तः । सामिकृतमित्यादौ 'सामि' 'स्वयं क्तेन' इति समासः । **मुहूर्तं सुखमिति** । 'कालाध्वनो'-रिति द्वितीया । 'अत्यन्तसंयोगे चे'ति समासः । मुहूर्तशब्दः पृषोदरादिरन्तोदात्तः । **भोज्योष्णमिति** । 'कृत्यतुल्याख्ये'ति समासः । भोज्यशब्दो ण्यदन्तः 'तित्स्वरित'मिति स्वरितान्तः । **वर्णो वर्णे** । अत्र 'एत' इति प्रतिषेधाद्बहुवचननिर्देशाच्च उत्तरपदे स्वरूपग्रहणं न, तत्साहचर्यात्पूर्वपदेऽपि स्वरूपग्रहणं। न तदाह–**वर्णवाचिनीत्यादि। कृष्णशब्दो नक्प्रत्ययान्त इति** । 'कृषेर्वर्णे' इति विहितो यो नक् तदन्त इत्यर्थः । कृष्णशब्दः 'कृष्णस्याऽमृगाख्या चे'दित्यन्तोदात्तो वेदे । भाषायां तु 'वर्णानां तणतिनितान्ताना'मित्याद्युदात्तः।[कृष्णैः]। **इतन्नन्त इति**। 'रुहे रश्च लो वा' इति इतन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः।**कृष्णतिला इति**। 'वर्णो वर्णेने'ति प्रतिपदोक्तः समास इह गृह्यते, तेनैव सिद्धे वर्णग्रहणं चिन्त्यप्रयोजनम् । **गाध । अरित्रगाधमिति । अरित्रं**=नौकाष्ठं, तस्य गाधं=स्पृश्यमानतलम् । गाध्यत इति गाधः । गाधृ प्रतिष्ठायाम् । कर्मणि घञ् । अर्द्धर्चादित्वात्क्लीबत्वम् । **गोलवणमिति** । षष्ठीसमासः । गोशब्दो 'गमेर्डो'रिति डोप्रत्ययान्तोऽन्तोदात्तः । **इत्रान्त इति** । 'अर्तिलूधूसूखनसहचर इत्रः' इति विहितः । **मध्योदात्त इति** । प्रत्ययस्वरेण । **इयत्तापरिच्छेदमात्रमिति** । इयत्तायाः परिच्छित्तिरियत्तापरिच्छेदः । क्रियाशब्दोऽत्र प्रमाणशब्दो गृह्यते, न पुनरायाममात्रे रूढ इत्यर्थः। **दायाद्यं** । दातव्यो दायोऽंशः । दायमादत्ते दायादः । मूलविभुजादित्वात्कः । दायादस्य भावो दायाद्यम्=दायस्य आदानं, तत्संबन्धो वा । इह तु लक्षणया आदीयमाने दाये एव दायाद्यशब्दो वर्तते । दायादशब्दे परे दायाद्यवाचि पूर्वपदं प्रकृतिस्वरं स्यात् । **क्युप्रत्ययान्त इति** । 'कृपृवृजिमन्दिनिधाञः क्युः' इति विहितः । **परमदायाद इति** । अत्र समासान्तोदात्तत्वमेव । **प्रतिबन्धि** । कार्यसिद्धिं प्रतिबध्नातीति प्रतिबन्धि । आवश्यके णिनिः । **गमनचिरं । व्याहरणकृच्छ्रमिति** । गमन–व्याहरणशब्दौ ल्युडन्तौ । तयोर्लित्स्वरः । अत्र विशेषणसमासः । ननु सामानाधिकरण्ये सति विशेषणसमासो भवति, न चेह तदस्ति, गमनशब्दस्य गतिवाचित्वाच्चिरशब्दस्य कालवाचित्वात् ?। नैष दोषः। चिरकालवाचिनि गमनेऽत्र चिरशब्दो वर्तते, गमनमत्र विशेष्यं, तद्विशेषणे तु चिरकृच्छ्रे । तत्र विशेष्यस्य पूर्वनिपातार्थं मयूरव्यंसकादित्वमप्येष्टव्यम् । पूर्वपदस्य प्रतिबन्धिवाचित्वमुपपादयति–**गमनमित्यादि**।कारणवैकल्यादि चिरकालभावि गमनं कार्यसिद्धेः प्रतिबन्धि जायते।**कृच्छ्रयोगि वा**।कृच्छ्रं

शे.]वादिनाऽपि दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वमिष्यत एवेति।**मुहूर्त्तं सुखमिति**।'कालाध्वनो'रिति द्वितीया।**काष्ठश्रितादौ** 'अहीने द्वितीये'ति भाव्यं, **'वनातीत'** इत्यादौ थाथादिस्वरः, **'ग्रामगमी'**त्यादौ णिनिस्वरः, **खट्वारूढे** 'प्रवृद्धादीनाञ्चे'ति, तस्मान्मुहूर्तसुखादीन्येवोदाहरणानीति भावः। **भोज्योष्णमिति** । 'कृत्यतुल्ये'ति समासः । कृत्यांशे लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्त्तते इति कश्चित्। **कृष्णसारङ्ग इति** । कृष्ण–लोहितौ 'वर्णानान्तणे'त्याद्युदात्तौ । वेदे तु 'कृष्णस्याऽमृगाख्या चे'दिति कृष्णोऽन्तोदात्तः। अत्र सूत्रे एवं वर्णग्रहणं व्यर्थम् , 'वर्णो वर्णेने'ति प्रतिपदोक्तसमासग्रहणादित्याहुः। **अरित्रगाधमिति** । अरित्रं–नौकाष्ठं, तस्य गाधं । तेन स्पृश्यमानतलमित्यर्थः। षष्ठीसमासा एते ।

**न पुनरायाम एवेति**।स च तिर्यगूर्द्ध्वोऽधरो वेत्यन्यत्।**दायाद्यम्**।दीयते स दायोंऽशः, तमादत्ते दायादः, तस्य भावो दायाद्यं=दायाऽऽदानं,तत्संबन्धो वा।प्रकृते तु लक्षणया दायाद्यशब्द आदीयमाने दाये एव वर्त्तते। यद्वा दायादमर्हतीत्यर्थे दण्डादित्वाद्यत् , स चोपस्थितत्वात्पूर्वपदार्थभूतो दाय एवेति बोध्यम्।'धनस्य दायादः' इति 'स्वामीश्वरे'ति संबन्धसामान्यषष्ठ्यन्तेन समासः । **परमदायाद इति** । अत्र समासान्तोदात्तत्वमेव । **गमनचिरमिति** । विशेषणसमासः, ल्युडन्तस्य भाववाचित्वात्। चिरकृच्छ्रयोः कालकष्टवाचित्वेऽपि प्रकृते चिरकालभाविनि, कृच्छ्रयोगिनि चार्थे चिरकृच्छ्रयोर्वर्त्तनात्सामानाधिकरण्यम् । एवञ्च चिरकृच्छ्रयोः पूर्वनिपातः प्राप्नोतीत्यतो मयूरव्यंसकादिसमासोऽत्रेत्याहुः। षष्ठीसमास इत्यन्ये । **प्रतिबन्धि जायत इति** । कार्यसिद्धेः प्रतिबन्धकं जायत इत्यर्थः । **प्रतिबन्धिशब्दे**–आवश्यके णिनिः ।

मूत्रकृच्छ्रम् । **पदेऽपदेशे** ।६।२।७। व्याजवाचिनि पदशब्दे उत्तरपदे पूर्वपदं प्रकृत्या तत्पुरुषे । मूत्रपदेन प्रस्थितः । उच्चारपदेन। मूत्रशब्दो घञन्तः। उच्चारशब्दो घञन्तः 'थाथा'दिस्वरेणान्तोदात्तः । अपदेशे किम् ?। विष्णुपदम् । **निवाते वातत्राणे** ।६।२।८। निवातशब्दे परे वातत्राणवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या । कुटीनिवातम् । कुड्यनिवातम् । कुटीशब्दो गौरादिङीषन्तः । कुड्यशब्दो ड्यगन्तः । यञन्त इत्यन्ये । वातत्राणे किम् ?। राजनिवाते वसति । निवातशब्दोऽयं रूढः पार्श्वे । **शारदेऽनार्तवे** ।६।२।९। ऋतौ भवमार्तवम् । तदन्यवाचिनि शारदशब्दे परे तत्पुरुषे पूर्वपदं प्रकृतिस्वरं स्यात् । रज्जुशारदमुदकम् । शारदशब्दो नूतनार्थः । तस्याऽस्वपदविग्रहः । रज्जोः सद्य उद्धृतम् । रज्जुशब्दः 'सृजेरसुम्चे'त्याद्युदात्तो व्युत्पादितः । अनार्तवे किम् ?। उत्तमशारदम्। **अध्वर्युकषाययोर्जातौ**।६।२।१०। एतयोः परतो जातिवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरम् । कठाध्वर्युः । दौवारिककषायम् । कठशब्दः पचाद्यजन्तः । तस्मात् 'वैशम्पायनान्तेवासिभ्यश्चे'ति णिनेः 'कठचरकाल्लु'गिति लुक् ।द्वारि नियुक्त इति ठक्यन्तोदात्तो दौवारिकशब्दः। जातौ किम् । परमाध्वर्युः । **सदृशप्रतिरूपयोः सादृश्ये** ।६।२।११। अनयोः पूर्वं प्रकृत्या । पितृसदृशः । [ मातृसदृशः ] । सादृश्ये किम् ?।

सु.]=दुःखं तद्योगि वा कार्यसिद्धेः प्रतिबन्धि जायते।**मूत्रकृच्छ्रमिति**। षष्ठीसमासः। **पदेऽपदेशे**। अपदेशो-व्याजः, 'व्याजोऽपदेशो लक्ष्यं चे'त्यमरात्तदाह-**व्याजवाचिनीति** । **उच्चारपदेनेति** । **उच्चारः**-पुरीषक्रिया । **विष्णुपदमिति** । षष्ठीसमासः । **निवाते** । **निवातशब्दे परे वातत्राणवाचिनीति** । वातत्राणाऽर्थे निवातशब्दे परे इत्यर्थः । वातस्याऽभावो निवातमित्यव्ययीभावः । निरुद्धो वातोऽस्मिन्निति बहुव्रीहिर्वा । तत्र कुड्यादयो वर्तमानाः समानाधिकरणा निवातशब्देन समस्यन्ते । कुटी एव निवातं कुटीनिवातम्। [कुटीशब्दोऽन्तोदात्तः]।कुड्य एव निवातं कुड्यनिवातम्।**ड्यगन्त इति**।कवतेर्ड्यक्।डकारस्येत्संज्ञा न भवति, गुणप्रतिषेधार्थात्ककारानुबन्धात्।**यञन्त इत्यन्ये इति**। ते तु 'कवतेर्य'ञिति सूत्रमधीयते । **शारदे** । **नूतनार्थ इति** । अभ्युत्पन्न इत्यर्थः । **रज्जोः सद्य उद्धृतमिति** । रज्जुबद्धपात्रोद्धृते रज्जुशब्दः । इदानीमेव कूपादुद्धृतं । नूतनं जलमित्यर्थः । **सृजेरसुम्चेति** । 'स्कन्देः सलोपश्चे'त्यतः सलोप इति वर्तते, 'मृमृशी'त्यित उरिति, 'धान्ये नि'दित्यतो निदिति । सृजेरुः स्यात्स च नित्, धातोरसुगागमः, सलोपश्चेत्यर्थः । तत्र सृजेरन्त्यादचः परेऽसुमि सलोपे यणादेशेऽसुम्सकारस्य जश्त्वे च रज्जुरिति भवति । **आद्युदात्त इति**। प्रत्ययस्य नित्त्वान्नित्स्वरेण। **उत्तमशारदमिति**। शरदि ऋतौ भवं शारदम् । **अध्वर्यु। कठाध्वर्युरिति** । अध्वरं यज्ञं यातीत्यध्वर्युः=ऋत्विग्विशेषः । कठेन प्रोक्तं छन्दोऽधीते कठः । कठशब्दादण्णन्ताण्णिनिप्रत्ययः। तस्य लुक् । अध्येत्रणस्तु 'प्रोक्ताल्लु'गिति लुक् । विशेषणसमासोऽयम् । **दौवारिककषायमिति** । षष्ठीसमासः । **सदृश** । सादृश्यवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या एतयोरुत्तरपदयोः । **पितृसदृश इति** । पितृमातृशब्दावुणादितृजन्तौ चित्स्वरेणाऽन्तोदात्तौ । नन्वत्र 'पूर्वसदृशसमोनार्थे'ति तृतीयासमासे कृते 'तत्पुरुषे तुल्यार्थे'त्येव सिद्धम् । न च तुल्यार्थयोगे षष्ठ्या अपि विहितत्वेन षष्ठीसमासार्थमिति वाच्यं, तत्राऽनभिधानात्षष्ठीसमासो नेत्यपि सुवचत्वादिति चेन्मैवम् । अलुक्समासानुरोधेन षष्ठीसमासस्वीकारस्यावश्यकत्वात् । तद्यथा दास्याःसदृशो वृषल्याःसदृश इति । 'षष्ठ्या आक्रोशे' इत्यलुक् । दासीशब्दो 'दंसेष्टो न आ चे'ति दंसेष्टः प्रत्ययः, नकारस्य चाऽऽकारः । प्रत्ययस्वरेण दासशब्द उदात्तः।टित्त्वान्ङीप्।'यस्ये'ति लोपः।'अनुदात्तस्य च यत्रोदात्तलोप'इति ङीप उदात्तत्वम्। वृषलशब्दाज्जातिलक्षणो ङीप् ।

शे.]**मूत्रकृच्छ्रमिति**।षष्ठीसमासोऽयम्। **मूत्रपदेनेति** । मूत्रमिषेणेत्यर्थः । उच्चारः-पुरीषक्रिया । **घञन्त इति** । **मूत्र**शब्दः 'सिविमुच्योष्टेरू चे'ति ष्ट्रन्प्रत्ययान्त इत्यन्ये । **वातत्राणे इति** । वातत्राणार्थे तत्पुरुष इत्यर्थः। **निवाते इति** । वाताऽभावो निवातं, निरुद्धो वातो यस्मिन्निति वा । **कुटीनिवातमिति** । आद्ये कुड्यादिहेतुकेऽर्थे वर्तमानाः कुड्यादयो निवातशब्देन समानाधिकरणाः, अन्त्ये तु स्पष्टमेव तत् । **राजनिवाते इति** । राजपार्श्वे इत्यर्थः । षष्ठीसमासोऽयम् । **रज्जुशारदमिति** । कर्मधारयः । रज्जुशब्दो रज्जुबद्धपात्रोद्धृते वर्तते । इदानीमेव कूपादुद्धृतम् । नवजलमित्यर्थः । **आद्युदात्त इति** । 'सृजेरसुम् सलोपश्चे'त्यत्र 'उर्नि'दित्यधिकारात् । **उत्तमशारदमिति** । शरदि भवमित्यर्थः। **कठाध्वर्युरिति** । कर्मधारयोऽयञ्चरणविशेषे रूढः।**दौवारिककषायमिति**। रूढिशब्दोऽयम् । कषायोऽर्द्धचादिः । **सादृश्ये इति** । सादृश्यवाचिनि तत्पुरुषे इत्यर्थः । पितृशब्दोऽन्तोदात्तः, तृजन्तत्वात् । तृतीयासमासे 'तत्पुरुषे तुल्यार्थे'त्यनेनैव सिद्धे इदं 'दास्याःसदृश' इत्यलुक्समासार्थम् । 'पितृसदृश' इत्यादौ षष्ठीसमासस्तु अनभिधानान्नेत्यपि वक्तुं शक्यम् । एवञ्च दासीशब्दस्याऽन्तोदात्ततया 'उदात्तयणः'इति विभक्तिरुदात्तेत्यादि 'पूर्वसदृशे'त्यत्र निरूपितम् । **न सादृश्यमिति** । यत्र हि प्रतियोगिविशेषसमर्पणार्थं पूर्वं पदं तत्रैवेदमिति

परमसदृशः । समासार्थोऽत्र पूज्यमानता, न सादृश्यम् । **द्विगौ प्रमाणे** ।६।२।१२। द्विगावुत्तरपदे प्रमाणवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरम् । प्राच्यसप्तसमः । सप्त समाः प्रमाणमस्य। 'प्रमाणे लो द्विगोर्नित्य'मिति मात्रचो लुक् । प्राच्यशब्द आद्युदात्तः । प्राच्यश्चासौ सप्तसमश्च प्राच्यसप्तसमः । द्विगौ किम् ? । व्रीहिप्रस्थः । प्रमाणे किम् ? । परमसप्तसमः । **गन्तव्यपण्यं वाणिजे** ।६।२।१३। वाणिजशब्दे परे तत्पुरुषे गन्तव्यवाचि, पण्यवाचि च पूर्वपदं प्रकृतिस्वरम् । मद्रवाणिजः । गोवाणिजः । सप्तमीसमासः । मद्रशब्दो रक्प्रत्ययान्तः । गन्तेति किम् ? । परमवाणिजः । **मात्रोपज्ञोपक्रमच्छाये नपुंसके** ।६।२।१४। मात्रादिषु परतो नपुंसकवाचिनि तत्पुरुषे तथा । भिक्षायास्तुल्यप्रमाणं भिक्षामात्रम् । भिक्षाशब्दो 'गुरोश्च हलः' इत्यप्रत्ययान्तः । पाणिन्युपज्ञम् । पाणिनिशब्द आद्युदात्तः । नन्दोपक्रमम् । नन्दशब्दः पचाद्यजन्तः । इषुच्छायम् । इषुशब्द आद्युदात्तो, नित्वात् । नपुंसके किम् ? । कुड्यच्छाया । **सुखप्रिययोर्हिते** ।६।२।१५। एतयोः परयोर्हितवाचिनि तत्पुरुषे तथा । गमनप्रियम् । गमनसुखम् । गमनशब्दो लित्स्वरः। हिते किम् ?। परमसुखम् । **प्रीतौ च** ।६।२।१६। प्रीतौ गम्यायां प्रागुक्तम् । ब्राह्मणसुखं पायसम् । छात्रप्रियोऽनध्यायः । ब्राह्मणच्छात्रशब्दौ प्रत्ययस्वरेणाऽन्तोदात्तौ। प्रीतौ किम् ?। राजसुखम्। **स्वं स्वामिनि** ।६।२।१७। स्वामिशब्दे परे स्ववाचि पूर्वपदं तथा । गोस्वामी । स्वं किम् ? । परमस्वामी । **पत्यावैश्वर्ये** ।६।२।१८। दमूना गृहपतिर्दमे ।

सु.]उभयत्रापि 'उदात्तयणो हल्पूर्वा'दिति विभक्तिरुदात्ता । नन्वेवं तृतीयासमासविधायके 'पूर्वसदृशे'ति सूत्रे सदृशग्रहणं मास्तु, सर्वत्र षष्ठीसमासोऽस्तु इति चेन्मैवम् , यत्र षष्ठ्यर्थो नास्ति तदर्थं सदृशग्रहणम्—विद्यया सदृशो विद्यासदृश इति । [विद्यया हेतुना सदृश इति]। अन्यो देवदत्तादिरत्र प्रतियोगी।**प्राच्यशब्द आद्युदात्त इति**।'द्युप्रागपागुदक्प्रतीचो य'दिति यदन्तत्वात् 'यतोऽनावः' इत्याद्युदात्तः। **परमसप्तसममिति**।सप्तानां समानां समाहारः सप्तसमं।समाहारद्विगुः।पात्रादित्वात्स्त्रीत्वाऽभावः । **गन्तव्यपण्यं** । वणिगेव वाणिजः । प्रज्ञादित्वादण् । **मद्रवाणिज इति** । मद्रेषु गत्वा व्यवहरतीत्यर्थः । **गोवाणिज इति** । गमेर्डोः । अन्तोदात्तोऽयम् । **सप्तमीसमास इति** । सप्तमीति योगविभागान्मद्रवाणिज इत्यत्र पष्ठीसमासः । **रक्प्रत्ययान्त इति** । 'स्फायितञ्ची'ति विहितो रक्। तदन्तादित्यर्थः। प्रत्ययस्वरेणान्तोदात्तोऽयम् । **मात्रो । तथेति** । पूर्वपदं प्रकृतिस्वरं स्यादित्यर्थः। भिक्षाशब्दोऽप्रत्ययान्तोऽन्तोदात्तः । मात्रशब्दस्तु तुल्यपर्यायो वृत्तिविषये तुल्यप्रमाणे वर्तते । भिक्षायास्तुल्यप्रमाणमित्यस्वपदविग्रहः षष्ठीतत्पुरुषः । तदाह—**भिक्षाया इति । पाणिन्युपज्ञमिति**।उपज्ञायत इति उपज्ञम् । 'आतश्चोपसर्गे'इति कर्मण्यङ् । पाणिनिशब्द इञन्तत्वादाद्युदात्तः। तस्य उपज्ञा इति षष्ठीतत्पुरुषः । 'उपज्ञोपक्रमं तदाद्याचिख्यासाया'मिति नपुंसकता। **नन्दोपक्रममिति** । षष्ठीसमासः । अत्रापि पूर्ववन्नपुंसकता । उपक्रम्यते इति कर्मणि घञ् । 'नोदात्तोपदेशस्ये'ति वृद्धिप्रतिषेधः । **इषुच्छायमिति** । इषूणां छायेति तत्पुरुषः। 'छाया बाहुल्ये' इति नपुंसकता। 'इषेः किच्चे'त्युप्रत्ययान्त इषुशब्दः। तत्र निदधिकारादाद्युदात्तस्तदाह—**इषुशब्द इति । गमनसुखमिति**। समानाधिकरणसमासो, मयूरव्यंसकादिर्वा। **लित्स्वर इति**। गमनशब्दो ल्युडन्तः। 'लिती'ति सूत्रेणाऽऽद्युदात्तः । **प्रागुक्तमिति** । सुखप्रिययोः परयोस्तत्पुरुषे पूर्वपदं प्रकृतिस्वरं स्यादित्यर्थः । योगविभागो यथासङ्ख्यनिवृत्त्यर्थः । ननु 'सुखप्रिययो'रित्येतावत्पूर्वसूत्रं कृत्वा 'हिते चे'ति वक्तव्यम् । तत्राऽऽद्ये सूत्रे सुखप्रिययोः प्रीत्यव्यभिचारादेव प्रीतौ गम्यमानायां भविष्यतीति चेत्सत्यम्। प्रीतिग्रहणं तदतिशयप्रतिपत्त्यर्थम्। **ब्राह्मणच्छात्रशब्दाविति** । ब्रह्मणोऽपत्यमित्यण् । 'ब्राह्मोऽजातौ' इति जातौ टिलोपाऽभावेऽन्निति प्रकृतिभावः । छात्रशब्दः

शे.]सादृश्यग्रहणसामर्थ्यादाश्रीयत इति भावः । **परमसप्तसममिति** । समाहारे द्विगुः, उपसर्जनत्वाद्ध्रस्वः । पात्रादित्वात्स्त्रीत्वाऽभावः । 'परमसप्तसम' इति त्वपपाठः । **वाणिज इति** । वणिगेव वाणिजः । प्रज्ञादित्वादण् । **सप्तमीसमास इति**।इदं च 'मद्रवाणिजः'इत्यत्र। मद्रेषु गत्वा व्यवहरतीत्यर्थः । न चैवं सप्तमीपूर्वपदप्रकृतिस्वरेणैव सिद्धे गन्तव्यग्रहणमत्र व्यर्थमिति वाच्यं, 'सुप्सुपे'ति लब्धस्य समासस्य प्रतिपदोक्तत्वाऽभावादिति भावात्। षष्ठीसमासार्थमावश्यकस्य परत्वात्तत्रापि प्रवृत्तिरित्याशय इत्यन्ये। **मात्रोपज्ञो। नपुंसके इति**। नपुंसकवाचिनि तत्पुरुषे इत्यर्थः। **तुल्यप्रमाणमिति** । मात्रशब्दो वृत्तिविषये तुल्यप्रमाणे वर्त्तते इति भावः । अस्वपदविग्रहः षष्ठीतत्पुरुषः । **सुखप्रिययोर्हिते** । यदायत्यां प्रीतिकरं तद्धितम् । **गमनसुखमित्यादि** कर्मधारयः । गमनस्य विशेषणत्वात्पूर्वनिपातः, मयूरव्यंसकादित्वाद्वा । **प्रीतौ च** । सुखप्रिययोः प्रीत्यव्यभिचारादिह यत्प्रीतिग्रहणं तत्प्रीत्यतिशयप्रतिपत्त्यर्थम् । योगविभागो यथासङ्ख्यनिवृत्त्यर्थः । **पत्यावैश्वर्ये** । ऐश्वर्यवाचिपतिशब्दे उत्तरपदे पूर्वपदं तथेत्यर्थः । **गृहपतिरिति** । 'गेहे कः'

**न भूवाक्चिद्दिधिषु** ।६।२।१९। पतिशब्दे परे ऐश्वर्यवाचिनि तत्पुरुषे नैतानि प्रकृत्या । भुवः पतिर्भूपतिः । वाक्पतिः । चित्पतिः । दिधिषूपतिः । **वा भुवनम्** ।६।२।२०। उक्तविषये । भुवनपतिः। [ भुवनपतिः ] । 'भूसूधूभ्रस्जिभ्यः' इति क्युन्नन्तो भुवनशब्दः । **आशङ्काऽऽबाधनेदीयस्सु संभावने** ।६।२।२१। अस्तित्वाध्यवसायः संभावनम् । गमनाशङ्कमस्ति । गमनाऽऽबाधम्। गमननेदीयः। गमनमाशङ्क्यते,–आबाध्यते,–निकटतरमिति वा–संभाव्यते । संभावने किम् ?। परमनेदीयः। **पूर्वे भूतपूर्वे** ।६।२।२२। आढ्यो भूतपूर्व आढ्यपूर्वः। पूर्वशब्दो वृत्तिविषये भूतपूर्वे वर्तते । भूतपूर्वे किम् ? । परमपूर्वः । **सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये** ।६।२।२३। एषु पूर्वं प्रकृत्या । मद्रसविधम् । गान्धारिसनीडम् । काश्मीरसमर्यादम् । मद्रसवेशम् । मद्रसदेशम् । सामीप्ये किम् ? । सह मर्यादया समर्यादं क्षेत्रम् । चैत्रसमर्यादम् । **विस्पष्टादीनि गुणवचनेषु** ।६।२।२४। विस्पष्टकटुकम् । विस्पष्टशब्दो 'गतिरनन्तरः' इत्याद्युदात्तः । विस्पष्टेति किम् ? ।

---

सु.]'छत्रादिभ्यो णः'इति णप्रत्ययान्तः।**पत्या**।ऐश्वर्यार्थे पतिशब्दे परे पूर्वपदं प्रकृतिस्वरं स्यात्तत्पुरुषे। **गृहपतिरिति**–षष्ठीसमासः । 'गेहे कः' इति कप्रत्ययान्तो गृहशब्दः प्रत्ययस्वरेणाऽन्तोदात्तः । **न भू** । भ्वादीनां समाहारद्वन्द्वे नपुंसकत्वम् । ह्रस्वत्वम् । **एतानीति** । भूवाक्चिद्दिधिषु–एतानीत्यर्थः । **न प्रकृत्येति** । पूर्वेण प्राप्तः प्रतिषिध्यते । **भूपतिरित्यादि** । षष्ठीसमासा एते । तत्र भ्वादयस्त्रयः क्विबन्ताः । दिधिषूशब्दः 'अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषू' इत्युप्रत्ययान्तो निपातितः । सर्वेऽप्यन्तोदात्ताः । **वा भुवनम्** । **उक्तविषये इति** । ऐश्वर्यवाचिनि पतिशब्दे परे भुवनशब्दः पूर्वपदप्रकृतिस्वरः स्यात् । 'पत्यावैश्वर्ये' इति प्राप्ते विकल्पोऽयम् । **भुवनपतिरिति** । भुवनशब्दः क्युन्प्रत्ययाऽन्तो नित्स्वरेणाद्युदात्तः । **आशङ्काबाध** । आशङ्काऽऽबाधनेदीयस्सूत्तरपदेषु संभावनवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरं स्यात् । शकि शङ्कायाम् । बाधृ लोडने । आङ्पूर्वाभ्यां कर्मणि घञ् । अतिशयेनाऽन्तिकं नेदीयः । द्वयोरन्तिकयोर्मध्ये एकस्यातिशयविवक्षायामीयसुनि 'अन्तिकबाढयो'रिति नेदादेशः।गमनाऽऽशङ्कादयो विशेषणसमासाः, मयूरव्यंसकादयो वा। **अस्तित्वाध्यवसाय इति** । अस्तित्वनिश्चयः । **गमनाशङ्कमिति** । पूर्वपदानि ल्युडन्तानि । तत्र लित्स्वरः । **गमनमाशङ्क्यत इत्यादि** । 'संभाव्यते' इत्यस्य प्रत्येकमन्वयः । गमनमाशङ्क्यते इति संभाव्यते । गमनमाबाध्यत इति संभाव्यते। गमनं निकटतरमिति वा संभाव्यते। **पूर्वे भूतपूर्वे**। भूतपूर्वार्थे पूर्वशब्दे परे पूर्वपदं प्रकृतिस्वरं स्यात् । **आढ्यो भूतपूर्व इति**।यः पूर्वमाढ्य आसीत्स एवमुच्यते। **आढ्यपूर्व इति**।अत्र विशेषणसमासो, मयूरव्यंसकादिर्वा। आढ्यशब्दे आङ्पूर्वाद्ध्यायतेः 'घञर्थे कविधान'मिति कर्मणि कः।आतो लोपः। पृषोदरादित्वाद्धस्य ढः।थाथादिस्वरेणाऽन्तोदात्तः। **परमपूर्व इति** । परमश्चासौ पूर्वश्चेति योऽयं वाक्यार्थः पूज्यमानतालक्षणस्तस्मिन्निह प्रत्युदाहरणे समासः । परमश्चासौ भूतपूर्वश्चेति विग्रहे तूदाहरणमेव । **सविध** । सामीप्यार्थेषु सविधादिषूत्तरपदेषु पूर्वपदं प्रकृत्या स्यात्तत्पुरुषे । **मद्रसविधमिति**। सर्वत्रोदाहरणे षष्ठीसमासः।मद्रो रगन्तोऽन्तोदात्तः।गान्धारिः–'कर्दमादीनां च'त्याद्युदात्तो, मध्योदात्तो वा।काश्मीरो 'लघावन्ते' इति मध्योदात्तः। सविधादीनां सह विधया इत्येवमादिका व्युत्पत्तिरेव केवलम् । समीपवाचिनस्त्वेते समुदायाः । मद्रादीनां सविधम् । समीपमित्यर्थः । **समर्यादमिति**। 'वोपसर्जनस्ये'ति सहस्य सादेशः । **चैत्रसमर्यादमिति** षष्ठीसमासः । सविधादिषु किम् ?। मद्रसमीपम् । **विस्पष्टा** । गुणवचनेषु परेषु विस्पष्टादीनि पूर्वपदानि प्रकृत्या स्युः।**विस्पष्टकटुकमिति**।'स्पश बाधनस्पर्शनयो'रित्यस्य ण्यन्तस्य निष्ठायां'वा दान्तशान्ते'ति स्पष्टशब्दो निपा-

---

बो.]इति कप्रत्ययान्तो गृहशब्दोऽन्तोदात्तः । **दमे इति** । गृहे इत्यर्थः । ऐश्वर्ये किं ? । वृषलीपतिर्विप्रः। तद्भर्तेत्यर्थः । **न भूवा** । सूत्रे समाहारद्वन्द्वः । **भूपतिरित्यादयः** षष्ठीतत्पुरुषा अन्तोदात्ताः । त्रयः क्विबन्ताः, अन्त्य ऊप्रत्ययान्तः । **वा भुवनम्** । 'पत्यावैश्वर्ये' इति प्राप्ते विकल्पोऽयम् । **अस्तित्वाध्यवसाय इति** । तद्विषयकोत्कटकोटिकज्ञानमित्यर्थः । **गमनमाशङ्क्यत इति** । 'सम्भाव्यते' इत्यनेनान्वेति, विशेषणसमासाः सर्वे । लित्स्वरः । **पूर्वे भूतपूर्वे** । भूतपूर्वार्थे पूर्वशब्दे उत्तरपदे इत्यर्थः। **आढ्यपूर्व इति** । आङ्पूर्वाद्ध्यायतेः कः । पृषोदरादित्वाड्ढः। आढ्यशब्दस्थाथादिस्वरेणान्तोदात्तः। विशेषणसमासः। **सविधसनीड**। सामीप्यार्थेष्वेतेषूत्तरपदेष्वित्यर्थः। सविधादयः समीपे रूढाः। **मद्रो** रगन्तोऽन्तोदात्तः। **गान्धारिः**–'कर्दमादीनाञ्चे'त्याद्युदात्तो, मध्योदात्तो वा। **कश्मीरो**–'लघावन्ते' इत्याद्युदात्तः, मध्योदात्तो वा । सविधादिषु किं?। मद्रसमीपम्।**विस्पष्टादीनि**।गुणवचनेषु परेषु विस्पष्टादीनि प्रकृत्येत्यर्थः।अत्र विस्पष्टादीनि प्रवृत्तिनिमित्तस्य विशेषणानि, न द्रव्यस्य । कटुकादिशब्दैर्गुणवद्द्रव्यमभिधीयत इति सामानाधिकरण्याऽभावात् कर्मधारयाऽभावेऽपि मयूरव्यंसकादित्वात्समासः। तत्र **विस्पष्टे**–गतिस्वरः, **विचित्रे**ऽव्ययस्वरः, **विचित्ते** बहुव्रीहिस्वरः।

परमलवणम् । गुणेति किम् ?। विस्पष्टब्राह्मणः । विस्पष्ट । विचित्र । विचित्त । व्यक्त । संपन्न । पटु । पण्डित । कुशल । चपल । निपुण । **अज्याऽवमकन्पापवत्सु भावे कर्मधारये** ।६।२।२५। अ ज्य कन् इत्यादेशवति, अवमशब्दे, पापवाचिनि चोत्तरपदे भाववाचि पूर्वपदं प्रकृत्या । गमनश्रेष्ठम् । गमनज्यायः । गमनाऽवमम् । गमनकनिष्ठम् । गमनपापिष्ठम् । श्रेति किम् ?। गमनशोभनम्। भावे किम् ?। गम्यतेऽनेनेति गमनं, गमनं श्रेयो गमनश्रेयः । केति किम् ? । षष्ठीसमासे मा भूत् । **कुमारश्च** ।६।२।२६। कर्मधारये । कुमारश्रमणा । कुमारशब्दोऽन्तोदात्तः । **आदिः प्रत्येनसि** ।६।२।२७। कुमारस्याऽऽदिरुदात्तः प्रत्येनसि परे कर्मधारये । प्रतिगतमेनोऽस्य प्रत्येनाः । कुमारप्रत्येनाः । **पूगेष्वन्यतरस्याम्** ।६।२।२८। पूगाः=गणास्तेपूक्तं वा । कुमारचातकाः। कुमारजीमूताः । आद्युदात्तत्वाऽभावे 'कुमारश्चे'त्येव भवति। [ कुमारचातकाः । कुमारजीमूताः ] । **इगन्तकालकपालभगालशरावेषु द्विगौ** ।६।२।२९। एषु परेषु पूर्वं

---

सु ]तितः । तस्य विशब्देन गतिसमासः। विस्पष्टं कटुकमिति विग्रहः। विस्पष्टादीनि शब्दप्रवृत्तिनिमित्तस्य विशेषणानि, न द्रव्यस्य। कटुकादिशब्दैर्गुणवद्द्रव्यमभिधीयते इति सामानाधिकरण्याऽभावात्कर्मधारयाऽभावे सुप्सुपेति समासः। **विचित्रे-त्यादि**। चित्र चित्रीकरणे चुरादिण्यन्तादेरच्। विशेषेण चित्रं विचित्रम्। प्रादिसमासः। 'तत्पुरुषे तुल्यार्थे'त्यव्ययपूर्वपद-प्रकृतिस्वरेणाद्युदात्तः। चिती संज्ञाने। निष्ठा। विगतं चित्तमस्य इति विचित्तः। 'बहुव्रीहौ प्रकृत्या पूर्वपद'मित्या-द्युदात्तः। अञ्जू व्यक्त्यादिषु। तस्य विपूर्वस्य निष्ठायां गतिस्वरे 'उदात्तस्वरितयो'रिति स्वरितादिः। पदेः कर्तरि क्तः। थाथादिस्वरेणाऽन्तोदात्तः। गतिस्वरस्तु न, कर्मणीति तत्र वर्त्तते, अयं कर्तरि क्तः। 'फलिपाटिनमि-मनिजनां गुक्पटिनाकिधतश्चे'त्युप्रत्ययान्तः पटुशब्दः। तत्र निदित्यधिकारादाद्युदात्तः। पडि गतौ। क्तः। प्रत्ययस्वरः। उणादिवृत्तौ तु पण व्यवहारे स्तुतौ च। अमन्ताड्डः। पण्डा बुद्धिः, सा संजाताऽस्येति तारकादित्वादितच्,- एवमुक्तम्। कुशान् लातीति कुशलः। 'आतोऽनुपसर्गे' इति कः। कृत्स्वरेणाऽन्तोदात्तः। चुप मन्दायां गतौ। अस्मा'च्चुपेरच्चोप-धायाः' इति कलप्रत्ययः।तत्र 'वृषादिभ्यश्चि'दित्यतश्चिदिति वर्तनादन्तोदात्तः।पुण कर्मणि शुभे। 'इगुपधज्ञाप्रीकिरः कः' इति कः। थाथादिस्वरेणान्तोदात्तः। **अज्या**।अज्यकनामादेशानामुत्तरपदत्वाऽसंभवात्सामर्थ्यात्तद्वदुत्तरपदं गृह्यत इत्याह-**इत्यादेशवतीति**। इष्ठेयसुनोः 'प्रशस्यस्य श्रः', 'ज्य च', 'युवाल्पयोः कनन्यतरस्याम्'। **गमनश्रेष्ठमित्यादि**। मयूरव्यंसकादित्वाद्राजदन्तादित्वाद्वा विशेषणस्य परनिपातः। **पापिष्ठमिति**। विन्मतोर्लुक्। उदाहरणे 'नपुंसके भावे क्तः' 'ल्युट् चे'ति भावे ल्युट्। तदन्तान्येतानि पूर्वपदानि लित्स्वरेणाद्युदात्तानि। **गम्यतेऽनेनेति**। 'करणाधिकरण-योश्चे'ति करणे ल्युट्। **केति किमिति**। कर्मधारय इति किमर्थमित्यर्थः। **कुमारश्च**। कुमारशब्दः पूर्वपदं प्रकृत्या स्यात्। **कुमारश्रमणेति**। कुमारी श्रमणा कुमारश्रमणा। 'कुमारः श्रमणादिभिः' इति समासः। लिङ्गविशिष्टपरि-भाषया कुमारीशब्दस्य समासे पुंवद्भावः। **अन्तोदात्त इति**। कुमार क्रीडायाम्। पचाद्यच्। चित्स्वरः। अत्र 'कुमारः श्रमणादिभिः' इत्यस्यैव ग्रहणं, प्रतिपदोक्तत्वात्। केचित्तु सर्वस्यैव कर्मधारयस्य ग्रहणमिच्छन्ति। तथा च कुमारब्राह्मण इत्यत्र पूर्वपदप्रकृतिस्वरत्वं मतभेदेन भवति। **आदिः**। आदिरिति षष्ठ्यर्थे प्रथमा। पूर्वत्र कुमारशब्दस्य प्रकृतिभावेन यः स्वरः प्राप्तः सोऽत्राऽऽदेर्भवतीति सूत्रार्थः। एवं स्थिते फलितमाह-**कुमारस्यादिरुदात्तः स्यादिति**। **पूगेषु**। गणवाचिन्युत्तरपदे कर्मधारये कुमारस्याऽऽदिरुदात्तो वा स्यात्। **कुमारचातका इति**। चातकादयः पूगशब्दास्तेभ्यः 'पूगाञ्ञ्योऽग्रामणीपूर्वा'दिति ञ्यः। तस्य 'तद्राजस्य बहुषु' इति लुक्। **कुमारश्चेत्येव भवतीति**। अत्र प्रतिपदोक्त-

---

**शे.]व्यक्तो** गतिस्वरेणाद्युदात्तः, **सम्पन्नो**ऽन्तोदात्तः, **पटु**र्नित्त्वादाद्युदात्तः, **पण्डितकुशला**वन्तोदात्तौ, **चपल-निपुणा**वप्येवम्। **अज्याऽवम**। अत्र अज्यकनामुत्तरपदत्वाऽसम्भवेन सामर्थ्यात्तद्वतो ग्रहणम्। 'व'दिति तु पापेनैव सम्बध्यते। एवञ्च 'अज्यकनित्यादेशवति, अवमशब्दे, पापशब्दवति चोत्तरपदे' इति पाठः। पाठान्तरन्तु प्रामादिकम्। **गमनश्रेष्ठमित्यादौ** मयूरव्यंसकादित्वाद्विशेषणस्य परनिपातो, राजदन्तादित्वाद्वा। **गमनपापिष्ठमिति**। पापवच्छब्दा-दिष्ठन्। विन्मतोर्लुक्। अन्यथा पापशब्दस्य गुणोपसर्जनद्रव्यवाचित्वाऽभावात्ततः स न स्यादिति बोध्यम्। **कुमारश्च**। कुमारशब्दः पूर्वपदं तथा कर्मधारये इत्यर्थः। अत्र 'कुमारः श्रमणादिभि'रिति समासस्यैव ग्रहणं, प्रतिपदोक्तत्वादिति केचित्। अन्ये तु सर्वकर्मधारयग्रहणम्, एवञ्च 'कुमारब्राह्मणः' इत्यादावपि प्रवर्त्तत इत्याहुः। तत्त्वमीश्वरो वेद। **आदिः प्रत्ये**। आदिरिति षष्ठ्यर्थे प्रथमा, कुमारशब्दः प्रकृतिस्वरेण यत्स्वरकः प्राप्तः स स्वर आदेरिति सूत्रार्थः। फलितमाह-**कुमारस्यादिरिति**। एतेनोदात्ताधिकाराऽभावादिदमसङ्गतमित्यपास्तम्। **पूगेष्व**। **पूगो**-गणः, तद्वाचि-न्युत्तरपदे कर्मधारये कुमारस्याऽऽदिरुदात्तो वेत्यर्थः।**कुमारश्चेत्येवेति**। प्रतिपदोक्तग्रहणपक्षे समासान्तोदात्तत्वं बोध्यम्। **पञ्चारत्निरिति**। तद्धितार्थे द्विगुः। 'प्रमाणे लो द्विगोर्नित्य'मिति मात्रचो लोपः। 'पञ्चारत्नयः' इत्यादौ अन्तरङ्गत्वात्पूर्वं

प्रकृत्या।पञ्चाऽरत्नयः प्रमाणमस्य पञ्चारत्निः।काले-[दश मासान्भूतो] दशमास्यः। पञ्चमासान् भूतः पञ्चमास्यः। 'तमधीष्ट' इत्यधिकारे-द्विगोर्यप्। पञ्चकपालः। पञ्चभगालः। पञ्चशरावः। 'त्रः सङ्ख्याया' इति पञ्चन्शब्द आद्युदात्तः। इगन्तादिषु किम् ?। पञ्चाश्वः। द्विगौ किम् ?। परमाऽरत्निः। **बह्वन्यतरस्याम्** ।६।२।३०। बहुशब्दस्तथा वा। बह्वरत्निः। बह्वरत्निः। बहुमास्यः। बहुमास्यः। बहुकपालः। बहुकपालः बहुशब्दोऽन्तोदात्तः। तस्य यणि सति 'उदात्तस्वरितयो'रिति भवति। **दिष्टिवितस्त्योश्च** ।६।२।३१। एतयोः परतः पूर्वपदं प्रकृत्या वा द्विगौ। पञ्चदिष्टिः। [ पञ्चदिष्टिः ]।पञ्चवितस्तिः। [पञ्चवितस्तिः]। **सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात्** ।६।२।३२। अकालवाचि सप्तम्यन्तं प्रकृत्या सिद्धादिषु। साङ्काश्यसिद्धः। साङ्काश्येति ण्यान्तः। आतपशुष्कः। भ्राष्ट्रपक्वः। भ्राष्ट्रेति ष्ट्रन्नन्तः। चक्रबन्धः। चक्रशब्दोऽन्तोदात्तः। अकालात्किम् ?। पूर्वाह्णसिद्धः। कृत्स्वरेण बाधितः सप्तमीस्वरः प्रतिप्रसूयते। **परिप्रत्युपापा वर्ज्यमानाऽहोरात्रावयवेषु** ।६।२।३३। एते प्रकृत्या, वर्ज्यमानवाचिन्यहोरात्रावयववाचिनि चोत्तरपदे। परित्रिगर्तं वृष्टो देवः।प्रतिपूर्वाह्णम्। [प्रत्यपररात्रम्। उपाऽपररात्रम्]। उपपूर्वाह्णम्। उपपूर्वरात्रम्। अपत्रिगर्तम्। 'उपसर्गा आद्युदात्ताः'। बहुव्रीहि-

---

सु.]ग्रहणपक्षे समासान्तोदात्तत्वम्।**पञ्चारत्निरिति**। पञ्च अरत्नयः प्रमाणमस्येति तद्धितार्थे द्विगुः। 'प्रमाणे लो द्विगोर्नित्य'मिति मात्रचो लुक्।पञ्चसु कपालेषु संस्कृतःपुरोडाशः, पञ्चसु भगालेषु संस्कृतः,पञ्चसु शरावेषु उद्धृतः-पञ्चकपालः, पञ्चभगालः, पञ्चशरावः। तद्धितार्थे द्विगुः। 'द्विगोर्लुगनपत्ये'इत्यणो लुक्। **पञ्चाश्व इति**। पञ्चभिरश्वैः क्रीतः पञ्चाश्वः। आर्हीयष्ठक्। तस्य 'अध्यर्धे'ति लुक्। **बहु**। बहुशब्दः पूर्वपदं प्रकृतिस्वरं वा; इगन्तादिषूत्तरपदेषु द्विगौ। पूर्वेण नित्ये प्राप्ते विकल्पः। **बहुशब्दोऽन्तोदात्त इति**।बंहि वृद्धौ, अस्मात् 'लङ्घिबंह्योर्नलोपश्चे'ति कुप्रत्ययः। प्रत्ययस्वरेणान्तोदात्तः। पक्षे समासान्तोदात्तत्वम्। पूर्ववद्विगुप्रत्ययलुक्प्रत्युदाहरणानि योजनीयानि। **दिष्टि**। दिष्टिवितस्ती प्रमाणे, तेनाऽत्र मात्रचो लुक्। अत्रापि पक्षेऽन्तोदात्तत्वं बोध्यम्। **सप्तमी**। **ण्यान्त इति**। वुञ्छणादिषु 'सङ्काशादिभ्यो ण्यः'। **ष्ट्रन्नन्त इति**। 'मस्जिगमिनमिहनिविश्यशां वृद्धिश्चे'ति ष्ट्रन्। संयोगादिलोपः। 'व्रश्चे'ति षत्वं। नित्त्वादाद्युदात्तः। **अन्तोदात्त इति**। 'कृञः को द्वे चे'ति कप्रत्ययान्तः प्रत्ययस्वरेण। **थाथादिस्वरेण बाधितः सप्तमीस्वर इति**। सिद्धशुष्कपक्वानां क्तान्तत्वाद्बन्धस्य घञन्तत्वात्थाथादिस्वरेण-'तत्पुरुषे तुल्यार्थे'त्यादिना सप्तम्यन्तस्य यः प्रकृतिभावः स-परत्वाद्बाधितस्तेन पुनर्विधीयते। क्वचित्तु '**कृत्स्वरेण बाधित**' इति पाठः। तत्र कृदन्तस्य यः स्वरस्थाथादिलक्षणस्तेनेत्यर्थः। **परिप्रत्यु**। परि प्रति उप एते प्रकृत्या स्युः। **परित्रिगर्तमिति**। त्रिगर्तं वर्जयित्वेत्यर्थः। 'अपपरी वर्जने' इति कर्मप्रवचनीयसंज्ञा। 'पञ्चम्यपाङ्परिभि'रिति पञ्चमी। 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः। **प्रतिपूर्वाह्णमिति**। अह्नः पूर्वो भागः पूर्वाह्णः। 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः। 'अह्नोऽदन्ता'दिति णत्वम्। पूर्वाह्णं प्रति। 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः। **उपपूर्वाह्णमिति**।पूर्वाह्णस्य समीपम्। 'अव्ययं विभक्ती'-त्यादिना सामीप्येऽव्ययीभावः। **उपपूर्वरात्रमिति**। रात्रेः पूर्वो भागः पूर्वरात्रः। 'अहःसर्वैकदेशे'त्यच्। 'रात्राऽह्नाहाः' इति पुंस्त्वम्। पूर्वरात्रस्य समीपमुपपूर्वरात्रम्। **उपसर्गा**। आद्युदात्तानि पूर्वपदानि। **सिद्धत्वादिति**। 'बहुव्रीहौ प्रकृत्या पूर्वपदम्', 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' इत्यनेन। ननु किं पुनः कारणम् अपपर्योरेव वर्ज्यमान उदाहृतो, नेतरयोस्तत्राह-**अपपर्योरिति**। तेन त्रिगर्तं वर्जयित्वेत्यर्थे उपत्रिगर्तं प्रतित्रिगर्तमिति

---

शे.]स्वरः, पश्चाद्विभक्तिनिमित्तकार्यम्। अकृतव्यूहपरिभाषा तु नास्ति, अनित्या वेत्यसकृदावेदितम्। किं च स्थानिवत्त्वेन निमित्तविनाशाऽभावात्तत्त्वेऽपि न दोषः।न च 'स्वरे ने'ति निषेधः,लोपाऽजादेशस्यैव तेन निषेधात्। कालग्रहणेन कालवाचकानाङ्ग्रहणं, तदाह-**दशमास्य इत्यादि**। **पञ्चकपाल इत्यादि**। पञ्चसु कपालेषु, भगालेषु संस्कृत इत्यर्थे 'द्विगोर्लुगनपत्ये' इति लुक्। पञ्चसु शरावेषूद्धृत इति 'तत्रोद्धृत'मित्यणो लुक्। **पञ्चाश्व इति**। पञ्चभिरश्वैः क्रीत इति 'अध्यर्द्धे'ति ठको लुक्। **बह्वन्य**। 'इगन्ते'ति प्राप्ते विभाषेयम्। **स्वरितयोरिति भवतीति**। पक्षेऽन्तोदात्तत्वं बोध्यम्। **पञ्चवितस्तिरिति**। मात्रचो लुक्, द्वयसचो वा। **अकालादिति** पञ्चमी प्रथमार्थे। **ण्यान्त इति**। तेनान्तोदात्त इत्यर्थः। **कृत्स्वरेणेति**। कृन्निमित्तिकेनेत्यर्थः। तथा च थाथादिसूत्रेण बाधित इतिं फलितम्। त्रयाणां क्तान्तत्वात्, बन्धस्य घञन्तत्वात्। **परिप्रत्युपा**। इत आरभ्य पञ्चसूत्राणि द्वन्द्वाऽव्ययीभावविषयाणि। **परित्रिगर्तमिति**। अत्र पर्यपयोः 'अपपरी वर्जने' इति कर्मप्रवचनीयत्वात्तद्योगे पञ्चमी, 'अपपरिबहि'रित्यव्ययीभावः।**प्रतिपूर्वाह्णमिति**।'लक्षणेनाभिप्रती' इति समासः। **उपपूर्वेति**। 'अव्ययं विभक्ती' ति समासः। **वर्ज्यमाना एव तयोरिति**। अतो न पृथ-

तत्पुरुषयोः सिद्धत्वादव्ययीभावार्थमिदम्।अपपर्योरेव वर्ज्यमानमुत्तरपदम्, तयोरेव वर्ज्यमानार्थत्वात्।अहोरात्रावयवा अपि वर्ज्यमाना एव तयोर्भवन्ति।वर्ज्येति किम्?। अग्नि प्रति। प्रत्यग्नि। **राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु**।६।२।३४।राजन्यवाचिनां बहुवचनान्तानामन्धकवृष्णिषु वर्तमाने द्वन्द्वे पूर्वपदं प्रकृत्या।श्वाफल्कचैत्रकाः। शिनिवासुदेवाः। शिनिराद्युदात्तो लक्षणया तदपत्ये वर्तते। राजन्येति किम्?। द्वैप्यभैमायनाः। द्वीपे भवा द्वैप्याः। भैमेरपत्यं युवा भैमायनः। अन्धकवृष्णय एते न तु राजन्याः। राजन्यग्रहणमिहाऽभिषिक्तवंश्यानां क्षत्रियाणां ग्रहणार्थम्। नैते तथा। बहुवचनं किम्?। सङ्कर्षणवासुदेवौ। द्वन्द्वे किम्?। वृष्णीनां कुमाराः वृष्णिकुमाराः। अन्धकवृष्णिषु किम्?। कुरुपञ्चालाः। **सङ्ख्या**।६।२।३५। सङ्ख्यावाचि पूर्वपदं प्रकृत्या द्वन्द्वे। [एकादश]। द्वादश। त्रयोदश। त्रेस्त्रयसादेशोऽन्तोदात्तो निपात्यते।**आचार्योपसर्जनश्चान्तेवासी**।६।२।३६। आचार्योपसर्जनान्तेवासिनां द्वन्द्वे पूर्वपदं प्रकृत्या। पाणिनीयरौढीयाः। छस्वरेण मध्योदात्तावेतौ। आचार्योपसर्जनग्रहणं द्वन्द्वविशेषणम्। सकलो द्वन्द्व आचार्योपसर्जनो यथा विज्ञायेत।तेनेह न-पाणिनीयदेवदत्तौ। आचार्येति किम्?। छान्दसवैयाकरणाः। अन्तेवासीति किम्?। आपिशलपाणिनीये शास्त्रे। **कार्तकौजपादयश्च**

सु.]न भवति।ननु पूर्वाह्णं पूर्वरात्रं वर्जयित्वेत्यर्थे अपपूर्वाह्णं परिपूर्वाह्णं, अपपूर्वरात्रं परिपूर्वरात्रमिति अहोरात्रावयवा अपपर्योः कस्मान्नोदाह्रियन्ते इत्याशङ्क्याह-**अहोरात्रावयवा इति**। **वर्ज्यमाना इति**। वर्ज्यमानग्रहणेनैव सिद्धत्वान्न पृथगुदाहृता इत्यर्थः। **वर्ज्येति किमिति**। वर्ज्यमानाहोरात्रावयवेषु किम्?। **अग्निं प्रतीति**। 'लक्षणेनाभिप्रती' इत्यव्ययीभावः। **श्वाफल्कचैत्रका इति**। श्वफल्कचैत्रकाभ्यामपत्येऽण्। **शिनिराद्युदात्त इति**। 'वह्निश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नि'दिति सूत्रेण बाहुलकाच्छीङोऽपि निः। तस्य नित्त्वं ह्रस्वत्वं चेति। **द्वैप्या इति**। 'द्वीपादनुसमुद्रं यञ्'। **भैमेरपत्यमिति**। भीमस्यापत्यम्। 'अत इञ्'। तदन्ताद्वृद्धाच्छः। ननु च 'राज्ञोऽपत्ये जातिग्रहण'मिति वचनाद्राजन्यशब्दः क्षत्रियजातिवचनः। ततश्च 'द्वैप्यभैमायना' इत्युक्तं प्रत्युदाहरणं, तेषामपि क्षत्रियत्वादत आह-**राजन्यग्रहणमित्यादि**। अन्धकवृष्णीनां क्षत्रियत्वाऽव्यभिचाराद्राजन्यग्रहणमुक्तविशेषपरिग्रहार्थमिति भावः। **एकादशेति**। 'सङ्ख्याया अल्पीयस्याः' इत्येकशब्दस्य पूर्वनिपातः। 'आन्महतः' इत्यत्र आदिति योगविभागात्प्रयोगाद-शभ्य इति निर्देशाद्वा आत्वम्। 'इण्भीकापाशल्यतिमर्चिभ्यः क'न्निति निरवादेकशब्द आद्युदात्तः। **द्वादशेति**। 'द्व्यष्टनः सङ्ख्यायाः' इत्यात्वम्। **त्रयोदशेति**। 'त्रेस्त्रय' इति त्रयआदेशः। **अन्तोदात्तो निपात्यत इति**। इदं काशिकानुरोधेनोक्तम्। वस्तुतस्तु 'त्रयोदश च मे' इति लक्ष्यानुरोधादाद्युदात्तो निपात्यत इति बोध्यम्। **आचार्योपसर्जन**। आचार्य उपसर्जनं यस्य आचार्योपसर्जनः। **अन्तेवासीति**। अन्ते वसतीत्यन्तेवासी। 'शयवासवासिष्वकाला'दिति सप्तम्या अलुक्। सूत्रे षष्ठीबहुवचनस्य स्थाने प्रथमैकवचनम्। तदाह-**आचार्योपसर्जनान्तेवासिनां द्वन्द्वे इति**। **पाणिनीयरौढीया इति**। वृद्धाच्छः। रौढिशब्दात् 'इञश्चे'त्यण्, 'न द्व्यचः प्राच्यभरतेषु' इति निषेधात्। **द्वन्द्वविशेषणार्थमिति**। न त्वन्तेवासिविशेषणार्थं, तस्य आचार्योपसर्जनत्वाऽव्यभिचारात्। किमर्थं पुनर्द्वन्द्वविशेषणं विज्ञायत इत्याह-**सकलो द्वन्द्व इत्यादि**। **छान्दसेति**। 'छन्दोऽधीते' इत्यण्। 'श्रोत्रियंश्छन्दोऽधीते' इति तु न, तत्र वाग्रहणानुवृत्तेः। **आपिशलपाणिनीये इति**। आपिशलस्यापत्यमापिशलिराचार्यः। तेन प्रोक्तमापिशलम्। 'इञश्चे'त्यण्। पाणिनिना प्रोक्तं पाणिनीयम्। 'वृद्धाच्छः'। आपिशलं च पाणिनीयं च आपिशलपाणिनीये।**कार्त**। कुर्भूमिः। तत्र जाताः-कुजाः, तान् पातीति कुजपः। कृतकुजपाभ्यामपत्ये ऋष्यण्। सावर्णिरिवान्तः। माण्डूकेयशब्दो

शो.]गुदाह्रियन्ते इति भावः। **अग्निं प्रतीति**।इति विग्रहे 'प्रत्यग्नि शलभाः पतन्ती'त्यादौ मा भूदित्यर्थः।क्वचित्तु तथैव पाठः। **लक्षणया**। शिनित्वारोपेण। **राजन्यग्रहणमिति**। अन्धकवृष्णीनां राजन्यत्वाऽव्यभिचारादित्यर्थः। **सङ्ख्या**। अत्र सर्वसूत्राद्द्वन्द्व इति वर्तते। **त्रयसादेश आद्युदात्त इति**। 'त्रयोदश च मे' इत्यादावाद्युदात्तपाठादिति भावः। क्वचिद्वृत्तिपुस्तके, मूलपुस्तके चाऽन्तोदात्त इति पाठो दृश्यते। तदा 'त्रयोदश च मे' इत्यादौ छान्दसत्वं बोध्यम्। **आचार्योप**। सूत्रे षष्ठीबहुवचनस्थाने प्रथमैकवचने। **पाणिनीयरौढीया इति**। पाणिने रौढेश्च छात्रा इत्यर्थः। तत्प्रोक्तमधीयते इत्यर्थो वा। पाणिनेर्गोत्रेऽन्तत्वाऽभावाद्रौढौ 'न द्व्यचः' इति निषेधाच्च 'इञश्चे'त्यण् न। तेन वृद्धाच्छः। **आचार्योपसर्जनग्रहणम्**-अचार्योपसर्जनान्तेवासिग्रहणम्। **द्वन्द्वविशेषणमिति**। न तु पूर्वपदविशेषणं,व्याख्यानादिति भावः। तत्फलमाह-**सकल इति**। **छान्दसेति**। छन्द अधीयते इत्याद्यर्थः। द्वन्द्वे किम्?। आपिशलप्रियः पाणिनीय आपिशलपाणिनीयः। **कार्तकौ**। अत्र गणे विभक्त्यन्तपाठो वचनविवक्षार्थः। कुर्भूमिः, तत्र जाताः-कुजाः,

।६।२।३७। एषां द्वन्द्वे पूर्वपदं प्रकृत्या । कार्तकौजपौ । [ कृतस्येदं, कुजपस्येदमित्यण्णन्तावेतौ ] । सावर्णिमाण्डूकेयौ । **महान्व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु** ।६।२।३८। महच्छब्दः प्रकृत्या व्रीह्यादिषु दशसु । महाव्रीहिः । महापराह्णः । महागृष्टिः । महेष्वासः । [महाहैलिहिलः] । महच्छब्दोऽन्तोदात्तः । 'सन्महद्' दिति प्रतिपदोक्तसमास एवाऽयं स्वरः । नेह–महतो व्रीहिर्महद्व्रीहिः । **क्षुल्लकश्च वैश्वदेवे** ।६।२।३९। चान्महान् । क्षुल्लकवैश्वदेवम् । महावैश्वदेवम् । क्षुधं लातीति क्षुल्लं । तस्मादज्ञातादिषु केऽन्तोदात्तः । **उष्ट्रः सादिवाम्योः** ।६।२।४०। उष्ट्रसादी । उष्ट्रवामी । उषेः ष्ट्रनि उष्ट्र आद्युदात्तः । **गौः साद-सादिसारथिषु** ।६।२।४१। गोसादः । गोसादिः । गोसारथिः । **कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूःपण्यकम्बलो दासीभाराणां च** ।६।२।४२। एषां सप्तानां समासानां, दासीभारादेश्च पूर्वपदं प्रकृत्या । कुरूणां गार्हपतं कुरुगार्हपतम् । कुप्रत्ययान्तः कुरुः । * **वृजेरिति वाच्यम्** । वृजिगार्हपतम् । वृजिराद्युदात्तः । रिक्तो गुरुः रिक्तगुरुः । 'रिक्ते विभाषे'ति रिक्तशब्द आद्युदात्तः । असूता जरती असूतजरती । अश्लीला दृढरूपा अश्लीलदृढरूपा । अश्लीलशब्दो नञ्समासत्वादाद्युदात्तः । श्रीर्यस्याऽस्ति

सु.]'ढक् च मण्डूका'दिति ढगन्तः । **महाव्रीहिरिति** । 'आन्महतः' इत्यात्वम् । **महेष्वास इति** । अत्रैकारः 'स्वरितो वाऽनुदात्ते पदादौ' इति स्वरितो वा । आदिपदेन–महाजाबालः, महाभारः, महाभारतः, महाहैलिहिलः, महारौरवः, महाप्रवृद्धः । **महच्छब्दोऽन्तोदात्त इति** । 'वर्तमाने पृषन्महद्'दित्यत्र तथा निपातनात् । **सन्महदिति** । एतच्च लक्षणप्रतिपदोक्तपरिभाषया लभ्यते । ननु प्रवृद्धग्रहणमनर्थकं 'कर्मधारये निष्ठे'ति वक्ष्यमाणेनैव सिद्धत्वात्, 'कृद्ग्रहणे गतिकारकपूर्वस्याऽपि ग्रहण'मिति प्रवृद्धशब्दस्य क्तान्तत्वादिति चेन्न, 'कर्मधारये निष्ठे'त्यत्रापि लक्षणप्रतिपदोक्तपरिभाषया क्तान्तेन प्रतिपदोक्तो यः समासः श्रेण्यादिस्तस्यैव ग्रहणमित्यर्थः । **क्षुल्लक** । क्षुल्लकमहच्छब्दौ पूर्वपदे प्रकृतिस्वरौ स्तो वैश्वदेवशब्दे परे । **क्षुल्लकमिति**–'आतोऽनुपसर्गे कः' । 'तोर्लि'ति परसवर्णः । **उष्ट्रः** । उष्ट्रः पूर्वपदं प्रकृतिस्वरं स्यात्सादिवाम्योः परतः । **उषेः ष्ट्रनीति** । उष दाहे अस्मात् ष्ट्रन्निति वर्तमाने 'उषिखनिभ्यां कि'दिति व्युत्पादितत्वात् ।

**गौः साद** । गोशब्दः पूर्वपदं प्रकृत्या सादादिषूत्तरपदेषु । **गोसाद इत्यादि** । सदेर्घञ् । तदन्तेन षष्ठीसमासः । अथ वा गां सादयति गोसादः । सदेर्ण्यन्तात्कर्मण्यण् । तस्मादेव णिनिः । **गोसादी** । तत्र सादसादिनोः कृत्स्वरस्यापवाद इत्यर्थः । सारथौ–समासस्वरस्य । **कुरु** । इह पण्यकम्बलान्ताः सप्त समासाः । तत्रादिनोर्द्वयोः षष्ठ्याः सौत्रो लुक्, इतरेषां पञ्चानां षष्ठ्याः स्थाने प्रथमैकवचनं । तदाह–**एषामिति** । 'दासीभाराणा'मिति बहुवचननिर्देशादाद्यर्थोऽवगम्यते । तदाह–**दासीभारादेरिति** । **कुप्रत्ययान्त इति** । 'कृग्रोरुच्चे'ति व्युत्पादितत्वात् । प्रत्ययस्वरेणान्तोदात्तोऽयम् । **आद्युदात्त इति** । वृजी वर्जने 'इगुपधात्कि'दितीन्नन्तत्वात् । फिषस्तु 'इगन्तानां च द्व्यषा'मित्यादिर्द्वितीयो वोदात्तः । एवं कुरुरपि । रिक्तगुर्वादयस्त्रयः कर्मधारयाः । **असूतजरती** । **अश्लीलदृढरूपेति** । असूताऽश्लीलशब्दौ नञ्समासत्वा-

शे.]तान् पाति कुजपः, कृतस्य कुजपस्य वाऽपत्यमित्यर्थे ऋष्यणन्तावेतौ–कार्तकौजपौ । सावर्णिमाण्डूकेयौ, अवन्त्यश्मकाः, पैलश्यापर्णेयाः,–अत्र बहुवचनमविवक्षितमिति वृत्तिकृत् । कपिश्यामकर्णेयाः । केचितु पैलश्यापर्णेयाः । कपिश्यापर्णेयाः इति पठन्ति । शैतिकाक्षपाञ्चालेयाः । अत्रापि बहुत्वमविवक्षितम् । कटुकवार्चलेयाः । वार्ध्रलेयाः इत्यन्ये पठन्ति । शाकलशुनकाः, शाकलशाणकाः, शाणकबाभ्रवाः, आर्चाभिमौद्गलाः, कुन्तिसुराष्ट्राः, वीतिसुराष्ट्राः । तण्डिवतण्डाः । अविमत्तकामविद्धाः । बाभ्रवशालङ्कायनाः । बाभ्रवदानच्युताः, कठकालापाः, कठकौथुमाः, कौथुमलौगाक्षाः, स्त्रीकुमारम्, मौदपैप्पलादाः, [मौदपैप्पलादाः] । अस्य द्विःपाठः पक्षे समासान्तोदात्तत्वाय । वत्सजरन्तः, सौश्रुतपार्थिवाः, जरामृत्यू, याज्यानुवाक्ये । **वृत्** । **क्षुल्लकश्च** । वृत्तावेषु तत्पुरुष इति नानुवर्त्तितम् । एवञ्चाऽव्ययीभावाद्यसम्भवेऽपि द्वन्द्वतत्पुरुषसाधारणानीमानि । युक्तं चैतत् । अन्यथा तत्पुरुषप्रकरणमध्ये 'परिप्रत्युपापे'ति पञ्चसूत्री न कृता स्यात् । परन्तु बहुधा तत्पुरुषा एवैषूदाहरणमिति बोध्यम् । **क्षुल्लकेत्यादी** कर्मधारयौ । **उष्ट्रसादी** कर्मधारयः, षष्ठीसमासो वा । **गोसाद इति** । सदेर्घञन्तेन, ण्यन्तादणन्तेन वा समासः । तस्मादेव णिनौ–गोसादी । गोषु सीदति, गाः सादयतीति वा विग्रहः । इणजादिभ्य इतीणन्तः सादिरत्र गृह्यते इत्यन्ये । **कुरुगार्ह** । **एषां सप्तानामिति** । षण्णामिति क्वचित्कोऽपपाठः, मनोरमाविरोधात् । सप्तापि भिन्नानि पदानि, आद्ययोः षष्ठ्याः सौत्रो लुक् । इतरेषां पञ्चानां षष्ठ्याः स्थाने प्रथमैकवचनम् । 'दासीभाराणा'मिति बहुवचननिर्देशादाद्यर्थावगतिरिति भावः । **कुप्रत्ययान्त इति** । तथा चान्तोदात्त इति भावः । केचित्तु तत्र नित्त्यनुवर्त्तयन्ति । तन्न । 'इगन्तानाञ्च द्व्यषा'मित्यनेन कुरौ पर्यायेणोभयोरप्युदात्तत्वस्वीकारेण फलाऽभावादित्याहुः । वृत्तिरप्येवम् । मूले तु प्रत्ययस्वरमात्रमुक्तम् । **रिक्तगुर्वादयः** कर्मधारयाः । **असूतो** नञ्समास आद्युदात्तः । अश्ली-

तत् श्लीलम् । सिध्मादित्वाल्लच् । कपिलकादित्वाल्लत्वम् । पारे वडवेव पा॒रेव॑डवा । निपातनादिवार्थे समासो विभक्त्यलोपश्च । पारशब्दो घृतादित्वादन्तोदात्तः । तैतिलानां कद्रूः तैति॒लक॑द्रूः । तितिलिनोऽपत्यं छात्रो वा इत्यणन्तः । पण्यशब्दो यदन्तत्वादाद्युदात्तः । पण्य॑कम्बलः । ❀ **संज्ञायामिति वक्तव्यम्** । अन्यत्र पणितव्ये कम्बले समासान्तोदात्तत्वमेव।प्रतिपदोक्ते समासे [तु]'कृत्याः' इत्येष स्वरो विहितः । दास्या भारो दा॒सीभा॑रः । दे॒वहू॑तिः । यस्य तत्पुरुषस्य पूर्वपदप्रकृतिस्वरत्वमिष्यते, विशिष्य च न विहितं, स सर्वो दासीभारादिषु द्रष्टव्यः । स राये स पुर॑न्ध्याम् । पुरं शरीरं धीयतेऽस्यामिति 'कर्मण्यधिकरणे चे'ति किप्रत्ययः। अलुक् छान्दसः । 'नञ्विषयस्ये'त्याद्युदात्तः पुरशब्दः । **चतुर्थी तदर्थे** ।६।२।४३। चतुर्थ्यन्तार्थाय यत्तद्वाचिन्युत्तरपदे चतुर्थ्यन्तं प्रकृत्या । यूपाय दारु यूप॑दारु । **अर्थे** ।६।२।४४। अर्थे परे चतुर्थ्यन्तं प्रकृत्या । दे॒वार्थ॑म् । **क्ते च**

---

सु.]दाद्युदात्ता। **श्रीर्यस्यास्तीति**।श्रीशब्दो[ऽपि] लावण्यवचनः। **कापिलकादित्वाल्लत्वमिति**।'कृपो रो लः' इत्यत्र कपिलकादीनामुपसङ्ख्यानाल्लत्वम् । लावण्यरहिताऽपि कुब्जत्वादीनामभावात्संस्थानमात्रेण दृढेत्यर्थः । **पारेवडवेति** । 'पारेमध्ये' इत्यव्ययीभावस्तु न, तथा सति सूत्रे दीर्घनिर्देशोऽयुक्तः स्यात्,वडवायाः पारस्याऽसंभवाच्च । **तितिलिनोऽपत्यमिति**।तिलाः सन्त्यस्मिन्निति तिली । तिलशब्दान्मत्वर्थीय इनिः । [टिलोपः] । पृषोदरादित्वात्तिशब्दस्य द्वित्वम् । अत्र यदाऽपत्येऽण् तदा 'नस्तद्धिते' इति टिलोपः।यदा तु छात्रे, तदानीम् 'इनण्यनपत्ये' इति प्रकृतिभावे प्राप्ते 'नान्तस्य टिलोपे सब्रह्मचारी'त्यनेन टिलोपः। **पण्यशब्द इति** । 'अवद्यपण्ये'ति यदन्तो 'यतोऽनावः' इत्याद्युदात्तः । **संज्ञायामिति** । नियतप्रमाणकस्य नियतमूल्यस्य कम्बलस्यैषा संज्ञा । **समासान्तोदात्तत्वमेवेति** । ननु पण्यशब्दस्य कृत्यप्रत्ययान्तत्वात्तत्पुरुषे तुल्यार्थेत्यनेन पूर्वपदप्रकृतिस्वरेण भाव्यमत आह–**प्रतिपदोक्ते हीति** । 'कृत्यतुल्याख्या अजात्ये'ति यः कृत्यसमासः प्रतिपदोपदोक्तस्तत्रैव सः । अयं तु 'विशेषणं विशेष्येणे'ति सामान्यलक्षणविहितः, कम्बलशब्दस्य जातिवचनत्वात् । न च 'कृत्यतुल्याख्या अजात्ये'त्यस्य वैयर्थ्यं शङ्क्यं, तद्धि गुणक्रियावाचिनोरनियमेन पूर्वनिपातप्रसङ्गे कृत्यान्तस्य पूर्वनिपातार्थं वचनं, नतु जातिनिषेधार्थम्।अजात्येति वचनं न्यायसिद्धार्थानुवाद एवेति स्थितम् । **दासीभार इति** । 'दंसेष्टो न आ च' इति टित्वान्ङीप् । उदात्तनिवृत्तिस्वरेण दा॒सीशब्दोऽन्तोदात्तः। **देवहूतिरिति**। दे॒वः पचाद्यजन्तः। **यस्य तत्पुरुषस्येत्यादि** । एतेन दासीभारादेराकृतिगणत्वं दर्शितम् । **चतुर्थी** । तस्मै इदं तदर्थं । तच्छब्देन चतुर्थ्यन्तस्यार्थ उच्यते । तदाह–**चतुर्थ्यन्तार्थाय यदिति** । **यूपदार्विति** । निदिति दीर्घश्चेत्यनुवर्तमाने 'कुयुभ्यां चे'ति पः । नित्त्वादाद्युदात्तो यूपशब्दः । **देवार्थमिति** । देवः पचाद्यजन्तः । **गोहितमिति** ।

---

शे.]लेत्यादि। अश्लीला चासौ दृढरूपा च । लावण्यरहितापि दृढरूपा। कुब्जत्वादिरहितत्वात् संस्थानमात्रेण शोभनेत्यर्थः। **निपातनादिति** । पारेवडवेवेत्यर्थः। 'पारेमध्ये' इत्यव्ययीभावस्तु न, सूत्रे दीर्घनिर्देशात्, वडवायाः पाराऽसम्भवाच्च । **तितिलिन इति** । तिलाः सन्त्यस्य तिली । पृषोदरादित्वात्तिशब्दस्य द्वित्वम् , अपत्ये 'नस्तद्धिते' इति टिलोपः, छात्रार्थे 'सब्रह्मचारी'त्यादिवचनेन टिलोपः । '**पण्यकम्बलः** कर्मधारयः, बहुलग्रहणात्समास' इत्युक्तं समासप्रकरणे । पण्यशब्दो यदन्तत्वादाद्युदात्तः । केचित्तु–ननु द्वितीयाकृत्या इत्येव सिद्धमिति चेन्न, प्रतिपदोक्ते 'कृत्यतुल्याख्ये'ति समासे एव तत्प्रवृत्तेः । इह तु विशेषणसमासः । नन्वजात्येति प्रतिषेधसामर्थ्याद्दुर्लभोऽसाविति चेन्न, अजात्येति न जातिप्रतिषेधार्थं, किन्तु न्यायसिद्धार्थानुवादकमात्रम् । तत्फलन्तु गुणक्रियावाचिनामनियमेन पूर्वनिपाते प्राप्ते तन्नियमार्थं सूत्रमिति व्युत्पादनम् । स्पष्टञ्चेदं वृत्त्यादावित्याहुः । तन्न । स्वरविधायके 'कृत्यतुल्याख्ये'त्येव वक्तव्ये कृत्यतुल्यार्थयोर्वियोगपाठेनाऽर्थपदघटितपाठेन च तदंशे परिभाषाया अप्रवृत्तेः। अत एव प्रकृतसूत्रे 'कृत्यप्रत्ययान्तत्वात्पूर्वपदप्रकृतिस्वरे सिद्धे'पण्यकम्बलः सञ्ज्ञायामेव','पण्यकम्बल एवे'ति वा नियमार्थमिदं विशेषणसमास'इति भाष्यकैयटयोरुक्तम्।**सञ्ज्ञायामिति** । नियमार्थमिदन्तदाह–**अन्यत्रेति** । प्रतिपदोक्त इत्यादि तु वृत्त्यनुरोधेन । तेन सोऽपि न भवतीति तद्भावः । दास्या भारो दासीभारः। **यस्य तत्पुरुषस्येति**। केचित्तु यस्य समासस्येत्येव वदन्ति। **यूपदार्विति**।यूपं आद्युदात्तः, 'कुयुभ्याञ्चे'त्यत्र निदित्यनुवृत्तेः। प्रकृतिविकृतिभाव एवाऽयं स्वर इष्यते, 'अर्थे' 'क्ते च' इत्यनयोरारम्भात् । तेन 'कुबेरबलि'रित्यत्र न । तदर्थे किम् ? । गोसुखम् । **देवार्थमिति** । देवायेदमिति विग्रहः, तादर्थ्ये चतुर्थी । **क्ते च** । प्रतिपदोक्तत्वाद्धितरक्षिताभ्यां समासस्यैवाऽत्र ग्रहणम् । **गोहितमित्यत्र** 'हितयोगे चे'ति चतुर्थी । एवञ्गोरक्षितमित्यत्र तादर्थ्ये चतुर्थी । अन्ये तु हितशब्दे नाऽस्य प्रवृत्तिः, अत्रापि तदर्थे इत्यनुवृत्तेः।अत एवाऽस्य सूत्रस्य प्रकृतिविकृतिभाव एव 'चतुर्थी तदर्थे'त्यस्य प्रवृत्तौ ज्ञापकता 'चतुर्थी तदर्थार्थे'ति सूत्रभाष्योक्ता सङ्गच्छते । न ह्यत्र तस्य प्रवृत्तिः, हितयोगे तादर्थ्याऽभावात्।न च 'हिते चे'ति वक्तव्ये 'क्ते चे'ति सामान्यसूत्रं रक्षितार्थमपि सज्ञापकमिति भाष्याशयः, गुरु-

।६।२।४५। क्तान्ते परे चतुर्थ्यन्तं प्रकृत्या । गोहि॑तम् । **कर्मधारयेऽनिष्ठा** ।६।२।४६। क्तान्ते परे पूर्वमनिष्ठान्तं प्रकृत्या । श्रेणि॑कृताः । श्रेणिशब्द आद्युदात्तः । पू॒गकृ॑ताः। पूगशब्दोऽन्तोदात्तः। कर्मधारये किम् ?। श्रेण्या कृतं श्रेणिकृतम् । अनिष्ठा किम्?। कृताऽकृ॒तम् । **अहीने द्वितीया** ।६।२।४७। अहीनवाचिनि समासे क्तान्ते परे द्वितीयान्तं प्रकृत्या । क॒ष्टश्रि॑तः । ग्रा॒मग॑तः । कष्टशब्दोऽन्तोदात्तः, ग्रामशब्दो नित्स्वरेण । अहीने किम् ?। कान्तारात्ती॒तः । * **अनुपसर्ग इति वक्तव्यम्** । नेह–सुखप्रा॒प्तः । 'थाथे'त्यस्यापवादोऽयम् । **तृतीया कर्मणि** ।६।२।४८। कर्मवाचके क्तान्ते परे तृतीयान्तं प्रकृत्या । त्वो॑तासः । रु॒द्रह॑तः । म॒हारा॒जह॑तः । रुद्रो रगन्तः । कर्मणि किम् ? । रथेन यातो रथयातः । **गतिरनन्तरः** ।६।२।४९। कर्मार्थक्तान्ते परेऽव्यवहितो गतिः प्रकृत्या । 'थाथे'त्यस्याऽपवादः । पु॒रोहि॑तम् । अनन्तरः किम् ?। अभ्युद्धृ॑तः । कारकपूर्वपदस्य तु सति-

सु.]'चतुर्थी चाशिष्ये'त्यादिना चतुर्थी। **आद्युदात्त इति**। श्रिञ् सेवायाम् । 'वह्रिश्रियुद्रुग्लाहात्वरिभ्यो नि'दिति निप्रत्ययस्य नित्त्वादाद्युदात्तः । **पूगशब्द इति** । 'मुदिग्रोर्गग्गौ' बाहुलकात्पूञोऽपि गक् । **कृताऽकृतमिति** । 'क्तेन नञ्विशिष्टेनाऽन'ञिति समासः । 'अनिष्टे' त्युच्यमाने इहैव स्यात् । श्रेण्यादिसमासाऽपेक्षया 'क्तेन नञ्विशिष्टेनाऽन'ञिति समासस्य प्रतिपदोक्तत्वादिति हरदत्तः । **अहीने** । हीनं = त्यक्तं, न हीनमहीनम् । **अहीनवाचिनि समास इति** । पूर्वपदद्वारेण समासस्याऽहीनवाचित्वम् । **कष्टश्रित इति** । 'द्वितीयाश्रिते'ति समासः । **कष्टशब्द इति** । क्तान्तत्वात् । **ग्रामशब्द इति** । 'ग्रसेरा चे'ति मन्प्रत्ययान्त आद्युदात्तः । **अनुपसर्ग इति वक्तव्यमिति** । सूत्रेऽहीनग्रहणमपनीयाऽनुपसर्गग्रहणं कर्तव्यं, व्यापकत्वादित्यर्थः । **थाथेत्यस्यापवाद इति**। तथा च प्रत्युदाहरणे थाथादिस्वर इति भावः । **तृतीया** । **त्वोतास इति** । त्वया ऊताः–रक्षिताः–त्वोतासः । 'प्रत्ययोत्तरपदयोश्चे'ति मपर्यन्तस्य त्वादेशे दकाराऽकारलोपश्छान्दसः।अवतेः क्तः। 'ज्वरत्वरे'त्यूठ्।'एत्येधत्यूठ्सु' इति वृद्धिः।इडागमस्य चाऽभावश्छान्दसः । तदन्ताज्जसः 'आज्जसेरसु'गित्यसुगागमः । पूर्वपदप्रकृतिस्वरे कृते 'एकादेश उदात्तेनोदात्तः' । ततः स्वरितप्रचयौ । **रगन्त इति** । 'रोदेर्णिलुक् चे'ति विहितः। **महाराजहत इति** । 'राजाहःसखिभ्यष्ट'जिति टजन्तो महाराजशब्दोऽन्तोदात्तः । **रथेन यात इति** । गत्यर्थत्वात्कर्तरि क्तः । **पुरोहितमिति** । 'पूर्वाधरावराणामसिपुरधवश्चैषा'मित्यसिप्रत्ययान्तः प्रत्ययस्वरेणाऽन्तोदात्तः पुरःशब्दः । अत्र समासान्तोदात्तत्वम्, अव्ययपूर्वपदप्रकृतिस्वरः, कृत्स्वरः, थाथादिस्वर–इत्येतेषु प्राप्तेषु पूर्वपदप्रकृतिस्वरो भवति । **अभ्युद्धृत इति** । इह हृतशब्दस्योच्छब्देन समासे पुरोहितमित्यत्रेव गतिस्वरेणाद्युदात्त उद्धृ॑तशब्दः।तस्य पुनरभिशब्देन समासः । तत्र 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहण'मिति परिभाषया उद्धृतशब्दः क्तान्त उत्तरपदम्। एवं समासान्तोदात्तत्वे प्राप्ते,तद्बाधकाऽव्ययपूर्वपदप्रकृतिस्वरत्वे, तदपवादे कृत्स्वरे, तदपवादस्थाथादिस्वरः प्राप्तस्तमपोह्याऽभेरयं स्वरः स्यात्सोऽनन्तरग्रहणेन वार्यते । नन्वनन्तरग्रहणेनाप्यसौ दुर्वारः,कृद्ग्रहणपरिभाषया उद्धृतशब्दस्य क्तान्तत्वेऽभेदस्तदानन्तर्यसत्वादिति चेन्मैवम्, अनन्तरग्रहणसामर्थ्याद्धि धातोरनन्तरा गतिराश्रीयते । अभिश्च तथा न । नन्वेवं मा भूदभेः स्वरः, इष्टसिद्धिस्तु कथम् ?।अभ्युद्धृतशब्दे हि उच्छब्दस्य स्वर इष्यते 'संसृष्टं धनमुभयं समाकृ॑त'मिति मन्त्रे समाकृतशब्दे आङः स्वरदर्शनात् । न चाप्तौ प्रकृतसूत्रेण सिध्यति। प्रथमसमासे तत्प्रवृत्तावपि द्वितीयसमासे थाथादिस्वरस्य प्राप्तेरुक्तत्वात्। न च तं बाधित्वा

शे.]त्वादुत्तरार्थं तस्यावश्यकत्वाच्चेत्याहुः।**कर्मधारयेऽनिष्ठा**। अत्र प्रतिपदोक्तश्रेण्यादिसमासस्यैव ग्रहणम्। तेन वैदिकपण्डित इत्यत्र न । इदञ्च 'महान्व्रीही'ति सूत्रे भाष्ये स्पष्टम् । **कृताऽऽकृतमिति** । 'आकृत'मिति च्छेदः। 'कृतापकृतादीनाञ्चोपसंख्यान'मिति प्रतिपदोक्तः समासः।'अकृत'मिति च्छेदस्तु न युक्तः, तस्य क्तान्तोत्तरपदत्वाऽभावेनाऽप्राप्तेः। **अहीनवाचिनीति** । अविभागवाचिनीत्यर्थः । थाथादिस्वरापवादोऽयम् । **अनुपसर्ग इतीति** । अनेनैवातीतादिव्यावृत्तिसिद्धावहीन इति व्यर्थमित्याहुः। **तृतीयाक**। अयमपि थाथादिस्वरापवादः। **त्वो॑तास इति** । त्वया ऊताः= रक्षिताः–त्वोतासः । 'प्रत्ययोत्तरपदयोश्चे'ति मपर्यन्तस्य त्वादेशे दकारलोपश्छान्दसः । अवतेः क्तः । 'ज्वरत्वरे'त्यूठ् । 'एत्येधती'ति वृद्धेरिडागमस्य चाऽभावश्छान्दसः । पूर्वपदप्रकृतिस्वरे कृते एकादेश उदात्तेनोदात्तः, ततः स्वरितः । **रथयात इति** । गत्यर्थत्वात्कर्तरि क्तः। **गतिरनन्तरः**। गतिः क्रियन्तः,पुंल्लिङ्गाऽनन्तरपदसामानाधिकरण्यात् । निपातनादनुनासिकलोप इति हरदत्तः । गतिशब्दस्य तत्सञ्ज्ञकशब्दपरत्वाच्च सामानाधिकरण्यानुपपत्तिरिति **कश्चित्**। **पुरोहितमिति** । पुरःशब्दोऽसिप्रत्ययस्वरेणाऽन्तोदात्तः। थाथादिस्वरापवादोऽयम् । **अभ्युद्धृत इति**। इह हृतशब्दस्योच्छब्देन समासे पुरोहितमित्यत्रेव गतिस्वरेणाद्युदात्त उद्धृ॑तशब्दः। तस्य पुनरभिशब्देन समासः। अयमेव समासक्रमो भाष्यादिसम्मत इति प्रागेव निरूपितम् । तत्र कृद्ग्रहणपरिभाषया उद्धृतस्य क्तान्तोत्तरपदत्वात् । अपवादक्रमेण समासा-

**शिष्टस्थाथादिस्वर एव । दूरादागतः । तादौ च निति कृत्यतौ ।६।२।५०।** तकारादौ निति तुशब्दवर्जिते कृति परेऽनन्तरो गतिः प्रकृत्या । अग्ने रायो नृतमस्य प्रभूतौ । संगतिं गोः । कृत्स्वरापवादः । तादौ किम् ? । प्रजल्पाकः । निति किम् ?। प्रकर्ता । तृजन्तः। अतौ किम् ?। आगन्तुः। **तवै चान्तश्च युगपत् ।६।२।५१।**

सु.]गतिस्वरः प्रवर्तत इति वाच्यम् ,द्वितीयसमासे उदः पूर्वपदत्वाऽभावात्। अत्रोच्यते–धातोरनन्तर इति व्याख्यानादेव पूर्वपदत्वं विनापि स्वरोऽयं प्रवर्तते । न हि क्तप्रकृतिभूतं धातुं प्रति पूर्वपदत्वं गतेः संभवति । तस्मादभ्युद्धृतं समाकृतमिति तावत्सुस्थम् । ननु दूरादागत इत्यादौ कारकपूर्वेऽपि गतिस्वरः स्यात् , इष्यते तु थाथादिस्वरः । अत आह–**कारकपूर्वेति ।** अयं भावः–अनन्तरशब्दोऽयमन्तरमपेक्ष्य प्रवर्तते, तत्र चानन्तरो गतिरित्युक्तेऽन्तरोऽपि संनिधानाद्गतिरेव प्रतीयते । ततश्चाऽपूर्वपदार्थमप्यनन्तरग्रहणं गतिद्वयसमवधाने एवानन्तरस्य प्रकृतिस्वरत्वं प्रापयतीति दूरादागतादौ न दोष इति । अथ वा 'कारकाद्दत्तश्रुतयोः' इति सूत्रे कारकादिति योगो विभज्यते । क्तग्रहणं, गतिग्रहणं चानुवर्तते । कारकात्परं क्तान्तं सगतिकमुत्तरपदमन्तोदात्तं स्यादित्यर्थः । तत्र 'दूराद्गत' इत्यादौ थाथादिसूत्रेणैव सिद्धत्वात् दूरादागत इत्यादौ 'गतिरनन्तरः' इत्यस्य बाधनार्थमेवेदं सूत्रमिति दिक् । **दूरादागत इति ।** 'स्तोकान्तिके'ति समासः । 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक् । **प्रभूताविति ।** क्तिनयम् । **प्रजल्पाक इति ।** 'जल्पभिक्षकुट्टलुण्टवृङः षाकन्' । **आगन्तुरिति ।** 'सितनिगमिसच्यविधाञ्क्रुशिभ्यस्तुन्'। ननु कृतीति व्यर्थम्। तथा हि–गतेरयं स्वरो विधीयते, गतिसंज्ञा च धातुमाक्षिपति, स च प्रत्ययविशिष्ट एव प्रयोगार्हः। धातोश्च द्वये प्रत्ययाः, तिङः कृतश्च। तत्र तिङन्ते पूर्वपदत्वाऽसंभवात्कृदन्त एव भविष्यतीति चेत्सत्यम्। कृद्ग्रहणं कृत्संज्ञाप्रवृत्तिकालोपलक्षणार्थं, तेन कृदुपदेशे तादित्वलाभात्प्रलपितेत्यादि सिध्यति, स्वरप्रवृत्तिवेलायां तादित्वाऽभावेऽपि पूर्वं तत्सत्त्वात् । आदिग्रहणं शक्यमकर्तुं, 'यस्मिन्विधि'-रित्येव सिद्धेः । **तवै चा । अन्त उदात्त इति ।** कथं पुनरन्तरेणोदात्तग्रहणमुदात्तो भवतीत्ययमर्थो लभ्यते ? । शृणु । प्रकृत्येति वर्तते।तत्रैवमभिसंबन्धः क्रियते, तवैप्रत्ययान्तस्य यः प्रकृत्याश्रयः स्वरः प्राप्तः सोऽन्त्यस्य भवतीति, स

शे.]न्तोदात्तत्वे तद्बाधकाऽव्ययपूर्वपदप्रकृतिस्वरत्वे,तद्बाधककृत्स्वरे,तद्बाधकथाथादिस्वरे प्राप्ते तमपोद्याऽयं प्राप्तः।नन्वनन्तरग्रहणेऽप्यसौ दुर्वारः, कृद्ग्रहणपरिभाषयोद्धृतस्य क्तान्तत्वेऽभेस्तदानन्तर्यस्य सत्त्वादिति चेन्न, अनन्तरग्रहणसामर्थ्याद्धि धातोरनन्तरो गतिराश्रीयतेऽभिश्च न तथेति न दोषः । नन्वभिस्वराऽभावेऽपि अभ्युद्धृतशब्दस्य थाथादिस्वरेणान्तोदात्तत्वापत्तिः, इष्यते तूच्छब्दस्य स्वरः, 'संसृष्टं धनमुभयं समाकृत'मित्यादिमन्त्रे समाकृतशब्दे आङः स्वरदर्शनात् । न चासौ प्रकृतसूत्रेण सिद्ध्यति, प्रथमसमासे तत्प्राप्तावपि द्वितीयसमासे थाथादिस्वरप्रवृत्तेरुक्तत्वात्।न च तं बाधित्वा गतिस्वरः प्रवर्त्तते, अभ्युद्धृतशब्दे उदः पूर्वपदत्वाऽभावादिति चेन्न,'धातोरनन्तर' इति व्याख्यानादेव, योगविभागेनाऽनन्तरो गतिरपूर्वपदमपि प्रकृत्येति व्याख्यानादेव वा पूर्वपदत्वं विनाऽप्यस्य प्रवृत्तिस्वीकारात् । अन्यथा धातुं प्रति गतित्वेन तं प्रति पूर्वपदत्वाऽसम्भवेन सूत्रार्थाऽसङ्गतेः । एवञ्चाभ्युद्धृतमित्यत्रोद एव स्वरः । इदमेवाऽनन्तरग्रहणं कृद्ग्रहणपरिभाषाया ज्ञापकमित्यन्यत्र प्रपञ्चितम्। नन्वेवमपि व्यवहितवारणेन 'धातोरनन्तर' इति व्याख्यान[स्यै] चारितार्थ्येन कथं सतिशिष्टथाथादिस्वरबाधकत्वमिति चेन्न, 'अहीने द्वितीये'ति सूत्रादनुपसर्गग्रहणमत्राऽनुवर्त्तते। तेनैव 'अभ्युद्धृत'मित्यादौ अभ्यादेर्व्यावृत्तिसिद्धौ अनन्तरग्रहणात्कक्षान्तरप्राप्तथाथादिस्वरबाधः, एवञ्चात्र तत्सामर्थ्यात्पूर्वपदमित्यपि न सम्बध्यत इत्याहुः ।

**कारकपूर्वस्य त्विति ।** अयं भावः–'कारकाद्दत्ते'ति सूत्रे कारकादिति योगो विभज्यते। क्तग्रहणं गतिग्रहणञ्चानुवर्त्तते, कारकात्परं क्तान्तं सगतिकमुत्तरपदमन्तोदात्तं स्यादित्यर्थः । एवञ्च 'दूराद्धूत' इत्यादौ थाथादिस्वरेण कृत्स्वरेण वा सिद्धेरिदं 'दूरादागत' इत्यादावाभ्युद्धृतन्यायेन प्राप्तगतिरनन्तर इत्यस्य बाधनार्थम्। एतेनोक्तरीत्या दूरादागत इत्यादौ कारकपूर्वेऽपि गतिस्वरः स्यात् , इष्यते तु थाथादिस्वर इत्यपास्तमिति दिक् । **तादौ च नि ।** कृत्स्वरापवादोऽयम् । तकारादेर्नित्प्रत्ययस्याऽकृतोऽभावाद्गतिग्रहणेन धातोराक्षेपेण तत्प्रकृतिकप्रत्ययस्यैव ग्रहणाच्च कृल्लाभे कृद्ग्रहणं कृत्सञ्ज्ञाप्रवृत्तिकाले यस्तकारादिस्तद्ग्रहणार्थम्। तेन प्रलपितेत्यादि सिध्यति। स्वरप्रवृत्तिवेलायां तादित्वाऽभावेऽपि पूर्वन्तत्सत्त्वात्। 'यस्मिन्विधि'रित्येव सिद्धे आदिग्रहणश्चिन्त्यप्रयोजनम् । **अनन्तर इति ।** अत्रापि पूर्वसूत्रवदेव व्यवस्था बोध्या । **आगन्तुरिति ।** नन्वताविति पर्युदासः क्तिन एवोचितः, 'गृण्णे चोदस्व सुष्टुति'मित्यादौ गतिस्वराऽदर्शनादिति चेन्न, तत्रोपायान्तरस्यैवाऽनुसर्तव्यत्वात् । न ह्यताविति पर्युदासेन तन्निर्वाहः, कृदुत्तरप्रकृतिस्वरेण धातोरुदात्तत्वापत्तेः, अन्तोदात्ततायाश्च तत्रेष्टत्वात् । किं चाऽताविति क्तिनः पर्युदासे 'प्रभूतौ सङ्गति'मित्यादौ गतिस्वरो न सिद्ध्येत्, तस्मात्तुन एवायं पर्युदासः । यत्तु 'मन्क्तिन्व्याख्याने'त्यादिना सुष्टुत्यादावन्तोदात्तत्वमिति, तन्न, प्रभूतावित्यादिसिद्धये

तवैप्रत्ययान्तस्याऽन्त उदात्तो गतिश्चाऽनन्तरः प्रकृत्या, युगपच्चैतदुभयं स्यात् । अन्वेतवा उ । कृत्स्वरापवादः । **अनिगन्तोऽञ्चतौ वप्रत्यये** ।६।२।५२। अनिगन्तो गतिर्वप्रत्ययान्तेऽञ्चतौ परे प्रकृत्या । ये पराञ्चस्तान् । अनिगन्त इति किम् ?। प्रत्यञ्चो यन्तु । चुस्वरात्परत्वादयमेव । जुहि वृष्ण्यानि कृणुही पराचः । वप्रत्यये किम् ?। उदञ्चनम् । **न्यधी च** ।६।२।५३। वप्रत्ययान्तेऽञ्चताविगन्तावपि न्यधी प्रकृत्या । न्यङ्ङुत्तानः । 'उदात्तस्वरितयोर्यण'इति अञ्चतेरकारः स्वरितः । अध्यङ् । **ईषदन्यतरस्याम्** ।६।२।५४। ईषत्कडारः । [ ईषत्कडारः ]। ईषदित्ययमन्तोदात्तः । ईषद्भेदं इत्यादौ कृत्स्वर एव । **हिरण्यपरिमाणं धने** ।६।२।५५। सुवर्णपरिमाणवाचि पूर्वपदं प्रकृत्या वा धने। द्वे सुवर्णे परिमाणमस्येति द्विसुवर्णं, तदेव धनं द्विसुवर्णधनम्। द्विसुवर्णधनम्। बहुव्रीहावपि परत्वाद्विकल्प एव । [ द्विसुवर्णधनः । द्विसुवर्णधनः ]। हिरण्यं किं ?। प्रस्थधनम् । परिमाणं किं ?। काञ्चनधनम् । धने किम् ?। निष्कमाला । **प्रथमोऽचिरोपसंपत्तौ** ।६।२।५६। प्रथमशब्दो वा प्रकृत्याऽभिनवत्वे । प्रथमवैयाकरणः । प्रथमवैयाकरणः । संप्रति व्याकरणमध्येतुं प्रवृत्त इत्यर्थः । प्रथमशब्दः प्रथेरमजन्तः । 'अँचो'ति किम् ? । प्रथमवैयाकरणः । **कतरकतमौ कर्मधारये** ।६।२।५७। वा प्रकृत्या । कतरकठः। कतरकठः। कर्मधारयग्रहणमुत्तरार्थम् । इह तु प्रतिपदोक्तत्वा-

---

सु.]चोदात्त एवेति युगपद्ग्रहणं पर्यायनिवृत्त्यर्थम् । **अन्वेतवा उ इति** । 'उपसर्गाश्चाभिवर्ज'मित्यनुरायुदात्तः। **अनिगन्तोऽञ्चतौ । पराञ्च इति**। 'ऋत्वि'गित्यादिना क्विन् । स च वकारमात्रं, ककारादीनामनुबन्धत्वात् । 'उगिदचा'-मिति नुम्। पराशब्द आद्युदात्तः । **प्रत्यञ्च इति** । कृदुत्तरपदप्रकृतिस्वरः । **परत्वादिति** । चुस्वरस्यावकाशः-दधीचः, यत्र गतिर्नास्ति।अनिगन्तस्वरस्यावकाशः-पराञ्चः।'पराच'इत्यादावुभयप्रसङ्गे परत्वादनिगन्तस्वर एव भवति । न चायं युक्तो विप्रतिषेधः, चुस्वरः सतिशिष्टः, भसंज्ञायामल्लोपे च कृते प्राप्तत्वात्। सत्यम् । नायं विप्रतिषेधः। किं तर्हि ?। इष्टिरेव । 'चोरनिगन्तेऽञ्चतावप्रत्यये इत्येव स्वर इष्यते' इति हरदत्तः । इहापि मूले **परत्वादि**त्यस्येष्टत्वादित्यर्थः । **न्यधी च** । अत्रापि चुस्वरादयमेव । कृत्स्वरापवादौ योगौ । **ईषदन्य** । ईषच्छब्दः पूर्वपदं प्रकृतिस्वरं वा स्यात् । **अन्तोदात्त इति** । फिट्स्वरेण । एतदभावे समासान्तोदात्तत्वम् । **ईषद्भेद इति** । 'ईषद्दुःसुषु कृच्छ्राऽकृच्छ्रार्थेषु खल्' । **कृत्स्वर एव भवतीति** । परत्वात् । अथ वा 'ईषद्गुणवचनेने'ति प्रतिपदोक्तसमासग्रहणादुपपदसमासेऽस्या-ऽप्रवृत्तिरिति । **द्वे सुवर्णे इति** । 'पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश' । 'पलं सुवर्णाश्चत्वारः' इति । **द्विसुवर्ण-मिति** । पक्षे समासस्वरः। **बहुव्रीहावपीति** । अत्र तत्पुरुषाधिकाराऽभावात् । **प्रथमो** । अचिरोपसंपत्तिः-अचिरो-पसंश्लेषः । अभिनवत्वमित्यर्थः । तदाह-**अभिनवत्व इति** । **अचीति किमिति** । अचिरोपसंपत्ताविति किमर्थ-मित्यर्थः । **प्रथमवैयाकरण इति** । वैयाकरणानामाद्यो मुख्यो वा यः प्रथमवैयाकरणशब्दः स नित्यमन्तोदात्त एव ।

---

शे.]तत्र कारकानुवृत्तेर्न्याय्यत्वात्, वृत्तिकृता दर्शितत्वाच्च। 'वृष्णे चोदस्व सुष्टुति'मित्यादौ तु स्तोत्रकरणीभूताया ऋचः साध्वसिरित्यादिवत्कर्तृत्वविवक्षायां क्तिजन्तत्वान्न दोषः । **तवै चान्त** । कृत्स्वराऽपवादः । **अन्त उदात्त इति** । यद्यप्युदात्तग्रहणं दुर्लभं, तथापि 'गतिः प्रकृत्या भवती'त्युक्ते उदात्तो बुद्धिमारोहतीति स एवान्तस्य भवतीति भावः । **अनन्तर इति** । अत्रापि पूर्ववदेव व्यवस्था । **अन्वेतवा इति** । अनुरुपसर्गत्वादाद्युदात्तः । **प्रत्यञ्च इति** । ननु 'अनिगन्तः' इत्युक्तावपि 'प्रत्यञ्च'मित्यादौ यणि अनिगन्तत्वादेतत्प्रवृत्तिर्दुर्वारा । न च स्थानिवत्त्वं, पूर्वपदस्य कार्यित्वेना-ऽपूर्वविधित्वात्। 'अनिगन्त' इति तु 'प्रतीच' इत्येतद्व्यावृत्त्या चरितार्थमिति चेन्न,'इगन्तस्य यणादेशे कृतेऽपि प्रतिषेधः' इति वचनेनैव निर्वाहात् । एवञ्च 'प्रत्यञ्चः' इत्यादौ कृदुत्तरपदप्रकृतिस्वर एव । **परत्वादिति** । चुस्वरावकाशः-'सा कद्रीची' अस्यावकाशः-'ये पराञ्चः',उभयप्रसङ्गे परत्वादयमित्यर्थः।वस्तुतस्तु इष्टत्वादित्यर्थः।एतेनाऽस्मिन् समासस्वरे कृते विभक्तौ 'अचः' इति लोपे कृते सतिशिष्टत्वाच्चुस्वर एव प्राप्नोतीत्यपास्तं, भाष्यकारेणैव परिहारात् । अत्र 'चुस्वरा'-दिति सतिशिष्टस्वरमात्रोपलक्षणमिति केचित् । **उदात्तस्वरितयोरिति** । स्वरसन्धेः पूर्वं पूर्वोत्तरपदनिमित्तकार्य-प्रवृत्तेः पूर्वमेतस्मिन्स्वरे पश्चाद्यणि अस्य प्रवृत्तिः । अध्यङ्ङित्यत्र 'उदात्तादनुदात्तस्ये'ति स्वरितः, एवम् 'अध्रीचा' इत्य-त्राऽप्ययमेव स्वरश्चुस्वरात् । कृत्स्वरापवादाविमौ योगौ। **ईषद्**। ईषदिति पूर्वपदं वा प्रकृत्येत्यर्थः, पक्षे समासान्तोदात्तः। **कृत्स्वर एवेति** । 'ईषद्गुणवचनेने'ति प्रतिपदोक्तसमासस्यैव ग्रहणादिति भावः । अत एव बहुव्रीहावपीदं न । केचित्तु परत्वात्कृत्स्वर एवेत्यर्थ इत्याहुः । **बहुव्रीहावपीति** । तत्पुरुषाधिकाराऽभावादिति भावः। **प्रथमोऽचिरो । अचिरोपसंपत्तिः**-अभिनवत्वम् । **प्रथमवैयाकरण इति** । वैयाकरणानामाद्यो मुख्य इत्यर्थकसमासे अयमन्तो-दात्त एव । **कतरकतमौ**-डतरडतमयोश्चित्त्वादन्तोदात्तौ।**प्रतिपदोक्तत्वादिति** । 'कतरकतमौ जाती'ति प्रतिपदोक्त-

देव सिद्धम्। **आर्यो ब्राह्मणकुमारयोः** ।६।२।५८। आर्यकुमारः। आर्यकुमारः ।आर्यब्राह्मणः। आर्यब्राह्मणः। आर्यो ण्यदन्तत्वादन्तस्वरितः। आर्यः किम्?।परमब्राह्मणः।ब्रेति किम्?। आर्यक्षत्रियः। कर्मधारय इत्येव। **राजा च**।६।२।५९। ब्राह्मणकुमारयोः परतो वा प्रकृत्या कर्मधारये। राजब्राह्मणः। [ राजब्राह्मणः ]। राजकुमारः। राजकुमारः। योगविभाग उत्तरार्थः। **षष्ठी प्रत्येनसि** ।६।२।६०। षष्ठ्यन्तो राजा प्रत्येनसि परे वा प्रकृत्या। राजप्रत्येनाः। राजप्रत्येनाः। षष्ठी किम्?। अन्यत्र न। **क्ते नित्यार्थे** ।६।२।६१। क्तान्ते परे नित्यार्थे समासे पूर्वं वा प्रकृत्या। नित्यप्रहसितः। नित्यप्रहसितः। 'काला'. इति द्वितीयासमासोऽयम्। नित्यशब्दस्त्यबन्त आद्युदात्तः। हसित इति थाथादिस्वरेणान्तोदात्तः। नित्यार्थे किम्?। मुहूर्तप्रहसितः। **ग्रामः शिल्पिनि** ।६।२।६२। वा प्रकृत्या। ग्रामनापितः। ग्रामनापितः। ग्रामः किं?। परमनापितः। ग्राम आद्युदात्तः। शिल्पिनि किम्?। ग्रामरथ्या। **राजा च प्रशंसायाम्** ।६।२।६३। शिल्पिवाचिनि परे प्रशंसार्थं राजपदं वा प्रकृत्या। राजनापितः। राजनापितः। राजकुलालः। राजकुलालः। प्रशंसायां किम्?। राजनापितः। शिल्पिनि किम्?। राजहस्ती।

**आदिरुदात्तः** ।६।२।६४। अधिकारोऽयम्। **सप्तमीहारिणौ धर्म्येऽहरणे** ।६।२।६५। सप्तम्यन्तं हारिवाचि च आद्युदात्तं धर्म्ये परे। देयं यः स्वीकरोति स 'हारी'त्युच्यते। 'धर्म्य'मित्याचारनियतं देयम्।

सु.]**कतर**।एतौ पूर्वपदभूतौ कर्मधारये प्रकृतिस्वरौ वा स्याताम्। कतरकतमौ डतरडतमयोश्चित्त्वादन्तोदात्तौ। **इहत्वित्यादि**। 'कतरकतमौ जातिपरिप्रश्ने' इति प्रतिपदोक्तो यः समासस्तस्यैव ग्रहणम्। स च कर्मधारय एव। तस्मान्नेहाऽर्थः कर्मधारयग्रहणेनेति भावः। **आर्यो ब्राह्मण**। ब्राह्मणकुमारयोरुत्तरपदयोरार्यः पूर्वपदं प्रकृतिस्वरं वा स्यात्कर्मधारये। **अन्तस्वरित इति**। 'तित्स्वरित'मित्यनेन। **ब्रेति किमिति**। ब्राह्मणकुमारयोरिति किमर्थमित्यर्थः। **राजब्राह्मण इति**। राजशब्दो ब्राह्मणे ताद्धर्म्याद्वर्तत इति सामानाधिकरण्यात्कर्मधारयः। राजशब्दः कनिन्प्रत्ययान्तत्वादाद्युदात्तः। **उत्तरार्थ इति**। उत्तरो विधिः राजशब्दस्यैव यथा स्यादार्यशब्दस्य मा भूत्। यथासङ्ख्याऽभावोऽपि पृथग्योगकरणस्य प्रयोजनं ज्ञेयम्।**राजप्रत्येना इति**।प्रतिगतमेनः=पापं यस्य स,-प्रत्येनाः। राज्ञः प्रत्येनाः राजप्रत्येनाः।**अन्यत्र नेति**।राजा चासौ प्रत्येनाश्च राजप्रत्येना इत्यत्र।**द्वितीयासमासोऽयमिति**।द्वितीया पुनरत्यन्तसंयोगे। अथवा 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्'। **त्यबन्त इति**। 'त्यब्नेर्ध्रुवे' इति त्यप्। **मुहूर्तप्रहसित इति**। थाथादिस्वरः। समासस्वरस्य द्वितीयापूर्वपदप्रकृतिस्वरो बाधकस्तस्य थाथादिस्वरः, तस्यापि पाक्षिकोऽपवादोऽयम्। **ग्रामः**। ग्राम इति स्वरूपग्रहणं, शिल्पिनीत्यर्थग्रहणम्। ग्रामशब्दः पूर्वपदप्रकृतिस्वरो वा स्याच्छिल्पिवाचिन्युत्तरपदे। **ग्रामनापित इति**। षष्ठीसमासः। **आद्युदात्त इति**। 'ग्रसेरा चे' ति मन्। नित्त्वादाद्युदात्तः। **राजनापित इति**। कर्मधारये राजगुणाऽध्यारोपेणोत्तरपदार्थस्य प्रशंसा। षष्ठीसमासे च राजयोग्यतया तस्य प्रशंसा। स हि कर्मणि प्रवीणत्वाद्राजानं प्रति योग्यो भवति। 'राजार्ह'मित्युक्ते प्रशंसा गम्यते। **आदिरुदात्तः**। पूर्वपदमित्यस्येहाऽर्थात्षष्ठ्या विपरिणामः।सर्वत्र चाऽत्र प्रकरणे पूर्वपदविषये षष्ठ्यर्थे प्रथमा। **सप्तमी**। 'हारी'त्यावश्यके णिनिः। जनपदे ग्रामे कुले वा परम्परयाऽऽयातः सदाचारो **धर्मः**। तस्मादनपेतं **धर्म्यम्**। 'धर्मपथ्यर्थे'ति यत्। तेन च प्राप्यमित्यर्थे 'नौवयोधर्मे'त्यादिना यत्। आचारवशादवश्यं कर्तव्यमित्यर्थः। हारिण्युदाहरणा-

शे.]स्यैव ग्रहणादित्यर्थः। **कर्मधारय इत्येवेति**। तेनाऽऽर्यस्य ब्राह्मण इत्यर्थे न दोषः। **राजब्राह्मण इति**। आद्युदात्तो राजन्शब्दः। पक्षेऽन्तोदात्तत्वम्। राजशब्दो ब्राह्मणे ताद्धर्म्याद्वर्तत इति सामानाधिकरण्यम्। षष्ठीसमासेऽन्तोदात्तत्वमेव। योगविभागो यथासङ्ख्यनिवृत्त्यर्थ, उत्तरार्थश्च। अत्र लिङ्गविशिष्टपरिभाषा नेति 'ङ्या'प्सूत्रे भाष्ये स्पष्टम्। एवं समासरूपसमुदायग्रहणेऽपि सा न। तेन 'बहोर्नञ्व'दिति सूत्रं 'बहुगोमती'त्यत्र न। **अन्यत्र नेति**। कर्मधारये इत्यर्थः। **क्ते नित्या**। नित्यमाभीक्ष्ण्यम्। **काला इति**। 'अत्यन्तसंयोगे चे'त्यस्योपलक्षणमेतत्। **द्वितीयासमास इति**। द्वितीयाऽत्यन्तसंयोगे। द्वितीयापूर्वपदप्रकृतिस्वरापवादथाथादिस्वरस्य पाक्षिकोऽपवादोऽयम्। **ग्रामः शिल्पिनि**। शिल्पिवाचिन्युत्तरपदे इत्यर्थः। **ग्रामनापित इति**। षष्ठीसमासः। **राजनापित इति**। कर्मधारये राजगुणाध्यारोपेणोत्तरपदार्थप्रशंसा, षष्ठीसमासे राजयोग्यतया। **अधिकारोऽयमिति**। 'अन्तः' इत्यतः प्रागादिरिति, 'प्रकृत्या भगाल'मित्यतः प्रागुदात्त इति चाधिक्रियत इत्यर्थः। **धर्म्यमिति**। **धर्मो** नाम ग्रामजनपदकुलेषु परम्पराऽऽयातः सदाचारः, तस्मादनपेतं, तेन प्राप्यं वा **धर्म्यम्**। आचारवशादवश्यं कार्यमित्यर्थः। **देयमिति**-प्रकृते व्याख्यानलभ्यम्। हारिण्युदाहरति-**याज्ञिकाश्व इति**। षष्ठीसमासाविमौ। 'हारी'त्यावश्यके णिनिः,हञोऽत्र ग्रहणमर्थः।

मुकुटेकार्षापणम्'। हले'द्विपदिका। 'संज्ञाया'मिति सप्तमीसमासः। 'कारनाम्नि चे'त्यलुक्। याज्ञि'काऽश्वः। वैया'करणहस्ती। क्वचिदयमाचारो–मुकुटादिषु कार्षापणादि दातव्यं, 'याज्ञिकानां त्वश्वादिरिति। धर्म्ये किम्?। स्तम्बेरमः। कर्मकरवर्द्धि'तकः। अहरणे किम्?। वाडवहरणम्। वडवाया अयं वाडवः। तस्य बीजनिषेकादुत्तरकालं शरीरपुष्ट्यर्थं यद्दीयते तद्धरणमित्युच्यते। परोऽपि कृत्स्वरो हारिस्वरेण बाध्यत इत्यहरण इति निषेधेन ज्ञाप्यते। तेन वाड'वहार्यमिति हारिस्वरः सिध्यति। **युक्ते च** ।६।२।६६। युक्तवाचिनि समासे पूर्वमाद्युदात्तम्। गोव'ल्लवः। कर्तव्ये तत्परो 'युक्तः'। **विभाषाऽध्यक्षे** ।६।२।६७। गवाध्यक्षः। गवा'ध्यक्षः। **पापं च शिल्पिनि** ।६।२।६८। पा'पनापितः। पा'पनापितः। 'पापाऽणके' इति प्रतिपदोक्तस्यैव ग्रहणात् षष्ठीसमासे न। **गोत्राऽन्तेवासिमाणवब्राह्मणेषु क्षेपे** ।६।२।६९। भार्या'सौश्रुतः। सुश्रुतापत्यस्य भार्याप्रधानतया क्षेपः। अन्तेवासी–कुमा'रीदाक्षाः। ओद'नपाणिनीयाः। कुमार्यादिलाभकामा ये दाक्ष्यादिभिः प्रोक्तानि शास्त्राण्यधीयन्ते ते एवं क्षिप्यन्ते। भिक्षा'माणवः। भिक्षां लप्स्येऽहमिति माणवः। भय'ब्राह्मणः। भयेन ब्राह्मणः संपद्यते। गोत्रादिषु किं?। दासीश्रोत्रियः। क्षेपे किम्?। परमब्राह्मणः। **अङ्गानि मैरेये** ।६।२।७०। मद्यविशेषो मैरेयः। मधु'मैरेयः। मधुविकारस्य तस्य मधवङ्गम्। अङ्गानि किम्?। परममैरेयः। मैरेये किम्?। पुष्पाऽऽसवः। **भक्ताख्यास्तदर्थेषु** ।६।२।७१। भक्तमन्नम्। भिक्षा'कंसः। भाजी'कंसः। भिक्षादयोऽन्नविशेषाः। भक्ताख्याः किम्?। समाशशा'लयः। समशनं समाश इति क्रियामात्रमुच्यते। तदर्थेषु किम्?। भिक्षाप्रि'यः।

---

सु.]न्याह–याज्ञिकाश्व इति। षष्ठीसमासः। **कर्मकरवर्द्धितक इति।** वर्द्धितको नाम मूले स्थूलोऽग्रे सूक्ष्म ओदनपिण्डः। स कर्मकराय दीयते, अन्यथा कर्म न कुर्यादिति। न त्वयं धर्मः। **वाडवहरणमिति।** क्वचिदयमाचारो–बीजनिषेकानन्तरं वाडवाय शरीरपुष्ट्यर्थं योग्यं मसूरादि दातव्यं यद्दीयते तद्वाडवहरणमित्युच्यते। अत्राऽस्मिन् स्वरे निषिद्धे कृत्स्वरे प्राप्ते'ऽनो भावकर्मवचन' इत्युत्तरपदान्तोदात्तत्वम्। ननु परत्वादेवाऽयं स्वरो भविष्यति किं प्रतिषेधेनेत्यत आह–**परोऽपीति।** **युक्तवाचिनीति।** युक्तः कर्तव्ये तत्परः, तद्वाचिनीत्यर्थः। गोवल्लवः। बल्लवादयः शब्दा गवादीनां पालकवचनाः। **विभाषा।** अध्यक्षशब्दे परे पूर्वपदमाद्युदात्तं वा स्यात्। अध्यक्षशब्दोऽपि समासे युक्तवाच्येवेति पूर्वेण नित्ये प्राप्ते विकल्पः। **पापं।** पापमिति स्वरूपग्रहणं, शिल्पिनीत्यर्थग्रहणं, व्याख्यानात्। शिल्पिवाचिनि परे पापशब्दः पूर्वपदमाद्युदात्तं वा स्यात्। **गोत्रान्तेवासि।** गोत्रवाचिनि, अन्तेवासिवाचिनि चोत्तरपदे, माणवब्राह्मणयोश्च परतः क्षेपवाचिनि समासे पूर्वपदमाद्युदात्तं स्यात्। **भार्यासौश्रुत इति।** सुष्ठु शृणोतीति सुश्रुत्। तस्यापत्यं सौश्रुतः। **भार्याप्रधानतयेति।** भार्याप्रधानः सौश्रुत इति शाकपार्थिवादित्वादुत्तरपदलोपी समास इति दर्शयति। दक्षेण प्रोक्तं दाक्षम्। तदधीते दाक्षः। **कुमार्यादिलाभकाम इति।** तत्प्रोक्ते ग्रन्थे श्रद्धायामसत्यामपि कुमार्यादिलाभकामः संस्तत्र प्रवर्तते तत एवं क्षिप्यते। पूर्ववत्समासः। **भयब्राह्मण इति।** 'तृतीये'ति योगविभागात्समासः। योऽब्राह्मणः सन् राजदण्डादिभयेन ब्राह्मणाचारं करोति स एवमुच्यते। **अङ्गानि।** अङ्गम्–उपकारकम्। बहुवचनं स्वरूपविधिनिरासार्थम्। मैरेयशब्दे उत्तरपदे तदर्थारम्भकवाचीनि पूर्वपदान्याद्युदात्तानि स्युः। **मद्यविशेष इति।** सुराव्यतिरिक्तं मद्यं मैरेयमित्यर्थः। **भक्ताख्या।** अन्नवाचि पूर्वपदमाद्युदात्तं स्यात्तदर्थेषूत्तरपदेषु। अत्र बहुवचननिर्देशादेव स्वरूपविधिनिरासे सिद्धे आख्याग्रहणं भक्ष्यविशेषवाचिनां भिक्षादीनां ग्रहणार्थम्। अन्यथा पर्यायाणामेवा-

---

शे.]**वाडवहरणमिति।** हरणशब्दः कर्मसाधनः। **कृत्स्वरो हारिस्वरेणेति।** कृत्स्वराऽपवाद–'अनो भावकर्मवचनः' इति स्वरबाधे कृत्स्वरबाधस्यापि फलितत्वादिति भावः। चित्स्वराद्धारिस्वरः परत्वात्–मातुलगव्रः, टचश्चित्त्वन्तु 'अतिगवे'इत्यादौ चरितार्थम्। **युक्ते च।** युक्तः–समाहितः, युज समाधावित्यस्य रूपम्। **गोवल्लव इति।** तत्परतया गवां पालक इत्यर्थः। कृत्स्वरात्थाथादिस्वराच्च पूर्वविप्रतिषेधेन 'युक्तेचे'ति स्वर एवेष्यते–गोद्वि'ट्। गोसं'ख्यः। 'समि ख्यः' इति कः। **विभाषाऽध्यक्षे।** अध्यक्षशब्दो युक्तवाच्येवेति प्राप्तविभाषेयम्। **पापञ्च शि।** शिल्पिवाचके पर इत्यर्थः। **गोत्रान्ते।** आद्ययोरर्थग्रहणम्, अन्त्ययोः शब्दग्रहणम्, अपत्याधिकारादन्यत्र लौकिकगोत्रग्रहणादाह–**सुश्रुतोऽपत्यस्येति।** माणवब्राह्मणयोर्गोत्रत्वेन प्रसिद्ध्यभावाद्ग्रहणम्। **ओदनपाणिनीया इति।** ओदनकामत्वेन तेषाङ्क्षेपः। **अङ्गानि मैरेये।** सुराव्यतिरिक्तं मद्यं मैरेयं, तद्वाचके उत्तरपदे तदर्थारम्भकवाचीनि पूर्वपदान्याद्युदात्तानीत्यर्थः। आसवो–न मद्यम्। **भक्ताख्यास्त।** भक्तशब्दोऽत्र अदनीयवस्तुमात्रपरः। **भिक्षाकंसादयः**–षष्ठीसमासाः। बहुवचनात्स्वरूपविधिनिरासे सिद्धे आख्योक्तिरावविशेषस्य भिक्षादेर्ग्रहणार्थेत्याहुः। **क्रियामात्रमिति।**

बहुव्रीहिरयम्। अत्र पूर्वपदमन्तोदात्तम्। **गोबिडालसिंहसैन्धवेषूपमाने** ।६।२।७२। धान्यंगवः। गोबिडालः। तृणंसिंहः। सक्तुसैन्धवः। धान्यं गौरिवेति विग्रहः। व्याघ्रादिः। गवाकृत्या सन्निवेशितं धान्यं धान्यगवशब्देनोच्यते। उपमाने किम् ?। परमसिंहः। **अके जीविकार्थे** ।७।२।७३। दन्तलेखकः। यस्य दन्तलेखनेन जीविका। 'नित्यं क्रीडे'ति समासः। अके किम् ?। रमणीयकर्ता। जीविकार्थे किम् ?। इक्षुभक्षिकां मे धारयसि। **प्राचां क्रीडायाम्**।६।२।७४। प्राग्देशवाचिनां या क्रीडा तद्वाचिनि समासे अकप्रत्ययान्ते परे पूर्वमाद्युदात्तं स्यात्। उद्दालकपुष्पभञ्जिका। 'संज्ञाया'मिति ण्वुल्। प्राचां किम् ?। जीवपुत्रप्रचायिका। इयमुदीचां क्रीडा। क्रीडायां किम् ?। तव पुष्पप्रचायिका। पर्याये ण्वुच्। **अणि नियुक्ते** ।६।२।७५। अण्णन्ते परे नियुक्तवाचिनि समासे पूर्वमाद्युदात्तम्। छत्रधारः। नियुक्ते किम्। काण्डलावः। **शिल्पिनि चाऽकृञः** ।६।२।७६। शिल्पिवाचिनि समासे अण्णन्ते परे पूर्वमाद्युदात्तं, स चेदण् कृञो न भवति। तन्तुवायः। शिल्पिनि किम् ?। काण्डलावः। अकृञः किम् ?। कुम्भकारः। **संज्ञायां च** ।६।२।७७। अण्णन्ते परे। तन्तुवायो नाम कृमिः। अकृञ इत्येव। रथकारो नाम ब्राह्मणः। **गोतन्तियवं पाले** ।६।२।७८। गोपालः। तन्तिपालः। यवपालः। अनियुक्तार्थो योगः। गो इति किम् ?। वत्सपालः। पाले इति किम् ?। गोरक्षः। **णिनि** ।६।२।७९। पुष्पहारी। **उपमानं शब्दार्थप्रकृतावेव** ।६।२।८०। उपमानवाचि पूर्वपदं णिन्यन्ते परे

---

सु.]न्यादीनां ग्रहणं स्यात्। भिक्षाकंसादयः षष्ठीसमासाः।तादर्थ्ये चतुर्थीसमासस्तु न भवति, प्रकृतिविकार एव तस्येष्टत्वात्। **बहुव्रीहिरिति**। तत्पुरुषश्चेदन्तोदात्तः [ भिक्षाप्रियः ]। **गोबिडाल**। उपमानशब्दे प्रत्येकं संबन्धादेकवचनम्। गवादिषूपमानवाचिषूत्तरपदेषु पूर्वपदमाद्युदात्तं स्यात्। **धान्यगव इति**। अत्रोपमितसमासे 'गोरतद्धितलुकी'ति टच्। अत्र पूर्वपदाद्युदात्तविधानसामर्थ्याट्टचश्चित्स्वरो बाध्यते। उपमानार्थो यो यत्रोदाहरणे यथा संभवति स तथा योजयितव्यः। तत्र दिङ्मात्रं दर्शयति–**गवाकृत्येत्यादि**। **आकृतिः**–संस्थानम्। **संनिवेशितं**–व्यवस्थापितम्। एवमन्यत्रापि यत्किंचित्सादृश्यं योजयितव्यम्। **अके**। जीविकाऽर्थवाचिनि समासे अकप्रत्ययान्ते उत्तरपदे पूर्वपदमाद्युदात्तं स्यात्। **दन्तलेखक इति**।'ण्वुल्तृचौ' इति ण्वुल्।**प्राचाङ्क्रीडायां**।'प्राचां क्रीडाया'मिति श्रुतयोरेवाऽन्वयसंभवान्मतेनेत्यध्याहारो न युज्यते इति। तत्राह–**प्राग्देशवर्तिनां या क्रीडेति**। अजीविकार्थमिदम्। **उद्दालकपुष्पभञ्जिकेति**। 'नित्यं क्रीडे'ति समासः। **अणि नियुक्ते**। युजिर् योगे इत्यस्य नियुक्त इति रूपम्। **नियुक्तः**–अधिकृतः। स च कस्मिंश्चित्कर्तव्ये तत्परो न भवतीति न 'युक्ते' इत्यनेन सिध्यति। 'युक्ते' इति सूत्रे हि युज समाधौ दिवादिरात्मनेपदी गृह्यते। **समाधिस्तत्परता**। अत्र[तु]रौधादिकस्य स्वरितेतो ग्रहणं। योगः–संबन्धमात्रम्। **छत्रधार इति**। कर्मण्यण्। **शिल्पिनि**। 'युक्ते चे'त्येवं सिद्धे कृञः प्रतिषेधार्थं वचनम्। **तन्तुवाय इति**। 'ह्वावामश्चे'त्यण्। 'आतो युक्'। **संज्ञायाम्**। संज्ञायां विषयेऽण्णन्ते उत्तरपदे पूर्वपदमाद्युदात्तं स्यात् ,स चेदण् कृञो न भवति। **गोतन्ति**। गोतन्तियवशब्दा आद्युदात्ताः स्युः पालशब्दे परे। **गोपाल इति**। गाः पालयतीति विग्रहः। **तन्तिपाल इति**। तनु विस्तारे। क्तिन्। **तन्तिर्वत्सानां** बन्धनरज्जुः। **णिनिः**। णिन्यन्ते उत्तरपदे पूर्वपदमाद्युदात्तम्। **उपमानम्**। **उष्ट्रक्रोशी**-

---

शे.]न द्रव्यमित्यर्थः। **बहुव्रीहिरिति**।षष्ठीसमासे त्वन्तोदात्तत्वम्। **गोबिडाल**।उपमानार्थेष्वेषूत्तरपदेषु पूर्वपदमाद्युदात्तमित्यर्थः। **गवाकृत्येति**। एवं यत्र यथोपमानभावः सम्भवति तत्र तथा योज्यमिति बोध्यम्। **अके जीवि**। जीविकार्थे समासे अकप्रत्ययान्ते उत्तरपदे पूर्वपदमाद्युदात्तमित्यर्थः। कृत्स्वरापवादः। दन्तलेखनादिजीविकायाः समासे प्रवृत्तिनिमित्तत्वात्समासस्य जीविकार्थत्वमित्याह–**यस्येति**। प्रतिपदोक्तत्वात् 'नित्यं क्रीडे'ति विहितसमासे एवेदम्। अकग्रहणन्तु स्पष्टार्थम्। **प्राचामिति** प्राग्देशवर्तिषु लाक्षणिकमित्याह–**प्राग्देशवर्तिनामिति**। अजीविकार्थमिदम्। **उद्दालकेत्यादौ** 'नित्यं क्रीडे'ति समासः। **तव पुष्पेति**। षष्ठीसमासः। **नियुक्त इति**। अधिकृत इत्यर्थः। स च कस्मिंश्चित्कर्तव्ये तत्परो न भवतीति 'युक्ते' इत्यनेन न सिद्ध्यति। **शिल्पिनि चा**। 'युक्ते चे'त्येव सिद्धे कृञः प्रतिषेधार्थं वचनम्। **सञ्ज्ञायाम्**। अत्राऽणीति 'शिल्पिनि चाऽकृञः'इति वर्त्तते। अयुक्तार्थमनियुक्तार्थं, कृञः प्रतिषेधार्थञ्च वचनम्। **गोतन्ति**। पालशब्दे परे एते आद्युदात्ता इत्यर्थः। वत्सानां बन्धनरज्जुस्तन्तिः। **णिनि**। णिन्यन्ते उत्तरपदे पूर्वमाद्युदात्तमित्यर्थः। अत्र सञ्ज्ञाग्रहणमनुवर्त्तते इति 'व्रते' इति सूत्रे भाष्यादौ। तेनाऽश्राद्धभोजीत्यादौ न। अत्र कृत्स्वर एव। उत्तरसूत्रस्थभाष्यात्तु नानुवर्तते इति प्रतीयते।तत्त्वन्त्वत्र ऋषयो विदुः। वस्तुत उत्तरसूत्रेऽपि संज्ञायामित्यस्य सबन्धे न कश्चिद्दोषः। **उपमानम्**। शब्दार्थकधातुप्रकृतिके एव णिन्यन्ते परे इत्यर्थः।**उष्ट्रक्रोशीति**। उष्ट्र इव क्रोशती-

आद्युदात्तम् । उष्ट्रक्रोशी । ध्वाङ्क्षरावी । उपमानग्रहणमस्य पूर्वयोगस्य च विषयविभागार्थम् । शब्दार्थप्रकृतौ किम् ?। वृकवञ्ची । प्रकृतिग्रहणं किम् ?। प्रकृतिरेव यत्रोपसर्गनिरपेक्षा शब्दाऽर्था तत्रैव यथा स्यात् , इह मा भूत्–गर्दभोच्चारी । **युक्तारोह्यादयश्च** ।६।२।८१। आद्युदात्ताः। युक्तारोही । आगतयोधी। क्षीरहोता । **दीर्घकाशतुषभ्राष्ट्रवटं जे** ।६।२।८२। कुटीजः । काशजः । तुषजः । भ्राष्ट्रजः । वटजः । **अन्त्यात्पूर्वं बह्वचः** ।६।२।८३। बह्वचः पूर्वस्याऽन्त्यात्पूर्वमुदात्तं जे उत्तरपदे। उपसरजः। आमलकीजः। बह्वचः किम् ?। दग्धजानि तृणानि । **ग्रामेऽनिवसन्तः** ।६।२।८४। ग्रामे परे पूर्वपदमुदात्तम् , तच्चेन्निवसद्वाचि न । मल्लग्रामः । ग्रामशब्दोऽत्र समूहवाची । देवग्रामः=देवस्वामिकः । अनिवसन्तः किम् ? । दाक्षिग्रामः=दाक्षिनिवासः । **घोषादिषु च** ।६।२।८५। दाक्षिघोषः। दाक्षिकटः। दाक्षिह्रदः। **छात्र्यादयः शालायाम्** ।६।२।८६। छात्रिशाला।

---

सु.]त्यादि । 'कर्तर्युपमाने' इति णिनिः । **शब्दार्थप्रकृतौ किमिति** । सूत्रं किमर्थमित्यर्थः । **वृकवञ्चीति** । कृत्स्वर एव भवति। **प्रकृतिरेवेत्यादि**। असति प्रकृतिग्रहणे शब्दार्थात्परो यो णिनिस्तदन्ते उत्तरपदे इत्यर्थो विज्ञायेत । तथा च यत्रापि धातूपसर्गसमुदायाच्छब्दार्थात्परो णिनिस्तत्रापि स्यात् । 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहण'मिति परिभाषया णिन्नन्तोत्तरपदत्वाऽनपायात् । प्रकृतिग्रहणे तु न भवति । योऽत्र धातुर्नाऽसौ शब्दार्थः, यश्च शब्दार्थो धातूपसर्गसमुदायो, न ततो णिनिर्विहित इति भावः । एवं किंशब्दार्थप्रकृतौ उपमानमेवेत्येव नियमो मा भूत् । **युक्तारोह्या** । युक्तारोह्यादयः समासा आद्युदात्ताः स्युः। **युक्तारोहीत्यादि** । अत्र 'णिनी'त्येव सिद्धे पूर्वोत्तरपदनियमार्थं सूत्रम् । यत्र युक्तादीन्येव पूर्वपदानि, आरोह्यादीन्येवोत्तरपदानि तत्रैव यथा स्यादित्यर्थः। **क्षीरहोतेति**। याजकादित्वात्षष्ठीसमासोऽयम् । समासस्वरापवादे कृत्स्वरे प्राप्ते, तदपवादे 'मन्क्ति'न्निति प्राप्ते, तदपवादोऽयम्।**दीर्घकाश**। दीर्घान्तं पूर्वपदं, काशादीनि च पूर्वपदानि आद्युदात्तानि स्युर्जे उत्तरपदे । **कुटीज इति** । 'सप्तम्यां जनेर्डः' । **उपसरज इति** । स्त्रीगवीषु पुंगवानां गर्भाधानाय प्रथममुपसरणमुपसरः । 'प्रजने सर्तेः' इत्यप । तत्र जात उपसरजः । **आमलकीज इति** । 'दीर्घकाशे'ति बाधित्वा परत्वादयं स्वरः । **ग्रामे** । सूत्रे निवसत्यस्मिन्निति निपूर्वाद्वसेः 'नृवसिवहिभासिसाधिगडिमण्डिनिनन्दिभ्यश्चे'ति झच् । **मल्लग्राम इति** । षष्ठीसमासः । **दाक्षिग्राम इति** । दाक्षयो निवसन्त्यस्मिन्स उच्यते । **घोषा** । घोषादिषूत्तरपदेषु पूर्वपदमाद्युदात्तम् । अत्र 'निवसन्त' इति केचिदनुवर्तयन्ति । अपरे नानुवर्तयन्ति । तथा च दाक्षीणां घोषो = निवासस्थानमित्यर्थे दाक्षिघोषशब्दे आद्युदात्तत्वं न भवति । मतान्तरे भवति । **छात्र्यादयः** । शालाशब्दे परे छात्र्यादय आद्युदात्ताः स्युः।**यदाऽपि शालान्त इत्यादि**। 'विभाषा सेनासुरे'त्यादिना

---

शे.]त्याद्यर्थे 'कर्तर्युपमाने' इति णिनिः। एवेति किम् ?। 'उपमानमेवे'त्येवं नियमो मा भूत् । तथा च 'साध्वध्यायी'त्यादौ पूर्वेणाद्युदात्तता न स्यात् ,'वृकवञ्ची'त्यत्र च स्यादिति बोध्यम्।**युक्तारोह्यादयश्च**।एते समासा एव गणे पठ्यन्ते।**युक्तारोहीति** । एषु 'णिनी'त्येव सिद्धे युक्तादीन्येव पूर्वपदानि आरोह्यादीन्येवोत्तरपदानीत्येवं पूर्वपदोत्तरपदनियमार्थमिदमिति केचित्। असञ्ज्ञार्थमित्यन्ये।**क्षीरहोतेति**।अत्र समासस्वराऽपवादे कृत्स्वरे प्राप्ते, तदपवादे 'मन्क्तिन्नि'ति प्राप्ते, तदपवादोऽयम् । एकशितिपाच्छब्दोऽत्र पठ्यते । तत्रैकः शितिः पादोऽस्येति त्रिपदे बहुव्रीहौ अवान्तरतत्पुरुषः । नन्ववान्तरतत्पुरुषे समासान्तोदात्तत्वं बाधित्वा 'इगन्ते'ति पूर्वपदप्रकृतिस्वरेणाऽऽद्युदात्तत्वं सिद्धमेकशब्दस्य कन्नन्तत्वादिति चेन्न, उत्तरपदे शित्यन्तस्य द्विगुस्वराऽभावज्ञापनार्थत्वात्।तेन द्विशितिपादित्यत्र तिशब्द एवोदात्तः।नन्वेवमपि समासान्तोदात्तत्वं बाधित्वा बहुव्रीहिनिमित्तपूर्वपदप्रकृतिस्वरत्वं भविष्यतीति व्यर्थ एव पाठ इति चेन्न, निमित्तिस्वरबलीयस्त्वस्यापि ज्ञापनात् । फलं तूक्तमेवेति केचित् । **परे तु** समर्थसूत्रे–'एतच्छब्दपाठेन नेहार्थः । इगन्ते द्विगावित्यस्य बाधकत्वान्न स्वरे दोष' इत्युक्तम् । तेन द्विशितिपादित्यत्रापि द्विशब्दस्वर एवेति लभ्यते । अत एव निमित्तिस्वरबलीयस्त्वं वाचनकमिति कैयटेनोक्तम् । सतिशिष्टन्यायसिद्धमिति त्वन्यदित्याहुः। पात्रेसमितादयोऽप्यत्र बोध्याः । '**अधिकशतवर्ष**शब्दोऽप्यत्र पठनीय' इति समर्थसूत्रे भाष्यम् । अयमाकृतिगणः । **दीर्घकाश** । दीर्घान्तं काशादीनि च जे परे आद्युदात्तानीत्यर्थः । दीर्घादिति किं ? । कुड्जिः । जे किं ?। शमीवृक्षः । कृत्स्वरापवादोऽयम् । **अन्त्यात्पूर्वम्** । 'आमलकीजः' इत्यत्र 'दीर्घकाशे'ति बाधित्वा परत्वादयमेव स्वरः । **तच्चेदिति** । पूर्वपदञ्चेदित्यर्थः । **निवसत्**–निवासकर्तृ । सूत्रे व्यत्ययेन बहुवचनम् । केचित्त्वधिकरणे औणादिकझजन्तं समासविशेषणमित्याहु । **मल्लग्रामादौ**–षष्ठीसमासः । **दाक्षिग्रामः** । दाक्षयो निवसन्त्यस्मिन्स एवमुच्यते। **घोषादि** । एषु पूर्वदमाद्युदात्तमित्यर्थः। घोष, कट, पल्वल, ह्रद, बदरी, पिङ्गल, पिशङ्ग,माला, शाला,रक्षा,कूटे शाल्मलि,अश्वत्थ,तृण,शिल्पी, मुनि, प्रेक्षा, अत्राऽनिवसन्त इत्यनुवर्तेत इत्येके । नानु-

व्याडि'शाला । यद्यपि शालान्तः समासो नपुंसकलिङ्गो भवति तदापि 'तत्पुरुषे शालायां नपुंसके' इत्येतस्मात्पूर्वप्रतिषेधेनाऽयमेव स्वरः । छात्रि'शालम् । **प्रस्थेऽवृद्धमकर्क्यादीनाम्** ।६।२।८७। प्रस्थशब्दे उत्तरपदे कर्क्यादिवर्जितमवृद्धं पूर्वपदमाद्युदात्तं स्यात् । इन्द्र'प्रस्थः । अवृद्धं किम् ? । दाक्षिप्रस्थः । अकेति किम् ? । कर्कीप्रस्थः । मकरीप्रस्थः । **मालादीनां च** ।६।२।८८। वृद्धार्थमिदम् । माला'प्रस्थः । शोण'प्रस्थः । **अमहन्नवं नगरेऽनुदीचाम्** ।६।२।८९। नगरे परे महन्नववर्जितं पूर्वमाद्युदात्तं स्यात्, तच्चेदुदीचां न । ब्रह्म'नगरम् । अमेति किम् ? । महानगरम् । नवनगरम् । अनुदीचां किम् ?। कार्तिनगरम् । **अर्मे चाऽवर्णं द्व्यच् त्र्यच्** ।६।२।९०। अर्मे परे द्व्यच् त्र्यच् पूर्वमवर्णान्तमाद्युदात्तम् । गुप्ता'र्मम् । कुक्कु'टार्मम् । अवर्णं किम् । बृहदर्मम् । द्व्यच्त्र्यच् किम् ? । कपिञ्जलार्मम् । अमहन्नवमित्येव । महार्मम् । नवार्मम् । **न भूताधिकसञ्जीवमद्राश्मकज्जलम्** ।६।२।९१। अर्मे परे नैतान्याद्युदात्तानि । भूतार्मम् । अधिकार्मम् । सञ्जीवार्मम् । मद्राश्मग्रहणं सङ्घातविगृहीतार्थम् । मद्रार्मम् । अश्मार्मम् । मद्राश्मार्मम् । कज्जलार्मम् । * **आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसङ्ख्यानम्** । दिवो'दासाय दाशुषे' ।

**अन्तः** ६।२।९२। अधिकारोऽयं प्रागुत्तरपदादिग्रहणात् । **सर्वं गुणकार्त्स्न्ये** ।६।२।९३। सर्वशब्दः पूर्वपदमन्तोदात्तम्। सर्व'श्वेतः।सर्व'महान्।सर्वं किम् ?। परमश्वेतः। आश्रयव्याप्त्या परमत्वं श्वेतस्येति गुणकार्त्स्न्ये

सु.]शालान्तस्य तत्पुरुषस्य विभाषा नपुंसकमुक्तं,तत्रास्यावकाशो यो नपुंसकलिङ्गो न भवति—छात्रिशाला।'तत्पुरुषे शालाया'मित्यस्यावकाशो—यश्छात्र्यादिपूर्वो न भवति—प्रभुशालम् । क्षत्रियशालम् । यस्तु छात्र्यादिपूर्वपदो नपुंसकलिङ्गश्च तत्र एकदेशविकृतस्याऽनन्यत्वादयमपि प्राप्नोति, 'तत्पुरुषे शालाया'मित्ययं च । तत्र पूर्वविप्रतिषेधादयमेव भवतीति वामनहरदत्तौ। **प्रस्थे** । 'मालादीनां चे'ति वचनादवृद्धमिति च्छेदः । कर्क्यादिप्रतिषेधस्तु नामधेयार्थः स्यात् 'वा नामधेयस्य वृद्धसंज्ञा वक्तव्ये'ति । **अकेति किमिति** । अकर्क्यादीनां किमित्यर्थः । **माला** । प्रस्थे परे मालादीनामादिरुदात्तः स्यात् । **शोणप्रस्थ इति** । 'एङ् प्राचां देशे' इति शोणशब्दस्य वृद्धत्वम् । **अम** । **महन्नववर्जितं पूर्वपदमिति** । महद्वर्जितं, नववर्जितं चेति प्रत्येकं संबन्धः । **महानगरमिति** । 'आन्महतः समानाधिकरणे'ति महत आत्वे कृतेऽवर्णान्तत्वादस्ति प्राप्तिः । **नवार्ममिति** । नवशब्दः प्रत्यग्रवचनोऽकारान्तः। **सङ्घातविगृहीतार्थमिति** । मद्रशब्दस्य केवलस्य, मद्राश्मशब्दस्य सङ्घातस्य च तस्य प्रतिषेधार्थः । **मद्राश्मार्ममिति** । 'अनोश्मायःसरसां जातिसंज्ञयो'रिति समासान्ते कृते अवर्णान्तमेतत् । तदेवं **मद्रार्मं, मद्राश्मार्म**मिति द्वे एवोदाहरणे। प्रायेण तु **अश्मार्ममिति** तृतीयमप्युदाहरणं पठ्यते तद्वृत्त्यनुरोधादुक्तम् , अश्मशब्दस्याऽनकारान्तत्वम् । न च नलोपे कृतेऽवर्णान्तत्वम् , स्वरविधौ नलोपस्याऽसिद्धत्वात् । अपरे तु 'मद्राश्मग्रहणं सङ्घातविगृहीतार्थ'मित्यस्य भाष्येऽदर्शनादसङ्गतमेतदित्याहुः । **दिवोदासायेति** । 'दिवसश्च दासे' इति षष्ठ्या अलुक् । **अन्तः** । अत्रापि प्रकरणे पूर्वपदविषया प्रथमा षष्ठ्यर्थे वेदितव्या । **सर्वं गुण** । गुणकार्त्स्न्ये वर्तमानः सर्वोऽन्तोदात्तः, यत्र गुणान्तरस्याऽभावस्तत्र गुणकार्त्स्न्यं भवति । **सर्वश्वेत इति** । 'पूर्वकालैके'त्यादिना कर्मधारयः । अत्र शौक्ल्येन गुणेन सर्वावयवानां व्याप्तिर्गम्यते । **आश्रयव्याप्त्येति** । नतूज्ज्वलत्वेन । **सर्वसौवर्ण इति** । विकारविषयमत्र कार्त्स्न्यम् । **सर्वश्वेत इति** । 'गुणात्तरेण तरलोपश्चे'ति समासः, तरप्रत्ययलोपश्च । **कार्त्स्न्ये किमिति** । गुणवाचिन्युत्तरपदे सर्वशब्दस्तत्कार्त्स्न्यं न व्यभिचरतीति प्रश्नः । अयं नियमः कर्म-

शे.]वर्त्तते इत्यन्ये। **छात्र्यादयः** । छात्रि, ऐलि[3], भाण्डि, व्याडि, आपिशलि, आखण्डि, गौमि[1]। **अयमेव स्वर इति**। स्पष्टश्चेदं वृत्तौ। भाष्ये तु नैतद्दृश्यते । **प्रस्थे** । 'मालादीनाञ्चे'ति सूत्रारम्भात्कर्क्यादिपर्युदासाच्चाह—**अवृद्धमिति** । प्रत्युदाहरणेऽन्तोदात्तत्वम् । कर्की, मद्री, मकरी, कर्कन्धू, शमी, करीर, कटुक, कवल, बदर । **शौणेति** । शोणेति पाठे 'एङ् प्राचां देशे' इति वृद्धत्वम्। माला,शाला,शोणा[6],शौणेतिवा।द्राक्षा, ध्राक्षा, श्लाक्षा, काञ्ची, एक, काम, [एका कामा क्षामा] । **नवार्ममिति** । नवशब्दः प्रत्यग्रवाची अकारान्तः । **महार्ममित्यात्राऽऽत्वे** कृते प्राप्तिः । **न भू** । **मद्राश्मस्य**—'अनोऽश्मायः' इति टजन्तत्वादवर्णान्तत्वम् । **सङ्घातेति**। स्वरविधौ नलोपस्याऽसिद्धत्वेनाश्मनोऽवर्णान्तत्वाऽभावादप्राप्तेर्भाष्येऽनुक्तत्वाच्च वृत्त्युक्तमिदं चिन्त्यम् । 'वृत्तिप्रामाण्यादयमश्मशब्दोऽकारान्तोप्यस्ती'त्यन्ये । **दिवोदासायेति** । 'दिवसश्च दासे' इति षष्ठ्या अलुक् । **सर्वश्वेत इति**। श्वेतादिगुणेन सर्वावयवानां व्याप्तिरिति गुणकार्त्स्न्ये-वृत्तिरत्र सर्वशब्दः। यत्र हि गुणाऽन्तराऽभावस्तत्र गुणकार्त्स्न्यं भवति। '**सर्वमहा**'नित्यत्र सर्वशब्दस्य पूज्यमानार्थत्वाऽभावात् 'पूर्वकालैके'त्येव समासः । **आश्रयव्याप्त्येति** । न तूज्ज्वलत्वेनेत्यर्थः । **सर्वसौवर्ण इति**। विकार-

वर्तते। गुणेतिकिम्?। सर्वसौवर्णः।कार्त्स्न्यें किम्?।सर्वेषां श्वेततरः सर्वश्वेतः।संज्ञायां गिरिनिकाययोः।६।२।९४। एतयोः परतः पूर्वमन्तोदात्तम्।अञ्जनागिरिः। मौण्डिनिकायः। संज्ञायां किम्?। परमगिरिः। ब्राह्मणनिकायः। कुमार्यां वयसि।६।२।९५।पूर्वपदमन्तोदात्तम् वृद्धकुमारी।कुमारीशब्दः पुंसा सहाऽसंप्रयोगमात्रं प्रवृत्तिनिमित्त-मुपादाय प्रयुक्तो वृद्धादिभिः समानाधिकरणः।तच्च वय इह गृह्यते, न कुमारत्वमेव। वयसि किम्?।परमकुमारी। उदकेऽकेवले।६।२।९६। अकेवलं=मिश्रं, तद्वाचिनि समासे उदके परे पूर्वमन्तोदात्तम्। गुडोदकम्। स्वरे कृतेऽत्र एकादेशः 'स्वरितो वाऽनुदात्ते पदादौ' इति पक्षे स्वरितः। अकेवले किम्?। शीतोदकम्। द्विगौ क्रतौ।६।२।९७। द्विगावुत्तरपदे क्रतुवाचिनि समासे पूर्वमन्तोदात्तम्। गर्गत्रिरात्रम्। द्विगौ किम्?। अतिरात्रः। क्रतौ किम्?। बिल्वहोमस्य सप्तरात्रं बिल्वसप्तरात्रम्। सभायां नपुंसके।६।२।९८। सभायां परतो नपुंसकलिङ्गे समासे पूर्वमन्तोदात्तम्। गोपालसभम्। स्त्रीसभम्। सभायां किम्?। ब्राह्मणसेनम्। नपुंसके किम्?। राजसभा। प्रतिपदोक्तनपुंसकग्रहणान्नेह–रमणीयसभं=ब्राह्मणकुलम्। पुरे प्राचाम्।६।२।९९। शिवदत्तपुरम्। नान्दीपुरम्। प्राचां किम्?। शिवपुरम्। अरिष्टगौडपूर्वे च।६।२।१००। पुरे परे अरिष्टगौड-

---

सु.]धारये, न षष्ठीसमास इत्याह–सर्वेषामिति। गुणिकार्त्स्न्ये वर्तमाना न गुणकार्त्स्न्ये।सर्वेषामिति गुणसंबन्धे षष्ठी। 'पटस्य शौक्ल्य'मितिवद्गुणवाचिन एव प्रत्ययः। सर्वेषां पटानां द्रव्यान्तराधारश्वेतगुणापेक्षया सातिशयः श्वेतो गुण इत्यर्थः। यदा तु प्रतिपदोक्तत्वात् 'पूर्वकालैके'ति समासो गृह्यते तदा कार्त्स्न्यग्रहणं माऽस्तु। अञ्जनागिरिरिति। 'वनगिर्योः संज्ञाया'मिति दीर्घः। कुमार्याम्। कुमारीशब्दे परे पूर्वपदमन्तोदात्तं स्याद्वयसि द्योत्ये। वृद्धकुमारीति। विशेषणसमासः। 'पुंवत्कर्मधारये'ति पुंवद्भावः। ननु कुमारीशब्दः प्रथमे वयसि वर्तते, तथा च 'वयसि प्रथमे' इत्यनेन ङीब्नत्र विहितस्तस्य कथं चरमवयोवाचिना वृद्धेन सामानाधिकरण्यमत आह–कुमारीत्यादि। कुमारीशब्दे द्वयं प्रवृत्तिनिमित्तं, प्रथमं वयः, पुंसा सहाऽसंप्रयोगश्च, तत्राऽऽद्यमर्थं त्यक्त्वा द्वितीयमात्रे वर्तते तदा वृद्धादिसामानाधिकरण्यं भवति। तदाह–तच्चेति। शब्दान्तराभिधेयमित्यर्थः। न कुमारत्वमेवेति। यदेतत्कुमारीशब्दस्य प्रवृत्तिनिमित्तं तद्वयो न गृह्यत इत्यर्थः। एतच्च वयोग्रहणसामर्थ्याल्लभ्यते। अन्यथा कुमारीशब्दप्रयोगे नियोगतः प्रथमं वयो गम्यत इत्यनर्थकं स्यात्। ननु तर्हि ङीबपि न स्यादिति चेच्छृणु। पूर्वं हि प्रथमं वयः प्रवृत्तिनिमित्तं कृत्वा ङीप् कृतः,सोऽनन्तरङ्गो वृद्धादिसामानाधिकरण्येऽपि न निवर्तते। परमकुमारीति। अत्र कुमारत्वमेव गम्यते न वयोऽन्तरमिति भवति प्रत्युदाहरणम्। उदके। अकेवल इति पदच्छेदः। अन्यथाऽसंदेहार्थं 'केवल उदके' इत्येव ब्रूयात्तदाह–अकेवलं मिश्रमिति। द्रव्यान्तरसंपृक्तं मिश्रम्। गुडोदकमिति। गुडमिश्रमुदकं गुडोदकम्। शीतोदकमिति कर्मधारयः। गर्गत्रिरात्रमिति। –षष्ठीसमासः। तिसृणां रात्रीणां समाहारस्त्रिरात्रम्। 'अहःसर्वैकदेश'त्यादिनाऽच् [समासान्तः]। 'सङ्ख्यापूर्वं रात्रं क्लीब'मिति क्लीबत्वम्। एवं सप्तरात्र इति। रात्रिमतिक्रान्त इति प्रादिसमासः। बिल्वसप्तरात्रमिति। अत्र बिल्वशब्दो बिल्वहोमे वर्तते। तेन सह षष्ठीसमासः। गोपालसभमिति। 'अशाला चे'ति क्लीबत्वम्। प्रतिपदोक्तेति। 'सभा राजे'त्यादिविहितम्। रमणीयसभमिति। रमणीया सभा यस्येति बहुव्रीहिः। अत्राऽभिधेयवशान्नपुंसकत्वं, न प्रतिपदोक्तम्। पुरे प्राचां। पुरशब्दे परे प्राचां देशे पूर्वपदमन्तोदात्तं स्यात्। अरिष्ट। पूर्वग्रहणं किमिति। 'अरिष्ट-

---

शे.]कार्त्स्न्यमत्र। सर्वेषामिति।गुणिकार्त्स्न्यवृत्तिः सर्वशब्दोऽत्र। 'गुणात्तरेणे'ति समासः।सर्वेषां पटानां मध्ये श्वेतगुणवद्रव्यान्तरापेक्षया सातिशयश्वेतगुणवानयमित्यर्थः। द्रव्यान्तराधेयश्वेतापेक्षया सर्वेषां पटानामयं श्वेतो गुणः सातिशय इत्यर्थ इत्यन्ये। अञ्जनागिरिरिति। 'वनगिर्यो'रिति दीर्घः। गिरीत्यादि किं?। शरवणम्। दूर्वावणम्। दूर्वावनम्। कुमार्यां वयसि।वयसि वर्तमानं पूर्वपदमित्यर्थः।वृद्धकुमारीति।विशेषणसमासः।'पुंवत्कर्मधारये'ति पुंवत्। असंप्रयोगमात्रेति। तन्मात्रेण कुमारत्वरूपं प्रवृत्तिनिमित्तमुपादाय।रोप्य प्रयुक्त इत्यर्थः। अत एव कुमारीत्यत्र ङीप्सिद्धिः। तच्च वय इति। वृद्धत्वमित्यर्थः। न कुमारत्वमेवेति। यत्कुमारीशब्दस्य प्रवृत्तिनिमित्तं न तदेव वयो गृह्यत इत्यर्थः। एवञ्च वयसीति पूर्वपदविशेषणमिति सूचितम्। स्वरे कृते इति। 'नेन्द्रस्ये'ति निषेधेन पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमेकादेशाऽभावज्ञापनादिति भावः। गर्गत्रिरात्रमिति। 'सङ्ख्यापूर्वं रात्रं क्लीब'मिति क्लीबता। पुंल्लिङ्गपाठस्तु क्वाचित्कः प्रामादिकः। एवं–बिल्वसप्तरात्रमित्येव पाठः। प्रतिपदोक्तेति। 'सभा राजे'ति विहितेत्यर्थः। प्रत्युदाहरणे बहुव्रीहिः, ब्राह्मणकुलं विशेष्यम्। पुरे प्राचाम्। स्वतन्त्राऽकारान्तपुरशब्दस्य, 'ऋक्पू'रित्यप्रत्ययान्तस्य च ग्रहणम्,अविशेषात्, अप्रत्ययान्तस्यापि परत्वसम्भवात्, नह्यत्रोत्तरपदाधिकारोऽस्तीत्याहुः। इहापीति। 'अरिष्टगौडे'त्येव सिद्धे पूर्वग्रहणं तदादि-

पूर्वे समासे पूर्वमन्तोदात्तम्। अरिष्टपुरम्। गौडपुरम्। पूर्वग्रहणं किम्?। इहापि यथा स्यात्—अरिष्टश्रितपुरम्। गौडभृत्यपुरम्। **न हास्तिनफलकमार्देयाः** ।६।२।१०१। पुरे परे नैतान्यन्तोदात्तानि। हास्तिनपुरम्। फलकपुरम्। मार्देयपुरम्। मृदोरपत्यमिति शुभ्रादित्वाड्ढक्। **कुसूलकूपकुम्भशालं बिले** ।६।२।१०२। एतान्यन्तोदात्तानि बिले परे। कुसूलबिलम्। कूपबिलम्। कुम्भबिलम्। शालबिलम्। कुसूलादि किम्?। सर्पबिलम्। बिले किम्?। कुसूलस्वामी। **दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु** ।६।२।१०३। दिक्शब्दा अन्तोदात्ता भवन्त्येषु। पूर्वेषुकामशमी। अपरकृष्णमृत्तिका। जनपद—पूर्वपञ्चालाः। आख्यान—पूर्वयायातम्। पूर्वचानराटम्। शब्दग्रहणं कालवाचिनोऽपि दिक्शब्दस्य परिग्रहार्थम्। **आचार्योपसर्जनश्चान्तेवासिनि** ।६।२।१०४। आचार्योपसर्जनान्तेवासिनि परे दिक्शब्दा अन्तोदात्ता भवन्ति। पूर्वपाणिनीयाः। आचेति किम्?। पूर्वान्तेवासी। अन्तेवासिनि किम्?। पूर्वपाणिनीयं शास्त्रम्। **उत्तरपदवृद्धौ सर्वं च** ।६।२।१०५। 'उत्तरपदस्ये'त्यधिकृत्य या वृद्धिर्विहिता तद्वत्युत्तरपदे परे सर्वशब्दो, दिक्शब्दाश्चान्तोदात्ता भवन्ति। सर्वपाञ्चालकः। अपरपाञ्चालकः। अधिकारग्रहणं किम्?। सर्वभासः। सर्वकारकः। **बहुव्रीहौ विश्वं संज्ञायाम्** ।६।२।१०६। बहुव्रीहौ विश्वशब्दः पूर्वपदभूतः संज्ञायामन्तोदात्तः स्यात्। पूर्वपदप्रकृतिस्वरेण प्राप्त-

---

सु.]गौडयो'रिति वक्तव्यमिति प्रश्नः। **इहापि यथा स्यादिति।** पूर्वग्रहणे हि सति बहुव्रीहिर्लभ्यते,—अरिष्टगौडौ पूर्वौ यस्मिन्समास इति। तेनारिष्टश्रितपुरं गौडभृत्यपुरमित्यत्रापि पूर्वपदमन्तोदात्तं भवति। असति तु पूर्वग्रहणे श्रितभृत्यशब्दाभ्यां व्यवहितत्वाच्चाऽरिष्टगौडयोस्तावन्न स्यात्, समुदाययोश्च सूत्रेऽनुपात्तत्वात्। **न हास्ति**। 'पुरे प्राचा'मिति प्राप्तः प्रतिषिध्यते। **मार्देयपुरमिति**। 'ढे लोपोऽकद्र्वाः' इत्युकारलोपः। **दिक्शब्दाः**। दिक्शब्दाः पूर्वपदानि अन्तोदात्तानि स्युर्ग्रामादिषूत्तरपदेषु। चानराटे स्वरूपग्रहणम्, इतरेष्वर्थग्रहणम्। **पूर्वेषुकामशमी, अपरकृष्णमृत्तिकेति**। 'दिक्सङ्ख्ये संज्ञाया'मिति समासः। **पूर्वपञ्चाला इति**। समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि वर्तन्त इति पञ्चालैकदेशे पञ्चालशब्दः। ततः पूर्वशब्देन सामानाधिकरण्यात् 'पूर्वाऽपरप्रथमे'त्यादिना कर्मधारयः। **पूर्वयायातमिति**। ययातिमधिकृत्य कृतो ग्रन्थ इत्यणि यायातशब्दः सिद्धः। **शब्दग्रहणमित्यादि**। दिशि दृष्टः शब्द इत्युत्तरपदलोपी समासस्तेन कालवाचिनोऽपि ग्रहणात्पूर्वयायातमित्यादावपि भवति। **आचार्योपसर्जन**। आचार्योपसर्जनग्रहणमन्तेवासिनो विशेषणं। सप्तम्यर्थे प्रथमा। तदाह—**आचार्योपसर्जनान्तेवासिनीति**। आचार्य उपसर्जनं यस्य स आचार्योपसर्जनः, स चासावन्तेवासी च, तद्वाचिनि। **पूर्वपाणिनीया इति**। 'पूर्वापरप्रथमे'ति समासः। पाणिनेश्छात्राः पाणिनीयाः। अत्राऽन्तेवासिनः प्रधानमाचार्यस्तूपसर्जनम्। **पूर्वपाणिनीयं शास्त्रमिति**। पूर्व=चिरंतनमित्यर्थः। **उत्तरपदवृद्धौ**। अत्र वृद्धावित्येतावतैव वृद्धिमदुत्तरपदपरिग्रहे सिद्धे उत्तरपदग्रहणात्तदधिकारो लक्ष्यते। उत्तरपदशब्दस्य स्वरितत्वाद्वाऽधिकारप्रतिपत्तिरित्याशयेनाह—**उत्तपदस्येत्यादि**। **सर्वपाञ्चालकइत्यादि**। 'सुसर्वार्धदिक्शब्देभ्यो जनपदस्ये'ति तदन्तविधौ 'अवृद्धादपि बहुवचनविषया'दिति वुञ्। 'सुसर्वार्धाज्जनपदस्य' 'दिशोऽमद्राणा'मित्युत्तरपदवृद्धिः। 'वृद्धिशब्देन या वृद्धिर्विहिता तद्वत्युत्तरपदे' इत्युच्यमानेऽपि न निर्वाह इत्याह—**सर्वकारक इति**। **बहुव्रीहौ**। 'संज्ञाया'मिति बहुव्रीहेर्विशेषणं, न विश्वशब्दस्य। **विश्वकर्मेति**। विशेः कन्। नित्त्वादाद्युदात्तो विश्वशब्दः।

---

शे.]समासग्रहणार्थमिति भावः। अप्रागर्थश्चेदं **सूत्रम्। हास्तिनपुरमिति।** एषु समासान्तोदात्तत्वमेव। ढगिनि। 'ढे लोपः' इत्युलोपः। **कुसूलकूप**। प्रत्युदाहरणेषु समासान्तोदात्तत्वम्। **दिक्शब्दा ग्राम**। **चानराटे** स्वरूपग्रहणम्, अन्यत्राऽर्थग्रहणम्। **पूर्वेष्विति।** एकादेशः स्वरित, उदात्तो वा। **पूर्वपञ्चालाँ इति**। पञ्चालैकदेशे पञ्चालशब्दस्य वृत्त्या पूर्वाद्भिना सामानाधिकरण्यं, 'पूर्वापरे'ति विशेषणसमासः। **यायातमिति**। ययातिमधिकृत्य कृतमाख्यानमित्यर्थः। 'पूर्वयायात'मित्यादौ पूर्वशब्दस्य दिक्शब्दत्वाऽभावात्कथं प्राप्तिरित्यत आह—**शब्दग्रहणमिति**। यदा कदा वा दिशि दृष्ट इत्यर्थलाभादिति भावः। **आचार्योपसर्जनश्च**। सप्तम्यर्थे प्रथमा। अन्तेवासिविशेषणश्चैतत्। **उत्तरपदस्येत्यधीति**। स्पष्टश्चेदं 'वृद्धिरादै'च्सूत्रे भाष्ये। वृद्धिमात्रस्योत्तरपदस्याऽभावेन सामर्थ्याद्वृद्धिमदुत्तरपदे लब्धे उत्तरपदग्रहणात्तस्य स्वरितत्वाद्वा तदधिकारलाभ इत्याहुः। अस्य वृद्धिशब्देन विहितवृद्धिग्रहणेनाऽपि वारयितुं शक्यत्वादाह—**सर्वकारक इति**। **बहुव्रीहौ विश्वं**। 'सञ्ज्ञाया'मिति बहुव्रीहेर्विशेषणम्। कर्मधारये विश्वेदे वा इत्यन्तोदात्तम्। **विश्वदेव इति**। असंज्ञायां पूर्वपदप्रकृतिस्वरः। विश्वमित्रविश्वाजिनयोः 'सञ्ज्ञायां मित्राजिनयो'रित्येतद्विप्रतिषेधेन। ऋषौ विश्वामित्रे अयमेव स्वरो भवति, 'ऋषिप्रतिषेधो मित्रे' इति वचनात्। **हर्यश्व इति**। 'नेन्द्रस्य परस्ये'ति ज्ञापकात्पूर्वं पूर्वोत्तरपदनिमित्त-

स्याद्युदात्तस्यापवादः। वि॒श्वक॑र्मणा वि॒श्वदे॑व्यावता। आवि॒श्वदे॑वं॒ सत्प॑तिम्। बहुव्रीहौ किम्?। विश्वे च ते देवाश्च विश्वदे॒वाः। संज्ञायां किम्?। विश्व॑देवः। प्रागव्ययीभावाद्बहुव्रीह्यधिकारः। **उदराश्वेषुषु** ।६।२।१०७। संज्ञायामिति वर्तते। वृ॒कोद॑रः। ह॒र्य॑श्वः। म॒हेषु॑ः। **क्षेपे** ।६।२।१०८। उदराश्वेषुषु पूर्वमन्तोदात्तं बहुव्रीहौ निन्दायाम्। घ॒टोद॑रः। क॒न्दुकौश्वः। चला॒च॒लेषु॑ः। अनु॒दर इत्यत्र 'नञ्सुभ्या'मिति भवति विप्रतिषेधेन। **नदी बन्धुनि**।६।२।१०९।बन्धुशब्दे परे नद्यन्तं पूर्वमन्तोदात्तं बहुव्रीहौ।गा॒र्गीब॑न्धुः। नदी किम्?। ब्रह्मबन्धुः। ब्रह्मशब्द आद्युदात्तः। बन्धुनि किम्?। गा॒र्गीप्रि॑यः। **निष्ठोपसर्गपूर्वमन्यतरस्याम्** ।६।२।११०। निष्ठान्तं पूर्वपदमन्तोदात्तं वा। प्र॒धौ॒तपा॑दः। प्रधौ॑तपादः। निष्ठा किम्?। प्र॒से॒च॒क॑मुखः। उपसर्गपूर्वं किम्?। शुष्क॑मुखः।

**उत्तरपदादिः** ।६।२।१११। उत्तरपदाधिकार आपादान्तम्। आद्यधिकारस्तु 'प्रकृत्या भगाल'मित्यवधिकः। **कर्णो वर्णलक्षणात्** ।६।२।११२। वर्णवाचिनो, लक्षणवाचिनश्च परः कर्णशब्द आद्युदात्तो बहुव्रीहौ। शु॒क्लक॒र्णः। शङ्कु॒क॒र्णः। कर्णः किम्?। श्वे॒तपा॑दः?। वर्णलक्षणात्किम्?।शोभ॒नक॑र्णः। **संज्ञौपम्ययोश्च**

---

सु.] **उदरा**। एषूत्तरपदेषु बहुव्रीहौ संज्ञायां पूर्वपदमन्तोदात्तं स्यात्। अयमपि पूर्वपदप्रकृतिस्वरस्यापवादः। वृकशब्दः 'प्राणिनां कुपूर्वाणा'मित्याद्युदात्तः। वृकस्येवोदरमस्य वृकोदरः। **हर्यश्व इति।** हरतेः 'सर्वधातुभ्य इ'न्निति इन्। आद्युदात्तो हरि शब्दः। हरिरश्वोऽस्य हर्यश्वः। यणि कृते 'उदात्तस्वरितयो'रिति स्वरितः। **महेषुरिति।** महच्छब्दोऽन्तोदात्तः। 'वर्तमाने पृषन्महद्'दित्यत्र तथा निपातनात्।तथा च पूर्वपदप्रकृतिस्वरेणैव सिद्धे सति स्वन्यार्थ आरम्भः। अपवादत्वादनेनैवान्तोदात्तत्वम्। उदाहरणं तु सुवर्ण पुङ्ख सुरिति ज्ञेयम्। सुष्ठु वर्णो येषां ते सुवर्णाः। 'नञ्दुःसुभ्या'दित्यन्तोदात्तत्वम्।सुवर्णाः पुङ्खा येषां ते इति बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण मध्योदात्तत्वम्। पुनरिषुशब्देन बहुव्रीहौ समासे पूर्वपदमन्तोदात्तम्। एकादेशस्तु 'स्वरितो वाऽनुदात्ते पदादौ' इति पक्षे स्वरितः। **घटोदर इति।** घटशब्दः पचाद्यजन्तः। कैन्दुशब्दात्संज्ञायां कन्। 'चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्ये'ति पचाद्यजन्तः–चलाचलशब्दः। **अनुदर इत्यादि।** अस्यावकाशः–घटोदरः। 'नञ्सुभ्या'मित्यस्यावकाशः–अयशाः। सुयशाः। एवं स्थिते विप्रतिषेधः। **नदी।** 'बन्धुनी'ति शब्दस्वरूपापेक्षया नपुंसकनिर्देशः।**गार्गीबन्धुरिति।**'गर्गादिभ्यो य'ञिति यञन्ताद्गर्गशब्दात् 'यञश्चे'ति ङीप्। **गार्गी।** ञित्स्वरेणाद्युदात्तः। **ब्रह्मबन्धुरिति।** 'बृंहेर्नोच्चे'ति नकारस्याऽकारादेशो मनिन्प्रत्ययश्चेति मनिनन्तो ब्रह्मशब्दो नित्स्वरेणाद्युदात्तः। तदाह–**ब्रह्मेत्यादि।** **गार्गीप्रिय इति।** अत्र पूर्वपदप्रकृतिस्वर एव। **निष्ठोपसर्ग।**उपसर्गपूर्वं निष्ठान्तं पूर्वपदमन्तोदात्तम्। **प्रधौतपाद इति।** धावु गतिशुद्ध्योः। क्तः। 'च्छ्वोः शू'डित्यूठ्। 'एत्येधत्यूठ्सु' इति वृद्धिः। प्रधौ॑तशब्दो गतिस्वरेणाद्युदात्तः। **प्रसेचकमुख इति।** ण्वुलन्तः प्रसे चकशब्दः कृदुत्तरपदप्रकृतिस्वरेण लित्वान्मध्योदात्तः। **शुष्कमुख इति।** 'शुष्कधृष्टौ' इति शुष्कशब्द आद्युदात्तः। **उत्तरपदादिः।** 'उत्तरपदे'ति पृथक्पदं लुप्तषष्ठीकम्। **कर्णो।** **आद्युदात्त इति।** सिद्धार्थकथनमेतत्। उत्तरपदस्य कर्णशब्दस्याऽऽदिरुदात्त इत्यक्षरार्थः। एवं चाऽस्मिन्प्रकरणे कर्ण इत्यादौ षष्ठ्यर्थे प्रथमेति ज्ञेयम्। **शङ्कुकर्ण इति।** शङ्कुः कर्णे यस्येति विग्रहः। 'सप्तमीविशेषणे' इति सप्तम्यन्तस्य पूर्वनिपाते प्राप्ते 'गड्वादेः परा सप्तमी'ति परनिपातः। 'कर्णे लक्षणस्ये'ति दीर्घः। पशूनां विभागज्ञानार्थं शङ्कुप्रतिरूपकं कर्णादिषु यच्चिह्नं क्रियते तदिह लक्षणं गृह्यते, पृथग्वर्णग्रहणात्। अन्यथा वर्णनापि

---

शे.]कार्यमिति स्वरोत्तरं यणादि। तेन 'उदात्तस्वरितयो'रित्यादिप्रवृत्तिः। अत्रापि सञ्ज्ञायामित्यनुवर्तत इत्याहुः। **क्षेपे।** अक्षेपे सञ्ज्ञात्वाऽभावे पूर्वपदप्रकृतिस्वर एव। **घटोदर इति।** घटशब्दो वृषादित्वादाद्युदात्तः। कटुकशब्दस्तु कन्नन्तत्वात्तथा। चलाचलस्याऽजन्तत्वाच्चलाचलेषुरित्युदाहरणं चिन्त्यम्। एवं महेषुरित्यपि। **अनुदर इत्यत्रेति।** क्षेपे सञ्ज्ञायां चेदम्। अक्षेपेऽपि पूर्वपदप्रकृतिस्वराऽपवादत्वात्तदेव। 'सूदर' इत्यत्र ततोऽपि परत्वात् 'उपसर्गात्स्वाङ्ग'मिति बोध्यम्। **ब्रह्मशब्द इति।** 'नब्विषयस्ये'त्यनेनाद्युदात्तत्वं,मनिनन्तत्वाद्वा,'ब्र॒ह्मा दे॑वाना'मित्यादावन्तोदात्तत्वं तु छान्दसत्वात्। **गार्गीप्रिय इति।** **गौरीप्रि॑य** इति तु क्वचित्कोऽपपाठः, गौरीशब्दस्य ङीषन्ततयाऽन्तोदात्तत्वेन विशेषाऽभावात्। **प्रधौ॑तशब्दो** गतिस्वरेणाद्युदात्तः। प्रसेचकशब्दः कृदुत्तरपदप्रकृतिस्वरेण लित्वान्मध्योदात्तः। शुष्कशब्दः–'शुष्कधृष्टौ' इत्याद्युदात्तः। **उत्तरपदादिः।** 'उत्तरपदे'ति लुप्तषष्ठीकं पृथक्पदम्। **कर्णो वर्ण।** कर्ण इति षष्ठ्यर्थे प्रथमा। उत्तरपदस्य कर्णस्याऽऽदिरुदात्त इति वाच्योऽर्थः, फलितमाह–**परः कर्ण इति।** एवमग्रेऽपि बोध्यम्। अत्र लक्षणशब्देन पशूनां विभागज्ञानार्थं दात्रशङ्कुप्रतिरूपकं यत्कर्णादिषु चिह्नं क्रियते तदुच्यते, पृथग्वर्णग्रहणात्। तेन 'स्थूलकर्णः' इत्यत्र न। स्थूलशब्दोऽन्तोदात्तः। **शङ्कुकर्ण इति।** 'कर्णे लक्षणस्ये'ति

।६।२।११३। कर्णं आद्युदात्तः। मणिकर्णः। औपम्ये-गोकर्णः। **कण्ठपृष्ठग्रीवाजङ्घं च** ।६।२।११४। संज्ञौपम्ययोर्बहुव्रीहौ। शितिकण्ठः। काण्डपृष्ठः। सुग्रीवः। नाडीजङ्घः। औपम्ये-खरकण्ठः। गोपृष्ठः। अश्वग्रीवः। गोजङ्घः। **शृङ्गमवस्थायां च** ।६।२।११५। शृङ्गशब्दोऽवस्थायां संज्ञौपम्ययोश्चाद्युदात्तो बहुव्रीहौ। उद्गतशृङ्गः। द्व्यङ्गुलशृङ्गः। अत्र शृङ्गोद्गमनादिकृतो गवादेर्वयोविशेषोऽवस्था। संज्ञायाम्-ऋष्यशृङ्गः। उपमायां-मेषशृङ्गः। अवस्थेति किम्? स्थूलशृङ्गः। **नञो जरमरमित्रमृताः** ।६।२।११६। नञः परा एते आद्युदात्ता बहुव्रीहौ। नै मे जराद्यजरम्। अमरम्। अमित्रमर्दय। श्रवो देवेष्वमृतम्। नञः किम्? ब्राह्मणमित्रः। जेति किम्? अशत्रुः। **सोर्मनसी अलोमोषसी** ।६।२।११७। सोः परं लोमोषसी वर्जयित्वा मन्नन्तमसन्तं चाऽऽद्युदात्तं स्यात्। 'नञ्सुभ्या'मित्यस्याऽपवादः। सुकर्माणः सुयुजः सनो वक्षदनिमानः सुब्रह्मा। शिवा पशुम्यः सुमनाः सुवर्चाः। सुपेशसस्करति। सोः किम्? कृतकर्मा। मनसी किम्? सुराजा। अलोमोषसी किम्? सुलोमा। सुषाः। कपि तु परत्वात् 'कपि पूर्व'मिति भवति। सुकर्मकः। सुस्रोतस्कः। **क्रत्वादयश्च** ।६।२।११८। सोः परे आद्युदात्ताः स्युः। साम्राज्याय सुक्रतुः। सुप्रतीकः सुहव्यः। सुप्रतूर्तिमनेहसम्। **आद्युदात्तं द्व्यच् छन्दसि** ।६।२।११९। यदाद्युदात्तं द्व्यच् तत्सोरुत्तरं बहुव्रीहावाद्युदात्तम्। अधा

सु.] लक्ष्यमाणत्वादनर्थकं तत्स्यात्। **श्वेतपाद इति**। श्विता वर्णे, पचाद्यच्। **शोभनकर्ण इति**। शुभ शोभार्थे। 'अनुदात्तेतश्च हलादेः' इति युच्। प्रत्युदाहरणे सर्वत्र पूर्वपदप्रकृतिस्वर एव भवति। **संज्ञौपम्य**। संज्ञायामौपम्ये च यो बहुव्रीहिस्तत्र कर्णशब्द उत्तरपदमाद्युदात्तं स्यात्। **कण्ठपृष्ठ**। कण्ठादीनां समाहारद्वन्द्वे नपुंसकह्रस्वत्वम्। कण्ठादीन्युत्तरपदानि संज्ञौपम्ययोराद्युदात्तानि स्युर्बहुव्रीहौ। **कण्ठपृष्ठौ**-'स्वाङ्गशिटा'मित्याद्युदात्तौ। ग्रीवाजङ्घयोः स्वाङ्गत्वेऽप्यदन्ताऽभावादन्तोदात्तत्वम्। **सुग्रीव** इत्यत्र परत्वात् 'नञ्सुभ्या'मित्यन्तोदात्तत्वेन भाव्यम्। अस्य तु दशग्रीवादिरवकाशः। यदि तु नेष्यते तर्हि चकारोऽस्यैव विधेः समुच्चयार्थ इति व्याख्येयम्। **नाडीजङ्घ इति**। नाड्याकारे जङ्घे यस्य स नाडीजङ्घः। **नञो जर**। 'नञ्सुभ्या'मित्यस्याऽपवादः। जरणं जरः। 'ॠदोरप्'। मरणं मरः। अस्मादेव निपातनादप्। अमरम्। ञिमिदा स्नेहने 'अमिचिमिदिशसिभ्यः क्त्रः'। मृङो 'नपुंसके भावे क्तः'। सूत्रे तु शब्दपरत्वात्पुंस्त्वम्। **जेति किमिति**। जरमरमित्रमृतग्रहणं किमर्थमित्यर्थः। **अशत्रुरिति**। 'नञ्सुभ्या'मित्युत्तरपदान्तोदात्तत्वम्। **सोर्मन**। मन् च अस् च मनसी। **सुकर्माण इत्यादि**। यद्यपि 'आद्युदात्तं द्व्यच्छन्दसी'त्यनेन सिद्धमिदं तथापि सुप्रथिमेत्यादि बह्वज्जर्थमच्छन्दोऽर्थं च सूत्रमिति बोध्यम्। **सुप्रथिमेत्यत्र** पृथोर्भाव इति पृथ्वादिभ्य इमनिच्। 'र ऋतो हलादेर्लघोः' इति रादेशः। **सुराजेति**। राजशब्दः 'कनिन्युवृषी'ति कनिन्प्रत्ययान्तः। लुनातेर्मनिन्। **लोम**। उष दाहे। 'मिथुनेऽसि'रिति वर्तमाने 'उषः कित्'। उषः। **कपि त्विति**। अस्यावकाशः-सुकर्मा। 'कपि पूर्व'मित्यस्यावकाशः-अपवरकैः। एवं स्थिते विप्रतिषेधः। **आद्युदात्तम्**। 'नञ्सुभ्या'मित्यस्यापवादः। 'अद्व्

शे.] दीर्घत्वम्। **श्वेतः**-पचाद्यजन्तः। **शोभनो** युजन्तः। प्रत्युदाहरणे पूर्वपदप्रकृतिस्वरः, तत्पुरुषे त्वन्तोदात्तत्वम्। **कण्ठपृष्ठ**। उत्तरपदान्येतान्याद्युदात्तानीत्यर्थः। **सुग्रीव इति**। यद्यपि परत्वात् 'नञ्सुभ्याम्', 'उपसर्गात्स्वाङ्ग'मित्युचितं तथापि '**नीलग्रीवः**' इत्युदाहरणं बोध्यम्। 'चेन पुनर्विधानादयं परस्यापि बाधक' इति हरदत्तः। **विशेषोऽवस्थेति**। 'गम्यते' इति शेषः। औपम्ये-गोशृङ्ग इत्युदाहरणम्। **नञो जर**। 'नञ्सुभ्या'मित्यस्यापवादः। जरणं जरः। 'ॠदोरप्'। मरणं मरः। अत एव निपातनादप्। मिदेस्त्रः। मित्रम्। **मृते** 'नपुंसके' इति भावे क्तः। सूत्रे तु शब्दपरत्वात्पुंस्त्वम्। **अमित्रेति**। अयं बहुव्रीहावनेन मध्योदात्तः, नञ्तत्पुरुषे अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तः, अमेरित्रचि अन्तोदात्तोऽपि। त्रयोऽपि पुंलिङ्गाः, शत्रुवाचकाश्च। 'मृत्राऽमित्रवृत्रमेघ्राः पुंसी'त्युक्तेः।न च तत्पुरुषे परवल्लिङ्गतापत्तिरिति वाच्यं, लिङ्गानुशासनसूत्रे एकशेषेणाऽस्यापि निर्देशान्न दोष इत्याहुः। **हरदत्तस्तु**-तत्पुरुषो नपुंसकमेव, आद्युदात्तश्चेत्याह। एवञ्च 'अश्नोतेराशुकर्मणी'त्युणादिसूत्रोक्तमनोरमादिरीत्या ईश्वरीशब्दवदमित्रशब्दोऽपि त्रिप्रकारः। **सोर्मनसी। अपवाद इति**। एवमुत्तरसूत्रत्रयमपि तदपवाद एव। मन् च अस् च-मनसी। **सुकर्माण इति**। यद्यपि'आद्युदात्तं द्व्यच्छन्दसी'त्यनेनैव सिद्धमिदन्तथापि 'अनिनस्मन्ग्रहणानी'ति न्यायेन सुप्रथिमेत्यादिबह्वज्जर्थमच्छन्दोऽर्थञ्चेदम्। 'सुत्र'दित्यत्रापि स्वरे कर्त्तव्ये बहिरङ्गत्वात्पूर्वत्राऽसिद्धत्वाद्वा दत्वस्याऽसिद्धत्वेनाऽसन्तत्वादयं स्वरो भवत्येव। यत्तु 'वस्वादिषु दत्वं सिद्ध'मिति, तत्तु 'सौ दीर्घत्वे' इति वाक्यशेषाद्दीर्घविधावेव। '**सुलोमे**'त्यादौ 'नञ्सुभ्या'मिति भवति। **क्रत्वादयश्च**। क्रतु, दृशीक, प्रतीक, प्रतूर्ति, हव्य, भव्य, भग-इति क्रत्वादयः। **आद्युदात्तं द्व्यच्। बहुव्रीहावा-**

स्वश्वाः। सु रथाँ आतिथिग्वे । नित्स्वरेणाश्वरथावाद्युदात्तौ। आद्युदात्तं किम्?। या सुबाहुः। द्व्यच् किम् ?। सुगु-
रसत्सुहिरण्यः ।·हिरण्यशब्दस्त्र्यच् । **वीरवीर्यौ च** ।६।२।१२०। सोः परौ बहुव्रीहौ छन्दस्याद्युदात्तौ । सुवी-
रेण रयिणा । सुवीर्यस्य गोमतः । 'वीर्य'शब्दो यत्प्रत्ययान्तः। तत्र 'यतोऽनावः' इत्याद्युदात्तत्वं नेति वीर्यग्रहणं
ज्ञापकम् । तत्र हि सति पूर्वेणैव सिद्धं स्यात्। **कूलतीरतूलमूलशालाऽक्षसममव्ययीभावे**।६।२।१२१।उप
कूलम् । उपतीरम् । उपतूलम् । उपमूलम् । उपशालम् । उपाक्षम्। सुषमम्। विषमम्। दुःषमम्। निःषमम्।
तिष्ठद्गुप्रभृतिष्वेते । कूलादिग्रहणं किम्?। उपकुम्भम्। अव्ययीभावे किम्?। परमकूलम् । **कंसमन्थशूर्पपाय्य-
काण्डं द्विगौ**।६।२।१२२। द्विकंसः। द्विमन्थः। द्विशूर्पः। द्विपाय्यम्। द्विकाण्डम् । द्विगौ किम् ?। परमकंसः।
**तत्पुरुषे शालायां नपुंसके** ।६।२।१२३। शालाशब्दान्ते तत्पुरुषे नपुंसकलिङ्गे उत्तरपदमाद्युदात्तम्। ब्राह्मण-
शालम् । तत्पुरुषे किम् ?। दृढशालं ब्राह्मणकुलम् । शालायां किम् ?। ब्राह्मणसेनम् । नपुंसके किम् ?।
ब्राह्मणशाला। **कन्था च** ।६।२।१२४। तत्पुरुषे नपुंसकलिङ्गे कन्थाशब्दमुत्तरपदमाद्युदात्तम् । सौशमिकन्थम् ।
आह्वरकन्थम् । नपुंसके किम् ?। दाक्षिकन्था । **आदिश्चिहणादीनाम्** ।६।२।१२५। कन्थान्ते तत्पुरुषे नपुं-
सकलिङ्गे चिहणादीनामादिरुदात्तः। चिहणकन्थम् । मडरकन्थम् । 'आदि'रिति वर्तमाने पुनर्ग्रहणं पूर्वपदस्या-

---

सु.]प्रुषिल्लटिकणिखटी'ति क्वन्नन्तोऽश्वशब्दः। 'हनिकुशिनिरमिकाशिभ्यः क्थन्' इति क्थन्नन्तो रथशब्दस्तदाह–नित्स्व-
रेणेति । **सुबाहुरिति** । 'अर्जिदृशिकम्यमिपशिबाधे'ति कुप्रत्ययान्तो बाहुशब्दः प्रत्ययस्वरेणान्तोदात्तः । **सुहिरण्य
इति** । 'हर्यतेः कन्यन् हिर च'ेति कन्यन्नन्तो हिरण्यशब्द आद्युदात्तस्त्र्यच् । **वीरवीर्यौ** । वीर विक्रान्तौ चुरादिः।तत्र
पचाद्यचि वीरः । 'अचो यत्' । वीरेषु साधुरिति, प्राग्दीव्यतीयो वा यत् । वीर्यः। **तत्रेत्यादि** । कथं पुनरेतज्ज्ञापक-
मित्याह–**तत्र हि सतीति** । **कूलतीर** । एतान्युत्तरपदान्याद्युदात्तानि स्युरव्ययीभावे । **सुषममित्यादौ**
'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' इति षत्वम् । तस्याऽसिद्धत्वात्समशब्द एवायम् । **तिष्ठद्गुप्रभृतिष्वेत इति** । तेना-
ऽव्ययीभावसंज्ञा । **कंसमन्थ** । एतान्युत्तरपदानि द्विगावाद्युदात्तानि स्युः । **द्विकंस इति** । द्वाभ्यां कंसाभ्यां क्रीत
इति तद्धितार्थे समासः । 'कंसाट्टिठ'न्निति टिठन् । तस्य 'अध्यर्धपूर्वे'ति लुक् । **द्विमन्थ इति** । 'आर्हादगोपुच्छे'-
त्यादिना ठक् । शेषं पूर्ववत् । **द्विशूर्प इति** । 'शूर्पादञन्यतरस्याम्' । **द्विपाय्यमिति** । 'पाय्यसान्नाय्ये'त्यादिना
पाय्यशब्दः परिमाणवाची निपातितः। तत्र 'प्राग्वहतेष्ठक्' । **द्विकाण्डमिति** । द्वे काण्डे प्रमाणमस्य 'प्रमाणे द्वयस'-
जिति मात्रच् । 'प्रमाणे लो द्विगोर्नित्य'मिति लुक् । **ब्राह्मणशालमिति** । 'विभाषा सेनासुराच्छाये'ति नपुंसकता ।
**दृढशालमिति** । बहुव्रीहिरयं । तत्र पूर्वपदप्रकृतिस्वर एव भवति, पूर्वपदं च निष्ठान्तत्वादन्तोदात्तम् । ननु चात्र
लक्षणप्रतिपदोक्तपरिभाषयैव न भविष्यति । सत्यम्। उत्तरार्थमावश्यकं तत्पुरुषग्रहणमिहैव क्रियते, परिभाषाऽनाश्रयणाय ।
**सौशमिकन्थमिति** । शोभनः शमोऽस्य सुशमस्तस्यापत्यं सौशमिस्तस्य कन्था सौशमिकन्थम् । 'संज्ञायां कन्थोशीन-
रेषु' इति नपुंसकता । **आह्वरकन्थमिति** । आङ्पूर्वात् ह्वरतेः 'आतश्चोपसर्गे' इति कः । **आदिश्चिहणादी-
नाम्** । चिनोतेः क्विप् । चित्। हन्तेः पचाद्यच् 'हनः' । 'चिहण' इति निपातनात्तलोपो, णत्वं च । मल मल्ल धारणे

---

शे.]द्युदात्तमिति । आद्युदात्तमेवेत्यर्थः। सोः किम् ?। अरथः । **सुबाहुरिति** । कुप्रत्यान्तो बाहुशब्दोऽन्तोदात्तः ।
**हिरण्यशब्द इति** । कन्यन्नन्तोऽयम् । **वीरवीर्यौ** । वीरो रक्प्रत्ययान्तः । **आद्युदात्तत्वं नेति** । छन्दसि नेति
ज्ञाप्यत इत्यर्थः । तेन भाषायां भवत्येव । तथा च छन्दसि वीर्यशब्दस्तित्स्वरेणान्तस्वरित इति भावः । 'बिल्वभक्ष्य-
वीर्याणि छन्दसी'ति फिट्सूत्रन्त्वस्यैवानुवादकमिति बोध्यम् । **कूलतीर** । कूलादीन्युत्तरपदान्याद्युदात्तानि स्युः । **सुष-
ममिति** । अधिसममित्यत्र तु न, प्रतिपदोक्ततिष्ठद्गुसमासघटकस्यैव ग्रहणादिति कश्चित् । उत्तरपदानीति किं ?। भूमेः
समत्वं समभूमिः । तिष्ठद्ग्वादिः । समासस्वरेणाऽन्तोदात्तः । अत्राऽक्षशब्दोऽकारान्त एव । प्रत्यक्षमित्यादौ टचश्चित्त्वा-
दन्तोदात्तत्वमेवेति कश्चित् । **कंसमन्थ** । एतान्युत्तरपदानि द्विगावाद्युदात्तानीत्यर्थः। **द्विकंसादौ** । क्रमेण टिठन्–ठक्–
अञ्–ठञाम् 'अध्यर्द्धे'ति लुक् । **पाय्यं**–परिमाणविशेषः । **द्विकाण्डमिति** । अत्र 'प्रमाणो लो द्विगो'रिति मात्रचो
लुक् । कंसादीनि किं ? । पञ्चमूली । **तत्पुरुषे शाला** । 'छात्रिशाल'मित्यादौ 'छात्र्यादयः शालाया'मित्यतः परत्वा-
दयमेव स्वरो भवति । **दृढशालमिति** । 'विभाषा सेने'ति प्रतिपदोक्तनपुंसकत्वग्रहणादेवाऽस्य व्यावृत्तौ तत्पुरुषग्रहण-
मुत्तरार्थमिति हरदत्तः । **सौशमिकन्थमिति** । 'सञ्ज्ञायां कन्थे'ति क्लीबत्वम् । **चिहणकन्थमिति** । चिहणस्य

द्युदात्तार्थम् । **चेलखेटकटुककाण्डं गर्हायाम्** ।६।२।१२६। चेलादीन्युत्तरपदान्याद्युदात्तानि । पुत्रचेलम् । नगरखेटम् । दधिकटुकम् । प्रजाकाण्डम् । चेलादिसादृश्येन पुत्रादीनां गर्हा । व्याघ्रादित्वात्समासः । गर्हायां किम् ? । परमचेलम् । **चीरमुपमानम्** ।६।२।१२७। वस्त्रं चीरमिव वस्त्रचीरम् । कम्बलचीरम् । उपमानं किम् ?। परमचीरम् । **पललसूपशाकं मिश्रे** ।६।६।१६८। घृतपललम् । घृतसूपः । घृतशाकम् । 'भक्ष्येण मिश्रीकरण'मिति समासः । मिश्रे किम् ?। परमपललम् । **कूलसूदस्थलकर्षाः संज्ञायाम्** ।६।२।१२९। आद्युदात्तास्तत्पुरुषे । दाक्षिकूलम् । शाण्डिसूदम् । दाण्डायनस्थलम् । दाक्षिकर्षः । ग्रामसंज्ञा एताः । संज्ञायां किम् ? । परमकूलम् । **अकर्मधारये राज्यम्** ।६।२।१३०। कर्मधारयवर्जिते तत्पुरुषे राज्यमुत्तरपदमाद्युदात्तम् । ब्राह्मणराज्यम् । अकेति किम् ?। परमराज्यम् । ❀ **चेलराज्यादिस्वराद्व्ययस्वरः पूर्वविप्रतिषेधेन।** कुचेलम् । कुराज्यम् । **वर्ग्यादयश्च** ।६।२।१३१। अर्जुनवर्ग्यः । वासुदेवपक्ष्यः । अकर्मधारय इत्येव । परमवर्ग्यः । वर्ग्यादिर्दिगाद्यन्तर्गणः । **पुत्रः पुम्भ्यः** ।६।२।१३२। पुम्शब्देभ्यः परः पुत्रशब्द आद्युदात्तस्तत्पुरुषे। दाशकिपुत्रः । माहिषपुत्रः । पुत्रः किम् ? । कौनटिमातुलः । पुम्भ्यः किम् ? । दाक्षीपुत्रः। **नाऽऽचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः** ।६।२।१३३। एभ्यः पुत्रो नाऽऽद्युदात्तः । आख्याग्रहणात्पर्यायाणां, तद्विशेषाणां च ग्रहणम् । आचार्यपुत्रः । उपाध्यायपुत्रः । शाकटायनपुत्रः । राजपुत्रः । ईश्वरपुत्रः । नन्दपुत्रः । ऋत्विक्पुत्रः । याजकपुत्रः । होतुःपुत्रः । संयुक्ताः—संबन्धिनः । श्यालपुत्रः । ज्ञातयो—मातापितृसंबन्धेन बान्धवाः । ज्ञातिपुत्रः । भ्रातुष्पुत्रः । **चूर्णादीन्यप्राणिषष्ठ्याः** ।६।२।१३४। एतानि प्राणिभिन्नषष्ठ्यन्तात्पराण्याद्युदात्तानि तत्पुरुषे । मुद्गचूर्णम् । अप्रेति किम् ? । मत्स्यचूर्णम् । **षट् च काण्डादीनि** ।६।२।१३५। अप्राणिषष्ठ्या आद्यु-

सु.]आभ्यां रः । निपातनाल्लस्य डत्वम् । मडरः । **आदिरिति वर्तमान इति** । पूर्वत्र ह्यादिग्रहणमुत्तरपदाऽभिसंबद्धम्। इह तु चिहणादीनां पूर्वपदानामाद्युदात्तत्वमिष्यते,तदर्थं पुनरादिग्रहणं कर्तव्यम् । **पुत्रचेलमिति**। चेलं=वस्त्रं । तद्वत्तुच्छमित्यर्थः । **नगरखेटमिति** । **खेट**मिति तृणनाम, तद्वद्दुर्बलः। **दधिकटुकमिति** । कटुकं = गतस्वादु, तद्वद्गतस्वादु । **प्रजाकाण्डमिति** । **काण्ड**मिति शरनाम । स यथा सक्षरपीडाकर एवंभूतम् । **व्याघ्रादित्वात्समास इति** । पुत्रश्चेलमिवेत्यादि विग्रह्य व्याघ्रादेराकृतिगणत्वादुपमितं व्याघ्रादिभिरिति समासः । **चीर** । उपमानवाचिचीरशब्द उत्तरपदमाद्युदात्तं स्यात्तत्पुरुषे । **वस्त्रचीरमिति** । पूर्ववद्व्याघ्रादिसमासः । **पललसूप** । पललादीन्युत्तरपदान्याद्युदात्तानि स्युर्मिश्रे तत्पुरुषे । **घृतपललमित्यादि** । घृतेन मिश्रं पललमिति विग्रहः । **पललं**-मांसम् । 'पललं क्रव्यमामिष'मित्यमरः । **कूलसूद** । एतान्युत्तरपदान्याद्युदात्तानि स्युः संज्ञायाम् । **दाण्डायनस्थलीति**। 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहण'मिति स्थलीशब्दो गृह्यते । 'जानपदकुण्डे'त्यनेन ङीष् । **चेलराज्यादिस्वरादिति** । आदिशब्देन वर्ग्यादिस्वरपरिग्रहः। चेलराज्यादिस्वरस्यावकाशो—भार्याचेलं ब्राह्मणराज्यम् । 'तत्पुरुषे तुल्यार्थे'त्यादिना विहितस्याऽव्ययस्वरस्यावकाशो—निष्कौशाम्बिः । कुचेलं कुराज्यमित्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधः । **वर्ग्या** । वर्ग्यादीन्युत्तरपदान्याद्युदात्तानि स्युरकर्मधारये तत्पुरुषे । ये दिगादिषु वर्ग्यादयः पठ्यन्ते त एवेह यत्प्रत्ययान्ता वर्ग्यादयो गृह्यन्ते, वर्ग्यादिपाठाऽभावात्तदाह—**वर्ग्यादिर्दिगाद्यन्तर्गण इति** । **कौनटिमातुल इति** । कुनटस्यापत्यं कौनटिः, तस्य मातुलः । **आख्याग्रहणादिति** । आख्याग्रहणमाचार्यादिभिः प्रत्येकं संबध्यते । **होतुःपुत्र इति** । 'ऋतो विद्यायोनिसंबन्धेभ्यः' इति षष्ठ्या अलुक् । **भ्रातुष्पुत्र इति** । कस्कादिषु पाठात्षत्वम् । **चूर्णा** । चूर्ण संकोचे । पचाद्यच् । **षट् च** । अप्राणिभ्यः परा या षष्ठी तदन्तात्पराणि षट् काण्डादीन्याद्युदात्तानि स्युः ।

शे.]कन्थेति तत्पुरुषः। चिहण,मडर, मड्डर, वैतुल, पटत्क, वैडालिकर्ण, वैडालिकर्णि,कुक्कुट,चिक्कण,चित्कण । **पुत्रचेलमिति**।चेलवत्तुच्छ इत्यर्थः। **खेट**—तृणम्।**कटुकम्**—अस्वादु । **काण्ड**—शरः। **पललसूप** । मिश्रे समासार्थे इत्यर्थः । **दाण्डायनस्थलमिति** । लिङ्गविशिष्टपरिभाषया दाण्डायनस्थलीत्यत्रापि । राज्यशब्दो यगन्तोऽन्तोदात्तः । **अव्ययस्वर इति** । अव्ययपूर्वपदप्रकृतिस्वर इत्यर्थः। **वर्ग्यादिरिति**। त एव यत्प्रत्ययान्ता इह वर्ग्यादयः, वर्ग्यादिपाठाऽभावात् । **पुत्रः पुम्भ्यः** । निषेधकोत्तरसूत्रादेव पुँल्लिङ्गशब्दलाभे सिद्धे बहुवचनं स्पष्टार्थम् । **तद्विशेषाणाञ्चेति** । चात्स्वरूपस्याऽपि । **सम्बन्धिन इति** । स्त्रीसम्बन्धिनः श्यालादय इत्यर्थः । **भ्रातुःपुत्र इति** । 'ऋतो विद्यायोनी'-ति षष्ठ्या अलुक् । **'भ्रातृपुत्र'** इति तु क्वचित्कोऽपपाठः । एवं होतुःपुत्रेऽपि । एषु पुत्रस्वरप्रतिषेधे समासान्तोदात्तत्वम् । **चूर्णादीन्य** । चूर्ण, करिव, करिष, शाकिन, शाकट, द्राक्षा, तूस्त, कुन्दुम, दलप, चमसी, चक्कन, चौल

दात्तानि । दर्भकाण्डम् । दर्भचीरम् । तिलपललम् । मुद्गसूपः । मूलकशाकम् । नदीकूलम् । षट् किम् ? । राजसूदः । अप्रेति किम् ? । दत्तकाण्डम् । **कुण्डं वनम्** ।६।२।१३६। कुण्डमाद्युदात्तं वनवाचिनि तत्पुरुषे । दर्भकुण्डम् । कुण्डशब्दोऽत्र सादृश्ये । वनं किम् ? । मृत्कुण्डम् । **प्रकृत्या भगालम्** ।६।२।१३७। भगालवाच्युत्तरपदं तत्पुरुषे प्रकृत्या । कुम्भीभगालम् । कुम्भीनदालम् । कुम्भीकपालम् । मध्योदात्ता एते । प्रकृत्येत्यधिकृतम् , 'अन्तः' इति यावत् । **शितेर्नित्याऽबह्वज्बहुव्रीहावभसत्**।६।२।१३८।शितेः परं नित्याऽबह्वच्कं प्रकृत्या । शितिपादः। शित्यंसः। पादशब्दो वृषादित्वादाद्युदात्तः।अंसशब्दः प्रत्ययस्य नित्त्वात् । शितेः किम् ?। दर्शनीयपादः। [नित्याऽबह्वच्किं ?। शितिककुत् ]। अभसत्किम् ?।शितिभसत्। शितिराद्युदात्तः। पूर्वपदप्रकृतिस्वरापवादोऽयं योगः।**गतिकारकोपपदात्कृत्**।६।२।१३९। एभ्यः कृदन्तं प्रकृतिस्वरं स्यात्तत्पुरुषे । प्रकारकः । प्रहरणम्।शोणा। धृष्णू नुवाहसा।इध्मप्रव्रश्चनः। उपपदात्-उच्चैःकारम्।ईषत्करः।गेति किम्?।देवस्य कारकः।

सु.]'चेलखेटकटुककाण्ड'मिति काण्डशब्दादारभ्य 'कूलसूदस्थलकर्षाः संज्ञाया'मिति कूलान्तानि काण्ड चीर पलल सूप शाक कूल एतानि काण्डादीनि, तत्र 'काण्ड गर्हाया'मित्युक्तम् ,अगर्हायामपि भवति।'चीरमुपमान'मित्युक्तमनुपमानेऽपि भवति। 'पललसूपशाकं मिश्रे' इत्युक्तम् ,अमिश्रेऽपि भवति। 'कूलं संज्ञाया'मित्युक्तम् ,असंज्ञायामपि भवति। **अप्रेति किमिति।** 'अप्राणिषष्ठ्या'इति किमर्थमित्यर्थः । **मृत्कुण्डमिति ।** मृद्भाजनविशेष इत्यर्थः । **प्रकृत्या** । भगालमित्यर्थग्रहणं, तदाह-**भगालवाचीति** । अत्र च व्याख्यानमेव शरणम् । **मध्योदात्ता एते इति** । 'लघावन्ते द्वयोश्चे'ति सूत्रात् । **शितेः** । शितेः परं नित्याऽबह्वच्कं भसच्छब्दवर्जितं बहुव्रीहौ प्रकृतिस्वरं स्यात् । **अंसशब्द इति ।** 'अमेः सन्' अंसः । **दर्शनीयपाद इति ।** 'बहुव्रीहौ प्रकृत्ये'ति पूर्वपदप्रकृतिस्वरः । दर्शनीयशब्दोऽनीयर्प्रत्ययान्त 'उपोत्तमं रिती'त्युपोत्तमोदात्तः । **शितिराद्युदात्त इति ।** 'वर्णानां तणतिनितान्ताना'मिति सूत्रेण ।

**गतिका** । 'शितेर्नित्याऽबह्व'जित्यतो बहुव्रीहिग्रहणं नाऽनुवर्तते,अस्वरितत्वात्। किं तु 'तत्पुरुषे शालाया'मित्यतो व्यवहितमपि तत्पुरुषग्रहणमनुवर्तते । तदाह-**तत्पुरुषे इति । प्रकारक इति** । 'कुगती'ति समासः । लित्स्वरेण प्रत्ययात्पूर्वमाद्युदात्तम् । **नूवाहसेति ।** नॄन्वहतीति विग्रहः । 'वसेर्णि'दित्यतो णिदित्यनुवृत्तेरसुनो णित्त्वादुपधावृद्धिः । नित्स्वरेणोत्तरपदमाद्युदात्तम् । **इध्मप्रव्रश्चन इति ।** प्रव्रश्च्यतेऽनेनेति करणे ल्युट् । कर्मषष्ठ्यन्तेन इध्मशब्देन समासः । अत्र गतिप्रयुक्ते कृत्स्वरे कृते, कारकप्रयुक्तः कृत्स्वरः । **उच्चैःकारमिति ।** 'अव्ययेऽयथाभिप्रेते'ति णमुल् । तत्र हि उच्चैरित्युपपदम् । **ईषत्कर इति ।** 'ईषद्दुःसुषु कृच्छ्रे'ति खल् । उभयथाऽपि लित्स्वरः । **शेषलक्षणा**

शे.]इति **चूर्णादिः। षड्व काण्डा।** काण्डस्याऽगर्हार्थं चीरस्याऽनुपमानार्थं,पललसूपशाकानाममिश्रार्थं,कूलस्याऽसञ्ज्ञार्थम्। 'चेलखेटे'ति सूत्रस्थकाण्डशब्दमादाय 'कूलसूदे'ति सूत्रस्थकूलपर्यन्ताः षट्काण्डादयः । **कुण्डशब्दोऽत्रेति** । सादृश्येन वने वर्तते इत्यर्थः । भाजनविशेषवाचिनः कुण्डशब्दस्य विना सादृश्येन वने वृत्त्यसम्भवादित्याशयः । वनशब्दश्च समूहवाची, प्रसिद्धत्वात्।नोदकवाची । अन्ये तु समूहरूपवनेऽपि मुख्य एव कुण्डशब्दः, पूर्वमते सादृश्यस्य दुरुपपादत्वात् । वनविशेषणेन च भाजनवाचिनो, 'दुर्गाकुण्ड'मित्यादौ विशिष्टाधारजलवाचिनश्च प्रसिद्धस्य निवृत्तिरित्याहुः । उक्तञ्च 'कुण्डाद्युदात्तत्वे तत्समुदायग्रहण'मिति । अत्र भाष्ये तच्छब्देन पूर्वपदार्थः। अपरे तु **तत्समुदाये**त्यस्य वनसमुदायेत्यर्थः । तेन दर्भवनसमुदायो दर्भकुण्डशब्देनोच्यत इत्याहुः । **मृत्कुण्डमिति** । मृद्भाजनविशेष इत्यर्थः । **भगालवाचीति ।** अत्र च व्याख्यानमेव शरणम् । **मध्योदात्ता इति** । 'लघावन्ते' इत्यनेनेति भावः । **शितेर्नित्या ।** शितेः परं भसच्छब्दभिन्नं यन्नित्यमबह्वच् उत्तरपदन्तद्बहुव्रीहौ प्रकृतिस्वरमित्यर्थः।**दर्शनीयपाद इति।** दर्शनीयशब्दो ['उपोत्तमं]रिती'त्युपोत्तमोदात्तः । नित्याऽबह्वच्किं ?। शितिललाटः। नित्येतिकिं ?। शितिककुत् । 'ककुदस्यावस्थायां लोपः', अन्यत्र शितिककुद इत्येवेति नायं नित्याऽबह्वच्कः। **गतिकारकोप** । इह 'शितेर्नित्याऽबह्वज्बहुव्रीहावभस'दिति पूर्वसूत्रस्थबहुव्रीहिग्रहणं नानुवर्तते, अस्वरितत्वात् । किं तु व्यवहितमपि 'तत्पुरुषे शालायां नपुंसके' इति सूत्रस्थन्तत्पुरुषग्रहणमनुवर्त्तते । तदाह-**तत्पुरुषे इति । प्रकारक इति ।** 'कुगती'ति समासः । लित्स्वरेणोत्तरपदमाद्युदात्तम् । **नृवाहसेति ।** नॄन्वहत इति विग्रहः । 'वहिधा' इत्यादिना असुन् , 'वसेर्णि'दिति सूत्राण्णिदित्यनुवृत्तेरसुनो णित्वादुपधावृद्धिः । नित्स्वरेणोत्तरपदमाद्युदात्तम् । **इध्मप्रव्रश्चन इति** । करणे ल्युट् , कर्मषष्ठ्या समासः । प्रव्रश्चने गतिप्रयुक्ते कृत्स्वरे कृते, इध्मशब्देन समासे कारकप्रयुक्तः कृत्स्वरः। व्रश्चनो लित्स्वरेणाद्युदात्तः । **उच्चैःकारमिति।** णमुल्विधावुच्चैरित्युपपदम् । **ईषत्कर इति** । 'ईषद्दुःसुषु' इति खल् । **शेषे षष्ठीति** । तदन्तेन समासः कार्य

शेषलक्षणा षष्ठी । 'कृद्ग्रहणं विस्पष्टार्थम्'[२] । प्रपचतितरामित्यत्र तरबाद्यन्तेन समासे कृते आम् । तत्र सतिशिष्टत्वादाम्स्वरो भवती'त्येके । 'प्रपचतिदेश्याद्यर्थं[३] तु कृद्ग्रहण'मित्यन्ये। **उभे वनस्पत्यादिषु युगपत्** ।६।२।१४०।

---

सु.]**षष्ठीति** । न कर्मलक्षणा । तथा सति कारकमेव देवदत्तः स्यात्, 'तृजकाभ्यां कर्तरी'ति समासप्रतिषेधश्च स्यात् । अथ कृद्ग्रहणं किमर्थम् । निर्गतः कौशाम्ब्या निष्कौशाम्बिरित्यत्र मा भूत् । नैतदस्ति । यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञा भवन्ति । नच कौशाम्बीशब्दं प्रति क्रियायोगः। कारकं च क्रियायामेव संभवति। उपपदमपि धात्वधिकारे सप्तमीनिर्दिष्टं प्रत्ययनिमित्तमुच्यते । तदेवं गत्यादिभिरपि क्रियावाच्युत्तरपदमाक्षिप्यते। धातोश्च क्रियावाचित्वं।तस्माच्च द्वये प्रत्ययाः । तिङः कृतश्च । तत्र तिङन्तेन समासाभाऽवात्कृदन्तमेव संभवति। 'अनुव्यचल'दित्यत्र तु न गतित्वनिबन्धनः समासः, किं तर्हि, सुबिति योगविभागात्समासः। तस्मान्नार्थः कृद्ग्रहणेनेत्यत आह–**कृद्ग्रहणं विस्पष्टार्थमिति**। य एवं प्रतिवक्तुमसमर्थस्तं प्रति विस्पष्टार्थं क्रियत इत्यर्थः। ननु विस्पष्टार्थमपि क्रियमाणे कृद्ग्रहणे आमन्ते न प्राप्नोति–'प्रपचतितरा'मिति । ततश्च समासस्वरं बाधित्वाऽव्ययस्वर एव स्यादत आह–**प्रपचतितरामित्यादि** । **इत्येके** इत्यस्य 'कृद्ग्रहणं विस्पष्टार्थ'मित्यादिना कृत्स्नेन संबन्धः । तदयमर्थः–कृद्ग्रहणं विस्पष्टार्थम् , आमन्ते च दोषाऽभाव इति केचिदाचार्या[४] व्याचक्षते इति । **प्रपचतिदेश्याद्यर्थं त्विति**। 'आदि'शब्देन प्रपचतिकल्पं, प्रपचतिदेशीयम् . प्रपचतिरूपमित्येतेषां त्रयाणां ग्रहणम्। प्रपचतिदेश्यादौ अर्थः प्रयोजनं यस्य तत्तथोक्तम्। अयमभिप्रायः–न विस्पष्टार्थं कृद्ग्रहणम्, अपि तु प्रपचतिदेश्यादौ यत्र सतिशिष्टं स्वरान्तरं नास्ति तत्रापि स्वरो मा भूत् , तैदव्ययपूर्वपदप्रकृतिस्वर एव यथा स्यादित्येवं सप्रयोजनमाहुः । अत्र हरदत्तः–इदं तु वक्तव्यम् । प्रपचतितरामित्यादौ तरबन्तेन समासे पश्चादाम् भवन्प्रत्ययग्रहणपरिभाषया पचतितरशब्दस्यैव प्रत्ययान्तत्वात्तत एव स्यात्।तत्र को दोषः?। सोपसर्गस्य घान्तस्यैकपद्याऽभावादाम् प्रपचतितरां देवदत्तेत्यादावाम एकान्तरमामन्त्रितमनन्तिक इत्येष विधिर्न स्यात् ,शेषनिघातश्च प्रशब्दस्य न स्यात्, भिन्नपदत्वात्। तस्मात्प्रशब्दस्याऽऽमन्तेन समासोऽङ्गीकर्तव्यो, न तरबन्तेन। तत्र समासत्वात्समुदायस्य प्रातिपदिकत्वे विभक्त्य-

---

शे.]इत्यर्थः । इदं गत्यंशे अव्ययपूर्वपदप्रकृतिस्वरस्य बाधकम् । कृद्ग्रहणप्रत्याख्याने 'अन्वविन्दते'त्यादौ परत्वात् 'तिङि चे'ति निघाते कृते यद्यपीदं सावकाशं, तथाऽपि परत्वाद्बाधकं बोध्यम् । कारकोपपदांऽशे तु समासान्तोदात्तत्वापवादः । **कृद्ग्रहणं स्पष्टार्थमिति** । क्रियायोगे गतिसञ्ज्ञाविधानात्, क्रियानिरूपितस्यैव कारकत्वाच्च, धात्वधिकारे सप्तमीनिर्दिष्टस्यैवोपपदत्वाच्च. केवलधातोः प्रयोगाऽभावाच्च कृदन्तक्रियापदाक्षेपे सिद्धे इत्यर्थः । तथा च वार्तिकं-'गत्यादिभ्यः प्रकृतिस्वरत्वे कृद्ग्रहणानर्थक्यमन्यस्योत्तरपदस्याऽभावा'दिति । न च 'यत्क्रियायुक्ताः प्रादयः' इत्यत्र यस्य क्रियेति षष्ठीसमासे यस्य धातोर्वाच्या क्रियेत्यर्थात्तं प्रतीति वाक्यशेषेऽपि तच्छब्देन धातोरेव ग्रहणे, प्रत्यासत्त्या तस्यैवोत्तरपदत्वे प्रणीरित्यादावेव स्वरः स्यात्, न तु प्रणायक इत्यादाविति कृन्मात्रसङ्ग्रहाय तदिति वाच्यं, 'यत्क्रिये'त्यत्र कर्मधारयस्यैव स्वीकारेण 'तं प्रती'त्यत्र वाक्यशेषे निरूपितरीत्या तस्या एव परामर्शेन क्रियारूपमर्थं प्रत्येव गतित्वात्। तत्र गतिकारकोपपदेषु सर्वत्र विशेष्यभूतक्रियाया वाचकमुत्तरपदं न सम्भवतीति सामर्थ्यात्साधनादिविशेषणक्रियावाचकमुत्तरपदं गृह्यते इति सर्वत्रेष्टसिद्धिः। न च प्रभवनमित्यादौ केवलक्रियावाच्युत्तरपदसत्त्वेन सामर्थ्यं दुरुपादम् , लिङ्गाद्यनन्वयिसाध्यरूपार्थस्यैव क्रियाशब्देन ग्रहणात् । पदमत्र शक्तमेव, न परिभाषितम् । तेन कृता सुबुत्पत्तेः प्राक् समासेऽपि न क्षतिः । एवञ्च प्रशब्दस्य पचतितरामित्याद्यामन्तेन समासेऽयं स्वरो भवत्येवेति भाष्ये स्पष्टं सूक्ष्मधियाम् । **एके इति** । अत्राऽरुचिबीजन्तु तथासति प्रपचतितरशब्दस्य घान्तत्वाऽभावात्तत आमभावे एकदेशादामि तदन्तत्वेन पचतितरामित्यस्यैव प्रातिपदिकत्वे, तत एव सुपि तदन्तस्यैकपदत्वाऽभावात्प्रशब्दस्वरः पृथक् श्रूयेत।किंचाऽऽम्प्रपचतितरां देवदत्तेत्यत्र 'आम एकान्तरमामान्त्रित'मिति निषेधो न स्यात् , तस्मादामन्तेनैव समासः, तत्र भाष्यप्रामाण्यादयं स्वरो भवत्येव । एवं प्रपचतिदेश्यादावपि । अत्र च नोपपदसमासोऽतिङित्युक्तेः, किं तु 'उदात्तवते'ति वार्तिकेन । तत्र **तिङे**त्यस्य तिङ्घटितेनेत्यर्थः । तदुदाहरणानाञ्च भाष्ये–सहेति योगविभागेनापि साधनात्तत्पुरुषत्वतदभावौ । वैकल्पिकत्वञ्च लक्ष्यानुसारेणेति न 'तिङि चोदात्तवती'ति सूत्रस्थभाष्यविरोधः । **अन्य इति** । अत्रापि भाष्यविरोध एवाऽरुचिबीजम् । तिङन्तसमासेष्वप्ययं स्वरो भवत्येव । यथा–'यो जातः पर्यभूष'दित्यादौ । 'नित्यं क्रीडे'त्यत्र नित्यमिति योगं विभज्य लक्ष्यानुरोधेन क्वचित्तत्पुरुषत्वाङ्गीकारात् । अत एवोदात्तवतेत्यस्य भाष्ये द्विःपाठः । अत्र यच्छब्दयोगात्तिङन्तस्याऽनिघातः । 'उदात्तवता गतिमता चे'ति तिङन्तस्य गतिसमासः । अव्ययपूर्वपदप्रकृतिस्वरं बाधित्वोत्तरपदप्रकृतिस्वरेणाऽट्स्वरः शिष्यते । यत्र तु तिङन्तोत्तरपदकेऽन्तोदात्तत्वमिष्यते यथा 'यत्रा नरो देवयन्तो युगानि वितन्वते' इत्यादौ, तत्र त्रिचक्रादित्वात्कल्प्यम्। अत्यायाहीत्यादौ तु यच्छब्दयोगाऽभावात् 'तिङ्ङतिङ' इति निघाते आङ 'सहे'ति योगविभागात्समासः । उत्तरपद-

एषु पूर्वोत्तरपदे युगपत्प्रकृत्या । वनस्पतिं वन आ । बृहस्पतिं यः । बृहच्छब्दोऽत्राद्युदात्तो निपात्यते । हर्षया शचीपतिम् । शार्ङ्गरवादित्वादाद्युदात्तः शचीशब्दः, 'शचीभिर्न' इति दर्शनात् । तनूनपादुच्यते । नराशंसे वाजिनम् । निपातनाद्दीर्घः । शुनःशेपम् । **देवताद्वन्द्वे च** ।६।२।१४१। उभे युगपत्प्रकृत्या स्तः । आ य इन्द्रावरुणौ । इन्द्राबृहस्पती वयम् । देवता किम् ?। प्लक्षन्यग्रोधौ । द्वन्द्वे किम् ? । अग्निष्टोमः । **नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु** ।६।२।१४२। पृथिव्यादिवर्जितेऽनुदात्तादावुत्तरपदे प्रागुक्तं न । इन्द्राग्निभ्यां कं वृषणः । अपृथिव्यादौ किम् ?। द्यावापृथिवी जनयन् । आद्युदात्तो 'द्यावा' निपात्यते । 'पृथिवी'त्यन्तोदात्तः । सोमारुद्रौ । 'रोदेर्णिलुक्चे'ति रगन्तो रुद्रशब्दः । इन्द्रापूषणौ । 'श्वन्नुक्षन्पूष'न्निति पूषा-अन्तोदात्तो निपात्यते । शुक्रामन्थिनौ । मन्थिन्निन्नन्तत्वादन्तोदात्तः । उत्तरपदग्रहणमनुदात्तादावित्युत्तरपद-

---

सु.]वैकपद्यं भवति, स्वरे तु दोषप्रसङ्गात्कृद्ग्रहणमपि वक्तव्यमिति भाष्ये स्थितम्। प्रपचतिदेश्यादौ का गतिरिति न विद्मः।

**उभे। वनस्पतिमिति।** वनशब्दो 'नब्विषयस्याऽनिसन्तस्ये'त्याद्युदात्तः, पतिशब्दोऽपि 'पातेर्डति'रिति डतिप्रत्ययान्तः प्रत्ययस्वरेण। पारस्करादित्वात्सुट्। **बृहस्पतिमिति।** 'वर्तमाने पृषन्महद्'दिति अतिप्रत्ययान्तत्वादन्तोदात्तोऽप्यत्राद्युदात्तो निपात्यते । 'तद्बृहतोः करपत्यो'रिति सुट्तलोपौ । **शार्ङ्गरवादित्वादाद्युदात्त इति** । शार्ङ्गरवादित्वान्ङीनि कृते नित्त्वादाद्युदात्तत्वमित्यर्थः । **शचीपतिरिति** । एते षष्ठीसमासाः । **तनूनपादिति** । 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' इति ऊप्रत्ययान्तत्वादन्तोदात्तोऽपि तनूशब्दोऽत्राद्युदात्तो निपात्यते । न पातयतीति नपात् । 'नभ्राण्नपान्नवेदा' इति सूत्रे आद्युदात्तो नपाच्छब्दो निपात्यते । तन्वाः नपादिति विग्रहः । **नराशंसमिति** । नरा एनं शंसन्तीत्यर्थः । नॄ नये । 'ऋदोरप्' । शंसेः कर्मणि घञ् । द्वावप्याद्युदात्तौ । 'अन्येषामपी'ति दीर्घः । **शुनःशेपमिति** । शुन इव शेपोऽस्येति बहुव्रीहिः । 'शेपपुच्छलाङ्गूलेषु शुनः संज्ञाया'मित्यलुक् षष्ठ्याः । श्वन्शब्दः प्रातिपदिकस्वरेण, शेपशब्दः 'स्वाङ्गशिटामदन्ताना'मित्याद्युदात्तौ । **इन्द्रावरुणाविति** । इन्द्रशब्दः 'ऋज्रेन्द्राग्रे'ति रनन्तः, वरुणशब्दः 'कॄवृदारिभ्य उनन्' इत्युननन्तः । उभौ आद्युदात्तौ । 'देवताद्वन्द्वे चे'ति पूर्वपदस्याऽऽनङ् । **इन्द्राबृहस्पती इति** । बृहस्पतिशब्दे वानस्पत्यादित्वाद्द्वावाद्युदात्तौ । तेनेन्द्राबृहस्पती इत्यत्र त्रय आद्युदात्ताः । **अग्निष्टोम इति** । 'अग्नेः स्तुत्स्तोमसोमाः' इति षत्वम्। **इन्द्राग्निभ्यामिति।** अग्निशब्दः 'अङ्गेर्निर्नलोपश्चे'ति निप्रत्ययान्तोऽन्तदात्तः। **पृथिवीत्यन्तोदात्त इति** । ङीप्प्रत्ययान्तत्वात् । **सोमारुद्राविति** । 'अर्तिस्तुसुहुसृधृ'इतिमन्नन्तत्वादाद्युदात्तः सोमशब्दः । **उत्तरपदग्रहणमित्यादि** । अन्यथाऽस्मिन् प्रकरणे द्वन्द्वः सप्तम्या निर्दिष्टः, नोत्तरपदं, तत्रानुदात्तादाविति सप्तम्यन्तं द्वन्द्वस्य विशेषणं स्यात् । ततश्चेन्द्रासूर्यावित्यादौ प्रतिषेधः स्यात् । इन्द्रशब्दो रनन्तत्वादन्तोदात्तः । सूर्यशब्दः 'राज-

---

शे.]स्योदात्तशून्यत्वात् ,गतिशून्यत्वाच्च गतिप्रयुक्तसमासाऽभावात्तत्पुरुषत्वाऽभावेन नाऽयं स्वरः। उदात्तस्वरितयोगिन एव प्रकृतिभावविधानादस्य तच्छून्यतयाऽपि नाऽयं स्वरः। एवञ्चाऽव्ययपूर्वपदप्रतिस्वरेणाऽऽद्युदात्तः। ततोऽतिशब्देन गतिसमासे अनेनोत्तरपदप्रकृतिस्वरे आद्स्वर एव शिष्यते इति रेक् । **परे तु** कृद्ग्रहणाऽभावे प्रभवनमित्यादौ क्रियाया विशेष्यत्वात्तत्रैव स्यान्न तु प्रणीरित्यादाविति कृद्ग्रहणं कर्त्तव्यम् । तदुक्तं भाष्ये–'अधिकार्थं कृद्ग्रहणं कर्त्तव्य'मिति । 'प्रपचतितरा'मित्यादौ त्वव्ययपूर्वपदप्रकृतिस्वरात्परत्वेन 'तिङि चोदात्तवती'त्यस्य प्रवृत्तावेतत्प्रवृत्तौ न फलम् । एतत्प्रवृत्त्यापि तत्राऽन्तोदात्तमेव लभ्यते । 'तिङि चोदात्तवती'ति सूत्रे एतदर्थमेव भाष्ये तिङ्ग्रहणं प्रत्याख्यातम् । अतिप्रसङ्गस्तु प्राग्वदेव परिहार्यः । अत एवाऽत्र सूत्रे 'तस्मात्कृद्ग्रहणं न कर्तव्य'मिति नोक्तमित्याहुः। **वनस्पतिमिति** । वनशब्दो नब्विषयत्वादाद्युदात्तः, पतिशब्दश्च प्रत्ययस्वरेण तथा । **निपात्यत इति** । अन्यथा अतिप्रत्ययान्तत्वादन्तोदात्तः स्यादिति भावः । एवमूप्रत्ययान्ततनूशब्दोप्याद्युदात्तो निपात्यते, नपाच्छब्दोऽपि 'नभ्रा'डिति सूत्रे आद्युदात्तो निपात्यते । वनस्पत्यादयः षष्ठीतत्पुरुषाः । तनूनपादित्यत्र तन्वाः नपादिति विग्रहः । **नराशंसमिति** । नरशंसशब्दावब्घञन्तत्वादाद्युदात्तौ । नरा एनं शंसन्ति स नरांशसः । **निपातनादिति** । 'अन्येषामपी'ति दीर्घ इत्यन्ये । **शुनःशेप इति** । श्वन्–शेपशब्दौ प्रातिपदिकस्वरनिपातनस्वरान्यतर-स्वाङ्गस्वराभ्यामन्तोदात्ताद्युदात्तौ। शण्डामर्कौ । घञन्तत्वादाद्युदात्तौ । द्वन्द्वः । 'अन्येषामपी'ति दीर्घः । तृष्णावरूत्री । तृष्णशब्दो 'निष्ठा च द्व्य'जित्याद्युदात्तः। 'प्रसितस्कभिते'त्यत्र वरूत्रीशब्द आद्युदात्तो निपात्यते । बम्बा-विश्ववयसौ अन्तोदात्तौ । मर्मृत्युः–अन्तोदात्तः । वृत् ॥ **इन्द्रावरुणाविति** । इन्द्रो रनन्त आद्युदात्तः । वरुणशब्दोप्युनन्तत्वात्तथैव। **नोत्तरपद** । **इन्द्राग्निभ्यामिति** । अग्निशब्दोऽन्तोदात्तः । **सोमारुद्राविति** । सोम आद्युदात्तो, मनन्तत्वात् , रुद्रो रगन्तत्वादन्तोदात्तः । **'रुद्रसोमा'**विति क्वाचित्कोऽपपाठः।

विशेषणं यथा स्याद्द्वन्द्वविशेषणं मा भूत्। अनुदात्तादाविति विधिप्रतिषेधयोर्विषयविभागार्थम्। अन्तः।६।२।१४३। अधिकारोऽयम्। थाऽथघञ्क्ताऽजवित्रकाणाम्।६।२।१४४। थ अथ घञ् क्त अच् अप् इत्र क एतदन्तानां गतिकारकोपपदात्परेषामन्त उदात्तः। प्रभृथस्यायोः। आवसथः। घञ्-प्रभेदः। क्त-धूर्तौ वज्री पुरुष्टुतः। पुरुषु-बहुप्रदेशेषु स्तुत इति विग्रहः। अच्-प्रक्षयः। अप्-प्रलवः। इत्र-प्रलवित्रम्। क-गोवृषः। मूलविभुजादित्वात्कः। गतिकारकोपपदादित्येव। सुस्तुतं भवता। सूपमानात्क्तः।६।२।१४५। सोरुपमानाच्च परं क्तान्तमन्तोदात्तम्। ऋतस्य योनौ सुकृतस्य। शशप्लुतम्[2]। संज्ञायामनाचितादीनाम्।६।२।१४६। गतिकारकोपपदात् क्तान्तमन्तोदात्तमाचितादीन्वर्जयित्वा। उपहूतः शाकल्यः। परिजग्धः कौण्डिन्यः[3]। अनेति किम्? आचितम्। आस्थापितम्। प्रवृद्धादीनां च।६।२।१४७। एषां क्तान्तमुत्तरपदमन्तोदात्तम्। प्रवृद्धः। प्रयुक्तः। असंज्ञार्थोऽयमारम्भः। आकृतिगणोऽयम्। कारकाद्दत्तश्रुतयोरेवाऽऽशिषि।६।२।१४८। संज्ञायामन्त उदात्तः। देवदत्तः। विष्णुश्रुतः। कारकात्किम्? [अकारकान्नियमो माभूत्]। संभूतो[4] रामायणः। दत्तश्रुतयोः किं? देवपालितः।

---

सु.] सूयसूर्ये'ति यदन्तत्वात् 'यतोऽनावः' इत्याद्युदात्तः। उत्तरपदग्रहणे सति तस्यैव श्रुतस्याऽनुदात्तादावित्येतद्विशेषणं भवति। अनुदात्तादाविति। विधिप्रतिषेधयोरित्यादि। अन्यथा विधिप्रतिषेधयोः समानविषयत्वाद्विकल्पः प्रसज्येत। इह पृथिव्यादिप्रतिषेधो ज्ञापयति-'स्वरविधौ व्यञ्जनमविद्यमानव'दिति। तेन 'अग्निमीळे' इत्यादौ स्वरितः सिध्यति। थाऽथ। प्रभृथस्येति। 'हनिकुषिनिरमिकाशिभ्यः क्थन्' 'अवे भृञः' इति क्थन्। नित्स्वरेणाद्युदात्तत्वे प्राप्ते। आवसथ इति। 'उपसर्गे वसेः' इत्यथप्रत्ययान्तः। पुरुष्टुत इति। कर्मणि क्तः। पुरुष्विति। तृतीयातत्पुरुषे तु 'तृतीया कर्मणि' इति सूत्रेण कर्मणि क्तान्ते उत्तरपदे तृतीयान्तस्य पूर्वपदस्य प्रकृतिस्वरः स्यादिति भावः। प्रक्षय इति। 'एरच्'। न च क्षयशब्दस्याच्प्रत्ययान्तत्वात्कृदुत्तरपदप्रकृतिस्वरेणैवाऽन्तोदात्तत्वं सिद्धमिति वाच्यम्, 'क्षयो निवासे' इति क्षयशब्दस्याद्युदात्तत्वात्। प्रलव इति। 'ऋदोरप्'। प्रलवित्रमिति। 'अर्तिलूधूसूखनसहचर इत्रः'। गोवृष इति। गां वर्षतीति विग्रहः। वृषु सेचने 'वृषादीनां च' इत्याद्युदात्तोऽयम्। सुस्तुतमिति। 'सुः पूजाया'मिति कर्मप्रवचनीयः। अव्ययपूर्वपदप्रकृतिस्वर एव। सूप। सुकृतस्येति। 'गतिरनन्तरः' इति प्राप्ते। शशप्लुतमिति। शशैरिव प्लुतमिति विग्रहः। 'तृतीया कर्मणि' इति प्राप्तम्। उपहूत इति। 'ह्वेञो निष्ठायाम्'। यजादित्वात्संप्रसारणम्। परिजग्ध इति। अदो जग्धादेशः। उभयत्र 'गतिरनन्तरः' इति प्राप्तम्। अनेति किमिति। अनाचितादीनामिति किमर्थमित्यर्थः। आचितमित्यादि। चिञ् चयने। ष्ठा गतिनिवृत्तौ। णिजन्तः। आभ्यां कर्तरि क्तः। प्रवृद्धः प्रयुक्त इति। वृधु वृद्धौ। यु मिश्रणे। असंज्ञार्थोऽयमारम्भ इति। संज्ञायां तु 'संज्ञायामनाचितादीना'मित्येव सिद्धम्। कारकाद्दत्त। तत्पुरुषे संज्ञायामाशिषि कारकात्परयोर्दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्तः स्यात्। 'संज्ञायामनाचितादीना'मित्यनेन विहितमन्तोदात्तत्वमनेन नियम्यते। देवदत्त इत्यादि। देवा एनं देयासुरित्येवं प्रार्थितैर्देवैर्दत्तो देवदत्तः। 'आशिषि लिङ्लोटौ' इति वर्तमाने 'क्तिच्क्तौ च संज्ञाया'मिति क्तः। 'दो दद्घोः' इति ददादेशः। विष्णुरेनं

---

शे.] शुक्रामन्थिनाविति। शुक्रो रगन्तत्वात्, मन्थिन्मत्वर्थीयेनिनाऽन्तोदात्तः। मा भूदिति। तथा सति 'सूर्याचन्द्रमसौ' इत्यादाविदं न स्यात्। सूर्यशब्दो यदन्तत्वादाद्युदात्तः, चन्द्रमस्शब्दो दासीभारादित्वान्मध्योदात्तः। विषयविभागार्थमिति। न च पृथिव्यादयो विधेर्विषयोऽन्यत्र प्रतिषेध इति विषयविभागः सिद्ध इति वाच्यम्, पूर्वसूत्रे पृथिव्यादिग्रहणेन सिद्धे एतत्सूत्रवैयर्थ्यापत्तेः। अयमेव पृथिव्यादिपर्युदासो ज्ञापयति-'स्वरोद्देश्यके विधौ व्यञ्जनमविद्यमानव'दिति। तेन 'अग्निमीळे' इत्यादौ 'उदात्तादनुदात्तस्ये'ति स्वरितः सिध्यति। थाऽथघञ्। कृत्स्वरापवादोऽयम्। प्रभृथे-क्थन्। आवसथ इति। 'उपसर्गे वसे'रित्यथः। उपपदोदाहरणमेतत्। प्रभेदे-घञ्। पुरुष्विति। तृतीयातत्पुरुषे तु 'तृतीया कर्मणी'ति पूर्वपदप्रकृतिस्वर एव। स्तुतो 'निष्ठा च द्व्यजना'दित्याद्युदात्तः। क्षयः-'क्षयो निवासे' इत्याद्युदात्तः। निश्चय इत्यत्रायं स्वरो नेष्यते, किन्तु कृत्स्वर एवेति 'अहन्नृद' इति सूत्रे भाष्यम्। सुस्तुतमिति। अव्ययपूर्वपदप्रकृतिस्वरोऽत्र। कृष्टपच्या इत्यत्राप्ययं स्वर इष्यत इति 'राजसूये'ति सूत्रे भाष्ये स्थितम्। अत्रोपपदग्रहणानुवृत्तिः समासनिर्देशात्कृता नात्यन्तं फलवती, गतिकारकाभ्यां सिद्धत्वात्। सूपमानात्क्तः। गतिस्वरापवादोऽयम्। अत्रापि 'गतिकारकोपपदा'दित्येव। नेह-सुस्तुतम्। शशप्लुत इति। शश इव प्लुत इत्यर्थः। संज्ञायामना। अयमपि गतिस्वरापवादः। कुद्दालखातमित्यादौ 'तृतीया कर्मणी'ति प्राप्तम्। आचितम्, पर्याचितम्, आस्थापितम्, परिगृहीतम्,

अस्मान्नियमादत्र 'संज्ञायामने'ति न। 'तृतीया कर्मणी'ति तु भवति। एव किम्?। कारकावधारणं यथा स्याद्दत्तश्रुतावधारणं मा भूत्। अकारकादपि दत्तश्रुतयोरन्त उदात्तो भवति। संश्रुतः। आशिषि किम्?। देवैः खातो देवखातो। आशिष्येवेत्येवमत्रेष्टो नियमः। तेनाऽनाहतो नदति देवदत्त इत्यत्र न। शङ्खविशेषस्य संज्ञेयम्। 'तृतीया कर्मणी'ति पूर्वपदप्रकृतिस्वरत्वमेव भवति। **इत्थम्भूतेन कृतमिति च** ।६।२।१४९। 'इत्थम्भूतेन कृत'मित्येतस्मिन्नर्थे यः समासस्तत्र क्तान्तमुत्तरपदमन्तोदात्तं स्यात्। सुप्तप्रलपितम्। प्रमत्तगीतम्। 'कृत'मिति क्रियासामान्ये करोतिर्नाऽभूतप्रादुर्भाव एव। तेन प्रलपिताद्यपि कृतं भवति। 'तृतीया कर्मणी'त्यस्याऽपवादः। **अनो भावकर्मवचनः** ।६।२।१५०। कारकात्परमनप्रत्ययान्तं भाववचनं, कर्मवचनं चाऽन्तोदात्तम्। पयःपानं सुखम्। राजभोजनाः शालयः। अनः किम्?। हस्ताऽऽदायः। भेति किम्?। दन्तधावनम्। करणे ल्युट्। कारकात्किम्?। निदर्शनम्। **मन्क्तिन्व्याख्यानशयनाऽऽसनस्थानयाजकादिक्रीताः** ।६।२।१५१। कारकात्पराण्येतान्युत्तरपदान्यन्तोदात्तानि तत्पुरुषे। कृत्स्वराऽपवादः। रथवर्त्म। पाणिनिकृतिः। छन्दोव्याख्यानम्। राजशयनम्। राजाऽऽसनम्। अश्वस्थानम्। ब्राह्मणयाजकः। गोक्रीतः। कारकात्किम्?। प्रभूतौ सङ्गतिम्। अत्र 'तादौ च निती'ति स्वरः। **सप्तम्याः पुण्यम्** ।६।२।१५२। अन्तोदात्तम्। अध्ययनपुण्यम्।

---

सु.] श्रूयादित्येवं प्रार्थितेन विष्णुना श्रुतो विष्णुश्रुतः। क्तप्रत्ययः पूर्ववत्। **संश्रुतो रामायण** इति। कारकादित्यनुच्यमाने गतिकारकोपपदादिति त्रितयाधिकाराद्यथा कारकान्नियमो भवति तथैव गतेरपि स्यात्। **एव किमिति**। सिद्धेऽधिकारे आरभ्यमाणोऽन्तरेणाप्येवकारं नियमार्थो भविष्यतीति प्रश्नः। **कारकावधारणमित्यादि**। असति ह्येवकारे विपरीतनियमोऽपि स्यात्–'कारकादेव दत्तश्रुतयो'रिति। एवं च कारकाद्दत्तश्रुतयोर्न स्यात्, इष्यते च। तथा कारकस्याऽनियतत्वाद्देवपालित इत्यादावन्तोदात्तः स्यादतः कारकावधारणं यथा स्याद्दत्तश्रुतावधारणं मा भूदित्येवमर्थमेवकारग्रहणमित्यर्थः। **देवखातेति**। 'तृतीया कर्मणी'ति पूर्वपदप्रकृतिस्वरः। **इत्थम्**। **इत्थंभूतेन कृतमित्येतस्मिन्नर्थे इति**। इत्थं प्रकारमापन्न इत्थंभूतस्तेन कृतमित्यर्थे। **सुप्तप्रलपितमित्यादि**। कथमेतान्युदाहरणानि यावता कृतमित्युच्यते?। न च प्रलपितानीति कृतानि। अभूतप्रादुर्भाव एव हि करोतिर्वर्तते। ततश्च सुप्तकृतं सुप्तभावितम् उन्मत्तभावितमित्यादिक्रमेणैवोदाहर्तव्यमित्यत आह–**कृतमितीति**। कृतिसामान्ये करोतिर्वर्तते इति। ततश्च 'यथा क्रियावचनो धातुः' 'क्रियायां क्रियार्थाया'मित्यादौ विशेषाणामपि ग्रहणं भवति तद्वदत्रापि। ननु 'सुप्तप्रलपित'मित्यादौ 'कारका'दिति योगविभागेनैव सिद्धमित्याशङ्क्याह–**तृतीयेति**। तस्य तु योगविभागो न बाधकः, अन्यथा तस्य निर्विषयत्वं स्यात्। **अभूतप्रादुर्भाव इति**। अभूतप्रादुर्भावो निष्पादनम्। **अनो**। 'गतिकारकोपपदात्कृ'दित्यस्याऽपवादः। **पयःपानमिति**। 'कर्मणि च येने'ति कर्मण्युपपदे भावे ल्युट्। उपपदसमासः। **राजभोजना इति**। 'कृत्यल्युटो बहुल'मिति कर्मणि ल्युट्। कर्तरिषष्ठ्या समासः।

**मन्क्तिन्**। कृत्स्वरापवादः। क्रीते तु 'तृतीयाकर्मणी'त्यस्य। **रथवर्त्मेति**। वृतेरधिकरणे मनिन्। कर्तरि षष्ठ्या समासः। **पाणिनिकृतिरिति**। कर्मणि क्तिन्। पूर्ववत्समासः। **छन्दोव्याख्यानमिति**। 'व्याख्यान'मिति करणे ल्युट्। **शयनासनस्थानेष्वधिकरणे ल्युट्**। **ब्राह्मणयाजक इति**। 'याजकादिभिश्चे'ति सूत्रे षष्ठीसमासार्थं ये याजकादयस्त एव गृह्यन्ते। **प्रभूतौ सङ्गतिमिति**। 'तादौ च निति कृत्यतौ' इति पूर्वपदप्रकृतिस्वर एवाऽत्र भवति।

---

शे.] निरुक्तम्, प्रतिपन्नम्, उपश्लिष्टम्, प्रश्लिष्टम्, उपहितम्, उपस्थितम्। संहिताऽगँवि। वृत्। गोरन्यस्य सञ्ज्ञायां संहिताशब्दोऽन्तोदात्तः। **कारकाद्दत्त**। 'सञ्ज्ञायामनाचितादीना'मित्यस्य नियमोऽयम्। **देवदत्त इति**। देवा एनं देयासुरित्यर्थः। विष्णुरेनं श्रूयादिति **विष्णुश्रुतः**। **कारकात्किं–सम्भूत इति**। कारकादित्यस्याऽभावे त्रितयाधिकाराद्गतेरपि नियमः स्यात्–सम्भूयादिति **सम्भूत** इति भावः। 'संश्रुतो रामायण' इति पाठस्त्वयुक्तः। आशिषोऽप्रतीतेः। **माभूदिति**। एतेन संश्रुतो विश्रुत इत्यत्र भवत्येवान्तोदात्तत्वम्। आशिषि किम्?। अनाशिषि नियमो मा भूत्। ततश्चेह न स्यात्–देवैः खाता देवखाता। **इत्येवमत्रेति**। इत्येवमप्यत्रेत्यर्थः। 'अत्र कारकादिति योगं विभज्य दूरादागत इत्यत्रान्तोदात्तत्वं विधेयं 'गतिरनन्तरः' इति बाधनार्थ'मित्युक्तम्। **कृतं भवतीति**। भावे यदा प्रलपितादयस्तदा थाथादिस्वरेणैव सिद्धम्। **अनो भाव**। कृत्स्वरापवादोऽयम्। **पयःपानमिति**। 'कर्मणि च येने'ति कर्मण्युपपदे भावे ल्युट्। **राजभोजना इति**। बाहुलकात्कर्मणि ल्युट्। **कृत्स्वरापवाद इति**। क्रीते तु 'तृतीया कर्मणी'त्यस्येत्याहुः। व्याख्यानादिषु करणे ल्युट्। **याजकादयो**–'याजकादिभिश्चे'ति सूत्रे गणे पठिताः। **अध्ययनपुण्यमिति**।

'तत्पुरुषे तुल्यार्थे'ति प्राप्तम्। सप्तम्याः किम्?। वेदेन पुण्यं वेदपुण्यम्। **ऊनाऽर्थकलहं तृतीयायाः** ।६।२।१५३। माषोनम्। माषविकलम्। वाक्कलहः। तृतीयापूर्वपदप्रकृतिस्वरापवादोऽयम्। अत्र केचिदर्थेति स्वरूपग्रहणमिच्छन्ति'। धान्यार्थः। ऊनशब्देन त्वर्थनिर्देशाऽर्थेन तदर्थानां ग्रहणमिति। प्रतिपदोक्तत्वादेव सिद्धे तृतीयाग्रहणं स्पष्टार्थम्। **मिश्रं चाऽनुपसर्गमसन्धौ** ।६।२।१५४। पणबन्धेनैकार्थ्यं सन्धिः। तिलमिश्राः। सर्पिर्मिश्राः। मिश्रं किं?। गुडधानाः। अनुपसर्गं किं?। तिलसंमिश्राः। मिश्रग्रहणे सोपसर्गग्रहणस्येदमेव ज्ञापकम्। असन्धौ किं?। ब्राह्मणमिश्रो राजा। ब्राह्मणैः सह संहितः=ऐकार्थ्यमापन्नः। **नञो गुणप्रतिषेधे सम्पाद्यर्हहिताऽलमर्थास्तद्धिताः**।६।२।१५५। संपाद्याद्यर्थतद्धिताऽन्ता नञो गुणप्रतिषेधे वर्तमानात्परेऽन्तोदात्ताः। कर्णवेष्टकाभ्यां संपादि कार्णवेष्टकिकम्। न कार्णवेष्टकिकमकार्णवेष्टकिकम्। छेदमर्हति छैदिकः। न छैदिकोऽच्छैदिकः। न वत्सेभ्यो हितोऽवत्सीयः। न सन्तापाय प्रभवति असान्तापिकः। नञः किम्?। गर्दभरथमर्हति गार्दभरथिकः। विगार्दभरथिकः। गुणप्रतिषेधे किम्?। गार्दभरथिकादन्योऽगार्दभरथिकः।

---

सु.] सप्तम्या। सप्तम्यन्तात्परं पुण्यमित्येतदुत्तरपदमन्तोदात्तं स्यात्तत्पुरुषे। **अध्ययनपुण्यमिति**। अध्ययने पुण्यमिति विग्रहः। 'सप्तमी'ति योगविभागात्समासः। **ऊनार्थ**। तृतीयान्तात्पराणि ऊनार्थानि कलहश्च एतान्युत्तरपदान्यन्तोदात्तानि स्युः। उदाहरणेषु 'पूर्वसदृशे'त्यादिना तृतीयासमासः। **केचित्त्वित्यादि**। नन्वेवमूनशब्दस्यापि स्वरूपस्य ग्रहणं प्रसज्येत। ततश्च तदर्थानामन्येषां ग्रहणं न स्यादत आह–**ऊनशब्देन त्विति**। अर्थनिर्देशार्थत्वं तु व्याख्यानादवसेयम्।

**मिश्रं चा**। तृतीयान्तात्परमनुपसर्गं मिश्रमन्तोदात्तं स्यादसन्धौ। अयमपि 'तत्पुरुषे तुल्यार्थे'त्यस्यापवादः। **पणबन्धेनैकार्थ्यमिति**। पणबन्धः परिभाषणं,–'यदि मे भवानिदं कुर्यादहमपि भवतः करिष्यामी'त्येवंरूपम्। **तिलमिश्रा इति**। 'पूर्वसदृशसमोनार्थे'ति समासः। **गुडधाना इति**। 'भक्ष्येण मिश्री'ति समासः। **तिलसंमिश्रा इति**। कथं पुनर्मिश्रशब्दस्य विधीयमानं सोपसर्गेण लभ्यतेऽत आह–**मिश्रग्रहणेत्यादि**। तेन 'मिश्रश्लक्ष्णै'रिति विधीयमानः समासः सोपसर्गेणाऽपि सिद्धः। **ब्राह्मणमिश्र इति**। 'यदि मे भवन्तः कार्यं कुर्युस्तदाहं भवतामुपकारं करिष्यामी'त्येवंरूपेण पणबन्धेन कृत्वा ब्राह्मणैः सह मिलित इत्यर्थः। अपरे तु स्वरूपभेदग्रहणं **सन्धिः**। 'ब्राह्मणमिश्र' इत्यत्र ब्राह्मणेनैकीभावेऽपि राजा स्वस्वरूपेण गृह्यते। 'गुडमिश्र' इत्यत्र गुडेनैकीभूतस्य स्वरूपभेदो न गृह्यत इत्याहुः।

**नञो गुण**। **कार्णवेष्टकिकमिति**। 'संपादिनी'ति प्राग्वतेष्ठञ्। **छैदिक इति**।'छेदादिभ्यो नित्य'मिति ठक्। **वत्सीय इति**। 'तस्मै हित'मिति छः। **सान्तापिक इति**। 'तस्मै प्रभवति सन्तापादिभ्यः' इति ठञ्। **नञः किमिति**। प्रतिषेधे प्रायेण नञ एव वृत्तिदर्शनात्प्रश्नः। **विगार्दभरथिक इति**। अव्ययपूर्वपदप्रकृतिस्वर एवाऽत्र भवति। **गार्दभरथिकादन्य इति**। उदाहरणादस्य विशेषं दर्शयितुं 'गुणप्रतिषेध' इति सूत्रावयवं व्याचष्टे–**गुण**

---

शे.] सुप्सुपेति समासः। पुण्यशब्दस्याऽव्युत्पन्नत्वे आह–**तत्पुरुषे तुल्येति**। 'नब्विषयस्ये'त्याद्युदात्तः पुण्यशब्दः। व्युत्पन्नत्वे तु 'यतोऽनावः' इत्याद्युदात्तः, तदा कृत्स्वरापवादोऽयम्। उक्तसमासस्याऽप्रतिपदोक्तत्वादेतदपवादत्वमेव युक्तम्। सप्तमीति योगविभागस्तु भाष्याऽनारूढः। तत्पुरुषे इत्यस्याऽत्राऽसम्बन्ध एव, सामर्थ्यात्। **वेदेन पुण्यं वेदपुण्यमिति**। व्युत्पत्तौ कृत्स्वरः। अव्युत्पत्तौ पूर्वपदप्रकृतिस्वरः। वेदशब्दोऽत्र वृषादित्वादाद्युदात्तः। **ऊनार्थकलहम्**।[ऊनार्थकलहानि] तृतीयान्तात्पराण्येतान्युत्तरपदान्यन्तोदात्तानीत्यर्थः। **तदर्थानामिति**। व्याख्यानादिति भावः। **स्पष्टार्थमिति**। न च धान्यायाऽर्थो धान्यार्थ इत्येतद्व्यावर्त्यम्। 'अर्थे' इति पूर्वपदप्रकृतिस्वरस्य बाधकस्य सत्त्वात्। इदं तृतीयासमासे सावकाशम्। न च समस्य सर्वानुदात्तत्वात्प्रकृतिस्वराऽभावे समर्थमित्येतद्व्यावर्त्यं, तदभावे समासस्वरेणाऽन्तोदात्तस्येष्यमाणत्वादित्याहुः। **परे** त्वत्रोनशब्देन तदर्थग्रहणे न भाष्यानुग्रहः, माषविकल इत्यस्यान्तोदात्तत्वे च न दृढं मानम्। अत्र 'तृतीयाया' इत्यनेन प्रतिपदोक्तपरिभाषाप्रवृत्त्यभावो ज्ञाप्यते। तेन वाचाकृतः कलह इत्याद्यर्थके वाक्कलहादावन्तोदात्तत्वं भवत्येव। अर्थेति त्वत्र स्वरूपग्रहणमेवेत्याहुः। ऊनेत्यादिकिं?। मासपूर्वः। **मिश्रञ्चानुप**। तृतीयान्तादुत्तरपदमनुपसर्गं मिश्रमन्तोदात्तमित्यर्थः। **पणबन्धेनेति**। 'यदि भवन्त इदं मे कार्यं कुर्युस्तदाऽहमपि भवतामुपकारं करिष्यामी'त्येवंरूपेणेत्यर्थः। **मिश्रग्रहणे इति**। अन्यथा प्रतिपदोक्तपरिभाषया 'मिश्रश्लक्ष्णै'रिति समासस्यैव ग्रहणे तद्वैयर्थ्यं स्पष्टमेव। **कार्णवेष्टकिकमिति**। क्रमेण–'सम्पादिनी'ति ठञ्, 'छेदादिभ्यो नित्य'मिति ठक्, 'तस्मै हित'मिति छः, 'तस्मै प्रभवती'ति ठञ्। **विगार्दभरथेति**। 'तदर्हति' इति ठक्। **गार्दभरथिकादन्य इति**। न चाऽस्य गर्दभरथार्हणकर्तृभिन्न इत्यर्थः,

गुणो हि तद्धितार्थे प्रवृत्तिनिमित्तं संपादित्वाद्युच्यते । तत्प्रतिषेधो यत्रोच्यते तत्राऽयं विधिः-कर्णवेष्टकाभ्यां न सम्पादि मुखमिति । सम्पेति किं ? । पाणिनीयमधीते पाणिनीयः । न पाणिनीयः अपाणिनीयः। तद्धिताः किं?। वोढुमर्हति वोढा । न वोढा अवोढा । **ययतोश्चाऽतदर्थे** ।६।२।१५६। ययतौ यौ तद्धितौ, तदन्तस्योत्तरपदस्य नञो गुणप्रतिषेधविषयात्परस्याऽन्त उदात्तः स्यात् । पाशानां समूहः पाश्या । न पाश्या अपाश्या । अदन्त्यम्। अतदर्थे किम् ? । अपाद्यम् । तद्धितः किम् ? । अदेयम् । गुणप्रतिषेधे किं ? । दन्त्यादन्यत्-अदन्त्यम् । 'तदनुबन्धग्रहणे नाऽतदनुबन्धकस्ये'ति नेह-अवामदेव्यम् । **अच्कावशक्तौ** ।६।२।१५७। अजन्तं कान्तं च नञः परमन्तोदात्तमशक्तौ गम्यायाम् । अपचः । पक्तुं न शक्तः । अविलिखः । अशक्तौ किम् ? । अपचो दीक्षितः । गुणप्रतिषेधे इत्येव । अन्योऽयं पचादपचः । **आक्रोशे च** ।६।२।१५८। नञः परावच्कावन्तोदात्तावाक्रोशे । अपचो जाल्मः । पक्तुं न शक्नोतीत्येवमाक्रुश्यते । अविक्षिपः । **संज्ञायाम्** ।६।२।१५९। नञः परमन्तोदात्तं संज्ञायामाक्रोशे । अदेवदत्तः । **कृत्योकेष्णुच्चार्वादयश्च** ।६।२।१६०। नञः परेऽन्तोदात्ताः स्युः ।

---

सु.]इति । **तद्धितार्थे प्रवृत्तिनिमित्तमिति**।तद्धितार्थः=संपाद्यादि,तस्य यत् प्रवृत्तिनिमित्तम्। **संपादित्वादीति**। आदिशब्देन तदर्हत्वादेर्ग्रहणं।स गुण इत्युच्यते । उक्तं हि 'संसर्गि भेदकं यद्यत्सव्यापारं प्रतीयते। गुणत्वं परतन्त्रत्वात्तस्य शास्त्रे उदाहृत'मिति । **वोढेति**। 'अर्हे कृत्यतृचश्चे'ति तृच्। धत्वढत्वष्टुत्वढलोपेषु 'सहिवहोरोदवर्णस्ये'त्योत्वम्। **पाश्येति**।समूहे 'पाशादिभ्यो यः। **अदन्त्यमिति**।'शरीरावयवाच्चे'ति यत्। **अपाद्यमिति**।'पादार्घाभ्यां चे'ति यत्। **अदेयमिति**।डुदाञ् दाने।अर्हार्थे 'अचो यत्'।'ईद्यती'तीत्वम् गुणः।**अवामदेव्यमिति**।वामदेवेन दृष्टमित्यर्थे 'वामदेवाड्ड्यड्ड्यौ' इति ड्यः । **अपच इति** । पचाद्यच् । **अविलिख इति** । 'इगुपधे'ति कः । कृत्योकेष्णुच्चार्वादय इति वक्ष्यमाणैः कृत्योकेष्णुभिः साहचर्यादच्कयोः कृतोरिह ग्रहणं । तेन कृद्ग्रहणपरिभाषया 'विलिख'शब्दस्य कान्तत्वम् । **अपचो दीक्षित इति**।दीक्षितः शास्त्रविरोधान्न पचति,न त्वशक्तत्वेन।**अपचो जाल्म इति**।पक्तुं शक्तोऽपि पक्तुमयं न शक्नोतीत्यनेन प्रकारेण क्षिप्यते। तदाह-**पक्तुमित्यादि**। **अदेवदत्त इति**।देवदत्तः सन् यस्तत्कर्म न करोति स एव-

---

शे.] तत्रार्थतोऽर्हत्वाऽभावस्यापि बोधनादस्त्येव गुणप्रतिषेधः, यथा घटभिन्न इत्युक्ते घटत्वाऽभाववानिति प्रतीयत इति वाच्यम्।'न गर्दभरथमर्हती'ति गर्दभरथस्य नञर्हाभ्यां युगपदेकार्थीभावविवक्षायां परत्वात्तद्धिते एकदेशद्वारकसामर्थ्यमाश्रित्य तद्धितान्तेन समासे 'आरोपितं गर्दभरथमर्हती'त्यर्थकेऽतिप्रसङ्गवारणार्थत्वात्।न च प्रत्ययार्थोपसर्जनगर्दभरथस्य नञर्थापेक्षत्वेनाऽसामर्थ्यात्ततस्तद्धितो दुर्लभः, अस्मादेव गुणप्रतिषेधाज्ज्ञापकान्नञर्थसापेक्षादपि तद्धितोत्पत्तिस्वीकारात् । स्पष्टञ्चेदं 'न नञ्पूर्वात्तत्पुरुषा'दिति सूत्रे भाष्ये । यत्तु कैयटेन-'एतदन्तोदात्तत्वविधानमेवैतदर्थज्ञापक'मित्युक्तं, तन्न, 'वत्सेभ्यो न हित' इत्यर्थे प्रधानस्य नञर्थापेक्षत्वेप्युपसर्जनवत्सानां तदर्थानपेक्षत्वेन तद्धितोत्पत्तिसाम्राज्ये सूत्रसार्थक्यात् । किं चेदृशेऽर्थेऽपि हितस्यैं धर्मिण एव प्रत्ययार्थतया तत्र नञर्थाऽन्वयेऽत्यन्ताऽभावार्थकत्वे हिताऽभावः प्रतीयते, न तु हितत्वरूपगुणप्रतिषेधः । भेदार्थकत्वे तु अस्मद्रीत्यैव गुणप्रतिषेधार्थत्वमुपपाद्यम् । एवञ्च नञर्थानपेक्षवत्सशब्दात्पूर्वं प्रत्यये पश्चान्नञ्समासेऽपि तदुदाहरणं सुलभम् । किं च त्वदुक्तरीत्या प्रत्ययार्थस्य सापेक्षत्वेऽपि प्रकृत्यर्थस्य तत्त्वाऽभावात् 'सापेक्षादपी'ति भाष्योक्तज्ञाप्याऽसिद्धिः । 'वत्से युगपदुभयान्वयविवक्षे'ति न वक्तुं युक्तम् , तथाहि सति वत्सभिन्नहित इत्येवं प्रतीत्या गुणप्रतिषेधाऽनवगमादित्याहुः । अगर्दभरथशब्दात्प्रत्यये तु नञ्पूर्वपदकतद्धितान्तोत्तरपदकसमासाऽभावात्स्वरस्याऽप्राप्तिरेवेति न तद्व्यावृत्तये तत् । **अवोढेति**। 'अर्हे कृत्यतृच' इति तृच्। अत्र नञ्स्वर एव । **ययतोश्चा** । ययतोः किम् । ?। अपाणिनीयम् । नञः किं ?। त्रिपाश्या । **तद्धिते किमिति** । अत्र तद्धिते इति नानुवर्तते इति मतान्तरम्-'अत्वसन्तस्ये'ति सूत्रे आकरे ध्वनितम् । तत्र हि-ण्यति तदनुबन्धकपरिभाषयाऽस्याऽप्रवृत्तिरित्युक्तम् । **दन्त्यादन्यदिति**। उक्तरीत्या आरोपितदन्तभवमित्यर्थोऽस्य बोध्यः।उदाहरणे तु दन्तभवभिन्नमिति। दन्तभवत्वाऽभाववदिति यावत्। **अच्का** । **नञः परमिति** । गुणप्रतिषेधार्थान्नञ इत्यर्थः । **दीक्षित इति** । अस्य हि शास्त्रनिषिद्धः पाको,न तु तत्राऽशक्तोऽयम्। **अन्योऽयं पचादिति**। अस्याऽऽरोपितपाककर्तृत्वमित्यर्थः पूर्ववत्। उत्तरकृत्योकादिसाहचर्यादत्राऽच्कौ कृतावेव। कृद्ग्रहणादेव गतिकारकपूर्वत्वेऽपि भवति,-अप्रपच इति । **नञः परावेति** । गुणप्रतिषेधार्थादित्येव । **पक्तुं नेति** । केचित्तु पक्तुं समर्थोऽपि न पचतीत्येवमाक्रुश्यत इत्याहुः । अत्र 'अच्कौ' इति वृत्त्यनुरोधादनुवर्तितम् । 'नवे'ति सूत्रभाष्ये तु 'अत्राऽच्काविति नानुवर्तते, 'विभाषातृन्नन्ने'त्यपेक्षया आक्रोशे इदमेव पूर्वविप्रतिषेधेन भवती'ति स्थितम् । 'सञ्ज्ञाया'मित्युत्तरसूत्रे गुणप्रतिषेध इति नानुवर्तते इति नाऽत्र पक्षे तद्वैयर्थ्यम् ।

अकर्तव्यः । उकञ्–अनागामुकः । इष्णुच्–अनलङ्करिष्णुः । इष्णुज्ग्रहणे खिष्णुचो ह्यनुबन्धकस्यापि ग्रहणम्, इकारादेर्विधानसामर्थ्यात् । अनाढ्यम्भविष्णुः । चार्वादिः–अचारुः । असाधुः । (ग) राजाऽह्नोश्छन्दसि । अराजा । अनहः । भाषायां नञः स्वर एव । [ अ॑रा॑जा । अन॑हः ] । **विभाषा तृन्नन्नतीक्ष्णशुचिषु** ।६।२।१६१। तृन्–अकर्ता । अन्न–अनन्नम् । अतीक्ष्णम् । अशुचि । पक्षे अव्ययस्वरः । [ अ॑कर्ता । अन॑न्नम् । अती॑क्ष्णम् । अशु॑चि ] । **बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने** ।६।२।१६२। एभ्यो-ऽनयोरन्त उदात्तः । इदं प्रथमं यस्य स इदंप्रथमः । एतद्द्वितीयः । तत्पञ्चमः । बहुव्रीहौ किम् ? । अनेन प्रथम इदंप्रथमः । 'तृतीये'ति योगविभागात्समासः। इदमेतत्तद्भ्यः किम् ?। यत्प्रथमः। प्रथमपूरणयोः किम् ?। तानि बहून्यस्य तद्बहुः । क्रियागणने किम् ? । अयं प्रथमः [प्रधानं] येषां ते इदंप्रथमाः । द्रव्यगणनमिदम् । गणने किम् ? । अयं प्रथमो येषां ते इदंप्रथमाः । इदंप्रधाना इत्यर्थः । उत्तरपदस्य कार्यित्वात्कपि पूर्वमन्तोदात्तम् । इदंप्रथमकाः। बहुव्रीहावित्यधिकारो 'वनं समासे' इत्यतः प्राग्बोध्यः। **सङ्ख्यायाः स्तनः** ।६।२।१६३। बहुव्रीहावन्तोदात्तः । द्विस्तना । चतुःस्तना । सङ्ख्यायाः किम् ?। दर्शनीयस्तना । स्तनः किम् ? । द्विशिराः। **विभाषा छन्दसि** ।६।२।१६४। द्विस्तनां करोति । [ द्वि॑स्त॑नां कुर्याद्वामदेवः । द्यावापृथिव्योर्दोहाय

सु.]माक्षिप्यते। **अनागामुक इति।** 'लषपतपदे'त्युकञ्। **अनलङ्करिष्णुरिति।** 'अलङ्कृ'ञितीष्णुच् । **इकारादेर्विधानसामर्थ्यादिति** । भवतेरुदात्तत्वात्ततः परस्य खिष्णुच इटैवेकारादित्वे सिद्धे इकारादेर्विधानमिह सामान्यग्रहणार्थमेवेति भावः । **अनाढ्यंभविष्णुरिति** । 'भुवः खिष्णुच्खुकञौ' इति खिष्णुच् । **अचारुरिति** । 'दसनी'ति चरेरुण् । **असाधुरिति** । साध्नोतेः 'कृवापाजी'त्युण् । **राजाह्नोः**। चार्वाद्यन्तर्गणसूत्रम् । नञः परयोरेतयोश्छन्दस्यन्तोदात्तत्वम् । **अराजेति** । 'नञस्तत्पुरुषा'दिति समासान्तनिषेधः । **विभाषा तृन्** । नञ उत्तरपदान्येतान्यन्तोदात्तानि स्युस्तत्पुरुषे । **बहुव्रीहाविदम्** । **एभ्य इत्यादि** । इदमेतत्तद्भ्यः । **अनयोः**=प्रथमपूरणयोः । **इदं प्रथमं यस्येति।** निगमनं, भोजनं वा। **अनेन प्रथम इदंप्रथम इति।**तृतीयापूर्वपदप्रकृतिस्वर एव भवति।**यत्प्रथम इति।** यत्प्रथमं गमनं यस्य स यत्प्रथमः। **इदंप्रधाना इत्यर्थ इति।** अनेन प्रधानवचनः प्रथमशब्दो न त्वेकसङ्ख्यावचन इति दर्शितम् । तेनाऽत्र गणनाऽभाव उक्तः। **उत्तरपदस्येत्यादि।** इह 'समासस्ये'ति प्रकृतम् 'उत्तरपदादि'रित्यतः प्रभृति उत्तरपदस्येति च । तत्र इहोत्तरपदं कार्यित्वेनाश्रीयते, तेन यदा कबुत्पद्यते तदा कपि परतो यत्पूर्वं 'प्रथमे'ति, तदन्तोदात्तं भवति, न तु कबन्तम् । कप्प्रत्ययो हि समासस्यैवाऽन्तो नोत्तरपदस्य। 'उत्तरपदावयवाः समासान्ताः' इति पक्षेऽपि 'प्रथमपूरणयो'रिति विशिष्टरूपग्रहणात्कपस्तत्रानन्तर्भावादुपात्तयोरेव स्वरः । **सङ्ख्यायाः** । सङ्ख्यायाः परतः स्तनशब्दोऽन्तोदात्तः स्यात् । **दर्शनीयस्तनेति** । पूर्वपदप्रकृतिस्वरः। दर्शनीयशब्दोऽनीयर्प्रत्ययान्तो रित्स्वरः।**विभाषा।** पूर्वसूत्रोक्तं छन्दसि वा स्यात् । **[द्विस्तनामिति।** अन्तोदात्तत्वम् । 'स्वाङ्गाच्चोपसर्जना'दिति ङीष् ]।**चतुःस्तनेति।** पूर्वपदप्रकृतिस्वरेण 'चतेरुरन्' इति चतुर्शब्दस्य नित्वादाद्युदात्तत्वम्। अत्राऽन्तोदात्तत्वाऽभावात् 'स्वाङ्गा'दिति ङीष् न।

शे.]**अदेवदत्त इति।** देवदत्तः सन् यस्तत्कार्यं न करोति स एवमाकुश्यते । **कृत्योकेष्णुजित्यत्र।** गुणप्रतिषेध इति सम्बध्यते । **इकारादेरिति** । इदं खिष्णुज्विधावाकरे स्पष्टम् । चारु, साधु, यौधिक अनङ्गमेजय, वदान्य, अनेकस्मात् 'वर्तमानवर्धमानत्वरमाणध्रियमाणरोचमानाः सञ्ज्ञायाम्' । 'प्रीयमाणविरोचमाणशोभमाना' अपि क्वचित्पठ्यन्ते । 'विकारसदृशे व्यस्तसमस्ते', गृहपति, गृहपतिक । 'राजाह्नोश्छन्दसि' । राजाह्नोरिति गणसूत्रं । छन्दस्येवैतौ चार्वादीत्यर्थः । **विभाषा तृन्नन्नतीक्ष्णशु** । नञः पराण्येतान्यन्तोदात्तानीत्यर्थः । गुणप्रतिषेध इत्येव । **पक्षेऽव्ययेति** । एतत्सूत्रं यावत् 'तत्पुरुषे शालाया'मिति सूत्रस्थतत्पुरुषपदानुवृत्तेरिति भावः । वृत्तौ चेदं स्पष्टम् । **बहुव्रीहाविदमे । अ यो-रिति** । क्रियागणनवृत्त्योः प्रथमशब्दपूरणप्रत्ययान्तयोरुत्तरपदयोरित्यर्थः । **इदं प्रथममस्येति** । 'गमनमागमनं वे'ति शेषः । **तृतीयेतीति** । एवञ्च तृतीयापूर्वपदप्रकृतिस्वरोऽत्रेति भावः । इदं पदमञ्जर्यां स्पष्टम् । केचित्तु तृतीयेत्यत्र योगविभागस्य भाष्येऽनुक्तत्वात्सुप्सुपेति समासेऽन्तोदात्तत्वमेव । अयमिव प्रथम इदंप्रथमः स इत्युदाहर्तुमुचितं। प्राथम्यमेव साधारणो धर्म इत्याहुः। **अयं प्रथम इति** । देवदत्तादिः । **अयं प्रथम एषामिति** । अयं पाकादिः प्रधानमेषामित्यर्थः । **उत्तरपदस्य कार्यित्वादिति** । समासान्तस्तु समासावयव एवेति भावः । **द्विस्तना चतुःस्तनेति** । 'द्विस्तनी'त्यादौ तु ङीषि सतिशिष्टत्वादन्तोदात्तत्वं सिद्धमिति तन्नोदाहृतमित्याहुः । **विभाषा छन्दसि** । पूर्व-

चतुःस्तनां करोति। पशूनां दोहाय चतुःस्तनां करोति ]। **संज्ञायां मित्राऽजिनयोः** ।६।२।१६५। देवमित्रः। कृष्णाऽजिनम्। संज्ञायां किं ?। प्रियमित्रः। ॐ **ऋषिप्रतिषेधो मित्रे** । विश्वामित्र ऋषिः। **व्यवायिनोऽन्तरम्** ।६।२।१६६। व्यवधानवाचकात्परमन्तोदात्तम्। वस्त्रमन्तरं=व्यवधायकं यस्य स वस्त्रान्तरः। व्यवायिनः किम् ?। आत्मान्तरः। अन्यस्वभाव इत्यर्थः। **मुखं स्वाङ्गम्** ।६।२।१६७। गौरमुखः। स्वाङ्गं किम् ?। दीर्घमुखा शाला। **नाऽव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः** ।६।२।१६८। उच्चैर्मुखः। प्राङ्मुखः। गोमुखः। महामुखः। स्थूलमुखः। मुष्टिमुखः। पृथुमुखः। वत्समुखः। पूर्वपदप्रकृतिस्वरोऽत्र। गोमुष्टिवत्सपूर्वपदस्योपमानलक्षणोऽपि विकल्पोऽनेन बाध्यते। **निष्ठोपमानादन्यतरस्याम्** ।६।२।१६९। निष्ठान्तादुपमानवाचिनश्च परं मुखं, स्वाङ्गं वाऽन्तोदात्तं बहुव्रीहौ। प्रक्षालितमुखः। पक्षे 'निष्ठोपसर्गे'ति पूर्वपदान्तोदात्तत्वम्। [ प्रक्षालितमुखः ]। पूर्वपदप्रकृतिस्वरत्वेन गतिस्वरोऽपि भवति। उपमान-सिंहमुखः। [ सिंहमुखः ]।**जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः** ।६।२।१७०। सारङ्गजग्धः। मासजातः। सुखजातः। दुःखजातः। जातिकालेति किम् ?। पुत्रजातः। अनाच्छादनात्किं ?। वस्त्रच्छन्नः। अकृतेति-

---

सु.]**संज्ञायां मित्रा**। एतयोरुत्तरपदयोरन्त उदात्तः स्याद्बहुव्रीहौ संज्ञायाम्। **विश्वामित्र इति**। 'मित्रे चर्षौ' इति दीर्घः। अत्र 'बहुव्रीहौ विश्वं संज्ञाया'मिति बाधित्वा परत्वादनेनाऽन्तोदात्तत्वं प्राप्तं प्रतिषिध्यते। अतो 'बहुव्रीहौ विश्वं संज्ञाया'मित्यन्तोदात्तत्वं भवति। **व्यवायि**। उदाहरणे व्यवधानवाचिनोऽन्तरशब्दात् 'तत्करोती'ति णिचि पचाद्यच्। प्रत्युदाहरणे त्वन्यवाच्यन्तरशब्दः। **मुखं**। मुखं स्वाङ्गमुत्तरपदमन्तोदात्तं बहुव्रीहौ। **दीर्घमुखा शालेति**। मुखशब्देनाऽत्र द्वारप्रदेशः शालाया उच्यते। स्वाङ्गमद्रवादिलक्षणमिह गृह्यते न तु 'स्वमङ्गं स्वाङ्ग'मिति व्युत्पत्तिलभ्यम्, अन्यथाऽत्रापि स्यादिति भावः। **नाऽव्यय**। एभ्यः परो मुखशब्दोऽन्तोदात्तो न स्यात्। **पूर्वपदप्रकृतिस्वरोऽत्रेति**। एषूदाहरणेषु 'बहुव्रीहौ प्रकृत्या पूर्वपद'मिति पूर्वपदप्रकृतिस्वरेणाऽन्तोदात्तं पूर्वपदम्। तथाहि-'उदि चेडैसिः'। **उच्चैः**। 'अनिगन्तोऽञ्चतावप्रत्यये' इति प्रशब्द उदात्तः। तत एकादेशस्वरेण 'प्राङ्'शब्द उदात्तः। 'गमेर्डोः'। **गौः**। 'वर्तमाने पृष'दित्यादिना महच्छब्द उदात्तो निपातितः। **स्थूलशब्दः** 'ऋज्रेन्द्रे'त्यादावन्तोदात्तो निपातितः। मुषेः क्थिच्। **मुष्टिः**। 'प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्चे'ति कुः-**पृथुः**। 'कृतॄवदी'त्यादिना सः। **वत्सः**। **उपमानलक्षणो विकल्प इति**। 'निष्ठोपमाना'दिति प्राप्तः। **बाध्यत इति**। अस्य प्रतिषेधस्यावकाशो यत्र गवाद्युपमानं न भवति-गौर्मुखमिव यस्य सः। वत्सो मुखमिव यस्येति। सर्वत्राऽत्र गवाद्युपमेयं, नोपमानम्। उत्तरस्य विकल्पस्यावकाशो-यत्र गवादि पूर्वपदं न भवति,-सिंहमुखः।व्याघ्रमुखः।गवादावुपमाने उभयप्रसङ्गेऽयमेव भवति पूर्वविप्रतिषेधेन। **सिंहमुख इति**। पक्षे पूर्वपदप्रकृतिस्वरः। हिंसेः पचाद्यचि सिंहः। पृषोदरादित्वादाद्यन्तविपर्ययः। **जातिकाल**। जात्यादिभ्यः परं क्तान्तमन्तोदात्तं स्याद्बहुव्रीहौ, कृतादीन्वर्जयित्वा, आच्छादनवाचकात्परं चेन्न। **सारङ्गजग्ध इति**। **सारङ्गः**=पक्षिविशेषः स **जग्धो**=भक्षितो येनेति विग्रहः। प्रत्युदाहरणे सर्वत्र पूर्वपदप्रकृतिस्वरः। तत्र पुत्रशब्दोऽन्तोदात्तः। वसेः ष्ट्रन्। वस्त्रशब्द आद्युदात्तः। कुण्डशब्दो 'नब्विषयस्याऽनिसन्तस्ये'त्याद्युदात्तः। ननू

---

शे.]सूत्रोक्तस्य विभाषा। पक्षे पूर्वपदप्रकृतिस्वरः। **सञ्ज्ञायामिति**।एतयोरुत्तरपदयोरन्त उदात्तो बहुव्रीहौ सञ्ज्ञायाम्। **विश्वामित्र इति**। 'मित्रे चर्षौ' इति दीर्घः। अत्र 'बहुव्रीहौ विश्वं सञ्ज्ञाया'मित्येव भवति। अनृषौ तु विश्वमित्रे इदमेव परत्वादित्युक्तम्। **व्यवायिनोऽन्तरम्**। उदाहणप्रत्युदाहरणयोरन्तरशब्दस्य परनिपातोऽस्मादेव ज्ञापकात्। **आत्मान्तर इति**। आत्मा = स्वभावोऽन्यो यस्येत्यर्थः। 'अन्यस्वभाव इत्यर्थ' इति युक्तः पाठः। अन्तरं किं ?। वस्त्रव्यवधायकः। **मुखं स्वाङ्गम्**। बहुव्रीहावुत्तरपदभूतमद्रवमित्यादिलक्षणलक्षितस्वाङ्गवाचि मुखमन्तोदात्तमित्यर्थः। **पूर्वपदेति**। उच्चैरादीनि पूर्वपदान्यन्तोदात्तान्यत्र। **उपमानलक्षण इति**। 'निष्ठोपमाना'दित्युत्तरसूत्रविहितः। **बाध्यत इति**। पूर्वविप्रतिषेधादिति भावः। वृत्तौ स्पष्टमेतत्। अत्राऽव्ययशब्देनाव्ययीभावस्यापि ग्रहणमिति 'अव्ययीभावश्चे'ति सूत्रस्थभाष्यस्वरसः। **प्रक्षालितेति**। कृद्ग्रहणपरिभाषयाऽस्य निष्ठान्तत्वम्। तस्यापि वैकल्पिकत्वात्तदभावे आह-**पूर्वपदप्रकृतिस्वरत्वेनेति**। **सिंहमुखे**-पक्षे पूर्वपदप्रकृतिस्वरः। **जातिकाल**। जात्यादिभ्यः परं क्तान्तं बहुव्रीहावन्तोदात्तं कृतादीन्वर्जयित्वा न चेद्वस्त्रार्थात्परं क्तान्तं भवति। **मासजात इति**। मासो जातो यस्येति विग्रहः। 'कालाः परिमाणिना' इति तत्पुरुषे तु सिद्धमेवाऽन्तोदात्तत्वम्। **पुत्रजात इति**। पुत्रशब्दोऽन्तोदात्तः। **वस्त्रशब्द**स्त्रन्प्रत्य-

किम् ?। कुण्डकृतः। कुण्डमितः। कुण्डप्रतिपन्नः। अस्माज्ज्ञापकान्निष्ठान्तस्य परनिपातः। **वा जाते** ।६।२।१७१। जातिकालसुखादिभ्यः परो जातशब्दो वाऽन्तोदात्तः। दन्तजातः। दन्तजातः। मासजातः। मासजातः। **नञ्सुभ्याम्** ।६।२।१७२। बहुव्रीहावुत्तरपदमन्तोदात्तम्। अव्रीहिः। सुमाषः। युञ्जन्ति ब्रध्नमरुषम्। **कपि पूर्वम्**।६।२।१७३।नञ्सुभ्यां[परं यदुत्तरपदं तदन्तस्य समासस्य]पूर्वमुदात्तं कपि परे।अब्रह्मबन्धूकः।सुकुमारीकः। **ह्रस्वान्तेऽन्त्यात्पूर्वम्**।६।२।१७४।ह्रस्वान्तं उत्तरपदे समासे वाऽन्त्यात्पूर्वमुदात्तं कपि, नञ्सुभ्यां परं बहुव्रीहौ। अव्रीहिकः।अव्रीहिकः। सुमाषकः।सुमाषकः।'पूर्व'मित्यनुवर्तमाने [पुनः]पूर्वग्रहणं प्रवृत्तिभेदेन नियमार्थं 'ह्रस्वान्तेऽन्त्यादेव पूर्वपदमुदात्तं, न 'कपि पूर्व'मिति। अज्ञकः। कबन्तस्यैवाऽन्तोदात्तत्वम्। **बहोर्नञ्वदुत्तरपदभूम्नि** ।६।२।१७५। उत्तरपदार्थबहुत्ववाचिनो बहोः परस्य पदस्य नञः परस्येव स्वरः स्यात्। बहुव्रीहिकः [बहुव्रीहिकः]। बहुमित्रकः [बहुमित्रकः]। उत्तरपदेति किम् ?। बहुषु मानोऽस्य स बहुमानः। **न गुणादयोऽवयवाः** ।६।२।१७६। अवयववाचिनो बहोः परे गुणादयो नाऽन्तोदात्ता-बहुव्रीहौ। बहुगुणा रज्जुः।

सु.]दाहरणेषु प्रत्युदाहरणेषु च 'निष्ठा' इति निष्ठान्तस्य पूर्वनिपातः प्राप्नोति।तत्राह–**अस्माज्ज्ञापकादिति**।इदमेव मनसि विभाव्योक्तं–'जातिकालसुखादिभ्यः परा निष्ठा वाच्या' इति। **दन्तजात इति**। पक्षे पूर्वपदप्रकृतिस्वरः। दन्तशब्दः 'स्वाङ्गशिटामदन्ताना'मित्याद्युदात्तः। मासशब्दो 'ग्रामादीनां चे'त्याद्युदात्तः। **नञ्सु**। नञ्सुभ्यां परमुत्तरपदमन्तोदात्तं स्यात्। समासान्ता उत्तरपदावयवाः, तेनाऽनृच इत्यत्र 'ऋक्पू'रित्यप्यकारस्योदात्तत्वं भवति। 'समासावयवाः समासान्ता' इति पक्षे तु अस्मिन् सूत्रे समासस्यैव कार्यित्वमाश्रीयते नोत्तरपदस्य, 'कपि पूर्व'मिति ज्ञापकात्। यद्यनेनोत्तरपदस्याऽन्तोदात्तः स्यात्ततोऽकुमारीक इत्यादावनेनैव सिद्धत्वात्कपिपूर्वमित्यवाच्यं स्यात्। **कपि पूर्वम्**। पूर्वेण कप एवोदात्तत्वे प्राप्ते ततः पूर्वस्योदात्तत्वं विधीयते। 'ह्रस्वान्तेऽन्त्यात्पूर्व'मिति वचनादिह दीर्घान्ता एवोदाहृताः। उदाहरणे 'नद्यृतश्चे'ति कप्।**ह्रस्वान्ते**।ह्रस्वोऽन्तो यस्य तदिदं ह्रस्वान्तमिति बहुव्रीहिः।तस्यान्यपदार्थमुत्तरपदं समासो वा गृह्यत इत्याशयेनाह–**उत्तरपदे समासे वेति**। अत्र कपि पर इति सामान्यवचनात्तद्रहितमुत्तरपदं समासो वा गृह्यते। ननु पूर्वग्रहणमनर्थकं,'कपि पूर्व'मित्यनुवृत्तेरत आह–**पूर्वमित्यनुवर्तमान इति**।प्रवृत्तिभेदेन=वाक्यभेदेन।तत्रैकेन वाक्येन ह्रस्वान्तेऽन्त्यात्पूर्वस्योदात्तत्वं विधीयते। द्वितीयेन तु नियम्यते–'ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं भवति, न कपि पूर्व'मिति। तेन किं सिद्धमत आह–**कबन्तस्यैवान्तोदात्तत्वमिति**। नास्ति ज्ञो यस्य अज्ञकः। अत्र यद्येष नियमो न स्यात्तर्हि एतस्याऽभावे 'कपि पूर्व'मित्ययमेव स्वरः स्यात्। अस्मिंस्तु नियमे सति न भवति।'नञ्सुभ्या'मिति कबन्तस्यैव भवति। **बहोर्नञ्**। नञ इव नञ्वत्। अस्मादेव निपातनात्पञ्चमीसमर्थाद्वतिः। बहूनां भावो भूमा। 'बहोर्लोपो भू च बहोः'। उत्तरपदशब्देन तदर्थो गृह्यते, स्वरूपेणोत्तरपदस्य बहुत्वाऽसंभवात्। तदाह–**उत्तरपदार्थबहुत्वेति। बहुव्रीहिक इत्यादि**। 'ह्रस्वान्तेऽन्त्यात्पूर्व'मिति स्वरः। **बहुमान इति**। पूर्वपदप्रकृतिस्वरः। बहुशब्दस्तु 'लङ्घिबंह्योर्नलोपश्चे'ति

शे.]यान्तत्वादाद्युदात्तः। नञ्विषयत्वात्कुण्डमाद्युदात्तम्। **वा जाते**। पक्षे पूर्वपदप्रकृतिस्वरः। दन्तशब्दः स्वाङ्गत्वादाद्युदात्तः, मासो ग्रामादित्वात्तथा। सुख, दुःख, कृच्छ्र, अस्र, अलीक, प्रतीप, करुण, कृपण, तृप्र, सोढ एते सुखादय इति हरदत्तः। 'सुखदुःखगहनकृच्छ्रास्रतृप्रालीकप्रतीपकरुणाः। कृपणसोढौ इमे सुखादयो दश गणे पठिता' इति **श्लोकगणकारः। गणरत्ने** तु आस्यशब्दोऽपीह पठ्यत इत्युक्तम्। पूर्वसूत्रे जातातिरिक्तक्तान्तमुदाहर्तुमुचितम्।**नञ्सुभ्याम्। उत्तरपदमिति**। समासान्तानां समासावयवत्वेऽपि 'कपि पूर्व'मित्यस्मादेव ज्ञापकादुत्तरपदाधिकारेऽप्यत्र सूत्रे समासस्यैव कार्यित्वं, अन्यत्रोत्तरपदस्यैव कार्यित्वं समासान्तरहितस्य। स्पष्टञ्चेदम् 'अन्तः' इति सूत्रे भाष्ये। **कपि पूर्वम्**। नञ्सुभ्यां परं यदुत्तरपदं तस्य कपि परे पूर्वमुदात्तमित्यर्थः, तदन्तस्य समासस्येत्यर्थो वा। पूर्वसूत्रापवादः। **ह्रस्वान्ते**। नञ्सुभ्यां, कपि इति च वर्त्तते। 'कपि पूर्व'मित्यस्यापवादः। ह्रस्वान्तोत्तरपदकसमासे नञ्सुभ्यां परस्य कपिपूर्वस्योत्तरपदस्याऽन्त्यात्पूर्वमुदात्तमिति सूत्रार्थः। **पूर्वग्रहणमिति**। पूर्वग्रहणेऽनुवर्त्तमाने पुनस्तद्ग्रहणमित्यर्थः। एतदर्थमेव पूर्वसूत्रे पूर्वग्रहणम्, अन्यथा 'कपी'त्येव वदेदिति भावः। **अज्ञक इति**। अन्त्यात्पूर्वं उदात्तभावी नास्तीति एतदभावे 'कपि पूर्व'मिति प्राप्तमनेन नियमेन व्यावर्त्यते। तेन 'नञ्सुभ्या'मिति कप एवोदात्तत्वमिति भावः।**बहोर्नञ्वत्**। ननु लाघवाद्बहुः सुवदित्येवास्तु इत्यत आह–**बहुमित्र इति**। नञो जरमरमित्रे'त्यस्यातिदेशेन प्रवृत्त्यर्थं तथोक्तमिति भावः। **बहुमाने**–पूर्वपदप्रकृतिस्वरः। बहुः फिट्स्वरेणाऽन्तोदात्तः। **न गुणादयो**। अवयववाचिनो

बह्वक्षरं पदम् । बह्वृच्योऽध्यायः । गुणादिराकृतिगणः । अवयवाः किम् ? । बहुगुणो द्विजः । अध्ययनश्रुतसदाचारा-दयो गुणाः । **उपसर्गात्स्वाङ्गं ध्रुवमपर्शु** ।६।२।१७७। प्रपृष्ठः । प्रललाटः । ध्रुवमेकरूपम् । उपसर्गात्किम् ?। दर्शनीयपृष्ठः । स्वाङ्गं किम् ? । प्रशाखो वृक्षः । ध्रुवं किम् ? । उद्बाहुः । अपर्शु किम् ? । विपर्शुः ? । **वनं समासे** ।६।२ १७८। समासमात्रे उपसर्गादुत्तरपदं वनमन्तोदात्तम् । तस्येदि मे प्रवणे । **अन्तः** ।६।२।१७९। अस्मात्परं वनमन्तोदात्तम्। अन्तर्वणो देशः । अनुपसर्गार्थमिदम् । **अन्तश्च** ।६।२।१८०। उपसर्गादन्तःशब्दो-ऽन्तोदात्तः । पर्यन्तः । समन्तः। **न निविभ्याम्** ।६।२।१८१। न्यन्तः । व्यन्तः । पूर्वपदप्रकृतिस्वरे, यणि च कृते 'उदात्तस्वरितयोर्यणः' इति स्वरितः । **परेरभितोभावि मण्डलम्** ।६।२।१८२। परेः परमभितः=उभयतो भावो यस्यास्ति तत्कूलादि, मण्डलं चाऽन्तोदात्तम् । परिकूलम् । परिमण्डलम् । **प्रादस्वाङ्गं संज्ञायाम्** ।६।२।१८३। प्रगृहम् । अस्वाङ्गं किम् ?। प्रपदम् । **निरुदकादीनि च** ।६।२।१८४। अन्तोदात्तानि । निरुदकम् । निरुलपम् । **अभेर्मुखम्** ।६।२।१८५। अभिमुखम् । 'उपसर्गात्स्वाङ्ग'मिति सिद्धेऽबहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थं चेदम् । अभिमुखा शाला । **अपाच्च** ।६।२।१८६। अपमुखम् । योगविभाग उत्तरार्थः । **स्फिगपूत-**

---

सु.] कुप्रत्ययाऽन्तोऽन्तोदात्तः। **न गुणा। अवयववाचिनो बह्वोः परे इति।** अवयववाचिन इति गुणादीनां विशेषणम्। **उपस**। स्वाङ्गं प्रति क्रियायोगाऽभावादुपसर्गग्रहणं प्राद्युपलक्षणम् । प्रादेरुत्तरं ध्रुवं स्वाङ्गवाचि पर्शुवर्जितमन्तोदात्तं स्याद्बहुव्रीहौ । प्रत्युदाहरणे पूर्वपदप्रकृतिस्वरः । 'दर्शनीय'शब्दोऽनीयर्प्रत्ययान्तो रित्स्वरः । **उद्बाहुरिति** । 'क्रोशती' ति शेषः। अत्र क्रोशनसमय एवोद्बाहुत्वं न सर्वदैवेत्यध्रुवम् । **वनं समासे** । बहुव्रीहावित्यस्य निवृत्त्यर्थं समासग्रहणम्। **प्रवण इति** । बहुव्रीहौ तत्पुरुषे च पूर्वपदप्रकृतिस्वरे प्राप्ते । 'प्रनिरन्तः' इति णत्वम् । **अन्तः**। अन्तःशब्दात्पञ्चम्या-श्छान्दसो लुक् । तदाह-**अस्मात्परमिति** । अन्तःशब्दात्परमित्यर्थः । **अन्तर्वण इति** । अत्रापि तेनैव णत्वम् । **अनुपसर्गार्थमिति** । उपसर्गे तु पूर्वेणैव सिद्धम्। **न निविभ्याम्।** निविभ्यामुत्तरोऽन्तःशब्दो नाऽन्तोदात्तः[स्यात्]। **पूर्वपदप्रकृतिस्वर इति** । बहुव्रीहिसमासे 'बहुव्रीहौ प्रकृत्येति. 'तत्पुरुषे तुल्यार्थे'त्यनेन । **परेरभितः** । परेरुत्तरोऽ-भिशब्दो भाववाची मण्डलं चाऽन्तोदात्तं स्यात् । अभितो भावीत्यस्यार्थमाह-**अभितो भावोऽस्यास्तीति** । अथवा अभितः=उभयतो भवति नद्यादौ कूलादिकमित्यभितोभावि । 'सुप्यजातौ' इति णिनिः । **परिकूलमिति** । बहुव्रीहिः, प्रादिसमासोऽव्ययीभावो वा । तत्र बहुव्रीहौ तत्पुरुषे च पूर्वपदप्रकृतिस्वरे प्राप्ते, अव्ययीभावे तु 'परिप्रत्युपापे'ति, 'कूल-तीरे'ति च प्राप्ते । परितः कूलमस्य, परिगतं कूलमिति वा, कूलात्कूलं वर्जयित्वेत्यर्थ इति वा विग्रहः । **प्राद्** । प्रादुत्तरमस्वाङ्गवाचि संज्ञायामन्तोदात्तं स्यात् । **प्रगृहमिति** । प्रादिसमासः, बहुव्रीहिर्वा । **प्रपदमिति** । पूर्वपदप्रकृतिस्वरः । **निरुदकमित्यादि** । निर्गतमुदकं यस्मादिति बहुव्रीहिः । निर्गतमुदकमिति प्रादिसमासो वा । उदकस्याऽभाव इत्यव्ययीभावे तु समासाऽन्तोदात्तत्वेनैव सिद्धम् । **अभे** । अभेरुत्तरपदं मुखमन्तोदात्तं स्यात् । **उप-सर्गात्स्वाङ्गमितीति** । 'मुखं स्वाङ्ग'मिति तु न भवति, 'नाऽव्ययदिक्शब्दे'ति निषेधात् । **अपाच्च** । अपादुत्तरपदं मुखमन्तोदात्तं स्यात्समासे । **अपमुखमिति** । प्रादिसमासे बहुव्रीहौ च पूर्वपदप्रकृतिस्वरे प्राप्ते, मुखं वर्जयित्वेत्यव्ययी-

---

शे.] गुणादयो बह्वोः परा इत्यर्थः। 'बह्वोर्नञ्व'दिति प्राप्तिः । 'गुण आमन्त्रणे' चुरादिः पचाद्यच्। **नान्तोदात्ता इति** । नञ्वद्भावप्राप्तस्वरोपलक्षणमेतत् । तेन 'बहुगुणका' इत्यादौ 'कपि पूर्वं' 'ह्रस्वान्तेऽन्त्यात्पूर्व'मित्यपि नेति बोध्यम्। **उप-सर्गात्स्वाङ्गन्ध्रु**। प्रादेरुत्तरं स्वाङ्गवाचि पर्शुशब्दभिन्नोत्तरपदकसमासे ध्रुवार्थबोधके यदुत्तरपदं तदन्तोदात्तं स्याद्बहु-व्रीहावित्यर्थः । यद्वा ध्रुवार्थबोधकसमासघटकमित्यर्थकं स्वाङ्गविशेषणमेव । **उद्बाहुरिति** । न हि बाहोर्नित्यमूर्ध्वदिगव-स्थानमिति भावः । तत्पुरुषे त्वव्ययपूर्वपदप्रकृतिस्वर एव । पर्शुः=पार्श्वम् । **प्रवण इति**। बहुव्रीहौ तत्पुरुषे च पूर्वपद-प्रकृतिस्वरः प्राप्तः । 'प्रनिरन्तः' इति णत्वं। **परिवने** 'परिप्रत्युपापे'ति प्राप्तम्। उपसर्गात्किं?। शरवणो देशः। बहुव्रीहा-वित्यस्य निवृत्त्यर्थं समासग्रहणम् । **अन्तः** । **अन्तर्वणमित्यव्ययीभावेऽप्येतदेव** । **न निविभ्याम्** । निविभ्यामुत्त-रोऽन्तशब्दो नाऽन्तोदात्त इत्यर्थः । **परेरभितोभावि म।** अभितः=उभयतो भवत्यवश्यमिति 'सुप्यजातौ' इति णिनिः। नद्यादौ हि कूलाद्युभयतो भवति । **परिकूलमिति**-बहुव्रीहिः, प्रादिसमासोऽव्ययीभावो वा । अत्र 'परिप्रत्युपे'ति, 'कूलतीरे'ति वा प्राप्तम् । **प्रादस्वाङ्गं स** । प्रादुत्तरपदमस्वाङ्गवाचि सञ्ज्ञायामन्तोदात्तं समासमात्रे इत्यर्थः । प्रग्रहादयः प्रगृहादयो वा प्रादिसमासा, बहुव्रीहयो वा । निरुदकादिराकृतिगणः। **अभिमुखा शालेति** । प्रादिसमासो, बहुव्रीहिर्वा।

**वीणाऽऽध्वकुक्षिसीरनामनाम च** ।६।२।१८७। अपादिर्मान्यन्तोदात्तानि । अपस्फिगम् । अपपूतम् । अपवीणम् । अञ्जस्-अपाऽञ्जः । अध्वन्-अपाध्वा । 'उपसर्गादध्वनः' इत्यस्याऽभावे इदम् । एतदेव च ज्ञापकं समासान्ताऽनित्यत्वे । अपकुक्षिः । सीरनाम-अपसीरम् । अपहलम् । नाम-अपनाम । स्फिगपूतकुक्षिग्रहणमबहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थं च । **अधेरुपरिस्थम्** ।६।२।१८८। अध्यारूढो दन्तोऽधिदन्तः । दन्तस्योपरि जातो दन्तः । उपरिस्थं किम् ? । अधिकरणम् । **अनोरप्रधानकनीयसी** ।६।२।१८९। अनोः परमप्रधानवाचि, कनीयश्चाऽन्तोदात्तम् । अनुगतो ज्येष्ठमनुज्येष्ठः । पूर्वपदार्थप्रधानः प्रादिसमासः । अनुगतः कनीयाननुकनीयान् । उत्तरपदार्थप्रधानः । प्रधानार्थं च कनीयोग्रहणम् । अप्रेति किम् ? । अनुगतो ज्येष्ठोऽनुज्येष्ठः । **पुरुषश्चाऽन्वादिष्टः** ।६।२।१९०। अनोः परोऽन्वादिष्टवाची पुरुषोऽन्तोदात्तः । अन्वादिष्टः पुरुषोऽनुपुरुषः । अन्वादिष्टः किम् ? । अनुगतः पुरुषोऽनुपुरुषः । **अतेरकृत्पदे** ।६।२।१९१। अतेः परमकृदन्तं, पदशब्दश्चाऽन्तोदात्तः । अत्यङ्कुशो नागः । अतिपदा गायत्री । अकृत्पदे किम् ? । अतिकारकः । * **अतेर्धातुलोप इति वाच्यम्** । इह मा भूत्-शोभनो गार्ग्योऽतिगार्ग्यः । इह च स्यात्-अतिक्रान्तः कारकमतिकारकः । **नेरनिधाने** ।६।२।१९२। निधानमप्रकाशता, ततोऽन्यदनिधानम् । प्रकाशनमित्यर्थः । निमूलम् । न्यक्षम् । अनिधाने किं ? । निहितो दण्डो निदण्डः । **प्रतेरंश्वादयस्तत्पुरुषे** ।६।२।१९३। प्रतेः परेंऽश्वादयोऽन्तोदात्ताः । प्रतिगतोंऽशुः

---

सु ]भावेऽपि 'परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेषु' इति प्राप्तेऽयमारम्भः । **उत्तरार्थ इति** । उत्तरत्र अपादित्यस्यैवानुवृत्तिर्यथा स्यादभेर्मा भूत् । **स्फिगपूत** । 'नाम'ग्रहणं सीरेणैव संबध्यते, न स्फिगादिभिः, स्फिगपूतकुक्षीणां पृथग्ग्रहणादिति हरदत्तः । तेन स्फिगपूतकुक्षयः पर्याया इति निश्चीयते । **उपसर्गादध्वन इत्यस्याभाव इति** । 'उपसर्गादध्वनः' इदं समासान्ताऽच्प्रत्ययविधायकं, तदभावे । तस्मिन् सति अच्प्रत्ययस्य चित्त्वादेव सिद्धम् । ननु 'उपसर्गादध्वनः' इत्यनेन नित्योऽज् विधीयते, तत्कथमुक्तमित्यस्याऽभाव इतीत्यत आह-**एतदेव च ज्ञापकमिति** । यदि हि नित्यः समासान्तः स्यादध्वग्रहणमिहानर्थकं स्यात्, अच्प्रत्ययस्य चित्त्वादन्तोदात्तस्य सिद्धत्वात् । । कृतं तु अध्वग्रहणं ज्ञापयति-'समासान्ता अनित्या' इति । **स्फिगपूतकुक्षिग्रहणमिति** । यदा ह्येतानि स्वाङ्गवाचीनि ध्रुवाणि च भवन्ति बहुव्रीहिश्च समासस्तदा 'उपसर्गात्स्वाङ्ग'मित्येव सिद्धम् । **अधेः** । अधेरुत्तरमुपरिस्थवाचि अन्तोदात्तं स्यात् । उपरि तिष्ठतीत्युपरिस्थम् । 'सुपि स्थः' इति कः । तदेतद्दर्शयति-**दन्तस्योपरीति** । **अधिकरणमिति** । अधिक्रियतेऽस्मिन्नित्यधिकरणम् । नैतदुपरिस्थवाचि, किं त्वधःस्थवाचि । अत्र कृदुत्तरपदप्रकृतिस्वरेणककाराऽकार उदात्तः । **अनुज्येष्ठ इति** । उत्तरपदार्थस्याऽप्राधान्यं दर्शयति-**पूर्वपदार्थप्रधानः प्रादिसमासोऽयमिति** । **प्रधानार्थं च कनीयोग्रहणमिति** । अन्यत्राऽप्रधानग्रहणेनैव सिद्धत्वात् । **अनुगतो ज्येष्ठ** इति विग्रहविशेषेण प्रधानवाचित्वं ज्येष्ठशब्दस्य दर्शयति । **पुरुषः** । **अन्वादिष्ट इति**। अनु=पश्चादादिष्टः-कथितः। कस्मिंश्चित्कथिते योऽन्यः कथ्यते-सोऽन्वादिष्ट इत्यर्थः। **अतेरकृत्पदे**। अकृच्च पदं च अकृत्पदे । तदाह-**अकृदन्तं पदशब्दश्चेति**। **अत्यङ्कुश इति**। अङ्कुशमतिक्रान्त इति विग्रहः । **अतिकारक इति** । शोभनः कारकः । पूजार्थोऽयमतिः । **अतेर्धातुलोप इति** । अत्यङ्कुशादौ वृत्तिविषयेऽतिशब्दोऽतिक्रान्तार्थवृत्तिरिति क्रमेरप्रयोग एव धातुलोपः । **अतिगार्ग्य इति** । यथान्यासे त्वत्रापि प्राप्नोति, गार्ग्यशब्दस्याऽकृदन्तत्वात् । **अतिकारक इति** । यथा न्यासे त्वत्र न स्यात्, कारकशब्दस्य कृदन्तत्वात् । तस्मादव्याप्त्यतिव्याप्तिपरिहारार्थमकृत्पदे इत्येतदपनीय धातुलोप इति वक्तव्यमित्यर्थः। **नेरनि** । निशब्दादुत्तरपदमन्तोदात्तं स्यादनिधानेऽर्थे । **निमूलमिति** । निर्गतं मूलमस्य, निर्गतं वा मूलं निमूलम् । **निदण्ड इति** । निशब्दो निधानार्थं ब्रवीति । कथं पुनर्निशब्दस्याऽयमर्थ इति चेच्छृणु । प्रादयो हि वृत्ति-

---

शे.]**अपाच** । मुखमिति वर्तते। **अपमुखमिति**। अव्ययीभावेऽपि 'परिप्रत्युपापे'ति प्राप्तम्। **एतदेव चेति**। अन्यथा अचश्चित्त्वादेव सिद्धं स्यादिति भावः । **सीरनामेति** । नामग्रहणं सीरेणैव संबध्यते, न स्फिगादिभिः स्फिगपूतकुक्षीणां पृथग्ग्रहणात्। हरदत्तप्रामाण्यादेषां पर्यायत्वमवगम्यते।व्याख्यानादेवाऽस्य सीरग्रहणेन संबन्ध इति तत्त्वम् । **स्फिगपूतकुक्षिग्रहणमिति** । वीणाग्रहणसहितः पाठोऽपपाठः। **प्रादिसमास इति**। अव्ययीभावे तु समासान्तोदात्तत्वेनाऽपि सिद्धम् । **पुरुषश्चाऽन्वा** । अन्वादिष्टोऽप्रधानशिष्टः। यथा भिक्षामटेत्यादौ। यद्वा कस्मिंश्चित्कथिते योऽन्यः पश्चात्कथ्यते सोऽन्वादिष्टः। **अतेर** । **अकृदन्तं पदशब्दश्चेति** । अयञ्चाऽर्थो वृत्तौ । भाष्यात्तु अतेरुत्तरपदमन्तोदात्तं, कृदन्तं, पदशब्दञ्च वर्जयित्वेत्यर्थः प्रतीयते । **नेरनि** । निशब्दादुत्तरपदमन्तोदात्तं स्यादनिधानेऽर्थे । **निमूलमिति** । निर्गतं मूलमस्येति,निर्गतं मूलमिति वाऽर्थः। अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् । **निदण्ड इति** । निशब्दो-

प्रत्यं सुः । प्रतिजनः । प्रतिराजा । समासान्तस्याऽनित्यत्वान्न टच् । **उपाद्‌द्व्यजजिनमगौरादयः** ।६।२।१९४। उपात्परं यत् द्व्यच्कमजिनं चाऽन्तोदात्तं तत्पुरुषे, गौरादीन्वर्जयित्वा । उपदेवः । उपेन्द्रः । उपाजिनम् । अगौरादयः किम् ? । उपगौरः । उपतैषः । तत्पुरुषे किम् ? । उपगतः सोमोऽस्य स उपसोमः । **सोरवक्षेपणे** ।६।२।१९५। सुप्रत्यवसितः । सुरत्र पूजायामेव । वाक्यार्थस्त्वत्र निन्दा, असूयया तथाऽभिधानात् । सोः किं? । कुब्राह्मणः । अवक्षेपणे किं? । सुवृषणम् । **विभाषोत्पुच्छे** ।६।२।१९६। तत्पुरुषे । उत्क्रान्तः पुच्छादुत्पुच्छः । [उत्पुच्छः] । यदा तु पुच्छमुदस्यति उत्पुच्छयते । 'एरच्' उत्पुच्छः, तदा थाथादिस्वरेण नित्यमन्तोदात्तत्वे प्राप्ते विकल्पोऽयम् । सेयमुभयत्र विभाषा । तत्पुरुषे किम् ? । उदस्तं पुच्छं येन स उत्पुच्छः । **द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ** ।६।२।१९७। आभ्यां परेष्वेष्वन्तोदात्तो वा । द्विपाच्चतुष्पाच्च रथाय । त्रिपाद्ूर्ध्वः । द्विदन् । त्रिमूर्धानं सुप्तरश्मिम् । मूर्धन्नित्यकृतसमासान्त एव मूर्धशब्दः । तस्यैतत्प्रयोजनम्-'असत्यपि समासान्ते अन्तोदात्तत्वं यथा स्यात्' । एतदेव ज्ञापकम्-'अनित्यः समासान्तो भवती'ति । यदाऽपि च समासान्तः क्रियते तदापि बहुव्रीहिकार्यत्वात्तदेकदेशत्वाच्च समासान्तोदात्तत्वं पक्षे भवत्येव । द्विमूर्धः । त्रिमूर्धः । द्वित्रिभ्यां किं? ।

---

सु.]विषये सक्रियं साधनमाहुः । **समासान्तस्यानित्यत्वादिति**। इह राजन्शब्दस्य पाठ एव ज्ञापयति-'समासान्ता अनित्या' इति । अन्यथा 'राजाहःसखिभ्यष्ट'जिति टचश्चित्वादेव सिद्धं स्यात् । **सोरव** । सोरुत्तरपदं निन्दायामन्तोदात्तं स्यात्तत्पुरुषे । **सुप्रत्यवसित इति** । 'सुः पूजाया'मिति कर्मप्रवचनीयस्य सोः 'स्वती पूजाया'मिति समासः । तेन सुप्रत्यवसिते थाथादिविधिर्नाशङ्कनीयः । ननु यदि सुशब्दोऽत्र पूजायां वर्तते, कथं तर्हि क्षेपो गम्यत इत्याह-**वाक्यार्थस्त्विति**। कथमित्याह-**असूययेति**। यः खल्वनर्थे उपस्थिते सुखायमान आस्ते तं प्रत्येवमुक्ते क्षेपो गम्यते । **विभाषोत्**। उच्छब्दात्परः पुच्छशब्दोऽन्तोदात्तो वा स्यात्तत्पुरुषे । **सेयमुभयत्र विभाषेति** । आद्यायां तु व्युत्पत्तावव्ययंपूर्वपदप्रकृतिस्वरेण बाधितत्वात्समासस्याऽन्तोदात्तत्वमप्राप्तम् । द्वितीयायां तु व्युत्पत्तौ थाथादिस्वरेण नित्यमन्तोदात्तत्वं प्राप्तमिति कृत्वोभयत्र विभाषा । **द्वित्रिभ्याम्** । 'पा'दिति कृताऽकारलोपो गृह्यते । 'द'दिति कृतददादेशो दन्तशब्दः । **आभ्यामिति** । द्वित्रिभ्याम् । **द्विपादिति** । द्वौ पादौ यस्येति द्विपात् । 'सङ्ख्यासुपूर्वस्ये'ति पादशब्दस्याऽकारलोपः । **द्विदन्निति** । 'वयसि दन्तस्य दतृ' । **मूर्धन्नित्यकृतसमासान्त एव मूर्धशब्द इति**। एतच्च 'मूर्धस्वि'ति निर्देशादेवावसीयते, अन्यथा 'मूर्धस्वि'ति निर्देश्यं स्यात् । किमर्थं पुनरकृतसमासान्त एव निर्दिष्ट इत्यत आह-**तस्येति** । यद्यकृतसमासान्तस्योपादानं तर्हि यदा समासान्तः क्रियते तदा न प्राप्नोति, तस्य शब्दान्तरत्वादित्यत आह-**यदापीति** । इह हि बहुव्रीहिः कार्यित्वेनोपात्तो, न मूर्धन्शब्दः । **तदेकदेशत्वाच्चेति** । तस्य बहुव्रीहेरेकदेशः समासान्तः, तस्य भावस्तत्त्वं तस्मादिति स एवार्थः । **तदेकदेशित्वादिति** पाठे तु-स = बहुव्रीहिरेकदेशी = अवयवी

---

शे.]ऽत्र निधानार्थं ब्रवीति । प्रादयो हि वृत्तिविषये सक्रियं साधनमाहुः । **अनित्यत्वादिति**। अंश्वादिषु राजन्शब्दपाठ एवाऽत्र ज्ञापको बोध्यः । अंशु, जन, राजन्, उष्ट्र, खेटक, अजिर, आर्द्रा, श्रवण, कृत्तिका, अर्ध, पुर । वृत् । **उपाद्द्व्य**। गौर, तैष, तैल, लेट, लोट, जिह्वा, कृष्ण, कन्या, गुध, कल्प, पाद । **वृत्। उपगौर इति**। अव्ययपूर्वपदस्वरः । बहुव्रीहावप्येवम् । **सोरव** । सोरुत्तरपदमन्तोदात्तं निन्दायां तत्पुरुषे इत्यर्थः । **पूजायामेवेति** । एवञ्च कर्मप्रवचनीयत्वेन गतित्वाऽभावात्थाथादिस्वरोऽत्र नास्ति । **निन्देति** । अनर्थे उपस्थिते यः सुखायमान आस्ते तं प्रतीदं वाक्यमसूयया प्रयुज्यते । **कुब्राह्मण इति** । 'नञ्कुनिपाताना'मिति ईषदर्थे चरितार्थम् । **विभाषोत्पु**। तत्पुरुषरूपेऽपि उत्पुच्छशब्दे यदुत्तरपदन्तदन्तोदात्तं वेत्यर्थः । '**उत्क्रान्तः पुच्छादिति** । अत्राऽव्ययपूर्वपदप्रकृतिस्वरः प्राप्तः । **यदात्विति** । केचित्त्वस्य लाक्षणिकत्वादत्र न ग्रहणम् । किंचाऽयमुत्पुच्छो न तत्पुरुषः, किं तु तदवयवकः, नापि तद्घटकः पुच्छशब्द उत्तरपदमित्याहुः । **मूर्धन्नित्यकृतेति** । केचित्तु "अत एव बहुव्रीहिग्रहणं चरितार्थम् । अन्यथा मूर्द्धस्वित्येव वदेत् । बहुव्रीहिभिन्नञ्च समासान्तविरहादेव वारयिष्यते । न च द्विदन्त इति बहुव्रीहौ वयोवाचकत्वाऽभावाद्दन्नादेशाऽभावे शसादौ 'पद्दन्' इति ददादेशे प्रवृत्त्यर्थं बहुव्रीहिग्रहणस्यावश्यकत्वेन समासान्तनिर्देशे गौरवम् । किं च समासान्तनिर्देशेऽत्र प्रवृत्तिर्न सुलभा । कृतसमासान्तसाहचर्येण दन्नादेशस्यैव ग्रहणापत्तेः । अत एव द्वयोर्दन्ता इति विग्रहे 'द्विदतः पश्ये'त्यादौ षष्ठीतत्पुरुषे न प्रवृत्तिरिति वाच्यम्, यथान्यासे हि पूर्वोत्तरसाहचर्येण विभक्त्यनिमित्तददादेशस्यैव ग्रहणात्, शसादिनिमित्तकस्य बहिरङ्गत्वेनाऽसिद्धत्वाच्च, भाष्योक्तप्रकृत्यन्तरत्वपक्षेऽत्र तदप्राप्तेश्च । एवञ्च बहुव्रीहिग्रहणमपि समासान्ता-

कल्याणमूर्धा । बहुव्रीहौ किम्? । द्वयोर्मूर्धा द्विमूर्धा । **सक्थं चाऽक्राऽन्तात्** ।६।२।१९८। गौरसक्थः । [गौरसक्थः । गौरसक्थः ] । श्लक्ष्णसक्थः । [श्लक्ष्णसक्थः] । अक्राऽन्तात्किम् ? । चक्रसक्थः । समासान्तस्य षचश्चित्त्वान्नित्यमेवान्तोदात्तत्वं भवति । **परादिश्छन्दसि बहुलम्** ।६।२।१९९। छन्दसि परस्य सक्थशब्दस्याऽऽदिरुदात्तो वा । अञ्जिसक्थमालभेत । अत्र वार्त्तिकम्-।* **परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते । पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं यतः ।** इति । **परादिः**-तुविजाता उरुक्षया । **परान्तः**-नि येन मुष्टिहत्यया । यस्त्रिचक्रः । **पूर्वान्तः**-विश्वायुर्धेहि । **इति समासस्वराः** ।

---

सु.]यस्य स तदेकदेशी=समासान्तः,तस्यभावस्तत्त्वं तस्मादिति स एवार्थः।तदेवं बहुव्रीहेः कार्यत्वात्तदेकदेशित्वाच्च समासान्तस्येति-यदा समासान्तः क्रियते तदाप्ययं विधिर्भवत्येव।**द्विमूर्ध इति**।'द्वित्रिभ्यां ष मूर्ध्नः' इति षः। **कल्याणमूर्धेति**। पूर्वपदप्रकृतिस्वर एवाऽत्र भवति । कल्याणशब्दो 'लघावन्ते' इत्यादिना मध्योदात्तः । **सक्थं च** । 'बहुव्रीहौ सक्थ्यक्ष्णो'रिति षजन्तः सक्थशब्द उत्तरपदमन्तोदात्तं वा स्यात् ,स चेत् 'क्र'शब्दान्तात्परो न भवति ।चित्त्वान्नित्यमन्तोदात्तत्वे प्राप्तेऽयं विकल्पः । **गौरसक्थ इति** । पक्षे पूर्वपदप्रकृतिस्वरः। 'शुक्लगौरयोरादि'रिति गौरस्याद्यन्तावुदात्तौ । तेऽनात्र त्रैस्वर्यम् । **श्लक्ष्णसक्थ इति** । 'कृत्यशूभ्यां क्स्नः' 'श्लिषेरच्चोपधायाः' इति श्लक्ष्णशब्दोऽन्तोदात्तः । **षचश्चित्त्वादिति** । एतेन चित्स्वरस्याऽपवादः प्राप्तविभाषेयमिति दर्शयति । **परादिश्छन्दसि** । परशब्देनाऽत्र सक्थशब्द एव, तस्यैव पूर्वसूत्रे सन्निहितत्वात्तदाह-**परस्य सक्थशब्दस्येति** । ननु तर्हि परग्रहणमनर्थकं, प्रकृतो हि सक्थशब्दोऽनुवर्तते । नैतदस्ति । बहुव्रीहेरपि प्रकृतत्वात्तस्याऽऽद्युदात्तत्वं शङ्क्येत । 'विभाषोत्पुच्छे'इत्यतो विभाषेति वर्तमाने बहुलग्रहणं बह्वर्थप्रदर्शनार्थम् । बहुलग्रहणस्याऽर्थं श्लोकेन दर्शयति-**परादिश्चेति** । **उरुक्षयेति** । उरूणां क्षयो निवास इति विग्रहः । 'क्षयो निवासे' इति क्षयशब्द आद्युदात्तः। 'समासस्ये'त्यन्तोदात्तं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्तत्वं प्राप्तं, तत्थाथादिस्वरेण बाधितम् । अतो बाहुलकेनोत्तरपदाद्युदात्तत्वम् । एतच्च 'क्षि निवासगत्योः' इति धातोर्बाहुलकादधिकरणे 'एर'जिति माधवमतेनोक्तम्।वस्तुतस्तु घप्रत्ययान्तः क्षयशब्द इति हरदत्तोक्तरीत्या थाथादिस्वरस्येहाऽप्राप्त्या कृदुत्तरपदप्रकृतिस्वरेणैव सिद्धम् । 'परादिश्चे'त्यस्योदाहरणं तु 'चोदयित्री सूनृतानां'मिति बोध्यम् । ऊन परिहाणे । चुरादिष्वदन्तः । णिच् । क्विप् । सुतरामूनयत्यप्रियमिति सूनृ [ तच्च ] तदृतं च सूनृतम् । 'अयस्मयादीनी'ति भत्वान्नलोपो न । **मुष्टिहत्ययेति** । मुष्ट्या हननं मुष्टिहत्या । 'हनस्त चे'ति सुबन्ते उपपदे क्यप् । कृदुत्तरपदप्रकृतिस्वरोऽत्र प्राप्तः । **त्रिचक्र इति**। बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरः प्राप्तः। **विश्वायुरिति** । विश्वमायुर्यस्मिन्निति बहुव्रीहिः। विश्वशब्दः क्वन्प्रत्ययान्तः पूर्वपदप्रकृतिस्वरेणाद्युदात्तः प्राप्तः।इति मौनि॰सुबोधिन्यां **समासस्वरप्रकरणम्**।

---

शे.]ऽनित्यत्वे ज्ञापक'मित्याहुः। **बहुव्रीहिकार्यत्वादिति** ।'अस्य स्वरस्ये'ति शेषः। **तदेकदेशत्वाच्चेति** । 'समासान्तस्ये'ति शेषः।समासान्तोदात्तत्वम्=एतत्सूत्रविहितं।**पक्षे भवत्येवेति**।अत्र च सूत्रे समासस्यैव कार्यित्वमिति सिद्धान्तः। **सक्थञ्चा** । 'बहुव्रीहौ सक्थि' इति षजन्तः सक्थशब्दोऽन्तोदात्तो वा स्यात् ,क्रशब्दान्तात्परश्चेन्न भवतीत्यर्थः।चित्त्वान्नित्यमन्तोदात्तत्वे प्राप्ते विकल्पोऽयम्। 'नञ्दुःसुभ्यः' इत्यजन्तस्तु न गृह्यते, व्याख्यानादित्याहुः। पक्षे पूर्वपदप्रकृतिस्वरः। 'शुक्लगौरयोरादि'रिति गौरः पर्यायेणाऽऽद्यन्तोदात्तः । **परादिश्छन्दसि** । इदञ्च समासमात्रे । परादिश्चेत्यस्योदाहरणम्-**उरुक्षया इति** । उरूणां=बहूनां क्षयावित्यर्थः । क्षयशब्दः 'क्षयो निवासे' इत्याद्युदात्तः। 'समासस्ये'त्यन्तोदात्तत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्तत्वं प्राप्तं, तत् थाथादिस्वरेण बाधितमतो बाहुलकेनोत्तरपदाद्युदात्तत्वमिति वेदभाष्ये स्थितम्। इदञ्च 'क्षि निवासगत्यो'रित्यतो बाहुलकादधिकरणे एरजन्तः क्षयशब्द' इत्यभिप्रायेण।यदि तु क्षयशब्दो घाऽन्तस्तदा थाथादिस्वराऽप्राप्त्या कृदुत्तरपदप्रकृतिस्वरेणैवेदं सिद्धम् । अस्योदाहरणन्तु 'चोदयित्री सूनृताना'मिति । सूपूर्वादूनयतेः क्विप् । सुतरामूनयत्यप्रियमिति **सूनृ**=प्रियं, तच्च तदृतञ्चेति सूनृतम् । 'अयस्मयादीनी'ति भत्वान्नलोपो न । परान्तोदाहरणं-**मुष्टिहत्ययेति** । मुष्ट्या हननं मुष्टिहत्या । 'हनस्त चे'ति क्यप् । कृदुत्तरपदप्रकृतिस्वरोऽत्र प्राप्तः । **त्रिचक्रे**-बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरे प्राप्ते पराऽन्त उदात्तः। पूर्वान्तत्वे-**विश्वायुरिति** । विश्वमायुर्यस्मिन्धने इति बहुव्रीहिरयम् । विश्वशब्दः क्वन्नन्तत्वादाद्युदात्तः।तस्य पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं प्राप्तम्। 'व्यत्ययो बहुल'मित्यनेनैव सिद्धे'परादि'रिति सूत्रं,'त्रिचक्रादीनाञ्छंदस्यन्तोदात्तत्व'मिति वार्तिकं च न कार्यमित्यर्थः।यद्वा वाग्रहणेऽनुवर्त्तमाने बहुलग्रहणमेतदर्थलाभार्थं कृतमित्यर्थः। यतो व्यत्ययो बहुलपदार्थ इति भावः । बहुलग्रहणादेव 'पुरः सो अस्तु' इत्यादौ शिट्स्वराऽप्रवृत्तिः,'अस्मन्वन्तं यदनस्था बिभर्ती'त्यत्र 'भीह्री'त्यस्य च स्वरस्याऽप्रवृत्तिरित्याद्यूह्यम्।**इति समासस्वराः**।

## अथ तिङन्तस्वराः ।

**तिङो गोत्रादीनि कुत्सनाऽऽभीक्ष्ण्ययोः** ।८।१।२७। तिङन्तात्पदाद्गोत्रादीन्यनुदात्तान्येतयोः । पचति गोत्रम् । पचतिपचति गोत्रम् । एवं प्रवचनप्रहसनप्रकथनप्रत्यायनादयः । कुत्सनाऽऽभीक्ष्ण्यग्रहणं पाठविशेषणम् । तेनाऽन्यत्रापि गोत्रादिग्रहणे कुत्सनादावेव कार्यं ज्ञेयम् । गोत्रादीनि किम् ? । पचति पापम् । कुत्सेति किम् ?। खनति गोत्रं-समेत्य कूपम् । **तिङ्ङतिङः** ।८।१।२८। अतिङन्तात्पदात्परं तिङन्तं निहन्यते । अग्निमी॑ळे । **न लुट्** ।८।१।२९। लुडन्तं न निहन्यते। श्वःकर्ता। [श्वःकर्तारौ]। **निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चणकच्चिद्यत्रयुक्तम्** ।८।१।३०। एतैर्निपातैर्युक्तं न निहन्यते । यद॒ग्ने स्याम॒हं त्वम् । युवा यदी॑ कृथः ।

---

सु.] **तिङो । पचति गोत्रमिति । गोत्रं**=स्वकुलं पीडयतीत्यर्थः । एवं हि कुत्सा भवति । आभीक्ष्ण्ये उदाहरणमाह-**पचतिपचति गोत्रमिति** । अनेकार्थत्वात्पचिः करोत्यर्थे वर्तते । विवाहादौ गोत्रं पुनः पुनः सुखाकरोतीत्यर्थः। 'नित्यवीप्सयो'रिति द्वित्वम् । ननु किं कुत्सनाभीक्ष्ण्यग्रहणं गोत्रादीनां पाठविशेषणम् , 'एतयोरर्थयोर्गोत्रादीनि भवन्ति,तानि च तिङः पराण्यनुदात्तानि भवन्ति,आहोस्विदनुदात्तविशेषणं-तिङः पराणि गोत्रादीन्यनुदात्तानि भवन्त्येतयोरर्थयोरिति ?। अस्मिन्विचारे निर्णयमाह-**कुत्सनाभीक्ष्ण्यग्रहणमिति** । अयं चाऽर्थो योगविभागाल्लभ्यते । **'तिङो गोत्रादीनी'** त्येको योगोऽनुदात्तविधानार्थः । **'कुत्सनाभीक्ष्ण्यो'रिति** द्वितीयो योगः । गोत्रादीनीत्येव । परिभाषेयम् । इह शास्त्रे गोत्रादीनि कुत्सनाभीक्ष्ण्यविषयाण्येव ग्राह्याणि । तेन किं सिद्धं भवतीत्यत आह-**तेनेति । अन्यत्रापीति** । 'चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगते'रित्यत्र । **पचति पापमिति**। 'पाप'मिति क्रियाविशेषणम् । **खनति गोत्रं समेत्य कूपमिति** । गोत्रं कुलं समुदितं भूत्वा कूपं खनतीत्यर्थः । **तिङः** । 'अनुदात्तं सर्व'मिति वर्तते । तदाह-**निहन्यत इति** । 'सर्वानुदात्तो निघात' इति वैयाकरणानां व्यवहारः। अतिङ इति किं ?। पचति भवति । एककर्तृका पचिक्रिया भवतीत्यर्थः । नन्वतिङ्ग्रहणं व्यर्थं 'समानवाक्ये निघातयुष्मदस्मदादेशाः' इत्युक्तत्वात् , एकस्मिंश्च वाक्ये तिङन्तद्वयाऽभावादिति चेत्सत्यम् । सूत्रकारेण समानवाक्याधिकारो न कृत इत्यतिङ्ग्रहणमकारि । भाष्ये तु अतिङ्ग्रहणं प्रत्याख्यातम् । **न लुट्** । इत आरभ्य निषेधसूत्राणि । **श्वःकर्ता । श्वःकर्ताराविति** । तासेः परस्य लसार्वधातुकस्याऽनुदात्तत्वे कृते तासिरुदात्तः। एकवचने टिलोपे कृते उदात्तनिवृत्तिस्वरेण डा उदात्तः । **निपातैः** । यदित्यादीनां यत्रेत्यन्तानां द्वन्द्वे तृतीयायाः सौत्रो लुक् ,न तु युक्तशब्देन समासः,निपातैरिति विशेषणस्याऽनन्वयापत्तेः।तदाह-**एतैर्निपातैरिति** । यत् यदि हन्त कुवित् नेत् चेत् चण् कच्चित् यत्र-एतैरित्यर्थः। 'यत्-यदार्थे च हेतौ च विचारे

---

शे.] **अथ तिङन्तस्वराः। पचति गोत्रमिति । गोत्रं**=स्वकुलं पीडयतीत्यर्थः । एवं हि कुत्सा भवति । **पचतिपचति गोत्रमिति** । अनेकार्थत्वात्करोत्यर्थे पचिः । विवाहादौ गोत्रं पुनः पुनः सुखाकरोतीत्यर्थः । **पाठविशेषणमिति**।योगविभागः कार्यः।'कुत्सनाऽऽभीक्ष्ण्ययो'रिति।'गोत्रादिनी'ति वर्त्तते।-परिभाषेयम्।यानि कुत्सनाभीक्ष्ण्यविषयाणि तान्येवात्र शास्त्रे गोत्रादीनीत्यर्थः । यत्र गोत्रादिपदघटितवाक्येन कस्यचित् कुत्सा बोध्यते क्रियागतमाभीक्ष्ण्यं वा, तानीति यावत् । **अन्यत्रापीति** । 'चनचिदिवे'त्यादौ । गोत्र, ब्रुव, प्रवचन, प्रहसन, प्रयतन, पवनं, यजनं, प्रकथन, प्रत्यायन, प्रचक्षण, विचक्षण, अवचक्षण,स्वाध्याय, भूयिष्ठ। वा नाम। नामेत्येतद्वा निहन्यते इत्यर्थोऽस्य। वृत्। तिङः किं ?। कुत्सितङ्गोत्रम् । **खनतीति**। गोत्रं समेत्य कूपङ्खनतीत्यर्थः।**तिङ्ङतिङः**। 'पदस्य' 'पदात्' अनुदात्तं सर्वमपादादा'वित्याधिकारादत्र प्रकरणे निहन्यते=सर्वानुदात्तं क्रियते इत्यर्थः । यथाऽत्र सर्वस्यानुदात्तता तथा निरूपितं युष्मदस्मत्प्रकरणे । 'उदात्तस्वरितगुणविशिष्टमेव निहन्यते नान्य'दिति 'स्वरितो वाऽनुदात्ते' इति सूत्रस्थभाष्यस्वरसः । अतिङ इति किं ?। पचति भवति । पाको भवतीत्यर्थः । वस्तुतोऽतिङ्ग्रहणं व्यर्थम् । समानवाक्याधिकारस्य वार्त्तिकोक्तस्यावश्यकत्वात् । 'एकतिङ् हि तत्र वाक्य'मिति भाष्ये स्पष्टम् । अपादादौ किं ? । तन्वा वाजेषु वाजिनं वाजयामः शतक्रतो । **निपातैर्यद्यदि** । यदादियत्रान्तानां द्वन्द्वे तृतीयायाः सौत्रो लुक् , न तु युक्तशब्देन समासः, निपातैरिति विशेषणस्याऽनन्वयापत्तेः । यदादयो निपातत्वादाद्युदात्ताः। सर्वनाम्नो यच्छब्दस्य न तु ग्रहणं, यत्रयदोः पृथग्ग्रहणात् । यद्यदार्थे च हेतौ च, विचारे **यदिचेच्चणः। हन्त** हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः । **कच्चित्**प्रश्ने, निषेधे **नेत्**, प्रशंसायां **कुवित्**स्मृतः । नेन्निषेधे, यत्रेत्याधारे । हन्त करोति । 'हन्ताऽहं पृथिवीमिमां निदधानि इवे हवा'-इत्यादौ दधानीत्यादेर्निघातश्छान्दसः। एतेन 'हन्तो नु किमाससे' इत्यादिव्याख्यातम्। हन्तो इत्यखण्डो वा निपातो बोध्यः । तथैव

कुविदङ्ग आसन्। अधि त्विमिश्चकृमा कच्चित्। पुत्रासो यत्र पितरो भवन्ति। **नह प्रत्यारम्भे**।८।१।३१। नहे-त्यनेन युक्तं तिङन्तं नाऽनुदात्तम्। प्रतिषेधयुक्त आरम्भः = प्रत्यारम्भः। नह भोक्ष्यसे। प्रत्यारम्भे किम्?। नह वै तस्मिँल्लोके दक्षिणमिच्छन्ति। **सत्यं प्रश्ने**।८।१।३२। सत्ययुक्तं तिङन्तं नाऽनुदात्तं प्रश्ने। सत्यं भोक्ष्यसे। प्रश्ने किम्?। सत्यमिद्वा उ तं वयमिन्द्रं स्तवाम। **अङ्गाऽप्रातिलोम्ये**।८।१।३३। अङ्गेत्यनेन युक्तं तिङन्तं नाऽनुदात्तम्। अङ्ग कुरु। अप्रातिलोम्ये किम्?। अङ्ग कूजसि वृषल! इदानीं ज्ञास्यसि जाल्म!। अनभिप्रेत-मसौ कुर्वन्प्रतिलोमो भवति। **हि च**।८।१।३४। हियुक्तं तिङन्तं नाऽनुदात्तम्। आ हि ष्मा याति। आ हि रुहन्तम्। **छन्दस्यनेकमपि साकाङ्क्षम्**।८।१।३५। 'ही'त्यनेन युक्तं साकाङ्क्षमनेकमपि नाऽनुदात्तम्। अनृतं

सु.]यदि चेच्चणः।हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः।कच्चित्प्रश्ने नेच्छिषेधे प्रशंसायां कुविस्स्मृतम्।यत्रेत्याधारे। तत्र मूले केचिदुदाहृताः। अन्येऽप्यूह्याः। तत्र युक्तग्रहणं साक्षात्संबन्धप्रतिपादनार्थम्। **यदग्ने स्यामिति**। स्यामिति अस्ते-र्लिङि रूपम्। **चकृमा कच्चिदिति**। 'चकृमे'ति लिट्। प्रत्ययस्वरेणाऽन्तोदात्तम्। कच्चिदयं निपातसमुदायः, पदकाले कद्-चिदिति विच्छिद्य पाठात्। निपातैः किम्। यत्कूजति शकटम्। एतीति यत्। इणः शतरि रूपम् 'इणो य'णिति यण्। ननु प्रतिपदोक्तत्वाद्यदादिभिः साहचर्याच्च निपातस्यैव यच्छब्दस्य ग्रहणं स्यादिति चेत्सत्यम्। एतदेव ज्ञापयति-'अस्मि-न्प्रकरणे नेदमुभयं व्यवस्थापक'मिति। तेन 'यावद्यथाभ्या'मित्यत्र 'यत्तदेतेभ्यः परिमाणे वतु'बिति व्युत्पादितस्याऽपि लाक्षणिकस्याऽनिपातस्यापि ग्रहणं भवति।'यावत् स्तोतृभ्यो ऽरदो गृणानाः' इति।अत्राऽरद इत्यद्स्वरेणाद्युदात्तम्।युक्तग्रहणं किम्?।अन्यान्विते मा भूत्। 'यत्र क्व च ते मनो दक्षं दधस उत्तरम्'। इह यत्रेत्यस्योत्तरमित्यनेन साक्षात्संबन्धः।दध धारणे। अनुदात्तेत्। **नह प्रत्या**। नहशब्दो निपातसमुदायो निषेधे वर्तते। **नह भोक्ष्यस इति**। अदुप-देशात्परत्वात्स इत्यस्य निघातः। स्यप्रत्ययस्वरेण मध्योदात्तं पदम्। पूर्वं भुङ्क्ष्वेत्युक्ते पुनः क्रोधेनोपहासेन वा पुनः पुनः प्रतिषेधयुक्तं पृच्छति-भोजनं न करिष्यसि?, स एवमुच्यते। **नह वै तस्मिन्निति**। तस्मिन्शब्दः फिट्स्वरेणाद्युदात्तः। लोकशब्दः पचाद्यजन्तत्वादन्तोदात्तः।दक्षिणशब्दः 'स्वाङ्गशिटामदन्ताना'मिति शिट्त्वादाद्युदात्तः।**सत्यं भोक्ष्यस इति**। इदं मध्योदात्तम्। **अङ्गा**।प्रातिलोम्यं प्रतिकूलकारित्वं, ततोऽन्यदभिमतकारित्वमप्रातिलोम्यम्।एवं चानुलोम्य इति वक्तव्यम्। अङ्गशब्द उदाहरणेऽनुज्ञायां, प्रत्युदाहरणे त्वमर्षे।**अङ्ग कुर्विति**। करोतेर्लोण्मध्यमपुरुषैकवचनं सिप्। तस्य 'सेर्ह्यपिच्चे'ति हिरादेशः।'तनादिकृञ्भ्य उः' 'सार्वधातुके' इति करोतेर्गुणः।'अत उत्सार्वधातुके' 'उतश्च प्रत्ययादसंयोगपूर्वा'दिति हेर्लुक्। कुर्वित्युप्रत्ययस्वरेणाऽन्तोदात्तम्। **हि च**। अत्राप्यप्रातिलोम्य इति संबध्यते। **आ हि ष्मेति**। 'स्म'शब्दो निपातो-ऽपि चादित्वादनुदात्तः। दीर्घत्वं षत्वं च छान्दसम्। प्रातिलोम्ये तु-हि कूज वृषल।उदाहरणे हिशब्दोऽवधारणे हेतौ वा। स च प्रत्युदाहरणे त्वमर्षे। **छन्दस्य**। **अनेकमपीति**। अपिशब्दादेकम्। तत्राऽनेकमुदाहरति-**अनृतं हीति**।

शे.]पदकारैः पाठात्। 'नेदेवमायुनजन्नत्र देवाः'।युनजन्निति युजेर्लेटि रूपम्।अन्यश्चेन्नाभिगच्छति। अत्र नवाम्यां विच्छिद्य इच्छब्दस्य पदकाले पाठान्निपातसमुदायावेतौ। **चणिति** चेदर्थे णित्। अन्यत्र त्वणित्। इन्द्रश्च मृळयाति नः। इन्द्रश्चेदस्मान् सुखयेदित्यर्थः। **कच्चिदिति** निपातसमुदायः प्रश्ने। यथा-चकृमा कच्चिदिति। यद्यप्यत्र एतैरेव परभूतैर्योगे नियमो नाऽन्यैरित्यर्थक-'यद्धितुपर'मिति नियमान्निषेधो न प्राप्नोति, तथापि छान्दसत्वेनाऽत्र नियमाऽप्रवृत्तिरित्याहुः। निपातैः किं?। यत् कूजति शकटम्। इणः शतरि इणो यणि रूपम्। ननु प्रतिपदोक्तत्वात्, यथादिभिर्निपातैः साह-चर्याच्च निपात एव ग्रहीष्यते?। सत्यम्। अत्र प्रकरणे क्वचिन्न्यायाऽप्रवृत्तिज्ञापनार्थत्वात्। तेन 'यावद्यथाभ्या'मिति सूत्रे वत्वन्तस्याऽव्ययस्य च यावच्छब्दस्य ग्रहणमिति स्पष्टमाकरे। युक्तग्रहणं किम्?। अन्यत्र साक्षादन्वितैरेतैः परम्परा-संबन्धे मा भूदिति। यथा-'यत्र क्व च ते मनो दक्षं दधसे उत्तरम्'। यत्रेत्यस्योत्तरमित्यनेन साक्षात् संबन्धः। दध धारणे। अनुदात्तेत्। **नहप्र**। नहेति निपातसमुदायो निषेधे वर्तते। **प्रतिषेधयुक्त इति**। पूर्वं भुङ्क्ष्वेत्युक्ते कर्तव्यतयोप-न्यस्तस्य भोजनादेरवज्ञानेऽवज्ञातुरुपालिप्सया पुनः क्रोधेनोपहासेन वा यत्र प्रतिषेधयुक्तं पृच्छ्यते स प्रत्यारम्भ इत्यर्थः। **भोक्ष्यसे इति**। स्यस्वरेण मध्योदात्तम्। अदुपदेशात्परत्वात् 'से' इत्यस्य निघातः। **सत्यं भोक्ष्यसे इति**। सत्य-शब्दः 'सत्यादशपथे' इत्यन्तोदात्तो निपात्यत इत्याहुः। **अङ्गाप्रा**। अङ्गेति लुप्ततृतीयाकम्। अप्रातिलोम्यमानुकूल्यम्। अङ्गेति आमन्त्रितत्वादाद्युदात्तम्। 'अन्तोदात्तमिदमव्ययम्,'इन्द्रो अङ्गे'त्यादौ तथादर्शना'दित्यन्ये। **अङ्ग कूजतीति**। अत्राऽङ्गेत्यमर्षे, कूजतीत्याद्युदात्तम्। **हि च**। आनुकूल्ये इत्येव। नेह 'हि कूज वृषल'। अत्राऽमर्षे हिशब्दः। उदाहरणेऽवधारणे।स्मशब्दो निपातत्वादाद्युदात्तः।छान्दसे दीर्घत्वषत्वे।छन्दस्यनेकमपि।अपिना एकमपि। **अनृतं हीति**।

हि मत्तो वदति पाप्मा चैनं युनाति । तिङन्तद्वयमपि न निहन्यते । **यावद्यथाभ्याम्** ।८।१।३६। आभ्यां युक्तं तिङन्तं नाऽनुदात्तम् । यथा चित्कण्वमावतम् । **पूजायां नाऽनन्तरम्** ।८।१।३७। यावद्यथाभ्यां युक्तमनन्तरं तिङन्तं पूजायां नाऽनुदात्तम् । यावत्पचति शोभनम् । यथा पचति शोभनम् । पूजायां किम् ? । यावद्भुङ्क्ते । अनन्तरं किम् ? । यावद्देवदत्तः पचति शोभनम् । पूर्वेणाऽत्र निघातः प्रतिषिध्यते । **उपसर्गव्यपेतं च** ।८।१।३८। पूर्वेणाऽनन्तरमित्युक्तम् , उपसर्गव्यवधानार्थं वचनम् । यावत्प्रपचति शोभनम् । अनन्तरमित्येव । यावद्देवदत्तः प्रपचति शोभनम् । **तुपश्यपश्यताऽहैः पूजायाम्** ।८।१।३९। एभिर्युक्तं तिङन्तं न निहन्यते पूजायाम् । आदह स्वधामनु पुनर्गर्भत्वमेरिरे । **अहो च** ।८।१।४०। एतद्योगे नाऽनुदात्तं पूजायाम् । अहो देवदत्तः पचति शोभनम् । **शेषे विभाषा** ।८।१।४१। अहो इत्यनेन युक्तं तिङन्तं वाऽनुदात्तम् अपूजायाम् । अहो कटं करिष्यति । अहो कटं करिष्यति । **पुरा च परीप्सायाम्** ।८।१।४२। पुरेत्यनेन युक्तं

---

सु.]ह्रियेत इत्यर्थे। यस्मादयं मत्तोऽनृतं वदति ततः पाप्मा = पापमेनं युनाति = अनृतवदनदोषेण युज्यत इति तात्पर्यार्थः। एकस्योदाहरणम्–'अग्निर्हि पूर्वमुदजयत्तमिन्द्रोऽनूदजयत्' । अत्र एकमजयदित्याद्युदात्तम् । परं निहतम् । अत्र हेतुहेतुमद्भावस्य द्योतको ह्रिरित्यनेकमपि तिङन्तं हियुक्तं भवति । अत्र पूर्वेण सर्वस्य निघातप्रतिषेधे प्राप्ते क्वचिदनेकस्य क्वचिदेकस्य यथा स्यादिति वचनम्। तत्र छन्दसि दृष्टानुविधानाद्यथाप्रयोगं व्यवस्था। **यावद्यथाभ्याम्**।इयं तृतीया, न पञ्चमीत्याह–**आभ्यां युक्तमिति** । तेन परभूतयोरपि भवति । देवदत्तः पचति यावदिति। यावच्छब्दो निपातश्चाऽनिपातश्च गृह्यते 'निपातैर्यद्यदी'त्यत्र ज्ञापितत्वात् । आद्यः साकल्ये, द्वितीयः परिमाणोपाधिको वतुप्रत्ययान्तः । यथाशब्दो योग्यतादिषु । **आवतमिति** । अवतेर्लोण्मध्यमपुरुषद्विवचनम् । यावच्छब्दोदाहरणं तु–यावद्भुङ्क्ते देवदत्तः । पचति यावदिति । 'यावत्स्तोतृभ्यो ऽरदो गृणानाः' इति । रद विलेखने लङि सिपि अट् । अट्स्वरेणाऽऽद्युदात्तः । **पूजायां नानुदात्तमिति** । अनुदात्त एव भवतीत्यर्थः । **यावद्देवदत्त इति** । पूर्वेणाऽत्र निघातप्रतिषेधः। 'व्यवाये यदि भवति उपसर्गेणैवे'ति नियमादत्राऽतिप्रसङ्गाऽभावेऽनन्तरग्रहणं शक्यमकर्तुम् । **उपसर्ग** । यावद्यथाभ्यां युक्तमनन्तरमुपसर्गेण व्यवहितं तिङन्तं पूजायां विषये नाऽनुदात्तं न स्यात्। [ किन्त्वनुदात्तमेव स्यात् ]। **अनन्तरमित्येवेति** । तच्चानन्तर्यं सोपसर्गस्य, न तिङन्तमात्रस्य । **प्रपचतीति** । प्रशब्द आद्युदात्तः। **तुपश्य।** तुप्रभृतीनि पूजाविषयाणि । उदाहरणानि–तु माणवको भुङ्क्ते, पश्य माणवको भुङ्क्ते । पश्यत माणवको भुङ्क्ते । माणवकस्तु भुङ्क्त इति आश्चर्ये तुशब्द इति भोजनस्य पूजा गम्यते । एवमन्यत्रापि । पूजायां किम् ?। पश्य मृगो धावति । तत्त्वकथनमेतत् । ननु 'पूजायां नानन्तर'मित्यतः पूजायामिति वर्तमाने पूजाग्रहणं व्यर्थमिति चेन्मैवम् । पूजाग्रहणं निघातप्रतिषेधार्थम् । तद्धि पूजाग्रहणं प्रतिषेधस्य प्रतिषेधेन संबद्धम्। ततश्च तदनुवृत्ताविहाऽपि 'न लु'डित्यादिके विषये प्रतिषेधस्य प्रतिषेधः स्यात्, मा भूदेवं, निघातस्यैव यथा स्यादित्येदर्थं पूजाग्रहणम्। किं चाऽनन्तरमित्येवं तदभूत्, इह त्वविशेषेणेष्यते। **अहो च** । **अहो देवदत्तः पचति शोभनमि**त्युदाहरम्।पृथग्योगकरणमुत्तरार्थम्। उत्तरो योगोऽहोयोग एव यथा स्यात्तुप्रभृतिभिर्योगे मा भूदिति । **शेषे** । पूर्वं पूजायामित्युक्तत्वात्ततोऽन्यः शेष इत्याह–**अपूजायामिति** । **अहो कटं करिष्यतीति** । पक्षे स्वप्रत्ययस्वरः । अनाश्चर्यभूतमेव वस्तु असूयया आश्चर्यवत्प्रतिपाद्यते, न पूजा । शेषग्रहणं स्पष्टार्थम् ,

---

शे.]ह्रियेत इत्यर्थे।यतोऽयं मत्तोऽनृतं वदति अतः पाप्मा=पापं चैनं न युनाति=न व्याप्नोतीत्यर्थः।अनृतवदनदोषेण न युज्यत इत्यर्थः।युञ् बन्धने इत्यस्य रूपं–युनातीति । अग्निर्हि पूर्वमुदजयत्तमिन्द्रोऽनूदजयत्। अत्रैकमाद्युदात्तमपरं निहतम् । अत्र हेतुहेतुमद्भावद्योतको ह्रिरित्यनेकमपि तिङन्तं हियुक्तम्।तत्र पूर्वेण सर्वस्य निघातप्रतिषेधे प्राप्ते क्वचिदेकस्य, क्वचिदनेकस्येत्येतदर्थमिदम् । छन्दसि दृष्टानुविधानाद्यथा प्रयोगं व्यवस्था। **यावद्यथा**।यावदिति निपाताऽनिपातयोरपि ग्रहणमित्युक्तम्। आद्यः साकल्ये, द्वितीयः परिमाणोपाधिको वतुबन्तः । यथा–योग्यतादिषु । भ्यामिति तृतीया । **तु पश्य** । पूजायामिति वर्त्तमाने पुनः पूजाग्रहणमनन्तरग्रहणस्य, निघातनिषेधस्य चानुवृत्तिनिवृत्त्यर्थम् । निषेधाऽनुवृत्तौ हि 'निपातैर्यद्यदी'त्यस्य प्रतिषेधः सम्भाव्येत। पूजायां किं?।पश्य मृगो धावति। तत्त्वकथनमेतत्। अहेत्यस्योदाहरणमाह–**आदहेति**। त्वादीनान्तु 'तु माणवको भुङ्क्ते शोभन'मित्याद्यूह्यम्।**अहो च**। पृथग्योगकरणमुत्तरार्थम्। अहो देवदत्तः करोति शोभनम्। अत्रापि पूजायामित्येव । **शेषे विभाषा** । पूर्वं पूजायामित्युक्तेरपूजा शेषः । **अहो कटमिति**। पक्षे स्वप्रत्ययस्वरः। अनाश्चर्यभूतमेव वस्तु असूयता आश्चर्यवत्प्रतिपाद्यते, न पूजा। शेषग्रहणं स्पष्टार्थम् । पूर्वत्र चानुकृष्टत्वादेव पूजायामित्यस्य निवृत्तेः, योगविभागसामर्थ्याच्च । तेन पूजायां नित्यं, तदभावे विकल्प इति व्यवस्थोपपत्तेः। **पुरा च । परीप्सा-**

वाऽनुदात्तं त्वरायाम् । अधी॑ष्व मा॒णव॒क पु॒रा॑ विद्यो॑तते वि॒द्युत्॥ [ अधीष्व माणवक! पुरा विद्योतते विद्युत् ]। निकटाऽऽगामिन्यत्र पुराशब्दः । परीप्सायां किम् ? । न तेन स्म पुराऽधीयते । चिराऽतीतेऽत्र पुरा । नन्वित्यनुज्ञैषणायाम् ।८।१।४३। नन्वित्यनेन युक्तं तिङन्तं नाऽनुदात्तमनुज्ञाप्रार्थनायाम् । ननु ग॒च्छा॑मि भोः ? । अनुजानीहि मां गच्छन्तमित्यर्थः । अन्विति किम् ?। अकार्षीः कटं त्वम् ?।ननु क॒रो॒मि । पृष्टप्रतिवचनमेतत् । क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् ।८।१।४४। क्रियाप्रश्ने वर्तमानेन किंशब्देन युक्तं तिङन्तं नाऽनुदात्तम् । किं॒ द्वि॒जः प॒च॒त्याहो॑ स्विद्ग॒च्छ॑ति ? । क्रियेति किम् ? । साधनप्रश्ने मा भूत् । किं॒ भ॒क्तं॑ प॒च॒त्य॒पूपान्वा ? । प्रश्ने किं ? । किं॒ प॒ठ॒ति॒ [2] । क्षेपोऽयम् । अनुपसर्गं किम् ? । किं॒ प्र॒प॒च॒ति उत प्रकरोति ? । अप्रतिषिद्धं किम् ? । किं॒ द्वि॒जो न प॒च॒ति॒।लोपे विभाषा ८।१।४५। किमोऽप्रयोगे उक्तं वा।देवद॒त्तः प॒च॒त्याहो॑स्वित्पठति?। देवद॒त्तः

---

सु.]योगविभागसामर्थ्यादेव पूर्वप्रकृतेषु किञ्चिन्नानुवर्त्तते इति संज्ञायां तत्र चानुकृष्टत्वात्पूजायामित्येतन्निवर्त्तिष्यत इति भावः। पुरा । पुरा विद्योतते विद्युदिति । 'यावत्पुरे'ति भविष्यति लट् । विद्युद्विद्योतनादावध्ययनं धर्मशास्त्रप्रतिषिद्धम् , अतस्तदुपन्यासेन त्वरितमधीष्वेति गम्यते। पक्षे[वि [2] ]द्योतते इति धातुस्वरेणाऽऽद्युदात्तम्। 'तास्यनुदात्ते'दिति लसार्वधातुकनिघातः । न तेन स्म पुराऽधीयत इति । 'लट् स्मे' इति भूते लट् । अत्र भूतस्याध्ययनस्य चिरकालप्रवृत्तत्वं गम्यते, न त्वरा । नन्वि । किंचित्कर्तुं स्वयमेवोद्यतस्य 'एवं क्रियता'मित्यभ्युपगमोऽनुज्ञा । तस्या एषणा=प्रार्थनाऽनुज्ञैषणा । अनुज्ञाप्रार्थनेत्यर्थः। तदाह–अनुज्ञाप्रार्थनायामिति । उदाहरणे वर्तमानसामीप्ये लट्। प्रत्युदाहरणे 'ननौ पृष्टप्रतिवचने' इति भूते लट् । अन्विति किमिति । अनुज्ञैषणायामिति किमित्यर्थः । 'अन्नाऽप्रातिलोम्ये' इत्यादिव दितिकरणं विनापि सिद्धे एकनिपातोऽयमिति प्रदर्शनार्थमितिशब्दः । अन्यथा द्वयोर्निपातयोर्ग्रहणं संभाव्येत । किं क्रिया । अप्रतिषिद्धमिति । अप्रतिषिद्धार्थमित्यर्थः । किं द्विजः पचति अहोस्विद्गच्छतीति । आहो॑स्विदेको निपात आद्युदात्तः । अत्र केचित्–'पूर्वं किंयुक्तं, तन्न निहन्यते, उत्तरं तु न किंयुक्तमिति निहन्यत एवे'ति । अन्ये तु–'यद्यप्येकस्याख्यातस्य समीपे किंशब्दः श्रूयते,तथापि सर्वस्य संशयविषयस्य तेन योग इति उभयत्रापि निषेधेन भाव्य'मिति । अत्र हरदत्तः–ये त्वाहुः–'पूर्वं किंयुक्त'मिति, ते मन्यन्ते–'अस्तु द्वयोः संशयविषयत्वं, किंशब्देन तु श्रुतक्रियाविषय एव प्रश्नो द्योत्यते । क्रियान्तरविषयस्तु प्रश्न 'आहोस्वि'दित्यनेन । क्रियाप्रश्न इति चोच्यते, तस्मात्तस्यैव निघातप्रतिषेध इति । प्रश्ने किम् ?। किं देवदत्तः पठति । क्षेपे किंशब्दः । क्वचित्पुस्तके 'किमधीते' इति प्रत्युदाहरणं दृश्यते, तन्नादर्तव्यं, सोपसृष्टत्वात् । लोपे । 'किंक्रियाप्रश्ने'इति सूत्रमनुवर्तते । तथा चाऽयमर्थः–क्रियाप्रश्ने यः किंशब्दस्तस्य लोपे तदर्थेन युक्तमनुपसर्गमप्रतिषिद्धं च तिङन्तं वाऽनुदात्तं स्यात्।सूत्रेण किमो लोपस्याऽविधानादर्थप्रकरणादिना गम्यमानार्थत्वादप्रयोग एव लोपो विवक्षितः।[देव]दत्तः पचति आहोस्वित्पठतीति।अत्र पक्षे निघातः, पक्षे धातुस्वरेणाऽऽद्युदात्तता। किंशब्दाऽप्रयोगादप्राप्तविभाषेयम्। यद्वा–तस्याऽप्रयोगेऽपि अर्थेन योगात्प्राप्तविभाषा। पूर्वसूत्रस्थानि प्रत्यु·

---

शे.]त्वरा । निकटेति।विद्योतनादावध्ययनं प्रतिषिद्धमतस्तदुपन्यासेन त्वरितमधीष्वेति गम्यते। पक्षे द्यो॑तने इत्याद्युदात्तः। पुराशब्दोऽत्र निपात एव, पूर्वोत्तरसाहचर्यात् । परीप्सेत्यस्य प्रत्युदाहरणमाह–न तेन स्मेति । 'लट् स्मे' इति भूते लट् । भूतस्याऽध्ययनस्य चिरकालप्रवृत्तत्वं गम्यते, न त्वरा । नन्वित्यनुज्ञै । किंचित्कर्तुमुद्यतस्यैवंक्रियतामित्यभ्युपगमाऽनुज्ञा, तस्याः प्रार्थना–अनुज्ञैषणा। ननु गच्छामि भोरित्युदाहरणे वर्तमानसामीप्ये लट् । गमनं प्रति मामाज्ञापयेति गम्यते । पृष्टप्रतिवचनाऽभावात् 'ननौ पृष्टप्रतिवचने' इत्यस्य न प्राप्तिः । नन्वित्यस्यैकनिपातत्वं ज्ञापयितुमिति शब्दः सूत्रे । किङ्क्रियाप्रश्नेऽनुप । 'किं'मिति लुप्ततृतीयान्तम् । क्रियाप्रश्न इति किमो विशेषणम् , अनुपसर्गमित्यादि तिङो विशेषणम् , अप्रतिषिद्धमित्यप्रतिषिद्धार्थकं तिङन्तविशेषणम्। 'किं देवदत्तः पचति आहोस्वित्पठती'त्यादावुभयोः संशयविषयत्वादुभयोरपि किमा युक्तत्वेन निघातनिषेध इति केचित् । हरदत्तस्तूभयोः संशयविषयत्वेऽपि किंशब्देन स्वसन्निहितक्रियाविषय एव प्रश्नो द्योत्यते, क्रियान्तरविषयस्त्वाहोस्विदित्यनेन,तस्मात्तस्यैव निघातप्रतिषेध इत्याह।क्रियाप्रश्ने किं?।कारकप्रश्ने मा भूत्–किं भक्तं पचति आहोस्विदपूपानिति।'प्रश्ने किं?किंपठती'ति पाठः।'किमधीते' इत्यपपाठः, उपसृष्टत्वात् । किं द्विज इति । द्विजस्याऽपचनं हि प्रतिषिद्धम् । इदन्तु युक्तमुदाहरणं–किं संन्यासी पचति। केचित्तु प्रतिषिद्धं प्रतिषेधस्तदप्रतियोग्यर्थकं तिङन्तमित्यर्थः,तदा मूलोक्तमेवोदाहरणमित्याहुः। लोपेवि । किमर्थयोगेऽपि किमोऽप्रयोगे इत्यर्थः। अर्थाध्याहारवाद इदं। पक्षे निघातः, पक्षे आद्युदात्तम्–पचतीत्यादि । किंशब्दाऽप्रयोगादप्राप्तविभाषेयम् ।

पचत्याहो स्वित्पठति। एहिमन्येप्रहासे लृट्।८।१।४६।'एहिमन्ये' इत्यनेन युक्तं लृडन्तं नाऽनुदात्तं क्रीडायाम्। एहि मन्ये भक्तं भोक्ष्यसे', भुक्तं तत्त्वतिथिभिः प्रहासे किम् ? एहि मन्यसे ओदनं भोक्ष्ये इति सुष्ठु मन्यसे। 'गत्यर्थलोटा लृ'डित्यनेनैव सिद्धे नियमार्थोऽयमारम्भः-'एहिमन्येयुक्ते प्रहास एव नान्यत्र'। एहि मन्यसे ओदनं भोक्ष्ये। जात्वपूर्वम्।८।१।४७। अविद्यमानपूर्वं यज्जातु, तेन युक्तं तिङन्तं नाऽनुदात्तम्। जातु भोक्ष्यसे'। अपूर्वं किम् ? । कटं जातु करिष्यसि। किंवृत्तं च चिदुत्तरम्।८।१।४८। अविद्यमानपूर्वं चिदुत्तरं यत्किंवृत्तं तेन युक्तं तिङन्तं नाऽनुदात्तम्। विभक्त्यन्तं डतरडतमान्तं किमो रूपं किंवृत्तम्। कश्चि भुङ्क्ते। कतरश्चित् कतमश्चिद्वा। चिदुत्तरं किं?। को भुङ्क्ते। अपूर्वमित्येव। रामः किंचित्पठति। आहो उताहो चाऽनन्तरम्।८।१।४९। आहो उताहो इत्याभ्यामपूर्वाभ्यां युक्तं तिङन्तं नाऽनुदात्तम्। आहो' उताहो वा भुङ्क्ते। अनन्तरमित्येव। शेषे विभाषां वक्ष्यति। अपूर्वेति किम्?। देव आहो भुङ्क्ते। शेषे विभाषा।८।१।५०। आभ्यां युक्तं व्यवहितं तिङन्तं वाऽनुदात्तम्। आहो देवः पचति। आहो देवः पचति। गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत्।८।१।५१। गत्यर्थानां लोटा युक्तं तिङन्तं नाऽनु-

---

सु.] दाहरणानि किंशब्दं त्यक्त्वाऽत्र योजनीयानि। एहि। एहिमन्य इत्यनेन युक्तमिति-समुदायाभिप्रायमेकवचनम्। अन्यथा आख्याते द्वे, आङ् चापर इति बहुवचनं प्राप्नोति। एहि मन्ये भक्तं भोक्ष्यस इति। मन्यसे भोक्ष्ये इत्यर्थे 'प्रहासे च मन्योपपदे' इत्यादिना मन्ये भोक्ष्यस इति पुरुषव्यत्ययः। इदं च वृत्तिकारमतरीत्या प्रत्युदाहरणम्। तन्मते उत्तमोपादानस्याऽतन्त्रत्वात्। भाष्ये तु 'एहि मन्ये रथेन यास्यसी'ति प्रत्युदाहृतम्। तत्रायमर्थः-त्वं रथेन यास्यसीत्यहं मन्य एहीति। गत्यर्थलोटा लृडित्यनेनैव सिद्ध इति। आङ्पूर्वादिणो लोट्। सिपो हिः। अत्र एहीत्यस्य गत्यर्थत्वाद्गत्यर्थलोटेति सिद्धमित्यर्थः। एहीत्यत्र आङः परत्वादिहीत्यत्र निघातः। मन्ये इति। मन ज्ञाने अनुदात्तेत्। श्यन्नन्तत्वादाद्युदात्वम्। 'तास्यनुदात्ते'दिति अदुपदेशात्परत्वादिडनुदात्तः। जात्व। अपूर्वमित्येतज्जातुशब्दस्यैव विशेषणं, न तिङन्तस्य. 'आहो उताहो' इति सूत्रे अनन्तरग्रहणाज्ज्ञापकात्। अन्यथा तत्राप्यपूर्वमित्यनुवृत्तेरेव केवलतिङन्तस्याऽऽनन्तर्यं लभ्यते इति किं तेन ?। ननु शेषे विभाषां वक्ष्यति, तत्र शेषप्रक्लृप्त्यर्थं तत्स्यात्-,शेषे विभाषा, कश्च शेषः ?। साऽन्तरं शेष इति ?। अन्तरेणाप्यनन्तरग्रहणं प्रक्लृप्तः शेषः। कथम्?। अपूर्वमिति प्रकृतं, सपूर्वः शेष इति। तदेतत्सकलमभिप्रेत्याह-अविद्यमानपूर्वं यज्जात्विति। जातु भोक्ष्यस इति। अदुपदेशात्परत्वात्से इत्यस्य निघातः। मध्योदात्तं पदम्। जातुशब्दो निपातत्वादाद्युदात्तः। कटं जातु करिष्यसीति। कटशब्दः फिट्त्वादन्तोदात्तः। किंवृत्तं। वृत्तमित्यधिकरणे क्तः। किमो वृत्तं किंवृत्तम्। 'अधिकरणवाचिनश्चे'ति कर्तरि षष्ठी। 'अधिकरणवाचिना चे'ति समासनिषेधे प्राप्तेऽस्मादेव निपातनात्समासः। इह 'जात्वपूर्व'मित्यतोऽपूर्वमिति वर्तते। तद्व्याचष्टे-अविद्यमानपूर्वमिति। यद्यत्र किंशब्दो वर्तते, तत्सर्वं गृह्येत, तर्हि किमीयः किंतरामित्यादेरपि प्रसङ्गः स्यादिति मत्वा परिसंचष्टे-विभक्त्यन्तमित्यादि। शेषे वि। अनन्तरापेक्षं शेषत्वमित्याह-व्यवहितमिति। पचतीति। पक्षे धातुस्वरेणाद्युदात्तम्। गत्यर्थ। गतिरर्थो येषामिति विग्रहः। गत्यर्थलोटा युक्तमिति। योगः पुनरर्थद्वारको निमित्तनिमित्तिभावः। लोडन्तवाच्यं हि निमित्तं-लृडन्तवाच्यस्य। 'न चेत्कारकं सर्वान्य'दित्यस्य व्याख्यानमाह-यत्रैव

---

शे.] केचित्तु तदर्थयोगस्य सत्त्वात्प्राप्तविभाषैवेत्याहुः। 'क्रियाप्रश्ने' इत्यादि सर्वमिहाप्यनुवर्तते। एहि मन्ये प्रहासे। उदाहरणे 'प्रहासे च मन्योपपदे' इति पुरुषव्यत्ययः। एहि मन्यसे इति। सूत्रे 'एहि मन्ये' इति 'प्रहासे चे'ति सूत्रविहितलडनुवाद एव। धातुमात्रं विवक्षितमिति भावः। इदञ्च वृत्तौ स्पष्टम्। भाष्यात्तु उत्तमोऽपि विवक्षितः। 'एहि मन्ये रथेन यास्यसी'ति प्रत्युदाहरणम्। एहि त्वं रथेन यास्यसीत्यहं मन्ये इत्यर्थ इति प्रतीयते। गत्यर्थेति। एहीत्यस्य गत्यर्थत्वादिति भावः। जात्वपूर्वम्। तृतीयास्थाने व्यत्ययेन प्रथमा उभयत्र। अविद्यमानपूर्वमिति जातुविशेषणं, न तिङन्तस्य, 'आहोउताहो' सूत्रेऽनन्तरग्रहणादिति वक्ष्यते। किंवृत्तञ्च चि। चिदुत्तरमिति बहुव्रीहिः-किंवृत्तविशेषणं। प्रथमा पूर्ववत्. पूर्वसूत्रादपूर्वमिति वर्तते, तेन 'देवदत्तः किंचित्पचती'त्यादौ न। विभक्त्यन्तमित्यादि। [न तु किमीय इत्यादि]। व्याख्यानमेवाऽत्र शरणम्। किमा वृत्तं = निष्पन्नमित्यर्थः। चिच्छब्दश्चादिगणेऽनुदात्तो निपात्यते। आहोउताहो। अपूर्वं किम् ?। अयमाहो भुङ्क्ते। वक्ष्यतीति। सान्तरं हि तत्र शेषः। तथा च तत्र शेषप्रक्लृप्त्यर्थमनन्तरग्रहणमिति भावः। नन्वपूर्वमित्यनुवर्तनात्तस्य च तिङन्तविशेषणत्वात्सपूर्वं तिङन्तं शेषो भविष्यतीति किमनन्तरग्रहणेनेति चेन्न, इदमेव ज्ञापयति-'अपूर्वमिति न तिङन्तविशेषण'मिति स्पष्टं भाष्ये। शेषे विभाषा। अपूर्वमित्येव। तेन 'अयमाहो देवो वर्षती'त्यत्र निहतमेव। गत्यर्थलोटा। अत्र नवेति लुप्तविभक्तिकं कारकविशेषणम्। कारकपदेन प्रत्यासत्त्या लकार-

दात्तं, यत्रैव कारके लोट् तत्रैव लृडपि चेत्। आगच्छ देवदत्त ग्रामं द्रक्ष्यस्येनम्। उह्यन्तां देवदत्तेन शालयो, रामेण भोक्ष्यन्ते। गत्यर्थेति किम्? । पच देव ओदनं, भोक्ष्यसेऽन्नम्। लोटा किम्? । आगच्छेर्देव ग्रामं द्रक्ष्यस्येनम्। लृट् किम्? आगच्छ देव ग्रामं पश्यस्येनम्। न चेदिति किम्?। आगच्छ देव ग्रामं पिता ते ओदनं भोक्ष्यते। सर्वं किम्? । 'आगच्छ देव ग्रामं, त्वं चाहं च द्रक्ष्याव एन'मित्यत्रापि निघातनिषेधो यथा स्यात्। यल्लोडन्तस्य कारकं तच्चान्यच्च लृडन्तेनोच्यते। **लोट् च** ।८।१।५२। लोडन्तं गत्यर्थलोटा युक्तं नाऽनुदात्तम्। आगच्छ देव ग्रामं पश्य। गत्यर्थेति किम्? । पच देवौदनं भुङ्क्ष्वैनम्। लोट् किम्? । आगच्छ देव ग्रामं पश्यसि। 'न चेत्कारकं सर्वान्य'दित्येव। आगच्छ देव ग्रामं पश्यत्वेनं रामः। सर्वग्रहणादिह स्यादेव—आगच्छ देव ग्रामं, त्वं चाहं च पश्यावः। योगविभाग उत्तरार्थः। **विभाषितं सोपसर्गमनुत्तमम्** ।८।१।५३। लोडन्तं गत्यर्थलोटा युक्तं तिङन्तं वाऽनुदात्तम्। आगच्छ देव ग्रामं प्रविश। आगच्छ देव ग्रामं प्रविश। सोपसर्गं किम्?। आगच्छ देव ग्रामं पश्य। अनुत्तमं किम्? आगच्छानि देव, ग्रामं प्रविशानि। **हन्त च** ।८।१।५४। हन्तेत्यनेन युक्तमनुत्तमं लोडन्तं वाऽनुदात्तम्। हन्त प्रविश। हन्त प्रविश। सोपसर्गमित्येव। हन्त कुरु। 'निपातैर्यद्यदी'दि निघातप्रतिषेधः। अनुत्तमं किम्? । हन्त प्रभुञ्जावहै। **आम एकान्तरमामन्त्रितमन-**

सु.]**कारके लोडित्यादि।** कर्तरि कर्मणि वा। **आगच्छ देव[दत्त] ग्रामं द्रक्ष्यस्येनमिति।** आङुपसर्गः। गच्छ-देवदत्तशब्दयोः पदात्परत्वान्निघातः। ग्रामशब्दो 'ग्रसेरा च'ेति मन्नन्त आद्युदात्तः। **द्रक्ष्यसीति।** प्रत्ययस्वरेण मध्योदात्तम्। **उह्यन्तां देवदत्तेन शालयो रामेण भोक्ष्यन्त इति।** वहेः प्रापणार्थत्वेऽपि गतिर्गम्यत इति गत्यर्थत्वम्। 'उह्यन्ता'मित्यत्र देवदत्तरामयोः कर्त्रोर्भेदेऽपि लकारवाच्यस्य शालेः कर्मणोऽभेदात्। **आगच्छेरिति।** लिङयं, न लोट्। **द्रक्ष्यसीनि**—वर्तमानसामीप्ये लट्। **आगच्छ देव ग्रामं, पिता ते ओदनं भोक्ष्यत इति।** कारकशब्देन सूत्रे कारकव्यक्तिरेवाश्रीयते, तेन कर्तृत्वाऽभेदेऽपि व्यक्तिभेदात्कारकभेदः। **त्वं चाहं च द्रक्ष्याव एन-मिति।** अक्रियमाणे तु सर्वग्रहणे यत्र वाच्यं न भिद्यते तत्रैव भवितव्यम्। इह च भिद्यते वाच्यम्। एकत्रैकमन्यत्र द्वयमिति निघातप्रतिषेधो न स्यात्, क्रियमाणे तु सर्वग्रहणे लोड्वाच्यकारकापेक्षया लृड्वाच्यकारकाधिक्येऽपि निघातप्रति-षेधः सिद्धः। **लोट् च।** लृड्ग्रहणं विहाय 'गत्यलोटे'ति संपूर्णं सूत्रमनुवर्तते। तदाह—**गत्यर्थेत्यादि।** **आगच्छेति।** गत्यर्थलोटा युक्तं 'पश्ये'ति न निहतं, गच्छेति तु निहतमेव। **योगविभाग उत्तरार्थ इति।** उत्तरो विकल्पो लोट एव यथा स्यात्, लृटो मा भूदिति। **विभाषितं।** पूर्वसूत्रं सर्वमनुवर्तते। प्राप्तविभाषा चेयम्। गत्यर्थ-लोटा युक्तं लोडन्तं सोपसर्गमुत्तमभिन्नं विभाषा नाऽनुदात्तं स्यात्, न चेत्कारकं सर्वान्यत्। **सोपसर्गमिति।** उपसर्गेण सह। उपसर्गे विद्यमान इत्यर्थः। सहशब्दो विद्यमानार्थो, न तुल्ययोगे, न ह्युपसर्गस्य निघातेयोगो-ऽस्ति। **आगच्छ देव ग्रामं प्रविशेति।** अत्र विशेति पक्षे निहितं, पक्षे शप्रत्ययस्वरेणाऽन्तोदात्तम्। यदाऽन्तोदात्तं तदा 'तिङि चोदात्तवति' इति गतेर्निघातः। **पश्य, प्रविशानीति**।—उभयत्रापि पूर्वेण नित्यमेव निघातः। प्रत्युदाहरणानि पूर्वसूत्रोक्तान्येव प्रशब्दपूर्वाणि योज्यानि। **हन्त च।** पूर्वसूत्रमनुवर्तते, लोड्ग्रहणं च।

शे.]वाच्यं कर्तृकर्मरूपमेव कारकं गृह्यते। स्पष्टञ्चेदं भाष्ये। तदाह—**यत्रैवेनि।** अस्य फलमाह—**उह्यन्तां देवदत्तेनेति।** अत्र यद्यपि कर्तृभेदोऽस्ति तथाऽपि लवाच्यकर्मभेदो नास्तीति भवत्येव प्रतिषेधः। एवम् 'आगच्छ देव ग्रामं, रामं द्रक्ष्य-सी'त्यादौ कर्मभेदेऽपि लवाच्यकर्त्रैक्याद्भवत्येव। **पचौदनमिति।** अत्र लृडन्तं निहतमेव। **पिता ते ओदनमिति।** आगमने देवः कर्ता, ग्रामः कर्म, भोजने तत्पिता कर्ता, ओदनः कर्मेति कारकभेदः। **त्वञ्चाहञ्चेति।** लोड्वाच्यकारका-पेक्षया यत्र लृड्वाच्यं कारकं किंचिदधिकं भवति तत्राप्ययं प्रतिषेधो यथा स्यादित्यर्थं सर्वग्रहणम्। प्रकृते एकस्याऽन्य-त्वेऽपि सर्वं नाऽन्यदिति भावः। एवं लोड्वाच्यकारकापेक्षया लृड्वाच्यं कारकं यदा न्यूनं भवति, लोड्वाच्यमधिकं भवति 'आगच्छतं देवदत्तयज्ञदत्तौ! देवदत्त ओदनं भोक्ष्यते' इति,—अत्रापि प्रतिषेधो भवत्येव। सर्वशब्दस्वारस्येन लृट्सर्वकारके एव लोट्सम्बन्धितदपेक्षयाऽन्यत्वाऽभावस्य निमित्तत्वप्रतीतेरित्याहुः। **लोट् च। न चेत्कारकमिति।** गत्यर्थलोड्वाच्य-कारकापेक्षया उदाहरणभूतलोड्वाच्यकारकं सर्वञ्चेदन्यन्न भवतीत्यर्थः। **विभाषितं सोपसर्गमनु। अनुत्तममित्यस्य**—उत्तमपुरुषभिन्नमित्यर्थः। न चेत्कारकं सर्वान्यदित्येव। पक्षे निहतं, पक्षे त्रैस्वर्यम्। प्रत्युदाहरणे पूर्वेण नित्यं निघात-प्रतिषेधः। **हन्त च।** 'विभाषित'मिति सम्पूर्णसूत्रं, 'लो'डिति च वर्तते। गत्यर्थलोटेत्यादि निवृत्तम्, अस्याऽपि विकल्पेन निषेधविधायकत्वात्। 'निपातैर्यद्यदी'ति नित्यनिषेधप्राप्तेः प्राप्तविभाषेयम्। **हन्त प्रविशेति।** पक्षेऽन्तोदात्तम्। पक्षे

**न्तिके** ।८।१।५५। आमः परमेकपदान्तरितमामन्त्रितं नाऽनुदात्तम् । आम् पचसि देवदत्ता ३ । एकान्तरं किम् ? । आम् प्रपचसि देवदत्ता ३ । आमन्त्रितं किम् ? । आम् पचति देवदत्तः । अनन्तिके किम् ? । आम् पचसि देवदत्त । **यद्धितुपरं छन्दसि** ।८।१।५६। तिङन्तं नाऽनुदात्तम् । उदसृजो यदङ्गिरः । उशन्ति हि । आख्यास्यामि तु ते । 'निपातैर्य' दिति, 'हि च' इति, 'तुपश्ये' ति च सिद्धे नियमार्थमिदम्—'एतैरेव परभूतैर्योगे नान्यै' रिति । जाये स्वारो हावैहि । एहीति गत्यर्थलोटा युक्तस्य लोडन्तस्य निघातो भवति । **चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः** ८।१।५७। एषु षट्सु परतस्तिङन्तं नाऽनुदात्तम् । देवः पचति चन । देवः पचति चित् । देवः पचतीव । देवः पचति गोत्रम् । देवः पचतिकल्पम् । देवः पचतिपचति । अगतेः किम् ? । देवः प्रपचति चन । **चादिषु च** ।८।१।५८। चवाहाहैवेषु परेषु तिङन्तं नाऽनुदात्तम् । देवः पचति च खादति

---

सु.] तदाह—**हन्तेत्यनेनेत्यादि** । प्राप्तविभाषेयम् । 'निपातैर्यदी' ति निघातनिषेधस्य सिद्धत्वात् । **प्रभुनजावहै इति** । भुजेर्लोट् । 'भुजोऽनवने' इत्यात्मनेपदं वहिः । टेरेत्वं । श्नम् । 'आडुत्तमस्य पिच्च' 'एत ऐ' । अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वम् । विकरणस्वरः । **आमः** । अन्तरयतीत्यन्तरं = व्यवधायकम् । एकमन्तरं यस्य तदेकान्तरम् । उदाहरणे निघाते प्रतिषिद्धे षाष्ठमाद्युदात्तत्वम् । **अनन्तिक इति किमिति** । अत्र केचिदनन्तिकं=दूरं । तथाच सामर्थ्यादेकश्रुतेर्निघातस्य च प्रतिषेधः । यदि निघातमात्रप्रतिषेधोऽयं तदा निघातस्यैकश्रुत्या बाधितत्वादिदं सूत्रं व्यर्थं स्यादिति । सामर्थ्यादेव चैतन्निषेधं प्रति एकश्रुतेरसिद्धत्वाऽभावः । प्लुतोदात्तस्तु न प्रतिषिध्यत इत्याहुः । अपरे तु अनन्तिक इत्यनेन यत्र दूरं न च संनिकृष्टं तदुच्यते, न दूरमेव, अन्यथा दूरमित्येव वदेत् । तेनाऽस्मिन्नेकश्रुतेः प्राप्तिरेव नास्ति, अदूरत्वात्प्लुतोदात्तोऽपि नोदाहर्तव्य इति । **यद्धितु** । **उदसृज इति** । तुदादेः सृजेर्लङि सिप्यट् । **उशन्ति हीति** । वश कान्तौ । अदादिः । लटि 'झोऽन्तः' । ग्रह्यादित्वात्संप्रसारणम् । **नान्यैरिति** । यदिहन्तेत्यादिभिरित्यर्थः । **जाये स्वारोहावैहीति** । रुहेर्लोट् । वस् । शप् । 'आडुत्तमस्य पिच्चे' त्याट् । 'लोटो लङ्व' दिति लङ्वद्भावात् 'नित्यं ङितः' इति सलोपः । आङ्पूर्वादिणो लोट् । सिपो हिः । एहि । तेन परभूतेन युक्तस्य रोहावेत्यस्य 'लोट् च' ेति प्राप्तो निघातप्रतिषेधो नियमान्निवर्तते । तेन स्वशब्दाश्रयो निघातो भवतिः । स्वःशब्दे 'रो' रि' इति लोपः । 'ढ्रलोपे' इति दीर्घः । 'स्वो रोहावे' ति पाठे तु छान्दसत्वादुत्वम् । **चनचि** । **एष्विति** । चन चित् इव गोत्रादि तद्धित आम्रेडित—एष्वित्यर्थः । इहापि गोत्रादयः कुत्सनाभीक्ष्ण्ययोरेव गृह्यन्त इति 'तिङो गोत्रादी' त्यत्रैवोक्तम् । **पचतकल्पमिति** । अत्राऽनुदात्त एव तद्धितो ग्राह्यः । अन्यत्र तद्धितस्वरेण तिङन्तस्वरो बाध्यते । अयं पचतिदेश्यः । **चादिषु च** । 'न चवाहाहैवयुक्ते' इति सूत्रे निर्दिष्टाश्चादयोऽत्र गृह्यन्ते, संनिकृष्टत्वात्, न तु 'चादयोऽसत्त्वे' इति सूत्रनिर्दिष्टाः, विप्रकृष्टत्वात् ।

---

शे.] निहतम् । **प्रभुनजावहै इति** । 'भुजोऽनवने' इत्यात्मनेपदम् । अत्रापि 'निपातैर्यदी' ति नित्यं निघातप्रतिषेधः ।

**आम एकान्तरं** । अनन्तिकशब्देनाऽसन्निहितमदूरं वोच्यते, अत एवोदाहरणे प्लुतैकश्रुती न । आमन्त्रितत्वादाद्युदात्तं पदम् । 'आम्भो देवदत्ते' त्यत्र 'नामन्त्रिते' इत्यविद्यमानवत्त्वनिषेधादेकान्तरत्वं बोध्यम् । **आम्प्रपचसीति** । अत्र निघातो भवत्येव । आमः किम् ? । शाकं पचसि देवदत्त । **आम्पचसि देवदत्तेति** । अत्राऽन्तिकत्वान्नैकश्रुतिः, किन्तु निघात एव । भाष्येऽनन्तिकं = दूरमिति पक्षान्तरमप्युक्तम् । तत्र सामर्थ्यादेकश्रुतेर्बाधः । अन्यथा निघातस्यैकश्रुत्या बाधितत्वादिदं व्यर्थमेव स्यात् । अत एवैकश्रुतेरसिद्धत्वाऽभावोऽपि बोध्यः । प्रकरणाच्च निघातस्याऽपि बाधः । अन्यथैकश्रुतिप्रकरण एव 'नाऽऽम एकान्तर' मिति ब्रूयात् । प्लुतोदात्तस्य तु नाऽयं प्रतिषेधः, 'आम एकान्तरे ऐकश्रुत्यप्रतिषेधः' इति वार्तिकात् । मूलेऽपि 'अनन्तिकं=दूरं, तत्र विहितमैकश्रुत्यं न, 'निघातनिषेधप्रकरणे पाठात् वचनसामर्थ्यान्निघातोऽपि' ने' त्येव पाठः । 'प्लुतश्च ने' त्यपपाठः । अस्य वार्तिकोक्तपक्षस्य 'नैव वा पुनरत्रैकश्रुतिः प्राप्नोति' इत्यादिना भाष्यकृता प्रत्याख्यानात् अत्र सूत्रे आद्यः पक्ष एव ज्यायान् । एवञ्चैतदुदाहरणविषये प्लुतो नैवेति भाष्यप्रदीपोद्द्योते निरूपितम् । **यद्धितुपरम्** । इदं बहुव्रीहिणा तिङो विशेषणम् । **नान्यैरिति** । यदिहन्तेत्यादिभिरित्यर्थः । **निघातो भवतीति** । न तु 'लोट् च' ेति प्राप्तो निषेधो भवतीत्यर्थः । अत्र सूत्रे रुहेर्गत्यर्थत्वस्य भाष्ये उक्तत्वेन तद्योगादेहीत्यस्य प्राप्तो निघातनिषेधो 'विभाषितं सोपसर्ग' मित्युक्तेर्न भवतीत्याहुः । भाष्ये तु छान्दसत्वेन समाहितम् । **चनचिदि** । अत्र गतिग्रहणेन उपसर्गग्रहणम् । तेन 'शुक्लीकरोति चने' त्यत्र करोतिशब्दोऽनिहत एवेति स्पष्टं भाष्ये । कुत्सनाभीक्ष्ण्ययोरेव गोत्रादीनि । नेह—सुखीकरोति गोत्रम् । अत्र निघात एव । **चादिषु च** । 'न चवाहे' ति सूत्रनिर्दिष्टाश्चादय एव गृह्यन्ते, सन्निकृष्टत्वात्, तदाह—**चवेत्यादि** । उदाहरणे खादतीत्यस्य न निघातप्रसङ्गः, नानावाक्यत्वात् । समुच्चयविकल्पयोरनेकधर्मत्वात्परं तदु-

च । [देवःपचति वा खादति वा]। अगतेरित्येव । दे॒वः प्रपचति च प्रखादति च । प्रथमस्य 'चवायोगे' इति निघातः प्रतिषिध्यते। द्वितीयं तु निहन्यत एव। **चवायोगे प्रथमा**।८।१।५९।चवेत्याभ्यां योगे प्रथमा तिङ्विभक्ति-र्नाऽनुदात्ता। गाथं चारयति वीणां वा वादयति। इतो वा सातिमीमहे। उत्तरवाक्ययोरनुषज्यमानीयतिङन्तापेक्षयेयं प्राथमिकी। योगे किम् ? । पूर्वभूतयोरपि योगे निघातार्थम् । प्रथमाग्रहणं द्वितीयादेस्तिङन्तस्य मा भूत् । **हेति क्षियायाम्** ।८।१।६०। हयुक्ता प्रथमा तिङ्विभक्तिर्नाऽनुदात्ता धर्मव्यतिक्रमे। स्वयं ह रथेन याती ३ उपाध्यायं पदातिं गमयती ३ । 'क्षियाशी'रिति प्लुतः । **अहेति विनियोगे च** ।८।१।६१। अहयुक्ता प्रथमा तिङ्विभक्ति-र्नाऽनुदात्ता, नानाप्रयोजने नियोगे, क्षियायां च। त्वमह ग्रामं गच्छ ३, त्वमहारण्यं गच्छ ३। क्षियायाम्—स्वय-मह रथेन याती ३, उपाध्यायं पदातिं नयती ३। **चाऽहलोप एवेत्यवधारणम्** ।८।१।६२। च अह एतयोर्लोपे प्रथमा तिङ्विभक्तिर्नाऽनुदात्ता । दे॒व ए॒व ग्रामं गच्छतु । देव एवारण्यं गच्छतु । ग्राममरण्यं च गच्छत्वित्यर्थः। देव एव ग्रामं गच्छतु । राम एवारण्यं गच्छतु । ग्रामं केवलमरण्यं केवलं गच्छत्वित्यर्थः। इहाऽहलोपः । स च केवलार्थः ।.अवधारणं किम् ? । देव क्वेव भोक्ष्यसे ?। न क्वचिदित्यर्थः। अनवक्लृप्तावेवः । **चादिलोपे विभाषा** ।८।१।६३। चवाहाऽहैवानां लोपे प्रथमा तिङ्विभक्तिर्नाऽनुदात्ता । चलोपे—इन्द्रं वाजे॑षु नोऽव । शुक्ला व्रीहयो

सु.]त[दे]दाह—**चवाहाहैवेषु परेष्विति**।पचति च खादति च,देवःपचति वा खादतिवेति।उभयत्र 'खादती' त्यस्य निघातप्रसङ्ग एव नास्ति, नानावाक्यत्वात्।चवायोगो हि समुच्चये विकल्पे वा सति भवति, स चाऽनेकस्य धर्म इति कृत्वोदाहृतम्।**चवा।प्रथमेति** स्त्रीलिङ्गस्य निर्वाहमाह—**प्रथमा तिङ्विभक्तिरिति** प्रथममुच्चारिता तिङ्विभक्तिरित्यर्थः। 'अगते'रिति प्रथमसूत्रे चानुकृष्टत्वादिह नानुवर्तते । **उत्तरवाक्ययोरिति** । 'दिवो वा पार्थिवादधि' । 'इन्द्रं महो वा रजसः' इत्येतयोरित्यर्थः । ननु श्रुतस्यैव तिङन्तस्योत्तरत्राऽनुषङ्गः, तत्कथं प्राथम्यमिति चेत्, अनुषक्तस्याप्यौपाधिकं भेदं पुरस्कृत्य प्राथम्याश्रयणेन निघातनिषेधस्य छन्दसि बहुशो दृष्टत्वात् । एतच्चेहैव मन्त्रे, नियेन मुष्टिहत्ययेति च मन्त्रे वेदभाष्ये स्पष्टम् । **हेति । स्वयं ह रथेन यातीति** । उपाध्याये पदातौ गच्छति सति शिष्यस्य रथेन गमनं प्रतिषिद्धमित्याचारभेदः । **अहेति** । अनेकस्मिन्प्रयोजने प्रेषणं विनियोगस्तदाह—**नानाप्रयोजने नियोगे इति** । अनेकप्रयोजनो नियोगः = प्रेषणम् । उदाहरणे पूर्वत्र प्रैषे प्लुतः, उत्तरत्र क्षियायाम् **चाहलोप** । अवधारणार्थैवशब्द-प्रयोगे सति प्रथमं तिङन्तं नाऽनुदात्तम्। सूत्रेण चाऽहलोपस्याऽविधानादर्थप्रकरणादिना गम्यमानार्थत्वादप्रयोग एव लोपो विवक्षितः । चशब्दः समुच्चयार्थः, अहशब्दः केवलार्थः । समानकर्तृके चलोपः । नानाकर्तृकेऽहलोपः । उदाहरणे चलोपं दर्शयति—**ग्राममरण्यं चेति** । **क्वेव भोक्ष्यस इति** । अनवक्लृप्तावयमेवशब्दः । 'एवे चाऽनियोगे' इति पररूपम् । **चादि । वाजेष्विति** । अवेति तिङन्तस्येह निघातः । निघाताऽभावस्य तूदाहरणान्तरं मृग्यम् । ननु पूर्वसूत्रे समानकर्तृके चलोप इत्युक्तम् , इह तु कर्तृभेदात् कथं चलोप इति चेत् , अवधारणार्थे एवशब्दप्रयोगे समान-

शे.]क्तिः:**चवायोग इति**। 'चवायोगे प्रथमा' इत्युत्तरसूत्रेणेत्यर्थः।इदञ्च वृत्तौ स्पष्टम् । चानुकृष्टत्वादत्राऽगतेरिति नानु-वर्तत इति तदाशयः । 'चनचिदिवे'त्यत्र कैयटस्तु 'चवायोगे इति—अत्राप्यनुवर्त्तते' इत्याह । **चवायो । प्रथमेत्यस्य** प्रथमोच्चारितेत्यर्थः । योगग्रहणं पूर्वाभ्यामपि योगे निघातप्रतिषेधार्थम् । तद्धनयन्नुदाहरति—**गाथं चारयतीति** । नियमोऽयं—'प्रथमैव नान्ये'ति । **इतो वा सातिमिति** । अस्य 'दिवो वा पार्थिवादधि' 'इन्द्रं महो वा रजसः' इत्युत्तरवाक्ये इन्द्रं प्रति सातिं = धनदानम् अधि = आधिक्येन ईमहे = याचामहे।वैदिकनिघण्टौ याच्ञाकर्मसु ईमह इति पाठात्। कस्माल्लोकादित्याकाङ्क्षायामाह—**इतः**=अस्माल्लोकात्पार्थिवाद्वा दिवो वा महो=महतः प्रौढात्,रजसः=रञ्जकात् अन्त-रिक्षलोकाद्वेति मन्त्रार्थः । ननु श्रुतस्यैव तिङन्तस्योत्तरत्रानुषङ्गात्कथं प्रथममेतदिति चेत्, अनुषक्तस्यापि औपाधिकभेदं पुरस्कृत्य प्राथम्याश्रयणेन निघातनिषेधस्य छन्दसि बहुशो दृष्टत्वात् । एतच्च वेदभाष्ये स्पष्टम् । **हेति क्षि** । धर्मोल्लङ्घ-नं—**क्षिया** । उदाहरणे द्वितीयस्य निघातो भवत्येव. हयोगाऽभावादिति बोध्यम् । **अहेति विनि** । अनेकस्मिन् प्रयो-जने प्रेषणं **विनियोगः** । अस्योदाहरणे पूर्ववन्निघातप्रतिषेधः, प्लुतश्च बोध्यः । **चाहलोपे** । लोपोऽत्राऽप्रयोग एव, शास्त्रेण लोपविधानाऽभावात्। अर्थप्रकरणादिना गम्यमानत्वाच्चाऽप्रयोगः।चः समुच्चये,अहशब्दः केवलार्थः।समानकर्तृके च-शब्दस्य लोपः।नानाकर्तृके त्वहशब्दस्य।**एवेत्यादेरवधारणार्थकै**वशब्दप्रयोगे सतीत्यर्थः। **अनवक्लृप्ताविति**।असम्भावना-यामित्यर्थः। न क्वचिद्भोक्ष्यसे न क्वचिद्भ्येष्यसे इत्यर्थः।**इन्द्र वाजेष्विति**।अवेति तिङन्तस्येह निघातः।निघाताऽभावस्य तूदाहरणान्तरं बोध्यम् । **शुक्ला व्रीहय इति** । समानकर्तृके चलोप इति नियमोऽवधारणार्थैवशब्दप्रयोगे न तु सर्वत्रे-

भवन्ति। शुक्ला व्रीहयो भवन्ति। श्वेता गा आज्याय दुहन्ति। वालोपे-व्रीहिभिर्यजेत। [व्रीहि॑भि॒र्यजे॑त]। यवैर्यजेत। **वैवावेति च छन्दसि**।८।१।६४। अहर्वै देवानामासीत्। अयं वाव हस्त आसीत्। **एकान्याभ्यां समर्थाभ्याम्**।।८।१।६५। आभ्यां युक्ता प्रथमा तिङ्विभक्तिर्नाऽनुदात्ता छन्दसि। अजामेकां जिन्वति। अजामेकां रक्षति। तयो॑र॒न्यः पिप्प॑लं स्वा॒द्वत्ति॑। अनेश्नन्नन्यो अभिचाकशीति'। समर्थाभ्यां किम्? । एको देवानुपातिष्ठत्। एक इति सङ्ख्यापरं नान्यार्थम्। **यद्वृत्तान्नित्यम्** ।८।१।६६। यत्र पदे यच्छब्दस्ततः परं तिङन्तं नाऽनुदात्तम्। यो भु॒ङ्क्ते। यदग्नङ्क्ष्यायुर्वाति। अत्र व्यवहिते कार्यमिष्यते। **पूजनात्पूजितमनुदात्तं [काष्ठादिभ्यः]** ।८।१।६७। * **काष्ठादिभ्य इति वक्तव्यम्**। पूजनेभ्यः काष्ठादिभ्यः पूजितवचनमनुदात्तम्। काष्ठाध्यापकः। * **मलोपश्च वक्तव्यः**। दारुणाध्यापकः। अज्ञाताध्यापकः। समासान्तोदात्तत्वापवादः। 'एतत्समासे इष्यते। नेह-दारुणमध्यापक' इति वृत्तिमतम्। पूजनादित्येव पूजितग्रहणे सिद्धे पूजितग्रहणमनन्तरपूजितलाभार्थम् एतदेव ज्ञापकम्-'अत्र प्रकरणे पञ्चमी निर्देशेऽपि नानन्तर्यमाश्रीयते इति।

---

सु.] कर्तृके चलोप इति नियमो, न तु सर्वत्रेत्यस्त्यत्र चलोपः। **व्रीहिभिर्यजेतेति**। पक्षे निहतं, पक्षे आद्युदात्तम्। द्वितीयं तु निहतमेव। एवं शेषेष्वपि यथादर्शनमुदाहरणम्। **वैवावे**। आभ्यां युक्तं प्रथमं तिङन्तमनुदात्तं वा स्याच्छन्दसि। वै स्फुटार्थे अक्षमायां च। वाव प्रसिद्धौ, स्फुटार्थे च। **एकान्या**। समौ तुल्यावर्थौ ययोस्तौ समर्थौ। शकन्ध्वादित्वात्पररूपम्। **जिन्वतीति**। जिविः प्रीणनार्थः। इदित्वान्नुम्। लट् तिप् शप्। **अजामेकां रक्षतीति**। अन्यां प्रीणयति, अन्यां रक्षतीत्यर्थः। **एक इति सङ्ख्यापरमिति**। एकशब्दस्याऽनेकार्थत्वात्। तथा चोक्तम्-'**एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा। साधारणे समानेऽल्पे सङ्ख्यायां च प्रयुज्यते**' इति। ननु साहचर्यादन्यार्थक एवैकशब्दो ग्रहीष्यत इति चेत्सत्यम्। न साहचर्यमत्र प्रकरणे नियामकमिति 'निपातैर्यद्यदिहन्ते'त्यत्रैवावोचाम। **यद्वृ**। **यदग्नङ्क्ष्विति**। यदञ्चतीति क्विन्। 'विष्वग्देवयोश्चे'ति टेरद्र्यादेशः। कथं पुनः पञ्चमीनिर्देशे सति 'यदग्नङ् वायुर्वाती'त्यादौ व्यवधाने भवत्यत आह-**अत्र व्यवहिते कार्यमिष्यत इति**। अत्र च ज्ञापकमुत्तरसूत्रे मूल एव स्फुटीभविष्यति।

**पूजनात्**। 'काष्ठादिभ्य' इति वार्तिकं दृष्टं, तदनुरोधेन 'पूजना'दिति बहुवचनस्थान एकवचनमिति व्याचष्टे-**पूजनेभ्यः काष्ठादिभ्य इति**। उत्तरसूत्रे तिङ्ग्रहणादिदं सुबन्तविषयकम्। **काष्ठाध्यापक इति**। काष्ठादयोऽद्भुतपर्यायाः सन्तः पूजनवचना भवन्ति। समासविषयकं सूत्रमिदम्। उदाहरणे मयूरव्यंसकादित्वात्समासः। **मलोपश्च वक्तव्य इति**। 'दारुणमध्यापक इति समासे कृते विभक्तेर्लुकि स्वाभाविकी मकारनिवृत्तिरनेन वचनेनान्वाख्यायते' इति वृत्तिन्यासकारयोर्मम्। तदेतदाह-**इति वृत्तिमतमिति**। भाष्यवार्तिककैयटास्तु असमास एव क्रियाविशेषणीभूतानां दारुणमित्यादीनामसमास एवास्य सूत्रस्य प्रवृत्तिमिच्छन्ति। मयूरव्यंसकादित्वे नास्ति प्रमाणम्। हरदत्तोऽप्याह-'यदि समासे एवेदमभिमतमभविष्यत्तदा समास इत्येवाऽवक्ष्यत्'। युक्तं चैतत्। न ह्यत्र समासाधिकारोऽस्ति येन समासः स्यात्। अस्मिन् पक्षे मलोपवचनं च सार्थकम्। **पूजनादित्येव पूजितपरिग्रहणे सिद्ध इति**। पूजनस्य पूजितापेक्षत्वादिति भावः। **अनन्तरपूजितलाभार्थमिति**। 'पूजनात्पूजित'मिति सूत्रे सामान्यगतमानन्तर्यविशेषणं विज्ञायत इति भावः। कथं पुनः पञ्चमीनिर्देशे व्यवहितस्य प्रसङ्ग इत्याह-**एतदेवेति**। ज्ञापक-

---

शे.] त्यस्ति चलोपः। पक्षे निहतं, पक्षे आद्युदात्तम्। **वैवावेति**। वै स्फुटार्थेऽक्षमायाञ्च। 'वाव' इति प्रसिद्धौ, स्फुटार्थे च। **एकान्याभ्यां**। **समर्थाभ्यां**=समानार्थाभ्यामित्यर्थः। **अजामेकामिति**। अन्यामित्यर्थः। जिविः-प्रीणनार्थः। अत्र प्रकरणे क्वचित्साहचर्योऽनाश्रयणज्ञापनार्थं समर्थग्रहणम्। **यद्वृत्ता** तयद्वृत्तमिति, न तु डतरडतमविभक्त्यन्तमेवेत्याग्रहः। इदञ्च भाष्ये ध्वनितम्। **अत्र व्यवहिते इति**। तेन 'यो जात एव पर्यभूष'दित्यादौ निघातप्रतिषेधः सिध्यति। अत्र मानन्तु 'पूजनात्पूजित'मिति सूत्रे पूजितग्रहणम्। तद्धि 'काष्ठाध्यापकः' इत्यादौ अनुदात्ततविधानाय। तत्र 'काष्ठादिभ्यः' इति वार्तिकम्। तत्र पूजनादित्येव प्रत्यासत्त्या ससम्बन्धिकतया च पूजितपरिग्रहे सिद्धे पूजितग्रहणमनन्तरप्रतिपत्त्यर्थं सदिह प्रकरणे पञ्चमीनिर्देशेऽप्यानन्तर्यं नाश्रीयत इति ज्ञापयतीत्याहुः। 'यथेच्छप्रवृत्तौ वेति वाच्यम्'। यत्र क्वचन य॒ज॒ते॒ [यत्र क्वचन यजते]। अत्र पक्षे निहतं, पक्षे आद्युदात्तम्। **पूजनात्पू**। अत्र वृत्तिकृत्-'काष्ठादिभ्य' इति सूत्रे पपाठ, तन्न्रमात्। काष्ठादिगणपाठेन सूत्रकारेणाऽपि ज्ञापितमेतत्। काष्ठादयोऽद्भुतपर्यायाः पूजनवचना भवन्ति। उत्तरसूत्रे तिङ्ग्रहणादिदं सुबन्तविषयम्। अत्र वृत्तिन्यासादयः-'समासविषयमेतत्। काष्ठादारुणादीनां प्रवृत्तिनिमित्तिभूताध्ययनाभिरूप्यादिविशेषणत्वेऽसमानाधिकरण्यात्समासाऽप्राप्तौ मयूरव्यंसकादित्वात्समासः। तन्निमित्तविभक्तेर्लुकि काष्ठाध्यापकादिसिद्धि'रित्याहुः। भाष्यकारास्तु- असमासे एव क्रियाविशेषणीभूतानां दारुणमित्यादीनां मलोपो निपात्यते। युक्तञ्चै-

**सगतिरपि तिङ्** ।८।१।६८। पूजनेभ्यः काष्ठादिभ्यस्तिङन्तं पूजितमनुदात्तम् । यत्काष्ठं प्रपचति । 'तिङ्ङतिङ' इति निघातस्य 'निपातैर्य'दिति निषेधे प्राप्ते विधिरयम् । सगतिग्रहणाच्च गतिरपि निहन्यते । * **गतिग्रहणे उपसर्गग्रहणमिष्यते** । नेह—यत्काष्ठा शुक्लीकरोति । **कुत्सने च सुप्यगोत्रादौ** ।८।१।६९। कुत्सने च सुबन्ते परे सगतिरगतिरपि तिङनुदात्तः । पचति पूति । प्रपचति पूति । पचति मिथ्या । कुत्सने किम् ?। प्रपचति शोभनम् । सुपि किम्। पचति क्लिश्नाति । अगोत्रादौ किम् ?। पचति गोत्रम् । * **क्रियाकुत्सन इति वाच्यम्** । कर्तुः कुत्सने मा भूत् । पचति पूतिर्देवदत्तः । * **पूतिश्चाऽनुबन्ध इति वाच्यम्** । तेनाऽयं चकारानुबन्धत्वादन्तोदात्तः । * **वा बह्वर्थमनुदात्तमिति वाच्यम्**। पचन्ति पूति । [पचन्तिपूति]। **गतिर्गतौ** ।८।१।७०। अनुदात्तः । अभ्युद्धरति । गतिः किम् ?। दत्तः पचति । गतौ किम् ? । आमन्द्रैरिन्द्र

सु.]फलं तु 'यद्वृत्तान्नित्य'मित्युक्तम् । **सगति** । **यत्काष्ठां पचतीति**। ये 'मलोपश्चे'त्यनेन [वाक्ये] मलोपमाहुस्तेऽपि तिङन्ते परतो नैव लोपमिच्छन्ति । **सगतिग्रहणाच्च गतिरपि निहन्यत इति** । तुल्ययोगे अत्र सहशब्दः । यत्र तुल्ययोगे सहशब्दस्तत्र द्वयोरपि कार्ययोगो भवति । तद्यथा—'सपुत्रो भोज्यता'मित्युक्ते पुत्रोऽपि भोज्यते । अपिग्रहणं यत्र गतिर्न युज्यते तत्र केवलस्याऽपि तिङन्तस्य यथा स्यात् , गतिप्रयोगे तु द्वयोः सहैव भवति। तिङ्ग्रहणं पूर्वयोगस्याऽतिङ्विषयत्वज्ञापनार्थम् । **कुत्सने** । पदादिति निवृत्तम् । **पचति क्लिश्नातीति** । अत्र समानवाक्यत्वस्य, सामर्थ्यस्य वाऽभावादेवाऽप्राप्तेः सुपीति स्पष्टार्थम् । **कर्तुः कुत्सने मा भूत् पचति पूतिर्देवदत्त इति** । कर्तृत्वमात्रं कुत्स्यते—अस्येदमयुक्तमिति । क्रिया तु शोभनैव। **पूतिश्चानुबन्ध इति**।चकारानुबन्ध इत्यर्थः । पूतिशब्द आद्युदात्तः, 'वशेस्ति'विति तिन्बाहुलकात्पूञोऽपि भवति । अस्मादेव निपातनाद्गुणाऽभावः। तस्य निघातनिमित्तस्याऽन्तोदात्तत्वं यथा स्यादिति चित्त्वमुपसङ्ख्यायते।**वा बह्वर्थमिति** । बहुवचनान्तं तिङन्तं वाऽनुदात्तं स्यात् । यदा तिङन्तस्य निघातस्तदा पूतिरन्तोदात्तः। अन्यदा त्वाद्युदात्तः। **आमन्द्रैरिति**।अत्र याहीत्येतत्प्रति क्रियायोगादाङित्येष गतिः। **तिङि** । उदात्तवति तिङन्ते परे गतिर्निहन्यते। 'निपाता आद्युदात्ताः' इत्यस्यापवादः।**यत्प्रपचतीति**। 'निपातैर्यद्यदी'तिनिघातप्रतिषेधात्तिङन्त-

शे.]तत् । समासाधिकाराऽभावात् , मयूरव्यंसकादित्वे प्रमाणाऽभावाच्च । अत एव 'मलोपो वक्तव्यः' इति वार्तिककृता आरब्धम् । एवञ्च दारुणमित्यादयः प्रयोगा असाधव एव, भाष्यविरुद्धत्वादिति ध्येयम्। पूजनात्किम् ?। दारुणाध्यापकः। दारुणसञ्ज्ञक इत्यर्थः । काष्ठादिभ्यः किं ? शोभनाध्यापकः । **सगतिरपि** । अपिनाऽगतिः । तदाह—**तिङन्तमिति** । 'न लु'डित्यादिनिषेधापवादः । **सगतिरिति** । तुल्ययोगे सहशब्दः । तेन गतेरपि निघातमाहुः । तिङ्ग्रहणं पूर्वसूत्रस्याऽतिङ्विषयत्वलाभार्थम्।अत्राऽपि गतिग्रहणेनोपसर्गस्यैव ग्रहणमिति 'चनचि'दिति सूत्रे भाष्ये स्पष्टम्। तेन 'यत्काष्ठा शुक्लीकरोती'त्यादौ 'निपातैर्यद्यदी'ति प्रतिषेध एव । **यत्काष्ठां प्रपचतीति** । 'यत्काष्टं प्रपचती'त्यपपाठः, भाष्यविरोधात् , काष्ठा इत्याकारान्तस्यैव गणे पाठाच्च । काष्ठेति ह्रस्वं पठतां तु भाष्यविरोध एव । काष्ठा, दारुण, अज्ञात, पुत्र, वेश, अनाज्ञात, अनुज्ञात, अपुत्र, अयुत, अद्भुत, अनुक्त, भृश, घोर, सुख, परम, सु, अति । **वृत्** । **कुत्सने च सु**। 'पदा'दिति निवृत्तम् । कुत्सनार्थे सुबन्ते परे इत्यर्थः । अयं विधिः परत्वात्प्रतिषेधान् बाधते । **यत्पचतः पूतीत्यादि** । पूतीति क्रियाविशेषणत्वान्नपुंसत्वम् । **पचति क्लिश्नातीति** । पाकक्रियाकर्तृकक्लेश इत्यर्थः । पूञः, पूयीधातोर्वा बाहुलकादौणादिके तिपि तत एव गुणाऽभावे आद्युदात्तत्वं पूतिशब्दस्य प्राप्नोतीत्यत आह—**पूतिश्चानुबन्ध इति** । चकारानुबन्ध इत्यर्थः। इदञ्च निघातसंनियोगशिष्टम् । तेन यदा निघातस्तदाऽन्तोदात्तम् , अन्यदा त्वाद्युदात्तमेवेति बोध्यम् । **वा बह्वर्थमिति** । बहुवचनान्तं तिङन्तमित्यर्थः । **गतिर्गतौ** । अयम् 'उपसर्गा' इत्याद्युदात्तत्वापवादः । गतौ परेऽनुपसर्गस्य गतेरनभिधानेन प्रयोगाऽभावादुपसर्ग इति वक्तव्ये गतिग्रहणं लाघवार्थमुत्तरार्थञ्च । यद्यप्ययमभौ सावकाशस्तथापि 'अभिर्गतौ' इति वक्तव्ये गतिग्रहणात्सर्वत्रापि प्रवर्त्तते, एतावतैव तदपवादत्वव्यवहार इत्याहुः । **अभ्युद्धरतीति** । अत्रोच्छब्दे यणि अभेर्निघातेऽनिघाते वा विशेषाऽभावेऽपि प्रवृत्तिमात्रेणोदाहृतम् । 'अभिसंहरति'इति मुख्यं फलम् । **गतौ किमिति** । गतेः शुद्धे तिङन्ते प्रयोगो, गतियुक्ते वा, कृदन्ते वा । तत्र कृदन्ते सगतावगतौ च कृत्स्वर-थाथादिस्वर-गतिस्वरेषु कृतेषु शेषनिघातेन गतेर्निघातस्याऽभावात् 'तिङि चोदात्तवती'ति तिङ्युदात्तवत्येवेति नियमादनुदात्तवति तिङन्ते तदप्रसङ्गादुदात्तवति तेनैव सिद्धेश्च पारिशेष्याद्गतावेव भविष्यतीति प्रश्नः । **आ मन्द्रैरिति** । 'ते प्राग्धातोः' इत्यस्य प्रयोगनियमार्थमिदम् । प्रयोगनियमपक्षमभिप्रेत्यैव 'छन्दसि परेऽपि' 'व्यवहिताश्चे'त्यारब्धम् । यदा तु भाष्यरीत्या सञ्ज्ञानियमार्थत्वमभिप्रेत्य तत्प्रत्याख्यायते तदा गतावितिं व्यर्थम्।

हरिभिर्याहि मयूररोमभिः । **तिङि चोदात्तवति** ।८।१।७१। गतिरनुदात्तः । यत्प्रपचति । तिङ्ग्रहणमुदात्तवतः परिमाणार्थम् , अन्यथा हि यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गतिस्तत्र धाताेवेवोदात्तवति स्यात् , प्रत्यये न स्यात् । उदात्तवति किम् ?। प्रपचति । इति तिङन्तस्वराः ।

## अथ वैदिकवाक्येषु स्वरसंचारप्रकारः ।

अथ वैदिकवाक्येषु स्वरसंचारप्रकारः कथ्यते । 'अग्निमीळे' [ पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् । ]-इति प्रथमा ऋक् । तत्राऽग्निशब्दोऽव्युत्पत्तिपक्षे 'फिषः' इत्यन्तोदात्त इति माधवः । वस्तुतस्तु घृतादित्वात् । व्युत्पत्तौ तु-निप्रत्ययस्वरेण । अम् सुप्त्वादनुदात्तः। 'अमि पूर्वः' इत्येकादेशस्तु-'एकादेश उदात्तेने'त्युदात्तः । 'ईळे' । 'तिङ्ङतिङ' इति निघातः । संहितायान्तु 'उदात्तादनुदात्तस्ये'तीकारः

---

सु.]मुदात्तवत् । ननु तिङ्ग्रहणं व्यर्थम् ।न च तिङन्ते यथा स्यान्मन्द्रशब्दे मा भूत् 'आमन्द्रैरिन्द्र हरिभिर्याही'ति,मन्द्रशब्दो रक्प्रत्ययान्तोऽन्तोदात्त इति वाच्यम् , 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः' इति वचनात् स्वसंबन्धिनमाक्षिपतीति क्रियावाचिन्येवोदात्तवति भविष्यति । न च कृदन्तेऽतिप्रसङ्गः । तत्र कृत्स्वर-थाथादिस्वर-गतिस्वरेषु कृतेषु शेषनिघातेन गतिर्निहन्यत एव । तस्मान्नाऽर्थस्तिङ्ग्रहणेनेत्याशङ्क्याह-**तिङ्ग्रहणमिति** । परिमाणमियत्ता। परिमाणार्थत्वमेव स्पष्टयति-**अन्यथाहीति** । अक्रियमाणे तिङ्ग्रहणे धातुरेव क्रियावाचित्वाद्गतिसंज्ञानिमित्तमिति तत्रैवोदात्तवति निघातः स्यात् , न प्रत्यये, तिङ्ग्रहणे कृते तु यं धातुं प्रति गतित्वं तद्घटके तिङन्ते उदात्तवति परे इत्यर्थो जायते, तेन यत्प्रकरोतीत्यादौ धातोः शेषनिघातेनानुदात्तत्वेऽपि तिङन्तस्य उप्रत्ययस्वरेण मध्योदात्तत्वाद्गतेर्निघातः सिद्ध इत्याहुः। **प्रपचतीति** । 'तिङ्ङतिङः' इति निघातः । **इति श्रीमन्मौनि० सुबोधिन्यां तिङन्तस्वरप्रकरणम् ।**

**इळे इति**।ईड स्तुतौ । लडुत्तमैकवचनम्-इट्। टेरेत्वं । 'द्वयोश्चास्य स्वरयो'रिति प्रातिशाख्येन डस्य ळः ।

---

शे.]आङो गतित्वाऽभावादेवाऽप्राप्तेः। मन्द्रशब्दस्तु रूढिशब्दत्वान्न क्रियावाची । आमन्द्रैरित्यत्र न दोषः, अगतित्वात् । यत्क्रियायुक्तास्तं प्रति गतिसञ्ज्ञा । न चाऽत्राऽऽङो मन्द्रं प्रति क्रियायोगः । किं तर्हि ? । याहिशब्दं प्रती'ति भाष्यस्याप्ययमेवार्थः-यत्क्रियान्वयस्तत्क्रियाव्यवहितत्वान्न गतित्वं, मन्द्रस्तु न क्रियावाचीति । यत्तु कैयटादयः-'ननु परनिमित्तानुपादाने यत्क्रियायुक्ता इति कथं लभ्यते ?। उच्यते । पदस्येत्यधिकारात्पदविधित्वात्समर्थपरिभाषोपस्थानादेतद्विशेषलाभ' इति।तत्तुच्छम्। अस्मदुक्तरीत्या भाष्यस्य सामञ्जस्यात् , एकार्थीभावे एव परिभाषाप्रवृत्तेश्च, युष्मदस्मदादेशनिघातविधौ परिभाषाऽप्रवृत्तेः समर्थसूत्रे भाष्ये उक्तत्वाच्च । न च मन्द्रादिकरणकेन्द्रकर्तृकं यानमाङा विशेष्यते इति समुदायंक्रियाविशेषवाचिनं प्रति गतित्वमस्त्येव । अत एवाऽभ्युद्धरतीत्यादावभेर्गतित्वमिति वाच्यम् , धातूपसर्गयोः संबन्धस्यान्तरङ्गत्वेन साधनान्वयात्पूर्वमेव तदन्वया । अत एव 'उपास्यते गुरुः' इत्यादेः सकर्मकत्वमिति भाष्य एव स्पष्टम् ।

**तिङि चो**।'निपाता आद्युदात्ताः' इत्यस्यापवादोऽयम् ।अनुपसर्गस्यापि गतेर्धात्वव्यवहितस्य सत्त्वात् । उदाहरणे 'निपातैर्यद्यदी'ति निघातप्रतिषेधादुदात्तवत्त्वं तिङन्तस्य । 'यच्छुक्लीकरोती'त्यत्र च्वेश्चित्त्वेऽपि चित्स्वरो येननाप्राप्तिन्यायेन निपाताद्युदात्तत्वमेव बाधते न त्वेनमिति अत्र शुक्लीशब्दस्य निघातः । नन्वामन्द्रैरित्यत्र रक्प्रत्ययान्ते मन्द्रशब्दे परे आङो निघातनिवृत्त्यर्थन्तदित्यत आह-**यत्क्रियेति** । एवञ्च तिङ्ग्रहणाऽभावेऽपि गत्याक्षिप्तक्रियावाचकस्योदात्तवतीति विशेषणादपि तन्निवृत्तिः सिद्धेति भावः । तत्र दोषमाह-**धातावेवेति** । यस्य वाच्यरूपया क्रियया युक्तास्तं धातुं प्रत्येव गतित्वादिति भावः । एवञ्च 'यत् पचती'त्यादावेव स्यान्न तु 'यत् प्रकरोती'त्यादौ । तिङ्ग्रहणे तु सति यं धातुं प्रति गतित्वं तद्घटिते तिङन्ते परे इत्यर्थः सम्पद्यते इति न दोषः । अत्र तिङ्शब्देन क्रियाप्रधानं लक्ष्यते । तेन 'उपपदमति'ङिति सूत्रस्थाऽस्मदुक्तरीत्या 'प्रपचतितरा'मित्यत्राऽसमामे उदात्तवत्यामन्ते गतेर्निघातः सिद्धः । तिङन्तं तु तत्र नोदात्तम् , आम्स्वरेण शेषनिघातात् । ध्वनितञ्चेदं भाष्ये । एते निघातास्तत्प्रतिषेधाश्च पदकाले विच्छिद्य पाठेऽपि भवन्ति, सहिताधिकाराऽभावादित्याहुः । **इति लघुशब्देन्दुशेखरे तिङन्तस्वराः ।**

**अथ स्वरसञ्चारप्रक्रिया । वस्तुतस्त्विति** । 'इगन्तानाञ्च द्व्यषा'मित्यस्य 'फिषः' इत्यपवादस्य सत्त्वादिति भावः । **संहितायान्त्विति** । 'तयोर्य्वावची'ति सूत्रस्थसंहिताग्रहणस्याऽऽशास्त्रसमाप्तेरधिकारात्, स्वरितविधेश्च तदन्तर्भावादिति भावः । अयमेव संहिताधिकारो ज्ञापयति-'एतदधिकारबहिर्भूतानां कालव्यवायेऽपि प्रवृत्तिः' । अन्यथाऽसंहितायां कालव्यवायादेव न भविष्यति, किं तदधिकारपाठेन ? । तेन पदकालेऽपि 'ईळे' इत्यादीनां निघातः, 'अग्नाविष्णू' इत्यादाववग्रहे आनङादयः, पदविभागे च वत्नसादयः सिध्यन्ति । अशत्त्यादिना कालव्यवायेऽपि नसादयः।

स्वरितः । 'स्वरितात्संहितायामि'ति 'ळे' इत्यस्य प्रचयाऽपरपर्याया एकश्रुतिः । पुरःशब्दोऽन्तोदात्तः, 'पूर्वाधरावराणा'मित्यसिप्रत्ययस्वरात् । हितशब्दोऽपि धाओ निष्ठायां 'दधातेर्हि'रिति ह्यादेशे प्रत्ययस्वरेणाऽन्तोदात्तः । 'पुरोऽव्यय'मिति गतिसंज्ञायां 'कुगती'ति समासे-समासान्तोदात्ते, 'तत्पुरुषे तुल्यार्थ'त्यव्ययपूर्वपदप्रकृतिस्वरे, थाथादिस्वरे च पूर्वपूर्वोपमर्देन प्राप्ते 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरः । पुरःशब्दोकारस्य संहितायां प्रचये प्राप्ते 'उदात्तस्वरितपरस्य सन्नतरः' इत्यनुदात्ततरः । यज्ञस्य । नङः प्रत्ययस्वरः । विभक्तेः सुप्त्वादनुदात्तत्वे स्वरितत्वम् । 'दे॒वम्' । पचाद्यच् । फिट्स्वरेण प्रत्ययस्वरेण वाऽन्तोदात्तः। ऋत्विक्शब्दस्तृन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः । 'रत्नशब्दो 'नब्विषयस्ये'त्याद्युदात्तः। रत्नानि दधातीति रत्नधाः ।-समासस्वरेण, कृदुत्तरपदप्रकृतिस्वरेण वाऽन्तोदात्तः । तमपः पित्त्वादनुदात्तत्वे स्वरितप्रचयावित्यादि यथाशास्त्रमुन्नेयम् ।

इति वैदिकवाक्येषु स्वरसंचारः ।

इत्थं वैदिकशब्दानां दिङ्मात्रमिह दर्शितम् ।
तदस्तु प्रीतये श्रीमद्भवानीविश्वनाथयोः ॥ १ ॥

इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यां वैदिकस्वरप्रक्रिया ।

सु.] यज्ञस्येति । 'यजयाचयते'ति यजेर्नङ् । विभक्तेः सुप्त्वादनुदात्तत्वे स्वरितत्वमिति । 'स्वरितो वाऽनुदात्ते पदादौ' इत्यनेन । ऋत्विगिति । 'ऋत्विग्दधृ' गित्यादिना ऋतावुपपदे यजेः क्विन् । 'वचिस्वपी'ति संप्रसारणम् । नब्विषयस्येति । इसन्तवर्जितस्य नित्यनपुंसकस्याऽऽदिरुदात्तः स्यादिति सूत्रार्थः । इति वैदिकवाक्येषु स्वरसंचारः । इति श्रीमन्मौनिकुलतिलकायमानश्रीगोवर्धनभट्टात्मजरघुनाथाऽऽत्मजेन जयकृष्णेन कृतायां सिद्धान्तकौमुदीव्याख्यायां सुबोधिन्याख्यायां वैदिकस्वरप्रकरणम् ।

शे.] व्यवधानञ्च मात्राकालेन, न तदधिकेनेत्यादि निरूपितम्। संहिताधिकारस्थन्तु यणादिकं स्वरितप्रचयादिकञ्च नेति बोध्यम्। नन्वेवं पुरः-हितमित्यवग्रहे हिशब्दस्य स्वरितत्वं बह्वृचैः पठ्यमानं न सिद्ध्येत् , संहिताधिकारस्थत्वेन कालव्यवायेऽप्रवृत्तेरिति चेन्न, 'यथा सन्धीयमानानामनेकीभवतां स्वरः। उपदिष्टस्तथा विद्यादक्षराणामवग्रहे' इति प्रातिशाख्ये विशिष्य विधानात् । अनेकीभवतां=प्रश्लेषमाप्नुवतां पुनः सन्धीयमानानामेकीक्रियमाणानां यथा=येन प्रकारेण स्वर उपदिष्टः शास्त्रे, तं स्वरमक्षराणामवग्रहेऽपि तथैव कुर्यादित्यर्थः।नन्वेवमुपगन्तवै अन्वेतवाउ इत्यादीनामवग्रहे उत्तरखण्डाद्यवर्णस्य प्रचयः स्यादिति चेन्न, 'पद्यादींस्तु द्व्युदात्तानामसंहितवदुत्तरान्' इति विशेषवचनात् । पद्यं=पदार्धं द्व्युदात्तानां पदानामुत्तरान् पदार्धादीन् स्वरविधावसंहितवज्जानीयादित्यर्थः । एवं रत्नधातमम्, अलल्लाभवन्तीरित्यादीनां क्रमकाले इतिशब्दोत्तरभागे प्रचयो न प्रवर्त्तते । 'परिग्रहे त्वनार्षान्तात्तेनैवैकाक्षरीकृतात् । परेषां न्यासमाचारं व्यालिस्तौ चेत्स्वरौ परौ' इति वचनात् । परिग्रहो वेष्टक उच्यते । अनार्षशब्देन तथाभूतइतिकरणः, स च ध्यक्षर आद्युदात्तः, पदाभ्यासस्य मध्ये वर्त्तमानः पूर्वपदान्तमादिना स्पृशति, द्वितीयपदादिमन्तिमेन स्पृशति तदाऽयं विकारः पदसन्धिरुक्तः। स च व्यञ्जनादिःस्वरादिर्वा भवति।यदि व्यञ्जनादिस्तदा प्रचये प्राप्तेऽयमपवादः। अनार्षादितिकरणात्परेषामक्षराणां न्यासमुदात्तमाचारं व्यालिराचार्यो मन्यते । यदा तु स्वरादिर्भवति तेन स्वरादिना एकाक्षरीकृतात्परेषां न्यासमिति तुल्यम्। तौ उदात्तस्वरितौ चेत्स्वरौ परौ भवत इत्यर्थः।अनार्षान्तादित्यस्योदाहरणं-रत्नधातममिति रत्नधातमम्।तेनैवैकाक्षरीकृतादित्यस्योदाहरणम्-अलल्लाभवन्तीरित्यलल्लाभवन्तीः । अलल्ला इति शब्दानुकरणमिति तद्भाष्यकृत इति सर्वेष्टसिद्धिः।

शब्देन्दुशेखरः पुत्रो मञ्जूषा चैव कन्यका । स्वमतौ सम्यगुत्पाद्य शिवयोरर्पितौ मया ॥ १ ॥
शब्देन्दुशेखरः सोऽयं फणिभाष्योक्तिभूषितः । सतां हृत्कमलेष्वास्तां यावच्चन्द्रदिवाकरौ ॥ २ ॥

इति श्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टरचिते लघुशब्देन्दुशेखराख्ये सिद्धान्तकौमुदीव्याख्याने उत्तरार्द्धं समाप्तम् । समाप्तोऽयं लघुशब्देन्दुशेखराख्यो ग्रन्थः ।

# अथ सटीकं लिङ्गानुशासनम् ।

## अथ स्त्र्यधिकारः ।

१ । लिङ्गम् । २ । स्त्री । अधिकारसूत्रे एते । ३ । ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः । ऋकारान्ता एते पञ्चैव स्त्रीलिङ्गाः । स्वस्रादिपञ्चकस्यैव ङीब्निषेधेन कर्त्रीत्यादेर्ङीपा ईकारान्तत्वात् । तिसृचतस्रोस्तु स्त्रियामादेशतया विधानेऽपि प्रकृत्योस्त्रिचतुरोर्ऋदन्तत्वाऽभावात् । ४ । अन्यूप्रत्ययान्तो धातुः । अनिप्रत्ययान्त ऊप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । अवनिः । चमूः । प्रत्ययग्रहणं किम् ? । देवयतेः क्विप् । द्यूः । विशेष्यलिङ्गः । ५ । अशनिभरण्यरणयः पुंसि च । इयमयं वा अशनिः । ६ । मिन्यन्तः । मिप्रत्ययान्तो, निप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । भूमिः । ग्लानिः । ७ । वह्निवृष्ण्यग्नयः पुंसि । पूर्वस्याऽपवादः । ८ । श्रोणियोन्यूर्मयः पुंसि च । इयमयं वा श्रोणिः । ९ । क्तिन्नन्तः । स्पष्टम् । कृतिरित्यादि । १० । ईकारान्तश्च । ईप्रत्ययान्तः स्त्री स्यात् । लक्ष्मीः । देवी । कुरुचरी । भद्रचरी । आग्नेयी । कौबेरी । वारुणीत्यादि । ११ । ऊङाबन्तश्च । कुरूः । विद्या । १२ । य्वन्तमेकाक्षरम् । श्रीः । भूः । एकाक्षरं किम् ? । पृथुश्रीः । १३ । विंशत्यादिरा नवतेः । इयं विंशतिः । त्रिंशत् । चत्वारिंशत् । पञ्चाशत् । षष्टिः । सप्ततिः । अशीतिः । नवतिः । १४ । दुन्दुभिरक्षेषु । इयं दुन्दुभिः । अक्षेषु किम् ? । अयं दुन्दुभिः । वाद्यविशेषोऽसुरो वेत्यर्थः । १५ । नाभिरक्षत्रिये । इयं नाभिः । १६ । उभावप्यन्यत्र पुंसि । दुन्दुभिर्नाभिश्चोक्तविषयादन्यत्र पुंसि स्तः । नाभिः क्षत्रियः । कथं तर्हि 'समुल्लसत्पङ्कजपत्रकोमलैरुपाहितश्रीण्युपनीवि नाभिभि'रिति भारविः । उच्यते । दृढभक्तिरित्यादाविव कोमलैरिति सामान्ये नपुंसकं बोध्यम् । वस्तुतस्तु लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति भाष्यात्पुंस्त्वमपीह साधु । अत एव 'नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः

श्रीः । [ अथ भैरवी चन्द्रकला ] मूले-अधिकारसूत्रे एते इति । उभयोरधिकारसूत्रत्वेऽपि 'लिङ्ग'मित्या शास्त्रसमाप्तेः, द्वितीयस्तु 'ताराधारा' इति यावदिति विवेकः । अत्रापि लिङ्गं शास्त्रीयं प्रागुक्तमेव विवक्षितम् । तच्चार्थनिष्ठं तच्छब्दप्रतिपाद्यम् । तत्रायं विशेषः । शब्दशक्तिस्वभावेन कस्यचित्सर्वलिङ्गप्रतिपादकता, कस्यचिदेकलिङ्गप्रतिपादकता, कस्यचिद्द्विलिङ्गयुक्तार्थप्रतिपादकता चेति । यद्यपि शब्दानामर्थानां चाऽऽनन्त्यात्प्रातिस्विकरूपेण तेषां ज्ञानं योगिनां युक्तयुञ्जानत्वेन व्यवहारयोग्यानामेव संभवति न त्वस्मदादीनामज्ञानाम् ,तथाप्यस्मदाद्युद्देशेन शास्त्रप्रवृत्तेर्यथा लघुनोपायेनास्मदादीनां ज्ञानं संभवेत्तथाह-ऋकारान्ता इत्यादिना । 'स्त्री'ति पदमेषु सूत्रेषु संबध्यते । तच्च भावप्रधाननिर्देशेन स्त्रीत्वपरम् । तस्य लिङ्गपदेन बहुव्रीहिसमासे 'स्त्रीलिङ्गा' इति सामानाधिकरण्येन व्यवहारः । मात्रादिशब्दानां विशेषत उपादानात्पञ्चेति लब्धम् । अवधारणस्य तु यथा लाभस्तं प्रकारमाह-स्वस्रादिपञ्चकस्यैवेति । ङीब्निषेधेनेति । 'न षट्स्वस्रादिभ्यः' इति सूत्रेण ङीपो निषेधेन। कर्त्रीत्यादेरिति। अनेन कर्तृपदेन यौगिकाः शब्दा ऋकारान्ताः परिग्राह्याः, रूढस्य क्रोष्टृप्रभृतिशब्दस्याऽऽदिना परिग्रहः । नच सप्तैवेति वक्तव्ये पञ्चैवेति नियमानुपपत्तिरिति वाच्यम् , आदेशत्वाऽनाक्रान्ताः पञ्चैवेत्यर्थात्। यद्यपि भाष्यसंमते 'तृज्वत्क्रोष्टुः' इत्यादिसूत्र्याः प्रयोगनियमार्थत्वपक्षे स्त्रियां प्रवर्तमानस्य क्रोष्टृशब्दस्यादेशत्वाऽनाक्रान्तत्वम् , तथापि परिनिष्ठिते शब्देऽयमीकारान्त एव प्रयुज्यत इति भावः । 'उणादयो बहुलम्' इति संगृहीतसाधुत्वकानां व्युत्पन्नत्वं शास्त्रान्तरे प्रसिद्धमिति । तदभिप्रायेणाह-अन्यू इत्यादि । अवनिः । 'अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः' इत्यनिः। चमूरिति। 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' इत्यूः । द्यूः। अत्र वकारस्य 'च्छ्वोः' इत्यूठ् । अशनिभरण्य । पूर्वसूत्रापवादोऽयम् । मिन्यन्तः। भूमिः । 'नियो मिः' इत्यतो मिरित्यनुवर्त्य विहितो 'भुवः कित्' इति निः । ग्लानिः । 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' इति निः । वह्न्यादिशब्दानां निप्रत्ययान्तत्वेन स्त्रीत्वे प्राप्ते आह-वह्निवृष्णि । वृष्णिः । 'सृवृषिभ्यां कित्' इति निः। अग्निः। 'अङ्गेर्नलोपश्च' इति निः । श्रोणियोन्यू । श्रोणिः। योनिः । 'वहिश्रि' इति निः । ऊर्मिः। 'अर्तेरुच्च' इति निः। ईकारान्तश्च। अत्र ईकारः प्रत्यय एव, पूर्वोत्तरसाहचर्यात्। लक्ष्मीरिति । अत्र 'लक्षेर्मुट् च' इति सूत्रे 'अवितृस्तृतन्त्रिभ्य ईः' इत्यत ईरित्यस्याऽनुवृत्त्या-तेनेकारः प्रत्ययः । एवमव्यादिधातुभ्य ईकारप्रत्ययेऽपि स्त्रीत्वम्। तद्यथा-अवीर्नारी रजस्वला,तरीर्नौस्तरी धूमः, तन्त्रीर्वीणादेर्गुणः । नच 'यापोः किद्वे च' इति सूत्रविहितेकारान्तस्याऽपि स्त्रीत्वापत्तिरिति वाच्यम्,पुंस्त्वाधिकारोक्तेन 'योपधः' 'पोपधः' इत्याभ्यां परत्वाद्बाधात् । यूप इत्यादौ प्रथमस्य, समय इत्यादौ द्वितीयस्य चारितार्थ्यात् । एवं च पपीययीशब्दयोः पुंस्त्वेऽपि न क्षतिः। ऊङाबन्तश्च । 'ऊङुतः' इत्यूङ् । आब्ग्रहणेन टाप्डाप्चापां ग्रहणम् । य्वन्तमेकाक्षरम् । ईकारोऽत्र प्रत्ययः, ऊकारसाहचर्यात् । विंशत्यादिरानवतेरिति । विंशत्यादयः 'पङ्क्तिविंशति' इति सूत्रनिर्दिष्टाः । दुन्दुभिरक्षेषु । अक्षेषु बोधनीयेषु यः प्रयुज्यत इत्यर्थः । नाभिरक्षत्रिये । क्षत्रियभिन्ने यो नाभिशब्दः प्रयुज्यते स स्त्रियां स्यात् । इयं नाभिरिति। पुरुषावयवे इदम् । उभावप्यन्यत्र पुंसि । इदं स्पष्टार्थम् , पूर्वसूत्रयोः 'अक्षेष्वक्षत्रिये' इत्यभिधानेन सिद्धेः । कथं

प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे' इति मेदिनी। रभसोऽप्याह–'मुख्यराट्क्षत्रिये नाभिः पुंसि प्राण्यङ्गके द्वयोः। चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे' इति। एवमेवंविधेऽन्यत्रापि बोध्यम्। १७। तलन्तः। अयं स्त्रियां स्यात्। शुक्लस्य भावः शुक्लता। ब्राह्मणस्य कर्म ब्राह्मणता। ग्रामस्य समूहो ग्रामता। देव एव देवता। १८ भूमिविद्युत्सरिल्लतावनिताभिधानानि। भूमिर्भूः। विद्युत्सौदामनी। सरिन्निम्नगा। लता वल्ली। वनिता योषित्। १९। यादो नपुंसकम्। यादःशब्दः सरिद्वाचकोऽपि क्लीबं स्यात्। यादः। यादसी२०।भाःस्रुक्स्रग्दिगुष्णिगुपानहः।एते स्त्रियां स्युः।इयं भा इत्यादि। २१। स्थूणोर्णे नपुंसके च। एते स्त्रियां क्लीबे च स्तः। स्थूणा। स्थूणम्। ऊर्णा। ऊर्णम्। तत्र स्थूणा काष्ठमयी द्विकर्णिका। ऊर्णा तु मेषादिलोम। २२। गृहशशाभ्यां क्लीबे। नियमार्थमिदम्। गृहशशपूर्वे स्थूणोर्णे यथासङ्ख्यं नपुंसके स्तः। गृहस्थूणम्। 'शशोर्णं शशलोमनी'त्यमरः।२३। प्रावृड्विप्रुड्रुट्तृड्विट्त्विषः। एते स्त्रियां स्युः। २४। दर्विविदिवेदिखनिशान्यश्रिवेशिकृष्योषधिकट्यङ्गुलयः। एते स्त्रियां स्युः। पक्षे ङीप्। दर्वी। दर्विरित्यादि। २५। तिथिनाडिरुचिवीचिनालिधूलिकिकिकेलिच्छविराञ्यादयः। एते प्राग्वत्। इयं तिथिरित्यादि। अमरस्त्वाह–'तिथयो द्वयो'रिति। तथा च भारविः–'तस्य भुवि बहुतिथास्तिथयः' इति। स्त्रीत्वे हि बहुतिथ्य इति स्यात्। श्रीहर्षश्च–'निखिलान्निशि पौर्णिमातिथी'निति। २६। शष्कुलिराजिकुट्यशनिवर्तिभ्रुकुटित्रुटिवलिपङ्क्तयः। एतेऽपि स्त्रियां स्युः। इयं शष्कुलिः। २७। प्रतिपदापद्विपत्सम्पच्छरत्संसत्परिषदुषःसंवित्क्षुत्पुन्मुत्समिधः। इयं प्रतिपदित्यादि। उषा उच्छन्ती। उषाः प्रातरधिष्ठात्री देवता। २८। आशीर्धूःपूर्गीर्द्वारः। इयमाशीरित्यादि।२९। अप्सुमनस्समासिकतावर्षाणां बहुत्वं च। अबादीनां पञ्चानां स्त्रीत्वं स्याद्बहुत्वं च। आप इमाः। 'स्त्रियः सुमनसः पुष्पम्'। 'सुमना मालती जातिः'। देववाची तु पुंस्येव। 'सुपर्वाणः सुमनसः'। बहुत्वं प्रायिकम्। 'एका च सिकता तैलदाने असमर्थे'ति अर्थवत्सूत्रे भाष्यप्रयोगात्। 'समांसमां विजायते' इत्यत्र 'समायां समाया'मिति भाष्याच्च।'विभाषा घ्राधेट्' इति सूत्रे 'अघ्रासातां सुमनसा'विति वृत्तिव्याख्यायां हरदत्तोऽप्येवम्। ३० स्रक्त्वग्ज्योग्वाग्यवागूनौस्फिजः।इयं स्रक् त्वक् ज्योक् वाग्यवागूः नौः स्फिक्। ३१। तृटिसीमासंबध्याः। इयं तृटिः। सीमा। संबध्या। ३२। चुल्लिवेणिखार्यश्च। स्पष्टम्। ३३। ताराधाराज्योत्स्नादयश्च।३४। शलाका स्त्रियां नित्यम्। नित्यग्रहणमन्येषां क्वचिद्व्यभिचारं ज्ञापयति। इति स्त्र्यधिकारः।

## अथ पुंलिङ्गाधिकारः।

३५। पुमान्। अधिकारोऽयम्। ३६। घञबन्तः। पाकः। त्यागः। करः। गरः। भावार्थ एवेदम्। नपुंसकत्वविशिष्टे भावे क्तल्युडुत्तर्थां, स्त्रीत्वविशिष्टे तु क्तिन्नादिभिर्बाधेन परिशेषात्। कर्मादौ तु घञाद्यन्तमपि विशेष्यलिङ्गम्। तथा च भाष्यम्–'संबन्धमनुवर्तिष्यते' इति। ३७। घाञजन्तश्च। विस्तरः। गोचरः। चयः। जय इत्यादि। ३८। भयलिङ्गभगपदानि नपुंसके। एतानि नपुंसके स्युः। भयम्। लिङ्गम्। भगम्। पदम्। ३९। नङन्तः। नङ्प्रत्ययान्तः पुंसि स्यात्। यज्ञः। यत्नः। ४०। याच्ञा स्त्रियाम्। पूर्वस्यापवादः। ४१। क्यन्तो घुः। किप्रत्ययान्तो घुः पुंसि स्यात्। आधिः। निधिः। उदधिः। क्यन्तः किम्? । दानम्। घुः किम्?। जज्ञिर्बीजम्।

---

तर्हीति। अत्र यत्कोमलैरिति तदनुपपन्नम्, स्त्रीलिङ्गनाभिशब्दार्थविशेषणत्वात्। सामान्ये इति। लिङ्गविशेषाऽविवक्षया नपुंसकं 'कोमलै'रिति प्रसाध्य,तस्य नाभिशब्दार्थविशेषणत्वं स्वीकार्यम्।विशेषप्रतिपादकस्य यथा पुंस्त्वं तथाऽस्यापि भविष्यतीत्याशयेन समाधानान्तरमाह–वस्तुतस्त्विति। 'चक्रमध्यक्षत्रिययोः' इत्यत्र चक्रमध्यं च क्षत्रियश्चेति द्वन्द्वः। अत एव 'प्राण्यङ्गके द्वयोः' इति सङ्गच्छते। तलन्तः। 'तस्य भावस्त्वतलौ' इति सूत्रविहिततल्प्रत्ययान्तः स्त्रियां स्यात्। भूमिविद्युदिति। अत्राऽभिधानशब्दो भूम्यादिशब्दशक्यतावच्छेदकधर्मावच्छिन्नशक्तपरः। तेन प्रमेयशब्दव्यावृत्तिः। एवमन्यत्रापि बोध्यम्। यादो नपुंसकम्। पूर्वस्यापवादः। स्थूणोर्णे नपुंसके च। चकारेण स्त्रियामित्यस्यानुकर्षणार्थमस्यात्र लेखः। प्रावृडिति। स्त्रीशब्दस्य पूर्वत्र चानुकृष्टत्वेऽपि 'स्वरितेनाऽधिकारः' इत्यस्याऽधिकः कार इति व्याख्यानस्यापि प्रसिद्धत्वादत्र संबन्धः। दर्विविदि। दर्विशब्दो 'वृदभ्यां विन्' इति विन्नन्तः, 'सर्वतोऽक्तिन्नर्थादित्येके' इति विकल्पेन ङीप्–दर्वी इति। तिथिनाडि। एते प्राग्वदिति। स्त्रियां स्युरित्यर्थः।पुंस्येवेति। 'देवासुरात्मे'त्यनेन पुंस्त्वबोधकेन परत्वाद्बाधादिति भावः। भाष्यप्रयोगादिति। तेन भाष्ये 'णौ' इति सूत्रनिर्दिष्टानां बहुत्वं प्रायिकमिति विकल्पेनाऽन्यत्र बहुत्वाऽभावेपि न क्षतिः। क्वचिद्व्यभिचारमिति। तेन तिथिशब्दस्य पूर्वत्र यथा पुंस्त्वं प्रदर्शितं तथान्येषामन्यलिङ्गत्वेऽपि साधुत्वमिति सूचयति। इति लिङ्गानुशासने स्त्र्यधिकारः।

भावार्थ एवेति। भावे यो घञ् तदन्तस्य पुंस्त्वमित्युक्तम्। एतल्लाभप्रकारमाह–नपुंसकेत्यादि। भयलिङ्गेत्यादि। पूर्वस्यापवादोऽयम्। क्यन्तो घुः।किप्रत्ययोऽन्तः = परो यस्मात्तादृशो घुसंज्ञको धातुस्तद्घटितः पुमानित्यर्थः।

।४२। इषुधिः स्त्री च । इषुधिशब्दः स्त्रियां पुंसि च । पूर्वस्यापवादः।४३। देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि । एतानि पुंसि स्युः। देवाः सुराः। असुरा दैत्याः। आत्मा क्षेत्रज्ञः । स्वर्गो नाकः । गिरिः पर्वतः । समुद्रोऽब्धिः । नखः कररुहः । केशः शिरोरुहः । दन्तो दशनः । स्तनः कुचः । भुजो दोः । कण्ठो गलः । खड्गः करवालः । शरो मार्गणः । पङ्कः कर्दम इत्यादि । ४४ । त्रिविष्टपत्रिभुवने नपुंसके । स्पष्टम् । तृतीयं विष्टपं त्रिविष्टम् । स्वर्गाभिधानतया पुंस्त्वे प्राप्ते अयमारम्भः । ४५ । द्यौः स्त्रियाम् । द्योदिवोस्तन्त्रेणोपादानमिदम् । ४६ । इषुबाहू स्त्रियां च । चात्पुंसि । ४७ । बाणकाण्डौ नपुंसके च । चात्पुंसि ।'त्रिविष्टपे'त्यादिचतुःसूची 'देवासुरे'त्यस्यापवादः। ४८। नान्तः। अयं पुंसि । राजा। तक्षा । न च चर्मवर्मादिष्वतिव्याप्तिः, 'मन्व्यच्कोऽकर्तरी'ति नपुंसकप्रकरणे वक्ष्यमाणत्वात् । ४९ । क्रतुपुरुषकपोलगुल्फमेघाभिधानानि । क्रतुरध्वरः । पुरुषो नरः । कपोलो गण्डः । गुल्फः प्रपदः । मेघो नीरदः । ५० । अभ्रं नपुंसकम् । पूर्वस्याऽपवादः । ५१ । उकारान्तः । अयं पुंसि स्यात् । प्रभुः । इक्षुः । 'हनुर्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम् । द्वयोः कपोलावयवे' इति मेदिनी । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः । एवंजातीयकविशेषवचनाऽनाक्रान्तस्तु प्रकृतसूत्रस्य विषयः । उक्तं च–'लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधित' इति । एवमन्यत्रापि । ५२ । धेनुरज्जुकुहूसरयुतनुरेणुप्रियङ्गवः स्त्रियाम् । ५३ । समासे रज्जुः पुंसि च । कर्कटरज्ज्वा । कर्कटरज्जुना । ५४ । श्मश्रुजानुवसुस्वाद्वश्रुजतुत्रपुतालूनि नपुंसके । ५५ । वसु चाऽर्थवाचि। अर्थवाचीति किम् ?। 'वसुर्मयूखाऽग्निधनाधिपेषु'। ५६ । मद्गुमधुसीधुशीधुसानुकमण्डलूनि नपुंसके च । चात्पुंसि । अयं मद्गुः । इदं मद्गु । ५७ । रुत्वन्तः । मेरुः । सेतुः । ५८ । दारुकशेरुजतुवस्तुमस्तूनि नपुंसके । 'रुत्वन्त' इति पुंस्त्वस्यापवादः । इदं दारु । ५९ । सक्तुर्नपुंसके च । चात्पुंसि । सक्तुः । सक्तु । ६० । प्राग्रश्मेरकारान्तः । 'रश्मिर्दिवसाभिधान'मिति वक्ष्यति, प्रागेतस्मादकारान्त इत्यधिक्रियते । ६१ । कोपधः । कोपधोऽकारान्तः पुंसि स्यात् । स्तबकः । कल्कः । ६२ । चिबुकशालूकप्रातिपदिकांऽशुकोल्मुकानि नपुंसके । पूर्वसूत्रापवादः।६३।कण्टकाऽनीकसरकमोदकचषकमस्तकपुस्तकतडाकनिष्कशुष्कवर्चस्कपिनाकभाण्डकपिण्डककटकशण्डकपिटकतालकफलकपुलाकानि नपुंसके च । चात्पुंसि । अयं कण्टकः । इदं कण्टकमित्यादि । ६४ । टोपधः । टोपधोऽकारान्तः पुंसि स्यात् । घटः । पटः । ६५ । किरीटमुकुटललाटवटविटश्रृङ्गाटकराटलोष्टानि नपुंसके । किरीटमित्यादि । ६६ । कुटकूटकपटकवाटकर्पटनटनिकटकीटकटानि नपुंसके च । चात्पुंसि । कुटः । कुटमित्यादि । ६७ । णोपधः । णोपधोऽकारान्तः पुंसि स्यात् । गुणः । गणः । पाषाणः । ६८ । ऋणलवणपर्णतोरणरणोष्णानि नपुंसके । पूर्वसूत्रापवादः । ६९ । कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च । चात्पुंसि । ७० । थोपधः । रथः । ७१ । काष्ठपृष्ठसिक्थोक्थानि नपुंसके । इदं काष्ठमित्यादि । ७२ । काष्ठा दिगर्था स्त्रियाम् । इमाः काष्ठाः । ७३ । तीर्थप्रोथयूथगाथानि नपुंसके च । चात्पुंसि । अयं तीर्थः। इदं तीर्थम् ।७४। नोपधः । [नोपधः] अदन्तः पुंसि । इनः। फेनः। ७५ । जघनाऽजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके । पूर्वस्याऽपवादः । ७६ । मानयानाभिधाननलिनपुलिनोद्यानशयनासनस्थानचन्दनाऽऽलानसमानभवनवसनसंभावनविभावनविमानानि नपुंसके च । चात्पुंसि । अयं मानः । इदं मानम् । ७७। पोपधः। अदन्तः पुंसि । यूपः। दीपः। सर्पः। ७७ । पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपाऽन्तरीपाणि नपुंसके। इदं पापमित्यादि।७९ । शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च। अयं शूर्पः । इदं शूर्पमित्यादि । ८० । भोपधः । स्तम्भः । कुम्भः । ८१ । तल्भं नपुंसकम् । पूर्वस्याऽपवादः । ८२ । जृम्भं नपुंसके च । जृम्भम् । जृम्भः । ८३ । मोपधः । सोमः । भीमः । ८४ ।

---

देवासुरा। अत्र पङ्कशब्दान्तद्वन्द्वं कृत्वा तस्य षष्ठीसमासोऽभिधानशब्देन कर्तव्यः।अभिधानशब्दः करणल्युडन्तो वाचकशब्दपरः, तेन देवादिशब्दवाच्यतावच्छेदकेत्यादि पूर्ववद्बोध्यम् । शब्दस्वरूपाऽपेक्षया च नपुंसकत्वम् । त्रिविष्टप । स्वर्गाभिधानतया पुंस्त्वे प्राप्तेऽस्यारम्भ इति । अत एवाहाऽमरसिंहः–'क्लीबे त्रिविष्टपम्' इति । द्यौः स्त्रियाम् । अस्य स्वर्गाभिधानत्वात्पुंस्त्वस्य पूर्वेण प्राप्तेऽस्यारम्भः । इषुबाहू । शरभुजपर्यायाविमौ । बाणकाण्डौ । शराभिधानोऽयम् । नान्त इति । नान्तप्रत्ययान्त इत्यर्थः । अभ्रं नपुंसकमिति । मेघाऽभिधानविषये पूर्वस्यापवाद इत्यर्थः । लिङ्गशेषविधिरिति। लिङ्गस्य शेषोऽवशेषस्तस्य विधिः व्यापकाण्डत्रस्य विधिव्यापी = काण्डत्रयस्य व्यापको यदि विशेषशास्त्रेण बाधितो न स्यादित्यर्थः । नपुंसके चेति । चात्पुंसि । वसु चाऽर्थवाचि । अर्थवाचि वसुशब्दो नपुंसके च द्रष्टव्यः । रुत्वन्तः । उकारो नेत्संज्ञकः । मेरुः । सेतुरित्यत्र 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' इति तुन् । सूर्यवाचकः प्रथमः । दारुकशेरु । जत्वादित्वादुप्रत्ययान्ता एते ।

रुक्मसिध्मयुध्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके । इदं रुक्ममित्यादि । ८५ । सङ्ग्रामदाडिमकुसुमाश्रमक्षेम-क्षौमहोमोद्दामानि नपुंसके च । चात्पुंसि । अयं सङ्ग्रामः । इदं सङ्ग्रामम् । ८६ । योपधः । समयः । हयः । ८७ । किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके । स्पष्टम् । ८८। गोमयकषायमलयाऽन्वयाऽव्ययानि नपुंसके च। गोमयः। गोमयम् । ८९ । रोपधः । क्षुरः । अङ्कुरः। ९० । द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रनीरतीरदूरकृच्छ्ररन्ध्राश्रश्वभ्र-भीरगभीरक्रूरविचित्रकेयूरकेदारोदराऽजस्रशरीरकन्दरमन्दारपञ्जराऽजरजठराऽजिरवैरचामरपुष्करगह्वरकुहरकुटीर-कुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयन्त्रक्षत्रक्षेत्रमित्रकलत्रचित्रमूत्रसूत्रवक्त्रनेत्रगोत्राङ्गुलित्रभलत्रशस्त्रशास्त्रवस्त्र-पत्रपात्रच्छत्राणि नपुंसके । इदं द्वारमित्यादि । ९१ । शुक्रमदेवतायाम् । इदं शुक्रं रेतः ।९२। चक्रवज्रान्धकार-साराऽवारपारक्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके च । चात्पुंसि । चक्रः । चक्रमित्यादि। ९३ । षोपधः। वृषः । वृक्षः । ९४ । शिरीषर्जीषाऽम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके ।९५। यूषकरीषमिषविषवर्षाणि नपुंसके च । चात्पुंसि । अयं यूषः । इदं यूषमित्यादि । ९६ । सोपधः। वत्सः । वायसः। महानसः।९७। पनसबिसबुससाहसानि नपुंसके । ९८ । चमसांऽसरसनिर्यासोपवासकार्पासवासभासकासकांस-मांसानि नपुंसके च । इदं चमसम् । अयं चमस इत्यादि । ९९ । कंसं चाऽप्राणिनि । 'कंसोऽस्त्री पानभाजनम्' । प्राणिनि तु कंसो नाम कश्चिद्राजा । १०० । रश्मिदिवसाभिधानानि । एतानि पुंसि स्युः । रश्मिर्मयूखः । दिवसो घस्रः । १०१ । दीधितिः स्त्रियाम् । पूर्वस्यापवादः । १०२ । दिनाऽहनी नपुंसके । अयमप्यपवादः । १०३ । मानाऽभिधानि । एतानि पुंसि स्युः । कुडवः–प्रस्थः । १०४ । द्रोणाढकौ नपुंसके च । इदं द्रोणम् । अयं द्रोणः । १०५ । खारीमानिके स्त्रियाम् । इयं खारी । इयं मानिका ।१०६। दाराऽक्षतलाजाऽसूनां बहुत्वं च । इमे दाराः । १०७ । नाड्यपजनोपपदानि व्रणाङ्गपदानि । यथासङ्ख्यं नाड्याद्युपपदानि व्रणादीनि पुंसि स्युः । अयं नाडीव्रणः । अपाङ्गः । जनपदः । व्रणादीनामुभयलिङ्गत्वेऽपि क्लीबत्वनिवृत्त्यर्थं सूत्रम् । १०८ । मरुद्गरुत्तरदृत्विजः । अयं मरुत् । १०९ । ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौलिमौलिरविकविकपिमुनयः । एते पुंसि स्युः । अयमृषिः । ११० । ध्वजगजमुञ्जपुञ्जाः । एते पुंसि । १११ । हस्तकुन्ताऽन्तव्रातवातदूतधूर्तसूतचूतमुहूर्ताः । एते पुंसि । अमरस्तु 'मुहूर्तोऽस्त्रिया'मित्याह । षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः। अयं षण्डः। ११२। वंशांश-पुरोडाशाः । अयं वंशः। पुरो दाश्यते पुरोडाशः । कर्मणि घञ् । भवव्याख्यानयोः प्रकरणे 'पौरोडाशपुरोडाशात्ष्ठन्' इति, विकारप्रकरणे 'व्रीहेः पुरोडाशे' इति च निपातनात्प्रकृतसूत्र एव निपातनाद्वा दस्य डत्वम् ।'पुरोडाशभुजामिष्ट'मिति माघः । ११४ । ह्रदकन्दकुन्दबुद्बुदशब्दाः। अयं ह्रदः। ११५ । अर्घपथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः। अयमर्घः । ११६ । पल्लवपल्वलकफरेफशोफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धस्कन्धमृदङ्गसङ्गसमुद्गपुङ्खाः । अयं पल्लव इत्यादि । ११७ । सारथ्यतिथिकुक्षिबस्तिपाण्यञ्जलयः । एते पुंसि । अयं सारथिः । इति पुंलिङ्गाधिकारः ।

## अथ नपुंसकाधिकारः ।

११८ । नपुंसकम् । अधिकारोऽयम् । ११९ । भावे ल्युडन्तः । हसनम् । भावे किम् ?। पचनोऽग्निः । इध्मप्रव्रश्चनः कुठारः । १२० । निष्ठा च । भावे या निष्ठा तदन्तं क्लीबं स्यात् । हसितम् । गीतम् । १२१ । त्वष्यञौ तद्धितौ । शुक्लत्वम्। शौक्ल्यम् । ष्यञः षित्त्वसामर्थ्यात्पक्षे स्त्रीत्वम् । चातुर्यम्। चातुरी । सामग्र्यम् । सामग्री । औचित्यम् । औचिती । १२२ । कर्मणि च ब्राह्मणादिगुणवचनेभ्यः । ब्राह्मणस्य कर्म ब्राह्मण्यम् । १२३ । यद्यढग्यगञ-

---

कंसं चाऽप्राणिनि ।'कंस'मिति शब्दस्य निर्देशात् 'नपुंसके च' इत्यस्य संबन्धः। अप्राणिनि वाच्ये कंसशब्द इत्यर्थः । दिनाऽहनी । दिवसाभिधानाविमौ । खारीमानिके । मानाभिधानत्वात्पुंस्त्वे प्राप्तेऽस्यारम्भः । बहुत्वं चेति । चकारः पुंस्त्वस्य समुच्चायकः । नाड्यपजनोपपदानि व्रणाऽङ्गपदानि । अत्रोपपदशब्दः पूर्वपदपरो नतु 'तत्रोपपद'मिति तत्संज्ञकपरः, तस्य प्राप्त्यभावात् । क्लीबत्वनिवृत्त्यर्थमिति । नपुंसकाधिकारे 'मुखनयने'त्यादिवक्ष्यमाणसूत्रेण विवराऽभिधानत्वेन क्लीबत्वं प्राप्तं तन्निवृत्त्यमित्यर्थः । अमरस्त्विवति । एवं च तन्मतेऽधर्चादिष्वयं द्रष्टव्यः ।

इति लिङ्गानुशासने पुंलिङ्गाधिकारः ।

भावे ल्युडन्तः । इदं च सूत्रं यद्यपि 'नपुंसके भावे क्तः' 'ल्युट् च' इत्यनेन गतार्थं तथापि स्पष्टार्थमुपात्तम् । एवमंतग्रहणं चेति बोध्यम् । इध्मप्रव्रश्चन इति । अत्र करणे ल्युट्। निष्ठा च। अत्र निष्ठापदं क्तस्य बोधकम् । इदमपि सूत्रं 'नपुंसके भावे क्तः' इत्यनेन गतार्थम् । प्रत्ययग्रहणे तदन्तस्य ग्रहणम् । त्वष्यञौ तद्धितौ । भावे इत्यनुवर्तते । यद्यपि 'तस्य भावः' इति सूत्रे भावशब्दः प्रकृतिजन्यबोधीयप्रकारताश्रयधर्मपरः । 'भावे ल्युडन्तः' इत्यत्र तु भावशब्दो भावनाबोधक इति सूत्रे भावशब्दः शब्दाधिकारेणाऽन्यार्थको द्रष्टव्यः । कर्मणि च । चाद्भावे ।

ण्वुल्छाश्च भावकर्मणि । एतदन्तानि क्लीबानि । 'स्तेनाद्यन्नलोपश्च । स्तेयम् । 'सख्युर्यः' सख्यम् । 'कपिज्ञात्योर्ढक् । कापेयम्। 'पत्यन्तपुरोहितादिभ्यो यक्'।आधिपत्यम्।'प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्' । औष्ट्रम् । 'हायनान्तयुवादि-भ्योऽण्'।द्वैहायनम्।'द्वन्द्वमनोज्ञादिभ्यो वुञ्'।पितापुत्रकम्।'होत्राभ्यश्छः'।अच्छावाकीयम्।१२४'अव्ययीभावः'।अधिस्त्रि। १२४।द्वन्द्वैकत्वम् ।पाणिपादम्।१२५।अभाषायां हेमन्तशिशिरावहोरात्रे च।स्पष्टम्।१२६।अनञ्कर्मधारयस्तत्पुरुषः। अधिकारोऽयम्। १२७। अनल्पे छाया । शरच्छायम् । १२८ । राजाऽमनुष्यपूर्वा सभा । इनसभमित्यादि । १२९ । सुरासेनाच्छायाशालानिशाः स्त्रियां च ।१३१। शिष्टं परवत् । अन्यस्तत्पुरुषः परवल्लिङ्गः स्यात् । रात्राह्नाहाः पुंसि। १३१ । अपथपुण्याहे नपुंसके । १३२ । सङ्ख्यापूर्वा रात्रिः । त्रिरात्रम् । सङ्ख्यापूर्वेति किम् ?। सर्वरात्रः । १३३ । द्विगुः स्त्रियां च व्यवस्थया। पञ्चमूली। त्रिभुवनम्।१३४। इसुसन्तः। हविः। धनुः।१३५। अर्चिः स्त्रियां च । इसन्त-त्वेऽपि–अर्चिः स्त्रियां नपुंसके च स्यात् । इयमिदं वा अर्चिः । १३६ । छदिः स्त्रियामेव । इयं छदिः । छद्यतेऽनेनेति छादेश्चुरादिण्यन्तादर्चिशुचीत्यादिना इस् । 'इस्म'न्नित्यादिना ह्रस्वः । 'पटलं छदि'रित्यमरः । तत्र पटलसाहचर्याच्छदिषः क्लीबतां वदन्तोऽमरव्याख्यातार उपेक्ष्याः । मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनाऽन्नाभिधानानि । एतेषामभिधायकानि क्लीबे स्युः। मुखमाननम् । नयनं लोचनम् । लोहं कालमयः । वनं गहनम् । मांसमामिषम् । रुधिरं रक्तम् । कार्मुकं शरासनम् । विवरं बिलम् । जलं वारि । हलं लाङ्गलम् । धनं द्रविणम् । अन्नमशनम् । अस्यापवादा-नाह त्रिसूत्र्या–। १३८ । सीरार्थौदनाः पुंसि । १३९ । वक्त्रनेत्राऽरण्यगाण्डीवानि पुंसि च । वक्त्रो वक्त्रम् । नेत्रो नेत्रम् । अरण्योऽरण्यम् । गाण्डीवो गाण्डीवम् । १४० अटवी स्त्रियाम् । १४१ । लोपधः । कुलम् । कूलम् । स्थलम् । तूलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि । अयं तूलः । १४३ । शीलमूलमङ्गलसालकमल-तलमुसलकुण्डलपललमृणालवालनिगलपलालबिडालखिलशूलाः पुंसि च । [चात् क्लीबे] । शीलं शील इत्यादि । १४४ । शतादिः संख्या । शतम् । सहस्रम् । शतादिरिति किम् ?। एको द्वौ बहवः। सङ्ख्येति किम् ?। शतशृङ्गो नाम पर्वतः । १४५ । शताऽयुतप्रयुताः पुंसि च । अयं शतः । इदं शतमित्यादि । १४६ । लक्षा कोटिः स्त्रियाम् । इयं लक्षा । इयं कोटिः । 'वा लक्षा नियुतं च त'दित्यमरात् क्लीबेऽपि–लक्षम् । १४७ । शङ्कुः पुंसि । १४८ । सहस्रः क्वचित् । अयं सहस्रः । इदं सहस्रम् । १४९ । मन्व्यच्कोऽकर्तरि । मन्प्रत्ययान्तो द्व्यचकः क्लीबः स्यान्न तु कर्तरि । वर्म । चर्म । द्व्यचकः किम् ? ।अणिमा । महिमा । अकर्तरि किम् ? । ददाति इति दामा । १५० । ब्रह्मन् पुंसि च । अयं ब्रह्मा । इदं ब्रह्म । १५१ । नामरोमणी नपुंसके । 'मन्व्यच्क' इत्यस्यायं प्रपञ्चः । १५२ । असन्तो द्व्यचकः ।

---

त्वष्यञावित्याद्यनुवर्तते । स्तेनाद्यन्नलोपश्चेति । यद्यपीदं सूत्रं प्राग्व्याख्यातमेव तथापीतः प्रभृति कथितनपुंसकत्वस्पष्ट-प्रतिपत्त्यर्थमिहोपादानमिति बोध्यम् । द्वन्द्वैकत्वमिति । 'द्वन्द्वश्च प्राणितूर्ये'त्यादिना । येषां द्वन्द्वानामेकवद्भावो भवति ते द्वन्द्वा नपुंसकत्वाभिधायका बोध्या इत्यर्थः । अभाषायाम् । इदमपि सूत्रं 'हेमन्तशिशिरावहोरात्रे च छन्दसि' इति सूत्रे छन्दसीत्युपादानेन गतार्थम् । 'हेमन्तशिशिरा'वित्यत्र तु निर्देशादेव पुंस्त्वप्रतिपदकता बोध्या । स्त्रियां चेति । चेन नपुंसकमित्यनुकर्षः । 'विभाषा'पदोपादानेनेदमपि गतार्थम् । परवत् । 'परवल्लिङ्ग'मिति सूत्रोपात्त इत्यर्थः । परवदिति सूत्रस्य स्मारकमिह परवदिति, नत्विदमपूर्वम्। तत्पुरुष इति । द्वन्द्वस्याप्युपलक्षणम् । सङ्ख्यापूर्वा रात्रिः । 'सङ्ख्यापूर्वं रात्रं क्लीबम्' इत्यस्यानुवादः । द्विगुः स्त्रियां चेति । चान्नपुंसकमिति संबध्यते । इदमपि 'अकारान्तोत्तर-पदो द्विगुः स्त्रियामिष्टः' 'पात्राद्यन्तस्य न' इत्यनेन गतार्थम् । अतएवाह–व्यवस्थयेति । इसुसन्तः । 'अर्चिशुचिहु-सृपिछादिछर्दिभ्य इसिः', 'जनेरुसिः' एतयोरुपात्तावेतौ । छदिः स्त्रियामेव । यद्यपि छदिरित्यस्येसन्तत्वेन नपुंस-कत्वे प्राप्ते विशेषोपादेन स्त्रियामित्यनेनैव नित्यस्त्रीत्वलाभे सिद्धे एवकारो व्यर्थः, तथापि 'पटलं छदिः' इत्यमरग्रन्थदर्श-नेन साहचर्यान्नपुंसकत्वमपीति भ्रान्तिः स्यात्तन्निवारणायैवकारः । अत एव वक्ष्यति–अमरव्याख्यातार इति । अस्येति। 'मुखनयने'ति सूत्रस्य । सीरार्थौदनाः । सीरशब्दो हलाभिधानः । अर्थशब्दस्तु धनशब्दस्य पर्यायः । ओदनशब्दो-ऽन्नवाची । भिस्स-भिस्सटाशब्दौ तु दग्धान्नपराविति तयोः स्त्रीत्वेऽपि न क्षतिरिति । अटवी स्त्रियाम् । अयं वनाभि धानः । सङ्ख्येति । सङ्ख्यावाचीत्यर्थः। शताऽयुत । अयं शतशब्दोऽनन्तवाची । 'शतादिः' इति पूर्वसूत्रापवादोऽयम् । लक्षाकोटिः । एतयोरपि सङ्ख्यावाचकत्वान्नपुंसकत्वे प्राप्ते इदम् । क्लीबेऽपीति । एवं चायमर्धर्चादिषु द्रष्टव्यः । शङ्कुः पुंसि। अस्य शङ्कुशब्दस्य सङ्ख्याविशेषवाचकत्वात् 'शतादिः सङ्ख्या' इति नपुंसकत्वे प्राप्तेऽस्यारम्भः। सहस्रः क्वचिदिति। क्वचिदिति अर्थविशेष इत्यर्थः । 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' इत्यत्राऽनन्तवाची। नचाऽत्र सहस्रशब्दस्यान-न्तपरत्वे सङ्ख्यापरत्वाऽभावेन सहस्रपादित्यत्र 'सङ्ख्यासुपूर्वस्य' इति पादशब्दान्त्यलोपो न स्यादिति वाच्यम् ,नियतविषय-परिच्छेदकत्वरूपसङ्ख्यात्वाऽभावेऽपि यथाकथंचित्सङ्ख्यायाः प्रतीतिरितीह लोपः । वस्तुतश्छान्दसो लोप इति तूचितम् । मन्व्यच्कः । अत्र मन्प्रत्ययः श्रूयमाणनकारान्तः 'सर्वधातुभ्यो मनिन्' इति विहितः । चर्म वर्मेति । चरादिधातो-

यशः । मनः । तपः । द्व्यच्कः किम् ?। चन्द्रमाः । १५३ । अप्सराः स्त्रियाम् । एता अप्सरसः । प्रायेणायं बहुवचनान्तः । १५४ । त्रान्तः । पत्रम् । छत्रम् । १५५। यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव । १५६ । भृत्राऽमित्रछात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंसि । अयं मृत्रः । न मित्रममित्रः । 'तस्य मित्राण्यमित्रास्ते' इति माघः । 'स्याताममित्रौ मित्रे चे'ति च । यत्तु द्विषोऽमित्र इति सूत्रे हरदत्तेनोक्तम्–'अमेर्द्विषदिं'त्यौणादिक इत्रच् । अमेरमित्रम् । मित्रस्य व्यथयेदित्यादौ मध्योदात्तस्तु चिन्त्यः । नञ्समासेऽप्येवम् । परवल्लिङ्गताऽपि स्यादिति तु तत्र दोषान्तर'मिति । तत्प्रकृतसूत्राऽपर्यालोचनमूलकम् । स्वरदोषोद्भावनमपि 'नञो जरमरमित्रमृता' इति षाष्ठसूत्राऽस्मरणमूलकमिति दिक् । १५७ । पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि च । १५८ । बलकुसुमशुल्बपत्तनरणाभिधानानि । बलं वीर्यम् । १५८ । पद्मकमलोत्पलानि पुंसि च । पद्मादयः शब्दाः कुसुमाभिधायित्वेऽपि द्विलिङ्गाः स्युः। अमरोऽप्याह–'वा पुंसि पद्मं नलिन'मिति । एवं चाऽर्धर्चादिसूत्रे 'जलजे पद्मं नपुंसकमेवे'ति वृत्तिग्रन्थो मतान्तरेण नेयः । १६० । आहवसंग्रामौ पुंसि । १६१ । आजिः स्त्रियामेव । १६२ । फलजातिः । फलजातिवाची शब्दो नपुंसकं स्यात् । आमलकम् । आम्रम् । १६३ । वृक्षजातिः स्त्रियामेव । क्वचिदेवेदम् । हरीतकी । १६४ । वियज्जगत्सकृत्शकन्पृषत्शकृद्यकृदुदश्वितः। एतेः क्लीबाः स्युः ।१६५। नवनीताऽवतानाऽनृताऽमृतनिमित्तवित्तचित्तपित्तव्रतरजतवृत्तपलितानि। १६६।श्राद्धकुलिशदैवपीठकुण्डभाण्डाऽङ्काऽङ्गदधिसक्थ्यक्ष्यास्यास्पदाकाशकण्वबीजानि।एतानि क्लीबे स्युः। १६७ । दैवं पुंसि । दैवम् । दैवः । १६८ धान्याज्यसस्यरूप्यकुप्यपण्यवर्ण्यधिष्ण्यहव्यकव्यकाव्यसत्यापत्यामूल्यशिक्यकुड्यमद्यहर्म्यतूर्यसैन्यानि । इदं धान्यमित्यादि ।१६९। द्वन्द्वबर्हदुःखबडिशपिच्छबिम्बकुटुम्बकवचवरशरवृन्दारकाणि । १७० । अक्षमिन्द्रिये । इन्द्रिये किम् ?। रथाङ्गादौ मा भूत् । इति नपुंसकाधिकारः ।

## अथ स्त्रीपुंसाधिकारः ।

स्त्रीपुंसयोः । [अधिकारोऽयम् ] ।१७२। गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः। इयमयं वा गौः । १७३ । मृत्युसीधुकर्कन्धुकिष्कुकण्डुरेणवः । इयमयं वा मृत्युः । १७४ गुणवचनमुकारान्तं नपुंसकं च । त्रिलिङ्गमित्यर्थः । पटु । पटुः । पट्वी । १७५ । अपत्यार्थस्तद्धिते । औपगवः । औपगवी ।'इति स्त्रीपुंसाधिकारः।

## अथ पुंनपुंसकाधिकारः ।

१७६ । पुंनपुंसकयोः । [अधिकारोऽयम् ]।१७७। घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः । अयं

---

मनिन्प्रत्ययः । बाहुलकादिडभावः । अणिमादौ त्विट् । दामेत्यत्रापि 'सर्वधातुभ्यो मनिन्' इत्यनेनैव मनिन्। परं त्वयं विशेषः–उणादिप्रत्ययान्तानां संज्ञाशब्दपरत्वेन यादृशी व्युत्पत्तिर्यत्रोचिता सा कल्पनीयेति कर्तर्यपि प्रत्ययः संभवतीति। ब्रह्मेति । बृंहेर्नोच' इति मनिन्प्रत्ययः । असन्तो द्व्यच्कः। 'सर्वधातुभ्योऽसुन्' इति विहितोऽसुन् । तस्याऽसुनो येष्वनुवृत्तिस्तदन्ता अपि बोध्याः। 'चन्द्रे मो डित्' इति विहिताऽसुन्प्रत्ययान्तश्चन्द्रमस्शब्दोऽप्यसुन्नन्तः, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् । एवमप्सरःशब्दोऽपि। त्रान्तः। त्रप्रत्ययान्तो नपुंसकः स्यात्।'सर्वधातुभ्यष्ट्रन्' इति त्रन्प्रत्ययो नकारानुबन्धक इति। यात्रामात्रा ।'हुयामा' इति विहितस्त्रन्प्रत्ययोऽपि त्रग्रहणेन गृह्यत इति नपुंसकत्वे प्राप्तेऽस्यारम्भः।एवकारो न्यायसिद्धबाध्यबाधकभावानुवादकः। भृत्रामित्र पूर्वस्यापवादः। यत्त्विति।'दोषान्तर'मित्यन्ता तदुक्तिः।मध्योदात्तः। मकारेकारस्य प्रत्ययाद्युदात्तत्वेन मध्योदात्त इति तद्भावः। चिन्त्य इति । चित्त्वस्य सत्त्वात् । नन्वमित्रशब्दो न इत्रान्तः किंतु 'अमिचिमि' इति धातुविहितक्तान्तमित्रशब्देन नञः समासे सति सिद्ध इत्याह–नञ्समासेऽप्येवमिति।अन्तोदात्त इत्यर्थः। परवल्लिङ्गतेति । एवं सति नपुंसकत्वं स्यात् । हरदत्तोक्तं दूषयति–तत्प्रकृतेत्यादिना । नञो जरमरेति । यदि तु न मित्रम् अमित्र इति नञ्समासस्तदा न 'नञो जरमरमित्रे'त्यस्य प्राप्तिस्तस्य बहुव्रीहिसमासे प्रवृत्तेरिति बोध्यम् । कुसुमाभिधायित्वेति । वस्तुतः कुसुमाभिधायित्वेऽपीत्यर्थः । यदि तु कुसुमविशेषाभिधायकोऽयं नतु कुसुमशब्दशक्यतावच्छेदकावच्छिन्नशक्त इति विभाव्यते तदात्वपूर्वमेवोभयलिङ्गत्वाभिधानमिति।मतान्तरेण । जलजशब्दस्य जलजातकुसुमान्तराभिधायकत्वमित्यभिप्रायकमतान्तरेणेत्यर्थः । आहवसंग्रामौ पुंसि । एतयोर्युद्धाभिधायकत्वान्नपुंसकत्वे प्राप्ते । एवमाजिशब्दोऽपि । फलजातिरिति । फलोपादानाद्वृक्षपरस्यामलकीशब्दस्य स्त्रीत्वेऽपि न क्षतिः । हरीतकीति । हरीतक्याः फलानि हरीतक्यः । 'हरीतक्यादिषु व्यक्तिः' इति स्त्रीत्वाऽभिधानात् । रथाङ्गादाविति । आदिना देवनाऽक्षपरिग्रहः। इति लिङ्गानुशासने नपुंसकाधिकारः ।

घृतः । इदं घृतम् । १७८ । श्रृङ्गार्घनिदाघोद्यमशल्यदृढाः । अयं श्रृङ्गः । इदं श्रृङ्गम् । १७९ । व्रजकुञ्जकुथकूर्चप्रस्थदर्पार्भार्धर्चदर्भपुच्छाः । अयं व्रजः । इदं व्रजम् । १८० । कबन्धौषधायुधान्ताः । स्पष्टम् । १८१ । दण्डमण्डखण्डशवसैन्धवपार्श्वाकाशकुशकाशाङ्कुशकुलिशाः । एते पुंनपुंसकयोः स्युः। 'कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जले' इति विश्वः । शलाकावाची तु स्त्रियाम् । तथा च 'जानपदे'ति सूत्रेणाऽयोविकारे ङीषि कुशी । दारुणि तु टाप् । 'कुशा वानस्पत्याः स्थ ता मा याते'ति श्रुतिः। 'अतः कृकमी'ति सूत्रे कुशाकर्णीष्विति प्रयोगश्च । व्याससूत्रे च-'हानौ तूपायनशब्दे शेषत्वात्कुशाच्छन्द' इति । तत्र शारीरकभाष्येप्येवम् । एवं च श्रुतिसूत्रभाष्याणामेकवाक्यत्वे स्थिते आच्छन्द इत्याङ्प्रश्लेषादिपरो भामतीग्रन्थः प्रौढिवादमात्रपर इति विभावनीयं बहुश्रुतैः। १८२ । गृहमेहदेहपट्टपटहाष्टापदाम्बुदककुदाश्च । इतिपुंनपुंसकाधिकारः । १८३ ।

अविशिष्टलिङ्गम् । १८४। अव्ययं कतियुष्मदस्मदः।१८५। ष्णान्ता संख्या॥ शिष्टा परवत्।एकः पुरुषः। एका स्त्री । एकं कुलम् । १८६ । गुणवचनं च । शुक्लः पटः । शुक्ला पटी । शुक्लं वस्त्रम् । १८७ । कृत्याश्च ।१८८। करणाधिकरणयोर्ल्युट् च । १८९ । सर्वादीनि सर्वनामानि । स्पष्टार्थेयं त्रिसूत्री । इति लिङ्गानुशासनं समाप्तम्। इति श्रीभट्टोजिदीक्षितविरचिता वैयाकरणसिद्धान्तकौमुदी समाप्ता ।

---

स्त्रीपुंसकयोः । अधिकारोऽयम् । नपुंसकं चेति । चात्स्त्रीपुंसयोः। इति लिङ्गानुशासने स्त्रीपुंसाधिकारः।

शलाकावाचीति । सा च शलाका काष्ठादिनिर्मिता । तत्र मानमाह–तथाचेति । इति पुंनपुंसकाधिकारः।

अविशिष्टलिङ्गम् । तत्तल्लिङ्गवाचकताप्रयुक्तकार्यविशेषशून्यम् । शिष्टा इति । पूर्वोक्तशब्दान्यतमत्वावच्छिन्नप्रतियोगिताकभेदवन्तः । परवदिति । विशेष्यवदित्यर्थः । गुणवचनं च । परवदित्यनुवर्तते ।

कृत्याश्च । कृत्यप्रत्ययान्ताः परवद्बोध्याः ।

सर्वादीनि सर्वनामानि । स्पष्टार्थेति । लोकव्युत्पत्त्यैव तत्तल्लिङ्गाभिधानसिद्धत्वात् । अत एव 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति भगवता भाष्यकृतोक्तम् । यौगिकेषु शब्देषु लोकव्युत्पत्तिरेव लिङ्गाभिधाने प्रमाणमिति सिद्धम् ।

इति श्रीभैरवमिश्रविरचितं लिङ्गानुशासनविवरणम् ।



## अथ गणपाठे प्रथमोऽध्यायः ।

**सर्वादीनि सर्वनामानि** । सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम । 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' । 'स्वमज्ञातिधनाख्यायाम्' । 'अन्तरं बहिर्योगोपसंव्यानयोः' । त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् ॥ इति **सर्वादिः** ।

**स्वरादिनिपातमव्ययम्** । स्वर् अन्तर् प्रातर् । **अन्तोदात्ताः** । पुनर् सनुतर् उच्चैस् नीचैस् शनैस् ऋधक् ऋते युगपत् आरात् [ अन्तिकात् ] पृथक् । **आद्युदात्ताः** । ह्यस् श्वस् दिवा रात्रौ सायम् चिरम् मनाक् ईषत् [ शश्वत् ] जोषम् तूष्णीम् बहिस् [ अधस् ] अवस् समया निकषा स्वयम् मृषा नक्तम् नञ् हेतौ [ हे है ] इद्धा अद्धा सामि । **अन्तोदात्ताः** । 'वत्' ब्राह्मणवत् क्षत्रियवत् । सना सनत् सनात् उपधा तिरस् । **आद्युदात्ताः** । अन्तरा । **अन्तोदात्तः** । अन्तरेण [ मक् ] ज्योक् [ योक् नक् ] कम् शम् सना सहसा [ श्रद्धा ] अलम् स्वधा वषट् विना नाना स्वस्ति अन्यत् अस्ति उपांशु क्षमा विहायसा दोषा मुधा दिष्ट्या वृथा मिथ्या । 'क्त्वातोसुन्कसुनः' । 'कृन्मकारसंध्यक्षरान्तोऽव्ययीभावश्च' । पुरा मिथो मिथस् प्रायस् मुहुस् प्रवाहुकम् प्रवाहिका आर्यहलम् अभीक्ष्णम् साकम् सार्धम् [ सत्रम् समम् ] नमस् हिरुक् । 'तसिलादयस्तद्धिता एधाच्पर्यन्ताः' 'शस्तसी कृत्वसुच् सुच् आस्थालौ । च्व्यर्थाश्च' । [ अथ ] अम् आम् प्रताम् प्रतान् प्रशान् । **आकृतिगणोऽयम्** । तेनान्येऽपि । तथाहि माङ् श्रम् कामम् [ प्रकामम् ] भूयस् परम् साक्षात् साचि (सावि) सत्यम् मङ्क्षु संवत् अवश्यम् सपदि प्रादुस् आविस् अनिशम् नित्यम् नित्यदा सदा अजस्रम् सन्ततम् उषा ओम् भूर् भुवर् झटिति तरसा सुष्ठु कु अञ्जसा अ मिथु ( अमिथु ) विथक् भाजक् अन्वक् चिराय चिरम् चिररात्राय चिरस्य चिरेण चिरात् अस्तम् आनुषक् अनुषक् अनुषट् अम्नस् (अम्भस्) अम्नर् (अम्भर्) स्थाने वरम् दुष्ठु बलात् शु अर्वाक् शुदि वदि इत्यादि । 'तसिलादयः प्राक्पाशपः' । 'शस्प्रभृतयः प्राक्समासान्तेभ्यः' 'मान्तः कृत्वोर्थः । तसिवती । नानाञाविति । इति **स्वरादिः** ।

**चादयोऽसत्त्वे** । च वा ह अह एव एवम् नूनम् शश्वत् युगपत् भूयस् सूपत् कूपत् कुवित् नेत् चेत् चण् कच्चित् यत्र तत्र नह हन्त माकिम् माकीम् माकिर् नकिम् नकीम् नकिर् आकीम् माङ् नञ् तावत् यावत् त्वा त्वै द्वै न्वै रै [ रे ] श्रौषट् वौषट् स्वाहा स्वधा ओम् तथा तथाहि खलु किल अथ सुष्ठु स्म अ इ उ ऋ ऌ ए ऐ ओ औ आदह उञ् उकञ् वेलायाम् मात्रायाम् यथा यत् तत् किम् पुरा वधा ( वध्वा ) धिक् हाहा हेहै ( हहे ) पाट् प्याट् आहो उताहो हो अहो नो ( नौ ) अथो ननु मन्ये मिथ्या असि ब्रूहि तु नु इति इव वत् वात् वन बत [ सम् वशम् शिकम् दिकम् ] सनुकं छंवट् ( छम्बट् ) शङ्के शुकम् खम् सनात् सनुतर् नहिकम् सत्यम् ऋतम् अद्धा इद्धा नोचेत् नचेत् नहि जातु कथम् कुतः कुत्र अव अनु हा हे [ है ] आहोस्वित् शम् कम् खम् दिष्ट्या पशु नट् सह [ अनुषट् ] आनुषक् अङ्ग फट् ताजक् [ भाजक् ] अये अरे वाट् (चाटु) कुम् खुम् घुम् अम् ईम् सीम् सिम् सि वै । 'उपसर्गसविभक्तिस्वरप्रतिरूपकाश्च निपाताः' । **आकृतिगणोऽयम्** । **इति चादयः** ।

**प्रादयः** । प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उद् अभि प्रति परि उप ॥

**ऊर्यादिच्विडाचश्च** । ऊरी उररी तन्थी ताली आताली वेताली धूली धूसी शकला संशकला ध्वंसकला भ्रंसकला गुलुगुधा सजूस् फल फली विक्ली आक्ली आलोष्ठी केवाली केवासी सेवासी पर्याली शेवाली वर्षाली अत्यूमशा वश्मशा मस्मसा मसमसा औषट् श्रौषट् वौषट् वषट् स्वाहा स्वधा (बन्धा) पापी प्रादुस् श्रत् आविस् । **इत्यूर्यादयः** ।

**साक्षात्प्रभृतीनि च** । साक्षात् मिथ्या चिन्ता भद्रा रोचना आस्था अमा अद्धा प्राजर्या प्राजरुहा बीजर्या बीजरुहा संसर्या अर्थे लवणम् उष्णम् शीतम् उदकम् आर्द्रम् अग्नौ वशे विकसने प्रसहने प्रतपने प्रादुस् नमस् । **आकृतिगणोऽयम्** । **इति साक्षात्प्रभृतयः** । [ **इति प्रथमोऽध्यायः** ] ।

## अथ द्वितीयोऽध्यायः ।

**तिष्ठद्गुप्रभृतीनि च** । तिष्ठद्गु वहद्गु आयतीगवम् खलेयवम् खलेबुसम् लूनयवम् लूयमानयवम् पूतयवम् पूयमानयवम् संहृतयवम् संह्रियमाणयवम् संहृतबुसम् संह्रियमाणबुसम् समभूमि समपदाति सुषमम् विषमम् दुःषमम् निःषमम् अपसमम् आयतीसमम् (प्रोढम्) पापसमम् पुण्यसमम् प्राह्णम् प्ररथम् प्रमृगम् प्रदक्षिणम् (अपरदक्षिणम्) संप्रति असंप्रति । 'इच्प्रत्ययः समासान्तः' । **इति तिष्ठद्गुप्रभृतयः** ।

**सप्तमी शौण्डैः** । शौण्ड धूर्त कितव व्याड प्रवीण संवीत अन्तर अधि पटु पण्डित कुशल चपल निपुण ॥

**पात्रेसमितादयश्च** । पात्रेसमिताः पात्रेबहुलाः उदुम्बरमशकः उदुम्बरकृमिः कूपकच्छपः अवटकच्छपः कूपमण्डूकः कुम्भमण्डूकः उदपानमण्डूकः नगरकाकः नगरवायसः मातरिपुरुषः पिण्डीशूरः पितरिशूरः गेहेशूरः गेहेनर्दी गेहेक्ष्वेडी गेहेविजिती गेहेव्याडः गेहेमेही गेहेदाही गेहेदृप्तः गेहेधृष्टः गर्भेतृप्तः आखनिकबकः गोष्ठेशूरः गोष्ठेविजिती गोष्ठेक्ष्वेडी गोष्ठेपटुः गोष्ठेपण्डितः गोष्ठेप्रगल्भः कर्णेटिरिटिरा कर्णेचुरुचुरा । आकृतिगणोऽयम् । इति पात्रेसमितादयः ।

**उपमितं व्याघ्रादिभिः सामान्याप्रयोगे**। व्याघ्र सिंह ऋक्ष ऋषभ चन्दन वृष वराह हस्तिन् तरु कुञ्जर रुरु पृषत् पुण्डरीक पलाश कितव। **इति व्याघ्रादयः। आकृतिगणोऽयम्**। तेन मुखपद्मम् मुखकमलम् करकिसलयम् पार्थिवचन्द्र इत्यादि।

**श्रेण्यादयः कृतादिभिः**। (१) श्रेणि एक पूग मुकुन्द राशि निचय विषय निधन पर इन्द्र देव मुण्डभूत श्रमण वदान्य अध्यापक अभिरूपक ब्राह्मण क्षत्रिय [विशिष्ट] पटु पण्डित कुशल चपल निपुण कृपण। **इति श्रेण्यादयः**। (२) कृत मित मत भूत उक्त [ युक्त ] समाज्ञात समाम्नात समाख्यात संभावित [संसेवित] अवधारित अवकल्पित निराकृत उपाकृत [दृष्ट कलितदलित उदाहृत विश्रुत उदित]। **आकृतिगणोऽयम्। इति कृतादयः।**
***शाकपार्थिवादीनामुपसङ्ख्यानम्***। शाकपार्थिव कुतुपसौश्रुत अजातौल्वलि। **आकृतिगणोऽयं**। कृतापकृत भुक्तविभुक्त पीतविपीत गतप्रत्यागत यातानुयात क्रयाक्रयिका पुटापुटिका फलाफलिका मानोन्मानिका। **इति।**

**कुमारः श्रमणादिभिः**। श्रमणा प्रव्रजिता कुलटा गर्भिणी तापसी दासी बन्धकी अध्यापक अभिरूपक पण्डित पटु मृदु कुशल चपल निपुण। **इति श्रमणादयः।**

**मयूरव्यंसकादयश्च**। मयूरव्यंसक छात्रव्यंसक कम्बोजमुण्ड यवनमुण्ड। छन्दसि। हस्तेगृह्य (हस्तगृह्य) पादेगृह्य ( पादगृह्य ) लाङ्गूलेगृह्य ( लाङ्गूलगृह्य ) पुनर्दाय। 'एहीडादयोऽन्यपदार्थे'। एहीडं एहियवं च एहिवाणिजा क्रिया अपेहिवाणिजा। एहिस्वागता अपेहिस्वागता एहिद्वितीया अपेहिद्वितीया प्रेहिद्वितीया एहिकटा अपेहिकटा प्रेहिकटा आहरकटा प्रेहिकर्दमा प्रोहकर्दमा विधमचूडा उद्धमचूडा ( उद्धरचूडा ) आहरचेला आहरवसना (आहरसेना) आहरवनिता ( आहरविनता ) कृन्तविचक्षणा उद्धरोत्सृजा उद्धरावसृजा उद्धमविधमा उत्पचनिपचा उत्पतनिपता उच्चावचम् उच्चनीचम् आचोपचम् आचपराचम् ( नखप्रचम् ) निश्चप्रचम् अकिञ्चन स्नात्वाकालक पीत्वास्थिरक भुक्त्वासुहित प्रोष्यपापीयान् उत्पत्यपाकला निपत्यरोहिणी निषण्णश्यामा अपेहिप्रघसा एहिविघसा इहपञ्चमी इहद्वितीया। 'जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति'। जहिजोडः। (जहिजोडम्)। जहिस्तम्बम्। (जहिस्तम्बः) [उज्जहिस्तम्बम्]। 'आख्यातमाख्यातेन क्रियासातत्ये'। अश्नीतपिबता पचतभृज्जता खादतमोदता खादतवमता। खादताचमता। आहरनिवपा। आहरनिष्किरा। (आवपनिष्किरा)। उत्पचविपचा भिन्धिलवणा कृन्धिविचक्षणा पचलवणा प्रचप्रकूटा। **आकृतिगणोऽयम्**। तेन। अकुतोभयः। कान्दिशीकः। कान्देशीकः। आहोपुरुषिका अहमहमिका यदृच्छा एहिरेयाहिरा उन्मृजावमृजा द्रव्यान्तरम् अवश्यकार्यम्। **इति मयूरव्यंसकादयः।**

**याजकादिभिश्च**। याजक पूजक परिचारक परिवेषक (परिषेचक) स्नापक अध्यापक उत्साहक उद्वर्तक होतृ भर्तृ रथगणक पत्तिगणक। **इति याजकादयः।**

**राजदन्तादिषु परम्**। राजदन्तः अग्रेवणम् लिप्तवासितम् नग्नमुषितम् सिक्तसंमृष्टम् मृष्टलुञ्चितम् अवक्लिन्नपक्वम् अर्पितोतम्। (अर्पितोप्तम्) उप्तगाढम् उलूखलमुसलम् तण्डुलकिण्वम् दृषदुपलम् आरग्वायनि। (आरग्वायन बन्धकी)। चित्ररथबाह्लीकम्। अवन्त्यश्मकम् शूद्रार्यम् स्नातकराजानौ विष्वक्सेनार्जुनौ अक्षिभ्रुवम् दारगवम् शब्दार्थौ धर्मार्थौ कामार्थौ अर्थशब्दौ अर्थकामौ वैकारिमतम् गाजवाजम्। (गोजवाजम्)। गोपालिधानपूलासम्। (गोपालधानीपूलासम्)। पूलासकारण्डम्। (पूलासककुरण्डम्)। स्थूलासम्। (स्थूलपूलासम्)। उशीरबीजम्। (जिज्ञास्थि) सिज्ञास्थम् सिञ्जाश्वत्थम्। (चित्रास्वाती)। चित्रस्वाती। भार्यापती दंपती जंपती जायापती पुत्रपती पुत्रपशू केशश्मश्रू शिरोविजु। (शिरोबीजम्)। शिरोजानु सर्पिर्मधुनी मधुसर्पिषी (आद्यन्तौ) अन्तादी गुणवृद्धी वृद्धिगुणौ। **इति राजदन्तादयः।**

**वाहिताग्न्यादिषु**। आहिताग्नि जातपुत्र जातदन्त जातश्मश्रु तैलपीत घृतपीत ( मद्यपीत ) ऊढभार्य गतार्थ। **आकृतिगणोऽयम्**। तेन—गडुकण्ठ अस्युद्यत (अरमुद्यत) दण्डपाणिप्रभृतयोऽपि। **इत्याहिताग्न्यादयः।**

**कडाराः कर्मधारये**। कडार गडुल खञ्ज खोड काण कुण्ठ खलति गौर वृद्ध भिक्षुक पिङ्ग पिङ्गुल (पिङ्गल) तड तनु ( जठर ) बधिर मठर कञ्ज बर्बर। **इति कडारादयः।**

***नौकाकान्नशुकशृगालवर्जेषु***। नौ काक अन्न शुक शृगाल। **इति नावादयः।**

**प्रकृत्यादिभ्य उपसङ्ख्यानम्**। प्रकृति प्राय गोत्र सम विषम द्विद्रोण पञ्चक साहस्र। **इति प्रकृत्यादयः।**

**गवाश्वप्रभृतीनि च**। गवाश्वम् गवाविकम् गवैडकम् अजाविकम् (अजैडकम् ) कुब्जवामनम् कुब्जकिरातम् पुत्रपौत्रम् श्वचण्डालम् स्त्रीकुमारम् दासीमाणवकम् शाटीपटीरम् शाटीप्रच्छदम् शाटीपट्टिकम् उष्ट्रखरम् उष्ट्रशशम् मूत्रशकृत् मूत्रपुरीषम् यकृन्मेदः मांसशोणितम् दर्भशरम् दर्भपूतीकम् अर्जुनशिरीषम् अर्जुनपुरुषम् तृणोपलम् ( तृणोलपम् ) दासीदासम् कुटीकुटम् भागवतीभागवतम्। **इति गवाश्वप्रभृतीनि।**

**न दधिपय आदीनि**। दधिपयसी सर्पिर्मधुनी मधुसर्पिषी ब्रह्मप्रजापती शिववैश्रवणौ स्कन्दविशाखौ परिव्राजककौशिकौ ( परिवाट्कौशिकौ ) प्रवर्ग्योपसदौ शुक्लकृष्णौ इध्माबर्हिषी दीक्षातपसी ( श्रद्धातपसी मेधातपसी )

अध्ययनतपसी उलूखलमुसले आद्यवसाने श्रद्धामेधे ऋक्सामे वाङ्मनसे। इति दधिपय आदीनि।

**अर्धर्चाः पुंसि च।** अर्धर्च गोमय कषाय कार्षापण कुतप कुसप (कुणप) कपाट शङ्ख गूथ यूथ ध्वज कबन्ध पद्म गृह सरक कंस दिवस यूष अन्धकार दण्ड कमण्डलु मण्ड भूत द्वीप चक्र धर्म कर्मन् मोदक शतमान यान नख नखर चरण पुच्छ दाडिम हिम रजत सक्तु पिधान सार पात्र घृत सैन्धव औषध आढक चषक द्रोण खलीन पात्रीव षष्टिक वारबाण (वारवारण) प्रोथ कपित्थ (शुष्क) शाल शील शुक्ल (शुल्क) शीधु कवच रेणु (ऋण) कपट शीकर मुसल सुवर्ण वर्ण पूर्व चमस क्षीर कर्ष आकाश अष्टापद मङ्गल निधन निर्यास जृम्भ वृत्त पुस्त बुस्त क्ष्वेडित शृङ्ग निगड (खल) मूलक मधु मूल स्थूल शराव नाल वप्र विमान मुख प्रग्रीव शूल वज्र कटक कण्टक (कर्पट) शिखर कल्क (वल्कल) नटमक नटमस्तक (नाटमस्तक) वलय कुसुम तृण पङ्क कुण्डल किरीट (कुमुद) अर्बुद अङ्कुश तिमिर आश्रय भूषण इक्कस (इष्वास) मुकुल वसन्त तटाक (तडाग) पिटक विटङ्क विडङ्ग पिण्याक माष कोश फलक दिन दैवत पिनाक समर स्थाणु अनीक उपवास शाक कर्पास (विशाल) चषाल (चखाल) खण्ड दर विटप (रण बल मक) मृणाल हस्त आर्द्र हल (सूत्र) ताण्डव गाण्डीव मण्डप पटह सौध योध पार्श्व शरीर फल (छल) पुर (पुरा) राष्ट्र अम्बर बिम्ब कुट्टिम मण्डल (कुक्कुट) कुडप ककुद खण्डल तोमर तोरण मञ्चक पञ्चक पुङ्ख मध्य (बाल) छाल वल्मीक वर्ष वस्त्र वसु देह उद्यान उद्योग स्नेह स्तेन (स्तन स्वर) संगम निष्क क्षेम शूक क्षत्र पवित्र (यौवन कलह) मालक (पालक) मूषिक (मण्डल वल्कल) कुज (कुञ्ज) विहार लोहित विषाण भवन अरण्य पुलिन दृढ आसन ऐरावत शूर्प तीर्थ लोमन (लोमश) तमाल लोह दण्डक शपथ प्रतिसर दारु धनुस् मान वर्चस्क कूर्च तण्डक मठ सहस्र ओदन प्रवाल शकट अपराह्ण नीड शकल तण्डुल। इत्यर्धर्चादिः।

**पैलादिभ्यश्च।** पैल शालङ्कि सात्यकि सात्यकामि राहवि रावणि औदञ्चि औदव्रजि औदमेघि औदव्यज्रि (औदमज्जि) औदसृज्जि दैवस्थानि पैङ्गलौदायनि राहक्षति भौलिङ्गि राणि औदन्यि औद्राहमानि औज्जिहानि औदशुद्धि। 'तद्राजाच्चाणः' (तद्राज) आकृतिगणोऽयम्। इति पैलादिः।

**न तौल्वलिभ्यः।** तौल्वलि धारणि पारणि रावणि दैलीपि दैवति वार्कलि नैवति (नैवकि) दैवमित्रि (दैवमति) दैवयज्ञि चाफट्टकि बैल्वकि वैकि (वैङ्कि) आनुहारति (आनुराहति) पौष्करसादि आनुरोहति आनुति प्रादोहनि नैमिश्रि प्राडाहति बान्धकि वैशीति आसिनासि आहिंसि आसुरि नैमिषि आसिबन्धकि पौष्णि कारेणुपालि वैकर्णि वैरकि वैहति। इति तौल्वल्यादिः।

**यस्कादिभ्यो गोत्रे।** यस्क लह्य द्रुह्य अयस्थूण (अयःस्थूण) तृणकर्ण सदामत्त कम्बलहार बहिर्योग पर्णाढक कर्णाढक पिण्डीजङ्घ वक्रसक्थ (वकसक्थ) विश्रि कुद्रि अजबस्ति मित्रयु रक्षोमुख जङ्घारथ उत्कास कटुक मथक (मन्थक) पुष्करट् (पुष्करसद्) विषपुट उपरिमेखल क्रोष्टुकमान (क्रोष्टुमान) क्रोष्टुपाद क्रोष्टुमाय शीर्षमाय खरप पदक वर्मुक भलन्दन भडिल भण्डिल भडित भण्डित। एते यस्कादयः।

**न गोपवनादिभ्यः।** गोपवन शैग्रु (शिग्रु) बिन्दु भाजन अश्वावतान श्यामाक (श्योनाक) श्यामक श्यापर्ण। बिदाद्यन्तर्गणोऽयं। इति गोपवनादिः।

**तिककितवादिभ्यो।** तिककितवाः वङ्खरभण्डीरथाः उपकलमकाः पफकनरकाः बकनखगुदपरिणद्धाः उब्जककुभाः लङ्कशान्तमुखाः उत्तरशलङ्कटाः कृष्णाजिनकृष्णसुन्दराः भ्राष्टककपिष्ठलाः अग्निवेशदशेरुकाः। एते तिककितवादयः।

**उपकादिभ्योऽन्यतरस्यामद्वन्द्वे।** उपक लमक भ्राष्ट्रक कपिष्ठल कृष्णाजिन कृष्णसुन्दर चूडारक आडारक गडुक उदङ्क सुधायुक अबन्धक पिङ्गलक पिष्टक सुपिष्ट (सुपिष्ठ) मयूरकर्ण खरीजङ्घ शलाथल पतञ्जल पदञ्जल कठेरणि कुषीतक कशकृत्स्न (काशकृत्स्न) निदाघ कलशीकण्ठ दामकण्ठ कृष्णपिङ्गल कर्णक पर्णक जटिरक बधिरक जन्तुक अनुलोम अनुपद प्रतिलोम अपजरध प्रतान अनभिहित कमक वराटक लेखाभ्र कमन्दक पिञ्जूलक वर्णक मसूरकर्ण मदाघ कवन्तक कमन्तक कदामत्त दामकण्ठ। एते उपकादयः। (इति द्वितीयोऽध्यायः)।

## अथ तृतीयोऽध्यायः।

**भृशादिभ्यो भुव्यच्वे।** भृश शीघ्र चपल मन्द पण्डित उत्सुक सुमनस् दुर्मनस् अभिमनस् उन्मनस् रहस् रोहत् रेहत् संश्वत् तृपत् शश्वत् भ्रमत् वेहत् शुचिस् शुचिवर्चस् अण्डर वर्चस् ओजस् सुरजस् अरजस् एते भृशादयः।

**लोहितादिडाज्भ्यः क्यष्।** लोहित चरित नील फेन मद्र हरित दास मन्द। लोहितादिराकृतिगणः।

**सुखादिभ्यः कर्तृ।** सुख दुःख तृप्त कृच्छ्र अस्र आस्र अलीक प्रतीप करुण कृपण सोढ। इति सुखादीनि।

**कण्ड्वादिभ्यो यक्।** कण्डूञ् मन्तु हृणीङ् वल्गु असु [मनस्] महीङ् लाट् लेट् इरस् इरज इरम् दुवस् उषस् वेट् मेधा कुषुभ (नमस्) मगध तन्तस् पम्पस् (पपस्) सुख दुःख [भिक्ष चरण चरम अवर] सपर अरर (अरर्) भिषज् भिष्णुज् [अपर आर] इषुध वरण चुरण तुरण भुरण गद्गद एला केला खेला [वेला शेला] लिट

लोट् [लिखा लेख] रेखा ध्रवस् तिरस् अगद उरस् तरण (तरिण) पयस् संभूयस् सम्बर। आकृतिगणोऽयम्।

**नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः**। 'नन्दिवाशिमदिदूषिसाधिवर्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम्'। नन्दनः वाशनः मदनः दूषणः साधनः वर्धनः शोभनः रोचनः। सहितपिदमः संज्ञायाम्। सहनः तपनः दमनः जल्पनः रमणः दर्पणः संक्रन्दनः संकर्षणः संहर्षणः जनार्दनः यवनः मधुसूदनः विभीषणः लवणः चित्तविनाशनः कुलदमनः [शत्रुदमनः] इति नन्द्यादिः। (२) ग्राही उत्साही उद्दासी उद्भासी स्थायी मन्त्री संमर्दी। रक्षश्रुवपशां नौ। निरक्षी निश्रावी निवापी निशायी। 'याचृव्याहृसंव्याहृव्रजवदवसां प्रतिषिद्धानाम्'। अयाची अव्याहारी असंव्याहारी अव्राजी अवादी अवासी। 'अचामचित्तकर्तृकाणाम्'। अकारी अहारी अविनायी [विशायी विषायी] विशयी विषयी देशे। विशयी विषयी देशः। 'अभिभावी भूते'। अपराधी उपरोधी परिभवी परिभावी। इति ग्रह्यादिः। पच वच वप वद चल पत नदट् भषट् प्लवट् चरट् गरट् तरट् चोरट् गाहट् सरट् (सूरट्) देवट् [दोषट्] जर (रज) मर (मद) क्षम (क्षप) सेव मेष कोप (कोष) मेध नर्त व्रण दर्श सर्प [दम्भ दर्प] जारभर श्वपच। पचादिराकृतिगणः।

**मूलविभुजादिभ्य उपसङ्ख्यानं**। मूलविभुज नखमुच काकगुह कुमुद महीध्र कुध्र गिरिध्र। आकृतिगणोऽयम्।

**पार्श्वादिषूपसङ्ख्यानम्**। पार्श्व उदर पृष्ठ उत्तान अवमूर्धन्। इति पार्श्वादिः।

**भविष्यति गम्यादयः**। गमी आगमी भावी प्रस्थायी प्रतिरोधी प्रतियोधी प्रतिबोधी प्रतियायी प्रतियोगी। एते गम्यादयः **संपदादिभ्यः क्विप्**। संपद् विपद् आपद् प्रतिपद् परिषद्। एते संपदादयः।

**षिद्भिदादिभ्योऽङ्**। 'भिदा विदारणे'। 'छिदा द्वैधीकरणे'। विदा। क्षिपा। गुहा गिर्योषध्योः'। श्रद्धा मेधा गोधा। 'आरा शस्त्र्याम्'। हारा। 'कारा बन्धने'। क्षिया। 'तारा ज्योतिषि'। 'धारा प्रपातने'। रेखा चूडा पीडा वपा वसा मृजा। 'क्रपेः संप्रसारणं च'। कृपा। इति भिदादिः।

**भीमादयोऽपादाने**। भीम भीष्म भयानक बहचर (बहचरु) प्रस्कन्दन प्रतपन (प्रतपन) समुद्र स्रुव स्रुक् वृष्टि (दृष्टि) रक्षः संकसुक (शङ्कुसुक) मूर्ख खलति। आकृतिगणोऽयम्। इति भीमादिः। (इति तृतीयोऽध्यायः)।

## अथ चतुर्थोऽध्यायः।

**अजाद्यतष्टाप्**। अजा एडका कोकिला चटका अश्वा मूषिका बाला होडा पाका वत्सा मन्दा विलाता पूर्वापिहाणा (पूर्वापहाणा) अपरापहाणा। 'संभस्त्राजिनशणपिण्डेभ्यः फलात्'। 'सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्'। 'शूद्रा चामहत्पूर्वा जातिः'। क्रुञ्चा उष्णिहा देवविशा ज्येष्ठा कनिष्ठा। 'मध्यमा पुंयोगेऽपि'। 'मूलान्नञः'। दंष्ट्रा। एतेऽजादयः।

**न षट्स्वस्रादिभ्यः**। स्वसृ दुहितृ ननान्दृ यातृ मातृ तिसृ चतसृ। इति स्वस्रादिः।

**नित्यं सपत्न्यादिषु**। समान एक वीर पिण्ड श्व (शिरी) भ्रातृ भद्र पुत्र। 'दासाच्छन्दसि'। इति समानादिः।

**षिद्गौरादिभ्यश्च**। गौर मत्स्य मनुष्य शृङ्ग पिङ्गल हय गवय मुकय ऋष्य (पुट तूण) द्रुण द्रोण हरिण कोकण (काकण) पटर उणक उकण (आमल) आमलक कुवल बिम्ब बदर फर्करक (कर्करक) तर्कार शर्कार पुष्कर शिखण्ड सलद शष्कण्ड सनन्द सुषम सुषव अलिन्द गडुल षाण्डश आढक आनन्द आश्वत्थ सृपाट सृगेट आखक (आपच्चिक) शष्कुल सूर्य (सूर्म) शूर्प सूच यूष (यूप) यूथ सूप मेथ वल्लक धातक सल्लक मालक मालत साल्वक वेतस वृक्ष (वृस) अतस (उभय) भृङ्ग मह मठ मेह छेद पेश मेद श्वन् तक्षन् अनडुही अनड्वाही। 'एषणः करणे'। देह देहल काकादन गवादन तेजन रजन लवण औद्गाहमानि (आद्गाहमानि) गौतम (गोतम) (पारक) अयस्थूण (अयःस्थूण) भौरिकि भौलिकि भौलिङ्गि यान मेध आलम्बि आलजि आलब्धि आलक्षि केवाल आपक आरट नट टोट नोट मूलाट मुलाट शातन (पोतन) पातन पाठन (पानठ) आस्तरण अधिकरण अधिकार अग्रहायणी (आग्रहायणी) प्रत्यवरोहिणी (सेचन)। सुमङ्गलात्संज्ञायाम्'। अण्डर सुन्दर मण्डल मन्थर मङ्गल पट पिण्ड (षण्ड) उर्द गुर्द शम सूद ओड (आर्द्र) हृद (हद) पाण्ड (माण्डल) भाण्ड (लोहाण्ड) कदर कन्दर कदल तरुण तलुन कल्माष बृहत् महत् [सोम] सौधर्म। 'रोहिणी नक्षत्रे'। 'रेवती नक्षत्रे'। विकल निष्कल पुष्कल। 'कटाच्छ्रोणिवचने'। पिप्पल्यादयश्च। पिप्पली हरितकी (हरीतकी) कोशातकी शमी वरी शरी पृथिवी क्रोष्टु मातामह पितामह। इति गौरादिः।

**बह्वादिभ्यश्च**। बहु पद्धति अञ्चति अङ्कति अंहति शकटि (शकति)। 'शक्तिः शस्त्रे'। शारि वारि राति राधि (शाधि) अहि कपि यष्टि मुनि। 'इतः प्राण्यङ्गात्'। 'कृदिकारादक्तिनः'। 'सर्वतोऽक्तिन्नर्थादित्येके'। चण्ड अराल कृपण कमल विकट विशाल विशङ्कट भरुज ध्वज। 'चन्द्रभागान्नद्याम्' (चन्द्रभागा नद्याम्) कल्याण उदार पुराण अहन् क्रोड नख खुर शिखा बाल शफ गुद। आकृतिगणोऽयम्। तेन भग गल राग इत्यादि। इति बह्वादयः।

**शार्ङ्गरवाद्यञो ङीन्**। शार्ङ्गरव कापटव गौग्गुलव ब्राह्मण वैद गौतम कामण्डलेय ब्राह्मणकृतेय (आनिचेय) आनिधेय आशोकेय वात्स्यायन मौञ्जायन कैकस काप्य (काव्य) शैव्य एहि पर्येहि आश्मरथ्य औदपान अराल चण्डाल वतण्ड। 'भोगवद्गौरिमतोः संज्ञायां घादिषु नित्यं ह्रस्वार्थम्'। 'नृनरयोर्वृद्धिश्च'। इति शार्ङ्गरवादिः।

**क्रौड्यादिभ्यश्च** । क्रौडि लाडि व्याडि आपिशलि आपक्षिति चौपयत चैटयत ( वैटयत ) सैकयत बैल्वयत सौधातकि । 'सूत युवत्याम्' । 'भोज क्षत्रिये' । यौतकि कौडि मौरिकि मौलिकि । (शाल्मलि) शालास्थलि कापिष्ठलि गौकक्ष्य । **इति क्रौड्यादिः** ।

**अश्वपत्यादिभ्यश्च** । अश्वपति (ज्ञानपति) शतपति धनपति गणपति (स्थानपति यज्ञपति) राष्ट्रपति कुलपति गृहपति ( पशुपति ) धान्यपति धन्वपति ( बन्धुपति धर्मपति ) सभापति प्राणपति क्षेत्रपति । **इत्यश्वपत्यादिः** ।

**उत्सादिभ्योऽञ्** । उत्स उदपान विकर विनद [मिनद] महानद महानस महाप्राण तरुण तलुन । 'बष्कयासे' । पृथिवी (धेनु) पङ्क्ति जगति त्रिष्टुप् अनुष्टुप् जनपद भरत उशीनर ग्रीष्म पीलुकुण । उदस्थान देशे । पृषदंश भल्लकीय रथंतर मध्यंदिन बृहत् महत् सत्त्वत् कुरु पञ्चाल इन्द्रावसान उष्णिह् ककुभ् सुवर्ण देव । 'ग्रीष्मादच्छन्दसि' । **इत्युत्सादिः** ।

**बाह्वादिभ्यश्च** । बाहु उपबाहु उपवाकु निवाकु शिवाकु वटाकु उपनिन्दु उपनिन्दु ( उपविन्दु ) वृषली । वृकला चूडा बलाका मूषिका कुशला भगला ( छगला ) ध्रुवका [ धुवका ] सुमित्रा दुर्मित्रा पुष्करसद् अनुहरत् देवशर्मन् अग्निशर्मन् (भद्रशर्मन् सुशर्मन्) कुनामन् (सुनामन्) पञ्चन् सप्तन् अष्टन् । अमितौजसः सलोपश्च । सुधावत् उदञ्चु शिरस् माष शराविन् मरीची क्षेमवृद्धिन् शृङ्खलतोदिन् खरनादिन् नगरमर्दिन् प्राकारमर्दिन् लोमन् अजीगर्त कृष्ण युधिष्ठिर अर्जुन साम्ब गद प्रद्युम्न रत्नम् [उदङ्क] उदकः संज्ञायाम् । संभूयोम्भसोः सलोपश्च । **आकृतिगणोऽयम्** । तेन सात्यकिः जाङ्घिः ऐन्दशर्मिः आजधेनविः—इत्यादि । **इति बाह्वादयः** ।

**गोत्रे कुञ्जादिभ्यः च्फञ्** । कुञ्ज ब्रध्न शङ्ख भस्मन् गण लोमन् शठ शाक शुण्डा शुभ विपाश् स्कन्द स्कम्भ ॥

**नडादिभ्यः फक्** । नड चर [वर] बक मुञ्ज इतिक इतिश उपक [एक] लमक । शलङ्कु शलङ्कं च । सप्तल वाजप्यतिक अग्निशर्मन्वृषगणे । प्राण नर सायक दास मित्र द्वीप पिङ्गल किङ्कर किङ्कल ( कातर ) कातल काश्यप (कुश्यप) काश्य काल्य (काव्य) अज अमुष्य (अमुष्म) कृष्णरणौ ब्राह्मणवसिष्ठे । अमित्र लिगु चित्र कुमार । क्रोष्टु क्रोष्टं च । लोह दुर्ग स्तम्भ शिंशपा अग्र तृण शकट सुमनस् सुमत मिमत ऋच् जलंधर अध्वर युगंधर हंसक दण्डिन् हस्तिन् ( पिण्ड ) पञ्चाल चमसिन् सुकृत्य स्थिरक ब्राह्मण चटक बदर अश्वल खरप लङ्क इन्ध अस्त्र कामुक ब्रह्मदत्त उदुम्बर शोण अलोह दण्डप । **इति नडादिः** ।

**अनृष्यानन्तर्ये बिदादिभ्योऽञ्** । बिद उर्व कश्यप कुशिक भरद्वाज उपमन्यु किलात कन्दर्प ( किंदर्भ ) विश्वानर ऋषिषेण ऋष्टिषेण ( ऋष्टिषेण ) ऋतभाग हर्यश्व प्रियक आपस्तम्ब कूचवार शरद्वत् शुनक (शुनक) धेनु गोपवन शिग्रु बिन्दु (भोगक) भाजन ( शमिक ) अश्वावतान श्यामाक श्यामक ( श्यावलि ) श्यापर्ण हरित किंदास बह्यस्क अर्कजूष (अर्कलूष) बध्योग विष्णुवृद्ध प्रतिबोध रचित ( रथीतर ) रथन्तर गविष्ठिर निषाद (शबर अलस अनस) मठर (मृडाकु) सृपाकु मृदु पुनर्भू पुत्र दुहितृ ननान्दृ । 'परस्त्री परशुं च' । **इति बिदादिः** ।

**गर्गादिभ्यो यञ्** । गर्ग वत्स । 'वाजासे' । संकृति अज व्याघ्रपात् विदभृत् प्राचीनयोग (अगस्ति) पुलस्ति चमस रेभ अग्निवेश शङ्ख शट शक एक धूम अवट मनस् धनंजय वृक्ष विश्वावसु जरमाण लोहित शंसित बभ्रु वल्गु मण्डु गण्डु शङ्कु लिगु गुहलु मन्तु मङ्क्षु अलिगु जिगीषु मनु तन्तु मनायी सूनु कथक कन्थक ऋक्ष तृक्ष ( वृक्ष ) (तनु) तरुक्ष तलुक्ष तण्ड वतण्ड कपिकत (कपि कत) कुरुकत अनडुह् कण्व शकल गोकक्ष अगस्त्य कण्डिनी यज्ञवल्क पर्णवल्क अभयजात विरोहित वृषगण रहूगण शण्डिल वर्णक (चणक) चुलुक मुद्गल मुसल जमदग्नि पराशर जतूकर्ण (जातूकर्ण) महित मन्त्रित अश्मरथ शर्कराक्ष पूतिमाष स्थूरा अदरक (अररक) एलाक पिङ्गल कृष्ण गोलन्द उलूक तितिक्ष भिषज ( भिषज् ) (भिष्णज्) भडित भण्डित दल्भ चेकित चिकित्सित देवहू इन्द्रहू एकलु पिप्पलु बृहदग्नि (सुलोहिन्) सुलाभिन् उक्थ कुटीगु । **इति गर्गादिः** ।

**अश्वादिभ्यः फञ्** । अश्व अश्मन् शङ्ख शूद्रक विद पुट रोहिण खर्जूर (खजूर) (खञ्जार वस्त) पिञ्जूर भडिल भण्डिल भडित भण्डित (प्रकृत रामोद) क्षान्त (काश तीक्ष्ण गोलाङ्क अर्क स्वर स्फुट चक्र श्रविष्ठ) पविन्द पवित्र गोमिन् श्याम धूम धूम्र वाग्मिम् विश्वानर कुट । शप आत्रेये । जन जड खड ग्रीष्म अर्ह कित विशंप विशाल गिरि चपल चुप दासक वैल्य (बैल्व) प्राच्य (धर्म्य) आनडुह्य । 'पुंसि जाते' । अर्जुन ( प्रहृत ) सुमनस् दुर्मनस् मन (मनन) (प्रान्त) ध्वन । 'आत्रेय भरद्वाजे' । 'भरद्वाज आत्रेये' । उत्स आतव कितव (वद धन्य पाद) शिव खदिर । **इत्यश्वादिः** ।

**शिवादिभ्योऽण्** । शिव प्रोष्ठ प्रोष्ठिक (मोष्ठक) चण्ड जम्भ (जन्म) भूरि दण्ड कुठार ककुभ् (ककुभा) अनभिम्लान कोहित सुख संधि मुनि ककुत्स्थ कहोड कोहड कहूय कहय रोध कपिञ्जल (कुपिञ्जल) खञ्जन वतण्ड तृणकर्ण क्षीरहद जल हद परिल (पथिक) पिष्ट हैहय (पार्षिका) गोपिका कपिलिका जटिलिका बधिरिका मञ्जीरक (मजिरक) वृष्णिक खञ्जार खञ्जाल (कर्मार) रेख लेख आलेखन विश्रवण रवण वर्तनाक्ष ग्रीवाक्ष (पिटक विटप) विटाक तृक्षाक नभाक ऊर्णनाभ जरत्कारु (पृथा उत्क्षेप) पुरोहितिका सुरोहितिका सुरोहिका आर्यश्वेत ( अर्यश्वेत ) सुपिष्ट मसुरकर्ण

मयूरकर्ण ( खर्जूरकर्ण ) कदूरक तक्षन् ऋष्टिषेण गङ्गा विपाश यस्क लह्य द्रुह्य अयस्थूण तृणकर्ण ( तृण कर्ण ) पर्ण भलन्दन विरूपाक्ष भूमि इला सपत्नी । द्व्यचो नद्याः । 'त्रिवेणी त्रिवणं च' । **इति शिवादिराकृतिगणः।**

**शुभ्रादिभ्यश्च** । शुभ्र विष्ट पुर ( विष्टपुर ) ब्रह्मकृत शतद्वार शलाथल शलाकाभ्रू लेखाभ्रू (लेखाभ्र) विकसा (विकास) रोहिणी रुक्मिणी ( रुहिणी ? ) धर्मिणी दिश् शालूक अजबस्ति शकंधि विमातृ विधवा शुक विश देवतर शकुनि शुक्र उग्र शातल (शतल) बन्धकी सृकण्डु विस्रि अतिथि गोदन्त कुशाम्ब मकष्टु शाताहर पवष्टुरिक सुनामन्। 'लक्ष्मणश्याम्योर्वासिष्ठे' । गोधा कृकलास अणीव प्रवाहण भरत ( भारत ) भरम मृकण्डु कर्पूर इतर अन्यतर आलीढ सुदन्त सुदक्ष सुवक्षस् सुदामन् कद्रु तुद आकशाय कुमारिका कुठारिका किशोरिका अम्बिका जिह्माशिन् परिधि वायुदत्त शकल शलाका खडूर कुबेरिका अशोका गन्धपिङ्गला ( अन्धपिङ्गला ? ) खडोन्मत्ता अनुदृष्टिन् (अनुदृष्टि) जरतिन् बलीवर्दिन् विम्र बीज जीव श्वन् अश्मन् अश्व अजिर । **इति शुभ्रादिकृतिगणः।**

**कल्याण्यादीनामिनङ् च** । कल्याणी सुभगा दुर्भगा बन्धकी अनुदृष्टि अनुसृति ( अनुसृष्टि ) जरती बलीवर्दी ज्येष्ठा कनिष्ठा मध्यमा परस्त्री । **इति कल्याण्यादिः** ।

**गृष्ट्यादिभ्यश्च** । गृष्टि हृष्टि बलि हलि विश्रि कुद्रि अजबस्ति मित्रयु । **इति गृष्ट्यादिः।**

**रेवत्यादिभ्यष्ठक्** । रेवती अश्वपाली मणिपाली द्वारपाली वृकवञ्चिन् वृकबन्धु वृकग्राह कर्णग्राह दण्डग्राह कुक्कुटाक्ष (ककुदाक्ष) चामरग्राह । **इति रेवत्यादिः।**

**कुर्वादिभ्यो ण्यः** । कुरु गर्गर मङ्कुष अजमार रथकार वावदूक । 'सम्राजः क्षत्रिये' । कवि मति (विमति) कपिञ्जलादि वाक ( वाक् ? ) वामरथ पितृमत् इन्द्रजाली एजि वातकि दामोष्णीषि गणकारि कैशोरि कुट शालाका ( शलाका ) मुर पुर एरका शुभ्र अभ्र दर्भ केशिनी । 'वेनाच्छन्दसि' । शूर्पणाय श्यावनाय श्यावरथ श्यावपुत्र ( श्यावपुत्र ? ) सत्यंकार वडभीकार पथिकार मूढ शकन्धु शङ्कु शाक शालिन् शालीन कर्तृ हर्तृ इन पिण्डी तक्षन्। 'वामरथस्य कण्वादिवत्स्वरवर्जम्' । **इति कुर्वादिः।**

**तिकादिभ्यः फिञ्** । तिक कितव ( संज्ञा बाला शिखा ) उरस् शाट्य सैन्धव यमुन्द रूप्य ग्राम्य नील अमित्र गोकक्ष्य ( गौकक्ष्य ) कुरु देवरथ तैतल औरस कौरव्य भौरिकि भौलिकि चौपयत चैटयत शीकयत क्षैतयत वाजवत् चन्द्रमस् शुभ गङ्गा वरेण्य सुपामन् आरब्ध वाह्यक स्वल्पक वृष लोमक उदन्य यज्ञ । **इति तिकादिः।**

**वाकिनादीनां कुक् च** । वाकिन गौधेर कार्कश काकलङ्क । 'चर्मिवर्मिणोर्नलोपश्च' । **इति वाकिनादिः।**

**कम्बोजाल्लुक्** । कम्बोज चोल केरल शक यवन । **इति कम्बोजादिः।**

**न प्राच्यभर्गादियौधेयादिभ्यः** । ( १ ) भर्ग करूश केकय कश्मीर साल्व सुस्थाल उरस् कौरव्य । **इति भर्गादिः।** (२) यौधेय शौक्रेय शौभ्रेय ज्यावाणेय धौर्तेय धार्तेय त्रिगर्त भरत उशीनर । **इति यौधेयादिः।**

**भिक्षादिभ्योऽण्** । भिक्षा गर्भिणी क्षेत्र करीष (अङ्गार ?) अङ्गारचर्मिन् धर्मिन् सहस्र युवति पदाति पद्धति अथर्वन् दक्षिणा भूत विषय श्रोत्र । **इति भिक्षादिः।**

**खण्डिकादिभ्यश्च** । खण्डिका वडवा । क्षुद्रकमालवात् सेना संज्ञायाम् । भिक्षुक शुक उलूक श्वन् अहन् युगवरत्रा (युगवरत्र) हलबन्धा (हलबन्ध) **इति खण्डिकादिः।**

**पाशादिभ्यो यः** । पाश तृण धूम वात अङ्गार पाटल पोत गल पिटक पिटाक शकट हल नट वन । **इति पाशादिः।।** ***खलादिभ्य इनिर्वक्तव्यः**। खल डाक कुटुम्ब शाक कुण्डलिनी । **इति खलादिराकृतिगणः।**

**राजन्यादिभ्यो वुञ्** । राजन्य आनत बाभ्रव्य शालङ्कायन दैवयातव ( देवयात ) ( अव्रीड वरत्रा ) जालंधरायण ( राजायन ) तेह्लु आत्मकामेय अम्बरीषपुत्र वसाति बैल्ववन शैलूष उदुम्बर तीव्र बैल्वल आर्जुनायन संप्रियदाक्षि उर्णनाभ । **इति राजन्यादिराकृतिगणः।**

**भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ** । ( १ ) भौरिकी भौलिकी चौपयत चौटयत ( चैटयत ) काणेय वाणिजक वाणिकाज्य ( वालिकाज्य ) सैकयत वैकयत । **इति भौरिक्यादिः।** (२) ऐषुकारि सारस्यायन ( सारसायन ) चान्द्रायण द्व्याक्षायण त्र्याक्षायण औडायन जौडायन खाडायन दासमित्रि दासमित्रायण शौद्रायण दाक्षायण शापण्डायन (शायण्डायन) तार्क्ष्यायण शौभ्रायण सौवीर [सौवीरायण] शपण्ड (शयण्ड) शौण्ड शयाण्डि (शयाण्ड) वैश्वमानव वैश्वधेनव (वैश्वधेनव) नड तुण्डदेव विश्वदेव [सापिण्डि] । **इत्यैषुकार्यादिः।**

**क्रतूक्थादिसूत्रान्ताट्ठक्** । उक्थ लोकायत न्यास न्याय पुनरुक्त निरुक्त निमित्त द्विपदा ज्योतिष अनुपद अनुकल्प यज्ञ धर्म चर्चा क्रमेतर श्लक्ष (श्लक्ष्ण) संहिता पदक्रम संघट (संघट्ट) वृत्ति परिषद् संग्रह गण [गुण] आयुर्वेव (आयुर्वेद) । **इत्युक्थादिः।।** **क्रमादिभ्यो वुन्** । क्रम पद शिक्षा मीमांसा सामन् । **इति क्रमादिः।**

**वसन्तादिभ्यष्ठक्** । वसन्त ग्रीष्म वर्षा शरद शरत् हेमन्त शिशिर प्रथम गुण चरम अनुगुण अथर्वन् आथर्वण ।

**संकलादिभ्यश्च।** संकल पुष्कल उत्तम उडुप उद्वेप उत्पुट कुम्भ निधान सुदक्ष सुदत्त सुभूत सुपूत सुनेत्र सुमङ्गल सुपिङ्गल सूत सिकत पूतिका (पूतिक) पूलास कूलास पलाश निवेश (गवेष) गम्भीर इतर आन् अहन् लोमन् वेमन् चरण (वरुण) बहुल सद्योज अभिषिक्त गोभृत् राजभृत् भल्ल मल्ल माल। इति संकलादिः।

**सुवास्त्वादिभ्योऽण्।** सुवास्तु (सुवस्तु) वर्णु भण्डु खण्डु सेवालिन् कर्पूरिन् शिखण्डिन् गर्त कर्कश शकटीकर्ण कृष्णकर्ण (कर्क) कर्कन्धुमती गोह अहिसक्थ। इति सुवास्त्वादिः।

**वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतंगमप्रगदिन्वराहकुमुदादिभ्यः** (१) अरीहण (अहीरण) द्रुघण द्रुहण भलग (भगल) उलन्द किरण सांपरायण क्रौष्ट्रायन (क्रौष्ट्रायण) औष्ट्रायण त्रैगर्तायन मैत्रायण भास्त्रायण वैमतायण (वैमतायन) गौमतायन सौमतायन सौसायन धौमतायन सौमायन ऐन्द्रायण कौद्रायण (कौन्द्रायण) खाडायन शाण्डिल्यायन रायस्पोष विपथ विपाश उद्दण्ड उदञ्चन भाण्डवीरण वीरण काशकृत्स्न (कशकृत्स्न) जाम्बवत शिंशपा रैवत (रेवत) विल्व सुयज्ञ शिरीष बधिर जम्बु खदिर (सुशर्मन्) भलन्दन भण्डु खण्डु कलन (कनल) यज्ञदत्त। इत्यरीहणादिः। (२) कृशाश्व अरिष्ट अरिदम वेश्मन् विशाल लोमश रोमश लोमक रोमक शंबल कूट वर्चल सुवर्चल सुकर सूकर प्रातर (प्रतर) सदृश पुरग पुराग सुख धूम अजिन विनत अवनत कुविद्यास (कुविद्यास) पराशर अरुस् अयस मौद्गल्याकर (मौद्गल्य युकर)। इति कृशाश्वादिः। (३) ऋश्य (ऋष्य) न्यग्रोध शर निलीन (निवास निवात) निधान निबन्धन (निबन्ध) (विबद्ध) परिगूढ (उपगूढ) असनी सित मत् वेश्मन् उत्तराश्मन् अश्मन् स्थूल बाहु खदिर शर्करा अनडुह (अनडुह्) अरडु परिवंश वेणु वीरण खण्ड दण्ड परिवृत्त कर्दम अंसु। इत्यृश्यादिः। (४) कुमुद शर्करा न्यग्रोध इक्कट संकट कंकट गर्त बीज परिवाप निर्यास शकट कच मधु शिरीष अश्व अश्वत्थ बल्वज यवास कूप विकङ्कत दशग्राम। इति कुमुदादिः। (५) काश पाश अश्वत्थ पलाश पीयूक्षा चरण वास नड वन कर्दम कच्छूल कङ्कट गुह बिस तृण कर्पूर बर्बर मधुर ग्रह कपित्थ जतु सीपाल। इति काशादिः। (६) तृण नड मूल वन पर्ण वर्ण वराण विल पुल फल अर्जुन अर्ण सुवर्ण बल चरण बुस। इति तृणादिः। (७) प्रेक्षा फलका (हलका) बन्धुका ध्रुवका क्षिपका न्यग्रोध इक्कट कङ्कट संकट कट कूप बुक पुक पुट मह परिवाप यवषि ध्रुवका गर्त कूपक हिरण्य। इति प्रेक्षादिः। (८) अश्मन् यूथ ऊष मीन मद नद दर्भ वृन्द गुद खण्ड नग शिखा कोट पाम कन्द कान्द कुल गह्व गुड कुण्डल पीन गुह। इत्यश्मादिः। (९) सखि अग्निदत्त वायुदत्त सखिदत्त (गोपिल) भल्लपाल (भल्ल पाल) चक्र चक्रवाल छगल अशोक करवीर वासव वीर पूर वज्र कुशीरक (सीहर) सरक सरस समर समल सुरस रोह तमाल कदल सप्तल। इति सख्यादिः। (१०) संकाश कपिल कश्मीर (समीर) सूरसेन सरक सूर। 'सुपथिन्पन्थ च'। यूप (यूथ) अंश अङ्ग नासा पलित अनुनाश अश्मन् कूट मलिन् दश कुम्भ शीर्ष चिरन्त (विरत) समल सीर पञ्जर मन्थ नल रोमन् लोमन् पुलिन सुपरि कटिप सकर्णक वृष्टि तीर्थ अगस्ति विकर नासिका। इति संकाशादिः। (११) बल चुल नल दल वट लकुल उरल पुल (पुल) मूल उलडुल (उल डुल) वन कुल। इति बलादिः। (१२) पक्ष तुक्ष तुष कुण्ड अण्ड कम्बलिका वलिक चित्र अस्ति। 'पथः पन्थ च'। कुम्भ सीरक सकल सरस समल अतिश्वन् रोमन् लोमन् हस्तिन् मकर लोमक शीर्ष निवात पाकसहक (सिंहक) अङ्कुश सुवर्णक हंसक हिंसक कुत्स बिल खिल यमल हस्त कला सकर्णका। इति पक्षादिः। (१३) कर्ण वसिष्ठ अक अर्कलूष द्रुपद आनडुह्य पाञ्चजन्य स्फिग (स्फिज्) कुम्भी कुन्ती जित्वन् जीवन्त कुलिश आण्डीवत् (आण्डीवत) जव जैत्र आकन (अनक)। इति कर्णादिः। (१४) सुतंगम मुनिचित विप्रचित्त महाचित्त महापुत्र स्वन श्वेत गडिक (खडिक) शुक्र विप्र बीजावापिन् (बीजवापिन्) अर्जुन श्वन् अजिर जीव खण्डिन कर्ण विग्रह। इति सुतंगमादिः। (१५) प्रगदिन् मगदिन् मददिन् कविल खण्डित गदित चूडार मडार मन्दार कोविदार। इति प्रगद्यादिः। (१६) वराह पलाशा (पलाश) शेरिष (शिरीष) पिनद्ध निबद्ध बलाह स्थूल विदग्ध (विजग्ध) विभग्न (निमग्न) बाहु खदिर शर्करा। इति वराहादिः। (१७) कुमुद गोमथ रथकार दशग्राम अश्वत्थ शाल्मलि (शिरीष) मुनिस्थल कुण्डल कूट मधुकर्ण घासकुन्द शुचिकर्ण। इति कुमुदादिः।

**वरणादिभ्यश्च।** वरणा शृङ्गी शाल्मलि शुण्डि शयाण्डी पर्णी ताम्रपर्णी गोद आलिङ्गयायन जालपदी (जानपदी) जम्बू पुष्कर चम्पा पम्पा वल्गु उज्जयिनी गया मथुरा तक्षशिला उरसा गोमती वलभी। इति वरणादिः।

**मध्वादिभ्यश्च।** मधु बिस स्थाणु वेणु कर्कन्धु शमी करीर हिम किशरा शर्याण मरुत् वार्दाली शर इष्टका आसुति शुक्तिआसन्दी शकल शलाका आमिषी इक्षु रोमन् रुष्टि रुप्य तक्षशिला कड (वड) वट वेट। इति मध्वादिः।

**उत्करादिभ्यश्छः।** उत्कर संफल शफर पिप्पलीमूल अश्मन् सुवर्ण खलाजिन तिक कितव अणक त्रैवण पिचुक अश्वत्थ काश क्षुद्र भस्त्रा शाल जन्या अजिर चर्मन् उत्क्रोश शान्त खदिर शूर्पणाय श्यावनाय नैवाकव तृण वृक्ष शाक

पलाश विजिगीषा अनेक आतप फल संपर अर्क गर्त अग्नि वैराणक इडा अरण्य निशान्त पण नीचानक शंकर अवरोहित क्षार विशाल वेत्र अरीहण खण्ड वातागाव मन्त्रणार्ह इन्द्रवृक्ष नितान्तवृक्ष आर्द्रवृक्ष । इत्युत्करादिः ।

**नडादीनां कुक्च** । नड प्लक्ष बिल्व वेणु वेत्र वेतस इक्षु काष्ठ कपोत तृण ।'क्रुञ्चा ह्रस्वत्वं च'। 'तक्षन्नलोपश्च'।

**कत्र्यादिभ्यो ढकञ्** । कत्रि उम्भि पुष्कर पुष्कल मोदन कुम्भी कुण्डिन नगरी माहिष्मती वर्मती उख्या ग्राम । 'कुड्याया यलोपश्च' । **इति कत्र्यादिः** ।

**नद्यादिभ्यो ढक्** । नदी मही वाराणसी श्रावस्ती कौशाम्बी वनकौशाम्बी काशपरी काशफारी (काशफरी) खादिरि पूर्वनगरी पाठा माया शाल्वा दार्वा सेतकी । 'वडवाया वृषे' । **इति नद्यादिः** ।

**प्रस्थोत्तरपदपलद्यादिकोपधादण्** । पलदी परिषद् रोमक वाहीक कलकीट बहुकीट जालकीट कमलकीट कमलकीकर कमलभिदा गोष्ठी नैकती परिखा शूरसेन गोमती पटच्चर उदपान यकृल्लोम । **इति पलद्यादिः** ।

**काश्यादिभ्यष्ठञ्ञिठौ** । काशि चेदि (वेदि) सांयाति संवाह अच्युत मोदमान शकुलाद हस्तिकर्षू कुनामन् हिरण्या करण गोवासन भारङ्गी अरिंदम अरित्र देवदत्त दशग्राम शौवावतान युवराज उपराज देवराज मोदन सिन्धुमित्र दासमित्र सुधामित्र सोममित्र छागमित्र साधमित्र। (सधमित्र)।'आपदादिपूर्वपदात्कालान्तात्'। आपद ऊर्ध्व तत्।

**धूमादिभ्यश्च** । धूम षडण्ड शशादन अर्जुनाव माहकस्थली आनकस्थली माहिषस्थली अट्टस्थली समुद्रस्थली दाण्डायनस्थली राजस्थली विदेह राजगृह सात्रासाह शष्प मित्रवर्ग (मित्रवर्ध) भक्षाली मज्जाली मद्रकूल आजीकूल द्व्याहव (त्र्याहाव) त्र्यहव (त्र्याहव) संस्फाय बर्बर वर्ज्य गर्त आनर्त माठर पाथेय घोष पल्ली आराज्ञी धार्तराज्ञी आवय तीर्थः । 'कूलात्सौवीरेषु' । 'समुद्रान्नावि मनुष्ये च' । कुक्षि अन्तरीप द्वीप अरुण उज्जयिनी पट्टार दक्षिणापथ साकेत ।

**कच्छादिभ्यश्च** । कच्छ सिन्धु वर्णु गन्धार मधुमत् कम्बोज काश्मीर साल्व कुरु अनुशण्ड द्वीप अनूप अजवाह विजापक कलूतर रङ्कु । **इति कच्छादिः** ।

**गहादिभ्यश्च** । गह अन्तस्थ सम विषम मध्य मध्यंदिन चरणे उत्तम अङ्ग वङ्ग मगध पूर्वपक्ष अपरपक्ष अधमशाख उत्तमशाख एकशाख समानशाख समानग्राम एकग्राम एकवृक्ष एकपलाश इष्वग्र इष्वनीक अवस्यन्दन कामप्रस्थ शाडिकाडायनि (खाडायन) काठेरणि लावेरणि सौमित्रि शैशिरि आसुत दैवशर्मि श्रौति आहिंसि आमित्रि व्याडि वैजि आध्यश्वि आनृशंसि (आनृशंसि) शौङ्गि आग्निशर्मि भोजि वाराटकि वाल्मिकि (वाल्मीकि) क्षेमवृद्धि आश्वत्थि औद्गाहमानि ऐकबिन्दवि दन्ताग्र हंस तत्त्वग्र (तन्त्वग्र) उत्तर अन्तर (अनन्तर) मुखपार्श्वतसोर्लोपः । जनपरयोः कुक्च । देवस्य च । वेणुकादिभ्यश्छण् । **इति गहादिः** । **आकृतिगणः** ।

**सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्** । सन्धिवेला सन्ध्या अमावास्या त्रयोदशी चतुर्दशी पञ्चदशी पौर्णमासी प्रतिपत् । संवत्सरात्फलपर्वणोः । **इति सन्धिवेलादिः** ।

**दिगादिभ्यो यत्** । दिश् वर्ग पूग गण पक्ष धाय्य मित्र मेधा अन्तर पथिन् रहस् अलीक उखा साक्षिन् देश आदि अन्त मुख जघन मेघ यूथ । उदकात्संज्ञायाम् । ञाय (न्याय) वंश वेश काल आकाश । **इति दिगादिः** ।

* **परिमुखादिभ्यश्च** * । परिमुख परिहनु पर्योष्ठ पर्युलूखल परिसीर उपसीर उपस्थूण उपकलाप अनुपथ अनुपद अनुगङ्ग अनुतिल अनुसीत अनुसाय अनुसीर अनुमाष अनुयव अनुयूप अनुवंश प्रतिशाख। **इति परिमुखादिः** ।

***अध्यात्मादिभ्यश्च*** । अध्यात्म अधिदेव अधिभूत इहलोक परलोक । **इत्यध्यात्मादिः**। **आकृतिगणः** ।

**अणृगयनादिभ्यः** । ऋगयन पदव्याख्यान छन्दोमान छन्दोभाषा छन्दोविचिति न्याय पुनरुक्त निरुक्त व्याकरण निगम वास्तुविद्या क्षत्रविद्या अङ्गविद्या विद्या उत्पाद उत्पात उद्याव संवत्सर मुहूर्त उपनिषद् निमित्त शिक्षा भिक्षा ।

**शुण्डिकादिभ्योऽण्** ।शुण्डिक कृकण कृपण स्थण्डिल उदपान उपल तीर्थ भूमि तृण पर्ण। **इति शुण्डिकादिः**।

**शण्डिकादिभ्यो ञ्यः** । शण्डिक सर्वसेन सर्वकेश शक शट रक खड्ग बोध । **इति शण्डिकादिः** ।

**सिन्धुतक्षशिलादिभ्योऽणञौ** ।(१) सिन्धु वर्णु मधुमत् कम्बोज साल्व कश्मीर गन्धार किष्किन्धा उरसा दरद (दरद्) गन्दिका । **इति सिन्ध्वादिः** ।(२) तक्षशिला वत्सोद्धरण कैमेंदुर ग्रामणी छगल क्रोष्टुकर्ण सिंहकर्ण संकुचित किंनर काण्डधार पर्वत अवसात बर्बर कंस । **इति तक्षशिलादिः** ।

**शौनकादिभ्यश्छन्दसि** । शौनक वाजसनेय शार्ङ्गरव शापेय शाष्पेय खाडायन स्तम्भ स्कन्ध देवदर्शन रज्जुभार रज्जुकण्ठ कठशाठ कषाय तल दण्ड पुरुषासक अश्वपेज । **इति शौनकादिः** ।

**कुलालादिभ्यो वुञ्** । कुलाल वरुड चाण्डाल निषाद कर्मार सेना सिरिन्ध्र (सिरिध्र) देवराज पर्षत् (परिषत्) वधू मधु रुरु रुद्र अनडुह् ब्रह्मन् कुम्भकार श्वपाक बैजवापि । **इति कुलालादिः** ।

**रैवतिकादिभ्यश्छः** । रैवतिक स्वापिशि क्षैमवृद्धि गौरग्रीव (गौरग्रीवि) औदमेघि औदवापि बैजवापि। इति।

**बिल्वादिभ्योऽण्**। बिल्व व्रीहि काण्ड मुद्ग मसूर गोधूम इक्षु वेणु गवेधुका कर्पासी पाटली कर्कन्धू कुटीर । इति।

**पलाशादिभ्यो वा**। पलाश खदिर शिंशपा स्यन्दन पूलाक करीर शिरीष यवास विकङ्कत। इति पलाशादिः।
**नित्यं वृद्धशरादिभ्यः**। शर दर्भ मृद् (मृत्) कुटी तृण सोम बल्वज। इति शरादिः।
**तालादिभ्योऽण्**। 'तालाद्धनुषि'। बार्हिण इन्द्रालिश इन्द्रादृश (इन्द्राशिष) इन्द्रायुध चय श्यामाक पीयूक्षा। इति।
**प्राणिरजतादिभ्योऽञ्**। रजत सीस लोह उदुम्बर नीप दारु रोहितक बिभीतक पीतदारु तीव्रदारु त्रिकण्टक कण्टकार। इति रजतादिः।
**प्लक्षादिभ्योऽण्**। प्लक्ष न्यग्रोध अश्वत्थ इङ्गुदी शिग्रु रुरु कक्षतु बृहती। इति प्लक्षादिः।
**हरीतक्यादिभ्यश्च**। हरीतकी कोशातकी नखरजनी शष्कण्डी दाडी दोडी श्वेतपाकी अर्जुनपाकी द्राक्षा काला ध्वाक्षा गभीका कण्टकारिका पिप्पली चिम्पा (चिञ्चा) शेफालिका। इति हरीतक्यादिः।
*** माशब्दादिभ्य उपसंख्यानम् ***। माशब्दः नित्यशब्दः कार्यशब्दः। इति माशब्दादिः।
*** आहौ प्रभूतादिभ्यः ***। प्रभूत पर्याप्त। इति प्रभूतादिः।
*** पृच्छतौ सुस्नातादिभ्यः ***। सुस्नात सुखरात्रि सुखशयन। इति सुस्नातादिः।
*** गच्छतौ परदारादिभ्यः ***। परदार गुरुतल्प। इति परदारादिः।
**पर्पादिभ्यः ष्ठन्**। पर्प अश्व अश्वत्थ रथ जाल न्यास व्याल। 'पादः पच्च'। इति पर्पादिः।
**वेतनादिभ्यो जीवति**। वेतन वाहन अर्धवाह धनुर्दण्ड जाल वेश उपवेश प्रेषण उपवस्ति सुख शय्या शक्ति उपनिषद् उपदेश स्फिज् (स्फिज) पाद उपस्थ उपस्थान उपहस्त। इति वेतनादिः।
**हरत्युत्सङ्गादिभ्यः**। उत्सङ्ग उडुप उत्पूत (उत्पुत) उत्पन्न उत्पुट पिटक पिटाक। इत्युत्सङ्गादिः।
**भस्त्रादिभ्यः ष्ठन्**। भस्त्रा भरट भरण शीर्षभार शीर्षेभार अंसभार अंसेभार। इति भस्त्रादिः।
**निर्वृत्तेऽक्षद्यूतादिभ्यः**। अक्षद्यूत (जानुप्रहृत) (जानूपहृत) जङ्घाप्रहृत जङ्घाप्रहृत पादस्वेदन कण्टकमर्दन गतानुगत गतागत यातोपयात अनुगत। इत्यक्षद्यूतादिः।
**अण्महिष्यादिभ्यः**। महिषी प्रजापति प्रजावती प्रलेपिका विलेपिका अनुलेपिका पुरोहिता मणिपाली अनुवारक (अनुचारक) होतृ यजमान। इति महिष्यादिः।
**किसरादिभ्यः ष्ठन्**। किसर नरद नलद स्थागल तगर गुग्गुलु उशीर हरिद्रा हरिद्रु पर्णी (पर्णी) इति किसरादिः।
**छत्रादिभ्यो णः**। छत्र शिक्षा प्ररोहस्था बुभुक्षा चुरा तितिक्षा उपस्थान कृषि कर्मन् विश्वधा तपस सत्य अनृत विशिखा विशिका भक्षा उदस्थान पुरोडा विक्षा चुक्षा मन्द्र। इति छत्रादिः।
**प्रतिजनादिभ्यः खञ्**। प्रतिजन इदंयुग संयुग समयुग परयुग परकुल परस्यकुल अमुष्यकुल सर्वजन विश्वजन महाजन पञ्चजन। इति प्रतिजनादिः।
**कथादिभ्यष्ठक्**। कथा विकथा विश्वकथा संकथा वितण्डा कुष्टविद् (कुष्ठविद्) जनवाद जनेवाद जनोवाद वृत्ति संग्रह गुणगण आयुर्वेद। इति कथादिः।
**गुडादिभ्यष्ठञ्**। गुड कुल्माष सक्तु अपूप मांसौदन इक्षु वेणु सङ्ग्राम सङ्घात सङ्क्राम संवाह (संवाय) प्रवास निवास उपवास। इति गुडादिः। इति चतुर्थोऽध्यायः।

## अथ पञ्चमोऽध्यायः।

**उगवादिभ्यो यत्**। गो हविस् अक्षर विष बर्हिस् अष्टका स्वदा (स्खदा) युग मेधा स्रुच्। 'नाभि नभं च'। 'शुनः संप्रसारणं वा च दीर्घत्वं, तत्सन्नियोगेन चान्तोदात्तत्वम्'। 'ऊधसोऽनङ् च'। कूप खद दर खर असुर अध्वन् (अध्वन) क्षर वेद बीज दीस (दीप्त)। इति गवादिः।
**विभाषा हविरपूपादिभ्यः**। अपूप तण्डुल अभ्युष (अभ्यूष) अभ्योष अवोष अभ्येष पृथुक ओदन सूप पूप किण्व प्रदीप मुसल कटक कर्णवेष्टक इर्गल। अर्गल। 'अन्नविकारेभ्यश्च'। यूप स्थूणा दीप अश्व पत्र। इत्यपूपादिः।
**असमासे निष्कादिभ्यः**। निष्क पण पाद माष वाह द्रोण षष्टि। इति निष्कादिः।
**गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्**। अश्व अश्मन् गण ऊर्णा (उर्म) उमा भङ्ग (गङ्गा) क्षण वर्षा वसु। इति।
**तद्धरति वहत्यावहति भाराद्वंशादिभ्यः**। वंश कुटज बल्वज मूल स्थूणा (स्थूण) अक्ष अश्मन् अश्व श्लक्ष्ण इक्षु खट्वा। इति वंशादिः।
**छेदादिभ्यो नित्यम्**। छेद भेद द्रोह दोह नर्ति (नर्त) कर्ष तीर्थ संप्रयोग विप्रयोग प्रयोग विप्रकर्ष प्रेषण संप्रश्न विप्रश्न विकर्ष। 'विराग विरङ्गं च'। इति छेदादिः।
**दण्डादिभ्यो यत्**। दण्ड मुसल मधुपर्क कशा अर्घ मेघ मेधा सुवर्ण उदक वध युग गुहा भाग इभ भङ्ग। इति।
***महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्यानम्***। महानाम्नी आदित्यव्रत गोदान। इति महानाम्न्यादिः।

* अवान्तरदीक्षादिभ्यो डिनिर्वक्तव्यः* । अवान्तरदीक्षा तिलव्रत देवव्रत । इत्यवान्तरदीक्षादिः ।
व्युष्टादिभ्योऽण् । व्युष्ट नित्य निष्क्रमण प्रवेशन उपसंक्रमण तीर्थ आस्तरण सङ्ग्राम सङ्घात । इति व्युष्टादिः ।
अग्निपदादिभ्य उपसङ्ख्यानम् । अग्निपद पीलुपद(पीलुमूल)प्रवास उपवास । इत्यग्निपदादिराकृतिगणः ।
तस्मै प्रभवति संतापादिभ्यः । संताप संनाह संग्राम संयोग संपराय संवेशन संपेष निष्पेष सर्ग निसर्ग विसर्ग उपसर्ग प्रवास उपवास संघात संवेष संवास संमोदन सक्तु । 'मांसौदनाद्विगृहीतादपि' । इति संतापादिः ।
* तदप्रकरणे उपवस्त्रादिभ्य उपसङ्ख्यानम् * । उपवस्तृ प्राशितृ चूडा श्रद्धा । इत्युपवस्त्रादिः ।
अनुप्रवचनादिभ्यश्छः । अनुप्रवचन उत्थापन उपस्थापन संवेशन प्रवेशन अनुप्रवेशन अनुवासन अनुवचन अनुवाचन अन्वारोहण प्रारम्भण आरोहण । इत्यनुप्रवचनादिः ।
* स्वर्गादिभ्यो यद्वक्तव्यः * । स्वर्ग यशस् आयुस्काम धन । इति स्वर्गादिः ।
*पुण्याहवाचनादिभ्यो लुग्वक्तव्यः* । पुण्याहवाचन स्वस्तिवाचन शान्तिवाचन । इति पुण्याहवाचनादिः।
पृथ्वादिभ्य इमनिज्वा । पृथु मृदु महत् पटु तनु लघु बहु साधु आशु उरु गुरु बहुल खण्ड दण्ड चण्ड अकिंचन बाल होड पाक वत्स मन्द स्वादु ह्रस्व दीर्घ प्रिय वृष ऋजु क्षिप्र क्षुद्र अणु । इति पृथ्वादिः ।
वर्णदृढादिभ्यः ष्यञ्च । दृढ वृढ परिवृढ भृश कृश वक्र शुक्र चुक्र आम्र कष्ट लवण ताम्र शीत उष्ण जड बधिर पण्डित मधुर मूर्ख मूक स्थिर । 'वेर्यातलातमतिर्मनःशारदानाम्' 'समो मतिमनसोः' । जवन । इति दृढादिः ।
गुणवचनब्राह्मणादिभ्यः कर्मणि च । ब्राह्मण वाडव माणव । 'अर्हतो नुम्च' । चोर धूर्त आराधय विराधय अपराधय उपराधय एकभाव द्विभाव त्रिभाव अन्यभाव अक्षेत्रज्ञ संवादिन् संवेशिन् संभाषिन् बहुभाषिन् शीर्षघातिन् विघातिन् समस्थ विषमस्थ परमस्थ मध्यमस्थ अनीश्वर कुशलचपलनिपुण पिशुन कुतूहल क्षेत्रज्ञ निश्न बालिश अलस दुःपुरुष कापुरुष राजन् गणपति अधिपति गडुल दायाद विशस्ति विषम विपात निपात । 'सर्ववेदादिभ्यः स्वार्थे' । 'चतुर्वेदस्योभयपदवृद्धिश्च' । शौटीर । आकृतिगणोऽयम् । इति ब्राह्मणादिः ।
*चतुर्वेदादिभ्य उभयपदवृद्धिश्च* । चतुर्वेद चतुर्वर्ण चतुराश्रम सर्वविद्य त्रिलोक त्रिस्वर षड्गुण सेना अनन्तर संनिधि समीप उपमा सुख तदर्थ इतिह मणिक । इति चतुर्वेदादिः ।
पत्यन्तपुरोहितादिभ्यो यक् । पुरोहित । राजाऽसे । ग्रामिक पिण्डिक (पण्डित) सुहित बालमन्द [बालमन्द] खण्डिक दण्डिक वर्मिक कर्मिक धर्मिक शिलिक सूतिक मूलिक तिलक अञ्जलिक [अन्तलिक] रूपिक ऋषिक पुत्रिक अविक छत्रिक पर्षिक पथिक चर्मिक प्रतिक सारथि आस्थिक सूचिक संरक्ष सूचक [ संरक्षसूचक ] नास्तिक अजानिक शाकर नागर चूडिक । इति पुरोहितादिः ।
प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् । उद्गातृ उन्नेतृ प्रतिहर्तृ प्रशास्तृ होतृ पोतृ हर्तृ रथगणक पत्तिगणक सुष्ठु दुष्ठु अध्वर्यु वधू 'सुभग मन्त्रे' । (सुभग मन्त्र) इत्युद्गात्रादिः ।
हायनान्तयुवादिभ्योऽण् । युवन् स्थविर होतृ यजमान । 'पुरुषाऽसे' । भ्रातृ कुतुक श्रमण [श्रवण] कटुक कमण्डलु कुस्त्री सुस्त्री दुःस्त्री सुहृदय दुर्हृदय सुहृद् दुर्हृद् सुभ्रातृ दुर्भ्रातृ वृषल परिव्राजक सब्रह्मचारिन् अनृशंस । 'हृदयाऽसे' । कुशल चपल निपुण पिशुन कुतूहल क्षेत्रज्ञ । 'श्रोत्रियस्य यलोपश्च' । इति युवादिः ।
द्वन्द्वमनोज्ञादिभ्यश्च । मनोज्ञ प्रियरूप अभिरूप कल्याण मेधाविन् आढ्य कुलपुत्र छान्दस छात्र श्रोत्रिय चोर धूर्त विश्वदेव युवन् कुपुत्र ग्रामपुत्र ग्रामकुलाल ग्रामड [ग्रामषण्ड] ग्रामकुमार बहुल अवश्यपुत्र अमुष्यपुत्र अमुष्यकुल सारपुत्र शतपुत्र । इति मनोज्ञादिः ।
तस्य पाकमूले पील्वादि कर्णादिभ्यः कुणब्जाहचौ । (१) पीलु कर्कन्धु शमी करीर बल [कुवल] बदर अश्वत्थ खदिर । इति पील्वादिः । (२) कर्ण अक्षि नख मुख केश पाद गुल्फ भ्रू शृङ्ग दन्त ओष्ठ पृष्ठ । इति० ।
तदस्य संजातं तारकादिभ्य इतच् । तारका पुष्प कर्णक मञ्जरी ऋजीष क्षण सूत्र सूत्र निष्क्रमण पुरीष उच्चार प्रचार विचार कुड्मल कण्टक मुसल मुकुल कुसुम कुतूहल स्तवक [स्तवक] किसलय पल्लव खण्ड वेग निद्रा मुद्रा बुभुक्षा धेनुष्या पिपासा श्रद्धा अभ्र पुलक अङ्गारक वर्णक द्रोह दोह सुख दुःख उत्कण्ठा भर व्याधि वर्मन् व्रण गौरव शास्त्र तरङ्ग तिलक चन्द्रक अन्धकार गर्व कुमुर [मुकुर] हर्ष उत्कर्ष रण कुवलय गर्ध क्षुध् सीमन्त ज्वर गर रोग रोमाञ्च पण्डा कज्जल तृष् कोरक कल्लोल स्थपुट फल कञ्चुक शृङ्गार अङ्कुर शैवल बकुल श्वभ्र आराल कलङ्क कर्दम कन्दल मूर्च्छा अङ्गार हस्तक प्रतिबिम्ब विघ्नतन्त्र प्रत्यय दीक्षा गर्ज । 'गर्भादप्राणिनि' । तारकादिराकृतिगणः ।
विमुक्तादिभ्योऽण् । विमुक्त देवाऽसुर रक्षोऽसुर उपसद् सुवर्ण परिसारक सदसत् वसु मरुत् पत्नीवत् वसुमत् महीयस् सत्वत् बर्हवत् दशार्ण दशार्ह वयस् हविर्धान पतत्रिन् महित्री अस्यहत्य सोमापूषन् इडा अग्नाविष्णू उर्वशी वृत्रहन् । इति विमुक्तादिः ।

